* श्रीः *

श्रीभट्टोजिदीक्षितविरचिता

# वैयाकरणसिद्धान्तकौमुदी

काशीस्थबिरलामहाविद्यालयप्रधानाचार्य–एम. एल. सी.-

सकलशास्त्रपारावारीण-वैयाकरणकेसरि-

**पण्डितश्रीसभापतिशर्मोपाध्याय-**

विरचितया "**लक्ष्मी**"

व्याख्ययोपेता

श्रीबालकृष्णशर्मपञ्चोलिना सम्पादिता

[ प्रथमोंशः ]

प्रकाशकः

मो ती ला ल  ब ना र सी दा सः

दिल्ली : वाराणसी : पटना.

प्रकाशक :
सुन्दरलाल जैन

पो० ब० ७५, नेपालीखपरा
वाराणसी

प्रथम संस्करण
१९६६
मूल्य २०–०

मुद्रक :
श्याम वाराणसी प्रेस
बाँसफाटक,
वाराणसी.

सर्वविध पुस्तक प्राप्तिस्थान :—

१. मोतीलाल बनारसीदास, बँगलोरोड, जवाहर नगर, दिल्ली ७।
२. मोतीलाल बनारसीदास, पो० ब० ७५, नेपालीखपरा, वाराणसी।
३. मोतीलाल बनारसीदास, माहेश्वरीमार्केट, बाँकीपुर, पटना।

# आमुखम्

इह प्रवाहाविच्छेदेन प्रवर्तमानेऽतिभयावहत्रिविधतापग्राहस्य ग्रस्तनिखिलप्राणिसमोप्सितसुखे संसारचक्रे धृतजनुषां अनिजक्लेशनिवहाक्रान्ताशान्तस्वान्तानां सर्वेषामेव त्रिविधदुःखात्यन्तिकनिवृत्ति-निर्वृत्तिसम्प्राप्तविषयिणी प्रवृत्तिरुपजायते। तत्र तादृशदुःखनिवृत्तिनिर्वृत्तौ च तत्तत्कारणध्वंसतत्तत्कारणोपलब्धिसाध्ये। कारणजिज्ञासायाञ्च तज्ज्ञापकशास्त्रशरणीकरणमेव श्रेयस्करमित्यतिरोहितं प्रेक्षावताम्। तदुद्दिष्टसरण्यवगतिश्च वाक्यार्थबोधावलम्बनापेक्षा। तदवगमश्च वाक्यानां सुप्तिङन्तचयादिरूपत्वाद् व्याकरणज्ञानाधीनः। तच्च व्याकरणं "नियतकालाश्च स्मृतयो भवन्ति" इति भाष्यप्रामाण्यादद्यत्वे पाणिनीयमेव। 'अयं शब्द इममर्थं बोधयति अस्य शब्दस्यास्मिन्नर्थे शक्तिः' इति ज्ञानं व्याकरणाधीनम्।

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इति।

व्याकरणशब्दार्थश्च—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्=व्याकृतिसाधनम्। व्याकृतिश्च व्युत्पत्तिः। सा च शास्त्रजन्यप्रकृतिप्रत्ययागमादिस्वरूपतदर्थतत्सम्बन्धज्ञानरूपा' तज्जन्यान्तःकरणवृत्तिरूपा, संस्कार-विशेषरूपा, नामरूपकरणकजगत्कर्मकप्रकाशनरूपा च। तथा च श्रुतिः—'नामरूपे व्याकरवाणि' इति।

व्याकरणस्यैव नामान्तरं 'शब्दानुशासनम' इति। भाष्ये 'लक्ष्यलक्षणे व्याकरणम्' इति तु न सिद्धान्तलक्षणम्। 'अथवा पुनरस्तु सूत्रम्' इत्येव सिद्धान्तलक्षणम्। यदि लक्ष्यलक्षणसमुदाये व्याकरणत्वप्रतियोगिका पर्याप्तिः स्यात्तदाऽन्योन्याश्रयापत्तिः। व्याकरणस्य प्रयुक्तान्वाख्यायकत्वेन प्रयुक्तज्ञानं विना प्रयुक्तज्ञानासम्भवः, लक्ष्यलक्षणसमुदितस्य व्याकरणत्वे 'शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्=बोद्धव्यम्' इति भाष्यं विरुध्येत। शब्दानुशासनमित्यस्य शब्दविषयकज्ञानसाधनार्थकत्वेन शब्दज्ञानस्य व्याकरणज्ञानफलकत्वेन शब्दरूपलक्ष्यघटितस्य व्याकरणत्वासम्भवात्। अपि च 'लघ्वर्थमध्येयं व्याकरणम्' इत्युपक्रम्य 'ब्राह्मणेनावश्यं शब्दा ज्ञेयाः' इति, 'नचान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुम्' इत्युक्तं भगवता पतञ्जलिना। तथा च व्याकरणज्ञानप्रयोज्यज्ञानविषयाः शब्दा इत्युक्तं भवति।

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥"

इति विभिन्नानि व्याकरणानि सन्ति 'जयन्त्यष्टादि शाब्दिकाः'। तत्रेन्द्रः प्रथमः शाब्दिक इति विषये महाभाष्ये प्रोक्तम्—'एवं हि श्रूयते-बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम, बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः तथापि नान्तं जगाम, किं पुनरद्यत्वे यः सर्वथा चिरं जीवति, स वर्षशतं जीवति" इति। तेनानुमीयते-अध्ययनानुकूलं शब्दपरिगणनरूपं व्याकरणं तेन विरचितमिति। किन्तु विषयेऽस्मिन् विदुषां वैमत्यं प्रतिभाति। तैत्तिरीयसंहितायां "वाचं व्याकुरु" इति देवैरिन्द्रः प्रार्थितः। ऐन्द्रव्याकरणविषये श्रीयुमान् चुमाङ् महोदयः कथयति व्याकरणसम्बन्धिनियमा इन्द्रेण स्थिरीकृता इति।

व्याकरणपरम्परा च सामवेदस्य ऋक्तन्त्रे इत्थं वर्णिता—"इदमक्षरं छन्दसां वर्णशः समनुक्रान्तम्। यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते। न भुक्त्वा, न नक्तं प्रब्रूयाद् ब्रह्मराशिरिति"

शाब्दिकाचार्यपरम्परा—पाणिनेः पूर्वं ६५ ऋषयः शाब्दिका आसन्—आग्निवेश्य-आग्निवेश्यायन-आग्रायण-आत्रेय-आन्यतरेय-आपिशलि-आह्वरक-उख्य-उत्तमोत्तरीय- उदीच्य-औदुम्बरायण-औदव्रजि-औपमन्यव-औपवि-और्णनाभ-काण्डमायन-काण्व-कात्थक्य-काश्यप-कौण्डिन्य-कौत्स-कौहलीपुत्र-क्रौष्टुकि-गार्ग्य-गालव-गौतम-चर्मशिरस्-चाक्रवर्मण-जातुकर्ण्य-तैटीकि-तैत्तरीयक-दाल्भ्य-नैगि-पञ्चाल-पौष्करसादि-प्लाक्षि-प्लाक्षायण-बाभ्रव्य-भारद्वाज-माण्डुकेय-माशकीय-मीमांसक-यास्क-वाडभीकार-वात्स-वात्स्य-

बाभ्रायणि-वाल्मीकि-वेदमित्र-व्याडि-शतबलाक्ष-मौद्गल्य-शाकटायन-शाकपूणि-शाकल-शाकल्य-शाकल्य-पितृ-स्थविर-शाङ्खायन-शैत्यायन-शौनक-सांकृत्य-सेनक-स्थौलष्ठीवि-स्फोटायन-हारीताः।

पाणिनिः—महर्षेः पाणिनेः जन्मविषये विभिन्नानि मतानि वर्तन्ते—शलातुरस्थानं पाणिनेः प्राकट्यस्थानमिति शालातुरीयः सः। नन्दसमकालिकत्वमिति केचन वदन्ति। परीक्षितजन्मानन्तरं १११५ वर्षेभ्योऽर्वाक् नन्दराज्यारम्भः श्रीमद्भागवते।

"आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्।
एतद् वर्षसहस्रन्तु शतं पञ्चदशोत्तरम्॥

मौर्ययुगस्य पाटलिपुत्रनगरं विद्यायाः प्रधानकेन्द्रमासीत् तत्र स्वीयं व्याकरणं निर्माय पाणिनि शास्त्रपरीक्षार्थं गतः। "एवं हि श्रूयते पाटलिपुत्रे शास्त्रकारपरीक्षा" राजशेखरेण काव्यमीमांसायां कथितम्। तत्र तस्य नन्देन सह मित्रता समजनि। पाटलिपुत्रस्य प्रसिद्ध शास्त्रपरीक्षासभायाः 'सभा राजा-मनुष्यपूर्वा' इति पा० सूत्रस्योदाहरणे राजसभा, महाभाष्ये 'चन्द्रगुप्तसभा' 'पुष्यमित्रसभा' इति चोल्लेखः कृतोऽस्ति। अष्टाध्यायाः प्रणेता पाणिनिः। वार्तिककारः कात्यायनः। महाभाष्यप्रणेता पतञ्जलिः। पाणिनि-विषये तत्रभवता पतञ्जलिना सुमहती श्रद्धा प्रकटिता। तद्यथा-'माङ्गलिक आचार्यो मङ्गलार्थं वृद्धिशब्दं प्रयुङ्क्ते' 'भगवतः पाणिनेराचार्यस्य सिद्धम्' 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्रं प्रणयति स्म' 'अनल्पमतिराचार्यः' इति।

पाणिनिसूत्राणि, तेषां संख्या च—सूत्रलक्षणन्तु—

अल्पाक्षरमसन्दिग्धं सारवत्विश्वतो मुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥

सूत्रसंख्याविषये—

"चतुःसहस्री सूत्राणां पञ्चसूत्रविवर्जिता।
अष्टाध्यायी पाणिनीया सूत्रैर्माहेश्वरैः सह"॥ इति।

तानि च सूत्राणि षड्विधानि—

"संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमीरितम्"।

श्रीभट्टोजिदीक्षितः—षोडशशताब्द्यां शेषश्रीकृष्णशिष्यो महामान्यः श्रीमद्भट्टोजिदीक्षितो व्याकरणस्य पूर्वप्रकाशितग्रन्थकस्य नोपकारभूयस्त्वमुपकलय्य भाष्याब्धिं प्रमथ्य च पाणिनीयव्याकरणसूत्रवृत्ति वैयाकरणसिद्धान्तकौमुदीं विरचितवान्। "लक्ष्मी व्याख्या"--यद्यपि वैयाकरणसिद्धान्तकौमुद्याः सन्ति विभिन्नानि व्याख्यानानि। किन्तु तानि ग्रन्थग्रन्थिविभेदने पर्याप्तानि न सन्तीति विचार्य सर्वतन्त्रस्वतन्त्र-वैयाकरणपतञ्जलिविद्वन्मूर्द्धन्यगुरुवर श्रीसभापतिशर्मोपाध्यायप्रणीतया अतिदुरूहविषयगाम्भीर्येसत्वेऽपि सरलताशालिन्याऽस्पावधानेनान्तेवासिहृदयं भूषयन्त्या प्राध्यापकांश्च प्रसादयन्त्याऽभिनवगवेषणापरिपूर्णया लक्ष्म्याख्यव्याख्ययोपस्कृता वैयाकरणसिद्धान्तकौमुदी मतान्तरनिरसनपूर्वकंनवनवशाब्दिकसिद्धान्तानुपहरन्ती इति प्रमोदास्पदमेतत्।

## व्याख्याकृतां परिचयः—

लक्ष्मीव्याख्यालेखकानां विद्वन्मूर्द्धन्यानां श्रीमतां गुरुवराणां श्रीसभापतिशर्मोपाध्यायानां संक्षिप्तः परिचयोऽत्र प्रस्तूयते—

जन्म शिक्षा च—पूज्यानां गुरुचरणानां जनिः सप्तत्रिंशदधिकैकोनविंशतिशततम (१९३७) वैक्रमाब्दस्य भाद्रशुक्लद्वितीयायां बलियामण्डलान्तर्गते 'उदयीछपराख्ये' ग्रामे गङ्गातटे समभूत्। एतेषां पूज्यपितृनाम पण्डितश्रीपलटशर्मोपाध्यायः, मातृनाम च सखीदेवी आसीत्। जन्मतः

षण्मासाभ्यन्तरमेव जननी दिवंगता, धात्र्या चैते पालिताः। एकदा गङ्गातटे परिभ्रमन् कश्चन विरक्तः संन्यासी एतेषां गृहं समागतः। तदानीं सभापतिनाम्ना पित्रा एते समाहूताः। महात्मना नाम श्रुत्वा तत्पिता पृष्टः–'अयमध्याप्यते नवेति'? तैरुत्तरितम्-सम्प्रति नेति। तदा संन्यासिनोक्तम्—'कश्चनात्र पण्डितो वर्तते चेद् इदानीमेव तत्सविधेऽध्येतुं प्रेषितव्योऽयम्' इति। ततः पण्डितश्रीबाबूरामशर्मोपाध्यायस्य सविधे एते

"प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये।
सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तृताम् ॥"

इति मङ्गलश्लोकमध्येतुमारब्धवन्तः। चित्रभूतायास्तद्ग्रन्थलिपेः प्रतिकृतिं लेखितुं प्रारब्धवन्तश्च। तल्लेखेनैव अक्षराणां ज्ञानं जातम्। सारस्वतव्याकरणं तेभ्यः समस्तमधीतम्। तदनन्तरं श्रीबाबूरामशर्मोपाध्यायाः काशीं गतवन्तः। ततश्चैते 'बढ़कीसेरिया' ग्रामे पण्डितरामदयादीपाठकस्य ज्योतिर्विदोऽन्तिके कियत्कालं ज्योतिषशास्त्राध्ययनं कृतवन्तः।

ततः षण्णवत्यधिकाष्टादशशततमे ( १८९६ ) ईशवीये वर्षे एतेऽध्ययनार्थं काशीं समागताः। तस्मिन् समये धौमशकटी नासीत्। काश्यां काशीनाथसंस्कृतपाठशालायां पाणिनिकल्प श्रीदेवनारायणत्रिपाठिनः सविधेऽधीत्य 'काशीराजकाशिकसंस्कृतमहाविद्यालयस्य' व्याकरणसम्पूर्णमध्यमपरीक्षा १८९८ ईशवीये वर्षे समुत्तीर्णा। ततः सर्वतन्त्रस्वतन्त्रभारतप्रसिद्धमहावैयाकरणमहामहोपाध्यायश्रीदामोदरशास्त्रिभारद्वाजसविधेऽधीयाना एते व्याकरणाचार्यपरीक्षाम् १९०८ ईशवीये वर्षे समुत्तीर्णवन्तः।

**अध्यापनम्**—ततः परं काशीस्थकाशीनाथसंस्कृतविद्यालये, गङ्गाधरकस्तूरीमलविद्यालये, यशोविजयजैनविद्यालये, रुइयाविद्यालये, हिन्दूकालेजे (महाविद्यालये) लण्डनमिशनविद्यालये चाध्यापनं कुर्वद्भिः–एतैर्महामहोपाध्यायशिवकुमारमिश्रात् पण्डितप्रवरश्रीदामोदरलालगोस्वामिनश्च मीमांसाशास्त्रम्, पण्डितश्रीनकच्छेदरामशर्मतः पण्डितश्रीकाशीनाथशर्मतश्च वेदान्तशास्त्रम्, पण्डित श्रीराधाकान्तभाशर्मतश्च न्यायशास्त्रं समधीतम्। शास्त्रान्तराण्यपि च स्वयमेवाभ्यस्तानि। साहित्यशास्त्रे समस्यापूर्तौ श्लोकनिर्माणे त्वसाधारणी प्रतिभा सम्पादिता। गुरूणां श्रीभारद्वाजानामाज्ञया अर्बुदनरेशस्य निमन्त्रणमनादृत्य एतैर्यावज्जीवं काशी एवोषिता।

अथ आंग्लविद्यालयाध्यापने विद्याह्रासं समवलोक्याधिकमपि वेतनं परित्यज्य गङ्गातटे ललघट्टे बिरलासंस्कृतमहाविद्यालये १९१४ ईशवीये वर्षे प्रारब्धमध्यापनमेभिः १९६४ ई० पर्यन्तमस्मिन्नेव महाविद्यालये सम्पादितम्।

**ग्रन्थनिर्माणकार्यम्**—१–विभिन्नदार्शनिकसिद्धान्तपर्यालोचनपरिपूर्णाया वैयाकरणसिद्धान्तलघुमञ्जूषाया विदुषामुपकारिका विशदा 'रत्नप्रभा' व्याख्या एतैः रचिता मुद्रापिता च।

२—सशब्दरत्नप्रौढमनोरमाया ग्रन्थग्रन्थिविभेदिका 'प्रभा' व्याख्या निर्मिता।

३—सनातनवैदिकधर्मविरोधिकृताक्षेपनिराकरणार्थं 'वैदिकधर्मरहस्य' नामको ग्रन्थो विरचितः।

४—भारतीयसंस्कृतपत्रिकासु समये समये दार्शनिका लेखा एतेषां प्रकाशिताः सन्ति।

५—विश्वविख्यात काशिकराजकीयसंस्कृतमहाविद्यालयीयम् एतेषां दीक्षान्तभाषणमपि समुल्लेख्यमस्ति यच्च २००७ वैक्रमवत्सरे पौषकृष्णद्वादश्यां एतैः प्रदत्तमासीत्।

६—वैयाकरणसिद्धान्तकौमुद्याः सर्वव्याख्यातिशायिनी लक्ष्मी व्याख्याऽप्येभि विरचिता।

**प्रादेशिकविधानसभादिसदस्यता**—स्वतन्त्रे भारते एतेषां विशिष्टं वैदुष्यं दृष्ट्वा उत्तरप्रदेशीयमहामान्यराज्यपालमहोदयेन राज्यविधानपरिषदः षड्वर्षपर्यन्तं सम्मानितसदस्यत्वेन ( एम. एल. सी. ) सत्कृता गुरुचरणाः। तत्र च विभिन्नाधिवेशनेषु वाराणसेयसंस्कृतविश्वविद्यालयस्थापनोपक्रमप्रस्तावः, काशीस्थगङ्गातटघट्टानां जीर्णोद्धारप्रस्तावश्चैतैः प्रस्ताविताः। प्रस्तावितयोः प्रस्तावयोः साफल्यञ्च तदानीन्तनमुख्यमन्त्रिभिः डा० श्रीसम्पूर्णानन्दमहानुभावैः समपादि।

वाराणसेयसंस्कृतविश्वविद्यालयाधिकारिभिर्विश्वविद्यालयगौरवाय सम्मानितप्राध्यापकपदं प्रदाय एते सम्मानिताः। भारतधर्ममहामण्डलेनैते महामहाध्यापकपदव्या, रामघट्टस्थसाङ्गवेदविद्यालयेन च 'व्याकरणरत्नम्' इति पदव्या भूषिताः।

तीर्थधामचतुष्टयस्य यात्रां कृत्वा चतुरशीतिवर्षवयस्काः ( ८४ ) सन्तो गुरुपादा अध्यापकान-प्यध्यापयन्तो विश्वनाथञ्चाराधयन्तो विदुषां काशिकेयानां शिरोमणितया विराजन्तेस्म।

मरणं मङ्गलं यत्र— अत्रान्तरे वृद्धावस्थाप्रयुक्तैरामयैरेते समाक्रान्ताः। माससप्तकं यावत् तैरयं वार्धक्यो व्याधिः समनुभूतः।

१९६४ ईशवीयवत्सरस्य जूनमासीय २६ दिनाङ्के २०२१ वैक्रमीयवत्सरस्य आषाढकृष्ण-चतुर्थ्यां सोमवासरे स दिवसः सम्प्राप्तः यः किल निर्विशेषंनिखिलैस्तनुभृद्भिरासाद्यते। अथ नारायणं स्मरद्भिराजन्म आचारमुखेन आदर्शचरितं शिक्षयद्भिः गुरुचरणैरपराह्णे द्विवादनसमये नेत्रज्योतिर्मुखेन पञ्चप्राणाः परब्रह्मणि समारोपिताः।

## 'लक्ष्मी' व्याख्यावैशिष्ट्यम्—

"सिद्धान्तकौमुदीव्याख्या सर्वव्याख्यातिशायिनी।
पूर्णा सर्वप्रकारेण लक्ष्मीर्वाग्विन्मनो हरेत्॥"

लक्ष्मीव्याख्याया वैशिष्ट्यं स्थालीपुलाकन्यायेनातिसंक्षेपतो वर्ण्यतेऽत्र–मुनिपदार्थविमर्शः पृ० २। कौमुदीशब्दार्थः पृ० ५। प्रत्याहारसाधनक्रमविषये—'अच्' इत्यादिप्रत्याहारसाधने ( पृ० १६ )। "स्वस्य च रूपस्य" इति व्याख्यानावसरे "वस्तुतस्तु प्रकृते न माठरपरिवेषणन्यायविषयः ( पृ० १७ )" "अनुनासिक इति निर्देशात्' इत्युपक्रम्य इत्संज्ञका वर्णा, बोधविषयत्वप्रकारक-तात्पर्याविषयत्वविशिष्टं यत् प्रत्याहारजन्यबोधविषयसमुदायघटकत्वं तदभाववन्तः"......इति। पृ० २०। मात्राशब्दार्थविचारः पृ० २१। 'आ ये' मन्त्रार्थः पृ० २३। 'अर्वाङ्' पृ० २४। 'क वोऽश्वाः' ऋग्वेदमन्त्रार्थविमर्शः पृ० २६। तत्रैव "रथानां न ये"। 'तालव दोति' पृ० ३१। "सादृश्यपदार्थविमर्शः" गवेषणापरिपूर्णोऽयं मौलिकोऽपूर्वविमर्शः (पृ०३२)। यमस्वरूपविचारः— 'वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः" इत्यत्रापि बहूनां भ्रमः। तथा हि—'वर्गेषु' इति बहुवचनेन कुचुटुतुपूनां ग्रहणम्। 'आद्यानां चतुर्णाम्' इत्य-नेन विंशतेर्वर्णानां ग्रहणम्। इत्युपक्रम्य 'यद्यपि इत्यारभ्य अपास्तमित्यन्तेनातीव व्याकरण-मधीयानानां कृते परमोपकारिणी गवेषणापूर्णा व्याख्या विहिता ( पृ० ४५ )। "वर्णानां प्रयत्नबोध-कचक्रम्' सुगमोपायेन प्रयत्नादिज्ञानार्थं प्रदर्शितम्।

सर्वभाषासु वर्णसंख्यां तत्तद्भाषाध्यायिनश्छात्रा जानन्ति। परन्तु संस्कृतभाषाध्यायिनोऽल्पा-यांस एव छात्रा भवेयुर्ये वर्णसंख्यां जानन्ति। यद्यपि पाणिनीयत्वेन प्रसिद्धायां शिक्षायाम्—

"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥
अनुस्वारो विसर्गश्च ≍क≍ पौ चापि पराश्रितौ।
दुःस्पृष्टश्चेति विज्ञेय लृकारः प्लुत एव च॥

इत्युक्त्वा पाणिनिमते 'दुःस्पृष्टः' इत्यनेन 'अग्निमीळे' इत्यादौ डकारस्थानिको यो ळकारः स दुःस्पृष्टशब्देन गृह्यते, प्लुतलृकारश्च। द्वयोः सम्मेलने चतुःषष्टिर्वर्णाः। दुःस्पृष्टस्य त्यागे त्रिषष्टिः। परन्तु पाणिनिना कस्मिंश्चिदपि सूत्रे दुःस्पृष्टस्य ळस्य, चतुर्णां यमानां चोपादानं न कृतम्। अतस्तन्मतेऽष्टपञ्चाशदेव वर्णा इति गुरुचरणाः उपाध्यायाः। एवञ्च पाणिनिमता वर्णा कतीत्यपि छात्

बोधनीयाः। वैयाकरणनये वर्णसंख्याविमर्शो ( पृ० ४८ ) लक्ष्मीव्याख्यायां द्रष्टव्यः। अत्र 'शम्भुमते मताः' इत्यत्र 'सम्भवतो मताः' इति पाठो व्याकरणदर्शनभूमिकायां महावैयाकरणपण्डितप्रवर श्रीरामाज्ञापाण्डेयाः। मन्ये पुनरुक्तिवारणाय एष पाठो विन्यस्तः स्यात्।

"ऋलृवर्णयो रिति" (परिशि०)। 'अणुदित्सवर्णस्य चाप्रत्ययः' संज्ञासूत्रमिदमित्यबोधानाख्याता नैव जानन्ति अत्र का संज्ञा कश्च संज्ञी इति। तत्र द्रष्टव्यं पृ० ५१, ५२।

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कथ्यते"॥ इति।

व्याकरणशास्त्रे परिसंख्यैव नियमपदेन व्यवह्रियते। एवञ्च समासग्रहणं परिसंख्यारूपनियमपरं तेन वाक्यस्य प्रातिपदिकसंज्ञावारणेऽपि समासस्य प्रातिपदिकसंज्ञारहितत्वं कुतो नेति प्रश्ने द्रष्टव्यो विशेषेण गुरुचरणानामभिप्रायः पृ० ५८। भूवादिविचारः पृ० ६० अत्र भ्वादिगणपठिताः शब्दा गृह्यन्ते। पृ०१८६ चतुर्मुख इति। द्रव्यपदार्थविमर्शः पृ०६३ "न वेति विभाषा" निषेधविकल्पयोः संज्ञित्वम् पृ० ६७। विभाषा संज्ञा। त्रिविधा विभाषा पृ० ६६ बालमनोरमादिमतखण्डनम् पृ० ६७ संयोगसंज्ञाविषये विशिष्टविमर्शः पृ० ७४। "इको यण् अचि" पृ० ९३ स्थानिवत् पृ० ९७ आरोपश्च सप्तविधः। पृ० १०३ पूर्वविधिशब्दे समासद्वयविमर्शः। पृ० ११६ प्रतिषेधश्च त्रिविधः। पृ. ११७ पावकशब्दार्थः। १३७ पृ० कुशोदार्थः। दशनशब्दविषये उपाध्यायमतम्। पृ० १४४ मयूरव्यंसकादिकल्पना व्यर्था" इति उपाध्यायाः। पृ० १६० अभिवादनप्रकारः। पृ० १७७ अर्थग्रहणं किम्। पृ० १९५ यवलपर इत्यत्रापेक्षाबुद्धिविमर्शः। पृ० १९८, १९९ क्रमो ह्रस्वादित्यर्थविचारः। पृ० २०१ पदान्ताद्वा इत्यत्र कस्यागमित्वम्? पृ० २१० वस्तुतस्तु पञ्चसन्धित्वं दुरुपपादम्। पृ० २१५ अप्रत्ययपदार्थविचारः, पृ० २२२ वोजसमौट् इति न्यासे कानि दूषणानि। पृ० २३७ विप्रतिषेधे' इति परिभाषासूत्रमिदम्। पृ० २३९ 'एतत्तदोः' इति सूत्रार्थविमर्शः। पृ० २४१, २४४ परिशिष्टांशः—पृ० २४५ बोद्धशब्दस्य वाचकत्वम्, बोद्धार्थस्य वाच्यत्वम्। पृ० २४८ अधातुरिति। पृ० २५१, २५२ समासग्रहणं नियमार्थम्। पृ० २६० 'वस्तुतस्तु पञ्चकं प्रातिपदिकार्थः' इत्यारभ्य 'पार्थ एव धनुर्धरः' इत्यादौ नाव्याप्तिरिति। २६६ स्वरूपाणाम् इत्यर्थव्याख्यानविमर्शः। पृ० २७४ वस्तुतस्तु इत्यारभ्य लभ्यते पर्यन्तम्। पृ० २८२-२८३ विधिरिति किम्। पृ० २८६-२८८ 'सुपि च' इति सूत्रं मास्तु। पृ० २९२ बहुवचने किम्। पृ० २५५ 'वस्तुतस्तु' इति। पृ० २९९ 'नुटि' इत्येव सूत्रमस्तु। पृ० ३०२ ह्रस्वपदार्थविमर्शः। पृ० ३०३ बहुव्रीहिर्द्विविधः। पृ० ३१६ अत्र शेखरकाराः। पृ० ३२१, ३२२, ३३३, पूर्वादिदिग्विमर्शः। आकाङ्क्षाविषये उपाध्यायमतम्। भारतवर्षविषये श्री बालकृष्णपञ्चोलिमतम्—विष्णुपुराणे द्वीपविचारः। पृ० ३२९ पाणिनि-कात्यायन पतञ्जलीनां न परस्परं वैमत्यम्। पृ० ३३२ उपाध्यायास्तु 'स्वविशिष्ट. स्वग्रहणेन गृह्यते' इति। पृ० ३४२ अखण्डपदत्वविमर्शः, पृ०३४८ 'अत्रेदं चिन्त्यते' इत्यतः 'शब्दस्यैव विशेष्यत्वात्' इति उपाध्यायाः। पृ०३४७ प्रत्ययलोपे' इत्यस्य विधित्वनियमत्वविमर्शः। पृ० ३७७' न लुमता' सूत्रार्थ विचारः, ३८१पृ० स्वतन्त्रमुपाध्यायमतम्। पृ० ३६४ तत्त्वबोधिनीकारमतखण्डनम्। पृ० ३९६ भाष्यकारमतपर्यालोचनम्। 'सूत्रत्रयी सार्थकी' इति उपाध्यायाः। पृ० ४०६ यौगिके यण् चिन्त्य इति उपाध्यायाः। ४२०, ४२१ प्रत्युदन्यासविमर्शः। शास्त्रविशिष्टत्वम्-प्रतिपदोक्तत्वम्। पृ० ४२७ उपसर्जनलक्षणम्। लक्षणसमन्वयश्च। पृ० ४३९ नागेशमतम्। पृ० ४५८, ४५९ भाषितपुंस्कशब्दार्थः तत्परिष्कारश्च। पृ०४६४ सन्ध्यक्षरविषये शेखरकारमतम्। ४६५ सन्निपातपरिभाषाप्रयोज्यसंकोचे माधवमतम्। इत्यजन्तनपुंसकलिङ्गान्तप्रथमभागस्य केचन विषयाः प्रदर्शिताः। द्वितीयोऽपि भागो दृष्टिपथं शीघ्रं भविष्यति।

प्राचीनार्वाचीनतत्तत्सिद्धान्तोपलक्षितानुपलब्धगवेषणापूर्णव्याख्यासंवलितग्रन्थरत्नानां प्रकाशनाय बद्धपरिकरेण भारतप्रसिद्ध—श्रीमोतीलाल बनारसीदास-पुस्तकप्रकाशनासंस्थानाध्यक्षश्रीसुन्दरलाल-

श्रेष्ठिवर्य्येण मुद्रयित्वा प्रकाशितेयं लक्ष्मीव्याख्यासंवलिता सिद्धान्तकौमुदी इत्यनेकाशीर्भिस्तमभिवर्द्धयामः। एतस्य ग्रन्थरत्नस्य सम्पादनकार्ये पण्डितप्रवरश्रीजितेन्द्रियाचार्याः, पं० श्रीसत्यनारायण खण्डूड़ी साहित्याचार्याः, साहित्याचार्यश्रीजनार्दनपाण्डेयमहोदया अतीवोपकृतवन्त इति धन्यवादार्हाः।

छात्राणामध्यापकानाञ्चाध्यापने नितरामासक्तस्य मे समयाल्पत्वान्मुद्रणदोषात्, भ्रान्तेर्वा सम्पादनकार्ये यास्त्रुटयोऽत्र सम्भवेयुस्ताः परिशोध्य सूचयन्तु सुधिय इति सप्रश्रयं निवेदयते—

बालकृष्णशर्मपञ्चोली
( काशीस्थराजकीयसंस्कृतमहाविद्यालयस्य, वाराणसेयसंस्कृतविश्वविद्यालयस्य पूर्वप्राध्यापकः )

दि० ५-२-६६
माघ पौर्णमासी

---

# विषयानुक्रमणिका

* श्रीगणेशाय नमः *

# वैयाकरणसिद्धान्तकौमुदी

## अथ संज्ञाप्रकरणम् ।

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ १ ॥

पण्डितप्रवरश्रीसभापतिशर्मोपाध्यायविरचिता

### * लक्ष्मीव्याख्या *

यदङ्घ्रिपाथोजरजोऽनुरञ्जनाद्
अव्याहता शास्त्रवने विभाति धीः ।
प्रणम्य तान् नम्रशिराः सभापति-
र्मुदे मनीषाधनिनां तपोजुषाम् ॥ १ ॥

तनोति सिद्धान्तविभासि कौमुदी-
व्याख्यावचः शास्त्रपयोधिजां श्रियम् ।
प्रयातु भव्याय शुभो ममोद्यमो
विभुं भवं प्रार्थयते नताननः ॥ २ ॥

सिद्धान्तकौमुदीव्याख्या सर्वव्याख्यातिशायिनी ।
पूर्णा सर्वप्रकारेण लक्ष्मीर्वाग्विन्मनो हरेत् ॥

क्षेत्रसेकाय कृतायाः कुल्याया इवान्यार्थं कृतस्य मङ्गलस्यानुद्देश्यक्शास्त्रादिमङ्गलसिद्धिरूपा "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्ति, आयुष्मत्पुरुषाणि च अध्येतारश्च मङ्गलयुक्ता यथा स्युः" इति 'भूवादयः' ( १–३–१ ) इति सूत्रस्थभाष्ये बोधित-शास्त्रगतमङ्गलाद्यवयवकत्वस्य परिपालनाय प्रारब्धुमिच्छाविषयीभूतग्रन्थस्य निर्विघ्नपरिसमाप्तये प्रचाराय शिष्याध्यापकयोरनुषक्तो मङ्गलाय 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायेन स्वकीयग्रन्थनिर्माणसमये शिष्या अपि मङ्गलं कुर्युरिति बोधनाय च भट्टोजिदीक्षितः स्वनिर्मितं मङ्गलं ग्रन्थावयवीकरोति–मुनित्रयमिति । एतेन 'कृतेऽपि मङ्गले तस्य ग्रन्थादौ लेखनं गौरवग्रस्तमित्य-पास्तम्, तथा सति शिष्याणामुक्तशिक्षाया असिद्ध्यापत्तेः । मङ्गलञ्चात्र निर्विघ्नसमाप्तिप्रयोजकवाक्य-विशेषरूपम् । अत एव 'मङ्गलादीनि शास्त्राणि' इति भाष्यमपि संगच्छते । शास्त्रस्य महावाक्यरूपतया तदाद्यवयवमङ्गलस्यापि शास्त्ररूपत्वौचित्यात् ।

मङ्गलं त्रिविधम्—आशीर्वादात्मकम्, नमस्कारात्मकम्, वस्तुनिर्देशात्मकञ्च । तदाद्यम्–आशिषः = अभीष्टप्रार्थनस्य वादः–उद्यतेऽनेनेति वादः = वाक्यम् । अभीष्टार्थप्रार्थनबोधकवाक्यरूपम् ।

द्वितीयं नमस्कारात्मकम् । नमस्कारः = नमस्कारकर्तुः स्वापेक्षयोत्कर्षबोधनानुकूलः करशिरः-संयोगविशेषादिरूपो व्यापारः । तद्बोधकवाक्यात्मकम् । यद्वा नमस्कारः = आशीर्वाचनानुकूलः करशिरःसंयोगविशेषादिरूपः, कराभ्यां पादस्पर्शादिरूपो वा व्यापारः । तद्बोधकवाक्यात्मकम् । स च नमस्कारस्त्रिविधः—कायिको वाचिको मानसिकश्चेति । तत्र कायेन कृतः कायिकः ।

सोऽपि त्रिविधः। यत्किञ्चिदङ्गकृतोऽष्टाङ्गकृतश्च। कराभ्यां चरणस्पर्शादिना कृत आद्यः। द्वितीयः— 'जानुभ्यां च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः॥' इत्युक्तलक्षणः। वाचिकस्तु 'विघ्नेश्वराय नमः' इत्यादिरूपया वाचा बोधितः। मानसिकस्तु मनोमात्रगोचरः।

वस्तुनिर्देशात्मकं मङ्गलञ्च—नमस्कार्य्यदेवतादिगुणगणवर्णनात्मकम्। यथा—'श्रीमाहन्ती-चरणेषु यैर्महर्षिभिः' इत्यादि।

मुनीति—मन्यन्ते=वेदशास्त्रादितत्त्वमवगच्छन्ति ये ते मुनयः = साधक-बाधकप्रमाणोपन्यास-रूपयुक्तिभिः सत्यासत्यावधारणरूपमननशीलाः। तदुक्तम्—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते॥

( गी. अ. २–५६ )

शाके पत्रे फले मूले वनवासे रतिः सदा। नियतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते॥

( अत्रि. स्मृ. श्लो. ३७२ )

मौनाद्ध मुनिर्भवति नारण्यवसनान्मुनिः। स्वलक्षणं तु यो वेद स मुनिः श्रेष्ठ उच्यते॥

( भारत. उद्यो. प. सनत्सुजा. अ. ४३. श्लो. ६० )

अन्तर्बहिश्च मननात्कुरुते कर्म नित्यशः। मौनी शश्वद्देशकाले यो वै स मुनिरुच्यते॥

( गणेशख. ३ अ. ३५ श्लो. ३१. )

अकृष्टफलमूलादी वनवासरतिः सदा। कुरुतेऽहरहः श्राद्धमृषिर्विप्रः स उच्यते॥

( चाणक्यनीतिद० अ. ११ श्लो. ११ )

वेदानुवचनेनापि यज्ञेन सकलेन च। दानेन तपसा देवाँस्तथैवानशनेन च।
वेत्तुमिच्छति यो विद्वान् स मुनिर्नेतरो जनः॥ ( स्कन्द. वैभव. ख. अ. १० श्लो. ४२ )
"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति"

( बृ. उ, ४ अ. ४ ब्रा. २२ म० ) इति।

'सर्वधातुभ्य इन्' इत्यत इन् इति, 'इगुपधात् कित्' इत्यतः किदिति चानुवर्त्य-'मनोरुच्चो-पधायाः'(उ. ४ पा. १२३ सू.) इत्युणादिसूत्रेण मन्धातोः कर्तरीन्प्रत्यये उपधाभूतस्याकारस्योकारादेशे मुनिरिति सिध्यति।

त्रयमिति—त्रयोऽवयवा अस्य समुदायस्य ( अवयविनः ) इति त्रयम् = त्रिसंख्य-काक्यवघटितसमुदायः। 'तदस्य संजातम्' ( ५-२-३६ ) इत्यतः 'तदस्य' 'समर्थानां प्रथमाद्वा' इत्यधिकृत्य च ( ४-१-८२ ) 'तद् = प्रथमान्तात्सूत्रे प्रथमोच्चारितवोध्यादवयवार्थे विद्यमानात्संख्या-वाचकादस्येति षष्ठ्यर्थेऽवयविनि वा तयप्' इत्यर्थकेन 'संख्याया अवयवे तयप्, ( ५-२-४२ ) इति सूत्रेण प्रथमान्तात् त्रिशब्दात्तयपि 'द्वित्रिभ्यां तयस्यायज्वा' ( ५-२-४३ ) इति सूत्रेण तयपोऽयजादेशे 'यस्येति च' ( ६।४।१८४ ) इति त्रिशब्देकारलोपे त्रयम् इति।

अत्र प्रकृतेरवयववाचकत्वादवयवस्यावयविनि नित्यसाकाङ्क्षत्वादस्येति षष्ठ्यन्तार्थोऽवयवी गृह्यते इत्यवयवी तयप्प्रत्ययार्थः। 'मुनीनां त्रयम्' इति विग्रहे त्रित्वसंख्याविशिष्टावयव-घटितावयविरूपत्रयशब्दार्थैकदेशे त्रित्वे मुनिपदार्थस्य षष्ठ्यर्थनिष्ठत्वसम्बन्धेनान्वये मुनिनिष्ठत्रित्व-विशिष्टा मुनय एवेति त्रिमुनिघटितसमुदायो मुनित्रयशब्देनोच्यते।

यद्वा, 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायेन त्रित्वस्य पदार्थैकदेशतयाऽ-न्वयासम्भवेन मुनिपदार्थस्य त्रयपदार्थे एव घटितत्वसम्बन्धेनान्वयः। एतेन मुनिपदार्थस्याभेदेन

त्रिपदार्थेऽन्वये मुनीनामिति षष्ठ्यनुपपत्तिरभेदे षष्ठ्यभावादिति, 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न' इति वार्त्तिकेन तयपोऽसिद्धिरिति च परास्तम्, 'राजपुरुषः सुन्दरः' इतिवत् विशेष्यभूतसमुदाये मुनेर्विशेषणत्वे तद्धितवृत्तौ बाधकाभावात्। अत एव 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' ( २-१-५६ ) इति सूत्रे 'सामान्याप्रयोगे' इति चरितार्थम्। अन्यथा 'पुरुषो व्याघ्र इव शूरः' इत्यत्र विशेष्यभूते उपमिते पुरुषे सामान्यभूतस्य शूरपदार्थस्य विशेषणत्वे 'सविशेषणानाम्' इति निषेधेन समासाप्राप्त्या 'सामान्याप्रयोगे' इति व्यर्थमेव स्यात्।

यत्तु त्रिशब्दस्य त्रयशब्दस्य च संख्यारूपगुणवाचकतया 'पूरणगुण' ( २-२-११ ) इति षष्ठीसमासनिषेधः स्यादिति तन्न, प्राचीनमते समानानुपूर्व्या गुणमात्रे सन् यो गुणिनि वर्तते तस्यैव ग्रहणात्। शेखरकारमते तु गुणमात्रवाचिनः शुक्लत्वादेरेव गुणशब्देन ग्राह्यतया त्रिशब्दादेः 'आदशतः संख्याः संख्येये' इति वचनाद् द्रव्यमात्रवाचित्वेन तन्निषेधाप्राप्तेः, 'शतसहस्रान्ताच्च' ( ५-२-११९ ) इति सूत्रे 'निष्कानां शतेन क्रीतः=नैष्कशतिकः' इत्यादेः, 'योजनं गच्छति' ( ५-१-७४ ) इति सूत्रे *'क्रोशशतयोजनशतयोरुपसंख्यानम्'* इति वार्तिके षष्ठ्यन्तस्य गुणेन समासदर्शनात् 'क्रौशशतिकः,' 'यौजनशतिक': इत्यादिप्रयोगोपलब्धेश्च गुणेन षष्ठीसमासनिषेधा-नित्यत्वस्य मुनित्रयाभिमतत्वाच्च, 'मुनित्रयम्' इत्यत्र समासे बाधकाभावात्। अवयवभूतास्त्रयो मुनयश्च पाणिनि-कात्यायन-पतञ्जलयः।

तत्र पणनं पणः=स्तुतिः। *'घञर्थे कविधानम्'* इत्यनेन स्तुत्यर्थकपणेर्भावे कप्रत्यये पण इति। पणोऽस्त्यस्य स्वनिरूपितकर्मतावत्त्वसम्बन्धेनेति पणी=स्तुत्यः कश्चिन्मुनिः। 'अत इनि-ठनौ' इतीनि प्रत्यये पणीति। पणिनो युवापत्यं पाणिनिः। पणिनः षष्ठ्यन्ताद् 'गोत्राद्यून्य-स्त्रियाम्' ( ४-१-९४ ) इति सूत्रेण गोत्रप्रत्ययान्तादेव यूनि प्रत्यय इति नियमात् 'तस्यापत्यम्' ( ४-१-९२ ) इत्यनेन पाणिनो गोत्ररूपे तृतीयापत्येऽणि पाणिन इति। ततः 'पाणिनशब्दात्' यूनि 'अत इञ्' ( ४-१-९५ ) इतीञि प्रत्यये पाणिनिरिति साधु। न तु पणिन्शब्दादणि 'नस्तद्धिते' ( ६-४-१४४ ) इति टिलोपे पाणिन इति न स्यात्, 'गाथि-विदथि-केशि-गणि-पणिनश्च' ( ६-४-१६५ ) इत्यनेन प्रकृतिभावविधानाट्टिलोपाप्राप्तेः।

कात्यायनः=वररुचिनामा व्याकरणवार्तिककर्त्ता मुनिः। वार्तिकन्तु—सूत्रे उक्तानुक्तदुरुक्तार्थ-व्यक्तिकारको वाक्यविशेषः। कतस्य युवापत्ये विवक्षिते 'गर्गादिभ्यो यञ्' ( ४-१-१०५ ) इत्यनेन गोत्रापत्यरूपे तृतीयादौ विवक्षिते यञि कात्य इति। ततः 'यञिञोश्च' ( ४-१-१०१ ) इति चतुर्थापत्ये युनि फक्प्रत्यये कात्यायन इति। यद्वा 'कात्यायन' इति पित्रादिसंकेतितं नाम, न तु यौगिकमित्यन्ये।

पतञ्जलिः=गोनर्दनामकपर्वतरूपदेशे सन्ध्याकरणसमये कस्यचिदृषेरञ्जलेः सर्परूपेण पतित इत्यैतिह्यम् अस्मर्यमाणकर्तृकपरम्परोपदेशमात्रम्। तथा च 'अञ्जलेः पतितः' इति विग्रहे 'मयूरव्यं-सकादयश्च' इत्यनेन मयूरव्यंसकादिषु तथापाठेन समासे निपातनादितशब्दस्य इत्-शब्दस्य वा लोपे जश्त्वाभावे च पतञ्जलिरिति साधु। यद्वा—नमस्कारकर्मत्वेन हेतुना 'पतन्तोऽञ्जलयो यत्र' इति विग्रहे बहुव्रीहौ शकन्ध्वादित्वाट्टेः पररूपे निपातनाज्जश्त्वाभावे पतञ्जलिः पाणिन्यष्टाध्याय्या भाष्यकर्त्ता शेषावतारो मुनिः। प्रथत्वे त्रय एते मुनयो मुख्यत्वेन व्याकरणे प्रमाणभूताः परिगण्यन्ते। तत्राप्ययोनिजत्वात्, शेषावतारत्वात्, योगसूत्रप्रणयनेन सर्वज्ञत्वाच्च पतञ्जलेः सर्वापेक्षया प्रामाण्यम्।

'मुनित्रयम्' इत्यत्र नमःशब्दयोगे नमः स्वस्ति स्वाहाऽऽदिशब्दार्थनिरूपितसाक्षात्सम्बन्धार्थ-वाचकप्रातिपदिकाच्चतुर्थीत्यर्थकात् 'नमः-स्वस्ति-स्वाहा-स्वधा' ( २-३-१६ ) इत्यनेन चतुर्थी तु न, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति भाष्योक्त्या सर्वसम्बन्धानां क्रियामूलकत्वे-

नान्तरङ्गमूलिकया वाक्ये क्रियायाः प्राधान्येन तन्निमित्तककारकविभक्तेः 'प्रधानकार्य्यं सर्वतो बलवत्' इति न्यायप्रमाणिकया वा परिभाषया नमःपूर्वककृधात्वर्थोत्कर्षबोधरूपफलाश्रयतया आशीर्वादवचनरूपफलाश्रयतया वा मुनित्रयशब्दाद्द्वितीयैव । न च 'नमस्कृत्य' इति कृदन्तयोगे परत्वाद् द्वितीयां बाधित्वा 'कर्तृकर्मणोः कृति' (२-३-६५) इति षष्ठी स्यादिति वाच्यम्, 'न लोकाव्यय' (२-३-६९) इत्यनेनाव्ययकृदन्तयोगे षष्ठीनिषेधात् । 'नमस्कृत्य' इत्यत्र समासे जहत्स्वार्थवृत्तिस्वीकारेण नमः-शब्दस्यानर्थकतया चतुर्थी नेति तु वक्तुमशक्यम्, 'नमस्करोति देवान्' इत्यत्र वृत्तेरभावेन चतुर्थ्या दुर्वारत्वात् ।

यत्तु माधवादयः—नमःशब्दो द्विधा स्वरादिरूर्य्यादिश्च । तत्र 'नमः स्वस्ति' इति सूत्रे स्वस्त्यादिसाहचर्य्यात्स्वरादिगणपठितस्यैव ग्रहणेन गतिसंज्ञकनमःशब्दयोगे न चतुर्थीति, तन्न, 'रावणाय नमस्कुर्य्यात्' इति भट्टिप्रयोगे चतुर्थ्यनापत्तेः । नचात्र स्वरादिगणस्थ एव नमःशब्द इति चतुर्थी सुलभा, स्वरादेर्गतित्वाभावेन सत्वानापत्तेः । किञ्च स्वस्तिसाहचर्य्येण चतुर्थीवारणन्तु न युक्तम् , विनिगमनाविरहादजन्तत्वेन, अक्षरसमाम्नायिकवर्णान्तत्वेन वा साहचर्य्यग्रहणे 'देवेभ्यो नमः' इत्यत्र चतुर्थ्यनापत्तिः, नमःशब्देऽप्राजन्तत्वाक्षरसमाम्नायिकवर्णान्तत्वाभावात् ।

केचित्तु 'नमो वरिवस्' ( ३-१-१९ ) इति सूत्रे भाष्ये 'नमस्यति' इत्यत्र चतुर्थीमाशङ्क्य 'उपपदविभक्तेः' इति न्यायेन समाहितम् । द्योतकोर्य्यादिगतनमःशब्दप्रयोगे चतुर्थ्यप्रवृत्तौ भाष्यकृदुक्ताशङ्कासमाधी विरुद्धयेताम् । 'रावणाय नमस्कुर्य्यात्' इत्यादिषु चतुर्थ्याः कर्मत्वेनाविवक्षया प्रकारान्तरेण वोपपत्तिर्वाच्येति तत्त्वम् ।

मुनित्रयशब्दस्य त्रिमुनिघटितसमुदायपरतया समुदायस्य नमस्कारकर्मत्वेऽपि प्रत्येकमुनेः नमस्कारो न जात इति तु नाशङ्कनीयम्, समुदायस्य प्रत्येकानतिरिक्तत्वेन पाणिन्यादेरपि नमस्कारसिद्धेः ।

**नमस्कृत्येति**—नमः शब्दस्योर्य्यादित्वाद् 'ऊर्य्यादिच्विडाचश्च' ( १-४-६१ ) इति गतिसंज्ञायां कृधातोः 'समानकर्तृकयोः पूर्वकाले' प्राचां क्त्वा, ( ३-४-२१ ) 'इति क्त्व' 'कुगति-प्रादयः' इति तत्पुरुषसमासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशे तुकि 'नमस्पुरसोर्गत्योः' ( ८-३-४० ) इति विसर्गस्य जिह्वामूलीयादिकं बाधित्वा सत्वे 'नमस्कृत्य' इति साधु ।

**तदुक्तीरिति**—तच्छब्दस्यात्र बुद्धिस्थार्थपरामर्शकत्वेन प्रत्यासत्त्या च मुनित्रयस्य ग्रहणम् । तथा च तस्य=मुनित्रयस्योक्तयस्तदुक्तय इति 'कर्तृकर्मणोः कृति' ( २-३-६५ ) इति कर्मषष्ठ्या 'षष्ठी' इतिसूत्रेण षष्ठीतत्पुरुषः । न च 'उक्तीः' इत्यत्र भावे क्तिप्रत्ययेन कर्तुः कर्मणश्चानुक्ततया 'उभयप्राप्तौ कर्मणि' (२-३-६६) इति नियमेन कर्तरि षष्ठ्यप्राप्तिः, उक्तौ तत्पदबोध्यमुनित्रयस्य कर्तृत्वादिति वाच्यम्, प्रयुज्यमानादेव प्राप्तेः सम्भवेन प्राप्तिग्रहणेन यत्र कर्तुः कर्मणश्चोभयोः प्रयोगस्तत्रैव निषेधप्रवृत्त्या 'तदुक्तीः' इत्यत्र तदित्यनेन कर्तृमात्रस्यैव प्रयोगेण कर्तुः शेषत्वेन विवक्षया वा 'उभयप्राप्तौ' इति नियमाप्राप्तेः । नचैवमपि त्रयपदबोध्यमुनिसमूहस्यैव प्रकृते तत्पदार्थतया मुनिसमुदायकर्तृकत्वस्योक्तौ बाधिततया 'तदुक्तीः' इत्यसङ्गतमिति वाच्यम्, अवयवगतकर्तृत्वस्य समुदाये आरोपेण तत्सङ्गतेः सुवचत्वात् । 'परिभाव्य' इति कृदन्तयोगे 'कर्तृकर्मणोः' इति 'तदुक्तीः' इत्यत्र षष्ठ्यापत्तिस्तु न, 'न लोकाव्यय' इति निषेधात् ।

**परिभाव्येति**—यदा तदुक्तीरित्यत्र तच्छब्देन मुनित्रयस्य परामर्शस्तदा 'परिभाव्य' इत्यस्य विचार्य्य इत्यर्थः । तथा च मुनित्रयोक्तिविचारपूर्वकत्वादस्य ग्रन्थस्य प्रामाणिकत्वं ध्वनितम् । न च परिपूर्वकभूधातोस्तिरस्कारार्थतया विचार्य्य इत्यर्थोऽप्रामाणिकः, "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' इति योगसूत्रे, 'मनसा परिभाव्य' इति नैषधे च विचारार्थकत्वस्य दर्शनेन तदन्तभूधातोर्विचारार्थकत्वे बाधकाभावात् । किञ्च, 'परौ भुवोऽवज्ञाने' इति

सूत्रे 'अवज्ञाने' इति ग्रहणेन 'धातूनामनेकार्थः' इति ज्ञापनेन विचारार्थकत्वाद्वतेः । अन्यथा परिपूर्वक-भूधातोरवज्ञानार्थत्वस्याव्यभिचरिततया अवज्ञानग्रहणस्य व्यावर्त्याभावेन वैयर्थ्यमेव स्यात् । नच परि-भवतेरेव तिरस्कारार्थकत्वेन हेतुमति णिचि 'परिभाव्य' इत्यस्य तिरस्कार्येत्यर्थापत्तिः, चौरादिकभवतेः स्वार्थे णिचि ण्यन्तस्यापि परिभवतिना समानार्थकत्वात्, भवतेर्विचारविषयीभवनार्थकत्वेनाकर्मकतया हेत्वर्थे णिच्यपि 'विचार्य' इत्यर्थस्यौचित्यात् । यत्तु—'अनादरः परिभवः परिभावस्तिरस्क्रिया' । इति कोशे परिभव-परिभावयोरेवोपादानाद् अप्प्रत्ययान्त-घञन्तयोरेव तिरस्कारार्थकत्वमिति तन्न, परिभवतेरपि जगत्प्रसिद्धतिरस्कारार्थकत्वानापत्तेः । कोशे उभयोः पाठस्तु 'परौ भुवः' इत्यनेना-पो बाधेन घञि 'परिभवः' इत्यस्यासाधुत्वभ्रमनिवृत्तये 'परौ भुवः' इत्यत्र 'विभाषाङि रुप्लुवोः' इत्यतो विभाषानुवृत्त्योभयोः साधुत्वात् । 'मनसा परिभाव्य' इति नैषधप्रयोगदर्शनादप्रयुक्त-त्वदोषोऽपि निरस्तः ।

यद्वा 'परिभाव्य' इत्यस्य तिरस्कृत्येत्यप्यर्थः । तथा च 'तदुक्तोः' इत्यत्रत्यतच्छब्देन बुद्धिस्थानां प्राचां माधवादीनां परामर्शः । तेषाम्=प्राचाम् उक्तयस्तदुक्तयस्तास्तदुक्तीस्तिरस्कृत्येत्यर्थः । एतेन प्राचीनैः काशिकादिग्रन्थैरेव कौमुदीप्रतिपाद्यार्थस्य गतार्थत्वात्कौमुद्या निर्माणं व्यर्थमित्यपास्तम्, प्राचीनोक्त-भाष्यादिविरुद्धार्थखण्डनांशस्य प्राचीनग्रन्थेष्वभावात् ।

वैयाकरणेति—व्याक्रियते = व्युत्पाद्यते = प्रकृतिप्रत्ययविभाग—तत्तदर्थविभाग—तत्तदन्व-यबोधविषयकज्ञानमनेनेति व्याकरणम् = शब्दानुशासनशास्त्रम् = प्रकृति-प्रत्ययादिविभाग—तत्तदर्थविभाग—तत्तदन्वयबोध ( शाब्दबोध ) विषयकपदार्थज्ञानरूपा या व्युत्पत्तिस्तत्साधनं शास्त्र-मिति यावत् । उक्तञ्च—

विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतः ।
ज्ञाप्यन्ते येन तच्छास्त्रमत्र शब्दानुशासनम् ॥

तथाच व्याकृतिः—व्युत्पत्तिरित्यनर्थान्तरम् । व्याङ्पूर्वकात्कृधातोः करणे ल्युटि व्याकरणं साधु । व्याकरणमधीयते विदन्ति वेति वैयाकरणाः । द्वितीयान्ताद् व्याकरणशब्दात् 'तदधीते तद्वेद' इत्यनेनाध्ययनकर्तरि ज्ञानकर्तरि वा अणि 'न य्वाभ्याम्' इति पदान्तयकारात्पूर्वमैजागमे वैयाकरणाः । तेषां सिद्धान्ताः—सिद्धाः = प्रमाणैर्निर्णीताश्च तेऽन्ताः = अर्था इति सिद्धान्ताः प्रमाणतो निर्णीतार्था इति यावत् ।

यद्वा सिद्धः = निष्पन्नोऽन्तः = निश्चयो येषामर्थानां ते सिद्धान्ताः = निश्चितार्था इति यावत् तेषां कौमुदी—कौ=पृथिव्यां मोदन्ते जना अनेनेति कर्तरि बाहुलकात्करणे वा क्विपि 'इगुपध' इति के वा कुमुद्, कुमुदं वा=कैरवम् ( कोंई ) चन्द्रो वा तस्येयमित्यर्थे 'तस्येदम्' इत्यणि ङीपि । कौमुदी=ज्योत्स्ना 'चन्द्रिका, कौमुदी ज्योत्स्ना' इत्यमरात् । चन्द्रिका हि कुमुदानि विकासयतीति विकसद्विकासकभावसम्बन्धस्तयोः । कौमुदीपदं त्वसदृशे ग्रन्थे लाक्षणिकम् । सादृश्यप्रयोजको धर्मः—१—प्रकाशकत्वम्, २—आह्लादकत्वम्, ३—तापशमकत्वम्, ४—तापजनकत्वं वा । चन्द्रिका यथा घटपटादीनि वस्तूनि प्रकाशयति, तथाऽयं ग्रन्थोऽपि प्रकृतिप्रत्ययादिशब्दस्वरूपाणि तदर्थांश्च प्रकाशयति, चन्द्रिका यथा रविकिरणतप्तान् आह्लादयति, तप्तानां तापञ्च शमयति, तथाऽयमपि भाष्यादिदुरूहग्रन्थरहस्यानव-बोधेन तप्तान् वैयाकरणसिद्धान्तानां सुखावबोधनेनाह्लादयति, तापं च शमयति, चन्द्रिका यथा विरहिणां चौराणाञ्च तापं जनयति तथाऽयमपि स्थूलबुद्धीनाम् अनधीतलघुकौमुदीकाव्यकोशादिग्रन्थानाञ्च सुखानवबोधेन तापं जनयतीत्युक्तधर्मैः सादृश्यं सुवचम् ।

नच कौमुदीशब्दस्य त्वसदृशे ग्रन्थे लक्षणायां पुंस्त्वापत्तिः, ज्योत्स्नाग्रन्थयोरुपमानोपमेयभावे विभिन्नलिङ्गत्वेन वैषम्यप्रतीतिरूपदोषवारणायोपमानगतलिङ्गत्वस्य ग्रन्थे आरोपेण स्त्रीलिङ्गत्वस्यौचित्यात्, 'गङ्गायां घोषः' इतिवत् । यद्वा, सादृश्यमूलकज्योत्स्नात्वारोपेण ग्रन्थस्यापि ज्योत्स्नात्वेनैव वाच्यतया

ज्योत्स्नात्वावच्छिन्नार्थे च नित्यस्त्रीत्वतया ग्रन्थेऽपि स्त्रीत्वापत्तेः, कौमुदी चेयं सूत्रविवृतिरिति सूत्रविवृते-रेवोपमेयत्वेन ग्रन्थेऽपि स्त्रीत्वापत्तेश्च। ननु सिद्धस्यैवार्थस्य संनिकर्षसम्भवेन कौमुद्या असिद्धत्वेन संनिकृष्टार्थविषयकेदमा बोधासम्भवेनेयमिति निर्देशासङ्गतिः। तदुक्तम्—

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥

विषयपदाध्याहारेण इदमस्तु संनिकृष्टं वस्तु विषय इत्येवं योजनीयम्, इति चेन्न, भाविन्या अपि कौमुद्या ग्रन्थकर्त्रा बुद्धिविषयीकृतत्वेन सन्निकृष्टतया इदंशब्देन बोधनस्यौचित्यात्, सांख्यमते सर्वस्यैव कार्यस्य कर्तृव्यापारात्प्रागपि कारणे तिरोहितरूपेण सत्त्वादियमिति पदेन निर्देष्टुं शक्यत्वाच्च। यद्वा द्विविधो ह्यर्थः—बुद्धिस्थ एकः, द्वितीयो बाह्यदेशस्थः। अत एव—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः॥

इत्यादिवाक्यजन्यबोधानुभवस्य नासङ्गतिः। तदुक्तं योगसूत्रे—

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति ( यो० द० समा० सू० ९ )

बुद्धौ शब्दज्ञानमात्रेणानुपतनशीलः बाह्यवस्तुशून्यः पदार्थः विकल्प इति। तज्ज्ञानमपि विकल्पात्मकमित्युच्यते। तथा च सर्वे शब्दा बौद्धार्थवाचका एव न बाह्यार्थवाचकाः। बौद्धेनार्थेन जलादिहरणादिकार्यासम्भवात्पश्चाद्बाह्यार्थबोधः। तथा च प्रत्यक्षादिना बुद्धावकृतस्यार्थस्य पदे शक्तिग्रहविषयत्वासम्भवाद् बुद्धिस्थायाः कौमुद्या अपि सत्त्वेन 'इयम्' इत्युक्तिर्नासङ्गता। यत्तु, अङ्गुलि-निर्देशयोग्ये एवेदंशब्दप्रयोग इति तच्चिन्त्यम्, कालस्याङ्गुल्या निर्देष्टुमशक्यतया अस्मिन् काले इत्यर्थे 'इदानीम्' इत्याद्यसिद्ध्यापत्तेः।

विरच्यते इति—विपूर्वकाद्रचधातोश्चुरादित्वात्स्वार्थे णिचि कर्मणि 'वर्तमानसामीप्ये वर्तमान-वद्वा' इति सूत्रेण भविष्यति लटि रूपम्। 'वर्तमाने लट्' इत्यनेन लट् तु न मङ्गलनिर्माणकाले कौमुदी-निर्मितेरभावेन वर्तमानत्वाभावात्। मङ्गलस्यापि ग्रन्थघटकत्वे तु वर्तमाने एव लट् बोध्यः। यद्यपि 'रच प्रतियत्ने' इत्युक्ते रचधातुः प्रतियत्नार्थकः। प्रतियत्नश्च—सिद्धे वस्तुनि गुणाधानम् इति प्रकृते सिद्धायां कौमुद्यां गुणाधानस्याभावेन 'विरच्यते' इति प्रयोगो न सङ्गच्छते तथापि धातूनामनेकार्थत्वात् तत्र-तत्र साहित्यादौ रचनाशब्दस्य शब्दविन्यासादिरूपार्थे प्रयोगदर्शनेन निर्मीयते इत्यर्थेऽपि तत्प्रयो-गस्य नासङ्गतिः। अत्र कर्त्राकाङ्क्षायां कौमुद्या उत्तरकृदन्तप्रकरणान्ते—

"भट्टोजिदीक्षितकृता सैषा सिद्धान्तकौमुदी।
प्रीत्यै भूयाद् भगवतोर्भवानीविश्वनाथयोः॥

इत्यत्र ग्रन्थकर्तुर्नामोक्त्या 'मया भट्टोजिदीक्षितेन' इति शेषो बोध्यः। भट्टान् = पण्डितान्। उन्तर्केण ( उ इति तर्केऽव्ययम् ) अयतीति भट्टोजिः। न च जिधातोः 'क्विप् च' इति क्विपि 'ह्रस्वस्य पिति कृति' इति तुगापत्तिः, 'आगमजमनित्यम्' इत्यनेनानित्यत्वस्य बोधनेन तदभावकल्पनात्। न चागमस्यानित्यत्वे प्रमाणाभावः, 'आनि लोट्' इति सूत्रे 'नि' लोट्, इति न्यासेऽपि लोट्सम्बन्धिनो नेत्यंत्वमित्यर्थेन 'प्रभवाणि' इत्यादिसिद्ध्या 'आ' ग्रहणवैयर्थ्येन तज्ज्ञापनात्। आगमस्यानित्यत्वे तु 'आडुत्तमस्य पिच्च' इत्यस्यानित्यतया कदाचिदाडागमाभावे णत्वं मा भूदिति आग्रहणं चरितार्थम्। अत एव 'सागरं तर्तुकामस्य' 'जप्त्वा स्तोत्रम्' इत्यादिषु इडागमाभावः सिध्यति। यद्वा जिधातोर्विचि भट्टो-जिरिति साधुः। न चात्रापि 'सार्वधातुक' इति गुणापत्तिः, 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषया गुणाभावसिद्धेः। नचात्र प्रमाणाभावः, 'ओर्गुणः' इत्यत्र 'ओरोः' इति वक्तव्ये गुणग्रहणस्यैव प्रमाणत्वात्। तेन 'स्वायम्भुवम्' इत्यादीनां सिद्धिः। नच 'ओः' इत्यस्यापि 'स्वं रूपम्' इत्यनेन संज्ञात्वम्, अस्येत्यस्य सत्त्वेन संज्ञापूर्वकत्वस्याक्षतत्वाच्च ज्ञापितेऽपि गुणग्रहणस्य वैयर्थ्यम्, यावता

अइउण् । १ ।

---

विनायद्वस्तुपपन्नं तत्सर्वं तेन ज्ञाप्यते, इति न्यायेन 'स्वरूपम्, इति बोधितसंज्ञातिरिक्तस्य विधेय-समर्पकस्य संज्ञापदेन ग्रहणेनादोषात् 'स्वं रूपम्' इत्यस्य भाष्यकृता प्रत्याख्यातत्वेन 'श्रो' इत्यस्य, संज्ञात्वाभावाच्च ।

वस्तुतस्तु 'भट्टान्' उ=तर्केण जिनाति पराजयतीति भट्टोजीः । ज्याधातोः कर्तरि क्विपि 'ग्रहिज्या' ते इति सम्प्रसारणे 'हलः' इति दीर्घे नागोजीभट्ट इतिवत् दीर्घान्त एव भट्टोजीशब्दः । दीक्षा= सोमयागादौ नियमः, यागः तन्त्रोक्तमभीष्टप्रदमन्त्रग्रहणं वा । तदुक्तम्—

"दीयते विमलं ज्ञानं क्षीयते कर्मवासना ।
तेन दीक्षेति सा प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ॥" इति

सा संजाताऽस्येति दीक्षितः । दीक्षाशब्दात् 'तदस्य संजातं तारकादिभ्यः' इति तद्धिते इतचि दीक्षितपदं साधु । भट्टोजीश्चासौ दीक्षितश्चेति भट्टोजीदीक्षित इति ।

सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥
सम्बन्धश्चाधिकारी च विषयश्च प्रयोजनम् ।
विनानुबन्धं ग्रन्थादौ मङ्गलं न प्रशस्यते ॥

इति वृद्धोक्त्या ग्रन्थादौ श्रोतृप्रवृत्तये प्रयोजनाद्यनुबन्धचतुष्टयं वक्तव्यम् । तद् 'मुनित्रयम्' इति पद्येन नमस्कारात्मकं मङ्गलं कुर्वन् 'वैयाकरणसिद्धान्तकौमुदीयम्' इत्यनेन सूचितम् । तथा हि—कस्मिंश्चिद्विषये प्रवृत्तौ 'इदं मदिष्टसाधनम्' 'मत्कृतिसाध्यञ्च' इति ज्ञानद्वयं कारणम् । एतज्ज्ञानञ्च विषयज्ञानं प्रयोजनज्ञानञ्च विना न भवितुमर्हति । अतः विषयादिकं वक्तव्यम् । अत्र विषयः—वैयाकरणसिद्धान्तः, तज्जिज्ञासुरधिकारी, तज्ज्ञानं प्रयोजनम्, साध्यसाधनभावः प्रयोजनग्रन्थयोः सम्बन्धः । ननु प्रवृत्त्युद्देश्यस्यैव विषयत्वमिति तन्न, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इत्युक्त्वा प्रवृत्त्युद्देश्यस्य प्रयोजनत्वात्, उद्देश्यसाधनस्यैव विषयत्वात् । प्रकृते वैयाकरणसिद्धान्तस्य 'ज्ञानं प्रति विषयस्य कारणत्वम्' इति न्यायेन वैयाकरणसिद्धान्तस्य विषयविधया ज्ञानरूपप्रयोजनं प्रति साधनत्वम् । तथा च व्याकरणस्य प्रयोजनं वैयाकरणसिद्धान्त ( व्युत्पत्ति ) ज्ञानम्, तस्य प्रयोजनम् 'रक्षोहागमलघ्वसन्देहाः', इति संस्कृतवाङ्मयवाक्यवाक्यार्थादिज्ञानञ्च ।

व्याकरणे साधवः—पुण्यजनकाः, शब्दा अभिधेयाः । तेषां शब्दानां प्रत्येकमुच्चार्य बोधनन्त्व-सम्भवं, शब्दानामानन्त्यात् । तथा चोक्तं भाष्यकृता 'अनभ्युपाय एष शब्दानां प्रतिपत्तौ' प्रति-पदपाठः । एवं हि श्रूयते-'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम । बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो नान्तं जगाम । किम्पुनरद्यत्वे यः सर्वथा चिरञ्जीवति स वर्षशतं जीवति । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति । आगमकालेन=अध्ययनकालेन, स्वाध्याय ( अभ्यास ) कालेन, प्रवचन ( अध्यापन ) कालेन, व्यवहारकालेन ( यागादिकर्मण्युपयोगेन ) तत्रागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठ इति ।

तस्मात्सामान्य-विशेषलक्षणेनैव शब्दा बोद्धव्या इत्यतः साधुशब्देषु कति वर्णा इष्टा इति सूचयितुं प्रत्याहारद्वारा लाघवेन सूत्रं निर्मातुञ्च महेश्वरोपदिष्टमक्षरसमाम्नायमाह—'अ इ उ ण्' इति । तथा चोक्तं शिक्षायाम्—

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ इति

केचित्तु—

एतस्याः शिक्षायाः पाणिनिसम्मतत्वे प्रमाणाभावः, इति वर्णसमाम्नायस्यापि कर्ता पाणिनिरेव, तस्य महेश्वरकर्तृकत्वं भाष्ये क्वापि नोपन्यस्तम् ।

अस्याक्षरसमाम्नायस्य ज्ञाने महानभ्युदयः । तथा चोक्तं भाष्ये—'अयमक्षरसमाम्नायः= वाक्समाम्नायः (वाक्संग्रहोपायः) पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः (ब्रह्मप्रतिपादकवर्णराशिः) सर्ववेद (वेदाध्ययन) पुण्यफलावाप्तिश्चास्य ज्ञाने भवति । माता-पितरौ चास्य स्वर्गे लोके महीयेते इति । तदुक्तं भाष्ये—वृत्तिसमवायार्थो वर्णानामुपदेशः' इति । प्रत्याहारद्वारा वर्णानामुपदेशः पाणिनेर्लाघवेन शास्त्रप्रवृत्त्यर्थ' इत्यर्थः, 'इष्टबुद्ध्यर्थश्च' इति च । व्याकरणे इष्टानां वर्णानां ज्ञानार्थ' इत्यर्थः । तथा च पुण्यजनकशब्दज्ञानं व्याकरणप्रयोजन-मुक्तम् । तज्ज्ञानप्रयोजनञ्च रक्षोहादि, संस्कृतवाङ्मयेऽनायासेन प्रवेशश्च । परन्तु संज्ञाशास्त्राणां साधुत्वबोधकत्वाभावाद् 'वृद्धि-गुण – टि – घि' इत्यादिशब्दानां पाणिन्याद्यभिमतार्थेषु केनापि साधुत्व-बोधनाभावात्तेषामसाधुत्वापत्तिरिति चेन्न, 'पृषोदरादीनि यथोपदिष्टम्' इत्यनेन तेषामपि शिष्टो-च्चारिततया साधुत्वबोधनात् ।

वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ।
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थञ्चोपदिश्यते इति च ॥

यस्मिन् अक्षरे ब्रह्म=वेदो वर्तते तत्र साधूनां सर्वेषां वर्णानां ज्ञानं यथा स्यात्तदर्थम्, इत्संज्ञकण-कारादिना प्रत्याहारद्वारा सूत्रनिर्माणे प्रयोगसाधने च लाघवाय 'अइउण्' इत्यादिसूत्रस्योपदेशः । एतेन 'अकारः साधुः, इकारः साधुः' इत्यादिक्रमेण 'अइउण्' इत्यादीनां विधिसूत्रत्वं सूचितम् । नचैवमपभ्रंश 'घडा' इत्याद्यवयवघकारादीनां साधुतया अपभ्रंशानामपि साधुत्वापत्तिः, 'यत्र च ब्रह्म वर्तते' इति भाष्येण नित्यानां वेदादिसंस्कृतवाङ्मयगतवर्णानामेवानेन साधुत्वविधानात् । अयञ्च वर्णसमाम्नायः संसारत उद्धाराय तपःकुर्वत्सु सनकादिमहर्षिषु व्याकरणसूत्रनिर्माणाय तपस्यति पाणिनिमुनौ च तदभीष्ट-सिद्धये भगवान् शङ्करः ढक्कानिनादेन तानुपदिदेश । तथाचोक्तम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ इति

अत्र 'विमर्शे' इति घञन्तसप्तम्यन्तम् । 'विचारे कृते सति' इत्यर्थकमिति, मृशधातोः परस्मै-पदित्वात् आत्मनेपदासङ्गत्याशङ्का न कार्या । णकारोऽण्प्रत्याहारमात्रार्थः । ^ उण्‌मात्रार्थ

'अइउण्' इत्यादिषु सन्धिकार्यन्तु न, संहितायाः अविवक्षणात् । अत्र समासस्तु न, 'अ' 'इ' इत्यादीनां निर्विभक्तिकत्वेन समासाप्राप्तेः । तथा च समासाभावेनैकपदत्वाभावेन च—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

इति वृद्धोक्त्याऽत्र संहिताया अविवक्षा सुगमा । नच 'सुप्तिङन्तचयो वाक्यम्' इति लक्षित-वाक्यत्वस्याप्यभावादविवक्षाया अप्यभावः, कारिकायां वाक्यपदेन एकपद-समास-धातूपसर्गभिन्नस्य शिष्टोच्चरितशब्दसमुदायस्य विवक्षितत्वात्, तादृशसमुदायत्वस्य 'अइउण्' इत्यादावक्षतत्वात् ।

यद्वा 'अ इ उ' इत्यादीनां स्वरत्वात् 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' इति चादिगणान्तर्गत-सूत्रेण चादित्वबोधनेन निपातत्वात् 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावेन सौत्रत्वेन वा सन्ध्यभावः । एषां चतुर्दशसूत्रत्वव्यवहारस्तु चतुर्दशानु-बन्धघटितत्वात् ।

'अ इ उ' इत्यादीनां प्रयोगस्थवर्णानामनुकरणतया वर्णबोधकत्वेन विवक्षिताद्वर्णात् 'अ' इत्यादिरूपात्कारप्रत्ययस्तु न ।

## ऋलृक् । एओङ् । ऐऔच् ।

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥'

इत्यर्थकाद् बहुलग्रहणात् ।

अकारादिभ्योऽत्र स्वाद्युत्पत्तिस्तु न, अभेदानुकरणे शक्यत्वभावेन वृत्त्याऽर्थविषयकबोधजनकत्व-रूपार्थवत्त्वाभावेन प्रातिपदिकत्वाभावात्; अनुकरणभेदपक्षेऽनुकार्य्यनिरूपितशक्तिमत्तयोपस्थस्यापि सुपो निपातत्वेनाव्ययतया लुक्प्रवृत्तेश्च । न च भेदपक्षे सुबन्तत्वेन द्वन्द्वापत्तिः, अनुकरणे सहविवक्षाया अभावात् ।

ननु 'ण्' इत्यनुबन्धस्य 'अइउण्' 'लण्' इत्युभयत्र करणेन अण्प्रत्याहारे इण्प्रत्याहारे च सन्देहः स्यादिति चेन्न, 'सन्देहे व्याख्यानतो निर्णयः कर्तव्यः' इत्यर्थस्य भाष्यकृतैवोक्तत्वात् । तथा हि—'अणुदित्सवर्णस्य' इत्येतत्परिहाय पूर्वेणाण्ग्रहणम्, परेणेण्ग्रहणम्, इति व्याख्यास्यामः इति । तदुक्तम्—

परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः ।
ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥ इति ।

'ऋलृक्' ककारोऽगादिप्रत्याहारार्थः । ननु संस्कृतशब्देषु लृकारस्याभावाद् वर्णसमाम्नाये लृकारोपदेशो व्यर्थ इति चेन्न, 'हे क्लृप्तशिख' इत्यादौ 'गुरोरनृतः' (८-२-८६) इति प्लुतार्थम्, 'प्रक्लृप्त' इत्यत्र 'उदात्तादनुदात्तस्य' (८-४-६६) इति स्वरितार्थम्, 'क्लृप्तवान्' इत्यत्र 'अनचि च' इति द्वित्वार्थं, तदुपदेशस्य चारितार्थ्यात् । न च 'कृपो रो लः' इत्यनेनोक्तस्थले 'पूर्वत्रासिद्धम्' इत्यनेन लत्वस्यासिद्धत्वाद् ऋकारबुद्ध्या पूर्वोक्तानि अच्कार्य्याणि स्युरितिवाच्यम्, प्लुत-स्वरित-द्वित्वविधायक-शास्त्राणाम् 'कृपो रो लः' इति सूत्रापेक्षया परत्रिपादीस्थत्वेन तद्दृष्ट्याऽसिद्धत्वासम्भवात्, कश्चिद् 'ऋतक' इति प्रयोक्तव्ये ऋकारस्य वक्तुमशक्यतया 'लृतक' इति प्रयुङ्क्ते तस्यानुकरणे 'कुमार्य्लृतकः' इत्याह इत्यत्र यणर्थञ्च तस्यावश्यकत्वात् । न च ऋलृवर्णयोः सावर्ण्येन अकारादीनां ह्रस्वानामेवोप-देशेऽपि दीर्घाकारादीनां त्रिविधसूत्रेषु ग्रहणवत्कारेण लृकारस्याप्यच्कार्य्याणि स्युरितिवाच्यम्, जातिपक्षे विजातीयत्वेन ग्रहणासम्भवात् । यदि 'ऋलृवर्णयोः' इति वार्त्तिकेन जातेरेव परस्पर-मतिदेशस्तदोक्तदोषाभावेऽपि लृवर्णस्य साधुत्वबोधनार्थ एव वर्णसमाम्नाये पाठः ।

'एओङ्' 'ऐऔच्' इत्यत्र ङकारचकारावेङैजादिप्रत्याहारार्थौ । 'ए ऐ' इत्यनयो रकारे-कारप्रयुक्तम् 'ओ औ' इत्यनयोरुकारोकारप्रयुक्तं कार्य्यन्तु सन्ध्यक्षरत्वेऽपि न भवति, 'दीर्घात्' इति पृथक्सूत्रकरणेन द्विमात्रिकेष्वैकमात्रिककार्य्याभावज्ञापनात् । अत एव 'अग्ने एति' अत्र 'एङः पदान्तादति' इति पूर्वरूपम्, 'अग्ने इन्द्रः' 'वायो उदकम्' अत्र 'अकः सवर्णे दीर्घः' इत्यादि कार्य्यं न । अन्यथा 'छे च' इत्यनेनैव दीर्घेऽपि तुकि सिद्धे 'दीर्घात्' इति योगविभागो व्यर्थ एव स्यात् ।

एवम् 'ऋ लृ' इत्यत्र रेफलकारप्रयुक्तः 'मातॄँतम्' इत्यत्र 'रो रि' इति लोपः, 'शरद् लृकारः' इत्यत्र 'तोर्लि' इति लत्वञ्च न, मध्ये प्रतीयमानरेफलकारयोः सत्त्वेन पूर्वोत्तरवर्त्यज्भागेन व्यवधानात् । यत्त्वव्यवधाननिमित्तकं कार्य्यं तद्भवत्येव, यथा 'आनृजे' इत्यत्र 'तस्मान्नुड् द्विहलः' इति नुट् । वस्तुतस्तु 'द्विहलः' इति प्रत्याख्यातं भाष्ये । न च 'आट' इत्यादौ नुडापत्तिः 'आनशे' इत्यत्र 'तस्मान्नुट्' इति नुटि सिद्धे 'अश्नोतेश्च' इति सूत्रस्य 'एकहल्घटितस्य नुट् चेत्तर्हि अश्नोतेरेवेति नियमार्थता स्वीकारेणादोषात् । क्षुभ्नादिषु 'तृप्नोति' इत्यस्य णत्वनिषेधार्थपाठवैयर्थ्येन ऋकारान्तस्य णत्वं भवती-तिज्ञापनेन 'ऋवर्णान्नस्य णत्वम्' इति वार्त्तिकं न कर्तव्यमिति भाष्ये उक्तम् ।

पृथक्प्रयत्ननिष्पाद्यो हि वर्णः, सन्ध्यक्षरेषु ऋकारादिषु च वर्णसादृश्यावगाहिनोऽवयवाः, न तु ते वर्णाः । अत एव ऋकारादिषु ज्ञापकादिना णत्वादिकार्य्यं साधितं भाष्ये ।

हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् ।

---

हयवरट् । टकारोऽट्प्रत्याहारार्थः । वर्णसमाम्नाये वर्णानां पौर्वापर्य्येण बोधने एव भाष्यतात्पर्य्यम् । अत एव लोकप्रसिद्धककारादिक्रमं परित्यज्य भिन्नक्रमेण वर्णानामुपदेशः ।

अत्र यदि यकारात्पूर्वं रेफ उपदिश्येत तदा 'पचेरन्' इत्यादौ यलोपो न स्यात्, 'लोपो व्योर्वलि' इति वल्परत्वाभावात् । किञ्च 'देवित्वा' इत्यादौ 'रलो व्युपधात्' इति कित्वाभावस्यातिदेशो न स्यात्तदर्थं वकारात्पर उपदिष्टः । रेफादिप्रश्लेषेण वारणे तु गौरवम् । यद्यपि यकारात्पूर्वं पाठे 'प्रातर्नयति' इत्यादौ 'यरोऽनुनासिके' इत्यस्य 'अनचि च' इत्यस्य, 'मद्रह्रदः' इत्यादौ 'अचो रहाभ्याम्-' इत्यस्य 'धाम्यंशः' इत्यत्र * 'यणो मयो द्वे' * इत्यस्य च भाष्याभिमताऽप्रवृत्तिः फलं तथापि 'नेमौ रहौ कार्य्यिणौ किन्तर्हि निमित्तं द्विर्वचनस्य' इति, 'रेफोष्मणां सवर्णा न सन्ति,' इति च भाष्येण समाधानान्तरस्य वक्ष्यमाणतया तत्फलस्यान्यथासिद्धत्वात् ।

'हयवरट्' 'हल्' इत्युभयत्र हकारोपादानम् अटि, अशि, हशि ग्रहणेन अर्हेण, देवा हसन्ति, देवो हसति, इत्यादिसिद्ध्यर्थम् । वलि, झलि, शलि च द्वितीयहकारग्रहणेन 'रुदिहि' इत्यत्र 'रुदादिभ्यः सार्वधातुके' इतीट्, 'अदाग्धाम्' इत्यत्र 'झलो झलि' इति सलोपः, 'अधुक्षत्' इत्यत्र 'शल इगुपधादनिटः क्सः' इति क्सश्च सिध्यति ।

लण् । णकारोऽण् इण् यण् प्रत्याहारार्थः ।

ननु 'अइउण्' इति सूत्रस्थणकारेण, लण्सूत्रस्थणकारेण वा 'अण्' 'इण्' प्रत्याहार इति सन्देहवारणायानुबन्धानामकर्तव्ये णद्वयकरणमसङ्गतमिति चेन्न, सन्देहप्रयोजकेत्संज्ञकणद्वयकरणस्य 'सन्देहे सति मुनित्रयादिव्याख्यानं दृष्ट्वा निर्णयो विधेयः' इत्यर्थक 'व्याख्यानतो विशेषप्रतिपत्तिः' इतिवचनज्ञापनपरकत्वस्य भाष्यकृतैवोक्तत्वात् । तदुक्तं भाष्ये—'अणुदित्सवर्णं परिहाय पूर्वेणाण्ग्रहणं परेणेण्ग्रहणमिति व्याख्यास्याम' इति ।

अत्र लकाराकारोऽपि इत्संज्ञकः । तेन 'र' प्रत्याहारः सिध्यति । रप्रत्याहारस्तु 'उरण् रपरः' इत्यत्र रपरपदे एव नान्यत्र । नागेशमते लकाराकारस्येत्संज्ञा नास्ति अतो रप्रत्याहारो न सिध्यति । अत एव भाष्यकृता लकाराकारस्येत्त्वं नोक्तम् । 'उरण् रपरः' इत्यनेन 'तवल्कारः' इत्यादौ लपरत्वं तु 'तुल्यास्य' इति सूत्रे 'लपरत्वं वक्ष्यामि' इतिवचनसूचितेन ॐ'लपरश्चेति वक्तव्यम्'ॐ इति वार्तिकेन बोध्यम् ।

कैयट-भट्टोजिदीक्षितादिमते तु 'लपरत्वं वक्ष्यामि' इतिभाष्यस्य लण्सूत्रस्थाकारस्येत्संज्ञकत्वेन 'उरण् रपरः' इति सूत्रस्थरपदस्य रलबोधकप्रत्याहारपरतया व्याख्यानं करिष्यामीत्यर्थमाश्रित्य लपरत्वं साधितम् । तन्मताभिप्रायेणैव ( लण्मध्ये त्वित्संज्ञकः ) इति वक्ष्यति मूले ।

ञमङणनम् । अन्त्य इत्संज्ञको मकारोऽम्-यमादिप्रत्याहारार्थः । वस्तुतस्तु ञमङणनझभञ् इति सूत्रमस्तु । अम् यम् आदिप्रत्याहारा ञकारेण अञ् यञ् रूपा एव सन्तु । न चैवम् 'ङमो ह्रस्वादचि' इत्यत्र ङम् करणे ञमयोरपि ह्रस्वात्परयोः पदान्तयोर्ङुडागमः स्यादिति वाच्यम्, पदान्तयोर्ञमयोरसत्त्वेन ङुडमुडप्राप्तेः । तदुक्तं भाष्ये—'एवमपि पञ्चागमास्त्रय आगमिनो वैषम्यात्संख्यातानुदेशो न प्राप्नोति । सन्तु तावद्येषामागमानामागमिनः सन्ति । ञकारमकारौ पदान्तौ न स्त इति आगमावपि न भविष्यतः ।' इति ।

झभञ् । ञकारो यञ्प्रत्याहारार्थः । 'अतो दीर्घो यञि' (७–२–१०१) इत्यत्र ।

घढधष् । इत्संज्ञकः षकारः झष्, भष् प्रत्याहारार्थः । 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( ८–२–३७ ) इत्यत्र ।

जबगडदश् । इत्संज्ञकः शकारः अश्, हश्, वशादिप्रत्याहारार्थः । 'भोभगोअघोअपूर्वस्य योऽशि' (८-३-१७) 'हशि च' (६–१–११४) 'नेड्वशि कृति' (७–२–८) इत्यादिषु ।

खफछठथचटतव्। कपय्। शषसर्। हल्।

खफछठथचटतव्। वकारश्छव्प्रत्याहारार्थः। 'नश्छव्यप्रशान्' (८-३-७) इत्यत्र।

कपय्। इत्संज्ञको यकारः यय् मय्, झयादिप्रत्याहारार्थः। 'अनुस्वारस्य ययि परसवर्णः' (८-४-५८) 'मय उञो वो वा' (८-३-३३) इत्यादिषु।

शषसर्। रेफो, यर्, झर्, खराद्यर्थः। 'यरोऽनुनासिकेऽनुनासिको वा' (८-४-४५) 'झरो झरि सवर्णे' (८-४-६५) 'खरि च' (८-४-५५) इत्यादिषु।

हल्। इत्संज्ञको लकारः। अल्, हल्, वलादिप्रत्याहारार्थः। 'अलोऽन्त्यात्पूर्व उपधा' (१-१-६५) 'हलोऽनन्तराः संयोगः' (१-१-७) 'लोपो व्योर्वलि' (६-१-६६) इत्यादिषु।

हकारः पुनरुपदिश्यते हल्-शल्-झलादिषु ग्रहणार्थः। 'रलो व्युपधाद्धलादेः संश्च' (१-२-२६) 'शल इगुपधादनिटः क्सः' (३-१-४५) 'झलो झलि' (८-२-२६) इत्यादिषु। केचित् प्रत्याहारान् परिगणयन्ति—

एकस्मान्ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः॥ इति॥

ननु 'शषसहर्' इत्येव सूत्रमस्तु 'अल्, हल्' इत्यादि प्रत्याहाराश्च रेफेणैव अर्, हर् इत्यादि-रूपाः सन्तु। अन्योन्याश्रयदोषपरिहारस्तु 'रन्त्यम्' उपदेशेऽन्त्यं र् इत् इत्यर्थकेन 'हर्' इतिरेफ-स्येत्संज्ञायां हर्प्रत्याहारसिद्धौ 'हर्' 'उपदेशेऽन्त्यं हर् इत्' इत्यर्थकेन यादीनामित्संज्ञायामचादि-प्रत्याहाराः स्युः। खरि हकारग्रहणे 'हरिर्हरति' इत्यादौ 'खरवसानयोर्विसर्जनीयः' इति विसर्गापत्ति-स्तु न, 'ग्रेप्यब्रुवोर्हविषोः' इतिसूत्रनिर्देशेन खर् ग्रहणेन हकाराग्रहणज्ञापनात्। नच सुगण् हसति, प्राङ्हसति, इत्यादौ 'ङणोः कुक्टुक् शरि' इति कुगाद्यापत्तिः, 'एकहस्वेति' ति निर्देशेन शरग्रहणेना-ग्रहणज्ञापनात्। नच कुगादेर्वैकल्पिकत्वेन निर्देशोपपत्तौ ज्ञापकत्वासम्भवः, ऋपेर्धर्मप्रधानत्वेन वैकल्पि-कत्वेऽपि सति सम्भवे सूत्रप्रवृत्त्यैव प्रयोगस्यौचित्यानुमानेनोक्तज्ञापने बाधकाभावादितिचेन्न, ज्ञापकादि-नाऽनेकवचनकल्पनापेक्षया 'हल्' इति पृथक्सूत्रकरणे एव लाघवात्, उक्तनिर्देशानां सौत्रत्वेनोपपत्तेश्च।

ननु 'संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते॥'

इति प्राचीनोक्तेषु सूत्रेषु किमिदं सूत्रमितिचेत्, अणादिसंज्ञाशब्दनिष्ठशक्तिग्राहकत्वेन संज्ञा-शास्त्रोपकारकतया संज्ञासूत्रमिदमिति गृहाण। 'इष्टान् वर्णान् भोत्स्यामहे' इतिभाष्यप्रमाणेन 'अकारः साधुः, इकारः साधुः' इत्येवंरीत्या साधुत्वविधायकतया विधिसूत्रत्वमेवास्येति गुरवः। अ, इ, उ, ण् इत्यादि प्रत्येकवर्णाद्विभक्त्युत्पत्तिस्तु न, साधुशब्दावयववर्णाभेदानुकरणत्वेन साकल्येनानुकार्यबोध-कत्वेऽपि वृत्त्याऽर्थबोधकत्वाभावात् वृत्त्याऽर्थविषयकबोधजनकस्यैव प्रातिपदिकसंज्ञाविधायकेऽर्थवद्ग्र-हणेन ग्रहणात्प्रकृते प्रातिपदिकसंज्ञाया अभावात्, 'वृद्धिरादैच्' (१-१-१) इतिसूत्रे 'छन्दोवत्सूत्राणि भवन्ति' इति भाष्येष्ट्या छन्दस्त्वातिदेशेन छन्दसि दृष्टानुविधानाच्च सुपोऽप्राप्तेः।

'वर्णात्कारः' इति कारप्रत्ययोऽपि न, 'कृत्यल्युटो बहुलम्' इत्यत्र 'बहुलम्' इत्यस्य योगविभागेन इष्टानुरोधेन कृत्प्रत्ययमात्रस्य क्वचिद्प्रवृत्तिबोधनात्। न च कारप्रत्ययस्य धातोर्विहितत्वाभावेन कृत्संज्ञ-कत्वाभावः, 'धातोः' इत्यधिकारे यस्मात् कस्माच्चिद्विहितप्रत्ययस्य 'कृदतिङ्' इत्यनेन कृत्संज्ञाविधानेन कारप्रत्ययस्यापि कृत्संज्ञायां बाधकाभावात्। अत एव 'अइउण्' सूत्रे भाष्ये 'अकारस्य विवृतोपदेश आकारग्रहणार्थः' इति कारप्रत्ययान्तस्य सुबन्तत्वमुपपद्यते। अन्यथा कारप्रत्ययस्य तद्धितसंज्ञायाः कृत्संज्ञायाश्चाभावे प्रातिपदिकत्वाभावेन 'अकारस्य' इत्यादिप्रयोगासङ्गतिः। अत एव 'अ-इ' इत्यादीनां निर्विभक्तिकत्वेन पार्थक्यात् 'वाक्ये तु सा विवक्षामपेक्षते' इति शिष्टोक्त्या न संहिताकार्यम्। स्वरमति-

इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि। एषामन्त्या इतः। लण्सूत्रेऽकारश्च। हकारादिष्वकार उच्चारणार्थः।

---

स्वरूपाणां निपातत्वेन प्रयुक्तत्वात्। न च 'अकारः साधुः', 'इकारः साधुः' इत्येवं साधुत्वविधायकत्वे 'अचश्चत्वारिंशत्सूत्रत्वापत्तिः,' अनुबन्धगतचतुर्दशत्वसंख्यायाः सूत्रेष्वारोपेण चतुर्दशसूत्रीत्वव्यवहारोपपत्तेः। 'अथ शब्दानुशासनम्' इत्यादिभाष्यप्रामाण्येन साधुशब्दघटकाकारादीनामेव साधुत्वविधानेन-अपभ्रंशघटकानां साधुत्वम्।

ननु 'अ-इ-उण्' इत्यादिषु णादीनामित्संज्ञकत्वात् 'तस्य लोपः' इत्यनेन लोपात्सूत्रे तदुच्चारणमसङ्गतम्। न चोच्चारणाभावे कुत्र णकारः कुत्र ककार इत्संज्ञक इति ज्ञानासम्भवः, तज्ज्ञानाय 'तस्य लोपः' इत्यस्याप्रवृत्तौ बीजाभावात्, व्याख्यानतस्तज्ज्ञानसम्भवाच्चेति चेन्न, लोप्ये एवेत्संज्ञालोपयोः प्रवृत्तेः सिद्धान्तितत्वेन सूत्रे इत्संज्ञालोपयोरप्रवृत्तेः। यद्वा 'तस्य लोपः' इत्यनेन लक्ष्यघटकतया इतां लोपविषयत्वाभावस्यैव बोधनेन सूत्रेषु तदुच्चारणे बाधकाभावः।

ननु चतुर्दशसूत्र्यां 'सोऽयमक्षरसमाम्नायः' इति 'ञ-म-ङ-ण-नम्' इति सूत्रे भाष्यकृतः, 'येनाक्षरसमाम्नायमधिगम्य महेश्वरात्' इति शिक्षाकृतश्चाम्नाय-समाम्नायशब्देन व्यवहारोऽनुपपन्नः, 'श्रुतिः स्त्री वेद आम्नायः' इति कोशादाम्नायशब्दस्य वेदे एव प्रसिद्धेरित्याशङ्कायामाह-माहेश्वराणीति-महेश्वरादागतानि = माहेश्वराणि। 'तत आगतः' ( ४-३-७४ ) इत्यणि साधु। महेश्वरप्रसादात्पाणिनिना लब्धानि न तु महेश्वरेण कृतानि। एवञ्चैवमानुपूर्विका अपौरुषेयी श्रुतिरेवैषेति आम्नाय-समाम्नायशब्देन व्यवहारो नानुपपन्न इति भावः। नैयायिकमते वेदस्यापीश्वरकृतत्वान्महेश्वरेण प्रोक्तानीत्यर्थेऽपि न वेदत्वहानिः। चतुर्दशसूत्र्या ज्ञाने सर्ववेदपारायणजं फलम्भाष्ये उक्तम्। एतेन श्रुतिमूलकस्यैव वेदाङ्गत्वमुचितमिति सूचितम्। आम्नायशब्दस्य वेदार्थकत्वमेवेति तु न युक्तम्, 'चन्द्रोदये विताने च स्यादाम्नायोऽन्वये श्रुतौ'। इति नानार्थकोशविरोधात्।

इयं चतुर्दशसूत्री व्याकरणोपकारिकाऽपि तद्बहिर्भूतैव। अत एव 'वृद्धिरादैच्' इति सूत्रे 'माङ्गलिकार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं प्रयुङ्क्ते' इति भाष्यं संगच्छते।

सूत्राणीति—स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥

इति सूत्रलक्षणं शिष्टैरुक्तम्।

ननु प्रयोजनविरहाच्चतुर्दशसूत्र्या वैयर्थ्यम्, न च पारायणेऽदृष्टार्थम्, व्याकरणग्रन्थे तदर्थोपन्यासस्यानुपयोगात्। न च वर्णस्वरूपज्ञानार्थम्, लोकत एव तत्सिद्धेः। अन्यथा दीर्घादीनामप्युपदेशापत्तिः। न च कलादिवर्णदोषनिवृत्त्यर्थोऽकारादिपाठः, कलादिदोषज्ञानाय प्रयत्नाकरणेन दोषज्ञानस्य लोकसाध्यत्वात् तन्निवृत्तेरपि लोकत एव सिद्धेः। नाप्यकारादिवर्णानां साधुत्वज्ञानार्थः पाठः, प्रकृति-प्रत्ययादिसाधुत्वबोधकैरेव तद्वर्णानामपि साधुत्वसिद्धेरित्याशङ्कायामाह—अणादीति—इत्संज्ञकवर्णविशिष्टवर्णोपदेशफलम् अकारादिणन्तादिवर्णानुद्दिश्य अण्, अक्, इत्यादि संज्ञाकरणम्। एतेन णकारादीनाम् 'ञमङणनम्' इत्यत्र प्राधान्येनोपदेशसत्त्वात् 'अ-इ-उण्' इत्यादिषु णकाराद्युपदेशो व्यर्थ इत्यपास्तम्। तेन लाघवेन सूत्रनिर्माणं पाणिनेः सिध्यति। अन्यथा अचादिबोध्यप्रत्येकवर्णमुच्चार्य कार्यविधाने महागौरवं स्यादिति भावः। अणादिर्येषां संज्ञानां ता अणादयः संज्ञाः, अर्थः = प्रयोजनं येषां तानि अणादिसंज्ञार्थानि चतुर्दशसूत्राणि। यद्वा अणादिसंज्ञाय इमानि अणादिसंज्ञार्थानि। *"अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्"* इत्यनेन चतुर्थीसमासः। अत्र तादर्थ्यचतुर्थ्यां अर्थशब्दार्थस्योक्तत्वाद् वाक्येऽर्थशब्दप्रयोगाप्राप्त्या वार्तिके नित्यसमासः, इत्यंशो नापूर्वः। यदि तु लिङ्गवचनमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येत्याश्रीयते तदा वार्तिकैमेव व्यर्थम्।

यत्तु 'अनर्थकत्वर्णराशित्वेऽपि एषाम्' इत्युक्तं, बालमनोरमायाम्, तच्चिन्त्यम्, अनुकार्यार्थकतया प्रत्याहारोपदेशकतया चानर्थक्यासिद्धेः। अत एव

'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥'

इत्युदाहरणोक्तिः संगच्छते, अनर्थकत्वे उद्धरणासम्भवात्।

चतुर्दशसूत्र्या अणादिसंज्ञासिद्धिप्रकारमाह–एषामिति = चतुर्दशसूत्राणाम्। अन्त्याः = अन्ते अवसाने भवा अन्त्याः। 'दिगादिभ्यो यत्' इति यति साधु। यद्यपि अन्त-शब्दस्यापि चरमावयवार्थकत्वम् अत एव 'आद्यन्तौ टकितौ' इति निर्देशसङ्गतिस्तथापि 'सति पूर्वस्मिन् यस्मात्परो नास्ति सोऽन्त्यः' इति भाष्यप्रामाण्यादन्त्यशब्दोऽपि अन्तावयवे रूढ इति मन्तव्यम्। अत एव 'आदिरन्त्येन सहेता' इति निर्देशः संगच्छते। अन्त्याः = णकारादय इतः = इत्संज्ञका इत्-नामान इति यावत्।

लण्सूत्र इति—लण्सूत्रे लकारोत्तरोऽकारश्च इत्संज्ञकः, इत इतिपूर्ववाक्यादनुवर्त्यार्थवशाद्विभक्तेर्विपरिणाम इति 'इत्' इत्येकवचनान्तेन विपरिणमय्य योजनीयः। अस्यान्त्यत्वाभावात्स्वरत्वाच्च पृथगुक्तिः। नच लण्सूत्रस्याकारस्यानुनासिकत्वेन 'उपदेशेऽजनुनासिक इत्' इत्यस्य वाक्यार्थबोधकाले 'अणुदित्सवर्णस्य' इत्यस्य वाक्यार्थबोधाभावात् 'नाज्झलौ' इत्यत्राच्पदे इव सवर्णग्रहणाभावेन 'उपदेशेऽच्' इतिसूत्रस्याच्पदेन 'लण्' सूत्राकारस्य ग्रहीतुमशक्यतया 'लण्सूत्रेऽकारश्च' इत्युक्तिरसङ्गतेति वाच्यम् 'उपदेशेऽच्' इति सूत्रारम्भसामर्थ्येन अत्रत्याच्पदेनानुनासिकानां ग्रहणाभ्युपगमात्, प्रत्याहारे जातिपक्षस्यैव सिद्धान्तत्वाच्च नच जातिपक्षाश्रयणस्य 'नाज्झलौ' इत्यत्रापि सम्भवादाकारप्रश्लेषवैयर्थ्यम्, इष्टापत्तेः। अत एव भाष्यकृताऽऽकारप्रश्लेषो नोक्तः। तथाच यस्य यस्येत्संज्ञा तेन तेन प्रत्याहारसिद्धिः। तेन इत्संज्ञकाकारेण प्रत्याहारेण 'उरण् रपरः' इत्यत्र रपदेन रलयोर्बोधः।

नागेशास्तु लण्सूत्रस्थाकारस्यानुनासिकत्वाभावेनेत्संज्ञकत्वाभावः, अनुनासिकत्वस्य प्रतिज्ञागम्यत्वेनात्राकारे पाणिन्यादिप्रतिज्ञाया अभावात्। नच 'तुल्यास्य' सूत्रे ऋकारलृकारयोः सावर्ण्ये लृकारस्यापि रपरत्वं प्राप्नोति। 'लृकारस्य लपरत्वं वक्ष्यामि' इति भाष्यमेव लण्सूत्रस्थाकारस्यानुनासिकत्वे मानम्। अत एव 'रपरः' इत्यत्र र इति लण्सूत्रस्थाकारेण प्रत्याहारः इति कैयटोक्तिरपि संगच्छते। भाष्ये 'वक्ष्यामि' इत्यस्य रप्रत्याहाररूपेण व्याख्यास्यामीत्यर्थात्। लकाराकारस्यानुनासिकत्वाभावे इत्संज्ञकत्वासम्भवे रप्रत्याहारोक्तिरसङ्गतैव स्यादितिवाच्यम्, भाष्ये 'वक्ष्यामि' इत्यस्य 'लपरश्च' इति कथयिष्यामीति वार्तिककरणे एव तात्पर्यात्। अत एव 'वक्ष्यामि' इत्युत्तरम्। तथात्वश्यं वक्तव्यम्। असत्यां सवर्णसंज्ञायां विध्यर्थम्, इतिभाष्ये तच्च (लपरश्च) इतिवार्तिकं विध्यर्थं वक्तव्यमिति विध्यर्थत्वं संगच्छते। रप्रत्याहाररूपव्याख्यानपरत्वे तु विध्यर्थमवक्तव्यमित्यनुपपन्नमेव स्यात्। किञ्च ऋकारग्रहणेन लृकारग्रहणे 'ऋवर्णाच्चस्य णत्वम्' इत्यनेन यथा 'क्लृप्यमानम्' इत्यत्र णत्वमापाद्य परिहृतम्, तथा 'रप्रत्याहारसत्त्वे 'रषाभ्यां नो णः' इत्यादिना 'फलानाम्' इत्यादिषु णत्वमापाद्य भाष्ये परिहाराकरणेन रप्रत्याहाराभाव एव निश्चीयते। किञ्च रप्रत्याहारस्य 'उरण् रपरः' इत्येकत्रैव फलसत्त्वेन 'न ह्येकमुदाहरणं सामान्ययोगारम्भं प्रयोजयति' इति भाष्यविरोधोऽपि स्यात्। 'रलपरः' इतिन्यासेनैव सिद्धे गुरुभूतप्रत्याहारसाधनस्य वैफल्यात्। अत एव 'अतो ल्रान्तस्य' (७–२–५) इतिसूत्रभाष्ये रप्रत्याहारेणैव रलयोर्ग्रहणसिद्धया लकारवैयर्थ्यापत्तिविषये शङ्का न कृता। किञ्चानेकत्र र-य घटितसूत्रेषु प्रत्याहारग्रहणाभावायानेकक्लिष्टकल्पनापेक्षया रप्रत्याहारस्वीकाराभावे एव लाघवम्। ॐ'अतो शान्तस्य' इत्यत्र लकारग्रहणेन रप्रत्याहारामित्यत्वज्ञापनन्तु न युक्तम्, फलाभावात्। न च 'रदाभ्यां निष्ठातो नः' 'रषाभ्यां नोणः' इत्यत्र च रप्रत्याहारा-

हलन्त्यम् । [ १ । ३ । ३ ] ।
'हल्' [ प्र. सू. १४ ] इति सूत्रेऽन्त्यमित्स्यात् ।

---

ग्रहणमेवानित्यत्वफलम्, अनुनासिकाकारेणैव प्रत्याहारकरणेन तेषु अनुनासिकत्वे प्रतिज्ञाया अभावेनैव रप्रत्याहाराप्राप्तेः । एवमेव 'वनो र च' 'रात्सस्य' इत्यादावपि बोध्यम् । वृद्ध्यादिसंज्ञाया व्याकरणशास्त्रे क्वचिदप्यनित्यत्वादर्शनेन रप्रत्याहारस्यानित्यत्वकल्पनमयुक्तम् । अत एव रप्रत्याहार इव यण् प्रत्याहारस्थाने लणोऽकारेण यप्रत्याहारेण क्वचिदपि पाणिन्यादिना न व्यवहृतः । विस्तरस्तु शब्देन्दुशेखरादवसेयः ।

नचास्यैवेत्संज्ञकत्वे हकाराद्युत्तराकाराणां वैयर्थ्यमत आह—हकारादिष्विति । तदुक्तम् 'उच्चैरुदात्तः' ( १–२–२९ ) इति सूत्रभाष्ये 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति' इति । अपिना उदात्तत्वाद्यभावस्य ग्रहणम् । नचैवम् 'ह्म्यन्त' ( ७–२–५ ) इतिवत् 'स्कोः' ( ८–२–२९ ) इतिवच्चैकेनाकारेण 'ह्य्व' इत्येवमुच्चारणसम्भवे प्रत्येकव्यञ्जनेन सहाकारोच्चारणवैयर्थ्यम्, मुखसुखार्थत्वेन यदुत्तरोऽकारस्तस्यैव व्यञ्जनस्य प्रत्याहारबोध्य-त्वमितिसूचनार्थत्वेन च प्रत्येकमकारोच्चारणसार्थक्यात् । अत एव नेत्संज्ञकानां प्रत्याहारबोध्यत्वम्, तदुत्तराकाराभावात् । नच यादीनां तालव्यादिस्थानजन्यत्वेनाकारस्य च कण्ठस्थानमात्रजन्यत्वेन च यादिवर्णोच्चारणार्थत्वासम्भवः ।

किञ्च हकारादिव्यञ्जनवर्णानन्तरमेवाकारोच्चारणमिति हकाराद्युच्चारणे तत्पूर्ववर्तित्वाभावेन तस्य सहकारिकारणत्वं दुर्वचमिति वाच्यम्, स्वावधिकपूर्वत्व-स्वावधिकोत्तरत्वान्यतरसम्बन्धेनाज्विशिष्टस्यैव हल उच्चारणं न केवलस्येत्यत्रैव भाष्यतात्पर्यात् । एवमेवायोगवाहेष्वपि तत्तद्वर्णवैशिष्ट्यं बोध्यम् । एवञ्च व्यञ्जनोच्चारणेऽजुच्चारणस्य कारणत्वाभावेऽपि न क्षतिः । किञ्च एषां नानास्थानजन्यत्वमिवोच्चारणार्थाज्विशिष्टहलामप्युच्चारणे बाधकाभावः । वायोरतिशीघ्रगामित्वात् क्रमेणोच्चारणसत्त्वेऽपि क्रमाप्रतीत्योच्चारणार्थकाज्झलोः सहैवोच्चारणप्रतीत्या च 'नाचं विना' इत्यस्य भाष्यकृदुक्तेः ।

एषामन्त्या इत इति—तत्र केन सूत्रेणेत्संज्ञेत्याकाङ्क्षायाम् 'उपदेशेऽन्त्यं हल् इत्' इत्यर्थकेन 'हलन्त्यम्' इतिसूत्रेण इत्संज्ञा वक्तव्या । तत्र हल्शब्देन 'हल विलेखने' इति धातोः, चतुर्दशस्य 'हल्' इति सूत्रस्य वा न ग्रहणम्,

'न विभक्तौ तुस्माः' ( १–३–४ ) इत्यस्य वैयर्थ्यापत्तेः । तथाहि—धातोः सूत्रस्य वा ग्रहणे विभक्तिस्थतुस्मां केनापीत्संज्ञाया अप्राप्तया इत्संज्ञानिषेधविधानवैयर्थ्यमेव, प्राप्तौ सत्यां निषेधस्य सार्थक्यात् । तस्मात् 'न विभक्तौ' इत्यस्य सार्थक्याय हल्पदेन व्यञ्जनानां ग्रहणं वाच्यम् । हल्पदेन व्यञ्जनबोधश्च हल्पदे व्यञ्जननिरूपितशक्तिज्ञानं विना न सम्भवति, शाब्दबोधं प्रति शक्तिज्ञानजन्योपस्थितेः कारणत्वात् । नच कोशादिना शक्तिज्ञानसिद्धिः, तादृशकोशाद्यभावात् । एवञ्च हल्पदे तादृशशक्तिज्ञानम् अन्त्येनेता सहादिर्मध्यगानां संज्ञा, इत्यर्थकस्य 'आदिरन्त्येन सहेता' ( १–१–७१ ) इत्यस्यार्थबोधं विना न सम्भवति । तदर्थबोधश्च 'वाक्यार्थबोधे पदार्थोपस्थितिः कारणम्' इति न्यायेन इत्पदशक्तिज्ञानं विना न सम्भवति । इत्पदशक्तिज्ञानञ्च 'हलन्त्यम्' इतिसूत्रार्थबोधमन्तरा असम्भवि । तदर्थबोधश्च हल्पदशक्तिज्ञानाधीनः । एवञ्च लकारस्येत्संज्ञायां हल् प्रत्याहारसिद्धिः, हल् प्रत्याहारसिद्धौ च इत्संज्ञेति हल्पदार्थज्ञानाधीनमित्पदार्थज्ञानमित्पदार्थज्ञानाधीनञ्च हल्पदार्थज्ञानमिति परस्परापेक्षत्वरूपान्योन्याश्रयदोषः । तदुक्तं भाष्ये 'लकारस्यानुबन्धत्वेनाज्ञापितत्वाद्धल्ग्रहणाप्रसिद्धिः' इति । यद्यपि सूत्रनिर्मातुः पाणिनेर्हल्शब्दार्थेत्पदार्थज्ञानं विना सूत्रनिर्माणं न सम्भवतीति उभयोर्वाक्यार्थज्ञानमन्तरापि तदर्थज्ञानमस्त्येव तथापि लक्षणैकचक्षुष्कस्यास्मदादेरन्योन्याश्रयत्वात् ज्ञाने उत्पत्तौ च 'अन्योन्याश्रयाणि कार्याणि नेह प्रकल्पन्ते' इति न्यायात् 'आदिरन्त्येन सहेता' इत्यनेन सह प्राप्तान्योन्याश्रयदोषपरिहारायान्तिमहल्सूत्रघटकलकारस्येत्वार्थमेकशेषेण, तन्त्रेण वा कृतम् 'हलन्त्यम्'

## आदिरन्त्येन सहेता [ १ । १ । ७१ ]

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्। इति हल्संज्ञायाम्।

इतिसूत्रम्। 'बोद्धुरुत्वावृत्त्या एकेन वाक्येनानेकार्थबोधः' इतिनियमादावृत्तम्, 'उपदेशेऽजनुनासिक इत्' (१-३-२) इति सूत्रात् 'उपदेशे' 'इत्' इतिपदद्वयमनुवर्त्य हल्=हल्सूत्रस्योपदेशेऽन्त्यमित्संज्ञम्' इत्यर्थकं द्रष्टमाह हलन्त्यमिति—अन्त्यमित्यस्याधारविशेषणत्वान्नपुंसकनिर्देशः। वाक्यपदीयेऽप्युक्तम्—

'आवृत्तिशक्तिभिन्नार्थे वाक्ये सकृदपि श्रुते।
लिङ्गाद्वा तन्त्रधर्माद्वा विभागो व्यवतिष्ठते॥' इति।

सकृदुच्चरितत्वेऽपि अनेकार्थविषयकबोधजनकत्वं तन्त्रम्। यथा 'श्वेता भज्यन्ताम्, भुज्यन्ताम्, दीव्यन्ताम्' इत्यत्राक्षपदेन सकृदुच्चरितेन शकटाङ्ग ( धूर ) कमलफल ( कमलगट्टा ) देवनशलाका- ( पासा ) नां बोधः।

तथा च पाणिनिना एकमेवार्थद्वयबोधकं सूत्रं तन्त्रेण पठितम्। आवृत्त्या च बोद्धृणामर्थद्वयबोधः। प्रथमेन 'हल्सूत्रस्यान्त्यमित्' इत्यर्थकेन हल्सूत्रस्थलकारस्येत्संज्ञायाम्, 'आदिरन्त्येन' इति सूत्रेण हल्प्रत्याहारसिद्धौ द्वितीयस्य 'उपदेशेऽन्त्यं हल् (व्यञ्जनम्) इत्, इत्यर्थकेन जस्-शस् इत्यादीनामपि सकारस्येत्संज्ञाप्राप्तौ तद्वारणाय 'न विभक्तौ तुस्माः' इति सूत्रं चरितार्थम्।

नचान्योन्याश्रयदोषपरिहाराय 'उपदेशे हदन्त्यम्' इति 'अच्' इति 'अनुनासिकः' इति सूत्रत्रयमस्तु। आद्यस्य 'उपदेशेऽन्त्यं हल् अच्च इत्' इत्यनेनाद्यादीनामित्संज्ञायामचादिप्रत्याहारसिद्धिः। अनन्त्यस्याच इत्त्वविधानार्थम् 'उपदेशेऽजित्' इत्यर्थकम् 'अच्' इति द्वितीयं सूत्रम्। न च प्रथमेन, द्वितीयेन च उपदेशे विद्यमानानाम् 'भू' 'रु' 'उ.शु' इत्यादिस्थानामचामित्त्वापत्तिः। न च फलाभावः 'स्वरतिसूतिसूयतिधूञूदितो वा' ( ७-२-४४ ) 'उदितो वा' इत्यादिना विकल्पेनेट्विधानरूपफलस्य सत्त्वादिति वाच्यम्, तृतीयस्य 'अनुनासिकः' इत्यस्य नियमेन वारणात्। तथाहि अनुनासिकस्याप्यचः पूर्वसूत्राभ्यामेवेत्त्वसिद्धया 'सिद्धे सत्यारभ्यमाणो विधिर्नियमाय कल्पते'—इति न्यायेन 'अच् चेदित्स्यात्तर्हि अनुनासिक एवेति नियमकल्पनेन अननुनासिकस्याच इत्संज्ञाप्राप्तेः। 'अनुनासिक इच्चेत्तर्हि अचेव' इतिविपरीतनियमस्तु न, 'मिदचोऽन्त्यात्परः' (१-१-४७) 'ञ्नित्यादिर्नित्यम्' (६-१-१९७) इत्यादीनां वैयर्थ्यापत्तेः। एवञ्च हल्ग्रहणमपि न कर्तव्यं भवति अन्योन्याश्रयश्च नेति चेन्न, आर्षसूत्रस्य पारायणे पुण्यजनकत्वेनानार्षतादृशसूत्रकरणे पुण्यजनकत्वानापत्तेः, तथाच तत्र तत्र भाष्यम् 'अपाणिनीयन्तु भवति' इति। यदि 'सूत्रभेदं तमुपाचरन्ति यत्र तदेवान्यत्क्रियते, भूयो वा यदि तदेवोपसंहृत्य क्रियते नासौ सूत्रभेदः, इति 'अच् उपसर्गात्तः' इति ( ७-४-४२ ) सूत्रभाष्याल्लाघवे सति सूत्रभेदो नार्षत्वप्रयोजक इत्युच्यते ( दोषाय ) तदा योगविभाग सूत्रत्रयकरणनियमविपरीतनियमवारणार्थज्ञापकाश्रयणरूपगौरवात्तादृशन्यासेनान्योन्याश्रयदोषवारणस्यायुक्तत्वं बोध्यम्।

यदि तु 'हलन्त्यम्' इत्यपहाय 'व्यञ्जनमन्त्यम्' इति न्यस्यते तदा नान्योन्याश्रयदोषः, नापि गौरवम्। व्यञ्जनपदस्य स्वरेतरवर्णेषु शक्तेर्लोकसिद्धत्वात्। अत एव 'नाचं विना व्यञ्जनस्योच्चारणमपि भवति' इति भाष्यं संगच्छते। नच भाष्यादिविरोधः, लाघवादरबुद्धिना पाणिनिना एवमेव कथं न कृतमित्यत्रैव न्यासतात्पर्यादिति दिक्।

'हल्' इतिसूत्रे लकारेत्संज्ञायाः फलाकाङ्क्षायामाह—आदिरन्त्येनेति—अन्तेऽवसाने भवोऽन्त्यः। भवार्थे दिगादित्वाद् 'दिगादिभ्यो यत्' (४-३-५४) इति यत्। नन्ववसानं वर्णानामभावस्तत्र कथं वर्णः? इति चेन्न, 'अन्ते' इत्यस्य अन्तसमीपपरकत्वेनावसानसामीप्यस्य चरमवर्णेऽसत्त्वात्। यद्यपि अन्तशब्दस्य चरमवर्णवाचकत्वेन 'आदिरन्तेन' इत्येव वक्तुमुचितं तथापि अन्तावयवेऽवयवोः पर्यायत्वभ्रमवारणाय 'अन्त्येन' इत्युक्तम्। अत एव 'अचोऽन्त्यादि टि' 'अन्तादिवच्च' इत्यादौ

तुल्यार्थाभिप्रायेणोभयनिर्देशसङ्गतिः। सति परस्मिन्यस्मात्पूर्वो नास्ति स आदिः। यद्वा, यस्मात्पूर्वो नास्ति स आदिः। एवं सति पूर्वस्मिन्यस्मात्परो नास्ति सोऽन्त्यः। यद्वा, यस्मात्परो नास्ति सोऽन्त्यः। अद्वा पक्षे एकस्मिन्नपि वर्णे आदित्वमन्त्यत्वञ्च स्वतः सिद्धमिति 'आद्यन्तवदेकस्मिन्' (१-१-२१) इति सूत्रं न कर्तव्यम्।

अत्रादिपदमन्त्यपदमित्युभयञ्च स्वसञ्ज्ञाबोधकम्। अन्यथा कस्यापि प्रत्याहारस्य सिद्धिर्न स्यात्। तथाहि—अच् प्रत्याहारसिद्धये 'ऐऔच्' सूत्रस्य चकारस्येत्संज्ञा कर्तव्या। तत्रेत्संज्ञकचकारेण सह अकारस्याव्यवहितत्वरूपसाहित्यमेव नास्ति इति 'आदिरन्त्येन' इत्यस्य तत्र प्रवृत्तिर्न स्यात्। यत्र च 'उपदेशेऽजनुनासिकः' इत्यादौ चकारेण सहाकारोऽस्ति तत्र चकारस्य नेत्संज्ञा उपदेशाभावात्। नापि तत्र मध्यमो वर्णः। उपदेशो नाम आद्योच्चारणम्। तच्च अज्ञातस्वस्वरूपज्ञापकोच्चारणम्। यदुच्चार्यते पाणिन्यादिभिस्तदेव यदि बुध्यते उपदेशत्वं तस्य। यथा 'सु-सुप्' 'गर्गादिभ्यो यञ्, टाप्, ङीप्, ङीष्, सुट्, तुट्, एव, शीङ् इत्यादिषु उच्चारित एव शब्दो बुध्यते। इत्युपदेशत्वसत्त्वेन इत्संज्ञा तत्र भवति। अच्, हल्, झल्, इत्यादिषु प्रत्यय-धातु-प्रातिपदिकसंज्ञाशब्देषु उच्चरितेषु तत्स्था वर्णा न बुध्यन्ते इति न तत्रोपदेशत्वम्।

तथा च 'आदिरन्त्येन' इति सूत्रसामर्थ्यात् सदृशो लक्षणया 'अन्त्येन' 'ऐ औच्' इत्यादिसूत्रस्थचकारादिस्तत्सदृशेन 'अच्' इत्यादिप्रत्याहारावयवचकारादिना सहितो य आदिः—अ इ उ ण् इत्यादिसूत्रस्थः, अकारादिस्तत्सदृशः, 'अच्' इत्यादिप्रत्याहारघटकोऽकारादिः, सः='अच्' इत्यादिशब्दः, स्वान्त्यचकाराद्यनुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितेत्संज्ञकचकारान्तस्य, स्वाद्यकाराद्यनुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णसमाम्नायादिस्थाकाराद्यवयवकस्य संज्ञा' इत्यर्थकेन 'आदिरन्त्येन' इति सूत्रेण अच्, हल् इत्यादिसकलप्रत्याहारः सिध्यति। तत्र इत्संज्ञको वर्णः सादृश्यप्रतियोगी। 'अच्' प्रत्याहारान्त्यो वर्णः चकारादिः सादृश्यानुयोगित्वेन विवक्षितः। स अन्त्यो यस्य सः। एवम् अ इ उ ण् इत्यादि घटक आदिवर्णः, अकारादिः सादृश्यप्रतियोगित्वेन विवक्षितः 'अच्' इत्यादिप्रत्याहारस्य आदिः अकारादिः सादृश्यानुयोगी। तथा च 'अच्' इत्यादिप्रत्याहारस्य आद्यन्तौ उभावपि सादृश्यानुयोगिनौ। प्रत्याहारेण यस्य समुदायस्य बोधस्तत्रत्यौ आद्यन्तौ वर्णौ सादृश्यप्रतियोगिनौ। एवञ्च सादृश्यानुयोगिनाऽन्त्यवर्णेन सहितः सादृश्यानुयोगी आदिः 'अच्' इति, सादृश्यप्रतियोगी 'ऐऔच्' इति सूत्रचकारो यस्य समुदायस्य अन्त्यः, "अइउण्" सूत्राकारो यस्य समुदायस्यादिः स समुदायः "अइउण् ऋलृक् एओङ् ऐऔच्," इति, तस्य समुदायस्य बोधकः। एवमन्यप्रत्याहारेषु स्वयमूह्यम्।

सर्वत्र संज्ञासूत्रे संज्ञाबोधकं पदं संज्ञिबोधकञ्च पदं वर्तते। यथा—'वृद्धिरादैच्' इत्यत्र 'वृद्धिः' इति संज्ञाबोधकम्, 'आदैच्' इति संज्ञिबोधकम्। एवम् 'आदिरन्त्येन सहेता' इत्यत्र न ज्ञायते—किं संज्ञाबोधकम् किञ्च संज्ञिबोधकमिति। 'अन्त्येनेता सहादिरिति 'अच्' 'हल्' इत्यर्थकं वाक्यं संज्ञाबोधकमिति चेत्तर्हि सम्पूर्णस्य संज्ञावाचकतया संज्ञिवाचकाभावेन संज्ञिनं विना संज्ञा नोपपद्यते। अतः संज्ञादलप्रविष्टावयवान्त्यावयवरूपार्थेन अवयविनं विना अवयवस्यानुपपत्त्या 'येन विना यदनुपपन्नं तेन तदाक्षिप्यते' यथा भोजनं विना पीनत्वं नोपपद्यते इति पीनत्वानुपपन्त्या 'पीनोऽयं देवदत्तः दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनाक्षेपस्तथा 'आदिरन्त्येन' इत्यत्रापि आद्यन्तावयवेन आक्षिप्तम् आद्यन्तघटितसमुदायरूपमवयविनं संज्ञिनमाश्रित्य अच्, हल्, इत्यादिसंज्ञा विधेया। तदुक्तं भाष्ये—'आदिरन्त्य इति सम्बन्धिशब्दावेतौ, तत्र सम्बन्धादेतद्गन्तव्यम्। यं प्रति य आदिरन्त्य इति च भवति तस्य ग्रहणम्, इति। आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते स एव संज्ञी इति भाष्याशयः।

तत्र समुदायस्य संज्ञित्वे अ-इ-उण् इत्यत्र पठितस्य अकारादिचान्तसमुदायस्य अच्पदबोध्यस्य क्वचिदपि लक्ष्येऽभावेन 'इको यणचि' इत्यादीनां वैयर्थ्यापत्त्या समुदाये प्राप्नुवती संज्ञा तदवयवे विश्राम्यति इति प्रत्याहारेण समुदायघटकवर्णानामेव बोधो न समुदायस्य। तत्र समुदायघटकाद्यन्तयोर्वर्णयोः

### हलन्त्यम् [ १ । ३ । ३ ]

उपदेशेऽन्त्यं हलित्स्यात्। उपदेश आद्योच्चारणम्। ततः 'अण्' 'अच्' इत्यादिसंज्ञासिद्धौ।

---

'अच्' इत्यादिष्वकारचकारयोर्बोधकत्वे प्रतिष्ठयोर्बोध्यत्वं न स्यात्, बोधकत्वेन बोध्यत्वस्य बाधात्। यथा 'सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्' इत्युक्ते माठरकौण्डिन्ययोर्ब्राह्मणान्तर्गतत्वेऽपि परिवेषणकर्तृत्वेन भोजनकर्मत्वस्य बाधः। तथा प्रकृतेऽपि स्यादिति 'स्वं रूपम्' (१-१-६८) इति सूत्रात्स्वंरूपमित्यनुवर्त्य षष्ठ्यन्तत्वेन विपरिणम्य स्वस्य रूपस्य च अजादिसंज्ञा बोद्धव्या। तदुक्तं मूले—स्वस्य च रूपस्येति। अत्र यद्यपि स्वपदेन बोधकस्य 'अच्' इति समुदायस्य संज्ञा प्राप्नोति तथापि समुदायस्य संज्ञायां फलाभावेन तदवयवस्यादेरेव संज्ञा नान्त्यस्य, 'प्रत्याहारेष्वितां न ग्रहणम्' इत्यनेन निषेधात्। सूत्रे 'अन्त्येन' इति 'सह युक्तेऽप्रधाने' (२-३-१९) इत्यनेन जाततृतीयया अन्त्यस्याप्रधानत्वेनादेश्च तदपेक्षया प्रधानत्वेन स्वशब्दस्य सर्वनाम्नः स्वभावतः प्रधानबोधकत्वेन 'स्वस्य च रूपस्य' इत्यनेनादेरेव बोध्यत्वकल्पनाच्च।

वस्तुतस्तु प्रकृते न माठरपरिवेषणन्यायविषयः। प्रत्याहारघटकयोः 'अच्' इत्यादावाद्यन्तयो-र्बोधकयोराद्यन्ताक्षिप्तसमुदायघटकाइउण्सूत्रस्थाद्यन्तसदृशत्वेऽप्याक्षिप्तसमुदायावयवत्वाभावेन बोध्य-त्वस्य च समुदायावयवे एव प्राप्त्या ब्राह्मणत्वमाठरत्वयोः सामानाधिकरण्यमिव समुदायावयवत्वेन सममन्तादिसदृशत्वयोर्बोध्यत्व-बोधकत्वयोश्च सामानाधिकरण्याभावात्। अनुवृत्तिं विनापि आदेः समुदायावयवत्वेन स्वत एव बोध्यत्वसिद्धौ अन्त्यस्य च, 'तस्य लोपः' इति लोपेन ज्ञापकादिना वा प्रत्याहारबोध्यत्वाभावसिद्धौ तदर्थमनेकविधक्लिष्टकल्पनमयुक्तमेव। 'आदिरन्त्येन' इत्यस्य 'अन्त्येत्सदृशेन सहित आदिसदृशः प्रकृतसादृश्यप्रतियोग्याद्यन्तान्वयवकसमुदायघटकानां संज्ञा' इत्यर्थो बोध्यः। आदि-रित्यस्याभावे इत्संज्ञकान्तसमुदायावयवस्य संज्ञायामिगादिप्रत्याहारेऽकारादिसमुदायस्यापि इत्संज्ञका-न्तत्वेनाकारस्यापीक्प्रत्याहारबोध्यत्वापत्तिः।

एवमन्त्येनेत्यस्याभावे 'इता सहादिः' इत्युक्ताविगादिप्रत्याहारे इकाराद्यवयवकसमुदायस्या-क्षेपेऽन्त्यस्यानियतत्वेन एकारादीनामपि प्रत्याहारबोध्यत्वापत्तिः। इतेत्यस्याभावे 'अम्' 'यम्' इत्यादिमकारेण प्रत्याहाराः पूर्वमुपस्थितत्वात् 'ञ म ङ ण' इति मकारेणैव स्युः, तथा सति ङादीनामुक्प्रत्याहारेषु ग्रहणं न स्यात्।

मध्यगानामिति। यद्यपि वर्णद्वयसत्त्वेऽप्याद्यन्तत्वसम्भवेनाद्यन्ताभ्यां मध्यघटितसमुदाय स्याक्षेपासम्भवः। तथापि आद्यन्तघटितसमुदायस्याक्षेपे मध्यघटिताघटितसमुदायस्य ग्रहणे मध्यघटित-समुदायघटकानामेवानेन संज्ञा न द्वयोः। वर्णद्वयघटितसमुदायघटकस्यादेरेव संज्ञात्वे संज्ञावैफल्यम्, संज्ञाया लाघवार्थत्वेनैकस्य बोधकत्वेन प्रत्याहारकरणे गौरवापत्तेः, 'अनाकृतिः संज्ञा, आकृतिमन्तश्च संज्ञिनः' इति भाष्यविरोधापत्तेश्च।

हल्संज्ञायामिति। 'हलितिसूत्रेऽन्त्यमित्' इत्यर्थकेन 'हलन्त्यम्' इतिसूत्रेण चतुर्दश-सूत्रस्थलकारस्येत्त्वे वर्णसमाम्नायस्थहकारादिलान्तसमुदायघटकान हल्संज्ञायामित्यर्थः।

हलन्त्यम्। 'उपदेशेऽजनुनासिक इत्' इत्यत उपदेशे, इत्, इति पदद्वयमनु-वर्तते। हल्पदेन च 'न विभक्तौ तुस्माः' इतिसूत्रारम्भसामर्थ्यात् वर्णसमाम्नायस्थहकारादिलान्तसमु-दायघटकवर्णसदृशवर्णानां ग्रहणम्। तथा च उपदेशे पाणिन्यादीनामाद्योच्चारणकाले विद्यमानमन्त्य-मिदित्संज्ञकमित्यर्थः। उपदेश इत्यस्य उपशब्दस्याद्यर्थत्वाद् दिशधातोरुच्चारणार्थत्वात् भावे घञि, आद्यश्च तदुच्चारणं च आद्योच्चारणमिति योगार्थः। अत्राद्यत्वञ्च न उच्चारणत्वावच्छिन्नप्रतियोगिताकध्वं-साधिकरणकालावृत्तित्वरूपम्, सूत्रनिर्माणात्पूर्वं पाणिनेराजन्म मौनित्वापत्तेः। किन्तु अज्ञातस्वरूपस्य शब्दस्य स्वरूपज्ञापकत्वरूपम्। यदानुपूर्वीकमुच्चार्यते तदानुपूर्वीकमेव बुध्यते चेत्तदा तदुच्चारण-माद्योच्चारणं बोध्यम्। यथा—अइउण्, सु-औजस्, टाप्, शीङ्, एध, ङीप् इत्यादि। अच्, हल्

उपदेशेऽजनुनासिक इत्। [ १।३।२ ]।

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्।

---

इत्यादिप्रत्याहाराणाम्, प्रत्यय, टि, घु, षट् इत्यादिसंज्ञाशब्दानाञ्च नोपदेशत्वम्, स्वस्वरूपबोधकत्वा-भावात्। एतेन पाणिन्यादिः स्वमौनानन्तरं प्रथमं यदुच्चारितवान् तदेकमेवाद्योच्चारणं स्यादित्यत्र इत्संज्ञापत्तिरित्यपास्तम्।

एवञ्च 'ऐऔच्' इत्यादौ एकारादेरित्संज्ञायामणादिप्रत्याहारसिद्धिरित्याह—ततः अणिति। सिद्धाविति। सिद्धौ सत्याम् 'उपदेशेऽजनुनासिकः' इत्यस्य वाक्यस्यार्थबोध इत्यर्थः। 'यस्य भावेन भावलक्षणम्' ( २-३-३७ ) इति सिद्धावित्यत्र सप्तमी।

उपदेशेऽजनुनासिक इत्। उपदेशे पूर्वोक्तस्वरूपे आद्योच्चारणकाले विद्यमानोऽनुनासिकोऽजित्संज्ञक इत्यर्थः। सूत्रे 'अज्' इत्यत्र कुत्वाभावो निपात्यते। तच्च श्रूयमाणः स्वरादिर्यः सुप तद्भिन्नप्रत्ययनिमित्तकपदत्वस्थले एव। अत एव 'अचोऽञ्णु' इति भाष्यप्रयोगः संगच्छते। 'अज्' इत्यत्र स्वरादिसुब्निमित्तकपदत्वेऽपि सौ श्रूयमाणस्वरादिसुब्भिन्नत्वसत्त्वेन कुत्वाभावनिपातनं सिद्ध्यति। एवं 'कमनच्त्वम्' इतिभाष्यप्रयोगेऽपि कुत्वाभावः, सुब्भिन्नत्वप्रत्ययनिमित्तकपदत्वसत्त्वात्। 'अज्भिर-व्यवहिताः,' 'अजन्ताङ्गस्य', 'अजन्तपुंलिङ्गाः' इत्यादयो दीक्षितादिप्रयोगा अपि अत एव सिध्यन्ति। सूत्रे आर्षत्वात्तदभावकल्पने तु उक्तप्रयोगाणामसाधुत्वं दुर्वारमेव स्यात्। एवञ्च 'अज्भिः' इत्यत्र कुत्वं न्याय्यम् इति शेखरोक्तिश्चिन्त्या।

उपदेश इति। अत्र 'उपदेशे' इत्यस्याभावे 'अभ्र आँ अपः' इत्यत्र 'आङोऽनुनासिकश्छन्दसि' (६-१-१२६) इत्यनुनासिकादेशे इत्संज्ञालोपौ स्याताम्। ननु छन्दसि दृष्टानुविधित्वादनुनासिकविधान-सामर्थ्याच्च नोक्तदोष इति चेन्न, 'हलन्त्यम्' इतिसूत्रे 'अग्निचित्' इत्यादावित्त्ववारणाय 'उपदेशे' इत्यनुवृत्तेरावश्यकतया इहापि तत्करणेनैवोक्तदोषवारणस्यौचित्यात्। केचित्तु विधानसामर्थ्याल्लोपा-भावेऽपि इत्संज्ञास्तु। तत्फलन्तु 'अभ्र आँ अटितः' इत्यत्रेट्प्रतिषेध इति, तन्न, यत्र यत्र संकेतसम्बन्धे-नेत्पदवत्त्वं तत्र तत्र प्रतियोगितासम्बन्धेन लोप इति व्याप्तेस्तथा लोपस्य व्यापकतया व्यापकाभावे व्याप्यसत्ताया वक्तुमशक्यत्वात्। यत्तु 'अभ्र आँ अटितः' इत्यादौ 'अनुबन्धा अनेकान्ताः' इति पक्षे 'आदितश्च' (७-२-१६) इति इट्प्रतिषेधः फलमिति, तन्न, अनुबन्धानामनवयवत्वपक्षस्य 'अनुबन्धा एकान्ता इत्येव न्याय्यम्' इति भाष्योक्त्या दूषितत्वात्, अटितपदघटितवाक्यस्य छन्दस्त्वाभावेन 'आङोऽनुनासिकश्छन्दसि' इत्यस्याप्रवृत्तेश्च।

वस्तुतस्तु 'अनुबन्धा एकान्ताः' इति सिद्धान्तपक्षेऽपि 'दधिँ' इत्यस्य 'अणोऽप्रगृह्यस्या-नुनासिकः' इति विहितानुनासिकस्यानुकरणादाचारक्विपि 'दधयति' इत्यत्रेत्त्वाभाव उपदेशे इत्यस्य फलम्। नचेत्त्वे लोपेतरफलाभावः, 'इदितो नुम् धातोः' (७-१-५८) इति नुमः फलस्य सत्त्वात्।

अनुनासिक इति। कण्ठादिस्थानान्तरेणोच्चरणं अनु = पश्चान्नासिकां गत इति नार्थः, तथा सति कादीनामनुस्वारयमानाञ्चानुनासिकत्वानापत्तेः। तेषूच्चारणकाले एव नासिकागतत्वस्य सत्त्वात्। किन्तु अभिहत्य व्यक्तः इत्यर्थेऽनुशब्दो, निपातानामनेकार्थत्वात्। तथा च नासिकामभिहत्य व्यक्तः प्रकाशित इत्यर्थः। उक्तावयवार्थेनैवानुनासिकत्वज्ञानं स्यादिति 'मुखनासिकावचनोऽनुनासिकः' इतिसूत्रमवयवशक्त्या तादृशार्थज्ञानासमर्थं प्रत्येवोपकारकमिति सूचनार्थं एव तत्सूत्रस्यात्रानुल्लेखः।

एवञ्चानेन लण्सूत्रस्थाकारस्येत्संज्ञायाम् हस्त्वशाकारेण सहोच्चार्यमाणो रेफः 'उरण् रपरः' इत्यत्र रेफाद्यकारान्तसमुदायघटकरलयोः संज्ञा।

अनुनासिक इत्यस्याभावे 'ईक्ष दर्शने' इत्यत्रेकारस्येत्त्वे 'ईक्षितः' इत्यत्र 'श्वीदितो निष्ठायाम्' ( ७-२-१४ ) इत्यनेनेण्निषेधापत्तिः। यद्यपि 'वाक्यार्थबोधे पदार्थोपस्थितिः कारणम्' इति नियमेन अत्रैवानुनासिकसंज्ञाशास्त्रस्य लेख उचितस्तथापि नासिकामनुगत इति पूर्वोक्त-

प्रतिज्ञानुनासिक्याः पाणिनीयाः। 'लण्' [ प्र. सू. ६ ] सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा।

---

योगार्थाश्रयणेनैव कार्य्यसिद्धौ अनुनासिकसंज्ञाशास्त्रं योगार्थानभिज्ञं प्रति अनुनासिकपदार्थज्ञानार्थम्। यत्तु अनुनासिकपदे योगार्थाश्रयणमशक्यम्, 'स्वं रूपं शब्दस्याशब्दसंज्ञा' ( १-१-६८ ) इति सूत्रेण स्वरूपस्यैव संज्ञित्वबोधनात्। अनुनासिकशब्देन स्वरूपस्यैव बोधे तु 'यरोऽनुनासिके' इत्यादौ पदान्तयरः अनुनासिकशब्दे परेऽनुनासिकशब्दस्यैव विधानं स्यादिति तन्न, 'स्वं रूपम्' इति सूत्रसत्त्वे 'विभाषा वृक्षमृग' ( २-४-१२ ) इत्यत्र वृक्षादौ विशेषाणां ग्रहणस्य, 'स्वे पुषः' ( ३-४-४० ) इत्यत्र अर्थस्य, पर्यायस्य, विशेषस्य च ग्रहणाय चानेकत्र लक्ष्यानुसारि भाष्यकारादिव्याख्यानस्यैव स्वीकरणीयत्वे सूत्रसाध्यार्थस्योपायान्तरेण लभ्यत्वे च स्वं रूपमित्यस्य प्रत्याख्यानात्। 'ङमुण्नित्यम्', 'तस्मान्नुडचि', इत्यादिसौत्रनिर्देशेन अनुनासिकशब्दे स्वरूपाग्रहणज्ञापनेनाशब्दसंज्ञायामित्यस्याभावेऽपि दोषाभावात्।

अजिति। मनिनो मकारस्येत्त्ववारणार्थम् अज्ग्रहणं, नचान्त्यानन्त्यहलोऽनेनेत्त्वे 'हलन्त्यम्' इतिसूत्रं नियमार्थम् 'हल इत्त्वं चेदन्त्यस्यैव' इति वाच्यम्, अननुनासिकचकारादेरित्संज्ञार्थं तत्पारितार्थ्येन नियमासम्भवात्। एतेनानन्त्यहलोऽनेनेत्त्वे हलन्त्यसूत्रेऽन्त्यग्रहणवैयर्थ्यापत्तिरपि निरस्ता। तदभावे आलचि लस्य क्विप्प्रत्ययादौ रेफादेशापत्तेः।

यद्यपि सूत्रकारादिना इत्संज्ञकत्वेनाभिमताः सर्वेऽचोऽनुनासिकचिह्नविशिष्टा एव पठितास्तथापि लेखकैः प्रमादादुदात्तादिचिह्नवदनुनासिकचिह्नानि अपि न लिखितानि। व्याख्यानादिनाऽनुनासिक्यं ज्ञातव्यमित्युक्तं प्रतिज्ञेति।

प्रतिज्ञेति। प्रतिज्ञायते = प्रतिज्ञाविषयीक्रियते इति प्रतिज्ञा। 'आतश्चोपसर्गे' इति स्त्रियां कर्मण्यङ्। अनुनासिकस्य भाव आनुनासिक्यम्। 'गुणवचनब्राह्मणादिभ्यः ष्यञ्' ( ५-१-१२४ ) इति भावे ष्यञ्प्रत्ययः। प्रतिज्ञानञ्चात्र अनुनासिकशब्देन कथनं व्यवहाररूपं वा। यथा 'अष्टनः' ... 'अप्-स्वरादिभ्यः' ( ४-१-१६ ) इतिसूत्रे 'अदृड्' इत्यत्र ङित्त्वाभावे पूर्वसवर्णदीर्घमाशङ्क्य 'अप्' इत्यकारस्यानुनासिकत्वमुक्तम्भाष्ये 'सिद्धन्तु अनुनासिकोपधात्' इति। अकारस्येत्संज्ञालोपयोः पूर्वसवर्णदीर्घो न स्यादिति भावः।

व्यवहारश्च 'सु' इत्यत्रोकारोऽनुनासिकः, तत्र-तत्र 'अनुनासिकः' 'प्रत्ययः' इत्यादिषु पदान्ते रुत्वविसर्गकरणात् 'लण्' इत्यत्राकारस्यानुनासिकत्वे प्रतिज्ञा च 'लपरत्वं वक्ष्यामि' इति वार्तिकमेव, वक्ष्यामीत्यस्य 'लण्' सूत्रस्थाकारस्यानुनासिकत्वेन र्-अ इति प्रत्याहारेण व्याख्यास्यामीत्यर्थं इति कैयटेनोक्तम्।

पाणिनीया इति। 'पाणिनेरिमे' इत्यर्थे 'वृद्धाच्छः' इति छ प्रत्यये पाणिनीया वर्णा इत्यर्थः। यत्तु पाणिनिना प्रोक्तं पाणिनीयं व्याकरणं, तदधीयते विदन्ति वा पाणिनीयाश्छात्रा इति। पाणिनिशिष्यपरम्परया इदानीन्तनानामनुनासिकत्वज्ञानं स्यात्। पाणिन्यादिः स्वशिष्यान् कथयेदयमनुनासिक इति, शिष्यश्च स्वशिष्यानिति परम्परयेति। तच्चिन्त्यम्। 'प्रतिज्ञाविषय आनुनासिक्यं येषा'मित्यत्र निष्ठत्वं षष्ठ्यर्थः। यत्स्वरवर्णनिष्ठमनुनासिक्यं प्रतिज्ञाविषयस्ते वर्णा इत्यर्थात्। आनुनासिक्यस्य शिष्यनिष्ठत्वासम्भवात् ज्ञानविषयत्वेन शिष्यनिष्ठत्वोपपादनस्य क्लिष्टत्वात्, पाणिनिशब्दात्तद्धितद्वयकल्पने गौरवाच्च।

लण्सूत्रस्थेति। लण्सूत्रे तिष्ठतीति लण्सूत्रस्थः। स चासाववर्णश्चेति लण्सूत्रस्थावर्णस्तेन सहोच्चार्यमाणः 'र' इति रेफो रलयोः संज्ञेत्यर्थः।

नन्वादिरन्त्येनेतिसूत्रेण प्रत्याहार आदेर्मध्यगानाञ्च संज्ञेत्युक्तम्। तथा च र-प्रत्याहारो र्-दूलानां संज्ञेति वक्तव्ये रलयोः संज्ञेति न्यूनं टकारस्यापि मध्यगत्वादित्यत आह—

न ह्यत्र ककारे परेऽच्कार्यं दृश्यते । प्रत्याहारेष्वितां न ग्रहणम्, 'अनुनासिकः' इत्यादिनिर्देशात् ।

---

प्रत्याहारेष्वितामिति—प्रत्याहारेषु 'अक्' 'अच्' 'र' इत्यादिप्रत्याहारबोध्यसमुदायघटकेषु मध्यगानामपीताम् = इत्संज्ञकानां न ग्रहणम् = न बोध इत्यर्थः ।

निर्देशादिति । निर्दिश्यते = उच्चार्यतेऽसाविति निर्देशः शब्दः । तथा च 'अनुनासिकशब्दा-दित्यस्य तत्र शब्दे यणूरूपाच्कार्यादर्शनादित्यर्थः । तदाह न ह्यत्रेति—ननु नासैव नासिका इति 'न सामिवचने' ( ५-४-५ ) इति सूत्रज्ञापितात्यन्तस्वार्थिककप्रत्ययस्य कप्प्रत्ययावधिकस्वादित्वेन 'स्वादिष्वसर्वनामस्थाने' ( १-४-१७ ) इत्यनेन पदत्वे 'इकोऽसवर्णे शाकल्यस्य' ( ६-१-१२७ ) इत्यनेन प्रकृतिभावे ह्रस्वे वा यण् न स्यात् । न च ककारस्याच्त्वात् 'यचि भम्' (१-४-१८) इत्यनेन भत्वेन पदसंज्ञाबाधात् 'इकोऽसवर्णे' इत्यस्याप्राप्तिः, 'यचि भम्' इत्यत्र 'य्' इत्यस्य अच्त्व-हल्त्वोभयाना-क्रान्तत्वेन तत्साहचर्यादचोऽप्यच्त्व-हल्त्वोभयानाश्रयस्यैव ग्रहणेन ककारस्योभयाश्रयत्वेन भत्वाप्राप्तेः । एतेन भत्वात् 'यस्येति च' ( ६-४-१४८ ) इतिसूत्रेण इकारस्य लोप एव स्यादिति यणोऽपादान-मसङ्गतमित्यपास्तमिति चेन्न, प्रकृतिभावस्य वैकल्पिकत्वेन तदभावपक्षे यण्प्राप्तेः । न चैवमपि प्रकृतिभावपक्षमादाय निर्देशसङ्गतिः, यणं कृत्वा प्रयोगे धर्माधिक्येन ऋपेश्च धर्मपक्षपातित्वेन यण्करणस्यैवौचित्यात् ।

वस्तुतस्तु नासिकाशब्दे 'नासृ शब्दे' इतिनासधातोर्ण्वुलः सत्त्वेन पदत्वभत्वयोरप्राप्त्या प्रकृति-भावलोपयोर्न प्राप्तिः । 'घोणा नासा च नासिका' इति कोशे नासाशब्दसत्त्वे तस्यैव स्वार्थिककप्रत्ययान्तस्य पुनः पाठे कोशासङ्गत्यापत्तेः, कोशे क्वापि प्रकृति-स्वार्थिकप्रत्ययान्तयोः पाठादर्शनात् । यत्तु अनुनासिक-शब्दस्य समस्तत्वात् 'न समासे' इत्यनेन प्रकृतिभावस्य निषेधः स्यादिति, तन्न, समासस्य पूर्वोत्तरपद-घटितत्वेन उत्तरपदघटकाजव्यवहितपूर्वत्ववद् इक एव 'वाप्यश्वः' इत्यत्रेव तेन निषेधात् । यद्वा 'ककारस्य कण्ठस्थानजन्यात्वेन अकारेण सह सावर्ण्ये दीर्घरूपकार्यस्यादर्शनात् प्रत्याहारबोध्यत्वाभाव इत्संज्ञकानामित्यत्रैव ग्रन्थतात्पर्यात् । 'न ह्यत्र' इतिग्रन्थस्य 'अः परो यस्मात्ककारादसावपरः ककारस्तत्र अपरे ककारेऽच्कार्यं दीर्घरूपं न दृश्यते' इत्यत्रैव तात्पर्यात् । 'यदपि प्रत्ययस्थात्कात्' (७-३-४४) इति सूत्रेण यकारे एवं विधातव्ये इकारविधानसामर्थ्याद्यण् न स्यादिति तन्न, तेन प्रधानस्य 'इको यणचि' (६-१-७७) इति शास्त्रस्य बाधकल्पनापेक्षया अप्रधानस्य संज्ञाशास्त्रस्य 'आदिरन्त्येन सहेता' ( १-१-७१ ) इत्यस्य बाधस्यैवौचित्यात् 'हे अनुनासिक३' इत्यादौ 'गुरोरनृतः' ( ८-२-८६ ) इति प्लुतविधानेनेत्त्वस्य चारितार्थ्याच्च ।

यत्तु अन्तरङ्गपरिभाषया 'इको यणचि' इतिसूत्रदृष्ट्या प्रत्ययस्थादितिविहितेत्वस्यासिद्धत्वाद्यणो-ऽप्राप्तिरिति, तन्न, 'नाजानन्तर्ये' इति परिभाषयाऽसिद्धत्वनिषेधात्, सन्धौ कर्त्तव्ये 'आदिरन्त्येन' इत्यादिनिर्देशादन्तरङ्गपरिभाषाया अन्तर्भूतनिमित्तकत्वबहिर्भूतनिमित्तकत्वरूपान्तरङ्गत्वमादाय अप्रवृत्ति-ज्ञापनाच्च । 'पट्व्या' इत्यादौ न तादृशत्वमिति न तत्प्रयोगस्यभाष्यविरोधः । अन्यथा इनादेशस्य बहि-रङ्गतया गुणानापत्तिः । यद्वा 'अनुनासिक इत्यादिनिर्देशात्' इत्यस्य 'अनुनासिकः' इतिशब्दरूपहेतुना इत्संज्ञकानां बोधविषयत्वेन प्रत्याहारबोध्यसमुदायघटकत्वाभावानुमानादित्यर्थः । तत्प्रयोगश्चेत्थम्— इत्संज्ञका वर्णाः, बोधविषयत्वप्रकारकतात्पर्यीयविषयत्वविशिष्टं यत् प्रत्याहारजन्यबोधविषयसमुदायघट-कत्वं तदभाववन्तः, प्रत्याहारघटितसूत्रादिप्रयोज्यबोधविषयकार्यप्रयोजकत्वाभाववद्वर्णघटितशब्दवत्वात्, यन्नैवं तन्नैवम्, यथा प्रत्याहारबोध्यसमुदायघटकेत्संज्ञकेतरवर्णाः । साध्यतावच्छेदकसम्बन्धः स्वरूपम् । हेतुतावच्छेदकसम्बन्धश्च स्वघटकवर्णनिष्ठविषयताप्रयोजकत्वाभाववत्त्वरूपः । स्वम् = अनु-नासिक इत्यादिशब्दरूपो हेतुः । प्रत्याहारजन्यबोधविषयसमुदायघटका इत्संज्ञकभिन्ना वर्णा लक्ष्य-भूतदध्यानयादिशब्दघटककारादिनिष्ठबोधीयविषयताप्रयोजकत्ववन्त एव स्वकीयरूपसामान्येन स्वाकृतिजातिमत्त्वेन वा लक्ष्यघटकवर्णानां बोधविषयीकरणात् । इत्संज्ञकेन तु न लक्ष्यघटकानामुक्त-

ऊकालोऽज्झ्रस्वदीर्घप्लुतः । [ १-२-२७ ]

उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । 'आदिरन्त्येन' इत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते ।

---

रूपेण बोधविषयीभावः । एवञ्च 'रट्' घटकटकारस्येत्संज्ञकत्वेन 'र' प्रत्याहारबोध्यसमुदायघटकत्वाभावेन तादृशसमुदायघटकानामेव 'आदिरन्त्येन' इत्यनेन प्रत्याहारबोध्यत्वबोधनेन इत्संज्ञकटकारस्य प्रत्याहार-जन्यबोधविषयत्वसमानाधिकरणघटकत्वाभावेन न प्रत्याहारबोध्यत्वमिति 'रलयोः संज्ञा' इत्युक्ति रुचितै-वेत्यन्यत्र विस्तरः ।

इत्यादौति—आदिना 'तृषिमृषिकृशेः काश्यपस्य,' (१-२-२५) 'पापाणके कुत्सितैः,' (२-१-५४) 'एकः पूर्वपरयोः'(६-१-८४) 'ङमो ह्रस्वादचि ङमुण्नित्यम्' (८-३-३२) इत्यादिनिर्देशसङ्ग्रहः । ननु 'प्रत्याहारेष्वितां न ग्रहणम्' इत्यत्र प्रत्याहारशब्देन किं गृह्यते ? न तावद्योगशास्त्रप्रसिद्धः 'इन्द्रियाणां स्वस्वविषयेभ्यो निराकरणार्थकः, तत्रेतां ग्रहणाप्रसक्तेः । यदि 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' इतिवार्तिके प्रत्याहारे = वर्णसमाम्नाये पठितानामनुबन्धानामज्ग्रहणेन ग्रहणं कस्मान्न भवतीति शङ्कायामुपात्तस्य वर्णसमाम्नायस्य ग्रहणं, तदा वर्णसमाम्नायेऽनुबन्धानां णादीनां गृहीतत्वात् 'प्रत्याहारेषु इतां न ग्रहणम्' इतिमूलासङ्गतिः ।

तर्हि कोऽसौ प्रत्याहारो यत्र इतां न ग्रहणमित्यत आह—आदिरन्त्येनेति । प्रत्याह्रियन्ते संक्षिप्य बोध्यन्ते वर्णा यत्र स प्रत्याहारः । ल्युटं बाधित्वा बाहुलकादधिकरणे घञ् । अक्, अच्, इत्यादिः । तत्रेतां न ग्रहणम् । तेनेतां न बोध इति यावत् । ननु योगार्थमात्रकः प्रत्याहारशब्दस्तदा 'अणुदित्सवर्णस्य' (१-१-६९) इतिसूत्रेण कृतासु अ, इ, उ इत्यादिसंज्ञासु सवर्णग्राहिकासु प्रत्याहार-शब्दव्यवहारापत्तिः, तामिरपि संक्षिप्याष्टादशानां बोधादितिचेन्न, पङ्कजादिवत् प्रत्याहारशब्दस्य वैयाकरणनिकाये 'आदिरन्त्येन' इति कृतसंज्ञासु योगरूढत्वात् । नन्वेवं 'प्रत्याहारेऽनुबन्धानाम्' इति वार्तिकविरोधः, तत्र वर्णसमाम्नायस्यैव ग्रहणादिति चेन्न, कटार्थतृणे कटोऽयमिति व्यवहारवत् वार्तिके वर्णसमाम्नायस्य अजादिप्रत्याहारार्थत्वेन तत्रापि तादर्थ्यात्ताच्छब्द्यमितिन्यायेन प्रत्याहारशब्दप्रयोगेणादोषात् ।

'उपदेशेऽजनुनासिक इत्' इत्यत्राच्श्रवणात्तद्देदमाह—'ऊकालोऽज्झ्रस्व' इति । यद्यपि वर्णसमाम्नायेऽकारस्य प्रथमोपात्तत्वात् 'आकाल' इति वक्तुमुचितम् । तथापि ब्राह्मे मुहूर्ते सूत्रनिर्माण-समये एकद्वित्रिमात्रान् वर्णान् एकत्रैव कुक्कुटरुते श्रुत्वा तदनुसारेण पाणिनिना 'ऊकाल' इत्युक्तम् । नचाकारस्य वर्णसमाम्नाये प्राथम्यात् क्षेत्रकर्षणसमये एकस्मिन्नेव हालिकप्रयोगे 'अ १ आ २ आ ३' इतित्रयाणां वर्णानामुपलब्धेः 'आकाल' इत्यपि वक्तुमुचितम्, ब्राह्मे सूत्रनिर्माणकाले तदनुपस्थितेः, सर्वत्र देशे तथा हालिकप्रयोगस्यादर्शनात् । कुक्कुटरुतस्य तु सर्वत्रैवैकविधस्यैवोपलब्धेश्च । तदुक्तम्—

> निरन्तराः क्रमस्थाश्च ह्रस्वदीर्घप्लुतास्त्रयः ।
> उवर्णे कुक्कुटरुतौ प्रसिद्धा इत्युकालगाः ॥ इति ।
> चापस्तु वदते मात्रां द्विमात्रं त्वेव वायसः ।
> शिखी रौति त्रिमात्रं तु नकुलस्त्वर्द्धमात्रकम् ॥ इति च ।

चापः = नीलकण्ठः । शिखी=कुक्कुटः । मात्रा तु कालविशेषोऽत्र । माति=परिच्छिनत्ति वर्णान् या सा मात्रा इति 'हु—या—मा—श्रु—भसिभ्यस्त्रन्' (उणादि. ४ पा.१६८ सू) इति त्रनि साधु । 'कालेन यावता पाणिः पर्य्येति जानुमण्डलम् । सा मात्रा कविभिः प्रोक्ता' इति लक्षणलक्षितो मात्राकालः । अक्षिपक्ष्मण उपरितो नीचैः पतने यावान् कालः सः, अङ्गुष्ठतर्जन्योर्मध्ये या नाडी तत्स्पन्दनमितो वा कालो मात्रापदेन व्यवह्रियते ।

उ १ श्च, ऊ २ श्च, ऊ ३ श्चेति एक द्वि त्रिमात्राणामितरेतरयोगद्वन्द्वे 'अकः सवर्णे दीर्घः' (६-१-१०१) इत्यनेन वारद्वयं दीर्घनिष्पन्नस्य ऊ २ शब्दस्य कालशब्देन सह वः कालो यस्येति

विग्रहे बहुव्रीहौ 'ऊकालः' इति । काल इत्यस्य 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन उकारत्रयेण सम्बन्धः। तदुक्तं भाष्ये 'कालशब्दः प्रत्येकं परिसमाप्यते' इति । तथा च 'उकालसदृशः, ऊ २ कालसदृशः, ऊ ३ कालसदृशश्च' कालो यस्याचः स क्रमेण ह्रस्वदीर्घप्लुतसंज्ञः स्यादित्यर्थः। यद्वा लाघवात् समाहारद्वन्द्वे 'ह्रस्वो नपुंसके' ( १-२-४७ ) इति अपरनिमित्तकत्वे- नान्तरङ्गत्वाद्ध्रस्वे वारद्वयं दीर्घे 'ऊ' इति । शेषं पूर्ववत् । न च उवर्णस्य कालेन सह सामानाधिकरण्या- भावात् बहुव्रीहिर्न स्यादितिवाच्यम्, ऊशब्दस्य स्वोच्चारणकालसदृशे लक्षणया ऊकालसदृशः कालो यस्येति 'वः कालो यस्य' इति विग्रहार्थत्वेनादोषात् । तदुक्तं वां काल इव,इति वाक्येन । उक्तरीत्या ऊपदे त्रयाणां सन्निवेशो मानञ्च 'ह्रस्व-दीर्घ-प्लुत' इति संज्ञात्रयकरणमेव । एकस्य उकारस्य संज्ञात्रयकरणं व्यर्थमेव- स्यात् 'लघ्वर्थं हि संज्ञाकरणम्' इति भाष्यविरोधात् । यद्यपि 'ऊः, अच्' इत्युक्तौ कालग्रहणं विनापि ऊसदृशोऽच् ह्रस्वादिसंज्ञक इत्यर्थलाभस्तथापि एकमात्रकप्रथमोकारे 'अणुदित्सवर्णस्य' इत्यस्य प्रवृत्या- त्रयाणां ह्रस्वसंज्ञावारणाय कालग्रहणस्य चारितार्थ्यात् । तदुक्तं भाष्ये 'यावदत्र तपरकरणं तावदत्र कालग्रहणम्' इति । तपरोच्चारणेन साध्यं यत्तत्समं कालग्रहणम्, तत्कालग्रहणं साधयतीत्यर्थः । तथा च ह्रस्वोकारेण द्वित्रिमात्राणां ग्रहणाभावाच्च तेषां ह्रस्वादिसंज्ञा ।

'वः कालो यस्य' इतिविग्रहे 'कालः' इत्येकवचनं 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' (१-२-५८) इत्यनेन जातौ बहुवचनस्य वैकल्पिकत्वात् । तत्प्रवृत्त्या 'वः' इति बहुवचनम् । 'वः' इति व्यक्तिबहुत्वेन बहुवचनम् । अत्र जातिविवक्षायां तु द्वन्द्वानुपपत्तेः ।

'ऊ' इत्यत्र प्रथम एकमात्रः, द्वितीयो द्विमात्रः, तृतीयस्त्रिमात्रः, इति क्रमेण निर्देशः, कुक्कुटरुते तथैव श्रवणात्, द्वितीयादीनामेकत्वज्ञानस्योपजीव्यत्वात् , महासंज्ञाकरणेन ह्रस्वत्वादीना- मन्वर्थत्वाच्च । उकारत्रयप्रश्लेषे मानमपि ह्रस्वादिसंज्ञात्रयकरणमेव । संज्ञानां त्रित्वात्संज्ञिनामपि त्रित्वमनुमीयते इति भावः । विशिष्टरूपा एकैव संज्ञा तु न, फलाभावात् , 'संज्ञा नाम यतो न लघीयः' इति भाष्यविरोधाच्च ।

किञ्चादौ त्रिमात्रस्य, अन्ते एकमात्रस्य च निवेशे त्रिमात्रस्य ह्रस्वसंज्ञा एकमात्रस्य प्लुतसंज्ञेति- फलति । तथा च 'विभाषा पृष्टप्रतिवचने हेः' ( ८-२-९३ ) इत्यस्य, 'गुरोरनृतः' इत्यत्र 'अनृतः' इत्यस्य च वैयर्थ्यापत्तिः, स्वत एव एकमात्रे प्लुतत्वस्य सत्त्वात्, 'प्लुतप्रगृह्याः' ( ६-१-१२५ ) इति प्रकृतिभावे निर्देशासिद्धेश्च । त्रिमात्रकस्य मध्ये द्विमात्रकस्यान्ते निवेशोऽपि न । एवञ्च त्रिमात्रस्य दीर्घसंज्ञा, द्विमात्रस्य प्लुतसंज्ञेति लभ्यते । तच्च न, 'ओमभ्यादाने' (८-२-८७) इत्यनेन 'ओम्' इतिद्विमात्रस्यौकारस्य प्लुतविधानवैयर्थ्यात्, एवञ्च त्रिमात्रस्यान्ते एव निवेश इतिस्थितम् । नापि द्विमात्रस्यादौ एकमात्रस्य च मध्ये पाठः, तथा सति एकमात्रस्य दीर्घसंज्ञा, द्विमात्रस्य च ह्रस्वसंज्ञा स्यात् , तदपि न, 'अतो दीर्घो यञि' (७-३-१०१)'सुपि च' (७-३-१०२) इत्यादीनां वैयर्थ्यापत्तेः,' अत्पदबोध्यस्यैकमात्रस्य स्वत एव दीर्घत्वसिद्धेः । 'ह्रस्वनद्यापो नुट्' ( ७-१-५४ ) इत्यत्र 'आपः' इत्यस्य वैयर्थ्यापत्तेश्च आबितिद्विमात्रकस्य ह्रस्वत्वादेव नुट् सिद्धेः, तस्मादेकमात्रादिक्रमेणैव उकारपाठः ।

वामिति । ऊ-शब्दात् षष्ठीबहुवचने रूपम् 'वाम्' इति । अर्थप्रदर्शनमात्रं नतु विग्रहः,, प्रथमान्तानामेव प्रायो बहुव्रीहिसमासात् । अजिति । अज्ग्रहणफलन्तु 'प्रतक्ष्य' इत्यादौ कषयोरेक- मात्रकत्वेन ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति' इति तुङ्मा भूत् । वस्तुतस्तु वर्णद्वयमादाय ह्रस्वादिसंज्ञाया अप्राप्तिः, उकारस्य वर्णत्वेन तत्सदृशस्य वर्णस्यैव ग्रहणौचित्यात् । 'वर्णग्रहणे जातिग्रहणम्' इत्यपि नात्र, 'ज्ञापकसिद्धं न सर्वत्र' इत्युक्तेः । तथाचाज्ग्रहणम् 'अचश्च' (१-२-२८) इत्यत्रानुवृत्त्यर्थम् ।

ह्रस्वेति । समाहारद्वन्द्वः । सौत्रत्वात्पुंस्त्वम् । इतरेतरयोगद्वन्द्वे सौत्रत्वादेकवचनमिति तु न, 'बहुषु बहुवचनम्' इतिशास्त्रबाधापत्तेः । समाहारे 'सः नपुंसकम्' इतिशास्त्रबाधस्तु न, 'लिङ्गमशिष्यं लोकाश्रयत्वाद्' इतिभाष्यकृतैव लिङ्गविधायकशास्त्राणां खण्डितत्वात् ।

स प्रत्येकमुदात्तादिभेदेन त्रिधा ।

उच्चैरुदात्तः । [ १-२-२९ ]

ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्त संज्ञः स्यात् । आ ये ।

नीचैरनुदात्तः । [ १-२-३० ]

स्पष्टम् । अर्वाङ् ।

---

स इति । तच्छब्दः पूर्वपरामर्शकः ह्रस्वः, दीर्घः, प्लुतश्चेत्यर्थः । उदात्तादीति—ननूदात्तादिभेदेनेत्यसङ्गतम्, ह्रस्वादेरुदात्तेन सहाभेदात् तेन भेदासम्भवात् धर्मिणो धर्मिभेदकत्वाभावादिति चेन्न, उदात्तादीत्यस्य उदात्तत्वादिधर्मैरित्यर्थात् । उदात्तत्वेन, अनुदात्तत्वेन स्वरितत्वेनेतियावत् । त्रिधेति—त्रिभिः=उदात्तत्वादिभिः प्रकारैर्भिद्यते इत्यर्थः । ह्रस्वोदात्तः, ह्रस्वानुदात्तः, ह्रस्वस्वरितः इत्यादिरूपेणेति भावः ।

उच्चैरुदात्तः । अत्र 'ऊकालः' इत्यतोऽजित्यनुवर्तते । 'उच्चैः' इति पदं यदि उच्चैस्त्व-(शब्दगतधर्मविशेष) विशिष्टार्थकं प्रथमान्तं तदा 'उच्चैस्त्वेन श्रूयमाणोऽजुदात्तसंज्ञ' इत्यर्थ एव स्यात् । तथा च नीचैस्त्वेन ( मन्दत्वेन ) श्रूयमाणस्याच उदात्तसंज्ञा न स्यात् । किञ्च शब्दगतम् उच्चैस्त्वम्, नीचैस्त्वञ्च न नियतम्, तीक्ष्णकर्णेन्द्रियस्य य एव उच्चैः श्रूयमाणः वर्णः स एव स्थूलकर्णेन्द्रियस्य नीचैस्त्वेन श्रूयमाण इत्येकस्यैवोदात्तत्वमनुदात्तत्वमुभयं स्यान्नेष्यते चोभयमेकत्र, व्यधिकरणधर्मस्यैव विभागप्रयोजकत्वेन 'उदात्तादिभेदेन त्रिधा' इति विभागानुपपत्तेः । अत उच्चैःपदम् ऊर्ध्वावयवपरम्, अधिकरणशक्तिप्रधानञ्च । तथा च 'ऊर्ध्वभागे' इत्यर्थः । तत्रावयवस्यावयविसाकाङ्क्षतया कस्योर्ध्वावयव इत्याकाङ्क्षायाम् प्रकृतोपयोगित्वात् ताल्वादिस्थानरूपावयविनामूर्ध्वभागे इत्यर्थः । अधिकरणकारकस्य क्रियासाकाङ्क्षतया 'निष्पन्नः' इत्यध्याहियते । एवञ्च ऊर्ध्वाधरभागयुक्तेषु ताल्वादिस्थानेषु ऊर्ध्वभागेनोच्चार्यमाणोऽजुदात्तसंज्ञो भवतीत्यर्थ इत्याह—

ताल्वादिष्विति । 'सुदेवो असि वरुण ! यस्य ते सप्त सिन्धवः, अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव' इतिभाष्यप्रदर्शितश्रुतौ वर्णाभिव्यक्तिस्थानस्य तालुत्वेन वर्णनात् तालुस्थानस्य प्रधानत्वप्रतीत्या कण्ठादीत्यनुक्त्वा ताल्वादीत्युक्तिर्नासङ्गता । काकुदं तालु इति तत्रैव भाष्ये । सभागेष्विति—ताल्वादीनां सभागत्वकथनमूर्ध्वभाग इत्यस्योपपत्तये । तेषामखण्डत्वे 'ऊर्ध्वभागे निष्पन्नोऽज्' इत्यसङ्गतमेव स्यात् ।

ननूर्ध्वभागनिष्पत्तेरप्रत्यक्षत्वादुदात्तादिसंज्ञा व्यर्थेतिचेन्न, यस्मिन्नुच्चार्यमाणेऽपि शरीरावयवानामायामोऽशैथिल्यम्, स्वरस्य रूक्षता (अमृदुता ), कण्ठविवरस्य संवृतता ( संकोचः ) भवति स उदात्तः । अत एव शनैर्निष्क्रमन् वायुः कण्ठावयवान् शोषयतीति अचोरूक्षता, इत्यादि लिङ्गस्योर्ध्वभागनिष्पन्नत्वद्योतकत्वात् । लोके उदात्तादिशब्दानां वर्णधर्मे उदात्तत्वादौ एव प्रसिद्ध्या अकारादयो नोदात्ता इतिभ्रमवारणाय उदात्तादिसंज्ञाविधानम् । आ ये इति । अत्र आकारः, एकारश्चोदात्तः । आकारः 'निपाता आद्युदात्ताः' (फिट् ४ पा. ८० सू.) इत्यनेनोदात्तः । यच्छब्दः 'फिषोऽन्त उदात्तः' (फिट्. १पा. १ सू. ) फिट्=प्रातिपदिकम्, तस्यान्त उदात्त इत्यर्थकेनानेन उदात्तः, ततो जसि, 'त्यदादीनामः' (७-२-१०२) इति दस्यानुदात्ताकारे, 'अतोगुणे' (६-१-९७) इतिपररूपे, 'एकादेश उदात्तेनोदात्तः (८-२-५) इति यशब्दाकारस्योदात्तत्वे, जसः 'अनुदात्तौ सुप्पितौ' (३-१-४) इत्यनुदात्तत्वे 'आद्गुणः' (६-१-८७) इति गुणे पुनः 'एकादेश उदात्तेन' इति एकार उदात्तः ।

आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आगहि ।

भा.—ये मरुतो देवा रश्मिभिः=सूर्यकिरणैः सहातन्वन्ति=आप्नुवन्ति आकाशमितिशेषः । किञ्च ओजसा=स्वकीयबलेन समुद्रं तिरस्कुर्वन्ति । निश्चलस्य जलस्य तरङ्गोत्पत्तये चालनं तिरस्कारः । हे अग्ने तैर्मरुद्भिः = देवविशेषैः सह आगहि = आगच्छ सोमपानायेतिशेषः (ऋ. १मं. १९सू. ८ मं. )

नीचैरनुदात्तः । अत्रापि पूर्ववत् नीचैरित्यस्य ताल्वादिस्थानस्य निम्नभागे इत्यर्थः । तथाच ताल्वादिस्थानस्याधोभागे निष्पन्नोऽजनुदात्तसंज्ञ इत्यर्थः । यस्मिन्नुच्चार्यमाणेऽपि गात्राणां

समाहारः स्वरितः । [ १-२-३२ ]

उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् ।

---

शैथिल्यम्, स्वरस्य मार्दवम्, कण्ठविवरस्य महत्ता ( विकाशः ) सोऽनुदात्तः । कण्ठविवरस्य महत्त्वादेव शीघ्रं वायोर्निष्क्रमणाद् गलावयवानां शोषाभावादनुदात्ते स्वरे मृदुता जायते ।

अर्वाङिति । अभिमुखवाचि अव्युत्पन्नं प्रातिपदिकमिदम् । 'फिषोऽन्त उदात्तः' ( फि. १–सू. १ पा.) इत्यनेन वाशब्दाकार उदात्तः । 'अनुदात्तं पदम्' (६–१–१५८) इति आद्यकारोऽनुदात्तः ।

'अर्वाङेहि सोमकामं त्वामाहुरयं सुतस्तस्य पिबा मदाय ।

उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥ ऋ. १मं. १०४ सू. ४ मं.

भा.—हे इन्द्र ! त्वमर्वाङ् = अस्मदभिमुखः सन् एहि = आगच्छ । किं कारणमिति चेद्यस्मात् त्वां सोमकामम् = सोमाभिलाषमाहुः = पुराविदः कथयन्ति । अयमस्मदीयः सोमः सुतः = ऋत्विग्भिरभिषुतः । अत आगच्छेत्यर्थः ।

आगत्य च मदाय = हर्षार्थम् । तस्य = तम् = अस्मदीयमभिषुतं सोमं पिबा = पिब । एतदेव स्पष्टीक्रियते- उरुव्यचाः=उरु=विस्तीर्णं व्यचः=व्यापनं यस्य तादृशो महावयवो भूत्वा जठरे = आत्मीय उदरे आवृषस्व = सोममासिञ्च = आ—समन्तात्पूरय । एवंभूतस्त्वं हूयमानः = स्तुतिभिर्हूयमानः सन् पितेव पुत्राणां वाक्यानि शृणोति तथा नोऽस्माकं वाक्यानि शृणुहि = शृणु । इति ।

समाहारः स्वरितः । 'ऊकालः' इत्यतोऽजित्यनुवर्तते । सम् आपूर्वकाद्धृधातोः 'समाह्रियेतेऽस्मिन्' इतिविग्रहेऽधिकरणे 'अकर्तरि च कारके संज्ञायाम्' ( ३-३-१९ ) इति घञ् । न च संज्ञात्वाभावः, संज्ञाग्रहणस्य प्रायिकत्वात् । 'बाहुल्येन संज्ञायां भवति' इत्यर्थमेव संज्ञाग्रहणात् । तदुक्तं भाष्ये-'संज्ञाग्रहणमनर्थकम्, असंज्ञायामपि घञ् दृश्यते । को भवता लाभो लब्ध' इति । न च ल्युटा बाधः, 'कृत्यल्युटो बहुलम्' (३-३-११३) इत्यत्र 'बहुलम्' इति योगविभागस्य कृन्मात्रप्रत्ययस्य व्यभिचारज्ञापनेन ल्युटोऽप्राप्तेः । भाष्ये तु योगविभागो नोक्तः, किन्तु 'कृतो बहुलम्' इत्युक्तम् । तथा च योगविभागमन्तरैव उक्तार्थलाभः । यद्वा समाहरणं समाहारः = सम्मेलनम् । तत 'अर्श आदिभ्योऽच्' (५-२-१२७) इत्यचि सम्मेलनाधिकरणरूपः स एवार्थः । एवञ्च कस्य समाहार इत्याकाङ्क्षायां प्रत्यासत्त्या पूर्वोक्तयोरुदात्तानुदात्तयोरिति लभ्यते । तत्र यद्यपि उदात्तानुदात्तपदे शब्दपरे विधेयपरे चैव तथापि एकस्मिन्नचि शब्दयोस्तदर्थधर्मिणोश्च समाहारासम्भवान्न्यायानुरोधादुदात्तत्वानुदात्तत्वयोर्धर्मयोः सम्मेलनाधिकरणीभूतो योऽच् स स्वरितसंज्ञ इत्यर्थो लभ्यते इत्याह—उदात्तत्वानुदात्तत्वे इति ।

न च स्वरितेऽपि उदात्तत्वानुदात्तत्वयोः सत्त्वाङ्गीकारे विभाजकधर्मत्वानुपपत्तिः, व्यधिकरणयोरेव धर्मयोर्विभाजकोपाधित्वादिति वाच्यम्, एकस्मिन्नचि अंशभेदेनोदात्तत्वानुदात्तत्वयोः सत्त्वेऽपि अल्त्वावच्छेदेन तयोर्व्यधिकरणत्वस्यैव सत्त्वात् । यद्धर्मावच्छिन्नस्य विभागः चिकीर्षितस्तद्धर्मावच्छेदेनैव व्यधिकरणत्वस्यापेक्षितत्वात् । यथा पदार्थत्वावच्छेदेन द्रव्यगुणत्वादीनां वैयधिकरण्यमिति ।

उदात्तानुदात्तस्वरितसंज्ञाविधायकं सूत्रत्रयमपि व्यर्थम्, उदात्तादीनां लोकवेदप्रसिद्धतया तत्प्रदर्शनस्या नावश्यकत्वात् । तदुक्तं भाष्ये 'व्याकरणं नामेयमुत्तरा विद्या । सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते' इति । 'उत्तरा' इत्यस्य वेदाध्ययनानन्तरं पठनीयेत्यर्थः । अद्यत्वे तु वेदाध्ययनात्प्रागेव व्याकरणमधीयते इत्युदात्तादिसंज्ञाशास्त्रं सार्थकमेव । यद्यपि मूले उदात्तादयस्त्रय एव स्वरा उक्तास्तथापि चतुर्थं एकश्रुतिस्वरोऽपि विज्ञेयः । तथा च सूत्रम् 'एकश्रुतिदूरात्सम्बुद्धौ' (१-२-३३) इति । एकश्रुतिश्च उदात्तत्वादिभेदतिरोधानम् । दूरादाह्वाने वाक्यस्य टेः प्लुतः, शिष्टं वाक्यमेकश्रुतिः भवतीत्यर्थः । एका उदात्तादिभेदरहिता श्रुतिः श्रवणं यस्य वाक्यस्य तदेकश्रुतिवाक्यविशेषणमेतत् ।

### तस्यादित उदात्तमर्धह्रस्वम् । [ १-२-३२ ]

ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादावर्धमुदात्तं बोध्यम् । उत्तरार्धन्तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा ।

---

ननु उदात्तत्वानुदात्तत्वयोरेकस्मिन्नचि सम्मेलने स्वरितो भवतीत्युक्तं परन्तु न ज्ञायते पूर्वभागस्योदात्तत्वं परभागस्य वेत्याकाङ्क्षायामाह–'तस्यादितः' (१-२-३२) इति–आदावित्यादितः 'आद्यादिभ्य उपसंख्यानम्' इत्यनेन सप्तम्यन्तात्तसिः । इदञ्च वार्तिकमेतज्ज्ञापकसिद्धमेव । आदिभागे इत्यर्थः । अर्द्धह्रस्वमिति—ह्रस्वस्यार्द्धमर्द्धह्रस्वमित्येकदेशिसमासः । तथा च भाष्यम्—'अर्द्धह्रस्वमित्युच्यते । तत्र दीर्घप्लुतयोर्न प्राप्नोति । कन्या, शाक्तिकः २ शाक्तिक ३,इति । 'कन्या' इत्यस्य 'तिल्यशिल्पशिक्य' ( फि. ४ पा. ७६ ) इति सूत्रेणान्तः स्वरितः । शाक्तिक इत्यत्र दीर्घप्लुतयोरपि स्वरितयोरुक्तभाष्येणोदात्तत्वानुदात्तत्वसम्मेलनस्येष्टत्वादर्द्धह्रस्वशब्देनाक्षरस्वारस्यात्सूत्रस्य ह्रस्वस्वरिते एव प्रवृत्त्येष्टसिद्धिः । न चैकमात्रिकांशस्यैव ह्रस्वत्वात्तस्य च दीर्घादिष्वपि सत्त्वेन दोषाभावः, दीर्घादिषु मात्रिकांशस्य सत्त्वेऽपि तस्य ह्रस्वसंज्ञात्वाभावात् । अत एव दीर्घादिषु ह्रस्वादिप्रयुक्तं तुगादिकं न । अत्र च एतत्सूत्रस्थं शङ्कापरं भाष्यमपि मानं बोध्यम् । इत्यभिप्रेत्याह—ह्रस्वग्रहणमतन्त्रमिति । 'ह्रस्वो नपुंसके' 'ह्रस्वं लघु' इति निर्देशाद्ध्रस्वपदं पुंलिङ्गं नपुंसकञ्चेत्यभिप्रायेण क्लीबनिर्देशः । तन्त्रपदं विवक्षितपर्य्यायम् । तथा च अविवक्षितमित्यर्थः । ननु ह्रस्वपदस्य वक्तुरिच्छाविषयत्वाभावेऽपि कथने पाणिनेरुन्मत्तत्वापत्तिरिति चेन्न, ह्रस्वपदं ह्रस्वसंज्ञकत्वेन न विवक्षितं किन्तु मात्रापरकत्वेनाविवक्षितमित्यत्र तात्पर्य्यात् । एवञ्च 'अर्द्धह्रस्वम्' इत्यस्य अर्द्धमात्रापरिमिताऽंश इत्यर्थः, अर्द्धमात्राप्रमाणमस्येति विग्रहे मात्रचि प्रत्यये 'प्रमाणे द्वयसच्' (५-२-३७) इति सूत्रे 'प्रमाणे लः' इति वार्तिकेन मात्रचो लोपात् । तथा च भाष्यम्–'मात्रचोऽत्र लोपो द्रष्टव्यः' इति । एवञ्च ह्रस्वदीर्घप्लुतेषु सर्वेषु स्वरितेषु प्रागर्द्धमात्रांश उदात्तः । शेषांशः प्रायोऽनुदात्तः । तत्रार्द्धमात्रांशस्योदात्तत्वे पक्षद्वयम्–कौमुदीकारमते स्वरितस्यार्द्धांश उदात्त उत्तरार्द्धांशस्त्वनुदात्त इति । नागेशमते सर्वत्रैकमात्रार्द्धांश उदात्तः शेषांशोऽनुदात्तः । यथा ह्रस्वस्वरितेऽर्द्धांश उदात्तः शेषोऽनुदात्त उभयमते । दीर्घेऽर्द्धमात्रांशः प्रागुदात्तः, अवशिष्टः सार्द्धैकमात्रांशोऽनुदात्तः । प्लुते प्रागर्द्धमात्रांश उदात्तः शेषं सार्द्धमात्राद्वयमनुदात्तम् । दीक्षितस्य तु सर्वत्र पूर्वार्द्धभाग उदात्त उत्तरार्द्धभागोऽनुदात्त इत्येव । तदाह–उत्तरार्द्धन्त्विति—आद्यांशस्योदात्तत्वे शिष्टस्यानुदात्तत्वं न्यायसिद्धम्, 'अनुदात्तं पदमेकवर्जम्' ( ८-१-१८ ) इति सूत्रात् येन केनापि विहितमुदात्तं स्वरितञ्च विहाय शेषं तत्पदमनुदात्ताच्कं भवतीति तदर्थात् ।

तस्येति—अनुदात्तस्योत्तरभागस्येत्यर्थः । उदात्तस्वरितेति—उत्तरभागोऽनुदात्तः शेषनिघातेन कदा भवति यदा स्वरितात्परः स्वरः स्वरितः स्यादथवा उदात्तः स्यात् । उदात्तश्च स्वरितश्चोदात्तस्वरितौ, उदात्तस्वरितौ परौ यस्मात्स्वरितात्स उदत्तस्वरितपरस्तस्य भाव उदात्तस्वरितपरत्वं तस्मिन्सतीत्यर्थः । यस्मिन्स्वरिते उदात्तपरत्वं स्वरितपरत्वं वा तत्रैव शेषभागोऽनुदात्तो भवति, नान्यत्र ।

श्रवणमिति—शेषस्यानुदात्तत्वधर्मेण स्पष्टं श्रवणं भवतीत्यर्थः । अन्यत्र = उदात्तस्वरितपरत्वाभावे । उदात्तश्रुतिरिति—शेषस्याप्युदात्तत्वेनैव श्रवणं न त्वनुदात्तत्वेनेति भावः । श्रुधात्वनुरोधेन वैदिकानामुच्चारणव्यवस्था प्रदर्शिता । उदात्तत्वेन श्रूयत एव न तूदात्तो भवति । तथा सत्युभयांशस्योदात्तत्वेनोदात्तस्वरस्यैव लाभेन स्वरितत्वहानेः ।

प्रातिशाख्य इति—शाखा=वेदशाखा शाखां-शाखां प्रति प्रतिशाखम्, वीप्सायामव्ययीभावः । प्रतिशाखं भवं प्रातिशाख्यम् = वेदव्याकरणम् । 'दिगादिभ्यो यत्' ( ४-३-५५ ) इति यति साधु । ऋक्प्रातिशाख्यम्, यजुःप्रातिशाख्यमित्यादिनाम्नाऽनेकविधम् । तदुक्तमृक्प्रातिशाख्ये (३-५)—

'अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत् ।
उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परम्' ॥ इति ।

'क्व॒'' १वोऽश्वाः। रथानां न येऽ२राः'।

---

अयमर्थः—स्वरितस्य परः शेष उत्तरभाग उदात्तः प्रयोक्तव्यः। यदा परमक्षरम् ( अच् ) उदात्तं स्वरितं वा नोच्यते चेत् तदा स शेष उदात्तश्रुतिर्भवति। एतेन उदात्तं स्वरितं परमक्षरं भवेत्तदानुदात्तः शेष इति फलति।

उदात्तपरत्वे ह्रस्वस्वरितमुदाहरति—क्वेति। किंशब्दात् 'किमोऽत्' ( ५–३–१२ ) इति अति, 'क्वाति' ( ७–२–१०५ ) इति कादेशे 'तित् स्वरितम्' ( ६–१–१८५ ) इति कशब्दाकारः स्वरितः। तस्याद्यंश उदात्तः। परांशोऽनुदात्तः। 'वोऽश्वाः' इत्यत्र 'वो' इत्योकारस्योदात्तत्वेन उदात्तपरत्वात्। तथा हि—'वः' इति 'अनुदात्तं सर्वमपदादौ' ( ८–१–१८ ) इत्यनुदात्तः। अशधातोः 'अशप्रुषि' ( उ. १–१५७ ) इति क्वनि नित्वात् 'ञ्नित्यादिर्नित्यम्' ( ६–१–१९७ ) इति अश्व-शब्द आद्युदात्तः। वसः सकारस्य 'ससजुषो रुः' ( ८–२–६६ ) इति रुत्वे तस्य 'अतो रोः' ( ६–१–११३ ) इत्युत्वे। स चोकारोऽनुदात्तः, व्यञ्जनस्थानिकस्वरस्यानुदात्तत्वमिति भाष्याभिमतत्वात्। 'आद् गुणः' ( ६–१–८७ ) इति गुणभूत ओकारश्च पूर्वपरयोः स्थानिनोरनुदात्तत्वेन 'स्थानेऽन्तरतमः' ( १–१–५० ) इति अनुदात्तः। 'एङः पदान्तादति' (६–१–१०९ ) इति पूर्वरूपनिष्पन्न ओकारश्च 'एकादेश उदात्तेन' ( ८–२–५ ) इत्युदात्तः। तथा च उदात्तौकारपरत्वेन कशब्दावयवस्वरिताकारस्याद्यंशः 'तस्यादितः' इत्यनेनोदात्तः। परभागश्चानुदात्तः।

'क्व॑ १'_ वोऽश्वाः क्वा १'_ भीशवः कुथं शेक कुथा यय। पृष्ठे सदो नसोर्यमः।'
( ऋ० ५ म० ६१ सू० २ म० )

भाष्यम्—हे मरुतः ! वः=युस्माकमश्वाः क्व=कुत्र्त्याः। क्व चाभीशवः=बन्धनरज्जवः। कथं च शेक=शीघ्रं गन्तुं शक्ता भवथ। कथा=कथं यय=याताः स्थ। पृष्ठे=अश्वानां पृष्ठदेशे, सदः =सीदन्ति=तिष्ठन्त्यत्रेति सदः पर्य्याणं दृश्यते। तथा नसोर्यमः=नियमिता=पलायनप्रतिबन्धकारी पशोर्नासिकयोर्दृश्यते। तस्मादश्वादिलिङ्गैः कुत्रापि त्वरितगमना इव प्रतिभान्ति के यूयम् ?' इति देवत्वमवधार्याह इति। रथवीत्याख्यस्य राज्ञो मरुतः प्रति प्रश्नः ?

वायोर्वर्णनम्—

'रथानां न ये १'_ राः सनाभयो जिगीवांसो न शूरां अभिद्यवः।

वरे॒यवो न मर्य्या घृतप्रुषो ऽभिस्वर्तारो अर्कं न सुष्टुभः॥' (ऋ० १० म० ७८ सू० ४ म०)

रथानां न=रथचक्राणामिव ( वेदे नशब्द इवार्थेऽपि ) अराः=चक्रनाभिनेमिमध्यस्थकाष्ठानि ते यथा बहवोऽपि सनाभयः=समाननाभयो भवन्ति। तद्वद्ये परस्परं सनाभयः=समानबन्धना एकस्मिन्नेवान्तरिक्षे वर्तमानाः ( मरुतः ) परस्परं बन्धुभूता इत्यर्थः। जिगीवांसो न शूराः=जयशीलाः शूरा इव अभिद्यवः=अभिगतदीप्तयः। किञ्च वरेयवो न मर्य्याः=वृतम्=वरं परस्मै प्रदातुमिच्छन्तो मनुष्या इव घृतप्रुषः=उदकसेक्तारः। उदकपूर्वं वराणि=वसूनि दीयन्ते नियमेन उदकप्रदा इत्यर्थः। किञ्च अभिस्वर्तारोऽर्कं न=अर्कम्=अर्चनीयं स्तोत्रम् अभिस्वर्तारः=अभितः शब्दयितारः। वन्दिन इव सुष्टुभः=सुशब्दाः। अभिपूर्वकाच्छब्दार्थकात्स्वृधातोस्तृचि अभिस्वर्तार इति। नशब्दोऽत्रेवार्थकः। 'येऽराः' इत्यत्र एकारः स्वरितः। तस्याद्यांश उदात्तः, परभागोऽनुदात्तः, 'रा' शब्दाकारस्योदात्तत्वेन उदात्तपरत्वात्। तथाहि—यच्छब्दः 'फिषोऽन्त उदात्तः' ( फि. १–१ ) फिट्=प्रातिपदिकम्। इत्युदात्तः। 'त्यदादीनामः' ( ७–२–१०२ ) इति दकारस्यानुदात्ताकारे 'एकादेश उदात्तेन' इत्युदात्ते पररूपे। अतः सुप्त्वात् 'अनुदात्तौ सुप्पितौ' (३–१–४) इति जसोऽनुदात्तत्वेनान्तरतम्यात् 'जसः शी' (७–१–१७) इति अनुदात्ते शयादेशे एकादेशस्वरेण 'आद् गुणः' ( ६–१–८७ ) इति गुणस्याप्युदात्तत्वे 'स्वरितो वा अनुदात्ते पदादौ' (८–२–६) इति 'एङः पदान्तादति' (६-१-१०९) इति पूर्वरूपनिष्पन्नैकारस्य स्वरितत्वम्। 'अराः' इत्यस्य ऋधातोरचि निष्पन्नत्वेन 'चितः' ( ६-१-६३ ) इत्यन्त्रोदात्तत्वे

'शतचक्रं यो ३ऽह्यः' इत्यादिष्वनुदात्तः। 'अ ग्निमी ळे' इत्यादावुदात्तश्रुतिः।

शेषनिघातेनाद्यनुदात्तत्वात्। एकादेशस्वरेण जसः पूर्वसवर्णदीर्घनिष्पन्नाकार उदात्तः। उदात्तपरस्य दीर्घस्वरितस्योदाहरणम्—'ये' इति।

स्वरितपरस्य स्वरितस्योदाहरणमाह—'यो' इति। आद्यंश उदात्तः, अन्त्यांशोऽनुदात्तः 'ह्यः' इत्यकारस्य स्वरितत्वात्। तथाहि—पूर्ववत् 'यः' इत्यत्राकारस्योदात्तत्वम्। 'यो' इत्यत्रानुदात्तेनोकारेणैकादेश ओकारोऽप्युदात्तः। 'अह्यः' इत्याद्यनुदात्तः स्वरितान्तश्च। 'एङः पदान्तात्' इति पूर्वरूपसिद्ध ओकारः 'स्वरितोऽवानुदात्ते पदादौ' इत्यनेन स्वरितः। आङ्पूर्वकाद्धनधातोः 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ. ४ पा. १३८) इति डिति इण्प्रत्यये आङो ह्रस्वे टिलोपे अहिरिति। वेदे यद्यपि 'अहिरिव भोगैः' 'अहिं वृत्रम्' इत्यादावहिशब्दस्याद्युदात्तपाठोपपत्तये 'वृषादीनाञ्च' (६-२-२०३) इति 'ग्रामादीनाञ्च' (फि. २ पा. ३८) इति वा आद्युदात्तत्वम्। 'इगन्तानाञ्च द्व्यषाम्' (फि. २ पा. ३९ सू.) इत्याद्युदात्तत्वन्तु न, तत्र 'जनपदशब्दानाम्' इत्यनुवृत्तेः। तथापि तस्मात् पञ्च्येकवचने 'उदात्तादनुदात्तस्य स्वरितः' (८-४-६६) इति अहेरिकारस्य स्वरितत्वे यणि च उदात्तस्वरितयोर्यणः' (८-२-४) इति, 'उदात्तादनुदात्तस्य' इति वा विहितस्वरितस्यासिद्धत्वेन 'अनुदात्तं पदमेकवर्जम्' (६-१-१५८) इत्याकारस्यानुदात्तत्वाभावे 'यो' इत्यस्य स्वरितत्वमिष्टं तन्न सिद्ध्येदिति तदर्थम् 'उञ्छादीनाञ्च' (६-१-१६०) इति, 'घृतादीनाञ्च' (फि. १ पा. २१ सू.) इति वा अन्तोदात्तत्वे शेषनिघातेनावर्णस्यानुदात्तत्वे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८-२-४) इति ङसोऽकारस्य स्वरितत्वम्। तथा च 'योऽह्यः' इत्यत्रोभयोः स्वरितत्वम्। नन्वहेः पञ्च्याम् 'घेर्ङिति' इति गुणे 'अहेः' इत्येव स्यादिति वाच्यम्, 'जसि च' (७-३-१०९) इति सूत्रे 'जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः' इति वार्तिकेन छन्दसि गुणस्य वैकल्पिकत्वेन यणः सुलभत्वात्। द्रविडनस्तु 'अह व्याप्तौ' इत्यतः कर्मणि ण्यति संज्ञापूर्वत्वाद्वृद्धेरभावः 'तित्स्वरितम्' इति स्वरित इति आहुः, तन्न, भाष्यविरुद्धत्वादनन्वितार्थकत्वाच्च।

'यं सुपर्णः परावतः श्येनस्य पुत्र आभरत्। शतचक्रं यो ३ ह्यो' वर्तनिः।

ऋ. १० म. ७८ सू. ४ म.

भाष्यम्—श्येनस्य = तार्क्ष्यस्य पुत्रस्तनयः सुपर्णो यं सोमं परावतः = परागताद् दूराद् द्युलोकादाभरत् = आहरत्। कीदृशं शतचक्रम्। शतमिति बहुनाम बहुधनस्य कर्तारम्। यद्वा शतकरणसाधनं बहुयागनिष्पादनमित्यर्थः। 'मूलविभुजादिभ्यः' (३-२-५८) इति, 'घञर्थे कविधानम्' (३-३-५८-४) इति वा कप्रत्ययः। 'कृञादीनां के' (का. ६-१-१२-१) इति 'कृ' इत्यस्य द्वित्वम्। यः सोमोऽह्यः=वृत्रस्य वर्तनि वर्तयिता=प्रेरयिता। यद्वा अह गतौ अह्यः = गन्तव्यो वर्तनि मार्गभूतः। एना वय इति वक्ष्यमाणेनैकवाक्यता। सोमलतास्तुतिः।

अनुदात्त इति = उत्तरांशोऽनुदात्त इत्यर्थः।

अन्यत्र (उदात्तस्वरितपरत्वाभावे) तूदात्तश्रुतिरित्यस्योदाहरणमाह—'अग्निमीले' इति।' 'घृतादीनाञ्च' (फि० १पा० २१सू०) इति, 'अङ्गेर्नलोपश्च' (उ० ४पा० ५०सू०) इति निप्रत्यये आद्युदात्तश्च' (३-१-३) इति प्रत्ययस्वरेण वा अग्निशब्दोऽन्तोदात्तः। 'फिषोऽन्तः' इति तु न, 'इगन्तानाञ्च द्व्यषाम्' (फि० २पा० ४९सू०) इत्याद्युदात्तेन बाधात्। अम् सुप्त्वात् 'अनुदात्तौ सुप्पितौ' (३-१-४) इत्यनुदात्तः। 'अमि पूर्वः' (६-१-१०७) इत्येकादेश इकारस्तु 'एकादेश उदात्तेनोदात्तः' (८-२-५) इत्युदात्तः। 'ईडे' इति 'तिङ्ङतिङः' (८-१-२८) इत्यनुदात्तः। ईकारः 'उदात्तादनुदात्तस्य स्वरितः' (८-४-३६) इति स्वरितः। एकारः 'स्वरितात्संहितायाम्' (१-२-३९) इत्येकश्रुतिः। ईकारस्य स्वरितस्य स्वरितपरत्वाभावादुत्तरभागोऽप्युदात्त एव श्रूयते। मूले 'प्रातिशाख्ये' इत्युक्त्या लोके तूत्तरभागः सर्वदा अनुदात्त एवेति सूचितम्।

स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ।

**मुखनासिकावचनोऽनुनासिकः । [ १-१-८ ]**

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ।

---

स इति—अजित्यर्थः । नवविध इति–विधीयते = विभज्यते आभिरिति व्युत्पत्त्या 'आतश्चोपसर्गे' ( ३–३–१०६ ) इति करणेऽङि विधाशब्दो विभाजकधर्मपरः । यद्वा विधीयते = व्यावर्त्यते = इतरभेदप्रकारकानुमितिविशेष्यीक्रियतेऽर्थ आभिरिति विधा व्यावर्तकधर्माः प्रकृते उदात्तत्वादयः । तथा च नवविधाः=विभाजकधर्मा यस्याचः स नवविध इत्यर्थः । इदं नवविधत्वमकारादि ऋकारान्तेष्वेव नतु ऌकारादिषु, ऌकारस्य एचश्च ह्रस्वत्वाभावात् । अनुनासिकेति—एजकारऌकाराणाम् 'हसे हसने' 'गम्ऌ गतौ' 'ओहाक् त्यागे' इत्यादिधातुष्वेव । ऐच् तु नास्त्येवानुनासिकस्तस्यानुनासिकत्वविधायकशास्त्राभावात् । यद्यपि ऋकारऌकारयोरपि तादृशशास्त्राभावस्तथापि छान्दसत्वादित्संज्ञाप्रयुक्तकार्यविधानसामर्थ्याच्च तेषामनुनासिकत्वं स्वीक्रियते । ऋकारस्यानुनासिकत्वम् 'नॄँः पाहि' इत्यादौ 'अत्रानुनासिकः पूर्वस्य तु वा' (८–३–२) इत्यनेन, अणस्तु ( अ-इ-उ ) 'अणोऽप्रगृह्यस्य' (८–४–५७) इति विधीयते ।

द्विधेति—द्विशब्दात् प्रकारेऽर्थे 'संख्याया विधार्थे धा' (५–३–४२) इत्यनेन धाप्रत्ययः । तत्र विधानं विधः 'घञर्थे कविधानम्' इति के विधशब्दस्यार्थः प्रकारो विधार्थस्तत्र धाप्रत्यय इत्यर्थः । विधाशब्दस्यार्थो विधार्थ इति तु न, विधाशब्दार्थोऽन्नमर्पीति तत्रापि एका गोविधा ( गवान्नम् ) इत्यादौ धाप्रत्ययापत्तेः । यदुक्तं भाष्ये क्रियाप्रकारेऽयं ( धाप्रत्ययः ) भवति । विध-युक्त-गताश्च प्रकारे भवन्ति । एवंविधम्, एवंयुक्तम्, एवंगतम्, एवंप्रकारमिति । पर्याया एते । तथा च द्विधेत्यस्याद्वादशप्रकारका इत्यर्थः । ननु 'क्रियाप्रकारेऽयम्' इति भाष्यात् द्विधा पठति त्रिधा गच्छति, इत्यादिष्वेव धाप्रत्ययः स्यान्न तु 'द्विधा अच्' इत्यर्थे क्रियाप्रकाराभावादिति चेन्न, उपदिश्यते, भवति, इत्यादिक्रियाध्याहारेण धर्मभेदेन क्रियाभेदस्यापि प्रतीतेः । तथा च अनुनासिकत्वाननुनासिकत्वधर्मरूपकरणाभ्यां द्विप्रकारोपदेशविषयोऽजित्यर्थः । 'द्विधा' इत्यस्य द्विप्रकारवति लक्षणया धर्मद्वयवानजितीत्यर्थः फलति ।

मुखनासिका (१–१–८) इति खन्यते=अवदीर्यते ऽन्नादिकमनेनेति मुखम् । 'खनु खनने' इत्यतः करणे 'डित्खनेर्मुट्चोदात्तः, ( उ. ५ पा. २० ) इति अलि, अचि वा उदात्तो धातोर्मुडागमे डित्त्वाट्टिलोपे मुखमिति । 'णासृ शब्दे' इत्यतः पचादित्वादचि नासते=प्राणवायोः प्रवेशनिर्गमाभ्यां शब्दं करोतीति नासा । ततः 'संज्ञायां कन्' (५-३-८७) इति, अरयन्तस्वार्थिके वा कनि नासिकेति । उक्तविग्रहे एव नासतेर्ण्वुलि वा नासिकेति । उच्यते=उच्चारणजन्यज्ञानविषयीक्रियते वर्णोऽनेनेति करणे ल्युटि वचनमिति । मुखेन सहिता मुखसहिता 'कर्तृकरणे कृता बहुलम्, ( २–१–३२ ) इति समासे मुखसहिता चासौ नासिका चेति 'विशेषणं विशेष्येण' (२-१-५७) इति कर्मधारये 'वर्णो वर्णेन, (२–१–६९) इति सूत्रे समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इति वार्तिकेन सहितेत्यस्य लोपे मुखनासिकेति । मुखनासिकावचनमुच्चारणमस्य वर्णस्येति बहुव्रीहिणा मुखनासिकावचनो वर्णोऽनुनासिकसंज्ञ इत्यर्थः ।

मुखसहितनासिकयोच्चार्यमाणोऽनुनासिक इति तु उच्यतेऽसौ वचन इति कर्मणि ल्युटोऽभिप्रायेण फलितार्थपरम् 'मुखनासिकं वचनमस्य' 'मुखोपसहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः' इत्यादिभाष्यात्करणसाधनस्यैकवचनशब्दस्य बहुव्रीहेश्च प्रतीतेः ।

मुखसहितनासिकार्थकमुखनासिकाशब्दसिद्धये शाकपार्थिवादिषु पाठस्यावश्यकतया तत्रोत्तरपदलोपस्य नित्यतया वृत्तौ 'मुखसहितनासिकया' इत्युक्तिरसङ्गता । मुखसहितया नासिकया इति पाठो वा उचितः । यद्वा शाकपार्थिवादित्वं न कल्पनीयम्, मुखशब्दस्य मुखसहितार्थे लक्षणाया अर्श आदिगणे

तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। ऌवर्णस्य द्वादश,

---

मुखमात्रशब्दस्य पाठे लाघवेन मुखमस्ति सहितत्वेन यस्या सा मुखा इत्यजन्तेन वा मुखं (मुखसहिता) चासौ नासिका चेति कर्मधारयोत्तरं तृतीयासमासो बहुव्रीहिर्वा । मुखोपसहिता इत्यादि भाष्यन्तु तदर्थकथनपरमेव । मुखञ्च नासिका चेति द्वन्द्वस्तु नात्र, 'द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्' ( २-४-२ ) इति समाहारद्वन्द्वनियमात् 'स नपुंसकम्' ( २-४-१७ ) इति नपुंसकत्वे 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे मुखनासिकवचन इत्यस्यापत्तेः ।

ननु मुखनासिकावचनमस्येति विग्रहोऽसङ्गतः, वचनशब्दस्य नासिकाविशेषणतया 'पचनी-स्थाली' इत्यत्रेव ङीबापत्तेरिति चेन्न, प्रकृते वचनस्यैव विशेष्यत्वेन विवक्षितत्वात्, मुखनासिकेत्यस्य मुखनासिकास्थानमित्यर्थकत्वात्, पदसंस्कारपक्षे वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संक्रि-यते । पश्चात्स्त्रीत्वस्य पदान्तरसम्बन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वान्ङीप्प्रत्ययो न भवति । यदा तु स्त्रीत्वाश्रयेण वचनीति पदं व्युत्पाद्यते तदा मुखनासिकावचनीक इत्येव भवतीति कैयटोक्तेश्च ।

अनुनासिकत्वस्य लोकप्रसिद्धतया महासंज्ञानुरोधात् अनुशब्दस्य लक्ष्यानुरोधेन 'अभिहत्य व्यञ्जितः' इत्यर्थे लक्षणया नासिकामभिहत्य वायुना व्यञ्जितो वर्णोऽनुनासिक इति योगाश्रयणेन वा सिद्धे इदं सूत्रं स्पष्टार्थम् । अनु=पश्चात्=स्थानान्तरेणोच्चारणानन्तरं नासिकां गतोऽनुनासिक इत्यर्थस्तु न ङादीनां कण्ठादिस्थानसहितनासिकयोच्चारणेन, यमानुस्वाराणां केवलनासिकयैव वोच्चारणेन चानुनासि-कत्वसिद्ध्यनापत्तेः ।

ननु अनुनासिकसंज्ञाविधायकशास्त्राभावे अनुनासिकसंज्ञायाः शब्दशास्त्रीयसंज्ञात्वाभावेन अनु-नासिकपदे 'अशब्दसंज्ञायाम्' इति निषेधाप्रवृत्त्या 'स्वं रूपम्' (१-१-३८) इति सूत्रेण 'यरोऽनुनासिके' ( ८-४-४५ ) इत्यस्य अनुनासिकशब्दे परेऽनुनासिकशब्दविधानापत्तिरिति चेन्न, 'हरतेर्दृतिनाथयोः पशौ' ( ३-२-२५ ) इत्यत्र पशुशब्दे, 'तस्यापत्यम्' ( ४-१-९५ ) इत्यत्र चापत्यशब्दे यथा शब्दे नाथहरत्वकर्तृत्वासम्भवेन गोत्राद्यर्थे प्रत्ययविधानेन च स्वरूपग्रहणाभावस्तथा 'ङमुण् नित्यम्' इत्यादिनिर्दे-शात् 'स्वनंयति' प्रातर्नयति' 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनुनासिकः प्राप्नोति इति 'हयवरट्' सूत्रभाष्याच्च स्वरूपग्रहणाभावकल्पनेनादोषात् । न च 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्तेस्तेषां केवलनासिकास्थानकत्वेन सूत्रेणानुनासिकसंज्ञा न स्यादिति वाच्यम्, तेषामनुनासिक-संज्ञायाः फलाभावेन क्षतिविरहात् । अत एव भाष्ये मुखग्रहणं प्रत्याख्यातम्, 'नासिकावचनोऽनुनासिकः' इति सूत्रकरणेऽपि विधानसामर्थ्यान्मुखनासिकोभयवचनानामेव संज्ञासिद्धौ मुखग्रहणस्य निष्फलत्वात् । सूत्रे मुखपदं मुखभवतरास्थानपरम्, मुखस्थानकत्वस्य सर्ववर्णसाधारण्येन व्यावर्त्याभावान्मुखग्रहण-वैयर्थ्यापत्तेः ।

तदित्थमिति—तत् = उदात्तत्वादिभेदेन नवविधत्वम्, तेषामनुनासिकत्वादिभेदेन द्विविधत्वञ्च प्रत्येकमष्टादशप्रकारकत्वमिति यावत् । न सर्वेषामचां किन्तु इत्थम्=अनेन वक्ष्यमाणप्रकारेण बोद्धव्यम् । अ, इ, उ, ऋ, एतेऽभेदानुकरणेन 'भू सत्तायाम्' इत्यादिवद् वृत्त्याऽर्थवत्त्वाभावात्प्रातिपदिकसंज्ञाया अभावेन निर्विभक्तिकाः, 'अनुकरणञ्चानितिपरम्' (१-४-६२) इत्यनुकरणोद्देश्यककार्य्यविधायकशास्त्र-बलादनुकरणानां साधुत्वबोधनेन साधव इति तु न, 'अपदं न प्रयुञ्जीत' इति भाष्यविरोधात् ।

अष्टादशभेदा इति—अष्टादशधर्मा इत्यर्थः । ते च धर्माः--१ ह्रस्वोदात्तत्वम् २ ह्रस्वानुदात्त-त्वम्, ३ ह्रस्वस्वरितत्वम्, ४ दीर्घोदात्तत्वम्, ५ दीर्घानुदात्तत्वम्, ६ दीर्घस्वरितत्वम्, ७ प्लुतोदात्तत्वम् ८ प्लुतानुदात्तत्वम् ९ प्लुतस्वरितत्वम् इति नव । प्रत्येकम् अनुनासिकत्ववैशिष्ट्येन नवापरे इत्यष्टादश-धर्मा अकारादिऋकारान्तवर्णानाम् । अनुनासिकत्वविधायकञ्चैषाम् 'अत्रानुनासिकः पूर्वस्य तु वा' ( ८-३-२३ ) इति 'अणोऽप्रगृह्यस्यानुनासिकः' ( ८-४-५७ ) इति च ।

द्वादशेति—ह्रस्वोदात्तत्वादयस्त्रयः, प्लुतोदात्तत्वादयश्च त्रय इति षट् । षडपि अनुनासिकत्व-समानाधिकरणाः । तदसमानाधिकरणाश्चेति द्वादश ।

तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्।

तुल्यास्यप्रयत्नं सवर्णम्। [ १-१-६ ]

दीर्घाभावादिति—दीर्यते=विध्रियते मुखमनेनेति दीर्घः। 'दृ विदारणे' इत्यत औणादिके कघप्रत्यये रूपम्। विवृतप्रयत्नकऌकारस्य दीर्घस्याभावादित्यर्थः। तेन 'ऌति ऌ वा' इति वार्तिकविहितस्य भाष्यसम्मतस्य ईषत्स्पृष्टप्रयत्नकस्य दीर्घस्य ऌकारस्य सत्त्वेऽपि न क्षतिः। ननु प्लुतस्य ऌकारस्य एचश्च सत्त्वे तत्रैकमात्रकत्वं द्विमात्रकत्वं च नास्तीत्यस्य वक्तुमशक्यतया ह्रस्वादिसंज्ञायाः सुकरत्वेन ऌकारस्य दीर्घाभावादेचश्च ह्रस्वाभावादित्यसङ्गतमिति चेन्न, 'दीर्घात्' इति तुग्विधानज्ञापकाद्दीर्घादिषु ह्रस्वादिनिमित्तककार्याभावज्ञापनेन फलाभावेन ह्रस्वादिसंज्ञाया अप्रवृत्तेः' 'नहि त्रिपुत्रो द्विपुत्रव्यवहारं लभते इति न्यायात्' 'तैलं न विक्रेतव्यं मांसं न विक्रेतव्यमिति व्यपवृक्तं च न विक्रीयते। अव्यपवृक्तं गावः सर्पपाश्च विक्रीयन्ते'' इति भाष्यप्रमाणेन पार्थक्येन प्रतीयमानानामेव ह्रस्वादिसंज्ञाविधानाच्च दीर्घादिघटकानामेकमात्रत्वेऽपि संज्ञाया अभावेनादोषात्। अस्य दीर्घाभावे प्रमाणञ्च तुल्यास्यसूत्रभाष्यमेव। तथाहि 'ऌति सवर्णे, इत्यनेन ऌद्वयघटितस्य ईषत्स्पृष्टप्रयत्नकस्य ऌकारस्य दीर्घस्य सत्त्वेऽपि तदभावपक्षे 'अकः सवर्णे' इति दीर्घे 'होतॄकारः' इति दीर्घऋकारघटितप्रयोग उदाहृतः। यदि विवृतप्रयत्नको दीर्घऌकारो भवेत्तदा स एव उदाहर्तुमुचितः, आन्तरतम्याद् ऌकारोदाहरणे दीर्घऌकारस्यैव प्राप्तेः, इति तदभावो ध्वन्यते। किञ्च 'ऌति ऌ वा' इत्यस्य भाष्यकृत्कृतप्रत्याख्यानमपि दीर्घाभावे एव संगच्छते। अन्यथा ह्रस्वऌकारस्य विवृतस्य स्थाने विवृतदीर्घऌकार एव 'अकः सवर्णे' इति सूत्रेण स्यात्र तु ऌद्वयघटितईषत्स्पृष्ट आन्तरतम्याभावात् दीर्घऌकारसत्त्वे तु भाष्यासङ्गतिः स्पष्टैव। एवञ्च दीर्घत्वघटितानां धर्माणामभावात् ऌकारस्य द्वादशधर्मभेदा इति सम्यगेव।

ह्रस्वाभावादिति—तथा च एओङ् सूत्रे भाष्यम्—'ननु चैङः सस्थानतरावर्द्ध एकारोऽर्द्ध ओकारः ( एकमात्रिकैकारौकारौ )। न तौ स्तः। यदि हि तौ ( एकमात्रिकैकारोकारौ ) स्यातां तावेवायमुपदिशेत्' इति। अस्य वर्णसमाम्नाये इति शेषः। एकमात्रिकस्यैङोऽभावोक्त्या तुल्यन्यायादैचोऽप्यभाव उक्त एव। 'ह्रस शब्दे' इत्यतः 'सर्वनिघृष्व' ( उ. १ पा. १५९ सू. ) इति बाहुलकाद् वन् प्रत्यये ह्रस्वः सिद्ध्यति।

'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यत्र सवर्णपदस्य शक्तिज्ञानायाह—तुल्यास्यप्रयत्नं सवर्णम्। तोल्यतेऽनया तुला=उन्मानम्। तुल उन्माने (चु.८१) इत्यतः तुल्यार्थैरतुलोपमाभ्याम् (२-३-७२) इत्यत्र 'तुला' इति निर्देशाद् 'षिद्भिदादिभ्यः' (३-३-१०४) इति भिदादिकल्पनात् निपाताद्वाङि निपातनादेव चुरादिणिचोऽनित्यत्वात् गुणाभावाद्वा तुलेति। तुलाशब्दात् तुलया सम्मितम् इत्यर्थे 'नौवयोधर्म' ( ४-४-९१ ) इति 'संज्ञायाम्' ( ४-४-८९ ) इत्यतः संज्ञायामित्यनुवर्त्य यत्प्रत्यये तुल्यशब्दः सदृशे रूढः रथन्तरादिवत्। अत एव पथोऽनपेतः पथ्य इति शब्दः 'नौवयः' इत्यनेनैव यति शार्ङ्गायात् पयः=मार्गाद् अनपेतमेव पथ्यमित्युच्यते, नतु ग्रामादिमार्गं गच्छन् चौरोऽपि पथ्यः।

आङ्पूर्वकात् 'स्यन्दू प्रस्रवणे' इत्यतः आस्यन्दते=आम्लादिना स्रवति, आस्वद्यते=अन्नादिना द्रवीक्रियते, इत्यर्थे 'अन्येष्वपि दृश्यते' ( ३-१-१०१ ) इति सूत्रे 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन डप्रत्यये अस्यन्ति=प्रकाशन्ते वर्णा अनेनेत्यर्थे अस्यते ग्रासोऽस्मिन्नित्यर्थे वा 'असु क्षेपणे' इत्यतः 'ऋहलोर्ण्यत्' (३-१-१२४) इति करणेऽधिकरणे वा ण्यति 'आस्यम्' इति। तदुक्तं भाष्ये 'अस्यन्ति अनेन वर्णानिति आस्यम्। अन्नमेतदास्यन्दते इति वा आस्यम्' इति अस्मादास्यशब्दात् आस्ये भवम् इत्यर्थे 'शरीरावयवाद्यत्' (४-३-५२) इति यति यदन्तोऽत्रास्यशब्दस्ताल्वादिस्थानवाची, तद्रहितस्य मुखवाचकस्यग्रहणे आस्यग्रहणवैयर्थ्यापत्तेः, सर्ववर्णानां मुखस्थानकत्वेनाव्यावर्तकत्वात्।

प्रपूर्वकाद्यतधातोः 'यजयाचयत' ( ३-३-९० ) इति यतनमित्यर्थे भावे नङि 'नङन्तः' ( लिं० ३९ ) इति पुंस्त्वं यत्न इति। प्रकृते यत्नश्च वर्णमुच्चारयितुमिच्छोः पुंसो मनो जाठराग्निं ताडयति।

तात्वादिस्थानमाभ्यन्तरप्रयत्नश्चेति

ताडितो जाठराग्निर्नाभिप्रदेशस्थं वायुं प्रेरयति, वायुर्वेगान्मूर्द्धानं गच्छति, ऊर्ध्वं गमनस्यावकाश-मलब्ध्वा निवृत्तो वायुर्मुखस्थानि ताल्वादिस्थानान्याहत्य वर्णानभिव्यञ्जयति = आविर्भावयति, न तु जनयति, वैयाकरणमते वर्णानां नित्यत्वात्, स्फोटरूपत्वाच्च। यद्वा पूर्वोक्तो वायुर्ध्वनिं जनयति, ध्वनिश्च स्वकीयरूपेण कत्वादिना वर्णान् दीपो घटादीनिव प्रकाशयति। तथाच नाभिप्रदेशान्मुखस्थानपर्य्यन्तं वर्णाविर्भावात्प्राक्तदनन्तरञ्च यो हि वायुव्यापारः स एव यत्नशब्देनोच्यते। तदुक्तं शिक्षायाम्—

आत्मा ( अन्तःकरणम् ) बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्द्धन्यभिहतो वर्णाञ्जनयते' इति।

स च प्रयत्नो द्विविधः—आभ्यन्तरो बाह्यश्च। तत्र ओष्ठात्प्रभृति काकलकात्प्राग्देशो मुखम्। काकलकश्च—कण्ठाधो ग्रीवास्थोन्नतभागः। तत्र यः प्रयत्नो वक्ष्यमाणः स्पृष्टादिः स एव 'तुल्यास्य' इति सूत्रे गृह्यते, 'यत्न' इत्येव वक्तव्ये सूत्रे प्रग्रहणात्प्रकृष्टो यत्नः प्रयत्न इत्यर्थेन वर्णाभिव्यक्त्यव्यवहितप्राक्कालभवत्वरूपप्रकर्षस्य आभ्यन्तरे एव सत्त्वात्, वर्णोत्पत्त्यनन्तरभाविबाह्यप्रयत्ने तदभावात्। यदि तु यत्नप्रयत्नशब्दयोः पर्य्यायतया पर्य्यायवाचकशब्देषु लाघवगौरवचर्चानादरस्य 'अन्यतरस्याम्' 'उभयथा' इत्यादिगुरुभूतशब्दोच्चारणेन पाणिनिना बोधिततया प्रशब्देन प्रकर्षार्थो बोधयितुं न शक्यते इत्युच्यते तदा आभ्यन्तरस्य प्रथमोपस्थितत्वात्, तुल्यावास्यप्रयत्नौ यस्य इत्यत्र जनकत्वरूपषष्ठ्यर्थस्यैव विवक्षितत्वात्, 'सन्ति ह्यास्याद्बाह्याः प्रयत्नास्ते हापिता भवन्ति' इति तुल्यास्यसूत्रभाष्याच्चात्र सूत्रे आभ्यन्तरप्रयत्नस्यैव ग्रहणं बोध्यम्। एवञ्च 'तुल्यञ्च ( आस्यम् ) तुल्यश्च ( प्रयत्नः ) इति विग्रहे पुंलिङ्गस्य तुल्यशब्दस्यैकशेषे, 'आस्यञ्च प्रयत्नश्चास्यप्रयत्नौ' इति द्वन्द्वे, तुल्यावास्यप्रयत्नौ यस्य वर्णस्य तद्वर्णस्य तत् तुल्यास्यप्रयत्नं वर्णं सवर्णसंज्ञं स्यादित्यर्थः फलति। वर्णशब्दो नपुंसकोऽपि, वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे' इत्यमरात्। ननु तुल्यञ्च तुल्यश्चेति विग्रहे 'नपुंसकमनपुंसकेन' ( १-२-६९ ) इति नपुंसकतुल्यशब्दस्यैवैकशेषे तुल्ये आस्यप्रयत्नौ यस्येत्येव विग्रहो न्याय्य इति चेन्न, नानाप्रवृत्तिनिमित्तकेऽप्येकशेषप्रवृत्तेर्भाष्यसम्मतत्वेन तुल्यत्वरूपैकप्रवृत्तिनिमित्तके तुल्यशब्दे एकप्रकारतानिरूपितनानाविशेष्यताकार्थोपस्थितिजनकत्वरूपार्थतन्त्रस्वीकारात्।

स्थानकृतं प्रयत्नकृतं वैकं तुल्यत्वमादाय सवर्णसंज्ञा तु न, 'अकः सवर्णे' (६-१-१०१) 'इकोऽसवर्णे' ( ६-१- १२७ ) इत्यादिषु सवर्णग्रहणवैयर्थ्यापत्तेः। विवृतप्रयत्नसाम्यमादाय सर्वैस्स्वरैः समं सावर्ण्याद्व्यावर्तकत्वात्।

ताल्वादीति—यद्यपि वर्णसमाम्नाये मातृकान्यासे चाकारस्य प्राथम्येन स्थानविवेके पूर्वं कण्ठस्थानस्यैवोक्तत्वेन चात्रापि कण्ठादीति वक्तुमुचितं तथापि भाष्ये पस्पशाह्निके व्याकरणस्य महत्त्ववर्णने 'सुदेवो ऽसि वरुण यस्य ते सप्तसिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव' इति वैदिकवाक्ये काकुदस्यैव ( तालुन एव ) वर्णनेन तदनुरोधाय सूत्रे आस्यपदमास्यभवस्थानपरमिति द्योतनाय च ताल्वादीत्युक्तिः। किञ्च कण्ठादीत्युक्तौ कण्ठ आदिरवयवो यस्येत्यर्थेन मुखार्थकमेवास्यशब्दः सूत्रे इति प्रतीतिरपि स्यात्। यद्वा ताल्वादीति तन्त्रेण निर्देशः। तालुन आदिः = कण्ठः ताल्वादिः, ताल्व्यादि र्यस्येति बहुव्रीहिणा मूर्द्धादिसंग्रहः। परन्त्वत्र पक्षे गौरवम्। किञ्चाकारस्य परमात्मवाचकतया परमात्मनो मायासम्वलितत्वेनैव जगत्कारणत्वेन मायायाः सृष्टौ प्राधान्यद्योतनाय तद्बीजस्येकारस्य तालुस्थानत्वोक्तिः। नच तन्निश्चत्वे सति तद्गतभूयोधर्मवत्त्वम् सादृश्यम्। तथा च अकारादेरकारादिना सह सवर्णसंज्ञा न स्यात्। उभयोः कण्ठस्थानत्वेन कण्ठस्य कण्ठे भेदघटितत्वतुल्यत्वासम्भवादिति वाच्यम्, 'प्रत्युच्चारणं शब्दा भिद्यन्ते' इति अकारादिवर्णयोर्भेदं स्थानेषु आरोप्य तुल्यत्वस्य सम्भवात्।

तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं सादृश्यम् । नच 'चन्द्रवन्मुखम्' इत्यादौ चन्द्रगतधर्माणां मुखे वृत्तित्वासम्भवश्चन्द्रमुखदर्शनजन्यसुखयोर्भिन्नतया तज्जनकत्वरूपाह्लादकत्वस्यापि कारणतावच्छेदकभेदेन भिन्नत्वस्य नियतत्वात् । यदि तद्गतधर्मसदृशधर्मवत्त्वे तस्य तात्पर्यं तदा आत्माश्रय इति वाच्यम्, तद्गतधर्मवृत्तिवद्धर्मजनकत्वस्य विवक्षितत्वात् । तद्गतधर्मवृत्तिधर्मश्च तात्पर्यविषय एव ग्राह्य इति न प्रमेयत्वादिकमादाय दोषः । यद्वा तद्गतभूयो धर्मवत्त्वमित्यस्य स्वाश्रयोपधायकत्वसम्बन्धेन एकवैजात्यविशिष्टत्वरूपत्वात् । स्वम्=सुखगतं सुखत्वव्याप्यं वैजात्यम् । तच्चोभयोः सुखयोरेकमेवेति तदाश्रयजनकत्वं चन्द्रे सुलभम् । वस्तुतस्तु सादृश्यं न भेदघटितम्, नापि साधारणधर्मघटितम्, किन्तु साधारणधर्मसम्बन्धप्रयोज्यं सदृशपदशक्यतावच्छेदकतया, सदृशदर्शनेऽनुभवजन्यसंस्कारोद्बोधकत्वं सर्वसम्मतम् । तथाच संस्कारोद्बोधनिष्ठकार्यतानिरूपितकारणतावच्छेदकतया चाखण्डमतिरिक्तं सिध्यति । अन्यथा सर्वत्र समानाकारकत्वेनानुभूतायाः प्रतीतेरपलापापत्तिः । समानाकारकत्वञ्चैकमकारकत्वम् । 'चन्द्रवन्मुखम्' इत्यत्राह्लादकत्वस्य, 'घटसदृशः पटः' इत्यत्र द्रव्यत्वपृथिवीत्वादेः प्रतीतिविषयत्वे तु प्रतीतेः समानाकारत्वापलापः स्पष्ट एव । यद्यपि मुखे चन्द्रे चानेकं सादृश्यम् । अन्यथा सर्वत्र सादृश्यस्यैक्यात् 'चन्द्रतुल्यः पटादिः' इत्यादिप्रतीत्यापत्तिः । किन्तु उभयसादृश्यगतसादृश्यत्वस्य अखण्डोपाधिरूपस्यानुगततया समानाकारकप्रतीत्युपपत्तिः । नच सादृश्यस्यातिरिक्तपदार्थत्वे 'सप्त पदार्थाः' इति सिद्धान्तविरोधः, तद्विभागस्य साक्षात् परम्परया वा तत्त्वज्ञानोपयोगिपदार्थमात्रनिरूपणपरत्वात् । तत्त्वज्ञानञ्च 'आत्मा द्रव्यादिभिन्नः' इति आत्मधर्मिकात्मेतरद्रव्यादिभेदप्रकारकं ज्ञानम् । तत्त्वज्ञानजनकज्ञानविषयत्वरूपं च तदुपयोगित्वम् । आत्मनो द्रव्यादीनाञ्च, तत्र पक्षज्ञानविधया आत्मनः साक्षादुपयोगित्वम् । द्रव्यादीनान्तु भेदप्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानविधया । आत्मनि द्रव्यादिसप्तातिरिक्तपदार्थभेदसत्त्वेऽपि तद्भेदज्ञानं न तत्त्वज्ञानोपयोगीति न नैयायिकादीनां पदार्थविभागविरोधः सादृश्यादीनामतिरिक्तत्वे । एवं प्रतियोगित्वादीन्यपि अतिरिक्तानि बोध्यानि । तेषामपि न तत्त्वज्ञाने उपयोगः । इवादियोगे साधारणधर्मसम्बन्धरूपा उपमा वाच्या । सादृश्यप्रतीतिरर्थतो लभ्यते । तुल्यादिशब्दयोगे सादृश्यप्रतीतिः शब्दलभ्या । उपमा त्वर्थतः प्रतीयते । सादृश्यन्तु साधारणधर्मसम्बन्धप्रयोज्यं नतु तद्घटितम् । तच्च सदृशादिपदशक्यतावच्छेदकतया सिद्धम् । सदृशदर्शनेऽनुभवजन्यसंस्कारोद्बोधकत्वं सर्वसम्मतम् । तथा च संस्कारोद्बोधनिष्ठकार्यतानिरूपितकारणतावच्छेदकतयाऽपि अखण्डं सादृश्यमतिरिक्तपदार्थः सिध्यति, न तु तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम्, तद्घटितस्य साधारणधर्मसम्बन्धप्रयोज्यत्वासम्भवात् । तच्च स्वस्य स्वस्मिन्नपि । अत एव 'अकर्तरि च कारके' ( ३-३-१९ ) इति भाष्ये—'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' नञ्युक्तमिवयुक्तञ्चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते । तथा ह्यर्थो गम्यते । अनेन भाष्येणाभेदेऽपि सादृश्यं ध्वन्यते । अन्यथा अन्यस्मिन्निति भाष्योक्तिरसङ्गता स्यात्सदृशपदेनैव तल्लाभात् । अत एव अस्या मुखसदृशमस्या मुखमित्यभेदेऽपि सादृश्यप्रतीतिः । किञ्च 'तुल्यास्य' सूत्रमप्यत एव संगच्छते । सादृश्यस्य भेदघटितत्वे तु वर्णयोस्तुल्यस्थानत्वं दुरुपपादमित्युपाध्याया इति दिक् ।

ननूदात्तानुदात्तयोरूर्ध्वभागाधोभागरूपभिन्नस्थानजन्यत्वेन सावर्ण्यं न स्यादिति चेन्न, स्थानविभाजककण्ठत्वादिधर्मेणैवास्यभवग्रहणस्य शिक्षोक्त्यनुसारेण विवक्षितत्वात् ।

एतद्द्वयमिति—यस्य वर्णस्य ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेतद्द्वयं येन = यद्वर्णीयताल्वादिस्थानाभ्यान्तरप्रयत्नेन तुल्यं तयोर्वर्णयोः परस्परं सवर्णसंज्ञेत्यर्थः । नच इकाराद्येकारादीनामपि ताल्वादिस्थानजन्यत्वेन तुल्यतया सावर्ण्यं स्यात्, 'बहुवचने झल्येत्' ( ७-३-१०३ ) इत्यादिषु 'झल्येत्' इत्यत्र दीर्घादर्शनेन स्वजनकस्थानजन्यत्व-स्वाजनकस्थानाजन्यत्वोभयसम्बन्धेन परस्परं सम्बन्धि यद्द्वयं द्वयं तयोरेव सवर्णसंज्ञाविधानेनादोषात् ।

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु ।

---

प्रयत्ने तु न सकलप्रयत्नतः साम्यम्, ह्रस्वदीर्घजनकयोरास्यभववायुसंयोगयोस्तुल्यत्वाभावेन ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः ।

रेफोष्मणां न सवर्णाः । रेफस्य शषसहानाञ्च भिन्नजातीया वर्णाः सवर्णा न सन्ति, स्थानप्रयत्न-साम्याभावात् । तदुक्तं हयवरट्सूत्रभाष्ये 'रेफोष्मणां सवर्णा न सन्ति' इति रेफस्य रेफ एव सवर्णः, शस्य श एव, षस्य ष एव सस्य स एव, हस्य ह एव, नान्य एतेषां सवर्णः ।

आस्यग्रहणं कचटतपानां तुल्यस्पृष्टप्रयत्नानां भिन्नस्थानानां सवर्णसंज्ञावारणार्थम् । अन्यथा 'तर्प्ता' इत्यत्र पकारस्य 'झरो झरि' ( ८-४-६५ ) इति लोपापत्तिः । प्रयत्नग्रहणं किम्, इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां सावर्ण्ये 'वाक् श्च्योतति' इत्यत्र 'झरो झरि' इति शकारस्य चकारे परे लोपो मा भूत् । आभ्यन्तरेत्यस्य फलं श्वासाघोषविवाररूपबाह्यप्रयत्नसाम्येन तत्रैव कशयोः सावर्ण्ये लोपो मा भूत् । तुल्यत्वस्य सम्बन्धिद्वयसाकाङ्क्षतया आह—यस्य येनेति । कस्य किं स्थानमित्याकाङ्क्षायामाह—अकुहेति—अश्च कुश्च हश्चेति द्वन्द्वः । अत्र अपदेनाष्टादशानां ग्रहणं लोकप्रसिद्धेरेव ननु अणुदित्सूत्रेण, तस्य पाणिन्यादिसूत्रादिष्वेव प्रवृत्तेः साजात्यात् । एवं वक्ष्यमाणेष्वपि बोध्यम् ।

ननु 'कण्ठ्यावहौ' इति शिक्षया अकारहकारयोः कण्ठस्थानत्वस्य लाभेऽपि 'जिह्वामूले तु कुः प्रोक्तः' इति शिक्षया कवर्गस्य जिह्वामूलस्थानत्वेनेदमसङ्गतमिति चेन्न, कण्ठपदेन लक्षणया कण्ठसमीप-जिह्वामूलयोर्बोधनेनाक्षतेः । नच कवर्गस्य जिह्वामूलस्थानत्वे जिह्वामूलीयपदस्य वहाऽर्थस्यापत्तिः 'योगाद् रूढिर्बलीयसी' इति न्यायेन वर्णविशेष एव रूढिरित्यदोषात् । अत्र हपदेन वर्गपञ्चमेन यणा वा संयुक्तहकारेण हकारस्य ग्रहणम् । तत्संयुक्तस्य तु उरःस्थानम्,

'हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥' इति शिक्षोक्तेः ।

नन्वनेन तत्तद्वर्णानां स्थानत्वे बोधिते तुल्यस्थानत्वात्सवर्णपदशक्तिग्रहे 'अणुदित्' सूत्रेण कुशब्दस्य सवर्णग्राहकत्वं बोधनीयमिति ततः प्राक्कथमत्र कुशब्देन पञ्चानां ग्रहणमिति चेन्न, कुशब्दस्य वर्णपञ्चके रूढत्वेन सूत्रस्य स्पष्टार्थमनुवादकत्वात् ।

विसर्जनीयानामिति—ननु 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षोक्तेः, नास्ति योगः = सम्बन्धो वर्णसमाम्नाये येषां ते अनुस्वार-विसर्ग-जिह्वामूलीयोपध्मानीययमा अयोगाः । वहन्ति = शास्त्रीयकार्यं लक्ष्येषु निर्वहन्तीति वाहाः । अयोगाश्च ते वाहा इत्ययोगवाहाः । आश्रय-स्थानभागिनः = यस्यायोगवाहस्य यत्साहाय्येनोच्चारणं तत्स्थानकत्वमेवेति । इकाराद्याश्रयस्य विसर्गस्य तालवादिस्थानकत्वेनेति कण्ठस्थानकत्वमात्रोक्तिरसङ्गतेति चेन्न, अकाराश्रयविसर्गस्यैव कण्ठस्थाने तात्पर्यात् ।

कण्ठ इति—'कण शब्दे' इत्यतः 'कणे ठः' ( उ. १ पा. १०८ ) इति कर्तरि करणे वा ठे साधुः । 'समीपगलशब्देषु त्रिषु कण्ठं विदुर्बुधाः' इति शाश्वतः ।

इचुयशेति—इश्च चुश्च यश्च शश्चेति विग्रहे द्वन्द्वः । इकारेणाष्टादशानां पूर्ववत् । यद्यपि तुल्यास्यसूत्रविवृत्तौ तालवादीत्युक्त्या तालुस्थानकमेव प्रथमं वक्तुमुचितं तथापि वर्णसमाम्नाये इकारस्य द्वितीयत्वादकारस्थानोक्त्युत्तरमेतदुक्तिः । तुल्यास्यसूत्रविवृत्तौ तु कण्ठादीत्यनुक्त्वा तालवादीत्युक्तिः सूत्रे आस्यपदस्य तद्धितान्तत्वद्योतनाय । कण्ठादीत्युक्तौ तु कण्ठ आदिः = आद्यवयवो यस्यास्येत्यर्थकतया मुखस्यैव ग्रहणे तद्वैयर्थ्यापत्तिर्मुखस्य सर्ववर्णस्थानत्वेनाव्यावर्तकत्वात् ।

तालिवति—तरन्ति = निःसरन्ति वर्णा यत इत्यर्थे 'त्रोरश्च लः' ( उ. १ पा. ५ सू. ) इत्यपादाने उण्प्रत्यये तालिवति । अत्र इकारोत्तरविसर्गस्यापि तालुस्थानत्वं बोध्यम् ।

ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च।

---

ऋटुरिति—ऋ च टुश्च रश्च षश्चेति विग्रहे द्वन्द्वः। मूर्द्धेति—मुह्यन्ति प्राणिन आहतेऽस्मिन्निति विग्रहे 'मुह वैचित्ये' इत्यतोऽधिकरणे 'श्वन्नुक्षन्' (उ० १ पा० १६५ सू०) इति कनि निपातनाद्धस्य धः, उकारस्य दीर्घश्च। ऋलृशब्दयोः 'ऋतो ङि' ( ७-४-११० ) इति गुणे दीर्घे च आ इति सौ 'शेषं रूपम् 'अरौ' 'अरः' इत्यादि पितृवत्। लृ शब्दे अलौ, अलः, अत्र रेफप्रसङ्गे लकार इत्येव विशेषः।

लृत्विति—लृ च तुश्च लश्च सश्चेति विग्रहे द्वन्द्वः। अत्र लृपदेन लोकप्रसिद्धद्वादशलृकारा ग्राह्याः, न तु अणुदित्सूत्रस्य प्रवृत्तिः, ऋकारस्यापि लृकारसावर्ण्येन तद्ग्रहणापत्तेः। साजात्यात्पाणिन्याद्युच्चरितेष्वेव तत्प्रवृत्तेश्च। दन्ता इति—दन्ताधारदेशा इत्यर्थः। तेन भग्नेऽपि दन्ते तेषामुच्चारणम्। वस्तुतस्तु दन्तसंयोगविशिष्टा दन्ताः= दन्ताधार देशा इत्यर्थः। अत एव दन्ते भग्ने दन्तसंयुक्तदेशाभावान्न सम्यगुच्चारणम्।

उपूविति—उश्च पुश्च उपध्मानीयश्चेति विग्रहे द्वन्द्वः। उश्च पश्च उपौ ध्मायेते=उच्चार्य्येते अनेनेति ध्मानः=ओष्ठः, करणे ल्युट्। उपयोर्ध्मान इति विग्रहे कर्मषष्ठ्या समासे उपध्मान इति तत्र भव उपध्मानीय इति। 'वृद्धिर्यस्य' ( १-१-७३ ) इति सूत्रे 'वा नामधेयस्य' इति वार्त्तिकेन वृद्धसंज्ञायाम् 'वृद्धाच्छः' ( ४-२-११४ ) इति छप्रत्यये साधु। उपध्मानीयः=विसर्गस्य स्थाने विहितः पफाभ्यां पूर्वं उच्चारणे लेखने चार्द्धविसर्गसदृशो वर्णविशेषः।

ओष्ठाविति—उष्यते=दह्यते उष्णाहारेण इति विग्रहे 'उष दाहे' इत्यत 'उषिकुषिगार्त्तिभ्य स्थन्' ( उ. २ पा. ४ सू. ) इति कर्मणि थन्प्रत्यये ओष्ठ इति योगरूढोऽयं मुखावयवविशेषे दन्तच्छदे इति यावत्। अत्रापि उकारोऽष्टादशविधो ग्राह्यः, वर्णगणनायां लोके 'उकारः' इति कथनेन सकलोकारस्य बोधदर्शनात्। पुपदेनापि रूढ्या एव पफबभमाः पञ्चवर्णा गृह्यन्ते।

ञमङेति—ञश्च मश्च ङश्च णश्च नश्चेति विग्रहे द्वन्द्वः। यद्यपि वर्गक्रमेण 'ङञ' इत्येवंरूपेण वक्तुमुचितं तथापि वर्णसमाम्नायक्रमानुरोधादेवमेवोक्तम्।

चेतीति—चशब्दोऽत्र स्वस्ववर्गीयताल्वादिस्थानसमुच्चायकः। तथाच ञकारस्तालुनासिकोभयस्थानजः। मकार ओष्ठनासिकोभयजन्यः। ङकारः कण्ठनासिकजः। णकारो मूर्द्धनासिकजः। नकारो दन्तनासिकजः। नचैवं स्वस्ववर्ग्याणां पञ्चमेन समं सावर्ण्यापत्तिः, इकारादीनामेकारादिना सह सावर्ण्यवारणाय यावत्स्थानतुल्यत्वस्यावश्यकत्वादिति वाच्यम्, तुल्यास्यसूत्रस्थास्यपदेन नासिकास्थानस्य न ग्रहणमिति मुखनासिका इति सूत्रभाष्ये ध्वनितत्वेन पञ्चमानां स्वस्ववर्ग्येण समं नासिकेतरयावदास्यभवतुल्यत्वसत्त्वेन सवर्णसंज्ञायां बाधकाभावात्। भाष्ये हि—अनुनासिकसंज्ञाविधायकसूत्रभाष्ये 'मुखनासिकम् आवचनमस्य मुखनासिकावचनः। किमिदमावचनम् ? ईषद्वचनमावचनम् = किञ्चिन्मुखवचनं किञ्चिन्नासिकावचनम्' इति भाष्येण, 'भागस्य मुखेनोच्चारणाद्भागस्य नासिकया' इति कैयटेन च कादीनां कियतो भागस्य कण्ठादिस्थानं कियतो भागस्य नासिका स्थानमिति प्रतीयते। 'मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः' इति भाष्येण, 'मुखस्य नासिकायाश्च यदन्तरालं स्थानान्तरं तदेव स्थानमनुनासिकस्य' इति कैयटेन च मुखनासिकयोर्मध्यगतं यत्स्थानं तदेव स्थानमनुनासिकस्येत्यपरः पक्ष उपलभ्यते। मुखद्वितीया वा नासिका वचनमस्य इति भाष्येण, 'यदा तु सर्व एव वर्णः ( अनुनासिको वर्णः ) मुखेन नासिकया चोच्चार्य्यते' इति कैयटेन च सर्वो भागो मुखेन नासिकया चोच्चार्य्यते' इति तृतीयः पक्षः। एवं पक्षत्रयेऽपि नासिकाया मुखात्पृथगुपादानेन आस्यभवस्थानेन नासिकास्थानं न गृह्यते इति स्पष्टमेव लभ्यते। किञ्च 'मुखग्रहणं किमर्थम् ? 'नासिकावचनोऽनुनासिकः' इत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत, अथ नासिकाग्रहणं किमर्थम् ? 'मुखवचनोऽनुनासिक'ः

एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ।

---

इत्युच्यमाने कचटतपानामेव प्रसज्येत' इति भाष्येण च नासिका न आस्यभवस्थानग्राह्येति स्पष्टमेव, नासिकास्थानानां यमानुस्वाराणामपि नासिकाया मुखग्रहणेन ग्रहणे कचटतपानामेवेत्यवधारणोक्त्यसङ्गतेः ।

किञ्च 'प्रयत्नविशेषणमास्योपादानम्' इत्यास्यभवप्रयत्नस्य आभ्यन्तरस्य ग्रहणे बाह्यप्रयत्नस्य न ग्रहणमित्युक्त्वा 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुणः' इति भाष्योक्त्यापि नासिकाया आस्यभवग्रहणेन नासिकाभवप्रयत्नस्य च सूत्रस्थप्रयत्नग्रहणेनाग्रहणं सूचितम् । नासिकाया आस्यपदेन ग्रहणे तु तत्रत्यप्रयत्नस्यास्यग्रहणोक्तिरसङ्गता स्यात् । इदञ्च नासिकाया आस्यग्रहणेनाग्रहणं प्रतिबन्धकमणिमन्त्रादिन्यायेन । यद्वा आस्यभवशब्देन पाणिनिशिक्षोक्तस्थानानामेव ग्रहणम्, पाणिनिशिक्षायां कादिपञ्चानां नासिकास्थानानुक्त्या अनुभवतः नासिकास्थानत्वस्य सत्त्वं सवर्णसंज्ञायां न बाधकम्, शिक्षोक्तस्थानानामेव सावर्ण्यप्रयोजकत्वात् ।

नच नासिकाया आस्यभवग्रहणेनाग्रहणे 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्त्या अनुस्वारस्यानुस्वारेण यमस्य यमेन सह सावर्ण्यं न स्यादिति वाच्यम्, एतेषां सवर्णसंज्ञायाः फलाभावेनादोषात् । तदुक्तं भाष्ये—'यमानुस्वाराणामपि प्राप्नोति । नैव दोषो न प्रयोजनम्' इति ।

एदैतोरिति—द्वादशानामेकाराणामैकाराणाञ्चात्र ग्रहणं बोध्यम्, तपरत्वस्यायादिवारकतया मुखसुखार्थतया वोच्चारणं न तु तपरसूत्रप्रवृत्त्यर्थम्, तस्य साजात्यात् पाणिन्यादिवाक्येष्वेव प्रवृत्तेः, अयावधि अणुदित्सूत्रवाक्यार्थानिष्पत्तेश्च ।

कण्ठताल्विति—कण्ठश्च तालु चेति समाहारद्वन्द्वः । 'द्वन्द्वश्च प्राणितुर्य्य' (२-४-२) इत्येकवद्भावः । 'स नपुंसकम्' ( २-४-११ ) इति नपुंसकत्वम् ।

ओदौतोरिति—ओच्च औच्च इत्यर्थे द्वन्द्वः । तपरोच्चारणं पूर्ववत् । द्वादशानामोकाराणामौकाराणाञ्च कण्ठोष्ठमुभयं समुदितं वा स्थानम् ।

दन्तोष्ठमिति—दन्तश्च ओष्ठश्चेत्यर्थे समाहारद्वन्द्वः । 'ओत्वोष्ठयोः' 'एङि पररूपम्' (६-१-९४) इतिसूत्रस्थेन 'ओत्वोष्ठयोः समासे वा' इति वार्त्तिकेन पररूपम् । अत्रापि उभयं समुदितं स्थानम् । वकारेण अनुनासिकाननुनासिकावुभौ ग्राह्यौ ।

जिह्वामूलीयस्येति—'अनुस्वारौ विसर्गश्च ॅक ॅपौ चापि पराश्रितौ' इति शिक्षाप्रामाण्यात् जिह्वामूलीयस्य कलाश्रितत्वेन कादीनाञ्च 'जिह्वामूले तु कुः प्रोक्तः' इति शिक्षया जिह्वामूलस्थानत्वेन जिह्वामूलीयस्यापि तत्स्थानकत्वम् । यद्यपि 'अकुह' इत्यत्र कण्ठपदस्य शक्यताऽवच्छेदकारोपरूपलक्षणया कण्ठस्थानस्य जिह्वामूलस्थानस्य बोधकत्वमुक्तमिति तत्रैव जिह्वामूलीयस्याप्युपादानमुचितं तथापि स्पष्टप्रतिपत्तये पृथगुक्तिः ।

अनुस्वारस्येति—अत्रानुस्वारपदं यमस्याप्युपलक्षणम्, 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्तेः । यमवर्णस्वरूपञ्चाग्रे वक्ष्यते । यद्वा छन्दसि एव तत्प्रयोगात् पाणिनिना यमानुक्तेश्च यमस्थनाकथनम् । स्वर्यते = उच्चार्यते इत्यर्थे 'अकर्तरि च' ( ३-३-१९ ) इति कर्मणि घञि स्वारः । स्वृ शब्दोपतापयोः' इत्यतः स्वरति = उच्चारयति व्यञ्जनं यः स स्वरः 'नन्दिग्रहिपचादिभ्यः' ( ३-१-१३४ ) इत्यचि स्वर इति । ततः स्वार्थेऽणि स्वार इति, यदि तु स्वम् = स्वयमेव राजन्ते इत्यर्थे 'उणादयः' इति उप्रत्यये स्वर इति । ततः स्वार्थेऽणि तदा 'सौवर्ण्यः सप्तम्यः' इतिवत् न . यवाभ्याम् ( ७-३-३ ) इति ऐज् स्यादिति तु न, द्वारादिगणे स्वशब्दस्य पाठोऽस्ति तेनैव स्वग्रामस्वाध्यायशब्दयोरपि तद्धिते ऐचि सिद्धे तयोरपि द्वारादिगणे कृतः पाठो ज्ञापयति—'स्वशब्दादैरैच् चेत्तदा स्वग्रामस्वाध्याययोरेवेति । तदा स्वार इत्यपि । स्वारमनुगतः = स्वरसाहाय्येनैव य उच्चार्य्यते सोऽनुस्वार इति । 'द्वारादीनाञ्च' ( ७-३-४ ) इति सूत्रे 'सौवर्य्यः सप्तम्यः' इति भाष्यप्रयोगस्तु सुष्ठु ऋच्छति = प्राप्नोति स्वरस्वरूपमित्यर्थे ऋ धातोः पचाद्यचि ततः

एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ।

---

इत्युच्यमाने कचटतपानामेव प्रसज्येत' इति भाष्येण च नासिका न आस्यभवस्थानप्राप्नोति स्पष्टमेव, नासिकास्थानानां यमानुस्वाराणामपि नासिकाया मुखग्रहणेन ग्रहणे कचटतपानामेवेत्यवधारणोक्त्यसङ्गतेः ।

किञ्च 'प्रयत्नविशेषणमास्योपादानम्' इत्यास्यभवप्रयत्नस्य आभ्यन्तरस्य ग्रहणे बाह्यप्रयत्नस्य न ग्रहणमित्युक्त्वा 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुणः' इति भाष्योक्त्यापि नासिकाया आस्यभवग्रहणेन नासिकाभवप्रयत्नस्य च सूत्रस्थप्रयत्नग्रहणेनाग्रहणं सूचितम् । नासिकाया आस्यपदेन ग्रहणे तु तत्रत्यप्रयत्नस्यास्यग्रहणोक्तिरसङ्गता स्यात् । इदञ्च नासिकाया आस्यग्रहणेनाग्रहणं प्रतिबन्धकमणिमन्त्रादिन्यायेन । यद्वा आस्यभवशब्देन पाणिनिशिक्षोक्तस्थानानामेव ग्रहणम्, पाणिनिशिक्षायां कादिपञ्चानां नासिकास्थानानुक्त्या अनुभवतः नासिकास्थानत्वस्य सत्त्वं सवर्णसंज्ञायां न बाधकम्, शिक्षोक्तस्थानानामेव सावर्ण्यप्रयोजकत्वात् ।

नच नासिकाया आस्यभवग्रहणेनाग्रहणे 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्त्या अनुस्वारस्यानुस्वारेण यमस्य यमेन सह सावर्ण्यं न स्यादिति वाच्यम्, एतेषां सवर्णसंज्ञायाः फलाभावेनादोषात् । तदुक्तं भाष्ये—'यमानुस्वाराणामपि प्राप्नोति । नैव दोषो न प्रयोजनम्' इति ।

एदैतोरिति—द्वादशानामेकाराणामैकाराणाञ्चात्र ग्रहणं बोध्यम्, तपरत्वस्यायादिवारकतया मुखसुखार्थतया वोच्चारणं न तु तपरसूत्रप्रवृत्त्यर्थम्, तस्य साजात्यात् पाणिन्यादिवाक्येष्वेव प्रवृत्तेः, अद्यावधि अणुदित्सूत्रवाक्यार्थानिरूपत्तेश्च ।

कण्ठताल्विति—कण्ठश्च तालु चेति समाहारद्वन्द्वः । 'द्वन्द्वश्च प्राणितुर्य' (२-४-२) इत्येकवद्भावः । 'स नपुंसकम्' ( २-४-११ ) इति नपुंसकत्वम् ।

ओदौतोरिति—ओच्च औच्च इत्यर्थे द्वन्द्वः । तपरोच्चारणं पूर्ववत् । द्वादशानामोकाराणामौकाराणाञ्च कण्ठोष्ठमुभयं समुदितं वा स्थानम् ।

दन्तोष्ठमिति—दन्तश्च ओष्ठश्चेत्यर्थे समाहारद्वन्द्वः । 'ओत्वोष्ठयोः' 'एङि पररूपम्' (६-१-९४) इतिसूत्रस्थेन 'ओत्वोष्ठयोः समासे वा' इति वार्त्तिकेन पररूपम् । अत्रापि उभयं समुदितं स्थानम् । वकारेण अनुनासिकाननुनासिकावुभौ ग्राह्यौ ।

जिह्वामूलीयस्येति—'अनुस्वारौ विसर्गश्च ᳲक ᳲपौ चापि पराश्रितौ' इति शिक्षाप्रामाण्यात् जिह्वामूलीयस्य कवर्गाश्रितत्वेन कादीनाञ्च 'जिह्वामूले तु कुः प्रोक्तः' इति शिक्षया जिह्वामूलस्थानत्वेन जिह्वामूलीयस्यापि तत्स्थानकत्वम् । यद्यपि 'अकुह' इत्यत्र कण्ठपदस्य शक्यताऽवच्छेदकारोपरूपलक्षणया कण्ठस्थानस्य जिह्वामूलस्थानस्य बोधकत्वमुक्तमिति तत्रैव जिह्वामूलीयस्याप्युपादानमुचितं तथापि स्पष्टप्रतिपत्तये पृथगुक्तिः ।

अनुस्वारस्येति—अत्रानुस्वारपदं यमस्याप्युपलक्षणम्, 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्तेः । यमवर्णस्वरूपञ्चाग्रे वक्ष्यते । यद्वा छन्दसि एव तत्प्रयोगात् पाणिनिना यमानुक्तेश्च यमस्थनाकथनम् । स्वर्यते = उच्चार्यते इत्यर्थे 'अकर्तरि च' ( ३-३-१९ ) इति कर्मणि घञि स्वारः । स्वृ शब्दोपतापयोः' इत्यतः स्वरति = उच्चारयति व्यञ्जनं यः स स्वरः 'नन्दिग्रहिपचादिभ्यः' ( ३-१-१३४ ) इत्यचि स्वर इति । ततः स्वार्थेऽणि स्वार इति, यदि तु स्वम् = स्वयमेव राजन्ते इत्यर्थे 'उणादयः' इति उप्रत्यये स्वर इति । ततः स्वार्थेऽणि तदा 'सौवर्ध्यः सप्तम्यः' इतिवत् न य्वाभ्याम् ( ७-३-३ ) इति ऐज् स्यादिति तु न, द्वारादिगणे स्वशब्दस्य पाठोऽस्ति तेनैव स्वग्रामस्वाध्यायशब्दयोरपि तद्धिते ऐचि सिद्धे तयोरपि द्वारादिगणे कृतः पाठो ज्ञापयति—'स्वशब्दादैच् चेत्तदा स्वग्रामस्वाध्याययोरेवेति । तदा स्वार इत्यपि । स्वारमनुगतः = स्वरसाहाय्येनैव य उच्चार्यते सोऽनुस्वार इति । 'द्वारादीनाञ्च' ( ७-३-४ ) इति सूत्रे 'सौवर्यः सप्तम्यः' इति भाष्यप्रयोगस्तु सुप्तु ऋच्छति = प्राप्नोति स्वरस्वरूपमित्यर्थे ऋगतौ: पचाद्यचि ततः

इति स्थानानि । प्रयत्नो द्विधा ।

स्वार्थिकेऽपि बोध्यः । ननु 'अइउण्' इति सूत्रे 'आकाशदेशः शब्दः' इति भाष्यात् 'आकाशस्य तु विशेषः शब्दो वैशेषिको गुणः' इति नैयायिकोक्तेश्च वर्णानां कण्ठादिस्थानकथनमसङ्गतमत आह— इति स्थानानीति—इति स्थानानीत्यस्य इमानि वर्णस्थित्यधिकरणानीत्यर्थः । तथा च शिक्षा— 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ इति । 'करणाधिकरणयोश्च' ( ३-३-११ ) इत्यधिकरणे ल्युट् । यद्यपि वर्णानां नाधिकरणं कण्ठादि तथापि वर्णाभिव्यञ्जकवायुसंयोगस्याधारः कण्ठादि इति वायुसंयोगस्य वर्णाभिव्यक्तिजनकतया जनकाधारे कण्ठादौ वर्णाधारत्वमारोप्य गङ्गायां तटगतं घोषाधारत्वमारोप्य यथा 'गङ्गायां घोषः' इति व्यवहारस्तथा वर्णानां कण्ठादिषु स्थानत्वव्यवहारः । यद्वा कण्ठाद्यवच्छिन्ने आकाशे वर्णाभिव्यक्त्या अवच्छेद्याकाशगत-माधारत्वं कण्ठादिष्वारोप्य शब्दप्रक्रियानिर्वाहाय तथा व्यवहारः । शिरोदेशावच्छिन्ने आत्मनि पीडाऽऽधारताया अवच्छेदके शिरसि आरोपेण 'शिरसि मे व्यथा' इति व्यवहारवत् ।

प्रयत्न इति—अत्र प्रयत्नशब्देन यदि आभ्यन्तरस्य ग्रहणं तदा द्विधेत्युक्तिर्न सङ्गच्छेत, तस्य चतुर्विधत्वात् । एवञ्च तुल्यास्यसूत्रे भाष्यादिप्रामाण्यात् प्रयत्नशब्देनाभ्यन्तरस्य ग्रहणेऽपि लोके यत्न-प्रयत्नशब्दयोः पर्य्यायतेति ध्वनयितुमुक्तं—प्रयत्नेति । प्रयत्नः=यत्नः । 'यती प्रयत्ने' इत्यतः 'यज-याच-यत' ( ३-३-९० ) इति भावार्थे नङ्प्रत्ययः । तदुक्तं भाष्ये—'प्रपूर्वकाद्यततेर्भावसाधनो नङ्प्रत्ययः । यत्नश्च नैयायिकमते आत्मनिष्ठो गुणविशेषः, वेदान्तिमते अन्तःकरणनिष्ठः । यत्नस्य प्रवृत्ति-निवृत्ति-जीवनयोनिकरणरूपत्वेन त्रैविध्येऽपि इच्छाजन्यः प्रवृत्तिरूपो यत्नोऽत्र गृह्यते ।

तथाहि—तत्तद्वर्णोच्चारणेच्छया उत्पन्नवर्णोपयोगी वर्णगतगुणोपयोगी च यत्नो 'प्रयत्नो द्विधा' इत्यत्रत्यप्रयत्नपदबोध्यो ग्राह्यः । तेन यत्नेनाभिहतो जाठराग्नि र्मारुतं प्रेरयति । नाभिप्रदेशा-त्प्रेरितो वायुर्वेगान्मूर्द्धपर्य्यन्तं गत्वा प्रतिनिवृत्तो मुखमागत्य पूर्वोत्पन्नयत्नसाहाय्येन ताल्वादिस्थानेषु जिह्वाग्रोपाग्रमध्यमूलादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णान् प्रकाशयति । तत्र वर्णप्रकाशोपयो-गिनो ये यत्नास्ते आभ्यन्तरा उच्यन्ते । यद्यपि यत्न आत्मनिष्ठ एव तथापि आस्यान्तर्गतकार्य्यकारि-त्वात्तेषु यत्नेषु आभ्यन्तरत्वमारोप्य आभ्यन्तरा इत्युच्यन्ते । ततो यत्नविशेषेण ओष्ठप्रभृति काकलक-( गलप्रदेशे उन्नतो भागः काकलकः ) रूपमुखादधस्ताद्बहिर्देशेषु वर्णोच्चारणान्तरं गलविवरसंवार-विवारादिरूपं मुखबहिर्देशे कार्य्यं जायते । तादृशकार्य्यकराश्च यत्नाः कार्य्यगतबाह्यत्वारोपेण बाह्या इत्युच्यन्ते । आस्यभवस्थानानां सम्यक् स्पर्शः स्पृष्टता, ईषत्स्पर्श ईषत्स्पृष्टत्वम्, समीपावस्थानं संवृतत्वम्, दूरावस्थानम् विवृतत्वम् । सामीप्यं दूरत्वञ्च ताल्वादिस्थानापेक्षया ।

ओष्ठयोर्विवृत-संवृतकराश्च ये यत्नास्त आभ्यान्तराः, मुखाद्बहिश्च द्विविधः—शरीराद्बहिः, काकल-कादधश्च । तत्र शरीराद्बहिस्तु वर्णोपयोगी यत्न एव नास्ति । परन्तु वर्णाविर्भावानन्तरं काकलका-दधोऽन्यत्र वा जायमानं यद्वर्णगतगुणोपयोगि कार्य्यं तत्प्रयोजका बाह्यप्रयत्ना इति फलति । नासिकाया आस्यग्रहणेनाग्रहणात् तत्कृतानुनासिक्यमपि बाह्यमेव ।

न च उदात्तत्वादीनामास्यभवोच्चैरादिस्थानस्पर्शकृतत्वेन बाह्यप्रयत्नेषु गणनासङ्गतिः, सवर्ण-संज्ञानुपयुक्तत्वा-न्तरतम्यपरीक्षोपयुक्तत्वाभ्यां बाह्यप्रयत्नसाम्येन लक्षणानुरोधाद्भाष्यादिप्रामाण्याच्चो-दात्तत्वादिजनकयत्नेषु बाह्ययत्नत्वारोपेण बाह्यत्वव्यवहारात् । 'परः सन्निकर्षः' ( १-४-१०९ ) इति सूत्रभाष्यादेकस्यैव यत्नस्य प्रक्रियोपयोगि सर्वकार्य्यजनकत्वं प्रतीयते तथापि स्पर्शादिकार्य्य-भेदादौपाधिको यत्नेषु भेदः । ननु कवर्गादिवर्णजनकस्य स्थानस्य यत्नस्याभ्यन्तरस्यैक्येऽपि कथं कण्ठत्वादिकृतः स्वरूपभेदो दुर्वच इति चेन्न, प्रत्येकवर्णजनकस्य वायुसंयोगस्य जिह्वाग्रादि-स्पर्शादेश्च सूक्ष्मभेदस्यैव धर्मभेदप्रयोजकत्वस्य वक्तुं शक्यत्वात्, कार्य्यभेदेन कारणभेदानुमा-नात् । मात्राकालिकत्वादिरूपह्रस्वत्वादिकमपि नाभिप्रदेशस्थवाऽवक्रत्वमहत्त्वकृतमेव । तथा च

आभ्यन्तरो बाह्यश्च ।

---

वायुप्रेरणारूपकार्य्यस्यास्यबहिर्भूतत्वेन ह्रस्वत्वादिकमपि बाह्यमेवेत्युक्तम् 'अइउण्' सूत्रे भाष्ये । तथाहि—ह्रस्वाकारस्य संवृतत्वेन दीर्घाकारस्य विवृतत्वेन सावर्ण्याभावाशङ्कायामुक्तम् । "किमुच्यते विवारभेदादिति न पुनः कालभेदादपि । यथैव ह्ययं विवारभिन्न एवं कालभिन्नोऽपि । सत्यमेवैतत् । वक्ष्यति······'आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्ति' इति बाह्यश्च पुनरास्यात्कालः" (ह्रस्वत्वादिः) ।

द्विधेति—विभाजकधर्मद्वयवतीत्यर्थः, धाप्रत्ययस्य धर्मार्थकत्वेऽपि लक्षणया धर्मिपरत्वात् । नच क्रियाविधार्थत्वाभावाद् धाप्रत्ययानापत्तिः, दिशिक्रियाया भवतिक्रियाया वा अध्याहारेणादोषात् । 'विभाजकधर्मद्वयञ्चात्र—आभ्यन्तरत्वम्, बाह्यत्वञ्च तच्च वर्णानामुत्पत्तेराविर्भावाद्वा प्राग्भावित्वमाभ्यन्तरत्वम्, पश्चाद्भावित्वं बाह्यत्वम् । तदाह—आभ्यन्तर इति—अभ्यन्तरम् = मध्यम् तत्र भव आभ्यन्तरः । ओष्ठात्प्रभृति प्राक्काकलकं मुखम् तन्मध्यभव इत्यर्थः । बाह्य इति—बहिः=मुखाद्बहिः=गलाधःप्रभागः । तत्र भवो यत्नो बाह्यः । जिह्वाग्रोपाग्रमध्यमूलस्पर्शादिरूपमुखभवकार्य्यगतमाभ्यन्तरत्वम्, गलविवरविकासादिरूपमुखबहिष्कार्य्यगतं बाह्यत्वञ्च यत्नेष्वारोप्य आभ्यन्तरः, बाह्यश्च यत्न इति व्यवहारः । यद्वा कस्यचिद्वर्णस्योच्चारणे कण्ठविवरस्य संकोचः, कस्यचिदुच्चारणे विकासः । तत्कृत एव वर्णे संवृतत्वं विवृतत्वञ्च गुण इति संवृतो ह्रस्वाकारः, विवृतो दीर्घस्वर इति व्यवहारः तथाच संवृतविवृतशब्दयोस्त्रिषु प्रयोगः—स्वरे प्रयत्ने कार्य्ये च । स्वरे—संवृतो ह्रस्वाकारः, विवृत आकारादिः । संवृतविवृतौ प्रयत्नौ । संवृतं संवरणम्, विवृतम् = विवरणम् । अत्र भावे क्तः । एवं स्पृष्टेषत्स्पृष्टयोरपि बोध्यम् ।

द्विविधः शब्दः—नित्यः कार्य्यश्च । तत्र नित्यः सर्वदेशव्यापक एकः स्फोटनामको ब्रह्मेत्यभिधीयते । तस्मात्कार्य्यः शब्द उत्पद्यते । नित्यः शब्द एव वा कार्य्यरूपेणाभिव्यज्यते । अनित्यः शब्दः क्वाचित्को ऽनन्तभेदश्च । यथा खननात्पूर्वं भूमावुदकमस्त्येव खननेन तद् दृश्यते सेयं वर्णस्योत्पत्तिर्व्यांकरणनये । अयं भावः—स्फोटात्मकं शब्दब्रह्म सर्वत्रैवास्ति । तत्तत्सामग्र्या प्रकाशते । ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन यत्नेन युक्तो मूलाधारस्थो वायुर्जाठराग्निना प्रेरितः सन् शब्दब्रह्माभिव्यञ्जयति । अभिव्यक्तं शब्दब्रह्म परा वागित्युच्यते । तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति

षण्णवत्यङ्गुलो देहायामः । तत्र मध्यमेकाङ्गुलं मूलाधारः । मूलाधारादुक्तरीत्या उत्थितः पवनः । कार्य्याणि करोति । चतुरङ्गुलमध्यदेशरूपनाभेरुत्थितवायुना आविर्भूतः शब्दो यदा मनोविषयो भवति तदा पश्यन्ती वागित्युच्यते । इयं द्विविधाऽपि वाग् योगिनां समाधौ गम्या भवति । हृदयदेशे आगतेन वायुना प्रकाशितो बुद्धिविषयीकृतः शब्दः—मध्यमा वाग् । परा सूक्ष्मतमा, पश्यन्ती सूक्ष्मतरा, मध्यमा सूक्ष्मा अस्मदादिबुद्धिगम्या । तदुक्तं तैत्तिरीयप्रातिशाख्ये—'वायुशरीरसमीरणात् कण्ठोरसोः सन्निधाने' (तै. १अ. २ सू.) अस्य शब्दोत्पत्तिर्भवतीति शेषः । तदुक्तं शिक्षायाम्—

मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ॥ इति ।

तदेवं सर्ववर्णानुवर्तिनः सामान्यरूपस्य वर्णस्य कण्ठोरो मध्यं स्थानम् । ततोऽकारककारादिविशेषरूपता सम्पादकानि कण्ठादिस्थानानि प्रयत्नविशेषाश्च । मूर्द्धानमाहत्य आस्यमागच्छता वायुना कण्ठादिस्थाने व्वभिव्यक्ता वाग् वैखरी इत्युच्यते । सैव परश्रवणग्राह्या । तत्र आस्यभववायुव्यापारास्तत्प्रयोजकव्यापारा आत्मनिष्ठा वा व्यापारा यत्ना आभ्यन्तरा इत्युच्यन्ते । मुखादधस्ताद्ये व्यापारास्ते तत्प्रयोजका वा बाह्या यत्ना इत्युच्यन्ते ।

आद्यश्चतुर्धा, स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। विवृतमूष्मणां स्वराणां च। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्।

---

आद्य इति—आभ्यन्तर इत्यर्थः। चतुर्धेति—विधार्थे धाप्रत्ययः। विधाया अर्थो यदि विधार्थस्तदा अस्वरूपे विधार्थेऽपि धा स्यात्। परन्तु 'संख्याया विधार्थे' इति सूत्रे अकन्तविधाशब्दमादाय 'विधायाम्' इति वक्तव्ये अर्थग्रहणसामर्थ्यात् प्रसिद्धोऽर्थः प्रकारो विभाजकधर्म एव गृह्यते न त्वप्रसिद्धोऽस्वरूपोऽर्थः। तथा च 'चतुर्धा' इत्यस्य चत्वारो विभाजकधर्मा इति शब्दार्थः। लक्षणया धर्मचतुष्टयवानित्यर्थः।

स्पृष्टेति—लक्षणया स्पृष्टादिपदं स्पृष्टत्वादिधर्मपरम्।

भेदादिति—भेदः = भिद्यते=व्यावर्त्यतेऽर्थोऽनेनेति व्यावर्तको धर्मः स च भेदपदसमभिव्याहृतपदार्थतावच्छेदकरूपः। प्रयोज्यत्वं पञ्चम्यर्थः। तथा च स्पृष्टत्वेषत्स्पृष्टत्वसंवृतत्वविवृतत्वाभिन्नधर्मप्रयोज्यसम्बन्धवद्धर्मचतुष्टयवानाभ्यन्तर इत्यर्थः। सम्बन्धश्चात्राभेदो विशेष्यविशेषणभावो वा। तत्रेति—तेषु प्रयत्नेष्वित्यर्थः। निर्धारणे सप्तमी। स्पर्शानामिति—कादिमान्तसमुदायावयववर्णानां स्पर्शसंज्ञा। व्यञ्जकमिति शेषः। स्पर्शवर्णानां व्यञ्जकं प्रयतनं स्पृष्टसंज्ञकमित्यर्थः। प्रयतनमिति भावे ल्युट् प्रयत्न इत्यर्थः। यद्वा स्पृष्टम् = स्पृष्टतागुणस्तदनुगतं प्रयतनम् = उच्चारणं स्पर्शानामित्यर्थं इति पदमञ्जरीकारः। अन्तःस्थानामिति—अन्तः = स्पर्शस्य उष्मणश्च मध्ये तिष्ठन्तीति अन्तःस्थाः, क्विपि विचि वा साधुरिति तु न, 'आतो धातोः' (६-४-१४०) इत्याल्लोपेन उक्तरूपानापत्तेः। तिष्ठतेरन्तर्भावितण्यर्थात्कर्मणि अङि टापि 'अन्तःस्थानाम्' इति। तथा च तिष्ठन्तीत्यस्य स्थाप्यन्ते इत्यर्थः। अत एव 'अन्तःस्थाभिश्च संयुतम्' इति शिक्षाऽपि संगच्छते। 'सुपि स्थः' (३-२-४) इति कप्रत्यये तु 'अन्तस्थैः' इति स्यात्। 'कर्मणि अङ्' इत्युक्त्या 'अकर्तरि च कारके' (३-३-१९) इत्यस्य 'आतश्चोपसर्गे' (३-३-१०६) इत्यत्रानुवृत्त्या कर्तरि अङ् न स्यादित्यपास्तम्। शिक्षायाम् 'अन्तःस्थैः' इति पाठे कप्रत्ययोऽपि वक्तुं शक्यः। एषामुच्चारणे तत्तत्स्थानेषु जिह्वाग्रादीनामल्प एव स्पर्शः।

विवृतमिति—जिह्वाग्रादीनि दूरेण यदा स्पृशन्ति स्थानानि तदा विवृतं प्रयतनम्। विवरणं (दूरावस्थानम्) च स्वराणामूष्मणाञ्चोच्चारणे जायते। अवर्णयोस्तु दीर्घप्लुतयोरेवोच्चारणे दूरावस्थानरूपविवृतत्वम्। ह्रस्वाकारस्य तु उच्चारणे समीपावस्थानरूपं संवृतत्वमेव 'अ अ' इति सूत्रेण विधीयते। एतेन ह्रस्वाकारस्यापि स्वरूपतो विवृतत्वमेवेति सूचितम्। अत एव दीर्घाकारस्य ह्रस्वाकारेण सह सावर्ण्याद् 'दण्डानयनम्' इत्यादौ दीर्घः सिध्यति। कादिमान्तस्पर्शवर्णोच्चारणे वायुप्रयोज्यजिह्वाग्रादीनां सम्यक्स्पर्शः, अन्तःस्थानामीषत्स्पर्शः, स्वराणामुष्मणाञ्चोच्चारणे स्पर्श एव न भवति। किन्तु दूरावस्थानरूपविवृतत्वमेव। ह्रस्वाकारेऽपि स्पर्शाभावः, किन्तु समीपावस्थानरूपसंवृतत्वमेव। एतद्विषये ऽनुभवः ...,

'अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः'

इत्यादि शिक्षावचनञ्च प्रमाणम्। तत्तद्वर्णानां स्पर्शेषत्स्पर्शविवृतत्वसंवृतत्वेष्व(पि) सूक्ष्मभेदाद् बाह्यप्रयत्नकृतभेदाच्च समानस्थानप्रयत्नानामपि वर्णानां परस्परं भेदः। तदाह—ह्रस्वस्यावर्णस्य प्रयोग इति-'अपदं न प्रयुञ्जीत' इति भाष्यात् 'न म्लेच्छितवै' इति च भाष्याच्च अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तानाम् = शास्त्रेण साधुत्वेन बोधितानां प्रयोगे = उच्चारणे क्रियमाणे 'रामः, कृष्णः, इत्यादौ संवृतत्वविशिष्टह्रस्वाकारस्यैव साधुत्वं न विवृतत्वविशिष्टस्य। वर्णसमाम्नाये 'अइउण्' इत्यादौ तु विवृत एव अकार उपदिश्यते अणादिग्रहणेषु दीर्घप्लुतानामपि ग्रहणं यथा स्यात्। 'रामाभ्याम्' इत्यादौ 'सुपि च' इत्यादिप्रवृत्तेः प्राक् ह्रस्व एवाकारस्तथापि शास्त्रबोधितस्य दीर्घाकारस्यैवोच्चारणमेवम् 'अ अ' इति सूत्रेण ह्रस्वाकारमात्रस्य संवृतत्वबोधनात् सर्वत्र लक्ष्ये ह्रस्वाकारः संवृत एवोच्चारणीयः। तदुक्तम्—'अइउण्' सूत्रे भाष्ये—'नैव लोके न च वेदे अकारो विवृतोऽस्ति कस्तर्हि संवृतः' बदयम् 'अ अ'

प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथा हि—

**अ अ । [ ८-४-६८ ]**

विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्याय्यां सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव ।

---

इत्यकारस्य विवृतस्य संवृतता प्रत्यापत्तिं शास्ति इति । ह्रस्वा अपि इकारादयो न संवृताः किन्तु विवृता एव, इकारादीनां संवृतताविधायकशास्त्राभावात् । वर्णसमाम्नायेऽकारस्य विवृतत्वे धात्वादिष्वपि ह्रस्वाकारो विवृत एव । तदुक्तं भाष्ये—'तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः' क्वान्यत्र = धातुप्रातिपदिकप्रत्ययनिपातस्थस्य' इति । एतेन सर्वत्रोपदेशे ह्रस्वाकारोऽपि विवृत एवेति स्पष्टमेव सूचितम् । तदाह—प्रक्रियादशायामिति—प्रकरणं प्रक्रिया 'श च' ( ३-३-१०० ) इति विभक्तयोगेन भावे शे यकि च 'रिङ्शयग्लिङ्क्षु' (७-४-२८) इति रिङादेशे टापि प्रक्रिया=शास्त्रप्रवृत्तिस्तद्दशायामित्यर्थः । एवञ्च 'अन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः' इति भाष्यस्य, 'नैव लोके न च वेदे अकारो विवृतोऽस्ति । कस्तर्हि संवृतः' इति भाष्यस्य विरोधपरिहाराय प्रक्रियादशामादाय विवृतोपदेशपरम्, परिनिष्ठितस्य प्रयोगकालमादाय संवृतपरं भाष्यमिति तात्पर्यं वर्णनीयमिति भावः ।

प्रदर्शितभाष्यतात्पर्ये सूत्रकारस्यापि सम्मतिमाह—एतच्चेति—प्रक्रियादशायां विवृतमेवेति चेन्न परिनिष्ठितस्य प्रयोगे संवृतत्वञ्चेत्यर्थः । तथेति—उभयविधत्वमित्यर्थः । हिर्हेतौ यतः 'अ अ' इति सूत्रमतो हेतोरित्यर्थः ।

'अ अ इतीति—अत्र प्रथमाकारो विवृतो द्वितीयाकारश्च संवृतः । तथा च धातुनामप्रत्ययादिषु पठितो विवृतो योऽकारः संवृतो भवतीत्यर्थः । अत्र अ इति पदद्वयं 'सुपां सु' (७-१-३९) इति लुप्तप्रथमान्तम्, सवर्णदीर्घस्तु न, विवृत-संवृतयोः प्रयत्नभेदेन सावर्ण्याभावात् । अत्र संवृतस्यासिद्धत्वन्तु न, संवृताकारानुकरणत्वेनाकारस्यात्र संवृततया असिद्धत्वासम्भवात् । न च 'आद्गुणः' (६-१-८७ ) इति गुणः स्यादिति वाच्यम्, वर्णसमाम्नाये विवृतस्यैव पाठेन अच्प्रत्याहारे संवृताकारस्याग्रहणेनाच्त्वाभावात् । यद्वा प्रथमोऽकारः स्वतन्त्रः, तस्य स्वयत्वलोपेषु कृतेषु यल्लोपस्यासिद्धतया सन्ध्यभावः । 'अतो रोः' इत्युत्वन्तु न, अतीति विवृताकारे परत एव उत्वविधानात् । यद्वा स्थान्यादेशविधौ स्थानिनः षष्ठ्यन्तस्योचिततया प्रथममपदं षष्ठ्यन्तम् । 'सुपां सु' ( ७-१-३९ ) इत्यादिना ङसः सुरादेशः शेषं पूर्ववत् । एतेन जातिपक्षे संवृताकारस्याप्यच्त्वस्याक्षततया 'आद् गुणः' इति गुणोऽत्र दुर्वार इत्यपास्तम् । प्रथमे अपदे अणुदित्सूत्रप्रवृत्त्या जातिपक्षेण वा दीर्घादीनां ग्रहणात् दीर्घप्लुताकारस्यापि 'अ अ' इत्यनेन संवृतह्रस्वाकारादेशस्तु न, 'सुपि च' ( ७-३-१०२ ) दीर्घविधायकानां वैयर्थ्यापत्त्या अणुदित्सूत्रस्य जातिपक्षस्य वा अविषयत्वज्ञापनात् ।

अस्य='अ अ' इति सूत्रस्य । सम्पूर्णेति—सम्पूर्णाष्टाध्यायीस्थपूर्वसूत्रं प्रतीत्यर्थः । पाणिन्यष्टाध्यायीस्थं किञ्चिदपि सूत्रम् 'अ अ' इति सूत्रं न जानाति, इति तद्विहितं संवृताकारमपि न जानाति किन्तु सर्वं ह्रस्वाकारं विवृतमेव सर्वं शास्त्रं पश्यति । एवञ्च तुल्यास्यसूत्रदृष्ट्या ह्रस्वाकारस्य दीर्घाकारस्य च विवृतप्रयत्नसाम्यसत्त्वेन सवर्णसंज्ञायाम् 'दण्डानयनम्' इत्यादौ दीर्घः सिध्यतीति भावः । नच तुल्यास्यसूत्रदृष्ट्या संवृतस्याकारस्य विवृतत्वेन ज्ञानेऽपि शुक्ते रजतत्वज्ञानेन रजतत्वासिद्धिवत् संवृताकारस्य विवृतत्वासिद्धौ सवर्णसंज्ञा न स्यादिति वाच्यम्, शास्त्रस्य प्रवृत्तौ अप्रवृत्तौ च तात्त्विकवस्तुसत्ताया अपेक्षायां अतिदेशशास्त्रवैयर्थ्यापत्त्या तत्तद्रूपेण ज्ञानस्यैव प्रयोजकत्वस्वीकारात् । अत एव 'हर इह' इत्यादौ वस्तुतोऽवर्णादिपरत्वसत्त्वेऽपि गुणाभावः सिध्यति । शास्त्रदृष्ट्येति—संवृतत्वस्यासिद्धत्वं न वास्तविकासत्त्वं किन्तु आहार्यारोपमात्रम् । एतावता ह्रस्वाकारस्य वास्तविकं सत्त्वं न हीयते । नापि वास्तविकं विवृतत्वं सम्पद्यते, किन्तु प्रक्रियानिर्वाहाय विवृतत्वं कल्प्यते । कथं सकलशास्त्रदृष्ट्या 'अ अ' इत्यस्यासिद्धिरित्यपेक्षायामाह—तथा च

तथा च सूत्रम् —

## पूर्वत्रासिद्धम्। [ ८-२-१ ]

सूत्रमिति--'च च' इत्यस्यासिद्धत्वबोधकसूत्रमित्यर्थः । च शब्दो अर्थे वर्तमानो हेतुत्वद्योतकः । 'यतस्सूत्रमतो ऽसिद्धत्वमित्यर्थः ।

पूर्वत्रासिद्धम्—पाणिनिना अष्टसु अध्यायेषु शब्दसाधुत्वबोधकानि सूत्राणि प्रणीतानि। तत्राष्टमाध्यायद्वितीयपादस्येदं प्रथमं सूत्रम् । पूर्वत्वस्य परत्वे नित्यसाकाङ्क्षतया परमिति लब्धम् । पूर्वत्वपरत्वयोरवधौ नित्यसाकाङ्क्षतया कस्मात्पूर्वं कस्मात्परमित्याकाङ्क्षायाम् उपस्थितत्वाद् 'पूर्वत्रासिद्धम्' इत्यत एव पूर्वम्, अत एव च परं शास्त्रं गृह्यते। पूर्वत्र इत्यत्र 'यस्य च भावेन' (२-३-३७) इति सप्तमी । तथा च अस्मात्पूर्वस्मिन् शास्त्रे कर्तव्ये अस्मात्परं शास्त्रमसिद्धमित्यर्थः । सिद्धे परशास्त्रे ऽसिद्धविधाने असिद्धवदिति लभ्यते, 'सिंहो माणवकः' इतिवत् । अयम्भावः 'पूर्वत्रासिद्धम्' इत्यतः पूर्वसूत्रसमुदायः सपादसप्ताध्यायीपदेन व्यवह्रियते। सप्तानामध्यायानां समाहारः सप्ताध्यायी। 'तद्धितार्थोत्तर' ( २-१-५१ ) इति द्विगुसमासे 'द्विगोः' ( ४-१-२१ ) इति ङीप्। पादेन सह वर्तते इति सपादा 'तेन सहेति' ( २-२-२८ ) इति बहुव्रीहिः। सपादा चासौ सप्ताध्यायी चेति सपादसप्ताध्यायी लक्षणया चेदं पदं सपादसप्ताध्यायीस्थशास्त्रपरम् । सपादसप्ताध्यायीस्थसूत्रे कर्तव्य इत्यर्थः । सूत्रे कर्तव्यताऽपि आरोपितैव ।

अतः परसूत्रसमुदायस्त्रिपादीपदेन व्यपदिश्यते । त्रयाणां पादानां समाहारस्त्रिपादी लक्षणया तत्रत्यं शास्त्रमिति यावत् । ननु 'पूर्वत्रासिद्धम्' इति घटितस्यैव त्रिपादीत्वात् सपादसप्ताध्यायीस्थसूत्रदृष्ट्या 'पूर्वत्र' इत्यस्याप्यसिद्धत्वापत्तिरिति चेन्न, अस्यासिद्धत्वे सर्वत्रिपादीस्थशास्त्राणां सिद्धतया 'पूर्वत्र' इत्यस्य वैयर्थ्यापत्त्या परपदबोध्यत्वेन असिद्धत्वबोधकस्य 'पूर्वत्र' इत्यस्य न ग्रहणम् । अत एव 'सर्वं वाक्यं मिथ्या ब्रवीमि' इति वाक्यं वाक्यान्तराणामेव मिथ्यात्वं प्रतिपादयति । न तु स्वस्य, स्वस्यापि मिथ्यात्वे वाक्यान्तराणां मिथ्यात्वं न स्यादित्यनर्थकमेतद्वाक्यं स्यात् ।

यदि 'पूर्वत्रासिद्धम्' इति सूत्रं विधायकमेव स्यात्तदा सपादसप्ताध्यायीस्थशास्त्रं प्रति त्रिपादीस्थं शास्त्रमसिद्धमित्येवार्थः स्यात् । पूर्वत्रिपादीस्थसूत्रदृष्ट्या परत्रिपादीस्थसूत्रं नासिद्धं स्यात् । तथा च- 'गोधुङ्मान्' इति न सिध्येत् । तथाहि—'गोदुह्मत्' इत्यवस्थायां 'दादेर्धातोर्घः' ( ८-२-३२ ) इति घत्वे 'झषः' ( ८-२-१० ) इति वत्वं न स्यात् । अधिकारसूत्रत्वे तु उत्तरोत्तरानुवृत्त्या 'दादेर्धातोर्घः' उपदेशे दादेर्धातोर्घः स्याज्झलि पदान्ते च, इदञ्च स्वस्मात्पूर्वशास्त्रे कर्तव्येऽसिद्धम् । 'झयः' इति पूर्वसूत्रदृष्ट्या 'दादेर्धातोर्घ' इति परत्रिपादीस्थशास्त्रस्यासिद्धतया घकाररूपझयोऽभावेन वत्वाप्राप्त्या भयभावे 'प्रत्यये भाषायाम्' इत्यनुनासिकत्वे 'गोधुङ्मान्' इति सिध्यति । अत एव • 'पूर्वत्रासिद्धमधिकारः' • इति वार्त्तिकम्, । 'गोधुङ्मान्, गुडलिण्मान्' इति । घत्वढत्वयोः कृतयोर्झय इति वत्वं प्रसज्येत तस्मादधिकारः' इति प्रकृतसूत्रस्थं भाष्यं च संगच्छते । न च परत्वाज्जश्त्वानुनासिकयोः कृतयोर्वत्वाप्राप्तिरिति वाच्यम्, 'विप्रतिषेधे परं कार्यम्' ( १-४-२ ) इत्यस्य सपादसप्ताध्यायीस्थतया तद्दृष्ट्या जश्त्वानुनासिकविधायकशास्त्रयोरसिद्धत्वेन त्रिपाद्यामप्रवृत्तेः । कार्यकालपक्षस्तु नात्र, 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति भाष्येण यथोद्देशपक्षस्यैवेष्टत्वबोधनात् वत्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वात्प्रतिपत्त्रोक्तत्वाच्च जश्त्वादिबाधकत्वात् । 'झयः' इत्यस्य 'तडित्वान्' इत्यादौ 'तसौ मत्वर्थे' ( १-४-१९ ) इति भत्वे जश्त्वाप्राप्त्या चारितार्थ्येनापवादत्वाभावेऽपि झय्प्रत्याहारग्रहणवैयर्थ्येन जश्त्वादिबाधकत्वकल्पनाच्च । यत्तु अधिकाराभावे 'प्रशान्, अनड्वान्' इत्यादौ 'मो नो धातोः' ( ८-२-६४ ) इति नत्वस्य 'संयोगान्तस्य लोपः' ( ८-२-२३ ) इति लोपस्य चासिद्धत्वाभावे 'न लोपः प्रातिपदिकान्तस्य' ( ८-२-७ ) इति नलोपापत्तिरिति तन्न, नत्वविधाननुम्विधानयोर्वैयर्थ्येन नलोपाभावकल्पनात् । नच सम्बुद्धौ 'न ङिसम्बुद्ध्योः'

अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् ।

( ८-२-८ ) इति निषेधेन चारितार्थ्यम्, 'न ह्येकमुदाहरणं सामान्ययोगारम्भं प्रयोजयति' इति भाष्योक्तन्यायेन सामान्यशास्त्रवैयर्थ्यापत्त्या नलोपाभावकल्पनसम्भवात् ।

किञ्चाधिकाराभावे 'किम्वावपनं महत्' इत्यत्र 'मय उञो वो वा' ( ८-३-३३ ) इति वत्वस्यासिद्धत्वाभावेन 'मोऽनुस्वारः' ( ८-३-२३ ) इति अनुस्वारापत्तिः । 'इको यणचि' ( ६-१-७७ ) इत्यतः परम् 'मय उञो वा' इति न्यस्य यणमनुवर्त्य वत्वे सिद्धे वग्रहणसामर्थ्यादनुस्वाराभावकल्पनन्तु न युक्तम्, 'प्रत्यङ् उ उक्तम्' इत्यादौ 'मय उञः' इत्यस्य त्रिपाद्यां पाठे वत्वस्यासिद्धतया 'ङमो ह्रस्वादचि' ( ८-३-३२ ) इति ङमुटि 'प्रत्यङ्ङ् वुक्तम्' इति सिद्धये वग्रहणस्यावश्यकत्वेन तत्सामर्थ्यादनुस्वाराभावकल्पनासम्भवात् ।

अत उक्तम्—'अधिकारोऽयम्' इति—अधिक्रियते=उत्तरोत्तरं सम्बध्यते इत्यधिकारः । कर्मणि घञ् । यद्यपि इदंशब्देन सूत्रस्यैव परामर्शात् 'इदम्' इति वक्तुमुचितं तथापि 'उद्देश्यविधेययोरैक्यमापादयत्सर्वनाम पर्य्यायेण तत्तल्लिङ्गभाग्भवति' इति नियमात् अधिकार इति विधेयानुरोधेन पुंलिङ्गनिर्देशस्यापि न्याय्यत्वात् । अत एव 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इत्यादिप्रयोगाः संगच्छन्ते । यद्वा, अयं योगोऽधिकारः । योगः, सूत्रमिति च समानार्थकम् ।

इदं सूत्रं स्वातन्त्र्येण न किञ्चिद् विधत्ते । किन्तु उत्तरोत्तरेण सम्बध्य वाक्यैकवाक्यतया असिद्धत्वमारोपयति । यथा 'संयोगान्तस्य लोपः' (८-२-२३) इत्यत्र पूर्वत्रासिद्धम् इत्यनुवर्तते । एकवाक्यता चेत्थम्—संयोगान्तं यत्पदं तदन्तस्य लोपो भवति, इदञ्च शास्त्रं पूर्वत्र कर्तव्येऽसिद्धम् । यत्र सूत्रेऽनुवृत्तिस्ततः पूर्वाणि यानि शास्त्राणि तेष्विदमसिद्धम् । 'संयोगान्तस्य' इति सूत्रीय पूर्वत्रपदेन सपादसप्ताध्यायीस्थानां तथाष्टमाध्यायद्वितीयपादस्यैकविंशतिसूत्राणाञ्च ग्रहणम् । तेषु कर्तव्येषु संयोगान्तलोपोऽसिद्ध इति 'अनड्वान्' इत्यत्र 'न लोपः प्रातिपदिकान्तस्य' ( ८-२-७ ) इत्यस्य दृष्ट्या हल्लोपस्यासिद्धत्वेन नकारस्य पदान्तत्वाभावान्नलोपो न । एवमेवाग्रेतनेषु सर्वेषु सूत्रेषु एकवाक्यतया असिद्धत्वं बोधनीयम् ।

यद्यपि शास्त्रमचेतनमिति दृश्यत्वं दर्शकत्वञ्च नोपपद्यते, तथापि पाणिनिना व्याकरणप्रक्रियानिर्वाहाय शास्त्रेषु चेतनत्वमारोप्य दृश्यदर्शकभाव आश्रीयते । यद्वा यद्यपि शास्त्राण्यचेतनानि तथापि शास्त्रप्रवर्तकस्तु चेतनः । स एव पूर्वशास्त्रं प्रवर्त्तयिष्यति परशास्त्रञ्चासिद्धवत्करिष्यति । तदुक्तं भाष्ये—'यद्यपि वर्णा अचेतना यस्त्वसौ प्रयुङ्क्ते स चेतनावान्' इति ।

तेनेति—अधिकारत्वेनेत्यर्थः । अधिकारसूत्रत्वञ्च—स्वदेशे लक्ष्योपयोगिवाक्यार्थबोधजनकत्वशून्यत्वे सति विधिशास्त्रैकवाक्यतया लक्ष्योपयोगिबोधजनकत्वम् । यत्राधिकारश्च लक्षणञ्चेति तन्त्रावृत्त्या साङ्कर्यं वारणीयम् । असिद्धत्वञ्च शास्त्रस्यैवानेन बोध्यते नतु कार्यस्य, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्, 'परः परो योगः पूर्वं पूर्वं योगं प्रति असिद्धो यथा स्यात्' इति प्रकृतसूत्रभाष्याच्च । योग इति प्राचां सूत्रस्य संज्ञा ।

किञ्च, कार्य्यासिद्धत्वे 'अमू, अमी' इत्याद्यसिद्धिः । 'अद अ औ' 'अद अ ई' इत्यवस्थायां कार्य्ये असिद्धत्वारोपो यदि विवक्ष्येत तदा लक्ष्ये कार्य्ये जाते एव तत्रासिद्धत्वारोपः कर्तुं शक्यते, कार्य्यरूपाधाराभावे निराधारारोपः कथं स्यादिति 'अदसोऽसेः' ( ८-२-८० ) इति मुत्वे कृते 'अमु अ औ' इत्यवस्थायाम् 'अतो गुणे' (६-१-९७) इति सपादसप्ताध्यायीस्थे कर्तव्ये 'पूर्वत्रासिद्धम्' इत्यनेन इदञ्च मुत्वं पूर्वत्र कर्तव्येऽसिद्धम् इत्यर्थकेन मुत्वस्यासिद्धत्वं वाच्यम् । तथाच मुत्वेऽसिद्धे 'अतो गुणे' इति शास्त्रम् 'अ अ औ' इत्येव पश्येत्, नतु 'अद अ औ' इति, मुत्वेऽसिद्धेऽपि देवदत्ते हते तद्धन्तुश्चैत्रस्य हननेऽपि यथा नोज्जीवनं देवदत्तस्य, तथा दस्य हन्तुर्मुत्वस्य 'पूर्वत्रासिद्धम्' इत्यनेन

बाह्यप्रयत्नस्त्वेकादशधा ।

---

हननेऽपि हतस्य दस्योर्जीवनं न स्यादिति दकारोत्तराकारस्याभावाद् 'अतो गुणे' इति पररूपं न स्यादिति अमू, अमी, इत्यादिरूपासिद्धिः स्पष्टैव । शास्त्रासिद्धत्वे तु 'अतो गुणे' इति दृष्ट्वा मुत्वविधायकशास्त्रस्यैवासिद्धत्वेन मुत्वात्प्रागेव प्रथमं निष्कण्टकम् 'अतो गुणे' इति पररूपे 'अद औ' इति जाते पुनर्वृद्धौ कर्तव्यायामपि मुत्वशास्त्रस्य पूर्ववदसिद्धया 'अदौ' इति जाते 'अदसः' इति मुत्वे मीत्वे च अमू, अमी, इति सिध्यति ।

एवञ्च 'अ अ' इत्यस्य अष्टाध्याय्या अन्तिमसूत्रत्वेन सम्पूर्णाष्टाध्यायीस्थसूत्रदृष्ट्या असिद्धत्वेन प्रक्रियादशायां विवृतत्वमेव ह्रस्वाकारस्य । परिनिष्ठितदशायां तु संवृतत्वमेव, 'अपदं न प्रयुञ्जीत' इति भाष्योक्तेः । अपदमित्यस्यापरिनिष्ठितमित्यर्थः । 'शास्त्रेण धर्मनियमः क्रियते' इति भाष्याद् ह्रस्वाकारस्य संवृतत्वेन प्रयोगे धर्म इत्येव 'अ अ' इति सूत्रेण बोध्यत इति भावः । ननु परशास्त्रस्यासिद्धत्वारोपापेक्षया 'पूर्वत्र न' इत्येव सूत्रमस्तु, पूर्वत्र कर्तव्ये परं न प्रवर्तते इत्येवार्थः स्यात् । तथा चासिद्धत्वारोपो व्यर्थ इति चेन्न, 'पूर्वत्र न' इत्यस्य पूर्वशास्त्रप्राप्तौ परशास्त्रं न प्रवर्तते इत्यर्थः, उत पूर्वशास्त्रविषयत्वसम्भावनायां परं न प्रवर्तते इत्यर्थः । आद्ये 'नलोपः सुप्स्वर' इति नियमस्य वैयर्थ्यम्, 'राजन् अश्व' इति दशायां पूर्वशास्त्रप्राप्त्यभावान्नलोपे 'अकः सवर्णे' (६–१–१०१) इति दीर्घरूपफलस्य नियमं विनापि सिद्धेः । न चैवं 'नलोपः सुप्स्वर' इति माऽस्त्विति लाघवमेवेति वाच्यम्, 'राजन्भ्याम्' इति दशायां 'सुपि च' (७–३–१०२) इति पूर्वशास्त्राप्राप्त्या 'पूर्वत्र न' इत्यस्याप्राप्त्या नलोपे 'सुपि च' इति दीर्घापत्तेः । द्वितीयार्थे यदि नलोपः स्यात्तदा पूर्वशास्त्रस्य 'सुपि च' इत्यस्य प्राप्तिः स्यादिति सम्भावनासत्त्वात् 'पूर्वत्र न' इत्यनेन परस्य 'न लोपः प्रातिपदिकान्तस्य' इत्यस्य निषेधे नलोपानापत्तौ 'राजभ्याम्' इत्यादेरसिद्ध्यापत्तेः । यदि तु 'नामन्त्रितं पूर्वमविद्यमानवत्' ( ८–१–७२ ) इति सूत्राद् 'अविद्यमानवत्' इत्यनुवर्त्य 'पूर्वत्र' इत्येव सूत्रं क्रियते । सपादसप्ताध्यायीस्थसूत्रं प्रति त्रिपादीस्थं शास्त्रं त्रिपाद्यामपि पूर्वं पूर्वं शास्त्रं परं परं शास्त्रमविद्यमानवदित्यर्थ आश्रीयते तदा 'असिद्धम्' इत्यंशो न कर्तव्यः ।

ओष्ठात्प्रभृति काकलकपर्यन्तं मुखम् ।

बाह्यप्रयत्न इति—यत्नेषु बाह्यत्वञ्च मुखाद्बाह्यदेशस्थत्वान्न बाह्यत्वं, किन्तु मुखादधस्ताद् गलविवरविकाससंकोचादिरूपबाह्यकार्यकरत्वाद्वर्णोत्पत्त्यूर्ध्वकालभावित्वाच्च बाह्यत्वम् । मुखादधस्तान्नवा बाह्याः । एतत्तत्त्वं पूर्वमुक्तम् । यद्यपि भाष्ये 'सन्ति ह्यास्याद् बाह्याः प्रयत्नाः ।...... के पुनस्ते ? विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता, महाप्राणतेति' इत्यष्टावेव बाह्यप्रयत्ना उक्ताः । तथापि उक्तेष्वष्टसु सवर्णसंज्ञायामनुपयुक्तत्वरूपमान्तरतम्यपरीक्षायामुपयुक्तत्वरूपञ्च सादृश्यनियामकसाधारणधर्ममादाय उदात्तानुदात्तस्वरितत्वजनकयत्नस्यास्यभवत्वेऽपि बाह्यप्रयत्नसादृश्याद् उदात्तानुदात्तस्वरितानां बाह्येषु गणनम्, इत्येवं मूलकृता बाह्यप्रयत्ना एकादश उक्ताः । इदञ्चोपलक्षणम् । मात्राकालिकत्वादिरूपह्रस्वत्वादिकमपि बाह्यम्, तेषां वाय्वल्पत्वमहत्त्वादिकृतत्वात् । नाभिप्रदेशात्प्रेरकः कश्चिद्विलक्षणो यत्न एवाल्पं वायुं प्रेरयति, कश्चिदधिकम्, कश्चिदधिकतरमिति तस्य वायुप्रेरणारूपं कार्यमास्यबाह्यदेशमिति ह्रस्वत्वादेर्बाह्यत्वम् । सावर्ण्यानुपयुक्तत्वेन चान्तरतम्योपयुक्तत्वेन च तत्त्वं बोध्यम् । 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुणः' इति भाष्याद्, बाह्यप्रयत्नसादृश्याच्चानुनासिक्यमपि बाह्यं बोध्यम् । अयं बाह्यप्रयत्नो वर्णाविर्भावानन्तरं जायन्ते । तत्र पूर्वं यद् विवृतत्वं संवृतत्वञ्चोक्तं तद्वर्णोत्पत्तेः प्राग्जिह्वाग्रादीनां तत्तस्थानाद् दूरावस्थानसमीपावस्थानकृतस्पर्शकारित्वरूपं भिन्नम् । विवारः संवारश्च गलविवरविकासरूपो विवारः, गलविवरसंकोचरूपः संवारश्च भिन्न एव । संवृते गलविवरेऽव्यक्तशब्दो नादः, विवृते गलविवरे

विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खयां यमाः खयः ⌣क⌣ पौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च

---

उपरिवर्तिवायुरूपः श्वासः, एतौ श्वासनादावनुप्रदानमित्युच्येते श्वासोऽप्यनुप्रदानम् नादोऽपि इति यावत् । अनुप्रदीयते वर्णोऽनेनेति अनुप्रदानं मूलकारणम् । 'अनुप्रदीयते=उपादीयते=जन्यते इत्यर्थः ।' इति सोमयागतैत्तिरीयभाष्यम् ।

एतेन बाह्यप्रयत्न आभ्यन्तरात्प्रथममेव जायते इति प्रतीयते । अनुशब्दः पश्चादर्थे । कोष्ठ्य-वायुसमुन्नयनात्परं मूर्ध्नि प्रतिघातान्निवृत्ते तस्मिन् कण्ठस्य संवारादयो ( संवारः विवारः तन्मध्यभव-प्रयत्नहकाराख्यश्च ) यथोक्तास्तिस्रोऽवस्था भवन्ति तदा प्रतीयन्ते स्थानेषु निवेश्यन्ते एभिर्वर्णा इत्य-नुप्रदानानि इति गार्ग्यगोपालयज्वभाष्यम् । मूर्ध्नि प्रतिघातान्निवृत्ते वायौ तत्तत्स्थानेषु अभिघातेन वर्णाभिव्यक्त्यनन्तरं कण्ठस्य संवारादयस्तिस्रोऽवस्था जायन्ते । एवञ्चाभ्यन्तरप्रयत्नात्पश्चाद् बाह्यप्रयत्ना इति अनेन प्रतीयते । इत्येव शेखरकृतो नागेशस्यापि मतम् । तदुक्तम्—'वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्तः—······यत्नो गुणशब्देनोच्यते' इति । नागेशस्यायमाशयः—प्रतीयते यन्नैयायिक-मते यथा समवायेन गुणादिकं प्रति तादात्म्येन द्रव्यस्य कारणतया गुणोत्पत्तेः पूर्वं द्रव्यरूपकारणस-त्ताया आवश्यकत्वात् क्षणं द्रव्यं निष्क्रियं निर्गुणमुत्पद्यते ततो गुणोत्पत्तिरिति । एवं शब्दस्यापि द्रव्यतया आभ्यन्तरेण तदुत्पत्तिस्ततो बाह्यप्रयत्नेन संवृतत्वादिरूपगुणोत्पत्तिरिति ।

वस्तुतस्तु संवृतत्वादयो धर्मा यत्नेष्वारोपिता एव । आभ्यन्तरकार्यकरत्वादाभ्यन्तरा बाह्य-कार्यकरत्वाच्च बाह्या इत्युच्यन्ते । उभावपि यत्नौ वर्णाविर्भावात्प्रागेव । इयाँस्तु विशेष आभ्यन्तरः साक्षाद् वर्णाभिव्यक्तिकरः । बाह्यस्तु परम्परयेति ।

केचिद्वर्णा नादप्रकृतयः, केचित्श्वासप्रकृतयः, केचिद्धकारप्रकृतयः । स्वरेषु घोषवत्सु च नादोऽनुप्रदानम्, 'नादोऽनुप्रदानं स्वरघोषवत्सु' ( तै० प्रा० २ अ० ८ सू० )

हकारे चतुर्थेषु च वर्णेषु हकारोऽनुप्रदानम् । 'हकारो हचतुर्थेषु' ( तै० प्रा २ अ० ९ सू ) । अघोषेषु श्वासोऽनुप्रदानम् । 'अघोषेषु श्वासोऽनुप्रदानम्' । 'अघोषेषु श्वासः' (तै० प्रा० २ अ० १०सू )।

वर्णोच्चारणभेदास्तु विस्तरेण तैत्तिरीयादिप्रातिशाख्ये निरूपिताः । बाह्यप्रयत्नस्त्वित्यत्र प्रशब्द-श्चिन्त्यः, भाष्ये 'प्रारम्भो यत्नस्य' इत्युक्त्या प्रशब्दबलेनाभ्यन्तरस्यैव प्रयत्नशब्देन ग्रहणस्येष्टत्व-प्रतीतेरिति दिक् ।

एकादशधेति—पूर्वोक्तधाप्रत्ययार्थानुसारेण एकादशधर्मवन्त इत्यर्थो बोध्यः । विवारादयो महाप्राणान्ता धर्मबोधका एव । व्यक्तिभेदे तासामानन्त्यादेकादशत्वानुपपत्तिः ।

उदात्तेति—उदात्तत्वम्, अनुदात्तत्वम्, स्वरितत्वञ्चेत्यर्थः । कस्य वर्णस्य को बाह्यप्रयत्न इत्याकाङ्क्षायामाह—खयामिति—खय्प्रत्याहारबोध्या ये वर्णास्तत्सम्बन्धिनो ये यमा वैदिकवर्ण-विशेषास्ते खयो यमा इत्यर्थः । प्रत्येकवर्गीयप्रथमद्वितीयवर्णेभ्यः परे ये यमास्ते इति यावत् ।

खय इति—खय्प्रत्याहारबोध्या वर्णा इत्यर्थः । ⌣क⌣ पाविति—जिह्वामूलीयोपध्मानीया-वित्यर्थः ।

शर् इति—शर्प्रत्याहारबोध्या वर्णा इत्यर्थः ।

श्वासानुप्रदाना इति—गलविवरे विवृते सति य उपरिवर्ती वायुर्जायते स एव श्वास इत्युच्यते । अनु=पश्चात्प्रदीयते जन्यते इति अनुप्रदानं बाह्यप्रयत्नः । तत्र यदा स्थानाभिघातजे वर्णात्मके ध्वनौ यदा श्वासोऽनुप्रदीयते=जन्यते तदा श्वासध्वनिसंसर्गादघोषाख्यो गुण उक्तेषु वर्णेषु जायते । तदुक्तम्—अघोषाश्चेति—खयादयो वर्णा अघोषप्रयत्नवन्त इत्यर्थः ।

विवृण्वते । कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः । अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥ वर्गेष्वाद्यानां चतुर्णां

---

विवृण्वते इति—यतः खयादयो वर्णाः कण्ठं विवृण्वतेऽतः श्वासः, विवृते कण्ठे एव श्वासस्य जननात् । कण्ठविवरणेन विवारप्रयत्नवन्तोऽपि ते खयादयः ।

अन्ये त्विति—उक्तेभ्यः खयादिभ्योऽन्ये=हशः, हशसम्बन्धिनो यमा हशः परे यमा इति यावत् । अनुस्वारः स्वराश्च । एते वर्णाः संवृताः संवारप्रयत्नवन्तः । एते कण्ठं संवृण्वते । संवृते कण्ठे नादोऽव्यक्तशब्दो जायतेऽतो नादभागिनः नादयत्नवन्त इत्यर्थः । तत्र यदा तत्तत्स्थानाभिघातजे वर्णात्मके ध्वनौ नादोऽनुप्रदीयते = अन्यते तदा नादध्वनिसंसर्गाद् घोषो जायते। घोषाख्यगुणवन्त एते वर्णा इत्यर्थः । तदुक्तं तैत्तिरीयप्रातिशाख्ये—'संवृते कण्ठे नादः क्रियते' ( २ अ० ४ सू० ) 'विवृते श्वासः' ( २ अ० ५ सू० ) अत्र 'कण्ठे' इति, 'क्रियते' इति चानुवर्तते । विवृते कण्ठे श्वासः क्रियते इत्यर्थः । सार्द्धेन पद्येन सर्वे वर्णाः संगृहीताः ।

अयुग्मा इति—युग्माः = समसंख्यकाः । प्रकृते वर्गेषु द्वितीयाश्चतुर्थाश्च । तद्भिन्ना अयुग्माः प्रथमतृतीयपञ्चमाः ।

वर्गयमगा इति--वर्गश्च यमश्च वर्गयमौ तौ गच्छन्तीति वर्गयमगाः वर्गगा यमगाश्च । अयुग्मा वर्गगाः=प्रथमतृतीयपञ्चमाः । अयुग्मा यमगाश्च अयुग्मवर्गेभ्यः प्रथमादिभ्यः परे ये यमवर्णास्ते इत्यर्थः । यणश्चेति--चेनाचां ग्रहणम् । अत एव 'न ङिसम्बुद्ध्योः' ( ८-२-८ ) इति भाष्ये ङिग्रहणप्रत्याख्याने 'परमे व्योमन्' इत्यत्र 'सुपां सुलुक्' (७-१-३९ ) इति ङेः पूर्वसवर्णे 'इकारस्यान्तर्यतो दकारः' इति भाष्यं संगच्छते । अन्यथा अचो घोषत्वमात्राङ्गीकारे इकारस्य पूर्वनकारान्तरतमौ दधौ पर्यायेण स्याताम् । अल्पप्राणत्वमात्राङ्गीकारे तदौ पर्यायेण स्याताम् । घोषाल्पप्राणोभयोरचः प्रयत्नत्वे तु दकार एव तादृश इति पूर्वोक्तभाष्यस्य नासङ्गतिः ।

अल्पासव इति—अल्पेऽसवो येषु तेऽल्पासवोऽल्पप्राणा इत्यर्थः । येषामुच्चारणे प्राणानामल्पत्वमिव भवति । अयुग्मादिवर्णा अल्पप्राणयत्नवन्त इत्यर्थः । वस्तुतस्तु 'अयुग्मा यमगाः' इत्यसङ्गतम्, यमकर्मकगमनकर्तारोऽयुग्मा इत्येवार्थः स्यात् । तथा च अयुग्मवर्णसम्बन्धिनो यमा अल्पप्राणयत्नवन्त इत्यर्थो नोपलभ्येत । यदि तु यमत्वधर्मापन्ना अयुग्माः ककारादय इत्यर्थः, यथा 'पलिक्क्नीः' इत्यादौ ककारादयः, तदा वाक्यार्थबोधसंभवेऽपि तस्य भ्रमत्वं दुर्वारम्, ककारादौ यमत्वाभावात् । एतच्चानुपदमेव स्फुटीभविष्यति ।

स्मृता इति--भाष्यकारादिभिरेते वर्णा अघोषादिगुणविशिष्टा अस्मारिषत इत्यर्थः ।

श्लोकद्वयं व्याख्यास्यन्स्वयमेव मूलकारो यमस्वरूपं सामान्यतो निर्वक्ति–वर्गेष्विति—समानधर्मैः कृतः समूहो वर्गः । तथा चामरः–'समैवर्गः' इति । कवर्गादिषु पञ्चसु वर्गेषु विद्यमानानामित्यर्थः । वर्गेष्वित्यत्र विद्यतिक्रियाऽधिकरणत्वमादायाधिकरणे सप्तमी । घटकतया विद्यमानानामित्यर्थः । वर्गेष्विति बहुवचनेन सर्ववर्गस्था ग्राह्या न तु कखगघा एव ।

आद्यानामिति—आद्यत्वञ्चात्र चरमवर्णभिन्नत्वम् । तथा च प्रत्येकवर्गे विद्यमाना आद्याः । प्रथमाः=कचटतपाः, द्वितीयाः=खछठथफाः, तृतीया=गजडदबाः, चतुर्थाः घझढधभाः । तेषामित्यर्थः ।

चतुर्णामिति—'यतश्च निर्द्धारणम् ' ( २-३-४१ ) इति निर्द्धारणे षष्ठी । समुदायादेकस्य जात्या गुणेन क्रियया संज्ञया वा पृथक् बोधनं निर्धारणम् । यथा द्विजत्वजात्या नृसमुदायात् श्रेष्ठस्य 'नृणां द्विजः श्रेष्ठः' इत्यनेन पृथग्बोधनम् । प्रकृते यदा पञ्चमेषु कादिषु परतः कादय एव वर्णा यमत्वं प्रतिपद्यन्ते इति मतं तदा कादिचतुष्टयस्यान्यतमात् कचटतपरूपात्पञ्चमे परे कादिवाह्यप्रयत्नको नासिकास्थानक एकविधो यमः १, खादिचतुष्टयस्यान्यतमात्पञ्चमे परे खादिवाह्यप्रयत्नको नासिकास्थानको

पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः

द्वितीयः २, गादिचतुष्टयस्यान्यतमात्पञ्चमे परे गादिबाह्यप्रयत्नको नासिकस्तृतीयविधः ३, घादिचतु-ष्टयस्यान्यतमात्पञ्चमे परे घादितुल्यबाह्यप्रयत्नको नासिकास्थानकश्चतुर्थः ४। इति चत्वारो यमाः। तदुक्तम्—'चत्वारश्च यमाः स्मृताः' इति।

यद्यपि यमानां कादिरूपत्वे विंशतिरूपत्वं दुर्वारम्। तदुक्तम्-'कुँ खुँ गुँ घुँ यमाः' ( यजु. प्रा. ८ अ. १४ सू ) 'इति यमसंज्ञका वर्णा विंशतिसंख्यका भवन्तीत्येतच्चतुर्थाध्याये व्याख्यातम्' इत्युव्वट-भाष्यम्। तथापि तत्प्रयत्नकत्वसमानाधिकरणनासिकास्थानजत्वरूपधर्मचतुष्टयत्वमादाय 'चत्वारश्च यमाः स्मृताः' इति शिक्षया विरोधः परिहरणीयः। यत्तु 'कुँ खुँ गुँ घुँ यमाः' इति सूत्रेण क ख ग घ-रूपाश्चत्वार यमा इति तन्न, पूर्वोक्तोऽव्वटभाष्यविरोधात्, सूत्रे ककारादीनां चादीनामप्युपलक्षणत्वात्। यजुःप्रातिशाख्ये 'अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम्' (यजु. ४ अ. १५४ सू०) इति सूत्रे पदमध्येऽप-ञ्चमः स्पर्शः पञ्चमेषु स्पर्शेषु प्रत्ययेषु विच्छेदमापद्यते। विच्छेदो यम इत्यनर्थान्तरम्। 'रुक्क्ष्मम्' इत्यत्र 'स्वरात्संयोगादिः' इत्यादिना ककारस्य द्विर्भावे कृतेऽनेन सूत्रेण द्वितीयस्य ककारस्य यम इत्ययं कार्य्यक्रमः क्रियते। तथा च चतुःसंख्याकवर्णघटकादन्यतमादित्यर्थः। घटकत्वं पञ्च्यर्थः। अध्याहृता-न्यतमपदार्थेऽन्वयात्परशब्दार्थेन योगाभावात् 'अन्यारादितरर्ते' ( २-३-२९ ) इति पञ्चम्या इति उचितमित्यपास्तम्। अन्यतमत्वसमानाधिकरणकत्वेन निर्द्धारणात् द्विजेतरावयवत्वं निर्द्धार्य्यते। क ख ग घ च छ ज झ ट ठ ड ढ त थ द ध प फ ब भरूपाणामन्यतमात्कादिरूपवर्णात्पञ्चमे ङादौ परतः ककारादिपञ्चमयोर्मध्ये यमो भवति। स च यमः स्वस्मात्पूर्वे ये वर्णाः ककाराद्यन्यतमास्तत्सदृशः। सादृश्यं प्रयत्नकृतं न तु कत्वादिजातिकृतं, यमेषु कत्वादीनामभावेन कत्वादिजात्या सादृश्यासम्भवात्। नच ककारादिपञ्चमयोर्मध्ये विहितो यमः ककारादिसरूप एवेति वाच्यम्, ककारादीनां नासिकास्थानत्वा-भावेन 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्त्या विरोधात्, कादीनां वर्णसमाम्नाये पाठेन नास्ति योगो वर्णसमाम्नाये 'अ इ उ ण्' इत्यादिके सम्बन्धो येषामित्यर्थकेन यमानामयोगवाहत्व-बोधकभाष्येण विरोधात्, अयोगवाहानां पराश्रितत्वेनोच्चारणपरकाकरग्रन्थविरोधाच्च। किन्तु नासिका-स्थानः स्वपूर्ववर्गीयप्रथमवर्णबाह्यप्रयत्नक एकः। द्वितीयवर्णबाह्ययत्नक एकः। तृतीयवर्णबाह्ययत्नकः एकः। चतुर्थवर्णबाह्ययत्नक एकः। इत्थं चत्वारो यमा वेदमात्रसाधुत्वका वर्णान्तराणि। एतेन क ख ग घरूपा एव स्वपूर्ववर्णतुल्यस्थानबाह्ययत्नका यमाः। अत एव 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षा संगच्छते इति महामहोपाध्यायमाधवशास्त्रिभण्डार्युक्तं प्रक्रियाकौमुदीटिप्पनीस्थमपास्तम्।

यथा 'यज्ज्ञः' जकारयमौ ञकारश्च संयोगः। 'दद्ध्ना' दकारधकारयमौ नकारश्च संयोगः। अत्र पदमध्ये इति किम् 'स्मन्यां समश्नन्' इति अत्र पदादौ तकारस्य न। अत्र भाष्ये द्वितीयस्य ककारस्य यम इति कथनेन यम आदेश इति लभ्यते। दकारश्च धकारयमश्चेति दकारधकारयमौ। अनेन कादयश्चत्वार एव यमा इति प्रत्याख्यातम्। ऋक्प्रातिशाख्ये 'अत्र यमोपदेशः' (१ पटल ९सू) इति सूत्रे नासिक्या-स्तावत्सर्व एव यमा उक्ताः। कण्ठ्योऽकार इत्यत आरभ्य यानि स्थानान्युक्तान्यत्र=एषु स्थानेषु यमानां स्थानोपदेश इत्ययर्थकेनानेन सूत्रेण द्वितीयं ( स्थानं ) तु प्रकृत्याश्रयं यत्स्थानं तदर्थमिदमुक्तम्, इत्युव्वट-भाष्यम्। यमाः प्रकृतिस्थाना नासिक्याश्चेत्युक्तं भवति। 'विंशतिर्यमाः' इति बह्वृचानां भवन्ति। स्वरूपै-श्चत्वार एव' इत्युव्वटभाष्यम्। अत्र मते स्वरात्परद्विर्भूतककारादिस्थाने यमविधानोक्तेरादेशत्वं यमस्य। तै. प्रा. 'नासिक्या नासिकास्थानाः' ( २ अ. ४९ सू. ) नासिक्या यमाः। 'मुखनासिक्या वा' ( तै. प्रा. २ अ. ५० सू ) मुखशब्देनात्र पञ्चापि वर्गस्थानानि गृह्यन्ते। तथा च पूर्वस्पर्शस्थानको नासिकास्थानकश्च यमः। एतन्मते यमाः पूर्वस्यागमाः। इत्येवं यमानामादेशत्वमागमत्वं वेति पक्षद्वयम्। सदृश इति—सादृश्यञ्च पूर्ववर्णस्य यादृशो बाह्यप्रयत्नस्तादृशप्रयत्नकत्वेन नतु कत्वखत्वा-दिना क्वचित्प्रातिशाख्यभाष्ये यमानां विंशतिसंख्याकत्वोक्तिस्तु विंशतिवर्णोपरागवशात्करवादिप्रतीतिमा-दायैव। अत एव यमानां भाष्योक्तमयोगवाहत्वं संगच्छते। ककारादिरूपत्वे तु तदसङ्गतिः स्पष्टैव। न

प्रातिशाख्ये प्रसिद्धः। पलिक्क्नीः, चख्खनतुः, अग्ग्निः, घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः। तत्र वर्गाणां प्रथमद्वितीयाः खयः, तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ, विसर्गः, शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च। अन्येषां तु संवारो नादो घोषश्च। वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः। अन्ये महाप्राणा इत्यर्थः।

च नासिकास्थानजन्यत्वविशिष्टकत्वादिना अयोगवाहत्वम् तादृशस्य वर्णसमाम्नाये पाठाभावादिति वाच्यम्, अनुनासिकाकारादीनामपि पाठाभावेनायोगवाहत्वापत्तेरिति प्रातिशाख्ये विस्तरः।

प्रातिशाख्य इति—वैदिकव्याकरणे इत्यर्थः। एतेन यमानां छन्दोमात्रविषयत्वं सूचितम्। पलिक्क्नीरिति—जीर्णार्थकात्पलितशब्दात् 'वर्णादनुदात्तात्' ( ४-१-३९ ) इति ङीषि, 'छन्दसि क्नमेके' इति वार्तिकेन नकारादेशं बाधित्वा त् स्थाने क्नादेशे पलिक्क्नीति। ततो जसि 'वा च्छन्दसि' इति पूर्वसवर्णदीर्घे पलिक्क्नीः= जीर्णा इत्यर्थः।

( ऋ. ५म. २ सू. ४ मन्त्र ) 'पलिक्क्नीरियुवतयो भवन्ति' इति।

अग्ग्निरिति—'अग्ग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत' इति। (ऋ. १ अ. १ मं. २ ऋ. ) घ्घ्नन्तीति—

एवं चकारादिप्रकृतयोऽपि यमा 'याच्च्ञा' इत्यादौ बोद्धव्याः। यमाश्च वेदे एव न लोके। तत्सदृशा इति—सादृश्यञ्च बाह्ययत्नकृतं लेखनकृतञ्च। नतु कत्वादिना। तत्सदृशा इत्यनेन यमानां कादिरूपत्वाभावः सूचितः। कादिरूपत्वे तु द्वितीयाः ककारादयो यमा इत्युक्तं स्यात्।

तत्रेति—तेषु एकादशसु मन्त्रेषु इत्यर्थः। तेषामेवेति खय् प्रथमसम्बन्धी एको यमः, द्वितीयसम्बन्धी द्वितीय इति द्वौ यमौ। यद्वा दश यमाः। पञ्चमे परे ये यमास्ते खयां यमा इत्यर्थः। खयः= वर्गाणां प्रथमद्वितीयवर्णाः। श्लोकस्य '⌣ क ⌣ पौ' इत्यस्यार्थमाह—'जिह्वामूलीयोपध्मानीयौ' इति। एते=वर्णाः श्वासानुप्रदानाः=श्वासोऽनुप्रदानं बाह्ययत्नो येषां ते। श्वासरूपबाह्ययत्नवन्तः, अघोषाः= अघोषरूपबाह्ययत्नवन्तः। विवृण्वते इति एते वर्णाः कण्ठं विवृण्वते। विवार एषां यत्न इत्यर्थः।

फलितार्थमाह—एतेषामिति—खयादीनामित्यर्थः। एतेषामुच्चारणे वायुना विवृते गलविवरे श्वासो जायते इति विवारः श्वासश्च यत्नः, स्थानाभिघातजध्वनेः। श्वासस्य च संसर्गादघोष इति। कार्य्यत्रयदर्शनात् त्रयः प्रयत्ना एतेषाम्।

अन्ये त्विति—उक्तेभ्योऽन्ये=हशप्रत्याहारवर्णास्तत्सम्बन्धिनो यमा अनुस्वारः, चेति-चेन स्वरा ग्राह्याः। एतेषामुच्चारणे गलविवरस्य संवरणं भवति इति संवारो नामवर्णधर्मः। संवृते गले नादः= अव्यक्तशब्दो जायते इति नादरूपकार्य्यकरत्वान्नादो यत्नः। अत्रापि स्थानाभिघातजध्वनेर्नादस्य च संसर्गाद् घोषो जायते घोषकार्य्यकरत्वाद् घोषो यत्न इत्युच्यते। तथा च 'घोषाः स्युः' इत्यस्याशं आयचा एते वर्णा घोषप्रयत्नवन्त इत्यर्थः। संवृताः =संवारप्रयत्नवन्तः। नादभागिनः = नादं भजन्त इति विग्रहे नादप्रयत्नवन्तः। तदुक्तम्—'संवादो नादो घोषश्चेति'। 'अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः' इत्यस्य व्याख्यानमाह—वर्गाणां प्रथमेति—कचटतपाः, गजडदबाः, ङञणनमाः। प्रथमतृतीययमौ= पञ्चमस्य यमाभावात् कादीनां गादीनाञ्च यमौ। यणश्चेति चेनाचां ग्रहणम्। अत एव 'न ङिसंबुद्धयोः' इति भाष्ये 'व्योमन्' इत्यत्र 'सुपां सु' इति ङेरित्यस्य स्थाने नकारस्य पूर्वस्य सवर्णादेशे आन्तरतम्याद् अल्पप्राणः। एतेषामुच्चारणे प्राणानामल्पत्वमिव भवति। ननु श्लोकद्वये केषां वर्णानां महाप्राणप्रयत्न इति नोक्तं परिशेषादुक्तमेवेत्याह—अन्ये इति—खछठथफाः, घझढधभाः तद्यमाः, अनुस्वारविसर्गौ, जिह्वामूलीयोपध्मानीयौ, शलश्चेत्यर्थः। महाप्राण इति—'पुंसि भूम्न्यसवः प्राणाः' इति कोषात् प्राणासुशब्दौ बहुवचनान्तावेव। वस्तुतस्तु 'अन्ये महाप्राणाः' इति वाक्ये महाप्राणशब्दोऽशं आयजन्तो बहुव्रीहिसंज्ञको वेति न कोषबलेनात्र बहुवचनान्तत्वम्। एवम् 'अल्पासव' इत्यत्रापि बोध्यम्। उदात्तानुदात्तस्वरितप्रयत्नानां स्वरधर्मत्वस्य प्रसिद्धत्वाद् व्याख्यानं न कृतम्।

बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्ताः, तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् । कादयो मावसानाः स्पर्शाः । यरलवा अन्तःस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ⌣क⌣प इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ ।

---

ननु प्रयत्नानाम् 'तुल्यास्य' इति सूत्रे एवापेक्षितत्वात्तत्र च आभ्यन्तरप्रयत्नस्यैव ग्रहणमिति सिद्धान्तितत्वाद् बाह्यप्रयत्नवर्णनं व्यर्थमित्याशङ्कते—यद्यपीति । समाधत्ते—तथापीति । यद्यपि यमानां प्रयत्नवर्णनं व्यर्थम् । अत एव आभ्यन्तरप्रयत्ने भाष्ये च यमप्रयत्नानुक्तिः । तथापि स्वरूपप्रदर्शनाय यमानां यत्नोक्तिः । आन्तरतम्येति—'स्थानेऽन्तरतमः' ( १-१-५० ) इति सूत्रे स्थान्यादेशयोः सादृश्यनिर्णये बाह्यप्रयत्नस्योपयोगः स्यादिति भावः । किञ्च तुल्यास्यसूत्रे आभ्यन्तरत्वस्य साकाङ्क्षतया किन्निरूपितमाभ्यन्तरत्वमित्याकाङ्क्षानिवृत्तयेऽपि बाह्यप्रयत्नकथनमावश्यकम् । बाह्यप्रयत्नस्यान्तरतम्यपरीक्षायामुपयोगित्वे प्रमाणञ्च 'स्थानेऽन्तरतमः' इति सूत्रे 'अथ तमग्रहणं किमर्थम् । 'झयो होऽन्यतरस्याम्' ( ८-४-६२ ) इत्यत्र सोष्मणः सोष्माणः प्रसक्ताः । नादवतो नादवन्त इति तृतीयाः प्रसक्ताः । तमग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः । 'वाग् घसति' इति भाष्योक्तिरेव ।

आन्तरतम्यपरीक्षा च 'अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः, घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थः' इत्यादिना तत्र तत्र मूले एव स्फुटीभविष्यति ।

'स्पृष्टं प्रयतनं स्पर्शानाम्' इत्यत्र स्पर्शाः के इत्याकाङ्क्षायामाह—कादय इति—क आदिर्येषान्ते कादयः, मोऽवसानम् अन्तावयवो येषां ते इत्यर्थः । कादिमावसानत्वञ्च कखगघेत्यारभ्य पफबभम इति लोकपाठाभिप्रायेण, वर्णसमाम्नाये कादिमावसानत्वाभावात् । कादीनां स्पर्शत्वे प्रमाणञ्च 'स्पर्शानां पञ्चविंशतिः' इत्यादिशिक्षावाक्यमेव । स्पर्शा इति—ननु 'कादयो मावसानाः स्पर्शाः' इति वाक्यम् 'घटो घटः' इतिवदसंगतमिति चेन्न, 'स्पर्शाः' इत्यस्य स्पर्शपदव्यवहार्या इत्यर्थेन प्रकारताविशेष्यतावच्छेदकयोर्भेदेन दोषाभावात् ।

अन्तःस्था इति—अन्तः=स्पर्शानामूष्मणाञ्च मध्ये ये तिष्ठन्ति तेऽन्तःस्थाः । योगरूढोऽयम्, 'सुपि स्थः' ( ३-२-४ ) इति के टापि रूपम्, अत एव 'ईषत्स्पृष्टमन्तःस्थानाम्' इति तुड्घटितः पाठः संगच्छते । क्विपि तु 'आतो धातोः' इत्यालोपे 'अन्तःस्थाम्' इति स्यात् । अत्र तु क्विप्यपि क्षतिविरहः, किन्तु ज्ञानगौरवम् । इदमपि लोकपाठाभिप्रायेणैव प्रत्याहारसूत्रे तत्त्वाभावात् । ऊष्माण इति—उष दाहे इत्यतः 'सर्वधातुभ्यो मनिन्' ( उ. ४ पा. १४५ सू. ) इति मनिन्प्रत्यये 'अन्येषामपि दृश्यते' (६-३-१३७) इति दीर्घे ऊष्मा । यद्वा 'ऊष रुजायाम्' इत्यतो मनिन् । ऊष्मा=वायुस्तत्प्रधाना इत्यर्थः । स्वरा इति—स्वयमेव राजन्ते इति स्वराः । स्वोपपदाद् राजधातोर्डे साधुः । यद्वा सुपूर्वकाद् ऋधातोरचि स्वरा इति । कपाभ्यामिति—इदमुपलक्षणं खफयोरपि । तेन ताभ्यामपि पूर्वौ जिह्वामूलीयोपध्मानीयौ बोध्यौ । सदृशाविति—सादृश्यमुच्चारणे लेखने च । जिह्वेति—लिहन्त्यनयेति जिह्वा । 'लिह आस्वादने' इत्यतः 'शेवायह्व' ( उ. १ पा. १५४ सू. ) इति वन्प्रत्यये लकारस्य जत्वं निपात्यते, टापि जिह्वेति । उपध्मानीया इति—उपौ ध्मायेते=उच्चार्य्येते अनेनेति उपध्मानम्=ओष्ठः । धमतेः करणे ल्युट् । तत्रस्थे उपध्मानीय इति । 'अं अः' इति—ननु 'अं' इत्यत्रानुस्वारोऽसङ्गतो हल्परत्वाभावादिति चेन्न, 'अं' इत्यनुस्वारान्तस्यानुकरणेनादोषात् । अत्र 'अ' इत्युपलक्षणं स्वरमात्रस्य । तदाह—अचः पराविति । अनुस्वार इति—स्वर एव स्वारः, स्वार्थेऽण् । नच 'द्वारादीनां च' इत्यैजागमः, स्वशब्दस्य द्वारादौ पाठादिति वाच्यम्, तत्र स्वाध्यायस्वग्रामशब्दयोः पाठसामर्थ्यात् स्वशब्दादेरैजागमश्चेत्तर्हि एतयोरेवेति नियमेन स्वशब्दादेः स्वरशब्दस्यैजागमाभावकल्पनात् । स्वारमनुगतोऽनुस्वारः, स्वराधीनोच्चारणक इत्यन्वर्था संज्ञा । विसर्गा इति—विसृज्यते शब्दोऽनेनेति

विसर्गः । विरुजतेर्घञि साधुः । प्रायोऽवसाने एव विसर्गस्य श्रवणाद्योगरूढोऽयम् ।

## वर्णानां प्रयत्नबोधकचक्रम्

### आभ्यन्तरप्रयत्नाः

स्पृष्टप्रयत्नकाः— क ख ग घ ङाः, च छ ज झ ञाः, ट ठ ड ढ णाः, त थ द ध नाः, प फ ब भ माः ।

ईषत्स्पृष्टप्रयत्नकाः— य र ल वाः ।

विवृतप्रयत्नकाः— अ इ उ ऋ ऌ ए ऐ ओ औ रूपा ह्रस्वदीर्घप्लुताः श ष स हाश्च ।

ईषत्स्पृष्टप्रयत्नकौ — रेफद्वयगर्भितो दीर्घ ॠकारः । लद्वयघटितो दीर्घ ॡकारश्च ।

भाष्यमते— विवृततरौ ए ओ वर्णौ ।

भाष्यमते— विवृततमौ ऐ औ वर्णौ ।

ईषद्विवृतप्रयत्नकाः— शषसहाः

### बाह्यप्रयत्नाः

विवारयत्नकाः— श्वासयत्नकाः— अघोषयत्नकाश्च — क च ट त पाः, एतेभ्यः पञ्चमे परे यमाश्च
ख छ ठ थ फाः, ,, ,, ,,
श षा साः, विसर्गश्च ।
ᳲ क ᳲ पौ च ।

संवारयत्नकाः— नादयत्नकाः— घोषयत्नकाश्च— ह य व र लाः, ञ म ङ ण नाः, झ भ घ ढ धाः,
ज ब ग ड दाः, एतेभ्यः पञ्चमे परे यमाश्च,
अनुस्वारः, अ इ उ ऋ ऌ ए ऐ ओ औ इत्यादयः सर्वे स्वराः ।

अल्पप्राणयत्नकाः— क च ट त पाः, ग ज ड द बाः, एतेभ्यः पञ्चमे परे यमाः, ङ ञ ण न मा श्च ।
अ इ उ ऋ ऌ ए ऐ औ इत्यादयः सर्वे स्वराः,

महाप्राणयत्नकाः— ख छ ठ थ फाः, घ झ ढ ध भाः, एतेभ्यः पञ्चमे परे यमाः ।
श ष स हाः, अनुस्वारः, विसर्गः,
ᳲ क ᳲ पौ च ।

## वैयाकरणनये वर्णसंख्याविमर्शः

### साम्प्रतिकपाणिनिशिक्षानुसारेण वर्णाः—

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ १ ॥
तथाहि– स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ २ ॥
अनुस्वारो विसर्गश्च ᳲकᳲ पौ चापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेय ऌकारः प्लुत एव च ॥ ३ ॥ इति शिक्षा ।

अत्र "शम्भुमते मताः" "सम्मवतो मताः" इति पाठ इति व्याकरणदर्शनभूमिकायां पण्डितप्रवररामाज्ञापाण्डेयाः । मन्ये पुनरर्कवारणाय एष पाठो विन्यस्तः स्यात् ।

इति स्थानप्रयत्नविवेकः। 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्' ( वा १५० )।

स्वरा विंशतिरेकश्चेति—अ आ आ ३, इ ई ई ३, उ ऊ ऊ ३, ऋ ॠ ॠ ३, ऌ १, ए ए ३, ओ ओ ३, ऐ ऐ ३, औ औ ३ इत्येकविंशतिः स्वराः। ननु व्यक्तिपक्षे अनन्ताः स्वराः। जातिपक्षे अत्वम्, इत्वम्, उत्वम्, ऋत्वम्, लृत्वम्, एत्वम्, ओत्वम्, ऐत्वम्, औत्वम् इति नव जातयः। इत्युभयोः पक्षयोः स्वराणामेकविंशतिसंख्याकत्वं न सम्भवतीति चेन्न, ह्रस्वत्वदीर्घत्वप्लुतत्वसामानाधिकरण्येन अत्वम्, इत्वम्, उत्वम्, ऋत्वम् प्रत्येकं त्रिविधम्। इति द्वादश अत्वादिधर्माः १२, लृत्वमेकम् १, दीर्घत्वप्लुतत्वसामानाधिकरण्येन एत्वम्, ओत्वम्, ऐत्वम्, औत्वम्, च प्रत्येकं द्विविधम् इत्यष्टौ एत्वादिधर्माः। इत्येवमेकविंशतिधर्मगतसंख्यां स्वरेष्वारोप्यैकविंशतिः २१ स्वरा इत्युच्यन्ते।

एवं "स्पर्शानां पञ्चविंशतिः" इत्याद्युक्तिरपि कत्वादिपञ्चविंशतिधर्मगतसंख्याभिप्रायेणैव। पञ्चविंशतिसंख्याकत्वं २५ स्पर्शानामपि बोध्यम्।

यादयश्चेति—यरलवाः, शषसहाश्चेत्यर्थः। तद्गतधर्मा अप्यष्टौ तत एव "यादयश्च स्मृता अष्टौ" ८। इति।

'चत्वारश्च यमाः स्मृता' इति—कचटतपानां बाह्यप्रयत्नः समान एवेति तत्प्रयत्नसमानाधिकरणानुनासिकत्वविशिष्टयमत्वमेकम्। खछठथफानामपि समान एव बाह्यप्रयत्न इति तत्प्रयत्नसमानाधिकरणानुनासिकत्वविशिष्टयमत्वे द्वितीयम्। गजडदबानां यो बाह्यप्रयत्नस्तत्समानाधिकरणानुनासिकत्वविशिष्टयमत्वं तृतीयम्। घझढधभानामपि एक एव बाह्यप्रयत्न इति तत्प्रयत्नसमानाधिकरणानुनासिकत्वविशिष्टयमत्वं चतुर्थमिति धर्मसंख्याका यमाश्चत्वारः ४। इत्येवं सर्वसम्मेलनेनाष्टपञ्चाशत्। ५८।

अनुस्वारत्वम्, विसर्गत्वम्, जिह्वामूलीयत्वम्, उपध्मानीयत्वम् इति धर्मचतुष्टयसंख्याका अनुस्वार-विसर्ग-जिह्वामूलीयोपध्मानीयाश्चत्वारः ४ इत्येवं द्विषष्टिर्वर्णाः ६२।

दुःस्पृष्टो ळकारस्थानिको ळकारः। 'ईडे' इत्यस्य 'ईळे' इति प्लुत लृकार ३ श्चेति द्वयोः सम्मेलने चतुःषष्टिर्वर्णाः ६४।

यदि दुःस्पृष्टो नाङ्गीक्रियते, प्लुतलृकारो वा तदा त्रिषष्टिरेव वर्णाः, इत्युक्तं त्रिषष्टिश्चतुःषष्टिर्वेति। यद्वा दुःस्पृष्टपदेन रद्वयघटितदीर्घऋकारस्य लद्वयघटितदीर्घलृकारस्य च धर्मे ईषत्स्पृष्टत्वरूपो गृह्यते। उभयोरीषत्स्पृष्टत्वरूपैकधर्मवत्त्वेनोभयोः संग्रहः। वस्तुतस्तु पाणिनिना लौकिकप्रकरणे वैदिकप्रकरणे च यमानामनुपादानात् तन्मते ५८ अष्टपञ्चाशदेव वर्णाः। विस्तरस्तु पण्डितप्रवररामाज्ञापाण्डेयकृतव्याकरणदर्शनभूमिकायां द्रष्टव्यः। यद्यपि मूले "लृवर्णस्य द्वादश, तस्य दीर्घाभावात्" इत्युक्तम्। तथापि दीर्घाभावादित्यस्य विवृतलृकारस्य दीर्घाभावादित्यर्थः। रद्वयलद्वयघटितौ ऋकारलृकारौ तु दीर्घावेव रद्वयवत्त्वेन लद्वयवत्त्वेन चान्तरतमत्वमादाय "अकः सवर्णे" इति सूत्रेणैव तयोः सिद्धिमाश्रित्य "ऋति ऋ वा" "लृति लृ वा" इति वार्तिकयोर्भाष्यकृता प्रत्याख्यानात्। अत एव मूले 'ऋति ऋ वा' "लृति ऋ वा" इत्युभयत्रापि विधेये द्विमात्रमित्युक्तम्। यद्यपि "प्लुतावैच इदुतौ" ( ८-२-१०६ ) इति सूत्रेण ऐकारे औकारे च एकमात्रोकारांशः, एकमात्र इकारांश उकारांशश्च तत्र ईकारांशस्य उकारांशस्य च प्लुतत्वमनेन विधीयते। तथा च चतुर्मात्रौ ऐकारौकाराविति पाणिन्यभिप्रेतम्, तथापि छन्दस्येव तयोः प्रयोग इति मूलकारेण न संगृहीतमिति प्रत्येतव्यम्। स्पष्टं चेदं भाष्ये।

इति स्थानेति—स्थानयत्नयोर्विवेकः=विचारः समाप्त इत्यर्थः। क्वचित्प्रयत्नेति पाठोऽपपाठः, भाष्ये 'प्रारम्भो यत्नस्य' इति विग्रहेण प्रशब्दस्याभ्यन्तरस्य ग्रहणार्थत्वोक्तेः। यद्वा, यत्नप्रयत्नशब्दौ पर्यायौ। भाष्ये 'प्रारम्भो यत्नस्य' इत्युक्तिस्तु पक्षान्तराभिप्रायेण।

ऋवर्णलृवर्णयोर्भिन्नस्थानत्वेन सवर्णसंज्ञाया अप्राप्त्या 'होतृ लृकारः' इत्यत्र इष्टस्य दीर्घस्य सिद्ध्यर्थम् 'ऋकारलृकारयोः सवर्णविधिः' इति वार्तिकं भाष्ये पठितम्, तदर्थतः पठति—'ऋलृवर्णयोर्मिथः

अकारहकारयोरिकारशकारयोरृकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते—

**नाऽऽज्झलौ । [ १-१-१० ]**

आकारसहितोऽच् आच्, स च हल् चेत्यतौ मिथः सवर्णौ न स्तः । तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न ।

---

सावर्ण्यं वाच्यम्' इति । ऋ च ऋ चेति विग्रहे द्वन्द्वे 'रलौ' इति रलौ च तौ वर्णाविति कर्मधारये 'ऋत्यकः' ( ६-१-१२८ ) इति प्रकृतिभावे 'ऋलृवर्णौ' इति । यदि लृशब्दात्सुबुत्पत्तिस्वीकारे षष्ठ्यादौ 'उल्' इत्यादिरूपसम्भवे 'न पदान्ता हलोऽणः सन्ति' इति भाष्यविरोधपरिहाराय लृशब्दात्सुपोऽनभिधाने ऋ च लृवर्णश्चेति विग्रह इति शेखरकारः । वस्तुतस्तु 'लृवर्णः' इति शब्दोऽपि समासेनैवोपपाद्य इति सुपोऽभावे समासानापत्तिस्तस्मात् 'लृ' इत्यस्य नपुंसकत्वमेव स्वीकार्यम् । तथा च नोक्तभाष्यविरोधः, लृशब्दस्य नपुंसके 'लृनः' इत्यादेरेव सम्भवेन पदान्तहलोऽणोऽभावात् । अत एव 'ऋति ऋ वा वचनम्' 'लृति लृ वा वचनम्, इति तुल्यास्यसूत्रे भाष्यकृता नपुंसकत्वमेवाश्रितम् । 'लृवर्णः' इत्यखण्ड इति तु न युक्तम्, तस्याखण्डत्वे प्रमाणाभावात् । किञ्च ततः सुपोऽभावे 'लृतुलसानाम्' इति मूलस्य 'दन्त्या लृतुलसाः स्मृताः' इति शिक्षायाश्चासङ्गतिः, सुबन्तत्वाभावेन द्वन्द्वाप्राप्तेः, 'लाकृतिः' इत्यादेरप्यसिद्ध्यापत्तेश्च, सुपोऽभावेन समासाप्राप्तेः । न च प्रथमाया उत्पत्तिस्वीकारेऽपि न भाष्यविरोध इति वाच्यम्, भाष्यविरोधपरिहाराय षष्ठ्यादिविधायके लृशब्दातिरिक्तत्वेन संकोचरूपगौरवापेक्षया नपुंसकत्वस्वीकारे एव लाघवादित्युपाध्यायाः । न चैवं 'लाकृतिः' इत्यादेरप्यसिद्ध्यापत्तिः, लकारस्य पदान्तहलोऽणः सत्त्वादिति वाच्यम्, अवसानपरकस्य पदान्तहल्रूपाण एव अनभिधानात् । 'न पदान्ताः परेऽणः सन्ति' इति तु न भाष्यसम्मतम्, दधि, मधु, कर्तृ, हरे, विष्णो, मस्यै, बुद्धौ, इत्यादीनामप्यनिष्टापत्तेः । किन्तु हयवरलानामेवावसानेऽभावबोधनात् ।

समानस्थानप्रयत्नानामचां हल्भिः सह सावर्ण्यमाशङ्कते—अकारहकारयोरिति लकारसकारयोरिति—लृकारतवर्गयोरिति तु नोक्तम्, स्थानसाम्येऽपि प्रयत्नसाम्याभावात् । मिथः सावर्ण्ये इति—तुल्यास्यसूत्रे मिथः इत्यनुक्तावपि परस्परं स्थानप्रयत्नसाम्ये एव सवर्णसंज्ञायां इष्टत्वात्सवर्णग्रहणेन ग्रहणाच्च फलितार्थमादायैव मिथ-इत्युक्तिः । ऊष्मणां स्वराणाञ्च सर्वेषां विवृतप्रयत्नेन साम्येऽपि स्थानेनापि तुल्यानामपि तुल्यानामेव सावर्ण्यप्राप्त्या अकां शल्भिरेवाशङ्कितम् ।

प्राप्तमनिष्टं सावर्ण्यं प्रतिषेधति 'नाज्झलौ' इति— न आज्झलौ' इति च्छेदः । तत्र आ २ अ आ ३ अ औ । दीर्घप्लुतयोर्दीर्घे 'आ' इति प्रातिपदिकादौविभक्तौ वृद्धौ 'औ' इति रूपम् । आभ्यां सहितः इत्यर्थे 'कर्तृकरणे' ( २-१-३२ ) इति समासे 'आसहितः' इति । आसहितश्चासौ अच् चेति आच् । आच्च हल् चेति 'आज्झलौ' इति । अत्र तुल्यास्यसूत्रात्सवर्णमित्यनुवर्तते । तच्च द्विवचनेन पुंलिङ्गत्वेन च विपरिणम्यते । तथा च आच् हल् च एतौ मिथः सवर्णौ न स्तः । दीर्घाकारेण प्लुताकारेण वर्णसमाम्नायपठितेन अकारादिस्वरेण च सह हल्वर्णानां सवर्णसंज्ञा न भवतीत्यर्थः फलतीति भावः ।

अज्झलौ केनापि समं सवर्णसंज्ञौ न भवत इति तु नार्थः, तुल्यास्यसूत्रवैयर्थ्यापत्तेः । अचामज्भिर्हलां हल्भिश्च सावर्ण्यमित्यपि नार्थः, सवर्णविधिवैयर्थ्यापत्तेः, 'नाज्झलौ' इत्यत्र दीर्घानापत्तेर्मकाररूपपूर्वसवर्णासिद्धेश्च । किन्तु हलामाचाञ्च परस्परं सवर्णसंज्ञा न भवतीत्येवार्थः । तेनेति—सवर्णसंज्ञानिषेधेनेत्यर्थः ।

दधीत्यस्येति—दधिशब्देकारस्य हकारे षकारे सकारे च परतो यण् न, यणादिकमित्यत्रादिना दधीत्यस्य शकारे परे शकारादीकारे परे, हकारादकारे परे च सवर्णदीर्घस्य सङ्ग्रहः । एवम् विपाड् नदी, तत्र भवो वैपाशो मत्स्यः, अनडुह इदम् आनुडुहं चर्म इत्यादौ 'यस्येति च' (६-४-१४८)

अन्यथा दीर्घादीनामिव हकारादोनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथाहि—

**अणुदित्सवर्णस्य चाप्रत्ययः । [ १-१-६६ ]**

प्रतीयते विधीयत इति प्रत्ययः, अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् ।

इत्यनेन इकारेण शकारस्य अकारेण हकारस्य सावर्ण्याल्लोपो न । एवमेव हकाराद्यन्तप्रातिपदिकेषु अदन्तत्वादिप्रयुक्तं कार्य्यम् अनडुहे, विपाशे इत्यादौ वारणीयम् । ननु अचः शलश्चैव स्थानप्रयत्न-साम्येन सवर्णसंज्ञाप्राप्त्या तन्निषेधार्थं सूत्रम् । तथा चोपस्थितिकृतलाघवानुरोधेन 'नाज्झलौ' इत्येव सूत्रमस्तु इति चेन्न, 'ऌति ऌ वा' इति विहितस्य ऌकारस्येषत्स्पृष्टत्वेन लकारेण सह सवर्णसंज्ञायाम् 'होतृ ऌकारः' इत्यत्र मयः परस्य ऌकाररूपस्य यणः 'यणो मयः' इति द्वित्वापत्तेः, 'तोर्लि' इति तकारस्य लत्वापत्तेश्च । ननु अकारहकारयोः, इकारशकारयोः, ऋकारषकारयोः, ऌकारसकारयोश्च साम्येऽपि अणादिप्रत्याहारे 'अइउण्' सूत्रपठितानामेव 'आदिरन्त्येन' इति सूत्रेण संज्ञाकरणात् हकारादिषु अच्त्वस्याच्त्वादेश्चाभावादजादिनिमित्तकं यणादिकार्य्यं न स्यात् । नहि अदेकां गुण-संज्ञामात्रेण अकारप्रयुक्तं कार्य्यम् एकारादौ भवतीत्याशङ्कायामाह—अन्यथेति—प्रत्याहारे अइउण् सूत्र-पठितानामेव ग्रहणे दीर्घादिषु यणादि 'एरच्' 'ऋदोरप्' इत्यादिना दीर्घेकारोकारान्तेभ्य अच् अप् इत्यादि च न स्यादत आह—ग्रहणकेति—गृह्यन्ते स्वसवर्णा अनेनेति ग्रहणं ततः स्वार्थे के ग्रहणकं शास्त्रमणुदित्सूत्रं तद्बलादित्यर्थः । वस्तुतस्तु ग्राहकशास्त्रबलादिति वक्तुमुचितम्, वृत्तिद्वयस्वीकारे गौरवात् ।

अच्त्वमिति—ननु अच्त्वस्याऽधर्मतया शास्त्रसहस्रेणापि हकारादीनामच्त्वं दुरुपपादमिति चेन्न, अच्त्वं स्यादित्यस्य अच्पदग्राह्यत्वं स्यादित्यर्थेनादोषात् । तथाहि आदिरन्त्येनेति सूत्रबलादच्पदेन अकारादीनां वर्णसमाम्नायपठितानामुपस्थितिः । उपस्थितेषु अकारादिषु 'अणुदित्' इति सूत्रेण तत्तत्सवर्णानामुपस्थितिरिति हकारादीनामप्यच्पदेन ग्रहणे यणादिकार्यं स्यादिति भावः ।

ननु 'उच्चरितः शब्दः प्रत्यायको भवति नानुच्चरितः' इति भाष्याद् इकारादीनामच्पदबोध्यत्वेऽपि उच्चरितत्वाभावाद् ग्राहकशास्त्राप्रवृत्त्या दीर्घादीनामजादिपदेन ग्रहणमशक्यमिति 'दीर्घादीनामिव' इति दृष्टान्तासङ्गतिरिति चेन्न, 'रुत्रादिभ्यश्च' ( ८-२-४४ ) इत्यादिषु दीर्घाणां यणादिदर्शनेन 'दीर्घाज्जसि च' ( ६-१-१०५ ) इत्यादिज्ञापकाच्च प्रत्याहारेषु स्ववाच्यवाच्ये निरूढलक्षणाया ज्ञापने-नादोषात् । किं तद्ग्राहकसूत्रमित्याकाङ्क्षायामाह—तथाहीति—प्रसिद्धमेवेत्यर्थेऽव्ययं तथाहीति । किं प्रसिद्धम् तदाह—अणुदित्सवर्णस्य चाप्रत्ययः ( १-१-६६ ) इति संज्ञासूत्रमिदम् । सवर्णस्ये-त्यस्य बोधक इति शेषः । चशब्द उदित्पदात्परो बोध्यः । प्रत्ययपदञ्च न प्रत्ययसंज्ञकपरं किन्तु विधीयमानपरम् । तथा च विधीयमानभिन्नोऽण् उदिच्च सवर्णस्य बोधकः । अविधीयमान इत्युक्त्वा 'सनाशंसभिक्ष उः' 'इदम इश्' 'आर्द्धधातुकस्येड्वलादेः' 'भुवो वुग्लुङ्लिटोः' 'अम् संबुद्धौ' इत्यादौ विधेये न सवर्णग्रहणम् । उदिच्चेति–अत्रांशे 'अप्रत्ययः' इति न सम्बध्यते । तथा च विधीयमानोऽ-विधीयमानः सर्वोऽप्युदित्सवर्णग्राहको भवति । 'चोः कुः' इत्यादौ विधीयमानेऽप्युदित्करणसामर्थ्यात् तेन 'जगाद' इत्यादि सिध्यति । स्वस्यापि स्वसवर्णत्वेन स्वस्यापि बोधकः । केचित्तु बोधकत्वेन बोध्यत्वस्य 'माठरपरिवेषण' न्यायेन बाधात् स्वेन स्वस्य बोधो न स्यादिति 'स्वं रूपम्' इति सूत्रात् 'स्वम्' इत्यनुवर्त्य षष्ठ्या विपरिणम्य स्वस्य च बोधक इत्येवं व्याख्येयम् । एवञ्च चशब्दो यथाश्रुत एव । सवर्णस्य चेति—बोध्यत्वस्येति षष्ठ्यन्तस्यैव समुच्चायकः ।

अत्राणपदेन तद्बोध्या अकारादिलकारसूत्रान्तसमुदायघटका द्वादशवर्णा गृह्यन्ते, संज्ञासूत्रं विहाय सर्वत्र संज्ञापदेन संज्ञिनो बोधस्य नियमात् । आदिरन्त्येनेति सूत्रबोधितया 'अण्' इति संज्ञया उपस्थिता अकारादयो वर्णा द्वादश संज्ञा । तेषां स्वस्वसवर्णा अष्टादशादिप्रकारवर्णाः संज्ञिनः । तद् वक्ष्यते 'अ' इत्यष्टादशानां संज्ञा इत्यादिना । एवम् उदित्पदमपि 'कु चु टु तु पु'

अत्रैवाण् परेण णकारेण ।

---

एतेषु पदेषु रूढम् । तथा च उदित्पदबोध्यं कु इत्यादिपदं इत्यकादित्रर्णस्य ये सवर्णाः कादयस्तेषां बोधकम् । तथा च कु इत्यादिसंज्ञा ककारादयो वर्णाः संज्ञिनः । उदित्पदं स्वसवर्णस्य बोधकम् इति तु न सम्यक् क्वादिसमुदायस्य सवर्णाप्रसिद्धेः । एतत्सर्वमभिप्रेत्याह अणुदिच्च सवर्णसंज्ञा स्यादिति । पूर्वेण णकारेण अण् प्रत्याहारः परेण वेति सन्देहे आह--

अत्रैवाणिति--'अत्र' इत्युक्त्या अन्यत्र 'उरण् रपरः' इत्यादिषु सर्वत्र पूर्वणकारेणैवाणप्रत्याहार इति सूचितम् । तदुक्तं भाष्ये "अणुदित्सवर्णस्य चाप्रत्ययः" इति असन्दिग्धं परेण न पूर्वेण । कुतः एतत् । सवर्णेऽण्ग्रहणं तपरं ह्युकृत् । यदयमुक्रं दित्युकारे तपरकरणं करोति तज्ज्ञापयत्याचार्यः—परेण न पूर्वेणेति ।" अयम्भावः—अणुदित्सूत्रेऽण्ग्रहणं परेणैव णकारेण न पूर्वेण । तत्फलन्तु 'उरण् रपरः' इति सूत्रे अणुदित्सूत्रप्रवृत्त्या 'उः' इत्यनेन दीर्घस्यापि ॠकारस्य ग्रहणात् 'ॠत इद् धातोः' इति विहितस्य दीर्घऋकारस्थानिकस्य इकारस्य 'गीः पूः' इत्यादौ रपरत्वं सिध्यति, 'ऊकालोऽज्' इत्यत्रैचि अणुदित्सूत्र-प्रवृत्त्या त्रिमात्राणामेचां प्लुतसंज्ञा सिध्यतीत्यादि । अत्र ज्ञापकञ्च—'उऋत्' ( ७-४-७ ) इति सूत्रे तपरकरणम् । तद्धि कृत-संशब्दने इत्यतश्चुरादिणिजन्ताल्लुङि चङि 'अचीकृतत्' इत्यत्र दीर्घॠकारस्य स्थाने ह्रस्व एव ऋकारो यथा स्यान्नतु दीर्घऋकारः, आन्तरतम्यात् । यदि अणुदित्सूत्रे पूर्वेण णकारेणाण्ग्रहणं स्यात्तदा 'ऋत्' इत्यत्र तपरत्वाभावेऽपि ह्रस्व एव ऋकारो विधीयेत, दीर्घाप्राप्तेः, प्रसक्तस्यैवान्तरतम्येन विधानं नाप्रसक्तस्य । अन्यथा 'खट्वैलका' इत्यादौ आन्तरतम्याच्चतुर्मात्रिका वृद्धिः स्यान्न द्विमात्रिका । प्रसक्तस्य आन्तरतम्याद्विधाने तु त्रिमात्रचतुर्मात्राणां वृद्धिसंज्ञैव नास्ति इत्यान्तरतम्येऽपि न चतुर्मात्रकादेशः, इति 'ऋत्' इत्यत्र तपरकरणं व्यर्थं सत्परेण ग्रहणमणुदित्सूत्रे इति ज्ञापयति । तथाच दीर्घ ॠकारस्थाने आन्तरतम्याद् दीर्घऋकार एव स्यात्, स मा भूत् किन्तु दीर्घऋकारस्थानेऽपि ह्रस्व एव भवत्विति तपरकरणं स्वांशे चरितार्थम् । फलञ्च गीः, पूः, इत्यादावपि 'उरण् रपरः' इत्यादेः प्रवृत्तिरूपं पूर्वोक्तं बोध्यम् ।

ननु परेण णकारेणाण्ग्रहणेऽपि तपरत्वाभावेऽपि 'ऋ' इत्यस्य विधीयमानतया दीर्घविधानाप्राप्त्या ज्ञापितेऽपि तपरकरणं व्यर्थमिति चेन्न,परेण ग्रहणे ज्ञापितेऽपि तपरत्वे विधीयमानत्वस्यैवासिद्धेः । तथाहि–विधीयमानत्वं हि अपूर्वबोध्यत्वम् । तपरत्वाभावे ऋग्रहणेन अणुदित्सूत्रबलाद् ह्रस्वदीर्घयोरुभयोऋकारयोरुपस्थितौ यथाश्रुतरक्षणार्थमेव आन्तरतम्याद् ह्रस्वऋकारस्थाने ह्रस्व एव दीर्घऋकारस्थाने दीर्घ एव ऋकारः स्यादिति पूर्वसिद्धस्यैव बोधनं नापूर्वस्येति न 'अप्रत्ययः' इत्यस्य विषयः । कृते तु तपरत्वे दीर्घॠकारस्य स्थाने ह्रस्व ऋकारस्यैव बोधनेन अपूर्वबोध्यत्वरूपविधेयत्वस्य लाभेऽपि न क्षतिः, पुनरणुदित्सूत्राप्रवृत्तेरिष्टत्वात् ।

न च तपरकरणेन परेण णकारेणाण्ग्रहणे ज्ञापिते पूर्वोक्तप्रकारेण ॠकारस्य विधेयत्वाभावेऽपि तपरत्वेविधीयमानत्वस्य भावितया 'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन 'एकान्नविंशः' इतिवत् 'अप्रत्ययः' इति प्रतिषेधात् तपरत्वस्य स्वांशे चारितार्थ्यं नास्तीति वाच्यम्, यत्रोत्सर्गशास्त्राप्रवृत्तौ अपवादशास्त्रप्रवृत्तिसम्भावना तत्रैव ज्ञापकसाजात्यात् 'उपसंजनिष्यमाण'न्यायप्रवृत्त्या निषेधकापवादस्थले निषेध्यरूपोत्सर्गाप्रवृत्तिसम्भावनायां निषेधकापवादस्य प्रवृत्तिवैफल्येन यदि अणुदित्सूत्रं न प्रवर्तेत तदा तपरत्वे कृते अप्रत्यय इति निषेधः स्यादित्यस्य वक्तुमशक्यतया उपसंजनिष्यमाणन्यायस्य प्रकृतेऽप्रवृत्तेः । एवञ्च तपरकरणेन ज्ञापिते परणकारग्रहणे 'अचीकृतत्' 'अचीकृतत्' 'अमीमृजत्' इत्यादौ इररारः बाधित्वा स्वरूपरक्षणार्थमेव ऋ विधानं स्यात् तन्मा भूत्, किन्तु इररारः बाधित्वा ह्रस्व एव ऋकारः सर्वत्र यथा स्यादित्येतदर्थमृद्विधानं चरितार्थमिति विधीयमानत्वसिद्धये कर्तव्यं तपरकरणं परेणाणग्रहणे ज्ञापकमेवेति । न च तपरसूत्रेऽण्ग्रहणानुवृत्तिपक्षे ऌकारग्रहणेन ऋ ऌ उभयविधानेन तपरग्रहणस्य चारितार्थ्ये तस्य ज्ञापकत्वासम्भव इति वाच्यम्, ऌकाररूपस्थानि-

कु चु टु पु एते उदितः। तदेवम् अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोऽपि। एचो द्वादशानाम्। एदैतोरोदौतोश्च न मिथः सावर्ण्यम्, 'ऐऔच्' इति सूत्रारम्भसामर्थ्यात्।

---

नोऽभावेन ऋकारस्थाने आन्तरतम्याद् ऋकारस्यैव विधानेन लृकारग्रहणे फलाभावात्। तपरसामर्थ्याद् ऋकारस्थाने एवोभयविधानकल्पनापेक्षया परेणाण्ग्रहणमिति ज्ञापन एव लाघवात् इति दिक्। किञ्च 'उपसर्गादृति धातौ' इति सूत्रे तपरकरणमपि ज्ञापकम्। तद्धि दीर्घऋकारग्रहणवारणार्थम्। यदि पूर्वेणाण्ग्रहणं स्यात्तदा दीर्घऋकारग्रहणाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। न च तपरसूत्रेण लृकारग्रहणार्थं तत्, तपरसूत्रेऽप्यणित्यस्यानुवृत्तेः। परेणाण्ग्रहणे तु दीर्घव्यावृत्त्या चरितार्थं सत् लृकारग्रहणार्थत्वमुपपद्यते। यदि तु तपरसूत्रे अण्ग्रहणाननुवृत्तिस्तदा लृकारग्रहणेन चरितार्थं तपरकरणम् उक्तार्थे नैव ज्ञापकम्। यद्यपि भाष्यतः प्रतीयते = विधीयते इत्यर्थो नोपलभ्यते, किन्तु प्रत्ययपदं प्रत्ययसंज्ञकपरमेव। तत्र 'सनाशंसभिक्ष उः' इत्यादौ प्रत्ययेऽणि 'येनार्थः प्रतीयते स प्रत्ययः' इति महासंज्ञयाऽन्वर्थाश्रयणेन दीर्घप्लुताभ्यामर्थाप्रत्ययेन तयोरप्राप्त्या व्यर्थमप्रत्ययग्रहणं ज्ञापयति— 'भाव्यमानेन सवर्णानां ग्रहणं नेति' इत्युक्तम्। तथा चोक्तपरिभाषया कुत्रापि विधीयमानं सवर्णस्य ग्राहकं न भवति इति तत्समयोगक्षेमत्वेन वचनसामर्थ्याकल्पनलाघवमूलकतया हरदत्तानुरोधेन च मूले दीक्षितेन 'अप्रत्ययः' इत्यनेनैव भाव्यमानपरिभाषालभ्यार्थः साधितः, परन्तु 'अविधीयमानोऽण्' इति मूलेन पर्युदास एव प्रतीयते। तथा चाण्बोधकप्रत्याहारे झलादौ, व्यक्तिपक्षे प्रत्याहारेण वर्णसमाम्नायस्थवर्णानामेव बोध्यत्वस्य प्राप्ततया सूत्रारम्भसामर्थ्यात्कचिल्लक्ष्ये सूत्रस्य चारितार्थ्ये प्रत्याहारघटितसूत्राणां स्वोद्देश्यताऽवच्छेदकाक्रान्ते सर्वत्र लक्ष्ये प्रवृत्तये ज्ञापकलक्षणाश्रयणाद्यनेकक्लिष्टकल्पनापेक्षया जातिपक्षमाश्रित्याण्ग्रहणप्रत्याख्यानस्यैव भाष्यकृदभिमतत्वेन जातिपक्षेऽपि 'गुणा अभेदकाः' इति न्यायेन च प्राप्तसवर्णग्रहणवारणाय 'अप्रत्ययः' इति योगं विभज्य प्रसज्यप्रतिषेधं चाश्रित्य 'विधीयमानः सवर्णस्य ग्राहको न भवति' इत्येवं व्याख्याय वाच्यसामान्यचिन्तया विधेये यथाकथञ्चित् प्राप्तस्य सर्वस्यैव सवर्णग्रहणस्यानेन निषेधः। सूत्रेऽण्ग्रहणं नैव कर्तव्यम्। तपरसूत्रमपि जात्यादिपक्षप्राप्तं सवर्णग्रहणं नियमयति।

ऋलृवर्णयोः परस्परं जात्यारोप एव विधेयः। नचैवं ऋदित्प्रयुक्तं कार्यम् लृदिति, लृदित्प्रयुक्तञ्च ऋदिति स्यादिति वाच्यम्, गम्लृ, कासृ, इत्यादौ तत्र तत्र ऋकारलृकारानुबन्धद्वयकरणेन ऋलृवर्णयोर्जात्यतिदेशस्यानित्यत्वकल्पनेनादोषात्। उदित इति—उदित्पदव्यवहार्या इत्यर्थः। तदेवमिति—तदित्यव्ययं तस्मात्कारणादित्यर्थः = ग्राहकसूत्रबलादिति यावत्। एवम् = उक्तप्रकारेण। अष्टादशानामिति—अकाराणामिति शेषः।

संज्ञेति—संज्ञायते = बोध्यतेऽनयेति संज्ञा 'आतश्चोपसर्गे' इति करणे अङ्। 'अ' इति वर्णोऽष्टादशानामकाराणां बोधक इत्यर्थः।

तथेति—'इ' इत्यष्टादशेकाराणाम्, 'उ' इत्यष्टादशोकाराणां संज्ञेत्यर्थः। ऋकार इति— 'ऋ' इति त्रिंशतः अष्टादशऋकाराणां द्वादशलृकाराणाञ्च संज्ञेत्यर्थः, दीर्घलृकाराभावात्। लृकार इति—'लृ' इति अष्टादशानामृकाराणाम्, द्वादशानाम् लृकाराणाञ्च संज्ञेत्यर्थः। इदञ्च वस्तुस्थितिकथनमात्रम्, क्वापि सूत्रे लृकारेण ऋकारग्रहणाभावात्।

एच इति—'ए' इति, 'ओ' इति, 'ऐ' इति, 'औ' इति च स्वस्वसवर्णानां संज्ञेत्यर्थः।

ननु एकारैकारयोरोकारौकारयोस्तुल्यस्थानप्रयत्नकत्वात्सवर्णसंज्ञकत्वे 'एचश्चतुर्विंशतेः संज्ञा' इति वक्तुमुचितमत आह—एदैतोरिति—सवर्णसंज्ञकानां स्वराणामेकस्यैव पाठो वर्णसमाम्नाये दृश्यते। यथा अष्टादशसु अकारेषु 'अ' इत्यस्यैव। एवं यद्येदैतोरोदौतोः सावर्ण्यं स्यात्तदा

तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् ।

वर्णसमाम्नाये 'ए, ओ' इत्येव ऐ, औ' इत्येव वा वदेदित्युभयोः पाठवैयर्थ्यं ज्ञापयति—"एकारैकारयोरोकारौकारयोश्च मिथः सावर्ण्यं न भवतीति ।" नच 'ऐऔच्' इति सूत्राभावे 'अदेङ् गुणः' 'वृद्धिरादैच्' इत्यादौ प्रत्याहारद्वयासिद्धिरिति वाच्यम्, तेषां सावर्ण्ये 'अणुदित्सूत्रेण' उभयत्रोभययोर्ग्रहणेन गुणवृद्धिसंज्ञाद्वयस्य दुर्वारतया प्रत्याहारद्वयकरणे फलाभावेन 'वृद्धिरादेङ्' इत्येवं पाठसम्भवात् । नच 'न य्वाभ्याम्' ( ७-३-३ ) इत्यत्रानिर्वाहः, 'ऐ औ' इति स्वरूपतः पाठेनापि तत्रादोषात् । नच 'एओङ्' इति पाठे 'एओ' इत्यनयोः सावर्ण्येन ऐऔ इत्यनयोर्बोधे ऽपि क्रमेणोपस्थितेर्नियमाभावेन 'एचो ऽयवायावः' इत्यत्र यथासंख्यमन्वयो न स्यादिति वाच्यम्, 'एओ' इत्यत्राकारांशस्य संवृतत्वेन 'ऐऔ' इत्यत्राकारांशस्य विवृतत्वेन संवृताकारघटितस्य कण्ठतालुस्थानकस्य एकारस्य, संवृताकारघटितस्य कण्ठोष्ठस्थानकस्य ओ इत्यस्य च स्थाने संवृताकारघटितः कण्ठतालुस्थानजः अय् आदेशः, संवृताकारघटितकण्ठोष्ठस्थानजोऽवादेशः । विवृताकारघटितस्य ऐ इत्यस्य विवृताकारघटितः तात्स्थानक आयादेशः, विवृताकारकस्य औ इत्यस्य विवृताकारघटितः तत्स्थानक आवादेश इति आन्तरतम्यमादायैव 'स्थानेऽन्तरतमः' ( १-१-५० ) इति सूत्रेणैव निर्वाहस्य भाष्यकृतैवोक्तत्वात् ।

यदि तु सावर्ण्येऽपि 'ऐऔच्' इति सूत्रसामर्थ्यान्नैङा ऐचो ग्रहणम्, नाप्यैचा एङो ग्रहणमित्युच्यते तदा फलाभावात्सावर्ण्याभावस्तयोर्वाच्यः । वस्तुतस्तु 'हलोऽनन्तराः' ( १-१-७ ) इति सूत्रे 'अनुपदिष्टस्यासत्त्वादसत्प्रतिपत्तेरशक्यत्वात्' इति भाष्येण, 'इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः' इति भाष्येण च ये वर्णा वर्णसमाम्नाये नोपदिष्टास्तेषामसत्ताऽसाधुत्वञ्च स्यादिति 'ऐऔ' जित्यस्य एङा सावर्ण्येऽपि ऌवर्णवत् साधुत्वाय पाठ आवश्यकः । नच दीर्घाद्याकारादीनां तत्र पाठाभावेनासाधुत्वापत्तिः, व्यक्तिपक्षेऽसंग्रहत्वेन वर्णसमाम्नाये जातिपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन तेषामुपदेशस्य कृतप्रायत्वात् । तथा च 'ऐऔच्' इति सूत्रारम्भस्य चारितार्थ्ये एङैचोः सावर्ण्याभावः, ङकारे चकारे वैकस्मिन्नेवानुबन्धे कर्तव्येऽनुबन्धमूलकैकैचप्रत्याहारद्वयकरणसामर्थ्येन 'प्लुतावैच इदुतौ' ( ८-२-१०६ ) इत्यत 'ऐचः' इत्यस्यानुवृत्त्या सिद्धे 'एचोऽप्रगृह्यस्यादूराद्धूते' ( ८-२-१०७ ) इति सूत्रे 'एचः' इत्यस्य वैयर्थ्येन, 'तेभ्योऽपि विवृतावेकौ ताभ्यामैचौ तथैव च' शिक्षया विवृततरविवृततमप्रयत्नभेदेन च साधनीयः । तेनेति—एदैतोरोदौतोश्च मिथः सावर्ण्याभावेनेत्यर्थः । नापादनीयमिति—न शङ्कनीयमित्यर्थः । तेन 'सर्वस्मै अत्र' इत्यत्र 'एङः पदान्तादति' इति पूर्वरूपम्, 'ग्लावम्' 'ग्लावः' इत्यत्र 'औतोऽम्शसोः' इत्यात्वञ्च न ।

ननु अकारहकारयोः सावर्ण्यस्य 'नाज्झलौ' इत्यनेन निषेधेऽपि दीर्घाकारप्लुताकारयोर्हकारेण सह सावर्ण्यं दुर्वारम्, नच 'नाज्झलौ' इति सूत्रघटकाच्पदेन अणुदित्सूत्रसहकारेण दीर्घादीनामपि ग्रहणात् हकारेण समं सावर्ण्यमिति वाच्यम्, 'नाज्झलौ' इति सूत्रस्य वाक्यार्थबोधकाले 'अणुदित्' इत्यस्य वाक्यार्थबोधाभावेन नाज्झलाविति सूत्रघटकाच्पदे तदप्रवृत्तेः । तथाहि—'अणुदित्सवर्णस्य' इति वाक्यार्थबोधे पदार्थोपस्थितिः कारणम्, इति न्यायेन वाक्यघटकपदार्थोपस्थितिरपेक्ष्यते । शाब्दबोधकारणीभूतपदार्थोपस्थितिश्च पदनिष्ठवृत्तिज्ञानं विना न सम्भवति । तत्राणपदवृत्तिज्ञानाय 'अ इ उ ण्' इत्यादिवर्णसमाम्नायज्ञानमपेक्ष्यते, तज्ज्ञानं विना 'आदिरन्त्येन' इति सूत्रवाक्यार्थबोधासम्भवात् । 'आदिरन्त्येन' इति वाक्यार्थबोधश्च इत्पदार्थज्ञानमन्तरा असम्भवि । इत्पदशक्तिज्ञानं च 'उपदेशेऽजनुनासिक इत्' 'हलन्त्यम्' इत्यादिशास्त्राधीनम् । एतावता वाक्यकदम्बेन 'अणुदित्' इति सूत्रघटकाणपदार्थोपस्थितिः । सवर्णपदशक्तिज्ञानाय 'तुल्यास्यप्रयत्नं सवर्णम्' इति सूत्रवाक्यार्थज्ञानापेक्षा । तथा दि स्वातन्त्र्येण सवर्णसंज्ञा विदधातस्तदा अज्झलोरपि सवर्णसंज्ञा स्यात् । ततः 'नाज्झलौ' इति सूत्रं 'भुक्तवन्तं प्रति मा भुक्थाः' इति न्यायेन व्यर्थमेव स्यादिति 'पूर्वं हि अपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' इति न्यायेन पूर्वमपवादशास्त्रीयोद्देश्यभिन्नत्वेनोत्सर्गशास्त्रीयोद्देश्ये संकोचं कृत्वा उत्सर्गशास्त्रवाक्यार्थबोधः । तथा च प्रकृते "अ-

'नाज्झलौ' ( सू. १३ ) इति सावर्ण्यनिषेधो यद्यप्याक्षरसमाम्नायिकानामेव,
तथापि हकारस्याऽकारो न सवर्णः,

ज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णसंज्ञं भवति'' इत्यर्थेन हलां हल्भिः सवर्णसंज्ञा, ''हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णसंज्ञं भवति'' इत्यर्थान्तरेण च अचामज्भिः सवर्णसंज्ञा भवति। एतदर्थं एव तात्पर्यग्राहकं नाज्झलाविति सूत्रम्। एतेन अज्झल्भिन्नं तुल्यास्यप्रयत्नं सवर्णसंज्ञं भवतीत्येवं तुल्यास्यसूत्रे संकोचे अचामज्भिः, हलां हल्भिरपि सावर्ण्यं न स्यादित्यपास्तम्। तथा च तुल्यास्य-सूत्रे एव नाज्झलावित्यस्य प्रवेशेन तदानीमणुदित्सूत्रवाक्यार्थबोधाभावेन नाज्झलाविति सूत्रघटकाच्पदे-ऽणुदित्सूत्राप्रवृत्त्या अच्पदेन दीर्घाकारस्याग्रहणादाकारहकारयोः सावर्ण्यं स्यात्तद्वारणायाह-'नाज्झला'-वितीति। यद्यपीति-सम्भाव्यते इत्यर्थः। आक्षरेति-अक्षराणामकारादिवर्णानां समाम्नायः-श्रुतिः। अक्षरबोधको वेद इत्यर्थः। तत्र भवा आक्षरसमाम्नायिकाः। 'बह्वचो ऽन्तोदात्ताट्ठञ्' ( ४-३-६७ ) इति ठञ्। वर्णसमाम्नाये पठितानामेव 'नाज्झलौ' इति सूत्रस्थाच्पदेन ग्रहणम्, सवर्णविधानकाले अणुदित्सूत्रार्थज्ञानाभावेन अच्पदवाच्या ये अकारादयस्ते नाष्टादशानां संज्ञाः, किन्तु स्वरूपबोधका एव। न च 'नाज्झलौ' इति सूत्रस्थाच्पदे अणुदित्सूत्रं न प्रवर्तत इति भावः। तदुक्तं भाष्ये—

१ वर्णानामुपदेशस्तावद्, २ उपदेशोत्तरकाला इत्संज्ञा, ३ इत्संज्ञोत्तरकाल आदिरन्त्येन सहेति प्रत्याहारः, ४ प्रत्याहारोत्तरकाला सवर्णसंज्ञा, ५ सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम्, एतेन समुदितेन वाक्येन अन्यत्र सवर्णानां ग्रहणं भवति' इति। अयम्भावः—अणु-दित्सूत्रघटकाण्पदार्थज्ञानाय 'अइउण्' इत्यादिसूत्रज्ञानं प्राथमिकम्। ततो 'हलन्त्यम्' इत्यनेन लण्-सूत्रणकारस्येत्संज्ञा। तत आदिरन्त्येनेति सूत्रेण अण्पदशक्तिज्ञानम्। ततः तुल्यास्यसूत्र-नाज्झलौ इति सूत्राभ्यां सवर्णपदशक्तिज्ञानम्। ततः अणुदित्सूत्रवाक्यार्थबोधः। तुल्यास्यसूत्रप्रवृत्तौ नाज्झला-वित्यपवादविषयलक्ष्यज्ञानमावश्यकम्। अन्यथाऽपवादविषयेऽपि तुल्यास्यसूत्रप्रवृत्तौ भुक्तवन्तमिति न्यायेन नाज्झलावित्यस्य वैयर्थ्यापत्तिः। अत एव 'प्रत्याहारोत्तरकाला सवर्णसंज्ञा' इति भाष्यसङ्गतिः। अन्यथा केवलसावर्ण्यविधेः प्रत्याहारानपेक्षत्वेन तदसङ्गतिः स्पष्टैव। तुल्यास्यसूत्रस्य नाज्झला-वित्यनेन सहैकवाक्यतया बोधे तु सावर्ण्यविधेः प्रत्याहारोत्तरकालिकत्वं स्वरसतः संगच्छते। तथा च अणुदित्सूत्रस्य सावर्ण्यनिषेधके नाज्झलावित्यत्राप्रवृत्तावच्पदेन दीर्घाकारादेरग्रहणे आकारहकारयोः समानस्थानप्रयत्नकत्वेन सावर्ण्यं दुर्वारम्। वाक्यार्थबोधात्प्रागणुदित्सूत्रघटकाण्पदेऽपि अणुदित्सूत्रस्य न प्रवृत्तिः, लोके सर्वत्र 'गामानय' इत्यादिवाक्यार्थबोधानन्तरमेव तद्बोधितकार्ये प्रवृत्तिदर्शनात्। इति १, अइउण् २, इत्संज्ञाशास्त्रम् हलन्त्यम् ३, आदिरन्त्येन ४, तुल्यास्य नाज्झलौ ५, अणुदित् इति पञ्चानां वाक्यानामर्थबोधानन्तरमेव अणुदित्सूत्रप्रवृत्तिः। न स्वस्मिन्नापि अइउण्-इत्यादिषु चतुर्षु। अणुदित्सूत्रस्य वाक्यार्थबोधे जाते पुनर्यदि वाक्यार्थबोधः स्यात्तदा तु अणुदित्सूत्रेऽपि अण्-पदेन दीर्घादीनां ग्रहणं शक्यते वक्तुं, स एव तु न स्यात्, जातस्य बोधस्य प्रतिबन्धकत्वात्, तत्सा-मग्र्यभावाच्च।

नच 'अणुदित्' इत्यस्य 'नाज्झलौ' इति सूत्रघटकाच्पदे उक्तरीत्या प्रवृत्त्यभावेऽपि 'इको यणचि' इत्यादौ 'उच्चरितः शब्दः प्रत्यायको नानुच्चरितः' इति मते इकारादीनामिक्पदबोध्यत्वेऽप्युच्चरितत्वा-भावादणुदित्सूत्राप्रवृत्त्या दीर्घेषु यणसिद्धये यथा इक्पदस्य स्ववाच्यवाच्ये लक्षणा तथा 'नाज्झलौ' इति सूत्रेऽपि 'अच्पदस्य' अच्पदवाच्या ये अकारादयस्तद्वाच्या येऽष्टादशाकारादयस्तत्र लक्षणया दीर्घाकारस्यापि ग्रहणेन आकार-हकारयोः सावर्ण्यनिषेधः स्यादिति वाच्यम्, प्रत्याहारविषये उक्त-लक्षणायाः सूत्रकारानभिप्रेतत्वात्। अन्यथा व्यक्तिपक्षेऽपि अणुदित्सूत्रेऽण्ग्रहणवैयर्थ्यापत्तिः। स्वादिभ्यः' इत्यादिनिर्देशैस्तु प्रत्याहारबोध्येऽपि अनुच्चरितेऽपि अणुदित्सूत्रं प्रवर्तते इत्येव बोध्यते।

तथापीति—'नाज्झलौ' इति निषेध आक्षरसमाम्नायिकानामेव इति स्वीकारेऽपीत्यर्थः।

तत्राऽकारस्यापि प्रश्लिष्टत्वात् । तेन 'विश्वपाभिः' इत्यत्र 'हो ढः' ( सू. ३२४ ) इति ढत्वं न भवति ।

तत्र=नाज्झलाविति सूत्रे ।

आकारस्यापीति—क्वचित् 'तत्रापी' ति पाठः । अत एव बालमनोरमायाम् 'अपिशब्दो व्युत्क्रमः' इत्युक्तम् ।

प्रश्लिष्टत्वादिति—'आसहितो ऽच् आच्' इत्युत्तरपदलोपसमासे सवर्णदीर्घेण आकारस्यापि संयुक्तत्वादित्यर्थः ।

इदमुपलक्षणं प्लुताकारप्रश्लेषस्यापि । अन्यथा प्लुताकारहकारयोः सवर्णसंज्ञायाम् 'हे बियासो' इत्यादौ 'गुरोरनृतः' (८–२–८६) इत्याकारस्य प्लुतत्वे इण्पदबोध्य इकारे ऽणुदित्सूत्र-प्रवृत्त्या हकारसवर्णप्लुताकारस्यापि इण्ग्रहणेन ग्रहणे 'आदेशप्रत्यययोः' ( ८–३–५९ ) इति षत्वापत्तिः । तत्र षत्वस्येष्टत्वं तु न, 'ईषद्विवृतमुष्मणाम्' इति भाष्यमते हकारस्य सकलाकारैः सावर्ण्याभावेन षत्वाप्राप्तेः । प्लुतस्यापि प्रश्लेषे तु न सूत्रकारभाष्यकारयोः फलभेदः, उभयमते षत्वा-प्राप्तेः । नचैवं दीर्घेकारस्य शकारेण, दीर्घऋकारस्य षकारेण सह साण्यर्यवारणाय यत्नान्तरं वक्तुमु-चितमिति वाच्यम्, तेषां सत्यपि दोषाभावात् । नच 'कुमारी शेते' 'कॄ षष्ठः' इत्यादौ सवर्णदीर्घापत्तिः. शकारषकारयोरण्त्वाभावेन न शकारषकाराभ्यामीकारऋकारयोर्ग्रहणम्, नापीकारऋकाराभ्यां शकारष-कारयोर्ग्रहणम्, दीर्घयोस्तयोरात्तरसमाम्नायिकत्वाभावेनाणुदित्सूत्राप्रवृत्तेः । तेन 'शि तुक्' (८–३–३१) 'ढ्णोः कुक् टुक् शरि' (८–३–२८ ) इत्यादौ न शषग्रहणेन ईकारऋकारयोर्ग्रहणम् । ह्रस्वेकारादिना तु न सावर्ण्यं, नाज्झलाविति निषेधात् । तथा च कथमपि शकारषकाराभ्यामचाम् अज्ञादिना च शकारषकारयोर्वा ग्रहणाप्राप्त्या न तेषां सावर्ण्यनिषेधाय यत्नान्तरानुसरणं ग्रन्थकृत इति भावः ।

तेनेति—आकारप्रश्लेषद्वारा दीर्घाकारहकारयोः सावर्ण्यनिषेधेनेत्यर्थः । ढत्वं नेति-'हो ढः' ( ८–२–३१ ) इति हपदबोध्यस्य विधीयमानं ढत्वम् 'विश्वपाभिः' इत्यत्राकारस्य न, हस्याण्-त्वेऽपि हस्य आकारेण सह सावर्ण्याभावेनाकारस्य हपदबोध्यत्वाभावादिति भावः । आकारप्रश्लेषाभावे तु 'हो ढः' इत्यत्राणुदित्सूत्रप्रवृत्त्या हशब्देनाकारस्य ग्रहणाद् ढत्वं दुर्वारमेव स्यादिति भावः । यद्यपि 'हो ढः' ( ८–२–३१ ) इत्यस्य 'संयोगान्तस्य लोपः' ( ८–२–२३ ) इति दृष्ट्या असिद्धत्वेन संयोगान्तलोप एवापादनीयः । किञ्च सावपि पदत्वमिति मते 'विश्वपाः' 'विश्वपाभ्याम्' इत्यत्रैव दोषदानस्यौचित्यम् । तथापि आपाद्यमानेऽर्थे न्यायस्यानादरात्, हकारेणाकारग्रहणे यद्यत्प्राप्नोति तस्य सर्वस्योपलक्ष-णत्वान्नास्य न दोषः । ढत्वमुपलक्षणम्—'पृथगायुः' इत्यादौ 'झयो होऽन्यतरस्याम्' (८–४–६२) इति आकारस्य स्थाने घत्वस्यापि ।

यदि तु विवृतं स्वराणाम्, ईषद्विवृतमुष्मणामिति प्रयत्नभेद आश्रीयते तदा 'नाज्झलौ' इति सूत्रं न कर्तव्यम्, स्वरैः सह हकारादीनां प्रयत्नभेदात्सावर्ण्याप्राप्तेः । तदुक्तं भाष्ये—ईषत्स्पृष्टमन्तः-स्थानाम् । विवृतमूष्मणाम् । ईषदित्येवानुवर्तते । स्वराणाञ्च विवृतम् । ईषदिति निवृत्तम्, इति । अनेन ऊष्मणामीषद्विवृतम्, स्वराणां विवृतम्, इति स्पष्टमेवोक्तम् ।

अत्राकारप्रश्लेषे प्रमाणञ्च 'नाज्झलौ' इति सूत्रप्रत्याख्यानपरं भाष्यम्, 'कालासमयवेलासु' इत्यादिसूत्रनिर्देशश्च । आकारप्रश्लेषाभावे प्रयत्नभेदेन हकारप्रयोज्यं कार्यमाकारे न प्राप्नोति । सूत्रारम्भे च हकाराकारयोः सावर्ण्याद् हकारप्रयुक्तं कार्यमाकारे प्राप्नोतीति फलभेदः । आकारप्रश्लेषो भाष्याभिमत इति प्रतीयते । किञ्च यदि हकाराकारयोः सावर्ण्यं स्यात्तदा 'वेलासु' इत्यत्र ढत्वस्य, परत्वस्य च प्राप्त्या पाणिनेराकारसकारोच्चारणमसङ्गतं स्यात् । तदुच्चारणेन पाणिनिना ज्ञाप्यते—आकारप्रश्लेषो नाज्झलाविति सूत्रेऽस्तीति । न च हकाराकारयोः सावर्ण्येऽपि आकारेण हकारग्रहणन्तु दुर्वचमेव, आकारस्या-नणत्वेन अणुदित्सूत्राप्रवृत्तेः । हकारेण आकारं गृहीत्वा यत्कार्यं ढत्वादिकं प्राप्नोति तत्सर्वं त्रिपादीस्थमेव । तथा च 'अणुदित्सवर्णस्य' ( १–१–६९ ) इत्यस्य सपादसप्ताध्यायीस्थतया तद्दृष्ट्या 'पूर्वत्रासिद्धम्'

अनुनासिकानुनासिकभेदेन यवला द्विधा। तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा।

**तपरस्तत्कालस्य। [ १-१-७० ]**

तः परो यस्मात्स तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्।

---

(८-२-१) इत्यनेन 'हो ढः' इत्यादीनामसिद्धतया हकारेणाकारग्रहणाप्राप्तिः स्पष्टैवेति वाच्यम्, अणुदित्सूत्रस्य त्रिपाद्यां प्रवृत्तेर्मुनित्रयसम्मतत्वात्। यदि तत्सूत्रस्य त्रिपाद्यां प्रवृत्तिर्न स्यात्तदा 'गुरोरनृतः' (८-२-८६) 'इदुदुपधस्य चाप्रत्ययस्य' (८-३-४१) इति सूत्रेऽणुदित्सूत्राप्रवृत्त्या तद्वारणाय कृतं तपरत्वं व्यर्थमेव स्यादिति तद्वैयर्थ्यमेव ज्ञापयति—'अणुदित्सूत्रदृष्ट्या त्रिपादी नासिद्धत्वमि'ति। तेन तपरत्वस्य चारितार्थ्यम्, 'ङमो ह्रस्वादचि' (८-३-३२) इत्यादौ प्रवृत्त्या 'सुगण्णीशः' इत्यादौ णुडादिकञ्च सिध्यति।

ननु हयवरलानां सवर्णाप्रसिद्धया तेषु अणुदित्सूत्रप्रवृत्तेर्वैयर्थ्यात् 'अचुदित्सवर्णस्य' इत्येव सूत्रमस्तु। न च लाघवाभावः, अच्पदेन नवानामुपस्थितौ लाघवसत्त्वात्प्राथम्याच्चेत्याशङ्कायामाह—अनुनासिकेति—तदुक्तं शिक्षायाम् 'अमोऽनुनासिका न ह्रौ' इति। अम्प्रत्याहारबोध्या अनुनासिकाः, परन्तु हकाररेफौ नानुनासिकौ इति तदर्थः। द्विधेति—अनुनासिकत्वाननुनासिकत्वरूपधर्मद्वयवन्त इत्यर्थः। तेनेति—यवलानां द्वैविध्येनेत्यर्थः। ते = यवलाः। वर्णसमाम्नाये पठितानामेवाणुदित्सूत्रेण संज्ञात्वबोधनेन अनुनासिकयवलानां तत्र पाठाभावेन अनुनासिका यँवँलँ स्वरूपबोधका एव, न तु द्वयोः २ संज्ञा। रेफो हकारश्चाण्प्रत्याहारान्तर्गतोऽपि न सवर्णानां संज्ञेति 'रेफोष्मणां सवर्णा न सन्ति' इति भाष्येण तयोः सवर्णाभावबोधनात्। एवञ्च यवला द्वयोर्द्वयोर्बोधका यथा स्युरित्येतदर्थमज्ग्रहणमकृत्वा सूत्रेऽण्ग्रहणं कृतमिति भावः।

अत्, इत्, उत्, ऋत् इत्यादितपराणामपि अणां सवर्णबोधकत्वे प्राप्ते तदपवादमाह—'तपरस्तत्कालस्य' इति (१-१-७०) 'वृद्धिरादैच्' इति सूत्रे 'किमर्थमाकारस्तपरः क्रियते। आकारस्य तपरकरणं सवर्णार्थम्' इति भाष्यम्, तादपि परस्तपर इति भाष्यञ्च। पर इत्यस्य पाणिनेस्तन्त्रेण एकशेषेण वोच्चारणम्। तन्त्रञ्च एकानुपूर्वीमच्छब्देनानेकार्थबोधनम्।

बोद्धुरस्मदादेस्तु आवृत्त्या बोध इति तपर इत्यावर्तते। यदि पूर्वसूत्रादण् इति अनुवर्तते तदा तः परो यस्मादणः सः, तात्परो वा अण् तत्कालस्य बोधक इत्यर्थः। अर्थद्वये प्रमाणञ्च तत्र तत्र तपरकरणम्, तत्र तत्काल इत्यस्य स कालो यस्येति विग्रहः। तत्र 'सः' इति लक्षणया तपरत्वेनोच्चार्यवर्णाधिकरणकालसदृशपरः। तथा च सः=तपरत्वेनोच्चार्यमाणवर्णाधिकरणकालसदृशः कालो यस्य वर्णस्य तस्य तपरः = अत्, इत्, उत्, ऋत् आदैच्, इत्यादिर्बोधकः। काले सादृश्यञ्च एकमात्रात्वेन द्विमात्रात्वेन च, तथा च ह्रस्वास्तपरा ह्रस्वानां बोधकाः, दीर्घास्तपरा दीर्घाणां बोधकाः। यथा 'अतो भिस ऐस्' (७-१-९) 'ईदूदेद् द्विवचनम्' (१-१-११) इत्यादिषु। तत्र तपरेऽपि अपि अणुदित्सूत्रप्रवृत्तौ तत्कालस्य ग्रहणे सिद्धे सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते, इति न्यायेन 'तपरः' इति सूत्रं नियमयति—'तपरोऽण् तत्कालस्यैव सवर्णस्य बोधको नातत्कालस्य' इति। न चाण्ग्रहणस्यानुवृत्तौ 'वृद्धिरादैच्' इत्यस्य तपरसूत्राप्रवृत्तौ प्लुतानामाकाराणां वृद्धिसंज्ञा न स्यादिति वाच्यम्, 'गुणा अभेदकाः' इति न्यायेन प्लुतानां ग्रहणे बाधकाभावात्। विधिस्त्रिविधः— अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्च। आद्यः 'स्वर्गकामो यजेत' यागस्य स्वर्गार्थत्वं प्रमाणान्तरेण न बोध्यते, किन्त्वनेनैवेति अपूर्वविधित्वमस्य। यथा वा 'इको यणचि' यण्घटितस्य इष्टसाधनत्वं प्रमाणान्तरेण न बोध्यते किन्त्वनेनैवेत्यपूर्वविधित्वमस्य।

द्वितीयः 'व्रीहीनवहन्यात्' व्रीहेर्निस्तुषीकरणं अवहननेन, नखविदलनादिना च प्राप्तम्। यदा नखविदलनादिना निस्तुषीकरणं तदा अवहनने विदलनकरणत्वाभावः प्राप्नोति। स च श्रुत्या अपसार्यते

तेन 'अत्' 'इत्' 'उत्' इत्यादयः षरणां षण्णां संज्ञा। 'ऋत्' इति द्वादशानाम्।

**वृद्धिरादैच्। ( १-१-१ )**

आदैच्च वृद्धिसंज्ञः स्यात्।

---

इत्यप्राप्तपरिपूरणफलो हि नियमः। शब्देन बोधितस्यावश्यकत्वं यत्र तत्र नियम इति व्यवहारः। तृतीयो यथा 'पञ्च पञ्चनखा भक्ष्याः' इति। अनेन न पञ्चसंख्याकपञ्चनखस्य भक्षणं विधीयते, तस्य क्षुन्निवृत्तये रागतः प्राप्तत्वात्। किन्तु लक्षणया पञ्चसंख्याकपञ्चनखभिन्नस्य पञ्चनखस्य भक्षणं प्रतिषिध्यते। शक्यार्थे तु नास्य व्यापार इति इतरप्रतिषेधफला परिसंख्या। तथा च व्याकरणे यत्र प्राप्तस्य विधानं तत्र तत्र इतरप्रतिषेधे एव तात्पर्य्यमिति सर्वत्र परिसंख्यैव। नियमत्वेन भाष्यकारादीनां तत्र तत्र व्यवहारस्तु नियमस्थले यथा नियामकशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छेदेन विधेयसम्बन्ध आवश्यकः, ऋतुमद्भार्य्यात्वावच्छिन्नायां गमनस्यावश्यकत्वम्। तथा व्याकरणशास्त्रे विधेये स्वीयोद्देश्यतावच्छेदकव्यापकत्वं भासते इति व्युत्पत्त्यनुरोधेनात्र परिसंख्यास्थलेऽपि समासत्वावच्छेदेन प्रातिपदिकसंज्ञारूपविधेये व्यापकत्वस्यावश्यकत्वेन नियमतुल्यत्वादित्युपाध्यायाः। यदि 'तपरस्तत्कालस्य' इत्यत्राण् इति नानुवर्तते, अणुदित्सूत्रेऽण्ग्रहणमकृत्वा जातिपक्षो वा 'उदात्तादयो गुणा भेदका एव' इति पक्षस्तदा 'वृद्धिरादैच्' 'आतो धातोः' ( ६-४-१४० ) इत्यादिषु 'आत्' पदेन तपरसूत्रप्रवृत्त्या षण्णामाकाराणां वृद्धिसंज्ञासिध्यर्थं तपरसूत्रं विध्यर्थमेव। तपरेऽणि परत्वात्परसूत्रस्यैव प्रवृत्तिः। वृत्तौ 'समकालस्यैव' इत्युक्त्या दीक्षितस्य नियमसूत्रत्वमेवाभिमतम्। नियमस्य फलमाह—तेनेति—नियमकरणेनेत्यर्थः। इत्यादय इति—आदिना एत्, ओत्, ऐत्, औत् इति दीर्घाणामणां तपराणां संग्रहः। एते तपराः स्वसमकालानां स्वस्य सवर्णानां संज्ञाः। द्वादशानामिति—ऋऌवर्णयोः सावर्ण्यात् 'ऋत्' इत्यनेन स्वसमकालानां ऌवर्णानामपि ग्रहणादिति भावः। एतेन जातिपक्षे तपरसूत्रं विध्यर्थमेवेति सूचितम्, ऋत्वजातेऌकारेऽभावे ऋकारेण ऌकारग्रहणाप्राप्त्या सूत्रे विधायकत्वस्यैवोचित्यात्। वस्तुतस्तु जातिपक्षेऽपि 'ऋऌवर्णयोः' इति वार्तिकेन परस्परं जात्यतिदेशस्यैव वक्तव्यतया अतिदिष्टऋत्वस्य ऌकारे तादृशऌत्वस्य च ऋकारेऽक्षततया ऋकारेण ऌकारग्रहणे सिद्धे नियमार्थत्वं सम्भवेदेव। परन्तु अस्मिन् पक्षे गौरवाद्विधायकत्वमेवोचितम्।

न च ऋता ऌता च द्वादशानां ग्रहणे ऋदित्सु 'काशृ' इत्यादिषु ऌदित्सु 'गम्ऌ' इत्यादिषु च ऋदिद्-ऌदिदुभयप्रयुक्तकार्यापत्तिरिति वाच्यम्, ऌदित्वान्यतरकरणेनैवोभयप्रयुक्तकार्य्यसिद्धौ उभयकरणवैयर्थ्येन 'ऋऌवर्णयोः' इत्यस्यानित्यत्वज्ञापनेनेष्टानुरोधेन धातुषु ऋता ऌता च यणामेव ग्रहणान्नोभयत्रोभयकार्य्यापत्तिः।

तदेवं ग्रहणकशास्त्रोपयोगिसंज्ञाप्रपञ्चः, ग्रहणकशास्त्रप्रपञ्चश्च समाप्तः।

आदैज्ज्ञानायापेक्षितां संज्ञाम् उक्त्वाऽष्टाध्याय्यां प्राथम्यान्माङ्गल्याच्च वृद्धिसंज्ञामाह—'वृद्धिरादैच्' ( १-१-१ ) इति।

न च वृद्धिसंज्ञायां प्रत्याहारसूत्रस्य ग्राहकप्रपञ्चस्य चापेक्षितत्वेऽष्टाध्याय्यामपि प्रथमं प्रत्याहारप्रपञ्चं ग्राहकप्रपञ्चं चाभिधाय 'वृद्धिरादैच्' इति सूत्रं कुतो नोक्तमिति वाच्यम्, 'मङ्गलार्थमादितो वृद्धिशब्दं प्रयुङ्क्ते' इति भाष्येणैव समाहितत्वात्। अत्र 'वृद्धिः', 'आत्', ऐच्' इति पदत्रयं न तु 'आदैच्' इति समाहारद्वन्द्वेन पदद्वयम्, 'द्वन्द्वाच्चुदषहान्तात्समाहारे' ( ५-४-१०६ ) इति टजापत्तेः। न चेतरेतरद्वन्द्वः, द्विवचनापत्तेः। यदि तु 'पाद्दन्मूर्द्धसु' ( ६-२-१९७ ) इत्यत्र 'द्वित्रिभ्यां ष मूर्ध्नः' इत्यनेन ( ५-४-११५ ) षे 'मूर्द्धसु' इति वक्तव्ये 'मूर्द्धसु' इति निर्देशात् समासान्तविधिरनित्य इति ज्ञाप्यत इत्यनित्यत्वाच्च टजित्युच्यते तदा पदद्वयमेव। परन्तु अनित्यत्वस्यागतिकगतित्वान्नेदं युक्तम्। न चात्र पदत्रयत्वेऽत्रैव भाष्ये 'कृतमनयोः साधुत्वम्' इति द्विवचनासङ्गतिः, 'अनयोः' इत्यस्य उद्देश्यदल-विधेयदलयोरित्यर्थेनादोषात्। नन्वेवमपि आत्पदस्य षण्णामाकाराणाम्, 'ऐच्'

इत्यस्य वर्णद्वयबोधकत्वेनैकवचनासङ्गतिः, आदित्येकवचनस्य जात्यभिप्रायेण, ऐजित्येकवचनस्य पक्ष-शब्देनेव तिरोहितावयवभेदसमूहाभिप्रायेण च विवक्षितत्वात्। सर्वत्र प्रत्याहारस्थले एवमेवैकवचनं बोध्यम्। यत्र सूद्भूतावयवविवक्षा तत्र बहुवचनं भवत्येव। यथा 'झलां जशोऽन्ते' (८-२-३९) इत्यादौ। अत्र वृद्धिपदस्य स्वरूपार्थकत्वमेव, न त्वादैजार्थकत्वम्, 'घटो घट' इतिवत् 'आदैच् आदैच्' इत्यसङ्गतबोधापत्तेः, वृद्धिः संज्ञा, आदैच् संज्ञी इतीष्टार्थलाभानापत्तेश्च। आत्पदबोध्याः षडाकाराः, ऐच्पदबोध्यौ ऐकारौकारौ च द्विमात्रकाः संज्ञिनो बोध्याः, आतस्तपरत्वादैचस्तात्परत्वात्। तेन 'कृष्णैकत्वम्' इत्यादौ स्थानिनस्त्रिमात्रकत्वेऽपि द्विमात्रिका एव वृद्धिः, त्रिमात्रचतुर्मात्रकाणां वृद्धि-संज्ञकत्वाभावात्। 'ऐच्' इत्यत्र कुत्वन्तु न, 'छन्दोवत्सूत्राणि भवन्ति' इत्यत्रत्यसूत्रभाष्येण सूत्रेषु—छन्दस्त्वातिदेशेन 'अयस्मयादीनि छन्दसि' (१—४—२०) इत्यनेन भत्वात्। वस्तुतस्तु अत एव निर्देशात् सुप्सकारपरत्वाभावे प्रत्याहारघटकस्य चस्य कुत्वं नेति ज्ञाप्यते। अत एव 'उपदेशेऽजनुनासिकः', 'अजादेर्द्वितीयस्य' (६—१—२) 'इजादेः सनुमः' (८—४—३२) इत्यादिसौत्रनिर्देशाः, 'अज्भिरव्यवहिताः' 'अनुनासिकोऽजित्संज्ञः' 'अजादीनाम्' इत्यादयो दीक्षितोक्ताः संगच्छन्ते। सकारपरत्वाभावे इत्युक्तथा 'अचोऽश्नु' इति भाष्ये कुत्वस्य नासङ्गतिः। सुप्सकारेत्युक्त्या 'अच्सन्धिः' इत्यत्र कुत्वं न। अत्र आत्पदबोध्याकारसमुदायस्य न संज्ञा, तादृशलक्ष्याभावात्संज्ञावैयर्थ्या-पत्तेः, 'प्रस्थेऽवृद्धम्' इति (६-२-८७) पर्युदासात् प्राक् तद्बाधनाय कृतस्य 'मालादीनाञ्च' (६-२-८८) इत्यस्य वैयर्थ्यापत्तेश्च। किन्तु आदैच्पदबोध्यप्रत्येकवर्णस्यैव वृद्धिसंज्ञा। 'अनाकृतिः संज्ञा, आकृति-मन्तः संज्ञिनः' इति भाष्ये अनाकृतिरित्यस्य भेदरहिता इत्यर्थः। एका इति यावत्। आकृतिमन्त इत्यस्य भेदवन्त इत्यर्थः। अनेके इत्यर्थः। तथा चैकशब्दत्वाद् वृद्धिः संज्ञा। बहुत्वादादैचः संज्ञिनः, लघ्वर्थं हि संज्ञाकरणम्, इत्यादिना वृद्धेः संज्ञात्वम्, आदैचां संज्ञित्वं च व्यवस्थाप्य पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञा। कुत एतत् सतो हि कार्यिणः कार्येण भवितव्यम्। इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते। कथं 'वृद्धिरादैज्' इति। एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति। सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञा। 'अदेङ् गुणः' इति यथा' इत्युक्तं भाष्ये। एतेन 'आदैज् वृद्धिः' इत्येव सूत्रयितुमुचितमिति शङ्का निरस्ता।

यदि 'गुणा अभेदकाः'=इतरव्यावर्तका न भवन्ति। अत एव लोके मुण्डेनापि चौर्ये कृते संजातकेशोऽपि प्रत्यभिज्ञाय निगृह्यते। अत एव 'अनन्तुदात्तः' इति उदात्तग्रहणं कृतम्। अन्यथा उदात्तगुणकमेवानन्तमुच्चारयेत्। तथा चानणि तपरकरणं व्यर्थमेव। वृद्धिरादैजित्यत्र तपर-करणमैजर्थमेव न पूर्वार्थम्। अज्ञातशक्तिज्ञापकत्वेन विधित्वमेवास्य। यत्तु पुरुषव्यापारात्प्रागवाचकोऽपि शब्दः संज्ञारूपेण पुरुषव्यापारेण कश्चिदपि वाचकः क्रियते। एतत्फलित एव 'सर्वे सर्वार्थवाचका' इति। तथा च वृद्धिशब्दस्यादैज्वाच्यता सिद्धैवेति नियमार्थं वृद्धिरादैजिति तन्न, सर्वार्थवाचकत्वज्ञानेऽपि आदै-ज्वाचकत्वेन सूत्रात्प्राग् ज्ञानाभावेन नियमत्वानुपपत्तेः। वृद्धिप्रदेशाः—'वृद्धिरेचि' इत्यादयः। 'अदेङ्गुणः' (१-१-२) भाष्यकाराद्याचार्योपदेशसिद्धसंज्ञाप्रस्तावात्संज्ञेति लभ्यते। अत्र तपरकरणं पूर्वार्थमुत्त-रार्थं च। तेन ह्रस्वस्यैवाकारस्य दीर्घयोरेव एकारैकारयोर्गुणसंज्ञा।

तथा च 'तरति' इत्यादिषु स्थानिनो दीर्घत्वेऽपि ह्रस्वाकाररूप एव गुणः। न आकारो गुण-संज्ञकत्वाभावात्। नच तपरत्वाभावेऽपि वृद्धिसंज्ञया गुणसंज्ञाया निरवकाशत्वाद् बाधादाकारो न स्यादिति वाच्यम्, आकडारादन्यत्र संज्ञासु बाध्यबाधकभावाभावात्। अत एव 'राजभ्याम्' इत्यादौ प्रातिपदिकपदाङ्गसंज्ञादीनां समावेशः सिध्यति। तात्परत्वादेङामपि दीर्घाणामेव गुणसंज्ञा। अत एव 'रथेशः' 'रमेशः' 'गङ्गोदकम्' 'रम्भोरुः' इत्यादौ त्रिमात्रचतुर्मात्रा एङ आदेशा न। अत्र 'अदेङ्' इति समाहारद्वन्द्वः, पदद्वयं वा। वस्तुतस्तु पूर्वसूत्रे समासाभावेऽत्रापि स एवोचितः।

अदेङ्गुणः [ १-१-२ ]

अदेङ् च गुणसंज्ञः स्यात् ।

भूवादयो धातवः । [ १-३-१ ]

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ।

---

गुणपदं गुण्यन्ते=आमन्त्र्यन्ते प्राणिनोऽनेनेति गुणः । 'गुण आमन्त्रणे' इति ( चु० प० ५२ ) इत्यतोऽदन्तात्स्वार्थे णिचि 'एरच्' इति करणेऽच्प्रत्ययः । इदं योगरूढम्, केवलरूढञ्च, अनेकार्थकत्वात् । तथा हि—

गुणो मौर्व्यामप्रधाने, रूपादौ सूद इन्द्रिये ।
त्यागे शौर्यादिसंध्यादि - सत्त्वाद्यावृत्तिरज्जुषु ॥
शुक्लादावपि वद्याञ्च, इति मेदिनी ।

न च गुणशब्दस्य अदेङर्थकत्वानुक्तेः कोशस्य न्यूनता, प्रायो लौकिकार्थप्रदर्शने एव कोषव्यापारात् ।

'अदेङ्गुणः' इति सूत्रानन्तरं बहुसंज्ञोपयोगिनीं सन्धिकार्योपयोगिनीं धातुसंज्ञामाह—'भूवादयो धातवः' ( १-३-१ ) इति । भाष्ये 'भूवादयः' इति पदं पक्षत्रयेण व्याख्यातम् । तत्र भूश्च वाश्च भूवौ आदिश्चादिश्चादी । भूवौ आदी येषां ते भूवादयः । अत्र भूशब्देन सम्बद्ध आदिशब्दो व्यवस्थावाची, अवयववाचीति यावत् । वाशब्देन सम्बद्धः प्रकारवाची, सदृशवाचीति यावत् । तदुक्तं भाष्ये—'भू इत्यत्र य आदिशब्दः स व्यवस्थायां वर्तते । वा इत्यत्र य आदिशब्दः स प्रकारे वर्तते' इति । नचैवं प्रत्येकमन्वये द्वन्द्वानुपपत्तिः, भूवासमुदायस्य आदिसमुदायेऽन्वयं स्वविशिष्टत्वसम्बन्धेन कृत्वा समासे पुनर्यथासंख्यसूत्रसामर्थ्येन यथासंख्यमन्वयः । यथासंख्येनान्वयस्थले द्वन्द्वस्योकर्तव्यैवोपपाद्यतया पुनर्यथासंख्येनान्वयाभावे यथासंख्यसूत्रवैयर्थ्यापत्तिस्तादृशद्वन्द्वघटितसूत्रवैयर्थ्यापत्तिश्च स्पष्टैव । सम्बन्धघटकवैशिष्ट्यञ्च प्रकृते स्वघटकाभिन्नघटितत्वस्वघटकप्रतियोगिकसादृश्यवद्घटितत्वोभयसम्बन्धेन । स्वम्=भूवासमुदायस्तद्घटकाभिन्न आदिस्तद्घटितत्वम्, स्वघटको वाशब्दस्तत्प्रतियोगिकसादृश्यवादिस्तद्घटितमपि आदिसमुदाये सुलभम् । तथा च एकधर्मावच्छिन्नस्यैकसम्बन्धेनैकधर्मावच्छिन्नेऽन्वयरूपसाहित्यस्य सत्त्वेन साहित्ये एव द्वन्द्व इति नियमस्यापि न व्यभिचारः ।

पुनर्यथासंख्येनान्वये वादय इत्यस्याभेदेन भ्वादय इत्यत्रान्वये वासदृशाभिन्ना भ्वादयो धातुसंज्ञका इत्यर्थः सिद्ध्यति । तत्र सादृश्यस्य साधारणधर्मसाकाङ्क्षत्वेन लक्ष्यानुरोधात्, क्रियावचनो धातुरित्यादिभाष्यादिप्रामाण्याच्च क्रियावाचित्वेनैव सादृश्यमिति क्रियावाचिनो भ्वादय इति फलितार्थमाह—क्रियावाचिन इति । यदि तु एकेन समस्तेन वा पदेन उपस्थितयोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयोऽनुपपन्नः । अत एव काव्ये विधेयाविमर्शो दोष इत्युच्यते तदा तन्त्रेण, भूवादय इत्यस्यावृत्त्या वा पदद्वयं विधायोक्तार्थः साधनीयः ।

नन्वेवमपि क्रियावाचित्वेन सादृश्यमसङ्गतम्, सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मेणैव सादृश्यमिति नियमः । अन्यथा कतिचिद्ब्राह्मणगतधनिकत्वमादाय 'ब्राह्मणवत् क्षत्रियो धनिकः' प्रयोगापत्तेः । व्यापकधर्मेण सादृश्ये तु ब्राह्मणत्वव्यापकत्वं धनिकत्वे नास्तीति न तादृशप्रयोगः । एवं प्रकृते वात्वव्यापकत्वं क्रियावाचित्वे नास्ति, अव्ययवाशब्दे वात्वसत्त्वेऽपि क्रियावाचित्वाभावात् । साध्यरूपक्रियावाचित्वं धातोरेवासाधारणो धर्म इति चेन्न, भूवाशब्दयोः परस्परसाहचर्येण क्रियावाचिन इत्यर्थलाभात् । तथाहि—वाशब्दोऽपृथ्वीवाचीति तत्साहचर्याद् भूशब्दोऽपि अपृथ्वीवाच्येवात्र । अपृथ्वीवाची भूशब्दश्चानव्ययमिति वाशब्दोऽपि अनव्ययमेव अनव्ययवाशब्दश्च क्रियावाचीति भ्वादयोऽपि क्रियावाचिन एव गृह्यन्ते इति क्रियावाचिन इत्यस्य लाभः । इत्ययमेव पक्षः सिद्धान्तरूपेण कौमुद्यामुक्तः । इत्येकः पक्षः । अत्र क्रियावाचिनो भ्वादय इत्यत्र भ्वादिपदेन धातुपाठस्थभूशब्दादारभ्य कण्ड्वादिस्थसंवरान्ता २०१८ ग्रहीतव्याः । न त्वदादितः पूर्वे एव भ्वादयः, चुराद्यन्ता एव वा, अदादीनां कण्ड्वादी-

नाम्न धातुत्वानापत्तेः। किञ्च भ्वादिगणपठिता धातुसंज्ञका इत्यपि नार्थः, गणे पठितानां स्वरूपबोधकत्वेन क्रियावाचकत्वाभावात्, लक्ष्यस्थस्य गणस्थत्वाभावेन धातुत्वानापत्तेश्च। किन्तु भ्वादिगणपठितवृत्त्यानुपूर्वीमन्तः क्रियावाचिनो धातुसंज्ञका इत्येवार्थः। गणेऽपठितानां सौत्राणां शिष्टप्रयोगे उपलब्धानाञ्च भ्वादिषु पाठं प्रकल्प्य धातुसंज्ञा विधेया। भूरादिर्येषां ते भूवादयः। न च यणि भ्वादय इति वाच्यम्, मङ्गलार्थं वकारागमनिपातनात्। न च वकारेण मङ्गलं दुर्वचम्, 'मङ्गलार्थं वकारमागमं प्रयुङ्क्ते' इति भाष्यस्यैव मानत्वात्। तच्च भाष्यं वकारागमेऽविकलभूशब्दश्रवणेन व्याहृतिस्मारकतया मङ्गलप्रयोजकता तस्येत्यभिप्रायकम्। अत्र पक्षे क्रियावाचिन इत्यस्य लाभस्तु पूर्वाचार्यैः क्रियावाचिनां धातुसंज्ञा कृता, तस्या महासंज्ञाया आश्रयणस्य उद्देश्यदले क्रियावाचित्वनिवेशतात्पर्यकत्वादिति द्वितीयः पक्षः।

यद्वा भुवम्=जायमानमर्थं ये वदन्ति ते भूवादयः। वदेरौणादिकः कर्तरि 'वसिवपि' (उ. ४ पा. १२५ सू.) इति इञ्। क्रियावाचिनो धातव इत्यर्थः। धातुत्वे सति क्रियावाचित्वं क्रियावाचित्वे सति धातुत्वमित्यन्योन्याश्रयस्तु न, शब्दानां नित्यत्वात्। इति तृतीयः पक्षः। तदुक्तं भाष्ये 'नेदमादिग्रहणम्। वदेरयमौणादिक इञ् कर्तृसाधनः। भुवं वदन्तीति भूवादय इति' इति।

यद्वा भवनं भूः, वा आदिर्येषां ते, वा गतीत्यारभ्य कण्ड्वाद्यन्ताः वादयः। तथा वा गतीत्यस्यादयो भ्वादयः वापर्य्यन्ताः। वादयश्च वादयश्च वादयः, बहुव्रीहितत्पुरुषयोरेकशेषः। भुवो वादयो भूवादयः। वाच्यवाचकभावः षष्ठ्यर्थः। क्रियावाचका भूप्रभृतयो वाप्रभृतयश्च धातुसंज्ञका इति चतुर्थः पक्षः।

क्रियावाचिन इत्यस्याभावे भूप्रभृतयो धातुसंज्ञका इत्यर्थे 'या' इति धातुर्या इत्याद्यन्तः। वा इति धातुर्वा इति निपातः। नु इति धातुर्नु इति प्रत्ययश्च निपातश्च। दिव् इति धातुर्दिव् इति प्रातिपदिकम्।' एषु धातुत्वे तव्यदादय आशङ्क्य साधनाभावात्परिहृताः। 'आतो धातोः' इति लोपश्च 'आतोऽनापः' इति न्यासेन परिहृतः।' 'त्रस्नू' इत्यत्र धातुसंज्ञायामुवङादेशः सूत्रे श्नुग्रहणसामर्थ्यात् प्रत्ययस्योवङादेशो न भवति' इति ज्ञापनेन वारितः।

'दिव्' इत्यस्य धातुसंज्ञायां स्वाद्युत्पत्तिर्न स्यादित्युक्तं भाष्ये। नच 'दिव औत्' इत्यारम्भसामर्थ्यात्स्वाद्युत्पत्तिः, अनिष्टे 'अक्षद्यूः' इत्यत्र प्राप्नोति इष्टं च न सिध्यति' इति दूषणमुक्तं भाष्ये।

क्रिया नाम—साध्यभूतो व्यापारः। साध्यत्वञ्च व्यापारे व्यापारान्तरानाकाङ्क्षत्वम्। 'पचति' इत्युक्ते कः पचति, किं पचति, केन पचति, क्व पचति, इत्येवं कारकविषयिणी आकाङ्क्षा जायते, परन्तु क्रियाविषयिणी आकाङ्क्षा न जायते। यया क्रियया क्रियाविषयिणी आकाङ्क्षा न भवति सा साध्या क्रिया तद्वाचको धातुरेव नान्यः। घञादिकृत्प्रत्ययोपस्थाप्यक्रियया 'पाकः' इत्यादौ भवति, भविष्यति वेत्यादिक्रियाविषयिणी आकाङ्क्षा जायते इति न सा साध्यरूपा। एवं यत्र क्रियायां कारकान्वयः तादृशक्रियावाचिन एव भ्वादयो धातुसंज्ञकाः। वेत्यव्ययस्य विकल्पक्रियाबोधकत्वेऽपि न धातुत्वम्, तत्र कारकाणामन्वयाभावेन साध्यक्रियावाचकत्वाभावात्।

यद्यपि धातुशब्दः—

> सुवर्णरूप्यताम्राणि हरितालं मनःशिला।
> गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः॥
> गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः।
> श्लेष्माश्रिरसरक्तादि महाभूतानि तद्गुणः।
> इन्द्रियाण्यपरमविकृतिः शब्दयोनिश्च धातवः॥

लोके एष्वर्थेषु धातुशब्दः प्रसिद्धः, तथापि आर्षपरम्परया संकेतानुरोधेन पाणिनिना भ्वादिषु संकेतितः।

प्राग्रीश्वरान्निपाताः । [ १-४-५६ ]

इत्यधिकृत्य ।

चादयोऽसत्त्वे । [ १-४-५७ ]

अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ।

'प्राग्रीश्वरान्निपाताः' ( १-४-५६ ) प्राचि देशे काले वा 'प्राक्' सप्तम्यन्तात् प्राक्शब्दात् 'दिक्शब्देभ्यः' ( ५-३-२७ ) इति अस्तातिप्रत्यये 'अञ्चेर्लुक्' ( ५-३-३० ) इति लुकि तद्धितान्तत्वात्प्रातिपदिकत्वे 'तद्धितश्चासर्व' ( १-१-३८ ) इत्यव्ययसंज्ञायां लुक्। 'रीश्वरात्' इति पञ्चम्यनुपपत्त्या 'प्राग्' इत्यध्याहारेण सिद्धे पुनः प्राग्ग्रहणमधिकारार्थम् । 'प्राङ् निपाताः' इति पदद्वयमधिक्रियते । तेन प्राङ्निपाताः सन्त उपसर्गसंज्ञकाः, गतिसंज्ञका इत्येवमर्थेन निपातसंज्ञाया उपजीव्यतया उत्तरोत्तरसंज्ञया न बाधः, किन्तु समावेश एव । अन्यथा आकडारीयत्वाद् बाधः स्यात् । निपातपदग्रहणं आद्यजन्तम् । अनेकेष्वर्थेषु निपातोऽस्ति एषामिति घञन्तनिपातशब्दादचि निपाता इति । एतत्फलितमेव 'निपाताश्चानेकार्थकाः' इति । नच 'निपाताः' एतावन्मात्रस्याधिकारेऽपि तत्सामर्थ्याद् बाधो न स्यादिति वाच्यम्, 'निपाताः' इत्यधिकारस्य पर्य्यायेण संज्ञायामपि चारितार्थ्यसम्भवात् । 'पराक्' इत्यादेस्तु नाध्याहारः, तथा सति रीश्वरात्परस्मिन्नधिकारे 'चादयोऽसत्त्वे' (१-४-५७) 'प्रादयः' ( १-४-५८ ) इत्यनयोर्विधेयाभावेन वैयर्थ्यापत्तेः । प्रागित्यस्याध्याहारे तु निपातपदस्यैव विधेयताप्रयोजकतया न वैयर्थ्यम् । वस्तुतस्तु 'अधिरीश्वरे' इत्यतः परस्मिन् 'विभाषा कृञि' इत्यत्रापि निपातपदसम्बन्धार्थम्, कारकविभक्तित्वात् रीश्वरादिति ल्यब्लोपे पञ्चमी । रीश्वरपदघटितसूत्रमभिव्याप्येत्यर्थः । 'विभाषा कृञि' इत्यत्रापि 'अधिरीश्वरे' इत्यनुवृत्त्या रीश्वरपदघटितत्वान्निपातसंज्ञा सिध्यति । एतेन 'प्रत्ययः' इत्यादिवदवधिनिर्देशाभावेऽप्यधिकारस्य तावत्पर्य्यन्तत्वे सिद्धे अवधिनिर्देशो व्यर्थ इत्यपास्तम् , अवधिनिर्देशाभावे पदद्वयाधिकारासिद्धेः । ननु 'रीश्वर' पदस्यानर्थक्येन प्रातिपदिकत्वाभावात्पञ्चम्यनापत्तिरिति चेन्न, रीश्वरेत्यस्य भेदानुकरणत्वेन स्वरूपार्थकत्वेनार्थवत्त्वाक्षतेः ।

ननु 'प्रागीश्वरात्' इत्येवोच्यतां रेफविशिष्टोच्चारणं व्यर्थमिति चेन्न, 'अधिरीश्वरे' (१-४-९७) इति विहाय 'ईश्वरे तोसुन्कसुनौ' ( ३-४-१३ ) इत्येतत्पर्य्यन्तमप्यधिकारापत्तेः । नचैवं 'कृन्मेजन्तः' ( १-१-३९ ) इत्यस्य वैयर्थ्यापत्तिर्निपातसंज्ञयैवाव्ययत्वसिद्धेरिति वाच्यम्, 'कृत्यार्थे तवैकेन्केन्यत्वनः' ( ३-४-१४ ) इत्येतदर्थं तस्य चारितार्थ्यात् । नच 'ईश्वरे तोसुन्' इत्यस्यावधित्वे 'अव्ययीभावश्च' ( १-१-४१ ) इत्यस्य वैयर्थ्यम्, निपातत्वेनैवाव्ययत्वसिद्धेरिति वाच्यम्, तदितरसमासस्य वारणाय समासस्य निपातत्वञ्चेत्तर्हि अव्ययीभावस्यैवेति नियमार्थं तच्चारितार्थ्यात् । नच प्रत्यासन्नत्वात्प्रागीश्वरादिति न्यासेऽपि 'अधिरीश्वरे' इत्यस्यैवावधित्वम् । अत एव 'आवनान्तादा उदकान्तात् प्रियं पान्थमनुव्रजेत्' इति । 'य एव प्रथमो वनान्त उदकान्तश्च ततोऽनुव्रजन्ति' इत्युक्तं भाष्य इति वाच्यम्, प्रत्यासत्तिन्यायस्यापि व्यभिचारदर्शनात् । तदुक्तं भाष्ये 'लौकिकं चातिवर्तते । द्वितीयं च वनान्तमुदकान्तञ्चानुव्रजन्ति' इति । तस्माद्रेफाधिकस्यावधित्वं पाणिनिना कृतम् ।

अधिकृत्येति—नन्वत्र क्त्वाप्रत्ययोऽसङ्गतः, पूर्वकालिकक्रियाबोधकादेव क्त्वाविधानेनात्रोत्तरकालिकक्रियाया अभावेन अधिकारक्रियायां पूर्वकालिकत्वाभावादिति चेन्न, निपाता इत्यधिकृत्य 'चादयोऽसत्त्वे' इत्याह पाणिनिरिति तदर्थात् ।

चादय इति—च आदिर्येषां ते चादय इति । यद्यपि अत्रान्यपदार्थश्च प्रथमावयवकसमूहो विवक्षितः । तथा च आदिर्यस्येति वक्तुमुचितं तथाप्युद्भूतावयवकसमूहस्यात्र विवक्षितत्वेन बहुवचनस्यापि सङ्गतत्वमेव ।

चादिगणश्चाव्ययप्रकरणे वक्ष्यते ।

असत्त्व इति—सीदन्ति = निविशन्ते विशेषणभावेन जातिगुणक्रिया यत्र इति विग्रहे 'ताभ्यामन्यत्रोणादयः' ( ३—४—७५ ) इत्यनेनाधिकरणे सदेरौणादिकस्त्वप्रत्ययः। द्रव्ये एव विशेषणतया जात्यादयो निविशन्त इति सत्त्वं द्रव्यम्। नैयायिकोक्तं क्षित्यादिरूपं द्रव्यं नात्र विवक्षितं किन्तु 'सर्वनामपरामर्शयोग्यं द्रव्यम्'। यो ह्यर्थः यत्तदादिसर्वनाम्ना बोध्यते तदेव द्रव्यम्। तथा च 'घटोऽस्ति, तमानय' अत्र घटो द्रव्यम्। 'घटत्वमस्ति, तत्पश्य' इत्यत्र घटत्वं द्रव्यम्। पाचक इत्यत्र क्रियाश्रयो द्रव्यम्। 'क्रिया अस्ति' अत्र क्रिया द्रव्यम्। शुक्लो गुणोऽपि द्रव्यम्। तथा च मुख्यविशेष्यतया उपस्थितं द्रव्यमित्युच्यते वैयाकरणैः, स्वनिकाये शास्त्रीयकार्यनिर्वाहाय, तथैव संकेतितत्वात्। तदुक्तं भर्तृहरिणा—

"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥" इति।

भेद्यत्वेन = विशेष्यत्वेन सिद्धरूपो योऽर्थः स्वार्थेन = विशेष्यतया विवक्षितस्तद् द्रव्यमित्यर्थः। अन्यत्रापि—

"स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदुच्यते"। इति 'यदा तु सतो भावः सत्त्वमिति तदा साध्यमानतया क्रियारूपापन्ना सत्ता सत्त्वशब्देनोच्यते। एवं च प्रकृते यदि सत्त्वशब्देन सत्तोच्यते तदा प्रतिषेधोऽनर्थकः स्यात्। नहि चादिषु सत्त्ववाची कश्चिच्छब्दोऽस्ति यदर्थो निषेधः स्यात्। प्रत्युत 'पशुर्वै पुरुषः' इत्यत्र पशुशब्दस्य निपातसंज्ञा स्यात्, सत्तावाचकत्वाभावात्।

यद्यपि 'असत्त्वे' इत्यत्र पर्युदासत्वे नञो लाघवम्, 'सत्त्वभिन्नेऽर्थे चादयो निपाताः' इत्येकस्यैव वाक्यस्य सत्त्वात्। प्रसज्यप्रतिषेधे तु वाक्यद्वयमसमर्थसमासश्चेति गौरवम्। तथाहि— 'चादयः' इत्येकम्। चादयो निपातसंज्ञका भवन्ति। 'असत्त्वे' इत्यपरम्। निपाता इत्यनुवर्तते। द्रव्येऽर्थे चादयो निपाता न भवन्तीति तथापि पर्युदासे 'विप्रघटकप्रशब्दस्य 'विशेषेण जनानां मनोरथान् प्राति=पूरयतीति विग्रहे प्रा पूरणे इत्यतः 'आतश्चोपसर्गे' इति कः। तथा च प्रशब्दस्य पूरणकर्तृवाचकतया प्रकृते कर्तुरेव द्रव्यत्वेन केवलाद् द्रव्यात् क्रियाद्रव्यसमुदायस्य भिन्नतया द्रव्यभिन्ने समुदायरूपेऽर्थे वर्तते प्रशब्द इति निपातत्वापत्तिः। निपातत्वे चाव्ययसंज्ञायां तद्विधेः सत्त्वेन विप्रशब्दस्य निपातान्तत्वे 'स्वरादिनिपातमव्ययम्' इत्यव्ययत्वे सुपो लुगापत्तिः, अतस्तद्वारणाय गौरवेऽपि प्रसज्यप्रतिषेध एव न पर्युदासः। तदुक्तं भाष्ये—'क्रियाद्रव्यवचनोऽयं संघातो द्रव्यादन्यश्च' इति। 'अथ प्रसज्यप्रतिषेधः, न दोषो भवति' इति च। वस्तुतस्तु प्रसज्यप्रतिषेधो न युक्तः, वाक्यभेदासमर्थसमासयोः बाधादिगौरवग्रस्तत्वात्। प्रतिषेधपरं भाष्यन्त्वरुचिग्रस्तमेव। अत एवाग्रे भाष्यकृता 'यथा न दोषस्तथाऽस्तु' इत्येवोक्तं न तु 'प्रसज्यप्रतिषेधोऽस्त्विति।' नच पर्युदासे विप्रशब्दे दोषः, विशेष्यतया द्रव्यभिन्नार्थवाचिनश्चादयो निपाता इत्यर्थेनादोषात्। प्रशब्दस्य तु विशेष्यतद्द्रव्यवाचित्वमेवेति न दोषः। यथाकथञ्चिद् द्रव्यभिन्नार्थकस्य निपातत्वे द्रव्यभिन्नं पशुत्वं जातिर्विशेषणतया तद्वाचकतया 'पशुः' इत्यादेर्निपातत्वे 'असत्त्वे' इत्यस्य वैयर्थ्यापत्तिः। ननु द्रव्यभिन्नो योऽर्थस्तस्य मुख्यविशेष्यतयोपस्थापका ये चादयस्ते निपाता इत्यर्थेऽनर्थकचादीनां निपातत्वानापत्तिरिति चेन्न, लिङ्गसंख्यान्वयिताऽवच्छेदकं यद् रूपं तद्रूपेतररूपावच्छिन्नविषयकबोधजनकत्वप्रकारकतात्पर्येणानुच्चरिताश्चादयो निपाता इत्यर्थेनानर्थकानामपि निपातत्वोपपत्तेः। लिङ्गसंख्यान्वयिताऽनवच्छेदकं चपदबोध्यसमुच्चयत्वादि तदितरद्रूपं समुच्चयादिपदबोध्यसमुच्चयत्वादि तदवच्छिन्नविषयकबोधजनकत्वप्रकारकतातात्पर्येणानुच्चरिताः सार्थका निरर्थकाश्च चादय इत्यदोषः। पूर्ववत् 'चादयः' इत्यस्य चादिगणपठितशब्दसदृशानुपूर्वीमन्तो निपाता इत्येवार्थः, चादिगणस्थानामेव निपातत्वे लक्ष्यस्थानां चादिबहिर्भूततया निपातत्वानापत्तेः। एवमेव सर्वत्र गणकार्यस्थलेऽर्थ ऊहनीयः। चादय इति किम्? प्रातरित्यत्र स्वरादिपठितस्य निपातत्वेन 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वं मा भूत्।

प्रादयः । [ १-४-५८ ]

अद्रव्यार्थाः प्रादयस्तथा । उपसर्गाः क्रियायोगे ( १-४-५६ ) गतिश्च ( १-४-६० ) प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः । प्र परा अप सम् अनु अव निस् निर् दुस दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप—एते प्रादयः ।

---

असत्त्वे इति तु 'छागः पशुः' इत्यादौ चादिपठितपशुशब्दसमानानुपूर्वीकत्वेन द्रव्यवाचकपशुशब्दस्य निपातत्ववारणाय । सम्यगर्थकपशुशब्दस्याद्रव्यवाचितया निपातत्वं भवत्येव । यथा 'पशु मन्यमानाः' इत्यत्र सम्यङ्मननशीला इत्यर्थः । सम्यगिति मननक्रियाविशेषणम् ।

अद्रव्यार्था इति—असत्त्वे इत्युनुवर्तनाद् विशेष्यतया द्रव्यभिन्नार्था इत्यर्थः । तेन विप्रघटकप्रशब्दस्य न । तथेति—निपाता इत्यनुवृत्तेर्निपातसंज्ञका इत्यर्थः । प्रादिगणमाह प्र परेति । नच चादिगणान्ते प्रादयः, षष्ठ्यन्तानां चादित्वेनैव निपातसंज्ञा तेषां स्यादिति 'प्रादय' इति सूत्रं व्यर्थमिति वाच्यम्, 'उपसर्गाः क्रियायोगे' इत्यत्र प्रादिमात्रस्यानुवृत्त्यर्थं 'प्रादयः' इत्यस्यावश्यकत्वात् । उपसर्गा इति सूत्रद्वयमिदं लाघवार्थं सह व्याख्यायते । अत्र प्राक् निपातः, प्रादय इति चानुवर्तते । गतिरित्येकवचनञ्च बहुत्वे आर्षम् । 'ऋजवः सन्तु पन्थाः' इतिवत् । तथा च क्रियायोगे प्रादयः प्राङ्निपाताः सन्त उपसर्गसंज्ञका गतिसंज्ञकाश्च स्युरित्यर्थः । 'गतिश्च' इत्यत्र चग्रहणसामर्थ्येन 'आकडारात्' इत्यस्य बाधादुपसर्गगतिसंज्ञयोः समावेशः । तत्फलञ्च 'प्रणीय' इत्यादौ 'उपसर्गादसमासेऽपि' इति णत्वम्, 'कुगतिप्रादयः' इत्यनेन समासश्च । ननु 'क्रियायोगे' इत्यत्र समासोऽनुपपन्नः, क्रियया सह योगे इति विग्रहे क्रियापदार्थस्य सहपदार्थेऽन्वयेन योगेनासामर्थ्यादिति चेन्न, अत एव निपातनात् 'कर्तृकरणे कृता बहुलम्' इत्यत्र बहुलग्रहणाद्वा सामर्थ्याभावेऽपि समासात् । यद्वा प्रादीनां धातुभिः क्रियाकरणकयोगात् करणतृतीयया समासः । 'क्रियायोगे' क्रियाकरणयोगे इत्यर्थः ।

क्रियायोगे इति किम् ? विगताः सेचका अस्मादिति विसेचकः, अत्र 'उपसर्गात्सुनोति' (८-३-६५ ) षत्वं मा भूत् । प्रगता नायका अस्मादिति प्रनायकः । अत्र 'उपसर्गादसमासे' ( ८-४-१४ ) इति णत्वं मा भूत् । ननु सत्यपि क्रियायोगग्रहणे गमिक्रियायोगमादायोपसर्गत्वे षत्वणत्वे दुर्वारे इति चेन्न, 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति सिद्धान्तात् । अयम्भावः—सूत्रे 'क्रियया' इत्येव वक्तव्ये 'स्तोः श्चुना' इतिवद् 'योगे' इत्यध्याहारेण उक्तार्थलाभे सूत्रस्थं योगपदं सामर्थ्यात् अर्शआद्यजन्तं प्राद्यर्थान्वयिधात्वर्थपरं विषयसप्तम्यन्तम् । तथाच क्रियया योगे प्रादयः स्वार्थान्वयिक्रियाविषये स्वार्थान्वयिक्रियावाचकं प्रति उपसर्गसंज्ञकाः । यद्वा स्वार्थक्रियायुक्ताः प्रादयस्तं धातुं प्रत्येव गत्युपसर्गसंज्ञका इति यावत् । 'उपसर्गात्सुनोति' इत्यादीनाञ्च प्रत्यासत्त्या सुनोत्याद्यर्थान्वय्यर्थकोपसर्गात्परेषां सुनोत्यादीनां सस्य षत्वमित्यर्थेन 'विसेचकः' इत्यत्र न षत्वम् । गमिं प्रत्युपसर्गत्वेऽपि सिचिं प्रत्यनुपसर्गत्वात् । एवं णत्वोपदेशधात्वर्थान्वय्यर्थबोधकस्तस्मादुपसर्गात्परस्य तद्धातुघटकस्य तस्य णत्वमित्यर्थेन 'प्रनायकः' इत्यत्र न णत्वम् ।

उपसर्गा इति उप=समीपे सृज्यन्ते=सम्बध्यन्ते इति उपसर्गाः । 'अकर्तरि च कारके' (३-३-१९) इति-कर्मणि घञि साधु । अत्र भाष्ये 'मरुच्छब्दस्योपसंख्यानम्' इत्युक्तम् । अयम्भावः—संख्यायतेऽनेनेति संख्यानम् = सूत्रम् । तस्य समीपे उपसंख्यानम् । सूत्रसमीपे 'मरुत्' इति वक्तव्यम् । निपात इत्यनुवर्तते । तेन 'मरुता दत्तः' इत्यर्थे 'अच उपसर्गात्' ( ७-४-४७ ) इति तादेशे 'मरुत्तः' इति सिध्यति । 'मरुत्तः' इति मध्योदात्त इति मनोरमाकारः । तत्र प्रमाणन्तु 'अस्मायामेधा' ( ५-२-१२१ ) इति सूत्रे 'पर्वमरुद्भ्यां तप्' इति मत्वर्थे आभ्यां तप् । 'मरुत्तः' इति । मरुच्छब्दश्च म्रियते मारयति वा इत्यर्थे 'मृग्रोरुतिः' (उ. १ पा० ९४ सू.) इति उत्प्रत्ययेऽन्तोदात्तः । ततश्च मरुता दत्तः 'मरुत्तः' मरुदित्यस्योपसर्गत्वे तत्सामर्थ्यादजन्तत्वाभावेऽपि अचः उपसर्गादितत्वे मरुत्त इति संसाध्य भाष्यकृता वार्तिके मरुद्ग्रहणं प्रत्याख्यातम् । प्रत्याख्यानरीत्या मरुत्त इति मध्योदात्तः । तपि

## न वेति विभाषा। [ १-१-४४ ]

निषेधविकल्पयोर्विभाषा संज्ञा स्यात्।

---

च मध्योदात्त इत्यारम्भप्रत्याख्यानयोः फलाभेदः। न चोपसर्गसंज्ञया सह निपातत्वे प्रत्याख्यानपक्षे मरुत्त इति 'निपाता आद्युदात्ताः' इत्याद्युदात्तमरुच्छब्देन समासे 'तृतीया कर्मणि' (६-२-४८) इति पूर्वपद-प्रकृतिस्वरे आद्युदात्तमरुत्त इति। तपि च मध्योदात्त इति फलभेदवारणाय वार्तिके तन् प्रत्यय एवेति आद्युदात्त एवेति तपः पित्त्वं चिन्त्यमिति काशिका, नागेशः—अदन्तश्चेति वाच्यम्, मरुच्छब्दस्य निपा-तत्वेऽव्ययत्वापत्तेः ततः सुपो लुगापत्तेः। नच मरुत्त उपसर्गसंज्ञा निपातसंज्ञा च तत्त्वविषय एवेति न निपातत्वादि। अत एव न सुपो लुगिति वाच्यम्, तथा सति वार्तिके 'तन्' इत्येव पाठ इति शेखरोक्त एव ज्यायान्। संज्ञायास्तत्त्वविषयकत्वस्य मरुच्छब्दे उपपदे क्विप्रत्ययस्याङ्प्रत्ययादेश्च वारणाय सर्वमते एवावश्यकतया निपातादिसंज्ञायामपि दोषाभावेन तद्बाधे प्रमाणाभावः।

गतिश्चेति पृथक् सूत्रन्तु उत्तरार्थम्। गतिसंज्ञैवोत्तरत्र यथा स्यादुपसर्गसंज्ञा मा भूत्। गम्यते-इति गतिः। 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति क्तिच्। न च क्तिचि 'न क्तिचि दीर्घश्च' (६-४-३९) इति निषेधान्मलोपो न स्यात्, अत एव निर्देशान्मलोपनिपातनात्। 'स्त्रियां क्तिन्' (३-३-९४) इति क्तिन् तु न, 'गतिरनन्तरः' इति सूत्रे, 'अनन्तरो गतिः' इति वृत्तौ च पुंलिङ्गनिर्देशासङ्गतेः। प्रादि-गणमाह—प्रपरेति—गणपठिता ये प्रादिशब्दास्ते लक्ष्यस्थप्रादीनामभेदानुकरणभूताः। अभेदानुकरण-पक्षे च अनुकरणस्य वृत्त्या अर्थबोधकत्वाभावान्न स्वाद्युत्पत्तिः। अनुकरणानां साधुत्वं तु 'लृकारोपदे-शोऽनुकरणार्थः' इत्यादिभाष्यात् 'अव्यक्तानुकरणस्य' इत्यादिसूत्रेषु अनुकरणस्योद्देश्यतयोपादानात्। न हि सूत्रेऽसाधूनामुद्देश्यत्वम्, गगर्यांद्यपभ्रंशानामपि प्रातिपदिकत्वाद्यापत्तेः।

रेफान्तयोर्निर्दुरोः पाठस्तु 'उपसर्गस्यायतौ' (८—२—१९) इति लत्वेन 'निलयते' 'दुलयते' इत्यादिषु लत्वाद्यर्थम्। सान्तयोस्तु पाठः 'निरयते' 'दुरयते' इति सिद्ध्यर्थः। अत्र लत्वं तु न, रत्वस्यासिद्धत्वात्। 'निर् दुर्' इति रेफान्तस्य पाठे प्रमाणम्—'निरः कुषः' (७-२-४६) इति। सान्तयोस्तयोः पाठे मानन्तु 'निसस्तपतावनासेवने' (८--२--१०२) इति। निष्कृत्य, दुष्कृत्य, इत्युदाहृत्य 'इदुदुपधस्य सकारस्य यो विसर्जनीयः' इति भाष्यञ्च।

'न वेति विभाषा इति' न वाशब्दो निषेधमात्रवाची एकनिपातोऽप्यस्ति। यथा 'भवता ग्रामो गन्तव्यो न वा' इति। 'नेति गम्यते' इति। परन्तु सोऽत्र न गृह्यते निषेधमात्रस्य विभाषा-संज्ञात्वे 'विभाषा दिक्समासे' (१-१-२८) इत्यतो निषेधार्थकविभाषाग्रहणानुवृत्त्या सिद्धे 'न बहुव्रीहौ' (१-१-२९) इत्यत्र नञ्ग्रहणस्य वैयर्थ्यापत्तेः, सर्वत्र विभाषापदघटितसूत्रे 'न' इत्येव वक्तव्ये संज्ञाकरणस्य वैयर्थ्यापत्तेः, लघ्वर्थं संज्ञाकरणमिति भाष्यविरोधाच्च नशब्दापेक्षया विभाषाकरणे गौरवात्। अत एव 'मेध्यः पशुरनड्वान् विभाषितः' इति वेदे केवलविकल्पोऽपि विभाषाशब्दार्थस्तस्यापि नात्र संज्ञा। किन्तु मिलितयोर्निषेधविकल्पयोः संज्ञार्थं नवेति सूत्रम्। तत्र न च वा चेति द्वन्द्वः। नवेति समुदायस्य निपातान्तत्वेनाव्ययत्वाद्विभक्तेर्लुक्। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन इति शब्दस्य प्रत्येकं सम्बन्धात् नेति = निषेधः, वेति = विकल्पश्च द्वयं विभाषा-संज्ञकं भवति इत्यर्थः। ननु व्याकरणशास्त्रे 'स्वं रूपं शब्दस्य' (१-१-६८) इति शास्त्र-बलात् सूत्रस्थाः संज्ञाभिन्नाः शब्दाः स्वरूपबोधका एव। यथा "दाधा घ्वदाप्" इत्यत्र दाधाशब्दौ दाधाबोधकौ। तथा प्रकृते न वाशब्दयोरेव विभाषासंज्ञा स्यात्। तथा च 'विभाषा श्वेः' (६-१-३०) इत्यादौ श्विशब्दादेः 'स्थाने नवा शब्दौ आदेशौ स्याताम्' इत्यर्थः स्यादिति चेन्न, इति ग्रहणसामर्थ्येन नवाशब्दार्थयोर्निषेधविकल्पयोरेव विभाषासंज्ञाया इष्टत्वात्।

अयम्भावः—लोके शब्दा अर्थबोधका एव। यथा 'गामानय' इत्यादौ गोशब्देनार्थो बुध्यते न गोशब्दः, अर्थबोधनार्थं शब्दप्रयोगात्। परन्तु तत्रेतिशब्दप्रयोगे गोशब्देन स्वरूपमेव बुध्यते न

त्वर्थः। यथा 'गवित्ययमाह' इत्यादौ 'गो' इति शब्दमाहेत्येव बोधो न तु तदर्थस्य। तथाचेतिशब्दस्य प्रसिद्धार्थविपर्य्यासकत्वेन शास्त्रे शब्दपरकस्य शब्दस्य इतिबलेनार्थपरकत्वमिति नवाशब्दार्थयोर्निषेध-विकल्पयोरेव विभाषासंज्ञा न शब्दयोरित्याह—निषेधविकल्पयोरिति।

अत्र शास्त्रे त्रिविधा विभाषा—प्राप्तविभाषा एका। यत्र नित्ये कार्य्ये प्राप्ते पुनर्विकल्पेन विधीयते सा प्राप्तविभाषा। यथा 'विभाषा ङिश्योः' (६–४–३६) इति। 'अल्लोपोऽनः' (६–४–३४) इत्यनेन नित्ये लोपे प्राप्ते ङिश्योर्विकल्पेन अनोऽकारस्य लोपो विधीयते। यद्वा 'दिवस्तदर्थस्य' (२–३–५८) इति नित्यषष्ठ्यां प्राप्तायाम् 'विभाषोपसर्गे' (२–३–५९) इति विकल्पेन षष्ठी विधीयते इतीयं प्राप्तविभाषा। यत्रकेनाप्यप्राप्ते कार्य्ये विकल्पेन विधीयते तत्र अप्राप्तविभाषा इत्युच्यते। यथा 'जराया जरसन्यतरस्याम्।' जरसदेशः केनापि न प्राप्तः, सोऽनेन विकल्प्यते इत्यप्राप्तविभाषा।

यत्र अन्येन प्राप्ते कार्य्ये, अप्राप्ते च उभयत्र विकल्पेन विधीयते तत्र प्राप्ताप्राप्तविभाषा इत्युच्यते। यथा—'प्रथम चरमतयाल्पार्ध' (१–१–३३) इति। अत्र 'विभाषा जसि' इत्यतो विभाषा इत्यनुवर्तते। अत्र प्रथमादिषु केनापि सर्वनामसंज्ञा न प्राप्ता, नेमशब्दस्य 'सर्वादीनि' (१–१–२७) इति प्राप्ता। उभयत्र जसि विकल्पेन सर्वनामसंज्ञा विधीयते इति प्राप्ताप्राप्त-विभाषा। यद्वा 'विभाषा श्वेः' (६–१–३०) इति प्राप्ताप्राप्तविभाषा। अनेन श्विधातोर्लिटि यङि च वा सम्प्रसारणं विधीयते। लिटि 'शुशाव, शिश्वाय' इति णलि। शुशुवतुः, शिश्वियतुः, अतुसि उदा-हरणम्। यङि तु 'शोशूयते' इति। तत्र किति लिटि 'वचिस्वपियजादीनां किति' (६–१–१५) इति नित्ये सम्प्रसारणे प्राप्ते, पिति लिटि यङि च कित्वाभावादप्राप्तं सम्प्रसारणं विधीयते इति प्राप्ताप्राप्तविभाषा।

तत्र यदि नवेति सूत्रेण विभाषासंज्ञा न स्यात् तदा 'मेध्यः पशुर्विभाषितः' इति याज्ञिक-प्रयोगे इव केवलविकल्प एवार्थः स्यात्। एवञ्च भावोऽभावश्च द्वयं विकल्पार्थः। तत्र प्राप्तविभाषास्थले भावस्तु प्राप्त एवेति अपूर्वबोध्यस्यैव विधेयत्वाद्भावस्य तु पूर्वशास्त्रेण बोधितत्वाद् विधातुमशक्यतया भावानुवादपूर्वकम् अभाव एव विधेयः स्यात्पक्षे न.भवतीति निषेधमुखेन विकल्पशास्त्रस्य प्रवृत्तिः। यत्र तु कार्य्यं केनापि न प्राप्तं तत्र विकल्पेन विधीयते। तत्र कार्य्याभावस्य पूर्वं ज्ञानसत्त्वेन अपूर्वबोध्यत्वा-भावेन विधेयत्वं न स्यादिति अभावानुवादपूर्वकं भाव एव विधेयः स्यादिति विकल्पेन कार्य्यं भवतीति विधिमुखेन सूत्रस्य प्रवृत्तिः स्यात्। उक्तस्थले निषेधविकल्पयोर्विभाषासंज्ञाया अभावेऽपि लोकवेद-प्रसिद्धकेवलविकल्पार्थकविभाषाशब्देनाप्युक्तरीत्या कार्य्यं स्यादिति नास्य सूत्रस्यावश्यकता, परन्तु प्राप्ताप्राप्तस्थले अप्राप्ते अभावानुवादपूर्वकं भावस्यैव विधेयता इष्यते। प्राप्ते च भावानुवादपूर्वकम भावस्यैवेति। एकेन वाक्येन भावाभावयोर्विधातुमशक्यतया वाक्याऽवृत्तिः कर्तव्या स्यादिति बहुगौरवं स्यात्। तद्गौरववारणाय निषेधविकल्पयोर्विभाषा संज्ञा क्रियते। तथा च यत्र प्राप्तमप्राप्तञ्च कार्य्यं तत्र नवेति श्रुतक्रमानुरोधेन विभाषापदेन पूर्वमुपस्थितनिषेधेन 'विभाषा श्वेः' इत्यनेन पूर्वं किति प्राप्तस्य संप्रसारणस्य निषेधे किति पिति लिटि यङि च सर्वत्र सम्प्रसारणाभावस्य सिद्धतया निषेधोत्तरमुपस्थित-केवलविकल्पेन उक्तस्थले सर्वत्र अभावानुवादपूर्वकसम्प्रसारणसत्ता विधीयते इतीष्टं सिध्यति। अत्र संज्ञाया अभावे केवलविकल्पार्थाश्रयणे यदि विधिमुखेन प्रवृत्त्या सम्प्रसारणं विधीयेत तदा अप्राप्तस्थले एव सूत्रस्य प्रवृत्तिः स्यादिति तत्र विकल्पः स्यात्। यदि तु निषेधमुखेन अभावस्यैव विधानं तदा 'प्राप्तौ सत्यां निषेधः' इति न्यायेन किति लिटि सम्प्रसारणप्राप्तया तत्रैव भावपूर्वकं सम्प्रसारणं न भवतीति निषेधमुखेन सूत्रं प्रवर्तेत नाप्राप्तस्थले। इत्युभयत्रोक्तरीत्या विकल्पेन कार्य्यसिद्धये नवेति संज्ञाया आवश्यकतेति हृदयम्।

उभयत्र विभाषार्थं सूत्रमिदमिति लभ्यम्। परन्तु यत्र प्राप्ताप्राप्तविभाषायां विभाषापदं नास्ति तत्र कथं निर्वाहः। यथा—'हृक्रोरन्यतरस्याम्' (१-४-५३) इति केवलहृकृधात्वोर्णिचि 'गतिबुद्धिप्रत्य-

स्वं रूपं शब्दस्याशब्दसंज्ञा । [ १-१-६८

शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना ।

वसानार्थं' ( १-४-५२ ) इत्यादिना केनापि सूत्रेण अणौ कर्तुर्णौ कर्मत्वं न प्राप्तमिति तत्र वा कर्मत्वमनेन विधीयते इति प्राप्तविभाषा । अभ्यवपूर्वकहृधातोर्भक्षणार्थत्वेन, विपूर्वकहृधातोरकर्मकत्वेन गतीतिसूत्रेण कर्मत्वं प्राप्तं तत्रापि 'हृक्रोरि'त्यस्य प्रवृत्तिरिति प्राप्तविभाषा । अत्र प्राप्ते निषेधमुखेन प्रवृत्तिरिष्यते पक्षे कर्मत्वं न भवतीति । अप्राप्ते च विधिमुखेन प्रवृत्तिरिष्यते अणौ कर्तुर्णौ कर्मत्वं भवतीति । एकस्य 'हृक्रोरि'त्यस्य विधिनिषेधयोर्विरुद्धत्वादुभयमुखेन प्रवृत्तिर्वक्तुमशक्या ।

यत्तु 'नवेति विभाषा' इत्यत्र 'इति' पदस्य विभाषापदेऽपि सम्बन्धाद् विभाषापदार्थवाचकाः सर्वे शब्दाः संज्ञा इति अन्यतरस्यामित्यादिपदस्थलेऽपि पूर्वं न इत्यस्योपस्थित्या प्राप्तस्य पक्षे निषेधे पुनर्वेत्यस्योपस्थित्या सर्वत्राप्राप्तत्वाद् विकल्पेन विधाने प्राप्तेऽप्राप्ते च विकल्पेन विधाने कुत्राप्युभयत्रविभाषायां न दोष इति तन्न, एकस्यार्थस्य निषेधविकल्पात्मकस्य समानफलकानेकसंज्ञाकरणस्य 'अनाकृतिः संज्ञा' इति वृद्धिः संज्ञेति वृद्धिसंज्ञासूत्रस्थभाष्येण तिरस्कारात् । एतेन 'लोके ये विकल्पपर्य्यायाः शब्दास्ते सर्वे निषेधविकल्पयोः संज्ञाः—इति बालमनोरमाद्युक्तमपास्तमित्यपाध्यायाः । तथा च विभाषापदाघटितेषु उभयत्रविभाषास्थलेषु अगत्या सूत्रावृत्त्या विधिमुखेन निषेधमुखेन च प्रवृत्तेर्वक्तव्यतया नवेति सूत्रमाऽस्तु सर्वत्रावृत्त्यैवोभयमुखेन प्रवृत्तिरस्त्विति सूत्रं प्रत्याख्यातं भाष्ये ।

'अग्नेर्ढक्' ( ४-२-३३ ) राजश्वशुराद् यत् ( ४-१-१३७ ) इत्यादिषु लोके यथा 'अग्निमानय' 'राजानं पश्य' इत्यादौ अग्निराजादिरूपार्थस्य बोधस्तथा व्याकरणेऽपि अग्निरूपार्थात् परो ढक्, राजादिरूपार्थात्परो यदित्यादर्थः स्यात् । तथा च ढको यतश्च शब्दरूपत्वेनार्थात्परत्वासम्भवेन अर्थेन सह 'प्रातिपदिकात्' इत्यधिकृतस्यान्वयासम्भवेन च सूत्रवैयर्थ्यापत्त्या अग्निरूपार्थवाचकात्पर्यायमात्राद्, राजादिरूपार्थवाचकसकलशब्दाच्च ढक् यत् स्यात् तद्वारणाय सूत्रोपात्तशब्दादेव परः प्रत्ययो यथा स्यान्नान्यस्मादिति नियमार्थमाह—'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति—स्वं रूपमिति सूत्रस्य संज्ञाशास्त्रत्वं न सम्भवति 'वृद्धिरादैच्' इत्यादाविव संज्ञासंज्ञिनोः समानविभक्तिकत्वेनानिर्देशादतस्तदुपपत्तये बोध्यमिति शेषो बोध्यः । तथाचोभयोः सामानाधिकरण्यमुपपन्नम् । यद्यपि संज्ञासंज्ञिनोर्वाच्यवाचकभावः सम्बन्ध इति सामानाधिकरण्यं नोपपद्यते । तथापि शब्दार्थयोस्तादात्म्यमादाय पाणिनेः संज्ञासंज्ञिनोः समानविभक्तिकत्वेन निर्देशः स्वभावसिद्धः । 'शब्दस्य' इति कर्तरि षष्ठी, 'कृत्यानां कर्तरिवा' इति सूत्रात् शब्देनार्थावगतेरर्थे कार्य्यास्यासम्भवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम्,' इति भाष्यात् संज्ञाशास्त्रमिदम् । 'स्वं रूपम्' इत्यस्य बोध्यमिति शेषः । तथा च सूत्रवार्तिकयोरुच्चारितस्य शब्दस्य स्वम्, रूपञ्च बोध्यम् । शब्दः संज्ञा, बोधकत्वात् । स्वं रूपञ्च संज्ञि, बोध्यत्वात् । वस्तुतस्तु शब्दस्य संज्ञात्वे 'प्रत्युच्चारणं शब्दा भिद्यन्ते' इति न्यायेन संज्ञाभूता सूत्रस्था शब्दरूपा व्यक्तिरनेका, संज्ञिभूता लक्ष्यस्था शब्दरूपा व्यक्तिरप्यनेका । एवञ्च 'एका संज्ञा अनेके संज्ञिनः' इत्येतदर्थकेन 'अनाकृतिः संज्ञा आकृतिमन्तः संज्ञिनः' इति भाष्येण सह विरोधवारणाय 'स्वं रूपम्' इति सूत्रे 'शब्दस्य' इत्यस्य शब्दगततज्जातेरित्यर्थः । तथा च शब्दगता जातिः संज्ञा, जातेश्चैकत्वान्नोक्तभाष्यविरोधः । तदुक्तं हरिणा—'संज्ञिनीं व्यक्तिमिच्छन्ति सूत्रग्राह्यामथापरे ।

जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते' इति ।

स्वशब्दोऽत्रात्मीयवाची । शब्दस्यात्मीयाश्चार्थं एव । रूपशब्देन रूप्यते=बुध्यतेऽर्थोऽनेनेति रूपम् = शब्दस्वरूपम् । एवञ्च शब्द आत्मीयार्थस्य स्वरूपस्य च संज्ञा । यथा 'जराया जरसन्यतरस्याम्' ( ७-२-१०१ ) इत्यादौ सूत्रस्थजराशब्देन लक्ष्यस्थजराशब्दस्य तदर्थस्य चोपस्थितिः । अर्थे कार्य्यस्यासम्भवादर्थः शब्दविशेषणम् । तथा चार्थवज्जराशब्दस्य जरसादेश इत्यर्थः सिध्यति । एवमेव-

नुपूर्वीरूपेणोच्चरितशब्दस्थले सर्वत्र बोध्यमिति 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति परिभाषा सूत्रार्थतः सिद्धा। स चार्थो मुख्यः = अनारोपितः, प्रसिद्धः = संज्ञाभिन्नश्च गृह्यते। तेन सादृश्यमहिम्ना आरोपितराजत्वविशिष्टात्, व्यक्तिविशेषे संकेतितराजशब्दाच्च 'राजश्वशुराद्यत्' इति यत्प्रत्ययो न। एवमन्यत्राप्यूह्यम्।

'अजाद्यतष्टाप्' 'अतो दीर्घो यञि' इत्यादिसौत्रप्रयोगेषु 'अथेत्ययं शब्दोऽधिकारार्थः' इत्याभाष्यादिप्रयोगेषु चानर्थकवर्णेषु वर्णप्रयुक्तकार्यदर्शनाद् वर्णानामानुपूर्वीरूपेणाग्रहणाच्च वर्णग्रहणे नेदं सूत्रं प्रवर्तते।

ननु सूत्रे रूपग्रहणं व्यर्थम्। आत्मीयवाचिना स्वशब्देन स्वरूपस्यैव ग्रहणं स्यात्, शक्तिज्ञानाधीनार्थोपस्थित्यपेक्षया तदनपेक्षस्वरूपज्ञानस्यान्तरङ्गत्वात्, पर्यायैरप्यर्थोपस्थित्याऽर्थस्य स्वपरसाधारणत्वात्, अभेदानुकरणस्थलेऽपि स्वरूपोपस्थितेरर्थानुपस्थितेश्चानियतोपस्थितिकत्वाच्चेति चेत्, स्वशब्देन बहिरङ्गस्यानियतोपस्थिकस्याप्यर्थस्य ग्रहणार्थं रूपग्रहणस्य चारितार्थ्यात्। तेनार्थस्वरूपोभयोः संज्ञित्वेन अर्थविशिष्टस्यैव शब्दस्योपस्थित्या अजं रार्तात्यर्थकाजराशब्दघटकजराशब्दस्य जरसादेशो न, 'प्रोढवान्' इत्यत्र 'प्रादूहोढ' इत्यनेन वृद्धिर्न, प्रकृते जरोढयोरनर्थकत्वात्।

अशब्दसंज्ञेति—शब्दस्य संज्ञा शब्दसंज्ञा इति समासस्तु न, तथा सति गुण–वृद्धि–घ–घु–टीत्यादिषु शब्दस्य संज्ञासु 'स्वं रूपम्' इति सूत्राप्रवृत्त्या संज्ञिनः, अदेङादेरर्थस्य ग्रहणे कर्मादिसंज्ञाया अर्थसंज्ञात्वेन 'स्वं रूपम्' इत्यस्याप्रवृत्त्या 'कर्मण्यण्' ( ३–२–१ ) 'करणे हनः' ( ३–४–३७ ) इत्यादिषु 'स्वं रूपम्' इत्यस्य प्रवृत्त्या 'कुम्भकारः' 'पादघातम्' इत्यादेरसिद्ध्यापत्तेः। किन्तु शब्दपदं लक्षणया शब्दशास्त्रपरम्। अत्र सप्तमीसमासः। तथा च शब्दे = शब्दशास्त्रे = व्याकरणे या संज्ञा सा स्वरूपं न गृह्णाति, किन्तु संज्ञिनमेवेति न दोषस्तदाह—शब्दशास्त्रे या संज्ञेति।

अशब्दसंज्ञेति किम्? 'उपसर्गे घोः किः' इत्यादिना दाधाभ्यः किप्रत्ययो यथा स्यात्, शब्दार्थकाद् घुधातोर्मा भूदिति। नच 'दाधा घ्वदाप्' ( १–२–२० ) इति घुसंज्ञाविधानसामर्थ्याद् घुस्वरूपानुपूर्वीमद्धातोः किर्न स्यादिति वाच्यम्, आत ईत्वविधायके 'ई हल्यघोः' 'घुमास्था' इत्यादौ स्वरूपग्रहणे आकाराभावेन घुग्रहणवैयर्थ्यापत्त्या तत्र संज्ञायाश्चारितार्थ्यात्। यदि तु 'निरनुबन्धकग्रहणे' इति परिभाषया ङकारानुबन्धकस्य 'घुङ् शब्दे' इत्यस्य ग्रहणं न स्यात्, किन्तु घुसंज्ञकस्यैव ग्रहणं स्यात्। न च निरनुबन्धकघुधातौ दोषः, तदभावादित्युच्यते तदा 'घरूपकल्प' इति सूत्रे 'घ' इत्यनेन स्वरूपग्रहणवारणाय अशब्दसंज्ञेति। नच घु-घसंज्ञाविधानसामर्थ्यात्तत्स्वरूपस्य ग्रहणं न स्यादिति वाच्यम्। संज्ञाविधानसामर्थ्यात्संज्ञिनो ग्रहणेऽपि स्वरूपग्रहणे बाधकाभावात्। अत एव 'उभयगतिरिह भवति' यथा संख्याग्रहणेनोभयोर्ग्रहणात् 'संख्यायाः अतिशदन्तायाः' ( ५-१-२२ ) इत्यनेन पञ्चकः, बहुक इत्युभयं सिध्यति।

भाष्ये तु 'स्वं रूपम्' इति सूत्रं प्रत्याख्यातम्। तथाहि—'न वा' अस्य प्रयोजनं वक्तव्यमिति शेषः। 'शब्दपूर्वको ह्यर्थप्रत्ययस्तस्मादर्थनिवृत्तिः'। अयमर्थः—उपलब्ध एव शब्दोऽर्थं बोधयति। क्वचिद् शास्त्रीये कार्येऽर्थस्यायोग्यत्वादुपस्थितत्वादुपात्त एव शब्दो ग्रहीष्यते इत्युच्चरितादग्नेर्ढक् स्यान्न वह्न्यादेः।

शब्दशास्त्रीयघु–घ–संज्ञादिषु स्वरूपग्रहणवारणार्थमपि नास्ति प्रयोजनं सूत्रस्य। तथा च भाष्यम्—आचार्यप्रवृत्तिर्ज्ञापयति—शब्दसंज्ञायां न स्वरूपविधिर्भवतीति। यदयं 'ष्णान्ताः षट्' इति षकारान्तायाः संख्यायाः षट्संज्ञां शास्ति। इतरथा हि वचनप्रामाण्याच्च ( संज्ञाकरणसामर्थ्यात् ) नकारान्तायाः संख्यायाः सम्प्रत्ययः स्यात्। स्वरूपग्रहणाच्च षकारान्तायाः' इति।

अयमभावः—शब्दस्य स्वरूपेऽर्थे च शक्तिः। तदुक्तम्—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।" इति।

येन विधिस्तदन्तस्य [ १-१-७२ ]

विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य।

तथा चार्ये कार्य्यस्य बाधे उपस्थितशब्द एव कार्य्यभाक् न त्वनुपस्थितः। उपस्थितेऽर्थे कार्य्यबाधेऽपि शब्दे विशेषणतयाऽन्वयसम्भवेऽर्थस्य त्यागे प्रमाणाभाव इति 'अर्थवद्ग्रहणे' इति परिभाषाऽपि सूत्रं विनापि सिध्यति। ज्ञापकाच्च संज्ञापदं स्वरूपग्राहकं न स्यादिति व्यर्थं सूत्रमिति।

अन्ये तु—प्रत्याख्यानपरं भाष्यमेकदेश्युक्तिरेव, प्रत्याख्याने गौरवात्। तथाहि–'राजश्वशुराद्यत्' इत्यत्र राजशब्देन शक्यताऽवच्छेदकरूपेणैवार्थोपस्थितिः स्यात्। राजशब्दश्च—'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यात्' इति मेदिनीकोशान्नानार्थकः। एवञ्च 'सकृदुच्चरितः' इति न्यायेन 'स्वं रूपम्' इत्यस्याभावे तत्तदर्थविशिष्टात्प्रत्ययोत्पत्तयेऽनेकावृत्तिः सूत्रस्य स्यादिति गौरवम्। सूत्रसत्त्वे तु अर्थत्वेन रूपेणार्थविशिष्टाद्राजशब्दाद्यदिति आवृत्तिं विनैव निर्वाह इति लाघवम्। एवम् 'टिड्ढाणञ्' इत्यादावपि अणोऽपत्यादिबह्वर्थकत्वेनावृत्तिरिति गौरवम्। प्रत्ययानां प्रकृतिसममिव्याहारे एवार्थबोधकतया सूत्राभावेऽर्थानुपस्थित्या अणादिषु तु न कश्चन दोषः, इत्संज्ञकणकारादिविशिष्टे एव डीबादिप्रवृत्त्या तत्रार्थवत्त्वस्य नियमेन सत्त्वात्। यत्र तु 'केऽणः' इत्यादौ नानुबन्ध स्तत्र सूत्रे प्रकृतिसममिव्याहाराभावेनार्थानुपस्थित्याऽनर्थकशब्दस्यापि ग्रहणे भाष्यमते 'आकरः' इत्यादौ ह्रस्वापत्तिः। 'प्रत्ययाप्रत्यययोः' इति परिभाषा तु 'तिति प्रत्ययग्रहणं कर्तव्यम्' वार्तिकोक्त्या नास्त्येवेति न तेन 'आकरः' इत्यादौ ह्रस्ववारणम्। यदि तु 'प्रत्ययेनार्थविशेष्यके बोधे जननीये प्रकृतिसममिव्याहारः कारणम्' इत्येव व्युत्पत्तिः। प्रकृते चार्थवति के परे इति कशब्दविशेष्यको बोध इति प्रकृत्यसममिव्याहारेऽपि 'अर्थवति के' इत्यर्थेन न दोष इत्युच्यते तदा भाष्यमते न लक्ष्यदोषः, किन्तु गौरवमेव दोषः। यत्तु अणुदित्सूत्रेऽण्ग्रहणात्पाणिनेर्व्यक्तिपक्ष एवेति तन्मतेऽपि सूत्रावृत्तिर्द्वयमेदेऽस्त्येवेति गौरवं तुल्यमिति तन्न, तन्मतेऽर्थविशिष्टराजशब्दात्, अर्थविशिष्टगोशब्दादित्येकरूपेणावृत्तिः। भाष्यमते तु विभिन्नराजत्वगोत्वादिरूपेण तत्तदर्थविशिष्टादित्याद्यर्थेनावृत्तौ गौरवमित्यन्यत्र विस्तरः।

'येन विधिस्तदन्तस्य' इति संज्ञाप्रकरणान्तर्गतत्वात्संज्ञाशास्त्रमिदम्। येनेति—विधानक्रियानिरूपितकरणे तृतीया, कारकविभक्तेर्बलवत्त्वात्, न तु हेतौ। नापि कर्तरि, कृद्योगे षष्ठ्या बाधात्। न च विधानं विधिरिति भावे किप्रत्यये उभयप्राप्ताविति नियमात्कृद्योगषष्ठ्या अप्राप्तिः, कर्तृकर्मणोरुभयोः प्रयोगाभावेन तदप्राप्तेः। अत एव 'अथ शब्दानुशासनम्' इति भाष्ये समासः संगच्छते। अन्यथा 'उभयप्राप्तौ कर्मणि' इति या षष्ठी सा न समस्यते इत्यर्थकेन 'कर्मणि च' इत्यनेन निषेधात्समासासङ्गतिः स्पष्टैव।

मम तु 'कर्तृकर्मणोः कृति' इति षष्ठीति निषेधाप्राप्तिः। अत्र विधानस्य कर्म तत्तच्छास्त्रविधेयमेव। कर्ता च पाणिन्याद्याचार्यः, प्रसिद्धत्वादाकाङ्क्षया लभ्यते। एवञ्च विधेयकर्मकमाचार्यकर्तृकं यत्करणकं विधानं तत्तदन्तस्य बोधकम्। स्वं रूपमित्यनुवर्त्य षष्ठ्यन्तत्वेन विपरिणामात्स्वस्य बोधकमित्यर्थः। वस्तुतस्तु स्वस्यापि व्यपदेशिवद्भावेन सिद्धेः स्वस्येत्यनुवृत्तिर्व्यर्था। करणस्य व्यापारवत्त्वनियमात् शब्दे च इतरव्यावृत्तिरूप एव व्यापारः। तादृशव्यापारवांश्च विशेषणीभूत एवेति येन विधिरित्यनेन विशेषणं लब्धम्। तच्च सम्बन्धानपेक्षत्वेन शीघ्रोपस्थितिकत्वात्समानाधिकरणमेवात्र ग्राह्यम्। शब्दोपस्थितविशेष्यस्यैव विशेषणं तदन्तस्य ग्राहकं भवति न शब्दानुपस्थितविशेष्यस्येति 'इको यणचि' इत्यादौ न तदन्तविधिः। शब्दोपात्तविशेष्यसन्निहितम्, अधिकारलब्धविशेष्यसन्निहितमाक्षेपलब्धविशेष्यसन्निहितञ्च विशेषणमसति बाधके तदन्तोपस्थापकं भवत्येव। यथा 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यत्र शब्दोपात्तद्विवचनसन्निहितमीदूदिति। अधिकारलब्धविशेष्यसन्निहितम् 'अतो भिस ऐस्' (७-१-९) इत्यत्र अत इति 'इको झल्' (१-२-९) इत्यत्र सनाक्षिप्तधातोरिति विशेष्य-

समासप्रत्ययविधौ प्रतिषेधः । उगिद्वर्णग्रहणवर्जम् ।

---

सन्निहितम् 'इकः' इति । अध्याहारलब्धविशेष्यसन्निहितञ्च विशेषणं सत्येव प्रमाणे तदन्तप्रयोजकम् । यथा 'सर्वादीनि सर्वनामानि' ( १-१-२७ ) इत्यत्र, 'स्वरादिनिपातमव्ययम्', ( १-१-३७ ) इत्यादौ च 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति येन विधिरिति सूत्रस्थभाष्यप्रामाण्येन शब्दस्वरूपं विशेष्यमध्याहृत्य तदन्तविधिः ।

न च 'रामैः' इत्यत्र 'अतो भिसः' इत्यस्य प्रवृत्तये ह्रस्वाकाराभिन्नमङ्गं नास्ति इति 'अत्' इत्यस्याङ्गविशेषणत्वाभावात्कथं तदन्तविधिरिति वाच्यम्, अशब्दाद् भिसि अकाराभिन्नाङ्गस्य सत्त्वादत इत्यस्य विशेषणताप्रयोजकतया तदन्तविधेः सुवचत्वात् । एवमेव सर्वत्र प्रथममभेदेन विशेष्यविशेषणभावं सम्पाद्य तदन्तस्य ग्राहकं विशेषणं बोध्यम् । यत्र चाभेदेन विशेष्यविशेषणभावो न सम्भवति भाष्यादिसम्मतश्च तदन्तविधिस्तत्र तदन्तविध्युत्तरमपि यदि अभेदेन विशेष्यविशेषणभावसम्भावना स्यात्तदापि तदन्तविधिः । यथा 'इन्हन्पूषा' इत्यत्र न हि इनभिन्नमङ्गं सम्भवति, इन्नंशे तदन्तविधौ तु इन्नन्ताभिन्नम् 'दण्डिन्' इत्याद्यङ्गं सम्भवतीति तत्र तदन्तविधिः सिध्यति ।

तदन्तस्येति—अस्य बोधकमिति शेषः । तथाच विशेषणं तदन्तसमुदायस्य बोधकमित्यर्थः । विशेषणान्तसमुदायस्य बोधकमिति यावत् । परिष्कृतार्थश्च-अभेदसम्बन्धावच्छिन्ना सम्बन्धानवच्छिन्ना वा या विषयता तादृशविषयताप्रयोजकम्, तादृशविषयताप्रयोजकत्वेन सम्भावितञ्च यत्पदं तत्स्वबोध्यनिष्ठचरमावयतानिरूपकसमुदायस्य बोधकमिति ।

केचित्तु करणतृतीयया पारतन्त्र्ये लक्षणा, कर्त्रधीनस्यैव करणत्वात् । शब्दे पारतन्त्र्यञ्च अभेदेन विशेष्यार्थबोधकत्वे सति सति सम्भवे विशेष्याधीनलिङ्गवचनकत्वम् । तच्च विशेषणे एव सम्भवतीति विशेषणमिति लब्धमिति तन्न, 'सुब्विभक्तौ न लक्षणा' इति सिद्धान्तात् । अत एव 'सुपां सुलुक्' ( ७-१-३९ ) इति सुग्रहणं सार्थकम्, अन्यथा 'ऋजवः सन्तु पन्थाः' इत्यत्र सुविभक्तेर्लक्षणया बहुत्वलाभे जसः स्थाने स्वादेशविधानार्थं सुग्रहणं व्यर्थमेव स्यात् । किञ्च पारतन्त्र्ये लक्षणायां विधिपदार्थेऽनन्वयापत्तिः, विधानस्य पारतन्त्र्ये निराकाङ्क्षत्वात्, कारकमात्रसाकाङ्क्षत्वाच्च ।

ननु विशेषणस्य तदन्तग्राहकत्वे 'द्वितीया श्रितातीत' ( २-१-२४ ) इत्यादौ श्रितादेः 'समर्थः पदविधिः' ( २-१-१ ) इति परिभाषासूत्रस्थसमर्थस्य विशेषणतया तदन्तविधौ द्वितीयान्तं श्रिताद्यन्तैः समर्थैः सह समस्यते इत्यर्थात् 'कष्टं परमश्रितः' इत्यत्रापि समासापत्तिः, एवम् 'गर्गादिभ्यो यञ्' ( ४-१-१०५ ) इत्यादिप्रत्ययविधायके शास्त्रे गर्गादेरधिकृतप्रातिपदिकादित्यस्य विशेषणतया गर्गाद्यन्तात्प्रातिपदिकाद्यञित्यर्थेन परगर्गशब्दादपि यञापत्तिरित्यत आह—समासेति—समासविधायके प्रत्ययविधायके च विशेषणं तदन्तस्य संज्ञा न भवति । तथाच सूत्रादौ पठितशब्दवृत्त्यानुपूर्वीसमानानुपूर्वीकेभ्य एव प्रत्ययः । सूत्रादौ पठितैरेव श्रितादिभिः समास इति नोक्तदोषः ।

नन्वेवं प्रत्ययविधायके 'उगितश्च' (४-१-६) इत्यत्र 'उगितः' इत्यस्य 'अत इञ्' (४-१-९५) इत्यत्र 'अतः' इत्यस्य च प्रातिपदिके विशेषणत्वात् 'समासप्रत्ययविधौ' इति तदन्तविधिनिषेधे उगितो भवतो ङीपि 'भवती' इत्यस्य, अकाररूपात् प्रातिपदिकादिञि अस्यापत्यम् 'इः' इत्यस्य सिद्धावपि 'अतिभवती' 'अतिमहती' इत्यादिषु ङीप्, 'दाक्षिः' इत्यत्र इञ् च न स्यादत आह—'उगिद्वर्णेति' इदं वार्तिकम् । गृह्यते=ज्ञायतेऽनेनेति ग्रहणम्=ज्ञानकरणम् । समासप्रत्ययविधौ उगिद्विषयकज्ञानजनकभिन्नम्, वर्णविषयकज्ञानजनकभिन्नं च यद्विशेषणवाचकं पदं तत्तदन्तस्य ग्राहकं नेति तदर्थात् । तथा च 'उगिदन्तात्प्रातिपदिकात्' स्त्रियां ङीप् इत्यर्थेन 'अदन्तात्प्रातिपदिकात् 'तस्यापत्यम्' इत्यर्थे इञ्' इत्यर्थेन 'अतिभवती' 'अतिमहती' 'दाक्षिः' इत्यादि सिध्यति । नच महच्छब्दस्य गौरादिषु पाठात् 'अमहत्पूर्वग्रहणेन स्त्रीप्रत्यये तदन्तविधिज्ञापनात् 'षिद्गौरादिभ्यश्च' ( ४-१-४१ ) इत्यनेन

विरामोऽवसानम् । [ १-४-११० ]

वर्णानामभावोऽवसानसंज्ञः स्यात् ।

---

ङीप् एव स्यादिति वाच्यम्, तत्रानुपसर्जनादित्यस्याधिकारात् 'महान्तमतिक्रान्ता' इत्यर्थे अति-महती' इत्यत्र ङीपोऽप्राप्तेः । नन्वेवमपि 'अर्थवत्परिभाषया अर्थवतोऽकारस्य ग्रहणेन दत्तशब्दाकारस्य निरर्थकत्वेन इञोऽप्राप्तिरिति चेन्न, वर्णग्रहणेऽर्थवत्परिभाषाया अप्रवृत्तेः। अत एव 'नेदमदसोरकोः' इति सूत्रं चरितार्थम्, अन्यथा 'अतो भिस ऐस्' इत्यत्राप्यर्थवतः अकारस्य ग्रहणे इदमदसोरकारस्यानर्थकतया ऐसोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । वर्णग्रहणे तदन्तविध्यभावे 'अत इञ्' इत्यादीनां वैयर्थ्यं तु न, वासुदेववाचके अशब्दे चारितार्थ्यात् । नन्वेवमपि अशब्दादिञि 'यस्येति च' ( ६-४-१४८ ) इत्यकारस्य लोपे प्रत्ययस्वरेणैवोदात्तत्वे ञित्त्वसामर्थ्यात्तदन्तविधिः स्यादिति वार्तिके वर्णग्रहणं व्यर्थमिति चेन्न, 'औडुलोमिः' इत्यत्र 'बह्वादिभ्यश्च' इतीञि आदिवृद्ध्यर्थम्, ञ्नित्यादिर्नित्यम्, ( ६-१-१९७ ) इत्याद्युत्तरार्थं ञित्त्वस्य चारितार्थ्यात् । उगिच्च वर्णश्च उगिद्वर्णौ ते वर्जयित्वा इत्यर्थे 'द्वितीयायां च' (३-४-५३ ) इति ण्यन्ताद् 'वृजी वर्जने' इत्यतो णमुलि 'उपपद-मतिङ्' ( २-२-१९ ) इति समासे 'कृन्मेजन्तः' ( १-१-३९ ) इत्यव्ययत्वात्सुपो लुकि उगिद्वर्णग्रहण-वर्जमिति साधु ।

'विरामोऽवसानमिति'—अवपूर्वकः स्यतिर्ज्ञानार्थकः । यथा 'केनैतदवसीयते' इति । केन ज्ञायते, इत्यर्थः । समाप्तावपि वर्तते — अवसितः पाठः समाप्त इत्यर्थः । व्याकरणेऽ-वसानशब्दस्य तदर्थनिवृत्तये आह—विराम इति—विरमणं विरामः । 'हलश्च' ( ३-३-१२१ ) इति भावे घञ् । क्रियाया अभावः । सा च क्रिया शब्दानुशासनप्रस्तावादुच्चारणरूपा ग्राह्या । वर्णानाम-भावस्तु न सम्भवति, शब्दस्य नित्यत्वाद् विभुत्वाच्च । उच्चारणाभावोऽपि किञ्चिदुच्चारणपूर्वक एव ग्राह्यः । अत्र मानन्तु 'वोरुपधायाः' ( ८-२-७६ ) इति निर्देशः, आरम्भपूर्वको मम विरामः, इति भाष्यञ्च । अन्यथा रयः, दत्तः, अश्वः, इत्यादौ रेफदकाराकारेभ्यः पूर्वमप्युच्चारणाभावस्य सत्त्वेना वसानसंज्ञापत्तौ विसर्गचर्त्वानुनासिकत्वापत्तिः । वस्तुतस्तु फलाभावाद्वर्णात्पूर्वाभावस्य नावसानसंज्ञा । विसर्गादिकं तु न फलम्, पदान्तत्वाभावेनैव तदप्राप्तेः । अनुकरणत्वादिनापि न पदत्वम्, लोकेऽभेदानु-करणस्यैव दर्शनेनात्रत्याऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वाभावात्सुपोऽप्राप्तेः । क्रियाया अभावो विरामः । यत्किञ्चित्प्रतियोगिकोऽभावोऽभाव इति । अत एव 'अभावोऽवसानम्' इति न कृतम्, पूर्वाभावस्याप्यवसानसंज्ञापत्तेः ।

ननु 'वाऽवसाने' इत्यादौ 'अवसाने परतो झलां चरः स्युरित्यसङ्गतम्, अवध्यवधिमतोः साजा-त्यनियमेन भावाभावयोः पौर्वापर्यस्य बाधितत्वादिति चेन्न, यथा नित्यविभूनामुच्चरितप्रध्वंसिनां वा वर्णानां सजातीयानामपि पौर्वापर्यासम्भवेऽपि बुद्धिकल्पितं पौर्वापर्यं प्रक्रियानिर्वाहायाश्रीयते, तथैव बुद्धिपरिकल्पितस्यावसानपरत्वस्यापि वर्णे सम्भवात् । उच्चारणाभावस्यावसानसंज्ञात्वे अवसितिरव-सानमिति भावे ल्युट् । यद्वा, 'विरम्यतेऽस्मिन्' इति, सामीपिकेऽधिकरणे घञ् । विरम्यतेऽनेनेति वा बाहुलकात्करणे घञ् । विरमणं स एवोच्चारणक्रियाया अभावः । तथा च यस्मिन् वर्णे उच्चारिते सति तदव्यवहितोत्तरकाले वर्णान्तराणामुच्चारणाभावः सोऽन्त्यवर्णोऽवसानसंज्ञकः इत्यर्थः । तदुक्तं भाष्ये 'वर्णोऽन्त्यो वावसानम्' इति । अस्मिन् पक्षे 'अवसीयतेऽस्मिन्' 'अवसीयतेऽनेनेति' वा अधिकरणे करणे वा ल्युड् बोध्यः । अस्मिन् पक्षे अन्त्यवर्ण एवावसानसंज्ञकः । अभावस्यावसानसंज्ञापक्षे 'अवसाने' इति परसप्तमी । परत्वञ्च बौद्धमित्युक्तम् । अन्त्यवर्णस्यावसानसंज्ञापक्षे तु 'खरवसानयोः' इति एकापि सप्तमी विषयभेदाद् भिद्यते । खरि परतो विसर्ग इति, अवसानसंज्ञके रेफे स्थानिनि सति विसर्गः । कस्य विसर्ग इत्याकाङ्क्षायां प्रत्यासत्त्या रेफस्येति लभ्यते ।

**परः सन्निकर्षः संहिता। [ १-४-१०९ ]**

वर्णानामतिशयितः सन्निधिः संहिता संज्ञा स्यात्।

**सुप्तिङन्तं पदम्। [ १-४-१४ ]**

सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

---

भाष्ये तु इदं सूत्रं संहिताविधायकसूत्रञ्च प्रत्याख्यातम्। तथाहि—'संहितावसानसंज्ञयोर्लोकविदितत्वात्सिद्धम्' इति। 'एवं हि कश्चित् कञ्चिदधीयानमाह 'शन्नो देवी' इतीयं संहितयाऽधीष्वेति स तत्र परमसन्निकर्षमधीते। अपर आह केनावस्यसीति स आह—अकारेकारेणोकारेति। एवमेतौ लोकविदितावर्थौ' इति। वस्तुतस्तु 'परः सन्निकर्षः संहिता' इति प्राक्तनं सूत्रं व्याख्याय 'विरामोऽवसानम्' पाश्चात्यं सूत्रं व्याख्यातुमर्हम् क्रमिकत्वात्, भाष्यकाशिकादिषु तथैव व्याख्यातत्वाच्च।

'परः सन्निकर्षः संहिता' इति—यद्यपि परशब्दोऽनेकार्थकः। तदुक्तम्—'परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले' इति मेदिनी। तथापि शब्दानुशासनप्रस्तावात्सन्निकर्षपदेन वर्णसन्निकर्षस्यैव ग्रहणम्। तथाच विशेष्ये सन्निकर्षे परार्थदिग्देशाद्यर्थानां सम्बन्धायोगात् 'संहिता' इति महासंज्ञायाश्च श्रेष्ठार्थक एवात्र परशब्दो गृह्यते। सन्निकर्षे श्रेष्ठत्वञ्चातिशयितत्वमेवेत्याह—वर्णानामतिशयित इति—यद्यपि वर्णानां नित्यत्वपक्षे आविर्भावस्य जन्यत्वपक्षे उत्पत्तेश्च एकवर्णवृत्तित्वाच्च युगपद् द्वावुच्चारयति। तदुक्तं भाष्ये—'गौरिति यावद्गकारे वाग् वर्तते नौकारे, उच्चरितप्रध्वंसित्वात्' इत्यादि। एवञ्च युगपद्वर्णद्वयाभावात्सन्निकर्षो न सम्भवति तथापि प्रक्रियानिर्वाहाय बुद्धिपरिकल्पितः सन्निकर्षो ग्राह्यः। तदुक्तं भाष्ये—'बुद्धिविषयमेव वर्णानां पौर्वापर्यम्' इति। सन्निकर्षश्चात्रार्द्धमात्राधिककालाव्यवायेन पौर्वापर्यरूपमेव, न तु संयोगः, तस्य द्रव्यधर्मत्वात्। पूर्ववर्णस्य स्थानादिव्यापारादाविर्भूते पूर्ववर्णे उत्तरवर्णस्य स्थानादिव्यापारानन्तरमुत्तरवर्णस्याविर्भाव इति वर्णयोर्मध्येऽर्द्धमात्राव्यवायो नियत इत्यत उक्तम्—'अर्द्धमात्राधिककालव्यवायराहित्येन पौर्वापर्यं संहिता' इति।

नन्वेवम् 'अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥' इति

द्रुतवृत्तावेवार्द्धमात्राधिककालाव्यवायेनोच्चारणं स्यात्। मध्यमविलम्बितयोस्तु मात्रादिकालव्यवायेनैवोच्चारणमिति तत्र संहिताकार्यं न स्यादिति चेन्न, सर्वासु वृत्तिषु मध्यवर्त्ती कालोऽर्द्धमात्रात्मक एव, किन्तु वृत्तयो वर्णज्ञानकालभेदकर्य्यः। यद्वा यस्यां वृत्तौ यावत्कालव्यवाय आवश्यकस्ततोऽधिककालव्यवायराहित्येन पौर्वापर्यमेव संहितेति नोक्तदोषावकाशः।

पिपर्तीति परः 'पॄ पालनपूरणयोः' इत्यतोऽचि साधुः। सन्निकर्षणं सन्निकर्षः। कृषधातोर्भावे घञ्। सन्धानं संहिता। धाधातोर्भावे 'क्तिच्क्तौ च संज्ञायाम्' ( ३-३-१७४ ) इति क्ते टाप्। पूर्ववर्णस्य परवर्णेन सन्निकर्षः प्रायः संहिता परवर्णाभावे पूर्वेणापि संहिता। अत एव संहिताधिकारेऽवसानकार्याणां पाठः। नन्वेवमपि 'अ' इति सम्बोधने 'अणोऽप्रगृह्यस्य' (८-४-५७) इत्यवसाननिमित्तको न स्यात्, संहिताया अभावादिति चेन्न, इष्टापत्तेः। तत्रानुनासिकत्वस्य प्रमितत्वे वर्णावयवानां सन्निकर्षः संहितेति स्वीकारेणादोषाच्च। वर्णस्यापि वर्णावयवत्वं व्यपदेशिवद्भावेन बोध्यम्।

'सुप्तिङन्तं पदम्' इति 'स्वौजसमौट्' ( ४-१-२ ) इति सूत्रे सुशब्दादारभ्य सुपः पकारेण सुप्प्रत्याहारः 'सुशब्दाद्यवयवक पकारचरमावयवकसमुदायघटकप्रत्ययानां संज्ञा। 'तिप्तस्झि' (३-४-७८) इति सूत्रीयतिशब्दादारभ्य महिङो ङकारेण तिङ्प्रत्याहारः। तिशब्दाद्यवयवकङकारचरमावयवक-

## हलोऽनन्तराः संयोगः [ १-१-७ ]

समुदायावयवप्रत्ययानां संज्ञा। प्रतिपदोक्तत्वात्ससमीसुपो नात्र ग्रहणम्, ङिसम्बुद्ध्योः पदत्वानापत्त्या 'न ङिसम्बुद्ध्योः' (८-२-८) इत्यस्य वैयर्थ्यापत्तेः। कपः पकारेणापि न, सुपः पकारस्य वैयर्थ्यापत्तेः। 'स्वादिषु' (१-४-१७) इति सूत्रे 'सुपि' इत्येव वक्तव्ये आदिग्रहणवैयर्थ्यापत्तेश्च। न च पित्त्वं स्वरार्थम्, सुप्प्रत्याहारेणैव स्वरसिद्धेः। नापि टापः पकारेण प्रत्याहारः, सुपः पकारस्य वैयर्थ्यापत्तेः। किन्तूक्तप्रत्याहार एव तिङ्साहचर्याच्च।

सुप् च तिङ् च सुप्तिङौ तावन्तौ=अन्तावयवौ यस्य तत्सुप्तिङन्तम्। अन्तशब्दस्य प्रत्येकं योगः, 'द्वन्द्वान्ते' इति न्यायात्। 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषयोपस्थितं तदादि शब्दस्वरूपं विशेष्यमादाय 'येन विधिः' इति तदन्तविधिना तदन्तलाभे अन्तग्रहणं व्यर्थीभूय कल्पयति—'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति। तेन 'तरप्तमपौ घः' (१-१-२२) इत्यत्र तदन्तविधिर्न। अन्यथा तरप्तमबन्तस्य घसंज्ञा स्यात्। तथा च 'घरूपकल्प' इत्यस्य तरबन्ते उत्तरपदे पूर्वस्य ङ्यन्तस्य ह्रस्व इत्यर्थेन 'कुमारगौरितरा' इतीष्टं न सिध्येत्। परत्वात्पुंवद्भावं बाधित्वा कुमारीत्यस्य ह्रस्वत्वं स्यात्, गौरीत्यस्य ह्रस्वत्वं न स्यात्, तरबन्तपरत्वाभावात्। एवञ्चात्र 'अन्त' इत्याभावे संज्ञाविधाविति तदन्तनिषेधात् सुप्तिङ एव पदत्वे 'हरिषु' 'करोषि' इत्यादौ 'सात्पदाद्योः' (८-३-१११) इति षत्वनिषेधापत्तिः। तद्वारणाय सुप्तिङन्तस्य पदत्वाय चान्तग्रहणं सार्थकम्। नचैवं 'कृत्तद्धित' (१-२-४६) इत्यत्र संज्ञाविधौ कृत्तद्धितान्तस्य प्रातिपदिकत्वं न स्यादिति वाच्यम्, अर्थवदित्यनुवृत्तिसामर्थ्येन 'कृदाद्यर्थवत्प्रातिपदिकसंज्ञकम्' इति सूत्रार्थेन संज्ञानिष्ठविधेयतया यत्र साक्षात्प्रत्ययनिष्ठोद्देश्यता तत्रैव संज्ञाविधाविति निषेधस्य प्रवृत्तिस्वीकारेणादोषात्। प्रकृते चार्थवन्निष्ठा साक्षादुद्देश्यता न तु प्रत्यये साक्षादुद्देश्यतेति न दोष इति दिक्।

'हलोऽनन्तराः संयोगः'। अन्तरशब्दोऽनेकार्थकः। तथाहि—

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥' इति।

अत्र छिद्रवाची एवान्तरशब्दो गृह्यते, अन्यार्थस्यासम्भवात्, 'यदि विज्ञायते अविद्यमानमन्तरं येषामिति। अवग्रहे संयोगसंज्ञा न प्राप्नोति 'अप्सु इति अप्स्विति।' अवग्रहः=द्वयोर्वर्णयोर्मध्ये मात्राकालः। तथा च प्रातिशाख्यम्—'मात्राकालोऽवग्रहः' इति। भाष्ये मात्राकालव्यवाये दोषदानाच्च। अविद्यमानमन्तरम्=छिद्रम्=वर्णशून्यकालो मध्ये येषां तेऽनन्तराः=अर्द्धमात्राधिककालव्यवायशून्या इत्यर्थः। 'नञः परेषामस्त्यर्थवाचिनां पदान्तरेण सह बहुव्रीहिर्वाच्यः, वा चोत्तरपदस्यास्त्यर्थवाचिनो लोपः' इत्यर्थकेन 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति वार्तिकेन विद्यमानपदस्य लोपः। यदि तु नञ्पदस्यैवाविद्यमाने लक्षणा तदा नोत्तरपदलोपः। एकवर्णोच्चारणानन्तरं वर्णान्तरोच्चारणेऽर्द्धमात्राकालव्यवायोऽवश्यम्भावीति तदधिककालव्यवधानाभावे हलां संयोगसंज्ञेति फलितम्।

न चैतदर्थेऽवग्रहे संयोगसंज्ञा न स्यान्मात्राकालव्यवधानसत्त्वादिति वाच्यम्, तत्र 'नैव दोषो न प्रयोजनम्' इति भाष्यकृतैव समाहितत्वात्। अधिकरणार्थकेषु 'अप्स्विति' इत्यादिषु सम्बोधनासम्भवात् 'गुरोरनृतः' (८-२-८६) इत्यस्याप्राप्तेः। उक्तभाष्यात् 'हे अप्सुचर' इत्यत्र 'गुरोरनृतः' इत्यस्य प्रवृत्तिसम्भवेऽपि अनभिधानान्न दोषः। यद्यपि गुणवृद्धिसंज्ञे इव एकैकस्य हलः संयोगसंज्ञा प्राप्नोति, तथापि 'संयोगः' इति महासंज्ञाकरणस्यान्वर्थत्वेन संयुज्यन्ते हलोऽस्मिन्समुदाये इत्यधिकरणे यथा 'ननु चायमस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति। तद्यथा 'गर्गाः शतं दण्ड्यन्ताम्'

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ।

---

गर्गिनश्च राजानो हिरण्येन भवन्ति नच प्रत्येकं दण्डयन्ति' इति भाष्योक्त्या च हल्समुदायस्यैव संयोगसंज्ञा नत्वेकैकस्य । यत्तु शेखरे 'घटपटौ संयुज्येते यत्र' इत्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतेत्यन्यर्थबलात्तद्वाक्ययोरेव संयोगसंज्ञापत्तिरिति तन्न, 'व्रीहयः संयुज्यन्ते यत्र राशौ' इत्याद्युक्तनियमस्य व्यभिचारदर्शनात् ।

यद्यपि एकैकस्य संयोगसंज्ञायाम् 'निर्यायात्' इत्यादौ 'वान्यस्य संयोगादेः' ( ६-४-६८ ) इत्येत्वम्, 'संस्वीष्ट' इत्यादौ 'ऋतश्च संयोगादेः' ( ७-४-१० ) इतीट्, 'दृषत्करोति' इत्यादौ 'संयोगान्तस्य लोपः' ( ८-२-२३ ) इति लोपः, 'शक्ता' इत्यादौ 'स्कोः संयोगाद्योः' ( ८-२-२९ ) इति लोपः प्राप्नोतीत्याशङ्क्य, संयोगौ आदी यस्य धातोः संयोगौ अन्तौ यस्य पदस्य, संयोगयोराद्यौ संयोगाद्यौ तयोः, झलि यः संयोगः, पदान्तश्च यः संयोगस्तस्यादिः समीपो यः सकारः ककारश्च तयोर्लोप इत्याद्यर्थेन परिहृतः । यद्यपि वृत्तौ द्वित्वादिसंख्याभानं न सम्भवति, तथाप्यन्तादिग्रहणसामर्थ्यात्संख्या विवक्षिता स्यात् । तथापि प्रत्येकं संयोगसंज्ञेति पक्षो वाच्यवृत्त्या न लभ्यते । किञ्च क्लिष्टकल्पनया दोषवारणं गौरवग्रस्तमिति 'गर्गदण्डन' न्यायेन समुदायसंज्ञापक्ष एव सिद्धान्तः । यत्र बहूनां हलामानन्तर्य्यं तत्र बहूनामपि संयोगसंज्ञा द्वयोरपि । हल इति बहुवचनन्तु हलौ च हलश्चेत्येकशेषाभिप्रायेणेति न द्वयोः संयोगे बाधः । न चेदृशैकशेषेण बहुवचनस्य क्वापि प्रयोगो न दृष्ट इति वाच्यम्, 'स्वरितात्संहितायाम्' ( १-२-३९ ) इति भाष्ये 'एकशेषनिर्देशोऽयम्—अनुदात्तस्य चानुदात्तयोश्चानुदात्तानाञ्चानुदात्तानामिति' इत्युक्तत्वात् । जातौ 'जात्याख्यायाम्' ( १-२-५८ ) इति बहुवचनमिति केचित् । अनन्तरा इत्यत्र न विद्यतेऽन्तरं ययोस्तौ अनन्तरौ, न विद्यतेऽन्तरं येषां तेऽनन्तराः । अनन्तरौ च अनन्तराश्चेत्येकशेषः । 'हल' इत्यत्र बहुत्वमविवक्षितम्, 'अथवा अविशेषेण संयोगसंज्ञा विज्ञायते द्वयोरपि बहूनामपि' इति भाष्यात् । बहुत्वविवक्षायां तु भाष्योक्ता द्वयोः संज्ञाऽसङ्गता स्यात् । ननु बहूनामानन्तर्य्ये संयोगसंज्ञा न प्राप्नोति, मध्यमेन हला आद्यन्तयोर्व्यवधानसत्त्वादिति चेन्न, व्यवधानस्य विजातीयैरेव प्रसिद्धत्वात् । नच बहूनामानन्तर्य्ये द्वयोः संयोगसंज्ञायाम् 'मष्टा' इत्यादिसिद्ध्या बहूनां संज्ञायाः फलाभावः, नच 'मङ्क्ता' इत्यत्र सकारलोपः फलम्, मध्ये नकारसत्त्वेऽपि विजातीयव्यवधानाभावेन तज्जयोः संयोगसंज्ञयैव सलोपसिद्धेः । नच बहूनामानन्तर्य्ये द्वयोरपि संयोगसंज्ञास्वीकारे क्यजन्तादिन्द्रशब्दात्सनि 'इन्द्रियिष' इत्यत्र 'अजादेर्द्वितीयस्य' (६-१-२) इत्यनेन 'द्रि' इत्यस्य 'न न्द्राः संयोगादयः' ( ६-१-३ ) इति निषेधाद् द्वित्वं न स्यादिति चेन्न, 'न न्द्राः' इत्यत्र अच् चासावादिश्चेत्यजादिरित्यर्थकस्याजादेरित्यस्यानुवृत्त्या आदिभूतादचः परेषामेव नदराणां द्वित्वनिषेधस्य वक्ष्यमाणत्वात् 'इन्दिद्रियिषति' इत्यस्य सिद्धौ बाधकाभावात् । ननु गृहसमुदायो ग्रामः । तथा च विजातीयवननद्यादेर्मध्ये सत्त्वेऽपि 'अनन्तरौ इमौ ग्रामौ' इति व्यवहारदर्शनाद् व्यवधानेऽप्यनन्तरशब्दप्रयोग इति चेन्न, वननद्यादिविशिष्टस्यैव ग्रामत्वमित्यभिप्रायेणाव्यवधाने एव तत्प्रयोग इति भाष्ये उक्तत्वात् सामीप्यमूलकानन्तर्य्यारोपाद्वा ।

अज्भिरिति—अत्र कुत्वं न्याय्यमिति नागेशाः । वस्तुतस्तु 'उपदेशेऽज्' 'अजादेः' 'अजन्तः' 'आदैच्' 'ऐच्' 'इजादेः सनुमः' 'अनच्त्वम्' इत्यादिसौत्रभाष्यदीक्षितादिप्रयोगदर्शनात् 'अचोऽज्भु' इति भाष्ये कुत्वदर्शनाच्च । सुप्सकारपरत्वाभावे प्रत्याहारघटकस्य चस्य कुत्वं नेति ज्ञापनात्कुत्वाभाव एव न्याय्यः । 'हलः' इति किम् ? तितउना दीव्यतीति तितउदेवः । सम्बुद्धौ 'तितउदेव !' इत्यत्र हल्ग्रहणाभावेऽज्समुदायस्यापि 'अनन्तराः' इत्यनेन ग्रहणे 'तउ' इत्यस्य संयोगसंज्ञायाम् 'संयोगे गुरु' ( १-४-११ ) इति गुरुत्वे 'ति' इतीकारस्य 'गुरोः' इति प्लुतापत्तिः । अनन्तरा इति किम् ? 'पनसम्' इत्यादौ अकारव्यवधानेऽपि सकारमकारयोः संयोगसंज्ञायां 'स्कोः' इति सलोपो मा भूत् । वस्तुतस्तु 'काक्यर्थम्' 'वास्यर्थम्' इत्यादिषु संयोगादिलोपवारणाय स्कोरिति सूत्रे 'झलः' इत्यनुवर्त्य षष्ठ्या विपरिणम्य झलन्तसंयोगाद्योरेव सकयोर्लोप इत्यर्थेन 'पनसम्' इत्यत्र

**ह्रस्वं लघु । [ १-४-१० ]**

**संयोगे गुरु । [ १-४-११ ]**

संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ।

**दीर्घं च । [ १-४-१२ ]**

दीर्घं च गुरुसंज्ञं स्यात् ॥

॥ इति संज्ञाप्रकरणम् ॥

---

दोषाभावात्, 'पनसात्' इत्यादौ सतयोः संयोगे संयोगादिलोपापत्तिः । 'अनन्तराः किम् ?' यदि तु सजातीयानां हलामचां वा समुदायस्यैव ग्रहणे नात्र दोष इत्युच्यते तदा 'कमलेश अङ्ग्यां पश्य' इत्यादौ प्लुतापत्तिर्दोषो बोध्यः ।

'ह्रस्वं लघु' एकमात्रकोऽज् लघुसंज्ञकः स्यादित्यर्थः । न चेदं सूत्रं मास्तु, यत्र लघुपदं तत्र ह्रस्वपदमेवास्त्विति वाच्यम्, 'संयोगे गुरु' इत्येतदर्थं ह्रस्वग्रहणस्यावश्यकत्वात् । नन्वेवमपि लघुसंज्ञा मास्त्विति चेन्न, संयोगनिमित्तकगुरुसंज्ञायां ह्रस्वस्योपजीव्यतया तत्र ह्रस्वगुरुसंज्ञयोः समावेश इष्यते । तेन 'हे सर्पिष्ट्व' इत्यत्र ह्रस्वसंज्ञया 'ह्रस्वात्तादौ तद्धिते' (८-३-१०१) इति षत्वम्, 'गुरोरनृतः' इति प्लुतश्च सिध्यति । गुरुसंज्ञया लघुसंज्ञाया बाध इष्यते । अन्यथा 'अततक्षत्' इत्यादौ सन्वद्भावो दुर्वारः स्यात् । एवञ्च 'ह्रस्वं संयोगे गुरु' इति सूत्रकरणे लघुपदस्थाने ह्रस्वपदनिवेशे 'सन्वल्लघुनि चङ्परे' इति न्यासे 'अततक्षत्' इत्यत्राभ्यासस्य ह्रस्वपरकत्वात्सन्वद्भावो दुर्वार एव स्यात् । 'लघुनि' इति न्यासे लघुसंज्ञाकरणे च गुरुसंज्ञया लघुसंज्ञाया बाधाल्लघुपरकत्वाभावान्नाभ्यासस्य सन्वद्भावः । 'ह्रस्वम्' इति निर्देशादेव ह्रस्वशब्दस्य नपुंसकत्वमपि ।

'संयोगे गुरु'—ह्रस्वमित्यनुवर्तते तदाह—संयोगे परे ह्रस्वमिति—ननु 'संयोगे गुरु' इति गुरुसंज्ञा यदि लघुसंज्ञाया निरवकाशत्वात्परत्वाच्च बाधिका तदा 'भेत्ता' इत्यत्र नित्यत्वाद्गुणं बाधित्वा तासिप्रत्यये 'संयोगे गुरु' इति गुरुत्वाल्लघूपधत्वाभावाद् गुणो न स्यादिति चेन्न, 'त्रसिगृधिधृषक्षिपेः क्नुः ( ३-२-१४० ) इत्यत्र कित्करणसामर्थ्येन भूतपूर्वलघूपधस्यापि गुणो भवतीति ज्ञापनेनादोषात् । भूतपूर्वलघूपधेत्यस्य भूतपूर्वो यो लघुस्तदुपधस्येत्यर्थः । न चैवं गुधातोर्लुटि तासि डादेशे टिलोपे 'गुत् आ' इत्यत्र भूतपूर्वो यो लघुरुकारस्तदुपधस्य 'गुत्' इत्यङ्गस्य गुणः स्यादिति वाच्यम्, 'गाङ्कुटादिभ्यः' (७-२-१) इत्यनेन गाङादिविहितप्रत्ययानां ङित्त्वविधानेन 'क्ङिति च' ( १-१-५ ) इत्यनेन गुणनिषेधात् ।

यद्वा क्नोः कित्करणेन न गुणविधायके लघुपदं ह्रस्वपरमिति ज्ञापनेन गुरुसंज्ञया ह्रस्वसंज्ञाया अबाधेन गुरुत्वेऽपि ह्रस्वोपधत्वसत्त्वाद् 'भेत्ता' इत्यादौ गुणसिद्धिः । भूतपूर्वो यो लघूपधस्तस्य गुण इत्यर्थस्तु न, 'इन्दति' 'सीदति' इत्यादौ गुणापत्तेः । लङ्घयति=गन्तुं शक्नोतीति लघुः । 'लङ्घिबंह्योर्नलोपश्च' ( उ. १ पा. ३० सू. ) इति लंघेः कुप्रत्यये नलोपे लघुरिति । पाणिनिना तु संयोगपरकभिन्नस्य ह्रस्वस्य 'लघु' संज्ञा कृता । गृणाति = उपदिशति वेदशास्त्रमाचारं चेत्यर्थे गृधातोः 'कृग्रोरुच्च'( उ. १ पा. २४ सू. ) इति कुप्रत्यये उकारादेशे च गुरुरिति । पाणिनिना तु संयोगपरकह्रस्वस्य दीर्घस्य गुरुरिति संज्ञा कृता ।

इति संज्ञेति—प्रथमाध्यायस्थानां सन्धिकार्य्योपयोगिनीनां संज्ञानाम् प्रकरणम्=एकार्थप्रतिपादकग्रन्थांशः, इति = समाप्तम्, संज्ञासूत्रत्वञ्च साक्षाच्छक्तिग्राहकत्वम् । प्रथमाध्यायेत्युक्त्या अष्टमाध्यायस्थाम्रेडितसंज्ञाया अनुपन्यासेऽपि न क्षतिः । सन्धिकार्य्येत्युक्त्या प्रगृह्यभलोपानामभावेऽपि न दोषः । वस्तुतस्तु सन्धिकार्य्येत्यस्य संहितासंज्ञानिमित्तककार्य्येत्यर्थः । तथा च प्रगृह्यग्रहेऽपि न क्षतिः । प्रगृह्यलोपयोरपि तन्निमित्तकत्वेन तदनुपन्यासन्यूनता दुःशोधेति तन्न, कार्य्येत्यनेन भावरूपापूर्वकार्य्यस्यैव ग्रहणात्, प्रगृह्यकार्य्यस्यापूर्वत्वाभावात्, लोपस्याभावकार्य्योपयोगित्वात् ।

# अथ परिभाषाप्रकरणम्

## इको गुणवृद्धी । [ १-१-३ ]

गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इकः' इति षष्ठयन्तं पदमुपतिष्ठते ।

---

टेरसंग्रहेऽपि न दोषः, सौत्रकार्यस्यैव ग्रहणात्, टेश्च वार्तिककार्योपयोगित्वात् । यद्यपि लघुसंज्ञा न सन्धिकार्योपयोगिनी । यदि गुरुसंज्ञाबाध्यतया तदुपन्यासस्तर्हि पदसंज्ञाबाधकतया भसंज्ञाप्युपन्यस्यताम् । किञ्च सम्प्रसारणसंज्ञापि पूर्वरूपोपयोगिनीति सापि वक्तव्या, तथापि प्रायेण सन्धिकार्योपयोगिनीनां प्रायेण समाहमिति तदर्थान्न दोष इति शम् ।

॥ इति संज्ञाप्रकरणम् ॥

गुणवृद्धीति—ननु द्वन्द्वे वृद्धिशब्दस्य पूर्वं निपाते 'वृद्धिगुणौ' इति स्यात्, ननु गुणवृद्धीति । यत्तु इत एव निर्देशात्पूर्वनिपातस्यानित्यत्वमिति तन्न, राजदन्तादित्वेन निर्देशस्योपपन्नत्वे ज्ञापकत्वासम्भवात् । नच निर्देशानुपपत्तिलभ्यस्यैव राजदन्तादिषु तथाऽनुवाद इति वाच्यम्, सूत्रनिर्माणात् प्राक्तन एव गणपाठ इति 'पूर्वादिभ्यो नवभ्यो वा' ( ७-१-१६ ) इति सूत्रस्थनवग्रहणेन ज्ञापितत्वात् । तदुक्तं भाष्ये—'आचार्यप्रवृत्तिर्ज्ञापयति स ( गणपाठः ) पूर्वपाठः । अयं ( सूत्रपाठः ) परः पाठः । यदयं पूर्वादिभ्यो नवभ्यो वेति नवग्रहणं करोति' इति । अत्र 'वृद्धिरादैच्' 'अदेङ्गुणः' इत्यतो वृद्धिगुणपदे अनुवर्तेते । न चैवम् 'अदेङ् गुणः' इत्यत्र वृद्धिपदानुवृत्त्याऽदेङां वृद्धिसंज्ञाऽपि स्यादिति वाच्यम्, निरवकाशतया गुणसंज्ञया वृद्धिसंज्ञाया बाधात्, 'वृद्धिरादैच्' इति सम्पूर्णसूत्रानुवृत्त्या अदेङां गुणसंज्ञाया अप्राप्तेश्च । न चानुवृत्तेर्वैयर्थ्यम्, धाराप्रवाहेणोत्तरत्रानुवृत्त्यर्थं तच्चारितार्थ्यात् । तथा चानुवृत्त्या गुणवृद्धिग्रहणलाभे सूत्रस्थं गुणवृद्धिग्रहणं व्यर्थीभूय गुणपदस्य अदेङ्निष्ठविधेयताप्रयोजकगुणपदे, वृद्धिपदस्य आदैज्निष्ठविधेयताप्रयोजकवृद्धिपदे लक्षणां ग्राहयति । तदाह—गुणवृद्धिशब्दाभ्यामिति—ल्यब्लोपे पञ्चमी । तथा च गुणपदमुच्चार्य यत्र गुणो ( अदेङ् ) विधीयते तत्र, वृद्धिपदमुच्चार्य यत्र वृद्धि- ( आदैच् ) र्वा विधीयते तत्र च 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते=संगच्छते=संगतं भवतीति यावत् । स्थाधातोः परस्मैपदित्वेऽपि 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिषु' इति 'उपान्मन्त्रकरणे' इति सूत्रस्थवार्तिकेन संगतिकरणे आत्मनेपदम् । यद्वा 'गुणवृद्धिशब्दाभ्याम्' इत्यत्र प्रयोज्यत्वं तृतीयार्थः । गुणवृद्धिपदनिरूपितप्रयोज्यतावती यत्रादेङादैज्निष्ठा विधेयता तत्र 'इकः' इत्युपतिष्ठते । 'अदेङ् गुणः' 'वृद्धिरादैच्' इति सूत्रे विधेयताप्रयोजकगुणवृद्धिपदसत्त्वेऽपि विधेयतया गुणवृद्धिपदनिष्ठतया अदेङादैज्निष्ठत्वाभावेन न तत्र 'इकः' इत्यस्योपस्थितिः । विधेयताप्रयोजकगुणवृद्धिपदनिवेशात् 'त्यदादीनामः' ( ७-२-१०२ ) पथिमथ्यृभुक्षामात् ( ७-१-८५ ) इत्यादौ नास्या उपस्थितिः । विधेयताप्रयोजकत्वनिवेशात् 'अतो गुणे' ( ६-१-९७ ) 'वृद्धिर्यस्याचामादिः' ( १-१-७३ ) इत्यादौ गुणवृद्धिपदयोरुद्देश्यताप्रयोजकतया न दोषः ।

न चात्र गुणवृद्धिपदानुवृत्त्या सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादेतादृशार्थलाभ इत्यसङ्गतम्, अत्रत्यगुणवृद्धिपदयोः संज्ञिपरतया अनुवृत्तयोश्च स्वरूपबोधकतया वैयर्थ्याभावादिति वाच्यम्, यतः संज्ञासंज्ञात्संज्ञाबोधकं पदमनुवर्तते तद्विधेयाद् भिन्नविधेयकशास्त्रेऽनुवृत्तसंज्ञाबोधकपदस्य संज्ञिपरकत्वनियमेनादोषात्, 'ष्णान्ताः षट्' इत्यत्रानुवृत्तसंख्यापदस्य पञ्चसप्तत्यादिसंज्ञिपरकत्ववत् । यद्वा पूर्वसूत्राभ्यामदेङ्पदमादैच्पदञ्चानुवर्त्य यत्रैते विधीयन्ते इत्यर्थेनैव सिद्धे गुणवृद्धिग्रहणवैयर्थ्येन गुणवृद्धिग्रहणसामर्थ्यादेतादृशार्थकल्पने बाधकाभावात् । यद्वा स्वरूपपरे गुणवृद्धिपदे अनुवर्त्य 'इत्येवम्' इति उच्चार्य इति चाध्याहृत्य इतिशब्दस्य प्रत्येकमन्वयो गुण इति, वृद्धिरिति एवमुच्चार्य यत्र गुणः ( अदेङ् ) वृद्धिः ( आदैच् ) वा विधीयते तत्र 'इकः' इत्युपतिष्ठते । उच्चारणस्य च विधानेऽन्वय इति

## अचश्च [ १-२-२८ ]

ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्र 'अचः' इति षष्ठ्यन्तं पदमुपतिष्ठते ।

---

उच्चारणक्रियायामेकत्र गुणवृद्धिपदयोरन्वयान्नासामर्थ्यं द्वन्द्वबाधकम् । गुणो गुणः, वृद्धिर्वृद्धिरिति योजनायान्तु एकधर्मावच्छिन्नेऽन्वयाभावाद् द्वन्द्वो न स्यात् । एतस्योपस्थितौ लिङ्गन्तु सूत्रघटकं यत् प्रथमान्तपदं यत्पदं वा तदन्यतराव्यवहितपूर्वत्वाभाववत्प्रथमान्तगुणवृद्धिपदम् ।

'वृद्धिरादैच्' इत्यत्र वृद्धिपदस्य प्रथमान्तादैच्पदपूर्वत्वात्, 'वृद्धिर्यस्याचाम्' इत्यत्र यत्पदपूर्वत्वाच्च नोपस्थितिरस्याः । विधेयताप्रयोजकं प्रथमान्तपदं लिङ्गमिति तु न सम्यक्, वाक्यार्थबोधात्प्राग् विधेयताया ज्ञातुमशक्यत्वात् । जाते सूत्रार्थबोधे 'इकः' इत्यस्योपस्थिते वैयर्थ्यम्, निराकाङ्क्षत्वेनानन्वयात् । सूत्रारम्भसामर्थ्यात्पुनर्वाक्यार्थबाधकल्पने तु गौरवम् । 'इकः' इत्युपस्थितञ्च कचित्सामानाधिकरण्येनान्वेति 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् ।' यथा 'एति' इत्यादाविगभिन्नमङ्गं सम्भवतीति तदन्तविधाविगन्तस्याङ्गस्येत्याद्यर्थः । 'मिदेर्गुणः' ( ७-३-८२ ) इत्यादौ इगभिन्नस्य मिदोऽसम्भवान्मिदेरवयवस्येको गुण इति वैयधिकरण्येनान्वयः । एतत्सूत्राभावे आतः, सन्ध्यक्षरस्य, व्यञ्जनस्य च गुणः स्यात्तन्निवृत्तये इदम् ।

वस्तुतस्तु यदि आकारस्य गुणः स्यात्तदा 'गापोष्टक्' ( ३-२-८ ) इति सूत्रे कित्करणमनर्थकं स्यात् । कित्त्वं हि 'आतो लोपः' इत्याकारलोपार्थम् । यद्याकारस्य गुणः स्यात्तदा द्वयोरकारयोः पररूपेणेष्टसिद्धौ कित्त्वं व्यर्थं स्यात्तदेव व्यर्थीभूय ज्ञापयति—नाकारस्य गुणो भवतीति ।

सन्ध्यक्षरस्य गुणनिवृत्तिरपि न फलम्, यदि 'ग्लायति' इत्यादावैकारादेर्गुणः स्यात्तदा 'ग्लै' इत्यत्र ऐग्रहणमनर्थकं स्यात् 'ग्ले' इत्येवोपदिशेत्, इत्यैकारोच्चारणसामर्थ्यादैकारादेर्गुणो न स्यात् । 'भेत्ता' इत्यादौ व्यञ्जनस्य गुणनिवृत्तिरपि न प्रयोजनम्, 'सप्तम्यां जनेर्डः' इत्यत्र डित्वकरणाज्ज्ञाप्यते न व्यञ्जनस्य गुणो भवतीति । अन्यथा प्रमाणकृतान्तर्येण नकारस्याकारे गुणे पररूपे 'पङ्कजम्' इत्यादिसिद्धेः । न चानुनासिकापत्तिः, पररूपेण रूपग्रहणात्पररूपस्य विधानेन सिद्धेः । वस्तुतस्तु स्थानकृतान्तर्यस्य बलीयस्त्वात् । न च व्यञ्जनस्य 'अभैत्सीत्' इत्यादौ वृद्धिप्रसङ्गः, गुणसाहचर्याद् व्यञ्जनस्य वृद्धेरप्यप्राप्तेः ।

'भिन्नः' इत्यादौ गुणनिषेधार्थमपि न, क्नोः कित्त्वकरणेनानिग्लक्षणयोरपि गुणवृद्ध्योर्निषेधज्ञापनात् । अन्यथा 'पुगन्त' इत्यस्य इग्लक्षणगुणाभावेन 'क्ङिति च' इत्यस्याप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव ।

वस्तुतस्तु स्थानकृतान्तर्यस्य बलीयस्त्वेन 'द्विजः' इत्यत्र नस्य स्थाने ए गुणः, 'गमेरप्यचं डो वक्तव्यः' गमेश्च गुण उच्यमान ओकारः प्राप्नोति, इति भाष्यात्, 'अन्येष्वपि दृश्यते' इत्यत्र दृशिग्रहणाच्च गमेर्डे 'ग्रामगः' इत्यादौ ओकारगुणश्च प्राप्नोति, तद्वारणाय कमेर्णिङि 'कामयते' णिङङ्गान्निरसने' इति पञ्चम्यात् णिङि पदं निरस्यति 'पादयते' इत्यादौ 'क्ङिति च' इत्यनेन वृद्धिनिषेधवारणाय च निषेधस्य इग्लक्षणे एव प्रवृत्तये च 'इको गुणवृद्धी' इति सूत्रं कर्तव्यमित्यन्यत्र विस्तरः ।

'अचश्च' 'अचः' इति पञ्चम्यन्तस्य 'अचस्' इत्यनुकरणम् । ततः सौ नपुंसकत्वाच्छान्दसत्वाद्वा सोर्लुकि न लुमतेति प्रत्ययलक्षणनिषेधात् 'अत्वसन्तस्ये'ति दीर्घाभावः । ऊकालसूत्रादच् इति, 'ह्रस्वदीर्घप्लुतः' इति चानुवर्तते । इत्येवम्, उच्चार्य, इति चाध्याहियते । शब्दस्वरूपपरह्रस्वादिग्रहणानुवृत्तिसामर्थ्यादेव निर्धार्यते इत्यध्याहृत्य तृतीयया विपरिणम्य ह्रस्वः, दीर्घः, प्लुतः, इत्येवमुच्चार्य यत्र सूत्रेऽज्विधीयते तत्र 'अचः' इति षष्ठ्यन्तपदमुपतिष्ठते । तदाह—ह्रस्वेत्यादि । उपस्थितस्याचः यथायथं सामानाधिकरण्येन वैयधिकरण्येन चान्वयो बोध्यः । ह्रस्वादि-

## आद्यन्तौ टकितौ [ १-१-४६ ]

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ।

---

संज्ञया निर्धार्यन्ते इत्युक्त्या 'दिव औत्' 'अष्टन आ विभक्तौ' इत्यादौ नास्या उपस्थितिः । यत्र ह्रस्वादिपदं तत्र अच इत्युपतिष्ठते, एतावन्मात्रोक्तौ 'ह्रस्वं लघु' 'दीर्घं च' इत्यादावपि अच इत्युपतिष्ठेत । तथाच अचः स्थाने जायमानह्रस्वदीर्घयोरेव लघ्वादिसंज्ञा स्यान्नान्यह्रस्वादिषु, तन्निवृत्तये ह्रस्वादिपादैरित्याद्युक्तिः । एतत्सूत्राभावे 'सुपाद् ब्राह्मणकुलम्' 'लिट् कुलम्' इत्यादौ व्यञ्जनस्य ह्रस्वत्वापत्तिः । किञ्च 'भिद्यते' इत्यादौ 'अकृत्सार्व' इत्यनेन व्यञ्जनस्य दीर्घापत्तिः ।

'आद्यन्तौ टकितौ' आदिश्चान्तश्चाद्यन्तौ । नच 'घ्यन्तादजादन्तं विप्रतिषेधेन' इत्यनेनान्तशब्दस्य पूर्वनिपातो युक्त इति वाच्यम्, राजदन्तादिषु 'आद्यन्तौ' इति पाठेनादिशब्दस्यापि पूर्वनिपातबोधनात् । न चैवमपि आदेष्टिति, अन्तस्य कित्यन्वयेन मिलितस्यैकत्रान्वयबोधेच्छारूपसहविवक्षाया अभावेन द्वन्द्वानुपपत्तिः । अत एव 'धवं छिन्धि, खदिरं पश्य' इति विवक्षायां न द्वन्द्व इति वाच्यम्, पूर्वं टित्कित्समुदायस्याद्यन्तसमुदायेऽभेदेनान्वयं कृत्वा द्वन्द्वे पुनर्यथासंख्यसूत्रसामर्थ्येन प्रत्येकान्वयबोधः । एवमेव 'एचोऽयवायावः' इत्यादावपि बोध्यम् । वस्तुतस्तु एकरूपावच्छिन्नस्य एकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वयबोधनेच्छायाः सहविवक्षात्वेन टित आद्यवयवे कितोऽन्तावयवेऽन्वयेऽपि अन्वयिताऽवच्छेदकीभूतस्य समूहत्वस्यैक्येन सहविवक्षाया अबाधितत्वेन द्वन्द्वस्साधुरेव । प्रत्येकवृत्तिधर्मेण समुदायघटकपदार्थस्य प्रत्येकवृत्तिधर्मावच्छेदेनान्वयविवक्षायामेव द्वन्द्वासाधुत्वम् । अत एव भाष्ये 'अनाविश्नौ देवदत्तयज्ञदत्तौ' तत्र न ज्ञायते कस्याजाधनं कस्याविधनम्' इत्येवोक्तं न तु द्वन्द्वासाधुत्वमुक्तम् । तथा च तादृशभाष्याद् द्वन्द्वगर्भबहुव्रीह्यर्थसमूहस्य द्वन्द्वार्थसमूहेनान्वयोत्तरं पुनः प्रत्येकान्वयो न भवतीत्येवोपलभ्यते । द्वन्द्वार्थसमूहयोस्तु अन्वये प्रत्येकान्वयो भवत्येवेति तत्त्वम् । अत एव 'इत् च, इत् च इतौ' इत्येकशेषः सिध्यति, उक्तरूपेण सह विवक्षायाः सत्त्वात् । अन्यथा एकस्येतः टिति अपरस्येतः कित्यन्वयादेकशेषानुपपत्तिः । समूहत्वेन प्रत्येकान्वये तु न दोषः । टश्च कश्च टकौ तावन्तौ यस्य तौ टकितौ समुदायस्योद्भूतावयवभेदविवक्षया द्विवचनम् । टकाराकार उच्चारणार्थः, अकारविशिष्टस्य टस्येत्त्वाभावात् । द्वन्द्वान्ते श्रूयमाणस्य इतः प्रत्येकं सम्बन्धात् टित् आदिः, कित् अन्त इति फलति । आद्यन्तावित्तौ कस्य वा क इत्याकाङ्क्षायामाह-यस्योक्ताविति —यमुद्दिश्य विहितौ टित्कितौ सोऽवयवीति भावः । प्रत्ययाघटकौ इत्संज्ञौ टकावस्याविकृतम्, टकारककारयोः स्थानत्रये एवेत्संज्ञा आगमे, धातौ प्रत्यये च । नास्या धातावुपस्थितिः, 'आद्यन्तौ टित्कितौ षष्ठीनिर्दिष्टस्य' इति भाष्याद् यत्र स्थानषष्ठी प्राप्ता तत्रोपतिष्ठते, इत्यर्थाद् धातौ तदभावेनैतदनुपस्थितेः 'उत्सर्गसमानदेशा अपवादाः' इति न्यायादष्टाध्यायीसूत्रेषु वार्तिकेष्वेव प्रयोगश्च । नापि प्रत्यये, तत्रापि स्थानषष्ठ्यभावात्, 'प्रत्ययः परश्च' इत्यधिकारात् 'गापोष्टक्' 'व्रीहिशाल्योर्ढक्' इत्यादावानन्तर्यसम्बन्धे षष्ठी, न तु स्थानसम्बन्धे, अधिकारप्राप्तपरत्वस्य बाधापत्तेः ।

यद्वा एतस्या विषये द्वयोरेव प्राप्तिः 'षष्ठीस्थाने' ( १-१-४९ ) इत्यस्य 'प्रत्ययः परश्च' ( ३-१-२ ) इत्यस्य वा । तत्र बाध्यशास्त्रव्यवधानशून्यं शास्त्रम् 'षष्ठी स्थाने' इत्येव । प्रत्ययः परश्च इति तु बाध्यषष्ठीस्थाने इत्यनेन व्यवहितम् । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेनेयं अव्यवहितायाः षष्ठीस्थानेऽस्या एव बाधिका । प्रत्यये तु एतां परत्वाद् बाधित्वा परश्चेत्येव प्रवर्तते इति 'चरेष्टः' इत्यादिटित्प्रत्ययेषु नास्याः प्रवृत्तिः । 'ह्रस्वनद्यापो नुट्' ( ७-१-५४ ) 'ङ्णोः कुक् टुक् शरि' ( ८-३-२८ ) इत्याद्युदाहरणम् ननु टकौ इतौ स्तोऽनयोरिति टकितौ इत्येवास्तु नच लाघवाभावः, कुकि ककाराकरणेन पदद्वयाभावेन च लाघवादिति चेन्न, टुकः पर्यायेण आदित्वान्तत्वयोरापत्तेः, 'धात्वन्तस्य टः' ( ३-२-४८ वा० ) 'राज्ञः क च' ( ४-२-१४० ) 'शुषः कः' ( ८-२-५१ ) 'खरि च' ( ८-४-५५ ] इत्यादौ विधेयस्य टादेराद्यन्तत्वापत्तेश्च ।

मिदचोऽन्त्यात्परः । [ १-१-४७ ]

'अचः' इति षष्ठ्यन्तम् । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ।

षष्ठी स्थानेयोगा । [ १-१-४९ ]

---

'मिदचोऽन्त्यात्परः' मकार इद्यस्य स मित्=नुमादेर्नकारादिः । मकारे मकारावयवत्वमारोपितम्, वर्णस्य वर्णान्तरानवयवत्वात् । अच इति निर्द्धारणे षष्ठी, न तु पञ्चमी । यदि तु 'अन्त्यात्' इति सम्बन्धात्पञ्चमी स्यात्तदा यत्रान्त्यभूतोऽच् तत्रैवास्याः प्रवृत्तिः स्याद् यथा 'कुण्डानि' 'वनानि' इत्यादौ । 'यशांसि' इत्यादावन्त्याचोऽभावादेतदप्रवृत्तौ 'अलोऽन्त्यस्य' इत्यनेन अन्त्यस्य स्थाने नुम् स्यात् । तथा च 'इदितो नुम् धातोः' ( ७-१-५८ ) 'शे मुचादीनाम्' ( ७-१-५९ ) इत्यादिना इदिद्धातूनां मुचादीनाञ्च हलन्तत्वेन 'मिदचः' इत्यस्याप्रवृत्त्या 'अलोऽन्त्य'-इत्यनेनान्त्यस्य नुमादेशापत्त्या 'नन्दिग्रहि' ( ३-१-१३४ ) 'अनुपसर्गाल्लिम्पविन्द' (३-१-१३८) 'चिन्तिपूजि' (३-३-१०५) इत्यादिसौत्रनिर्देशासङ्गतिः । उक्तनिर्देशैलंघयानुरोधेन च निर्द्धारणषष्ठी एव कल्प्यते । नुमो मकारस्य वैयर्थ्यन्तु न, 'नपुंसकस्य झलचः' इत्यत्रानुवृत्त्या अजन्ते नुमागमाय चारितार्थ्यात् । न च निर्द्धारणपदार्थस्य समूहादेकदेशस्य पृथक्करणरूपत्वेन निर्द्धारणविभक्तेः समूहवाचकादेवोत्पत्तेः, अच्पदे अच्च अच्च अच्च इत्येवमेकशेषस्यावश्यकत्वेन तत्र बहुवचनं न्याय्यम् । अत एव 'कारके' इति भाष्ये निर्द्धारणे सप्तम्याम् 'कारकेषु' इति ब्रूयादित्युक्तमिति वाच्यम्, सौत्रत्वाद् 'व्यत्ययो बहुलम्' (३-१-८५) इत्यनेनैकवचनविधानात् ।

इयञ्च बाध्यसामान्यचिन्तया स्थानेयोगत्वप्रत्ययपरत्वयोरुभयोर्बाधिका 'तृणह इम्' (७-३-९२) इति निर्देशात्, भमो मित्करणाच्च । अचां मध्ये अन्त्योऽपि साजात्यादच् एव, न त्वक्षरसमाम्नायेऽचां मध्येऽन्त्य औकार इत्यव्याप्त्यतिव्याप्ती 'सर्वादीनि' इत्यादिनिर्देशात्, 'संघातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां निहन्तुमिति कृत्वा 'पञ्चारत्नि' इत्यादौ द्विगुस्वरो भविष्यति इति भाष्याच्च यस्य समुदायस्य मिद्विहितस्तद्घटकयावदच्समुदायस्तदन्त्यस्यैव ग्रहणात् । अत्र 'आद्यन्तौ' इत्यतः 'यथन्त इति वर्तते ततः पूर्वान्तः' इति भाष्याद् एकदेशे स्वरितत्वाद् 'अन्त' इत्यनुवर्तते तदाह—तस्यैवान्त इति—तस्येत्यनेन यस्य मिद्विहितस्तत्समुदायस्यैव ग्रहणं न त्वन्त्याचः, 'संघातक्तोऽसौ' इत्युक्तभाष्यात् । अत एव 'पञ्च अरत्नयः प्रमाणमनयोरिति । पञ्चारत्नि' इत्यत्र 'इगन्तकपाल' (६-२-२९) इतीगन्ते उत्तरपदे परे पूर्वपदस्य प्रकृतिस्वरः सिध्यति । अन्त्याचोऽवयवत्वे तु इकारावयवो नकारः 'अवयवावयवः समुदायावयवः' इति न्यायेन अरत्निरूपोत्तरपदस्याप्यवयवत्वेन इगन्तोत्तरपदपरकत्वाभावात्पूर्वपदप्रकृतिस्वरो न स्यात् । वस्तुतस्तु अन्त इत्यनुवृत्तिर्व्यर्था, 'उरण् रपरः' इत्यत्रेवात्र परशब्दस्य अवयवत्वसमानाधिकरणोत्तरत्वावच्छिन्नवाचकत्वमाश्रित्य निरूपितत्वसम्बन्धेन उद्देश्यभूतसमुदायस्य अवयवत्वे, अवधित्वसम्बन्धेन च अन्त्याचश्चान्वयेन सर्वेष्टसिद्धेः । 'मुञ्चति' इत्यादावेकस्यैवाचः अच्समुदायघटकान्त्याच्त्वं व्यपदेशिवद्भावेन बोध्यम् । अन्त इत्यंशस्तु तत्र बाधितत्वात्त्यज्यते । मकारे पदावयवत्वं तन्मध्यपतितन्यायेन । आदिपदानुवृत्त्या मितः परादित्वं तु न, 'वारीणि' इत्यादौ नकारस्य प्रत्ययावयवत्वे नान्ताङ्गाभावेन दीर्घाघनापत्तेः । पूर्वस्य परस्य च समुदायस्य अनवयव एव तु न मित्, 'वहं लिहः' इत्यत्र नुमो नकारस्य पदानवयवत्वेनानुस्वारानापत्तेः । मकारोऽस्त्यस्येति मी=मकारवान् इत्यर्थे 'म्यचोऽन्त्यात्परः' इति तु न सूत्रितम्, इणो गमादेशस्य म्नाचाखोर्मनादेशस्य च अन्त्यादचः परत्वापत्तेः । नच लाघवाभावः, मुमि मकाराकरणेन पदद्वयाकरणेन च लाघवसत्वात् ।

'षष्ठी स्थानेयोगा' प्रतियोगिवाचकात् सम्बन्धे षष्ठीविधानात् सर्वत्र शास्त्रे सम्बन्धस्य प्रतियोगिमात्रमुपात्तम् । 'इको यणचि' इत्यत्र षष्ठ्यर्थसम्बन्धस्य प्रतियोगी इक्पदार्थः । अनुयोगी तु नास्ति । नच यणनुयोगी, यणोऽसिद्धतया अनुयोगित्वासम्भवात् । तत्रानुयोगिनियम-

अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या । स्थानं च प्रसङ्गः ।

---

नागाह—षष्ठी स्थानेयोगेति—अत्र शास्त्रेऽसति प्रतिबन्धके षष्ठ्यर्थः सम्बन्धः स्थानपदार्थानुयोगिक एव । एतस्य सूत्रस्यानुयोगनिर्णयार्थत्वादेव यत्र 'ऊदुपधाया गोहः' ( ६-४-८९ ) इत्यादावनुयोगिवाचकपदमुपात्तं तत्र नास्याः प्रवृत्तिः, अनुयोगिपदवैयर्थ्यापत्तेः । अनुयोगिनोऽनिर्णये सम्बन्धविशेषस्यापि निर्णयो न स्यादिति फलितार्थमाह—अनिर्द्धारितसम्बन्धेति—एतत्सूत्रमन्तरा न निर्द्धारितः = निश्चितः सम्बन्धविशेषरूपोऽर्थो यस्याः षष्ठ्याः सा षष्ठी स्थानपदार्थानुयोगिकसम्बन्धार्थिका ।

केचित्तु स्थाने - स्थानपदार्थे वाचकतासम्बन्धेन योगः=सम्बन्धो यस्याः सा षष्ठी स्थानेयोगा । उभयथापि स्थानशब्दस्यैदन्तत्वं निपातनात् । सप्तम्या अलुका तु न, 'स्थानेन योगोऽस्याः' इतिपक्षे तदसिद्धेः । स्थानपदार्थनिरूपितवाचकतावती षष्ठी इत्यर्थः । षष्ठीवाच्यः स्थानपदार्थ इति यावत् । तत्र निरूपकतासम्बन्धेन इकः षष्ठ्यर्थे स्थानेऽन्वयः । तत्र 'स्थानेयोगोऽस्याः' इति, 'स्थानेन योगोऽस्याः' इति व्यधिकरणबहुव्रीहिपरभाष्यविरोधात् । स्थानपदार्थस्य षष्ठ्यर्थत्वे लाघवात् 'स्थानं योगोऽस्याः' इति समानाधिकरणबहुव्रीहेरेव वक्तुमुचितत्वात् ।

'षष्ठी स्थाने' इति सूत्राभावे लोके यथा 'चैत्रस्य' इत्युक्ते आर्याः, यौनाः, मौखाः, स्रौवाश्च सम्बन्धा उपतिष्ठन्ते । भृत्यः, पुत्रः, शिष्यः, पुरोहितः, इत्युक्ते एव एक एवावतिष्ठते, अन्ये निवर्त्तन्ते । तथा 'इकः' इत्युक्ते 'आनन्तर्यम् सामीप्यम्, अवयवावयविभावः, स्थान्यादेशभावः, इत्यादयः सम्बन्धा उपस्थित भवन्ति । तत्रासति प्रतिबन्धके स्थानप्रतियोगिकसम्बन्ध एव षष्ठ्यर्थ इत्यनेन निर्णीयते । स्थानपदार्थश्च प्रसङ्गः, 'उरण्' इति सूत्रे भाष्ये 'षष्ठी स्थाने' इत्यतः 'स्थाने' इति वर्तते । 'स्थानशब्दश्च प्रसङ्गवाची' इत्युक्तेः । प्रसङ्गश्च प्राप्तिः । प्राप्तिश्चात्र आहार्यज्ञानरूपा या आपत्तिस्तद्रूपैव । तथा हि 'बाधसमकालिकेच्छाजन्यं ज्ञानमाहार्यम् । यथा कश्चिद् भृत्यः स्वामिनं ब्रूते 'त्वं माता त्वं पिता' इति । तदाहार्यज्ञानम् मातृत्वपितृत्वाभावसमकालिकमातृत्वपितृत्वविषयकत्वात् । इच्छाजन्यच्च ज्ञानं न बाध्यं नापि बाधकम् । प्रकृते 'सुध्युपास्यः' इत्येव शब्दस्तत्र प्रक्रियानिर्वाहाय 'सुधी उपास्यः' इति कल्पनामात्रमाहार्यज्ञानम् । तथा च इकः प्रसङ्गे आहार्यज्ञाने सति यण्घटितज्ञानं कर्तव्यमित्येव सूत्रेण बोध्यते ।

स्थानित्वञ्च आहार्यज्ञानीयविषयतापर्याप्त्यधिकरणत्वम् । प्रकृते यकारे इकारज्ञानमाहार्यम् । तद्विषयतापर्याप्त्यधिकरणत्वमिकारे । इत्यत इकारः स्थानी । आहार्यज्ञानसत्ताव्याप्यसत्तापर्याप्त्यधिकरणत्वमादेशत्वम् । प्रकृते यणादेशः । इकारज्ञानरूपाहार्यज्ञानसत्ताव्याप्या या सत्ता यण्सत्ता । तत्सत्तापर्याप्त्यधिकरणत्वं यण इत्यादेशत्वं तस्य । यद्वा आपत्तिविषयकबुद्धिविषयतापर्याप्त्यधिकरणत्वस्थानित्वम्, आपत्तिसत्ताव्याप्यसत्ताश्रयबुद्धिविषयतापर्याप्त्यधिकरणत्व मादेशत्वम् । आहार्यज्ञानानन्तरम् इकारबुद्धिमादाय लक्षणसमन्वयः । आपत्तिसत्ताव्याप्यसत्ता यण्सत्ता तदाश्रयो यण् तद्बुद्धिविषयतापर्याप्त्यधिकरणत्वम् यण इत्यादेशत्वं तस्य । यद्वा स्थानपदार्थानुयोगिकसम्बन्धवाचकप्रत्ययप्रकृतिबोध्यत्वं स्थानित्वम् । तादृशप्रकृतिबोध्यसत्ताव्याप्यसत्ताश्रयत्वमादेशत्वम् । अत एव स्थानिवत्सूत्रे कैयटे 'अपवादप्रसङ्गस्तु' इति प्रतीकमादाय 'बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भाव' इत्युक्तम् । तत्र यदीत्युक्त्याऽन्यथोत्सर्गकृतप्रसङ्गो नास्तीति सूचितम् । तत्र तयोः स्थान्यादेशभावलक्षणत्वे एव सङ्गच्छते इति दिक् । स्थानपदोत्तरसप्तम्याः 'राहूपरागे स्नायात्' इत्यत्रेव कालोऽर्थः । तथा च अजव्यवहितपूर्वस्य इकः ।

प्रसङ्गे इगुच्चारणप्राप्तिकाले यण् उच्चारणीयः संहितायां सत्याम्' इति 'इको यणचि' इत्यस्यार्थः सम्पन्नः । अनिर्धारितसम्बन्धार्थकषष्ठीश्रुतौ स्थानपदमुपतिष्ठते इति भावः । 'ऊदुपधाया गोहः' 'नास इह' इत्यादौ उपधापदसन्निधानेनावयवावयविभावसम्बन्धरूपषष्ठ्यर्थस्य निर्णीतत्वात्

स्थानेऽन्तरतमः । [ १-१-५० ]

प्रसङ्गे सति सदृशतम आदेशः स्यात् । 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' [ प. १४ ]

---

'गोहः' 'शासः' इति षष्ठी न स्थानपदार्थानुयोगिकसम्बन्धार्थिका । किन्तु अवयवावयविभावसम्बन्ध-बोधिकैव । तत्रैव 'उपधायाः' इत्यत्र षष्ठी अनिर्धारितसम्बन्धार्थकतया स्थानपदार्थानुयोगिकसम्बन्धा-र्थिकैव । स्थान-सामीप्यानन्तर्यादीनां षष्ठीवाच्यत्वं तु मनोरमा-शब्दरत्न-शेखरादिषु दूषितम् । ननु लोके स्थानशब्दोऽधिकरणे प्रसिद्धः । तद्यथा शिवस्थानं कैलासः, विष्णुस्थानं वैकुण्ठः । शिवा-धिकरणम्, विष्णवधिकरणमित्यर्थः । एवम् 'इको यणचि' इत्यादौ इक्पदार्थस्य निरूपकतया, निरू-पिततया, अभेदेन वा स्थानपदार्थेऽन्वये 'इकोऽधिकरणे यण् स्यात्' इति, इगभिन्नाधिकरणको यण् स्यादिति वार्थे इको निवृत्तिर्न स्यात् । अत उक्तं स्थानं च प्रसङ्ग इति । न च स्थानपदं प्रसङ्गार्थेऽप्रसिद्धम्, अभियुक्तैरिष्टौ 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्यादिवाक्ये स्थानशब्दस्य प्रसङ्गार्थकत्वदर्शनात् । तत्र यथा शरैर्दर्भा निवर्त्यन्ते तथा 'इको यणचि' इत्यादावपि यणाद्यादेशैरिगादयो निवर्त्यन्ते । तत्र यः प्रसक्तः सन् निवर्तते स स्थानीति व्यवह्रियते । यो निवर्तयति स आदेश इति । भाष्ये तु शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदतः स्थानात् । शब्दस्यापि शब्देनानन्तरादयोऽभि-सम्बन्धाः । अस्तेर्भूर्भवतीति सन्देहः—स्थाने अनन्तरे समीपे वेति । सन्देहमात्रमेतद्भवति । सर्व-सन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमि'ति । स्थाने इति व्याख्या-स्यामः । 'स तर्हि अयं योगो वक्तव्यः' इत्येवं सूत्रं प्रत्याख्यातं सम्बन्धनिर्णयाय । 'निर्दिश्यमान-स्यादेशा भवन्ति' इति परिभाषालाभाय च वक्तव्यमित्युक्तम् । तथाहि—यतः सा इत्यध्याह्रियते । यतः षष्ठी सा एव षष्ठीप्रकृतिः=षष्ठीप्रकृतिशक्यः स्थानेयोगा=स्थानपदार्थानुयोगिकसम्बन्धप्रति-योगितया युज्यते न शास्त्रान्तरयो विधि-यदागमपरिभाषाप्रयोज्यशब्दबोधविषयस्तदन्तादिरित्याशयः । तथा चादेशस्य निर्दिश्यमानः षष्ठीप्रकृतित्वेनोच्चार्यमाणसजातीय एव स्थानीति 'निर्दिश्यमानस्या-देशा भवन्ती' ति सिद्धम् ।

'स्थानेऽन्तरतमः' अत्र स्थानशब्दो यदि प्रसङ्गार्थकस्तदा एकस्य स्थाने अनेकेषामादेशानां प्रसङ्गे=प्राप्तौ अन्तरतमः=प्राप्तानां मध्ये यः सदृशतमः=अतिशयेन सदृशः स एवादेशो भवति नान्यः । यद्यपि अन्तरशब्दस्य सदृशोऽर्थः कोशे नोक्तः । तथाहि—अन्तरमवकाशा-वधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ इत्यमरः । तथापि भाष्यादिप्रामाण्यात्सदृशार्थकोऽपि । यथा चैत्रसदृशो मैत्र इत्युक्तौ केन धर्मेण सदृश इत्याकाङ्क्षा जायते तथा 'स्थानिसदृश आदेशो भवति' इत्यत्रापि सादृश्यनियामकधर्मविषयिणी आकाङ्क्षा उदेति । एवञ्च 'ओष्ठस्थानस्य ओष्ठस्थानः, एकार्थस्य एकार्थः, प्रमाणतोऽकारो गुणः प्राप्नोति, 'सोष्मणः सोष्माणः' 'नादवतो नादवन्तः,' इत्यादिभाष्योक्त्या स्थानम्, १ अर्थः २, प्रमाणम्=मात्रा ३, गुणः=बाह्य-प्रयत्न इति चत्वारो सादृश्यनियामकत्वेन गृह्यन्ते । तदुक्तं बौद्धैः—सादृश्यञ्चात्र स्थानार्थगुणप्रमाण-कृतमिति । गुणग्रहणं सादृश्यनियामकधर्मान्तरस्याप्युपलक्षणमित्यग्रे वक्ष्यते । अतिशयेन सदृश इत्यस्याशयः—न्यूनधर्मेण सदृशापेक्षया अधिकधर्मेण सदृशोऽतिशयेन सदृश इति स एवादेशः । यथा 'झयो होऽन्यतरस्याम्' ( ८-४-६२ ) इत्यनेन महाप्राणवतो हकारस्य महाप्राणवान् पूर्व-सवर्णादेश इति विवक्षायां वर्गद्वितीयचतुर्थाः खादयः प्राप्नुवन्ति । नादवतो हस्य नादवन्त इत्यर्थे वर्ग-तृतीया गादयः, महाप्राणवतः नादवतश्च हस्य स्थाने यो नादमहाप्राणोभयप्रयत्नवानतिशयेन सदृशो वर्गचतुर्थः घः, झः, ढः, धः, भो वा स एव भवति यथा वाग्घरिः, 'नाज्झलौ' षड्ढर्षाः, तद्धिः, ककुब्भरिः, इत्यादिषु । अतिशयार्थलाभे च तमब्ग्रहणमेव मानम् ।

तत्र स्थानकृतसादृश्योदाहरणम्—'सुद्ध्युपास्यः' इति, 'इको यणचि' इत्यनेन तालुस्थानकस्येकारस्य तालुस्थानको यकारः। अर्थकृतसादृश्यस्य 'क्रोष्टा' इति। अत्र 'तृज्वत्क्रोष्टुः' ( ७–१–९५ ) इत्यनेन शृगालार्थकस्य क्रोष्टुशब्दस्य स्थाने तदर्थकः क्रोष्टृशब्द एवादेशो नतु कर्त्रादिः। वस्तुतस्तु 'पद्दन्नोमास्' ( ६–१–६३ ) इति, 'तृज्वत्क्रोष्टुः' इत्यादि च सूत्रं नादेशविधायकं, किन्तु द्विविधशब्दानां कोशलोकसिद्धतया कस्यां विभक्तौ कस्य प्रयोग इति नियामकत्वमेवानयोरिति नेदमर्थकृतसादृश्येनादेशस्योदाहरणम्। अर्थकृतसादृश्यस्योदाहरणम्–'सुधी उपास्यः' इत्यत्रानुमानिकस्थान्यादेशपक्षे 'सुधीभिरुपास्यः सुध्युपास्यः' सुधीरुपास्यो यस्य स सुध्युपास्यः, इत्येवं द्व्यर्थकः सुध्युपास्यशब्दस्तत्र 'सुधीभिरुपास्यः' एतदर्थकस्य 'सुधी उपास्यः' इत्यस्य स्थाने अर्थकृतसादृश्येन सुधीकर्तृकोपासनाकर्मीभूतार्थक एव सुध्युपास्य इत्यादेशो नतु यत्किञ्चित्कर्तृकोपासनाकर्मीभूतः सुधीउपास्यस्तदर्थकसुध्युपास्य इत्यादेशः। यत्तु सुधी उपास्य इत्यस्य स्थानेऽर्थकृतसादृश्येन 'मध्वरिः' इति नादेशः इत्यभिनवचन्द्रिकाकारस्तन्न, अजव्यवहितेग्घटितस्य सुधी उपास्य इत्यस्य स्थाने अजव्यवहितयघटित आदेश इत्येवानुमानिकस्थान्यादेशभावः, तथा च 'मध्वरिः' इत्यस्य यकाराघटितत्वेन तदादेशत्वासिद्धेः। न च लाघवाद् यण्घटितत्वेनैवादेशकल्पनेति तदुक्तिर्नासङ्गतेति वाच्यम्, 'सुधी उपास्यः' इत्यस्य स्थाने यण्घटितः क आदेशः स्यादित्याकाङ्क्षायामुपस्थितत्वात् 'सुध्युपास्यः' इत्यस्यैव तदादेशत्वसिद्धेः। न च यकारघटितस्य 'सुध्युपास्यः' इत्यस्य नोपस्थितिः, यकारघटितः कः शब्द इत्याकाङ्क्षायामुपस्थितत्वात्तस्यैव यकारघटितत्वकल्पने लाघवात्। गुणतः सादृश्यस्य 'वाग्घरिः' अत्र घोष-संवार-नाद-महाप्राणवतो हस्य पूर्वगकारसवर्णस्तादृशप्रयत्नवान्घकार एव भवति नान्यः, अन्यत्र हकारीययावद्बाह्यप्रयत्नसाम्याभावात्। यद्यपि गुणोऽत्र बाह्यप्रयत्नः, तथैव भाष्ये दर्शनात्, तथापि गुणशब्दोऽत्र स्थानार्थप्रमाणभिन्नधर्ममात्रपरः। अत एवात्रैव सूत्रे भाष्ये आन्तरतम्याभाववत्त्वरूपमेव ऋकारशकारयोः सादृश्यमित्याशयेन 'अनान्तर्य्यमेवानयोरान्तर्य्यम्' इत्युक्तिः संगच्छते।

प्रमाणतः—'अमुष्मै, अमूभ्याम्' इत्यत्र 'अदसोऽसेः' ( ८–२–८० ) इत्यनेन एकमात्रकस्य एकमात्रकोकारः। द्विमात्रकस्य द्विमात्रकः। एवमन्यदप्यूह्यम्। 'स्थानेऽन्तरतमः' इति सूत्रे यदि स्थानपदं प्रसङ्गार्थकं तदा 'षष्ठी स्थाने' इति सूत्रात्प्रसङ्गार्थकस्थानपदानुवृत्त्या सिद्धेऽत्र स्थानपदं व्यर्थं स्यादतः स्थानपदमत्र ताल्वादिस्थानपरम्। तथा च स्थाने इत्यनुवर्त्य एकस्य स्थाने अनेकेषामादेशानां प्रसङ्गे स्थानेन सदृशतम आदेशो भवतीत्यर्थः सम्पद्यते। नन्वेवमपि स्थाने ग्रहणं व्यर्थम्, एकस्य स्थाने अनेकेषामादेशानां प्रसङ्गे सति सदृशतम आदेश इत्यर्थक 'अन्तरतमः' इति सूत्रेणैव स्थानेन सदृशस्याप्यादेशस्य सिद्धेरिति चेन्न, स्थानेग्रहणस्य योगविभागेन 'यत्रानेकविधमान्तर्य्यं तत्र स्थानत आन्तर्य्यं बलीयः' इति परिभाषालाभार्थत्वात्। तथा हि—'अन्तरतमः' इति प्रथमं सूत्रम्। तस्योक्तरीत्या एकस्य स्थानेऽनेकेषामादेशानां प्रसङ्गे सति सदृशतम आदेशो भवति, इत्यर्थः। द्वितीयम्–'स्थाने' इति। तच्च तृतीयया विपरिणम्यते। अत्र 'षष्ठी स्थाने' इत्यतः 'स्थाने' इति, 'अन्तरतमः' इति सूत्रमनुवर्तते। तथा च 'एकस्य स्थानेऽनेकेषामादेशानां प्रसङ्गे सति स्थानेन सदृशतम आदेशो भवति' इत्यर्थः। एतदर्थस्यापि पूर्वसूत्रेण संग्रहादिदं व्यर्थं सन्नियमार्थम्। प्रमाणादिना सदृशे स्थानेन च सदृशे आदेशे प्राप्ते स्थानेनैव सदृशतम आदेशो भवति नान्येन सदृशः। तथा च 'चेता' 'स्तोता' इत्यादौ 'सार्वधातुकार्धधातुकयोः' इत्यादिना प्रमाणेन आन्तर्य्येण मात्रिकेकारोकारयोः स्थाने मात्रिकोऽकारो गुणः प्राप्तः, स नियमेन वार्य्यते। स्थानकृतसादृश्येन ताल्वोष्ठस्थानयोरिकारोकारयोः ताल्वोष्ठस्थानकौ एकारौकारौ एव भवतो नाकार इति। नन्वेवमपि इकारस्य एकारः, उकारस्य ओकारो गुणो न स्यात्, कण्ठस्थानाधिक्येन स्थानत आन्तरतम्याभावादिति चेन्न, 'चेता, स्तोता, प्रमाणतोऽकारो गुणः प्राप्नोति। स्थानत एकारौकारौ। पुनः स्थाने ग्रहणादेकारौकारौ भवतः' इति भाष्यादिप्रामाण्याद्यत्किञ्चित्स्थानसाम्यस्यात्र विवक्षितत्वात्। एकस्य स्थानेऽनेकेषामादेशानां प्राप्तिरस्या विषयम्।

## तस्मिन्निति निर्दिष्टे पूर्वस्य । [ १-१-६६ ]

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ।

---

'तस्मिन्निर्दिष्टे पूर्वस्य'—तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्सप्तम्यन्तपदमेवार्थः । न तु 'तस्मिन्नणि च युष्माकास्माकौ' ( ४-३-२ ) इति सूत्रस्य 'तस्मिन्' इत्यस्यानुकरणम्, तथा सति तस्मिन्पदघटिते 'तस्मिन्नणि' इत्यत्र खञणोः प्रत्ययत्वात्ताभ्यां यस्माद्विहितौ तदादेरुपस्थित्या 'निर्दिष्टेऽणि च पूर्वयोर्युष्माकास्माकौ' इति न्यासेन सिद्धे स्वतन्त्रसूत्रकरणस्य वैयर्थ्यापत्तेः, 'ङमो ह्रस्वादचि' इति सूत्रे 'तस्मिन्' इत्यस्य 'तस्मादित्युत्तरस्य' इत्यस्य चोपस्थितिमाशङ्क्य 'उभयनिर्देशे पञ्चमी-निर्देशो बलीयान्' इति भाष्यकृता समाहितत्वाच्च ।

'तस्मिन्' इत्यत्राधिकरणे सप्तमी, न तु 'यस्य च भावेन भावलक्षणम्' ( २-३-३७ ) इत्यनेन भावलक्षणभावे, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायात्, 'संहितायाम्' (६-१-७२) इति सूत्रे 'अधिकरणं नाम त्रिप्रकारम्—व्यापकम्, औपश्लेषिकम्, वैषयिकम् इति । शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात्, 'इको यणचि' अचि उपश्लिष्टस्य' इति भाष्याच्च ।

सत्सप्तम्यां तु नास्या उपस्थितिः । अत एव 'कृतिः कृष्णस्य' 'कर्ता कृष्णो जगतः' इत्यादौ 'कर्तृकर्मणोः कृति' ( २-३-६५ ) इत्यनेन षष्ठी सिद्ध्यति । 'कर्तृकर्मणोः कृति' इत्यत्र सती सप्तमी, 'तस्मिन्निति' सूत्रमौपश्लेषिकाधिकरणसप्तम्यामेव प्रवर्तते इत्यत्र च 'उभयप्राप्तौ कर्मणि' (२-३-६६) इति सूत्रमपि मानम् । अन्यथा 'तस्मिन्' इत्यस्य सत्सप्तम्यामपि प्रवृत्तौ कृदन्ततदाद्यव्यवहित पूर्वत्वस्यैकदा कर्तृकर्मवाचकपदयोरसम्भवेन षष्ठ्या उभयत्र प्राप्त्यभावात् 'उभयप्राप्तौ' ( २-३-६६ ) इति सूत्रवैयर्थ्यं स्पष्टमेव । 'तस्मिन्' इति सप्तमी तु 'निर्दिष्टे' इत्यनेन सामानाधिकरण्येनान्वयाय । निर्शब्दस्याव्यवधानमर्थः । दिशेरुच्चारणमर्थः । क्तप्रत्ययार्थः कर्म । 'तस्मिन्' इत्यस्य औपश्लेषिकाधिकरणसप्तम्यन्तपदे इत्यर्थः । विपर्यासकेतिशब्दबलात्सप्तम्यन्तपदार्थे इत्यर्थः, तथा च औपश्लेषिकाधिककरणसप्तम्यन्तपदस्य अर्थे अव्यवधानेनोच्चारिते पूर्वस्य कार्यं कर्तव्यमित्यर्थोऽस्याः फलितः । यत्रौपश्लेषिकाधिकरणार्थकसप्तम्यन्तं पदं तत्रेयमुपतिष्ठते । तत्र 'निर्दिष्टे' इति, पूर्वस्य इति पदद्वय-मुपतिष्ठते, किमपेक्षया पूर्वस्येत्याकाङ्क्षया सप्तम्यन्तपदार्थापेक्षयेति बोध्यम् ।

तथाच 'इको यणचि' ( ६-१-७७ ) इत्यत्र सप्तम्यन्तं पदमचीति । तदर्थः, अकारादयः स्वराः । तेषु स्वरेषु यस्य पूर्वस्येकः कार्यं चिकीर्षितं तदपेक्षया अव्यवधानेनोच्चारितेषु सत्सु इकः स्थाने यण् इत्यर्थः सम्पद्यते । स्वरेऽव्यवहिते तदपेक्षया पूर्वं इगपि अव्यवहित एवेति फलितार्थमाह—सप्तमीनिर्देशेनेति–सप्तम्यन्तपदार्थोच्चारणेन विधीयमानम्=क्रियमाणं कार्यम् । वर्णान्तरेण=अन्यो वर्णो वर्णान्तरम्, तेन=अन्यवर्णेन व्यवधानरहितस्य पूर्वस्य कार्यं बोध्यमित्यर्थः । वर्णान्तरेणेत्युप-लक्षणमर्द्धमात्राधिककालस्यापि । न चैवं संहिताधिकारस्य वैयर्थ्यमिष्टापत्तेः । अत एव 'संहितायाम्' ( ६-१-७२ ) इति सूत्रे अयं योगः शक्योऽवक्तुम्' इति । अत्र निर्दिष्टग्रहणेनाव्यवहिते एव उपश्लेषस्य बोधनात् । यद्यपि लोके किञ्चिद्दूरस्थितोऽपि 'वृक्षमूले तिष्ठति' कटव्यवधानेऽपि 'भूमौ शेते' इति । तथापि नात्र तथा, भाष्यप्रामाण्यात् । एवं च 'परः सन्निकर्षः' ( १-४-१०९ ) इत्यपि न कर्तव्यम् ।

एतत्सूत्राभावे 'इको यणचि' इत्यस्याजुपश्लिष्टस्य इकः स्थाने यण् इत्येवार्थः स्यात् । उपश्लेषः=सामीप्येन सम्बन्धः । उपश्लिष्टस्य=समीपे स्थितस्य । सामीप्यञ्च व्यवधानेऽपि भवति । यथा 'काशीसमीपे चैत्रस्य ग्रामः' इति व्यवहारः काशीचैत्रग्रामयोर्मध्ये ग्रामान्तरादिसत्त्वेऽपि भवति । तथा च 'सुधी उपास्य' इत्यत्र यदि अचिपदेन उकारो गृह्यते तदा तत्समीप इक् सकारोत्तर उकारः, धकारोत्तर इकारश्च उभयोर्यण् प्रसज्ज्येत । यदि अच् धीशब्देकारस्तदा तत्समीप इक् सुशब्दोकारः,

**तस्मादित्युत्तरस्य । [ १-१-६७ ]**

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य ज्ञेयम् ।

**अलोऽन्त्यस्य [ १-१-५२ ]**

षष्ठीनिर्दिष्टस्यान्त्यस्याल आदेशः स्यात् ।

---

उपलब्धोकारश्च उभयत्र यत्र प्राप्नोति । सामीप्यस्य पूर्वपरव्यवहिताव्यहितसाधारणत्वेन पूर्वस्य परस्य, व्यवहितस्याव्यवहितस्य च कार्ये प्राप्ते तद्वारणार्थमिदमावश्यकम् ।

सप्तम्यन्तपदार्थोच्चारणेन विधीयमानं कार्यमित्युक्त्या यत्र सप्तम्यन्तपदार्थः शब्दभिन्नस्तत्र नास्या उपस्थितिः, शब्दभिन्नस्य अर्थस्य उच्चारणासम्भवात् । तेन 'जनपदे लुप्' ( ४-२-८१ ) 'हरतेर्दृतिनाथयोः पशौ' ( ३-२-२५ ) इत्यादौ नास्योपस्थितिः, सप्तम्यन्तार्थस्य शब्दभिन्नत्वात् ।

'तस्मादित्युत्तरस्य' अत्र तत्पदस्य पञ्चम्यन्तपदमर्थः । ननु 'तस्मात्' इत्यनुकरणम् । 'तिङ्ङतिङः' ( ८-१-२८ ) इति सूत्रेषु भाष्यकृता प्रवर्तितत्वात् । पञ्चमी तु 'अन्यारादितर' ( २-३-२९ ) इत्यनेन दिग्योगेऽवधित्वार्थिका । नच 'उपपदविभक्तेः कारकविभक्तिः' इति न्यायादपादाने पञ्चमी अस्त्विति वाच्यम्, पञ्चम्यन्तपदघटितसूत्रविषयेऽपादानार्थकविभक्तेरसम्भवात् । नापि ल्यब्लोपे पञ्चमी, अत्रैव भाष्ये 'अतिङः पूर्वस्य अतिङः परस्येति सन्देहः' इति दिग्योगलक्षणपञ्चम्या एव सन्देहप्रदर्शनेन दिग्योगे पञ्चम्या एव तदभिमतत्वात्, बहुलघयसंस्कारानुरोधाच्च । इतिशब्दबलाद् तदिति पञ्चम्यन्तपदार्थपरः । पूर्वतोऽनुवृत्तं निर्दिष्टे इति पदं तस्मादित्यस्य समभिव्याहाराद् पञ्चम्या विपरिणम्यते । तथा च अव्यवहितोच्चारितात् पञ्चम्यन्तपदार्थात् परस्य कार्यं बोध्यमित्यर्थस्तत्फलितार्थमाह—पञ्चमीनिर्देशेनेति—दिग्योगपञ्चम्यन्तोच्चारणेन अत्र पञ्चम्यन्तपदस्योपादानम् । पूर्वसूत्रे सप्तम्यन्तपदस्य । पूर्वत्र पूर्वस्योपस्थितिरत्र परस्यैतावानेव विशेषः । शेषं पूर्ववदूह्यम् ।

अनयोः परिभाषयोः षष्ठीप्रकल्पकत्वमपि भाष्ये उक्तम् । तथा हि—'षष्ठी स्थाने' इत्यतः षष्ठी इत्यनुवर्तते सप्तम्यन्तार्थनिर्देशे तदनन्तरस्य पूर्वस्य षष्ठी । यत्र षष्ठी तस्य कार्यम् । पञ्चम्यन्तार्थनिर्देशे तदनन्तरस्योत्तरस्य षष्ठी । यत्र षष्ठी तस्य कार्यम् । एतत्फलितार्थमेव सप्तमी स्वस्मात्पूर्वां षष्ठीं कल्पयति, पञ्चमी स्वस्मात्परां षष्ठीं कल्पयतीति । यत्रोभयनिर्देशस्तत्र पञ्चम्या एव प्रकल्पकत्वं परत्वात्, यथा 'ङमो ह्रस्वादचि' इत्यत्र ।

आभ्यां परिभाषाभ्याम् अव्यवहितांशः, परश्चांशः, पूर्वांशः परांशश्चोपस्थाप्यते । यत्र तु योंऽशः सिद्धो बाधितो वा तमंशं त्यक्त्वा शेषांश एवोपतिष्ठते । 'इकः' इत्यत्र षष्ठी सिद्धैवेति अव्यवहितांशः पूर्वांशश्चेत्यंशद्वयमेवोपतिष्ठते । एवमेवान्यत्राप्यूह्यम् ।

'अलोऽन्त्यस्य' अत्र 'षष्ठी स्थाने' इति सूत्रमनुवर्तते । षष्ठीपदञ्च तृतीयया विपरिणम्यते । विधीयमान आदेश इत्याध्याह्रियते । 'अन्त्यस्य' इत्यनिर्धारितसम्बन्धार्थिका षष्ठी । अतः स्थाने इत्युपतिष्ठते । 'अलः' इति च ङसन्तम् । तत्रैवान्त्यस्येति विशेषणम् । एवञ्च 'स्थानयोगया षष्ठ्या विधीयमान आदेशोऽन्त्यस्यालः स्थाने स्यात्' इत्यर्थ उपलभ्यते । 'अल्' इति च 'अइउण्' सूत्राकारमारभ्य हल्सूत्रलकारान्तवर्णवाचकः प्रत्याहारः । यदि तु 'अलः' इति जसन्तं मत्वा 'स्थानषष्ठ्या विधीयमानोऽल्रूप आदेशोऽन्त्यस्य स्थाने भवतीत्युच्यते । बहुत्वन्त्वविवक्षितम् । अनेकाल्सूत्रेऽनेकाल्ग्रहणं न कर्तव्यम्, अनेकालादेशस्याल्रूपादेशत्वाभावात्स्वत एव सर्वादेशत्वसिद्धेः । न चैवम् 'पादस्य लोपः' ( ५-४-१३९ ) इत्याद्यभावरूपादेशेषु एतदप्रवृत्त्या सर्वादेशत्वापत्तिः, 'लुग्वा दुहदिह' ( ७-३-७३ ) इति सूत्रे 'घोर्लोपो लेटि वा' ( ७-३-७० ) इत्यतो लोप इत्यनुवर्तमाने लुग्ग्रहणं सर्वस्य क्सस्य लोपार्थम् । अधुना अभावादेशस्य सर्वादेशत्वसिद्धौ लुग्ग्रहणसामर्थ्येन 'अलोऽन्त्य'सूत्रेऽल्ग्रहणस्थाने आदेशभिन्नसर्वादेशपरकत्वज्ञापनेनादोषात्सदा अन्त्यपदेन पदस्यापि ग्रहीतुं शक्यतया 'वरमाद्भ्याम्' इत्यादौ अन्त्यस्यानडुदित्यस्यापि 'वसुस्रंसु' ( ८-२-७२ ) इति दकारादेशापत्त्या

ङिच्च । [ १-१-५३ ]

अयमप्यन्त्यस्यैव स्यात् । '—सर्वस्य' ( सू ४५ ) इत्यस्यापवादः ।

---

अन्त्यस्याल्रूपस्यैव ग्रहणार्थम् 'अलः' इति षष्ठ्यन्तं बोध्यम् । 'अलः' इत्यस्य षष्ठ्यन्तत्वेऽपि 'ङिच्च' इत्यास्यानेकालादेशोऽन्त्यस्य चेत् 'ङिदेव' इति नियमेन सिद्धेऽनेकाल्ग्रहणं व्यर्थमित्यपि न, 'रामैः' इत्यादौ 'आदेः परस्य' ( १-१-५४ ) इत्यस्य बाधनाय उभयपक्षेऽपि तदावश्यकत्वात् । स्थानषष्ठ्या विधीयमान इत्युक्त्या 'भविता' इत्यादौ तृच ऋकाररूपान्त्यस्याध्यवयव 'आर्द्धधातुकस्येट्' (७-२-३५) इतीण् न । अन्त्यस्याल इत्युक्त्या 'मनुडुद्भ्याम्' इत्यादौ डुहृइत्यस्य डुहृइत्यादेर्यस्य कस्यचनान्त्य-मागस्य लोपो न । पदस्येत्यधिकारात् 'परमानुडुद्भ्याम्' इत्यादावन्त्यस्य पदस्य लोप इति तु न, 'उत्तरपदत्वे' इत्यनेन प्रत्ययलक्षणनिषेधेन पदत्वाभावात् । 'त्यदादीनामः' ( ७-२-१०२ ) यः, सः, इत्याद्युदाहरणम् । स्थानषष्ठी अस्या लिङ्गम् ।

'ङिच्च' ङ् इत्यस्यादेशस्य स ङिदादेशः । अलोऽन्त्यस्य इत्यनुवर्तते । ङिदादेशोऽन्त्यस्यालः स्थाने स्यादित्यर्थः । तदाह—अयमपीति—ङिदपीत्यर्थः । स्थानषष्ठ्या निर्दिष्टस्य स्थाने योऽन्त्यस्तस्य ङिदादिदेशः स्यादित्यर्थः । चोऽप्यर्थे । अपिना पूर्वादेशस्य समुच्चयः । वस्तुतो व्यर्थ एव, समुच्चये फला-भावात् । ननु 'अलोऽन्त्यस्य' इत्येव सिद्धे इदं व्यर्थमत आह—सर्वस्येति 'अनेकाल्शित्सर्वस्य' इत्यस्यापवाद इत्यर्थः । अपोद्यते = बाध्यतेऽनेनेत्यपवादः । बाहुलकात् 'हलश्च' ( ३-३-१२१ ) इति करणे घञ् । योगरूढोऽयम् । येन नाप्राप्ते यो विधिरारभ्यते सोऽपवादः । तद्विषये यत्कर्तृकावश्यप्राप्तिः स उत्सर्गः । अपवाद उत्सर्गस्य बाधकः । 'अप्राप्ते' इत्यत्र भावे क्तः ।

'न अप्राप्ते' इत्युक्ते प्राप्ते इति लभ्यते । तथा च प्राप्ते इत्येव वक्तव्ये न नञ् इतिपदद्वयमाव-श्यकत्वद्योतकम् । 'नाप्राप्ते' न अप्राप्तम्, नाप्राप्तम्, 'सुपा' ( २-१-४ ) इति नशब्देन समासः । नञोऽभावान्नलोपो न । येनेति कर्तरि तृतीया । यत्कर्तृकावश्यं प्राप्तौ सत्यां यो विधिः=यच्छास्त्र-मारभ्यते स आरभ्यमाणविधिस्तस्य = अवश्यं प्राप्तस्य बाधको भवतीत्यर्थः । इदं वचनं न्यायसिद्धम् । तथाहि—अनङादयः ङिदादेशाः सर्वेऽनेकाल एवेति यत्र यत्र 'ङिच्च' इत्यस्य प्राप्तिस्तत्र सर्वत्र 'अनेकाल्' इत्यस्य नियमेन प्राप्तिः । एवञ्च यदि ङिदनेकालेष्वपि 'अनेकाल्सूत्रं प्रवर्तेत तदा ङिच्चेति सूत्रं व्यर्थमेव स्यादिति 'मर्ता किं न कर्ता' इति लोकप्रसिद्ध्या 'ङिच्च' इति शास्त्रं तदपवादः । अनेकाल् सूत्रं तु ङित्सु बाधेऽपि ङिद्भिन्नेऽनेकालादेशे 'जराया जरस्' इत्यादौ चरितार्थमिति न क्रियमाणम् । उत्सर्गः=सामान्यशास्त्रम्, अपवादः=विशेषशास्त्रमित्युच्यते । तदुक्तम्—'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति । 'अनङ् स्फोटायनस्य' 'अनङ् सौ' इत्याद्युदाहरणम् । 'तुह्योस्ता-तङ्' ( ७-१-३५ ) इति तु नोदाहरणम् । तथा हि—'तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्स-र्वादेशः' इति भाष्ये उक्तम् । तस्यायं भावः । नेदं 'ङिच्च' इति सूत्रमपूर्वम् । किन्तु तत्र तत्र ङित्करणस्य फलान्तराभावेन ङित्करणवैयर्थ्यसिद्धो योऽनेकालित्यस्य बाधस्तदनुवादकम् । यदि तु यत्र ङित्त्वस्य फलान्तरं विद्यते तत्रापि प्रवृत्तिः स्यात्तदा ङित्करणसामर्थ्यसिद्धं न स्यादित्यपूर्वविधायकत्वेनानुवादक-त्वं न स्यात् । तथा सति 'प्राप्तानुवादेन विधायकत्वरूपनियामकत्वं परिभाषाया विरुध्येत सफलङित्त्वे ङित्करणसामर्थ्यलब्धान्त्यादेशत्वासिद्धेः । किञ्च भाष्ये 'विप्रतिषेधात्' इत्यस्य 'विप्रतिषेधे' इति-सूत्रेण परत्वादिति नार्थः, बाध्यबाधकयोः सूत्रयोः सावकाशत्वं हि विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । नच ङिच्चेति सूत्रं क्वचिदपि अनेकाल्सूत्राप्राप्तिविषये चरितार्थम् इति ङित्त्वस्य सावकाशत्वप्रदर्शनं भाष्यकृतोऽसङ्गतमेव स्यात् । मम तु यत्र ङित्त्वस्य वैयर्थ्यं तत्रैवास्य प्रवृत्तिवैयर्थ्यमूलकत्वेनानुवाद-कत्वात् । ङित्त्वस्य सावकाशत्वान्नात्र प्रवृत्तिरित्येव भाष्यतात्पर्यमिति नासङ्गतिः । न च सर्वादेशत्वे सार्व-धातुकार्धधातुकयोर्ङित्त्वेन गुणादिप्रतिषेधः सम्प्रसारणञ्च फलम् । सफलत्वे च ङिच्चेत्यस्याप्रवृत्तौ सर्वादेश इत्यन्योन्याश्रयत्वादुभयोरप्रवृत्तौ 'अलोऽन्त्यस्य' इत्यनेनान्त्यादेश एव तातङ् स्यादिति वाच्यम्, 'एरुः'

**आदेः परस्य । [ १-१-५४ ]**

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । 'अलोऽन्त्यस्य' ( सू ४२ ) इत्यस्यापवादः ।

**अनेकाल्शित्सर्वस्य । [ १-१-५५ ]**

स्पष्टम् । 'अलोन्त्य'सूत्रापवादः ।

---

( ३-४-८६ ) इत्यनन्तरम् 'तिह्योस्तादाशिष्यन्यतरस्याम्' इति न्यस्य 'लोटो लङ्वत्' ( ३-४-८५ ) इत्यतो 'लोटः' इति, 'एरुः' इत्यत एरित्यनुवर्त्य लोडादेशयोस्तिह्योरिकारस्योकारादेश इत्यर्थेनान्त्यादेशत्वे सिद्धे ङित्त्वस्य गुणवृद्धिप्रतिषेधार्थत्वज्ञापनद्वारा सर्वादेशार्थत्वेनादोपादित्यन्यत्र विस्तरः ।

'आदेः परस्य' 'अलोऽन्त्यस्य' इत्यनेनान्त्यस्यादेशत्वे तदपवादोऽयम् । पूर्वतः 'अलः' इत्यनुवर्तते । परस्येत्यावर्त्तते । आवृत्तञ्च परार्थबोधकपरं तृतीयया विपरिणम्य परार्थबोधकशब्देन परस्य स्थाने यत् कार्य्यं तत् पष्ठीनिर्दिष्टस्यादेरलः स्थाने बोध्यम्' । 'परस्य' इत्यत्र षष्ठ्या अनिर्द्धारितार्थकतया स्थाने इत्यस्योपस्थितिः 'स्थाने' इत्यस्य मण्डूकानुवृत्त्या वा । किञ्चिदवधिकपरत्वविशिष्टस्य यत्कार्य्यमित्युक्तौ तु 'टित आत्मनेपदानां टेरे' इत्यनेन तत्र टेर्नियमेन धात्वादितः एव सत्त्वेन 'एधेते' इत्यादावामष्टेराकारस्यैत्वापत्तिः । वस्तुतस्तु 'परस्य' इत्यस्यावृत्तिर्न युक्ता । उक्तापत्तिस्तु न, प्रतिपदोक्तपरिभाषयैव परशब्दमुच्चार्य्य विहितेष्वेव प्रवृत्तेः । नच परशब्दमुच्चार्य्य कार्य्यविधानाभावः, परार्थबोधकशब्दपरत्वात् । उदाहरणम्—'उदः स्थास्तम्भोः पूर्वस्य' ( ८-४-६१ ) उत्थानम्, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६-३-९७) द्वीपम् । 'अतो भिस ऐस्' (७-१-९) 'रामैः' इत्यादौ तु परत्वादनेकाल्सूत्रेणास्य बाधात्सर्वादेशः ।

ननु परबोधकशब्दमुच्चार्य्य कार्य्यं, यत्र 'तस्मादित्युत्तरस्य' इत्यस्य विषयस्तत्रैव । तथा च 'तस्मादित्युत्तरस्यादेः' इत्येकमेव सूत्रमस्तु । तत्र 'तस्मादित्युत्तरस्य' इत्येकं वाक्यम् । तत्रोत्तरस्येत्यत्र सम्बन्धसामान्यं षष्ठ्यर्थः । तेनागमविधौ 'तस्मान्नुडचि' इत्यादावपि तस्य प्रवृत्तिः । पञ्चमीनिर्देशेन यत्कार्य्यं तदुत्तरसम्बन्धि इति तस्यार्थः।'आदेः' इति द्वितीयं वाक्यम् अत्र 'उत्तरस्य' इत्यनुवर्तते । तत्र च शब्दाधिकारादुत्तरस्येति, आदेरिति च स्थानषष्ठी । न च 'तस्मादित्युत्तरस्य' (१-१-६७) इत्यत्रादेरित्यस्य प्रवेशे 'रामैः' इत्यादौ 'अनेकाल्' ( १-१-५५ ) इत्यस्य तस्मादित्यनेन परत्वाद् बाधापत्तिरिति वाच्यम्, 'आदेः परस्य' ( १-१-५४ ) इत्यत्रैव 'तस्मादित्युत्तरस्यादेः' इति सूत्रकरणेऽनेकाल्सूत्रस्य परत्वाक्षतेः । न चैवम् 'अनेकाल्सूत्रेण 'आदेः' इत्यस्य बाधवत् 'तस्मादित्युत्तरस्य' इत्यस्यापि बाधे वाक्यसंस्कारपक्षे 'ब्राह्मण अस्, अष्टन् अस्' इत्यत्र 'अष्टाभ्यः' इत्यत्र पञ्चम्या अवधित्वसामान्यवाचकतया अष्टन्शब्दात्पूर्वस्यापि जस औशापत्तिरिति चेन्न, प्रत्यासत्त्या अष्टन्शब्दनिष्ठाङ्गसंज्ञानिमित्तयोरेव जस्शसोरौश्विधानेनादोपात् । 'तस्मादित्युत्तरस्यादेः' इत्यत्र 'निर्दिष्टे' इत्यस्यानुवृत्तये ततः पूर्वं 'तस्मिन्निति' सूत्रमवश्यं कर्तव्यम् । तथाच 'आदेः' इत्यंशे 'स्थाने' इत्यस्यासम्बन्धे 'आज्जसेरसुक्' ( ७-१-५० ) इत्याद्यागमविषयेऽप्रवृत्त्यापत्तिः । स्थाने इत्यस्य तत्र सम्बन्धे मध्यस्थितयोः 'तस्मिन्निति' 'तस्मादिति' अनयोरपि सम्बन्धे तयोरप्यागमविषयेऽप्रवृत्त्यापत्तिरिति यथान्यासमेव साधु ।

'अनेकाल्शित्सर्वस्य, न एकः, अनेके अलः=वर्णाः यस्मिन्सोऽनेकाल्, श इत्यस्य स शित्, अनेकाल् च शिच्चानयोः समाहारोऽनेकाल्शित् । स्पष्टमिति—अनेकालादेशः शिदादेशश्च सर्वस्य स्थाने स्यादिति विवरणं स्पष्टमित्यर्थः ।

अलोऽन्त्यसूत्रेति —सूत्रैकदेशानुकरणम् 'अलोऽन्त्य' इति । 'प्राग्रीश्वरान्निपाताः' इत्यत्र 'रीश्वरात्' इति निर्देशात्, साधुत्वेन सूत्राणां प्रवृत्तेः 'अनुकरणं चानिति' इत्यादिसूत्रसामर्थ्याच्चानुकर-

'अष्टाभ्य औश्' (सू ३७२) इत्यादौ 'आदेः परस्य' (सू ४४) इत्येतदपि परत्वादनेन बाध्यते ।

**स्वरितेनाधिकारः । [ १-३-११ ]**

स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् ।

---

णानां साधुत्वम् । अलोऽन्त्यपदञ्च लक्षणया अलोऽन्त्यपदघटितसूत्रपरम्। तथाच अलोऽन्त्यं च तत्सूत्रं चेति कर्मधारयः । न चैवं षष्ठ्या लुगापत्तिः, 'अस्यवामीयम्' इति भाष्यप्रयोगवत् 'प्रकृतिवदनुकरणम्' इत्यस्यानित्यत्वाश्रयणेन सुप्त्वाभावाल्लुकोऽप्राप्तेः । 'जराया जरस्' इत्यादौ अलोऽन्त्यसूत्रेणान्त्यस्यादेशे प्राप्ते तद् बाधित्वा सर्वादेशार्थमिदम् ।

ननु अष्टन्शब्दाज्जसि शसि च 'अष्टन आ विभक्तौ' ( ७-२-८४ ) इत्यात्वे सवर्णदीर्घे अष्टा अस् इति जाते कृताकारादष्टनः परयोर्जश्शसोर्विधीयमान औशादेशः 'अष्टाभ्य औश्' इत्यत्र 'आदेः परस्य' इत्यस्योपस्थित्या अलोन्त्यमपवादत्वाद् जश्शसोरादेरलः स्थाने स्यात् । एवम् 'रामैः' इत्यत्रापि 'अतो भिस ऐस्' इत्यत्रादेः परस्येत्यनेन भिसो भकारस्यैसादेशः स्यादित्याशङ्कायामाह—अष्टाभ्य औश् इति-अयम्भावः-प्रथमम् अलोऽन्त्यस्य, इत्यनेनान्त्यस्य औशैसादेशौ प्राप्तौ, तदपवादत्वात् 'आदेः परस्य' तत्र 'आदेः परस्य' इत्यनेनादेरेव प्राप्नोति । यद्यपि 'अनेकाल्सूत्रम्' आदेः परस्येत्यस्य नापवादः, 'जराया जरस्' 'अस्तेर्भूः' इत्यादौ पञ्चमीनिर्देशाभावेन आदेः परस्य, इत्यस्याप्राप्तविषये चारितार्थ्यात् । तथापि विप्रतिषेधे परं कार्य्यम्' ( १-४-२ ) इति परिभाषया परत्वाद् 'आदेः परस्य' इति सूत्रं बाधित्वा अनेकाल्सूत्रप्रवृत्त्या सर्वादेशः सिध्यति । विप्रतिषेधः=तुल्यबलयोर्द्वयोर्विरोधः । तुल्यबलविरोधश्च क्वचिल्लक्ष्ये विरोधिनोऽप्राप्तौ सत्यां चरितार्थयोर्द्वयोरेकत्र प्राप्तिरूपः । यथा 'आदेः परस्य' इति 'उदःस्थास्तम्भोः पूर्वस्य' 'उत्थानम्' इत्यत्र विरोधिनो ऽनेकाल्सूत्रस्याप्राप्तौ चरितार्थम् । जराया जरस् इति जरसौ, इत्यादौ 'अस्तेर्भूः' इति च 'भविता' इत्यादौ विरोधिनः 'आदेः परस्य' इत्यस्याप्राप्तिविषये चरितार्थम् । 'अष्टौ' 'रामैः' इत्यादावुभयोः प्राप्तिरिति तुल्यबलविरोधः । एतेन 'अनेकाल्ग्रहणं व्यर्थम्' अनेकालादेशस्याप्यन्त्यादेशत्वे 'ङिच्च' इति व्यर्थम् । ङिदनेकालादेशस्यापि अलोन्त्यसूत्रेणान्त्यादेशत्वे सिद्धे तन्नियमार्थं स्यात् 'ङिदेवानेकालादेशोऽन्त्यस्य स्थाने नान्यः' इति नियमादेव ङिद्भिन्नानेकालादेशविषये अलोऽन्त्यसूत्रानुपस्थित्या तत्तत्सूत्रेण सर्वादेशत्वसिद्धेरिति यत्तत्परास्तम्, अष्टौ, रामैः, इत्यादौ 'आदेः परस्य' इत्यस्य बाधनाय अनेकाल्ग्रहणस्य चारितार्थ्यात् ।

ननु शिद्ग्रहणं व्यर्थम् । न च 'जसः शी' इति श्यादेशस्य सर्वादेशार्थम्, अनेकाल्त्वादेव सिद्धेः । नच 'इदम इश्' 'अष्टाभ्य औश्' इत्यादीनां सर्वादेशार्थम्, तेषामपि शकारकरणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वोपपत्तेः । न च 'घ्वसोरेद्धावभ्यासलोपश्च' ( ६-४-११९ ) इति लोपादेशस्याभावरूपतया अनेकाल्त्वाभावात्सर्वादेशार्थम्, 'लोपो यि' ( ६-४-११८ ) इत्यतो लोपग्रहणानुवृत्त्या सिद्धे पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशस्य भाष्यकृतैवोक्तत्वादिति चेन्न, शिद्ग्रहणवैयर्थ्येन 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषाज्ञापनात् । तेन 'अवंणसावनञः' इति आदेशः सर्वस्य न । इत्येतदपीति-अपिना अपवादत्वाद् 'अलोऽन्त्यस्य' इत्यस्य बाधसंग्रहः । अनेकाल्सूत्रविषये 'अलोऽन्त्यस्य' इत्यस्यावश्यप्राप्तेः । अनेन = अनेकालित्यनेन ।

'स्वरितेनाधिकारः—स्वरितः 'समाहारः स्वरितः' इत्युक्तः स्वरविशेषः । स्वरितपदमत्र स्वरितत्वधर्मपरम् । तच्च अधिक्रियमाणपदघटकाज्निष्ठम्, अज्झल्साधारणं दोषविशेषरूपं वा । तच्च स्वरितत्वमानुनासिक्यवत् प्रतिज्ञागम्यम् । प्रतिज्ञा च 'अयं शब्दः स्वरितत्वविशिष्टः' इत्युक्तिरूपा, व्यवहाररूपा वा । तथा च प्रतिज्ञास्वरितत्वाः पाणिनीयाधिकृताः शब्दा इति फलितम् । 'जटाभिस्तापसः' इतिवत् 'स्वरितेन' इत्यत्र 'इत्थंभूतलक्षणे' तृतीया । अधिकारश्चात्र उत्तरोत्तरसम्बन्धः । तथा च स्वरितत्वज्ञाप्योऽधिकार इति भावः । कियद्दूरमधिकार इत्यत्रापि क्वचित्साक्षाद् भाष्यकारोक्तिः प्रमाणम् । यथा 'इङ्श्च' इत्यत्र 'आसहमहमाहेरधिकारोऽयम्' इति भाष्यम् । 'अङ्'

'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' ( प ३९ )। 'असिद्धं बहिरङ्गमन्तरङ्गे' ( प १५) 'अकृतव्यूहाः पाणिनीयाः' ( प ५७ ) निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ॥

॥ इति परिभाषाप्रकरणम् ॥

---

इत्यस्याधिकारे 'प्राग्दीव्यतोऽण्' ( ४-१-८३ ) इति पाणिनिसूत्रम्। क्वचिद् व्याख्यानं मानम्। यथा 'इको यणचि' इत्यत्र 'अचि' इत्यस्यानुवृत्तौ। एवमन्यदप्यूह्यम्। वस्तुतस्तु स्वरितत्वज्ञानस्य प्रतिज्ञापेक्षत्वेऽनुवृत्तेरेव प्रतिज्ञापेक्षत्वमुचितम्। किञ्च व्याख्यानादिना निवृत्तिवत् तत एवाधिकारोऽपि स्यादितीदं सूत्रं व्यर्थमेव।

न च स्वरितेन अधिकः कारः=काय्यं कर्तव्यमिति ज्ञानं फलम्। यथा 'गोस्त्रियोरुपसर्जनस्य' ( १-२-४८ ) इत्यत्र गोशब्दसाहचर्य्यात् स्त्रीशब्दस्यैव ग्रहणे प्राप्तेऽपि स्त्रीशब्दे स्वरितत्वप्रतिज्ञया चतुर्थाध्यायस्य 'स्त्रियाम्' इत्यधिकारस्थटाबादिप्रत्ययानामेव ग्रहणं न स्वरूपस्य। किञ्च अधिकः कारः= कृतिरित्यर्थे स्वरितेनैव पूर्वं सदपि सूत्रं परसूत्राणि बाधते इति सर्वे पूर्वविप्रतिषेधा अनेनैव संगृहीताः। किञ्चात एव गौणेऽर्थेऽपि शास्त्रप्रवृत्तिस्तेन गौणाधारादेरपि 'गङ्गायां घोषः' इत्यादावधिकरणादिसंज्ञा सिध्यति। एतदर्थं तत्साफल्येऽपि उत्तरोत्तरसम्बन्धार्थं तदनावश्यकत्वात्। यत्तु 'अनुवृत्तिनिवृत्ती अनेनैव साध्येते इति न व्याख्यानाद्यपेक्षेति। तथाहि—यदा 'स्वरितेन' इति तृतीयान्तं तदा मूलोऽर्थः। यदा तु 'स्वरिते' इति सप्तम्यन्तम् 'न' इति निषेधार्थकम्। तथा च स्वरिते दृष्टे सति अधिकारो न= निवर्तते इति' तन्न, सकृदुच्चरितन्यायविरोधाद् भाष्याद्यनुक्तत्वात्, क्व स्वरितोऽनुवृत्त्यर्थः, क्व निवृत्तिसूचकः, इति निर्णेतुं व्याख्यानस्यैवाश्रयणीयत्वाच्च।

ननु परत्वादेर्बाधकत्वे एव मानाभावेन 'आदेः परस्येत्येतदपि परत्वादनेन बाध्यते' मूलोक्तमयुक्तमत आह—परनित्येति—परनित्यान्तरङ्गापवादशास्त्राणां मध्ये पूर्वपूर्वापेक्षया उत्तरोत्तरं शास्त्रं बलीयः=बलवत्तरमित्यर्थः। 'उत्तरोत्तरम्' इत्यत्र 'आनुपूर्व्ये द्वे वाच्ये' इति द्वित्वम्। आनुपूर्व्यं=क्रमः पौर्वापर्य्यमिति यावत्। तत्र गम्यमाने विवक्षिते इति यावत् पदस्य द्वित्वम् इत्यर्थः। 'कर्मधारयवदुत्तरेषु' उत्तरेषु=एतत्सूत्रापेक्षया उत्तरेण सूत्रेण वार्तिकेन वा विहितेषु द्विर्वचनेषु कर्मधारये इव काय्यं कर्तव्यमित्यर्थकेनानेन सूत्रेण 'उत्तरमुत्तरम्' इत्यस्य प्रातिपदिकत्वे सुपो लुकि पुनः समुदायात्सुपि 'उत्तरोत्तरम्' इति साधु। वस्तुतस्तु पूर्वस्मात्पूर्वस्मादुत्तरमुत्तरं बलीय इत्येव साधु। 'कर्मधारयवदुत्तरेषु' इत्यत्र 'उत्तरेषु' इत्यनेन उत्तरसूत्रविहितद्विर्वचनानामेव ग्रहणात्। अत एव भाष्ये 'प्रकारे गुणवचनस्य' ( १-१-१२ ) इति सूत्रस्थस्य 'आनुपूर्व्ये द्वे वाच्ये' इत्यस्योदाहरणे 'मूले-मूले स्थूलः, अग्रे-अग्रे सूक्ष्माः' इत्यत्र सुपो लुगभावः पूर्वरूपाभावश्च भाष्योक्तः संगच्छते।

बलीय इति—बलवच्छब्दाद् 'द्विवचनविभज्योपपदे तरबीयसुनौ' ( ५-३-५७ ) इतीयसुन्प्रत्यये 'विन्मतोर्लुक्' ( ५-३-६५ ) इति मतुपो लुकि साधु। ननु उच्यतेऽनेनेति वचनम्। द्वयोर्वचनम् द्विवचनम्। कर्मषष्ठ्या समासः 'कर्मणि च' [ २-२-१४ ] इति समासनिषेधस्तु न, 'उभयप्राप्तौ' इति विहितषष्ठ्यामेव तत्प्रवृत्तेः। प्रकृते च 'कर्तृकर्मणोः कृति' इति षष्ठी। द्विवचनपदं चात्र यौगिकं न तु संज्ञापरम्, 'नेदं पारिभाषिकस्य ग्रहणम्, किं तर्हि अन्वर्थग्रहणम्' इति भाष्यात्। विभक्तुं योग्यं विभज्यम्। अत एव निर्देशात् ण्यतं बाधित्वा निपातनात् यत्। उपपदम्=पदस्य समीपे इत्युपपदम्। इदमपि न संज्ञापरम्, धात्वधिकार एव सप्तमीनिर्दिष्टानामुपपदसंज्ञाविधानात्। प्रातिपदिकादिति, तिङ इति चानुवर्तते। तथा च द्व्यर्थप्रतिपादके विभज्ये चोपपदे द्वयोर्मध्येऽन्यतरापेक्षयाऽतिशयार्थविशिष्टवृत्तेः, विभागप्रयोजकीभूतधर्मवाचकाच्च प्रातिपदिकात् तिङन्ताच्च स्वार्थे तरबीयसुनौ स्तः। एवञ्च 'अनयोः पूर्वपरशास्त्रयोरिदं परशास्त्रमतिशयेन बलवदिति बलीयः। अत्र द्वित्वविशिष्टार्थवाचकं पदमनयोरिति तत्रोपपदे अतिशयार्थविशिष्टवृत्तिमतः, विभागप्रयोजकधर्मवाचकबलवच्छब्दादीयसुन्निति तु सम्यक्। परन्तु पूर्वपरनित्यानां मध्ये इदं नित्यमतिशयेन बलवदित्यर्थे तु बलीय इति न स्यात्, तदर्थवाचकोपपदाभावात्। न च 'तस्मिन्निति निर्दिष्टे' इति सूत्रे भाष्ये

एते खल्वपि नैर्देशिकानां ( बोधप्रयोजनानां शब्दानां ) वार्तंतरका ( युक्ततराः ) भवन्ति ये सर्वनाम्ना निर्दिश्यन्ते' इति, 'बहुषु पुत्रेष्वेतदुपपन्नं भवति—अयं मे ज्येष्ठोऽयं मध्यमोऽयं कनीयान्' इति च भाष्यप्रयोगाद्बह्वर्थेऽप्युपपदे तरबीयसुनौ भवत इति वाच्यम्, 'न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यं केन तर्हि तमपा' इति तमप्सूत्रभाष्यविरोधात्। न च बह्वर्थकोपपदे उक्तप्रयोगाणाम-सङ्गतिरिति वाच्यम्, तत्र विभज्योपपदे तरप्सत्वेनादोषात्। -तथाहि—'नैर्देशिकानां मध्येऽन्येभ्यः शब्देभ्यो वार्तंतरका सर्वनामशब्दा इत्यर्थे विभज्ये सर्वनामशब्दे उपपदे तरप्। आभ्यां ज्येष्ठ-कनिष्ठाभ्यां कनीयानयम्' इत्यत्रापि विभज्ये उपपदे ईयसुन्।

तथा च प्रकृतेऽपि 'पूर्वपरनित्यानां मध्ये नित्यमन्याभ्यां बलीयः, पूर्वपरनित्यान्तरङ्गाणां मध्ये अन्तरङ्गमन्येभ्यो बलीयः, 'पूर्वपरनित्यान्तरङ्गापवादानां मध्येऽपवादोऽन्येभ्यो बलीयान्' इत्यर्थेन विभज्योपपदे तरप्। एवम् 'नतराम्, तितराम्' इत्यादौ द्योत्यप्रकर्षेऽपि द्योतकान्तरम्। 'द्वित्वविशिष्टा-र्थके उपपदे' इत्युक्त्वा 'दन्तोष्ठस्य दन्ताः स्निग्धतराः' इत्यादिभाष्यप्रयोगोऽपि सिध्यति। द्विवचनो-पपदे इत्यर्थे तु उक्तप्रयोगो न सिध्येत्। उपपदप्रत्ययानां यथासंख्यं तु न, 'सांकाश्यकेभ्यश्च पाटलि-पुत्रकेभ्यश्च माथुरा अभिरूपतराः' इति भाष्ये विभज्योपपदे तरब्दर्शनात्। पूर्वात्परं बलवत्, 'विप्रति-षेधे परं कार्यम्' इति सूत्रात्। यथा 'वृक्षेभ्यः' अत्र पूर्वं 'सुपि च' (७-३-१०२) इति दीर्घं बाधित्वा 'बहुवचने' ( ७-३-१०३ ) इत्येत्वम्। परान्नित्यं यथा 'तुदति' अत्र परमपि 'पुगन्त' (७-३-८६) इति गुणं बाधित्वा 'तुदादिभ्यः शः' इति नित्यत्वात् शः। विरोधिनि गुणे कृतेऽकृते च शस्य प्राप्तिरिति शो नित्यः, गुणस्तु न नित्यः, शे कृते 'क्ङिति च' इति निषेधात् कृताकृतप्रसङ्गित्वं नित्यलक्षणम्। नित्यस्य बलवत्त्वे लाघवं बीजम्। अनित्यस्य कृते विरोधिनि प्राप्त्यभावस्य सिद्धतया नित्ये कृते सिद्धाभावस्य परिरक्षणमात्रम्। अनित्यस्य प्रवर्तने तु नित्यस्य असिद्धोऽभावः कल्पनीयः स्यादिति गौरवम्।

परादन्तरङ्गं यथा 'असुस्तुवत्'। असुस्तु 'अत्' इत्यत्र 'असुस्तु अ' इत्यङ्गस्य लघूपधत्वेन प्राप्तं गुणं बाधित्वा अन्तरङ्गत्वादुवङ्। केचित्तु 'उभये' इति 'परादन्तरङ्गं बलवत्' इत्यस्योदाहरणम्—विभक्तिनिरपेक्षतया 'सर्वादीनि सर्वनामानि' इति अन्तरङ्गम्, विभक्तिसापेक्षतया अन्तरङ्गनिमित्ता पेक्षया बहिर्भूतविभक्तिनिमित्तकत्वेन प्रथमचरमेति परं शास्त्रं बहिरङ्गम्, तद् बाधित्वाऽन्तरङ्ग प्रवर्तते। यच्छास्त्रनिमित्तसमुदायान्तर्गतनिमित्तकं यत् तदन्तरङ्गम्। यच्छास्त्रनिमित्तसमुदायबहिर्भूत-निमित्तकं यत् तद्बहिरङ्गम्।

नित्यादन्तरङ्गं यथा—'ग्रामणिनी' इति नपुंसकाद् ग्रामणीशब्दाद् औ विभक्तौ ह्रस्वे नुमि च प्राप्ते नित्यं नुमं बाधित्वा अन्तरङ्गत्वाद्ध्रस्वः।

वस्तुतस्तु परात् नित्याच्चान्तरङ्गं बलवदिति बहिरङ्गादन्तरङ्गं बलवदित्यस्य फलितार्थकथनम्, बहिरङ्गादन्तरङ्गं बलीयः' इति, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति वा परिभाषास्वरूपत्वात्। यत्र अन्त-रङ्गबहिरङ्गयोरेककाले प्राप्तिस्तत्र 'बहिरङ्गादन्तरङ्गं बलीयः' इति प्रवर्तते। यत्र बहिरङ्गशास्त्रमुत्पन्नन्तर-मन्तरङ्गं प्राप्नोति तत्र 'असिद्धं बहिरङ्गम्' इति प्रवर्तते, इति प्राचीनमतम्। नवीनास्तु 'असिद्धं बहिरङ्गम्' इत्यनेनैव एककाले बहिरङ्गान्तरङ्गयोः प्राप्तिस्थलेऽपि निर्वाहः स्यात्। ननु अनया सिद्धे ऽसिद्धत्वारोपो विधीयते। एककाले प्राप्तौ तु बहिरङ्गकार्यं न सिद्धम्। कथं तत्रासिद्धत्वारोप इति चेन्न, बहिरङ्गशब्देन शास्त्रं गृह्यते, तच्च सर्वदा सिद्धमेवेति समकालिकप्राप्तिस्थलेऽपि बहिरङ्गशास्त्रा सिद्धत्वस्य वक्तुं शक्यतया 'बहिरङ्गादन्तरङ्गं बलीयः' इति परिभाषान्तरं व्यर्थमेव। बहिरङ्गस्या सिद्धतया अन्तरङ्गमेव प्रवर्तते इति अन्तरङ्गं बलीय इति फलति।

समानकाले प्राप्तयोः द्वयोर्मध्ये बहिरङ्गस्यासिद्धत्वे-अत्र भाष्योक्तलोकन्याय एव बीजम्। तथाहि—'प्रत्यङ्गवर्ती लोको दृश्यते मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति। ततः सुहृदां ततः सम्बन्धिनाम्' इति 'अचः परस्मिन्' इति सूत्रे भाष्ये उक्तम्। एतेन प्रथमोपस्थितनिमित्तकानां प्रथमोपस्थितत्वरूपान्तरङ्गस्य बलवत्त्वमुक्तम्। अत्रैव 'ओमाङोश्च' इत्यत्राङ्ग्रहणमपि मानं बध्यते।

यत्र बहिरङ्गं प्रवृत्तं ततोऽन्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वे मानन्तु 'वाह ऊठ्' इति ( ६-४-१३२ ) सूत्रे ऊठ्ग्रहणम्। तथाहि—विश्ववाह्शब्दाच्छसि 'विश्ववाह् अस्' इत्यत्र वकारस्य ऊठि पूर्वरूपे 'एत्येधत्यूठ्सु' ( ६-१-८९ ) इति वृद्ध्यर्थमूठ्ग्रहणम्। अन्यथा सम्प्रसारणमात्रे कृते 'आद् गुणः' ( ६-१-८७ ) इति गुणे 'विश्वोहः' इति स्यात्। इष्यते च 'विश्वौहः' इति। परन्तु सम्प्रसारणे कृते 'विश्व उह अस्' इति दशायाम् ण्विप्रत्ययं णिच्प्रत्ययं वा प्रत्ययलक्षणेनादाय 'पुगन्त' इत्यनेन गुणं परत्वाद्बाधित्वा गुणे 'विश्व ओह्' इति जाते 'वृद्धिरेचि' इति वृद्धौ रूपसिद्धौ ऊठ्ग्रहणं व्यर्थीभूय कल्पयति—'अन्तरङ्गे बहिरङ्गमसिद्धम्' इति तेन अन्तरङ्गायां वृद्धौ लघूपधगुणस्य बहिरङ्गस्यासिद्धतया एच्परत्वाभावाद् वृद्धिर्न स्यादिति वृद्ध्यर्थमूठ्ग्रहणं चरितार्थम्। 'वाङ्यूहः' 'निरूहः' इत्यादीनान्तु ज्ञापकपरभाष्यप्रामाण्यादेवानभिधानम्। तदाह—असिद्ध-मिति—अन्तरङ्गे कर्तव्ये बहिरङ्गमसिद्धमित्यर्थः। तेन 'स्योनः' इत्यत्र सिव्धातोर्नें ऊठि 'सिऊ न' इत्यत्र 'इको यणचि' इति बहिर्भूतनरूपार्धधातुकनिमित्तकं लघूपधगुणं बाधित्वा अन्तरङ्गत्वाद् यणेव भवति। 'पचाव इदम्, पचावेदम्' इत्यत्र पदद्वयवर्णनिमित्तकत्वेन बहिरङ्गस्य गुणस्या-सिद्धत्वाद् अन्तरङ्गम् 'एत ऐ' इति न भवति।

अन्तरङ्गादपवादो बलीयान् इत्यस्य 'सुधियौ' इति,। अन्तरङ्गम् इको यणचीति यणं बाधित्वा अपवादत्वादियङ्। 'परादपवादो बलवान्' यथा 'लभ्यम्' इत्यत्र परमपि 'ऋहलोर्ण्यत्' ( ३-१-१२४ ) इति ण्यतं बाधित्वा 'पोरदुपधात्' ( ३-१-९८ ) इत्यपवादत्वाद्यत्। यद्वा 'सर्वेषाम्' इत्यत्र परं नुटं बाधित्वा अपवादत्वात्सुट्। नित्यादपवादो यथा—'रुणद्धि' इत्यत्र नित्यमपि शपं बाधित्वा अपवादत्वात् श्नम्।

अन्तरङ्गादपवादो बलवान् यथा—'दैत्यारिः, श्रीशः' इत्यत्रान्तरङ्गं गुणं यणं च बाधित्वा अपवादत्वात् सवर्णदीर्घ इति तु न सम्यक्, समाननिमित्तकत्वेनान्तरङ्गत्वाभावात्, अर्थकृद्बहिरङ्ग-त्वस्य भाष्यविरुद्धत्वात्।

यत्रापवादशास्त्रस्य बाध्यशास्त्रस्य च समाननिमित्तकत्वेन प्रवृत्तिः, यथा दैत्यारिः, श्रीशः,' इत्यादौ। तत्रापवादशास्त्रं केवलं बाध्यशास्त्रं बाधित्वा चरितार्थम्। एवञ्च यत्र 'अयज इ इन्द्रम् आम इ इत्यम्' इति वाक्यसंस्कारपक्षे एकपदघटकवर्णद्वयनिमित्तकमन्तरङ्गम् 'आद् गुणः' इति शास्त्रम्, पदद्वयघटकवर्णद्वयनिमित्तकम् बहिरङ्गम् 'अकः सवर्णे दीर्घः' इत्यपवादं बाधते, निरवकाश-तया उत्सर्गस्य बाधेन चरितार्थेऽपवादेऽन्तरङ्गपरिभाषाबाधे मानाभावेनान्तरङ्गतया उत्सर्ग एव-ा पवादं बाधते। तदुक्तम्–'अपवादो यद्यन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यते' इति।

ननु सद्धातोः क्वसुप्रत्यये 'सेद्वस्' इत्यवस्थायां 'वसोः सम्प्रसारणम्' इत्यस्याप्राप्त्या 'वस्वेका-जाद्घसाम्' ( ७-२-६७ ) इतीटि ततः शसि 'वसोः सम्प्रसारणम्' ( ६—४—१३१ ) इति सम्प्रसारणे यदि 'सेदुषः' इति स्यादत आह—अकृतव्यूहा इति—निमित्तविनाशे सम्भाविते सति, न कृतो व्यूहः=शास्त्रप्रवृत्तिविषयकविशिष्टनिश्चयो यैस्तेऽकृतव्यूहाः पाणिनीयाः=पाणिनिशास्त्रवेत्तारः बहिरङ्गेणान्तरङ्गस्यानिमित्तविनाशे सम्भावितेऽन्तरङ्गं न प्रवर्तयन्तीत्यर्थः। तथा च वसोः बलादित्वस्य सम्प्रसारणेन विनाशे सम्भाविते अन्तरङ्गस्यापीटः प्रवृत्तिर्न स्यादिति 'सेदुषः' सिध्यति। तदाह—निमित्तमिति—विनाशस्य उन्मुखम्=मुखप्रारम्भमुद्गमिष्यदिति उन्मुखम्=विनाशनिरूपित-प्रतियोगितया प्रारप्स्यमानम् सम्भावितमिति यावत्। विनाशप्रतियोगितया सम्भावितं निमि-त्तं दृष्ट्वा=ज्ञात्वा तत्प्रयुक्तम्=तन्निमित्तकं कार्यं न कुर्वन्ति पाणिनीया इत्यर्थः। यद्वा व्यूह्यते=निरस्यते परबलमनेनेति व्यूहः=रचनाविशेषविशिष्टसेनासमूहः। स इवाचरति परबलनिराकरणेनेति व्यूहः=अन्तरङ्गशास्त्रम्। व्यूहशब्दादाचारक्विबन्तात्कर्तरि अच्। पाणिनीया निमित्तविनाशे सम्भावितेऽन्तरङ्गं न कुर्वन्ति इत्यर्थः।

यद्वा न कृतो व्यूहः = निमित्तकारणस्य कुलालादेर्विनाशेऽपि घटादिरूपकार्य्यस्य स्थितिरूपो विशिष्टस्तर्को यैस्ते 'अकृतव्यूहाः' कारणनाशे कार्यनाश इति तर्कयन्तः पाणिनीयाः। एवञ्च तन्मते निमित्तापाये = कारणनाशे। नैमित्तिकस्य = कार्य्यस्यापि अपायः = नाशः। तथा च 'सेदुषः' इत्यत्र वस्वादिरूपकारणस्य नाशे इड्रूपकार्य्यस्यापि नाशे 'सेदुषः' इति सिध्यतीति भावः।

अत्र ज्ञापकम्—'समर्थानां प्रथमाद्वा' (४-१-८२) इति सूत्रे 'समर्थानाम्' इति समर्थपदमत्र कृतसन्धिकार्य्यपरम् इति वक्ष्यते। तथा च कृतसन्धिकार्य्यात्प्रातिपदिकात् तद्धितप्रत्यया यथा स्युरित्येतदर्थं समर्थानामिति। पञ्चम्यर्थे षष्ठी, सौत्रत्वात्। 'सु उत्थित' इति प्रातिपदिकात् 'अत इञ्' (४-१-९५) इत्यादितद्धिता न भवन्ति, किन्तु कृतदीर्घादिकार्य्यात् सूत्थितादिप्रातिपदिकादेव। एवञ्च समर्थग्रहणं व्यर्थम्, सुशुत्पत्त्यनन्तरं तद्धितप्राप्त्या ततः पूर्वमेव पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादाय सन्धिकार्य्ये कृते एव तद्धिताः स्युः। तद् व्यर्थं सज्ज्ञापयति—'अकृतव्यूहाः' इति। तत्र भाविन्या 'तद्धितेष्वचामादेः' (७—२—११७) इति आदिवृद्ध्या दीर्घनिमित्तविनाशसम्भावनया दीर्घो न स्यादिति 'सु उत्थित' शब्दादेव तद्धितोत्पत्तौ वृद्धौ 'सावुत्थितिः' इति प्रयोगवारणाय समर्थग्रहणं चरितार्थम्। फलञ्च 'निषेदुषीम्' 'सेदुषः' इत्यादेः सिद्धिरूपम्।

इति परिभाषेति—ननु 'उरण् रपरः' 'यथासंख्यमनुदेशः' 'अनुदात्तपदमेकवर्जम्' इत्यादयोऽपि परिभाषास्तासामनुक्त्या न्यूनता। किञ्च न्यायज्ञापकसिद्धानां वाचनिकीनाञ्च कासाञ्चित्परित्यागः। कासाञ्चिदुपादानमित्यर्द्धजरतीयम् इति चेन्न, प्रायेण प्रथमाध्यायस्थानां प्रायेण सन्धिकार्य्योपयोगिनीनामाकाङ्क्षितानाञ्च परिभाषाणां प्रायेण व्याख्यानं समाप्तमिति तदर्थात्। प्रायेण सन्धिकार्य्येति निवेशात् सन्धिकार्य्यानुपयोगिनीनाम् 'इको गुणवृद्धी' 'अचश्च' इत्यादीनामनुपन्यासेऽपि न क्षतिः। आकाङ्क्षितानाञ्चेत्युक्त्या 'परनित्यान्तरङ्ग' इत्युक्तिर्न विरुद्धा, 'परत्वादनेन बाध्यते' इत्युक्तौ बीज-प्रदर्शनाय तदुपादानात्। परिभाषात्वञ्च—संकेतग्राहकभिन्नत्वे सति विधिशास्त्रविशिष्टत्वम्—वै०अन-नुवृत्त्या स्वजन्यप्रमात्मकबोधोपकारकत्वस्वप्रवृत्तिनिवृत्त्यन्यतरप्रयोजकत्वविशिष्टपाणिनिप्रयत्नन्याया-न्यतरसिद्धत्वान्यतरसम्बन्धेन। अननुवृत्त्येति निवेशेनाधिकारव्यवच्छेदः। आद्यसम्बन्धेनाष्टाध्यायीस्थ-परिभाषाणां संग्रहः। द्वितीयेन न्यायज्ञापकसिद्धानाम्, 'अनुदात्तपदमेकवर्जम्' इत्यादेश्च संग्रहः।

॥ इति परिभाषाप्रकरणम् ॥

---

## ॥ अथ सन्धिप्रकरणम् ॥

"संहितायाम्" (६-१-७२) इत्यत आरभ्य "पारस्करप्रभृतीनि च" (६-१-१५७), इत्यन्तं संहिताधिकारः, "तयोर्य्वावचि संहितायाम्" (८-२-१०८) इत्यत आरभ्य "अ अ" (८-४-६८) इति यावत् 'संहितायाम्' इत्यस्य सम्बन्धः। सम्पूर्वकाद् दधातेर्भावे क्ते भावक्तान्तस्य नपुंसकत्वेऽपि 'संहितायाम्' इतिनिर्देशादेव स्त्रीत्वे टापि संहिताशब्दः सिध्यति। संहिता, सन्धिरिति पर्य्यायः। सम्पूर्वकाद् धा-धातोः "उपसर्गे घोः किः" (३-३-९२) इति किप्रत्यये "सन्धिः" इति। कस्यचिद्वर्णस्योच्चारणानन्तरमर्धमात्राऽऽधिककालाव्यवधानेन यद्वर्णान्तरोच्चारणं तत्संहितयोच्चारणमित्युच्यते। तदुक्तम् "परः सन्निकर्षः संहिता" इति। पूर्वोक्तयोरुभयोः षष्ठाष्टमाध्यायस्थयोः संहिताधिकारयोर्यावन्ति सूत्राणि सन्ति तानि विधीयमानानि कार्य्याण्यपि सन्धिशब्देनोच्यन्ते, साध्येऽपि साधनत्वोपचारात्। सन्धेर्विभागश्च पञ्चधाप्रसिद्धः। यथा—अच्संधिः, प्रकृतिभावसन्धिः, हल्सन्धिः, विसर्गसन्धिः, स्वादिसन्धिश्चेति। तथा च अचा सह संहितायां यद्रूपान्तरप्राप्तिः स अच्सन्धिरित्युच्यते। अचोऽचा सह संहितायां यत् प्लुत-प्रगृह्ययोः स्वरूपेणावस्थानं तत्प्रकृतिभाव इत्यभिधीयते। हलो हलाऽचा वा संहितायां यत्कार्य्यं तद् हल्सन्धिशब्देन व्यवह्रियते। विसर्गस्य हला सह संहितायां यत्कार्य्यं तद्विसर्गसन्धिशब्देन व्यवहार-

# अथाच्सन्धिप्रकरणम्

**इको यणचि । [ ६-१-७७ ]**

इकः स्थाने यण् स्यादचि संहितायां विषये ।

---

विषयः । स्वादिप्रत्ययविकारमादाय यत्संहिताकार्यं तत्स्वादिसन्धिरिति निगद्यते । व्याकरणाचार्य्या निखिलशास्त्रावगाहनलब्धवैदुष्या रामाज्ञापाण्डेयास्तु वस्तुतोऽस्माकं मते सृष्टिस्थितिसंहारभेदात् त्रिविधः सन्धिः—तत्र "आद् गुणः, वृद्धिरेचि, एत्येधत्यूठ्सु, हशि च" इत्यादिसूत्रैर्वर्णानामधिकमात्रत्वसम्पादक-सन्धिः सृष्टिसन्धिपदेन व्यवह्रियते । प्रकृतिः स्थितिपदेन गृह्यताम् । "इको यणचि" "एचोऽयवायावः" "लोपः शाकल्यस्य" इत्यादिभिर्निष्पाद्यः सन्धिः संहारसन्धिपदेन बोध्यः । यतो हि "इग्यणः सम्प्र-सारणम्" इति सूत्रप्रामाण्याद् यदा यणोऽर्धमात्रिकाः संप्रसृता भवन्ति तदा इको रूपमेकमात्रं धार-यन्ति । तथा च इको मूलं यणेव विद्यते । एवं स्थितौ "इको यणचि" इत्यादिसूत्रबलाद्यदा इका-रादयः स्वकारणभूते यणि लीयन्ते तदा संहारसन्धित्वेन व्यवहार इत्याहुः ।

पूर्वं कस्यचिद्वर्णस्योच्चारणानन्तरमर्धमात्राधिककालाव्यवधानेन यदुच्चारणं तत्संहितयोच्चा-रणमित्युच्यते इत्युक्तम् । तत्र मात्रापदेन कियान् कालो गृह्यते इत्याकाङ्क्षायाम् "कालेन यावता पाणि-पर्य्येति जानुमण्डलम् । सा मात्रा कविभिः प्रोक्ता" इति शब्दस्तोममहानिधिः । अक्षिपक्ष्मणोऽधः पतने यावान् कालः सा मात्रा, अङ्गुष्ठतर्जन्योर्मध्ये काचन नाडी प्रस्फुरति । तस्या एकप्रस्फुरणे यावान् काल सा मात्रेति सिद्धहेमवृत्तिः । स्वरसन्धिप्रकरणे षष्ठाध्यायस्थसंहिताकार्य्याणि अष्टमाध्यायस्थसंहिता-धिकारस्थानि च कार्य्याणि सन्ति । हल्सन्धौ तु "द्वे च" इति सूत्रचतुष्कं विहायाष्टमाध्यायस्थसंहिता-धिकारीयाण्येव कार्य्याणि ।

विसर्गसन्धिस्तु अष्टमाध्यायस्थसंहिताधिकारीयकार्य्यविशिष्ट एव । स्वादिसन्धिस्तूभयसंहिता-धिकारिकार्य्यसंवलित इत्यलं विस्तरेण ।

॥ अथाच्सन्धिप्रकरणम् ॥

अथाच्सन्धीति—ननु अत्र चकारस्य कुत्वम्, सकारस्य श्चुत्वं तु न, 'नाज्झलौ' इति भाष्ये 'कथमनच्त्वम्' इति प्रयोगे, 'सिद्धमनच्त्वात्' इति वार्तिके 'अल्पाच्तरम्' इति च सूत्रे कुत्वश्चुत्वयोरकारेण सुप्सकाराव्यवहितपूर्वत्वाभाववतोऽचः कुत्वाभावस्य श्चुत्वाभावस्य च निपातनात् 'पदान्तकार्यस्याभावो बोध्यते' इति शेखरोक्तं तु न साधु, 'अजनुनासिकः' इत्यत्र जश्त्वा-नापत्तेः । सुप्सकारेत्याद्युक्त्या 'अचोऽप्सु' भाष्यप्रयोगे कुत्वं सिध्यति ।

'इति परिभाषाप्रकरणम्' इत्यस्यार्थे 'सन्ध्युपयोगिनीनामि' त्युक्त्या प्रसङ्गसङ्गत्या सन्धिप्रकरण-मारभते—'संहितायाम्' ( ५-१-७२ ) इत्यधिकारे 'द्वे च' ( ६-१-७१ ) इत्यस्य प्रथमोपात्तत्वे-ऽपि वर्णसमाम्नायेऽचां पूर्वमुपादानेनाच्प्रत्याहारस्य प्रथममुक्तत्वेन चाच्प्रत्याहारनिमित्तकं सन्धि-माह—इको यणचीति—'इकः' इत्यत्र 'षष्ठी शेषे' ( २-३-५० ) इति सम्बन्धे षष्ठी । सम्बन्धश्च द्वयमपेक्षते विशेषणं विशेष्यञ्च । यतः षष्ठी तदर्थो विशेषणम् । प्रकृते इक्पदार्थ इकारादिर्विशेषणम् । विशेष्यन्तु सूत्रे नास्ति । विशेष्यज्ञानं विना कः सम्बन्धः षष्ठ्यर्थ इति ज्ञानं न स्यात् । यथा 'राज्ञः' इत्युक्ते जन्यजनकभावः, स्वस्वामिभावः, अवयवावयविभावः सम्बन्ध इति निर्णयो न जायते । 'पुत्रः' इत्यादिविशेष्ये उक्ते एव सम्बन्धविशेषज्ञानं जायते । एवमेव 'इकः' इत्यत्र कः सम्बन्धः षष्ठ्यर्थ इति निश्चयो न जायते । यदि समीपो विशेष्यस्तदा अवधित्वं सम्बन्धः । इकः समीपे यण् इत्यर्थः । यदि अवयवो विशेष्यस्तदा निरूपितत्वं षष्ठ्यर्थः, इक्निरूपितावयवत्वाश्रयो यण् इत्यर्थः । यदि स्थानं विशेष्यं तदा विषयविषयिभावः षष्ठ्यर्थः । इकः स्थाने यण् स्यादित्यर्थः । एवं संशये 'षष्ठी स्थानेयोगा'

इति परिभाषा निर्णयति। अत्र स्थानपदार्थ एव विशेष्यो नान्य इति। तदाह—इकः स्थाने इति। षष्ठ्यर्थस्तु न स्थानम्। तदुक्तं भाष्ये—'एकशतं षष्ठ्यर्थाः यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति। इष्यते च व्याकरणे या षष्ठी सा स्थानेयोगैवेति' इति। स्थानं च प्रसङ्गः=प्राप्तिरिति यावत्। अत्र व्याकरणे सूत्रेषु यावन्ति सप्तम्यन्तानि पदानि सन्ति तेषु "सप्तम्यधिकरणे च" इति सप्तमी वक्तव्या। अधिकरणमाधेयसापेक्षम्। यथा "भूतले घटः" इत्यत्र भूतलं संयोगसम्बन्धेन घटाधारः, घटश्चाधेयः, तथा "इको यणचि" "बहुवचने झल्येत्" इत्यादावाधेयः क इत्याकाङ्क्षायाम् अजव्यवहितपूर्वस्य च यस्य कार्यं तदाधेयः। यथा "वटे गावः" इत्यत्र वट आधारः, गौश्चाधेयः। अत्र यद्यपि गोवटयोर्नहि संयोगस्तथापि गवाधिकरणीभूतो यो देशः, वटाधिकरणीभूतश्च तयोः सामीप्यात् वटेऽपि देशकृतसामीप्यारोपेण सामीप्यसम्बन्धकृताधारत्वारोप इत्यधिकरणवाचकाद् वटशब्दात्सप्तमी। तथा अजव्यवहितपूर्वस्य इकः, बहुवचनाव्यवहितपूर्वस्य अदन्ताङ्गस्य कार्यं विधीयते, इति "इक्" अदन्ताङ्गश्चाधेयः। अत्राजधिकरणीभूतः, बहुवचनाधिकरणीभूतश्च यः कालः, तयोः सामीप्यात् इकि, अदन्ताङ्गे च सामीप्यारोप इति कालकृतसामीप्यारोपेण इकि, अदन्ताङ्गे च सामीप्यमूलकाधेयत्व-विवक्षायाम् "अचि" बहुवचने चाधिकरणत्वविवक्षायां सप्तमी। यद्यपि सप्तमी द्वेधा अधिकरणे सप्तमी, सति "सदर्थे" सप्तमी च। यथा "छात्रेषु अधीयानेषु गतः" इत्यत्र सदर्थे सप्तमी। परन्तु असति बाधके "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायात् औपश्लेषिकाधिकरणे एव सप्तमी। सति बाधके सदर्थे सप्तमी उपपदविभक्तिः, यथा "कर्तृकर्मणोः कृति" इत्यत्र।

'अचि' इति 'वटे गावः' इतिवत् औपश्लेषिकाधिकरणे सप्तमी, स्थितिक्रियाद्वारा इग् आधेयः। एतेन नहि वर्णा वर्णान्तरस्याधारा भवन्तीति परास्तम्, बौद्धसामीप्याधारत्वे बाधकाभावात्। तदुक्तं भाष्ये 'इको यणचि' 'अचि उपश्लिष्टस्येति' इति। तथा च 'सुधी उपास्यः' इत्यत्र यदि अचपदेन धकारोत्तर ईकारो गृह्यते तदा तत्समीपस्य सकारोकारस्य धकारेण व्यवहितस्यापि यण् प्राप्तो व्यवधानेऽपि सामीप्यव्यवहारात्। उपास्योकारस्यापि समीपस्थत्वाद् यण् प्राप्तः। परन्तु 'तस्मिन्निति' परिभाषया सप्तम्यन्ताचपदार्थाव्यवहितपूर्वस्यैव इको यणिति नियम्यते।

तेन अच् समीपेऽपि व्यवहितस्य परस्य चेको यण् न। यदि तु 'छात्रेषु अधीयानेषु गतः' इतिवत् लक्ष्यलक्षणभावे सती सप्तमी स्यात् तदा 'जगतः कृष्णः कर्ता' इतिवत् व्यवधानेऽपीको यण् स्यात्। सत्यां सप्तम्यान्तु 'तस्मिन्निति' न प्रवर्तते। अत एव 'कर्तृकर्मणोः कृति' इत्यस्य 'जगतः कृष्णः कर्ता' इत्यत्रापि प्रवृत्तिः। ननु सप्तम्या पूर्वस्य उपस्थितौ 'परसप्तमी इयम्' इति व्यवहारानुपपत्तिः, सप्तम्याः परोपस्थापकत्वाभावात्, किन्तु पूर्वस्योपस्थापकत्वात् पूर्वसप्तमीत्येव वक्तव्यमिति चेन्न, पूर्वापेक्षया सप्तम्यन्तार्थस्य परतया फलितार्थमादाय परसप्तमीत्वव्यवहारात्।

वस्तुतस्तु 'तस्मिन्निति' इति सूत्रस्य 'औपश्लेषिकाधिकरणसप्तमीनिर्देशेन विहितं यत्कार्यं तदव्यवहितपूर्वस्य यथा स्यात्तथा कर्तव्यमित्यर्थेन 'अव्यवहिते परे' इत्यध्याहारेऽपि 'इकोऽव्यवहितेऽचि परे यण्' इत्यर्थेन 'परसप्तमी' इत्यस्य परोपस्थापिका सप्तमीत्येवार्थः। अत एव 'यणादौ सुपि परे' इत्यादयः कौमुदीकृतः, 'लसार्वधातुके परतस्तासयादीनामिति संदेहः' इति 'तस्मिन्निति' इतिसूत्रभाष्योक्तिश्च संगच्छन्ते। यस्य कार्यं यस्मिन् परतस्तयोः संहितायाम्=अर्धमात्राधिककालव्यवधानराहित्ये एव सन्धिकार्यम्। यदि तु उपश्लेषोऽपि अर्धमात्राधिककालव्यवधानाभावे एवेति तदा संहिताधिकारो व्यर्थः। 'परः सन्निकर्षः संहिता' इति सूत्रमपि व्यर्थमिति भाष्ये स्थितम्। 'दधि' इत्यतः परम् 'अत्र' इत्यस्य विलम्बेनोच्चारणे धकारेकारयोः संहितासत्त्वाद्यण् तु न, कार्यिनिमित्तयोः संहिताया अपेक्षितत्वात्। उप=समीपे श्लेषः उपश्लेषः = सम्बन्धस्तत्कृतमधिकरणम् = औपश्लेषिकम्= सामीपिकमिति यावत्।

'सुधी उपास्यः' इति स्थिते ।

ननु 'आदिरन्त्येन' इति सूत्रेण इक्पदस्य वर्णसमाम्नाये पठितेषु '–इ-उ-ऋ-ऌ' इत्येतेषु शक्तिर्बोधिता, तथा च दीर्घादीनां यण् न स्यात्, इका तदनुपस्थितेः । नच 'अइउण्' सूत्रे अणुदित्सूत्रप्रवृत्त्या अकारादिना दीर्घादीनामुपस्थित्या तेषामपि इक् संज्ञा स्यादिति वाच्यम्, 'वर्णानामुपदेशः' इत्यादिना 'एतेन सर्वेण समुदितेन वाक्येन अन्यत्र—'पञ्चवाक्यादन्यत्र' सवर्णानां ग्रहणं भवति, इत्यनेन भाष्येण वर्णसमाम्नाये अणुदित्सूत्राप्रवृत्तिबोधनात् । नच इक्पदेनोपस्थितेषु इकारादिषु अणुदित्सूत्रप्रवृत्त्या दीर्घादीनां ग्रहणम्, 'नानुबन्धरितः शब्दः प्रत्यायकः' इति भाष्येण तेषु ग्रहणकशास्त्राप्रवृत्तेः, इक्पदनिष्ठवृत्त्या अनुपस्थितत्वेन 'इको यणचि' इति सूत्रप्रयोज्यशाब्दबोधे दीर्घादीनामप्रवेशाच्चेति चेन्न, 'अकः सवर्णे दीर्घः' इत्यत 'अकः' इत्यनुवृत्त्यर्थं 'प्रथमयोः पूर्वसवर्णः' इति दीर्घविधायकेऽपि अणुदित्सूत्राप्रवृत्त्या 'गौर्यौ, गौर्यः' इत्यादिषु तदप्राप्त्या तत्र दीर्घनिषेधकस्य 'दीर्घाज्जसि च' (६–१–१०५) इत्यस्य वैयर्थ्येन 'प्वादीनां ह्रस्वः' (७–३–८०) इति, 'ऊकालोऽज्' (१–२–२७) इत्यादिनिर्देशेन च प्रत्याहारेषु स्वशास्त्रप्राप्येषु दीर्घादिषु लक्षणेति ज्ञापनात् । एवञ्च इक्पदवाच्य इकारादिस्तल्लक्ष्य इकारादयोऽष्टादश तत्स्थाने यणित्यर्थान्न दोषः । वर्णसमाम्नायादौ सर्वत्र जातिपक्षस्वीकारे अत्वादिजातौ कार्य्यासम्भवाद्विनिगमनाविरहाज्जात्याश्रयाणां सर्वेषां ह्रस्वदीर्घादीनामिगादिसंज्ञेति दीर्घादीनामपि यणादिविधाने बाधकाभावः ।

तथा च अणुदित्सूत्रे अण्ग्रहणं प्रत्याख्यातं भाष्यकृता, जातिपक्षेणैव कार्य्यसिद्धेः । 'अप्रत्ययः' इति योगविभागेन यथाकथञ्चित्प्राप्तस्य सवर्णग्रहणस्य निषेधकः, तपरसूत्रमपि तथैव ।

सुधी उपास्य इति—इदं बालानां बोधनाय कल्पितरूपम्, न तु वास्तविकम्, समासे सन्धिकार्य्यस्य नित्यत्वात् शब्दानां नित्यत्वाच्च । तदुक्तं हरिणा—

उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ इति ।

सुष्ठु ध्यायन्तीति विग्रहे 'ध्यै चिन्तायाम्' इत्यतः 'अन्येभ्योऽपि दृश्यते' ( ३–२–१७८ ) इति सूत्रस्थेन 'ध्यायतेः सम्प्रसारणञ्च' इति वार्तिकेन कर्तरि क्विपि यकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हलश्च' ( ६–४–२ ) इति सम्प्रसारणस्य दीर्घे सुधीशब्दः सिद्ध्यति । उपपूर्वकादासधातोः 'ऋहलोर्ण्यत्' ( ३–१–१२४ ) इति कर्मणि ण्यति उपासितुं योग्य इत्यर्थे उपास्यशब्दः साधुः । सुधीभिरुपास्यः सुध्युपास्य इति कर्तृतृतीयान्तेन समासः । बुद्धिमत्कर्तृकोपासनायोग्य इत्यर्थः । नच सम्प्रसारणस्य पूर्वरूपे दीर्घे च परम्परया स्थानिवद्भावेन तमादाय द्विसम्प्रसारणे 'सम्प्रसारणाच्च' इति उपास्योकारस्य पूर्वरूपं स्यादिति वाच्यम्, 'हलः' इति सूत्रसामर्थ्येन पूर्वरूपे स्थानिवद्भावेन सम्प्रसारणत्वेऽपि 'हलः' इति विहितदीर्घे अनल्विधाविति निषेधेन स्थानिवद्भावाभावेन पूर्वरूपाप्राप्तेः । 'इकोऽसवर्णे' ( ६–१–१२७ ) इति प्रकृतिभावस्तु न, 'न समासे' इति निषेधात् ।

ननु ईकारस्य स्थाने चत्वारोऽपि यणः स्युः । न च 'यथासंख्यम्' ( १–३–१० ) इत्यनेनेकारस्थाने यकार एव स्यादिति वाच्यम्, चतुःषष्टिसंख्याका इकः, सप्तसंख्याकाः चतुःसंख्याका वा यण इति यथासंख्यमन्वयाप्राप्तेः । न च जातिपक्षे इत्वादयः, यत्वादयश्च चतस्र इति तद्द्वारा यथासंख्यम्, जातिपक्षे 'ऋलृवर्णयोः' इति वार्तिकेन ऋकारे लृत्वस्य लृकारे ऋत्वस्य चातिदेशेन ऋकारस्थाने लकारस्य लृकारस्थाने रेफस्य च यणः प्राप्तेः । न च धातुषु ऋलृरूपानुबन्धद्वयकरणेन ऋलृवर्णयोः सावर्ण्यमनित्यम् । अन्यथा 'पुषादिद्युताद्यॢदितः' ( ३–१–५५ ) इत्यादौ अणुदित्सूत्रप्रवृत्त्या ऋदित्यपि लृदित्प्रयुक्तकार्य्यस्य दुर्वारतया अनुबन्धद्वयकरणवैयर्थ्यापत्तेः । तथा चेष्टानुरोधेनात्र ऋलृवर्णयोर्नास्त्यतिदेशाभावे नोक्तापत्तिरिति वाच्यम्, अत्र एकवाक्यतयामिष्टानिष्टत्वस्य दुर्ज्ञेयत्वेन यथासंख्या-

स्थानत आन्तर्यादीकारस्य यकारः। 'सुध्य् उपास्यः' इति जाते।

सिद्धेरत आह—स्थानत इति— तालुस्थानकेकारस्य तालुस्थानको यकार एवादेश इत्यर्थः। एवम् ओष्ठस्थानकोकारस्य ओष्ठस्थानकः, मूर्द्धस्थानकस्य ऋकारस्य मूर्द्धस्थानकः, दन्तमात्रस्थानकस्य लृकारस्य दन्तमात्रस्थानको यणित्यर्थः। यदि तु ह्रस्वोरुवयोर्जात्योरनारोपितयोरेव सम्भवात् तत्साहचर्यात् ऋत्वलृत्वे अपि अनारोपिते एव गृह्येते तदा यथासंख्येनापि सिद्धिरिति वक्तुं शक्यते। अत एव 'स्थानेऽन्तरतमः' इति सूत्रभाष्ये 'किमिहोदाहरणम्? इको 'यणचि' दध्यत्र, मध्वत्र। नैतदस्ति। संख्यातानुदेशेनापि सिद्धम्' इत्युक्तम्। व्यक्तिपक्षेऽपि इक्पदयणपदयोः शक्यार्थमादाय वा यथासंख्येनापि सिद्धिरित्यभिप्रायकं वा तद्भाष्यम्। ऋलृदित्सूत्रं तु लक्षणाग्राहकम्। न च यथासंख्यसूत्रभाष्ये "किमिहोदाहरणम्? 'इको यणचि' दध्यत्र, मध्वत्र। नैतदस्ति। स्थानेऽन्तरतमेनाप्येतत्सिद्धम्' इति भाष्यविरोधः, आरोपिताया अपि जातेर्ग्रहणे यथासंख्येनासिद्धत्वाभिप्रायेण तदुक्तत्वात्। 'अणोऽप्रगृह्यस्यानुनासिकः' इत्यनेनानुनासिकस्य 'दधिँ' इत्यस्यानुकरणं 'दधिँ अत्र' इत्यत्रेकारस्यानुनासिकत्वेऽपि यण् अननुनासिक एव, यण्पदस्य विधेयताप्रयोजकत्वेन 'अप्रत्ययः' इति निषेधेनानुनासिकयणोऽनुपस्थितेः। व्याकरणेन बोधितानां शब्दानां पुण्यजनकत्वं तु यदि अपशब्दवदर्थबोधमात्रफलकत्वं संस्कृतशब्दानामपि स्यात्तदा शास्त्रवैयर्थ्यमेव स्यादिति शास्त्रवैयर्थ्यापत्त्या यच्छास्त्रेण परिनिष्ठितत्वेन बोध्यते तत्पुण्यजनकमिति कल्पनेन 'एकः शब्दः सम्यग् ज्ञातः' इत्यादिभाष्येण च बोध्यम्।

ननु 'इकः' इति माऽस्तु 'यणचि' इत्येव सूत्रमस्तु। न च 'अग्निचिदत्र' पचति' इत्यादौ हलोऽपि यणापत्तिः, 'दीर्घात्' (६-१-७५) इत्यतो दीर्घादित्यनुवर्त्य अचीति सप्तम्या षष्ठ्या विपरिणम्य दीर्घस्य, 'ह्रस्वस्य पिति कृति तुक्' ( ६–१–७१ ) इत्यतो ह्रस्वस्येत्यनुवर्त्य ह्रस्वस्य च यणो विधानेन हलः स्थाने- यणोऽप्राप्तेः। 'हरये' 'रमेशः' इत्यादौ यणादेशस्तु अयादिगुणवृद्ध्यादिभिरपवादैर्बाधा-स्परिहरणीयः। एवमिग्ग्रहणमन्तरेणापि इको यणि सिद्धे पुनरिग्ग्रहणम्, 'इको यणचि' इत्यस्य, इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इत्यस्य च समानविषयतया विधानसामर्थ्याद्विकल्पेन यणि ह्रस्वे च सिद्धे इग् ग्रहणं व्यवस्थितविभाषार्थम्। तेन सिद्धित्यसमासयोरिकोऽचि यणेव यथा स्याद् यदन्यदप्राप्तिकं तन्मा भूदिति कल्पते। तथा च- 'सिति च' 'न समासे' इति वार्त्तिकद्वयं न करणीयम्। स्पष्टचेदं सर्वं भाष्ये। वस्तुतस्तु यन्ताघातेः 'क्तिच्क्तौ च संज्ञायाम्' ( ३–३–१७४ ) इति क्तिचि 'अतो लोपः' इत्यल्लोपे 'लोपो व्योः' इति यल्लोपे अल्लोपस्य 'अचः परस्मिन्' इति स्थानिवद्भावेन 'आतो लोप इटि च' ( ६-४-६४ ) इत्याल्लोपे 'यातिः' इत्यत्र आल्लोपस्य स्थानिवत्त्वादाकारस्य यणादेशवारणायेग्ग्रहणं कर्त्तव्यम्। न च 'अकः सवर्णे' इति यणोऽपवादेन दीर्घेण बाधः, दीर्घस्य स्थानिभूतादचः पूर्वपरोभयविधितया पूर्वमात्रस्यैव विधौ भाष्याद्यभिमतस्य स्थानिवद्भावस्य दीर्घेऽप्राप्त्या दीर्घेणात्र यणो बाधस्य दुर्वारत्वात्। न च पूर्वमात्रस्य विधावित्यर्थे प्रमाणाभावः, विधिग्रहणस्यैव प्रमाणत्वात्। अन्यथा 'पूर्वस्य' इत्येव वक्तव्ये विधिग्रहणवैयर्थ्यं स्पष्टमेव। पर्याप्तिभानस्यौत्सर्गिकत्वेन पूर्वपर्याप्तोद्देश्यताकविधावित्यर्थाच्च। न चैतदर्थस्य 'आर' इत्यादेः सिद्धेरेव फलम्। तथाहि—'ऋ ऋ अतुस्' अभ्यासस्य 'उरत्' इत्यत्वे उत्तरस्य 'ऋच्छत्यृताम्' इति गुणे स्थानिवत्त्वेन ऋकारमादाय दीर्घप्राप्त्या 'आद् गुणः' इति गुणे 'अरतुः' इत्यस्यापत्तेः। 'यणचि' इत्यत्र अमुट् तु न, सौत्रत्वात्, संहिताया अविवक्षितत्वाच्च। अणुसूत्राकारेण प्रत्याहारमादाय 'योऽचि' इति तु न कृतम्, 'क्रेयः' 'योऽचि' इत्यादौ प्रश्ना द्वाराभावाय ज्ञापकाश्रयणे गौरवात्।

जाते इति—जाते सति धकारस्य द्वित्वमित्यन्वयः। केन सूत्रेण द्वित्वमित्या-

[काङ्क्षायामाह—

अनचि च । [ ८-४-४७ ]

अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वम् ।

'अनचि च' इति । अत्र चो भिन्नक्रमः । प्रथमम् 'च' इति एकं सूत्रं द्वित्वविधायकम् । तत्र 'यरोऽनुनासिकेऽनुनासिको वा' ( ८—४—४५ ) इत्यतो यर इति षष्ठ्यन्तम्, वेति च, 'अचो रहाभ्यां द्वे' ( ८-४-४६ ) इत्यतः 'अचः' इति पञ्चम्यन्तम्, 'द्वे इति चानुवर्तते । तथा च 'अचः परस्य यरो द्वे वा स्तः' इति द्वित्वं विधीयते। अत एव 'ए ओङ्' सूत्रभाष्ये यदि द्विमात्रकेषु एकारादिषु तपरत्वं क्रियेत तदा अच्प्रत्याहारे प्लुतानामग्रहणात् 'गौ३ अात' इत्यत्र 'अनचि चेति' 'अच उत्तरस्य यरो द्वे भवतः' इति द्विर्वचनं न प्राप्नोति' इति भाष्योक्तिः संगच्छते । अन्यथा 'अनचि च' इत्यस्य निषेधकत्वात् 'अनचि च' इति द्विर्वचनं न प्राप्नोतीतिभाष्योक्तिरसङ्गता स्यात् । मम तु 'अनचि' 'च' इत्यत्र 'च' इति = इत्यस्य 'च' इति = च इति सूत्रेण 'अचः परस्य यरो द्वे भवत इत्यर्थकेन द्विर्वचनं न प्राप्नोतीति स्वरसतो भाष्यं संगच्छते । केचित्तु 'प्राप्तौ सत्यां निषेधः' इति नियमान्निषेधेन विधिरनुमीयते । स च विधिः परनिमित्तको न भवति । तथा च अचः परस्य यरोऽवसानेऽपि द्वित्वं सिध्यति । अत एव 'अवसाने च द्वे भवत इति वक्तव्यम्' 'वाक्क्, वाक्' इत्युक्त्वा 'न वक्तव्यम् । नायं पर्युदासो यदन्यदच इति । किं तर्हि प्रसज्यप्रतिषेधोऽ 'चि नेति' इति भाष्ये उक्तम् । एतेन प्रसज्यप्रतिषेधेऽसमर्थसमासः, नञः क्रियया सह सम्बन्धेन समासाप्राप्तेः । वाक्यभेदः, विधिनिषेधयोरेकेन वाक्येन वक्तुमशक्यत्वात्, शास्त्रबाधश्चेति गौरवं लक्ष्यानुरोधात्सोढ-व्यमिति सूचितम् । पर्युदासे तु 'नञिवयुक्तमन्यसदृशे तथा ह्यर्थगतिः' नञ्युक्तम्, इवयुक्तञ्च पदं तद्भिन्ने तत्सदृशेऽर्थे वर्तते । हि यतः तथैवार्थबोधस्तस्मादित्यर्थकन्यायात् 'अनचि' इत्यस्य अज्भिन्ने वर्णे परेऽचः परस्य यरो वा द्वित्वमित्यर्थे 'त्वक्क्' इत्यादौ अवसाने परे द्वित्वं न स्यात् । इष्यते च तत्रापि । किञ्च पर्युदासे 'हलि' इत्येव वक्तव्ये 'अनचि' इति गुरुभूतन्यासो व्यर्थ एव स्यात् ।

'यरः' इत्यस्य अनिर्द्धारितषष्ठ्यर्थतया 'षष्ठी स्थानेयोगा' इत्युपतिष्ठते । 'द्वे' इत्यस्य द्वित्वत्रि शिष्टार्थकतया द्वित्वविशिष्टे के इत्याकाङ्क्षायाम् उच्चारणक्रिये उपतिष्ठेते । तथा च 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेनाध्याहृतोच्चारणक्रियानिरूपितकर्मण्येव षष्ठी, न तु स्थानषष्ठी । यत्र तु स्वरूपत आदेशस्योपादानं तत्र नोच्चारणक्रियाया अध्याहारः, स्थानपदार्थद्वारा उपस्थितत्वादादेशे एवान्वयसम्भवादिति तत्र 'षष्ठी स्थानेयोगा' इत्यस्य चारितार्थ्यम् । तथा च अचः परस्य यरो द्विवारो-च्चारणं कर्तव्यमिति फलतीति भावः ।

इति धकारस्येति—ननु धकारस्य द्वित्वे कृते पुनः पुनः धकारस्य अच् परत्वसत्त्वाद् द्वित्वं स्यात् । न चैवं द्वित्वस्य विरतिरेव न स्यादिति तन्निया न वारं वारं द्वित्वमिति वाच्यम्, यावच्छक्त्युच्चारणयोग्यस्य धकारस्य द्वित्वे बाधकाभावादिति चेन्न, 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायेन पुनर्द्वित्वाप्रवृत्तेः । अत्र मानं तु 'समः सुटि' ( ८-३-५ ) इति सूत्रमेव—तद्धि 'संस्कर्ता' इत्यत्र समो रुत्वेन सकारत्रय-सम्पादनार्थम् । यदि एकस्य लक्षणस्य=सूत्रस्य लक्ष्ये प्रवृत्तावपि पुनः प्रवृत्तिः स्यात्तदा 'समो वा लोपमेके' इति वार्त्तिकेन मकारस्य लोपे 'अनचि च' इत्यनेन सुटः सकारस्य वारद्वयं द्वित्वे सकार-त्रयघटितरूपसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । 'लक्ष्ये लक्षणम्' इति न्यायाङ्गीकारे तु द्वित्वेन सकारद्वयघटित-रूपसिद्धावपि पुनर्द्वित्वाप्राप्त्या सकारत्रयघटितरूपसम्पादनाय 'समः सुटि' इति सूत्रं चरितार्थम् । न च धकारस्य जश्त्वेन दकारे दकारस्य 'अनचि च' इति द्वित्वं स्यात् । लक्ष्ये लक्षणन्यायेन तद्वारणन्तु न, वर्ण-भेदेन लक्ष्यभेदे तदप्रवृत्तेः । अत एव 'न सम्प्रसारणे सम्प्रसारणम्' इत्यस्य चारितार्थ्यम् । अन्यथा 'यूनः' इत्यत्र यकारस्य सम्प्रसारणे लक्ष्ये लक्षणन्यायेन पुनर्वकारस्य सम्प्रसारणाप्राप्त्या तद्वैयर्थ्यं स्पष्ट-मेव । वर्णभेदेन लक्ष्यभेदे तदप्रवृत्तौ तु लक्ष्ये लक्षणन्यायेन यकारस्य सम्प्रसारणवारणासम्भवात्तद्वा-रणाय सूत्रं चरितार्थमिति वाच्यम्, विकारकृतवर्णभेदेन लक्ष्यभेदेऽपि लक्ष्ये लक्षणन्यायस्य प्रवृत्तेर्भाष्य-

स्थानिवदादेशोऽनल्विधौ । [ १-१-५६ ]

आदेशः स्थानिवत्स्यात्,

---

सम्मतत्वात् । अत एव 'सिचि वृद्धिः' (७-२-१) इति सूत्रभाष्ये 'उदवोढाम्' इत्यादौ 'उद् अवह् स् ताम्' इति दशायाम् 'वदव्रजहलन्तस्य' (७-२-३) इति वृद्धौ सिजादिलोपे 'सहिवहोरोदवर्णस्य' (६-३-११२) इति अकारस्य ओकारादेशे पुनः 'वदव्रज' इति वृद्धौ प्राप्तायाम् 'लक्ष्ये लक्षणन्यायेन पुनर्वृद्धिर्न' इति भाष्यं संगच्छते । यदि विकारकृतवर्णभेदेऽपि लक्ष्यभेदः स्यात्तदा पूर्वमकारस्य वृद्धि-विधानीमोकारस्येति वर्णभेदाल्लक्ष्यभेदेन 'तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते' इत्यर्थकलक्ष्ये लक्षणन्याया-प्राप्त्या भाष्यासङ्गतिः स्पष्टैव । विकारकृतलक्ष्यभेदो नाश्रीयते इत्याश्रयणे तु अकारस्यैवौकारो विकार इति लक्ष्यभेदाभावात् तन्न्यायप्रवृत्तिर्भाष्योक्ता नासङ्गता ।

नतु 'सुध् य् उपास्यः' इत्यत्र ईकारस्थाने जातस्य यकारस्य स्थानिवद्भावेनाच्त्वात् 'अनचि च' इत्यनेन अचि परे यरो न द्वे स्त इति निषेधाद् धस्य द्वित्वं न स्यादिति शङ्कामादाय स्थानिवद्भावप्रापकं सूत्रमाह—स्थानिवदादेश इति ।

'स्थानिवदादेशोऽनल्विधौ' यद्यपि लोके एकस्मिन्नध्यापके मृते पुनस्तत्स्थाननिविष्ट-स्यापि अभिवादनाध्यापनादिधर्मलाभो भवति । एवं राजनि मृते तत्स्थानेऽभिषिक्तस्य राजपुत्रा-देरपि राजधर्मलाभो भवति । वैदिकयागेऽपि विकृतौ 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इति श्रुत्या कुशानां स्थाने शराः प्रस्तीर्यन्ते । तद्वदत्रापि 'अस्तेर्भूः' (२-४-५२) इत्यादिना अस्धातोः स्थाने भ्वादेशे जाते अस्तेः ये धर्मा अर्थबोधनधातुत्वादयो भवतेरपि लोकदृष्टान्तेन स्युरेवेति नार्थोऽनेन सूत्रेण, तथापि व्याकरणे लोकन्यायस्य निवर्तकं 'स्वं रूपं शब्दस्य' (१-१-६८) इति सूत्रं पाणिनिना कृत-मस्ति । तेन 'आङो यमहनः' (१-३-२८) इत्यात्मनेपदं वधादेशे न स्यात् । किञ्च उपाध्यायः शिष्येण यज्ञार्थमुपनिमन्त्रितोऽपि कार्यान्तरव्यासङ्गात् स्वयं न गतः, किन्तु स्वशिष्यः प्रेषितः । तदा स शिष्यस्तत्स्थानापन्नतया अग्रासनादीन् लभते, परन्तु 'उपाध्यायोऽयम्' इति न व्यवह्रियते । तद्वत् अस्तेः स्थाने भूशब्दः, हनः स्थाने वधशब्दः, अस्धातुः, भूशब्दः, हन्धातुः वधशब्द इति व्यवहारो न स्यादिति तद्व्यवहारोऽपि भवत्वित्यतः स्थानिवत्सूत्रम् । स्थानम् = प्रसङ्गः । सोऽस्त्यस्येति स्थानी । यस्य प्रसङ्गे किञ्चिद्विधीयते स स्थानी । येन विधीयमानेन प्रसक्तं निवर्तते स आदेशः । स्थानिना तुल्यः स्थानिवत् । 'तेन तुल्यं क्रिया चेद्वतिः' (५-१-११५) इति वतिः । स्थानिवदित्यव्ययम् । आदेशः स्थानिना तुल्यो भवति । स्थानिधर्मकः, स्थानिकार्यभाग् वा आदेशो भवतीति यावत् । इदञ्च अतिदेशसूत्रम् । तच्च बाधज्ञानसमकालिकेच्छाजन्यज्ञानरूपाहार्यारोपबोधकम् । यथा 'रामाय' इत्यत्र यादेशे सुप्त्वाभावेऽपि 'यादेशः सुप्' इति ज्ञानं बोधयति । लोके यथा 'चिन्तामणिरयं माणवकः' इति । अत्र च स्थानिसदृश आदेश इत्येव बोध्यते । सादृश्यमूलकाश्च तत्तद्धर्मारोपा ऊह्याः । आरोपश्च सप्तविधः । तथाहि—१ निमित्तातिदेशः, २ व्यपदेशातिदेशः, ३ शास्त्रातिदेशः, ४ रूपातिदेशः, ५ तादात्म्यातिदेशः, ६ कार्यातिदेशः, ७ अर्थातिदेशश्चेति । तदुक्तम्—

> कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः ।
> व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते ॥ इति ।

१ निमित्तातिदेशो यथा—'पूर्ववत्सनः' इत्यनेन प्रकृतिगतमेव अनुदात्तेत्त्वम्, [illegible] ङित्त्वं वा सन्नन्तेऽतिदिश्यते, तेन 'एदिधिषते' इत्यादावात्मनेपदं सिध्यति ।

२—व्यपदेशः = मुख्यव्यवहारः । 'आभ्याम्' इत्यत्र अरूपेऽङ्गे 'आद्यन्तवदेकस्मिन्' इत्यनेन अचन्ताङ्गत्वातिदेशः ।

न तु स्थान्यलाश्रयविधौ ।

३–शास्त्रातिदेशः—'परिवीः' व्येञ्धातोः क्विपि तस्य लोपे सम्प्रसारणे च शास्त्रातिदेशेन 'ह्रस्वस्य पिति' ( ६–१–७१ ) इति तुकं बाधित्वा 'हलः' ( ६–४–२ ) इत्यनेन परत्वाद् दीर्घः ।

४–रूपातिदेशः—'वतण्डाच्च' ( ४–१–१०० ) इति यञि वतण्डस्यापत्यम् 'वातण्ड्य' इति स्थिते 'यञश्च' ( ४–१–१६ ) इति ङीपि वतण्डी । सा चासौ वृन्दारिका च 'वातण्ड्यवृन्दारिका' अत्र 'पुंवत्कर्मधारय' ( ३–३–४२ ) इत्यनेन पुंवाचकवातण्ड्यशब्दरूपमतिदिश्यते ।

५–तादात्म्यातिदेशः । तादात्म्यं तदङ्गता । 'व्रतपाणी शुभस्पती' इत्यत्र 'सुबामन्त्रिते पराङ्गवत्स्वरे' ( २–१–२ ) इत्यनेन शुभ इति षष्ठ्यन्तस्य पतिशब्दतादात्म्यमतिदिश्यते । तेन 'आमन्त्रितस्य च' इत्यनेन 'शुभस्पती' इति समुदायस्यामन्त्रितत्वात् शकारोकारस्याद्युदात्तत्वं सिध्यति ।

६–कार्यातिदेशः—'गोतो णित्' ( ७–१–९० ) इत्यनेन णिति वृद्धिरूपं यत्कार्यं तदति-दिश्यते । तेन 'गौः' 'गावौ' इत्यादि सिध्यति । यद्वा 'कर्मवत्कर्मणा तुल्यक्रियः' ( ३–१–८७ ) इत्यनेन कर्मणि लकारे यत्कार्यं तत् कर्मणा तुल्ये कर्तरि अतिदिश्यते । तेन कर्मकर्तरि 'अनुक्रियते' 'पराक्रियते' इत्यत्र 'अनुपराभ्यां कृञः' इति बाधित्वा परत्वात् 'कर्मवत्कर्मणा' इत्यात्मनेपदमेव भवति । शास्त्रातिदेशे तु 'तङ् भावकर्मणोः' इति बाधित्वा परत्वादनुपराभ्यामिति परस्मैपदापत्तिः ।

७–अर्थातिदेशो यथा—'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' ( १–२–५८ ) इत्यनेन एकत्वविशिष्टेऽर्थे बहुत्वरूपार्थातिदेशः । तेन 'ब्राह्मणाः पूज्याः' इत्यत्र विशेषणादपि बहु-वचनं सिध्यति । यदि तु एकवचनस्य स्थाने बहुवचनप्रत्ययः स्यात् तदा 'व्रीहिभ्य आगतः' इत्यत्र जात्याख्यायाम् ङसेः स्थाने बहुवचने 'घेर्ङिति' इति गुणः प्रसज्जेत । एकवचनं बाधित्वा बहुवचन-मित्यर्थे तु जातिवाचकादेव बहुवचनं स्यान्नतु तद्विशेषणात् । अर्थातिदेशे तु विशेषणानां विशेष्यार्थगत-संख्याबोधकत्वात्ततोऽपि बहुवचनम् । न तु स्थान्यलाश्रयेति—अल इति सम्बन्धसामान्यषष्ठ्या समासात् अल्=वर्णस्तत्सम्बन्धो यो विधिस्तद्भिन्नविधावादेशः स्थानितुल्यो भवति । वर्णविधावा-देशः स्थानिवन्नेतीति फलतीति भावः । तथा च अला विधौ, अलः परस्य विधौ, अलः स्थाने विधौ, अलि परे विधौ च आदेशो न स्थानिवदिति यावत् । अला विधौ यथा—'व्यूढोरस्केन' अत्र 'सोऽपदादौ' ( ८–३–३८ ) इत्यनेन विसर्गस्य सत्वेऽत्र सकारस्य स्थानिवद्भावेन विसर्गत्वमादाय विसर्गस्याकारोपरि पाठेनाड्ग्रहणेन ग्रहणात् णत्वविधावड्व्यादेरलो व्यवधानाख्यक्रियायाः कर्तृतया करणतया वा निमित्ततया अल्कर्तृकविधौ अल्करणकविधौ वा आदेशो न स्थानिवदित्यर्थकेन 'अला विधौ' इत्यनेन स्थानिवत्त्वनिषेधात् अडादिमात्रव्यवधानाभावेन णत्वं न ।

अलः परस्य विधौ यथा—'द्यौः' इत्यत्र वकारस्थानिकस्य औकारस्य स्थानिवत्त्वेन हल्त्वात् ततः परस्य सोः 'हल्ङ्याब्भ्यः' ( ६–१–६८ ) इति लोपः प्राप्तः, अलः परस्य विधौ न स्थानि-वदिति निषेधान्न भवति ।

अलः स्थाने विधौ यथा—'द्युकामः' 'दिवं कामयते' इत्यर्थे 'कर्मण्यण्' ( ३–२–१ ) इत्यण् । 'दिव उत्' ( ६—१—१३१ ) इति वकारस्य उकारादेशे स्थानिवद्भावेन वत्वमादाय 'लोपो व्योर्वलि' ( ६–१–७६ ) इति वलोपः प्राप्तोऽलो वकारस्य स्थाने लोपस्य विधित्वेन स्थानि-वत्त्वनिषेधान्न भवति ।

अलि परे विधौ यथा—'क इष्टः' इत्यत्र यजेः क्ते 'वचिस्वपि' ( ६—१—१५ ) इति यकारस्य इकारे सम्प्रसारणे तत्र स्थानिवत्त्वेन हल्त्वबुद्ध्या कशब्दोत्तररोः 'हशि च' इत्युत्वे प्राप्ते हश्रूपे अलि परे विधित्वात् स्थानिवत्त्वनिषेधान्नोत्वम् । ननु 'अल्निमित्तके विधौ न स्थानिवत्' इत्यर्थे 'रामाय' इत्यादौ 'सुपि च' इति दीर्घस्य यञ्रूपाल्निमित्तकत्वेन तत्र कर्तव्ये 'अनल्विधौ'

इति निषेधात् 'आदेशः स्थानिवत्' इति स्थानिवद्भावो न स्यात्। तथा च यादेशस्य सुप्त्वाभावात् 'सुपि च' इति दीर्घो न स्यादिति चेन्न, प्रत्यासत्त्या स्थानिघटकाल्विधावेव निषेधस्वीकारात्। न च 'अनल्विधौ' इत्येतत्सन्निहित आदेश एव न स्थानी, सूत्रे 'स्थानिवदादेशोऽनल्विधौ' इत्युक्तेः। तथा च आदेशाघटकाल्निमित्तके विधौ स्थानिवद्भावनिषेधाद् दीर्घो न स्यादिति वाच्यम्, 'शाब्दक्रमादार्थक्रमो बलीयान्' इति न्यायेन शब्दकृतपौर्वापर्याश्रयणे आदेशस्य सन्निहितत्वेऽपि अर्थकृतपौर्वापर्ये 'आदेशः स्थानिवत् स्यात् अनल्विधौ' इत्येवंरूपे स्थानिन एव सन्निहितत्वात्। आर्थक्रमस्य बलवत्त्वे बीजन्तु शब्दप्रयोगस्यार्थप्रत्यायनार्थत्वेनार्थस्य प्राधान्यम्, 'कष्टाय क्रमणे' (३-१-१४) इत्यादयो निर्देशाश्च। अत एव वेदेऽपि 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इति शाब्दक्रमसत्त्वेऽपि आर्थक्रमात् प्रथमं यवागूपाकस्ततो हवनम्।

नन्वेवमपि 'प्रदीव्य' इत्यादौ 'आर्धधातुकस्येड्वलादेः' इत्यनेन प्राप्तस्येटः स्थानिनोऽभावेन तद्घटकाल्निमित्तकत्वाभावात्। 'अनल्विधौ' इति निषेधानुपपत्तिरिति चेन्न, 'अनल्विधौ' इति निषेधसामर्थ्येन अल्पया स्थान्यल्वृत्तिधर्मनिमित्तके विधौ स्थानिवन्नेत्यर्थेन स्थानिनोऽभावेऽपि इटि स्थान्यल्वृत्तिवल्त्वनिमित्तकत्वस्याबाधेन निषेधोपपत्तेः। न चैवमपि 'प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः' इति न्यायेन अल्वृत्तिधर्मस्य प्राधान्येन निमित्तकत्वे 'हशि च' 'लोपो व्योर्वलि' इत्यादावेव निषेधः स्यान्न तु वलादिनिमित्तकत्वे, वल्त्वस्याप्राधान्यादिति वाच्यम्, विधिग्रहणसामर्थ्यात्, 'न ल्यपि' इत्यादिज्ञापकाच्चाप्राधान्येनाल्आश्रयणेऽपि निषेधप्रवृत्तिज्ञापनात्। नन्वेवमपि 'रामाय' इत्यादौ स्थानिवद्भावो न स्यात्, 'सुपि च' इति दीर्घस्य स्थानी एकारस्तद्घटकोऽल् स एव तद्वृत्तिधर्मः सुप्त्वम् तन्निमित्तकत्वादिति चेन्न, तादृशधर्मस्य अल्मात्रवृत्तिन एव ग्रहणेन सुप्त्वस्य च अल्समुदायेऽपि सत्त्वेनादोषात्।

तथा च स्थान्यवयवाल्वृत्त्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्मनिमित्तके विधौ आदेशः स्थानिवन्नेत्यर्थः फलति। 'अतिदिदिक्षित' इत्युक्त्या 'बभूविथ' इत्यादौ इटः स्थानिघटकाल्वृत्त्यल्त्वव्याप्यवल्त्वनिमित्तकत्वेऽपि वलादित्वस्य थलि स्वतः सिद्धत्वेन निषेधाप्रवृत्त्या स्थानिवद्भावेनार्धधातुकत्वमादायेट्सिद्धिः। ननु 'अनल्विधौ' इत्यस्य स्थानिघटकाल्मात्रवृत्तिधर्मघटितातिदिदिक्षितधर्मनिमित्तके विधौ प्रवृत्तिस्वीकारे 'धिन्वन्ति' इत्यत्र 'धिवि प्रीणने' इत्यतो लटि झेरन्तादेशे 'धिन्विकृण्व्योर च' (३-१-८०) इति वकारस्याकारे उप्रत्यये अकारस्य 'अतो लोपः' (६-४-४८) इति लोपे उकारस्य यणि 'धिन्व् अन्ति' इति जाते स्थानिवद्भावेन उकारवृत्त्यार्धधातुकत्वं वकारे आदाय 'आर्धधातुकस्येट्' इतीट् स्यात्। न च अनल्विधाविति निषेधः, वलादित्वस्यातिदिदिक्षितत्वाभावादिति चेन्न, यत्राल्त्वव्याप्यधर्मेण अलः स्थानिता तत्र अतिदिश्यमानधर्मस्य अल्मात्रवृत्तित्वाभावेऽपि स्थानिवद्भावो नेत्यर्थस्य 'अनल्विधौ' इत्यनेन बोधनात्। अत्र मानञ्च 'भोभगो' (८-३-१७) इति सूत्रस्थं भाष्यमेव। तथाहि—'अशग्रहणमनर्थकम्।···नह्यन्यत्र रुरस्ति अन्यदतोऽशः। ननु चायमस्ति—'छन्दस्सु' इति। किं पुनः कारणं सुकारपर एवोदाह्रियते न पुनरयं वृक्षस्तत्रेति, अस्त्यत्र विशेषः। विसर्जनीये कृते न भविष्यति। ननु चेहापि विसर्जनीये कृते न भविष्यति-छन्दःस्विति। स्थानिवद्भावात्प्राप्नोति। ननु चेहापि स्थानिवद्भावात्प्राप्नोति-वृक्षस्तत्रेति, अनल्विधौ स्थानिवद्भावः। अथायमल्विधिः स्यात्, शक्यमशग्रहणमवक्तुम्' इति। 'छन्दःसु' इत्यत्र 'अनल्विधौ' इति प्रतिषेधो न, 'वृक्षः' इत्यत्र 'प्रतिषेधः' इति वैषम्यम् 'रोः सुपि' इत्यत्र रुत्वेन रेफस्य स्थानिता, रुत्वञ्च नाल्त्वव्याप्यो धर्म इति न निषेधः। 'वृक्षः' इत्यत्र 'रो रि' इत्यतः 'रः' इत्यस्य 'भोभगोः' इत्यत्रानुवृत्त्या रत्वेन स्थानिता। रत्वञ्च वर्णमात्रवृत्ति इत्यल्त्वव्याप्यधर्मेण स्थानितेति 'अनल्विधावि'ति निषेध इत्युक्तवैषम्यस्य एवमेवोपपत्ती भाष्यतात्पर्यात्। 'धिन्वन्ति' इत्यत्र उकारस्य इक्त्वेन स्थानिता इति स्थानिवत्त्वनिषेधेन नेट्। 'रामाय' इत्यत्रापि एत्वेन स्थानितेति स्थानिवत्त्वनिषेधो न। गुरवस्तु 'धिन्वन्ति' इत्यत्र पञ्चमीसमासेन

'अचः परस्मिन्' इति स्थानिवत्त्वादिटोऽप्राप्त्या अलत्वेन स्थानितायाम् अलस्वव्याप्यधर्मनिमित्तकत्वाभावेऽपि निषेध इत्यर्थस्य न फलम्, भाष्यन्तु एकदेशि । न तु सिद्धान्ति ।

अथ 'अनल्विधौ' इति प्रसज्यप्रतिषेधः—स्थान्यवयवाल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवदिति । अथवा पर्युदासः । स्थान्यवयवाल्वृत्तिधर्मभिन्नधर्मनिमित्तके विधौ आदेशः स्थानिवदिति एकमेव वाक्यम् इति । नाद्यः, प्रसज्ये नञः क्रियायामन्वयेनासामर्थ्यात् 'अनल्विधौ' इति नञ्समासासम्भवेः, विशेषकवाक्यान्तरापत्तेः, निषेधेन शास्त्रबाधापत्तेः 'वागेका वाग्मिनः सतः' इति न्यायेन पाणिनेरप्रामाण्यापत्तेश्च । किन्तु पर्युदास एव । न च निषेधपरत्वेन भाष्योक्तव्याख्यानविरोधः, अल्विधिभिन्नविधौ स्थानिवत्त्वविधाने, अल्विधौ स्थानिवत्त्वाभावस्य फलिततया फलितनिषेधमादायैव भाष्यप्रवृत्तेः । न चैवम् 'व्यूढोरस्केन' इत्यत्र स्थान्यवयवविसर्गाल्वृत्तिष्टूत्वभिन्नत्वनिमित्तकत्वेन स्थानिवत्त्वेन षत्वापत्तिः, स्थान्यवयवाल्वृत्तिधर्मनिमित्तकविधिभिन्नविधौ आदेशः स्थानिवदित्यर्थेन षत्वस्य स्थान्यवयवविसर्गाल्वृत्तिष्टूत्वनिमित्तकत्वेनादोषात् । अनेन स्थानिनि सति यत्कार्यं प्राप्नोति तदेवादेशे सति बोध्यते । यत्कार्यं स्थानिनि सति न भवति तत्कार्यमादेशेऽपि न भवतीति नोच्यते, 'नायकः' इत्यादेरसिद्ध्यापत्तेः । तथा हि अत्र 'यु' इत्यस्य 'युवोरनाकौ' ( ७-१-१ ) इत्यकादेशः । स्थानिनि युशब्दे सति आयादेशो न भवति, एवमकादेशेऽपि न स्यादतो भावकार्यस्यैवातिदेशो न त्वभावस्येति नियम्यते । अत्र च 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' ( २-३-३४ ) इत्यादिनिर्देशा लिङ्गम् । अन्यथा भिसि सति वृद्धिर्न भवतीति ऐसादेशेऽपि वृद्धिर्न स्यादिति निर्देशासङ्गतिः ।

ननु 'स्थानिवत्' इति न्यासेऽपि 'पितृवदधीते' इत्युक्ते पुत्र इति गम्यते इतिवत् स्थानिन आदेशे नित्यसाकाङ्क्षतया आदेश इति लाभे आदेशग्रहणं व्यर्थमिति चेन्न, आदेशो द्विविधः—श्रौत आनुमानिकश्च । तत्र श्रौतः सूत्रेषु पठितः 'जराया जरस्' इत्यादिः । आनुमानिकश्च यथा 'एरुः' ( ३-४-८६ ) इत्यादिना इकारादिवर्णमात्रस्य उकारादिवर्णविधाने 'शब्दा नित्याः' इति वैयाकरणसिद्धान्तस्वीकृत्या नित्येषु शब्देषु स्थानिनिवृत्तेः, आदेशस्य चानुपपत्त्या लोट्स्थानिकस्य इकारान्तस्य उच्चारणप्रसङ्गे उकारान्त उच्चारणीयः । इकारान्तबुद्धिप्रसङ्गे उकारान्तबुद्धिः कर्तव्या इत्यर्थे वा पर्यवसिते 'तेरित्यस्य प्रसङ्गे तुरित्यादेशः' इति फलति । तथा च श्रौतस्य स्थान्यादेशभावस्य शाब्दप्रत्यक्षविषयतया प्रत्यासत्त्या तत्रैव स्थानिवत्सूत्रं प्रवर्तेत, नानुमानिके । एवञ्च 'भवतु' इत्यादेस्तिङन्तत्वाभावेन पदत्वं न स्यात् । आनुमानिकेऽपि स्थानिवद्भावे तु तेस्तिङ्त्वं तुशब्दे स्थानिवत्त्वेनादाय पदत्वं सिध्यति । आदेशग्रहणसामर्थ्यात्प्रत्यासत्तिन्यायबाधेन आनुमानिकस्यापि ग्रहणं सिध्यति । अर्थप्रत्यायनार्थमेव शब्दप्रयोगात् अर्थवत एव उच्चारणस्य बुद्धेश्च प्रसक्तौ अर्थवत्सु एव स्थान्यादेशकल्पना । तद्ध्वनयते—'युष्मदस्मद्भ्यां ङसोऽश्' ( ७-१-२७ ) इति सूत्रे—'सर्वे सर्वपदादेशाः' इति ।

यद्यपि 'स्थानिवदादेशोऽनल्विधौ' इति सूत्रं भाष्ये प्रत्याख्यातम् । तथा हि—'आचार्यप्रवृत्तिर्ज्ञापयति—स्थानिवदादेशो भवतीति । यदयं युष्मदस्मदोरनादेशे इति आदेशे प्रतिषेधं शास्ति । इति । अयमाशयः—विभक्तौ परतः युष्मदस्मदोरादेशा विधीयन्ते । सुप्तिङोर्विभक्तित्वादादेशस्य विभक्तित्वाभावेन 'युष्मदस्मदोरनादेशे' (७-२-८६) इत्यात्वाप्राप्त्या अनादेशग्रहणं व्यर्थीभूय कल्पयति—'आदेशः स्थानिवद् भवति' इत्यादेशेऽपि स्थानिवत्त्वेन विभक्तित्वादाकारादेशे प्राप्ते तद्वारणाय 'अनादेशे' इति चरितार्थम् । फलञ्च तत्र तत्र स्थानिवद्भावसिद्धिः । न चाल्विधौ स्थानिवद्भावनिषेधार्थं सूत्रम्, अस्मिन्नपि ज्ञापकेनैव स्थानिवद्भावाभावसिद्धेः । तथा हि—यदि सर्वत्रैव आदेशः स्थानिवत्स्यात्तदा 'अदो जग्धिर्ल्यप्ति किति' ( २-४-३६ ) इति सूत्रे ल्यप्ग्रहणं व्यर्थमेव स्यात्, 'प्रजग्ध्य' इत्यादौ ल्यबागतं तादित्वं स्थानिवद्भावेन ल्यबादेशे आदाय जग्ध्यादेशसिद्धेस्तद् व्यर्थं सज्ज्ञापयति—अल्विधौ स्थानिवन्नेति । तथा च तत्स्थानिकाल्मात्रवृत्तिधर्मत्वेन तादित्वस्य तद्घटितत्वेन स्थानिवन्न स्यादतः तिग्रहणं चरितार्थम् । अस्य फलम्—'प्रपठ्य' इत्यत्र नेट् । इति प्रत्याख्यानपक्षस्तु न युक्तः, उत्तरसूत्रस्य 'अचः

अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्य 'अनचि' ( सू. ४८ ) इति द्वित्वनिषेधो न शङ्क्यः, 'अनल्विधौ' इति तन्निषेधात् ।

## अचः परस्मिन्पूर्वविधौ । [ १-१-५७ ]

अल्विध्यर्थमिदम् । परनिमित्तोऽजादेशः स्थानिवत्स्यात् ।

---

परस्मिन्पूर्वविधौ' (१-१-५७) इत्यस्यावश्यकत्वे तत्र 'स्थानिवदादेशः' इत्यस्यावश्यं वक्तव्यत्वे ज्ञापकरूपार्थापत्त्या वचनकल्पने ज्ञानगौरवेण प्रत्यक्षसूत्रकरणे एव लाघवात् ।

अनेनेति—'स्थानिवदादेशः' इति सूत्रेणेत्यर्थः । इह = 'सुध् य् उपास्यः' इत्यत्र । अच्त्वमिति—सूत्रसहस्रेणापि यकारस्याच्त्वासम्भवेन अच्त्वमित्यस्य अच्कार्यभाक्त्वं स्यादित्यर्थः । तत्कार्यमाह—द्वित्वनिषेध इति । निषेधादिति—स्थान्यवयवाल्वृत्त्यल्त्वव्याप्यधर्मनिमित्तकविधिभिन्नविधौ आदेशः स्थानिवदित्यर्थे भेदप्रतियोगिविधौ आदेशो न स्थानिवदिति फलितनिषेधादित्यर्थः । अत्र स्थानी ईकारस्तदवयवोऽपि व्यपदेशिवद्भावेन ईकार एव तद्वृत्त्यल्त्वव्याप्यधर्मः, अच्त्वरूपस्तन्निमित्तकविधिरेव 'अचि परे द्वित्वं न' इति निषेधो न तु तद्भिन्नविधिरिति न स्थानिवत्त्वेनाच्त्वं यकारस्येति च द्वित्वनिषेधः ।

ननु 'सुध् य् उपास्यः' इत्यत्र 'अनल्विधौ' इति निषेधात् स्थानिवदिति सूत्रेण स्थानिवत्त्वाभावेऽपि एतदुत्तरसूत्रेण स्थानिवद्भावः स्यात्, तदाह—'अचः परस्मिन् पूर्वविधौ' इति 'वव्रश्च' इत्यादौ 'न सम्प्रसारणे सम्प्रसारणम्' ( ६-१-३७ ) इत्यस्य सम्प्रसारणत्वरूपाल्मात्रवृत्तिधर्मनिमित्तकत्वेऽपि स्थानिवद्भावार्थकत्वादित्याह—अल्विध्यर्थमिति—अल्विधित्वेऽपि स्थानिवद्भावार्थमित्यर्थः । यथा व्रश्चधातोर्लिटि तिपि णलि द्वित्वे 'लिट्यभ्यासस्योभयेषाम्' ( ६-१-१७ ) इत्यभ्यासरेफस्य सम्प्रसारणे पूर्वरूपे 'वृश्च् व्रश्च' इति जाते ऋकारस्य 'उरत्' ( ७-४-६६ ) इत्यत्वे 'हलादिः शेषः' ( ७-४-६० ) इत्यादिहल्शेषे 'वव्रश्च' इति दशायां पुनः 'लिट्यभ्यासस्य' इति वस्य सम्प्रसारणे प्राप्ते 'अचः परस्मिन्' इति सूत्रेण ऋवृत्तिसम्प्रसारणत्वस्याल्मात्रवृत्तित्वेऽपि स्थानिवद्भावेनाकारस्य सम्प्रसारणतया 'न सम्प्रसारणे सम्प्रसारणम्' (६-१-३७) इति सम्प्रसारणत्वनिषेधे 'वव्रश्च' इति सिध्यति । स्थानिवत्सूत्रेण तु स्थानिवत्त्वं न स्यात् 'न सम्प्रसारणे' इति निषेधस्याल्विधित्वात् । अकारादेशस्य स्थानी ऋकारस्तदवयव ऋकार एव तद्वृत्त्यल्त्वव्याप्यो धर्मः सम्प्रसारणत्वं तन्निमित्तकत्वं तस्येत्यल्विधित्वम् । किञ्च अत्र सूत्रे 'अनल्विधौ' इत्यस्यानुवृत्तौ प्रमाणाभावादल्विधौ प्रवृत्तौ बाधकाभावः ।

अत एव 'न पदान्त' सूत्रे वरेग्रहणं चरितार्थम् । अन्यथा 'आतो लोपः' ( ६-४-६४ ) इत्यस्य स्थानिघटकाऽनिमित्तकत्वेनाल्विधित्वात्स्थानिवद्भावाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । 'अचः परस्मिन्पूर्वविधौ' अत्र 'स्थानिवदादेशः' इत्यनुवर्तते । 'अचः' इति स्थानषष्ठी, आदेश इत्यनेन सम्बन्धात् । तेनान्वये मानञ्च 'आगत्य' इत्यादौ अनुनासिकस्य हलो लोपे 'अचः' इत्युक्त्या स्थानिवत्त्वाभावेन तुक्साधनपरं भाष्यमेव । अच इत्यस्य पञ्चम्यन्तत्वे तु तद्भाष्यासङ्गतिः । अत्र अजादेशपदेन अच एवादेशो ग्राह्यो न हलचोरादेशः । अत्र मानन्तु 'अचः' इति ग्रहणमेव । अच इत्यस्याभावे हलादेशस्य तु न स्थानिवत्त्वम् 'न सम्प्रसारणे सम्प्रसारणम्' इत्यनेन हलादेशो न स्थानिवदिति ज्ञापनात् । यदि हलादेशोऽपि स्थानिवत्स्यात्तदा अन्त्यस्य यणः सम्प्रसारणत्वे ज्ञापितेऽपि वकारादेशे सम्प्रसारणे स्थानिवत्त्वेन स्थानिनि 'सति यच्च भवति तस्मिन्सति यद्भवतीत्यर्थेन प्रकृतेऽभावातिदेशेन 'न सम्प्रसारणे' इति निषेधाप्राप्त्या पूर्वयणोऽपि सम्प्रसारणे तद्वैयर्थ्येन हलादेशो न स्थानिवदिति ज्ञापकत्वेनैव सिद्धे 'अचः' इतिकरणसामर्थ्येनैवाज्मात्रस्थानिकादेशस्य लाभाद् अज्झलादेशो न स्थानिवदिति ज्ञापनात् । न च 'परस्मिन्' इति च निमित्तसप्तमी । औपश्लेषिकसप्तमीस्वीकारे सप्तम्यन्तार्थाव्यवहितपूर्वस्यैव आदेशे एवास्य प्रवृत्त्या घसधातोर्लिटि 'जक्षतुः' इत्यत्र तादृशाचः स्थाने आदेशाभावेन

स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति यणः स्थानिवद्भावे प्राप्ते ।

---

स्थानिवद्भावाप्राप्तया न पदान्तसूत्रे तन्निषेधाय कृतस्य वर्णग्रहणस्य वैयर्थ्यापत्तिः । निमित्तसप्तम्यां तु न दोषः, 'तस्मिन्' इति परिभाषाया निमित्तसप्तम्यामप्रवृत्त्या व्यवहिताव्यवहितस्थाच आदेशमात्रे स्थानिवद्भावप्राप्तया तन्निषेधार्थं वर्णग्रहणस्य चारितार्थ्यात् । 'पूर्वविधौ' इत्यत्र पूर्वत्वस्य अवधौ नित्यसाकाङ्क्षतया स्थानी, आदेशः, परनिमित्तञ्चावधित्वेन सन्निधत्ते । तत्र स्थानी तु नावधिरादेशे-नापहारात् । नादेशनिमित्ते 'वैयाकरणः' इत्यादौ यणः स्थानिवत्त्वेन ऐकारादेरायायादेशापत्त्या 'वैया-करणाख्यायां चतुर्थ्याः' (६-३-७) इत्यादिनिर्देशासङ्गत्यापत्तेरिति चेन्न, स्थानिन एव पूर्वत्वस्यावधि-त्वात् । 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते' इति न्यायेन आदेशात्पूर्वं स्थानिनिरूपितपूर्वत्वस्यापे-क्षितत्वात् । तत्फलितमाह स्थानिभूतादचः पूर्वत्वेनेति आदेशात्प्राक् स्थानिभूताजवधिकपूर्वत्वप्र-कारकज्ञानविशेष्यमात्रस्य कार्ये कर्तव्ये परनिमित्तोऽजादेशः स्थानिवदित्यर्थः । स्थानिवद्भावे इति 'अनर्धि' इति धकारस्य द्वित्वनिषेधाय यणः प्राक् 'ईकारात्पूर्वो धकारः' इति ज्ञानविशेष्यीभूतस्य धस्य द्वित्वनिषेधरूपे कार्ये कर्तव्ये स्थानिवद्भावे प्राप्ते इत्यर्थः । परनिमित्तकेऽजादेशे शास्त्रविहितम्= शास्त्रीयम्, तद्भिन्नम् = अशास्त्रीयञ्चातिदिश्यते । स्थानिनि सति यत्कार्यं प्राप्नोति तदादेशेऽपि कर्तव्यम्, स्थानिनि सति यत्कार्यं न भवति तदादेशे सति प्राप्तमपि न कर्तव्यमिति भावाभावयोरुभयोरप्यतिदेशः ।

किञ्च 'पूर्वविधौ' इत्यत्र पूर्वस्य विधिरितिवत्, पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासोऽपि । तदुक्तं भाष्ये—'विधिग्रहणं किमर्थम् ? सर्वविधविभक्त्यन्तसमासो यथा स्यात् । पूर्वस्माद्विधिः पूर्व-विधिरिति । 'स्थानिभूतादचः पूर्वत्वेन दृष्टाद्वर्णात्परस्य विधौ कर्त्तव्ये स्थानिवत्' इत्यर्थः । तेन यङन्ते 'बेभिदिता' इत्यत्राल्लोपस्य स्थानिवत्त्वेन 'एकाच उपदेशे' ( ७-२-१० ) इतीट् न । 'माथितिकः' मथितं पण्यमस्येति विग्रहे ठकि अल्लोपस्य स्थानिवत्त्वेनेकः 'इसुसुक्तान्तात्' (७-३-५१) इति कादेशो न । 'अपीपचन्' इत्यत्र परादिवद्भावेन झित्वमादाय 'सिजभ्यस्त' ( ३-४-१०९ ) इति जुसादेशे प्राप्ते एकादेशस्य खिल्लोपस्य च स्थानिवत्त्वेन न भवति ।

केचित्तु 'बिभित्सति' इत्यादौ 'एकाच उपदेशे' ( ७-२-१० ) इत्यत्र विहितविशेषणस्यावश्य-कतया यङन्ताद्विहितप्रत्ययस्यैकाचो विहितत्वाभावेनेण्निषेधाप्राप्तया पञ्चमीसमासस्य नेदं फलम् । 'माथितिकः' इत्यपि न, हल्मात्रस्य ठस्येकादेशे 'इसुसुक्तान्तात्' इत्यस्यापि ठमात्रालिनमित्तकत्वेन 'अनल्विधौ' इति इति निषेधेन ठकाराभावात्, सन्निपातपरिभाषया वा तदप्राप्तेः । 'अपीपचन्' इत्याद्यपि 'सिजभ्यस्तविदिभ्यश्च' ( ३-४-१०९ ) इत्यत्र विप्रतिषेधशास्त्रात्परसाहचर्यस्य बलीय-स्त्वेन विदिसाहचर्याल्लुक एव झेर्जुसोर्विधानेन सिध्यति ।

वस्तुतस्तु पूर्वसाहचर्यस्यान्तरङ्गतया सिच्साहचर्येण लुको ग्रहीतुं शक्यतया 'अपीपचन्' इत्याद्यर्थः पञ्चमीसमास आवश्यकः । 'विभाषा गमहन' ( ७-२-६८ ) इति सूत्रादौ भाष्ये विदः परसाहचर्येण तौदादिकस्यैव ग्रहणं तु लुग्विकरणपरिभाषानुरोधेनान्तरङ्गपरिभाषायाश्चानित्यत्वेन च बोध्यमिति न तद्विरोधः । किञ्च लङ एव जुर्विधानेऽपि 'ऐत्सन्' इत्यत्र 'प्रत्येपिपन्' इति 'उभेऽभ्य-स्तम्' भाष्यप्रयोगे च पञ्चमीसमासं विना जुर्दुर्वारः । न च 'सिजभ्यस्त' इत्यत्र पूर्वोत्तरसाह-चर्येण भावरूपादेशेन अनपहृतविकरणकाभ्यस्तस्यैव ग्रहणेन प्रकृते भावरूपेण पररूपेण चङ्रूप-विकरणस्यापहृतत्वाद्दोषाभाव इति वाच्यम्, उभयसाहचर्याश्रयणेनापूर्वार्थाश्रयणप्रयुक्तगौरवापेक्षया पञ्चमीसमासाश्रयणे एव लाघवात् । यत्तु मनोरमोक्तेन परसाहचर्यस्य बलवत्त्वेन 'अपीपचन्' इत्यत्र जुर्वारणेऽपि 'अदभ्यस्तात्' इत्यद्भावापत्तिर्दुर्वारेति तन्न, झत्वाभावेनाद्भावाप्राप्तेः । स्थानिवत्त्वेन झत्वं तु न, झत्वस्याल्मात्रवृत्तित्वेनानल्विधाविति निषेधात् । ननु 'आयन्, आसन्' इत्यादिसिद्धये 'अचः परस्मिन्' इत्यत्र 'अचः परस्मिन्नपरविधौ' इति भाष्यकारीयन्यासे स्थानिन आदेशतो वा परस्य विधौ

स्थानिवत्त्वाभावे 'अपीपचत्' इत्यत्र जुसादेशस्य स्थानिवत्त्वेन वारयितुमशक्यतया परमूतविदिसाह-चर्य्येण अभ्यस्तादपि जुस एव जुसि परसाहचर्य्येणैव वारणीयतया तदनाश्रयणमसङ्गतमिति चेन्न, तन्न्यासेऽपि अपरस्माद्विधिरिति पञ्चमीसमासे परविधावपि स्थानिवद्भावेन जुसो वारणसम्भवात्। वस्तुतस्तु 'अपरविधाविति न्यासोक्तिरेकदेशयुक्तिः, तत्फलस्य आयन्, आसन्, इत्यादेरसिद्धवत्सूत्रेण 'आवस्थायामाट्' इति पक्षेण वा सिद्धत्वात्। 'धिन्वन्ति' इत्यत्रेडभावोऽपि न फलम्, 'अचः परस्मिन्' इत्यत्र पञ्चमीसमासेनाभावातिदेशेन सिद्धेः।

न च 'पूर्वविधौ' इत्यत्र पञ्चमीसमासे 'हे गौः' इत्यत्र एङ्ह्रस्वादिति सुलोपापत्तिरिति वाच्यम्, 'एङ्ह्रस्वात्' इति सूत्रे एङ्ग्रहणेन पञ्चमीसमासस्यानित्यत्वज्ञापनात्, एङ्ह्रस्वादित्यस्य अन्तरङ्गत्वा-नवकाशेन च गुणेन बाधादेङ्ग्रहणं चरितार्थमित्युच्यते तदा 'नान्तः' पादमव्यपरे' इति सूत्रस्थे हे से 'इत्यादौ चारितार्थ्यम्, न च ङः पदान्तपरो ह्रस्वस्तीति भाष्येण तादृशस्यानभिधानबोधनात्। किञ्च पूर्वत्वेन दृष्टादव्यवहितपरस्यैव कार्य्ये स्थानिवत्त्वेन प्रकृते गकारव्यवधानेन तदप्रवृत्तेश्च।

'निष्ठायां सेटि' इति सूत्रे 'सेट्' ग्रहणं तदनित्यत्वे मानम् बोध्यम्। तथा हि—सेड्ग्रहणं हि नामिद्ध्यावृत्त्यर्थं णयन्तस्यानेकाच्त्वेनेटो निषेधाप्राप्तेः। न च ज्ञपेः सनि सनीवन्त' इतीड्विकल्पेन निष्ठायाम् 'यस्य विभाषा' इति णयन्तेऽपीण्निषेधादनिटि लोपाभावार्थं तत्, 'दरिद्रितः' इत्यत्राप्रवृत्त्ये 'यस्य विभाषा' इत्यत्रैकाच् इत्यनुवृत्त्या णयन्ते तदप्रवृत्तेः। किन्तु 'कारितम्' इत्यादाविटि कृते एव णिलोपः, न तु ततः प्रागिति कालावधारणार्थमेव सेड्ग्रहणम्। तथा च श्वदीदः प्राक् णिलोपः स्याच्चदा अनुदात्तादेकाचः कृत्सः परत्वादिटो निषेधः स्यात्तन्मा भूदिति सेड्ग्रहणं चरितार्थम्। पञ्चमीसमासस्य नित्यत्वे तु इटः पूर्वं णिलोपेऽपि णेर्लोपस्य स्थानिवत्त्वेनेण्निषेधाप्राप्त्या सेड्ग्रहण वैयर्थ्यापत्तिः। पञ्चम्या स्थानिवत्त्वस्यानित्यत्वादेव 'प्रविगणय्य' इत्यत्र 'ल्यपि लघुपूर्वादिति णेरया-देशः सिध्यति।

अन्यथा स्थानीभूतादचः पूर्वत्वेन दृष्टात् णकारात्परस्य णेरयादेशोऽल्लोपस्य स्थानिवत्त्वेन लघुपूर्वणकात् णकारात्परत्वाभावादयादेशो न स्यात्। यत्तु अल्लोपस्य स्थानिवत्त्वेऽपि लघुरका-रस्तत्पूर्वको व्यपदेशिवद्भावेन अकार एव ततः परस्य णेरयादेशे बाधकाभाव इति तन्न, 'दधि' इत्यादौ यथाप्राप्त्या पूर्वत्वपरत्वयोर्व्यपदेशिवद्भावालभ्यत्वात्। 'लघुपूर्वात्' इत्यत्र पूर्वशब्दस्य व्यवहिता-व्यवहितसाधारणार्थकत्वेन लघुर्गकाराकारस्तत् पूर्वः स्थानिवत्त्वेन लभ्योऽकार एव ततः परस्य णेरयादेशसिद्ध्या तन्निर्देशोऽनित्यत्वे न मानमिति तु न दरिद्रातेर्ण्यन्तात् ल्यपि अयादेशापत्तेः। किञ्च दिधिषुशब्दाद्‌ाचक्षाणण्यन्तात् क्त्वा प्रत्यये प्रेण समास 'प्रदिधिषय्य' इत्यत्र स्थानीभूते ऊकारे व्यपदिशिवद्भावेन गुरुत्वया लघुपूर्वकत्वाभावादयादेशानापत्तेः।

विधिशब्दोऽत्र यदि विधीयते विधिरिति कर्मसाधनस्तदा पूर्वस्य कार्य्ये कर्तव्ये इत्यर्थः। एवञ्च पुनर्वर्णविशिष्टस्त्रीवाचकात् एनीशब्दात् एन्या अपत्यम् इत्यर्थे 'ऐनेयः' इत्यत्र 'स्त्रीभ्यो ढक्' इति ढकि 'यस्येति च' इत्यकारेकारयोर्लोपे ङीप्सन्नियोगेन जातस्य 'वर्णादनुदात्तात्' (४-१-३९) इति नकारस्य ङीपो निवृत्तौ 'सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिः' इति न्यायेन निवृत्तिः स्यात्। तथा च 'ऐतेयः' इति स्यान्न तु ऐनेय इति। अतः पूर्वविधिशब्दे विधानं विधिरिति भावकि-प्रत्ययान्तोऽपि स्त्रीकार्य्यः। तथा च पूर्वस्य विधौ स्थितौ कर्तव्येऽपि अनादेशस्य स्थानिवत्त्वे 'ऐनेय इत्यत्र नकारस्य स्थितिः सिध्यति। विधीयते विधिः कार्य्यमिति कर्मसाधनोऽपि तन्त्रेण ग्राह्यः। तेन निगाल्यते इत्यादौ णकारस्य न निवृत्ति। अत्र मानन्तु अत्रैव सूत्रे 'लुकि न स्थानिवत् 'इति वार्तिकम्। तथाहि—पञ्चेन्द्राण्यो देवता अस्य इत्यर्थेऽणि तस्य 'द्विगोः' इति लुकि 'लुक् तद्धितलुकि' इति ङीपोऽपि लुकि स्थानिवत्त्वेन ङीपः सत्त्वादानुकः सन्नियोगशिष्टन्यायेन निवृत्तिर्न स्यात्। यदा तु स्थानिवत्त्वनिषेधस्तदा सन्नियोगशिष्टन्यायेनानुको निवृत्तिसिद्धयर्थं वार्तिकम्। पूर्वस्याभावं प्रति स्थानि-

---

त्वाभावे लुकि न स्थानिवत्, इत्यस्य वैयर्थ्येन भावार्थकविधिशब्दकल्पनम्। भावसाधनो विज्ञायते पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानिवत् इति भाष्यम्। 'निगार्यते' इति भाष्योदाहरणादि कर्मसाधने च मानम्। अत्र रेफस्य भावः स्थितिर्न स्थानिवत्त्वेन चिकीर्षितः, किन्तु लत्वम्।

अचः किम् 'आगत्य' इत्यादौ मलोपस्य स्थानिवत्त्वात्तुगभाववारणार्थम्। यदि तु 'न सम्प्रसारणे' इत्यादिज्ञापनेन हलादेशो न स्थानिवदित्युच्यते तदा 'अज्ग्रहणमज्झलादेशे स्थानिवत्त्ववारणाय पर्य्याप्त्या अचः स्थानित्वबोधनद्वारा स्पष्टार्थमेव। तेन 'मल्लमाचष्टे मारयति' पच आचष्टे 'पाचयति' इत्यादावज्झलादेशस्य स्थानिवत्त्वेन वृद्ध्यभावो न, एवम् 'धिन्विकृण्व्योर च' इत्यविधानेन 'न धातुलोप आर्द्धधातुके' इति सूत्रवैयर्थ्येन हलादेशो न स्थानिवदिति संसाध्य अज्ग्रहणमेव अच एवादेश इत्यर्थे मानं बोध्यम्। परस्मिन्निति किम् 'युवजानिः' अत्र अत्र 'जायायानिङ्' (५-४-१३४) इति निङादेशे 'लोपो व्योः' इति यलोपो भवति। परस्मिन्नित्यस्याभावे आलोपस्य स्थानिवत्त्वेन स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति, इत्यभावातिदेशात् यलोपो नस्य 'यलोपे न स्थानिवत् इति निषेधस्तु न, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदिति' भाष्यवार्तिकात्।

अत एव 'वाय्वोः' इत्यादौ यलोपो न। यदि तु अन्तरङ्गपरिभाषया यणोऽसिद्धतया लोपाप्राप्तिरित्युच्यते तदा 'द्विपदिका' 'वैयाघ्रपद्यः' इत्यादौ अल्लोपस्य स्थानिवत्त्वाभावात्पदादेशसिद्धिः फलं परस्मिन्नित्यस्य बोध्यम्।

यदि तु पादशब्दस्य इशब्देन समासे पूर्वान्तवद्भावेन पादशब्देन पादेशब्दस्य ग्रहणाद् वीप्सायां वुनि पल्लोपार्थं लोपग्रहणस्य चरितार्थ्यम्, 'व्याघ्रपदः' वैयाघ्रपद्य इत्यादौ 'पादस्य दस्य दश् लोपोऽहस्त्यादिभ्यः' इति न्यासेन सिद्धिः, इत्युच्यते तदा 'वित्तः' 'जुहुतः' इत्यादौ लुकः, श्लोश्च स्थानिवत्त्वेन गुणापत्तिर्दोषो बोध्यः। 'लुकि न स्थानिवत्' इत्यस्य तु न प्रवृत्तिः, 'तस्मिन्' परिभाषया लुकि परे अजादेश एव तत्प्रवृत्तेः। वस्तुतस्तु 'रामाय' इत्यत्र यादेशस्य स्थानिवत्त्वेन यञादित्वाभावाद् दीर्घानापत्तिर्दोषो बोध्यः। दीर्घविधौ न स्थानिवदिति तु न, त्रैपादिकदीर्घस्यैव तत्र ग्रहणात्।

वस्तुतस्तु 'चिण्णमुलोः' (६-४-९२) इति सूत्रस्थात् ण्यन्ताद् यङन्ताच्च णिचि। ततः चिणि णमुलि च वैकल्पिकदीर्घार्थम्, 'चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानं कर्तव्यम्' स्थानिवद्भावाच्च चिण्णमुलपरः। ननु च प्रतिषिध्यते स्थानिवद्भावः, दीर्घविधिं प्रति न स्थानिवदिति। तस्मान्नार्थ उपसंख्यानेनेति' इति भाष्यात्, 'कमेर्णिङ्' (३-१-३०) इति सूत्रे 'अथ' दीर्घोऽन्यतरस्यामित्युच्यमाने यावता स्थानिवद्भावः कथमेवैतावता सिध्यति। एतदिदानीं दीर्घग्रहणस्य प्रयोजनं दीर्घविधिप्रत्यजादेशो न स्थानिवदिति' इति भाष्याच्च दीर्घमात्रेऽजादेशो न स्थानिवदिति 'रामाय' इत्यत्रापि न दोषः। यथाकृतिनिर्देशेन तु न णिद्वयस्य ग्रहणं वक्तुं शक्यम्, मनुष्यत्वादेरिव णित्वस्य प्रत्येकविश्रान्ततया णिद्वये णित्वाभावात्। अत एव 'सन्वल्लघुनि' (७-४-९६) इति सूत्रे सन्वद्भावदीर्घत्वे 'णौर्णिचि उपसंख्यानम्' णिचा व्यवहितत्वात्, लोपे कृते नास्ति व्यवधानम्, स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवद्भाव इति, एवमप्यनग्लोप इति प्रतिषेधः प्राप्नोति' इति भाष्यं संगच्छते। यथाकृतिग्रहणेन सिद्धौ तु वार्तिकभाष्याद्यसङ्गतमेव स्यात्, णिद्वयस्यापि णि ग्रहणेन ग्रहणात्सिद्धेः। इदमपि भाष्यम् स्थानिवद्भावप्रतिषेधे दीर्घमात्रस्य ग्रहणे मानं बोध्यम्। किञ्च नपदान्तसूत्रे स्वरदीर्घयलोपु लोपाजादेश एव न स्थानिवदिति साधितम्। दीर्घग्रहणस्यापि त्रैपादिकस्य ग्रहणेन 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्याश्रयणेन प्रत्याख्याने तु दीर्घविषये लोपाजादेश एव न स्थानिवदिति दुरुपपादं स्यात्। भाष्ये च 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्येवोक्तम्, न तु 'क्रियोः, गिर्योः' एतदर्थं किञ्चिदुक्तम्। ततोऽभिज्ञायते 'यलोपस्वरवर्जम्' इति भाष्यं दीर्घस्याप्युपलक्षणमिति। अत एव अहिडि, अहीडि इति सिध्यति। ह्रस्वस्य विकल्पे तु अहेडि अहिडि, इति स्यात् [illegible]।

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।१। [ १-१-५८ ]**

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् ।

---

पूर्वविधाविति किम्—'नैधेयः' निपूर्वाद् धाञः किप्रत्यये आल्लोपस्य स्थानिवत्त्वात् भत्वव्यपदेशात् 'इताश्चनिञः' इति ढगभ्त्वनिमित्तकढगनापत्तेः। 'न हि त्रिपुत्रो द्विपुत्रव्यवहारं लभते' इति न्यायेन ढक्प्रत्ययनिवृत्तेः।

स्थानिवद्भावे प्राप्ते इति— 'स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति' इत्यभावातिदेशेन अचि परे यरो द्वित्वं नेति स्थानिवत्कार्ये प्राप्ते इत्यर्थः। स्थानिवद्भावनिषेधकं सूत्रमाह:—न पदान्तेति—पदस्य अन्तः=अन्तावयवः। द्विः = द्विवारम्, वचनम् = उच्चारणम्, वरे परे योऽजादेशः स न स्थानिवदित्यर्थे निपातनात्सप्तम्यन्तस्य द्वन्द्वे प्रवेशः, सप्तम्या अलुक् च। तथा च पदान्तश्च द्विर्वचनञ्च वरे च यलोपश्च स्वरश्च दीर्घश्च जश् च चर् इति इतरेतरयोगद्वन्द्वे, भावार्थकविधिशब्देन कर्मषष्ठ्या समासः। तथा च यत्र सूत्रं पदचरमावयवादि विधत्ते तत्र स्थानिवत्त्वनिषेधः। लोपस्तु न पदचरमावयवः, वर्णसमुदायरूपभावात्मकपदस्य अभावरूपस्य लोपस्यावयवत्वासम्भवात् इति लोपे कर्तव्ये न निषेधः। यदि तु विधीयते इति विधिः कर्मणि किः, कर्म च पदचरमावयवादयः। तदा कर्मण उक्तत्वात् शेषे षष्ठी, तदन्तस्य समासे पदचरमावयवादिसम्बन्धिनि विधौ विधानकर्मणि सति स्थानिवत्त्वनिषेध इत्यर्थस्तदा लोपेऽपि कर्तव्ये निषेधः प्राप्नोति, लोपस्य पदचरमावयवत्वाभावेऽपि पदचरमावयवस्थानिकत्वेन पदचरमावयवसम्बन्धित्वात्। तथा च 'एषो यन् हसति' इत्यादौ 'एतत्तदोः सुलोपः' इति सुलोपे कर्तव्ये पदान्तस्य स् इत्यस्य सम्बन्धिनि लोपे इणो यणादेशे स्थानिवत्त्वनिषेधापत्तिः। न च इणः शतरि यणि च यन् इति सिद्धे तत 'एषः' इत्यस्य सम्बन्धे सोः स्थानीभूतादचः पूर्वत्वाभावेन स्थानिवत्त्वाप्राप्त्या सुलोप इष्ट एवेति वाच्यम्, वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते, इति पक्षे वाक्यसंस्कारस्यैव सिद्धान्तिसम्मतत्वेन दोषस्य सत्त्वात्। न हि पदान्तरमनपेक्ष्य पदानि संस्क्रियन्ते, 'स्पृहेरीप्सितः' 'युष्मद्युपपदे' इत्यादिवैयर्थ्यापत्तेः। न च तादृशशास्त्रबलात्तत्र वाक्यसंस्कारस्य सत्त्वेऽप्यन्यत्र तत्सत्त्वे मानाभाव इति वाच्यम्, अर्द्धजरतीयस्यानौचित्यात्। किञ्च वाक्यसंस्कारस्यात्राभावे उत्वघटितप्रयोगानापत्तिः। न च अकृतव्यूहेति परिभाषया विसर्गो न स्यात्, तस्या अभावादनित्यत्वाच्च।

वस्तुतस्तु शेषषष्ठ्या समासे 'षडिकः' इत्यस्यासिद्धिः। तथा हि—षडङ्गुलिशब्दात् ठचि 'ठाजादावूर्ध्वं द्वितीयादचः' ( ५-३-८३ ) इति अङ्गुलिशब्दस्य लोपे 'यस्येति च' इत्यकारलोपे 'षष' इत्यस्यान्तर्वर्तिविभक्त्या पदत्वे पदान्तस्य षस्य जश्त्वे कर्तव्ये अल्लोपस्य स्थानिवत्त्वनिषेधात् इकप्रत्ययनिमित्तकभसंज्ञया पदसंज्ञाया बाधाज्जश्त्वासिद्धिः। नच ठचः पूर्वमेव जश्त्वे रूपसिद्धिः। जश्त्वस्य त्रिपादीस्थतया असिद्धत्वेन ठजादीनामेव पूर्वं प्रवृत्तेः। नच भत्वे अल्लोपस्य स्थानिवत्त्वेन समानावधिकत्वाभावाच्च भत्वेन पदत्वबाध इति वाच्यम्, अकारान्ते भत्वस्य षान्ते पदत्वस्याबाधकत्वेन परम्परया पदान्तविधित्वेन भत्वेऽपि स्थानिवत्त्वनिषेधात्। कर्मषष्ठ्या समासे तु पदान्तत्वस्य यत्र विधानं तत्रैव स्थानिवत्त्वनिषेधेन प्रकृतेऽन्तर्वर्तिविभक्त्या पदत्वस्य सिद्धतया भत्वेन पदान्ततायाः अविधानाच्च स्थानिवत्त्वनिषेधः।

किञ्च हयेन यातीति क्विपि हययाः। ततो णिचि क्विपि 'हय' इति तत आचारक्विपि—ततः क्तिनि तितुत्रेति नेट् 'हयतिः'। अत्र णिलोपटिलोपयोः स्थानिवत्त्वात् 'अतो लोपः' इत्यलोपो न भवति। यदि तु पदान्तस्य स्थाने विधानमित्यर्थस्तदाऽन्तर्वर्तिविभक्त्या हय इत्यस्य पदत्वेन पदान्तस्य अकारस्य

लोपे कर्तव्ये स्थानिवत्त्वनिषेधाद्वलोपापत्तिः, अतः पदचरमावयवे कर्तव्ये इत्यर्थलाभाय भाष्योक्तो भावे क्विः स्वीकार्य्यः। यत्तु भानोरः भान्वस्तत आचारक्विपि अलोपे 'लोपो व्योः' इति वलोपे च भान् इत्यत्र वलोपे स्थानिवत्त्वनिषेधो नेति स्नेहिरामशास्त्रिणस्तन्न, 'लोपो व्योः' इति सूत्रे वलोपयोग्यस्य लौकिकलक्ष्यस्याभावेन 'अनारम्भो वा पुनर्वलोपस्य' इत्यादिना भाष्ये प्रत्याख्यानात्।

यदि तु पदान्तादिना विधिशब्दस्य कर्मधारयसमास आश्रीयते तदा कर्मणि किप्रत्ययेऽपि न दोषः, पदचरमावयवाद्यभिन्ना ये विधयस्तेषु कर्तव्येषु स्थानिवत्त्वं नेत्यर्थात् लोपस्य चरमावयवत्वाभावात्। केचित्तु पदान्तस्य स्थाने विधावित्यर्थोऽसङ्गतः, पदान्तस्य स्थाने विधौ द्विर्वचनादेश्च विधावित्यर्थे वाक्यभेदापत्तेः। किञ्च 'एषो यन्' इति असाधुः, परत्वान्नित्यत्वादप्रतिपदोक्तत्वाच्च सुलोपस्य न्याय्यत्वात्। न च स्थानिवद्भावः, 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपस्येव लोपस्यापि स्थानिद्वारा पदचरमावयवत्वात्, तदुक्तम्—कौमुद्यां 'स्थानिद्वारेणायं समासान्तः' इति लक्ष्यानुरोधेन पदैकदेशकारपक्षस्यैवाश्रयणाच्च। अत एव 'स एवास्मि स सन् यज' इति श्रौतप्रयोगः, एष यज्ञिति छान्दोग्यप्रयोगश्च संगच्छते। लोकेऽपि स सन्नित्येव प्रयुज्यते, न तु सः सन्निति इत्याहुः।

अयञ्च प्रतिषेधस्त्रिविधः—साक्षात्पदचरमावयवसाधकस्थानिवद्भावनिषेधः, साक्षात् पदचरमावयवप्रतिबन्धकस्थानिवद्भावनिषेधः, परम्परया पदचरमावयवप्रतिबन्धकस्थानिवद्भावनिषेधश्च। परम्परया पदचरमावयवसाधकस्थानिवद्भावस्य तु नानेन निषेधः, 'पडिकः' इति भाष्यप्रयोगसिद्धये तथा कल्पनात्। अत्र हि वकारान्ते भसंज्ञाप्रतिषेधार्थः स्थानिवद्भावोऽकारान्ते भत्वसम्पादनद्वारा वकारान्तस्य पदत्वेन परम्परया पदचरमावयवत्वसम्पादकः। यद्यस्यापि निषेधः स्यात्तदा पडिक इति भाष्याभिमतप्रयोगासिद्धिः। पदसंज्ञाप्रतिबन्धकस्थानिवत्त्वं तु न, तस्य परम्परया पदसंज्ञाप्रतिबन्धद्वारा पदचरमावयवत्वप्रतिबन्धकत्वेनात एव भाष्यात् परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्त्वस्य निषेधकल्पनात्।

साक्षात्पदचरमावयवसाधकस्थानिवत्त्वनिषेधस्योदाहरणम्—'सध्रीचः' इत्यादि। अत्र 'अचः' ( ६-४-१३८ ) इत्यल्लोपस्य स्थानिवत्त्वं साक्षात्पदचरमावयवयणसाधकस्तस्य निषेधाद्यण् न। साक्षात्पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्योदाहरणम्—'हयतिः' इति। हयं यातीति हययाः, ततो क्विपि टिलोपे क्विपि क्विलोपे यलोपे 'हयः' इति। ततं आचारक्विबन्तात् क्तिनि 'हयतिः' इत्यत्र क्विलोपटिलोपयोः स्थानिवद्भाव आर्द्धधातुकपरत्वाभावसम्पादनेन साक्षात् 'अतो लोपः' इत्यल्लोपस्य प्रतिबन्धकः। यत्तु साक्षात्पदचरमावयवत्वप्रतिबन्धकस्थानिवत्त्वनिषेधस्योदाहरणम्—'यशोऽरा' इति। तथा हि यशस्शब्दादाचारक्विबन्तात् 'अ प्रत्ययात्' (३-३-१०२) इति अप्रत्यये गुणे तस्य स्थानिवत्त्वं साक्षात्पदचरमावयवोत्वप्रतिबन्धकं तस्य निषेधादुत्वसिद्धिरिति तन्न, उत्वस्थानीभूतस्य रोर्गुणादेशस्थानीभूताकाररूपाचः पूर्वत्वेन दृष्टत्वाभावात्, त्रिपादीस्थत्वेन सपादसप्ताध्यायीस्थगुणदृष्ट्याऽसिद्धतया रोः पूर्वमेव गुणप्रवृत्तेः। न च स्थानिवत्त्वेन सकारगतस्थानीभूताचः पूर्वत्वेन दृष्टत्वं रौ सुलभम्, अतिदिश्यमानस्याल्त्वव्याप्यधर्मघटितत्वात्।

परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलम्—'दध्यारः', दध्यर्चः' इत्यादि। अत्र ऋधातोर्ऋच्धातोश्च 'कर्मण्यण्' ( ३-२-१ ) इत्यणि वृद्धिगुणयोः स्थानिवत्त्वेन 'ऋत्यकः' ( ६-१-१२८ ) इति प्रकृतिभावेन यण्प्रतिबन्धकस्थानिवत्त्वस्य निषेधाद्यण् सिध्यति।

वस्तुतस्तु भाष्ये 'पदेऽन्तः' पदान्त इति सप्तमीसमास आश्रितः। तथा च पडिकः, वेतस्वान्, इत्यादौ न दोषः, पदपरकपदचरमावयवकार्य्ये एव प्रत्यासत्त्या परपदस्थाजादेशस्यैव स्थानिवत्त्वस्य निषेधोऽनेनेति सिद्धान्तात्। पदशब्देन च पदत्वयोग्यस्य ग्रहणम्। तेन 'गोचा' इत्यादौ 'गतिकारक' इति परिभाषया अच् इत्यस्य सुबुत्पत्तेः पूर्वं समासेऽपि पदत्वयोग्यत्वसत्त्वान्न दोषः।

'द्विर्वचने कर्त्तव्ये न स्थानिवत्' इत्यस्योदाहरणम्—'दध्यत्र' 'सुद्ध्युपास्यः' इत्यादि। अत्र 'अनचि च' ( ८-४-४७ ) इत्यत्र 'च' इति विभक्तयोगेन धस्य द्वित्वे कर्त्तव्ये यणादेशस्य स्थानिवद्भावः प्राप्तो निषिध्यते। तेन द्वित्वं सिध्यति। अन्यथा 'अनचि' इत्यनेन निषेधात् द्वित्वं न स्यात्।

वरे = वरे परतो योऽजादेशः स न स्थानिवत्। 'यायावरः' इति अत्र यङन्तात् यायायधातोः 'यश्च यङः' ( ३-२-१७६ ) इति वरचि 'अतो लोपः' इत्यल्लोपस्य स्थानिवत्त्वेन 'आतो लोपः' ( ६-४-६४ ) इत्याल्लोपः प्राप्तो वरे अजादेशस्य अल्लोपस्य स्थानिवत्त्वनिषेधेन अजादिक्ङिति परत्वाभावान्न भवति।

नच 'यायावरः' इत्यत्र पूर्वमल्लोपे ततो यल्लोप इति क्रमसत्त्वेन 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन 'य' इत्यत्रार्द्धधातुकत्वप्रत्ययत्वसत्त्वेऽपि लुप्यमानाकारस्य प्रत्ययत्वाभावेन अजाद्यार्द्धधातुकपरत्वाभावान्न आल्लोपप्राप्तिरिति वरेऽजादेशो न स्थानिवदिति निषेधो व्यर्थ इति वाच्यम्, अत एव निषेधसामर्थ्येन यत्रार्द्धधातुकत्वसम्भावना तस्मिन्नपि 'आतो लोपः' इत्यस्य प्रवृत्तिज्ञापनात्। अस्ति चात्र सम्भावना—'यदि पूर्वं यल्लोपः' स्यात्तदा 'यः शिष्यते' इति न्यायेन अकारे आर्द्धधातुकत्वादिकं स्यादिति सम्भावना। तथा च 'यायावरः' इत्यत्र साम्भावनिकार्द्धधातुकत्वादिकमादाय आल्लोपः स्थानिवद्भावेन प्राप्नोति, तद्वारणाय वरे अजादेशस्य स्थानिवत्त्वनिषेधः।

अत एव यातेर्यङन्तात् क्तिचि अतो लोपे यल्लोपे, स्थानिवत्त्वनिषेधेन लोपो व्योरिति यल्लोपे, अल्लोपस्य स्थानिवत्त्वेन आल्लोपे पुनर्यल्लोपे 'यातिः' इति भाष्यप्रयोगः सिध्यति। पुनराल्लोपस्तु न, आल्लोपस्यापि स्थानिवत्त्वेनार्द्धधातुकपरत्वाभावात्। न च 'अभ्यासस्यासवर्णे' इत्यत्रासवर्णग्रहणेन 'अभ्यासकार्ये तदुत्तरखण्डादेशस्य अभ्यासकार्यप्रतिबन्धकीभूतस्थानिवत्त्वं नेति' ज्ञाप्यते। अत एव यङ्लुगन्ताद्धातोर्लटि श्नौ अदादेशे रुकि यणादेशे रेफस्य लोपे 'ढ्लोपे' इति दीर्घे 'आरति' इति सिध्यतीति वाच्यम्, अभ्यासत्वपर्याप्त्यधिकरणस्य स्थाने आदेशे एव तन्निषेधप्रवृत्तेः।

'यल्लोपविधौ न स्थानिवत्' इत्यस्यापि 'यातिः' इत्युदाहरणं बोध्यम्। भाष्यकृता तु कण्डूयधातोः क्तिचि 'कण्डूतिः' इत्युदाहृतम्। 'अ प्रत्ययात्' इति ( ३-३-१०२ ) अप्रत्ययस्तु न, क्तिना बाधात्। 'स्वरविधौ न स्थानिवत्' इत्यस्य 'चिकीर्षकः' इत्युदाहरणम्। सनोऽतो लोपे 'ञ्णिति' ( ६-१-१९३ ) इत्यनेन ककारेकारस्योदात्तत्वे न स्थानिवत्।

सवर्णानुस्वारविधौ 'शिण्ढि' इति। 'शिष्' इति धातोर्लोटि सिपि हौ धित्वे श्नमि 'श्नसोरल्लोपः' ( ६-४-१११ ) इत्यल्लोपे 'नश्चापदान्तस्य झलि' ( ८-३-२४ ) इति नस्यानुस्वारे कर्त्तव्ये परसवर्णे च कर्त्तव्ये अल्लोपो न स्थानिवत्। अन्यथा झल्परत्वाभावादनुस्वारपरसवर्णौ न स्याताम्। परसवर्णश्च 'झलां जश् झशि' ( ८-४-५३ ) इति षस्य डकारे कृते एव बोध्यः, भाष्यमते 'रेफोष्मणां सवर्णा न सन्ति' इत्युक्त्या षकारे तदप्राप्तेः। वस्तुतस्तु भाष्ये सूत्रव्याख्यानक्रमदर्शनेन 'अनुस्वारस्य ययि परसवर्णः' इत्यतः परम् 'झलां जश्' 'झरो झरि सवर्णे' इत्यनयोः पाठदर्शनेन परसवर्णदृष्ट्या जश्त्वस्यासिद्धत्वेन षकारस्य च सवर्णाभावेन अत्र परसवर्णो नैव भवति 'शिंढि' इति, लोपाभावे 'शिं ड्ढि' इति वा रूपम् इति शब्दरत्नकारः।

अत्र अनुस्वारस्य स्थानीभूतादचः पूर्वत्वेन दृष्टत्वाभावस्तु नाशङ्कनीयः, स्थानिवत्त्वेन वकारगतं स्थानीभूतादचः पूर्वत्वेन दृष्टत्वं तस्यानुस्वारे आनयनसम्भवात्। भाष्ये 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्याश्रित्य त्रिपादीस्थानां द्विर्वचनादीनाम् 'न पदान्त' इति सूत्रे प्रत्याख्यानपक्षे तु खत्वे तस्य 'संयोगादिलोपलत्वणत्वेषु' इति प्रतिषेधात् स्थानिवत्त्वस्य दुर्वारत्वेनात्र परसवर्णो नेष्टः। खत्वे

इति स्थानिवद्भावनिषेधः ।

## झलां जश् झशि । [ ८-४-५३ ]

स्पष्टम् ।

---

प्रतिपदोक्तपरिभाषा तु न, भाष्ये 'रषाभ्याम्' इति सूत्रे ( ८-४-१ ) 'अपदान्तस्य मूर्द्धन्यः' इत्यनुवर्त्य खग्रहणस्य प्रत्याख्यानेन प्रतिपदोक्तणत्वाभावात् ।

एवञ्च हरिं ददातीति हरिदस्तमाचष्टे हरिदयति । ततः कर्त्तरि क्विपि णिलोपे 'हरिद्मति' इत्यत्र टिलोपस्य पञ्चमीसमासेन प्राप्तस्थानिवत्त्वस्य निषेधेन 'यरोऽनुनासिके' ( ८-४-४५ ) इति सूत्रे सवर्णग्रहणमपकृष्य 'स्वर्नयति' इत्यत्र रेफस्यानुनासिकादेशवारणपक्षे परसवर्णनकारसिद्धिः, 'हरिल्लुनाति' इत्यत्र 'तोर्लि' ( ८-४-६० ) इति लत्वसिद्धिश्च परसवर्णे न स्थानिवदित्यस्यो-दाहरणं बोध्यम् ।

दीर्घविधौ—'प्रतिदीव्ना' इत्यत्र 'हलि च' इति दीर्घः सिध्यति । अत्र दीर्घपदेन दीर्घ-मात्रस्य ग्रहणं न तु त्रैपादिकस्यैवेति 'अचः परस्मिन्' इत्यस्य व्याख्यान्ते उक्तम् ।

जश्विधौ—'सग्धिः' इति । अदेः क्तिनि 'बहुलं छन्दसि' ( २-४-२९ ) इति घस्लादेशे 'घसिभसोर्हलि च' ( ६-४-१०० ) इत्युपधालोपे 'झलो झलि' ( ८-२-२६ ) इति सलोपे 'झषस्तथोः' ( ८-२-४० ) इति तस्य धत्वे, 'झलां जश् झशि' इति ( ८-४-५३ ) इति जश्त्वे उपधालोपस्य स्थानिवत्त्वं न । समाना ग्धिः सग्धिः । 'समानस्य च्छन्दसि' ( ६-३-८४ ) इत्यत्र 'समानस्य' इति योगविभागेन उत्तरपदे परे समानस्य सादेशः । 'सग्धिः स्त्री सहभोजनम्' इत्य-मरात् 'सहस्य सः संज्ञायाम्' ( ६-३-७८ ) इति सहस्य सादेशः प्रतीयते । सग्धिशब्दः सहभोजने रूढः स्त्रीलिङ्गः । सहशब्दः सदृशार्थकोऽपि । अत एव सदृशार्थकसहशब्देन समासे 'सदृशः सख्या ससखि' इत्यव्ययीभावे कौमुदी । किञ्च समानभोजनार्थकत्वमेव युक्तम्, साहित्यार्थकसह-शब्देन कर्मधारयसमासस्य कुत्राप्यदर्शनात् । अतः सह भोजनमित्यस्य समानभोजनमित्येवार्थः । परन्तु स्कन्द वेदभाष्ये 'बन्धुभिः सह भोजनं सग्धिः' इत्युक्त्या च सम्मिल्य भोजनमेव तत् ।

अत्र जश्पदेन 'झलां जश् झशि' इत्येव गृह्यते, 'पद्धिकः' इत्येतत्परकभाष्यपर्य्यालोचनात्, चरादिसाहचर्य्याच्च ।

चर्विधिं प्रति अजादेशो न स्थानिवत्—

'जक्षतुः' इति अद्धातोर्लिटि 'लिट्यन्यतरस्याम्' (२-४-४०) इति घस्लादेशे 'गमहन्' इत्यु-पधालोपे 'खरि च' ( ८-४-५५ ) इति चर्त्वमल्लोपस्य स्थानिवत्त्वान्न स्यादिति निषिध्यते ।

इति स्थानिवद्भावेति—इति=अनेन='द्विर्वचनविधौ न स्थानिवत्' इति वचनेन स्थानि-वद्भावनिषेध इत्यर्थः । ननु द्विर्वचने कर्त्तव्ये स्थानिवत्त्वनिषेधेऽपि तन्निषेधे कर्त्तव्ये स्थानिवत्त्वनिषेधे मानाभाव इति चेन्न,

विनिगमनाविरहेण 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्याश्रित्य द्विर्वचनादिग्रहणप्रत्याख्यान-परभाष्येण च पदचरमावयवादेः साधकस्य प्रतिबन्धकस्य वा स्थानिवद्भावस्यानेन निषेध इति सिद्धान्तात् । द्विर्वचने कर्त्तव्ये एव स्थानिवद्भावनिषेधस्वीकारे 'दध्यत्र' इत्यादौ सति द्विर्वचनग्रहणे द्विर्वचननिषेधे स्थानिवत्त्वनिषेधाभावेन स्थानिवत्त्वे अचि द्वित्वं नेति द्वित्वनिषेधः प्राप्नोति । प्रत्याख्यानपक्षे द्वित्वनिषेधस्यापि पूर्वत्रासिद्धीयत्वेन स्थानिवत्त्वाभावाद् द्वित्वं प्राप्नोतीति फलभेद-वारणाय द्वित्वनिषेधेऽपि स्थानिवत्त्वनिषेधकल्पनस्यावश्यकत्वात् । इति 'अनचि' इति निषेधा-भावाद् धस्य द्वित्वे 'सुध् ध् य् उपास्यः' इति जाते—

स्पष्टमिति—अत्र सूत्रं स्पष्टमिति तु नार्थः, सर्वत्रैव सूत्रे श्रावणप्रत्यक्षविषयत्वरूपस्पष्टत्वस्य सत्त्वेन स्पष्टमित्युक्तेर्वैयर्थ्यापत्तेः । तस्मात् स्पष्टार्थके लक्षणा । तथा च 'झलां स्थाने जश् स्याद्

इति धकारस्य दकारः।

अदर्शनं लोपः। [ १-१-६० ]

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्।

संयोगान्तस्य लोपः। [ ८-२-२३ ]

संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्।

---

झशि परे' इति स्पष्टार्थमिदमित्यर्थः, अतो व्याख्यानस्य प्रयोजनं नास्ति। यद्वा विवरणं विनैव ज्ञानविषयत्वरूपार्थगतस्पष्टत्वस्य सूत्रे आरोपात् स्पष्टं सूत्रमित्यर्थेऽपि न क्षतिः। 'जश्' इत्यत्र 'झश्' इति निर्देशात्, हस्वबोधकप्रत्याहारेषु सन्धिकार्यस्य पदान्तकार्यस्य चाभावो ज्ञाप्यते। तेन 'जश्, झष्' इत्यादिषु जश्त्वपरत्वादिकं न। सौत्रत्वाज्जश्त्वादिकं नेति तु न युक्तम्, सूत्रे तदभावेऽपि विवरणवाक्येषु जश्त्वापत्तेर्दुर्वारत्वात्। हस्वबोधकेत्युक्त्या इगादिशब्देषु न दोषः। 'झशि' इत्युक्त्या 'दत्तः' इत्यादौ न जश्त्वम्।

प्रत्याहारेषु उद्भूतावयवभेदविवक्षया तिरोहितावयवभेदविवक्षया चैकवचनद्विवचनादय इति 'झलां जश् झशि', इत्यादौ बहुवचनैकवचनयोरुपपत्तिः।

इतीति—अनेन सूत्रेणेत्यर्थः। धकारस्येति—प्रथमधकारस्येत्यर्थः। दकार इति—दन्तरूपस्थानत आन्तर्य्यादिति भावः। घोषादिप्रयत्नसाम्येन जकारादयो न।

'सुधीभिरुपास्यः सुध्युपास्यः' इत्यत्र 'कर्तृकरणे कृता बहुलम्' इति समासे भिसो लुकि 'प्रत्ययलोपे' इत्यनेन लुप्यमानप्रत्ययमादाय 'सुधी' इत्यस्य पदत्वे ईकारगतपदान्तत्वस्य स्थानिवत्त्वेन यकारेऽतिदिश्य सुद्ध्य् इत्यत्र यकारस्य संयोगान्तलोपं शङ्कितुं लोपसंज्ञामाह—

'अदर्शनं लोपः' इति दर्शनस्याभावोऽदर्शनम्, अर्थाभावेऽव्ययीभावः। नागेशमते तु नञा नाव्ययीभावः, किन्तु तत्पुरुष एव। दर्शनञ्चात्र न चाक्षुषप्रत्यक्षरूपम्, शब्दस्य श्रावणप्रत्यक्षविषयतया चाक्षुषत्वासम्भवात्। दृशिरत्र ज्ञानसामान्ये। शब्दसत्त्वे श्रावणज्ञानस्यावर्ज्जनीयत्वेन ज्ञानसामग्र्यन्तर्गतोच्चारणकृतसत्ताभावस्यैवादर्शनपदेन ग्रहणं लक्षणया। तथा च शब्दानुशासनप्रकरणात् शब्दोच्चारणाभाव एव लोपसंज्ञकः। नन्वेवम् 'मधु' इत्यादौ क्विप्प्रत्ययस्योच्चारणाभावरूपलोपपदार्थसत्त्वेन 'प्रत्ययलोपे' इति सूत्रेण क्विपमादाय 'ह्रस्वस्य पिति' इति तुगापत्तिः, न च कृता तदादेशेपात् कृत्प्रत्ययप्रकृतिधात्वादेरेव ह्रस्वान्तस्य तुगिति वाच्यम्, एवमपि 'लिण्मधु' इत्यादौ तुगापत्तेर्दुर्वारत्वादिति चेन्न, 'षष्ठी स्थानेयोगा' इति सूत्रात्, स्थान इत्यस्यानुवृत्त्या शास्त्रतोऽर्थतो वा प्रसङ्गे सत्येव शब्दोच्चारणाभावस्य लोपसंज्ञकत्वेन 'लिण्मधु' इत्यादौ मधुपदोत्तरं शब्दतोऽर्थतो वा क्विपः प्रसङ्गाभावेन तत्र तदभावस्य लोपसंज्ञया अभावेन तुगापत्तेरभावात्। यत्र अर्थवान् शब्दोऽर्थबोधनाय उच्चारणीयो न चोच्चार्य्यते तत्रार्थतस्तदभावः। यथा 'प्रासादात् प्रेक्षते' इत्यादौ। अत्र ल्यबर्थः प्रतीयते, न चोच्चार्य्यते इति तादृशोच्चारणाभावस्यापि लोपसंज्ञा। एवं यत्र 'लिट्', धुक्' इत्यादौ शास्त्रेण सोः 'स्वौजसमौट्' इति प्राप्तिरस्ति तत्र सोरुच्चारणाभावोऽपि लोपसंज्ञकः।

'स्वं रूपम्' इति सूत्रबलाद् अदर्शनशब्दस्यैव तु न लोपसंज्ञा, संज्ञाशास्त्राणां विधिशास्त्रार्थतया 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इति न्यायात्, "न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके" इति लौकिकन्यायात् 'उपदेशेऽजनुनासिक इत्' इत्यादिनिर्देशाल्लक्ष्यानुरोधाच्च। प्रसक्तस्य='स्वौजसमौट्' इत्यादिशास्त्रतः अर्थबोधनाय वा प्राप्तोच्चारणकस्य शब्दस्यादर्शनम्=उच्चारणाभावो लोपसंज्ञक इत्यर्थः।

'संयोगान्तस्य लोपः' अत्र 'पदस्य' ( ८-१-१६ ) इत्यधिकारात् संयोगोऽन्तः=चरमावयवो यस्य पदस्य तस्य लोप इत्यर्थे सर्वस्य पदस्य लोपे प्राप्ते 'अलोऽन्त्यस्य' इति परिभाषया अन्त्यस्यैव लोप इत्याह तदन्तस्य लोप इति। अत्र अन्तग्रहणं स्पष्टार्थम्, 'संयोगस्य लोपः' इति

इति यलोपे प्राप्ते। 'यणः प्रतिषेधो वाच्यः' (वा ४८०६)। 'यणो मयो द्वे वाच्ये' (वा ५०१८)। 'मय इति पञ्चमी यण इति षष्ठी' इति पक्षे यकारस्यापि द्वित्वम्। तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि। एकधमेकयम्। द्विधं द्वियम्। द्विधमेकयम्। एकधं द्वियम्। सुद्ध्युपास्यः।

---

सूत्रेऽपि अधिकृतस्य पदस्य विशेष्यतया संयोगस्य विशेषणतया 'येन विधिः' इति सूत्रेण तदन्तविधौ संयोगान्तस्येत्यर्थलाभात्।

यत्तु प्रत्येकं संयोगसंज्ञापक्षे 'दृषत्करोति' इत्यादौ तकारादिलोपवारणाय संयोगाद्यन्तौ यस्येत्यर्थलाभार्थमन्तग्रहणमिति तन्न, आन्तर्यस्यानेकसत्त्वे एव सम्भवेन पर्युदासन्यायेन गर्गादिवचनन्यायेन समुदायस्यैव संयोगसंज्ञेति भाष्येण 'नाज्झलौ' इत्यादौ लोपादर्शनेन 'संयोग' इति महासंज्ञाकरणेन च समुदायस्यैव संयोगसंज्ञेति सिद्धान्तात्। ननु—भूयान्, ज्यायान्, इत्यादौ सलोपं बाधित्वा रुः स्यादिति चेन्न, रोरसिद्धत्वात्संयोगान्तलोपस्य सिद्धेः। येन नाप्राप्तिन्यायेन रुत्वस्य जश्त्वापवादत्वेऽपि पच इत्यादौ संयोगान्तलोपाप्राप्तिविषये चारितार्थ्येन लोपापवादत्वे मानाभावात्।

इति यलोप इति—'सु ध् ध् य्' इत्यत्र अनेन सूत्रेण यलोपे प्राप्ते इत्यर्थः। यण इति—संयोगान्तं यत्पदं तदन्तस्य यणो लोपस्य प्रतिषेधो वाच्य इत्यर्थः। तेन यकारस्य लोपो नेति भावः।

यकारस्य 'अनचि च' इत्यनेन द्वित्वाप्राप्तेस्तस्य द्वित्वार्थं वार्तिकमाह—यणो मय इति—अत्रावृत्त्या अर्थद्वयम्। एकस्यैव तु नार्थद्वयम्, 'सकृदुच्चरितः शब्दः सकृदेवार्थं बोधयति' इति न्यायविरोधात्। आवृत्तौ प्रमाणञ्च 'यदि यण इति पञ्चमी मय इति षष्ठी' उल्का इत्युदाहरणम्। अथ मय इति पञ्चमी यण इति षष्ठी 'दध्यत्र' इत्युदाहरणम् इति भाष्यमेव।

ननु यण इति पञ्चमी मय इति षष्ठीति पक्षे यकारो न यणः परो नापि मय् कथमनेन द्वित्वमत आह—मय इति पञ्चमीति—अत्र वार्त्तिकेऽपि 'यरोऽनुनासिके' इति सूत्राद् वा इति सम्बध्यते 'अनचि' इति न सम्बध्यते 'दध्य्यत्र' इति भाष्योदाहरणात् इति सूचयन्नाह—तदिह धकारयकारयोर्द्वित्वविकल्पादिति—तदिति तस्मात्कारणादित्यर्थेऽव्ययम्=द्वित्वद्वयोक्तेरित्यर्थः। इह—'सुध् य् उपास्यः' इति लक्ष्ये। रूपाणीति—सम्पद्यन्ते इति शेषः। एकधमिति—एको धो यस्मिन्रूपे तदेकधम्। धकाराद्यकार उच्चारणार्थः। एवमेकयमिति द्वित्वाभावे इति शेषः। इदं प्रथमं रूपम्। द्विधमिति—द्वौ धौ यस्मिन् तद् द्विधम्। अस्य प्रक्रियादशायामिति शेषः। परिनिष्ठिते प्रथमधस्य जश्त्वेन धकारद्वयाभावात्। द्वियमिति—द्वौ यौ यस्मिन्तद् द्वियम्, धकारयकारयोरुभयोरपि द्वित्वात्। इदं द्वितीयरूपम्। द्विधमेकयमिति—धकारस्य द्वित्वे यकारस्य द्वित्वाभावे च तृतीयं रूपम्। एकधं द्वियमिति—धकारस्य द्वित्वाभावे यकारस्य द्वित्वे च चतुर्थं रूपम्। धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि। यदि तु 'अनचि च' इत्यनेन सकारस्य, विसर्गस्य शर्प्रत्याहारे भाष्ये पाठेन तस्यापि यर्त्वाद् द्वित्वं तदा षोडश रूपाणि। भाष्ये तु 'यणः प्रतिषेधो वाच्यः' इति वार्तिकं प्रत्याख्यातम्। तथा हि—'संयोगान्तस्य लोपः' इत्यत्र मण्डूकप्लुत्या 'झलो झलि' (८-२-२६) इत्यतो झल् इत्यनुवर्त्य षष्ठ्या विपरिणम्य झलन्तस्य संयोगान्तपदस्य लोप इत्यर्थेन यणन्तपदस्य लोपाप्राप्त्या वार्तिकं न कर्तव्यम् इति।

ननु गिरिवेश्मादिशब्दात् सुपि पदत्वे सति वार्तिके मकारस्य लोपो भवति, झलन्तस्य लोप इति प्रत्याख्यानपक्षे च लोपो न प्राप्नोतीति फलभेदे प्रत्याख्यानासङ्गतिरिति चेन्न, वाक्यभेदेन संयोगान्तस्य पदस्य लोप इत्येकम्, संयोगान्तस्य झलन्तस्य पदस्य लोप इत्यपरं वाक्यं विधाय लोपो विधेयः। तथा च पूर्ववाक्येन झलोऽपि लोपे सिद्धे द्वितीयं वाक्यं ज्ञापयति—क्वचिदझलोऽपि लोप इति। तथा च 'ज्ञापकादिष्टसिद्धिः' इति न्यायेन गिरिवेश्मिन्यादौ प्रामाणिकप्रयोगे न दोषः। वार्तिके

मद्ध्वरिः । धात्त्रंशः । लाकृतिः ।

'हलः' इत्यस्य सम्बन्धाभावेऽपि संयोगान्तलोपापेक्षया यणादेः पदद्वयादिनिमित्तापेक्षत्वेन बहिरङ्गतया असिद्धत्वेन लोपाप्राप्त्या वार्त्तिकं न कर्तव्यमित्यपि भाष्ये उक्तम् ।

ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया जश्त्वस्यासिद्धत्वाभावेन वर्णभेदेन लक्ष्यभेद इति पुनर्दकारस्यापि द्वित्वं स्यादिति चेन्न, 'उदवोढाम्' इति भाष्येण 'विकारकृतलक्ष्यभेदो नाश्रीयते' इति 'इति धकारस्य द्वित्वम्' इति प्रतीके पूर्वमुक्तत्वेनादोषात् । 'सुधी उपास्यः' इत्यत्र 'इकोऽसवर्णे शाकल्यस्य' (६-१-१२७) इति ह्रस्वे प्रकृतिभावस्तु न, 'न समासे' इति वार्त्तिकेन ह्रस्वनिषेधात् । 'न भूसुधियोः' ( ६-४-८५ ) इति यणनिषेधोऽपि अजादौ सुप्येव तत्प्रवृत्तेः । सुपूर्वकध्यायतेः क्विपि 'ध्यायतेः सम्प्रसारणञ्च' इति वार्त्तिकेन सम्प्रसारणे पूर्वरूपे 'हलः' ( ६-४-२ ) इति सूत्रसामर्थ्येन पूर्वरूपनिष्पन्ने इकारे स्थानिवत्त्वेन सम्प्रसारणत्वेऽपि दीर्घादेशे ईकारेऽनल्विधाविति निषेधेन सम्प्रसारणत्वाभावेन 'सम्प्रसारणाच्च' ( ६-१-१०८ ) इत्यनेन पूर्वरूपापत्तिशङ्कापि न कार्या, पूर्वरूपे 'समानाङ्गग्रहणं कर्तव्यम्' इति वार्त्तिकेन पूर्वरूपाप्राप्तेश्च । सम्प्रसारणात् सम्प्रसारणनिमित्तात्पूर्वेऽचि परतः पूर्वपरयोः पूर्वरूपमित्यर्थे एव समानाङ्गग्रहणं कर्त्तव्यमित्यस्य तात्पर्यग्राहकत्वात् । तेन कारीषगन्धीपुत्रः, सुधियौ, सुधियोःपुत्रः' ( अलुक्समासे ) इत्यादौ च नाव्याप्त्यतिव्याप्ती । 'कारीषगन्धीपुत्रः' इत्यत्र सम्प्रसारणनिमित्तपुत्रशब्दपूर्वत्वस्य आकारे सत्त्वात् पूर्वरूपम्, 'सुधियौ' इत्यादौ च सम्प्रसारणनिमित्तक्विपः पूर्वत्वस्य विभक्तिघटकेऽचि अभावाच्च दोषः ।

सुध्युपास्यः क इत्याकाङ्क्षायामुकारस्योदाहरणाकाङ्क्षायाञ्चाह—'मध्वरिः' इति । मधुः= असुरविशेषस्तस्यारिर्विष्णुरिति दुर्गायां स्पष्टम् । अत्रापि धकारवकारयोर्द्वित्वविकल्पात्पूर्ववच्चत्वारि रूपाणि बोध्यानि । अत्रोकारस्य स्थानत आन्तर्यात् वकारः । नच वकारस्य दन्तस्थानाधिक्येन स्थानसाम्यं नास्तीति वाच्यम्, 'किरतौ लवने' इत्यादिनिर्देशादान्तरतम्यपरीक्षायां सकलस्थानतुल्यत्वस्याभावेऽप्यादेशस्वीकारादत एव 'चेता, स्तोता' इत्यादिसिद्धिः ।

कीदृशोऽयं मध्वरिरित्याकाङ्क्षया ऋकारस्योदाहरणमाह—धात्त्रंश इति—धाता अंशो यस्य मध्वरेः स धात्रंशः । धाता = ब्रह्मा । अत्र 'अनचि च' इति तकारस्य द्वित्ववैकल्पिकतया द्वितमेकम्, एकतमपरम् इति रूपद्वयम् । अत्र मयः परस्य यणो वा द्वे इत्यर्थके 'यणो मयो द्वे वाच्ये' इत्यनेन रेफस्य द्वित्वं तु न, 'अचो रहाभ्यां द्वे' ( ८-४-४६ ) इत्यत्र रेफस्य निमित्तत्वेन 'नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्य' इति हयवरट्सूत्रभाष्येण रेफस्य द्वित्वनिमित्ततया द्वित्वरूपकार्यित्वाभावबोधनात् । अत एव 'रेफस्य परोपदेशे 'अनुनासिकद्विर्वचनपरसवर्णप्रतिषेधो वक्तव्यः' इति वार्तिकेन स्वर्नयति, मद्ह्रदः, कुण्डं रथेन, इत्यादौ 'यरोऽनुनासिके' इत्यनुनासिकस्य 'अचो रहाभ्याम्' इति यद्वित्वस्य, 'वा पदान्तस्य' इति परसवर्णस्योक्तं प्रतिषेधम् 'यरोऽनुनासिके' इत्यत्र 'अनुस्वारस्य ययि परसवर्णः' ( ८-४-५८ ) इत्यतः सवर्णग्रहणमपकृष्य 'यरः सवर्णोऽनुनासिको भवतीत्यर्थेन, रेफोष्मणां सवर्णा न सन्ति' इत्युक्त्वा 'नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्य' इति स्वीकृत्य प्रत्याख्यातवान् भाष्यकारः । तत्र सति वार्त्तिके 'मद्ह्रदः' इत्यादौ 'मयः परस्य यणो द्वित्वम्' इत्यनेन प्राप्तस्य दकारोत्तररेफस्यापि द्वित्वस्य निषेधो भवति । तदेकवाक्यतासिद्धये एतद्द्वित्वप्रकरणस्थेन येन केनापि प्राप्तस्य रेफद्वित्वरूपकार्यित्वस्य निमित्ततया बाध इति भाष्ये ध्वनितं सङ्गच्छते ।

यथा 'सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्' इत्यत्र माठरत्व-कौण्डिन्यत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन ब्राह्मणत्वरूपव्यापकधर्मावच्छिन्ने संकोचाच्च माठरकौण्डिन्यौ भोजनं लभेते । तथैव रेफत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन यणत्व-यरत्वरूपव्यापकधर्मावच्छिन्ने संकोचाच्च यरपदेन यण्पदेन वा रेफो द्वित्वरूपकार्यभाग् भवति' इत्यन्यत्र विस्तरः ।

लाकृतिरिति—लृ न आकृतिरिवाकृतिर्यस्य स लाकृति मध्वरिः । यथा लृकारः बहुपिरथ एवैक-

## नादिन्याक्रोशे पुत्रस्य । [ ८-४-४८ ]

पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । 'आक्रोशे' किम् । तत्त्वकथने द्विर्वचनं भवत्येव ।

---

त्वया विम्बुरप्येक एवेति भावः ।

ननु आन्तरतम्यपरीक्षायां स्थानसाम्यमपेक्ष्यते न तु सर्वस्थानसाम्यमित्यस्य पूर्वमुक्तत्वेन लृकारस्य स्थाने दन्तस्थानजन्यत्वेन साम्यमादाय प्रथमोपस्थितत्वात् लकार एव यण् स्यादिति चेन्न, अत्र यवरलाश्चत्वारो यणो विधेयास्तत्र वर्णसमाम्नाये पाठगतपरत्वमादाय परत्वाल्लकारादेशस्यैवौचित्यात् ।

ओष्ठस्थानजन्यत्वेन तुल्यत्वमादाय उकारस्थाने वकारविधानस्य चारितार्थ्येन लकाररूपविधेयस्य निरवकाशतया 'येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादो भवति' इति न्यायेन लृकारस्थाने लकारादेशस्यापवादत्वेन वकारादेशस्य बाधाच्च ।

'च' इति सूत्रेण प्राप्तस्य द्वित्वस्य निषेधमाह—

'नादिन्याक्रोशे पुत्रस्य' इति अत्र 'यरोऽनुनासिके' इत्यतो यर इति वा इति च, अचो रहाभ्याम्' इत्यतोऽच इति चानुवर्तते । अद्धातोः 'सुप्यजातौ' ( ३-२-७८ ) इति णिनि प्रत्यये ङौ 'आदिनि' इति सप्तम्यन्तम् । ङ्यन्तात्सप्तम्या लुकि तु 'आदिनी' इति न रूपम्, 'ईदूतौ च सप्तम्यर्थे' ( १-१-१९ ) इति प्रगृह्यत्वे प्रकृतिभावापत्तेः । सौत्रत्वात्तद्भावकल्पने तु गौरवम् । लिङ्गविशिष्टपरिभाषया स्त्रीप्रत्ययेऽप्येतादृशाक्रोशस्य लोके प्रसिद्धया पुंलिङ्गे आक्रोशाभावेन स्त्रीप्रत्ययान्तप्रयोगे एवैतस्य प्रवृत्तिः ।

आदिन्नित्यस्य प्राधान्यात्पुत्रविशेषणीभूतयरि एवान्वयः । तत्र आदिन्शब्दाव्यवहितपूर्वत्वस्य पुत्रावयवनकाररूपयरि असम्भवेन 'येन नाव्यवधानं' न्यायेन रेफाकारयोर्व्यवधानं सह्यते । रेफे यरि तु नान्वयः, 'नेमौ रहौ कार्यिणौ' इत्यनेन रेफस्य द्वित्वरूपकार्यित्वाभावबोधनात् । 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया द्वित्वे 'अचः परस्मिन्' इत्यनेन स्थानिवद्भावात् पुत्रशब्दावयवे यरि तकारे आदिनीशब्दपूर्वत्वं सुलभम् । यद्वा पूर्वान्तवद्भावेन पुत्रशब्दत्वं परादिवद्भावेन आदिनीशब्दत्वमादाय आदिनीशब्दाव्यवहितपूर्वत्वं पुत्रशब्दावयवे यरि सुलभम् । 'उभयत आश्रयणे नान्तादिवत्' इति निषेधस्तु न, पूर्वत्वपरत्वघटितधर्मानयने एव तत्प्रवृत्तेः । एकत्र एकदेशविकृतन्यायस्तु न, पुत्रत्वादेरक्षपरिभाषासमनियतत्वेन तदप्रवृत्तेः ।

केचित्तु सूत्रे आदिनीशब्दाद् ङौ ङेः 'सुपां सुलुक्' ( ७-१-३९ ) आकारादेशः । तथा च 'न आदिन्या आक्रोशे पुत्रस्य' इति पदच्छेदः, ईकारान्तसप्तम्यन्तत्वाभावाच्च प्रगृह्यत्वम् । 'येन नाप्राप्ते' इति न्यायेन अकाररेफयोरेव व्यवधानस्य सोढव्यतया लिङ्गविशिष्टपरिभाषया पुत्रीशब्दस्यापि ग्रहणेन 'पुत्र्यादिनी' इत्यत्र नास्य प्रवृत्तिः, यकारस्य ईकारस्य वा अधिकव्यवधानस्य सत्त्वात् । पुत्रशब्दस्येति—पुत्रशब्दावयवयर इत्यर्थः । पुत्रादिनीति—पुत्रमत्सि=भक्षयसि इति पुत्रभोजिनीत्यर्थः । आक्रोशो निन्दा । सा च विरोधिभिरापादितदोषकथनरूपा । दुष्टत्वबोधनाय सतोऽसतो वा दोषस्य कथनं वा ।

आक्रोशे किमिति—आक्रोशे इत्यस्य किम्फलमिति पृच्छेत्यार्थः, 'किं पृच्छायां जुगुप्सते' इत्यव्ययवर्गेऽमरात् । 'कायतेर्डिमिः' ( उ. ४ पा. १५८ सू. ) कैधातोर्डिमिप्रत्यये किमिति 'कृन्मेजन्तः' इत्यव्ययत्वम् । सर्वनामकिंशब्दस्तु अभ्युपगम इति नाव्ययत्वम् ।

मार्गे प्रसर्पन्ती सर्पिणी बहून्यपत्यानि प्रसूते । तेनैव यथा प्रत्यासर्पन्ती सा क्षुत्पीडिता तान्येवापत्यानि भक्षयतीति प्रसिद्धिमाश्रित्याह—तत्त्वेति—स्तुति-निन्दातात्पर्यं विनैव सतो दोषस्य गुणस्य वा कथनं तत्त्वम् । पुत्रस्य, अत्र नेत्यनुवृत्त्या सिद्धे केचित्तु 'अनचि च' आदिन्याक्रोशे नञ्द्वयोपादानेन नञ्घटितवाक्यस्यानित्यत्वकल्पनेन 'नादिन्याक्रोशे' इत्यस्य पुंसि न प्रवृत्तिः । न च पुंस्येव प्रवृत्तिरस्तु, स्त्रियां नेति वैपरीत्यमेव कुतो नेति वाच्यम्, भाष्ये स्त्रियामुदाहरणस्य विरोधापत्तेरित्याहुः ।

पुत्त्रादिनी सर्पिणी । 'तत्परे च' ( वा ५०२१ ) । पुत्रपुत्रादिनी त्वमसि पापे ।
'वा हतजग्धयोः' ( वा ५०२२ ) । पुत्त्रहती—पुत्रहती । पुत्त्रजग्धी—पुत्रजग्धी ।

त्रिप्रभृतिषु शाकटायनस्य [ ८-४-५० ]

त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्रः—इन्द्रः । राष्ट्ट्रम्—राष्ट्रम् ।

---

वस्तुतस्तु नन्द्वयं स्पष्टार्थमेव, नन्घटितस्यानित्यत्वे फलाभावाद् भाष्यानुक्तेश्च । 'तत्परे च' इदं वार्तिकम्=उक्तानुक्तदुरुक्तार्थव्यक्तकारिवचनम् ।

तदुक्तम्—उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥ इति ।

स आदिनीशब्दः परो यस्मात्स तत्परः । आदिनीशब्दपरको यः कश्चन शब्दस्तस्मिन् परेऽपि पुत्त्रशब्दस्ययरो न द्वे स्तः । तथा च पुत्रश्च पौत्रश्च पुत्रपौत्रौ, तावत्तीति 'पुत्रपौत्रादिनी' इत्यत्रापि न द्वित्वम् । वस्तुतस्तु आदिनीशब्दपरकः प्रत्यासत्त्या पुत्रशब्द एव गृह्यते । तथा च 'पुत्रपुत्रादिनी' इत्येवोदाहरणम् । अत्र प्रथमस्यापि पुत्रस्य यरोऽनेन द्वित्वं न । अत्र प्रथमपुत्रशब्द आदिनीपरो न, द्वितीयपुत्रशब्देन व्यवधानादतः 'नादिन्याक्रोशे' इत्यनेन द्वित्वनिषेधे अप्राप्ते इदमारब्धम्—

'वा हतजग्धयोः' इति 'नादिन्याक्रोशे' इति सूत्रेऽस्य पाठाद् इदं वार्त्तिकमपि आक्रोशे एव । ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनादिदमपि स्त्रियामेवात आह पुत्रहतीति–हतः पुत्रो यया सा पुत्रहती । 'वाऽहिताग्न्यादिषु' ( २–२–३७ ) इति, 'राजदन्तादिषु परम्' ( २–२–३१ ) इति वा हतजग्धयोः परनिपातः । यद्वा हतजग्धयोः परतो द्वित्वनिषेधसामर्थ्यादेव तयोर्विशेषणत्वेऽपि परनिपातः । गौरादित्वान् ङीष् । 'अस्वाङ्गपूर्वपदाद्वा' ( ४–१–५३ ) इति तु न ङीप्, तत्र 'जातिपूर्वादिति वक्तव्यम्' इत्युक्तेः पुत्रशब्दस्य जातिवाचकत्वाभावात् । 'अनचि च' इत्येव द्वित्वविकल्पे सिद्धे क्तान्ते परे पुत्रशब्दस्य यरो द्वित्वं चेद्धतजग्धयोरेव आक्रोशे एव चेति नियमार्थं वार्तिकमिदम् ।

तेन 'पुत्रकृती' इत्यादौ न द्वित्वम् । द्वित्वाभावे पुत्रहतीति । एवं जग्धः पुत्रो यया सा पुत्त्रजग्धी, पुत्रजग्धीति । अद्धातोः क्ते जग्ध इति भक्षित इत्यर्थः । वस्तुतस्तु नियमलब्धैवकारार्थस्य 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इत्यन्तरङ्गमूलकन्यायेन हतजग्धयोरेवेति नियम एव युक्तः । अन्यथा विनिगमनाविरहेण पुत्रशब्दस्यैवेति तृतीयनियमापत्त्या 'अदुष्टहती' इत्यादौ द्वित्वानापत्तेरित्यन्यत्र विस्तरः ।

'त्रिप्रभृतिषु शाकटायनस्य' इति शकटऋषेर्गोत्रापत्यं शाकटायनः । 'नडादिभ्यः फक्' ( ४–१–९९ ) त्र्यादिष्विति—आदिना चतुरादिसंग्रहः । तेन 'पुम्म्युपास्यः' इत्यादौ 'यणो मयः' इति यकारस्य द्वित्वपक्षे चतुर्णां संयोगस्य सत्त्वेन तकारस्य वा द्वित्वनिषेधः । त्रिचतुरादिषु हल्सु संयुक्तेषु सत्सु अचः परस्य आद्यस्य हलो वा द्वित्वं न शाकटायनस्य मते इत्यर्थः । अत्र त्रिचतुरादीनां सजातीयानामेव ग्रहणं परस्परसाहचर्यात् अन्तरङ्गत्वाच्च । यज्जातीयस्तज्जातीय एव द्वितीयः, यज्जातीयस्तज्जातीय एव प्रथम इत्येवं साहचर्यात् त्रयश्चत्वारो वा वर्णाः सजातीया एव । तादृशाश्च यद्यपि 'तितउ अत्र' इत्यत्र अचोऽपि सम्भवन्ति । तथापि त्र्यादिवर्णघटकस्य अचः परस्य यरस्तत्राभावेन सूत्रवैयर्थ्यापत्त्या त्र्यादीनां हलामेव ग्रहणमित्याह—संयुक्तेष्विति । विजातीयानां त्र्यादीनां ग्रहणे 'अचो रहाभ्याम्' इत्यस्य तु न वैयर्थ्यम्, हर्य्यनुभवः, न ह्यस्ति, इत्यादौ अचः परस्य यरोऽभावात् । यदि त्वत्र अच इति नानुवर्तते तदा कथञ्चित् 'अचो रहाभ्याम्' इत्यस्य वैयर्थ्यं वक्तुं शक्यम् । अत्र 'वा द्वित्वम्' इत्युक्तिस्तु निषेधविकल्पविधिविकल्पयोरैक्याभिप्रायेण । यदि 'अनचि च' इत्यत्र 'वा' इति नानुवर्तते तदा 'अनचि च' इत्यनेन 'सर्वत्र शाकल्यस्य' इत्यनेन च द्वित्वविकल्पे सिद्धे 'नादिन्येति' 'त्रिप्रभृतिषु' इति सूत्रद्वयम्, 'अनचि च' इत्यत्र विकल्पस्यानुवृत्तौ च 'सर्वत्र' इत्यनेन सहितं सूत्रत्रयञ्च कस्य मते द्वित्वं न भवति इति द्योतनार्थं सत्स्पष्टार्थमेव । इन्न्द्रः, राष्ट्ट्रम्, इत्यादौ नकारषकारयोर्विकल्पेन द्वित्वनिषेधः । राजतेः ष्ट्रनि राष्ट्रम्=देशः ।

सर्वत्र शाकल्यस्य [ ८-४-५१ ]

द्वित्वं न । अर्कः । ब्रह्मा ।

दीर्घादाचार्याणाम् । [ ८-४-५२ ]

द्वित्वं न । दात्रम् । पात्रम् ।

अचो रहाभ्यां द्वे । [ ८-४-४६ ]

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः ।

---

'सर्वत्र शाकल्यस्य' शकलस्य गोत्रापत्यं शाकल्यः । 'गर्गादिभ्यो यञ्' ( ४-१-१०५ ) इति यञ् वेत्यनुवर्तते । शाकल्यस्य मते एतत्प्रकरणस्थद्वित्वमात्रस्य निषेधः । अर्कः = अर्च्यते = पूज्यते इत्यर्कः = सूर्यः । अर्चतेः 'पुंसि संज्ञायां घः' इति घे साधु । ब्रह्मेति— बृह बृहि वृद्धौ ( भ्वा. ८६ ) इत्यतः 'बृंहेर्नोऽच्च' ( उ. ४ पा. १४६ सू ) इत्यनेन मनिन्प्रत्यये नकारस्याकारोदेशे यथि बृंहति बृंहयति वा वर्द्धते, वर्द्धयते वा ब्रह्मा सृष्टिकर्ता देवः ।

'दीर्घादाचार्याणाम्' इति दीर्घादुत्तरस्य यरो न द्वे स्त आचार्याणां मते । आचार्यपदेन पूर्वोक्तशाकटायनादिभिन्ना ग्राह्याः । यद्वा आचार्यः=पाणिनिः, इहाचार्यपदेन स विवक्षितो गुरुत्वात्तु बहुवचनम् ।

आम्नायतत्त्वविज्ञानाच्चराचरसमानतः ।
यमादियोगसिद्धत्वादाचार्य इति कथ्यते ॥

यद्वा—आचिनोति च शास्त्राणि आचारे स्थापयत्यपि ।
स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते ॥ इति ।

यद्वा—उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥ इति ।

'अनचि च' इत्यत्र वाग्रहणमनुवर्तते इति नाज्झलाविति सूत्रे कैयटः । एवं च अनचि चेत्येव द्वित्वविकल्पसिद्धौ त्रिप्रभृतिष्वित्यादिसूत्रत्रयं नारम्भणीयमिति प्रौढमनोरमायां स्थितम् । 'एतत्सूत्रत्रयविरोधादनचि चेत्यत्र वेति नानुवर्त्यमिति युक्तं प्रतिभाति' इति बालमनोरमा । वस्तुतस्तु अनचि च इति भाष्ये 'अवसाने च द्वे भवत इति वक्तव्यम् । वाक्क्, वाक्, त्वक्क् त्वक्' इत्युक्त्वा अनचि च इत्यत्र प्रसज्यप्रतिषेधमाश्रित्यावसानेऽपि द्वित्वं संसाध्य वार्तिकं प्रत्याख्यातं भाष्ये । तत्र वाक्क्, वाक् इत्यादिरूपद्वयदर्शनेन, अवसाने प्रायो द्वित्वादर्शनेन च 'वा' इत्यस्य सम्बन्ध आवश्यकः । अन्यथा अनचि चेति द्वित्वस्य नित्यत्वे 'ङः सि धुट्' 'शि तुक्' इत्यादिनिर्देशानुपपत्तिरिति सूत्रचतुष्टयं कस्य मते द्वित्वं भवति कस्य मते नेति बोधनार्थमेव । दात्रमिति—दान्ति = छिन्दन्त्यनेनेति दात्रम् । दाप् लवने इत्यत्र करणे 'दाम्नीशस' ( ३-२-१८२ ) इति ष्ट्रनि साधु । 'दात्रं लवित्रम्' इत्यमरः । 'हंसुवा' इति लोके । पात्रमिति—पाति = रक्षति स्वस्मिन्नाधेयमिति, पिबत्यनेनेति वा कर्तरि करणे वा पातेः पिबतेर्वा 'सर्वधातुभ्यः ष्ट्रन्' (उ. ४-१५९ सू.) इति ष्ट्रनि साधु । 'पारावारे परार्वाची तीरे पात्रं तदन्तरम्' इत्यमरः । पारावारयोर्मध्यं पात्रम् ।

'पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि ।
योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि ॥' इति हैमः ।

'अचो रहाभ्यां द्वे' इति यर इत्यनुवर्तते। वेति च, अच इति पञ्चम्यन्तम् । ततश्च अचः पराभ्यां, रेफहकाराभ्यां परस्य यरो द्वे रूपे स्त इत्यर्थः । नच 'अचः' इत्यत्र तस्मादिति परिभाषा नोपतिष्ठेत 'विधौ परिभाषोपतिष्ठते नानुवादे' इत्युक्तेरिति वाच्यम्, तत्तत्परिभाषाया भाष्यानुक्तत्वेनाभावात् । किञ्च पराभ्यामित्यस्याध्याहारमात्रलभ्यत्वे 'निर्ह्रादः' इत्यादौ अज्झकारयोर्व्यवधानेऽप्यचः परस्य हकारस्य सत्त्वाद् द्वित्वापत्तिः । 'उदीचामातः स्थाने' इत्यत्र स्थानेग्रहणं स्पष्टार्थमेव । किञ्च स्थानेग्रहणेन

हर्य्यनुभवः । न ह्य्यस्ति ।

**हलो यमां यमि लोपः । ( ८-४-६४ )**

हलः परस्य यमो लोपः स्याद्वा यमि । इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु 'आदित्यो देवता अस्येत्यादित्यं हविः' इत्यादौ ।

परिभाषाणामनित्यत्वं ज्ञाप्यते, 'न तु विधौ परिभाषा' इति परिभाषा । एतेन 'अचः' इत्यस्यापि एकत्र द्वयमिति रीत्या यदि एवान्वय इति तस्मादित्यस्योपस्थितौ बाधकाभाव इत्यपास्तम् ।

हर्य्यनुभव इति—हरेर्विष्णोरनुभवो ज्ञानमित्यर्थः । अत्र रेफात्परस्य यस्य द्वित्वम् । न ह्य्यस्तीति—न हि वर्तते इत्यर्थः । अत्र हकारात्परस्य यस्य द्वित्वम् । अत्र अचः परयो रेफहकारयोः 'अनचि च' इत्यनेन द्वित्वं न, हकारस्य यरत्वाभावात् । रेफस्य साक्षाच्छ्रुतेन करणत्वरूपनिमित्तत्वेन सूत्रान्तरमासस्य कार्यित्वस्य 'नेमौ रहौ कार्य्यिणौ' इति हयवरट्सूत्रभाष्येण माठरपरिवेषणान्यायेन च रेफत्वावच्छिन्नातिरिक्तत्वेन यरि यणि च संकोचात् । अत एव 'रेफस्य द्विर्वचनानुनासिकपरसवर्ण-प्रतिषेधो वक्तव्यः' इति वार्तिकस्य प्रकारन्तरेण प्रत्याख्यानपरभाष्येण न विरोध इत्यनचि चेति सूत्रव्याख्यानतोऽवसेयम् ।

हर्य्य् अनुभवः' 'नह् य्य् अस्ति' इत्यत्र प्रथमयकारस्य वैकल्पिकलोपमाह—हल इति—

'हलो यमां यमि लोपः' इति । 'झयो होऽन्यतरस्याम्' (८-४-६२)इत्यतोऽन्यतरस्याम् इत्यनुवर्तते । तच्च स्वरूपतो विभक्तिप्रतिरूपकमव्ययं विकल्पार्थकम् । भाष्यसम्मतसूत्रक्रमतस्तु 'वावसाने' इत्यतो वेत्यनुवर्तनीयम् । यमामिति बहुत्वं प्रयोगबाहुल्याभिप्रायेण ।

लोपपक्ष इति—यकारस्य द्वित्वे कृते प्रथमयकारस्य लोपपक्षे इत्यर्थः । एकयमिति—एको यकारो यस्मिन् लक्ष्ये तदेकयम् । तुल्यमिति—यकारस्य द्वित्वं कृत्वा लोपे सति यादृशं रूपं तादृशमेव द्वित्वाभावेऽप्येकयं रूपमित्यर्थः । द्वित्वे लोपाभावे च द्वियं रूपम् ।

ननु यकारद्वयघटितरूपसिद्धये 'हलो यमाम्' इति सूत्रस्यावश्यकता नास्ति, अचो रहाभ्यामित्यनेन द्वियकारकस्य द्वित्वाभावे एकयकारकस्य रूपस्य सिद्धेरत आह—लोपारम्भेति—अदितेरपत्यमित्यर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये आदित्य इति । आदित्यशब्दात् आदित्यो देवता अस्येत्यर्थे 'दित्यदित्यादित्य' इत्यनेनैव पुनर्ण्ये आदित्य य इति स्थितौ 'यस्येति च' इति आदित्यशब्दाकारस्य लोपे 'आदित्य् य' इति जाते 'हलो यमाम्' इत्यनेन तकारात्परस्य यकारस्य ण्यप्रत्ययघटकयकारे परे लोपे 'आदित्यम्' आदित्यदेवताकम् इत्यर्थे एकयकारकं रूपं सिध्यति । एतत्सूत्राभावे तु यकारद्वयघटितमेव रूपं स्यात् ।

न च 'हलो यमाम्' इत्यस्याभावेऽपि 'अदितेरपत्यमादित्यः' इत्यपत्यार्थकण्यप्रत्ययान्तादित्यशब्दघटकयकारस्य 'आपत्यस्य च तद्धितेऽनाति' ( ६-४-१५१ ) इत्यनेनापत्ययकारस्य लोपेन एकयकारकं रूपं सिध्यतीति वाच्यम्, अपत्यभिन्नप्राग्दीव्यतीयण्यप्रत्ययान्तादित्यशब्दघटकयकारस्य आपत्यत्वाभावेन 'आपत्यस्य' इति सूत्राप्राप्तेः । यदि तु 'आदित्यं हविः' इत्यत्र मयस्तकारात्परस्य यकारस्य 'यणो मयः' इति द्वित्वं तदा पक्षे यकारद्वयघटितरूपसिद्ध्यर्थं सूत्रम् । एवम् 'शय्या' इत्यत्र शीधातोः 'संज्ञायां समज' ( ३-३-९९ ) इति क्यपि 'शीङोऽयङ् यि' इत्ययङादेशे 'शय् य' इति जाते 'अनचि च' इति यकारस्य द्वित्वे 'शय्य् य' इति स्थितौ 'हलो यमाम्' इत्यस्य द्वितीययकारलोपेन 'शय्या' इति यद्वयघटितरूपार्थमावश्यकत्वम् ।

ननु 'हर्यनुभवः, न ह्यस्ति' इत्यत्र 'हलो यमां यमि' इत्यस्य फलाभावे इह तस्योल्लेखो विफल इति चेन्न, 'उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते' इति नियमेन पर्जन्यन्यायेन चेह तदुपन्यासस्यौचित्यात् ।

ननु महात्मनो भाव इत्यर्थे महात्मन् शब्दात् 'गुणवचन' ( ५-१-१२४ ) इति ष्यञि

'यमां यमि' इति यथासंख्यविज्ञानान्नेह—माहात्म्यम् ।

**एचोऽयवायावः । [ ६-१-७८ ]**

एचः क्रमादय् अव् आय् आव् एते स्युरचि ।

**तस्य लोपः । [ १-३-९ ]**

तस्येतो लोपः स्यात् ।

---

टिलोपे आदिवृद्धौ माहात्म्यम्=गुणोत्कर्षः । अत्र तकाररूपहलः परस्य मकाररूपस्य यमः यकाररूपे यमि परेऽनेन लोपः स्यादत आह—यमामिति ।

यथासंख्येति—विज्ञायते साधुत्वादिकमनेनेति विज्ञानं सूत्रम् । 'विज्ञानं शिल्पशास्त्रयोः' इत्यमरः । यथासंख्यविज्ञानादित्यस्य यथासंख्यसूत्रादित्यर्थः । तथा च तद्रूपस्य यमः सरूपे यम्येव लोपस्येष्टत्वान्नात्र यकारे मकारस्य लोप इति भावः । यद्यपि यथासंख्यसूत्रोपन्यासोऽत्रैव युक्तः, तथापि 'झरो झरि' ( ८-४-६५ ) इति भाष्ये 'सवर्णग्रहणं समसंख्यप्रतिषेधार्थम्' इत्युक्त्वा असति यत्ने समसंख्याकानां यथासंख्यसम्बन्धस्यौत्सर्गिकत्वं सूचितम् । तेन 'शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय' इति लोके इव सूत्रं विनैव यथासंख्यमन्वयः स्यादेवेति नेहोपन्यस्तम् । इकः कार्य्यमुक्त्वा अचः कार्य्यमाह—

'एचोऽयवायाव' इति । 'इको यणचि' इत्यतोऽचीत्यनुवर्तते । अय् च अव् च आय् च आव् चेति विग्रहे द्वन्द्वः । क्रमादिति—यथासंख्यसूत्रेणेत्यर्थः । एकारा द्वादश, ओकाराश्च द्वादश, ऐकारा औकाराश्च षट् षट् ऐचोऽनुनासिकस्याभावात् । तथा च एचः षट्त्रिंशत् अयादयश्चत्वार इति यथासंख्याऽसम्भवस्तदा जातिपक्षमादाय 'स्थानेऽन्तरतमः' इत्यनेन संवृताकारघटितस्य कण्ठतालुजन्यस्य एकारस्य स्थाने तादृशोऽय्, संवृताकारघटितस्य कण्ठोष्ठस्थानजन्यस्य ओकारस्य स्थाने तादृशोऽव्, विवृताकारघटितयोस्ताल्वोष्ठजन्ययोरैकारौकारयोश्च स्थाने तादृशौ आयावौ च भवन्ति, एतदाशयलभ्य एव क्रमादिति भाष्ये स्पष्टम् । अत्र 'लोपः शाकल्यस्य' इति यवयोर्लोपस्तु न, वैकल्पिकत्वात् । अत्रायाद्यादेशेषु 'हलन्त्यम्' इतीत्संज्ञायां लोपमाशङ्कितुमाह—

'तस्य लोप' इति । अत्र 'लोपः' इत्युक्तावपि कर्माकाङ्क्षायामित्संज्ञाप्रकरणात्, 'उपदेशेऽजनुनासिक इत्' इत्यपदानुवृत्त्या षष्ठ्या विपरिणामेन 'इतः' इति लाभे 'तस्य' ग्रहणं यत्र समुदायस्य इत्संज्ञा, तत्र अलोऽन्त्यपरिभाषयाऽन्त्यस्य लोपो मा भूत्, किन्तु समुदायस्यैव लोपो यथा स्यादित्येतदर्थं तस्य ग्रहणम् । तदुक्तं भाष्ये 'येऽनेकाल इत्संज्ञास्तेषां लोपः सर्वादेशो यथा स्यादिति' इति । नानर्थके इति परिभाषा तु नास्त्येव, तत्फलानामन्यथासिद्धत्वेन भाष्ये तस्याः प्रत्याख्यानात् । न च अलोऽन्त्यसूत्रप्रवृत्तौ उकारमात्रस्य 'उपदेशेऽजनुनासिकः' इतीत्त्वेन लोपे सिद्धे 'आदिर्ञिटुडवः' इति समुदायस्य संज्ञाविधानसामर्थ्यात्समुदायस्यैव लोपः स्यादिति तस्य ग्रहणं व्यर्थमिति वाच्यम्, तथा सति कुङ्आदीनामुदित्त्वेन 'उदितो वा' ( ७-२-५६ ) इत्यनेन 'कृत्वा' इत्यादौ वैकल्पिकेडापत्तेः । 'ट्वितोऽथुच्' ( ३-३-८९ ) इत्येतदर्थं समुदायसंज्ञायाश्चारितार्थ्येन तस्य ग्रहणं सर्वलोपार्थमेव । न च 'आदिर्ञिटुडवः' इति टकारादीनाम्, उकारस्य च उपदेशेऽजनुनासिक इतीत्त्वेन 'ट्वितोऽथुच्' इत्यादीनां चारितार्थ्यमिति वाच्यम्, एवमपि कुङादीनामुदित्त्वे वैकल्पिकेडापत्तेर्दुर्वारत्वात् । न च 'उदितो वा' इत्यत्र उत् चासौ इत् चेति कर्मधारये इत्संज्ञकोकारान्ताद् धातोः परस्येड्विधानेन न दोष इति वाच्यम्, 'उबुन्दिर निशामने' इत्यस्य इत्संज्ञकोकारान्तत्वाभावेन वैकल्पिकेडनापत्तेः । न च 'इरबुन्दु निशामने' इति न्यासेन तत्सिद्धिः, 'इरित्संज्ञा वाच्या' इत्येतत्प्रत्याख्यानपरभाष्यविरोधापत्तेः, 'इरित्संज्ञा वाच्या' इति वार्त्तिककरणापत्तेश्च । तथा हि—भाष्यकृता हि इकारस्य 'उपदेशेऽज्' इत्यनेन रेफस्य 'हलन्त्यम्' इत्यनेनेत्त्वं विधाय इदित्त्वेन नुम्वारणाय इदित इति कर्मधारयेण इदिदन्तस्य धातोर्नुम् इत्यर्थेन इत्संज्ञकरेफान्तधातोः 'इदितो नुम्' इति नुम् वारितः । 'इरबुन्दू' इति पाठे रेफस्य उपदेशेऽन्त्यत्वाभावात् हलन्त्यमित्यस्याप्राप्त्या उञेरकर्थमिरित्यस्येत्राय

इति यवयोर्लोपो न, उच्चारणसामर्थ्यात् । एवं च इत्संज्ञापीह न भवति । हरये । विष्णवे । नायकः । पावकः ।

### वान्तो यि प्रत्यये । [ ६-१-७९ ]

---

'इरित्संज्ञा वाच्या' इत्यस्यावश्यकतया प्रत्याख्यानपरभाष्यविरोधः स्पष्ट एव । यदि तु लुप्यते इति लोप इति कर्मणि घञ् । लोप इत्यस्य लोपकर्म इत्यर्थः । प्रथमान्तमित्पदमनुवर्त्य 'लोपकर्मीभूत इत्' इत्यर्थस्तदा षष्ठ्यन्तपदाभावे अलोऽन्त्यसूत्राप्राप्त्या सर्वादेशलोपसिद्धया तस्य ग्रहणं स्पष्टार्थमेव । न च पूर्वसूत्रे इत्पदस्य स्वरूपपरकतयाऽर्थाधिकारानुरोधादित्पदं संज्ञिपरकं न स्यादिति तस्य ग्रहणमावश्यकमिति, कार्य्यान्तरविधायके शास्त्रेऽनुवृत्तस्य स्वरूपपरस्यापि शब्दस्य संज्ञिपरकत्वदर्शनात् । अत एव 'ष्णान्ताः षट्' इत्यत्रानुवृत्तसंख्यापदस्य संज्ञिपरकत्वम् । केचित्तु 'एति=गच्छतीति इत्' इत्यन्वर्थसंज्ञाश्रयणेन इतो लोपसिद्धया सूत्रमेव व्यर्थम् इत्याहुः ।

इतीति--अनेन सूत्रेणेत्यर्थः । लोप इति--अस्य 'हलन्त्यम्' इत्यनेन यकारादेरित्संज्ञायां सत्यामिति शेषः । यत्तु 'अदर्शनं लोपः' इत्यत्र 'अदर्शनम्' इत्येव सूत्रं कर्त्तव्यम् । 'इत्' इत्यनुवर्तते । तथा च 'अदर्शनमित्संज्ञकं भवति' इति अदर्शनस्य इत्संज्ञां विधाय सर्वत्र लोपस्थाने 'इत्' ग्रहणं कर्त्तव्यम् । एवञ्च 'तस्य लोपः' इति सूत्राकरणेन, 'अदर्शनं लोपः' इत्यत्र लोपग्रहणाकरणेन च महालाघवमिति चेन्न, 'धान्यते' इत्यादौ 'णेरनिटि' इत्यनेन इत्पदेन णेरदर्शनविधाने 'इदितो नुम् धातोः' इत्यनेन नुमापत्तेः । यदि तु 'णौ चङ्युपधाया ह्रस्वः' इति सूत्रारम्भसामर्थ्यात् णेरिदित्वमादाय नुम् न भवतीति कल्प्यते तदोक्तन्यासः सुवच एव । यत्तु अदर्शनस्येत्संज्ञकेन 'ऋत इत्' 'भृञामित्' इत्यादावपि लोपापत्तिरिति तन्न, 'किरतौ लवने' इत्यादिनिर्देशाद् व्याख्यानतश्च तत्र वर्णस्यैव ग्रहणात् । 'एचोऽयवायावः' 'इको यणचि' उभयस्थाने 'इचः स्थाने क्रमाद् यणयवायावः स्युरचि' इत्यर्थकम्—'इचोऽचि यणयवायावः' इति सूत्रयितुमुचितम् । नचैवं 'वान्तो यि प्रत्यये' इत्यत्र वान्तपदेनयणूरूपयकारस्यापि ग्रहणात् 'तोष्ट्रयते' इत्यादौ 'वान्तो यि' इत्यनेन यणापत्तिः, 'अवावौ यि प्रत्यये' इति न्यासेनादोषात् ।

उच्चारणेति—यदि यादीनां लोपः स्यात्तदा उच्चारणाभावेनैवादर्शनसिद्धया तदुच्चारणस्य 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन वैयर्थ्यं स्यादिति भावः । एवञ्च 'या या संज्ञा सा सा फलवती' इति नियमाल्लोपाभावे फलान्तराभावादित्संज्ञापीह न भवतीति भावः । न च 'क्षय्यम्' जय्यम्, इत्यत्र निपातनात्, गव्यम्, नाव्यम्, इत्यादौ वकारप्रश्लेषाच्च लोपाभावे चारितार्थ्यम् । सम्बुद्धौ शाकल्यस्येतावनार्षे 'गवि च युक्ते' 'परिक्रयणे सम्प्रदानम्' इत्यादिनिर्देशाल्लोपाभावकल्पनात् । वस्तुतस्तु 'गुणे त्वन्याय्यकल्पना' इति न्यायेनोक्तनिर्देशादिना इत्वाभाव एव कल्पनीयः । तथा च लोपाप्राप्त्या न प्रधानशास्त्रस्य बाधः । एवञ्चेति लोपाभावे फलान्तराभावे चेत्यर्थः । इहेति—यकारे वकारे चेत्यर्थः । हरय इति—नम इति शेषः । तथा च 'नमः स्वस्ति' इति चतुर्थ्याः साधुत्वम् । नायकः=नेता । पावकः=अग्निः ।

> अपावनानि सर्वाणि वह्निसंसर्गतः क्वचित् ।
> पावनानि भवन्त्येव तस्मात्स पावकः स्मृतः ॥ इति काशीखण्डे ।

'वान्तो यि प्रत्यये' इति । 'यि' इति सप्तमी । 'यि' इति अभेदेन विशेषणम् । 'प्रत्यये' इति विशेष्यम् । तथा च 'येन विधिः' इति तदन्तविधौ प्राप्ते अपवादत्वात् 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिः । अत्र यत्पदस्य सप्तम्यन्तपदमर्थः । गृह्यते इतरभिन्नत्वेन ज्ञायते येन तद्-ग्रहणम्=विशेषणमिति यावत् । ग्रहणञ्च तदल्चेति अल्ग्रहणम् । पूर्वनिपातप्रकरणस्यानित्यत्वा-च्चार्थत्वाच्च विशेष्यस्य पूर्वनिपातः । परिभाषार्थस्तु—सप्तम्यन्तपदार्थे अल्रूपविशेषणे यो विधिः सप्तम्यन्तार्थावयवादौ विशेष्ये बोध्यः । अत्र मानञ्च 'न ह्यपि' इति, 'कोः कत् तत्पुरुषेऽचि' इत्येव सिद्धे

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गोर्विकारो गव्यम्। 'गोपयसोर्यत्' (सू १५३८) इति यत्।

---

रयवदयोश्चेति, अनेकवचने भस्येत्, इत्येव सिद्धे 'बहुवचने भल्येद्' 'ओसि च' इति सूत्रद्वयकरणञ्च मानं बोध्यम्। प्रकृते सप्तम्यन्तम् 'यि' इति तदर्थो विशेषणीभूतोऽल् य् इति तद्विशेषणे सति विधिर्वान्तादेशरूपः स वान्तादेशो यकारादौ प्रत्यये परे स्यात्, इति पूर्वसूत्रे वान्तादेशस्य ओदौतो- रेव स्थानितया निर्णीतत्वेन उपस्थितानुपस्थितयोरुपस्थितं बलीयः, प्रथमज्ञानविषयत्वादतोऽत्रापि ओदौतोरेव स्थानित्वमिति प्राञ्चः।

नागेशास्तु 'वान्तज्ञानाय पूर्वसूत्रपर्य्यालोचनस्यावश्यकत्वेऽपि स्थानिविशेषनिर्णायकतद्वाक्या- र्थपर्य्यालोचने मानाभावेन 'आदौतोरिति वक्तव्यम्' इति वार्तिकमूलाद् व्याख्यानादेव ओदौतोः स्थानिनिर्णय इत्याहुः। वस्तुतस्तु आचार्य्यपारम्पर्य्याच् शिष्याणामनुक्रमेणैव सूत्रतद्वाक्यार्थयोरध्ययन- तात्पर्यपर्य्यालोचने प्रायशो दृश्येते। अत उत्तरसूत्रार्थपर्य्यालोचनकाले पूर्वसूत्रपर्य्यालोचने तद्वाक्यार्थ- पर्य्यालोचनं न जातमित्यस्य वक्तुमशक्यतया प्राचीनोक्तमेव ज्यायः। अपूर्ववार्तिकस्वीकारे गौरवञ्च।

भाष्ये तु 'यि प्रत्यये' इत्येव सूत्रमस्तु, 'एच' इत्यनुवर्तते। यादौ प्रत्यये परे एचः स्थानेऽयादयो भवन्ति, इत्यर्थेन गव्यादीनां सिद्धिः। 'चेयम्' इत्यादौ यान्तादेशस्तु न, क्षय्यं जय्यमित्यत्रानेनैव वान्तादेशे सिद्धे 'क्षय्यजय्यौ शक्यार्थे' इत्यस्य नियमार्थतया एकारस्य यादौ यान्तादेशश्चेत्तर्हि क्षिज्योरेवै- तयोरपि शक्यार्थे एवेति नियमात्। न च 'रैयति' इत्यत्र यान्तादेशः, 'रायि छान्दसः' इति भाष्येण यादौ प्रत्यये रायश्छान्दसत्वात्। अत एव भाष्याद् ऐकारान्तानां यादौ प्रत्ययेऽनभिधानम्। एवं च वान्तग्रहणं न कर्तव्यमित्युक्तम्। प्रत्यये किम् 'गोयानम्'। न च 'गोयूतौ' 'अध्वपरिमाणे च' इत्यनयोः प्रत्ययघटकभिन्ने यकारे वान्तादेशश्चेत्तर्हि यूतावेवेति नियमान्नोक्तापत्तिरिति वाच्यम्, गोशब्दस्य यकारे परे वान्तादेशश्चेत्तर्हि यूतावेवेति नियमस्यापि सम्भवेनोक्तापत्तेस्तादवस्थ्यात्।

वस्तुतस्तु वार्तिकेन सूत्रे न सङ्कोचः। अत एव 'प्रत्ययस्थात्कात्' इति सूत्रे प्रत्ययग्रहणं चरितार्थम्। अन्यथा 'मामकनरकयोरुपसंख्यानम्' इति वार्तिकेन प्रत्ययघटकभिन्नककारात्पूर्व- स्येत्वं चेत्तर्हि मामकनरकयोरेवेति नियमेन सिद्धे प्रत्ययग्रहणस्य वैयर्थ्यापत्तिः। यद्वा 'ओत्व- भिन्नस्य एचो यान्तादेशश्चेत्तर्हि क्षिज्योरेवैचः शक्यार्थे एवेति 'रैयति' इत्यादौ न दोषः। यत्तु 'वान्तो यङ्गस्य' इत्येवास्तु, अङ्गेन प्रत्ययस्याक्षेपादङ्गावयवयोरोदौतोर्वान्तादेशः स्याद्यादौ प्रत्यये परे इत्यर्थेन 'गोयानम्' इत्यादौ न दोष इति चेन्न, अस्यापत्यमिः। एररियरिः। गोर्यरिः गव्यरिरित्यादौ यादिप्रत्ययनिमित्तकाङ्गत्वस्याभावेन वान्तादेशानापत्तेरिति तन्न, प्रत्ययग्रहणसत्त्वे 'प्रत्ययग्रहणे यस्मात्स विहितः' इति परिभाषया तदादेरुपस्थित्या यादौ प्रत्यये परे ओदौदन्ततदादेर्निर्दिश्यमानौदौतोर्वान्ता- देश इत्यर्थे 'गोयरिः' इत्यत्रैवेष्टत्वेन तत्र वान्तादेशानापत्तेरकिञ्चित्करत्वात्। 'अङ्गस्य' इति करणे प्रत्ययाक्षेपे च लाघवाभावेन अधिकृतस्य शब्दे भानाभावेन च यथाश्रुतन्यासस्यैवौचित्यात्। एतेन अधातोर्यणि अतो लोपे अ इत्यनेन, उकादशब्दात् 'तत्र साधुः' इति यति यस्येति च, इति अलोपे यशब्देन वा गोशब्दस्य समासे गव्य इत्यत्रोक्तन्यासे वान्तादेशानापत्तिरप्यपास्ता, तत्र वान्तादेशस्य सिद्धान्तविरुद्धत्वात्। यत्तु 'यान्ते प्रत्यये' इत्यर्थे वान्त इति सूत्रवैयर्थ्यात्तदादिविधिरिति तन्न; गोमयमतर्तीति गोमयात् तमाचष्टे 'गोमयति' इत्यादौ टिलोपस्याजादेशत्वेन स्थानिवद्भावाभावात् तत्र सूत्रस्य चारितार्थ्यसम्भवात् 'अल्ग्रहणे' सप्तम्यन्ते तदादिविधौ 'अपो भि' इत्यपि न ज्ञापकम्, भान्तप्रत्ययासम्भवेऽपि एकत्र द्वयमिति रीत्या भि इत्यस्य अङ्गाक्षिप्तप्रत्ययस्य च स्वातन्त्र्येणान्वयाद् भकाराव्यवहितपूर्वः सन् यः प्रत्ययाव्यवहितपूर्वः अप्शब्दस्तद्घटकस्य अन्त्यालस्तकार इत्यर्थेन चारितार्थ्यसम्भवात्। एवमन्यत्राप्यूह्यम्।

गव्यमिति—गोर्विकार इत्यर्थे षष्ठ्यन्ताद् गोशब्दाद् 'गोपयसोर्यत्' (४-३-१६०) इति यति तद्धितान्तत्वात्प्रातिपदिकत्वे षष्ठ्या लुकि गो य इति स्थिते अत्रास्यकस्याभावादवादेशाप्राप्त्या

नावा तार्यं नाव्यम्। 'नौवयोधर्म' ( सू १६४३ ) इत्यादिना यत्। 'गोर्यूतौ छन्दस्युपसंख्यानम् ( वा ३५४३ ) 'अध्वपरिमाणे च' ( वा ३५४४ ) गव्यूतिः। 'ऊतियूति' इत्यादिना यूतिशब्दो निपातितः। वान्त इत्यत्र वकाराद् गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे 'लोपो व्योः' ( सू० ८७३ ) इति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्यत इति यावत्।

---

वान्तादेशोऽत्र विधीयते। गव्यम् = दुग्धादि। नाव्यमिति— नौशब्दात् तृतीयान्तात् 'नौवयोधर्म' ( ४-४-९१ ) इति तार्य्येऽर्थे यति तृतीयाया लुकि नौ य इति स्थितौ वान्तादेशे 'नाव्यम्' नावा तरितुं शक्यं जलम् तार्य्यम् इत्यत्र 'ऋहलोर्ण्यत्' ( ३-१-१२४ ) इति कर्मणि ण्यत्।

ननु गव्यम्, नाव्यम्, इत्यत्रान्तरवर्तिनी विभक्तिमाश्रित्य पदत्वाद् 'लोपः शाकल्यस्य' इति वलोपः स्यादत आह—वान्त इत्यत्रेति—'हलि सर्वेषाम्' इत्यनेन तु न वलोप आशङ्कनीयः, तत्र यग्रहणानुवृत्तेः। 'नपदान्ता हलोऽणः सन्ति' इति लण्सूत्रभाष्येण 'भोमगो' इति भाष्येण वृक्षवादीनामनभिधानात्। सूत्रे व्वान्त इति पाठः। न चेदानीं वान्त इत्येव पाठः श्रूयत इति वाच्यम्, सूत्रे 'लोपो व्योः' इति वलि परे वकारलोपात्। न च वकारनिष्ठकार्यित्वेन वकत्वेन प्राप्तवकारनिष्ठनिमित्तत्वस्य बाधात् वकारे परे वलोपासम्भव इति वाच्यम्, 'येन नाप्राप्ते' इति न्यायस्य, तक्रकौण्डिन्यन्यायस्य च संकुचितधर्मयोर्विषयतयोर्वा यत्र व्याप्यव्यापकभावस्तत्रैव व्याप्यविषयातिरिक्तत्वेन व्यापकविषयताश्रये संकोच इति सिद्धान्तात्। प्रकृते च कार्यितायाः पूर्ववकारनिष्ठतया निमित्ततायाश्च परवकारनिष्ठतया सामानाधिकरण्याभावेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वरूपव्यापकत्वस्यासम्भवेन कार्यितया निमित्तत्वस्याबाधात्। भाष्ये वलि परे वकारलोपयोग्यलक्ष्याभावाद् वकारस्य प्रत्याख्यानेनात्र वकारलोपासम्भव इति तु न वाच्यम्, लौकिकप्रयोगार्थे प्रत्याख्यानेऽपि सौत्रप्रयोगसिद्धये तत्सत्त्वात्। अत एव 'अतो ल्रान्तस्य' ( ७-२-२ ) इति सूत्रभाष्ये 'लुप्तनिर्दिष्टोऽत्र वकारः' इत्युक्तिः संगच्छते। तथा च 'वे वान्तः' इत्यत्र व इत्यस्य विशेषणतया तदन्तविधौ वान्तो वान्ते आदेश इत्यत्र वान्तादेशे वान्तत्वस्य व्यभिचारासम्भवेन वकारप्रश्लेषवैयर्थ्येन सर्वदा श्रूयमाणवकारान्त एव वान्तादेश इति कल्प्यते। तथा च तादृशकल्पनयात्र वकारलोपबाधः।

ननु गव्यं नाव्यमित्यत्र 'यचि भम्' ( १-४-१८ ) इत्यनेन भत्वेन पदत्वबाधाद्वलोपाप्राप्तिरत आह—छकाराद् वेति—सूत्रे न हि प्रश्लेषः, किन्तु 'गोर्यूतौ छन्दस्युपसंख्यानम्' इत्यत्र छकारात्पूर्वं वकारं प्रश्लिष्योक्तरीत्या सदा श्रूयमाणवान्तादेश इति 'गव्यूतिः' इत्यत्रापि न वलोपः। अत्र यजादिप्रत्ययपरत्वाभावाच्च भत्वेन पदत्वबाधः। 'गोर्यूतौ छन्दस्युपसंख्यानम्' इत्यस्य संख्यायते=ज्ञायते शब्दसाधुत्वमनेनेति संख्यानम् सूत्रम्। तस्य समीपे इति उपसंख्यानम्। 'वान्तो यि प्रत्यये' इति सूत्रसमीपे 'गोर्यूतौ छन्दसि' इति वक्तव्यम्, इति सूत्रकारः सूच्यते कात्यायनेन। यूतिशब्दाव्यवहितपूर्वत्वविशिष्टस्य गोशब्दान्त्यालूरूपस्य निर्दिश्यमानस्याव्रूप आदेशः छन्दसि इत्यर्थः।

'आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्' इति मन्त्रः। गव्यूतिः=गोप्रचारभूमिः। गावो यूयन्ते=मिश्रन्तेऽस्मिन्निति अधिकरणे युधातोः 'क्तिन्' इति वेदभाष्ये भट्टभास्करः। 'ऊतियूतिजूति' ( ३-३-९७ ) इति दीर्घादिकं निपात्यते। सूत्रतो वार्त्तिके वान्त इत्यनुवर्त्य श्रूयमाणवकारान्तादेश इत्यर्थः। ननु यदि वकारो न श्रूयेत तदा वान्तादेश एव न स्यादिति श्रूयमाणत्वविशेषणं व्यर्थमत आह—वकारो न लुप्यत इति यावदिति। यावदिति सीमायामव्ययम्। इति यावत्=एतत्पर्य्यन्तं तात्पर्य्यमित्यर्थः।

अन्ये तु 'वान्तः' इति सूत्रे वकारप्रकारप्रश्लेषो व्यर्थः, गव्यम्, नाव्यम् इत्यादौ भत्वेन पदत्वबाधाद्वलोपाप्राप्तेः। न च गामिच्छति 'गव्यति' इत्यत्र क्यजन्ते क्यप्रत्ययावधिकस्वादित्वा-

भावादत्र भत्वाप्राप्त्याऽन्तर्वर्तिसुपा पदत्वाल्लोपाभावाय सूत्रे वकारप्रश्लेष आवश्यक इति वाच्यम्, 'नः क्ये' इति नियमसूत्रेण क्यचि नान्तस्यैव पदत्वेन लोपाप्राप्तेः। छान्दसे गव्यूतिपदेऽपि 'छन्दसि दृष्टानुविधिः' इति सिद्धान्तात् 'षष्ठीयुक्तश्छन्दसि' ( १-४-९ ) इत्यत्रानुवृत्तस्य 'वा' इत्यस्य योगविभागेन 'सर्वे विधयश्छन्दसि वा भवन्ति' इति स्वीकाराच्च वार्तिकेऽपि वकारप्रश्लेषस्य नावश्यकता। तदुक्तम्भाष्ये—'षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति। ततो 'वा' इति। सर्वविधयश्छन्दसि विकल्पेन भवन्ति' इति। न च 'गव्यूतिः स्त्री क्रोशयुगम्' इति अध्वपरिमाणे लोके वल्लोपवारणाय वार्तिके प्रश्लेष आवश्यकः, सन्निपातपरिभाषयैव तत्रापि वल्लोपवारणात्। अध्वपरिमाणवाचकत्वमुपजीव्य प्रवृत्तो वान्तादेशस्तद्विघातकवल्लोपे निमित्तं न स्यात्। वल्लोपे अध्वपरिमाणवाचकत्वनियामकानुपूर्वीविनाशेन अध्वपरिमाणवाचकत्वविनाशः स्पष्ट एव।

वस्तुतस्तु गां नयतीति गोनीस्तमाचष्टे गोनयति ततः कर्तरि क्विपि निष्पन्नगोशब्दात् क्यचि 'नः क्ये' इति पदत्वे नल्लोपे 'गव्यति' इत्यत्र वल्लोपवारणाय सूत्रे वकारप्रश्लेष आवश्यकः। न च नल्लोपस्यासिद्धत्वाद् वान्तादेशाप्राप्तिः, 'नल्लोपः सुप्स्वर' ( ८—२—२ ) इति नियमेन वान्तादेशे नलोपासिद्धत्वाप्राप्तेः। न च णिलोपटिलोपयोः स्थानिवत्त्वाद् यादिप्रत्ययपरकत्वाभावेन वान्तादेशाप्राप्तिः, अवादेशस्य पदचरमावयवत्वेन 'न पदान्त' इति स्थानिवत्त्वनिषेधात्। उपाध्यायास्तु वकारप्रश्लेषस्य भाष्यकाराद्यनुक्तत्वेनाप्रामाणिकतया प्रश्लेषाद्युपपत्तये शङ्कासमाधाने उपेक्षणीये एव, गोनूशब्दात्क्यचि सत्यभिधाने लोप इष्ट एवेत्याहुः। केचित्तु त्रिपाद्यां सन्निपातपरिभाषा न प्रवर्तते। अत एव 'न पदान्तात्' ( ८-४-४२ ) इति सूत्रे 'टोः' ग्रहणं चरितार्थम्। अन्यथा 'सर्पिष्टमम्' इत्यत्र सन्निपातपरिभाषया ष्टुत्वाप्राप्त्या तद्वैयर्थ्यमेवेति तन्न, तेन तत्परिभाषाया अनित्यत्वज्ञापनेनात्र प्रवृत्तौ बाधकाभावात्। 'संज्ञाभङ्गभिया न वल्लोपः' इति तु न सम्यक्, तादृशवचनस्य भाष्यकाराद्यनुक्तत्वात्। यत्र कार्ये संज्ञात्वस्योपजीव्यत्वं तत्र सन्निपातपरिभाषाविरोधात् न संज्ञाविघातककार्यमिति फलितार्थमादायैव संज्ञाभङ्गभियेति वचनम्। अत एव 'आत्थ' इत्यादौ धत्वे कृते ईडादिवारणाय क्वचित् त्रिपाद्यामपि तत्प्रवृत्तिरित्याहुः।

यत्तु शेखरकृता लौकिकगव्यूतौ संज्ञात्वभङ्गापत्तेर्न वल्लोपः। यथा 'रघुनाथेति संज्ञाशब्दे नित्यस्यापि णत्वस्याभावः' इति। तत्र 'पूर्वपदात्संज्ञायामगः' इति सूत्रे संज्ञायामित्यस्य णत्वे सति संज्ञायां गम्यमानायामित्यर्थः। तदुक्तम्—'भृञोऽसंज्ञायाम्' ( ३-१-११२ ) इति भाष्ये 'य एते संज्ञायां विधीयन्ते तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति, किं तर्हि 'प्रत्ययेन चेत्संज्ञा गम्यत इति' अत्र 'य एते संज्ञायां विधीयन्ते' इत्युक्त्वा सकलसंज्ञाविधीनां संग्रहः। तथा चाग्रे प्रत्ययपदमुपलक्षकं कार्यमात्रस्य। एवञ्च 'रघुनाथः' इति दृष्टान्तासङ्गतिः। न हि तत्र कृतणत्वेन संज्ञा गम्यते इति णत्वाप्राप्तिः। किन्त्वेवं न ह्युपजीव्यत्वं संज्ञाया येन संनिपातविघातरूपा संज्ञात्वभङ्गापत्तिः स्यादिति।

अत्रोच्यते संज्ञायामित्यस्योपजीव्यत्वमेव णत्वात्प्रागपि संज्ञात्वमपेक्ष्यते। कृतणत्वेन संज्ञायां गम्यमानायामिति भाष्यन्तु सन्निपातपरिभाषालभ्यार्थानुवादकम्। तथा च यत्र णत्वात्प्राक्परत्र संज्ञात्वं तत्रैवानेन णत्वम्। रघुनाथ इत्यत्र तु णत्वात्प्रागेव संज्ञात्वमिति णत्वेन संज्ञात्वविघातरूप उपजीव्यविरोध इति न णत्वम्। 'सर्वनाम' इति तु न हि अनादिभूता संज्ञा, किन्तु विवक्षाधीना। तथा च सर्वनाम इत्यपि संज्ञा भवितुमर्हति सर्वणाम इत्यपि। तत्र विकल्पस्येव इव शास्त्रविधेयघटितस्य प्रयोगे पुण्याधिक्येन णत्वाशङ्का। निपातनेन णत्वाभाव इत्यनेन नकारघटितस्यापि तत्र साधुत्वं बोधितम्। अन्यत्र तु संज्ञात्व स्योभयत्र सत्त्वेऽपि णत्वघटितस्यैव साधुत्वं णत्वाघटितस्य। यत्र तु णत्वात्पूर्वमेव संज्ञात्वं तत्तु नास्य विषयः, सन्निपातविरोधादिति तत्त्वम्। अत्रैव 'अगः' इति तात्पर्यग्राहकम्। 'ऋगयनम्' इत्यत्र संज्ञात्वस्योभयत्र सत्त्वेन णत्वघटितस्यैव साधुत्वं प्राप्तं तत्र अग इति प्रतिषेधात् 'अनृ ऋगयनादिभ्यः'

भावादत्र भत्वाप्राप्त्याऽन्तर्वर्तिसुपा पदत्वाल्लोपाभावाय सूत्रे वकारप्रश्लेष आवश्यक इति वाच्यम्, 'नः क्ये' इति नियमसूत्रेण क्यचि नान्तस्यैव पदत्वेन लोपाप्राप्तेः। छान्दसे गव्यूतिपदेऽपि 'छन्दसि दृष्टानुविधिः' इति सिद्धान्तात् 'षष्ठीयुक्तश्छन्दसि' ( १-४-९ ) इत्यत्रानुवृत्तस्य 'वा' इत्यस्य योगविभागेन 'सर्वे विधयश्छन्दसि वा भवन्ति' इति स्वीकाराच्च वार्त्तिकेऽपि वकारप्रश्लेषस्य नावश्यकता। तदुक्तम्भाष्ये—'षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति। ततो 'वा' इति। सर्वविधयश्छन्दसि विकल्पेन भवन्ति' इति। न च 'गव्यूतिः स्त्री क्रोशयुगम्' इति अध्वपरिमाणे लोके वल्लोपवारणाय वार्त्तिके प्रश्लेष आवश्यकः, सन्निपातपरिभाषयैव तत्रापि वल्लोपवारणात्। अध्वपरिमाणवाचकत्वमुपजीव्य प्रवृत्तो वान्तादेशस्तद्विघातकवल्लोपे निमित्तं न स्यात्। वल्लोपे अध्वपरिमाणवाचकत्वनियामकानुपूर्वीविनाशेन अध्वपरिमाणवाचकत्वविनाशः स्पष्ट एव।

वस्तुतस्तु गां नयतीति गोनीस्तमाचष्टे गोनयति ततः कर्तरि क्विपि निष्पन्नगोशब्दात् क्यचि 'नः क्ये' इति पदत्वे नलोपे 'गव्यति' इत्यत्र वल्लोपवारणाय सूत्रे वकारप्रश्लेष आवश्यकः। न च नलोपस्यासिद्धत्वाद् वान्तादेशाप्राप्तिः, 'नलोपः सुप्स्वर' ( ८—२—२ ) इति नियमेन वान्तादेशे नलोपासिद्धत्वाप्राप्तेः। न च णिलोपटिलोपयोः स्थानिवत्त्वाद् यादिप्रत्ययपरकत्वाभावेन वान्तादेशाप्राप्तिः, अवादेशस्य पदचरमावयवत्वेन 'न पदान्त' इति स्थानिवत्त्वनिषेधात्। उपाध्यायास्तु वकारप्रश्लेषस्य भाष्यकाराद्यनुक्तत्वेनाप्रामाणिकतया प्रश्लेषाद्युपपत्तये शङ्कासमाधाने उपेक्षणीये एव, गोनूशब्दात्क्यचि सत्यभिधाने लोप इष्ट एवेत्याहुः। केचित्तु त्रिपाद्यां सन्निपातपरिभाषा न प्रवर्तते। अत एव 'न पदान्तात्' ( ८-४-४२ ) इति सूत्रे 'टोः' ग्रहणं चरितार्थम्। अन्यथा 'सर्पिष्टमम्' इत्यत्र सन्निपातपरिभाषया ष्टुत्वाप्राप्त्या तद्वैयर्थ्यमेवेति तन्न, तेन तत्परिभाषाया अनित्यत्वज्ञापनेनात्र प्रवृत्तौ बाधकाभावात्। 'संज्ञाभङ्गभिया न वल्लोपः' इति तु न सम्यक्, तादृशवचनस्य भाष्यकाराद्यनुक्तत्वात्। यत्र कार्ये संज्ञात्वस्योपजीव्यत्वं तत्र सन्निपातपरिभाषाविरोधात् न संज्ञाविघातककार्यमिति फलितार्थमादायैव संज्ञाभङ्गभियेति वचनम्। अत एव 'आत्थ' इत्यादौ थत्वे कृते ईडादिवारणाय क्वचित् त्रिपाद्यामपि तत्प्रवृत्तिरित्याहुः।

यत्तु शेखरकृता लौकिकगव्यूतौ संज्ञात्वभङ्गापत्तेर्न वल्लोपः। यथा 'रघुनाथेति संज्ञाशब्दे नित्यस्यापि णत्वस्याभावः' इति। तत्र 'पूर्वपदात्संज्ञायामगः' इति सूत्रे संज्ञायामित्यस्य णत्वे सति संज्ञायां गम्यमानायामित्यर्थः। तदुक्तम्—'भृञोऽसंज्ञायाम्' ( ३-१-११२ ) इति भाष्ये 'य एते संज्ञायां' विधीयन्ते तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति, किं तर्हि 'प्रत्ययेन चेत्संज्ञा गम्यत इति' अत्र 'य एते संज्ञायां विधीयन्ते' इत्युक्त्वा सकलसंज्ञाविधीनां संग्रहः। तथा चाग्रे प्रत्ययपदमुपलक्षकं कार्यमात्रस्य। एवञ्च 'रघुनाथः' इति दृष्टान्तासङ्गतिः। न हि तत्र कृतणत्वेन संज्ञा गम्यते इति णत्वाप्राप्तिः। किन्त्वेवं न ह्युपजीव्यत्वं संज्ञाया येन संनिपातविघातरूपा संज्ञात्वभङ्गापत्तिः स्यादिति।

अत्रोच्यते संज्ञायामित्यस्योपजीव्यत्वमेव णत्वात्प्रागपि संज्ञात्वमपेक्ष्यते। कृतणत्वेन संज्ञायां गम्यमानायामिति भाष्यन्तु सन्निपातपरिभाषालभ्यार्थानुवादकम्। तथा च यत्र णत्वात्प्राक्परञ्च संज्ञात्वं तत्रैवानेन णत्वम्। रघुनाथ इत्यत्र तु णत्वात्प्रागेव संज्ञात्वमिति णत्वेन संज्ञात्वविघातरूप उपजीव्यविरोध इति न णत्वम्। 'सर्वनाम' इति तु न हि अनादिभूता संज्ञा, किन्तु विवक्षाधीना। तथा च सर्वनाम इत्यपि संज्ञा भवितुमर्हति सर्वणाम इत्यपि। तत्र विकल्पस्येव इव णत्वविधेयघटितस्य प्रयोगे पुण्याधिक्येन णत्वाशङ्का। निपातनेन णत्वाभाव इत्यनेन नकारघटितस्यापि तत्र साधुत्वं बोधितम्। अन्यत्र तु संज्ञात्व स्योभयत्र सत्त्वेऽपि णत्वघटितस्यैव साधुत्वं णत्वाघटितस्य। यत्र तु णत्वात्पूर्वमेव संज्ञात्वं तत्तु नास्य विषयः, सन्निपातविरोधादिति तत्त्वम्। अत्रैव 'अगः' इति तात्पर्यग्राहकम्। 'ऋगयनम्' इत्यत्र संज्ञात्वस्योभयत्र सत्त्वेन णत्वघटितस्यैव साधुत्वं प्राप्तं तत्र अग इति प्रतिषेधात् 'अयन् ऋगयनादिभ्यः'

## धातोस्तन्निमित्तस्यैव। [ ६-१-८० ]

यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव। लव्यम्। अवश्यलाव्यम्। 'तन्निमित्तस्यैव' इति किम्? ओयते।

---

इति निर्देशाद्वा वकारघटितस्यापि साधुत्वं बोध्यते इत्युपाध्यायाः। ननु 'ओयत' 'औयत' इत्यादावपि ओदौतोर्वान्तादेशः स्यादतः 'वान्तो यि' इत्यस्य नियामकत्वमाह—

'धातोस्तन्निमित्तस्यैव' इति। सः=यादिप्रत्ययो निमित्तं यस्यैचः स एच् यादिप्रत्ययनिमित्तकः। 'वान्तो यि प्रत्यये' इति सूत्रमनुवर्तते। 'एचः' इति च। धातोरिति अवयवावयविभावसम्बन्धेन एचि विशेषणम्। यादौ प्रत्यये यादिप्रत्ययनिमित्तकस्य धात्ववयवस्य एचोऽपि वान्तादेशः 'वान्तो यि' इत्यनेनैव सिद्ध इति 'सिद्धे सत्यारम्भमाणो विधिर्नियमाय कल्पते' इति नियमात् नियमार्थमिदमित्याह—तन्निमित्तस्यैवेति—यादिप्रत्ययनिमित्तकस्यैवेत्यर्थः। एवार्थोऽन्ययोगो (सम्बन्धः) व्यवच्छेदश्च (अभावः)। तत्रान्यार्थैकदेशे भेदे प्रतियोगितया धात्ववयवयादिप्रत्ययनिमित्तकैच् सम्बध्यते। योगश्चात्र स्थान्यादेशभावरूपः। तथा च यादौ प्रत्यये परे धात्ववयवैचः स्थाने धात्ववयवयादिप्रत्ययनिमित्तकैज्भिन्ननिरूपितस्थान्यादेशसम्बन्धाभाववान् वान्तादेशो भवतीत्यर्थः। एतेनेदं फलितं यद् यादिप्रत्ययानिमित्तकस्य धातोरेचो वान्तादेशो न भवतीति। नियमस्थले प्रकारद्वयम्—विधिमुखेन प्रवृत्तिरित्येकः, निषेधमुखेन प्रवृत्तिरित्यपरः। तत्र यदि नियामकशास्त्रीयोद्देश्यतावच्छेदकधर्मव्यापकः, नियम्यशास्त्रीयोद्देश्यतावच्छेदकधर्मव्याप्यश्च यो धर्मः प्रकृते यादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टधात्ववयवैच्त्वरूपस्तद्वद्भिन्नत्वेन 'वान्तो यि' इति नियम्यशास्त्रीये एचि संकोचे 'लो यम्, अवश्यलौ यम्' इत्यादावेचि धात्ववयवो य एच् तद्भिन्नत्वस्याभावेन 'वान्तो यि' इत्यनेन वान्तादेशाप्राप्त्या 'धातोस्तन्निमित्तस्यैव' इत्यनेन वान्तादेशः सिध्यति। 'ओयत' 'औयत' इत्यादौ धात्ववयवो य एच् तद्भिन्नत्वस्याभावेन 'वान्तो यि' इत्यस्याप्राप्तिः। यादिप्रत्ययनिमित्तकस्य एचोऽभावेन 'धातोस्तन्निमित्तस्यैव' इत्यस्य चाप्राप्त्या न वान्तादेशः। इति विधिमुखेन प्रवृत्तिप्रकारः।

द्वितीयश्च प्रकारः—नियामकशास्त्रे 'तन्निमित्तस्य' इत्यत्र लक्षणया यादिप्रत्ययनिमित्तकभिन्ने लक्षणया भवतीत्यत्र नेत्यस्याध्याहारेण च यादिप्रत्ययनिमित्तक एज्भिन्नो यो धात्ववयव एच् तस्य वान्तादेशो न भवति, इत्यर्थः। तथा च 'ओयते' इत्यादावनेन वान्तादेशनिषेधोऽनेन वान्तादेशस्तु सर्वत्र निषेधाप्रवृत्तियोग्ये लक्ष्ये 'वान्तो यि' इत्यनेनैवेति निषेधमुखेन प्रवृत्तिप्रकारः।

विधिमुखेन प्रवृत्तिप्रकारपक्षमाश्रित्यास्योदाहरणमाह—'लव्यम्' इति, 'लूञ् छेदने' इत्यतः लवितुं योग्यं शक्यं वेत्यर्थे कर्मणि 'अचो यत्' ( ३-१-९७ ) इति यत्प्रत्यये यत्प्रत्ययरूपमार्धधातुके 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इति गुणे लो य इति स्थितौ ओकारस्य स्थानिवत्त्वेन धात्ववयवत्वाद् यादिप्रत्ययनिमित्तकत्वादनेन वान्तादेशः। 'अवश्यलाव्यम्' इति—लुनातेः 'ओरावश्यके' (३-१-१२५) इति ण्यति 'अचो ञ्णिति' (७-२-११५) इति ण्यति ण्यत्प्रत्ययं निमित्तीकृत्य वृद्धौ, आवश्यकत्वद्योतनाय अवश्यमित्यव्ययस्य 'लुम्पेदवश्यमः कृत्ये' इति पृषोदरादिवचनात् मस्य लोपे 'अवश्यलौ य' इति स्थितौ औकारस्य धात्ववयवत्वाद् यादिप्रत्ययनिमित्तकत्वाचानेन वान्तादेशे 'अवश्यलाव्यम्' इति।

ननु लव्यम्, अवश्यलाव्यम्, इत्यादौ 'वान्तो यि' इत्येव वान्तादेशे सिद्धे व्यर्थमिदमतो नियमफलं पृच्छति—तन्निमित्तस्यैवेति—अवयवद्वारा समुदाये प्रश्न इति न्यायात् सूत्रमेव किमर्थमिति प्रश्नः। नियमस्य किं फलमित्यर्थः।

'ओयते' इति—आङ्पूर्वकाद् 'वेञ् तन्तुसन्ताने' इत्यतः कर्मणि 'लः कर्मणि भावे च' (३-४-६९) इति लटि 'भावकर्मणोः' (१-३-१३) इति तङि 'सार्वधातुके यक्' (३-१-६७) इति यकि 'वचिस्वपि' (६-१-१५) इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'अकृत्सार्वधातुकयोः'

औयत।

---

( ७-४-२ ) इति दीर्घे 'आ ऊयते' इति जाते 'आद् गुणः' ( ६-१-८७ ) इति गुणे 'ओयते' इति। वानकर्मीभूतं वस्त्रं भवतीत्यर्थः ( वस्त्र बुना जाता है )। अत्र 'अन्तादिवच्च' इति परादिवद्भावेन ओकारस्य धात्ववयवत्वाद् गुणस्य यादिप्रत्ययनिमित्तकत्वाभावेन न वान्तादेशः। नन्वत्र गुणस्य ओकारस्य 'आ' इति 'ऊयते' इति पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन 'असिद्धं बहिरङ्गम्' इति परिभाषया पदैकसापेक्षवान्तादेशे कर्तव्येऽसिद्धतया ओकाराभावेन वान्तादेशाप्राप्तिरित्यरुचेः फलान्तरमाह—'औयत' इति। वानकर्मीभूतं वस्त्रमभूदित्यर्थः, ( वस्त्र बुना गया )। अत्र कर्मणि वेञ्धातोर्लङि पूर्वोक्तरीत्या तङादौ 'आडजादीनाम्' ( ६-४-७२ ) इत्यादि 'आ ऊयत' इति जाते 'आटश्च' ( ६-१-९० ) इति वृद्धौ 'औयत' इति। अत्र वृद्धेर्वान्तादेशस्य च एकपदनिमित्तकत्वेन नास्ति वृद्धेर्बहिरङ्गत्वम्। यद्वा ओकारस्य फलम्-ओयते इति, औकारस्य-औयत इति। ननु सूत्रस्य नियामकत्वबलादेव एवकारार्थे लब्धे एवग्रहणं व्यर्थमिति चेन्न, यादिप्रत्ययनिमित्तकस्य एचो वान्तादेशश्चेत्तर्हि धातोरेवेति विपरीतनियमस्यापि वक्तुं शक्यतया 'बभ्रोरपत्यं बाभ्रव्यः' इत्यत्र 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' ( ४-१-१०६ ) इति यञि 'ओर्गुणः' ( ६-४-१४६ ) इति तद्धितनिमित्तके गुणे ओकारस्य यादिप्रत्ययनिमित्तकतया धात्ववयवस्य एचोऽभावेन वान्तादेशाभावापत्तिवारणाय 'पतिः समासे एव' इतिवद् इष्टनियमलाभार्थत्वमेवग्रहणस्य।

नन्वत्र यादिप्रत्ययस्य एचि अन्वयो धातौ वा। आद्ये यादिप्रत्ययाव्यवहितपूर्वो यो धातोरवयव एच् तस्य वान्तादेशश्चेत्तर्हि तन्निमित्तस्यैवेत्यर्थापत्त्या 'गामिच्छति गव्यति' इत्यत्र क्यजन्तस्य 'सनाद्यन्ता धातवः' ( ३-१-३२ ) इति धातुसंज्ञायाम्, 'गो यति' इत्यत्र ओकारस्य यादिप्रत्ययाव्यवहितपूर्वत्वेन धात्ववयवत्वेन च यादिप्रत्ययनिमित्तकत्वाभावाद् वान्तादेशानापत्तिः। नान्त्यः, यादिप्रत्ययाव्यवहितपूर्वो यो धातुस्तदवयवस्य एचो वान्तादेशश्चेत्तर्हि तन्निमित्तस्यैवेत्यर्थेन 'गव्यति' इत्यत्र 'गो' इत्यस्य धातुत्वाभावेन दोषाभावेऽपि बुधधातोर्ण्यति 'बोध्यम्' इत्यादौ 'वान्तो यि' इत्यस्याप्राप्त्या 'धातोस्तन्निमित्तस्यैव' इत्यस्य उक्तार्थे यादिप्रत्ययाव्यवहितपूर्वो बुधधातुस्तदवयवस्य एचः सत्त्वेन वान्तादेशविधानार्थं सूत्रस्य चारितार्थ्ये नियमानापत्त्या 'औयत' इत्यादावपि वान्तादेशापत्त्या अव्याप्त्यतिव्याप्तिदोषापत्तिस्तद्वारणाय यदि अनुवृत्तस्य एचो धातोरभेदेन विशेषणतया 'येन विधिः' इति तदन्तविधौ एजन्तधातावेव यादिप्रत्ययस्यान्वयेन यादिप्रत्ययाव्यवहितपूर्वो य एजन्तधातुस्तदवयस्य एचो वान्तादेशश्चेत्तर्हि तन्निमित्तस्यैवेत्यर्थेन गव्यति, बोध्यम्, इत्यादौ दोषाभाव इत्युच्यते तर्हि एतदर्थासम्भवः, एकस्य एचो धातौ विशेषणत्वेन द्वितीयस्य एचोऽभावादिति चेन्न, 'अलोऽन्त्यस्य' इति परिभाषया एजन्तस्य धातोरन्त्यस्यालो वान्तादेश इत्यर्थेन तत्रान्त्यस्याल एच एव सम्भवेन द्वितीयस्य एचः फलितार्थत्वात्।

नचैवमपि वान्तादेशस्यानेकाल्त्वेन 'अनेकाल्शित्' इति परिभाषया 'अलोऽन्त्यस्य' इत्यस्या बाधेन एजन्तधातोर्वान्तादेशापत्तिरिति वाच्यम्, एजन्तस्य धातोर्निर्दिश्यमानस्य स्थाने वान्तादेश इत्यर्थेन निर्दिश्यमाने एव च यि प्रत्यये इत्यस्यान्वयेन प्रकृते अन्त्यस्य एच एव निर्दिश्यमानत्वेन सर्वदोषवारणात्। नन्वेवमपि नियमस्य यकि एव फलदर्शनेन वान्तो यि इत्यस्य बाधवात् 'न यकि' यकि परे वान्तादेशो न इत्येवोच्यतामिति चेन्न, निषेधकतया भूधातोर्विचि गुणे भोशब्दात् 'तत्र साधुः' ( ४-४-९८ ) इति यति 'भोयम्' इति यथाश्रुतन्यासे भवति, ओकारस्य विच्प्रत्ययनिमित्तकत्वेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावात् 'न यकि' इत्यस्यात्राप्रवृत्त्या वान्तादेशापत्तेः। एवम् जनानवतीति जनौः। जनपूर्वकादवधातोः क्विपि 'ज्वरत्वर' ( ६-४-२० ) इत्यादिना उपधावकारयोरूठि 'एत्येधत्यूठ्सु' ( ६-१-८९ ) इति वृद्धौ जनौशब्दात् 'तत्र साधुः' इति यति 'जनौयम्' इत्यत्र 'न यकि' इति न्यासे वान्तादेशापत्तिः।

क्षय्यजय्यौ शक्यार्थे । [ ६-१-८१ ]

यान्तादेशनिपातनार्थमिदम् । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । 'शक्यार्थे' किम् ? क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः ।

क्रय्यस्तदर्थे । [ ६-१-८२ ]

---

नच 'धातोरुच्यमानं कार्य्यं तत्प्रत्यये भवति' अत एव 'दाण्डिनायन' ( ६-४-१७४ ) इति सूत्रे भ्रूणघ्नो भाव इत्यर्थे भ्रूणहन्शब्दात् ष्यञि 'भ्रौणहत्यम्' इत्यत्र 'हनस्तोऽचिण्णलोः' ( ७-३-३२ ) इत्यनेन ष्यञो धातुविहितप्रत्ययत्वाभावेन हनो नकारस्य तकारादेशाप्राप्त्या तकारादेशनिपातनं संगच्छते । अन्यथा 'हनस्त' इति सूत्रेणैव सिद्धे तादेशनिपातनं व्यर्थमेव स्यात् । तथा च 'धातोस्तन्निमित्तस्य' इत्यस्यापि धातुविहितप्रत्यये एव प्रवृत्त्या उक्तस्थले 'भोयम्', 'जनौयम्', इत्यादेर्नियमशास्त्रविषयत्वाभावेन वान्तादेशस्येष्टतया 'न यकि' इति न्यासः सुवच एवेति चेन्न, 'न भूसुधियोः' ( ६-४-८५ ) इत्यनेन तस्याः परिभाषाया अनित्यत्वस्य, धातुत्वभिन्नधातुवृत्तिधर्मेणोपदाने एव प्रवृत्तेर्वा ज्ञापनेनात्र तदप्रवृत्तेः । अत एव 'धातोस्तन्निमित्तस्य' इत्यत्र एवग्रहणाभावे विपरीतनियमापत्त्या 'शङ्कव्यं दारु, पिचव्यः कार्पासः' इत्यत्र भाष्योक्तं दूषणापादनं संगच्छते । अन्यथा धातुविहितप्रत्ययाभावेन नियमाविषयतया भाष्यमसङ्गतमेव स्यादित्यन्यत्र विस्तरः ।

'क्षय्यजय्यौ शक्यार्थे' इति शक्यार्थे=शक्तिविषयेऽर्थे गम्ये क्षय्यजय्यशब्दौ प्रयोक्तव्यावित्यर्थः । नन्वत्र कस्यचित्संहिताधिकारुर्यस्याप्रतीत्येदमसङ्गतमत आह—यान्तादेशेति—क्षि क्षये, जि जये, इत्यतः 'शकि लिङ् च' ( ३-३-१७२ ) इति शक्यार्थे 'अचो यत्' इति यति गुणे क्षे यम्, जे यम्, इत्यत्र क्षेतुम्=नाशयितुम् जेतुं वशीकर्तुं पराजेतुम् वा शक्यमित्यर्थे एकारस्य अयादेशो निपात्यते=अन्यथा प्राप्तस्य स्वरूपतोऽन्यथोच्चारणं पाणिन्यादीनाम् । क्षेप् हिंसायाम्, क्षै क्षये, इत्यनयोस्तु न निपातनम्, प्रसिद्धत्वेन 'क्षिज्योरेव एचः' इति वान्तसूत्रभाष्येण च क्षि क्षये, जि जये, इत्यनयोरेव ग्रहणात् । शक्यार्थे किमिति—शक्यार्थे इत्यस्य किं प्रयोजनमिति प्रश्नः । क्षेतुं जेतुं वा योग्यम् इत्यर्थे 'अर्हे कृत्यतृचश्च' ( ३-३-१६९ ) इति योग्येऽर्थे कर्मणि यति क्षेयम्, जेयम्, इत्येव, न तु यान्तादेशः, शक्यार्थाभावात् ।

'क्रय्यस्तदर्थे' इति इदमपि यान्तादेशनिपातनार्थम् । 'डुक्रीञ् द्रव्यविनिमये' इत्यतः कर्मणि यति गुणे यान्तादेशो निपात्यते । तदर्थं इति—यद्यपि तच्छब्देन प्राधान्यात् क्रयणकर्मैव ग्राह्यम्, तथाऽपि यदि स एवार्थस्तदर्थं इति कर्मधारयस्तदा 'क्रय्यशब्दः स्वार्थे वर्तते' इत्यर्थस्तदा स्वार्थे वर्तमानत्वस्य स्वतःसिद्धतया तदर्थग्रहणस्य वैयर्थ्यम् । यदि सः क्रयणकर्मीभूतोऽर्थो यस्येति बहुव्रीहिस्तदापि तद्वैयर्थ्यम् । यदि सः क्रय्यशब्दोऽर्थो यस्येत्यर्थस्तदापि शब्दे क्रय्यशब्दस्य प्रयोगसम्भवादानर्थक्यमेव । अतः प्रत्ययार्थे गुणीभूतस्यापि क्रयरूपस्य प्रकृत्यर्थस्य तच्छब्देन ग्रहणम् । क्रीअर्थश्च यदा द्रव्यदानपूर्वकं धान्यादिग्रहणरूपस्तदा क्रेत्रा मया क्रय्यमिदमिति प्रयोगे यान्तादेशः । विक्रेत्रा तु क्रेयं धान्यमित्येव प्रयुक्तं स्यात् । यदा तु द्रव्यग्रहणपूर्वकं धान्यादिदानरूपः क्रीअर्थस्तदा विक्रेत्रा क्रय्यं धान्यमिति प्रयुज्यते । मुद्राकार्षापणादिद्रव्येषु क्रीधातुप्रयोगो न भवति, शब्दशक्तिस्वभावात्सुवर्णादिद्रव्यभिन्ने एव क्रयविक्रयव्यवहारस्य लोके दर्शनात् । क्रयणार्थत्वञ्च फलोपधानरूपमेव, न तु स्वरूपयोग्यत्वरूपम्, तादृशक्रयणार्थत्वस्य वस्तुमात्रे सत्त्वेन 'तदर्थे' इत्यस्य वैयर्थ्यापत्तेः, 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायात् । अन्ये तु मया सुवर्णं क्रेतव्यम्, रजतं क्रेतव्यमिति व्यवहारस्य दर्शनाद् द्रव्येऽपि 'क्रय्यम्' इति प्रयोगो भवत्येव । एवञ्च यत्र आपणे क्रेतुं विक्रेतुं वा किञ्चिद् वस्तु सूच्यते तत्र क्रय्यशब्देन व्यवहारः । यत्र तु मनोविनोदाय गृहादिशोभायै वा किञ्चिद् वस्तु स्थाप्यते तत्र फलोपधानरूपक्रयणादेरसत्त्वात् क्रेयशब्देनैव व्यवहारः ।

तस्मै प्रकृत्यर्थायेदं तदर्थम्। क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम्। क्रेयमन्यत्। क्रयणार्हमित्यर्थः।

लोपः शाकल्यस्य [ ८-३-१६ ]

अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे।

---

तस्मै = यत्प्रत्ययप्रकृतिभूतक्रीअर्थाय इदम् क्रय्यम्। तदाह—क्रेतार इति। अन्यदिति—गृहादौ भोजनाद्यर्थम्, शोभार्थं वा स्थापितं द्रव्यं क्रेयम्।

'लोपः शाकल्यस्य' इति। ( ८-३-१६ ) हरे एहि, विष्णो इह, श्रियै उद्यतः, गुरौ उत्कः, एषु क्रमेण अय्, अव्, आय्, आव् आदेशेषु कृतेषु यकारवकारयोर्विकल्पेन लोपविधानाय आह—

लोप इति—अत्र 'भो भगो अघो अपूर्वस्य' इति,'अशि' इति चानुवर्तते,'भोभगोऽघोऽपूर्वस्य' इत्यस्य 'हलि सर्वेषाम्' इत्यत्रानुवृत्तेरावश्यकत्वात्। न च 'हलि सर्वेषाम्'इत्यत्र भो इत्यादेः, अपूर्वस्य इत्यस्य चाननुवृत्तेः न दोष इति वाच्यम्, इश्च उश्च यू तयोरर्थो य्वर्थं इत्यत्र यकारलोपापत्तेः। न च स्थानिवत्त्वेन हल्परत्वाभावः,'पूर्वत्रासिद्धीये' इति तन्निषेधात्। किञ्च 'व्योर्लघु' इत्यत्र 'गौर्यत्र' इत्यत्र लघुप्रयत्नवारणाय 'एरर्थः यर्थः', 'शम्भो यर्थः' इत्यादौ 'ओतो गार्ग्यस्य' इत्यस्याप्रवृत्तये च सम्पूर्णस्य भो भगोऽघोऽपूर्वस्यानुवृत्तेश्च लोपः शाकल्यस्येत्यत्राप्यनुवृत्तिरावश्यकी, अन्यथा मण्डूकानुवृत्तिः स्यात्। न च उक्ते 'शम्भो यर्थः' इति लक्ष्ये 'ओतो गार्ग्यस्य' इत्यस्य प्रवृत्तिरिष्टैवेति वाच्यम्, 'ओतो गार्ग्यस्य' इति भाष्ये 'किमर्थमिदमुच्यते ? न लोपः शाकल्यस्येत्येव सिद्धम्, ओकारात् लोपवचनं नित्यार्थम्' इत्युक्तिविरोधापत्तेः। ओत इत्यस्य विधानसामर्थ्यादेव नित्यत्वस्य वाच्यतया 'शम्भो यर्थः' इत्यत्र 'लोपः शाकल्यस्य' इत्यस्याप्राप्त्या तदर्थम् 'ओतः' इत्यस्य चारितार्थ्येन भाष्योक्तनित्यत्वस्यासम्भवात्। तत्र ओकारान्तपूर्वयोः 'ओतो गार्ग्यस्य' इति नित्यार्थकेन बाध इत्याशयेनाह—अवर्णपूर्वयोरिति। 'व्योर्लघु' इत्यतो व्योरित्यप्यनुवर्तते। तत्र वर्णसमाम्नाये यकारस्य प्राथम्येऽपि सूत्रे 'व्वोः' यकारस्य वलि लोपापत्तेः। वृत्तौ वर्णसमाम्नायक्रमेणाह—यवयोरिति। 'व्योः' इति विशेष्यस्य द्विवचनान्ततया अपूर्वस्येति वचनविपरिणामेन सम्बध्यते। तदाह—अवर्णपूर्वयोरिति, अवर्णपूर्वौ यकारो वकारश्चेत्यर्थः। 'पदस्य' ( ८-१-१६ ) इति 'अपदान्तस्य मूर्द्धन्यः' इत्यतः प्रागधिकाराल्लभ्यते। तथा च व्योरिति विशेषणम्, पदस्येति विशेष्यम्। तदन्तविधौ अवर्णपूर्वो यो यकारो वकारश्च तदन्तं यत्पदं तदन्त्यस्य लोपोऽशि परे शाकल्यस्य मते इत्यर्थः। तत्फलितार्थमाह—अवर्णपूर्वयोरिति। शाकल्यस्य मते लोप इति कथनेन अन्यस्य मते लोपो नेति विकल्पः फलति।

न च शाकल्यवंश्यैरेव लोपानुसरणं विधेयं नान्यैरिति पुरुषभेदेन शाकल्यग्रहणं प्रयोगव्यवस्थापकमेव कुतो न स्यादिति वाच्यम्, 'न वेति विभाषा' इति भाष्ये इत्थमेवाशङ्क्य समाहितम्, 'इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं ( विकल्पेन ) शब्दानां प्रतिपत्तिरिति' आचार्यग्रहणं देशग्रहणञ्चासति बाधके विकल्पार्थमेवेति सिद्धान्तात्।

ननु 'अपूर्वस्य' इति पूर्वसूत्रे रुशब्देन सम्बद्धम्। एवञ्च सन्नियोगशिष्टन्यायेन रुसम्बद्धस्यैवात्रानुवृत्त्या अवर्णपूर्वो यो रुस्तत्स्थाने यो यकारस्तस्यैव लोपः स्यादिति चेन्न, 'ज्ञान एव धर्मः', इति 'स तस्मा आचष्टे' इत्यादिभाष्यप्रयोगाद् यकारे रुस्थानिकत्वस्याऽसम्भवाच्च रोरित्यस्याननुवृत्तेः।

इदं सूत्रं लघुप्रयत्ने न प्रवर्तते, शाकटायनमते लघुप्रयत्नतरविधानेन शाकल्यमते तदभावात्। अवर्णपूर्वयोः किम्–'गौर्यत्र'। पदान्तयोः किम्–'हरये, विष्णवे'।

अशि किम्—वृक्षं वेति, वातीति क्विपि वृक्षवीः, वृक्षवाः, तमाचष्टे इत्यर्थे णिचि टिलोपे विचि णिलोपे वृक्षव् करोति। अत्र लोपो मा भूत्। 'लोपो व्योः' इति लोपस्तु णिलोपटिलोपयोः

'पूर्वत्रासिद्धम्' ( सू० १२ ) इति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः। हर एहि—हरयेहि। विष्णो इह—विष्णविह। श्रियै उद्यतः—श्रियायुद्यतः। गुरौ उत्कः—गुरावुत्कः। 'कानि सन्ति' 'कौ स्तः' इत्यत्रास्तेरल्लोपस्य स्थानिवद्भावेन यणावादेशौ प्राप्तौ 'न पदान्त' ( सू० ५१ ) इति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः।

---

स्थानिवत्त्वात्। लोपः शाकल्यस्य इति लोपे तु न स्थानिवत्, पूर्वत्रासिद्धीये तन्निषेधात्। न च न पदान्तेति निषेधः, लोपस्याभावरूपत्वेन पदचरमावयवत्वाभावात्।

नागेशास्तु 'न पदान्ता हलोऽणः सन्ति' इति लण्सूत्रस्थभाष्याद्, 'अशग्रहणमनर्थकमन्यत्राभावात्' इति 'भोभगो' इति सूत्रभाष्याच्च वृक्षवादीनामनभिधानात् अशग्रहणं विफलमिति न कर्तव्यम्। अशग्रहणम् 'हलि सर्वेषाम्' इत्युत्तरार्थमिति भाष्योक्तिस्त्वेकदेशिनः, तत्सूत्रे वग्रहणानुवृत्त्यैव दोषवारणसम्भवादित्याहुः।

अपरे तु 'भो भगो' इति सूत्रे भाष्ये 'वृक्षव् करोति' इत्यस्य कण्ठत एवोक्तत्वेन अनभिधानोक्तिः साहसमात्रम्। 'न पदान्ता हलोऽणः सन्ति' इति भाष्ये च 'कार्यभाजः' इति शेषः, इति कैयटेनैव विस्पष्टमुक्तत्वेन वृक्षवादेरनभिधाने प्रमाणाभावाच्च। 'वृक्षव् करोति' इत्यत्र च 'हलि सर्वेषाम्' इत्यत्राशीत्यनुवृत्त्या लोपाप्रवृत्तौ वकारस्य न कार्यभाक्त्वम्। यद्वा 'न पदान्ता हलोऽणः सन्ति' इत्यस्य दोषसम्पादका इति शेषः। तेन 'हरयिह' 'विष्णविह' इत्यादौ पदान्तहल्रूपाणां सत्त्वेऽपि न क्षतिः। 'वृक्षव् करोति' इत्यत्राशीत्यनुवृत्त्या न लोपरूपदोषसम्पादकत्वमिति स्पष्टमेव भाष्ये उक्तम्। वकारानुवृत्त्यैव लोपवारणसम्भवादिति तु न युक्तम्, द्वन्द्वनिर्दिष्टयोरेकदेशस्यानुवृत्त्यसम्भवादत एव 'अदसो मात्' इत्यत्र एकारानुवृत्त्यर्थं माद्ग्रहणं कृतम्। अन्यथा ईदूदित्येकदेशस्यानुवृत्त्या सिद्धे माद्ग्रहणवैयर्थ्यं स्पष्टमेवेत्याहुः। तेन अवसाने 'अणोऽप्रगृह्यस्य' इति अनुनासिकापत्तिरूपदोषसत्त्वादनभिधानं नान्यत्रेति तत्त्वम्। ननु 'हर एहि' (हे हरे आगच्छेत्यर्थः) इत्यत्र यकारस्य लोपे 'ओमाङोश्च' इति पररूपं स्यात्, आङ्ियोरेकादेशे पूर्वान्तवद्भावेनाङ्परत्वात्। विष्ण इह, श्रिया उद्यतः, गुरा उत्कः, इत्यादौ वकारयकारयोर्लोपे 'आद् गुणः' इति गुणः स्यादिति शङ्कायामाह— पूर्वत्रेति, गुणपररूपरूपयोः यकारवकारलोपयोरसिद्धतया अकारादचोऽभावेन नोक्तसन्धिकार्यम्।

इक्सन्धिमेच्सन्धिञ्च निरूप्योभयत्राशङ्कते—कानीति— अत्र यद्यपि, तथापि, इति पूरणीयम्। तथा च 'यद्यपि यणावादेशौ प्राप्तौ तथापि न स्तः' इत्येवं योजनीयम्। स्थानिवद्भावेति—अदादिकाद्यसधातोर्लटि झौ 'सन्ति' इति, तसि 'स्तः' इति रूपम्। उभयत्रापि 'श्नसोरल्लोपः' इत्यल्लोपः। तस्य स्थानिवद्भावे यणावोः प्राप्तिः। नच प्रकृते यणावोः स्थानिघटकाकारनिमित्तकत्वेन अनल्विधाविति निषेधात्स्थानिवद्भावाप्राप्तिः, अल्विध्यर्थकेन 'अचः परस्मिन्' इत्यनेन ङ्किति परे विधीयमानस्याल्लोपस्य परनिमित्तकतया स्थानिवद्भावप्राप्तेः।

न च पदसंस्कारपक्षे 'कानि' इति पदस्य 'सन्ति' इत्यस्य च पृथक् संस्कारः। तदनन्तरमुभयोर्योग इति इकारस्य औकारस्य च स्थानीभूतादसोऽकारात्पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्राप्तिरिति वाच्यम्, वाक्यसंस्कारपक्षे स्थानीभूतादचः पूर्वत्वेन दृष्टत्वसत्त्वात्। तत्पक्षे वाक्यं क्रियस्य पदानि संस्क्रियन्ते। तथा च येन क्रमेण पदश्रवणं तेन क्रमेण संस्कार इति प्रथमोपस्थितिकत्वेनान्तरङ्गत्वात् कानि इत्यस्य सिद्धिः। एवञ्च 'कानि अस् झि' इत्येवं विन्यासेन साधने इकारौकारयोः स्थानीभूतादचः पूर्वत्वमक्षतमेव। न च वाक्यसंस्कारपक्षेऽपि साध्यत्वेन पूर्वं क्रिया बुद्धिविषयो भवति। ततः क्रियासाधनतया कारकाणि बुद्धिमारोहन्ति, इति येन क्रमेण बुद्धिविषयता तेन क्रमेणैव साधनम्। इत्यञ्च 'सन्ति' इत्यस्यैव प्रथमोपस्थितिकत्वरूपमन्तरङ्गत्वमतः स्थानीभूतादचः पूर्वत्वेन दृष्टत्वाभावो दुर्वच एवेति वाच्यम्, 'नह्येच्छा नियन्तुं शक्यते' इति न्यायेन 'कानि' इत्यस्यैव यत्र पूर्वं मनोनिवेशस्तत्र ततः 'सन्ति' इत्यस्य। तत्र यणादीनामन्तरङ्गत्वेन पूर्वं सिद्धत्वेन स्थानीभूतादचः

एकः पूर्वपरयोः [ ६-१-८४ ]

इत्यधिकृत्य ।

आद् गुणः [ ६-१-८७ ]

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्संहितायाम् । उपेन्द्रः । रमेशः । गङ्गोदकम् ।

---

पूर्वत्वस्य सुलभत्वात् । अत्र यणावादेशौ न भवत इत्यत्र हेतुमाह—न पदान्तेति—पदान्तेकारौकारयोः स्थाने भवतो यकारस्य आवादेशस्य च पदचरमावयवतया तयोः कर्तव्ययोः परनिमित्तकस्य अल्लोपस्य स्थानिवत्त्वनिषेधादित्यर्थः ।

न च यणावौ यदा स्यातां तदा इकारौकारवृत्तिपदचरमावयवत्वं स्थानिवत्सूत्रेण यणि आवि च स्यादिति 'न पदान्त' सूत्रप्रवृत्तिकाले पदचरमावयवकर्तव्यत्वाभावेन निषेधाप्रवृत्तिरिति वाच्यम्, निषेधसामर्थ्यात्साम्भावनिकपदचरमावयवत्वस्य ग्रहणेनादोषात् । अस्ति चात्र सम्भावना–'यदि यणावौ स्यातां तदा स्थानिवत्त्वेन पदचरमावयवौ स्याताम्' इति ।

न चैकेन पक्षेण लक्ष्ये सिद्धे पक्षान्तरेण दोषदानमयुक्तमिति वाच्यम्, पक्षभेदेन लक्ष्यभेदो मा भूदित्युभयपक्षे फलैक्यप्रदर्शनाय तथोक्तेः ।

पूर्वस्याचः सन्धिकार्यमुक्त्वा पूर्वपरयोरचोः सन्धिकार्यमाह—एक इति । 'एकः पूर्वपरयोः' इत्यत्र 'अल्पाक्षरं पूर्वम्' इति 'परपूर्वयोः' इति वक्तव्ये पूर्वपरयोरित्युक्तिः पूर्वनिपातप्रकरणस्यानित्यत्वद्योतनाय ।

पूर्वस्य परस्य च स्थाने गुणादिद्वयं मा भूदित्येकग्रहणम् । यथा–'अनयोः पुत्रयोः कटं कुरु' इत्युक्तौ पुत्रद्वयसम्बन्ध्येककटकरणप्रतीतिस्तथा 'पूर्वपरयोर्गुणः' इत्याद्युक्तावपि 'गुणः' इत्यत्र स्वार्थैकत्वस्य विवक्षया पूर्वपरस्थानिकैक एव गुणः स्यादित्येकग्रहणं न कर्तव्यम्' इति भाष्ये उक्तम् । न च 'सूत्रे लिङ्गवचनमतन्त्रम्' इतीदमसङ्गतमिति वाच्यम्, उद्देश्यदले एव तयोरविवक्षितत्वात् । न च 'पूर्वपरयोः' इत्यपि व्यर्थम्, आदिति पञ्चमी अचीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति । तस्मादित्युत्तरस्येति । तथाऽचीति सप्तमी आदिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्येति' इति भाष्यादिति वाच्यम्, 'एवं तर्हि सिद्धे सति यत् पूर्वपरग्रहणं करोति तज्ज्ञापयत्याचार्यः–'न उभे युगपत्प्रकल्पिके भवत इति' इति भाष्येणैव समाधानात् । तेन 'आने मुक्, ईदासः' इत्यादौ न युगपत्प्रकल्पकत्वम् ।

इत्यधिकृत्येति—उत्तरोत्तरसम्बन्धोऽधिकारः । अधिकारसूत्रमिदम् । अधिकारसूत्रत्वञ्च स्वदेशे लक्ष्यधर्मिकसाधुत्वप्रकारकबोधाजनकत्वे सति उत्तरोत्तरसूत्रानुवृत्त्या लक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वम् । ननु पूर्वोत्तरक्रिययोः सत्त्वे पूर्वकालिकक्रियार्थकधातोः क्त्वा भवति । उत्तरक्रियाया अभावाद् अधिकृत्येत्यनुपपन्नमिति चेन्न, एतत्प्रोत्तरसूत्रैकवाक्यतया एकादेशसन्धिमाह पाणिनिरित्यध्याहृतक्रियामादाय क्त्वाप्रत्ययोपपत्तेः ।

'आद् गुणः' इति, 'आत्' इति पञ्चम्यन्तम्, न तु तपरः प्रथमान्तः, अनन्वयात्, 'आदित्येषा पञ्चमी अचीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति' इति भाष्याच्च ।

'एकः पूर्वपरयोः' इति, 'अचि' इति चानुवर्तते । तदाह—अवर्णादचीत्यादिति । अत्र 'पूर्वपरयोः' इति इतरेतरयोगद्वन्द्वनिर्देशेन पूर्वस्य परस्य च प्रत्येकस्यापि स्थानित्वम् । अन्यथा समाहारेणैव निर्दिशेत् । उपेन्द्र इति—इन्द्रमुपगत इत्यर्थे 'अत्यादयः' इति द्वितीयातत्पुरुषः । उपेन्द्रो विष्णुः, स हि कश्यपाद् अदितौ इन्द्रानुजतया सञ्जातः । 'उप इन्द्रः' इत्यत्र अकारेकारयोः कण्ठतालुस्थानजन्यतया आन्तरतम्यात् कण्ठतालुजन्य एकार एव गुणो न त्वकारः । 'आद्' इत्यत्र 'अ' इत्यष्टादशाकाराणां संज्ञा । तथा च अपदेन दीर्घादीनामपि बोधात् । तथा अच्पदवाच्या अकारादिचान्ता वर्णाः । तद्वाच्या अकारादिसवर्णा इत्यतः पूर्वपरयोर्दीर्घयोरुदाहरणमाह—रमेश इति—रमायाः = लक्ष्म्या

## उरण् रपरः [ १-१-५१ ]

'ऋ इति त्रिंशतः संज्ञा' इत्युक्तम्, तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्त्तते।

---

ईशः पतिर्विष्णुः। पूर्ववदान्तरतम्यादेकारः, गङ्गाया उदकम् 'गङ्गोदकम्'=गङ्गाजलम् इत्यत्रापि पूर्व-परयोः स्थाने ओकारः। अत्र स्थानिनश्चतुर्मात्रकत्वेऽपि द्विमात्रकावेव एकारौ, 'अदेङ्गुणः' इत्यत्र तपरकरणेन द्विमात्रकयोरेव एकारौकारयोर्गुणत्वात्। कृष्णस्य=वासुदेवस्य ऋद्धिः=वृद्धिः। 'कृषे र्वर्णे' (उ. ३ पा. १ सू.) इति नकि कृष्ण इति। 'ऋधु वृद्धौ' इत्यतः क्तिनि ऋद्धिरिति। 'कृष्ण ऋद्धिः' इत्यत्र 'आद् गुणः' इति प्राप्नोति। अत्र अकार ऋकारश्चेति द्वौ स्थानिनौ। तयोः स्थाने अकार एकार ओकारश्चेति त्रयो गुणाः प्राप्नुवन्ति। तत्र अकारेण स्थानिना कण्ठस्थानजन्यत्वेन साम्यन्तु त्रयाणामपि गुणानाम् इत्यविशेषात् त्रयो गुणाः प्राप्नुवन्ति। ऋकारेण स्थानिना तु मूर्द्धस्थानजन्यत्वेन केषुचिदपि गुणेषु साम्यं नास्ति इति विधानसामर्थ्यात्सर्वे गुणाः प्राप्नुवन्ति। एवम् लृकारेण स्थानिनाऽपि कस्यापि गुणस्य साम्यं नास्ति, गुणेषु दन्तस्थानजन्यत्वाभावात्। एवञ्च अकारऋकारयोः, अकार-लृकारयोश्च कतमो गुणः स्यादित्याकाङ्क्षायामाह—'उरण् रपरः' इति।

इत्युक्तमिति—'अणुदित्सवर्णस्य चाप्रत्ययः' 'अण्पदबोध्यो वर्णः स्वसवर्णस्य संज्ञा' इत्यस्योदाहरणरूपेण 'ऋकार-स्त्रिंशतः संज्ञा' इत्यणुदित्सूत्रे उक्तमित्यर्थः। सूत्रे 'उः' इति ऋशब्दस्य षष्ठ्येकवचनम्। त्रिंशतः संज्ञात्वात् ऋपदेन अष्टादशानामृकाराणाम्, द्वादशानाम् लृकाराणाञ्चोपस्थितिः। अनुवादेऽपि परिभाषा प्रवर्तते। अत एव 'उदात्तस्वरितयोर्यणः' इत्यत्र न दोषः। 'षष्ठी स्थानेयोगा' इति परिभाषया 'उः' इत्यस्य अनिर्धारितषष्ठ्यर्थतया 'स्थाने' इत्युपतिष्ठते। यद्वा एकदेशे स्वरितत्वात् स्थाने इत्यनुवर्तते। 'द्वितीयं स्थानेग्रहणमनुवर्तते' इति भाष्यात् 'स्थानेऽन्तरतमः' इत्यतोऽपि स्थाने इत्यनुवर्तते। तच्च लक्षणया 'प्रसङ्गकाले' इत्यर्थकम्। तथाच ऋकारस्य लृकारस्य च स्थाने विधीयमानोऽण् (अ, इ, उ,) प्रसङ्गकाले रपरो भवति। प्रसङ्गः=प्राप्तिः। सा च ऋकारस्य अणश्च स्थान्यादेशभाव-सम्बन्धेन शास्त्रजन्यबोधविषयता। एवञ्च ऋकारस्थाने अण्विधायकशास्त्रजन्यबोधकाले एव अण् रपरः स्यादिति। 'कृष्ण ऋद्धिः' इत्यत्र कण्ठमूर्द्धस्थानजन्ययो रकार-ऋकारयोः स्थाने कण्ठमूर्द्धस्थान-जन्यः अर् एव गुणः स्यात्, न एकार ओकारो वा। न च 'अर्' इत्यस्यानेकाल्त्वात्सर्वादेशप्रसङ्गः, पूर्वपरवर्णयोरेव सर्वस्थानित्वेनादोषात्, न च 'ऋत इद् धातोः' इत्यादौ तदन्तस्थले सर्वादेशापत्तिः, निर्दिश्यमानपरिभाषया ऋकाररूपनिर्दिश्यमानस्यैवादेशात्। यद्वा यदा ऋकारस्थानेऽण् तदा रपरः यदा रपरस्तदा अनेकाल्त्वात्सर्वादेशः केन स्यात् आदेशस्तु जात इति जातसंस्कारविरोधात्, ऋकारस्थानिकत्वमुपजीव्य जायमानो रपरः न ऋकारस्थानिकत्वं विहन्यादित्युपजीव्यविरोधाच्च।

यद्वा 'आद् गुणः' इत्यनेन अवर्णादिकि परे पूर्वपरयोर्गुणो विधीयते, एचि 'वृद्धिरेचि' इत्यनेन अकारादकारे दीर्घेण च बाधात्। तथा च इकारे उकारे च परे आन्तरतम्याद् एकार ओकारश्च चरितार्थः। अकाराद् ऋकारे परे, लृकारे वा परे ऋकारलृकारयोस्तुल्यः कोऽपि गुणो नास्ति। अकार-रूपगुणस्य कश्चन स्थानी नास्ति इत्यान्तरतम्याभाव एव उभयोः सादृश्यम् इति मत्वा ऋकारलृकारयो-रकार एव गुणः स्यात्। तदुक्तं भाष्ये—'अनान्तर्य्यमेवानयोरान्तर्यम्। 'नष्टाश्वदग्धरथवत्' इति। यद्वा साम्भावनिकात् कण्ठमूर्द्धस्थानत्वेन आन्तरतम्यादकारो गुणः। यदि अकारऋकारयोः स्थाने अकारो गुणः स्यात्तदा अण्त्वाद् 'अ' इति गुणो रपरत्वेन स्थानिसदृशः स्यात्। एकार ओकारो वा नाण्, अणुदित्सूत्रं विहाय सर्वत्र पूर्वणकारेणैवाणुप्रत्याहारात् प्रशास्तृणामिति निर्देशादेः इति नास्ति साम्भावनिकं तुल्यत्वं तयोरिति न त्वयवादेशौ अकारऋकारयोः। रपरः सन्नेवेति—अत्र 'र' इति 'हयवरट्' इति रेफादारभ्य लण्सूत्रस्थाकारेण प्रत्याहारः। तथा च रः=रकारो लकारो वा परः अपरत्वविशिष्टोऽवयवो यस्याणः स रपरोऽण्। अत एव 'ऋवर्णस्यान्तर्य्यतो रेफवतो रेफवानकार

तत्रान्तरतम्यात् 'कृष्णर्द्धिः' इत्यत्र अर्। 'तवल्कारः' इत्यत्र अल्। अचो रहाभ्याम् (सू ५६) इति पक्षे द्वित्वम्।

झरो झरि सवर्णे [ ८-४-६५ ]

हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि। द्वित्वाभावे लोपे सति एकधम्।

---

एवान्तरतमो भवति, इति भाष्यं संगच्छते। यदागमा इति न्यायेन रेफविशिष्ट एव गुणत्वमिति बालमेताः। अकारावयवत्वं रेफे आरोपितं न तु वास्तविकम्, वर्णस्य वर्णान्तरावयवत्वासम्भवात्।

केचित्तु रः परो यस्मादिति पञ्चम्यर्थेऽवधिवाचकपरशब्दस्य समासः। गुणत्वं तु अकारमात्रे। रेफस्यावयवत्वेन सावर्ण्यमादाय स्थान्यादेशभावः। वस्तुतस्तु विशिष्ट एव गुणत्वम्। अन्यथा 'निनयिथ' इत्यत्र 'थलि च सेटि' ( ६-४-१२१ ) इत्यनेन एत्वाभ्यासलोपापत्तिः। न च 'न शसदद' इति निषेधः, 'निने इ थ' इत्यत्र एकारे गुणभूतत्वस्य सत्त्वेऽपि अयादेशे गुणभूतत्वाभावात्। न च स्थानिवत्त्वेन गुणभूतत्वम्, गुणभूतत्वस्य वर्णमात्रवृत्तितया अनल्विधाविति निषेधात्। विशिष्टे गुणत्वे तु गुणभूतत्वस्याल्वृत्तितया अल्मात्रवृत्तित्वाभावेन निषेधाप्रवृत्त्या स्थानिवत्त्वेन अयादेशस्यापि गुणभूतत्वात् 'न शस' इति निषेधः सिध्यति। 'न शस' इत्यत्र गुणग्रहणस्य वैयर्थ्यं तु न, 'शशरुः' इत्यादौ स्थानिवत्त्वं विनैव गुणग्रहणस्य चारितार्थ्यात्।

यदि तु 'रदाभ्यां निष्ठातो नः' 'रषाभ्यां नो णः' इत्यादाविव 'उरण्' इत्यत्र रेफोत्तरोऽकार उच्चारणार्थ एव, 'अण्' सूत्रेऽकारस्येत्त्वाभावेन रप्रत्याहारो नास्तीत्युच्यते तदा 'लपरत्वं वक्ष्यामि' इति भाष्यप्रामाण्यात् 'उरण् रपरः' इत्यत्र 'लपरः' इति वक्तव्यम्। ऌकारस्थाने योऽण् स प्रसङ्गकाले रपरो लपरश्च भवतीत्यर्थः। 'अल्' इत्यस्य स्थाने कण्ठदन्तस्थानजन्योऽल्लेवेति 'तवल्कारः' इत्यस्य सिद्धिः। न च लाघवात् 'उरणोरक्' 'लंक्' इति सूत्रमस्तु। ऋऌवर्णयोरण् तस्य रगागमो लगागमश्च भवत इत्यर्थेन सिद्धिरिति वाच्यम्, 'यंयम्यते' इत्याद्यर्थम् 'दीर्घोऽकितः' इत्यस्य किद्रहितस्य अभ्यासस्य दीर्घ इत्यर्थेन 'वावृत्यते' इत्यादौ दीर्घानापत्तेः। यदि 'वावृत्यते' इत्यादौ कितो रेफस्य 'हलादिः शेषः' इत्यनेन लोपात् अभ्यासस्य किद्रहितत्वेन दीर्घे बाधकाभाव इत्युच्यते, 'उरणोरम्' इति वा न्यस्यते तदा न दोषः। 'उरण् रपरः' इत्यकृत्वा 'अरल्देङ् गुणः' 'वृद्धिरारलादैच्' इति न्यासे, 'आपृच्छपोरीत्' 'ऋधामिर्'। इत्यादिन्यासे च गौरवापत्त्या यथाश्रुतन्यास एव लाघवात्।

तत्रेति—अर्, अल् इत्यनयोर्मध्ये इत्यर्थः। आन्तरम्यादिति कण्ठमूर्द्धकण्ठदन्तजन्यत्वादिरूपसावर्ण्यादित्यर्थः। द्वित्वमिति 'कृष्णर्द्धिः' इति ऋध् धातोः क्तिनि 'झषस्तथोर्धः' ( ८-२-४० ) इति धत्वे पूर्वधस्य जश्त्वे सिध्यति। तत्र प्रक्रियादशायां धकारद्वयं स्वाभाविकम्। द्वित्वे धकारत्रयम्। तत्र लोपार्थं सूत्रमाह—

'झरो झरि सवर्णे'—अत्र 'झयो होऽन्यतरस्याम्' इत्यतोऽन्यतरस्यामिति, 'हलो यमां यमि लोपः' इत्यतः 'हलः' इति, 'लोपः' इति चानुवर्तते। तदाह—हलः परस्येत्यादि। अत्र विकल्पानुवृत्तौ मानञ्च 'अणुदित्' सूत्रे 'अच्' इत्येव वक्तव्येऽणित्यस्य 'सय्यँन्ता' इत्यादौ अनुस्वारस्यानुनासिके यँकारे परसवर्णे यर्ग्रहणेन ग्रहणात् 'अनचि च' इति द्वित्वे यकारत्रयघटितं रूपं फलमुक्तं भाष्ये। 'हलो यमाम्' इति लोपो यदि नित्यस्तदा द्वित्वस्य न फलत्वम्, यद्वयघटितस्य द्वित्वं विनैव सिद्धेः। लोपस्य वैकल्पिकत्वे तु पक्षे यत्रयघटितं वर्णा लभ्यते। एवं 'हलो यमाम्' इत्यस्य वैकल्पिकत्वे सिद्धे 'हर्य्यनुभवः' इत्यादौ लोपाभावे 'अचो रहाभ्याम्' इत्यस्य चारितार्थ्येन 'झरो झरि' इत्यस्य नित्यत्वे 'शरोऽचि' इति व्यर्थं सत् तस्यापि वैकल्पिकत्वे ज्ञापकम्।

द्वित्वाभाव इति—'कृष्णर्धिः' इत्यत्र रेफोत्तरधकारस्य 'अचो रहाभ्याम्' इति द्वित्वाभावे 'झरो झरि' इति हल्रूपात् रेफात्परस्य धातोर्धकारस्य लोपे सति एकधं रूपम् 'कृष्णर्धिः' इति।

असति लोपे द्वित्वलोपयोर्वा द्विधम्। सति द्वित्वे लोपे चासति त्रिधम्।

कृष्णर्धिः, कृष्णर्द्धिः, कृष्णर्द्धिः। 'यण इति पञ्चमी मय इति षष्ठी' इति पक्षे ककारस्य द्वित्वम्। लस्य तु 'अनचि च' (सू ४८) इति। तेन 'तवल्कारः' इत्यत्र रूपचतुष्टयम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्॥

– वृद्धिरेचि [ ६-१-८८ ]

आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्।

---

असति लोप इति—द्वित्वाभावे सतीति शेषः, लोपस्य, द्वित्वस्य चाभावे स्वाभाविकं द्विधमित्यर्थः। द्वित्वलोपयोरिति—द्वित्वे, लोपे च सतीत्यर्थः। सति द्वित्वे लोपे चासतीति—स्वाभाविकं द्विधम्। लोपे चाकृते एको धातुधकारः, द्वितीयः प्रत्ययधकारः, तृतीये द्वित्वनिष्पन्नो धकार इति त्रिधमित्यर्थः। क्रमेण तत्स्वरूपमाह—'कृष्णर्धिः' इत्यादि। यद्यपि द्विधकारके प्रथमस्य, त्रिधकारके आद्ययोर्द्वयोर्धकारयोर्जश्त्वेन दकारे द्विधमित्यसङ्गतम्, तथापि प्रक्रियादशां भूतपूर्वगतिं वा आदाय द्विधमित्यादिव्यवहारः। तव लिखितो लकार इत्यर्थे लेख्यलेखकभावसम्बन्धे षष्ठी। लृकारशब्दं विहाय अकारात्परलृरूपाच् नास्तीति लृकारे एवोदाहरणम्। तवलृकार इत्यवस्थायां यणः परस्य मयो द्वे वा स्त इत्यर्थे लृरूपाद्यणः परस्य कस्य द्वित्वे 'अनचि च' इति लस्य द्वित्वे रूपचतुष्टयम्। तदाह—द्वित्वं लस्यैवेति—लस्य द्वित्वे कस्य द्वित्वाभावे च द्विलकारकमेकककारात्मकम् 'तवल्ल्कारः' इति। कस्य द्वित्वे लस्य द्वित्वाभावे च द्विककारकमेकलकारकं द्वितीयम् 'तवल्क्कारः' इति। उभयोर्लकयोर्द्वित्वाभावे एकककारकमेकलकारकं तृतीयम्—'तवल्कारः' इति। लकारककारयोरुभयोर्द्वित्वे 'तवल्ल्क्कारः' इति रूपचतुष्टयं बोध्यमित्यर्थः। तदेवम्—लस्यैवेति—लस्य द्वित्वे कस्य द्वित्वाभावे एकककारम्, कस्य द्वित्वे लस्य द्वित्वाभावे च द्वितीयम्। नोभयोरिति उभयोर्लकारककारयोर्न द्वित्वम् इति तृतीयम्। उभयोरपि लकारककारयोर्द्वित्वाभावे चतुर्थम्। एवं रूपचतुष्टयं बोध्यमित्यर्थः। आदिना 'ममल्कारादेः' संग्रहः।

हलः किम् 'प्रत्तम्' अत्र चत्वारस्तकाराः। 'प्रदा त' इत्यत्र 'अच उपसर्गात्' (७-४-४७) इत्याकारस्य तकारः। 'खरि च' इति दकारस्य तकारः। 'अनचि च' इति प्रथमतकारस्य द्वित्वेन चतुर्थस्तकारः। अत्र द्वितीयतृतीययोस्तकारयोर्लोपो भवति। हल इत्यस्याभावे प्रथमतकारस्यापि लोपः स्यात्तद्वारणार्थं हल इति।

झरः किम् 'शार्ङ्गम्' इति। अत्र रेफात्परस्य ङकारस्य लोपवारणाय झर इति। झरि किम् 'प्रियपञ्च्नाम्' इति। अत्र ञकारात्परस्य चकारस्य नकारे सवर्णे परे लोपो मा भूदिति झरि इति। सवर्णे इति किम् 'तर्प्ता' इति। अत्र पलोपवारणाय सवर्णे इति। न च सवर्णग्रहणाभावे यथासंख्यमन्वये नात्र दोष इति वाच्यम्, सवर्णग्रहणसामर्थ्येन यथासंख्यमन्वयाभावस्य ज्ञापनात्। तेन 'शिण्ढि' इत्यत्र ढकारे परे भाष्योक्तो डकारलोपः सिध्यति। अत एव 'हलो यमाम्' 'झरो झरि' इत्युभयोः स्थाने 'हलो यरां यरि' इत्येकमेव न सूत्रितम्, यथासंख्ये 'शिण्ढि' इत्यसिद्धयापत्तेः, तदभावे 'माहात्म्यम्' इत्यादावपि लोपापत्तेः।

'वृद्धिरेचि' इति (६-१-८८) 'आत्' इत्यनुवर्तते, 'अ' इत्यष्टादशानां संज्ञा, ततः पञ्चमी। तदाह—अवर्णादिति। एकादेश इति—अवर्णैचोः स्थाने एका वृद्धिरित्यर्थः। अपवाद इति—अपोद्यते=दूरीक्रियते उत्सर्गशास्त्रमनेनेति 'अपवादः' 'अकर्तरि च' (३-३-१९) इति करणे घञ्। निरवकाशत्वेन बाधके अपवादशब्दो रूढ इति भावः। निरवकाशश्च उत्सर्गशास्त्रप्राप्त्यविषयो यस्य लक्ष्यं नास्ति स एव। कृष्णैकत्वमिति। अत्र कृष्ण इति पृथक् पदं सम्बोधनान्तम्।

गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ।

एत्येधत्यूठ्सु । [ ६-१-८९ ]

---

न च षष्ठीसमासः, 'पूरणगुण' इति निषेधात् । न च 'दूराद्धूते च' ( ८-२-८४ ) इति कृष्णाकारस्य प्लुतत्वात्प्रकृतिभावः, 'कृष्ण आगच्छ' इति वाक्यान्तस्य प्रयोगेण वाक्यघटितत्वाभावेन प्लुतत्वाभावात् प्रकृतिभावाप्राप्तेः । 'प्राचाम्' इति योगविभागेन प्लुतस्य वैकल्पिकत्वेन प्रकृतिभावाप्राप्तेश्च ।

अन्ये तु 'संज्ञाप्रमाणत्वात्' 'पादपूरणम्' इत्यादिनिर्देशात् 'पूरणगुण' (२-२-११) इति गुणेन पूरणार्थेन च निषेधस्यानित्यत्वज्ञापनेन 'कृष्णैकत्वम्' इत्यत्र षष्ठीसमासेऽपि न दोषः । अत एव 'कुम्भपूरणसम्भवः उत्क्षपक्षः' इत्यादिप्रयोगाः सङ्गच्छन्ते ।

परे तु एकया आनुपूर्व्या यः शब्दः गुणस्य गुणिनश्च वाचकस्तेन गुणवाचकेन, तत्प्रकृतिक-भावप्रत्ययान्तेन च न षष्ठीसमास इत्यर्थः । प्रकृते एकशब्दस्य 'आद्यशतस्संख्याः संख्येये' इति कोशात् गुणिवाचकत्वमेव न तु गुणवाचकत्वमिति तत्प्रकृतिकभावप्रत्ययान्तेनापि एकत्वशब्देन न निषेधः । अत एव 'घटरूपम्' 'पुष्पगन्धः' इत्यादौ न षष्ठीसमासनिषेधः । प्रमाणशब्दोऽपि एकया आनुपूर्व्या न हि गुणे, गुणिनि च वर्तते । अतः 'संज्ञाप्रमाणत्वात्' इत्यत्र समासे बाधका-भावेन न तन्निर्देशस्यानित्यत्वे ज्ञापकत्वम् । न च प्रमाणशब्दो भावे ल्युटा गुणवाचकः, करणे ल्युटा गुणिवाचकश्चेति वाच्यम्, समवायेन स्वरूपेण वा गुणवद्वाचकस्यैव गुणिवाचकशब्देन ग्रहणेन प्रमाकर-णस्य उक्तसम्बन्धेन गुणवत्त्वाभावात् । एवं मन्दशब्दस्य गुणिवाचकत्वमेवेति गुणगुण्युभयवाचक-त्वाभावात् 'बुद्धिमान्द्यम्' इत्यत्र समासनिषेधः । गुरुलघुशब्दयोरपि गुणिमात्रवाचकतया 'अर्थ-गौरवम्' इत्यादेरपि सिद्धौ बाधकाभावः । न च विंशत्यादेः संख्यायां संख्येये च सत्त्वाद् 'गोविंशतिः, ब्राह्मणशतम्' इत्यादौ समासनिषेधः, 'पङ्क्ति' सूत्रे भाष्ये संख्यागतधर्ममात्रवचना विंशत्यादय इति स्वीकारात् । यद्वा ये गुणवचना गुणिवचनाः सन्तः विशेष्यलिङ्गं भजन्ते तेषामेवात्र ग्रहणम् । न च विंशत्यादयो विशेष्यनिघ्ना इति नैषामत्र गुणशब्देन ग्रहणम् इत्यलमतिविस्तरेण । कृष्ण इत्यस्य सम्बोध्यत्वे हे कृष्ण तव एकत्वमस्ति = अद्वितीयोऽसि त्वमिति यावत् । समासे कृष्णस्याद्वितीयतेति स एव फलितार्थः । गङ्गौघ इति—गमधातोर्गनि 'गङ्गा' इति । 'गन् गम्यद्योः' ( ३-१-१२३ ) इति गन् । 'उन्दी क्लेदने' इत्यतः 'उणादयो बहुलम्' इति ओघप्रत्यये टिलोपे गुणे उन्दति = आर्द्री-करोतीति 'ओघ' इति । गङ्गाया ओघः = प्रवाह इत्यर्थः । देवैश्वर्यमिति—पूर्ववत् 'देव' इति सम्बोधनं समासघटको वा । देवैश्वर्यं तत्रास्तु इत्यर्थः । कृष्णौत्कण्ठ्यम् = कृष्णसम्बन्धिनी ममो-त्कण्ठा इत्यर्थः । एषु स्थानिनरद्विमात्रचतुर्मात्रकत्वेऽपि द्विमात्रक एव वृद्ध्यादेशः, 'वृद्धिरादैच्' इत्यत्र तपरकरणेन तादपि परस्तपर इत्यर्थेन द्विमात्रकाणामेव वृद्धिसंज्ञाविधानात् ।

एत्येधत्यूठ्सु इति (६-१-८९) अत्र सौत्रत्वाच् चर्त्वं न । वस्तुतस्तु चर्त्वं भवत्येव, ठकार-पाठस्तु लेखकप्रमादात् । अत्र पूर्वसूत्राद् 'एचि' इत्यनुवर्तते । एतिश्च एधतिश्च ऊठ् चेति एत्येधत्यूठस्तेषु । 'इकि इकारादौ प्रतिषेधः' इति वार्तिकात् प्रसिद्धत्वाच्च 'इण् गतौ, एध वृद्धौ' इत्यतो धातुस्वरूपबोधने 'इक्श्तिपौ' ( का० वा० ) इति कृत्संज्ञके श्तिप्प्रत्यये रूपम् । न च श्तिपः कर्तृवाचकत्वाभावेन 'एधति' इत्यत्र शपोऽनुपपत्तिः, 'सुनोति' 'ध्यायतेः' इत्यादिसूत्रवार्तिकप्रयोगेण 'कर्तरि शप्' इत्यत्र कर्तृपदस्य भावकर्मावाचिन उपलक्षणत्वेनादोषात् । एवम् 'सार्वधातुके यक्' ( ३-१-६७ ) इत्यत्र भावकर्मपदमपि अकर्तृवाचिन उपलक्षणम् । अत एव 'विभाषा लीयतेः' ( ६-१-५१ ) इत्यत्र यका निर्देशः संगच्छते । श्तिकरणसामर्थ्यात्तु शबादिरिति तु न, तिष्ठतेरित्, जिघ्रतेर्वा, इत्यादिषु तिष्ठाद्या-देशार्थम्, ध्यायतेः, इत्यादौ 'आदेच उपदेशे' ( ६-१-४५ ) इत्यात्वाभावार्थं श्तित्वस्य चारितार्थ्यात् अत्रानुवृत्तमेचीति विशेषणस्य इतरव्यावृत्तिफलकत्वेन इतरव्यावृत्तिरूपं फलम् सम्भवमात्रे एव

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः ।

---

सम्भवति । यथा 'उष्णमग्निमानय' इत्यत्र उष्णत्वविशेषणं व्यर्थम्, उष्णत्वस्याग्नौ नियतत्वेन व्यभिचाराभावात् । 'शीतमग्निमानय' इत्यत्र शीतत्वविशेषणमपि निष्फलम्, तादृशस्याग्नेरभावात् । इत्येवाभिप्रेत्य उच्यते 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति । प्रकृते 'एचि' इति विशेषणस्य 'यस्मिन्विधिः' इति परिभाषया एजादावित्यर्थकत्वेन इणेधधात्वोः 'एति' 'एधते' इत्यादावेजादित्वस्य 'इतः' मा 'इदिधत्' इत्यादौ एजादित्वाभावस्य च सत्त्वेन एजादिभिन्नस्य ग्रहणाभावाय चारितार्थ्यम् । न च 'इदिधत्' इत्यत्र एधत्वं नास्तीति वाच्यम्, एकदेशविकृतन्यायेन, स्थानिवत्त्वेन वा एधधातुत्वानपायात् । ऊठि तु एजादित्वस्य व्यभिचार एव, न तु सम्भव इति न तद्विशेषणम् 'एचि' इति । न च आपूर्वकादवधातोः क्विपि 'ज्वरत्वर' ( ६-४-२० ) इति वकारवकारयोरूठि आकारस्य ऊठ ऊकारस्य च गुणे 'ओ' इति जाते तस्य जनशब्देन समासे 'जन ओ' इत्यत्र परादिवद्भावेन एजादित्वमादाय वृद्धिः स्यात् । 'प्रष्ठौहः' इत्यत्र तु न स्यादेजादित्वाभावात् । न च 'वृद्धिरेचि' इत्यनेन तत्र वृद्धिः, पूर्वान्तवद्भावेन आङ्त्वमादाय 'ओमाङोश्च' इत्यनेन वृद्धेर्बाधात् । अणुनिमित्तिकायास्तु वृद्धेर्न तेन बाधः, एजादावूठि इत्यर्थे ऊणुनिमित्तिकाया वृद्धेर्निरवकाशत्वेन 'ओमाङोश्च' इत्यस्यापवादत्वादिति वाच्यम्, 'इषि इकारादौ वृद्धेः प्रतिषेधः' इति वार्तिकप्रत्याख्यानाय 'योगविभागः करिष्यते·········'एत्येधत्योः' एत्येधत्योश्च एचि वृद्धिर्भवति । तत 'ऊठि' ऊठि च वृद्धिर्भवति' इति भाष्ये 'ऊठि' 'एचि' इत्यस्यासम्बन्धेन ऊठि वृद्धेर्येन नाप्राप्तन्यायेन 'आद् गुणः' इत्यस्यैवापवादतया आङि ऊणुनिमित्तकवृद्धेः परत्वाद् 'ओमाङोश्च' इत्यनेन बाधात् पररूपस्यैवेष्टत्वात् । वार्तिके 'इषि' इति एधतेरप्युपलक्षणमिति न भाष्यवार्तिकयोः फलभेद इति 'इदिधत्' इत्यस्यानभिधानं चिन्त्यम् ।

अत्र 'आद् गुणः' इत्यत आदिति पञ्चम्यन्तमनुवर्तते तदाह—अवर्णादिति । एत्येधत्योरिति= इण्धात्वेधधात्वोः परत इत्यर्थः । पर इति—ननु यस्मात् परः स पूर्वशब्देन गृह्यते । यस्मिन् परे कार्यं स परशब्देन गृह्यते । तथा च प्रकृते पूर्वशब्देन अकारस्य ग्रहणम् । परशब्देन एजाद्योरिणेधधात्वोर्ग्रहणे एध इति समुदायस्य स्थाने वृद्धिः स्यादिति चेन्न, 'प्रत्ययलोपे' इति भाष्ये 'औतोऽम्शसोः' इत्यस्य अजाद्योरम्शसोरिति नार्थः, किन्तु 'अम्यचि शस्यचि' इत्येवार्थं इत्युक्तम् । एतेन 'अम्शसोः' इत्यत्र घटकत्वं सप्तम्यर्थः, 'वृक्षे शाखा' इतिवत् । इति सूचितम् । तथा च अम्शसोरवयवेऽचि परत इत्यर्थेन यथा परशब्देन प्राधान्यादचो ग्रहणं तथाऽत्रापि एत्येधत्यवयवेऽचि परे वृद्धिरित्यर्थेन परशब्देनाच एव ग्रहणात् ,अवर्णादेजाद्योरेत्येधत्योरित्यर्थे धातोर्विशेष्यत्वेऽपि 'तस्मादित्युत्तरस्य','आदेः परस्य' इति परिभाषोपस्थित्या एजाद्योरादेरल एव स्थाने वृद्धेर्बोधनाच्च ।

ननु 'इठ् गतौ' 'एधठ् वृद्धौ' इति पठित्वा 'ठिति च' इति न्यस्यतां किं गुरुभूतेन सूत्रेण । न च 'एचि' इत्यस्य सम्बन्धे अवर्णादेजादौ ठिति परे पूर्वपरयोः स्थाने वृद्धिरित्यर्थे 'प्रष्ठ ऊहः' इत्यत्र वृद्धिर्न स्यात्, 'एचि' इत्यस्यासम्बन्धे 'उपेतः' इत्यादावपि वृद्ध्यापत्तिरिति वाच्यम्, 'वाह ऊठ्' ( ६-४-१३२ ) इत्यत्र 'ऊ' इत्येव वक्तव्ये ठित्करणसामर्थ्येन, ओठ् इति करणेन वा एजादित्वाभावेऽपि वृद्धिसिद्धेः ।

न च अकारान्तोपसर्गादुकारान्तोपसर्गाच्च परस्य वाह इत्यस्य प्रयोगे 'प्र ओ हः' इत्यत्र 'एङः पदान्तादति' इति पररूपापत्तिः, 'निरूहः' इत्यादेरसिद्धिश्चेति वाच्यम्, 'वाहः' सम्प्रसारणमात्रे कृते प्रत्ययलक्षणेन ण्विचं विचं वा निमित्तीकृत्य 'पुगन्त' इति गुणे 'वृद्धिरेचि' इति वृद्धौ च 'प्रष्ठौहः' इत्यादीनां सिद्धिं कृत्वा 'ऊठ्' ग्रहणवैयर्थ्येन 'अन्तरङ्गपरिभाषाज्ञापकपरभाष्यप्रामाण्येन 'प्रौहः' 'निरूहः' इत्यादीनामनभिधानकल्पनेनादोषात् । न च 'ओठ्' करणे यणः स्थाने इकोऽभावेन सम्प्रसारणसंज्ञाया अप्राप्तया 'सम्प्रसारणाच्च' इति पूर्वरूपानापत्तिः, 'इग् यणः सम्प्रसारणम्' इति न्यासेनादोषात् । न च

उपैति । उपैधते । प्रष्ठौहः ।

---

'प्रष्ठौहः' इत्यादौ 'ऊडिदम्पदाद्यप्' ( ६-१-१७१ ) इति स्वरानापत्तिः, 'ओडिदम्' इति न्यासेना-दोषात् । न च 'स्यौनाति' इत्यत्र 'च्छ्वोः शूडनुनासिके' ( ६-४-१९ ) इति ऊठि एजादिठित्वोऽभा-वाद् वृद्ध्यनापत्तिः, ओठ्करणे 'ज्वरत्वर' इत्यत्र तस्यैवानुवृत्त्या 'जूः तूः' इत्यादेरसिद्धिश्चेति वाच्यम्, ठित्वसामर्थ्येन एजादित्वाभावेऽपि वृद्धिसिद्धेः । न च 'जूरः' इत्यादौ 'ओडिदम्' इति स्वरा-सिद्धिः, 'ठिदिदम्' इति न्यासेन स्वरसिद्धेः । वस्तुतस्तु 'प्रष्ठौहः' इत्याद्यर्थम् 'ओठ्' इति न्यासो विफल एव, ठित्वसामर्थ्येन एजादित्वाभावेऽपि वृद्धिसिद्धेः, ऊठ्ग्रहणवैयर्थ्येन अन्तरङ्गपरिभाषाज्ञा-पकपरभाष्यप्रामाण्येन 'प्रष्ठौहः' इत्यादावुगुणनिमित्तकस्वराभावस्यैवेष्टत्वादिति चेन्न, 'नासूया कर्तव्या यत्रानुगमः क्रियते आचार्यैः' इति भाष्योक्त्या अनेकत्रानेकक्लिष्टकल्पनापेक्षया च यथाश्रुतन्या-सस्यैवौचित्यात् ।

उपैतीति—प्राप्नोतीत्यर्थः । 'इण् गतौ' इत्यतो लटि तिपि शपि 'अदिप्रभृतिभ्यः' इति शपो लुकि प्रत्ययलक्षणेन गुणे उपयोगे 'उप एति' इत्यत्र 'वृद्धिरेचि' इति वृद्धिमपवादत्वाद् बाधित्वा 'एङि पररूपम्' इति पररूपे प्राप्ते तदपवादत्वादनेन वृद्धिः । 'उपैति' इति । 'वी गति' इत्यत्र प्रश्लिष्टस्य ई धातोः एति परे 'उपेति' इत्येव । उपैधत इति—एधतेर्लटि ते शपि उपयोगे 'उप एधते' पूर्ववद् पररूपं बाधित्वाऽनेन वृद्धौ 'उपैधते' इति = वर्द्धत इत्यर्थः । प्रष्ठौह इति—प्रष्ठमग्रेसरं वृषभं वहति = प्रापयतीति प्रष्ठवाट् = शकटे युगपार्श्वस्थो वृषभः । यत्र शकटे त्रयो वृषभा नियोजिताः तत्राग्रेसरः प्रष्ठः । पार्श्वस्थश्च 'प्रष्ठवाड्' इति । 'प्रष्ठोऽग्रगामिनि' इति पाणिनिसूत्रम् । 'पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसरा' इत्यमरः ।

यद्वा प्रष्ठौहः=युगपार्श्वस्थान् वृषभान् पश्येत्यर्थः । प्रष्ठपूर्वकाद् वहधातोः 'वहश्च' (३-२-६४) इति 'प्रष्ठौह आगतः' इति भाष्यप्रयोगात् लोकेऽपि ण्विः, ण्यन्ताद्वा विचि 'वेरपृक्तस्य' (६-१-६७) इति वलोपे 'अत उपधायाः' ( ७-२-११६ ) इति वृद्धौ त्रिश्वत्राट् छन्दात् शसि 'वसोः सम्प्रसा-रणम्' ( ६-४-१०१ ) इत्यतः सम्प्रसारणपदानुवृत्त्या 'वाह ऊठ्' ( ६-४-१३२ ) इति सम्प्रसा-रणसंज्ञकस्य ऊठः 'सम्प्रसारणाच्च' ( ६-१-१०८ ) इति पूर्वरूपे 'प्रष्ठ ऊह' इति जातेऽनेन वृद्धौ 'प्रष्ठौहः' इति रूपम् । नन्विदं सूत्रं व्यर्थम्, एत्येधत्योः परतः 'वृद्धिरेचि' इति वृद्ध्या सिद्धेः । ऊठ्ग्रहणमपि व्यर्थम्—'ऊठ्ग्रहणानर्थक्यम् सम्प्रसारणेन कृतत्वात् । गुणस्तु प्रत्ययलक्षणत्वात् । एज्ग्रहणाद् वृद्धिः ।' इति वार्तिककृता उक्तत्वात् । 'वाह ऊठ्' इत्यत्र ऊठ्ग्रहणं न कर्तव्यम् 'वाहः' इत्येव सूत्रमस्तु, भस्य वाहः सम्प्रसारणं स्यादित्यर्थेन वकारस्य उकारे सम्प्रसारणे पूर्वरूपे 'उह' इति स्थिते प्रत्ययलक्षणेन ण्विम्, णिचं वा आर्धधातुकमाश्रित्य 'पुगन्त' इति गुणे 'प्रष्ठ ओह' इति स्थिते । 'वृद्धिरेचि' इति वृद्धौ 'प्रष्ठौहः' इत्यस्य सिद्धेरिति वार्तिककृदाशय इत्यत आह—पररूपगुणापवाद इति—एत्येधत्योः 'एङि पररूपम्' इत्यस्य ऊठि 'आद् गुणः' इत्यस्यायं योगोऽपवाद इत्यर्थः । यदि वाहः सम्प्रसारणमेव क्रियेत, न तु ऊठ् तदा वस्य उकारे सम्प्रसारणे 'उ आहः' इति जाते पूर्वरूपे 'उहः' इति स्थितौ लघूपधगुणो न स्यात्, बहिर्भूतशस्प्रत्ययापेक्षभसंज्ञापेक्षसम्प्रसारणस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया सम्प्रसारणस्यासिद्धत्वाल्लिकोऽभावात् । यद्वा 'वृद्धिरेचि' इत्यन्त-रङ्गायां वृद्धौ लघूपधगुणस्य बहिरङ्गस्य असिद्धतया एच्परत्वाभावाद् वृद्धिर्न स्यादिति 'आद् गुणः' इति गुणे 'प्रष्ठोहः' इति स्यात् । सम्प्रसारणसंज्ञके ऊठि कृते तु पूर्वरूपे 'ऊह्' इत्यत्र लघूपधत्वा-भावेन वृद्धेरप्राप्त्या वृद्ध्यर्थम् ऊठ्ग्रहणं चरितार्थम् । इदमेव ऊठ्ग्रहणमन्तरङ्गपरिभाषायां ज्ञापकमिति भाष्ये स्पष्टम् । परिभाषया उक्तरीत्या वृद्ध्या सिद्धे ऊठ्वैयर्थ्यं स्पष्टमेव । 'अन्तरङ्ग-परिभाषायाः फलं तु 'पचावेदम्' इत्यादौ 'आमेत' इति आमाद्यभावः ।

'एजाद्योः' किम्? उपेतः। मा भवान्प्रेदिधत्। पुरस्तादपवादन्यायेनेयं वृद्धिः 'एङि पररूपम्' (सू ७८) इत्यस्यैव बाधिका, न तु 'ओमाङोश्च' (सू ८०) इत्यस्य।

---

एजाद्योः किमिति—एजाद्योरित्यस्य किम्फलमिति प्रश्नः। उपेत इति—इण्धातोर्लटि सति शपि लुकि च तसः 'सार्वधातुकमपित्' (१-२-४) इति ङित्वात् 'क्ङिति च' इति इणो गुणाभावे वृद्धिवारणार्थम्। 'तौ उपेतः' (वे दोनों पहुँचे) 'मा भवान् प्रेदिधत्' इति—ण्यन्तादेधेर्लुङि तिपि 'इतश्च' (३-४-१००) इति तिप इकारस्य लोपे 'णिश्रिद्रुस्रुभ्यः' (३-१-४८) इति चङि 'णौ चङ्युपधाया ह्रस्वः' इति (७-४-१) उपधाया एकारस्य ह्रस्वे 'इधि अ त्' इति स्थिते 'चङि' (६-१-११) इत्यजादेर्द्वितीयस्य इति धिशब्दस्य द्वित्वे 'अभ्यासे चर्च' (८-४-५४) इति अभ्यासधस्य जश्त्वे 'न माङ्योगे' इत्याडागमाभावे भवच्छन्दयोगात् 'शेषे प्रथमः' (१-४-१०८) इति प्रथमपुरुषे 'प्र इदिधत्' इत्यत्र एजादित्वाभावान्न वृद्धिः। एजादित्वविशेषणाभावे तु अत्रापि वृद्धिः स्यादिति तद्वारणाय एजाद्योरिति। न च 'णौ चङि' इति ह्रस्वेन इकारे नायमेधतिरिति वाच्यम्, एकदेशविकृतन्यायेन आनुमानिकस्थानिवत्त्वेन वा एधधातुत्वस्य सुलभत्वात्। अत्र माङं विहाय 'प्रैदिधत्' इति न प्रत्युदाहृतम्, माङोऽभावे 'आडजादीनाम्' (६-४-७२) इत्याटि 'आटश्च' (६-१-९०) इति वृद्धौ 'ऐदिधत्' इति रूपम्। अत्र एजादित्वाद् वृद्ध्या 'प्रैदिधत्' इत्यस्येष्टत्वात्। अत्र 'भवान्' इत्यस्य प्रयोगो विफल एव। ननु इण्धातोर्लोटि सिपि हौ आङा योगे 'आद् गुणः' इति गुणे 'एहि' इति स्थितौ अवोपसर्गेण योगे 'अव एहि' इति स्थितौ एकारस्य 'अन्तादिवच्च' इति परादिवद्भावेन इण्त्वात् 'आद्यन्तवदेकस्मिन्' इति व्यपदेशिवद्भावेन एजादित्वात् एजादाविण्धातौ परे 'एङि पररूपम्' इति बाधित्वा वृद्धौ 'अवैहि' इत्यनिष्टं स्यात्, इष्यते तु 'अवेहि' इति, इष्टं न स्यात्। तदुक्तं रघुवंशे–'अवेहि मां किङ्करमष्टमूर्तेः' इति। न च 'ओमाङोश्च' इति पररूपेण सिद्धिः, 'एत्येधत्यूठ्सु' इत्यस्य वृद्धेः पररूपस्य चापवादत्वादित्यत आह—पुरस्तादिति—यत्र पूर्वमपवादशास्त्रम् ततः परं बाध्यं शास्त्रद्वयम्। तत्र बाध्येनाव्यवहितं यद्बाध्यं तदेवापवादेन बाध्यते, शीघ्रोपस्थितिकत्वात्। तदेवाह–पुरस्तादपवादा अनन्तरान् (अव्यवहितान्) विधीन् बाधन्ते नोत्तरान् (न बाध्यव्यवहितान्) इति।

तथा च प्रकृते बाध्यं शास्त्रम्—'एङि पररूपम्' (६-१-९४) इति, 'ओमाङोश्च' (६-१-९५) इति। बाधकञ्च 'एत्येधत्यूठ्सु' इति पूर्वम्। एवञ्च बाध्यव्यवधानशून्यम् 'एङि पररूपम्' इत्येव बाध्यते, न तु बाध्येन 'एङि पररूपम्' इत्यनेन व्यवहितम्—'ओमाङोश्च' इति। तथा च यत्र 'एत्येधत्यूठ्सु' इत्यस्य 'ओमाङोश्च' इत्यस्य च प्राप्तिस्तत्र परत्वात् 'ओमाङोश्च' इत्यस्यैव प्रवृत्त्या पररूपमेव स्यादिति 'अवेहि' इतीष्टं सिध्यतीति भावः। अयम्भावः—'येन नाप्राप्ते' इति येनेत्यस्य अपवादेतरत्वावच्छिन्नेनेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत्प्राप्नोति तत्सर्वं बाध्यं तदव्याप्तलक्षणाभावादिति बाध्यसामान्यचिन्तेत्युच्यते। यदा तु येनेत्यस्य तद्व्यक्तिरूपलक्षणेनेत्यर्थः, शास्त्रविशेषेणेति यावत्। प्राधान्यात्कार्य्यविशेषेणेत्यर्थो वा तदा बाध्यविशेषचिन्ता। अत्र बाध्यविशेषचिन्तापक्षे 'पुरस्ताद्' इति न्यायः।

वस्तुतस्तु 'एत्येधत्यूठ्सु' इति वृद्धिः 'ओमाङोश्च' इति पररूपस्य न बाधिका, आङ्रहिते 'उपैति' इत्यादौ 'ओमाङोश्च' इत्यस्याप्राप्त्या येन नाप्राप्तत्वाभावेन तत्र 'एत्येधत्यूठ्सु' इत्यस्य चारितार्थ्यात् 'एङि पररूपम्' इत्यस्य तु सर्वत्रैव प्राप्तिरिति नाप्राप्तत्वात्तस्यैवायमपवादः स्यात्। आङि तु परत्वात्पररूपमेव स्यात्। अत एव 'कुप्वोः' इति सूत्रं 'विसर्जनीयस्य सः' इत्यस्यैवापवादो न तु 'शर्परे विसर्जनीयः' इत्यस्य, 'तदुक्तं भाष्ये—'नाप्राप्ते एङि पररूपे 'एत्येधतीति' वृद्धिरारम्यमाणा भवति तस्यापवादः। आङि पररूपे तु प्राप्ते चाप्राप्ते च आरभ्यमाणा वृद्धिर्न

तेन 'अवैहि' इति वृद्धिरसाधुरेव । 'अक्षादूहिन्यामुपसंख्यानम्' ( वा ३६०४ ) अक्षौहिणी सेना । 'स्वादीरेरिणोः' ( वा ३६०६ ) । स्वैरः । स्वेनेरितुं शीलमस्येति स्वैरी । स्वैरिणी । 'प्रादूहोढोढ्येषैष्येषु' ( वा ३६०५ ) प्रौहः । प्रौढः ।

यत्तु भाष्ये अथवा 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते' इत्येवमेत्येधत्यति वृद्धिरेङि पररूपमेव बाधते, न त्वोमाङोश्चेति पररूपमपि' इति, तत्तु अपवादशब्दस्य बाधकपरत्वाभिप्रायेण । तदुक्तम्—'अपवादो यद्यन्यत्र चरितार्थस्तर्हि परान्तराङ्गाभ्यां बाध्यते' इति । बाध्यसामान्यचिन्ता तु तत्रैव यत्र कस्यापि नाप्राप्तत्वं नास्ति, यथा—'अचि र ऋतः' इति । 'अवेहि' इत्यस्य जानीहि इत्यर्थः, अवपूर्वकेणो ज्ञानार्थकत्वात् । 'अक्षादूहिन्याम्' इति । 'आद् गुणः' इत्यस्यापवादोऽयम् । अक्षशब्दादूहिनीशब्दे परे पूर्वपरयोर्वृद्धिरिति तु नार्थः, समुदायस्थाने वृद्ध्यापत्तेः । किन्तु आदिति अचि इति वृद्धिरिति चानुवर्तते, अक्षपदं स्वावयवे लाक्षणिकम् । ऊहिन्यामिति, घटकत्वं सप्तम्यर्थः । तथा च अक्षशब्दाकारादूहिनीशब्दावयवेऽचि परे पूर्वपरयोः स्थाने वृद्धिरित्यर्थः । एवमेवोत्तरत्रापि समुदायोद्देश्येऽवयवस्य कार्यं बोध्यम् ।

अक्षौहिणीति—अक्षाणाम्=द्यूतपाशादीनामूहिनी । 'ऊह वितर्के' इत्यतो भावे घञि ऊहनमूहस्तर्कः सोऽस्त्यस्या इति ऊहिनी 'अत इनिठनौ' इति इनिः, ङीप्, ङ्यन्तेन षष्ठीसमासः । 'पूर्वपदात्' इति णत्वम् ।

वस्तुतस्तु 'अक्षान् ऊहते' इत्यर्थे 'आवश्यकाधमर्ण्ययोः' (३-३-१७०) इति णिनिः, पूर्वप्रक्रियया वृत्तित्रयकरणे गौरवात्, उत्तरवार्त्तिकस्थकृदन्तसाहचर्याच्च । अक्षौहिणीपदं सेनाविशेषे रूढम् । तदुक्तं भारते—

'अक्षौहिण्याः प्रमाणं तु खाङ्गाष्टैकद्विकैर्गजैः ।

(२१८७०) रथैरेतैर् (२१८७०) हयैस्त्रिघ्नैः (६५६१०) पञ्चघ्नैश्च (१०९३५०) पदातिभिः ॥

एकीकरणे—( २१८७०० ) अक्षशब्दस्य ऊहशब्देन समासे तत इनौ तु न वृद्धिरन्तरङ्गतया गुणस्यैव प्रवृत्तेः, अर्थवद्ग्रहणपरिभाषया अर्थवदूहिनीशब्दस्य ग्रहणेन प्रकृतोहिनीशब्दस्यानर्थक्यात् ।

'स्वादीरेरिणोः' इति । स्वशब्दावयवाकाराद् ईरेरिणघटकेऽचि परे पूर्वपरयोरचो वृद्धिरित्यर्थः । ईरशब्दो द्विविधः--'ईर गतौ' इत्यतो भावे घञि ईरणमीर इति स्वेच्छया गमनम् । यद्वा स्वेन ईरते=गच्छतीति पचादित्वादचि स्वैरः—स्वेच्छया गमनकर्त्ता, मन्दश्च । तदुक्तम् अमरे-'मन्दस्वच्छन्दयोः स्वैरः' इति । स्वैरीति-स्वपूर्वकादीरतेः 'सुप्यजातौ' इति णिनिः । स्त्रियामपि ङीपः प्राग्भागस्य ईरिन्रूपत्वात्, लिङ्गविशिष्टपरिभाषाश्रयणेनापि वृद्धिसिद्धया परिभाषया तत्साधनं विफलम् ।

वस्तुतस्तु णिन्यन्तेरिन्शब्दस्यानभिधानमेव । 'तदुक्तं भाष्ये'—ईरिन्ग्रहणं शक्यमकर्तुम् । कथं स्वैरीति ? इति नैतन्मत्वर्थीयेन सिद्धम् । स्वैरोऽस्यास्तीति स्वैरी, इति । एतेन 'स्वादीरे' इत्येव कर्तव्यम् इत्युक्तम् भवति । तथा च णिन्यन्ते न प्राप्नोति । अतो णिन्यन्तस्य स्वैरीत्यस्यानभिधानं ध्वनितम् । अन्यथा तदर्थमीरिन्ग्रहणस्य चरितार्थ्याद् भाष्यासङ्गतिः स्पष्टैव । एतेन स्वेनेरितुं शीलमस्येत्यर्थे णिन्यन्तस्योदाहरणं चिन्त्यम् । भाष्ये 'स्वादीर' इत्यतः प्राक् 'प्रादूहोढोढ्येषैष्येषु' इति वार्त्तिकं पठितम् । काशिकानुरोधेन तु स्वादित्यतः परतः पाठः ।

'प्रादूहोढोढ्येषैष्येषु' इति । प्रशब्दाकारात् ऊह--ऊढ--ऊढि--एष--एष्य एतद्घटकेऽचि परे पूर्वपरयोरचोः वृद्धिरेकादेशः स्यादित्यर्थः । प्रौह इति --ऊह वितर्के इत्यतो 'गुरोश्च हलः' इति भावे घञि ऊह इति । प्रशब्देन 'कुगति' इति गतिसमासः । प्रौहः = प्रकृष्टः तर्क इत्यर्थः । अकारस्य ऊकारस्य च स्थाने वृद्धिः । प्रौढ इति—वहधातोः 'कर्तरि च' इत्यनुवर्तमाने 'गत्यर्थाकर्म' इति

'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' (प १५) 'व्रश्च'—(सू २१४) इति सूत्रे राजेः पृथग्भ्राजिग्रहणाज्ज्ञापकात् । तेनोढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः ।

कर्तरि क्ते 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे वत्वे 'झषस्तथोः' इति तस्य धत्वे ष्टुत्वे 'ढ्लोपे' इति दीर्घे च उपसर्गयोगे 'प्र ऊ ढ' इति स्थिते गुणं बाधित्वा वृद्धौ प्रौढ इति—प्रवृद्ध इत्यर्थः । 'प्रवृद्धं प्रौढमेधितम्' इत्यमरः । प्रगल्भः निपुण इत्यर्थकोऽपि कोशान्तरे । 'स्वं रूपं शब्दस्य' इति अर्थविशिष्टस्यैव शब्दस्य संज्ञात्वाद् अर्थवद्ग्रहणपरिभाषया वा अर्थवदूढशब्दे एव वृद्धिविधानात् वहधातोः क्तवतुप्रत्ययेन निष्पन्ने ऊढवच्छब्दे 'ऊ' इति प्रकृतेरंशोऽर्थवान् 'ढवत्' इति प्रत्ययः कर्त्रर्थकः प्रकृतिप्रत्ययैकदेशसमुदायश्च 'ऊढ' इति न केनापि अर्थवत्त्वेन बोधितः इत्यतोऽनर्थकत्वात् तस्मिन् परे न वृद्धिरित्याह—अर्थवद्ग्रहण इति—यद्यपि 'स्वं रूपम्' इति सूत्रे स्वशब्द आत्मीयत्वेनार्थमाह, रूपशब्दः शब्दस्वरूपम् इत्युभयं शब्दस्य संज्ञीति सूत्रत एवार्थवद्ग्रहणपरिभाषा सिद्धा, तथापि सीरदेवमतानुसारेण ज्ञापकमप्याह—भ्राजिग्रहणादिति—

केचित्तु 'समुदायकार्य्यसाधकोऽनुबन्धोऽवयवकार्य्यसाधको न भवति' इत्यस्य ज्ञापकसिद्धत्वेन न सार्वत्रिकत्वम् । अत एव सुपः पित्त्वसाधकं पकारमादाय अर्थवत्सूत्रे भाष्ये 'तिप्तस्झि' ति तिशब्दादारभ्य सुपः पकारेण प्रत्याहार इत्यभिप्रायेण 'अतिप् प्रातिपदिकम्' इति न्यासः, टिड्ढेति सूत्रभाष्ये अयचश्चकारस्य चित्त्वसाधकत्वेऽपि मात्रच्प्रत्याहारोक्तिः, 'न लोके' ति सूत्रभाष्ये तृनो नित्त्वसाधकत्वेऽपि शतृशब्दघटकतृशब्दादारभ्य आतृनो नकारात् 'तृन्' इति प्रत्याहारः, इति च भाष्योक्तिः संगच्छते । तदा भ्राजिग्रहणस्य ज्ञापकत्वं सम्यगेवेत्याहुः । वस्तुतस्तु 'तस्थस्थमिपाम्' इत्यस्योक्तार्थे ज्ञापकत्वं चिन्त्यम्, प्रत्याहारसाधकानुबन्धस्य समुदायानुबन्धत्वे बीजाभावात् । अत एव 'ऐऔच्' इत्यादिसूत्रघटकचकारादेः अजादिप्रत्याहारसाधकत्वेऽपि सूत्रघटकत्वं नापैति ।

यदि शब्देन स्वरूपमात्रस्य ग्रहणं स्यात्तदा 'विभ्राट्' इत्यत्र षत्वार्थं 'व्रश्चभ्रस्ज' इति सूत्रे भ्राजग्रहणं व्यर्थमेव स्यात्, व्रश्चसूत्रस्थराजग्रहणे तु भ्राजघटकराजरूपस्यापि षत्वसिद्धेः । तद्व्यर्थं सत्परिभाषां ज्ञापयति—'अर्थवद्ग्रहणे' इति फलञ्च तिङ्, तङ् प्रत्याहारसाधकोऽनुबन्धो महेङित्त्वं न साधयति, तेन 'पप्रच्छिमहे' 'वव्रश्चिमहे' इत्यादौ सम्प्रसारणं नेति । तथा च भ्राजेरकारो राजेर्न स्यादिति ज्ञापकत्वं चिन्त्यम् । तथा हि—व्रश्चादिसाहचर्येण धातोरेव राजृपदेन ग्रहणात् भ्राजृघटकस्य राजृशब्दस्य धातुत्वाभावेन षत्वाप्राप्त्या भ्राजृग्रहणस्य षत्वार्थं चारितार्थ्याज्ज्ञापकत्वासम्भवः । किञ्च राजृऋकारावयवकराजेरेव ग्रहणम् । 'भ्राजृ' इत्यत्र ऋकारे समुदायावयवत्वं न तु राजृनिरूपितम् । समुदायकार्य्यसाधकोऽनुबन्धश्च नावयवकार्य्यसाधकः । अत्र मानञ्च 'तस्थस्थमिपाम्' इति सूत्रमेव । थसस्थकारात् मिपः पकारेण प्रत्याहारं मत्वा 'तस्थस्थमिपां तांतंतामः' इति वक्तव्ये चतुर्णां पृथग्ग्रहणं व्यर्थीभूय कल्पयति समुदायकार्य्यार्थम् आश्रितोऽनुबन्धो नावयवकार्य्यसाधकः, इति । तेन प्रत्याहाररूपसमुदायानुबन्धो मिप्रत्ययावयवो न स्यादिति । मिते पित्त्वं स्यादिति मिपः पित्त्वार्थं च न चतुर्णां ग्रहणं चरितार्थम् । अर्थवतो राजृशब्दस्य ग्रहणे तु भ्राजृघटकराजृशब्दस्य केनापि अर्थबोधनात् समुदायः प्रकृतिप्रत्ययादिरर्थवान् तदेकदेशोऽनर्थक इति नियमात् 'भ्राजृ' इत्यत्र 'राजृ' इत्यस्य अर्थवत्त्वाद्राजृग्रहणेनाग्रहणाद् भ्राजग्रहणं चरितार्थम् । न च व्रश्चसूत्रे भ्राजृ राजृ उभयोग्रहणे फणादिना राजिना साहचर्य्यात् फणादेरेव भ्राजेः षत्वं भवति फणादिभिन्नस्य भ्राजेः विभ्राग इत्येव रूपं न तु विभ्राडिति । भ्राजृग्रहणाभावे तु साहचर्यपरिभाषाया अप्रवृत्त्या राजग्रहणेन फणादिभिन्नस्यापि षत्वापत्त्या तद्वारणार्थं भ्राजृग्रहणं चरितार्थमिति वाच्यम्, भ्राजग्रहणाभावे साहचर्य्यपरिभाषाया अप्रवृत्तावपि फणादिभिन्नस्य 'टु भ्राज् दीप्तौ' इति पाठेऽपि राजृग्रहणेनाग्रहणात् षत्वाप्राप्त्या 'विभ्राग्' इति रूपसिद्धेः ।

नन्वेवमपि भ्राजृग्रहणं व्यर्थम्, फणादेः 'विभ्राट्' फणादिभिन्नस्य 'विभ्राक्' इति रूपद्वयं दीप्त्यर्थे साध्यं तच्च रूपद्वयं व्रश्चसूत्रे भ्राजग्रहणं विनापि सिध्यति । तथा हि—गणे भ्राजृ दीप्तौ, भ्राशृ दीप्तौ

प्रौढवान् । प्रौढिः । 'इष इच्छायाम्' तुदादिः, 'इष गतौ' दिवादिः, 'इष आभीक्ष्ण्ये' क्र्यादिः, एषां घञि ण्यति च 'एषः' 'एष्यः' इति रूपे, तत्र पररूपे प्राप्ते अनेन वृद्धिः । प्रैषः । प्रैष्यः । यस्तु 'ईष उञ्छे' यश्च 'ईष गतिहिंसादर्शनेषु' तयोर्दीर्घोपधत्वाद् ईषः, ईष्यः । तस्माद् गुणे प्रेषः, प्रेष्यः । 'ऋते च तृतीयासमासे' ( वा ३६०७ ) सुखेन ऋतः सुखार्तः । 'तृतीया' इति किम् ? परमर्तः । 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' ( वा ३६०८-९ ) प्रार्णम् ।

---

इति धातुद्वयं पठितम् । तत्र शान्तस्य 'भ्रश्' इति षत्वे 'विभ्राड्' इति । जान्तस्य कुत्वे 'विभ्राग्' इति रूपसिद्धिरिति चेन्न, सूत्रे भ्राजग्रहणसत्त्वे क्विबन्तात् फणादिनिष्पन्नविभ्राट्शब्दात् 'विभ्राजमाचष्टे' इत्यर्थे णिचि टिलोपे विभ्रिधातोः क्विपि निष्पन्नविभ्रशब्दात् सौ सुलोपे आनुमानिकस्थान्यादेशाभावेन 'भ्र्' इत्यस्य भ्राजग्रहणेन ग्रहणाद् रेफस्य षत्वे भस्य षत्वे विष्ट् इति रूपं भवति । न च संयोगान्तलोपः, लोपदृष्ट्या षत्वस्यासिद्धत्वेन यणः सत्त्वाद्यणः संयोगान्तलोपाभावात्तदर्थं भ्राज् ग्रहणस्य चारितार्थ्यात् । वस्तुतस्तु भ्राज्ग्रहणं परिभाषायां न ज्ञापकम् ।

इष इच्छायामिति—त्रयोऽपि धातवो लघूपधा इति गुणार्हाः ।

तेषामिति—निर्धारणे षष्ठी, तेषामन्यतमाद् घञि ण्यति च सति लघूपधगुणे एष, एष्य इति रूपे भवतः । तत्र 'एङि पररूपम्' इति बाधित्वा अनेन वृद्धिः 'प्रैषः, प्रैष्यः' इति । पूर्वं धातुरुपसर्गेण युज्यते, इत्युक्त्वा नैतत्सारं पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण इत्युक्तम् । तदाह—तत्र-पररूपे प्राप्तेऽनेन वृद्धिरिति । ननु 'पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेन' इति भाष्यात् प्र इष इति स्थितौ गुणस्यैव प्राप्त्येदमसङ्गतमिति चेन्न, पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेणेति सिद्धान्तात् । तदुक्तं 'सुट् कात्पूर्वः' इति सूत्रे भाष्ये—यदा तु आङ्पूर्वको घञन्तः, ण्यदन्तश्च तदा 'आ एषः' 'आ एष्यः' इति स्थितौ 'एङि पररूपम्' इति पररूपे एषः, एष्यः, इति । प्रशब्देन योगे परत्वाद् वृद्धिं बाधित्वा पूर्वान्तवद्भावेन आङ्त्वात् 'ओमाङोश्च' इति पररूपमेव ।

दीर्घोपधत्वादिति—अस्य गुणाभावे इति शेषः । अत्र 'एष एष्य' रूपाभावान्न वृद्धिः, किन्तु 'आद् गुणः' इति गुणे प्रेषः, प्रेष्य इत्येव । तयोः प्रामुख्यो दासो वा इत्यर्थः । इष आभीक्ष्ण्ये निष्पन्नस्य प्रैषः, प्रैष्यः, इत्यनयोः पौनःपुन्येन करणीयोऽर्थः । ईष उञ्छे इति सिद्धस्य प्रेषः, प्रेष्यः, इत्यस्य भावप्रत्ययान्तस्य अबाधितस्यानेषु पथिषु क्षेत्रेषु च पतितानामन्नादीनामङ्गुलीभ्यामेकैकस्य कणस्य समुच्चयनमर्थः । कर्मप्रत्ययान्तस्य तथाविधसञ्चयनकर्मभूतोऽर्थः । 'ईष गतिहिंसादर्शनेषु' इति निष्पन्नस्य भावार्थकस्य गमनम्, पीडनम्, दर्शनं वा । कर्मणि गन्तव्यः, हिंस्यः, दर्शनीयो वाऽर्थः । ऊढिशब्दसाहचर्य्यादेष इति कृदन्त एव, न तु एतच्छब्दस्य एष इत्यस्य । एष इति कृदन्तोऽनव्ययः, तत्साहचर्य्याद् एष्य इति अनव्ययः कृदन्तश्च गृह्यते, न तिङन्तो नापि ल्यबन्तः ।

'ऋते च तृतीयासमासे' इति । आदिति, वृद्धिरिति अचीति चानुवर्तते । तृतीयासमासे अकाराद् ऋतशब्दावयवेऽचि परे पूर्वपरयोरचोः वृद्धिरेकादेशः स्यादित्यर्थः । तृतीयासमासज्ञापनाय तृतीयान्तेन विग्रहं प्रदर्शयति—सुखेनेति—सुखेनेति 'प्रकृत्यादिभ्य उपसंख्यानम्, इति तृतीया । ऋत इति ऋ गतौ इत्यतः 'गत्यर्थाकर्मक' इति कर्तरि क्तः । 'सुपा' इति समासः, 'सुख ऋत' इति स्थितौ वृद्धिः सुखार्त इति बालमनोरमा । वस्तुतस्तु सुखेनेति कर्तरि तृतीया ऋत इति कर्मणि क्तः । सुखकर्तृकप्राप्तिकर्मीभूतः सुखविशिष्ट इति फलितोऽर्थः । समासग्रहणस्य प्रत्युदाहरणम् 'सुखेन ऋतः' इति वाक्यं दर्शितप्रायमिति तृतीयेत्यस्य फलं पृच्छति—तृतीयेति किमिति—किं फलमित्यर्थः । परमर्त इति परमश्चासौ ऋतश्चेति 'परमर्तः' इत्यत्र वृद्ध्यभावः फलमित्यर्थः । आद् गुण एव, न तु वृद्धिः ।

प्रवत्सतरेति—प्र-वत्सतर-कम्बल-वसन-दशन-ऋणशब्दानामकाराद् ऋणशब्दावयवेऽचि परे पूर्वपरयोरचोर्वृद्धिरेकादेश इत्यर्थः । प्रार्णमिति—प्रकृष्टम् ऋणमित्यर्थः । ऋधातोः कर्मणि क्ते

वत्सतरार्णमित्यादि । 'ऋणस्यापनयनाय यदन्यद् ऋणं क्रियते तद् ऋणार्णम् ।' दशार्णो देशः । नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जले च ।

**उपसर्गादृति धातौ । [ ६-१-९१ ]**

अवर्णान्तादुपसर्गाद् ऋकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति । उपार्च्छति ।

---

'ऋणमाधमर्ण्ये' इत्यनेन आधमर्ण्ये तकारस्य नकारादेशो निपात्यते । केनचित्पुरुषेण कस्माच्चित्पुरुषात् सकुसीदं पुनर्देयत्वेन गृहीतं धनम् ऋणमित्युच्यते । कुसीदञ्च—

कुत्सितात् सीदतश्चैव निर्विशङ्केन गृह्यते ।
चतुर्गुणं वाष्टगुणं कुसीदाख्यं ततः स्मृतम् ॥ इति ॥

मूलधनादधिकं पश्चाद्देयं धनं कुसीदमित्याख्यायते 'सूद' इति भाषायाम् । आधमर्ण्ये एव ऋणमिति चेत्तदा ऋणेऽधमः, अधममृणं यस्येति वा यत्सम्बन्धेन ऋणेऽधमत्वं सोऽधमर्णो गृहीता । ऋणे उत्तमः यत्सम्बन्धेन ऋणे उत्तमत्वम् अत उत्तममृणं यस्य स उत्तमर्णो दाता । ननु आधमर्ण्ये गम्ये ऋणमिति निपात्यते इत्युक्ते 'उत्तमर्ण' इति न स्यात्, औत्तमर्ण्यस्यैवात्र गम्यत्वं नाधमर्ण्यस्येति चेन्न, 'धारेरुत्तमर्णः' इति निर्देशाद् दातृग्रहीत्रोर्व्यवहारविशेषे गम्ये इत्यर्थेनादोषात् । वत्सतरार्णमिति—अल्पं वत्सत्वमस्येति वत्सतरः स्पष्टतारुण्य इत्यर्थः । प्रथमवया वत्सः । वत्सत्वस्याल्पत्वञ्च द्वितीयवयःसम्बन्धरूपम् । आरब्धतारुण्यो वत्सतर उच्यते । तदुक्तम्—'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' ( पा. ५-३-९१ ) इति सूत्रेण वत्सादिपदोपात्तवत्सत्वादीनां तनुत्वे 'अल्पत्वे' ष्टरच्प्रत्ययो वत्सादिभ्यः । स्त्रियां षित्त्वात् 'षिद्गौरादिभ्यश्च' इति ङीषि वत्सतरीति । अमरेऽपि—

'शकृत्करिस्तु वत्सः स्याद् दम्यवत्सतरौ समौ' । इति ।

वत्सतरस्य ऋणं वत्सतरार्णम् । वत्सतरस्य क्रयणाय पुष्ट्यै वा ऋणमित्यर्थः । 'वत्स ऋणम्' इति स्थितौ गुणं बाधित्वा वृद्धिः । एवम् कम्बलार्णम्—कम्बलसम्बन्धि ऋणम् । वसनार्णम्—कम्यतेऽभीप्स्यते यः स कम्बलः । 'कमेर्बुक् च' ( उ. १ पा. १०७ सू. ) इति कमधातोः कलच् प्रत्ययः बुक् च । वस्यते=आच्छाद्यते शरीरादिकमनेनेति वस आच्छादने इत्यतः करणे ल्युट् । ऋणस्य ऋणम् 'ऋणार्णम् ।' ऋणस्य ऋणेन सह अपनेयापनायकभावः सम्बन्धः । दशार्णो देश इति—दशविधानि ऋणानि दुर्गाणि यस्मिन्देशे स दशार्णो देशः । एवं दशविधानि ऋणानि जलानि यस्यां नद्यां सा दशार्णा नदी । अत्र सर्वत्र गुणं बाधित्वा वृद्धिः ।

उपाध्यायास्तु 'ऋणदशाभ्यां च वृद्धिर्वक्तव्या' इति भाष्ये पाठदर्शनात् न हि संख्यावाची दशन्शब्दोऽत्र, किन्तु दशशब्दोऽदन्तः । तथा च दश्यतेऽनेनेति दशम्=भञ्जकम् । दशानि भूभञ्जकानि ऋणानि जलानि यस्याः सा दशार्णा नदी सागरमण्डल- ( जिला ) सविधे वर्तते । एवं दशानि शत्रूणां भञ्जकानि ऋणानि दुर्गाणि यस्मिन्देशे स दशार्णो देश इति भावः । कौमुदीकारस्तु भाष्ये क्वचित् पुस्तके 'ऋणदशाभ्यां च' ऋणे दशाभ्यां वृद्धिर्वक्तव्या, इति पाठमुपलभ्य दशशब्दः संख्यावाचक इत्यभिप्रायेण व्याख्यातवान् ।

'उपसर्गादृति धातौ' इति, अत्र 'आत्' इत्यनुवर्तते, तच्च उपसर्गादित्यस्य विशेषणत्वात् तदन्तोपस्थापकम् । तदाह—अकारान्तादुपसर्गादिति । वृद्धिरिति, एकः पूर्वपरयोरिति, चानुवर्तते । 'ऋति' इति 'धातौ' इत्यस्य विशेषणम् । तच्च 'यस्मिन्विधिः' इति परिभाषया ऋकाराद्युपस्थापकम् । तथा च अकारान्तादुपसर्गादृकारादौ धातौ परे पूर्वपरयोर्वृद्धिरेकादेशः स्यादित्यर्थः, तदभिप्रेत्याह—अवर्णान्तादित्यादि । वस्तुतस्तु उक्तार्थे पूर्वपदेन अकारान्तस्य परपदेन ऋकारादिधातोर्ग्रहणापरया समुदायस्थाने वृद्धेरापत्तिरतः उपसर्गपदमुपसर्गावयवपरम् । आदिति च तद्विशेष्यम् । धातावित्ति धात्ववयवपरम् । 'ऋति' इति च तद्विशेष्यम् । तथा च उपसर्गावयवाकाराद् धात्ववयवे ऋति परे पूर्वपरयोरचोर्वृद्धिरित्यर्थः । तेन न उपसर्गस्य धातोश्च स्थाने वृद्ध्यादेशः । उपार्च्छतीति—

अन्तादिवच्च । [ ६-१-८५ ]

योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् ।

---

उपमपूर्वकाद् 'ऋ गतिप्रापणयोः' इत्यतो लटि तिपि शपि 'पाघ्राध्मा' ( ७-३-७८ ) इति ऋधातो-र्ऋच्छादेशे 'उप ऋच्छति, प्र ऋच्छति' इति स्थितौ अकारऋकारयोर्वृद्धिः । उपार्च्छति=समीपे गच्छति । 'प्रार्च्छति' प्रकर्षेण गच्छति, ।

पदान्तरेफस्य विसर्गविधानेन रेफस्य पदान्तत्वसाधनायाह--'अन्तादिवच्च' इति, अत्र 'एकः पूर्वपरयोः' इत्यधिक्रियते । एकपदेन एकादेश उच्यते । एकादेशस्य द्वयं स्थानि पूर्वो वर्णः, परो वर्णश्च । तत्र 'पूर्वपरवर्णयोरेकादेशः पूर्वस्य=पूर्वस्थानिनोऽन्तवत्, परस्य=परस्थानिन आदिवत्, इत्यर्थे पूर्वस्थानिनोऽन्तो व्यपदेशिवद्भावेन पूर्ववर्ण एव, परस्थानिन आदिः परवर्ण एव तद्वदेकादेश इत्येव फलति ।

तथा च 'अन्तादिवच्च' इत्यस्य स्थाने 'तद्वच्च' इत्येव सूत्रमस्तु, पूर्वपरयोरेकादेशः तद्वत्= पूर्वस्थानी इव परस्थानी इव भवति, इत्यर्थेन सिद्धे अन्तादिग्रहणं व्यर्थं सत् अन्तघटितसमुदायपरम्, आदिघटितसमुदायपरञ्च । एकादेशपदमपि एकादेशनिष्ठचरमावयवतानिरूपकसमुदायपरम्, एकादेशनिष्ठाद्यवयवतानिरूपकसमुदायपरञ्च । तथा च पूर्ववर्णस्य एकादेशः अन्तवत् इत्यस्य एकादेशनिष्ठचरमावयवतानिरूपकार्थवान् समुदायः=एकादेशान्तार्थवत्समुदाय इति यावत् । आदिवद् भवति= एकादेशपूर्वस्थानिनिष्ठचरमावयवतानिरूपकार्थवत्समुदायवद् भवति= पूर्वस्थान्यन्तार्थवत्समुदायवद् भवतीति यावत् । एवम् एकादेशनिष्ठाद्यवयवतानिरूपकार्थवत्समुदायः=एकादेशाद्यवयवकार्थवान् समुदाय इति यावत् । आदिवद् भवति=एकादेशपरस्थानिनिष्ठाद्यवयवतानिरूपकार्थवत्समुदायवद् भवति= एकादेशपरस्थान्याद्यवयवकार्थवान् यस्समुदायस्तद्वद् भवतीति यावत् ।

प्रकृते एकादेशो यस्यान्तः स समुदायः 'उपार्' इति, स एकादेशनिष्ठचरमावयतानिरूपकार्थवान् समुदायः स एकादेशस्य यः स्थानी सोऽन्तो यस्य समुदायस्य स समुदायः 'उप' इति, स एकादेशपूर्वस्थान्यकारनिष्ठचरमावयवतानिरूपकार्थवान् समुदायस्तद्वद् भवतीत्यर्थः । एवम् एकादेशनिष्ठाद्यवयवतानिरूपकार्थवान् समुदायः 'आर्छ' इति समुदायः, एकादेशपरस्थानिनिष्ठाद्यवयवतानिरूपकार्थवान् यः समुदायः 'ऋच्छ' इति तद्वद् भवति—तद्धर्मवान् भवतीत्यर्थः । 'उपार्' इति- उपवृत्तिधर्मवान् भवति, 'आर्छ' इति,—ऋच्छवृत्तिधर्मवान्भवतीति फलितम् ।

एतेन समुदायवृत्तिधर्मस्यैवानेनारोपो भवति, न तु वर्णमात्रवृत्तिधर्मस्य इत्यपि फलति । तेन 'खट्वाभिः' इत्यादौ अत्वस्य आकारे नारोप इति 'अतो भिस ऐस्' इति न प्रवर्तते । न च एकादेशान्तः समुदायः 'खट्वा' इति, स पूर्वस्थान्यन्तः 'खट्व' इति तद्वृत्त्यदन्तत्ववान् स्यात् । एवञ्च 'खट्वाभिः' इत्यादावैसापत्तिरिति वाच्यम्, वर्णमात्रवृत्तिधर्मघटितसमुदायवृत्तिधर्मस्य नानेनारोप इति 'षत्वतुकोरसिद्धः' इति सूत्रे तुग्ग्रहणेन ज्ञापनात् ।

तथा हि अधिपूर्वकादिधातोः क्त्वो ल्यपि 'अधि इय' इति स्थितौ 'ह्रस्वस्य पिति कृति' इति- बहिरङ्गं तुकं बाधित्वा अन्तरङ्गत्वाद् दीर्घे 'अधीय' इति जाते ह्रस्वाभावात्तुक् न प्राप्नोति इत्येकादेशस्य तुकि कर्तव्येऽसिद्धत्वेन तुगर्थं तुग्ग्रहणम् । यदि वर्णमात्रवृत्तिधर्मस्य तद्घटितधर्मस्य चान्तादिवद्भावेनातिदेशः स्यात्तदा परादिवद्भावेन इधातुवृत्तिह्रस्वत्वस्य ह्रस्वान्ततदादित्वस्य च दीर्घेकारेऽतिदेशात् तुकि सिद्धे तुकि कर्तव्ये एकादेशस्यासिद्धत्वविधानं व्यर्थं सत् अन्तादिवत्सूत्रेण वर्णमात्रवृत्तिधर्मस्य तद्घटितधर्मस्य चातिदेशाभावं ज्ञापयति इति दीर्घे जाते तुगर्थं तुकि कर्तव्येऽसिद्धवचनं चरितार्थम् । फलञ्चास्य 'खट्वाभिः' इत्यादौ ह्रस्वत्वसमानाधिकरणत्वस्य, ह्रस्वान्तत्वस्य च नातिदेश इति भिस ऐस् न । अत एव 'अयजे इन्द्रम्' इत्यत्र पूर्वान्तवद्भावेन परादिवद्भावेन वा अकारवृत्ति इकारवृत्ति वा वर्णमात्रवृत्तिधर्ममादाय 'अकः सवर्णे' इति दीर्घो न ।

एवञ्च यथा 'स्थानिवदादेशः' इत्यनेन अल्विधौ स्थानिवद्भावो न भवति, अनल्विधौ भवति ।

इति रेफस्य पदान्तत्वे ।

**खरवसानयोर्विसर्जनीयः । [ ८-३-१५ ]**

खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । इति विसर्गे प्राप्ते । अन्तवद्भावेन पदान्त रेफस्य न विसर्गः ।

---

तथाऽनेनापि अल्विधौ अन्तादिवद्भावो न भवति, अनल्विधौ च भवति । इत्येकादेशेऽन्तादिवद्भावोऽपि स्थानिवत्सूत्रेणैव स्यादितीदं सूत्रं व्यर्थम् । न च 'अभीयात्' इत्यादौ स्थानिवत्त्वेन इण्त्वात् 'एतेर्लिङि' ( ७-४-२४ ) इति ह्रस्वः स्यात्, 'अन्तादिवच्च' इत्यस्य सत्त्वे तु 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादिण्त्वाभावेन ह्रस्वो न भवतीति वाच्यम्, सूत्राभावे उभयत आश्रयणे स्थानिवदिति स्थानिवच्चेति वचनेनादोषात् । स्थानिवदित्युक्त्या 'प्लायते' इत्यादौ उभयत आश्रयणेऽपि 'अचः परस्मिन्' इति स्थानिवत्त्वेन लत्वं सिध्यति ।

यत्तु 'क्षीरपेण' इत्यत्र क्षीरप इन, इति स्थिते आद् गुण इत्येकादेश एकारः । तत्र पूर्वान्तवत्त्वेन प्रवृत्त्येकाजुत्तरपदत्वम् 'पे' इत्येकान्तसमुदाये आरोप्य 'एकाजुत्तरपदे णः' इति णत्वं भवति । अत्र स्थानिवत्सूत्रं तु न प्रवर्तते, स्थानिपशब्दघटकाकारवृत्त्यल्त्वव्याप्याच्त्वघटितत्वेन एकाजुत्तरपदत्वस्यातिदेशे 'अनल्विधौ' इति निषेधादिति तन्न, 'पे' इत्यत्र एकाच्त्वस्य स्वतः सिद्धत्वेन उत्तरपदत्वमात्रातिदेशे स्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्मघटितोऽतिदिदिक्षितो यो धर्मस्तन्निमित्तके विधौ न स्थानिवदिति अनल्विधावित्यस्यार्थेन अतिदिदिक्षितस्य उत्तरपदत्वस्य तादृशधर्मत्वाभावेन 'अनल्विधावि'ति निषेधाप्रवृत्तेः ।

प्रकृते उपप्रवृत्तिपदत्वस्य 'उपार्' 'प्रार्' इत्यत्रातिदेशाद् रेफस्य पदान्ततया विसर्गं शङ्कितुमाह—रेफस्येति ।

विसर्गविधायकं शास्त्रमाह—'खरवसानयोर्विसर्जनीयः' इति । अत्र 'पदस्य' (८-१-१६) इति 'अपदान्तस्य मूर्द्धन्यः ( ८-३-५५ ) इति मर्यादीकृत्य अधिकृतं सम्बध्यते । 'रो रि' इत्यतः (रः) इति षष्ठ्यन्तमनुवर्तते । तत् पदस्येत्यस्य विशेषणतया तदन्तग्राहकम् । रेफान्तस्य पदस्य विसर्गः स्यात् खरि अवसाने च परे । अभावरूपस्य अवसानस्य परत्वं तु बुद्धिपरिकल्पितं न वास्तविकम्, अवध्यवधिमतोः साजात्यनियमेन भावाभावयोः साजात्याभावेन तदसम्भवात् । विसर्गस्तु 'अलोऽन्त्यस्य' इति परिभाषया अन्त्यस्यैवाल इति फलितार्थमाह—रेफस्येति । पदान्ते इति—रेफे पदचरमावयवे सति इत्यर्थः । पदान्ते विद्यमानस्य रेफस्य विसर्ग इति नार्थः, वर्षा इत्यादौ खर्परत्वात् पदान्तः=पदचरमावयवः 'र्षा' इति, तत्र विद्यमानत्वाद्रेफस्य विसर्गापत्तेः । न च 'विसर्गोऽनशि' पदान्तस्य रेफस्य विसर्गः स्यान्न त्वशीत्यर्थं इति वाच्यम्, लाघवाद् 'अनशी' त्यस्य पर्युदासापत्त्या अशभिन्नेऽलि विसर्ग इत्यर्थेन अवसाने विसर्गानापत्तेः । न च 'विसर्गोऽनशि' इति सूत्रमस्तु । अत्र वाक्यद्वयम्—पदान्तस्य रेफस्य विसर्ग इत्येकम् । अशि न विसर्ग इत्यपरमित्यवसानेऽपि विसर्गः सिध्यतीति वाच्यम्, 'विसर्जनीयस्य सः' इत्यत्र 'खरि' इत्यस्यानुवृत्त्यनावृत्तौ अवसानेऽपि सत्त्वापत्तेः । यदि तु 'सः' इत्येव विधेये विसर्गविधानसामर्थ्यान्नावसाने विसर्ग इत्युच्यते तदा 'कुप्वोः' इत्यत्रानुवृत्त्यर्थं तद्ग्रहणं बोध्यम् । अन्यथा कवर्गे पवर्गे घादौ पादौ च तदप्रवृत्त्यापत्तिः । न च 'हशि च' इत्युत्वविधानसामर्थ्याद्धशि न जिह्वामूलीयादिरिति वाच्यम्, हयवादौ तस्य चरितार्थ्यादिति . यथाश्रुतमेव सूत्रं करणीयम् । इतीति—अनेनेत्यर्थः । अनेन विसर्गे प्राप्ते तत्परिहार उच्यते इति शेषः । 'अन्तवद्भावेन पदान्तत्वे प्राप्तस्य रेफस्य न विसर्गः' इत्यनुमीयते । कुत इति चेत् उभयथा 'ऋक्षु' 'च ऋषि' इति स्थितौ 'आद् गुण' इति गुणे चवृत्तिपदत्वस्य 'चर्' इत्यत्र, उभयथा वृत्तिपदत्वस्य 'उभयथर्' इत्यत्र आरोपेण रेफस्य पदान्तत्वेऽपि 'चर्षि' 'उभयथर्क्षु' इति रेफघटितनिर्देशात्=निर्दिश्यते=उच्चार्यते इति निर्देशः=शब्दः, तस्मात् शब्दश्रवणात् ।

यदि अन्तवद्भावेन पदान्तत्वे प्राप्तस्य रेफस्य विसर्गः स्यात्तदा रेफघटितनिर्देशो नोपपद्येत

'उभयथर्क्षु' ( सू ३६३० ), 'कर्तरि चर्षिदेवतयोः' ( सू ३१६७ ) इत्यादिनिर्देशात् । उपसर्गेणैव धातोराक्षेपे सिद्धे 'धातौ' इति योगविभागेन पुनर्वृद्धिविधानार्थम् । तेन 'ऋत्यकः' ( सू ९२ ) इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति ।

---

इत्यर्थापत्त्या तस्य विसर्गाभावः कल्प्यते इति भावः । न च स्थानिवद्भावेन 'अन्तादिवच्च' इत्यस्य गतार्थत्वे 'अन्तवद्भावेन पदान्तरेफस्य न विसर्गः' इत्यसङ्गतम्, अन्तवद्भावाभावात् । स्थानिवद्भावेन पदान्तरेफस्य न विसर्ग इति तु वक्तुमशक्यम्, रामः, पाहि नः, वः, इत्यादौ विसर्गानापत्तेरिति चेन्न, 'चर्षि' इत्यादिनिर्देशेन 'स्वाघटितं यत्पदं तद्घटकनिमित्तकत्वसम्बन्धेन खर्विशिष्टो य ऋकारस्थानिको रेफस्तस्य खरि परे विसर्गो नेति' ज्ञापनेनादोषात् । 'प्रार्च्छति' इत्यादौ खर् 'त्' इति तदघटितं पदं 'प्र' इति तद्घटकार्निमित्तकत्वम् एकादेशद्वारा ऋकारस्थानिकरेफे वर्तते इति तस्य न विसर्गः । किञ्च 'अन्तादिवच्च' इति सूत्रसत्त्वेऽपि स्वाघटितपदघटकनिमित्तकत्वसम्बन्धेन खर्विशिष्टस्य ऋकारस्थानिकरेफस्य न विसर्ग इत्येव कल्पनं युक्तम्, अन्तवद्भावेनेति ज्ञापनं तु न युक्तम् स्थानिवद्भावेन पदान्तत्वे प्राप्तस्य रेफस्य यो विसर्गस्तस्य प्रकारान्तरेण वारयितुमशक्यत्वात् । विसर्गे कर्तव्ये पदद्वयनिमित्तकतया बहिरङ्गाया वृद्धेरसिद्धत्वं तु न, विसर्गस्यापि रेफचकाररूपपदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वेन अन्तरङ्गत्वाभावात् । अन्तरङ्गपरिभाषाया 'वाह ऊठ्' सूत्रस्थत्वेन तद्दृष्ट्या त्रिपाद्या असिद्धत्वेन अन्तरङ्गाभावेन त्रिपादीस्थेऽन्तरङ्गे तदप्रवृत्तेः । तदुक्तम्भाष्ये 'अयुक्तोऽयं परिहारो बहिरङ्गलक्षणत्वाद्वेति' ।

ननु 'उपसर्गादृति धातौ' इत्यत्र ऋदिति तपरोच्चारणं दीर्घाग्रहणार्थम्, ऌकारग्रहणार्थं च । तच्च 'उपसर्गात्' इति विभक्तितकारमादाय 'तात्परः' इत्यर्थेन सिद्धमिति ऋति तपरकरणं व्यर्थमिति चेन्न, एतत्तकारवैयर्थ्येन 'तपरः' इति सूत्रं विभक्तितकारमादाय न प्रवर्तते, इति ज्ञापनात् । तेन 'आद् गुणः' इति सूत्रे तपरसूत्राप्रवृत्त्या अपदेन ह्रस्वदीर्घयोरपि ग्रहणं सिद्ध्यति । 'उपसर्गादृति' इत्यस्य स्थाने 'गतेर्ऋति' इति न न्यस्तम्, 'अच्छगत्यर्थवदेषु' ( १-४-६९ ) इति अच्छ इत्यस्य गतित्वात् 'अच्छ ऋच्छति' इत्यत्र वृद्ध्यापत्तेः ।

नन्वत्र 'धातौ' इति व्यर्थम्, क्रियायोगे एव उपसर्गसंज्ञाविधानेन क्रियायाश्च धातुवाच्यतया धातुं विना उपसर्गत्वानुपपत्त्या पीनत्वेन रात्रिभोजनाक्षेपवदुपसर्गत्वेन धातोराक्षेपस्स्यादित्याह—धातोराक्षेप इति । न चाक्षिप्तस्य शाब्दे भानं न भवति । अत एव 'घटं पश्य' इत्यादौ घटशब्देनाश्रयतयाक्षिप्ताकाशस्य भानं नेति वाच्यम्, वैयाकरणनिकाये अर्थापत्त्याऽऽक्षिप्तस्यापि शाब्दे भानस्वीकारात् । अत एव तत्र निर्देशादिना ज्ञाप्यार्थस्य शाब्दे भानम् । न चैवमपि 'उपगत ऋकार उपर्कारः' इत्यादौ गम्यमानधातुयोगसत्त्वाद् वृद्ध्यापत्तिरिति वाच्यम्, यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः, इति परिभाषया आक्षिप्तधातौ ऋतो विशेष्यतया ऋकारादौ धातौ वृद्धिविधानेनादोषात् ।

योगविभागेनेति—योगः=सूत्रं तस्य विभागः = खण्डद्वयकरणं तथा हि—'उपसर्गादृति' इत्येकम्, 'धातौ' इत्यपरमित्येवं सूत्रद्वयं विधाय धातुः संज्ञा, तत्संज्ञिनश्च क्रियावाचिनो भ्वादयः सनाद्यन्ताश्च । तथा च उपसर्गाकाराद् ऋकारादिधात्ववयवेऽचि परे पूर्वपरयोरचोर्वृद्धिः स्यात् । ततः 'धातौ' अत्र उपसर्गात् 'ऋति' इति सम्बध्यते उक्त एवार्थः । द्विर्बद्धं सुबद्धं भवतीति न्यायेन पूर्वेणैव वृद्धौ सिद्धायामिदं नियमार्थम् । तेन =वृद्धिरेव नान्यदिति बोधनेन । पाक्षिकः=वैकल्पिकः । न भवतीति—परोऽपि प्रकृतिभावो नियमेन बाध्यते इत्यर्थः । न च येन नाप्राप्तन्यायेन गुणबाधकस्य प्रकृतिभावस्यायं बाधकः स्यादिति योगविभागो व्यर्थ इति वाच्यम्, प्रकृतिभावस्य वैकल्पिकत्वेन तदभावपक्षे वृद्धेश्चारितार्थ्येन निरवकाशत्वाभावात् । अत एवोक्तम्—पाक्षिकोऽपीति । औपदेशिकस्य भ्वादेर्धातोर्दीर्घऋकारादेरभावात् 'ऋति' इति तपरकरणमुत्तरार्थम् ।

वा सुप्यापिशलेः । [ ६-१-९२ ]

अवर्णान्तादुपसर्गाद् ऋकारादौ सुब्धातौ परे वृद्धिरेकादेशो वा स्यात् । आपिशलिग्रहणं पूजार्थम् । प्रार्षभीयति । प्रर्षभीयति । सावर्ण्याद् लृवर्णस्य ग्रहणम्, प्राल्कारीयति, प्रल्कारीयति । तपरत्वाद्दीर्घे न, उप ॠकारीयति-उपर्कारीयति ।

'वा सुप्यापिशलेः' इति । अत्र 'उपसर्गात्' इति पूर्वसूत्रम्, आदिति, वृद्धिरिति, अचीति चानुवर्तते । आदिति उपसर्गादित्यस्य विशेषणम् । विशेषणञ्च तदन्तस्य संज्ञा, तदाह—अवर्णान्तादिति । 'ऋति' इति धातावित्यस्य विशेषणम् । अल्बोधकञ्च सप्तम्यन्तं विशेषणं तदादेर्बोधकम्, 'यस्मिन् विधिः' इति परिभाषाबलात्, तदाह—ऋकारादाविति । वस्तुतस्तु एतादृशार्थे पूर्वपदेनाकारान्तोपसर्गस्य परपदेन ऋकारादेर्धातोर्ग्रहणापत्त्या धातूपसर्गसमुदायस्यापत्तिः । अतोऽत्र उपसर्गपदधातुपदयोः स्वावयवे लक्षणया उपसर्गावयवाकाराद् ऋकारादिसुब्धात्ववयवेऽचि परे पूर्वपरयोरचोः स्थाने वृद्धिरित्यर्थ उचितः ।

सुब्धाताविति—अत्र सुप्पदम् 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया स्वान्तस्वप्रकृत्यादिसमुदायपरम् = सुबन्ततदादिरिति यावत् । सुबन्तस्य च धातुत्वासम्भवाल्लक्षणया सुबन्तप्रकृतिकप्रत्ययान्तपरम् । तथा च सुब्धातावित्यस्य सुबन्तप्रकृतिकप्रत्ययान्तधातावित्यर्थः । 'सुबन्तप्रकृतिकधातौ' इत्यर्थस्तु चिन्त्यः, यस्मात्प्रत्ययो विधीयते सा प्रकृतिः, एवञ्च सुबन्तप्रकृतिकत्वस्य क्यजादिप्रत्ययधर्मतया धातावसम्भवात् । यदि तु सुबन्तः प्रकृतिः कारणं यत्रेत्येवं व्याख्यायते तदा तत्त्वस्य सम्भवेऽपि क्लिष्टकल्पना, व्याकरणे प्रकृतिशब्दस्य तदर्थेऽप्रसिद्धेः । केचित्तु लक्षणया सुबन्तावयवके धातावित्यर्थमाहुः । न च 'ऋज गतौ' इत्यादितः क्विपि सुपि तल्लोपे 'ऋक्' इत्यादौ सुबन्तधातुत्वसम्भवः, तथाऽपि न तत्रास्य प्रवृत्तिः, तपरव्यावर्त्यस्य दीर्घॠकारादेर्नामधातावेव सम्भवेन तत्रैवास्य प्रवृत्तेः सर्वसम्मतत्वात् । अत एव तुल्यास्यसूत्रे 'वा सुप्यापिशलेः' 'उपार्कारीयति उपर्कारीयति' इति भाष्योक्तं संगच्छते । सुबन्तभिन्ने धातौ प्रवृत्तौ तु भाष्यासङ्गतिः स्पष्टैव ।

आपिशलेरिति—'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी, सुब्धातौ वा वृद्धिरापिशलेराचार्यस्य मते इत्यर्थः । ननु वाग्रहणेनैव विकल्पे सिद्धे आपिशलिग्रहणं व्यर्थमत आह पूजार्थमिति—कस्य पूजार्थमित्याकाङ्क्षायाम् यदि आचार्यापेक्षया अष्टाध्याय्याः प्रसिद्धिस्तदा अष्टाध्याय्यामपि तन्मतसंग्रहेण आचार्यस्य पूजा गम्यते । यदि अष्टाध्याय्यपेक्षया आचार्यस्य महत्त्वं तदा तन्मतसत्तया अष्टाध्याय्याः पूजा प्रतीयते । ननु आपिशलिग्रहणेनैव पूजाविकल्पयोः सिद्धयोर्वाग्रहणं व्यर्थमिति चेन्न, आचार्यस्य प्राधान्येन पूजां स्थापयितुं वाग्रहणस्य चारितार्थ्यात् ।

प्रार्षभीयतीति—आत्मन ऋषभम्=वृषभमिच्छतीत्यर्थे अमन्तादृषभशब्दात् 'सुप आत्मनः' इति क्यचि 'सनाद्यन्ताः' इति धातुत्वे 'सुपो धातु' इत्यमो लुकि 'क्यचि च' इतीत्वे लटि तिपि शपि प्रयोगे 'प्र ऋषभीयति' इति स्थिते अनेन वृद्धौ 'प्रार्षभीयति' वृद्ध्यभावे गुणे 'प्रर्षभीयति' इति । ऋकारलृकारयोः सावर्ण्यात् 'तपरस्तत्कालस्य' इति ह्रस्वयोॠकारलृकारयोर्ग्रहणात् आत्मन लृकारमिच्छति 'लृकारलेखने मम योग्यता स्यादितीच्छति' इत्यर्थे पूर्ववत् क्यजादौ उपशब्दयोगे आल् वृद्धिः 'उपाल्कारीयति' इति । वृद्ध्यभावे गुणे 'उपल्कारीयति' इति । तपरकरणेन ह्रस्वयोरेव ग्रहणाद् दीर्घमॄकारमिच्छति ॠकारीयति । उपयोगे 'उपर्कारीयति' अत्र गुण एव । अत्रापि 'ऋत्यकः' इति प्रकृतिभावो न, 'धातौ' इति योगविभागकृतनियमेन प्रकृतिभावस्य बाधात् ।

'एङि पररूपम्' इति, आदिति, उपसर्गादिति, धाताविति एकः पूर्वपरयोः' इति 'अचि' इति चानुवर्तते । आदिति उपसर्गादित्यस्य विशेषणतया तदन्तग्राहकम्, 'एङि' इति धातावित्यस्य विशेषणतया अल्बोधकसप्तम्यन्तत्वेन 'यस्मिन् विधिः' इति परिभाषया तदादिग्राहकम् । तदाह—अवर्णान्तादित्यादि । वस्तुतस्तु उपसर्गावयवाकाराद् धात्ववयवे एङ्रूपेऽचि परे पूर्वपरयोरचोः स्थाने पररूपमेकादेश इत्येवार्थः । तेन धातूपसर्गयोः समुदितयोः स्थाने नादेशः ।

एङि पररूपम् । [ ६-१-९४ ]

अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति । इह 'वा सुपि' इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन एङादौ सुब्धातौ वा, उपेडकीयति, उपैडकीयति । प्रोषीयति, प्रौषीयति । 'एवे चानियोगे' ( वा ३६३१ ) नियोगोऽवधारणम् । क्वेव भोक्ष्यसे । अनवक्लृप्तावेवशब्दः ।

प्रेजत इति—एजृ दीप्तौ । प्र एजते इति स्थितौ वृद्धिं बाधित्वा धातूपसर्गयोरचोः स्थाने पररूपमेकार एकादेशः । 'प्रेजते'=प्रकर्षेण दीप्यते । उपोषतीति—उप दाहे इत्यतो लटि तिपि शपि लघूपधगुणेऽनेन वृद्धिं बाधित्वा पररूपे 'उपोषति' इति अल्पं दहतीत्यर्थः ।

वाक्यभेदेनेति—'एङि पररूपम्' इत्येकं वाक्यम्, तस्यार्थं उक्त एव । तत्र 'वा सुपि' इति द्वितीयं वाक्यम्, उपसर्गावयवाकारात् सुब्धात्ववयवे एङ्रूपेऽचि पूर्वपरयोर्वा पररूपमेकादेशः । वाक्यभेदेन व्याख्यानं भाष्ये नोपलभ्यते । काशिकायाम् 'केचिद् वा सुप्यापिशलेरित्यनुवर्तयन्ति । तद्वाक्यभेदेन सुब्धातौ विकल्पं करोति' इत्युक्तम् । तत्रापि केचिदित्युक्त्या अरुचिः सूचिता ।

उपेडकीयति—एडकः=मेषः । तदुक्तममरे-'मेढ्रोरभ्रोरणोर्णायुमेषवृष्ण्य एडके' इति । तमात्मन इच्छति 'उपेडकीयति' अत्र पररूपमेकारः । तदभावे वृद्धौ 'उपैडकीयति' प्रोषीयतीति—'ओषः'=द्रुतं नृत्यादिकम् । तदुक्तम्—'अविलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्' इति । ओघः= समूहः, 'स्तोमौघनिकरव्रातवारसंघातसंचयाः' इत्यमरात् । ओघः=जलप्रवाहः, 'ओघो वृन्देऽम्भसां रये' इत्यमरात् । तमात्मन इच्छति प्रकर्षेणेतीत्यर्थः । वस्तुतः पररूपं भाष्यासम्मतम् । 'एङ्येङ्' इत्येव सिद्धे पररूपग्रहणम् उत्तरार्थम् । तेन 'आ ऋश्यात्' 'अर्श्यात्' इत्यत्र गुणे अत्र इत्यादिना योगे अरि पूर्वान्तवद्भावेनाङ्त्वे 'अवर्श्यात्' इत्यत्र 'ओमाङोश्च' इति पररूपे रूपं सिध्यति । न चात्र परत्वात्सवर्णदीर्घ एव स्यादिति वाच्यम्, 'आ ऋश्यात्' अर्श्यात् अव अर्श्यात् 'अवर्श्यात्' इत्येव भवितव्यम् इति भाष्यात्पूर्वविप्रतिषेधेन पररूपस्यैवेष्टत्वात् 'उस्यपदान्तात्' 'अतो गुणे' इत्यादावनुवृत्त्यर्थत्वाच्च । 'अमि पूर्वः' इतिवत् 'एङि परः' इत्येव सिद्धे रूपग्रहणं चिन्त्यम् । पूर्वगुणकादेशवारणार्थन्तु न, पूर्वगुणकपरगुणकयोः प्राप्तौ परत्वात्परगुणकस्यैवादेशस्य सिद्धेः ।

'एवे चानियोगे' इति । अवर्णात् एवघटके एङि परे पूर्वपरयोः पररूपमेकादेशो भवति नियोगभिन्नेऽर्थे गम्यमाने । अवधारणमिति—यद्यपि नियोगशब्दः प्रेरणायाम्, कार्ये इत्याद्यनेकेष्वर्थेषु परन्तु 'नियोगे इति किमर्थम्' 'इहैव भव मा स्म गाः' 'अत्रैव त्वमिह वयं सुखोषाः' इति प्रत्युदाहरणादवश्यम्भावरूपमवधारणमिह गृह्यते । अन्ययोगव्यवच्छेदोऽवधारणम्=अन्यसम्बन्धाभावः निश्चय इति यावत्, अनियोगोऽनिश्चयः ।

क्वेवेति—कुत्र मया भोक्तव्यम् ।

तदुक्तम् 'नावक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः ।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत् ॥' इति ।

अस्यार्थः=नावक्लृप्तौ=अनिश्चये यदा एवकारो दृष्टः स पररूपस्य गोचरः=विषयः । यदा तु नियमे दृष्टः स वृद्धेर्विषय इति । केचित्तु नियोगो व्यापार इत्याहुः, तन्न, तदर्थे प्रमाणाभावात्, 'यदैव पूर्वे जनने शरीरम्' इति कुमारसम्भवप्रयोगस्य 'ममैव जन्मान्तरपातकानाम्' इति रघुवंशप्रयोगस्य 'धातोस्तन्निमित्तस्यैव' 'लङः शाकटायनस्यैव' इति सौत्रप्रयोगस्य च विरोधाच्च । सर्वत्र व्यापाराप्रतीतया पररूपापत्तेः । यस्य कस्यचिद् व्यापारस्य ग्रहणे तु 'क्वेव भोक्ष्यसे' इत्यस्याप्युदाहरणत्वानापत्तेः, तत्रापि व्यापारस्य सत्त्वात् । स्थलसंकीर्णत्वात्कस्मिन्स्थाने त्वया भोक्तव्यमिति स्थलनिश्चयो नास्तीत्यर्थः । अत्रानिश्चयसत्त्वात् 'क एव' 'क्वेव' इति पररूपम् । अनवक्लृप्ताविति—अनवक्लृप्तिरनवधारणम्=अनिश्चय इति यावत् । कोशकारास्तु 'एवशब्दस्य योऽयमर्थ-

'अनियोगे' किम्— तवैव ।

अचोऽन्त्यादि टि । [ १-१-६४ ]

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । 'शकन्ध्वादिषु पररूपं वाच्यम्' ( वा ३६३२ ) । तच्च टेः ।

---

द्वयम् । अवधारणमसम्भवरूपमनवक्लृप्त्यादि च 'तयोरन्त्य एवात्र एवशब्दार्थः' इत्युक्त्वा 'क्वेव भोक्ष्यसे' इत्यस्य 'स्थलसंकीर्णत्वादिना नास्ति सम्भवस्तव भोजनस्येति गम्यते' इत्यूचुः । एतन्मते भोजनस्थलनिश्चयाभाव इति न गम्यते । किन्तु भोजनासम्भव एव द्योत्यः । अनियोगे किमिति= अनियोगे इत्यस्य किं प्रयोजनमित्यर्थः । फलमाह—तवैवेति—कस्येदं पुस्तकमिति प्रश्ने 'तवैव' इति निश्चीयते इत्यर्थः । अत्र नियोगसत्त्वाद् वृद्धिरेव, न पररूपम् । भाष्ये तु 'शकन्ध्वादिषु च' इत्यस्योत्तरम् 'एवे चानियोगे' इति पठितम् ।

अथ टेः पररूपं वक्ष्यति तत्र टिसंज्ञामाह— 'अचोऽन्त्यादि टि' इति । 'अचः' इति निर्धारणे षष्ठी । निर्धारणञ्च—जाति-गुण-क्रिया-संज्ञैतदन्यतमविशिष्टस्य स्वेतरावृत्तिधर्मवत्त्वप्रकारकज्ञान-विषयीकरणम् । प्रकृतेऽच्त्वजातिविशिष्टस्य स्वेतरयावदज्वृत्तिधर्मान्त्यत्ववत्त्वप्रकारकाज्विशेष्यकं ज्ञानम्='अयमच् अच्समुदायनिरूपितान्त्यत्ववान्' तद्विषयत्वमन्त्याचः । तथा च 'अचः' इत्यत्र प्रकृतेरच्समुदायोऽर्थः । तस्य स्वघटकत्वस्वघटितसमुदायघटकस्वेतरावृत्तित्वोभयसम्बन्धेन अन्त्यत्वेऽन्वयः । न च 'अचः' इत्यस्यान्त्यत्वेऽन्वये यन्त्य आदिर्यस्य तद् 'अन्त्यादि' इति समासानुपपत्तिः, अन्त्यत्वस्य नित्यसाकाङ्क्षतया नित्यसाकाङ्क्षावृत्तिसापेक्षत्वस्यैव 'साकाङ्क्षमसमर्थवत्' इत्यत्र साकाङ्क्षपदेन ग्रहणात् ।

ननु निर्द्धारणस्यानेकापेक्षत्वात् 'अचः' इत्येकवचनानुपपत्तिरिति चेन्न, सौत्रत्वात् जातिगतैकत्वविवक्षणाद्वा तदुपपत्तेः । अन्त्यादिति—अन्तशब्दोऽत्रावसानवाची । समीप्याधिकरणसप्तम्यन्ताद् 'दिगादिभ्यो यत्' इति अन्ते=अवसानसमीपे भव इत्यर्थे यत् । अन्त्य आदिः=आद्यवयवो यस्य समुदायरूपस्य तत् समुदायरूपं टिसंज्ञकं भवतीत्यर्थः । यथा 'पथिन्' इत्यादौ 'इन्' इत्यादेः । अचः, अन्त्यादि, टि, इति पदत्रयम् ।

'शकन्ध्वादिषु पररूपं वाच्यम्' इति । शकन्धुरादिर्यस्य गणस्य=समुदायस्य स शकन्ध्वादिः । अवयवगतसंख्याया बहुत्वस्य गणे आरोपाद् गणस्यैकत्वेऽपि 'शकन्ध्वादिषु' इति बहुवचनोपपत्तिः । एवमेवान्यत्रापि बोध्यम् । शकन्ध्वादिगणे पठितानां शब्दस्वरूपाणां सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । तच्च टेरिति—शकन्ध्वाद्यनुगुणं पररूपञ्च टेः स्थाने बोध्यमित्यर्थः । तथा च शकादिपूर्वपदघटकटेरचि परे पूर्वपरयोः टेरचश्च स्थाने पररूपं स्यादित्यर्थः । नन्वेवम् 'शक अन्धुः' इति स्थितौ अन्त्योऽच् ककाराकारः स च कस्यापि आदि र्नास्ति इत्यकारस्य टित्वाभावात्पररूपं न स्यादिति चेन्न, अन्त्येऽप्येव अन्त्यादिसमुदायत्वस्य तदवयवत्वस्य च आरोपेण अन्त्यादिसमुदायत्वाभाववति शकशब्दाकारे अन्त्यादिसमुदायज्ञानस्य तत्समुदायावयवत्वज्ञानस्य च विषयीकरणेन अन्त्यादिशब्देन केवलान्त्यस्य ग्रहणेन टिसंज्ञायां टित्वानपायात् ।

आरोपश्च—'तदभाववति तत्प्रकारकं ज्ञानमेव' । तच्चोत्तरकालबाधविशिष्टम् एकम् । यथा शुक्तौ 'रजतम्' इति । अन्यच्च बाधसमकालिकेच्छाजन्यमुत्तरकालबाधरहितम् । यथा— 'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः' इत्यादि । अत्र अन्त्यमेव ज्ञानं विवक्षितम् । नागेशस्तु यथा 'शशशृङ्गम्, वन्ध्यापुत्रः' इत्यादीनाम् 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पतञ्जल्युक्तं विकल्पात्मकं बौद्धज्ञानम् तथा 'शक' इत्यत्र टेरभावे टिज्ञानमकारे कृत्वा पररूपं विधेयम् इत्यारोपस्य नोपयोगः । अन्त्यादिसमुदायत्वेन ज्ञानविषयीभूतस्यैव टिसंज्ञा, न तु वस्तुसत एव । अत्र मानञ्च 'प्रत्यभिवादेऽशूद्रे' इति भाष्ये 'अशूद्रे किम्, कुशलस्यसि तुषजक' इत्यत्र वाक्यस्य टेः प्लुतस्य प्रत्युदाहरणम्,

शकन्धुः । कर्कन्धुः । कुलटा । 'सीमन्तः केशवेशे' ( वा ३६३३ ) सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः ।

---

'आयुष्मानेधीन्द्रपालित' इत्यत्र प्लुतकरणञ्च । अन्यथा अन्त्याचो वाक्यघटितत्वाभावात्तद्भाष्यमसङ्गतमेव स्यात् । तथा च 'शक अन्धुः' इत्यत्र ककाराकारस्य टेः, अन्धुशब्दाकारस्य च स्थाने अकाररूपे पररूपे 'शकन्धुः' इति सिध्यति । शकानां देशविशेषाणामन्धुः कूपः शकन्धुः । शकसंवत्सरप्रवर्त्तको राजविशेषः, तस्यान्धुरिति वार्थः । भाष्ये काशिकायाञ्च नेदमुदाहृतम् । प्रक्रियाकौमुद्यनुरोधेनेदमुदाहरणम् ।

कर्कन्धुरिति—कर्कार्णा राजविशेषाणामन्धुः कर्कन्धुः । बदरीफलवाचिनस्तु नात्र ग्रहणम्, तस्य कर्क = कण्टकं दधातीति कर्कन्धूः । कर्कोपपदाद् धाधातोः 'अन्दूदम्भू' इति (उ. १पा. ९३सू.) कूप्रत्यये उपपदस्य नुमागमनिपातने च सिद्धेः ।

कुलटेति—अटति=तत्र तत्र गच्छति भिक्षार्थमेव यदि तदा पचाद्यचि टापि अटा कुलानामटा इति शेषषष्ठ्या समासे 'कुल अटा' इति स्थितौ पररूपे 'कुलटा' इति सती भिक्षुकी । यदि तु व्यभिचारार्थमटति सा व्यभिचारिण्यपि कुलटा ।

'सीमन्तः केशवेशे'—केशानां वेशः = अलङ्करणं केशवेशस्तत्रार्थे सीमन्शब्दस्य टेः अन्तशब्दस्याचि परे पूर्वपरयोः स्थाने पररूपमेकादेशो निपात्यते । 'सीमनः अन्तः' इति विग्रहमात्रम् । केशान्तर्गतवर्त्माकाररेखायाम्, गर्भस्य षष्ठे सप्तमे वा मासि संस्कारविशेषे वा सीमन्तशब्दो रूढः । केशवेशादन्यत्र तु सवर्णदीर्घ एवेत्याह सीमान्तोऽन्य इति—सीम्नः ग्रामाद्यवधेरन्तश्चरमो भागो ग्रामान्तभाग इत्यर्थः ।

मनीषेति—ईषा=हलयुगयोर्मध्यस्थितः काष्ठदण्डः । 'ईष गतौ' इत्यत ईष्यतेऽनयेत्यर्थे 'गुरोश्च हलः' इति करणे अप्रत्यये टाप् ईषेति । अत्र ईषाशब्दो लक्षणया सदृशपरः । मनस ईषा= प्रेरकतया तत्सदृशी बुद्धिर्मनीषा । 'मनस् ईषा' इति स्थितौ अस् इति टेः, ईकारस्य चोभयोः स्थाने ईकाररूपे पररूपे 'मनीषा' इति ।

हलीषेति—हल्यते = कृष्यतेऽनेनेति हलः । 'हल विलेखने' इत्यतः 'पुंसि संज्ञायां घः' इति करणे घे हलः तीक्ष्णाग्रो लौहमयो भूकर्षको यन्त्रविशेषः, परन्तु तद्घटितत्वात् ईषा लाङ्गलादिविशिष्टः समुदायोऽपि हल इत्युच्यते यदा तदा हलस्य ईषा हलीषा अवयवावयविभावसम्बन्धेन हलविशिष्टा ईषा हलीषा =लाङ्गलदण्डः । यदा तु हलशब्दः स्वार्थे एव तदा चाल्यचालकभावसम्बन्धेन हलविशिष्टा ईषा हलीषेति । लाङ्गलीषेति—लाङ्गलम्=हलस्तस्येषा लाङ्गलीषा । स एवार्थः । पूर्ववत्पररूपम् ।

पतञ्जलिरिति—यदा पतन्तोऽञ्जलयो नमस्कार्यतया यस्मिन्स पतञ्जलिः = योगसूत्रप्रणेता ऋषिविशेषः, तदा 'पतत् अञ्जलिः' इत्यत्र 'अत्' इति टेः, अकारस्य च स्थाने पररूपम् । यदा तु गां जलं नर्दयतीति गोनर्दः पर्वतविशेषस्तत्समीपदेशोऽपि गोनर्दस्तत्र तपस्यतः कस्यचिदृषेः सन्ध्याकरणसमये अञ्जलेः पतित इत्यर्थस्तदा 'अञ्जलेः पतितः' इत्यर्थे पतितशब्दस्य अञ्जलिशब्देन मयूरव्यंसकादित्वात् 'मयूरव्यंसकादयश्च' ( २–१–७२ ) इत्यनेन समासो वाच्य इति तत्रैव निपातनात् 'इत' इत्यस्य लोपे जश्त्वाभावे च तस्य सिद्धिः स्यादिति शकन्ध्वादिषु पाठश्चिन्त्यः । अन्ये तु 'मयूरव्यंसकादौ निपातनात् 'इत्' इत्यस्य लोपः, अवशिष्टस्य अकारस्थानेन पररूपम् । पररूपस्य स्थानिवत्त्वात्तकारस्य न जश्त्वम्' इति वदन्ति ।

परे तु समासार्थं मयूरव्यंसकादौ पाठेऽपि शकन्ध्वादित्वात् 'इत' इत्यस्य पररूपम् । टेः पररूपमिति तु शकन्ध्वादिशब्दसिद्ध्यनुगुणं पररूपमिति वार्तिकार्थेन फलितम् यथा तथा 'पतञ्जलि' इत्यस्य सिद्धये 'इत' इत्यस्य पररूपमित्यपि वक्तुं शक्यम् । वस्तुतस्तु अत्र पाठसामर्थ्यात् 'सुप्सुपा' इति समासः पररूपञ्चेति मयूरव्यंसकादित्वनिपातकल्पना व्यर्थेत्युपाध्यायाः ।

'सारङ्गः पशुपक्षिणोः' ( ग १३६ )। साराङ्गोऽन्यः। आकृतिगणोऽयम्। मार्तण्डः। 'ओत्वोष्ठयोः समासे वा' ( ३६३४ )। स्थूलोतुः, स्थूलौतुः। बिम्बोष्ठः, बिम्बौष्ठः।

'सारङ्गः पशुपक्षिणोः' इति—सारङ्गः=चित्रमृगः पशुः। चातकः, मयूरो वा पक्षी। 'सार अङ्ग' इति स्थितौ अनेन पररूपम्। अन्य इति—सारशब्दो बलवाची वृत्तौ बलवद्वाची। तदुक्तम्—'सारो बले स्थिरांशे च न्याय्ये क्लीबोऽम्बरे त्रिपु'। इति। साराणि=बलवन्ति अङ्गानि यस्य पशोः पक्षिणो वा स सारङ्गः पशुः पक्षी वा तद्भिन्नो मनुष्यादिश्चेत्तदा दीर्घः साराङ्गो देवदत्तो बलवानित्यर्थः। 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' इत्यमरः। इदं भाष्ये काशिकायाञ्च न दृश्यते। प्रक्रियाकौमुद्याम् 'सारङ्गः' इत्युदाहृतं परन्तु पशुपक्षिणोरिति कोशे पशुपक्षिणोः सारङ्ग इति प्रयोगदर्शनादाकृतिगणोऽयमित्यस्योदाहरणेन भवितव्यम्।

आकृतिगणोऽयमिति—पररूपविधायकशास्त्राविषयत्वेऽपि पररूपघटिताकृत्या गण्यते =बोध्यते इत्याकृतिगणः। अयं शकन्ध्वादिराकृतिगण इत्यर्थः। तत्फलमाह—मार्त्तण्ड इति—अत्र शास्त्रान्तरेण पररूपाप्राप्त्या पररूपघटितप्रयोगदर्शनात् शकन्ध्वादित्वं कल्प्यते। मृतण्डादागतो मार्तण्डः। अणुविषये एव पररूपम्, तथैव प्रयोगदर्शनादिति नागेशाः। अणविषयता च भावित्वेन। एवञ्च मृतमण्डं यस्य स मृतण्डः कश्चिदृषिः। मृत अण्ड इति स्थितौ पररूपे कृते अणि आदिवृद्धौ मार्तण्ड इति। अपत्ये तु नाण् 'अत इञ्' इतीञा बाधात्। मार्तण्डः सूर्यः। वस्तुतस्तु मृतञ्च तदण्डञ्चेति मृतण्डं ब्रह्माण्डम्, तत्र भवो मार्तण्ड इत्येव व्युत्पत्तिरुचिता। 'मृतेऽण्ड एष एतस्मिन्' इति मार्तण्डशब्दनिर्वचनस्य भागवते प्रदर्शितत्वात्। मृते=अचेतने एष सूर्यो वैराजरूपेण यस्मात्प्रविष्ट इति तद् व्याचष्टे श्रीधरः।

महाभारते मोक्षधर्मेषु बुधशापवशाददितेरुदरस्थो निश्चेतनो ममार। बहिर्निःसृतस्तु पश्चाच्चैतन्यमवापेति मार्तण्डपदव्युत्पत्तेर्दर्शनाच्च। मृतेऽण्डे जातो मृत्वा जात इत्यर्थ इति तद्व्याख्यातारः। 'परा मार्ताण्डमास्यत्' 'पुनर्मार्त्ताण्डमाभरत्' इत्यादिवैदिकप्रयोगेषु छान्दसत्वाद् दीर्घः। अन्ये वेदे दीर्घदर्शनाल्लोकेऽपि न्यायप्राप्तदीर्घ एवोचित इत्याहुः।

'ओत्वोष्ठयोः समासे वा'—इति, आदिति, अचि, इति, एकः पूर्वपरयोः, इति पररूपमिति चानुवर्तते। 'समासे' इति घटकत्वं सप्तम्यर्थः, समासघटकाकारात् तत्समासघटके ओत्वोष्ठयोरवयवेऽचि परे पूर्वपरयोः पररूपमेकादेशो वा स्यादित्यर्थः। एतेन यत्र समासे ओतुपदम् ओष्ठपदं वा उत्तरपदं तस्मिन् परे एव पररूपं स्यादिति शङ्का निरस्ता। तथा च दन्ते भवो दन्त्यः, ओष्ठे भव ओष्ठ्यः, दन्त्यश्चासावोष्ठ्यश्च दन्त्योष्ठ्यः, इत्यत्र ओष्ठशब्दस्योत्तरपदत्वाभावेऽपि समानसमासघटकाकारात् परस्य ओष्ठशब्दघटकौकारस्याचः सत्त्वात्पररूपसिद्धिः। तेन 'दन्त्योष्ठ्यो वः स्मृतो बुधैः' इति शिक्षाया नासङ्गतिः। 'तव ओष्ठजलम्' इत्यत्राकारस्य समासाघटकत्वान्नातिव्याप्तिः। 'राजपुरुष ओष्ठजलं पश्य' इत्यत्रोभयोः समानसमासाघटकत्वान्न पररूपम्, किन्तु वृद्धिरेव। न च ओत्वोष्ठयोः पदत्वेन पररूपस्य पदसम्बन्धिकार्यतया 'समर्थः पदविधिः' इति परिभाषोपस्थित्या समासे एव स्यादिति समासग्रहणं व्यर्थमिति वाच्यम्, पदत्वेन सुबन्तत्वेन वा यत्र पदयोः साक्षादुद्देश्यता तत्रैव तत्परिभाषाप्रवृत्तेः।

किञ्च समासग्रहणाभावे समर्थपरिभाषाप्रवृत्तिस्वीकारे 'मूलकेन ओष्ठोपदंशम्' इत्यत्रैकार्थीभावसत्त्वेन पररूपापत्तिः, समासग्रहणे तु तदभावान्न पररूपम्।

स्थूलोतुरिति—स्थूलश्चासावोतुश्चेति स्थूलोतुः—स्थूलविडाल इत्यर्थः। बिम्बोष्ठ इति—बिम्ब्याः फलं बिम्बं तदिव रक्तावोष्ठावस्येति 'बिम्बोष्ठः' बिम्ब ओष्ठः, इति स्थितौ वृद्धिं बाधित्वा पररूपम्। पररूपस्य वैकल्पिकत्वात् तदभावे वृद्धौ 'बिम्बौष्ठः' इति। बिम्बफलवद् रक्तौष्ठ इत्यर्थः।

'समासे' किम्। तवौष्ठः।

**ओमाङोश्च [ ६-१-९५ ]**

ओमि आङि च आत्परे पररूपमेकादेशः स्यात्। शिवायों नमः। शिव एहि—शिवेहि।

**अव्यक्तानुकरणस्यात इतौ [ ६-१-९८ ]**

ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात्।

---

समासे किमिति—समासे इत्यस्य किम्फलमित्यर्थः। फलमाह—तवेति—समासाभावेन नात्र पररूपं किन्तु वृद्धया 'तवौष्ठः' इत्येकमेव रूपम्।

'ओमाङोश्च' इति, ओम् आङ् चेति द्वन्द्वे ओमाङौ। आदिति, पररूपमिति, अचि इति एकः पूर्वपरयोरिति चानुवर्तते। अवर्णादोमाङोरचि परे पूर्वपरयोः पररूपमेकादेशः स्यादित्यर्थः। अत्र 'एङि' इति नानुवर्तते। अत एव 'आ ऋश्यात् अर्श्यात्। अद्य अर्श्यात् 'अद्यर्श्यात्' इत्येव भवितव्यम्। एवं हि सौ नागाः पठन्ति 'चोऽनर्थकोऽनधिकारादेङः' इति भाष्यं संगच्छते। परत्वात्सवर्णदीर्घस्तु न, उक्तभाष्यादेव पूर्वविप्रतिषेधेन बाध्यसामान्यचिन्तया अपवादत्वेन वा पररूपेणैव बाधात्।

शिवायेति—'नमः स्वस्ति' इति नमोयोगे चतुर्थी। अवति = रक्षतीति ओम् = ईश्वरः। ब्रह्म वा, तदुक्तम्—'तस्य वाचकः प्रणवः' (योग. सू) 'ओमित्येकाक्षरं ब्रह्म' इति च। ओमित्यव्ययम्, चादिषु पाठात्, 'कृन्मेजन्तः' इत्युक्तेश्च। ब्रह्मस्वरूपाय शिवाय नमस्कार इत्यर्थः। 'शिवाय ओम्' इति स्थितौ अकारस्य ओकारस्य च स्थाने ओकाररूपं पररूपम्। 'शिवायों नमः' इति।

शिवेहीति—आङ्पूर्वकात् 'इण् गतौ' इत्यतो लोटि सिपि हौ 'आ इहि' इति स्थितौ गुणे शिवशब्देन योगे पूर्वान्तवद्भावेन एकारस्य आङ्त्वे वृद्धिं बाधित्वा पररूपे 'शिवेहि' इति। न च वाक्यसंस्कारपक्षे 'शिव आ इहि' इति स्थितौ गुणदीर्घयोः प्राप्तयोरपवादत्वाद् दीर्घे शिवा इहि, इति जाते गुणेन सिद्धे आङ्ग्रहणं व्यर्थमिति वाच्यम्, आङ्ग्रहणसामर्थ्यादेव 'धातूपसर्गयोः कार्य्यमन्तरङ्गम्' इति ज्ञापनात्। न च धातूपसर्गकार्य्यस्यान्तरङ्गत्वेऽपि तस्य बलवत्त्वे प्रमाणाभाव इति वाच्यम्, समकालप्राप्तौ 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्याङ्ग्रहणेन ज्ञापनात्। दीर्घस्य बहिरङ्गत्वेनासिद्धेः। न चैवमपि अन्तरङ्गादपि अपवादस्य बलीयस्त्वाद् दीर्घे आङ्ग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम्, 'यावता विना अनुपपन्नं तत्सर्वं तेन ज्ञाप्यते' इति न्यायेन 'अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यते' इत्यस्याप्यनेन ज्ञापनात्। तथा चोक्तरीत्या गुणे वृद्धिबाधनार्थमाङ्ग्रहणमिति। भाष्ये तु बाध्यसामान्यचिन्तया 'आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् 'अद्यर्श्यात्' इत्यादौ दीर्घबाधनार्थमप्याङ्ग्रहणमित्युक्तम्।

'अव्यक्तानुकरणस्यात इतौ' इति, अव्यक्तम्=अपरिस्फुटवर्णो ध्वनिः, वर्णविभागरहित इति यावत्। नन्वेवं तदनुकरणमपि अकारादिवर्णविभागरहितमेव स्यात्, अनुकरणस्यानुकार्य्यसमानरूपत्वात्। तथा च अव्यक्तानुकरणस्य यः 'अत्' इत्युक्तिरसङ्गतैव स्यात्। अनुकार्य्ये अव्यक्ते अनुकरणेनाप्यव्यक्तेन भवितव्यम्, अनुकरणेऽच्छब्दसत्त्वेऽनुकार्य्ये च तदभावेऽनुकरणत्वमेव भज्येतेति चेन्न, वृक्षादिपतनादिजन्यध्वनौ वर्णाभावेऽपि लोकैः स्वयंकल्पितवर्णादिघटितस्याप्यनुकरणत्वव्यवहारदर्शनात्। न चानुकार्य्यसदृशमनुकरणमिति नियमभङ्गः, कल्पितवर्णानामनुकार्य्येऽपि कल्पनेन सादृश्यस्याक्षतत्वात्।

अव्यक्तत्वञ्च वस्तुस्थित्यभिप्रायेण। अत्र 'अनुकरणम्' इत्यत्र करणस्य कर्तृत्वविवक्षया चानुकरणकर्तरि ल्युट्। अव्यक्तं कर्म। तथा च अव्यक्तकर्मकानुकृतिकर्ता योऽच्छब्दस्तत इति शब्दघटकेऽपि परे पूर्वपरयोरच्छब्देकारयोः स्थाने इकारः पररूपं स्यादित्यर्थः। यदि तु करणे ल्युट्

पटत् इति पटिति। 'एकाचो न' ( वा ३६३७ )। अदिति।

नाम्रेडितस्यान्त्यस्य तु वा। [ ६-१-९९ ]

आम्रेडितस्य प्रागुक्तं न स्यात्। अन्त्यस्य तु तकारमात्रस्य वा स्यात्। 'डाचि बहुलं द्वे भवतः' ( वा ४६९७ ) इति बहुलग्रहणाद् द्वित्वम्।

---

स्यात्तदा 'उभयप्राप्तौ कर्मणि' इति षष्ठी स्यात्, तदा 'कर्मणि च' इति षष्ठीसमासनिषेधः स्यात्। कर्तरि ल्युटि तु 'कर्तृकर्मणोः कृति' इति षष्ठीति समासे बाधकाभावः। अन्ये तु करणे एव ल्युट्। समासनिषेधस्तु यत्र वाक्ये कर्तृकर्मणोरुभयोः प्रयोगस्तत्रैव।

अत एव 'अथ शब्दानुशासनम्' इति भाष्ये समस्तप्रयोगः संगच्छते। ननु पूर्वपरयोरिति स्थानषष्ठ्या 'अलोऽन्त्यस्य' इति परिभाषया अतस्तकारस्यैव पररूपं न 'अत्' इति समुदायस्येति चेन्न, 'नानर्थकेऽलोऽन्त्यविधिः' इति परिभाषया अलोऽन्त्यसूत्राप्रवृत्तेः। अत्र ज्ञापकञ्च 'नाम्रेडितस्यान्त्यस्य तु वा' इति ग्रहणमेव। अन्यथा अलोऽन्त्यपरिभाषयैवान्त्यस्यादेशे सिद्धे 'अन्त्यस्य' इत्यस्य वैयर्थ्यं स्पष्टमेव। न च 'अतो गुणे' इत्यतः 'अतः' इत्यस्य शब्दाधिकाराश्रयणेनानुवृत्त्या सिद्धे 'अतः' इति व्यर्थम्, तान्ते एव पररूपं न तु दान्ते इत्यर्थं वेति वाच्यम्, शब्दाधिकारस्य 'न हि गोधा सर्पन्ती अहिर्भवति' इत्यादिना दूषितत्वात्। तान्ते एव पररूपमिति भाष्यकृताऽनुक्तेश्च। 'पटत् इति' अलौकिकप्रक्रियावाक्यमेतत्, न तु प्रयोगार्हम्, पररूपस्य नित्यत्वात्, संहिताया अविवक्षणाद्वा। अदित्यस्य इकारस्य च पररूपे 'पटिति' इति। 'पटत्' इति जायते=करोति वेत्यर्थः।

'एकाचो न' इति। एकाचोऽव्यक्तानुकरणस्य इतौ परे पररूपं नेत्यर्थः। यद्यपि भाष्ये 'इतावनेकाजग्रहणं अदर्थम्' इति वार्तिकं पठितं तथापि तत्फलितार्थतया लाघवानुरोधेन 'एकाचो न' इत्युक्तम्। अदितीति—अदिति अव्यक्तानुकरणम्। अत्र पररूपं न। 'पटत्' इत्यव्यक्तानुकरणस्य द्वित्वे 'पटत्पटत् इति' इति स्थितौ पररूपे प्राप्ते तन्निषेधमाह—

'नाम्रेडितस्यान्त्यस्य तु वा' इति। 'अव्यक्तानुकरणस्यात इतौ' इति, पररूपमिति, एकः पूर्वपरयोरिति, अचीति चानुवर्तते। आम्रेडितस्यावयवः, अव्यक्तानुकरणस्य चावयवो योऽच्छब्दस्तस्य इतिशब्दावयवेऽचि परे पररूपं न स्यादित्यर्थः। आम्रेडितस्येति। अव्यक्तानुकरणस्येति च द्वयमपि अच्छब्देन सह सम्बध्यते। अन्त्यस्य तु तकारमात्रस्य वेत्यर्थः। अन्त्यस्यावयविनि नित्यसाकाङ्क्षतया प्रत्यासत्त्या अत इत्यस्यैव सम्बन्धेन तकारमात्रस्येति फलितार्थपरम्।

यत्तु 'नाम्रेडितस्य वस्तु वा' इत्येव वक्तव्ये अन्त्यग्रहणसामर्थ्येन अच्छब्दभिन्ने अगादिशब्देऽपि अन्त्यस्य पररूपं भवति। तेन 'वट्ग्वटेति' इति सिध्यतीति तन्न, मुनित्रयानुक्तकल्पनाया अप्रामाणिकत्वात्। अत एव 'तदधीते तद्वेद' इति सूत्रे द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्य' इति भाष्ये उक्तम्। अन्यथा द्विस्तद्ग्रहणेनापि 'योऽधीते वेद च' तत्रैव यथा स्यान्न तु केवलाध्ययने वेदने च' इत्येवंरूपायाः कस्याश्चित्कल्पनायाः कर्तुं शक्यत्वात् तद्भाष्यमसङ्गतमेव स्यात्। 'लाघवानवधानलक्षणः प्रमादः' इति कैयटः। ननु 'पटत् पटत्' इत्यत्र नित्यवीप्सयोरभावात्कथं द्वित्वमत आह— 'डाचि बहुलं द्वे भवतः' इति। ननु डाचि सति टिलोपे अन्त्यतकारासम्भवः। किञ्च इतौ डाज् निषिध्यते 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इत्यत आह—बहुलग्रहणादिति—वेत्येव वक्तव्ये बहुलग्रहणमधिकविधानार्थम्, बहूनर्थान् लाति गृह्णातीति व्युत्पत्तेः। तदुक्तमभियुक्तैः—

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद् बहुलग्रहे तु॥' इति।

वस्तुतस्तु बहुलग्रहणघटितं वार्तिकं भाष्ये नोपलभ्यते, 'प्रकारे गुणवचनस्य' ( ८-४-२ ) इति सूत्रे भाष्ये 'डाचि च द्वे भवत इति वक्तव्यम्। पटपटायति, शरशरायति' इत्युक्तेः। अत्र कैयटः-

तस्य परमाम्रेडितम् [ ८-१-२ ]

द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति ।

झलां जशोऽन्ते [ ८-२-३९ ]

पदान्ते झलां जशः स्युः । पटत्पटदिति ।

---

'बहुलग्रहणमत्रान्यैराश्रीयते तेन द्वितीया करोतीत्यादौ द्विर्वचनाभावः' इति । कैयटेनान्यैरिति कृत्वा स्वीयासम्मतिः सूचिता । तथा च 'पटत् पटत्' इत्यत्र वीप्सायामेव द्विर्वचनं बोध्यमित्युपाध्यायाः ।

आम्रेडितपदार्थजिज्ञासायामाह—'तस्य परमाम्रेडितम्' इति । परशब्दोऽत्रावयवत्ववाची । यद्यपि 'अन्यारादितरर्ते' इत्यनेन दिगित्येव सिद्धे शब्दग्रहणं दिशि दृष्टः शब्द इत्यर्थलाभार्थम् । तेन देशकालादिवृत्तिनाऽपि परशब्दयोगे पञ्चमी प्राप्ता, परन्तु 'तस्य परम्' इति निर्देशादेव 'अवयववाचिपरशब्दयोगे पञ्चमी न' इति ज्ञाप्यते । तेनात्र 'षष्ठी शेषे' इति अवयवावयविभावसम्बन्धे षष्ठी सिध्यति ।

तस्य ग्रहणं विषयावधारणार्थम् । तेनानन्तरोक्तस्य द्वित्वस्येत्यर्थः । नन्वनन्तरोक्तं 'सर्वस्य द्वे' इति तत्राधिकारसूत्रम्, न हि तेन द्वित्वं विधीयते इतीदमसङ्गतमिति चेन्न, अनन्तरोक्तस्येत्यस्य 'सर्वस्य द्वे' इत्यधिकृत्य विहितस्येत्यर्थः । तेन षाष्ठिके 'एकाचो द्वे' आष्टमिके 'अचो रहाभ्यां द्वे' इति द्विर्वचने इयं संज्ञा न । नन्वाम्रेडितशब्दः 'म्रेडृ, म्रेडृ उन्मादे, इति भौवादिकात् आङ्पूर्वकादच्चि आम्रेड उन्मत्तः । आम्रेडेन आचर्यते इत्यर्थे आचारक्विबन्तात् आम्रेडधातोः क्ते उन्मत्तेन यथा कथितस्य पुनः पुनः कथनं क्रियते तथैव कथितस्य द्विस्त्रिः कथने एव प्रसिद्धः । तथा चामरः— 'आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टन्तु घोषणा' इति । तथाऽपि इह शब्दविशेषे वृद्ध्यादिशब्दवत्परिभाष्यते । महासंज्ञाकरणन्तु प्राचामनुरोधेन, शीघ्रोपस्थितिकत्वात् । द्विरुक्तस्येति—'सर्वस्य द्वे' इत्यधिकृत्य द्विरुक्तस्येत्यर्थः । अत्र तस्य ग्रहणं स्पष्टार्थम्, 'सर्वस्य द्वे' इत्यतो द्वे इत्यनुवर्त्य षष्ठ्या विपरिणामेन 'पूर्वोऽभ्यासः' इतिवत्सिद्धेः । षाष्ठाष्टमिकद्विरुक्तयोस्तु न संज्ञा, संज्ञाप्रकरणं परित्यज्यात्र संज्ञाकरणात् । 'पटत्पटेति' इति—'पटत् पटत् इति' इति स्थितौ अतस्तकारस्य इतेरिकारस्य च स्थाने इकारः पररूपमेकादेशः । 'पटत्पट इति' इति स्थिते गुणे 'पटत्पटेति' इति । अत्र अतः पररूपनिषेधस्तकारस्य च वा पररूपम् । पररूपाभावपक्षे जश्त्वविधानमाह—

'झलां जशोऽन्ते' इति । 'पदस्य' इत्यधिकाराल्लभ्यते । 'स्कोः संयोगाद्योरन्ते च' ( ८-२-२९ ) इत्यतोऽन्ते इत्यनुवर्त्तमाने पुनरन्ते ग्रहणं तत्र चकारेणानुवृत्तस्य 'झलि' इत्यस्यात्र निवृत्त्यर्थम् । ननु 'एकाचो बशः' ( ८-२-३७ ) इति सूत्रे 'स्ध्वोः' ग्रहणेन 'झलि' इत्यस्य निवृत्तेर्बोधितत्वेन पुनरन्तेग्रहणं तन्निवृत्त्यर्थमित्युक्तिरसङ्गतेति चेन्न, स्ध्वोर्ग्रहणेन 'झलि' इत्यस्य निवृत्तिकल्पने 'दधस्तथोश्च' ( ८-२-३८ ) इत्यत्र झलीत्यनुवर्त्य तथोर्ग्रहणप्रत्याख्यानपरभाष्यविरोधपरिहाराय स्ध्वोर्ग्रहणं झलीति निवृत्त्यर्थमित्यस्य=झलीत्यनुवर्त्य सकारधकारभिन्ने झलि सूत्रप्रवृत्तिनिवृत्त्यर्थमित्यर्थे एव तात्पर्येण स्ध्वोर्ग्रहणं झलीति निवृत्तेः कल्पयितुमशक्यत्वात् । ननु 'चानुकृष्टं नोत्तरत्र' इति परिभाषया 'झलि' इत्यस्यानुवृत्तिर्न स्यात् । अत एव णमुलित्यनुवर्तमाने पुनः 'अव्ययेऽयथाभिप्रेते' इति सूत्रे णमुलग्रहणं चरितार्थमिति चेन्न, अनुवृत्त्यर्थकसकलचकारप्रत्याख्यानपरभाष्येण अस्या अप्रामाणिकत्वात्, अनित्यत्वाच्चेत्यन्यत्र विस्तरः । पदान्ते=पदचरमावयवे विद्यमानानां झलां जशः स्युरिति तु नार्थः, 'सरित्' इत्यादौ पदचरमावयवस्तौ इति तत्र विद्यमानस्य तकारस्य जश्त्वापत्तेः । किन्तु 'अन्ते' इति पष्ठ्या विपरिणम्य पदान्तानां झलां जशः स्युरित्यर्थः । तेन नोक्तदोषः । यद्वा अन्तशब्दोऽवसानपरः । तथा च पदस्यान्ते=अवसाने परे झलां जशः स्युरित्यर्थः । अनेन तकारस्य स्थानत आन्तरतम्याद् दकारे जशि कृते 'पटत्पटदिति'

## अकः सवर्णे दीर्घः [ ६-१-१०१ ]

अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। 'अचि' किम्? कुमारी शेते। 'नाज्झलौ' ( सू १३ ) इति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः, ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः।

---

इति। ननु झलीत्यनुवृत्तौ झलि परे जश्त्वविधानेऽपि खरि परे चर्त्वेन हकारपरझलोऽभावेन च दोषाभाव इति चेन्न, शुष्कः, पक्वः, इत्यादौ जश्त्वेऽनिष्टापत्तेः।

'दैत्य अरिः, श्री ईशः' इत्यादौ गुणे यणि च प्राप्ते तदपवादमाह—'अकः सवर्णे दीर्घः' इति। अचीति, एकः पूर्वपरयोरिति चानुवर्तते। अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यादित्यर्थः। दैत्यस्यारिः=दैत्यारिर्विष्णुः। गुणं बाधित्वा दीर्घः। श्रिया ईशः श्रीशः = विष्णुः। विष्णोरुदयो विष्णूदयः, अनयोर्यणं बाधित्वा दीर्घः। अचि किमिति—अचीत्यनुवृत्तेः किं फलमिति प्रश्नः। 'कुमारी शेते' इत्यादौ दीर्घनिवृत्तिः फलमित्युत्तरम्। अचीत्यस्यानुवृत्त्यभावे ईकारस्य शकारस्य च तालुस्थानजन्यत्वेन 'विवृतमूष्मणां स्वराणाञ्च' इति विवृताभ्यन्तरप्रयत्नसाम्येन च परस्परं सावर्ण्येन तयोः स्थाने दीर्घ ईकारादेशः स्यात्तद्वारणार्थमचीत्यनुवर्तनीयमिति भावः। ननु ईकारशकारयोः स्थानप्रयत्नसाम्येऽपि न सावर्ण्यम्, 'नाज्झलौ' इति निषेधात्। अतः, अक सवर्णपरत्वाभावाद् दीर्घाप्राप्तावचीति व्यर्थमत आह—नाज्झलाविति—'नाज्झलौ' इति निषेधो वर्णसमाम्नायपठितानामेव, 'आदिरन्त्येन सहेता' इत्यनेन अकारादीत्संज्ञकचकारान्तसमुदायघटकानामेव अच्संज्ञाबोधनेन दीर्घप्लुतानां तत्समुदायाघटकत्वे अच्पदग्राह्यत्वाभावेनाऽज्झलाविति निषेधाप्रवृत्तेरीकारशकारयोः सावर्ण्यसत्त्वाद् दीर्घवारणाय अचीत्यनुवृत्तिरावश्यिकी। ननु दीर्घप्लुतानाम् अकारादिऌकारान्तानामच्संज्ञाया अभावेऽपि अच्पदबोध्यह्रस्वानामकारादीनाम् अण्पदबोध्यत्वेन ग्रहणकशास्त्रेण अणुदित्सूत्रेण अकारादीनां ह्रस्वानां स्वस्वसवर्णानां संज्ञाविधानेन अच्पदबोध्यबोध्यत्वेन दीर्घादीनामपि अच्पदबोध्येन ह्रस्वेनाच्ग्रहणं स्यादिति 'कुमारी शेते' इत्यादौ नाज्झलाविति निषेधेन सावर्ण्याभावाद् दीर्घाप्राप्त्या अचीति व्यर्थमत आह—

सावर्ण्यविधीति—सावर्ण्यविधिः='तुल्यास्यप्रयत्नं सवर्णम्' इति, निषेधः='नाज्झलौ' इति। ताभ्यां प्राक् पूर्वम्। अनिष्पत्तेरिति—असिद्धेरित्यर्थः। अयम्भावः-किञ्चिद्वाक्यं स्ववाक्यार्थबोधं विना न स्वबोध्यार्थविषये प्रवर्तकं भवति। तथा च नाज्झलावित्यस्य वाक्यार्थबोधकाले अणुदित्सूत्रस्य वाक्यार्थबोध एव नास्ति, तत्कथं नाज्झलाविति सूत्रस्थाच्पदबोध्येन अणा सवर्णं ग्राहयेत्। वाक्यार्थबोधे पदार्थोपस्थितेः कारणत्वेन अणुदित्सूत्रार्थबोधे अण्पदस्य, उदित्पदस्य च सवर्णपदस्य च शक्तिज्ञानं यदा स्यात्तदा तदर्थोपस्थित्या वाक्यार्थबोधः स्यात्। स च न सम्भवति, सवर्णपदशक्तिज्ञानस्य तुल्यास्य सूत्रस्य वाक्यार्थबोधाधीनत्वात्। तुल्यास्यसूत्रञ्च 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' उत्सर्गः = बाध्यशास्त्रम्। बाधकशास्त्रविषयं लक्ष्यं परित्यज्य स्वकार्यं विधत्ते। तथा च अपवादविषयलक्ष्यज्ञानञ्च अपवादवाक्यार्थबोधं विना न सम्भवतीति नाज्झलावित्यस्य वाक्यार्थबोधे जाते तद्विषयं परित्यज्य सवर्णसंज्ञां विधत्ते। तदनन्तरं सवर्णपदशक्तिज्ञाने अणुदित्सूत्रवाक्यार्थबोधस्तदनन्तरञ्च तेन स्वकार्यकरणमिति रीत्या नाज्झलावित्यच्पदबोध्ये ग्रहणकशास्त्रस्य न प्रवृत्तिः। अणुदित्सूत्रस्य स्वरूपतो निष्पत्तावपि ग्रहणकत्वेन = अणा सवर्णबोधजनकत्वेनानिष्पत्तेरिति भावः। तथा च ईकारशकारयोः सावर्ण्यसत्त्वेन 'कुमारी शेते' इत्यत्र संहिताविवक्षायां दीर्घः स्यात्तद्वारणार्थमचीत्यनुवर्तनमावश्यकमिति। अचीत्यनुवृत्तौ तु नायं दोषः, ईकारशकारयोः सावर्ण्यस्य सत्त्वेऽपि शकारेऽच्त्वस्य कथमपि साधयितुमशक्यत्वात्, यदि तु भाष्यानुसारेण ऊष्मणाम् ईषद्विवृतप्रयत्नत्वम्, स्वराणाञ्च विवृतप्रयत्नकत्वमिति पक्षा

'अकः' किम्—हरये। 'अकोऽकि दीर्घः' इत्येव सुवचम्। 'ऋति सवर्णे ॠ वा' (वा ३६४०) होतॄकारः—होतृकारः। 'ऌति सवर्णे ॡ वा' (वा ३६४१) होतॄकारः। पक्षे ऋकारः सावर्ण्यात्।

---

अयणं तदा अचीत्यस्य नेदं फलम्, ईकारऌकारयोः प्रयत्नभेदेन जातिपक्षेण वा सावर्ण्याभावादित्यन्यत्र विस्तरः। अकः किमिति—ननु 'अचि किम्' इत्यतः पूर्वमेव 'अकः किम्' इति प्रश्न उचित इति चेन्न, अक इत्यपेक्षया अचीत्यस्य पूर्वसूत्रोपात्तत्वेन प्रथमोपस्थितत्वेन तद्विषयकप्रश्नानन्तरमेवास्य प्रश्नस्योचितत्वात्। न च 'अकः' इत्यस्याभावे आदित्यस्यानुवृत्त्या 'औशः' इत्यत्राव्याप्तिदोषस्यैव सत्त्वेन 'हरये' इत्यत्रातिव्याप्तिदानमसङ्गतमिति वाच्यम्, आदित्यस्य सम्बन्धे त्रिविधस्याप्यकारस्य हला 'नाज्झलौ' इति सावर्ण्यनिषेधे हलि परतो दीर्घाप्राप्त्या अचीत्यस्यानुवृत्तिवैयर्थ्येन आदित्यस्य निवृत्तिकल्पनात्। 'सवर्णे' इत्यस्य तु न वैयर्थ्यम्, तथा सति गुणवृद्ध्योरेवापवादत्वापत्त्या 'दैत्यारिः' इत्यत्रापवादेन गुणेन दीर्घबाधापत्तेः। न च दीर्घवैयर्थ्यम्, उभयोर्वैयर्थ्येन विकल्पापत्तेः। सवर्ण इत्यस्य 'ऋति ॠ वा' इत्याद्यर्थमावश्यकत्वाच्च। तथा च अक इत्यस्य 'हरये' इत्यादावेव फलदानस्यौचित्यात्।

सुवचमिति—यथासंख्यमन्वयाद् अकारादाकारे, इकारादिकारे, उकारादुकारे, ऋकारादृकारे ऌकाराद् ऌकारे परे पूर्वपरयोः दीर्घ एकादेशः स्यादित्यर्थेन लक्ष्यसिद्ध्या सवर्णग्रहणं न कर्तव्यं भवतीति लाघवमित्याशयः। न च यथासंख्यं सम्बन्धे ह्रस्वाद्दीर्घे परे दीर्घो न स्यादिति वाच्यम्, जात्योरेव यथासंख्यं सम्बन्धेनोक्तदोषानवकाशात्। नन्वेवमपि ऋकाराद् ऌकारे परे दीर्घाप्राप्तिः, 'ऋऌवर्णयोः' इति वार्तिकेन जात्योरेवातिदेशबोधनाद् ऋकारऌकारयोरपि दीर्घसिद्धेः।

वस्तुतस्तु 'ऋति ॠ वा' 'ऌति ॡ वा' इति वार्तिकयोः ह्रस्वऋकाराद् ह्रस्वऋकारे परे रेफद्वयघटितॠविधानाय ऋकाराद् ऌकारे परे लद्वयघटितॡविधानाय च 'सवर्णे' इत्यस्य वार्तिकेऽनुवृत्त्यर्थमावश्यकतेति सुवचमित्युक्तिश्चिन्त्या। न च वार्तिकेऽपि 'अकोऽकि' इत्यनुवृत्त्यैव ऋकाराद् ऋकारे परे इत्याद्यर्थलाभः, अक ऋकाररूपेऽकि परे पूर्वपरयोर्दीर्घं ॠकार इत्यस्यैव वक्तुं शक्यतया अकारादेरृकारे ऌकारे च परे वार्तिकप्रवृत्त्यापत्तेः। किञ्च भाष्ये 'यदेतदृति इति तदेतदृत इतिवक्ष्यामि' इति पक्षे ऋतः सवर्णे परं विलक्षणऋकारऌकारौ स्यातामित्यर्थस्य दीर्घऋकारादृति ऌति वा परे वार्तिकाप्रवृत्तये भाष्यसम्मतस्य लाभाय सवर्णग्रहणमावश्यकम्। मनोरमायाम् 'अकोऽकि दीर्घः' इति सुवचम्' इति पाठदर्शनात् कौमुद्यां प्रक्षिप्तः पाठ इति गम्यते। कौमुद्यामुक्तत्वे पुनर्मनोरमायां तयोक्तेरनावश्यकत्वात्।

'ऋति सवर्णे ॠ वा' इति अत्र 'ऋति ॠ वा' इत्येव वार्तिकं भाष्ये पठितम्। 'तत्सवर्णे यथा स्यात्' इति भाष्योक्त्या सूत्रतः सवर्णपदानुवृत्तिमभिप्रेत्य 'ऋति सवर्णे ॠ वा', 'ऌति सवर्णे ॡ वा' इत्युक्तं मूले। वार्तिकाभ्यां विधेय ॠकारो रेफद्वयघटितः, द्विमात्रकश्च। ॡकारोऽपि लकारद्वयघटितो द्विमात्रकश्च। द्विमात्रकत्वे प्रमाणन्तु तुल्यास्यसूत्रस्थम् ऋकारऌकारयोः सवर्णसंज्ञायाम् ऋत ऌति परे वार्तिकविधेयस्य ॡकारस्य ॠकारस्य च दीर्घेणैव सिद्धया 'तन्न वक्तव्यं भवति' इत्युक्तम्। एतेन वार्तिकविधेय ॠकार ॡकारश्च द्विमात्रक एवेति सूचितम्। अग्रे 'न च ॠकारॡकारो वाऽस्ति' इत्युक्तम्। रेफद्वयघटित 'ॠकारः, लद्वयघटितॡकार इति च सूचितम्। अन्यथा वर्णसमाम्नाये ॠकारॡकारयोः सत्त्वात्। 'न च ॠकार ॡकारो वाऽस्ति' इति भाष्यमसङ्गतमेव स्यात्। अग्रे अनयोरत्त्वं वक्ष्यामि' इत्यादिना वर्णसमाम्नाये ऋऌक्सूत्रानन्तरम् अनयोः पाठः कर्तव्यस्तेनाच्संज्ञा स्यात् 'होतॄ ३ कारः, होतॡ ३ कारः' इत्यत्र गुरोरनृत इति प्लुतः सिध्यति इत्युक्तम्।

यत्तु शेखरे अइउण् सूत्रानन्तरं पाठः। तेन वार्तिकविधेयस्य ॠकारस्थानिकत्वेऽपि 'उरण् रपरः' इति रपरत्वं न, अणुत्वाभावादिति तन्न एवमपि होतुरः 'होतॄ' इत्यत्र वार्तिकेन रेफद्वयघटित-

होतॣकारः। 'ऋति ऋ वा' 'ऌति ऌ वा' इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्। आद्यस्य मध्ये द्वौ रेफौ, तयोरेका मात्रा। अभितोऽज्भक्तेरपरा। द्वितीयस्य तु मध्ये द्वौ लकारौ, शेषं प्राग्वत्। इहोभयत्रापि 'ऋत्यकः' ( सू ६२ ) इति पाक्षिकः प्रकृतिभावो वक्ष्यते।

एङः पदान्तादति [ ६-१-१०९ ]

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव।

---

ऋकारादेशौ पदशब्दे न समासे 'होतॄपदम्' इत्यादौ 'इको ह्रस्वोऽङ्यः' इति ह्रस्वापत्तेः। अतः 'ऋऌक् सूत्रानन्तरं वर्णसमाम्नाये पाठ इति सूचितम्। इमौ च ॠकारॡकारौ ईषत्स्पृष्टप्रयत्नकौ न विवृतौ, तथा सति सूत्रेणैव विवृतदीर्घयोः सिद्धौ वार्तिकस्य वैयर्थ्यापत्तेः।

होतॣकारः इति—'होतृ ऌकारः' इति स्थितौ उभयोर्ऌकारयोः स्थाने ईषत्स्पृष्टप्रयत्नको रेफद्वयघटितो नृसिंहवद्वर्णान्तरम् ॠकारादेशः। एवं वर्णान्तरम्, ईषत्स्पृष्टप्रयत्नको द्विमात्रकॡकारश्च। 'होतॣकारः, इति। वार्तिकाप्रवृत्तौ सूत्रेण विवृतप्रयत्नको दीर्घॠकारादेशस्तदाह—पक्षे इति 'होतृ ऌकारः' इति स्थितावपि ऋकारऌकारयोः स्थानेऽपि सूत्रेण विवृतस्यैव दीर्घस्य विधीयमानत्वाद् ऋकार एव दीर्घः। न तु ऌकारस्तस्य दीर्घस्याभावात्। तत्र मानञ्च 'होतृ ऌकार' इति स्थितौ दीर्घे होतॄकारः' इति दीर्घॠकारघटितप्रयोग एव। अन्यथा ऌकारमेव दीर्घं कुर्यात्। न च ऋकारस्यापि स्थानित्वात् तत्र दीर्घॠकारादेशेन दीर्घॡकारो नास्तीति न हि वक्तुं शक्यते इति वाच्यम्, ऋकारस्य स्थानित्वेऽपि ऌकारस्थानिनः परत्वात्तदन्तरतमॡकारादेशस्यैव कर्तुमुचितत्वात्।

यदि तु ऋकारस्थानिनः पूर्वमुपस्थितत्वेनान्तरङ्गतया तत्सदृश एव दीर्घो भाष्यकृता प्रयुक्त इत्युच्यते तदा 'ऌति ऌ वा' इत्यस्य प्रत्याख्यानपरं भाष्यं दीर्घॡकाराभावे मानं बोध्यम्। तथा हि— 'होतृ ऌकारः' इत्यत्र ऌकारवान् स्थानीति तत्स्थाने ऌकारवानेव दीर्घः स्यादिति लकारघटितश्च यदि दीर्घो विवृतोऽपि स्यात्तदाऽऽन्तरतम्याद्विवृतस्य स्थानिनः स्थाने स एव स्यादिति द्विलकारक ईषत्स्पृष्टो न स्यादिति द्विलकारकस्य विधानार्थं वार्तिकस्यावश्यकत्वाद् भाष्योक्तं तत्प्रत्याख्यानमसङ्गतमेव स्यात्। न च विकल्पेन विधानार्थं वार्तिकं चरितार्थम्, एवमपि सूत्राद् वार्तिके दीर्घग्रहणानुवृत्त्या सिद्धे ऌग्रहणवैयर्थ्यं विलक्षणऌॡवर्णयोः सत्त्वे ज्ञापकम्। मम तु विवृतस्य दीर्घस्य ऌकारस्याभावे ऌकारघटितदीर्घं ईषत्स्पृष्टो लद्वयघटित एवेति स एव स्यादिति तत्प्रत्याख्यानं संगच्छते।

अभित इति—उभयत इत्यर्थः। पूर्वत्र परत्र चेत्यर्थः॥ कस्मात्पूर्वत्रेत्याद्याकाङ्क्षायां 'द्वौ रेफौ' इत्यनुपपद्यते। तथात्र द्वितीयान्तम्, अभितः पदयोगात्। अज्भक्तेरिति—भज्यते या सा भक्तिः भाग इत्यर्थः। व्यञ्जनस्यार्द्धमात्रकत्वेन रेफद्वयस्यैका मात्रा रेफात्पूर्वस्याज्भागस्यार्धमात्रा रेफात्परस्याज्भागस्य चार्द्धमात्रेति अज्भागस्याप्येका मात्रेति मिलित्वा मात्राद्वयं सिद्धम्। पूर्वभागेऽचोभावे 'मातॄतम्' 'तद् ऌकारः' इत्यादौ 'रो रि' इति रलोपादिः, 'तोर्लि' इति लत्वं च स्यात्।

द्वितीयस्येति—वार्तिकविधेयस्य ॡकारस्येत्यर्थः। द्वौ लकाराविति तयोरेका मात्रेति शेषः। शेषमिति—अभितो लकारौ अज्भक्तेरपरा मात्रेत्यर्थः। एतच्च तुल्यास्यसूत्रे भाष्यकैयटयोः स्पष्टम्। एतेन सूत्रेण दीर्घे सिद्धे वार्तिकाभ्यामाभ्यां ह्रस्वऋकारः, ह्रस्वऌकारश्च विधीयत इति प्राचोक्तं व्याख्यानं परास्तम्। पाक्षिक इति—वैकल्पिक इत्यर्थः। प्रकृतिभाव इति—प्रकृत्या स्वरूपतो भावः=सत्ता प्रकृतिभावः निर्विकारस्वरूपेणावस्थानम् सन्ध्यभाव इति यावत्। 'एचोऽयवायावः' इत्यस्यापवादमाह—

'एङः पदान्तादति' इति—'अमि पूर्वः' इत्यतः पूर्व इति सम्बध्यते, एकः पूर्वपरयोरिति च। पदान्तादेङोऽति परे पूर्वपरयोः स्थाने पूर्वः=पूर्वस्थानिसजातीय एक आदेशः स्यादित्यर्थः। हरे अव, हरेऽव, विष्णो अव, विष्णोऽव। हे विष्णो अव = रक्ष मामित्यर्थः।

## सर्वत्र विभाषा गोः [ ६-१-१२२ ]

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । गो अग्रम् , गोऽग्रम् । 'एङन्तस्य' किम्—चित्रग्वग्रम् । 'पदान्ते' किम्—गोः ।

एङ इति किम् 'दध्यत्र' इत्यत्र मा भूत् । पदान्तात् किम् चयनम् । ननु अपदान्तादपि एङोऽति परे यदीदं प्रवर्तेत तदा 'ङसिङसोश्च' इति सूत्रं व्यर्थं स्यात्, हरेः, विष्णोः, इत्यादावनेनैव पूर्वरूपसिद्धेः । तथा च सिद्धे सत्यारम्यमाणो विधिर्नियमाय कल्पते, इति न्यायेन 'अपदान्तादेङोऽति परे पूर्वरूपञ्चेत्तर्हि ङसिङसोरेवेति नियमात् 'चयनम्, भवति' इत्यादौ न दोषः । न च विभक्तौ चेन्ङसिङसोरेवेति नियमस्यापि संभवाद् हरयः, भानवः, इत्यादौ दोषाभावेऽपि भवति, चयनम्, इत्यादौ दोष एवेति वाच्यम्, 'असति बाधके प्रमाणसामान्ये पक्षपातो लाघवात्' इति नियमे विभक्तौ इत्यस्य प्रवेशानर्हत्वात् ।

न च ङसिङसोरति पूर्वरूपं चेदपदान्तादेङ एवेति विपरीतनियमादुक्तदोषतादवस्थ्यम्, ङसिङसोरति अपदान्तस्यैव एङः सम्भवेन विपरीतनियमे फलाभावात् । न च परमहरेः, परमविष्णोः, इत्यादौ प्रत्ययलक्षणेनान्तर्वर्तिविभक्त्या हरेरित्यादेः पदत्वेन तत्र पूर्वरूपाभाव एव फलमिति वाच्यम्, 'उत्तरपदत्वे च' इति प्रत्ययलक्षणप्रतिषेधान्ङसिङसोरति पदान्तस्य एङो वक्तुं शक्यत्वादिति चेन्न, पचति गच्छति, इत्येवं सततमभिधीयते यस्मिन्व्यापारे स पचतिगच्छतिर्व्यापारः, इति 'आख्यातमाख्यातेन' इति समासे 'पचतिगच्छतेः' इत्यत्र तिङन्तत्वेन 'गच्छते' इत्यस्य पदत्वेन पदान्तस्य एङः सम्भवेन विपरीतनियमापत्तौ हरयः, भानवः, भवतीत्यादौ पूर्वरूपापत्तेरित्यन्यत्र विस्तरः । अति किम् वायो इति । तपरः किम् , वायो आयाहि ।

'सर्वत्र विभाषा गोः' इति—यद्यपि छन्दसि इति न प्रकृतं तथापि 'प्रकृत्याऽन्तःपादम्, यजुष्युरः' अव्यक्तमुरव्रतात स्युः' इति त्रयाणां छन्दस्येव प्रवृत्त्या इदमपि छन्दस्येव मा भूदित्युक्तं सर्वत्रेति छन्दसि भाषायाञ्चेत्यर्थः । अत्र एङ इति, पदान्तादिति, अतीति सम्पूर्णं सूत्रमनुवर्तते, तत्र एङ इति, पदान्तादिति षष्ठ्या विपरिणम्यते । तत्र पदान्तस्येत्यभेदेन एङा सम्बध्यते । पदान्ताभिन्नो य एङ् तदन्तस्य गोरति वा प्रकृतिभावः = स्वभावेनावस्थानमित्यर्थः । प्रकृतिशब्दः स्वभाववाची 'दुस्त्यजा प्रकृतिः' इत्यादौ तदर्थदर्शनात् । 'गो अग्रम्' अत्र न पूर्वरूपम् नाप्यवादेशः । प्रकृतिभावाभावे 'गोऽग्रम्' इति । अवादेशं बाधित्वा 'एङः पदान्तात्' इति पूर्वरूपम् ।

पदान्तस्य किम् 'गो अस्' 'गोः' अत्र न प्रकृतिभावः, 'यचि भम्' इति भत्वेन पदान्तस्य एङोऽभावात् । एङ इति किम्? चित्रगु अग्रम्' इति स्थितौ एकदेशविकृतन्यायेन स्थानिवत्त्वेन वा 'गु' इत्यस्य गोशब्दत्वेऽपि एङन्तत्वाभावात् न प्रकृतिभावः । एङः प्रतिपदोक्तस्यैव ग्रहणात्, 'हे चित्रगो अग्रम्' इत्यत्र वास्य प्रवृत्तिः, 'ह्रस्वस्य गुणः' इति निष्पन्नस्य ओकारस्य तत्तच्छब्दानुवादेन विहितत्वरूपप्रतिपदोक्तत्वाभावात् । न च एङ इति वर्णः । वर्णग्रहणे च प्रतिपदोक्तपरिभाषा न प्रवर्तते । अत्र ज्ञापकञ्च 'ह्वावामश्च' इति ह्वाग्रहणमेव । तद्धि 'स्वर्गह्वायः' इत्यादौ 'आतोऽनुपसर्गे कः' इति कबाधनार्थम् । प्रतिपदोक्तपरिभाषाप्रवृत्तौ तु ह्वेञ आकारस्य लाक्षणिकत्वात् कप्रत्ययाप्राप्तौ 'कर्मण्यण्' इत्यणा सिद्धौ व्यर्थं सद् वर्णग्रहणे क्वचिन्न प्रवर्तते क्वचित्प्रवर्तते इत्येवंरूपानित्यत्वे ज्ञापकम् । शिष्टप्रयोगानुसारेण प्रवृत्त्यप्रवृत्ती बोध्ये । तेन 'इको यणचि' इत्यादावप्रवृत्त्या 'सुध्युपास्यः' इत्यादौ ईकारस्य लाक्षणिकत्वेऽपि यणादिः सिध्यति ।

## अवङ् स्फोटायनस्य [ ६-१-१२३ ]

'अति' इति निवृत्तम्। अचि परे पदान्ते गोरवङ् वा स्यात्। गवाग्रम्। 'पदान्ते' किम्—गवि। व्यवस्थितविभाषया गवाक्षः।

---

'अवङ् स्फोटायनस्य' इति, अतीति निवृत्तमिति—अत्र 'अति' इति नानुवर्तते, व्याख्यानात्। तथा हि—'प्लुतप्रगृह्या अचि नित्यम्' इति भाष्ये 'नित्यग्रहणं किमर्थम्? विभाषा मा भूदिति। नैतदस्ति प्रयोजनम्। पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम्' इत्युक्तम्। तत्र सहेतुकं वाक्यं प्रमाणमिति हेत्वपेक्षायाम् 'इन्द्रे च' इत्यस्यारम्भसामर्थ्यादित्यभिप्रैति भाष्यकृत्। अन्यथा यदि स्वोक्तिमात्रेण तन्निवृत्तिस्तर्हि 'अत्र (प्लुतप्रगृह्याः) विभाषाग्रहणं निवृत्तम्' इत्येव वदेत्। तथा च यदि 'अवङ् स्फोटायनस्य' इत्यत्र 'अति' इत्यस्य यदि सम्बन्धः स्यात्तदा 'इन्द्रे च' इत्यस्य 'गवेन्द्रः' इत्यादिसिद्धये आवश्यकत्वाद् आरम्भसामर्थ्यादित्युक्तिरसङ्गतैव स्यात्। निवृत्तिवादिमते तु पूर्वेणैव 'गवेन्द्रः' इत्यादिसिद्ध्या सामर्थ्योक्तिः सुतरां संगच्छते। गवेशः, गवोढः, इति लक्ष्यानुसाराद् अतीति निवृत्तमित्युक्तिस्तु लक्षणैकचक्षुष्काणामुक्तप्रयोगाणां भाष्येऽदर्शनादसङ्गता। स्फोटः = सकलप्रपञ्चस्याधिष्ठानभूतं शब्दब्रह्म अयनम् = प्रतिपाद्यं यस्य सः स्फोटायनः शब्दब्रह्मप्रतिपादक इत्यर्थः। सोऽवङः स्मर्ता। अन्यः पाणिन्यादिर्न अवङः स्मर्ता, किन्तु तदभावस्येति, विकल्पः फलति। वस्तुतस्तु नित्यः शब्द इति पक्षे उक्तार्थसम्भवेऽपि कार्यः शब्द इति पक्षे स्फोटायनेन अचि परे पदान्ते गोरवङ् कृतः, नान्येनेति विकल्पो व्याख्यातुं शक्यः, पाणिनिकृतकार्याणामप्यन्येनाकरणात्सर्वत्र विकल्पापत्तेः, देवदत्तेन घटः कृतः, न चैत्रेणेति घटोत्पत्तेरपि विकल्पापत्तेश्च। तस्मादाचार्यनामोक्तिमात्रेण न कस्यचिद्वैकल्पिकत्वं किन्तु मानान्तरेणैव। प्रकृते 'पूर्वस्मिन् योगे 'इन्द्रे च' विभाषेति निवृत्तम्' इत्येकवचनोक्त्या 'अवङ् स्फोटायनस्य' इत्यत्र विभाषेति सम्बध्यते इति ध्वननेन वैकल्पिकत्वं बोध्यम्। स्फोटायनग्रहणन्तु पूजार्थमेव।

ननु 'अति' इत्यस्य निवृत्तौ हलि परेऽपि गोरवङापत्तिः, 'प्लुतप्रगृह्याः' इति सूत्रे भाष्यकृता अचीत्यनुवर्तनादत्राप्यचीत्यनुवृत्तेरदोषात्। अत्र पदान्तादिति, एङ इति, गोरिति, अचीति चानुवर्तते। पदान्तादिति, एङ इति षष्ठ्या विपरिणम्य परस्परं सम्बध्यते। गोरिति चावयवावयविभावेन एङा सम्बध्यते। तथा च गोरवयवस्य पदान्तस्य एङोऽचि परे स्फोटायनस्य मते वा अवङादेशः स्यादित्यर्थः सम्पद्यते। गवाग्रमिति—गोरग्रं गवाग्रम्। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः।' इति, 'अनड्वान् सौरभेयो गौः' इति, 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्यात्।' इति चामरः। बह्वर्थोऽयं गोशब्दो वृषे, सौरभेय्यां च प्रसिद्धः। गो इत्यस्य प्रत्ययलक्षणेन पदत्वम्। 'गो अग्रम्' इति स्थितौ 'ङिच्च' इति परिभाषया गोऽन्त्यालः ओकारस्यावङि 'गव अग्रम्' इति जाते सवर्णदीर्घे 'गवाग्रम्' इति। अवङोऽभावेऽपि वैकल्पिकः प्रकृतिभावः, तदभावे पूर्वरूपम्। अद्भिन्नेऽचि अवङादेशस्तदभावे पूर्वरूपमिति व्यवस्था। ननु अग्रशब्दाकारमुपजीव्य जायमानोऽवादेशोऽकारविघातके दीर्घादेशे निमित्तं न स्यात्, सन्निपातपरिभाषया इति, चेन्न, 'कष्टाय क्रमणे' इत्यादिनिर्देशेन अत्रैव सूत्रे 'गवाग्रम्' इति भाष्यप्रयोगाच्च तस्याः सामान्यतोऽनित्यत्वज्ञापनात्।

गवीति—गवा, गवे, गवोः, गवाम् इत्यादि तु न प्रत्युदाहृतम्, क्वचित्सवर्णदीर्घेण क्वचिद् अतो गुणे इति पररूपेण सिद्धेः। वस्तुतस्तु दीर्घादिप्रवृत्तावपि सन्निपातपरिभाषाया अनित्यत्वस्यावश्यकतया तृतीयादावपि तदनित्यत्वेन अदन्तप्रयुक्तयाद्यादेशादयो दोषा बोध्याः। अचि किम् 'गोभ्याम्'। व्यवस्थितेति—विषयान्तरपरिहारेण विषयविशेषेऽवस्थितरूपविकल्पपदार्थबोधिका विभाषेत्यर्थः। उद्देश्यतावच्छेदकावच्छिन्ने क्वचिद् भावबोधनम्, क्वचिदभावबोधनमिति

इन्द्रे च [ ६-१-१२४ ]

गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।

अथ प्रकृतिभावः ।

---

फलितोऽर्थः । यथा 'गवाक्षः' इत्यत्र अवङभावरूपविषयान्तरपरित्यागेन वातायनरूपेऽर्थविशेषेऽनङ्कः स्थितिबोधिका । अत्र अवङेव, न तु तदभावः । परिष्कृतरूपन्तु विभाषाशास्त्रीयोद्देश्यतावच्छेदकं यद्रूपं तद्व्याप्यं यद्रूपं तदवच्छेदेन भावाभावान्यतरविधायकत्वे सति भावाभावोभयविधायकत्वं व्यवस्थितविभाषात्वम् । प्रकृते अजव्यवहितपूर्वत्वविशिष्टगोशब्दावयवपदान्तैङ्त्वम् 'अवङ् स्फोटायनस्य' इति शास्त्रीयोद्देश्यताऽवच्छेदकम् । तद्व्याप्यं यद् वातायनवाचकशब्दघटकाजव्यवहितपूर्वत्वविशिष्ट-गोशब्दावयवपदान्तैङ्त्वम् तदवच्छेदेन भावमात्रविधायकत्वम् । वातायने गवां किरणानामक्षीवेत्यर्थे षष्ठीसमासः । अक्षिशब्दोऽत्र लक्षणया रन्ध्रपर इति 'अक्ष्णोऽदर्शनात्' इत्यच् समासान्तः । गवां सौरभेयीणामपि नेत्रमित्यर्थे 'गोऽक्षि' इत्यत्र न । गवाक्षम्, गोऽक्षम्, इत्यत्र वा ।

तदुक्तं भाष्ये—'देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।

मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥' इति ।

'नुदविदोन्द' इति नत्वं संज्ञायां न । यथा देवत्रातः, भवत्रात इत्यादौ । देवेन रक्षित इत्यर्थे-त्रातः, त्रात उभयम् । 'अचि विभाषा' इति लत्वं प्रायङ्गे नित्यम् 'गलः' इति । विषे नैव 'गरः' इति । 'विभाषा ग्रह' इति णप्रत्ययो जलचरे नित्यम् 'ग्राहः' इति । सूर्य्यादौ न 'ग्रहः' अच् । भवच्छ्रियायां वा 'ग्राहः' 'ग्रह' इति च । 'लक्षणहेत्वोः' इति शत्रादिरितिशब्दयोगे न 'हन्तीति पलायते' इति । अत्र 'घ्नन् इति पलायमानः' इत्यसाधु । ते नत्वादयो मिथ एकस्मिन् विषये न विकल्प्यन्ते, किन्तु विषयभेदेनेत्यर्थः । न चास्य व्यवस्थितविभाषात्वे इन्द्रे परे नित्यमवङि सिद्धे 'इन्द्रे च' इति व्यर्थम्, भाष्योक्तव्यवस्थितविभाषातिरिक्तविभाषाणां व्यवस्थितत्वस्याप्रामाणिकत्व-ज्ञापनार्थं तत्कारितार्थ्यात् । अवङ् इत्यत्र ङित्करणं चिन्त्यम् , गोरेङोऽवादेश इत्युक्तौ निर्दिश्यमान-परिभाषयैव एङोऽवादेशसिद्धेः । न च गोरपि निर्दिश्यमानत्वेन ( षष्ठीप्रकृतिजन्यप्राथमिकोपस्थिति-विषयत्वेन ) तदादेशापत्तिः, सूत्रघटकयावन्निर्दिश्यमानावयवस्यादेशा भवन्तीत्यर्थेन गोः, ङ्योर्निर्दिश्य-मानयोरनवयवत्वेनादोषात् ।

'इन्द्रे च' इति । अत्र पदान्तादिति, गोरिति, एङ् इति, अचीति चानुवर्तते । तत्राचीति न इन्द्रे इत्यस्य विशेषणम् । तथा सति अजादौ इन्द्रे उत्तरपदे परे इत्यर्थः स्यादिति इन्द्रस्य यज्ञ इन्द्रयज्ञो गोरिन्द्रयज्ञो 'गवेन्द्रयज्ञः' इत्यत्र न स्यादिन्द्रस्योत्तरपदत्वाभावात् । यद्य-प्यत्रोत्तरपदग्रहणं नास्ति तथाप्यर्थात्समासे तद्विधानम्, इन्द्रशब्दाव्यवहितपूर्वत्वविशिष्टस्य गोरेङः प्रतिपदोक्तस्य समास एव सम्भवात् । समासे च गोशब्दस्य पूर्वपदत्वे इन्द्रशब्दस्योत्तरपदत्वे एव स्यात् । अचीति विशेष्यम्, इन्द्रे इति तद्विशेषणम् । घटकत्वं सप्तम्यर्थः । तथा चेन्द्रघटकेऽचि परे इत्यर्थः । तेन नोक्तदोषः । अत्रार्थे भाष्यमेव मानम् । 'इन्द्रादाविति वक्तव्यम्', इहापि यथा स्यात् । गवेन्द्रयज्ञं यजते इति । न वक्तव्यम् । नैवं विज्ञायते इन्द्रेऽचीति । अचि भवति कतरस्मिन्निन्द्रेऽचीति ।' इति । एतेन समासेनोत्तरपदाक्षेप अचीत्यस्य विशेष्यत्वेऽपि उत्तरपदभूतेन्द्रावयवेऽचीत्यर्थापत्तावुक्तदोष-तादवस्थ्यमित्यपास्तम् , उक्तभाष्यविरोधेनोत्तरपदानाक्षेपात् । यद्वा इन्द्रशब्दघटको योऽच् तदादा-वुत्तरपदे परे इत्यर्थे एव भाष्यतात्पर्य्यमित्यदोषः । गवेन्द्र इति—गवामिन्द्रः स्वामी श्रेष्ठो वेति 'गो इन्द्रः' इति स्थितौ अवङादेशे गुणे 'गवेन्द्र' इति ।

अथ प्रकृतिभाव इति—अथेत्यधिकारार्थः, प्रकृतिभावोऽधिक्रियते इत्यर्थः । निरूप्यते इति शेषो वा । अथेत्यनन्तरवाची । 'नान्तः पादमव्यपरे' 'प्रकृत्यान्तः पादमव्यपरे' इत्यष्टाध्याय्यां पाठ-द्वयमुपलभ्यते । तत्र नञ्घटितपाठे 'सर्वत्र विभाषा गोः' इत्यादौ नञोऽनुवृत्त्या बाध्यसामान्यचिन्ता-

प्लुतप्रगृह्या अचि नित्यम् [ ६-१-१२५ ]

प्लुताः प्रगृह्याश्च वक्ष्यन्ते, तेऽचि परे नित्यं प्रकृत्या स्युः। एहि कृष्ण ३ अत्र गौश्चरति। हरी एतौ। 'नित्यम्' इति किम्। 'हरी एतौ'।

अवङेन पदस्य गोरति परे यत्प्राप्तं तन्नेत्यर्थेन निर्वाहेऽपि 'प्लुतप्रगृह्या अचि नित्यम्' इत्यत्र नञोऽनुवृत्तौ 'प्लुताः प्रगृह्याश्चाचि परे न स्युरि'त्यर्थापत्त्याऽनिष्टापत्तेः। नच प्रगृह्यसंज्ञाविधानवैयर्थ्यम्, 'एचोऽप्रगृह्यस्य' ( ८-२-१०७ ) इत्यत्र 'अणोऽप्रगृह्यस्यानुनासिकः' ( ८-४-५७ ) इत्यत्र च प्रगृह्यस्य पर्युदासेन चारितार्थ्यात्। 'अप्लुतवदुपस्थिते' इत्यस्य इति परे प्रगृह्यस्यैव फलसत्त्वेन अचि परे तन्निषेधे तद्वैयर्थ्यात् 'प्रकृत्यान्तः पादम्' इति पाठस्यैव ज्ञापनान्नान्त इति पाठेन न निर्वाह इति द्योतनायाह—अथ प्रकृतिभाव इति। एतेन प्रकृतिभावस्य 'सर्वत्र विभाषा गोः' इत्यत एवारब्धत्वेनेदमसङ्गतमित्यपास्तम्। 'सर्वत्र' इत्यस्योत्तरसूत्रयोर्गोरित्यस्य चानुवृत्त्यर्थमुक्तत्वेनान्वाचयशिष्टतया प्रकृतिभावारम्भस्याविवक्षितत्वात्।

'प्लुतप्रगृह्या अचि नित्यम्' इति। यद्यपि प्लुतादेशस्य प्रगृह्यसंज्ञायाश्च विधायकशास्त्रानन्तरमेव एतत्सूत्रोल्लेख उचितः, प्लुतादेशानां प्रगृह्यसंज्ञकानाञ्चैतत्सूत्रोद्देश्यत्वात्, तथापि प्राचीनैः 'इन्द्रे च नित्यम्' इति सूत्रं पठ्यते तदसङ्गतम्, तत्र नित्यग्रहणसत्त्वे तदनुवृत्त्यैवाभीष्टे सिद्धेऽत्र नित्यग्रहणसामर्थ्यादित्यभिप्रायेण 'इन्द्रे च' एतत्सूत्रानन्तरमस्य पाठात्।

वक्ष्यन्त इति—अष्टाध्यायीक्रमापेक्षया तु प्रगृह्यसंज्ञाः प्रथमाध्याये उक्ताः, किन्तु ग्रन्थक्रमानुरोधेनेदम्। ननु प्लुतसंज्ञापि उभयक्रमेण पूर्वमुक्तेतीदमसङ्गतमिति चेन्न, संज्ञाशास्त्रेण प्लुतपदस्य शक्तिरेव ज्ञाप्यते। लक्ष्ये च प्रकृतिभावो विधीयते तत्र प्लुतसंज्ञकानां विधानं तु 'दूराद्धूते च' इत्यादिशास्त्राधीनं तदभिप्रेत्योक्तं वक्ष्यन्त इति।

ते = प्लुत-प्रगृह्यसंज्ञका अचः। संहिताया विवक्षायामपि प्रकृत्या = स्वस्वरूपेणैवावतिष्ठन्ते, न सन्धिकार्य्यं लभन्त इति भावः। ननु प्लुतानां त्रिपादीस्थत्वेनैतद्दृष्ट्या असिद्धतया प्रकृतिभावानापत्तिरिति चेन्न, प्लुतमाश्रित्य प्रकृतिभावविधानसामर्थ्येन असिद्धत्वाभावज्ञापनात्।

ननु अचीत्यनुवृत्त्यैव सिद्धे सूत्रे 'अचि' इति व्यर्थमिति चेन्न, प्रत्यासत्त्या यत्राच्यनयोः प्रकृतिभावस्तदज्निमित्तककार्य्यस्यैव प्रकृतिभावेनाभाव इति बोधनार्थमचीत्यस्यावश्यकत्वात्। तेन 'जानु उ अस्य रुजति' इत्यत्र 'उ' इत्यस्य 'निपात एकाच्' इति प्रगृह्यत्वे अकारे परे 'उ' इत्यस्य प्रकृतिभावः प्राप्त इति यण् न स्याद्, सवर्णदीर्घस्तु स्यादेवेति 'जानू अस्य रुजति' इति सिध्यति। न च 'ग्रामे इत्यम्' इत्यादाविव पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वादेव प्रकृतिभावं बाधित्वा दीर्घः स्यादिति तदर्थमचीति व्यर्थमेवेति वाच्यम्, 'उ अस्य रुजति' इत्यस्य पूर्वमुच्चारणे ततो जानुपदस्य सम्बन्धे प्रकृतिभावस्यैवान्तरङ्गत्वात्।

अत्र दीर्घे कृते ऊकारस्य प्रगृह्यत्वाभावात्कथं प्रकृतिभाव इत्यत आह—एहि कृष्ण ३ इति—अत्र 'दूराद्धूते च' इति वक्ष्यमाणेन 'एहि कृष्ण' इति वाक्यस्य टेः कृष्णाकारस्य प्लुतादेशः। तस्य 'अत्र गौश्चरति' इति वाक्यान्तरेण संहितायां सवर्णदीर्घे प्राप्तेऽनेन प्रकृतिभावे सन्ध्यभावः। एहि = आगच्छेत्यर्थः। 'हरी एतौ' इति—अत्र 'ईदूदेद्द्विवचनम्' इतीकारस्य प्रगृह्यत्वम्। तस्य यणि प्राप्तेऽनेन प्रकृतिभावः। हरिशब्दो नानार्थकः—

यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।

शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥ इत्यमरः।

एतौ हरी = अश्वौ सिंहौ वेत्यादिरर्थः। यद्वा विष्णोरेकत्वात् द्वित्वस्य तत्र बाधितत्वाद्धरिविष्णुपदे तत्सदृशपरे। विष्णुसदृशावित्यर्थः। 'विष्णू इमौ' अत्रापि पूर्ववत्प्रगृह्यत्वम्। यणं बाधित्वा प्रकृतिभावः। विष्णुसदृशाविमावित्यर्थः।

इत्यादावयमेव प्रकृतिभावो यथा स्यात्। 'इकोऽसवर्णे' (सू ९१) इति ह्रस्वसमुच्चितो मा भूत्।

---

ननु 'इन्द्रे च' इति सूत्रे विभाषानिवृत्तेर्भाष्यसम्मततया अत्र तदनुवृत्त्यैव नित्यत्वे सिद्धे नित्यग्रहणं व्यर्थमत आह—नित्यग्रहणं किमिति अयमेवेति—हरी इमौ, इत्यत्र प्रगृह्यप्रकृतिभावस्य, 'चक्रि अत्र' इत्यत्र 'इकोऽसवर्णे' इति ह्रस्वस्य चारितार्थ्येन 'हरी एतौ' इत्यत्र प्रगृह्यप्रकृतिभावं बाधित्वा परत्वाद्ध्रस्वसमुच्चितं प्राप्तं प्रकृतिभावं बाधितुं 'नित्यम्' इति योगो विभज्यते। अत्र प्रकृत्या इति, प्लुतप्रगृह्या अचि, इति चानुवर्तते। प्लुताः प्रगृह्याश्च वक्ष्यन्ते तेऽचि नित्यं प्रकृत्या स्युरित्यर्थः पूर्ववत्। 'प्लुतप्रगृह्याः' इत्यनेन प्रकृतिभावे सिद्धे इदं 'नित्यम्' इति सूत्रं प्लुतप्रगृह्या इत्यस्य बाधकं यत् 'इकोऽसवर्णे' इत्यादि तद्बाधनार्थम्। तेन शुद्धः प्रकृतिभाव एव भवति, न तु परोऽपि ह्रस्वसमुच्चितः प्रकृतिभावस्तदाह—हरी एतावित्यादाविति। यथाशब्दो योग्यतायाम्। अयमेव प्रकृतिभावः प्राप्तुं योग्य इत्यर्थः। व्यवच्छेद्यमाह—इक इति—वक्ष्यमाणः 'इकोऽसवर्णे शाकल्यस्य' इति ह्रस्वसमुच्चितः=ह्रस्वत्वप्रकृतिभावोभयविशिष्टः।

मा भूत् = न भवेत्। 'माङि लुङ्' इति सर्वलकारापवादत्वाद् विध्यर्थे लुङ्। 'नित्यम्' इति योगविभागाभावे परत्वाद्ध्रस्वत्वविशिष्टः प्रकृतिभावः प्रसज्येत। कृते तु नित्यग्रहणे योगविभागसामर्थ्यादेव 'प्लुतप्रगृह्याः' इति प्राप्तः प्रकृतिभावः परमपि ह्रस्वसमुच्चितं प्रकृतिभावं बाधते इति भावः।

तदुक्तं भाष्ये 'नित्यग्रहणं किमर्थम्। विभाषा मा भूदिति। नैतदस्ति प्रयोजनम्। पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम्। इदं तर्हि प्रयोजनम्। प्लुतप्रगृह्याणामचि प्रकृतिभाव एव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति' इति।

ननु 'इको यणचि', पदस्य शाकल्यस्य ह्रस्वः, अत्र 'इकः' इति 'अचि' इति चानुवर्तते इगन्तस्य पदस्य ह्रस्वः स्यात् शाकल्यस्य मतेऽन्यस्य मते तदभाव इति वैकल्पिकत्वं फलति। तत 'ऋत्यकः' इति। अत्र पदस्य, शाकल्यस्य, अचीति चानुवर्तते। अगन्तस्य पदस्य ह्रस्वः स्यादचि शाकल्यस्य मते। एवं न्यासेन सिद्धे नित्यग्रहणं न कर्तव्यम्। हरी एतौ, इत्यादौ ह्रस्वसमुच्चितं प्रकृतिभावं बाधित्वा परत्वात् 'प्लुतप्रगृह्या अचि' इत्यस्यैव प्रवृत्तेः। सवर्णेऽचि परत्वात् अपवादत्वाच्च अकः सवर्णे दीर्घः, इत्यस्यैव प्रवृत्त्या 'असवर्णे' ग्रहणमपि न कर्तव्यम्। इक इत्यनुवृत्त्यैव सिद्धे 'इकः' ग्रहणमपि न कर्तव्यमिति लाघवम्।

न च 'इको यणचि' इत्यत्र 'इको' ग्रहणमपि मास्तु, 'ह्रस्वस्य पिति' इत्यतो ह्रस्वस्येति, 'दीर्घात्' इत्यतो दीर्घादिति चानुवार्यपञ्चम्या विपरिणमय्य तयोः स्थाने यणादिविधानेन सिद्धेः। 'दैत्यारिः' इत्यादौ तु न, दीर्घेण बाधान्न यण् इति वाच्यम्, यायायतेः क्विपि 'यातिः' इत्यत्राकारलोपस्य स्थानिवत्त्वेन आकारस्य यणापत्तेः।

न च सवर्णदीर्घेण बाधः, दीर्घस्य पूर्वपरोभयविधित्वेन स्थानीभूतादचः पूर्वमात्रस्य कार्ये कर्तव्य एव स्थानिवत्त्वेन सवर्णदीर्घे स्थानिवत्त्वाप्राप्त्या दीर्घाप्राप्तेः, एवं गोमयशब्दादाचारक्विबन्तात् क्विपि अल्लोपयलोपयोः 'गोमतिः' इत्यादौ यणापत्तेश्चेति चेन्न, 'अप्लुतवदुपस्थिते' इत्यत्रासवर्णग्रहणानुवृत्तये यथाश्रुतन्यासस्यावश्यकत्वात्। अत एव 'ई चाक्रवर्मणस्य' इत्यत्र ईग्रहणसत्त्वे 'चिनुहीदम्' इत्यत्र विकल्पेन अप्लुतवद्भावो भाष्यकृता तत्प्रत्याख्याने च 'चाक्रवर्मणस्य' इत्यस्यापवादभूतेन 'अप्लुतवदुपस्थिते' इत्यनेन नित्यमप्लुतवद्भाव इति फलभेदो न, असवर्णे एव 'अप्लुतवत्' इत्यस्य प्रवृत्तेः।

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च [ ६-१-१२७ ]

पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा। अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम्। चक्रि अत्र-चक्र्यत्र। 'पदान्ताः' इति किम्। गौर्यौ। 'न समासे' (वा ३६८४)। वाप्यश्वः।

---

'इकोऽसवर्णे शाकल्यस्य' इति, अत्रार्चाति, एङः पदान्तादित्यतः पदान्तादिति चानुवर्तते। तच्च प्रथमान्तेन विपरिणम्यते। सूत्रे 'इकः' इति प्रथमान्तमित्यभिप्रेत्याह—पदान्ता इक इति। वस्तुतस्तु ह्रस्वादेशविधानाय स्थानषष्ठ्या आवश्यकत्वेन षष्ठ्यन्तेन विपरिणामस्यावश्यकतया 'सर्वत्र विभाषा गोः' इत्यादौ तथा क्लृप्तत्वेन च इक इति षष्ठ्यन्तमेव। न च प्रकृत्या स्युरित्यर्थे प्रथमान्तस्यावश्यकता, प्रकृत्या अवस्थानमित्यर्थे उभयत्र षष्ठ्यन्तेनैव निर्वाहात्। तथा च पदान्तस्येकोऽसवर्णेऽचि परे ह्रस्वः स्यात्। तत्र 'च' इत्यनेन प्रकृत्या इत्यनुकृष्यते। तेन प्रकृत्या अवतिष्ठते। कोऽवतिष्ठते इत्याकाङ्क्षायां प्रत्यासत्त्या ह्रस्व इति सम्बध्यते। तथा च उक्तो ह्रस्वः प्रकृत्याऽवतिष्ठते इत्यर्थः। तेन यण् न। यदि चकारो न क्रियेत तदा सजातीयं दृष्ट्वा सजातीयो निवर्तते। यथा कश्चित् स्वामी भृत्यमाह्वयति तदा यदि कश्चन भृत्य उपस्थितस्तदा भृत्यान्तरं नागच्छति। तथैवात्र यदि चो न स्यात्तदा ह्रस्वं दृष्ट्वा 'प्रकृत्या' इति नोपतिष्ठेत। यदि चः क्रियते तदा चशब्दस्य समुच्चायकत्वात् 'प्रकृत्या' इति समुच्चीयते। यथा सत्यपि भृत्ये स्वामी यदि भृत्यान्तरमाह्वयति तदा सोऽप्यागच्छति। चशब्दाभावे पदान्तस्येकोऽसवर्णेऽचि परे ह्रस्वः स्यादित्येव लभ्येत। ह्रस्वस्य प्रकृतिभावो न स्यात्। तथा च 'चक्रि अत्र' इति ह्रस्वे जाते तस्य यणि 'चक्र्यत्र' इत्येव स्यान्न तु 'चक्रि अत्र' इति ह्रस्वेकारघटितं रूपम्। दृश्यते च तदपि, अतः प्रकृत्येत्यस्यानुकर्षणार्थश्चकारः कर्तव्य इति पाणिनेराशयः।

भाष्यकारस्य तु अयमाशयो यत् प्रकृत्येत्यस्यानुकर्षणार्थश्चो न कर्तव्यः। न चैवं ह्रस्वे कृते प्रकृतिभावाभावे यण् स्यादिति वाच्यम्, ह्रस्वविधानसामर्थ्यादेव यणभावसिद्धेः। अन्यथा प्रक्रियालाघवार्थं यणमेव विदध्यात् न ह्रस्वम्। एवं च प्रकृत्येत्यनुकर्षणार्थश्चकारो न करणीय इति। ननु ह्रस्वाभावेऽपि प्रकृतिभावार्थं चकरणमिति चेन्न, ह्रस्वाभावे प्रकृतिभावरूपफलस्य भाष्यकृता अनुक्तत्वेनाप्रामाणिकत्वात्।

तद् ध्वनयन्नाह—भाष्ये स्थितमिति। ह्रस्वाभावे यणि 'चक्र्यत्र' इति। अत्र चक्री = विष्णुरस्ति इत्यर्थः। 'चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि।' इति हैमः।

ननु 'चक्र्यत्र' इत्यत्र पदान्तसंयोगस्य सत्त्वात् 'स्कोः संयोगाद्योरन्ते च' इति कलोपः प्राप्नोतीति चेन्न, 'अचः परस्मिन्' इति यणादेशस्य स्थानिवत्त्वेन पदान्तसंयोगाभावात्। न च पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात्स्थानिवद्भावो न स्यादिति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वार्तिकेन बाधात्। कार्यकालपक्षे यणो बहिरङ्गत्वेनासिद्धत्वाच्च। संहिताया अविवक्षया 'चक्री अत्र' इत्यपि साधु।

'गौर्यौ इति—न च 'दीर्घाज्जसि च' इत्यस्य वैयर्थ्येन नात्रास्य प्रवृत्तिरिति वाच्यम्, ह्रस्वाभावे तस्य चारितार्थ्येनात्र ह्रस्वापत्तेर्दुर्वारत्वात्। 'सित्समासयोः शाकलं न' इति वार्तिकं विभज्य पठति 'न समासे' समासघटकस्य पदान्तस्येकोऽसवर्णे समासघटकेऽचि ह्रस्वो नेत्यर्थः। प्रत्यासत्त्या पूर्वपरयोरेकसमासयोरेव। तेन 'परमचक्रि एतत्स्थाने' इत्यत्र न निषेधः।

वाप्यश्व इति—वाप्यामश्व इति विग्रहे 'संज्ञायाम्' (२-१-४४) इति 'सुपा' इति वा समासः। यद्यपि भाष्ये 'सिन्नित्यसमासयोः' इत्युक्त्वा 'वैयाकरणः' इत्याद्युदाहृतम्। तथाप्यग्रे नित्यग्रहणेन नार्थः। तेन इदमपि सिद्धं भवति। वाप्यश्व इति कस्यचिन्नाम वाप्यधिकरणकोऽश्वो वा।

'सिति च' ( वा ३६८४ ) । पार्श्वम् ।

ऋत्यकः [ ६-१-१२८ ]

ऋति परेऽकः प्राग्वत् । ब्रह्म ऋषिः–ब्रह्मर्षिः । 'पदान्ताः' इत्येव । आर्च्छत् ।

---

'सिति च' इति, स इत्यस्य स सित् तस्मिन् प्रत्यये परे इको ह्रस्वो नेत्यर्थः । पार्श्वमिति कक्षाधोभागस्थमस्थीनि पर्शवः, तासां समूहः पार्श्वम्=कक्षाधोभागः । पर्शुशब्दात् 'पर्श्वा णस् वक्तव्यः' इति णसि सस्येत्वे 'सिति च' इति पदसंज्ञायाम् 'इकोऽसवर्णे' इति ह्रस्वे प्राप्तेऽनेन निषेधः । यद्यपि पर्शुशब्दो नपुंसको ह्रस्वान्तोऽपि, परन्तु 'अप्राणिजातेश्च' इत्यूङि पर्शूरिति स्त्रीलिङ्गोऽपि । तस्यैव वार्तिके ग्रहणम्, पर्श्वा इति निर्देशात् ।

ननु वार्तिके 'सिति च' इति मास्तु 'पर्श्वा उवण् वक्तव्यः' इति न्यासेन पर्शूशब्दात् उवणि टिलोपे आदिवृद्धौ 'पार्श्वम्' इति सिध्येत् । न च ऋतुशब्दाद् 'छन्दसि घस्' ( ५-१-१०६ ) इति ऋतुः प्राप्तोऽस्य इत्यर्थे घसि 'ऋत्वियः' इत्यत्र 'सिति च' इत्यस्याभावे 'इकोऽसवर्णे' इति ह्रस्वापत्तिः, 'छन्दसि ह्रियः' इति न्यासेन 'छन्दसि दृष्टानुविधिः' इति नियमेन शाकल्यप्रकृतिभावस्य वैकल्पिकत्वेन प्रकृतिभावाभावपक्षेण वा तस्य सिद्धेरिति चेन्न, पर्शूशब्दादाचाराणण्यन्तात् कर्तरि क्विपि निष्पन्नात् पर्शूशब्दात् एकदेशविकृतन्यायेनानुमानिकस्थान्यादेशभावेन वा णसि 'पार्शम्' इति, उवणि तु 'प्त्रम्' इति फलभेदेन तथा न्यासस्य कर्तुमशक्यत्वात् । न च 'आरगुदीचाम्' इति सूत्रे भाष्ये गोधाशब्दाद् रकि प्रत्ययेऽपि 'गौधारः' इत्यस्य सिध्या आकारग्रहणमन्यतोऽपि विधानार्थमित्युक्तं तत्प्रामाण्यादाचाराणण्यन्तनिष्पन्नात्प्रातिपदिकात् तद्धितो नोत्पद्यते इति कल्पनेन नोक्तदोष इति वाच्यम्, ज्ञापकस्य सजातीयापेक्षत्वेन आवन्तनिष्पन्नादेव तथा कल्पयितुं शक्यत्वात्, पर्शूशब्दादाचारक्विबन्तात्कर्तरि क्विपि नपुंसकात् पर्शूशब्दात्पुनराचारक्विबन्तात्कर्तरि क्विपि पर्शुत एकदेशविकृतन्यायेन स्थानिवत्त्वेन वा पर्शूशब्दतया यदागमन्यायेन च णसि 'पार्शवः' इति, उवणि 'पार्श्वम्' इति फलभेदस्य दुर्वारत्वाच्च । न च 'न समासे, सिति च' उभयोः स्थाने 'वृत्तौ न' इत्येव न्यस्यताम् । समासतद्धितयोर्वृत्तित्वान्निषेधसिद्धेरिति वाच्यम्, वृत्तिपदेनैकार्थीभावात्मकवृत्तेर्ग्रहणे 'दधि उपदंशं भुङ्क्ते' इत्यत्र 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासाभावेऽपि अन्यतरस्यां ग्रहणेनैकार्थीभावात्मकवृत्तेः सत्त्वेन प्रकृतिभावस्य निषेधापत्तेः । यदि समासादिपञ्चान्यतमं गृह्यते तदाऽपि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया कृदन्ततदादिरूपवृत्तिघटकत्वस्य इकि अचि च सत्त्वेनोक्तदोषतादवस्थ्यात् ।

'ऋत्यकः' इति–अत्र पदान्तादिति षष्ठ्यन्तेन विपरिणतम्, मूलकारमते प्रथमान्तेन वा, अचीति, शाकल्यस्य ह्रस्वश्च कारे इति, ह्रस्वश्च इति चानुवर्तते । असवर्णे इति निवृत्तम् । तथा च पदान्तस्याकोऽचि परे शाकल्यस्य मते ह्रस्वः तस्य प्रकृत्याऽवस्थानम् चेत्यर्थः । यद्वा प्रकृत्या इति नानुवर्तते, ह्रस्वविधानसामर्थ्यात्सन्ध्यभावस्तदाह—ऋति परेऽकः प्राग्वदिति । ब्रह्म ऋषिरिति—ब्रह्मा ऋषिः, यदि समासाभावस्तदा आकारस्य ह्रस्वे सन्ध्यभावः । हिरण्यगर्भसदृशः ऋषिर्मन्त्रद्रष्टा वशिष्ठादिः । यद्वा ब्रह्मा=विप्रः । 'आर्च्छत्' ऋ गतावित्यतो लङि शपो 'पाघ्राध्मा' इति ऋच्छादेशे 'आडजादीनाम्' इत्यादि आटः पदान्तत्वाभावात् ह्रस्वाभावे प्रकृतिभावाभावे 'आटश्च' इति वृद्धौ 'आर्च्छत्' इति । यदि तु 'उस्योमाङ्क्ष्वाटः प्रतिषेधः' इति वार्तिकप्रत्याख्यानाय भाष्यकृता 'आटः' इत्येको योगः, आटोऽचि परे पूर्वपरयोर्वृद्धिरेकादेश इत्यर्थः । ततः 'च' इत्यपरो योगः । अत्र आटः, अचीति चानुवर्तते । ठक एवार्थः । इदञ्च सूत्रम् 'आटः' इत्यस्य यद्बाधकं तद्बाधनार्थम् । तेन 'उस्राम्, ओङ्कारं वा ऐच्छत्, 'औस्रीयत, औङ्कारीयत' इत्यादौ 'उस्यपदान्तात्' 'ओमाङोश्च' इति प्राप्तं पररूपं बाधित्वा 'च' इत्यनेन वृद्धिः सिध्यति । तथाच 'च' इत्यनेन 'ऋत्यकः' इति ह्रस्वं बाधित्वा वृद्धिरेव स्यादित्युच्यते तदा ईषदसमाप्त ऋश्यकः 'बहूर्श्यकः' इत्यत्र 'विभाषा सुपो बहुच्'

समासेऽप्ययं प्रकृतिभावः। सप्त ऋषीणाम्-सप्तर्षीणाम्।

वाक्यस्य टेः प्लुत उदात्तः। [ ८-२-८२ ]

इत्यधिकृत्य।

प्रत्यभिवादेऽशूद्रे। [ ८-२-८३ ]

---

इति बहुचि पदान्ताकोऽभावेन यण् सिध्यतीति पदान्तादित्यनुवृत्तेः फलं बोध्यम्। वस्तुतस्तु 'च' इति अनन्तरन्यायेन पररूपमात्रस्य बाधकं पदान्तादित्यस्यैव 'आच्छंत्' इति फलम्। ननु हक ऋति परे 'इकोऽसवर्णे' इत्येव सिद्धे 'ऋत्यस्य' इत्यकारमात्रस्यानेन ह्रस्वोऽस्त्विति चेन्न, 'असवर्णे' इत्यनुवृत्त्या 'होतृ ऋकारः' इत्यादौ सवर्णे परे प्रकृतिभावार्थमक इत्यस्यावश्यकत्वात्।

समासेऽपीति—'ऋलृवर्णयोः सावर्ण्यं वाच्यम्' इति निर्देशात्, सिल्साहचर्यात्, 'न समासे' इत्यस्यात्र सम्बन्धे प्रमाणाभावाच्चेत्यर्थः।

सप्त ऋषीणामिति—'दिक्संख्ये संज्ञायाम्' इति कर्मधारयः। सप्त च ते ऋषयश्चेति विग्रहः। 'ऋत्यकः' इति ह्रस्वे प्रकृतिभावे च 'सप्तऋषीणाम्' इति। ह्रस्वाभावे गुणे 'सप्तर्षीणाम्' इति। मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिरा वसिष्ठश्चेति सप्तानां संज्ञा।

'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः।
वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः'॥ इति च।

प्रकृतिभावप्रकरणशुद्धये लौकिकप्रकृतिभावविधायकं सूत्रद्वयमुपन्यस्य 'प्लुतप्रगृह्याः' इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्लुतस्य प्रथमोपात्तत्वेन प्लुतप्रकरणमारभते—

'वाक्यस्य टेः प्लुत उदात्तः' इति—अत्र पदस्येत्यधिक्रियते। एकत्र द्वयमिति रीत्या वाक्यस्येति, पदस्येति च द्वयमपि टिना सम्बध्यते। विधेयताप्रयोजकप्लुत इति श्रुत्या 'अचश्च' इति परिभाषया 'अचः' इत्युपतिष्ठते। तत्र टिर्विशेषणतया सम्बध्यते 'टेरचः' इति। तथाच वाक्यावयवो यः पदावयवष्टिस्तस्याचः स्थाने प्लुतादेशः स्यादित्यर्थः सम्पद्यते। तेन अजन्ते हलन्ते च वाक्ये टेरचः प्लुतादेशः सिध्यति। आयुष्मान् भव देवदत्त ३! आयुष्मान् भव सोमसुत् ३! इति।

ननु यत्र यत्र वाक्यटित्वं तत्र तत्र पदटित्वमिति व्याप्त्यैव पदावयवटित्वलाभात् पदस्येत्यस्यात्रानुवृत्तिर्व्यर्थेति चेन्न, अत्र पदस्येत्यस्याननुवृत्तौ 'नश्छव्यप्रशान्' इत्यादौ तदनुवृत्तेरावश्यकतया मण्डूकानुवृत्तिकल्पने गौरवापत्तेः। तद्वारणायैवात्रानुवृत्तेरुचितत्वात्। वाक्यघटकप्रत्येकपदस्य टेः प्लुतादेशवारणाय वाक्यस्य टेरित्युक्तिः। यदि तु 'पदस्य' इत्यस्य 'प्रत्यभिवादे' इत्यनेन विशेषणात् प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकपदस्यैव टेः प्लुत इत्युच्यते तदा वाक्यस्येत्यस्याभावेऽपि न प्रत्येकपदस्य टेः प्लुतापत्तिस्तथापि अनन्त्यस्यापि प्रत्यभ्युद्यमानार्थवाचकपदस्य टेरचः प्लुतादेशवारणाय वाक्यस्येत्यस्याधिकार आवश्यकः। यदि तु 'टेः' इति न स्यात्तदा प्लुतश्रुत्या 'अचश्च' इत्यनया 'अच' इत्युपस्थित्या तस्य वाक्यविशेषणत्वे अजन्तस्य वाक्यस्यैव टेः प्लुतः स्यान्न तु हलन्तवाक्यस्य। इष्यते च तत्रापि स्यादित्यत उक्तं टेरिति। टेर्ग्रहणसत्त्वे तु तत्सामर्थ्यात् टेरचो विशेषणाद् हलन्तवाक्यस्य 'आयुष्मानेधि सोमसु३त्' इत्यादेरपि टेरचः प्लुतसिद्धिः। इत्यधिकृत्येति—इति सूत्रमधिकृत्य=उत्तरोत्तरं सम्बध्येत्यर्थः। पूर्वोत्तरक्रिययोः सत्योः पूर्वकालिकक्रियावाचकात् क्त्वेति नियमसंरक्षणयात्र प्लुतप्रकरणमारभते आचार्यैः'—इति शेषो बोध्यः।

'प्रत्यभिवादेऽशूद्रे'—'अशूद्रे' इति च्छेदः, 'अशूद्रस्त्र्यसूयकेषु इति वक्तव्यम्' इति वार्त्तिके तथोक्तेः। अभिवादं प्रतिगतः प्रत्यभिवादः। अभिवादश्च 'दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीत, उरस्समं क्षत्रियः, मध्यसमं वैश्यः, नीचैः शूद्रः। प्राञ्जलिः' इति तिष्ठन् प्रातरभिवादमभिवादयीतासावहं भोः, इति च आपस्तम्बेनोक्तः। असावित्यनेन स्वनामनिर्देशः सूचितः।

अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टे प्लुतः स्यात्, स चोदात्तः।

अभिवादये देवदत्तोऽहम्। आयुष्मान् भव देवदत्त ३।

---

देवदत्तोऽहं भो इति ब्रुवन्। अभिवादम् = आशीर्वचनम्। अभिवादयीत = अभिवाद्यं गुर्वादिं वक्तुं विज्ञापयेदित्यर्थः।

एवञ्च यथावर्णं बाहुं प्रसार्य 'अभिवादये देवदत्तोऽहं भो' इति ब्रूयात्। अभिवादनप्रकारो मनुना प्रदर्शितः। तथाहि--

'अभिवादात्परं विप्रे' ज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्॥
नामधेयस्य ये केचिदभिवादं न जानते।
तान्प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च॥
भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥

क्षत्रियस्य बलवर्मन् इति, वैश्यस्य वसुभूते इति, स्वरान्ते वाक्येऽन्तः प्लुतः कार्यः। अकार इत्युपलक्षणं स्वरमात्रस्य। व्यञ्जनान्ते वाक्ये व्यञ्जनात्पूर्वाक्षरः प्लुतः कार्यः। अन्ये तु 'अकारश्चास्य नाम्नोऽन्ते' इति मनुवाक्यम् 'आयुष्मान् भव सौम्य देवदत्त ३ अ' इति प्रत्यभिवादवाक्यं प्रयोज्यमित्येतदभिप्रायकमाहुः। ननु प्रत्यभिवादवाक्ये 'अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः' इति मनूक्त्यनुसारेण 'आयुष्मान् भव देवदत्त ३ अ' इति कस्मान्न प्रयुज्यते? अत्रोच्यते यदर्थाभिधाने उपयुज्यते तदेव व्याकरणे वक्तव्यम्। अकारश्चायमदृष्टार्थ एव, नत्वर्थवानिति न प्रयुक्तः। अन्ये तु अस्य अभिवादयितुर्नाम्नोऽन्ते योऽकारः स प्लुतो वाच्यः। अकार इति स्वरमात्रस्योपलक्षणम्। वाक्यान्तस्थे हलन्ते नाम्नि हलः पूर्वोऽच् प्लुतो वाच्य इति व्याचक्षते। अकारोऽन्ते प्रयोक्तव्य इति न विधीयते। अत एव भाष्ये क्वचि अन्ते अकारो न प्रयुक्तः।

अभिवादं विना प्रत्यभिवादासम्भवादभिवादवाक्यं प्रथममाह--'अभिवादये देवदत्तोऽहम्' इति। भोःशब्दोऽप्यन्ते योजनीयः। प्रत्यभिवादवाक्यमाह—'आयुष्मान् भव देवदत्त ३' इति। 'अभिवादये' इत्यस्य अभिवादम्=आशीर्वचनं वक्तुमर्हत्वेन विज्ञापयामीत्यर्थः। नमस्कारपूर्वमाशिषं वाचयामीति यावत्। अभिवादितो गुर्वादिर्वदति-आयुष्मानिति--उद्देश्यवाचकात् सिद्धार्थकादेव-सम्बोधनविभक्तिरिति प्रकृते आयुष्मत्त्वस्य विधेयत्वात्सम्बोधनविभक्त्यभावः। अत्र भवेत्यस्यानन्तरं मनूक्त्यनुसारेण 'सौम्य' इति योज्यम्। 'आयुष्मान् भव' इति मनूक्तौ भवेत्यर्थग्रहणम्। 'आयुष्मानेधि देवदत्त ३' इत्यत्र 'एधि' इति प्रयोगस्यापि भाष्ये दर्शनात्। तेन पर्यायैरपि प्रत्यभिवादो भवति। 'अत्र' देवदत्तशब्दान्त्याकारः प्लुतः। प्रत्यभिवादे शर्मादिप्रयोगो न नियतः, 'एचोऽप्रगृह्यस्य' इति सूत्रे प्रत्यभिवादेऽन्त्यस्यैचः प्लुतदर्शनात्, 'आयुष्मानेधि अग्निभूता३इ' इति भाष्ये तदुदाहरणादुक्तमन्वादिस्मृतिविरोधाच्च। शर्मादिशब्दप्रयोगे तु तट्टेरेव प्लुतः, 'शर्मान्तं नाम ब्राह्मणस्येत्यादिस्मृत्या तस्य नामावयवत्वबोधनात्। अशूद्रे किम् 'कुशल्यसि तुषजक' इति भाष्यम्। अत्र न प्लुतः। अभिवादानन्तरं गुर्वादिर्यत् प्रतिभाषते सोऽत्राभिवादो न तु प्रत्यभिवादत्वेन प्रसिद्ध आशीर्वादरूपः, शूद्रे आशीर्वादस्य निषिद्धत्वेन 'अशूद्रे' इत्यस्य वैयर्थ्यापत्तेः, 'अशूद्रे किम्? कुशल्यसि तुषजक' इति भाष्योक्तप्रत्युदाहरणस्य। शीर्वचनाभावेन विरुद्धत्वापत्तेश्च। अनेन भाष्येण शूद्रविषये 'आयुष्मान् भव सौम्य' इति न प्रयोक्तव्यमिति प्रतीयते। भाष्ये 'प्रत्यस्यभिवदमुच्यते

'स्त्रियां न' ( वा ४८६४ ) अभिवादये गार्ग्यहम्। भो आयुष्मती भव गार्गि। नाम गोत्रं वा वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते। नेह, आयुष्मानेधि।

---

'अशूद्रे इति'। 'अशूद्रस्त्र्यसूयकेष्विति वाच्यम्'। इत्येकं वार्त्तिकमुक्तम्। अस्यार्थः—शूद्रविषये एव प्लुतप्रतिषेधो न भवति किन्तु शूद्रवत् स्त्रीविषये असूयकविषयेऽपि प्लुतप्रतिषेधो वक्तव्य इति। स्त्रीविषये वार्त्तिकं विभज्यार्थतः संगृह्याह—

'स्त्रियां न' इति—स्त्रीविषयकप्रत्यभिवादवाक्ये टेः प्लुतो न भवतीत्यर्थः। प्रत्यभिवादनस्याभिवादनपूर्वकत्वादभिवादनवाक्यमाह—'अभिवादये गार्ग्यहम्' इति। प्रत्यभिवादवाक्ये प्लुतनिषेधोदाहरणमाह—'आयुष्मती भव गार्गि' इति। अत्र टेर्न प्लुतः।

केचित्त्वाहुः—न स्त्री अभिवादयते। पादोपसंग्रहणाद्येव तु करोति। अन्ये त्वाहुः—अभिवादयते त्वपि न तु स्वं नाम गोत्रं वा गृह्णाति। अत्रोभयपक्षयोः स्त्रीप्रतिषेधो न विधेयः, नामगोत्रयोः प्रत्यभिवादवाक्येऽप्यभावात्। वस्तुतस्तु 'स्त्रियां न' इति प्रतिषेध आवश्यकः। यदि स्त्रीविधिं परित्यज्य नामगोत्रपूर्वकम् अभिवादयेत्। अभिवाद्यश्च गुर्वादिः नामगोत्रपूर्वकं प्रत्यभिवादवाक्यं प्रयुञ्जीत तत्र प्लुतो मा भूदिति। न हि निषिद्धकार्यकरणाय संस्कृतवाक्यं न प्रयोक्तव्यमिति विधिरस्तीत्युपाध्यायाः। वार्तिकेऽसूयके प्रतिषेध उक्तः। मूलकृता तु नोक्तस्तस्यायमाशयः—असूयतीति असूयकोऽविनीतः। यावदयमसूयकत्वेन ज्ञातो न भवति तावत् प्लुतं करोत्येव 'यदा तु असूयकोऽयं मामुपहसितुकाम' इति जानाति तदा नैवाशीर्वादरूपं प्रत्यभिवादं प्रयुङ्क्ते 'प्रत्युत शापमेव ददाति' इति भाष्ये दर्शितम् इति नास्ति तत्र प्रतिषेधस्यावश्यकता, प्रत्यभिवादाभावात्।

असूयके—स्थाल्यहं भोः, इत्यभिवादानन्तरम्। गुरुणा स्थालिशब्दं संज्ञां मत्वा 'आयुष्मानेधि स्थालि३न्' इति प्लुते प्रयुक्ते। असूयक आह 'नैषा मम संज्ञा किन्तु दण्डिन्यायो मया विवक्षितः स्थालमस्यास्तीति स्थाली'ति। तदुक्तं सत्यं मन्वानो गुरुः प्लुतरहितं प्रत्यभिवादं पुनः कृतवान् 'आयुष्मानेधि स्थालिन्' इति। पुनरसूयक आह न मया दण्डिन्यायो विवक्षितः संज्ञैषा ममेति। ततोऽसूयकत्वं तस्य निर्णीय कुपितो गुरुः पुनराह 'असूयकस्त्वं जाल्म न त्वं प्रत्यभिवादमर्हसि। भिद्यस्व वृषल स्थालिन्' इति। अनेन भाष्येणेदमुपलब्धं यदसूयकत्वज्ञानानन्तरं प्रत्यभिवाद एव न स्यात्कुतस्तदर्थो निषेध इति। अनेनेदमपि ध्वनितम् 'संज्ञावाचकस्यैव टेः प्लुतो भवति। न योगमात्रेणार्थबोधकस्येति'।

नाम गोत्रं वेति—असूयके प्रतिषेधपरपूर्वप्रदर्शितभाष्यप्रामाण्यात् 'आयुष्मती भव गार्गि' इति भाष्योक्तवाक्ये 'गार्गि' इत्यस्य गोत्रवाचकस्य प्रयोगाच्च। यदि तु 'गार्गि' इत्यपि नामैव संकेतसम्बन्धेन तत्पदवाच्यस्यैव नाम्नः प्रवृत्तिनिमित्तत्वादित्युच्यते तदा गोत्रवाचकपदस्य टेः प्लुतत्वे प्रमाणान्तरं मृग्यम्। अभिवादप्रत्यभिवादौ नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धौ। तत्राधिकृतस्य पदस्येत्यस्य 'प्रत्यभिवादे' इत्यनेन विशेषणात् प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव टेः प्लुतः। तथा च यत्र वाक्यादौ वाक्यमध्ये वा नाम गोत्रं प्रयुज्यते तत्र नामगोत्रयोष्टेर्वाक्यटित्वाभावात् 'देवदत्त आयुष्मानेधि, आयुष्मान् देवदत्त एधि' इत्यादौ न प्लुतः। तदुक्तं 'भाष्ये—प्रधानस्य च टिसंज्ञस्य प्लुत्या भवितव्यमिति'। अयम्भावः—प्रधानमर्थोऽभिवादयिता तदनुग्रहार्थत्वात्प्रत्यभिवादस्य, कुशलित्वादिकन्तु तस्यैव संस्कारकम्। एवम् 'एधि' इत्याख्यातवाच्या क्रिया साध्यतया प्रधानभूतापि संस्कारकत्वेन विवक्षितत्वादप्रधानमेव। तस्मात्प्रधानभूतस्याभिवादयितुरुपस्थापकं यत्पदं वाक्यान्ते प्रयुज्यमानं तस्य टेः प्लुतो भवति न यस्किञ्चित्पदस्य। अत्र नामशब्देन द्वादशेऽह्नि पित्रादिकृतं गृह्यते। अत एव यौगिके 'स्थालिन्' 'दण्डिन्' इत्यादौ भाष्ये प्लुतो न कृतः। तत्र नाम्नः प्लुतत्वमुदाहृतम्।

'भोराजन्यविशां वेति वाच्यम्' (वा ४८६५) आयुष्मानेधि भो३ः। आयुष्मानेधीन्द्रवर्म३न्। आयुष्मानेधीन्द्रपालित३।

दूराद्धूते च [ ८-२-८४ ]

---

गोत्रस्योदाहरणम्, 'अभिवादये गार्ग्योऽहम्' 'भो आयुष्मानेधि गार्ग्य ३' इत्याद्यूह्यम्। यत्तु 'दण्डिन्' इत्यस्य तद्धितान्तत्वात् तस्य च 'न तद्धितम्' इति निषेधान्न नामत्वमिति तन्न संज्ञां मत्वा भाष्यकृता 'स्यात्नि३न्' इत्यस्य तद्धितान्तत्वेऽपि प्लुतकरणेन तद्धितान्तनिषेधस्य प्रायिकत्वबोधनात्।

'भो राजन्यविशां वेति वक्तव्यम्' इति, प्रत्यभिवादवाक्यान्ते प्रयुज्यमानस्य भोः-शब्दस्य राजन्यवैश्ययोर्नाम्नश्च टेः प्लुतो वा भवतीति वक्तव्यमित्यर्थः। भोः–शब्दस्य नामगोत्रपरत्वाभावादप्राप्ते इतरयोस्तु नामत्वात् प्राप्ते उभयत्र विभाषेयम्। 'आयुष्मानेधि भोः ३' अत्र प्लुतः। 'आयुष्मानेधि भोः' अत्र प्लुतो न, वैकल्पिकत्वात्। प्रत्यभिवादवाक्यमिदम्। अतः पूर्वं भाष्ये 'देवदत्तोऽहं भोः' इति। अस्य 'अभिवादये' इति शेषः। राजन्ये—आयुष्मानेधि इन्द्रवर्म ३ न्। अत्र प्लुतः। 'आयुष्मानेधि इन्द्रवर्मन्।' अत्र न प्लुतः। अतः प्राक् 'अभिवादये इन्द्रवर्माहं भोः' इति शेषः। वैश्ये—'अभिवादये इन्द्रपालितोऽहं भोः' अभिवादवाक्यम्।

आयुष्मानेधि इन्द्रपालित ३। अत्र वा प्लुतः। प्रत्यभिवादवाक्यमेतत्। अत एव भाष्यात् प्रत्यभिवादवाक्ये 'शर्मान्तं ब्राह्मणस्य, वर्मान्तं क्षत्रियस्य, पालितान्तं वैश्यस्य' इत्यादिविधयोऽप्यनुमताः प्रतीयन्ते। तथा च नामगोत्रान्तम्, शर्माद्यन्तनामान्तं वा प्रत्यभिवादवाक्यमिति विकल्पः फलति। 'भो राजन्य' इति वार्तिके 'भोशब्दस्य टेः' 'राजन्यविशां नाम्नश्च टेः' इत्येवमन्वये एकधर्मावच्छिन्नेऽन्वयाभावेन द्वन्द्वो न प्राप्नोतीत्यार्षप्रयोगाद् द्वन्द्वो वाच्य इत्यपर आह इत्यादिना भाष्येऽर्थान्तरमुक्तम्।

तथा हि सर्वस्यैव नाम्नः प्रत्यभिवादवाक्ये भोःशब्द आदेशो वा वक्तव्यः। देवदत्तोऽहं भोः, 'आयुष्मानेधि भो ३, आयुष्मानेधि देवदत्त ३ इति वा' इति अत्र देवदत्तशब्दस्य विकल्पेन भो आदेशः। प्लुतस्तु नित्य एव। इयमेव व्याख्या समीचीना। प्लुतस्य वैकल्पिकपरत्वे 'प्राचाम्' इति योगविभागेन सर्वेषां प्लुतानां वैकल्पिकत्वस्य वक्ष्यमाणतया 'भो राजन्य' इति वार्तिकस्य वैयर्थ्यापत्तेरित्युपाध्यायाः।

'दूराद्धूते च' इति, दूरादिति–'दूरान्तिकार्थेभ्यः' इति प्रातिपदिकार्थे पञ्चमी। 'दूरं देशमपेक्ष्य' इत्यर्थे ल्यब्लोपे पञ्चमी वा। ह्वानं हूतम् 'भावे क्तः' दूरादित्युच्यते दूरस्थानवस्थितम् 'तदेव हि कंचित्प्रति दूरं भवति कञ्चित्प्रति अन्तिकम्। एवं हि कश्चित् कञ्चिदाह—य एष पार्श्वतः करकः= कमण्डलुस्तमानयेति, स आह उत्थाय गृहाण, दूरे न शक्नोमि गन्तुमिति। अपर आह दूरं मथुरायाः पाटलिपुत्रकमिति। स आह न दूरमन्तिकमिति। तदेवं दूरपदार्थस्यानियतत्वान्न ज्ञायते कदाऽयं प्लुत इष्यत इति चेदुच्यते—ह्वानापेक्षया दूरम्। यत्र तत्तत्पुरुषस्वभावसिद्धात्कथनप्रयत्नादधिके प्रयत्ने ऽकृते सन्देहो भवति श्रोष्यति न श्रोष्यति वेति तद् दूरम्। येन शब्देन पर आगमने नियुज्यते तद्धूतमिति लोके प्रसिद्धम्। परन्त्वत्र हूतपदं बोधनस्योपलक्षणम्। तथा च दूराद्धूतम्=दूराद् बोधनम्। दूराद् बोधने यद्वाक्यं तदन्तस्य नाम्नो गोत्रस्य वा टेः प्लुतः स्यादित्यर्थः। तदाह—दूरात्संबोधनपदेन सम्बुद्धिविभक्तिर्नापेक्ष्यते। तेन अभिमुखीकृत्य बोधनाभावे 'आगच्छतु भवान् देवदत्तः ३' इत्यादावपि प्लुतो भवति। अत एव 'आकडारसूत्रभाष्ये नदीगुरुसंज्ञयोः समावेशे 'वात्सीबन्धु३' इत्यत्र 'गुरोरनृतः' इति प्लुतः, 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वञ्च फलमिति भाष्यं

दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात्। सक्तून्पिब देवदत्त ३।

**हैहेप्रयोगे हैहयोः [८-२-८५]**

एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात्। हे३ राम। राम है३।

**गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् [८-२-८६]**

दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे३वदत्त। देवद३त्त। देवदत्त३।

---

संगच्छते। अन्यथा सम्बोधनविभक्त्यभावेन गुरोरित्यस्याप्राप्त्या तदसङ्गतिः स्यात्। हूतस्य बोधनोपलक्षणत्वे फलमाह—'सक्तून् पिब देवदत्त ३' इति। अत्र बोधनमात्रं विवक्षितं न त्वागमनाय नियोजनम्। तदुक्तं भाष्ये 'यत्र प्राकृतात्प्रयत्नाद्विशेषेऽनुपादीयमाने सन्देहो भवति श्रोष्यति न श्रोष्यतीति तद्दूरमिहावगम्यते' इति।

इह दूरात्सम्बोधने उदात्तत्वविशिष्टः प्लुतो विधीयते। तत्रैव 'एकश्रुतिः दूरात्सम्बुद्धौ' (१-२-३३) इति दूरात्सम्बोधने वाक्यमेकश्रुतिर्विधीयते। एकस्मिंश्च विषये प्राप्तानां बाध-विकल्पसमुच्चयानामन्यतमेन भवितव्यम्। तत्र बाधस्तु विशेषेण सामान्यस्य। यथा काव्योः। सामान्यस्याण आदन्ताद्विधीयमानेन केन बाधः। अत्र तु सामान्यविशेषभावो नास्ति, तुल्योद्देश्य-कत्वात्। विकल्पोऽपि सहप्राप्तयोरेव भवति। अत्र तु एकश्रुतिदृष्ट्या प्लुतस्यासिद्धत्वान्नास्ति सह प्राप्तिः। तस्मात्पारिशेष्यात्समुच्चयः—वाक्यस्य टेः प्लुत उदात्तः, अन्यस्य वाक्यावयवस्याच एकश्रुतिः।

'हैहेप्रयोगे हैहयोः' इति, हैहयोः सम्बोधनद्योतकत्वेन केवलाभ्यामपि ताभ्याम् सम्बोधनदर्शनेन च तयोरपि हूयमानार्थपदत्वाद् 'गुरोरनृतः' इत्येव सिद्धे नियमार्थमित्याह—हैहयोरेवेति। अन्ये तु प्रथमं हैहेग्रहणं नामग्रहणनिषेधविषये 'एहि हे ३' इत्यादौ हूयमानार्थ-त्वाभावादप्राप्ते विध्यर्थम्। द्वितीयम्—'हैहयोः' इति वाक्यादित्वाद् 'हे राम३' इत्यादावप्राप्ते विध्यर्थम्।

प्रयोगग्रहणात्तु यत्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र सम्बुद्ध्यन्तेनैव सम्बोधनस्य द्योतित-तया द्योत्याभावादनर्थकयोरपि हैहयोः प्लुतार्थम्। तदाह 'राम है३' इति। नियमे तु न मानम्, तेन वाक्यस्य टेः प्लुतसमावेश इत्याहुः।

'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' इति अत्र 'वाक्यस्य टेः प्लुत उदात्तः' इति, 'दूराद्धूते' इति, 'पदस्ये'ति चानुवर्तते। दूरत्वमात्राविवक्षितम्, 'अतो रोः' इति सूत्रे अप्लुतादित्यस्य व्यावर्त्यपराद् 'सुस्रोत३ अत्र त्वमसि' इति दूरात्सम्बोधनाभावेऽपि प्लुतघटितपराद् भाष्यात्। तेन दूरत्वाभावेऽपि बोधनमात्रस्य विवक्षितत्वे भवति। तथा च सम्बोधने यद्वाक्यं तदवयवस्य ऋद्भिन्न-स्यानन्त्यस्य सम्बोध्यमानार्थवाचकपदावयवस्य गुरोः, सम्बोध्यमानार्थवाचकपदावयवस्य वाक्यटेश्च एकैकस्योदात्तः प्लुतो वा भवति। अपिना गुरोरगुरोश्च टेः समुच्चयः, तेन यदा टेः प्लुतस्तदानन्त्यस्य गुरोर्न, यदानन्त्यस्य गुरोः प्लुतस्तदा वाक्यस्य टेर्नेति भावः। अन्त्यस्य गुरोरेव टेः सत्त्वे 'एकैकस्य' इति नियम इति तु न, भाष्ये गुरोः प्लुतविधाने लघोरप्यस्य प्लुतप्रसङ्ग इत्याशङ्क्य 'न वा आन-न्त्यस्यापीति वचनमुभयनिर्देशार्थम्, आनन्त्यस्यापि गुरोरन्त्यस्यापि टेः, इत्युभयनिर्देशार्थं भविष्यति' इति भाष्येण गुरोरगुरोश्च टेः समुच्चयबोधनात्। देवदत्तशब्दे द्वौ गुरू—वकारात्पूर्व एकारः, तकार-द्वयात्पूर्वोऽकारश्च। तत्र पर्यायेण प्लुतः—'दे३वदत्त' इति। अस्य 'एहि' इत्यादिः। 'देवद३त्त' इति, 'देवदत्त३' अत्र पदस्य टेः प्लुतः। प्लुतस्य वैकल्पिकत्वेन तदभावे 'देवदत्त' इति, नात्र प्लुतादेशः।

'गुरोः' किम् । वकारात्परस्याकारस्य मा भूत् । 'अनृतः' किम् । कृष्ण३ । एकैकग्रहणं पर्यायार्थम् । इह 'प्राचाम्' इति योगो विभज्यते । तेन सर्वः प्लुतो विकल्प्यते ।

अप्लुतवदुपस्थिते [ ६-१-१२६ ]

---

गुरोः किम् । वकारादुत्तरस्य लघोरकारस्य प्लुतो मा भूत् । ऋत इत्यत्र तपरकरणात् 'होतृ३ कार' इत्यत्र दीर्घऋकारस्य प्लुतः स्यादेव । धातुषु ऋदिद्लृदित्प्रयुक्तकार्ययोः सांकर्य्यवारणाय ऋलृरूपानुबन्धद्वयकरणेन क्वचित्परस्पराग्राहकत्वं ज्ञाप्यते । अत एव 'ऋलृक्' सूत्रभाष्ये 'क्लृ३प्तशिखः' इत्यत्र ऋत इत्यनेन लृकारस्याग्रहणात् प्लुतादेशकरणं संगच्छते । पर्य्यायार्थमिति—एकैकग्रहणाभावे 'देवदत्त' इत्यादौ युगपत्सर्वेषां गुरूणां प्लुतः स्यात् ।

न च 'अनुदात्तपदमेकवर्जम्' ( ६-१-१५८ ) इत्यनेन एकस्यैवैकदा उदात्तत्वविशिष्टः प्लुतः स्यात्, उदात्तं विहाय सर्वेषामनुदात्तविधानादिति वाच्यम्, 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इति अनुदात्तप्लुतसमावेशवारणाय 'एकैकग्रहणस्य' सत्त्वात् ।

योगो विभज्यत इति—'गुरोरनृत एकैकस्य' इत्येको योगः । अस्य च उक्त एवार्थः । तत 'प्राचाम्' इति योगविभागसामर्थ्यादत्र प्लुतमात्रं सम्बध्यते । पूर्वोक्तः प्लुतः प्राचां मते बोद्धव्य इत्यर्थः । तथा च 'विभाषा पृष्टप्रतिवचने' इत्यादिषु विभाषाग्रहणं न कर्त्तव्यम्, योगविभागेनैव विकल्पेन प्लुतसिद्धेः । तेन 'अग्नीत्प्रेषणे' इति प्लुतो न । किञ्च 'द्वैपायनो विरहकातर आजुहाव । पुत्रेति' इति भागवते 'पुत्रेति' इति सिध्यति । केचित्तु 'अप्लुतवदुपस्थिते' इति 'चाकवर्मणस्य' इति वा अप्लुतवद्भावाद् वाक्यादेरनुकरणसम्भवाच्च 'पुत्रेति' इत्यस्य सिद्ध्या नेदं फलम् । 'अग्नीदग्नीन्' इत्यपि न फलम् 'अग्नीत्प्रेषणे परस्य विभाषा' इति न्यासेन व्यवस्थितविभाषासिद्धेः, अत एव भाष्यकृता 'अपर आह' इत्यादिना सर्वप्लुतस्य वैकल्पिकत्वमुक्त्वापि फलं नोपन्यस्तम् । तस्मात्फलाभावाद् योगविभागेन वैकल्पिकत्वं न भाष्यसम्मतमित्युपाध्यायाः । 'अग्नीत्प्रेषणे परस्य च' इति इति सूत्रस्य 'अग्नीदग्नीन् विहर' इत्यत्राप्रवृत्तये 'ओश्रावये परस्य च' इति न्यासान्तरमुक्तम् । तेन- 'ओ३ श्रा३ वय' इत्यत्रैव प्रवर्तेत, नान्यत्र—'अग्नीदग्नीन् विहर' इत्यादौ । ततो यथाश्रुतन्यासेऽपि 'अग्नीत्प्रेषणे परस्य च विभाषा' इति न्यस्य विकल्पेन प्लुतविधानात् 'अग्नीदग्नीन् विहर' इत्या प्लुताभावः सिध्येत् 'ओश्रावये परस्य च' इति वार्तिकं प्रत्याख्यातम् । परन्तु विकल्पेन विधानपक्षे 'अग्नीदग्नीन् विहर' इत्यत्र विकल्पेन प्लुतोऽपि स्यात् । वार्तिकरूपे न्यासान्तरे तु उक्तप्रयोगे सर्वथा प्लुताभाव एवेति फलभेदवारणाय व्यवस्थितविभाषाऽऽश्रयणीया । एवञ्च 'अग्नीदग्नीन् विहर' इत्यत्र प्लुताभाव एवेष्यते । इति 'प्राचाम्' इत्यपि व्यवस्थितविभाषैवेति नोक्तदोषः । 'अग्नीत्प्रेषणे' इत्यत्र 'अपर आह—सर्व एव प्लुतः साहसमनिच्छता विभाषया वक्तव्यः' इति वदता भाष्यकृता 'प्राचाम्' इति, 'विभाषा' इति वा योगविभागः सूचितः ।

सर्वः प्लुत इति–नेदं वार्तिककृत्सम्मतम्, 'भोराजन्यविशां वेति वक्तव्यम्' इत्युक्तेः । अन्यथा योगविभागेनैव विकल्पसिद्ध्येदं व्यर्थं स्यात् । यत्तु सर्वेषां प्लुतानां वैकल्पिकत्वे भाष्ये 'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः' इत्यादिना निन्दाश्रवणाद् भाष्यविरोध इति । किञ्च 'भोराजन्य' इति वार्तिकवैयर्थ्यञ्चेति तन्न, व्यवस्थितविभाषाश्रयणेन प्रत्यभिवादे नित्यप्लुतेरेवेष्टत्वात्, वैकल्पिकत्वेऽपि भावानुष्ठानस्यौचित्येन भाष्यस्य शास्त्राज्ञाननिन्दामात्रपरत्वात्, भोराजन्येति वार्तिकस्य योगविभागलब्धवैकल्पिकानुवादपरत्वाच्च ।

'अप्लुतवदुपस्थिते' इति, अनार्ष इति—ऋषिर्वेदस्तत्र भव आर्षो वैदिकः । न आर्षोऽनार्षोऽवैदिक इतिशब्द उपस्थित इत्युच्यते । पदकारैः समुदायाद्वाच्यपदं पृथक्कृत्य तत्स्वरूपज्ञानाय इतिशब्दः प्रयुज्यते स इतिर्व्यवस्थितः । तदुक्तं भाष्ये—'उपस्थिते

उपस्थितोऽनार्ष इतिशब्दः, तस्मिन्परे प्लुतोऽप्लुतवद्भवति। अप्लुतकार्यं यणादिकं करोतीत्यर्थः। सुश्लोक३ इति-सुश्लोकेति। 'वत्' किम्? अप्लुत इत्युक्तेऽप्लुत एव विधीयेत, प्लुतश्च निषिध्येत। तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्।

---

इत्युच्यते किमिदमुपस्थितं नाम? अनार्ष इतिकरणः' इति। स्वस्मिन्स्वसादृश्यस्यासम्भवाद् अप्लुतवदित्युक्त्या प्लुत इत्यध्याह्रियते। तदाह—प्लुतोऽप्लुतवदिति। तथा च अवैदिके इतिशब्दे परे प्लुतोऽप्लुतवत्स्यादित्यर्थः। अप्लुतेन तुल्यमप्लुतवत्। तुल्यत्वनियामको धर्मश्च प्लुतकार्य्यप्रयोजकत्वाभावरूपः। अप्लुते यथा प्लुतकार्य्यं न भवति तथा व्यवस्थिताव्यवहितपूर्वे प्लुतेऽपि प्लुतपदमुपादाय विहितं कार्य्यं न भवतीति यावत्। प्लुतशब्दमुपादाय्य कार्य्यञ्च प्रकृतिभावरूपमेव। तत्फलितमाह—अप्लुतकार्य्यं यणादिकमिति। एतेन 'सुश्लोक ३ इति' इत्यत्र गुणादेरपि प्लुतकार्य्यत्वात् तदपि न स्यादित्यपास्तम्, तथात्वे प्लुतवद्भावस्य वैयर्थ्यापत्तेश्च। यदि यणादिकार्य्यकर्तृत्वेनैव सादृश्यं तदा 'अप्लुतवदुपस्थिते' 'ई चाक्रवर्मणस्य' इत्याभ्यामेव यणादिकं विधीयेत। एवञ्च 'एहि करभोरु ३ इति, एहि सुतनु ३ इति, चिनु हि ३ अत्र' इत्यादौ प्लुतस्य यणादिसिद्धये 'इको यणचि' इत्यत्र 'इकः' इत्यस्य नावश्यकता, परत्वात् 'प्लुतप्रगृह्याः' इति प्रकृतिभावं बाधित्वाऽऽभ्यां यणसिद्धिः। यदि तु अप्लुते प्रकृतिभावो न भवति तथा अवैदिकेतिशब्दाव्यहितपूर्वस्य प्लुतस्यापि प्रकृतिभावो न भवतीत्येवोच्यते तदोक्तप्रयोगे 'इको यणचि' इत्यनेनैव यणप्राप्तिर्वाच्या। तथा च 'ह्रस्वस्य पिति' इत्यतो 'ह्रस्वस्य' इत्यस्य 'दीर्घात्' इत्यतो दीर्घग्रहणस्य चानुवृत्त्या ह्रस्वस्य दीर्घस्य च यण्विधाने उक्तप्रयोगे प्रकृतिभावनिषेधे प्लुतस्य यणसिद्धये 'इकः' इत्यास्यावश्यकर्तव्यत्वम्। अत एव पाणिनिना 'इको यणचि' इत्युक्तं न तु 'यणचि' इत्येव। वस्तुतस्तु प्रकृतिभावनिषेधे यणादिकार्य्यविधाने वा प्लुतस्य यणसिद्धये 'इकः' इति चरितार्थम्। अप्लुतवदित्यादिना न हि स्वातन्त्र्येण यणादिकार्यं विधीयते, किन्तु प्रकृतिभावबाधनार्थं प्रतिप्रसूयते। ह्रस्वदीर्घयोरेव यण्विधाने अप्लुतवदित्यादिनापि प्लुतस्य यण् न स्यादिति यण्विधानपक्षेऽपि प्लुतस्य यण्विधानाय 'इकः' इत्यावश्यकम्। यदि तु प्रकृतिभावनिषेधे प्लुतस्य यणो दृष्ट्या असिद्धतया ह्रस्वदीर्घबुद्ध्यैव यणादि स्यादित्युच्यते तदा 'इकः' इत्यस्य 'यातिः' इत्यादि भाष्योक्तं फलं बोध्यम्।

सुश्लोक ३ इतीति—तैत्तिरीये 'सुश्लोक ३ इति प्लुतान्तो मन्त्रः पठितः। पदविभागकाले अवग्रहे ततः परम् इतिशब्दं पदकारा योजयन्ति। तत्र 'सुश्लोक ३ इति' इति स्थितौ अप्लुतवद्भावेन प्रकृतिभावाभावे सति गुणैकादेशे 'सुश्लोकेति' इति रूपम्। शोभनाः श्लोका यशांसि यस्य स सुश्लोकस्तत्सम्बुद्धौ रूपम्।

पदकारास्तु 'सुश्लोक ३ इति' इत्येवावगृह्णन्ति। तत्राप्लुतवद्भावाभावस्तु संहिताया अविवक्षितत्वाद्बोध्यः। वत्किमिति—अप्लुत इत्यस्य पर्युदासन्यायेन प्लुतभिन्नार्थकतया 'उपस्थिते' इतिशब्दे परे प्लुतस्य स्थाने अप्लुतः—ह्रस्वो दीर्घो वा आदेशः स्यादित्यर्थः स्यादित्यर्थः। न च प्लुतस्य स्थाने ह्रस्वापेक्षया आन्तरतम्याद् दीर्घ एवादेशः स्यान्न तु ह्रस्व इति वाच्यम्, दीर्घ इत्येव वक्तव्ये 'अप्लुत' इत्युक्त्या उभयोर्विधानसम्भवात्। तथा चादेशेन स्थानिनोऽपहाराद् प्लुतस्य निवृत्तिरेव फलेत्। तदाह—प्लुतश्च निषिध्येतेति। 'अप्लुतः' इत्यस्य प्रसज्यप्रतिषेधमाश्रित्य 'प्लुतो न स्यादिति तु' नार्थः, वाक्यभेदासमर्थसमासादिगौरवापत्तेः।

भाष्ये 'प्लुतप्रतिषेधे' इत्युक्तिस्तु फलितार्थमादायैव। अयम्भावः—वद्ग्रहणे सति प्लुतकार्य्यप्रयोजकत्वाभाववत्त्वेन सादृश्यमादाय सादृश्यस्य विधाने प्लुतकार्य्यं प्रतिषिध्यते, त्रिमात्रता तु तिष्ठत्येव। न हि 'सिंहसदृशोऽयं मनुष्यः' इत्युक्ते मनुष्यत्वं तस्य प्रतिषिध्यते। तदुक्तं भाष्ये 'वद्वचनं क्रियते प्लुतकार्य्यप्रतिषेधार्थम्। प्लुतकार्य्यं प्रतिषिध्यते। त्रिमात्रता तु न प्रतिषिध्यते' इति। ननु वद्ग्रहणे सति त्रिमात्रतायाः प्रतिषेधाभावे फलाभावः, स्वरसन्धिना त्रिमात्रताया विनाशा-

अग्नी३ इति ।

ई३ चाक्रवर्मणस्य । [ ६-१-१३० ]

ई३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । चिनु ही३ इति—चिनु हीति ।

---

श्रवणकत्वादिति चेन्न, यत्र प्रगृह्यसंज्ञकः प्लुतस्तत्र प्रगृह्यनिमित्तकप्रकृतिभावस्य निर्बाधत्वेन प्लुतश्रवणस्यैव फलत्वात् । न च प्लुतस्य प्रगृह्यत्वाभावः 'ईदूदेद्' इत्यनेन दीर्घस्यैव प्रगृह्यविधानादिति वाच्यम्, 'ईदूदेद्' इति सूत्रदृष्ट्या त्रैपादिकप्लुतस्यासिद्धत्वेन प्लुतस्य प्रगृह्यत्वे बाधकाभावात् । न च तपरकरणवैयर्थ्यम्, तत्कालानां स्वरितादीनां षण्णां ग्रहणेन चारितार्थ्यात् ।

प्लुतस्य प्रगृह्याश्रयप्रकृतिभावे फलमाह—'अग्नी ३ इति' इति । अत्र 'अग्नी' इति सम्बोधने प्रथमाद्विवचनान्तस्यानुकरणम् । तत्र प्लुतस्यासिद्धत्वाद् 'ईदूदेत्' इत्यनेन प्लुते यथा दीर्घत्वबुद्धिस्तथा दीर्घत्वबुद्ध्या प्लुतस्यैव प्रगृह्यत्वमपि स्यात् । तदनुकरणे च 'प्रकृतिवदनुकरणम्' इत्यनेन प्लुतत्वं प्रगृह्यत्वं च स्यात् । तथा च 'अप्लुतवद्' इत्यनेन प्रकृतिभावाभावे प्राप्तः सवर्णदीर्घः प्लुतस्य प्रगृह्यनिमित्तकप्रकृतिभावे 'अग्नी ३ इति' इति सिध्यति । तद्ग्रहणाभावे प्लुतस्याप्लुवादेशे ( दीर्घादेशे ) प्लुतस्य श्रवणं न स्यादिति भावः ।

न च परत्वात्प्रगृह्यत्वनिमित्तकप्रकृतिभावं बाधित्वा 'अप्लुतवद्' इत्यनेन दीर्घ एव स्यादिति तद्ग्रहणं व्यर्थमिति वाच्यम्, अजन्निमित्तकप्रकृतिभावस्य इतिशब्दनिमित्तकाप्लुतवद्भावापेक्षयान्तरङ्गतया प्रकृतिभावस्यैव प्रवृत्तेः । न च 'नाजानन्तर्ये' इति बहिरङ्गासिद्धत्वनिषेधः, जातबहिरङ्गे एव तत्प्रवृत्तेः । अत एव 'असुस्तुवत्' इत्यत्रोक्तसिद्धिः । वस्तुतस्तु 'अग्नी ३ इति' इति नास्योदाहरणम्, 'इकोऽसवर्णे' इत्यतोऽसवर्णे इत्यस्यानुवृत्तेः । भाष्ये 'अग्नी ३ इति' इति तु 'ई चाक्रवर्मणस्य' इत्यस्य प्रवृत्त्यभिप्रायेण वद्ग्रहणस्य फलमुक्तम्, न तु 'अप्लुतवद्' इत्यभिप्रायेण । अत एव 'ई चाक्रवर्मणस्य' इत्यत्र ईग्रहणप्रत्याख्यानपरं भाष्यं संगच्छते । तथा हि—'ईग्रहणेन नार्थः । ··· इदमपि सिद्धं भवति—'वशा ३ इयम्, वशेयम्' इति' इति भाष्यम् । अत्र ईग्रहणाभावे उपस्थितेऽनुपस्थिते च भाष्यानुमोदितप्रवृत्त्या अस्य व्यापकशास्त्रत्वेन 'अप्लुतवद्' इत्यस्य व्याप्यत्वेन 'येन नाप्राप्ते' इति न्यायेनापवादशास्त्रेण अप्लुतवदित्यनेन 'अग्नी ३ इति' इत्यत्र 'ई चाक्रवर्मणस्य' इत्यस्य बाधान्नित्याप्लुतवद्भावः । 'ईग्रहणसत्त्वे तु' अस्य अनुपस्थिते चारितार्थ्येन 'सुश्लोकेति' इत्यादौ 'अप्लुतवद्' इत्यस्य चारितार्थ्येन 'अग्नी ३ इति' इत्यत्रोभयोः प्राप्त्या परत्वात् 'ई चाक्रवर्मणस्य' इत्यस्यैव प्रवृत्त्या विकल्पेन प्लुतवद्भाव इति फलभेदः । अप्लुतवदित्यत्रासवर्णे इत्यस्यानुवृत्तौ तु 'अग्नी ३ इति' इत्यत्र ईग्रहणस्य सत्त्वेऽसत्त्वे चास्यैव प्रवृत्त्या फलभेदाभाव इति । 'अप्लुतवद्' इत्यत्र वद्ग्रहणस्य फलं तु 'वायू ३ इति' इत्यत्र बोध्यम् ।

एतेन उक्तफलभेदवारणाय ईग्रहणसत्त्वे पूर्वविप्रतिषेधेनाप्लुतवद्भाव एवेष्ट इति शेखरोक्तं परास्तम्, 'विप्रतिषेधे' इत्यस्य बाधकल्पनापेक्षया 'असवर्णे' इत्यनुवृत्तिकल्पनस्यैव न्याय्यत्वात् ।

'ई चाक्रवर्मणस्य' इति । 'ई' इति प्लुतेकारानुकरणं लुप्तप्रथमान्तम्, अभेदानुकरणत्वेन निर्विभक्तिकं वा । 'उपस्थिते' इति नानुवर्तते, 'अनुपस्थितार्थोऽयमारम्भ' इति भाष्यात् । अप्लुतवदित्यनुवर्तते । स्वस्मिन्स्वसादृश्यविधानस्य फलाभावादनुयोगितया प्लुत इति सम्बध्यते । चाक्रवर्मणग्रहणं विकल्पार्थम् । तथा च प्लुत ईकारश्चाक्रवर्मणमुनेर्मतेऽप्लुतवत्स्यादचि परे नान्यमते इत्यर्थः । तदाह—ई प्लुतोऽप्लुतवद्वा स्यादचि परे इति । चिनु, हि, इति, इति पदत्रयम् । 'चिनु' इति लोडन्तम् । 'उतश्च प्रत्ययात्' इति हेर्लुक् । 'हि' इत्यव्ययम् = अवधारणे । किं मया कर्तव्यमिति प्रश्नस्योत्तरमिदम्—चिनु ही ३ इति, इदमिति अप्परत्वसम्पादनाय भिन्नवाक्यस्थम् । अन्यथा 'विभाषा पृष्टप्रतिवचने हेः' इत्यनेन प्रश्नोत्तरवाक्यावयवस्य टेः सतो हेष्टेः प्लुतः स्यादचि परे' इति

चिनु ही३ इदम्- चिनुहीदम् । उभयत्र विभाषेयम् ।

ईदूदेद् द्विवचनं प्रगृह्यम् । [ १-१-११ ]

ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् ।

हेरीकारस्य प्लुतो न स्यात् । इदमित्यस्य वाक्यान्तरत्वे तु 'देवदत्त चिनु हि ३' इति वाक्यटित्वं सम्पद्यते ।

यत्तु 'चिनु ही ३ इदम्' इत्येकमेव वाक्यम्, 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यनेन हीत्यस्य प्लुतत्वमिति तन्न चिनु, ही, इदम्, इति पदत्रयस्य टेः प्लुतापत्तेः । न चेष्टापत्तिः, भाष्यादावप्यत्र प्लुतत्रयानुपलब्धेः । अप्लुतवद्भावे 'चिनु हीदम्' इत्यत्र दीर्घः अप्लुतवद्भावाभावे 'प्लुतप्रगृह्याः' इति प्रकृतिभावे 'चिनु ही ३ इदम्' इत्यत्र दीर्घाभावः ।

उभयत्रेति—सूत्रारम्भेण अप्लुतवद्भावस्य प्राप्तेऽप्राप्ते चेत्यर्थः । विभाषेति—विभाष्यते विकल्प्यतेऽनयेति विभाषा 'गुरोश्च हलः' इति स्त्रियां करणेऽप्रत्ययः । इयमिति—इदं सूत्रमित्यर्थः । न च सूत्रस्येदमर्थत्वे 'इयम्' इति स्त्रीलिङ्गनिर्देशोऽसङ्गत इति वाच्यम्, 'उद्देश्यविधेययोरैक्यात् सर्वनाम पर्य्यायेण तत्तल्लिङ्गभाग् भवति' इति नियमात् 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इतिवत्प्रयोगात् । तथा च उपस्थिते पूर्वेण प्राप्ते अनुपस्थिते पूर्वेणाप्राप्ते च इयं विभाषा विकल्पविधायकं शास्त्रमारब्धमित्यर्थः । ईग्रहणं भाष्ये प्रत्याख्यातम् । तथा हि—'ईग्रहणेन नार्थः । ···इदमपि सिद्धं भवति । वशा३ इयम्, वशेयम्' इति । एवञ्च ईकारग्रहणाभावे 'अप्लुतवदि'ति सूत्रं निरवकाशत्वादस्य बाधकम् । इति 'अग्नी३ इति' इत्यत्र नित्याप्लुतवद्भावः । सतीकारे परत्वादिदमेव बाधकम् अप्लुतवदित्यस्येति विकल्पेनाप्लुतवद्भाव इति फलभेदवारणाय ईकारग्रहणसत्त्वेऽपि पूर्वविप्रतिषेधेन नित्याप्लुतवद्भाव एव इष्यते । एवञ्चोपस्थितेऽस्याप्रवृत्त्या 'उभयत्र विभाषा' इत्यस्य अनुपस्थिते इतिशब्दे, तद्घटकेऽचि च विभाषा इयमित्यर्थं शेखरकार आह । तच्च 'अप्लुतवद्' इत्यत्र 'असवर्णे' इत्यस्यानुवृत्त्या 'अग्नी३ इति' इत्यत्र ईग्रहणस्य सत्त्वेऽसत्त्वे च अप्लुतवदित्यस्याप्राप्त्या असङ्गतमिति पूर्वोक्तमनुसन्धेयम् ।

'ईदूदेद् द्विवचनं प्रगृह्यम्' इति । ईच्च ऊच्च एच्चेति विग्रहे समाहारद्वन्द्वे ईदूदेदिति प्रथमान्तम् । ईदूदेदिति–तच्च द्विवचनस्य विशेषणमिति 'येन विधिः' इति तदन्तस्य संज्ञा । तदाह—ईदूदेदन्तमिति—ईदन्तम्, ऊदन्तम्, एदन्तमित्यर्थः । द्विवचनस्य प्रत्ययबोधकत्वेन 'प्रत्ययग्रहणे यस्मात्' इति परिभाषया तदादेरस्योपस्थित्या ईदूदेदन्तं यद् द्विवचनान्तं तत्प्रगृह्यमित्यर्थस्तु न, 'संज्ञाविधौ प्रत्ययग्रहणे' इति परिभाषया तदन्तविधेर्निषेधात्, कुमार्य्योरगारम्, वध्वोरगारम्, कुमार्य्यगारम्, वध्वगारम्, इत्यादौ दोषाच्च । तथा हि—'कुमार्य्यगारम्' इत्यत्र षष्ठीसमासे ओसो लुकि 'कुमारी अगारम्'—इत्यवस्थायाम् ईदन्तं कुमारीति, प्रत्ययलक्षणेन ओसमादाय द्विवचनान्तञ्चेति प्रगृह्यत्वापत्तिः स्यात् । अत ईदूदेदन्तं द्विवचनं प्रगृह्यमित्येवार्थो न तु द्विवचनान्तमिति । ईदाद्यन्तं द्विवचनमित्यर्थे तु नात्र प्रगृह्यत्वम्, ओसः सान्तत्वात् । एवम् 'वध्वगारम्' इत्यत्रापि दोष ऊह्यः ।

ननु ईदूदेदन्तं द्विवचनमित्यर्थे 'पचेते इमौ, पचेथे एतौ' इत्यादौ 'एते' 'एथे' इत्येदन्तद्विवचनसत्त्वेन प्रगृह्यत्वे सिद्धेऽपि 'हरी' 'विष्णू' 'गङ्गे' इत्यादौ परादिवद्भावेन ईवर्णादेर्द्विवचनत्वेऽपि ईदाद्यन्तद्विवचनत्वाभावात्प्रगृह्यत्वं न स्यादिति चेन्न, एकपुत्रेऽपि कनिष्ठत्वादिव्यवहारवत्, 'व्यपदेशिवदेकस्मिन्' इति न्यायेन वर्णरूपेऽपि तदन्तत्वबोधनात्, ईदूदन्तद्विवचनाभावेन ईदूद्ग्रहणसामर्थ्यादीदूद्रूपेऽपि द्विवचने प्रवृत्तिकल्पनाच्च ।

ईदूदित्यत्र तपरकरणं यणादिसंहिताकार्य्यवारणद्वाराऽसन्देहार्थम् । न च तपरग्रहणं दीर्घाणां ग्रहणार्थमिति वाच्यम्, 'गुणा अभेदकाः' इति परिभाषयैव वर्णानां ग्रहणसिद्धेः । न च

हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यत्र लिवार्थे वशब्दो वाशब्दो वा बोध्यः ।

---

प्लुतेकारादीनां निवृत्त्यर्थं तपरकरणम्, अणुदित्सूत्रेऽप्यग्रहणेन दीर्घाकारस्याग्रहणात् प्लुतग्रहणा-प्राप्तेः । वस्तुतस्तु प्रगृह्यत्वेऽप्यु प्लुतस्यासिद्धतया दीर्घत्वबुद्ध्या प्लुतानामपि प्रगृह्यत्वमिष्टमेव ।

तदुक्तं भाष्ये—'संज्ञाविधावसिद्धः' तस्यासिद्धत्वात् तत्काला एव भवन्ति । न च कार्य-कालपक्षे संज्ञाशास्त्राणां विधिदेशत्वेन 'अणोऽप्रगृह्यस्य' ( ८-४-५७ ) इति देशस्य प्रगृह्यत्वेऽप्या प्लुतस्यासिद्धत्वेन प्रगृह्यत्वाभावे 'अप्रगृह्यस्य' इति निषेधाप्रवृत्त्या 'अग्नी ३' इत्यादावनुनासिक-त्वापत्तिः, प्रगृह्यसंज्ञायां यथोद्देशपक्षस्यैव स्वीकारात् । न चात्र प्रमाणाभावः, 'किं न एतेन यत्नेन कार्यकालं संज्ञापरिभाषमिति । यथोद्देशमेव संज्ञापरिभाषम् । अत्र चासावसिद्धः' इति भाष्यस्यैव मानत्वात् । एतेन तपरकरणसामर्थ्यात् प्लुतानां ग्रहणं न स्यात्, इत्यपास्तम्, उक्तरीत्या प्लुतानां प्रगृह्यत्वस्येष्टत्वात् ।

न च प्लुतानां प्रगृह्यत्वे फलाभावः, 'अणोऽप्रगृह्यस्य' इति अनुनासिकत्वाभावस्य, उपस्थिते इतिशब्दे परे 'अग्नी३ इति' इत्यादौ प्लुतनिमित्तकप्रकृतिभावाप्राप्त्या प्रगृह्यनिमित्तकप्रकृतिभावस्य 'एचो ऽप्रगृह्यस्य' ( ८-२-१०७ ) इति प्लुतोत्तरभागस्य इदुदादेशाभावस्य च फलस्य सत्त्वात् । न च 'हरी एतौ' 'विष्णू इमौ' 'गङ्गे अमू' इत्यत्र द्विवचनमसङ्गतम्, विष्णोर्गङ्गायाश्चैकत्वादिति वाच्यम्, हर्यादिशब्दस्य सदृशपरत्वेन गङ्गायाश्च देशभेदेन द्विधा विभक्ततया च द्वित्वोपपत्तेः ।

कस्यचिदेषेद्वौ वत्सौ एकस्यां रज्जौ बद्धौ चरन्तौ कथञ्चिदुष्ट्रग्रीवायां लम्बमानौ मृतौ, तदानीन्तने 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारतश्लोके 'मणी' इत्यत्र ईकारस्य परादिवद्भावेन द्विवचनतया प्रगृह्यत्वेन प्रकृतिभावे इवेन सवर्णदीर्घाप्राप्त्या 'मणीव' इत्यसङ्गतमित्या-शङ्कायामाह— इवार्थ इति—नात्र इवशब्दः, किन्तु सदृशार्थकम् 'व' इति 'वा' इति वा अव्ययम् । अत एव 'शात्रवं व पपुर्यशः' इतीवार्थे व-शब्दः कालिदासोक्तः, 'कादम्बखण्डितदलानि व पङ्कजानि' इति च संगच्छते । यत्तु 'विनाऽपि प्रत्ययम्' इति वार्तिकेन इवशब्दघटकेकारलोपे व इति तन्न, पूर्वोत्तरपदयोरेव लोपविधानेनाखण्डपदे तदप्रवृत्तेः । तदुक्तं मेदिन्याम्—

'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्,' इति ।
अमरेऽपि—'व वा यथा तथैवैवं साम्ये' इति ॥

यत्तु 'ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः' इति । तेन निषेधात् 'मणीव' 'रोदसीव' इत्यादौ प्रगृह्यत्वाभाव इति, तन्न, तादृशवार्तिकस्य भाष्यादावदर्शनेनाप्रामाणिकत्वात् ।

प्रगृह्यमिति—'पदास्वैरिबाह्यापक्ष्येषु च' ( ३-१-११९ ) इत्यनेन पदे, अस्वैरिणि, बाह्या-याम्, पक्ष्ये चार्थे कर्मणि ग्रहधातोः क्यप्निपात्यते । क्यपि सम्प्रसारणे प्रगृह्यमिति । प्रकृत्या गृह्यते = उच्चार्यते यत्पदं तत्प्रगृह्यमिति । ननु प्रगृह्यशब्दस्य पदवाचकत्वे वर्णानां प्रगृह्यत्वं न स्यादिति चेन्न, 'अदसो मात्' इति 'स्वरितेनाधिकारः' ( १-३-११ ) अत्राधिकारपदमधिकृति-रधिकार इति भावार्थकम्, अधिक्रियतेऽसाविति कर्मपरं वा । अधिकार उत्तरोत्तरसम्बन्धः । स च द्विविधोऽर्थाधिकारः, शब्दाधिकारश्च । अर्थाधिकारो नाम—यस्मिन् सूत्रे यः शब्दो यदर्थकस्तदर्थ-कस्यैव उत्तरत्रापि सम्बन्धः । शब्दाधिकारो नाम—पूर्वत्र सूत्रे योऽर्थस्तं विहाय उत्तरत्र गतः स एव शब्दोऽर्थान्तरं प्रतिपादयति तदा शब्दाधिकारः । प्रकृते पूर्वसूत्रे 'ईदूत्'पदं तदन्तार्थकमत्र तु विशेष्याभावेन विशेषणत्वाभावाद्वर्णमात्रबोधकमिति शब्दाधिकारः । सूत्रभाष्ये 'एचामयादय ईदूतोः प्रगृह्यसंज्ञा' इत्युक्तेः सूत्रे पदशब्दस्य शब्दोपलक्षणत्वात् ।

## अदसो मात्। [ १-१-१२ ]

अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते।

---

'अदसो मात्' इति। अत्र 'ईदूत्' इति, 'प्रगृह्यम्' इति चानुवर्तेते। एदिति तु नानुवर्तते, अदश्शब्दावयवमकाराव्यहितोत्तरस्य एकारस्यानुपलब्धेः। 'अदसो मादव्यवहितं यदेदन्तं तत्प्रगृह्यम्' इत्यर्थे 'अमुकेऽत्र' इत्यत्र मकारात्परस्य 'उके' इत्येदन्तस्य सम्भवेन प्रगृह्यत्वार्थं तु न, 'न माद्-ग्रहणेन ईदाद्यन्तं विशेष्यते। किं तर्हि ईदादयो विशेष्यन्ते। मात्परे ये ईदादय इति' इति भाष्यविरोधात्।

द्विवचनन्तु नानुवर्तते 'अमी ईशाः' इत्यादौ बहुवचनान्ते प्रगृह्यत्वानापत्तेः, सम्भवव्यभि-चाराभ्यां विशेषणस्यार्थवत्त्वेन मकारात्परस्मिन्नूकारे व्यभिचाराभावाच्च।

अमी ईशा इति—अदश्शब्दाज्जसि त्यदाद्यत्वे पररूपे जसः श्यादेशे गुणे 'अदे' इति जाते 'एत ईद् बहुवचने' इति एकारस्य ईकारे 'अमी' इति रूपम्। अत्र ईकारस्य द्विवचनत्वाभावात्पूर्व-सूत्रेण प्रगृह्यत्वाप्राप्त्या तत्र प्रगृह्यार्थमिदम्।

रामकृष्णावमू इति—पुंवाचकाददश्शब्दात्प्रथमाद्विवचने त्यदाद्यत्वे पररूपत्वे वृद्धौ 'अदौ' इति जाते 'अदसोऽसेः' इति औकारस्य ऊकारादेशे दस्य मादेशे 'अमू' इति रूपम्। न चात्र ऊकारस्य द्विवचनत्वात् 'ईदूदेद्' इत्यनेन सिद्धिः, तत्र कर्तव्ये ऊत्वस्यासिद्धतया औकारस्य सत्त्वेन प्रगृह्यत्वाप्राप्तेः।

'अदसो मात्' इति दृष्ट्या तु नासिद्धत्वम्, सूत्रारम्भसामर्थ्यात्। नन्वारब्धेऽप्यस्मिन् आरम्भसामर्थ्यान्मूत्व-मीत्वयोर्यथोद्देशपक्षेऽपि असिद्धत्वाभावेऽपि स्वरसन्धौ तयोरसिद्धतया अयाद्या-देशापत्तिः। न च संज्ञावैयर्थ्यम्, 'अणोऽप्रगृह्यस्यानुनासिकः' (८।४।५७) इति कर्तव्ये ययोः प्रगृह्यसंज्ञा जाता तयोरीदूतोः पूर्वत्वेनानुनासिकप्रतिषेधं प्रति सिद्धत्वेन अनुनासिकप्रतिषेधेनार्थवत्त्वात्।

कार्यकालपक्षे तु अनुनासिकपर्युदासस्थप्रगृह्यदृष्ट्या मूत्वमीत्वयोः सिद्धतया संज्ञायाश्चारि-तार्थ्यं तदेवमुभयोः पक्षयोः स्वरसन्धिर्दुर्वार इति चेन्न, प्रगृह्यसंज्ञाया अनुनासिकपर्युदासमात्रस्य प्रयोजनत्वे अनुनासिकविधायकशास्त्रोत्तरं 'अदसो न' इति न्यासेन सिद्धे संज्ञाविधानसामर्थ्येन संज्ञायाः प्रकृतिभावार्थत्वस्यापि ज्ञापनात्। प्रकृतिभावार्थत्वन्तु अयादिस्वरसन्धिं प्रति मूत्वमीत्वयोः सिद्धत्वमन्तरेणानुपपन्नम् इति सन्धिकार्ये प्रत्यपि मूत्वमीत्वयोः सिद्धत्वात्।

न च 'अदसो न' इति न्यासेनानुनासिकप्रतिषेधे 'हे अमुक' 'अमुका' इत्यादावपि अनुनासिक-प्रतिषेधापत्तिः, 'अदसो मात्' इति सूत्रसत्त्वे तु मात्परत्वाभावाच्च दोष इति वाच्यम्, अनुनासिकनिषेध-फलं प्रकृत्य यच्च तावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात् 'अणोऽप्रगृह्यस्यानुनासिकः' 'अदसो न' इति' इति भाष्येण तादृशानामनभिधानकल्पनात्, 'यथोत्तरं मुनीनां प्रामाण्यम्' इति न्यायेन तत्रापि प्रतिषेधस्येष्टत्वस्य कल्पयितुं शक्यत्वात्, दस्य सः दसः नास्ति दसो यत्रादश्शब्दे तस्यैवादश्शब्दस्य एकशेषेण 'अदसो न' इति न्यासकल्पनायामेव भाष्यतात्पर्यसत्त्वेनादोषाच्च। यत्रादःशब्दे दस्य सकारो न तत्रैवादश्शब्दसम्बन्धिनोऽणोऽनुनासिकत्वं नेत्यर्थः।

'अमू' इति रूपं लिङ्गत्रये। तत्र स्त्रीक्लीबयोः 'औङ आपः' 'नपुंसकाच्च' इति औङः शीभावे गुणे 'अदे' इति स्थितौ मूत्वमिति मूत्वस्यासिद्धत्वे एदन्तद्विवचनमादाय 'ईदूदेद् द्विवचनम्' इत्यनेनैव प्रगृह्यत्वसिद्ध्या 'ऊद्' इत्यस्यानुवृत्तिर्व्यर्थेति शङ्कावारणाय पुंलिङ्गद्योतनाय पुलिङ्गविशेष्यमाह—राम-कृष्णाविति—अत्र त्यदाद्यत्वादिकार्ये जाते 'अद औ' इति स्थितौ वृद्ध्यनन्तरं मूत्वे 'अमू' इति। तत्र मूत्वस्यासिद्धत्वे औकारान्तत्वात् 'ईदूदेद्' इत्यस्याप्राप्त्याऽनेन प्रगृह्यत्वम्। 'अदसो मात्' इति सूत्रदृष्ट्या तु नासिद्धत्वम्, सूत्रारम्भसामर्थ्यादित्यादिविस्तरेण पूर्वोक्तमनुसन्धेयम्।

'मात्' किम्। अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत।

शे। [ १-१-१३ ]

अयं प्रगृह्यः स्यात्। अस्मे इन्द्रावृहस्पती।

निपात एकाजनाङ्। [ १-१-१४ ]

---

मात्किमिति—'अदसः' इत्येव सूत्रमस्तु। अदश्शब्दावयवौ ईदूतौ प्रगृह्यसंज्ञकौ स्त इत्यर्थेन सिद्धौ माद्ग्रहणं मास्त्विति प्रश्नः। माद्ग्रहणसत्त्वे मादित्यस्य पञ्चम्यन्तत्वेन 'तस्मादित्युत्तरस्य' इत्यस्याः परिभाषाया उपस्थित्या अदश्शब्दावयवमकाराव्यवहितोत्तरस्य एकारस्य दुर्लभत्वेन फलाभावादेकारो नानुवर्तते। असति तस्मिन् अदश्शब्दावयवानामीदूदेतां सम्भवेन अदःशब्दात् 'अव्ययसर्वनाम्नाम्' इति टेः प्रागकचि अदकश्शब्दस्यापि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इतिन्यायेन अदश्शब्दतया ततो जसि त्यदाद्यत्वे पररूपे शयादेशे गुणे मुत्वे 'अमुके' इत्यत्र अदश्शब्दावयवस्य एकारस्य सत्त्वात् प्राप्तप्रगृह्यत्ववारणाय माद्ग्रहणम्।

तथा च एतोऽनुवृत्त्यभाव एव माद्ग्रहणस्य फलमिति भावः। तदुक्तम्—असतीति।

अनुवर्तेतेति—'सन्नियोगशिष्टानां सहैव प्रवृत्तिः' इति न्यायात् एदित्यस्याप्यनुवृत्तौ प्राप्तायां तद्बाधनार्थं माद्ग्रहणमिति भावः।

'शे' इति। 'सुपां सुलुक्पूर्वसवर्णा...शे' ( ७-१-३९ ) इत्यनेन छन्दसि सुपः शेरादेशो भवति। तस्याभेदानुकरणे शक्त्या लक्षणया वा अर्थवत्त्वाभावेन प्रातिपदिकसंज्ञाया अभावान्न विभक्त्युत्पत्तिः। 'अपदं न प्रयुञ्जीत' इत्यस्य तु न विषयः, तस्य अपरिनिष्ठितं नोच्चारयेदित्यर्थेनास्य नित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तत्वरूपपरिनिष्ठितत्वस्य सत्त्वात्। यत्र कस्यापि नित्यसूत्रस्य न प्राप्तिः शास्त्रेण बोधितसाधुत्ववाँश्च स एव परिनिष्ठितः शब्दः। शास्त्रारम्भसामर्थ्यात्साधुशब्देष्वेव शास्त्रप्रवृत्तिः। अन्यथा सर्वत्रैवापभ्रंशे सूत्रप्रवृत्त्या व्याकरणानर्थक्यं स्यात्। अनुकरणानाञ्च 'अनुकरणञ्चानितिपरम्' इत्यादिसूत्रसामर्थ्यात्साधुत्वम्। शेरूपादेशस्य छन्दस्येवोपलब्ध्या वैदिकप्रकरणे एव वोल्लेख उचितस्तथापि शकारेत्संज्ञकस्य 'ए' प्रत्ययान्तस्य लोकेऽपि 'अस्मे इति' इत्यनुकरणसम्भवेन तत्र प्रगृह्यत्वार्थं सन्दर्भशुद्ध्यर्थञ्चात्रोल्लेखः।

'अस्मे' इति—अस्मच्छब्दाद् भ्यसः 'सुपां सुलुक्' इति शे आदेशे 'शेषे लोपः' इति अदित्यस्य लोपे 'अस्मे' इति रूपम् 'अस्मभ्यम्' इत्यर्थः। अत्र 'ए' इत्यस्य प्रगृह्यत्वात्प्रकृतिभावे 'अस्मे इन्द्रावृहस्पती' इत्यत्रायादेशो न।

वस्तुतस्तु 'अस्मे इति' इत्यादौ 'अस्मे' इत्याद्यनुकरणे 'पदान्तप्रकरणे प्रकृतिभावः' इति भाष्यात् पदान्तयोरेव प्लुतप्रगृह्ययोः प्रकृतिभावस्येष्टतया पदान्तत्वातिदेशाय 'प्रकृतिवदनुकरणम्' इत्यतिदेशस्यावश्यकतया प्रगृह्यत्वस्यापि तेनातिदेशादनुकरणे प्रकृतिभावे सिद्धे वैदिकप्रकरणे एवास्योपन्यासो न्याय्यः। न च 'त्वे व्यः, मे व्यः' इत्यग्रयस्य त्वे, मे, इत्यस्यानुकरणेऽनुकार्ये प्रगृह्यत्वस्य फलाभावेनाप्रवृत्त्याऽनुकरणे प्रगृह्यत्वस्य दुर्लभतया प्रगृह्यत्वार्थमत्रोपन्यासो युक्त एवेति वाच्यम्, अनुकरणेऽतिदेशार्थमेवानुकार्ये प्रगृह्यत्वस्य सफलत्वात्। अत एव शेखरकृताऽत्रास्य व्याख्यानं न कृतम् 'शे' इति सूत्रस्यात्रासत्त्वात्। अर्थवद्ग्रहणपरिभाषयाऽर्थवतः शे इत्यस्य ग्रहणात् 'हरिशे, वभ्रुशे' इत्यादावनर्थके न प्रवृत्तिः, प्रतिपदोक्तत्वात् शकारेत्संज्ञकस्यैव ग्रहणाच्च।

'निपात एकाजनाङ्' इति—निपात इति—निपतन्त्यनेकेऽर्था यत्रासौ निपातः। बाहुलकादधिकरणे घञ्। निपातसंज्ञकश्चादिः। एकाजिति—एकश्चासावच्चेति 'पूर्वकालैकजरत्' ( २-१-४९ ) इति कर्मधारयः। एकोऽजरूपनिपात इत्यर्थः। अनाङ्—आङ्भिन्न इति पर्युदासः। प्रगृह्यमित्यनुवर्तते। निपात इत्यस्य पुंस्त्वात् प्रगृह्यपदमपि पुंस्त्वेन विपरिणम्यते, सति सम्भवे विशेष्यविशेषणयोः समानलिङ्गकत्वनियमात्।

आङि ङकारकरणात् ङिदाकारभिन्नः, निपातसंज्ञको य एकोऽच् स प्रगृह्यसंज्ञको भवतीत्यर्थः। निपात इति किम्, 'चकारात्र' अत्र णलोऽकारस्य, 'हेऽ अ आगच्छ' इत्यत्र वासुदेववाचकस्य अकारस्य च निपातत्वाभावेन प्रगृह्यत्वाभावः। ननु 'एकाच्' इत्यत्र कर्मधारये एकग्रहणं व्यर्थम्। न चैकग्रहणाभावे अजित्यस्य निपातविशेषणतया तदन्तविधौ अजन्तनिपातानां चादीनां प्रगृह्यत्वापत्तिः, अज्ग्रहणस्य वैयर्थ्यापत्तेः। न च हलन्तव्यावृत्त्यर्थमज्ग्रहणम्, तस्य प्रगृह्यत्वे फलाभावेनाज्ग्रहणवैयर्थ्यस्य तादवस्थ्यात्।

ननु 'पुरोऽस्ति' इत्यादौ रोः प्रगृह्यत्वे उत्वाभावः फलम् इति चेन्न, प्रगृह्यशास्त्रदृष्ट्या रुत्वस्यासिद्धत्वेन रोः प्रगृह्यत्वाप्राप्तेः। न च सस्यैव प्रगृह्यत्वापत्तिः, अचि परतः सस्य किञ्चित्कार्याप्राप्त्या अज्निमित्तकप्रकृतिभावरूपफलाभावात्। तथा चाज्ग्रहणसामर्थ्यादज्रूपो निपातः प्रगृह्य इत्येव स्यात्। न चाज्ग्रहणसामर्थ्यादजन्तो निपातः प्रगृह्य इत्येवास्तु, न त्वज्रूप इति वाच्यम्, 'श्ववहपणोः समर्थयोः,' 'गोरध्ययने वृत्तम्', इत्यादिनिर्देशात्, अनाङिति पर्युदासाच्च तदन्तविधेरभावबोधनात्। तदुक्तं भाष्ये—'आचार्यप्रवृत्तिर्ज्ञापयति, इयं च न भवति येन विधिस्तदन्तस्येति, यदयमनाङिति, प्रतिषेधं शास्ति इति। अनेन भाष्येण 'निपातः' इति विशेषणम्, अजिति विशेष्यमिति तदन्तविधेरभाव इति सूचितम्।

न च 'अ इ उ अपेहि' इत्यादौ एकाज्द्विर्वचनन्यायेन समुदायस्य प्राप्तसंज्ञायाः प्रत्येकं प्रवृत्त्यर्थमिति वाच्यम्, अजित्येकवचनेनैकत्वविवक्षया, लाघवात्प्रत्येकस्योद्देश्यत्वसम्भवे समुदायस्योद्देश्यत्वे प्रमाणाभावाच्च समुदायस्य प्रगृह्यत्वाप्राप्तेः। तथा चैकग्रहणं व्यर्थीभूय ज्ञापयति—वर्णवृत्तिजातेर्वर्णसमुदाये आरोपाद् 'वर्णग्रहणे जातिग्रहणम्' इति। एवञ्च अच्समुदायेऽच्त्वारोपात् समुदायस्यैव प्रगृह्यत्वे प्राप्ते तद्वारणार्थमेकग्रहणस्य सत्त्वात्। न च फलाभावः, दम्भधातोः सनि 'दीम्भ् स' इति दशायाम् इक्समीपो हल् मकारस्ततः सनोऽव्यवहितपरत्वाभावात् 'इक्समीपाद्धलः परो झलादिः सन् कित्स्यात्' इत्यर्थकस्य 'हलन्ताच्च' (१-२-१०) इत्यस्याप्राप्त्या किन्निमित्तकस्य 'अनिदिताम्' इति नलोपस्याप्राप्तिमापद्येन हल्समुदाये हल्त्वारोपेण सनः कित्वाद् 'धीप्सति' इत्यादेः सिद्धेरेव फलसत्त्वात्।

तदुक्तं भाष्ये—'यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति तज्ज्ञापयत्याचार्यः—'वर्णग्रहणे जातिग्रहणं भवतीति' इति। एकग्रहणेऽत्र कृते त्वेकग्रहणसामर्थ्यादेकस्यैवाचो ग्रहणम्। तेन वितउघटकस्य 'अ उ' इत्यस्यानुकरणे 'अ उ अकरोत्' इत्यत्र 'अनुकरणं चानितिपरम्' (१-४-६२) इति निपातत्वेऽपि न प्रगृह्यत्वम्, एकाज्रूपनिपातस्याभावात्।

अनाङिति—पर्युदास एव, न तु प्रसज्यप्रतिषेधः, वाक्यभेदासमर्थसमासशास्त्रबाधशास्त्रकाराप्रामाण्यग्रहरूपदोषचतुष्टयग्रस्तत्वात्। शास्त्रकारेऽप्रामाण्यग्रहश्च वाक्यभेदे 'वागेका वाग्मिनः सतः' इति न्यायेन स्पष्ट एव। क्वचिद् भाष्ये प्रतिषेधोक्तिस्तु पर्युदासेऽपि प्रतिषेधस्य फलितत्वाभिप्रायेण।

वासुदेववाचकेन पञ्चम्यन्तेन अशब्देन आङा सह वासुदेवं मर्यादीकृत्य संसार इत्यर्थे 'आ-अ' इत्यव्ययीभावे समाससमकाले एवान्तरङ्गत्वात् सवर्णदीर्घेऽव्ययीभावस्य नपुंसकत्वेन ह्रस्वत्वे ततोऽमि 'अ अम्' इति स्थितौ पूर्वान्तवद्भावेनाकारस्य निपातत्वेऽपि आङ्भिन्नत्वस्य स्वतः सिद्धत्वेन प्रगृह्यत्वं तु न, पूर्वान्तवद्भावेन आङ्त्वस्याप्यतिदेशेन 'अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्य स्वभावसिद्धतया' स्वतःसिद्धाङ्भिन्नत्वप्रयुक्तप्रगृह्यत्वस्याप्राप्तेः। तथा च 'अमि पूर्वः' इति पूर्वरूपे 'अम्' इति सिध्यति। एवम् इणः क्ते इत इति, वेञः क्ते उत इति, आभ्यां पूर्वोक्तस्य आङेकादेशस्य अशब्दस्य समासे गुणे एत इति, ओत इति च रूपम्। अकारे पूर्वान्तवद्भावेनाङ्त्वातिदेशे प्रगृह्यत्वाभावात्प्रकृतिभावाभावे सिध्यति। अत्राकारस्य समासान्तर्गतविभक्त्या पदत्वा-

एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात्। इ विस्मये। उ वितर्के। इ इन्द्रः। उ उमेशः। 'अनाङ्' इत्युक्तेरङिदाकारः प्रगृह्य एव। आ एवं नु मन्यसे। आ एवं किल तत्। ङित्तु न प्रगृह्यः। ईषदुष्णं ओष्णम्।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥

'अन्यत्र ङित्' इति विवेकः।

---

प्रगृह्यत्वे प्रकृतिभावो दुर्वारः स्यात्। वस्तुतस्तु 'अदसो मात्' इति सूत्रे पदान्तप्रकरणे प्रकृतिभावः, इति भाष्यात्पदान्तयोरेव प्लुतप्रगृह्ययोः प्रकृतिभावेनामि परे पूर्वस्य पदत्वाभावेन प्रकृतिभावाप्राप्त्या फलाभावेन प्रगृह्यत्वस्याप्यभावादाङ्त्वातिदेशेन प्रगृह्यत्ववारणं शेखरोक्तं चिन्त्यम्। यत्तु परादिवद्भावेनाङ्भिन्नत्वातिदेशे 'अतिदिश्यमानधर्मविरुद्ध' इत्यस्य विषयाभावेन प्रगृह्यत्वं दुर्वारमिति तन्न, 'ओत्' इति सूत्रे 'प्रतिषिद्धार्थोऽयमारम्भः। ओ आयातं मरुतः' इति। अत्र 'आ उ' ओ इत्यस्य पूर्वान्तवत्त्वेनाङ्त्वादनाङिति निषेधे प्राप्ते तद्बाधनार्थम् 'ओत्' इति सूत्रमित्युक्तम्। अत्र परादिवद्भावेनाङ्भिन्नत्वातिदेशेन प्रगृह्यत्वे ओदित्यस्य बाधनार्थोक्तिरसङ्गता स्यात् 'निपात एकाच्' इत्यनेनैव प्रगृह्यत्वसिद्धेरिति प्रसज्यप्रतिषेध एव। उपाध्यायास्तु 'इदमेकदेश्युक्तिर्गौरवादित्याहुः'। आङ्क सहाव्ययीभावघटितम् 'एतः, ओतः, इत्यादिरूपमप्रमाणन्तु न, 'प्रतिषिद्धार्थोऽयमारम्भः' इति भाष्यात्।

यद्वा आङ्वर्ज इति—'वृजी वर्जने' इति चौरादिकण्यन्तात्कर्मणि घञि आङ्कर्तृकत्यागकर्मीभूतः, यद्वा आङित्येव कर्म आङ्वर्जो यत्र स निपातसंज्ञक आङ्भिन्न इति यावदित्यर्थः।

वृज्धातुराधर्षीयश्चुरादिः। 'आधृषाद्वा' इति णिजभावपक्षे अदादौ रुधादौ च पाठात् 'वृक्ते' 'वृणक्ति' इति। यत्तु भट्टोजिदीक्षितः 'णिजभावपक्षे वर्जति' इति तन्न, णिजभावे शपो लुकः, श्नमो वा प्रवृत्तौ बाधकाभावात्। यदि तु 'अनाङ्' इति प्रसज्यप्रतिषेधस्तदा 'ङिदाङ् प्रगृह्यसंज्ञको न भवति' इत्यर्थः। तथा च सूत्रद्वयम्—'निपात एकाच्' इत्येकम्, 'अनाङ्' इत्यपरम्।

इ विस्मय इति—चादित्वेन इ इत्यस्य निपातत्वम्। तेनाव्ययत्वात्सुपो लुक्। विस्मय इत्यस्याश्चर्ये इत्यर्थः। अत्र स्थाने इन्द्र इत्याश्चर्यम्। उ उमेश इति—उ इति चादित्वान्निपातः। अयम् उमाया ईशः शिव इति वितर्क्यते इत्यर्थः। यत्तु बालमनोरमा—'उ इति सम्बोधने' इति तन्न, 'हे राम' इतिवत्सम्बोधने प्रयोगादर्शनात्। 'उ उत्तिष्ठ' इत्यत्र तु उनिपातः सम्बोधने एव, हे चैत्र त्वमुत्तिष्ठ, इति तदर्थात्।

अनाङित्युक्तेरिति—आ इति निपातो द्विविधः—ङकारेत्संज्ञकः, तद्भिन्नश्च। तत्र ङिदाकारभिन्न एकाज्निपातः प्रगृह्यसंज्ञक इत्युक्तेर्ङिदाकारो न प्रगृह्यसंज्ञकस्तेन तत्र न प्रकृतिभावः। तदाह—आ एवमिति—अत्र ङिद्भिन्न आकार इति प्रगृह्यत्वेन प्रकृतिभावाद् वृद्धिर्न, 'पूर्वं त्वमेवं मामंस्थाः' इति पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः। 'एवं मन्यसे' इत्यस्य 'इदानीम्' इति शेषः। आ एवं किलेति—यत्त्वया विस्मृतं तदेवं किल इति स्मर्यते इत्यर्थः। अत्र स्मरणद्योतक आकारः। ननु 'आङ्' इत्यस्य चादिषु पाठेन उपदेशावस्थायामेव ङकारस्येत्संज्ञालोपयोः सर्वत्र 'आ' इत्यस्योपलम्भात्प्रयोगे ङिदङिद्विवेको दुर्लभोऽत आह—'ईषदर्थे' इति—अङिदाकारस्य बहुत्वाल्लाघवात् ङितमाकारं परिगणयति—ईषदर्थ इति—अल्पार्थे इत्यर्थः। क्रियायोग इति—धात्वर्थक्रियागतविशेषार्थद्योतक उपसर्गसंज्ञक इति यावत्। 'आ एति' 'ऐति' आगच्छतीत्यर्थः। मर्य्यादेति—म्रियतेऽवशिष्यते ग्रामादिकं यत्र सा मर्या = सीमा। सा दीयते = खण्ड्यते यत्र सा मर्य्यादा। यथा—'आ उमापतेः संसारः' 'ओमापतिः' संसारः, उमापतेः प्रागेव संसारः, उमापतिं प्राप्य तु मोक्ष एव।

## ओत् । [ १-१-१५ ]

ओदन्तो निपातः प्रगृह्यः स्यात् ।

---

अभिविधाविति—न च मर्य्यादेत्यत्रेतरेतरयोगद्वन्द्वे द्विवचनापत्तिः, समाहारद्वन्द्वे नपुंसकत्वेन नुमापत्तिरिति वाच्यम्, मर्य्यादाशब्दस्य तत्सहिते लक्षणया मर्य्यादा चासावभिविधिश्चेति कर्मधारयेनादोषात् । 'आगमशास्त्रमनित्यम्' इति परिभाषया समाहारनपुंसकेऽपि नुमभाव इति हरदत्तमिश्राः । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यादत्र पुंस्त्वान्नुमभाव इत्युपाध्यायाः । कार्य्यान्वयित्वेनाभिसन्धाय विधीयते इत्यभिविधिः । यथा 'आ अध्ययनाद् गुरुशुश्रूषा, गुरुशुश्रूषारूपकार्य्यस्याध्ययनकालस्याभिव्याप्त्या सम्बन्धेनाध्ययनकालोऽभिविधिः । एषु चतुर्ष्वर्थेषु ङिदाकारः, स च न प्रगृह्यः । कैयटेऽपि 'विना तेन मर्य्यादा' । 'सह तेनाभिविधि'रिति । वाक्यस्मरणयोरिति—वाक्यञ्च स्मरणञ्च वाक्यस्मरणे तयोः । अत्र पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतने लक्षणा । तथा च गतवाक्यार्थस्यान्यथात्वद्योतकः, स्मरणद्योतकश्चाकारो ङिन्न । अत्राङिल्लक्षणे एव भाष्यतात्पर्य्यम्, लाघवात्, ङित्त्वाभावनियमनेऽन्यत्र ङित्त्वस्य फलितत्वात् । अत एव 'अभ्र आँ अपः' इत्यत्र विभक्त्यर्थेऽपि आङो ङित्त्वाद् 'आङोऽनुनासिकश्छन्दसि' इत्यनेनानुनासिकः । अस्याङो विभक्त्यर्थत्वे मानञ्च 'यथायमव्ययें भवति तथा 'अभ्र आं अपः' इत्येष निगमः' इति निरुक्तम् ( नि० ५ अ० १ पा० ६ ख० ) विभक्त्यर्थेऽव्ययीभावस्य नित्यत्वेऽपि छान्दसत्वात्तदभावः ।

'ओत्' इति । अनुवर्तमानं निपात इति विशेष्यम् ओदिति विशेषणम् । विशेषणस्य तदन्तसंज्ञात्वेनाह—ओदन्त इति—ननु अहउ, अहो, उत अहउ, उताहो, अथ उ, अथो, न उ, नो' इत्येवमोदन्तो निपातसमाहारः । ततश्च परादिवद्भावाद् 'निपात एकाज्' इत्यनेनैव प्रगृह्यं सिध्यतीति चादिषु पाठदर्शनादेकनिपातत्वेन पूर्वेणासिद्धेः । तदुक्तम्भाष्ये 'एवं तर्हि एकनिपाता इमे' इति ।

निपातसमाहारपक्षे यदि उञः प्रवेशस्तदा 'उञः, ऊँ' इत्यस्यैव प्रवृत्तिः, परत्वात् । यदि निरनुबन्धक उ इ न्यस्य तदा 'निपात एकाज्' इत्यस्य विषयः । यदा आङा सह उ इत्यस्य द्वन्द्वस्तदा पूर्वान्तवत्त्वेनाङ्त्वादाङ्भिन्नत्वाभावेन निपात एकाज् इति प्रगृह्यत्वाप्राप्त्या तत्र प्रगृह्यत्वार्थम् 'ओत्' इति सूत्रम् । न च शास्त्रीयकार्य्याभावादाङ्त्वातिदेशः, 'प्रतिषिद्धार्थोऽयमारम्भः' इति भाष्याद् गम्यमानस्यापि पर्य्युदासलभ्यस्य प्रतिषेधस्य शास्त्रीयकार्य्यत्वाभ्युपगमात् । न च परादिवत्त्वेनाङ्भिन्नत्वातिदेशेन प्रगृह्यत्वसिद्धिः, शास्त्रीयधर्मस्यैव प्रत्यासत्त्या अतिदेशेन आङ्भिन्नत्वस्याशास्त्रीयत्वात् ।

ण्यन्ते ओदन्तनिपाते 'अद्रोऽभवत्, गोऽभवत्, इत्यादौ नास्य प्रवृत्तिः, तत्रारोपितधर्मवद्बोधकतया 'गौणमुख्ययोर्मुख्ये कार्य्यसम्प्रत्ययः' इति भाष्योक्तन्यायेन गौणार्थबोधके निपाते तदप्रवृत्तेः । न च गौणमुख्यन्यायस्य स्ववृत्त्यानुपूर्वीरूपेण साक्षाद् बोधके एव प्रवृत्त्याऽत्र निपातपदस्य तथात्वाभावेनाप्रवृत्तिः, निपातपदेऽपि भाष्यप्रवर्तितगौणमुख्यन्यायानुरोधेन स्ववृत्तिस्वबोध्यवृत्त्यन्यतरानुपूर्वीरूपेण साक्षादुपस्थापके पदे प्रवृत्तिस्वीकारेण निपातपदस्य स्वबोध्यचादिवृत्त्यानुपूर्व्याः साक्षादुपस्थापकतया न्यायप्रवृत्तौ बाधकाभावात् ।

ण्यन्तांशे तु न विशिष्टरूपोपादानमित्यर्थवत्परिभाषागौणमुख्यन्याययोर्न प्रवृत्तिः । न च ण्यन्ते 'ओत्' इत्यस्य प्रवृत्त्या भाष्यविरोधः, अर्थवत्परिभाषया गौणमुख्यन्यायेन च निपातपदेन मुख्यार्थानामेव ग्रहणेन ण्यन्तानां गौणार्थबोधकत्वेनाग्रहणात् । न च ऋषिशापादिना यत्रागौः गौरभवत्तत्र 'गोऽभवत्' इत्यत्रानारोपितगोत्वस्य ण्यन्तेनापि बोधान्मुख्यार्थकत्वं तत्रापि सम्भवतीति वाच्यम्, 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इत्यत्र सम्पद्यकर्तरीत्यत्र षष्ठीतत्पुरुषः सम्पद्यः सम्पत्तिः, निपातनाद्भावे शः, अनन्यथाभावं तदर्थः, विकार इति यावत् । स चारोपितोऽत्र विवक्षितः ।

ओत्। [ १-१-१५ ]

ओदन्तो निपातः प्रगृह्यः स्यात् ।

---

अभिविधाविति—न च मर्य्यादेत्यत्रेतरेतरयोगद्वन्द्वे द्विवचनापत्तिः, समाहारद्वन्द्वे नपुंसकत्वेन नुमापत्तिरिति वाच्यम्, मर्य्यादाशब्दस्य तत्सहिते लक्षणया मर्य्यादा चासावभिविधिश्चेति कर्मधारयेनादोषात् । 'आगमजमनित्यम्' इति परिभाषया समाहारनपुंसकेऽपि नुमभाव इति हरदत्तमिश्राः । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यादत्र पुंस्त्वान्नुमभाव इत्युपाध्यायाः । कार्य्यान्वयित्वेनाभिसन्धाय विधीयते इत्यभिविधिः । यथा 'आ अध्ययनाद् गुरुशुश्रूषा, गुरुशुश्रूषारूपकार्य्येणाध्ययनकालस्याभिव्याप्त्या सम्बन्धेनाध्ययनकालोऽभिविधिः । एषु चतुर्ष्वर्थेषु ङिदाकारः, स च न प्रगृह्यः । कैयटेऽपि 'विना तेन मर्य्यादा' । 'सह तेनाभिविधि'रिति । वाक्यस्मरणयोरिति—वाक्यञ्च स्मरणञ्च वाक्यस्मरणे तयोः । अत्र पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतने लक्षणा । तथा च गतवाक्यार्थस्यान्यथात्वद्योतकः, स्मरणद्योतकश्चाकारो ङिन्न । अत्राङिद्ग्रहणे एव भाष्यतात्पर्य्यम्, लाघवात्, ङित्त्वाभावनियमनेऽन्यत्र ङित्त्वस्य फलितत्वात् । अत एव 'अभ्र आँ अपः' इत्यत्र विभक्त्यर्थेऽपि आङो ङित्त्वाद् 'आङोऽनुनासिकश्छन्दसि' इत्यनेनानुनासिकः । अस्याङो विभक्त्यर्थत्वे मानञ्च 'यथायमभ्यर्थे भवति तथा 'अभ्र आं अपः' इत्येप निगमः' इति निरुक्तम् ( नि० ५ अ० १ पा० ६ ख० ) विभक्त्यर्थेऽव्ययीभावस्य नित्यत्वेऽपि छान्दसत्वात्तदभावः ।

'ओत्' इति । अनुवर्तमानं निपात इति विशेष्यम् ओदिति विशेषणम् । विशेषणस्य तदन्तसंज्ञात्वेनाह—ओदन्त इति—ननु अहउ, अहो, उत अहउ, उताहो, अथ उ, अथो, न उ, नो' इत्येवमोदन्तो निपातसमाहारः । ततश्च परादिवद्भावाद् 'निपात एकाज्' इत्यनेनैव प्रगृह्यं सिध्यतीति चादिषु पाठदर्शनादेकनिपातत्वेन पूर्वेणासिद्धेः । तदुक्तम्भाष्ये 'एवं तर्हि एकनिपाता इमे' इति ।

निपातसमाहारपक्षे यदि उञः प्रवेशस्तदा 'उञः, ऊँ' इत्यस्यैव प्रवृत्तिः, परत्वात् । यदि निरनुबन्धक उ इ न्यस्य तदा 'निपात एकाज्' इत्यस्य विषयः । यदा आङा सह उ इत्यस्य द्वन्द्वस्तदा पूर्वान्तवत्त्वेनाङ्त्वादाङ्भिन्नत्वाभावेन निपात एकाज् इति प्रगृह्यत्वाप्राप्त्या तत्र प्रगृह्यत्वार्थम् 'ओत्' इति सूत्रम् । न च शास्त्रीयकार्य्याभावात्ताङ्त्वातिदेशः, 'प्रतिषिद्धार्थोऽयमारम्भः' इति भाष्याद् गम्यमानस्यापि पर्य्युदासलभ्यस्य प्रतिषेधस्य शास्त्रीयकार्य्यत्वाभ्युपगमात् । न च परादिवत्त्वेनाङ्भिन्नत्वातिदेशेन प्रगृह्यत्वसिद्धिः, शास्त्रीयधर्मस्यैव प्रत्यासत्त्या अतिदेशेन आङ्भिन्नत्वस्याशास्त्रीयत्वात् ।

ण्यन्ते ओदन्तनिपाते 'अद्रोऽभवत्, गोऽभवत्, इत्यादौ नास्य प्रवृत्तिः, तत्रारोपितधर्मद्बोधकतया 'गौणमुख्ययोर्मुख्ये कार्य्यसम्प्रत्ययः' इति भाष्योक्तन्यायेन गौणार्थबोधके निपाते तदप्रवृत्तेः । न च गौणमुख्यन्यायस्य स्ववृत्त्यानुपूर्वीरूपेण साक्षाद् बोधके एव प्रवृत्याऽत्र निपातपदस्य तथात्वाभावेनाप्रवृत्तिः, निपातपदेऽपि भाष्यप्रवर्तितगौणमुख्यन्यायानुरोधेन स्ववृत्तित्वबोध्यवृत्त्यन्यतरानुपूर्वीरूपेण साक्षादुपस्थापके पदे प्रवृत्तिस्वीकारेण निपातपदस्य स्वबोध्यचादिवृत्त्यानुपूर्व्याः साक्षादुपस्थापकतया न्यायप्रवृत्तौ बाधकाभावात् ।

ण्यन्तांशे तु न विशिष्टरूपोपादानमित्यर्थवत्परिभाषागौणमुख्यन्याययोर्न प्रवृत्तिः । न च ण्यन्ते 'ओत्' इत्यस्य प्रवृत्त्या भाष्यविरोधः, अर्थवत्परिभाषया गौणमुख्यन्यायेन च निपातपदेन मुख्यार्थानामेव ग्रहणेन ण्यन्तानां गौणार्थबोधकत्वेनाग्रहणात् । न च ऋषिशापादिना यत्रागौः गौरभवत्तत्र 'गोऽभवत्' इत्यत्रानारोपितगोत्वस्य ण्यन्तेनापि बोधान्मुख्यार्थकत्वं तत्रापि सम्भवतीति वाच्यम्, 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इत्यत्र सम्पद्यकर्तरीत्यत्र षष्ठीतत्पुरुषः सम्पद्यः सम्पत्तिः, निपातनाद्भावे शः, अभूततद्भावः तदर्थः, विकार इति यावत् । स चारोपितोऽत्र विवक्षितः ।

अहो ईशाः ।

## सम्बुद्धौ शाकल्यस्येतावनार्षे । [ १-१-१६ ]

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति, विष्णविति । 'अनार्षे' इति किम् ? ब्रह्मबन्धवित्यब्रवीत् ।

---

यो वस्तुतो येन रूपेणाभूतस्तस्यायथार्थेन तेन रूपेण भवनमभूततद्भावः । न तु वस्तुतस्तेन रूपेण भवनम् । तथा सति सम्पद्यकर्तरीति सौत्रेणैव लाभे अभूततद्भाव इत्यस्य वैयर्थ्यापत्त्या अयथार्थरूपेण भवने विवक्षिते च्विविधानेन शापादिना गोभवने च्विप्रत्ययाभावात् ।

न च 'गोतो णित्' इत्यत्रापि न्यायप्रवृत्त्या 'गौर्वाहीकः' 'गां वाहीकं पाठय' इत्यादौ णित्वाभावापत्त्या वृद्ध्याद्यनापत्तिः गकारस्याविवक्षितत्वेनानुपूर्वीप्रकारकत्वेनोपस्थापकत्वाभावेन न्यायाप्रवृत्तेः, सुबनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वरूपपदकार्यत्वस्याभावेन च तन्न्यायविषयाभावाच्च ।

सम्बुद्धौ शाकल्यस्येतावनार्षे इति । ऋषिर्वेदस्तत्र भव आर्षः, न आर्षोऽनार्षः । एतच्च इतावित्यस्य विशेषणम् । तथाच 'एता गा ब्रह्मबन्धवित्यब्रवीत्' इत्यत्र न प्रगृह्यत्वम् , अत्रार्षस्यैवेतिशब्दस्य सत्त्वात् । आर्षे इति शब्दे परे ओकारः सम्बुद्धिनिमित्तक इति पर्युदासन्यायेन अनार्षे इति शब्देऽपि सम्बुद्धिनिमित्तक एव ओकारः प्रगृह्यसंज्ञको भवति । तदाह—सम्बुद्धिनिमित्तक इति । तेन स्वरादिपठिते 'मिथो इति' इत्यादावस्य निपातत्वाभावेन 'ओत्' इत्यस्य चाप्राप्त्या 'मिथविति' इति सिध्यति । सम्बुद्धौ परत इति व्याख्याने तु नपुंसके 'अपो इति' इत्यत्र न स्यात् न लुमतेति निषेधेन प्रत्ययलक्षणाभावात् । न लुमतेति निषेधस्यानित्यत्वेन प्रत्ययलक्षणप्रवृत्तिस्तु न, तस्य ज्ञापकसिद्धतयाऽगतिकगतिकत्वात् ।

वस्तुतस्तु 'तस्मिन्निति निर्दिष्टे' इति सूत्रस्य बाधापेक्षया इष्टसिद्ध्यर्थं ज्ञापितेन निषेधानित्यत्वेन 'अपो इति' इत्यादौ प्रगृह्यत्वं सुवचम् । अत एव 'सौ शाकल्यस्य' इति सिद्धे सम्बुद्धिग्रहणं प्रगृह्यत्वे न लुमतेति निषेधस्याप्रवृत्तिज्ञापनार्थम् , तेन 'मिथो इति' इत्यत्रातिव्याप्तिवारणेन सम्बुद्धिग्रहणं चरितार्थम्, फलञ्च 'अपो इति' इत्यत्र निषेधानित्यत्वेन प्रगृह्यत्वम् इति सूत्रकृन्मतं न तु निमित्तसप्तमीत्याहुः—इति सदाशिवोक्तिः सङ्गच्छते ।

'उपस्थिते' इत्येव वक्तव्ये 'अनार्षे' इति तूत्तरत्र 'उञः' इत्यादौ केवलस्य 'इतौ' इत्यस्य सम्बन्धेन लोके वेदे च इतौ 'उ इति' इत्यादौ प्रगृह्यत्वाद्यर्थम् । उपस्थिते इत्यस्योत्तरत्रानुवृत्तौ तु अनार्षे एव तस्य प्रवृत्तिः स्यात् ।

न च संहिताया अविवक्षया 'अपो इति' इत्यस्य सिद्धिः, संहिताया विवक्षायामपि प्रकृतिभावार्थं प्रगृह्यत्वस्यावश्यकत्वात् । संहिताया विवक्षा च अर्द्धमात्राऽव्यवायेनोत्तरवर्णोच्चारणेच्छा । अर्द्धमात्राधिककालव्यवायेनोत्तरवर्णोच्चारणेच्छा च तदविवक्षा । ननु वर्णग्रहणे प्रतिपदोक्तपरिभाषाया 'आतो लोप इटि च' इत्यादे धेट्धात्वादावपि प्रवृत्तयेऽनित्यतया अप्रवृत्तावपि 'दिङ्नामान्यन्तराले' इति विहितसमास्य 'विभाषा दिक्समासे' इत्यत्र प्रतिपदोक्तपरिभाषया ग्रहणवत् सम्बुद्धिशब्दमुख्यार्थं विहितस्यैवौकारस्यात्रापि ग्रहणेन सम्बुद्धिनिमित्तक इत्यर्थः फलति । न च 'लुनातीति' 'लो' इत्यत्र प्रगृह्यत्वानापत्तिः, 'गोतो णित्' इत्यस्य प्रवृत्त्या 'हे लौः' इत्यस्यैवेष्टत्वात् ।

अचः परस्मिन्निति सूत्रे भाष्ये पूर्वविधावित्यस्याकरणे 'हे गौः' 'इत्यत्र' स्थानिवद्भावात् 'एङ्ह्रस्वादि'ति लोपमाशङ्क्य एङिति प्रत्याहारग्रहणसामर्थ्यात् सम्बुद्धिलोपे न स्थानिवदिति ज्ञाप्यते । अन्यथा 'ओ ह्रस्वात्' इत्येव 'ब्रूयात्' इत्युक्तम् । तत्र नी—लू—पूधातुभ्यो क्विपि गुणे 'ने-लो-पो' शब्दात् सम्बुद्धौ स्थानिवत्त्वेनापि दीर्घान्ततया सम्बुद्धिलोपाप्राप्त्या तत्र लोपार्थं प्रत्याहारग्रहणस्य चारितार्थ्येन भाष्यासङ्गतिवारणाय तादृशानामनभिधानकल्पनावश्यकत्वाच्चेति चेन्न, उक्तरीत्या निमित्तार्थलाभेऽपि परसप्तमीत्वस्य बाधायोगात् ।

उञः । [ १-१-१७ ]

उञ इतौ वा प्रागुक्तम् । उ इति — विति ।

ऊँ । [ १-१-१८ ]

उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात् । ऊँ इति ।

**मय उञो वो वा [ ८-३-३३ ]**

---

यत्तु 'अहो इति' इत्यादावन्तरङ्गत्वात् 'ओत्' इत्यस्यैव प्रवृत्त्या सम्बुद्धिग्रहणं व्यर्थम् । न च नाजानन्तर्ये इति निषेधः, 'असुव्वत्' इत्यादिसिद्धये ज्ञापकसाजात्येन जातबहिरङ्गे एव तत्प्रवृत्तेरिति तन्न, स्वरादिपठिते मिथो इत्यव्यये प्रगृह्यत्वाभावाय 'सम्बुद्धौ' इत्यस्यावश्यकत्वात् ।

'उञः' इति । 'निपात एकाच्' इति नित्ये प्राप्ते विकल्पार्थमिदम् । उञ इति कर्मणि षष्ठी । वाचकमिति शेषः । उञ् इति निपात एव, न तु ऊञः ञकारेण प्रत्याहारः, प्रतिपदोक्तत्वात्, उञ्ग्रहणसामर्थ्याच्च । अन्यथा हल्सु प्रगृह्यसंज्ञायाः फलाभावेन चकारेण उच्प्रत्याहारमेव कुर्यात् । प्रगृह्यम्, शाकल्यस्य, इतौ, इति चानुवर्तते । ञकारेत्संज्ञकस्य उ इत्यस्य इतौ परे शाकल्यस्य मते वाचकं प्रगृह्यपदम् । तदाह—उञ इति उञो वाचकं प्रगृह्यपदमितौ परे वा, इत्यर्थः । प्रगृह्यपदस्य इतौ परे य उञ् स वाच्य इति यावत् । प्रागुक्तमिति—पूर्वोक्तप्रगृह्यत्वमित्यर्थः । तथा च इतौ उञः प्रगृह्यसंज्ञायाम् 'उ इति' तदभावे यणि 'विति' ।

'ऊँ' इति दीर्घः, अनुनासिकः । 'छन्दोवत्सूत्राणि' इति भाष्योक्त्या छान्दसत्वात् 'सुपां सुलुक्' इति सोर्लुकि प्रथमान्तम् । नपुंसकत्वात्तु न लुक्, ह्रस्वत्वापत्तेः । अत्र उञः, प्रगृह्यम्, शाकल्यस्य, इतौ, इति चानुवर्तते । तदाह—उञ इत्यादि । 'उञ ऊँ' इत्येकसूत्रत्वे तु यदि शाकल्यस्य इति नानुवर्तेत तदा उञः प्रगृह्यसंज्ञा स्यात् प्रगृह्यसंज्ञकस्य तस्य ऊँ इत्यादेश इत्यर्थः स्यात्तदा 'ऊँ' इत्येकमेव रूपं स्यात् । उ इति, विति, रूपं न स्यात् । शाकल्यस्य इत्यस्यानुवृत्तावपि प्रगृह्यसंज्ञाया आदेशस्य च वैकल्पिकत्वेन 'ऊँ इति' 'विति' इत्यनयोः सिद्धावपि 'उ इति' इति न सिद्ध्येत् । न च निरनुबन्धके उनिपाते 'निपात एकाच्' इति प्रगृह्यत्वेन 'उ इति' इति सिध्यति, ञकारानुबन्धकेऽपि तथा प्रयोगस्येष्टस्य सिद्ध्यर्थं योगविभागस्यावश्यकत्वात् ।

न च 'ऊँ इति' इत्यत्र 'इकोऽसवर्णे' इति ह्रस्वे ऊँभावाभावपक्षे वा ह्रस्वे 'उ इति' 'विति' इति रूपस्य ञकारानुबन्धकस्यापि सिद्धिरिति योगविभागवैयर्थ्यम्, योगविभागाभावे तन्न्यायेन सर्वथाऽनवकाशत्वेन वादेशस्य शाकल्यह्रस्वबाधकत्वात्, 'नित्यम्' इति योगविभागेन प्रकृतिभावेन बाधाच्च । केचित्तु योगविभागस्य 'विति' रूपं फलमाहुः । तथाहि:—'उञ ऊँ' इत्येकयोगे 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायेन उञ इत्यस्य श्रुतेनादेशेनैव सम्बन्धः स्यान्न तु प्रगृह्यसंज्ञया । अनुवृत्ता प्रगृह्यसंज्ञाऽपि समानविभक्तिकत्वेन 'ऊँ' इत्यत्रैव सम्बध्येत । उञः प्रगृह्यसंज्ञा तु 'निपात एकाच्' इत्यनेन नित्यैव स्यात् । तथा च 'ऊँ' आदेशे 'ऊँ इति' तदभावे 'उ इति' तथा च 'विति' योगविभागफलं लब्धमित्याहुः ।

न च दीर्घे आदेशविधानादेव सन्धिर्न स्यादिति 'ऊँ इत्यस्य प्रगृह्यसंज्ञा व्यर्था, विधानसामर्थ्यात्सन्धिशास्त्रबाधकल्पनापेक्षया प्रगृह्यसंज्ञासम्बन्धकल्पनेऽपि मण्डूकानुवृत्त्यकल्पनेन लाघवसत्त्वात् संहिताया अविवक्षायाम् 'ऊँ' इति दीर्घविधानस्य चरितार्थ्येन सामर्थ्येन यत्रादिबाधे मानाभावाच्च ।

यद्यपि 'गुणा अभेदकाः' इति न्यायेन 'ऊँ' इत्यनुनासिकत्वस्याविवक्षा प्राप्ता' तथापि दीर्घोऽनुनासिकः प्रगृह्यश्चेति भाष्यादत्रानुनासिकत्वं विवक्षितम् । अनुनासिकत्वस्य फलन्तु प्रयोगे तथोच्चारणम्, 'यदेतन्ँ इति पठसि तद्दीर्घम्' इत्यादौ 'यरोऽनुनासिके' इति दकारस्य वा नकारः, किन्ँ ऊँ इति, किम्ँ इति, इत्यत्र हस्य यः ।

मयः परस्य उञो वो वा स्यादचि । किमु उक्तम् , किम्वु उक्तम् । वत्वस्यासिद्धत्वान्नानुस्वारः ।

---

'मय उञो वो वा' इति । मय् अत्र प्रत्याहारः, न तु धातुः, 'किम्वावपनं महत्,' इति भाष्योक्तलक्ष्यदर्शनरूपाद् व्याख्यानात् । मय इति पञ्चमी, उञ इति षष्ठी । 'ङमो ह्रस्वादचि' इत्यतोऽचीत्यनुवर्तते । तदाह—मयः परस्य इत्यादि । इदं सूत्रम् उञः, 'निपात एकाजनाङ्' इत्यनेन 'उञः' इत्यनेन वा प्रगृह्यत्वात्प्रकृतिभावस्य सवर्णेऽचि दीर्घस्य च यणो बाधकस्य बाधनार्थम् ।

नन्वेवं सति 'इको यणचि' इत्यनन्तरम् 'मय उञो वा' इति सूत्रमस्तु । यण्पदानुवृत्त्याऽन्तरतम्यादुञः स्थाने वकार एव स्यादिति वग्रहणं व्यर्थमित्याशङ्कायामाह—वत्वस्यासिद्धत्वादिति । 'किम्वुक्तम्' इत्यत्र किम् उ उक्तम् इति दशायामनेन वकारेऽस्य त्रिपादीस्थत्वेन 'मोऽनुस्वारः' इत्यस्य दृष्ट्या असिद्धत्वेन हल्परत्वाभावादनुस्वारो न भवति । यदि षष्ठाध्याये 'इको यणचि' इत्यत्रैव 'मय उञो वा' इति सूत्रे कृते सति यणादेशो विधीयेत तदाऽनुस्वारदृष्ट्याऽसिद्धत्वाभावेनानुस्वारो दुर्वारः स्यात् । त्रिपाद्यां कृते तु 'पूर्वत्रासिद्धम्' इति वत्वस्यासिद्धतया नानुस्वारः । ननु इको यणचीत्यत्र पाठेऽपि वत्वस्य पदत्रयनिमित्तकत्वेन बहिरङ्गतया 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनेन पदद्वयनिमित्तकेऽन्तरङ्गेऽनुस्वारे कर्तव्येऽसिद्धतयाऽनुस्वारो न स्यात् ।

यद्वा 'अचः परस्मिन्' इति वकारस्य स्थानिवत्त्वेनानुस्वाराभाव इति चेन्न, अन्तरङ्गपरिभाषाया उद्ग्रहणज्ञापितत्वेन सपाद्यध्यायीस्थतया तद्दृष्ट्या त्रिपादीस्थानुस्वारस्याभावेन तेन वत्वासिद्धत्वस्य वक्तुमशक्यत्वात् । किञ्च सन्धिकार्येऽन्तरङ्गपरिभाषा न प्रवर्तते'ऽत एव 'शिवोऽर्च्यः' 'रामेश' इत्यादौ गुणसिद्धिरिति तु न, तस्या 'विशेषणं विशेष्येण बहुलम्' इति निर्देशेनानित्यतया तदप्रवृत्त्या गुणादिसिद्धेः । स्थानिवत्त्वस्य तु 'न पदान्त' इति, पूर्वत्रासिद्धीये न स्थानिवत् इति वा निषेधात् ।

यदि तु मकारमुपजीव्य जायमानो वकारः सन्निपातपरिभाषयाऽनुस्वारे कर्तव्ये निमित्तं न स्यादित्युच्यते तदा 'प्रत्यङ्ङ् आत्मा' इत्यत्र वत्वस्यासिद्धतया पूर्वं ङमुटि ततो वत्वे 'प्रत्यङ्ङ्वात्मा' इति भवति वत्वस्यासिद्धत्वाभावे तु ङमुडनापत्तिः । न च स्थानिवत्त्वेन ङमुट्, पूर्वत्रासिद्धीये तन्निषेधात् । यदि कार्यकालपक्षेऽदृष्टपिशाचन्यायेन त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्त्याऽन्तरङ्गे ङमुटि बहिरङ्गयणोऽसिद्धतया ङमुट्सिद्धिरित्युच्यते तदा 'षड् उ इह' इत्यत्र जश्त्वस्य सपाद्यध्यायीस्थवत्वदृष्ट्याऽसिद्धतया मयः परत्वाभावाद् वत्वानापत्तिर्दोषः । वत्वस्य त्रिपादीस्थत्वे तु न दोषः, वत्वस्य परत्रिपादीस्थत्वेन पूर्वं जश्त्वस्य सिद्धत्वात् ।

यत्तु 'किम्वुक्तम्' इत्यादौ सन्निपातपरिभाषयैवानुस्वाराभावे सिद्धे वग्रहणं व्यर्थं सत् 'सन्धिकार्ये सन्निपातपरिभाषा न प्रवर्तते' इति ज्ञापयति । तेन 'गवाग्रम्' इत्यादौ दीर्घादिः सिध्यतीति तन्न, उक्तरीत्या त्रिपाद्यां करणेन वग्रहणस्यावश्यकत्वात् ।

'किम् उ इति, किम् उँ इति, किम्विति, किं विति ।' अत्र उञः प्रगृह्यत्वेऽपि 'मय उञो वो वा' इति वकारे वत्वस्यासिद्धत्वान्नानुस्वारः । प्रगृह्यत्वाभावपक्षे 'इको यणचि' इति यणि मकारस्यानुस्वारः । तत्र 'अनचि च' इत्यत्र 'च' इति योगविभागेन मकारस्य, 'यणो मयो द्वे वाच्ये' वकारस्य च द्वित्वे रूपचतुष्टयम् । अनुस्वारस्य परसवर्णेऽनुनासिकवकारे तस्य द्वित्वे वकारत्रयघटितमेकम् किविँवँव ति' हलो यमाम्, इति वलोपे द्वित्वाभावे च वकारद्वयोपेतमेकम् । अनुस्वारस्यापि यत्वाद् द्वित्वे द्वे दशरूपाणि । इतिशब्देकारस्य 'अणोऽप्रगृह्यस्य' इति वैकल्पिकेऽनुनासिके विंशति रूपाणि । 'मय उञो वो वा' इति अनुनासिकस्य 'उँ' इत्यस्यानुनासिकवकारस्तु न, विधीयमानत्वेन सवर्णाग्रहणात् । 'अनुनासिके वकारे' इति मनोरमोक्तिश्चिन्त्या, तदभावे 'अष्टाविंशती रूपाणि' इत्युक्तिरपि चिन्त्या ।

ईदूतौ च सप्तम्यर्थे [ १-१-१६ ]

सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात्। सोमो गौरी अधिश्रितः। मामकी तनू इति। 'सुपां सुलुक्—' ( सू ३५६१ ) इति सप्तम्या लुक्। अर्थग्रहणं किम्—वृत्तावर्थान्तरोपसंक्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः।

ईदूतौ च सप्तम्यर्थे इति। शाकल्यस्य, अनार्षे, इतौ, इति पदत्रयं निवृत्तम्। अत्र विधेयं नास्तीति चशब्दरूपप्रयत्नेन प्रगृह्यमित्यनुवर्तते। 'सप्तम्यर्थे' इत्यस्याधिकरणकारकत्वेन कारकस्य क्रियायामन्वयेन 'पर्य्यवसन्नौ' इति विद्यमानार्थकौ अध्याह्रियेते। ईदूताविति विशेषणम्। तदन्तस्य संज्ञा। पर्य्यवसन्नौ शब्दौ इति विशेष्यम्, तथा सप्तम्यर्थे पर्य्यवसन्नौ ईदूदन्तौ शब्दौ प्रगृह्यौ स्त इत्यक्षरार्थः। फलितमाह—सप्तम्यर्थे पर्य्यवसन्नमीदूदन्तमिति।

ननु 'ईदूतौ च सप्तमी' इति न्यासेन ईदूदन्तं सप्तम्यन्तं प्रगृह्यमित्यर्थेन सिद्धे अर्थग्रहणं व्यर्थम्। न च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति निषेधेन ईदूदन्ता या सप्तमी सा प्रगृह्या इत्यर्थे यत्र सप्तम्या लुक् तत्र न स्यात्। न च प्रत्ययलक्षणम्, 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधात्। न च सूत्रवैयर्थ्यम्, तादृशसप्तम्या अभावादिति वाच्यम्, ययी-पपी-शब्दाभ्यां ङौ सवर्णदीर्घे 'ययी अत्र' 'पपी अत्र' इत्यत्र परादिवद्भावेन व्यपदेशिवद्भावेन च ईदन्तसप्तम्याः सम्भवादिति चेन्न, भाष्ये यत्र सप्तम्या दीर्घत्वमुच्यते 'इति न शुष्कं सरसी शयानम्' इत्यत्र सरःशब्दात् ङौ 'इयाडियाजीकाराणामुपसंख्यानम्' इति ङेरीकारादेशे ईदन्ता सप्तमी अस्ति इत्युक्त्वा अत्रापि गौरादिङीषन्तसरसीशब्दात्सप्तम्या लुगिति नात्र ईदन्ता सप्तमीति सूत्रारम्भसामर्थ्यात्संज्ञाविधाविति निषेधाप्रवृत्त्या सप्तम्यन्तमित्यर्थे यत्र 'गौरी अधिश्रितः' इत्यादौ सप्तम्या लुक् तत्रापि प्रत्ययलक्षणेन सप्तम्यन्ततया प्रगृह्यत्वं सिध्यति इत्युक्तम्। यदि ययी, पपी, इति ङौ दीर्घे रूपं स्यात्तदा सूत्रारम्भसामर्थ्याज् 'ज्ञापकं स्यात्तदन्तत्वे' इति भाष्योक्तिरसङ्गता स्यात्।

किञ्च ईकारान्तसप्तम्याः सम्भवेऽपि ऊकारान्तसप्तम्या असम्भवेन ऊद्ग्रहणवैयर्थ्यात् 'सप्तम्यन्तम्' इत्यर्थः स्यात्। न च 'मामकी तनू' इत्यत्र वेदेऽच्परत्वाभावेन प्रकृतिभावाप्राप्त्या प्रगृह्यत्वं व्यर्थमिति चेन्न, प्रगृह्यसंज्ञकेभ्यः परत इति शब्दप्रयोगस्य पदकारैर्वैदिकैर्नियमितत्वेन मामकी इति, तनू इति, इत्यत्र प्रकृतिभावफलसत्त्वात्। न च गौरी ङि, तनू ङि, इत्यत्र 'सुपां सुलुक् पूर्वसवर्ण' इति पूर्वसवर्णे ईकारे दीर्घे च ईदन्ता, ऊदन्ता सप्तमी परादिवद्भावेन लभ्येते इति वाच्यम्, सवर्णदीर्घं बाधित्वा आटि, आमि च गौर्याम्, तन्वाम् इत्यापत्तेः। न च 'हरिषु' शब्दस्य उशब्देन योगे 'हरिषू अत्र' इत्यत्र पूर्वान्तवद्भावेन ऊदन्तसप्तम्यामपि चारितार्थ्यमिति तदन्तविषयसम्भव इति वाच्यम्, ईदूदन्ता सप्तमीत्यर्थे सूत्रवैयर्थ्येन 'ज्ञापकं स्यात्तदन्तत्वे' इति भाष्योक्त्या ईदूदन्तसप्तम्या अनभिधानकल्पनात्।

अत्रोच्यते—ययी-पपीशब्दान्ङावपि ययोरनभिधानं वा। तथा च 'सोमो गौरी अधिश्रितः' 'अध्यस्यां मामकी तनू' इत्यत्र 'गौर्याम्, मामक्यां तन्वाम्' इति लोके इव प्राप्ते छन्दसि 'सुपां सुलुक्' इति सप्तम्या लुकि सप्तम्यन्तस्याङ्गत्वाभावेन न लुमतेति निषेधाप्रवृत्त्या प्रत्ययलक्षणेन सप्तम्यन्ततया प्रगृह्यत्वं स्यादिति यद्यपि 'स्वायां तनू ऋत्वे नाधमानाम्' इत्यत्र मन्त्रेऽप्यच्परत्वमस्ति। तथापि तत्र 'ऋत्यकः' इति प्रकृतिभावेनैव निर्वाहः। छन्दसि दृष्टानुविधानात्पाक्षिकत्वेऽपि न फलम्। अर्थग्रहणं किमिति प्रश्नः। कस्मै प्रयोजनायेत्यर्थे 'किम्' इत्यव्ययम्।

वृत्तावर्थान्तरेति—अयम्भावः—वृत्तिपदमत्र कृत्तद्धितैकशेषसमाससनाद्यन्तधात्वेतदन्यतमपरम्। वृत्तिर्द्विधा जहत्स्वार्था, अजहत्स्वार्था च। जहत्=त्यजत् स्वम्=आत्मीयं पदं यम्=अर्थम् इति विग्रहे द्वितीयार्थे बहुव्रीहिः। जहत्स्वतः त्यजत्पदकोऽर्थः=समुदायार्थो यस्यां वृत्तौ सा

### अणोऽप्रगृह्यस्यानुनासिकः [ ८-४-५७ ]

अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधिँ, दधि। 'अप्रगृह्यस्य' किम्। अग्नी।

॥ इत्यच्सन्धिप्रकरणम् ॥

---

जहत्स्वार्था। अजहत्स्वोऽर्थो यस्यां सा अजहत्स्वार्था। यत्र पदं स्वार्थं कथयत्समुदायार्थमभिधत्ते सा अजहत्स्वार्था। यत्र पदं स्वार्थं नाभिधत्ते किन्तु वर्णवदनर्थकं सा जहत्स्वार्था इति यावत्। तथा च सप्तम्यर्थे पर्य्यवसन्नमित्यर्थे 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन 'वाप्यश्वः' इत्यादौ वापीपदं सप्तम्यर्थे पर्य्यवसन्नमस्तीति अर्थग्रहणसत्त्वेऽपि प्रगृह्यत्वं प्राप्नोति, परन्तु अर्थग्रहणसामर्थ्यात् सप्तम्यर्थमात्रे विद्यमानस्यैव प्रगृह्यसंज्ञा इत्यर्थेन वृत्तौ पूर्वपदं स्वार्थं कथयत्समुदायार्थमप्यभिधत्ते इति सप्तम्यर्थमात्रवृत्तित्वाभावान्न प्रगृह्यत्वम्। न च सप्तम्यर्थमात्रे विद्यमानमित्यस्य सप्तम्यर्थवाचकत्वे सति तदितरार्थावाचकम्। तथाच प्रकृत्यर्थस्यापि वाचकतया सप्तम्यर्थमात्रवृत्तित्वासम्भव इति वाच्यम्, एवं सति पुनरर्थग्रहणस्य वैयर्थ्यापत्त्या सूत्रस्यैव वैयर्थ्याद्वा सप्तम्यर्थमात्रे विद्यमानमित्यसप्तम्यर्थ–सप्तमीप्रकृत्यर्थ–तत्सम्बन्धवाचकत्वे सति तदितरार्थावाचकम् ईदूदन्तम् प्रगृह्यम्।

सप्तम्यर्थस्य तत्प्रकृत्यर्थस्य तयोः सम्बन्धस्य च वाचकं तद्भिन्नार्थस्य चावाचकं यदीदूदन्तं तत्प्रगृह्यमिति यावत्। वृत्तौ ( समासे ) पूर्वपदमुत्तरपदञ्च अजहत्स्वार्थायां स्वार्थं कथयदपि समुदायार्थस्यापि वाचकमिति सप्तम्यन्ततदाद्यर्थमात्रस्य न वाचकमित्यतः प्रगृह्यत्वाभावः। जहत्स्वार्थायान्तु सप्तम्यन्ततदादिपदं निरर्थकमेवेति सप्तम्यर्थे पर्य्यवसन्नत्वाभावान्न प्रगृह्यत्वम्।

अर्थग्रहणाभावे तु ईदूदन्तसप्तम्यन्तस्य वृत्तावपि सत्त्वात्प्रगृह्यत्वं दुर्वारमेव स्यादिति तद्वारणार्थमुक्तरीत्या अर्थग्रहणं चरितार्थम्। वाप्यश्व इति—'संज्ञायाम्' इति, सुपा, इति वा समासः। न च 'वाक्येन संज्ञानवगमान्नित्यसमासोऽयम्' इति स्थितौ 'वाप्यामश्वः' इति विग्रहोऽनुचित इति वाच्यम्, संज्ञायाः समासत एव प्रतीत्या संज्ञायां समासनैयत्यलाभेऽपि विभाषाधिकारबाधे मानाभावेन विग्रहे बाधकाभावात्। नित्यसमासोऽयमित्यस्य नित्यसमाससदृशोऽयमित्यर्थात्। अत्र तपरकरणं गुणान्तरभिन्नानां तुल्यकालानां ग्रहणार्थं न, 'गुणा अभेदकाः' इत्यनेनैव तद्ग्रहणसिद्धेः। नापि प्लुतनिवृत्तये, अनण्त्वाप्लुतग्रहणाप्राप्तेः। किन्तु तपरकरणं सन्ध्यभावसम्पादनद्वाराऽसंदेहार्थम्।

ईदूतौ किम्, 'प्रियः सूर्य्ये प्रियो अग्ना भवति' अग्निशब्दात्परस्याः सप्तम्याः 'सुपां सुलुक्' इत्यादिना डादेशस्तेन अग्नाशब्दः सप्तम्यन्ततदाद्यर्थे वर्तमानः। न चात्राच्परकत्वाभावात्फलाभावः, पदकारैः प्रगृह्येषु इति शब्दप्रयोगस्य नियमितत्वेन डान्तेऽपि इति शब्दप्रयोगापत्तिः। ईदूद्ग्रहणसत्त्वे तु नात्र इतिशब्दः, प्रगृह्यत्वाभावादिति न दोषः। सप्तम्यर्थग्रहणं किम्, 'धीती, मती, सुष्टुती'। धीत्या, मत्या, सुष्टुत्या इति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्णं ईकारादेशे 'अकः सवर्णे' इति दीर्घे 'धीती' इत्यादि तृतीयान्तम्। 'सुपां सुलुक्' इति तृतीयाया लुक् तु नात्र, ह्रस्वान्तरूपापत्तेः। लोके ईदूदन्तसप्तम्यन्ततदादेरभावाद् वैदिकप्रयोग उदाहृतः। तथा च वैदिकप्रक्रियायामेवास्योपन्यासे प्राप्ते प्रगृह्यप्रकरणानुरोधेनात्रोन्यासः।

'अणोऽप्रगृह्यस्यानुनासिकः' इति अत्र 'वाऽवसाने' इति सूत्रमनुवर्त्तते। अप्रगृह्यस्येति पर्य्युदासानुरोधेनात्रोपन्यासः। अत्राण्प्रत्याहारः पूर्वणकारेणैव, 'यदि हि परेण स्यात्' अण्ग्रहणमनर्थकं स्यात् 'अचोऽप्रगृह्यस्यानुनासिकः' इत्येव ब्रूयात् इति भाष्यात् प्रथमोपस्थितत्वाच्च। अणः किम्, कर्तृ, हर्तृ, नपुंसके सोर्लुक्। अग्नी इति—'ईदूदेद्' इति प्रगृह्यत्वम्। ननु 'ईदूदेद्' इत्यस्य दृष्ट्या 'अणोऽप्रगृह्यस्य' इत्यस्यासिद्धतया फलाभावात् 'अग्नी' इत्यत्र प्रगृह्यत्वं न स्यादिति चेन्न, प्रगृह्यपर्य्युदासवैयर्थ्यापत्त्या संज्ञादृष्ट्या असिद्धत्वाभावज्ञापनात्, कार्य्यकालपक्षे संज्ञाया अपि तद्देशस्थत्वेनासिद्धत्वाभावात् 'संज्ञां प्रति त्रिपादी नासिद्धा' इदम्, तदानीं संज्ञाशब्दस्य शक्तिग्रहाभावेन

# अथ हल्सन्धिप्रकरणम्

**स्तोः श्चुना श्चुः [ ८-४-४० ]**

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः ।

---

त्रिपादीस्थसंज्ञाघटितशास्त्रस्य वाक्यार्थबोधाभावेन कार्य्याज्ञानेन निष्फलत्वात् 'पूर्वत्र' इत्यस्याप्रवृत्तेः, 'न मकुर्छुराम्' 'न पदान्ताट्टोरनाम्' इति ज्ञापकाच्च ।

इत्यच्सन्धिरिति—संधानं सन्धिः । 'उपसर्गे घोः किः' इति भावे किः । अत्र सन्धिपदं संहितानिमित्तककार्य्यपरम् । अचः सन्धिरच्सन्धिः, अचः सन्धिनिमित्तकं कार्य्यम् । तत्प्रतिपादकत्वादत्र लक्षणया प्रकरणमपि अच्सन्धिः । 'नाज्झलौ' इति भाष्ये 'परश्शशतानि' इत्यत्र शतात्पराणि परश्शतानि, पारस्करादित्वात्सुटि श्चुत्वे, अनचि चेति शकारस्य द्वित्वे 'झरो झरि' इति मध्यशकारस्य सवर्णे शकारे परे लोपो भवति । यदि इकारशकारयोः सावर्ण्यं स्यात्तदा एकस्य शस्याज्ग्रहणेन ग्रहणादच्त्वम्, अपरस्य शस्य हल्प्रत्याहारे पाठाद्धल्त्वमित्यज्झलोः सावर्ण्यनिषेधात् शकारयोरपि परस्परं सावर्ण्यं न स्यादिति शकारे शकारस्य लोपो न स्यादित्याशङ्कायामुक्तं भाष्ये—'सिद्धमनच्त्वात्' लोपरूपकार्य्यं सिद्धम्, कथमनच्त्वात्—अच्पदेन शकारस्याग्रहणात् । 'नाज्झलौ' इति निषेधेन 'विवृतं स्वराणाम्, ईषद्विवृतमुष्मणाम्' इति प्रयत्नभेदेन वा सावर्ण्याभावात् । तत्रैवोक्तं 'कथमनच्त्वम्' प्रयत्नभेदादिति शेषः । तत्र 'अनच्त्वात्' अनच्त्वम्, इति भाष्यप्रयोगेण 'अल्पाच्तरम्' इति सौत्रप्रयोगेण च वृत्तिघटकाच्पदे पदान्तकार्य्यस्य तत्सन्निधाने श्चुत्वस्य चाभावो बोध्यते इति न कुत्वश्चुत्वादि ।

॥ इत्यच्सन्धिप्रकरणम् ॥

---

## ॥ हल्सन्धिप्रकरणम् ॥

'स्तोः श्चुना श्चुः' इति । स् च तुश्चेति समाहारद्वन्द्वः सौत्रत्वात्पुंस्त्वम्, इतरेतरयोगद्वन्द्वे सौत्रत्वादेकवचनमिति तु न, 'द्व्येकयोर्द्विवचनैकवचने' इति शास्त्रबाधापत्तेः । सौत्रत्वात्पुंस्त्वे शास्त्रबाधस्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्योक्त्या लिङ्गविधायकशास्त्राभावात् । सूत्रमते 'स नपुंसकम्' इत्यादिशास्त्रसत्त्वात्तद्बाध इति चेत्समासेऽनेकक्लिष्टकल्पनापेक्षया, 'श्चुः' इत्यादौ शकारस्य षत्वषत्वयोः सौत्रत्वेनैव वारणीयतया स्थान्यादेशयोर्यथासंख्यमन्वयस्य वक्ष्यमाणतया एकधर्मावच्छिन्नेऽन्वयाद्यभावेन द्वन्द्वाप्राप्त्या च 'स्तोः' 'श्चुना' इत्यत्र 'स्' इति 'श्' पृथक् पदम्, आद्ययोः सौत्रत्वात् षष्ठ्यास्तृतीयायाश्च 'सुपां सुलुक्' इति लुक् षत्वाभावश्च । 'श्चुः' इत्यत्र 'हल्ङ्याब्' इति सोर्लोप इत्येव पन्था लघीयान् ।

'श्चुना' इत्यस्य सहार्थे गम्यमानेऽन्वयः, 'योगे' इत्यध्याहृत्य तत्र स्तोरित्यस्य कर्मतयाऽन्वयः । 'श्चुः' इत्यत्र स्थान्याकाङ्क्षायां प्रत्यासत्त्या स्तोरिति स्थानषष्ठ्या विपरिणम्य सम्बध्यते । तत्र स्थानिनोः सकारतवर्गयोः शकारेण चवर्गेण वा योगे सकारस्य शकारः, तवर्गस्य च चवर्गः ,इति यथासंख्यमन्वयः । तत्रापि तथदधनानां स्थानक्रमेण चछजझञाः स्युरिति यथासंख्यमन्वयः । सकारस्य शकार इति च आन्तरतम्याच्च । निमित्तभूतेन श्चुना इत्यनेन तु 'सकारस्य शकारेण, तवर्गस्य चवर्गेण योगे' इति यथासंख्यं नान्वयः, किन्तु सकारस्य शकारेण, चवर्गेण वा योगे शकारः, तवर्गस्य शकारेण चवर्गेण वा योगे चवर्गादेश इति यथेष्टमन्वयः । न च यथासंख्यसूत्रेण निमित्तयोः शकारचवर्गयोः कार्यिणोः सकारतवर्गयोरपि यथासंख्येनान्वयः स्यादिति वाच्यम्, 'शात्' इति सूत्रवैयर्थ्यापत्तेः ।

तथा हि—निमित्तकार्यिणोर्यथासंख्येनान्वये सकारस्य शकारेण तवर्गस्य चवर्गेण योगे एवादेशः स्यात् । तथा च 'विश्नः, प्रश्नः' इत्यत्र तवर्गस्य नकारस्य चवर्गेण योगाभावात् 'शात्परस्य

हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ।

शात् [ ८-४-४४ ]

शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः । प्रश्नः ।

तवर्गस्य श्चुत्वं नेत्यर्थकम् 'शात्' इति सूत्रं व्यर्थमेव स्यादिति तज्ज्ञापयति 'निमित्तकार्यिणो-र्यथासंख्यमन्वयो न भवति' इति । तथा च नकाररूपतवर्गस्य शकारेण योगेऽपि प्राप्तस्य श्चुत्वस्य निषेधाय 'शात्' इति सूत्रं चरितार्थम् । ज्ञापनफलन्तु, 'रामश्चिनोति, सञ्शम्भुः' इत्यादिषु श्चुत्वसिद्धिः ।

न च विश्नमाचष्टे विष्णयतीति ण्यन्तात्कर्तरि क्विपि 'हे विश्न चिनु' इत्यत्र श्चुत्ववारणाय 'शात्' इत्यस्य चारितार्थ्यम् । न च टिलोपणिलोपयोः स्थानिवत्त्वम्, 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधादिति चेन्न, 'आचार्यप्रवृत्तिर्ज्ञापयति' 'संख्यातानुदेशो नेति, यदयं शात्प्रतिषेधं शास्ति' इति भाष्यविरोधादीदृशानामनभिधानात् । 'तज्ज्ञानम्' इत्यादौ श्चुत्वं भवत्येव । 'जञोर्ज्ञः' इति शिष्टोक्त्या भिन्नरूपेण उच्चारणेऽपि स्वरूपेण जकारस्य सत्त्वात् ।

किञ्च जञोः संयोगे एव ज्ञशब्दप्रयोगेण 'वर्गीयवर्णानामन्यतमात्पञ्चमे परे मध्ये यमो वर्णः' इति नियमेन जकारात्परः मकारात्पूर्वो यमस्तस्य च शरि पाठेन झल्ग्रहणेन ग्रहणात् यमं झत्वं निमित्तीकृत्य जकारस्य 'चोः कुः' इत्यनेन गकारे 'तद्ग्ज्ञानम्' इत्येव । 'तज्ज्ञानम्' इत्यादौ जकारो-ल्लेखस्तु छन्दस्येव यम इत्यतः कुत्वाप्रवृत्त्यभिप्रायेण । 'स्तोः श्चौ श्चुः' इति सुवचम्, तत्र पूर्वत्र परत्र वा श्चौ सति स्तोः श्चुत्वमित्येवार्थो न तु श्चौ परत इति 'शात्' इति लिङ्गात् । न चात्र न्यासे 'चितम्' इत्यादौ व्यवधानेऽपि श्चुत्वापत्तिः, 'शात्' इति ज्ञापकेन 'तस्मिन्' इति सूत्रप्राप्तपूर्वत्वांशतन्मात्रबाधेन सूत्रस्य चारितार्थ्येऽव्यवहितांशबाधे बाधकाभावादव्यवहिते श्चौ सत्येव श्चुत्वविधानात् । अत्र पदस्येत्यधिकृतमपि 'स्वन्तस्य पदस्य' इति सामानाधिकरण्येन नान्वयः, 'राज्ञः क च' (४-२-१४०) इत्यादिनिर्देशात् ; किन्तु पदावयवयोः सकारतवर्गयोरित्येवार्थः ।

हरिश्शेते इति—'वा शरि' इति विसर्गाभावे शः । सच्चिदिति—चुत्वस्यासिद्धतया पूर्वं जश्त्वेन दकारे ततश्चुत्वेन जकारे चर्त्वे च 'सच्चित्' इति साधु । जश्त्वचर्त्वयोरत्रानुक्तिस्तु चुत्वमात्रेणापि लक्ष्यसिद्धया फलाभावेन 'पूर्वत्रासिद्धम्' इत्यस्याप्रवृत्त्यभिप्रायेण सत्स्वरूपं चित्स्व-रूपं ब्रह्मेत्यर्थः ।

शार्ङ्गिञ्जिति—शृङ्गस्य विकारः शार्ङ्गं धनुस्तदस्ति अस्येति शार्ङ्गी वासुदेवस्तत्सम्बुद्धौ हे शार्ङ्गिन् विष्णो जय सर्वोत्कर्षेण वर्तस्वेत्यर्थः । चवर्गयोगान्तकारस्य श्चुत्वं ञकारः ।

'शात्' इति । अत्र 'तोः षि' ( ८-४-४३ ) इत्यतस्तोरिति, 'न पदान्तात्' इत्यतो नेति, श्चुरिति चानुवर्तते । शकारानुवृत्तिर्न निषेधार्था तोः स्थाने शकारादेशाप्राप्तेः, किन्तु सन्नियोगशिष्टत्वेन त्यागायोगार्था । यद्वा एकदेशस्वरितत्वात् 'चुः' इत्येवानुवर्तते । शादिति पञ्चम्या 'तस्मादित्युत्तरस्य' इति परिभाषया अव्यवहितोत्तरस्योपस्थितिः । तथा च शकारादव्यवहितपरस्य तवर्गस्य चुत्वं न स्यादित्यर्थस्तदाह—शात्परस्येत्यादि ।

विश्न इति—विच्छ गतौ, प्रच्छ ज्ञीप्सायाम्, इत्यत्र 'यजयाचविच्छ' इत्यादिना नङि 'च्छ्वोः शूट्' इति च्छस्य शादेशे ङित्वाद् गुणाभावे विश्न इति, प्रश्न इति च ।

न च 'प्रश्नः' इत्यत्र नस्य ङित्वाद् ग्रहिज्येति सम्प्रसारणापत्तिरिति वाच्यम् 'प्रश्ने चासन्नकाले' ( ३-२-११७ ) इति निर्देशेन सम्प्रसारणाभावज्ञापनात् । न चैवं 'प्रश्ने' इति निर्देशादेव शात्परस्य तवर्गस्य चुत्वं नेत्यपि ज्ञाप्यतामिति 'शात्' ( ८-४-४४ ) इति सूत्रं व्यर्थमिति वाच्यम्, लक्ष्यैक-चक्षुष्कस्य शात्परस्य तवर्गस्यैव साधुत्वमिति ज्ञानासम्भवेन तादृतार्थस्य ज्ञापयितुमशक्यत्वेन

---

तादृशाज्ञानाय विश्वः, इत्याद्यर्थं 'शात्' इति सूत्रस्यावश्यकत्वात्। न च 'जश्त्वम्' इत्येवोदाहर्तव्ये नकारोदाहरणपर्यन्तानुधावनमसङ्गतमिति वाच्यम्, 'सिद्धमनच्त्वात्', 'अल्पाच्तरम्' इत्याद्यार्ष-निर्देशेन 'सुब्घटकसकाराव्यवहितपूर्वत्वाभाववति प्रत्याहारे संहितानिमित्तं कार्यं न भवति' इति ज्ञापनेनैव तत्र चुत्ववारणसम्भवेन विश्न इत्याद्युदाहरणस्यैवोचित्यात्। सुब्घटकसकारेत्युक्त्या 'अचोऽक्षु' इति भाष्यप्रयोगोपपत्तिः। 'अजन्भ्यां स्त्रीखलनाः' 'उपदेशेऽजनुनासिकः' इत्यादिनिर्देशादच्प्रत्याहारे पदान्तजश्त्वं भवत्येव। तेन 'अजिभरव्यवहिता हलः' इत्युक्तिरपि नासङ्गता।

नच 'अच्त्वम्' इत्यादावपि जश्त्वापत्तिः, चर्त्वेन रूपसिद्धेः। प्रत्याहारमात्रे संहिताकार्या-भावज्ञापनात् जश्त्वचर्त्वभष्भावखर्परादिशब्देषु षत्वजश्त्वविसर्गादिकार्याणां निवृत्तिः सिद्धा।

ननु उदित्पदैः कुचुटुतुपुभिः पञ्चमो वर्णो न गृह्यते, तैः कादिसवर्णानामेव 'अणु-दित्' इत्यनेन ग्रहणबोधनेन पञ्चमस्य नासिकास्थानाधिक्येन तुल्यस्थानत्वाभावादिति तुचुशब्देन नकारञकारानुपस्थित्या 'विश्नः' इत्यादौ श्चुत्वाप्राप्त्या 'निमित्तकार्यिणोर्यथासंख्यं न भवति' इत्यत्र 'शात्' इत्यस्य ज्ञापकत्वासङ्गतिः सूत्रवैयर्थ्यञ्चेति चेन्न, शादिति ज्ञापकादेव तुल्यास्यसूत्रे आस्यशब्देन नासिकाया अग्रहणबोधनेन कादीनां पञ्चमेनापि सावर्ण्ये बाधकाभावेन नकारस्य चुत्वप्राप्त्या तन्निषेधार्थं शादित्यस्य चारितार्थ्यात्। आस्यग्रहणेन नासिकाया अग्रहणे ज्ञापितेऽपि यदि निमित्त-कार्यिणोर्यथासंख्यं स्यात्तदा पुनरपि 'शात्' इत्यस्य वैयर्थ्यापत्तिरिति 'यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यते' इति न्यायेन निमित्तकार्यिणोर्यथासंख्याभावोऽप्यनेन ज्ञाप्यते।

यत्किञ्चित्स्थानतुल्यत्वेन सावर्ण्ये तु 'गौरी एहि' इत्यादाविकारैकारयोः सावर्ण्येन सवर्ण-दीर्घापत्तिः, 'इकोऽसवर्णे' इति प्रकृतिभावानापत्तिश्च। 'स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्। तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च' इति शिक्षोक्त्या एङो विवृततरत्वरूपप्रयत्नभेदेनोक्त-दोषवारणेऽपि नासिकातुल्यत्वमादाय ञमङणनानामपि सावर्ण्ये 'त्वञ्ङयसि' इत्यादौ पञ्चानामपि पञ्चमानाम् 'अनुस्वारस्य ययि' इत्यादिना परसवर्णादेशापत्तिः, तद्वान्, तद्वस्तु, इत्यादौ लवकारयो-र्दन्तस्थानजन्यत्वेन साम्यात्सावर्ण्येन 'तोर्लि' इति दस्य लादेशापत्तिश्च। वकारस्य न दन्तस्थानम्, नाप्योष्ठस्थानम्, किन्तु दन्तोष्ठसमुदायात्मकं भिन्नस्थानमिति न लकारवकारयोः सावर्ण्यमिति तु न, 'अदुग्ध्वहि' इत्यत्र दन्त्याचारमनेपरत्वाभावाद् 'लुग्वा दुहदिह' इत्यनेन क्सस्य लुगनापत्तेः, 'सुस्वूर्षति' इत्यादौ ओष्ठ्यपूर्वत्र्रकाराभावेन 'उदोष्ठ्यपूर्वस्य' इत्यनेन उकारादेशानापत्तेश्च।

न च वकारस्य दन्त्यत्वे षोपदेशलक्षणे 'दन्त्याजन्तसादयः षोपदेशाः' इत्युक्त्यैव स्विदादीनामपि षोपदेशत्वे सिद्धे षोपदेशलक्षणे स्विदादीनां प्रतिपदोक्तत्वेन पृथग्ग्रहणं व्यर्थमिति वाच्यम्, लक्षणे दन्त्यपदेन 'स्वाद आस्वादने' इत्यादीनामषोपदेशत्वसिद्धये केवलदन्तस्थानजस्यैव ग्रहणात्। अत्र च ष्वस्कादीनां पृथग्ग्रहणमेव ज्ञापकमिति उत्तरार्द्धे मूले एव वक्ष्यति। केचित्तु

'अनुस्वारयमानाञ्च नासिका स्थानमिष्यते'

इति शिक्षोक्त्या अन्येषां न नासिका स्थानम्, किन्तु नासिका अनुनासिकत्वगुणसम्पादिकैव। न चैवम् अकारादीनामिव ककारादीनामपि नासिकया उच्चारणेऽनुनासिकत्वं स्यादिति वाच्यम्, तेषामनु-नासिकत्वस्य शास्त्राबोधितत्वेनासाधुत्वात्। एतन्मते कङादीनां सावर्ण्ये न किञ्चिद् बाधकम्।

अन्ये तु अकारादीनां नासिकास्थानमन्तराऽपि स्वरूपोपलब्ध्या तत्र नासिका गुणसम्पा-दिकैव, परन्तु ङादीनान्तु नासिकां विना स्वरूपानुपलब्ध्या स्थानमेव।

न च 'अनुस्वारयमानाञ्च' इति शिक्षाविरोधः, तत्र चेन ङादीनां सङ्ग्रहात्। अन्यथा चशब्दस्य वैयर्थ्यापत्तेः।

वस्तुतस्तु 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुणः' इति भाष्येण ङादिष्वपि नासिकाया गुणसम्पादकत्वमेव।

## ष्टुना ष्टुः [ ८-४-४१ ]

स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ।

## न पदान्ताट्टोरनाम् [ ८-४-४२ ]

'अनाम्' इति लुप्तषष्ठीकं पदम् । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । 'पदान्तात्' किम्—ईट्टे । 'टोः' किम्—

---

यत्तु 'तद्वान्' इत्यादौ 'तोर्लि' इत्यत्र लकारप्रश्लेषेण लकाररूपे लकारसवर्णे एव तोर्ल-विधानेन दोष इति तन्न, लकारप्रश्लेषे गौरवात् ।

'ष्टुना ष्टुः' इति । स्तोरित्यनुवर्तते । अत्रापि समाहारद्वन्द्वः सौत्रत्वात्पुंस्त्वम् । सौत्र-त्वादेव षस्य जश्त्वं न । यत्तु असन्देहार्थं जश्त्वं नेति तन्न, असन्देहार्थं शास्त्रप्रवृत्तेरप्रामाणिकत्वात् । यद्वा 'ष्टुः' इत्यत्र 'ष्' इति पृथक् पदम्, टुरिति च ।

स्थान्यादेशयोः 'सकारस्य षकारः, तवर्गस्य टवर्गः' इति यथासंख्यं भवति । अत्र 'यथा-संख्यमनुदेशः' इति सूत्रमेव मानम् । निमित्तस्य ष्टोः कार्यिणः स्तोश्च यथासंख्यं न भवति । तथा च सकारस्य षकारेण टवर्गेण वा योगे, तवर्गस्य च षकारेण टवर्गेण वा योगे सकारस्य षकारः, तवर्गस्य टवर्ग आदेशः स्यात्, इत्यर्थस्तदाह—स्तोः ष्टुनेति ।

यथासंख्याभावे 'तोः षि' इतिसूत्रमेव मानम् । अन्यथा षकारे तोः टुत्वाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । न च अटतीति विग्रहे क्विपि अटं नयतीति अण्णीः । तमाचष्टे इत्याचक्षाणण्यन्तात्क्विपि णिलोपे अण्न् शब्दात् सम्बुद्धौ 'हे अण्नृषष्ठोऽयम्' इत्यत्र 'तोः षि' इति चरितार्थम्, 'नेह संख्या-तानुदेशो भवति, यदयं तोः षीति प्रतिषेधं शास्ति' इति भाष्येण तादृशानामनभिधानात् । 'ष्टुः ष्टौ' इति सुवचम् ।

न च 'तस्मिन्निति' परिभाषया ष्टौ परे स्तोः ष्टुत्वमित्यर्थे 'ईट्टे' इत्यादौ ष्टुत्वापत्तिः, 'न पदान्तात्' इति ज्ञापकेन पूर्वत्वानुपस्थितेः । स्तोरव्यवहिते ष्टौ सति ष्टुरित्यर्थस्यैव लाभात् । अव्य-वहितत्वं पूर्वत्वेन परत्वेन वा । अत्र पूर्वसूत्रे च योगपदेन संयोगो ग्राह्यस्तेन व्यवहिते 'चितम्' इत्यादौ न दोषः । राम इति—'रामस् षष्ठः' इत्यत्र सस्य षकारेण योगात् षः । ष्टुना योगे यथा-संख्याभावस्य फलं दर्शयितुं सस्य टवर्गयोगे उदाहरति—रामष्टीकते इति—'टीकृ गतौ' रामो गच्छतीत्यर्थः । पेष्टेति—'पिष्लृ संचूर्णे' इत्यतः तृचि लुटि वा रूपम् । षकारयोगे तकारस्य टकारः । पेषणकर्तेत्यर्थः । तट्टीकेति—तस्य टीकेति विग्रहः । तद् टीका इत्यत्र दस्य टुत्वे डः तस्य चर्त्वेन टः । टीक्यते ज्ञायतेऽर्थोऽनयेति टीका 'गुरोश्च हलः' इति करणे अप्रत्ययः । विषमपदव्याख्या टीका । हेमचन्द्रस्तु 'टीका निरन्तरव्याख्या' सुगमानां विषमाणाञ्च निरन्तरव्याख्या टीकेत्याह । चक्रिन्निति—'चक्री कोके कुलाले ऽहौ वैकुण्ठे चक्रवर्तिनि' इति हैमः । ढौकसे—उत्प्लुत्य गच्छसीत्यर्थः ।

न पदान्ताट् टोरनाम् इति । ष्टुरित्यनुवर्तते, स्तोरिति च । अनामित्यत्र 'नाम्' इति कृतनुट्कस्यामो ग्रहणम्, भाष्ये 'अनामिति किम्, षण्णां भवति काश्यपः' इत्यास्येव प्रत्युदा-हरणात् । इदञ्च तोरित्यस्याभेदेन विशेषणात् नामवयवभिन्नपरम्, लुप्तषष्ठीकञ्च अभेदेन विशेष्य विशेषणभावे प्रायेण समानविभक्तिकत्वनियमात् । तदुक्तं लुप्तषष्ठीकमिति । तथा च पदान्तटवर्गात्प-रस्य नामवयवभिन्नस्य सकारतवर्गस्य ष्टुत्वं न स्यादित्यर्थः । सन्त इति-सज्जना इत्यर्थः । षट् ते इति—ये पूर्वमुक्ताः ते षडित्यर्थः । पदान्तात्किम्, ईड स्तुतौ ईट्टे ।

'टोः' किमिति—'ष्टुना ष्टुः' इत्यतः ष्टुना इत्यनुवर्त्य पञ्चम्यन्तेन विपरिणामस्य पदा-न्तषकारस्यापि असत्वेन डकाररूपतया पदान्तात्, टवर्गादित्यर्थलाभे टोर्ग्रहणं व्यर्थमित्याशयेन पृच्छति—टोः किमिति । तत्र ष्टुनेत्यस्यानुवृत्तौ फलाभावः, पदान्ताट्टवर्गात्परस्य स्तोः ष्टुर्नेत्यर्थेनैव

सर्पिष्टमम् ।

---

त्वयसिद्धेरिति वाच्यम्, परानस्पर्तात्यर्थे क्विपि 'पराष्टीकते' इत्यत्र ष्टुत्वानापत्तेः, पूर्वान्तवद्भावेन रेफोत्तराकारस्य पदान्तत्वात् । ननु 'ष्टुना' इत्यनुवृत्तौ यत्र षकारस्यासिद्धतया जश्त्वाप्राप्तिस्तत्र पदान्तषकारात्परस्यापि तवर्गस्य ष्टुत्वानापत्तिरित्याशयेनाह ।

सर्पिष्टममिति—अतिशयितं सर्पिरित्यर्थे 'अतिशायने तमबीयसुनौ' ( ५ । ३ ५५ ) इति तमपि 'स्वादिष्वसर्वनामस्थाने' इत्यनेन सुबन्तात् तद्धितोत्पत्त्या प्रत्ययलक्षणेनान्तवर्तिनीं विभक्तिमाश्रित्य 'सुप्तिङन्तम्' इति वा पदत्वेन सर्पिषः षकारस्य पदान्ततया ततः परस्य तकारस्य ष्टुत्वनिषेधो मा भूदित्येतदर्थं टोर्ग्रहणमिति भावः । न चात्रापि षकारस्य 'झलां जशोऽन्ते' ( ८ । २ । ३८ ) इति जश्त्वेन डकाररूपटवर्गात्परत्वात् टोग्रहणसत्त्वेऽपि ष्टुत्वनिषेधो दुर्वार इति वाच्यम्, पूर्वजश्त्वदृष्ट्या 'ह्रस्वात्तादौ तद्धिते' (८-३-१०१) इत्यस्यासिद्धतयाजश्त्वाप्रवृत्तेः । न च सकारस्यैव जश्त्वं स्यादिति वाच्यम्, सकारस्य जश्त्वापवादत्वाद्रुत्वे विसर्गे विसर्जनीयस्य सः, इति सत्वे ह्रस्वात्तादाविति षत्वे च विसर्गसत्वषत्वानामसिद्धतया रुत्वस्य च जश्त्वापवादत्वेन 'यं प्रति यस्यापवादत्वं तं प्रति तस्यासिद्धत्वं न भवति' इति न्यायेनासिद्धत्वाभावाद्रेफस्य झल्त्वाभावेन जश्त्वाप्राप्तेः । अत्र 'आदेशप्रत्यययोः' इत्यनेन षत्वम्, 'अपदान्तस्य मूर्द्धन्यः' इत्यस्य तत्र सम्बन्धेन अपदान्तसस्यैव तेन षत्वविधानात् ।

ननु 'सर्पिस् तमम्' इति स्थितौ सस्य जश्त्वं प्राप्नोति, तदपवादत्वाद्रुत्वम्, रुत्वापवादत्वाद् 'ह्रस्वात् तादौ' इति षत्वं तस्यासिद्धत्वाद् -रुत्वम्, तदपवादत्वाद्रुत्वमित्यादिक्रमेण चक्रकापत्त्या किमपि न स्यादिति 'सर्पिष्टमम्' इत्यस्यासिद्धिरिति चेन्न, 'चतुष्टयम्, गिष्ट्वम्' इत्यादौ रेफस्य विसर्गे 'विसर्जनीयस्य सः' ( ८-३-३४ ) इति सस्य 'ससजुषो रुः' ( ८-२-६६ ) इति रुत्वदृष्ट्या 'झलां जशोऽन्ते' ( ८-२-३९ ) इति जश्त्वदृष्ट्या चासिद्धतया रुत्वजश्त्वयोरप्राप्त्या 'ह्रस्वात्तादौ' ( ८-३-१०१ ) इत्यस्य दृष्ट्या पूर्वस्य सिद्धत्वेन तत्र ह्रस्वादित्यस्य चारितार्थ्येन 'सर्पिस्तमम्' इत्यत्र ह्रस्वादित्यस्यासिद्धत्वेन रुत्वे विसर्गे सत्वे षत्वे च चक्रकापत्त्यभावात् ।

नच 'ष्टुना' इत्यतः टुमात्रस्यानुवृत्त्या न दोष इति वाच्यम्, 'अदसो मात्' इत्यत्र एकारनुवृत्तये माद्ग्रहणेन, 'लिङ्सिचावात्मनेपदेषु' ( १-२-११ ) इत्यतः सिचोऽनुवृत्त्या सिद्धे पुनः 'हनः सिच्' ( १-२-१४ ) इत्यत्र सिज्ग्रहणेन च ज्ञापितया 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषया 'ष्टुना' इत्यस्यैवानुवृत्तेः । न चैकदेशे स्वरितत्वप्रतिज्ञाबललभ्येन 'क्वचिदेकदेशोऽनुवर्तते' इति न्यायेन टुमात्रस्यानुवृत्त्या नोक्तदोष इति वाच्यम्, तोरित्यनुवृत्तेः 'तोः षि' इत्यत्र तोर्ग्रहणेनात्र प्रकरणे 'क्वचिदेकदेश' इति न्यायाप्रवृत्तेर्ज्ञापनात् टोर्ग्रहणाभावे टुमात्रानुवृत्तेर्लक्ष्यानुसारेणैव वक्तव्यतया लक्षणैकचक्षुष्कस्य तन्मात्रानुवृत्तिज्ञानासम्भवाच्च ।

यत्तु 'षष्ठी' ( १-२-८ ) इति निर्देशेन षकारात्परस्य तोः ष्टुत्वनिषेधो नेति ज्ञाप्यते इतितु तुच्छम्, तत्र षषो डटि 'षट्कतिकतिपय' ( ५ । २ । ५१ ) इत्यनेन डटि परे षट्शब्दस्य थुग्विधानेन षकारस्यापदान्ततया निषेधाप्राप्त्या निर्देशासङ्गतेरभावेन तेन तादृशार्थस्य ज्ञापयितुमशक्यत्वात् । सूत्रनिर्देशेन सूत्राक्षरखण्डनस्यानौचित्याच्च । अत एव 'हलि च' इत्यादिनिर्देशाद्धलि परत इको यण् नेति ज्ञापनेन सिद्धे 'इको यणचि' इत्यादावचीत्यादेर्वैयर्थ्यं न ।

न च सन्निपातपरिभाषयाऽत्र ष्टुत्वं न भवत्येवेति वाच्यम्, तस्यान्निपाद्यामप्रवृत्तेः । अत एव 'मय उञो वो वा' इति सूत्रस्यभाष्यसङ्गतिः । तथाहि—'यदि पुनरतत्रैवोच्येत' इको यणचि, मय उञो वो वेति । नैवं शक्यम् । इह हि दोषः स्यात् 'किम्वावपनं महत्' । 'मोऽनुस्वारो हलीति अनुस्वारः प्रसज्येत । वत्वे पुनः सत्यसिद्धत्वान्न भविष्यति' । सन्निपातपरिभाषायान्निपाद्यां प्रवृत्तौ तु तयैव मयमुपजीव्य आयमानवकारस्यानुस्वारनिमित्तत्वायोगादनुस्वारवारणसम्भवे भाष्यासङ्गतिः

'अनाम्नवतिनगरीणामिति वाच्यम्' ( वा० ५०१६ ) षण्णाम् । षण्णवतिः । षण्णगर्यः ।

तोः षि [ ८-४-४३ ]

तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः ।

झलां जशोऽन्ते [ ८-२-३९ ]

वागीशः । चिद्रूपम् ।

---

स्यादेव । अत एव 'षाड्स्थः' इति झलि षत्वविधानमपि सङ्गच्छते । अत एव च 'पञ्चानाम्' इत्यादीनां सिद्धिः । अन्यथा नान्तसंख्यावाचकस्वरूपषट्त्वमुपजीव्य जायमानो नुट् पदत्वसम्पादनद्वारा नान्तत्वविघातकनलोपे निमित्तं न स्यात् ।

पदान्तादित्यत्र 'पदात् टोः' इति न्यासेऽपि तदन्तविधिना टवर्गान्तात्पदादित्यर्थेऽपि दोषाभावेन अन्तग्रहणम्, अटतीत्यट् तेन सह वर्तते इति साट् । 'साट् सिद्धः' इत्यादौ एकदेशविकृतन्यायेन वर्णरूपटमात्रस्य पदत्वेन पदरूपात् टवर्गात्परस्य स्तोः ष्टुनेति निषेधशङ्कावारणेन स्पष्टार्थञ्च ।

अनाम्नवतीति—नाम् च नवतिश्च नगरी चेति द्वन्द्वे नञ्समासे च 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते' इति न्यायेन नाम्नवतिनगर्यर्थवर्णभिन्नो यस्तवर्गस्तस्य पदान्तटवर्गात्परस्य ष्टुत्वं नेति वाच्यमित्यर्थः ।

षण्णामिति—'षष् नाम्' इति स्थितौ 'स्वादिषु' इति पदसंज्ञायां जश्त्वेन षस्य डे 'प्रत्यये भाषायां नित्यम्' इत्यस्यासिद्धतया ष्टुत्वेन तस्य णत्वे षण्णामिति । मतमित्यादि शेषः । षण्णवतिरिति—'दिक्संख्ये' इति नियमात् षडधिका नवतिरिति विग्रहः । अत्र ष्टुत्वनिषेधो न, अनवतीति पर्युदासात् ।

षण्णगर्य्य इति—अत्र षडिति नगर्य्य इति पृथक्पदे, अनगरीति पर्युदासात् ।

'तोः षि' इति । ष्टुरिति नेति चानुवर्तते । तवर्गस्य षकारे परे इति । सन् षष्ठ इति—षष्ठः साधुरित्यर्थः । अस्मादेव ज्ञापकात् 'ष्टुना, ष्टुः' इत्यनयोर्यथासंख्यं न ।

अच्सन्धौ 'झलां जशोऽन्ते' इति प्रसङ्गादुपन्यस्तम्, अत्र तु हल्सन्धिप्रकरणात् । अत्र 'स्कोः संयोगाद्योरन्ते च' इति अन्त ग्रहणानुवृत्त्या सिद्धे पुनरन्तग्रहणं झलीति निवृत्त्यर्थम् । तेन 'वस्ता, वस्तव्यम्' इत्यादौ न जश्त्वम् । अन्तशब्दोऽत्रावसानार्थको न त्ववयववाची, अत्रावयवे वर्तमानानां झलां जश इत्यर्थे 'वाचौ' इत्यादावपि पदस्य अन्तावयवः 'चौ' इति, तत्र वर्तमानस्य 'चस्य' जश्त्वापत्तेः ।

न च 'एकाचो बशो भष्' इत्यत्र स्ध्वोर्ग्रहणसामर्थ्यादेव झलीति निवृत्तमिति तन्निवृत्त्यर्थमन्तग्रहणं व्यर्थमिति वाच्यम्, झलीत्यस्य सम्बन्धेऽप्यन्यनिवृत्तये स्ध्वोर्ग्रहणस्यावश्यकत्वे झलाद्योःस्ध्वोरेवमन्वयसम्भवेऽपि स्ध्वोर्झलाद्योरेव सम्भवे फलाभावेनानुवृत्तिनिवृत्तौ समर्थं स्ध्वोर्ग्रहणमिति भावः । मूले झलीति निवृत्तमित्यस्य स्ध्वोर्ग्रहणेन अन्यस्मिन्झलि इदं सूत्रं निवृत्तम् न प्रवर्तते इति यावत् । न तु झलीति पदं नानुवर्तते इत्यर्थः । अन्यथा 'दधस्तथोश्च' ( ८-२-३८ ) इति सूत्रे झलीत्यनुवर्त्य तयोर्ग्रहणप्रत्याख्यानं विरुध्यते, पूर्वत एव झलीत्यस्य निवृत्तेः । मण्डूकानुवृत्तिस्तु तस्यां गतौ अनिष्टा । किञ्च 'एकाचः' इति सूत्रे झलीत्यस्य निवृत्तावन्ते इत्यस्यापि निवृत्तिः स्यात् सन्नियोगशिष्टन्यायात् ।

नन्वेवं 'झलां जशः' इत्यत्र 'अन्ते' इत्यस्य झलीत्यस्य चानुवृत्तिरस्तु । अन्तग्रहणं मास्तु, झलि परतः पदान्ते च झलां जशः स्युरित्येवार्थः । झश्यपि अनेनैव जश्त्वे 'झलां जश् झशि' इति सूत्रं मास्तु । न च 'अभ्यासे चर्च' ( ८-४-५४ ) 'खरि च' ( ८-४-५५ ) 'वाऽवसाने' ( ८-४-५६ )

### यरोऽनुनासिकेऽनुनासिको वा [ ८-४-४५ ]

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः, एतद्मुरारिः, स्थानप्रयत्नाभ्यामन्तरतमे

---

इत्यादौ झलाम्, जश् इत्यनयोः सम्बन्धानुपपत्तिः, एतदनन्तरं त्रिसूत्र्याः, अणोऽप्रगृह्यस्य च पाठेन तयोः सम्बन्धसिद्धेः। न च खरि परेऽपि जश्त्वापत्तिः, चर्त्वेन सिद्धेः। न च हे परे जश्त्वापत्तिः, हे परेऽपदान्तझलोऽसम्भवादिति चेन्न, 'सुद्ध्युपास्यः' इत्यादौ 'झलां जशः' ( ८-२-३९ ) इति दृष्ट्या 'अनचि च' ( ८-४-४८ ) इत्यस्यासिद्धत्वापत्त्या जश्त्वानापत्तेः। 'झलां जश् झशि' ( ८-४-५३ ) इति दृष्ट्या तु नासिद्धत्वम्, द्वित्वस्य पूर्वत्रिपादीस्थत्वात्। 'पक्वः' इत्यादौ 'पचो वः' ( ८-२-५२ ) इत्यस्यासिद्धतया झश्परत्वेन जश्त्वापत्तेः।

'अन्ते' इत्यस्यात्राभावे 'दधस्तथोश्च' इति, ततो वक्ष्यामि 'झलां जशः' झलां जशो भवन्ति दधस्तथोः। ततः 'अन्ते' अन्ते च झलां जशो भवन्तीति। तत्र जश्त्वे कृते तथोर्भष्भावो न भविष्यत्यझषन्तत्वादिति 'अधोग्रहणं न कर्तव्यम्' इति भाष्यविरोधस्तु न, 'जशः' इत्यत्र 'झषस्तथोरि'-त्यनुवर्त्य जश्त्वविधानात्। ततः 'झलाम्' इति 'अत्र अन्ते' इत्यस्य झलीत्यस्य चानुवृत्त्या पदान्ते झलि च जश्विधानेन भाष्योक्तस्य अध इति प्रत्याख्यातस्य सुस्थत्वात्।

'यरोऽनुनासिकेऽनुनासिको वा' इति। 'न पदान्तात्' इत्यतः पदान्तादित्यनुवृत्तमनुनासिक इत्यादेशानुरोधेन यर इत्यस्य पञ्चम्यन्ततया षष्ठ्यन्तत्वेन विपरिणम्यते। तदाह—यरः पदान्तस्येति। पदान्तस्येति किम्; शंखघ्मः, अघ्नः, चख्नतुः, जग्मतुः, इति। न च पदान्तग्रहणाभावे 'रदाभ्याम्' ( ८-२-४२ ) इत्यनेन दस्य नत्वविधानं व्यर्थम्, प्रत्यये भाषायाम्, इत्यनेनैव दस्य नत्वे सिद्धे व्यर्थं तदपदान्तस्य यरोऽनुनासिकश्चेत्तर्हि निष्ठाऽव्यवहितपूर्वस्य दस्यैवेति नियमेन चख्नतुः, वेघ्मि, इत्यादौ दोषाभाव इति वाच्यम्, दस्यानुनासिकश्चेत्तर्हि निष्ठायामेवेत्यस्य, दस्य यद्यनुनासिकस्तर्हि पदान्तस्यैवेति नियमस्य सम्भवेन 'एतन्मुरारिः' इत्यादेरसिद्ध्यापत्तेः। 'द्विविशसन्' ( ६-१-६३ ) इत्यादिनिर्देशस्य सौत्रत्वेनाप्युपपन्नतया तेन विपरीतनियमवारणासम्भवात्, 'क्षुण्णः' इत्यादौ 'अट्कुप्वाङ्' ( ८-४-२ ) इत्यनेन णत्वार्थं दस्थाने नादेशस्य चारितार्थ्याच्च। अन्यथा 'प्रत्यये भाषायाम्' इत्यनुनासिकनस्यासिद्धतया णत्वं दुर्लभं स्यात्।

एतन्मुरारिति—एष चासौ मुरारिश्चेति 'एतन्मुरारिः' इति समस्तम्, असमासे 'एष मुरारिः' इत्यस्यैव प्राप्तेः। अत्र दस्य दन्तस्थानसाम्येनानुनासिको नकार एव। दन्तस्थानसाम्येऽपि लँरूपानुनासिकस्तु न, अर्धमात्रकत्वरूपप्रमाणकृतसाम्यस्य नकारे एव सत्त्वात्।

ननु 'चतुर्मुखः' इत्यादौ मूर्द्धस्थानजत्वेनान्तरतम्यात् णकारोऽनुनासिकः स्यादित्याशङ्कायामाह—स्थानप्रयत्नाभ्यामिति—अयम्भावः 'अष्टाध्याय्याम्' 'स्थानेऽन्तरतम' 'उरण् रपरः' इति सूत्रद्वयं संहितया पठितम्। तत्र अन्तरतमे उरण्, इत्यपि च्छेदः, अन्तरतमः, उरण् इत्यपि। यदा प्रथमान्तपाठस्तदा निर्धार्यमाण आदेश एव। एकस्य रेफरूपस्य स्थानिनः स्थाने प्राप्तेषु ञमङणनेषु अक्षु च अनुनासिकेषु मूर्द्धस्थानप्रमाणकृतान्तरतम्येन रेफस्य णकारः प्राप्नोति।

परन्तु 'अन्तरतमे' इति सप्तम्यन्तपाठे 'आदेश अन्तरतमे स्थानिनि सति भवति' इत्यर्थे णकाररूप आदेश अनेकस्मिन् स्थानिनि सति कस्य स्थाने स्यादित्याकाङ्क्षायां य आदेशस्य अन्तरतम. स्थानी तस्यैव स्थाने स्यात्। तथा च प्रकृते णकाररूपादेशस्य स्थानी यर तत्र स्थानमात्रकृतान्तरतम्येन र-ट-ठ-ड-ढ-ण-षाः यरः सर्वे णादेशस्यान्तरतमाः स्थानिनः। परन्तु घोष-संवार-नादप्रयत्नकस्य णस्य 'हशः संवारा नादा घोषाश्च' इत्युक्त्या तत्प्रयत्नका र-ड-ढाः स्थानिनो यरोऽन्तर-

स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः । 'प्रत्यये भाषायां नित्यम्' ( वा ५०१७ ) । तन्मात्रम् । चिन्मयम् । कथं तर्हि 'मदोदग्राः ककुद्मन्तः' इति ?, यवादि-( ग २५० )

---

तमः । तत्रापि अल्पप्राणकस्य णस्य अल्पप्राणक उकारो रेफश्च स्थानी अन्तरतमः । एवमान्तरतम्यपरीक्षायां बाह्यप्रयत्नसाम्यस्यैवापेक्षितत्वेन तत्साम्यस्य रेफे डरूपस्पर्शवर्णे च सत्त्वेन 'स्थानप्रयत्नाभ्यां स्पर्शे ( स्थानिनि ) चरितार्थो णकाररूपोऽयं विधी रेफे न प्रवर्तते' इति मूलोक्तिरसङ्गतेति चेन्न, 'उरण्' सूत्रभाष्ये अकाररूपगुणादेशस्य ऋकाररूपस्थानिनश्चान्तरतम्यविचारे 'अनान्तर्यमेवानयोरान्तर्यम्' 'पूर्वपरयोरेकादेशप्रकरणे अगुणस्य स्थानी नोपलभ्यते, ऋकाररूपस्थानिनो गुणः अन्तरतमो नोपलभ्यते' इत्यान्तरतम्याभाव एव अकारऋकारयोरान्तरतम्यमादाय ऋकारस्थाने अकारो गुणः साधितः ।

तत्र तत्र स्थानार्थगुणप्रमाणकृतचतुर्विधान्तर्यस्यैव भाष्यकारादिभिरुक्ततया 'अनान्तर्यमेवानयोरान्तर्यम्' इत्यान्तरतम्योक्तिविरोधवारणाय प्रमाणपदमान्तर्यमात्रस्य संग्राहकमिति शब्दरत्नोक्तदिशा स्पृष्टप्रयत्नको णकारः स्पृष्टप्रयत्नकडरूपस्पर्शे स्यान्न तु ईषत्स्पृष्टप्रयत्नके रेफे, इति स्थानप्रयत्नाभ्यामित्याद्युक्तेः सप्तम्यन्तपाठे युक्तत्वात् । मूर्द्धस्थानतः, बाह्यप्रयत्नाभ्यन्तरप्रयत्नश्चान्तरतमे डरूपे स्पर्शे चरितार्थः = लब्धप्रयोजनको णकारानुनासिकरूपो विधी रेफे न प्रवर्तते, आभ्यन्तरप्रयत्नभेदादित्यर्थः ।

नन्वेवं सप्तम्यन्तपाठस्वीकारे 'इको यणचि' इति यणादेशः स्थानकृतान्तरतम्येन मात्राद्वयन्यूनकालकत्वरूपप्रमाणकृतान्तरतम्येन च ह्रस्वस्य इकः स्थाने एव यण् स्यान्न तु दीर्घस्येक इति 'सुद्ध्युपास्यः' इत्यादीनामसिद्धिः, स्त्रादिभ्य इत्यादिनिर्देशासङ्गतिश्चेति चेन्न, 'अनुस्वारस्य ययि परसवर्णः' (८-४-५८ ) इति सूत्रे पर इति लुप्तषष्ठीकं पृथक्पदम् । ततश्च सवर्णपदमत्रापकृष्यम् । तथा च यरः स्थाने सवर्णोऽनुनासिको भवतीत्यर्थेन 'रेफोष्मणां सवर्णा न सन्ति' अस्य 'अनुनासिका' इति शेषः । तथा च रेफरूपयरोऽनुनासिकसवर्णाभावान्न 'चतुर्मुखः' इत्यत्रानुनासिकादेशः । तदुक्तम्—'हयवरट्' इति सूत्रे भाष्ये 'रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधो न वक्तव्यः । रेफोष्मणां सवर्णा न सन्तीति' । एतेन अनुनासिकविधायके सवर्णपदापकर्षः सूचितः । 'यरो ञमि ञम् वा' इति तु न सूत्रितम् 'यदेतनूँ इति पठति' 'यदेतनाँ श्रिनोषि' इत्यादावनुनासिकेऽचि अनुनासिकानापत्तेः । 'यरोऽनुनासिके ञम्वा' इत्यपि न, दध्याँ श्रिनोषि, कमलाँ श्रिनोषि, मध्वाँ श्रिनोषि' इत्यादौ यँ-लँ-वँरूपानुनासिकादेशानापत्तेः । दध्यत्र, मध्यत्र, इत्याद्युदाहृतवता भाष्यकृता 'न पदान्ता हलोऽणः सन्ति' इत्युक्त्या अवसानकार्यभाजामेव अण्रूपहलामनभिधानसूचनान्नैतेषामनभिधानम् ।

'प्रत्यये भाषायां नित्यम्' वार्तिकमिदम् । वेति विहाय 'यरोऽनुनासिके' इति सूत्रं पदान्तादिति च सम्बध्यते । भाषा=अवैदिकप्रयोगः, भाष्यते व्यवहर्तृभिरिति व्युत्पत्तेः । पदान्तस्य यरोऽनुनासिकादौ प्रत्यये परे नित्यमनुनासिकः स्याद् भाषायामित्यर्थः । तन्मात्रमिति—तत्प्रमाणमस्येत्यर्थे 'प्रमाणे द्वयसच्' ( ५-२-३७ ) इति सूत्रेण मात्रच्प्रत्यये रूपम् । चिन्मयमिति—चिच्छब्दस्य प्रमाणवाचकत्वाभावाद् 'चिन्मात्रम्' इत्यपपाठः । 'चिन्मयम्' इति साधु । 'तत्प्रकृतवचने मयट्' (५-४-२१) इत्यत्र 'तद्' इति वाक्यभेदेन क्वचित्प्राचुर्याभावेऽपि मयडर्थम् । तेन स्वार्थे मयट् । अत एव 'चिन्मयं ब्रह्म' इत्यपि संगच्छते । एवार्थकस्य मात्रशब्दस्य 'मयूरव्यंसकादयश्च' ( २-१-७२ ) इति नित्यसमासो वक्ष्यते । तस्य प्रत्ययत्वाभावाद् 'यरोऽनुनासिकः' इति वैकल्पिकोऽनुनासिकः ।

कथं तर्हीति—यरनुनासिकादौ प्रत्यये परे नित्यमनुनासिकस्तर्हि कथम्—

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।<br>
लोलालेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ इति

गणे दकारनिपातनात् ।

तोर्लि [ ८-४-६० ]

तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाल्ँ लिखति । नकारस्यानुनासिको लकारः ।

उदः स्थास्तम्भोः पूर्वस्य [ ८-४-६१ ]

---

कालिदासः, मतुपः प्रत्ययत्वेन तस्मिन्परे नकारस्य नियत्वादित्याक्षेपः । परिहरति—यवादिगण इति—'ककुद्मन्तः' इत्यस्य 'झयः' 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' 'झयवादिभ्यः' इति पञ्चुदासाय ( ८-२-९ ) इति मतोर्मस्य प्राप्तवत्वाभावाय यवादिगणे पाठः । तत्र यद्यनुनासिक इष्टः स्यात्तदा 'ककुन्मान्' इति नकारविशिष्टे पठितव्ये दकारघटितनिर्देशात् 'अन्यथाप्राप्तस्य आचार्य्येणान्यथाकरणरूपनिपातनान्नकाराभावः' इति भावः ।

परन्तु यदि 'ककुद्मत्' इति विशिष्टस्य पाठस्तदा निपातनं युक्तम् । तत्र तु 'यव–दल्मि, उर्मि, इत्येवं प्रातिपादिकमात्रं पठितम् । तथा च 'ककुद्' इति प्रातिपदिकमात्रस्य पाठे निपातनस्य नास्त्यवसर इतीदमसङ्गतमिति चेदुच्यते 'यचि भं तसौ मत्वर्थे' इति पठ्यते । तत्र झरो झरीति लोपेन नकारात्पूर्वं दकारोऽपि प्रक्षिप्यते । स 'द्' इति पृथक् प्रथमान्तम् । तदोः समाहारद्वन्द्वानन्तरमितरेतयोगद्वन्द्वो वेति न द्विवचनानुपपत्तिः, इति दान्तस्यापि भत्वेनानुनासिकादेशाभावः । इदमपि चिन्त्यम्, दकारप्रक्षेपस्य भाष्यानुक्तत्वात् ।

यत्तु यवादौ 'ककुद्' इति दकारः पठ्यते । तत्र भावानुष्ठानस्य धर्माधिक्यफलकत्वेन 'वाऽवसाने' इति चर्वस्य वैकल्पिकत्वेऽपि धर्माधिक्याय पाणिनिना चर्त्वे कर्तव्येऽपि तदकरणेन मत्वर्थप्रत्ययसमभिव्याहारेऽनुनासिकाभावो निपात्यते, तदपि न युक्तम्, त्यदादिष्वपि तथात्वापत्तौ 'तत्कुलम्' इत्यादौ चर्वानापत्तेः । केचित्तु मतुप्समभिव्याहारे तस्यावश्यम्भावाद् गणे 'ककुन्' इत्येव पठितव्ये दकारपाठेन अनुनासिकाभावो निपात्यते इति । किञ्च प्रायः सर्वत्र गणपाठेऽभेदानुकरणमेव । अत एव तत्र वृत्त्या अर्थानुपस्थापकत्वात्प्रातिपदिकसंज्ञाया अभावेन सुपोऽभावे न पदत्वप्रयुक्तं गणपाठे कार्य्यम् । तथा च 'ककुद्' इत्यत्र पदत्वाभावेन चर्त्वाप्राप्त्या तत्र दकारनिपातनं चिन्त्यम् ।

तस्माद् रघुवंशे 'ककुन्मन्तः' इत्येव पाठ उचितः, तावताऽपि क्षतिविरहात् । दकारघटितपाठस्तु लेखकप्रमादात् । अत एव मल्लिनाथेनापि तत्र यवादित्वाद्वत्वाभाव इत्येवोक्तं न तु निपानाद् नत्वाभाव इत्यपीत्युपाध्यायाः ।

'तोर्लि' इति । 'अनुस्वारस्य ययि' इत्यतः परसवर्ण इत्यनुवर्तते । तोरिति स्थानषष्ठी । तथा च लकारे परे तवर्गस्य स्थाने परसवर्ण आदेशः स्यादित्यर्थस्तदाह—तवर्गस्येति । तल्लय इति—स चासौ लयश्च, तस्य लय इति वाऽर्थे समासः । 'तद् लयः' इति स्थितौ दकारात्परो यो लकारस्तस्य सवर्णः ईषत्स्पृष्टरूपप्रयत्नसाम्येन लकार एव, न तु तवर्गादयः, प्रयत्नभेदादिति दस्य स्थाने लः परसवर्ण आदेशः । लयो नाशः । विद्वाल्लिँखतीति—अत्र नस्य अनुनासिकत्व गुणकृतान्तर्य्येण स्थानेन च परस्य लस्य सवर्णो योऽनुनासिक ल्ँ इति स एवादेशः । तदाह—नस्येति ।

'उदः स्थास्तम्भोः पूर्वस्य' इति । अत्र 'अनुस्वारस्य ययि' इत्यतः सवर्ण इत्यनुवर्तते । न च 'सन्नियोगशिष्टन्यायेन' परसवर्ण इत्यस्यैवानुवृत्तिः स्यान्न त्वेकदेशस्येति वाच्यम्, पर इत्यस्य लुप्तषष्ठीकत्वेन पृथक्त्वात्, एकदेशे स्वरितत्वप्रतिज्ञाबलाद्वा सवर्णपदमात्रानुवृत्तौ बाधकाभावाच्च ।

उद् इति पञ्चम्या 'तस्मादित्युत्तरस्य' इति परिभाषया अव्यवहितोत्तरयोरित्युपतिष्ठते । 'अलोऽन्त्यस्य' इत्यस्यापवादभूतया—'आदेः परस्य' इति परिभाषया स्थास्तम्भोरादेरित्यस्य लाभः । तथाच 'उदः परयोः स्थास्तम्भोरादिर्यो वर्णस्तस्य स्थाने पूर्वदकारस्य सवर्णो यः स आदेश इत्यर्थः । तदाह—

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। 'आदेः परस्य' (सू ४४)। उत्थानम्। उत्तम्भनम्। अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य 'झरो झरि' इति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणम्, न तु 'खरि च' इति चर्त्वम्, चर्त्वंप्रति थकारस्यासिद्धत्वात्।

---

उदः परयोरिति। उत्थानमिति—उत्पूर्वकात् 'ष्ठा गतिनिवृत्तौ' इत्यतो भावे ल्युटि रूपम्। उत्तम्भनमिति—ष्टभि प्रतिबन्धे, रोधनार्थे सौत्रः ष्टम्भु इति। धात्वादेः षः सः' इति षस्य सकारे 'षात् टवर्गस्तवर्गजः' इति वृद्धोक्त्या 'ष्टुना ष्टुः' इति निष्पन्नठकारस्यापि, निमित्तापाये नैमित्तिकस्यापि ठकारस्य निवृत्त्या थकारश्रवणम्। अत्र 'ष्टभि प्रतिबन्धे, ष्टम्भु रोधने, उभयोरपि मकारोपधत्वाद् ग्रहणम्।

ननु 'उद् स्थानम्, उद् स्तम्भनम्, इत्यत्र सकारस्य स्थाने पूर्वसवर्णादेशे कर्त्तव्ये पूर्वो दकारः तत्सवर्णाश्च तथदधनाः पञ्चापि दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च न लृकारसकारौ, स्थानसाम्येऽपि विवृतमुष्मणां स्वराणाञ्चेत्युक्त्या विवृतप्रयत्नभेदात्। नापि 'लृति सवर्णे लृ वा' इति विहितलृकारः, तस्येषत्स्पृष्टत्वात्। एवञ्च सकारस्य स्थाने पूर्वनिमित्तभूतदकारसवर्णाः पञ्चापि तथदधना आदेशाः प्राप्नुवन्ति। स्थानीभूतसकारेण सह स्थानकृतान्तर्य्यस्य पञ्चस्वपि दकारसवर्णेषु सत्त्वात्। आभ्यन्तरप्रयत्नत आन्तर्य्यं तु केषुचिदपि दकारसवर्णेषु नास्ति, सकारस्य विवृतत्वात् तवर्गस्य च स्पृष्टत्वेन भेदात्। अतो बाह्यप्रयत्नत आन्तरतम्यमाह—अत्राघोषस्येति—खयः, शरश्चाघोषप्रयत्नकाः। तथा च तस्यान्तरतमौ तकारथकारौ। शलश्च महाप्राणाः, वर्गचतुर्थधकारोऽपि महाप्राण इति अघोषस्य महाप्राणस्य सस्याघोषमहाप्राणस्थकार एव दकारसवर्ण आदेशः। अघोषस्येत्युक्त्या श्वासवतो विवारवतश्चेत्युक्तप्रायम्; त्रयाणां समनियतत्वात्। स्थानीभूतः सकारः, श्वासाघोषविवारमहाप्राणरूपप्रयत्नचतुष्टयवान्, थकारोऽप्युक्तप्रयत्नचतुष्टयवान्, अन्ये तदधनास्तु नोक्तप्रयत्नचतुष्टयवन्त इति थकार एवादेशो न तु तकारादिः। उदो दकारस्य 'खरि च' इति चर्त्वम्। थस्य तु नचर्त्वम्, असिद्धत्वात्। तथा चैकतकारं द्वियकारं चैकं रूपम् 'उत्थ् थानम्' इति। झरो झरीति थलोपे एकतकारमेकथकारञ्चैकम् 'उत्थानम्' इति। एवम् द्वितकारमेकथकारमेकम्।

'उत्थ्तम्भनम्' इति। झरो झरीति लोपे द्वितकारमेकम् 'उत्तम्भनम्' इति। भाष्यकारव्याख्याक्रमदर्शनेन 'अनुस्वारस्य ययि, वा पदान्तस्य, तोर्लि, उदः स्था, झयो हो, शश्छो, झलां जश्, अभ्यासे चर्, खरि च, वाऽवसाने, अणोऽप्रगृह्यस्य, सूत्राणां क्रमपक्षे 'खरि च' इत्यस्य दृष्टथा 'उदः' इति थस्य नासिद्धत्वम् इति थस्य चर्त्वे 'उत्त्थानम्' इत्येकथं द्वितं रूपम्। अत एव 'उत्पूर्वस्कन्दे रोगे उपसंख्यानम्' उदः परस्य स्कन्दे रोगे पूर्वसवर्णादेश इत्यर्थकस्य वार्तिकस्योदाहरणे 'उत्त्कन्दो रोगः' इत्यत्र तकारद्वयमुक्तं भाष्ये। अन्ये तु तक्रकौण्डिन्यन्यायेन 'उदः' इति सूत्रं चर्त्वापवादः। तथा चापवादात्पूर्वम् उत्सर्गशास्त्रं न प्रवर्त्तते सुड्विषये तुड्वत्। एवञ्च थस्य सिद्धत्वेऽपि चर्त्वं न स्यात्। अतः थकारद्वयघटितमेव रूपं साध्वित्याहुः। न च झरो झरीति थलोपः, सवर्णपरत्वाभावात्। न च झलो झलीति सलोपे उत्थानमित्यादेः सिद्धया 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रमेव व्यर्थमिति वाच्यम्, पक्षे तकारद्वय-थद्वयान्यतरघटितरूपार्थम्, 'सङिति वक्तव्यम्' इति वार्तिकेन झलादौ प्रत्यये एव तत्प्रवृत्तेश्च सूत्रस्यावश्यकत्वात्।

उदस्थात्, इत्यादौ तु नास्याः प्रवृत्तिः, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया पञ्चम्यन्तार्थस्य निर्दिश्यमाने एव साक्षादन्वय इति सिद्धान्तेन उदोऽव्यहितपरयोर्निर्दिश्यमानयोः स्थास्तम्भोरेव पूर्वसवर्णादेशविधानेन यदागमपरिभाषया, 'येन विधिस्तदन्तस्य' इत्यनेन चावोधितो यः स्थानषष्ठ्यांप्रकृतिमन्योपस्थितिविषयः स एव निर्दिश्यमानः। अन्यथा, इति तु यदागमपरिभाषा-

## झयो होऽन्यतरस्याम् [ ८-४-६२ ]

झयः परस्य हस्य पूर्वसवर्णो वा स्यात्। घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः । वाग्घरिः, वाग्हरिः ।

## शश्छोऽटि [ ८-४-६३ ]

पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । दस्य श्चुत्वेन जकारे कृते ।

## खरि च [ ८-४-५५ ]

खरि परे झलां चरः स्युः। इति जकारस्य चकारः। तच्छिवः, तच्शिवः ।

---

बोधित एवेति न निर्दिश्यमानः। यश्च 'स्था' इति निर्दिश्यमानः स उदः अव्यवहितपरो नास्तीति न पूर्वसवर्णः ।

'झयो होऽन्यतरस्याम्' इति । झय इति पञ्चम्यन्तम्, ह इति षष्ठ्यन्तम्, 'नाज्झलौ' इति निर्देशात् । 'उदः स्था' इत्यतः पूर्वस्येति, अनुस्वारस्य ययि, इत्यतः सवर्णस्येति चानुवर्तते । 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येति लभ्यते । अन्यतरस्यामिति च विकल्पार्थकमव्ययम् । तथा च झयः परस्य हस्य स्थाने झयो यः सवर्णः स आदेशो वा स्याद् इत्यर्थस्तदाह--झयः परस्येति ।

वाचां हरिर्वाग्घरिः, वचने सिंह इत्यर्थः, न कुतश्चिद् बिभेतीति भावः। 'वाच् हरिः' इत्यत्र चस्य कुत्वे जश्त्वे च हकारात्पूर्वो गकारस्तस्य पञ्च सवर्णाः कखगघङा इति । स्थानत आन्तर्य्येण पञ्चापि प्राप्ताः । आभ्यन्तरप्रयत्नकृतमानन्तर्य्यन्तु हस्य कुत्रापि कवर्गे नास्ति, हस्य विवृतत्वात् कवर्गस्य स्पृष्टत्वेन भेदात्। अतः बाह्यप्रयत्नतो व्यवस्थामाह—घोषवत इति— पूर्वसवर्णस्य स्थानीभूतो हकारः 'कण्ठमन्ये तु घोषाः स्युः' इत्युक्त्या 'शलश्च महाप्राणाः' इत्युक्त्या च घोषसंवारनादमहाप्राणरूपयत्नचतुष्टयवान्, तादृशयत्नचतुष्टयवांश्च घकार एव पूर्वसवर्ण इति हस्य स्थाने स एवादेश इति 'वाग्घरिः' इति सिद्धम् । तदाह—घोषवत इत्यादिना । पूर्वसवर्णस्य वैकल्पिकत्वेन तदभावे 'वाग्हरिः' इति ।

'शश्छोऽटि' इति । अनुवृत्तझय इत्यस्य पञ्चम्यन्ततया श इति षष्ठ्यन्तम् । अन्यतरस्यामिति, 'न पदात्' इत्यतो मण्डूकप्लुत्या पदान्तादिति चानुवर्तते । तदाह—झयः परस्येति । पदान्तादिति किम्—मध्वश्चोतन्त्यभितो विरप्शम्, विरप्शी, विपूर्वकाद्रपेरौणादिकौ श-शिनौ प्रत्ययौ । यदि श-शिनिप्रत्ययान्तस्य छान्दसत्वान्न दोष इत्युच्यते तदा चक्षिङः ख्शादेशे ङिति 'चक्शौ, चक्शे' इत्यादौ छत्वाभावः फलं बोध्यम् ।

तच्छिव इति—स चासौ शिवश्चेति, तस्य शिव इति, तत् शिवं कल्याणं यस्येति वा विग्रहे समासः। तद् शिव इति स्थितौ दस्य श्चुत्वेन जकारे तस्य चकारं कर्तुं सूत्रमाह—

'खरि च' इति । झलां जश् झशि इत्यतो झलामिति, 'अभ्यासे चर्च' इत्यतः चर् इति चानुवर्त्तते । तदाह—खरि परे इति । चर्त्वं प्रति छत्वस्यासिद्धत्वात्पूर्वं चर्त्वेन चकारे कृते छत्वम् । भाष्यसम्मताष्टाध्यायीपक्षे तु छत्वं प्रति चर्त्वस्यासिद्धत्वात्पूर्वं छत्वं ततश्चर्त्वम् ।

चर्त्वे कृते श्चुत्वमिति तु न, श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात् । यत्तु (न मुने) इत्यत्र न इत्येको योगः। पूर्वं प्रति कश्चित्परमसिद्धं नेत्यर्थः । तेन श्चुत्वं प्रति चर्त्वस्यासिद्धत्वं न स्यादित्याशयेन चर्त्वे श्चुत्वमित्युक्तिरिति तन्न, असिद्धत्वेऽपि लक्ष्यसिद्ध्या अगतिकगतिकेन योगविभागेनासिद्धत्वाभाव-बोधने मानाभावात्, योगविभागस्य भाष्येऽदर्शनाच्च । 'तच्छिवः' इत्यत्र 'चोः कुः' इति कुत्वं तु न, कुत्वं प्रति श्चुत्वस्यासिद्धत्वात् ।

'छत्वममीति वाच्यम्' (वा ५०२५) तच्छ्लोकेन, तच्श्लोकेन । अमि किम्, वाक् श्च्योतति ।

## मोऽनुस्वारः [ ८-३-२३ ]

मान्तस्य पदस्यानुस्वारः स्याद्धलि । 'अलोऽन्त्यस्य' ( सू ४२ ) । हरिं वन्दे । 'पदस्य' इति किम्–गम्यते ।

ननु 'तच्छ्लोकेन' इत्यादौ छत्वानापत्तिः, अट्परत्वाभावादत आह–छत्वममीति–'शश्छोऽटि' इति सूत्रे अटीति निष्कास्य 'शश्छोऽमि' इति वक्तव्यमित्यर्थः । स चासौ श्लोकश्च, तस्य श्लोक इति वा विग्रहे समासः । 'तद् श्लोकः' इति स्थितौ श्चुत्वे चर्त्वे लकारस्याटि पाठाभावात् छत्वाप्राप्तावमि तत्पाठेन छत्वसिद्धिः । तच्छ्लोकेनेत्यस्य 'आनन्दो जायते' इत्यादि शेषः । श्लोकः पद्यं यशो वा, तत्पद्येन, तद्यशसा वा आनन्दो भवतीत्यर्थः । अमि किम्, 'वाक् श्चोतति' अत्र चस्य अम्प्रत्याहारे पाठाभावेऽम्परत्वाभावान्न छत्वम् । अत्र कुत्वं भवति चकारस्य वच धातौ स्वभावसिद्धत्वेनासिद्धत्वाभावात् । वाक्श्चोतति = अमृतं स्रवतीत्यर्थः । मधुरेयं वार्णाति यावत् ।

'मोऽनुस्वारः' इति । 'अपदान्तस्य मूर्द्धन्यः (८।३।५५) इत्यतः प्राक् 'पदस्य' (८-१-१६) इत्यधिकृतमत्र सम्बध्यते । तद्विशेषणत्वेन य इति षष्ठ्यन्तम् । 'हलि सर्वेषाम्' इत्यतो 'हलि' इति चानुवर्तते । 'येन विधिः' इति सूत्रेण म इति मान्तस्य संज्ञा । तदाह—मान्तस्य पदस्येति । अलोऽन्त्यस्येति—अस्य 'उपतिष्ठते' इति शेषः । तथा च मान्तस्य पदस्य योऽन्त्योऽल् तस्य स्थानेऽनुस्वारः स्याद्धलि परे इत्यर्थः । पदान्तस्य मस्यानुस्वारो भवतीति फलितम् । 'हरिं वन्दे' इति । वदि अभिवादनस्तुत्योः । अहं हरिं = विष्णुं वन्दे = स्तौमि नमामि वेत्यर्थः ।

गम्यते इति – 'गम्लृ गतौ' इत्यतः कर्मणि 'लः कर्मणि च' इति लटि । 'तङ् भावकर्मणोः' इति लस्य तङादेशे कर्मवाचिनि सार्वधातुके परे 'सार्वधातुके यक्' इति यकि 'गम्यते' अत्र 'सुप्तिङन्तं पदम्' इति पदसंज्ञायामेकारः पदान्तः । मकारस्य पदान्तत्वाभावान्नानुस्वारः ।

ननु 'मोऽनुस्वारः' इत्यनेन 'पदस्य' इत्यस्यासम्बन्धे यदि अपदान्तस्य मस्यानुस्वारः स्यात्तदा 'नश्चापदान्तस्य' इत्यत्र 'सजातीयं सजातीयो निवर्तते' इति न्यायेन 'नः' इति स्थानिनं दृष्ट्वा 'मः' इति स्थानिनोऽननुवृत्तौ प्राप्तायां चग्रहणं मकारानुकर्षणार्थं कृतं तद्व्यर्थम्, 'आक्रम्स्यते' इत्यत्रापदान्तस्य मस्यानेनैवानुस्वारे सिद्धे 'सिद्धे सत्यारम्भमाणो विधिर्नियमाय कल्पते' इति न्यायेन अपदान्तस्य मस्यानुस्वारश्चेत्तर्हि झल्येवेति नियमार्थं भविष्यति इति 'गम्यते' इत्यत्र झल्परत्वाभावादपदान्तस्यानुस्वारो न भवेदिति पदस्येति व्यर्थमिति चेन्न, झलि मस्य अनुस्वारश्चेत्तर्हि अपदान्तस्यैवेति नियमस्यापि सम्भवेन 'हरिं स्मरति' इत्यादौ झलि परे पदान्तस्य मस्यानुस्वारानापत्तेः ।

न च 'झलि परे मस्यानुस्वारश्चेत्तर्हि अपदान्तस्यैवेति'नियमे 'हे मपरे वा' इत्यस्य वैयर्थ्यापत्तिः । 'किं ह्मलयति' इत्यादौ किमो मस्य पदान्तत्वेन झल्परत्वेन च नियमे नैवानुस्वारवारणादिति तत्सामर्थ्याद्विपरीतनियमो न स्यादिति वाच्यम्, विपरीतनियमे 'किम् ह्मलयति' इत्यादौ 'हे मपरे वा' इत्यस्य फलाभावेऽपि 'प्रशाम् ह्मलयति' इत्यादौ 'मो नो धातोः' इत्यनेन प्राप्तनत्ववारणाय 'हे मपरे वा' इत्यस्य चारितार्थ्यात् ।

न च क्विबन्ते राजतौ परे समो मस्यानुस्वारो न स्यादित्यर्थके 'न राजि समः क्वौ' इति न्यासेन सिद्धे मग्रहणम् 'हे मपरे वा' इत्यत्रानुवृत्त्या अनुस्वारस्य, 'मो नो धातोः, इति नत्वस्य च बाधनार्थम् । विपरीतनियमे तु तत्रानुस्वारस्य प्राप्तिरेव नास्ति इत्युभयबाधनार्थं कृतं मग्रहणं व्यर्थीभूय विपरीतनियमं वारयेदिति वाच्यम्, 'षम अवैकल्ये' इत्यतो क्विपि सम् इत्यनेन राट् शब्दस्य समासे सम्राट् इत्यत्र विपरीतनियमेऽपि प्राप्तयोर्नत्वानुस्वारयोर्बाधनाय 'मो राजि समः क्वौ'

नश्चापदान्तस्य झलि [ ८-३-२४ ]

नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । 'झलि' किम् —मन्यते ।

---

इत्यत्रैव मग्रहणस्य चारितार्थ्येन उत्तरत्र मग्रहणेनोभयबाधने मानाभावात्, सूत्रस्य तु नत्वमात्रबाधनेन चारितार्थ्यात् ।

न च 'हे मपरे' इति सूत्रस्य नत्वमात्रबाधफलकत्वे 'मो नो धातोः' इत्यतः परं 'हे मपरे वा' 'नपरे' इति न्यासेन मस्य वा नविधानेन 'नपरे' इत्यत्र 'मो नो धातोः' इत्यतो नग्रहणानुवृत्त्यैव सिद्धे नग्रहणाकरणलाघवेन सिद्धौ 'मो राजि' इत्यतः परम् 'हे मपरे वा, नपरे नः' इति नकरणरूपगौरवग्रस्तन्यासकरणसामर्थ्याद्विपरीतनियमो न स्यात् ।

नचैवं न्यासे 'हे मपरे वा' 'नपरे' इत्यनयोः 'मो नो धातोः' (८-२-६५) इत्यतः परं पाठे 'ङ्णोः कुक् टुक् शरि' ( ८-३-२८ ) इत्यत्र वा इति नानुवर्तेतेति वाच्यम्, 'मो राजि' इत्यनन्तरम् 'ङमो ह्रस्वादचि' 'मय उञो वो वा' 'ङ्णोः कुक्' इति न्यासेन मय इत्यतो वा इत्यनुवृत्त्या सिद्धेरिति वाच्यम्, 'वेश्म् झलयति' इत्यत्र संयोगान्तलोपवारणाय 'मो राजि समः' इत्यनन्तरम् 'हे मपरे' इत्यस्य मस्य मविधानस्यावश्यकत्वेन गुरूभूतन्यासेन विपरीतनियमस्य वारयितुमशक्यत्वात् ।

न च झल एव संयोगान्तलोपेन तद्बाधनाय मविधानं व्यर्थमिति वाच्यम्, 'यणः प्रतिषेधो वाच्यः' इत्यस्य संयोगान्त इत्यनुवृत्त्या आरम्भप्रत्याख्यानयोः फलैक्याय 'संयोगान्तस्य लोप इत्यस्य वाक्यभेदेन क्वचिद् झत्वोऽपि लोपस्यावश्यकत्वात् । तस्माद् विपरीतनियमे 'हरिं स्मरति' इत्यादौ दोषवारणाय पदस्येत्यावश्यकम् ।

वस्तुतस्तु 'पदस्य' इत्यधिकारस्य पूर्वत्र परत्र चावश्यकत्वादत्रासम्बन्धकल्पनया प्रासदोषवारणाय ज्ञापकेनानेकक्लिष्टकल्पनापेक्षयाऽत्र सम्बन्धस्यैव ज्ञापनमुचितम् । अन्यथा वराटकार्थे पर्वतखननन्यायापातो दुर्वार इत्युपाध्यायाः ।

'नश्चापदान्तस्य झलि' इति । 'न' इति स्थानिनं दृष्ट्वा 'मः' इति नानुवर्तेतातश्चेनानुकृष्यते 'मः' इति । विधेयाकाङ्क्षायाम् 'अनुस्वारः' इत्यनुवर्त्तते । पदान्तभिन्नस्य नस्य मस्य चानुस्वारः स्याज्झलि परे इत्यर्थः ।

यशांसीति—यशश्शब्दाज्जसि तस्य 'जश्शसोः शि' इति शौ, 'नपुंसकस्य झलचः' इति नुमि 'यशन्स् इ' इति स्थितौ 'सान्तमहतः' इति दीर्घे 'यशान्स् इ' इति जाते नस्यानुस्वारे 'यशांसि' इति ।

आक्रंस्यते इति—आङ्पूर्वकात् 'क्रमु पादविक्षेपे' इत्यतः कर्तरि लृटि 'आङ उद्गमने' इति तस्य तङादेशे स्यप्रत्यये उद्गमनेऽर्थे आङ्पूर्वकः क्रमधातुरात्मनेपदस्य निमित्तमिति आत्मने पदनिमित्तयोरेव स्नुक्रमोरिट् नान्ययोरिति 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति नियमादिडभावे 'आक्रम् स्यते' इति स्थितौ मस्यानुस्वारः । 'आक्रंस्यते' इति सिद्धम्—ऊर्ध्वं गमिष्यतीत्यर्थः ।

झलि किमिति—झलीतिपदं कस्मै प्रयोजनायेत्यर्थः । प्रश्नविषये सर्वत्र 'किम्' इति पदम् 'कस्मै प्रयोजनाय' इत्यर्थेऽव्ययम् । मन्यते इति—इति प्रयोगस्य सिद्धये इत्यर्थः ।

अत्र झल्परत्वाभावान्नानुस्वारः । ननु झल्ग्रहणाभावे 'राजन्' इत्यत्रसाने लोपे देये 'मन्यते' इत्यसङ्गतमिति चेन्न, हलीत्यस्यानुवृत्तेः । न चोपस्थितत्वात् 'गम्यते' इत्येव वक्तव्ये इदमसङ्गतम्, झल्ग्रहणाभावे हलि पदान्तमस्य पूर्वेणापदान्तस्यानेनेत्युभाभ्यां विधाने गौरवेण लाघवात्पूर्वत्र पदस्येत्यननुवर्त्य उभयत्र तेनैव सिद्धेऽत्र च ग्रहणे फलाभावेन तदकरणेन मकारे एतदप्रवृत्तेः, चग्रहणसामर्थ्यादझलि अपदान्तमकारस्य नानुस्वार इति कल्पनाच्च ।

अनुस्वारस्य ययि परसवर्णः [ ८-४-५८ ]

स्पष्टम् । अङ्कितः । अञ्चितः । कुण्ठितः । शान्तः । गुम्फितः ।

'कुर्वन्ति' इत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् ।

---

'अनुस्वारस्य ययि परसवर्णः' इति । स्पष्टमिति—अनुवर्त्यपदान्तरसम्बन्धाभावात्स्पष्टार्थकम् । विवरणमन्तरैव प्रकाशितार्थकमिति यावत् । अत्र 'पर' इति लुप्तषष्ठीकं पृथक्पदम् । अत एव 'उदः स्था' इत्यत्र सवर्णग्रहस्यानुवृत्तिः, 'यरोऽनुनासिके' इत्यत्र अपकर्षश्च सिद्धौ ।

अङ्कित इति—'अकि लक्षणे' इति भौवादिकात्, 'अङ्क पदे लक्षणे च' इति चौरादिकात् अदन्तप्रकृतिकण्यन्ताद्वा कर्मणि क्ते इटि 'निष्ठायां सेटि' इति णेर्लोपे 'अङ्कितः इति । तत्र अकि लक्षणे इत्यस्य इदित्वान्नुमि, 'अङ्क' इति णयन्तस्य 'नकारजावनुस्वारपञ्चमौ झलि धातुषु' इति वृद्धोक्त्या 'अन्क् इतः' इति स्थितौ 'नश्चापदान्तस्य' इति नस्यानुस्वारे तस्यानेनानुस्वारात्पर यः ककारस्तस्य सवर्णः कवर्गः प्राप्नोति । परन्तु स्थानिनोऽनुस्वारस्य नासिकास्थानजत्वेनान्तरतम्यात् ङ् एव परसवर्णो भवति । तदाह—अङ्कित इति—चिह्नितः, गतो वेत्यर्थः ।

अञ्चित इति—'अञ्चु गतिपूजनयोः' इति नोपधः । 'अञ्चेः पूजायाम्' इतीट् । 'नाञ्चेः पूजायाम्' इति निषेधात् 'अनिदिताम्' इति नलोपो न । अत्र श्चुत्वस्यासिद्धतया तस्य 'नश्चापदान्त' इत्यनुस्वारेऽनेन नासिकास्थानसाम्येन परचकारसवर्णो ञकारोऽनुस्वारस्य स्थाने आदेशः । अञ्चित इति—पूजित इत्यर्थः । कुण्ठित इति—कुठि प्रतिघाते इत्यतः क्ते इदित्वान्नुमि इटि तस्य 'नश्चापदान्त' इत्यनुस्वारस्यानेनानुनासिकत्वान्तर्येण परठकारसवर्णो णः । कुण्ठित इति—प्रतिहत इत्यर्थः, निश्चेष्ट इति यावत् ।

शान्त इति—'शमु उपशमे' क्ते 'उदितो वा' इति क्त्वायां विकल्पेट्कत्वात् 'यस्य विभाषा' इति इडभावे 'अनुनासिकस्य क्विझलोः' इत्युपधादीर्घे 'शाम् तः' इति स्थितौ मस्यानुस्वारेऽनेनान्तरतम्यात् नकारः परसवर्णः । प्राप्तशान्तिक इत्यर्थः । यद्वा ण्यन्तशमिधातोः क्ते 'वा दान्तशान्त' इति निपातनादिडभावे णेर्लोपे 'अनुनासिकस्य' इत्युपधादीर्घेऽनुस्वारपरसवर्णे शान्त इति—कृतशान्तिक इत्यर्थः । न च णिलोपस्य स्थानिवत्त्वात् अनुनासिकस्येति दीर्घो न स्यात्, निपातनात् णिलोपस्य परनिमित्तकत्वाभावात्, दीर्घविधौ स्थानिवत्त्वनिषेधात्, दीर्घस्यापि निपातनाद्वा ।

गुम्फित इति—'गुम्फ ग्रन्थे' इति नोपधात् क्ते इटि 'नोपधात्थफान्ताद्वा' १।२।२३ इति क्तस्य कित्त्वनिषेधेन 'अनिदिताम्' इति नलोपाभावे तस्य 'नश्च' इत्यनुस्वारे परसवर्णे मकारे च गुम्फित इति—ग्रथित इत्यर्थः ।

यत्तु तत्त्वबोधिन्याम् 'मस्यानुस्वारे परसवर्णेन मः' इत्युक्तम्, तच्चिन्त्यम् 'गुम्फ्' इत्यत्र धातुपाठे नस्यानुसारे परसवर्णेन निष्पन्नमकारघटितस्यैव पाठेन तस्य मस्य 'नश्चापदान्तस्य' इति उक्त्या असिद्धतया अनुस्वाराप्राप्तेः । मचौपदेशिक एव मकारो न परसवर्णज इति वाच्यम्, मकारस्य लोपाप्राप्त्या 'गुम्फते' इत्यादेरसिद्ध्यापत्तेः, 'शे तृम्फादीनां नुम्वाच्यः' इति वार्तिकवैयर्थ्यापत्तेश्च । तद्धि 'तृम्फति, गुम्फति' इत्यादौ 'अनिदिताम्' इति नलोपेकृतेऽपि मघटितरूपसिद्ध्यर्थम्, मस्यौपदेशिकत्वे तु नलोपाप्राप्त्या तद्रूपसिद्धौ बाधकाभावः ।

कुर्वन्तीति—ननु कृञ्धातोर्लटि झौ 'झोऽन्तः' इति अन्तादेशे 'तनादिकृञ्भ्य उः' इति उप्रत्यये गुणे 'अत उत्सार्वधातुके' इति उकारे यणि च 'न भकुर्छुराम्' इति निषेधात् 'र्वोरुपधायाः' इति दीर्घाभावे 'कुर्वन्ति' इति रूपम् ।

तत्र नस्य 'नश्चापदान्तस्य' इत्यनुस्वारे 'अट्कुप्वाङ्' इति णत्वे च प्राप्ते णत्वस्यासिद्धतया अनुस्वारे परसवर्णे च ने कृते 'अट्कुप्वाङ्' इति णत्वं स्यादिति वाच्यम्, णत्वदृष्ट्या परसवर्णस्यासिद्धतयाऽनुस्वारस्य सिद्धतया च णत्वाप्राप्तेः । तदाह—कुर्वन्तीति । अत्र 'ययि' इति न कर्तव्यम् ।

**वा पदान्तस्य [ ८-४-५६ ]**

पदान्तस्यानुस्वारस्य यथि परे परसवर्णो वा स्यात् । त्वङ्करोषि, त्वं करोषि । सय्यँन्ता, संयन्ता । सव्वँत्सरः, संवत्सरः । यल्ँ लोकम्, यं लोकम् । अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः ।

**मो राजि समः क्वौ । [ ८-३-२५ ]**

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् ।

---

न च 'दंशनम्' इत्यादौ परसवर्णापत्तिः, 'रेफोष्मणां सवर्णा न सन्ति' इति भाष्येण शकारसवर्णाप्रसिद्धेः । न च शकारस्य शकाररूपसवर्ण आदेशोऽस्तु, 'यरोऽनुनासिके' इत्यतः 'अनुनासिकः' इत्यनुवृत्त्या अनुनासिकः 'परसवर्णो भवति' इत्यर्थेन शस्यानुनासिकसवर्णाभावे एव भाष्यतात्पर्य्यंणादोषात् ।

वस्तुतस्तु सूत्रकारमते ईकारशकारयोः सावर्ण्यसत्त्वात् 'दंशनम्' इत्यादावनुस्वारस्थाने शकारसवर्णः ईकारो मा भूदेतदर्थं 'यथि' इत्यावश्यकम् । ननु भाष्यमते 'विवृतं स्वराणाम्' 'ईषद्विवृतमुष्मणाम्' इति प्रयत्नभेदेन ईकारशकारयोः सावर्ण्याभावाद् 'यथि' इति व्यर्थम्, नच तन्मतेऽपि शकारसवर्णशकारादेशवारणाय ययीत्यस्यावश्यकत्वम् । न च अनुनासिकपदानुवृत्त्या शकारः सवर्णो न स्याद्, तदनुवृत्तेर्भाष्यानुक्तत्वात् । न च 'कुण्डं रथेन' इत्यत्रानुनासिकपदाननुवृत्तौ उष्मणां सवर्णाभावेन परसवर्णवारणपरभाष्यासङ्गतिः, शरूपसवर्णसत्त्वादिति वाच्यम्, अनुस्वारपरसवर्णविधायकेऽत्र शास्त्रे 'स्थानेऽन्तरतमः' इति परिभाषोपस्थित्या रेफरूपयरः अनुस्वारस्य स्थानेऽनुस्वारान्तरतमः परसवर्णो भवतीत्यर्थेन उक्तभाष्याद् रेफस्य णकारः सवर्णो नास्ति । यश्च रेफस्य सवर्णो रेफः सोऽनुस्वारस्यान्तरतमो नास्तीति रेफे परे न परसवर्णप्रवृत्तिः ।

एवम् 'दंशनम्' इत्यत्र शकारस्य सवर्णोऽनुनासिको नास्ति, यश्च सवर्णः शकारः सोऽनुस्वारस्यान्तरतमो नास्तीति परसवर्णादेशो न प्राप्नोतीति ययीत्यस्य वैयर्थ्येऽपि अनुनासिकपदानुवृत्तिर्न कर्तव्येत्याशयः ।

'वा पदान्तस्य' 'अनुस्वारस्य ययि पर सवर्णः' इति सूत्रमनुवर्त्तते । तदाह—पदान्तस्येति । 'त्वम् करोषि' इति स्थितौ मस्यानुस्वारे अनुस्वारस्यान्तरतम्यान्ङकारः परसवर्णः । परसवर्णाभावे 'त्वं करोषि' इत्यादावनुस्वार एव । एवमेवानुस्वारस्य स्थाने 'यवलेषु कुचुटुतुपुषु च परेषु क्रमेण यँवँलाँः ङञणनमाश्चानुनासिकाः परसवर्णादेशा भवन्ति । तदभावेऽनुस्वारस्तदाह—'सय्यँन्ता' 'संयन्ता' इत्यादि । संयमकर्त्तेत्यर्थः । सम्पूर्वकयमधातोस्तृचि रूपम् । यल्ँ लोकमिति—पुण्यात्मा यं लोकमिच्छति तं प्राप्नोतीत्यर्थः । 'सव्ँवत्सर इति'—संवसन्ति ऋतवो यत्र स संवत्सरः । 'संपूर्वाच्चित्' ( उ० सू० ३-७२ ) इति संवसतेः सरन् । 'सः स्यार्द्धे' इति सस्य तः । वर्षमित्यर्थः । परसवर्णाभावपक्षे आह—अनुस्वारस्येति । स्वर एव स्वारः 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण् । स्वारमनुगतोऽनुस्वारः स्वराश्रयेणोच्चार्यमाणो वर्णविशेषः ।

'मो राजि समः क्वौ' इति । अत्र 'मः' इति प्रथमान्तम्, षष्ठ्यन्तत्वे 'मोऽनुस्वारः' इत्यनुवृत्त्या सिद्धे 'मः' इत्यस्य वैयर्थ्यापत्तेः 'मोऽनुस्वार' इत्यतो म इति षष्ठ्यन्तमनुवर्तते । सम इति अवयवषष्ठी । 'प्रत्ययग्रहणे' इति परिभाषया क्विबन्त इत्यर्थलाभः । स च राज्ञो विशेषणम् । तदाह—क्विबन्त इति—'न राजि' इति न्यासेन 'समो मस्यानुस्वारो न स्याद् क्विबन्ते राजतो परे' इत्येव वक्तव्ये मग्रहणमनुस्वारादिविकारमात्रबाधनार्थम् । तदुक्तम् 'समो मश्' इति भाष्ये 'मकारस्य मकारवचनसामर्थ्यादनुस्वारादयो बाध्यन्ते' इति । न इत्युक्तावनन्तरत्वादनुस्वारस्यैव निषेधः स्यात् आदेशान्तरं तु स्यादेव । म इत्युक्त्या 'मो नो धातोः' इति नत्वमपि बाध्यते । न च 'समः' इत्यनेन प्रतिपदोक्तत्वात्प्रसिद्धत्वाच्च उपसर्गस्यैव समो ग्रहणात्त्वाप्राप्त्या 'नत्वमपि बाध्यते' इत्यसङ्गतमिति वाच्यम्, 'हे मपरे वा' इत्यत्रानुवृत्त्या 'प्रशाम् शाम्यति' इत्यादौ

सम्राट्।

## हे मपरे वा [ ८-३-२६ ]

मपरे हकारे परे मस्य म एव स्याद्वा। 'ह्मल ह्मल चलने' किम् ह्मलयति, किं ह्मलयति। 'यवलपरे यवला वेति वक्तव्यम्' ( वा ४६०२ )।

## यथासंख्यमनुदेशः समानाम्। [ १-३-१० ]

समसम्बन्धी विधिर्यथासंख्यं स्यात्।

---

प्राप्तनत्वबाधनाय मग्रहणात्। एतेन 'सममाचष्टे' इति णिचि टिलोपे क्विपि 'सम्राट्' इत्यत्रैव नत्वबाधनार्थं मग्रहणमित्यपास्तम्, उपसर्गस्यैव ग्रहणमित्युक्तत्वात्।

सम्राट् इति—अत्र मोऽनुस्वार इति न, मस्य मविधानसामर्थ्यात्। 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम्'। सर्वभूमेरीश्वर इत्यर्थः। यद्वा राजसूयकर्ता, द्वादशराजमण्डलस्येश्वरः, सर्वनृपतीनां शासकः त्रयोऽपि सम्राट्पदवाच्याः। सम्पूर्वात् 'राजृ दीप्तौ' इत्यतः 'सत्सूद्विष' इति क्विपि 'व्रश्च' इति षत्वे जश्त्वे 'वाऽवसाने' इति चर्त्वे रूपम्।

यत्तु 'संज्ञामङ्गमिया अत्रानुस्वारो न स्यादिति व्यर्थमिदं सूत्रमिति तन्न' यत्र कार्ये संज्ञाया निमित्तत्वम्, संज्ञानिमित्तककार्यविधानेन संज्ञा विहन्यते तत्र उपजीव्यविरोधात् कार्यं न भवति। यथा 'रघुनाथः' इत्यत्र नविशिष्टैव संज्ञा। यदि णत्वं स्यात्तदा संज्ञा भज्येत। अतः सन्निपात-विरोधान्न णत्वम्। नात्रानुस्वारः संज्ञानिमित्तक इति सूत्रमावश्यकम्।

हे मपरे वा' इति। 'मोऽनुस्वारः' इत्यतो म इति षष्ठ्यन्तम्, 'मो राजि' इत्यतो म इति प्रथमान्तञ्चानुवर्तते। मः परो यस्मादित्यर्थे 'मपरे' इति बहुव्रीहिः। मात्पर इति तु न, मात्परहकारा-भावात्। 'न राजि समः क्वौ' इत्येव वक्तव्ये मग्रहणमनुवृत्त्या कार्यमात्रबाधनार्थं तेन नानुस्वारः, 'मोनो धातोः' इति नत्वमपि न। तथा च 'ष्टीम आर्द्रीभावे' इति क्विपि 'स्तीम् ह्मलयति' इत्यादौ न नत्वम्। किमिति—यदि किमित्यव्ययं तदा 'कस्मै प्रयोजनाय चलितुं प्रेरयति' इत्यर्थः। ह्मलतेः प्रेरणार्थे णिचि वृद्धौ 'ज्वलह्मलह्मनमामनुपसर्गाद्वा' इति मित्त्वे 'मितां ह्रस्वः' इत्युपधाह्रस्वः। अत्र मस्य म एव न विकारः। यदा किमिति सर्वनाम तदा किं नगरं गमयतीत्यर्थः।

'यवलपरे यवला वा' ( वार्तिकम् ) अत्र म इति षष्ठ्यन्तम्, म इति प्रथमान्तम् 'हे मपरे' इत्यतो हे इति सम्बध्यते। यवलाः परा यस्माद्धकारात् तस्मिन् यवलपरे हे परे यो मस्तस्य म एव वा स्यात्। पक्षे यथाप्राप्तमनुस्वारः, 'मो नो धातोः' इति नत्वञ्च। यवलपरे हे मस्य मो वा इत्युक्तौ यपरे हे मस्य वकारलकारौ, वपरे हे मस्य यलौ लपरे हे यवावपि स्यातामत आह—

'यथासंख्यमनुदेशः समानाम्' इति। संख्याक्रममनतिक्रम्य यथासंख्यम्। पदार्थानतिवृत्तौ अव्ययीभावः। यद्यपि 'संख्यापदमेकत्वादिसंख्यायां प्रसिद्धं तथाऽपि अत्र लक्षणया प्रथमत्वादिक्रम-परम्, यथासंख्यसूत्रसामर्थ्यात्, द्वित्वत्वादिसंख्यावत्सु क्रमस्याऽव्यभिचरितत्वाच्च। मुख्ये संख्यारूपेऽर्थे 'समसंख्यानां विधेयादीनां या संख्या द्विव्यादिरूपा तथा उद्देश्यादिः सम्बध्यते' इत्यर्थे यवलानां क्रमवैपरीत्येन विधानेऽपि त्रिसंख्याकयवलानां त्रिसंख्याकयवलपरहकारैः सम्बन्धो जात एवेति सूत्रवैयर्थ्यम्।

ननु तर्हि 'यथाक्रममनुदेशः' इत्येव कथं नोक्तमिति चेन्न, संख्याद्वारकसाम्यलाभस्येष्टत्वेन क्रमपदनिवेशे तल्लाभेन स्थानप्रयत्नादिनाऽपि साम्यमादाय विधानापत्तेः। न च संख्यापदस्य क्रमे लक्षणायां गणनरूपसंख्याया अबोधेन कथं तेन संख्याद्वारकसाम्यलाभ इति वाच्यम्, शक्यताऽव-च्छेदकारोपेणैव लक्ष्यार्थस्य क्रमस्य बोधेन क्रमे लक्षणायामपि शक्यार्थप्रतीतेरावश्यकत्वात्, शक्यार्थ-प्रतीतिं विना शक्यसम्बन्धरूपाया अपि लक्षणाया अप्रतीतेश्च। प्रतीतो हि शक्योऽर्थः लक्ष्यार्थं गमयतीति नियमात्।

क्रमश्चात्र अपेक्षाबुद्धिविशेषविषयता । तथा हि—द्वित्वादिसंख्योत्पादिका या बुद्धिः सा अपेक्षाबुद्धिरित्युच्यते । सा च प्रकृते यवयोर्द्वित्वोत्पादिका बुद्धिः । य इत्येकः, एतदेकत्वविशिष्टयविशिष्टश्चायमेको वकार इति । एतज्ज्ञानानन्तरम् 'इमौ यवौ द्वौ' इति द्वित्वमुत्पद्यते । अत्र एकत्वनिष्ठप्रकारतानिरूपितविशेष्यता एका यकारे सा प्रकारतासमानाधिकरणा अमुख्या, अपरा प्रकारत्वासमानाधिकरणा वकारे मुख्या । एवम् 'एतद् द्वित्वविशिष्टवकारविशिष्टश्चायमेको लकारः' इति त्रित्वोत्पादिका बुद्धिः । तत्रापि एकत्वनिष्ठप्रकारतानिरूपिता मुख्या विशेष्यता लकारे । एवञ्च एकत्वत्वावच्छिन्नविशेष्यताकबुद्धिर्द्वित्वोत्पादिका । एतत्त्रित्वविशिष्टविशिष्टश्चायमेकः' इति चतुष्ट्वोत्पादिका । द्वित्वाद्युत्पादकापेक्षाबुद्धौ सर्वत्र एकत्वनिष्ठप्रकारतानिरूपिता विशेष्यता मुख्यैव । अनुदेश इति—अनुपूर्वकदिशधातोः पश्चाद्भवज्ञानमर्थः ।

अनुदिश्यतेऽसावनुदेशः, कर्मणि घञ्, पश्चाद्भवज्ञानविषयः पृथगुपस्थितयोः पदार्थयोः सम्बन्ध इत्यर्थः । प्रथमं सम्बन्धिनोरुपस्थितिः । तदनन्तरमनयोः कः सम्बन्ध इति आकाङ्क्षा जायते । अतः सम्बन्धः पश्चाज्ज्ञानविषयत्वेन 'अनुदेश' इत्युच्यते । य आकाङ्क्षाभास्यसम्बन्ध इत्युच्यते । अनुदेशो विधेय इति कश्चित् । समानामिति—तुल्यानामित्यर्थः । तुल्यत्वप्रयोजिका च द्वित्वादिसंख्या । ततः संख्यया तुल्यानामित्यर्थः । यो विशेषणीभूय भासते स सम्बन्धस्य प्रतियोगी । यश्च विशेष्यीभूय भासते स सम्बन्धानुयोगी । यथा 'राज्ञः पुरुषः' इत्यत्र स्वस्वामिभावसम्बन्धस्य राजा प्रतियोगी पुरुषश्चानुयोगी । एवञ्च प्रकृते 'समानाम्' इत्यस्यावृत्त्या तुल्यसंख्याप्रतियोगिकः, तुल्यसंख्यानुयोगिकः, अनुदेशः संख्याक्रममनतिक्रम्य क्रममनुसृत्येति यावद् बोध्यः ।

यवलपर इत्यत्र यवलपरा ह्य, ह्व, ह्लास्त्रयो निमित्तभूताः । यवला विधेयास्त्रयः । तत्र मस्य स्थाने ह्ये परे यः, ह्वे परे वः, ह्ले परे लोऽव्यवहितपूर्वो भवतीत्यर्थः । एवञ्च यवलपरह इत्यस्य मकारेऽन्वयेऽपि परम्परया विधेयेऽन्वयेऽपि यथासंख्यमन्वय उपपाद्यः । वस्तुतस्तु 'यवलपरे' इत्यत्र निमित्तस्य विधेयेऽन्वये विधेयस्य मकारमात्रनिमित्तकत्वेन यत्र कुत्रापि मस्य यवलापत्तिरतः परम्परया समसंख्याकेऽन्वयेऽप्येतत्प्रवृत्तिः स्वीकार्या । अत एव 'स्यतासी' इत्यत्र ऌलुडव्यवहितपूर्वाद्धातोः परौ स्यतासी स्त इत्यर्थेऽपि यथासंख्यमन्वयसिद्धिः । विधेये एव ऌलुटोरन्वये तु यत्र कुत्रापि धातोः स्याद्यापत्तिः । अत्र ह्य इत्येकः, एतदेकत्वविशिष्टह्यविशिष्टश्च ह्व इत्येकः, इति बुद्धौ ह्य इत्यत्र अमुख्या एकत्वनिष्ठप्रकारतानिरूपितविशेष्यता, ह्व इत्यत्र मुख्या विशेष्यता । एवम् य इत्येकः, एतदेकत्वविशिष्टयविशिष्टश्च व इत्येकः, इति विधेयदलेऽपि अपेक्षाबुद्धौ यकारेऽमुख्या विशेष्यता वकारे मुख्या । तथा च द्वित्वजनकापेक्षाबुद्धीयामुख्यविशेष्यतावान् यः, ह्यश्च तयोः पूर्वापरिभावः सम्बन्धः द्वित्वजनकापेक्षाबुद्धिसजातीयविषयतावदनुयोगिकः द्वित्वजनकापेक्षाबुद्धिसजातीयविषतावदनुयोगिकश्च । द्वितीयस्य द्वितीयेन सम्बन्धः द्वित्वजनकापेक्षाबुद्धिसजातीयमुख्यविशेष्यतावदनुयोगिकः, उक्तमुख्यविशेष्यतावत्प्रतियोगिकश्च ।

एवम् तृतीयस्य तृतीयेन सह पूर्वापरिभावसम्बन्धोऽपि त्रित्वजनकापेक्षाबुद्धिसजातीयविशेष्यतावदनुयोगिकः, उक्तविशेष्यतावत्प्रतियोगिकश्च । ननु वकारे मुख्या विशेष्यता ह्वशब्देऽपि मुख्या विशेष्यता प्रथमं विहाय द्वितीयादौ मुख्यविशेष्यतायाः सत्त्वादिति चेन्न, मुख्यविशेष्यताया वकार ह्वयोः सत्त्वेऽपि वकारापेक्षाबुद्धेर्द्वित्वजनकत्वेन ह्वविषयकापेक्षाबुद्धेस्त्रित्वजनकत्वेन तयोः पौर्वापर्यस्य सजातीयविशेष्यतावत्प्रतियोगिकानुयोगिकत्वयोरभावात् ।

वस्तुतस्तु 'य इत्येकः, एतदेकत्वविशिष्टश्च व इत्येकः' इतीमौ द्वौ, इति बुद्ध्यनन्तरम् एतदेकत्वविशिष्टश्च ल इत्येकः' इत्येवमपेक्षाबुद्धिर्ग्राह्या 'द्वित्वविशिष्ट विशिष्टश्चायमेकः' इति बुद्धेः 'अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते' इत्यपेक्षाबुद्धिलक्षणाक्रान्तत्वात् । न च द्वित्वेऽप्येकत्वसत्त्वादनेकै-

कियँ् ह्यः, किं ह्यः । किवँ् ह्वलयति, किं ह्वलयति । किलँ् ह्लादयति, किं ह्लादयति ।

नपरे नः । [ ८-३-२७ ]

नपरे हकारे परे मस्य नः स्याद्वा । किन् ह्नुते, किं ह्नुते ।

ङ्णोः कुक्टुक् शरि । [ ८-३-२८ ]

कत्वावगाहित्वम् 'द्वौ' इत्यादिबुद्धेरप्यपेक्षाबुद्धित्वापत्तेः । समानामिति—सम्बन्धसामान्ये षष्ठी समसंख्याकानामित्यर्थः ।

न तु कर्मणि षष्ठी, 'एचोऽयव' इत्यादौ समसंख्याकविधाने एव प्रवृत्त्यापत्त्या 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यत्र विधेयस्य णमुल एकत्वेन उद्देश्ययोः समसंख्योः प्रवृत्त्यनापत्तेः ।

सम्बन्धसामान्ये षष्ठ्यां तु समसंख्याकप्रतियोगिकः समसंख्याकानुयोगिकश्च सम्बन्धो येन क्रमेण पदज्ञानं पदादुपस्थितिर्वा तेनैव क्रमेण शाब्दबोधविषयो बोद्धव्यः । इयं च परिभाषा । एवञ्च समानां स्थान्यादेशनिमित्तादीनां सम्बन्ध एतस्या लिङ्गम् ।

यत्र विधौ समानां सम्बन्धो निमित्तं तत्र एवोपतिष्ठते । तदाह—समसम्बन्धीति–फलितार्थमिदम् । न तु सूत्रे विधेरुपादानम् । येन क्रमेण पदज्ञानमित्यस्योदाहरणम्—समूलाकृतेति । पदादुपस्थितिरित्यस्योदाहरणम्—'एचोऽयव' इति, 'परस्मैपदानां णल्' इति च । अत्र एच्पदात् परस्मैपदाच्च एकारादीनां तिबादीनां च क्रमेणोपस्थितिर्नत्वत्र सूत्रे क्रमेण पठिताः ।

यथासंख्यमिति—संख्याऽत्र क्रम इत्युक्तम् । प्रथमत्वद्वितीयत्वादिरूप क्रम एव क्रमः फलति । प्रथमस्य प्रथमेन द्वितीयस्य द्वितीयेनेत्येवं सम्बन्धोऽनेन बोध्यते ।

किं ह्य इति—ह्य इत्यव्ययम्, गतदिवसे किमभूदित्यर्थः । 'किम् ह्यः' इति स्थितौ मस्यानुनासिकोयकारः । न च नासिकास्थानसाम्यादनुनासिक एव यँ स्यादिति वाच्यम्, यवलानां विधेयताप्रयोजकत्वेन अनुनासिकानामनुपस्थितेः । न च 'गुणा अभेदकाः' इत्यनेन अनुनासिकानामुपस्थितिः, 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्यस्य सर्वबाधकत्वात् । 'कि य् ह्यः' पक्षे 'किं ह्यः' इति । मस्यानुस्वारः । एवम् 'कि व् ह्वलयति' किं ह्वलयति, किमर्थं गमयतीत्यर्थः । 'ह्वल चलने' । कि ल् ह्लादयति, किं ह्लादयति, कस्मै प्रयोजनाय हर्षयतीत्यर्थः । 'ह्लादि सुखे' हेतुमति णिच् ।

ननु समानां यथासंख्यमन्वये 'ङसिङसोश्च' 'नाडीमुष्ट्योर्ध्माधेटोः' इत्यादावपि यथासंख्यमन्वयापत्तिः 'अथवैतं वक्ष्यामि, यथासंख्यमनुदेशः समानां स्वरितेन' ततः 'अधिकारः' अधिकारश्च भवति स्वरितेनेति ।' इति भाष्याद्यत्र स्वरितत्वं तत्रैव 'यथासंख्यमन्वयस्वीकारात् । व्याख्यानतश्च स्वरितत्वज्ञानम् । 'ङसिङसोश्च' इत्यादौ स्वरितत्वे प्रमाणाभावान्न प्रवृत्तिः । ननु 'स्यतासी लृलुटोः' इत्यत्र यथासंख्यं न स्यात्, लृपदेन लृङः लृटश्चैव ग्रहणेन संख्यया तुल्यत्वाभावादिति चेन्न, उपस्थितिकालिकस्यैव साम्यस्य ग्रहणेन एकस्य लृड्त्यस्योपस्थितेः सत्त्वात् धर्मसाम्यमादायादोषाच्च ।

न चैवम् यथासंख्येन द्वन्द्वानापत्तिरेकधर्मावच्छिन्नेऽन्वयाभावेन साहित्याभावादिति वाच्यम्, यथासंख्यसूत्रारम्भसामर्थ्येन समूहत्वेनान्वयं विधाय पुनर्यथासंख्येनान्वयबोधात् ।

केचित्तु सूत्रमिदं व्यर्थम्, लोके समानाम् 'शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय' इत्यादौ पुरुषप्रयत्नं विनैव यथा संख्यमन्वयस्तथाऽत्रापि सिद्धेः ।

'नपरे नः' इति । नश्चासौ परश्चेति न कर्मधारयः, परग्रहणवैयर्थ्यापत्तेः । नापि पञ्चमीसमासः, तादृशलक्षणाभावात् । नः परो यस्मात्स नपर इति बहुव्रीहिः । वेत्यनुवर्तते । किमिति—कस्मै प्रयोजनायेत्यर्थः । 'ह्नुङ् अपनयने'—अपनयनम् ।

'ङ्णोः कुक्टुक् शरि' ( ८-३-२८ ) 'पदस्य' इत्यधिक्रियते । 'स्कोः' 'हे मपरे वा' इत्यतोऽन्ते वेति चानुवर्तते । कुकटुगिति समाहारः, द्वन्द्वैकवचनम् । यथासंख्यमन्वयः । ङः कुक्, णः टुक् । क इत्, उकार उच्चारणार्थः 'आद्यन्तौ' इति ङ्णोरन्तावयवौ कुक्टुकौ । ङ्णोः पदान्त-

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न । 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' ( वा ५०२३ ) । प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः । सुगण्ठ् षष्ठः । सुगण्ट् षष्ठः । सुगण् षष्ठः ।

डः सि धुट् । [ ८-३-२९ ]

डात्परस्य सस्य धुड् वा स्यात् । षट्त् सन्तः, षट् सन्तः ।

नश्च । [ ८-३-३० ]

नकारान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः, सन्सः ।

शि तुक् । [ ८-३-३१ ]

नस्य पदान्तस्य शे परे तुग्वा स्यात् ।

स्वादवयवावयवः समुदायावयव इति ङ्णोरवयवयोः ककारटकारयोरपि पदान्तत्वेन जश्त्वाशङ्कायामाह-कुक्टुकोरिति चय इति—इदं वार्तिकम् 'नादिन्याक्रोशे' इति सूत्रस्थम् । खठयोर्जश्त्वं न, असिद्धत्वात् । न च 'खरि च' इति चर्त्वम्, द्वितीयादेशविधानवैयर्थ्यापत्तेः । न चापदान्तस्यैव चयो द्वितीयादेशः । अत एव 'उष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्' इति प्रातिशाख्यं संगच्छते इति वाच्यम्, अपदान्तभाजमित्यस्याचर्त्वनिष्पन्नमित्यर्थात् । प्रकृते कुक्टुकोष्टकयोश्चर्त्वानिष्पन्नतया द्वितीयादेशे बाधकाभावात् । न चासिद्धत्वेन जश्त्वाभावे पर्जन्यवल्लक्षणप्रवृत्त्या चर्त्वेऽचर्त्वनिष्पन्नत्वाभावाद् द्वितीयादेशाप्राप्तिः, द्वितीयादेशस्य चर्त्वापवादत्वेन सुड्विषये नुट इव चर्त्वाप्राप्तेः ।

पौष्करसादेरिति—पुष्करे = तीर्थविशेषे सीदतीति क्विपि पुष्करसद् तस्यापत्यं पौष्करसादिः । बाह्वादित्वादिञ् । 'अनुशतिकादीनाञ्च' इति पूर्वोत्तरपदयोराद्यचोर्वृद्धिः । पौष्करसादेराचार्यस्य मते द्वितीयादेशो नान्यस्य मते इति विकल्पः फलति । पक्षे 'प्राङ्क्षष्ठः' सुगण्ट्षष्ठः, इति । प्रकर्षेणाञ्चति = गच्छति, पूजयति वा प्राङ् । अञ्चु गतिपूजनयोः । ऋत्विगिति क्विनि प्रगन्ता, प्रपूजको वा । सुष्ठु गणयतीति 'गण संख्याने' क्विपि सुगण् = सम्यग्गणनकर्तेत्यर्थः ।

'डः सि धुट्' ( ८-४-२९ ) वेत्यनुवर्तते । ड इति पञ्चमी तस्मादिति परिभाषया 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' परत्वात् इति न्यायेन 'सि' इति सप्तम्याः षष्ठीं प्रकल्पयति तदाह—डात्परस्येति । सस्येति तु नोक्तम्, गौरवात् । षट्त्सन्त इति—तस्य थस्तु न, चर्त्वस्यासिद्धत्वेन चयोऽभावात् तुटि, डस्य तुकि वा द्वितीयादेशापत्तिः, तुकि ष्टुना ष्टुः, इति तस्य टादेशापत्तिश्च । धुटि तु टस्य पदान्तत्वेन 'न पदान्तात्' इति निषेधेन न ष्टुत्वम् । 'षड्श्चोतन्ति' इत्यत्र 'शकार जश्शकारश्चे' इत्युक्तया श्चुत्वस्यासिद्धतया धुट् तु न, 'स्तोः श्चुना' इति योगं विभज्य 'न भाभू' इति नेति, 'रषाभ्याम्' इति ण इत्यनुवर्त्यस्तोः श्चुना योगे णत्वं न' इति भाष्योक्तेः ।

'डः सि धुट्' इति भाष्ये 'शश्छोऽटि' झषः पदान्तादित्येवं तत् । इह मा भूत् । 'पुराक्रूरस्य विसृपो विरप्शिन्' इति ।

'नश्च' इति । धुडिति, 'सि' इति, वेति चानुवर्तते । 'नः' इति पञ्चमी, पूर्वत्र सस्य धुड् इत्यर्थस्य निर्णीतत्वेनार्थाधिकारानुरोधात् 'नः' इत्यत्र पञ्चम्या एवोचितत्वात् । 'षट्सन्तः' इत्यत्र चर्त्वे कर्तव्ये लक्ष्ये लक्षणं सकृदेवेति न्यायस्तु नात्र, वर्णभेदेन लक्ष्यभेदात् । अत एव 'न सम्प्रसारणे' इति चरितार्थम् । धुटः परादित्वे 'कुर्वन् त्सः' इत्यत्र णत्वाभावः, 'पदान्तस्य' इति निषेधात् । अत्र 'अनचि च' इति टस्य-तस्य, विसर्गस्य द्वित्वे षोडश, खयः शर इति सस्यापि द्वित्वे द्वात्रिंशत् । न च 'शरोऽचि' इति निषेधः, सौत्रस्यैव निषेधात् ।

'शि तुक्' इति । 'वा' इत्यनुवर्तते । भाष्यादिलक्ष्यानुरोधेन 'शि' इति सप्तम्या निरवकाशत्वेन च 'कुर्वञ्च्छेते' इति । यद्वा अपदान्तनकारेऽनुस्वारप्रवृत्त्या परिशेषादाह—नस्य पदान्तस्येति च 'नः' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते । पदस्येत्यधिकृतं विशेष्यमादाय 'नः' इति विशेषणं तदन्तस्य संज्ञा नान्तस्य पदस्येत्यर्थे 'अलोऽन्त्यपरिभाषया फलितार्थमाह—पदान्तस्येत्यादि । धुडेव तु न कृतम्, शश्छोऽटीति

'शश्छोऽटि' ( सू १२० ) इति छत्वविकल्पः। पक्षे 'झरो झरि' इति चलोपः। सञ्छम्भुः, सञ्च्छम्भुः, सञ्च् शम्भुः, सञ् शम्भुः ॥

अछौ अचछा अचशा अशाविति चतुष्टयम्।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥

## ङमो ह्रस्वादचि ङमुण् नित्यम्। [ ८-३-३२ ]

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः।

---

झयः पदान्तादित्येवं तदिति भाष्योक्त्या 'सञ्छम्भुः' इत्यादौ द्वित्वानापत्तेः, धुटः पदादित्वेन पदान्ताभावात्। नत्वेवं 'कुर्वंश्छेते' इति पदान्तस्येति णत्वनिषेधो न स्यात्, 'स्तोः श्चुना' इति विभक्तयोगेन णत्वनिषेधात्, कार्यकालपक्षेऽन्तरङ्गपरिभाषया तुकोऽसिद्धत्वाच्च। परसवर्णे 'सन् शम्भुः' इति स्थितौ तस्यान्तावयवस्तुक्। श्चुत्वस्यासिद्धतया नस्यानुस्वारे परसवर्णस्यासिद्धतया श्चुत्वेन तस्य च कृते परसवर्णे ञे छत्वे 'झरो झरि' इति चलोपे 'सञ्छम्भुः' लोपाभावे 'सञ्च्छम्भुः'। लोपछत्वयोरभावे 'सञ्च्शम्भुः' तुकोऽभावे 'सञ्शम्भुः' तुको जश्त्वं न, तुकोऽसिद्धत्वात्।

चतुष्टयमिति—'चयो द्वितीयाः' इति मत्वा छत्वस्यासिद्धत्वेन शपरत्वात् चस्य छे सञ्छ्म्भुः, शस्य छत्वाभावे चस्य छत्वे 'सञ्छ्शम्भुः' षड्रूपाणि अक्षुविसर्गाणाम् अनचि च, शरः खय इति द्वित्वविकल्पे रूपाधिक्यम्। यत्त्वनुस्वारस्य द्वित्वमिति तन्न, 'वाक्' इति भाष्यप्रयोगे वर्णद्वित्वेऽपि 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य प्रवृत्तिदर्शनेन परत्वाद् द्वित्वं बाधित्वा परसवर्णेऽसिद्धत्वाभावेनानुस्वारस्य द्वित्वासम्भवात्। एवं परत्वात् छत्वे छस्यैव द्वित्वं न शस्येति दिक्। ननु सन्निपातपरिभाषया नकारनिमित्तकानुस्वारो न स्यात् नकारमुपजीव्य जायमानत्वादिति वाच्यम्, त्रिपाद्यां सन्निपातपरिभाषाया अप्रवृत्तेः। अत एव 'पञ्चानाम्' इत्यादेः सिद्धिः। अन्यथा नान्तत्वमुपजीव्य जायमानो नुट् पदसंज्ञाद्वारा नलोपे निमित्तं न स्यात्। अत्र तुकोऽसिद्धतया 'नश्छवि' इति रुत्वं तु न, छत्वस्यासिद्धत्वेन छवपरत्वाभावात्।

ङमो ह्रस्वादचि ङमुण् नित्यम् इति। अत्र ङम् प्रत्याहारः, अन्यस्यानुपलब्धेः, 'ञमङणनम्' इति सूत्रे मकारप्रत्याख्याने 'कथं ङमो ह्रस्वादचि ङमुण्नित्यमिति' प्रत्याहारशङ्कापरभाष्याच्च। ङमः ङमुट् उभयत्रापि प्रत्याहारग्रहणम्। ङम् इति संज्ञा तस्य लक्ष्येऽसम्भवात्तत्र कृतं टित्वं संज्ञिनि विश्राम्यति ङुट्, णुट्, नुट् इति। उटावितौ। ङम इति पञ्चम्यन्तम्, 'ङम उत्तरस्याचः' इति भाष्यात्। ह्रस्वादिति ङम इत्यस्य विशेषणम् 'ह्रस्वात्परात् ङम इति। पदस्येत्यधिकृतं ङम इत्यस्य विशेषणं। पञ्चम्यन्तं विपरिणम्यते। ङम इति श्रुतेन ह्रस्वादित्यनेन 'श्रुतानुमितयोः' इति न्यायेन सम्बन्धमननुभूय विशेषणतया तदन्तपरम् 'ह्रस्वात्परो यो ङम् तदन्तात्पदादिति। ङम इति पञ्चम्या 'तस्मादित्युत्तरस्य' इति परिभाषया 'अचि' इति सप्तम्याः षष्ठी प्रकॢप्तिर्भविष्यति 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वात्' इति भाष्योक्तेः। 'अचि' इति सप्तमीनिर्देशो लाघवार्थः, 'मय उञः' इत्युत्तरार्थश्च। तदेतत्सर्वं मनसि निधाय आह—

ह्रस्वात्पर इत्यादि—ङमुडिति आगमास्त्रय ङमः परा आगमिनः अचोऽपि यः। ङः परस्य ङुट्, णः परस्य णुट्, नः परस्य नुट्, इति यथासंख्यं सम्बन्धः। ननु समासार्थायां विभक्तौ लुप्तायामपि 'परमदण्डिनौ' इत्यादौ प्रत्ययलक्षणेन दण्डिन्नित्यस्य पदत्वात् ङमुट् स्यादिति चेन्न, समासादिघटकेरन्तिमो यो भागस्तस्य पदसंज्ञायां कर्तव्यायां प्रत्ययलक्षणं न भवति, इत्यर्थकेन 'उत्तरपदत्वे च' इति न लुमतेति सूत्रस्थवार्त्तिकेन प्रत्ययलक्षणनिषेधात्। अत एव 'परमवाचौ' इत्यादौ कुत्वादिकं न।

न चैवम् 'दधिसेचौ' इत्यत्र सात्पदाद्योः इति षत्वनिषेधो न स्यात् 'सेच्' इत्यस्य पदत्वाभावादिति वाच्यम्, वार्त्तिके 'अपदादिविधौ' इत्यस्यापि सत्वेन पदादिविधिं वर्जयित्वा प्रत्ययलक्षण-

निषेधात्। 'सात्पदाद्योः' इत्यस्य पदादादिः पदादिरिति समासेन पदात्परस्यादेः सस्य षत्वं नेति भाष्याभिमतार्थेनादोषात्, अत्र पदपदेन पदत्वयोग्यस्य पदसंज्ञाप्रयोजकसुबादिप्रत्ययोद्देश्यस्य ग्रहणाच्च। नन्वेवमपि माषस्य कुम्भः माषकुम्भः, इत्यत्र कुम्भस्य समासान्तिमभागत्वेन पदत्वानापत्तौ 'पदव्यवायेऽपि' इति णत्वनिषेधो न स्यादतोऽन्तिमभागस्य कार्य्यित्वे एव निषेधस्वीकारे 'परमदण्डिनौ' इत्यत्र दण्डिन्नित्यस्य कार्य्यित्वाभावे न प्रत्ययलक्षणनिषेधाप्राप्त्या ङमुडापत्तिरिति चेन्न, 'ङमि च पदे' इत्यतः 'पदे' इत्यनुवर्त्य अजादेः पदस्यैव ङमुड्विधानात्। केचित्तु अजादेः पदस्य ङमुटि पदादिविधित्वेन सनादिः, यन्नन्तः, इत्यादौ उत्तरस्य पदत्वेन ङमुडापत्तिरतोऽजादौ पदे परे ङमो ङमुट् इत्येवार्थः। ङम इति पञ्चम्यन्तम्। न च 'कुर्वन्नास्ते' इत्यादौ णत्वापत्तिः 'पदान्तस्य' इत्यस्य पदान्तनकारावयवस्य णत्वं नेत्यर्थेन पूर्वनस्यापि णत्वनिषेधादित्याहुः।

वस्तुतस्तु 'उत्तरपदत्वे' इति निषेधे उत्तरभागस्य कार्य्यित्वे एवेत्यस्य न फलम्, 'सात्पदाद्योः' इत्यत्र 'पदव्यवायेऽपि' इत्यत्र च पदशब्देन पदत्वयोग्यस्यैव ग्रहणम्। अत एव 'अतद्धिते इति वक्तव्यम्' 'आर्द्रगोमयेण' इत्याद्यर्थम्। इति वार्त्तिकं पदे परतो यस्तद्व्यवाये णत्वं नेत्यर्थमाश्रित्य 'आर्द्रगोमयेण' इत्यत्र पूर्वपदस्थाभ्यां रषाभ्यां परस्य पदे परे यः पूर्वस्तेन व्यवहितस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णो न' इत्यर्थे निषेधाप्राप्त्या 'अतद्धिते' इति प्रत्याख्यातं भाष्ये। तथा च 'गतिकारकोपपदानां कृद्भिः समासवचनम्' इति सिद्धान्ते 'माषकुम्भवापेन' क्षीरपकुम्भेन, इत्यादौ सूत्रकारभाष्यकारयोः फलभेदो न। अन्यथा वाप इत्यस्य 'प' इत्यस्य च पदत्वाभावेन उभयत्र फलभेदः स्यात्। अपदादिविधाविति पर्य्युदासेन पदान्तस्थानिके विधौ निषेध इति तु न, दुहेः क्विपि परमशब्देन समासे 'परमदुहौ' इत्यत्र घत्वभष्भावापत्तेः। पदादिपदान्तयोः सादृश्यञ्च पदघटकपूर्वत्वपदघटकोत्तरत्वोभयाभावत्वेन। ननु नित्यग्रहणम् 'ह्रे मपरे वा' इत्यतोऽनुवर्तमानस्य 'वा' इत्यस्य निवृत्त्यर्थम्।

वस्तुतस्तु अत्र वा इत्यस्यानुवृत्तौ 'मय उञः' इत्युत्तरसूत्रेऽपि वा इत्यस्यानुवृत्त्यैव सिद्धे तत्र वाग्रहणसामर्थ्यात् 'ङमो ह्रस्वात्' इत्यनुवृत्त्यभावे सिद्धे नित्यग्रहणं स्पष्टार्थमेव। अत एव 'विभाषाद्वयमध्ये ये विधयस्ते नित्याः' इति 'पूङः क्त्वा च' इति भाष्यसङ्गतिः। ननु वाग्रहणेन 'ह्रे मपरे वा' इत्यनुवृत्तस्य वा इत्यस्य निवृत्तिकल्पने 'नपरे नः' इति पञ्चसूत्र्यामपि निवृत्त्यापत्तिः, स्वरितत्वप्रतिज्ञयाऽनुवृत्तस्य वाग्रहणेन निवृत्तिकल्पने उपस्थितत्वात् स्वाव्यवहितपूर्वसूत्रे एव तत्कल्पनस्यौचित्यात्।

यत्तु नित्यग्रहणं ङमुटोऽनित्यत्वज्ञापनार्थम्। तेन 'सनाद्यन्ताः' इत्यादि सिध्यतीति तन्न, भाष्याद्यनुक्तत्वात्। ननु 'गणेशः, वनेशः' इत्यादावसमासे ङमुड् दुर्वारः, पदादिवद्भावेनाजादिपदत्वात्, एकदेशविकृतन्यायेन पूर्वस्य ङमन्तपदत्वाच्च। न च पञ्चमीसमासेन स्थानिवद्भावः, पूर्वत्रासिद्धीये तन्निषेधात्। तस्य दोष इति तु न, लत्वसाहचार्येण णादेशस्यैव तत्र ग्रहणादिति चेन्न, 'समासान्ताः, तनादिकृञ्भ्यः' इत्यादौ रुत्वनलोपयोरदर्शनेन एकादेशात्पूर्वभागस्य एकदेशविकृतन्यायेन पूर्वान्तवत्त्वेन च पदत्वानिदेशाभावकल्पनात्। अत एव वनान्तः, सान्ता, इत्यादौ नलोपरुत्वादयो न। पूर्वान्तवत्त्वेन पदत्वसमासेऽपि 'गणेशः' इत्यादावुत्तरपदत्वे चेति निषेधेनोत्तरभागस्य पदत्वाभावान्न ङमुट्। नचापदादिविधाविति पर्य्युदासः, लत्वसाहचर्य्येण पदादेः स्थाने विधौ तत्प्रवृत्तेः। केचित्तु 'इकोऽचि यण्' इति न्यस्तत्वे गुरुन्यासेन आगमानित्यत्वं ज्ञाप्यते। तेन 'तर्तुकामस्य' इत्यादिसंज्ञार्थानि, यणादिकं करोति, इत्याद्यागमाघटितं लक्ष्यं सिध्यतीत्याहुः। प्रत्यङ्ङिति—प्रतिपूर्वकात् 'अञ्चु गतिपूजनयोः' इति क्विनि 'नाञ्चेः पूजायाम्' इति नलोपाभावे नस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङे प्राङिति पूजितात्मा जीवात्मा वा।

सुगण्णिति—गण संख्याने णिचि क्विपि णिलोपे सुगण्णिति। 'अनुनासिकस्य क्वि' इति

### समः सुटि। [ ८-३-५ ]

समो रुः स्यात्सुटि। 'अलोऽन्त्यस्य'

### अत्रानुनासिकः पूर्वस्य तु वा। [ ८-३-२ ]

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात्।

---

दीर्घस्तु न, अल्लोपणिलोपयोः स्थानिवत्त्वात्। न च दीर्घे तन्निषेधः, औपादिकस्य दीर्घस्य चरादिसाहचर्येण ग्रहणात्।

वस्तुतस्तु 'यङन्तात् शाम्यतेर्लुङि चिणि 'अशंशामि' इत्यत्र दीर्घसिद्धयर्थम् 'चिण्णमुलोः' इति सूत्रे 'यङ्लोपे च उपसंख्यानम्' दीर्घार्थम् इति वार्त्तिकप्रत्याख्यानाय सूत्रेणैव दीर्घो भविष्यतीत्याशयेन 'लोपे कृते चिण् णमुल्परो भवति। स्थानिवद्भावाच्च चिण् णमुल्परः। ननु च प्रतिषिध्यते तत्र स्थानिवद्भावः। दीर्घविधिं प्रति न स्थानिवदिति 'तस्मात्सार्थं उपसंख्यानेन' इति भाष्यात्सापादिकदीर्घस्यापि निषेधे ग्रहणाद् दीर्घाभावे क्विप्यपि 'सुगण्' इति। विचि वा शोभनगणनाकर्ता ईशः=स्वामीत्यर्थः। ङमुटि कर्तव्ये णिलोपादेर्न स्थानिवत्त्वम्, पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात्। न च णत्वे 'तस्य दोषः' इति बाधः, लत्वादिसाहचर्येण आदेशस्यैव णस्य ग्रहणात्। ङम इत्यस्य पञ्चम्यन्तत्वे ङमन्तस्य पदस्य ङमुट् इति तु नार्थः, 'तस्मिन्निति निर्दिष्टे' इत्यादिनिर्देशात्। सन्निति—सन्=सत्य इत्यर्थः। अच्युतः=परमात्मा विष्णुर्वा।

'समः सुटि' इति। 'मतुवसो रुः सम्बुद्धौ' इत्यतो रु रित्यनुवर्त्तते तदनुरोधेन सम इति स्थानषष्ठी। प्रतिपदोक्तत्वात्सुडित्यागमो गृह्यते, न प्रत्याहारः। तदाह—समो रुरिति। यद्यपि मस्यानुस्वारे 'अनचि चे' ति सस्य द्वित्वे 'संस्स्कर्ता' इति सिध्यति, तथापि अनुनासिकघटितस्य, त्रिसकारकस्य च रूपस्य सिद्धयर्थमिदं सूत्रम्। न च 'समो वा लोपमेके' इति मलोपे लोपस्यापि रुप्रकरणस्यत्वेन पूर्वस्यानुनासिकादेशे पक्षेऽनुस्वारे च द्वित्वे पुनर्द्वित्वे च त्रिसकारकस्यापि सिद्धिरिति वाच्यम्, एवं सतीदमेव व्यर्थं सज्ञापयति—'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति। तेन 'ऊखतुः' इत्यत्र द्वित्वे पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वस्यैव ह्रस्वे दीर्घे 'लक्ष्ये लक्षणम्' इति न्यायेन पुनर्ह्रस्वो न। समपूर्वकात् कृधातोः तृचि लुटि वा 'संपरिभ्यां करोतौ भूषणे सुट्' इति सुटि 'अलोऽन्त्यस्य' इति मस्य रुत्वम्। न चानेकाल्त्वात्सर्वादेशः, रोरुकारस्येत्संज्ञकत्वेन 'नानुबन्धकृतमनेकाल्त्वम्' इत्यनेकाल्त्वाभावात्। 'सर् स्कर्ता' इति स्थितौ—

'अत्रानुनासिकः पूर्वस्य तु वा' इति। 'मतुवसोरुः' इत्यनन्तरमस्य पाठात् 'अत्र' इत्यस्य रुप्रकरणे इत्यर्थः। अत एव भाष्ये 'संपुंकानाम्' इति वार्त्तिकप्रत्याख्यानाय 'समः स्सुटि' इति सकारप्रश्लेषः संगच्छते। अन्यथा रुस्वरूपस्य ग्रहणे सकारविधाने ततः पूर्वस्यानुनासिकासिद्धया सप्रश्लेषेण वार्तिकप्रत्याख्यानमसङ्गतमेव स्यात्। तथा च 'पूर्वस्य' इत्यत्र किमपेक्षया पूर्वस्येत्याकाङ्क्षायां प्रत्याख्यानपरभाष्यप्रामाण्याद् रुप्रकरणे विधेयात्पूर्वस्येत्यर्थस्तेन सविधानेऽपि पूर्वस्यानुनासिकत्वे न क्षतिः। अत्र पूर्वत्वमव्यवहितत्वेनैव, उपस्थितत्यागे मानाभावात्। 'महाँ इन्द्रः' इत्यादौ तथैव दर्शनाच्च। तदाह—अत्र रुप्रकरणे रोः पूर्वस्येति—

अत्र केचित्—अयमधिकारो विधिर्वेति सन्दिग्धम्। अधिकारेऽधिकारादेव रुप्रकरणलाभेऽत्रग्रहणस्य वैयर्थ्यापत्तेः। अधिकारपक्षे तुग्रहणम् परस्य नित्यं रुत्वम्, पूर्वस्य तु वाऽनुनासिक इति विशेषद्योतनाय सार्थकमित्यधिकारत्वप्रयोजकम्। विधिपक्षे तुग्रहणं व्यर्थम्, अनुनासिकस्य मन्स्थानेन विधानात्। वस्तुतस्तु अधिकार एवेदम्। (प्रतिसूत्रं सम्बन्धेन गौरवेऽपि 'अत्राग्रहणकरणलाघवेन) भाष्ये 'मतुवसोः' इति पूर्वसूत्रे 'वन उपसंख्यानम्' 'विभाषा भगवदघवतोश्छन्दस्य' इति कृतयोर्वार्त्तिकयोरुदाहरणे 'हरिवो मेदिनं त्वा' हे भगोः, हे अघोः, इत्यत्र अनुना-

**अनुनासिकात् परोऽनुस्वारः । [ ८-३-४ ]**

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् । 'खरवसानयोर्विसर्जनीयः' ।

**विसर्जनीयस्य सः । [ ८-३-३४ ]**

सिकादर्शनेन चाधिकारपक्ष एव ज्यायान् । विधिपक्षे रुप्रकरणेऽनुनासिकविधानेन पूर्वेण विधेयस्यापि रुप्रकरणस्थत्वात् अनुनासिकापत्तिर्दुर्वारा ।

अधिकारपक्षे तु उत्तरमेवास्य सम्बन्धात्पूर्वेषां रुप्रकरणस्थत्वेऽपि नानुनासिक इति हृदयम् । ननु अधिकारपक्षे तत्तत्सूत्रैकवाक्यतया 'समोऽन्त्यस्यालो रुः स्यात्पूर्वस्य तु वा अनुनासिकः' इत्यर्थे रोः पूर्वस्येत्यसङ्गतम्, रोर्विधेयत्वात्तत्रैव तस्यावधित्वेनोपादानासम्भवात्, लोपपक्षेऽनुनासिकानापत्तेश्चेति चेन्न, रोः पूर्वस्येत्यस्य रुप्रकरणे विधेयस्थानिनः पूर्वस्येत्यर्थात् । पूर्वत्वञ्चेदमुपलक्षणं न तु विशेषणम्, रुणा स्थानिनोऽपहारेण तत्पूर्वत्वासम्भवात् ।

'अनुनासिकात्परोऽनुस्वारः' इत्यनुनासिकाभावपक्षेऽनुस्वारागमविधानसामर्थ्येनानुनासिकस्य वैकल्पिकत्वे सिद्धे वाग्रहणं स्पष्टार्थम् । स्वरितत्वेनाधिकारादेव रुप्रकरणे लब्धेऽत्रग्रहणमपि स्पष्टार्थमेव । अनेनानुनासिकादेशे 'सँर्स्कर्ता' इति ।

'अनुनासिकात्परोऽनुस्वारः' इति । अनुनासिकादिति पञ्चमी न परशब्दयोगे दिग्योगलक्षणा, तथा सति अनुनासिकात्परस्यैवानुस्वारस्य लाभेन 'अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वा' इत्येकयोगे एव कर्त्तव्ये 'अनुनासिकात्परः' इति पृथग्योगकरणवैयर्थ्यात् ल्यब्लोपे पञ्चमीं ज्ञापयति । ल्यबन्तमप्यभावार्थकमेव तथा सत्येव सूत्रस्य स्वांशे चारितार्थ्यसम्भवात् । एवञ्च अनुनासिकादित्यस्यानुनासिकं विहायेत्यर्थः, अनुनासिकाभावे इति यावत् । तदाह—अनुनासिकं विहायेति । रोः पूर्वस्मादिति—रुप्रकरणे विधेयस्य स्थानिनः पूर्वस्मादित्यर्थः । परत्वविशिष्ट इत्यर्थः । अवयवत्वविशिष्टागमत्वं तु न, अवयवत्वे मानाभावात् । अवयवत्वस्याभिमतत्वे तु पूर्वस्येत्यनुवर्त्य पूर्वस्यावयवः पर इत्येव व्याख्यत् न पञ्चम्या ।

किञ्चावयवत्वे 'संस्कर्ता' इत्यत्र सकारस्य द्वित्वानापत्तिः, यदागमन्यायेनानुस्वारविशिष्टएवाच्त्वेनानुस्वाररूपयरोऽचः परत्वाभावात् । किञ्चावयवत्वे 'अनुनासिकादनुस्वारक' इति कत्वेन कुमुट इव बोध्यस्य परावयवत्वे सिद्धे परग्रहणस्य वैयर्थ्यापत्तिः । यदि तु क्वचिदागमस्यापि द्वित्वं प्रमितं तदा यदागमन्यायस्यानित्यत्वेन समाधेयम् । मूलेऽनुस्वारागम इत्युक्तिस्तु आगमस्य इतरानुपमर्देन जायमानतया सादृश्याद् बोध्या । एवम् 'न य्वाभ्याम्' इत्यैजागमोऽपि नावयवः, मान्ताभावात्, तत्रापि पूर्वत्वविशिष्टमात्रपरत्वात्, अवयवत्वे फलाभावाच्च । किञ्चावयवत्वे सार्द्धसप्तमात्रालाघवानुरोधेन 'न य्वाभ्यां पदान्ताभ्यां तयोश्चैच्' इति न्यासेन ङमुटि इव ऐच्टमेव विदध्यात् । तत्राप्यैजागमो स्व इत्युक्तिरागमसादृश्येन लाक्षणिकी । अनुनासिकस्य वैकल्पिकतया तदभावपक्षे रोः पूर्वस्माद्कारात्परेऽनुस्वारे 'संस्कर्ता' इति । रोः पूर्वस्मादिति—अनुवृत्तस्य पूर्वस्येत्यस्य परयोगेन पञ्चम्यन्तेन विपरिणामात्पूर्वस्मादिति लब्धम् । यद्वा सवत्सा ऽऽनीयतामित्युक्ते यथा गवापत्यस्यैव वत्सपदव्यवहार्यतया वत्ससम्बन्धस्य गव्येव सम्भवेन गौरेवानीयते । एवम् प्राप्तस्यैव निषेध इति न्यायेन अवत्साऽऽनीयतामित्युक्ते वत्सराहित्यमपि गोरेव प्रत्यायकं भवति । तथा रोः पूर्वस्यैवानुनासिकत्वप्राप्त्या अनुनासिकाभावेनापि पर इत्यस्यावध्याकाङ्क्षायां रोः पूर्वस्यैवावधित्वप्रतीत्या लोकन्यायेनैव रोः पूर्वस्मादिति लभ्येत पूर्वस्येत्यनुवृत्तिर्व्यर्थेति मनोरमा । खरवसानयोरिति—इत्यनेन 'सँःस्कर्त्ता संःस्कर्ता' इति विसर्गे कृते—

विसर्जनीयस्य सः इति, अत्र खरीत्यस्य एकदेशो स्वरितत्वबलादनुवृत्तः । 'अवसाने' इति नानुवर्तते, उभयानुवृत्तौ विसर्गविधानस्य वैयर्थ्यापत्तेः 'खरवसानयोः सः' इत्यस्यैव वक्तव्यत्वात् ।

खरि विसर्जनीयस्य सः स्यात् । एतदपवादे 'वा शरि' इति पाक्षिके विसर्गे प्राप्ते 'संपुंकानां सो वक्तव्यः' ( वा ४८६२ ) सँस्स्कर्ता–सँस्स्कर्ता ।

'समो वा लोपमेके' इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् ।

द्विसकारं तूक्तमेव । तत्र 'अनचि च' इति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् ।

---

न चैवमवसाने इत्यस्यैवानुवृत्तिरस्तु, सत्वबाधकस्य 'शर्परे विसर्जनीयः' इत्यस्य वैयर्थ्यापत्तेरित्युक्तं भाष्ये ततो हलीत्यनुवर्तते, खरीत्यनुवर्तत इत्युक्तमेषु पक्षेषु फलभेदवारणाय अवसाने विसर्गे कृते पश्चादजादिपदसम्बन्धे अकृतव्यूहपरिभाषाऽस्वीकर्तृमते 'हरिः अयम्' इत्यपि साधु । अनभिधानं वैतादृशस्य ।

शेखरकृता तु विसर्गेणानुमितस्यावसाने इत्यस्य 'स्वप्रयोज्यविसर्गस्थानिकत्वसम्बन्धेन' सरूप-विधेये नान्वयः, 'प्रत्ययः' इत्यादिनिर्देशरूपाद् व्याख्यानात् । तथा चावसाननिमित्तकस्याग्रहे परिशेषात् खर्निमित्तकस्यैव विसर्गस्य सत्वं स्यादिति फलितार्थमाह—खरीति । इह खरीत्यस्या-क्षेपस्तु न, आक्षिप्तस्य शाब्दे भानायोगात् । 'अवसाने' इत्याक्षेपस्तु नात्र लुप्यते, तस्य शाब्देऽ-भानात् । अनेन विसर्गस्य सत्वे प्राप्ते तस्य 'वा शरि' इति अपवादेन बाधाद्विकल्पेन विसर्गस्य विसर्गे प्राप्ते तद्बाधनार्थमाह—

'सम्पुंकानां सो वक्तव्यः' इति । सञ्च पुञ्च काँञ्च सम्पुंकानः तेषाम्=सम्, पुम्, कान् एषां विसर्गस्य सकारो वक्तव्य इत्यर्थः । अनेन विसर्गस्य नित्यमेव सः । इति विसर्गस्य सकारे 'संस्स्कर्ता' इत्यनुनासिकपक्षे अनुनासिकाभावेऽनुस्वारागमे 'संस्स्कर्ता' इति द्विसकारकमुभयम् । भाष्ये तु 'संपुंकानाम्' इति प्रत्याख्यातम्—तथाहि—'समस्सुटि' द्विसकारको निर्देशः । समः सुटि सकारो भवति । उत्तरत्र सूत्रे च स इत्यस्यैवानुवृत्तिः । ननु अग्रे 'स' इत्यस्यैवानुवृत्तौ 'दीर्घादटि समानपादे' इत्यनेनापि से 'महान् इन्द्रः' इत्यत्र 'महाँ इन्द्रः' इति न सिद्ध्येत्, सत्वस्यासिद्धतया रुत्वाभावे यत्वाद्यप्राप्तेः । 'मतुवसोः रुः' इत्यतो रोरनुवृत्तौ तु यत्वलोपयो रूपं सिध्यतीति चेन्न, सम्बन्धानु-वृत्त्या सिद्धेः । तथा हि—समः सो भवति सुटि, मतुवसोः रुः सम्बुद्धौ छन्दसि । पुमः खय्यम्परे सो भवति, मतुवसोः रुः पूर्ववत् । 'नश्छव्यप्रशान्' अत्र रुरित्यनुवर्तते, रोरुर्भवति, पुमः खय्यम्परे सः, दीर्घादटि रुर्भवति, पुमः खय्यम्परे सः । 'कानाम्रेडिते' अत्र रुरिति, पुमः खय्यम्परे इति च निवृत्तं स इत्यनुवर्तते । कानित्यस्य सो भवत्याम्रेडिते इत्येवं व्याख्यानेन 'महाँ इन्द्रः' इत्यादि सिध्यति । इदं भाष्यं स्पष्टम् ।

'समो वा लोपमेके' इति अत्र एकशब्दोऽन्यपर्यायो बहुवचनदर्शनेन संख्यावाचका-सम्भवात् । पाणिनितो भिन्ना आचार्याः समो मस्य वा लोपमिच्छन्तीत्यर्थः । 'एकोऽन्यार्थे प्रधाने च' इत्यमरः । लोपस्यापि रुप्रकरणस्थविधेयत्वादनुस्वारानुनासिकयोः कृतयोरेकसकारकम् 'सँस्कर्ता' संस्कर्ता' इति रूपद्वयम् । तदाह—लोपस्यापीति । भाष्ये 'समो वा लोपमेके इच्छन्ति, संस्कर्ता, सँस्कर्ता' इत्यत्रानुस्वारानुनासिकदर्शनात् । अत्रानुनासिकः, अनुनासिकात्परः' उभयत्रापि रोः पूर्व-स्येत्यस्य रुप्रकरणस्थविधेयस्यानिनः पूर्वस्येत्यर्थः । अधिकारपक्षेऽत्रेत्यस्य वैयर्थ्येन वा पूर्वस्येत्यस्यो-कार्थकत्वज्ञापनात् ।

उक्तमेवेति—'रुत्वपक्षे' इति योजनीयम् । ननु लोपपक्षे एव सुटः सकारस्य 'अनचि च' इति विकल्पेन द्वित्वे द्विसकारकरूपस्यापि सिद्धतया 'समः सुटि' इति व्यर्थमत आह—तत्रेति—रुत्वे सति निष्पन्नयोर्द्विसकारकरूपयो रुस्थानिकविसर्गस्थानिकस्य सस्य 'अनचि च' इति द्वित्वे त्रिसका-रकरूपसिद्ध्यर्थम् 'समः सुटि' इति सूत्रमित्यर्थः । ननु लोपपक्षे एव वारद्वयम् 'अनचि च' इति सकारस्य द्वित्वे त्रिसकारकरूपस्यापि सिद्धतया सूत्रं व्यर्थमेवेति चेन्न, उक्तरीत्या व्यर्थं सदेतदेव सूत्रम्

अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वार-स्याप्यच्त्वात् ।

अनुनासिकवतां त्रयाणां 'शरः खयः' ( वा ५०१६ ) इति कद्वित्वे षट् ।

अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश ।

एषामष्टादशानां तकारस्य द्वित्वे, वचनान्तरेण पुनर्द्वित्वे चैकतं द्वितं त्रितमिति चतुष्पञ्चाशत् ।

अणोऽनुनासिकत्वेऽष्टोत्तरशतम् ।

पुमः खय्यम्परे । [ ८-३-६ ]

'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति परिभाषां ज्ञापयति । तेन 'ऊखतुः' इत्यादौ पर्जन्यवल्लक्षणप्रवृत्त्या पूर्वं ह्रस्वे सवर्णदीर्घानन्तरं पुनर्ह्रस्वो न । अत्र 'स्कोः संयोगाद्योः' इति संयोगादिलोपो न, समो रुत्वस्यासिद्धत्वेन संयोगादिसकाराभावात् । सुटः सकारमादाय संयोगादित्वेऽपि पदान्त-संयोगादित्वाभावेन तदप्रवृत्तेः ।

ननु अनुस्वारपक्षे वर्णसमाम्नायेऽनुस्वाराभावेनाच्त्वात्ततः परस्य यरो द्वित्वं न स्यादत आह—अनुस्वारेति । अकारोपरं ति—ऊर्ध्वे इत्यर्थः । ऊर्ध्वशब्दस्य उपादेशः रिल् प्रत्ययश्च निपात्यते । वस्तुतस्तु अकारस्योपरि पाठासम्भवेन अकारशकाराव्यवहितोत्तरं पाठेनेति सूचितम् । इकारोत्तरं तु न पाठः, 'यशःसु' इत्यादौ 'आदेशप्रत्यययोः' इति षत्वापत्तेः शर्षु पाठेन विसर्जनीयस्य शर्ग्रहणेन ग्रहणात् 'पिपठीःषु' इत्यत्र इण्कोरित्यधिकारे 'नुम्विसर्जनीयशर्व्यवायेऽ' इति षत्वं सिध्यति । तदुक्तं भाष्ये—'शर्व्यवाये' इति षत्वं सिद्धं भवति 'नुम्विसर्जनीयशर्व्यवायेऽपीति विसर्जनीयग्रहणं न कर्तव्यं भवति' इति ।

एवमनुनासिकपक्षे एकसम्, द्विसम्, त्रिसम् इति त्रीणि, अनुस्वारपक्षेऽपि अनुस्वारमच-मादाय द्वित्वे त्रीणि रूपाणि, इति षट् । अनुनासिकवतां त्रयाणाम्, शरः परस्य खयो वा द्वित्वमित्यर्थ-केन 'शरः खयः' इति कस्य द्वित्वे द्विक्कारकाणि त्रीणि, द्वित्वाभावे एकककारकाणि, इति षट् ।

अनुस्वारपक्षे 'शरः खयः' इति कद्वित्वे एककानि त्रीणि, द्विकानि त्रीणि इति षट् ६। षट्सु रूपेषु अनुस्वारस्य शर्षु पाठेन यत्वात् अचः परत्वाच्च 'अनचि च' इति द्वित्वे अनुस्वारद्वययुतानि षट् ६। त्रीणि एकानुस्वारकाणि षट् ६ इति द्वादश रूपाणि १२ । तथा च अनुनासिकयुतानि षट् । अनुस्वारयुतानि षड् इति इति द्वादश । सर्वसंकलने अष्टादश रूपाणि । अष्टादशसु रूपेषु, 'अचो रहाभ्याम्' इति तस्य द्वित्वे द्वितकारकाणि अष्टादश १८ । तत्र तकारस्य 'यणो मयो द्वे' इति रेफ-रूपयणः परस्य तस्य वा पुनर्द्वित्वे त्रितकारकाणि अष्टादश १८ । मिलितानि चतुष्पञ्चाशद्रूपाणि सिद्धानि । चतुष्पञ्चाशद्रूपेषु 'अणोऽप्रगृह्यस्य' इत्यवसाने परे तकाराकारस्यानुनासिकादेशे चतुष्पञ्चाश-दन्त्यानुनासिकानि ५४ । अनुनासिकादेशस्य वैकल्पिकत्वात्तदभावे चतुष्पञ्चाशद् रूपाणि अनुनासिका-न्त्यरहितानि चतुष्पञ्चाशदननुनासिकान्त्यानि । मिलितानि अष्टोत्तरशतं १०८ रूपाणि ।

तदाह—एषामिति । तकारस्य द्वित्व इति—अचो रहाभ्यामित्यनेनेति शेषः । वचनान्तरेणेति—'यणो मयः' इत्यनेनेत्यर्थः । संस्कर्ता—संस्कारकर्तेत्यर्थः । संस्कारश्च सतोऽलङ्कार वस्त्रादेरुद्दीपन-मार्जन—शातनरूपगुणान्तराधानरूपप्रतियत्नः, वैदिकविधिना उपनयसंस्कारादिः, अनुभवजन्य-आत्मगुणः, यथाऽवस्थिततया स्थितिस्थापनाप्रयोजको गुणः । पृथिव्यादिवृत्तिर्वेगाख्यो गुणः, शास्त्रजन्या व्युत्पत्तिः, व्याकरणदिशा शब्दसाधनम्, भूषाकरणम्, सज्जीभवनम्, पाकश्च ।

'पुमः खय्यम्परे' इति । संयोगान्तलोपोत्तरमेवैतत्प्रवृत्त्या 'पुम्' इत्यस्यैव शेषात् तदनु-करणात्पञ्ची । 'अम्' अत्र प्रत्याहारः, न द्वितीयैकवचनम्, तस्मिन्परे पुमित्यस्यासम्भवात्, खया प्रत्याहारेण साहचर्याच्च । 'अम्परे' इति अम्परो यस्मादित्यर्थे बहुव्रीहिः । अम् चासौ परश्चेति

अम्परे खयि पुम्शब्दस्य रुः स्यात् ।

व्युत्पत्तिपक्षे 'अप्रत्ययस्य' इति षत्वपर्युदासात् ≍क≍पयोः प्राप्तौ, अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ 'संपुंकानाम्–' इति सः । पुँस्कोकिलः, पुंस्कोकिलः । पुँस्पुत्रः, पुंस्पुत्रः । 'अम्परे' किम्—पुंक्षीरम् । 'खयि' किम्—पुंदासः । 'ख्याञादेशे न' ( वा १५६१ ) पुंख्यानम् ।

---

कर्मधारयस्तु न, परग्रहणस्य वैयर्थ्यापत्तेः, 'अमि' इत्यनेनैवामि परे इत्यर्थलाभात् । रुरित्यनुवर्तते—तदाह—अम्परे खयीति । पुमान् कोकिल इवेति 'उपमितं व्याघ्रादिभिः' इति कर्मधारये 'संयोगान्तस्य' इति सलोपे 'पुम् कोकिलः' इति स्थितौ मस्य रुत्वे अनुनासिकानुस्वारयोः कृतयोः, रस्य विसर्गे प्रयोगसिद्धिः । व्युत्पत्तीति—पाति=रक्षतीति, पुनातीति वा 'पातेर्डुम्सुन्' इति, 'पूञ डुम्सुन्' इति वा डुम्सुन्प्रत्यये पुमानिति उणाद्यन्तं प्रातिपदिकम् । तत्र प्रकृति-प्रत्ययविभागज्ञानप्रयोज्या यदा सूत्रप्रवृत्तिस्तदा व्युत्पत्तिपक्षः । तत्पक्षे प्रत्ययावयवभिन्नस्य विसर्गस्य षः, इत्यर्थकस्य 'इदुदुपधस्य' इत्यस्य-प्रत्ययावयवविसर्गसत्त्वेनाप्राप्तया 'कुप्वोः' इति ≍क≍पयोः प्राप्तिरित्याह—≍क≍पयोरिति । अव्युत्पत्तीति—यदा उणाद्यन्तानि प्रकृतिप्रत्ययविभागज्ञानप्रयोज्यशास्त्रप्रवृत्त्यभाववन्ति' इति पक्षे इत्यर्थं ।

षत्वप्राप्तौ इति—तत्पक्षे प्रत्ययज्ञानप्रयोज्यशास्त्राप्रवृत्त्या 'अप्रत्ययस्य' इति पर्युदासाप्रवृत्त्या 'इदुदुपधस्य' इति सत्वप्राप्तावित्यर्थः । इयञ्च प्राप्तिरनुनासिकपक्षे । अनुस्वारपक्षे तु अनुस्वारस्यैवोपधात्वेन उदुपधस्य पदस्याभावेन षत्वाप्राप्त्या व्युत्पत्तिपक्षे अव्युत्पत्तिपक्षे च ≍क≍पयोः प्राप्तौ । 'कुप्वोः' त्यस्य, 'इदुदुपधस्य' इत्यस्य च बाधनाय 'संपुंकानाम्' इति । यदा तु 'समस्सुटि' इति द्विसकारकं सूत्रं तदा स् इत्यनुवृत्त्या पुमो मस्य सादेशे सादेशस्यासिद्धतया रुत्वविसर्गयोरभावेन नास्ति 'कुप्वोरित्यस्य इदुदुपधस्येति प्राप्तिरिति वार्तिकं व्यर्थम् । न चात्र रुरित्यस्यानुवृत्तौ अग्रे 'दीर्घादटि' इति सूत्रेऽपि रोरनुवृत्तिर्न स्यात् तथा च 'महाँ इन्द्रः' इत्यत्र यत्वलोपयोरभावापत्तिरिति वाच्यम्, अत्रापि उत्तरत्रानुवृत्त्यर्थम् 'मतुवसो रुः' इत्यनुवर्त्य पुना रुर्विधानेन 'दीर्घादटि' इत्यत्रानुवृत्तौ बाधकाभावात् । पुमान् कोकिल इव मधुरभाषीत्यर्थः ।

पुंस्पुत्र इति—पुंसः पुत्रः षष्ठीसमासः । पुत्रे पुंसम्बन्धस्याव्यभिचरितत्वेन विशेषणत्वासम्भवात् वीरत्वं द्योतयति । 'पुंस्पुत्रः' वीर इत्यर्थः । क्षीरमिति—'क्षि क्षये' इति 'इक् कृष्यादिभ्यः' भावे इकि क्षीः = क्षयः, तामीरयति कम्पयतीति क्षीरम् । कर्तरि अण् । यद्वा क्षरधातोरुपधाया ईत्वेऽच्प्रत्यये क्षीरमिति शेखरे । 'क्षि निवासगत्योः' इत्यतः 'शुचिसिचि 'क्षिमीनां दीर्घश्च' इति क्रन् दीर्घत्वञ्च । 'घसेः किच्च' इतिरनि 'गमहन' इत्युपधालोपे चर्त्वे षत्वेन क्षीरमिति तु नात्र, चर्त्वस्यासिद्धतया खम्परत्वाभावात् । पुंस्त्वविशिष्टस्य वृषस्य क्षीरमित्यर्थः । पुमर्थं क्षीरमिति वा । अत्र ककारात्परः षकारो नाम् इत्यम्परखयोऽभावः । दास इति—'दासृ दाने' इति दास्यते दीयतेऽस्मादिति सम्प्रदाने घः । दासो भृत्यः शूद्रो वा ।

ननु 'चक्षिङ् व्यक्तायां वाचि' इति ल्युटि 'चक्षिङः ख्यादेशे पुंसः ख्यानं पुंख्यानम्' इत्यत्रापि पुमो मस्य रुः स्यादत आह—ख्याञादेशे नेति—भाष्ये 'चक्षिङः ख्याञ्' ख्यादिर्भविष्यति । 'असिद्धे शस्य यवचनं विभाषा' 'पुंख्यानम्' इति रुर्विधिर्न भवति' इत्युक्तम् । अयम्भावः—'चक्षिङः ख्याञ्' इति पठित्वा पूर्वत्रासिद्धकाण्डे णत्वानन्तरम् 'ख्शाञः शस्य यो वा' इति यत्वं विधेयम् । तेन 'सौप्रख्ये भवः सौप्रख्यीयः' इति सिध्यति । धन्वयोपधादिति वुञ् न, यत्वासिद्धत्वेन शकारोपधत्वात् किन्तु वृद्धाच्छः । 'पुंख्यानम्' इत्यत्र अम्परखयोऽभावाद् रुर्न । न च 'अस्तनयोश्च प्रतिषेधो वक्तव्यः' विचक्षण इत्यत्रेव अने परे ख्याञादेशो न स्यादिति वाच्यम्, 'बहुलं तणि' इति संज्ञाच्छन्दसोरेतन्निषेधप्रवृत्तेः । 'तण' इति = संज्ञाच्छन्दसोर्नाम । न च 'ख्या प्रकथने' इत्यतो ल्युटि रुर्दुर्वारः, तस्य सार्वधातुके एव प्रयोग इत्यस्य मूले एव वक्ष्यमाणत्वात् । 'बहुपुंस्ख्याति' इति तु भवत्येव ।

नश्छव्यप्रशान् । [ ८-३-७ ]

अम्परे छवि नकारान्तस्य पदस्य रुः स्यात्, न तु प्रशान्शब्दस्य । विसर्गः । सत्वम् । श्चुत्वम् । शार्ङ्गिँश्छिन्धि, शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । 'पदस्य' किम् । हन्ति । 'अम्परे' किम् । सन्त्सरुः=खड्गमुष्टिः । 'अप्रशान्' किम् । प्रशान्तनोति ।

नॄन्पे । [ ८-३-१० ]

नॄन् इत्यस्य रुः स्याद्वा पकारे परे ।

कुप्वोः ᳵकᳶपौ च । [ ८-३-३७ ]

'नश्छव्यप्रशान्' इति तु भवत्येव । रुरित्यनुवर्तते । न इति षष्ठ्यन्तम् । अधिकृतस्य पदस्य विशेषणं तेन नान्तपदग्रहणम् । अम्परे इत्यनुवर्तते तदाह—अम्परे इत्यादि अलोऽन्त्यपरिभाषया नस्य रुः । 'प्रशान्' प्रपूर्वकाच्छाम्यतेः क्विपि 'अनुनासिकस्य क्वि' इति दीर्घे 'मो नो धातोः' इति मस्य न 'प्रशान्' अत्र सूत्रे प्रशानिति प्रथमान्तस्यानुकरणेन नञा समासे लुप्तषष्ठ्यन्तम्, षष्ठ्यर्थे प्रथमा वा सौत्रत्वात् । 'न लोपः' इति इष्ट्या नत्वस्यासिद्धतया नलोपो न । ननु प्रतिपदोक्तत्वात्प्रपूर्वकस्य शान तेजने इति क्विबन्तस्य ग्रहणमुचितमिति चेन्न, तदनुकरणे नलोपस्य दुर्वारतया सूत्रे 'अप्रशान्' इति निर्देशासङ्गत्यापत्तेः । नान्तस्य पदस्येति—अलोऽन्त्यपरिभाषया नस्य रुरित्यर्थः । अप्रशानित्यस्य प्रशानित्यस्य प्रशानवयवभिन्नस्येत्यर्थः । तेन 'सुप्रशान् तनोति' इत्यत्रापि रुर्न । केचित्तु प्रशान्भिन्नं यन्नान्तपदं तदन्तस्य नस्य रुरित्यर्थः, अवयवे लक्षणायां मानाभावात् । तथा च प्रशान्भिन्नं पदं सुप्रशानिति तदन्तस्य नस्य रुर्भवत्येवेत्याहुः । विसर्ग इति—रुत्वपक्षे इदम् । सकारादेशपक्षे तु श्चुत्वमात्रम् । शार्ङ्गिन्निति—हे शार्ङ्गिन् छिन्धि मे भवबन्धनमित्यर्थः । चक्रिन्निति—अत्र रुत्वे विसर्गे सत्वे अनुनासिकानुस्वारयोः चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व इति । हे विष्णो रक्ष मामित्यर्थः । त्सरुरिति–'त्सर छद्मगतौ' । त्सरति=कुटिलं गच्छतीति त्सरुः । 'भृमृशीङ्' इति कुः । मुष्टिरिति—खड्गग्रहणप्रदेश इत्यर्थः । प्रशानिति—नत्वस्यासिद्धतया नलोपो न । अतिशान्तिमान् यशो विस्तारयतीत्यर्थः । अप्रशानित्यस्य पर्युदासेन नान्तत्वेन सादृश्यमादाय नान्तस्यैव रुत्वे सिद्धे 'नॄन् पे' 'नः' इति व्यर्थमिति तु न, प्रशानित्यस्य लक्षणावशसम्पन्ननान्तत्वेन लक्षणावशसंपन्ननान्तस्यैव ग्रहणापत्त्या 'मांस्तनोति' इत्यादेरसिद्ध्यापत्तेः ।

नॄनिति—द्वितीयाबहुवचनान्तानुकरणं स्वरूपपरम् षष्ठ्यन्तम् । षष्ठ्याः सौत्रत्वात्सुपां सुलुगिति लुक् नलोपाभावश्च । पदस्याधिकृतस्य विशेष्यतया नॄनिति विशेषणत्वेन तदन्तपरम्, नॄनन्तस्य पदस्येत्यर्थः । रुरित्यनुवर्तते । निर्दिश्यमानपरिभाषया अलोऽन्त्यपरिभाषया च नॄनन्तपदावयवस्य निर्दिश्यमानस्य नस्य रु र्वेत्यर्थः । फलितार्थमाह—नॄनित्यस्येति—नकारस्येति शेषः । 'पे' इत्यकार उच्चारणार्थः । पकारमात्रं निमित्तम् । रुविधायकेषु पूर्वसूत्रेषु सप्तम्यन्तार्थनिमित्तस्य वर्णमात्रस्य ग्रहणादत्रापि तत्प्रकरणत्वेन तथैवोचितत्वात् । वस्तुतस्तु 'हसि' इतिवत् 'नॄन् पि' इत्येव वक्तुमुचितम् । तेन 'नॄँ' ᳶ पुनीहि' इत्यपि सिध्यति । 'उभयथर्क्षु' इत्यत उभयथा इत्यनुवर्तते । कदाचिद् भवति न भवति चेति उभयथा रुः प्रयोक्तव्यः । विकल्प इति यावत् । नॄनिति—नयतीति ना । 'नयते र्डिच्' इति ऋप्रत्ययः डित्वाट्टेर्लोपः । 'नॄन् पाहि' इति स्थिते नस्य रुत्वे अनुनासिकानुस्वारयोः, विसर्गे च कृते सत्वे प्राप्ते तदपवादमाह—

'कुप्वोः ᳵकᳶपौ च' इति । सूत्रे ओसस्सकारस्य रुत्वे जिह्वामूलीयस्य शरि पाठेन खर्परत्वाद् रोर्विसर्गे 'खर्परे शरि वा' इति विसर्गलोपः । यद्वा 'वा शरि' इति विसर्ग एव 'कुप्वोः' । इति सविसर्गो निर्विसर्गो वा उभयं साधु । आदेशयोः ' ᳵ ᳶ ' इत्येव विधेयौ ककारपकारावुच्चारणार्थौ । जिह्वामूलीयोपध्मानीययोरुच्चारणे सहायकावेव, न तु विधेयौ, भाष्ये 'कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीया वक्तव्याः' वार्तिकेन जिह्वामूलीयोपध्मानीयमात्रविधानात्, तत्रोदाहरणमप्रदर्शनात् ।

कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । येन नाप्राप्त-न्यायेन 'विसर्जनीयस्य सः' ( सू १३८ ) इत्यस्यापवादोऽयम् , न तु 'शर्परे विसर्जनीयः' ( सू १५० ) इत्यस्य । तेन तेन 'वासः क्षौमम्' इत्यादौ विसर्ग एव । नॄँ≍पाहि, नॄँ≍पाहि, नॄः पाहि, नॄन्पाहि ।

विसर्जनीयश्चेति चेन 'शर्परे विसर्जनीय इत्यतो विसर्जनीय इत्यनुकृष्यते । तेन विसर्गस्य स्थाने कखरूपे कवर्गे परे ≍कः, विसर्गश्च पफरूपे पवर्गे परे ≍ पः, विसर्गश्चेत्येवमादेशद्वयमनेन विधीयते । नच 'वा शरि' इत्यतो वेत्यनुवृत्त्या विसर्गस्य स्थाने कुप्वोः परयोर्विकल्पेन ≍क≍ पयो-र्विधाने पक्षे विसर्गः सिध्यति, विसर्गानुकर्षणार्थं चग्रहणञ्च न कर्तव्यं भवतीति लाघवमस्तीति वाच्यम्, ≍क≍ पयोरभावे 'विसर्जनीयस्य सः' इति सत्वापत्तेः । अनेन विसर्जनीयस्यापि विधाने तु सत्वापवादत्वादादेशद्वयं सिध्यति । क ≍ करोति, कः करोति । क ≍ पचति, कः पचति इति । नच चेन उत्तरसूत्रात् 'शर्परे' इत्यतो विसर्गानुकर्षणे मानाभावः, चग्रहणस्यैव मानत्वात् । अन्यथा तद्वैयर्थ्यं स्पष्टमेव । ननु विसर्गो द्विविधः—'खरवसानमिमित्तकः, शर्परखर्निमित्तकश्च । तत्र शर्पर-निमित्तकस्यैवानेन ≍क≍पौ स्याताम्, न खर्निमित्तकस्य, 'कुप्वोः' इत्यस्यासिद्धत्वेन 'विसर्जनीयस्य सः' इति सादेशेन तदपहारात् । न चापवादत्वम्, शर्परखर्निमित्तकविसर्गस्यासिद्धत्वेन सत्वाप्राप्तया तत्रास्य चरितार्थत्वात् । नच तस्यापि एतद्दृष्ट्याऽसिद्धतया ≍क≍ पयोरप्राप्तिः, एतद्वैयर्थ्येन सिद्धत्वज्ञापनात् ।

नच शर्परखर्निमित्तकविसर्गे एव ≍क≍ पयोः प्रवृत्तौ 'शर्परे' इति विसर्गविधानस्य वैयर्थ्यम्, कः त्सरुक इत्यादौ 'शर्परे' इत्यस्य चारितार्थ्यादिति चेन्न, 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायेन 'विसर्जनीयस्य सः' इत्यपवादतया खर्निमित्तक-विसर्गे एवैतत्प्रवृत्तेः । तथा हि यदि शर्परे इति विसर्गे ≍क≍ पौ स्यातां तदा शर्परे इति सूत्रे विसर्जनीयग्रहणस्य वैयर्थ्यापत्तिः, एतद्विहितविसर्गे ≍क≍ पयोः प्रवृत्त्या । 'शर्परे' इत्यस्य सत्व-मात्रापवादतया 'न शर्परे' इति न्यासेनैव सत्वनिषेधसिद्ध्या विसर्जनीयग्रहणसामर्थ्येन शर्परे खरि विसर्जनीयस्य सत्वं ≍क≍ पौ च बाधित्वा विसर्ग एव भवति इति कल्पनेन तद्विसर्गे ≍क≍-पयोरप्रवृत्तौ परिशेषात् खर्निमित्तविसर्गे एव एतस्य प्रवृत्तौ तत्र च सत्वस्यावश्यं प्राप्ततया 'येन नाप्राप्ते' इति न्यायेन ≍क≍ पयोः सत्वापवादत्वस्यैव कल्पनात् । नचास्यासिद्धतया सत्वापत्तिः, यं प्रति यस्यापवादत्वं तं प्रति तस्य सिद्धत्वस्यारम्भसामर्थ्यादनेन ज्ञापनात् ।

वस्तुतस्तु 'शर्परे' इति विसर्गस्यासिद्धतया तत्रास्याप्रप्तिः । एतस्यासिद्धतया खर्परविसर्गस्य सत्वेनापहारादस्याप्राप्तिरिति कुप्वोरित्यस्य वैयर्थ्येन सत्वम्, 'शर्परे' इति वा बाधनीयम् । तत्र 'शर्परे' इत्यस्य शर्परयोः कुप्वोरेव प्राप्त्या, सत्वस्य तु सर्वत्र कुप्वोः प्राप्तस्य 'येन नाप्राप्ते' इति न्यायेन सत्वस्यैवानेन बाधः । शर्परविहितविसर्गे तु नास्य प्राप्तिः, तस्यासिद्धत्वात् । ननु खर्भिन्नयोः कुप्वोर्गकारादिभवकारायोरस्य चारितार्थ्यात्सत्वस्याप्यबाधः । न च खरि एव विसर्ग-सत्वेन गकारबकारादिकुप्वोर्विसर्गाभावेनास्य न चारितार्थ्यम्, अवसाने विसर्गं कृत्वा पुनर्गकारादि-सम्बन्धे अकृतव्यूहपरिभाषाया अभावेन तदनित्यत्वेन वा गकारादावपि विसर्गोपलब्धेरिति चेन्न, खरीत्यनुवृत्त्या खरूपयोरेव कुप्वोरेतत्प्रवृत्तेः ।

ननु 'अशर्परे विसर्जनीयस्य सः'. 'कुप्वोः ≍क≍ पौ विसर्जनीयः' इत्येवं न्यासोऽस्तु 'कुप्वोः' इत्यत्राशर्परे इति सम्बध्यते । अशर्परयोः कुप्वोः प्रवृत्त्या 'वासः क्षौमम्' इत्यादौ न दोषः । तावतापि सूत्रत्रयापेक्षया सूत्रद्वयकरणेन कुप्वोरिति सूत्रे चकाराकरणेन च लाघवमिति चेन्न, 'अशर्परे' इत्यस्य 'शर्परे खरि न विसर्गस्य सः' इति प्रसज्यप्रतिषेधाश्रयणे सूत्रत्रयस्य तादवस्थ्येन, असमर्थ-समासादिदोषग्रस्तत्वेन च गौरवात् ।

पर्युदासे शर्परखरो हल्परत्वेन हल्परयोरेव कुप्वोः जिह्वामूलीयादेः प्रवृत्त्या 'क≍ पचति' इत्याद्यसिद्ध्यापत्तेः । भाष्ये तु 'येन नाप्राप्ते' इति न्यायेन बाधो नोक्तः, किन्तु योगविभागेन ।

**कानाम्रेडिते । [ ८-३-१२ ]**

कान्नकारस्य रुः स्यादाम्रेडिते परे । संपुंकानाम्' ( वा ४८९२ ) इति सः । यद्वा

**कस्कादिषु च । [ ८-३-४८ ]**

एष्विण उत्तरस्य विसर्गस्य षः स्यात् । ≍क≍ पयोरपवादः । अन्यस्य तु सः । काँस्कान्, कांस्कान् । कस्कः । कौतस्कुतः सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् ।

**संहितायाम् । [ ६-१-७२ ]**

---

तथा हि—'शर्परे विसर्जनीयः', 'कुप्वोः' शर्परयोः कुप्वोर्विसर्जनीयस्य विसर्जनीयः स्यात्' ≍क≍ प्वोर्बाधनार्थमिदम् । ततः ≍क≍ पौ च कुप्वोः ≍क≍ भवतो विसर्गश्चेति ।

'कानाम्रेडिते'—'कान्' इति द्वितीयाबहुवचनान्तानुकरणं लुप्तषष्ठ्यन्तम् । द्वित्वविधायकानि कानिचित्सूत्राणि षष्ठाध्याये कानिचिदष्टमाध्याये । तत्राष्टमाध्यायसूत्रविहितद्वित्ववतः परभाग आम्रेडितशब्देनोच्यते, 'तस्य परमाम्रेडितम्' इति सूत्रात् । रुरित्यनुवर्तते । तदाह—कानिति । रुत्वे विसर्गे ≍कं बाधित्वा 'संपुकानाम्' इति सः । वार्तिकाभावे 'समस्सुटि' इति सकारानुवृत्त्या सादेशः । यस्यासिद्धत्वाद् रुत्वविसर्गौ न । न च 'नॄन्पे' इत्यत्र सकाराननुवृत्त्याऽनुवृत्तिर्न स्यादिति वाच्यम्, तत्र 'स्' इत्यनुवृत्तेः । नच 'नॄनोऽप्राप्तेः । अत्र 'पुमः खयि' इति निवृत्तं स् सम्बध्यते । अत्र किंशब्दः प्रष्टव्यवाची, "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिन्याः । 'नित्यवीप्सयोः' इति द्वित्वम् । सर्वान् प्रष्टव्यान् पश्यतीत्यर्थः । यत्र कुत्सितान् प्रष्टव्यान् इत्यर्थे 'कान्कान्' इति तत्र न रुत्वम् आम्रेडितपरत्वाभावात् । न चात्रापि द्वित्वमेव, अर्थत आन्तर्य्येण द्वित्वे विभिन्नार्थासम्भवात् । अत एव 'कान्कानि' इति नोक्तम्, विभिन्नार्थके द्विरुच्चारितेऽपि रुत्वापत्तेः । यद्वेति—वार्तिके संकान्ग्रहणं न कर्तव्यम्, कस्कादित्वात्सिद्धेस्तदाहुः—

'कस्कादिषु च' अत्र 'इणः षः' इति, विसर्जनीयस्य, इति चानुवर्तते । इणः परस्य विसर्गस्य कस्कादिषु षः स्यादित्यर्थः । 'सोऽपदादौ' इत्यतः स इत्यनुवर्तते । इण्भिन्नात्परस्य विसर्गस्य कस्कादिषु सः स्यादित्यर्थः । इति वाक्यद्वये प्रमाणाच्च कस्कादिषु कृतसत्वषत्वानां तादृशानां पाठः । तथा च कस्कादिषु 'कांस्कान्' संस्कृ, इति पाठेन ≍ कं बाधित्वा सः स्यादिति भावः । पुंग्रहणन्तु वार्तिके कर्तव्यमेव, कस्कादिपाठे 'इणः परस्य विसर्गस्य षत्वापत्तेः । वस्तुतस्तु 'समस्सुटि' इत्यत्र सकारप्रश्लेषेण वार्तिकप्रत्याख्याने एव लाघवम्, अष्टमाध्याये 'तयोर्य्वावचि संहितायाम्' इति संहितायामित्यस्याधिकारात् । तदविवक्षायां 'क≍कोऽत्र भोः' इत्यत्र सत्वाभावः ।

कस्क इति—कः, को गच्छतीत्यर्थः । कौतसिति—कुत इत्यस्य वीप्सायां द्वित्वे 'तत आगतः' इत्यणि 'अव्ययानां भमात्रे टिलोपः' इति टिलोपे तसः सस्य 'ससजुषो रुः' इति रुत्वेऽनेन सत्वे 'कौतस्कुतः' इति । गणे तसन्तपाठसामर्थ्यात् 'अव्ययात् त्यप्' इति त्यपो बाधः । 'सर्पिस् कुण्डिका' इति स्थितौ रुत्वे विसर्गे इणः परत्वात् षत्वे च 'सर्पिष्कुण्डिका' इति घृतस्य पात्रमित्यर्थः । 'कुण्डी-कमण्डलौ जारात्पतिवत्नीसुते पुमान् । 'पिठरे ( पात्रे ) तु न ना' इति मेदिनीकोशात् । धनुष्कपालमिति—धनुषः शिरोभाग इत्यर्थः, 'कपालोऽस्त्री शिरोऽस्थिन स्याद् । घटादेः शकले व्रजे' इति मेदिन्याः । ननु 'कस्कादिषु 'काँस्कान्' इत्यस्य पाठाभावात्सत्वमनेन न स्यादत आह—आकृतीति 'आकृतिगणोऽयम्' इति गणसूत्रम् । अयं कस्कादिः, आकृत्या वर्णविन्यासरूपया आनुपूर्व्या गण्यते=ज्ञायते इत्याकृतिगणः । यत्र शिष्टोच्चरितशब्दे सत्वषत्वादिकार्यं दृश्यते सूत्रान्तरेण च न सिध्यतीति सत्वषत्वघटिताकृतिः कस्कादिबोधिकेति यावत् ।

'संहितायाम्' संपूर्वकाद्धाधातोर्भावे क्ते रूपम् । नच 'नपुंसके भावे क्तः' इति नपुंसकत्वम्, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्योक्तेः, अत एव निर्देशाच्च यद्वा सम्बन्धितं यस्यां सा संहिता इति समासे भिन्नादिसंज्ञावत्प्रवृत्तिरियम् । यद्वा 'क्तिच्क्तौ च संज्ञायाम्'

इत्यधिकृत्य ।

छे च । [ ६-१-७३ ]

ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । श्चुत्वस्यासिद्धत्वात् 'चोः कुः' ( सू ३७८ ) इति कुत्वं न । स्वच्छाया । शिवच्छाया ।

आङ्माङोश्च । [ ६-१-७४ ]

एतयोश्छे परे तुक्स्यात् । 'पदान्ताद्वा' ( सू १३६ ) इति विकल्पापवादः । आच्छादयति । माच्छिदत् ।

दीर्घात् । [ ६-१-७५ ]

दीर्घाच्छे परे तुक्स्यात् ।

---

इति बाहुलकादाशिषोऽभावेऽपि क्तः । अधिकृत्येति—'छे च' इत्यादिना तुगादिकं विधीयते आचार्येणेति शेषः । तेन समानकर्तृकक्रियाद्वयाभावात्कथं ल्यबिति शङ्का निरस्ता । यद्यपि 'इको यणचि' इति प्राग्लेख उचितस्तथापि 'न वक्तव्यं संहितावसानयोर्लोकविदितत्वात्' इति वार्तिकात्, 'अयं योगः शक्योऽवक्तुम्''' ' शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात्' इति भाष्याच्च इदं सूत्रं व्यर्थमिति द्योतनायात्रोल्लेखः । उपश्लेषः=अर्धमात्राधिककालाव्यवायेन सम्बन्धः । विषयसप्तमीयम् । संहितायां विषयभूतायामित्यर्थः ।

'छे च' 'ह्रस्वस्य पिति कृति' इत्यतो ह्रस्वस्य इति तुगिति चानुवर्तते । यद्यपि पूर्वसूत्रे 'प्रत्ययग्रहणे यस्मात्स विहितः' इति परिभाषयोपस्थिततदादिविशेषणमित्यर्थाधिकारादत्रापि ह्रस्वान्तस्य तुका भाव्यं तथापि ह्रस्वान्तस्य तुकि 'चच्छौ' इत्यादौ 'हलादिः शेषः' इति तुको लोपाभावाय ह्रस्वस्य तुग्विधीयते । न चैवमपि 'अवयवावयवः समुदायावयवः' इति लोकन्यायाद्दोष एवेति वाच्यम् ह्रस्वमात्रस्य शब्दाधिकारेणानुवृत्त्यर्थकृतेन 'छे च' इति चग्रहणेन 'छे आङ्माङोः' इति न्यासेन चेन ह्रस्वस्यापि तुकि सिद्धे योगविभागसामर्थ्येन चावयवावयवन्यायस्यात्राप्रवृत्तिकल्पनात् । 'छे' इत्यत्राकार उच्चारणार्थः । 'विदिभिदिच्छिदेः कुरच्' 'शाच्छोरन्यतरस्याम्' इत्यादि निर्देशात्, 'प्रष्टा, प्रष्टुम्, प्रष्टव्यम्' 'तुक्प्रसङ्गश्च' इति षत्वस्यासिद्धतया तुगापत्तिपरभाष्याच्च ।

'अग्ना ई ३ छत्रम्' इति छन्दसि प्लुतस्यासिद्धत्वेऽपि न तुक्, छन्दसि सर्वविधीनां वैकल्पिकत्वात् । स्वच्छायेति—स्वस्य=आत्मनः स्वा आत्मीया वा छाया स्वच्छाया । षष्ठीसमासः, कर्मधारयो वा । छाया=प्रतिबिम्बम् शिवस्य हरस्य छाया=कान्तिः शिवच्छाया ।

उभयत्रापि अकारस्य तुक् 'आद्यन्तौ टकितौ' इत्यन्तावयवः । स्वत् छाया, शिवत् छाया, इत्यत्र जश्त्वेन दकारे चुत्वेन जे, चर्त्वेन च, चुत्वस्यासिद्धतया जचयोरदर्शनेन 'चोः कुः' इति कुत्वाभावे 'स्वच्छाया' 'शिवच्छाया' इति । जश्त्वेनेति प्रतीके शेखरे 'स्वशब्दे उपपदे छ्यतेर्डे' इत्यादिव्याख्यादर्शनेन 'स्वच्छः' इत्येवोदाहरणं प्रतीयते न तु 'स्वच्छाया' इति ।

'आङ्माङोश्च' छे इति, तुगिति चानुवर्तते । आच्छादयति अत्र जश्त्वादिकं पूर्ववत् । 'माच्छिदत्' 'मा छिदत्' इति स्थितिः । अट् तु न, 'न माङ्योगे' इति निषेधात् । 'मा च्छिदत्' अस्य न छिनत्ति, नाच्छिदत्, न छिनत्तु, न छेत्स्यतीत्यर्थः, माङि लुङः सर्वलकारापवादत्वात् । आङ्माङोः 'दीर्घात्' इति तुकि सिद्धे 'पदान्ताद्वा' इति वैकल्पिकतुको बाधनार्थ मिदमित्याह—पदान्ताद्वेति—अव्ययेन आङा साहचर्याद्व्ययस्यैव माङो ग्रहणम् । तेन क्विबन्तस्य माङ्धातोर्योगे वैकल्पिकस्तुगेव । ङित्करणादङितो रामाव्ययोरपि 'पदान्ताद्वा' विकल्पेन तुक् ।

'दीर्घात्' अत्र 'छे' इति तुगिति चानुवर्तते । 'छे' इति सप्तम्या पूर्वस्य, दीर्घादिति पञ्चम्या परस्य तुकः प्राप्तौ यदि 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वात्' इति न्यायेन 'तस्मादिति' परिभाषया दीर्घात्परस्य छस्यान्तावयवस्तुक् स्यात् तदा छिदिधातोर्यङि छित्वे

दीर्घस्यायं तुक्, न तु ह्रस्व, 'सेनासुराच्छाया-' इति ज्ञापकात्। चेच्छिद्यते।

पदान्ताद्वा। [ ६-१-७६ ]

दीर्घात्पदान्ताच्छे परे तुग्वा स्यात्।

हलादिशेषे परत्वादाङ्गत्वाच्च 'गुणो यङ्लुकोः' इति गुणे तङि 'चेछिद्यते' इति स्थितौ ह्रस्यान्तावयवे तुकि 'चेछ्त्द्यते' इति जाते श्चुत्वेन तस्य चे तत्पूर्वस्य ह्रस्य 'खरि च' इति चर्त्वे न च मुपजीव्य-जायमानं तुकमादाय सन्निपातपरिभाषया चर्त्वाभावे चद्वयाभावेऽपि छकारात्परं चकारः श्रूयेतात आह—दीर्घस्येति। दीर्घस्यान्तावयवे तुकि 'चेत् छिद्यते' इति स्थितौ पदान्तत्वाभावेन जश्त्वाभावे चुत्वे पर्जन्यन्यायेन चर्त्वे 'चेच्छिद्यते' इति। न च पुनः 'हलादिः शेषः' 'नुगतोऽनुनासिकान्तस्य' इति सूत्रवैयर्थ्येन हलननुबन्धकस्यैव स्थानिद्वारा साक्षाद्वा अभ्यासावयवहलस् तेन निवृत्तिज्ञापनात्। तुक् तु ककाररूपहलनुबन्धक इति न निवृत्तिः। ननु दीर्घस्य तुकि प्रमाणाभावोऽत आह—सेनेति। यदि ह्रस्य तुक् स्यात्तदा 'पदान्ताद्वा' इत्यनेनापि ह्रस्यैव तुक् स्यात्तदा 'सेनासुराच्छाया' इति चकारोत्तरच्छकारघटितनिर्देशो न संगच्छते। तादृशनिर्देशः स्वस्वरूपसमत्वये दीर्घस्य तुकं ज्ञापयतीति भावः।

ननु 'सुराच्छाया' इत्यत्र 'पदान्ताद्वा' इत्यस्य विषयतया तस्य तादृशत्वमस्तु 'दीर्घात्' इति तु अपदान्ते प्रवर्ततेऽतोऽस्य दीर्घस्य तुगित्यर्थे मानाभावः। किञ्च 'भोभगोअघो' इत्यत्र 'असन्धिः सौत्रः' इतिवत् सौत्रत्वेन निर्देशोपपत्त्या ज्ञापकत्वासम्भव इति चेन्न, भाष्ये 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति पक्षे 'आलूय' इत्यत्र 'ह्रस्वस्य पिति' तुकमाशङ्क्य 'दीर्घे ह्रस्वाश्रयो विधिर्न भवति' इत्यर्थे 'यदयं दीर्घाच्छे तुकं शास्ति' इति ज्ञापकमुक्तम्, यदि ह्रस्यायं तुक् तदा तु ह्रस्वस्य तुग्विधायकेन 'ह्रस्वस्य तुक्' न ह्रस्य इति तेन 'छे च' इत्यनेन नास्य गतार्थत्वाभावाद् भाष्यासङ्गत्यापत्त्यैव दीर्घस्यायं तुगित्यर्थकल्पनात्। न च दीर्घादिति उत्तरार्थमन्यथा ह्रस्वेऽपि पदान्ते 'पदान्ताद्वा' इत्यस्यापत्तिरिति वाच्यम्, एवं तर्हि 'दीर्घात्' इति योगविभागेन तदर्थज्ञापनात्। तदुक्तं भाष्ये—'यत्तर्हि योगविभागं करोति। इतरथा हि 'दीर्घात्पदान्ताद्वा' इत्येव ब्रूयात्, इति। नन्वेवं क्लिष्टकल्पनापेक्षया 'ह्रस्वस्य पिति' इति सूत्रम् 'ह्रस्वात् पिति कृति तुट्' इति रूपात्मकमस्तु। पञ्चमीनिर्देशस्य बलवत्तया पित्कृत आद्यवयवे तुट्यपि 'अग्निचित्' इत्यादिसिद्धेः। एवं 'छे च' दीर्घात्, इत्यादिनापि ह्रस्य तुटि दोषाभावः। किञ्च 'चेच्छिद्यते, चाच्छाद्यते,' इत्यादौ तुको 'हलादिः शेषः' इति निवृत्तयत्नानाश्रयणकृत-लाघवमप्यस्ति। किञ्च 'नुगतोऽनुनासिकान्तस्य' इत्येवास्तु। तत्र 'अतः' इति पञ्चम्यन्तम्। हलादि-शेषेण नुको निवृत्तये न ज्ञापकाद्याश्रयणमित्यपि अनुकूलम् इति चेन्न, 'अग्निचित्' इत्यादौ अन्त-रङ्गत्वात् क्विपो लोपे तुडनापत्तेः। न च तुटो वैयर्थ्यम्, 'प्रकृत्य' इत्यादौ चारितार्थ्यात्। न च प्रत्ययल-क्षणेन तुट्, अभावरूपे लोपे प्रत्ययत्वबुद्धावपि तुटि तदवयवत्वासम्भवात्। यदि क्विपि पित्करणाल्लो-पेऽपि तुट् 'लोपात्पूर्वं वा तुट्। न च पूर्वं तुटि तस्य क्विपो लोपापत्तिः, विधानसामर्थ्येन तद्बाधात्। यत्तु 'प्रत्ययलोपे' इति सूत्रे लक्षणग्रहणेन प्रत्ययस्य लोपे सति प्रत्ययस्थानिके कार्ये 'प्रत्ययलोपे' इति सूत्रं न प्रवर्तते। तेन 'नलनिर्भिन्नः' इत्यादौ भिस ऐस् न। तत एव क्विपो लोपे प्रत्ययस्था-निकत्वात् तुट् न स्यादिति तन्न, आगमानामवयवत्वेन प्रत्ययस्थानिककार्याभावात्। परन्त्वेतादृश-क्लिष्टकल्पनापेक्षया यथाश्रुतन्यासेन तुक एव दीर्घस्येति ज्ञापने एव लाघवात्। तथा च दीर्घादिति षष्ठ्यर्थे पञ्चमीति भावः। चेच्छिद्यते इति—अतिशयेन पुनः पुनर्वा खण्डयतीत्यर्थः।

'पदान्ताद्वा' इति 'छे' इति दीर्घादिति चानुवर्तते। अर्थाधिकारानुरोधाद् दीर्घादिति विशेष्यानुरोधेन 'सुराच्छाया' इति निर्देशेन 'पदान्तात्' इत्यपि षष्ठ्यर्थे पञ्चमी। दीर्घात्पदान्तादिति पदान्तस्य दीर्घस्येत्यर्थः।

लक्ष्मीच्छाया, लक्ष्मीछाया ।

पदादित्येवं न्यासे दीर्घस्य विशेषणतया तदन्तविधिना दीर्घान्तस्य पदस्य वा तुगित्यर्थलाभे-ऽन्तग्रहणम् 'साक्षात्पदोद्देश्यकविधौ प्रवर्तमानस्य 'समर्थः पदविधिः' इत्यस्य तुकः परम्परया पदोद्देश्यकत्वसम्पादनद्वारा अप्रवृत्त्यर्थः । तेन 'गौरी च्छादयति' इति वाक्ये, 'तिष्ठतु वेर्वा च्छत्रं नय चैत्र,' इति सामर्थ्याभावेऽपि तुक् सिध्यति । वस्तुतस्तु 'अन्तग्रहणं स्पष्टार्थमेव, पदत्वप्रयोजकसुप्तिङ्-विधायकशास्त्रोद्देश्यतावच्छेदकधातुप्रातिपदिकसंज्ञाविधायुद्देश्यानां कृत्तद्धितसमासानाम्, सन्न्य-ज्ञादीनाञ्चैव पदविधित्वस्य वक्ष्यमाणत्वेन पदस्य साक्षादुद्देश्यत्वेऽपि तदनुपस्थितेः । पदविधित्वञ्च— 'पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वम्' इति पञ्चोलिनः ।

लक्ष्मीति—लक्षयति=दर्शयति जनं या लक्ष्मीः = कमला तस्याश्छाया=कान्तिः । लक्षयतेरी-प्रत्यये मुटि च साधु । छयत्यावरणमिति छाया = कान्तिः, प्रतिबिम्बो वा । छ्यतेर्यप्रत्ययः ।

इतीति—हल्सन्धिप्रकरणम्—साक्षाद्धल्निमित्तकः सन्धिः हल्सन्धिः तस्य प्रकरणम्— सजातीयार्थप्रतिपादकग्रन्थांशः प्रकरणमत्र ।

इति हल्सन्धिः—इतीति-हलः सन्धि हल्सन्धिः । संहितानिमित्तकं यद्धल्कार्य्यं तद्ध-ल्सन्धिः । तत्प्रतिपादकत्वात्प्रकरणमपि हल्सन्धिः । हल्सन्धिप्रकरणं समाप्तमित्यर्थः । यद्यपि 'पदान्ताद्वा' ( ६–१–७६ ) इत्यनन्तरम् । इति हल्सन्धिप्रकरणमित्युल्लिखितं तथापि 'अच्सन्धिः'१ हल्सन्धिः,२ विसर्गसन्धिः,३ स्वादिसन्धिः,४ इति सन्धिचतुष्टयमेवोपलभ्यते । प्रकृतिभावस्याच्स-न्धिभिन्नत्वं तु न, तस्यापि संहितानिमित्तकाच्कार्य्यरूपाच्सन्धित्वात् । अत एव प्रकृतिभावानन्तरम् 'इत्यच्सन्धिरित्युल्लेखः । अतो विसर्गसन्धिवदनुस्वारसन्धिरेव पञ्चसन्धित्वसम्पादकः । इत्यतः 'अच्सन्धित्वम्, हल्सन्धित्वम्, अनुस्वारसन्धित्वम् ( तच्च अनुस्वाररूपम् अनुस्वारनिमित्तकञ्च । ) स्वादिसन्धित्वम् इति पञ्च धर्मा एव सन्धिविभाजकोपाधयः ।

नच व्यधिकरणधर्माणामेव विभाजकोपाधित्वात् स्वादिसन्धेरपि संहितानिमित्तकहल्कार्य्यत्वाद् हल्सन्धित्वस्वादिसन्धित्वयो व्यधिकरणत्वानुपपत्तिः, स्वादिसन्धिभेदविशिष्टहल्सन्धित्वस्यैव हल्सन्धि-त्वपदेन ग्रहणात् ।

वस्तुतस्तु पञ्चसन्धित्वं दुरुपपादम् । तथा हि—स्वादिसन्धिरित्यस्य यदि 'संहितायाम्' इत्यधिकृत्य स्वादिप्रत्ययनिमित्तकं कार्यमित्यर्थस्तदा 'रामावास्ताम्' इत्यादावच्सन्धेः, 'रामश्चिनोति' इत्यादौ हल्सन्धेरपि स्वादिसन्धित्वापत्तिः । न च 'संहितायाम्' इत्याधिकृत्य स्वादित्वतद्व्याप्यधर्मेण वा यत् स्वादिप्रत्ययस्थानिकं कार्य्यं तत्स्वादिसन्धिरूपम्, इति नोक्त दोष इति वाच्यम्, तथा सति 'एतत्तदोः सुलोपः' 'सोऽचि लोपे चेत्' इति सूत्रद्वयविहितकार्य्यस्यैव स्वादिसन्धित्वेन स्वादिसन्धौ बहूनां सूत्राणां निवेशस्य वैयर्थ्यापत्तेः, सुसन्धिरित्येव वक्तव्ये आदिग्रहणस्य वैयर्थ्यापत्तेश्च ।

एवं 'हल्सन्धिः' इत्यस्य 'संहितायाम्' इत्यधिकृत्य यदि हल्स्थानिकं कार्य्यं हल्सन्धिः । हल्-नष्टा स्थानिना च हल्त्वेन तद्व्याप्यधर्मेण वेत्यर्थः । तदा 'ङः सि धुट्' 'शि तुक्' 'ङ्णोः कुक्टुक्शरि' 'छे च' इत्यादि-विहितकार्य्याणां हल्सन्धित्वानुपपत्तिः । यदि हल्निमित्तककार्य्यत्वं तद्, तदा 'वान्तो यि' 'मय उञो वो वा' 'अचो रहाभ्याम्' इत्यादेरपि कार्य्यस्य हल्सन्धित्वापत्तिः । न चेष्टापत्तिः, अच्सन्धौ तदुल्ले-खस्य विरोधापत्तेः । अतः 'संहितायाम्' इत्यधिकृत्य यत्कार्य्यं तत्सन्धिकार्य्यम् । तस्य एकमेव सन्धिप्रकरणम् इत्युपाध्यायाः ।

॥ इति हल्सन्धिप्रकरणम् ॥

———

## अथ विसर्गसन्धिप्रकरणम् ।

'विसर्जनीयस्य सः' [ ८-३-३४ ] खरि विसर्जनीयस्य सः स्यात् । विष्णुस्त्राता ।

**शर्परे विसर्जनीयः । [ ८-३-३५ ]**

शर्परे खरि विसर्जनीयस्य विसर्जनीयः, न त्वन्यत् । 'कः त्सरुः', । 'घनाघनः क्षोभणः' । इह यथायथं सत्वं जिह्वामूलीयश्च न ।

**वा शरि । [ ८-३-३६ ]**

शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात् ।

हरिः शते, हरिश्शते ।

---

'विसर्जनीयस्य सः' इति । ननु 'संस्कर्ता' इत्यस्य साधनावसरे इदं सूत्रमुक्तं पुनरत्रोपन्यासो व्यर्थं इति चेन्न, तत्रास्य प्रासङ्गिक उल्लेखः । अत्र तु विसर्गसन्धेः प्रकरणात्, विसर्जनीयपदस्य उत्तरत्र सम्बन्धस्यावश्यकत्वाच्चात्रोपन्यासात् । ननु विसर्गस्यापि शर्षु पाठेन हल्त्वात् हल्सन्धिष्वेव विसर्गसन्धेरप्यन्तर्भाव उचित इति चेन्न, ब्राह्मणवशिष्ठन्यायेन विसर्गस्थानिकसन्धिसन्देहे झटिति ज्ञानाय पृथगुल्लेखात् । विसर्जनीयस्य स इत्युक्ते व्याप्त्या खरवसानयोरित्यनुमीयते । तत्र 'प्रत्ययः' इत्यादिनिर्देशात् अवसाने न सः । फलितार्थमाह—खरीति । वस्तुतस्तु अनुमितस्य शाब्देऽन्वयाभावेन मण्डूकप्लुत्या खरीत्यनुवर्तते । खरीत्यस्यैव मण्डूकानुवृत्तौ मानन्तु 'खरवसानयोरि'—त्यनेन सत्वे विधातव्ये विसर्गविधानसामर्थ्येनोभयोरसम्बन्धे सिद्धे खर्मात्रस्य सम्बन्धः । अवसानमात्रस्य तु न सम्बन्धः, 'शर्परे' इत्यस्य वैयर्थ्यापत्तेः, 'प्रत्ययः' इत्यादिनिर्देशात्, विसर्जनीयस्य सः' इत्यत्र खरीत्यनुवर्तिष्यते, इति भाष्याच्च । अन्ये तु 'अवसाने विसर्जनीयः' अवसाने रेफस्य विसर्गः स्यादित्यर्थः । 'खरि सः' खरि रेफस्य सः स्यात् । 'शर्परे विसर्जनीयः' शर्परे खरि रेफस्य विसर्जनीयः । 'विसर्जनीयस्य सः' इति न कर्तव्यमित्याहुः । विष्णुस्त्राता = रक्षको नारायण इत्यर्थः । अत्र सस्य रुत्वन्तु न, रुत्वदृष्ट्या सत्वस्यासिद्धत्वात् ।

'शर्परे विसर्जनीयः' इति । 'शर्परे' इति शर्परो यस्मात्स शर्पर इति बहुव्रीहिर्न तु कर्मधारयः, शरि, इत्येव वक्तव्ये परग्रहणस्य वैयर्थ्यापत्तेः । खरीत्यनुवर्तमानं प्रत्यासत्त्या बहुव्रीह्यर्थः । विसर्जनीयस्येति चानुवर्तते । विसर्जनीयस्य स्थाने विसर्जनीयविधानं सत्वादिबाधनार्थम् । तदाह—न त्वन्यदिति—अत्र कुप्वोरित्यनुवर्त्यं वाक्यभेदेन शर्परयोः कुप्वोः विसर्गस्य विसर्गविधानेन जिह्वामूलीयादेरपि बाध इति भावः । नेति वक्तव्ये विसर्जनीयग्रहणेन कार्यमात्रस्य बाध इति तु न, 'अनचि च' इत्यादिद्वित्वस्यापि बाधापत्तेः । न चेष्टापत्तिर्मानाभावात् । न च वाक्यभेदेन विधानेऽपि 'इदुदुपधस्य' इति प्राप्तषत्वबाधाय बाध्यसामान्यचिन्ताश्रयेण 'अनचि च' इति द्वित्वबाधो दुर्वार इति वाच्यम्, प्रतिपदोक्तपरिभाषया कुप्वोरित्युच्चार्य विहितस्यैव बाधेन षत्वविषयेऽपि कुप्वोरित्यस्य सम्बन्धेन षत्वबाधेऽपि द्वित्वबाधाप्राप्तेः ।

विसर्गस्य विसर्गविधौ फलमाह—न त्वन्यदिति । किमन्यदित्याह—यथायथमिति—'यथास्वे यथायथम्' यथार्हमीयं यथाप्राप्तमिति यावत् । 'कः त्सरुः' अत्र सत्वं न । 'घनाघनः क्षोभणः' अत्र ⌣को न । तथा च कुप्वोरित्यस्य सत्वषत्वयोश्चापवादोऽयम् । तेन 'चतुःक्षीरम्' इत्यादौ षत्वमपि न । यदि तु 'विसर्जनीयस्य सः' इत्यत्र विसर्जनीयपदं 'कुप्वोरिति' शर्परे इति विहितयोरसिद्धतया 'खरवसानयोः' इति विहितविसर्गस्यैव बोधकमित्यर्थाधिकारानुरोधात् कुप्वोरित्यादावपि तस्यैव ग्रहणात् 'शर्परे' इति विहितविसर्गस्य जिह्वामूलीयाद्यप्राप्तिरिति तदर्था क्लिष्टकल्पना व्यर्था ।

'वा शरि' इति विसर्जनीय इति चानुवर्तते । सत्वापवादोऽयम् । विसर्गपक्षे 'हरिः शेते' तदभावे विसर्गस्य सत्वे श्चुत्वे च 'हरिश्शेते' इति ।

'खर्परे शरि वा विसर्गलोपो वक्तव्यः' ( वा ४६०६ ) राम स्थाता, रामः स्थाता । हरि स्फुरति, हरिः स्फुरति । पक्षे विसर्गे सत्वे च त्रैरूप्यम् ।

'कुप्वोः ≍क ≍पौ च' । क≍करोति, कः करोति क≍खनति, कः खनति । क≍पचति, कः पचति । क≍फलति, कः फलति ।

सोऽपदादौ । [ ८-३-३८ ]

विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः ।

'पाश-कल्प-क-काम्येष्विति वाच्यम्' । पयस्पाशम् । यशस्कल्पम् । यशस्कम् यशस्काम्यति । 'अनव्ययस्येति वाच्यम्' ( वा० ४६०१ ) । प्रातःकल्पम् ।

---

'खर्परे शरि वा विसर्गलोपो वक्तव्यः' वार्तिकम् इदम् । खर्परो यस्मादिति बहुव्रीहिः, परग्रहणसामर्थ्यात् , न तु कर्मधारयः । अन्यपदार्थश्च शर् एव । विसर्गलोपे 'राम स्थाता' इति, रामः स्थास्यतीत्यर्थः । लोपाभावे वा शरीति विसर्गे 'रामः स्थाता' इति तदभावे सत्वे 'रामस्स्थाता' इति रूपत्रयम् । हरि स्फुरतीति—चलतीत्यर्थः ।

'कुप्वोः ≍क≍ पौ च' प्रकरणादत्रोपन्यस्तम् । अत्र यद्वक्तव्यं तत्पूर्वमुक्तम् । ≍क≍ फलतीति—फल निष्पत्तौ । कः सिध्यतीत्यर्थः ।

'सोऽपदादौ' अत्र कुप्वोरिति, विसर्जनीयस्य, इति चानुवर्तते । अपदादाविति, कुप्वोर्विशेषणम् अपदाद्योः कुप्वोरिति । तथा च अभेदेन विशेष्यविशेषणयोः असति बाधके समानवचनकत्वनियमात्सूत्रे 'अपदाद्योः' इति वक्तव्ये सौत्रत्वादेकवचनम् । यद्वा अनुवृत्तम् 'खरि' इति विशेष्यम् 'अपदादौ खरि' इति । न च मण्डूकानुवृत्तिर्दोषः, वा शरि इत्यत्रापि शर्भिन्ने खरीति शरो विशेषिततया व्याख्यानेन पूर्वसूत्रेऽप्यनुवृत्त्या मण्डूकानुवृत्तेरभावात् । वस्तुतस्तु सौत्रत्वादेकवचनमित्येव न्याय्यम् । अन्यथा अतिशयिता पूः पूस्तरा इत्यत्र 'इणः षः' इति षत्वापत्तिः, 'सोऽपदादौ' 'इणः षः' इत्युभयोः समाननिमित्तकत्वात्खरि एव तस्यापि प्रवृत्तेः । यदि कुप्वोरित्यप्यनुवर्त्य कवर्गपवर्गरूपे खरीति व्याख्यायते तदाऽतिगौरवम्, अतः खरीति नानुवर्तनीयं किन्तु कुप्वोरित्यस्यैवानुवृत्तिः । 'बहुलं छन्दसि' इति द्वित्वे एकवचनम् । न च 'पूस्तरा' इत्यत्र 'पाशकल्प' इति परिगणनात् 'इणः षः' इत्यस्याप्राप्त्या 'खरीत्यनुवृत्तावपि दोषाभावः' भाष्ये परिगणनस्यानुक्त्या कुप्वोरित्यनुवृत्त्यभिप्रायेणैव सम्भवाभिप्रायेण 'पाशकल्प' इत्युक्तेः । तदननुवृत्तौ तु 'पूस्तरा' इत्यत्र षत्वप्रवृत्तिर्दुर्वारा । 'सोऽपदे' इत्येव वक्तव्ये कवर्गपवर्गावपदे परे स इत्यर्थादादिग्रहणम् 'अपदे' एव,न तु कदाचित्पदे पदत्वयोग्ये प्रातिपदिक इति यावत्, इत्यर्थलाभार्थम्, तेन उरः कः कायतीति 'उरः कः' इत्यत्र 'गतिकारक' इति कृदन्तेन समासे क इत्यस्यापदत्वेऽपि न सः, क इत्यस्य प्रातिपदिकत्वात् इति शब्दरत्नकारः । परमत्रार्थे भाष्यानुग्रहश्चिन्त्य इत्युपाध्यायाः ।

पाशेति—अपदाद्योः कुप्वोरित्येव सम्भवात्स्पष्टप्रतिपत्तये काशिकायामुक्तं तदत्रापि संगृहीतम् । नेदं वार्तिकम् । यद्यपि 'कप्यच्' प्रत्ययेऽप्यपदादिककारः । परन्तु रथशब्दादेव सः– 'रथकल्या' इति । तत्र विसर्गासम्भवान्न संगृहीतम् । कुत्सितं पयः पयस्पाशम् । 'याप्ये पाशप्' इति पाशप्प्रत्ययः । ईषदसमाप्तं यशः 'यशस्कल्पम्' 'ईषदसमाप्तौ' इति कल्पप् । अपूर्णं यश इत्यर्थः । अज्ञातं यशः यशस्कम् । 'अज्ञाते' इति कः । कुत्सितं यशः इति तु नार्थः, यशसि कुत्सितत्वस्यासम्भवेन यशस्त्वे कुत्साद्यहित्यव्याप्यत्वात् । यशस्काम्यतीति—इच्छतीत्यर्थः । 'काम्यच्' इति इच्छार्थे काम्यच् ।

प्रातःकल्पमिति—ईषदूनरात्रिसमाप्तिसमय इत्यर्थः । समासादिवृत्तौ सप्तम्यन्तोऽपि प्रातरादिशब्दः प्रातिपदिकार्थमात्रार्थको भवति । तेनात्र प्रथमा । वृत्त्यभावे प्रातरित्यस्य 'प्रातःकाले' इत्यर्थः । तत्र न प्रथमा । 'प्रातरभूत्' इत्यादिप्रयोगास्तु लक्षणया कथञ्चिन्नेयाः । अधिकरणशक्तिप्रधानस्यापि वृत्तिविषये शक्तिमत्परत्वमित्यस्योक्त एवाभिप्रायः । एवमेव 'दोषा' इत्यस्य 'रात्रौ' दिवा, इत्यस्य 'दिने' इत्यर्थेऽपि 'दोषाभूतमहः' 'दिवाभूता रात्रिः' इत्यत्रापि प्रथमा । 'अनव्ययस्य' इत्यत्रा-

'काम्ये रोरेवेति वाच्यम्' ( वा० ४६०२ ) नेह—गीः काम्यति ।

इणः षः । [ ८-३-३९ ]

इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ।

नमस्पुरसोर्गत्योः । [ ८-३-४० ]

व्ययपदेन अव्ययीभावरूपाऽव्ययस्य न ग्रहणम् । अव्ययीभावस्याऽव्ययसंज्ञा लुकि, मुखस्वरे, उपचारे कर्तव्ये एव भवतीति परिगणनं विधाय परिगणनमुपायान्तरेणान्तरेणान्यत्राव्ययसंज्ञा वारिता ।

तत्र उपचारः=विसर्गस्थानिकः सकारस्तत्र कर्तव्येऽव्ययीभावस्याव्ययसंज्ञायाः 'उपपयःकारः' प्रयोजनम् । अत्र 'अतः कृ' इति 'अनव्ययस्य' इति सत्वप्रतिषेधफलमुक्त्वा 'अनुत्तरपदस्थस्य' इति निषेधेन सत्वाभावमुपपाद्य तत्र प्रयोजनमिति परिगणनस्योपचारफलं प्रत्याख्यातम् । परन्तु 'उपपयस्काम्यति' इत्यादौ 'सोऽपदादौ' इति प्राप्तसत्वाभावस्य 'अनुत्तरपदस्य' इति निषेधेन वारयितुमशक्यतया उपचारफलस्य सत्त्वेन भाष्यासङ्गत्यापत्त्या परिगणनस्योपचारपदेन 'अतः कृ' इति विहितसस्यैव ग्रहणं भाष्यकृतामिति मन्तव्यम् । 'सोऽपदादौ' इति सत्त्वे तु अव्ययीभावस्याव्ययसंज्ञा नैव भवतीति प्रत्याख्यानं संगच्छते इति न 'उपपयस्काम्यति' इत्यादावेतत्सत्वप्रतिषेधः ।

'काम्ये रोरेवेति वाच्यम्' इति भाष्ये तु 'रोः काम्ये नियमार्थम्' इत्युक्तं तत्फलितार्थमाह—काम्ये रोरेवेति । न चैवम् 'रोः काम्ये एवेत्यपि' नियमः स्यात्, तथा च 'यशस्कम्' इति न सिध्येदिति वाच्यम्, 'रोरेव काम्ये' इति भाष्योक्त्या विपरीतनियमाभावात् । गीः काम्यतीति—गृधातोः क्विपि 'ऋत इद् धातोः' इतीत्वे 'उरण्' इति रपरत्वे गिरमिच्छतीत्यर्थे अमन्तात् 'काम्यच्' इति काम्यप्रत्ययेऽमो लुकि 'र्वोरुपधायाः' इति दीर्घे विसर्गे 'कुप्वोः' इति विसर्गस्य विसर्गादेशे 'गीः काम्यतीति । पक्षे गीᳲकाम्यति इत्यपि । काम्यप्रत्यये परे रुस्थानिकविसर्गस्यैव सत्वमत्र रेफस्थानिको विसर्गः ।

'इणः षः' इति विसर्जनीयस्येति स्थानिनोऽनुवर्त्तनात् 'इणः' इति पञ्चम्यन्तम् । कुप्वोरिति, अपदादौ, इति चानुवर्तते । तदाह—इण उत्तरस्येत्यादि । 'सर्पिष्पाशम्' इत्यादौ 'इदुदुपधस्य' इत्यस्यासिद्धतया प्राप्तस्य 'सोऽपदादौ' इति सत्वस्य बाधनार्थम्, गीष्पाशम्, दोष्कल्पम्, इत्यादौ षत्वार्थञ्चेदम् ।

पूर्वविषये इति—एतेन 'कुप्वोः' विसर्जनीयस्य, अपदादौ, काम्ये रोरेव, अनव्ययस्य इति सर्वं सम्बध्यते इति सूचितम् । अत्र मानञ्चात्रत्यं भाष्यमेव । तत्रहि अत्र प्रकरणे विसर्गस्य स्थाने सर्वैः सूत्रैः सत्वमेव विधेयम् । 'इण उत्तरस्य सस्यानेन षत्वम्' इत्युक्तम् । विसर्गस्थानिकस्यैव सस्य षत्वम् । तेन 'पुंस्पुत्रः' इत्यादौ मस्थानिकस्य न षत्वम् । अनेन यत्र सत्वं कुप्वोः स्यात्तत्रानेन षत्वं स्यान्नान्यत्रेति लब्धम् । तत्पक्षसमानफलकत्वाय विसर्गस्य षत्वपक्षेऽपि सत्वनिमित्तनिमित्तकत्वस्येति लब्धम् ।

ननु अत्र 'सः' इत्यनुवर्तते न वा, नाद्यः, इणः परस्यापि सत्वापत्तेः । नान्त्यः, 'नमस्पुरसोः' इत्यत्र सस्यानुवृत्त्यापत्तेः, विधेयाकाङ्क्षायां षस्यानुवृत्त्यापत्तेश्चेति चेन्न, सत्वनिमित्तविशिष्टस्य स इत्यनुवृत्त्याऽदोषात् । तथा हि 'इणः षः' इत्यत्र 'सोऽपदादौ' इति पूर्वं सानुवृत्तिकमनुवर्त्य पृथक् सत्वं विधेयम् । न च पुनर्विधाने फलाभावः, उत्तरत्रानुवृत्तेरेव फलत्वात् । एवमेव 'नमस्पुरसोः' इत्यत्र 'इणः षः' इत्यनुवर्तनीयम् । पृथक् षत्वं विधेयम्, इदुदुपधस्य' इत्यत्र षत्वानुवृत्तये । तदुक्तं भाष्ये 'सम्बन्धमनुवर्तिष्यते' इति । तस्य उक्त एवाभिप्रायः ।

'नमस्पुरसोर्गत्योः' ( ८-३-४० ) 'नारायणं नमस्कृत्य' इत्यादिशिष्टप्रयोगदर्शनात् । अपदादाविति निवृत्तम् । सः, विसर्जनीयस्य, कुप्वोरिति अनुवर्तते । 'इणः षः' इति च । कुप्वो-

गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः। नमस्करोति। साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसंज्ञा। तदभावे–नमः करोति। 'पुरोऽव्ययम्' इति नित्यं गतिसंज्ञा। पुरस्करोति। अगतित्वान्नेह— पूः पुरौ 'पुरः प्रवेष्टव्याः'।

### इदुदुपधस्य चाप्रत्ययस्य। [ ८-३-४१ ]

इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम्।

---

रित्यस्यापवादोऽयम्। 'नमस्करोति' इति रुत्वे, विसर्गेऽनेन सत्वम्। साक्षादिति, ननु 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' इति भाष्यात् अनमः नमस्करणे एव गतित्वेऽत्र तदर्थाभिप्रायेण 'नमस्करोति' इत्यस्य सम्भवेऽपि 'नारायणं नमस्कृत्य' इत्यादौ तदभावादगतित्वाभावेन सत्वानापत्तिरिति चेन्न, शिष्टप्रयोगानुरोधाद् ऊर्यादिषु पाठकल्पनेन च्व्यर्थाभावेऽपि गतित्वात्। वस्तुतस्तु 'च्व्यर्थवचनस्यैव प्रायिकत्वं प्रकल्पनीयम्। न चातिप्रसङ्गः, ज्ञापकसिद्धस्येष्टसिद्ध्यर्थत्वात्। ऊर्यादेराकृतिगणत्वाभावेन तत्र पाठकल्पने गौरवादित्युपाध्यायाः।

किञ्च ऊर्यादेर्नित्यगतित्वेन।

गतित्वाभावे 'नमः करोति' इति मूलासङ्गतिश्च। पुरोऽव्ययमिति—पूर्वस्मिन् देशे इत्याद्यर्थे 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इति पूर्वशब्दादसिप्रत्यये पूर्वस्य 'पुर्' आदेशे इकारस्येत्त्वे 'तद्धितश्चासर्व' इत्यव्ययसंज्ञायाम् सौ तस्य लुकि 'पुरस्' इति। रुत्वे विसर्गे च सत्वम्। पुरोऽग्रे इत्यर्थः। पुरस्करोति पूजयतीत्यर्थः। 'पुरस्कृतोऽभिशस्तारिप्रस्ताग्रेकृतपूजिते' इति मेदिनी। पुरः प्रवेशष्टव्या इति—पिपर्ति = पालयति जनानित्यर्थे पृधातोः क्विपि पूर्नगरी। पुरः प्रवेष्टव्याः= नगर्यः प्रवेशयोग्या इत्यर्थः। 'पुः पुरौ' इति तु पुर इत्यस्य जसन्तत्वद्योतनाय। अव्ययत्वाभावेन गतित्वाभावश्च सः।

'इदुदुपधस्य चाप्रत्ययस्य' इति इदुतौ उपधे यस्य पदस्य तदिदुदुपधं पदम्। पदस्येत्यधिक्रियते। कुप्वोरिति, विसर्जनीयस्य इति चानुवर्तते। पदस्येति अवयवषष्ठी। 'अप्रत्ययस्य' इत्यत्र प्रत्ययपदं प्रत्ययावयवपरम्। तथा च प्रत्ययावयवभिन्नस्येत्यर्थः, तेन 'कविभिः कृतम्' इत्यादौ न षत्वम्, विसर्गस्य प्रत्ययावयवत्वात्। प्रत्ययभिन्नस्य इत्युक्तौ त्वत्र षत्वं दुर्वारम्। वस्तुतस्तु 'लोपे प्रत्ययलक्षणम्' इति न्यस्य 'प्रत्ययस्य लुक्श्लुलुपः' इत्यतः 'प्रत्ययस्य' इत्यनुवर्त्य प्रत्ययस्य लोपे इत्यर्थलाभे 'प्रत्ययग्रहणं प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारज्ञापनार्थम्' इति वक्ष्यते। तथा च प्रत्ययावयवोऽपि प्रत्यय एवेति प्रत्ययभिन्नस्य विसर्गस्य इत्यर्थेऽपि 'कविभिः कृतम्' इत्यादौ न दोषः। तथा च इदुदुपधपदस्यावयवः कवर्गपवर्गपरको यो विसर्गः प्रत्ययभिन्नस्तस्य षत्वं स्यादित्यर्थः।

नन्वेवम् 'पयः कुण्डलसोमसुत्' इत्यत्र षत्वापत्तिः। न च प्रत्ययावयवभिन्नविसर्गान्तस्य इदुदुपधस्येत्यर्थेन नात्र दोषः, एवमपि 'पयःकुण्डलसर्पिष्करोति' इत्यादावव्युत्पत्तिपक्षे दोषादिति चेन्न, निर्दिश्यमानपरिभाषया अलोऽन्त्यपरिभाषया चान्त्यस्यैव विसर्गस्य षत्वविधानात्। न च विसर्गस्याच्त्वाभावोऽच्प्रत्याहारे पाठाभावादिति वाच्यम्, भाष्ये 'अयोगवाहानामट्सूपदेशस्योपसंख्यानम्' इत्यनेनाच्प्रत्याहारे पाठबोधनात्। इदुदिति तपरकरणम् 'गीः क्रियते' 'पूः क्रियते' इत्यादौ षत्ववारणार्थम्।

'इदुद्भ्यामप्रत्ययस्य' इति न्यासेन इदुद्भ्याम्परस्य विसर्गस्य षत्वे सिद्धे उपधाग्रहणं न कर्तव्यमिति हयवरट् सूत्रे भाष्ये स्थितम्।

निष्प्रत्यूहमिति—प्रतिकूलतया ऊह्यते = वितर्क्यते कार्यमनेनेति—प्रत्यूहो विघ्नः। तस्याभावो निष्प्रत्यूहम्—निर्विघ्नमित्यर्थः। अर्थाभावेऽव्ययीभावः। 'निस् निर् वा प्रत्यूहम्' आविष्कृतमिति—प्रकाशितमित्यर्थः, 'प्रकाशे प्रादुराविः स्यात्' इत्यमरात्। दुष्कृतमिति—दुस् दुर् वा कृतम्।

'अप्रत्ययस्य' किम्। अग्निः करोति। वायुः करोति।' एकादेशशास्त्रनिमित्तकस्य न षत्वम्,

दुःष्ठु कृतमित्यर्थः। पापमिति वा। 'सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छति' इति श्रवणात्। निरः, दुरश्चात्र ग्रहणम्, न च 'इदुदुपधस्य सस्य यो विसर्गः' इति हयवरट्सूत्रभाष्येण सस्थानिकविसर्गस्यैवानेन षत्वात्तत्र निरः प्रवेश इति वाच्यम्, अथवा 'इदुदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इदुदुद्भ्यामुत्तरस्य विसर्जनीयस्य' इति भाष्योक्तपक्षान्तरे सर्वविसर्गस्याविशेषेण षत्वस्येष्टतया पक्षान्तरे 'सस्य यो विसर्गः' इति भाष्ये उभयपक्षफलैक्याय 'सस्य' इत्यस्य विसर्गस्थान्युपलक्षणत्वेन निरो विसर्गस्यापि ग्रहणे षत्वस्येष्टत्वात्।

अत 'पुँस्कामा' इत्यत्र 'सम्पुंकानाम्' इति रोर्विधाने षत्वापत्तिर्भाष्यकृदुक्ता संगच्छते। अन्यथा सस्य विसर्गाभावेन भाष्यमसङ्गतं स्यात्।

अप्रत्ययस्य किमिति--प्रत्ययभिन्नस्य विसर्गस्येत्यर्थ इति मनोरमा। न चैवम् 'अग्निः करोति' अत्र षत्वापत्तिः, सोः प्रत्ययत्वेऽपि विसर्गस्य प्रत्ययसंज्ञकत्वाभावात्।

नच स्थानिवत्त्वेन प्रत्ययत्वम्, स्थानिवत्त्वस्य सपादसप्ताध्यायीस्थत्वेन त्रिपादीस्थस्य रुत्वस्यासिद्धत्वेन स्थानिवत्त्वाप्राप्तेरिति वाच्यम्, अनेनैवाप्रत्ययस्येत्यनेन स्थानिवत्त्वदृष्ट्या त्रिपाद्याः सिद्धत्वज्ञापनात्। तेन 'रामः' इत्यादौ रोः स्थानिवत्त्वेन सुप्त्वात् 'सुप्तिङन्तम्' इति पदत्वेन रोः विसर्गः सिध्यति। 'अचः परस्मिन्' इति दृष्ट्या तु त्रिपाद्या असिद्धत्वमेव। अत एव 'तिरश्चः' 'राज्ञः' इत्यादौ अल्लोपस्य स्थानिवत्त्वाभावेन श्चुत्वं सिध्यति।

न चैवम् 'गाल्यते' 'चक्रधत्र' इत्यादौ यण्णिल्लोपयोः स्थानिवत्त्वाभावेन लत्वानापत्तिः, संयोगादिकलोपापत्तिश्चेति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वार्तिकेन लत्वादिषु स्थानिवत्त्वबोधनात्। अत एव 'पूर्वत्रासिद्धीये न स्थानिवत्' इति स्वीकृत्य 'न पदान्तद्विर्वचन' इति सूत्रे त्रिपादीस्थद्विर्वचनादिग्रहणं प्रत्याख्यातं भाष्ये। अन्यथा 'अचः परस्मिन्' इत्यस्य त्रिपादीस्थे कार्ये स्थानिवत्त्वे 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्यवष्टभ्य द्विर्वचनादिप्रत्याख्यानमसङ्गतं स्यात् स्थानिवत्त्वनिषेधाय तद्ग्रहणस्यावश्यकत्वात्।

केचित्तु प्रत्ययभिन्नो यो विसर्ग इत्यर्थे 'तिष्ठतु सर्पिः पिब त्वमुदकम्' इत्यत्र षत्वापत्तिः।

न च 'इसुसोः' इति वैकल्पिकषत्वम्, व्यपेक्षासामर्थ्याभावात्। न च प्रत्ययावयवभिन्नो यो विसर्ग इत्यर्थेऽपि 'शङ्कुः, शयढः, इत्यादौ 'आयनेय' इति खढघोरादेशवारणाय 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति भाष्योक्त्या 'तिष्ठतु सर्पिः पिब त्वमुदकम्' इत्यत्र षत्वापत्तिर्दुर्वारेति वाच्यम्, 'इसुसोः सामर्थ्ये' इत्यस्य 'सर्पिष्करोति' इति भाष्योदाहरणेन तत्र 'इदुदुपधस्य' इत्यप्राप्तिसूचनेन उणादिषु व्युत्पत्तिपक्षस्यापि सूचनात्।

अत एव 'अय आमन्त' इति सूत्रे आय्यग्रहणं चरितार्थम्। अन्यथा आय्यप्रत्ययस्य उणादित्वेन तस्मिन् णिलोपविधानस्य वैयर्थ्यं दुर्वारम्, अव्युत्पत्तिपक्षे प्रकृतिप्रत्ययनिमित्तककार्याभावात एव अव्युत्पन्नप्रातिपदिकत्वात्।

किञ्च 'तिष्ठतु सर्पिः, पिब त्वमुदकम्' इत्यादौ 'इदुदुपधस्य' इति नित्यषत्वस्येष्टत्वे 'कस्कादिषु 'सर्पिष्कुण्डिका' शब्दस्य पाठोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः' इति वक्ष्यमाणमूलग्रन्थविरोधापत्तिः। वस्तुतस्तु प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्य सिद्धान्तिततया प्रत्ययभिन्नस्य विसर्गस्येत्यर्थेऽपि न दोषः।

केचित्तु 'इदुदुद्भ्यामप्रत्ययस्य' इति न्यासेन सिद्धे 'इदुदुपधस्य' इति गुरुभूतग्रहणं नित्यं य इदुदुपधस्तस्यैव षत्वार्थम्। तेन भिसो विसर्गस्य 'रामैः' इत्यादौ इदुदुपधत्वाभावात् 'कविभिः कृतम्' इत्यादौ न षत्वमिति तन्न, सोर्विसर्गस्य राम इत्यादौ व्यभिचारात् 'अग्निः करोति' इत्यादौ षत्वाप्राप्त्या अप्रत्यय इत्यस्य वैयर्थ्यापत्तेः, 'भिषचत्वाः' इत्यत्राकारोपधत्वेन 'चतुष्कपालः' इत्यादौ षत्वानापत्तेश्च।

कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् ।

---

अन्ये तु 'न मुने' इत्यत्र 'न' इत्येको योगः । 'पूर्वत्र कर्तव्ये परमसिद्धं न' इत्यर्थः । 'मुने' नाभावविषये मुभावो नासिद्धः । पूर्वेणैव नाभावेऽपि मुभावस्यासिद्धत्वे सिद्धे इदं व्यर्थं सत् 'न' इत्यस्य इष्टसिद्ध्यर्थत्वं ज्ञापयति । तेन 'स्थानिवदादेशः' इति सूत्रदृष्ट्या त्रिपाद्या नासिद्धत्वम् । 'अचः परस्मिन्' इत्यत्र तु त्रिपाद्या असिद्धत्वमेवेति । तेन राज्ञ इत्यादौ श्रुत्वसिद्धिः । 'प्रत्ययः' 'परश्च' इत्यादिनिर्देशाश्च नेति योगविभागस्यैव ज्ञापका इत्याहुः । अग्निस्तापम्, वायुः कम्पं करोतीत्यर्थः । अत्र द्विवारं स्थानिवत्त्वेन विसर्गस्य प्रत्ययत्वम् । ननु मातृशब्दात्षष्ठ्येकवचने ङसि 'ऋत उत्' इति ऋकारस्य अकारस्य च स्थाने उकारे एकादेशे रपरत्वे च 'मातुर्स्' इति स्थितौ 'रात्सस्य' इति सस्य लोपे रेफस्य विसर्गे कृपाशब्दयोगे 'मातुः' इत्यत्र 'उ' इत्यत्र विसर्गस्य प्रत्ययभिन्नत्वं प्रत्ययावयवभिन्नत्वञ्चास्ति । 'उर्' ऋकाराकारयोः प्रत्ययत्वाभावात् ।

अयम्भावः—मातृ अस् इत्यवस्थायां सकारसत्त्वे अकारमात्रस्य प्रत्ययत्वाभावेन तत्स्थानिक उरादेशोऽपि न प्रत्ययः । यस्तु शिष्यमाणः स् प्रत्ययः स तु लुप्तः । तदुक्तं भाष्ये 'इह कस्मान्न भवति 'पितुः करोति' इति । अप्रत्ययस्येति षत्वं प्राप्नोति । अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायम् । लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्येति इति । ननु एकादेशपरस्थानिघटितार्थवत्समुदायवृत्तिधर्मस्य प्रत्ययत्वस्य एकादेशविशिष्ट 'उरस्' इत्यत्र 'अन्तादिवच्च' इत्यनेनारोपात् प्रत्ययावयवभिन्नत्वं विसर्गस्य नास्तीति षत्वाप्राप्तिः, प्रत्ययभिन्नस्य विसर्गस्येत्यर्थे षत्वप्राप्तेर्दुर्वारत्वादाह—एकादेशशास्त्रेति—एकादेशशास्त्रम् 'उरण्' इति सहकारेण निमित्तं यत्र तादृशो रेफस्तस्यैकादेशशास्त्रनिमित्तकत्वात्परम्परया विसर्गस्यापि एकादेशशास्त्रनिमित्तकत्वं बोध्यम् । एकादेशशास्त्रनिमित्तकविसर्गस्य षत्वाभावे प्रमाणमाह–कस्कादिष्विति ।

केचित्तु 'साच्यणः सम्प्रसारणम्' इति न्यासेन स्वरविशिष्टस्य यणः सम्प्रसारणे 'शकहूषु' इत्यादौ दोषाभावेन 'सम्प्रसारणाच्च' इति सूत्राकरणेन च लाघवात्पत्वे पदापदाद्योरेवैकादेशोऽसिद्ध इति नियमो न कार्यः । मातुः कृपा इत्यत्रैकादेशस्य 'षत्वतुकोः' इत्यसिद्धतया षत्वाप्राप्तिः । अत एव कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठश्चरितार्थः, एकादेशस्यासिद्धतया उदुपधत्वाभावेन षत्वाप्राप्तेः । तथा च 'एकादेशशास्त्रनिमित्तकस्य' इति ज्ञापकत्वोपपादनमप्यसङ्गतम् । इति तत्र श्वानमाचष्टे 'शावयति' इति रूपत्वादिमते टिलोपे सम्प्रसारणानापत्तेः ।

वस्तुतस्तु 'नैकाच्' इत्येव वक्तव्ये 'प्रकृत्यैकाच्' इति प्रकृतिग्रहणेन टिलोपमात्रबाधस्येष्टत्वेन, यपूर्वेति सूत्रभाष्याद् बाध्यसामान्यपक्षस्यैवाभिमतत्वेन च प्रकृतिभावेन टिलोपस्य दुर्लभतया 'शूनयति' इति रूपस्यैवेष्टत्वेनात्र दोषाभावः । तथा च परमश्वानमाचष्टे 'परमशावयति' इत्यत्र टिलोपेऽत्र दोषो बोध्यः । यदि तु 'मघवता' इत्यादौ सम्प्रसारणपरभाष्यप्रामाण्येन श्रूयमाणनान्तस्यैव सम्प्रसारणम् । अत एव बहुश्वन्शब्दात् स्त्रियां डापि टिलोपे नन्तत्वाभावेन सम्प्रसारणाभावे 'बहुश्वा' इत्येव भाष्यमिति भाष्यं सङ्गच्छते, इत्युच्यते तदा अचसाहित्यस्य पूर्वत्वेन चान्यतररूपेण वक्तुं शक्यतया परत्वेनाच्साहित्यमादाय सम्प्रसारणे यूनः, मघोनः, इत्यादेरसिद्ध्यापत्तेः । 'यूनस्ति' इति निर्देशस्तु पूर्वत्वेन साहित्यग्रहणे न ज्ञापकोऽन्यतररूपेण साहित्यग्रहणे तन्निर्देशोपपत्तेः । किञ्च 'शुनः' इत्यत्र अच उदात्तत्वेन वस्य चानुदात्तधर्मतया भाष्याभिमतत्वेनोभयोः स्थाने उभयगुणकस्वरितसम्प्रसारणापत्तिः । सिद्धान्ते तु 'एकादेश उदात्तेनोदात्तः' इति पूर्वरूपस्योदात्ततया न दोषः । 'अतः शुनः, शुनो दंष्ट्रा, इति सौत्रनिर्देशेनोदात्तत्वविधाने तु लाघवाभावः,' 'सम्प्रसारणाच्च' इत्यस्य 'न सम्प्रसारणे' इत्युत्तरार्थमावश्यकतया 'सम्प्रसारणादसम्प्रसारणे' इति न्यासेन 'नसम्प्रसारणे' इति प्रत्याख्याने चावश्यकतया साच् इग्यणः सम्प्रसारणम्, इति न्यासे एव गौरवादिति दिक् ।

तेनेह न—मातुः कृपा । 'मुहुसः प्रतिषेधो वक्तव्यः' । मुहुः कामा ।

तिरसोऽन्यतरस्याम् । [ ८-३-४२ ]

तिरसो विसर्गस्य सो वा स्यात्कुप्वोः । तिरस्कर्ता, तिरःकर्ता ।

द्विस्त्रिश्चतुरिति कृत्वोऽर्थे । [ ८-३-४३ ]

कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः ।

---

पाठादिति—यदि एकादेशशास्त्रनिष्पन्नविसर्गस्यापि 'इदुदुपधस्य' इत्यनेन षत्वं स्यात्तदाऽनेनैव 'भ्रातुष्पुत्रः' इत्यत्र षत्वे सिद्धे कस्कादिषु तस्य पाठो व्यर्थीभूय ज्ञापयति—'एकादेशशास्त्रनिमित्तकस्य विसर्गस्य षत्वं न भवति' तेन 'मातुः कृपा' इत्यादौ षत्वाभावः सिध्यति ।

यदा प्रत्ययावयवभिन्नविसर्गस्य षत्वमित्यर्थस्तदाऽपि षत्वस्यासिद्धतया आदिवद्भावाप्राप्त्या 'पूर्वत्रासिद्धीये न स्थानिवत्' इति स्थानिवत्त्वनिषेधे विसर्गस्य प्रत्ययावयवभिन्नतया 'मातुः कृपा' इत्यादौ षत्वं ज्ञापकेनैव वारणीयम् । ज्ञापनञ्च—त्रिपाद्यामप्यन्तरङ्गाद्यप्रवृत्तावेव । षत्वाभावस्तु प्रत्ययपर्युदासलब्धार्थानुवाद एव ।

प्रत्ययत्वस्य प्रत्यये प्रत्ययावयवे च सत्त्वस्वीकारे प्रत्ययभिन्नस्य प्रत्ययावयवभिन्नस्य चेत्यन्यतरार्थस्वीकारे उभयपक्षेऽपि कस्कादिषु भ्रातुष्पुत्रशब्दस्योक्तार्थे ज्ञापकत्वम् । भाष्ये तु 'नैकादेशनिमित्तात्षत्वं भवति' इति पाठः । एकादेश एकादेशशास्त्रं निमित्तं यस्य उकारस्य तदुकारात्परस्य विसर्गस्य षत्वं न भवतीत्यर्थः ।

न च कस्कादिषु 'भ्रातुष्पुत्र' शब्दस्य पाठः 'षत्वतुकोरसिद्धः' इति सूत्रेण षत्वे कर्तव्ये एकादेशस्यासिद्धतया उदुपधत्वाभावेन षत्वाप्राप्तथा षत्वविधानार्थं एव इति ज्ञापकत्वासम्भव इति वाच्यम्, पदान्तपदाद्योरेवैकादेशस्य तेनासिद्धत्वबोधनात् । यथा 'कोऽसिचत्' । न चात्र मानाभावः, 'पदान्तपदाद्योरेवैकादेशस्यासिद्धवचनात्' इति भाष्यस्यैव प्रमाणत्वात् । अत एव 'शकान् ह्वयन्ति, परिव्ययन्ति इत्यर्थे ह्वयतेर्व्ययतेश्च क्विपि सम्प्रसारणे पूर्वरूपे शकहूषु, परिवीषु, इत्यादाविणः परत्वात्षत्वं सिध्यति । 'सम्प्रसारणाच्च' इति पूर्वरूपस्यासिद्धत्वे तु अकारेण व्यवधानात्षत्वं न स्यात् ।

नन्वेवम् 'कस्कादिषु भ्रातुष्पुत्रपाठाज्ज्ञापितेन एकादेशनिमित्तकस्य न षत्वमित्यनेन 'शकहूषु' इत्यादौ षत्वानापत्तिः, ज्ञापकसाजात्यात्कुप्वोरेव तत्प्रवृत्तेः । तदुक्तं भाष्ये—'तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? यः कुप्वोः' इति ।

मुहुः कामेति—'पुँस्कामा' इत्यत्र षत्वं तु न, 'सम्पुंकानाम्' इति सत्वस्यासिद्धत्वाभावेन विसर्जनीयाभावात् । 'नि ३ ष्कुल' इत्यादौ 'गुरोः' इति प्लुतस्य बहिरङ्गत्वेनासिद्धतया षत्वसिद्धिः । यदि त्रिपाद्यां तदप्रवृत्तिस्तदा 'प्लुतानां तादौ कुप्त्रोश्चेति' इति वार्तिकेन 'वहि ३ ष्टर, निष्कुल' इत्यत्र षत्वं बोध्यम् ।

'तिरसोऽन्यतरस्याम्' इति । अरदादाविति, विसर्जनीयस्येति, स इति, कुप्वोरिति चानुवर्तते । इण इति नानुवर्ततेऽसम्भवात्, तत्सन्नियोगेन ष इति निवृत्तम् । तिरसोऽत्र न गतित्वम्, अन्तर्द्धेरविवक्षितत्वात् ।

तिरःकर्तेति—सादेशाभावे 'कुप्वोः' इति जिह्वामूलीयो विसर्गश्च । निन्दितेत्यर्थः । पराभवितेत्यर्थो वा । अत्र गतेरिति नानुवर्तते इदुदुपधस्येति विच्छिन्नत्वेन मण्डूकानुवृत्तौ प्रमाणाभावात्, तिरस्कृधातोरन्तर्द्धात्रसम्भवाच्च । काशिकाकारादयो गतेरित्यनुवर्तयन्ति । तन्मते गतित्वाभावे न सः ।

'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे' इति । सूत्रे द्विस्, त्रिस्, चतुर्, इति सुजन्तानुकरणम् । त्रयाणां द्वन्द्वात् षष्ठ्या लुक् । विसर्जनीयस्य, इति, ष इति, कुप्वोरिति अन्यतरस्यामिति चानुवर्तते । कृत्वसुचः प्रत्ययस्यार्थः कृत्वोऽर्थः= क्रियायाः पुनः पुनर्भवनम् । तत्र वर्तमानानां स्यादी-

द्विष्करोति, द्विः करोति इत्यादि। 'कृत्वोऽर्थे' किम्—चतुष्कपालः।

---

नामित्यर्थः। द्विस्त्रिःशब्देऽप्राप्तेऽव्युत्पत्तिपक्षे चतुःशब्दे प्राप्ते षत्वे उभयत्र विभाषेयम्। 'कृत्वोऽर्थे' इति न विसर्गस्य विशेषणम्, तथा सति कृत्वोऽर्थे वर्तमानस्य विसर्गस्येति त्रिष्करोतीत्यादौ विसर्गस्यावयविद्वारा कृत्वोऽर्थे विद्यमानत्वेऽपि 'चतुष्करोति' इत्यत्र सुचो लोपेन विसर्गस्य कृत्वोऽर्थे विद्यमानत्वाभावात्षत्वानापत्तेः।

द्विष्करोतीति—द्विवारं भोजनादि करोतीत्यर्थे 'संख्यायाः क्रिया' इत्यनुवर्तमाने "द्वित्रिचतुर्भ्यः सुच्" इति सुच्प्रत्यये उचोरित्त्वलोपयोः क्रियाविशेषणेन कर्मतया द्वितीयैकवचनस्य 'तद्धितश्चासर्व' इत्यव्ययतया लुकि रुत्वे विसर्गेषत्वे च रूपम्। षत्वाभावे 'कुप्वोः' इति जिह्वामूलीयविसर्गौ। द्वित्रिच-तुरिति किम्? 'पञ्चकृत्वः करोति' इत्यत्र सत्वं मा भूत्। नच द्विरादिग्रहणाभावे कृत्वोऽर्थे इति विसर्गस्य विशेषणापत्त्या 'चतुष्करोति' इत्यत्र सुचो लोपेन विसर्गस्य कृत्वोऽर्थेऽविद्यमानतया षत्वानापत्तिरिति वाच्यम्, अधिकृतस्य पदस्य विशेष्यत्वेन विसर्गस्य विशेषणत्वेन च कृत्वोऽर्थे विद्यमानस्य विसर्गा-न्तस्य पदस्येत्यर्थेनादोषात्। वस्तुतस्तु 'इदुदुपधस्य' इत्यनुवर्त्य कृत्वोऽर्थे विसर्गान्तस्य इदुदुपधस्य पदस्य षत्वविधाने 'पञ्चकृत्वः करोति' इत्यादौ दोषाभावेन द्विस्त्रिश्चतुरिति सुत्यजम्। नचैवमव्युत्पत्तिपक्षे 'कृत्वोऽर्थे' इत्यस्य द्विष्करोति इत्यादौ चारितार्थ्येन 'चतुष्करोति' इत्यत्र 'कृत्वोऽर्थे' इत्यस्यासिद्धतया 'इदुदुपधस्य' इति नित्यषत्वापत्तिः, 'द्विष्करोति, त्रिष्करोति, इत्यादौ 'इसुसोः सामर्थ्ये' इति षत्वसिद्धया 'चतुष्करोति' इति चतुश्शब्दार्थमेव 'सुचः' इत्यस्यावश्यकत्वेन 'इदुदुपधस्य' इत्यपवादत्वेनासिद्धत्वा-भावबोधनात्। 'कृत्वोऽर्थे' इति किम्, 'चतुष्कपालः' इत्यत्र विकल्पेन षत्वं मा भूत्।

ननु सुच्प्रत्ययो द्वित्रिचतुर्भ्यं एकशब्दाच्च भवति। तत्र 'एकस्य सकृच्च' इति सकृदादेशे सुचः संयोगान्तलोपे 'सकृत्करोति' इत्यादौ षत्वाभावेन 'सुचः' इति न्यासे सुजन्ततदाद्यन्तस्य विसर्गान्तस्य पदस्य कुप्वोः षत्वमित्यर्थेन सिद्धौ गुरुभूतं सूत्रं न कार्य्यम्। 'देवदत्तः पचतु द्विष्करोति चैत्रः पाठम्' इत्यादावसामर्थ्ये षत्वार्थं 'सुचः' इत्यस्य चारितार्थ्येनापवादत्वाभावात् 'चतुष्करोति' इत्यत्र सुच इत्यस्यासिद्धतया नित्यषत्वापत्तिस्तु न, 'सुचः' इत्यनन्तरम् 'र' इति न्यस्य रेफान्तं यत्सु-जन्तं तदवयवस्य विसर्गस्य वा षत्वमित्यर्थेनापवादत्वान्नित्यषत्वबाधसिद्धेः। यदि सुचः, इति, रः, इति करणे गौरवं विभाव्यते तदा त्रयाणाम् एकशेषेण 'सुचाम्' इति न्यासे प्रतिसुजन्तं षत्वविधान-सामर्थ्यान्नित्यषत्वाप्राप्त्या न कश्चिद् दोषः। तत्त्वविदस्तु 'चतुरावृत्ताः पञ्च 'चतुष्पञ्चाः' इत्यादौ 'संख्ययाऽव्ययासन्न' इति सुजभावोऽभिहितार्थत्वात्समासे'। अभिहितः सुजर्थः समासेनेति कृत्वा समासे सुज् न भवति' इति भाष्यात्सुजर्थे चतुःशब्दमादाय समासे यथाश्रुतन्यासे चतुश्शब्दस्य कृत्वोऽर्थे विद्यमानतया षत्वे 'चतुष्पञ्चाः' 'चतुः पञ्चाः' इति विकल्पेन सिध्यति 'सुचाम्' इति न्यासे तु समासे सुचोऽभावेन षत्वानापत्तिरिति पाणिन्युक्तमेव सूत्रं युक्तमित्याहुः।

सूत्रे इतिग्रहणं किम्? 'न वेति' इतिवदत्रेति शब्दो नार्थपरत्वसम्पादकः, अर्थे षत्वस्या-सम्भवात् 'स्वं रूपम्' इति स्वरूपस्यैव ग्रहणे सिद्धेऽपि सुजर्थस्य क्रियाविशेषणतया कृत्वोऽर्थे विद्यमानस्य विसर्गान्तस्य पदस्य द्विः, त्रिः, चतुर्वारं षत्वं स्यादित्यर्थवारणार्थम्।

इतेः सत्वे तु तत्सामर्थ्यादेषामित्यर्थे न स्वरूपस्य ग्रहणं सिध्यति।

द्विस् त्रिस् इत्यस्य सुजन्त एव सम्भवेन तत्साहचर्य्याच्च चतुश्शब्देऽपि सुजन्ते एव षत्वं स्यात् कृत्वोऽर्थग्रहणं साहचर्य्यं न सर्वत्र नियामकमिति 'सहचरित' परिभाषाऽनित्यत्वज्ञापनार्थम्। तेन 'दीधीवेवीटाम्' इति सूत्रे साहचर्य्येण इट्पदेन धातोर्न ग्रहणम्, किन्त्वागमस्यैवेति बहवो वदन्ति। वस्तुतस्तु भाष्ये कृत्वोऽर्थग्रहणस्य चतुर्षु कपालेषु संस्कृतः 'चतुष्कपालः' इत्यत्र विकल्पेन षत्ववारण-स्यैव फलस्योक्ततयाऽनित्यज्ञापनं भाष्यासम्मतम्। 'दीधी' इत्यत्र ङित्वानुबन्धकत्वसाहचर्य्येण न धातोर्ग्रहणमित्यनित्यत्वे फलाभावश्चेत्युपाध्यायाः। 'चतुष्कपाल' इत्यत्र इदुदुपधस्येति नित्यं षत्वम्,

इसुसोः सामर्थ्ये । [ ८-३-४४ ]

इसुसोर्विसर्गस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति, सर्पिः करोति । धनुष्करोति, धनुः करोति । सामर्थ्यमिह व्यपेक्षा । 'सामर्थ्ये' किम्--तिष्ठतु सर्पिः, पिब त्वमुदकम् ।

---

'चतुष्पाद्भ्यो ढञ्' 'चतुष्पादो गर्भिण्या' इति निर्देशेन भाष्येण च चतुरशब्देऽव्युत्पत्तिपक्षस्यैव लाभात् । 'समः सुटि' इति सूत्रे 'द्वितं त्रितमिति चतुःपञ्चाशत्' इति स्वमूलग्रन्थः प्रयोगश्चिन्त्यः स्यात् इति तत्त्वबोधिन्या 'चतुः पञ्चाशत्' इति पाठस्यैव मूले लाभात् । कृत्वोऽर्थे किम् 'चतुः कपाल' इति पाठो लभ्यते 'चतुष्पाद्भ्यः' इति तु सौत्रत्वात्साधुरिति कौमुद्याशयः ।

'इसुसोः सामर्थ्ये'—इश्च उश्चेति विग्रहे द्वन्द्वः । पूर्वपदे सौत्रत्वेन मत्वाद्रुत्वाभावः । अत्र व्युत्पत्तिपक्षे इसुस् च प्रत्ययः । स च अर्थवद्ग्रहणपरिभाषया लक्षणप्रतिपदोक्तपरिभाषया च इस् तिङनवयवस्तत्साहचर्य्यात् उस् तिङनवयवः । तादृशश्च प्रतिपदोक्तोऽर्थवाँश्च उस् कृदेव तत्साहचर्य्येण च कृतोरेव इसुसोर्ग्रहणम् । तेन 'सख्युः पाकः' 'पेचुः काष्ठेन' 'कविभिः कृतम्' इत्यादौ न षत्वम् । प्रातिपदिकावयवयोरेव इसुसोर्ग्रहणमिति तु न युक्तम्, जक्षुः पेचुर्यस्मिन् व्यापारे स जक्षुःपेचुर्व्यापारः । जक्षुः पेचुः क्रियते, 'षष्ठ्या आक्रोशे' इत्यलुकि 'सख्युः पुत्रः' इत्यादौ च षत्वापत्तेः । सुपीः पचति, सुभूः पचति, इत्यत्र तु न दोषः, अर्थवतोरेव ग्रहणात् ।

सामर्थ्यम् अन्वितार्थविषयकबोधजनकत्वम् । तच्च राज्ञः पुरुषः, राजपुरुषः, इति व्यासे समासे च । तच्च द्विविधम्—व्यपेक्षारूपम्, एकार्थीभावरूपञ्च । नानापदार्थयोर्वर्तमानयोः शब्दयोर्यदन्वितामिधानं सा व्यपेक्षा । इयञ्च वाक्ये एव, तत्रैव पृथगुपस्थितयोरर्थयोरन्वितार्थाभिधानात् । समासे तु पदेन पृथगुपस्थितिर्नास्ति, एकशक्त्या विशिष्टस्यैवोपस्थितेः । तदुक्तं भाष्ये 'नानापदार्थयोर्वर्तमानयोः व्यासते यदा योगः' इति अस्य 'व्यपेक्षा' इति शेषः । 'व्यपेक्षासामर्थ्ये पूर्वयोगः' इति च भाष्यम् । अत्र पूर्वयोग इत्यस्य 'इसुसोः सामर्थ्ये' इति सूत्रमित्यर्थः ।

तथा च प्रत्ययग्रहणपरिभाषया तदादिविशेष्यकतदन्तविधौ इसुसन्तं यत्तदादि इत्यर्थः । पुनः पदस्य विशेष्यतया इसुसन्ततदाद्यन्तं यद्विसर्गान्तं पदं तदन्त्यस्य षत्वं व्यपेक्षासामर्थ्ये कुप्वोरित्यर्थः । एवञ्चाप्रत्ययस्येति पर्युदासात्पत्वेऽप्राप्तेऽप्राप्तविभाषेयम् । यदा तु 'शकुः' 'शण्डः' इत्यादावीनामादेशावारणाय उणादिष्वव्युत्पत्तिपक्षस्तदा इदुदुपधस्येति षत्वे प्राप्ते प्राप्तविभाषेयम् । न चैवम् 'नित्यं समासेऽनुत्तरपदस्य' इति व्यर्थम्, समासे 'इदुदुपधस्य' इति नित्यषत्वसिद्धेरिति-वाच्यम्, समासे उत्तरपदस्थस्य षत्वाभावाय तस्यावश्यकत्वात् । नित्यषत्वसिद्धया ।नत्यग्रहणं तु न कर्तव्यमेव । 'प्रधानत्वमिहितं समानाधिकरणमसमर्थवत्' इति षत्वे कर्तव्ये समानाधिकरणम् = अभेदान्वयबोधकं पदमसमर्थवदित्यर्थः । तेन 'सर्पिः कालकम्' इत्यादौ न षत्वम् । धातुविहितप्रत्ययार्थेन समानाधिकरणन्तु समर्थम् भवत्येव, तेन 'सर्पिष्पायते' इत्यादौ षत्वं भवति । 'ब्राह्मणस्य सर्पिष्करोति इत्यत्र 'सापेक्षमसमर्थवत्' इति तु न, एकार्थीभावसामर्थ्ये एव तत्प्रवृत्तेर्भाष्यतो लाभात् ।

सर्पिष्करोतीति—'सृप्लृ गतौ' सृपेरिसिः । (उ० २-१०-८) सर्पिः=घृतम् करोति=निर्मातीत्यर्थः । धनुरिति—'धन धान्ये' धन्यते=धनं प्राप्यतेऽनेनेति धनुः = शस्त्रं शास्त्रं वा । धनेरुरिति उः ( १-७ ) । उभयत्र षत्वाभावे विसर्गजिह्वामूलीयौ । व्यपेक्षेति—विविधाः = पृथक् पृथगुपस्थिता अर्था अपेक्ष्यन्ते = अस्याम्वयी क इति जिज्ञास्यन्ते यत्र सा व्यपेक्षा । व्यपपूर्वकादीक्षेः 'गुरोश्च हलः' इत्यप्रत्ययः । पृथगर्थोपस्थापकानां पदानामाकाङ्क्षयाऽन्वितार्थबोधनशक्तिर्व्यपेक्षा । सर्पिःपदार्थकरोतिपदार्थयोः क्रियाकारकभावसम्बन्धः । सामर्थ्ये किमिति—तिष्ठतु सर्पि, इत्येकं वाक्यम् । पिब त्वमुदकमिति भिन्नं वाक्यम् । अत्र सर्पिरित्यस्य न पिबेत्यनेन सह सम्बन्ध इतोसन्तकवर्गघटितपदयोः परस्परमन्वितार्थबोधकत्वाभावान्न व्यपेक्षासामर्थ्यम् ।

**नित्यं समासेऽनुत्तरपदस्थस्य । [ ८-३-४५ ]**

इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं षः स्यात्कुप्वोः परयोः । सर्पिष्कुण्डिका । धनुष्कपालम्, 'अनुत्तरपदस्थस्य' इति किम्—परमसर्पिःकुण्डिका । कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो व्यपेक्षायां नित्यार्थश्च ।

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य । [८-३-४६ ]**

'नित्यं समासेऽनुत्तरपदस्थस्य' इति । अत्र विसर्जनीयस्येति, इसुसोरिति, ष इति, कुप्वोरिति, पदस्येति चानुवर्तते । इसुसन्तं यत्तदादितदन्तं विसर्गान्तं पदं समासे विद्यमानं तदन्तस्य तत्समासीयकुप्वोः परयोर्नित्यं षः स्यादित्यर्थः । अत्राव्युत्पत्तिपक्षे तु इदुदुपधस्येति नित्यषत्वसिद्धेरिदं सूत्रम् उत्तरपदस्थेसुसोर्विसर्गस्य षत्वनिषेधार्थमेव । अव्युत्पत्तिपक्षे 'सर्पिषा' इत्यादौ प्रत्ययावयवस्य सस्याभावेऽपि षत्वं तु 'उणादयो बहुलम्' इति बहुलग्रहणाद् बोध्यम् । अतः शङ्कु इत्यादौ न इनाद्यादेश इति नागेशः ।

वस्तुतस्तु 'उणादयोऽव्युत्पन्नानि व्युत्पन्नानि च' इत्युभयं पाणिनिसम्मतम् । व्युत्पत्तौ 'अयामन्ताल्वाय्य' इति, 'तितुत्रतथ' इति, 'नित्यं समासे' अत्र नित्यग्रहणञ्च मानम् । तथा हि—अव्युत्पत्तौ आय्यप्रत्ययस्य, इत्नुप्रत्ययस्य, तित्रभिन्नानां तादीनाञ्च उणादित्वेन तत्तत्कार्य्यं न स्यात् । व्युत्पत्तिमात्रे शङ्कुः, शण्ढः, इत्यादीनामसिद्धिः, 'ऋतेरीयङ्' इति वक्तव्ये 'ईयङ्' विधानसामर्थ्याद् धातुविहितखादीनामादेशो नेति ज्ञापनाददोष इति केचित् । 'उणादयोऽव्युत्पन्नानि' इति, 'कंसीयपरशव्ययोः' इति सूत्रस्थं च भाष्यम्, 'अप्तृन्तृच्' इत्यत्र तृचश्चकारः, 'अतः कृकमि' इत्यत्र कंसग्रहणञ्च मानम् । 'सर्पिः कालकम्' इत्यत्रासामर्थ्येन 'इसुसोः' इत्यप्रवृत्तावपि इदुदुपधस्येति नित्यषत्वापत्तिः ।

अनुत्तरपदेति—उत्तरपदशब्दस्य समासचरमावयवे रूढत्वेन पर्य्युदासन्यायेन समासे लब्धे समासग्रहणं चिन्त्यम् इतितु न, समासे उत्तरपदस्य पदात्परत्वेन पर्य्युदासे पदात्परत्वेन सादृश्यग्रहणे 'आनय सर्पिः पठत्ययम्' इत्यादावेव स्यादित्यतिप्रसङ्गवारणार्थं समास इति । परमसर्पिःकुण्डिकेति–परमञ्च तत्सर्पिः परमसर्पिस्तस्य कुण्डिकेत्यर्थः । अत्र विसर्गस्योत्तरपदस्थत्वान्न षत्वम् । न च इसुसोः प्रत्ययत्वे पदस्येति विशेष्यस्य सत्त्वेन तदादित्वधर्ममात्रस्योपस्थित्या तदादित्वविशिष्टस्य इसुसन्तस्यैव षत्वप्राप्त्या 'परमसर्पिः' इत्यत्र समुदायस्य इसुसन्ततदादित्वाभावेन सर्पिरित्यस्य 'उत्तरपदत्वे' इति निषेधेन पदत्वाभावात्षत्वाप्राप्तिरिति 'अनुत्तरपदस्थस्य' इति व्यर्थमिति वाच्यम्, अनुत्तरपदस्थग्रहणसामर्थ्यादेव तदादिरूपधर्मिण उपस्थित्या तदन्तविधिद्वयेन षत्वप्राप्तेः सुवचत्वात् । तेन पूर्वसूत्रेण 'परमसर्पिष्करोति' इत्यादौ विकल्पेन षत्वं सिध्यति । नन्वनेनैव 'सर्पिष्कुण्डिका' इत्यत्र षत्वे सिद्धे कस्कादिषु पाठो व्यर्थोऽत आह—कस्कादिष्विति । व्यपेक्षाविरहेऽपीति—'तिष्ठतु सर्पिष्कुण्डिकामानय' इत्यादावित्यर्थः । अत्र सर्पिषः कुण्डिकायाश्च न सम्बन्ध इति परस्परसम्बन्धरूपव्यपेक्षाया विरहः = अभावः । अत्र सामर्थ्याभावान्न पूर्वेण, समासाभावान्नानेन, प्रत्ययावयवभिन्नत्वाभावान्न 'इदुदुपधस्य' इति च षत्वसिद्धिः । व्यपेक्षायामिति—'सर्पिष्कुण्डिकायामस्ति' इत्यत्र सर्पिष्कुण्डिकयोराधाराधेयभावसम्बन्धस्य सत्त्वाद् व्यपेक्षाऽस्ति । 'इदं सर्पिष्कुण्डिकायाः' अत्र 'सम्बन्धे षष्ठी' । अत्र 'इसुसोः' इति बाधित्वा कस्कादिषु पाठसामर्थ्यान्नित्यं षः ।

'अतः कृ–कमि–कंस–कुम्भ–पात्र–कुशा–कर्णीष्वनव्ययस्य' इति । अत्र विसर्जनीयस्य सः, कुप्वोः, पदस्य, 'नित्यं समासेऽनुत्तरपदस्थस्य' इति सर्वमनुवर्त्तते । अत इति पञ्चमी—अत्र समासेन उत्तरपदस्याक्षेपात् उत्तरपदभूतकंसादिघटककुप्वोरित्यर्थः । तेन 'अभवः' अकरोत् यस्मिन्व्यापारे स 'अभवोऽकरोद्' इति समासे लावस्थायामट् इति पक्षे धातुग्रहणे तदादिग्रहणात् कृधात्वाद्युत्तरपदपरत्वस्य सत्त्वेऽपि न सः, कवर्गपरत्वाभावात् ।

अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु, न तूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्पात्रम्। अयस्सहिता कुशा अयस्कुशा। अयस्कर्णी। 'अतः' किम्—गीःकार। 'अनव्ययस्य' किम्—परमयशःकारः।

**अधश्शिरसी पदे।** [ ८-३-४७ ]

एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदम्। शिरस्पदम्। समास इत्येव। अधः पदम्। शिरः पदम्। अनुत्तरपदस्थस्यैव। परमशिरः पदम्। कस्कादिषु च। भास्करः।

॥ इति विसर्गसन्धिप्रकरणम् ॥

---

कृ-कमीति प्रतिपदोक्तत्वाद् धातुग्रहणम्। धातुग्रहणे तदादिग्रहणस्य वक्ष्यमाणत्वादाह—अयस्कार इति—अयः करोतीति 'अयस्कारः' कर्मण्युपपदे कर्त्तरि अण्, एवम्—'अयस्कामः' अयो-लौहम्। 'शीलि-कामि' इति वार्तिकेन णः। कमेः सः कंसः=पानपात्रम्। 'वृ-तृ-वदि' ( ३-उणा. ६२ ) इति सः। कमिग्रहणेन सिद्धे कंसग्रहणं ज्ञापयति उणाद्यन्तेषु प्रकृतिप्रत्ययनिमित्तकं कार्य्यं न भवतीति। तदुक्तम्—उणादयोऽव्युत्पन्नानीति। तथा च कंसे कमधातुप्रयोज्यं कार्य्यं न स्यादिति सत्वार्थं कंसग्रहणं चरितार्थम्। कम् = जलमुम्भति = पूरयतीति कुम्भः। कर्मण्युपपदेऽण्। शकन्ध्वा-दित्वात्पररूपम्। अयसः कुम्भः, अयस्कुम्भः। लिङ्गविशिष्टपरिभाषया अयस्कुम्भीति। पात्रमिति। 'अयस्पात्री' पिबतेः ष्ट्रनि पित्वान्ङीप् 'अत्रापि लिङ्गविशिष्ट' परिभाषया सकारः।

कुशेति-यज्ञे उद्गातॄणां स्तोत्रगणनार्था उदुम्बरकाष्ठमयी शलाका 'कुशा' इत्युच्यते। शाकपार्थिवादित्वात्सहितशब्दस्य लोपः, अयश्शब्दस्य तत्संहितायां लक्षणा वा। अयसः कुशा इति षष्ठीसमासस्तु न, 'जानपद' इति ङीषापत्तेः। अयस्कर्णीति-अय इव कर्णौ यस्या इत्यर्थः। 'नासिकोदर' इति ङीप्। गीः कार इति—वाणीनिर्मातेत्यर्थः। स्वः काम इति=स्वर्गकामः सुखकामो वा।

'अधश्शिरसी पदे' इति। सूत्रे छान्दसत्वात्षष्ठ्यर्थे प्रथमाद्विवचनम्। अधशिरसोः पदयोरित्यर्थः। पदशब्दोऽत्र स्वरूपपरः, न तु सुप्तिङन्तपरः, 'नित्यं समासेऽनुत्तरपदस्थस्य' इत्यनु-वृत्त्या समासत एव तल्लाभाद् पदग्रहणस्य वैयर्थ्यापत्तेः। एतयोरिति—अधशिरश्शब्दयोरि-त्यर्थः। अध इति—अधरस्मिन्=नीचे देशे इत्यर्थः। अधरशब्दाद् 'पूर्वाधराधराणाम्' इति असिः। अधरस्य अध् आदेशः। पदस्याध इत्यर्थे 'मयूरव्यंसकादयश्च' इति समासः। कुप्वोरिति प्राप्ते सः। शिरसि पदं शिरस्पदम् अत्र सुप्सुपेति समासः। शिरसः पदमिति षष्ठीसमासो वा। परमेति—परमं शिरः परमशिरस्तत्र तस्य वा पदमित्यर्थः। प्रकरणात्पुनराह—'कस्कादिषु च' इति। भास्कर इति-'अतः कृ' इति तपरकरणाप्राप्ते कस्कादित्वात्सः।

इति विसर्गसन्धिः—यद्यपि सन्धानं सन्धिः = संहिता तथाऽपि सन्धिशब्दस्तन्निमित्तक कार्यपरोऽपि लक्षणया। तथा च विसर्गसन्धिरित्यस्य विसर्गस्य संहितानिमित्तं यत्कार्य्यं तत्समाप्तमित्यर्थः। यद्वा तादृशकार्य्यप्रकरणमपि सन्धिः तत्प्रकरणं समाप्तमित्यर्थः।

॥ इति विसर्गसन्धिप्रकरणम् ॥

# अथ स्वादिसन्धिप्रकरणम्

'स्वौजसमौ डिति—' सुप्रत्यये

---

## अथ स्वादिसन्धिप्रकरणम् ।

अथ स्वादिसन्धिरिति—स्वादिसन्धिप्रकरणमारभ्यते इत्यर्थः । सन्धिपदं संहितापदपर्यायः शक्त्या, लक्षणया तु संहितानिमित्तककार्य्यपरम्, तत्प्रकरणपरञ्च ।

केचित् 'स्वौजसमौट्' इत्यस्य स्थाने 'स्वौजसमौट्' इति न्यस्यन्ति । सस्य रुत्वाकरणरूपं प्रक्रियालाघवं यद्यपि तन्मतेऽस्ति, तथाऽपि तन्मतं न युक्तमिति दर्शयितुमाह—स्वौजसमौडिति—'रु' इति न्यासे 'शिवोऽर्च्यः' इत्यत्र 'अतो रोरप्लुतात्' इति सूत्रस्य रुविभक्तेश्चतुर्थाध्यायस्थत्वेनासिद्धत्वाभावात् चारितार्थ्येन 'यशोऽत्र' इत्यत्र 'ससजुषो रुः' इत्यस्य त्रिपादीस्थत्वेन उत्वदृष्ट्या असिद्धतया रोरभावेन 'अतो रोः' इत्युत्वं न स्यात्, 'सु' इति न्यासे तु सर्वत्र सस्थानिकरोः स्थाने उत्वस्य कर्तव्यतया उत्वदृष्ट्या रोरसिद्धत्वेन 'अतो रोः' इति सूत्रं व्यर्थं सज्ज्ञापयति—'उत्वं प्रति रुत्वस्य नासिद्धत्वम्' इति तेन 'यशोऽत्र' इत्यादि सिध्यति । न चोत्वदृष्ट्या रुत्वस्यासिद्धत्वे 'ससजुषो रुः' इत्यत्र इत्संज्ञकोकारस्य वैयर्थ्यम्, 'भोभगोः' इति यत्वार्थं तस्य चारितार्थ्यात् । न च उत्वं प्रति रोरसिद्धत्वे 'अप्लुतात्' इत्यस्य वैयर्थ्यम्, 'एहि सुस्रोत ३ अत्र स्नाहि' इत्यत्र सुस्रोत इति कस्यचित्संज्ञा । एहि सुस्रोत३इति एकं वाक्यम् । टेस्तकाराकारस्य 'दूराद्धूते च' इति प्लुतादेशे अप्लुताद् ग्रहणाभावेऽपि रोरसिद्धतया उत्वाप्राप्तेः । एवम् 'अप्लुते' इत्यपि व्यर्थम्, 'तिष्ठतु पय अ३ग्निदत्त' इत्यत्रापि रोरसिद्धतया उत्वाप्राप्तेः । तदुभयं व्यर्थीभूय 'रोरसिद्धत्वाभावं ज्ञापयतीति' वाच्यम् । 'आगच्छतु भवान् देवदत्त ३ अहं गच्छामि' इत्यत्र 'अप्लुतादित्यस्य' 'तिष्ठतु भवान् देवदत्त अ ३ ग्निदत्तो भवानागच्छतु' इत्यत्र च 'अप्लुते' इत्यस्य चासम्बुद्धौ रुविभक्तेः सत्त्वेनोभयोश्चारितार्थ्येन ताभ्यां रोरसिद्धत्वाभावस्य कल्पयितुमशक्यत्वात् । न च सम्बुद्धावेव प्लुतविधानेन तत्र चातः परस्याः सम्बुद्धेर्लोपेन रुर्दुर्लभ इति वाच्यम्, आकडारसूत्रभाष्ये 'वार्त्सा३बन्धुः' इत्यत्र 'गुरोरनृतः' इति प्लुतस्य भाष्यकृता उक्तत्वेन 'दुराद्धूतशब्देन दूराद् बोधनस्य विवक्षितत्वेन तद्बोधनस्य सम्बुद्धिभिन्नप्रथमयाऽपि सम्भवेन तत्रापि प्लुतस्येष्टत्वात् । न च उत्वं प्रति रोरसिद्धत्वे 'अहरहः' इत्यत्र रुत्वे रत्वे वा उत्वाप्राप्त्या 'रोऽसुपि' इति अहन्नित्यस्य रविधानं व्यर्थम्, 'अहरहः' इत्यत्र 'भोभगोः' इति यत्ववारणाय रविधानस्य चारितार्थ्यात् । न च 'रूपरात्रि' इत्यनेन रुविधानं व्यर्थम्, तत्र यत्वस्यासिद्धतया 'रो रि' इत्यनेन लोपस्यैव प्राप्त्या तत्र 'रोऽसुपि' इति आदेशेन सिद्धौ रुविधाने फलाभावादिति वाच्यम्, रूपमिवाचरत् 'अरूपत्' 'अहोऽरूपत्' इत्यत्र रूपग्रहणेन यदागमपरिभाषयाऽड्विशिष्टस्य रूपशब्दत्वेन तत्र 'भोभगो' इति यत्वार्थं रुविधानस्य आवश्यकत्वात् । न चैवं प्रक्रियालाघवाय 'रूपरात्रि' इत्यनेन यत्वे एव विधातव्ये रुविधानं व्यर्थम्, अहन्शब्दस्य रशब्देन समासे तत आचक्षाणे णिचि प्रत्ययाव्यवहितपूर्वत्वविशिष्टस्य भस्य 'अह्लिलोपश्चेत्तर्हि टलोरेवेति' 'अह्नष्टलोरेव' इति नियमस्य रेफेण व्यवधानादप्राप्त्या टिलोपे क्विपि णिलोपे 'अह' इत्यस्य घोशब्दस्य षष्ठीसमासे 'घोऽह' इत्यस्य अरूपदित्यनेन योगे ओहृत्वस्य परादिवत्त्वेनानुमानिकस्थान्यादेशभावेन च ओह इत्यस्याहन्शब्दत्वेन हस्य रुत्वे 'घोररूपत्' इति सिद्धये 'रूपरात्रि' इति रुविधानस्य चारितार्थ्येन तेन यत्वविधानस्य कर्तुमशक्यत्वात् ।

घोऽहशब्दस्य रूपशब्देन समासे 'घोऽरूपम्' इत्यत्र तु यत्वेन दोषः, रुत्वे 'रो रि' इति यत्वे 'लोपो व्योः' इति लोपे रुत्वे विशेषाभावात् ।

वस्तुतस्तु उत्वं प्रति रोरसिद्धत्वे रात्रिशब्दे परे अह्नो रुत्वविधानं व्यर्थं स्यात्, रात्रिरिवाचरत् 'अरात्रयत्' इत्यत्राङ्गस्याड्विधानेन रात्रिग्रहणेनाड्विशिष्टस्य यदागमपरिभाषयाऽप्यग्रहणेन रूपरात्रीति

'शिवस् अर्च्यः' इति स्थिते ।

**ससजुषो रुः [ ८-२-६६ ]**

पदान्तस्य सस्य 'सजुष्' शब्दस्य च रुः स्यात् । जश्त्वापवादः ।

रुत्वाप्राप्त्या रात्रिशब्दे परे रुत्वे च 'रो रि' इत्यस्यैव प्रवृत्त्या रात्रिशब्दे परे रुत्वविधानं व्यर्थी य कल्पयति—'उत्वं प्रति रुत्वं नासिद्धम्' इति । तथा च 'न यशोऽत्र' इत्यादौ लोपः । परन्तु एतादृशक्लिष्ट-कल्पनया रुन्याससमर्थने गौरवेण 'स्वौजस्' इति न्यासस्यैवौचित्यम् । 'रु' इति न्यासे 'रामः' इत्यत्र 'रुपि च' इति दीर्घस्तु न, टात आरभ्य सुपः पकारेण प्रत्याहारमाश्रित्य 'आपि च' इति न्यासकरणात्, 'पथिमथि' इति सौ ह्रस्वाकारविधानेऽपि 'रुपि च' इति दीर्घेण 'पन्थाः' इति सिद्धे दीर्घाकार-विधानसामर्थ्येन रौ 'रुपि च' इत्यस्याप्रवृत्तिज्ञापनाच्च । न च 'हे पन्थाः' इत्यत्र ह्रस्वाकारविधाने 'एङ्ह्रस्वात्' इति सोर्लोपापत्तिः, परत्वान्नित्यत्वाच्च लोपं बाधित्वा 'रुपि च' इति दीर्घस्यैव पूर्वं प्रवृत्तेः । शिवस् अर्च्य इति—ननु 'शिवस्' इत्यत्र रुत्वार्थम् अर्च्य इत्यस्य सम्बन्धानपेक्षणे रुत्वे विसर्गे चेदमसङ्गतमिति चेन्न, वाक्यसंस्कारपक्षे 'शिवोऽर्च्यः' इति वाक्यप्रयोगानन्तरं सूत्रप्रवर्तने तादृशप्रक्रियावाक्यस्य सङ्गतत्वात् ।

'ससजुषो रुः' इति । 'ससजुषोः' इति सश्च सजुश्चेति द्वन्द्वे षष्ठीद्विवचनान्तम् इति मनोर-माकारादयः । वस्तुतस्तु पदस्येत्यधिकृतं तत्सामानाधिकरण्यानुरोधेन 'ससजुषः' इति समाहार-द्वन्द्वैकवचनान्तम्, असति बाधके समानाधिकरणविशेष्यविशेषणयोः समानवचनकत्वनियमात्, इत्युपाध्यायाः । 'ससजुष' इति विशेषणं पदस्येति विशेष्यम् । येन विधिरिति तदन्तविधिः । 'स' इति सकार उच्चारणार्थः । सान्तस्य सजुश्शब्दान्तस्य पदस्येत्यर्थः । अलोऽन्त्यपरिभाषया सस्य षस्य च तत्फलितमाह—पदान्तस्येति । ननु 'सजुःशब्दान्तस्य' इत्यर्थे 'सजुः' इत्यादौ सत्वं न स्यात् । न च 'व्यपदेशिवदेकस्मिन्' इति परिभाषया एकस्मिन् पुत्रे ज्येष्ठत्वादिव्यवहारवत्सिद्धिः, 'व्यपदेशिवद्भावोऽप्रातिपदिके न' इति निषेधात् । न चात्र प्रमाणाभावः, 'नान्तादसंख्यादेर्मट्' इति सूत्रस्यैव मानत्वात् ।

अन्यथा पञ्चादिशब्दस्यापि व्यपदेशिवद्भावेन संख्यादित्वात् 'पञ्चमः' इत्यत्रापि तदप्राप्त्या सूत्र वैयर्थ्यस्य स्पष्टत्वात् । किञ्च तदन्तविधिरपि दुर्लभः, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति निषेधादिति, चेन्न भाष्ये 'जराया जरस्' 'असनंतृच्' इत्यादौ व्यपदेशिवद्भावस्य तदन्तविधेश्च दर्शनेन उभयोः परिभाषयोः प्रत्ययविधायकशास्त्रे एव प्रवृत्तिकल्पनात् । अत एव 'गर्गादिभ्यो यञ्' इत्यादिना परमगर्गशब्दान्न प्रत्ययः, प्रत्ययविधायकत्वेन तदन्तविधेरभावात् । 'सूत्रान्तात् ठक्' इत्यादेर्व्यपदेशि-वद्भावेन केवलसूत्रशब्देन प्रवृत्तिः । 'ग्रहणवता' इति च 'येन विधिः' इत्यस्यैव निषेधकः, 'समास-प्रत्ययविधौ प्रतिषेधः' इत्यस्यानुवादरूपत्वात् । अत एव ग्रहणवत्प्रातिपदिकपदेन उगिद्वर्णग्रहणवर्ज-ग्रहणभिन्नानामेव ग्रहणेन 'उगितश्च' 'अत इञ्' 'यञञोश्च' इत्यादौ तदन्तविधिः । 'व्यपदेशिवद्भावोऽ-प्रातिपदिकेन' इत्यत्र मानन्तु 'सपूर्वाच्च' इत्येकसूत्रेण 'पूर्वी' 'कृतपूर्वी' इत्यादेः सिद्धौ 'पूर्वादिनिः' इति पृथक् सूत्रकरणमेव । इदं रुत्वम् 'झलां जशोऽन्ते' इत्यस्यापवादः भूतम्, रुत्वविषये तस्य सर्वत्र प्राप्त्या 'येन नाप्राप्ते' इति न्यायेनापवादत्वात् । तेन 'विद्वान्' इत्यादौ रुत्वस्यासिद्धतया 'संयोगान्तस्य लोपः' इत्यस्य रुत्वेन न बाधः, यं प्रति यस्यापवादत्वं तस्यैव तं प्रति सूत्रारम्भसामर्थ्येन सिद्धत्वस्य ज्ञापनात् । तदाह—जश्त्वापवाद इति—अत्र जश्त्वपदत्वेन, अल्पाच्तरम्, कथमनन्वयम्, इत्यादिसूत्र-भाष्यनिर्देशेन वृत्तिघटकप्रत्याहारघटकस्य पदान्तकार्याभावज्ञापनात् । 'जुषी प्रीतिसेवनयोः' इत्यतो भावे क्विपि जुषा=प्रीत्या सेवया वा सह वर्तते इति सजुः=प्रीतियुक्तः सेवायुक्तो वा । 'शिवरु अर्च्यः' इति दशायां पदसंस्कार पक्षेऽपि 'खरवसानयोः' इति न विसर्गः, अकृतव्यूहपरिभाषया अवसान-रूपनिमित्तस्य अर्च्यपदयोगेन विनाशोन्मुखत्वात् ।

## अतो रोरप्लुतादप्लुते [ ६-१-११३ ]

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति। 'भोभगोअघो—' इति प्राप्तस्य यत्वस्यापवादः। उत्वम्प्रति रुत्वस्यासिद्धत्वं तु न भवति, रुत्वमनूद्योत्वविधेः सामर्थ्यात्।

## प्रथमयोः पूर्वसवर्णः [ ६-१-१०२ ]

अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते

---

'अतो रोरप्लुतादप्लुतेऽति।' 'ऋत उत्' इति सूत्रात् 'उत्' इति 'एङः पदान्तात्' इत्यतः 'अति' चानुवर्तते। अत इति पञ्चम्यन्तम्। अप्लुताद् ह्रस्वाकारात्परस्य उकारेत्संज्ञकरेफस्य स्थाने उः स्याद् अप्लुते=ह्रस्वाकारे परे इत्यर्थः। यत्वापवाद इति—द्वन्द्वापवाद एकशेष इतिवदत्र अपवादशब्दप्रयोगः। यदीदं न स्यात्तदा यत्वं स्यात्। सति त्वेतस्मिन् यत्वस्यासिद्धतया पूर्वमुत्वे गुणे च यत्वाप्राप्त्या अपवादेन दीर्घादिना यथा यत्वादेरप्राप्तिस्तथा त्वस्यात्र सत्त्वेनापवादसादृश्येनापवादत्वारोपादपवादः। न च यत्र यत्र उत्वप्राप्तिस्तत्र सर्वत्रावर्णपूर्वकरोर्यत्वप्राप्त्य कृते च यत्वे स्थानिवत्त्वेनोत्वप्राप्त्या तक्रन्यायेनोत्वं यत्वस्यापवाद इति उत्वारम्भसामर्थ्याद् डत्वं प्रति घत्वस्यासिद्धत्वाभाववदुत्वं प्रति यत्वस्यासिद्धत्वं न स्यादित्यपवादत्वं सुलभमिति वाच्यम्, उत्वे कृते यत्वस्यासिद्धतया गुणस्य स्थानिवत्त्वानपेक्षतया पूर्वं गुणे कृते गुणात्पूर्वं स्थानिवत्त्वाभावेन उकारे रुत्वस्याभावेन 'एङः' इति पूर्वरूपेऽपि रुत्वस्य स्थानिवृत्तित्वाभावेन यत्वाप्राप्त्या कृते उत्सर्गे नुटि कृते यदागमपरिभाषया सुटश्चारितार्थ्यमिव उत्वस्य चारितार्थ्याभावेन तक्रन्यायविषयाभावात्।

एतेन ननु उत्वे कृते तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादत आह—यत्वस्यापवाद इति। विधानसामर्थ्यादुत्वं यत्वस्य बाधकमित्यर्थः'' इति तत्त्वबोधिन्यामुक्तम्, ननु परत्वाद्यत्वं स्यादत आह— भोभगो इति येन नाप्राप्तिन्यायादिति भावः'' इति रत्नाकरोक्तञ्चापास्तम्।

ननु सपादसप्ताध्यायीस्थोत्वं प्रति त्रिपादीस्थरुत्वस्यासिद्धतया उत्वं न स्यादत अत आह— असिद्धत्वं तु नेतीति रुत्वस्यासिद्धत्वे उकारेत्संज्ञकरोरभावेन सूत्रवैयर्थ्यापत्त्या सूत्रारम्भसामर्थ्यादुत्वं प्रति रुत्वं नासिद्धमिति ज्ञाप्यते इति भावः। ननु 'रोः सुपि' इत्यनन्तरम् 'अत उरति' 'हशि च' इति सूत्रे आस्ताम्। तथा च 'अप्लुतादप्लुते' इति न कर्तव्यं भवति, उत्वात्प्लुतस्य पूर्वत्रिपादीस्थत्वेन सिद्धतया 'अतः' इति 'अति' इति तपरेणैव प्लुताद् अकारात्परस्य प्लुतेऽकारे परे उत्वं न स्यादिति चेन्न, 'शिवोऽर्च्यः' इत्यादौ 'आद् गुणः' इति गुणं प्रति उत्वस्यासिद्धतया गुणानापत्तेः। न च 'अत ओरति' इत्योकारादेशविधानेनादोष इति वाच्यम्, तथा सति ओकारादेशस्यासिद्धतया 'एङः पदान्तात्' इति पूर्वरूपानापत्तेः। 'शिव उ अर्च्यः' इति स्थितौ 'आद् गुणः' इति गुणं परत्वाद् बाधित्वा पूर्वसवर्णदीर्घप्राप्तिमाशङ्कते—

'प्रथमयोः पूर्वसवर्णः' इति। अकः सवर्णे इत्यतः 'अकः' इति 'इको यण्' इत्यतः 'अचि' इति चानुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। प्रथमापदमत्र प्रथमा च प्रथमा चेत्येकशेषेणैकं प्रथमाविभक्तिपरम्। द्वितीयं स्वोत्तरत्वसम्बन्धलक्षणया द्वितीयापरम् यद्वा 'एषु द्वौ प्रथमौ भोजय' 'एषु त्रीन् चतुरो वा प्रथमान् भोजय' इत्यादिसर्वानुभवसिद्धलोकव्यवहारेण 'प्रथमयोः' इति पदं लक्षणां विनैव द्वितीयान्तसमुदायवृत्तिप्राथम्यविशिष्टपरम्। इति नैकशेषावश्यकता। प्राथम्यञ्च विवक्षितसमुदायविशिष्टो धर्मविशेषः। प्रथमयोः प्रत्यययोस्तु न ग्रहणम्, अर्चात्यनुवृत्त्या अप्येवैतत्प्रवृत्त्या सोरजरूपत्वाभावात्। न च उत्वे तत्सम्भवः, 'नादिचि' इति निषेधात्, अकारेतरस्मादकः परस्याजरूपत्वाभावात्, 'दीर्घाज्जसि च' इत्यत्र जसिग्रहणसामर्थ्यात् 'तस्माच्छसो नः' इति लिङ्गाच्चात्र प्रथमाद्वितीययोरेव ग्रहणज्ञापनात्। उक्तज्ञापकादेव न तिङ्विभक्त्योर्ग्रहणम्। यद्वा 'वा सुप्यापिशलेः' इत्यतः सुपीत्यनुवृत्ते न तिङो ग्रहणम्। तदुक्तं भाष्ये 'अथवा सुपीति वर्तते' इति।

## नादिचि [ ६-१-१०४ ]

अवर्णादिचि परे न पूर्वसवर्णदीर्घः । 'आद् गुणः' । 'एङः पदान्तादति' शिवोऽर्च्यः ।

---

इति प्राप्ते इति—'शिव उ अर्च्यः' इत्यत्र अकारात्परे उकाररूपे प्रथमाया अचि परे आकाररूपे पूर्वसवर्णे दीर्घे प्रसक्ते इत्यर्थः । ननु 'प्रथमयोः सवर्णः' इत्येवास्तु, पूर्वस्य दीर्घत्वे तु 'दीर्घाज्जसि च' इति निषेधादप्रवृत्त्या पूर्वस्य दीर्घत्वाभावेन पूर्वजातीयो दीर्घः स्यादिति चेन्न, विनिगमनाविरहात्परजातीयदीर्घस्यापत्तेः । सवर्णग्रहणं माऽस्तु, पूर्वं इत्येवास्तूक्तरीत्या पूर्वजातीयो दीर्घः स्यादित्यर्थेन सिद्धेः । दीर्घग्रहणानुवृत्तौ पूर्वसवर्णविधाने 'अग्नी' 'वायू' इत्यादौ स्थानिनस्त्रिमात्रकतया त्रिमात्रकप्लुतादेशापत्तेः ।

अचि किम् रामः । अकः किम्, गावौ । प्रथमयोः किम्, हर्योः । वृक्षे इत्यादौ तु प्रथमयोरित्यस्याभावेऽपि न दोषः, 'नादिचि' इति निषेधात् ।

'नादिचि' इति—न आत्, इचि, इति पदत्रयम् । आदिति पञ्चम्यन्तम् । पूर्वसवर्ण इत्यनुवर्तते । अनेन 'शिव उ अर्च्यः' इत्यत्र पूर्वेण प्राप्तः पूर्वसवर्णदीर्घो निषिध्यते । यद्यप्यत्र उत्वस्य पदद्वयनिमित्तकत्वेन बहिरङ्गतया दीर्घस्य च पदैकनिमित्तकत्वेन अन्तरङ्गतया च 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वेन दीर्घाप्राप्तिः । न च 'नाजानन्तर्ये' इति निषेधादन्तरङ्गपरिभाषाया बाधः, जातबहिरङ्गस्थले एव ज्ञापकसाजात्यात्तत्प्रवृत्तेः । अत एव 'असुसुवत्' इत्यादौ लघूपधगुणं बाधित्वा ऽन्तरङ्गतया उवङ् सिध्यति । तथाऽपि अन्तरङ्गपरिभाषाया अनित्यत्वपक्षे तदप्राप्तिशङ्कानिरासाय निषेधोल्लेखः । आद् गुण इति—गुणापवादे दीर्घे निषिद्धे गुण इत्यर्थः । न च देवदत्ते हते तद्धन्तुर्हनने ऽपि देवदत्तस्य नोज्जीवनं यथा, तथा दीर्घेण हते पुनः 'नादिचि' इति गुणस्य हन्तुर्दीर्घस्य हननेऽपि गुणस्य पुनः प्रवृत्ति र्न स्यादिति वाच्यम्, देवदत्तहन्तृहतन्यायस्यात्र विषयाभावात् । तथा हि—देवदत्तं हन्तुमुद्यतस्य हनने देवदत्तोज्जीवनमभवति, तथा प्रकृते सवर्णदीर्घेण गुणो न हतः, किन्तु हननोद्यमसदृशं प्राप्तिमात्रम्, प्राप्तस्य निषेधे च गुणोज्जीवनं निर्बाधमेव । एतन्मूलक एव 'अपवादे निषिद्धे उत्सर्गस्य प्रवृत्तिः' इति न्यायः । यत्तु 'भ्रष्टावसरो न कार्यभाक्' इति न्यायेनात्र गुणो न स्यादिति, तदपि न, शास्त्रस्यावसरो लक्ष्ये स्वीयोद्देश्यताऽवच्छेदकावच्छिन्नत्वमेव । अस्ति च प्रकृते दीर्घे निषिद्धे अवर्णाव्यवहितोत्तराज्वरूपोद्देश्यतावच्छेदकम् इति नास्ति भ्रष्टावसरन्यायस्याप्यवसरः । अत एव 'भिद्योद्ध्यौ नदे' 'तौ सत्' इत्यादिनिर्देशाः संगच्छन्ते ।

ते हि 'नादिचि' इति पूर्वसवर्णदीर्घनिषेधे पुनरुत्सर्गभूताया वृद्धेः प्रवृत्त्यैव सिध्येयु र्नान्यथा । गुणे कर्तव्ये ऽन्तरङ्गपरिभाषया उत्वासिद्धत्वं तु न, जातबहिरङ्गस्योत्वस्य 'नाजानन्तर्ये' इति परिभाषया किञ्चिदव्यवहितपूर्वत्वविशिष्टस्य अचः कार्ये कर्तव्ये बहिरङ्गासिद्धत्वनिषेधात् । न च अपवादे निषिद्धे उत्सर्गप्रवृत्तिस्वीकारे 'सुजाते अश्वसूनृते' इत्यादौ 'नान्तः पदमव्यपरे' इत्यनेनायादिबाधके पूर्वरूपे निषिद्धे उत्सर्गस्य 'एचोऽय' इत्यस्य प्रवृत्तिः स्यादिति वाच्यम्, 'सर्वस्यायं प्रतिषेधः' इति, 'अकारान्तं यत्प्राप्नोति तस्य प्रतिषेधः, इति, 'पदान्तादिसम्बद्धमेङ्ग्रहणमनुवर्तते' इति च भाष्यात् 'एङः पदान्तादति' इति सम्पूर्णसूत्रस्य 'नान्तः' इत्यत्रानुवृत्त्या बाध्यसामान्यचिन्तया पदान्तादेङोऽति परे यत्कार्यं प्राप्नोति तस्य सर्वस्याप्यपवादत्वेन प्रकृते अपवादविषयातिरिक्तत्वेन उत्सर्गमात्रे संकोच इति नियमेन 'एचोऽय' इत्यत्रापि अदव्यवहितपदान्तैङ्भिन्नस्यैव एचोऽयादिविधानेन तदप्रवृत्तेः । एङः पदान्तादिति—'शिवो अर्च्यः' इति जाते ओकारस्य परस्य अकारस्य च स्थाने ओकाररूपं पूर्वरूपमित्यर्थः ।

'अतः' इति तपरः किम्—देवा अत्र। 'अति' इति तपरः किम्—श्व आगन्ता। 'अप्लुतात्' किम्—एहि 'सुस्रोत३' अत्र स्नाहि। प्लुतस्यासिद्धत्वादतः परोऽयम्। 'अप्लुतात्' इति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यम्, दीर्घनिवृत्त्या चरितार्थत्वात्। 'अप्लुते' इति किम्—तिष्ठतु पय अ३ग्निदत्त। 'गुरोरनृतः—' इति प्लुतः।

---

अत इतीति—अत इति पदे इत्यर्थः। तपर इति—तपरत्वमित्यर्थः। अन्यथा तपरपदस्य ह्रस्वाकारपरत्वेन तद्ग्रहणाभावे 'हरिरयम्' इति दोपदानस्यैवौचित्येन 'देवा अत्र' इति प्रत्युदाहरणमसङ्गतं स्यात्। तपरत्वाभावे तु आदित्यस्य सत्त्वेऽणुदिति सवर्णग्रहणात् 'देवा अत्र' इत्यादावपि उत्वं स्यादिति भावः। अत इति तपरत्वे तु उत्वाप्राप्त्या 'भोभगो' इति यत्वे 'लोपः शाकल्यस्य' इति यलोपे 'देवा अत्र' इति सिध्यति। कस्मै प्रयोजनाय इत्यर्थे किमित्यव्ययम्। एवम् 'अति' इति पदे तपरत्वमपि 'श्व आगन्ता' इत्यादिसिद्धिरूपप्रयोजनायेत्यर्थः। अत्रापि रुत्वयत्वलोपेषु तत्सिद्धिः।

एहीति—'एहि सुस्रोत' इत्येकं वाक्यम्। 'अत्र स्नाहि' इति भिन्नं वाक्यम्। अत एव सुस्रोत इत्यस्य वाक्यान्तत्वेन 'दूराद्धूते च' इत्यनेन टेः प्लुतः, सुस्रोत इति कस्यचिन्नाम हूयमाननाम्नो गोत्रस्य वा टेः प्लुतत्वस्य पूर्वं सिद्धान्तितत्वात्। अत एव 'एहि यष्टिधर' इत्यादौ योगार्थमात्रपरत्वे न प्लुतः। 'सुस्रोत३ रु अत्र, इति स्थितौ अप्लुतात्परत्वाभावान्नोत्वम्, किन्तु यत्वलोपौ। ननु अत्राकारस्य प्लुतत्वेन अतः परत्वाभावादेव उत्वाप्राप्त्या, अप्लुतादिति व्यर्थमिति आह—प्लुतस्यासिद्धतया अप्लुतादतः परस्य रोः सत्त्वेन उत्वे प्राप्ते तन्निवृत्तये अप्लुतादित्यर्थः।

ननु अप्लुतादित्यस्य सत्त्वेऽपि उत्वे कर्तव्ये प्लुतस्यासिद्धतया अप्लुतादतः परस्य रोः सत्त्वेन उत्वं दुर्वारमत आह—अप्लुतादिति विशेषणे त्विति तत्सामर्थ्यादिति—यदि अप्लुतादिति कृतेऽपि उत्वे कर्तव्ये प्लुतस्यासिद्धत्वं स्यात्तर्हि अप्लुतादिति व्यर्थमेव स्यात्। अतोऽप्लुतादिति व्यर्थं सज्ज्ञापयति—उत्वे कर्तव्ये प्लुतस्य नासिद्धत्वमिति। ननु तपरकरणसामर्थ्यादेव उत्वं प्रति प्लुतस्यासिद्धत्वाभावज्ञापनेन प्लुतात्परस्य रोरुत्ववारणसम्भवादप्लुतादित्यस्य वैयर्थ्यं तादवस्थ्यमत आह—तपरकरणस्येति। न सामर्थ्यमिति—अस्य 'प्लुतस्यासिद्धत्वाभावज्ञापने' इति शेषः। तपरकरणस्य प्लुतस्यासिद्धत्वाभावज्ञापने सामर्थ्यं नास्तीत्यर्थः। अत्र हेतुमाह—दीर्घनिवृत्त्येति 'देवा अत्र' इत्यादौ दीर्घाकारात्परस्य रोरुत्वाभावसम्पादनेन चरितार्थत्वादित्यर्थः। येन विना यदनुपपन्नं तत्तेन ज्ञाप्यते। प्रकृते प्लुतस्यासिद्धत्वाभावं विनाऽपि दीर्घाकारात्परस्य रोरुत्ववारणाय उपपन्नं कृतसामर्थ्यमिति व्यर्थत्वाभावेन सामर्थ्याभावात्कथं प्लुतस्यासिद्धत्वाभावं ज्ञापयेत्। यथा दिवा अभुञ्जानस्य पीनत्वं रात्रिभोजनं विना अनुपपन्नमिति रात्रिभोजनमनुप्राप्य पीनत्वमबाधितं भवति। तथा तु नात्र। यदि तु 'ईदूदेद्द्विवचनम्' इति सूत्रभाष्यरीत्या 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावं प्रति प्लुतस्यासिद्धतया प्लुताभावेन प्लुतप्रकृतिभावविधानं व्यर्थीभूय 'संहिताधिकारे यद्विधीयते तं प्रति प्लुतस्यासिद्धत्वं न भवति' इति ज्ञापयति तदा उत्वस्यापि संहिताधिकारकार्यतया तत्प्रति प्लुतस्य सिद्धतया अत इति, अति च, तपरत्वादेव प्लुताप्लुते चोत्वाप्राप्त्या अप्लुतादप्लुते इति न कर्तव्यम् उक्तरीत्या दोषाभावात्। तदुक्तं भाष्ये—'किमेतस्य ज्ञापने प्रयोजनम्? अप्लुतादप्लुते इत्येतन्न वक्तव्यं भवति' इति।

'यं विधिं प्रति उपदेशोऽनर्थकः स विधिर्बाध्यते' इति न्यायेन 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वं प्रति अप्लुतादप्लुते इत्यस्य वैयर्थ्यमिति तत्सामर्थ्यात् तदसिद्धत्वस्य बाधेऽपि 'आगच्छ हे पयो ३ द्, आगच्छ हे पयो ३ द' इत्यादौ आद्ये 'वाक्यस्य टेः' इत्यट्शब्दाकारः प्लुतः, द्वितीये रेफदकारसंयोगपरत्वेन 'पयर्द' इति यकाराकारस्य गुरुत्वाद् 'गुरोः' इति प्लुतः। तत्र वाक्यनिमित्तकप्लुतस्य बहिरङ्गतया वर्णत्रयसापेक्षमुत्वं प्रति 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषाप्रयोज्यासिद्धत्वबाधे मानाभावेन प्लुतस्यासिद्धतया उत्वे गुणे च कृते प्लुतप्रवृत्त्या 'पयो३ऽट्, पयो३द' इति सिध्यति। अग्निदत्त

हशि च [ ६-१-११४ ]

अप्लुतादतः परस्य रोरुः स्याद्धशि। शिवो वन्द्यः। रोरित्युकारानुबन्धग्रहणान्नेह—प्रातरत्र। 'भ्रातर्गच्छ'। 'देवास्' इह इति स्थिते। रुत्वम्।

भोभगोअघोअपूर्वस्य योऽशि [ ८-३-१७ ]

एतत्पूर्वकस्य रोर्यादेशः स्यादशि परे। असन्धिः सौत्रः।

---

इति—अस्य सिद्धिरप्लुते इत्यस्य प्रयोजनमित्यर्थः। अत्र अप्लुतपरत्वाभावेन उत्वाभावे रोर्यत्वे लोपे च सिध्यति। वस्तुतस्तु 'तिष्ठतु पय अग्निदत्त' इत्यत्र वाक्यनिमित्तकप्लुतस्य बहिरङ्गत्वेनासिद्धतया 'पयोऽग्निदत्त' इत्युत्वं भवत्येव। तस्मात् चैत्र तिष्ठतु पय अ३ग्निदत्त स्नाहि' अत्र उत्वस्य वाक्यद्वय-घटकनिमित्तकत्वेनान्तरङ्गत्वाभावादन्तरङ्गपरिभाषाऽप्रवृत्त्या दोषो बोध्यः। तदुक्तं भाष्ये—'वाक्यान्तस्य वाक्यादावन्तरङ्गः प्लुतः बहिरङ्गमुत्वम्' वाक्यादौ परतो वाक्यान्तस्य उत्वे कर्तव्ये प्लुतोऽन्तरङ्ग इति-भाष्यार्थः। समानवाक्ये पदान्तस्य पदादौ परत उत्वे कर्तव्ये उत्वमन्तरङ्गम्'—यथा 'आगच्छ पयो३ऽट्, आगच्छ पयो३द' इत्यादौ। एकवाक्यघटकपदद्वयघटकनिमित्तकमुत्वमन्तरङ्गम्। वाक्यनिमित्तकत्वेन प्लुतोऽत्र बहिरङ्गः। उत्वे पूर्वरूपे गुणे च कृते बहिरङ्गः प्लुतः प्रवर्तते।

'हशि च'। अत्र 'अतो रोरप्लुतादिति, 'ऋत उत्' इत्यत उदिति च सम्बध्यते। तदाह—अप्लुतादत इति। शिवो वन्द्य इति—शेते जगदस्मिन्निति शिवः। 'सर्वनिघृष्व' इति ( १ पा. १५३ सू. उ. ) शीधातोर्वन्प्रत्यः, धातोर्ह्रस्वत्वञ्च निपात्यते। शिव ईश्वरः। "शिवो मोक्षे महादेवे कीलकग्रहयोगयोः। बालके गुग्गुलौ वेदे पुण्डरीकद्रुमेऽपि च" सुखे क्षेत्रे जले क्लीबम्'। वन्द्य इति। वदि अभिवादनस्तुत्योः। वन्दितुं योग्य इत्यर्थे कर्मणि ण्यत्। वन्द्यः = अभिवादनीयः स्तुत्यो वा।

'अतो रोरप्लुतादप्लुतेऽति हशि च' इत्येकयोग एव। अत एव 'अप्लुतादप्लुते' इति भाष्ये 'अप्लुतादप्लुतवचने अकारहशोः समानपदे प्रतिषेधो वक्तव्यः' इति वार्तिके 'अकारहशोः' इत्युक्तिः संगच्छते। अन्यथा हशि च इत्युक्त्वा 'अकारहशोः' प्रतिषेधोक्तिरसङ्गता स्यात्। रोरित्युकारेति—रोरित्यत्र उकाररूपानुबन्धग्रहणात् उकार इत्यस्य तस्यैव रेफस्य उत्वम्। तेन 'प्रातरत्र, भ्रातर्गच्छ' इत्यत्र रेफो न उकारेत्संज्ञकः, 'प्रातर्' इति रेफान्तस्यैव स्वरादिगणे पठितत्वात्, भ्रातृशब्दात्सम्बुद्धौ 'ऋतो ङिसर्वनामस्थानयोः' इति ऋकारस्य गुणे 'उरण्' इति रपरत्वेन उकारानुबन्धाभावात्। 'हे भ्रातरत्र स्थाने प्रातर्गच्छ' इत्यर्थकमेकमेव वाक्यम्। 'देवा अत्र' इत्यादेः पूर्वोक्तस्य साधुत्वाय आह— देवास् इहेत्यादि।

'भोभगोअघोअपूर्वस्य योऽशि' इति। 'रोः सुपि' इत्यतो 'रोः' इत्यनुवर्तते। भोश्च भगोश्चाघोश्चाश्चेति द्वन्द्वः। ते पूर्वे यस्मादिरिति पञ्चम्यर्थे समासः। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते' 'द्वन्द्वान्ते' इत्यस्य द्वन्द्वसमीपे इत्यर्थः। सामीप्यञ्च पूर्वत्वेन, परत्वेन वा। पूर्वत्वेनेत्यस्यो दाहरणम्—'अधिशीङ्स्थासां कर्म इति। अत्र परत्वेन सामीप्यम्। तथा च भोपूर्वस्य भगोपूर्वस्य अघोपूर्वस्य अपूर्वस्य च रोर्यादेशोऽशि परे इत्यर्थः।

असन्धिः सौत्र इति—सूत्रे कृतः, सूत्रेण निर्वृत्तो वा 'कृतलब्ध' इति, 'तेन निर्वृत्तम्' इति वा अण्। अत्र सूत्रपदं सूत्रत्वपरम्। सूत्रत्वेन हेतुना निर्वृत्तः सन्ध्यभावः, छन्दसि दृष्टानुविधेः सर्वसम्मतत्वादित्येव न्याय्यम्। ननु 'एङः पदान्तादति' इति दृष्ट्या 'भोभगोअघो' इत्यस्य त्रिपादी-स्थत्वेनासिद्धतया पूर्वरूपाप्राप्त्या 'असन्धिः सौत्र' इत्यसङ्गतमिति चेन्न, पूर्वत्रासिद्धमित्यनेन शास्त्रत्वेनैव रूपेणासिद्धत्वबोधनात्। अत एव अत्रैव सूत्रे 'योऽशि' इत्यत्र पूर्वरूपादिसिद्धिः, 'रोरि' इत्यत्रोत्वादिसिद्धिश्च।

वस्तुतस्तु 'छन्दोवत्सूत्राणि भवन्ति' इति भाष्येण सूत्राणामपौरुषेयत्वमेव बोध्यते। तथाचाकृतत्वेन सौत्रप्रयोगाणां दृष्टानुविधानस्यैव वक्तुं शक्यतया यथावस्थितस्वरूपाणामेव तेषां साधुत्वम्। पाणिन्यादयः सूत्राणां संस्मर्तार एव, न तु कर्तारः। स्मृतिशक्तिवैगुण्येन तत्तद्व्याकरणेषु किञ्चिद्भिन्नरूपेण सूत्रस्मरणम्। अत एव पाणिन्यादीनां नाज्ञानकल्पना। एवं वार्तिकान्यपि तथाभूतान्येव। स्मरणकर्तृत्वमात्रेण तु तत्तत्कर्तृत्वव्यवहारः। एतेन पाणिन्यादिव्याकरणात्प्राग् वेदानां न्यूनाङ्गत्वोक्तिः परास्ता।

इदं सन्ध्यभावकथनम् ओकारान्तानां भोशब्दादीनामनुकरणाभिप्रायेण। कृतरुत्वानां भोर्भगोरघोरादीनामनुकरणं तु अनेनैव सूत्रेण स्वस्मिन्नपि स्वीयोद्देश्यताऽवच्छेदकधर्मसत्त्वेन लक्ष्यीकृत्य रोर्यत्वे 'ओतो गार्ग्यस्य' इति यलोपे च कृते तयोरसिद्धतया पूर्वरूपाप्राप्त्या भगोशब्दाघोशब्दौकारयोरकाराभ्यां सह प्राप्तपूर्वरूपात्मकसंहिताकार्याभावो न्याय्य एव। किन्तु अघोशब्दान्तं द्वन्द्वं कृत्वा सौत्रत्वाल्लुप्तषष्ठ्यन्तत्वञ्चाश्रित्य 'एषामन्त्यस्य रोर्यादेशोऽपूर्वस्य चाशि' इत्यर्थो बोध्यः। परन्तु रेफान्तानुकरणं न युक्तम्, तथात्वे वाक्यभेदस्य सौत्रत्वाल्लुकश्च कल्पने गौरवात्, इत्योदन्तानुकरणपक्ष एव समीचीनः।

न चैवं 'विभोरिदम्' सुप्रभा गौर्यस्य 'सुप्रभगोरिदम्' इत्यत्र यत्वापत्तिः, ओदन्तस्य भोशब्दादेरनर्थकस्यैव सम्भवादिति वाच्यम्, प्रतिपदोक्तानामेव वार्तिकनिष्पन्ननिपातानां भोशब्दादीनां ग्रहणात्। न च 'विभाषा भवद्भगवदघवतामोच्चावस्य' 'भवद्भगवदघवच्छब्दानामन्त्यस्य रुर्भवति, अवशब्दस्य सम्पूर्णस्य ओकारादेशश्च सम्बुद्धौ परतः' इत्यर्थः। इति वार्तिकनिष्पन्नस्यापि लाक्षणिकत्वेन ग्रहणाभाव इति वाच्यम्, विशेषलक्षणबोधितस्वरूपप्रतिपदोक्तत्वस्य वार्तिकनिष्पन्ननिपातेष्वेव सत्त्वात्। विशेषलक्षणत्वञ्चात्र—'भोभगो' इति सूत्रोपात्तशब्दमात्रनिष्पादकत्वम्। तन्निष्पादकत्वे सति तदितरनिष्पादकसामान्यलक्षणाबोधितत्वं लाक्षणिकत्वम्। तच्च विभोरित्यादीनामस्तीति न तेषां ग्रहणम्। यद्वा भुशब्दानिष्पन्नभगोऽघोसाहचर्येण वार्तिकनिष्पन्नस्य निपातस्य च तादृशस्य भोशब्दस्य ग्रहणम्। तादृशभोशब्दसाहचर्येण च वार्तिकनिष्पन्नयोर्निपातयोश्च भगोशब्दाघोशब्दयोर्ग्रहणमित्योकारान्तानुकरणेऽपि न दोषः।

भोभगोऽघोशब्दानां निपातानां स्वीकारे संबुद्धौ भोश्शब्दादिसिद्धये वार्तिकं न कर्तव्यमिति तु न, 'आमन्त्रितं पूर्वमविद्यमानवत्' 'आमन्त्रितस्य च' 'वाक्यादेरामन्त्रितस्य' 'सुबामन्त्रिते' 'आम एकान्तरम्' इत्याद्यामन्त्रितकार्यसिद्धये वार्तिकस्यावश्यकत्वात्। 'निपाता आद्युदात्ताः' 'अव्यये नञ्कुनिपातानाम्' इत्यादिप्रवृत्तये 'भो हरिहरौ' 'भो ब्राह्मणौ' इत्यादिसिद्धये च निपातानामावश्यकत्वम्। अन्यथा वार्तिकस्य प्रथमाया एकवचने सम्बुद्धावेव प्रवृत्त्या द्विवचनादौ, 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इति परिभाषया स्त्रीलिङ्गे 'भवति' इत्यत्र, असम्बोधने भो ब्राह्मणि, 'भो ब्राह्मणी' इत्याद्यसिद्धिप्रसङ्गः।

यत्तु—'अव्ययमेव भोशब्दो 'भो ब्राह्मण, भो ब्राह्मणी' इति भाष्याद् भो इत्येव निपातो न तु भगोः, अघोः इति तन्न, 'नचोदाहरणमादरणीयम्' इति भाष्योक्त्या उदाहरणादानेन तत्कल्पनस्यानुचितत्वात्। ननु 'भो भगो' इति सूत्रकाले वार्तिकस्यासत्त्वेन तत्र तद्ग्रहणमसङ्गतमिति तन्न, सूत्रवार्तिकादीनामनादित्वस्योक्तत्वात्, 'कुलटाया वा' 'कतन्तेभ्यः' इत्यादिसूत्रेषु 'शकन्ध्वादिषु' इति पररूपदर्शनेन वार्तिकोक्तानामपि सूत्रकृत्सम्मतत्वानुमानात्, त्रैकालिकाज्ञत्वाच्च।

केचित्तु 'भुवश्च महाव्याहृतेः' इत्यत्र प्रतिपदोक्तत्वात्स्वरादेराकृतिगणतया गृहीतस्य भुवः एव ग्रहणे व्याहृतिग्रहणात् 'यावत्पुरानिपातयोर्लट्' इत्यत्र 'यावत्' 'पुरा' इति निपातयोरेव प्रतिपदोक्ततया ग्रहणे च सिद्धे निपातग्रहणाच्च प्रतिपदोक्तपरिभाषाया अनित्यत्वाद् वार्तिकनिष्पन्नानां

'लोपश्शाकल्यस्य' देवा इह, देवायिह। 'अशि' किम्—देवास्सन्ति।

यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथाऽपि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्। न ह्ययमल्विधिः। रोरिति समुदायरूपाश्रयणात्। भोस्, भगोस्, अघोस् इति सकारान्ता निपाताः।

निपातानाञ्च भोशब्दादीनां रुत्वम् ओकारान्तानुकरणपक्षे अर्थवत्त्वासम्भवादनर्थकानामपि विभोरित्यादीनान्तु न ग्रहणम्, प्रतिपदोक्तस्यैवान्तरङ्गतयोपस्थितेः।

लोपः शाकल्यस्येति—अनेन यलोप इत्यर्थः। लोपाभावे आह—देवायिह। अशि किमिति—अशिपदं कस्मै प्रयोजनायेत्यर्थः। देवास्सन्तीति—यत्तु अश्ग्रहणाभावे 'खरि' इत्यस्य सम्बन्धेऽप्यासिद्दोषस्य सम्भवेऽतिव्याप्तिदानमसङ्गतम्, किञ्च खकारादिषु दोषमाशङ्क्य जिह्वामूलीयादिना बाधात् तेषु दोषाभाव इत्युक्तम्, तत्तुच्छम्, जिह्वामूलीयश्रुत्वादीनां यत्वदृष्ट्या असिद्धतया तैर्यत्वस्य बाधासम्भवात्। वस्तुतस्तु 'आपाद्यमानेऽर्थे न्यायानादरात्' इति न्यायेन 'देवाः सन्ति' इति प्रत्युदाहरणम्। निर्देशादिना सूत्रैकदेशखण्डनं तु न युक्तम्, सौत्रनिर्देशानां छान्दसत्वादिनापि समाधातुं शक्यत्वात्। 'देवास् सन्ति' इति लक्ष्यं प्रयोजनमित्यर्थः। अत्र सस्य रुत्वे विसर्गे सत्वे च रूपं सिध्यति। अश्परकरोरभावाद्यत्वं न भवति। ननु 'देवार् सन्ति' इति दशायां यत्वस्यासिद्धतया विसर्ग एव स्यादित्यश्ग्रहणं व्यर्थमत आह—यद्यपीति—'स्थानिवदादेशः' इति सूत्रेण उकारेत्संज्ञकरत्वरूपस्य विसर्गस्थानिवृत्तिधर्मस्य विसर्गे तदभाववति तत्प्रकारकज्ञानविषयत्वरूपातिदेशाद् विसर्गस्यापि रो रूपत्वाद्यत्वं स्यात्तद्वारणाय 'अशि' इति भावः।

ननु शास्त्रसहस्रेणापि विसर्गस्य रुत्वबोधने माणवके सिंहत्वाभाववद्रुत्वाभावेन रुत्वविशिष्टस्य रोरभावात्कथं यत्वमिति चेन्न, 'स्थानिवदादेशः' इत्याद्यतिदेशसूत्रारम्भसामर्थ्याद्रुत्वादिप्रकारकज्ञानविषयस्य स्थाने यादेश इति 'रोर्यादेशः' इत्यादेरर्थेन अश्ग्रहणाभावे यत्वस्य दुर्वारत्वात्। ननु उकारेत्संज्ञकरेफत्वस्य ररूपाल्मात्रवृत्तित्वात्स्थान्यवयवाल्मात्रवृत्तिधर्मनिमित्तके विधौ न स्थानिवदित्यर्थकेन 'अनल्विधौ' इत्यनेन निषेधात्स्थानिवद्भावो न स्यादिति यत्वाप्राप्तिरत आह—न ह्ययमिति। अल्विधित्वाभावे हेतुमाह—

रोरिति समुदायेति—अयम्भावः—सूत्रे स्थानषष्ठीविभक्तिप्रकृतित्वं येन रूपेणोपात्तं तद्रूपं यदि अल्मात्रवृत्ति तदा तन्निमित्तके विधौ आदेशो न स्थानिवत्। प्रकृते रोरित्यनुवृत्त्या रोः स्थाने यत्वं विधीयते। तत्र उकारेत्संज्ञकरेफत्वरूपेण रेफोत्तरवर्त्युपदेशिकानुनासिकोत्वरूपेण वा रुत्वेन प्रकृतित्वं सूत्रे उपात्तं तच्च रुशब्दवृत्तित्वान्न रेफमात्रवृत्ति इत्यल्मात्रवृत्तित्वाभावान्न स्थानिवद्भावनिषेधः। अत एव 'अग्रहीत्' इत्यत्र अग्रह् ई स ईत्' इति स्थिते इटः परस्य सिचोऽभावात् 'इट ईटि' इति लोपो न प्राप्नोति, स्थानिवद्भावाद्दीर्घेऽपि इट्त्वम्। तत्र 'अनल्विधौ' इति निषेधमाशङ्क्य भाष्ये उक्तम् 'विशिष्टं ह्येषोऽनल्कमाश्रयते इटं नाम' इति भाष्यं संगच्छते। अन्यथा टकारस्येत्संज्ञायामिकारं स्थानिनमादाय दीर्घं इति स्थानिनोऽल्मात्रस्य सत्त्वे यदि निषेधः स्यात्तदेदं भाष्यं विरुध्येत। अतो यत्वविधिर्विसर्गस्थानिभूतमल्रूपमपि रेफं न रेफत्वेनाश्रयति, किन्तु रुत्वेनेति नायमल्विधिः। अतो विसर्गे कृतेऽपि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्तद्वारणाय सूत्रे अशीति यदि तु अत्र 'रो रि' इति सूत्रात् 'रोः सुपि' इत्यत्र 'भोभगो' इत्यत्र च 'रः' इत्यनुवर्त्य रो रेफस्य विसर्गादेशः, यत्वं च विधीयते तदा अल्मात्रवृत्तिधर्मेण रेफत्वेन रेफस्य स्थानितया 'अनल्विधौ' इति स्थानिवद्भावनिषेधाच्च 'देवाः सन्ति' इत्यत्र 'छन्दस्सु' इत्यत्र च दोष इत्यश्ग्रहणमुत्तरार्थम्। यदि 'लोपः शाकल्यस्य' इत्युत्तरत्र 'अशि' इति नानुवर्तेत तदा 'वृक्षव् करोति' इत्यत्र वलोपः स्यात्। न च 'न पदान्ता हलोऽचः सन्ति' इति लण्सूत्रभाष्यादस्यानभिधानम्, 'पदान्ता हलोऽचोऽनु-

तेषां रोर्यत्वे कृते।

व्योर्लघुप्रयत्नतरः शकटायनस्य [ ८-३-१८ ]

पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे। यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः।

नासिककार्य्यभाजो न सन्ति' इति भाष्यतात्पर्य्यात्। नचात्र प्रमाणाभावः, 'अणोऽप्रगृह्यस्यानुनासिकः' इति सूत्रे एव तद्भाष्योक्तेः। अत एव चतुर्भ्यः चतुर्णाम् सुद्ध्युपास्यः, मध्वरिः' इत्यादीनां नानभिधानम्। अत एव च 'भोभगो' इति सूत्रे 'उत्तरार्थं तर्हि अशुग्रहणं कर्तव्यम् 'हलि सर्वेषाम्' अशि हलि यथा स्यात्। इह मा भूत् 'वृक्षव् करोति' इति भाष्यञ्च संगच्छते। वकारानुवृत्तिनिवृत्त्यैव 'वृक्षव् करोति' इत्यत्र न दोष इति शेखरस्तु न युक्तः, द्वन्द्वनिर्दिष्टस्यैकदेशानुवृत्तेः सूत्रकारासम्मतत्वात्। अन्यथा 'अदसो मात्' इत्यत्र मादुग्रहणवैयर्थ्यापत्तिः, एकदेशस्य ईदून्मात्रग्रहणस्यानुवृत्त्यैव सिद्धेः। तेषामिति—तेषामपीत्यर्थः। अपिना वार्तिकनिष्पन्नानां संग्रहः।

'व्योर्लघुप्रयत्नतरः शाकटायनस्य' इति। सूत्रे प्रत्येकाभिप्रायेण 'लघुप्रयत्नतर' इत्येकवचनम्। यद्यपि 'अइउण्' सूत्रे यकारस्य प्राथम्यात् य्वोरिति वक्तुमुचितं तथापि 'लोपो व्योर्वलि' इति लोपे वकारासत्त्वशङ्कानिवृत्तये तथा नोक्तम्। लघुप्रयत्नेति—प्रयतनं प्रयत्नः भावे नङ्। वर्णोच्चारणहेतुरात्मधर्मः प्रयत्नः। लघुः प्रयत्नो यस्य स लघुप्रयत्नः। अतिशयेन लघुप्रयत्नो लघुप्रयत्नतरः।

लघुप्रयत्नतरत्वञ्च उच्चारणे ताल्वादिस्थानानाम्, जिह्वाग्रोपाग्रमध्यमूलानाम् करणानां च शैथिल्यम् = मन्दप्रयत्नता। लघुप्रयत्नो वर्णः। तस्य प्रकर्षश्च वर्त्तिपदार्थगतप्रकर्षेण। यथा शिखागतं ध्वंसप्रतियोगित्वं शिखिन्यारोप्य 'शिखी ध्वस्तः' इति। लाघवगतं प्रकर्षं प्रयत्ने आरोप्य लघुतरप्रयत्नक इत्यर्थः। अयम्भावः—'गुणस्यैव प्रकर्षो न द्रव्यस्य' इति भाष्याद् युगपद्गुणप्रकर्षविवक्षायाम्, अन्यपदार्थविवक्षायाञ्च तरपि, बहुव्रीहौ च प्राप्ते 'पूर्वपदातिशये आतिशायिकाद्बहुव्रीहिः' इति वार्त्तिकबलात्परमपि तरपं बाधित्वा बहुव्रीहिः। ततो गुणप्रकर्षविवक्षायां लघुप्रयत्नबोधके तरपि 'लघुप्रयत्नतरः' इति। तदुक्तं भाष्ये 'गुणस्यैव प्रकर्षो न द्रव्यस्य' इति, 'पूर्वपदार्थातिशये आतिशायिकाद्बहुव्रीहिः, सूक्ष्मवस्त्रतराद्यर्थः' इति च। यस्य प्रकर्षेण तदाश्रये प्रकर्षः सोऽत्र गुणशब्देन गृह्यते। अत एव 'गोतरः, गोतरा', इत्यादौ प्रकर्षे तरब् न स्यादित्याशङ्कायाम् 'नैष जातेः प्रकर्षः कस्य तर्हि गुणस्य। गौरयं यः शकटं वहति। गोतरोऽयं यः शकटं वहति सीरं च। गौरियं या समां समां विजायते। गोतरेयं या समां समां विजायते स्त्रीवत्सा च' इति भाष्ये क्रियागतं प्रकर्षमादाय तरबुक्तिः संगच्छते। शाकटायनस्येति—शकटो नाम कश्चन। तस्यापत्यं शाकटायनः। नडादित्वात्फक्। व्याकरणनिर्माता कश्चन मुनिः।

अत्र 'पदस्य' इत्यधिक्रियते। व्योरिति तस्य विशेषणम्। तदन्तविधौ वान्तस्य यान्तस्य च पदस्येत्यर्थः। 'अलोऽन्त्यस्य' इति वययोर्लोपः। शाकटायनस्येत्यस्य मतेनेति शेषः। भोभगोअघोअपूर्वस्य योऽशीति चानुवर्तते। तत्फलितमाह—पदान्तयोरिति। भोभगोअघोअपूर्वयोरित्यपि बोध्यम्। यद्यपीदं सूत्रम् 'लोपः शाकल्यस्य' इत्यस्य व्याख्यातः पूर्वमेव वक्तुमुचितं तथापि गार्ग्यमते ओकारात्परस्यालघुप्रयत्नस्यैव यकारस्य सम्भव इति प्रदर्शनायात्रोक्तम्। अन्ये तु अत्र रोरित्यनुवर्तते। रोः स्थाने यकारस्य लघुप्रयत्नतरयकारादेशः। रोः स्थाने वकारस्यानुपलब्ध्या वग्रहणमुत्तरत्रानुवृत्त्यर्थमेव। न तु वस्य लघुप्रयत्नवकारादेशः। अत एव शेखरे वकारोदाहरणन्तु 'असावादित्यः' इति। वृत्तिपदेनारुचिः सूचिता। अत एव 'लोपः शाकल्यस्य' इत्यत्र नोपन्यस्तमित्याहुरित्युपाध्यायाः।

### ओतो गार्ग्यस्य [ ८-३-२० ]

ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात्। गार्ग्यग्रहणं पूजार्थम्। भो अच्युत। लघुप्रयत्नपक्षे भोयच्युत। 'पदान्तस्य' किम्—तोयम्।

### उञि च पदे [ ८-३-२१ ]

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि परे। स उ एकाग्निः। 'पदे' किम्—तन्त्रयुतम्।

'ओतो गार्ग्यस्य' इति ओत इति पञ्चम्यन्तम्। 'व्योर्लघु' इत्यतो यमात्रं सम्बध्यते वकारस्तु न, ओतः परस्य तस्यासम्भवात्। यद्यपि 'गां वाति वेति वा गोवाः, गोवीस्तमाचष्टे 'गोवच्युत' इत्यादौ तत्सम्भवस्तथापि तत्र नास्य प्रवृत्तिः व्योर्लघु' इति सूत्रे यस्य 'धात्ववयवस्यैव सम्भवेनार्थाधिकारानुरोधाद्वकारोऽपि तादृश एव गृह्यते इति 'गोवच्युत' इत्यादौ वैतदप्रवृत्तेः। वस्तुतस्तु धात्ववयवत्वेन साहचर्यं शेखरोक्तमसङ्गतम्, 'त्वमचका यत्र' इत्यादौ दस्य रुत्वे यत्वे कटिवी' इति प्रश्लिष्टादेतेः क्विपि 'योऽर्थः यर्थः' इत्यादौ च धात्ववयवस्य यस्य सम्भवात्। तस्माद् 'भोभगोअघो' इत्यतो भोभगोऽघो इत्यनुवर्त्यं तत्सम्बन्धिनो यस्य लोपविधानेन 'स्मृतोवच्युत' इत्यादौ दोषो वारणीयः। यत्तु 'एतेर्विजन्तस्य, नयतेर्विजन्तस्य वा अनयशब्देन समासे 'यवयः, 'नयनयः' इत्यादौ धात्ववयवस्य सम्भवात्साहचर्यमसङ्गतमिति तन्न, 'नचैङः पदान्तात्परो रस्ति' इति भाष्यात्तादृशस्य विजन्तस्यानभिधानात्। अशीति, लोप इति, पदस्येति चानुवर्तते। ओतः परो यो यस्तदन्तस्य लोपोऽशीत्यर्थः। अलोऽन्त्यस्येति यस्य लोपस्तत्फलितमाह—

ओकारात्परस्येत्यादि। अत्र गार्ग्यस्य मते लोपो नान्येषामिति न विकल्पार्थं गार्ग्यग्रहणम्, किन्तु गार्ग्यस्य नित्ययलोपस्मरणं स्वस्मृतौ पाणिनिरपि तथेच्छतीति पूजाद्योतनार्थमेवम्। तदुक्तं भाष्ये 'ओकाराल्लोपवचनं नित्यार्थम्' इति। इदं लघुप्रयत्नयकारे न प्रवर्तते, लोपस्य नित्यतया लघुप्रयत्नविधानवैयर्थ्यापत्तेः। शाकटायनमते तत्सत्त्वेन गार्ग्यमते तदभावाच्च। तथाच लघुप्रयत्ने 'भोयच्युत' इत्येकमेव। अलघुप्रयत्नेऽपि 'भो अच्युत' इत्येकमेव, लोपस्य नित्यत्वात्। पूजार्थत्वकथनेन आरम्भसामर्थ्यान्नित्य एव लोपः स्यादिति गार्ग्यग्रहणं व्यर्थमित्यपास्तम्। तोयमिति—भो इत्यादेरनुवृत्त्यभावाभिप्रायेणेदम्। तदनुवृत्तौ तु इदं चिन्त्यम्। केचित्तु व्योरिह प्रकरणे लघुप्रयत्नतरोऽपि विहितो लोपोऽपि तत्कस्यायं लोपो बाधकः? बाध्यसामान्यचिन्तयोभयोर्बाधकः। तदा लघुप्रयत्नतरोऽपि न भवति। तथा च 'भो अच्युत' इत्यकमेवेत्याहुः। परन्तु इदं भाष्यविरुद्धम्—"विकल्पेन लोपे प्राप्ते नित्यलोपार्थमिति"।

'उञि च पदे' अत्र 'अपूर्वस्य' इति, व्योरिति पदस्य, इति लोप इति चानुवर्तते। व्योरिति पदस्येत्यस्य विशेषणं तेन तदन्तविधौ यान्तस्य वान्तस्य पदस्येत्यर्थः। अलोऽन्त्यस्येत्यन्तस्य लोप इति फलितमाह—पदान्तयोर्यवयोरिति। पूर्वसूत्रवदिदमपि नित्यलोपार्थम्, भोरित्याद्यत्र नानुवर्तते, तत्र ओत इत्यनेन नित्यलोपसिद्धेः। न च लघुप्रयत्ने तदप्रवृत्त्या तल्लोपार्थमत्र भोरित्यादेरनुवृत्तिरस्तु 'न च लघुप्रयत्नविधानवैयर्थ्यम्, उञ्भिन्नेऽशि तच्चारितार्थ्यादिति वाच्यम्, अत्रापि गार्ग्यग्रहणानुवृत्त्या तन्मते लघुप्रयत्नयकाराभावेन तत्रैतस्याप्रवृत्तेः।

स उ इति—उ इति निपातो ञकारेत्संज्ञकः। तत्र 'उञ्' इति स्वरूपस्य प्रयोगोऽनुपलम्भात् ञकारेत्संज्ञके उकारे परे इत्यर्थः। 'सस् उ एकाग्निः' इति स्थिते सस्य रुत्वे अपूर्वकत्वेन रोर्यत्वे 'लोपः शाकल्यस्य' इति विकल्पे प्राप्तेऽलघुप्रयत्नस्य यस्य नित्यमनेन लोपः। वकारस्य तु नानेन लोपः, रोरित्यनुवृत्त्या रुस्थानिकस्यैव लोपविधानेन तादृशस्य वस्यासम्भवात्। एतेन 'वकारोदाहरणन्तु 'असा उ एकाग्निः' इति वृत्तिकारोक्तमपास्तम्। ननु उञः पदत्वस्याव्यभिचरितत्वात् सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इत्युक्तेः पदे इति व्यर्थमत आह—पदे इति किं तन्त्रयुत-

वेञः सम्प्रसारणे रूपम् । यदि तु प्रतिपदोक्तो निपात उञिति ग्रहीष्यते, तद्युत्तरार्थं पदग्रहणम् ।

**हलि सर्वेषाम् [ ८-३-२२ ]**

भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन ।

मिति 'वेञ् तन्तुसन्ताने' इत्यतः क्ते 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'उतम्' इति । अनुबन्धानामनेकान्तत्वपक्षे इत्संज्ञके ञकारपूर्ववर्तिबोध्ये उशब्दे परे इत्यर्थेन वेञ्गतञकारेत्संज्ञकत्वस्य स्थानिवत्त्वेन उकारेऽपि सत्त्वेन वा प्राप्तौ पदान्तयलोपवारणाय पदेग्रहणम् ।

यदि तु लक्षण ( सूत्र ) निष्पन्नस्य लक्षणार्थज्ञानपूर्वकज्ञानविषयत्वेन विलम्बोपस्थितिकतया स्वरूपतस्तत्तच्छब्दानुवादेन विहितस्य शीघ्रोपस्थिकत्वेन तन्मूलिकया भाष्योक्तया 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषया चादिषु प्रतिपदोक्तं पठितस्य निपातस्यैव पदे इत्यस्याभावेऽपि ग्रहणं स्यादित्युच्यते तदोत्तरार्थं पदे ग्रहणमित्याह ।

यदि त्विति—अयम्भावः—'ङमो ह्रस्वादचि' इत्यस्य ह्रस्वात्परः पदावयवो यो ङम् ततः परस्याचो ङमुडित्यर्थेन 'दण्डिना' 'शकटिना' इत्यादौ ङमुड्वारणाय पदे इत्यनुवर्त्य 'यस्मिन् विधिः' इति परिभाषया 'तदादिविधौ पञ्चमी स्वस्मात्परां षष्ठीं कल्पयति' इति न्यायादजादेः पदस्य ङमुडित्यर्थसम्पादनार्थम् 'पदे' ग्रहणम् । न चाधिकृतस्य ङम इति पञ्चम्यन्तानुरोधेन पञ्चम्या विपरिणम्य ङमन्तात्पदात्परो योऽच् तस्य ङमुडित्यर्थेन नात्र दोष इति पदे इति व्यर्थमिति वाच्यम्, एवमपि 'परमदण्डिनौ' इत्यादावन्तर्वर्तिविभक्त्या 'दण्डिन्' इत्यस्य पदतया ततः परस्याचो ङमुडापत्तेः । न च 'उत्तरपदत्वे' इति प्रत्ययलक्षणप्रतिषेधेन दण्डिन् इत्यस्य पदत्वाभावः,

'माषकुम्भवापेन' इत्यत्र 'पदव्यवायेऽपि' इति निषेधपरभाष्येण उत्तरपदं यत्र कार्यि तत्रैव 'उत्तरपदत्वे' इति प्रत्ययलक्षणप्रतिषेधप्रवृत्तिः । यदि तु 'पदव्यवायेऽपि' इति पदपदं पदत्वयोग्यप्रातिपदिकपरम् । अत एव पदे व्यवायः पदव्यवाय इति समासमाश्रित्य 'आर्द्रगोमयेण' इत्यादौ पदव्यवायेऽपीति निषेधाप्रवृत्त्या णत्वसिद्धौ 'अतद्धिते इति वक्तव्यम्' इति वार्तिकप्रत्याख्यानपरभाष्येण 'क्षीरपकुम्भेन' 'माषकुम्भवापेन' इत्यादौ न फलभेदः ।

अन्यथा 'गतिकारक' इति परिभाषया कृदन्तेनैव समासे प इत्यस्य वाप इत्यस्य च पदत्वाभावेन पदेन व्यवाय इति सूत्रमते 'क्षीरपकुम्भेन' इत्यत्र निषेधाप्राप्त्या पदे व्यवाय इति भाष्यमते कुम्भपदे परतो व्यवायसत्त्वेन निषेधप्रवृत्त्या फलभेदः स्यात् । पदत्वयोग्यस्य ग्रहणे तूभयमतेऽपि निषेधसिद्धया फलभेदाभाव इत्युच्यते तदा उत्तरपदस्य कार्यत्वे एव प्रत्ययलक्षणप्रतिषेध इति कार्यित्वनिवेशे फलाभावेन उत्तरपदत्वे इति निषेधेनैव 'परमदण्डिनौ' इत्यादौ दोषवारणसम्भवे पदे इति स्पष्टार्थम् । 'हलि सर्वेषाम्' 'ङः सि धुट्' इत्यादौ तु पदे इत्यस्य नानुवृत्तिः, विप्रकृष्टे 'ङमो ह्रस्वादचि' इत्यादौ पदे इत्यस्य फलदानपरभाष्ये तेषु तदननुवृत्तिसूचनात् । अत एव 'लिट्त्सु' इत्यादौ धुट् 'माभ्याम्' इत्यादौ 'हलि सर्वेषाम्' नित्यं यलोपः सिध्यति । तत्र पदे इत्यस्य सम्बन्धेन हलादौ पदे परे एव 'हलि सर्वेषाम्' इत्यस्य प्रवृत्त्या 'माभ्याम्' इत्यादौ वैकल्पिक एव यलोप इति तु न, तत्र पदे इत्यस्य सम्बन्धे प्रत्यासन्नं फलं विहाय ङमुट्पर्यन्तधावनपरभाष्यविरुद्धत्वात् ।

'हलि सर्वेषाम्' इति भोभगोअघोअपूर्वस्येति, व्योर्लघुरित्यतो य इति चानुवर्तते, पदस्येत्यधिक्रियते तदाह भो इति—तत्र भोकारात्परस्य लघूच्चारणस्यैवानेन लोपः, अलघूच्चारणे 'ओतो गार्ग्यस्य' इत्यस्यैव प्रवृत्तेः । अपूर्वस्य तु लघ्वलघूच्चारणस्य उभयस्य यस्य लोपः ।

न च अलघुप्रयत्ने यकारेऽस्यासिद्धतया 'लोपः शाकल्यस्य' इत्येव स्यादिति वाच्यम्, तथा सति लघुप्रयत्ने एवास्य प्रवृत्त्या 'व्योर्लघु' इति विहितस्य यस्याचि परे एव श्रवणेऽव्योर्लघु' इत्यत्र 'अचि' इति करणेनैव हलि लघुप्रयत्नयकारनिवृत्तिसिद्धौ 'हलि सर्वेषाम्' इत्यनेन लोपविधानस्य

भो देवाः । भो लक्ष्मीः । भो विद्वद्वृन्द । भगो नमस्ते । अघो याहि । देवा यान्ति । 'हलि' किम्—देवायिह देवा इह ।

रोऽसुपि । [ ८-२-६९ ]

अह्नो रेफादेशः स्यान्न तु सुपि । रोरपवादः । अहरहः ।

---

वैयर्थ्येनालघुप्रयत्नेऽप्येतत्प्रवृत्तिकल्पनेन 'लोपः शाकल्यस्य' न प्रवृत्तिः, अनेन बाधात् । न च 'मोऽनुस्वारः' इत्यत्रानुवृत्त्यर्थम् 'हलि सर्वेषाम्' इत्यस्य चारितार्थ्यम्, अनुस्वारसूत्र एव 'हलि' इति कर्तव्ये योगविभागस्य 'सर्वेषाम्' ग्रहणस्य च वैयर्थ्यतादवस्थ्यात् ।

नच यथाश्रुतन्यासेऽपि 'सर्वेषां' ग्रहणस्य वैयर्थ्यम्, गार्ग्यस्येत्यस्यानुवृत्तिनिवृत्तये तच्चारितार्थ्यात् । अत्र यकारमात्रमनुवर्तते न वकार इत्यत्र मानन्तु 'प्रकृत्याऽन्तः पादमव्यपरे' इत्यत्र 'अव्यपरे' इति निर्देश एव । 'वृक्षव् करोति' इत्यादौ तु नास्य प्रवृत्तिः, अशा हलो विशेषणेन अशरूपे हल्येव लोपस्य भाष्ये उक्तत्वात् । न च 'न पदान्ता हलोऽणः' सन्ति' इत्यनुदात्तम् सूत्रभाष्यादस्यानभिधानम्, दध्यत्र, मध्वत्र, इत्यादिसिद्धये 'अनुनासिककार्यभाजः पदान्ता हलोऽणो न सन्ति' इति भाष्यतात्पर्यात् । किञ्च भोभगोरिति सूत्रे 'वृक्षव् करोति' इत्यस्य कण्ठतो भाष्ये उक्तत्वेनानभिधाने मानाभावात् । 'वृक्षव् हसति' इत्यादौ तु लोपस्येष्टत्वमेव, अशरूपे हलि लोपस्य भाष्योक्तेः । एवञ्च वकारानुवृत्तौ भाष्यानुग्रहश्चिन्त्यः ।

अत एव 'वृक्षव् करोति' इत्यत्र 'अशा हलो विशेषणाद्' भाष्ये लोपो वारितः, न तु वकारानुवृत्तेः । 'अव्यपरे' इत्यत्र तु सौत्रत्वाल्लोपः । 'गव्यम्' इत्यादौ पदान्तत्वाभावान्न दोषः । 'गव्यूतिः' इत्यादौ तु अध्वपरिमाणवाचकत्वमुपजीव्य जायमानो वान्तादेशोऽध्वपरिमाणवाचकत्वविनाशके लोपे निमित्तं न स्यादिति 'सन्निपातपरिभाषाप्रवृत्त्या न दोषः । वकारप्रश्लेषेण वारणन्तु न युक्तम्, प्रश्लेषे मानाभावात् । इत्यन्यत्र विस्तरः ।

'देवा नम्याः' इत्यादौ 'लोपो व्योर्वलि' इत्येव सिद्ध इति तु न, तं प्रति यत्वस्यासिद्धत्वात् 'देवा यान्ति' इत्यादौ तदप्राप्तेश्च । देवायिहेति—ननु 'हलि' इत्यस्याभावे अशयप्येतत्प्रवृत्त्या 'लोपः शाकल्यस्य' 'हलि सर्वेषाम्' इति सूत्रद्वयकरणवैयर्थ्यापत्तिरिति चेन्न, 'लोपः शाकल्यस्य' इत्यस्यालघुप्रयत्नवकारे एव प्रवृत्त्या आरम्भसामर्थ्याल्लघुप्रयत्ने वैकल्पिकेन नित्यलोपस्य बाधात् । न चास्य वैयर्थ्यम्, लघुप्रयत्ने तदप्रवृत्त्या तत्रास्य चारितार्थ्यात् । तथा च लघुप्रयत्ने 'देवायिह' इत्यत्र लोपवारणार्थं हल्ग्रहणमिति भावः ।

रुत्वप्रकरणे 'अहरहः' इत्यादौ 'अहन्' इति प्राप्तरुत्वस्य बाधायाह—'रोऽसुपि' इति । रः, असुपि, इति छेदः । र इति प्रथमान्तम् । अकार उच्चारणार्थः । 'अहन्' इत्यतो लुप्तषष्ठ्यन्तम् 'अहन्' इति,'स्कोः संयोगाद्योः' इत्यतोऽन्ते इति चानुवर्तते । पदस्येति चाधिक्रियते । पदस्यान्ते विद्यमानस्याहन्शब्दस्य रुः स्यान्न तु सुपि । असुपीति प्रसज्यप्रतिषेधः । सामर्थ्याभावेऽपि 'सुबनपुंसकस्य' इतिवत् समासः । सुब्भिन्ने परे र इति पर्युदासस्तु न, 'दीर्घाहा निदाघः' इत्यत्र रुत्वं बाधित्वा रत्वापत्तेः । प्रसज्ये तु प्रत्ययलक्षणेन सुप्परत्वान्न रः । 'अहरहः' इत्यत्र तु न लुमतेति प्रत्ययलक्षणनिषेधेन न सुप्परत्वम् । किञ्च पर्युदासे 'नञिवयुक्तमन्यसदृशाधिकरणे' इति न्यायेन सुब्भिन्ने प्रत्यये परे इत्यर्थे 'अहर्वान्' इत्यादौ मतुबादौ प्रत्यये एव रत्वं स्यान्न तु 'अहर्भाति' इत्यादाविति ।

तदुक्तं भाष्ये—'प्रसज्योऽयं प्रतिषेधः—सुपि नेति' इति । न च रत्वस्यासिद्धतया पूर्वं नलोपेऽकारस्यैव रत्वं स्यादिति वाच्यम्, उत्सर्गसमानदेशा अपवादा इति न्यायेन 'अहन्' इति सूत्रेणैव नकारस्यैव रुत्वविधानात् । तत्र हि अहन्नित्यावश्यं नलोपाभावं निपात्यार्थस्य मले एव वचयमाणत्वात् । यद्वा रुत्वस्येव नलोपस्याप्यपवादत्वाच्च । अहरहरिति—गमनादिक्रियाया व्याप्तिप्रति-

अहर्गणः । 'असुपि' किम्–अहोभ्याम् । अत्र 'अहन्' इति रुत्वम् । 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' । अहोरूपम् । गतमहो रात्रिरेषा । एकदेशविकृतस्यानन्यत्वाद्–अहोरात्रः, अहोरथन्तरम् । 'अहरादीनां पत्यादिषु वा रेफः' ।

पिपादयिषायाम् 'नित्यवीप्सयोः' इति द्वित्वम् । गमनादिक्रियया दिनं व्याप्नोतीत्यर्थः । उभयभागे रत्वम् । तेन उत्वयत्वादिकं न । अहर्गण इति—अह्नां गणः समूहोऽहर्गणस्त्रिंशद्दिनात्मको दिन-समूहः = मास इति यावत् । यद्वा ज्यौतिषशास्त्रप्रसिद्ध आसृष्टेर्वर्तमानदिनपर्य्यन्तो दिनसमूहः । प्रत्ययग्रहणपरिभाषया 'सुबन्ते तदादौ परे न' इत्यर्थस्तु न, कस्मात्परे इत्याकाङ्क्षायां प्रकृतेरिति पञ्चम्यन्तस्याध्याहारेण 'प्रत्ययग्रहणे चापञ्चम्याः' इति तदन्तविधिनिषेधात् । अहोभ्यामिति—नच सुब्ग्रहणाभावे सुप्यपि रत्वे 'अहन्' इत्यस्य वैयर्थ्यान्न सुपि रत्वमिति वाच्यम्, सुपीत्यस्याभावे उभयोरपि समानविषयतया उभयोरपि वैयर्थ्येन पर्य्यायेण सर्वत्र रुत्वरत्वयोरापत्तेरेव दोषात् । वस्तुतस्तु 'अहन् सुपि' इति सूत्रमस्तु पदान्तेऽह्नो रुत्वं स्यात् सुपि । तेन 'अहोभ्याम्' इत्यादि सिध्यति । ततः 'रः' 'अहन्नित्यनुवर्तते' अह्नो रेफादेशः पदान्ते । सुपि निरवकाशत्वात्पूर्वेण बाधात्सुप्परत्वाभावेऽस्य प्रवृत्तिरिति नञ्ग्रहणं सुत्यजम् ।

'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' ( का. वा ) अहन्नित्यनुवर्तते । 'रोऽसुपि' इति रत्वे प्राप्ते तदपवादोऽयम् । न च रुत्वस्यासिद्धत्वान्नलोपः स्यादिति वाच्यम्, येन नाप्राप्तन्यायेन निरव-काशतया रुत्वरत्वाभ्यां नलोपस्य बाधात् । न च नलोपे कृतेऽकारे तयो श्चारितार्थ्यम्, अकारस्य रुत्वे रत्वे वा फलाविशेषेण रूपरथन्तरेत्यस्य वैयर्थ्यात् । न च 'हेऽहो इत्यरूपम्' इत्यत्र सम्बुद्धौ नलोपस्य निषेधात् तत्र उत्वार्थं वार्त्तिकचारितार्थ्यम्, सम्बोधने 'अहन्' इत्यस्य 'रोऽसुपि' इत्यस्य च चारितार्थ्येऽपि 'यदाहिं रूपरात्रिरथन्तरेषूपसंख्यानं करोति तज्ज्ञापयत्याचार्य्यः नानन्त्यस्य रुर्भ-वतीति ।···न ह्यस्ति विशेषो रूपरात्रिरथन्तरेषु अनन्त्यस्य रौ रे वा' इति भाष्येण सम्बोधने एतद-प्रवृत्तिकल्पनात् । अन्यथा तत्र नलोपाभावे रौ रे वा विशेषस्य सत्त्वेन भाष्यासङ्गतिर्दुर्वारैव स्यात् ।

अहोरूपमिति—अह्नो रूपमित्यर्थे षष्ठीसमासः । असमासे उदाहरणमाह—गतमिति—भ्रमाद् रात्रिं दिवं मन्यमानमाह 'अहर्गतं रात्रिरेषेति । एकदेशेति—यदि तु नियतानुपूर्वीकग्रहणस्य परिच्छिन्नपरिमाणतया 'सपुच्छं श्वानमानय' इत्युक्तौ पुच्छरहितस्यानयनादर्शनेन रात्रिशब्देन 'रात्रि' शब्दस्य यथा न ग्रहणं तथा एकदेशविकृतन्यायस्यात्राप्रवृत्त्या आनुमानिकस्थान्यादेशभावमादाय रात्रशब्दे रात्रित्वबुद्ध्याऽत्र रुत्वं बोध्यम् । अहश्च रात्रिश्चेत्यर्थे समाहारद्वन्द्वः । 'अहः सर्वैकदेश' इति रात्रिशब्दान्तादच्समासान्तः । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । अहरिदमतो रथन्तरं सामवेद-मन्त्रं पठतु भवान्' 'पूर्वाह्णे गेयं साम' इत्युक्तेः ।

केचित्तु भाष्ये स्थानिवत्त्वेन रात्रिशब्दत्वमादायैव 'अहोरात्रः' इत्यस्यैवोदाहरणदानेन वार्तिके क्वचिद्रात्रेतिपाठेन 'गतमहो रात्रिरेषा' इत्यस्यानभिधानमेवेत्याहुः । न चोदाहरणमादरणीयमित्यस्य तु नात्र विषयः, तस्य उदाहरणान्तरस्यापि सम्बोधने एव तात्पर्य्येण प्रकृते स्वतः सिद्धरात्रिशब्दे परे उदाहरणादानेन गुरुभूतोदाहरणदानेन चानभिधानकल्पनस्य प्रामाणिकत्वसम्भवात् । तथा च भाष्योक्तम् 'अहोरात्रः' इत्येवोदाहरणं न तु 'गतमहो रात्रिरेषे' ति । न जहाति सूर्य्यं प्रकाशं वेति विग्रहे 'नञि जहातेः' ( उ. १ पा. १५८ सू. ) इति सूत्रेण नञि उपपदे हाधातोः कनिनि अहन् इति साधुः । राति = ददाति सुखमित्यर्थे रा दाने इत्यतः 'राशदिभ्यां त्रिप्' ( उ. ४ पा. ६७ सू. ) इति त्रिपि रात्रिरिति । रथेन तरति विग्रहे तॄधातोः 'संज्ञायां भृ-तॄ-वृजि-धारि' ( ३-२-४६ ) इति खचि मुमागमे रथन्तरमिति । रथनेता शूरः । साम वा । 'अम्नरूधरवर्' ( ८-२-७० ) इति सूत्रभाष्ये पठितं विसर्गापवादभूतं वार्त्तिकमाह—

'अहरादीनां पत्यादिषु वा रेफः' ( का. वा. ) इति । यद्यपि 'अम्नरूधर्' इत्यत्र छन्दसि

विसर्गापवादः । अहर्पतिः । गीर्पतिः । धूर्पतिः । पक्षे विसर्गोपध्मानीयौ ।

रो रि । [ ८-३-१४ ]

रेफस्य रेफे परे लोपः स्यात् ।

ढ्रलोपे पूर्वस्य दीर्घोऽणः । [ ६-३-१११ ]

ढरेफौ लोपयतीति तथा, तस्मिन्वर्णेऽर्थात् ढकारे रेफात्मके परे पूर्वस्याणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शम्भू राजते ।

---

इति वर्तते, तथाऽपि 'छन्दसि भाषायाञ्च प्रचेतसो राजन्युपसंख्यानम्' इति तत्सूत्रवार्त्तिकात् छन्दसि भाषायाञ्चेत्यनुवर्त्तनादुभयत्रास्य प्रवृत्तिः । 'उभयथा' इत्यस्य सूत्रतोऽनुवर्तनाद्वा रः । यद्यपि 'रोऽसुपि' इत्येव रत्वं सिद्धं परन्तु रस्य रविधानं विसर्गबाधनार्थम् । तेन रेफाभावपक्षे विसर्गजिह्वामूलीयोपध्मानीया भवन्त्येव । उभयत्रापि आदिशब्दः प्रकारे । तेन धूर्गिरोरपि रेफादेशः । पत्यादावादिशब्दस्य प्रकारार्थत्वे फलम् 'स्वर्चक्षा रथिरः' इत्यत्र 'कविः काव्यसेना स्वर्चना' इत्यत्र च रेफादेशः । अह्नां पतिरहर्पतिः -सूर्यः । गिरां पतिः गीर्पतिः=गुरुः । धुरां पति धूर्पतिः= भारवाहकः, श्रेष्ठो वा ।

'रो रि' इति । र इति षष्ठ्यन्तम् । 'ढो ढे लोपः' इत्यतो लोप इत्यनुवर्तते । तदाह— रेफस्येति । 'पुनर् रमते' इत्यत्र रेफस्य लोपे कृते कार्य्यान्तरमाह ।

'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति । अकार उच्चारणार्थः, अकारविशिष्टयोर्ढ्र्योर्लोपाभावात् । लोपः = प्रसक्तादर्शनम् । ढश्च रश्च ढ्रौ तयोर्लोप इति षष्ठीतत्पुरुषस्तु न 'पचनीयम्' 'चचार' इत्यादौ दीर्घापत्तेः । न च चचार इत्यत्र अभ्यासह्रस्वेन सिद्धिः, अभ्यासविकारेषु बाध्यबाधकभावाभावेन पूर्वं ह्रस्वे ततो दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्राप्तेः ।

यदि तु 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति ढरशब्दमुच्चार्य्य विहिते एव ढ्रलोपेऽस्य प्रवृत्तिरित्युच्यते तदा षष्ठीसमासेऽपि न दोषः । परन्तु प्रतिपदोक्तस्य ग्रहणे दीर्घं प्रति वस्यासिद्धतया दीर्घाप्राप्त्या विधानसामर्थ्याल् लोपसूत्रे उपस्थिते 'पूर्वत्रासिद्धम्' इत्यत्र पूर्वपदेन 'ढ्रलोपे' इति सूत्रमित्रस्यैव ग्रहणमिति श्रुतस्य पूर्वत्रासिद्धमित्यस्य बाधः, अनित्यत्वात्प्रतिपदोक्तपरिभाषाबाध इति गवेषणायाम् आनुमानिक्या बाध इति गुणे त्वन्याय्यकल्पनेति न्यायेन परिभाषाया बाधे षष्ठीसमासे उक्तदोषतादवस्थ्यम् । अत एव भाष्यकृता उक्तम्—

'नैवं विज्ञायते ढ्रोर्लोपो ढ्रलोप इति । कथं तर्हि ढ्रोर्लोपोऽस्मिन् ढ्रलोप इति' इति । तथा च व्यधिकरणबहुव्रीह्यपेक्षया ढ्रौ लोपयतीति विग्रहे कर्मण्युपपदे कर्तरि अणि उपपदसमासे ढ्रलोपनिमित्ते ढे रे च पूर्वस्याणो दीर्घ इति मूले उक्तम् ।

वस्तुतस्तु लुप्यतेऽसौ लोप इति कर्मणि घञि ढश्च रश्चेति ढ्रम् इति समाहारद्वन्द्वेन ढ्रश्चासौ लोपश्चेति ढ्रलोपः । लुप्यमाने ढकारे रेफे च परे दीर्घविधानमुचितम्, अन्यपदार्थकल्पनापेक्षया ण्यर्थकल्पनापेक्षया चात्र कल्पे लाघवात् । न च 'अजर्घाः' इत्यादौ रुत्वस्य 'लीढः' इत्यादौ ढत्वादीनाम्, 'पितू राज्यम्' इत्यादौ संयोगान्तलोपस्य चासिद्धतया दीर्घाप्राप्तिरिति वाच्यम्, ढग्रहणसामर्थ्येन लघुसूत्रे 'अजर्घाः' इति भाष्योदाहरणेन चासिद्धत्वाभावज्ञापनात् दीर्घे कर्तव्ये तत्र तत्र सूत्रे पूर्वग्रहणेन एषामग्रहणज्ञापनादिति यावत् । पुना रमते इति—'पुनर् रमते' इति स्थितौ रलोपे लोपनिमित्ते रे पूर्वस्य दीर्घे रूपसिद्धिः । पुनः क्रीडतीत्यर्थः । 'हरिस् रम्यः' हरी रम्यः = सुन्दरो हरिरित्यर्थः शम्भुस् राजते, शम्भू राजते = शङ्करः शोभते इत्यर्थः ।

अत्र अण्प्रत्याहारः पूर्वणैव णकारेण न परेण 'परेण ग्रहणेऽजमात्रस्य ग्रहणे दीर्घश्रुत्या 'अचश्च' इति परिभाषया अच उपस्थित्या दीर्घे सिद्धेऽजग्रहणवैयर्थ्यापत्तेः । अत एव अयाख्यामुदाहरणं दत्तम् । अतः परम् 'लीढः' इत्युदाहरणानन्तरम् 'अणः किम्' इति वक्तुमुचितम् ।

'अणः' किम्-तृढः । वृढः । 'तृहू हिंसायाम्' । 'वृहू उद्यमने' । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्यैव दीर्घार्थम् ।

---

अणः किमिति—अण इत्यस्याभावे दीर्घपदश्रुत्या 'अचश्च' इति उपस्थित्या अणो दीर्घत्वे सिद्धे अण इत्यस्य किं प्रयोजनमिति प्रश्नः । अच उपस्थित्या ऋकारस्यापि दीर्घः स्यादित्याह – तृढ वृढ इति—तौदादिकात् तृहेः वृहेश्च क्ते ऊदित्वेन वेट्कत्वाद् 'यस्य विभाषा' इति निष्ठायामिण्निषेधे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु ऋकारस्य दीर्घो मा भूदित्यण्ग्रहणम् । धातोरूदित्त्वेन वेट्कत्वद्योतनाय तृहू हिंसायाम्, वृहू उद्यमने इत्युपात्तम् ।

यत्तु अणः किम् 'दृढः' इति तन्न, तत्र ढलोपस्यैवाभावात् । दृंहेः क्ते 'दृढः स्थूलबलयोः' इति सूत्रेण हकारनकारयोर्लोपस्तकारस्य ढत्वञ्च निपात्यते । 'हो ढः' इति तु न, 'दादेर्धातोर्घः' इति बाधात् । न च हकारलोपो न निपातनीयो ढत्वनिपातने धत्वष्टुत्वे 'ढो ढे लोपः' इत्येव सिद्धेरिति वाच्यम्, निपातने लोपे च प्रक्रियागौरवात् ।

'परिदृढं करोति' इति णिचि परिदृढिधातो ल्यपि 'परिदृढय्य' इत्यत्र 'ल्यपि लघुपूर्वात्' इति अयादेशानापत्तेः, 'द्रढिमा' इत्यत्र 'र ऋतो हलादे लघोः' इति रत्वानापत्तेः, ढलोपादेरसिद्धत्वेन गुरुपूर्वकत्वात्, परिदृढस्यापत्यं कन्या 'पारिदृढी' इत्यत्र गुरूपोत्तमत्वात् ष्यङादेशापत्तेश्च । हलोपादिनिपातने तु न दोषस्तस्य सपादसप्ताध्यायीस्थत्वेनासिद्धत्वाभावात् 'संयोगे गुरु' इत्यस्याप्राप्तेः । एतेन अण्ग्रहणाभावेऽपि एषः स्वत एव दीर्घत्वेन ऋकारस्य 'दृढः' इति 'प्रभौ परिवृढः' इति च निर्देशेन दीर्घाभावज्ञापनात् लृकारस्य तादृशस्याभावेन च लक्ष्यसिद्ध्या 'अणः' इति व्यर्थमित्यपास्तम् ।

ननु 'ढ्लोपे' इत्यत्र औपश्लेषिकाधिकरणसप्तम्या 'तस्मिन्निति निर्दिष्टे' इति परिभाषयाऽव्यवहितपूर्वस्य इत्यस्यैवेवं पूर्वस्येत्यर्थलाभे सूत्रे पूर्वस्य ग्रहणं व्यर्थमित्याशङ्कायामाह—पूर्वग्रहणमिति–अयम्भावः—'अलुगुत्तरपदे' इति सूत्रस्योत्तरपदे इत्यस्य षष्ठाध्यायस्थतृतीयपादसमाप्तिपर्य्यन्तमधिकारस्य 'उत्तरपदाधिकारः प्रागङ्गाधिकारात्' इति भाष्येण मूले एव वक्ष्यमाणतयाऽत्रापि तत्सम्बन्धे पदे इत्यस्यैवाधिकारे कर्त्तव्ये उत्तरग्रहणसामर्थ्यादुत्तरपदशब्दस्य समासचरमावयवे रूढत्वबोधनेन समासचरमावयवस्थे ढ्लोपे पूर्वस्याणो दीर्घ इत्यर्थापत्त्या 'पुना रमते' इत्यादावसमासे दीर्घासिद्धिस्तद्वारणार्थं पूर्वग्रहणं सामर्थ्यादुत्तरपदे इत्यस्यात्रासम्बन्धबोधनार्थमिति यावदिति ।

नचाणुसामर्थ्यादत्राधिकृतमुत्तरपदे इति उत्तरञ्च तत्पदञ्चेति यौगिकमेव भविष्यति । अन्यथा तृढः, वृढः, इत्यादौ दीर्घाप्राप्तया अण इत्यस्य वैयर्थ्यापत्तिः । सूत्रवैयर्थ्यन्तु न 'रक्तान्निर्गतं नीरक्तम् दुष्टं रक्तं दूरक्तम्' इत्यादौ समासे चारितार्थ्यात् ।

यदि तु पितरं रातीति पितरास्तमाचष्टे पितरयतीत्यर्थे कर्तरि क्विपि पितर् इति । तस्य राज्यादिशब्देन समासे 'पितृराज्यम्' इत्यादौ दीर्घवारणायाण इत्यस्य चारितार्थ्यम् । न च णिलोपटिलोपयोः स्थानिवत्त्वाद् दीर्घाप्राप्तिः, पूर्वत्रासिद्धीये तन्निषेधात् । अत एव भाष्यकृता न पदान्तसूत्रे द्विर्वचनादित्रिपादीस्थग्रहणं प्रत्याख्यातमित्युच्यते तदा अण्ग्रहणसामर्थ्यादुत्तरपदग्रहणमत्र यौगिकमाश्रीयते इत्यदोषः ।

न च 'लिहो ढौकनम्' लीढौकनम्' इत्यादौ तांशेऽपि समासे सूत्रचारितार्थ्यम्, पदान्तजश्त्वं प्रति 'ढो ढे लोपः' इत्यस्यासिद्धतया जश्त्वे 'लिड्ढौकनम्' इत्यस्यैवेष्टत्वेन दीर्घाप्राप्तेः । न च लोपो [illegible]; पदान्ते जश्त्वस्यान्तरङ्गत्वेन ढलोपस्य च पदद्वयवर्णनिमित्तकत्वेन बहिरङ्गतया 'लीढः' [illegible]परिभाषया बाधं विनैव केवलं ष्टुत्वस्यासिद्धत्वबाधेनैव ढो ढे लोप इत्यस्य चारितार्थ्येन [illegible] योभयोर्बाधे मानाभावेन पदान्ते जश्त्वस्य दुर्वारत्वात् । अत एव [illegible]म् । इह मा भूत्—'लिड्ढौकनम्' इति भाष्यं संगच्छते ।

अजर्घाः। लीढः। 'मनस् रथः' इत्यत्र रुत्वे कृते 'हशि च' इत्युत्वे 'रो रि' इति रेफलोपे च प्राप्ते।

विप्रतिषेधे परं कार्यम्। [ १-४-२ ]

तुल्यबलविरोधे सति परं कार्यं स्यात्।

---

यत्तु अण्ग्रहणसामर्थ्यादुत्तरपदे इति यौगिकमिति तन्न, पितरं रातीति पितृरास्तमाचष्टे पितृरयतीति ण्यन्तात् क्विपि 'पितृर्' इति तस्य राज्यशब्देन समासे 'पितृराज्यम्' इत्यत्र दीर्घवारणाय अण इत्यस्य चारितार्थ्यात्। न च दीर्घे आलोपणिलोपयोः स्थानिवत्त्वम्, ऋकारस्य पदान्तत्वेन न पदान्तेति निषेधात्। न च 'रो रि' इति लोपे स्थानिवत्त्वम्, पूर्वत्रासिद्धीये न स्थानिवत्, इति निषेधेन पूर्वत्रासिद्धीये 'रो रि' इति कर्तव्ये स्थानिवत्त्वाभावात्। तस्मात्सूत्रे ढ्ग्रहणसामर्थ्यादुत्तरपदे इत्यस्याधिकारेऽपि उत्तरञ्च तत्पदमुत्तरपदमिति यौगिकार्थस्याश्रयणे दोषाभावेन सूत्रे पूर्वग्रहणं सुत्यजम्। मूलन्तु सूत्रस्य उक्तप्रयोगेषु 'लीढौकनम्' इत्यादिषु चारितार्थ्येऽपि 'लीढः' 'अजर्घाः' इत्यादीनामसिद्धिरिति पूर्वग्रहणमुत्तरपदं इत्यस्य निवृत्तये कर्तव्यमित्यभिप्रायेण। यत्तु उत्तरपदे इत्यस्य यौगिकत्वाश्रयणे 'स्तोकान्मुक्तः' इत्यादौ दोषप्रदर्शनं तच्चिन्त्यम्, अत्र यौगिकार्थाश्रयणेऽपि सर्वत्र तदाश्रयणे मानाभावात्।

केचित्तु सूत्रत्रयस्य स्थाने 'ढ्रोढ्रि लोपः पूर्वस्याणो दीर्घश्च' इति न्यासेन सिद्धे सूत्रत्रयं व्यर्थम्। 'चचार' इत्यादौ तु न दोषः, सन्नियोगशिष्टन्यायेन यत्रानेन लोपस्तत्रैव दीर्घप्रवृत्तेरिति दिक्।

अजर्घा इति—'गृधु अभिकाङ्क्षायाम्' इत्यतो यङि लुकि द्वित्वे आदिहल्शेषे अभ्यासस्य ऋगागमे अभ्यासस्य कोश्चुत्वे जश्त्वे लङि सिपि शपि लुकि लघूपधगुणे रपरत्वे 'हलश्च' इतीकारलोपे 'हल्ङ्याब्भ्यः' इति सेर्लोपि 'जर्गर् ध्' इति स्थितौ 'एकाचो बशः' इति गस्य घे धस्य जश्त्वेन दकारे 'दश्च' इति दस्य रुत्वे 'अडागमे' 'अजर्घर्र्' इति जाते 'रो रि' इति रलोपे 'ढ्रलोपे' इति पूर्वस्याणो दीर्घे विसर्गे च 'अजर्घाः' इति। अत्रापि रेफलोपनिमित्तभूतरेफस्य उत्तरपदस्थत्वाभावात् तस्मिन्परे अकारस्य दीर्घो न स्यादिति 'उत्तरपदे' इत्यस्यात्राधिकारनिवृत्तये पूर्वग्रहणम्।

ननु 'मनोरथः' इत्यत्र 'मनस् रथः' इति स्थितौ सस्य रुत्वे 'रो रि' इति लोपे 'हशि च' इत्युत्वे च प्राप्ते किं स्यादित्याशङ्कायामाह—

'विप्रतिषेधे परं कार्य्यम्' इति। परिभाषासूत्रमिदम्, अनियमे नियमकारित्वात्। विप्रतिपूर्वकात् 'षिधू शास्त्रे' इत्यतः, षिधु गत्याम्' इत्यतो वा कर्मव्यतिहारे विद्यमानाद् 'भावे' इति भावे घञ्। परस्परविरोधार्थकोऽयं विप्रतिषेधशब्दः। तदुक्तं भाष्ये 'इतरेतरप्रतिषेधो विप्रतिषेधः' इति। द्वे शास्त्रे अन्यत्र चरितार्थे यदा युगपदेकत्र प्राप्नुतस्तदा स विप्रतिषेधः। तदुक्तं भाष्ये 'द्वौ प्रसङ्गौ यदाऽन्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतः स विप्रतिषेधः' इति। यथा 'वृक्षाभ्याम्' इत्यर्थम् 'सुपि च' इति 'वृक्षेषु' इत्यर्थम् 'बहुवचने झल्येत्' इति। 'वृक्षेभ्यः' इत्यत्र युगपत्प्राप्नुतः। तत्र परमेत्वमेव भवति। परं यत्कार्य्यमेत्वादि तन्नवर्तत्यर्थात्। यद्वा यत्परं तत्कार्य्यं कृत्यहं भवतीत्यर्थात्। विरोधश्च लोके तुल्यबलयोरेव, न तु महाकसिंहयोरित्याह— तुल्येति—एतेन बलवत्त्वप्रयोजकनित्यत्वान्तरङ्गत्वापवादत्वाद्यभावे एव पूर्वापरस्य बलवत्त्वं बोध्यते इति सूचितम्। अत्र विरोधश्च शास्त्रयोः 'स्वविधेयघटितस्य साधुत्वम्, विधेयान्तरघटितस्यासाधुत्वम्' इति बोधनेन। यथा 'वृक्षेभ्यः' इत्यत्र 'सुपि च' इत्यनेन आघटितस्य साधुत्वम्, एकारघटितस्यासाधुत्वं बोध्यते। 'बहुवचने' इत्यनेन एकारघटितस्य साधुत्वम्, आकारघटितस्यासाधुत्वं बोध्यते इत्युभयोर्विरोधः। एवमेव सर्वत्र बोध्यम्। केचित्तु 'एकस्य स्थाने कार्य्यद्वययोगः, स्वस्वनिमित्तानन्तर्यासम्भवश्च विरोध इत्याहुस्तन्न वरमित्यन्यत्र निरूपितम्।

इति रेफलोपे प्राप्ते, 'पूर्वत्रासिद्धम्' इति 'रो रि' इत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ।

इदं सूत्रं यत्र द्वयोः कार्य्ययोर् ण्वुल्तृचाविव पर्य्यायेण प्राप्तिस्तत्र परकार्य्यस्यापि पक्षे सिद्धतया 'सिद्धे सत्यारभ्यमाणो विधिर्नियमाय कल्पते' इति न्यायेन परमेव भवति न पूर्वमिति नियम्यते । तदा फलति—'सकृद्गतौ यद् विप्रतिषेधे बाधितं तद् बाधितमेव' इति । यदा लोके कश्चन द्वयोरेको भृत्यो भवति तयोः पर्य्यायेण कार्य्यं करोति । यदि द्वयोः स्वामिनोः एकदैव एकस्य पूर्वदिशि प्रेषणमपरस्य पश्चिमदिशि प्रेषणं तदा पक्षपातशून्यो भृत्य उभयोः कार्य्यं न करोति उदास्ते । किन्तु यदा राजाज्ञा पित्राद्याज्ञा वा यत्कार्य्यंकरणाय प्रेरिका भवति तत्कार्य्यं करोति । तथैव लक्ष्यार्थमेव शास्त्रमिति लक्ष्यं प्रेष्यम् एकञ्च । तल्लक्ष्यं केनापि न सम्बध्नाति' इति द्वयोः शास्त्रयोः प्रवृत्त्यभावे प्राप्ते 'विप्रतिषेधे' इति सूत्रं परं विधत्ते न पूर्वं निषेधति । परस्मिन्कृते यदि पूर्वस्य प्राप्तिः सम्भवेत्तदा तदपि स्यात् । इत्येवं 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति न्यायः सिध्यति ।

अनयोर्न्याययोः शिष्टप्रयोगानुसारेणानुसरणम् । द्वयोः सूत्रयोः क्वचिल्लब्धावकाशयोरेकत्र लक्ष्ये उभयोर्युगपत्प्राप्तिस्तुल्यबलविरोधः । कार्य्ये परत्वञ्च परशास्त्रविहितत्वम् । प्रकृते 'हशि च' इत्यस्यावकाशः—'शिवो वन्द्यः' इति । 'रो रि' इत्यस्यावकाशः—'पुना रमते' इति । 'मनर् रथः' इत्यत्र उभयोर्युगपत्प्राप्तिरिति तुल्यबलविरोधसत्त्वादुत्वं बाधित्वा परत्वात् लोपः प्राप्नोति । इत्याह—रेफलोपे प्राप्ते इति ।

रेफलोपशङ्कां परिहरति—पूर्वत्रासिद्धम् इति । 'रो रि' इत्यस्येति । अत्र रेफलोपस्यासिद्धत्वादित्यनुक्त्वा 'रो रीत्यस्यासिद्धत्वादिति' ब्रुवन् दीक्षितः 'पूर्वत्रासिद्धम्' इत्यत्र शास्त्रासिद्धत्वमेव युक्तम्, न तु कार्य्यासिद्धत्वमिति सूचयति । अयम्भावः 'पूर्वत्र' इत्यतिदेशशास्त्रम्, अतिदेशबोधकत्वात् । अतिदेशः – आरोपः, स च तदभाववति तत्प्रकारकभ्रमात्मकज्ञानरूपः ।

प्रकृते सिद्धे 'रो रि' इति परशास्त्रेऽसिद्धत्वज्ञानं शास्त्रासिद्धत्वम् । कार्य्यासिद्धत्वे हि सिद्धे 'रो रि' इति लोपरूपे कार्य्येऽसिद्धत्वज्ञानमेवातिदेशः स्यात् । लोपे कृते तत्राभावप्रतियोगित्वारोपेऽपि देवदत्ते हते तत्र हनत्वाभावारोपेऽपि यथा तस्य न जीवनम् इति 'देवदत्तस्य हन्तरि हतेऽपि देवदत्तस्योज्जीवनं न भवति । हतत्वारोपे कथमुज्जीवनं स्यात् । तथा लोपेऽभावत्वारोपेऽपि रोरुज्जीवनं न स्यादिति 'हशि च' इत्यस्याप्रवृत्तिरेव स्यात् । शास्त्रासिद्धत्वे तु परस्य रोरीति शास्त्रस्यासिद्धतया तत्कृतकार्य्यस्यापि अभावः स्वत एव सिध्यति इति लोपाभावे रोः सत्त्वात् 'विप्रतिषेधे' इति शास्त्रं न प्रवर्तते, परकार्य्यस्याभावात् । तदुक्तम्भाष्ये—'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति । तथा च 'हशि च' इत्यस्य दृष्ट्या रोः सत्त्वेन उत्वं सिध्यति । एतच्च 'पूर्वत्र, इति, अचः परस्मिन्' इति, 'षत्वतुकोः' इति च भाष्ये स्पष्टम् ।

ननु अत्र शास्त्रे 'देवदत्तहन्तृहतन्यायस्वीकारे 'रामौ' इत्यादि न सिध्येत् । 'राम औ' इति दशायाम् 'वृद्धिरेचि' इति प्राप्तां वृद्धिं बाधित्वा 'प्रथमयोः पूर्वसवर्णः' इति प्राप्नोति । तस्य 'नादिचि' इति निषेधेऽपि 'वृद्धिरेचि' इत्यस्य दीर्घेण हततया पुनर्वृद्ध्यप्राप्तेरिति वाच्यम्, पूर्वसवर्णदीर्घप्राप्तेर्हननोद्यमरूपत्वेन 'वृद्धिरेचि' इत्यस्य हननाभावात् । लक्ष्ये प्रवृत्त्या यदि सूत्रस्य बाधस्तदा हननम् । तथा च लक्ष्ये प्रवृत्तिर्हननस्थानीया प्राप्तिस्तु तदुद्यमः । हननोद्यतस्य हनने बाधे वा हननीयस्योज्जीवनं भवत्येव । एतेन 'तौ सत्' इति निर्देशात् 'देवदत्तप्रहन्तृहनन्यायस्यानित्यतया 'रामौ' इत्यादिसिद्धिरित्यपास्तम्, रामावित्यादौ तन्न्यायाप्राप्तेः ।

अत्र कार्य्यकालपक्षे परिभाषाणां विधिदेशे आकर्षणे विधिदेशत्वेऽपि न तत्रत्यं परत्वं ग्राह्यम्, किन्तु पाठकृतमेव । अत एव 'ङमो ह्रस्वाद्' इति सूत्रभाष्ये 'तस्मिन्निति' 'तस्माद्' इति परिभाषयोरुपस्थितौ 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्, परत्वात्' इत्युक्तिः संगच्छते । अन्यथा एकस्मिन्नेव सूत्रे उपस्थितयोस्तयोस्तुल्यदेशत्वेन परत्वोक्तिरसङ्गता स्यात् । ननु 'ङमो ह्रस्वात्' इति त्रिपादीसूत्रे

एतत्तदोः सु लोपोऽकोरनञ्समासे हलि। [ ६-१-१३२ ]

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। 'अकोः' किम्—एषको रुद्रः।

उपस्थितयोः परिभाषयोस्त्रिपाद्यस्थत्वेन 'पूर्वत्रासिद्धीये नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति भाष्योक्त्या तत्र विप्रतिषेधशास्त्राप्रवृत्तौ 'पञ्चमीनिर्देशो बलीयान्' इति भाष्योक्तिरसङ्गतेति चेन्न, त्रिपादीस्थसूत्रेण तयोराकर्षणेऽपि स्वदेशीयत्वस्यापरित्यागेन पाठकृतपरत्वमादाय 'विप्रतिषेधे' इत्यस्य प्रवृत्तौ बाधकाभावात्।

संज्ञाशास्त्राणान्तु कार्य्यकालपक्षे विधिदेशगतपरत्वमादायैव विधिगतपरत्वं संज्ञाशास्त्रे आरोप्यैव 'विप्रतिषेधे' इति सूत्रं प्रवर्त्तनीयम्। अत एव 'अकडारादेका' इति भाष्ये 'अयादिभ्यः पूर्वं प्रगृह्यसंज्ञा' इति भाष्यसङ्गतिः। अन्यथा 'एचोऽय्' इत्यस्य षष्ठाध्यायस्थत्वेन प्रगृह्यसंज्ञायाः प्रथमाध्यायस्थत्वेन भाष्योक्तिरसङ्गतैव स्यात्।

'एतत्तदोः सु लोपोऽकोरनञ्समासे हलि' इति। 'एतत्तदोः' इत्यत्र 'स्वं रूपम्' इति सहकारेण लक्ष्यस्थस्यानुकरणत्वेन च शब्दस्वरूपबोधकतया सर्वार्थवाचकत्वाभावेन त्यदादिग्रहणेनाग्रहणात् 'त्यदादीनामः' इत्यत्वम्, 'त्यदादीनां मिथः सहोक्तौ' इत्यादिना एकशेषश्च न। एतेन अत्र त्यदाद्यत्वमेकशेषश्च न, सौत्रत्वात्, प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशाद्वा। एवञ्च वृत्तावपि 'एतत्तदोरिति प्रयोगस्साधुः' इति समाधानं परास्तम्।

एवं कोशेऽपि प्रथमान्तशब्दाः स्वरूपपरा एवेति तुल्यार्थत्वाभावेन 'नैकशेषप्राप्तिः' 'विरूपाणामपि समानार्थानाम्' इत्यप्राप्तेः। सुशब्देन सम्बन्धे षष्ठी। सम्बन्धश्च न आनन्तर्यरूपः, मतुप्सूत्रभाष्ये आनन्तर्य्यस्य षष्ठ्यवाच्यत्वबोधनात्। अत एव 'ब्राह्मणस्य कम्बलः' इत्युक्ते न हि ब्राह्मणानन्तरः कम्बलः प्रतीयते। किञ्च 'रामः सः' इत्यत्र रामपदोत्तरसुशब्देऽपि तच्छब्दानन्तर्य्यस्य सत्त्वेन सोर्लोपापत्तिः।

यदि तु स्वोत्तरत्वविशिष्टानन्तर्य्यं षष्ठ्यर्थस्तदोक्तदोषवारणेऽपि वासुदेववाचकाशब्दघटिते 'सस् अः' इत्यत्र रुत्वे, उत्वे, गुणे पूर्वरूपे 'सोर्गच्छति' इत्यत्र पूर्वान्तवद्भावेन सोशब्दे तच्छब्दत्वेन सोर्लोपापत्तिर्दोष एव। अतःस्वाव्यवहितोत्तरत्व—स्वार्थगतसंख्याभिधायित्व—स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वरूपैतत्त्रितयसम्बन्धः षष्ठ्यर्थ इति न क्वापि दोषः। न च एतत्तदोर्यः सुस्तस्य लोप इत्यर्थे 'ऋद्धस्य राज्ञः पुरुषः' इतिवत् 'सुलोपः' इति समासानापत्तिः, 'सविशेषणानां वृत्तिर्न' इति निषेधादिति वाच्यम्, समासाभावेऽपि सौत्रत्वात् 'सुपां सुलुक्' इति षष्ठ्या लुकि सुशब्दस्य पृथक्पदत्वात्, 'सविशेषणानाम्' इत्यत्राभेदेनैव विशेषणस्य ग्रहणेन समासे बाधकाभावाच्च।

एतत्तदोर्यः सुरिति—एतत्तदर्थगतसंख्याभिधायी तदव्यवहितोत्तरस्तदन्तोद्देश्यकश्च यस्सुरित्यर्थः। तथा च 'परमस ददाति, परमैष ददाति' इत्याद्यपि सिध्यति। तदन्तोद्देश्यक इत्युक्त्या पूर्वोक्ते 'सोर्गच्छति' इत्यत्र न दोषः, तत्र सोरशब्दोद्देश्यकत्वात्। अकोरिति—अविद्यमानः ककारो ययोरेतत्तदोस्तयोरित्यर्थस्तदाह—अककारयोरिति। अनञ्समास इति—नञा समासो नञ्समासः। न नञ्समासोऽनञ्समासस्तत्रेत्यर्थः। प्रतिषेधार्थक एवात्र नञ्समासेन समास्यमानो नञ्, न पर्य्युदासः। अन्यथा नञ्समासभिन्ने तत्सदृशे समासे 'परमस ददाति' इत्यादौ एव लोपः स्यात् 'नञिवयुक्तमन्यसदृशाधिकरणे' इति न्यायात् न तु 'एष विष्णुः' इत्यादौ। प्रसज्यनञा सामर्थ्याभावेऽपि सौत्रत्वात्समासः। 'एष विष्णुः, स शम्भुः' इति—एषस् विष्णुः, सस् शम्भुः, उभयत्र सलोपः। एषक इति—'अव्ययसर्वनाम्नः' इति टेः प्रागकच्प्रत्ययेऽत्र एतदः सककारतया लोपाभावे रुत्वे उत्वे च रूपम्। एवम् 'सको रुद्रः' इत्यपि बोध्यम्।

न च 'एषक' इत्यस्य एतद्रूपत्वाभावात्सुलोपाप्राप्तौ 'अकोः' इति व्यर्थमिति वाच्यम्, 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन सककारस्यापि एतद्ग्रहणेन ग्रहणात्। अत्र च

'अनञ्समासे' किम्—असश्शिवः। 'हलि' किम्-एषोऽत्र।

**सोऽचि लोपे चेत्पादपूरणम्।** [ ६-१-१३४ ]

'सस्' इत्येतस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत।

'सेमामविड्ढि प्रभृतिम्' 'य ईशिषे'।

'इह ऋक्पाद एव गृह्यते' इति वामनः। 'अविशेषा च्छ्लोकपादोऽपि' इत्यपरे।

'सैष दाशरथी रामः'।

'लोपे चेत्' इति किम्–'स इत्वेति' 'स एवमुक्त्वा'।

'सत्येव' इत्यवधारणं तु 'स्यश्छन्दसि बहुलम्' इति पूर्वसूत्राद् बहुलग्रहणानुवृत्त्या लभ्यते। तेनेह न।

'सोऽहमाजन्मशुद्धानाम्।

इति स्वादिसन्धिप्रकरणम्।

---

'अकोः' इत्येव मानम्। अन्यथा सुलोपाप्राप्त्या अकोरिति व्यर्थमेव। एतस्य फलन्तु 'ककिम्' शब्दात्सौ 'किमः कः' इति कादेशे क इति रूपसिद्धः। अज्ञातः कुत्सितो वा एषः, सः, इति वेत्यर्थः। असः इति—न सोऽसः। विसर्गस्य सत्वे श्चुत्वेन शः 'असश्शिवः' इति। एवम् 'अनेषो रुद्रः' इत्यत्रापि न सुलोपः, नञ्समासत्वात्। अत्र 'एतत्तद्भ्यां परस्य सोर्लोप इति तु नार्थः, पञ्चम्या अभावेन तदर्थासम्भवात्। एतत्तद्भ्यां विहितस्येत्यपि नार्थः, 'परमस ददाति' इत्यादौ एतत्तदोर्विहितत्वाभावेन लोपानापत्तेः, 'अनञ्समासे' इत्यस्य वैयर्थ्यापत्तेश्च, अतस्माद् विहितत्वेन सुलोपाप्राप्तेः। वास्तविकोऽस्यार्थस्तूक्त एव।

अस इत्यस्य 'आरोपिततत्वविशिष्ट' इत्यर्थः। आरोपितत्वं नञ्द्योत्यम्। तत्र तादात्म्येनारोपस्य भेदसादृश्ययोः सतोरेव सम्भवेन संसर्गस्यारोपस्य तदभावे एव सत्वेन चारोपितत्वबोधे सादृश्याभावादिबोध आर्थः। तथा च यन्मूलको यत्रारोपस्तस्यार्थिको बोधः। यथा 'अनुदरा कन्या' इत्यत्राल्पत्वेन उदराभावमारोप्य आरोपित उदर इति बोधे अल्पोदरेत्यार्थः, अद्विज इत्यत्र भेदमूलकारोपेण आरोपितो द्विजः शब्दः, द्विजभिन्न इत्यार्थः। अधर्म इत्यत्र विरोधमूलकारोपे आरोपितो धर्म इति शाब्दः, धर्मविरुद्ध इत्यार्थः। अत्र पक्षे उत्तरपदार्थस्य प्रधानतया त्यदादिकार्यं सुलभम्।

न च नञर्थस्य प्राधान्ये तत्र लिङ्गसंख्ययोरभावेन कथं तत्प्रतीतिरिति वाच्यम्, शब्दशक्तिस्वभावेन समासे नञः सत्त्वार्थाभिधायित्वात्, अन्याश्रितार्थवाचकानामाश्रयार्थगतलिङ्गाद्यभिधायित्वस्वभावाच्च। अभावेन प्रतियोगिनोऽपि स्वज्ञानाद्याश्रयणेन तस्याप्याश्रयत्वात्।

'स्यश्छन्दसि' 'सोऽचि लोपे चेत्' इत्युत्तरसूत्रयोः प्रथमैकवचनस्यैव सोः सम्भवेनार्थाधिकारानुरोधात्, अनुनासिकोकारविशिष्टस्यैव निर्देशाच्च सप्तम्याः सोरपि न ग्रहणम्।

ननु 'लोपो व्योः' इति लोपग्रहणम्, 'हल्ङ्याब्भ्यः' इति सुग्रहणञ्चानुवर्त्य 'हल्ङ्याब्भ्य' इति सूत्रानन्तरं पाठेन सुलोपे लब्धे सुलोप इति व्यर्थमिति चेन्न, तत्र 'संहितायाम्' इत्यस्याधिकाराभावेनासंहितायामपि सुलोपापत्तेः।

'सोऽचि लोपे चेत्पादपूरणम्' इति 'सः' इति लुप्तषष्ठीकं प्रथमान्तस्यानुकरणम्। सस् शब्दस्येत्यर्थः। सुलोप इत्यनुवर्तते तदाह—सस् इत्येतस्येति। अचीति स्पष्टार्थम्, लोपे सति पादपूरणापूरणयोरच्येव वैलक्षण्यस्य सम्भवेनार्थत एव तल्लाभात्।

केचित्तु सस् इति त्वन्तत्तच्छब्दानुकरणम्। षष्ठ्यर्थे प्रथमा। 'सामान्ये नपुंसकम्' इति नपुंसकत्वात्सोर्लुक्, न लुमतेति निषेधेन सोः परत्वाभावात् 'अत्वसन्तस्य' इति दीर्घो न 'इको गुणवृद्धी' इतिवदित्याहुः।

श्लोकस्य चतुर्थांशः पादः। अनेन सोर्लोपे पादपूर्तिरनेन लोपाभावेन पादपूर्तिर्यत्र तत्रैवानेन सोर्लोपः। इति वृत्त्यर्थाख्यातम्। तेन 'सोऽहमाजन्मशुद्धानाम्' इति रघुवंशवाक्ये न सुलोपः, अत्र

लोपे साहमिति, लोपाभावे 'सोऽहम्'इति उभयथाऽपि पादपूर्तेः सत्त्वात्। परन्तु अवधारणपदतया व्याख्याते 'सास्मा अर.....................इति ऋङ्मन्त्रे सोर्लोपेन स्यात् 'सस् अस्मै' इत्यत्र लोपे 'सास्मै' इति, लोपाभावे 'सोऽस्मै' इति उभयथापि पादपूर्तेः। न चात्र लोपाभावे उत्वे गुणे च 'सोअस्मै' इत्येव 'प्रकृत्यान्तः पादम्' इति प्रकृतिभावेन पूर्वरूपस्य बाधादिति लोपे एव पादपूर्त्तिरिति वाच्यम्, 'सोऽयमभात्' इत्यत्रैव प्रातिशाख्यवचनेन पूर्वरूपविधानात्। तस्मात् 'स्य श्छन्दसि बहुलम्' इत्यतो बहुलग्रहणानुवृत्त्या 'क्वचित्प्रवृत्तिः' इति रीत्या बाहुलकेन सर्वं समाधेयमित्यवधारणपरतया व्याख्यानं चिन्त्यम्। एतेन लोके लोपे पादपूरणे सत्येव लोपो नान्यत्रेत्यवधारणपरतया व्याख्यानमित्यपास्तम्।

पादशब्देनेह छन्दसीत्यनुवृत्त्या ऋक्पाद एव गृह्यते इति वामनः। छन्दसीत्यनुवृत्तौ प्रमाणाभावेन लोकेऽपि लोपदर्शनेन च पादमात्रस्य ग्रहणमित्यपरे। तेन 'सैष दाशरथी रामः, सैष राजा युधिष्ठिरः। सैष कर्णो महात्यागी सैष भीमो महाबलः' इत्याद्यपि सिध्यति।

इति स्वादिसन्धिप्रकरणम्।

------

# परिशिष्टांशः

## अथ वर्णविमर्शः

तत्तत्प्रातिशाख्यव्याकरणानुसारं वर्णस्वरूपेऽवगम्यमाने तत्तत्तन्त्रानुसारं वर्णविषये संक्षेपेण किञ्चिदुच्यते—वैष्णवतन्त्रानुसारम्—अहिर्बुध्न्यसंहितातो वर्णस्वरूपं प्रदर्श्यते—तत्र शुद्धसंविन्मयी भगवतो विष्णोः क्रियाशक्तिः पराशब्देनोच्यते। तत्र यः प्रथम उन्मेषो भगवतः सा भूतिरिति कथ्यते। भावकस्तु विष्णुसंकल्पः सुदर्शनपदेनोच्यते। उद्यती या क्रियाशक्तिर्नादरूपतां धत्ते। स एव नादो दीर्घघण्टानादोपमः समाधौ योगिभिरनुभूयते। यो हि नाद उन्मेषं प्राप्तो बिन्दु र्भवति।

स च बिन्दुर्नामनामिभेदेन द्विधा भिद्यते। तत्र नामरूपेणोदयं प्राप्य ब्रह्मशब्दपदेनाभिधीयते। नामिरूपेणोदिता भूतिरुच्यते। प्रकृते सा बिन्दुमयी शक्ति र्वर्णरहिताऽपि अनुत्तररूपेण स्थिता स्वरव्यञ्जनभेदेन द्विधा व्यवतिष्ठते, तस्या अ इत्युन्मेषः—अनुत्तरपदेनोच्यते। अनया रीत्या—

अ इ उ ऋ लृ ए ओ एते सप्त स्वराः सूर्यरश्मयः।
आकारादय उत्तरे सप्त स्वराः सोमरश्मयः॥

## अधुना व्यञ्जनसृष्टिरुच्यते

ह स ष श व ल र य म भ ब फ प न ध द थ त ण ढ ड ठ ट ञ झ ज छ च ङ घ ग ख क इति। तथा च व्यञ्जनेषु लकारं विहाय चतुस्त्रिंशद् व्यञ्जनानि सन्ति। चतुर्दश च स्वराः सन्ति इति संकलया अष्टचत्वारिंशदेव वर्णा एतन्मते। [ अ० बु० सं० अ० १६ ] इति दिक्।

## शैवशाक्ततन्त्रानुसारं वर्णविचारः

तथा हि—साधकमूर्द्धन्येन श्रीभास्कररायापरनाम्ना भासुरानन्दनाथेन वरिवस्यारहस्यादौ समुपन्यस्तां वर्णविभाजनपद्धतिं प्रदर्शयामि—वटबीजीयसूक्ष्मरूपतुल्यशब्दसृष्टिसूक्ष्मरूपशालिनी पूर्वोक्तरूप। त्रिपुरसुन्दर्येव ( वामा ज्येष्ठा रौद्री अम्बिका ( अनुत्तरांशभूता ) इच्छा ज्ञानक्रिया शान्ता ( ऊर्ध्वावयवा ) एता अष्टशक्तयः परासहिता नव परापदवाच्या सैव मातृकापदेनोच्यते। तत्र स्रष्टव्यपदार्थान् आलोच्य "तदैक्षत बहुस्यां प्रजायेय" [ तै० उ० २६ ] इति श्रुतिरीत्या तादृशमीक्षणमेव प्रवृत्तिनिमित्तीकृत्य तस्यां पश्यन्तीति पदं प्रवर्तते। तदवयवाश्च वामादयोऽष्ट शक्तयः। सैव व्यष्टिसमष्टिभेदेन नवविधा। ततो नव नादा जाताः— विर्णाति प्रथमः, विणिविर्णाति

द्वितीयः। घण्टानादस्तृतीयः। शंखनादश्चतुर्थः। पञ्चमस्तन्त्रीनादः। षष्ठस्तालनादः। सप्तमो वेणुनादः। अष्टमो भेरीनादः। नवमो मृदङ्गनादः तत्समष्टिश्च नादध्वन्यादिपदवाच्या नातिसूक्ष्मा परावत्, नातिस्थूला वैखरीवत् अतो मध्यमाख्या मातृका। ततो नवभिर्नादैः अकचटतपयशलाख्यवर्णनवकवती वैखरी मातृका जाता इदं वर्णानुपूर्व्यं यथा स्थूल-सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमभेदं तथैव तद्वाच्या अर्था अपि तथा तथा उन्नेयाः।

## मातृकाचक्रानुसार वर्णोपन्यासः

पञ्चभ्यो भूतेभ्यः क्रमशः पञ्चानां वर्णानामुत्पत्तिः। अर्थात् कण्ठ्यतालव्यमूर्धन्यदन्त्यौष्ठ्यात्मका वर्णाः क्रमश आकाशवायुतेजोजलपृथिवीसम्बन्धिनः। विस्तरस्तु मातृकाचक्रविवेके तन्त्रग्रन्थे, २ अध्याये द्रष्टव्य इति दिक्।

## एवं षोडशमातृकास्वरूपञ्च

"अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः"। इत्युपक्रम्य इमा षोडशमातृका मार्कण्डेयपुराणे व्याकरणदर्शनभूमिकायाञ्च निर्दिष्टाः सन्ति।

एवं षोडशमातृकाविषये तान्त्रिकाणां वैयाकरणानाञ्च मतभेदोऽपि व्या० द० भूमिकायां निरूपित इति संक्षेपः।

## अथ वर्णनीतिः।

अथ वर्णा आनीयन्ते—१—"अवते विट्वलोपो दीर्घश्च वा" विटः सर्वलोपे धातोर्वलोपे च कृते दीर्घविकल्पाद् अ, आ, इति सिद्धम्। अवति विश्वम् अः ( विष्णुः ) "इष्युषिभ्यां क्विब्यअनलोपश्च" ॥ २—दीर्घश्च वा स्यात् 'कित्वाद् गुणः। इ, ई, उ, ऊ इति इच्छत्यनेन इः=कामः। ओषति=दहति विश्वम् उः शिवः। "अर्त्तिकिरत्योः कत्लोपश्च" ॥ ३—'अनेक्याः' क्विप् कृधातोः कलोपश्च"। ऋ, ॠ इति। क्विपः पित्त्वेऽपि बाहुलकाद् ऋधातोर्न तुक्। अर्दने गम्यते देवैः ऋं ॠशब्दोदितौ। "तयोरेव लृ" ॥ ४—तयो ऋ ॠ इत्यनयो लृत्वञ्च स्यात्। आन्तरतम्यादेकद्विमात्रौ। 'लृ, ॡ" लृवर्णस्य दीर्घाभावो लिपिपाठादन्यत्रेदं प्रमाणम्। "इको गुणवृद्धी"॥ ५— ए,ऐ। "ऊहेरन् अनलोपश्च" ॥ ६—गुणवृद्धी च स्तः। ओ, औ। "अमेर्मुसौ च" ॥ ७—अमेर्व्यंअनलोपो मुसौ च प्रत्ययौ स्तः। म् स् इति शेषे सस्य रुत्वविसर्गौ। अं, अः। "कनिखनिगमिघसिङुङ्भ्यो डः" ॥ ८—डित्वाद् टिलोपः। क, ख, ग, घ, ङ। कनति=दीप्यते को ब्रह्मादिः। "चमिछमिजन्युज्झिमिदेरुजलोपो ञ च" ९—एषां डः स्यात्। उज्झेरुकारजकारलोपौ मिदेर्मकारस्य आदेशश्च ॥ च, छ, ज ॥ उज्झे झकारमात्रस्य शिष्टत्वादजभावे टिलोपाप्रसङ्गः। झ। मिदेर्मकारस्य ञत्वे टिलोपे च कृते ञ इति। "टवखि ठवखि डवखि ढौकृपणिभ्यो वपलोपश्च" ॥ १०—एभ्यो डो वलोपश्च। पणेः पशब्दलोपश्च स्यात्। ट, ठ, ड, ढ, ण ॥ "तनिथुडिदमिधनिमिभ्यश्च" ॥ ११—उः स्यात्। त, थ, द, ध, न ॥ "पातिफक्कतिबहिभृम्भ्रकश्च" ॥ १२ ॥ प, फ, ब, भ, म ॥ याति राति लाति वातिभ्यश्च" ॥ १३—य, र, ल, व ॥ शमिमुषिसहाभ्यो मुलोपश्च" ॥ १४—एभ्यो डोमुगेर्मुलोपश्च। श, ष, स, ह ॥ "कायतिपिबत्योः ⌣क ⌣पौ च" ॥ १५—अनयोर्डे एतावादेशौ च स्तः। ⌣क, ⌣प इति। इति वर्णनीतिः नारायणभट्टविरचिते प्रक्रियासर्वस्वे उणादिखण्डे इति दिक्।

## परिभाषात्वञ्च

परिभाषात्वञ्च—शक्यग्राहकत्वे सति लक्ष्यविशेष्यकसाधुत्वप्रकारकशाब्दबोधाजनकत्वे सति लक्ष्यविशेष्यकसाधुत्वप्रकारकाप्रामाण्यज्ञानानास्कन्दितशास्त्रजन्यबोधसहकारित्व—साक्षात्परम्परा लक्ष्यसाधुत्वप्रयोजकशास्त्रप्रवृत्तिनिवृत्तिप्रयोजकत्वान्यतरत्वेन मुन्यभिप्रेतत्वम्। सत्यन्तविशेषणेन संज्ञाशास्त्रस्य व्यावृत्तिः। सहकारित्वान्तेन शास्त्रत्वसम्पादकपरिभाषाणां संग्रहः। प्रयोजकत्वान्तेन शास्त्रत्वसम्पादकेतरपरिभाषाणां संग्रहः।

'इको गुणवृद्धी'

'इको गुणवृद्धि' 'अचश्चेति परिभाषान्तरम्' इत्येतत्सूत्रभाष्यात्परिभाषेयम्। 'इकः' इति षष्ठ्यन्तानुकरणं लुप्तविभक्तिकम्। 'अत्वसन्तस्य' इति दीर्घो न, न लुमतेति प्रत्ययलक्षणनिषेधे सोः परत्वाभावात्। गुणश्च वृद्धिश्च इति गुणवृद्धी इतीतरेतरद्वन्द्वः। 'राजदन्तादिषु परम्' इति पित्त्वेन पूर्वप्रयोगार्हस्य वृद्धिशब्दस्य 'गुणवृद्धी' इति परनिपातः।

यत्तु इत एव निर्देशात्पूर्वनिपातस्यानित्यत्वमिति पित्वेऽपि न वृद्धिशब्दस्य पूर्वनिपात इति तन्न, राजदन्तादित्वेन निर्देशस्योपपन्नत्वे ज्ञापकत्वासम्भवात्। न च निर्देशानुपपत्तिभयस्यैव राजदन्तादिषु तथानुवाद इति वाच्यम्, सूत्रनिर्माणात्प्राक्तन एव गणपाठ इति 'पूर्वादिभ्यो नवभ्यो वा' इति सूत्रे भाष्यकृता नवग्रहणेन ज्ञापितत्वेनानुवादासम्भवात्।

संज्ञाविधायके शास्त्रे संज्ञापदस्य स्वरूपबोधकत्वेऽपि संज्ञाशास्त्रेण शक्तिज्ञानानन्तरमन्यत्र सर्वत्र संज्ञिपरकत्वमेव।

न चैवम् 'सुसिङन्तम्' इत्यत्र पदशब्दस्य स्वरूपपरकत्वेऽपि 'स्वादिष्वसर्वनामस्थाने' इत्यत्र स्वरूपपरकत्वानापत्तिः, भिन्नसंज्ञाविधायके एवान्यत्र संज्ञिपरकत्वनियमात्। 'स्वादिषु' इति तु पदसंज्ञाविधायकमेवेति न दोषः। तथा च 'वृद्धिरादैच्' अदेङ् गुणः' इत्यतोऽनुवृत्तेन गुणवृद्धिपदेन गुणवृद्धिपदार्थलाभे गुणवृद्धिग्रहणं व्यर्थीभूय गुणपदम् 'अदेङ्निष्ठविधेयताप्रयोजकगुणपदपरम्। वृद्धिपदम् आदैज्निष्ठविधेयताप्रयोजकवृद्धिपरम्। तथा च तादृशे गुणवृद्धिपदे यत्र शास्त्रे तत्र 'इकः' इति षष्ठ्यन्तस्योपस्थितिरित्यर्थस्तदाह—

गुणवृद्धिशब्दाभ्याम्

यद्वा गुणवृद्धिपदं स्वरूपपरके एवानुवर्त्यं गुण इत्युच्चार्य्य यत्र अदेङ्विधानम्, वृद्धिरित्युच्चार्य्य यत्र वृद्धिविधानं तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थः। तदुक्तं भाष्ये 'संज्ञया विधाने नियमः'......गुणवृत्तिग्रहणसामर्थ्यात्। प्रकृतं गुणवृद्धिग्रहणमनुवर्तते' इति।

न चानुवर्तते 'अदेङ् गुणः' इत्यत्र वृद्धिपदानुवृत्त्या अदेङां वृद्धिसंज्ञापत्तिरिति वाच्यम्, निरवकाशतया गुणसंज्ञया वृद्धिसंज्ञाया बाधात्, 'वृद्धिरादैच्' इति सम्पूर्णसूत्रस्यानुवृत्त्या पुनर्वृद्धिसंज्ञाविधानेन आदैचां गुणसंज्ञाया अप्राप्तेश्च। न चानुवृत्तिवैयर्थ्यम्, धाराप्रवाहेणोत्तरत्रानुवृत्त्यर्थं तच्चारितार्थ्यात्। विधीयेते इत्युक्त्या 'अतो गुणे' वृद्धिर्यस्याचामादिः, इत्यादिषु नास्योपस्थितिः। गुणवृद्धिशब्दाभ्यामित्युक्त्या 'त्यदादीनामः' 'दिव औत्' इत्यादिषु नास्य प्रवृत्तिः। गुणो यो गुणः, वृद्धिर्या वृद्धिरिति योजना तु 'गुणवृद्धिशब्दाभ्या'मिति समासानापरोरेकशान्त्वयाभावेन साहित्याभावात्। तस्माद्विधानेऽन्वयेन पूर्वोक्तरीत्या साहित्यमुपपाद्यम्।

इको यणचि

इको यणचि अत्र 'इकः' इत्यस्याभावे इग्भिन्नस्वरस्याचि परे यणापत्तिस्तु न, गुणवृद्धिदीर्घादिभिरपवादैर्बाधात्। 'जगदस्ति' इत्यादौ हलो यणपि न, 'ह्रस्वस्य पिति कृति तुक्' इत्यतः ह्रस्वपदं 'दीर्घात्' (६-१-७५) इत्यतो दीर्घपदञ्चानुवर्त्य षष्ठ्यन्तेन विपरिणम्य ह्रस्वदीर्घयोरेव यण्विधानात्।

परशब्दशक्यार्थविचारः

उरण् रपरः', 'मिदचोऽन्त्यात्परः' इति सूत्रद्वयभाष्ये 'यदि अन्त इति वर्तते' इत्युक्त्या परशब्दोऽनयोः सूत्रयोर्दिङ्मात्रवाची। अत एव अन्त्यादिति पञ्चमी। अवयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वे भाष्यद्वयेऽन्तानुवृत्तिवैयर्थ्यापत्तिः। भाष्यस्यैकदेशित्वे तु 'पूर्वं नाभेः कायस्य' इत्यत्र पूर्वशब्दस्येव विशिष्टवाचकत्वं सुवचम्।

वस्तुतस्तु सूत्रद्वयभाष्यविरोधात्मानाभावाच्च नावयववाचिनौ पूर्वपरशब्दौ, किन्तु दिङ्मात्रवाचिनावेव। 'पूर्वं नाभेः कायस्य' इत्यादौ तु दिक्त्वव्याप्यपूर्वत्वादिनैवावयववाचित्वम् न त्ववयवत्वेन, अवयवावयविभावरूपषष्ठ्यर्थमादायैवावयवावयविभावमतीतिः।

उदात्तादिभेदेनेति—उदात्तादीति भावप्रधानो निर्देशः। उदात्तत्वादिरित्यर्थः। भाव्यतेऽवच्छिद्यते विशेष्यताऽनेनेति तत्तत्पदजन्यशाब्दबोधविशेष्यताऽवच्छेदको धर्मो भावः। स प्रधानम् शाब्दबोधविशेष्यीभूतोऽस्य निर्देशस्येति 'भावप्रधानो निर्देशः' इति वाक्यस्यार्थः। निर्दिश्यते = बोध्यतेऽनेनेति निर्देशः शब्दः। अत्र भावप्रधानोदात्तादिशब्द इत्यर्थः।

### समः सुटि

ननु 'मः सुटि' इति न्यासोऽस्तु, सुटि समो मस्यैव सम्भवात्तस्यैव रुः स्यात्। न च सुट्पदेन सर्वनामस्थानस्य ग्रहणापत्त्या 'प्रशामौ' इत्यत्र रुत्वापत्तिः, 'संस्कृतं भक्षाः' इत्यादिनिर्देशेन सर्वनामस्थानस्याग्रहणात्। यथाश्रुतन्यासेऽपि तस्य तथैव वारणीयत्वात्। अत एव समधातोर्विचि 'समौ' इत्यत्र रुर्न। तन्निर्देशादेव 'सुट्' स्वरूपस्यापि न ग्रहणमिति 'सम् सुट्' इति वाक्येऽपि रुर्नेति चेन्न, संशब्दादकचि सकंशब्दात् णिचि टिलोपे सकिधातोः क्विपि णिलोपे सक्शब्दस्यापि तन्मध्यपतितन्यायेन संशब्दतया तत्पूर्वके 'सक् करोति' इत्यत्र 'संपरिभ्याम्' इति सुटि 'समः सुटि' इति सूत्रसत्त्वे ककारस्यापीष्टस्य रुत्वस्य सिद्ध्यनापत्तेः, 'विनापि प्रत्ययं पूर्वोत्तरपदलोपः' इति परिष्कारशब्दे परीत्यस्य लोपे 'किंस्कारः' इत्यत्रापि रुत्वापत्तेः।

निमित्तापाये नैमित्तिकस्याप्यपाय इति तत्र सुटोऽपि निवृत्तौ दोषाभावेऽपि उपस्कारशब्दैकदेशस्कार इत्यनुकरणे प्रकृतिवदनुकरणस्वीकारे सुटः सत्त्वेन 'किंस्कार इत्यत्र रुत्वापत्त्या तादृशस्य दुष्टत्वात्।

### परः सन्निकर्षः संहिता

'परः सन्निकर्षः संहिता' सन्धानं संहिता भावे क्तः। अत एव निर्देशात् स्त्रीत्वम्। 'नपुंसके भावे क्तः' इति सूत्रात् नपुंसकत्वमपि। अत एव 'संहितवत्' इति प्रातिशाख्ये तद्भाष्ये च प्रयुक्तम्।

अनञ्समासे इति—यदि नञर्थस्य प्राधान्यम् 'असः' इत्यस्य तद्भिन्न इत्यर्थस्तदा 'अनञ्समासे' इति ज्ञापकात्सर्वादिकार्य्यम्। यद्यत्र सर्वादिकार्यं न स्यात्तदा 'असः' इत्यत्र हल्ङ्यादिसूत्रेण सुलोपस्य सिद्धतया अनञ्समासे इति व्यर्थमेव स्यात्।

### सन्धिभेदाः

चत्वारः, पञ्च वा वर्णानां योगे सन्धिर्भवति। अत्र व्याकरणे पञ्चसन्धिपदेन सन्धीनां व्यवहारो दृश्यते। तत्र कति सन्धयः शास्त्रप्रमाणगम्या इति चिन्तायामुच्यते—याज्ञवल्क्यशिक्षायां पदपाठानन्तरं सप्तमसूत्रे—'सन्धिश्चतुर्विधो भवति—'लोपागमौ, वर्णविकारः, प्रकृतिभावश्चेति'।

ऋग्प्रातिशाख्ये प. २ सू. ८ भाष्ये "चतुः प्रकाराः सन्धयो भवन्ति—द्वयोः स्वरयोः, द्वयोर्व्यञ्जनयोः, व्यञ्जनस्वरयोः, स्वरव्यञ्जनयोरिति"। अत्र यदि "प्रकृत्येतिकरणाद्यौ प्रगृह्याः"(सू. ५१ प. २) इति सूत्रोक्तो याज्ञवल्क्यशिक्षायां चोक्तः प्रकृतिभावोऽपि ग्रहीष्यते तदा पञ्चसन्धयो भवन्ति।

किञ्च कातन्त्रपर्यालोचनया सन्धौ पञ्चपादा उपस्थापिताः सन्तीति पञ्चपादसन्धिरित्यत्र पादशब्दलोपे पञ्चसन्धिरिति।

### त्रय एव सन्धय इति श्रीरामाज्ञापाण्डेयाः

तथा हि—"वस्तुतस्तु अस्माकं मते सृष्टिस्थितिसंहारभेदात् त्रिविधः सन्धिः। तत्र 'आद् गुणः' 'वृद्धिरेचि' 'इशि च' इत्यादिसूत्रैर्वर्णानामधिकमात्रत्वसम्पादकसन्धिः, सृष्टिसन्धिपदेन व्यवह्रियते। प्रकृतिभावस्तु स्थितिपदेन गृह्यताम्।

'इको यणचि' 'एचोऽयवायावः' 'लोपः शाकल्यस्य' इत्यादिभिर्निष्पाद्यः सन्धिः संहारसन्धिपदेन बोध्यः। यतो हि 'इग् यणः सम्प्रसारणम्' (१।१।४५) इति सूत्रप्रामाण्याद् यदा यणोऽर्धमात्रिकाः संप्रसृता भवन्ति तदा इको रूपं एकमात्रं धारयन्ति। तथा च इको मूलं यणेव विद्यते। एवं स्थितौ 'इको यणचि' इत्यादिसूत्रबलाद् यदा इकः स्वकारणभूते यणि लीयन्ते तदा संहारसन्धित्वेन व्यवहार इति" समासतो विमर्शः।

इति पञ्चसन्धयः।

# अथ अजन्तपुँल्लिङ्गप्रकरणम्

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् [ १-२-४५ ]

अथ अजन्तपुँल्लिङ्गप्रकरणम्

अजन्तेति—अजन्तो येषां ते अजन्ताः। अत्र कुत्वं न, 'अजनुनासिकः' इत्यादिनिर्देशेन विभक्तिघटकसकाराव्यवहितपूर्वत्वाभावविशिष्टस्याच्छब्दस्य कुत्वाभावज्ञापनात्। 'अचोऽप्सु' इति भाष्यप्रयोगे विभक्तिसकाराव्यवहितपूर्वत्वसत्त्वात्कुत्वसिद्धिः। पुमान्=व्याकरणोक्तसंस्कारविशेषनिमित्तभूतः सत्त्वादिगुणानामुपचयरूपः प्रवृत्तिशब्दवाच्यो लिङ्गम्=पदसाधुताप्रयोजको धर्मविशेषो येषां शब्दानां ते पुँल्लिङ्गाः। अजन्ताः पुँल्लिङ्गाः शब्दा यत्र प्रकरणे तदजन्तपुँल्लिङ्गप्रकरणम्।

अथ=आरभ्यते इत्यर्थः। अयम्भावः—सत्त्वरजस्तमसां पदार्थमात्रोपादानभूतानामुपचयोपचयस्थितयो विद्यन्ते। तदुक्तं भाष्ये—'सर्वत्र प्रवृत्तिः खल्वपि नित्या इति। सत्त्वादीनामाविर्भावतिरोभावस्थितिरूपः प्रवृत्तिशब्दवाच्यः सनातनः परिणामः प्रवृत्तिः। उक्तञ्च वाक्यपदीये—

प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते।
आविर्भावस्तिरोभावस्थितिरचेत्यथ भिद्यते॥

प्रवृत्तिमन्तः सर्वेऽर्थाः तिसृभिश्च प्रवृत्तिभिः।
सततं न वियुज्यन्ते वाचश्चैवान्तसम्भवः॥ इति।

आविर्भावतिरोभावयोरन्तरालग्नस्था स्थितिः सा च नपुंसकशब्देन व्यवह्रियते॥

तथा च लिङ्गत्रयं शब्दवाच्यवस्तुमात्रव्यापि। चैतन्ये तु नाविर्भावादय इति लिङ्गशून्यं तत्। शब्देन विवक्षायान्तु तत्रापि लिङ्गम्। चैतन्ये प्रवृत्तिभिन्नं लिङ्गमिति वस्तुतत्त्वान्वेषिणोऽनन्यसाधारणमेधाशालिनो रामाज्ञापण्डिताः। परन्तु शब्दशक्तिस्वभावात् कश्चिच्छब्द एकं लिङ्गं वक्ति कश्चिद्द्वयं कश्चित् त्रयमिति कोशाप्तवाक्यव्यवहारतो निर्णयम्।

सुप्तिङन्तपदचयरूपवाक्यनिमित्तकसन्धिप्रकरणानन्तरम् सुबन्तजिज्ञासया 'स्वौजसमौट्छि' सुप्रत्यये' इत्युक्तौ तत्प्रकृतिजिज्ञासया चाह—

'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति। अर्थोऽस्यास्तीत्यर्थवत् अध्याहृतशब्दस्वरूपविशेष्यानुरोधेन नपुंसकत्वम्। यद्यपि 'अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने' इति कोशान्नानार्थक अर्थशब्दस्तथापि इह अभिधेयार्थक एव, अर्थवद्ग्रहणस्य निरर्थकवर्णानां प्रातिपदिकसंज्ञाव्यावृत्तिरूपफलपरकभाष्यात्। स चार्थश्चतुर्विधः जातिगुणः क्रिया द्रव्यञ्चेति। गौः, शुक्लः, पाचकः, डित्थः, इति क्रमेणोदाहरणम्।

तथा च अभाव-शशशृङ्गादिशब्दानां प्रातिपदिकसंज्ञा न प्राप्नोति, उक्तार्थावाचकत्वात्। न च समासत्वादुत्तरेण संज्ञा, तत्रापि अर्थवदित्यस्यानुवृत्तेः। अन्यथा अनर्थकशशशृङ्गादीनां प्रातिपदिकसंज्ञार्थं समासग्रहणस्य विध्यर्थत्वसम्भवेन भाष्याभिमतनियमार्थत्वानुपपत्तिरिति वाच्यम्, अर्थशब्देनाभिधेयस्य ग्रहणे अभावस्याप्यभिधेयत्वात्, बुद्धिविषयाभिधेयस्य ग्रहणेन शशशृङ्गादिशब्दानामपि बौद्धार्थस्य सत्त्वात्। बहिः सत्ताविशिष्टस्यैवार्थस्य शब्दवाच्यत्वे 'घटोऽस्ति, घटो नास्ति' इति प्रयोगो न स्यात् सत्ताविशिष्टस्यैव घटस्य घटशब्दवाच्यत्वादस्तीत्यनेन पौनरुक्त्यापत्तेः, सत्ताविशिष्टस्य घटस्य नास्तीत्यनेन विरोधाच्च। बुद्धिसतोऽर्थस्य वाच्यत्वे तु बहिः सत्ताबोधनाय अस्तीत्यस्य सार्थक्यम्, बहिरभावबोधनाय 'नास्ति' इत्यस्यापि सार्थक्यम्। तस्माद् बौद्ध एव शब्दो वाचकः, बौद्ध एवार्थो वाच्यश्चेति न काप्यनुपपत्तिः। एवमेव 'अपाक्षीत्' 'पक्ष्यति' 'अस्य सूत्रस्य शाटकं वय' इत्यादौ बुद्ध्युपारूढ एव पक्ष्यादीनामर्थो न तु शब्दप्रयोगकाले बहिः सत्तावान्।

अत्र लाघवात् 'अर्थवधातुः' इति नोक्तम् 'अर्थाच्चासन्निहिते' इत्यनेन असन्निहितधनवाचिनोऽर्थशब्दादिनेर्विधानात्। अर्थशब्दयोः सदा सन्निहितत्वेन इनेरप्राप्तेः। सन्निहितत्वञ्च कालकृतम्। यस्मिन्काले यस्यार्थो नास्ति सोऽर्थाकुल्यो यस्य तु सन्निहितोऽर्थः सोऽर्थवान् इत्युच्यते। तदुक्तं भाष्ये- 'असन्निहिते इति किमर्थम् 'अर्थवान्' इति। 'धान्यार्थी' इत्यादौ च भाष्ये 'यदि हि पुनरयमर्थयतेर्णिनिः स्यादेतदपि क्रियामेव कुर्वीत स्यात्। तूष्णीमासीनो यः सोऽपि अर्थी अयमनेनेति। एवं तर्हि अयमर्थशब्दोऽस्त्येव द्रव्यपदार्थकः। तद्यथा 'अर्थवानयं देश' इत्युच्यते। यस्मिन् गावः सस्यानि च वर्तन्ते। अस्ति क्रियापदार्थको भावसाधनः। अर्थनमर्थ इति। तस्य क्रियापदार्थकस्य तस्येदं ग्रहणम्। इदं पदेन 'अर्थी अयमनेनेति' पूर्वोक्तस्य ग्रहणम्। एतच्च कृत्वा 'अर्थिकप्रत्यर्थिकावपि सिद्धौ।

अत्र कैयटः—क्रियापदार्थकत्वे 'अत इन्ठनौ' इति प्रत्ययद्वयं सिध्यति। मतुप्तु क्रियापदार्थकादनभिधानान्न भवति। धनवाचिनोऽप्यनभिधानात्सन्निहिते इन्ठनोरभावः। विद्यार्थीत्यादिशब्दास्तु विद्यामर्थयन्ते इत्यर्थे णिन्यन्ता एव। 'अर्थवानयं देशः' इत्यत्र 'यस्मिन् गावः सस्यानि च वर्त्तन्ते' इति भाष्योक्त्या प्रयोगकाले तात्पर्यविषयीभूतसम्बन्धेनार्थविशिष्टत्वं सन्निहितत्वं प्रतीयते। उपलब्धविषयिका इच्छा न भवतीति। स्वविषयकेच्छावत्त्वसम्बन्धेनार्थविशिष्टेऽर्थे अर्थशब्दादिनिरिति फलति। प्रयोजनवचनादर्थशब्दादिनिरिति मिश्रोक्तिस्तु भाष्यविरुद्धत्वादुपेक्ष्या।

अत्र सूत्रे वृत्त्या अर्थविषयकबोधजनकत्वरूपमर्थवत्त्वम्। अत एव 'हरिषु' इत्यादौ प्रत्ययस्य प्रातिपदिकत्ववारणाय अर्थवत्सूत्रे पाणिनिना 'अप्रत्ययः' इति पर्युदासः कृतः। 'कृत्तद्धित' इति सूत्रे च एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वरूपमर्थवत्त्वम्। अत एव 'कृत्तद्धितान्तस्यैवार्थवत्त्वं न केवलाः कृतस्तद्धिता वा' इति भाष्ये, 'धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते। कृत्तद्धितानामर्थश्च केवलानामलौकिकः' इति वाक्यपदीये चोक्तमिति प्राञ्चः। एकार्थीभावश्च कृत्तद्धितसमासैकशेषधातुरूपासु पञ्चसु वृत्तिषु शक्तिविशेषः।

अत्र मते अर्थवत्त्वद्वये अर्थवत्पदस्य शक्तिद्वयम्, उपस्थितिद्वयम्, शाब्दबोधद्वयम्, शब्दाधिकारः, विभिन्नयोग्यतादिरूपकारणाधिक्यञ्चेति गौरवं मत्वा नवीना आहुः—सूत्रद्वयसाधारणमेकमेवार्थवत्त्वम्। तच्च 'एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपम्। एतच्च न केवलप्रत्यये प्रत्ययस्य प्रातिपदिकसंज्ञाफलभूतविभक्तीतरप्रकृतिसमभिव्याहारापेक्षयैव लोकेऽर्थादिपकबोधजनकत्वादिति 'हरिषु' इत्यादौ सोः प्रातिपदिकत्वाप्राप्त्या तद्वारणाय 'अप्रत्ययः' इति पर्युदासो न कर्तव्य इत्यपि लाघवम्।

तथा चैतन्मते यद्यपि अर्थवत्त्वं स्वरूपतो गुरुभूतं तथाऽपि अर्थवत्पदनिष्ठा एकैव शक्तिरुभयसूत्रशाब्दबोधप्रयोजिका, उपस्थितिरप्येकैव, अर्थाधिकारश्चेति न अर्थभेदेन शब्दभेदः। अत्र विभक्तिपदं प्रत्ययपरम्। तेन खट्व, पक्षिशब्दादीनां विभक्तीतरस्य टापः, मपश्च समभिव्याहारेण बोधजनकत्वेऽपि न क्षतिः।

अन्ये तु प्राचीनमतेऽपि सूत्रद्वयसाधारणम् 'वृत्तिमत्त्वमेवार्थवत्त्वम्। एतन्मतेऽपि 'हरिषु' इत्यादौ प्रत्ययार्थे लिङ्गसंख्यायोगेन स्वादेरप्राप्तया फलाभावात्संज्ञाया अप्रवृत्तेः। औत्सर्गिकैकवचनस्यापि 'एकवचनम्' इति महासंज्ञाकरणेन एकत्वसत्त्वे एव प्रवर्त्तमानस्य तत्राप्रमाणसत्त्वे एव प्रवृत्तेः। यथा अव्ययेभ्य एकवचनोत्पत्तौ 'अव्ययादाप्सुपः' इति सूत्रं लिङ्गम्। विभक्तेः स्वाद्युत्पत्तौ तु न किञ्चिल्लिङ्गम्। तथा च 'अप्रत्ययः' इति पर्युदासोऽत्र मतेऽपि न कार्यः।

न च 'कृत्तद्धितान्तस्यैवार्थवत् न केवलाः कृतस्तद्धिता वा' इति भाष्यविरोधः कृत्तद्धितादेरपि वृत्तिमत्त्वस्य सत्त्वादिति वाच्यम्, कृत्तद्धितान्तस्यैवार्थवत्प्रातिपदिकसंज्ञं भवति न केवलाः कृतस्तद्धिता वा प्रातिपदिकसंज्ञका' इति भाष्याशयेन तदविरोधात्। 'संज्ञाविधौ' इति निषेधस्तु तदादिविशेष्यक-

तदन्तविधेरेव प्रकृतेऽर्थवद्विशेष्यकतदन्तविधेर्निर्बाधत्वेन कृत्तद्धितान्तस्यैव प्रातिपदिकसंज्ञाया भाष्यकृतोऽभिप्रेतत्वात्। विस्तरस्तु गुरुमुखादवसेयः।

अर्थातोस्थन्प्रत्यये अर्यते=प्राप्यते यः सोऽर्थः। अर्थशब्दस्य नानार्थकत्वेऽपि शब्दानां बोध्य एवेहार्थपदेन गृह्यते, व्याख्यानात्।

अर्थवत्किं 'धनं वनम्' इत्यादौ प्रतिवर्णं संज्ञा मा भूत्। यदि व्युत्पत्तिपक्षः अधातुरित्यस्य अप्रत्यय इत्यस्य च धात्वप्रत्ययभिन्नम्, प्रत्ययावयवभिन्नमित्यर्थश्च आश्रीयते तदा धनाद्यवयवानां धातुप्रत्ययान्यतरावयवत्वेन न वर्णानां प्रातिपदिकसंज्ञेत्युच्यते। यद्वा वर्णे संख्याद्ययोगात्स्वाद्यप्राप्तिः।

किञ्च प्रतिवर्णं प्रातिपदिकत्वेऽपि वृक्षप्रचलनन्यायेन स्वादिघटितस्य समुदायस्यापि प्रातिपदिकत्वे सुपो लुकि प्रतिवर्णं स्वादिश्रवणं तु न दोषः। औत्सर्गिकैकवचनन्तु सत्येव गमके तदा 'षडपूपा दशदाडिमानि कुण्डमजाजिनम्' इत्यादिर्निरर्थको यस्समुदायस्तस्य संज्ञावारणार्थमर्थवद्ग्रहणम्। समुदायस्य प्रातिपदिकत्वे तदवयवस्य सुपो लुक् नलोपादिश्च स्यात्।

न च समासग्रहणसामर्थ्यादर्थवत्समुदायस्य प्रातिपदिकत्वं चेत्तदा समासस्यैवेति नियमेन न तत्र दोष इति वाच्यम्, नियमस्य सजातीयापेक्षत्वेन अर्थवान् योऽर्थवत्समुदायस्तस्य चेत्समासस्यैवेति नियमाकारेण 'दशदाडिमानि' इति समुदायस्यानर्थकतया नियमेन तद्दोषस्य वारयितुमशक्यत्वात्।

यदि तु 'अधातुः, अप्रत्ययः' इति पर्युदासेनार्थवत्त्वलाभ इत्युच्यते तदा अर्थवत्त्वग्रहणमुत्तरार्थम्। न चोत्तरत्रापि कृत्तद्धितादीनामर्थवत्त्वाव्यभिचारादनुवृत्तिर्व्यर्थेति वाच्यम्, अर्थवद्ग्रहणानुवृत्तिसामर्थ्येन संज्ञाविधाविति निषेधं बाधित्वात्तदन्तविधेरेव फलत्वात्।

न च ज्ञापकसाजात्याद्यत्र संज्ञानिष्ठविधेयतानिरूपिता यत्र साक्षात् प्रत्ययनिष्ठोद्देश्यता तत्रैव निषेधप्रवृत्तिरिति वाच्यम्, कृदाद्यभिन्नं यदर्थवत्प्रातिपदिकमित्यर्थसम्पादनायैवानुवृत्तेरावश्यकत्वात्। पर्युदासस्यानित्यज्ञापनार्थं तु नार्थवद्ग्रहणम्, अनित्यत्वे भाष्यसम्मतदृढतरफलाभावात्। अन्ये त्वर्थवत्त्वम् उभयत्रापि वृत्त्या अर्थविषयकबोधजनकत्वमेव। वृत्तिश्च शक्तिलक्षणाव्यञ्जनान्यतमरूपा। लक्षणया वृत्तिमत्त्वस्य 'गोपी' इत्युदाहरणम्। अत्र हि गोपत्वारोपेण गोपशब्दः स्त्रियां वर्तते। व्यञ्जनया वृत्तिमत्त्वं चादिनिपातानाम्।

अत एव भाष्ये 'अर्थवदिति व्यपदेशाय वर्णानां मा भूत्' इत्युक्तं न तु प्रत्ययस्य मा भूदिति। न चोक्तार्थवत्त्वस्वीकारे प्रत्ययपर्युदासकरणापत्तिः, फलाभावेनैव तत्र प्रातिपदिकत्वाप्रवृत्तेः। न च 'हरिषु' इत्यादावौत्सर्गिकैकवचने तस्य श्रवणं फलम्, संख्याद्यभावे सति गमके एव तत्प्रवृत्तेः। न चैवं प्रतिवर्णं विभक्त्यनुत्पत्तौ अर्थवदिति व्यर्थम्, 'निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति भाष्येण अनर्थकप्रातिपदिकादेकवचनोत्पत्त्यभ्यनुज्ञानात्।

न च 'काण्डे' इत्यादौ प्रत्ययस्य प्रातिपदिकत्वे ह्रस्वत्वापत्तिः, प्रत्ययस्य नपुंसकत्वार्थबोधकत्वाभावेन 'ह्रस्वो नपुंसके' इत्यस्याप्राप्तेः। न च व्यपदेशिवद्भावेन सुपोऽपि सुबवयवत्वेन प्रातिपदिकत्वे लुगापत्तिः, सुप्कार्यन्तु अलुकि चरितार्थमिति वाच्यम्, धातुसाहचर्येण व्यपदेशिवद्भावानतिदिष्टावयवस्यैव सुपो लुग्विधानात्। 'पञ्चगवधनः' इत्यत्र तु न स्त्रीप्रत्ययः, क्वचित्स्वार्थिकप्रत्ययान्तानां लिङ्गातिवर्तनदर्शनेन 'पञ्चगव' इत्यत्र नपुंसकत्वाभ्युपगमात्। किञ्च 'हरिषु करोषि' इत्यादौ 'षुकरोषि' इति निरर्थकस्य प्रातिपदिकत्वे लुग्वारणार्थम्, अत्र व्यपदेशिवानतिदिष्टस्यैवावयवस्य सत्त्वात्।

न च 'वर्णानां मा भूत्' इति भाष्यविरोधः, तस्य प्रत्युदाहरणदिग्दर्शनपरत्वात्। 'दश दाडिमानि' इति समुदायव्यावृत्तिस्तु नार्थवद्ग्रहणफलम्, अर्थवत्समुदायस्य चेत् समासस्यैवेति नियमेन वारणसम्भवात्। न च 'अर्थवत्समुदायोऽर्थवांस्तत्रैव नियमप्रवृत्तिः' नियमाकारे समुदायेऽर्थवत्त्वविशेषणे फलाभावात्। न च नियमे तदनिवेशे भाष्यविरोधः, फलान्तराभावे तद्विरोधस्याकिञ्चित्करत्वात्।

अस्योदाहरणम् अव्युत्पत्तिपक्षे 'घटः, पटः' इति। व्युत्पत्तिपक्षे तु बहुपटवः, परमगार्ग्यायणः, शिवभागवतः, राजकुमारीश्रितः, इति 'बहुपटु जस्' इत्यस्य, गार्ग्य-भगवच्छब्दाभ्यां फगण्विधानेन परम-शिवसहितस्य च तद्धितान्ततदादित्वाभावात्। एते 'सर्वं नाम च धातुजमाह' इति पक्षे इदं सूत्रं व्यर्थमित्यपास्तम्।

अधातुरिति पर्युदासो लाघवात्। आरोपितत्वस्य नञ्द्योत्यत्वेन तत्पुरुषस्योत्तरपदार्थप्रधानतया च आरोपितधातुत्वविशिष्ट इत्यर्थः। आरोपस्य भेदसाहचर्ये सत्येव सम्भवेन धातुभिन्नमिति फलितोऽर्थः। तत्र भेदश्च धातुत्वपर्याप्तावच्छेदकताकप्रतियोगिताको ग्राह्य इति न धातुघटोभयभेदमादाय दोषः। अधातुरिति किम् 'अहन् वृत्रम्' इति। अत्र विशेषविहितत्वाल्लङाद्युत्पत्तौ अडागमे च प्रातिपदिकत्वे नलोपापत्तिः। इदं सुबुत्पत्तेरप्युपलक्षणम्। न च लङादिभिः सुपो बाधः, 'पुत्रीयति' इत्यादौ प्रत्ययान्तत्वेन प्रातिपदिकत्वाप्राप्त्या तत्र लङादेश्चारितार्थ्यात्। न च प्रत्ययलक्षणेन प्रत्ययान्तत्वात्प्रातिपदिकत्वाप्राप्तिः, यथोद्देशपक्षे धातुसंज्ञासमकालमेव प्रातिपदिकत्वे दोषात्। धातुसंज्ञया प्रातिपदिकत्वस्य बाधस्तु न, आकडारीयत्वाभावेनात्र संज्ञयोरविरोधेन बाधाभावात्। न च कार्य्यकालपक्षे प्रत्ययान्तत्वेन प्रातिपदिकत्वाप्राप्तिः, कार्य्यकालपक्षे 'न ङिसम्बुद्ध्योरिति ज्ञापकेन प्रत्ययलक्षणेन प्रत्ययान्तपर्युदासाप्रवृत्तेः। अत एव 'राजा' इत्यादौ नलोपसिद्धिः न च कृदन्तत्वादत्र प्रातिपदिकत्वम्, 'दाक्षी, दित्सू' इत्यत्र पूर्वान्तवद्भावेन कृदन्तत्वेन प्रातिपदिकत्वात्परादिवद्भावेन 'सुपो धातु' इति सुपो लुग्वारणाय 'कृत्तद्धित' इत्यत्रापि प्रत्ययान्तपर्युदासानुवृत्तेः। न च 'सप्तम्यधिकरणे च' इति ज्ञापितेन विभक्त्येकादेशस्यान्तवत्त्वाभावेनादोषः, सौत्रत्वेन निर्देशस्य समाधतुं शक्यतया 'अप्रत्ययः' इत्यनुवृत्त्यैव समाधानस्यौचित्यात्। न च धातोरपि प्रातिपदिकत्वे 'सुपो धातु' इति सूत्रे धातुग्रहणं व्यर्थीभूय ज्ञापयति—धातोः प्रातिपदिकत्वं न भवतीति वाच्यम्, 'पुत्रीयति' इत्यादौ प्रत्ययान्ते धातुग्रहणस्य चारितार्थ्येन ज्ञापकत्वासम्भवात्। ननु 'नलोपोऽतिङः' इति न्यासेनात्र नलोपाप्राप्तिः।

न चैवम् 'एधेरन् पचेरन्' इति सततमभिधीयते यस्मिन्व्यापारे इत्यर्थे 'आख्यातमाख्यातेन' इति समासे 'एधेरन्पचेरा' इत्यत्र तिङन्तत्वान्नलोपानापत्त्या स न्यासो न युक्त इति वाच्यम्, तिङन्ततदादिभिन्नं यत्पदं तदन्तस्य नस्य लोप इत्यर्थेन 'एधेरन्पचेरन्' इति पदस्य तिङन्ततदादिभिन्नत्वेन नलोपे बाधकाभावात्।

न चैवमपि अ इवाचर अ, अ अहन् यस्मिन्व्यापारे स 'आहा' इत्यत्र परादिवद्भावेन तिङन्ततदादित्वान्नलोपानापत्तिः, उक्तरीत्या प्रत्ययान्ततदादित्वस्याप्यविदेशात् अर्थवत्सूत्रेण प्रातिपदिकत्वाप्राप्त्या तत्र विध्यर्थं समासग्रहणस्य चारितार्थ्येन भाष्योक्तनियमार्थत्वस्य विरोधादीदृशनामनभिधानात्।

न चोक्तन्यासे 'सर्वस्मिन्' इत्यादौ नलोपापत्तिः, नकारोच्चारणसामर्थ्येन तद्बाधात्। न च 'हे सर्वस्मिन् शय' इत्यलुक्समासे नलोपस्यासिद्धत्वेन संयोगपरतया गुरुसंज्ञायाम् 'गुरोरनृतः' इति इकारस्य प्लुतादेशार्थं नकारोच्चारणस्य चारितार्थ्यमिति वाच्यम्, 'नलोपः सुप्स्वर' इति भाष्ये संज्ञाविधावित्यस्य 'दण्डिदत्तौ' इत्यत्र दण्डिशब्दस्य घित्वेन पूर्वनिपाताभावरूपफलदानावसरे दण्डि च दत्तश्च इत्यर्थे 'दण्डिदत्तौ' इत्यस्य 'दत्तश्च दण्डी च' इति विग्रहे 'दत्तदण्डिनौ' इत्यस्य च सिद्ध्या नेदं संज्ञाविधावित्यस्य फलमिति शङ्कायाम्—

'एवं तर्हि संज्ञाग्रहणसामर्थ्यात् 'यस्य पूर्वनिपाते घित्वं भावि तस्य पूर्वनिपातः' इति 'द्वन्द्वे घि' इत्यस्यार्थमाश्रित्य उभयविधविग्रहे दण्डीत्यस्य पूर्वनिपाते नलोपासिद्धत्वाभावे घित्वेन 'दण्डिदत्तौ' इत्येकमेव रूपं स्यात्, घिसंज्ञायां नलोपासिद्धत्वे तु घित्वाभावेन उभयविधविग्रहे उभयं रूपं सिध्यति' इति भाष्ये उक्तम्, तत्र संज्ञाविधावित्यस्य संयोगसंज्ञायां गुरुसंज्ञायाञ्च 'सर्वस्मिन् शय'

धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

---

इत्यत्र नलोपासिद्धत्वस्य फलसत्त्वेन संज्ञाग्रहणसामर्थ्याद् 'द्वन्द्वे घि' इत्यस्योक्तार्थकरणपरभाष्य-विरोधपरिहाराय संज्ञापदेन घिसंज्ञाया एव ग्रहणमिति भाष्याशयस्यावश्यकल्पनीयत्वेन संयोग-संज्ञायां गुरुसंज्ञायाञ्च नलोपासिद्धत्वाभावेन 'स्मिन्' इत्यत्र नकारोच्चारणसामर्थ्येन लोपाभावस्य वक्तुं शक्यत्वात् । यतः सुप् विधीयते तद् भिन्नं यत्पदं तदन्तस्य नस्य लोप इत्यर्थकेन 'नलोपः सुप् यतः' इति न्यासेनादोषाच्चेति चेन्न, एवं सति 'अधातुः' इत्यकरणस्येष्टत्वात्, यथाश्रुतन्यासानुरोधेन उक्तदोष-तानाच्चेत्यन्यत्र विस्तरः ।

किञ्च 'कृत्तद्धित' इत्यत्र 'अप्रत्ययः' इत्यनुवृत्तौ भाष्यमेव मानम् । तथा हि—'अत्र सूत्रे भाष्ये' सुब्लोपे च प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोति । राजा, तक्षा, । प्रत्ययलक्षणेनाप्रत्ययेनेति प्रतिषेधः प्राप्नोति । नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन प्रतिषेधो भवतीति । यदयं 'न ङिसम्बुद्ध्योः' इति प्रतिषेधं शास्ति' इत्युक्तम् । कृत्तद्धित, इति सूत्रे 'अप्रत्ययः' इत्यस्यान-नुवृत्तौ तु 'हे सुराजन्' इत्यत्र कार्यकालपक्षेऽपि समासत्वात्प्रातिपदिकत्वेन नलोपवारणाय सूत्रस्य चारितार्थ्येन भाष्योक्तज्ञापकत्वासङ्गतिः ।

अनुवृत्तौ तु 'समासानवयवो यः' प्रत्ययस्तदन्तभिन्नस्य समासस्य प्रातिपदिकसंज्ञाविधानेन 'हे सुराजन्' इत्यत्र प्रत्ययलक्षणेन प्रत्ययान्तत्वात् समासानवयवप्रत्ययान्तभिन्नसमासाभावेन प्राति-पदिकत्वाप्राप्त्या नलोपाप्राप्तौ 'न ङिसम्बुद्ध्योः' इत्यस्य भाष्योक्तं संगच्छते ।

किञ्च 'अप्रत्ययः' इत्यस्याननुवृत्तौ सुराजा, सुतक्षा, इत्यत्र कार्यकालपक्षे नलोपाय प्रत्यया-न्तत्वेन अर्थवदित्यस्य, कृदन्ततदादित्वाभावेन 'कृत्तद्धित' इत्यस्य चाप्राप्त्या प्रातिपदिकसंज्ञाविधानेन समासग्रहणस्यावश्यकत्वेन भाष्योक्तनियमानुपपत्तिः ।

अनुवृत्तौ तु—अप्रत्यय इति पाणिनिना तन्त्रेणैकशेषेण वोक्तम् । आरोपितप्रत्ययत्वावि-विशिष्टादिरर्थः शाब्दः । प्रत्ययभिन्नं प्रत्ययान्तभिन्नमिति तुल्यरीत्या फलति । तत्र प्रत्ययपर्युदासे मानं 'सात्पदाद्योः' इति सूत्रे साद्ग्रहणम् ।

अन्यथा प्रत्ययान्तभिन्नमेतावन्मात्रार्थकत्वे 'अग्निसाद्भवति' इत्यत्र सातेः 'अर्थवत्' इति प्रातिपदिकत्वे सौ तदन्तत्वेन पदत्वे पदादित्वेन षत्वनिषेधसिद्ध्या साद्ग्रहणं व्यर्थमेव स्यात् । तद्व्यर्थीभूय प्रातिपदिकसंज्ञाविधौ प्रत्ययपर्युदासोऽप्यस्तीति ज्ञापयति । तेन सात्प्रत्ययस्य प्राति-पदिकसंज्ञाया अभावेन सुपोऽप्राप्त्या पदत्वाभावात् षत्वनिषेधार्थं साद्ग्रहणं चरितार्थम् ।

एवञ्च 'हरिषु' इत्यादौ 'सु' इत्यस्य न प्रातिपदिकत्वम् । न च प्रातिपदिकत्वे सोरुत्पत्तावपि 'सामान्ये नपुंसकम्' इति नपुंसकत्वात्सोर्लुक् स्यादिति वाच्यम्, विभक्त्यर्थस्य लिङ्गान्वयं प्रति स्वरूपायोग्यत्वेन नपुंसकत्वाभावात् ।

प्रत्ययान्तभिन्नमित्यर्थे तु तद्धितग्रहणं लिङ्गम्. तथा हि—यदि प्रत्ययान्तभिन्नमित्यर्थो न स्यात्तदा तद्धितान्तस्य प्रत्ययभिन्नत्वेन धातुभिन्नत्वेन च 'अर्थवत्' सूत्रेणैव प्रातिपदिकत्वसिद्ध्या तद्धितग्रहणं व्यर्थीभूय कल्पयति—पूर्वसूत्रे प्रत्ययान्तपर्युदासोऽप्यस्तीति तेन 'रामाभ्याम्' इत्यादौ प्रत्ययान्तस्य न प्रातिपदिकत्वम् । तत्त्वे हि सुपो लुगापत्तिः ।

न च तद्धितग्रहणं तद्धितविशिष्टप्रकृतिपरं तेन 'बहुपटवः' इत्यत्र प्रातिपदिकत्वं सिध्यतीति-वाच्यम्, अर्थवत्सूत्रेण तत्र प्रातिपदिकत्वसिद्ध्या तद्धितग्रहणवैयर्थ्यस्य तादवस्थ्यात् । यत्तु तद्धित-विशिष्टस्य प्रातिपदिकत्वे 'पचकि' इत्यत्र प्रातिपदिकत्वापत्तिरिति तन्न, स्वाव्यवहितपूर्वत्व-स्वाव्यव-हितोत्तरत्वान्यतरसम्बन्धेन तद्धितविशिष्टप्रकृतेः प्रातिपदिकसंज्ञाविधानेन तद्दोषात् ।

कृत्तद्धितसमासाश्च । [ १-२-४६ ]

प्रत्ययान्तभिन्नमिति किम् 'हरिषु, करोषि' इत्यादौ विशिष्टस्य प्रातिपदिकत्वेन 'सुपो धातु' इति लुङ् मा भूत् । न च प्रत्ययान्तग्रहणसत्त्वेऽपि 'काण्डे, कुण्ड्ये' इत्यादौ पूर्वान्तवद्भावेन प्रातिपदिकतया 'ह्रस्वो नपुंसके' इति ह्रस्वत्वं स्यादिति वाच्यम्, परादिवद्भावेन प्रत्ययत्वमादाय प्रत्ययान्तत्वात्, 'सप्तम्यधिकरणे च' इति निर्देशेन 'विभक्त्येकादेशो नान्तवत्' इति ज्ञापनात्, नपुंसकवृत्तित्वस्य प्रातिपदिके एव सत्त्वेन 'नपुंसके' इत्युक्त्यैव प्रातिपदिकत्वलाभे प्रातिपदिकग्रहणेन सत्त्वप्रधानप्रातिपदिकस्यैव ह्रस्व इति ज्ञापनेनादोषस्य भाष्ये उक्तत्वाच्च नात्र ह्रस्वः । धातुसाहचर्येण वृत्तिघटकस्य वृत्तिप्रयोजकशास्त्रप्रयोज्यविषयताश्रयस्य सुपो लुग्विधानात् लुगपि नेति प्रत्ययान्तपर्युदासो विफलः, तथाऽपि एतावत्क्लिष्टकल्पनया प्रत्ययान्तपर्युदासखण्डनापेक्षया तत्करणे एव लाघवम् ।

यत्तु व्युत्पत्तिपक्षे उत्तरसूत्रेणैव प्रातिपदिकत्वे सिद्धेऽव्युत्पत्तिपक्षस्य अर्थवत्सूत्रमेव ज्ञापकमिति तन्न, 'बहु पटु जस्' इति समुदायस्य प्रातिपदिकत्वाय तस्य चारितार्थ्येन ज्ञापकत्वासम्भवात् । नच समुदायस्य प्रातिपदिकत्वे फलाभावः, प्रातिपदिकत्वे पूर्वं जसो लुकि 'चितः' इत्यनेन टकारोत्तरोकारस्योदात्तत्वे पुनर्जसि गुणकृतान्तत्र्येण टकाराकारस्य 'बहुपटवः' इत्यत्रोदात्तत्वसिद्धेरेव फलत्वात् । अत्र च भाष्यमेव मानम् ।

नचैवं 'बहुच्पूर्वं प्रातिपदिकम्' इत्येव सूत्र्यतां किमनेनेति वाच्यम्, एकार्थीभावस्य सत्त्वे समाससंज्ञाया अभावे च 'मूलकेनोपदंशम्' इत्यस्य 'कृत्तद्धित' इति प्रातिपदिकत्वापत्तेः । नच समासग्रहणकृतनियमेन तस्य व्यावृत्तिः, 'बहुच्पूर्वः' इति न्यासे समासग्रहणस्य नियमार्थत्वासम्भवात् । 'अधातुप्रत्ययौ' इति एकेन नञा सिद्धे नञ्द्वयोपादानं स्पष्टार्थम् । पदं पदं प्रति इति प्रतिपदम् । तदर्हतीति प्रातिपदिकमिति महासंज्ञाकरणं तु श्रुत्यनुरोधात् ।

तथा चाथर्वणे 'को धातुः, किं प्रातिपदिकम्, कः प्रत्ययः' इति । (अत्रत्यश्चाथर्वणो द्रष्टव्यः) ननु शब्दार्थयोर्यदि वाच्यवाचकभावसम्बन्धस्तदा अनयोर्द्योतकत्वपक्षे 'अनुभवति' इत्यादावनोः प्रातिपदिकत्वाभावे पदत्वाभावात् 'तिङ्ङतिङः' इति निघातानापत्तिः । पदादित्यस्यासम्बन्धे 'बहुपचति' इत्यत्र बहुच्प्रत्ययात्परस्य निघातापत्तिरिति चेन्न, शब्दार्थयोस्तादात्म्यसम्बन्धस्वीकारेणादोषात् ।

नच तयोस्तादात्म्ये अग्निशब्दोच्चारणे मुखे दाहापत्तिः, मधुशब्दोच्चारणे माधुर्यापत्तिश्चेति वाच्यम्, अग्निमधुनोः मुखेन संयोगेनैव दाहमाधुर्यादिजनकतया शब्दस्य चावच्छेदकतासम्बन्धेन तत्र सत्त्वेऽपि तदापत्तेरभावात्, शब्दस्य बौद्धार्थेनैव तादात्म्यात्तत्र दाहादिजनकत्वाभावाच्च । यद्वा वाच्यवाचकभावद्योत्यद्योतकभावान्यतरसम्बन्ध एव शब्दार्थयोः ।

ननु 'तिप्तस्' इति तिशब्दादारभ्य 'ङ्योस्सुप्' इति पकारेण तिप्प्रत्याहारमादाय 'अतिप् समासश्च प्रातिपदिकम्' इत्येकमेव सूत्र्यताम्, तिङ्सुबन्ततदादिभिन्नं यत् तत् प्रातिपदिकसंज्ञकं स्यादित्यर्थः । समासग्रहणाच्च नियमार्थमस्त्विति चेन्न, 'प्रतिवर्णम्' 'रमा' 'सुकरोषि' इत्यादेश्च प्रातिपदिकत्ववारणाय अर्थवद्ग्रहणस्यावश्यकत्वाच्च । समासग्रहणकृतनियमेन तु नास्य व्यावृत्तिः, पूर्वभागस्य स्वातन्त्र्येण प्रयोगाद्यर्थवत्त्वाभावात् । नचार्थवत्समुदायघटकवर्णानामर्थवत्त्वपक्षस्यापि 'हयवरट्' सूत्रे भाष्ये उक्ततया अर्थवद्ग्रहणसत्त्वेऽपि प्रतिवर्णाद् विभक्तिर्दुर्वारेति वाच्यम्, 'संघातस्यैकार्थ्यात् सुबभावो वर्णात्' इति भाष्येणैव समाहितत्वात् । अयम्भावः—तन्त्रेण वृक्षप्रचलनन्यायेन च समुदायोत्तरविभक्त्यैव समुदायार्थगतमवयवार्थगतञ्चैकत्वं बोधयेत् । एकमेव तन्त्रेकत्वम् 'तच्चैकेन सुपा प्रत्यायितमिति बोधनीयाभावादुक्तार्थानामप्रयोग इति न्यायेन प्रत्येकवर्णाद् विभक्त्यनुत्पत्तिः ।

'कृत्तद्धितसमासाश्च' इति । कृच्च तद्धितश्च समासश्च कृत्तद्धितसमासा इतीतरेतरयोगद्वन्द्वः । कृत्पदेन 'धातोः' ( ३-१-९१ ) इति अधिकृत्य आतृतीयाध्यायसमाप्तेरुक्तास्तिङ्भिन्नाः प्रत्यया

कृत्तद्धितान्तौ समासश्च प्रातिपदिकसंज्ञाः स्युः ।

गृह्यन्ते 'कृदतिङ्' इति सूत्रात् । तद्धितपदेन 'तद्धिताः' ( ४-१-७६ ) इत्यधिकृत्य आपञ्चमाध्यायसमाप्तेरुक्ताः प्रत्ययास्तद्धितसंज्ञकाः । समासपदेन च 'प्राक्कडारात्समासः' इत्यधिकृत्य 'कडाराः कर्मधारये' ( २-२-३८ ) इत्यतः प्राक् ये समाससंज्ञका उक्तास्ते ग्राह्याः ।

अर्थवदित्यनुवर्तते, तत्सामर्थ्यात् 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं न' इति निषेधाप्राप्त्या 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदादिविशेष्यकतदन्तविधौ कृदन्ततदादितद्धितान्ततदादी अर्थवच्छब्दौ समाससंज्ञकाश्च शब्दाः प्रातिपदिकसंज्ञका इत्यर्थः । तदाह—कृत्तद्धितान्तावित्ति—अयम्भावः कृत्तद्धितयोः प्रत्ययत्वेन प्रत्यय इति महासंज्ञाकरणेनार्थबोधकस्यैव प्रत्ययतया कृत्तद्धितयोरर्थवत्त्वविशेषणं न सम्भवति व्यभिचाराभावादिति अर्थवत्त्वानुवृत्तिर्यथा सती एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वरूपमर्थवत्त्वमवगमयति । किञ्च अर्थशब्दात् प्राशस्त्येऽत्र मतुप् 'भूमनिन्दाप्रशंसासु' इत्युक्तेस्तथा चार्थे प्राशस्त्यं लौकिकप्रयोगे प्रसिद्धत्वमेव ।

केवलानां कृत्तद्धितानां संज्ञायाः प्रयोजनाभावादिति तु न युक्तम्, अशब्दादाचारक्विबन्तात् क्वे इटि अल्लोपे 'इतः' इत्यत्र अस्यापत्यम् 'इः' इत्यत्र च केवलकृत्तद्धितयोः प्रातिपदिकत्वे फलसत्त्वात् । यदि तु यथोद्देशपक्षमादाय प्रक्रियादशायां केवलयोः प्रातिपदिकत्वे फलाभावेन तत्सामर्थ्यात्तदन्तस्य संज्ञेत्युच्यते तदा तदपि सम्यगेव । अत्र तद्धितग्रहणादेव पूर्वसूत्रे अप्रत्ययपदेन तदन्तस्यापि निषेधः । अन्यथा 'उपगु अस् अण्' इत्यादितद्धितान्तस्य धातुप्रत्ययभिन्नतया पूर्वेणैव प्रातिपदिकत्वे सिद्धे तद्धितग्रहणं व्यर्थमेव स्यात् । कृद्ग्रहणस्य तु न वैयर्थ्यम्, 'लिट् धुक्' इत्यादौ 'अधातुः' इति पर्युदासेन प्रातिपदिकत्वाप्राप्तया तस्य चारितार्थ्यात् ।

न च क्विबायन्तस्य पूर्वेण प्रातिपदिकत्वे क्विबादिलोपे एकदेशविकृतन्यायेन आनुमानिकस्थान्यादेशभावमादाय स्थानिवद्भावेन वा प्रातिपदिकत्वे लब्धे कृद्ग्रहणमपि प्रत्ययान्तपर्युदासे बीजं स्यादिति वाच्यम्, अन्तरङ्गतया प्रतिपदोक्तत्वेन च वेर्लोपस्यैव पूर्वं प्रवृत्तेः ।

अत्र 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया 'मूलकेन उपदंशम्' इति समुदायस्यापि कृदन्ततदादितया न प्रातिपदिकत्वम्, परत्वात्समासग्रहणकृतनियमेन बाधात् । तथा च फलाभावात् 'कृद्ग्रहणे' इति नात्रोपतिष्ठते । विकल्पेन समासविधानस्य तु न वैयर्थ्यम्, पृथक्स्वरश्रवणाय तच्चारितार्थ्यात्, 'दधि उपदंशम्' इत्यत्र समासाभावे प्रकृतिभावस्यापि फलस्य वक्तुं शक्यत्वाच्च ।

वस्तुतस्तु प्रत्ययपर्युदासमात्रमाश्रित्य तद्धितग्रहणेन प्रत्ययान्तस्य प्रातिपदिकत्वं चेत्तद्धितान्तस्यैवेति नियममाश्रित्य च प्रत्ययान्तपर्युदासः प्रत्याख्यातो भाष्यकृता । तथा च 'अहन्' इत्यादौ नियमेनैव प्रातिपदिकत्ववारणसम्भवे धातुग्रहणप्रत्याख्यानमपि भगवता सूचितमेव । वस्तुतस्तु प्रातिपदिकसंज्ञाया आकडारीयत्वाभावेन धातुसंज्ञासमकालमेव प्राप्तया तद्वारणाय 'अधातुः' इति । कार्यकालपक्षमादाय तत्प्रत्याख्यानं भाष्ये सूचितम् । धातुसंज्ञाया निरवकाशत्वं तु न 'धुक्' 'भुवौ' इत्यादौ वत्वोवङादिसम्पादनाय तच्चारितार्थ्यात्, कार्यकालपक्षे तत्र प्रातिपदिकसंज्ञाया फलाभावेनाप्रवृत्तेः ।

ननु समासग्रहणं व्यर्थम्, अर्थवत्सूत्रेणैव तस्यापि प्रातिपदिकत्वसिद्धेः । न च 'राजन् अस् पुरुष सु' इति समासस्य प्रत्ययान्तत्वात्तदप्राप्तिः । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया येन प्रत्ययेन प्रत्ययान्तत्वं तत्प्रकृत्यादितत्प्रत्ययान्तस्यैव प्रत्ययान्तग्रहणेन ग्रहणात् । समासस्य प्रत्ययान्तत्वेऽपि तत्प्रकृत्यादिरूपतदादित्वाभावेन प्रत्ययान्तपर्युदासाप्राप्तेः ।

न च 'राजन् अस् कुमारी सु' इति स्थितौ सोरन्तरङ्गत्वात् 'हल्ङ्याब्भ्यः' इति लोपे 'स्त्रीप्रत्यये चानुपसर्जने न' इति तदादित्वस्य निषेधे प्रत्ययान्तपर्युदासे प्राप्ते तत्र विध्यर्थं समासग्रहणमिति

पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम् ।

वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति न्यायेन लुग्विषये ह्रस्वत्वादिलोपाप्राप्त्या सोः सत्त्वे एव प्रातिपदिकत्वस्येष्टत्वेन तस्य च पूर्वसूत्रेण सिद्धौ बाधकाभावात्, सुप्प्रत्ययमात्रबोधके एव प्रत्ययपदे 'अनुपसर्जने न' इति तदादित्वनिषेधकस्य प्रवृत्त्या प्रकृते तदादिनिषेधाप्राप्तेश्च ।

न चानर्थकेऽसमर्थसमासे 'न स् सुर्य्यं स्' इत्यादौ पूर्वसूत्राप्राप्त्या तदर्थं समासग्रहणम्, अत्रापि 'अर्थवत्' इत्यनुवृत्त्या तत्रास्याप्यप्रवृत्तेः । असमर्थसमासस्य प्रातिपदिकत्वं तु 'असमर्थसमासज्ञापकात् 'असूर्य्यललाटयोः' इति निर्देशरूपज्ञापकादेव । न च 'शश अस् शङ्कस्' इत्याद्यनर्थके प्रातिपदिकत्वार्थं समासग्रहणम्, अर्थवदित्यनुवृत्त्याऽस्याप्यप्राप्त्या तत्र बौद्धार्थकल्पनाया आवश्यकत्वेन पूर्वेणैव सिद्धेः ।

न च समासे प्रत्येकपदशक्त्यैवार्थबोधनिर्वाहे पदसमुदायात्मके समासेऽर्थवत्त्वाभावेऽपि विध्यर्थं समासग्रहणम्, 'समर्थः पदविधिः' इति सूत्रानुरोधेन एकदेशे विशेषणाद्यन्वयाभावार्थत्वेन च समासेऽर्थवत्त्वस्यावश्यकत्वात् ।

न च नैयायिकमते समासे शक्त्यस्वीकारेण विध्यर्थं समासग्रहणम्, 'मूलकेनोपदंशम्' 'गङ्गायाः पारे' इत्यादौ समासाभावेऽपि विशेषणाद्यनन्वयाय एकार्थीभावात्मकशक्तेरावश्यकत्वेन तन्मते प्रातिपदिकत्वस्य दुर्वारतया तन्मतस्य दुष्टत्वात् । न च समुदायस्य प्रातिपदिकत्वमिष्टमेवेति वाच्यम्, मूलकेनेति तृतीयाया लुगापत्तेः । न च 'तृतीयाप्रभृतीनि' 'पारे मध्ये षष्ठ्या वा' इति विकल्पेन समासविधानस्य वैयर्थ्यम्, समासे 'समासस्यान्तोदात्तः' इत्येकस्वरश्रवणम्, समासाभावेऽपि प्रातिपदिकत्वे तु पूर्वोत्तरपदयोर्विभिन्नस्वरश्रवणमिति विशेषात्, 'दधि उपदंशम्' इत्यादौ 'न समासे' इति प्रकृतिभावनिषेधाभावरूपफलस्यापि वक्तुं शक्यत्वाच्च । किञ्च न्यायनये कृदन्तस्याप्यनर्थकत्वेन कर्ता कारक इत्यादौ प्रातिपदिकत्वानापत्तिः । नच कृद्ग्रहणसामर्थ्यादनर्थकस्यापि कृदन्तस्य प्रातिपदिकत्वम्, क्विट् घुगित्यादौ लुप्तप्रत्यये 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन कृद्रहितस्यार्थवत्त्वेन कृद्ग्रहणस्य चारितार्थ्यात् ।

किञ्चावयवशक्तित एव वाक्यार्थबोध इति वदतो नैयायिकस्य पङ्कजपदं योगरूढम्, अश्वगन्धापदं ओषधिविशेषबोधे रूढम्, वाजिशालाबोधे यौगिकम्, पाचकपदं यौगिकम्, इत्यादिविभागानुपपत्तिः, शक्त्या बोधकानामेवैतद्विभागेन उक्तशब्दानां वाक्यात्मकत्वेन योगरूढत्वादेरसम्भवात् ।

लक्षणया समासस्यार्थवत्त्वोपपादने तु तादृशार्थवत्त्वमादायैव पूर्वेण प्रातिपदिकत्वसिद्धौ समासग्रहणं व्यर्थमित्याशङ्कायामाह—नियमार्थमिति—नियमोऽत्र व्यावृत्ति र्न तु पाक्षिकप्राप्तौ सत्यां विधिरूपः, समासे प्रातिपदिकत्वस्य प्राप्तेरेव सम्भवेन पाक्षिकप्राप्तेरभावात् । यत्र तु 'ऋतौ भार्य्यामुपेयात्' इत्यादौ रागतः प्राप्तिरपि रागाभावेऽप्राप्तिरपि गमनस्येति तत्र नियमः, 'ऋतौ उपेयादेव' इति । तदुक्तम्— 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते' इति ॥

प्रकृते समासे ततोऽन्यत्र वाक्ये च प्रातिपदिकसंज्ञायाः प्राप्तौ सत्यां समासे संज्ञाविधानं परिसंख्यापरमेव स्यात् । तथा च पाक्षिकाप्राप्तांशपरिपूरणफलो हि नियमः । अन्यनिवृत्तिफला परिसंख्या । यद्यपि नियमेऽपि अन्यनिवृत्तिस्तथापि परिसंख्यायां पाक्षिकाप्राप्तांशपरिपूरणं नास्ति । अत एव रागाभावे पञ्चानां पञ्चनखानां भक्षणाभावे न दोषः । नन्वेवं समासस्य प्रातिपदिकसंज्ञायाः पक्षेऽभावेऽपि साधुत्वापत्तिरिति चेन्न, यत्र प्रापकस्य नियतत्वे विधिस्तत्र विधेयाकरणे दोषः, यत्र प्रापकस्यानियतत्वे विधिस्तत्र तदकरणेऽपि न दोष इति नियमात् ।

अत्र च प्रातिपदिकसंज्ञाप्रापकस्यार्थवत्सूत्रस्य नियतत्वात्समासस्य प्रातिपदिकसंज्ञाया अकरणे दोषात्तस्या आवश्यकत्वम् । 'पञ्च पञ्चनखा भक्ष्याः' इत्यदौ भक्षणप्रापिकाया इच्छाया हिंसादिदोष-

यत्र संघाते पूर्वोभागः पदं तस्य चेद्भवति तर्हि समासस्यैव ।

दर्शनेन निवृत्तिसंभवेनानियतत्वाद्विधेयाकरणेऽपि न दोषः । यद्वाऽत्र विधेरन्यनिवृत्तिफलकत्वेन परिसंख्यात्वेऽपि व्याकरणे विधेयस्य उद्देश्यताऽवच्छेदकव्यापकत्वनियमेन समासे न प्रातिपदिकसंज्ञाया अभाव इत्युपाध्यायाः ।

नियमाकारं दर्शयति—यत्र संघात इति—नियमश्चान्यव्यावृत्तिः । समासभिन्नस्य प्रातिपदिकसंज्ञा न भवतीति नियमेऽर्थवत्सूत्रादिवैयर्थ्यापत्तिरतः सजातीयविषयको नियमो वाच्यः ।

अयम्भावः—यत्र नियमस्तत्र द्विविधं शास्त्रम् । १नियम्यशास्त्रम्, २नियामकशास्त्रञ्च । तत्र समानविधेयकत्वे सति व्यर्थताप्रयोजकं शास्त्रं नियम्यम् । समानविधेयकत्वे सति व्यर्थीभूतशास्त्रं नियामकम् । तत्र नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकधर्मव्याप्यम्, नियामकशास्त्रीयोद्देश्यताऽवच्छेदकधर्मव्यापकञ्च यद्धर्मं तेनैव धर्मेण नियामकशास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्नसदृशस्य व्यावृत्तिरिष्यते ।

अत्र नियामकशास्त्रम्—'समासः प्रातिपदिकसंज्ञकः स्यात्' इति । तदीयोद्देश्यताऽवच्छेदकं समासत्वं तदवच्छिन्नः समासः । स च पदत्वयोग्यपूर्वोत्तरभागघटितोऽर्थवाँश्चेति 'पदत्वयोग्यपूर्वोत्तरभागघटितार्थवत्समुदायत्वावच्छिन्नस्य प्रातिपदिकत्वञ्चेत्तर्हि समासस्यैव नान्यस्य इति नियमाकारः ।

एवञ्च 'राज्ञः पुरुषः' इत्यादिवाक्यस्य पूर्वेण प्रातिपदिकसंज्ञा प्राप्नोति, अनेन च निषिध्यत इत्युभयोर्विरोधपरिहाराय पदत्वयोग्यपूर्वोत्तरभागघटितार्थवत्समुदायभिन्नत्वेन पूर्वसूत्रीयोद्देश्यदले संकोचेन तादृशसमुदायभिन्नं यदर्थवत् तस्यैव तेन प्रातिपदिकसंज्ञाविधाने वाक्यस्य, समासस्य च पदत्वयोग्यपूर्वोत्तरभागघटितसमुदायभिन्नत्वाभावेन पूर्वेण प्रातिपदिकत्वाप्राप्त्या समासस्यानेन प्रातिपदिकसंज्ञा विधीयते । वाक्यस्य तु न पूर्वेण नाप्यनेन, उद्देश्यतावच्छेदकधर्मानाक्रान्तत्वात् ।

न च 'मूलकेनोपदंशम्' इत्यस्य 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया कृदन्ततदादित्वरूपोद्देश्यताऽवच्छेदकधर्माक्रान्ततया प्रातिपदिकत्वापत्तिः, पदत्वयोग्यपूर्वोत्तरभागघटितार्थवत्समुदायस्य प्रातिपदिकत्वं चेत्तर्हि समासस्यैव नान्यस्येति नियमेन परत्वाद् बाधात् ।

अत एवात्र 'कृद्ग्रहण' परिभाषा नोपतिष्ठते, फलाभावादिति पूर्वोक्तमनुसन्धेयम् । तदाह—यत्र संघाते पूर्वो भागः पदमिति । पदमिति—पदत्वयोग्यस्योपलक्षणम् । अन्यथा 'वृषण्वसुः' इति समासे 'वृषण्' इत्यस्य 'वृषण्वस्वश्वयोः' इति भत्वेन 'अश्वक्रीती' इत्यादौ 'गतिकारकोपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया असुबन्तोत्तरपदकसमासस्यापि दर्शनेनैव पदसंज्ञकपूर्वभागघटितत्वादिरूपेण साजात्यं न स्यात्, नियामकशास्त्रीयोद्देश्यताऽवच्छेदकधर्मव्यापकधर्मेणैव साजात्यस्य सर्वसम्मतत्वात् । अत्र समासत्वमस्ति, तादृशसमुदायत्वन्तु नास्तीति व्यापकत्वानुपपत्तिः । पदत्वयोग्यत्वस्य निवेशे तु 'पदत्वप्रयोजकस्वादिप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताऽवच्छेदकप्रातिपदिकत्वावच्छिन्नत्वरूपपदत्वयोग्यत्वस्य' वृषण्शब्देऽपि सत्त्वेन न व्यापकत्वहानिः ।

एवमुत्तरभागस्यापि पदत्वयोग्यस्यैव ग्रहणेन 'जन्मवान्' इत्यादौ तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वस्य नियमेन न बाधः, मतुपः प्रातिपदिकत्वरूपपदत्वयोग्यत्वाभावात् । समुदायस्यापि अर्थवत एव निवेशेन अर्थवद्ग्रहणस्य 'दश दाडिमानि षडपूपाः' इत्यनर्थकस्य समुदायस्य प्रातिपदिकत्ववारणरूपफलदानपरभाष्येण न विरोधः । अन्यथा 'दश दाडिमानि' इति भाष्योक्तसमुदायस्य पदत्वयोग्यपूर्वोत्तरभागघटितत्वेन समासग्रहणकृतनियमे नैव प्रातिपदिकत्ववारणसम्भवात् 'अर्थवद्'-ग्रहणफलदानपरभाष्यासङ्गतिः स्यात् । अत एव 'अर्थवत्समुदायानां समासग्रहणं नियमार्थम्' इत्युक्तं भाष्ये । तत्र 'अर्थवत्समुदायानाम्' इत्यस्य एकशेषेण तन्त्रेण वा अर्थवतां समुदायोऽर्थवत्समुदायोऽर्थवाँश्चासौ समुदायश्चेत्युभयार्थकत्वम् । ननु पूर्वोत्तरयोः पदत्वयोग्ययोर्ग्रहणे 'गवित्ययमाह' इत्यस्य पूर्वसूत्रेण प्रातिपदिकत्वं दुर्वारम्, अभेदानुकरणे 'गो' इत्यस्य वृत्त्या अर्थवत्त्वाभावेनाप्राति-

पदिकत्वादिति चेन्न, अर्थवत्पदस्य पदत्वयोग्यपदस्य च स्वातन्त्र्येण प्रयोगार्हार्थवत्परत्वेनादोषात्। प्रवृत्तिनिमित्तभेदे सति य आकाङ्क्षासंसर्गस्तेनार्थवान् यः समुदायस्तत्साजात्येन नियमस्वीकारात्, प्रकृतिप्रत्ययभावानापन्नसमुदायविषयकनियमाच्च।

प्रकृतिप्रत्ययभावापन्नत्वञ्च प्रत्ययविशिष्टत्वम्। वै० स्वान्तत्व-स्वविशिष्टघटितत्व-स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन। द्वितीयसम्बन्धघटकवैशिष्ट्यञ्च-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्व-स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन, तृतीयसम्बन्धघटकवैशिष्ट्यञ्च स्वाघटकत्व—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाघटकत्व—स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतेकार्थीभावानाश्रयत्व-स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयाघटकत्वैतच्चतुष्टयसम्बन्धेनेति पद्मोलिनः।

वस्तुतस्तु नियमशरीरे स्वातन्त्र्येण प्रयोगार्हार्थवतां ग्रहणमयुक्तम्। तथा हि—'देवदत्तो गार्ग्यं' इति भाष्योक्तसमुदायस्य तदादिनियमाश्रयणेन तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्ववारणेऽपि अर्थवत्सूत्रेण तत्र तस्या दुर्वारत्वात्।

किञ्च तदादिनियमाभावे 'देवदत्तो गार्ग्य' इति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वमापादितं भाष्ये। तदानीञ्च न समासग्रहणस्य नियमार्थत्वम्, 'प्रत्ययग्रहणे यस्मात्स विहितः' इति परिभाषाया अभावे समासस्य प्रत्ययान्तत्वेन पूर्वेण प्रातिपदिकत्वासिद्धेः। किन्तु विध्यर्थमेव समासग्रहणम्।

तथा च 'देवदत्तो गार्ग्य' इति समुदायस्य प्रातिपदिकत्वापत्तेर्नियमेन दुष्परिहरतया भाष्ये प्रातिपदिकत्वापादनं सूपपन्नमेव। किञ्च 'कुम्भकारः' इत्यादिसमासे, उत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेन, 'शुक्लीकृत्य' इत्यादौ कृभ्वस्तीन् विना शुक्लीति पूर्वभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेन, 'पटुपटु' 'एकैकम्' इत्यादेरतिदिष्टसमासत्वमाश्रित्य प्रातिपदिकत्वस्य वक्तव्यतया तद्घटकपूर्वोत्तरभागयोः स्वातन्त्र्येण प्रयोगार्हार्थवद्घटितत्वसमुदायत्वमिति तेन रूपेण शेखरोक्तं साजात्यं चिन्त्यम्।

किञ्च 'एधामास' 'मूलकेनोपदंशम्' इत्यादीनां पूर्वसूत्रेण प्रातिपदिकत्वं दुर्वारम्, एधामासेत्यनयोः पूर्वपरपरिहारेण प्रयोगासम्भवात्, मूलकेनेत्येतद्भिन्ना उपदंशमित्युत्तरभागस्य प्रयोगासम्भवाच्च।

तस्माद्यदुद्देश्यशास्त्रेण समासो विहितस्तत्तदुद्देश्यघटितसमुदायत्वावच्छिन्नस्य प्रातिपदिकत्वं चेत्तर्हि समासस्यैवेति नियमाकारः।

तथा च सुबन्तसमुदायस्य, सुबन्तकृदन्तसमुदायस्य, सुबन्ततिङन्तसमुदायस्य, तिङन्तसमुदायस्य च समासविधानेन तत्तदेकवाक्यतापन्नेन 'कृत्तद्धितसमासाश्च' इत्यत्रत्येन समासग्रहणेन नियमनात्। उक्तसमुदायानां प्रातिपदिकत्वं चेत्तर्हि समासस्यैवेति नियमः फलति। तदुक्तं भाष्ये—'तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः? 'यथा जातीयकानां समासः। कथं जातीयकानां समासः? सुबन्तानाम्। सुप्तिङ्समुदायस्य 'वृत्रम् अहन् इत्यादेः' तर्हि प्रातिपदिकसंज्ञा प्राप्नोति। सुप्तिङ्समुदायस्यापि प्रातिपदिकसंज्ञाऽऽरभ्यते। 'जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधातीति। तन्नियमार्थं भविष्यति। एतस्यैव सुप्तिङ्समुदायस्य प्रातिपदिकसंज्ञा नान्यस्येति। तिङ्समुदायस्यापि प्रातिपदिकसंज्ञा प्राप्नोति 'पचति भवति' इत्यादेः। तिङ्समुदायस्यापि प्रातिपदिकसंज्ञाऽऽरभ्यते। 'आख्यातम् आख्यातेन क्रियासातत्ये' इति। तन्नियमार्थं भविष्यति। एतस्यैव तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति।'' इति इदं भाष्योक्तं नियमत्रयमुपलक्षणमन्यस्यापि यज्जातीयकस्य समासविधिर्न तज्जातीयकस्य।

'उपपदमतिङ्' इत्येनदेकवाक्यतापन्नेन 'कृत्तद्धित' इत्यनेन सुबन्तप्रातिपदिकसमुदायस्य प्रातिपदिकत्वनियमनात् 'कष्टश्रः' इत्येतदेकवाक्यतापन्नेन 'कृत्तद्धित' इत्यनेन धातुसुबन्तसमुदायस्य प्रातिपदिकत्वनियमनाच्च 'भू सत्तायाम्' 'एध वृद्धौ' इत्यादिसमुदायस्य न प्रातिपदिकत्वम्।

तेन वाक्यस्य न ।

नियमफलमाह—वाक्यस्य नेतीति—'राज्ञः पुरुषः' 'गामानय' इत्यादिवाक्यस्य प्रातिपदिकत्वं नेत्यर्थः । प्रातिपदिकत्वे हि सुपो लुगापत्तिः । न च विकल्पेन समासविधानसामर्थ्याल्लुगभावः, समासान्तोदात्तत्वादेस्तदभावाय च वैकल्पिकसमासविधानस्य चारितार्थ्यादिति, समासे विशेषणायोगः, समासाभावे विशेषणयोगस्य सत्त्वेन विशेषाच्च । न च सुब्निमित्तककार्यविधायकानाम् 'सुपि च' 'अतो भिस ऐस्' इत्यादीनां वैयर्थ्यापत्त्या न सुपो लुक्, वाक्यैकदेशप्रयोगे 'वृक्षाय' 'वृक्षैः' इत्यादौ अलुक्समासे च तेषां चारितार्थ्यात् । न च धातुसाहचर्येण वृत्यवयवस्यैव सुपः 'सुपो धातुप्रातिपदिकयोः' इत्यनेन लुग्विधानात्समासाभावे लुगभावः, एवमपि 'मूलकेनोपदंशम्' इत्यादावेकार्थीभाववृत्तिसत्त्वे लुको दुर्वारत्वात्, साहचर्यस्यानित्यत्वाच्च । न च शशशृङ्गवन्ध्यापुत्रादीनामनर्थकतया पूर्वेणासिद्धया तत्र प्रातिपदिकत्वार्थं समासग्रहणं नियमार्थम्, वैयाकरणनये बौद्धार्थस्य सत्त्वेन न्यायनये प्रत्येकपदार्थस्य सत्त्वेन सम्बन्धमात्रारोपेण च तत्राप्यर्थवत्त्वस्य सत्त्वात् ।

न च वाक्ये वृत्तेरभावेनानर्थकत्वान्न प्रातिपदिकत्वम्, विशेष्यविशेषणभावे वाक्यस्य शक्तिरिति मञ्जूषायां सिद्धान्तितत्वेन 'यदत्राधिक्यं स वाक्यार्थः' इति 'षष्ठी शेषे' इति सूत्रस्थेन समासग्रहणनियमपरकभाष्येण च वाक्यस्यापि शक्त्याऽर्थबोधकत्वात् । अत्र 'च' पदमनुक्तस्यानर्थकनिपातस्य समुच्चायकम् । तेन पादपूरणमात्रफलकनिपातस्य प्रातिपदिकत्वं सिध्यति । एवं च 'निपातस्यानर्थकस्य प्रातिपदिकत्वम्' इति भाष्योक्तं वार्तिकं न कर्त्तव्यमिति कश्चित् ।

पूर्वो भागः पदमिति—अत्र पूर्वो भागोऽर्थवदित्युक्तौ सुबन्तात्पटुशब्दाद् पुरस्ताद् बहुच्प्रत्यये 'बहु पटु जस्' इति स्थितौ अर्थवदिति प्रातिपदिकत्वे जसो लुकि 'चितः' इति सप्रकृतिकस्यान्तोदात्तत्वे उकारस्योदात्तत्वेन टकाराकारस्योदात्तत्वम् 'बहुपटवः' इत्यत्र श्रूयते । बहुप्रत्ययस्यार्थवत्त्वेन नियमेन प्रातिपदिकत्वानापत्तौ जसो लुगभावे तदकारस्यैवोदात्तत्वे टकाराकारस्य 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तत्वापत्तिः । पदमित्यस्य निवेशे तु नियमाविषयतया प्रातिपदिकत्वे जसो लुकि चित्स्वरे पुनर्जसि 'बहुपटवः' इत्यादौ टकाराकारस्योदात्तत्वं सिध्यति । उत्तरस्तु पूर्वभागप्रकृतिकप्रत्ययो न, यदा उत्तरभागोऽपि पदत्वयोग्यः प्रातिपदिकमिति यावदिति वा वाच्यम् । तेन 'जन्मवत्' इत्यादेः पूर्वभागस्य पदत्वेऽपि मतुपः प्रत्ययत्वात्, प्रातिपदिकत्वाभावाच्च न दोषः ।

न च तद्धितग्रहणसामर्थ्यान्नियमस्य बाधेन तद्धितान्तत्वात् प्रातिपदिकत्वं सिध्यतीति वाच्यम्, 'औपगवः' इत्यादौ पूर्वभागस्य पदत्वाभावेन नियमाप्रवृत्त्या तद्धितग्रहणस्य चारितार्थ्येन नियमस्य तेनाबाधात् परत्वात्तस्यैव नियमेन बाधाच्च । पूर्वभागः पदं प्रातिपदिकं वेति नियमे निवेशे तु औपगवादावपि पूर्वभागस्य प्रातिपदिकत्वेन नियमप्रवृत्त्या तद्धितग्रहणवैयर्थ्यापत्त्या तत्सामर्थ्याद्यद्यपि तद्धितान्तत्वेनैव प्रातिपदिकत्वं वक्तुं शक्यम् तथापि सामर्थ्याद् बाधकल्पनापेक्षया नियमे उत्तरभागे तादृशसंकोच एव लाघवादुचितः । न च 'अप्रत्ययः' इत्यस्य नास्ति प्रत्ययो यस्मिन्समुदाये सोऽप्रत्यय इत्यर्थेन वाक्यस्य पूर्वेणाप्राप्त्या विध्यर्थमेव समासग्रहणमिति वाच्यम्, 'बहुपटवः' इत्यत्र प्रातिपदिकत्वानापत्त्या स्वरभेदापत्तेः । न च 'बहुच्पूर्वोऽप्रत्ययः प्रातिपदिकम्' इति न्यासेनादोषः । 'मूलकेनोपदंशम्' इत्यस्य कृदन्तत्वेन प्रातिपदिकत्वापत्तेः । सिद्धान्ते तु नियमेन तस्य व्यावृत्तिः ।

न च तद्धितविशिष्टस्य प्रातिपदिकसंज्ञा विधीयते । वैशिष्ट्यञ्च—स्वघटितत्वस्वाव्यवहितस्वोद्देश्यघटितत्वोभयसम्बन्धेन 'पचतकि' इत्यत्र स्वाव्यवहितोद्देश्यघटितत्वाभावान्न दोष इति वाच्यम्, 'मूलकेनोपदंशम्' इत्यस्य कृदन्तत्वेन प्रातिपदिकत्वस्य दुरुद्धरत्वात् इत्यन्यत्र विस्तरः ।

वक्ष्यमाणत्वादीनां प्रत्ययत्वोपपत्तये आह—

प्रत्ययः । [ ३-१-१ ]

आपञ्चमपरिसमाप्तेरधिकारोऽयम् ।

परश्च । [ ३-१-२ ]

अयमपि तथा ।

---

'प्रत्ययः' इति—संज्ञाधिकारोऽयम्, 'अधिकारेणेयं प्रत्ययसंज्ञा क्रियते' इति भाष्यात्, विधित्वे सकलसंज्ञिनां निर्देशे गौरवापत्तेश्च । प्रतिपूर्वकादिणधातोः पचादित्वात् कर्तरि कर्मणि च अच् । तदुक्तं भाष्ये 'प्रत्याययतीति प्रत्ययः' इति, प्रत्याय्यते इति प्रत्ययः उभयसाधनोऽयम्, इति भाष्यात्तन्त्रेणोभयार्थकत्वम् । तत्र कर्तृसाधनेन स्वार्थप्रत्यायकस्य कर्मसाधनेन प्रत्याय्यते प्रकृत्या बोध्यते इति स्वार्थिकप्रत्ययस्य च संग्रहः । यद्यपि स्वार्थिकेषु प्रकृत्या कार्यार्थः प्रत्याय्यते न तु कादिः, तथापि शब्दार्थयोस्तादात्म्याभिप्रायेण कादिरपि प्रत्याय्यमानः प्रत्ययः । तथा च आत्मीयार्थबोधकस्यैव प्रत्यय-संज्ञा । अर्थे आत्मीयत्वञ्च धातुपाठसूत्रनिरुक्तकोशादौ अर्थबोधकशब्दमुखाख्यं बोधितत्वम् । स्वस्व-प्रवृत्त्यन्यतरार्थेनार्थवानिति यावत् । विकरणागमानामनर्थकत्वात्, आदेशानां स्वार्थाभावाच्च न संज्ञा ।

आपञ्चमपरिसमाप्तेरिति—अत्र मानञ्च पञ्चमाध्यायान्तभागे 'मूर्ध्नः खः' इत्यादिभाष्ये 'किमर्थं मूर्ध्नः खः प्रत्ययान्तरं क्रियते' इत्याद्युक्तिरेव ।

प्रत्ययस्यैव परत्वविशिष्टस्य विधानाय 'परश्च' इति सूत्रमपि तावत्पर्यन्तमेवाधिक्रियते । तदाह—अयमपि तथेति—अयं योगोऽपि पञ्चमाध्यायसमाप्तिपर्यन्तमधिक्रियत इत्यर्थः । विकारा-गमादेशानां तु न प्रत्ययसंज्ञा 'यः स्वमर्थं प्रत्याययति स प्रत्ययः' इति भाष्ये स्वपदोपादानेन आत्मीया-र्थबोधकानामेव प्रत्ययसंज्ञाविधानेन विकारादीनां तस्याभावात् । न च प्रत्ययानां स्वीयार्थप्रत्यायकत्वे सर्वेषां स्वार्थिकत्वापत्तिः स्वार्थिकपदस्य प्रकृत्यर्थप्रत्यायकप्रत्यये एव योगरूढत्वात् । अत एव 'स्वार्थिकाः' प्रत्ययाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इत्यादौ तादृशानामेव ग्रहणम् । प्रत्ययसंज्ञाकरण फलं तु 'प्रत्ययलोपे प्रत्ययलक्षणम्' यस्मात्प्रत्ययविधिः' इत्येवमादिषु ।

'परश्च' इति अयमपि तथेति—अयमपि योग आपञ्चमपरिसमाप्ते योगे योगेऽधिक्रियते इत्यर्थः । तावत्पर्यन्तमधिकारे भाष्यादिव्याख्यानमेव मानम् । अत्र चग्रहणमनुक्तसमुच्चयार्थकम् । तेन 'उणादयो बहुलम्' इत्यत्र बहुलग्रहणेन प्राप्तविपर्यासोऽपि परत्वनियमेन बाध्यते इत्यर्थः । पञ्चम्यन्ता-त्प्रायः प्रत्ययो विधीयते । पञ्चमी चात्र दिग्योगे । तत्र परयोगपञ्चम्या पर एव प्रत्ययो भवतु पूर्वयोग-पञ्चम्या पूर्वो मा भूदित्येतदर्थं परश्चेति । न च यमिच्छति पूर्वंग्रहणं करोति 'विभाषा सुपो बहुच् पुरस्तात्' इति पुरस्ताद् ग्रहणम् । मध्ये यमिच्छति तत्र यत्रान्तरं टिग्रहणम् 'अकच् प्राक्टेः' इति । अमादौ मित्करणम् । यत्र यत्नो नास्ति स पर एव भविष्यतीति व्यर्थं परश्चेति वाच्यम्, यत्र कश्चन यत्नः स एव नियतदेशो, यत्रानियतोद्देशस्तत्र कदाचित्पूर्वत्वापत्तेः । तद्यथा मातुर्वत्सः कदाचिदग्रतः कदाचि-त्पृष्ठतः कदाचित्पार्श्वतो भवति । तत्र पर एव यथा स्यादित्येवमर्थं सूत्रम् ।

वस्तुतस्तु 'गुप्तिज्किद्' इत्यादौ पञ्चम्यन्तात्प्रत्ययो विधीयते । तत्र 'तस्मादित्युत्तरस्य' इति परत्वे लब्धे प्रयोगनियमार्थमेव परग्रहणम् । स च प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या न केवलेति प्रकृतिनियमः । प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यो न केवलप्रत्यय इति प्रत्ययनियमश्च । तेन 'गापोष्टक्' इत्यत्र पञ्चम्यभावात्तदर्थं परश्चेति, अनन्तरार्थयोगषष्ठ्याः स्वीकारेण टित्करणेन परत्वेनैवानन्त-र्यग्रहणेन सिद्धेः ।

'गविरययमाह' इत्यत्रामेदानुकरणे 'गो' इत्यस्य प्रातिपदिकत्वाभावेन प्रकृतित्वाभावात् केवलस्य प्रयोगेऽपि न दोषः । "न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः" इति न्यायश्च शास्त्रा-बोधितान्यतरप्रयोगविषयक एव । तेन 'छिद्' 'इयान्' इत्यादौ न दोषः । एतेषां केवलानां प्रयोगे च

## ङ्याप्प्रातिपदिकात् । [ ४-१-१ ]

ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारः ।

इत्यङ्यादिशास्त्रमेव मानम् । प्रकृतित्वञ्च 'आगमभिन्न आदेशभिन्नश्च यस्तृतीयचतुर्थपञ्चमाध्याय-सूत्रवार्तिकविधेयस्तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वम् ।

ननु तत्तत्प्रत्ययानां तत्तत्प्रकृत्युद्देश्यत्वेनैव विहिततया केवलप्रकृतेः केवलप्रत्ययस्य च प्रयोगो न प्राप्नोतीति नियमो व्यर्थः । न च प्रातिपदिकार्थमात्रविवक्षायां धात्वर्थमात्रविवक्षायाञ्च प्रकृति-मात्रस्य प्रयोगः प्राप्नोतीति वाच्यम्, तत्राप्यौत्सर्गिकैकवचनस्य दुर्वारत्वात् । न च एकवचनमिति-महासंज्ञाकरणेनैकत्वे सत्येवैकवचनम्, एकत्वाभावे एकवचनन्तु संख्येव गमके इति वाच्यम्, 'प्रातिपदि-कार्थमात्रे प्रथमा' इत्यस्य प्रातिपदिकार्थेतरार्थाविवक्षायाम्, 'वर्तमाने लट्' इत्यादेर्वर्तमानेतरकाला-विवक्षायां लट्, एकवचनमित्यस्य एकत्वेतरसंख्याया अविवक्षायामेकवचनमित्यर्थेन संख्याकालयोर-विवक्षितत्वेऽप्येकवचनस्यावश्यप्राप्तेरिति चेन्न, वाक्ये वाक्यैकदेशन्यायेन 'पिण्डीम्, पिधेहि' इति-वत्, पदे पदैकदेशन्यायेन सत्या, भामा, देवः, दत्तः, इतिवच्च समभिव्याहारनियन्त्रितकार्यविषयेऽपि सुद्युपास्य इत्यर्थे 'सुद्युप्' इत्यस्य पाचक इत्यर्थे 'पच्' इत्यस्य अक इत्यस्य च केवलस्य प्रयोग-वारणाय समभिव्याहारनियन्त्रितकार्याणां तत्तत्समभिव्याहाराभावेऽसाधुत्वबोधनाय परश्चेत्यस्याव-श्यकत्वात् । एतन्मूलकमेव 'अपदं न प्रयुञ्जीत' इति ।

'ङ्याप्प्रातिपदिकात्' इति । ङी च आप् च प्रातिपदिकञ्चेति समाहारद्वन्द्वः । ङी इति, ङीप्, ङीष्, ङीन् इति त्रयाणाम्, आप् इति टाप्, डाप्, चाप् इति त्रयाणां ग्राहकम्, विशेषग्रहणे मानाभावात् ।

आपञ्चमेति—पञ्चमाध्यायपर्यन्तं परश्चेत्यधिकारस्योक्तत्वेन परत्वस्यावधौ नित्यसाकाङ्-क्षतया तन्निवृत्तये तावत्पर्यन्तमस्याप्यधिकारः ।

ननु 'परश्च' इत्यनेन प्रकृतेराक्षेपात् प्रातिपदिकाधिकारो व्यर्थः । नचाक्षिप्तस्य शाब्दे माना-भावेनेदमप्रकृतम्, प्रकृतेरिति पदाध्याहारेण शाब्दत्वोपपत्तिसम्भवात् ।

न च ङ्याप्प्रातिपदिकव्यतिरिक्ता चतुर्धा प्रकृतिरस्ति, धातुः, तिङन्तम्, वाक्यम्, सुबन्तञ्च । चतुर्धा च प्रत्ययाः, स्वादयः, टाबादयः, अणादयः, स्वार्थिकाश्च । इति चतुर्विधाभ्यः प्रकृतिभ्यश्चतु-र्विधाः प्रत्यया मा भूवन्नित्येतदर्थोऽयमधिकार इति वाच्यम्, स्वादयो धातोस्तव्यदादिना बाधात्, तिङन्तात्संख्याया उक्तार्थत्वात्, अदन्तात्कथादिधातोष्टाबादयो धात्वर्थस्य स्त्रीत्वेन योगाभावात्, क्विबा-दिभिर्बाधितत्वाच्च, अणादयो धात्वर्थस्यापत्याद्यर्थेन सह योगाभावात्समर्थविभक्त्यभावाच्च स्वार्थिका-स्तुमुन्नादिभावप्रत्ययैर्बाधात्, प्रकृतिविशेषमुद्दिश्य विहितत्वाच्च, तिङन्तादपि टाबादयोऽणादयश्च स्त्रीत्वापत्याद्यर्थैर्योगाभावात् न स्युः ।

न च 'पचति भवति, पश्य मृगो धावति' इत्यादौ प्रथमाद्वितीयादयः कर्तरि कर्मणि च स्यु-र्भवतिम्प्रति पाकस्य कर्तृत्वात् दर्शनम्प्रति धावनस्य कर्मत्वादिति वाच्यम्, प्रातिपदिकार्थाभावात्प्रथमायाः, संख्याया अभावादुक्तत्वाच्च द्वितीयादेश्चाप्राप्तेः । तिङश्चेति ज्ञापकाच्च न तद्धितास्तिङन्तादिति चेन्न, 'वृद्धा-वृद्धावर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ वृद्धादयः प्रातिपदिकादित्यस्य विशेषणानि स्युः । समर्थादित्यस्य सुबन्तादित्यस्य वा विशेषणानि मा भूवन्नित्येतदर्थं प्रातिपदिकादित्यधिकारस्यावश्यकत्वात् । वृद्धादीनां समर्थसुबन्तयोर्विशेषणत्वेऽव्याप्त्यतिव्याप्ती स्याताम् ।

तथा हि—'उदीचां वृद्धादगोत्रात्' इति 'ज्ञानां ब्राह्मणानामपत्यम्' इहातिप्रसज्येत, ज्ञेयोर्ब्रा-ह्मणयोरपत्यम् इह न स्यात् । 'प्राचामवृद्धात् फिन् बहुलम्' इति ज्ञेयोर्ब्राह्मणयोरपत्यम् इह स्यात् । ज्ञानां ब्राह्मणानामपत्यम् इह न स्यात् वृद्धत्वात्सुबन्तस्य । 'अत इञ्' 'दक्षस्यापत्यम् इह इञ्

'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इत्येव सिद्धे ङ्याब्ग्रहणं

स्यात्, दक्षयोर्दक्षाणां वाऽपत्यम् इह न स्यात्, सुबन्तस्यादन्तत्वाभावात्। 'अनुदात्तादेरञ्' इति वाचो विकारः, इह स्यात् 'सावेकाचः' इति विभक्तेरुदात्तत्वेन सुबन्तस्यानुदात्तादित्वात्। सर्वेषां विकार इह न स्यात् 'सर्वस्य सुपि' इति सौवरीणां सप्तमीनां तदन्तार्थकत्वेन सुबन्तस्याद्युदात्तादित्वात्। 'नौद्व्यचष्ठन्' इति वाचा तरति इहातिप्रसज्येत। घटेन तरति इह न स्यात्, सुबन्तस्य द्व्यच्कत्वाभावात्। वृद्धादीनां प्रातिपदिकादित्यस्य विशेषणत्वे तु सर्वं सिध्यति स्पष्टञ्चेदं भाष्ये।

एतदधिकाराभावे वाक्यात्तद्धितोत्पत्त्या वाक्यघटकसकलसुब्लोपापत्तिरिति तु न युक्तम्, 'स्वार्थेन परिपूर्णं पदमर्थान्तरमाकाङ्क्षति' इति न्यायेन सुबन्ततदादेरेव प्रत्ययोत्पत्तेः। तदुक्तं 'कुत्सिते' इति भाष्ये 'प्रियकुत्सितादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः' इति। विभक्त्यन्तः सन् प्रियकुत्सितादिनाऽर्थान्तरेण युज्यत इति भाष्यार्थः।

ङ्याप्पदं प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदन्तपरमित्याह—ङ्यन्तादाबन्तादिति। ननु ङ्याप्प्रातिपदिकात्परे स्वादयो भवन्ति इत्युक्तौ श्वश्रूशब्दात् ते न स्युस्तस्य ऊङन्तत्वादतस्ततः स्वाद्यर्थम् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' प्रातिपदिकबोधकम् प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मावच्छिन्नबोधकं पदं लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्राहकं भवतीत्यर्थः।

तेनेत्थं फलति—लिङ्गबोधकप्रत्ययरहिते दृष्टानां प्रातिपदिकत्व—तद्व्याप्यधर्माणां लिङ्गबोधकप्रत्ययविशिष्टेऽनयाऽऽरोपः क्रियते। अयं भावः—प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकलिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयवृत्तिधर्माणां लिङ्गबोधकप्रत्ययविशिष्टे आरोपः। वै० स्वघटितत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व-स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यञ्च—स्वघटकत्व—स्वप्रकृत्यघटकत्वैतदुभयसम्बन्धेनेति पञ्चोलिनः।

अनया परिभाषयैव प्रातिपदिकस्य शु=शीघ्रमश्नुते=आप्नोति जामाता यं स श्वशुरः। शुपूर्वकादशूधातोः 'शावशेराप्तौ' ( १-४४-उ ) इति उरन्प्रत्ययान्तस्य यथा प्रादिपदिकपदेन ग्रहणं तथा लिङ्गबोधकोङ्विशिष्टस्य श्वश्रूशब्दस्यापि ग्रहणं भवति। तथैव तथैव परिभाषया रमा·गौरीत्यादेरपि स्वादयः स्युरेवेति ङ्याबधिकारो व्यर्थं इत्याशङ्क्याह—प्रातिपदिकग्रहण इति—

लिङ्गविशिष्टस्येति—लिङ्गबोधकङीबादिप्रत्ययविशिष्टस्येत्यर्थः। इयञ्च प्रातिपदिकपदोपादाने तद्विशेषोपादाने च प्रवर्तते। आद्ये मानमनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यशङ्कापरकभाष्यमेव। द्वितीये मानञ्च अनया परिभाषया कुण्डोधनुगतबहुव्रीहित्वस्य कुण्डोध्नी इति ङीबन्ते आरोपपरकम् 'बहुव्रीहेरूधसः' इति सूत्रस्थं भाष्यम्, बहुव्रीहित्वञ्च प्रातिपदिकत्वव्याप्यम्, यत्र यत्र बहुव्रीहित्वं तत्र तत्र प्रातिपदिकत्वमिति व्याप्तेः 'नद्यन्तो यो बहुव्रीहिस्ततः कप्' इत्यर्थे कप् आपाद्य नद्युत्तरपदकबहुव्रीहेः कश्चिन्यर्थेन परिहृतः। अत एव 'अयस्कुम्भी' इत्यत्र 'अतःकृ' इति कुम्भे उत्तरपदे परे विधीयमानं सत्वं कुम्भीरूपे उत्तरपदेऽपि सिध्यति।

न चास्याः परिभाषाया अस्वीकारेऽपि 'श्वशुरः श्वश्र्वा' इति सौत्रनिर्देशादेव 'श्वश्रू' इत्यस्य प्रातिपदिकत्वम्, अतः कृकमिति सूत्रे कुम्भश्च कुम्भी चेत्येकशेषेण तन्त्रेण वा निर्देशात् कुम्भ्युत्तरपदेऽपि सत्वञ्च सिद्ध्येदिति वाच्यम्, 'कुमारीमाचष्टे कुमारयति, यामिन्य इवाहान्याचरन्ति यामिनयन्ति अहानि' इत्यादौ णिचः क्विपश्च सिद्ध्यै परिभाषाया आवश्यकत्वात्।

अत्र मानञ्च 'पूर्वकालैक' इत्यतः पादसमाप्तिं यावत् 'समानाधिकरणेन' इत्यधिकृत्य 'कुमारः श्रमणादिभिः' इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। तथा हि—गणे पठितैः स्त्रीप्रत्ययान्तैः श्रमणादिभिः

ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यान्ङ्याब्भ्यां प्राङ् मा भूदित्येवमर्थम् ।

सप्तभिः कुमार इत्यस्य पुंस्त्वविशिष्टस्य सामानाधिकरण्याभावात्समासो न स्यादिति श्रमणादिग्रहणं व्यर्थीभूय ज्ञापयति 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति । तेन कुमारशब्देन कुमारीशब्दस्यापि ग्रहणेन कुमारी चासौ श्रमणा चेत्यर्थे समासार्थः पाठश्चरितार्थः । फलञ्चोक्तमेव । भाष्यकृता तु प्रकृतसूत्रे 'वाचनिकी' एषा परिभाषा स्वीकृता ।

अत एव 'युवा खलति' ( २-१-६७ )इति सूत्रे 'अयुक्तोऽयं निर्देशः समानाधिकरणेनेति वर्तते । कः प्रसङ्गो व्यधिकरणानां समासस्य । एवं तर्हि ज्ञापयत्याचार्यो यथाजातीयकमुत्तरपदं तथाजातीयकेन पूर्वपदेन समासो भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । प्रातिपदिकग्रहणे'''इति परिभाषा न कर्तव्या भवति' इति भाष्योक्तिः संगच्छते । ज्ञाप्यत्वे तु ज्ञाप्यान्तरेण ज्ञाप्यान्तरस्य खण्डनमसङ्गतमेव स्यादुभयोस्तुल्यत्वात् ।

तथा च प्रातिपदिकादित्यनेनैव रमादण्डिन्यादिशब्देभ्योऽपि स्वादयः स्युरेवेति ङ्याब्ग्रहणं ज्ञापयति ङ्याबन्तादिति ।

यथा स्यादिति—यथेति योग्यतार्थकः । ङ्याबन्तादेव तद्धितः प्रयोक्तुं योग्य इत्यर्थः । अत्र ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रस्योपलक्षणम्, तेन त्यूङोरपि कृतयोस्तद्धित उत्पद्यते । अत एव 'इदं तर्हि 'युवतितरा, ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरेति' इति भाष्योक्तं फलं सगच्छते । अत्र 'तसिलादिषु' 'इति पुंवत्त्वं तु न, 'जातेश्च' इति निषेधात् । वयोवाचिनोऽपि वैकल्पिकजातिकार्य्यभाक्त्वस्य भाष्ये स्वीकृतत्वात् । अत एव 'युवजानिः' इत्यत्र पुंवत्त्वम्, युवतितरा, इत्यत्र तदभावश्च भाष्ये उक्ते ।

स्त्रीप्रत्ययान्तात् तद्धितोत्पत्तौ फलं दर्शयति—ङ्याब्भ्यां प्रागिति । एवञ्च 'लोहिनिका, एनिका आर्य्यका' इति सिध्यति ।

तथा हि—आद्युदात्त इत्यधिकृत्य 'वर्णानां तणतिनितान्तानाम्' इति फिट्सूत्रेण लोहित एतश्चाद्युदात्तः शेषनिघातेनान्तोदात्तश्च इति स्त्रीत्वविवक्षायाम् 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप् तकारस्य नकारादेशश्च प्राप्तः, 'लोहितान्मणौ' इति, 'सामिकृतम्' इत्यत्र सामिशब्दस्यार्धवाचितया तेनैवानत्यन्तगतेरुक्तत्वात् 'अनत्यन्तगतौ क्तात्' इति कनोऽप्राप्त्या व्यर्थेन 'न सामिवचने' ( ५-४-४ ) इति सूत्रेण ज्ञापितश्च स्वार्थे कन्नपि प्राप्तः । स्वार्थिकत्वेनान्तरङ्गः परश्च कन् ङीपं बाधित्वा प्रवर्तेत । तथा सति ङीप् न स्यात्कोपधत्वेन तोपधत्वाभावात् । एवञ्च लोहितकशब्दात् एनकशब्दाच्च टापि प्रत्ययस्थात्' इतीत्वे 'लोहितिका, एतिका' इत्येकमेव रूपं स्यान्न तु 'लोहिनिका' इति । इष्यते तु रूपद्वयम् । 'ङ्याप्प्रातिपदिकात्' इत्यत्र ङीग्रहणे तु तत्सामर्थ्यादन्तरङ्गं परमपि कनं बाधित्वा ङीपि तत्संनियुक्ते नत्वे कनि टापि च 'केऽणः' इति ह्रस्वे 'लोहिनिका' इत्यपि सिध्यति । वैकल्पिकत्वेन ङीपोऽभावे कनि टापि इत्वे 'लोहितिका' इति रूपद्वयसिद्धिः ।

एवम् आर्य्यशब्दादपि स्वार्थिकत्वेनान्तरङ्गत्वात्परत्वाच्च टापं बाधित्वा स्वार्थिके कनि एकाज्द्विर्वचनन्यायेन कान्तात् टापि यकाराकारस्य आत्स्थानिकत्वाभावात् 'उदीचामातः' इत्यस्याप्राप्तया 'प्रत्ययस्थात्' इति नित्यमित्वे 'आर्यिका' इत्येकमेव रूपं स्यात्, न तु 'आर्यका' इति । इष्यते तूभयम् । आब्ग्रहणसत्त्वे तु तत्सामर्थ्यात् कनं बाधित्वा टापि आर्य्या इति जाते कनि 'केऽणः' इति ह्रस्वे 'आर्यिका' इति । तदभावे 'आर्यका' इति उभयं सिध्यति ।

न च ङ्याबन्तात्तद्धितोत्पत्तौ समासान्तप्रत्ययस्यापि तद्धितत्वेन बहव गोमन्तो यस्यां सा 'बहुगोमत्का' इति भाष्यप्रयोगानुपपत्तिः पूर्वम् 'उगितश्च' इति ङीपि कपि 'बहुगोमतीका' इत्यस्यापत्तेरिति वाच्यम्, 'येषां पदानां समासो न तावत्तेषामन्यद् भवति कप् तावत्प्रतीक्षते' इति भाष्यादलौकिके वाक्ये 'बहु अस् गोमत् अस्' इति स्थितौ समासस्य कपश्च प्रवृत्त्या तदानीम् उगिदन्तस्त्रीवाचकप्रातिपदिकाभावान्न ङीप । असन्ते एव स्त्रीत्वविशिष्टान्यपदार्थवाचकत्वारोपात् अत एव 'बहुकुमारीकः'

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् । [ ४-१-२ ]

इति भाष्यप्रयोगे ह्रस्वोऽपि न, असन्तस्य कबन्तस्य वा समासत्वेन स्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाभावात् । न च वाक्यस्य सुबन्ततदादित्वाभावात् 'सुबन्तात्तद्धितोत्पत्तिरिति कुत्सितसूत्रस्थभाष्यविरोधः, सार्थकतद्धितेष्वेव तन्नियमेनात्यन्तस्वार्थिकप्रवृत्तौ बाधकाभावात् । तथा च समासान्तानामत्यन्तस्वार्थिकत्वेन तत्र 'ङ्याप्प्रातिपदिकात्' इत्यस्य नाधिकारः ।

वस्तुतस्तु पञ्चकं प्रातिपदिकार्थः । स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणोपस्थितिः । तथा हि–प्रथमं स्वार्थः=प्रवृत्तिनिमित्तम्, प्रवृत्तिनिमित्तलक्षणन्तु 'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् । यथा–घटत्वम्, ब्राह्मणत्वम् । निर्दुष्टप्रवृत्तिनिमित्तलक्षणन्तु—प्रातिपदिकविशिष्टत्वम् । वै० स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयप्रकारताश्रयत्वम्—स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्ना, पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रकारता तदभाववत्त्वमेतदुभयसम्बन्धेन । विशेष्यत्वाभावश्च—स्वसामानाधिकरण्य-स्वावच्छेदकत्वसामानाधिकरण्यैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन 'पार्थ एव धनुर्धर' इत्यादौ नाव्याप्तिरिति पञ्चोक्तिनः ।

तज्ज्ञानम्, ततस्तदाश्रयस्य ज्ञानम् । द्रव्यपदमाश्रयपरम् । तत आश्रयमात्रापेक्षत्वाल्लिङ्गज्ञानम्, ततः सजातीयपदार्थान्तरापेक्षसंख्याज्ञानम्, ततो विजातीयक्रियापेक्षकारकज्ञानम् । ततो बहिर्भूतकुत्सादियोगः । इति ज्ञानक्रमानुरोधेनैव तत्तत्प्रयुक्तकार्यप्रवृत्तेरौचित्येन सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्ते संख्याकारकापेक्षया सुपः पूर्वं स्वार्थद्रव्यलिङ्गापेक्षस्त्रीप्रत्यये जाते सुपि च सति तद्धितः स्यादिति स्त्रीप्रत्ययान्तात्तद्धितोत्पत्तिरिति न्यायसिद्धार्थानुवादकमेव ङ्याब्ग्रहणम् । न चैवं, बहुगोमतीकेत्यस्यापत्तिः, 'कपं तावत्प्रतीक्षते' इति भाष्यप्रामाण्यात् स्वार्थेन परिपूर्णं पदमर्थान्तरमाकाङ्क्षति, इति न्यायविषयाभावाच्च समासान्तेषु 'ङ्याप्प्रातिपदिकात्' इत्यस्य सुबन्तात्तद्धितोत्पत्तिरित्यस्य च त्यागेन स्त्रीप्रत्ययात्पूर्वं कपः प्रवृत्त्या बहुगोमत्का इत्यस्य सिद्धेः ।

तथा च स्त्रीप्रत्यये सुपि च कृते कुत्सिताद्यर्थे कनि 'आर्यिका' 'आर्यका' इति रूपद्वयस्य 'लोहिनिका' 'लोहितिका' इति रूपद्वयस्य च सिद्ध्या ङ्याब्ग्रहणं तदनुवादकं सत्स्पष्टार्थमेव । सार्थकतद्धितानामेव सुबन्तादुत्पत्त्या अत्यन्तस्वार्थिककनो ङ्यापः पूर्वमेव क्रमानुरोधेन प्रवृत्त्या 'आर्यिका' इत्येकमेव रूपम् । टापः प्राक् कप्रत्ययस्यैव प्रवृत्त्या आत्स्थानिकस्य अकारस्याभावेन 'उदीचाम्' इत्यस्याप्रवृत्तेः । 'लोहिनिका' लोहितिका, इति रूपद्वयन्तु भाष्यसम्मतम् 'लोहितान्लिङ्गबाधनं वा' इति वार्तिकबलात्पूर्वं ङीपि नत्वे कनि टापि च साध्यम् । लिङ्गबाधने च पूर्वं कनि लोहितिका इति ।

तद्धितोत्पत्तिरिति—समासान्त-तिप्रत्ययात्यन्तस्वार्थिकप्रत्ययभिन्न एव तद्धितोऽत्र ग्राह्यः । एतेषां सुबन्तादुत्पत्तौ प्रमाणाभावेनान्तरङ्गत्वात् स्त्रीप्रत्ययात्पूर्वं प्रवृत्तेः एतेन 'युवतीतिः' 'बहुगोमतीका' इति स्यादित्यपास्तम् ।

'स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्' इति सूत्रे समाहारद्वन्द्वः । अत्र एक एव द्वन्द्वस्तु न, द्वन्द्वविषये एकशेषस्य प्रवृत्त्या सरूपाणां भ्यामादीनामेकशेषापत्तेः । अतः प्रथमभ्याम्पर्यन्तं द्वन्द्वं कृत्वा ततो द्वितीयभ्यांपर्यन्तं द्वन्द्वं कृत्वा ततस्तृतीयभ्याम्पर्यन्तं द्वन्द्वं कृत्वा ततः प्रथमौस्पर्यन्तं द्वन्द्वं कृत्वा ततः सुप्पर्यन्तं द्वन्द्वं कृत्वा ततः सकलद्वन्द्वानां समाहारद्वन्द्वः ।

वस्तुतस्तु एतादृशागुरुभूतकल्पनापेक्षया पृथक्पदत्वमाश्रित्य सौत्रत्वाद्विभक्तेर्लुक् कल्पनमेव न्यायः, स्वादीनां' वारणाय सौत्रत्वस्यावश्यकत्वाच्च इत्युपाध्यायाः । किञ्च निर्विभक्तिकानुकरणभूतानि पृथक्पदान्येव । तथा सति स्त्वादिशङ्कापि न । अभेदानुकरणाच्च स्वादिः । पृथक्पदत्वं तु न, अगतिकं छान्दसत्वमाश्रित्य बहूनां लुक्कल्पने गौरवापत्तेः । इतरेतरयोगद्वन्द्वस्तु न, बहुवचनापत्तेः ।

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्यु । सुङस्योरुकारेकारौ जशटङपाश्चतः ।

ननु समासे पदान्तसकारस्य रुत्वाद्यापत्तिरिति चेन्न, 'उभयथा छन्दसि' इति, 'अयस्मयादीनि छन्दसि' इति वा भत्वात् ।

अत्र 'ङ्याप्प्रातिपदिकात्' इति, 'प्रत्ययः' इति 'परश्च' इति चाधिकृतम् । समाहारस्य न विधानम्, लक्ष्येऽदर्शनात्तत्सूत्रारम्भसामर्थ्याच्च । एकविंशतिः स्वादयः । तत्राधिकृतानां प्रत्येकं सम्बन्धः । तथा च ङ्याबन्तात्प्रातिपदिकाच्च परे स्वादयः स्युस्ते च प्रत्ययसंज्ञका इति ।

यद्यपि 'आद्युदात्तश्च, इत्यप्यधिकृतं तथापि तदत्र न सम्बध्यते 'अनुदात्तौ सुप्पितौ' इत्यनेन बाधात् ।

सुङस्योरिति—सोरुकारः 'अर्वणः त्रसावनञः' इत्यत्र विशेषणार्थः । तत्र 'असि' इति न्यासे सकारादिभिन्नार्थकत्वात्परथा 'अर्वन्तु' इति न सिद्ध्येत् । ङसेरिकारः 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्रा-स्याग्रहणार्थः । यदि तु 'एकवचनस्य च' इत्यत्र 'टा' इत्यस्य व्यावृत्तये पञ्चम्या इत्यनुवृत्त्या अदा-देशेन बाधात्पञ्चम्या ङस एव ग्रहणं स्यादित्युच्यते । तदा 'टाङसिङसाम्' 'ङसिङ्योः स्मात्स्मिनौ' इत्यनयोर्यथासंख्यान्वयसिद्ध्यर्थत्वं बोध्यम् । एतेन फलाभावादित्संज्ञा न स्यादित्यास्तम् । तथा च यत्र लोपे सति तद्वैयर्थ्यं तत्र नेत्संज्ञा, यत्र तु सार्थक्यं तत्रेत्संज्ञेति भावः ।

जशटङपा इति—जरासोर्जकारशकारौ 'जशः शी' 'तस्माच्छसो न' इत्यनयोर्विषयविभागाय। अन्यतरस्य निरनुबन्धकत्वे तु जसो जकाराभावे औ इत्यस्याव् स्यात् । ततश्च विभक्तेर्वकारान्ताऽपि सम्भाव्येत । 'नाज्झलौ' इत्यादिनिर्देशात्तदभावकल्पने तु ज्ञानगौरवम् । शसः शकाराभावे औटो डित्त्वसम्भावनया डित्त्वसामर्थ्यादभस्यापि टेर्लोपे लिहावित्याद्यसिद्धिः । औटष्टकारः सुट्प्रत्याहारार्थः 'सुडनपुंसकस्य' इति ।

टाटकारः 'टाङसि' इति विशेषणार्थः । तदभावे 'सुपां सु' इति विहितस्य आकारादेशस्यापि 'या सुरया' इत्यादाविनादेशापत्तिः । ङेप्रभृतीनां ङकारः 'घेर्ङिति' इत्यादौ ङित्कार्यार्थः ।

'घेः' इत्येव सूत्रमस्तु घेः सुपि गुण इत्युक्तावपि 'जसि च' इति 'अनुनासिकवर्णाघटितं यद्गुणाद्येकवचनं तद्भिन्नस्मिन्सुपि गुणश्चेत्तर्हि जस्येव' इति नियमेन तत्र दोषाभावेऽपि 'याडापः' इत्याद्यर्थं ङित्त्वमावश्यकम् । सुपः पकारस्तु प्रत्याहारार्थः ।

अत्र स्वादीनामर्थाकाङ्क्षायाम् यदि 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्येक-वाक्यतया प्रातिपदिकार्थगते एकत्वे, द्वित्वे, बहुत्वे वा विवक्षिते क्रमेण प्रथमाया एकवचनद्विवचन-बहुवचनानि स्युरित्यर्थस्तदा सर्वकारकगते एकत्वे प्रथमाया एकवचनं द्वित्वे द्विवचनम्, बहुत्वे बहु-वचनम् स्यात् । एवम् सर्वकारकगतेषु एकत्वादिषु द्वितीयादीनामेकवचनादीनि स्युः । इष्यते च अनभिहितकर्मगतैकत्वादिषु द्वितीयायाः अनभिहितकर्तृकरणगतैकत्वादिषु तृतीयाया एकवचनादीनी-त्येवं रूपेण । तच्च स्वादिसूत्रेण न सिध्यति ।

अतः 'पञ्चकं प्रातिपदिकार्थः' इति पक्षे सर्वेषु कारकेषु सर्वा विभक्तयोऽनेन स्युः । ततः द्विती-यादीनां कर्माद्यर्थेषु अनेनैव सिद्धतया 'कर्मणि द्वितीया' इत्यादीनि 'सिद्धे सत्यारभ्यमाणो विधिर्नियमाय कल्पते' इति न्यायेन 'कर्मणि द्वितीयैव द्वितीया कर्मण्येव वा' इत्येवं नियमार्थानि स्युः। ततो नियमसामर्थ्येन कर्मणि द्वितीयातिरिक्तानामागतानां सर्वासां विभक्तीनां तत्प्रकृतीनाञ्च निवृत्तिकल्पनया कर्मणि द्वितीयामात्रमवशिष्यते । एवं कर्त्रादर्थेष्वपि बोध्यम् ।

परन्त्वत्र पक्षे सर्वत्र सर्वासां विधानं नियमेन तन्निवर्तनञ्चेति 'विहितानां नियमः' इति पक्षे महागौरवम् । अतः स्वादिसूत्रे 'द्व्येकयोर्द्विवचनैकवचने' इत्यादीनाम्, 'कर्मणि द्वितीया' इत्यादीनाञ्चो-पस्थित्या एकवाक्यतया कर्मगतेषु एकत्वादिषु विवक्षितेषु एकत्वादिविशिष्टे कर्मणि विवक्षिते वा प्रातिपदिकात्परं द्वितीयाया एकवचनादयः स्युरित्येवं नियमविधानमेव युक्तम्, लाघवात् । नन्वेवं

विभक्तिश्च । [ १-४-१०४ ]

सुप्तिङौ विभक्तिसंज्ञौ स्तः ।

मन्येभ्यः स्वादयो न स्युः संख्याकर्मादेरभावादिति चेन्न, भाष्ये 'एकवचनम्' इत्येव सूत्रे कार्य्यम् एकग्रहणं न कर्तव्यम् । प्रातिपदिकादेकवचनं स्यादिति सामान्येन विधानम् । ततः 'द्व्येकयोर्द्विवचन-बहुवचने' इत्यनेन द्वित्वे द्विवचनेन बहुत्वे बहुवचनेन एकवचनस्य बाधात्परिशेषाद् द्वित्वबहुत्वयोरभावे एकवचनविधानेनादोषात् । अव्यये द्वित्वबहुत्वयोरभावादेकवचनम् ।

पञ्चकं प्रातिपदिकार्थश्च 'स्वार्थद्रव्यलिङ्गसंख्याकारकरूपः' । तत्र स्वार्थः प्रवृत्तिनिमित्तम् शाब्दबोधीयप्रकारताश्रयः, शाब्दबोधीयधर्मितानिरूपितप्रकारताभाववाँश्चेति यावत् । स च क्वचित् शब्दस्वरूपम्, जातिः, गुणः, क्रिया, द्रव्यं वा । द्रव्यपदेनाश्रय उच्यते, विशेष्य इति यावत् । स च जातिः, गुणः, द्रव्यं वा । शब्दस्वरूपेण विशिष्टा जातिर्यदा गवादिशब्देनोच्यते । तदा शब्द-स्वरूपं स्वार्थः ।

जातिस्तु विशेष्यत्वाद् द्रव्यम् 'गौः' इति । यदा जातिविशिष्टो गुण उच्यते तदा जातिः स्वार्थः । गुणो द्रव्यम् 'आश्रयः' परस्य शुक्लो गुण न इति यथा । यदा गुणविशिष्टं द्रव्यमुच्यते, शुक्लः पट इति अत्र गुणः स्वार्थः विशेष्यत्वात्पटो द्रव्यम् । यदा द्रव्यं द्रव्यान्तरस्य विशेषणम् 'यष्टीः प्रवेशय' इत्यादौ । अत्र यष्टिमान् पुरुष उच्यते । अत्र यष्टिः स्वार्थः पुरुषो द्रव्यं विशेष्यम् ।

क्वचित्सम्बन्धोऽपि स्वार्थः, यथा 'दण्डी' इति । अत्र दण्डपुरुषयोः सम्बन्धः स्वार्थः। पुरुषो द्रव्यम् ।

क्वचित् क्रिया स्वार्थः । क्रियाकारकसम्बन्धो वा यथा 'पाचकः' इत्यत्र पाकक्रिया स्वार्थः क्रियाश्रयो द्रव्यम् । अत्र क्रियाकारकसम्बन्धः स्वार्थ इत्यन्ये । एकः पट इत्यत्र एकत्वं स्वार्थः, तदाश्रयः पटो द्रव्यम् । शब्दानां पुंस्त्वादिविशिष्टेऽपि शक्तिः । तत्र पटादिशब्दानां पुंस्त्वादपि प्रातिपदिकार्थः ।

पञ्चकार्थपक्षे संख्याकर्मादयः प्रातिपदिकार्थाः । विभक्तयस्तु तद्द्योतिकाः ।

'न विभक्तौ तुस्माः' इत्यादिष्वाकाङ्क्षितां विभक्तिसंज्ञामाह—'विभक्तिश्च' इति । 'सुपः' इति सूत्रात्सुब्ग्रहणम्, 'तिङस्त्रीणि' इत्यतस्तिङ्ग्रहणञ्चानुवर्तते प्रथमया विपरिणम्यते च । तदाह—सुप्ति-ङाविति । सुबिति सुपः पकारेण तिङिति महिङो ङकारेण प्रत्याहारः प्रत्यासन्नत्वान्न तु कपः पकारेण, विप्रकृष्टत्वात् । सप्तम्या बहुवचनस्यापि न, तिङ्साहचर्य्येण स्वरूपाग्रहणात् । ननु प्रत्या-हारग्रहणे प्रत्येकमेव विभक्तिसंज्ञा स्यात्प्रत्येकं सुप्संज्ञासत्त्वात्तथा च 'प्रथमयोः पूर्वसवर्णः' इत्यत्र औजसोरेव ग्रहणं स्यान्न तु प्रथमाद्वितीययोरतस्त्रीणि त्रीणीत्यनुवर्त्य त्रयाणामेव विभक्तिसंज्ञा विधेया । एवं सति प्रथमयोरित्यनेन प्रथमाद्वितीययोर्ग्रहणमपि सिध्यति ।

न च 'अष्टन आ विभक्तौ' इत्यात्वानापत्तिः, प्रत्ययत्रयस्यैव विभक्तित्वेन तत्परकत्वस्य दुर्लभ-त्वादिति वाच्यम्, 'अष्टन आ' इति सूत्रारम्भसामर्थ्येन विभक्तिशब्देन समुदायावयवस्यापि ग्रहणज्ञाप-नादिति चेन्न, सूत्रारम्भसामर्थ्येन विभक्तिपदस्य समुदायावयवपरकत्वज्ञापने अनुवृत्तौ च गौरवेण त्रीणीत्यस्याननुवृत्तिरेव लाघवात् । न चाननुवृत्तौ 'प्रथमयोः' इत्यत्र दोषः, 'तस्माच्छसो न' इति ज्ञापकेन प्रथमाद्वितीययोर्ग्रहणज्ञापनात् ।

चपदं पुरुषवचनसंज्ञाभिः समावेशार्थम् । अन्यथा आकडारीयत्वेन विभक्त्यादिसंज्ञानां पर्या-यत्वं स्यात् । तथा सति 'रामेभ्यः, भवामः' इत्यादौ विभक्तिसंज्ञाया अभावपक्षे भ्यसो मतश्च सकारस्ये-त्वलोपापत्तिः, 'न विभक्तौ' इति निषेधाप्राप्तेः ।

तत्र 'सु' 'औ' 'जस्' इत्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः।

सुपः। [ ३-४-१०३ ]

सुपस्त्राणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः।

---

अतः पूर्वम् 'सुपः' इति सूत्रमव्याख्याय 'विभक्तिश्च' इति सूत्रव्याख्यानं वृत्त्याद्यनुरोधेन। वस्तुतस्तु 'सुपः' इति व्याख्यायैवास्य व्याख्यानं युक्तम्। 'विभक्तिश्च' इत्यकृत्वा तत्र तत्र विभक्तिपदस्थाने सुप्तिङ्पदं न्यस्यताम्। न चैवं न्यासे यत्र, तत्र, इत्यादौ त्यदाद्यनापत्तिः, सुप्तिङ्परकत्वाभावादिति वाच्यम्, 'प्राग्दिशः सुप्' इति न्यासेनादोषात्। न च प्राग्दिशीयानां सुप्संज्ञायां 'यर्हि, तर्हि' इत्यत्र 'सुपि च' इति दीर्घापत्तिः, 'इदमो ऽर्हिल्' इति न्यासेनादोषात्।

न च 'एतर्हि' इत्यादीनामसिद्धौ रादित्वाभावेन 'एतेतौ रथोः' इत्यस्याप्रवृत्तेरिति वाच्यम्, 'एतैतावरथे' इति न्यस्य अकाररेफथकारादावादेशविधानेनादोषात्। अरथमिति समाहारद्वन्द्वः। न च प्राग्देशीयानां सुप्त्वे 'सुपो धातु' इति लुगापत्तिः, अत्रादिविधानसामर्थ्यात्। न च यत्र, इवाचरति 'यत्रति' इत्यादौ यत्रेत्यस्य पदत्वेन 'अतो गुणे' इति पररूपानापत्तिः, 'सुप्तिङन्तम्' इति सूत्रे तिङ् साहचर्य्येण तद्धितभिन्नस्यैव सुपो ग्रहणादिति चेन्न, 'सदा' इत्यादौ 'सर्वस्य सुपि' इत्याद्युदात्तत्वापत्त्या, कतरशब्दात् ण्यन्तात्क्विपि ततस्तसिलि 'कतस्तः' इत्यादौ तसः सुप्त्वेन 'रोः सुपि' इति नियमेन सत्वानापत्त्या, 'यत्रैव' इत्यादौ सुपोऽलोपेन त्रलादेश्चरितार्थ्यात् 'यत्र' इत्यादौ त्रलो लुगापत्त्या च प्राग्देशीयानां सुप्संज्ञायाः कर्तुमशक्यत्वात्।

तत्रेति—घटकत्वं सप्तम्यर्थः, तत्पदं स्वादिपरम्, स्वादिघटकानां सु-औ-जस् इत्यादीनामित्यर्थः। विषयत्वस्य सप्तम्यर्थत्वे घटकत्वस्यापि विषयत्वात्। सु-औ-जस् इति अभेदानुकरणं निर्विभक्तिकम्।

त्रिकाणामिति—त्रयाणां प्रत्ययानां समूहास्त्रिकाणि तेषां त्रिकाणाम् इत्यर्थः, 'अचित्तहस्ति' इति समूहे ठक्। त्रिघटितसमूहास्त्रिकाणि।

प्रथमादय इति—सु-औ जस् प्रथमा, अम् औट् शस् द्वितीया, टा भ्याम् भ्यस् तृतीया, ङे भ्याम् भ्यस् चतुर्थी, ङसि भ्याम् भ्यस् पञ्चमी, ङस् ओस् आम् षष्ठी, ङि ओस् सुप् सप्तमी इति सप्त संज्ञाः।

प्राचामिति—पूर्वाचार्य्याणामित्यर्थः। आचार्य्येऽर्थे प्रागादिशब्दः कोषे नोपलभ्यते। न वेति सूत्रभाष्ये 'आचार्य्यदेशशीलनेन च तद्विषयता' इति वार्तिकमुपादाय 'प्राचामवृद्धात् फिन् बहुलम्' प्राक्षु चैव हि फिन् स्यात्' इत्युक्त्या प्राक्शब्दो देशवाचीत्येव प्रतीयते, न त्वाचार्य्यवाची। प्रागादिशब्दो दिग्देशकालवाची इति 'दिग्देशकाले पूर्वादौ प्रागुदक् प्रत्यगादयः' इत्यमरात्, 'दिग्देशकालेष्व स्तातिः' इति पाणिनिसूत्राच्च प्रतीयते। स च द्विविधः—अव्ययम् अनव्ययञ्च। तत्रानव्ययप्रागादिशब्दाः 'तात्स्थ्यात्ताच्छब्द्यम्, इति न्यायेन कालादिवाचिन एव तद्वाचाचार्य्यबोधका अपि। प्राक्छब्दः पूर्वकालवाची। लक्षणया तु प्राचामित्यस्य पूर्वाचार्य्याणामित्यर्थः। इहापीति—पाणिनीयव्याकरणेऽपीत्यर्थः। व्यवहार इति—अर्थविशेषबोधनाय शब्दविशेषप्रयोग इत्यर्थः।

'सुपः' इति। सुप इति—प्रत्याहारात्षष्ठी। 'तान्येकवचनद्विवचनबहुवचनान्येकशः' इति सूत्रं तानिपदरहितमनुवर्तते। एकश इति—एकैकमित्यर्थः। 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्। शसेव वीप्साया उक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन 'नित्यवीप्सयोः' इति द्वित्वं न। यत्तु 'सर्वस्य द्वे' इति भाष्ये 'एकैकशो ददाति' इति प्रयोगात्, सूत्रे 'एकशः' इति दर्शनादुभयं साध्विति तत्र वीप्सायां द्वित्वे कृतेऽल्पार्थकैकैकशब्दात् 'बह्वल्पार्थात्' इति स्वार्थिकशस्प्रत्ययस्य तत्र सत्त्वात्। 'तिङस्त्रीणि' इत्यतस्त्रीणि त्रीणीत्यनुवर्तते। तदाह—सुपस्त्रीणीति। एकश इति त्रयाणाम् प्रत्येकमित्यर्थः।

### द्व्येकयोर्द्विवचनैकवचने [ १-४-२२ ]

द्वित्वैकत्वयोरेते स्तः ।

### बहुषु बहुवचनम् [ १-४-२१ ]

बहुत्वे एतत्स्यात् ।

'द्व्येकयोर्द्विवचनैकवचने' इति । अत्र द्व्येकपदं सौत्रत्वाद् द्वित्वैकत्वपरम् । न तु द्वित्वादिविशिष्टपरम् बहुवचनापत्तेः । लोके तु 'आदशतः संख्याः संख्येये' इति कोशात् 'न हि आकाराच्चा संख्याऽस्ति' इति 'संख्ययाव्ययासन्न' इति सूत्रभाष्याच्च दशपदघटितपर्यन्तसंख्येयपरा एव । तदाह— द्वित्वैकत्वयोरिति । क्वचित् संख्येयगतसंख्याया आरोपेण दशावधिकाऽपि संख्यापरापि, अत एव कस्य द्वित्वे, केषां बहुत्वे इत्यर्थे बहुषु बहुवचनमिति भाष्ये 'कयोर्द्वयोः, केषां बहुषु' इति संगच्छते । अत्र एकग्रहणमव्ययेभ्यः स्वादिसिद्धये भाष्यकृता प्रत्याख्यातम् । तथा हि— एकवचनम्' इत्येकं सूत्रम् । विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनम् इत्यर्थः । 'द्विबह्वोर्द्विवचनबहुवचने इत्यपरम् । द्वित्वबहुत्वयोरेकवचनं बाधित्वा द्विवचनबहुवचने' स्याताम् । द्वित्वबहुत्वयोरभावे एकवचनम् यत्रैकत्वम् यत्र च कापि संख्या नास्ति उभयत्र द्वित्वबहुत्वयोरभाव उभयत्र चैकवचनमिति संख्यारहितार्थकाव्ययादपि एकवचनोत्पत्तौ बाधकाभावः ।

एवं न्यासे 'एकवचनम्' इति सूत्रं विनाऽपि द्वित्वबहुत्वयोरभावे स्वादिसूत्रेणैकवचने सिद्धे एकवचनमिति सूत्रं सर्वथाऽप्राप्तप्रापणार्थम् । तेन कर्मत्वाद्यभावेऽव्ययाद् द्वितीयादीनामेकवचनमपि । अत एव 'अव्ययादाप् सुपः' इति प्रत्याहारग्रहणं चरितार्थम् अन्यथा 'आप्सोः' इत्येव वदेत् ।

नन्वेवम् कर्मत्वाद्यविवक्षायाम् पचतिकल्पाय पचतिकल्पात् इत्याद्यपि स्यादिष्यते तु प्रथमाद्वितीयातृतीयानाम् एकवचनमेवेति चेन्न, तत्र कर्तृकर्मत्वयोरेकत्वस्य च सत्त्वेन सर्वथाऽप्राप्तेरभावात् ।

'बहुषु बहुवचनम्' इति । बहुशब्दोऽत्र त्रित्वादिपरार्द्धान्तसंख्यानां व्यापको यो धर्मो बहुत्वं तत्परः न चैवं बहुत्वस्यैकत्वात् 'बहुषु' इति बहुवचनानुपपत्तिरिति चेन्न, बहुत्वे बहुत्वस्यारोपेण तदुपपत्तेः । तेन वैपुल्यरूपबहुत्ववद्वाक्याद् एकवचनमेव 'बहुः पर्वतः' इति । विशालः पर्वत इत्यर्थः ।

ननु एकस्त्रीबोधतात्पर्येण 'दाराः' इति बहुवचनं न स्यात् तत्र बहुत्वाभावादिति चेन्न अवयवगतबहुत्वस्यावयविन्यारोपाद्बहुवचनोपपत्तेः ।

एतेन एकत्वादिप्रकारकबोधजनकत्वेन विवक्षिते एकवचनादय इति सूचितम् । तच्चैकत्वादिपारमार्थिकमपारमार्थिकं वा । आरोपश्च कोशवृद्धव्यवहारानुसारेणैव न तु स्वातन्त्र्येण । अत एव कपिञ्जलाधिकरणे 'कपिञ्जलानालभेत्' इत्यनेन त्रयाणामेव ग्रहणं संगच्छते । 'दाराः' इत्यत्र 'दाराः पुंभूम्नि चाक्षताः' इति कोशात्, एकस्मिन्नपि 'गुरवः समागताः' इत्यत्र वृद्धव्यवहारादारोपः । तदुक्तं भाष्ये—'दृष्टिविप्रयोगाच्च' दृश्यते ह्यपि विप्रयोगः । अक्षिणी मे दर्शनीयानि पादा मे सुकुमारा इति । वृद्धव्यवहारादत्र द्वित्ववत्यपि बहुत्वारोपेण प्रयोग इति भावः ।

वस्तुतस्तु बहुवचनबोध्यं बहुत्वं न संख्या, नियतविषयकपरिच्छेद ( ज्ञान ) हेतोरेव संख्यात्वात् ।

बहुत्वन्तु न तथा । न च बहुत्वस्यासंख्यात्वे 'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्' इति भाष्योक्तिविरोध इति वाच्यम्, आरोपितसंख्यात्वस्य भाष्यकृत्सम्मतत्वेन तथोक्तेः । अत एव 'बहुगण' इति भाष्ये 'यदयमसंख्यां संख्यामाह —'संख्यवदयं भवति' इत्युक्तिः संगच्छते । तच्च बहुत्वं त्रित्वादिसंख्याव्यापकमखण्डोपाधिरूपं धर्मान्तरं वा । न च द्वौ घटौ त्रयो वा इति संशये

रुत्वविसर्गौ रामः ।

सरूपाणामेकशेष एकविभक्तौ । [ १-२-६४ ]

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

'घटाः सन्ति' इत्युक्तौ त्रित्वप्रकारकसंशयः प्रतिबध्यते । स च न सम्भवति त्रित्वप्रकारकसंशयं प्रति त्रित्वप्रकारकनिश्चयस्यैव प्रतिबन्धकतया बहुत्वप्रकारकनिश्चयसत्त्वेऽपि त्रित्वप्रकारकनिश्चयाभावादिति वाच्यम्, बहुत्वस्यापेक्षाबुद्धिविशेषान्यतया यदा अपेक्षाबुद्धिविशेषजन्यबहुत्वप्रकारकं प्रत्यक्षं तदा त्रित्वप्रकारकप्रत्यक्षसामग्र्या अपि कल्पनेन तज्जन्यत्रित्वप्रकारकनिश्चयस्य सत्त्वेन प्रतिबन्धोपपत्तेः । अत एव कपिञ्जलाधिकरणे 'कपिञ्जलानालभेत' इत्यनेन त्रयाणामेव ग्रहणं संगच्छते । न च बहुत्वस्याखण्डोपाधित्वेऽभाववत्स्वरूपसम्बन्धेन प्रत्येकवृत्तितया यत्किञ्चिद्व्यक्त्यभिप्रायेणापि 'घटाः' इति प्रयोगापत्तिरिति वाच्यम्, बहुत्वस्य त्रित्वादिव्याप्तिविशिष्टपर्याप्तेरेव सम्बन्धत्वोपगमादित्यत्र विस्तरः ।

रुत्वविसर्गाविति—'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥

इति श्रुत्यनुरोधेन रमन्ते योगिनोऽस्मिन्निति विग्रहे रमधातोः 'करणाधिकरणयोश्च' इत्यधिकारे 'हलश्च' इत्यधिकरणे घञि कृदन्तत्वात्प्रातिपदिकत्वे 'यदि तु अव्युत्पन्नः संज्ञाशब्दो वा रामशब्दस्तदा अर्थवदिति प्रातिपदिकत्वमिति तन्न युक्तम्, अव्युत्पत्तिपक्षस्य 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति भाष्योक्त्या उणाद्यन्तप्रातिपदिकमात्रविषयकत्वात् । यदपि 'गन्धर्वं शरभो रामः सृमयो गवयः शशः । 'इत्यादयो मृगेन्द्राद्याः गवाद्या' पशुजातय इति कोशाद्यदि रूढोऽयं रामशब्दः पशौ प्रयुज्यते तदा अर्थवदिति प्रातिपदिकत्वमिति तदपि न, रूढत्वेऽपि कृदन्तत्वानपहारात् । सुप्रत्यये उकारेत्संज्ञायां लोपे च 'सुप्तिङन्तम्' इति पदत्वे 'ससजुषो रुः' इति सस्य रुत्वे 'उपदेशेऽजनुनासिक इत्' इति इत्संज्ञया रुत्वस्य त्रिपादीस्थत्वेनासिद्धतया रोरभावेनोकारस्य इत्संज्ञालोपयोरभावेन, स्थानिवत्सूत्रदृष्ट्याऽपि असिद्धतया रेफे सुप्त्वाभावेन च पदान्तरेफाभावाद्विसर्गो न स्यादिति तु न, रोरुकारस्यानुनासिकत्वसामर्थ्यादिरवदृष्ट्याऽसिद्धत्वाभावकल्पनेन इत्संज्ञालोपयोः सुलभत्वात् ।

'इदुदुपधस्य चाप्रत्ययस्य' इति सूत्रे प्रत्ययग्रहणसामर्थ्येन स्थानिवत्सूत्रं प्रति त्रिपाद्या असिद्धत्वाभावकल्पनया रेफस्य सुप्त्वेन पदत्वात्, यथोद्देशपक्षे आनुमानिकस्थान्यादेशभावेन 'रामस्' इत्येतद्गतपदत्वस्यातिदेशात्, एकदेशविकृतन्यायेन पदत्वाच्च । यत्तु 'न मु ने' इत्यत्र 'न' इति विभागेन क्वचिदसिद्धत्वाभाव इति तन्न, भाष्ये योगविभागादर्शनात् । एकदेशविकृतन्यायेन सुबन्तत्वन्तु दुर्लभम्, सुप्त्वस्य परिच्छिन्नपरिमाणतया अक्तपरिमाणघटितधर्मानयने तन्न्यायाप्रवृत्तेः ।

अत एव एकोनशतमुद्राविशिष्टमञ्जूषायाम् शतमुद्राविशिष्टमञ्जूषात्वस्य नारोपस्तेन । तथा चोक्तप्रकारेण रान्तस्य पदतया 'खरवसानयोः' इति विसर्गे 'रामः' इति सिध्यति । न च विसर्गस्याकारोपरि पाठाद्ध्वेन 'आद् गुणः' इति गुणः स्यादिति वाच्यम्, गुणे कर्त्तव्ये विसर्गस्यासिद्धत्वात् ।

'सरूपाणामेकशेष एकविभक्तौ' इति । प्रातिपदिकार्थगतद्वित्वविवक्षायाम् 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति न्यायेन 'प्रत्यर्थशब्दनिवेशान्नैकेनानेकस्याभिधानम्' इति भाष्येण च यावन्तोऽर्थास्तावन्तः शब्दाः प्रयोक्तव्या इत्येकेन रामशब्देन राघवबलरामयोर्बोधो न स्यादिति रामशब्दद्वयस्य प्रयोगे प्राप्ते एकस्य शेषार्थमन्यस्य लोपार्थञ्चेदं सूत्रम् ।

समानं रूपं येषां प्रातिपदिकानां तानि सरूपाणि इति 'ज्योतिर्जनपदरात्रि' इत्यनेन रूपशब्दे उत्तरपदे परे समानशब्दस्य सादेशः। यानीति नपुंसकनिर्देशः प्रातिपदिकानामेवैकशेष इति द्योतनाय। रूपेण सह वर्तन्ते इति सरूपाणि इति तु न, सर्वेषां शब्दानां रूपेण सह विद्यमानत्वेन व्यभिचाराभावाद्धसरूपग्रहणवैयर्थ्यापत्तेः। रूपञ्चात्र कर्णेन्द्रियग्राह्यं शब्दवृत्त्यानुपूर्वीरूपं धर्मं गृह्यते। न चक्षुर्ग्राह्यं शुक्लादिरूपम् प्रातिपदिके तस्यासम्भवात्। एकशेष इत्यत्र एकपदं लुप्तविभक्तिकमसमस्तम्, तत्र यदि शिष्यते यः स शेषः कर्मणि घञ् चेत्तदा एकश्चासौ शेषश्चेति कर्मधारयः। यदा भावे घञ् तदा षष्ठीसमासः। सरूपाणामित्यस्य निर्धार्यमाणे एकपदार्थेऽन्वयेन 'सविशेषणानां वृत्तिर्नेति' निषेधेन समासाप्राप्तेः। वस्तुतस्तु येन रूपेण निर्धारणं तद्रूपे एव निर्धारणषष्ठ्यर्थसम्बन्धेन प्रकृत्यर्थसमुदायस्यान्वयः। तथा च शेषत्वेन एकस्य निर्धार्यमाणतया शेषत्वे एव सरूपाणामित्यस्यान्वयः। शेषपदार्थस्य च विशेष्यत्वेन 'राजपुरुषः सुन्दरः' इतिवद् विशेष्यस्य सविशेषणत्वेऽपि समासो भवत्येव।

अत एव 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगग्रहणं चारितार्थम्' अन्यथा 'पुरुषो व्याघ्र इव शूरः' इत्यत्र शूरस्य पुरुषविशेषणतया समासाप्राप्त्या सामान्याप्रयोगग्रहणवैयर्थ्यं स्पष्टमेव। तदेव व्यर्थीभूय ज्ञापयति—विशेष्यस्य सविशेषणत्वे समासो भवत्येवेति।

निर्धारणषष्ठीप्रकृत्यर्थस्य जाति-गुण-क्रिया-संज्ञाविशिष्टस्य सरूपारब्धसमुदायस्य स्वघटकवृत्तित्वजात्यादिविशिष्टेतरयावदवृत्तित्वैतदुभयसम्बन्धेन निर्धारणकरणीभूतधर्मेऽन्वयः। 'नृणां द्विजः श्रेष्ठः' इत्यत्र श्रेष्ठत्वे, 'सरूपाणामेकशेषः' इत्यत्र शेषत्वेऽन्वयः। 'वृद्धो यूना' इत्यत्र एवकारोऽपकृष्यते। एकविभक्तावित्यस्य अव्यवहितपूर्ववृत्तित्वसम्बन्धेन सारूप्येऽन्वयः। एवकारार्थश्च इतरयोगः, व्यवच्छेद (अभावः) श्च। तत्र इतरपदार्थैकदेशे भेदे प्रतियोगितया सारूप्यस्यान्वयः। सारूप्यप्रतियोगिकभेदवद्वैरूप्यसम्बन्धाभाववत्सारूप्यं तद्वदेकविभक्त्यव्यवहितपूर्वत्वविशिष्टं प्रातिपदिकं तदारब्धसमुदायघटकानामेकः शिष्यते इत्यर्थः। इतरनिवृत्तिपूर्वकमवस्थानं शेषः। एकोऽवतिष्ठतेऽन्ये लुप्यन्ते इत्यर्थः। एकविभक्तौ परतः सरूपाणामेव दृष्टानामेकः शिष्यते इति फलितम्।

रूपग्रहणाभावे 'समानानामेकशेष' इत्युच्यमाने यत्रैव सर्वं समानं शब्दोऽर्थश्च तत्रैव स्याद् 'वृक्षाः' इति। इह न स्याद् 'अक्षाः' पादाः, माषाः, इति। रूपग्रहणसत्त्वे तु न दोषः, अर्थभेदेऽपि रूपैक्यात्। एकशेष इत्यत्र एकग्रहणाभावे द्वियह्वोरपि शेषः स्यात्। शेषग्रहणाभावे 'सरूपाणामेकः' इत्युक्तौ सरूपाणां स्थाने एक आदेशः प्रसज्यते। तथा सति अशेः क्वनि अश्वशब्दो निरस्वरेणाद्युदात्तः, शेषनिघातेनानुदात्तश्च। उदात्तद्वयघटितस्य 'अश्वः' इत्यादेशः प्रसज्येत। एवम् अनुदात्तद्वयघटितोऽप्यादेशः कदाचित्स्यात्।

एकविभक्तौ परत एकशेष इति तु नार्थः। तथा सति यस्यां विभक्तौ परत एकशेषः प्रत्यासत्त्या तस्यां विभक्तावेव सारूप्यमपेक्षितं स्यादिति जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्भ्यामादावेकशेषापत्तिः, भ्यामादौ सारूप्यस्यैव सत्त्वात्। 'विभक्तिः सारूप्येणाश्रीयते। अनैमित्तिक एकशेषः' इति। एवेत्यस्यापकर्षणेन तु जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः, औजसादिषु वैरूप्यात्। जननीवाचिनः 'मातरौ' मातरः, इति। परिच्छेत्तृवाचिनः 'मातारौ' मातारः, इति। यद्यपि कतिपयविभक्तिषु उभयोर्मातृशब्दयोः सारूप्यमेव, तथापि 'एकस्यामपि विभक्तौ परतः विरूपाणि यानि न दृष्टानि तेषामेकशेष इत्यर्थो विवक्षितः। एतद्द्योतयितुमेव एकपदम्। एवकारापकर्षसिद्धार्थकथनपरम् एकग्रहणं स्पष्टार्थमेवेति केचित्। अन्ये तु एकग्रहणाभावे विभक्तौ यानि सरूपाणि तेषामेकः शिष्यते इत्युक्तौ स्वसा च स्वसारौ च इति 'स्वसारः' इति न स्यात्, विभक्तिपदेन स्वादोर्ग्रहणेन तत्र च वैरूप्यसत्त्वेन एकशेषाप्रवृत्तेः। एवम् 'स्वसरि च स्वस्रोश्चेति स्वसृषु' इत्यत्रापि बोध्यम्। एकग्रहणसत्त्वे तु न दोषः, काप्येकविभक्तौ तत्र वैरूप्यादर्शनात्। यदि तु 'विभक्तौ' इत्यत्र एकत्वं विवक्ष्यते तदैकग्रहणं स्पष्टार्थम्। केचित्तु एकग्रहणमेकैकविभक्तावित्यर्थलाभार्थम्। तेन सकलविभक्तावित्यर्थलाभः, तथाचैवकारापकर्षो व्यर्थः।

अत्र 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे' इत्यतो द्वन्द्वे इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सरूपाणामेकशेष इति व्याख्येयम्। तेन 'देवानां देवो 'देवदेवः' राज्ञां राजा' 'राजराजः' इत्यादौ नैकशेषः, द्वन्द्वविषयत्वाभावात्। सहविवक्षाया एव द्वन्द्वविषयत्वात्। 'शेषे' इत्यनुवर्त्य द्वन्द्वस्य भाष्यकृतोक्तवाच्यस्य समासान्तरं नोक्तं सामर्थ्यञ्चास्ति स एव शेषः। स च एकधर्मावच्छिन्नस्य एकसम्बन्धेन एकधर्मावच्छिन्नेऽन्वयरूपसहविवक्षायामेव सम्भवति। तथा च 'द्वन्द्वापवाद एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्योक्त्या 'इदितो नुम्' इति निर्देशेन च एकशेषस्य सहविवक्षाविषयत्वं सिद्धम्। यद्यप्यनैमित्तिकोऽयमेकशेषः, सुबुत्पत्त्यनन्तरभविष्यद्द्वन्द्वात्प्रागेव भवति, तथापि यदि एकशेषो नाभविष्यत्तदा प्रत्येकं सुपि सति द्वन्द्वोऽभविष्यत् सति त्वेकशेषे द्वन्द्वो न जात इत्यपवादविषये यथा उत्सर्गो न प्रवर्तते तथा एकशेषविषये द्वन्द्वो न भवतीत्यपवादसादृश्यात्साम्भावनिकापवादत्वाद्वा द्वन्द्वापवादोऽयमेकशेष इति व्यवहारः।

समाहारद्वन्द्वविषये तु नैकशेषः, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति सूत्रेण विकल्पेनैकवद्भावविधानात्। अन्यथा समाहारविषये एकशेषं कृत्वा एकवद्भावस्य, इतरेतरयोगविषये एकशेषे कृते द्विवचनादेश्च विकल्पेन सिद्ध्या एकवद्भावविधानं व्यर्थीभूय ज्ञापयति 'समाहारद्वन्द्वविषये नैकशेषः' इति। तथा च इतरेतरयोगद्वन्द्वविषये एकशेषे द्विवचनादिसिद्धावपि एकवचनस्यापि सिद्ध्यर्थं विकल्पेनैकशेषविधानं चरितार्थम्।

न च इतरेतरयोगद्वन्द्वविषये नैकशेष इति ज्ञापनेन द्विवचनादिसिद्धावपि एकवचनासिद्ध्यर्थं सूत्रं चरितार्थमिति वाच्यम्, 'यजुष्येकेषाम्' इति निर्देशेन 'इतरेतरयोगद्वन्द्वविषये नैकशेष' इत्यस्य ज्ञापयितुमशक्यत्वात्। समाहारद्वन्द्वविषये एकशेषे 'एकस्य' इति निर्देशस्यैव प्राप्तेः। तथा च समाहारद्वन्द्वविषये एकशेषविषयपदानामनभिधानमेव। एतेन 'घटघटम्' इति स्यादित्यपास्तम्।

न च विरूपस्थले 'घटकलशौ' इति द्वन्द्वापत्तिः, 'विरूपाणामपि समानार्थानाम्' इत्येकशेषप्रकरणे वक्ष्यमाणत्वात्। यदि तु रूप्यते बुध्यते इति रूपमर्थः। समानं रूपमर्थो येषां तान्यपि सरूपाणि इत्यर्थ आश्रीयते तदा सूत्रेणैव तन्त्रेणोभयोरेकशेष इति वार्त्तिकं न कर्तव्यम्।

ननु एकश्च एकश्च'एकौ' द्वौ च द्वौ च 'द्वौ' इति स्यादिति चेन्न, संख्याया अर्थासंप्रत्ययादेकशेषाप्रवृत्तेः। न हि 'एकौ' द्वावित्यर्थो गम्यते। यत्र तु अर्थो गम्यते, तत्र भवत्येकशेषः, विंशतिश्च विंशतिश्च 'विंशती' इति। यत्रार्थः प्रतीयते तदर्थे शब्दान्तरं चास्ति तत्रैकशेषो भवति। यत्रार्थो न प्रतीयते शब्दान्तरं चास्ति तत्र न भवत्येकशेषः। तदुक्तं भाष्ये—'संख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चानेकशेषः। न ह्येकावित्यनेनार्थो गम्यते। ... अन्यपदार्थत्वाच्च। एकश्चेत्यस्य द्वावित्यर्थः। द्वौ च द्वौ चेत्यस्य चत्वार इत्यर्थः'। अर्थो न गम्यते, शब्दान्तरञ्चास्ति अतो नैकशेषः।

'अन्यपदार्थेऽप्येकशेषो भवति। तद्यथा 'विंशतिश्च विंशतिश्च विंशती इति' इति। 'विंशति' इत्येकशेषोदाहरणादेव 'एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः' इति शेखरे उक्तम्। विरूपाणां तु भवत्येव, यथा 'द्वौ च दश च द्वादश' इति।

ननु 'सरूपाणामेकशेष एकविभक्तौ' इत्यत्र 'सरूपाणाम्' इति पदेऽपि सरूपाणि च सरूपाणि चेति सरूपाणि। तेषां सरूपाणाम् इत्येकशेषो दृश्यते। स च सम्भवति सूत्रोच्चारणात्प्राग्वाक्यार्थबोधाभावेन स्वस्मिन्स्वप्रवृत्त्यसम्भवादिति वाच्यम्, 'उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते' इति न्यायेन स्वस्मिन् स्वप्रवृत्तेरावश्यकत्वात्, सूत्रप्रणेतुस्तदर्थज्ञानसत्त्वेन कृतैकशेषस्योच्चारणसम्भवाच्च।

अन्यथा 'तुल्यास्य' इत्यत्र सवर्णदीर्घः, 'अर्थवधातुः' इत्यत्र प्रातिपदिकत्वम्, 'प्रत्ययः परश्च' इत्यत्र सोः प्रत्ययत्वम्, 'ससजुषोरुः' इत्यत्र रुत्वम्, 'खरवसानयोर्विसर्जनीयः' इत्यत्र विसर्गश्च न

सिध्येत्। 'स्वाध्यायो ( वेदो ) ऽध्येतव्यः' 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतेर्यथा स्वस्मिन्नपि प्रवृत्तिस्तथैकशेषादेः स्वस्मिन्प्रवृत्तौ बाधकाभावात्।

एतेन 'अइउण्' इति सूत्रे 'आद् गुणः' इत्यादिसन्धिकार्यं कुतो नेत्याशङ्कायाम्, वर्णोपदेश-कालेऽजादिसंज्ञानामसिद्धेऽजादिपदार्थज्ञानाभावेन सन्धिर्नेत्यपास्तम्, वर्णोपदेशे हल्संज्ञायामजादि-प्रत्याहारे च निष्पन्ने प्रवर्त्तमानानां गुणादीनाम् 'उपेन्द्रः' इत्यादाविवोद्देश्यतावच्छेदकाक्रान्ते वर्णस-मम्नायेऽपि प्रवृत्तेरावश्यकत्वात्। ननु 'सकृदुच्चरितन्यायेन शिष्यमाणमेकं प्रातिपदिकमेकमेवार्थं बोधयेदिति द्वित्वादिविशिष्टस्य बोधाभावेन द्विवचनाद्यनुपपत्तिरिति चेन्न, आनुमानिकस्थान्यादेशभावेन यः शिष्यते तस्य लुप्यमानार्थाभिधायित्वात्। अत एवैकशेषस्य परार्थाभिधानं वृत्तिरिति वृत्तिलक्षणा-क्रान्तत्वात् 'कृत्तद्धितसमासैकशेष' इति वृत्तिषु परिगणनम्। अत एव 'लिट्, घुक्' इत्यादौ कर्त्रर्थके किपि कर्त्रर्थप्रतीतिः।

अत्र पञ्च पक्षाः सन्ति। (१) यदैकशब्दः 'तेनैकदिक्' इतिवत्समानवचनः। प्रत्येकशब्दा-द्विभक्तौ कृतायां विभक्तौ परत एकः शिष्यते—यथा 'वृक्षस्, वृक्षस्, वृक्षस्' इति स्थितौ द्वयोर्लोपे लुप्यमानादिवहितविभक्तेरत्र पक्षे श्रवणापत्तिः।

(२) यदा 'तिष्यपुनर्वस्वोः' इत्यतो 'द्वन्द्वे' इत्यनुवर्त्य 'कृते' इत्यध्याहृत्य 'सरूपाणां द्वन्द्वे कृते समासादेकविभक्तौ परत एकः शिष्यते इत्यर्थस्तदा 'पन्थानौ, पन्थानः' इत्यत्र 'ऋक्-पूरब्धूः' इति समासान्तापत्तिर्दोषः। 'सर्वे' इत्यत्र 'विभाषा जसि' इति विकल्पापत्तिः, 'सर्वेषाम्' इत्यत्र 'द्वन्द्वे च' इति निषेधापत्तिश्चात्र पक्षे दोषः।

यत्तु 'करौ, कराः' इत्यत्रैकवद्भावापत्तिश्चेति तन्न, 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्यादीनां समाहारद्वन्द्वनियामकत्वेन तत्र चैकशेषाप्रवृत्तेः।

( ३ ) 'ह्रस्वो नपुंसके' इत्यतः 'प्रातिपदिकस्य' इत्यनुवर्तते। षष्ठीबहुवचनेन विपरिणम्यते। 'विभक्तौ' इति सारूप्ये उपलक्षणम्। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषां सरूपाणां प्रतिपदिकानामेकः शिष्यते। अनैमित्तिकोऽयमेकशेषः। अयमेव पक्षो निर्दोषः सिद्धान्तश्च।

( ४ ) यदा विभज्यते प्रातिपदिकार्थोऽनयेति व्युत्पत्त्या विभक्तिशब्दः कारकवचनः। तदुक्तं भाष्ये 'नेदं पारिभाषिक्या विभक्तेर्ग्रहणम्। किं तर्हि अन्वर्थग्रहणं विभागो विभक्तिरिति' अत्र कैयटः— 'कर्मादिकारकमिह विभक्तिशब्देनोच्यते' इति। तत्र कस्मिंश्चित्कारके विवक्षिते तन्निमित्ततया विभक्त्या भाव्यमित्येकविभक्त्यन्तानां सरूपाणामेकशेषः। यथा 'वृक्षस्' इति स्थितौ वृक्षस् इत्यस्य शेषे यद्यपि 'वृक्षः' इति सिध्यति, तथापि वृक्षौ, वृक्षाः, इत्यादिद्विवचनबहुवचनान्तानामसिद्धिः। यत्तु सहविव-क्षायां सर्वे शब्दा अनेकव्यक्तिवाचकाः शिष्यमाणशब्देन यावन्तोऽर्था अभिधीयन्ते तावदर्थानामेकशेषा-त्प्रागपि सर्वे शब्दा वाचका इति द्विवचनबहुवचनान्तानामेवैकशेष इति विभक्त्यन्तानामेकशेषपक्षेऽपि न दोष इति तन्न, वृत्त्यर्थस्य प्रत्येकपदबोध्यत्वे वृत्तेः प्रागेव तावदर्थवाचकत्वस्यावश्यकतया 'राज्ञः पुरुषः' इत्यत्र राजपदेनैव राजसम्बन्धविशिष्टपुरुषस्याभिधानादुक्तार्थानामप्रयोग इति न्यायेन षष्ठ्य-नापत्त्या षष्ठीसमासानापत्तेः। 'प्लक्षश्च न्यग्रोधश्च' प्लक्षादिपदस्य न्यग्रोधवाचकत्वस्य वृद्धव्यवहार-विरुद्धत्वाच्च। तदुक्तम्भाष्ये 'सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च' इति।

( ५ ) समुदायादेकविभक्तौ परतः सरूपाणामेकः शिष्यते इति पञ्चमः। अत्र पक्षे जननी-परिच्छेत्तृवाचिनोर्मातृशब्दयोरेकशेषापत्तिः। एकविभक्ताविल्यावर्त्य एवकारश्चापकृष्य एकविभक्तौ परतः सारूप्यमेव येषां तेषामेकविभक्तौ परत एकशेष इति पञ्चमः। अत्रावृत्तौ प्रमाणाभावः, परत्वेन निमित्तत्वे फलाभावो गौरवञ्च। तस्मात्तृतीयपक्ष एव ज्यायान्।

अन्ये तु एवकारापकर्षे न मानम्। अत एव 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः' इति प्रातिपदिकैकशेषे एव प्रतिषेध उक्तो न तु विभक्त्यन्तैकशेषे। न चैवं विभक्त्यन्तैकशेषे श्यामा-

दावेकशेषापत्तिरिति पक्षभेदेन 'मातृमातृभ्याम्' इत्यस्यासाधुत्वापत्तिः, वार्तिकस्य सर्वनामस्थानमात्रविषयकत्वे प्रातिपदिकैकशेषविभक्त्यन्तैकशेषपक्षयोः फलभेदाभावात्। भ्यामादौ सारूप्ये सत्युभयपक्षेऽप्येकशेषस्येष्टत्वात्।

न च 'मातृमात्रोः' इति वार्तिकप्रयोगे एकशेषाकरणादेवशब्दापकर्षो ध्वन्यत इति वाच्यम्, 'मात्रोः प्रतिषेधः' इत्युक्तौ समानार्थकेऽपि निषेधापत्तेः। 'मातृमात्रोः' इत्युक्तौ तु मातृद्वयग्रहणसामर्थ्याद्भिन्नार्थकयोरेव ग्रहणमिति न दोषः। यद्यपि मातृद्वयग्रहणसामर्थ्यस्य समानार्थकयोरेव ग्रहणमिति कल्पनयाऽपि चारितार्थ्यं वक्तुं शक्यते तथापि 'माता च जनयित्री मातारौ च धान्यस्य मातृमातारः' इति वार्तिकोदाहरणाद्भिन्नार्थकयोरेव ग्रहणात्।

वस्तुतस्तूदाहरणस्यैव निर्णायकत्वे 'मात्रोः' इति पाठेऽपि न दोषः, परन्तु 'मातृमात्रोः' इति निर्देशस्यार्षत्वेनापि समाधातुं शक्यतया तेन भाष्यानुक्तैवकारापकर्षकल्पनमप्रमाणमेव।

ननु सकृदुच्चारणेनानेकार्थबोधनरूपतन्त्रेण सिद्धेरिदं व्यर्थम्। तन्त्रकारणन्तु शब्दानां तुल्यरूपता। अत्र रूपशब्देन आनुपूर्वी, अर्थश्च गृह्यते। तेन समानार्थकविरूपशब्दस्थलेऽपि तन्त्रेण प्रयोगसिद्धया 'विरूपाणाम्' इति वार्तिकमपि न शिष्यम् इति सिद्धम्। यथा अक्षो भज्यताम्, भुज्यताम्, दीव्यताम्' इति। एकशेषस्थलेऽपि 'अक्षा भज्यन्ताम्, भुज्यन्ताम्, दीव्यन्ताम्' इत्यत्र तन्त्रेण प्रयोगः स्यात्।

तन्त्रं द्वेधा—यत्र शब्दस्य विवक्षितार्थसंग्राहकं शब्दान्तरं न सम्भवति तत्र शब्दतन्त्रम्। यथा अक्षा इत्यत्र। अत्र कमलाक्ष–देवनाक्ष–रथाङ्गानां त्रयाणां वाचकं किञ्चित्पदान्तरं नास्ति। यत्र विवक्षितार्थवाचकं पदान्तरं विद्यते तत्रार्थतन्त्रम्। यथा 'घटाः' इति। अत्र घटपर्य्यायाः कलशादिशब्दाः सन्ति। नानाप्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधो यत्र तत्र शब्दतन्त्रम्। एकप्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधो यत्र पदे तत्रार्थतन्त्रमिति वा। न च तन्त्रेण प्रयोगे जनयित्रीपरिच्छेत्तृवाचिशब्दस्थलेऽपि एकेनोभयोर्बोधापत्तिरिति वाच्यम्, तन्त्रेण सिद्धिमाश्रित्य सूत्रप्रत्याख्यानपरभाष्येण तादृशस्थले एकस्यानेकार्थबोधनेऽनभिधानकल्पनात्।

मनोरमाकारास्तु तन्त्रेण सिद्धे सूत्रस्य नियमार्थत्वम् 'एकविभक्तौ यानि सरूपाण्येव दृष्टानि तत्रैवैकेनैवानेकार्थबोधनं नानेकेने'ति। तथा च 'घटघटघटाः' 'अक्षाक्षाक्षाः' इति न प्रयोग इत्याहुः। असहविवक्षायामपि तन्त्रम्, अत एव विभिन्नक्रियान्वयेऽपि 'अक्षाः' इति प्रयोगः।

एकशब्देऽपरसरूपत्वञ्च—स्वाघटकाघटितत्वसम्बन्धेन परस्परविशिष्टत्वेरूपम्। सर–रसशब्दयोर्न परस्परविशिष्टत्वम्, स्वः सरशब्दस्तदघटकोऽस् तद्घटितत्वस्य रसशब्दे सत्त्वात्। यदा स्वो रसशब्दस्तदघटकः 'अर्' इति तद्घटितत्वमेव सरशब्दे इति न सरूपत्वं तयोः। अर्थयोः सरूपत्वमपि पूर्वोक्तमेव। तत्र स्वाघटकाघटितत्वमित्यस्य स्वाघटकवृत्तिधर्मावच्छिन्नाघटितत्वमित्यर्थः। तेन न एकस्य रामशब्दस्याघटको द्वितीयरामशब्दघटकरेफादिस्तद्घटितत्वमादाय सारूप्यभङ्गः।

यत्तु 'व्यक्तिः पदार्थ' इति पक्षे प्रतिव्यक्त्यनेकशब्दोच्चारणे प्रसक्ते एकेनैवानेका व्यक्तयो बोधनीया इत्येतदर्थमिदं सूत्रम्। जातिः पदार्थ इति पक्षे तु एकेनैव शब्देन तज्जात्याश्रयविवक्षितसकलव्यक्तिबोधसम्भवे तत्पक्षे व्यर्थं सूत्रमिति तन्न, 'अक्षाः' इत्यत्र जातेरप्यनेकत्वेन एकजात्याश्रयानेकव्यक्तिबोधसम्भवेऽपि अनेकजात्याश्रयसकलव्यक्तिबोधाय तत्पक्षेऽपि सूत्रस्यावश्यकत्वात्।

तन्त्राश्रयणे तु एकेनानेकव्यक्तिबोधवदनेकजात्याश्रयस्यापि बोधोपपत्तावुभयपक्षेऽपि सूत्रं व्यर्थम् इति स्पष्टं भाष्यादौ।

राम-राम इत्यत्र 'सरूपाणाम्' इत्येकस्य लोपे द्वित्वविवक्षायां द्विवचने 'राम औ' इत्यत्र 'वृद्धिरेचि' इति वृद्धौ प्राप्तायां तां बाधित्वा 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते तस्य 'नादिचि' इति निषेधे 'वृद्धिरेचि' इति अकारौकारयोरौकाररूपवृद्धौ 'रामौ' इति रूपम्।

'प्रथमयोः पूर्वसवर्णः' 'नादिचि' 'वृद्धिरेचि' । रामौ ।

चुटू । [ १-३-७ ]

प्रत्ययाद्यौ चुटू इतौ स्तः । इति जस्येत्संज्ञायाम् ।

अत्र यथोद्देशपक्षे 'राम औ' इति स्थितौ भविष्यति किञ्चिदनेन प्रयोजनम् इति ज्ञानमात्रेण सुबन्तत्वात्पदसंज्ञा स्यात् । तच्च पदत्वम् 'राम औ' इत्यस्य स्थाने 'रामौ' इत्यादेश इत्यानुमानिक-स्थान्यादेशभावमादाय स्थानिवत्त्वेन 'रामौ' इत्यस्य पदत्वं सिध्यति । कार्यकालपक्षे तु परादिवद्भावेन 'औ' इत्यस्य सुप्त्वम्, एकदेशविकृतन्यायेन 'राम्' इत्यस्य प्रकृतित्वमिति सुबन्ततदादित्वात्पदत्वम् ।

पूर्वसवर्ण इतीति—अस्य पूर्वसवर्णे दीर्घे प्राप्ते इति शेषः ।

'नादिचि' इतीति—अस्य पूर्वसवर्णदीर्घनिषेध इति शेषः ।

वृद्धिरेचीति—अस्य वृद्धिरिति शेषः । नच 'भ्रष्टावसरो न कार्यभाग् भवति' इति न्यायेन वृद्धेर्दीर्घेण बाधादवसरो भ्रष्ट इति पुनर्वृद्धिर्न स्यादिति वाच्यम्, 'तौ सत्' इत्यत्र वृद्धेर्दर्शनेन भ्रष्टाव-सरन्यायस्यात्राप्रवृत्तिकल्पनात् । किञ्च शास्त्रस्यावसरो नाम—लक्ष्ये उद्देश्यतावच्छेदकाक्रान्तिः । सा च नादिचीति दीर्घे निषिद्धे वृद्धिरेचीत्यस्य एजव्यवहितपूर्वत्वविशिष्टावर्णत्वरूपोद्देश्यतावच्छेदकधर्मोऽ स्त्येवेति नात्र भ्रष्टावसरन्यायविषयः । राम, राम, राम इत्यत्रैकशेषे कृते बहुत्वविवक्षया 'स्वौज-समौट्' इति जसि जस्येत्त्वार्थमाह—

'चुटू' इति—'उपदेशेऽजनुनासिक इत्' इत्यतः 'इत्' इति, "आदिर्ञिटुडवः" इत्यतः 'आदिः' इति चानुवृत्ते द्विवचनान्तत्वेन विपरिणम्येते । 'षः प्रत्ययस्य' इत्यतः 'प्रत्ययस्य' इति चानु वर्तते । च्विः, जस्, ञ्यः, टः, डः, णः, इत्युदाहरणानि । तत्र छस्येयादेशेन, ठस्येका, ढस्यैयादेशेन झस्यान्ताद्यादेशेन च बाधान्नेत्त्वम् ।

चुञ्चुप्–चणपोः टीटजादिषु वलि लोपेन यकारप्रश्लेषादादित्वाभावात्, 'चुटुपः प्रत्ययस्य' इत्येकयोगे एव कर्तव्ये योगविभागसामर्थ्येनास्यानित्यत्वाच्च क्वचिन्नेत्त्वम् । प्रत्ययस्येति किम् चामरः । आदिरिति किम् कमठः । अवटीटः । अत्रैव भाष्ये 'इर उपसंख्यानम्' इत्युक्तम् । इरिति समुदायस्य इत्संज्ञा भवतीत्यर्थः । फलन्तु 'इरितो वा' 'अभिदत्' इति । यदि तु इकारस्य 'उपदेशेऽच्' इति, रेफस्य 'हलन्त्यम्' इतीत्त्वम् । 'इरितो वा' इत्यस्य इश्च रश्च इरौ यस्येति बहुव्रीहिरिति इरितो धातो-रित्यर्थः । नच 'इदितो नुम्' इति नुम्, इद्विधेः कुम्भीधान्यन्यायानुगतत्वात् । कुम्भीधान्यः श्रोत्रिय इत्युच्यते । यस्य पुनः कुम्भ्यां चान्यत्र च धान्यं नासौ कुम्भीधान्यः । एवं यस्य इकार एव इत् तस्य नुम् । यद्वा 'न दृशः' इति क्सनिषेधो ज्ञापयति न इरितो नुम् भवतीति । अन्यथा नुमि इगुपधत्वा-भावेन क्सादेशस्याप्राप्त्या तन्निषेधो व्यर्थं एव स्यात् । यद्वा 'इदितः' इत्यस्य इत्संज्ञक इत् इदित् तस्य इत्संज्ञकेकारान्तस्य धातोर्नुम् । इरित्तु रेफान्त इति न दोषः । यद्वा 'इरितो वा' ज्ञापकादेवेरिति समुदायस्य इत्संज्ञेति न दोष इत्युच्यते तदा 'इर इत्संज्ञा वाच्या' इति वार्तिकं व्यर्थम् । इति भाष्ये स्पष्टम् ।

'आदिर्ञिटुडवः' इत्यत आदिरिति 'षः प्रत्ययस्य च' इत्यतः प्रत्ययस्येति 'उपदेशे-ऽजनुनासिकः' इत्यत इदिति चानुवर्तते । आदिरिति, इदिति च द्विवचनान्तत्वेन विपरिणम्यते । तदाह—प्रत्ययाद्याविति । प्रत्ययाद्यौ किम् 'वाचाटः' 'आलजाटचौ बहुभाषिणि' इत्याटच्प्रत्यये टस्ये-त्त्वं मा भूत् । नच टस्येत्त्वलोपयोः सवर्णदीर्घे लकारोत्तराकारवैयर्थ्यम् इति तत्सामर्थ्यात् टस्य नेत्त्वं, विधिशास्त्रदीर्घस्य बाधकल्पनापेक्षयाऽप्रधानस्येद्विधायकस्यैव बाधौचित्यादितिवाच्यम्, विनिगमना-विरहेण संहितासंज्ञाया अपि बाधापत्त्या 'वाच अ' इत्यस्यापरोः टस्येत्वलोपयोर्दीर्घे च 'अचः परस्मिन्' इति पञ्चमीसमासेन स्थानिवत्तया भिसि 'वाचैः' इति सिद्ध्येऽकारस्य चारितार्थ्येन तत्सा-मर्थ्येन इत्त्वस्य बाधयितुमशक्यत्वाच्च । प्रत्ययग्रहणाभावे चामरेऽपीत्त्वं स्यात् ।

न विभक्तौ तुस्माः । [ १–३–४ ]

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सकारस्य नेत्त्वम् ।

अतो गुणे । [ ६–१–९७ ]

ननु 'विद्याचणः, विद्याचुञ्चुः' इत्यत्र चणप्चुञ्चुपोश्चस्य प्रत्ययादित्वादित्वं स्यादिति चेन्न, चुञ्चुप्चणपोर्यकारप्रश्लेषेण चस्यादित्वाभावात् । तदुक्तं भाष्ये 'यकारादी चुञ्चुप्चणपौ । किं यकारो न श्रूयते लुप्तनिर्दिष्टो यकारः । सूत्रे 'लोपो व्योः' इति यलोपः । यकारप्रश्लेषफलं चस्येत्त्वलोपाभाव एव । न च यस्य लोपे चस्यादित्वादित्वं स्यादिति वाच्यम्, यकारप्रश्लेषसामर्थ्येन प्रत्ययबोधकस्यादेरेव इत्त्व विधानात्, प्रत्ययबोधकत्वस्य च सूत्रस्थयकारघटिते एव सत्त्वात् । पित्त्वसामर्थ्याच्चस्य-नेत्त्वमिति तु न, पित्त्वस्य पर्यायेण अनुदात्तत्वविधानेनापि चारितार्थ्यात् ।

अन्ये तु 'चुटुपः प्रत्ययस्यादेः' इत्येकयोगे एव कर्त्तव्ये 'चुटू' इति योगविभागसामर्थ्यादिदमनित्यं तेन चुञ्चुप्चणपोर्नेत्त्वम् इत्याहुः । अनेकत्र यकारप्रश्लेषापेक्षयाऽनित्यत्वे एव लाघवम् । किन्तु भाष्यानुक्तत्वमेवात्र मते दोषः ।

इत्संज्ञायामिति —तस्य लोपः, इति जस्य लोप इति शेषः ।

उच्चारणसामर्थ्याज्जस्य नेत्त्वमिति तु न, 'जसशसौ' इत्यत्र विशेषणतया चारितार्थ्येन उच्चारणसामर्थ्यस्य वक्तुमशक्यत्वात् । 'हलन्त्यम्' इत्यनेन जसः सकारस्येत्संज्ञायां प्राप्तायां तन्निषेधकसूत्रमाह—

'न विभक्तौ तुस्माः' इति । तुश्च सश्च मश्चेतीतरेतरयोगद्वन्द्वः । इदित्यनुवर्तते जसन्तत्वेन विपरिणम्यते च । तदाह—विभक्तिस्था इति । अत्र विभक्तौ परतः तुस्मा इतो न इति तु नार्थः, सूत्रवैयर्थ्यापत्तेः । स्थितिक्रियानिरूपिताधिकरणे सप्तमी । इतीति—अनेनेत्यर्थः, निषेधादिति शेषः । तवर्गोदाहरणम्—'रामात्' 'सर्वस्मिन्' 'पचेरन्' इति । नन्वत्र उपदेशावस्थायामेवेत्संज्ञा प्राप्नोति, निषेधश्चादेशोत्तरं स्थानिवत्त्वे सति विभक्तित्वे प्राप्नोतीत्यन्तरङ्गत्वादित्त्वापत्तिरिति चेन्न, प्रतिषेधसामर्थ्यादनित्यपि विभक्तित्वे प्रतिषेधाङ्गीकारात् । तदुक्तम्—'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते ।' इति । न च नकारतकारोच्चारणसामर्थ्यान्नेत्त्वम्, 'ञ्नित्यादिर्नित्यम्' 'तित्स्वरितम्' इति फलस्य सत्त्वात् । ननु जसः सकारस्येत्त्वे फलाभावान्नेत्त्वम् इति चेन्न, 'रामाः' इत्यादौ फलाभावेऽपि 'लिहः दिवः' इत्यादौ 'सिति च' इति पदत्वे ढत्वाद्यापत्तेः । मकारोदाहरणम् 'रामम्' इति 'अभवताम्' इति च । मित्त्वेऽन्त्यादचः परः स्यात् ।

अयञ्च प्रतिषेधो विभक्तौ तद्धिते न भवति । अत्र ज्ञापकञ्च 'इदमस्थमुः' इत्यत्रोकारानुबन्धकरणम् । अन्यथा 'प्राग्दिशो विभक्तिः' इत्यधिकारेण थमो विभक्तित्वेन 'न विभक्तौ' इति निषेधेनैव मस्येत्त्वाभावे सिद्धे तत्परित्राणार्थमुकारकरणं व्यर्थं स्यात् । तत्फलम् 'किमोऽत्' इति अप्रत्यये 'क्व' इत्यत्र तस्येत्त्वे तित्स्वरसिद्धिः । न चैवम् 'दानीमो मकारस्येत्त्वापत्तिः, 'दानीञ्च' इत्यत्रान्तियकारप्रश्लेषेण मकारस्योपदेशेऽन्त्यत्वाभावात् । 'एवं तर्हि यकारान्तो दानीं करिष्यते ।......लुप्तनिर्दिष्टो यकारः' इति भाष्योक्तेः । यद्वा थमोरुदित्त्वेनास्य निषेधस्यानित्यत्वज्ञापनात् 'ज्ञापकसिद्धं' न सर्वत्र इति परिभाषया दानीमि निषेधाप्रवृत्तेश्च ।

विभक्तौ किम्—'अहलोण्यंत्' 'ऊर्णाया युस्' 'रुदादिभ्यः अम्' इत्येतेषु इत्त्वनिषेधो मा भूद । व्यति निषेधे तित्स्वरानापत्तिः । युसि निषेधे भत्वादाकारलोपापत्तिः, अमि निषेधेऽन्त्यादचः परत्वासिद्धिः । तुस्मा इति किम्—जसादौ जकारादेरित्त्वनिषेधाभावः ।

'अतो गुणे' इति 'एङि पररूपम्' इत्यतः पररूपमिति, 'उस्यपदान्तादि'त्यत अपदान्तादिति चानुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । अत इति पञ्चम्यन्तम्, अपदान्तादित्यस्य विशेष्यञ्च ।

अपदान्तादकाराद् गुणे परतः पररूपमेकादेशः स्यात् ।

इति प्राप्ते । परत्वात्पूर्वसवर्णदीर्घः । 'अतो गुणे' इति हि 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' इति न्यायेन 'अकः सवर्णे दीर्घः' इत्यस्यैवापवादः । न तु 'प्रथमयोः–' इत्यस्यापि । रामाः ।

**एकवचनं संबुद्धिः [ २–३–४९ ]**

संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ।

---

तदाह—अपदान्तादकारादिति । पररूपमिति—अस्य पूर्वपरयोरिति शेषः । न च परत्वाद्दीर्घयणगुणयोर्यथा 'अकः सवर्णे' इत्यपवादस्तथा वृद्धिसवर्णदीर्घयोर्निरवकाशत्वेनास्याप्यपवादत्वात् । न च 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषया वृद्धेरेवापवादः स्यान्न दीर्घस्येति वाच्यम्, 'गुणे' इति ग्रहणेन दीर्घस्याप्यपवादत्वकल्पनात् । तथा हि 'अतः' इति सूत्रे 'एङि' इत्यनुवर्त्य अपदान्तादत एङि पररूपमित्येव सिद्धे गुणग्रहणसामार्थ्याद् गुणमात्रेऽस्य प्रवृत्तिज्ञापनेन दीर्घस्याप्यपवादत्वसिद्धेः ।

अतोऽकाररूपे गुणे परत उदाहरणम्—'सः इति' 'भवन्ति' इति च । एकारे परतः 'एधे' इत्यादि । ननु अपदान्तादकारादोकारे परत उदाहरणासम्भव इति चेन्न, 'तनोतेर्डं उः सन्वच्च' ( उ० ४ पा० ५२ सू० ) इति निष्पन्नतितउशब्दस्य सम्बोधने 'ह्रस्वस्य गुणः' इति उकारस्य गुणे 'तित ओ' अत्र पररूपे 'हे तितो' इत्युदाहरणसम्भवात् ।

नन्वेमपि 'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्याप्यपवादः स्यात्तथा च 'रामाः' इत्यादेरसिद्धिरत आह–पुरस्तादपवादा इति–अयमभावो यत्रानेके बाध्यास्तत्राष्टाध्याय्याम्—अपवादशास्त्रापेक्षया बाध्यव्यवधानशून्यो य उत्सर्गः प्रत्यासत्तिन्यायेन तस्यैवापवादो बाधको न बाध्यव्यवहितोत्सर्गस्य । तथा च 'अतो गुणे' इति स्वापेक्षया बाध्यव्यवधानशून्यस्य 'अकः सवर्णे' इत्यस्यैव बाधको न तु बाध्येन सवर्णदीर्घेण व्यवहितस्य 'प्रथमयोः' इत्यस्य । एवञ्च 'अतो गुणे' इति सूत्रम् 'अकः सवर्णे' इति च परत्वाद् बाधित्वा 'प्रथमयोः' इति दीर्घे 'रामाः' इत्यादेः सिद्धिः । पुरस्तात्—पूर्वं पठिता इत्यर्थः । अनन्तरान्=बाध्यव्यवधानरहितान् 'विधीन्=सूत्राणि । अनन्तरानित्यस्य व्यवधानरहितानिति तु नार्थः, सूत्रत्रयेण व्यवहितस्य 'अकः सवर्णे' इत्यस्यापि बाधानापत्तेः ।

यत्तु 'पुरस्ताद्' इति न्यायस्य नायं विषयः, 'भवन्ति' इत्यादावप्राप्तेऽपि पूर्वसवर्णदीर्घे पूर्वरूपस्यारम्भात्' इति तन्न, एवं सति 'सः' इत्यादावप्राप्तायामपि वृद्धौ पूर्वरूपस्यारम्भेण वृद्ध्यादेरप्यपवादत्वानापत्तेः । अस्य पुरस्तादिति न्यायविषयत्वे 'नादिचि' इत्यत्र इज्ग्रहणं लिङ्गम् । पररूपेण पूर्वसवर्णदीर्घबाधे हि 'रामाः, रामान्' इत्यादौ पररूपप्रवृत्त्या दीर्घाप्राप्त्या अचीत्यनुवृत्तावपि दोषाभावेनेज्ग्रहणं व्यर्थीभूय परिभाषां ज्ञापयति । ज्ञापितायान्त्वस्यां पररूपं बाधित्वा प्रथमयोरिति प्राप्तदीर्घनिषेधाभावाय इज्ग्रहणं चरितार्थम् । इत्यन्यत्र विस्तरः ।

रामा इति—अस्य रुत्वविसर्गयोः कृतयोरित्यादिः ।

सम्बोधने 'हे राम स्' इति स्थितौ 'एङ्- ह्रस्वात्सम्बुद्धेः' इत्यस्य प्रवृत्तये सम्बुद्धिपदार्थमाह—

'एकवचनं सम्बुद्धिः' इति । 'प्रातिपदिकार्थ' इत्यतः पञ्चम्यन्तत्वेन परिणंस्यमानं प्रथमेति, 'सम्बोधने च' इत्यतः 'सम्बोधने' इति चानुवर्त्तते । तदाह—सम्बोधन इति—'सुः सम्बुद्धिः' इति सूचितम् । सम्बोधने प्रथमाया एव विधानात् 'तदनुबन्धकग्रहणे' इत्यतश्च सप्तमीबहुवचनस्य न संज्ञा । प्रत्ययग्रहणेनैकवचनान्तस्य स्वन्तस्य वा न संज्ञा, सम्बुद्धौ परतो ह्रस्वान्ताङ्गस्य गुणविधानसामर्थ्यात् । सुरित्यनुनासिकगुणकस्यैव पाठात्, प्रतिपदोक्तपरिभाषया सम्बोधने इति पदमुख्यार्थ्यं विहितप्रथमाया एव ग्रहणाच्च । 'प्रत्ययः' इत्यादिनिर्देशेन 'रामः' इत्यादौ दोषवारणन्तु न वरम्, गौरवात् ।

एङ्ह्रस्वात्सम्बुद्धेः [ ६-१-६९ ]

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत्। सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणा-न्नेह। हे कतरत् कुलेति।

---

यत्तु केचित्तु 'सुः सम्बुद्धिः' इत्येव वक्तव्ये एकवचनग्रहणम् आमन्त्रितसंज्ञावत्स्वन्तस्य सम्बुद्धिसंज्ञावारणार्थम्। तेन नात्र तदन्तस्य संज्ञेति तन्न, तदन्तस्य संज्ञाया ज्ञापकात्, 'संज्ञाविधौ' इति निषेधाच्च वारणात्। सम्बुद्धिप्रदेशमाह—

'एङ्ह्रस्वात्सम्बुद्धेः' इति। 'हल्ङ्याब्भ्यः' इत्यतो 'हल्' इति, 'लोपो व्योः' इत्यतो 'लोपः' इति चानुवर्तते। हलिति सामानाधिकरण्यानुरोधाद्भावघञन्तमपि लोपपदमत्र कर्मप्रत्ययान्तत्वेन विपरिणम्यते। तदाह—हल् लुप्यते इति। सम्बुद्धेरिति। अवयवावयविभावसम्बन्धे षष्ठी। तस्याश्च हलि अन्वयः 'सम्बुद्धेरवयवो यो हल्' इति सम्बुद्धेः प्रत्ययत्वात्प्रत्ययस्य च प्रकृतिनियतत्वात्तेना-ङ्गमाक्षिप्यते। तदङ्गम् एङ्ह्रस्वादिति विशेषणानुरोधात्पञ्चम्यन्तम्। 'येन विधिः' इति विशेषणस्य तदन्तसंज्ञात्वे 'एङन्ताद्ध्रस्वान्ताच्चाङ्गात्' इत्यर्थो लभ्यते। अङ्गादिति च सम्बुद्ध्यवयवेन हला सम्ब-ध्यते। तथा च एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परं यत्सम्बुद्ध्यवयवभूतं हल् तल्लुप्यते इत्यर्थः फलति। तदाह—एङन्तादित्यादिना। ननु अस्याङ्गाधिकारस्थत्वाभावात्कथम् 'अङ्गाद्' इति विशेष्यलाभः। किञ्च 'एङो ह्रस्वाच्च परं यत्सम्बुद्ध्यवयवभूतं हल् तल्लुप्यते' इत्यर्थेनैव निर्वाहे अङ्गादित्यस्य प्रयोजना-भाव इत्याशङ्कायामाह—

सम्बुद्ध्याक्षिप्तस्येति—सम्बुद्धेः प्रत्ययत्वात् प्रकृतेः परस्यैव प्रत्ययसंज्ञाविधानात् प्रत्ययेन पूर्वत्वविशिष्टमङ्गमाक्षिप्यते। तच्चाङ्गम् एङा ह्रस्वेन च विशेष्यते। तथा च एङन्ताद्ध्रस्वान्ता-च्चाङ्गात्परं यत्सम्बुद्ध्यवयवभूतं हल् तल्लुप्यते इत्यर्थे अङ्गस्य एङ्ह्रस्वाभ्यां विशेषणात् इह लोपो नेत्यर्थः। इहपदार्थमाह—

'हे कतरत्' इति—नपुंसकात्कतरशब्दात्सम्बुद्धौ सौ कृते तस्य 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इति अद्डादेशे नपुंसके सोः सर्वनामस्थानसंज्ञाया अभावेन 'यचि भम्' इति भत्वे डित्वात् 'टेः' इति रेफोत्तराकारस्य लोपे 'वावसाने' इति दस्य चर्त्वे 'कतरत्' इति रूपम्, यदि अङ्गलोपो न स्यात्तदा 'एङो ह्रस्वाच्च परं यत्सम्बुद्ध्यवयवभूतं हल् तल्लुप्यते' इत्यर्थेन 'कतरत्' इत्यत्र दकाररूपस्य हलो ह्रस्वादकारात्परत्वात्सम्बुद्ध्यवयवत्वाच्च लोपः प्रसज्येत।

यदा तु एङन्तं ह्रस्वान्तञ्चाङ्गमपेक्ष्यते तदा टिलोपे रेफान्तं न तु ह्रस्वान्तमिति तल्लोपः। यच्च अदोऽकारमादाय ह्रस्वान्तम् 'कतर' इति न तदङ्गम्, प्रत्ययाव्यवहितपूर्वत्वाभावात्। अदः प्रत्ययत्वेन तदव्यवहितपूर्वत्वस्य रेफान्ते एव सत्त्वात्। ननु एङो ह्रस्वाच्च परा या सम्बुद्धिस्तदवयवो हल् लुप्यते इत्येवार्थोऽस्तु। प्रकृते 'अद्' इति सम्बुद्धे रेफात्परत्वेन न दोष इत्यत आह—'कुल' इति—'कुल स्' इति स्थितौ सोरमि कृते परत्वात् 'एङ्ह्रस्वात्' इति लोपं बाधित्वा 'अमि पूर्वः' इति पूर्वरूपे 'हे कुलम्' इति जाते ह्रस्वात्परस्याः सम्बुद्धेरभावान्मलोपानापत्तिः। न च परादिवद्भावेन 'अम्' इत्यस्य सम्बुद्धित्वम्, एवमपि तस्य रेफात्परत्वेन लोपाप्राप्तेः। न च पूर्वान्तवद्भावेन ह्रस्वत्वम्, उभयत आश्रयणे अन्तादिवद्भावनिषेधात्, एकस्यैव स्वघटिते परस्मिन् स्वनिरूपितपरत्वस्य न्यायविरुद्धत्वाच्च।

एतेन सम्बुद्ध्याक्षिप्तस्याङ्गस्य प्रत्यासत्त्या सम्बुद्धावेवान्वय उचितः। तथा च एङन्ताद्ध्र-स्वान्ताच्चाङ्गात्परा या सम्बुद्धिस्तदवयवो हल् लुप्यत इत्यर्थः स्यात्तथा च 'राम' इत्यादिसिद्धौ हलि

अङ्गान्वयोऽसङ्गत इत्यपास्तम्, एतादृशार्थस्वीकारे 'हे कुल' इत्यस्यासिद्धेः, उभयतोऽतिदेशाश्रयणे-नैवास्य सिद्धेर्वक्तव्यतया तत्र चान्तादिवद्भावस्य निषेधात्।

तदुक्तम्—'एवमप्येकादेशे कृते व्यपवर्गा ( पौर्वापर्यं ) भावात्सम्बुद्धिहल्लोपो न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गो भविष्यति। उभयत आश्रयणे नान्तादिवत्' इति प्रकृतसूत्रे भाष्ये। एतेन 'कुल' इत्युक्तिः 'कतरत्' इत्यस्य नपुंसकत्वद्योतनायेति बालमनोरमाकारोक्तिः परास्ता। न च पूर्वान्तवद्भावेन 'कुल' इत्यस्य ह्रस्वाङ्गत्वे, एकदेशविकृतन्यायेन 'म्' इत्यस्य सम्बुद्धित्वे च दोषाभावः, अर्द्धविकारे तन्न्यायाप्रवृत्तेः, एकवचनसम्बुद्धिसंज्ञयोरुक्तपरिमाणनिष्ठतया शतत्व-प्रस्थत्वयोरिव सम्बुद्धि-त्वस्य तेन न्यायेनालाभाच्च।

वस्तुतस्तु यच्चेनोपस्थाप्यते तस्य तत्रैवान्वय इति नात्र नियमः, गुणादिपदेनोपस्थापित-स्यार्पीकोऽङ्गेऽन्वयदर्शनात्। तथा च सम्बुद्ध्याक्षिप्ताङ्गस्य हलि अन्वयेऽपि बाधकाभावः। परम्पर-याऽन्वयस्तूभयत्रापि तुल्यः।

एवञ्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परं सम्बुद्ध्यवयवभूतं यद्धल् तल्लुप्यते इत्यर्थे 'कुल' इति पूर्वान्तवद्भावेन ह्रस्वान्ताङ्गम्, ततः परं सम्बुद्ध्यवयवभूतं हल् 'म्' इति तस्य लोपः सिध्यति। न च सम्बुद्धेरभावे तदवयवत्वस्य मकारेऽभावाल्लोपानापत्तिः, सम्बुद्ध्यवयवत्वस्योपलक्षणत्वात्। मकारस्य सम्बुद्ध्यवयवत्वं पूर्वमासीदित्याशयात्। इत्यङ्गाक्षेपवादिकौमुदीकारमतम्।

अत्र शेखरकाराः—यथा 'पीनोऽयं दिवा न भुङ्क्ते' इत्यत्र पीनत्वानुपपत्त्या तदुपपादकं रात्रि-भोजनमनुमीयते। अनुमितेन रात्रिभोजनेन पीनत्वमुपपद्यते। तथा सम्बुद्धेः प्रत्ययतया प्रत्ययज्ञानस्य प्रकृतिज्ञानव्याप्यतया व्याप्यज्ञानेन व्यापकज्ञानरूपा अनुमितिः, यद्वा प्रकृतिं विना प्रत्ययत्वस्या-नुपपन्नतया प्रत्ययत्वानुपपत्त्याऽनुमीयमानस्याङ्गस्य न प्रत्ययत्वज्ञानं सम्बुद्धित्वज्ञानं वा फलम्, प्रत्ययत्वसम्बुद्धित्वज्ञानयोः प्रकृतेरनपेक्षणात् तथा चोपपद्यमानस्य उपपत्तिरूपफलाभावान्नानु-मितिरर्थापत्तिः प्रयोज्या।

किञ्चाङ्गाक्षेपेऽपि न दोषनिस्तारः, आक्षिप्तस्य शाब्देऽनन्वयात्। अत एव 'घटं पश्य' इत्यत्र घटशब्देनाश्रयतयोपस्थितस्याप्याकाशस्य न दर्शनेऽन्वयः। तस्मात् 'प्रत्यये गृह्यमाणे यस्मात्स विहितस्तदादि' इत्युपतिष्ठते। तच्च एङ्ह्रस्वादिति विशेषेण पञ्चम्यन्तत्वेन विपरिणम्यते। तथा च तदादिरूपं विशेष्यमादाय तदन्तविधौ एङन्ताद् ह्रस्वान्ताच्च परं यत्सम्बुद्ध्यवयवभूतं हल् तल्लुप्यते इत्यर्थ इति तदाद्युपस्थित्या दोषनिरासो न त्वङ्गाक्षेपेणेत्याहुः।

वस्तुतस्तु आक्षिप्तस्य शाब्देऽनन्वयात्, 'हे कुल' इत्यत्र लोपोपपत्तये ह्रस्वादित्यस्य हल्येवान्व-यस्यावश्यकतया 'हे कतरत्' इत्यत्र रेफोत्तरह्रस्वात्परस्य ह्रस्वान्ततदादिरूपं यत् 'कतर' इति, ततः परस्य च सम्बुद्ध्यवयवत्वेनोपलक्षितस्य हलः सत्त्वेनोभयमतेऽपि 'हे कतरत्' इत्यत्र लोपापत्तिर्दुर्वारा। न चाक्षिप्तस्य शाब्देऽनन्वये 'आदिरन्त्येन' इत्यत्राक्षिप्तस्य समुदायस्य संज्ञित्वानापत्तिरिति वाच्यम्, सूत्रारम्भसामर्थ्यात्, 'सम्बन्धिशब्दावेतौ 'तत्र सम्बन्धाद् गन्तव्यम्। यं प्रति आदिरन्त्य इति च भवति' इति भाष्याच्चाक्षिप्तस्यापि शाब्देऽन्वयस्वीकारात्।

तस्मात्प्रातिपदिकावयवस्य एङः साहचर्याद् ह्रस्वोऽपि प्रातिपदिकावयव एव गृह्यते। यद्वा एङ-न्तं शब्दस्वरूपमर्थवत्साहचर्याद् ह्रस्वान्तमप्यर्थवदेव ग्राह्यम्, यद्वा 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इत्येको योगः। प्रत्ययबोधके पदे गृह्यमाणे 'यस्मात्प्रत्ययविधिस्तदादि' इत्युपतिष्ठते इत्यर्थः। उप-स्थिततदादिविशेष्यकतदन्तत्वमादाय 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति लभ्यते।

ततः 'अङ्गम्' इति द्वितीयो योगः। अत्र सम्पूर्णं पूर्वसूत्रमनुवर्तते। यस्मात्प्रत्ययो विधीयते तदादि प्रत्यये परे अङ्गसंज्ञकं भवति' इत्यर्थः। अत्र तदादि प्रत्ययाव्यवहितपूर्वत्वविशिष्टमित्यर्था-

ङ्गान्वयोऽसङ्गत इत्यपास्तम्, एतादृशार्थस्वीकारे 'हे कुल' इत्यस्यासिद्धेः, उभयतोऽतिदेशाश्रयणे-नैवास्य सिद्धेर्वक्तव्यतया तत्र चान्तादिवद्भावस्य निषेधात्।

तदुक्तम्—'एवमप्येकादेशे कृते व्यपवर्गा (पौर्वापर्य्य) भावात्सम्बुद्धिलोपो न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गो भविष्यति। उभयत आश्रयणे नान्तादिवत्' इति प्रकृतसूत्रे भाष्ये। एतेन 'कुल' इत्युक्तिः 'कतरत्' इत्यस्य नपुंसकत्वद्योतनायेति यालमनोरमाकारोक्तिः परास्ता। न च पूर्वान्तवद्भावेन 'कुल' इत्यस्य ह्रस्वाङ्गत्वे, एकदेशविकृतन्यायेन 'म्' इत्यस्य सम्बुद्धित्वे च दोषाभावः, अर्द्धविकारे तन्न्यायाप्रवृत्तेः, एकवचनसम्बुद्धिसंज्ञयोरुक्तपरिमाणनिष्ठतया शतत्व-प्रस्थत्वयोरिव सम्बुद्धित्वस्य तेन न्यायेनालाभाच्च।

वस्तुतस्तु यद्येनोपस्थाप्यते तस्य तत्रैवान्वय इति नात्र नियमः, गुणादिपदेनोपस्थापित-स्वार्थिकोऽङ्गेऽन्वयदर्शनात्। तथा च सम्बुद्ध्याक्षिप्ताङ्गस्य हलि अन्वयेऽपि बाधकाभावः। परम्परयाऽन्वयस्तूभयत्रापि तुल्यः।

एवञ्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परं सम्बुद्ध्यवयवभूतं यद्धल् तल्लुप्यते इत्यर्थे 'कुल' इति पूर्वान्तवद्भावेन ह्रस्वान्ताङ्गम्, ततः परं सम्बुद्ध्यवयवभूतं हल् 'म्' इति तस्य लोपः सिध्यति। न च सम्बुद्धेरभावे तदवयवत्वस्य मकारेऽभावाल्लोपानापत्तिः, सम्बुद्ध्यवयवत्वस्योपलक्षणत्वात्। मकारस्य सम्बुद्ध्यवयवत्वं पूर्वमासीदित्याशयात्। इत्यङ्गाक्षेपवादिकौमुदीकारमतम्।

अत्र शेखरकाराः—यथा 'पीनोऽयं दिवा न भुङ्क्ते' इत्यत्र पीनत्वानुपपत्त्या तदुपपादकं रात्रि-भोजनमनुमीयते। अनुमितेन रात्रिभोजनेन पीनत्वमुपपद्यते। तथा सम्बुद्धेः प्रत्ययतया प्रत्ययज्ञानस्य प्रकृतिज्ञानव्याप्यतया व्याप्यज्ञानेन व्यापकज्ञानरूपा अनुमितिः, यद्वा प्रकृतिं विना प्रत्ययत्वस्यानुपपन्नतया प्रत्ययत्वानुपपत्त्याऽनुमीयमानस्याङ्गस्य न प्रत्ययत्वज्ञानं सम्बुद्धित्वज्ञानं वा फलम्, प्रत्ययत्वसम्बुद्धित्वज्ञानयोः प्रकृतेरनपेक्षणात् तथा चोपपद्यमानस्य उपपत्तिरूपफलाभावान्नानुमितिरर्थापत्तिः प्रयोज्या।

किञ्चाङ्गाक्षेपेऽपि न दोषनिस्तारः, आक्षिप्तस्य शाब्देऽनन्वयात्। अत एव 'घटं पश्य' इत्यत्र घटशब्देनाश्रयतयोपस्थितस्याप्याकाशस्य न दर्शनेऽन्वयः। तस्मात् 'प्रत्यये गृह्यमाणे यस्मात्स विहितस्तदादि' इत्युपतिष्ठते। तच्च एङ्ह्रस्वादिति विशेषेण पञ्चम्यन्तत्वेन विपरिणम्यते। तथा च तदादिरूपं विशेष्यमादाय तदन्तविधौ एङन्ताद् ध्रस्वान्ताच्च परं यत्सम्बुद्ध्यवयवभूतं हल् तल्लुप्यते इत्यर्थ इति तदाद्युपस्थित्या दोषनिरासो न त्वङ्गाक्षेपेणेत्याहुः।

वस्तुतस्तु आक्षिप्तस्य शाब्देऽनन्वयात्, 'हे कुल' इत्यत्र लोपोपपत्तये ह्रस्वादित्यस्य ह्रस्वेवान्वयस्यावश्यकतया 'हे कतरत्' इत्यत्र रेफोत्तरह्रस्वात्परस्य ह्रस्वान्ततदादिरूपं यत् 'कतर' इति, ततः परस्य च सम्बुद्ध्यवयवत्वेनोपलक्षितस्य हलः सत्त्वेनोभयमतेऽपि 'हे कतरत्' इत्यत्र लोपापत्तिर्दुर्वारा। न चाक्षिप्तस्य शाब्देऽनन्वये 'आदिरन्त्येन' इत्यत्राक्षिप्तस्य समुदायस्य संज्ञित्वानापत्तिरिति वाच्यम्, सूत्रारम्भसामर्थ्यात्, 'सम्बन्धिशब्दावेतौ 'तत्र सम्बन्धाद् गन्तव्यम्। यं प्रति आदिरन्त्य इति च भवति' इति भाष्यादाक्षिप्तस्यापि शाब्देऽन्वयस्वीकारात्।

तस्मात्प्रातिपदिकावयवस्य एङः साहचर्याद् ह्रस्वोऽपि प्रातिपदिकावयव एव गृह्यते। यद्वा एङन्तं शब्दस्वरूपमर्थवत्तत्साहचर्याद् ह्रस्वान्तमप्यर्थवदेव ग्राह्यम्, यद्वा 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इत्येको योगः। प्रत्ययबोधके पदे गृह्यमाणे 'यस्मात्प्रत्ययविधिस्तदादि' इत्युपतिष्ठते इत्यर्थः। उपस्थिततदादिविशेष्यकतदन्तत्वमादाय 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति लभ्यते।

ततः 'अङ्गम्' इति द्वितीयो योगः। अत्र सम्पूर्णं पूर्वसूत्रमनुवर्तते। यस्मात्प्रत्ययो विधीयते तदादि प्रत्यये परे अङ्गसंज्ञकं भवति' इत्यर्थः। अत्र तदादि प्रत्ययाव्यवहितपूर्वत्वविशिष्टमित्यर्था-

हे राम। हे रामौ। हे रामाः। 'एङ्' ग्रहणं किम्—हे हरे। हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति।

---

धिकारानुरोधात्साहचर्याच्च पूर्वसूत्रेऽपि प्रत्ययाव्यवहितपूर्वत्वविशिष्टस्यैव तदादेर्ग्रहणम्, अतस्तदर्थं-भूतपरिभाषयापि तादृशमेव तदाद्युपस्थाप्यते।

तथा च 'कतर' इति तकाररहितभागे ह्रस्वाकारो न प्रातिपदिकावयवः, किन्तु सम्बुद्ध्यवयवः। नापि 'कतर इत्यर्थवान् प्रत्ययैकदेशाकारघटितत्वेनानर्थकत्वात्। नापि प्रत्ययाव्यवहितपूर्वत्वविशिष्टस्त-काराव्यवहितपूर्वत्वस्य सत्त्वेऽपि तकारे प्रत्ययत्वाभावादित्येवं रूपेण दोषोद्धार इति गुरवः। तदुक्तं भाष्ये 'विहितविशेषणं ह्रस्वग्रहणम्। यस्माद्ध्रस्वात्सम्बुद्धिरिति' इति। एतेन सम्बुद्ध्यव्यवहित-पूर्वस्यैव ह्रस्वान्तस्य ग्रहणमिति सूचितम्। 'भाष्ये विहितपदं परत्वपरम्। अन्यथा 'हे नदि' इत्यादौ सम्बुद्धेर्दीर्घान्ताद्विहितत्वेन लोपानापत्तिः।

हे रामेति—अत्र ह्रस्वात्परस्याः सम्बुद्धेर्लोपः। 'सम्बोधने च' इति प्रथमाया विधानाद् द्वित्वबहुत्वयोरपि रूपमाह—हे रामाविति। किमिति—किं प्रयोजनमित्यर्थः। हे हरे इति—अत्र सम्बुद्धेर्लोपः प्रयोजनमित्यर्थः।

हे हरे इति—हरिशब्दाद्विष्णुशब्दाच्च सम्बुद्धौ सौ 'ह्रस्वस्य गुणः' इति गुणे हे हरे स्, हे विष्णो स्, इत्यत्र ह्रस्वात्परत्वाभावाल्लोपो न स्यादत एङ्ग्रहणमिति भावः।

ननु गुणात्पूर्वं ह्रस्वात्परस्य सोर्लोपसिद्धे एङ्ग्रहणं व्यर्थमत आह—अत्र हीति—सम्बुद्धिलोपा-पेक्षया 'ह्रस्वस्य गुणः' इति परं शास्त्रम्, नित्यञ्च, अकृतेऽपि सम्बुद्धिलोपे गुणस्य प्राप्तेः—कृतेऽपि सम्बुद्धिलोपे 'प्रत्ययलोपे' इति प्रत्ययलक्षणमाश्रित्य प्राप्तेश्च। 'विप्रतिषेधे परम्' इति सूत्रात् अनित्यान्नित्यं बलवत् इति न्यायाच्च लोपं बाधित्वा गुण एव स्यादिति न गुणात्पूर्वं लोप इत्यर्थः। किञ्च 'इमाः किमाचामय से न चक्षुषी' इति श्रीहर्षप्रयोगे 'आचामयसे' इति नात्मनेपदम्, 'निगरण-चलनार्थेभ्यश्च, इति निगरणे परस्मैपदविधानात्। न चाचमनं न निगरणम्, पिण्डीभूतद्रव्यगलबिलाधः संयोगानुकूलव्यापारस्यैव निगरणत्वादिति वाच्यम्, 'न पादम्याङ्यम्' इति सूत्रे पिबतेर्निषेधसा-मर्थ्यात्पानस्यापि निगरणत्वात्। किन्तु 'आचामय' इति लोडन्तम्, 'से' इति पृथक्पदम्। ईषल्लक्ष्मीस्तया सह वर्तते इति 'से' सम्बुद्धौ रूपम्। अत्र लोपार्थमप्येङ्ग्रहणमावश्यकम्।

न च गुणस्य नित्यत्वे तुल्यबलविरोधरूपविप्रतिषेधाभावात्परत्वादित्यसङ्गतमिति वाच्यम्, तस्याभ्युच्चयत्वात् वादिनिराकरणाय सदसद्विवेकेन तदुक्तेरिति यावत्, परत्वस्यापवादत्वरूपत्वाद्वा। यत्र यत्र गुणप्राप्तिस्तत्र तत्र लोपप्राप्तेः, कृते लोपे चारितार्थ्याच्च सुट इवेति तक्रन्यायविषयसत्वात्।

वस्तुतस्तु 'ह्रस्वस्य गुणः' इत्यत्र ह्रस्वस्य स्थानिन उपादानेन इक्परिभाषानुपस्थित्या 'हे राम' इत्यादावपि गुणप्राप्त्या 'एङ्ह्रस्वात्' इत्यस्यापि निरवकाशत्वेनोभयोरप्यपवादत्वमिति नित्यत्वाद् गुणे कृते इत्येवोचितम्। किञ्च योपधादन्ताद् भियादिशब्दादाचारक्विबन्तात्कर्तरि क्विपि 'अतो लोपः' इत्यलोपे च सम्बुद्धौ 'हे भि' इत्यत्र गुणस्य पूर्वविधित्वेनातो लोपस्य स्थानिवत्त्वेन तदप्राप्त्या सम्बुद्धिलोपस्य परविधित्वेन स्थानिवत्त्वाप्राप्त्या। 'एङ्ह्रस्वात्' इत्यस्यतत्र चारितार्थ्येन नापवादत्वम् लोपस्येति गुरवः।

न चानवकाशत्वे तक्रन्यायेन बाधे सुटि कृते नुडिव गुणे कृते लोपो न स्यादिति वाच्यम्, यन्नि-मित्तमादायापवादात्पूर्वं प्राप्तिस्तन्निमित्तकस्यैवापवादे कृतेऽप्यप्रवृत्तेः निमित्तान्तरेण निमित्तकस्य लोप-स्यात्र तु प्रवृत्तौ बाधकाभावात्। अपरनिमित्तकत्वेनान्तरङ्गत्वं तु न गुणस्य, अपूर्वनिमित्तकत्वे सत्यपर-निमित्तकस्यैवान्तरङ्गत्वात्। अन्यथा 'ऋतो भारद्वाजस्य' इति भाष्ये 'जहर्थ' इत्यत्र गुणोऽपि प्राप्नोतीत्यणिषेधोऽपि 'अचस्तास्वत्' इति। तत्र परत्वान्नित्यत्वाच्च गुणे रपरत्वे चेण्निषेधाभावशङ्कया

अमि पूर्वः [ ६-१-१०७ ]

अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ।

---

'उपदेशे' इत्यनुवर्तते इत्युक्तम्। अपरनिमित्तकत्वमात्रेणान्तरङ्गत्वे तु अपरनिमित्तकत्वेनेत्वनिषेधस्य पूर्वं प्रवृत्त्या भाष्यकृदुक्तोपदेशानुवृत्तेर्वैयर्थ्यापत्तेः। अपूर्वनिमित्तकत्वे सत्यान्यस्य निषेधे तु इचिनषेधे ऽजन्तस्य पूर्वस्यापि निमित्तत्वेनान्तरङ्गत्वाभावान्न वैयर्थ्यमनुवृत्तेः।

न च गुणे कृते सन्निपातपरिभाषया लोपाप्राप्तिः, 'हे से' इत्याद्यर्थम् 'एङ्ह्रस्वात्' इत्येव वक्तव्ये 'एङ्' ग्रहणसामर्थ्येन लोपे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनात्, 'गुणात् सम्बुद्धेः' इति न्यासेन सिद्धे एङ्ह्रस्वग्रहणसामर्थ्याच्चात्र सन्निपातन्यायस्याप्रवृत्तिकल्पनाच्च। अत एव 'हे हरिम' इत्यादेः सिद्धिः।

कर्मत्वादिविवक्षायां द्वितीयैकवचने 'राम अम्' इत्यत्र 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे प्राप्ते तदपवादमाह—

'अमि पूर्वः' (६-१-१०७)—'अकः सवर्णे' इत्यतः 'अकः' इति पञ्चम्यन्तम्, 'इको यण्' इत्यतः 'अचीति' चानुवर्तते 'एकः पूर्वपरयोः' इत्यधिकृतम्। अमीति अवयविनोऽधिकरणत्वविवक्षया सप्तमी। तस्याचि अन्वयः। अक इत्यस्याप्यचि अन्वयः। तथा च अकोऽमि विद्यमानो योऽच् तस्मिन् परे पूर्वपरयोरगचोः स्थाने एकं पूर्वरूपमित्यर्थः। 'राम अम्' इति स्थितौ 'न विभक्तौ' इति मस्य नेत्वम्। 'अकः सवर्णे' इति दीर्घं बाधित्वा 'अतो गुणे' इति पररूपे प्राप्ते तद्बाधके 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे प्राप्ते तद्बाधकम् 'अमि पूर्वः' इति।

यद्यपि अम् इत्यवयवी, अकारस्तदवयवः। अवयविनं प्रत्यवयवस्य कारणत्वात् कारणस्य कार्याधिकरणत्वाच्च 'अमि' इत्यधिकरणे सप्तमी अनुचिता, तथापि विवक्षातः कारकाणि भवन्तीति 'वृक्षे शाखा' इतिवत् कार्यस्यापि कारणाधिकरणत्वविवक्षया सप्तमी। तथा च अमि योऽच् तस्मिन् परत इति व्याख्येयम्। तेन परपदेनामोऽग्रहणाच्च मकारसहितस्य पूर्वरूपम्।

न चैवमपि अशब्दादमि 'अम्' इति जाते ततः 'हे चैत्र अं पश्य' इति वाक्ये परादिवद्भावेनामवयवाच्परकत्वात् चैत्रघटकाकमादाय पूर्वरूपापत्तिरिति वाच्यम्, अम्प्रत्ययेन तदादेरुपस्थित्या अम्प्रकृत्यवयववाचकः, अमवयवेऽचि परे पूर्वपरयोः पूर्वरूपमित्यर्थेनादोषात्। अत्र 'अकः सवर्णे' इत्यतः 'अकः' इति पञ्चम्यन्तम्, 'इको यण्' इत्यतः 'अचि' इति चानुवर्तते 'एकः पूर्वपरयोः' इत्यधिकृतमत उक्तार्थलाभः। 'दीर्घाज्जसि' इत्यतो दीर्घादिति नानुवर्तते, तदनुवृत्तौ सवर्णदीर्घेणैव रूपसिद्ध्या 'अमि पूर्वः' इत्यस्य वैयर्थ्यापत्तेः।

'प्रथमयोः पूर्वसवर्णः' इत्यतः पूर्वग्रहणानुवृत्त्या सिद्धे पूर्वग्रहणवैयर्थ्यन्तु न, सन्नियोगशिष्टन्यायेन पूर्वसवर्ण इति विशिष्टस्यानुवृत्त्यापत्त्या 'कुमारीम्' इत्यादौ त्रिमात्रादेशापत्तेः। 'रामम्' इत्यादौ स्थानिनो द्विमात्रकत्वेन दीर्घापत्तिस्तु न, 'प्रथमयोः पूर्वसवर्णः' इत्येव दीर्घसिद्ध्या 'अमि' इति सूत्रस्य वैयर्थ्यापत्तेः। अत्र पूर्वग्रहणम् पूर्वः स्थानी स्थानप्रयत्नप्रमाणैर्यज्जातीयस्तज्जातीयस्तत्स्थानप्रयत्नप्रमाणक एवादेशो यथा स्यादित्येतदर्थमिति न क्वापि दोषः।

केचित्तु अम्पदं स्वावयवे लाक्षणिकम्। तेनामवयवेऽचीति सामानाधिकरण्येनान्वय इत्याहुः। अन्ये तु 'अकः' इत्यस्य पञ्चम्यन्तत्वात् 'तस्मादित्युत्तरस्य' इति परस्येत्युपस्थित्या अम आदेरेवादेशबोधनेन 'एकः पूर्व' इति पूर्वपरवर्णयोरेव ग्रहणमिति नामः सर्वस्यादेश इति ब्रुवन्ति। अत्रामो मस्य नेत्वम् 'न विभक्तौ' इति निषेधात्। राममिति—अस्य स्मर इत्यादिशेषः।

रामाविति—औटष्टस्येत्वे लोपे च 'राम औ' इति स्थितौ पूर्ववद् वृद्ध्यादौ 'रामौ' इति, द्वित्वविशिष्टरामकर्मकं दर्शनादीत्यर्थः। रामानिति—'न विभक्तौ' इति सस्येत्वनिषेधाद् 'राम शस्'

लशक्वतद्धिते [ १-३-८ ]

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः । इति शसः शस्येत्संज्ञा ।

तस्माच्छसो नः पुंसि [ ६-१-१०३ ]

इति दशायाम् शस्येत्संज्ञार्थं सूत्रमाह—'लशक्वतद्धिते' इति 'औट्छस्' इत्यत्र औपदेशिकः श एव, न तु छः, छस्य 'आयनेय' इतीयादेशापत्तेः । न च 'पक्षिमत्स्यमृगान् हन्ति' इतिनिर्देशानुपपत्त्या न इयादेशापत्तिरिति वाच्यम्, अनेकक्लिष्टकल्पनापेक्षया शकारकरणे एव लाघवात् । न च फादिसाहचर्यात्तद्धितच्छस्यैव ग्रहणाच्च निर्देशसङ्गतिरिति वाच्यम्, 'मत्वर्थाच्छः' इतिविहितकृतश्छस्येयादेशानापत्त्या 'मत्वर्थीयः' इत्यस्यासिद्ध्यापत्तेः । आदिभूतानाम् 'हलन्त्यम्' इत्यप्राप्ते इदं सूत्रम् । 'लशकु' इति समाहारद्वन्द्वः । यद्यपि कुशब्दस्य घित्वात्पूर्वनिपात उचितस्तथापि पूर्वनिपातस्यानित्यत्वात्तथोक्तिः । 'अतद्धिते' इति षष्ठ्यर्थे सप्तमी, तद्धितभिन्नस्येत्यर्थः । 'उपदेशेऽजनुनासिक इत्' 'आदिर्ञिटुडवः' 'षः प्रत्ययस्य' इत्यतः क्रमेण इत्, आदिः, प्रत्ययस्य, इत्यनुवर्तते । तथा च तद्धितभिन्नस्य प्रत्ययस्यादिभूतं ल–श–कवर्गमित्संज्ञकं भवतीत्यर्थः । ल्युट्, शप्, क्तः, ल्वच्, ग्स्नुः, घुरच्, ङसिः, इत्याद्युदाहरणानि । 'अतद्धिते' इत्युक्त्या चूडालः, लोमशः, कर्णिका इत्यादौ नेत्त्वम् । चूडाल इत्यत्र लित्वसामर्थ्यात्, चित्त्वसामर्थ्याच्च पर्यायेण स्वरे आद्युदात्तत्वापत्तेः ।

एतेन लकारोच्चारणसामर्थ्यान्नेत्त्वमित्यपास्तम् । 'कर्णिका' इत्यत्र कनः कित्त्वे "किति च" इति वृद्ध्यापत्तिः । यदि तु वराहादिभ्यः ककः कित्वकरणात्, "केऽणः" इति सूत्रारम्भाच्च आदिककारस्य नेत्त्वमिति कल्प्यते तदा "चूडालः" इत्यत्र लचो नेत्त्वमिति "अतद्धिते" इत्यस्य फलं बोध्यम् । लोमश इत्यत्र तु शकारोच्चारणसामर्थ्यान्नेत्त्वमिति शक्यते वक्तुम् । प्रत्ययाद्या इत्युक्तेः वृङः पाकनि 'वराकः' इत्यत्र कस्य नेत्त्वम् । कित्वे गुणो न स्यात् । इति शसः शस्येति—न च शकारोच्चारणसामर्थ्यादित्त्वं न स्यादिति वाच्यम्, औटोर्ङित्त्वसम्भावनावारणाय शस्य चारितार्थ्येन उच्चारणसामर्थ्यस्य वक्तुमशक्यत्वात् । 'राम अस्' इति स्थितौ 'पुरस्तादपवादा' इति न्यायेन "अतो गुणे" इत्यस्य पूर्वसवर्णदीर्घानपवादत्वेन परत्वात्पररूपं बाधित्वा दीर्घे 'रामास्' इति स्थितौ—

"तस्माच्छसो नः पुंसि', इति । इह तस्मादित्यनेनानन्तरः पूर्वसवर्णदीर्घः परामृश्यते । तदाह—पूर्वसवर्णदीर्घादिति । तस्मादित्युत्तरस्य" इति परिभाषालभ्यार्थमाह—परस्येति—अत्र शस्पदं तदवयवपरम्, पूर्वसवर्णदीर्घात्परस्येत्यस्यावयवेऽन्वयो न तु शसि, पूर्वसवर्णदीर्घेण शसोऽकारस्यापहारात् ततः परस्य शसोऽसम्भवात् । न हि पूर्वसवर्णदीर्घात्परः कश्चित्शस् । न चान्तादिवद्भावेन सः, उभयत आश्रयणेऽन्तादिवद्भावाभावात् । अत एव शस् इत्यस्य शसोऽवयवस्येत्यर्थः । अवयवत्वं षष्ठ्यर्थं इति तु न, सम्बन्धस्योभयवृत्तित्वेन अवयवावयविभावस्यैव षष्ठ्यर्थत्वस्यौचित्यात् ।

पुंसीति पञ्चम्यर्थे सौत्रत्वात्सप्तमी विहितविशेषणञ्च । पुंवाचकाद्विहितस्य शसो योऽवयवस्तस्य नत्वमित्यर्थः । न चैवं ब्राह्मणभार्या इत्यत्र नत्वापत्तिः, पुंस्त्वविशिष्टब्राह्मणस्य भार्या इत्यर्थकस्य ब्राह्मणभार्याशब्दस्य पुंवाचकतया ततो विहितस्य शसः सत्वादिति वाच्यम्, 'प्रधानाप्रधान' न्यायेन पुंवाचकपदप्रयोज्योपस्थितीयमुख्यविशेष्यतानिरूपितप्रकारताऽनवच्छेदकीभूतपुंस्त्ववाचकस्यैव ग्रहणेन प्रकृते भार्यानिष्ठमुख्यविशेष्यतानिरूपितब्राह्मणनिष्ठप्रकारत्वावच्छेदकत्वस्यैव पुंस्त्वे सत्वेन नत्वाप्राप्तेः ।

न च दारान्, षण्ढान्, इत्यादौ नत्वानापत्तिः, तत्र स्त्रीत्वविशिष्टनपुंसकत्वविशिष्टवाचकत्वस्यैव सत्वादिति वाच्यम्, सत्त्वादिगुणानामुपचयरूपपुंस्त्वस्य लौकिकस्त्रीत्व–नपुंसकत्वविशिष्टेऽपि सत्त्वेन पुंस्त्वविशिष्टत्वेनैव स्त्रीत्वावच्छिन्न–नपुंसकत्वावच्छिन्नवाचकयोर्दारषण्ढशब्दयोः पुंस्त्वविशिष्टवाचकत्वे बाधकाभावात् ।

पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात्पुंसि ।

## अट्कुप्वाङ्नुम्व्यवायेऽपि [ ८-४-२ ]

पुंस्त्वविशिष्टप्रातिपदिकाद्विहितस्य शसो नादेश इत्यर्थः । वैशिष्ट्यञ्च—स्वोपस्थापकत्व-स्वनिष्ठप्रकारतासाक्षान्निरूपितयत्किञ्चिद्धर्मावच्छिन्नशाब्दबोधीयमुख्यविशेष्यताप्रयोजकप्रकारकतात्पर्योच्चरितत्वैतदुभयसम्बन्धेन । एतेन पुंस्त्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरिताद्विहितस्य शसो नादेश इत्यर्थे स्त्रीत्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरिताद् दारशब्दात्परस्य शसो नत्वानापत्तिरित्यपास्तम्, पुंस्त्वनिष्ठप्रकारतासाक्षान्निरूपितस्त्रीत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वेनोच्चरितत्वस्य तत्रापि सत्त्वात् पुंस्त्वविशिष्टस्त्रीत्वावच्छिन्नस्यैव तेन बोधात् ।

नन्वेवमपि 'चञ्चा इव पुमांसः' चञ्चाः तान् चञ्चाः पश्य' इत्यत्र पुंस्त्वविशिष्टान् चञ्चासदृशान् पश्य' इत्यर्थके नत्वापत्तिरिति चेन्न, 'लुपि युक्तवत्' इति सूत्रेण स्त्रीत्वातिदेशेन अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मकार्य्याभावात् । तस्मादिति किम्, 'एतान् गाः पश्य' इति । अयम्भावः तस्मादित्यनेन सन्निहितः पूर्वसवर्णदीर्घ एव गृह्यते । तदभावे दीर्घमात्रस्य ग्रहणे तु 'गाः' इत्यत्र वृषभवाचिगोशब्दात् शसि 'औतोऽम्शसोः' इति शसोऽकारेण सह ओकारस्य आकारैकादेशे दीर्घाकारात्परस्य शसः सकारस्य नत्वं स्यात्, तद्वारणाय तस्मादिति ।

ननु अक इत्यनुवर्त्य पुंसोऽगन्ततदादेः परस्य शसोऽन्त्यस्य न इत्यर्थेन 'गाः' इत्यत्र 'औतोऽम्' इति नित्यत्वादात्वे पूर्वान्तवद्भावेनागन्ततदादित्वेऽपि ततः परस्य शसोऽभावात्परादिवद्भावेनास्मात्रस्य शस्त्वेऽपि गन्तस्यागन्तत्वाभावात् 'गाः' इत्यत्र न दोषः । नत्वं बाधित्वा प्रतिपदोक्तत्वादाकारैकादेश इति तु न युक्तम्, आत्वस्यापि शश्शब्दोच्चार्य्य विहितत्वेन प्रतिपदोक्तत्वात् ।

न च पूर्वसवर्णदीर्घस्य नत्वेन तक्रकौण्डिन्यन्यायाद् बाधः, दीर्घे कृतेऽकः परस्य शसोऽभावेन कृते चारितार्थ्यरूपस्य बाधबीजस्याभावेन तक्रन्यायाप्रवृत्तेः । सर्वथाऽनवकाशत्वेन नत्वे आमादेशेन बाधितस्य याट इव पुनर्दीर्घप्रवृत्त्या रूपासिद्धेः ।

न च 'तितऊन्' इत्यत्र दीर्घे कृतेऽपि परादिवद्भावेन 'ऊस्' इत्यस्य शस्त्वेन अकः परस्य शसः सत्त्वात्कृते चारितार्थ्यरूपबीजेन तक्रन्यायेन दीर्घबाधे 'हरीन्' इत्याद्यसिद्धिः, 'शसस्सो नः पुंसि' इति न्यासेन 'अगन्तात्परस्य शसः सस्य नः पुंसि' इत्यर्थेन अकः परत्वस्य सकारविशेषणत्वेन दीर्घस्योपजीव्यतया दीर्घोत्तरमेव नत्वप्रवृत्तेः । अक्चार्थाधिकारानुरोधादनुवृत्तिसामर्थ्याच्च शसोऽनवयव एव गृह्यते इति न दीर्घात्पूर्वं नत्वम् । न च 'लिहः' इत्यादौ दोषः । एतेन दीर्घात्पूर्वम् शसोऽकारस्य नत्वापत्तिरित्यपास्तम् । तथा च 'गाः' इत्यत्र आत्वे कृते एव अकः परस्य सस्य सत्त्वेन नत्ववारणार्थं तस्माद्ग्रहणम् ।

यदि तु 'शसोऽन्' नुम्, नुग् वा पुंसि इति न्यस्यते पञ्चमीसमासाभावस्तस्यानित्यत्वं वा 'मृगान्' इति निर्देशात्, तक्रन्यायस्यानित्यत्वं चाश्रीयते तदा न दोषः । यद्वा पूर्वसवर्णः, दीर्घः इति चानुवर्त्य पञ्चम्यन्तेन विपरिणम्य प्रतिपदोक्तपरिभाषया पूर्वसवर्णपदमुच्चार्य्य विहितो यो दीर्घस्ततः परस्य शसोऽवयवस्य नत्वं विधीयते तदा न कोऽपि दोषः ।

शसः किम्—रामाः, पुंसि किम्, धेनूः पश्य । अत्र तद्धितस्य शसो न ग्रहणम्, पूर्वसूत्रात्प्रथमयोरित्यस्य सम्बन्धात्, द्वितीयायाः शसो ग्रहणात् । प्रकृते 'रामान्' इति स्थितौ णत्वमाशङ्क्यमाह—

"अट्कुप्वाङ्नुम्व्यवायेऽपि" इति, अत्र 'रषाभ्यां नो णः समानपदे' इति सूत्रमनुवर्तते । अट् प्रत्याहारः । अट् च कुश्च पुश्च आङ् ( ङित् आ निपातः ) च नुम् च इति विग्रहे द्वन्द्वे

अट्-कवर्ग-पवर्ग-आङ्-नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे ।

तैर्व्यवायो व्यवधानम्, व्यवपूर्वकस्य इण्धातोर्व्यवधानार्थकत्वात् । 'रषाभ्याम्' इत्यनेन रषाभ्यामव्यवहितपरस्य समानपदस्थस्य नस्य णत्वं विहितम् । तच्च 'रामेण' इत्यादौ न प्राप्नोति ।

अतो व्यवधानेऽपि णत्वार्थमिदमारब्धम् । व्यवधानञ्चात्र न अडादिसमस्तैः तादृशलक्ष्याभावेन सूत्रवैयर्थ्यापत्तेः । नापि प्रत्येकेनैव, रामेणेत्याद्यसिद्धेः, नापि यथासम्भवं मिलितैरेव, 'नरेण' इत्यादावेकव्यवाये ऽप्रवृत्त्यापत्तेः । अतोऽडादिभिः प्रत्येकैर्यथासंभवं मिलितैश्च व्यवधाने नस्य णत्वमनेन विधीयते । तदुक्तं भाष्ये "उभयथाऽपि वाक्यसमाप्तिर्दृश्यते । तद्यथा—गर्गैः सह न भोक्तव्यमिति । प्रत्येकञ्च न भुज्यते समुदितैश्च" इति । तदाह—व्यस्तैः 'प्रत्येकैः' यथासंभवं मिलितैश्चेति । अत एव 'विशेषणं विशेष्येण बहुलम्' इत्यादिनिर्देशः, क्षुभ्नादिषु क्षुभ्नशब्दपाठश्च संगच्छते ।

वृत्तौ अट्, कु, पु, आङ्, नुम्, इति अविभक्तिको निर्देशः । यद्वा सामान्ये नपुंसकम् इति नपुंसकत्वम् । समानपदे इति—समानशब्दोऽत्रैकार्थकपदे अखण्डपदे विद्यमानयोर्निमित्तरेफषकार-निमित्तिनकारयोरित्यर्थः । तेन 'रामनाम' इत्यत्र न, राम इत्यस्यापि पदत्वेनाखण्डत्वाभावात् । यदि तु 'समानपदे' इत्यस्य एकपदे इत्येवार्थस्तदा 'पदे' इत्युक्त्यैव एकपदत्वे लब्धे समानग्रहणस्य वैयर्थ्यापत्तिः । तथा हि—यदि पदे इत्यस्य पदस्थयोर्निमित्तनिमित्तिनोरित्येवार्थस्तदा पदग्रहणस्य वैयर्थ्यापत्तिरपदस्थयोर्निमित्तनिमित्तिनोरभावात् ।

तथा च पदग्रहणसामर्थ्यादेवैकपदत्वे सिद्धे समानग्रहणं समानमेवाखण्डमित्यर्थलाभार्थम् ।

न च निमित्ती णकारो न तु नकारस्तथा च णत्वप्रवृत्तेः प्राग्निमित्तनिमित्तिनोरखण्डपदस्थत्वासम्भव इति वाच्यम्, स्वप्रयोज्यकार्योद्देश्यत्वसम्बन्धेन निमित्तविशिष्टस्य नस्यैव निमित्तिपदेन विवक्षितत्वात् । एवञ्च निमित्तानधिकरणं यन्निमित्तियत्पदं तद्घटितभिन्नं यत्पदं तदवयवयोर्निमित्तनिमित्तिनोः सतोर्णत्वमित्यर्थः । तेन निमित्तानधिकरणं निमित्तिमत्पदं नाम इति तद्घटितं पदं रामनाम इति तद्भिन्नपदावयवत्वं निमित्तनिमित्तिनोर्नास्तीति 'रामनाम' इत्यत्र न णत्वम् । अत्र पदपदं पदत्वयोग्यप्रतिपदिकपरम्, तेन 'मातृभोगीणः' इत्यत्र णत्वं सिध्यति, भोगीन इत्यस्य ईन इत्यस्य वा प्रातिपदिकत्वाभावात् , तादृशं पदमुदासीनं तद्घटितमप्युदासीनं तद्भिन्नपदं मातृभोगीन इति । तद्घटतकतया णत्वम् । रामनाम, गन्धर्वगानम्, इत्यादावुत्तरस्य उत्तरपदत्वे इति निषेधेन पदत्वाभावेऽपि प्रातिपदिकत्वस्य सत्वात् । न चैवं 'रामनरेण' इत्यत्र पूर्वनस्य णत्वापत्तिः, निमित्तरेफानधिकरणं निमित्तिनकाराधिकरणम् 'नाथ' इति न तु नर इति, तत्र निमित्तस्य सत्त्वादिति वाच्यम्, 'रेफपकारान्यतरविशिष्टस्य नस्य णत्वम्' इत्यर्थेनादोषात् । वैवस्वोत्तरत्वम्, स्वाघटितपदाघटकत्वञ्चोभयम् । यदि रेफपदेन 'रामनरेण' परमाग्नीभ्रेण, इत्यत्र राम-परमशब्दघटकरेफग्रहणं तदा स्वोत्तरत्वसम्बन्धस्य नरनकारे अग्निनकारे सत्त्वेऽपि स्वो रेफस्तदघटितं पदं नर इति, अग्नि इति च पदं । तत्पदाघटकत्वं नराग्निपदघटकनकारे नास्तीति न णत्वम् । यदि द्वितीयरेफस्य ग्रहणं तदा स्वोत्तरत्वं नराग्निशब्दघटकनकारे नास्तीति न णत्वम् । द्वितीयं रेफमादाय विभक्तिस्थनस्य णत्वम् । तत्रोभयसम्बन्धसत्त्वात् । न च स्वोत्तरत्वस्य सत्त्वेऽपि स्वो नराग्नीध्रशब्दघटको रेफस्तदघटितं पदम् इन इति तदघटकत्वं नकारे नास्तीति कथं णत्वमिति वाच्यम्, पदशब्देन प्रातिपदिकग्रहणस्योक्तत्वात् इन इति प्रत्ययस्य प्रातिपदिकत्वाभावादित्यन्यत्र विस्तरः ।

ननु 'आदर्शेन' इत्यादौ अड्व्यवधानसत्वात् णत्वं प्राप्नोति । न च व्यवधाने णत्वञ्चेत्तर्हि अडादिभिरेव नान्यैरिति न दोषः, व्यवधाने णत्वाप्राप्तया 'सिद्धे सत्यामारभ्यमाणो विधिर्नियमाय' इति न्यायविषयाभावेन नियमाभावात् । न च भाष्ये 'व्यवाये' इत्येको योगः । तत्र 'रषाभ्याम्' इति

'पदव्यवायेऽपि' इति निषेधं बाधितुमाङ्ग्रहणम् ।
नुम्ग्रहणमनुस्वारोपलक्षणार्थम् ।

सूत्रमनुवर्त्य 'रषाभ्यां परस्य नस्य णो भवति व्यवाये सति समानपदे' इत्यर्थेन अडादिव्यवधाने णत्व-सिद्धया 'अट्कुप्वाङ्नुम्' इति लुप्ततृतीयान्तं सूत्रं कृत्वाऽस्य नियमपरतया व्याख्यानेन अडादिभिरेव व्यवधाने णत्वं नान्यैराक्षरसमाम्नायिकैरिति भाष्योक्तरीत्याऽदोष इति वाच्यम्, नियमव्यावर्त्यत्वस्य नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्त एव प्रवृत्त्या अडादिव्यवधानविशिष्टनत्वावच्छिन्न-भिन्नस्यैव व्यावर्त्यतया नियमेन 'आदर्शेन' इत्यत्र णत्ववारणासम्भवादिति चेन्न, आक्षरसमाम्ना-यिकवर्णव्यवधानविशिष्टनत्वावच्छिन्नभिन्नो यः, व्यवधानविशिष्टो नस्तस्यैव 'मातृणाम्' 'व्यवाये' इत्यनेन णत्वविधानात् निषेधप्रकरणे 'शस्तुभिः' एतैर्व्यवधाने नस्य णो न इति लघुभूतन्यासेन 'मृत्स्ना' 'आर्द्नोत्' 'पृश्नि' इत्यादौ णत्वनिषेधे सिद्धे 'अट्कु' इति गुरुभूतन्याससामर्थ्यात् आक्षर-समाम्नायिकवर्णकर्तृकव्यवाये नस्य णत्वञ्चेत्तर्हि अडादिमात्रकर्तृकव्यवाये एव, नान्यत्रेति नियम एव भाष्यतात्पर्यात् ।

यद्वा अट्कु' इत्यत्र 'रषाभ्याम्' इत्यनुवृत्तौ 'तस्मात्' इति परिभाषया रेफषकाराव्यवहित-परत्वं नकारे उपस्थाप्यते। 'अट्कु' इत्यनेन चाडादिकर्तृकव्यवहितत्वं नकारे लभ्यते । तथा च रषाभ्यां परस्य व्यवधानरहितस्य अडादिव्यवधानसहितस्य नस्य ण इत्यर्थे सूत्रवैयर्थ्येन व्यवधान-रहितस्येत्यस्याडाद्यतिरिक्तव्यवधानशून्यस्येत्यत्र तात्पर्येण 'आदर्शेन' इत्यादौ नास्ति कश्चन दोषः ।

पर्य्याङ्पूर्वकान्नहधातोः क्तप्रत्यये 'नहो धः' इति हस्य धत्वे 'पर्य्याणद्धम्' इत्यादौ 'उप-सर्गादसमासे' इति सूत्रे अट्कुप्वित्यस्यानुवृत्त्यैवाङ्व्यवाय इत्येवाङोऽप्यट्त्वात् णत्वे सिद्धे सूत्रे आङ्-ग्रहणं व्यर्थमित्याशङ्कायामाह—बाधितुमिति । आङः पदत्वात् 'पदव्यवायेऽपि' इति णत्वनिषेधे प्राप्ते आङ्ग्रहणसामर्थ्यात्पदपदेनाङ्भिन्नं यत्पदं तद्व्यवधाने एव निषेधेनात्र 'उपसर्गादसमासे' इति णत्वं सिध्यति तत्राट्कुप्वाङित्यस्यानुवृत्तेः । 'अट्कुप्वाङ्' इत्यनेन तु न णत्वम्, समानपदत्वाभावात् ।

ननु 'इवि प्रीणने' इत्यतो ल्युटि नुमि 'प्रेन्वनम्' अत्र 'इजादेः सनुमः' इति णत्वं प्राप्नोति । किञ्च 'वृहि वृद्धौ' ल्युटि नुमि अनुस्वारे च 'वृंहणम्' इत्यत्र 'तृंहू हिंसायाम्' 'तृंहणम्' इत्यत्र च णत्वं न स्यादनुस्वारस्याडादिष्वभावादित्यत आह ।

नुम्ग्रहणमिति—झल्परस्य नुमोऽनुस्वारविधानात्स्थानिना नुमा अनुस्वारो लक्षणया बोध्यते इत्यर्थः । तथा चानुस्वारव्यवधाने णत्वं फलति । स चानुस्वारो नुम्स्थानिक एवेति न, किन्त्वनुस्वारमात्रम् ।

तदुक्तं भाष्ये ,'यद्येवं नार्थो नुम्ग्रहणेनानुस्वारे कृते' 'अड्व्यवाय' इत्येव सिद्धम्' इति । एतद्भाष्येण नुम्ग्रहणं नुम्स्थानिकानुस्वारग्रहणार्थमित्यपि परास्तम् । अनुस्वारोपलक्षणे 'प्रेन्वनम्' इत्यादौ सत्यपि नुमि न णत्वम् । अत एव 'नुम्व्यवायेऽनुस्वाराभावे णत्वे प्रतिषेधो वक्तव्यः ।' "प्रेन्वनम्, प्रेन्वनीयम्" इति भाष्ये उक्तम् । एवञ्चात्रोपलक्षणत्वम् स्वार्थाबोधकत्वे सति स्वार्थ-सम्बन्धिविशेषबोधकत्वरूपमेव ।

यथा "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति कालविशेषोपलक्षणपरायां श्रुतौ सत्यपि दिवा नक्षत्रदर्शने वाक् न विसृज्यते, उपलक्षितस्य कालस्याभावात् । रात्रावसत्यपि नक्षत्रदर्शने वाग् विसृ-ज्यते कालस्य भावात् । तथेहापि 'प्रेन्वनम्' इत्यादौ सत्यपि नुमि णत्वं न भवति, उपलक्षितस्या-नुस्वारस्याभावात् । 'वृंहणम्' इत्यादावसत्यपि नुमि णत्वं भवति, उपलक्षितस्यानुस्वारस्य सत्त्वात् । ननु णत्वदृष्ट्या अनुस्वारस्यासिद्धतयाऽनुस्वारव्यवधानासम्भवः । न च 'तृंहणम्' इत्यादौ स्वतः सिद्धानुस्वारे तद्व्यवधानसम्भवः, "नकारजावनुस्वारपञ्चमौ झलि धातुषु" इति वचनेन

तत्राकर्तुं शक्यम्। अयोगवाहानामट्सूपदेशस्योक्तत्वात्। इति णत्वे प्राप्ते।

पदान्तस्य [ ८-४-३७ ]

पदान्तस्य नस्य णत्वं न स्यात्। रामान्।

---

तत्राप्यसिद्धत्वादिति चेन्न, अनुस्वारव्यवधाने णत्वविधानसामर्थ्येन णत्वशास्त्रदृष्ट्या अनुस्वारस्य सिद्धत्वज्ञापनात्, अनुस्वारविधायकशास्त्रीयोद्देश्यतावच्छेदकधर्माक्रान्तनकारोपलक्षणत्वाच्च। तच्च=अनुस्वारबोधकनुम्ग्रहणञ्च।

अयोगवाहेति—अविद्यमानो योगे वर्णसमाम्नाये सम्बन्धो येषां ते अयोगाः। चतुर्दशसूत्र्यामपठिताः पठितैरगृहीताश्च। वाहयन्ति=प्रयोगं निर्वाहयन्ति ये ते वाहाः। अयोगाश्च ते वाहाश्चेत्ययोगवाहा वर्णसमाम्नाये सम्बन्धरहिताः सन्तः प्रयोगनिर्वाहकाः शास्त्रेण बोधितसाधुत्ववन्तो वर्णा इत्यर्थः। तान्स्वरूपतः पठति—

अनुस्वारेति—स्वरा एव स्वाराः, स्वार्थेऽण्। स्वाराननुगतोऽनुस्वारः स्वराश्रयेणोच्चार्यमाण इत्यर्थः। योगरूढोऽयम्। विसृज्यते=त्यज्यते स्वस्मात्परं वर्णान्तरं येन स विसर्गः, सृजेर्घञि रूपम्। यद्यपि खरि परेऽपि विसर्गसत्त्वादुक्तार्थानुपपत्तिस्तथापि तत्र विसर्गस्य रूपान्तरस्यापि सम्भवादुक्तार्थस्याबाधात्।

अट्स्विति—वस्तुतस्तु अकारोपरीति वक्तव्यम्। अन्यथा 'यशःसु' इत्यादावपि णः परत्वात् षत्वापत्तिः। णत्वे इति—शसो नकारस्य णकारे प्राप्ते इत्यर्थः। अयम्भावः—णत्वस्य विधाने जातेर्निराश्रयाया अनुपपत्त्या नकारे एव णत्वातिदेशे णकारो न स्यादतोऽत्र णकाराभिन्नो यो णपदवाच्यस्तत्र णपदस्य शक्त्या त्वप्रत्ययप्रकृतिभूतो यो णशब्दस्तस्य उक्तार्थकतया तत्र णकारस्य प्रकृतिजन्यबोधेऽभेदेन प्रकारीभूततया तद्वाचक एव त्वप्रत्यय इति णत्व इत्यस्य णकार इत्यर्थः फलति। एवं "कुत्वं कस्मान्न" इति भाष्येऽपि कवर्गाभिन्नो यः कुपदवाच्यस्तत्र कुपदस्य शक्तिः। तत्र प्रकारतया भासमानो यः कवर्गः स एव कुत्वपदार्थस्तथा च कुत्वमित्यस्य कवर्ग एवार्थः।

अन्ये तु शब्द एव ब्रह्म इति मते धर्मी एक एव नित्योऽखण्ड इति तस्य विधातुमशक्यतया कल्पिता धर्मा एव विधेया इति जातिरूपस्यानित्यस्य णत्वस्य विधानं युक्तमेवेत्याहुः।

उपाध्यायास्तु धर्मिणो नित्यत्वेऽपि तत्रापूर्वबोध्यत्वरूपविधानस्य सम्भवेन तस्य विधानमशक्यमिति चिन्त्यम्। वस्तुतस्तु "स्वं रूपम्" इति शास्त्रतो णादेः संज्ञाशब्दतया अशब्दशास्त्रीयसंज्ञाशब्देषु स्वस्वरूपस्यैव शक्ततासम्बन्धेन प्रवृत्तिनिमित्तत्वात् णकार एव त्वप्रत्ययवाच्य इति णकार इत्यर्थ एव युक्तः। तदुक्तं हरिणा—

"सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता।
संज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभिः" ॥ इति

"पदान्तस्य" इति। अत्र "रषाभ्याम्" इत्यतो 'नः' इति 'ण' इति 'न भाषू' इत्यतो 'न' इति चानुवर्तते। तदाह—पदान्तस्येत्यादि। "अपदान्तस्य मूर्द्धन्यः" इति सूत्रे भाष्ये "रषाभ्याम्" इत्यादिषु सर्वेषु णत्वविधायकेषु "अपदान्तस्य मूर्द्धन्यः" इत्यनुवर्त्य "णः" इत्यस्य "पदान्तस्य" इति सूत्रस्य च भाष्यकृता प्रत्याख्यातत्वात्, सर्वणत्वविधिकाण्डानन्तरं णत्वनिषेधकाण्डारम्भाभावानन्तरस्येति न्यायाप्रवृत्त्या सर्वणत्वनिषेधकमिदम्। णत्वविधायकेषु "अपदान्तस्य मूर्द्धन्यः" इत्यधिकारपक्षे तु पदान्तनस्य णत्वाप्राप्तिरेव।

रामशब्दात् तृतीयाविभक्तिविवक्षायां टाविभक्तौ 'चुटू' इति टस्येत्वे "राम आ" इत्यवस्थायां प्रवर्तयिष्यमाणे "टाङसि" इति सूत्रे "अङ्गस्य" इत्यस्याधिकारात् अङ्गपदार्थजिज्ञासानिवृत्तये आह—

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । [ १-४-१३ ]**

यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् । भवामि 'भविष्यामि' इत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम् । 'विधिः' इति किम्—स्त्री इयती ।

"यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" इति । यस्मादिति—संज्ञिनिर्देशार्थं यस्मादिति । ननु तदादीति संज्ञा न तु यस्मादिति पञ्चम्यन्तत्वात्संज्ञासंज्ञिनोः प्रायः प्रथमान्तस्यैव दर्शनादितीदमसङ्गतमिति चेन्न, तच्छब्दार्थप्रदर्शनद्वारा संज्ञित्वस्य निर्णायकत्वात् । सति हि यस्मादित्यस्मिन् तदादीत्यनेन संज्ञा निर्देष्टुं शक्यते । अन्यथा तदादीत्यसम्बद्धमेव स्यात् । यस्माद्विधिरितीत्युच्यमाने "नेर्विशः" इत्यादौ निरुपसर्गात्पराद् विशेरात्मनेपदं स्यादित्यर्थे विशावात्मनेपदीयोद्देश्यताख्यविषयताया विधानसत्त्वादुपसर्गात्पूर्वमडाद्यापत्तेः । प्रत्ययग्रहणसत्त्वे तु न दोषः, उपसर्गात्प्रत्ययविधेरसत्त्वात् । यद्वा "स्त्री इयती" इत्यत्र स्त्रीशब्दात्सोस्तल्लोपस्य च विधेः सत्त्वेन अङ्गसंज्ञायां भसंज्ञायाञ्च "यस्येति च" इति लोपापत्तेः । स्पष्टञ्चेदं भाष्ये । तदादीति—तत्प्रकृतिरूपमादि यस्य तत्तदादि प्रकृतिनिष्ठावयवतानिरूपकसमुदाय इत्यर्थः ।

ननु आदिग्रहणं मास्तु 'तदङ्गम्' इत्येवास्तु इत्याशङ्कायामाह—भवामीति—भूधातोर्लटि मिपि शपि गुणावादेशयोः "अतो दीर्घो यञि" इति दीर्घे "भवामि" । एवं भूधातोर्लृटि मिपि स्यप्रत्यये इटि गुणावादेशयोर्दीर्घे "भविष्यामि" इति । अत्र आदिग्रहणाभावे भूशब्दस्यैवाङ्गसंज्ञा स्यान्न भव इत्यस्य, भूधातोरेव लकारस्य विधानात् । आदिग्रहणसत्त्वे तु प्रकृतिनिष्ठावयवतानिरूपकसमुदायस्य तदादिग्रहणेन ग्रहणात् भव इत्यस्य, भविष्य इत्यस्य च तदादिग्रहणेन ग्रहणादङ्गत्वे "अतो दीर्घः" इति अदन्ताङ्गस्य दीर्घे रूपं सिध्यति । ननु प्रकृते राम इत्यस्य तदादित्वाभावादङ्गत्वं न स्यादिति चेन्न, "व्यपदेशिवदेकस्मिन्" इति न्यायेन केवलप्रकृतेरप्यङ्गत्वसिद्धेः । न च "अतो दीर्घो यञि" इति सूत्रारम्भसामर्थ्यादङ्गत्वाभावेऽपि अदन्तस्य दीर्घः स्यादिति वाच्यम्, 'पय' गतौ 'वय गतौ' इत्यादेर्यङ्लुकि पायामि, वावामि, इत्यादौ केवलप्रकृतेरेवाङ्गत्वेन सूत्रस्य चारितार्थ्यात् ।

विधिरिति किमिति—अयमाशयः—"यस्मात्प्रत्ययस्तदाद्यङ्गम्" इत्येव सूत्रमस्तु विधिग्रहणं मास्तु, "विधीयते" इत्यस्याध्याहारेण विधित्वलाभादिति प्रश्नः । असति विधिग्रहणे दिग्योगलक्षणपञ्चम्या परशब्दस्याप्यध्याहारे 'यस्मात्परः प्रत्ययस्तस्मिन् परे तदाद्यङ्गसंज्ञमित्यर्थे' 'स्त्री इयती' इति न सिध्येत् । तथाहि—

इदं परिमाणमस्या इत्यर्थे "किमिदम्भ्यां वो घः" इति वतुपि वस्य घादेशे च घस्य इयादेशे च "इदम् इयत्" इति जाते तत्र "इदं किमोरीश्की" इति इदम ईशादेशे 'ई इयत्' इति स्थितौ "यस्येति च" इतीकारलोपे "इयत्" इति प्रत्ययमात्रमवशिष्यते । ततः स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीपि "इयती" इति । स्त्रीशब्दयोगे 'स्त्री इयती' इत्यत्र इयत्प्रत्ययः स्त्रीशब्दात्परोऽस्तीति तस्मिन् परे स्त्री इत्यस्याङ्गसंज्ञायाम् "स्त्रियाः" इति सूत्रेणाङ्गकार्यम् इयङ् स्यात् । विधिग्रहणसत्त्वे तु तत्सामर्थ्यात् ल्यब्लोपपञ्चम्या यमुद्दिश्य प्रत्ययो विहितस्तस्मिन् प्रत्यये तदाद्यङ्गमित्यर्थे वतुपः स्त्रीशब्दमुद्दिश्य विहितत्वाभावेन इयत्प्रत्यये स्त्री इत्यस्य नाङ्गसंज्ञेति इयङोऽप्राप्तिः ।

न च विधिग्रहणेऽपि सुनिरूपिताङ्गत्वस्य स्त्रीशब्दे सत्त्वाद्दोषतादवस्थ्यम्, प्रत्यासत्तिन्यायेन यस्मिन् प्रत्यये परे आदेशस्तन्निरूपिताङ्गत्वस्यैव विवक्षितत्वेन अजादिप्रत्ययप्रयोज्याङ्गसंज्ञावतः स्त्रीशब्दस्य अजादौ प्रत्यये परे इयङादेशविधानेन "स्त्री इयती" इत्यत्र दोषाभावात् ।

न च विधिग्रहणाभावेऽपि हल्लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन नेयङापत्तिरिति वाच्यम्, इयङः पदचरमावयवविधित्वेन 'न पदान्त' इति निषेधात् , पदसंस्कारपक्षे स्त्रीशब्दस्य इयतीशब्देन समं लोपानन्तरमेव योगेन स्थानीभूतादचः पूर्वत्वेन दृष्टस्य कार्याभावेन स्थानिवत्त्वाप्रवृत्तेश्च ।

न च इयङादेशे कर्तव्ये हल्लोपस्याभीयासिद्धत्वेन अजादिप्रत्ययाव्यवहितपूर्वस्य स्त्रीशब्दस्याभावेन न दोष इति वाच्यम्, उभयोराभीययोरन्यूनानतिरिक्तनिमित्तकत्वे एव 'असिद्धवदात्राभात्' इत्यस्य प्रवृत्त्या प्रकृते 'स्त्रियाः' इत्यस्य 'यस्येति च' इति लोपापेक्षया अधिकस्य स्त्रीशब्दस्यापेक्षणेन व्याश्रयत्वात्। आभीयासिद्धत्वस्य 'अल्लोपोऽनः' इत्यत्र। आभीयासिद्धत्वस्य व्याश्रयत्वेऽपि प्रवृत्तिस्त्वशक्या, "पपुषः, चिच्युषः, इत्याद्यसिद्ध्यापत्तेः। इह चि-पाधातोः परस्य वसोर्यसम्प्रसारणं तस्य 'आतो लोप इटि च' इति, 'एरनेकाचः' इति च कर्तव्ये ऽसिद्धतया यणाल्लोपयोरप्रवृत्त्यापत्तेः। समानाश्रयत्वे एवासिद्धत्वस्वीकारे तु आल्लोपादीनि कर्णौ सम्प्रसारणं तु विभक्ताविति न दोषः।

न च "अभ्यासस्यासवर्णे" इत्यतोऽसवर्णे इत्यनुवृत्त्या असवर्णाजादौ प्रत्यये एव इयङः प्रवृत्त्या न दोष इति वाच्यम्, एवमपि 'स्त्री अधुना' इत्यादावसवर्णाजादिप्रत्ययसत्त्वेन दोषतादवस्थ्यात्। यदि तु "अधुना" इति सूत्रेण धुनाप्रत्यय इदमोऽशादेशश्च निपात्यते तदा "ऐत्" इति तिङन्ताद् "तिङश्च" इत्यकचि "स्त्री अकैत्" इत्यत्रासवर्णाजादिप्रत्ययसत्त्वेनेयङापत्तिर्दोषो बोध्यः।

न च "वाम्शसोः" इत्युत्तरसूत्रस्य सुप्येव प्रवृत्त्या तत्साहचर्येणास्यापि सुप्येव प्रवृत्त्या न दोष इति वाच्यम्, साहचर्यस्यानित्यत्वात् सूत्रान्तरसाहचर्यस्य प्रामाणिकैरनङ्गीकाराच्च। ननु "स्त्री इयती" इत्यत्र "यचि भम्" इति भत्वेन पदत्वबाधात् "न पदान्त" इति निषेधस्याप्राप्त्या हल्लोपस्य स्थानिवत्त्वेन "स्त्रियाः" इत्यस्याप्राप्त्या न दोष इति चेन्न, "अभनकक्" इत्यत्र "अभन्" इत्यस्य भत्वेन "अल्लोपोऽनः" इत्यल्लोपापत्तेः।

न च यादिप्रत्ययस्य स्वप्रकृत्यघटकस्यैव सम्भवेन तत्साहचर्यादजादिप्रत्ययस्यापि तादृशस्यैव ग्रहणेन 'यचि भम्' इति भत्वाप्राप्त्या 'अभनकक्' इत्यत्र न दोष इति वाच्यम्, साहचर्यानित्यत्वस्य पूर्वमुक्तत्वात्। किञ्च "भनक्ति" इत्यादौ "भ" इत्यस्य अमि प्रत्यये परेऽङ्गतया "अतो दीर्घो यञि" इति दीर्घापत्तिर्दोषः।

न च तत्र "भूसुवोस्तिङि" इत्यतस्तिङित्यस्यानुवृत्त्या यञादौ तिङि एव दीर्घे न दोष इति वाच्यम्, 'ज्ञाजनोर्जा' इति सूत्रभाष्यविरोधापत्तेः। तत्र जमात्रादेशं कृत्वा 'अतो दीर्घः' इति दीर्घेण 'जानाति' इत्यादेः सिद्धिं प्रदर्श्य "जा" इति दीर्घादेशविधानं 'अङ्गकार्ये कृते नाङ्गकार्यम्' इति परिभाषायां ज्ञापकमुक्तं भाष्यकृता तिङित्यनुवृत्तौ तु दीर्घाप्राप्त्या भाष्यविरोधः स्पष्ट एव।

यदि तु विधिग्रहणखण्डने सूत्रकारविरोध इव भाष्यविरोधोऽप्यकिञ्चित्कर इत्युच्यते तदा विधिग्रहणं सुत्यजम्। यद्वा अशब्दादौविभक्तौ वृद्धौ वारिशब्देन योगे "वारि औ" इत्यत्र पराविवक्षावेन विभक्तित्वादनतेडंप्रत्यये टिलोपे च सति पूर्वान्तवद्भावेन प्रत्ययत्वाच्च "इकोऽचि विभक्तौ" इति नुमापत्तिर्दोषः। न च "सुपि" इत्यनुवृत्त्यैव सिद्धे 'इकोऽचि' इत्यत्र विभक्ताविति अनतिदिष्टविभक्तिलाभार्थमिति "वारि औ" इत्यदोषः; एवमपि "स्त्री औ" इत्यत्र इयङ्वारणार्थं विधिग्रहणमित्यस्य वक्तुं शक्यत्वात्। केचित्तु विधिग्रहणाभावे परशब्दाध्याहारे तदादिग्रहणं विनापि विकरणविशिष्टस्याङ्गत्वे सिद्धे तदादिग्रहणवैयर्थ्यापत्त्या तत्सामर्थ्यादेव यस्मादिति पञ्चम्या ल्यब्लोप पञ्चमीत्वकल्पनेन यमुद्दिश्य विहित इत्यर्थलाभेन विधिग्रहणं व्यर्थमेवेत्याहुः।

अत्र भाष्ये "यस्मात्प्रत्ययविधिस्तदादि प्रत्यये" इत्येकसूत्रम्। "नेयङः" इत्यत 'अस्त्री' इत्यनुवर्त्य प्रधानन्यायेन प्रधानीभूतस्यर्थभिन्ने प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठते इत्यर्थः। तेन "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषा सिद्धा। "परमकारीषगन्धीपुत्रः" इत्यत्र प्रधानाभूतस्त्र्यर्थकत्वान्न तदादेर्ग्रहणम्। ततः "अङ्गम्" इति

'प्रत्यये' किम्—प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत् ।

---

तृतीयं सूत्रम् । अत्र पूर्वसूत्रं सम्पूर्णमनुवर्तते । यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गसंज्ञं भवतीति मूलोक्तार्थकमङ्गसंज्ञाविधायकम् ।

प्रत्यये किमितीति—यस्मात्प्रत्ययविधिस्तदाद्यङ्गमित्येव सूत्रम्, सप्तम्यन्तं प्रत्ययग्रहणं किमर्थमिति प्रश्नः । यस्मात्प्रत्ययविधिरिति प्रत्ययस्य श्रुतत्वात्तदवधि प्रत्ययं मर्य्यादीकृत्यैवाङ्गं भविष्यति किं प्रत्ययग्रहणेनेति भावः । प्रत्ययविशिष्टस्येति—यस्मात् प्रत्यय इति प्रत्ययपदस्य तदादिघटकतत्पदार्थनिरूपकत्वेन चरितार्थतया मर्य्यादारूपावध्यर्थत्वं तस्येति वक्तुमशक्यत्वेन तदादिशब्दस्वरूपं कियदित्याकाङ्क्षायां प्रत्ययान्तस्य ततोऽप्यधिकस्य वाऽङ्गत्वं स्यात्तद्वारणार्थं प्रत्यये इति ।

न च विशिष्टाङ्गत्वे "टाङसिङसाम्" इत्यादीनां वैयर्थ्यम्, अदन्तादङ्गात्परेषां टादीनामभावात् इति वाच्यम्, अङ्गस्य योऽत् ततः परेषां टादीनामिनादयः स्युरित्यर्थेन चारितार्थ्यात् । एवम् "बहुवचने झल्येत्" इत्यादीनामपि झलादिबहुवचनाव्यवहितस्याङ्गावयवस्यात एत्वमित्यादर्थेन चारितार्थ्यमूह्यम् ।

प्रत्ययविशिष्टस्याङ्गत्वे वव्रश्चेति, 'व्रश्चेर्लिटि द्विर्वचने कृते रेफस्य "हलादि शेषः" इति निवृत्तिः, सम्प्रसारणञ्च प्राप्नोति । तत्र उभयेषां ग्रहणसामर्थ्येन संप्रसारणस्य बलवत्वात्पूर्वविप्रतिषेधाच्च सम्प्रसारणे 'उरत्' इत्यत्वस्याङ्गेन प्रत्ययस्याक्षेपाद् अङ्गसंज्ञाद्वारा परम्परया वा परनिमित्तकात्वस्य स्थानिवद्भावेन 'न सम्प्रसारणे' इति वस्य सम्प्रसारणनिषेधः सिध्यति ।

यद्यङ्गसंज्ञाशास्त्रे प्रत्यये इति न स्यत्तदा अङ्गाक्षेपासम्भवात् उदरत्वस्य परनिमित्तकत्वाभावेन स्थानिवद्भावाभावाद् "न सम्प्रसारणे" इति निषेधाप्रवृत्त्या 'वव्रश्च' इत्यत्र द्वितीयवस्य सम्प्रसारणापत्तिः ।

यदि तु सम्प्रसारणपदं सम्प्रसारणाज्जातपरमपि तदा स्थानिवद्भावाभावेऽसम्प्रसारणजातं रेफमादाय 'ग्रः सम्प्रसारणम्' इति ज्ञापकाद् अभ्यासनिमित्तकशास्त्राणां द्वित्वनिमित्तप्रत्ययनिमित्तकत्वम् । अत एव 'जिह्वायर्कायिषति' इत्यादौ 'अभ्यस्तस्य च' इति सम्प्रसारणं न इति उरदत्वस्यापि णिच्निमित्तकत्वेन स्थानिवद्भावेन सम्प्रसारणपरत्वमाश्रित्य वा 'वव्रश्च' इत्यादौ दोषाभाव इत्यरुचेराह—ततोऽप्यधिकस्य वेति—प्रत्यय इत्यस्याभावे 'देवदत्त ओदनमपाक्षीत्' इत्यत्र सुप्प्रत्ययनिमित्तकाङ्गसंज्ञायां लुङि परतो देवदत्तविशिष्टसमुदायस्य सत्त्वेन देवदत्तशब्दात्पूर्वमडापत्तिः । अङ्गसंज्ञायाः प्रत्ययनिमित्तकत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वात् । "राजपुरुषः" इत्यादौ 'राजन्' इत्यादेः "सुप्तिङन्तम्" इति पदसंज्ञाया अपि लुप्तप्रत्ययनिमितकत्वेन "न लुमता" इति प्रत्ययलक्षणप्रतिषेधात्पदत्वानापत्त्या नलोपानापत्तिस्तु न दोषः "न लुमता तस्मिन्" इति वार्तिकन्यासपक्षेऽदोषात् ।

केचित्तु अधिकस्याङ्गसंज्ञायाम् । श्र्यर्थम्, भ्वर्थम्, इत्यादौ श्रीभूशब्दाच् चतुर्थीविधानस्य सत्वात् श्री—भूशब्दयोरङ्गावयवयोरियङाद्यापत्तिः । प्रत्यये इत्यस्य सत्त्वे तु अङ्गशब्दस्य सम्बन्धिशब्दत्वाद्यस्मिन्नजादौ प्रत्यये यस्याङ्गसंज्ञा तस्मिन्नेव तस्याङ्गकार्य्यमियङादिकं भवतीति न दोषः ।

किञ्च उपपूर्वकाद्वसेः क्वसौ ततः टायाम् 'उप वस् वस् आ' इति स्थितौ वसोः प्रत्ययस्य सम्प्रसारणे कृते "न सम्प्रसारणे" इति निषेधाद् धातोः सम्प्रसारणं न प्राप्नोति इति "समानाङ्गग्रहणञ्च" कर्त्तव्यम्" इति भाष्ये उक्तम् । तथा च क्वसौ परतो धातोरेकाङ्गसंज्ञा, टायां द्वितीयेति । "यस्याङ्गस्य सम्प्रसारणप्राप्तिस्तस्मिन् द्वितीया प्राप्तिः सा प्रतिषिध्यते । अत्र च वसिः क्वसावङ्गम्, क्वसन्तं पुनर्विभक्तौ" इत्युक्तमिति समानाङ्गत्वाभावान्न निषेधः । एतच्च प्रत्यये इत्यस्य सत्त्वे एव । तदभावे तु क्वसन्तस्यैकैवाङ्गसंज्ञेति धातोः सम्प्रसारणप्रतिषेधे 'उपोषुषा' इति रूपासिद्धिर्दोष इत्याहुरित्यलमतिविस्तरेण ।

अङ्गस्य । [ ६-४-१ ]

इत्यधिकृत्य ।

टाङसिङसामिनात्स्याः । [ ७-१-१२ ]

अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः ।

"अङ्गस्य इति । अधिकृत्येति — अस्य "टा-ङसि-ङसामिनात्स्या वाच्या इति शेषः। तेनाधिकारस्य पूर्वकालिकत्वाक्त्वप्रसिद्धिः । सप्तमाध्यायसमाप्तिपर्यन्तमस्याधिकारः = स्वदेशे शाब्द-बोधाजनकत्वे सति उत्तरसूत्रेष्वनुवर्त्तनम् ।

"टा-ङसि-ङसामिनात्स्या." इति । "अतो भिस ऐस्" इत्यतः 'अतः' इति पञ्चम्यन्त-मनुवर्तते । अङ्गस्येत्यधिकृतम् अर्थवशाद्विभक्तिविपरिणाम इति सिद्धान्तात् पञ्चम्यन्तेन विपरिणम्यते, अभेदेन विशेष्यविशेषणभावे समानविभक्तिकत्वस्य प्रायो दर्शनात् ।

यद्यपि विशेष्याधीनं विशेषणमित्येव नियमो न तु विशेषणाधीनं विशेष्यमिति विशेष्यस्य पञ्चम्यन्तत्वेन विपरिणामोऽयुक्तस्तथापि लक्ष्यानुसारादत्र विशेष्यस्यापि विशेषणानुरोधेन विपरिणा-मस्य वृद्धसम्मतत्वम् । यद्वा "अतः परेषामङ्गसंज्ञानिमित्तानां टादीनामिनादय आदेशाः स्युः" इत्येवार्थोऽस्तु । क्रमादिति—यथासंख्यालब्धमिदम् । टा-ङसि-ङसां त्रयाणां स्थाने क्रमेण इन-आत्-स्य एते त्रय आदेशाः स्युरित्यर्थः । अत्र भाष्ये 'न' इत्येवादेशं स्वीकृत्य इकारग्रहणं प्रत्या-ख्यातम् । तथा च 'राम न' इत्यत्र "बहुवचने झल्येत्" इत्यतः परम् 'आङोसोः' इति सूत्रम् आङि ओसि च अदन्ताङ्गस्य एत्वम् । इति 'रामेन' इति जाते ।

ततः 'आपः सम्बुद्धौ च' इति तृतीयं सूत्रम् । अत्र चकाराद् 'आङोसोः' इत्यनुवर्तते । आप एकारः आङोसोः सम्बुद्धौ चेत्येवं न्यासः ।

न च 'अनेन' इत्यत्र 'इद न' इति दशायाम् 'हलि लोपः' इतीदो लोपापत्तिः । 'हलि लोप' इति न्यासस्तु कर्तुमशक्यः, छन्दसि इदमस्तुर्येकवचनस्य 'सुपां सुलुक्' इति यादेशे 'अया' इत्यत्र लोपानापत्तेरिति वाच्यम्, ने आपि च इदोऽनादेश इत्यर्थकम् लुप्तनिर्दिष्टं नकारं प्रश्लिष्य 'अत्' इति नपुंसकम् । 'अनाप्यकः' इत्यत्र लोपबाधकानादेशविधानेनादोषात् ।

एवम् 'अत्' इत्यादेशेन 'रामात्' इत्यादिसिद्ध्या 'आत्' इति दीर्घादेशोऽपि भाष्ये प्रत्या-ख्यातः । न चादादेशे पररूपापत्तिः, पररूपे अकारस्य वैयर्थ्येन तद्बाधात् । न च सवर्णदीर्घस्यापि बाधापत्तिः सवर्णदीर्घे अकारवैयर्थ्याभावेन 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते" इति भाष्योक्तन्यायेन पररूपस्यैव बाधकल्पनात् ।

न च सर्वादेशविधानेनाकारस्य चारितार्थ्यम्, तकारमात्रविधानेऽपि ङसेरकारस्य 'आदेः परस्य' इति तादेशे सकारस्य संयोगान्तलोपे च रूपसिद्धेः । न च अतिजरशब्दात् टापां ङसि च इनादादेशयोः 'अतिजरसिन' अतिजरसात्' इति सिद्ध्यर्थम् इनात्करणम्, सन्निपातपरिभाषया जरसादेशाभावेन "अतिजरेण" 'अतिजरात्' इत्यस्यैवेष्टत्वात् ।

न चोक्तरीत्या इकारदीर्घाकारवैयर्थ्येन सन्निपातपरिभाषाया अनित्यत्वकल्पनेन जरसादेशे तयोश्चारितार्थ्यम् भाष्यकृतस्तत्खण्डनविरोधापत्त्या अनित्यत्वकल्पनाया अन्याय्यत्वात् ।

ननु अतः, अङ्गस्य च यदा अभेदस्तदा अत इति विशेषणम् "येन विधिः" इत्यनेन तदन्तस्य संज्ञा । तदन्तस्य संज्ञायाञ्च अदन्तमङ्गम् इति विशेष्यविशेषणभाव इति अन्योन्याश्रयात् अत इति तदन्तस्य संज्ञा न स्यादिति चेन्न, अशब्दात् ब्यामादौ अरूपाङ्गस्य सत्त्वेन अत् इत्यस्य विशेषणत्वात् तदन्तसंज्ञाया अक्षतत्वादिति दिक् ।

णत्वम् । रामेण ।

'सुपि च' । [ ७-३-१०२ ]

यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ।

णत्वमिति—णकार इत्यर्थः, णकाराभिन्नो यो णपदवाच्यस्तस्यैव णपदवाच्यत्वेन तत्र णकारस्य विशेषणतया त्वप्रत्ययवाच्यन्वसिद्धेः । यद्वा धर्मिणो णकारस्य ब्रह्मरूपतया तस्य सिद्धरूपतया विधानासम्भवेन धर्माणामेव कल्पितानामेव विधेयत्वेन णत्वमित्युक्तिरुचितैव ।

वस्तुतस्तु अपूर्वबोध्यत्वरूपविधेयत्वस्य कालत्रयाबाधिते नित्येऽपि ब्रह्मणि सम्भवेन णकारस्य विधेयत्वमपि युक्तमेव ।

"सुपि च" इति । 'अतो दीर्घो यञि' इति सूत्रमनुवर्तते । यञीति विशेषणं सुपीति विशेष्यम् । "यस्मिन् विधिस्तदादावल्ग्रहणे" इति परिभाषया अल्मात्रबोधकं यत्सप्तम्यन्तं विशेषणं तत्तदादिपरमित्यर्थिकया यञित्यस्य यञादावित्यर्थेनाह—अदन्ताङ्गस्य दीर्घः स्याद्यञादौ सुपीति ।

न च यञ्रूपसुपोऽभावेन यञो विशेषणत्वाभावेन तदादिपरत्वानापत्तिः, "यस्मिन् विधिः" इत्यस्य विशेषणं तदादिविध्युत्तरं विशेषणत्वेन सम्भावितं च यदल्मात्रबोधकं सप्तम्यन्तं तत्तदादिपरमित्यर्थेनादोषात् । अत एव सुपि चेत्यस्य न वैयर्थ्यम् । अदन्तस्येति किम् 'अग्निभ्याम्' । यञीति किम् 'रामः' ।

ननु 'सुपि च' इति माऽस्तु "अतो दीर्घो यञि" इत्यत्र 'सार्वधातुके' इत्यननुवर्त्य तेनैव 'रामाभ्याम्' इत्यादौ दीर्घविधानात् । न च 'केशवः' इत्यादौ दीर्घापत्तिः, "केशाद्वः" इति न्यासेनादोषात् । न च केशमाचष्टे इत्यर्थे णिचि टिलोपे क्विपि केट्शब्दात् स्थानिवद्भावेन केशशब्दतया वप्रत्यये 'केश्वः' इतीष्यते, अवप्रत्यये तु तत्र स्यादिति वाच्यम्, "आरगुदीचाम्" इत्यत्र रका 'गोधारः' इत्यस्य सिद्धे आग्रहणमन्यतोऽपि विधानार्थमिति भाष्योक्त्या णिजन्तात्तद्धितानामनभिधानात् । न च आबन्तप्रकृतिकणिजन्तादेवानभिधानमिति वाच्यम्, 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति लाघवमूलकन्यायेन सामान्यापेक्षज्ञापनस्यैवौचित्यात् ।

न च "वासुदेवार्जुनाभ्यां वुन्" इत्यत्र कना सिद्धे वुन्ग्रहणं ण्यन्तात् 'अर्जुनकः' इत्यादिसिद्ध्यर्थम्, तत्र ण्यन्तात्तद्धितानभिधाने विरुध्येतेति बाधादुक्तविशेषापेक्षज्ञापने अवप्रत्यये ण्यन्तात् 'केशवः' इत्यनिष्टं स्यादिति वाच्यम्, अर्जुनशब्दस्य उशब्देन समासे अर्जुनोशब्दस्यापि पूर्वान्तवद्भावेनार्जुनशब्दतया ततो वुनि 'अर्जुनवकः' इत्यस्य सिद्धये वुन्ग्रहणस्य चारितार्थ्येन 'विशेषापेक्षज्ञापने' मानाभावेन ण्यन्ते 'केशाद्वः' इत्यस्याप्रवृत्तेः ।

यदि तु गोधाशब्दस्य उशब्देन समासे गोधोशब्दात् पूर्वान्तवद्भावेन आरकि "गौधवारः" इत्यस्य सिद्धये आग्रहणस्य चारितार्थ्येन अन्यतो विधानार्थज्ञापनपरभाष्यविरोधापत्त्या पूर्वान्तवद्भावेन तच्छब्दत्वमादायापि तद्धितानुत्पत्तिरिति कल्प्यते तदा वुन्ग्रहणस्य ण्यन्ते एव सार्थक्येन वुन्ग्रहणेन विशेषापेक्षज्ञापनस्यैवौचित्येन "केशाद्वः" इति न्यासस्य कर्तुमशक्यतया 'केशवः, अङ्गना,' इत्यादौ दीर्घवारणाय । "अतो यञि" इति सूत्रे सार्वधातुके इत्यस्यानुवृत्तेरावश्यकता तदा 'रामाभ्याम्' इत्याद्यर्थमेव सुपि चेति सूत्रं सार्थकम् ।

• "त्रिनभ्यां नानाञौ" इति ञित्करणेन "अतो यञि" इत्यस्य तद्धितेऽप्रवृत्तिरिति तु वक्तुमशक्यम्, ञित्करणस्याद्युदात्तार्थं चारितार्थ्यात् । न च "वेर्ना" "नञ उदात्तश्च" इति न्यासेन आद्युदात्तत्वसिद्धिः, उत्तरसूत्रे ना इत्यनुवर्तते इति वाच्यम्, योगविभागोदात्तग्रहणकरणे गौरवात् । पूर्वोक्तज्ञापनप्रयुक्तगौरवाच्च ।

यदि 'ना' इत्यनुवृत्त्यैव सिद्धे नाप्रत्ययाकरणेन लाघवादुक्तन्यासेनाद्युदात्तत्वे सिद्धे ञित्करणेन तद्धितप्रत्यये परे 'अतो यञि' इति न प्रवर्तते इति कल्प्यते तदा सुपि चेति सुत्यजम् ।

यत्तु 'केचित्तु' 'शरादीनाञ्च' इति सूत्रं 'शरावती' इत्यत्र दीर्घार्थम् । तच्च 'अतो दीर्घो यञि' इति दीर्घेण नियमार्थं भविष्यति तद्धिते दीर्घः शरादीनामेवेति 'केशवः' इत्यादौ न दीर्घ इति तदसत्, शरस्य इः शरे नपुंसकह्रस्वत्वे शरिशब्दान्मतुपि 'शरीमती' इत्यत्र दीर्घार्थं सूत्रस्य चारितार्थ्येन नियामकत्वाभावाद् शरादीनां दीर्घश्चेत्तर्हि तद्धिते एवेति नियमेन 'शराभ्याम्' इत्यादौ दीर्घानापत्तेश्चेति, तत्र शरादिगणे 'अहि, मणि, कपि इत्यादीनां षण्णामिकारान्तानां दीर्घार्थं सूत्रस्य चारितार्थ्येन नियामकत्वासम्भवेऽपि शरादिगणे शरवंशधूमशब्दपाठवैयर्थ्येन तद्धिते 'अतो दीर्घो यञि' इति न प्रवर्तते इत्यस्य ज्ञापयितुं शक्यत्वात् ।

यत्तु शरशब्दस्य इशब्देन समासे चारितार्थ्यप्रदर्शनं तदपि चिन्त्यम्, आरगुदीचाम् इति भाष्येण पूर्वान्तवद्भावेन तच्छब्दत्वमादाय तद्धितविषये तत्कार्याभावज्ञापनात् शरिमतीत्यादौ दीर्घाप्राप्तेः । पामादिभ्योऽन्विधानेन 'अङ्कना' इत्यस्य तु न सिद्धिः, पामन्, वामन्, हेमन्, वेमन् इत्यादिभ्योऽनि 'अल्लोपोऽनः' इत्यस्य प्रवृत्त्या रूपासिद्धेः । एतेन अन्प्रत्यये 'लक्ष्म्या अ च' इति गणसूत्रं न कर्तव्यमित्यपि परास्तम् ।

न च सुपि चेत्यस्याभावे 'राजभ्याम्' इत्यादौ दीर्घापत्तिः, अतो दीर्घ इत्यस्य सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तताकत्वाभावेन 'नलोपः सुप्स्वर' इत्यनेन उक्तसुब्निमित्तताकविधावेव नलोपासिद्धत्वबोधनेनात्र तदप्राप्तेः ।

न च येन केन रूपेण सुब्निमित्तके विधौ नलोपासिद्धत्वं तेन बोध्यते । प्रकृते च प्रत्ययत्वेन दीर्घेऽपि सुपो निमित्तत्वमस्त्येवेति नलोपासिद्धतया दीर्घाप्राप्तिः, तथा सति 'दण्डिषु' इत्यादौ षत्वस्यापि सुब्निमित्तकतया नलोपासिद्धतया षत्वानापत्तेरिति वाच्यम्, 'नलोपः सुप्स्वर' इत्यत्र पूर्वत्रेत्यस्यानुवृत्त्या नलोपापेक्षया पूर्वत्र सुबादिविधावेव कर्तव्ये नलोपासिद्धत्वबोधनेन परस्मिन् षत्वविधौ नलोपासिद्धत्वाप्राप्त्या येन केनापि रूपेण सुब्निमित्तके विधौ नलोपासिद्धत्वबोधने दोषाभावात् ।

वस्तुतस्तु येन केनापि रूपेण सुब्निमित्तके विधौ नलोपासिद्धत्वस्वीकारो न युक्तः, राजानमिच्छति राजीयति । ततः क्विपि अल्लोपयलोपयो राजीशब्दादौविभक्तौ "एरनेकाचः" इति यणि कर्तव्येऽसिद्धत्वापत्त्या सुप्त्वव्याप्या या विषयता तादृशविषयताकविधौ नलोपस्यासिद्धत्वमनेन प्रतिपाद्यते ।

तथा च षत्वशास्त्रीयप्रत्ययत्वावच्छिन्नशब्दविषयताया यणशास्त्रीयविषयतायाश्च सुब्भिन्नप्रत्यये तिङादावपि सत्त्वेन सुप्त्वाव्यापकतयाऽसिद्धत्वाभावे षत्वादीनां सिद्धिः । अतो दीर्घो यञीति दीर्घस्यापि सुप्त्वव्याप्यनिमित्तताख्यविषयताकत्वाभावेन 'राजभ्याम्' इत्यादावसिद्धत्वाभावे दीर्घापत्तिर्दुर्वारैवेति "सुपि च" इति सूत्रमावश्यकम् ।

अन्ये तु संज्ञा च आश्च एश्च ऐश्चेति द्वन्द्वेन प्रश्लिष्य आत्वे एत्वे ऐत्वे च कर्तव्ये नलोपासिद्धत्वबोधनेन 'अत आ यञि' इति न्यासेन प्रतिपदोक्तपरिभाषया आशब्दमुच्चार्य आविधाने नलोपासिद्धतया 'राजभ्याम्' इत्यादावसिद्धत्वम् 'राजाश्वः' इत्यादौ चासिद्धत्वाभाव इत्यदोष इति सुपि चेति सुत्यजमित्याहुः ।

न च सुपि चेति सूत्राभावे अय्, पय्—दयादिधातोर्वनिपि यलोपे अवा, पवा, दवा इत्यादौ "अत आ यञि" इति दीर्घापत्तिरिति वाच्यम्, "विड्वनोरनुनासिकस्यात्" इत्यनेन ह्रस्वाकारविधानेऽपि अनेन दीर्घे 'विजावा' इत्यादिरूपसिद्ध्या आद्विधानं व्यर्थीभूय ज्ञापयति—कृति परे 'अत आ यञि' सूत्रं न प्रवर्तते इति ज्ञापनेनादोषात् ।

न च विटि 'विजावा' इत्यत्र वेर्लोपे यञादिप्रत्ययपरत्वाभावात् 'अत आ यञि' इत्यस्याप्राप्त्या तत्र आविधानं चरितार्थम्, अन्तरङ्गत्वाद् वेर्लोपेऽपि प्रत्ययलक्षणेन यञादिप्रत्ययपरत्वमादाय

## अतो भिस ऐस् । [ ७-१-९ ]

अकारान्तादङ्गाद्भिस ऐस् स्यात् । अनेकाल्त्वात्सर्वादेशः । रामैः ।

---

माद्विधानसिद्धेः । न च 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधेन यञ्रूपवर्णाश्रयतया प्रत्ययलक्षणाप्राप्तिः, निषेधस्य वर्णप्राधान्ये एव प्रवृत्तेः ।

अन्ये तु 'पचध्वम्' इत्यादौ "बहुवचने झल्येत्" इत्यस्याप्रवृत्तये अनुवृत्त्यर्थं सुपि चेति सूत्रम्। तत्र 'अध्वम्' प्रत्ययस्तु कर्तुमशक्यः 'चकृढ्वे' इत्याद्यसिद्ध्यापत्तेः । न च "बहुवचने स्येत्" इति न्यासेन सकारभकारादौ बहुवचने एत्वेनादोषः, "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदे "संगसीरन्" इत्यत्र तु नैत्वम् भकारादिबहुवचनस्य सुप एव सम्भवेन तत्साहचर्यात्सादेरपि सुप एव ग्रहणादिति वाच्यम्, 'पट्वी' इत्यादौ "घेर्ङिति" इत्यस्याप्रवृत्तये सुपि चेत्यनुवृत्त्यर्थमावश्यकत्वात् ।

ननु तत्र टापो विधानाददोषः । न च पट्वीवाचरति 'पट्वयते' इत्यत्र "अनुदात्तङित आत्मनेपदम्" इत्यात्मनेपदार्थं ङित्करणमावश्यकम्, "ब्राह्मणमाणववाडवाद्यन्" इत्यत्र "केदाराद्यञ्च" इत्यतो यञोऽनुवृत्त्या सिद्धे यन्ग्रहणमन्यतो विधानार्थम् 'पृष्ठ्यम्' इति भाष्योक्त्या प्रातिपदिकप्रत्ययगतमनुबन्धमादाय "अनुदात्तङितः" इत्यादीनामप्रवृत्तिबोधनादिति चेन्न, 'कुरुतः' इत्यादौ "घेर्ङिति" इत्यस्याप्रवृत्तये "सुपि च" इत्यनुवृत्तेरावश्यकत्वात् ।

यदि तु "घेर्ङिति" इत्यस्य ङश्चासौ इत् च ङित् इत्संज्ञकङकारादौ प्रत्यये घेर्गुण इत्युच्यते, तदा कुरुत इत्यादौ दोषाभावात् 'सुपि च' इति सूत्रं चिन्त्यम् । न च इत्संज्ञकङकारादौ घेर्गुण इत्यर्थे 'प्रबाह्वा' इत्यत्र दोषः, "आङ्याजारामुपसंख्यानम्" इत्यनेन प्रबाहुशब्दात् टाप्रत्यये टाइत्यस्याङादेशे "घेर्ङिति" इति गुणे अवादेशे चोक्तं रूपं जायते । इत्संज्ञकङकारादौ गुणे तु घेर्ङितीत्यस्याप्राप्त्या गुणासिद्धिरिति वाच्यम्, तत्र ङारूपादेशविधानेन गुणसिद्धेः ।

वस्तुतस्तु तत्र तत्रानेकक्लिष्टकल्पनाकरणापेक्षया "सुपि च" इति सूत्रकरणमेव ज्यायः । अनभिहिते कर्तरि करणे वा बहुत्वविवक्षायाम् 'राम भिस्' इति स्थिते ।

"अतो भिस ऐस्" इति । अङ्गस्येत्यधिक्रियते । तच्च 'अतः' इति पञ्चम्यन्तविशेषणवशात् पञ्चम्यन्तेन विपरिणम्यते । न च 'अतः' इत्यस्य पञ्चम्यन्तत्वे मानाभावः, "इह उभयं ( आदेः परस्य, अनेकाल्शित्सर्वस्य ) प्राप्नोति "अतो भिस ऐस्" इति भाष्यस्यैव मानत्वात् । अत इति विशेषणं तेन तदन्तपरम् । अत आह—अकारान्तादिति—अत इति किम्—'विश्वपाभिः' इति ।

ननु 'रमाभिः' इत्यत्रैस् प्राप्नोति एकादेशस्य पूर्वान्तवत्त्वेन अदन्तात्परत्वात् । न च तपरसामर्थ्यान्नैस्त्वमिति वाच्यम् अकृतैकादेशे विश्वपाभिः' इत्यादौ चारितार्थ्यादिति चेन्न 'अन्तादिवच्च' इत्यस्य स्थान्यलविधावप्रवृत्तेः, ऐसोऽदन्तत्वनिमित्तकत्वेनाल्विधित्वात् । अन्यथा 'अस्यै अश्वः' इत्यत्र "एङि पररूपम्" इति पररूपापत्तिः । 'जुहाव' इत्यादौ पूर्वान्तवत्वेन "आत औ णलः" इत्यौत्वापत्तिश्च । उक्तं च भाष्ये "वर्णाश्रये चान्तादिवत्वप्रतिषेधो वक्तव्यः" इति । "पत्वतुकोरसिद्धः" तुग्यसिद्धत्वञ्चात्र लिङ्गम् । 'अधीत्य' इत्यादौ तुकः परादिवत्त्वेन सिद्धतया तुक्यसिद्धत्ववैयर्थ्यादिति दिक् । भिसः सस्य नेत्त्वम्, "न विभक्तौ" इति निषेधात् । "आदेः परस्य" इत्यस्यावकाशः "द्वयन्तरुपसर्गेभ्यः" इति, अनेकाल्" इत्यस्य "अस्तेर्भूः" इति । परत्वात् "अनेकाल्" इति सर्वादेशः । "बहुवचने झल्येत्" इत्यस्याप्यपवादत्वाद्बाधकमिदम् । अत्र एस् इत्येव वक्तव्ये ऐसकरणम् "बहुलं छन्दसि" इत्यनतोऽपि 'नद्यैः' इत्युत्तरार्थम् ।

वस्तुतस्तु द्वयोरपि द्विमात्रकत्वात्, प्रयोगे ऐस एव उपस्थितत्वात्, पररूपवारणाय एकारोच्चारणसामर्थ्यकल्पनरूपगौरवाच्च ऐसकरणम् ।

ङेर्यः । [ ७-१-१३ ]

अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् । रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् 'सुपि च' इति दीर्घः ।

यत्तु अतिजरशब्दाद् भिस ऐसि जरसादेशे 'अतिजरसैः' इत्येतदर्थमेतत् इति तन्न, सन्निपातपरिभाषया जरसोऽप्राप्तेः । तदुक्तं भाष्ये—"अतिजरमतिजरैरिति भवितव्यम् । सत्यामेव तस्यां परिभाषायां सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति" इति । 'राम ऐस्' इति जाते वृद्धौ स्थानिवद्भावेन सुप्त्वात्पदत्वम् सम्प्रदानत्वविवक्षायां चतुर्थ्येकवचने 'राम ङे' इत्यत्र "लशक्वतद्धिते" इति ङस्येत्त्वे लोपे च ।

"ङेर्यः" इति । ङेरिति चतुर्थ्येकवचनस्य ग्रहणम् , प्रतिपदोक्तत्वात् , ङि सप्तम्येकवचनस्य ग्रहणेऽनेन तस्य स्मैरादेशः, "ङसिङ्योः" इत्यनेन स्मिन्नादेशश्चेति स्वीकारे "सर्वनाम्नः स्मैस्मिनौ" इत्यनेन ङेरादेशद्वये विधातव्ये ततः "ङसेः स्मात्" इति न्यासेन सिद्धे ङिग्रहणस्य वैयर्थ्यापत्तेश्च । 'सम्प्रसारणे' इति निर्देशेन सप्तम्या अग्रहणम्, 'कष्टाय' इति निर्देशेन चतुर्थ्या ग्रहणमिति तु 'सम्प्रसारणे' इति पररूपेण चतुर्थ्या एव, 'कष्टाय' इति सप्तम्या एव रूपमित्यस्यापि वक्तुं शक्यत्वात् । ङेरित्यत्र ङित्करणं तु घेर्ङितीत्याद्यर्थम् । अतोऽङ्गादिति—अदन्तादङ्गादित्यर्थः । तेन 'रामाय' इत्यादौ न दोषः । अन्यथा अद्ग्रहणादङ्गात्परत्वाभावाद्यादेशानापत्तिः ।

स्थानिवद्भावेनेति—न च दीर्घस्य पररूपानाश्रयत्वेन "अनल्विधौ" इति निषेधापत्तिः, स्थान्यवयवानाश्रयविधानेव निषेधप्रवृत्तेरुक्तत्वात् । तदुक्तं भाष्ये "आदेशिन्यल्याश्रीयमाणे प्रतिषेधः" इति । आदेशिनीत्यस्य स्थानिघटकेऽलीत्यर्थः । ननु यादेशस्य सुप्प्रत्याहारान्तर्गतत्वाभावात् "सुपि च" इति दीर्घानापत्तिरत आह—स्थानिवद्भावेन सुप्त्वादिति—स्थानिवत्सूत्रञ्चातिदेशसूत्रम् ।

अतिदेशश्च तदभाववति तत्प्रकारकं ज्ञानम् । तच्च सप्तधा—१–निमित्तातिदेशः, २–व्यपदेशातिदेशः, ३–तादात्म्यातिदेशः, ४–शास्त्रातिदेशः, ५–कार्य्यातिदेशः, ६–रूपातिदेशः, ७–अर्थातिदेशः ।

तदुक्तम्—"कार्य्यरूपनिमित्तार्थं शास्त्रतादात्म्यशब्दिताः ।
व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते ॥" इति ।

१–'चिकीर्षते' इत्यत्र 'सनन्ते ङित्त्वरूपनिमित्तातिदेशात् 'पूर्ववत्सनः' इत्यात्मनेपदम् । २–औपगवः" इत्यादौ अरूपे प्रत्यये समुदायसाध्यप्रत्ययादित्वस्य अनीरादौ प्रसिद्धस्य व्यपदेशस्य "आद्यन्तवदेकस्मिन्' इत्यतिदेशः । व्यपदेशो मुख्यव्यवहारः । ३–'द्रवत्पाणी शुभस्पती' इत्यत्र "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यनेन शुभ इति षष्ठ्यन्तस्य परभूतामन्त्रिताङ्गतादात्म्यातिदेशेन "आमन्त्रितस्य" इत्याद्युदात्तत्वं सिध्यति । ४—प्रावृड्देवता अस्य इत्यर्थे "कालेभ्यो भववत्" इत्यनेन 'तत्र भवः" इति भवार्थे यच्छास्त्रं प्रवर्त्तते तद् देवतार्थेऽपि प्रवर्त्स्यते इति "प्रावृष एण्यः" इति भवार्थकः प्रत्ययः सिध्यति । ५–'गौः' इत्यत्र "गोतो णित्" इत्यनेन णितिप्रत्यये अजन्तस्य यत्कार्य्यं वृद्धिरूपं तदतिदिश्यते । "गोतो णित्" इत्यस्य निमित्तातिदेशत्ववादिनये तु कार्य्यातिदेशोदाहरणम् "कर्मवत्कर्मणा तुल्यक्रियः' इत्यत्र बोध्यम् । 'वतण्डी चासौ वृन्दारिका वातण्ड्यवृन्दारिका' इत्यत्र 'पुंवत्कर्मधारयः' इत्यनेन पुंवाचकवातण्ड्यशब्दस्य रूपमतिदिश्यते ।

गार्गी च गार्ग्यायणी चेत्यर्थे गर्गाः । अत्र गोत्रप्रत्ययान्तस्त्रीवाचकस्य "वृद्धो यूना" इत्येकशेषे 'स्त्री पुंवच्च' इत्यनेन स्त्र्यर्थे पुंस्त्वरूपार्थोऽतिदिश्यते । स्त्रियां पुंस्त्वातिदेशादतिदिश्यमानधर्मविरुद्धस्त्रीत्वमप्रयुक्तः 'तद्राजस्य बहुष्वस्त्रियाम्' इत्यतोऽनुवृत्तम्' अस्त्रियामिति पदं निषेधकं न भवति । शब्दस्य रूपातिदेशे तु स्त्रीत्वरूपार्थस्यानिवर्तनात् अस्त्रियामिति निषेधात् 'यञञोश्च' इति यञो लुक् न स्यात् । प्रकृते यादेशे सुप्स्वरूपनिमित्तातिदेशाद् दीर्घः सिध्यति ।

'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा तु नेह प्रवर्तते । 'कष्टाय क्रमणे' इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् ।

ननु 'राम य' इति दशायाम् 'सुपि च' इति प्राप्नोति । 'अकृत्सार्वधातुकयोः' इति च । तत्र परत्वात् 'अकृत्सार्वधातुकयोरि'ति दीर्घेण भवितव्यमिति चेन्न, अकृदित्यादिपर्युदासेन सुब्भिन्ने एव प्रवृत्तेः, फले विशेषाभावेन तुल्यबलविरोधाभावाच्च । वस्तुतस्तु एकस्यैव उभयविधेयत्वं न सम्भवति इत्येकस्य विधायकत्वेऽपूर्वयोध्यत्वरूपविधेयत्वस्यापरप्रवृत्तिकालेऽसत्त्वेन द्वितीयस्यानुवादकत्वं वाच्यम् । इत्येकस्य विधायकत्वमपरस्यानुवादकत्वमिति विरोधसत्त्वेन तुल्यबलविरोधाभाव इत्यसङ्गतम् ।

नन्वस्ति परिभाषा 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति । सन्निपातो द्वयोः सम्बन्धः पौर्वापर्य्यरूपः, विशेष्यविशेषणभावरूपश्च । सन्निपातो लक्षणं=निमित्तं यस्य विधेः= कार्य्यस्य सन्निपातलक्षणः = सम्बन्धनिमित्तकं कार्य्यम् इति यावत् । तद्विघातस्य = तं सन्निपातं यो विहन्ति = विनाशयति स सन्निपातविघातो विधिः = कार्य्यम् । सम्बन्धविनाशककार्य्यस्य सम्बन्धनिमित्तकं कार्य्यं कारणं न भवतीत्यर्थः । अत्र प्रमाणञ्च उपजीव्यविरोधो नोचित इति लौकिकन्याय एव । उपजीव्य आलम्बनीय आश्रयभूत इति यावत् । तस्य विरोध उपजीवकेन आलम्बनकर्त्रा न कार्य्यः ।

प्रकृते सुपोऽदन्ताङ्गस्य च यः पौर्वापर्य्यभावसम्बन्धस्तन्निमित्तकं कार्य्यं यादेशरूपम् । स यादेशः, अदन्ताङ्गसुपोः सम्बन्धस्य विनाशकं यद्दीर्घरूपं प्रति निमित्तं न स्यात् । दीर्घे सति अदन्ताङ्गसुपोः सम्बन्धस्य नाशप्रसङ्गात् सम्बन्धिनाशे सम्बन्धनाशस्य नियतत्वात् ।

तथा च यादेशः अदन्ताङ्गसम्बन्धविनाशकदीर्घस्य निमित्तं न स्यादिति तु इह 'रामाय' इति चतुर्थ्येकवचने न । "कष्टाय क्रमणे" इति सूत्रे कष्टाय इति निर्देशेन निर्दिश्यते उच्चार्य्यते इति निर्देशस्तेन 'कष्टाय' इति दीर्घघटितशब्दज्ञानेनेत्यर्थः ।

इत्यादीति—आदिना 'यूपाय दारु' इत्यादि भाष्यप्रयोगसंग्रहः । परिभाषाया अप्रवृत्तिर्नात्र चतुर्थ्येकवचनादेशः स्वसन्निपातविनाशनिमित्तत्वाभावाभावान्, कष्टायेतिशब्दघटकदीर्घनिष्ठकार्य्यतानिरूपितकारणतावत्त्वात् यन्नैवं तन्नैवम् यथा शतानीति अनुमितिरूपम् । अत्र साध्यतावच्छेदको हेतुतावच्छेदकश्च स्वरूपसम्बध एव ।

अयम्भावः तत्तद्विधिसूत्रेण कार्य्यविधानन्तु शाब्दम् । यथा प्रकृते दीर्घरूपम्, परन्तु तत्तत्कार्य्यविधानेन शास्त्रस्य साफल्यं न भवितुमर्हति । सुधी उपास्य इति यणघटितप्रयोगवारणस्य कर्तुमशक्यत्वादिति शास्त्रवैयर्थ्यापत्त्या व्यञ्जनया शास्त्रस्य स्वविधेयघटितस्य साधुत्वम् पुण्यजनकतावच्छेदकजातिमत्त्वम्, तदितरस्यासाधुत्वम् ।

पुण्यजनकतावच्छेदकजात्यभाववत्त्वमिति बोधनेऽपि तात्पर्य्यं कल्पते । तथा च पुण्यस्य सुखजनकत्वेनेष्टसाधनतया पुण्यजनकशब्दप्रयोगे एव मनुष्याणां प्रवृत्तिः स्यान्न तु विधेयाघटितस्य प्रयोगे । परन्त्वेवमपि एकस्मिन् लक्ष्येऽनेकशास्त्राणां प्रवृत्तौ स्वस्वविधेयघटितस्य साधुत्वबोधने 'रामेण' इत्यत्र 'टाङसि' इत्यनेन 'राम इन्' इत्यस्य साधुत्वम् । तदितरस्य 'रामेन' इत्यस्यासाधुत्वं स्यात् ।

'आद् गुणः' इत्यनेन 'राम इन' इत्यस्यासाधुत्वं बोधितं स्यादिति परस्परं विरोधे कस्यापि साधुत्वमसाधुत्वञ्च न स्यात् इति पुनः शास्त्रवैयर्थ्यापत्त्या स्वोत्तरप्रवृत्तिमते शास्त्रायाम्यानुज्ञादानेऽपि शास्त्रस्य तात्पर्य्यं कल्प्यते । तच्चाभ्यनुज्ञादानम्, मत्प्रवृत्त्युत्तरं प्रवृत्तिमता शास्त्रेण यद् बोध्यते तदपि साधु इति । इति सर्वेषां शास्त्राणां साधुत्वेव प्रवृत्तिर्नतु 'गगरी' इत्याद्यसाधुशब्दे । सन्निपातपरिभाषया चाभ्यनुज्ञावाक्ये संकोचः कल्प्यते ।

रामाभ्याम् ।

तथा 'शतानि' इत्यत्र नुम्विधायकशास्त्रीयाभ्यनुज्ञावाक्ये 'यत् (नुम्विधायकशास्त्र)' प्रवृत्त्युत्तरं प्रवृत्तिमता यत्सन्निपातविघातकभिन्नेन शास्त्रेण यद् बोध्यते तदपि साधु इति ।

तथा च साधुत्वविधायकशास्त्रस्यैव प्रवृत्तिर्नत्वसाधुत्वविधायकस्य । सन्निपातविघातकशास्त्रस्य 'षड्भ्यो लुक्' इत्यस्य तु नाभ्यनुज्ञेति न तस्य प्रवृत्तिः । एवञ्च फलाभावात् 'ण्यान्ताः षट्' इत्यस्यापि न प्रवृत्तिः । यत्र तु परिभाषया अनित्यत्वम् तत्र अभ्यनुज्ञावाक्येऽपि तत्तच्छास्त्रातिरिक्तत्वेन संकोचात्प्रवृत्तिर्भवत्येव ।

यथा 'रामाय' इत्यत्र 'यादेशोत्तरं प्रवृत्तिमता सुपि चेति शास्त्रभिन्नं यत्सन्निपातविघातकं तद्भिन्नेन यद् बोध्यते तदपि साधु' इति संकुचितसंकोचे 'सुपि च' इति दीर्घः सिध्यति । एवमेव सन्निपातपरिभाषाप्रवृत्तिस्थले तदप्रवृत्तिस्थले च बोध्यम् । यदि परिभाषायां तद्विघातपदं कर्त्रथन्तममत्वा भावघञन्तम्—विहननं विघातो विनाश इति यावत्, विधिपदञ्च कर्मणि किना कार्य्यपरम्, करणे किना शास्त्रपरं वा । तदा 'स्वनिमित्तसन्निपातसम्पादकशास्त्रीयनिमित्तसन्निपातविघातक भिन्नं कार्य्यं भवति । एवं सर्वत्र विधेये संकोचः । ईदृशश्च संकोचो यत्र सन्निपातविघातं विना सूत्रस्य न चारितार्थ्यं तत्रैव । यथा 'सुपि च' इत्यस्य सन्निपातविनाशं विना न चारितार्थ्यम् । यत्र 'यतोऽनावः' इत्यादौ आदेर्वर्णस्य स्थाने उदात्त आदेश इति पक्षस्तत्र द्व्यच्कत्वरूपसन्निपातस्य विनाशं विनापि अवतेयर्यति 'अव्यम्' इत्यादावादेरूपरुदात्तादेशेऽपि द्व्यच्कत्वं न विहन्यते । तत्र स्वनिमित्तसन्निपातविघातकातिरिक्त उदात्तो द्व्यच्कपदन्तस्यादेः स्थाने इत्येवार्थः ।

लोकसिद्धोऽयं न्यायः । तथा हि—अधिकारिणा राजपण्डितेन राजसभायां प्रवेशितः कश्चन विद्वान् राजपण्डितापेक्षया अधिकशास्त्रज्ञोऽपि राजपण्डितस्य राज्ञा समं यादृशः सन्निपातस्तं परिरक्षन्नेव राज्ञा सह प्रवेशितविद्वद्व्यवहारः, 'कृतघ्ने नास्ति निष्कृतिः' इति धर्मशास्त्रदर्शनात् । एवं पूर्वसूत्रेण साधुत्वार्थमनुज्ञातमपि सूत्रं पूर्वसूत्रीयः स्वोपजीव्यनिमित्तभूतो यः सन्निपातस्तद्विघातकं कार्य्यं न करोति ।

यदा तु तद्विघातशब्दः "कर्मण्यण्" इति कर्मण्युपपदे कर्त्रण्न्तस्तदा अभ्युनुज्ञावाक्ये एवं संकोचः । राजनीतिज्ञो हि मन्त्री स्वापेक्षया मेधाविनं विद्वांसं स्वोन्मूलनभयान्न प्रवेशयति । एवं शास्त्रमपि स्वसन्निपातोन्मूलनभयात्स्वसन्निपातविघातकं शास्त्रं साधुत्वार्थं नानुजानीते इत्यन्यत्र विस्तरः ।

अत्र चतुर्थ्येकवचने एव सुपि चेति कर्त्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिः । अन्यत्र तु सुपि चेति दीर्घेऽपि सन्निपातपरिभाषा प्रवर्त्तते एव । अत एव शित्वाभावे 'नाम्नलोपः' इति न्यासे 'रत्नानाम्' नामीति दीर्घं बाधित्वा परत्वात् नलोपः स्यादिति भाष्यं संगच्छते । अन्यथा नलोपापेक्षयाऽपि परत्वात्सुपि चेति दीर्घ एव स्यादिति दीर्घं बाधित्वा परत्वान्नलोप इति भाष्यमसङ्गतमेव स्यात् । मन्मते तु सुपि चेति दीर्घेऽपि सन्निपातपरिभाषया सुपि चेत्यस्याप्राप्त्या परत्वान्नलोप इति भाष्यं सङ्गतमेव ।

अन्ये तु सुपि चेति दीर्घे कर्तव्ये सन्निपातपरिभाषा न प्रवर्तते, इत्येव 'कष्टाय' इति निर्देशेन ज्ञाप्यते । भाष्यविरोधस्तु न, 'रत्नानाम्' इत्यादौ नलोपापेक्षया सुपि चेत्यस्य परत्वेऽपि नलोपस्य नित्यतया पूर्वं प्रवृत्तेः । न च 'परत्वान्नलोपः' इति भाष्ये परत्वादित्युक्तिविरोधः, तत्र परत्वादित्यस्य उत्कृष्टत्वादित्यर्थात् । उत्कृष्टत्वञ्च परत्वकृतं नित्यत्वकृतं वा ।

न च सन्निपातपरिभाषाविरोधात् 'कष्टाय' इत्यस्य सुपि चेति दीर्घाभावेऽपि 'अकृत्सार्वधातुकयोः' इति दीर्घेणोपपत्तेरनित्यत्वे ज्ञापकं न स्यादिति वाच्यम्, तत्र 'अयङ् यि क्ङिति' इत्यत 'उरुश ब्दात् टायाः 'सुपां सुलुक्' इति यादेशे 'उरुया' इत्यत्र दीर्घवारणाय क्ङितीत्यनुवर्तनात् । ननु भाष्ये 'ज्यायीयसः' इत्येवास्तु 'बहोर्लोपः' इत्यतो लोप इत्यनुवर्त्य ज्यात्परस्य ईयस ईकारस्य

बहुवचने झल्येत् । [ ७-३-१०३ ]

झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । 'बहुवचने' किम्—रामः, रामस्य ।

---

लोप एवास्तु "अकृत्सार्व" इति दीर्घे 'ज्यायान्' इति स्यादित्याद्ग्रहणम् 'अङ्गवृत्ते' इति परिभाषां ज्ञापयति इत्युक्तं विरुध्येत इति चेन्न, ङिर्तात्यनुवृत्त्यभिप्रायेण 'ज्ञाजनोर्जा' इति जाग्रहणस्यापि भाष्ये तत्परिभाषालिङ्गत्वेनोक्तत्वात् । 'उरुया' इत्यादि तु छन्दसि बहुलग्रहणात्सिध्येत् । 'रामाय' स्थानिवत्त्वेन ङित्वस्य सत्त्वेऽपि अकृदिति दीर्घस्यापि सन्निपातपरिभाषाविरोधादेवाप्राप्तेः । सम्प्रदानबहुत्वविवक्षायाम् 'राम भ्यस्' इति स्थितावाह—

"बहुवचने झल्येत्" इति । सुपि चेति दीर्घः परत्वादनेन बाध्यते, रामायेत्यत्र सुपि चेत्यस्य 'रामेषु' इत्यत्र 'बहुवचने झल्येत्' इत्यस्य लब्धावकाशत्वात् । "अतो दीर्घः" इत्यतोऽत इति, 'सुपि च' इत्यतः सुपीति चानुवर्तते । तदादिविध्युत्तरं झलीत्यस्य सुपो विशेषणत्वसम्भवादस्मिन् विधिरिति तदादिविधावाह झलादाविति । अतोऽङ्गस्येति—झलादिबहुवचनाव्यवहितपूर्वस्य अङ्गावयवस्यात इत्यर्थः ।

राम इति—बहुवचनग्रहणाभावे विसर्गरुत्वयोरसिद्धत्वाद् व्यपदेशिवद्भावेन झलादित्वादेत्वं स्यादिति भावः । ननु 'अकृतव्यूहाः' इति परिभाषया रुत्वविसर्गयोर्झलादित्वस्य विनाशितयाऽत्रैत्वं न स्यात् ।

न च विसर्गस्य शरन्तर्गतया शरो झल्त्वेन झलादित्वविनाशाभाव इति वाच्यम्, 'नुम्-विसर्जनीय' इति सूत्रे शर्ग्रहणेन विसर्गव्यवधानेऽपि षत्वसिद्धया विसर्गग्रहणसामर्थ्येन शर्ग्रहणेन विसर्गस्याग्रहणबोधनात् ।

वस्तुतस्तु एत्वदृष्ट्या रुत्वविसर्गयोरसिद्धतया निमित्तविनाशो भावीत्यस्यापि ज्ञानाभावेन प्रकृते परिभाषया एत्ववारणासम्भव इति चेन्न, 'वोर्जस्मौट्' इति न्यासेन एत्वाप्राप्तेः, सुपि चेत्यस्य स्थाने 'शपि च' इति न्यासेनादोषाच्च ।

यत्तु 'एङ् ह्रस्वात्सम्बुद्धेः' इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यात्सम्बुद्धावेत्वं नेति कल्प्यते इति तन्न, ह्रस्वशब्दस्य संज्ञात्वेनार्द्धमात्रकतया उक्तन्यासे गौरवात् स्वांशे चारितार्थ्येऽपि अन्यत्र फलाभावात् । 'हे ज्ञान, हे अम्ब' इत्यत्र लोपाय ह्रस्वग्रहणस्य चारितार्थ्याच्च ।

न च "अम्ब, ज्ञान" इत्यादावप्येत्वे चारितार्थ्याभावः, आद्ये 'अम्बार्थ' इति ह्रस्वविधानसामर्थ्येन द्वितीये मस्य झलादित्वाभावेन चैत्वाप्राप्तेः । 'अम्बार्थनद्यो ह्रस्वः' इति न्यासान्तरे तु लाघवाभावः ।

दूषणान्तरमाह—रामस्येति—न च 'सन्निपातपरिभाषया एत्वाभावः, 'हलि सर्वेषाम्' इत्यादिनिर्देशेन एत्वे तदप्रवृत्तिकल्पनात् । न च 'अस्य' इत्यादेशविधानेनादोषः, इदंशब्दस्य 'अस्य' इत्यादिरूपे 'हलि लोपः' इत्यनेन लोपानापत्तेः । न च 'आपि लोपः' 'अन्टौसोरकः' इति न्यासेनादोषः, गौरवात् रामाभ्याम्' इत्यादावेत्वस्य दुर्वारत्वापत्तेश्च ।

ननु 'वोर्जस्मौट्' इति न्यासे 'यशोऽत्र' इत्यत्र उत्वानापत्तौ रुत्वस्यासिद्धत्वात् । उत्वं तु 'शिवोऽर्च्यः' इत्यादौ चरितार्थम् । न च 'अप्लुतात्, अप्लुते ग्रहणाद्वा उत्वं प्रति रुत्वं नासिद्धमिति कल्प्यते इति वाच्यम्, 'भवान् देवदत्त ३ अत्र स्नाहि', 'भवान् देवदत्त अ ३ त्रिदत्त' इत्यादौ चारितार्थ्यात् ।

न च "रूपरात्रि" इति रुत्वविधानादुत्वं प्रति रुत्वं नासिद्धमन्यथा रौ रे वा विशेषाभावः। न च यत्रार्थ रुत्वम्, यत्वस्यासिद्धतया 'रो रि' इत्यस्यैव प्राप्तेरिति वाच्यम्, रूपमिवाचरत् 'अरूपत' अहो

ऽरूपत् इत्यत्र 'रो रि' इत्यस्याप्राप्तया यत्वार्थं तच्चारितार्थ्यात्। एवमेव "रोऽसुपि" इत्यस्यापि यत्वाभावाय चारितार्थ्यमिति चेन्न, रात्रिग्रहणसामर्थ्येन उत्वं प्रति रुत्वासिद्धत्वाभावज्ञापनात्। रात्रि-रिवाचरदरात्रयत् 'अहोऽरात्रयत्' इत्यत्र यत्वार्थं तु न चारितार्थ्यम्, अटोऽङ्गावयवत्वेन रात्रय इति शबन्तस्याङ्गतया अड्विशिष्टस्य रात्रिग्रहणेनाग्रहणादुत्वाप्राप्तेः। रूपरथन्तरादौ तु शबन्तस्य पूर्वान्त-वद्भावेन रूपादिशब्दतया अड्विशिष्टस्यापि रूपादिशब्दतया रुत्वप्राप्तिर्बोध्या।

एवञ्च रात्रिशब्दे रुत्वस्य उत्वमात्रफलकतया रुत्वासिद्धत्वाभावज्ञापने 'बाधकाभावाद् वीज-स्मौट्' इति न्यासे दोषाभावः। अन्ये तु न च रूपरात्रीति रुत्वविधानमसिद्धत्वाभावे ज्ञापकमिति वाच्यम्, यत्वार्थं चारितार्थ्यात्। न चैवं ये विधेये रुविधानं ज्ञापकमेवेति वाच्यम्, अहराचष्टे अहयति· टिलोपे क्विपि अहशब्दस्य गोशब्देन समासे 'गोरूपम्' इति। यकारे तु गोयरूपमिति स्यात्। इत्युक्त तच्चिन्त्यम्, अहराचष्टे टिलोपे वृद्धौ क्विपि आहशब्दस्य गोशब्देन समासे गवाह् इति। रूपशब्देन योगे रुत्वे यत्वे यलोपे 'गवारूपम्' यविधानेऽपि तदेवेति रुत्वे फलाभा.. , ये विधातव्ये रुविधानस्य ज्ञापकत्वसम्भवात्।

यदपि रुत्वविधानं तु 'अहोरूपित्वा, 'अहोरूपत्वा' इति इड्विकल्पार्थमिति तदपि न 'उदितो वा' इत्यत्र उच्चासाविच्चेति लाघवात्कर्मधारयेन उदिदन्तात्धातोः परस्यैव क्त्वो विकल्पेनेड्विधानात्प्रकृते तद्प्राप्तेः। यदपि नच हलिति सूत्रारम्भसामर्थ्यादुत्वं प्रति रुत्वं नासिद्धमिति वाच्यम्, दीर्घाहरित्वा, दीर्घाहर्त्वा, इति रूपद्वयार्थं रुविधानस्य चारितार्थ्यादिति तदपि न, प्रातिपदिकादेवाचारक्विपो विधानेन "अहन्" इत्यस्य पदान्ते एव प्रवृत्त्या रुत्वाप्राप्तेः।

उत्सर्गसमानदेशा अपवादा इति न्यायेन 'रोऽसुपि' इत्यस्यापि पदान्ते एव प्रवृत्त्या 'अह-रित्वा' इत्येकरूपार्थं रेफविधानस्य चरितार्थत्वं बोध्यमित्यपि चिन्त्यम्।

यत्तु सुभिन्ने ऋत्वादावेत्वमित्यर्थकेन 'असौ ऋल्येत्' इति न्यासेन राम इत्यत्र दोषाभावात्। अस्यादेशविधानात् रामस्य, इत्यस्य, 'सर्वनाम्नः स्मै अट् च' इति न्यस्य च 'ङसिङ्योः' इत्यत्राप्यनु-वर्त्यं रूपसिद्धिरिति, तन्न गौरवात्।

न च 'अस्य' इत्यादेशे 'निर्जरस्य, इत्यादौ जरसापत्तिः, सन्निपातपरिभाषया तदप्राप्तेः। अत एव 'अतिजरैरिति भवितव्यं सन्निपातपरिभाषया' इत्युक्तं भाष्ये।

सुपाऽऽक्रदस्याशब्देन समासे 'सुपादस्य' इत्यत्र अस्यादेशे परादिवद्भावेनाजादिविभक्तित्वमा-दाय भत्वे "पादः पत्" इति पदादेशापत्त्या अस्यादेशस्य कर्तुमशक्यतया 'रामस्य' इत्यत्रैत्ववारणस्य मेव फलं 'बहुवचने' इत्यस्य। न च 'आयसौ' इत्यत्र नुम्वारणाय 'अचः परस्मिन्' इति स्थानिवद्भाव इवात्रापि स्थानिवद्भावात्पदादेशप्राप्तिः, पदादेशस्य पदचरमावयवत्वेन 'न पदान्त' इति निषेधात्।

यदि तु 'हलि सर्वेषाम्' 'केशवेशेषु' इत्यादिनिर्देशात् लक्ष्यानुरोधाच्च षष्ठीसप्तमीबहुवचने परे एत्वे कर्तव्ये एव सन्निपातपरिभाषाया अप्रवृत्तिरिति 'रामस्य' इत्यत्र सन्निपातपरिभाषया दोषा-भाव इत्युच्यते तदा 'रामाभ्याम्' इत्यत्र एत्ववारणाय बहुवचने इत्यावश्यकम्।

न च 'सुपि च' इत्यारम्भसामर्थ्यादित्वबाधः, 'रामाय' इत्यत्र चारितार्थ्यात्। यदि तु 'रामाय' इत्यत्र 'कष्टाय' इति निर्देशेन सन्निपातपरिभाषाया अप्रवृत्त्या 'अकृत्सार्वधातुकयोः' इत्यनेन दीर्घ-सिद्धया 'रामाभ्याम्' इत्यत्र 'सुपि च' इत्यारम्भसामर्थ्यादेत्वबाध इत्युच्यते तदा बहुवचने इति मुत्यजम्। केचित्तु 'सुपि च' इत्यस्य स्थाने 'इभ्यामि' इति न्यस्यापवादतया दीर्घसिद्धया बहुवचने इति व्यर्थमिति वाच्यम्, सुपिचेत्यस्यभावे 'पचध्वम्' इत्यादौ 'ऋल्येत्' इत्येत्वापत्तेः। अध्वंकरणे तु 'एधांचकृध्वे' इत्याद्यसिद्धिः। 'स्म्येत्' इति न्यासेन आदिसाहचर्य्योग च तिङवयवसकारस्यैव ग्रहणेन 'पचध्वम्' 'पचस्व' इत्यत्र च न दोषः। न च 'षेर्हिति' इत्यत्र सुर्पात्यस्यासम्बन्धे 'पट्वी' इत्यादौ गुणापत्तिः, तत्र टीप् इति न्यासे आपत्त्यभावात्।

'झलि' किम्–रामाणाम् ।

न च पट्वीशब्दादाचारक्विबन्ताद् 'अनुदात्तङितः' इत्यात्मनेपदार्थं ङीप् इति न्यासस्यावश्यकतया दोषतादवस्थ्यम् 'ब्राह्मणमाणववाडवाद्यन्' इति सूत्रस्थ भाष्यप्रामाण्येन प्रातिपदिकप्रकृतिकप्रत्ययगतेस्त्वमादाय 'अनुदात्तङितः' इत्यादेरप्रवृत्तिज्ञापनात् । तत्र हि 'किमर्थं ब्राह्मणादिभ्यो यन्विधीयते न यञ् प्रकृतः सोऽनुवर्तिष्यते । न ह्यस्ति विशेषो ब्राह्मणादिभ्यो यञो वा यनो वा । तदेवं रूपं स एव स्वरः । एवं तर्हि सिद्धे सति यद् ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्यः—"अन्येभ्योऽप्ययं भवतीति" इत्युक्तम् । यदि तु यञ्गतमित्वमादायात्मनेपदं स्यात्तदा "नास्ति विशेषः यञो वा यनो वा" इति भाष्यं विरुध्येत ।

यद्वा सुपि चेत्यस्याभावे 'घेर्ङिति' इत्यत्रासम्बन्धे यदि 'पट्वी' इति रूपं स्यात्तदा 'तद्धिताः' इत्यधिकारः स्त्रियामित्यनेन सहैवास्तु । "यस्येति च" इत्यत्र ईग्रहणम्, "औङः श्यां प्रतिषेधो वाच्यः" इति वार्त्तिकम्, "प्राचां ष्फः" इति सूत्रे तद्धितग्रहणञ्च मास्तु । न चैवम् 'पट्वी' इत्यत्र गुणापत्तिरुक्तन्यासाभावेऽपि तत्र गुणस्य 'घेर्ङिति' इत्यनेनेष्टतया 'ओर्गुणः' इति गुणेऽपि दोषाभावेन गुरुभूतरीत्या 'तद्धिताः' इत्यधिकारकरणं ज्ञापयति—'स्त्रीप्रत्यये गुणो न' इति 'पट्वी' इत्यत्र 'घेर्ङिति' इत्यपि गुणो न स्यात् । न च 'प्राचां ष्फः' इत्यत्र तद्धितग्रहणाभावे "तद्धितग्रहणमन्यतोऽपि विधानार्थम् । तेन 'आसुरायणी' इति असुरस्यापत्यं स्त्री इत्यर्थे इञन्तात्ष्फे 'यस्येति च' इतीकारलोपे सिध्यति । अन्यथा यञन्तात्ष्फे अस्य लोपाभावेऽपि दीर्घेण 'गार्ग्यायणी' इत्यादिसिद्धौ तद्धितग्रहणमनर्थकमेव स्यादिति वाच्यम्, 'प्राचां ष्फङ' इति न्यासेन ङित्करणस्यैवान्यतो विधानार्थत्वस्य वक्तुं शक्यत्वात् । न च 'शुनी' इत्यादौ अतद्धिते इति निषेधात्सम्प्रसारणानापत्तिः, 'यस्येति च' इत्यत्र ईग्रहणं कृत्वा तत्र तद्धिते एव लोपसिद्धया ईग्रहणं ज्ञापयति–'अजरूपे स्त्रीप्रत्यये 'तद्धितपरत्वनिमित्तकं कार्य्यं न भवति' इति ज्ञापनात् । अत एव नस्तद्धिते' इति टिलोपोऽपि न । डापो डित्करणेनापि 'नस्तद्धिते' इत्यस्याप्रवृत्तिः । अतद्धित इति निषेधानुक्त्यैत्वं न, स्यादिति तु न, टीप् टीष् इत्यादिन्यासस्योक्तत्वात् । 'चुटुङः' इतिकरणन्तु न युक्तम्, गौरवात् । 'कुरूः' इत्यादावपि 'अजरूपस्त्रीप्रत्यये' इति निषेधाद् गुणो न । अजरूप इत्युक्त्या 'आसुरायणी' इत्यादाविलोपः सिध्यति ।

रामाणामिति—ननु झलिकिमिति शङ्का निर्मला, जसादौ दोषस्य स्फुटत्वादिति चेन्न, 'उतो-वृद्धिः' इत्यतो 'हलि' इत्यनुवृत्तेः । रामशब्दादामि नुटि 'हरीणाम्' इत्यादौ चरितार्थं नामीति दीर्घं बाधित्वा परत्वात् 'रामेषु' इत्यादौ चरितार्थमेत्वं 'रामाणाम्' इत्यत्र मा भूदेतदर्थं झलीतीति भावः । न च "उतो वृद्धिः" इत्यत्र हलीत्यस्य स्थाने झलीत्येव पाठ्यमिति न दोष इति वाच्यम्, 'स्तौमि' इत्यादौ वृद्ध्यनापत्तेः । 'म्झलि' इति न्यस्य मकारे झलि च वृद्धिविधाने दोषाभावेऽपि "तुरुस्तुशम्यमः सार्वधातुके" इत्यत्र म्झलीत्यनुवृत्त्या 'स्तुवीव' इत्याद्यसिद्ध्यापत्तेः । न च वलीति लोपेन 'म्झलि' इत्यत्र वकारस्यापि प्रश्लेष इति 'स्तुवीव' इत्यत्रादोषः, 'स्तुवीयात्' इत्यादावीडनापत्तेः । न च यकारस्यापि प्रश्लेषः, गौरवात्, रमाशब्दाज्जसि "सुपां सुलुक्" इति जसो यादेशे 'रमाया' इत्यत्रैत्वापत्तेश्च । नन्वेवमपि सन्निहितत्वाज्झलीत्यस्याभावे यञीत्यस्यैवानुवृत्तिः स्यात्तथाच 'रामेषु' इत्यादावव्याप्तिदोषं परिहायातिव्याप्तिदोषदानमनुचितम् इति चेन्न, 'वा शोकष्यञ्रोगेषु' 'हलि सर्वेषाम्' इत्यादिनिर्देशे 'यञि' इत्यस्यासम्बन्धकल्पनात् । यत्तु "नादिचि" इति सूत्रे इज्ग्रहणम् 'रामाः, रामान्' इत्यादौ "प्रथमयोः पूर्व" इति दीर्घप्रवृत्तये । अन्यथा 'अचि' इत्यनुवृत्त्या 'प्रथमयोः' इत्यस्य निषेधापत्तिः । 'रामाः रामान्, इत्यत्र एत्वप्रवृत्तौ तु इज्ग्रहणं व्यर्थीभूय कल्पयति--जसादावेत्वं नेति । न च इज्ग्रहणं "दीर्घाज्जसि च" इत्यस्य 'नदीः' इति शसि अप्रवृत्तये इति वाच्यम्, इज्ग्रहणाभावे 'अचि' इत्यनुवृत्तौ जस्ग्रहणं व्यर्थीभूयेदकारादौ निषेधश्चेत्तर्हि जस्येवेति नियमे न शसि अप्रवृत्तेः । एवञ्च 'रामाः रामान्' इत्यत्राप्रवृत्त्या झलीत्यस्य रामाणामित्यत्राप्रवृत्तिरेव फलम् । न चैव परत्वात् नुटोऽपि

'सुपि' किम्—पचध्वम् ।

पूर्वमेत्वापत्त्या सन्निपातपरिभाषाविषयाभावज्ञानेन तदनित्यत्वज्ञापनं सम्भवतीति वाच्यम्, प्रतिपदोक्त-परिभाषया पूर्वं नुट एव प्रवृत्तेः ।

न च सन्निपातपरिभाषया 'रामाणाम्' इत्यादौ नैत्वम्, एवं तर्हि झलीति व्यर्थीभूय एत्वे कर्तव्ये सन्निपातपरिभाषा अनित्येति ज्ञापयति । तेन 'विश्वेषाम्' इत्यादीनां सिद्धिः न च पर्जन्यवल्लक्षणप्रवृत्त्या नामीति दीर्घस्य नित्यतया परमप्येत्वं बाधित्वा दीर्घे न दोष इति सन्निपात परिभाषाया एत्वेऽनित्यत्वज्ञापनेऽपि स्वांशे चरितार्थ्यंभावः, 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति' इति परिभाषया नामीत्यस्याप्यनित्यतया परत्वादेत्वापत्तेः ।

वस्तुतस्तु हय-भयादिशब्दात् आचक्षाणण्यन्तात् क्विपि अलोपयलोपयोः प्रातिपदिकत्वे जसि 'हाः, भाः' इत्यादौ दीर्घवारणाय इग्ग्रहणस्य चारितार्थ्यम् । न च तत्राप्येत्वम्, एत्वे अलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन तदप्राप्तेः । न च दीर्घेऽपि स्थानिवत्त्वेनाप्राप्तिः, दीर्घस्य पूर्वपरोभय-विधित्वेन पूर्वमात्रविधित्वाभावात् । पूर्वमात्रस्य विधावेव स्थानिवद्भावः । अत एव 'श्लेष्मघ्न ३' इत्यत्र 'न पूर्वविधिः संयोगः । किं तर्हि पूर्वपरविधिः संयोगः इति भाष्यं संगच्छते । दीर्घविधौ स्थानिवत्त्व-निषेधाच्च । एवञ्च इग्ग्रहणसामर्थ्यादेत्वं न स्यादित्यस्याभावाद् झलीत्यनुवृत्त्यैव जसादिषु दोषो वार-णीयः । यत्तु यलोपस्यापि स्थानिवत्त्वादेत्वाप्राप्तिरितितन्न, शास्त्रीयकार्ये एव स्थानिवद्भावात् । अत एव 'नायकः' इत्यादेः सिद्धिः । झलादौ बहुवचने परेऽदन्ताङ्गस्य इक् इत्यकः 'बहुवचने झलीक'' इति न्यासस्तु न, 'ज्ञानयोः' इत्यादौ पञ्चमीसमासेन स्थानिवत्त्वेनोभयोर्नित्ययोः परत्वान्नुमापत्तेः । 'आद् गुणः' इति गुणं बाधित्वार्णादाङ्ग वलीय इति परिभाषया नुमापत्तिरिति भावः। यदि समानस्थानि-कत्वे एवाङ्गवार्णयोराङ्गस्य बलीयस्त्वम् । अत एव 'छाछा अ' इति स्थितौ 'ह्रस्वः' इति ह्रस्वमन्तरङ्ग-त्वाद्बाधित्वा तुकि अजन्ताभ्यामाभावाद्ध्रस्वो न स्यात् इति भाष्यं संगच्छते । तथा च इक आगमत्वेन समानस्थानिकत्वाभावात्परिभाषाया अप्रवृत्त्या अन्तरङ्गत्वाद्गुणे 'ज्ञानयोः' इत्यस्य सिद्धिस्तदा 'अग्रश-ब्दस्य अशब्देन समासे अग्राशब्दादाचारक्विबन्तात् क्विपि नपुंसके ह्रस्वे पुनः 'अः' अग्रं यत्रेत्यर्थे बहु-व्रीहौ नपुंसके 'आग्र ओस्' इति स्थितौ आग्र इत्यस्य परादिवद्भावेन धातुत्वाद् इति यदागमपरिभाषया इगन्तस्यापि धातुत्वादिकः स्थाने इयङो गुणस्य च प्राप्तया आङ्गत्वादियङापत्तिर्दोषः । 'रमे' इत्यादौ "ह्रस्वस्य गुणः" इति गुणापत्तिश्च । उक्तरीत्या 'परमज्ञानयोः' इत्यत्र तु न दोषः, परमज्ञानरूपा-ङ्गस्य इकि इवर्णान्तधातोरभावेन इयङोऽप्राप्तेः । केचित्तु अन्तरङ्गत्वाद्गुण इति तु न युक्तम्, इकि तस्या अनित्यत्वेनाप्रवृत्तेः । अन्यथा वहिरङ्गतया इकोऽसिद्धतया गुणो न स्यात् । यदि तु 'च्छ्वोः' इत्यत्र सतुङ्निर्देशेन तदनित्यत्वज्ञापनपरभाष्येणागमविषयेऽपि 'वार्णादाङ्गम्' इत्यस्याः प्रवृत्ति-स्तदा आङ्गत्वान्नुमापत्तिर्दोषः । इट् करणे तु बहुवचनस्येटि 'रामेभ्यः' इत्यादिसिद्धावपि 'हे गङ्गे' इति न सिध्येत् । गुणस्य पञ्चमीसमासेन स्थानिवत्त्वात् एङन्तत्वाभावेन 'एङ्ह्रस्वात्' इत्यस्य, व्यवधानात् 'ह्रस्वङ्याब्भ्यः' इत्यस्य चाप्राप्तयो रूपासिद्धेः । पञ्चमीसमासस्यानित्यत्वे, तत्समासे पूर्व-त्वेन दृष्टाद्व्यवहितपरस्यैव कार्यं तत्प्रवृत्तौ चात्र दोषाभावेऽपि 'व्याघ्रपाच्छब्दस्य अशब्देन समासे व्याघ्रपादशब्दाद् भ्यसि 'व्याघ्रपादेभ्यः' इत्यत्र पराद्विवद्भावेन एभ्य इत्यस्य स्वादित्वेन भत्वे 'पादः पत्' इति पदादेशापत्तिर्दोषः । पदादेशे स्थानिवत्त्वं तु न, 'न पदान्त' इति निषेधात् ; पदादेशस्यान्तवर्ति-सुपा पदचरमावयवत्वात् ।

यत्तु सुभिन्ने तत्सदृशे सुपि एत्वमित्यर्थकः 'असावेत्' इति न्यासोऽस्तु "ओसि च" इति नियमार्थम् । अजादौ सुपि ओस्येव एत्वम् । तेन 'रामम्' इत्यादौ न दोष इति तन्न, 'रामाभ्याम्' इत्यत्रैत्वापत्तेः । 'सत्राभ्याम्' इति निर्देशेन एत्वाभावकल्पनं न युक्तम् बहुसूत्रवैयर्थ्यापत्तेः ।

सुपि किमिति—एतत्तत्त्वं सुपि चेत्यस्य व्याख्याने उक्तम् ।

जश्त्वम् ।

वाऽवसाने । [ ८-४-५६ ]

अवसाने झलां चरो वा स्युः । रामात्, रामाद् । द्वित्वे रूपचतुष्टयम् । रामाभ्याम् । रामेभ्यः । रामस्य । सस्य द्वित्वपक्षे 'खरि च' इति चर्त्वेऽप्यान्तरतम्यात् सस्य स एव, न तु तकारः । अल्पप्राणतया प्रयत्नभेदात् । अत एव 'सः सि–' इति तादेश आरभ्यते ।

जश्त्वमिति—अस्य आधिक्येति शेषः, तक्रन्यायेनापवादत्वात् । न चावसाने चर्त्वस्य जश्त्वापवादत्वे 'रत्नमुट्' इति न स्यात्, पस्य पेरूपे चर्त्वे सुटि तुट इव जश्त्वाप्रवृत्त्या ट्श्रवणानापत्तेः । न चेष्टापत्तिः "ण्यान्ता षट्" इति निर्देशविरोधादिति वाच्यम्, 'सर्वे ब्राह्मणा भोज्यन्ताम् माठरकौण्डिन्यौ परिवेविषाताम्' इति न्यायेन एककार्यविनियोगोद्देशेन प्रवृत्तवाक्यकद्वयघटकव्यापकधर्मावच्छिन्ने ब्राह्मणत्वावच्छिन्ने माठरकौण्डिन्यत्वावच्छिन्नातिरिक्तत्वेन संकोच इव झलत्वावच्छिन्ने चर्त्वावच्छिन्नातिरिक्तत्वेन संकोचे चभिन्नस्यैव झलश्चर्त्वविधानेन जश्त्वं विना चर्त्वाप्राप्तया ऽपवादत्वाभावाज्जश्त्वे कृते चर्त्वप्रवृत्तेः । तथा च जश्त्वं कृत्वेति शेष इत्युचितम् । अन्ये तु "ण्यान्तापट्" इति निर्देशाज्जश्त्व चर्त्वयोर्बाध्यबाधकभावो नास्तीति चर्त्वासिद्धतया जश्त्वं ततश्चर्त्वमित्याहुः । परे तु तक्रन्यायेन जश्त्वापवादत्वाच्चर्त्वम्, तदभावे जश्त्वमिति भाव इत्याहुः ।

द्वित्वे इति–'पूर्वत्रासिद्धीयमद्वित्वे' इति न्यायात्परत्वाच्चर्त्वे ततोऽनचि चेति तस्य वा द्वित्वे चर्त्वाभावे दस्यापि वा द्वित्वे रूपचतुष्टयमिति भावः । न च वर्णद्वित्वे 'पूर्वत्रासिद्धीयम्' इति न प्रवर्तते । अत एव "द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम्" इति वार्त्तिकं संगच्छते । अन्यथा 'सँय्यँन्ता' इत्यत्र 'संयन्ता' इति दशायाम् परसवर्णस्यासिद्धतयाऽनुस्वारस्य द्वित्वे परस्यानुस्वारस्य परसवर्णे कृते पूर्वस्याप्यनुस्वारस्यानुनासिकयस्यापि अणुत्वात् यग्रहणेन ग्रहणात्पुनः परसवर्णः यकारस्याणग्रहणेन ग्रहणे फलमुक्तम् । पुनरुक्तम्भाष्ये "नैतदस्ति प्रयोजनम्, वचयत्येतत्" द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्" इति । एवञ्चानुस्वारस्य न द्वित्वं किन्तु परत्वात्परसवर्णे कृतेऽनुनासिकयस्य यग्रहणेन ग्रहणाद् द्वित्वं फलमुक्तम् । वर्णद्वित्वेऽपि "पूर्वत्रासिद्धीये" इत्यस्य प्रवृत्तावनयैव द्वित्वे परसवर्णस्यासिद्धत्वाभावेन परत्वात्परसवर्णे सिद्धे वार्तिकवैयर्थ्यं स्पष्टमेव । नागेशास्तु वर्ण द्वित्वेऽप्येयं परिभाषा प्रवर्तते । अत एव 'वाक्क' इति भाष्ये प्रयोगे 'वाक्क्' इति स्थितौ "अनचि च" इति कस्ये द्वित्वे चर्त्वे च प्राप्ते "पूर्वत्रासिद्धीयम्" इति चर्त्वस्यासिद्धत्वाभावेन परत्वात् चर्त्वे द्वित्वे च कद्वयं सिध्यति । न च वार्तिकविरोधः, वार्तिकस्य परिभाषासिद्धार्थानुवादकत्वात् ।

रामस्येति—ननु 'अनचि च' इति सस्य द्वित्वे प्रथमसस्य 'खरि च' चर्त्वेनान्तरतम्यान्तकारे 'रामत्स्य' इति स्यादत आह–सस्य द्वित्वे इति । स एवेति सकार एवेत्यर्थः । एवकार व्यावर्त्यमाह-न तु तकार इति । ननु दन्तस्थानजन्यत्वेन विवार-श्वासाघोषप्रयत्नसाम्येन चान्तरतम्यात्तकारोऽपि स्यादत आह–अल्पेति । तथा च महाप्राणस्य सस्य महाप्राणः स एव स्यान्न तु तकारस्तस्याल्पप्राणत्वात् । ईषद्विवृतरूपाभ्यन्तरस्य सस्य स्पृष्टप्रयत्नभेदेनापि न तकारः । न चान्तरतम्ये वाह्यप्रयत्नस्येवोपयोगो नाभ्यन्तरस्येति वाच्यम्, "अनान्तर्यमेवानयोरान्तर्यम्" इति भाष्येण दृष्टसाधकान्तर्यमात्रस्य ग्रहणात् ।

तादेश इति—वसधातोः 'वत्स्यति' इत्यादौ 'सः स्यार्धधातुके' इत्यनेन सस्य सकारे परे तकारविधानं ज्ञापयति–सस्य चर्त्वेन स एव, इति । यदि चर्त्वेन सस्यतः स्यात्तदा तादेशविधानं व्यर्थमेव स्यादिति भावः ।

न च "सः सि" इत्यनेन तादेशे "खयो द्वितीयाः" इति तस्य थादेशे 'वथ्स्यति' इत्यपि रूपं भवति । चर्त्वेन तकारे तु तस्यासिद्धतया न स्यादिति वाच्यम्, तावन्मात्रफलकत्वे "सः सि" इति सूत्रेण सादावार्धधातुके सस्य स्थाने आदेशः स्यादित्यर्थेनान्तरतम्यात्सस्य तादेशे तस्य थादेशे च सिद्धे

**ओसि च । [ ७-३-१०४ ]**

ओसि परे अतोऽङ्गस्यैकारः स्यात् । रामयोः ।

**ह्रस्वनद्यापो नुट् । [ ७-१-५४ ]**

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ।

"अच उपसर्गात्तः" इत्यत 'तः' इत्यस्यानुवृत्तये स्वरितत्वकरणवैयर्थ्येन तस्य स एव च भवतीत्युक्तार्थस्य ज्ञापनात् । अत एव मूले 'तादेश आरभ्यते' इत्युक्तम् ।

न च 'सः सि' इत्यनेन सामान्यत आदेशविधाने आन्तरतम्यात्कदाचित्सकारादेशः कदाचित्तकारादेश इति द्वैविध्यम्, त इत्यनुवृत्तौ तु तकारमात्रादेश एवेति फलभेदात्सामान्यत आदेशो विधातुं न शक्यत इति वाच्यम्, सकारादेशेऽपि 'खरि च' इति चर्त्वेन तघटितरूपस्यैव सिद्ध्या फलभेदाभावात् ।

ननु तादेशे 'चयो द्वितीया' इत्यस्यानन्तरम् "स आर्द्धधातुके" इति कार्य्यम्, सिग्रहणं न कार्य्यम् । शरीन्यनुवृत्त्या शरादावार्द्धधातुके सस्य द्वितीयः । स चान्तरतम्यात् थकार एव । न च तासस्त्योः" इत्यत्रानुवृत्त्यर्थं सिग्रहणम्, "तासस्त्योः सि" इति न्यासेनादोषात् । न च लाघवाभावः, तकारस्य थकारविधानाय "चयो द्वितीयाः" इत्यप्रवृत्तिरूपप्रक्रियालाघवस्यैव सत्त्वात् । थकाराभावे च 'खरि च' इति चर्त्वेन तकारः, एवं सिद्धे तविधानेन सस्य स एव चर् इति कल्पनायां बाधकाभावात् । अत एव 'वेधस्सु' इत्यादौ चर्त्वेन सस्य तो न । 'राम ओस्' इति स्थितौ वृद्धिबाधनायाह—

'ओसि च' इति । 'अतो दीर्घ' इत्यतोऽत इति, 'बहुवचने झल्येत्' इत्यत एदिति चानुवर्तते । अङ्गस्येत्यधिकृतं तदाह—ओसि परे इति ओसि परे योऽङ्गस्यात् तस्य एदित्यर्थः । ओसीति अतो विशेषणम् ।

"ह्रस्वनद्यापो नुट्' इति । ह्रस्वाद्यन्ताङ्गस्य नुटि ह्रस्वनद्याप इति पञ्चम्यन्तम् षष्ठ्यन्तत्वे नामीत्यस्य प्रत्ययत्वेनाङ्गेऽन्वयेन नामव्यवहितपूर्वस्याजन्ताङ्गस्य दीर्घं इत्यर्थेन 'नामि' इत्यस्य वैयर्थ्यापत्तेः, नामव्यवहितपूर्वस्याजन्ताङ्गस्यानुपलब्धेः । तथा च पञ्चम्यन्तानुरोधेन अङ्गस्येत्यधिकृतं पञ्चम्यन्तेन 'विपरिणम्य ह्रस्वादिभिर्विशेष्यते । विशेषणत्वेन तदन्तविधिः । उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायेन पञ्चमी स्वस्मात्परां षष्ठीं कल्पयतीति 'तस्मादित्युत्तरस्य' इति परिभाषया 'आमि सर्वनाम्नः' इत्यतोऽनुवृत्तस्य 'आमि' इत्यस्य षष्ठ्यन्तेन विपरिणाम इत्याह—ह्रस्वान्तान्नद्यन्ताङ्गात्परस्य आम इति ।

आमत्र षष्ठीबहुवचनमेव, कास्प्रत्ययादामः, घादामश्च मकारस्येत्त्वाभावाद्यानुबन्धकरणात् । 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' इति परिभाषया अग्रहणात् , ङेरामश्च न नुक् याट् स्याड्भ्यां परत्वाद् बाधात्सकृद्गतिन्यायाच्च । परिशेषात्षष्ठीबहुवचनग्रहणसिद्धेः ।

यत्तु 'नुट्' इत्येको योगः, 'नद्यापः' इति द्वितीयः । अङ्गात्परस्यामो नुट् स्यादित्यर्थः । तेन 'रामाणाम्' इत्यादौ नुट् । न चैवम् 'हाहाम, ग्रामण्याम्' इत्यादौ नुडापत्तिः, नदीनाम्, रमाणाम्, इत्यादावपि नुटि सिद्धे 'नद्यापः' इत्यस्य दीर्घान्ताच्चेत् नद्याप एवेति नियमात् । न चैवमपि 'लिहाम्' इत्यादौ नुडापत्तिः, 'षण्णाम्, चतुर्णाम्' इत्यादावपि 'नुट्' इत्यनेनैव नुटि सिद्धे हलन्ताच्चेत् षट्चतुर्भ्यं एवेति नियमेनादोषात् । तथा च ह्रस्वग्रहणं न कार्य्यम् इति तन्न, नियम्यशास्त्रीयोद्देश्यतावच्छेदकं यदङ्गाव्यवहितोत्तराम्त्वं तद्व्याप्यत्वस्य दीर्घान्ताव्यहितोत्तराम्त्वे सत्त्वेऽपि नियामकशास्त्रस्य 'नद्यापः' इत्यस्योद्देश्यतावच्छेदकं यन्नद्याबन्ताङ्गाव्यवहितोत्तराम्त्वं तस्य मतिशब्दे, अतिखट्वशब्दे च नदीत्वाप्त्वयोः सत्त्वेन दीर्घत्वस्य चाभावेन दीर्घान्ताङ्गाव्यवहितोत्तराम्त्वे नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वस्याभावेन दीर्घान्तादामो नुट् चेत् नद्याबन्तादेवेति नियमस्य वक्तुमशक्यतया स्त्रीलिङ्गवाचकाव्यवहितोत्तराम्त्वस्य च 'मत्याम्, अतिखट्वानाम्' इत्यत्रापि सत्त्वेन तत्र नियम्य-

नामि । [ ६-४-३ ]

नामि परेऽजन्तस्याङ्गस्य दीर्घः स्यात् ।

नुट्शास्त्रीयोद्देश्यतावच्छेदकव्याप्यत्वस्य नियामकनद्याप्शास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वस्य च अभावात् । स्त्रीलिङ्गानां चेन्नद्याप एवेति नियमस्यापि सम्भवेन 'मतीनाम्' इत्यादौ नुडनापत्तेः ।

वस्तुतस्तु 'बहुश्रेयसीनाम्' कुमारी–वनितादिशब्दादाचारक्विबन्तात् पुंसि कुमारीणाम्, वनितानाम्, मनुष्याणाम् इत्यादौ नद्यबन्ताव्यवहितोत्तराम्त्वस्य सत्त्वेन स्त्रीवाचकाव्यवहितोत्तराम्त्वस्य चाभावेन तत्रापि नियम्यनियामकशास्त्रोद्देश्यतावच्छेदकव्याप्यत्वव्यापकत्वयोरभावात् स्त्रीलिङ्गानां चेन्नद्याप एवेति नियमस्याप्यसम्भवेन 'हाहाम्' इत्यादौ नुडापत्तेरेव दोषतया तथा न्यासस्याशक्यतया ह्रस्वग्रहणमावश्यकम् ।

यद्वा नद्यापः परस्यामो नुडेवेति विपरीतनियमस्यापि सम्भवेन सर्वासाम्, गौर्याम्, सर्वस्याम्, इत्यादौ याट्स्याट्सुटां नुटा बाधापत्तिः । 'सर्वासां प्रायदर्शनम्' इत्यादिनिर्देशैर्विपरीतनियमवारणे तु विनिगमनाविरहात् आकारान्तादूकारान्तादीकारान्तात्परस्यामो नुट् चेन्नद्याप एवेति नियमस्यापि सम्भवात् 'ग्लावाम्, नावाम्' इत्यादौ नुडापत्त्या ह्रस्वग्रहणमावश्यकम् ।

अपि च 'नद्याम्' इत्यादौ नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम्, रमायाम्, सर्वासाम्, सर्वस्याम्, इत्यादौ प्राप्तान् याट्सुट्स्याटो बाधितुं चाब्ग्रहणम् । तथा च 'नद्यापः' इति विध्यर्थमेव स्यात् । एवञ्च 'विश्वपाम्, वातप्रम्याम्' इत्यादौ नुडापत्तिरुक्तन्यासे दुर्वारा ।

'सख्यशिश्वीति भाषायाम्' 'नद्या मतुप्' 'निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनम्' 'तदस्यां प्रहरणम्' इत्यादिनिर्देशैः 'नद्यापः' इत्यस्य विधायकत्वस्य नद्यापः परस्यामो नुडेवेति विपरीतनियमस्य च वारणे तु ज्ञानगौरवम् ।

यत्तु 'छन्दसि 'गोनाम्' इत्यस्य 'नुट्' इत्यनेनैव सिद्धतया 'गोः पादान्ते' इति नियमार्थम् एजन्तात्परस्यामो नुट् चेद् गोरेव, छन्दस्येव, पादान्ते एवेति विनिगमनाविरहेण न दोष इति तन्न, अनेकविधनियमस्वीकारे प्रतिपत्तिगौरवस्य दुर्निवारत्वात् ।

'नामि' इति । 'ढ्लोपे' इत्यतो दीर्घ इति अनुवर्तते । दीर्घशब्देन विधानात् 'अचश्च' इति परिभाषया 'अचः' इत्युपस्थितेन अङ्गस्येति विशेष्यते । अजभिन्नं यदङ्गमिति । अच इति विशेषणतया तदन्तस्य संज्ञा । तदाह—अजन्ताङ्गस्येति ।

'अर्थवद्ग्रहणे' इति परिभाषया, 'प्रत्ययाप्रत्यययोः' इति परिभाषया, अङ्गस्य प्रत्ययांशे नित्यसाकाङ्क्षतया च नामिति षष्ठीबहुवचनस्यैव ग्रहणम् । तेन पामनाम्, अङ्गनाम् इति द्वितीयान्ते न दीर्घः । नामित्यस्य प्रकृत्येकदेशघटितत्वेनानर्थकत्वात् । अत्र हि पामनाशब्दात्, अङ्गनाशब्दाच्च अम्प्रत्ययः । यद्यपि नप्रत्ययान्तपामनाशब्दे ऽनर्थकस्य ग्रहणेऽपि नलोपासिद्धतया दीर्घाप्राप्तिस्तथापि 'अङ्गनाम्, भावनाम्' इत्यादौ दोष एव । नलोपासिद्धत्वेऽपि 'नोपधायाः' इति दीर्घापत्तिश्च । वस्तुतस्तु 'अङ्गस्य' इत्यस्याभावे 'ब्राह्मणभिस्सा' इत्यत्र दोषदानपरभाष्यविरोधेनात्र प्रकरणे अर्थवत्परिभाषायाः प्रत्ययाप्रत्ययपरिभाषायाश्चाप्रवृत्तिरेवेति अङ्गस्य निमित्तं यन्नाम तत्र दीर्घ इत्यर्थेन षष्ठीबहुवचनस्यैव ग्रहणं बोध्यम् ।

अङ्गस्येति किम्—चर्मणाम् । अंगस्येत्यभावेऽत्र प्रकरणे भाष्यानुरोधात् अर्थवत्परिभाषायाः प्रत्ययाप्रत्ययपरिभाषायाश्चाप्रवृत्त्या नाम्पदेन यस्य कस्यापि ग्रहणे चर्मन्शब्दस्य जन्तस्य नामपरकत्वाद्दीर्घः स्यात्तद्वारणाय अङ्गस्येति । तत्सत्वेतु अङ्गस्य प्रत्ययनिरूपितत्वेन नामिति बहुवचनस्यैव ग्रहणान्न दोषः ।

वस्तुतस्तु 'अकारात्परस्य भिस्मात्रस्यैस् भवतीति' । इहापि प्रसज्येत 'ब्राह्मणभिस्सा' इति भाष्येण अर्थवत्प्रत्ययाप्रत्ययपरिभाषयोरप्रवृत्तिकल्पने फलाभावेन तद्भाष्यस्यैकदेश्युक्तित्वादर्थवत एव

नामो ग्रहणे 'चर्मणाम्' इत्यत्र दोषाभावे क्विबन्तनामशब्दे परे 'चर्म नाम्' इत्यत्र दोषो बोध्यः। 'अङ्गस्येति किम्-चर्मणाम्' इति शेखरेऽपि 'चर्मनाम्' इत्येव पाठः, णत्वघटितपाठस्तु लेखकप्रमादात्।

ननु 'नुटि' इत्येव सूत्रमस्तु नुटि परेऽजन्ताङ्गस्य दीर्घ इत्यर्थेन 'रामाणाम्' इत्यादेः सिद्धिः। न च 'अनश्वः' इत्यादौ दीर्घापत्तिः 'तस्य नुर्गचि' इति न्यस्य लुप्तनकारस्य नञो नुक् स्यादित्यर्थेनेष्टसिद्धेः। न च नुकि नस्य पदान्तत्वेन लोपापत्तिः, नुग्विधानसामर्थ्येन लोपाभावकल्पनात्। न चैवमपि 'ङमो ह्रस्वादचि" इति ङमुडापत्तिः, नञ्नये पदे इत्यनुवर्त्याजादेः पदस्य ङमुड्विधानेन प्रकृते 'उत्तरपदत्वे' इति प्रत्ययलक्षणनिषेधात् पदत्वाभावेन तदप्राप्तिः। यदि तु नञ्नये उत्तरस्य कार्यित्वे एव निषेधप्रवृत्तिः। नुकि तु नोत्तरपदं कार्यि। किञ्च नुकि नञोऽशब्देन समासे अनशब्दादाचारयन्तात् क्विपि अलोपे तस्य अमित्रं यस्येत्यर्थे बहुव्रीहौ 'अमित्रः' इत्यत्र नञः परस्य मित्रशब्दस्याद्युदात्तत्वापत्तिः। नुटि तु नलोपासिद्धतया नविशिष्टस्य नञ्ग्रहणेनाग्रहणान्नञः परमित्रशब्दाभावेनाद्युदात्तत्वाभावः। नुकस्तु यदागमन्यायेन नविशिष्टस्य नञ्ग्रहणे ग्रहणात्तदापत्तिरित्युच्यते तदा "तस्मान्नुडचि" इति न्यासेनादोषो बोध्यः। न च नडागमे नमोऽकारस्येव श्रवणार्थत्वापत्तिः, "अनचि च" इत्यादिनिर्देशात्। न च 'राजन्नच्युतः' इत्यत्र 'नोपधायाः' इति नुटि परे दीर्घापत्तिः, ङमुडित्यस्य स्थाने ङ्युट्करणेनादोषात्। यत्तु नडागमे अनश्वशब्दादाचारक्विबन्तात् क्त्वाप्रत्यये "उदितो वा" इतीडनापत्तिरिति तन्न, 'अवयवावयवः समुदायावयवः' इति न्यायेन नश्वशब्दस्योदित्त्वेऽपि अनश्वशब्दस्योदित्त्वे मानाभावात्, अङ्गाधिकारेण प्रत्ययाक्षेपात् नुडादौ प्रत्यये परेऽजन्ताङ्गस्य दीर्घ इत्यर्थेन सर्वदोषोद्धारात्।

"अनो नुट्" इति नुटि 'अक्षण्वन्तः' इत्यत्र नलोपस्यासिद्धतया 'नोपधायाः' इति दीर्घस्तु नडागमकरणेन वारणीयः। न च 'अक्षण्वच्छब्दादाचारक्विबन्तात् क्त्वाप्रत्यये 'उदितो वा' इतीडनापत्तिः, हलन्तेभ्य आचारक्विपोऽनभिधानात्, मतुप उगित्त्वमादाय तत्सिद्धेश्च।

यत्तु 'नुटि' इति न्यासे 'भृञः किन्नुट् च' इति भृधातोर्मनूप्रत्यये तस्य नुटि किस्वाद् गुणाभावे 'भृङ्गः' इत्यत्र दीर्घापत्तिरिति तन्न, 'भृञः किन्नुम् च' इति न्यासेन धातोरेव नुमि तस्य सिद्धेः। एवञ्च भृङ्ग इवाचर्य 'भृङ्गित्वा' भृङ्क्त्वा' इति 'उदितो वा' इतीडपि सिध्यति। किञ्च संज्ञादिशब्दानां साधुत्वप्रयोजकप्रकृतिप्रत्ययादीनां कल्पनयैव साधनस्य वक्तव्यतया भृधातोर्ग्नक्प्रत्ययेनापि साधुत्वस्य वक्तुं शक्यत्वात्।

वस्तुतस्तु "आयनेय" इति सूत्रे शमेः खः शङ्खः। इत्यत्रेनादेशमाशङ्क्य "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति भाष्योक्त्या 'भृङ्गः' इत्यत्र नुटोऽभावेन नुटिति न्यासे दोषाभावेऽप्यनेकत्रानेकक्लिष्टकल्पनापेक्षया नामीति सूत्रकरणमेव न्याय्यम्।

यत्तु "नि" इति 'सुपि च' इत्यस्मादुत्तरं न्यस्य नकारादौ सुपि अजन्ताङ्गस्य दीर्घ इत्यर्थेन सर्वेष्टसिद्धिः। 'अङ्गना' इत्यादौ च न दोषः। न च 'हरिणा' इत्यादौ दीर्घापत्तिः, 'आङि नुम्स्त्रियाम्' इति न्यासेनाङ्गस्य नुग्विधानात्। न च 'अमुना' इत्यत्र नाभावस्याभावेन 'न मु ने' इत्यस्याप्रवृत्त्या तदसिद्धिः, नाभावे इत्यर्थे सूत्रवैयर्थ्येन नकारे कर्तव्ये मुभावो नासिद्ध इत्यर्थेनादोषात्। न चैवम् 'अमुष्मै कुलाय' इत्यत्र नुमापत्तिः, 'न मु नुकि' इति न्यस्य नुग्विषये एवासिद्धत्वबोधनात्। न च 'अमुना' इत्यत्र 'सुपि च' इत्यस्याप्रवृत्तये नुग्विषये यस्मिन् कस्मिन्नपि शास्त्रे कर्तव्ये मुभावो नासिद्ध इत्यर्थस्यावश्यकतया 'अमुष्मै कुलाय' इत्यत्र 'इकोऽचि' इत्यस्मिन्नपि मुत्वस्यासिद्धत्वाभावेन नुमापत्तिर्दुर्वारा, नुकं बाधित्वा नित्यत्वात्स्मैभावस्यैव प्रवृत्तेरिति तन्न, नुगागमे 'गर्गभगिनी' इत्यत्र 'कुमति च' इति णत्ववारणाय उत्तरपदावयवस्यैव प्रातिपदिकान्तस्य नस्य णत्वमित्यर्थस्य भाष्यसम्मततया 'रम्यविणा' इत्यादौ णत्वानापत्तेः। न च 'आङि नुम्स्त्रियाम्' इति न्यासेन नुमोऽचोऽवयवत्वे 'अवयवावयवः' इति न्यायेन नुमो विशब्दावयवत्वे नान्तोत्तरपदत्वम्, अत्र समुदायपदेनाङ्गस्यैव ग्रहणेन नुमोऽङ्गा-

वयवत्वेऽपि विशब्दावयवत्वे मानाभावात । अतः "समुदायभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुम्" इति भाष्यं संगच्छते । अन्यथा 'पञ्चारत्नीनि' इति भाष्योदाहरणे उत्तरपदस्यापि नान्तत्वे "इगन्तकपाल" इतीगन्तोत्तरपदनिमित्तकस्वरापत्तिः ।

किञ्च नुमि नुकि वा अनुकृतत्रिशब्दस्य परमशब्देन समासे 'परमत्रिणा' 'पट्त्रिचतुर्भ्यो हलादिः' इति स्वरानापत्तिः, हलादिविभक्तेरभावात् । यदि तु गौणेऽप्रयुक्ते च नैव शास्त्रप्रवृत्तिस्तदा नेदं दूषणम् । केचित्तु उदितस्य स वित् । अङ्गनिमित्ते विदादौ प्रत्यये परेऽचो दीर्घ इत्यर्थकम् 'वति' इति सूत्रमस्तु । राम इत्यत्र सिन्न्यासेन, 'पथिमथि' इत्याकारविधानेन च सौ 'विति' इति न प्रवर्तते । 'धनवान्' इत्यादौ 'मतप्' प्रत्ययकरणेन दोषाभावः । मतुप उदित्वम् 'उदितो वा' इत्येतदर्थं तु न, हलन्तादाचारक्विपि 'ह्रस्वनद्यापः' इति सूत्रस्थेन 'प्रत्ययान्तादाम् विधीयते । तत्र नास्ति विशेषः प्रत्ययः पर इति वा परत्वे मिदोऽन्त्यादचः पर इति वा परत्वे 'इति भाष्येणानभिधानात् । 'कृतवान्' इत्यादावपि न दीर्घः, 'निष्ठायामण्यदर्थे' इत्यनेन कृति 'विति' इत्यनेन दीर्घो नेति कल्पनादित्याहुस्तदसङ्गतम्, भावकर्मार्थभिन्ननिष्ठायां दीर्घश्चेत्तदा क्विप एवेति विपरीतनियमे कर्मणि क्ते कृत इत्यादौ वितीति दीर्घापत्तेः ।

अन्ये तु नुटि, विति च न्यासे नुडादिप्रत्ययत्वस्य विदादिप्रत्ययत्वस्य च सुप्त्वव्याप्यत्वाभावेन नलोपस्यासिद्धत्वाभावात् 'पञ्चानाम्' इत्यादौ 'नोपधायाः' इति दीर्घानापत्तेः; नृनयशब्दादाचारक्विबन्तात् क्विपि अलोपयलोपयोस्तस्य यशब्देन समासे नलोपे नृयशब्दादाचारक्विबन्तात् क्विपि अलोपयलोपयोः नुकि नलोपस्यासिद्धतया नुकोऽभावे आमि 'नृ आम' इत्यत्र आम्त्वस्य आम्प्रत्ययमात्रे सत्त्वेन सुप्त्वाव्याप्यत्वेन सुप्त्वद्व्याप्यधर्मावच्छिन्ननिमित्तकविधावेव 'दण्डिषु' इत्याद्यनुरोधेन नलोपस्यासिद्धत्वस्य स्वीकारेण प्रकृते विति 'नृ च' इति दीर्घे नलोपासिद्धत्वाभावे 'नृ च' इति वैकल्पिकदीर्घापत्तिः । नामिसूत्रसत्त्वे तु नाम्त्वस्य सुप्त्वव्याप्यतया नलोपासिद्धत्वेन नकारव्यवधानात् 'नृ च' इत्यस्याप्रवृत्त्या 'नोपधायाः' इति नित्यो दीर्घः सिध्यति । नुडागमेऽलोपस्य स्थानिवत्त्वं तु न, पूर्वदृष्टस्य विधेरभावात् पञ्चमीसमासस्यानित्यत्वाच्च । नोपधाया इति दीर्घे तु न स्थानिवत्त्वम्, पदचरमावयवविधित्वेन तन्निषेधात् । न च 'दण्डिषु' इत्यादेः सिद्धये 'सुप्भिन्नविषयताप्रयोजकं विधौ नलोपोऽसिद्धः' इत्यर्थ एव स्वीकार्य्य इति वितीतिपदं सुपोऽपि बोधकमिति 'नृ च' इति दीर्घेऽपि नलोपासिद्धतया तदप्राप्त्या नोपधाया इत्येव स्यादिति वाच्यम्, दण्डीयतेरिच्छार्थक्यजन्तात् क्विपि 'दण्डियौ' इत्यत्र 'अचिश्नु' इत्यस्यापि सुभिन्नविषयताप्रयोजकनलोपासिद्धतया इयङनापत्तेः ।

ननु 'न आमि' इत्येव सूत्रमस्तु 'नः' इति षष्ठ्यन्तम् । तथा च नान्तस्याङ्गस्याच आमव्यवहितपूर्वस्य दीर्घ इत्यर्थः । येन नाव्यवधानम्' इति न्यायान्नकारमात्रव्यवधानेपि दीर्घः स्यादिति 'नोपधायाः' इति सूत्रमपि न कार्य्यं तत्राप्यनेनैव दीर्घसिद्धेः । न च 'रामाणाम्' इत्यत्र 'अल्लोपोऽनः' इत्यल्लोपापत्तिः 'षट्चतुर्भ्यश्च' इति निर्देशेन सन्निपातपरिभाषया वा अनुपजीव्यस्य नुटस्तद्विघातके लोपे निमित्तत्वाभावात् ।

'बहुवचने झल्येत्' इत्यत्र झल्ग्रहणं न कार्य्यम्, 'रामाणाम्' इत्यत्र नुकि अदन्ताङ्गत्वाभावादेव तदप्राप्तेः । न च 'हरीणाम्' इत्यादौ नुकश्चारिताथ्र्येन 'रामाणाम्' इत्यत्र परत्वान्नुकं बाधित्वा एत्वापत्तिः, 'उतो वृद्धिः' इत्यतो हलीत्यनुवृत्तेः । किञ्च 'वारीणाम्' इत्यादौ नुम्यपि दीर्घसिद्ध्या 'नुमचिर' इति वार्तिके नुम्ग्रहणमपि न कार्य्यमित्यपरं लाघवम् । न च 'षण्णाम्' इत्यत्र अनुनासिकादिप्रत्ययाभावात् 'प्रत्यये भाषायां नित्यम्' इत्यस्य, पदान्तयरोऽभावात् 'यरोऽनुनासिके' इत्यस्य चाप्राप्त्या रूपासिद्धिरिति वाच्यम्, 'षट्चतुर्भ्यो नुट्' इति न्यासेनादोषात् । न चैवम् 'पञ्चानाम्' इत्यादीनामसिद्धिः 'षट्चतुर्भ्यश्च' इत्यत्र चतुरशब्दसाहचर्य्येण षष् इति शब्दस्वरूप-

स्यैव ग्रहणात्। तथा च 'षड् णाम् इति स्थितौ 'प्रत्ययं भाषायाम्' इति डकारस्य णकारेणेष्टसिद्धौ 'न पदान्तात्' इति सूत्रे नामग्रहणाकरणमपि लाघवम्। नचैवं सति 'चर्मणाम्' इत्यादौ 'न आमि' इति दीर्घापत्तिः 'न आमि' इत्यतः परम् 'षषः' इति न्यस्य न इत्यनुवर्त्य नान्तस्य षट्संज्ञकस्य च आमि परे दीर्घं इत्यर्थे 'न आमि' इति दीर्घे सिद्धे नान्तप्रकृतिके आमि परे दीर्घश्चेत्तर्हि षट्संज्ञकानामेवेति नियमात्। अत एव 'न लोकाव्यय' इति सूत्रे 'तृनाम्' इति निर्देशः संगच्छते इति चेन्न, 'तसृणाम्' इत्यत्र 'षट्त्रिचतुर्भ्योहलादिः' इति स्वरानापत्तेः। न तत्र हलादिग्रहणं न कार्य्यम् 'षट्त्रिचतुर्भ्यः' इत्यनन्तरम् 'आम्' इति सूत्रं कार्य्यम्। 'षट्त्रिचतुर्भ्यः परं आमुदात्तः। 'षट्त्रि' इत्येव सिद्धे 'आम्' इति सूत्रं नियमार्थम् 'अजादिरुदात्तश्चेद् आमेव, इति जश्शसोर्न दोषः। नच 'चेतन्तीं सुमतीनाम्' इत्यत्र नामोऽनर्थकत्वात् 'नामन्यतरस्याम्' इति नाम उदात्तत्वानापत्तिः, सम्प्रति नाम्रूपाया विभक्तेरसम्भवेनसूत्रवैयर्थ्यापत्त्या अनर्थकस्यापि नाम उदात्तत्वविधानेनादोषात्। नच 'पञ्चारत्नीनाम्' इत्यत्र प्रकृतेर्नान्तत्वेन 'इगन्तकपाल' इति स्वरानापत्तिः, नुकः समुदायभक्तत्वेन इगन्तोत्तरपदनिमित्तकस्वरविधाने बाधकाभावात्। एवञ्च यद्यपि 'न आमि' न्यासे 'नामि' इत्यत्र 'न' इत्यस्य षष्ठ्यन्तत्वस्वीकारे वा न कश्चन दोषस्तथापि अनेकत्रानेकक्लिष्टकल्पनज्ञानगौरवापेक्षया यथाश्रुतन्यास एव ज्यायान्।

ननु 'आमि' इत्येव सूत्रमस्तु। ननु नित्यत्वान्नुटं बाधित्वा दीर्घे नुटोऽप्राप्तिः। न च निरवकाशतया नुटो दीर्घापवादत्वे केरामि कृते याडादाविव नुटि दीर्घे च 'रामाणाम्' इत्यादेः सिद्धिः, आम्यति दीर्घस्यापि तन्न्यायेनापवादतयोभयोरपवादत्वे नित्यतया दीर्घे नुटोऽप्राप्त्या ह्रस्वग्रहणवैयर्थ्येन भूतपूर्वह्रस्वान्तत्वमादाय नुट् सिद्धेः। न च कृतेऽपि दीर्घे पञ्चर्मीसमासमादाय 'अचः परस्मिन्' इति स्थानिवद्भावेन नुटः प्राप्त्या नुड्दीर्घयोरुभयोरपि नित्यतया परत्वान्नुटि लक्ष्यसिद्धिरिति ह्रस्वांशे भूतपूर्वगत्याश्रयणमयुक्तमिति वाच्यम्, पञ्चमीसमासे 'तस्मादिति' परिभाषया पूर्वत्वेन दृष्टादव्यवहितपरस्यैव कार्य्ये स्थानिवत्त्वे भूतपूर्वगत्याश्रयणस्यावश्यकत्वात् 'प्रविगणय्य' इति भाष्यप्रयोगात्पञ्चमीसमासेन स्थानिवत्त्वस्यानित्यत्वाच्च।

अत एव पञ्चमीसमासेन स्थानिवत्त्वात् 'हे गौः' इत्यत्र 'एङ्ह्रस्वात्' इति सुलोपो न। न च भूतपूर्वगत्याश्रयणे प्रमाणाभावः 'नृणाम्' इत्यत्र दीर्घाभावपक्षे ह्रस्वग्रहणस्य चारितार्थ्यादिति वाच्यम्, तन्मात्रविषयकत्वे 'नृनपो नुट्' इत्येव तत्सिद्धया भूतपूर्वगत्याश्रयणे ह्रस्वग्रहणस्यैव मानत्वात्। न च 'तिसृणाम्' इत्यत्र 'न तिसृ' इति दीर्घनिषेधाद्ध्रस्वग्रहणस्य चारितार्थ्यम्, 'त्रेस्त्रयः' इत्यतः 'षट्चतुर्भ्यश्च' इत्यत्र त्रेरित्यनुवृत्त्या सिद्धे तद्वैयर्थ्यस्य सूपपादत्वात्।

न च 'षट्चतुर्भ्यश्च' इति बहुवचननिर्देशेन गौणेऽप्रवृत्त्या 'प्रियतिसृणाम्' 'प्रियचतसृणाम्' इत्यादौ ह्रस्वग्रहणसत्त्वे नुट् सिध्यति। तदभावे तु 'प्रियतिसृनाम्' इति यणघटितं रूपमिति फलभेद इति वाच्यम्, लाघवार्थमेव बहुवचनसत्त्वेन गौणे तदप्रवृत्तौ मानाभावात्। अत एव 'षट्चतुर्भ्यश्च' इत्यस्य गौणेऽप्रवृत्तौ 'प्रियतिसृणाम्' इत्याद्यर्थमपि ह्रस्वग्रहणस्यावश्यकतया 'नह्येकमुदाहरणं योगारम्भं (सामान्ययोगारम्भम्) प्रयोजयति' इति भाष्यं संगच्छते। एतेन 'ऋन्नपः' इति न्यासे भाष्यतात्पर्यमित्यपास्तम्, 'नैकमुदाहरणम्' इति भाष्यविरोधापत्तेः।

न च 'नृनपः' इति न्यासे नृशब्दादाचारक्विबन्तादामि 'नृनाम्' नृशब्दस्य ऋशब्देन समासे 'न्राम्' इत्यत्र च फलभेदः। ह्रस्वग्रहणसत्त्वे एषु नुण् न भवति। नृघटितन्यासे तु यदागमन्यायेन, पूर्वान्तवद्भावेन च नृशब्दतया नुडापत्तिरिति चेदत्राहुः 'नृन्नपः' इति न्यासे भाष्यतात्पर्येण तपरकरणसामर्थ्यात् ह्रस्वऋकारान्तस्य 'नृ' शब्दस्य ग्रहणात्। ननु छन्दसि 'छन्दस्युभयथा,' इत्यनेन नामि परे वा दीर्घो विधीयते। तेन धातॄणाम्, धातृणाम्, इति रूपद्वयं जायते। आमि वा दीर्घविधाने तु दीर्घपक्षे नुटोऽभावे 'धात्राम्' इति। तदभावे 'धातृणाम्' इति फलभेद

रामाणाम्। सुपि च इति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते, संनिपातपरिभाषाविरोधात्। 'नामि' इत्यनेन।

इति चेदुच्यते—१ 'न तिसृचतसृ' २ 'नृ च' ३ 'छन्दस्युभयथा' ४ 'षट् चतुर्भ्यश्च' ५ श्रीग्रामण्योश्छन्दसि, 'ह्रस्वनद्यापः' इति पञ्च सूत्राणि अकृत्वा १ 'ऋतश्चतुरो नुट्' अत्र त्रेरित्यनुवर्तते। ऋदन्तात्, त्रेः, चतुरश्च परस्यामो नुडित्यर्थः। २ 'षण्नद्यापः' षट्संज्ञकान्नद्यापश्च परस्यामो नुडित्यर्थः। ३ 'नुर्वा' नृशब्दात्परस्यामो वा नुट्। 'छन्दसि च' अङ्गात्परस्यामो वा नुट्। धातॄणाम्, नुटोऽभावे 'धात्राम्' 'श्रीग्रामण्योः' आमो वा नुट्, इति लघुना न्यासेन सिद्धे ह्रस्वग्रहणसामर्थ्येन, भूतपूर्वगत्याश्रयणम् इति भावः।

न च भूतपूर्वगत्याश्रयणे 'पदाम् इत्यादौ' नुडापत्तिः, ह्रस्वत्वं नाम-मात्राकालिकात्त्वम्। तत्र दीर्घे सति अनुपलभ्यमाने मात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणं नतवत्त्वांशे तस्य सत्त्वादित्यदोषादिति चेन्न, 'नोपधायाः' इत्युत्तरार्थं 'चर्मणाम्' इत्यत्र दीर्घवारणाय नामीत्यस्यावश्यकत्वात्। ननु 'आमि' इति न्यासे 'वारीणाम्' 'मधूनाम्' इत्यादौ 'इकोऽचि' इति नुम्यपि 'नोपधायाः' इति दीर्घे सिद्धे 'नुमचिर' इति वार्तिके नुम्ग्रहणसामर्थ्येन 'नोपधायाः' इत्यनेन नुड्विशिष्टे आम्येव दीर्घो ज्ञाप्यते इति 'चर्मणाम्' इत्यत्र न दोषः। न च 'इन्हन्' इति नियमाद् 'वारीणाम्' इत्यत्र 'नोपधायाः' इति दीर्घो न स्यादिति वाच्यम्, पूषन्नादिसाहचर्य्येण प्रतिपदोक्तस्येनो ग्रहणादिति चेन्न, 'वारीणाम्' इत्यादिरूपसिद्धावपि 'नामन्यतरस्याम्' इत्युदात्तत्वसिध्यर्थं वार्तिके नुम्ग्रहणस्यावश्यकत्वेन तेन नुड्विशिष्टे आमि 'नोपधायाः' इत्यस्य प्रवृत्तिरित्यर्थस्य ज्ञापयितुमशक्यत्वात्, 'प्रत्ययस्थात्कात्' इति सूत्रे 'शका' इत्यत्र ह्रस्वस्य 'मामकनरकयोः' इति नियमेन वारयितुं शक्यत्वेऽपि प्रत्ययस्थाद् ग्रहणेन वार्तिकेन सूत्राक्षरखण्डनस्यायुक्तत्वज्ञापनाच्च।

रामाणामिति—नन्वत्र परत्वात् 'सुपि च' इति दीर्घ एव स्यात्। न च विरोधे सति 'विप्रतिषेधे' इत्यस्य प्रवृत्तिः प्रकृते च उभाभ्यां दीर्घस्यैव विधानाद्विरोधाभाव इति वाच्यम्, अपूर्वबोध्यत्वस्यैव विधेयत्वेन एकेन विहितेऽपूर्वबोध्यत्वस्याभावेनापरस्यानुवादकत्वमेव कल्पनीयं स्यात्। तत्रानुवादकत्वविधायकत्वयोर्विरुद्धतया विरोधस्य सत्त्वात्। न चैवमपि फले विशेषाभावाद्विप्रतिषेधाप्रवृत्तिः, 'कृतकारि खल्वपि शास्त्रं पर्जन्यवत्' इति 'इको झल्' इति सूत्रस्थभाष्येण फले विशेषाभावेऽपि शास्त्रप्रवृत्तेर्बोधितत्वात्। तदाह—पर इति। इहेति—रामाणामित्यत्रेत्यर्थः। सन्निपातेति—ह्रस्वान्तस्याङ्गेन सहयो विशेष्यविशेषणभावरूपः सम्बन्धस्तमुपजीव्य जायमानस्य नुटो सम्बन्धविघातकदीर्घे निमित्तत्वासम्भवात्। यदि दीर्घः स्यात्तदाऽह्रस्वान्ताङ्गयो यंस्सम्बन्धः स नश्येत्। अत्र ह्रस्वान्तरूपसम्बन्धिनाशेनैव सम्बन्धनाशो बोध्यः। यथा लोके मातापित्रोः सम्बन्धमुपजीव्य जायमानः पुत्रः मातापित्रोर्विनाशकं प्रति सहायको न भवति तथा शास्त्रेऽपीति भावः। नचैवं 'नामि' इति दीर्घोऽपि सन्निपातविघातक इति तं प्रत्यपि नाम्त्वसम्पादनद्वारा नुटो निमित्तत्वानापत्तिरत आह—नामीत्यनेनेति—यद्यत्र नामीति दीर्घो न स्यात्तदा नामिसूत्रारम्भः पाणिनेर्व्यर्थ एव स्यात्। तस्मान्निरवकाशत्वान्नामीति दीर्घः सन्निपातपरिभाषां बाधित्वा प्रवर्तते इति भावः। सुपि च इति दीर्घस्तु यत्र सन्निपातपरिभाषाया नावसरः 'रामाभ्याम्' इत्यादौ चरितार्थ इति न सन्निपातपरिभाषां बाधितुं शक्तः, बाधप्रयोजकनिरवकाशत्वहेतोरभावात्।

ननु निरवकाशत्वस्यैव बाधप्रयोजकत्वे नामीति दीर्घोऽपि परिभाषाबाधको न स्यात्। यत्र ह्रस्वान्तत्वमनुपजीव्य नुटः प्रवृत्तिस्तत्र सन्निपातपरिभाषा अनुपस्थितेः। यथा 'कर्तॄणाम्' इत्यत्र। अत्र 'षट्चतुर्भ्यश्च' इति नुट्। स न ह्रस्वान्तत्वनिमित्तक इति सन्निपातपरिभाषाविषयं विनाऽपि नामीत्यस्य चारितार्थ्यांशेन परिभाषाबाधोऽयुक्त इति चेन्न, तावन्मात्रफलकत्वे 'कतेर्नामि' इति न्यासेनैव तत्सिद्धेः। न च गौरवम्, 'न तिसृचतसृ' इति सूत्राकरणेन लाघवात्। न च 'कर्तॄणाम्' इत्यत्र षट्संज्ञकसन्निपातेन जायमानो नुट् दीर्घे निमित्तं न स्यात्, ह्रस्वान्त इत्यन्तस्यैव षट्संज्ञकत्वेन

त्वारम्भसामर्थ्यात्परिभाषाव ाध्यते ।

दीर्घे सति तन्नाशसम्भवादिति वाच्यम्, एकदेशविकृतन्यायेनदीर्घं स्यापि षट्त्वाद् । न च 'नदीह्रस्वत्वं सम्बुद्धिलोपस्य' इति वार्तिके 'नदीह्रस्वत्वे कृते एङ्ह्रस्वादिति सम्बुद्धिलोपो न प्राप्नोति' इति भाष्यात् स्थानिवत्त्वेन प्रत्ययलक्षणेन वा सम्बुद्धेः सत्त्वेन सन्निपातपरिभाषया सम्बुद्धिलोपो न प्राप्नोतीत्याशयकभाष्यस्य सङ्गतये आतिदेशिकसन्निपातविघाताभावमादायैतत्परिभाषयाप्रतिबन्धो न भवतीति वाच्यम् आतिदेशिकपदेन एकदेशविकृतन्यायातिरिक्तेन बोधितस्यैव ग्रहणात् । अत एव 'अजरांसि' इति भाष्यप्रयोगः संगच्छते । अन्यथा अङ्गत्वमुपजीव्य जायमानो जरसादेशोऽङ्गत्वविघातके नुमि निमित्तं न स्यात् ।

ननु 'एङ्ह्रस्वात्' इत्यत्र ह्रस्वग्रहणानुवृत्तौ नपुंसके सोरमादेशे 'हक्ह्रस्वात्' इत्यादेः परस्येत्यकारलोपे सुपि चेति दीर्घे 'हे कुण्डाम्' इति प्राप्नोति, इति भाष्याद् ह्रस्वसन्निपातलक्षणो विधिः स्वप्रयोज्यत्वादिद्वारा ह्रस्वविघातकदीर्घस्यानिमित्तं न निमित्तमिति यावदित्येव 'कष्टाय' इति निर्देशेनानित्यत्वं ज्ञाप्यते । एवञ्च 'कुण्डाम्' इति भाष्यसङ्गतिः, 'रामाणाम्, इत्यत्र सुपि च इत्यस्य प्रवृत्तौ बाधकाभाव इति चेन्न, ज्ञापकीभूतो भाष्यसाक्षात्यादादेशरूप एव विधिगृह्यते नत्वागमादिः । तथा च 'रामाणाम्' इत्यत्र सन्निपातपरिभाषया सुपि चेति दीर्घो न स्याद् । अत एव 'आन्नलोपः' इत्यत्र शकारश्चरितार्थः । 'नाम्नलोपः' इतिन्यासे हि 'यज्वनानाम्' इत्यादौ नामीति दीर्घं बाधित्वा नलोपः स्यात्' इत्युक्तं भाष्ये । 'सुपि च' इति दीर्घेऽपि सन्निपातपरिभाषाया अप्रवृत्तौ तु लोपादपि परत्वेन सुपि चेति दीर्घ एव स्यात्तथा च 'परत्वादीर्घं बाधित्वा नलोपः स्यात्' इति भाष्योक्तिरसङ्गता स्यात् । 'सकृद्गतौ विप्रतिषेधे' इति परिभाषया शकारस्य वैयर्थ्यं च स्याद् ।

अन्ये तु 'कष्टाय' इति निर्देशेन 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायेन दीर्घमात्रे सन्निपातपरिभाषा न प्रवर्तते । अत एव 'आने मुक्' इति भाष्ये मुडापादितः । मुटि दीर्घे सन्निपातपरिभाषाया अप्रवृत्त्या 'अतो दीर्घः' इति दीर्घेण सिद्धेः । किञ्च 'नामि' इति भाष्ये 'अग्नीनाम्' इत्याद्युदाहृतम्, न तु 'वृक्षाणाम्' इति, तत्र परत्वात्सुपि चेत्यस्य न्याय्यत्वात् । 'आन्नलोपः' इति भाष्ये 'नामीति दीर्घं बाधित्वा परत्वान्नलोपः' इत्युक्तौ परत्वपदमुत्कृष्टत्वपरम् । उत्कृष्टत्वञ्च लोपे नित्यत्वरूपमिति न तद्विरोधः । न चैवम् 'रामाणाम्' इत्यत्र मूले नामीत्युल्लेखोऽयुक्तः, परत्वात्सुपि चेत्यस्यैव प्रवृत्तेरिति वाच्यम्, नित्येन नामीत्यनेन परस्यापि सुपि चेत्यस्य बाधात् । भाष्ये 'अग्नीनाम्' इत्याद्युदाहरणन्तु अनन्यथासिद्धत्वाभिप्रायेणेत्यलं विस्तरेण ।

आरम्भेति—'कतेर्नामि' इत्यनुक्त्वा सामान्यसूत्रारम्भसामार्थ्यादित्यर्थः । एकस्य लक्ष्यस्य साधनाय बहुलक्ष्यसाधारणं सूत्रं नारम्भणीयमिति भावः । अत एकस्य लक्ष्यस्य साधनाय 'अग्नेर्ढक्' 'मुद्गादण्' इत्यादेर्नासङ्गतिः, बहुलक्ष्यसाधारणत्वाभावात् ।

अन्ये त्वाहुः—'कतीनाम्' इत्यत्र परत्वात् 'षट्चतुर्भ्यश्च' इत्येव नुट् । अत्र सन्निपातपरिभाषाया अप्राप्त्या तामबाधित्वा नामीति दीर्घश्चरितार्थः । तथा च 'रामाणाम्' इत्यत्र सन्निपातपरिभाषया नामीति दीर्घो न स्यात् । तथा च 'आदाचार्याणाम्' इति निर्देशात् सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य परत्वात् 'सुपि च' इति दीर्घ एवास्तु इति चेदत्र केचित्—चतुस्साहचर्यात् हलन्तषट्संज्ञकादेव परस्यामः 'षट्चतुर्भ्यश्च' इत्यनेन नुड् विधीयते । अतः 'कतीनाम्' इत्यत्र ह्रस्वाश्रय एव नुडिति आरम्भसामर्थ्यस्यानुपक्षयाद् ह्रस्वाश्रये नुटि सन्निपातपरिभाषां बाधित्वा नामीत्येव दीर्घ इति । तदपरे न क्षमन्ते । चतुर्घटकरेफस्याग्त्वेन तत्साहचर्यादामन्तादेव षट्संज्ञकात्परस्यामो नुडित्यस्यापि वक्तुं शक्यतया 'कतीनाम्' इत्यत्र परत्वात् 'षट्चतुर्भ्यश्च' इत्येव नुट् 'षण्णाम्' इत्यत्र च नुण् न स्यादमन्तात्परस्यामोऽभावात् । तस्मात्साहचर्यं नाश्रयणीयम् ।

अन्ये तु बहिरङ्गः षट्त्वाश्रयो नुडिति 'कतीनाम्' इत्यत्रान्तरङ्गत्वाद् ह्रस्वाश्रये नुटि आरम्भसामर्थ्यात्सन्निपातपरिभाषां बाधित्वा नामीति नुट् ।

रामे । रामयोः । सुप्येत्वे कृते ।

**अपदान्तस्य मूर्धन्यः । [ ८-३-५५ ]**

आपादपरिसमाप्तेरधिकारोऽयम् ।

**इण्कोः । [ ८-३-५७ ]**

इत्यधिकृत्य ।

**आदेशप्रत्यययोः । [ ८-३-५९ ]**

'सहेः साडः सः' इति सूत्रात् 'स' इति षष्ठ्यन्तं पदमनुवर्तते ।

इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात् ।

अपरे तु 'आरम्भसामर्थ्यादित्यस्य' 'न तिसृचतसृ' इति सूत्रारम्भसामर्थ्यादित्यर्थः । 'तिसृणाम्' इत्यादौ ह्रस्वान्तलक्षणे नुटि कृते नामीति दीर्घप्रवृत्तौ हि 'न तिसृ' इति निषेध आरभ्यते । सन्निपातपरिभाषया दीर्घाप्रवृत्तौ तु दीर्घनिषेधारम्भो व्यर्थ एव स्यात् । अतो ज्ञायते नामीति दीर्घः सन्निपातपरिभाषां बाधते इति । यैस्तु 'ह्रस्वनद्यापः' इति सूत्रे ह्रस्वग्रहणं प्रत्याख्यायते, तैस्तु नामीति दीर्घे आरम्भसामर्थ्यं नाश्रयणीयम । इति ।

रामयोरिति--'राम ओस्' इत्यत्र 'ओसि च' इत्यत्वे अयादेशे च ।

न चान्तरङ्गेऽयादेशे कर्तव्ये प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादसिद्धत्वेऽयादेशानापत्तिः, "नाजानन्तर्ये" इति बहिरङ्गासिद्धत्वनिषेधात् ।

सुपीति—सप्तमीबहुवचने सुपि परे 'बहुवचने झल्येत्, इत्येत्वे कृते इत्यर्थः । अस्य 'षः' इति अग्रेतनेनान्वयः ।

'अपदान्तस्य मूर्द्धन्यः' इति । 'अपदान्तस्य 'इति, मूर्द्धन्य इति चाधिक्रियतेऽष्टमाध्यायस्य तृतीयपादसमाप्तिपर्यन्तम् । मूर्द्धन्य इति—मूर्वति = बध्नाति सर्वा नाडीरिति मूर्द्धा । मूर्वतेः कनिनि वस्य धत्वं निपात्यते । ष इत्येव सिद्धे मूर्द्धन्यग्रहणम् उत्तरार्थम् 'इणः षीध्वम्' इति 'अकृढ्वम्, चकृढ्वम् इति । भाष्यकृता उत्तरत्र 'अपदान्तस्य, मूर्द्धन्य इति पदद्वयमनुवर्त्य 'इणः षः' इत्यत्र षग्रहणम्, 'रषाभ्याम्' इत्यत्र णग्रहणम्, 'पदान्तस्य' इति सूत्रं च प्रत्याख्यातम्, मूर्द्धन्यादेशविधानेनापि आन्तरतम्यात् नस्य स्थाने णस्य सस्य स्थाने षस्य च सिद्धेः, पदान्तयोस्तयोर्णत्वषत्वाप्राप्तेश्च ।

'इण्कोः' इति इण् च कुश्चेति विग्रहे समाहारद्वन्द्वः, सौत्रत्वात्पुंस्त्वम् । न चेतरेतरयोगद्वन्द्वेऽपि सौत्रत्वादेकवचनं वक्तुं शक्यम्, तथात्वे 'द्व्येकयोः' इति शास्त्रबाधापत्तेः । लिङ्गव्यत्यये तु न शास्त्रबाधः, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्योक्त्या लिङ्गस्य लौकिकत्वात् । सर्वत्र इण्प्रत्याहारः परेण णकारेण । कवर्गादिपञ्चकम् । न च 'इण्कात्' इत्येव सूत्रमस्तु, सकारे परे स्वादीनामसम्भवादिति वाच्यम्, 'स्रक्षु' इत्यादौ षत्वानापत्तेः, षत्वे चर्त्वस्यासिद्धतया जश्त्वस्य सिद्धतया च सकारस्य गात्परस्यैव सत्त्वात् ।

'आदेश प्रत्यययोः' इति । यदि अवयवावयविभावसम्बन्धे षष्ठी तदा 'तिसृणाम्' इत्यादौ आष्टमिकद्विर्वचनस्य स्थाने द्विर्वचनत्वाद् 'विसं विसम्' 'मुसलं मुसलम्' इत्यादौ च षत्वापत्तिः । न च 'तिसृणाम्, इत्यत्र सकारोच्चारणसामर्थ्यान्न षत्वम् 'तिस्रः' इत्यत्र 'उस्रः, उस्रा' इत्यादाविव 'न रपरसृपिसृजि' इति षत्वनिषेधेन चारितार्थ्यात् । किञ्च 'प्रियतिसृ' शब्दादाचक्षाणण्यन्तात् क्विपि 'प्रियतिः' इति रूपम् । तिपादेशे तु 'प्रियतिट्' इत्यापद्येत । तस्मात् 'सात्पदाद्योः' इत्यत्र सादग्रहणात् 'हलि सर्वेषाम्' इत्यादिनिर्देशाच्च प्रत्ययपदं प्रत्ययावयवे लाक्षणिकम् । 'नीलस्य घटस्य' इतिवत् अभेदः षष्ठ्यर्थः । तथा च आदेशाभिन्नः प्रत्ययावयवाभिन्नश्च यः सकारस्तस्य षत्वमित्यर्थः । यद्वा प्रत्ययावय-

विवृताघोषस्य सस्य तादृश एव षः। रामेषु।
'इण्कोः' किम्? रामस्य।

वे ऽपि प्रत्ययत्वव्यवहारः, 'प्रत्ययलोपे' इति सूत्रे 'प्रत्ययस्य लुक्श्लु' इत्यतः 'प्रत्ययस्येत्यनुवर्तमाने' पुनः प्रत्ययग्रहणात्। तथा च प्रत्ययाभिन्नो यः सकारस्तस्य षत्वमित्यर्थेऽपि न दोषः। अत एव 'कविभिः कृतम्' इत्यत्र 'इदुदुपधस्य' इति षत्वं न।

न च प्रत्ययावयवे प्रत्ययत्वस्वीकारे 'रामाणाम्' इत्यत्र 'रामन् आम्' इत्यवस्थायाम् 'अल्लोपो-ऽनः' इत्यल्लोपापत्तिः, आकाररूपे प्रत्यये परे भसंज्ञायाः सत्त्वात्। तथा 'भूयात्' इत्यादौ तकारमात्रे प्रत्ययत्वस्य सत्त्वेनाप्यसंज्ञायाम् 'हल्ङ्याब्भ्यः' इति तल्लोपापत्तिरिति वाच्यम्, यत्प्रकृति-भूतं यत्प्रत्ययपदं तत्प्रयोज्यविषयता यत्र तत्रैव प्रत्ययत्वस्य स्वीकारात्। आम आकारे, तकारे च षष्ठीप्रकृतिप्रयोज्यविषयत्वाभावात्।

मनोरमाकारास्तु प्रत्ययपदं शक्यार्थपरमेव। आदेशस्याभेदेन प्रत्ययस्यावयवावयविभाव-सम्बन्धेन सकारेऽन्वयः। न च विभिन्नसम्बन्धेनान्वये 'काष्ठेन काष्ठं छिनत्ति' इत्यत्र द्वन्द्वाभाव इव प्रकृते द्वन्द्वाभावः, छान्दसत्वाद् द्वन्द्वोपपत्तेरित्याहुः।

विवृताघोषस्येति—विवृतरूपाभ्यन्तरप्रयत्नविवृतोऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः। ठका-रवारणायायम्, ऋकारवारणाय द्वितीयम्।

रामस्येति—न च 'शाकस्यस्य' इति निर्देशात्षत्वाभावः, 'स्वादयः' 'पथिमथ्यृभुक्षाम्' इत्यादिनिर्देशैरेवाचि परे यण्सिद्धौ 'इको यणचि' इत्यादिसूत्रवैयर्थ्यापत्तेः।

ननु प्रक्रियालाघवाय ष्यादेशे एव कर्तव्ये सकारोच्चारणसामर्थ्यात्षत्वाभावः। न च 'षः प्रत्ययस्य' इतीत्त्वापत्तिः, षकारोच्चारणसामर्थ्यात्, षात्पूर्वं लोपेन यकारप्रश्लेषाद्वा। न च सकारोच्चारणसामर्थ्येन षत्वाभावकल्पने 'अमुष्य पुत्रः' इत्यत्र षत्वानापत्तिः, नडादिगणे षत्वनिपात-नात्। "आमुष्यायणामुष्यपुत्रिका" इति निर्देशादेव तत्र षत्वकल्पनात्।

न च 'हे राम स्य' इति तिङन्ते षत्वापादने एव दीक्षिततात्पर्य्यम्, 'सात्पदाद्योः' इति निषेधेन षत्वाप्राप्तेः। न च राममिच्छति रामस्यति 'क्यचि लालसायाम्' इति सुकि लोटि हौ 'रामस्य' इत्यत्र तात्पर्य्यम्, सुकः प्रातिपदिकावयवत्वेन षत्वाप्राप्तेरिति चेन्न, अतत्तात्पर्य्यत् चौरस्यात् 'चौरस्यात्' इति 'षष्ठ्या आक्रोशे' इत्यलुक्समासे तत आचक्षाणण्यन्तात् क्विपि स्यादेशपक्षे 'चौराः, चौरसौ' इत्यादिसिद्धये ष्यादेशस्य कर्तुमशक्यत्वेन सकारोच्चारणसामर्थ्यात्षत्ववारणासम्भवात्।

किञ्च 'इण्कोः' इत्यस्याभावे 'रमासु' इत्यादावपि दोषो बोध्यः। नचात्र सु इत्येव वक्तव्ये सकारोच्चारणसामर्थ्यान्न षत्वम् 'लिट्त्सु' इत्यत्र धुडर्थं सकारोच्चारणस्य चारितार्थ्यात्। ननु 'दधिसेचः' इत्यादौ 'गतिकारकोपपदानाम्' इति परिभाषया सुबुत्पत्तेः प्राक्समासे षत्वनिषेधाय 'सात्पदाद्योः' इत्यत्र पञ्चमीसमासेन पदात्परस्यादेः सस्य षत्वं नेति भाष्यकृता व्याख्यातमिति 'रामेषु' इत्यत्रापि 'स्वादिषु' इति पदत्वेन षत्वनिषेधापत्तिरिति वाच्यम्, 'सात्पदाद्योः' इत्यत्र 'अग्निसाद्भवति' इत्यादौ सात्प्रत्यये परे 'स्वादिषु' इत्यग्नेरपि पदतया पदात्परस्य षत्वं नेति निषेधस्य सिद्धया साद्ग्रहणसाम-र्थ्येन 'स्वादिष्विति पदसंज्ञकात्परस्य निषेधो न' इति ज्ञापनात्।

एवञ्च 'व्यतिसे' इत्यत्र पञ्चमीसमासेन निषेधसिद्धया 'से' इत्यस्यानुमानिकस्थान्यादेशभावेन एकदेशविकृतन्यायेन वा षष्ठीसमासेऽपि निषेधसिद्धया च शङ्कासमाधाने निर्दले। न च 'पदस्यादेरिति समासे 'रामेषु' इत्यत्र सोरपि व्यपदेशिवद्भावेन सुबन्ततया पदत्वे षत्वनिषेधापत्तिः, असहाय एव व्यपदेशिवद्भावात्, सिद्धान्ते षटकत्वघटितत्वयोरेव तेनातिदेशबोधनाच्च।

'आदेशप्रत्यययोः' किम्—सुपीः । सुपिसौ । सुपिसः । 'अपदान्तस्य' किम्–हरिस्तत्र । एवं कृष्णमुकुन्दादयः ।

## सर्वादीनि सर्वनामानि । [ १-१-२७ ]

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः ।

---

सुपीः, सुपिसौ इति—सुपूर्वकात्पिसधातोः क्विपि रूपम् । अत्र धातोः सकार इति द्योतनाय 'सुपीः' इत्युपन्यस्तम्, रेफान्तस्य धातोः पदान्ते दीर्घविधानात् । न च 'आदेशप्रत्यययोः' इत्यस्याभावे 'इण्कोः' इत्यनेन षत्वविधाने 'शिष्टः' 'उषुः' इत्यादावपि षत्वसिद्धौ 'शासिवसि' इति सूत्रे शासिवसिघसिग्रहणं नियमार्थम्, धातोः सस्य षत्वञ्चेदेषामेवेति न दोषः । न च 'सिषाधयिषति' इत्यादौ षत्वानापत्तिः, नियमस्य सजातीयापेक्षत्वेन अनादेशस्य धात्ववयवस्य सस्य षत्वञ्चेदेषामेवेति नियमेन 'सिषाधयिषति' इत्यादौ सस्यादेशरूपत्वादिति चेन्न, 'तिसृणाम्' इत्यादौ षत्ववारणाय 'इण्कोः परस्यादेशरूपस्य सस्य षत्वमित्यर्थस्यावश्यकतया 'रामेषु' इत्यादौ षत्वार्थं प्रत्ययग्रहणस्याप्यावश्यकत्वात् । अथ सर्वादिगणपतितेषु सर्वनामसंज्ञाप्रयुक्तकार्यविधानाय सर्वनामसंज्ञामाह—

"सर्वादीनि सर्वनामानि" इति । सर्वं आदिः=प्रथमावयवो येषां समुदायरूपाणां तानि सर्वादीनि समुदायरूपाणि । ननु सर्वघटितसमुदायस्यैकत्वाद् बहुवचनमसङ्गतमिति चेन्न, सर्वाद्यर्थसमुदायस्य क्वचिदपि प्रयोगाभावात् 'समुदायेऽवतरन्ती संज्ञा तदवयवे विश्राम्यति' इति न्यायेन समुदायघटकप्रत्येकं संज्ञा विश्राम्यति, इति द्योतनाय अवयवगतबहुत्वसंख्यायाः समुदाये आरोपाद् बहुत्वोपपत्तेः ।

बहुव्रीहिर्द्विविधः—तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । तत्र तस्य=अन्यपदार्थस्य गुणाः= विशेषणानि=समस्यमानपदार्थस्वरूपाणीति तद्गुणाः । तेषां संविज्ञानम्=क्रियान्वयितया विज्ञानं यत्र स तद्गुणसंविज्ञानः । तदुक्तं भाष्ये—'भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा— 'शुक्लवाससमानय' 'लोहितोष्णीषा ऋत्विजः संचरन्ति' इत्यत्र तद्गुण आनीयते, तद्गुणाश्चां संचरन्ति' इति ।

अयं भावः—बहुव्रीहौ अन्यपदार्थे बहुव्रीहिघटकपदार्थो यदि समवायेन, संयोगेन वा विशेषणीभूय भासते । स च सम्बन्धो बहुव्रीह्यर्थस्तदा तद्गुणो बहुव्रीहिः । यथा लम्बकर्णमानय, शुक्लवाससमानय, इत्यादौ । अत्र लम्बकर्णौ समवायेनान्यपदार्थौ पुरुषे विशेषणीभूतौ, शुक्लवासश्च संयोगेनेति तद्गुणत्वम् ।

'नागयज्ञोपवीती भोज्यताम्' इति हरिसम्मततद्गुणान्योदाहरणे यज्ञोपवीतस्य भोजनेऽन्वयाभावेऽपि संयोगेन अन्यपदार्थे विशेषणत्वात्तद्गुणत्वम् । वस्तुतस्तु 'नागयज्ञोपवीती' इत्यत्र न बहुव्रीहिस्तथाऽपि 'मत्वर्थे बहुव्रीहिः' इति वार्तिकानुरोधेन, नागयज्ञोपवीतं यस्य स नागयज्ञोपवीती भोज्यतामिति पाठाभिप्रायेण वा तद्गुणत्वोक्तिः । नन्वेवं दृष्टसागरे पुरुषे सागरे स्नाति सति यदा 'दृष्टसागरमानय' इति प्रयोगस्तदा पुरुषस्य सागरेण संयोगसम्बन्धसत्त्वेऽपि संयोगस्य बहुव्रीह्यर्थत्वाभावान्न तद्गुणत्वम् ।

तथा च संयोग-समवायान्यतरसम्बन्धेन बहुव्रीहिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणत्वम्, संयोगसमवायसम्बन्धेन बहुव्रीहिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वमतद्गुणत्वमिति फलितम् । यद्वा बहुव्रीहिविशिष्टार्थबोधकत्वं तद्गुणत्वम् । वैशिष्ट्यञ्च स्वार्थान्वयित्व-स्वार्थान्वयसमकालिकस्वार्थसन्निहितत्वान्यतररूपम् । प्रकृते सर्वाभिन्नप्रथमावयवरूपबहुव्रीहिघटकपदार्थस्यान्यपदार्थे समुदाये आरोपितसमवायेनान्वयः, अवयवावयविनोः समवायसम्बन्धस्य क्लृप्तत्वात् तद्गुणत्वम् । तथा च समुदायस्योद्देश्यतया सर्वनामसंज्ञाकर्तृकसंज्ञाक्रियायामन्वय इति सर्वशब्दस्य सर्वनामत्वम् । अत्र च 'हलि सर्वेषाम्' इति निर्देशादि लिङ्गम् ।

तदन्तस्यापीयं संज्ञा, 'द्वन्द्वे च' इति ज्ञापकात्। तेन 'परमसर्वत्र' इति त्रल्, 'परमभवकान्' इत्यत्राकच्च सिद्ध्यति।

---

यदि आदिशब्दः समीपार्थकः स्यात्तदा तद्गुणसंविज्ञानात्सर्वनामत्वं न स्यात्। अत्र सर्वनाम इति महासंज्ञाकरणात् सर्वार्थवाचकानामेव सर्वनामसंज्ञा। सर्वादिगणपठिताश्च अर्थविशिष्टस्वरूपपरा एव, अनुकरणत्वात्, तेषां सर्वनामत्वे फलाभावाच्च। 'तस्मात्' 'सर्वादीनि सर्वनामानि' इत्यस्य सर्वादिगणपठितशब्दवृत्त्यानुपूर्वीविशिष्टानि सर्वार्थवाचकानि सर्वनामसंज्ञकानि स्युस्तदन्तानि चेत्यर्थः। तथा च लक्षणघटकसर्वादीनां सर्वनामत्वं सिध्यति। सर्वत्र गणेन निर्देशे एवमेवार्थो बोध्यः। सर्वनाम इत्यत्र 'पूर्वपदात्संज्ञायाम्' इति प्राप्तस्य णत्वस्य 'सर्वनामानि' इति निर्देशेनाभावो निपात्यते। तदुक्तं भाष्ये—"सर्वनामसंज्ञाया निपातनात् णत्वाभावः" इति।

ननु परमसर्वादिशब्दानां गणे पाठाभावात्सर्वनामता न स्यादत आह—तदन्तस्यापीति—सर्वादिगणपठितानुपूर्वीकशब्दान्तस्यापीत्यर्थः।

ननु तदन्तस्य सर्वनामत्वे 'परमसर्वस्मै' इत्यादौ स्मायादय एव फलानि। तेषां तु अङ्गाधिकारेण तद्विशेषणतया तदन्तविधौ सर्वनामान्तादङ्गात्परेषां ङ्यादीनां स्मायादय इत्यर्थेन सिद्धया फलत्वाभावः, प्रमाणाभावश्चात आह—द्वन्द्वे चेतीति—'वर्णाश्रमेतराणाम्' इत्यादौ 'द्वन्द्वे च' इत्यनेन सर्वादिशब्दान्तद्वन्द्वस्य सर्वनामसंज्ञा निषिध्यते। सर्वादौ पठितानामेव सर्वनामत्वम्, न तु तदन्तानामपि तदा 'द्वन्द्वे च' इति व्यर्थमेव स्यादिति व्यर्थीभूय ज्ञापयति–सर्वाद्यन्तस्यापीयं संज्ञेति। न च अशब्दस्य अन्यशब्देन द्वन्द्वे 'आन्यानाम्' इत्यत्र परादिवद्भावेन सर्वादितया प्राप्तसंज्ञावारणाय 'द्वन्द्वे च' इति चरितार्थम्, अन्यशब्दसापेक्षसर्वनामसंज्ञाया अन्तरङ्गत्वेन पदद्वयवर्णद्वयापेक्षबहिरङ्गदीर्घस्यासिद्धतया संज्ञाया अप्राप्तया चारितार्थ्याभावात्। उक्तरीत्या 'परमसर्वस्मै' इत्यादौ तदन्तस्य संज्ञायाः फलाभावेऽपि 'परमसर्वत्र' इत्यादौ फलमस्तीत्याह—

तेनेति—न चात्रापि 'प्रातिपदिकात्' इत्यधिकारात् तदन्तविधिना सिद्धिः, 'समासप्रत्ययविधौ प्रतिषेधः' इत्यनेन तदन्तविधेर्निषेधात्। न च सर्वनाम्नो विहितत्वाभावेन 'परमसर्वस्मै' इत्यादेरप्यसिद्धिः, तदन्तसंज्ञाया अभावपक्षे 'द्वन्द्वे च' इत्यनेन द्वन्द्वे विद्यमानावयवस्यैव निषेधाद्विहितविशेषणे फलाभावान्मानाभावाच्च। अकचेति—चेन 'परमसर्वतः' इत्यत्र तसिल्। न चावयवसर्वनामत्वमादाय त्रलादिः सिध्येदिति वाच्यम्, 'कुत्सिते' इति भाष्ये—

'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्।
समवेतस्य वचनं लिङ्गं वचनं विभक्तिञ्च॥
अभिधाय तान् विशेषानपेक्षमाणश्च कृत्स्नमात्मानम्।
प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः॥

इत्युक्त्या पञ्चकप्रातिपदिकार्थप्रयुक्तकार्य्यानन्तरमितरेण युज्यते पदं इत्यर्थस्य लाभेन सुबन्तादेव सार्थकतद्धितोत्पत्तिरिति सुबन्तार्थगतकुत्साद्यर्थविवक्षायां सर्वनामप्रकृतिकसप्तम्याद्यन्तादेव त्रलादेरुत्पत्त्या तदन्तसंज्ञां विना तदनुपपत्तेः।

"येन विधिस्तदन्तस्य" इति सूत्रे भाष्ये–'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्। सर्वे, परमसर्वे,' इति भाष्यमपि तदन्तविधौ गमकं बोध्यम्। उक्तप्रमाणात् 'शब्दस्वरूपाणि' इत्यध्याहृत्य तद्विशेषणतया तदन्तविधिः।

• "अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्।" इति भाष्यात् 'द्वन्द्वे च' इत्यनेनावयवानां न निषेधः, किन्तु द्वन्द्वस्य सर्वनामसंज्ञानिषेधः।

स च 'द्वन्द्वे च' इत्यस्य प्रथमार्थे सप्तमीस्वीकारादेव सिध्येत्। द्वन्द्वः सर्वनामसंज्ञको न भवतीति। यद्वा "द्वन्द्वे च" इत्यत्राधिकरणे सप्तमी सर्वनामपदं वाच्यतासम्बन्धेन द्वन्द्वे न तिष्ठति। द्वन्द्वः सर्वनामपदवाच्यो न भवतीति यावत्।

जसः शी । [ ७-१-१७ ]

अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः ।

न च 'अवर्णस्तृ' इत्यादाविव 'नानुबन्धकृतमनेकाल्त्वम्' इति वाच्यम्,

---

सर्वशब्दाज्जसि "प्रथमयोः" इति पूर्वसवर्णदीर्घे प्राप्ते आह—"जसः शी" ( ७-१-१७ ) इति—'अतो भिस्' इत्यतोऽत इति, 'सर्वनाम्नः स्मै' इत्यतः सर्वनाम्न इति चानुवर्तते । 'शी' इति गौरादिर्ङीषन्तम् । अत एव 'औङः श्याम्' इति निर्देशः संगच्छते । अत इत्यस्याङ्गविशेषणतया तदन्तविधिः । सर्वनाम्न इति तु विहितविशेषणम् । अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्य जसः शीत्यर्थः । सर्वनाम्नो विहितस्येत्युक्त्या 'वर्णाश्रमेतराः' इत्यत्र श्यादेशो न, द्वन्द्वस्य सर्वनामत्वनिषेधेन तद्विहितत्वाभावात् ।

सर्वनाम्नो विहितस्येत्यर्थाभावे सर्वनाम्नः परस्येत्यर्थे तु "विभाषा जसि" इत्यस्य वैयर्थ्यमेव स्यात् , संज्ञाया अभावपक्षेऽपि इतररूपसर्वनाम्नः परस्य जसः श्यादेशेन नित्यश्यादेशस्यैव पर्य्यवसिततया विभाषया संज्ञानिषेधवैयर्थ्यं स्पष्टमेव । अदन्तात्सर्वनाम्नो विहितस्येति तु नार्थः, 'ते' 'तेषाम्' इत्याद्यसिद्ध्यापत्तेः । ननु सर्वनाम्नः परस्य जसः शी इत्यर्थे 'द्वन्द्वे च' इत्यस्यापि वैयर्थ्यम्, समुदायस्य संज्ञानिषेधेऽपि अवयवसर्वनामत्वमादाय शीभावप्रवृत्तेर्दुर्वारत्वादिति चेन्न, 'वर्णाश्रमेतराणाम्' इत्यत्र सुडभावाय 'आमि सर्वनाम्नः सुट्' इत्यस्य सर्वनाम्नो विहितस्यामः सुडित्यर्थस्वीकारे 'द्वन्द्वे च' इत्यस्य चारितार्थ्यात् ।

वस्तुतस्तु न कुत्रापि विहितविशेषणम्, अङ्गसंज्ञकाददन्तात्सर्वनाम्नः परस्य जसः शी, अङ्गसंज्ञकाददन्तात्सर्वनाम्नः परस्यामः सुडित्येवंरूपार्थस्वीकारेणादोषात् । 'विभाषा जसि' इत्यादीदृशार्थे एव लिङ्गम् ।

यद्यपि 'जसः शि' इति निर्देशेनापि 'सर्वे' इत्यादीनां सिद्धिः, तथाऽपि 'वारिणी' इत्याद्यर्थं दीर्घोच्चारणम् । अनेकाल्त्वादिति—अनेकाल्त्वादेव श्यादेशः सर्वस्य जसः स्थाने भवति ।

ननु इत्संज्ञकः शकारोऽनुबन्धः।तथा च'नानुबन्धकृतमनेकाल्त्वम्'इति परिभाषया अनुबन्धाइत्संज्ञको वर्णस्तत्कृतानेकाल्त्वस्य निषेधात् 'अनेकाल्त्वात्सर्वादेश' इत्ययुक्तम् । अत एव 'अर्वणस्त्रसावनञः' इत्यत्र इत्संज्ञकमृकारमादायानेकाल्त्वात्सर्वादेशो न आदेशः । अन्यथा आदेशोऽपि सर्वस्य स्यात् ।

अतः शित्वादेव सर्वादेशो वाच्य इत्याशङ्कायामाह—न चेति—यथा 'अर्वणस्त्रसावनञः' इत्यत्र अनुबन्धकृतमनेकाल्त्वं न भवति तथाऽत्र न, आदेशविधानकाले शकारस्य इत्संज्ञकत्वाभावात् । 'लशक्व' इत्यनेन प्रत्ययादेः शस्य इत्त्वं विधीयते । शी इत्यस्य प्रत्ययत्वञ्च स्थानिवद्भावेनैव स्यात् । स्थानिवद्भावश्चादेशे कृते एव ।

एवञ्च कृते आदेशे शकारस्येत्संज्ञकत्वेऽपि श्यादेशविधानकाले इत्संज्ञकत्वाभावेन 'नानुबन्ध' इति परिभाषाया अप्राप्त्या शस्येत्त्वाभावाच्चानेकाल्त्वादेव सर्वादेशो न तु शित्वात् । आदेशे तु आदेशात्प्रागेव 'उपदेशेऽजनुनासिक इत्' इत्यनेन ऋकारस्येत्संज्ञायाम् 'नानुबन्धकृतम्' इति परिभाषया नानेकाल्त्वम् । 'शी' इत्यस्य स्वतस्तु न प्रत्ययत्वम्, पञ्चमाध्यायपर्य्यन्तमेव प्रत्ययसंज्ञाऽधिकारात् । अस्य च सप्तमाध्यायस्थत्वात् ।

'नानुबन्धकृतम्' इत्यत्र मानन्तु 'अनेकाल्' सूत्रे शिद्ग्रहणमेव । अन्यथा 'इदम इश्' 'अष्टाभ्य औश्' इत्यादय आदेशा अनेकाल्त्वादेव सर्वस्य स्थाने स्युरिति शिद्ग्रहणं व्यर्थमेव स्यात् । तदुक्तं भाष्ये—'एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह तज्ज्ञापयत्याचार्य्यः—भवत्येषा परिभाषा-'नानुबन्धकृतमनेकाल्त्वम्' इति' । न च ज्ञापितायामपि परिभाषायां शस्येत्त्वाभावेन परिभाषाया अप्रवृत्त्या शिद्ग्रहणं व्यर्थम्, ज्ञापकञ्च तदेव वरं यत्स्वांशे चरितार्थमिति वाच्यम्, भाष्यप्रामाण्यात परिभाषायाम् इत्संज्ञायोग्यस्वरूपानुबन्धस्यापि ग्रहणात् ।

सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात्। सर्वे।

सर्वनाम्नः स्मै। [ ७-१-१४ ]

अतस्सर्वनाम्नो ङे इत्यस्य स्मै स्यात्। सर्वस्मै।

अस्ति च प्रकृते यदि सर्वादेशः स्यात्तदा प्रत्ययादितया शस्येत्त्वं स्यादिति सम्भावनाविषयत्वरूपमित्संज्ञायोग्यत्वम्।

यद्वा शिद्ग्रहणमनुबन्धस्य प्रत्याहारबोध्यत्वाभावं बोधयति। तथा च अल्पदेनानुबन्धस्याग्रहणात् इश्, शी, इत्यादावनेकाल्त्वाभावात्सर्वादेशेऽप्राप्ते शिद्ग्रहणम्, तेन 'अर्वणस्तृ' इत्यनेन न सर्वादेशः। न चानुबन्धस्य प्रत्याहारबोध्यत्वाभावे 'हलन्त्यम्' इत्यादिना इत्त्वं न स्यात्। किञ्च 'उगितश्च' इत्यादेरनुपपत्तिरिति वाच्यम्, 'अनुदात्तङित आत्मनेपदम्' 'उगितश्च' इत्यादिसूत्रारम्भादित्संज्ञायामिविनिमित्तके कार्ये च प्रत्याहारबोध्यत्वकल्पनात्। एतेनानुबन्धानामल्पदबोध्यत्वाभावबोधने 'रा मः' 'चोरः, इत्यादौ हलन्तत्वानयने 'अनश्विचौ' इति निषेधाप्रवृत्त्या घञः नदट्, चोरट् इत्यादेर्हलन्तत्वमादाय सुलोपापत्तिः।

किञ्च धूञ्, प्रीञ् इत्यादिभ्यः 'गुरोश्च हलः' इत्यप्रत्ययापत्तिः, 'कुम्रश्नः' इति कदादेशापत्तिः, 'मिदेर्गुणः' इत्यादौ 'यस्मिन्विधिः' इति परिभाषया इत्संज्ञकशकारादावित्यर्थानापत्तिश्चेत्यपास्तम्। प्रकृते तु प्राचीनमते शी इति शकारस्यानुबन्धत्वाभावेन अनेकाल्त्वं स्यादित्यनेकाल्त्वादेव सर्वादेशः। इत्संज्ञायोग्यत्वमनुबन्धत्वमिति नव्यमते तु शकारस्येत्वयोग्यत्वात्प्रत्याहारबोध्यत्वाभावेन, 'नानुबन्धकृतम्' इति परिभाषयाऽनेकाल्त्वाभावात् शित्त्वादेव सर्वादेशः।

अन्ये तु शित्त्वात्सर्वादेश इति न युक्तम्, इत्संज्ञायोग्यत्वज्ञाने सर्वादेशत्वज्ञानम् सर्वादेशत्वज्ञाने च प्रत्ययादित्वज्ञानम् प्रत्ययादित्वज्ञाने च इत्संज्ञायोग्यत्वज्ञानम् इति चक्रकापत्तेः।

सर्वे इति—सरतीति सर्वः। सरतेः 'सर्वनिघृष्व' ( उ० १ पा० १९३ सू० ) इति वन्प्रत्ययः। विशतीति विश्वः। विशतेः 'अशूप्रुष्लुषि' ( १ पा० १५१ सू० ) इति क्वन्। सर्वशब्दो विश्वशब्दश्च अनेकावयवकसमुदायपरः। ततो द्विवचनबहुवचनविधाने प्रकारद्वयम्। यदा सर्वविश्वशब्दाभ्याम् द्वौ समुदायौ विवक्ष्येते, अथवा अवयवगता संख्या आरोपात् समुदाये विवक्ष्यते तदा द्विवचनम्। एवमेव बहुवचनम्। तथा च 'सर्वौ' इत्यस्य द्वौ समुदायावित्यर्थः, आरोपितद्वित्वविशिष्ट एक एव समुदाय इत्यर्थो वा।

'सर्वे' इत्यस्य बहुसमुदाया इत्यर्थः, आरोपितबहुत्वविशिष्ट एक एव समुदाय इत्यर्थो वा। सर्वशब्दात् ङेविभक्तौ 'ङेर्यः' इति प्राप्ते तदपवादमाह—

सर्वनाम्नः स्मै इति। 'अतो भिसः' इत्यतोऽत इति, 'ङेर्यः' इत्यत ङेरिति चानुवर्तते। अत्र पूर्वोत्तरसूत्रेषु आदेशबोधकं विभक्तिदर्शनात्, विभक्तेरभावविषये केनचिदपि व्याख्यात्रा किञ्चिदनुक्तेश्च 'स्मैः' इत्येव पाठो युक्तः।

अतः सर्वनाम्न इति—अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्यर्थः। यद्वा अङ्गसंज्ञकात् अदन्तसर्वनाम्नः परस्येत्यर्थः। तेन 'मासपूर्वाय' इत्यत्र स्मै न, अन्यथा समुदायस्य 'तृतीयासमासे' इति सर्वनामत्वनिषेधेऽपि—

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्।"

इति भाष्योक्त्या अवयवस्य सर्वनामत्वसत्त्वेन अदन्तात्सर्वनाम्नः परस्य ङेः स्मैरित्यर्थे स्मैदुर्वारः स्यात्। सर्वस्मै इति—तिरोहितावयवकसमुदायस्यैकत्वादेकवचनम्।

**ङसिङ्योः स्मात्स्मिनौ । [ ७-१-१५ ]**

अतस्सर्वनाम्नः एतयोरेतौ स्तः । सर्वस्मात् ।

**आमि सर्वनाम्नः सुट् । [ ७-१-५२ ]**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् ।

---

"ङसिङ्योः स्मात्स्मिनौ" इति । 'अतो भिस्' इत्यतोऽत इति, 'सर्वनाम्नः स्मै' इत्यतः सर्वनाम्न इति चानुवर्तते । 'अङ्गस्य' इत्यधिक्रियते । अदन्तादङ्गात्सर्वनाम्नः परयोः अदङ्गात्परयोः सर्वनाम्नो विहितयोर्वा ङसिङ्योः स्मात्स्मिनौ स्यातामित्यर्थः । तेन 'मासपूर्वात्' इत्यत्र न ।

ननु स्मात्स्मिनोस्तनयोः 'हलन्त्यम्' इतीत्त्वापत्तिः । न च 'न विभक्तौ' इति निषेधः, उपदेशावस्थायां विभक्तिसंज्ञायाः सुप्त्वाभावेनाप्राप्त्या निषेधाप्राप्तेः, आदेशोत्तरमेव विभक्तित्वस्य स्थानिवद्भावलभ्यत्वादिति चेन्न, विभक्तावित्यस्य विभक्तित्वयोग्ये इत्यर्थेन आदेशोत्तरं स्थानिवत्त्वेन विभक्तित्वं स्यादिति सम्भावनारूपयोग्यत्वस्य सत्त्वात् ।

अत एव सूत्रे तुग्रहणं चरितार्थम् । अन्यथा अनादेशे सुपि तवर्गस्यासत्त्वेन तिङ्यपि अन्त्यतवर्गाभावेन, प्राग्दिशीयविभक्तौ थमोरुदित्करणेन 'न विभक्तौ' इत्यस्यानित्यत्वज्ञापनात् 'क्व' इत्यादिसिद्धयेऽस्याप्रवृत्तेरिष्टत्वेन च विभक्तिस्थतवर्गस्य इत्त्वनिषेधे तुग्रहणस्य वैयर्थ्यापत्तिः । 'उपसर्जनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन 'हलन्त्यम्' इत्यस्य 'न विभक्तौ' इत्यनेन बाधे विभक्तिपदस्य यथाश्रुतार्थकत्वेऽपि तुग्रहणस्य चारितार्थ्यं तु न, 'न बहुव्रीहौ' इतौ सूत्रस्थभाष्यविरोधपरिहाराय निषेधविषये संज्ञाविषये वा उपसंजनिष्यमाणन्यायाप्रवृत्तिकल्पनात् ।

तथा हि--'त्वकत्पितृकः' इत्यादावलौकिके विग्रहवाक्ये प्राप्ताकच्वारणाय बहुव्रीहिपदं लक्षणया बहुव्रीह्यर्थालौकिकविग्रहवाक्यपरमित्युक्तम् भाष्ये । बहुव्रीहेः प्रागपि उपसंजनिष्यमाणन्यायेन सर्वनामसंज्ञायास्तन्निमित्तकाकचश्चाप्रवृत्तिसिद्धौ भाष्याभिमतलक्षणाया असङ्गत्यापत्तेः ।

एतयोरिति--ङसिङ्योरित्यर्थः । एताविति--स्मात्स्मिनावित्यर्थः ।

'सर्व आम्' इति स्थितौ नुटि प्राप्ते तदपवादमाह--

"आमि सर्वनाम्नः सुट्" इति । अत्र 'आज्जसेः' इत्यत आदित्यनुवर्त्तते । 'आमि' इति सप्तम्या 'त्रेस्त्रयः' इत्यत्र चरितार्थतया आदिति पञ्चम्या निरवकाशत्वेन 'तस्मात्' इति परिभाषया 'आमि' इत्यस्य पञ्चम्यन्तत्वेन विपरिणामात् आदित्यस्याङ्गविशेषणतया तदन्तविधौ अवर्णान्तादङ्गात् परस्येत्यर्थलाभः ।

सर्वनाम्न इति तु विहितविशेषणमामि विधानद्वारकं विशेषणमित्यर्थः । सर्वनाम्न इति ल्यब्लोपे पञ्चमी--सर्वनाम उद्दिश्य विहित इत्यर्थः । उद्देश्यता च पर्याप्त्या । तथा च सर्वनामपर्याप्तोद्देश्यताकविधेयताश्रयस्य अवर्णान्तादङ्गात्परस्यामः सुडित्यर्थः ।

विहितविशेषणत्वे प्रमाणन्तु 'विभाषा दिक्समासे' इति सूत्रे बहुव्रीहिग्रहणफलपरम् 'दक्षिणोत्तरपूर्वाणाम्" इति भाष्यप्रयोग एव । सर्वनाम्नः परस्यामः सुडित्यर्थे तु भाष्यप्रयोगे सुड् दुर्वार एव स्यात् । द्वन्द्वस्य दक्षिणोत्तरपूर्वस्य 'द्वन्द्वे च' इति सर्वनामत्वनिषेधेऽपि द्वन्द्वावयवस्य पूर्वशब्दस्य सर्वनामत्वसत्त्वात् । 'अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इति सर्वनामसूत्रस्थभाष्यमपि विहितविशेषणे मानम् । अवर्णान्तात्सर्वनाम्नो विहितस्य इति तु नार्थः, 'येषाम्' इत्यादौ दकारान्तादामो विहितत्वेन सुडनापत्तेः ।

केचितु अङ्गनिमित्तस्य सर्वनाम्नो विहितस्यामः सुडित्येवार्थ उचितः, आदित्यनुवृत्तौ मानाभावात्, अवर्णात्परस्यामः सुडित्यर्थे फलाभावाच्च । न च त्वदिति तान्तात्सर्वनाम्न आमि 'त्वताम्'

शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः ।

सर्वादयश्च पञ्चत्रिंशत् ।

---

इत्यत्र सुडापत्तिः, 'त्वदधरमधुरमधूनि पिबन्तम्' इति जयदेवप्रयोगबलेनान्यार्थकत्वच्छब्दसत्त्वेऽपि तस्य सर्वनामत्वे मानाभावात्, 'त्वत्त्वसमसिमेत्यनुच्चानि' इति फिट्सूत्रे सर्वनामसाहचर्य्येण त्वदित्यस्य सर्वनामत्वप्रतीतावपि तस्य बहुसम्मतत्वाभावेत्याहुः ।

वस्तुतस्तु 'दाधिडनायन' इति सूत्रे 'एकश्रुतिनिर्देशात्सिद्धम्' इति भाष्यात् अलन्तस्यानन्तस्य च ऐक्ष्वाकशब्दस्य एकश्रुत्या पाठ इव त्वशब्दस्य सर्वादावेकश्रुत्या पाठेनोदात्तानुदात्तयोर्ग्रहणे सिद्धे त्वशब्दस्य द्विः पाठो ज्ञापयति—एकस्तान्त इति, तेन 'त्वकत्' इत्यकजादिकं सिध्यति । अत एव ऋङ्मन्त्रेऽपि "स्तरीरुत्वद्भवति" 'सुत उ त्वद्' इति तान्तप्रयोगः संगच्छते । वेदभाष्यकार अपि 'त्वदिति सर्वनामसु पठितोऽनुदात्तोऽन्यपर्य्याय इत्याहुरिति ।' इत्यञ्च अवर्णात्परस्यामः सुडित्यर्थोऽप्यावश्यक एव ।

शेषमिति—'घञबन्तः' इति लिङ्गानुशासनोक्तपुंस्त्वन्तु भावे एव, कर्मघञन्तस्तु विशेष्यनिघ्न एव । अत एव 'सम्बन्धमनुवर्तिष्यते' इति भाष्ये नपुंसकत्वं संगच्छते । शेषमित्यस्य रूपमिति शेषः । एवमिति—सर्वशब्दसदृशा इत्यर्थः । सादृश्यञ्च सर्वशब्दवृत्तिसर्वनामकार्य्यादिमत्त्वेन न तु समानरूपवत्त्वेन, सर्वविश्वादिशब्दयोरानुपूर्वीभेदात् ।

ननु बहुत्वव्यापकं सर्वत्वं तत्प्रवृत्तिनिमित्तकात्सर्वशब्दात् बहुशब्दवद् बहुवचनमेव स्यादिति चेन्न, 'सर्वो लोकोऽभ्युदयेन युज्येत' इत्यादिभाष्यादिप्रयोगात्सर्वशब्दोऽनेकावयवारब्धसमुदायत्वप्रवृत्तिनिमित्तकः समुदायवाची । तत्रावयवगतद्वित्वादिसंख्याया उद्भूतत्वेन विवक्षायाम्, समुदायादिविवक्षायां वा द्विवचनादि । अवयवगतसंख्याया अनुद्भूतत्वेन विवक्षायाम्, समुदायैकत्वविवक्षाया वा एकवचनम् इत्येवं व्यवस्थितेः ।

ननु अनेकावयवारब्धसमुदायवाची यदि सर्वशब्दस्तदा 'सर्वोऽप्यात्मा नित्यः' इत्यादिप्रयोगानुपपत्तिः, आत्मनो निरवयवतया तादृशसमुदायत्वानुपपत्तेरिति चेन्न, 'सर्वोऽप्यात्मा नित्यः' इत्यादावुद्देश्यवाचकस्यात्मादिशब्दस्यापि समुदायपरत्वात् । तथा च अन्तःकरणावच्छिन्नजीवात्मनाम् निरवच्छिन्नात्मनश्च समुदायस्यानेकावयवारब्धत्वस्य वक्तुं शक्यत्वात् । एवमेव 'सर्वं गगनं नित्यम्' इत्यादावप्यनुसन्धेयम् इत्यन्यत्र विस्तरः ।

ननु सर्वेषां नामानि=वाचकानीति सर्वनामानीति महासंज्ञाकरणेनान्वर्थत्वाश्रयणेन सर्वनामपदेन गणपठितानामेव ग्रहणं स्यादिति 'सर्वादीनि' इति संज्ञाकरणम् गणपाठश्च व्यर्थ एवेत्याशङ्कायामाह—पञ्चत्रिंशदिति—पञ्च च त्रिंशच्चेति समाहारद्वन्द्वः । न च 'संख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्च' इति वार्त्तिकात् 'एकश्चैकश्चैकौ द्वौ च द्वौ चेति द्वाः' इति संख्यावाचकानामेकशेषो निषिद्धः, 'एकौ' इत्यनेन द्व्यर्थस्य 'द्वाः' इत्यनेन त्र्यर्थस्य चाप्रतीतेः 'द्वौ' इत्यनेन 'त्रयः' इत्यनेन च तदर्थप्रतीत्या अन्यपदार्थत्वाच्चेति चेन्न, द्वे संख्ये, तिस्रः संख्याः, इति संकलितसंख्याबोधनविषये एव 'एके संख्ये' 'द्वाः संख्याः' इत्यादीनामेव वार्त्तिकानभिधानबोधनात् । यद्वा पञ्चाधिका त्रिंशत् 'पञ्चत्रिंशत्' इति तत्पुरुषो वा । न च संख्यान्तस्य तत्पुरुषस्य चरमावयवो डच् वाच्य इत्यर्थकेन 'संख्यायास्तत्पुरुषस्य वाच्यः' इति वार्तिकेन डजापत्तिः, "अन्यत्राधिकलोपात्" इति वार्त्तिकेन तद्बाधात् ।

पञ्चत्रिंशदिति परिगणनाभावे कृत्स्नसकलाखिलादिना सर्वनामपदेन ग्रहणापत्तिस्तद्वारणाय संज्ञासूत्रम्, सर्वविश्वादीनां परिगणनञ्चावश्यकमिति भावः ।

सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम। 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्'। 'स्वमज्ञातिधनाख्यायाम्' 'अन्तरं बहिर्योगोपसंव्यानयोः'। त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इति।

तत्र उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः। तस्येह पाठस्तु 'उभकौ' इत्यकजर्थः। न च कप्रत्ययेनेष्टसिद्धिः, द्विवचनपरत्वाभावेन उभयतः 'उभयत्र' इत्यादाविवायच्प्रसङ्गात्। तदुक्तम्।

सर्वविश्वेति—सर्वविश्वेत्यादि 'सर्वः' 'विश्वः' इत्यादिप्रयोगस्थानामभेदानुकरणं स्वरूपबोधकमेव, न तु समुदायार्थबोधकम्। न चैवं सर्वार्थवाचकानि सर्वादिगणपठितानि शब्दस्वरूपाणि सर्वनामसंज्ञकानीत्यर्थानुपपत्तिः, सर्वादिगणपठितानीत्यस्य सर्वादिगणपठितशब्दवृत्त्यानुपूर्वीमन्ति प्रयोगस्थानि सर्वादीनीत्यर्थात्।

अभेदानुकरणेन वृत्त्या अर्थबोधकत्वाभावात्प्रातिपदिकसंज्ञाया अभावेन न सर्व-विश्व इत्यादौ स्वादिविभक्तिः।

पूर्वपरेति—गणसूत्रमिदम्। व्यवस्थायामसंज्ञायाञ्च पूर्वादीनि सप्त सर्वादिगणपठितानुपूर्वीकाणि बोद्धव्यानीत्यर्थः। एषां सर्वनामसंज्ञा तु "सर्वादीनि" इति सूत्रेणैव। एवम् "स्वमज्ञाति" इत्यादिगणसूत्राणामप्यर्थो बोध्यः।

इतीति—इतिशब्दः सर्वादिसमाप्त्यर्थकः।

उभशब्दे विशेषमाह—तत्रेति—सर्वादिगणे इत्यर्थः। अत इति—द्वित्वविशिष्टस्य वाचकत्वादेवेत्यर्थः। नित्यमिति—सदेत्यर्थः। न चैवम् "उभ" इति गणे पाठः, उभशब्द इति निर्देशश्चासङ्गत इति वाच्यम्, गणे, उभशब्द इत्यत्र च उभशब्दस्य स्वरूपपरकत्वेन द्वित्वविशिष्टवाचकत्वाभावात्।

न चैवं द्विवचने कस्यापि सर्वनामकार्यस्याभावेन सर्वादिगणे उभशब्दस्य पाठो व्यर्थं अत आह—तस्येति—तस्य=उभशब्दस्य। इह=सर्वादिगणे। अकजिति—"उभकौ" इत्यत्र "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यनेनाकच्प्रत्ययार्थं इत्यर्थः।

न च "सर्वनाम्नस्तृतीया च" इति सूत्रेण "उभाभ्यां हेतुभ्याम्" "उभयोर्हेत्वोः" इत्यादौ षष्ठीतृतीयादिसिद्धिरपि फलम्, "निमित्तपर्यायशब्दप्रयोगे सर्वासां प्रायदर्शनम्" इति वार्त्तिकामनैव तत्सिद्धेः।

न च तस्य वार्त्तिकस्य "सर्वनाम्नस्तृतीया च" इति सूत्रे पठितत्वेन सर्वनामसंज्ञके एव तत्प्रवृत्तिः, भाष्ये "हेतौ" इति सूत्रे एव तत्पाठात् तत्प्रवृत्तौ सर्वनामसंज्ञकत्वस्यानपेक्षितत्वात्। अत एव "अन्नेन कारणेन" "अन्नस्य कारणस्य" इत्यादिसिद्धिः।

न च माऽस्तु सर्वादिगणे उभशब्दस्य पाठः। न च अकच्प्रत्ययो न स्यात्, 'कुत्सिते' इत्यादिसूत्रेण कप्रत्ययेनापि "उभकौ" इत्यादिसिद्धेः। न च "चितः" इति सूत्रेणान्तोदात्तत्वासिद्धिः, "प्रत्ययः आद्युदात्तः" इति प्रत्ययस्वरेणाद्युदात्तत्वेऽपि अन्तोदात्तत्वे सिद्धे कस्य आद्युदात्तत्वेऽन्तोदात्तत्वे वा विशेषाभावात्।

न च "चितः सप्रकृतेर्बह्वकजर्थम्" इति वार्त्तिकेनाकचि "स्वार्थेन परिपूर्णं पदमर्थान्तरमाकाङ्क्षति" इति भाष्यात्सुबन्तस्यैव प्रकृतित्वेन "उभकाभ्याम्" इत्यत्र सुबन्तस्यान्तोदात्तत्वम् के तु प्रत्ययस्यान्तोदात्तत्वेन "चितः सप्रकृतेः" इत्यस्याप्राप्त्याऽभ्यामः प्राग्भागस्य प्रकृतेरेवान्तोदात्तत्वमिति सुबन्तस्यान्तोदात्तत्वाय सर्वादौ पाठस्य चारितार्थ्यमिति वाच्यम्, "स्वार्थेन परिपूर्णं पदमर्थान्तरमाकाङ्क्षते" इति भाष्योक्त्या तद्धितस्य सुबन्तात्परत्वेऽपि "प्रातिपदिकात्" इत्यधिकारस्य सत्त्वेन सुप्प्रकृतेरुभकरूपप्रातिपदिकस्यैवकेऽकचिनान्तोदात्तत्वेन स्वरे विशेषाभावात्।

नचाकचि तन्मध्यपतितन्यायेन उभकशब्दस्योभग्रहणेन ग्रहणात् "उभादुदात्तः" इत्यनेन उभकावयववास्येरर्थेऽयचि "उभकयः" इति रूपम्, के तु तन्मध्यपतितन्यायस्याप्रवृत्त्या उभकशब्दादयचोऽभावेन फलभेद इति वाच्यम्, "कश्च काकचोर्विशेषः" इति भाष्योक्त्या उभकशब्दादयचोऽनभिधानस्य बोधनात्। तस्मात्फलान्तरमाह—नचेति कप्रत्ययेनेति—उभशब्दस्यासर्वनामत्वेऽकचोऽभावेऽपि "प्रागिवात्कः" इत्यधिकारे "अज्ञाते" इत्यादिना कप्रत्यये 'उभकौ" इत्यादेर्न च सिद्धिरित्यर्थः। तत्र हेतुमाह–द्विवचनेति। यथा "उभयतः" "उभयत्र" इत्यत्र पञ्चम्यन्तात्तसि, सप्तम्यन्तात् त्रलि च तद्धितान्तत्वेन प्रातिपदिकतया सुपो लुकि द्विवचनपरत्वाभावे उभशब्दादयच् प्रत्ययो भवतीत्यर्थस्य सर्वाभिमतत्वेन कप्रत्यये "उभक औ" इति दशायाम् उभशब्दाव्यवहितोत्तरं द्विवचनं नास्ति, अतोऽयचि "उभयकौ" इति रूपापत्तिः। इष्यते तु "उभकौ" इति।

सर्वनामसंज्ञायाम् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति टेः पूर्वमकचि तन्मध्यपतितन्यायेन "उभक" इत्यत्र उभत्वारोपेण उभकशब्दोऽपि उभशब्द इति। ततः परं द्विवचनं वर्तते। इत्यतोऽयचोरभावेन "उभकौ" इत्यादिसिद्धिरेव सर्वादिषु उभशब्दपाठस्य फलमिति भावः।

न च "उभौ" इत्यस्य द्वावित्यर्थः। तथा च "अवयववाचकादुभशब्दादवयविन्यर्थेऽयच्" इत्यर्थकस्य "उभादुदात्तो नित्यम्" इत्यस्याप्राप्तिरिति वाच्यम्, "उभादुदात्तो नित्यम्" इत्यत्र "उभादुदात्तः" इत्येको योगः। अवयववाचकादुभशब्दादवयविन्यर्थेऽयज्वा इत्यर्थः, विभाषाऽधिकाराद्वैकल्पिकत्वमस्यार्थः।

ततः "नित्यम्" इति। उभशब्दाद् वृत्तिविषये नित्यमयच् स्यादित्यर्थः। इत्येवं योगविभागेन उभशब्दात्स्वार्थेऽयज्विधानात्। न च योगविभागस्य भाष्यानुक्तत्वादप्रामाण्यम्, स्थानिवत्सूत्रस्य दोषप्रदर्शनावसरे "तयादेशे उभयप्रतिषेधो वक्तव्यः। उभये देवमनुष्याः। तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति" इति भाष्ये तयपोऽयजादेशे दूषणमुक्तम्। तयप् च "संख्याया अवयवे तयप्" इति विकल्पेन विधीयते, महाविभाषाऽधिकारात्। तथा च तयपोऽयचि "उभये" इति। तयपोऽभावे "उभाववयवावेषाम्" इति वाच्यम्। "नैष दोषः, अयच् प्रत्ययान्तरम्।" इति।

भाष्यमतेऽपि अयज्विकल्पेन वाच्यः। अन्यथा सूत्रकृद्भाष्यकृतोः फलभेदापत्तेः। तथा चैकसूत्रत्वे "नित्यम्" इति विरुद्धार्थत्वान्न संगच्छते। अतो योगविभागे एव भाष्यस्य तात्पर्यस्वीकारे नित्यग्रहणस्य सार्थक्यात्। पुनरयचः प्रत्ययान्तरत्वे "उभयी" इतीकारो न प्राप्नोति "टिड्ढ" इति सूत्रेणेति शेषः। तत्र सूत्रे "मात्रशब्दात्प्रभृति आ अयचः चकारात् प्रत्याहारग्रहणम्" इति अयचस्तदन्तर्गतत्वेन "उभयी" इति सिध्यतीति सर्वादिसूत्रभाष्ये उक्तम्।

न च—सुबन्तस्यान्तोदात्तत्वाय पाठस्य चारितार्थ्यमिति वाच्यम्, 'प्रातिपदिकात्' इत्यधिकारादकच्यपि उभशब्दस्यैव प्रकृतित्वेन उभकशब्दस्यैवान्तोदात्तत्वेन स्वरे विशेषाभावात्। न चाकचि तन्मध्यपतितन्यायेन उभशब्देन उभकशब्दस्यापि ग्रहणात् 'उभादुदात्तो नित्यम्' इत्यनेनोभकशब्दादयचि 'उभकयः' इति रूपम्, कप्रत्यये तु तन्मध्यपतितन्यायाप्रवृत्त्या अयज् न स्यादिति वाच्यम्, 'कश्च काकचोर्विशेष' इति भाष्योक्त्या काकचोर्विशेषाभावबोधनेन उभकशब्दादयचोऽभावकल्पनात्।

तस्मात्फलान्तरमाह—न चेति—उभशब्दस्य सर्वनामत्वाभावे कप्रत्ययेन 'उभकौ' इतीष्टस्य रूपस्य सिद्धिर्न स्यादित्यर्थः। कुत इति चेत्तदाह—द्विवचनपरत्वाभावेनेति। यथा 'उभयतः, उभयत्र' इत्यादौ पञ्चम्याः सप्तम्याश्च लुकि द्विवचनपरत्वाभावादयज्भवति तथा उभशब्दाद् द्विवचनान्तात्के तद्धितान्तत्वात्प्रातिपदिकत्वेन द्विवचनस्य औ इत्यस्य लुकि पुनर्द्विवचने 'उभक औ' इति स्थितौ एकस्य लुका अपहारेण द्वितीयस्य औ इत्यस्य कप्रत्ययव्यवधानेन उभशब्दाद्व्यवहितद्विवचनपरत्वाभावादयज्दुर्वार एव स्यात्। सर्वनामत्वे सत्यकचस्तु उभशब्दाकाररूपात् टेः प्राग् भवत्वेव तन्मध्य-

पतितयायेन उभकशब्दस्यापि उभग्रहणेन ग्रहणादुभकरूपशब्दादव्यवहितोत्तरस्य द्विवचनस्य सत्त्वेन नायजिति भावः ।

न च 'उभौ' इत्यर्थे अयज् नैव प्राप्नोति अवयविन्यर्थेऽवयववाचकादुभशब्दादयचः 'उभादुदात्तः' इत्यनेन विधानादिति वेच्च, 'उभादुदात्तो नित्यम्' इति सूत्रे 'उभात्' इत्येको योगः, 'नित्यम्' इत्यपरः । तत्राद्येन प्रथमान्ताद् अवयववाचकादुभशब्दादस्येति षष्ठ्यन्तार्थेऽवयविन्यर्थेऽयज् इत्यवयविन्यर्थेऽयज्विधानात् । तत्र 'तदस्य संजातम्' इति सूत्रात् 'तदस्य' इत्यनुवृत्त्या तादृशार्थलाभात् । यथा उभाववयवावस्य मणेरिति 'उभयो मणिः' इति 'नित्यम्' इत्यत्र उभादुदात्त इति सूत्रम्, 'तद्' इति चानुवर्तते । अस्येति नानुवर्तते, नित्यमिति सूत्रारम्भसामर्थ्यात् ।

न चात्रापि 'अस्य' इत्यनुवृत्त्या पूर्वसूत्रविषये नित्यमयज्विधानेन चारितार्थ्यम्, पूर्वसूत्रेण विकल्पेनायज्विधानेन नित्यमित्यस्य विरुद्धार्थतया वैयर्थ्यापत्तेस्तादवस्थ्येन 'नित्यम्' इत्यनेन अवयववाचकात्प्रथमान्तादुभशब्दात् स्वार्थेऽयज्विधानकल्पनात् । ननु द्विवचनपरत्वाभावेऽयजित्यर्थे मानाभाव इत्यत आह—तदुक्तमिति । अस्य भाष्ये इति शेषः ।

'यदा पुनरयमुभशब्दो द्विवचनटाब्विषयः क इदानीमन्यत्र भवति । 'उभयोऽन्यत्र' उभयशब्दोऽस्यान्यत्र भवति—'उभये देवमनुष्याः' 'उभयो मणिः' इति । यदि तु द्विवचनशब्देन द्वित्वमुच्यतेऽनेनेति यौगिकार्थाश्रयणं तदा उभशब्दात्स्वार्थे विहितस्य कप्रत्ययस्यापि द्विवचनतया अयचोऽप्राप्त्या उभशब्दः सर्वादौ न पठनीयः ।

तदुक्तं भाष्ये—'केऽपि द्विवचनपरो भविष्यति' कथम्, स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति' इति ।

यद्वा प्रकृतितोऽविशिष्य भवतीत्यस्य स्वार्थिकप्रत्ययान्ते प्रकृतिपर्याप्तधर्माणामारोप इत्यर्थः । तथा च 'उभकौ' इत्यत्र यद् द्विवचनं तदपि उभकरूपोभशब्दात् परमेवेति न तत्रायच् । न चैवं स्वार्थिकप्रत्ययान्तगर्गकादिशब्देभ्यो यञाद्यापत्तिः, आरोपस्य प्रयोगानुसारित्वेनानभिधानात्तत्र यञभावात् ।

वस्तुतस्तु सहस्रशः शब्देष्वनभिधानकल्पनायां गौरवात्, 'स्वार्थिकाः प्रकृतितोऽविशिष्टाः' इति भाष्याक्षरस्वारस्येन, "उभोभौ" इत्यत्रायज् न भवति, शेखरोक्त्या च द्विवचने परेऽयज् न भवति इत्येवार्थः । कप्रत्ययस्यापि भाष्यमते द्विवचनत्वेन तत्र नायजिति सर्वादावुभशब्दपाठस्य भाष्यमते वैयर्थ्यम् ।

मनोरमाकारास्तु भाष्यस्य प्रौढिवादत्वमाहुः । कृत्रिमाकृत्रिमन्यायेन द्विवचनसंज्ञकप्रत्ययस्यैव ग्रहणौचित्येन स्वार्थिकस्य उभशब्दाद्विहितकादिप्रत्ययस्य द्विवचनत्वाभावात् । अन्यथा अक्षादीनामपि स्वार्थिकत्वेन उभयतः, उभयत्र इत्यादावयजनापत्तिरित्याहुः । तच्चिन्त्यम् 'यथोत्तरं मुनीनां प्रामाण्यम्" इत्यस्य सर्वसम्मतत्वेन प्राधान्येन द्वित्वविशिष्टबोधकस्यैव द्विवचनशब्देन ग्रहणात् त्रिभक्त्यन्ताद्विहिते त्रलादौ विभक्त्यर्थकारकस्यैव प्राधान्येन उभयत्रेत्यादावयजुत्पत्तौ बाधकाभावात् ।

सूत्रकारमते तु न माग्रच्प्रत्याहारः, 'टिड्ढाण्' इति सूत्रे तयप्ग्रहणवैयर्थ्यापत्तेः । अयच् प्रत्ययान्तरम्' इति भाष्यन्तु उभशब्दप्रकृतिकायज्विषयकमेव । अत एव 'धातोश्च द्वये प्रत्ययाः' इति भाष्यं संगच्छते । 'उभशब्दोऽयं द्विवचनटाब्विषयः' 'उभयोऽन्यत्र' इति भाष्यात्, 'उभयो मणिः' 'उभये देवमनुष्याः' इति भाष्ये द्विवचनमुल्लङ्घ्य बहुवचनोदाहरणपरभाष्याच्च द्विविधोऽप्ययच् उभशब्दस्य उभयशब्दस्य वा परिनिष्ठिते रूपे द्विवचनपरत्वाभावसम्भावनायामेव वाऽयजिति लभ्यते । ननु 'नित्यम्' इति योगप्राप्तोऽयच् अर्थविशेषानुपादानात् स्वार्थे एवेति 'उभयो मणि, उभये देवमनुष्याः' इत्यादौ अवयविन्यर्थेऽयचि कृतेऽपि स्वार्थिकोऽयच्स्यादिति चेन्न, एतद्भाष्यप्रयोगात्, 'लिट्यभ्यासस्योभयेषाम्' 'उभयथ ऋक्षु छन्दसि' इत्यादिनिर्देशाच्च क्वचिदप्रवृत्तिज्ञापनात् ।

'उभयोऽन्यत्र' । अन्यत्र द्विवचनपरत्वाभावे ।

तत्फलितार्थमेव वार्त्तिकम् 'उभयोन्यत्र' इति । 'उभादुदात्तः' इति सूत्रे 'तदस्य संजातम्' इत्यतस्तदस्येति अनुवर्त्तते तदित्यवयववाचकं प्रथमान्तम् । अस्येति अवयविवाचकम् ।

ननु "नित्यम्" इति विहितोऽयच् स्वार्थिकत्वेनान्तरङ्गत्वात् सुबुत्पत्तेः पूर्वमेवेत्ययजन्तस्य सर्वादौ पाठेन अकचि तद्विशिष्टस्याप्युभयशब्दतया उभयकशब्दरूपोभयशब्दाद् द्विवचनपरत्वसम्भावनया तदभावसम्भावनाप्रयोज्यायचोऽप्रवृत्तौ उभशब्दात्केऽपि "उभकौ" इत्यस्य सिद्धिरिति पुनरपि सर्वादौ तत्पाठो व्यर्थं इति चेन्न, द्विवचनपरत्वाभावसम्भावनाप्रयोज्यप्राप्तस्यायचस्तदन्ताद् द्विवचनपरत्वसम्भावनयाऽप्रवृत्तौ उभशब्दस्य कप्रत्ययविवक्षायां द्विववचनपरत्वाभावसम्भावनासत्त्वेनायचः प्रवृत्तौ कप्रत्ययस्योपजीव्यत्वेन यद्ययजन्तादकच् स्यात्तर्हि कप्रत्ययो न स्यादित्युपजीव्यविरोधः स्यादित्युपजीव्यविरोधादयच् सर्वनामसंज्ञाद्वारा अकचि निमित्तं न स्यादिति अकचोऽप्रवृत्तौ के द्विवचनपरत्वाभावादयचि 'उभयकौ' इति मा भूदेतदर्थमुभशब्दपाठस्य चारितार्थ्यात् ।

नन्वपवादेऽकचि जागरूके कप्रत्ययो न स्यादिति चेन्न, 'अपवादो यद्यन्यत्र' इति न्यायेन 'सर्विका' इत्यादावपवादस्याकचश्चरितार्थतया अत्र सन्निपातपरिभाषाविरोधेनाकचोऽप्रवृत्तौ कप्रत्यये बाधकाभावात् ।

अन्यत्रेति—परिनिष्ठिते प्रयोगे द्विवचनपरसम्भावनाया अभावे इत्यर्थः । तेन द्विवचनोत्पत्तेः प्राक् तदभावेऽपि नायच् द्विवचनचिकीर्षायां तत्परत्वसम्भावनायाः सत्त्वात् ।

'उभयो मणिः' इत्यादौ तु न स्वार्थिकोऽयच् "लिङ्ग्युभयेषाम्" इति निर्देशेन, योगविभागस्येष्टसिद्ध्यर्थत्वेन च तस्य क्वचिदप्रवृत्तिज्ञापनात् । अत एव 'उभरूपम्' इत्यत्र वार्त्तिकसूत्रकारयोर्मते द्विवचनसंज्ञकप्रत्ययपरत्वाभावेऽपि नायच् । भाष्यमतेऽपि फलभेदवारणायानभिधानान्नायच् ।

तथाच अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रोभशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायच् ।

यद्वा यत्रायच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायच् । तेन 'उभयतः, उभयत्र' इत्याद्यपि सिध्यति । पूर्वसम्भावनायान्तु भाष्यमते यद्ययच् न स्यात्तदोभयशब्दाद् द्विवचनं स्यादिति ततोऽन्यत्वं न जातम् इत्ययजभावे उभशब्दात् पञ्चमीसप्तम्योर्द्विवचने उभशब्दस्य सर्वादौ पाठाभावेन सर्वनामप्रकृतिपञ्चम्याद्यन्तत्वाभावेन तसिलादयो न स्युः । इति द्विवचनस्य लुकोऽभावेनायच् न स्यात् । द्वितीयसम्भावनायान्तु अयच्प्रवृत्तौ अयजन्तोभयशब्दस्य सर्वादौ पाठेन सर्वनामप्रकृतिकपञ्चम्याद्यन्ततया तसिलादौ कृते द्विवचनस्य लुकि द्विवचनपरत्वसम्भावनाया अन्यत्वेनायच् सिध्यति ।

द्विवचनपरत्वाभावेऽयजित्युक्तौ तु स्वार्थिकस्यायचः सुबुत्पत्तेः पूर्वमेव प्राप्त्या तदानीं सर्वदा द्विवचनपरत्वाभावेन 'उभौ' इत्यादावप्ययच्प्रवृत्त्या 'उभयोऽन्यत्र' इति वार्त्तिकस्य वैयर्थ्यापत्तिरिति सम्भावनाघटितार्थे एव वार्त्तिकतात्पर्यमिति भावः ।

न च 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तार्थं सर्वादावुभस्य पाठावश्यकत्वेन प्रत्याख्यानमसङ्गतमिति वाच्यम्, प्रत्याख्यानपरभाष्यप्रामाण्येन सर्वादौ पाठेऽपि अन्तोदात्तत्वनिपातनानुमानेन पाठाभावेऽपि फिट्सूत्रेणान्तोदात्तत्वसिद्धेः ।

उभ्ज्ञादिपाठकल्पनं तु न युक्तम्, एकत्र पाठखण्डनेऽपरत्र पाठे लाघवाभावात् । न च 'निमित्तपर्य्यायप्रयोगे सर्वासाम्' इत्यत्र प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीययोरभावोक्त्या पाठाभावे प्रथमाद्वितीययोरभावापत्तिरिति वाच्यम्, प्रायग्रहणेन प्रयोगानुसारस्यैव कल्पनीयतया उभशब्दातिरिक्ताद् सर्वनाम्नः प्रथमाद्वितीययोरभावस्य कल्पनात् । सूत्रकारमते गणे पाठस्याकज्मात्रफलकत्वे 'अव्ययोभसर्वनाम्नामकच्प्राक्टेः' इति तु न सूत्रितम्, 'परमोभकौ' इत्यादेरसिद्ध्यापत्तेः । समुदायकुत्सा-

उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । तस्माज्जस्ययचादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया 'प्रथमचरम' इति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति ।

---

विवक्षायामेकदेशादुभशब्दात्तु नाकच्, उभशब्दप्रकृतिकसुबन्तार्थकुत्सायामेवाकचः प्राप्तेः । शेखरे तु तादृशान्यासेऽपि न दोषः ।

न च संज्ञोपसर्जनीभूतादप्यकजापत्तिः, सर्वनामसाहचर्येण तादृशादकचोऽप्राप्तेरित्युक्तम् । 'उभयोऽन्यत्र' इति वार्तिके 'उभयो मणिः, उभये देवमनुष्याः' इति भाष्ये द्विवचनमुल्लङ्घ्य बहुवचनोदाहरणात्, स्वार्थिकायचं प्रकृत्य 'उभयोऽन्यत्र' इति वार्तिकप्रवृत्तेश्च द्वयोरप्ययचोर्द्विवचनाभावे एव प्रवृत्तेः । तदाह—उभयशब्दस्य द्विवचनं नास्तीति । इदमेव युक्तम्, भाष्यवार्तिकसम्मतत्वात् ।

कैयट इति—"तद्धितश्चासर्वविभक्तिः' इति सूत्रे भाष्यप्रदीपे—'ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वम्' इति तद्धितानां परिगणनम् इत्युक्तं कैयटेन । हरदत्त इति—विंशत्यादयस्तु कृतैकशेषा द्विवचनबहुवचनान्ता अपि भवन्तीति नासर्वविभक्तयः । एवं द्वयत्रयोभयशब्दा अयजन्ताः ।' एवमित्यस्य नासर्वविभक्तय इत्यर्थः । पचतिकल्पमित्याद्यर्थन्तु परिगणनमिति पदमञ्जर्यां हरदत्त इत्यर्थः ।

तस्मादिति—उभयशब्दादित्यर्थः । जसीति । न च उभयशब्दस्य द्वित्वविशिष्टबोधकत्वेन तयबन्तार्थकस्यावयवद्वयारब्धैकसमुदायबोधकत्वेन च बहुवचनाप्राप्त्या इदमसङ्गतमिति वाच्यम्, उभौ च उभौ चेत्येकशेषपक्षे अवयवद्वयारब्धसमुदायस्य बहुत्वविवक्षायाञ्च जस उत्पत्तौ बाधकाभावात् । अयजादेशस्येति—उभावयवावस्येत्यर्थे 'संख्याया अवयवे तयप्' इति तयपि 'उभादुदात्तः' इति तयपोऽजादेशे स्थानिवद्भावेन तयप्प्रत्ययतया तयप्प्रत्ययान्ततेति भावः ।

अत्र शेखरकारः—"सर्वादीनि सर्वनामानि" इत्यस्य प्रवृत्तौ जसोऽनपेक्षत्वेन "प्रथमचरम" इत्यत्र च जसो निमित्तत्वेन नित्यसंज्ञाया अन्तरङ्गत्वेऽपि अन्तरङ्गपरिभाषाया अत्र प्राप्तिर्नास्ति, अन्तरङ्गबहिरङ्गयोः समानकाले प्राप्तौ अन्तरङ्गस्य बलवत्त्वम्, बहिरङ्गस्य प्रवृत्तौ जातायां वा अन्तरङ्गप्राप्तौ बहिरङ्गस्यासिद्धत्वञ्चानया बोध्यते, अन्तरङ्गपरिभाषाज्ञापकसाजात्यात् । उभयशब्दे च जस उत्पत्तेः प्रागेव तस्य प्रातिपदिकसंज्ञासमकालमेव नित्यसंज्ञायाः प्राप्तिरिति न समकालप्राप्तिः, नापि बहिरङ्गे जाते प्राप्तिरिति । अतो नित्यसंज्ञायां जातायाम् "प्रथमचरम" इत्यनेन जातसंज्ञायाः पक्षेऽभावो बोध्यते । एवञ्च उभये, उभया, इति रूपद्वयम् । यद्यपि यदा कार्यं तदा संज्ञेति पक्षे जसः शीविधानकाले उभयोः प्राप्तया परिभाषाया विषय इति वक्तुं शक्यते, तथाऽपि भाष्ये सर्वनाम्नो विहितस्य जसः शीविधानोक्त्या जस उत्पत्तेः प्रागेव संज्ञायां विहितत्वसम्भवादत्र कार्यकालपक्षासम्भवः । 'जसि' इति विषयसप्तमीस्वीकारेऽपि न समकाले प्राप्तिः, प्रातिपदिकाज्जसो विधानात्प्रातिपदिकसंज्ञासमकाले नित्यसंज्ञायाः प्राप्तया तदानीं प्रातिपदिकसंज्ञकत्वरूपस्य जसो विषयकत्वस्याभावेन समकालप्राप्त्यभावात् । उभयशब्दस्य जसि नित्यसंज्ञात्वे भाष्यमेव मानम् । 'तयादेशे उभयप्रतिषेधः' स्थानिवद्भावस्येति शेषः । 'अयच्प्रत्ययान्तरम्' 'उभयी' इत्यत्र ङीप् तु मात्रच्प्रत्याहारमादाय । 'कति' इत्यत्रात इत्यनुवृत्त्या न दोषः । भाष्यसम्मतप्रत्याहाराश्रयणे तयब्ग्रहणं न कार्यमिति लाघवम् । द्वयत्रयस्य तयबन्तस्य जसि पुंसि फलभेदवारणायानभिधानं भाष्यबलात्स्वीकार्यमिति सर्वमनवद्यम् ।

अन्तरङ्गत्वादिति—बहिरङ्गशास्त्रप्रवृत्तौ यावानपेक्ष्यते तद्घटकापेक्षत्वं यत्र शास्त्रे तदन्तरङ्गम् । प्रकृते उभय जस् इति प्रथमचरमेत्यस्य प्रवृत्तौ निमित्तत्वेनापेक्ष्यते । तद्घटकमुभयरूपम् 'सर्वादीनि' इत्यत्रापेक्ष्यते इत्यन्तरङ्गत्वम् । न च अन्तरङ्गबहिरङ्गयोर्यत्र युगपत्प्राप्तिः, यत्र वा जाते

उभये। डतरडतमौ प्रत्ययौ। 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' (२४)। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति, (१ २८) 'सुप्तिङन्तम्' इति ज्ञापकात्। तथाऽप्याह तदन्तग्रहणम्,

बहिरङ्गेऽन्तरङ्गस्य प्राप्तिस्तत्रैवान्तरङ्गपरिभाषायाः प्रवृत्त्या अत्र तादृशत्वाभावेन कथमन्तरङ्गपरिभाषायाः प्राप्तिरिति वाच्यम्, परिभाषाया अविषयत्वेऽपि जस उत्पत्तेः पूर्वं पूर्वोपस्थितनिमित्तकत्वेन नित्यसंज्ञाप्रवृत्तौ बाधकाभावेन पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्यैव ग्रन्थकृदभिमतत्वात्।

न चापवादप्रथमचरमविषयातिरिक्तत्वेन सर्वादीनीत्यत्र संकोचाल्नित्यसंज्ञाया अप्राप्तिः, 'द्वितये' इत्यादौ चारितार्थ्येनापवादत्वाभावात्। न च प्रथमचरमेत्यनेन जसि परे संज्ञाविधाने 'प्रथमे' इत्यादौ जसः सर्वनाम्नो विहितत्वाभावेन शीभावानापत्तिः, सर्वनामसंज्ञकाभिन्नं यदकारान्तमङ्गं ततः परस्य जसः शीविधानेन 'वर्णाश्रमेतराः' इत्यादौ दोषाभावेन विहितविशेषणे फलाभावात्। एवमेव 'आमि सर्वनाम्नः' इत्यत्रापि बोध्यम्।

'तयादेशे उभयप्रतिषेधः' इति स्थानिवद्भावनिषेधके स्थानिवत्सूत्रस्थवार्तिकसत्त्वे, भाष्यमतेऽयचस्तयप्स्थानिकत्वाभावे चात्र शङ्कासमाधाने अनुचिते। वैकल्पिकसर्वनामसंज्ञाया अभावेन 'उभये' इत्येकमेव रूपम्, प्रथमचरमेत्यस्याप्राप्तेः। यत्तु छन्दसि 'उभया अमित्राः' इति। तत्र 'बहुलं छन्दसि' इति बाहुलकात्सर्वनामत्वाभावः। 'उभयः' इत्यस्य उभौ अवयवौ यस्यावयविनः स उभयो मण्यादिः, द्वाभ्यामवयवाभ्यामारब्ध इत्यर्थः, अवयववाचिनः संख्याशब्दादवयविन्यर्थेऽयजित्यर्थकेन 'उभादुदात्तः' इति सूत्रेणायच्प्रत्ययः।

"उभये" इत्यस्य उभौ अवयवौ येषां ते, अथवा उभयश्च उभयश्च उभयश्चेत्येकशेषेण उभाभ्यामवयवाभ्यामारब्धा अनेके मण्यादय इत्यर्थः। परन्तु उभौ अवयवौ ययोस्तौ उभयश्च उभयश्चेत्येकशेषेण, स्वार्थिकेऽयचि द्वौ मणी इत्यभिप्रायेण वा "उभयौ" इति तु असाध्वेव, 'उभयोऽन्यत्रे'ति वार्तिकेन द्विवचनान्तस्योभयशब्दस्याभावबोधनात्।

सर्वादिगणे 'डतरडतमौ', इति पठ्यते। तत्र केवलयोर्डतरडतमयोः प्रयोगादर्शनादाह—डतरडतमौ प्रत्ययाविति—प्रत्ययावित्यस्य प्रत्ययबोधकावित्यर्थः। एतेन प्रातिपदिकात्परयोरेव डतरडतमयोः प्रत्ययसंज्ञकत्वेन सर्वादिगणपठितयोः प्रत्ययत्वाभावेन प्रत्ययावित्यसङ्गतमित्यपास्तम्। "किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्" 'वा बहूनां जातिपरिप्रश्ने डतमच्' 'एकाच्च प्राचाम्' इति तद्धिताधिकारे विहितयोः प्रत्ययः परश्चेत्यधिकारेण प्रत्ययसंज्ञकत्वात्प्रत्ययबोधकत्वेन 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया प्रत्ययबोधके पदे सति यस्मात्स विहितस्तदादिरित्युपतिष्ठते इति तदादिरित्यस्य विशेष्यतया डतरडतमयोर्विशेषणतया 'येन विधिः' इति सूत्रेण डतरडतमौ डतरान्तडतमान्ततदाद्योः संज्ञे इत्यर्थः।

संज्ञाविधाविति—संज्ञा विधीयतेऽनेनेति संज्ञाविधिः संज्ञाविधायकं सूत्रम्। तत्र यत्प्रत्ययबोधकं पदं तत् तदन्तस्य ग्राहकं न भवति, किन्तु स्वार्थबोधकमेव। यथा 'तरप्तमपौ घः' इत्यत्र तरप्तमपोरेव घसंज्ञा न तदन्तयोः। तेन 'कुमारीब्राह्मणितरा' इत्यत्र कुमारीत्यस्य 'घरूप' इत्यनेन न ह्रस्वः, किन्तु ब्राह्मणीत्यस्यैव ह्रस्वः।

अत्र प्रमाणञ्च—'सुप्तिङन्तम्' इति सूत्रेऽन्तग्रहणम्। यदि संज्ञासूत्रेऽपि तदन्तविधिः स्यात्तदा 'सुप्तिङ् पदम्' इत्युक्तेऽपि 'प्रत्ययग्रहणे' इति परिभाषयैव सुप्तिङन्तार्थलाभेऽन्तग्रहणं व्यर्थं स्यात्तदेव व्यर्थीभूय ज्ञापयति—'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति। परन्तु अत्र यदि डतरडतमयोरेव सर्वनामसंज्ञा तदा 'यतरे यतमे' इति न सिध्येत्, वर्णाश्रमेतराः' 'मासपूर्वाः' इत्यत्र शीभावाभावाय अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्य जस एव 'जसः शी' इत्यनेन श्यादेशविधानात्।

केवलयोः प्रयोजनाभावात् । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । 'त्व' 'त्व' इति द्वावप्यदन्तावन्यपर्यायौ, 'एक-उदात्तोऽपरोऽनुदात्तः' इत्येके । 'एकस्तान्तः' इत्यपरे ।

---

अन्यथा "अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गमुक्तसंशयम्"

इति भाष्योक्त्या 'द्वन्द्वे च' 'तृतीयासमासे' इत्यादीनां द्वन्द्वतृतीयासमासयोरेव सर्वनाम-संज्ञानिषेधेन इतरपूर्वयोः सर्वनामत्वसत्त्वेन सर्वनामान्तादङ्गात्परस्य जसः शीभावापत्तिः । डतरडतमान्तस्य सर्वनामत्वे तु यतरयतमशब्दाज्जसो विधानेन 'यतरे, यतमे, इति सिध्यति ।

वस्तुतस्तु प्रत्ययग्रहणपरिभाषाया प्रत्ययमात्रग्रहणे एव प्रवृत्त्या 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन संज्ञाविधावित्यस्यापि प्रत्ययमात्रबोधके एव प्रवृत्त्या प्रकृते डतरडतमयोः सर्वादित्वेन सर्वाद्यन्तस्य च सर्वनामतया भाष्यादिसिद्धतया 'सर्वादीनि' इत्यत्र सर्वादिपदस्य प्रत्ययमात्रबोध-कत्वाभावेन शब्दस्वरूपं विशेष्यमादाय तदन्तविधिसिद्धया शङ्कासमाधाने अत्र निर्दले ।

किञ्च सर्वनाम इति महासंज्ञाकरणेन सर्वार्थवाचकानामेव सर्वादीनां सर्वनामसंज्ञाविधानेन केवलयोः सर्वार्थवाचकत्वाभावान्न केवलयोस्तत्प्राप्तिरित्यलं विस्तरेण ।

प्रयोजनाभावादिति—प्रातिपदिकादित्यधिकारेण सर्वनामरूपप्रातिपदिकार्थगतकुत्साद्यर्थ-विवक्षायामेवाकचो विधानेनाकजपि न फलम् । तथा च प्रयोजनाभावादित्यस्य फलाभावादिति नार्थः, किन्तु प्रयोजनम् प्रयोजकं सर्वार्थवाचकत्वरूपं तस्य डतरडतमयोरभावादित्यर्थः ।

अव्युत्पन्नाविति—व्युत्पत्तिः प्रकृतिप्रत्ययविभागस्तत्प्रयुक्तशास्त्रीयसंस्कारः । तद्रहितावव्यु-त्पन्नावित्यर्थः । किं यत्तदेकेभ्य एव डतरडतमयोर्विधानेनान्यशब्दात्तयोरविधानात् । तत्रान्यतरशब्द-स्य सर्वादौ पाठात्सर्वनामत्वम् । अन्यतमशब्दस्य तु सर्वादौ पाठाभावेन न सर्वनामसंज्ञा । स्वरूपसिद्धा शक्तिः स्वभावस्तस्मादित्यर्थः । निर्द्धारण इति—अन्यतर इत्यस्य द्वयोर्मध्ये एक इत्यर्थः । अन्यतम इत्यस्य बहूनां मध्ये एक इत्यर्थः ।

अमरकारस्तु "भिन्नार्थकस्त्वन्यतर एकस्त्वोऽन्येतरावपि"

इत्युक्त्या अन्यतरशब्दस्य भिन्नार्थकत्वमेवाह ।

अन्यपर्य्यायाविति—'एकस्त्वोऽन्येतरावपि' इत्यमरात् । उदात्त इति 'एतं त्वं मन्ये' इत्यु-दात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च पदे दर्शनादिति भावः । एके इति—अन्ये काशिकाकारा इत्यर्थः । एकस्तान्त इति—प्रथमस्तान्त इत्यर्थः । अपरे इति—द्वयोरदन्तत्वे हि एकश्रुत्या त्व इत्यस्य सकृत्पाठेनैव कार्य्यसिद्धौ द्विःपाठो व्यर्थ एव स्यादिति भावः । तान्ते प्रमाणन्तु—'त्वत्त्वसमसिमेत्यनु-च्चानि' इति फिट्सूत्रम्, 'स्तरीरुत्वद्भवति सूत उत्वत्' इति ऋङ्मन्त्रः ।

'त्वदधरमधुरमधूनि पिबन्तम्'

इति जयदेवश्च । तत्राधरः त्वदधर इति तु नार्थः, चिरमनुरक्तां राधां लतागृहे दृष्ट्वा काचन सखी कृष्णं प्रति कथयति—राधिकादशाम् । एवञ्च येन सह वार्ता तस्यैव युष्मच्छब्देन ग्रहणं स्यात् । एवञ्च 'राधा दिशि दिशि=प्रतिदिशं त्वदधरमधुरमधूनि पिबन्तं भवन्तं पश्यति' इत्यर्थः । तवाधरः कृष्णाधर इत्यर्थे स्वाधरमधूनि पिबन्तमित्यर्थे भवन्तमित्यनेनानन्वयापत्तिः, स्वाधरमधुनः स्वेन पानस्य शृङ्गाररसविरुद्धत्वात् । अन्याधर इत्यर्थे तु न विरोधः, अन्यस्या नायिकाया अधरपानं कुर्वन्तं कृष्णं दृष्ट्वा राधिका क्लिश्यति कृष्णकर्तृकस्वाधरपानस्य तदानीं दुर्लभत्वादिति भावः । तकारान्तस्य सर्व-नामत्वे फलन्तु अकच् 'आ सर्वनाम्नः' इत्यात्वम्, "सर्वनामसंख्ययोरुपसंख्यानम्" इति पूर्वनिपातः, 'सर्वनाम्नस्तृतीया च' इत्यादि । तान्तस्य त्वच्छब्दस्य सत्त्वेऽपि तस्य सर्वादित्वे मानाभाव इति शेखरः ।

नेम इति—नीधातोः 'अर्त्तिस्तुसु' इति ( उ. १ पा. १४० सू. ) मन्प्रत्ययः ।

'नेमः' इत्यर्थे। समः सर्वपर्यायस्तुल्यपर्यायस्तु नेह गृह्यते, यथासंख्यमनुदेशः समानाम्' इति ज्ञापनात्। अन्तरं बहिर्योगोप' ( ग सू ३ ) इति गणसूत्रे 'अपुरीति वक्तव्यम्' ( वा २४० ) अन्तरायां पुरि।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। [ १-१-३४ ]**

अर्धे इति—अत्र मानम् 'प्रनेमस्मिन् ददृशे सोमो अन्तः' इत्यृचि तदर्थकत्वदर्शनम्। नेमशब्दस्य अवधिः,कालः, अर्द्धम्, प्राकारः, कैतवम्, गर्त्तः, नाड्यम्, अन्यः, एतेऽर्था इति शब्दस्तोम-महानिधिः। अर्धे एव सर्वनामता नान्यत्रेत्यत्र मानं मृग्यम्।

सर्वपर्य्याय इति—'षम अवैकल्ये' इत्यतोऽचि सम इति। समाने, तुल्ये, सर्वस्मिन्, साधौ, युग्मे, युग्मराशौ, तालविशेषे इति शब्दस्तोममहानिधिः। तत्र सर्वार्थकस्यैव सर्वनामसंज्ञा इत्यत्र मूलं मृग्यम्। तुल्यार्थकसमस्य सर्वनामसंज्ञा नेत्यत्र तु 'यथासंख्यमनुदेशः समानाम्' इति निर्देश एव मूलम्।

सिम इति—षिञ् बन्धने इत्यतः 'अविसिविसिशुषिभ्यः कित्' ( उ. १ पा १४४ सू ) इति मन्। सिमः सर्वपर्य्यायः। यद्यपि 'सिमः कृत्स्ने च शक्ते च स्यान्मर्य्यादावबद्धयोः' इति कोशात् सिमोऽर्थान्तरेऽपि' तथापि लक्ष्यानुरोधात् सर्वार्थकस्यैव संज्ञा।

गणसूत्र इति—यद्यपि भाष्येऽष्टाध्यायीस्थसूत्रे 'अपुरीति वक्तव्यम्' इति वार्त्तिकं पठितम्, तथाऽपि तद्गणसूत्रे एव योजनीयम्, न तु जसि विभाषया संज्ञाविधायके सूत्रे, 'जसः शी' इत्यत्र अत इत्यनुवृत्त्या अदन्तात्सर्वनाम्न एव जसः शीविधानेन पुरि अन्तरशब्दात् टापि 'जसः शी' इत्यस्याप्राप्तेः। न च जसः शी इत्यस्याप्राप्तावपि विभाषया अकच् फलम्, जसि विभाषाविधायके एव अपुरीत्यस्य पाठे 'अपुरीति वक्तव्यम्' इह मा भूत् 'अन्तरायां पुरि वसति' इति भाष्यविरोधापत्तेः। अन्तरशब्देनान्तरा-शब्दस्य ग्रहणं तु पूर्वान्तवद्भावेन 'प्रातिपदिकग्रहणे' इति परिभाषया वा बोध्यम्। 'अन्तरायां पुरि' अत्र सर्वनामत्वाभावात् 'सर्वनाम्नः स्याट्' इत्यनेन स्याडभावः फलम्।

"अपुरि" इत्यत्र पुःशब्दस्य स्वरूपेऽर्थे च शक्त्या अन्तरशब्दस्य पुःशब्दप्रयोज्यविशेष्यतानि-रूपिताभेदसंसर्गावच्छिन्नप्रकारत्वाप्रयोजकत्वे सर्वादित्वम्। एवञ्च तादृशप्रकारताप्रयोजकत्वे सर्वादित्वा-भावेन न सर्वनामत्वम्। नगर्य्यादिशब्दस्य तादृशविशेष्यताप्रयोजकत्वे त्वन्तरशब्दस्य सर्वादित्वमेवेति 'अन्तरस्यां नगर्य्याम्' इत्येव साधु।

अन्तरायामित्यस्यात्राह्यायाम्, बाह्यसम्बद्धायां वेत्यर्थः। अयमभावः पूर्वं प्राकारेणावृता प्रायो नगरी आसीत्। प्राकाराद् बहिरपि यदा कियान् भागो नगर्य्यास्तदा प्राकाराद् बाह्यायाम्, प्राकारान्त रापि बाह्यसम्बद्धा अतो बाह्यसम्बद्धायामित्यर्थः। नगर्य्येकदेशेऽपि पुःशब्दस्य प्रयोगे एव एष प्रयोगः। त्यद्,तद्,यद्, इति त्यजतिगुणदोषरहितो भवतीति त्यद्, तनुते विस्तृतं भवतीति तद्, यजते सर्वैः पदार्थैः संगतं भवतीति यद् एते ब्रह्मवाचकाः, त्यत्तदौ उक्तार्थबुद्धिस्थपरामर्शकौ। त्यच्छन्द-श्छान्दस इति केचित्तन्न, 'स्यश्छन्दसि' इति सूत्रे हलि परे सोर्लोपविधायके छन्दोग्रहणवैयर्थ्यापत्तेः। लोकेऽपि त्यच्छब्दसत्त्वे तु लोके लोपो मा भूदेतदर्थं छन्दसीत्यस्य चारितार्थ्यम्। यच्छब्दः सिद्धार्थः यो बुद्धिस्थस्तद्वाचकः द्वितीयः।

अत्र पूर्वपरेत्यादीनि त्रीणि सूत्राणि समानरूपाण्येव सर्वादिगणपाठेऽष्टाध्याय्याञ्च पठितानि। तत्र विशेषं दर्शयितुमाह—

पूर्वपरावरेति—गणसूत्राणि विभक्तिनिरपेक्षतया पूर्वादीनां सर्वादित्वं बोधयन्ति। अष्टाध्या-य्यान्तु 'सर्वादीनि सर्वनामानि, विभाषा जसि' इति चानुवर्त्तते। तथा च जसि पूर्वादीनां सप्तानां विकल्पेन सर्वनामसंज्ञाविधायकानि। जसोऽन्यत्र। पूर्वादीनां सर्वादितया नित्यैव सर्वादिसूत्रेण सर्वनामसंज्ञेत्याह—

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् ।

एतेषामिति—पूर्वादिसप्तानामित्यर्थः । व्यवस्थायामिति—व्यवस्था अग्रे वक्ष्यते ।

पूर्वप्रसङ्गानुरोधेन सिंहावलोकनन्यायेन वा त्यादिशब्दार्थान् प्रदर्शयामि—'त्यजितनियजिभ्यो डित्' इति ( उ. १ पा. १३२ सू. ) अदि प्रत्यये डित्वात् टिलोपे त्यदादयः सिद्धाः । एतद्, इदम्, एति बुद्धौ प्राप्नोतीति, एतद्, 'एतेस्तुट् च' ( उ. १ पा. १५७ सू. ) इति इणो डिति अदिप्रत्यये गुणे साधु पुरोवर्त्तिनि बुद्धिस्थे । इदम्, इन्दति परमैश्वर्यहेतुः भवतीति इदम् । इदि परमैश्वर्ये इत्यतः 'इन्देः कमि नलोपश्च' ( उ. ४ पा. १५७ सू. ) इति कमि नलोपे साधु, पुरोवर्त्तिनि बुद्धिस्थे रूढः ।

अदस्. न दस्यते उपक्षिप्यतेऽङ्गुलिर्यत्र तद् अदः, नञ्पूर्वकात्—'दसु उपक्षये' इत्यतः अधिकरणे सम्पदादिभ्यश्चेति क्विपि साधु । परोक्षे बुद्धिस्थे ।

एक. एति गणनायां प्राथम्यं प्राप्नोतीत्येकः । इण् धातोः 'इण्भीकाया' ( उ. ३ पा. ४३ सू. ) इति कनि गुणे साधु । प्रथमसंख्यायाम् मुख्यादौ च तथा चोक्तम्—

"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥" इति ।

ष्णान्ता इति भाष्येऽप्युक्तम्—"एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यापरः, तद्यथा एको द्वौ बहव इति । असहायवाची । एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति । असहायैरित्यर्थः इति अन्यार्थे वर्त्तते—प्रजामेका रक्षत्यूर्जमेकेति । अन्येत्यर्थः । सधमादो द्युम्न एकास्ताः । अन्येत्यर्थ इति" इति ।

साधारणसमानयोरर्थतः संख्यावाचिन एव पर्य्यवसानम् । तद्यथा—तेनैकदिक्, चैत्रमैत्रयोरेका मातेति—साधारणा तुल्या वा एकत्वविशिष्टेत्यर्थो वा । 'सर्वस्य द्वे' इति सूत्रे कैयटः 'केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्तीति । 'नेत्येकेऽस्तेर्हि दृश्यते, 'समो वा लोपमेके' एकत्रीरेत्यादौ मुख्यार्थकः । 'एको मुख्यान्यकेवलाः' इति कोशः । द्रुधातोरौणादिके डिप्रत्यये द्वाविति द्वित्वसंख्याविशिष्टे । युष्मद्, अस्मद्, योषति सेवते इति युष्मद्, अस्यतीति अस्मद्, सौत्रयुषधातोः, अस्यतेश्च 'युष्यसिभ्यां मदिक्' (उ. १ पा. १३९ सू. ) इति मदिक्प्रत्यये साधु ।

भवन्तु—भाति-दीप्यते दीपयति वा भवात् भातेः 'भातेर्डवतुप्' (उ. १ पा. ६६ सू. ) इति डवतुपि साधु ।

किम्—कायतीति किम्—'कायतेर्डिमिः' इति काधातोर्डिमिप्रत्यये साधु, 'प्रश्नाद्यर्थे । प्रकृतमनुसरामः—

गणेति—सर्वादिगणपाठादित्यर्थः । या प्राप्तेति—'सर्वादीनि' इति सूत्रेण नित्यं या प्राप्तेत्यर्थः । एतेन सर्वादिगणे यत् 'पूर्वपर' इति तत् जसोऽन्यत्र नित्यसर्वनामसंज्ञार्थम् । अष्टाध्यायीस्थं तु जसि पूर्वादीनां विकल्पेन सर्वनामसंज्ञार्थम् । इति पौनरुक्तिदोषनिरासः ।

पूर्व इति—यदा पूर्वादयः शब्दा अदेशे दिशि कालेऽर्थे स्युस्तदैव सर्वनामत्वम् व्यवस्थायामित्युक्तेः । पूर्व निवासे निमन्त्रणे च इति चुरादिण्यन्तादचि पूर्व इति प्रथमे, देशे सूर्यसन्निहितदेशे दिशि ( सूर्योदयदिशि ) काले च । पर इति पूर्य्यते इति परः 'ॠदोरप्' इति कर्मण्यपि साधु । अन्यस्मिन्, उत्तरे, दूरे, श्रेष्ठे, ब्रह्मणि, शत्रौ च । अपर इति न पूर्य्यते इत्यपरः । न पृणाति सन्तोषयतीत्यपरः शत्रुः, अर्वाचीनः, ( पश्चात्कालिकः ) भिन्नश्च । केचित्तु अत्र सूत्रेऽपरशब्दपाठस्य फलाभावमाहुः नञ्पूर्वकस्यापरशब्दस्य सर्वनामसंज्ञायास्तदन्तविधिनैव गतार्थत्वात् । अन्ये तु अव्युत्पन्नतया तस्य चारितार्थ्यं वदन्ति । पृधातोरपि रूपम् ।

अवर इति अवपूर्वकाद् राधातोः 'आतश्चोपसर्गे' इति के रूपम् । चरमे, अधमे, पश्चाद्वर्त्तिनि देशे काले च, दक्षिण—"द्रुदक्षिभ्यामिनन्" ( उ. २ पा. ५० ) इति दक्ष वृद्धौ शीघ्रार्थे च इतीनति रूपम् । यद्यपि दक्षिणशब्दोऽनेकार्थकस्तथापि यदा देशे दिशि वा वर्तेत तदैव सर्वनामत्वम् ।

पूर्वे पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था ।

व्यवस्थायामित्युक्तेः । उत्तर इति—उत्तरन्ति यत्र स उत्तरो देशः कालो दिग्वा यदाऽर्थः तदा सर्वनामत्वम् । अधर इति—न ध्रियते इत्यधरो भिन्नार्थे रूढः । पचाद्यचि साधु ।

स्वाभिधेयेति—अभिधीयते=उच्यते यः सोऽभिधेयो वाच्योऽर्थः । स्वस्य=पूर्वादिशब्दस्याभिधेयोऽर्थः—पूर्वत्वादिरूपेण प्रतीयमानो दिग्देशकालरूपः तेनापेक्ष्यते इति कर्मणि घञि अपेक्षः= अपेक्ष्यमाणो योऽवधिः=मर्य्यादारूपः । यथा पूर्वो ग्राम इत्युक्ते आकाङ्क्षा जायते कस्मात्पूर्व इति, एवं परो ग्राम इत्युक्ते आकाङ्क्षा जायते कस्मात्पर उत्तरो भिन्नो वेति तथा च पूर्वस्थानस्य यत्पूर्वत्वं तत् परत्वमपेक्षते, परस्थानस्य यत् परत्वं तत् पूर्वत्वापेक्षं भवति ।

एवञ्च पूर्वादिशब्दाभिधेयेनापेक्ष्य=आकाङ्क्ष्यमाणो योऽवधिः=परादिरूपस्तस्य नियमः=नियताकाङ्क्षा तस्यां गम्यमानायां पूर्वादीनां सर्वनामत्वम् । एवं कालेऽपि—'पूर्वः फाल्गुनः' कस्मादित्याकाङ्क्षायां चैत्रादिति गम्यते । ननु दिशि वर्तमानानां पूर्वादिशब्दानामर्थेऽवध्याकाङ्क्षा न प्रतीयते 'दक्षिणा दिक्' इत्युक्ते किमपेक्षया दक्षिणेत्याकाङ्क्षाया अनुत्थानात्, उपस्थिताकाङ्क्षाया एव व्यवस्थापदेन ग्रहणादिति चेन्न, दक्षिणा दिगित्यादिना संकेतसम्बन्धेन दक्षिणपदवती दिगित्यर्थस्यैव प्रतीत्या दक्षिणादिपदस्यैव प्रवृत्तिनिमित्तत्वेन अवध्यंशे नित्यसाकाङ्क्षप्रवृत्तिनिमित्तकत्वाभावेऽपि सोपाधिकदिश्येव दक्षिणादिशब्दानां संकेतेन तत्रापि व्यवस्थायाः सत्त्वात् ।

उपाधिश्च—मध्याह्नसूर्यसंयोगी यो देशस्तदवधिकोदयाचलसन्निहितदिक्स्वरूपः । तदुपलक्षितो यः संकेतसम्बन्धेन पूर्वादिपदवान् स एव दिग्वाचकपूर्वादिशब्दशक्यः । तत्रोदयाचलसन्निहितत्वादेरेवावधौ साकाङ्क्षत्वाद् उपलक्षणगतावधिनित्यसाकाङ्क्षत्वस्योपलक्ष्ये लक्ष्यानुरोधेनारोपाद् व्यवस्था बोध्या ।

तत्र मध्याह्ने सूर्यस्योदङ्मुखत्वात्सूर्यदक्षिणबाहुसन्निहितदेशमारभ्योदयाचलपर्यन्तदेशः=पूर्वा दिक्, सन्निहितदेशे वामबाहुभागमारभ्यास्ताचलपर्यन्तो देशः=पश्चिमा, सूर्यसम्मुखसन्निहितदेशमारभ्य मेरुपर्य्यन्तो देशः=उत्तरा, सूर्यपृष्ठसन्निहितदेशमारभ्य भूम्यन्तो देशः=दक्षिणा दिक् ।

कश्चित्तु सुमेरुपर्वतमेव सूर्य्यः परिभ्रमति । यथा □, ○ चतुष्कोणो वर्त्तुलो वा मेरुः । मेरोः सर्वत्र बहिर्भागे भारतवर्षादिदेशाः सन्ति । तत्तद्देशवासिनः क्वचिदेव मेरुर्बहिर्भागे सूर्य्यमुदयन्तं पश्येयुः । तत्र द्रष्टारमवधीकृत्य सूर्य्योदयाधिकरणीभूतमेरुभागपर्य्यन्तो भागः=पूर्वा दिक् । सूर्य्यास्ताधिकरणमेरुभागमारभ्य द्रष्टृदेशपर्य्यन्तो देशः पश्चिमा, प्रातः सूर्य्यद्रष्टृवामभागसन्निहितदेशमारभ्य मेरुपर्य्यन्तः उत्तरा, तद्दक्षिणभागसन्निहितदेशमारभ्य भूगोलान्तो देशो दक्षिणा । एवमेव भूगोलमध्यस्था लङ्का, तामाश्रित्यापि दिग्विभागो ज्ञेयः ।

नन्वेवमपि पूर्वादिशब्दस्य संकेतसम्बन्धेन पूर्वादिपदवति शक्तौ देवदत्तादिपदवत् संज्ञारूपतया असंज्ञायामिति सर्वनामत्वाभाव इति चेन्न, पूर्वादीनां सर्वादिगणपाठसामर्थ्यात् संज्ञापदेनाधुनिकसंज्ञाया एव ग्रहणात् । अन्यथा सर्वपूर्वेत्यादीनामपि अर्थविशेषरूढत्वेन असंज्ञायामित्यस्यापि वैयर्थ्यापत्तिः ।

अयम्भाव आधुनिकसंज्ञाशब्दाः केवलशब्दप्रवृत्तिनिमित्तका एव, तेषामेव सर्वत्र संज्ञापदेन ग्रहणम् ।

अनादिरूढशब्दानान्तु शब्दातिरिक्तमपि किञ्चित्प्रवृत्तिनिमित्तम् । अन्यथा इन्द्रशक्रेत्यादिभिन्नानुपूर्वीकाणां पर्य्यायत्वानुपपत्तिः । द्वयोः शब्दयोरेकस्य धर्मस्य प्रवृत्तिनिमित्तत्वे हि पर्य्यायत्वम् । तस्मादिन्द्रादिशब्दानां शब्दातिरिक्तं किञ्चित्प्रवृत्तिनिमित्तं वाच्यम् । तच्च देवदत्तत्वमन्यदेव वा किञ्चिदस्तु, तथैव पूर्वादीनामपि शब्दातिरिक्तं किञ्चित्प्रवृत्तिनिमित्तं वाच्यम्, तच्च पूर्वोक्तं तदासन्निहितत्वमिति व्यवस्था सूपपादा । अनादिसंज्ञाम् 'असंज्ञायाम्' इत्यस्याप्रवृत्तेरेव 'विश्वेषां देवानाम्'

व्यवस्थायां किम्—दक्षिणा गायकाः, कुशला इत्यर्थः । असंज्ञायां किम्—उत्तरा कुरवः ।

---

इति श्राद्धकर्मस्थवाक्यानां सर्वनामत्वं संगच्छते, अस्य वेदे देवविशेषप्रसिद्धतया आधुनिकसंकेताभावात्। एवं पूर्वादिष्वाधुनिकसंकेताभावादसंज्ञायामिति न निषेधः।

ननु "तथा परेषां ( शत्रूणाम् ) युधि चेति कालिदासः, अपरे (प्रतिवादिनः) प्रत्यवतिष्ठन्ते" इत्यादौ व्यवस्थाया अभावात्सर्वनामत्वानापत्तिरिति चेन्न, व्यवस्थाविषयपरत्वापरत्वयोरेवारोपात् शत्रौ प्रतिवादिनि च प्रयोगात् । न चारोपितार्थबोधकत्वेनोपसर्जनत्वे, स्वावधिकपूर्वपदप्रयोज्योपस्थितिविषयविशेष्यतानिरूपितप्रकारताप्रयोजकस्यैव तत्रोपसर्जनपदेन ग्रहणात् । अत्र मानञ्च—'ह्वीयतेऽत्यये द्व इति प्राप्नोति स्व इति चेष्यते'' इति भाष्यमेव । अन्यथा द्वाविच्छति द्वीयति ततः क्विपि रद्वीशब्दस्य द्विकर्मकेच्छाकर्तृबोधकतया द्विशब्दार्थस्य द्वित्वविशिष्टस्येच्छाविशेषणतया सर्वादेर्विशेषणीभूतार्थोपस्थापकत्वमात्रेण, अर्थान्तरोपस्थापकत्वेन वा उपसर्जनत्वे भाष्ये 'द्व' इति 'त्यदादीनामः' इत्यत्वनिर्देशोऽसङ्गतः स्यात् ।

पूर्वादीनां सप्तानां दिक् देशश्चार्थः । तत्र मध्याह्नसूर्य्यसंयोगिदेशात् पृथ्वीमध्याद्वा उदयाचलं यावत् पूर्वा दिक् । तस्यामेव दिशि यत्स्थानापेक्षया यत्स्थानात्संनिहित उदयाचलः स पूर्वो देशः, मध्याह्नसूर्यदेशात् पृथ्वीमध्याद्वा यश्च विप्रकृष्टः स पश्चिम इत्युच्यते । एवम् उक्तस्थानात् अस्ताचलपर्यन्तो भागः पश्चिमा दिक् । ततोऽत्र दिशि यदपेक्षया यस्य अस्ताचलः सन्निहितः स पश्चिमो देशः यश्च विप्रकृष्टः स पूर्वो देश इत्युच्यते ।

यद्वा महोदयः कान्यकुब्जनगरम् तदेव पृथ्वीमध्यम् । तत एवोक्तरीत्या दिग्देशविभागः । यद्वा यस्य पुरुषस्य उदयगिरिसन्निहिता या दिक् सा तस्य पूर्वा । एवम् उदयगिरिविप्रकृष्टा तस्य पश्चिमा। सुमेरुगिरिसन्निहिता तस्य उदीची, सुमेरुगिरिविप्रकृष्टा दक्षिणा ।

व्यवस्थायां किमिति—यदा दक्षिणाशब्दः कुशलार्थकस्तदेदं प्रत्युदाहरणम् । कुशलार्थत्वे मानं मृग्यम्, कोशे तदर्थानुपलब्धेः । 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' इति कोशात् उदारः सरलो वा इत्यर्थः सूचितः । किमपेक्षया कुशला उदारा वा इत्यवधिसापेक्षत्वे तु 'उत्तरे प्रत्युत्तरे च शक्तः' 'अधरे ताम्बूलरागः' इति च प्रत्युदाहार्य्यम् । उत्तरपदं प्रतिवाद्युच्चारितवाक्यार्थकम् । प्रत्युत्तरपदञ्च पूर्ववाद्युच्चारितवाक्यार्थकम् । एवञ्चावध्याकाङ्क्षा नास्तीति लब्धम् । कुशला इति—एतेन दक्षिणपार्श्ववर्त्तिनो गायका इत्यर्थे सर्वनामत्वमिष्टमेवेति सूचितम् ।

वस्तुतस्तु आकाङ्क्षा द्विविधा—उत्थिता, उत्थाप्या च । तत्र निरूप्यदक्षिणत्वादिज्ञानस्य व्यापिका या अवध्याकाङ्क्षा तस्या एवात्र ग्रहणेन कुशलत्वादेर्निरूप्यस्याकाङ्क्षाया अभावेऽपि बोधदर्शनेन नास्ति व्यवस्थेति तदपि प्रत्युदाहरणं सम्यगेवेत्युपाध्यायाः ।

उत्तराः कुरव इति—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।<br>
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥<br>
नवयोजनसाहस्रो विस्तारोऽस्य महामुने ।<br>
महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः ॥<br>
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ सर्वद्वीपात्मकं भूमण्डलम् ।

'सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धचरितस्य विष्णोरवतारभूतस्य तनुजन्मा भरतो महाभागवतो यदा भगवताऽवनितलपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे । तस्यामात्मजान् कार्त्स्न्येनानुरूपानात्मनः पञ्चपुत्रान् जनयामास भूतादिरिव भूतसूक्ष्माणि । सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति, अजनाभं नामैतद् वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ।

स्वमज्ञातिधनाऽख्यायाम् । [ १-१-३५ ]

स भरतः स्वे स्वे कर्मणि वर्तमानाः प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् । एवं वर्षायुत-सहस्रपर्यन्तावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात् स्वनिकेतात् पुलहाश्रमं प्रवव्राज ।' इति भरतस्य संक्षिप्तमितिवृत्तमिति । न तु दुष्यन्तराजतनयोऽत्र भरत इति बालकृष्णए पञ्चोलिनः ।

उक्तं विष्णुपुराणे—

'जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥
एते द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समैः ॥
एषां द्वीपानां मध्यवर्ती जम्बूद्वीपः ।
जम्बूद्वीपमध्यवर्ती कनकपर्वतो मेरुः ॥
जम्बूद्वीपमभितो नववर्षाणि ।
प्रथमं भारतं वर्षं ततः किंपुरुषं स्मृतम् ॥
हरिवर्षं तथैवान्यंमेरोर्दक्षिणतो द्विज ।
रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम् ॥
उत्तराः कुरवश्चैव यथा वै भारतं तथा ।
नवसहस्रमेकैकमेतेषां द्विजसत्तम ॥
इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ।
मेरोश्चतुर्दिशं तत्तु नवसाहस्रविस्तृतम् ॥
भद्राश्वं पूर्वतो मेरोः केतुमालं तु पश्चिमे ।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्ये इलावृतम् ॥ इति ॥

एवञ्च 'उत्तराः कुरवः'—एतन्नामकं वर्षं तच्च मेरोरुत्तरे भागे । मेरोरदृश्यत्वादुत्तरकुरुवर्ष-मप्यस्माकं दृष्टिपथाद् बहिः । एतेन दक्षिणकुर्वपेक्षया कुरूणामुत्तरत्वमित्यपास्तम् । कुरुशब्दो देशविशेषे योगरूढो नित्यबहुवचनान्तश्च । एवमत्र उत्तरशब्दोऽपि । भारतवर्षावधिकस्य उत्तरत्वस्य तत्र प्रतीत्या व्यवस्थायाः सत्त्वेऽपि संज्ञात्वान्न सर्वनामता । सर्वापेक्षया तु नोत्तरत्वम् 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इत्युक्त्या तदुत्तरत्वस्याव्यावर्तकत्वात् । न च पूर्वादिशब्दानामपि दिक्षु ईश्वर-संकेतितत्वात्सर्वनामत्वानापत्तिरिति वाच्यम्, संज्ञापदेनात्राधुनिकसंज्ञाया एव ग्रहणेनात्र कुरुषु मेरुमवधाय प्रवृत्त्याऽऽधुनिकसंज्ञात्वाभावतः । अन्यथा सर्वेषां पूर्वादिशब्दानामीश्वरसंकेतिततया सर्वादिगणे तत्पाठवैयर्थ्यापत्तेः ।

"असंज्ञायाम्"—इत्यस्याभावे संज्ञायामेतस्य प्रवृत्तौ बाधकाभावेनाप्राप्तविभाषामाश्रित्य संज्ञायामेवानेन विभाषासर्वनामत्वं स्यात्, प्राप्तविभाषाकल्पे नित्यशास्त्रबाधकल्पनापेक्षया शास्त्रबाधा कल्पनेनाप्राप्तविभाषाश्रयस्यैवौचित्यादिति केचित् ।

अन्ये तु 'दिङ्नामान्यन्तराले' इति सूत्रभाष्ये भाषितपुंस्कस्य पुंवद्भावः, न चैतौ भाषितपुंस्कौ । "ननु च भो दक्षिणशब्दः पूर्वशब्दश्च पुंसि भाष्येते । समानायामाकृतौ यद्भाषितपुंस्कम् । आकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणा पूर्वेति दिक्शब्दौ । दक्षिणः पूर्व इति व्यवस्थाशब्दौ । एवं तर्हि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति वक्तव्यम्' इति भाष्यकैयटसम्मततया पुंवद्भावविषयकभाष्यकैयट-पर्यालोचनया दिग्वाचकपूर्वादीनां व्यवस्थाविषयत्वाभावे सर्वनामत्वाभावमाहुः ।

ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्।
स्वे, स्वाः। आत्मीया इत्यर्थः, आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा।

अन्तरं बहिर्योगोपसंव्यानयोः। [ १-१-३६ ]

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्।
अन्तरे, अन्तरा वा गृहाः। बाह्या इत्यर्थः। अन्तरे अन्तरा वा शाटकाः।

---

तदसत्, भाष्यकैयटयोर्मते दिग्वाचकानां व्यवस्थाविषयत्वाभाव इत्यत्र प्रमाणाभावात्। न च 'दक्षिणा पूर्वेतिदिक्शब्दौ'। दक्षिणः पूर्वं इति व्यवस्थाशब्दौ' इति 'दिङ्नामानि' सूत्रभाष्योक्त्या दिक्शब्दौ न व्यवस्थाविषयौ इति स्पष्टं प्रतीयत इति वाच्यम्, 'दिक्शब्दौ' इत्यस्य देशविशेषसंनिहितत्वविशिष्टतत्तच्छब्दप्रवृत्तिनिमित्तकौ 'दक्षिणः पूर्वं इति व्यवस्थाविषयौ' इत्यस्य तत्तद्देशसन्निहितत्वमात्रप्रवृत्तिनिमित्तकौ इत्यर्थात्, समानप्रवृत्तिनिमित्तकत्वाभावात् पुंवद्भावो न स्यादिति भाष्याशयात्। अत एव 'समानायामाकृतौ यद्भाषितपुंस्कम् आकृत्यन्तरे चैतौ भाषितपुंस्कौ' इति भाष्योक्तिः संगच्छते। अत एव 'यदि पुनर्दिग्वाचका अपि व्यवस्थाविषयाः स्युः' इति तत्रैव भाष्ये। किञ्च दिग्वाचकानां सर्वनामत्वाभावे 'दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं दिक् सा दक्षिणपूर्वेत्युच्यते' इति कैयटवाक्यासङ्गतिः, दिशः सर्वनामत्वाभावेन 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडादेरसम्भवात्।

किञ्च बहुव्रीहिवद्भावे 'दक्षिणदक्षिणस्यै' इति भाष्यप्रयोगाच्च दिग्वाचकानामपि संनिहितत्वादिघटितार्थकत्वेन व्यवस्थाविषयतया सर्वनामत्वस्येष्टत्वेन काव्यपुराणादिषु सर्वनामकार्याणां नासङ्गतिः।

वस्तुतस्तु अत्र गणसूत्रे च संज्ञाग्रहणं व्यर्थमेव, सर्वनामेत्यन्वर्थबलेनैवातिप्रसङ्गाभावात्।

ज्ञातिधनान्येति—आत्मात्मीयज्ञातिधनवाची स्वशब्दः। तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीययोरर्थयोरेव सर्वनामत्वम्। तदाह—ज्ञातिधनान्यवाचिन इति। अत्र सूत्ररीत्या 'असंज्ञायाम्' इत्यस्यानुवृत्त्या अन्वर्थबलेन वा नित्या संज्ञा प्राप्तेति प्राप्तविभाषेयम्। तदाह—या प्राप्तेति सर्वादिसूत्रेण प्राप्तेत्यर्थः।

आत्मान इति वेति—यत्तु 'स्वो ज्ञातौ, आत्मनि स्वम्' इत्यमरादात्मनि स्वशब्दस्य नपुंसकत्वेन स्वे स्वा इत्यस्य आत्मान इत्यर्थोऽसंगत इति तन्न, 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोषानुरोधेन 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरकोषेऽपि 'आत्मनि' इत्यस्य 'स्वः' इति पूर्वेणैव सम्बन्धात्। किञ्च स्वशब्दस्यात्मनि नपुंसकत्वे जसि सर्वनामकार्याभावेन ज्ञातिधनयोः पर्युदासेन आत्मीयार्थे एव सर्वनामसंज्ञाया इष्टत्वे 'स्वमात्मीयाऽख्यायाम्' इति लघुन्यासेनैव सिद्धे गुरुन्यासकरणेन सूत्रकारमतेऽपि आत्मनि स्वशब्दस्येष्टत्वज्ञापनात्।

आख्याग्रहणसामर्थ्याज् ज्ञातिधनयोरपि ज्ञातित्वेन धनत्वेन विवक्षायामेव स्वशब्दस्य न सर्वनामत्वम्, ज्ञातिधनयोरपि आत्मीयत्वेन विवक्षायां तु सर्वनामत्वं भवत्येव। 'स्वमात्माऽऽत्मीयाख्यायाम्' इति तु नोक्तम्, गौरवात्। 'स्वमात्माऽऽत्मीययोः' इति न्यासे तु ज्ञातिधनयोरप्यर्थे आत्मीयार्थे विद्यमानत्वेनापतितसर्वनामत्ववारणाय आख्याग्रहणम्। आख्याग्रहणसत्त्वे तु आत्मीयत्वेनैव विवक्षायां सर्वनामत्वप्राप्त्या ज्ञातित्वेन धनत्वेन च विवक्षितयोर्ज्ञातिधनयोरात्मीयत्वेऽपि आत्मीयत्वेन विवक्षाया अभावान्न सर्वनामत्वम्। आत्मीयत्वेन विवक्षायान्तु ज्ञातिधनयोरपि सर्वनामत्वमेवेत्यलं विस्तरेण। 'स्वन शब्दे' इति स्वनति = प्रख्यापयतीति स्वनतेर्डे स्वमिति सिध्यति।

अन्तरं बहिर्योग इति। अन्तं राति इत्यन्तरम्। अन्तकर्मकाद् राधातोः के साधु। बहतेरौणादिके इसि पृषोदरादित्वाद्वादेशे बहिरिति। बहिरनावृतो देशः ( मैदान ) स च बहिर्योगोऽनावृतदेशे यो चाण्डालादिगृहास्ते एव अन्तरे, अन्तरा इत्युच्यन्ते। तदाह—बाह्या इति। यदा तु लक्षणया बहिश्शब्दो बाह्यपरस्तदा अनावृतदेशभवा नगरान्तिमगृहास्ते बाह्यास्तैः सह सम्बद्धा ये नगराभ्यन्तरगृहास्तेऽन्तरे अन्तरा उच्यन्ते-तथा च बाह्यसम्बद्धा अभ्यन्तरागृहा इत्यर्थः। उभयत्रापि वा सर्वनामत्वमिति कैयटः।

परिधानीया इत्यर्थः ।

---

एवम् उपसंव्यानशब्देनापि उपसंवीयते आच्छाद्यतेऽनेनेति करणे ल्युटा अन्तरं अन्तरा व शाटका आच्छादनकरणीभूता परिधानकर्मीभूता इत्यर्थः । तदाह—परिधानीया इति ।

कैयटस्त्वत्रापि—करणव्युत्पत्त्या उत्तरीयेऽर्थे कर्मव्युत्पत्त्या उत्तरीयस्याच्छादनकर्मीभूतं यच्छरीराच्छादनकरणीभूतमन्तरीयं तत्रापि उत्तरीयस्य बाह्यत्वाद् अन्तरीयस्य च बाह्यसम्बद्धत्वाद् बहिर्योग इत्यनेनैव सिद्धत्वाद् उपसंव्यानग्रहणं न कर्त्तव्यम् इति भाष्याशय इत्युक्तम् । उद्द्योतेऽपि तदेव समर्थितम् ।

वस्तुतस्तु—भाष्ये बहिरशब्देन अनावृतदेश एव विवक्षित इति प्रतीयते । तथा हि—भाष्यकृता उक्तम् 'उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् ।' अस्य भाष्यस्य यदुत्तरीयं तत्रानावृताकाशदेशसम्बन्धोऽस्तीति बहिर्योगेण सिध्येदिति तदनर्थकमित्याशयः ।

तत उक्तम्—'न वा शाटकयुगाद्यर्थम् । न वाऽनर्थकम् । किं कारणम् ? शाटकयुगाद्यर्थं तर्हीदं वक्तव्यम् । यत्रैतन्न ज्ञायते किमन्तरीयम् । किमुत्तरीयमिति' । अस्यायमाशयः—बहिर्योगस्तु उत्तरीये एव स्यात् । यत्तु अन्तरीयं तत्र बहिर्योगो नास्ति तत्रापि सर्वनामत्वं करणव्युत्पत्त्यैव तथा स्यात्तदर्थं उपसंव्यानग्रहणमिति ।

तत उक्तम् 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति । निर्ज्ञातं तस्य भवति इदमन्तरीयम् इदमुत्तरीयमिति' । अस्यायमभिप्रायः—संदिग्धस्थलमेव नास्ति—यथाऽस्य सूत्रस्य शाटकं वय' इत्यत्र भविष्यच्छाटकज्ञानेन प्रयोगस्तथा शाटकयुगादिस्थलेऽपि भविष्यदुत्तरीयत्वज्ञानमादाय तत्रैव प्रयोगः स्यात् । तत्र चानावृतदेशयोगोऽस्तीति बहिर्योगेणैव सिध्येत् । अन्तरीये तु नेष्यते सर्वनामत्वमिति ।

बहिरशब्दस्योभयार्थकत्वमादाय सर्वनामत्वसाधने तु 'किमन्तरीयम्, किमुत्तरीयम्' इति विचारासङ्गतिरेव स्यात्, अन्तरीये उत्तरीये च बहिर्योग उभयत्र सत्त्वात् । उत्तरीये एव सर्वनामत्वस्येष्टत्वे तु संदिग्धस्थले बहिर्योगस्यानिश्चितत्वात् विभाषा सर्वनामत्वं न स्यादिति । सन्दिग्धस्थलमपाकुर्वन् निश्चिनोत्युत्तरीयम्—य एव मनुष्य इत्यादिना ।

बहिरशब्दस्योभयार्थकत्वे उपसंव्यानशब्दस्य कर्मकरणोभयसाधनत्वे तु किमन्तरीयम् । किमुत्तरीयमिति निर्णयस्य वैयर्थ्यमेव स्यात्, निर्णयाभावेऽपि उभयार्थकबहिर्योगेण सिद्धत्वे बाधकाभावात् । तस्माद् बहिरशब्दोऽनावृतदेशपर एव । उपसंव्यानशब्दोऽपि करणसाधनतया उत्तरीयपर एवेति बहिर्योगेण कृतत्वादुपसंव्यानग्रहणं व्यर्थमेवेति भाष्याशय इत्युपाध्यायाः ।

बहिर्योगोपसंव्यानयोरिति किम् ? अर्थान्तरे मा भूत् । अन्तरशब्दश्च बह्वर्थकः । तदुक्तममरसिंहेन—

अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ इति ।

( नानार्थव. श्लो. १८७ ) । अवकाशे—अन्तरं देहि । अवधौ—मासान्तरे देयम् । परिधाने—अन्तरे शाटकाः । अन्तर्द्धौ—पर्वतान्तरितः सूर्य्यः । भेदे—यदन्तरं सिंहशृगालयोः । तादर्थ्ये—भवदन्तरे मया धनमर्जितम् । छिद्रे ( निवरे ) अन्तरे प्रहर्तव्यम् । आत्मीये—अयं ममान्तरः । विनार्थे अन्तरेण पुरुषकारम् । बहिरर्थे—अन्तरे चाण्डालगृहाः । अवसरे—अन्तरज्ञः सेवकः । मध्ये—आवयोरन्तरे शैलाः । अन्तरात्मनि—अन्योऽन्तर आत्मा आनन्दमयः । चात् सादृश्ये—स्थानेऽन्तरतमः ।

'पू 'परावरेति', 'स्वमिति', 'अन्तरमिति' त्रिसूत्र्या 'विभाषा जसि' इत्यतो 'जस ईः' इत्यर्थकस्य 'जसि' इत्यनुवृत्त्या जसः श्यादेशे एव कर्तव्ये प्रवृत्तिरिति अकजादौ कर्तव्ये 'सर्वादीनि' इत्यनेन नित्यमेव सर्वनामत्वम् ।

**पूर्वादिभ्यो नवभ्यो वा । [ ७-१-१६ ]**

एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादीनामपि । शेषं सर्ववत् ।

एकशब्दः संख्यायां नित्यैकवचनान्तः ।

**न बहुव्रीहौ [ १-१-२६ ]**

---

"पूर्वादिभ्यो नवभ्यो वा" इति । पुर्व पुरणे, ( भ्वः ) पुर्व निकेतने ( चुः ) उभाभ्यामचि 'उपधायाश्च' इति दीर्घे पूर्व इति । पॄधातोः 'ऋदोरप्' इति अप् इति ।

अवपूर्वकाद् राधातोः 'आतश्चोपसर्गे' इति के अवर इति । दक्षधातोः 'द्रुदक्षिभ्यामिनन्' ( उ. २ पा. सू. ५० ) इति इननि दक्षिण इति ।

उत्पूर्वकात् तॄधातोः 'ऋदोरप्' इत्यपि उत्तर इति । नञ्पूर्वकात् पॄधातोरपि अपर इति । नचैवमपरशब्दस्य सर्वादौ पाठो व्यर्थः, परशब्दे तदन्तविधिना अपरशब्दस्यापि सर्वनामत्वसिद्धेरिति वाच्यम्, परापरयोः पर्य्यायतया अपरशब्दे नञा समासेऽपि रथन्तरादिवत् जहत्स्वार्थवृत्त्या परार्थे प्रयोगदर्शनेन अपरशब्दघटकपरशब्दस्य निरर्थकत्वेन स्वीयसर्वार्थवाचकपरशब्दान्तत्वाभावेन तदन्तविधिनाऽपि सर्वनामत्वाप्राप्त्या अपरशब्दपाठस्य सर्वादावावश्यकत्वात् ।

न भ्रियते उन्नतत्वेनेति अधरः । नञ्पूर्वकाद् धृधातोरचि अधर इति—'अधरस्त्वन्यनीचयोः ।' एते नव पूर्वादयः । ततः परयोः ङसिङ्योः वा स्मात्स्मिनौ स्त इत्यर्थः ।

एति प्रथममिति एकः । इण् धातोः 'इण्भी' ( उ. ३ पा. ४३ सू. ) इति कनि एक इति ।

संख्यायामिति—'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।

साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥

बहुषु बहुवचनम्, ष्णान्ताः षट् इति भाष्ये उक्तम्—'एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यापरः । तद्यथा—एको द्वौ बहव इति । अस्त्यसहायवाची । तद्यथा—एकाग्नयः, एकहलानि, एकाकिभिःक्षुद्रकैर्जितमिति असहायैरित्यर्थः । अस्त्यन्यार्थे वर्तते—अजामेकां चरत्यूर्जमेकेति । अन्येत्यर्थः 'एको गोत्रे' इति भाष्ये—'यावद् ब्रूयात् प्रथमो गोत्रे प्रत्ययमुत्पादयति तावदेको गोत्रे इति ।' प्रथमो यन्निरूपितं गोत्रत्वं विवक्षितं तद्वाचकः शब्दः प्रथमशब्दार्थः ।

साधारण—समानार्थयोः संख्यावाचिन्येवार्थतः पर्य्यवसानम्, 'तेनैकदिक्' ( ४ । ३ । ११२ ) इति सूत्रभाष्ये

यथा 'तेनैकदिक्' 'चैत्रमैत्रयोरेका माता' इत्यादौ विभिन्नमातृत्वे एकत्वसंख्याप्रकारकबोधासम्भवात्साधारणसमानार्थत्वयोरेव पर्य्यवसानम् । 'सर्वस्य द्वे' इति सूत्रभाष्ये 'एकैकशः' इति प्रयोगेऽल्पार्थकत्वं विना 'बह्वल्पार्थात्' इति शसोऽसम्भवेनाल्पार्थकत्वम् ।

प्रधानार्थस्तु बहुषु वीरेषु राजसु सत्स्वपि प्राधान्याय एकवीर इति प्रधानवीर इत्यर्थः । केचित्तु स्वनिष्ठगुणसजातीयगुणवत्त्वकृत सजातीयद्वितीयरहितत्वप्रयोज्यासहायत्वस्यापि सम्भवात्प्रधानार्थे न दृढं मानमित्याहुः ।

न बहुव्रीहौ इति । ननु युष्मदस्मदोर्बहुव्रीहिसमासे चिकीर्षिते त्वकं पिता यस्य, अहकं पिता यस्येत्यर्थे बहुव्रीहेः सुबन्तसमुदायनिमित्तकत्वेन बहिरङ्गत्वात् अज्ञाताद्यर्थविवक्षायाम्, 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकचः सुबन्तद्वयानिमित्तकत्वेनान्तरङ्गतया अज्ञातः कुत्सितो वा अहं त्वम् इत्यर्थेऽकचि युष्मकद् सु, अस्मकद् सु इति दशायां बहुव्रीहौ त्वकत्पितृकः, मकत्पितृक इति प्राप्नोति, इष्यते तु त्वत्कपितृकः इति, मत्कपितृक इति न सिध्येदत आह—'न बहुव्रीहौ' इति ।

अत्र बहुव्रीहावित्यधिकरणे सप्तमी । तत्र यदि सर्वनामसंज्ञाया अभावो आधेयस्तदा सर्वनामसंज्ञायां तदन्तविधेः सत्त्वेन 'प्रियविश्व' इत्यादिबहुव्रीहौ बहुव्रीह्याधारा संज्ञा प्राप्ता । बहुव्रीहौ

बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात्। त्वकं पिता यस्य स त्वत्कपितृकः। अहकं पिता यस्य स मत्कपितृकः। इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते।

सर्वनामसंज्ञा न भवतीति निषिध्यते। परन्तु त्वत्कपितृक इति पितृशब्दान्तबहुव्रीहौ संज्ञायाः सर्वनामसंज्ञाया अप्राप्तया निषेधो न स्यादतो बहुव्रीहाविति अनुवृत्तस्य सर्वादीनीत्यस्याधिकरणम्। तथा च बहुव्रीहौ विद्यमानानि यानि सर्वादीनि तानि सर्वनामसंज्ञकानि न भवन्तीत्यर्थः। एवं च बहुव्रीह्यवयवानां सर्वेषां सर्वादीनां सर्वनामत्वनिषेधः सिध्यति।

ननु बहुव्रीहावन्यपदार्थप्राधान्येनोपसर्जनीभूततया संज्ञाया अप्राप्त्या निषेधो व्यर्थः। किञ्च बहुव्रीहिसंज्ञायाः प्राक् बहुव्रीहिसंज्ञार्थे कल्पितेऽलौकिकविग्रहवाक्ये संज्ञाया निषेधो न स्यादत आह—

चिकीर्षिते इति—बहुव्रीहेः प्राक् सर्वनामत्वे निषेधवैयर्थ्यापत्त्या "चिकीर्षिते" इत्यध्याह्रियते इति भावः। विषयसप्तम्या तु नेष्टसिद्धिः, समुदाये एव बहुव्रीहिविषयत्वादुक्तदोषतादवस्थ्यात्। नन्वेवमपि बहुव्रीहिसंज्ञाकर्मककर्तीच्छाविषयीभूतत्वस्यापि समुदाये एव सत्त्वेनावयवस्य संज्ञाया निषेधानापत्तिरिति चेन्न, बहुव्रीहिसंज्ञाविधायकशास्त्रघटकपदप्रयोज्यविषयताश्रयस्य चिकीर्षितपदेन ग्रहणात्। सुबन्तपदप्रयोज्यविषयतायाः प्रत्येकमनेकपदप्रयोज्यविषयतायाः समुदाये च सत्त्वेनादोषात्।

लौकिके इति—"त्वकं पिता यस्य" "अहकं पिता यस्य" अर्थबोधनाय लोके उच्चार्यमाणवाक्ये इवेत्यर्थः।

तत्रापीति—'युष्मत्क सु, अस्मत्क सु' इत्यलौकिकविग्रहवाक्ये इत्यर्थः। अत्र 'प्रागिवात्कः' इत्यधिकारे 'अज्ञाते' 'कुत्सिते' इति वा प्राप्तं कं बाधित्वा अकच् स्यादिति भावः। ननु लौकिके वाक्ये अहकमित्यादौ बहुव्रीहेश्चिकीर्षितत्वान्निषेधः कस्मान्नेति चेन्न, लौकिकवाक्यघटकपदानामप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तस्वरूपपरिनिष्ठितत्वेन शास्त्राप्राप्ते बहुव्रीहेश्चिकीर्षितत्वाभावात्। न च लौकिवाक्यपदानामपि सिद्धये अलौकिकविग्रहस्य 'युष्मद् सु, अस्मद् सु' इत्यस्य कल्पनाऽऽवश्यकत्वेन तत्रापि बहुव्रीहिसंज्ञायामकचोऽप्राप्तिरिति वाच्यम्, समासस्य वैकल्पिकत्वेन तत्र सामर्थ्याकल्पनेन बहुव्रीहेरप्राप्तेः।

'चिकीर्षिते' इत्यस्याध्याहारे सूत्रमेव मानम्। अन्यथा बहुव्रीहावन्यपदार्थप्रधानतया युष्मदादीनामुपसर्जनीभूतार्थप्रतिपादकत्वेन सर्वनामत्वाप्राप्त्या निषेधवैयर्थ्यं स्पष्टमेव।

न च यत्रालौकिके विशेष्यविशेषणभावापन्नार्थोपस्थितिजनकस्वरूपैकार्थीभावसामर्थ्यारोपस्तत्रैव बहुव्रीहिसमासस्येष्टतया तत्रापि युष्मदादेरुपसर्जनतया सर्वनामत्वाप्राप्त्या चिकीर्षिते इत्यध्याहारेऽपि निषेधवैयर्थ्यम्, स्वार्थविशिष्टार्थान्तरबोधजनकत्वरूपोपसर्जनत्वस्य परबोधनायोच्चारिते एव सत्त्वेनालौकिकत्वेन विगृह्यमाणे तदसत्त्वात्।

समासात्प्रागिति—'युष्मद् सु पितृ सु, अस्मद् सु पितृ सु' इत्यत्र समाससंज्ञातः प्रागेव सर्वनामत्वं निषिध्यते इति नाकच्, किन्तु क एवेति।

ननु निषेधस्य चिकीर्षितबहुव्रीहिनिमित्तकत्वेन बहिरङ्गतया सर्वनामसंज्ञायाः सर्वादिनिमित्तकतया अन्तरङ्गत्वेन संज्ञा दुर्वारा, निषेधारम्भसामर्थ्यात्, 'चिकीर्षिते बहुव्रीहौ' बहुव्रीहिचिकीर्षाकाले इत्यर्थेन निषेधे बहुव्रीहेरनिमित्तत्वाच्च।

न चालौकिकवाक्ये बहुव्रीहेः प्रागुपसर्जनत्वाभावेऽपि बहुव्रीहौ परिनिष्ठिते रूपे उपसर्जनत्वस्य भावितया 'निमित्तं विनाशोन्मुखं ( भाविनं निमित्तविनाशम् ) दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्ति पाणिनीयाः' इत्यर्थकाकृतव्यूहाः पाणिनीया इति परिभाषया सर्वनामत्वाप्राप्त्या निषेधवैयर्थ्यम्। 'न बहुव्रीहौ' इति सूत्रारम्भसामर्थ्येन परिभाषाया अनित्यत्वज्ञापनात्। अत एव अतिभवकानिति सिध्यति। अन्यथा अत्रापि अनुपसर्जनत्वस्य भाविविनाशकतया सर्वनामत्वाभावेऽकचोऽनापत्तेः।

अन्यथा लौकिकविग्रहवाक्य इव तत्राप्यकच् प्रवर्तेत। स च समासेऽपि श्रूयेत। अतिक्रान्तो भवकन्तम् अतिभवकान् इतिवत्।

वस्तुतस्तु 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्' इति 'हेतुमति च' इति सूत्रस्थवार्तिके आख्यानं भूतकथाप्रबन्धः कंसवधादिः तद्वाचिनः कृदन्तात् तदाचष्टे इत्यर्थे णिच् णिच्प्रकृत्यवयवस्य कृतो लुक्, तस्यैव कृतो या प्रकृतिस्तस्याः प्रत्ययापत्तिः कृत्प्रत्ययनिमित्तका-देशादिविकारपरित्यागेन स्वरूपावस्थापनं भवतीत्यर्थिकया 'अकृतव्यूहाः' इति परिभाषयैव कृतो लुकि तन्निमित्तककार्यस्य निवृत्त्या प्रकृतिस्वरूपावस्थानसिद्धया 'कंसं घातयति' इति रूपसिद्धौ प्रकृतिप्रत्ययापत्तिविधानेन परिभाषाया अनित्यत्वसिद्धौ 'न बहुव्रीहौ' इति सूत्रं व्यर्थमेव। 'ङ्णोः कुक्टुक् शरि' इति सूत्रे तुग्विशिष्टस्य छस्य शविधानमपि अकृतव्यूहपरिभाषाया अनित्यत्वे मानम्। तथा हि—'छे च' इत्यादिना छकारं निमित्तीकृत्य तुग्विधीयते। छस्य शादेशे अकृतव्यूहपरिभाषया तुको निवृत्तौ सिद्धायां तुग्विशिष्टस्य छस्य शविधानं व्यर्थीभूय परिभाषाया अनित्यत्वे ज्ञापकम्।

'विभाषा दिक्समासे बहुव्रीहौ' इत्यतो बहुव्रीहौ इत्यनुवर्तमानेऽत्र बहुव्रीहावित्यस्य वैयर्थ्यं तु न, तत्र 'दिक्समासे' इत्युक्त्याऽपि प्रतिपदोक्तपरिभाषया 'दिङ्नामान्यन्तराले' इति बहुव्रीहेरेव ग्रहणे सिद्धे बहुव्रीहिग्रहणस्याकर्तव्यतया भाष्यकृदुक्तेः।

न च 'बहुव्रीहौ' इत्यत्र बहुव्रीहावित्यनुवृत्त्या बहुव्रीहिरेव यो बहुव्रीहिस्तस्य ग्रहणं यथा स्याद् बहुव्रीहिवद्भावेन यो बहुव्रीहिः 'एकं बहुव्रीहिवत्' इति तस्य ग्रहणं मा भूदिति वाच्यम्, समासे इत्येकदेशस्याप्यनुवर्तनेऽतिदिष्टस्य समासत्वाभावेनानुवृत्तौ फलाभावात्।

वस्त्रमन्तरं येषां ते वस्त्रान्तराः, वसनमन्तरं येषां ते वसनान्तराः। वस्त्रान्तराश्च वसनान्त-राश्चेति द्वन्द्वे वस्त्रान्तरवसनान्तराः' इति द्वन्द्वावयवस्य बहुव्रीहेः सर्वनामत्वनिषेधार्थं बहुव्रीहा-वित्यस्यानुवृत्तौ भाष्योक्तं फलमपि न, अन्तरशब्दस्योपसर्जनतया। सर्वादित्वाभावेन केवलस्य तदन्तस्य च सर्वाद्यन्तत्वाभावेन सर्वनामत्वाप्राप्त्या तस्य भाष्यस्यैकदेश्युक्तित्वात्। 'विरूपाणामपि समानार्थानाम्' इत्येकशेषस्तु न, वसन्ति जना अस्मिन्नित्यधिकरणे ल्युटा गृहवाचकतयोभयोः समानार्थत्वाभावात्।

'न बहुव्रीहौ' इति सूत्रे 'तादर्थ्यात्ताच्छब्द्यम्' इन्द्रार्था स्थूणा इन्द्र इति वत् बहुव्रीहिपदं बहु-व्रीह्यर्थकल्पितालौकिकविग्रहवाक्यपरम्। तत्रैव सर्वनामत्वनिषेध इति पाणिनिमतम्। किञ्च 'न बहुव्रीहौ' इत्यत्र प्रथमार्थे सप्तमी।

बहुव्रीहिः सर्वनामसंज्ञको न भवतीत्येवार्थः। तत्फलं तु 'प्रियविश्वाय' इत्यादि। अत्र 'वा प्रियस्य' इति प्रियशब्दस्य पूर्वनिपातः। न चोपसर्जनत्वादप्राप्तिः, उपसर्जनप्रतिषेधस्य 'संज्ञोपसर्जन-प्रतिषेधः' इति वदतो वार्तिककारस्य 'अन्वर्थग्रहणं विज्ञास्यते सर्वेषां यन्नाम तत्सर्वनाम' इत्यन्वर्थसंज्ञा-माश्रयतो भाष्यकृतश्चैव न सूत्रकृतः। तथा च 'बहुव्रीहौ चिकीर्षिते' इत्यर्थो वृत्तिकृदूहित एव न सूत्रसम्मतः।

अत एव भाष्यकृता बहुव्रीहिपदं तादर्थ्यात्ताच्छब्द्यमिति बहुव्रीहिपदमेव बहुव्रीह्यर्थालौकिक-वाक्यपरमित्युक्तं न तु चिकीर्षिते इति। बहुव्रीहिपदस्यालौकिकविग्रहपरत्वमपि न भाष्यसम्मतम् अत एव 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं ( प्रत्यवयवम् ) मुक्तसंशयौ' इत्युक्तम्।

एतेन बहुव्रीहिः सर्वनामसंज्ञको न भवतीत्यर्थ एव सूचितः। तथा च सूत्रकारस्याप्यकजिष्ट एव। एतेन सूत्रप्रत्याख्यानमेतत्। यथोत्तरं मुनीनां प्रामाण्यमिति कैयटोक्तिश्चिन्त्या। भाष्यकृता तु 'तर्हि वक्तव्यम्। न वक्तव्यम्' इत्यादिशब्दैरेव प्रत्याख्यायते। तथा त्वत्र नोक्तम्। अन्वर्थत्वे तु सूत्रस्य नाऽवश्यकतेति त्वन्यत्।

भाष्यकारस्तु त्वकत्पितृकः, मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् । 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः ( वा २२५ ) महासंज्ञाकरणेन,

भाष्यकारस्त्विति—त्वं पिता यस्येत्यार्थे बहुव्रीहौ त्वकत्पितृक इत्यादेरकज्घटितस्यैव साधुत्वं स्वीकृत्य 'न बहुव्रीहौ' इति सूत्रं प्रत्याचख्यौ । वस्तुतस्तु बहुव्रीहिः सर्वनामसंज्ञको न भवतीत्यर्थं मत्वा अवयवस्य सर्वनामत्वसत्त्वेनाकच् स्यादेवेत्याशयो भाष्यकारस्येति सूत्रमतेऽपि तत्राकजिष्ट एव, बहुव्रीहौ' इति प्रथमार्थे सप्तमीसत्त्वेन बहुव्रीहिः सर्वनामसंज्ञको न भवतीत्यर्थेनावयवस्य सर्वनामत्वात् ।

न च बहुव्रीहेः सर्वनामत्वाप्राप्तिः, 'प्रियविश्वाय' इत्यादौ विश्वशब्दस्योपसर्जनतया 'संज्ञोपसर्जनीभूतानां प्रतिषेधो वाच्यः' इति वार्तिकात्, सर्वनामेति महासंज्ञाकरणेन च स्वीयप्रसिद्धसर्वार्थवाचकानामेव संज्ञाकरणादिति वाच्यम्, सूत्रमते वार्तिकाभावेन अन्वर्थत्वस्यापि भाष्यकृतोहितत्वेन सूत्रमते उपसर्जनस्यापि संज्ञाप्राप्त्या 'न बहुव्रीहौ' इत्यस्य तदन्तविधिज्ञापनद्वारा निषेधार्थसूत्रस्यावश्यकत्वात् । अवयवस्य सर्वनामत्वं तु सूत्रकृद्भाष्यकृतोरुक्तरीत्या इष्ट एवेति ।

यथोत्तरम्—इत्यस्य विषयाभावे मतभेदे एव तदुपस्थितेः । यथोत्तरमित्यत्र प्रमाणं तु 'भ्रिन्विकृण्व्यरचो' ( ३ । १ । ८० ) इति सूत्रभाष्यमेव । एवं हि तत्र भाष्यम् 'काय—मकारः श्रूयते, न क्वचिच्छ्रूयते । लोपोऽस्य भवति । यदि न क्वचिच्छ्रूयते । किमर्थमिदमुच्यते । न लोप एवोच्येत । नैवं शक्यं लोपे सति गुणः प्रवर्तेत । अत्वे च सत्यकारलोपस्य स्थानिवद्भावाद् गुणो न भविष्यति । ननु च लोपेऽपि 'न धात्वि' ति निषेधो भविष्यति, आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः, न चैष आर्द्धधातुकनिमित्तको लोपः । अपि च प्रत्याख्यायते खल्वपि स योगः । तस्मिन् प्रत्याख्याते गुणः स्यादेवेति ।

एतेन सूत्रतस्तत्प्रत्याख्यानवादिमतं प्रबलमिति । प्रत्याख्यानवादिसम्मतलक्ष्यमेव कथञ्चित्सूत्रमतेऽपि साध्यं न तु तद्विपरीतमिति २, सूत्रतस्तदसम्भवे सूत्राप्रामाण्यमेवेति ३, प्रत्याख्यानं सूत्रसम्मतमिति च ४, सूचितम् । 'तदशिष्यं संज्ञाप्रमाणत्वात्' इत्यादिना सूत्रकृतखण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत् सूत्रकारवचनखण्डनप्रवृत्तभाष्यवार्तिकवचनैः सर्वांशेऽप्रामाण्ये 'वर्णेनाप्यनर्थकेन न भवितव्यम्' इति वृद्धिसूत्रस्थभाष्यविरोधापत्त्या सूत्रवचसोऽपि अदृष्टार्थसाधने तत्र तत्र "अपाणिनीयन्तु भवति" इति भाष्योक्त्या प्रामाण्यसत्त्वेऽपि दृष्टार्थसाधने अप्रामाण्यकल्पनैवोचिता।

किञ्च इतिहासपुराणार्थैर्वेदार्थवर्णनवत् वार्तिकभाष्यादिग्रन्थैः सूत्रार्थवर्णनमुचितमिति भावः ।

वस्तुतस्तु वादिप्रतिवादिनोर्विरोधे समुपस्थिते वादिप्रतिवादिसम्मतो न्यायासनाधिष्ठितो यथा लोके निर्णयति तथाऽत्राप्यन्येन निर्णायकेन भवितव्यम् । एवञ्चोभयसम्मतो न्यायाधीशो महेश्वरः लण्सूत्रस्थणकारेण "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति बोधयन् उत्तरोत्तरमुनीनां व्याख्यानकर्तॄणां प्रामाण्यं बोधयतीत्येव पन्था ज्यायान् । वादिनः प्रतिवाद्यभिमतार्थस्वीकारे प्रमाणानपेक्षणात्, स्वस्याप्रामाण्यबोधने सर्वत्र एवोक्तावप्रामाण्यसन्देहसम्भवाच्चेति दिक् ।

संज्ञोपसर्जनीभूता इति—अत एव आढ्यो भूतपूर्व आढ्यपूर्वस्तस्मै 'आढ्यपूर्वाय' इत्यत्र न सर्वनामत्वम्, पूर्वपदार्थकालस्य 'क्रियाभेदाय कालः स्यात्' इति वाक्यपदीयाद् भवनक्रियाविशेषणतयोपसर्जनत्वात् । यत्तु आढ्ये विशेषणं पूर्व इति तच्चिन्त्यम्, उक्तयुक्तेः ।

महासंज्ञाकरणेनेति—संज्ञाशब्दत्वञ्च—स्वत्या बोधकशब्दमात्रप्रवृत्तिनिमित्तकशब्दत्वम् ।

अत एव 'संज्ञायां समज' इति सूत्रेण समजवाचकस्य समज्याशब्दस्य शब्दप्रवृत्तिनिमित्तकत्वेऽपि पाणिनिना भगवता साधुत्वमुक्तम् ।

तदनुगुणानामेव गणे सन्निवेशात्। अतः संज्ञाकार्यमन्तर्गणकार्यञ्च तेषां न भवति। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय देहि। अतिकतरं कुलम्। अतितत्।

## तृतीयासमासे [ १-१-३० ]

'आधुनिकसंकेतः संज्ञा' इति तु न सम्यक्, आधुनिकत्वस्य निर्वक्तुमशक्यत्वात्। यदि तु आधुनिकः=शरीरीत्युच्यते तदा तदपि न सम्यक्, ईश्वरसंकेतितस्तु न संज्ञा, इन्द्रशक्रादिशब्दानां शब्दप्रवृत्तिनिमित्तकत्वे सकलसम्मतपर्य्यायत्वानापत्तेः। तथा चेन्द्रादिशब्दाश्च तद्व्यक्तित्वरूप-प्रवृत्तिनिमित्तकाः कल्पभेदेनानेकवृत्तित्वेन जातिप्रवृत्तिनिमित्तका वा बोध्याः।

सर्वादिशब्दा अपि एवमेव। कुत्र आधुनिकसंकेतः, कुत्र ईश्वरसंकेत इत्यत्र तु शिष्टव्याख्यानमेव शरणम्। उपसर्जनीभूतास्तु एकार्थीभावात्मकशक्त्या विशेषणतया अर्थोपस्थापका उपसर्जनसंज्ञका वा।

ननु लौकिकोपसर्जनत्वस्य ग्रहणे 'तदो सः' इति सूत्रे 'अनन्त्ययोः' इत्यस्य व्यर्थत्वोपपादना-वसरे 'तदो सः सौ' इत्येकं ततः 'अदसः' इति, अदसो दकारस्य सो भवतीत्यर्थः। एवञ्च त्यदादीनां तकारदकारयोः सौ स इत्यर्थंकेन पूर्वेणैव अदो दकारस्यापि सत्त्वे सिद्धे 'अदसः' इति नियमार्थम्, अदस एव दस्य सो नान्यस्येति, तेन 'सः' इत्यत्र अत्वं बाधित्वा दस्य सो न। एवञ्च 'द्वींयतेरप्रत्यये' "द्व" इति प्राप्नोति 'स्वः' इति चेष्यते इति भाष्यं विरुध्येत, द्व्यर्थस्य कर्मतासम्बन्धेनेच्छां प्रति विशे-षणतया लौकिकोपसर्जनत्वेनात्वाप्राप्तेरिति चेन्न, तस्य भाष्यस्यैकदेश्युक्तित्वात्। नञ्समासस्य पूर्व-पदार्थप्राधान्येऽत्वसत्वयोः 'सः' इत्यत्रात्वसत्वयोरनापत्तिः, उक्तभाष्ये उत्तरपदार्थप्राधान्ये तु नेति शास्त्रीयोपसर्जनस्य ग्रहणे तु उभयथाप्युक्तदोषसत्त्वेन तस्यैकदेश्युक्तित्वस्यावश्यकत्वात्।

तदनुगुणानामिति—तस्याः=महासंज्ञाया अनुगुणाः=अनुकूलार्थास्तेषामेव गणे—सर्वादिगणे संनिवेशात्=अनुकरणत्वेन प्रवेशादित्यर्थः। तथा च सर्वेषाम्—स्वीयप्रवृत्तिनिमित्तसमानाधिकर-णानि यावन्ति तद्व्यक्तित्वानि सकलतदाश्रयाणां नामानि वाचकानि यानि तदनुकरणानामेव गणे संनिवेशादित्यर्थः।

तथा च 'पूर्वपरावर' इति गणसूत्रेऽष्टाध्यायीस्थे च 'सर्वादीनि' 'असंज्ञायाम्' इति न कार्य्यम्, संज्ञाभूतस्य सर्वादित्वाभावेन 'सर्वादीनि' इत्यस्यानुवृत्त्या च सर्वनामत्वाप्राप्तेः। एतेन 'असंज्ञायाम्' इत्यस्याभावे 'पूर्वपरावर' इति सूत्रस्य संज्ञायामेवाप्राप्तविकल्पापत्तिरिति परास्तम्।

वस्तुतस्तु 'तदोः सः' इति भाष्यस्य नैकदेश्युक्तित्वम्, स्वेतरपदप्रयोज्यविशेष्यतानिरूपितप्रका-रताप्रयोजकत्वस्यैवोपसर्जनत्वेन 'द्वः' इत्यत्र स्वेतरपदाभावेनोपसर्जनत्वाभावादत्वविधाने बाधकाभावात् शास्त्रीयस्यैवोपसर्जनत्वस्य ग्रहणस्यानेन भाष्येण बोधनाच्च। नञ्सूत्रस्थभाष्यविरोधस्तु न, पूर्व-पदार्थप्राधान्ये अव्ययीभावस्यैव भाष्यकृदभिमतत्वेन तस्य नपुंसकत्वेन सुपो लुकि विभक्तिपरकत्वा-भावादत्वसत्वयोरनापत्तिरित्यत्रैव भाष्यतात्पर्य्यात्।

संज्ञाकार्य्यमिति—सर्वनामसंज्ञाकार्य्यं शीभावादिकम्। अन्तर्गणेति—संज्ञोपसर्जनीभू-तयोः सर्वादित्वाभावे त्यदादिडतरादेरपि सर्वादितया संज्ञोपसर्जनीभूतत्यदादिडतराद्योर्न त्यदादिडत-राद्यन्तर्गणगतत्वमिति तेष्वपि गणकार्य्याभावः। तेषामिति—संज्ञोपसर्जनीभूतत्यदाद्यादीनाम्। अतिकतरमिति—अद्ड्डादेशाभावे अतिकतरदिति न। अतितदित्यत्र अत्वसत्वयोरभावः।

तृतीयासमासे—विभाषा दिक्समासे इत्यतः समासे इत्यनुवर्तमाने पुनः समासग्रहणं समा-सार्थवाक्यस्यापि ग्रहणार्थम्। तदुक्तं भाष्ये—समासे इत्यनुवर्तमाने पुनः समासग्रहणम्...... तृतीयासमासार्थानि पदानि तृतीयासमास इति' तथा च अलौकिकविग्रहवाक्ये विकल्पेन समास-प्रवृत्त्या समासाभावेऽपि निषेधप्रवृत्त्या 'मासेन पूर्वाय' इत्यपि सिध्यति। यत्तु कैयटः—प्रयोगार्हस्य लौकिकस्य ग्रहणे सति 'मासेन पूर्वाय' सिध्यतीति तन्न, परिनिष्ठितस्यैव लोके प्रयोगेण तत्र शास्त्र-प्रवृत्तेरसम्भवात्।

इह सर्वनामता न स्यात् । मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय ।

द्वन्द्वे च । [ १-१-३१ ]

द्वन्द्वे उक्ता संज्ञा न । वर्णाश्रमेतराणाम् । समुदायस्यैवायं निषेधः, न त्ववयवानाम् । न चैवं तदन्तविधिना सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् ।

---

न च समासग्रहणस्य विग्रहवाक्यपरत्वे समासे निषेधो न स्यात्, आवृत्त्या उभयत्रापि प्रवृत्तेः । आवृत्तौ च मासपूर्वाय, मासेन पूर्वाय इत्युदाहरणमेव मानम् । यद्वा, 'तृतीया' इत्येकं वाक्यम् । अत्र 'समासे' इत्यनुवृत्त्या समासे निषेधः । ततः "असमासे" इति पर्युदासन्यायेन असमासपदं समाससदृशपरम् । सादृश्यनियामकश्च धर्मः—समासकार्य्यभाक्त्वरूपः समाससमानपदघटितत्वरूपो वा । तेन समाससदृशे विग्रहवाक्येऽनेन निषेधः । तदुक्तं—भाष्ये "योगविभागः करिष्यते । "तृतीया" ततः "असमासे" इति । असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति" इति । अत्र भाष्ये "तृतीयायाः" इति पञ्चम्यन्तोपादानात् "मासेन पूर्वाय" इत्यत्र निषेधः । "पूर्वस्मै मासेन" इत्यत्र तु न निषेधः । भाष्ये पञ्चम्युपादानात् पूर्वपदभूते नास्य प्रवृत्तिः" इत्युद्द्योतोक्तेः ।

अत्र तृतीयासमासोऽपि प्रतिपदोक्तपरिभाषया तृतीयापदं सर्वादिघटकपदद्योत्याख्ये विहित एव गृह्यते । स च 'पूर्वसदृश' इति विहितसमासस्तदर्थकवाक्यं वा गृह्यते, तेन त्वयका कृतम् इत्यादौ निषेधाभावादकजादिः सिध्यति । अत्र सप्तमी प्रथमार्थे । तेन सर्वाद्यन्ततृतीयासमासस्तदर्थवाक्यं वा सर्वनामसंज्ञां न लभते । वाक्ये त्ववयवस्यैव निषेधः न समुदायस्य, फलाभावात् ।

द्वन्द्वे च—वर्णाश्रमेतराणाम् अत्र सर्वाद्यन्तत्वात्प्राप्ता संज्ञा निषिध्यते ।

समुदायस्येति—"अकचस्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्" इति भाष्यात् समुदायस्यैव निषेध इति गम्यते । तथा चात्र प्रकरणे सर्वाऽपि सप्तमी प्रथमार्थे, छान्दसत्वात् । तथा च द्वन्द्वः सर्वनामसंज्ञको न भवतीत्यर्थेन समुदायस्यैव द्वन्द्वसंज्ञकत्वेन समुदायस्यैव निषेध इत्याह—समुदायस्येति ।

किञ्चावयवमात्रस्य निषेधे तस्य सर्वनामत्वाभावेऽपि सर्वार्थकत्वानपहारेण तदन्तस्य सर्वनामत्वे सुडापत्तिर्दुर्वारा । द्वन्द्वे घटकतया विद्यमानस्यावयवस्य तुल्यास्यसूत्रभाष्योक्तरीत्या व्यपदेशिवद्भावेन द्वन्द्वस्यापि द्वन्द्वे विद्यमानतया निषेधे तु अवयवस्य निषेधे फलाभावः ।

उपाध्यायास्तु—अत्र निषेधप्रकरणे सर्वनामानीति नानुवर्तते, किन्तु सर्वादीनीत्युनुवर्तते । तथा च द्वन्द्वे विद्यमानानि सर्वादीनि न भवन्तीत्यर्थः । तथा च समुदायस्यावयवस्य सर्वनामत्वाप्राप्तिरिति यथाश्रुतसप्तम्यामपि दोषाभाव इत्याहुः । द्वन्द्वे यानि सर्वादीनीति नार्थः, कारकाणां क्रियान्वयनियमात् । द्वन्द्वे विद्यमानानीत्यपि नार्थो विद्यतिक्रियाध्याहारे गौरवात्, नियमेनाध्याहृतायां प्रधानभूतभवतिक्रियायामन्वयस्यौचित्याच्च ।

नागेशास्तु इतरेतरसमाहारद्वन्द्वयोः समूहस्य विशेष्यतया भानेन सर्वाद्यर्थस्य विशेषणतया उपस्थित्या उपसर्जनत्वेन सर्वनामसंज्ञाया अप्राप्त्या "द्वन्द्वे" इति सूत्रं व्यर्थमेव । अत एव "कुक्कुटमयूर्यौ" इत्यत्र मयूरीत्यस्य समूहे उपसर्जनतया "गोस्त्रियोः" इति ह्रस्ववारणाय "द्वन्द्वे न" इति ह्रस्वनिषेधकं वार्तिकमारब्धं भाष्ये ।

इतरेतरसमाहारयोर्भेदस्तु अवयवगतसंख्याया उद्भूतत्वेन विवक्षायामितरेतरः, समूहगतैकत्वविवक्षायां समाहार इति प्राचां मते तु समूहस्य विशेष्यत्वे समाहारः, इतरेतरे तु समूहस्य विशेषणतया समुदितवर्णाश्रमेतरयोधे इतरस्यानुपसर्जनतया प्राप्तसर्वनामत्ववारणाय सूत्रस्यावश्यकता ।

न चैवमिति—अवयवस्य निषेधाभावे पूर्वशब्दात्सर्वनाम्नः परस्यामः सुडापत्तिरित्यर्थः ।

विहितस्येति—वर्णाश्रमेतरशब्दादामो विहितत्वेन तस्य सर्वनामत्वाभावेन न सुडिति भावः ।

## विभाषा जसि । [ १-१-३२ ]

जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे, वर्णाश्रमेतराः । शीभावं प्रत्येव विभाषेत्युक्तम्, अतो नाकच्, किन्तु कप्रत्यय एव । वर्णाश्रमेतरकाः ।

विभाषा जसि—शीभावकार्यरूपाधेयमादाय जस आधारत्वविवक्षया सप्तमी । तदाह—जसाधारमिति । ननु शीभावेन जसो विनाशात् जसाधारमित्यसङ्गतम्, विद्यमानस्यैवाधारत्वनियमात् । अन्यथा 'नष्टो घटो जलवान्' इत्यापद्येतेति चेन्न, कालगताधारत्वस्य तत्रारोपात् । 'जसाधारम्' इति वाक्यमसङ्गतम्, सुबन्तानामेव समासेन रुत्वयत्वयलोपानां वारयितुमशक्यत्वात् । एवम् 'जस ईः' इति व्याख्यानेऽपि दोषः । सूत्रे भत्वेन तद्वारणमप्यनुचितम्, एतादृशव्याख्यानस्य सूत्रकृदभिमतत्वे प्रमाणाभावात् । अन्ये तु जस ई जसि । शब्दस्वरूपापेक्षनपुंसकह्रस्वत्वे 'सुपां सु' इति सप्तम्या लुका निर्देशो जस ईकारे ( शीभावे ) कर्त्तव्ये इत्यर्थः । तेनाकचि कर्त्तव्ये 'द्वन्द्वे च' इति नित्यनिषेध एव । अविशेषेण विभाषायान्तु पक्षेऽकचि तन्मध्यपतितन्यायात् 'वर्णाश्रमेतरकाः' इत्यत्र शीभावापत्तिः । के तु तद्विशिष्टस्य सर्वनामत्वाभावात् शीभावो न, अत्र 'द्वन्द्वे च' इति निषेध एव । अत्र मानन्तु 'जसः कार्यं प्रति विभाषा' इति प्रकृतसूत्रस्थभाष्यमेव । अन्ये तु अत एव भाष्याद् व्यवस्थितविभाषात्वमस्य वर्णयन्ति । जसः शीभावादन्यत्र कार्ये तु 'द्वन्द्वे च, इति नित्यनिषेधात्सर्वनामकार्याभावः ।

ननु द्वन्द्वावयवस्य निषेधाभावे 'पदाङ्गाधिकारे तस्य तदन्तस्य च' इति परिभाषया सर्वनामान्तादङ्गाद् विहितस्यावन्तात्परस्यामः सुडित्यर्थकेन सूत्रेण 'वर्णाश्रमेतराणाम्' इत्यत्र सुडापत्तिरिति चेन्न, अवर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्यामः सुडित्यर्थेन वर्णाश्रमेतररूपसमुदायस्य सर्वनामत्वाभावेन तत एवामो विहितत्वेन सुटोऽप्राप्तेः, सर्वनामान्तादङ्गाद्विहितस्येत्यर्थासङ्गतेश्च । विहिते सत्यङ्गत्वम्, न तु अङ्गाद्विहितत्वम् ।

ननु समुदायस्यैव न निषेधे इतरशब्दस्य सर्वनामत्वेन तदर्थगतकुत्सादिविवक्षायामकच् स्यात् तथा च सविशेषणानां वृत्तिर्न तन्मध्यपतितत्वेन ततः सुट् स्यादिति चेन्न, 'वृत्तस्य विशेषणयोगो न' इति वार्त्तिकादवयवार्थगतकुत्सायां प्रत्ययाप्राप्तेः, यमुद्दिश्याकज्विहितस्तद्ग्रहणेनैवाकज्घटितस्य ग्रहणात् प्रकृते इतरग्रहणेन इतरकस्य ग्रहणेऽपि तत आमो जसो वा विहितत्वाभावेन तयोरप्राप्तेश्च ।

उपाध्यायास्तु—कूपजलं गङ्गागतं सद् गङ्गाग्रहणेन यथा उद्देश्यत्वाभावेऽपि गृह्यते तथा वर्णाश्रमेतरगतोऽकज् वर्णाश्रमेतरग्रहणेन समुदायस्योद्देश्यत्वाभावेऽपि गृह्येतेति श्याद्यापत्तिर्दुष्परिहरेत्याहुः । तथा च स्वविशिष्टः स्वग्रहणेन गृह्यते इत्येव तन्मध्यपतितन्यायाभिप्रायः । वै. स्वसत्तोत्तरकालिकसत्ताकत्वम्, उभयतोभागेन स्वघटकसम्बद्धत्वं चोभाभ्यां सम्बन्धाभ्याम् । प्रकृतेऽकचि उभयसम्बन्धस्य सत्त्वेन श्याद्यापत्तिर्दुर्वारैव ।

न च प्राचीनमते द्वन्द्वे उत्तरपदार्थस्य विशेष्यतया भानेन सुन्दरो राजपुरुष इतिवत् कुत्सित इतर इति विशेषणसम्भवेनावयवस्य "द्वन्द्वे च" इति निषेधाभावे "अकज् हि न भवति" इति भाष्यासङ्गतिः, नव्यनये द्वन्द्वे समूहस्यैव विशेष्यत्वेनेतरस्य विशेषणतया तत्र विशेषणान्वयासम्भवात्, 'अकज् हि न भवति' इति भाष्येणावयवगतकुत्सार्थेऽकचोऽनभिधानकल्पनाच्च । जहत्स्वार्था वृत्तिरिति पक्षेऽवयवस्य निरर्थकत्वेन तत्र कुत्साद्यर्थस्य वक्तुमशक्यत्वात्, केचित्तु 'द्वन्द्वे च' इत्यप्यर्थकचेनावयवस्यापि निषेधमाहुः । तदाह 'वर्णाश्रमेतरकाः' इति । अत्र क एव ।

यदा तु कुत्सिता इतरे इति विवक्षायामकचं कृत्वा वर्णाश्चाश्रमाश्चेतरके चेति द्वन्द्वः क्रियते तदा "वर्णाश्रमेतरके, वर्णाश्रमेतरकेषाम्" इति शीभावादिर्भवत्येवेति दिक् । नेमशब्दस्य 'सर्वादीनि' इति प्राप्त्याऽन्यत्र चाप्राप्त्या प्राप्ताप्राप्तविभाषेयम् । अत्र 'विभाषा जसि' इति सर्वनामानीति

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । [ १-१-३३ ]**

एते जसः कार्यप्रत्युक्तसंज्ञका वा स्युः। प्रथमे, प्रथमाः। शेषं रामवत्। तयः प्रत्ययस्ततस्तदन्ता ग्राह्याः। द्वितये, द्वितयाः। शेषं रामवत्, नेमे, नेमाः। शेषं सर्ववत्।

'विभाषा प्रकरणे तीयस्य ङित्सूपसंख्यानम्' ( वा २४२ )। द्वितीयस्मै, द्वितीयाय इत्यादि। एवं तृतीयः। अर्थवद्ग्रहणान्नेह—पटुजातीयाय।

---

चानुवर्तते। एते—प्रथमादयः। उक्तसंज्ञका—सर्वनामसंज्ञकाः। अत्र न इति नानुवर्तते, प्रथमादिषु सर्वनामत्वाप्राप्तया निषेधासम्भवात्। रामवदिति—नेमशब्दं विहाय प्रथमादीनां सर्वादित्वाभावाद्रामवज्जस्भिन्नविभक्तौ रूपम्।

तयः प्रत्यय इति—'संख्याया अवयवे तयप्'५,२,४२ इति विहित इत्यर्थः। प्रत्ययस्यैव ग्रहणं न तु 'तय गतौ' इत्यजन्तस्य प्रातिपदिकस्य। 'प्रथमचरम' इति सूत्रमभिप्रेत्य उभयशब्दः सर्वादिषु पठ्यते तयपश्चायजादेशः क्रियते ....उभयत्र वेति' उभयशब्दमादाय 'प्रथम' इत्यत्र उभयत्र विभाषा शङ्कापरभाष्यप्रामाण्यात्, प्राङ्मते 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषाबलाच्च।

तदन्ता इति—'प्रत्ययग्रहणे' इति परिभाषया तदादिविशेष्यकतदन्तविधौ तयबन्ततदादय इत्यर्थः। तेन 'सुन्दरा द्वितयाः' इति समुदायस्य सर्वनामत्वे 'स्वाङ्गशिटाम्' इत्याद्युदात्तत्वं न। द्वितये इति—बहवो द्व्यवयवकसमुदाया इत्यर्थः।

एतेन द्व्यवयवसमुदायस्यैकत्वाद् 'द्वितये' इति बहुवचनमसाधु इति परास्तम्। उद्भूताव-यवसंख्याविवक्षया साधुत्वं तु न, अवयवे द्वित्वस्यैव सत्त्वेन बहुत्वासङ्गतेः।

तीयस्येति--अर्थवद्ग्रहणपरिभाषया प्रत्ययस्यैव तीयस्य ग्रहणम्। तेन पटुजातीयाय इत्यत्र न, प्रत्ययैकदेशस्यानर्थकत्वात्। ईषदूनाय पटवे इत्यर्थः। द्वयोः पूरणः, त्रयाणां वा पूरण इत्यर्थे 'द्वेस्तीयः' इति, 'त्रेः सम्प्रसारणञ्च' इति सूत्राभ्यां द्वितीयतृतीयौ साधू।

अत्र 'जसाधारम्' इत्युक्तौ यद्यपि नेमशब्देऽकचि सर्ववद्रूपम्, सर्वनामत्वाभावे के रामवत्। सर्वत्र विकल्पेन सर्वनामत्वेऽपि रूपद्वयमेवेति दोषाभावस्तथाऽपि प्रथमादिषु सर्वत्र रूपद्वया-भावाय 'जसाधारे' इत्युक्तिः। ननु 'द्वितीयो भागः' इत्यर्थे 'पूरणाद् भागे तीयादन्' इत्यन्प्रत्यय-निष्पन्नद्वितीयशब्दस्य सर्वनामत्ववारणाय 'लक्षणप्रतिपदोक्त' परिभाषया प्रतिपदोक्ततीयग्रहणाद् 'द्वितीयाय भागाय' इत्येवेति नागेशः।

उपाध्यायास्तु अ ( अन् ) प्रत्ययान्तस्तीयोऽनर्थक एव, तीयप्रत्ययान्तादनो विहितत्वेन 'द्वितीय' इति प्रकृतेरर्थवत्त्वम् 'अ' इति प्रत्ययस्य च। प्रकृत्येकदेशविशिष्टः 'तीय' इत्यनर्थक एव 'रामाभ्याम्' इत्यत्र 'भ्याम्' इतिवत्। एवञ्च अर्थवत्परिभाषयैवैतस्यापि व्यावृत्तौ प्रतिपदोक्तस्ये-त्युक्ति र्व्यर्थैवेत्याहुः।

प्रथम इति प्रथ्यते = प्रख्यायते आदौ इति 'प्रथ प्रख्याने' इत्यतः 'प्रथेरमच्' ( उ. ५।६८ ) इत्यमचि साधु। 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी। चरमः—चरति—भक्षय-त्यग्रिमिमिति चरमः। चरते ( चरेश्च ) ( उ. ५।६९ ) रमचि साधु। 'अन्तो जघन्यं चरममन्त्यपाश्चा-त्यपश्चिमाः' (अ. ३ का. ८१) इति, अल्पः—अल्पते—वार्यतेऽधिकमित्यल्पः। अल् भूषणादौ ततो बाहुलकात्पे अल्पः 'स्तोकाल्पक्षुल्लकाः' (अ. ३ का. ६१) इति, अर्द्ध-ऋध्यति—वर्द्धते इत्यर्द्धः। अर्ध-शब्दो द्विविधः—खण्डवाची समांशवाची च। तदुक्तम्—'भिन्नं शकलखण्डे वा पुंस्यर्धः' इति। अत्रा-द्यस्य ग्रहणम्, न द्वितीयस्य 'अर्धं समेंऽशके' ( अ. १ का १६ ) इति च, नित्यनपुंसकत्वेन फला-भावात्। कतिपय इति—कतिशब्दादयच् प्रत्ययः पुगागमश्च निपात्यते। संख्याभेदपरिज्ञानाय पृष्टेऽर्थे। नेमः—नयति समांशत्वं प्राप्नोतीति नेमः। नीधातोरौणादिके 'अर्तिस्तु' ( उ. १ पा. १४० ) इति मनि साधु।

निर्जरः ।

जराया जरसन्यतरस्याम् । [ ७-२-१०१ ]

जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ ।

'पदाङ्गाधिकारे तस्य च तदन्तस्य च' ( पं ३० ) ।

अनेकाल्त्वात्सर्वादेशे प्राप्ते 'निर्दिश्यमानस्यादेशा भवन्ति' ( प १३ ) । एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः ।

निर्जर इति—जीर्य्यते शरीरमनयाऽवस्थयेति जरा, 'जॄष् वयोहानौ' इत्यतः 'षिद्भिदादिभ्योऽङ्' इत्यङि जरेति । जराया निष्क्रान्तो, निर्गता जरा यस्येति वा निर्जरः । तत्र देवे नित्यपुंलिङ्गः । तदुक्तम्—'निर्जरः स्यात्पुमान् देवे जरात्यक्ते च वाच्यवत्' इति । वाच्यवद्=विशेष्यनिघ्नः ।

जराया जरस् इति । ( ७–२–१०१ ) अत्र 'जरायाः' इत्यस्य शब्दस्वरूपपरकत्वेऽप्यर्थगतं स्त्रीत्वं शब्दे आरोप्य स्त्रीलिङ्गनिर्देशः । अत्र 'अङ्गस्य' इत्यधिकृतम्, 'अष्टन आ विभक्तौ' इत्यतो विभक्ताविति, 'अचि र ऋतः' इत्यतोऽचीति चानुवर्तते । अल्बोधकं पदं यदि सप्तम्यन्तार्थस्य विशेषणं स्यात्तदा 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादौ कार्य्यं स्यात् ।

प्रकृते 'अचि' इत्यल्बोधकं विशेषणम् 'विभक्तौ' इति विशेष्यं तथा च अजादौ विभक्तौ परत इत्यर्थ उपलभ्यते । 'अङ्गस्य' इति विशेष्यम्, जराया इति विशेषणम् । तथा च 'येन विधिः' इति तदन्तविधौ जराशब्दान्तस्य अङ्गस्य इत्यर्थो लब्धः । तत्र अङ्गस्येति स्थानषष्ठ्या 'निर्दिश्यमान'—परिभाषोपस्थित्या निर्दिश्यमानस्येत्यस्योपस्थित्या जराशब्दान्तस्याङ्गस्यावयवो यो निर्दिश्यमानः षष्ठ्योच्चार्या बोधितो ऽजादिविभक्त्यव्यवहितपूर्वः तस्य जरसादेशः स्यादित्यर्थः । तेन 'निर्जर औ' इत्यत्र जरेत्यस्य जरसादेशे 'निर्जरसौ' इति रूपम् ।

न चात्र जराशब्दान्तमङ्गम्, न तु जराशब्दान्तम् । तथा च 'जरायाः' इति षष्ठीप्रकृत्युपस्थापितजरारूपनिर्दिश्यमानाभावाज्जरसादेशो न स्यादिति वाच्यम्, 'एकदेशविकृतमनन्यवत्' इति परिभाषया छिन्नपुच्छे शुनि श्वत्वव्यवहारवत् जरशब्दस्यापि जरारूपत्वस्वीकारे बाधकाभावात् । एतत्सर्वं मनसि निधायाऽऽह—

पदाङ्गाधिकारे इत्यादि—पदस्य, अङ्गस्य चाधिकारे तस्य (सूत्रोपात्तस्य) इदं व्यपदेशिववद्भावलभ्यम्, एकस्मिन् पुत्रे ज्येष्ठत्वादिव्यवहारवत् । तदन्तस्येति । 'येन विधिः' इति संज्ञया यस्मिन् विधिरिति च लब्धम् । एवञ्च 'पदाङ्गाधिकारे' इति परिभाषा नापूर्वा । किन्तु व्यपदेशिवद्भावपरिभाषा, येन विधिरिति लब्धार्थानुवादिका । तत्र पदाधिकारपदेन 'उत्तरपदे' इति, 'पदस्य' इति च गृह्यते । तत्र उत्तरपदाधिकारे प्रयोजनम् 'इष्टकेषीकामालानाम्' इति इष्टकचितम्, पक्वेष्टकचितम् उभयत्रापि पूर्वपदस्य ह्रस्वः । केवलपदाधिकारे प्रयोजनम्, वसुस्रंसुध्वंस्वनडुहां दः' इति । 'अनडुद्भ्याम्' 'परमानडुद्भ्याम्' इति । इदञ्चानित्यम् । अत एव 'अल्लोपोऽनः' इत्यत्र 'अङ्गावयवो योऽन्' इत्येवार्थो न तु अनन्तं यदङ्गमिति । अत्रत्यं भाष्यमेवात्र मानम् ।

एकदेशेति—एतच्च यद्यपि लोकन्यायसिद्धम्, तथाप्यत्राश्रयणे मानञ्च–'प्राग्दीव्यतोऽण्' इत्यत्र 'तेन दीव्यति खनति' इति सूत्रस्थस्य दीव्यतीत्यस्य य एकदेशो दीव्यदिति तदनुकरणं दीव्यदित्येव । तथा हि—'अण्' इत्यधिक्रियते । कियत्पर्यन्तमधिकार इत्याकाङ्क्षायामाह—प्राग् दीव्यति इति ।

अत्र 'दीव्यत्' इति शब्दस्वरूपपरस्तथात्वे दीव्यत्शब्दघटितात् 'तेन दीव्यति' इति सूत्रात्प्राग् यावन्ति प्रत्ययनिर्देशरहितानि सूत्राणि स्युस्तेषु सर्वेषु अणोऽधिकारः स्यात् । एवञ्च 'बाह्वादिभ्यश्च' 'शुभ्रादिभ्यश्च' 'द्व्यचः' इत्यादिषु प्रत्ययनिर्देशरहितेष्वपि अणिति सम्बन्ध्येत । तद्वारणाय प्राग् दीव्यतोऽण्' इत्यत्र दीव्यच्छब्देन तदर्थ एवावधित्वेन ग्राह्यस्तथा सति दीव्यदर्थात्प्राग् ये अर्थास्तद्बोधकपदघटितसूत्रेष्वेवाणोऽधिकारस्वीकारे 'तस्यापत्यम्' 'तेन रक्तं रागात्' सोऽस्य देवता'

इनादीन्बाधित्वा परत्वाज्जरस्। निर्जरसा। निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकृता तु 'पूर्वविप्रतिषेधेनेनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसात् इति रूपे, न तु निर्जरसा निर्जरस इति केचित् इत्युक्तम्। तथा भिसि निर्जरसै रिति रूपान्तरमुक्तम्।

---

इत्यादिष्वर्थबोधकं पदं तद्घटितेष्वेवाणः सम्बन्धो नान्यत्रेति न दोषः। अयमर्थश्च 'अवध्यावधिमतोः साजात्यनियम इति सिद्धान्ताल्लभ्यः।

एतच्च "दीव्यत्" शब्दस्यार्थवत्त्वे एव सम्भवति। तथा च 'एकदेशविकृत' इति न्यायः।

इनादीन् बाधित्वेति—"विप्रतिषेधे परं कार्य्यम्" ( पा० १-४-२ ) इति सूत्रेण परस्य "जराया जरस्" इत्यस्य बलवत्त्वबोधनादिति भावः। "टाङसिङसाम्" इत्यस्य रामादिशब्दे "जराया जरस्" इत्यस्य "जरसौ" इत्यादिषु सावकाशस्यान्यत्र लब्धावकाशयोरेकत्र प्राप्तिरूपतुल्यबलत्वसत्त्वेन पूर्वं जरसादेशेऽदन्तत्वाभावेनेनाद्यप्राप्तेरिति भावः। न च स्थानिवद्भावेनादन्तत्वम्, अनल्विधाविति निषेधात्। अदन्तत्वस्याल्धर्मत्वाभावेऽपि अस्वरूपाल्धर्मघटितत्वेनाल्मात्रवृत्तिधर्मघटितधर्मनिमित्तकेऽपि अनल्विधावित्यस्य प्रवृत्तेः सर्वसम्मतत्वात्। अत एव "खट्वाभिः" इत्यत्रैस् न। पक्षे इति—जरसोऽभावपक्षे इत्यर्थः। रामवदिति—रूपमिति शेषः।

वृत्तिकृतेति—धातुवृत्तौ माधवेनेत्यर्थः। तत्र हि—"जरामतिक्रान्तं ब्राह्मणकुलम्, अतिक्रान्तैः कुलैरिति विगृह्य "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समस्य सोरम्भावे भिसश्चैसि सन्निपातपरिभाषाया अनित्यत्वाश्रयेणाजादित्वमाश्रित्य जरसादेशे "अतिजरसम्" "अतिजरसैः" इति भाष्यम्। तथा टाङस्योरपि जरसादेशात्पूर्वम् इनादादेशयोः पश्चाज्जरसादेशे "अतिजरसिन" "अतिजरसात्" इति केचित्" इत्युक्तम्।

अत्र "केचित्" इत्युक्तया नेदं माधवमतमिति प्रतीयते। अत एवाग्रे तत्रैव "गोनर्दीयस्तु सर्वत्र परिभाषाप्रवृत्तेस्सोरमि भिसश्चैसि टाङस्योरिनादादेशयोश्च जरसादेशाभावात् "अतिजरम्, अतिजरैः, अतिजरेण, अतिजरात्, इत्याह" इत्युक्तम्। ननु इनाद्यादेशान् परत्वाद्बाधित्वा जरसादेशे पुनरिनाद्यप्राप्तेः कथमुक्तरूपाणीत्याह।

पूर्वविप्रतिषेधेनेति—विप्रतिषेधशब्दोऽत्र स्वप्रयोज्यबलवत्त्वपरस्तथा च पूर्वस्य बलवत्त्वेनेत्यर्थः। ननु "विप्रतिषेधे परम्" इत्युक्तया पूर्वस्य बलवत्त्वे बीजाभाव इति चेन्न, "टाङसि" इति सूत्रेण नादेश एव विधेयः। "बहुवचने झल्येत्" इत्यतः परम् "आङोसोः" आङि ओसि च अदन्ताङ्गस्यैत्वं स्यादित्यर्थेन "रामेण" "रामयोः" इत्यनयोः नादेशे एत्वे च सिद्धे, इग्रहणं व्यर्थीभूय कल्पयति—पूर्वस्य इनादेशस्य परजरसादेशापेक्षया बलवत्त्वमिति। यत्तु 'विप्रतिषेधे परं कार्य्यम्' इति सूत्रेण पूर्वस्य इनातोर्बलीयस्त्वम्। नचात्र परशब्दोपादानात्तेन पूर्वस्य बलीयस्त्वासम्भव इति वाच्यम्, तत्र परशब्दस्येष्टार्थकत्वेन भाष्ये व्याख्यानात्।

अत्र पूर्वस्यैवेष्टत्वादिति तन्न, परशब्दस्येष्टवाचित्वेन पूर्वस्येनादेर्बलवत्त्वबोधनस्यासङ्गतत्वात्। लक्ष्यैकचक्षुष्काणामिष्टानिष्टत्वस्य ज्ञातुमशक्यत्वात्। न च इनादाविकारादिग्रहणवैयर्थ्येन पूर्वस्येष्टत्वमत्र ज्ञाप्यते इति वाच्यम्, एवं सति ज्ञापनेनैव पूर्वस्य बलीयस्त्वसिद्ध्या परशब्दस्येष्टवाचित्वेन तत्कल्पनस्य निष्फलत्वात्। न चैवमपि सन्निपातपरिभाषया जरसोऽप्राप्तिः, तथा सति पुनरिकारग्रहणं व्यर्थीभूय 'यावता विनाऽनुपपन्नं तत्सर्वं ज्ञापयति' इति न्यायेन जरसादेशे कर्तव्ये संनिपातपरिभाषा न प्रवर्तत इत्यस्यापि ज्ञापनात्।

तथा च जरसादेशे सन्निपातपरिभाषाया अप्रवृत्त्या इनातोः कृतयोर्जरसादेशे निर्जरसिन निर्जरसात् इति रूपे भवतः।

तथेति—'अतो भिस् एस्' इत्येव वक्तव्ये ऐस्करणमपि पूर्वमैसादेशस्ततो जरसादेशं ज्ञापयति। अतो भिस इति ऐसादेशे सन्निपातपरिभाषाया अप्रवृत्त्या जरसादेशे 'निर्जरसैः' इति पक्षे निर्जरैः, इति।

तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्य' इत्येव रूपमिति स्वीकृतम्। एतच्च भाष्यविरुद्धम्।

तदनुसारिभिरिति—जरसादेशं बाधित्वा पूर्वविप्रतिषेधेनेनादयो भवन्तीति मतानुसारिभिरित्यर्थः। इनादिसाहचर्य्यात्स्यादेशोऽपूर्वविप्रतिषेधेन जरसादेशं बाधेतेति निर्जरस्येत्येकमेव रूपं स्वीकृतमिति भावः। एतन्मतानुसारिभिरेव 'वीतजन्मजरसः परं शुचि ब्रह्मणः पदम्' इति भारविप्रयोगासङ्गतिवारणाय 'वीतजन्मरजसः' इति विपरिणम्यते। अन्यथा एतन्मते 'वीतजन्मजरस्य' इति भवितव्यं स्यादेशेन जरसो बाधात्। वस्तुतस्तु पूर्वविप्रतिषेधमतं भाष्यविरुद्धमिति 'वीतजन्मजरसः' इति साध्वेव, स्यादेशं बाधित्वा वैकल्पिकजरसादेशस्यैवेष्टत्वात्।

नागेशमते तु विभक्त्यादेशा एव पूर्वविप्रतिषेधेन, न तु परत्वाज्जरस्। अत एव 'जरायाः' इति सूत्रे भाष्ये 'अजरांसि' इत्यत्र 'नुम्जरसोः प्राप्तयोः परत्वाज्जरस्' इति भाष्योक्तिः संगच्छते। परत्वाज्जरसः स्वीकारे तु 'अजर अस्' इत्यवस्थायामसः 'अनपुंसकस्ये'ति प्रतिषेधात्सर्वनामस्थानत्वाभावेन नुमोऽप्राप्त्या शिभावं परत्वाद् बाधित्वा जरसादेशे ततः शिभावे नुमि प्राप्ते तदानीं जरसादेशस्य पूर्वमेव जातत्वेन 'नुम्जरसोः प्राप्तयोः' इति भाष्यासङ्गतिः स्यात्।

जरसादेशं बाधित्वा पूर्वविप्रतिषेधेन शिभावरूपे विभक्त्यादेशे कृते तु नुम्जरसोर्युगपत्प्राप्त्या परत्वाज्जरस् इति भाष्यं संगच्छते इति 'वीतजन्मजरस्य' इत्येव स्यादिति 'रजसः' इति पाठ एव ज्यायान् इति।

वस्तुतस्तु 'नुम्जरसोः प्राप्तयोः परत्वाज्जरस्' इति भाष्योक्त्या विभक्त्यादेशस्य पूर्वविप्रतिषेधकल्पनाऽयुक्तैव। भाष्यन्तु 'अजर-अस्' इति दशायां शिभावे जरसि च प्राप्ते परत्वाज्जरसेव स्यादित्युक्ते नित्यत्वात् शिभाव एव स्यात् जरसादेशे कृतेऽपि शिभावप्राप्तेस्तस्य नित्यत्वम्।

न च शिभावे कृते जरसादेशस्यापि प्राप्त्या जरसादेशोऽपि नित्य इत्युभयोर्नित्यत्वे परत्वात् जरस् एव स्यादिति वाच्यम्, शिभावे कृते नुमि सति नुम्विशिष्टस्य निर्दिश्यमानत्वाभावेन नुम्रहितस्य नुमा व्यवधानादजादिविभक्त्यव्यहितपूर्वत्वाभावेन च जरसोऽप्राप्त्या जरसोऽनित्यत्वेन नित्यत्वाज्जरसादेशं बाधित्वा शिभाव एव स्यादित्युक्ते यदि जरसादेशात्पूर्वं नुम् स्यात्तदा जरसादेशाप्राप्त्या जरसोऽनित्यत्वं वाच्यम्, तदेव तु न, नुम्जरसोः प्राप्तयोः परत्वाज्जरस् एव स्यादिति जरसोऽपि नित्यत्वं शिभावस्यापि नित्यत्वमिति परत्वात् शिभावं बाधित्वा जरस् एव स्यादिति जरसो नित्यत्वप्रदर्शनपरं तद्भाष्यमिति न तेन विभक्त्यादेशो जरसादेशात्पूर्वविप्रतिषेधेन कल्पयितुं शक्यमिति पूर्वविप्रतिषेधपरं नागेशोक्तं चिन्त्यमिति बा० कृ० पञ्चोलिनः।

न चाकृतेऽपि जरसि अजन्तत्वान्नुम् प्राप्नोति, कृते जरसि झलन्तत्वान्नुमः प्राप्तिरिति नुमो नित्यतया नुमः परत्वाज्जरसि भाष्यासङ्गतिरिति वाच्यम्, शब्दान्तरस्य प्राप्नुवद्विधिरनित्य इति नुमोऽनित्यत्वेन परत्वाज्जरसिति भाष्यासङ्गतेरभावात्।

एतच्चेति—पूर्वविप्रतिषेधेनेनादिविधानं सन्निपातपरिभाषाया अनित्यत्वेन जरसादेशकरणञ्चेत्यर्थः।

भाष्यविरुद्धमिति—भाष्यकृता 'टाङसिङसामिनात्स्याः' इति न्यस्य टास्थाने न इति, ङसेः स्थाने अत् इति आदेशं कृत्वा 'रामेण' इत्यादीनां सिद्धये योगविभागः कृतः। तथा हि—'बहुवचने झल्येत्' 'ओसि च' 'आङि च' 'आपः सम्बुद्धौ च' तत्र 'आङि च' अत्र एदिति अनुवर्तते। अदन्ताङ्गस्य एत्वं स्यादाङि परे। 'राम टा' इत्यत्र टाया न आदेशे 'आङि च' इत्येत्वे 'रामेण' सिध्यति। 'आपः सम्बुद्धौ च' इत्यस्य आबन्ताङ्गस्य एत्वं स्यादाङि ओसि सम्बुद्धौ च इति रमे, रमया, रमयोरिति सिध्येत्। न च नादेशे 'अनेन' इति न सिध्येत् 'हलि लोपः' इतीदो लोपे 'एत' इति स्यादिति वाच्यम्, 'अनाप्यकः' इति द्विनकारकोऽनिर्देशः। 'अन् नानि अकः' इति। इदोऽन् स्यात् ने आपि च, इति लोपं बाधित्वा ने परे अनादेशे 'अनेन' इति सिध्येत्।

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छ्प्रभृतिषु । [ ६-१-६३ ]

पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष् यकृत् शकृत् उदक आस्य एषां पदादय आदेशाः स्युः शसादौ वा ।

'झलि लोपः' इति न्यासेन तु न लोपवारणं सम्भवति, छन्दसि इदमश्चतुर्थ्येकवचने 'सुपां सुलुक्' इति यादेशे 'अयाविष्टाजनयन्' इत्यत्र 'अया' इति प्रयोगे झलादित्वाभावाल्लोपानापत्तेः । 'अन् नापि' इत्यत्र नश्चाप् चेति समाहारद्वन्द्वः । अनो नकारस्य सूत्रे 'न लोपः प्रातिपदिकान्तस्य' इति नकारलोपे 'अनाप्यकः' इति यथाश्रुतमेव सूत्रम् । अन् इति नपुंसकनिर्देशेन सो लुकि 'न लुमताङ्गस्य' इति निषेधात् 'सर्वनामस्थाने च' इति दीर्घाभावः । 'रामात्' इत्यत्र ङसेरदादेशे सवर्णदीर्घे सिध्येत् । 'अतो गुणे' इति पररूपन्तु न, अकारोच्चारणसामर्थ्यात् । न च सर्वादेशार्थं तत् 'त्' आदेशेऽपि 'अलोऽन्त्यस्य' इति सकारस्य तादेशे 'रामात्' इति रूपसिद्धेरकारोच्चारणवैयर्थ्येन पररूपबाधात् ।

एवं योगविभागेन 'इन' इत्यत्र इकारग्रहणम्, 'आत्' इत्यत्र दीर्घग्रहणञ्च प्रत्याख्यातम् । यदि 'अतिजरसिन' 'अतिजरसात्' इत्येतदर्थं स्यात्तदा प्रत्याख्यानं विरुध्येत । तस्मात् परत्वात् जरसादेशपक्षे 'अतिजरसा' 'अतिजरसः' इत्येवेष्टम् । जरसादेशाभावपक्षे 'अतिजरेण' 'अतिजरात्' इति भिसि च 'अतिजरैः' इत्येव । अत एव 'जराया जरस्' इति सूत्रे 'अतिजरैः' इत्येव भवितव्यं संनिपातपरिभाषया' इति भाष्ये उक्तम् ।

अतः पूर्वविप्रतिषेधेन विभक्त्यादेश इति नागेशोक्तिः वृत्त्याद्य किञ्च चिन्त्या । एतेन 'अतो भिस्' इति सूत्रे एस् इति वक्तव्ये ऐस्करणम् 'अतिजरसैः' इत्येतदर्थमित्यपि परास्तम्, किञ्च 'बहुलं छन्दसि' ( ७-१-१० ) इत्यत्र ऐस् इत्यस्यानुवृत्त्या अनतोऽपि भवति' 'नद्यैः' इति, एस्करणे तु न सिध्येत् ।

पद्दन्नोमास् इति । 'शस्प्रभृतिषु' इति निमित्तोपादानात्पदाद्यादेशानुरूपाः प्रकृतिरूपाः स्थानिन आक्षिप्यन्ते । पदाद्यादेशानुरूपत्वञ्च—स्वघटकहल्घटितत्व-स्वबोध्यार्थबोधकत्वाभ्याम् । तेन चरणशब्दस्य न पदादेशः, आसनशब्दस्य च न आसन् आदेशः, आदेशस्य आसन्' इत्यस्य मुखवाचकत्वस्य वक्ष्यमाणत्वात् । यद्यपि आदेशानां स्थान्यर्थेनैवार्थवत्त्वस्य सर्वत्र दर्शनात् स्थानिनिर्णयं विना आदेशानामर्थनिर्णयो दुर्वच इति आदेशानुरूपाः स्थानिन आक्षिप्यन्ते इति वचनं नौचितीमावहति ।

तथाऽपि पदाद्यादेशघटितवाक्येषु प्रकरणादिना स्वान्वययोग्यार्थान्तराच्च पदाद्यादेशानामर्थदर्शनेन कथञ्चित् स्वानुरूपत्वस्य वक्तुं शक्यत्वात् । पदशब्दस्य तु न पदादेशानुरूपत्वम् नित्यन'स-कत्वात्, पच्छब्दस्य पुंवाचकत्वात् ।

अत्र 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यतोऽन्यतरस्यामित्यनुवर्तते । अत एव तुल्यास्यसूत्रादिभाष्ये 'आस्ये तुल्यः' 'पादेनोपहतम्' 'मासेन पूर्वाय' इत्यादयः 'हृदयस्य प्रिय' इति सौत्रप्रयोगाश्चोपपन्ना भवन्ति । 'ये च तद्धिते' इत्यत्रान्यतरस्यामिति नानुवर्तते, 'वा केशेषु' इत्यत्र वाग्रहणवैयर्थ्यापत्तेः ।

नागेशास्तु अत्र अन्यतरस्यामिति नानुवर्तते, अत एव 'शीर्षंश्छन्दसि' इति सूत्रे 'शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरश्शब्दस्य प्रयोगो न स्यात्, इति भाष्योक्तिः संगच्छते । अन्यथा तत्रापि विकल्पानुवृत्तौ शिरश्शब्दस्य प्रयोगसम्भवेन भाष्यासङ्गतिः स्यात् । किञ्च न पदादय आदेशाः, किन्तु प्रकृत्यन्तराण्येव । अत एव 'ये च तद्धिते' इत्यत्रादेशत्वाय शिरसो ग्रहणं कर्तव्यमिति भाष्योक्तिः सङ्गच्छते । अन्यथा शीर्षन्नादेशेन स्वानुरूपस्थानिनः शिरस आक्षेपेणैव सिद्धे 'शिरसोग्रहणम्' कर्तव्यमित्यसङ्गतं स्यात् ।

यत्तु 'आसनशब्दस्यासन्नादेशः' इति काशिकायामुक्तं तत्प्रामादिकम्। पादः। पादौ। पादाः। पादम्। पादौ। पदः, पादान्। पदा, पादेनेत्यादि।

## सुडनपुंसकस्य। [ १-१-४३ ]

सुडिति प्रत्याहारः। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य।

---

एवञ्च यत्र स्थानी न निर्दिश्यते तत्र प्रकृत्यन्तराण्येव बोद्धव्यानीति पदादयः प्रकृत्यन्तराण्येव न त्वादेशभूताः। सूत्रन्तु पदादीनां हलन्तानां शसादिष्वेव प्रयोग इति नियमार्थमेव। यत्र स्थानिनिर्देशो नास्ति तत्र सर्वत्र प्रकृत्यन्तरत्वमेव।

'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठदूषणावसरे भाष्यकृता पदाद्यादेशानां पादादिरूपस्थान्यन्यथासिद्धयकरणादपि प्रकृत्यन्तरत्वमेव ध्वनितम्। प्रकृत्यन्तरत्वे तु प्रत्याख्यानमेव सूत्रस्योचितम्, शसादितोऽन्यत्रापि प्रयोगदर्शनेन प्रभृतिग्रहणस्य प्रकारार्थताया वक्ष्यमाणत्वादितिप्रसक्तस्यानभिधानाश्रयणेनैव निरासात्। भाष्ये यद्यपि 'शीर्षंश्छन्दसि' इत्यतः 'छन्दसि' इत्यस्यात्रानुवृत्तिर्दृश्यते। तथाऽपि 'मासश्छन्दसि' इत्यत्र छन्दोग्रहणेन भाषायामपि एते आदेशा इति नपुंसके वक्ष्यते।

प्रामादिकमिति। 'आस्नो वृकस्य वर्तिकाम्' इति मन्त्रे मुखादित्यर्थदर्शनात्, 'वृकस्यचिद्वर्तिकामन्तरा स्यात्' इति मन्त्रे आस्यस्यैव प्रकृतत्वाच्च। एवं 'हव्या जुह्वान आसनि' इत्यत्र, 'आसन्यं प्राणमूचुः' इत्यत्र च मुखार्थकत्वदर्शनाच्च। काशिकाव्याख्यायां पदमञ्जर्याम् 'आस्यशब्दस्तु पठितव्यः' इत्युक्तेश्च। आसन् इत्यस्य स्थानित्वेन आस्यशब्द एव पठितव्य इत्यर्थः।

पद्यते=गम्यतेऽनेनेति पादः, 'अकर्तरि च कारके' इति करणे घञि रूपम्। दन्त इति 'दमु शमनायाम्' इत्यतः। 'मृगॄ' ( उ. ३पा. ८६ ) इति तन्प्रत्यये दाम्यति यो येन वा जिह्वाम् इति दन्तः। सुटि रामवत्। शसि पदादेशे 'दत् अस्' इति स्थितौ 'स्वादिषु' इति पदत्वे 'झलां जशोऽन्ते' इति जश्त्ववारणक्रमं दर्शयन् सर्वनामस्थानसंज्ञामाह—

'सुडनपुंसकस्य' इति। स्त्री च पुमांश्च 'अचतुर' ( ५-४-७७ ) इत्यचि स्त्रीपुंसौ तस्य नञा समासे 'नभ्राण्नपात्' ( ६-३-७५ ) इति नञः प्रकृतिभावः स्त्रीपुंसशब्दस्य पुंसकादेशश्च निपात्यते इति नपुंसकशब्दः सिध्यति। वस्तुतस्तु 'अनपुंसकस्य' इति निर्देशादेव निपातनान्नपुंसकशब्दः सिध्येत्, 'नभ्राण्नपात्' इति सूत्रे नपुंसकग्रहणं न कर्तव्यम्।

ननु 'अनपुंसकस्य' इत्यत्र समासो न स्यात्। नञः नपुंसकशब्देनासामर्थ्यात्। तदुक्तं भाष्ये—असमर्थसमासश्चायं द्रष्टव्योऽनपुंसकस्येति, न हि नञो नपुंसकेन सामर्थ्यम्, 'केन तर्हि' 'भवतिना' इतीति चेन्न, अत एव निपातनादसमर्थसमासो भवतीति ज्ञाप्यते। असमर्थसमासस्य 'बहूनि प्रयोजनानि सन्ति। कानि? असूर्यंपश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी ब्राह्मण इति' इत्युक्तं भाष्ये।

प्रत्याहार इति—टाटकारेण तु न प्रत्याहारः, प्रतिपदोक्तपरिभाषया अन्त्यत्वेन यस्येत्संज्ञा तस्यैव ग्रहणादनन्तरत्वादौटष्टकारोच्चारणसामर्थ्याच्चौटष्टकारेणैव प्रत्याहारः। एतेन फलाभावेन च सुडागमस्यापि ग्रहणं निरस्तम्।

'सुडशीः' इति तु न सूत्रितम्, 'ज्ञानम्' इत्यत्र सन्निपातपरिभाषया नुम्वारणसम्भवेऽपि 'अजरसं पश्य' इत्यादौ दीक्षितमते झलन्तलक्षणनुमापत्तेः।

यदि तु 'नपुंसकस्य झलचः' इत्यत्र सर्वनामस्थाने इति नानुवर्तनीयम् 'शौ' इति पाठ्यम्, झलन्तस्याजन्तस्य च नपुंसकस्य शौ नुम् इत्यर्थेन 'अजरसम्' इत्यत्र नुमोऽप्राप्त्या 'ज्ञानानि' 'तिर्यञ्चि' इत्यादौ नुम्सिध्या च 'सुडशी' इति न्यासः सुवचः। न च 'सर्वे' इत्यत्र भत्वे 'यस्येति च' इत्यल्लोपापत्तिः, औङ इत्यकृत्वा 'श्यां प्रतिषेधः' इति करणेनैवालोपवारणात्।

स्वादिष्वसर्वनामस्थाने । [ १-४-१७ ]

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ।

यचि भम् [ १-४-१८ ]

यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् ।

न च लाघवाभावः, 'शि सर्वनामस्थानम्' इति सूत्राकरणेन लाघवसत्त्वात् । नचासामर्थ्य-समासज्ञापनासम्भवः, 'असूर्य्यललाटयोर्दृशितपोः' इति निर्देशेनैव तज्ज्ञापनसम्भवादित्यन्यत्र विस्तरः ।

स्वादिषु इति—सुरत्र प्रथमैकवचनमेव, असर्वनामस्थाने इति पर्युदासात् 'तदनुबन्ध-कग्रहणे नातदनुबन्धकग्रहणम्' इति वचनाच्च । स्वादिष्वित्यनेन न सुप्प्रत्ययस्य ग्रहणम्, आदिग्रहण-वैयर्थ्यापत्तेः । 'सुपि' इत्यनेनैव प्रत्याहारग्रहणसिद्धेः ।

सुरत्र प्रत्ययस्तत्साहचर्य्यादत्रान्यपदार्थोऽपि प्रत्ययसमुदाय एव गृह्यते । कपोऽनन्तरं प्रत्य-याभावात् कपस्त्यागे मानाभावाच्च कबन्तस्यैव प्रत्ययसमुदायस्य ग्रहणम् । उद्भूतावयवसंख्याविव-क्षया स्वादिष्विति बहुवचनम् । कप्प्रत्ययावधि स्वादिसमुदायपरत्वासम्भवेन स्वादिसमुदायघटके परत इत्यर्थः । ननु कप्प्रत्ययान्तस्वादौ पदत्वविधानं व्यर्थम्, सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात्प्रत्यय-लक्षणेन सुपमादाय तद्धिते परतः 'सुप्तिङन्तम्' इत्यनेनैव पदत्वसिद्धेरिति वाच्यम्, अनेन पदसंज्ञायाः फलाभावेऽपि कबन्ते यजादौ स्वादौ परतः भसंज्ञारूपफलसत्त्वात् । तत्र भसंज्ञायाम् 'यस्येति च' 'नस्तद्धिते' इत्यादिना लोपादीन्येव फलानि ।

न च 'राजा' इत्यादौ सौ 'असर्वनामस्थाने' इति निषेधात्पदत्वाभावे नलोपो न स्यादिति वाच्यम्, एवं सति 'हे राजन्' इति संबुद्धावपि पदत्वाभावेन नलोपाप्राप्त्या 'न ङिसंबुद्ध्योः' इत्यत्र संबुद्धिग्रहणं व्यर्थीभूय ज्ञापयति—प्रत्ययलक्षणेन सुपमादाय 'असर्वनामस्थाने' इति निषेधो न भवति, इति निषेधाप्राप्तेः ।

न च 'हे चर्मन्' इति नपुंसके न लुमतेति प्रत्ययलक्षणनिषेधात् 'असर्वनामस्थाने' इति निषेधाप्राप्त्या संबुद्धिग्रहणस्य चारितार्थ्यम्, तत्रापि न लुमतेति निषेधात्सम्बुद्धिपरत्वाभावेन संबुद्धि-ग्रहणस्य चारितार्थ्याभावात् ।

न च 'ङिसम्बुद्ध्योः' इति षष्ठ्यन्तमेव, ङ्यन्तस्य सम्बुद्ध्यन्तस्य च नलोपो न स्यादित्यर्थे लुप्तप्रत्ययपरकाङ्गकार्य्याभावान्निषेधाप्रवृत्त्या सम्बुद्धिग्रहणस्य चारितार्थ्येनोक्तज्ञापनासम्भवे 'राजा' इत्यत्र दोषतादवस्थ्यम्, सप्तम्यन्तपाठे 'न लुमता' इत्यस्यानित्यत्वज्ञापने 'सम्बुद्धौ नपुंसकानां नलोपो वा' इति वार्तिकाकरणलाघवेन सप्तम्यन्तपाठस्यैव युक्तत्वात् । न लुमतेत्यस्याप्रवृत्तौ सम्बुद्धिपरत्वाच्च-लोपाभावः, तत्प्रवृत्तौ नलोपाभाव इति वार्तिकस्य नैष्फल्यात् ।

यद्वा सौ परतः पदत्वनिषेधेऽपि 'राजान् स्' इत्यस्य 'सुप्तिङन्त' इति पदत्वे एकदेशविकृत-न्यायेन 'राजन्' इत्यस्यापि पदत्वेन नलोपसिद्धेः । यदि तु 'स्वादिषु' इत्येको योगः 'असर्वनामस्थाने यचि' इत्येकस्तया च यजादौ सर्वनामस्थाने एवेति तदा सौ पदत्वं सुलभमेव । एवञ्च 'दत् अस्' इति शसि 'स्वादिषु' इति पदत्वे 'झलां जशोऽन्ते' इति तकारस्य जश्त्ववारणायाह—

'यचि भम्' इति—अत्र यश्चाश्चेति समाहारद्वन्द्वः । सौत्रत्वात् 'द्वन्द्वाच्चुदष' इति न टच् । समासान्तविधेरनित्यत्वान्न टच् इति तु न, लोकेऽपि 'यच्' इत्यस्य साधुत्वापत्तेः । सौत्रत्वादि-त्यर्थः । छन्दोवत्सूत्राणि भवन्ति । 'छन्दसि दृष्टानुविधिः' इति भाष्योक्तेः । इतरेतरयोगद्वन्द्वे सौत्रत्वा-देकवचनमित्यपूर्वकल्पनमपेक्ष्य समासान्तविधेरनित्यत्वस्य क्लृप्ततया तत्कल्पने लाघवात् । य् इति लुप्तसप्तमीकं पृथक्पदमिति तु समासाकरणलाघवादुचितम् ।

आ कडारादेका संज्ञा । [ १-४-१ ]

इत ऊर्ध्वं 'कडाराः कर्मधारये' ( सू ७५१ ) इत्यतः प्रागेकस्यैव संज्ञा ज्ञेया । या परा, अनवकाशा च ।

---

अत्र 'स्वादिष्वसर्वनामस्थाने' इति सूत्रमनुवर्तते । यचि 'स्वादिषु' इत्यस्य विशेषणम् । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति तदादिविधौ 'यकारादिष्वजादिषु' इत्यर्थलाभः । एवञ्च 'दत् अस्' इत्यादौ भसंज्ञया पदत्वस्य बाधाज्जश्त्वाभावः ।

ननु कृत्कृत्यप्रत्ययसंज्ञानां तव्यदादिषु समावेशदर्शनाद्विरोधाभावाच्च भपदसंज्ञयोः समावेशो ऽस्त्विति शङ्कानिरासायाह—

'आकडारात्' इति । आङत्र मर्य्यादायाम्, नाभिविधौ 'कडाराः कर्मधारये' ( २-२-३८ ) इत्यतः प्रागेवायं नियमो न तु तत्र, तस्य संज्ञाविधायकत्वाभावेन फलाभावात् । नापि 'प्राक् कडारात्समासः' ( १-२-३ ) इत्यस्यात्र कडारपदेन ग्रहणम्, 'द्विगुश्च' ( २-१-२३ ) इत्यस्य तत उत्तरत्वादाकडारादीयत्वाभावात् तत्पुरुषसंज्ञासमावेशार्थं चकारवैयर्थ्यापत्तेः ।

'नदीभिश्च' ( २-१-२ ) इति सूत्रे 'द्वीरावतीको देशः' इत्यत्र 'बहुव्रीहिर्भविष्यति विप्रतिषेधेन । एकसंज्ञाधिकारे सिद्धं परं कार्यत्वे तु न सिध्यति' इति भाष्यविरोधापत्तेश्च । अन्यत्र संज्ञानां समावेशदर्शनान्नियमार्थं वचनम् ।

लोके तावत्—इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । व्याकरणेऽपि कर्तव्यम्, हर्तव्यमित्यत्र प्रत्ययकृत्कृत्यसंज्ञानां समावेशो भवति । पाञ्चालो वैदेहो वैदर्भ इति प्रत्ययतद्धिततद्राजसंज्ञानां समावेशः' इति आकडारादेकैव संज्ञा न द्वयी त्रयी वेति । अत्र 'एका' इति स्त्रीलिङ्गनिर्देशात् संज्ञाप्रकरणाच्च संज्ञालाभे संज्ञाग्रहणं स्पष्टार्थम् ।

'चार्थे द्वन्द्वः' ( २-२-२९ ) इत्यत उत्तरेषु 'कडाराः कर्मधारये' इत्यतः पूर्वेषु अष्टसु सूत्रेषु संज्ञाविधेरभावात् 'आ चार्थात्' इत्येव वक्तव्ये कडारावधिश्चिन्त्यः । 'आद्वन्द्वात्' इति तु न वरम्, 'द्वन्द्वश्च प्राणितूर्य' इत्यस्यापि सम्भावनया सम्बुद्धिसंज्ञाऽऽमन्त्रितसंज्ञयोः समावेशानापत्तेः । यद्यप्या कडारोयेऽपि भसंज्ञाऽङ्गसंज्ञयोः गत्युपसर्गसंज्ञयोरेवमादीनां समावेशो दृश्यते । तत्र ज्ञापकव्याख्यानादिना समावेशः समर्थनीयः ।

ननु एका संज्ञा इत्युक्तेऽपि विनिगमनाविरहात्पर्य्यायता स्यादत आह—या परेति । उभयोः सावकाशत्वे 'विप्रतिषेधे परम्' इति परा । एकस्या निरवकाशत्वे तु निरवकाशैव भवतीति भावः । तत्र करणापादानसंज्ञयोरन्यत्र सावकाशयोः 'धनुषा विध्यति' इत्यत्र परत्वात्करणसंज्ञया अपादानसंज्ञाया बाधः । भवतोऽयम् 'भवत् ईय' इत्यत्र 'भवतष्ठक्छसौ' इति छसि छस्येयादेशे ईयादेशस्य स्थानिवत्त्वेनासिद्धत्वात् 'सिति च' इति पदत्वे 'यचि भम्' इति भत्वे च प्राप्ते ऽनवकाशया पदसंज्ञया भसंज्ञाया बाधः । तस्य जश्त्वे 'भवदीयः' सिध्यति ।

प्रकृते 'दत् अस्' इत्यत्र निरवकाशया भसंज्ञया 'स्वादिषु' इति पदसंज्ञाया बाधाज्जश्त्वं न । तदाह—या पराऽनवकाशा चेति । नन्वारब्धेऽपि आकडारसूत्रे परत्वानवकाशत्वाभ्यामेव यदि, बाधनिर्णयस्तर्हि सूत्रं मास्तु परत्वानवकाशत्वाभ्यां बाधः स्यादिति चेन्न, लोके व्याकरणे च संज्ञासु बाध्यबाधकभावप्रयोजकविरोधस्यादर्शनेन बाध्यबाधकभावाभावेऽपि सति 'आकडारात्' इति सूत्रे तु संज्ञाविषयेऽपि एकस्यैकैव संज्ञेति विरोधो जायते ।

विरोधे च सति परत्वानवकाशत्वाभ्यां व्यवस्थादर्शनेन ताभ्यां निर्णयस्य वक्तुं शक्यत्वादिति भावः । नन्वेवमपि 'यचि भम्' इत्यस्य शास्त्रतया शास्त्रीयकार्य्ये कर्तव्ये एव प्रवृत्तिः स्याच्च त्वशास्त्रीये । प्रकृते तु पदत्वाभाव एव कार्यञ्च न शास्त्रीयमिति भत्वाप्रवृत्त्या दोषतादवस्थ्यमिति

तेन शसादावचि भसंज्ञैव, न पदत्वम् । अतो जश्त्वं न । दतः । दता । जश्त्वम्, दद्भ्यामित्यादि । मासः । मासा । भ्यामि रुत्वे यत्वे च यलोपः, माभ्याम् । माभिरित्यादि ।

**भस्य । [ ६-४-१२९ ]**

इत्यधिकृत्य ।

**अल्लोपोऽनः । [ ६-४-१३४ ]**

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् ।

चेन्न' 'न पदान्त' सूत्रे भाष्ये 'वेतस्वान्' इत्यत्र 'भसंज्ञा बाधिका भविष्यति 'तसौ मत्वर्थे' इति भाष्योक्त्या अशास्त्रीयेऽपि कार्ये भसंज्ञायाः प्रवृत्तिबोधनात् ।

अन्यथा 'वेतस्वान्' इत्यत्र भसंज्ञाप्रयुक्तशास्त्रीयकार्याभावेन 'भसंज्ञाऽत्र बाधिका भविष्यति' इति भाष्यासङ्गत्यापत्तिः । अशास्त्रीयेऽपि कार्ये प्रवृत्तिस्वीकारे तु पदत्वाभावरूपकार्ये भत्वप्रवृत्त्या नासङ्गतिः । न च 'राजन्यः' इत्यादावन्तर्वर्तिविभक्तिमादाय 'सुप्तिङन्तम्' इति पदत्वान्नलोपापत्तिः, परया भसंज्ञया तु न बाधः, सुबन्तप्रयुक्तपदसंज्ञाया अन्तरङ्गत्वादिति वाच्यम्, 'सिति च' (१-४-१६) इति ज्ञापकेन बाध्यसामान्यचिन्तया अन्तरङ्गाया अपि संज्ञाया बाधज्ञापनात् ।

अन्यथा 'भवदीयः' इत्यत्रापि अन्तरङ्गायाः पदसंज्ञाया बहिरङ्गभसंज्ञया बाधाभावेन जश्त्वसिद्धौ 'सिति च' इत्यस्य वैयर्थ्यं स्पष्टमेव ।

तेनेति—अनवकाशत्वेनेत्यर्थः । अत इति—पदत्वाभावादित्यर्थः । जश्त्वमिति—'दत् भ्याम्' इत्यत्र 'स्वादिषु' इति पदत्वे 'झलां जशोऽन्ते' इति जश्त्वमित्यर्थः । इत्यादीति—भिसमारभ्य सुप्पर्यन्तं रूपाणि आदिशब्दार्थः । एवमेवाग्रेऽपि बोध्यम् । सुपि जश्त्वे 'खरि च' इति चर्त्वे 'दत्सु' पक्षे दन्त्वान्, दन्तेनेत्यादि रामवद्रूपम् ।

मास इति—माति = परिच्छिनत्ति स्वगत्या कालं यः स माः 'सार्वधातुभ्योऽसुन्' ( उ. ४-१-९ ) इति मा माने इत्यतोऽसुनि स्वार्थेऽणि मास इति । मास इति 'मास शस्' इत्यत्र हलन्तादेशे मासः । 'मास् भ्याम्' इति हलादौ 'स्वादिषु' इति पदत्वे 'ससजुषो रुः' इति रुत्वे 'भोभगो' इति यत्वे 'हलि सर्वेषाम्' इति यलोपे 'माभ्याम्' इति । वलि लोपस्तु न, तद्दृष्ट्या यत्वस्यासिद्धत्वात् । 'मास् सु' इत्यत्र रुत्वे विसर्गे 'वा शरि' इति वा सः 'मास्सु' 'माःसु' इति रूपद्वयम् ।

यूषति = हिनस्ति रोगाननेनेति यूषः करणे घञि साधु । यूषो मण्डः । 'मुद्गामलकयूषस्तु भेदी दीपनपाचनः' । यूषो मांसरस इति माधवः ।

'अल्लोपोऽनः' इति । अदिति लुप्तषष्ठीकं पृथक्पदम् 'आतो धातोः' इत्यन्तानुवृत्त्यर्थम् । अन्यथा एकदेशानुवृत्तौ क्लिष्टकल्पना स्यात् । 'अनः' इत्यत्रावयवावयविभावसम्बन्धे षष्ठी । तच्चातो विशेषणम् 'अनोऽवयवस्यात' इति । 'अङ्गस्य' इत्यप्यन्तावयवषष्ठीकमतो विशेषणम् । अङ्गावयवोऽसर्वनामस्थान इति । भस्येत्यधिकाराल्लभ्यते । भस्याङ्गस्येत्यनेन यजादिप्रत्यय आक्षिप्यते । भस्येत्यनेन तु न यचीत्यस्याक्षेपः, "वृषण्वस्वश्वयोः" इति वृस्वश्वप्रातिपदिकयोरपि भसंज्ञादर्शनेन यजादिस्वादिप्रत्ययमात्रनिमित्तत्वाभावात् । स चात्र सम्बध्यते ।

तदुक्तं भाष्ये—'एवं तर्हि कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं भस्येत्युपस्थितमिदं भवति 'यचि भम्' इति । तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामोऽना चाकारं यजादिस्वादिपरस्यानोऽकारस्येति' । तथा च भस्याङ्गस्यावयवोऽसर्वनामस्थानयजादिस्वादिपरकश्च योऽन् तस्याकारस्य लोप इत्यर्थः । 'अनस्तक्ष्णा' इत्यत्र प्रथमस्यानः, अनसा, मनसा इत्यत्र चानो यजाद्यव्यवहितपूर्वत्वाभावान्न लोपः । तक्ष्ण इत्यत्र तकाराकारस्य च लोपाभावः ।

अन्नन्तस्य भस्याङ्गस्याकारस्य लोप इत्यर्थे 'तक्ष्णा' इत्यत्र तकाराकारस्यापि लोपापत्तिः । अन्नित्यावर्त्य अन्नन्तस्य भस्याङ्गस्यानोऽकारस्य लोप इत्यर्थेऽपि 'अनस्तक्ष्णा' इत्यत्र प्रथमस्यानोऽ-

**रषाभ्यां नो णः समानपदे । [ ८-४ ]**

एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् । पूष्णः । पूष्णा ।

---

कारस्यापि लोपापत्तिः प्राचां मते । यदि तु भस्याङ्गस्येत्यनेनाक्षिप्तस्य यचीत्यस्य 'येन यदाक्षिप्यते तस्य तत्रैवान्वयः' इति न्यायेनाङ्गे एवान्वय इत्युच्यते तदा 'अन्त्ययाधेऽन्त्यसदेशस्य' इति परिभाषया अन्त्यस्यैवानोऽकारस्य लोपः स्यादिति न क्वापि दोषः । 'अदसुयङ्' इत्यर्थम् 'अनन्त्यविकारे' इति परिभाषाया आवश्यकतया अत्र, 'सान्तमहत' इत्यादौ चान्वयविषयकानेकक्लिष्टकल्पनापेक्षया परिभाषा-स्वीकार एवोचितः ।

अत एव 'यान्येनस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्याः' इत्युपसंहृतं भाष्ये । यत्तु 'न सम्प्रसारणे' इति सूत्रे 'नैतस्याः परिभाषायाः प्रयोजनानि सन्ति' इति भाष्यं तत्तु 'न संप्रसारणे' इत्यादेरेव ज्ञापकात्प्रयोजनाल्पत्वसूचकम् इति न तद्विरोधः ।

'यूपशब्दस्य सुटि पक्षे च रामवद्रूपम्' यूपशब्दात् शसि 'पद्दन्' इति यूषन्नादेशे यूषन् शस् इति जाते 'अल्लोपोऽनः' इत्यल्लोपे 'यूष्न् अस्' इति स्थितौ 'रषाभ्यां नो णः समानपदे' इति । रषाभ्यामिति पञ्चमी 'तस्मादित्युत्तरस्य' इति परिभाषया उत्तरस्योपस्थानाद्दिग्योगलक्षणा । समानशब्द एकपर्यायः 'समाननगरे समानैव वृत्तिर्येषाम्' इत्यादावेकनगरे इत्यर्थस्य दर्शनात् । समानपदे इत्याधारसप्तम्या विद्यमानाभ्यामित्यध्याह्रियते ।

तदाह—एकपदस्थाभ्यामिति । अत्र 'रषाभ्याम्' इति निमित्तयोः, 'नः' इति निमित्तिनि 'णः' इति आदेशे च अकार उच्चारणार्थः ।

यद्यपि रषौ निमित्ते न नकारस्य, निमित्तमनपेक्ष्य तस्य सिद्धत्वादिति निमित्ती नकार इत्यस-ङ्गतमिति चेन्न, णकारगतनिमित्तित्वस्य स्थानिन्यारोपेण तदुपपत्तेः, यद्वा णकारस्यैव निमित्तिनो विधा-नोत्तरकालं समानपदस्थत्वे तात्पर्यं बोध्यम् । इति नस्य णत्वे 'यूष्णः' इति । अत्र एकपदे इत्यर्थस्य निमित्तस्य रेफषकारात्मकस्य निमित्तिनो नकारस्य च पदस्थस्यैव सम्भवेन पदं विनापि पदस्थाभ्या-मित्यर्थलाभे पदे ग्रहणसामर्थ्यादेव एकपदस्थाभ्यामित्यर्थे सिद्धे समानग्रहणं समानमेव—अखण्डमेवेत्य-र्थलाभार्थम् । तथा च अखण्डपदस्थाभ्यां रेफषकाराभ्यामित्यर्थः । तेन 'रामनाम' इत्यादौ न णत्वम् ।

अखण्डपदस्थत्वञ्च—निमित्तवत्पदभिन्नपदस्थत्वाभाववत्त्वम् । 'रामनाम' इत्यत्र निमित्तवत्पदं रामेति तद्भिन्नपदं नामेतीति नामघटकनकारे भिन्नपदस्थत्वमेवेत्यखण्डपदस्थत्वाभावान्न णत्वम् । न च 'मातृभोगीणः' इत्यत्र णत्वानापत्तिर्निमित्तमृकारस्तदनधिकरणं निमित्तिमत्पदं भोगीन इति तत्स्थ-त्वाच्चस्येति वाच्यम्, भोगीन इत्यस्य पदैकदेशत्वेन पदत्वाभावात् ।

न च 'रामनरेण' 'परमाग्नीध्रेण' इत्यत्र दोषः, निमित्तवत्पदं राम इति, नर इति तद्भिन्नं घटा-दिपदं तत्स्थत्वाभाववान्निमित्ती नरघटकनकार इति तस्य णत्वापत्तिः । एवम् 'परमाग्नीध्रेण' इत्यत्र निमित्तं रेफस्तद्वत्पदं परमपदम्, आग्नीध्रमपि, उभयो रेफघटितत्वात् तद्भिन्नं घटादि तत्स्थत्वाभा-ववान् आग्नीध्रघटकनकार इति तस्यापि णत्वापत्तिरिति वाच्यम्, निमित्तविशिष्टस्य तस्य णत्वमित्यत्रैव समानपदे इत्यस्य तात्पर्यात् । वैशिष्ट्यञ्च—स्वोत्तरत्व-स्वाघटितपदाघटकत्वाभ्याम् । राम-परमघटक-रेफस्य निमित्तत्वेन ग्रहणे द्वितीयसम्बन्धाभावान्न दोषः । नर-आग्नीध्रघटकरेफग्रहणे स्वोत्तरत्वरूप-प्रथमसम्बन्धाभावान्न दोषः । सूत्रे तपरकरणं न लोपोऽल्लोप इति नञ्समासभ्रमवारणायेति कश्चित् ।

ननु प्रपूर्वकानूधातोः क्विपि 'प्राणः, प्राणा' इत्यादावाकारलोपवारणार्थं तपरकरणम् । न चा-नोऽभावः, 'अनितेः' ( ८-४-१९ ) इति णत्वस्यासिद्धत्वादिति चेन्न, सवर्णदीर्घे कृते अनोऽभावात् । न च 'वार्णादाङ्गं बलीयः' इति न्यायाद्दीर्घात्पूर्वमेवाल्लोप इति वाच्यम्, तथा सति व्यावर्त्यालाभेन तपरकरणवैयर्थ्यस्य सूपपादत्वात् ।

'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति ।

वस्तुतस्तु 'वार्णादाङ्गम्' इत्यस्य न विषयः, युगपत्प्राप्तावेव तत्प्रवृत्तेः । 'अनुनासिकस्य क्वि-झलोः' इति दीर्घेण सवर्णदीर्घात्पूर्वमपि अनोऽभाव एव । न च दीर्घेऽपि एकदेशविकृतन्यायेन अन्त्वम्, अर्द्धविकारे तन्न्यायाप्रवृत्तेः ।

अत एव 'श्वयुवमघोनाम्' इति सूत्रे भाष्ये 'मघवतः' इत्यत्र सम्प्रसारणवारणाय 'नकारान्त-ग्रहणं कर्तव्यम्' इत्युक्त्वा न कर्तव्यम् 'योगविभागः करिष्यते' 'श्वयुवमघोनामतद्धिते' 'अल्लोपः' अकारस्य च लोपो भवति । ततोऽन इत्यभयोः शेषः ।" यदि अर्धविकारेऽपि एकदेशविकृतन्यायस्य प्रवृत्तिः स्यात्तदा 'मघवतः' इत्यत्र दोषतादवस्थ्याद् भाष्यं विरुध्येत । तथा च तपकरणं व्यर्थमेव ।

गुरवस्तु 'सर्वे सर्वपदादेशाः' इति न्यायेन अन इत्यस्य स्थाने आन् आदेश इति स्वीकारे 'आन्' इत्यत्र स्थानिवद्भावेन अन्त्वमादाय लोपवारणाय तपरकरणमित्याहुः ।

यत्तु 'अनो नश्' इति सूत्रमस्तु, नकाराकार उच्चारणार्थं इति तच्चिन्त्यम्, 'आतो धातोः' इत्यत्रानुवृत्त्यर्थं लोपग्रहणस्यावश्यकत्वात् ।

पूर्वस्मादपि विधाविति —'अचः परस्मिन्' इति सूत्रे 'पूर्वविधौ' इत्यावर्त्य पूर्वस्मात्= स्थानीभूतादचः पूर्वत्वेन दृष्टाद्वर्णादव्यवहितपरस्य कार्य्ये कर्तव्ये परनिमित्तकोऽजादेशः स्थानिवदित्य-र्थाश्रयणादित्यर्थः । अत एव 'उभे अभ्यस्तम् ( ६-१-५ ) सूत्रे यत्रोभे 'द्विर्वचनस्य पूर्वभागोत्तर-भागरूपे' श्रूयेते तत्रैवाभ्यस्तसंज्ञार्थमुभे ग्रहणम् ।

तेन ऋधधातोः सनि 'आप्ज्ञप्यृधामीत्' ( ७—४—५६ ) इति ऋकारस्येत्वे रपरत्वे 'र्धस्' इत्यस्य द्वित्वे 'अत्र लोपोऽभ्यासस्य' (७-४-५८) इत्यभ्यासलोपे लङि झौ आरि वृद्धौ 'ऐर्त्सन्' इत्य-त्राभ्यस्तत्वाभावाद् जुस् न । शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽ प्राप्तेऽसति प्रयोजने उभेग्रहणं सहार्थम्' इत्युक्तम् । तेन 'नेनिजति' इत्यादौ द्वित्वभागस्य प्रत्येकम् 'अभ्यस्ताना-मादिः' ( ६-१-१८६ ) इत्याद्युदात्तत्वं न । तेन 'प्रत्यैषिषन्' इत्यत्रापि यत्रोभे श्रूयेते इत्यर्थेऽपि पञ्चमीसमासेन शपैकादेशस्य स्थानिवत्त्वेन सिद्धे 'उभे' ग्रहणं सहार्थमेवेति भावः । 'न पदान्त' इति स्थानिवत्त्वनिषेधस्तु न, परपदस्याजादेशस्यैवाश्रयणात् ।

अत एव 'पदेऽन्तः पदान्तः पदान्तस्य विधिः पदान्तविधिः' इति विग्रहद्वयप्रदर्शनं भाष्योक्तं संगच्छते । पदे परे पदान्तस्य विधावित्यर्थतः परपदस्याजादेशस्यैव स्थानिवत्त्वनिषेध इति सूचितं भाष्यकृता । अत एव 'अपपचन् देवदत्तयज्ञदत्तविष्णुमित्राः' इत्यत्र पदे परतोऽपि स्थानिवत्त्वनिषेधो न, परपदस्याजादेशाभावात् । यदि तु 'भेजुस्' ( ३-४-१०८ ) इत्यत्रेकारोऽविवक्षितो भमात्रस्य जुस् तदा भत्वस्याल्मात्रवृत्तित्वेन स्थानिवद्भावाभावात्पञ्चमीसमासस्य नेदं फलम् । बेभिदिता, माथितिकः, अपीपचन्, इत्यादौ 'एकाच उपदेशे' इत्यत्र विहितविशेषणात्, ठमात्रस्य इकादेशविधानेन ठत्वस्याल्मात्रवृत्तित्वात्, परसाहचर्य्यस्य वर्णाश्रयत्वेन त्रिदिसाहचर्य्याल्लङ एव जुस्विधानाच्च पञ्चमी-समासस्य नैतानि फलानि ।

वस्तुतस्तु मथितमाचष्टे मथितयति ततः क्विपि णिलोपक्विलोपयोः मथित्शब्दात् 'चरति' ( ४-४-८ ) इति तृतीयान्तात् ठकि 'चरत् ठ' इत्यवस्थायाम् 'इसुसुक्तान्तात्कः' ( ७-३-५१ ) इति के कर्तव्ये पञ्चमीसमासेन टिलोपणिलोपयोः स्थानिवत्त्वेन कादेशाप्राप्त्या 'ठस्येकः' इकादेशार्थं पञ्चमीसमा-सस्यावश्यकत्वम् । माथितिक इति भाष्यस्यात्रैव तात्पर्य्यमिति गुरवः । पञ्चमीसमासे 'हे गौः' इत्यत्र तु न दोषः, अव्यवहितपरस्यैव कार्य्ये स्थानिवत्त्वात् ।

'निष्ठायां सेटि' ( ६-४-५२ ) इत्यत्र सेट्ग्रहणात्पञ्चमीसमासोऽनित्यः । तथा हि—सेड्-ग्रहणं कालावधारणार्थम् । तदभावे हि 'कारितम्' इत्यादौ इटि णिलोपे च प्राप्ते नित्यत्वाद् णिलोपे

पक्षे तु 'अड्व्यवाये' इत्येवात्र णत्वम्। 'पूर्वत्रासिद्धीये न स्थानिवत्' (वा ४३३) इति त्विह नास्ति

'एकाचः' इतीण्निषेधः स्यात्। सति तु तस्मिन् 'इटि सत्येव लोपः' इति न दोषः। पञ्चमीसमासस्य नित्यत्वे तु पूर्वं णेर्लोपेऽपि णिलोपस्य स्थानिवत्त्वात् एकाच इति निषेधाप्राप्त्या सेड्ग्रहणं व्यर्थीभूय कल्पयति—पञ्चमीसमासोऽनित्य इति।

'प्रविगणय्य' इति भाष्यप्रयोगोऽप्यनित्यत्वे मानम्। पञ्चमीसमासस्य नित्यत्वे तु चौरादिकाद् 'गण संख्याने' इत्यदन्ताद्धातोर्णिचि 'अतो लोपः' इत्यल्लोपे 'अचः परस्मिन्' इति स्थानीभूतादचः पूर्वत्वेन दृष्टस्य गकाराकारस्य वृद्धौ स्थानिवद्भावाल्लघूपधत्वाभावेन 'अत उपधायाः' इति वृद्ध्यभावे प्रतिपूर्वात् गणिधातोः क्त्वाप्रत्यये समासे तस्य ल्यबादेशे 'प्रविगणि य' इति स्थितौ णिलोपं बाधित्वा 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णे (एः) रयादेशे 'प्रविगणय्य' इति सिध्यति। अत्र णेरिकारात्पूर्वत्वेन दृष्टो गकारस्तस्मात्परस्य णेरयादेशे कर्तव्ये—

स्थानिवद्भावे तु अकारेण व्यवधानाल्लघुपूर्वाद् गकारात्परस्य णेरभावात् 'ल्यपि लघुपूर्वात्' इत्ययादेशो न स्यात्। व्यपदेशिवद्भावेन लघुपूर्वत्वं तु न, तथा सति 'दधि' इत्यादौ यणापत्तेः, घटकत्वघटितत्वयोरेव तेनातिदेशाच्चेति दिक्।

अड्व्यवाय इति—पञ्चमीसमासेन 'यूषन् अस्' इत्यत्र स्थानीभूतादकारात्पूर्वत्वेन दृष्टः षकारस्ततः परस्य नस्य णत्वे कर्तव्येऽल्लोपस्य स्थानिवद्भावात् षकाराव्यवहितोत्तरस्य कार्य्याभावेन 'रषाभ्याम्' इत्यस्याप्राप्त्या 'अट्कुप्वाङ्' इत्यनेन णत्वमिति भावः। 'रषाभ्याम्' इत्यस्य वारणाय 'स्थानिवदादेशः' इत्यनेन स्थानिवद्भावस्तु न, तस्य स्थानिनि सति यत्कार्य्यं प्राप्नोति तत्कर्तव्ये एव प्रवृत्तेः।

अत्र तु अकारे सति 'रषाभ्याम्' इति न प्राप्नोतीति तद्वारणाय न स्थानिवद्भावः। अन्यथा 'नायकः' इत्यादौ तु प्रत्यये सति आयादेशो न प्राप्नोतीति तद्वारणायापि स्थानिवद्भावे आयादेशो न स्यात्।

पञ्चमीसमासानित्यत्वस्य 'हे गौः' इत्यत्र 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपो न। अन्यथा औकाररूपवृद्धेः स्थानिवद्भावेन ओकारबुद्ध्या सम्बुद्धिलोपः स्यादिति कश्चित्, तन्न स्थानीभूतादचः पूर्वत्वेन दृष्टादव्यवहितपरस्यैव कार्य्ये 'तस्मादित्युत्तरस्य', इति सूत्रबलात्प्रवृत्त्या प्रकृते स्थानीभूतादोकाररूपादचः पूर्वत्वेन दृष्टो गकारस्तस्मादव्यवहितपरः सुर्नास्ति, ओकारेण औकारेण वा व्यवधानात्।

अड्व्यवाये इत्येवेति—'अट्कुप्वाङ्' इति सूत्रेणैवेत्यर्थः। 'रषाभ्याम्' इत्यस्योदाहरणं तु 'चतुर्णाम्' 'पुष्णाति' इत्यादौ बोध्यम्। वस्तुतस्तु षकारादव्यवहितपरस्य नस्य णत्वविधानं व्यर्थम्, तत्र ष्टुत्वेनैव णत्वसिद्धेः। तथा च षग्रहणमुत्तरत्रानुवृत्त्यर्थमेव।

ननु 'न पदान्त' सूत्रे भाष्ये 'पूर्वत्रासिद्धीये च' पूर्वत्रासिद्धीये च न स्थानिवदिति वक्तव्यम्। प्रयोजनं क्सलोपः सलोपे अदुग्ध, अदुग्धाः। 'लुग्वा दुह' इति लुग्ग्रहणं न कर्तव्यं भवति।' अयम्भावः—'घोर्लोपो लेटि वा' (७-३-७०) इत्यतो लोपपदमनुवर्त्य 'लुग् वा दुहदिहलिहाम्' (७-३-७३) इति 'अलोऽन्त्यस्य' इति परिभाषया क्सस्यालोपे सस्य च 'झलो झलि' (८-२-२६) इति सलोपे 'अदुग्ध' इत्यादीनां सिद्धिः स्यात्। न चालोपस्य स्थानिवत्त्वेन झल्परत्वाभावात्सलोपो न स्यात्, 'पूर्वत्रासिद्धीये च' इति वार्तिकेन स्थानिवत्त्वनिषेधात्।

'अचः परस्मिन्' इति सूत्रदृष्ट्या त्रिपाद्या असिद्धत्वात्तद्बोधितकार्याभावेन स्थानिवत्त्वाप्रवृत्तिमूलकमिदम्, अनुवादफलन्तु वतिघटितानामन्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिः। तेन 'अमी' 'क्षीरपेण' इत्यादौ 'एत ईद्बहुवचने' (८-२-८१) इत्यस्य 'एकाजुत्तरपदे णः' (८-४-१२) इत्यस्य च 'अन्तादिवच्च' इति दृष्ट्या असिद्धत्वाभावेन बहुवचनत्वोत्तरपदत्वयोरतिदेशः सिध्यति।

'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' ( वा ४४० ) इति निषेधात् ।

न लोपः प्रातिपदिकान्तस्य ।[ ८–२–७ ]

नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे ।

---

वस्तुतस्तु लुक्प्रकरणस्थाख्यानपरं भाष्यमेकदेश्युक्तिः, 'लुग्वा दुह' इति सूत्रे 'दन्त्ये' इत्यकृत्वा 'तौ' इति वक्तव्ये दन्त्यग्रहणसामर्थ्याद्धकारस्यापि ग्रहणेन वहिप्रत्ययेऽकारलोपे झल्परत्वाभावेन सकारलोपासम्भवाद्रूपासिद्धेः ।

तस्य दोष इति—'पूर्वत्रासिद्धे न' इत्यस्य, दोषः=बाधः ।

इदं वार्तिकम् 'न पदान्त' सूत्रे भाष्ये वाचनिकम् । यत्तु 'न मु ने' (८–२–३) इत्यस्य फलम्—'अमुना' इत्यस्य सिद्धिस्तथा च 'अधुना' इतिवत् 'अमुना' इति वक्तव्ये 'न मु ने' इति इत्युक्तिर्योगविभागार्था—'न' इत्येको योगः । पूर्वत्रासिद्धमित्यनुवर्तते पूर्वत्र कर्तव्ये त्रिपादीस्थं नासिद्धम् । 'मु ने' इति नाभावविषये मुत्वं नासिद्धम् । पूर्वेणैव मुत्वस्याप्यसिद्धत्वे सिद्धे 'मु ने' इति सूत्रं पूर्वस्य काचित्कत्वं ज्ञापयति ।

योगविभागादिष्टसिद्धिरिति न्यायेन 'रामः' इत्यादौ इत्संज्ञा लोपदृष्ट्या 'न' इत्यनेन रुत्वस्यासिद्धत्वाभावे इत्संज्ञालोपयोः सिद्धिः । स्थानिवद्भावेन रौ सुप्त्वेन पदत्वसिद्धिः । न च रौ अनुनासिकत्वप्रतिज्ञया असिद्धत्वाभावः,'देव रुहि' इत्यादौ 'हशि चे' ति उत्ववारणायानुनासिकत्वस्य चारितार्थ्यादिति तन्न, भाष्ये योगविभागादर्शनात् । इत्संज्ञादृष्ट्या 'स्थानिवदादेशः' इति दृष्ट्या च असिद्धत्वाभावस्य 'प्रत्ययः' परश्चेत्यादिनिर्देशादेव सिद्धेः । तथा च 'चक्रयत्र' इत्यत्र संयोगादिलोपे कर्तव्ये यणादेशस्य स्थानिवत्त्वेन पदान्तसंयोगाभावात् 'स्कोः संयोगाद्योः' इति कलोपो न । 'निगाल्यते' इत्यत्र णिलोपस्य स्थानिवद्भावात् 'अचि विभाषा' इत्यचि परे लत्वं सिध्यति । 'माषवपनी' इत्यत्र वपतेर्ल्युटि टित्वान्ङीपि 'यस्येति च' इति नकारोत्तराकारस्य लोपे तस्य स्थानिवत्त्वेन प्रातिपदिकान्तनकाराभावात् 'प्रातिपदिकान्तनुम्' इति नस्य णत्वं न ।

ननु 'गर्गभगिनी' इत्यत्र गर्गाणां भगिनी गर्गभगिनी इति समासे उत्तरपदं यत्प्रातिपदिकं तदन्तस्य नस्य णत्वमित्यर्थेन भगिनीति न प्रातिपदिकम्, नापि तदन्त्यनकार इति यथा णत्वाभावस्तथा माषाणां वपनी माषवपनी इत्यत्रापि णत्वाप्राप्तिरेवेति चेन्न,

माषाणां वपनी, इत्यत्र उप्यतेऽनयेति करणे ल्युटि 'कृत्यैरधिकार्थ' ( २–१–३३ ) इति सूत्रस्थेन वार्तिकेन 'साधनं कृता' इत्यनेन सुपः प्राग् ल्युडन्तेनैव समासे टित्वान्ङीपि 'यस्येति च' इत्यलोपे नकारस्य प्रातिपदिकान्तत्वाद् णत्वप्राप्ते लोपस्य स्थानिवद्भावेनैव णत्वस्य वारणीयत्वात् ।

यत्तु 'पूष्णः' इत्यत्र 'रषाभ्याम्' इत्यस्य नोपयोगः, ष्टुत्वेनैव सिद्धेः, षग्रहणमुत्तरार्थमिति तन्न, उत्तरार्थत्वेऽपि इह करणात् ष्टुत्वस्यासिद्धत्वाच्च 'रषाभ्याम्' इत्यस्यैव प्रवृत्तेः । अनवकाशत्वात् ष्टुत्वेन बाधस्तु न, 'पुष्टः पुष्टिः' इत्यादौ चारितार्थ्यात् । न च तस्य, थस्य, दस्य, धस्य, नस्य षकारेण योगे टुत्वम्, इत्यर्थे नस्य षकारेण योगे 'णः' इत्यस्यानवकाशत्वम्, टुत्वेनैव रूपेण टुत्वविधानात् नकारषकारयोः पृथग्योगस्यानुक्तेः षकारात्परस्य नस्य णत्वमित्यस्याप्यनवकाशत्वेन टुत्वस्यैव बाधसम्भवाच्च । न च 'षग्रहणमुत्तरार्थम्' इत्याकरविरोधः, इह षग्रहणं विनापि पुष्णातीत्यादिलक्ष्याणां सिद्धावेवाकरतात्पर्यात् , न तु 'रषाभ्याम्' इत्यस्याप्रवृत्तौ ।

'न लोपः' इति । अत्र न इति लुप्तषष्ठ्यन्तं पृथक्पदम्, अन्तस्येति नस्य विशेषणम्, अन्ताभिन्नस्य नस्येत्यर्थः । अत एव 'सविशेषणानां वृत्तिर्न' इति निषेधात् लोपशब्देन समासाभावः । एवम् प्रातिपदिकान्तस्य इत्यत्र प्रातिपदिक इति लुप्तषष्ठ्यन्तम् । अधिकारलब्धस्य पदस्येत्यस्य विशेषणम् ।

अत एव अन्तपदार्थेन सामर्थ्याभावान्न समासः, तदाह नेति, प्रातिपदिकेति च लुप्तषष्ठीके पदे इति । उभयत्र 'सुपां सुलुक्' ( ७–१–३९ ) इति छान्दसत्वात् षष्ठ्या लुक् । तदाह—

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात्। नलोपस्यासिद्धत्वाद्दीर्घत्वम् ऐस्त्वमेत्वं च न। यूषभ्याम्। यूषभिः। यूषभ्य इत्यादि।

विभाषा ङिश्योः [ ६-४-१३६ ]

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि, यूषणि। पक्षे रामवत्। 'पद्दन्नो- ( सू २२८ ) इति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्।

प्रातिपदिकं यत्पदमित्यादि। यदि तु प्रातिपदिकेति नेति च अभेदेन पदस्येत्यनेन सम्बध्यते, नेत्यस्य विशेषणतया तदन्तविधौ प्रातिपदिकसंज्ञकं नान्तं यत्पदं तस्य लोप इति व्याख्यायते। 'अलोऽन्त्यस्य' अन्त्यनस्य लोप इति तदा सौत्रमन्तग्रहणं व्यर्थम्।

भाष्ये तु 'पदाधिकारो विशेषणम्। कथम्? पदस्येति। नैषा स्थानषष्ठी। का तर्हि विशेषण-षष्ठी' ( अवयवषष्ठी ) असत्यन्तग्रहणे प्रातिपदिकसंज्ञकस्य पदस्य योऽवयवो नकारस्तस्य यत्र कुत्रचित्स्थितस्य लोपः स्यादित्यर्थः स्यात्। तथा सति 'नराभ्याम्' इत्यादावपि नलोपः स्यादिति भाष्याशयः।

न च पदस्यावयवरूपं यन्नान्तं प्रातिपदिकं तस्य लोप इत्यर्थे 'नराभ्याम्' इत्यादौ न दोष इत्यन्तग्रहणं व्यर्थम्, 'लोमनिशयः' इत्यलुक्समासे पदं 'लोमनिशयः' इति तदवयवभूतं प्रातिपदिकं लोमन् इति अत्र नलोपापत्तेः।

ननु नलोपेऽदन्ताङ्गस्य सत्त्वात् 'यूषभ्याम्' इत्यत्र 'सुपि च' इति दीर्घः, 'यूषभिः' इत्यत्र 'अतो भिस ऐस्' इति ऐसादेशः, 'यूषभ्यः' इत्यत्र 'बहुवचने झल्येत्' इति एत्वं च स्यादत आह—नलोपस्यासिद्धत्वादिति—'पूर्वत्रासिद्धम्' इत्यनेन त्रैपादिकनलोपस्यासिद्धत्वबोधनाददन्ताङ्गाभावाद्दीर्घादयो नेति भावः।

'यूषन् इ' इत्यत्र 'अल्लोपोऽनः' इति नित्ये लोपे प्राप्ते 'विभाषा ङिश्योः' इति। ङिश्च शीश्चेति विग्रहे इतरेतरयोगद्वन्द्वः। शीपदेनात्र 'नपुंसकाच्च' इति विहितशीरेव गृह्यते 'जसः शी' 'जश्शसोः शिः' इत्येतावादेशौ न गृह्येते, 'तयोः सर्वनामस्थानत्वेन तत्र मत्वाभावात्।

अत्र 'अल्लोपोऽनः' इत्यनुवर्तते। भस्याङ्गस्येति चाधिकाराल्लभ्यते। भसंज्ञकस्याङ्गस्येत्यनेन 'असर्वनामस्थाने' इति, 'यचि' इति वाऽऽक्षिप्यते। यद्वा साङ्गम् 'यचि भम्' इति सूत्रमुपतिष्ठते। एतेन आक्षिप्तस्य शाब्दबोधे भानं न भवतीत्यपि परास्तम्। तदाह—अङ्गावयवेत्यादि।

वस्तुतस्तु भसंज्ञकाङ्गावयवो यो ङिशीपरकोऽन् तस्याकारस्य वा लोप इति व्याख्यानेऽपि न क्षतिः।

पक्षे इति—यूषन्नादेशाभावपक्षे इत्यर्थः।

प्रकारार्थमिति—सादृश्यार्थमित्यर्थः। वस्तुतस्तु प्रकारशब्दोऽत्र सदृशार्थकः। सादृश्यार्थकत्वे शस्प्रभृतिषु इत्यस्य शस्सादृश्येषु इत्यर्थः स्यात्। तथा च शस्प्रभृत्यव्यवहितपूर्ववर्तिपादादीनां पदादीनां वेत्यर्थानुपपत्तिः। तथा च शस्सदृशे परे इत्यर्थं उपपद्यते। सादृश्यनियामकधर्मश्च सुप्त्वरूप इति नागेशः। न च 'मांसपचनी' इत्यस्यासिद्धिः सुप्परत्वाभावादिति 'न लुमताऽङ्गस्य' इति निषेधानित्यत्वेन प्रत्ययलक्षणेन षष्ठीरूपसुप्परकत्वात्।

लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि।
समो वा हिततयोर्मांसस्य पचि युड्घञोः॥

इति पृषोदरादित्वादपि सिध्यति, तथाऽपि व्युत्पत्त्यन्तरपरमिदम्। शब्दत्वेन सादृश्यमित्यन्ये। शिष्टप्रयोगानुरोधेन यस्मिंस्कस्मिंश्चिच्छब्दे परे एते पदादयो नावसाने इति तद्भावः।

वस्तुतस्तु शब्दत्वेन सादृश्ये भाष्यविरोधः स्यात्—तथा हि—नासिक्यो वर्णः, नासिक्यं नगरम्, इति सिद्धये 'अवर्णनगरयोः' इति वार्त्तिकं नसादेशवारणाय 'पद्दन्नोमास' इति सूत्रे 'नासिकाया यत्तसक्षुद्रेषु' इति वार्तिकं उक्तम्। तद्वार्त्तिकम् 'अव्ययीभावाच्च' ( ४-३-५९ ) इति व्यविधायके

तथा च औङः श्यामपि दोषन्नादेशः । अत एव भाष्ये 'ककुद्दोषणी' इत्युदाहृतः । तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'स्वान्तं हृन्मानसं मनः' इत्यादि च संगच्छते । 'आसन्यं प्राणमूचुः' इति च । आस्ये भव आसन्यः ।

---

सूत्रे पठितेन 'परिमुखादिभ्य एवेष्यते' इति वार्त्तिके परिमुखादौ पाठात् 'नासिक्यो वर्णः' इति, संकासादिषु पाठात् 'नासिक्यं नगरम्' इति संसाध्य 'अवर्णनगरयोः' इति वार्त्तिकं भाष्यकृता प्रत्याख्यातम् ।

शब्दत्वेन सादृश्ये तु 'अवर्णनगरयोः' इति वार्त्तिकसत्त्वे 'नासिक्यम्' इत्येकमेव रूपम्, नसादेशनिषेधात् । वार्त्तिकासत्त्वे 'पद्दन्नोमास्' इत्यनेन यति शब्दे परे वैकल्पिकनसादेशे 'नस्यम्' इत्यपि स्यात् । सुप्त्वेन सादृश्ये तु 'न लुमता' इति प्रत्ययलक्षणनिषेधात्सुप्परकत्वाभावात् 'नासिक्यम्' इत्येकमेव । न च 'न लुमता' इत्यस्यानित्यत्वात्सुप्परकत्वसत्त्वात्तादापत्तिः, सुप्त्वेन सादृश्येऽपि तदवस्थैव, ज्ञापकसिद्धस्यानित्यत्वस्य 'ज्ञापकादिष्टसिद्धिः' इति न्यायेनानिष्टापादनेऽप्रवृत्तेः ।

उक्तभाष्यविरोधादेव प्रत्ययत्वेनापि सादृश्यं परास्तम् । सुप्त्वेन सादृश्यादेव पादमाचष्टे पादयतीत्यादावपि न पदाद्यादेशः, प्रातिपदिकादेव णिज्विधानात् । 'सुप्सु' इति वक्तव्ये 'शस्प्रभृतिषु' इत्युक्त्या शसादिसुब्भिन्ने सुपि क्वचिदेवादेशः ।

अत एव पद्दन्निशामादेशविधानं चरितार्थम् । अन्यथा कोशेऽजन्तानां हलन्तानाञ्च परिगणनात्सर्वत्र सुपि रूपद्वये सिद्धे आदेशविधानस्य व्यर्थतया तेषां शसादिष्वेव हलन्तानां प्रयोगो न सुटीति व्यवस्थार्थमेवादेशविधानस्य चारितार्थ्यात् । सुम्मात्रे प्रवृत्तौ व्यवस्थाया असम्भवस्तु न, पादयतीत्यादौ णिचि पदाद्यादेशाभावरूपव्यवस्थायाः सम्भवात् ।

तथा चेति–प्रभृतिग्रहणस्य प्रकारार्थत्वे चेत्यर्थः । अत एवेति—औङः श्यामपि दोषन्नादेशादेवेत्यर्थः । ककुद्, इत्यसमस्तं पृथक् दोषणी इति औङः श्यां रूपम् । दोषणी=बाहू इत्यर्थः । समासे तु समाहारे एकवचनम् । इतरेतरयोगद्वन्द्वे ककुद एकत्वाद् बाह्वोर्द्वित्वाद् बहुवचनं स्यात् ।

यद्यपि ककुद्दोः शब्दयोः समाहारद्वन्द्वं कृत्वा ककुद्दोश्च ककुद्दोश्चेत्येकशेषे 'ककुद्दोषणी' इति द्विवचनं स्यात्तथापि एकशेषे ककुद एकत्वं न लभ्येत किन्तु द्वित्वम् तच्च न विवक्षितम्, वृषस्कन्धस्थितमांसपिण्डरूपस्य ककुद एकत्वात् । भाष्ये च 'शस्प्रभृतिष्वित्युच्यते अशस्प्रभृतिष्वपि दृश्यते शलादोषणी ककुद्दोषणी याचते महादेव' इत्युक्तम् । एतदेव भाष्यं प्रभृतिग्रहणस्य प्रकारार्थत्वे मानम् । शलाद्दोषणी इत्यस्य शलाके इव दोषणी इत्यर्थः । छान्दसः कलोपः ।

तेनेति—प्रभृतिग्रहणस्य प्रकारार्थत्वेन । 'पद्' इति 'हृद्' इति च प्रथमैकवचने रूपं सङ्गच्छते । न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक् पदादिवचनं कोशे व्यर्थम् । न हि स्थान्यादेशयोः कोशे पृथगुपादानमस्ति । स्थान्युपादानेनैव यदर्थाभिधानसमर्थः स तस्यादेश इति स्थान्यर्थेनैवार्थवत्त्वात् ।

अत एव नसाद्यादेशानां नासिकादिपर्य्याये कोशेऽनुपदेश इति वाच्यम्, पदादीनां भाष्यरीत्याऽनादेशत्वात् । अनादेशत्वेऽपि 'तृज्वत्क्रोष्टुः' इतिवत् क्व हलन्तानां पदादीनां प्रयोग इति व्यवस्थार्थं सूत्रस्यावश्यकत्वात् । शसादिभिन्नेऽपि सुपि हृदादीनां प्रयोगार्थं प्रकारार्थकत्वस्याप्यावश्यकत्वात् । स्पष्टञ्चेदम् 'वा शोक' इति सूत्रे मूले 'हृदयशब्दपर्य्यायो हृच्छब्दोऽप्यस्ति' इति ग्रन्थेन ।

इतीति—इत्यादीति क्वचित्पाठः । आदिना निशः संग्रहः । आसन्यमिति—आस्यशब्दात् 'शरीरावयवाद्यत्' ( ५-१-६ ) इति यति पद्दन्नस् इत्यासन्नादेशः ।

आस्ये भव इति—न तु आसने भव इत्यर्थः । प्रायेण सामानाधिकरण्यासङ्गतेः । अत्र 'नस्तद्धिते' इति टिलोपस्तु न, 'ये चाभावकर्मणोः' इत्यनेन प्रकृतिभावात् । प्रभृतिग्रहणस्य प्रकारार्थत्वाभावे तु शसादिषु यत्प्रत्ययस्याभावादासन्नादेशो न स्यात् ।

दोष्शब्दस्य नपुंसकत्वमप्यत एव भाष्यात्। तेन 'दक्षिणं दोर्निशाचरः' इति संगच्छते। 'भुजबाहू प्रवेष्टो: दोः' इति साहचर्यात्पुंस्त्वमपि। 'दोषं तस्य तथाविधस्य भजतः' इति। द्वयोरन्नोर्भवो न्यङ्कः।

---

ननु नैषधे ( १२ स० ९७ श्लो० )

> यः पृष्ठं युधि दर्शयत्यरिभरश्रेणिषु यो वक्रता-
> मस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः।
> दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं
> विख्यातः स्फुटमेक एव नृपतिः सीमा गुणग्राहिणाम्॥

दोषम् = नलस्य बाहुं भजतश्चापस्य, दोषम्=दूषणं भजतोऽन्यस्य कस्यचिद् गुणं गृह्णन् चापस्य गुणं=मौर्वीं च गृह्णन् नृपतिर्नल एष एको गुणग्राहिणां सीमा अत्र 'दोषम्' इति द्वितीयाया रूपं पुंस्येवोपलभ्यते इति भाष्ये 'दोषणी' इति नपुंसकद्विवचनं न संगच्छत इत्यत आह—अत एवेति—भाष्ये 'दोषणी' इति नपुंसके द्विवचनान्तप्रयोगादेवेत्यर्थः। तेनेति—नपुंसकत्वेनेत्यर्थः।

दक्षिणं दोर्बाहुमुद्यम्य-उत्थाप्य

साहचर्यादिति—अमरे 'प्रवेष्टः' इति पुंलिङ्गसाहचर्याद् 'दोस्' शब्दः पुंलिङ्गोऽपीत्यर्थः। तदुक्तममरे 'साहचर्याच्च कुत्रचित्' इति लिङ्गनिर्णय इत्यर्थः। पुंस्त्वमपीति—अत एव 'दोषम्' इति श्रीहर्षप्रयोगः संगच्छते। 'दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथा' इति धनञ्जयकोशात् टाबन्तोऽपि। दाम्यत्युपशाम्यत्यनेनेति 'दयेर्डोसिः' ( उणा. २ पा. ६९ ) इति डोसिः प्रत्यय इकार इत्।

अत्रेदं चिन्त्यते यत् 'हृन्मानसम्' 'पदाङ्घ्रिः' इत्यादौ पादशब्दस्य, हृदयशब्दस्य च पद्हृदादेश इत्यसङ्गतम्, कोशस्थशब्दानां लौकिकशब्दानुकरणरूपत्वेन स्वरूपबोधकतया पादादिशब्दानां च 'अर्थवद्ग्रहणे' इति परिभाषया चरणत्वादिप्रकारकचरणादिविशेष्यकार्थबोधकानामेवादेशविधानेन प्रकृते तदभावेन 'प्रभृतिग्रहणं प्रकारार्थकम्' इत्यस्य 'हृन्मानसम्' 'पदङ्घ्रिः' इत्यादिफलप्रदर्शनपरा कौमुद्यसङ्गता।

यदपि शब्दस्वरूपेऽपि अर्थस्य प्रकारतया 'अग्नेढक्' इत्यादिवल्लाभेनात्रादेशः सङ्गत एवेति तदपि न, अर्थविशेष्यकभानस्थले एव 'अभिव्यक्तपदार्थाः' इति न्यायेनादेशप्रवृत्तेरिति चेन्न, कोशस्थशब्दानामर्थपरत्वात्।

ननु शक्तिग्रहस्य कोशाधीनतया कोशस्थशब्दानां शक्तिग्रहासम्भवेनार्थपरत्वं शशशृङ्गायमाणमिति चेन्न, इदं पदमर्थबोधकम् पदत्वादस्मदुच्चरितघटादिपदवदित्यनुमानेन सामान्यतः ( अर्थत्वेन रूपेण ) शक्तिग्रहे पश्चात्तस्य पुरुषस्य कोशस्थपर्यायघटितसमुदायघटके कस्मिंश्चित्पदे लोकतो व्यवहारादिना वा शक्तिज्ञानं वर्तते।

तस्येदं विष्णुपदं नारायणत्वावच्छिन्ननिरूपितशक्तिमत्, ज्ञातशक्तिकनारायणपदघटितसमुदायघटकत्वादित्येवं विशेषरूपेण शक्तिज्ञानाद्विशेषार्थबोधः।

यस्य तु कुत्रचित्पदे शक्तिज्ञानं नास्ति तस्य तु विना उपदेशादिना नैव कोशपदे शक्तिग्रहः। तथा च पदत्वहेतुकानुमानेन अर्थवत्पादादीनां सत्त्वात्कोशे पदाद्यादेशे बाधकाभावात् कौमुदी सङ्गतैव विशेषरूपेणार्थबोधकेष्वेव सूत्रप्रवृत्तौ न मानम्। किञ्च शब्दार्थयोर्नित्यसम्बन्धकत्वात्सर्वत्र व्याकरणेऽर्थस्य प्रकारतया शब्दस्य विशेष्यतयोपस्थितिमादायैव ढगादिविधानमिति अर्थस्य विशेष्यतया भाने एव शास्त्रप्रवृत्तिरित्युक्तिश्चिन्त्या। कोशे एकशेषस्तु न, एकधर्मावच्छिन्नस्यैकसम्बन्धेनैकधर्मावच्छिन्नेऽन्वयरूपसाहित्याभावात्। कोशे शब्दानामर्थविशिष्टस्वरूपपरकत्वेऽपि नैकशेषः, शब्दप्रकारकार्थविशेष्यकबोधजनकानामेवैकशेषविधानात्। अत एव 'यत्तदेतेभ्यः' इत्यादौ नैकशेषः, शब्दस्यैव विशेष्यत्वादित्युपाध्यायः।

संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ । [ ६-३-११० ]

संख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ । द्व्यह्नि, द्व्यहनि, द्व्यह्ने । विगतमहर्व्यह्नः । व्यह्नि, व्यहनि, व्यह्ने । अह्नः सायः सायाह्नः । सायाह्नि, सायाहनि, सायाह्ने ।

इत्यदन्ताः ॥

विश्वपाः ।

दीर्घाज्जसि च । [ ६-१-१०५ ]

---

अह्नोरिति—न जहाति=त्यजति प्रकाशं यत्तदहः 'नञि जहातेः' (उ१ पाः१६४) इति कनिन् । द्वयोरह्नोर्भवो व्यापारादिरिति विग्रहे 'तद्धितार्थे' ( २-१-५१ ) इति समासे 'कालाट्ठञ्' ( ४-३-११ ) इति ठञः 'द्विगोर्लुगनपत्ये' ( ४-१-८८ ) इति लुकि 'राजाहःसखिभ्यष्टच्' ( ५-४-९१ ) इति टचि 'अह्नोऽह्न एतेभ्यः' ( ५-४-८८ ) इत्यह्नादेशे द्व्यह्न इत्यदन्तस्य रामवद् रूपम् । ङौ विशेषमाह—

'संख्याविसाय'' इति—सायेभ्य इति वक्तव्ये पूर्वग्रहणं संख्या च विश्व सायश्चेति विग्रहे समासे संख्याविसायास्ते पूर्वो यस्मादह्नशब्दात्स्याह्नशब्दस्येत्यर्थः । तदाह—संख्यादिपूर्वस्येति—'विभाषा ङिश्योः' इति वा अल्लोपे 'द्व्यह्नि द्व्यहनि' इति । अहन्नादेशाभावे 'द्व्यह्ने' इति ।

विगतमिति—'प्रादयो गताद्यर्थे' इति तत्पुरुषः । अतीतदिनमित्यर्थः । सायमिति—स्यते-र्भावे घञि युकि सायोऽवसानम् । अह्नः साय इति विग्रहे 'संख्याविसाय' इति सूत्रे सायपूर्वकाह्नशब्द-स्याह्नादेशविधानसामर्थ्यादेकदेशिसमासः । 'सर्वैकदेशसंख्यातपूर्वकस्याह्नशब्दस्य अह्नादेशः समा-सान्ते परे इत्यर्थकेन 'अह्नोऽह्नः' इति अह्नादेशे 'सायाह्नः' इति—अह्नोऽवसानकालः सायं-काल इति यावत् । इत्यदन्ताः ।

अथ आदन्ताः ।

विश्वपा इति—विशतेः 'अशू प्रुषि' ( उ. १ पा. १५१ सू. ) इति क्वनि विशन्ति प्राणिनो-ऽस्मिन्निति विश्वं संसारे न. जीवे. पु. श्राद्धदेवे व. व. पु. सर्वस्मिन्. सर्वनाम. त्रि. । विश्वं पाति=रक्ष-तीति विश्वपाः । 'आतोऽनुपसर्गे' (३-२-३) इति प्राप्ते 'वाऽसरूपः' इति न्यायेन 'आतो मनिन्क्व-निप्' ( ३-१-७४ ) इति चेन, 'विभाषा पूर्वाह्ण' ( ४-३-२४ ) इति सूत्रे 'कीलालप आगतम्' इति भाष्यप्रयोगाल्लोकेऽपि विच् इति केचित् । अन्ये त्वत्र क्विपमेवाहुः ।

इदमत्राकूतम्—'आतो मनिन्' अत्र छन्दसीत्यनुवृत्त्या विच् छन्दस्येव । 'अन्येभ्योऽपि दृश्यन्ते' ( ३-२-७५ ) इत्यत्र 'दृश्यन्ते' इत्युक्तेश्छन्दसीत्यस्यासम्बन्धः । अपिना छन्दस्येवातः समुच्चयः । यथा छन्दसि तेषां दृष्टानुविधिरादन्तेभ्यः, तथा तद्भिन्नेभ्दः सर्वत्र तेषां दृष्टानुविधिरित्यर्थः । 'क्विप् च' ( ३-२-७६ ) इत्यत्रान्येभ्योऽपीत्यनुवर्तते 'दृश्यते' इति वचनविपरिणामेन 'क्विप् चान्ये-भ्योऽपि दृश्यते' इति ताच्छीलिकप्रकरणे भाष्योक्तेः । चेन मनिन्नादेः संग्रह ।

अपिना आतः समुच्चयः । क्विबप्यन्येभ्य आतश्च दृश्यते इत्यर्थः । दृशिना दृष्टानुविधिः 'स्थः कः च' ( ३-२-७७ ) इति सूत्रे भाष्ये 'किमर्थं स्थः ककिपावुच्येते' इति भाष्योक्तेश्चेन क्विम्मात्रं सम्ब-ध्यते । एवञ्च आदन्तेभ्यो लोके क्विवेव । न च 'घुमास्था' इति सूत्रस्थवार्तिक-प्रत्याख्यानयोः फलैक्याय आदन्तेभ्यः क्विपोऽनभिधानमावश्यकमिति वाच्यम्, 'प्रत्ययलोपे' इति सूत्रस्य नियमार्थत्वेन क्विपोऽन्त-रङ्गत्वादपृक्तलोपे वर्णाश्रयत्वात्प्रत्ययलक्षणस्थानिवत्त्वयोरप्राप्त्या ङित्साहचर्येण श्रूयमाणे एव ङिति ईत्वप्रवृत्तेः वार्तिकारम्भप्रत्याख्यानयोः फलभेदाभावेनानभिधाने मानाभावादिति आदन्तेभ्यः क्विपि बाधाभावादत्र क्विवेवेति दिक् ।

'विश्वपा औ' इत्यत्र 'प्रथमयोः पूर्वसवर्णः ( ६-१-१०२ ) इति दीर्घे प्राप्ते दीर्घाज्जसि च इति । अत्र 'प्रथमयोः पूर्वसवर्णः' इत्यतः पूर्वसवर्ण इति, 'नादिचि' ( ६-१-१०४ ) इत्यतः 'न'

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। वृद्धिः। विश्वपौ। सवर्णदीर्घः। विश्वपाः। यद्यपीह औङि 'नादिचि' इत्येव सिद्धम्। जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षति र्नास्ति। तथाऽपि 'गौर्यौ' 'गौर्यः' इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्।

---

इति, इति चानुवर्तते। चेन 'इचि' इत्यनुकृष्यते, 'जसि' इति निमित्तस्य सत्त्वेन निराकाङ्क्षत्वादिचि इत्यस्यानुवृत्तेः सम्भवात् चग्रहणात्। केचित्तु 'च' इत्यस्याभावे 'नादिचि' सूत्रस्यैवानुवृत्तौ ह्रस्वाकारादिचि दीर्घाज्जसि निषेधः सम्भाव्येतेति चग्रहणं तद्व्युदासार्थमित्याहुः।

ननु 'तस्माच्छसो नः' इत्यतः प्राक् 'दीर्घाच्छसि' इत्येव सूत्र्यताम्। पूर्वसवर्ण इति दीर्घ इति चानुवर्त्यताम्। 'प्रथमयोः' इत्यनेनैव दीर्घे सिद्धे दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इति नियमेन दोषाभावः। 'तस्माच्छसः' इत्यत्र शसो ग्रहणं न कर्तव्यम्, 'शसि' इत्यनुवर्त्य 'तस्मात्' इति पञ्चम्या सप्तम्यन्तस्य षष्ठ्यन्तत्वकल्पनसम्भवात्। चग्रहणञ्च न कर्तव्यं भवतीति लाघवम्।

नन्वेवं तच्छब्देनानन्तरस्यैव परामर्श इति सिद्धान्तादत्र 'दीर्घाच्छसि' इत्यनेन दीर्घस्तत्रैव 'बहुश्रेयसीन्' इत्यादौ 'तस्मात्' इत्यनेन नत्वं स्यान्न तु 'हरीन्' इत्यादौ। तस्मात् इत्यत उत्तरं पाठे तु शस्ग्रहणं तस्मादित्यत्र कर्तव्यं स्यात्, किञ्चानन्तरन्यायेन 'तस्मात्' इत्यनेन अनन्तरस्यैव नत्वं स्यात् 'बहुश्रेयसीन्' इत्यत्र नत्वानापत्तिर्दोषश्चेति चेन्न। 'तस्मात्' इत्यनेन अको दीर्घस्य, प्रथमयोरिति दीर्घस्य वा परामर्श इत्याशयादिति चेन्न, दीर्घादेव शसि पूर्वसवर्णदीर्घ इति विपरीतनियमस्यापि सम्भवेन 'हरीन्' इत्यादेरसिद्ध्यापत्तेः। 'मृगान् हन्ति' 'नॄन्पे' 'कानाम्रेडिते' इति निर्देशेन विपरीतनियमवारणे तु प्रतिपत्तिगौरवम्।

'दीर्घात्सुटि' इति सुवचम्। दीर्घात्सुटि परे पूर्वसवर्णदीर्घो न स्यादित्यर्थः। नन्विदं सूत्रं व्यर्थम्! औङि 'नादिचि' इत्येव निषेधसिद्धेरित्याह—यद्यपीति। ननु जसि पूर्वसवर्णदीर्घनिषेधार्थमावश्यकमिदं तत्र 'नादिचि' इत्यस्याप्राप्तेरित्यत आह—जसि त्विति। सति निषेधे पूर्वसवर्णदीर्घाभावे 'अकः सवर्णे' इति दीर्घः। असति निषेधे पूर्वसवर्णदीर्घः, इति निषेधो मास्तु सवर्णदीर्घेण रूपं सिध्येदेवेत्याह—यद्यपीति।

गौर्य्याविति—ननु 'गौरी औ' इत्यत्र पूर्वसवर्णदीर्घो न प्राप्नोति, दीर्घस्य अक्पदबोध्यत्वाभावात् वर्णसमाम्नाये पठितानामेव अक्संज्ञा। दीर्घेकारादयश्च तत्र न पठिताः। न च अक्पदबोध्या इकारादयः 'अणुदित्' सूत्रबलात् सवर्णान् गृह्णीयुरिति वाच्यम्, उच्चरितः प्रत्ययको भवति नानुच्चरितः, इति भाष्यात्।

अकः इत्यत्र ह्रस्वेकारस्तु नोच्चरित इति 'अणुदित्' इत्यस्याप्राप्तया पूर्वसवर्णदीर्घाप्राप्तितादवस्थ्यमिति वाच्यम्, प्रत्याहारेषु जातिपक्षस्यैव भाष्यकृता सिद्धान्तितत्वात्।

अणुदित्सूत्रं विनैव वर्णसमाम्नाये पठितवर्णवृत्तिजातिमतां सर्वेषाम् अगादिसंज्ञाविधानेन दीर्घादीनामप्यक्पदबोध्यतया 'गौरी औ' इत्यादौ दीर्घेष्वपि पूर्वसवर्णदीर्घनिषेधस्य सुलभतया तदर्थं दीर्घाज्जसि चेत्यावश्यकम्।

'यूस्त्र्याख्यौ नदी' इत्यत्र 'ख्यादिभ्यश्च' इत्यादौ च दीर्घस्य यण्दर्शनात् प्रत्याहारेषु स्वबोध्यबोध्ये निरूढलक्षणाया दीक्षितेन दर्शितत्वाच्च पूर्वसवर्णदीर्घनिषेधस्य चारितार्थ्यम्। ल्वादिभ्य इत्यादिनिर्देशादिकपदे अच्पदे एव च निरूढलक्षणा इति तु न, असति बाधके प्रमाणानां सामान्ये पक्षपात इति नियमात्, 'गोरीः, इत्यादौ पूर्वसवर्णदीर्घसिद्धये, 'उपार्च्छति, इत्यादौ आकाररूपाया वृद्धेः 'उरण् रपरः, इति रपरत्वाय, 'निषादकर्षूः' ठक्, इत्यत्र 'इसुसुक्तान्तात्कः' इति ठस्यकादेशाय, 'अर्मीषाम्, इत्यत्र इणः परस्य सस्य षत्वाय च प्रत्याहारमात्रे निरूढलक्षणाया आवश्यकत्वात्।

ननु 'गौर्यौ' इत्याद्यर्थं यदि 'दीर्घाज्जसि च' इति सूत्रं तदा ईकाराद्यन्तप्रकरणे एव एतदुपन्यास उचित इत्यत आह—इहापीति—'विश्वपौ' इत्यत्र 'नादिचि' दीर्घाज्जसि च' उभयोः प्राप्तौ परत्वात

आतो धातोः । [ ६-४-१४० ]

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । 'अलोऽन्त्यस्य' । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । 'धातोः' किम्—हाहान् ।

'दीर्घाज्जसि च' इत्यस्यैव पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायेनौचित्यादित्यर्थः । न च विरोधे सति परस्य बलीयस्त्वमत्र तूभयोर्निषेधकत्वेन विरोधाभावात्परस्य बलवत्त्वमसङ्गतमिति वाच्यम्, एकेन यदि निषेधविधानं तदा अपरेण तदनुवादो वाच्य इति कस्यानुवादकत्वम्, विधायकत्वमिति विवादरूपविरोधस्यापि सत्वात् ।

'विश्वपा अस्' इत्यत्र 'प्रथमयोः' इति पूर्वसवर्णदीर्घे प्राप्ते 'आतो धातोः' (६-२-१४०) इति । अत्र 'अङ्गस्य' इति, 'भस्य' इति चाधिकाराह्लभ्यते । 'अल्लोपोऽनः' इत्यतो लोप इत्यनुवर्तते । आत इति धातोर्विशेषणम् । तदन्तविधौ आदन्तस्य धातोरिति अङ्गस्य विशेषणम् । आदन्तो योधातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । तदाह—आकारान्त इत्यादि । 'विश्वपा अस्' अलोऽन्त्यस्येति परिभाषया अन्त्याकारस्य लोपे 'विश्वपाः' इत्यादि ।

शङ्खध्मादय इति—शाम्यति भञ्झावातमिति शङ्खः । अन्तर्भावितण्यर्थोऽत्र शमिः । शङ्खध्वनिना भञ्झावातः शाम्यति । शङ्खशब्दः वाद्यभेदे, ललाटास्थ्नि, निधिभेदे, नखीनाम्नाख्याते गन्धद्रव्ये, कर्णान्तिकेऽस्थ्नि, नागभेदे, नागदन्तमध्ये, दशनिखर्वसंख्यायाम् । शङ्खेन शङ्खं वा ध्मति शब्दं करोतीति शङ्खध्मा क्विपि रूपम् । आदिना सोमपाः । सोमशब्दः चन्द्रे, कर्पूरे, कुबेरे, यमे, वायौ, वसुभेदे, जले, वानरे, सोमलतौषधौ, अमृते दीधितौ, शिवे च । कीलालपाः । पयः कीलालममृतम् । मधुपादयः । धातोः किमिति—'आतोऽनापः' इत्येव सूत्रमस्तु । अनाप इत्युक्त्या 'रमाः' इत्यत्र न दोषोऽत आह—

हाहानिति—'हाहाः' इत्यव्युत्पन्नं यदि प्रातिपदिकं तदा प्रत्युदाहरणम्—

'हाहा हूहूश्चैवमाद्या गन्धर्वाः' इत्यमरात् हाहानामको गन्धर्वो देवयोनिविशेषः ।

नैषधे तु हंसस्योक्तिः—'स्वर्लोकमस्माभिरितः प्रयातैः केलीषु तद्गानगुणान् निशम्य । (निपीय हा हेति गायन् यदशोचि तेन नाम्नैव हाहा हरिगायनोऽभूत्' इति ।

( नै. ३ स. २७ श्लो. ) ।

यदि तु हा=कष्टं कष्टेन वा जहातीति 'हाहाः' तदा धातुत्वादल्लोपे 'हाहः' इत्येवेष्टमित्यत आकारेण सह वर्तते इत्यर्थे 'तेन सहेति तुल्ययोगे' (२-२-२८) इति बहुव्रीहिसमासे 'वोपसर्जनस्य' (६-३-८२) इति सहस्य सादेशे 'स आ' इत्यत्र पूर्वसवर्णदीर्घे 'साः' इति, ततः शसि 'सा अस्' इत्यत्र आकारलोपवारणार्थं धातुग्रहणम् । 'सान्' इत्येव रूपम् । अकारेण सह समासे तु पञ्चमीसमासेन स्थानिवद्भावाद्दीर्घाकाराभावाल्लोपाप्राप्तेर्न दोष इति तन्न, आकारेणोक्तसमासे दोषतादवस्थ्यात् ।

वस्तुतस्तु 'क्त्वः' 'भः' इति षष्ठ्यन्ते 'आतो धातोः' इत्यस्याप्राप्तया तत्र लोपार्थम्, 'याः' इत्यत्र लोपाभावार्थं च वार्तिककृता धातोरित्यकृत्वा 'आतोऽनापः' इति वक्तव्यम् इत्युक्तम् । भाष्यकृता च 'आतः' इत्येको योगः । आदन्ताङ्गस्य भस्याकारस्य लोप इत्यनेन 'क्त्वः, रनः' इत्यत्र लोपः साधितः । 'आतोऽनाप' इति वार्तिकं प्रत्याख्यातम् । तथा च आबन्तादाचारक्विबन्तादामि भाष्यमते धातोराकारसत्वाल्लोपः प्राप्नोति । वार्तिकमते तत्र आपः सत्वाल्लोपो न प्राप्नोतीति विरोधः स्यात्तद्वारणायास्यानभिधानं कल्पयति नागेशः । यद्वा आबन्तादाचारक्विबेव नेति वा ।

वस्तुतस्तु सूत्रकृद्भाष्यकृद्वार्तिककृतां मतैक्याय धातुपदमाबन्तभिन्नपरम् । तथा च त्रयाणां मते क्त्वः, भः, इत्यादीनां सिद्धिः । न चैवं 'न मु ने' इति निर्देशासङ्गतिः, 'ना' इत्यस्य नपुंसकत्वेन ह्रस्वत्वे लोपाप्राप्तेः । 'रामान्' इत्यत्र आल्लोपस्तु न, आकारान्ताद्विहिते प्रत्यये यद् भं तस्यैवाकारस्य लोपविधानात् । तथा च 'सा' शब्दे हाहादिशब्दे च लोप इष्ट एव ।

टासवर्णदीर्घः । हाहा । ङे वृद्धिः । हाहै । ङसिङसोर्दीर्घः हाहाः । ओसि वृद्धिः हाहौः । ङौ आद् गुणः । हाहे । शेषं विश्वपावत् । 'आतः' इति योगविभागादधातोरप्याकारलोपः क्वचित् । क्त्वः, भ्रः ।

॥ इत्यादन्ताः ॥

---

'आतो धातोः' इत्यत्र धातुपदमाङिभन्नपरम् । अत एव 'अतो गुणे' इति पररूपं बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकमिति भाष्यकृता मत्वा 'रामान्' इत्यस्य सिद्धये पररूपबाधनाय 'बहुवचने' इति योगविभागः कृतः । अत्र 'अतो दीर्घ' इति, 'सुपि च' इत्यनुवर्त्य 'अदन्ताङ्गस्य दीर्घः स्याद्बहुवचने सुपि' इत्यर्थेन पररूपं बाधित्वा दीर्घे कृते नत्वसिद्धये 'प्रथमयोः पूर्वसवर्णः' इति दीर्घैकादेशे 'रामान्' इत्यस्य सिद्धिं विधाय 'राम आम्' इत्यत्र नुटं परत्वाद् बाधित्वा 'बहुवचने' इति दीर्घे नुड्विधानाय 'आज्जसेरसुक्' इत्यत आदित्यनुवर्त्य 'ह्रस्वनद्यापः' इत्यत्र आब्ग्रहणमकृत्वा अकारान्तात्परस्यामो नुडित्यर्थेन दीर्घाकारान्तात्परस्यामो नुटि 'कीलालपा आम्' इत्यत्र नुड्वारणाय 'ह्रस्वनदिनः' इत्यत्र 'आतो धातोः' इत्यनुवर्त्य वाक्यभेदेन आदन्तस्य धातोर्लोप आमि इति नुड्बाधकेन लोपेन 'कीलालपाम्' इत्यत्र नुड् वारितः ।

हाहा-सा-इत्यादिशब्देषु शङ्कासमाधी न कृतौ । ततो ज्ञायते तत्र 'सानाम्' 'हाहानाम्' इत्यादीनामेवेष्टत्वम् इति । अन्यथा भाष्यमसङ्गतं स्यात् । यद्वा पक्षान्तरेणैकवाक्यतासम्पत्तये 'ह्रस्वग्रहणस्य' अनुवृत्तिं कृत्वा ह्रस्वेनानो विशेषणात् ह्रस्वस्थाने य आकारस्तदन्तात्परस्यामो नुडित्यर्थेन हाहाशब्दे न नुट् । 'हाहाम्' इत्येव ।

न च 'बहुवचने' इति योगविभागपक्षे अवर्णान्तान्नुड्विधानस्य 'रमाणाम्' इत्यत्राबन्ते चारितार्थ्येन 'रामाणाम्' इत्यत्र 'राम आम्' इति दशायां नुटं परत्वाद् बाधित्वा 'बहुवचने' इति दीर्घे 'आतो धातोः' इति लोपप्रसङ्गः, पञ्चमीसमासेन स्थानिवत्त्वात् सन्निपातपरिभाषाबलाच्च लोपाप्राप्तेः।

गुरवस्तु 'आतः' इति विभक्तसूत्रे आत्पदं खोत्वावच्छिन्नबोधकस्य घटको य आकारस्तद्भिन्नो य आकारस्तत्परम् । 'न मु ने' इत्यत्र नाशब्दः स्त्रीलिङ्ग एवेति 'ने' इति निर्देशः सङ्गच्छते । क्त्वाशब्दश्च 'क्त्वानाम्' इति भाष्यप्रयोगात् टाबन्तः, अजादित्वात् । क्त्वः इति सौत्रप्रयोगात्पुंलिङ्ग इति तत्राकारलोपः । एवम् 'भ्रः' इत्यपीत्याहुः ।

टासवर्णदीर्घ इति—टायाः सवर्णदीर्घः टासवर्णदीर्घ इति समस्तम् । 'टा' इत्यविभक्तिको निर्देशः प्रक्रियादशायां न दूष्यति इति बालमनोरमा । 'ङेवृद्धिः' अत्रापि 'ङेवृद्धिः' इति समस्तम् । वस्तुतस्तु 'आने' 'ङसिङसोः' 'ओसि' इत्यादौ सप्तम्यन्तपाठदर्शनात् 'टायां सवर्णदीर्घः, 'ङयि वृद्धिः' इत्येव युक्तम् । लेखकप्रमादकृत्पाठान्तरम् ।

ननु क्त्वाभ्राप्रत्ययौ तथा च 'क्त्वः' भ्रः' 'क्त्वि' इत्यत्र कथमाल्लोप इत्यत आह—इतीति । आत इति—'आतो धातोः' इत्यत्र 'आतः' इत्येको योगः । आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः । तेन 'क्त्वः' इति 'भ्रः' इत्यादावाल्लोपः सिध्यति । ततः 'धातोः' इति आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः । पूर्वेणैव धातोरप्याकारलोपसिद्धेरिदं व्यर्थीभूय योगविभागस्येष्टसिद्ध्यर्थतया पूर्वस्य क्वाचित्कत्वं ज्ञापयति । तेन नातिप्रसङ्गः । 'धातोः' इति आबन्तव्यावृत्त्यर्थम्, हाहादिव्यावृत्त्यर्थञ्च ।

न च मालाशब्दादाचारक्विबन्तात् शसादावाबन्तस्य धातुत्वेनालोपापत्तिः सन्नाद्यन्तत्वेन धातुत्वादाकारान्तत्वाच्च । न च 'आतोऽनापः' इति वार्त्तिकेन निषेधः, आत इति योगविभागेन भाष्यकृता वार्त्तिकस्य प्रत्याख्यातत्वादिति वाच्यम्, भाष्यवार्त्तिककारयोर्मतैक्याय आङिभन्नस्यैवाकारस्य ताभ्यां लोपविधानात्, आचारक्विबन्तात्कर्तृक्विपोऽनभिधानाच्च ।

सूत्रे 'क्त्वः' 'भ्रः' इत्यादिप्रयोगस्तु 'बहुलं छन्दसि' इति वचनात् सूत्राणां छन्दोवत्त्वात् क्वचिदधातोरप्याकारलोपेन सिध्येत्, परन्तु क्त्वो ल्यप् स्यात्, भ्रः शानच् स्यादिति व्याख्यानवाक्ये लोपः सिद्धः । इत्यादन्ताः ।

हरिः । 'प्रथमयोः पूर्वसवर्णः' ( सू १६४ ) । हरी ।

जसि च [ ७-३-१०९ ]

ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः ।

---

अथ इकारान्ताः । हरिरिति—हरति पापं तमो वेति हरिः ।

"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥" इति ।

हरतेः 'हृपिषिरुचि' ( उ. ४ पा. ११६ सू. ) इति इन्प्रत्ययः । विष्णौ, सूर्ये, सिंहे, सर्पे, वानरे, भेके, चन्द्रे, वायौ, अश्वे, यमे, हरे, ब्रह्मणि, किरणे नववर्षेषु, वर्षभेदे, मयूरे, कोकिले, हंसे, शुकपक्षिणि, भर्तृहरौ, पण्डिते, वह्नौ, इन्द्रे, पीतवर्णे, पिङ्गलवर्णे, हरिद्वर्णे च इति शब्दस्तोममहानिधिः ।

ननु 'हरिः' इत्यत्र विसर्जनीयस्य हयवरट्सूत्रभाष्ये 'अयोगवाहानामट्सु णत्वम्' इति वार्त्तिअधिकृतं केनाच्त्वबोधनाद्विसर्गे परे यण् स्यादिति चेन्न, 'इको यणचि' ( ६-१-७७ ) इत्यस्य दृष्ट्या सानयोर्विसर्जनीयः' ( ८-३-१५ ) इत्यस्यासिद्धत्वात् 'हरि औ' इत्यत्र 'प्रथमयोः 'सवर्णदीर्घे पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे 'हरी' इति । जसि 'हरि अस्' इत्यत्र पूर्वसवर्णदीर्घे प्राप्ते ।

'जसि च' (७-३-१०९) इति । 'ह्रस्वस्य गुणः' ( ७-३-१०८ ) इत्यनुवर्तते, 'अङ्गस्य' विशेष्यं ह्रस्वस्येति विशेषणम् । तदन्तविधौ ह्रस्वान्तस्याङ्गस्य गुणः स्यादित्यर्थः । 'अलोऽन्त्यस्य' इति ह्रस्वेकारस्य गुणे 'हरयः' इति ।

ननु 'जसि च' 'जुसि च' ( ७-३-८३ ) इत्यकृत्वा 'जिति च' (७-३-८३) इति सूत्रमस्तु । 'मिदेर्गुणः' इत्यतो गुण इति 'क्सस्याचि' इत्यतोऽचीति अनुवर्त्य 'ह्रस्वस्य' इत्यनुवर्त्य 'इको गुणवृद्धी' इति परिभाषया 'इकः' इत्यस्योपस्थित्या इगन्ताङ्गस्य गुणः स्यादजादौ जिति' इत्यर्थेन 'हरयः' विष्णवः, 'अजागरुः' 'अजुहवुः' 'अबिभयुः' इत्यादीनां सिद्धिः ।

न च 'जिति' इत्यस्य 'हरयः' इत्यादौ चारितार्थ्यात् जुसि क्ङिति च' ( १-१-५ ) इति निषेधाद्गुणो न स्यादिति वाच्यम्, 'जुसि' जित्करणवैयर्थ्येन तत्रापि 'क्ङिति च' इत्यस्य बाधकल्पनात् । 'जुसि च' इत्यत्र 'अथवा अचीति वर्तते तेन जुसं विशेषयिष्यामोऽजादौ जुसीति' 'क्सस्याचि' इत्यतोऽचीत्यनुवृत्तेः भाष्ये उक्ततया 'उषुर्युः' 'जागृयुः' इत्यादौ न दोषः ।

वस्तुतस्तु 'क्सस्याचि' ( ७-३-७२ ) इत्यतः परेषु दशसु सूत्रेषु अचीत्यस्याननुवर्त्तनादेकादेशेऽनुवर्तनं भाष्यकृतां प्रौढिकृतमेव । किञ्च 'चिनुयुः' 'सुनुयुः' इत्यत्र गुणाभावाय 'अचि' इत्यस्यानुवृत्तिरुक्ता, न्यासान्तरं चोक्तम्—'मिदेर्गुणोऽजुसि' इति संहितया पाठे शिद्विषयेऽजादावुसि गुण इत्यर्थेन वारणमेव सम्यक् । शिद्विषये इत्युक्त्या 'चक्रुः' इत्यादौ न गुणः ।

न च 'पप्यः' 'वातप्रम्यः' इत्यादौ गुणापत्तिः, 'दीर्घाज्जसि च' इति सूत्रे जस्ग्रहणसामर्थ्येन दीर्घान्तस्य जसि गुणाभावकल्पनात् । अन्यथा गुणेनैव पूर्वसवर्णदीर्घबाधात्पूर्वसवर्णदीर्घनिषेधार्थं जस्ग्रहणस्य वैयर्थ्यापत्तेः ।

न च गौरीहूहूशब्दात् क्यजन्तात् क्विपि अलोपयलोपयोः जसि अलोपस्य स्थानिवत्त्वेन गुणाप्राप्तथा पूर्वसवर्णदीर्घे च स्थानीभूतादचः पूर्वस्य परस्य च स्थानिवत्त्वेन पूर्वमात्रविधावेव स्थानिवत्त्वस्य भाष्ये सिद्धान्तिततया स्थानिवत्त्वाप्राप्तया प्राप्तपूर्वसवर्णनिषेधार्थं जस्ग्रहणस्य चारितार्थ्येन जसि दीर्घान्तस्य गुणो नेति कल्पनमशक्यमिति वाच्यम्, 'एरनेकाचः' 'ओः सुपि' इति यणा बाधेन दीर्घाप्राप्त्या वयर्थ्येन उक्तकल्पनायाः सुवचत्वात् ।

## ह्रस्वस्य गुणः [ ७-३-१०८ ]

ह्रस्वस्य गुणः स्यात्सम्बुद्धौ। 'एङ्ह्रस्वात्' ( सू १९३ ) इति संबुद्धिलोपः। हे हरे। हरिम्। हरी। हरीन्।

## शेषो घ्यसखि [ १-४-७ ]

अनदीसंज्ञौ ह्रस्वौ याविदुतौ

न च यवक्री-सुश्रीशब्दात्क्यजन्तक्विबन्तात् 'जसि' संयोगपूर्वकत्वेन 'एरनेकाचः' इत्यस्याप्राप्त्या तत्र पूर्वसवर्णदीर्घनिषेधार्थं जस्ग्रहणं चरितार्थमिति वाच्यम्, 'अचि श्नु' इति इयङा बाधेन तत्रापि पूर्वसवर्णदीर्घाप्राप्ते जंस्ग्रहणवैयर्थ्यंतादवस्थ्यात् ।

न च 'एरनेकाचः' इति यणमन्तरङ्गत्वाद् बाधित्वा 'इको यणचि' प्राप्तं यणं परत्वाद् बाधित्वा पूर्वसवर्णदीर्घं प्राप्तं परत्वाद् बाधित्वा 'एरनेकाचः' इति यणं बाधित्वा 'इको यण्' इति चक्रकापत्तिस्तु न, 'वार्णादाङ्गं बलीयः' इति न्यायेन इको यणो बाधेन चक्रकाभावात्। 'पटुजातीयः' इत्यत्र 'चुटू' इत्यनेन जकारस्येत्त्वे 'ञिति च' इति गुणापत्तिस्तु न, 'लोपो व्योर्वलि' इति लोपेन यकारप्रश्लेषाज्जकारस्योपदेशे प्रत्ययादित्वाभावेनेत्त्वाप्राप्तेरिति चेन्न, यङ्लुगन्ताद् भूधातोर्लङि जुसि 'अबोभवुः' इत्यत्र 'ञिति च' इति गुणस्यानुबन्धेन निर्दिष्टत्वात् 'श्तिपा शपाऽनुबन्धेन' इति परिभाषया गुणाप्राप्त्याऽसिद्ध्यापत्तेः ।

वस्तुतस्तु 'सन्यङोः' इत्यत्र 'एकाचः' इत्यनुवर्तनात् 'श्तिपा शपा' इत्यनेन यङ्लुगन्ते द्वित्वाप्राप्त्या अभ्यासाभावेन 'गुणो यङ्लुकोः' इत्यस्य यङ् लुकि अप्राप्त्या तत्र लुग्ग्रहणं व्यर्थीभूय परिभाषाया अनित्यत्वं ज्ञापयति । परिभाषाया भाष्यानुक्तत्वेन च 'अबोभवुः' इत्यादेः सिद्धावपि अनेकक्लिष्टकल्पनापेक्षया ज्ञानगौरवात् 'ञिति च' न्यासः मूषिकार्थं पर्वतखननन्यायवत्त्याज्य एवेति दिक् ।

ह्रस्वस्य गुण इति । 'सम्बुद्धौ' (७-३-१०६) इत्यत 'सम्बुद्धौ' इत्यनुवर्तते, सम्बुद्धिलोप इति । एङन्तत्वादिति शेषः । ह्रस्वान्तत्वात्तु न, परत्वान्नित्यत्वात्, तदप्राप्तियोगेऽचरितार्थे सति कृते चारितार्थ्यात् तक्रन्यायेनापवादत्वाच्च गुणेन बाधात् । न च सम्बुद्धिसंनिधानेन गुणे संनिपातपरिभाषया लोपो न स्यादिति वाच्यम् 'नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यात' इति भाष्योक्त्या सम्बुद्धिनिमित्तके कार्ये कृते तस्य कार्यस्य यत्र सन्निपातविघातककार्यान्तरनिमित्तत्वप्रसङ्गस्तत्रैव एङ्ग्रहणसामर्थ्येन भाष्योक्त्या च सन्निपातपरिभाषाया अप्रवृत्तिकल्पनात् ।

तेन 'अतोऽम्' इत्यत्र म् इति छेदे 'हे ज्ञान' इत्यत्र सन्निपातपरिभाषया सम्बुद्धिलोपानापत्तिरिति भाष्येण न विरोधः, सम्बुद्धिलोपे कर्तव्ये सम्बुद्धिनिमित्तककार्यस्यानिमित्तत्वात् ।

शेषो घ्यसखि इति । 'आधृषाद्वा' इत्यधिकारे 'शिष असर्वोपयोगे' अयं विपूर्वोऽतिशये। शेष्यते न सर्वं उपयुज्यते इत्यर्थे ण्यन्तात्कर्मणि 'एरच्' इति कर्मणि अच् णेरभावे घञ्। शेषोऽवशिष्टः। अत्र यूस्त्र्याख्यौ इत्यत 'यू' इत्यनुवर्तते 'ङिति ह्रस्वश्च' इत्यतो 'ह्रस्वः' इति। पूर्वसूत्रे तस्य दीर्घपरत्वेनात्र ह्रस्वेन सामानाधिकरण्यासम्भवात् शब्दाधिकारादत्र ह्रस्वपरत्वम्। अत्र 'यू' इति ह्रस्वान्तद्विवचनम् ।

यद्वा अनुवृत्तस्य 'यू' इत्यस्याभेदेनान्वयबाधात् षष्ठ्यन्तेन विपरिणामाद् य्वोर्यौ ह्रस्वौ इति शेषपदार्थमाह—अनदीसंज्ञकाविति। 'असखि' इत्यस्य सखिभिन्नमित्यर्थः। तथा च वर्णसंज्ञापक्षे सखिभिन्नस्यावयवौ अनदीसंज्ञकौ यौ ह्रस्वाविदुतौ तौ घिसंज्ञौ स्त इत्यर्थः। तदन्तसंज्ञापक्षे सखिभिन्नौ यौ अनदीसंज्ञकह्रस्वेवर्णोवर्णान्तौ तौ घिसंज्ञकावित्यर्थं इति दीक्षिताः ।

यत्रावयवस्य कार्ये समुदायः पर्युदस्यते तत्र समुदायभेदस्य व्यभिचाराभावाद्विशेषणवैयर्थ्यात् समुदायबोधकस्य स्वावयवे लक्षणा। तथा च सख्यवयवभिन्नौ याविदुतौ तौ तदन्तौ वा घिसंज्ञौ स्त इत्यर्थः। तथा च सख्यवयवभिन्नावित्यर्थे सुसखिशब्दादौ न घिसंज्ञा, इकारस्य सख्यवयवत्वात् ।

तदन्तं सखिवर्जं घिसंज्ञं स्यात्। 'शेषः' किम्—मत्यै। एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम्। 'ह्रस्वः' किम्-वातप्रम्ये। 'यू' किम्-मात्रे।

---

अस्मिन्नर्थे प्रमाणञ्च 'यस्येति च' (६-४-१४८) इति सूत्रस्थं भाष्यम्। तथा हि—ईकारे परे इकारलोपस्य किमुदाहरणमिति प्रश्ने 'अतिसखेरागच्छति' इति। अयं भावः 'सख्यशिश्वीति भाषायाम्' (४-१-६२) इति सखिशब्दान् ङीपि यदि लोपो न स्यात्तदा सवर्णदीर्घे पूर्वान्तवद्भावेन सखि-शब्दत्वात् उपसर्जनह्रस्वे सख्यवयव एव इकार इति सख्यवयवभिन्नेकाराभावाद् घिसंज्ञा न स्यात्। लोपे तु शेष इकारो न सखिशब्दावयव इति घित्वं सिध्यति।

यदि सखिभिन्नो यः शब्दस्तस्येकारस्य घिसंज्ञेति दीक्षितार्थे तु भाष्यं विरुध्येत, दीर्घे कृतेऽपि सखिभिन्नो यः शब्दस्तस्य यो ह्रस्वेकार इत्यर्थे सखिभिन्नोऽतिसखीति तस्येकारस्य घित्वं स्यादेवेति भाष्यविरोधापत्तेरिति शेखरकाराः। दीक्षितमते तु सखिभिन्नः सुसखिशब्दस्तस्यावयवाविदुतौ तदन्तं वा सुसखि इति तस्य घिसंज्ञा स्यादेव।

दीक्षितः स्वमतेनाह—

तदन्तं सखिवर्जं घिसंज्ञं स्यादिति। शेषः किमिति—'अनदीसंज्ञौ' इति मास्तु, ह्रस्वौ याविदुतौ तदन्तं शब्दस्वरूपं घिसंज्ञं स्यादित्येवास्तु। 'मत्यै' इति। 'ङिति ह्रस्वश्च' इति नदीसंज्ञा-पक्षेऽपि घित्वे 'आण्नद्याः' इत्यादि 'घेर्ङिति' इति गुणे अयादेशे 'आटश्च' इति वृद्धौ 'मतयै' इति स्यात्त-द्वारणार्थम् 'अनदीसंज्ञकावि'ति। ननु शेषग्रहणाभावेऽपि 'मत्यै' इत्यादौ घिसंज्ञा न स्यात् 'आकडारा-देका संज्ञा' इति नियमेन निरवकाशया नदीसंज्ञया बाधादित्याह—एकसंज्ञेति—'आकडारादेका' इत्यस्य संज्ञाव्यवस्थापकत्वेन अधिकारादियस्य 'कडाराः कर्मधारये' इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः।

यद्यपि असखीति पर्युदासेन शब्दस्वरूपस्य विशेष्यस्य लाभो भवति तथाऽपि पर्युदास-लभ्यस्य विलम्बोपस्थितिकतया झटिति विशेष्यलाभार्थं तदित्याह—स्पष्टार्थमिति।

ननु 'मत्यै' इत्यादावनवकाशत्वान्नदीसंज्ञैव भविष्यतीत्युक्तं तदसङ्गतम्, असखीति पर्युदा-सात्सखिशब्दे 'पतिः समास एव' इति नियमात् 'गवां पत्यै ( स्वामिन्यै ) स्त्रियै' इत्यत्र पतिशब्दे च घिसंज्ञाया अप्राप्त्या नदीसंज्ञायास्तत्र चारितार्थ्यात्।

'मत्यै' इत्यादौ परत्वाद् घिसंज्ञा मा भूदेतदर्थं शेषग्रहणमावश्यकमिति चेन्न, 'ङिति पतिश्च' 'समासे एव' अत्र पतिरित्यनुवर्तते। इत्येवं कर्तव्ये 'न ह्येकमुदाहरणं सामान्ययोगारम्भं प्रयोजयतीति न्यायेन 'ङिति ह्रस्वश्च' इत्यत्र ह्रस्वग्रहणवैयर्थ्येन तेन स्वविषये नदीसंज्ञाबाधज्ञापनात्, इकारांशे चारि-तार्थ्येऽपि उकारांशे चारितार्थ्याभावेन 'ङिति ह्रस्वश्च' इति सूत्रेण उकारस्य स्त्रियां वर्तमानस्य नदी-त्वेन घिसंज्ञासूत्रे उकारस्यानदीसंज्ञकस्यैव ग्रहणमिति तत्साहचर्यादिकारस्यापि तादृशस्य ग्रहण-मित्याशयात्। परन्तु अनेकक्लिष्टकल्पनापेक्षया स्पष्टप्रतिपत्तये शेषग्रहणमेव ज्याय इति ग्रन्थकृदाशयः।

वस्तुतस्तु 'गवां पत्यै' इत्यादौ 'पतिः समास इव' इति नियमेन घिसंज्ञाया बाधेऽपि असंकु-चिताया घिसंज्ञाविधायकशास्त्रीयविषयतायाः सत्त्वेन न चारितार्थ्यशङ्कावकाश इति 'अहन्' सूत्रे शेखरे स्पष्टम्।

वातप्रम्ये इति—ह्रस्वग्रहणाननुवृत्तावपि 'असखि' इति ह्रस्वान्तस्य पर्युदासाद् ह्रस्वस्यैव घिसंज्ञा स्यादित्याशङ्कायां सखायमिच्छति सखीयतीति क्यजन्तात् क्विपि दीर्घान्तस्यापि सम्भवेन दीर्घेऽपि घित्वं स्यादित्याह—वातप्रम्ये इति। यद्यपि ह्रस्वग्रहणाननुवृत्तौ 'यू स्त्र्याख्यौ' इत्यत्र यूपदं दीर्घबोधकमित्यत्रापि दीर्घयोरेव ग्रहणं स्यादिति 'हरये' इत्यादावव्याप्तिरेव दातुमुचिता, तथाऽपि 'अच घेः' ओगुणः' इत्यादिनिर्देशाद् ह्रस्वस्यापि घित्वं स्यादित्यतिव्याप्तिरेवोक्ता।

मात्रे इति—'यू' इत्यस्याननुवृत्तौ ह्रस्वग्रहणस्यानुवृत्तौ ह्रस्वो ह्रस्वान्तो वा घिसंज्ञ इत्यर्थे मातृशब्दस्यापि घित्वे मातृ ए इत्यत्र 'घेर्ङिति' इति गुणे रपरत्वे 'मातरे' इत्यस्य वारणाय यूग्रहण-मिति। न च यू ग्रहणाभावे प्रथमोपस्थितत्वाद् रामशब्दे एवापत्तिरुचिता।

आङो नाऽस्त्रियाम् [ ७-३-१२० ]

घे: परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। 'अस्त्रियाम्' किम्—मत्या।

घेर्ङिति [ ७-३-१११ ]

घिसंज्ञकस्य, ङिति सुपि गुणः स्यात्।

न च फलाभावः 'राम टा' इत्यत्र नादेशरूपस्य फलस्य सत्वादिति वाच्यम्, निरवकाशेन इनादेशेन नादेशस्य बाधात्। न च रामश्च कर्ता चेति द्वन्द्वे 'द्वन्द्वे घि' (२-२-३२) इत्यनेन रामस्य पूर्वनिपातः फलम्, 'अजाद्यदन्तम्' इत्यस्य अदन्तस्य पूर्वनिपातश्चेत्तर्हि अजादेरेवेति नियमेन तल्लक्षणाभावात्। अजादेश्चेत्पूर्वनिपातस्तर्हि अदन्तस्यैवेति विपरीतनियमस्तु न, 'ईदग्नेः सोमवरुणयोः' इति ज्ञापकात्। अन्यथा अग्निशब्दस्यादन्तत्वाभावेन पूर्वनिपाताभावे तद्वैयर्थ्यापत्तिः।

न च 'ऋतो ङिसर्वनामस्थानयोः' इति सूत्रे ऋदन्तस्य घित्वे ङौ 'घेर्ङिति' इति गुणेनैव सिद्धे ङिग्रहणवैयर्थ्येन ऋदन्तस्य घेर्गुणो नेति कल्प्यते इति वाच्यम्, अपूर्ववचनज्ञापनापेक्षया लाघवादनुवृत्तेरेव ज्ञापनौचित्यात्।

यद्वा 'यू किं मात्रे' इत्यस्य व्याख्यानं मातृशब्दार्थम् इति 'मातृ टा' इत्यत्र 'आङो ना' इति नादेशाभावार्थमित्यर्थः। न च मातृशब्दस्य स्त्रीत्वाभावाप्राप्तिः परिच्छेत्तृवाचकस्यैवात्र विवक्षितत्वेन तस्य च पुंवाचकत्वाभावापत्तेः सुवचत्वात्। एतेन ऋदन्तस्य घेर्गुणश्चेत्तर्हि ङावेवेति ङौ गुणश्चेत्तर्हि ऋदन्तस्यैवेति विपरीतनियमेन 'रामे' इत्यत्र गुणाभावस्तु न, 'बहुवचने' इत्यादिनिर्देशेन विपरीतनियमाभावादित्यपि परास्तम्। 'आङो नाऽस्त्रियाम्' इत्यत्र 'इदुद्भ्याम्' इत्यनुवृत्त्या मात्रा इत्यत्र दोषाभावे तु 'यू किम्' इत्यस्य 'यूस्त्र्याख्यौ' इति सूत्रे इत्यर्थः। 'मात्रे' इत्यस्य स्त्रीवाचके नदीसंज्ञायामाटि 'मात्रै' इत्यापत्तिरित्यर्थः।

'आङो नाऽस्त्रियाम्' इति। 'अच घेः' इत्यतो घेरित्यनुवर्तते तदाह—घेः परस्येति। 'आङः पुंसि' इति तु नोक्तम्, 'अमुना कुलेन' इति नपुंसके मुत्वस्यासिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्यानापत्तौ रूपासिद्धेः। नादेशे तु नासिद्धत्वम् 'न मु ने' इति असिद्धत्वस्य निषेधात्। तत्र 'ने' इति नाशब्दान् ङौ रूपम्। न च तन्त्रेण नाभावे नकारे च कार्ये विषयसप्तम्या नाभावं नुमं च (नकारम्) प्रति अन्यं च प्रति कृते च कार्यान्तरं प्रति ( दीर्घादिकं प्रति ) मुभावो नासिद्ध इति वाच्यम्; 'अमुष्मै कुलाय' इत्यत्र 'न मु ने' इति सूत्रविषये पूर्वं विभक्तिनिमित्तककार्याप्रवृत्तौ मुत्वे तस्य नकारविषये कमपि प्रत्यसिद्धत्वाभावेन स्मायादेशं प्रत्यसिद्धत्वेऽपि परत्वेन नुमापत्तेः।

'अमू कुले' 'अमुयोः कुलयोः' इत्यत्र एत्वस्याप्रवृत्तौ मुत्वे नुमि चानिष्टापत्तेश्च। नकारप्रश्लेषे 'न मु टादेशे' इति वार्तिकविरोध इति नागेशोक्तिस्तु न युक्ता, पूर्वपक्षिणः सूत्रविरोधवद्वार्तिकविरोधस्याकिञ्चित्करत्वात्। 'अमुना घटेन' इत्यस्यासिद्धिरिति वक्तुं युक्तम्।

ननु आङो विभक्तेरभावाद् 'आङो ना' इत्यसङ्गतमत आह—आङिति प्राचामाचार्याणां संज्ञेत्यर्थः। ङकारविशिष्टा संज्ञा न तु ङस्येत्त्वम्। तेन 'हरिणा' इत्यत्र न गुणः। एवम् 'औङ आपः' इत्यत्रापि न ङित्त्वम्। अन्यथा याट् स्यात्। न च 'औङ आपः' इत्यपवादेन याटो बाधः, असम्भवे एवापवादत्वमिति वार्तिकमतेऽत्र याटः शीभावस्यापि सम्भवेनापवादत्वाभावात्। एवम् 'हरौ' इत्यादौ 'घेर्ङिति' इति गुणोऽपि न।

मत्येति—मन्यतेऽनयेति करणे 'स्त्रियां क्तिन्' ( ३-३-९४ ) इति क्तिनि मतिशब्दस्य स्त्रीलिङ्गत्वान्नाभावो नेति भावः।

'घेर्ङिति' इति। 'सुपि च' इत्यतः 'सुपि' इति, ह्रस्वस्य गुणः इत्यतो गुण इति चानुवर्तते इत्याह—घिसंज्ञकस्येति। यणोऽपवादोऽयं योगः। ननु 'घेर्ङि' इत्येव सूत्र्यताम्। ङकारादौ सुपि घेर्गुणः, इति चेन्न, 'प्रबाहु टा' 'प्रबाहवा' इत्यत्र 'आङयाजयारामुपसंख्यानम्' इति वार्तिकेन टाया

हरये। 'घेः' किम्—सख्ये। ङिति किम्—हरिभ्याम्। 'सुपि' किम् पट्वी। 'घेर्ङिति' इति गुणे कृते।

आङादेशे ङादित्वाभावेन गुणानापत्तिरिति तु न, ङादेशस्य तत्र कर्तुं शक्यत्वादिति वाच्यम्, 'मत्याम्' इत्यादौ 'मति ङि' इति दशायाम् निरवकाशत्वादाटं बाधित्वा ङेरामि कृते आमो ङादित्वाभावेन 'आण् नद्याः' इत्याडनापत्तेः। स्थानिवत्त्वेन ङादित्वं तु न, ङादित्वस्यास्मात्रवृत्तिङत्वघटितत्वेनानल्विधाविति निषेधात्।

'ङिति' इति न्यासे तु ङित्त्वनिमित्तकस्याटोऽनुबन्धकार्य्यत्वात् अनुबन्धकार्य्येऽनल्विधाविति निषेधो नेति 'न ल्यपि' ( ६-४-६९ ) इत्यनेन ज्ञापितत्वात्स्थानिवत्त्वं सुलभम्। ननु ङकारस्यापि वस्तुतोऽनुबन्धत्वेन ङादित्वनिमित्तकस्याप्यनुबन्धकार्य्यत्वात् स्थानिवत्त्वनिषेधाभावेनादोष इति चेन्न, तथा सति 'प्रपठ्य' इत्यादाविडापत्तेः। क्त्वाप्रत्ययककारस्यानुबन्धत्वेन स्थानिवत्त्वेन वलादित्वस्य सुवचत्वात्। अत् इत्संज्ञाघटितस्यैवानुबन्धत्वम्, नानुबन्धघटितस्येति भावः। न च 'मत्याम्' इत्यादावाडभावेऽपि रूपसिद्धिः, आडभावे नुडापत्तेः। अत एव मूले उक्तम् 'परत्वादाटा नुड् बाध्यते' इति।

यदि तत्र 'ङेराम्नद्याम्नीभ्यः' इति क्रियते, तदा 'रमायाम्' इत्यत्र आदेशात्पूर्वं प्रत्ययादित्वाभावेनेत्संज्ञाया अप्रवृत्त्या ङकारयुक्त एवादेशे कृते इत्संज्ञाया वार्णकार्य्यत्वात् 'वार्णादाङ्गं बलीयः' इति न्यायेनेत्त्वात्पूर्वं याटि ङस्य प्रत्ययादित्वाभावादित्त्वानापत्तिः।

यत्तु अनुबन्धविनिर्मुक्तपदार्थोपस्थित्या नायं दोष इति तन्न, यत्रोपदेशावस्थायामेवेत्संज्ञा तत्रैव तादृशोपस्थितेः सम्भवात्। यथा इट् इश् इत्यादौ प्रत्ययादेशस्थले तु आदेशोत्तरं स्थानिवत्त्वेनैव प्रत्ययत्वस्य वक्तव्यतया "चुटू" 'लशक्वतद्धिते' इत्यनयोः प्रत्ययादित्वे एव प्रवृत्त्या अनुबन्धविनिर्मुक्तपदार्थोपस्थितेरसम्भवात्।

तस्मादनेकक्लिष्टकल्पनापेक्षया 'घेर्ङिति' इति यथाश्रुतन्यास एव साधुः। ननु 'घेः' इत्येव सूत्रमस्तु, घेः सुपि गुणः स्यादित्यर्थेन सकलेष्टसिद्धिः। न च 'हरिः' 'हरिभ्याम्' इत्यादावपि गुणापत्तिः, ङिद्भिन्ने सुपि गुणश्चेत्तर्हि जस्येवेति 'जसि च' इत्यस्य नियमेन गुणाप्राप्तेः। यद्वा अनुनासिकान्तभिन्नं यद्गुणाद्येकवचनं तद्भिन्ने सुपि गुणश्चेत्तर्हि जस्येवेति नियम्य ङेङसिङस्ङिविभक्तिषु ङकारमकृत्वा 'घेः' इति न्यासे दोषाभाव इति चेन्न, 'पतयः' इत्यत्र गुणार्थम् 'जसि च' इत्यस्यावश्यकत्वेन नियमासम्भवात्।

न च 'पतिः समासे एव जसि च' इति न्यासेन पतिः समासे जसि च घिसंज्ञः स्यादित्यर्थेन दोषाभाव इति वाच्यम्, एवं सति 'प्रबाहु आ' इत्यस्य अनुनासिकान्तभिन्नं मान्तभिन्नं वा यद् गुणाद्येकवचनं तद्भिन्नसुप्त्वस्य टादेशे आङि सत्त्वेन गुणानापत्तेः, लाघवाभावाच्च।

सुपि किं पट्वीति—पटुशब्दात् 'वोतो गुणवचनात्' (४-१-४४) इति ङीषि गुणवारणाय सुपि ग्रहणमित्याशयः। न च टापः प्रागेव 'तद्धिताः' इत्यधिकारोऽस्तु 'यस्येति च' इत्यत्र ईद्ग्रहणं मास्तु, ङीबादौ अकारेकारयोस्तद्धितनिमित्तकलोपसिद्धेः। न च ङीबादेर्ङकारस्य 'अतद्धिते' इति पर्य्युदासादित्त्वानापत्तिः 'चुटुकः' इति न्यासेन सिद्धेः।

एवञ्च 'औङः श्यां प्रतिषेधो वाच्यः' इति वार्तिकमपि न कर्तव्यम्, 'यस्य' इति सूत्रे ईद्ग्रहणाभावेन औङः श्यां लोपाप्राप्तेः। 'प्राचां ष्फस्तद्धितः' इत्यत्र तद्धितग्रहणमपि न कार्य्यम्। एवं लाघवसत्त्वेऽपि 'यूनस्तिः' ( ४-१-७७ ) इत्यतः प्राक् 'तद्धिताः' इत्यधिकारकरणं ज्ञापयति—'स्त्रीप्रत्यये गुणो न' इति। तेन पट्वी इत्यत्र न गुणः। न च टापः प्राक् तद्धिताधिकारे 'शुनी, दण्डिनी' इत्यादौ 'नस्तद्धिते' इति टिलोपापत्तिः, टापो डित्करणं ज्ञापयति–स्त्रीप्रत्यये 'नस्तद्धिते' इत्यस्याप्रवृत्तिरिति। किञ्च 'प्राचां ष्फस्तद्धितः' इत्यत्र तद्धितग्रहणं न ष्फान्तस्य प्रातिपदिकसंज्ञाद्वारा 'षिद्गौरादिभ्यः' इति ङीषर्थम्, प्रातिपदिकत्वं विनापि षित्करणसामर्थ्यादेव ङीषः सिद्धेः, यञन्ते 'यस्येति च' इति लोपार्थमपि न, आयने परे सवर्णदीर्घेणापि 'गार्ग्यायणी' इत्यादिसिद्धेः। किन्तु तद्धितग्रहणमन्यतोऽपि

ङसिङसोश्च [ ६-१-११० ]

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरेः । हरेः । हर्योः । हरीणाम् ।

विधानार्थम् । तेन इजन्तादासुरिशब्दात् ष्फे 'आसुरायणी' इति सिध्यति । 'आसुरेरुपसंख्यानम्' इति वार्तिकं नापूर्वम्, किन्तु उक्तज्ञापकसिद्धमेव ।

यदि तु ष्फएवं विधाय ङित्करणसामर्थ्यात् क्वचिदन्यतोऽपीति 'आसुरायणी' इत्यस्य सिद्धिः । गोकक्षशब्दादपि 'क्रौड्यादिभ्यश्च' ( ४-१-८० ) इति ष्यङि 'पाद्यश्चाप् वक्तव्यः' इति चापि ष्फप्रत्यये विवक्षिते 'भस्याढे तद्धिते' इति पुंवद्भावेन 'गोकक्ष्यशब्दात्स्यन्ताद् ष्फे' गौकक्ष्यायणी' इति पुंवद्भावोऽपि न फलम् , अधिकारेणैव तद्धितत्वे पुंवद्भावसिद्धेः । न च टापस्तद्धितत्वे 'रमा' इत्यत्र टापि 'यस्येति च' इत्यकारलोपे 'एकादेश उदात्तेनोदात्तः' ( ८-२-५ ) इत्युदात्तत्वं न स्यादिति वाच्यम्, उदात्तनिवृत्तिस्वरेण 'अनुदात्तस्य यत्रोदात्तलोपः' इति विहितेनोदात्तत्वसिद्धेः । बहु यथाश्रुतमेव तद्धिताधिकारोऽस्तु टीप् टीष् करणेन 'ङ्याप्प्रातिपदिकात्' इत्यत्र स्याप् इति करणेन 'पटवी' इत्यत्र न दोषः ।

ङीबादेर्ङित्वस्य पटवीशब्दान्नामधातावात्मनेपदमपि न फलम्, प्रातिपदिकाद्विहितप्रत्ययगतानुबन्धमादायात्मनेपदं न भवतीति 'ब्राह्मणमाणववाडवाद्यन्' (४-२-४२) इति सूत्रस्थ 'केदाराद्यञ् च' (४-२-४०) इत्यतो यञोऽनुवृत्त्या सिद्धे यन्ग्रहणमन्यतोऽपि विधानार्थम् । तेन 'पृष्ठयम्, इति सिद्धम्, इति भाष्येण ध्वननात् । अन्यथा यञा नामधातावात्मनेपदं यनि प्रत्यये तु तन्नेति 'अन्यतोऽपीति भाष्यं विरुध्येत । तथाऽपि 'कुरुतः' इत्यत्र गुणवारणाय सुपीत्यस्यानुवृत्तिरिति भाष्ये स्पष्टम् ।

हरिशब्दान् ङसिङसोर्गुणे कृते 'ङसिङसोश्च' इति ( ६-१-११० ) 'एङः पदान्तादति' इत्यतः 'एङ' इति, 'अति' इति च 'अमि पूर्वः' इत्यतः पूर्व इति, चानुवर्तते । 'एकः पूर्वपरयोः' इत्यधिक्रियते । तदाह—एङोः ङसिङसोरित्यादि । 'हरे अस्' इति दशायां पूर्वरूपे 'हरेः' इति । यद्यपि ङसिङसौ एकश्चैश्च द्वौ इति संख्यातानुदेशः प्राप्नोति । तथापि यत्र स्वरितत्वं तत्रैव संख्यातानुदेशः ।

तदुक्तं भाष्ये—'संख्यातानुदेशः समानां स्वरितेन' ततः 'अधिकारः' अधिकारश्च भवति स्वरितेन, इति । अत्र स्वरितत्वाभावान्न यथासंख्यम् । क्व स्वरितत्वं क्व नेति व्याख्यानतो निर्णेयम् । अत्र स्वरितत्वाभावे 'उपसर्गे घोः किः' 'अच्च घेः' इति निर्देश एव लिङ्गम् । अन्यथा एकारात् ङसौ परे ओकारान् ङसि परे पूर्वरूपमित्यर्थे घु शब्दान् ङसौ गुणे 'घो अस्' पञ्चम्येकवचने, घिशब्दात् षष्ठ्येकवचने 'घे अस्' इत्यत्र च पूर्वरूपाभावे निर्देशासङ्गतिः । अल्पाच्तरस्य ङसोऽत्र पूर्वनिपाताकरणाच्च यथासंख्याभावो ध्वन्यते ।

ननु 'ङितश्च' इत्येव सूत्रमस्तु, एङो ङितोऽति परे पूर्वरूपमित्यर्थ इति चेन्न, 'ऋत उत्' ( ६-१-१११ ) इत्यत्रापि 'ङितः' इत्यस्यानुवृत्त्या 'जागृ अति' इत्यत्र 'अति' इत्यस्यापित्सार्वधातुकत्वेन ङित्वात् पूर्वरूपापत्तेः । 'आ' (समन्तात्) 'ओः' ( वासुदेवः ) यस्मिन्नगरे तद् नपुंसकह्रस्वत्वे 'अम्' ततो बहुच्प्रत्यये पुनर्नपुंसकह्रस्वत्वे 'बह्वम्' इति ।

तत आचारक्विबन्तात् लङि तिपि शपि 'आङ्गकार्यसम्भावनायां पूर्वमेव वार्णकार्यं न प्रवर्तत इत्यर्थकाद् 'वार्णादाङ्गं बलीयः' इति न्यायायप्रवृत्तौ लघूपधगुणे 'बहो अ अत्' इत्यत्र 'अतो गुणे' इति पररूपे 'बहो अत्' इति दशायाम् 'ङितः' इति पूर्वरूपापत्त्या 'अबहवत्' इत्यस्यासिद्ध्यापत्तेश्च ।

किञ्च 'ङितः' इति न्यासे 'जयन्ति' 'भवन्ति' इत्यादेरप्यसिद्धिः, तथा हि—'जि अ अन्ति' 'भू अ अन्ति' इत्यवस्थायामन्तरङ्गत्वात् 'अतो गुणे' इति पररूपे स्थानिवत्त्वेन 'अचः परस्मिन्' इत्यनेन शपि परे गुणे 'जे अन्ति' 'भो अन्ति' इति स्थितौ परादिवद्भावेन अन्ति इत्यस्य ङित्वात् एङः परस्य ङितोऽकारस्य सत्त्वात्पररूपापत्तिः ।

अच्च घेः [ ७-३-११६ ]

इदुद्भ्यामुत्तरस्य ङेरौत्स्याद्घेरन्तादेशश्चाकारः। वृद्धिः। हरौ। हर्योः। हरिषु। एवं श्रीपत्यग्निरविकव्यादयः।

अनङ् सौ [ ७-१-९३ ]

'अच्च घेः' इति। ( ७-३-११६ ) अत्र 'इदुद्भ्याम्' इति, 'औत्' इति सूत्रम् 'ङेराम्' इत्यतो 'ङेः' इति चानुवर्तते। तदाह—इदुद्भ्यामुत्तरस्येत्यादि। घेरन्तादेश इति—घेरन्तात्र आदेश इति 'अलोऽन्त्यस्य' इति परिभाषया लभ्यते। वर्णसंज्ञापक्षे तु घेरदादेश इत्येव।

इदुद्भ्यां किम्? घेः परस्य ङेरौत् अच्चेति ङेरेवादेशद्वयं मा भूत्। ङिप्रकृतेर्घेरेव औत्, अच्चेत्यर्थो वा मा भूत्। वस्तुतस्तु 'औत्' इति सूत्रे 'ङेः' इत्यस्य स्थानषष्ठ्यन्तत्वनिर्णयादत्रापि तस्य तत्त्वमेवोचितम्। तथा च ङिप्रकृतेरित्युक्तिर्नागेशस्य चिन्त्या।

औत्स्यादिति—अत्र केचित्—औतस्तित्वं स्वरितार्थम्। 'न विभक्तौ' इति तकारस्येत्त्वनिषेधस्तु 'इदमस्यमुः' इत्यत्रोकारग्रहणेन मकारस्येत्त्वपरित्राणार्थेनानित्यत्वज्ञापनान्न प्रवर्तते इति तच्चिन्त्यम्, 'स्तीर्णे बर्हिषि समिधाने अग्नौ' इत्यादौ स्वरितत्वादर्शनात्।

नन्वौतः स्वरितत्वेऽपि न 'अग्नौ' स्वरितत्वश्रवणम्, अग्निशब्दस्यान्तोदात्तत्वेन 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वादिति चेन्न, औदकारस्वरितत्वमादाय 'अनुदात्तं पदमेकवर्जम्' इति सर्वानुदात्तत्वे 'एकादेश उदात्तेन' इत्यस्यात्राप्राप्तेः, उदात्तेनानुदात्तस्य य एकादेशस्तस्यैवानेनोदात्तत्वविधानाच्च।

न चैवमपि स्वरितरूपो य उदात्तस्तेनानुदात्तस्याग्निशब्दघटकाकारस्यैकादेशसत्त्वादुदात्तत्वम्, 'उदात्तस्वरितयो र्यणः' इत्यत्र स्वरितग्रहणाद् ज्ञापकात् स्वरितस्योदात्तग्रहणेनाग्रहणात्।

उच्चारणार्थानामित्संज्ञकत्वेऽपि 'प्रत्ययाप्रत्यययोर्मध्ये प्रत्ययस्यैव ग्रहणम्' इति परिभाषयैव 'तित्स्वरितम्' इति सूत्रे तित्प्रत्ययस्यैव ग्रहणे सिद्धे पुनः 'तिति प्रत्ययग्रहणं कर्तव्यम्' इति वार्तिकसामर्थ्यादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्त्या नात्र स्वरितत्वप्रवृत्तिः। किञ्चादेशेषु औदादिषु दकारस्थानिकत्वर्वनिष्पन्नतकारस्य सत्त्वेन दित्त्वास्वरितत्वाप्राप्तिरेव। उच्चारणार्थं इत्यस्य च वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो न त्वन्यफलार्थं इत्यर्थः। अत एव भाष्ये 'औत्' इति सूत्रे 'औङ्' इति पाठमाश्रित्य 'अच्च घेः' इति सूत्रे अद्ग्रहणं भाष्ये प्रत्याख्यातम्। विंशतेर्ङौ अनभिधानान्न दोषः।

यद्वा सूत्रकारभाष्यकारयोः फलभेदवारणाय 'नस्तद्धिते' इत्यतस्तद्धिते इत्यपकृष्यते, तद्धिते डिति परे विंशतेस्तिशब्दस्य लोप इति डिति औकारे परे न तिशब्दस्य लोपः। यद्वा डश्चासौ इत् चेति ङित् इत्संज्ञकडकारादावित्यर्थ इति विंशतौ लोपाभावः। यत्तु 'अत्' इति तपरत्वं 'बुद्धौ' इत्यादावत्वे कृते स्त्रियां टाबभावार्थमिति तन्न, तपरकरणात् टापा सह दीर्घो मा भूत् टाप् तु स्यादेव। अत एव 'कृन्मेजन्तः' इति सूत्रवार्तिकयोर्विवरणे च सन्निपातपरिभाषया टाप् न इत्येवोक्तम्। टापा व्यवधाने हि आनन्तर्यविघातः स्यात्। तस्मादौत इव अतोऽपि तपरकरणमुच्चारणार्थमेवेत्यवधेयम्।

न च 'गोऽविदर्थस्य करणे' इति प्रकरणेन समासबाध इवानेन टापोऽपि बाध इति वाच्यम्, 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्त्तिकानुरोधेन तत्र तथा कल्पनेऽपीह तथा कल्पने मानाभावात्।

समानं ख्यायते जनैरिति सखा। 'समाने ख्यः स चोदात्तः' ( उ. ४-१३ ) समाने उपपदे ख्य इण् स च डित् यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च। 'वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्' इत्यमरः (का. २-क्षत्रियवर्गे. १२ ) सखिशब्दात् सुविभक्तौ 'सखिस्' इति स्थितौ 'अनङ् सौ' इति ( ७-१-९३ ) इति। 'सख्युरसम्बुद्धौ' इत्यनुवर्तते। 'अङ्गस्य' इत्यधिक्रियते। असम्बुद्धाविति पर्युदासात्, प्रथमोपस्थितत्वाच्च सुरत्र प्रथमैकवचनम्।

सख्युरङ्गस्यानङादेशः स्यादसंबुद्धौ सौ परे। 'ङिच्च' (५४३) इत्यान्तादेशः।

**अलोऽन्त्यात्पूर्व उपधा [ १-१-६५ ]**

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्।

**सर्वनामस्थाने चासंबुद्धौ [ ६-४-८ ]**

नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने।

---

यत्तु साविति प्रथमैकवचनमिति तच्चिन्त्यम्, सावित्यस्य सप्तम्यन्तत्वात्। यदि तु सावितीत्यन्तप्रकृतिः प्रथमैकवचनमित्यर्थस्तदा लक्षणा चिन्त्या। अनङ् इत्यत्र नस्याकार उच्चारणार्थ इत्संज्ञकश्चेति नागेशः, 'स्वतन्त्रः कर्ता' इत्यादिनिर्देशात् अन्यथा नलोपानापत्तिः।

'सोडौ' इत्येव सिद्धेऽनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम्। तेन उशनमः सम्बुद्धावनङ् सिध्यति। वैकल्पिकत्वमात्रं तु वाचनिकम्। तथा चोक्तम् 'सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्। 'माध्यंदिनि वष्टि—गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः' इति प्राञ्चः।

तच्चिन्त्यम्—सौडेति न्यासे 'ऋदुशनस्पुरुदंशस' (७-१-९३) इत्यनेनापि डा स्यात्। तथा च 'उशना' इत्यत्र नान्तत्वात् 'सर्वनामस्थाने चासम्बुद्धौ' (६-४-८) इति दीर्घापत्तौ 'उशना' इति स्यात्। 'पुरुदंसा' इत्यत्र 'सान्तमहतः' इति दीर्घापत्तिश्च। 'संज्ञापूर्वको विधिरनित्य' इति, 'अङ्गवृत्ते' इतिपरिभाषया वा समाधानन्त्वगतिकगतिः।

वस्तुतस्तु 'सोडौ' इति न्यासे लाघवाभावः, डित्त्वसामर्थ्यादभस्यापि टिलोपकल्पने गौरवञ्च। तस्मादुशनसः सम्बुद्धावनङ् तद्वैकल्पिकत्वं च चिन्त्यमेव, भाष्यानुक्तत्वादिति प्रामाणिका इति दीक्षितनागेशौ।

'अलोऽन्त्यात्पूर्व उपधा' (१-१-६५) इति 'अलः' इति, पञ्चम्यन्तम् 'अन्त्यात्' इति पञ्चम्यन्तविशेषणात्। 'अल्' इति वर्णपर्यायः, अवध्यवधिमतोः साजात्यनियमात् पूर्वोऽपि अलेव गृह्यते। इत्याह—अन्त्यादल इत्यादि।

अन्त्यात्पूर्व इत्येवोच्यताम् अल इति किम् 'शिष्टः' इत्यत्र शास्धातौ आस् इति संघातरूपान्त्यात्पूर्वस्य 'श्' इत्यस्य उपधासंज्ञा मा भूत्। अन्यथा 'शास इदङ्हलोः' इति सकारस्येत्वं स्यात्। वोऽन्त्यादिति किम् अन्त्यात् सकाररूपादलः पूर्वस्य शा, इति समुदायस्योपधासंज्ञा मा भूत्। न च 'शा' इत्यस्योपधासंज्ञायामपि 'अलोऽन्त्य' इति परिभाषया आकारस्यैवेत्वं स्यादित्यदोषः, 'नानर्थकेऽलोऽन्त्यविधिः' इति परिभाषया तन्निषेधात्।

वस्तुतस्तु 'नाऽनर्थके' इति परिभाषायाः फलानि प्रकारान्तरेणोपपाद्य इयं परिभाषा प्रत्याख्याता भाष्ये। पूर्वोऽल् इति तु यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्वोऽपि गृह्यते। इत्यन्त्यादल इत्युक्ते पूर्वोऽपि अल् एव गृह्यतेति प्रथमान्तस्याल् इत्यस्य प्रयोजनं नास्ति। तदुक्तं भाष्ये 'अक्वनाकविज्ञानात् सिद्धमिति। उपधेति उप=समीपेऽन्तस्य धीयते इति उपधा 'आतश्चोपसर्गे' इति किः अङ्। समुदायविशिष्टत्वमुपधात्वम्। वैशिष्ट्यञ्च—स्वघटकत्व—स्वघटकान्त्याल् अव्यवहितत्वामयसम्बन्धेन। स्वम्=समुदायः।

'सर्वनामस्थाने चासम्बुद्धौ' (६-४-८) इति। 'नोपधायाः' (६-४-७) इति सूत्रमनुवर्तते 'अङ्गस्य' इति चाधिकाराल्लभ्यते। तत्र न इति लुप्तषष्ठीकमभेदेनाङ्गस्य विशेषणम्। तदन्तविधौ नान्तस्याङ्गस्येत्यवयवायविभावसम्बन्धेनोपधाविशेषणम्। 'ढ्लोपे पूर्वस्य' (६-३-१११) इत्यतो दीर्घ इत्यनुवर्तते—नान्तस्येत्यादि।

सूत्रे चग्रहणं व्यर्थम्। न च 'सम्बुद्धौ' इति पदच्छेदवारणाय तत्, तथा सति सम्बुद्धेरपि सर्वनामस्थानतया तद्ग्रहणवैयर्थ्यापत्तेः। यद्वा चपदं लेखकप्रमादात्प्रक्षिप्तमित्युपाध्यायाः।

अपृक्त एकाल्प्रत्ययः [ १-२-४१ ]

एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ।

---

सखनस् इति स्थितौ उपधादीर्घेऽपृक्तकार्यार्थमपृक्तसंज्ञामाह—'अपृक्त एकाल् प्रत्ययः' (१-२-४१) इति । अत्रैकशब्दोऽसहायपर्यायः । कश्चित् संख्यावाचिनोऽपि ग्रहणे दोषाभाव इत्याह । उक्तञ्च—

'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते' ॥ इति

न च संख्यावाचित्वे 'अभैत्सीत्' इत्यत्र हलन्तात्परस्यापृक्तस्य सिचः सकारस्य लोपापत्तिः, सुतिविभक्तिसाहचर्य्यादिभक्तेरेव लोप इति व्याख्यानेनादोषात् ।

एकालित्युक्तेः 'जागृविः' इत्यत्र 'वेरपृक्तस्य' (६-१-१७) इति लोपो न, अजित्यनेनैवैकत्वे लब्धे एकग्रहणं ज्ञापयति—'वर्णग्रहणे जातिग्रहणम्' इति । तेन दम्भेः सनि 'दम्भ इच्च' (७-४-५६) इतीत्वे द्वित्वे अभ्यासलोपे दिम्भ स्, इति स्थितौ 'नृम्' इत्यत्र हल्त्वजातेरारोपाद्धल्ग्रहणेन ग्रहणात् 'हलन्ताच्च' (१-२-१०) इत्यनेन इकः समीपो यो हल् तत्परो यो झलादिः स किदित्यर्थकेन सनः कित्वे 'अनिदिताम्' इति नलोपः सिध्यति । अन्यथा इकः समीपो नकारस्ततः परः सन् नास्ति । भकाराच्च परः सन् स भकार इक् समीपो नास्ति नकारेण व्यवधानादिति कित्वाभावे नलोपो न स्यात् ।

वस्तुतस्तु असहायवाची एवात्र एकशब्दः । अत एव 'निपात एकाजनाङ्' इति सूत्रे एकग्रहणेन 'वर्णग्रहणे जातिग्रहणम्' इति परिभाषा भाष्यकृता ज्ञापिता । फलञ्च पूर्वोक्तं दर्णं संगच्छते । अत्र च किमपि नोक्तम् ।

'अपृक्त' इति पुंस्त्वमविवक्षितम् । अत एव अपृक्तं हल् लुप्यते इति नागेशः । वस्तुतस्तु पृच्यते=संस्पृश्यते इति पृक्तः । 'पृची संपर्के' इत्यतः कर्मणि क्ते ईदित्वात् 'श्वीदितो निष्ठायाम्' इतीण्निषेधे त्रिलिङ्गमिदम् । अत्र एकाल्प्रत्यय इत्यत्राभेदेनान्वयात् पुंस्त्वम् हल्शब्दश्च 'हलन्त्यम्' इति निर्देशात् नपुंसकः, 'हलोऽनन्तराः संयोगः' इति निर्देशात्पुंलिङ्ग इत्यन्वयिलिङ्गभाग् भवति । 'अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे संज्ञाविधानमस्पष्टार्थम्, इति शेखरकृत् ।

यत्तु 'हल्ङ्याप्' इति सूत्रे 'तस्मादित्युत्तरस्य' इति परिभाषया पञ्चम्यन्तत्वकल्पनेन तदन्तविधौ हलन्तानां सुतिसीनां लोप इत्यर्थे 'हन्यात्' इत्यादौ यासुड्विशिष्टस्य लोपापत्तिरिति तन्न, निर्दिश्यमानपरिभाषया पञ्चम्यन्तार्थस्य निर्दिश्यमाने एवान्वय इति सिद्धान्तेन च हलन्तादव्यवहितोत्तरेषां निर्दिश्यमानानां सुतिसीनां लोप इत्यर्थेन प्रकृते यासुटा व्यवधानाल्लोपाप्राप्तेः सुतिसि हल् इति समासाभावे कर्मधारये वा परनिपातान्तस्य हलो विशेष्यत्वनिर्णयेन हलन्तानामित्यर्थस्य दुर्लभत्वाच्च ।

वस्तुतस्तु 'गुणोऽपृक्ते' इत्यस्य हलादौ सार्वधातुके इत्यर्थे 'ऊर्णोति' इत्यत्रापि गुणापत्तिः । न च 'ऊर्णोते र्विभाषा' इत्यस्य वैयर्थ्यम्, सूत्रद्वयस्थविषयव्यवस्थाया एवानापत्तेः, उभयसामर्थ्यात् पर्य्यायापत्तेश्च । एवम् 'अदः सर्वेषाम्' (७-३-१००) इत्यस्य हलादेः सार्वधातुकस्याडित्यर्थापत्तौ 'अत्ति' 'अत्ताम्' इत्यादावडापत्तिः । तस्मात् अपृक्तसंज्ञासूत्रं स्पष्टार्थमपि ।

एकालिति किम्--'जागृविः' इत्यत्र 'वेरपृक्तस्य' इति वेर्लोपो मा भूत् । वस्तुतस्तु 'वेरपृक्तस्य' इत्यत्रानुनासिकत्वप्रतिज्ञानादत्र लोपाप्राप्तया 'एकाल्' ग्रहणं चिन्त्यप्रयोजनम् । यत्तु 'जागृवि' इति नपुंसके 'अणोऽप्रगृह्यस्य' इत्यनुनासिकत्वे लोपापत्तिरिति तदपि न, 'वेरपृक्तस्य' इति दृष्ट्याऽनुनासिकत्वस्यासिद्धत्वात् ।

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् [ ६-१-६८ ]

हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सु ति सि इत्येतदपृक्तं हल् लुप्यते। हल्ङ्याब्भ्यः' किम्-ग्रामणीः। 'दीर्घात्' किम्-निष्कौशाम्बिः। अतिखट्वः।

'सखन् स्' इति स्थितौ सुलोपार्थमाह—'हल्ङ्याब्भ्यः' इति। अत्र 'ङी' इति ङीपूर्ङीषो-रेकदेशस्यानुकरणम्। हल् च ङी चाप् चेति द्वन्द्वे हल्ङ्यापः। हल्ङ्याब्भ्य इति अध्याहृतपररूप-दिग्वाचकयोगे पञ्चमी।

'दीर्घात्' इत्येकत्वमविवक्षितम् औत्सर्गिकं, वैकवचनम्। तेन ङ्यापोरभेदेन विशेषणत्वे न क्षतिः। दीर्घादिति हलो न विशेषणम्, असम्भवात्। सुतिसीनां प्रत्ययत्वात् 'प्रत्ययग्रहणे' इति परिभाषया तदादिरुपतिष्ठते। स च हला, दीर्घङ्यापोरपि प्रत्ययत्वेनोपस्थिततदादिविशेषणत्वेन तदन्तविधौ ङ्याबन्ततदादिना च विशेष्यते।

तथा च हलन्तात् दीर्घङ्याबन्ततदाद्यन्ताच्च सुतिसितदादेः परं सुतिसीत्येतदपृक्तं हल् लुप्यते इत्यर्थस्तदेतत्सर्वं हृदि निधायाह—हलन्तात्परं दीर्घौ यावित्यादि—परमिति—विहितविशेषणं तु न, आबन्ताद्विहितत्वाभावेन याता इत्यादौ लोपानापत्तेः, 'तस्मादित्युत्तरस्य' इति सूत्रसत्त्वे विहित-विशेषणे मानाभावाच्च।

न च हलन्ताद्विहितत्वेन सिद्धिः, यः स इत्यादावपि लोपापत्तेः, कर्ता सखा इत्यादौ लोपाना-पत्तेश्च। 'विभक्तौ' 'सौ' इत्यादीनां विषयसप्तमीत्वे यद्यपि स्वादेः प्रागेवात्वे अनङि च नोक्तदोषस्तथाऽपि 'तस्मिन्निति' इति सूत्रसत्त्वे विषयसप्तमीत्वस्याप्रामाणिकत्वात्।

हलिसि—हलोऽत्र सुतिसिरूपत्वं भूतपूर्वगत्या एकदेशविकृतन्यायेन सर्वपदादेशत्वं स्वीकृत्य स्थानिवत्त्वेन वा बोध्यम्। लुप्यत इति—यद्यपि 'लोपो व्योर्वलि' इत्यतो लोप इत्यनुवर्त्तते, तच्च तत्र भावसाधनं तथाऽपीह शब्दाधिकारमाश्रित्य हलिति प्रथमान्तेन सामानाधिकरण्यात्कर्मसाधनाभिप्रायेण लुप्यते इत्युक्तम्।

यद्यपि 'पञ्चमी स्वस्मात्परां षष्ठीं कल्पयति' इति न्यायेन षष्ठ्यन्तताऽपि सम्भवतीति भावसा-धनत्वमत्रापि वक्तुं शक्यं तथाऽपि बहुषु पदेषु विभक्तिविपरिणामकल्पनाऽपेक्षयाऽऽगन्तुकलोपशब्दे एवार्थान्तरकल्पनमुचितमित्युक्तं लुप्यते इति।

हल्ङ्याब्भ्यः किमिति—दीर्घात्परं लुप्यते इत्यर्थेन राम इत्यादौ न दोषः। ग्रामणी-रिति—ग्रामं नयतीति विग्रहे 'णीञ् प्रापणे' इत्यतः 'सत्सूद्विष्' इति क्विपि 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वे 'ग्रामणीः' इति अत्र दीर्घान्तात्परस्य सोर्लोपो मा भूत्। वस्तुतस्तु हल्ङ्याब्भ्य इत्यस्याभावे 'लिट्' इत्यादावव्याप्तिः 'विश्वपाः' इत्यादावतिव्याप्तिश्च दातुमुचिता।

दीर्घात्किमिति—ङ्यापोर्दीर्घत्वाव्यभिचारात् प्रश्नः। निष्कौशाम्बिः, अतिखट्व इति—कुशा-म्बेन निर्वृत्ता नगरी कौशाम्बी वत्सपत्तनम्। कौशाम्ब्या निष्क्रान्तः, खट्वामतिक्रान्त इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति तत्पुरुषसमासे, गोस्त्रियोरुप-सर्जनस्य' ( १। २। ४८ ) इति ह्रस्वत्वम्,

अत्र स्थानिवत्त्वेन ङीत्वाप्त्वयोरतिदेशेन ङ्याबन्तत्वाल्लोपो मा भूदिति निषेधात्। नन्विह सम-स्तस्य ङ्याबन्ततदादित्वाभावः। न च स्त्रीप्रत्यये तदादिनियमो न। अत एव 'परमकारीषगन्धीपुत्रः' इत्यत्र परमकारीषगन्ध्या इत्यस्य स्त्रीप्रत्ययप्यङन्ततदादित्वाभावेऽपि पूर्वपदस्य 'ष्यङः सम्प्रसारणम्' स्त्रीप्रत्यये इति सम्प्रसारणं सिध्यतीति वाच्यम्, अनुपसर्जने स्त्रीप्रत्यये तदादिनियमाभावेऽप्युपसर्जन-ङ्याबन्ततदाद्यन्ततदादेः परस्य सोर्लोपविधानाच्च तदादिनियमसत्त्वात्। अत एव 'अतिकारीषगन्ध्या-पुत्रः' इत्यत्र पूर्वपदस्य ष्यङन्ततदादित्वाभावान्न सम्प्रसारणम्।

'सुतिसि' इति किम्–अभैत्सीत्। तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति।

---

तदुक्तम्–'स्त्रीप्रत्यये चानुपसर्जने न' इति। सत्यम्, तथाप्युत्तरपदयोर्ङ्याबन्ततदादित्वेन सोस्ततः परत्वानपायात् ङ्याबन्ततदाद्यन्ततदादेः परस्य सोर्लोपविधानाच्च दीर्घग्रहणाभावे सुलोपापत्तिर्दुर्वारैव।

न चैवमपि सोर्ङ्याबन्ततदादेर्विहितत्वाभावो विहितविशेषणत्वे प्रमाणाभावाद्बहुश्रेयसीत्यादौ सुलोपानापत्तेश्च श्रेयसीत्यस्य ङ्यन्ततदादित्वेऽपि सोस्ततो विहितत्वाभावात्। अभ्युपेत्यवादेन विहित-विशेषणत्वेऽपि श्रविष्ठासु जातः 'श्रविष्ठः' 'श्रविष्ठाफल्गुन्यनुराधा' (४–३–३४) इति तद्धितलुकि 'लुक् तद्धितलुकि' (१।२।४९) इति स्त्रीप्रत्ययलुकि च प्रत्ययलक्षणेनाबन्तत्वात् प्राप्तसुलोपवार-णार्थमपि दीर्घग्रहणमावश्यकम्।

ननु दीर्घग्रहणसत्त्वेऽपि गर्गामिच्छति गर्गीयति, ततः क्यजन्तात्क्विपि अल्लोपयलोपयोः 'गर्गीः' इत्यत्र ईकारस्य स्थानिवत्त्वेनाप्त्वाद्दीर्घत्वेन श्रूयमाणत्वाच्च सुलोपापत्तिः।

न चाल्लोपस्य स्थानिवत्त्वात्सोरापोऽव्यवहितपरत्वाभावः, 'क्वौ लुप्तं न स्थानिवत्' इति भाष्य-वार्त्तिकेन स्थानिवत्त्वनिषेधादिति चेन्मैवम् ङी. ई. आ. आप् इति प्रश्लिष्य दीर्घग्रहणस्य भाष्ये प्रत्या-ख्याततत्वेन 'गर्गी' इत्यत्र आरूपापोऽभावान्नातिप्रसङ्गः। निष्कौशाम्बिमिच्छति निष्कौशाम्बीयति। ततः क्यजन्तात्क्विपि अल्लोपयलोपयोः 'निष्कौशाम्बी' इत्यत्र तु ईरूपस्य स्थानिवत्त्वेन ङीप्रत्ययस्य सत्त्वात् सोर्लोपो भवत्येव।

सुतिसीति किम्—'भेत्ता' तासेस्तकारस्य लोपो मा भूत्। न चैवमपि 'अभैत्सीत्' इत्यादौ सिचो लोपापत्तिः, सुतिभ्यां साहचर्येण विभक्तेरेव सेर्ग्रहणात्।

अपृक्तमिति किम्—बिभर्त्तीति—एतच्चिन्त्यम्, विशिष्टस्य तेरहल्त्वात्। सुतिसीनां हल् इति व्याख्यानस्य 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्' इति न्यायविरुद्धत्वात्-गौरवाच्च।

यदप्याहुः—सुरां सुनोतीति सुरासुत् तमाचष्टे सुरासयति, ततः क्विपि 'सुराः सुरासौ, सुरासः' इत्यत्र सुनोतेरवयवस्य सस्य लोपं वारयितुमपृक्तग्रहणमिति तदपि न, परस्परसाहचर्येण विभक्ती-नामेव ग्रहणात्। अन्यथा 'अभैत्सीत्' इत्यादौ सलोपापत्तिर्दुर्वारैव स्यात्। प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च, अनुनासिकोकारविशिष्टस्यैव सुशब्दस्य पाठाच्च।

यत्तु 'प्रत्ययाप्रत्यययोः' इति परिभाषा भाष्यानुक्तेति तन्न, 'अङ्गस्य' इत्यधिकारखण्डनावसरे 'क्वचित्प्रत्ययस्य ग्रहणेऽप्रत्ययस्य न' इति भाष्यकृता कण्ठरवेणैवोक्तत्वात्।

वस्तुवस्तु भाष्ये पठिताऽपि लिङ्गाभावद्वाचनिकत्वे गौरवान्निष्फलत्वाच्च सिद्धान्ते नाश्रितेति तत्त्वम्। एवञ्चात्रापृक्तग्रहणं व्यर्थमेव।

ननु हलन्तात्परस्य हलः सुतिसिरूपस्य संयोगान्तलोपेनैव सिद्धेः प्रथमहल्ग्रहणं व्यर्थम्। अत्राहुः— 'संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति।
रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते॥' इति।

तथा हि 'सखा' इत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नकारस्य पदान्तत्वाभावान्नलोपो न स्यात्। यदि तु 'संयोगान्तलोपो नलोपे कर्तव्ये नासिद्धः' इति 'न ङिसम्बुद्ध्योः' इति सूत्रे सम्बुद्धिग्रहणा-ज्ज्ञापकात्। नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाभावे 'गोमान्' इत्यत्र तु न नलोपः, ज्ञापकस्य सजातीयविषयत्वेन विभक्तिरूपं यः संयोगान्तस्तल्लोपस्यैव सिद्धत्वज्ञापनात्।

न च नपुंसके 'हे महन्' इत्यत्र सोर्लुकि नलोपनिषेधार्थं सम्बुद्धिग्रहणस्य चारितार्थ्येन संयो-गान्तलोपस्य सिद्धत्वे ज्ञापकत्वं न सम्भवतीति वाच्यम्, सोर्लुका लुप्तत्वेन 'न लुमताङ्गस्य' इति प्रत्यय-लक्षणप्रतिषेधेन सम्बुद्धिपरत्वाभावात् सम्बुद्धिग्रहणवैयर्थ्यस्य तादवस्थ्येन उक्तज्ञापते बाधकाभावात् 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः' इत्यनेनैव तत्सिद्धेश्च।

'अपृक्तम्' इति किम्–बिभर्ति । 'हल्' किम्–बिभेद । 'प्रथमहल्' किम्–राजा ।

---

यदि 'न ङिसम्बुद्ध्योः' इत्यत्र षष्ठ्यन्तं तदा अङ्गस्य कार्य्याभावेन न लुमतेत्यस्याप्रवृत्त्या नपुंसकार्थं सम्बुद्धिग्रहणमिति तदपि न, विकल्पार्थं वार्तिकस्यावश्यकत्वात् ।

यद्यपि 'वा नपुंसकानाम्' इत्येव भाष्ये पठितम्, सम्बुद्धिग्रहणञ्च सूत्रादेव वार्तिके सम्बध्यते इत्यनुवृत्त्यर्थं सम्बुद्धिग्रहणं चरितार्थम्, तथापि वार्तिके एव वक्तव्ये इह किञ्चित् 'अपो' इति न्यायेन सूत्रे करणस्योक्तज्ञापने बाधकाभावः । सम्बुद्धिग्रहणं भाष्ये प्रत्याख्यातमिति तु न भ्रमितव्यम्, 'चर्मणि तिलः' राजन् चासौ वृन्दारकश्च 'राजवृन्दारकः' अत्र पूर्वपदे नलोपे कर्तव्ये 'न ङि' इति निषेधो मा भूदिति ।

'न ङिसम्बुद्ध्योरनुत्तरपदे' इति वार्तिकमुपन्यस्तं भाष्यकृता । ततः 'भत्वात्तु कौ प्रतिषेधा-नर्थक्यम्' यदि भसंज्ञा तर्हि 'अल्लोपोऽनः' इत्यल्लोपः प्राप्नोति । नैष दोषः, उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । सम्बुद्ध्यर्थेनापि नार्थः । 'सम्बुद्ध्यन्तानां न समासो राजवृन्दारकेति' इत्युक्तम् ।

एतेन छन्दोऽर्थमिदं वार्तिकमुपन्यस्तम् । छान्दसत्वाच्च खण्डितम्, अत्र 'न ङिसम्बुद्ध्योः' इति सूत्रं न खण्डितम् ।

किन्तु वार्तिकं प्रत्याख्यातम् । तस्मान्नलोपो न प्रयोजनम् । इह तर्हि 'अभिनोऽत्र' इत्यत्र 'अभिनद् स्' इत्यवस्थायां 'सिपि धातो रुर्वा' ( ८–२–७४ ) इति दस्य रुत्वे यदि संयोगान्तलोपः स्यात्तदा तस्यासिद्धत्वात्सकारेण व्यवधानादकारे परे रोरुत्वं न स्यात् । तथा लङि तिपि 'अबि-भर्त्' इति दशायाम् 'रात्सस्य' इति नियमात् तकारस्य संयोगान्तलोपो न स्यादिति 'अबिभर्भवान्' इति न सिध्येत् ।

अत्रेदमवधेयम्—ङ्याब्ग्रहणं सोरेव विशेषणम्, न तु तिस्योः, व्याख्यानात् । तथा हि—अस्मिन्नेव सूत्रे 'यदि पुनरयमपृक्तलोपः संयोगान्तलोपो विज्ञायेत । किं कृतं भवति ? द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यं भवति' इति भाष्ये उक्तम् ।

एतेन 'ङ्यापो दीर्घात्सोः' इत्येव वक्तव्यम् इत्युक्तं भवति । यदि ङ्याब्ग्रहणं तिस्योरपि विशेषणं स्यात्तर्हि कथं तिस्योर्ग्रहणस्याकर्तव्यतां ब्रूयात् ।

यत्तु ङ्याब्भ्यां तिस्योरसम्भव एवेति । तन्न ङ्यन्तादसम्भव इति सत्यम्, ङ्यन्तादाचार-क्विबन्तात् लङि तिपि शपि•ऽयन्तादव्यवहितोत्तरस्तिप् नोपलभ्येत, शपा व्यवधानात् ।

न च कस्य कौ की । कीशब्दादाचारक्विबन्तात् यङ्लुकि लङि 'अचिकेत्' 'अचिकेः' अत्र शपो लुकि ङ्यन्तादपि तिसौ स्त एवेति वाच्यम्, आचारक्विबन्ताद्यङ्लुकोऽनभिधानात् ईरूपङ्यन्ताभावाच्च ।

यथा 'अनदयत्' इत्यत्र । आबन्तात्तु आचारक्विबन्तात् लङः तिपि सिपि शपि च सति सवर्णदीर्घे पूर्वान्तवद्भावेन 'अरमात्' 'अरमाः' इत्यत्राबान्तादव्यहितपरौ तिप्सिपौ स्त एव ।

नचैवं 'दुह्रौ' इत्यादौ सन्निपातपरिभाषया टाब्नेति भाष्यविरोधः, दीर्घे कृते पूर्वान्तत्वेन प्रकृति-प्रत्यययोरानन्तर्य्यस्याविघातादिति वाच्यम्, टाबुत्पत्तिकालिकानन्तर्य्यविघातस्य वारयितुमशक्यत्वात् सन्निपातस्याशाश्रीयत्वेनान्तवत्त्वेनातिदेष्टुमशक्यत्वात् ।

'नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यात्' इति भाष्येणारोपितसन्निपातस्य परिभाषाप्रवृत्त्या-बाधकत्वाच्च । अन्यथा 'हे नदि' इत्यादौ प्रत्ययलक्षणेन सम्बुद्धेः सत्त्वात्सन्निपातस्य सत्त्वेन भाष्यं विरुध्येत । आबन्तेभ्य आचारक्विबेव न, 'आतो धातोः' इति भाष्यात् ।

न च स्थानिवत्त्वेन शपा व्यवधानम्, पूर्वविधित्वाभावात् ।

अत्रायं निष्कर्षः—'ङ्यापः सोः' इत्येव सूत्रमुचितम् । 'सुराः, सुरासौ' इत्यत्र तु न दोषः, अनुनासिकोकारविशिष्टस्यैव सोः पाठात्, ङ्याप्साहचर्यात्, 'प्रत्ययाप्रत्यययोः' इति परिभाषया च प्रत्ययस्यैव ग्रहणात् ।

नलोपो न स्यात्, संयोगान्तलोपस्यासिद्धत्वात्।

---

'अभिनोऽत्र' इत्यत्रोत्वपूर्वरूपे अपि सूपपादे, संयोगान्तलोपो रोरुत्वे, इति भाष्ये सिद्धकाण्डे पाठात्। 'हरिवो मेदिनं त्वा' इति यथा। हरिशब्दान्मतुपि 'छन्दसीरः' इति वत्वे नुमि संयोगान्तलोपे 'मतुवसोः' (८।३।१) इति रुत्वे उत्वे गुणे च 'हरिवो मेदिनम्' इति। 'अबिभर्भवान्' अत्रापि न दोषः, 'रात्सस्य' इति सूत्रे तकारस्यापि प्रश्लेषात्।

न चैवं कीर्तयतेः विचि क्विपि वा 'कीर्त्' इतेयङ्लुकि लङि 'अववर्त्' इत्यादौ तकारस्य लोपापत्तिः, अत्रैव सूत्रे 'यथालक्षणमप्रयुक्ते' इति भाष्येण अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यताबोधनात्।

न च 'उखास्रस् स्' इति स्थितौ संयोगान्तलोपं बाधित्वा संयोगादेः सस्य लोपापत्तिः 'वसुस्रंसु' इति दत्वप्रवृत्त्या संयोगादेः सकारस्याभावात्। न च दत्वस्यासिद्धत्वात् संयोगादिलोपापत्तिः, 'सिद्धकाण्डे वस्वादिषु दत्वम्' इति पाठात्।

न च सोः पूर्वभागस्यापदत्वाद्दत्वानापत्तिः 'असर्वनामस्थाने यचि' इति न्यासे यजादौ सर्वनामस्थाने पदं नेत्यर्थे सावपि पदत्वसत्त्वात्। न च सौ पदत्वे 'राजा' इत्यादौ नलोपे कृते सोरुत्वविसर्गौ स्यातामिति वाच्यम् 'पथिन् सु' इत्यत्र 'इतोऽत्सर्वनामस्थाने' इत्युपधादीर्घे नलोपे सो रुत्वविसर्गयोः 'पन्थाः' इति सिध्येत् 'पथिमथिन्' इत्याकारविधानं ज्ञापयति—'प्राक् सुलोपो नलोपात्' इति।

न च सम्बुद्धौ दीर्घाप्राप्तेः 'हे पन्थाः' इति सिद्ध्यर्थमाद्विधानम्, सम्बुद्धौ नलोपो नेति वाच्यम्, एवं तर्हि नलोपात्प्राक् सुलोप इतीत्यर्थस्य 'न ङिसम्बुद्ध्योः' इति सूत्रेणैव ज्ञापनात्। 'न ङिसम्बुद्ध्योः' इत्यत्र षष्ठी, न सप्तमी ङेलु‍ेका लुप्ततया प्रत्ययलक्षणाभावात् ङ्यन्तस्य सम्बुद्ध्यन्तस्य च प्रातिपदिकस्येति सामानाधिकरण्येनान्वयः।

न च प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तं प्रातिपदिकं लभ्येत। तस्मात् 'ङ्यापः सोः' इति न्यासे न किञ्चिद् बाधकम्। यदि तु 'वस्वादिषु दत्वं सिद्धकाण्डे' इति वार्त्तिकं प्रत्याख्यायते। अवातुप्रङ्गेनैव 'उखास्रत्' इत्यादौ दीर्घाभावसिद्धेः।

तर्हि 'हल्ङ्यापः सोः' इति सूत्रमस्तु। अत एव 'सुपीः' इति सिध्यति। अन्यथा पदान्ते संयोगादिलोपस्य संयोगान्तलोपापवादत्वात्तत्प्रवृत्तौ 'र्वोरुपधायाः' इति दीर्घो न स्याद्धातोः सकारस्य संयोगादिलोपेन रेफान्तधातोरभावात्। ननु प्रकृतिप्रत्ययसम्बन्धिवर्णसंयोगमाश्रित्य संयोगादिसस्य पदान्ते 'स्कोः' इति लोपावृत्तिज्ञापनान्न दोषः। तथा हि—यदि प्रकृतिप्रत्ययवर्णसंयोगादेः सस्य पदान्ते 'स्को' (८-२-२९) इति लोपः स्यात्तदा 'तिप्यनस्तेः' (८-२-७३) 'सिपि धातो रुर्वा' (८-२-७४) इति सूत्राभ्याम् 'अचकास् त्' 'अचकास् स्' इति दशायां सकारस्य दत्वरुत्वविधानं व्यर्थं स्यादिति तेन ज्ञाप्यते--प्रकृतिप्रत्ययवर्णसंयोगमाश्रित्य पदान्तसंयोगादेः सस्य लोपो न भवतीति।

तथा च 'सुपीः' इत्यत्र संयोगादिलोपाभावे न दोष इति चेदेवं कल्पने गौरवात्। किञ्च 'न ङिसम्बुद्ध्योः' इत्यत्र सप्तम्येव युक्ता। ङिग्रहणाच्च 'न लुमताङ्गस्य' इत्यस्यैतद्विषयेऽनित्यत्वम्। तथा च 'न लुमता' इत्यस्याप्रवृत्तौ 'हे ब्रह्मन्' इत्यत्र 'न ङि' इति निषेधान्नलोपाभावः। प्रवृत्तौ निषेधाभावान्नलोपः। इत्येतत्फलितमेव 'वा नपुंसकानाम्' इति वार्तिकम्।

एवञ्च नपुंसके 'ब्रह्मन्' इत्याद्यर्थं सम्बुद्धिग्रहणस्यावश्यकत्वे 'नलोपे संयोगान्तलोपस्यासिद्धत्वं न भवतीति ज्ञापनासम्भवः। अपूर्ववचनकल्पनेन सिद्धप्रत्याख्यानं तु न युक्तम्।

इदमेवाभिप्रेत्य सूत्रशेषे भाष्ये 'तस्मादशक्यो हल्ङ्यादिलोपः संयोगान्तलोपो विज्ञातुम्। न चेद्विज्ञायते द्विहल्ग्रहणं तिस्योश्च ग्रहणं कर्तव्यम्' इत्युक्तम्।

सखा । हे सखे ।

**सख्युरसंबुद्धौ [ ७-१-९२ ]**

सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ।

**अचो ञ्णिति [ ७-२-११५ ]**

ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात् । सखायौ । सखायः । सखायम् । सखायौ । घिसंज्ञाभावान्न तत्कार्यम्, सख्या । सख्ये ।

**ख्यत्यात्परस्य [ ६-१-११२ ]**

---

हल्ङ्याप: सुतिसिहल्' इति सूत्रमस्त्विति तदाशयः । अत एव 'अविभा राज्यम्' इत्यादौ 'ढ्लोपे' इति दीर्घसिद्धिः । अन्यथा सलोपस्यासिद्धतया रेफपरकरेफस्याभावेन रेफलोपाभावे दीर्घो न स्यात् ।

सखेति—'सर्वनामस्थाने' इति दीर्घे 'हल्ङ्याब्' इति सुलोपे 'न लोपः' इति नलोपः । न चेह सुनिमित्तकोऽनङ् सुलोपे सन्निपातपरिभाषया निमित्तं न स्यादिति वाच्यम्, 'स्वतन्त्रः कर्ता' इति निर्देशेन अनङो नकारमाश्रित्य सुलोपे कर्त्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनात् ।

यद्यपि अत्रैव 'सख्युरसम्बुद्धौ' इत्यस्य लेख उचितः, णित्वे 'अत उपधायाः' इति वृद्ध्यैव दीर्घं बाधित्वा परत्वाद्भवितव्यम् । तथापि कृताकृतप्रसङ्गिप्रमाणामपि नित्यत्वस्त्वीकारादन्तरङ्गत्वाच्च वृद्धिं बाधित्वा 'सर्वनाम' इति दीर्घेणैवात्र भवितव्यम् । वृद्धेस्तु णिद्वद्भावमुपजीव्य प्रवर्त्तमानत्वाद् बहिरङ्गत्वम् ।

'सख्युरसम्बुद्धौ'—इति । सख्युरिति पञ्चम्यनुरोधेन 'अङ्गस्य' इत्यधिकृतमपि पञ्चम्या परिणमते 'सख्युरङ्गात्' इति 'इतोऽत् सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इति 'गोतो णित्' इत्यतो णिदिति चानुवर्तते । 'णित्' इति विधेयप्राधान्यानुरोधेन 'असम्बुद्धौ' इति 'सर्वनामस्थाने' इति द्वयं प्रथमा प्रकल्पते । तदाह—सख्युरङ्गादित्यादि ।

णिद्वदिति—अणिति णित्वमारोप्यते, सम्बुद्धिभिन्नं सर्वनामस्थानं णित्ववत् । आहार्य्यज्ञानमेतत् । आहार्य्यारोपात् कार्य्यं तु तत्तच्छास्त्रेणैव । तत्कार्य्यारोपे तु कार्य्यविशेषज्ञानाय तच्छास्त्रज्ञानस्यावश्यकतया गौरवं स्यात् ।

'सख्युरसम्बुद्धिः' इति सूत्रयितुमुचितम्, 'गोतो णित्' इत्यत्र णिदनुरोधेन अनुवृत्तं सर्वनामस्थाने इति प्रथमान्तेन विपरिणतमेवात्रानुवृत्तमसम्बुद्ध्याऽभेदेनान्वितं स्यात् । असम्बुद्धिपदमर्थानुरोधेन सप्तम्या विपरिणतं स्यादित्येवौचित्यम् ।

वस्तुतस्तु 'असम्बुद्धौ' इति यथाश्रुतमेवोचितम्, असम्बुद्धौ परतो यः सखिशब्दस्ततः सर्वनामस्थानं णिद्वदित्यर्थः । अग्रे च सप्तम्यन्तस्यैवान्वय इति न विपरिणामस्यावश्यकता ।

'अचो ञ्णिति इति । ञश्च णश्च ञ्णौ तौ इतौ यस्य तत् ञ्णित् । द्वन्द्वान्ते ('द्वन्द्वसमीपे') श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते ञिति, णिति इति । 'मृजेर्वृद्धिः' इत्यतो वृद्धिरित्यनुवर्तते । अङ्गस्येति अधिकृतमचा विशेष्यते, विशेषणेन तदन्तविधिस्तदाह—अजन्ताङ्गस्येत्यादि । स्थानत आन्तर्य्याद् इकारस्य वृद्धिरैकारस्तत आयादेशे च 'सखायौ' इत्यादि ।

शपि णित्वाभावाद् वृद्ध्यभावे हरिवद्रूपमित्याह—'सखीन्' इति । घिसंज्ञाभावादिति—'असखि' इति पर्य्युदासात् । सख्यन्यत्रभिन्नौ याविदुतौ तदन्तमिति नागेशमते, सखिभिन्नं यदिदुदन्तमिति दीक्षितमतेऽपि घित्वाभावादित्यर्थः । तत्कार्य्यमिति—घिकार्य्यंनाऽऽदेशादिकं नेत्यर्थः । तेन यणि सख्येत्यादि ।

ख्यत्यात्परस्य इति । कृतयणादेशयोः खि-खीशब्दयोरनुकरणं ख्य इति, एवं ति-तीशब्दयोः 'त्य' इति । उभयत्राकार उच्चारणार्थः । न तु मुख्यापत्यादिशब्दैकदेशानुकरणम्, 'सख्युर्यः' (५-१-१२६)

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात्। सख्युः।

औत् [ ७-३-११८ ]

इदुद्भ्यां परस्य ङेरौत्स्यात्। उकारानुवृत्तिरुत्तरार्था। सख्यौ। शेषं हरिवत्।

'पत्युर्नः' ( ४-१-१३३ ) इत्यादिनिर्देशः कृतयणोऽनुकरणे प्रमाणम्। 'संख्यायाः सम्वत्सरसंख्यस्य च' ( ७-३-१५ ) 'आपत्यस्य च तद्धितेऽनाति' ( ६-४-१५१ ) इत्यादिनिर्देशा न अकृतयणादेशयोः ख्य-त्यशब्दयोरनुकरणाभावे प्रमाणम्।

इत्यभिप्रेत्याह—खि-तिशब्दाभ्यामित्यादि। ख्यश्च त्यश्चेति समाहारद्वन्द्वः। 'एङः पदान्तादति' इत्यतोऽतीति, 'ङसिङसोश्च' इत्यतः 'ङसिङसोः' इति चानुवर्तते। अत्रावयवावयविभावसम्बन्धे षष्ठी 'अति' इत्यनेन सम्बध्यते 'ङसिङसोरति' इति।

'ख्यत्यात्परस्य' इति पञ्चम्यन्तेन सामानाधिकरण्यादतीति षष्ठ्या विपरिणम्यते 'ख्यत्यात्परस्य ङसिङसोरत' इति। 'ऋत उत्' इत्यतः 'उत्' इत्यनुवर्तते। ख्यत्यादिति पञ्चम्यन्तेन 'तस्मात्' इति परिभाषया परत्वे लब्धे 'परस्य' इति 'एकः पूर्वपरयोः' इत्यधिकारनिवृत्त्यर्थम्। अनुवृत्तिनिवृत्त्योर्व्याख्यानसापेक्षत्वेन 'पत्युर्नः' 'सख्युर्यः' इत्यादिनिर्देशादेव 'एकः पूर्वपरयोः' इत्यधिकारनिवृत्तिसिद्धेः परग्रहणं चिन्त्यमित्युपाध्यायाः।

एवं च यत्र यणप्रवृत्तिस्तत्रैवोत्वम्। न तु 'अतिसखेः' इत्यादौ। नन्वेवं ह्रस्वेकारस्थानिकयण्घटितख्यत्यशब्दमादाय सूत्रस्य चारितार्थ्याद्दीर्घेकारयण्घटितेषु प्रवृत्तिर्न स्यादिति वाच्यम्, निर्देशस्य ह्रस्वदीर्घसाधारण्याच्छास्त्रस्य बहुविषयकत्वसम्भवे तत्संकोचस्यान्याय्यत्वाद् भाष्यप्रामाण्याच्च दीर्घस्थानिकयण्घटितेष्वपि प्रवृत्तेः।

तथा च प्रकृतसूत्रे भाष्यम्—'सखीयतेरप्रत्ययः'सख्युः' 'पत्युः' लुनीयते पूनीयतेरप्रत्ययः'लून्युः' 'पून्युः' इति। न च क्विपि परे लुप्तमकारं स्थानिवत्त्वेनादाय यणि यलोपे स्थानिवत्त्वाभावाद् 'लोपो व्योर्वलि' इति यलोपे तत्र ख्यत्यशब्दाभावः क्वौ लुप्तस्य स्थानिवत्त्वाभावेन तन्निमित्तकयणोऽप्रवृत्तेः। अत्रार्थे चोक्तभाष्यप्रयोग एव मानम्।

'औत्' ( ७-३-११८ ) इति। एतच्च नदीसंज्ञकेषु 'इदुद्भ्याम्' ( ७-३-११७ ) इति पूर्वसूत्रेण घिसंज्ञकेषु 'अच्च घेः' ( ७-३-११९ ) इत्युत्तरसूत्रेण बाध्यते। तस्मादेतत्संज्ञाद्वयशून्योऽस्य विषयः। न च तादृश उकारोऽस्तीत्यत आह—उकारानुवृत्तिरिति—उत्तरार्थेति—'विष्णौ' इत्यादिसिद्ध्ये 'अच्च घेः' इत्युत्तरसूत्रार्थं इत्यर्थः।

सुसखेति—शोभनः सखा सुसखा 'कुगतिप्रादयः' इति नित्यतत्पुरुषः। इह 'राजाहःसखिभ्यष्टच्' (५-४-९१) इति टच् तु न, 'न पूजनात्' ( ५-४६९ ) इति समासान्तनिषेधात्।

'शेषोघ्यसखि' इत्यत्र 'असखि' इति नायं प्रसज्यप्रतिषेधः सखिशब्दो घिसंज्ञको न भवतीति, असमर्थसमासापत्तेर्वाक्यभेदापत्तेश्च गौरवात्। किन्तु पर्युदास एव सखिभिन्न इत्यर्थः। तथा च सुसखीतिसमुदायो न सखिशब्दः किन्तु तद्भिन्न इति घिसंज्ञा स्यादेव। ननु असखीत्वस्य सखिभिन्नं सखिशब्दान्तभिन्नं यत्प्रातिपदिकमित्यर्थेन सुसखीत्यस्य सखिशब्दान्तत्वाद् घिसंज्ञा न स्यादत एव 'कृतं सख्या' इत्यस्य प्रातिपदिकत्वाभावान्न संज्ञेति चेन्न, पर्युदासन्यायेन तद्भिन्नस्य प्रातिपदिकस्य ग्रहणेऽपि विशेष्यस्यात्र शब्दतोऽनुपस्थितत्वेन तदन्तविधेरभावात्सखिभिन्न इत्येवार्थः।

अत एव 'अतिसखेरागच्छति' इति भाष्यं संगच्छते। तत्सर्वं हृदि निधायाह-समुदायस्येत्यादि। एवम् अतिशयितः सखा 'अतिसखा' इत्यत्रापि पूर्वोक्तं सर्वमुन्नेयम्।

ननु सखिभिन्नमित्यर्थे सखिशब्दे घित्वापत्तिः, सखिभिन्नस्य इदन्तस्य 'खि' इत्यस्य सत्त्वादिति चेन्न, 'पर्युदासः सदृशग्राही' इति न्यायेन प्रातिपदिकत्वेन सादृश्यमादाय सखिभिन्नस्य प्रातिपदिकस्यैवेदुदन्तस्य ग्रहणात्। सखिघटकं खि इति तु न प्रातिपदिकमित्यदोषात्।

शोभनः सखा सुसखा । सुसखायौ । सुसखायः । अनङ्णिद्वद्भावयोरङ्गत्वात्तदन्तेऽपि प्रवृत्तिः ! समुदायस्य सखिरूपत्वाभावाद् 'असखि' ( सू २४३ ) इति निषेधाप्रवृत्तेर्घिसंज्ञा । सुसखिना । सुसखये । ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् 'खयत्यात्--' ( सू २२५ ) इत्युत्वं न । सुसखेः । सुसखावित्यादि । एवमतिशयितः सखा अतिसखा ।

---

अत्र शेखरकृतः—यत्र पर्युदस्यमानो वर्णः पर्युदाससमर्पकं च समुदायबोधकपदम्, तत्र समुदायबोधकं पदं स्वावयवे लाक्षणिकम् । यथा 'टोरनाम्' इत्यत्र पर्युदस्यमानः तवर्गः, स तु नाम्भिन्न एवेति 'षड्नाम्' इत्यत्र नामभिन्नस्य नाम्घटकनकारस्य टुत्वनिषेधापत्तिः, अतो नामपदं नामवयवपरमिति नामवयवभिन्नस्य तवर्गस्येत्यर्थे न दोषः ।

एवम् 'नश्छव्यप्रशान्' इत्यत्र प्रशान्भिन्नस्य नकारस्येत्यर्थे प्रशान्शब्दावयवस्य नकारस्य प्रशान्भिन्नत्वाद् रुत्वापत्तिरतस्तत्र अप्रशानित्यस्य प्रशानवयवभिन्नस्य नस्येति न दोषः ।

एवमेव वर्णस्य संज्ञापक्षे सखिभिन्नो यो ह्रस्व इकार इत्यर्थे सखिशब्दस्येकारे सखिभिन्नत्वसत्त्वेन घिसंज्ञा दुर्वारेति 'असखि' इत्यस्य वैयर्थ्यापत्त्या सखिपदमत्र सख्यावयवे लाक्षणिकम् । तथा च सख्यवयभिन्नो यो ह्रस्वेकारः स घिसंज्ञो भवतीत्यर्थे सुसख्यादिशब्दघटकेकारे सख्यवयभिन्नत्वस्यासत्त्वेन घिसंज्ञा वक्तुमशक्येति 'सुसख्या' इत्येव रूपम्, न तु 'सुसखिना' इत्यादि ।

तदन्तसंज्ञापक्षेऽपि सख्यवयवभिन्नो यो ह्रस्वेकारस्तदन्तो घिसंज्ञ इत्येवार्थः । एवञ्चोभयपक्षेऽपि सुसख्यतिसख्यादौ घिसंज्ञा दुरुपपादा ।

अत एव 'यस्येति च' इति सूत्रभाष्ये—अवर्णस्य इति किमुदाहरणम् ? 'अतिसखेरागच्छति' इति । यदि अत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वादतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अतिदेशशास्त्रारम्भसामर्थ्यादप्रवृत्त्या उपसर्जनह्रस्वत्वेऽपि सखिशब्दतया घिसंज्ञा न स्यात् ।

लोपे तु अन्तवद्भावातिदेशाविषयत्वेन लक्षणप्रतिपदोक्तपरिभाषया अस्य सखिग्रहणेनाग्रहणात् पर्युदासाप्रवृत्त्या घिसंज्ञा सिध्यति । सखिभिन्नं यदिदन्तं प्रातिपदिकं तद् घिसंज्ञमित्यर्थवादिदीक्षितमते तु लोपेऽलोपे वा सखिभिन्नं प्रातिपदिकम् 'अतिसखि' इति तस्य घित्वं दुर्निवारमेवेति लोपाभावे घिसंज्ञानापत्तिदानं भाष्यकृतोऽसङ्गतं स्यात् । सख्यवयवभिन्नस्य इतो घिसंज्ञा इति वादिनस्तु मते लोपाभावे पूर्वान्तवत्त्वेन सखिशब्दतया सख्यवयस्यैवेकारस्य सत्त्वेन भाष्योक्ता घिसंज्ञानापत्तिः संगच्छते । अतः सख्यवयवभिन्नो यो ह्रस्वेकारस्तस्यैव घिसंज्ञा भाष्यसम्मतेत्याहुः ।

दूषितास्तु सखिभिन्नस्यावयवो यो ह्रस्वेकारः स घिसंज्ञोऽथवा सखिभिन्नं यद्ध्रस्वेकारान्तं प्रातिपदिकं तद् घिसंज्ञकं भवतीत्यर्थः । अत एव ख्यत्यात्परस्येति सूत्रस्थं भाष्यं संगच्छते ।

तथा हि—किमर्थं विकृतं न सखिपतिभ्याम्, इति भाष्यं संगच्छते । किं पुनः कारणं विकृतयोः सखिपत्योर्ग्रहणं क्रियते न सखिपतिभ्यामेवोच्येत । नैवं शक्यम् । गरीयांश्चैव निर्देशः स्यात् । इह प्रसज्येत 'अतिसखेरागच्छति' इति । अयम्भावः—'अतिसखेः, इत्यत्र सखिशब्दात्परस्य ङसेरकारस्य सत्त्वेन उत्वापत्तिः । विकृतनिर्देशे तु अत्र कृतयणः ख्यात्परत्वाभावेन नोत्वम् । यदि सख्यवयवभिन्नस्य ह्रस्वेकारस्य घिसंज्ञायां तु अत्र सख्यवयवस्यैव इकारस्य सत्त्वेन घित्वानापत्त्या 'अतिसखेः' इति प्रयोगासङ्गतिः सखिभिन्नमिदन्तं प्रातिपदिकं घिसंज्ञमित्यर्थे तु प्रकृते सखिभिन्नमिदन्तं प्रातिपदिकम् अतिसखि इतीति घित्वे निर्देशसङ्गतिः । तस्मात्सख्यवयवभिन्नो यो ह्रस्वेकारस्तदन्तं प्रातिपदिकं घिसंज्ञकमित्यर्थो भाष्यविरुद्धः ।

ननु दीक्षितमते 'यस्येति च' इति सूत्रस्थभाष्यविरोधः । तथा हि—इवर्णस्य इति किमुदाहरणम् 'अतिसखेरागच्छति' अतिसखेः स्वम् । यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृते असखीतिप्रतिषेधः प्रसज्येत, इत्युक्तं भाष्यकृता । सखिभिन्नमिदन्तमित्यर्थे तु सखिभिन्नमिदन्तमतिसखीति घित्वं स्यादेवेति भाष्यं विरुध्येतेति चेन्न, तस्य भाष्यस्यैकदेशित्वात् ।

'परमः सखा यस्य' इति विग्रहे परमसखा परमसखायौ इत्यादि। गौणत्वेऽप्यनङ्णित्वे प्रवर्तेते। सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच्। हरिवत्। इहानङ्णित्वे न भवतः। 'गोस्त्रियोः—' (सू ६५६) इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्, 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्'।

---

तथा हि सखिशब्दात् 'सख्यशिश्वीति भाषायाम्, (४-१-६२) इति ङीषि 'सखि ई' इति स्थितौ "यस्येति च" इतीकारलोपेऽपि ङीषन्तस्यापि लिङ्गविशिष्टपरिभाषया सखिग्रहणेन ग्रहणादुपसर्जनह्रस्वत्वेऽपि स्थानिवत्त्वेन लोपाभावपक्षे एव प्रतिषेधकथनस्यैकदेशित्वं स्पष्टमेव।

किञ्च 'असखी'ति प्रतिषेधः प्रसज्येत, इत्युक्तिः सिद्धान्तभूतपर्युदासपक्षे न सम्भवति। प्रसज्यप्रतिषेधपक्षे तु सखिशब्दो घिसंज्ञको न भवतीत्येवार्थः। तत्पक्षे सखिभिन्नम्, सख्यवयवभिन्नमित्यादिव्याख्याया गन्ध एव नास्ति। अत एव कैयटेनोनोक्तम् प्रसज्यप्रतिषेधे चायं दोषो न तु पर्युदासे तदन्तस्य सखिशब्दान्यत्वाद् घिसंज्ञायाः सिद्धत्वादिति। अत्र प्राचीनमतमेव ज्याय इति गुरवः।

परमः सखा यस्येति—परमश्चासौ सखेति कर्मधारयस्तु न टच्प्रसङ्गात्। न च परमशब्दस्य पूजनार्थत्वात् 'न पूजनात्' इति निषेधः, स्वतिभ्यामेव तत्प्रवृत्त्युपगमात्।

गौणत्वेऽपीति—पदकार्योऽयं न्यायो न तु प्रातिपदिककार्यो, पदस्य पदान्तरसम्बन्धे एव गौणत्वप्रतीतेः, पदसंस्कारवेलायां पदान्तरसम्बन्धाभावेन गौणत्वाप्रतीतेः।

पदकार्यत्वञ्च—सुबनिमित्तकत्वे सति सर्वत्वानिमित्तकत्वम्। प्रकृते अनङ्णिद्वद्भावयोः सुबनिमित्तकत्वेन प्रातिपदिकार्यत्वमेव न पदकार्यत्वमिति गौणन्यायाप्रवृत्त्या गौणेऽपि वस्तुतो न्याये गौणत्वमपि अप्रसिद्धत्वरूपम् गुणप्रयोज्यलक्षणाविषयत्वरूपञ्च। न तु प्रकारतया भासमानत्वम्। बहुव्रीहौ तु समस्यमानपदार्थाः प्रकारतयैव भासन्ते एतन्न्यायविषयाभावान्नैतन्न्यायप्रवृत्तिरित्युक्तं गौणत्वेऽपीति।

अत एव 'येन विधिः' इति सूत्रे तदन्तविधेः फलं सुसखा, सुसखायौ, सुसखायः, परमसखा परमसखायौ, परमसखायः, इत्युक्तम्। तत्र परमसखिपदे बहुव्रीहिरेव, न तत्पुरुषष्टजापत्तेः। समासान्तानित्यत्वेन समाधानं त्वगतिकगतिकम्। "द्वितीया श्रितातीत" इति भाष्येऽपि बहुव्रीहौ 'सोमसखा' इत्युदाहृतम्।

एवमेव 'अनुग्रुणो वरुण इन्द्रसखा, "अग्ने याहि मरुत्सखा" 'तीव्रं सोमं पिबति गोसखायम्' इत्यादयः प्रयोगाः समर्थनीयाः। एतेषु पूर्वपदप्रकृतिस्वरस्य दर्शनेन बहुव्रीहित्वाद् गौणत्वम्। गौणत्वेऽप्यनङादीनां प्रवृत्त्या घिसंज्ञासूत्रे शोभनः सखा अस्येति 'सुसखिः' इत्युदाहरन्तौ हरदत्तन्याः सकारौ तदनुगामिनश्चान्ये उपेक्ष्याः।

अनित्यत्वादिति—समानाधिकरणाधिकारस्थे 'कुमारः श्रमणादिभिः' (२-१-७०) इति सूत्रे स्त्रीलिङ्गविशिष्टस्यापि ग्रहणम्, इति परिभाषयाः 'हरतेरनुद्यमनेऽच्' (३-२-९) इति सूत्रपठिते शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम्' इति वार्तिके घटीग्रहणज्ञापितानित्यत्वादित्यर्थः। लिङ्गविशिष्टपरिभाषया घटग्रहणेनैव घटीशब्दस्यापि ग्रहणे सिद्धे घटीग्रहणं व्यर्थीभूयानित्यत्वं ज्ञापयति। तेन 'राजाहः सखिभ्यष्टच्' (५-४-९१) इति सूत्रे सखिशब्देन सखीशब्दस्याग्रहणान्न टजिति भावः।

लाक्षणिकत्वादिति—लक्षणम्=शास्त्रं तत्र भवम् 'बह्वचोऽन्तोदात्ताद्' (४-३-६७) इति 'अध्यात्मादिभ्य इष्यते' इति ठञि लाक्षणिकम्, अतिसखिशब्दस्वरूपस्य 'गोस्त्रियोः' इति लक्षणानुसन्धानविषयत्वात्। यद्यपि प्रतिपदोक्तशब्दस्यापि लक्षणानुगम्यत्वमेव, तथाऽपि यस्य

पतिः समास एव [ १-४-८ ]

पतिशब्दः समास एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः। पत्युः। पतीनाम्। पत्यौ।

---

स्वरूपप्रतिपत्तये विशेषतः शास्त्रप्रवृत्तिस्तदपि प्रतिपदोक्तम्। तत्तच्छब्दानुवादेन विहितत्वात्। सखि-शब्दस्तु न लाक्षणिकः, 'समाने ख्यः सचो दात्तः' ( उ० ४ पा० १३७ ) इतीण्प्रत्यये ङित्त्वेन टिलोपे चानुवर्तमाने विशेषतो व्युत्पादितत्वेन प्रतिपदोक्त एव।

लक्षणेति—लक्षणम्=लाक्षणिकम्। विशिष्य प्रत्यक्षोपदिष्टं प्रतिपदोक्तम्। तयोर्मध्ये प्रति-पदोक्तस्यैव ग्रहणम्। झटित्युपस्थितिकं प्रतिपदोक्तम्, लक्षणानुसन्धानाद्विलम्बोपस्थितिकं लाक्षणिकम्, तत्र प्रतिपदोक्तमादाय शास्त्रस्य चारितार्थ्यान्न लाक्षणिकेषु प्रवृत्तिरिति न्यायसिद्धेयम्।

इकारान्तेषु पतिशब्दे कार्यविशेषमाह—'पतिः समास एव' ( १-४-८ ) इति। 'शेषो घ्यसखि' इत्यतो 'घि' इत्यनुवर्तते तदाह—घिसंज्ञ इति। यद्यपि 'शेषो घ्यसखि' इत्यनेन पति-शब्दस्य घित्वे सिद्धे 'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते' इति न्यायेन 'पतिः समासे एव घिसंज्ञः' इत्यर्थो लभ्येत इत्येवकारो व्यर्थः तथापि 'समासे घिसंज्ञः पतिशब्द एव' इत्यपि नियमः सम्भवेत्तद्विपरीतनियमवारणाय सूत्रे एवग्रहणं समासे एव पतिशब्दो घिसंज्ञ इतीष्टनियमलाभार्थमेवग्रहणम्।

'अनस्विधौ' 'धात्वादेः षः सः' इत्यादि निर्देशाद्विपरीतनियमवारणेन ज्ञानगौरवम्। स्मृति-पुराणेषु 'सखिना' 'पतिना' इत्यादि व्याकरणानिष्पन्नत्वेनासाध्वेव। न चैवमृषीणामसाधुशब्दप्रयोग-जन्यप्रत्यवायापत्तिः, त्रिशङ्कुयाज्ययाजनादिवत् तेषां तपोमाहात्म्येनासाधुप्रयोगेऽपि ऋषीणां दोषा-भावात्, यज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च।

अस्माकमपि स्मृतिपुराणाध्ययनविधिबलात्तेषां तपोबलाच्च यज्ञमध्येऽपि तदन्तर्गतपाठे न दोषः। स्वातन्त्र्येणेदृशं प्रयुञ्जानाः प्रत्यवयन्त्येव। अत एव नदीसंज्ञा सूत्रे भाष्ये 'छन्दोवत्कवयः कुर्वन्ति, 'न होषेष्टिरस्ति' इत्युक्तम्।

केचित्तु 'सीतायाः पतये नमः' 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। कृष्णस्य सखिरर्जुनः, सखिना वानरेन्द्रेण, इत्यादिपराशरभारतरामायणादिप्रयोगाः पतिमाचष्टे इत्याचक्षाणयन्तादौ-णादिकेप्रत्ययेन निष्पन्नत्वात् 'पतिः समासे एव' इत्यत्र लाक्षणिकत्वान्न गृह्यन्त इत्याहुः, तन्न, अर्थासङ्गतेः। तस्मादार्षत्वमेव समाधिरुचितः।

समासे इत्युक्तेः ईषदूनः पतिः बहुपतिरिति 'विभाषा सुपो बहुच् पुरस्तात्तु' ( ५-३-६८ ) इति बहुचि न घित्वम्, तेन 'बहुपत्या' इत्येव।

अत एव 'पतिर्वृत्तावेव' इति न सूत्रितम्। यत्तु अभिनवचन्द्रिकाकारः—वृत्तिसंज्ञायाः शास्त्रकारैरनुक्तेः 'पतिर्वृत्तावेव' इति न्यासो न कर्तुं शक्यत इति तच्चिन्त्यम्, समर्थसूत्रभाष्ये 'सविशेषणानां वृत्तिर्न' इति 'धातोः कर्मणः' ( ३-१-७ ) इति सूत्रे च 'इह द्वौ पक्षौ वृत्तिपक्षश्चा-वृत्तिपक्षश्च। स्वभावतश्चैतद्भवति वाक्यञ्च प्रत्ययश्च। तत्र स्वाभाविके वृत्तिविषये' इति च भाष्योक्त्या वृत्तिसंज्ञायास्तदभिमतत्वात्।

वर्णसंज्ञापक्षे 'पत्यवयव इकारः समासे एव घिसंज्ञो भवतीत्यर्थः। तदन्तपक्षे पत्यवयवेकारान्तः समासे एव घिसंज्ञो भवतीत्यर्थः। नियमशास्त्राणां द्विधा प्रवृत्तिः विधिमुखेन निषेधमुखेन च।

विधिपक्षे 'शेषो घ्यसखि' इति नियम्यशास्त्रे सामान्यतः पतिशब्दातिरिक्तः ह्रस्वेकारान्तो घि-संज्ञो भवतीति संकोचः, तेन पतिशब्दस्यासमासे समासे च घित्वाप्राप्तयाऽनेन विधीयते। निषेधपक्षे तु समासाघटकपत्यवयवेकारः समासाघटकपत्यवयवेकारान्तो वा घिसंज्ञो न भवतीत्यर्थः।

शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ।

बहुगणवतुडति संख्या [ १-१-२३ ]

'शेषो घ्यसखिपती' इति न्यासस्तु न, सख्यवयवेकारान्तस्येव पत्यवयवेकारान्तस्यापि निषेधः स्यादिति 'सुसख्या' इत्यादाविव 'सुपतिना' इत्यादावपि नाभावादिनं स्यात् 'सखिपती समासे एव' इत्यपि न, नागेशमते 'सुसख्या' इतीष्टे घित्वापत्तेः । दीक्षितमते बहुचपूर्वके 'बहुसखिना' इतीष्टासिद्धेः ।

ननु शेषो घ्यसखिपती' इति न्यासे सखिपतिभिन्नमिदन्तं घिसंज्ञमित्यर्थवादिमते सुसखि-सुपतिसमुदायस्य सखिपतिभिन्नतया 'सुसखिना, सुपतिना' इतीष्टसिद्धिः । 'सखिपती समासे एव' इति न्यासे च 'सुसखिना' इत्यादीष्टसिद्धिरिति चेन्न, आद्यन्यासे 'पतिसुतान्वयभ्रातृबान्धवान्' इत्यादौ द्वन्द्वघटकपतिशब्दस्य घित्वानापत्त्या पूर्वनिपातानापत्तेः, द्वितीयन्यासेऽपि द्वन्द्वे पतिशब्दस्येव सखि-शब्दस्यापि घित्वापत्तौ पूर्वनिपातापत्तेः ।

यत्तु कन्लुबन्तादाचारक्विपि 'वृत्तावेव' इति न्यासे घित्वापत्तिरिति तन्न, क्विपि 'ह्रस्वस्य पिति कृति' ( ६-१-७१ ) इति तुकि इदन्तत्वाभावेन घित्वाप्राप्तेः ।

पाति रक्षतीति पतिः पातेर्डतिः ( उ. ४ पा. ५७ सू. ) डतिप्रत्यये साधुः । पतिः, स्वामी, रक्षकश्च ।

कति इति का संख्या परिमाणमेषामिति विग्रहे 'किमः संख्यापरिमाणे डति च' (५-२-४१) इति सूत्रेण संख्यायाः परिमाणम्=परिच्छेदो निश्चय इति यावत्, तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन् वर्तमानात्प्रथमान्तात्किंशब्दादस्येति षष्ठ्यर्थे डति प्रत्यये 'कति' इति सिध्यति । स च बहुवचनान्त एव 'तदुक्तं भाष्ये' 'बहुष्विति वक्तव्यम्' 'न वक्तव्यम्' किमित्येतत्परिप्रश्ने वर्तते । परिप्रश्नश्चानिर्ज्ञाते । 'अनिर्ज्ञातं च बहुलम्' इति । बहुत्वसंख्यावच्छिन्नसंख्येयविषयकप्रश्ने एव डतिरिति भावः । षट्कार्यं वक्ष्यन् षट्संज्ञोपयोगिनीं संख्यासंज्ञामाह—

'बहुगण' इति बहुश्च गणश्च वतुश्च डतिश्चैतेषां समाहार इति विग्रहे समाहारद्वन्द्वः । एतत्संख्यासंज्ञः स्यादित्यर्थः । फलितमाह बहुवचनान्तेन एते इत्यादि । बहुगणशब्दाविह त्रित्वादि-परार्द्धान्तसंख्याव्यापकधर्मविशेषवाचिनौ गृह्येते, संख्यायतेऽनयेत्यन्वर्थमहासंज्ञाकरणात् । अत एव वैपुल्यवाचिनो बहुशब्दस्य न संघवाचिनो गणशब्दस्य ग्रहणम् । वतु-डती प्रत्ययौ तेन तदन्तस्य ग्रहणम् । संज्ञाविधाविति निषेधस्तु न, केवलयोः प्रयोगानर्हत्वात् । वतुरिह 'यत्तदेतेभ्यः परिमाणे वतुप्' इति तद्धितप्रत्ययो गृह्यते, न तु 'तेन तुल्यं क्रिया चेद्वतिः' इति, उकारानुबन्धात् । डतिरपि 'किमः संख्यापरिमाणे डति च' इति तद्धित एव गृह्यते, न तु 'पातेर्डतिः' इति कृत्, तद्धितवतु-साहचर्यात् ।

नन्वयं संख्याप्रदेशेषु 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्यादिषु 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्' इतिसंज्ञाकरणमूलकपरिभाषया बह्वादीनां चतुर्णामेव ग्रहणं स्यान्न तु लोक-प्रसिद्धसंख्यावाचिनाम् । 'पञ्चकृत्वः' इत्यादि न सिध्येदिति चेन्न 'संख्याया अतिशदन्तायाः कन्' इति सूत्रे तिशदन्तपर्युदासबलेन संख्याप्रदेशेषु कृत्रिमाकृत्रिमन्यायो न प्रवर्तते इति ज्ञापनात् ।

न हि ति-शदन्तानां विंशतित्रिंशदादीनां कृत्रिमा संज्ञाऽस्तीति तद्वैयर्थ्यं स्पष्टमेव कृत्रिम-ग्रहणे । न चैवम् 'कृत्रिमाकृत्रिमन्यायवैयर्थ्यम्, अभ्यासाम्रेडितसंज्ञाविषये एतस्य चारितार्थ्यात् ।

नन्वेवं बहुगणयोरपि एकादीनामिव संख्याप्रदेशेषु ग्रहणे सिद्धे सूत्रे तद्ग्रहणं व्यर्थमिति चेन्न, तयोर्नियतविषयपरिच्छेदहेतुत्वरूपसंख्यात्वाभावेनैकादिवैषम्यात्सूत्रे ग्रहणात् । अत एव भाष्ये 'एतत्सू-

एते संख्यासंज्ञाः स्युः ।

---

ग्रमतिदेस्यर्थं यदयमसंख्यां संख्येत्याह' इत्युक्तम् । परिच्छेदो ज्ञानविशेषः । तत्र नियतत्वञ्च इतर-व्यावृत्तविषयकत्वम् । बहुगणयोर्न साक्षान्नियतपरिच्छेदकत्वं किन्तु बहुत्वादिव्याप्यत्रित्वादिरूपपर त्वस्यैव । कतिशब्दोऽपि संख्यानकरणीभूतार्थविषयकप्रश्नार्थकतया संख्यानकरणम् । एवं यावत्ता-वच्छब्दादिवत्वन्तानामपि संख्यानकरणत्वं स्वव्याप्यत्रित्वादिना बोध्यं न तु साक्षात् ।

केचित्तु 'संख्या' इत्येको योगस्तत्रान्वर्थसंज्ञाबलाद् बह्वादींश्चतुर आक्षिप्य बह्वादयः संख्या-संज्ञका भवन्ति इति संख्यां संज्ञां विधाय 'बहुगणवतुडति' इत्यपरो योगः ।

पूर्वस्यैव बह्वादीनां संख्यासंज्ञासिद्धौ इदं नियमार्थम् 'अनियतसंख्यावाचिनां संख्या संज्ञा चेत्तर्हि-बह्वादीनामेवेति नियमेन भूर्य्यादीनां न संख्यासंज्ञा । यद्वा अन्वर्थसंज्ञाबलादेकादीनामिव बहुगणयोरपि संख्याकार्य्ये सिद्धे बहुगणग्रहणं नियमार्थम् । अनियतसंख्यावाचिनां संख्याकार्य्यं चेद् बहुगणयोरेवेति तेन भूर्य्यादिव्यावृत्तिः ।

बहुत्वं गणत्वञ्च त्रित्वादिसंख्याव्यापको धर्मविशेषो नतु त्रित्वादिरूपमेव । तच्चाखण्डो-पाधिरेकञ्च । तस्य चानेकेषु पर्य्याप्तत्वात्समवायवद् बोध्यम् । न च बहुत्वस्य त्रित्वादिभिन्नत्वस्वीकारे गौरवं शङ्क्यम्, बहुत्वस्य त्रित्वादिरूपत्ववादिनां मते 'बहवः' 'त्रयः' इति प्रतीतिवैलक्षण्याय त्रित्वत्वादीव बहुत्वत्वं जातिरूपं त्रित्वादिवृत्ति वाच्यम्, अतिरिक्तवादिनां नये तु बहुत्वमेव त्रित्वादिभिन्न-मिष्यते । बहुत्वत्वं तु बहितरावृत्तित्वे सति सकलबहुवृत्तित्वरूपम् ।

अत्र बहुत्वस्य त्रित्वादिरूपत्ववादिना उच्यते मया बहुत्वत्वमपि जातिरूपं नेष्यते, किन्तु एकत्वद्वित्ववद् भेदविशिष्टसंख्यात्वमेव बहुत्वम्, तर्हि अतिरिक्तवादिनाऽपि बहुत्वमतिरिक्तं नेष्यते किन्तु एकत्वद्वित्ववद् भेदरूपमेवेत्यलमतिप्रसक्तविचारेण ।

बहुत्वस्य संख्यात्वमस्ति नवेति संशये उच्यते—बहुत्वं त्रित्वादिवत्संख्या । नचैवम् 'असंख्यां संख्येत्याह' इति भाष्यविरोधः, तद्भाष्यस्य वतुडतिविषयकत्वेनाप्युपपत्तेः । किञ्च बहुत्वस्य संख्यात्वा-भावे 'संख्या चैव तथा तिङाम्' इति भाष्ये संख्यापदेन बहुत्वं विवक्षितम् ।

तथा 'तस्य पूरणे डट्' इति सूत्रे 'संख्यापूरणे इति वक्तव्यम्' इति वार्तिके 'बहुतिथः' इति सिद्ध्यर्थं संख्यापदेन बहुत्वं विवक्षितञ्च विरुध्येत । तस्मादस्तु बहुत्वं त्रित्वादिरूपा संख्यैवेति चेन्न, अत्र प्रकरणे संख्यापदेन संख्यावाचकपदस्यैव विवक्षितत्वात् । किञ्च बहुत्वस्य संख्यात्वे भूर्य्यादीनां संख्याकार्य्यं दुर्वारम् ।

न च 'बहुगण' इति नियमेन भूर्य्यादीनां निराकरणम्, एतत्सूत्रस्य भाष्ये प्रत्याख्यानात् । तथाहि—'बह्वादीनामग्रहणम्' । केनेदानीं संख्याप्रदेशेषु संख्यासम्प्रत्ययो भविष्यति ? ज्ञापकात्सिद्धम् यदयं 'वतोरिड्वा' इति संख्यायां विहितस्य कनो वत्वन्तादिटं शास्ति । वतोरेव तज्ज्ञापकं स्यात् । नेत्याह—'योगापेक्षं ज्ञापकम्' इति । 'अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न भ्रमितव्यम्, किन्तु योगानपेक्षते इतियोगापेक्षम् ।

यदयं 'बहुगणसंघस्य तिथुक्' इति, 'वतोरिथुक्' इति 'षट्कतिकतिपयचतुरां थुक्' इति च डटि परत आगमं शास्ति तज्ज्ञापयति भवति संख्याकार्य्यमिति' इति कैयटः ।

तत्र भाष्ये बहुत्वस्य संख्यापदेन व्यवहारस्तु बहुशब्दस्य संख्यासंज्ञकत्वेन ज्ञापकसिद्धसंख्या-कार्य्यकत्वेन च शब्दार्थयोस्तादात्म्याङ्गीकारेण द्विरेफव्यहारवत् 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इतिवच्च ज्ञेयः । अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वाच्यम् । 'समासवत् विध्यर्थम् । अर्द्धपञ्च-मकः । 'संख्याया अति' इति—

डति च [ १-१-२५ ]

डत्यन्ता संख्या षट्संज्ञा स्यात् ।

प्रत्ययस्य लुक्श्लुलुपः [ १-१-६१ ]

लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ।

'डति च' इति । अत्र 'बहुगण' इत्यत 'संख्या' इति 'ष्णान्ताः षट्' इत्यतः षडिति चानुवर्तते । प्रत्ययत्वात्तदन्तग्रहणम् । 'संज्ञाविधौ प्रत्ययग्रहणे' इति निषेधस्तु न, डतिप्रत्ययमात्रस्य प्रयोगानर्हत्वात् । तदाह--डत्यन्तेत्यादि । संख्येति किम् 'पतयः' इत्यत्र षट्संज्ञायाम् 'षड्भ्यः' इति लुङ् मा भूत् ।

भाष्ये तु 'इदं डतिग्रहणं द्विः क्रियते । संख्यासंज्ञायां षट्संज्ञायाञ्च । एकं शक्यमकर्तुम् । यदि संख्यासंज्ञायां क्रियते । षट्संज्ञायां न करिष्यते । 'ष्णान्ता षट्' इत्यत्र डतीत्यनुवर्तिष्यते । अथ षट्संज्ञायां क्रियते । संख्यासंज्ञायां न करिष्यते । 'डति च' इत्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते इति । एवमेकं डतिग्रहणं प्रत्याख्यातम् ।

अत्र सूत्रे 'संख्यासंज्ञाऽनुवृत्तिरपि उणादीनां व्युत्पत्तिपक्षस्य ज्ञापिका । संख्यासंज्ञाऽनुवृत्तिर्हि डवादिप्रत्ययस्य डतेरत्र ग्रहणाभावाय यदि अव्युत्पत्तिपक्षः स्यात्तदा तद्धितभिन्नस्य डतेरभावात्संख्यानुवृत्तिर्व्यर्था स्यात् । षट्संज्ञाकार्यं लुकं वक्ष्यन्नाह—'प्रत्ययस्य लुक्' इति । 'अदर्शनं लोपः' इत्यतोऽदर्शनमित्यनुवर्तते । यदि प्रत्ययस्यादर्शनमेकमेव संज्ञिनमुद्दिश्य लुक्-श्लु-लुप्संज्ञास्तिस्रः स्युस्तदा 'हन्ति' इत्यत्र शपो लुकि 'श्लौ' इति द्वित्वं स्यात् । 'जुहोति' इत्यत्र शपः श्लौ 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः स्यात् ।

न च 'नाभ्यस्तस्याचि' ( ७-३-८७ ) इत्यतः 'नाभ्यस्तस्य' इति 'उतो वृद्धिः' इत्यत्रानुवर्त्य अभ्यस्तस्य न वृद्धिरित्यर्थेन न दोष इति वाच्यम्, प्रत्ययादर्शनस्य संज्ञाचतुष्टये सर्वत्रैव श्लोः सत्त्वेन सर्वत्र द्वित्वेऽभ्यस्तसंज्ञायाञ्च 'उतो वृद्धिः' इति सूत्रस्य निर्विषयत्वापत्तेः । तस्मान्नैकस्यानेकसंज्ञाः, अन्वर्थं हि संज्ञाकरणम्' इति भाष्यादेकस्यानेकसंज्ञाकरणासामर्थ्यादनेकसंज्ञिलाभाय 'लुक्श्लुलुपः इत्यावर्त्यते । तृतीयान्तेन विपरिणम्य लुक्शब्देन प्रत्ययादर्शनं लुक्संज्ञम्, श्लुशब्देन प्रत्ययादर्शनं श्लुसंज्ञम्, लुप्शब्देन प्रत्ययादर्शनं लुप्संज्ञमिति प्रत्येकसंज्ञाया भिन्नं भिन्नं संज्ञीति न दोषः ।

नन्वेवमपि सिद्धस्यैव संज्ञाविधानम् 'लुगादिशब्देन प्रत्ययादर्शनस्यैव लुगादिसंज्ञा क्रियते । तथा चान्योन्याश्रयः । यदा लुक्शब्देन प्रत्ययादर्शनं तदा लुक् संज्ञा । यदा संज्ञा तदा लुक्शब्देन प्रत्ययादर्शनमिति चेन्न ।

यथा तन्तुवायं प्रति कश्चिद् ब्रवीति 'अस्य सूत्रसमूहस्य शाटकं वय' इति । तत्र उतमेव शाटकमित्युच्यते । यदि शाटकं तन्न वातव्यम् । यद् वातव्यं तन्न शाटकम् इतिवदिति चेन्न, अस्य सूत्रस्यैतादृशं वय अस्मिन्नुते शाटकमिति नाम स्यादितिवत् अत्र एतादृशं प्रत्ययस्यादर्शनं स्याद् यस्मिन् सति लुग् इति नाम स्यादिति भाविसंज्ञाश्रयणेनादोषात् ।

यद्वा लुगादिपदानां लुगादिपदप्रयोज्यत्वे, विधेयतायाम्, अदर्शने च खण्डशः शक्तिः । तथा च यत्र लुक्पदं विधायकं तत्र अदर्शनमात्रमुपतिष्ठते नेतरत्, प्रयोजनाभावात् ।

यत्र तु उद्देश्यतया उपात्तम् यथा 'तद्धितलुकि' 'श्लौ' इति तत्र लुकीत्यस्य श्लौ इत्यस्य च लुक्श्लुपदप्रयोज्यत्वस्य विधेयताया अदर्शनस्य च त्रयाणामुपस्थितिः । आकाङ्क्षावशाद् लुगादिपदप्रयोज्यतानिरूपितविधेयताश्रये अदर्शने इत्यर्थं इति भाविसंज्ञाश्रयणं व्यर्थमेव ।

**षड्भ्यो लुक् [ ७-१-२२ ]**

षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ।

**प्रत्ययलोपे प्रत्ययलक्षणम् [ १-१-६२ ]**

प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् ।

---

किञ्च आकडारीयत्वाभावेऽपि अनेकसंज्ञाकरणसामर्थ्यात्तासां समावेशः । लोपसंज्ञायास्तासां विषयेऽपि समावेशो भवत्येव, बाधकाभावात् ।

नह्येताः संज्ञा इव लोपसंज्ञा प्रत्ययादर्शनमुद्दिश्य प्रवृत्ता किन्त्वदर्शनमात्रम् । लुमत्संज्ञाविषये लोपसंज्ञाया अभावे 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यस्याप्राप्त्या 'न लुमताङ्गस्य' इति निषेधवैयर्थ्यापत्तेश्च समावेश इति स्पष्टं भाष्ये ।

'षड्भ्यो लुक्' इति । सर्वनाम्नः स्मै' इतिवत् 'षषः' इति वक्तव्ये बहुवचननिर्देशोऽर्थप्राधान्यसूचनार्थः । तेन षट्संज्ञकार्थगतसंख्याभिधायिनोर्जश्शसोर्लुगित्यर्थात् 'प्रियपञ्चानः' इत्यादावन्यपदार्थप्राधान्यान्न लुक् ।

शेखरकृतस्तु 'षड्भ्यः' इति विहितविशेषणम् 'अङ्गाधिकारे पञ्चम्या यदुच्यते तद् गृह्यमाणविभक्तेर्भवति' इति भाष्यात् षड्भ्यो विहितयोर्जश्शसोर्लुगित्यर्थाद् गौणे न लुक् ।

'परमपञ्च' इत्यादौ तु विशिष्टस्य संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्संज्ञकत्वमस्त्येवेति न दोष इत्याहुः ।

ननु विहितविशेषणत्वे 'परमकति' इत्यत्र 'षड्भ्यो लुक्' इति लुगनापत्तिः, डत्यन्ततदादेरेव संज्ञाविधानात् । डत्यन्ततदादित्वञ्च कतिशब्दे एव, न तु परमकतिशब्दे । नचात्र समास एव दुर्लभः, 'दिक्संख्ये संज्ञायाम्' ( २-१-५० ) इति नियमादिति वाच्यम्, दिक्संख्ययोः समानाधिकरणविशेषणत्वेनोपात्तयोरेव प्रवर्तमानसमासस्य तेन नियमेन व्यावृत्तेः ।

अत एव सर्वादिसूत्रे भाष्ये 'परमपञ्च' इति प्रयुक्तं संगच्छते । न च 'बहुगण' 'डति च' इत्यत्र तदन्तविधिद्वयम्, मानाभावादिति चेन्न 'परमकतयः' इत्यस्यैवेष्टत्वात् ।

नवीनाभिमतसंख्यावाचकत्वं 'पञ्च इव त्रयस्त्रिपञ्चानः' इत्यत्र 'उपमितं व्याघ्रादिभिः' इति समासे पञ्चप्रतियोगिकसादृश्यविशिष्टत्रित्वावच्छिन्नोपस्थापके विशिष्टस्य संख्यात्रित्वप्रकारकसंख्येयत्रिविषयकबोधजनकतया षट्त्वापत्त्या चिन्त्यम् ।

'जश्शसोः शिः' इत्यतो जश्शसोरित्यनुवर्तते तदाह—जश्शसोर्लुक् स्यादिति ।

प्रत्ययलोपे प्रत्ययलक्षणम् ( १-१-६२ ) इति । 'प्रत्ययस्य लुक्श्लुलुपः' इत्यतः 'प्रत्ययस्य' इत्यनुवृत्त्या सिद्धे 'लोपे प्रत्ययलक्षणम्' इत्येव सूत्रमस्तु । प्रत्ययो लक्षणं निमित्तं यस्य कार्यस्य तत्प्रत्ययलक्षणं कार्यं प्रत्ययस्य लोपेऽपि स्यादित्यर्थः । तेन 'अतृणेट्' इत्यत्र 'अतृणह् त्' इति दशायां नित्यत्वात् 'हल्ङ्याब्भ्यः' इति तल्लोपे 'तृणह इम्' ( ७-३-९२ ) इति इमागमो न प्राप्नोति, हलादिपित्सार्वधातुकपरत्वाभावादत आह—

प्रत्यये लुप्तेऽपीत्यादि । न च स्थानिवत्त्वेन सिद्धिः, हलादित्वस्याल्घटितधर्मत्वेन अनल्विधाविति निषेधात् । तथा च 'प्रत्ययलोपे' इत्यत्र प्रत्ययग्रहणं व्यर्थमिति चेन्न 'आघ्नीय' इत्यत्र 'आहन् सीय' इत्यवस्थायाम् 'लिङः सलोपोऽनन्त्यस्य' ( ७-२-७९ ) इति सलोपे 'अनुदात्तोपदेशवनति' ( ६-४-३७ ) इति लुप्तं प्रत्ययावयवसकारम् प्रत्ययलक्षणेनादाय हलादिपरत्वादनुनासिकस्य नस्य लोपवारणाय प्रत्ययग्रहणस्यावश्यकत्वात् ।

न च सकारलोपस्य प्रत्ययलोपाभावात्प्रत्ययलक्षणाप्राप्तिः, एवं सति 'प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारः' इति ज्ञापनद्वारा प्रत्ययावयवलोपेऽपि प्राप्तप्रत्ययलक्षणस्य वारणाय प्रत्ययत्वपर्याप्त्यधिकरणलोपे प्रत्ययलक्षणं यथा स्यादित्यर्थज्ञापनेन प्रत्ययग्रहणस्य चारितार्थ्यात् ।

प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहार इत्यस्य फलं तु 'आदेशप्रत्ययोः' इत्यत्र प्रत्ययपदस्य प्रत्ययावयवे लक्षणाभावः भिन्नार्थकषष्ठीकल्पनाऽभावश्च। 'कविभिः कृतम्' इत्यादौ प्रत्ययविसर्गसत्त्वात् 'इदुदुपधस्य' इत्यनेन षत्वाभावश्च।

ननु प्रत्ययत्वपर्य्याप्त्यधिकरणलोपे इत्यर्थेऽपि प्रत्ययत्वप्रतियोगिका पर्य्याप्तिस्सकारेऽप्यवयवस्यापि प्रत्ययत्वादिति स्वांशे चारितार्थ्याभाव इति चेन्न, प्रत्ययत्वोपलक्षितसमुदायत्वावच्छिन्नप्रतियोगितानिरूपको योऽभावस्तद्विषयकज्ञानजन्यज्ञानीयविषयताश्रयप्रत्ययनिमित्तकं कार्य्यमेव प्रत्ययलक्षणेन भवतीति कल्पनेन सकाररूपप्रत्ययलोपेऽपि प्रत्ययत्वोपलक्षितसमुदायत्वावच्छिन्नप्रतियोगिताकाभावाभावेन दोषाभावात्।

ननु क्त्वादौ क्ङिति परेऽनुपधालोपिनो वनतेः साहचर्य्यादनुपधालोपिनोऽनुदात्तोपदेशस्यापि ग्रहणात् 'आघ्नीय' इत्यत्र दोषाभाव इति चेन्न, इच्छार्थकक्यजन्तात्समिशब्दाद् विचि अल्लोपयलोपयोः टादिविभक्तौ क्यजवयवाकारलोपस्यापि प्रत्ययलोपत्वेन प्रत्ययलक्षणापत्तौ अदन्तत्वात् 'टाङसिङसाम्' इत्यनेनेनाद्यापत्तेः।

'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति तु न, वर्णप्राधान्ये एव तत्प्रवृत्तेः। अत्र अदन्ताङ्गादित्यर्थेऽतोऽङ्गविशेषणत्वात्। क्विपि तु न दोषः, क्वौ लुप्तं न स्थानिवदिति निषेधात्। यदि तु 'ह्रस्वनद्यापः' इति सूत्रस्थभाष्यप्रामाण्यादिगुपधेभ्य आचारक्यजन्ताद्विच्क्विपोरनभिधानमित्युच्यते तदा वृकः वाकनि वराकः, खनेरिकवके 'खनिकवकः' इत्यत्र ककारस्येत्त्वे गुणनिषेधः, 'गमहन' इत्युपधालोपो दोषो बोध्यः।

यत्रापि 'लशक्व' इति सूत्रे आदिग्रहणानुवृत्तिसामर्थ्यादारोपितप्रत्ययत्ववतो न ग्रहणमित्युच्यते तदा प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहार इति पक्षो निर्दोष एव।

भाष्ये तु 'इदं तर्हि प्रयोजनम्'—कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति। 'आघ्नीत' 'सं रायस्पोषेण ग्मीय' इति। पूर्वस्मिन्नपि योगे 'प्रत्ययस्य लुक्श्लु' इति सूत्रे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम्। 'अन्यतरच्छक्यमकर्तुम्' इत्येवं प्रत्ययग्रहणं प्रत्याख्यातम्।

'प्रत्ययलक्षणम्' इत्यत्र प्रत्ययग्रहणं किमर्थम्। 'प्रत्ययलोपे तल्लक्षणम्' इत्येव सूत्रमस्तु। अत्र भाष्यम् 'अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्' प्रत्ययलक्षणं यथा स्याद्वर्णलक्षणं मा भूदिति। गवे हितम्, 'गोहितम्' 'रायः कुलम्', 'रैकुलम्' इति।

अत्र कैयटः—'प्रत्ययलोपे तल्लक्षणम्' इतीयत्युच्यमाने प्रत्ययस्य यत्र कार्य्ये निमित्तभावः प्रत्ययरूपाश्रयेण वर्णरूपाश्रयेण वा तत्सर्वं स्यात्, सर्वनाम्नो वस्तुमात्रपरामर्शकत्वात्। सति प्रत्ययग्रहणे तु प्रत्ययनिमित्तमेव कार्य्यं प्रत्ययलोपे सति भवति नतु वर्णनिमित्तम् इति। 'तेन वर्णाश्रये नास्ति प्रत्यय लक्षणम्' इति।

तत्र प्रधानाप्रधानन्यायेन वर्णप्राधान्ये एव। ततश्च प्रत्ययत्वतद्व्याप्यधर्मावच्छिन्ननिमित्तककार्य्यमेव प्रत्ययलोपे सति भवति नान्यदिति हृदयम्। तेन 'सुदृषत्प्रासादः' 'गोहितम्' इत्यादौ असन्तत्वस्य अत्वस्याचः प्रत्ययत्वाव्याप्यत्वेन न तन्निमित्तको दीर्घावङौ प्रत्ययलक्षणेन भवतः। तदेतद्वक्ष्यति यङ्लुगन्ते 'यत्र हि प्रत्ययस्यासाधारणरूपमाश्रीयते तत्रैव तत्। 'अत एव 'सुदृषत्प्रासादः' इत्यत्र अत्वसन्तस्येति दीर्घो न, इति।

स्थानिवत्त्वेन सिद्धे इदं सूत्रं नियमार्थमिति भाष्यकारमतम्। तथा हि—'प्रत्ययलोपे प्रत्ययलक्षणमेव न स्थानिवत्। तथा च स्थानिवत्सूत्रे आदेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन संकोचे प्रत्ययलोपातिरिक्त एवादेशः स्थानिवत् स्यान्न तु प्रत्ययलोपादेशः।

तेन 'सुदृषत्प्रासादः' इत्यत्र प्रत्ययलोपरूपादेशसत्त्वात्स्थानिवत्त्वं न, प्रत्ययत्वतद्व्याप्यधर्मावच्छिन्ननिमित्तताककार्याभावात्प्रत्ययलक्षणं नेति दीर्घाभावः सिध्यति ।

एतेन नियामकशास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्ने संकोचे स्नुषाश्वश्रून्यायप्रसङ्ग इत्यपास्तम् ।

तत्रैव स्नुषाश्वश्रून्यायप्रसङ्गो यत्र नियम्यनियामकशास्त्रयोरेकमेव विधेयम् । नियम्यशास्त्रीयोद्देश्ये नियामकशास्त्रीयोद्देश्यभिन्नत्वेन संकोचेऽसंकोचे वा नास्ति विशेषः, किन्तु समानफलकत्वमेव ।

यथा 'अर्थवत्' सूत्रे समासभिन्नत्वेन संकोचे अर्थवत्सूत्रेण न प्रातिपदिकसंज्ञा समासस्य, किन्तु 'कृत्तद्धित' इति सूत्रेण । संकोचाभावेऽर्थवत्सूत्रेण सिद्धाया एव प्रातिपदिकसंज्ञाया उत्तरेण विधानम् । नास्ति फलान्तरम् ।

यथा गोपगृहे कश्चन गतो दुग्धं क्रेतुं स्नुषयोक्तम् नास्ति दुग्धमिति । पथि प्रत्यावर्तमानो दुग्धं चिकीर्षुः स्नुषाश्वश्रा दृष्टः पृष्टश्च कुत आगम्यते इति । तेनोक्तं त्वद्गृहे दुग्धाय गतवानासम् । त्वत्स्नुषयोक्तं नास्ति दुग्धमिति । श्वश्र्वोक्तं मया सह मद्गृहे गच्छ । तथैव कृतं तेन । गृहे आगत्य श्वश्र्वाऽप्युक्तं नास्ति दुग्धमिति । तेनोक्तं यदिति तु त्वत्स्नुषयैवोक्तं किमर्थं त्वयाऽऽनीतोऽहम् । तयोक्तं मयि सत्यां कोऽधिकारस्तस्या अस्ति न वेति कथनस्य ।

अत्र यथोभयोरभावमात्रबोधनं न फलान्तरम् । तथैव प्रातिपदिकसंज्ञाविधानमात्रमुभाभ्यां न तु फलान्तरमिति स्नुषाश्वश्रून्यायविषयता तत्र । अत्र तु स्थानिवत्सूत्रे प्रत्ययलोपातिरिक्तत्वेन संकोचे 'सुदृषत्प्रासादः' इत्यत्र स्थानिवद्भावो न भवेत् । संकोचाभावे स्थानिवत्त्वेन 'अत्वसन्तस्य' इति दीर्घः स्यात् । उद्देश्यभिन्नत्वेनापि संकोचासंकोचयोः फलवैषम्यं वर्तते इति नास्त्युक्तन्यायप्रसङ्गः ।

अतोऽत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकधर्मावच्छेदातिरिक्तत्वेन न संकोचस्तादृशधर्मकल्पने गौरवात् ।

✓ ननु यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधित्वेऽपि विध्यर्थमिदम्, तेन 'अतृणेट्' इत्यत्र हलादौ पिति सार्वधातुके विहितः 'तृणह इम्' इतोमागमो लुप्तेऽपि तस्मिन् भवति । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति तु न, वर्णप्राधान्यविषयकत्वात् ।

यथा चित्रायां जातेत्यर्थे 'कालाट्ठञ्' (४-३-११) इति ठञं बाधित्वा 'संधिवेलाद्यृतु' (४-३-१६) इति विहितस्याणः 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इति लुकि 'लुक् तद्धित' (१-२-४९) इति टापोऽपि लुकि 'टिड्ढाणञ्' ( ४-१-१५ ) इति अणो योऽकारस्तदन्तान्ङीप् इत्यर्थेन प्रत्ययं प्रति अकारस्य प्राधान्येन ङीप्न ।

न च लुप्यमानटापा स्त्रीत्वस्योक्ततया ङीपोऽप्राप्तिः, नक्षत्रगतस्त्रीत्वस्य टापा उक्तत्वेऽपि जातार्थगतस्त्रीत्वस्यानुक्ततया ङीपः प्राप्तेः । वर्णप्राधान्यञ्च वर्णनिष्ठं प्रत्ययनिरूपितविशेष्यत्वमितरा विशेषणत्वञ्चान्यतररूपम् । अन्यदोदाहरणम् 'गवे हितं गोहितम्' इत्यत्र 'एचोऽयव्' ( ६-१-७८ ) इत्यव् न । 'तृणह इम्' इत्यत्र 'हलि' इत्यननुवर्त्य 'नाभ्यस्तस्याचि' ( ७-३-८७ ) इत्यतो 'न' 'अचि' इत्यनुवर्त्य अजादिप्रत्यये 'तृणहानि' इत्यादौ निषेधेन दोषाभावेनाल्विधित्वाभावात् । न च 'मित्रं शास्तीति मित्रशीः, इत्यत्र 'शास इदङ्हलोः' (६-४-३४) इतीत्वानापत्तिरल्विधित्वादितिवाच्यम्, तत्र हल्ग्रहणाभावेऽपि योगविभागेन सिद्धेः । तथाहि 'शास इत्' इत्येको योगः । शास इत् स्यात् 'क्ङिति' ततः 'अङि' इति नियमार्थम्—शासाजादौ क्ङिति इत्वंचेदङ्येव । न च 'आशास्ते' इत्यत्रेत्वापत्तिवारणाय 'शास इत्' इतीत्वम् अङ्साहचर्यात् हलादौ परस्मैपदे एवेत्यर्थलाभाय एकसूत्रस्यावश्यकतेति वाच्यम्, 'आशासः क्वावुपसंख्यानम्' इत्यस्य 'आङ्पूर्वं शासश्चेत्वम् क्वावेवेति नियमार्थतया दोषवारणात् ।, वार्तिककारास्तु 'अतृणेट्' 'मित्रशीः' इत्यादावल्विधित्वे

इति 'जसि च' ( सू २४१ ) इति गुणे प्राप्ते ।

न लुमताऽङ्गस्य [ १-१-६० ]

लुक् श्लु लुप् एते लुमन्तः । लुमताशब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् ।

स्थानिवत्त्वाप्राप्त्या अल्विधावपि प्रत्ययलक्षणेन कार्य्यसिद्धये 'प्रत्ययलोपे' इति सूत्रं विध्यर्थम् । 'गोहितम्' इत्यत्र प्रत्ययलक्षणेन 'अव्' तु न, प्रत्ययत्वतद्व्याप्यधर्मावच्छिन्ननिमित्तककार्य्ये एव तत्प्रवृत्त्या अस्त्वस्य तथात्वाभावेन प्रत्ययलक्षणाप्रवृत्तेः ।

नियमस्य सजातीयविषयतया 'कृत्स्नप्रत्ययलोपे लुप्तप्रत्ययवृत्तिप्रत्ययत्वतद्व्याप्यधर्मावच्छिन्न-निमित्तककार्य्यमेवे'ति नियमेन न क्वापि दोष इत्यवसेयम् ।

'प्रत्ययलोपे प्रत्ययवत्' इति न्यासेनैवार्भीष्टसिद्धौ लक्षणग्रहणं प्रत्ययनिमित्तकमेव कार्य्यं प्रत्ययलक्षणेन, न तु प्रत्ययस्थानिकमित्यर्थलाभार्थम् । तेन 'नखनिर्भिन्नः' इत्यादावैत्सादिकं न । तदाश्रितं कार्य्यमिति—अनेन कार्य्यातिदेशः सूचितः । कार्य्यविशेषविधायकसूत्रगतपूर्वत्वपरत्वमादाय विप्रतिषेधसूत्रप्रवृत्त्या 'परिवीः' इत्यत्र परत्वाद् 'हलः' इति सम्प्रसारणस्य दीर्घत्वमेव, न तुक् ।

'जसि च' ( ७-३-१०९ ) इति गुणे प्राप्ते इति-निमित्तातिदेशपक्षे इदम् । कार्य्यातिदेशपक्षे तु 'जसि च' इति विहिते गुणे प्रत्ययलक्षणेन प्राप्ते इत्यर्थः ।

'न लुमताऽङ्गस्य' ( १-१-६३ ) इति । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रमनुवर्त्तते । लुशब्दोऽस्त्येषु इति लुमन्तः प्रत्यासत्त्या लुक्-श्लु-लुप् शब्दाः । लुमतेकवचनेन लुका श्लुना लुपा वा प्रत्ययलोपे=प्रत्ययादर्शने सति तन्निमित्तकमङ्गकार्य्यं न भवतीत्यर्थः । लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तस्य यत्कार्य्यमङ्गाधिकारीयं तद्भिन्नं वा तस्मिन् कर्तव्ये प्रत्ययलक्षणं न ।

तेन 'कति' इत्यत्राङ्गस्य जसि चेति गुणस्याप्रवृत्तिः । 'अहर्ददाति' इत्यत्र 'रोऽसुपि' इत्यनाङ्गे रत्वेऽनेन प्रत्ययलक्षणप्रतिषेधाद् 'सुपि न' इति प्रतिषेधाप्रवृत्तौ रत्वं सिध्यति । 'राजपुरुषः' इत्यत्र राजेत्यस्य सुबन्तनिमित्तकं सुप्तिङन्तमिति पदत्वेन नलोपो भवति, अजादौ स्वादौ परतः पूर्वस्य राजेत्यस्य भत्वे प्रत्ययलक्षणनिषेधेन भत्वाभावात् ।

'अल्लोपोऽनः' इत्यल्लोपो न, अङ्गसंज्ञायां तु लुप्तप्रत्यये परतः पूर्वस्य तदादिरूपस्यनिमित्तत्वेऽपि लब्धाङ्गसंज्ञकस्य तस्य निमित्तत्वाभावेन न प्रत्ययलक्षणनिषेध इति लुप्तेऽपि अङ्गसंज्ञा भवति । तदुक्तम्—'स्त्रियां च' ( ७-२-९६ ) इति सूत्रे भाष्ये 'अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन' इति । एतद्भाष्यैकवाक्यत्वाय 'न लुमता तस्मिन्' इति न्यासेऽपि लब्धाङ्गसंज्ञकस्यैव निषेधकल्पनं युक्तम् । तथा च लुप्तप्रत्ययाव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपिता या अङ्गपर्याप्तधर्मेण साक्षात् परम्परया वा अवच्छिन्ना धर्मिता तत्समानाधिकरणोद्देश्यताके कार्य्ये कर्तव्ये प्रत्ययलक्षणं न साक्षादवच्छिन्नोद्देश्यताया उदाहरणम्—

'राजपुरुषः' इत्यत्र भसंज्ञारूपं कार्य्यम् । परम्परया इत्यस्योदाहरणम्—'परमत्रिपुत्रः' इति अत्र आमव्यवहितपूर्वत्वविशिष्टं यत् त्रिशब्दान्ताङ्गघटकं निर्दिश्यमानं तस्य त्रयादेश इत्यर्थे लुप्तप्रत्ययाव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपिता धर्मिता निर्दिश्यमाननिष्ठा सा च त्रिशब्दान्ताङ्गत्वधर्मेण स्वावच्छिन्नघटकत्वरूपपरम्परासम्बन्धेनावच्छिन्ना तत्समानाधिकरणा या निर्दिश्यमाननिष्ठोद्देश्यता तदुद्देश्यताके त्र्यादेशरूपकार्य्ये प्रत्ययलक्षणं न ।

'राजपुरुषः' इत्यत्र राज इत्यस्य भसंज्ञायाम् कप्प्रत्ययावधिकयजादिस्वाद्यव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपितधर्मिता तदादिनिष्ठा सा चाङ्गपर्य्याप्ततदादित्वेन साक्षादवच्छिन्ना कप्प्रत्ययावधिकयजादिस्वाद्यव्यवहितं तदादि भसंज्ञकमिति 'यचि भम्' इति सूत्रस्यार्थात् । तद्धर्मितासमानाधिकरणतदादिनिष्ठोद्देश्यताकभसंज्ञायां प्रत्ययलक्षणं न ।

कति । कति ! कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु अस्मद्युष्मद्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ।

त्रेस्त्रयः । [ ७-१-५३ ]

---

'उत्क्राम' इत्यत्र लुप्तपरस्मैपदाव्यवहितपूर्वत्वनिष्ठप्रकारनिरूपितधर्मिता शित्प्रत्ययनिष्ठा परस्मैपदाव्यवहितपूर्वविशिष्टो यः शित्प्रत्ययस्तदव्यवहितपूर्वस्य क्रमेरुपधाया दीर्घ इति 'क्रमः परस्मैपदेषु' ( ७-३-७६ ) इत्यस्यार्थात् तत्समानाधिकरणोद्देश्यतायाः अभावात् प्रकृतपदार्थाबधर्मावच्छिन्नत्वभावाच्च न प्रत्ययलक्षणनिषेध इति दीर्घः सिध्यति ।

अङ्गस्य किम् 'पञ्च, सप्त, राजपुरुषः' इत्यादौ सुबन्तस्य पदत्वे प्रत्ययलक्षणनिषेधो मा भूत् । निषेधाभावे पदत्वेन नलोपः सिध्यति । लुमतेति किम्–'कार्यते' इत्यादौ 'ण्यल्लोपावियङ्' इति वार्तिकादपवादत्वाद्वा वृद्धिं बाधित्वा णेर्लोपे प्रत्ययलक्षणेन वृद्धिर्यथा स्यात् ।

एवञ्च 'कति जस्' इत्यत्र 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया जसि चेति गुणं बाधित्वा 'षड्भ्यो लुक्' इति लुकि प्रत्ययलक्षणन्यायेन निषेधाज्जस्परत्वाभावान्न गुण इत्याशयेनाह – 'कति' इति ।

अस्मदिति—प्राञ्चस्तु 'अव्ययास्मदिति पठन्ति तच्चिन्त्यम्, अव्यये 'सदृशं त्रिषु लिङ्गेषु' इति श्रुत्वा लिङ्गाभावात् लिङ्गप्रतीतेरननुभवाच्च । अव्ययीभावस्य 'अव्ययीभावश्च' ( १-१-४१ ) इति नपुंसकत्वेऽपि लिङ्गान्तराभावात् ।

त्रिष्विति—पुंस्त्रीक्लीबेष्वित्यर्थः । सरूपा इति—समानानि रूपाणि येषां ते सरूपाः । समानशब्दस्य 'समानस्य छन्दस्यमूर्द्ध' ( ६-३-८२ ) इत्यत्र 'समानस्य' इति विभक्तयोगेन सादेशः, यद्वा भाष्ये योगविभागानुक्तेः समानार्थकसहशब्देन बहुव्रीहौ 'वोपसर्जनस्य' ( ६-३-८२ ) इति सहस्य सादेशः । ननु अस्मद्युष्मदोस्त्रिलिङ्गित्वे 'अलिङ्गे युष्मदस्मदी' इति भाष्यविरोधः, लिङ्गबोधकपदान्तरसमभिव्याहारं बिना लिङ्गं ततो न प्रतीयते इत्यत्रैव भाष्यतात्पर्यात् । अत एव 'नेतराच्छन्दसि' ( ७-१-२६ ) इति सूत्रे भाष्ये 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन' इति वार्तिकम् 'त्वं ब्राह्मणः' 'अहं ब्राह्मणः' 'त्वं ब्राह्मणकुलम्' 'अहं ब्राह्मणकुलम्' इत्यादि भाष्यञ्च संगच्छते ।

'ङेप्रथमयोरम्' ( ७-१-२८ ) इति सूत्रे च भाष्ये 'सिद्धमत्र नत्वम्'–'तस्माच्छसो नः पुंसि' इति । यत्र तेन न सिध्यति तदर्थम् । क्व च तेन न सिध्यति । स्त्रियां नपुंसके च । युष्मान् ब्राह्मणकुलानि पश्य, अस्मान् ब्राह्मणकुलानि पश्येति' इति ।

ननु विभक्तिप्रतिरूपकाणाम् 'कश्चित्' काचित्, किञ्चित्' इति चेन्न, त्रिषु सरूपा इति ग्रन्थस्य सारूप्यमात्रप्रतिपादने एव तात्पर्यात् । अत एव 'अलिङ्गाः' इति नोक्तम् । 'न षट्स्वस्रादिभ्यः' इति ज्ञापकात् षट्संज्ञकानामपि लिङ्गमस्त्येव । अत एव 'सदृशं त्रिषु लिङ्गेषु' इत्यपि संगच्छते । अन्यथा 'अलिङ्गम्' इत्येव वदेत् ।

त्रिशब्द इति—तरति=गच्छति मूलकारणेषु सत्त्वरजस्तमस्सु या संख्या सा त्रिः=त्रित्वम् । तद्वन्तस्त्रयः त्रित्वविशिष्टाः 'आदशतः संख्या संख्येये' इत्युक्तेः । एकादयो दशघटितशब्दमभिव्याप्य स्थिताः संख्यावाचकाः संख्येये–संख्याश्रये एव, न तु संख्यायाम् । संख्यायान्तु एकत्वम्, द्वित्वम्, एवमष्टादशत्वम् ।

तरतेर्ड्रिन्, इति ड्रिन्प्रत्यये 'त्रयः' इति । 'त्रेस्त्रयः' ( ७-१-५३ ) इति 'त्रेः' इत्येकवचनम स्वरूपपरकत्वात् । 'त्रयः' इत्यदन्तं न तु सान्तं नपुंसकम् 'निजां त्रयाणाम्' इति निर्देशात् । इत्यमि·

त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु । द्विशब्दो नित्यं द्विवचनान्तः ।

त्यदादीनामः । [ ७-२-१०२ ]

एषामकारोऽन्तादेशः स्याद्विभक्तौ । 'द्विपर्यन्तानामेवेष्टिः, द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । 'द्विपर्यन्तानाम् इति किम् । भवान् । भवन्तौ । भवन्तः ।

---

प्रेत्याह—त्रिशब्दस्येत्यादि । ननु निजां 'त्रयाणाम्' इति निपातनादेव त्रयादेशे सिद्धे सूत्रं व्यर्थमिति चेन्न, 'अबाधकान्यपि निपातनानि' इत्यर्थज्ञापनेन सूत्रस्य चारितार्थ्यात् । तेन 'पुरातनम्' इत्यस्य सिद्धिः । अन्यथा 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ( ४-३-१०५ ) इत्यत्र 'पुराण' इति निर्देशात् तलोपो निपात्यते ।

पुराशब्दात् 'सायंचिरंप्राह्णेप्रगे' ( ४-३-२३ ) इति ट्युप्रत्यये तुटि च 'पुरातन' इति सिध्यति । यदा तु निपातनाभावोऽपि ज्ञाप्यते तदा 'पुरातनम्' इत्यपि सिध्यति । 'त्रेरयङ्' इति तु नोक्तम्, इयङ्, अनङ् अयङ् इत्यादिवत् ङकारात्पूर्वस्याकारस्योच्चारणार्थत्वमसङ्गात् त्रयादेशेऽपि सान्तत्वस्य निर्देशेन वारणवदुच्चारणार्थत्वाभावस्यापि वारणे तु त्रिशब्दादाचक्षाणव्ययन्तात् कर्तरि क्विपि तुकि 'त्रित् आम्' इत्यत्र क्वित्वात् तकारस्य अयङादेशे 'त्रयाणाम्' इति रूपासिद्धेः । न च वार्णादाङ्गं बलीयः' इति न्यायेन तुकः प्रागेवादेशस्तु न, युगपत्प्राप्तावेव तेन बलीयस्त्वबोधनात् । 'अभिव्यक्तपदार्थाः' इति 'गौणमुख्ययोः' इति च न्यायेन गौणे आदेशाप्रवृत्तिः, द्वयोरनयोः पदकार्ये एव प्रवृत्तेः, पदान्तरसम्बन्धे एव गौणार्थप्रतीतेश्च ।

किञ्च अप्रसिद्धस्य नामादेः सादृश्यमूलकलाक्षणिकस्य च परिभाषायां ग्रहणम्, न इतरविशेषणत्वेनोपसर्जनीभूतस्य । अत एव 'त्रिचतुरोः स्त्रियाम्' इति सूत्रे 'प्रियतिसा' इत्यादय उदाहृता भाष्ये । अत एव सर्वादिसूत्रे उपसर्जनीभूतानां प्रतिषेधो वार्तिककृतोक्तः ।

गौणत्वे तु नेति—'आमि सर्वनाम्नः सुट्' इति पूर्वसूत्रसाहचर्यादिति तेषामाशयः । प्रियत्रीणामिति—प्रियास्त्रयो यस्य स प्रियत्रिः । अस्यान्यपदार्थप्रधानत्वादेकवचनद्विवचनबहुवचनानि स्युः । हरिवद् रूपाणि ।

विस्तुतस्त्विति—सूत्रान्तरसाहचर्ये मानाभावाद् 'गौणमुख्ययोः' इति न्यायाविषयत्वाच्चेति-भावः । 'पदाङ्गाधिकारे तस्य तदन्तस्य च' इत्युक्त्या तदन्तविधिमभिप्रेत्याह-परमत्रयाणाम् इति ।

प्रियत्रयाणामिति--शेषाणि रूपाणि हरिवत् । द्विशब्द इति—द्विश्चासौ शब्दश्चेति द्विशब्दः, स्वरूपपरकत्वादेकवचनम् । द्विशब्दश्च—

द्विवचनान्त इति—द्वित्वविशिष्टस्य वाचकतया प्रकृत्यर्थगतसंख्याया एव विभक्तेर्वाचकतया द्विवचनमेव ।

त्यदादीनाम इति । 'अष्टन आ विभक्तौ' इत्यतो 'विभक्तौ' इत्यनुवर्तते । तदाह—विभक्ताविति । त्यदादिर्येषां ते त्यदादयः । उद्भूतावयवगतसंख्याविवक्षया बहुवचनम् । तद्गुण-संविज्ञानो बहुव्रीहिः 'त्यश्छन्दसि बहुलम् ( ६-१-१३३ ) इति निर्देशात् त्यत्तदौ पर्यायौ । विभक्तौ किम्—'तत् फलम्' लुका लुप्तत्वेन प्रत्ययलक्षणाभावादत्वं न ।

द्विपर्य्यन्तानामेवेष्टिरिति—तदुक्तं भाष्ये 'त्यदादीनां द्विपर्य्यन्तानामकारवचनम्' । युष्म-दन्तानां भवदन्तानां वा मा भूदिति, द्विपर्य्यन्तानां किमिति युष्मदस्मदोर्न दोषः, आत्वयत्वलोपैर्विशेष-विहितैरत्वस्य बाधात् । किंशब्देऽपि न दोषः, किमः कादेशस्य विशिष्यविधानेन बाधात् अत आह—

भवान् इति । 'भवत् सु' इति दशायां तकारस्यात्वे 'अतो गुणे' इति पररूपे 'उगिदचाम्' इति नुमि 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे सुलोपे नलोपे च 'भवा' इति मा भूत् । भवन्तौ इति । तकारस्यात्वे पररूपे उगित्वान्नुमि दीर्घे 'भवानौ' इति स्यात् ।

संज्ञायामुपसर्जनत्वे च नात्वम्, सर्वाद्यन्तर्गणकार्यत्वात्। द्विर्नाम कश्चित्। द्विः। द्वी। द्वावतिक्रान्तोऽतिद्विः। हरिवत्। प्राधान्ये तु परमद्वावित्यादि। औडुलोमिः। औडुलोमी। बहुवचने तु उडुलोमाः। 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः'। बाह्वादीञोऽपवादः। औडुलोमिम्। औडुलोमी। उडुलोमान्। इति इदन्ताः।

---

न च नुमं परत्वाद् बाधित्वा अत्वे नुमि दीर्घं 'भवान्' इति सिध्येदिति वाच्यम्, तावतापि नलोपेनेष्टासिद्धेः, 'शमिनौ' इत्यादौ नुमवारणाय उगिदन्तस्यापि झलन्तस्यैव नुम्विधानेनात्वे नुमोऽप्राप्तेः। ननु परत्वान्नुमं बाधित्वा अत्वे 'डवतुः' इत्यत्र उगित्करणवैयर्थ्यापत्तिर्झलन्तत्वाभावेन नुमोऽप्राप्तेरिति तत्सामर्थ्यान्नात्वमिति चेन्न, 'भवतितरा' इत्यत्र 'उगितश्च' इति ह्रस्वत्वाय तच्चारितार्थ्यात्।

ननु भवच्छब्दस्य त्यदादिपूर्वं पाठः कर्तव्य इति 'भवान्' इत्यत्र न दोष इत्यत आह 'भवन्तौ इति' त्यदादितः पूर्वपाठे 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति वार्तिकेन स च भवांश्च 'भवन्तौ' इत्यस्यासिद्धेः।

यत्तु पूर्वशेषस्यापि दर्शनान्नेदं फलम् इति तन्न, त्यदादिष्वेव पूर्वशेषस्य भाष्यसम्मतत्वात्। तथा च भाष्यम्—'पूर्वशेषदर्शनाच्च' पूर्वस्य खल्वपि शेषो दृश्यते। स च यश्च 'तावानय' इति। किञ्च 'त्यदादितः शेषे पुनपुंसकतो लिङ्गवचनानि' इति वार्तिकेन त्यदादितः पूर्वं पाठे 'भवान्' इत्यस्य सिद्धावपि 'स च भवांश्च' 'भवन्तौ' इत्यस्यासिद्ध्यापत्तिः।

संज्ञायामिति—त्यदादेः सर्वाद्यन्तर्गणत्वात् 'संज्ञोपसर्जनीभूतानां प्रतिषेधो वक्तव्यः' सर्वनामेति महासंज्ञाकरणेनान्वर्थत्वाच्च संज्ञोपसर्जनयोस्त्यदादित्वाभावादाह—संज्ञायामुपसर्जने च नात्वेमिति। द्विरिति—संज्ञाभूतस्योपसर्जनीभूतस्य च द्विशब्दस्यातिद्विशब्दस्य हरिवद् रूपाणि।

उपसर्जनीभूतस्येत्यस्य अन्यपदार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताश्रयार्थकस्येत्यर्थः। तेन 'द्वौ घटौ' इत्यत्र द्विशब्दस्य घटनिष्ठविशेष्यतानिरूपितप्रकारताश्रयार्थकत्वे न क्षतिः शाब्दबोधीयप्रकारताया एव सत्त्वात्। अङ्गाधिकारीयत्वेन तदन्तस्य फलमाह—प्राधान्ये त्विति।

औडुलोमिरिति—उडूनीव लोमानि यस्य स उडुलोमा। तस्यापत्यम् 'औडुलोमिः' उडुलोमन्शब्दात् 'बाह्वादिभ्यश्च' ( ४-१-९६ ) इतीञि 'नस्तद्धिते' ( ६-४-१४४ ) इति टिलोपे रूपम्। अपत्येऽञ्प्रत्ययान्त औडुलोमिशब्द एकवचनद्विवचनान्त एव। तत्र हरिवद् रूपाणि। उडुलोम्नो बहून्यपत्यानि इत्यर्थे इञोपवादः 'लोम्नोऽपत्येषु अकारः' इति वर्तिकेन अप्रत्यय एव।

तदुक्तम् 'दित्यदित्यादित्य' इति ( ४-१-८५ ) सूत्रे भाष्ये 'लोम्नोऽपत्येषु बहुषु अकारो वक्तव्य' इति शेषः, 'स्याम्नोऽकार' इत्यतोकार इत्यनुवर्तनात्। अप्रत्यये टिलोपे 'उडुलोम्नः' रामवद् बहुवचने एव रूपाणि। अस्यादन्तेष्वेव पाठ उचितः। एतेन 'औडुलोमिशब्देकारस्य बहुवचनेऽकारादेश' इति भ्रमो निरस्तः।

ननु बाह्वादिषु 'लोमन्' इत्यस्यैव पाठः समासप्रत्ययविधौ तदन्तविधेर्निषेधादुडुलोमशब्दादिञेव दुर्लभ इति चेन्न, लोम्नः रोमरूपार्थकत्वेन रोम्णोऽपत्यार्थेन योगासम्भवाद् गणे पाठसामर्थ्यात्तदन्तविधेस्तदंशे स्वीकारात्।

न च बाह्वादिञि कृतेऽपि 'यञञोश्च इञः प्राच्यभरतेषु' ( ४-१-६६ ) इतीञो लुकि पञ्चया लुकि च प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वे नलोपे च 'उडुलोम जस्' इति स्थितौ जस्येत्वे 'प्रथमयोः' पूर्वसवर्णदीर्घे 'उडुलोमाः' 'उडुलोमान्' इति सिद्धे अप्रत्ययविधानं व्यर्थमिति वाच्यम्, 'उडुलोमैः, उडुलोमेभ्यः' इत्यादौ सुब्विधौ ऐसि एत्वे च नलोपस्यासिद्धतया रूपासिद्धेः, प्राच्यभरतभिन्नापत्ये लुकोऽप्राप्तेश्च। इतीदन्ता इति—ह्रस्वेकारान्ताः समाप्ता इत्यर्थः।

'वातप्रमीः' इत्युणादिसूत्रेण माङ ईप्रत्ययः। स च कित्। वातं प्रमीमीते इति वातप्रमीः'। 'दीर्घाज्जसि च'। वातप्रम्यौ। वातप्रम्यः। हे वातप्रमीः। 'अमि पूर्वः'। वातप्रमीम्। वातप्रम्यौ। वातप्रमीन्। वातप्रम्या। वातप्रमीभ्याम्३। वातप्रमीभिः। वातप्रम्ये। वातप्रमीभ्यः। वातप्रम्योः२। वातप्रमीभ्याम्। वातप्रम्याम्। दीर्घत्वान्न नुट्। ङौ तु सवर्णदीर्घः। वातप्रमी। वातप्रमीषु। एवं ययीपप्यादयः। यान्त्यनेनेति ययीः=मार्गः। पाति लोकमिति पपीः=सूर्यः। 'यापोः किद् द्वे च' इति ईप्रत्ययः। क्विबन्तवातप्रमीशब्दस्य त्वमि शसि ङौ च विशेषः। वातप्रम्यम्। वातप्रम्यः। वातप्रम्यि। 'एरनेकाचः—' इति वक्ष्यमाणो यण्। प्रधीवत्। बहुयः

ईदन्तानाह—वातप्रमीरिति—वातम्=शीघ्रगत्या प्रमिमीते=परिमातीत्यर्थे माङ्धातोः 'वातप्रमीः' ( उ. ४ पा. १ सू. ) इति सूत्रे 'अवि-तृ-स्तृ-तन्त्रिभ्य ईः' इत्यत ईरिति 'यापोकिद्: द्वे च' ( उ. ३ पा. १५९ सू. ) इत्यतः किदिति चानुवर्तते। ईतीप्रत्यये कित्वादातो लोपे 'उपपदमतिङ्' इत्युपपदसमासे 'वातप्रमीः' इति सिध्यति। वातप्रमीः=निःशङ्को मृगविशेषः।

तथा च अमरः 'वातप्रमीर्वातमृगः' ( अ. २ का सिंहादिव ७ श्लो. ) 'दीर्घाज्जसि च' इति-दीर्घनिषेधे यणि वातप्रम्यौ वातप्रम्य इति। 'अमि पूर्वः' इति पूर्वरूपे वातप्रमीम्। शसि पूर्वं सवर्णदीर्घे वातप्रमीन्। शेषे अजादिस्वादौ यण्। ङौ तु सवर्णदीर्घ इति—

वस्तुतस्तु दीर्घस्य भाष्यविरुद्धतया सप्तम्यामनभिधानम् यणेवेति कल्पनीयम्। 'ईदूद्रूपा सप्तमी नोपलभ्यते इति प्रसङ्गे 'सरस् ङि' इत्यत्र 'सुपां सुलुक्' (७–१–३९) इति सूत्रे 'इयाडियाजीकाराणामुपसंख्यानम्' इति वार्तिकेन ङेरीकारादेशे ईकाररूपा सप्तम्युपलभ्यते 'इति' न शुष्कं सरसी शयानम्' इति छन्दसि। ततः 'सरसी' इत्यत्रापि गौरादित्वेन ङीषि दीर्घेकारान्तस्य ङेर्लुकि रूपम्। नात्रापि ईरूपा सप्तमीति ईद्ग्रहणसामर्थ्यात्तदन्तग्रहणमित्युक्तं भाष्ये।

यदि वातप्रमी, पपी, इति सप्तम्यां स्यात्तदा ईग्रहणसामर्थ्यात्तदन्तविधिपरं भाष्यं विरुध्येतेति तत्त्वम्।

ययीपप्यादय इति—याधातोः पाधातोश्च 'यापोः किद् द्वे च' इत्यत्र 'अवितृस्तृतन्त्रिभ्य ईः' इत्यत ई इत्यनुवर्तते। या-पा धातोः कित्संज्ञके ईप्रत्यये द्वित्वेऽभ्यासह्रस्वे आलोपे ययीः=मार्ग इति, पपीः=सूर्य्य इति—वातप्रमीवद्रूपम्। क्विबन्तवातप्रमीशब्दस्येति—अत्र यद्वक्तव्यं तद्विश्वपाशब्दे उक्तम्। शेखरकारमते 'ईत्वमवकारादौ' इति वार्तिकप्रत्याख्यानपरभाष्याद् आदन्तादीत्वयोग्याद्धातोः क्विपोऽनभिधानम्।

दीक्षितादिमते श्रूयमाणवकारकवनिबाद्यन्तानामेवानभिधानं ननु लुप्तक्विबन्तानाम्। तदाह—क्विबन्तेति—माधातोः क्विपि अनभिधानपक्षे मीनातेरेव क्विपि वातप्रमीशब्दो बोध्यः। यद्वा ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तस्य धातुत्वे 'एरनेकाचः' इति यणि रूपे विशेषः।

यत्तु देवयज्यतिलक्ष्मीशब्दयोरपि वातप्रमीवद्रूपमितिप्राचोक्तं तदुपेक्ष्यम्, 'सर्वधातुभ्य इन्' ( उ.४-पा.११८ ) इति सूत्रेण इन्प्रत्यये ह्रस्वान्तस्यैव सिद्धेः। तथा च भट्टीः—अद्मो द्विजान् देवयजीन् निहन्मः' इति। वेदे च 'आयजि त्वा मनवे जातवेदसे इति। अतिलक्ष्मीशब्दस्य तु आमि 'अतिलक्ष्मीनाम्' इति महदेव वैलक्षण्यम्।

यदि तु ह्रस्वान्तदेवयज्यतिलक्ष्मिभ्यामिच्छाक्यजन्ताभ्यां स्वादौ वातप्रमीवद् रूपमिति मतं कथञ्चिदुक्तं वक्तुं शक्यमित्युपाध्यायः।

ङौ तु विशेष इति—'इदुतौ च' इति सूत्रभाष्यादीद्रूपसप्तम्या अभावबोधनेन ङौ रूपानभिधानं यणेवेति कल्पनेन दीर्घोक्तिश्चिन्त्या।

बह्व्यः श्रेयस्य इति—अतिशयेन प्रशस्येति श्रेयसी। प्रशस्यशब्दाद् 'द्विवचनविभज्य' (५-३-५७) इतीयसुनि 'प्रशस्यस्य श्रः' (५-३-६०) इति आदेशे 'प्रकृत्यैकाच्' (६-४-१६३) इति

श्रेयस्यो यस्य सः बहुश्रेयसी । दीर्घङ्यन्तत्वात् 'हल्ङ्याप्—' इति सुलोपः ।

यू स्त्र्याख्यौ नदी । [ १-४-३ ]

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ।

---

'श्र' इत्यस्य प्रकृतिभावेनालोपाभावे गुणे 'श्रेयस्' इति जाते 'उगितश्च' ( ४-१-६ ) इति ङीपि 'श्रेयसी' इति । बहुव्रीहौ 'स्त्रियाः पुंवत्' ( ६-३-३४ ) इति बहुशब्दस्य पुंवद्भावे 'ईयसश्च' ( ५-४-१५६ ) इति कपो निषेधे 'गोस्त्रियोः' ( १-२-४८ ) इति ह्रस्वस्य 'ईयसो बहुव्रीहेर्नेति वाच्यम् इति निषेधे 'बहुश्रेयसी' इति । दीर्घङ्यन्तत्वादिति—.

ननु ङ्यापोः प्रत्ययत्वेन 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया ङ्याबन्ततदादेः परस्यैव सोर्लोपविधानात् बहुश्रेयसी इति न ङ्यन्ततदादिरिति सोर्लोपो न स्यात् । न च 'स्त्रीप्रत्यये तदादिनियमो न' अत एव 'परमकारीषगन्धीपुत्रः' इत्यत्र स्त्रीप्रत्ययान्तस्य परमकारीषगन्ध्या इत्यस्य स्त्रीप्रत्ययष्यङन्ततदादित्वाभावेऽपि सम्प्रसारणं भवतीति वाच्यम्, अनुपसर्जने स्त्रीप्रत्यये एव तदादिनियमाभावात् ।

उपसर्जनस्त्रीप्रत्यये तु तदादिनियमसत्त्वादेव 'अतिकारीषगन्ध्यापुत्रः' इत्यत्र संप्रसारणं न । बहुश्रेयसी इत्यत्र तु ङ्यन्तार्थस्यान्यपदार्थे प्रत्युपसर्जनतया तदादिनियमसत्त्वेन सुलोपानापत्तिरिति चेन्न, बहुश्रेयसीत्यस्य ङ्यन्ततदादित्वाभावेऽपि श्रेयसीत्यस्य ङ्यन्ततदादित्वेन ततः परस्य सोर्लोपे बाधकाभावात् ।

न च सोर्ङ्यन्ततदादेर्विहितत्वाभावः, 'हल्ङ्याब्भ्यः' इति सूत्रे विहितविशेषणे प्रमाणाभावात् । या, सा, इत्यादौ हलन्तेभ्यः सुपि त्यदाद्यत्वे टापि टाबन्ताद्विहितत्वाभावेन 'कर्त्ता, सखा' इत्यादौ हलन्ताद्विहितत्वाभावेन सोर्लोपानापत्त्याऽव्याप्तेः, यः, सः, इत्यादावतिव्याप्तेश्च विहितविशेषणं कर्तुमशक्यम् । 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यणि बहुश्रेयस्यौ बहुश्रेयस्यः ।

हे बहुश्रेयसी स् इत्यत्र नदीह्रस्वत्वाय नदीसंज्ञामाह—'यू स्त्र्याख्यौ नदी' ( १-४-३ ) इति । अत्र ईश्च ऊश्च यू इति दीर्घयोरेव ग्रहणम्, व्याख्यानात्–तथा हि 'अथवा पुनरस्तु दीर्घयोः । ननु चोक्तं निर्देशो नोपपद्यत इति । दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यते इति । नैष दोषो 'वा छन्दसि' इत्येवं भविष्यति । छन्दसीत्युच्यते । नचेदं छन्दः, 'छन्दोवत्सूत्राणि भवन्ति' इति भाष्यरूपाद् व्याख्यानात् । सूत्रेषु छन्दस्त्वमारोप्यते, वेदरक्षा हि सूत्रप्रयोजनमिति तादर्थ्यात्ताच्छब्द्यम् ।

किञ्च 'यू' इति ह्रस्वयोर्निर्देशे 'नेयङुवङ्स्थानौ' इत्यस्य वैयर्थ्यापत्तिः, न हि इयङुवङ्स्थानौ ह्रस्वेकारोकारौ स्तः ।

न च ह्रस्वयोर्निर्देशेऽपि न तत्सूत्रवैयर्थ्यम्, 'अणुदित्' सूत्रेण दीर्घस्यापि ग्रहणादिति वाच्यम्, अणुदित्सूत्रे 'शब्दसंज्ञायाम्' इत्यस्यानुवृत्तेर्भाष्ये उक्तत्वेन शब्दस्य संज्ञा इत्यर्थकत्वेन च शब्दस्य संज्ञायां तंत्रायामण् सवर्णान् न गृह्णातीत्यर्थेन दीर्घग्रहणस्य वक्तुमशक्यत्वात् ।

यद्वा 'यू स्त्र्याख्यौ' इत्यनेन ह्रस्वयोर्दीर्घयोश्च नदीसंज्ञा विधीयते । शेषग्रहणं न क्रियते । पुंनपुंसकयोश्चरितार्था घिसंज्ञा परत्वान्नदीसंज्ञाया बाधिका स्यात् । स्त्रियां घिसंज्ञायां नित्यं प्राप्तायाम् 'ङिति ह्रस्वश्च' इति विभाषया घिसंज्ञा । तदभावे 'यू स्त्र्याख्यौ' इति नदीसंज्ञेति न कश्चिद्दोष इति भाष्ये स्पष्टम् । दीर्घयोर्ग्रहणे 'यू' इति छान्दसत्वाल्लुप्तविभक्तिकोऽयं निर्देश इति केचित् ।

ईदूदन्ताविति—तदन्तस्य संज्ञाऽभिप्रायेणेदम् । स्त्र्याख्यौ' इत्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिः ।

वर्णयोरेव संज्ञेत्यपि पक्षः । अत एव 'तुदन्ती' इत्यत्र ईकारमात्रस्य नदीत्वेन 'आच्छीनद्योर्नुम्' ( ७-१-८१ ) इति नुम् सिध्यति । वर्णयोः स्त्रीवाचकत्वं क्वचित्स्वपर्याप्तशक्त्या क्वचित् स्त्रीवा-

'प्रथमलिङ्गग्रहणं च'। पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि इदानीं नदीत्वं वक्तव्यमित्यर्थः।

---

चकवर्णसमुदायघटकत्वेन। ङ्यादौ स्वपर्याप्तत्वया, लक्ष्म्यादौ स्त्रीवाचकवर्णसमुदायलक्ष्मीघटकत्वेन। अत्र स्त्रीवाचकत्वम् स्त्रीविषयकबोधजनकत्वरूपं बोध्यम्। तेन ङ्यादीनां द्योतकत्वेऽपि न क्षतिः। तदत्र संज्ञापक्षे 'आच्छीनद्योः' इत्यत्र नदीपदस्य तदवयवे लक्षणा बोध्या।

ननु 'तुदत् ई' इत्यत्र नदीसंज्ञा ङ्यन्तस्य 'तुदत् ई' इत्यस्य तद्घटके ईकारे परे नुमि 'तुदन्ती' इत्यत्रेव तुदन्ती चासौ गौरी च 'तुदद्गौरी' इत्यत्र नुमापत्तिः, नदी तुदद्गौरी इति तद्घटके गौरीशब्दे परे अवर्णान्तादङ्गात् तुदरूपात्परो यः शतुरवयवस्तकारस्तदन्ताङ्गस्य सत्त्वादिति चेन्न, शत्रन्तस्य अङ्गसंज्ञाया निमित्तभूते नदीसंज्ञकस्य चरमावयवे परे इत्यर्थात्। प्रकृते गौरीति नाङ्गसंज्ञाया निमित्तभूतम्, अप्रत्ययत्वात्। एतेन तुदच्छब्दान्मतुपि ङीपि च 'तुदद्वती' इत्यत्र शत्रन्तस्य अङ्गसंज्ञाया निमित्तभूते नदीघटके मतुपि परेऽपि न नुमापत्तिः, मतुपो नदीचरमावयवत्वाभावात्।

स्त्र्याख्याविति—स्त्रियमाचक्षाते इति स्त्र्याख्यौ 'मूलविभुजादित्वात्कः।

तदुक्तं भाष्ये 'मूलविभुजादित्वात्' को भविष्यति। एवं च कृत्वा सोऽप्यदोषो भवति। यदुक्तम् 'यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ। ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति' इति इति। तदुक्तं 'तुन्दशोकयोः' ( ३-२-५ ) इति सूत्रे भाष्ये 'कप्रकरणे,मूलविभुजादिभ्य उपसंख्यानम्' इति।

'यू स्त्रियाम्' इत्येव वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थम्। तदुक्तं भाष्ये,—नदीसंज्ञाया-माख्याग्रहणं स्त्रीविषयार्थम्। स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात्। इह मा भूत् 'ग्रामण्ये' सेनान्ये स्त्रियै इति' इति।

यू किम्—खट्वा, माला, 'बहुखट्वकः' इत्यत्र 'नद्यृतश्च' ( ५-४-१५३ ) इति नित्यं कप् स्यादिति तु न 'ङेराम्नद्याम्नीभ्यः' ( ७-३-११६ ) इत्यत्र आब्ग्रहणं ज्ञापयति – नापो नदीसंज्ञा भवतीति। तर्हि 'मात्रे, मातुः', इत्यत्र 'आण् नद्याः' ( ७-३-११२ ) इत्याण् मा भूत्। अत्र नित्यस्त्रीत्वम् प्रवृत्तिनिमित्तैक्ये स्त्रीत्वेतरलिङ्गविशिष्टार्थानभिधायकत्वम्।

तेन ङ्यन्तकुमारीशब्दात्क्यचि क्विपि निष्पन्नकुमारीशब्दस्य कुमारीकर्मकेच्छाकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय त्रिलिङ्गत्वेऽपि कुमारीत्वरूपप्रवृत्तिनिमित्तमादाय लिङ्गान्तरानभिधायकत्वेन नदीत्वं सिध्यति।

स्त्रीत्वान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गान्वयितानवच्छेदकञ्च यत्प्रवृत्तिनिमित्तं तादृशप्रवृत्तिनिमित्तविशिष्टार्थाभिधायकत्वमिति फलितम्।

नन्वेवं बहुश्रेयसीशब्दस्य त्रिलिङ्गतया नदीत्वं न स्यादत आह–प्रथमेति–प्रथमस्य=समासादिवृत्तिप्रवृत्तेः पूर्वंप्रवृत्तस्य नित्यस्त्रीत्वरूपलिङ्गस्य 'यू स्त्र्याख्यौ' इति सूत्रे ग्रहणं कर्तव्यमित्यर्थः। नचैवं समासादिवृत्त्यभावे गौर्यादौ नदीत्वं न स्यादित्याशङ्कानिवृत्तये व्याख्यायते।

पूर्वामति—वृत्तेः पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमे उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः। वार्तिके चशब्दोऽप्यर्थकः। तथा च वृत्त्यभावेऽपि नित्यस्त्रीलिङ्गस्य संग्रहः। उपसर्जनत्वेऽपि अपिना उपसर्जनत्वाभावे गौर्यादेः संग्रहः। यथोद्देशे न्यायसिद्धमिदं वार्तिकम् कार्यकाले वाचनिकम्। इदञ्च वार्तिकं भाष्यकृता प्रत्याख्यातम्। यथोद्देशे पूर्वप्रवृत्तनदीसंज्ञामादायैव नदीकार्यं स्यात्।

कार्यकालपक्षेऽपि 'कुमारी' इत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसंज्ञा। तन्मात्रबोधकत्वनिवेशे 'प्रधानाप्रधानयोः प्रधाने कार्य्यसंप्रत्ययः' इति न्यायरूपमानसत्त्वेन 'प्रधानकार्य्यं च सर्वतो बलवद्' इति तत्र तत्र शेखरे उक्तत्वेन न मानमित्युक्तिश्चिन्त्या।

**अम्बार्थनद्योर्ह्रस्वः । [ ७-३-१०७ ]**

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ । हे बहुश्रेयसि । शसि बहुश्रेयसीन् ।

किञ्च अन्यादिशब्दानामिष्ठाद्यजन्तात् कर्तृक्विबन्तानां स्त्रियां वृत्तौ 'तस्माच्छसो नः पुंसि' इति नत्वापत्तिः, शकटिशब्दस्य स्वरूपे पुंसि लक्षणायाम् आङो नाभावाद्यनापत्तिश्च । अतो भाष्यप्रामाण्यात् प्रधानाप्रधानन्यायोऽत्र न प्रवर्तते इति वक्तुं युक्तमित्युपाध्यायाः । प्राधान्येन नित्यस्त्रीलिङ्गबोधकत्वनिवेशे वा न मानम् । तदुक्तं भाष्ये 'तर्हि वक्तव्यम् । न वक्तव्यम् 'अवयवस्त्रीविषयत्वात्सिद्धम्' । अवयवोऽत्र स्त्रीविषयः । तदाश्रया नदीसंज्ञा भविष्यति ।' इति ।

अत्र कैयटः—अन्तरङ्गत्वात् पूर्वमेव स्थान्ययत्वात्प्रवृत्ता नदीसंज्ञा पश्चादुपजायमाने लिङ्गान्तरयोगे न निवर्तते इति । अत्र भाष्यप्रामाण्ययथोद्देश एव, न तु कार्यकालः । यत्तु आकडारीयसंज्ञायां कार्यकालपक्षस्वीकारे संज्ञयोर्विधिदेशीयत्वेन पौर्वापर्याभावेन बाध्यबाधकभावानापत्तिरिति तन्न, संज्ञयोः कार्यार्थं विधिदेशगमनेऽपि व्यवहारार्थं तत्तद्देशगतानां व्यवहर्तॄणामिव स्वदेशीयत्वत्यागाभावात् ।

किञ्च प्रकृते न हि बाध्यबाधकभावविषयो येन कार्यकालपक्षोऽत्र दूष्येत । मिश्रास्तु 'अधिकारो नाम त्रिप्रकारः—कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति' इति भाष्यव्याख्यावसरे 'कश्चित्=परिभाषारूपः' इति कैयटव्याख्यानेन परिभाषाविषये एव स्वदेशत्यागेन व्यवस्था ।

संज्ञाविषये तु अयादिभ्यः परैव 'प्रगृह्यसंज्ञा' इति 'अदसो मात्' इति सूत्रे भाष्यकृतोक्तत्वेन संज्ञाविषये स्वदेशत्यागेनैव व्यवस्थायाः कार्यकालपक्षे भाष्यसम्मतत्वात् ।

प्रकृते नदीसंज्ञाविधायकशास्त्रस्य विधिशास्त्रेणैकवाक्यता नाभिप्रेता । किन्तु यदा नदीत्वप्रयुक्तकार्यप्रवृत्तिश्चिकीर्षिता तदा नदीसंज्ञां कृत्वा सा कल्पनीया । न तु भविष्यत्किञ्चित्प्रयोजनमिति न्यायेन नदीत्वप्रवृत्तिरित्याहुः ।

'अम्बार्थनद्योर्ह्रस्वः' ( ७-३-१०७ ) इति । 'सम्बुद्धौ च' इत्यतः सम्बुद्धावित्यनुवर्तते । 'अङ्गस्य' इत्यधिकारात्तदन्तविधिः तदाह–नद्यन्तानामिति—अम्बार्थान्तानामङ्गानामित्यपि बोध्यम् । 'हे बहुश्रेयसि' इति ह्रस्वे कृते 'ह्रस्वस्य गुणः' इति गुणस्तु न, प्रक्रियालाघवाय 'अम्बार्थानां ह्रस्वः' ह्रस्वनद्योर्गुणः' इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात् । 'जसि च' इत्यत्र एकदेश ह्रस्वे स्वरितत्वप्रतिज्ञया तन्मात्रस्यानुवृत्तिः । 'अम्बार्थानां गुणः' ततो 'ह्रस्वनद्योः' ।

अत्र गुण इत्यनुवर्तते इति तु न 'अनः क्लीवं जले शोके मातृस्यन्दनयोरपि' इतिरभसाद्युक्तानः शब्दस्याम्बार्थत्वेन गुणापत्तेः । न च नपुंसकत्वात्सोर्लुकि । न लुमता' इति प्रत्ययलक्षणप्रतिषेधाद् गुणाप्राप्तिः, 'हे वारे' इत्यत्रेव निषेधानित्यत्वेन गुणापत्तेः सुवचत्वात् । केचित्तु नदीसाहचर्यादम्बार्थानामप्यजन्तानामेव ग्रहणे न कोऽपि दोष इत्याहुः ।

भाष्यकृतस्तु अम्बार्थनद्योर्ह्रस्वः' ततो 'ह्रस्वस्य' अत्र अम्बार्थनद्यो ह्रस्वेत्यनुवर्तते, अम्बार्थनद्योर्ह्रस्वस्य ह्रस्वो भवति । किमर्थमिदं गुणं वक्ष्यति तद्बाधनार्थम् । ततो 'गुणः' ह्रस्येत्यनुवर्तते 'ह्रस्वस्य गुणः स्यात्सम्बुद्धौ' एवं योगविभागेन ।

यद्वा 'अम्बार्थनद्योर्ह्रस्वः' 'ह्रस्वस्य गुणः' इति यथाश्रुत एव न्यासः । 'ह्रस्वस्य गुणः' इत्यत्र 'अम्बार्थनद्योर्ह्रस्वः' इत्यनुवर्तते । तथा च ह्रस्वस्य गुणः, अम्बार्थनद्योश्च ह्रस्वः स्यादित्यर्थेन पुनर्ह्रस्वविधानसामर्थ्यान्न गुण इत्याहुः ।

अयं ह्रस्वोऽनन्तरस्येति न्यायात् 'ह्रस्वस्य गुणः' इत्यस्यैव बाधकः । तेन 'मातः' इत्यादौ 'ऋतो ङि' इति गुणो भवत्येव ।

वस्तुतस्तु सम्बुद्धिनिमित्तक गुणस्यैव ह्रस्वो बाधक इति मातरित्यादौ न दोषः । अत्र सूत्रे भाष्ये 'तत्र ह्रस्वत्वं वा ङिसम्बुद्धयोः' ततो ह्रस्वत्वम्, ङिसम्बुद्धयोरिति वक्तव्यम् । देवत, देवते । देवतायाम्,

आण् नद्याः । [ ७-३-११२ ]

नद्यन्तात्परेषां ङितमाडागमः स्यात् ।

आटश्च । [ ६-१-९० ]

आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयस्याः । नद्यन्तात्परत्वान्नुट् । बहुश्रेयसीनाम् ।

देवते इति भाष्ये । इदं छन्दस्येव । अतः पूर्वं ह्रस्वान्तात्परस्यामो नुडित्युदाहृतम् । अत्र नद्यन्तात्परत्वादामो नुड् बोध्य इत्यर्थः । यद्वा श्रेयसीत्यस्य नित्यस्त्रीलिङ्गतया नदीत्वेन तदन्ताद् बहुश्रेयसीशब्दात्परत्वादामो नुड् ज्ञेय इत्यर्थः । 'आण्नद्याः' ( ७-३-११२ ) इति 'अङ्गस्य' इत्य धिकृतम् । तच नद्या इति पञ्चम्यन्ते सम्बद्धं पञ्चम्या विपरिणम्यते । तदन्तविधिः । 'घेर्ङिति' इत्यतो ङितीत्यनुवर्तते । नद्या इति पञ्चम्यनुरोधेन 'पञ्चमी स्वस्मात्परां विभक्तिं षष्ठीं कल्पयति' इति न्यायात् 'ङिति' इति सप्तम्याः षष्ठ्या विपरिणामस्तदाह—नद्यन्तादित्यादि । टित्वान्ङित आद्यवयवः 'बहुश्रेयसी आ ए' इति स्थितौ ।

'आटश्च' (६-१-९०) इति । अत्र 'इको यणचि' इत्यतः 'अचि' इति, 'वृद्धिरेचि' इत्यतो वृद्धिरिति चानुवर्तते, 'एकः पूर्वपरयोः' इत्यधिकृतं तदाह—आटोऽचीत्यादि । वृद्धौ यणि 'बहुश्रेयस्यै' इति । यद्यप्यत्र 'वृद्धिरेचि' इत्येव सिद्धं तथाऽपि 'ऐक्षत' इत्याद्यर्थमावश्यकं न्याय्यत्वादिहोपन्यस्तम् ।

ननु 'अण् नद्याः' इत्येव सूत्रमस्तु । न च 'अतो गुणे' इति वृद्ध्यादिकं परत्वाद् बाधित्वा पररूपापत्तिस्तु न, नु डविधानवैयर्थ्यापत्त्या पररूपस्य बाधात् ।

ननु 'परत्वादाटा नुड् बाध्यते' इति परग्रन्थपर्यालोचनया ङेरामि कृते प्राप्तनुड्वारणाय अड्विधानं सार्थकमिति चेत्तर्हि 'ह्रस्वनद्यापः' इति सूत्रानन्तरं 'ङेर्नं' इति सूच्यताम् । आमीत्यनुवृत्त्या 'ङेरामो नुण् न स्यात्' इति व्याख्यानेन सिद्धेरड्विधानसामर्थ्यात्पररूपं बाधित्वा वृद्धिसवर्णदीर्घाभ्यां रूपसिद्धौ 'अण् नद्याः' इति न्यासः सुवच इति चेन्न, 'न माङ्योगे' ( ६-४-७४ ) इति सूत्रभाष्ये 'अजादीनामटा सिद्धम्' इत्यादिना 'आडजादीनाम्' इत्यस्य प्रत्याख्यानावसरे 'यदि तर्ह्याटो वृद्धिरित्युच्यते 'अस्वपो हसति' इत्यत्र वृद्धिः प्राप्नोति रोरुत्वे कृते··· धातावटो वृद्धिं वक्ष्यामि । योगविभागः करिष्यते । 'अटः' अचि वृद्धिर्भवति । ततः 'उपसर्गादृति' वृद्धिर्भवति । ततो 'धातौ' इत्युभयोः शेषः' इत्युक्तं भाष्यकृता ।

तथा च 'अटश्च' इत्यस्याजादौ धातावेव प्रवृत्त्या 'बहुश्रेयस्यै' इत्यादिषु अटि 'अटश्च' इत्यस्याप्राप्त्या रूपासिद्धेः । नचाड्विधानसामर्थ्यात्पररूपाभावे वृद्धिसवर्णदीर्घाभ्यां सिद्धिः, न च ङेरामि नुड्बाधनाय अटश्चारितार्थ्यम् 'ह्रस्वनद्यापोरङेः' इति न्यासेन 'ङेरामुनद्याम्नीभ्यः' इति न्यासेन वा नुडभावसिद्धेरड्विधानवैयर्थ्येन पररूपबाध इति वाच्यम्, 'सखी' शब्दान्ङस्यटि पररूपेऽपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वेन 'ख्यत्यात्परस्य' इत्युत्वत्रणार्थमड्विधानस्य चारितार्थ्येन पररूपबाधनासम्भवेन 'आण् नद्याः' इत्यस्यावश्यकत्वात् ।

तथा च 'वृद्धिरेचि' 'अकः सवर्णे' इत्येताभ्यामेव 'बहुश्रेयस्यै' 'बहुश्रेयस्याः' इत्यादीनां सिद्धिर्बोध्येति दिक् । नद्यन्तात्परत्वादिति—अनवकाशत्वेन बाधस्थले अनवकाशशास्त्रस्य पूर्वं प्रवृत्तिरित्येव नियमः । यदि अनवकाशे प्रवृत्ते उत्सर्गस्य प्राप्तियोग्यता तदा तदपि प्रवर्तते एव । अयं बाधो माठरपरिवेषणन्यायवत् ।

अयं भावः—एककार्यविनियोगोद्देश्येन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तद्वाक्यघटकव्याप्यपदार्थातिरिक्तत्वेन संकोचः । ब्राह्मणत्वम्-व्यापकम् । माठरत्वम्, कौण्डिन्यत्वञ्च व्याप्यम् ।

ङेराम्नद्याम्नीभ्यः। [ ७-३-११६ ]

नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात्। इह परत्वादाटा नुड् बाध्यते, बहुश्रेयस्याम्। शेषमीप्रत्ययान्तत्वाभावात्प्रमीवत्। अङ्यन्तत्वान्न सुलोपः, अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्।

---

यथा सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्, इत्युक्ते माठरकौण्डिन्यौ न भुञ्जाते। परिवेषणानन्तरं तावपि भुञ्जाते एव यदि भोजनस्य योग्यता तयोः।

'ङेराम् नद्याम्नीभ्यः—( ७-३-११६ ) इति। अत्र 'ङेः' इति सप्तम्येकवचनानुकरणं प्रकृतिकषष्ठ्यन्तम्, 'समानकर्तृकादिच्छायाम्' 'क्रियाश्च' इत्यादिनिर्देशात्। नदी च आप् च नीश्चेति नद्याम्न्यस्तेभ्यो नद्याम्नीभ्य इति। अङ्गस्येत्यधिकृतं विशेष्यमादाय तदन्तविधिः। आपः प्रत्ययतया तदादिविशेष्यकम् अङ्गविशेष्यकञ्च तदन्तत्वम्।

तदाह—नद्यन्तादिति। आबन्तादिति—आबन्ततदाद्यन्तादित्यर्थः। नीशब्दादिति—नीशब्दान्तादित्यर्थः।

बहुश्रेयसी ङ् इति दशायाम् आडपि प्राप्नोति आमादेशोऽपि। तत्र उत्सर्गप्राप्तियोग्येऽचारितार्थ्यविशिष्टं यत्र उत्सर्गे कृतेऽप्यचारितार्थ्यम् तत्र सर्वथा अनवकाशत्वाद् बाध इत्युच्यते।

यथा प्रकृते आटोऽप्राप्तियोग्ये क्वचिदपि लक्ष्ये 'ङेराम्' इत्यस्य चारितार्थ्यं नास्ति कृतेऽपि आटि नद्यन्तादव्यवहितात्परस्य निर्दिश्यमानस्य ङेरित्यस्य आटा व्यवहितत्वादभावेन, आड्विशिष्टस्याव्यवहितत्वेऽपि आगमविशिष्टस्य न निर्दिश्यमानत्वमिति सर्वसम्मतत्वेन कृते आटि आमोऽचारितार्थ्यमिति सर्वथा निरवकाशत्वेन आमा आटो बाधः।

एवञ्च यत्र सर्वथा निरवकाशत्वेन बाधस्तत्र उत्सर्गशास्त्रीयोद्देश्येऽनवकाशशास्त्रप्रवृत्तियोग्यो योऽनवकाशशास्त्रीयोद्देश्यस्तदतिरिक्तत्वेन संकोचः।

एवञ्च अतः पूर्वं ह्रस्वान्तात्परस्यामो नुडित्युदाहृतम्। अत्र नद्यन्तात्परत्वादामो नुड् बोध्य इत्यर्थः। यद्वा श्रेयसीत्यस्य नित्यस्त्रीलिङ्गतया नदीत्वेन तदन्ताद् बहुश्रेयसीशब्दात्परत्वादामो नुडेव इत्यर्थः। आमादेशे जाते 'बहुश्रेयसी आम्' इत्यत्र आमादेशस्य प्रवृत्तियोग्यता नास्तीति आटः प्रवृत्तौ बाधकाभावः। आमि कृते आटोऽपि प्राप्तिर्नुटोऽपि। आटोऽवकाशो 'बहुश्रेयस्यै' इत्यादौ। नद्यन्तात्परस्यामो नुटोऽवकाशः—

'बहुश्रेयसीनाम्' इत्यत्र। इहोभयं प्राप्नोतीति परत्वादाटा नुटो बाधः। ननु आटि कृते यदागमपरिभाषया आड्विशिष्टस्याम्त्वेन नुट् स्यादिति चेन्न, 'सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति न्यायेन नुटोऽप्राप्तेः।

यत्रोत्सर्गप्राप्तियोग्येऽचारितार्थ्यविशिष्टम् उत्सर्गे कृते अनवकाशशास्त्रस्य प्रवृत्तियोग्यता तत्रापवादत्वेन बाध इत्युच्यते। यथा सुटा नुटो बाधः।

अत्र 'आमि सर्वनाम्नः' इत्यस्य नुटोऽप्राप्तियोग्येऽचारितार्थ्यम्। उत्सर्गे नुटि कृते यदागमन्यायेन नुड्विशिष्टस्याम्त्वेन पुनः सुटः प्राप्तियोग्यतेति सुटा नुटो बाधः। अत्र सुडुत्तरं यद्यपि नुटोऽपि प्राप्तिस्तथापि अत्र अनवकाशशास्त्रप्रवृत्तियोग्यातिरिक्तत्वेन अनवकाशशास्त्रीयविधेयघटितातिरिक्तत्वेन च उत्सर्गशास्त्रीयोद्देश्ये संकोचात्। अनवकाशशास्त्रप्रवृत्तौ तद्विधेयघटितातिरिक्तत्वाभावाच्चोत्सर्गशास्त्रस्य प्रवृत्तिः। अयमेव द्वितीयबाधबीजरूप 'तक्रकौण्डिन्य' न्यायेन बाध इत्युच्यते।

यथा 'सर्वेभ्यो दधि दीयताम्' 'तक्रं कौण्डिन्याय' इत्युक्तौ तक्रदानात्पूर्वं परञ्च दधिदानं न भवति। यद्यपि तक्रदानात्पूर्वं परं वा दधि दातुं शक्यते, तथाऽपि तादृशवाक्यमहिम्ना सर्वथा कौण्डिन्याय दधि दीयते।

कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी, क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप्। 'हल्ङ्याप्—' ( सू २५२ ) इति सुलोपः।

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। [ ६-४-७७ ]

---

अनवकाशत्वापवादत्वयोर्भेदश्च 'गुणो यङ्लुकोः' ( ७-४-८२ ) इति भाष्ये 'न गत्तेरीत्वमपवादत्वाद्धलादिः शेषं बाधते, किं तर्ह्यनवकाशत्वात्' इति भाष्योक्त्या प्रतीयते। अतो ऽन्त्यपरिभाषया गत्तेरभ्यासस्य स्स्येत्वम् इत्यर्थे 'हलादिः शेषः' इत्यनेन यकारलोपे ईत्वाप्राप्तिरित्यनवकाशत्वात् 'हलादिः शेषः' इत्यस्य बाधे प्राप्ते 'अभ्यासविकारेषु बाध्यबाधकभावो नास्ति' इति परिभाषया 'हलादिः शेषः' इत्यस्य बाधो न जात इति यकारस्य निवृत्तौ गकाराकारस्येत्वे 'अजीगणत्' इति सिध्यति।

अनवकाशत्वेन बाधे अनवकाशस्य पूर्वं प्रवृत्तिरित्येव बाधः, 'अभ्यासविकारेषु' इति परिभाषया स न जातः किन्तु उत्सर्गशास्त्रप्रवृत्त्यनन्तरमीत्वप्रवृत्तिः।

ईप्रत्ययान्तेति—वातप्रमीशब्दस्यापीवर्णान्तधातुत्वाभावेन अमि शसि 'एरनेकाचः' इति यणोऽप्राप्त्या यथा पूर्वरूपादि तथाऽत्रापि बहुश्रेयसीम्, बहुश्रेयसीन्, इति।

अतिलक्ष्मीरिति—लक्ष्यते = दृश्यते समुद्रादिति, लक्षयति = पश्यति वा 'लक्ष्मीः'। लक्षेर्ण्यन्ताद् 'लक्षेर्मुट् च' उ. ३ पा. १६० इति ईप्रत्यये प्रत्ययस्य मुडागमे 'लक्ष्मीः' तामतिक्रान्त इत्यर्थे 'अत्यादयः' इति समासः। 'लक्ष्मीः कान्तौ, विष्णुपत्न्याम्' सम्पत्तौ ऋद्ध्यौषधे, फलिनीवृक्षे ( प्रियङ्गुवृक्षे ) स्थलपद्मिन्याम्, हरिद्रायाम्, माल्याम्, मुक्तायाम्, द्रव्ये च' इति शब्दस्तोममहानिधिः। स्त्रीप्रत्ययान्तत्वाभावान्नोपसर्जनह्रस्वः। अङ्यन्तत्वादिति—ङ्यन्तत्वाभावादित्यर्थः।

कुमारीमिच्छन्निति—'कुमार क्रीडायाम्' इत्यतः 'नन्दिग्रहि' इत्यचि कुमारयति=क्रीडतीति कुमारः। कामयते आहारान् इत्यर्थे कमधातोः 'कमेः किदुच्चोपधायाः' (उ. ३ पा. १३८) इति आरन्प्रत्यये उपधाया उत्वे कित्वाल्लघूपधगुणाभावे कुमार इति स्त्रियाम् 'वयसि प्रथमे' (४-१-२०) इति ङीपि कुमारी।

'समाप्ते द्वादशे वर्षे कुमारीत्यभिधीयते।' इति स्मृतिः।

ब्रह्मचर्यं समाप्य कुमारीमिच्छन् ब्राह्मणः कुमारी। कुमारीवाचरन् वा इत्यर्थे इच्छाक्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विपि अल्लोपे यलोपे क्विपो लोपे कुमारीति पुंलिङ्गः, 'सनाद्यन्ता धातवः' ( ३-१-३२ ) इति धातुत्वं प्राप्तः।

यद्यपि इच्छायां प्रति आचारं प्रति वा ङ्यन्तार्थस्य विशेषणतया अप्रधानत्वरूपमुपसर्जनमस्तीति। तथापि 'गोस्त्रियोः' इत्यत्र कृत्रिमस्यैवोपसर्जनस्य ग्रहणान्न ह्रस्वः। अत एव 'गोस्त्रियोः' इति सूत्रे 'न चान्तरेण समासं स्त्र्यन्तं प्रातिपदिकमुपसर्जनमस्ति' इति भाष्यं संगच्छते। अत एव हरीतक्याः फलानि हरीतक्य इत्यादावपि न ह्रस्वः।

सुलोप इति—न च क्यचोऽकारलोपस्य पूर्वस्माद्विधिरिति पञ्चमीसमासाश्रयणेन स्थानिवत्त्वात् सोऽङ्यन्तात्परत्वाभावाल्लोपो न स्यादिति वाच्यम्, 'क्वौ लुप्तं न स्थानिवत्' इति निषेधात्, पञ्चमीसमासस्यानित्यत्वाच्च स्थानिवत्त्वाभावात्।

'कुमार्यौ औ' इत्यत्र यणो बाधमाशङ्कितुमाह—'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६-४-७७) इति। इश्च उश्च यू तयोर्य्वोरिवर्णोवर्णयोरित्यर्थः। श्नुश्च धातुश्च भ्रूश्चेति श्नुधातुभ्रुवस्तेषाम्। अत्र प्रत्ययग्रहणपरिभाषया श्नुपदेन तदन्तं गृह्यते। अङ्गस्य इत्यधिकृतम्। य्वोरिति धातोरेव विशेषणम्, न श्नु-भ्रुवोरसम्भवादिकारांशे उकारांशे च व्यभिचाराभावात्। 'सम्भवव्यभिचाराभ्याञ्च स्याद्विशेषणमर्थवत्' इत्यस्य सर्वसम्मतत्वात्।

श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोः 'भ्रू' इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। 'हिन्व' ( सू ४३ ) इत्यन्तादेशः । आन्तरतम्यादेरियङ् ओरुवङ् । इतोयङि प्राप्ते ।

---

तथा च श्नुप्रत्ययान्तं यदादि तदन्तं यदङ्गं तस्य, इवर्णोवर्णान्तो यो धातुस्तदन्तं, भ्रूशब्दान्तञ्च यदङ्गं तस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये तेन 'सुभ्रुवौ' इत्यादावुवङ् सिद्ध्यति। अङ्गेन प्रत्यय आक्षिप्यते ।

न च 'भ्रू' शब्दे तदन्तग्रहणं न स्यात्, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति निषेधात् । अत एव परमगर्गादिभ्यो न यञ् इति वाच्यम्, प्रत्ययविधिविषये एव तत्प्रवृत्तेः ।

अत एव 'परमयञ्जुः' इत्यत्र रुत्वं सिध्यति । एतेनात्र तदन्तविधेरभावात् 'कासि हे सुभ्रु' इति, 'विमानिता सुभ्रु पितुर्गृहे कुतः'। इति महाकविप्रयोगेषु नदीत्वप्रयुक्तं ह्रस्वत्वं सिध्यति 'नेयङुवङ्' इति निषेधाप्रवृत्तेः, तदन्ते उवङोऽभावादिति निरस्तम् ।

य्वोरिति धातोः समानाधिकरणं विशेषणम् । ननु समानाधिकरणविशेषणे समानवचनत्वनियमादिदं युक्तम् इति चेन्न, 'वेदाः प्रमाणम्' 'जात्याकृतिव्यक्तयः पदार्थः' इत्यादिविभिन्नवचनत्वेऽपि सामानाधिकरण्यदर्शनात् ।

किञ्च, धातोर्याविकारोकारौ तयोरियङुवङौ स्त इत्यर्थे 'क्षिपति' इत्यादावप्यादेशापत्तेः । न च तत्र वलि लोपेनादोषः, तथाऽपि 'ऊयतुः' इत्यादौ वल्परत्वाभावे दोषतादवस्थ्यात्, वैयधिकरण्येनान्वये गौरवाच्च, वैयधिकरण्येनान्वये इकारोकारयोरेव निर्दिश्यमानत्वेन ङकारवैयर्थ्यापत्तेश्च ।

न चेष्टापत्तिः, तुल्यन्यायादुत्तरसूत्रेऽपि तथात्वापत्तौ 'दिदिवतुः' इत्यादौ यणापत्तेश्च । ननु 'गमः क्वौ' ( ६-४-४० ) इति सूत्रे 'ऊङ् च गमादीनां वक्तव्यम्' इति अनुनासिकलोपे ऊकादेशे च भ्रूशब्दस्य निष्पन्नत्वेन धातुग्रहणेनैव सिद्धे भ्रूग्रहणं व्यर्थमिति चेन्न, अव्युत्पन्नस्य 'भ्रमेर्डूः' ( उ. २ पा. ६८ सू. ) इति डूप्रत्ययान्तस्य वाऽऽदेशार्थं भ्रूग्रहणस्य चारितार्थ्यात् ।

केचित्तु भ्रूशब्दोपादानं प्राधान्यसूचनार्थम् । भ्रूशब्दार्थप्राधान्ये एवोवङ् नाप्राधान्ये न तूपसर्जने इत्यर्थः । तेन उपसर्जने भ्रूशब्दस्य उवङ्विषयत्वाभावात् 'नेयङुवङ्स्थानौ' इत्यस्य उपसर्जनीभूतभ्रूशब्देऽप्रवृत्त्या नदीसंज्ञायाम् 'कासि हे सुभ्रु' इत्यादौ शोभने भ्रुवौ यस्या इत्यर्थकतयोपसर्जनत्वेन ह्रस्वत्वं सिध्यति ।

'गूढसूचितरहस्यविभेदः सुभ्रुवां प्रववृते परिहासः।' इत्यत्र च सुष्ठु भ्रमन्ति यास्तासामित्यर्थे उपसर्जनत्वाभावादुवङ्प्रवृत्तेर्नदीत्वनिषेधेन नुडभाव उवङ् च सिध्यति इत्याहुः ।

आन्तरतम्यादिति—तालुस्थानकस्य तालुस्थानीयः, ओष्ठस्थानकस्य ओष्ठस्थानीय इत्यान्तरतम्यादित्यर्थः । इतीयङि प्राप्त इति— न च शास्त्रान्तरासहकारेणोपस्थितविषयस्यैव निर्दिश्यमानत्वेन दीर्घेकारोकारयोः 'अणुदित्' सूत्रसहकारेणैवोपस्थितत्वान्निर्दिश्यमानत्वाभावेनेयङोऽप्राप्तिरिति वाच्यम्, 'न भूसुधियोः' इति निषेधेन इयङ्घटितनिर्देशेन 'अतो लोपः' ( ६-४-४८ ) इत्यत्र तपरकरणेन च ग्राहकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनात् ।

अन्यथा दीर्घेषु आदेशाप्राप्तया तद्वैयर्थ्यं स्पष्टमेव । न च इकारोकारयोरेव निर्दिश्यमानपरिभाषयाऽऽदेशे सिद्धे ङित्करणं व्यर्थमिति वाच्यम्, श्नु भ्रुवोरपि निर्दिश्यमानत्वेन सर्वादेशवारणाय ङित्करणस्य चारितार्थ्यात् । न च 'धातोरुच्यमानं कार्यं तत्प्रत्यये भवति' इति परिभाषया प्रातिपदिकाद्विहिते सुपि इयङादिर्न स्यादत एव 'कंसपरिमृड्भ्याम्' इत्यादौ 'मृजेर्वृद्धिः' इति वृद्धिर्नेति वाच्यम्, 'न भूसुधियोः' 'ओः सुपि' इति सूत्राभ्यामिह प्रकरणे तच्छायाप्रवृत्तेर्ज्ञापनात् ।

### एरनेकाचोऽसंयोगपूर्वस्य [ ६-४-८२ ]

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। इति यण्। कुमार्यो। कुमार्यः। हे कुमारि। अमि शसि च कुमार्यम्, कुमार्यः। कुमार्यै। कुमार्याः। कुमार्याः। कुमारीणाम्। कुमार्याम्। कुमारीषु।

---

इयङुवङोर्बाधकं यण्विधायकं शास्त्रमाह—'एरनेकाचोऽसंयोगपूर्वस्य' (६-४-८२) इति। 'इणो यण्' (६-४-८१) इत्यत यण् इत्यनुवर्त्तते। 'एः' इति षष्ठ्यन्तम्—इवर्णस्येत्यर्थः। पूर्वसूत्रे 'श्नु धातुभ्रुवाम्' इति द्वन्द्वनिर्देशेऽपि धातुमात्रमनुवर्त्तते, न तु 'श्नुभ्रुवौ' इति तयोरिवर्णासम्भवात्, एकदेशे स्वरितत्वप्रतिज्ञानाच्च।

अनुवृत्तञ्च धातुपदमावर्त्तते षष्ठ्या च युज्यते 'धातोः' इति। एकमवयवषष्ठ्यन्तम्। 'एः' इति धातोरित्यस्य षष्ठ्यन्तम्, स्थानषष्ठ्यन्तस्य समानाधिकरणं विशेषणम्। तेन तदन्तविधिः। इवर्णान्तस्य धातोः स्थाने इत्यर्थः। अवयवषष्ठ्यन्तं धातोरिति 'असंयोगपूर्वस्य' इत्यस्यैकदेशे संयोगेऽन्वेति—तथा च धातोरवयवो यः संयोगः स पूर्वो यस्य इवर्णस्य स धात्ववयवसंयोगपूर्व इवर्णस्तद्भिन्नो य इवर्णस्तस्येत्यर्थः। तद्भिन्नोऽधात्ववयवपूर्व एव तेन 'उदियौ' इत्यादावुपसर्गावयवपूर्वस्य यण् न। तादृशेवर्णेन धातुर्विशेष्यते, तदाह—

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो धातुरिति। तादृशधातुनाङ्गं विशेष्यते। तदन्तविधिस्तदाह—तदन्तस्येति—अनेकाच इत्यप्यङ्गविशेषणम्, तथा च तादृशेवर्णान्तधात्वन्तमनेकाच् च यदङ्गं तस्य स्थाने यण् स्यादजादौ प्रत्यये परे इत्यर्थः। धात्ववयवेन संयोगस्य विशेषणात् उन्यौ, उन्यः, इत्यादौ यण् सिध्यति उपसर्गावयवधात्ववयवघटितसंयोगस्य धात्ववयवत्वाभावात् इवर्णान्तधातुना अङ्गविशेषणात् 'प्रध्यम्, प्रध्य' इत्यादाविव। हरिम् हरी, हरीन् इत्यादौ पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् न, हरिशब्दस्य इवर्णान्तधात्वन्ताङ्गत्वाभावात्।

यत्तु शेखरकृता धात्ववयवसंयोगभिन्नादित्यर्थकात् 'असंयोगात्' इत्येव वक्तव्ये पूर्वग्रहणं स्पष्टार्थमिति तच्चिन्त्यम्, यवक्रियौ, कटप्रुवौ, इत्यादौ धात्ववयवसंयोगभिन्नः 'यवक् कटप्' इति ततः परयोरिकारोकारयोर्यणापत्तेः।

न च तद्भिन्नोऽपि धात्ववयव एव पर्युदासन्यायादिति नोक्तदोष इति वाच्यम्, एवमपि धात्ववयवसंयोगभिन्नाद् धात्ववयवरेफात्परत्वमादाय दोषतादवस्थ्यात्।

'य्वोः' इति पूर्वसूत्रतोऽनुवर्त्य 'अनेकाचोऽसंयोगात्' इत्येव सूत्रमस्तु, धात्ववयवसंयोगात्परौ न भवतो यौ इवर्णोवर्णौ तदन्तधात्वन्ताङ्गस्येयुवौ स्यातामित्यर्थेन लक्ष्यसिद्धिरिति पूर्वग्रहणं न कर्तव्यम्।

न च 'लुलुवतुः' इत्यादावपि यणापत्तिरिति वाच्यम्, 'ओः सुपि' इत्यस्य 'उवर्णान्तस्य यण् चेत्तर्हि अजादौ सुप्येवे' ति नियमात्। अजादौ सुपि यण् चेत्तर्हि उवर्णान्तस्येवेति विपरीतनियमस्तु न 'न भूसुधियोः' इति सूत्रे सुधीग्रहणस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह—

'एः' किम् इति—असंयोगपूर्वग्रहणम् इवर्णविशेषणं यथा स्यादङ्गविशेषणं मा भूत्। अन्यथा 'यवक्रियौ' इत्यादौ यणापत्तिः, धात्ववयवसंयोगपूर्वभिन्नत्वस्य 'यवक्रोरूपाङ्गे सत्त्वात् धात्ववयवसंयोगात्परस्येवर्णस्य न यण् इति व्याख्याने तु 'उदियौ' इत्यादौ यणप्रसङ्गः=पर्युदासाभाव इति धात्ववयवसंयोगभिन्न इत्यर्थलाभार्थं पूर्वग्रहणम्।

कुमार्याविति—कुमारीमिच्छतीत्यर्थेऽमन्तात्क्यचि 'सुपो धातु' (२-४-७१) इति सुपो लुकि प्रत्ययलक्षणेन सुबन्तत्वात् पदत्वे 'कुमारी अौ' इत्यादिषु 'इकोऽसवर्णे' (६-१-१२७) इति प्रकृतिभावो न शङ्क्यः, 'नः क्ये' इति नियमेन नान्तभिन्नस्य पदत्वाभावात्। नन्वेवमपि राजायतेः

प्रधीः । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह स्यादेव यण् । उन्न्यौ । उन्न्यः । हे उन्नीः । उन्न्यम् । ङेराम् उन्न्याम् । एवं ग्रामणीः । 'अनेकाचः' किम्—नीः । नियौ । नियः । अमि शसि च परत्वादियङ्, नियम्, नियः । ङेराम् नियाम् । 'असंयोगपूर्वस्य' किम्—'सुश्रियौ' यवक्रियौ ।

---

क्विपि निष्पन्नराज्ञीशब्दात् 'राज्ञी श्रौ' इत्यत्र नान्तत्वेन पदत्वात्प्रकृतिभावो दुर्वार इति चेन्न, यद्वृत्तिघटकं सुपमादाय पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वमुत्तरपदत्वं वाच्यम्, वैः स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्व-स्वघटकत्वैतदुभयसम्बन्धेन ।

अत एव अत्रेरपत्यानि इत्यर्थे 'इतश्चानिञः' ( ४-१-१२२ ) इति ढकि 'अत्रिभृगु" (२-४-६५) इति ढको लुकि ङसो लुकि च लुप्तं सुपमादाय पदसंज्ञा न 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणस्य निषेधेन पदत्वाभावेन 'एङः पदान्तादति' इति पूर्वरूपं न । तथैवात्रापि 'राज्ञी' इत्यस्य उत्तरपदतया 'उत्तरपदत्वे' इति प्रत्ययलक्षणनिषेधेन पदत्वाभावात् ।

प्रधीरिति—प्रकृष्टं ध्यायतीति प्रधीः । ध्यै चिन्तायामित्यतः 'ध्यायतेः सम्प्रसारणञ्च' इति वार्तिकेन क्विपि सम्प्रसारणे पूर्वरूपे च 'हलः' ( ६-३-२ ) इति सम्प्रसारणस्य दीर्घे निष्पन्न-प्रधीशब्दस्त्रिलिङ्ग इति न नदीत्वम् । परन्तु 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । ( अम. १ का. धीवर्ग १ श्लो. ) इति कोषप्रदर्शितधीशब्दस्य नित्यस्त्रीलिङ्गत्वेन प्रकृष्टा धीर्यस्य इति विग्रहे समस्तप्रधीशब्दस्य 'प्रथमलिङ्गग्रहणञ्च' इति वार्तिकेन नदीत्वात् 'एरनेकाचः' इति यणविषयत्वेन 'नेयङुवङौ' इति नदीत्वनिषेधाप्राप्त्या नदीत्वकार्यं स्यादित्येके ।

अन्ये तु एवं तर्हि 'यथोद्देशे प्रवृत्तौ' न्यायसिद्धमिदं वार्तिकमिति मनोरमा विरुध्येत, यथोद्देशेऽपि प्रधीशब्दार्थयतया वचनस्यावश्यकत्वात् । मूले हि उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्युक्तं न तु नित्यस्त्रीत्वम् । तस्मात्प्रथमलिङ्गग्रहणम् इत्यनेन लिङ्गप्रयुक्तं नदीत्वं वृत्तेः प्राक् स्थितं तदिहातिदिश्यते ।

धीशब्दे तु 'नेयङुवङौ' इत्यस्य विषयतया वृत्तेः पूर्वं नदीत्वाभावेन नास्त्येव प्रधीशब्दस्य नदीत्वातिदेश इति । 'ङिति ह्रस्वश्च' इति वैकल्पिकनदीत्वमपीह नातिदिश्यते । प्रथमलिङ्गेति वचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थानुरोधेन वृत्तेः प्रागवस्थायामवयवे विद्यमानाया एव नदीसंज्ञायाः समुदायेऽभ्युपेयत्वात् ।

प्रकृष्टा धीर्यस्य तस्मै प्रध्ये इत्यादौ समस्यमानप्रथमान्तधीशब्दस्य ङिति परे प्रवर्तमाना नदीसंज्ञा नैवास्तीति नदीकार्यमत्र न स्यादित्याहुः ।

यदि प्रधीशब्दस्य नदीत्वं तदा कुमारीशब्दवद्रूपाणि । नदीत्वाभावे क्विबन्तवातप्रमीवद् रूपम् ।

उन्नीरिति—उत्पूर्वकाणीधातोः 'सत्सूद्विष' ( ३-२-६१ ) इति क्विप् ङ्यन्तत्वाभावान्न सुलोपः । अजादौ सुपि 'एरनेकाचः' इति यण् । नन्वत्र ईवर्णस्य संयोगपूर्वकत्वाद्यण् न स्यादत आह—

धातुनेति—धात्ववयवसंयोगपूर्वस्यैव यण् पर्युदस्यते । नचात्र संयोगो धात्ववयवः,नी मात्रस्य धातुत्वात् । हे उन्नीरिति—नित्यस्त्रीत्वाभावेन नदीत्वाभावात् 'अम्बार्थ' इति ह्रस्वो न, उत्=ऊर्ध्वम् उत्कृष्टं वा नयतीत्युन्नीः । उन्न्यमिति—पूर्वरूपापवादो यण् उन्न्यामिति 'ङेराम् नद्याम्नीभ्यः' इति नीशब्दात्परस्य ङेराम् । आङ्गत्वेन नीशब्दान्तादपि ङेराम् ।

ग्रामणीरिति—अङ्यन्तत्वान्न सुलोपः । ग्रामं नयति=नियच्छतीति 'ग्रामणीः' 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वम् । अनेकाचः किमिति—'एरनेकाचः' इति सूत्रे इति शेषः । नियाविति — अनेकाच्त्वाभावान्न यण् किन्तु इयङ् । सुश्रियाविति—सुष्ठु श्रयतीति सुश्रीः । 'क्विब्वचि' ( का०वा० ) इति क्विप् प्रकृतेर्दीर्घश्च । शोभना श्रीरस्येति बहुव्रीहिर्वा । स्त्रीप्रत्ययान्तत्वाभावान्न ह्रस्वः । 'नेयङुवङौ'

'गतिकारकेतरपूर्वपदस्य यण् नेष्यते'। ( वा ५०३४ ) शुद्धधियौ, परमधियौ। कथं तर्हि 'दुर्धियः' 'वृश्चिकभियः' इत्यादि ? उच्यते। 'दुःस्थिता धीर्येषाम्' इति विग्रहे 'दुर्' इत्यस्य धीशब्दं प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः।

---

इति निषेधेन नदीत्वाभावात् 'नद्यृतश्च' ( ५-४-१५३ ) इति कप् न। अत्र, यवं क्रीणातीति 'यवक्रीः' इत्यत्र च ईकारस्य धात्ववयवसंयोगपूर्वकत्वाच्च यण्। यवान् क्रीणातीति यवक्रीः। 'क्विप् च' ( ३-२-७६ ) इति क्विप्।

गतिकारकेति--यद्यपि 'एरनेकाचः' इति भाष्ये 'गतिकारकपूर्वस्यैवेष्यते' इति पठितम्। तथाऽपि स नियमः। तेन गतिकारकपूर्वभिन्नस्य यण् नेति फलति। नियमस्य सजातीयापेक्षत्वात् गतिकारकपूर्वसपूर्वपदम् इति नियम्यमपि तत्सजातीयं सपूर्वपदमेव गृह्यते इति सपूर्वपदके एव नियमात् 'निम्यतुः' इत्यादौ यण् सिध्यति। गतिकारकभिन्नपूर्वपदकस्य यण् नेति फलति तदाह—गतिकारकेतरेति।

यत्तु अत्र गतिसमासो नित्याधिकारस्थः 'कुगति' ( २-८-१८ ) इति विहितसमास एव प्रतिपदोक्तत्वाद् गृह्यते इति। तथा च दुष्टा धीर्यस्य स दुर्धीः। ततोऽजादिविभक्तौ यण् न स्यादिति तन्न, भाष्ये 'गतिकारकपूर्वस्यैवेष्यते' वार्तिके पूर्वसमासाद्यवयवरूढस्य पूर्वपदस्याभावेन समासोपस्थिते-रभावेन प्रतिपदोक्तसमासो ग्राह्यो लाक्षणिको वेति विषयाभावेन विशिष्टरूपोपादानविषये प्रतिपदोक्त-परिभाषाया अप्रवृत्तेः।

अत एव नदीसंज्ञासूत्रस्थः प्रकृष्टा धीर्यस्येति विग्रहाभिप्रायेण प्रवृत्तः 'प्रध्यै ब्राह्मण्यै' इति भाष्य-प्रयोगः संगच्छते। एतेन गतिसमाससाहचर्येण कारकसमासस्य 'कर्तृकरणयोः' इति विहितसमास-स्यैव ग्रहणाद् दुष्टा धीर्येषाम्, वृश्चिकाद् भीः इत्यर्थकदुर्धीवृश्चिकभीशब्दयोर्यण् न प्राप्नोतीति मूलोक्तसमाधानप्रयासो व्यर्थ एवेत्यपास्तम्।

एवञ्च यदि सुबन्तात्तद्धितोत्पत्तिस्तदा कन्लुबन्तकुमारीशब्दे शाकलं भवत्येवेत्यप्यपास्तम् 'उत्तरपदत्वे' इति प्रत्ययलक्षणनिषेधेन पदत्वाभावात् प्रागुक्तोत्तरपदत्वस्यात्रापि सत्त्वात्।

शुद्धधियाविति—शुद्धा धीर्यस्येति विग्रहः। अत्र सत्त्वभूतार्थकधीशब्दार्थे विशेषणत्वात् शुद्धार्थस्य कारकगतित्वाभावः। असत्त्वभूतक्रियासम्बन्धिन एव कारकगतित्वम्। तच्चात्र नास्तीति भावः ( यदि तु शुद्धं ब्रह्म ध्यायतीति विग्रहस्तदा शुद्धपदार्थस्य ध्यानक्रियान्वयिकर्मकारकपूर्वपदत्वा-द्यण्भवत्येव )।

'शुद्धधियौ' इति परमधियाविति—परत्वं मातीति परमः। परत्ववाचिपरे कर्मण्युपपदे माधातोः 'आतोऽनुपसर्गे कः ( ३-२-३ ) इति कः। परमा = उत्कृष्टा धीरस्येति परमधीः। अत्रापि सत्त्वभूतधीविशेषणतया कारकत्वाभावः।

कथं तर्हीति—'दुर्ध्यायति' दुष्टा धी ध्यानं येषाम्, वृश्चिकाद् भीः, इत्यर्थकयोः दुर्धी-वृश्चिकभी-शब्दयोः दुःशब्दस्य ध्यानरूपासत्त्वभूतक्रियायोगेन गतित्वात् भीतिक्रियां प्रति वृश्चिकस्यापादानतया यणा भाव्यमित्याशङ्कायामाह-कथं तर्हीति। उच्यते इति-परिहार इति शेषः।

गतित्वमेवेति--'उपसर्गाः क्रियायोगे' ( १-४-५९ ) 'गतिश्च' ( १-४-६० ) आभ्यां प्रादीनामसत्त्वभूतक्रियायोगे गत्युपसर्गसंज्ञे विहिते। धीशब्दश्चात्र बुद्धिरूपगुणवाची। अत न तं प्रति दुरो गतित्वम् इति गतिपूर्वकत्वाभावान्न यण्। प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः इति वार्तिकेन। ननु लुप्तस्य स्थिताशब्दस्य क्रियाप्रवृत्तिनिमित्तकत्वात् तं प्रति दुरो गतित्वमस्त्येवेत्यत आह—यत्क्रियेति–यया क्रियया युक्ता प्रादयः तत्क्रियावाचकं प्रत्येव गत्युपसर्गसंज्ञका इत्यर्थः।

वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम्। वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा।

## न भूसुधियोः [ ६-४-८५ ]

नन्वेवमपि लुप्तं स्थिताशब्दं प्रति यद् गतित्वं तदादाय दुर्धीशब्दस्य गतिपूर्वकत्वमस्त्येवेति चेन्न, 'उपसर्गाः क्रियायोगे' इत्यत्र 'उपसर्गाः क्रियायाम्' इत्येव सूत्रमस्तु। अन्वेतीत्यस्याध्याहारेण प्रादय क्रियायामन्वयिन उपसर्गसंज्ञका गतिसंज्ञकाश्च स्युरित्यर्थलाभसम्भवे योगग्रहणं यदर्थं प्रादीनामन्वयस्तं प्रत्येव गत्युपसर्गसंज्ञका नान्यं प्रति।

तेन विगताः सेचका अस्मादिति 'विसेचको ग्राम' इत्यत्र 'उपसर्गात् सुनोति' ( ८-३-६५ ) इति षत्वं न, गमनक्रियां प्रत्येव वीत्यस्य गत्युपसर्गत्वं न सेचनक्रियां प्रति। तथैव प्रकृते स्थितिक्रियां प्रति गतित्वेऽपि ध्यानं प्रत्यगतित्वान्न 'दुर्धी' इत्यस्य गतिपूर्वकत्वम्। गतिकारकपूर्वस्यैवेष्यते, इति भाष्यस्य यद्गत्यर्थकारकार्थयोर्यद्वास्वयेन सह सम्बन्धस्तत्पूर्वकधातोरेव यणिष्यत इत्यर्थः।

तदाह--दुरित्यस्येति। वृश्चिकशब्दस्येति—वृश्चिकशब्दार्थस्येत्यर्थः। कुतो न विवक्षितमित्याह—बुद्धिकृतमिति—आरोपितमित्यर्थः। अपादानत्वं हि विभागावधित्वम्। वृक्षात्पर्णं पततीत्यत्र पर्णविभागे वृक्षस्यावधित्वमिव भयविभागे वृश्चिकस्यावधित्वं नास्ति। यतः संयोगपूर्वको हि विभागः। वृक्षे च पर्णसंयोगस्तदनन्तरं विभागः। न हि वृश्चिके भयस्य संयोगो द्रव्ययोरेव संयोगात्। भीतिश्च क्रिया।

अत एव सूत्रकृता 'भीत्रार्थानां भयहेतुः' इत्युक्तम्, नत्ववधिरिति। तदुक्तं भाष्ये 'भीत्रार्थानां भयहेतुः' ( १-४-२५ ) अयं योगः शक्योऽवक्तुम् य एष मनुष्यः प्रेक्षापूर्वकारी भवति। स पश्यति यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति, स बुद्धया सम्प्राप्य निवर्तते। यदि मां चौराः पश्यन्ति ध्रुवमस्य वधबन्धनादिक्लेशा इति स बुद्धया सम्प्राप्य निवर्तयति। तत्र 'ध्रुवमपायेऽपादानमित्येव सिद्धम्' इति।

एतेन 'विवक्षातः कारकाणि भवन्ति' इत्युक्तं भवति। यदि बुद्धिकृतौ संयोगविभागौ नारोप्येते तदा नापादानत्वमिति। आरोपस्य वक्तुरधीनत्वादपादानत्वाविवक्षायां सम्बन्धमात्रविवक्षया शेषे षष्ठीति षष्ठ्यन्तेन समासे कारकपूर्वकत्वं नास्तीति गतिकारकेतरपूर्वपदतया यणभावः।

नेहेति—'भीत्रार्थानाम्' इति सूत्रं तु हेतुत्वमकारकबोधे 'हेतौ' इति तृतीयाबाधनार्थम्। उपपदविभक्तिप्रकरणेऽकृत्वाऽत्र करणं तु कारकत्वप्रयुक्तस्वरविधानार्थम् 'वृश्चिकभयम्' इत्यत्र 'गतिकारकोपपदात् कृत्' ( ६-२-१३९ ) इति कृदुत्तरपदप्रकृतिस्वरः। एवञ्च हेतुत्वाविवक्षया सम्बन्धत्वेन विवक्षया षष्ठीसूत्रारम्भेऽपीत्यपि बोध्यम्।

वृश्चिकसम्बन्धिनीति—वृश्चिकसम्बन्धिनो चासौ भीश्चेति कर्मधारयसमासे 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योसंख्यानम्' इति वार्तिकेन पूर्वपदघटकसम्बन्धिनीशब्दस्य लोपः। एवञ्च वृश्चिकस्य भयसम्बन्धाभावान्नापादानकारकत्वमिति सूत्रकारमतेऽपि न दोषः।

सुष्ठु ध्यायतीति, शोभना धीर्यस्येति वा विग्रहे—सुधीशब्दो निष्पन्नः। न च शोभना धीर्यस्येत्यर्थे शोभनत्वस्य धीविशेषणतया गतित्वाभाव इति वाच्यम् प्रकर्षस्य धीशब्दार्थे विशेषणतया भासमानासत्त्वभूतध्यानक्रियाविशेषणतया गतित्वात्तेः।

ततोऽजादौ विभक्तौ 'एरनेकाचः' इति प्राप्ते 'न भूसुधियोः' ( ६-४-८५ ) इति। 'इको यणचि' इत्यतो यणिति, अचि इति चानुवर्तते। 'ओः सुपि' इत्यतः सुपीति। तदाह–एतयोरित्यादि 'अनन्तरस्य' इतिन्यायेन 'एरनेकाचः' 'ओः सुपि' इत्यनयोरेवायं निषेधः। अत्र सुपि इति वा

एतयोर्यण् न स्यादचि सुपि। सुधियौ, सुधिय इत्यादि। सखायमिच्छति सखीयति। ततः क्विप्। अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते 'क्वौ लुप्तं न स्थानिवत्' ( वा ४३१ )।

---

अनुवर्तते। तथा च सुध्युपास्ये निषेधप्रवृत्तिर्न। लोपाविति—'अतो लोपः' 'लोपो व्योर्वलि' इत्याभ्यामिति शेषः।

न च परत्वात् 'वेरपृक्तस्य' इति वेर्लोपे वल्परत्वाभावात् वलि लोपानापत्तिरिति वाच्यम्, 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन' इति वार्त्तिककारोक्तेः। यद्वा योगविभागात्सिद्धम्। तथा हि-'लोपो व्योर्वलि' ततः 'वेः' अत्र व्योरित्यनुवर्तते। 'वेः' प्रत्ययस्य ग्रहणम् तथा च विप्रत्ययान्तस्य व्योर्लोपः, इत्यर्थेन वेर्लोपेऽपि प्रत्ययलक्षणेन विप्रत्ययान्तत्वात् 'वेः' इति विभक्तेन व्योर्लोपः स्यात्।

ततः 'अपृक्तस्य' वेरित्यनुवर्त्तते। अपृक्तस्यानुनासिकस्य वेर्लोप इत्यदोषः। तदुक्तं भाष्ये—अथ-वैवं वक्ष्यामि—'लोपो व्योर्वलि'। ततो 'वेः' व्यतयोश्च व्योर्लोपो भवति। ततोऽपृक्तस्य। अपृक्तस्य च लोपो भवति—'वेरित्येव' इति। 'सुधियौ' इति न च सामासिकीं विभक्तिमाश्रित्य पदत्वात् 'लोपः शाकल्यस्य' इति यलोपः स्यादिति शङ्क्यम्, 'उत्तरपदत्वे च' इति प्रत्ययलक्षणप्रतिषेधात्।

आदिति—आदिना सर्वाजादिविभक्तिसंग्रहः। प्रधीवद्रूपाणि। इयङेव विशेषः। वृत्तौ अचीति वस्तुस्थितिरनजादौ यणः प्रसक्त्यभावात्। सुपि किम्—सुधीभिरुपास्यः 'सुध्युपास्यः।' वस्तुतः सुपीति नानुवर्त्तनीयम्। न च 'सुध्युपास्यः' इत्यत्र निषेधापत्तिः, अजादौ प्रत्यये एव निषेधप्रवृत्तेः।

प्रकृते 'उप' इत्यस्याप्रत्ययत्वात् सुधिया उपास्यः सुध्युपास्य इत्यत्र तु अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य प्राप्तस्य 'एरनेकाचः' इति यणो 'न भूसुधियोः' इति निषेधेऽपि 'इको यणचि' इति यण् भवत्येव, अनन्तरस्य इति न्यायेन 'एः' 'ओः' इत्यनयोरेव निषेधात्। स्थानिवत्त्वादिति—एवञ्च यणादेशे यल्लोपे स्थानिवत्त्वनिषेधाद्यल्लोपे सख् इति स्यात्।

क्वौ लुप्तमिति—ननु क्वौ लोपकर्मीभूतं न स्थानिवदित्येवार्थः, लुपधातोः सकर्मकत्वात् 'तयोरेव' इति कर्मणि क्तविधानात्। तथा च लवमाचष्टे 'लौः' इत्यत्र क्वौ लोपकर्मणो णेः स्थानिवत्त्वाभावेऽपि यावल्लोपस्य स्थानिवत्त्वेन ऊठ् न प्राप्नोति चेन्न, लुप्तपदे 'नपुंसके भावे क्तः' (३-३-११४) इति भावे विधानेन क्वौ लोपे सति अजादेशो न स्थानिवदित्यर्थेन अल्लोपस्यापि स्थानिवत्त्वनिषेधात्।

नन्वेवं 'बेभिदि कुलानि' इति न सिध्येत्। बेभिद्यतेः क्विपि अल्लोपे यलोपे च क्वौ लुप्तत्वेन अल्लोपस्य स्थानिवत्त्वाभावे झलन्तलक्षणनुमापत्तेरिति चेन्न, 'क्वौ लुप्तं न स्थानिवत्' इत्यस्यानित्यत्वात्। तदुक्तं भाष्ये—नैवं विज्ञायते क्वौ लुप्तं न स्थानिवदिति। कथं तर्हि क्वौ विधिं प्रति न 'स्थानिवदिति। अस्योदाहरणं लवमाचष्टे 'लौ' इति। क्वौ लुप्तं न स्थानिवत्' इत्यस्य सखीयतेः सख्युरिति स्यादिति सूत्रभाष्योक्तम्, गोमत्यतेर्गोमानिति उगित्त्वमिति सूत्रभाष्योक्तम्, यथन्तपदेः पादः पदिति येन विधिरिति सूत्रभाष्योक्तं बोध्यम्।

अत्रेदं बोध्यम्—'न पदान्त' इति सूत्रे भाष्ये 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्' इति वार्त्तिकमुक्तम्। तस्यैकदेशानुवादोऽयं क्वौ लुप्तं न स्थानिवत् इत्यादि। 'लुका लुप्ते न स्थानिवत्' पञ्चेन्द्राण्यो देवता अस्येति 'पञ्चेन्द्रः' दशेन्द्रः, पञ्चाग्निः। एषु 'साऽस्य देवता' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। ततो ङीपः 'लुक्तद्धितलुकि' इति लुक्। तस्य स्थानिवत्त्वाभावेन आनुक् न श्रूयते, पञ्चाग्निरित्यत्र ऐकारो न श्रूयते। यदि लुकि स्थानिवत्त्वं स्यात्तदा ङीषः सत्त्वादानुगैकारादेशयोर्निवृत्तिर्न स्यात्। ङीपो लुकः परनिमित्तकत्वं तु स्थानिद्वारा बुद्धिपरिकल्पितत्वेन बोपपादनीयम्।

एकदेशविकृतस्यानन्यत्वयाऽनङ्णित्त्वे, सखा, सखायौ, सखायः।

---

न चात्र स्थानिवत्त्वनिषेधाभावेऽपि 'भस्याढे तद्धिते' इति पुंवद्भावेनानुगैकारयोर्निवृत्तिः, प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाभावात्, पुंसि इन्द्रत्वम्, स्त्रियां तु इन्द्रसम्बन्धः इति प्रवृत्तिनिमित्तिभेदात्। यदि इन्द्रसम्बन्धमूलकः स्त्रियामिन्द्रत्वाऽरोपस्तदा 'न लुमते' ति निषेधाद् यजादिस्वादिपरत्वाभावेन भत्वाभावाच्च पुंवद्भावः।

अथवा कीलुकः स्थानिवत्त्वाभावेन 'यस्येति च' इति अल्लोपो न। स्थानिवत्त्वे तु ईकारपरत्वेन भत्वादकारलोपापत्तिः। ये तु 'न पदान्त' इति सूत्रे वर ई इति प्रश्लिष्य ईकारादेशो न स्थानिवदिति वर्णयन्ति तेषां लुग्ग्रहणं न कर्त्तव्यम्।

उपधात्वनिमित्तके कार्य्ये न स्थानिवत्। 'पारिखीयः' इत्यत्र परिखाया अदूरभव इत्यर्थे 'अदूरभवश्च' (४-२-७०) इति चातुरर्थिकेऽणि आकारलोपे तस्य स्थानिवत्त्वाभावात् 'वृद्धाद्वृकेकान्तखोपधात्' इति छप्रत्ययः सिध्यति। स्थानिवत्त्वे खोपधत्वाभावाच्छो न स्यात्।

चङ्परनिर्ह्रासे न स्थानिवत्। चङ्परे णौ यो ह्रस्वः स चङ्परनिर्ह्रासस्तत्र कर्तव्ये न स्थानिवत्। वदधातोर्यन्ताण् णिचि 'वादितवन्तं प्रयोजितवान्' 'अवीवदद्वीणां परिवादकेन' योऽसौ णौ णिर्लुप्यते तस्य स्थानिवत्त्वनिषेधात् 'णौ चङ्युपधायाः' इति उपधाह्रस्वत्वं सिध्यति। उपधात्वनिमित्तकेन स्थानिवदित्यनेन तु न सिद्धिः, पटुमाचष्टे 'पटयति' इत्यादौ स्थानिवत्त्वनिषेधाभावाय उपधात्वनिमित्तकप्रत्ययविधावेव स्थानिवत्त्वनिषेधस्य भाष्ये उक्तत्वात्।

ननु 'णौ चङ्युपधायाः' इति सूत्रे णिपदं सामान्य ( णित्व ) परम्, णिसमुदाये णित्वमारोप्यते इति णि-णि-इति समुदायस्यापि णिग्रहणेन ग्रहणात् स्थानिवत्त्वेऽपि ह्रस्वसिद्धिरिति चेत्तदा वारि आख्यत् 'अवीवरत्' इत्यत्र ह्रस्वकर्त्तव्ये इल्लोपस्य स्थानिवत्त्वनिषेधादुपधाह्रस्वत्वं सिध्यति। नचात्र 'नाग्लोपि' (७-४-२) इति ह्रस्वे निषेधः, परत्वाद् वृद्धौ सत्यां टिलोपात्।

अत एव 'सुखदमित्र' (३-१-२१) इति सूत्रे इलिकल्योरदन्तत्वनिपातनं संगच्छते। अन्यथा वृद्धेः पूर्वमिल्लोपेऽग्लोपित्वादेव सन्वद्भावदीर्घयोरभावः सिध्यति। वृद्धौ सत्यां टिलोपस्वीकारे तु ऐकारस्य लोपे अग्लोपित्वं न स्यादित्यग्लोपित्वाय अदन्तत्वे वृद्धौ सत्यामपि आलोपेऽग्लोपित्वात्क्षतिः। कुत्वे न स्थानिवत्।

यन्तादर्चयतेर्घञि औणादिके 'कृदाधारार्चिकलिभ्यः कः' ( उ. ३ पा. ४० सू' ) इति कप्रत्ययेनाणिल्लोपस्य स्थानिवत्त्वनिषेधात् 'चजोः कुः' (७-३-५२) इति, 'चोः कुः' (८-२-३०) इति वा कुत्वं सिध्यति। 'अर्कः' इत्यत्र 'पूर्वत्रासिद्धे'=त्रिपादीस्थे कार्य्येऽजादेशो न स्थानिवत्। 'धत्से, धद्ध्वे, धद्ध्वम्, इत्यत्र आल्लोपस्य स्थानिवत्त्वनिषेधात् 'एकाचो बशो भष्' इत्यनेनैव झषन्तत्वाद् भष्भावसिद्धे 'दधस्तथोश्च' इति सूत्रे ध्वे इत्यस्यानुवृत्तये चग्रहणं न कर्तव्यम्।

अत्र तत्त्वबोधिनीकाराः—किं चङ्परनिर्ह्रासोपधानां ग्रहणं वार्तिके आवश्यकम्। लुक ईकारप्रश्लेषेण कुत्वस्य 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्यनेन च गतार्थत्वात्। वस्तुतस्तु 'वञ्च संस्कारगत्योः, क्षजि कृच्छ्रजीवने' इति चौरादिकवञ्जिक्षजिभ्यां घञि वाग:, क्षङ्गः, इत्यत्र 'चजोः कुः' इति कुत्वे णिल्लोपस्य स्थानिवत्त्वनिषेधाय कुग्रहणस्यापि वार्तिके सन्निवेश आवश्यक इत्युपाध्यायाः।

अनङ्णित्वे इति— अस्य भवत इति शेषः। ननु ह्रस्वान्तसखिशब्दस्य विधीयमाने अनङ्णित्वे कथं दीर्घान्तस्य भवेतामित्याशङ्कायामाह—'एकदेशेति—एकदेशविकृतमनन्यवत्' इति 'प्राग्दीव्यतोऽण्' (४-१-८३) इति विकृतनिर्देशबोधितलौकिकन्यायेन दीर्घस्यापि ग्रहणादिति भावः। गौणमुख्यन्यायः, 'अभिव्यक्तपदार्था ये' इति न्यायश्च पदकार्यविषय एवेत्युक्तं प्राक्।

हे सखीः। अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते ततोऽपि परत्वात् 'सख्युरसंबुद्धौ' ( सू २५३ ) इति प्रवर्तते, सखायम्, सखायौ। शसि यण्, सख्यः। सह खेन वर्तत इति सखः, तमिच्छतीति सखीः। सुखमिच्छतीति सुखीः। सुतमिच्छतीति सुतीः। सख्यौ। सुत्यौ। 'ख्यत्यात्—' ( सू २५५ ) इति दीर्घस्यापि ग्रहणादुकारः, सख्युः, सुख्युः, सुत्युः। लूनमिच्छतीति लूनीः। क्षाममिच्छतीति क्षामीः। प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोर्यण्। नत्वमत्वयोरसिद्धत्वात् 'ख्यत्यात्—' ( सू २५५ ) इत्युत्वम्, लून्युः, क्षाम्युः, प्रस्तीम्युः। शुष्कीयतेः क्विप्। शुष्कीः। इयङ्, शुष्कियौ, शुष्कियः। ङसिङसोः शुष्किय इत्यादि। इति ईदन्ताः॥

---

हे सखीरिति—अङ्यन्तत्वान्न सुलोपः। क्विबन्तत्तया न नदीकार्य्यम्। यणि प्राप्ते इति—एरनेकाच इत्यनेन। इति प्रवर्त्तते इति—एकदेशविकृतन्यायेन दीर्घस्यापि ग्रहणादित्यर्थः। शसि यणिति—पूर्वसवर्णदीर्घमपवादत्वाद् बाधित्वा 'एरनेकाचः' इति यणित्यर्थः।

स इ खेनेति—खमाकाशं मन्न खकारो वा तेन सह वर्तते इत्यर्थे 'तेन सहेति तुल्ययोगे' ( २-२-२८ ) इति बहुव्रीहिः। 'वोपसर्जनस्य' इति सादेशः। तमिच्छतीति—सखमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' ( ३-१-८ ) इति क्यचि 'क्यचि च' ( ७-४-३३ ) इति अस्य ईत्वे 'सनाद्यन्ताः' इति धातुत्वात् क्विपि अल्लोपयलोपयोः सखीशब्दो निष्पन्नः। एवं सुखं सुतं चेच्छतीति विग्रहे सुखी-सुतीशब्दोऽपि बोद्धव्यः। सखीरिति—सखीः, सुखीः, सुतीः इत्यत्र अङ्यन्तत्वान्न सुलोपः। सह खेन वर्तते इत्यर्थकस्य सखीशब्दस्य 'सख्युरसम्बुद्धौ' इत्यादिषु न ग्रहणम्, लाक्षणिकत्वात्—प्रतिपदोक्तपरिभाषया प्रतिपदोक्तस्यैव ग्रहणात्।

दीर्घस्यापीति—एतदर्थमेव कृतयणिर्देशः। ननु अतिसखेः, भूपतेः, इति गुणविषयं वारयितुं यणा निर्देश एवमपि दीर्घे प्रवृत्तिरवारणीया। न हि ह्रस्वे यथा भाष्यं न दीर्घे इत्यत्र प्रमाणमस्ति। सौत्रस्य विकृतनिर्देशस्य अव्याप्त्यतिव्याप्त्युभयवारकत्वेन सारवत्त्वलाभे तथैवौचित्याद् भाष्यसम्मतत्वाच्च।

तथा च भाष्यम्—'सखीयतेः पतीयतेरप्रत्ययः' सख्युः, पत्युः, लूनीयतेरप्रत्ययः लून्युः, एवं पून्युः' इति। लू भू छेदने, क्षै क्षये, स्त्यै शब्दसंघातयोः, शुष शोषणे, डुपचष् पाके, एभ्यः क्ते ल्वादिभ्यश्च, ( ८-२-४४ ) क्षायो मः, ( ८-२-५३ ) प्रस्त्योऽन्यतरस्याम्, ( ८-२-५४ ) इति तस्य नत्वमत्वे शुषः कः, पचो वः, इति कत्ववत्वे रूपाणि।

प्रस्तीमीरिति—स्त्यै इत्यस्यात्वे क्ते यत्वे 'स्यः प्रपूर्वस्य' ( ६-१-२३ ) इति सम्प्रसारणे 'सम्प्रसारणाच्च' ( ६-१-१८ ) इति पूर्वरूपे 'हलः' इति सम्प्रसारणस्य दीर्घे पूर्ववत्क्यजादौ सखीः, सुतीवद्रूपाणि। ङसिङसोर्यणिति—'एरनेकाचः' इत्यनेन। असिद्धत्वादिति—'पूर्वत्रासिद्धम्' इत्यनेन। एवञ्च त्यात्परत्वात् 'ख्यत्यात्परस्य' इत्युत्वम्। तथा च लून्युः, क्षाम्युः, प्रस्तीम्युः, इति सिध्यति।

शुष्कीयतेरिति—शुष्कीयधातोरित्यर्थः। 'इक्श्तिपौ धातुनिर्देशे' इति श्तिबन्तस्य पञ्चम्या रूपम्। शुष्कमात्मन इच्छतीत्यर्थे क्यजन्तात् शुष्कीयधातोः क्विपि अल्लोपयलोपयोः शुष्कीरिति। सुखीसुतीत्यादिशब्दवत् शुष्कीयशब्दस्य रूपाणि। संयोगपूर्वकेकारान्तत्वाद्यण् न, किन्तु इयङेवेति विशेषः।

इयङि अल्लोपस्याभीयासिद्धत्वं तु न, समानाश्रयत्वाभावात्। क्विपि अल्लोप इयङादेशस्तु अजादौ प्रत्यये इति व्याश्रयत्वम्।

अत एव कत्वस्यासिद्धत्वेन तीशब्दसत्त्वेऽकृतयणादेशाभावात् 'ख्यत्यात्परस्य' इत्युत्वं न। इति ईदन्ताः। अथ उदन्ताः—

शंभुर्हरिवत् । एवं विष्णुवायुभान्वादयः ।

तृज्वत्क्रोष्टुः । [ ७-१-९५ ]

---

शम्भुरिति—शम्=सुखं कस्यां वा भावयतीत्यर्थे 'मितद्र्वादिभ्य उपसंख्यानम्' इति वार्त्तिके 'विप्रसंभ्यो ड्वः' ( ३-२-१८० ) इत्यतो डुरिति सम्बध्यते । अन्तर्भावितण्यर्थाद्धातो र्ण्यन्तार्थे लाक्षणिकादिति यावत् डुप्रत्यये डित्त्वसामर्थ्यादभस्यापि टेर्लोपे सिध्यति । यत्तु शम्भवत्य- स्मादिति अपादाने डुप्रत्यये शम्भुरिति तद्बाहुलकात्कथञ्चित्समाधेयम् । हरिवदिति—शम्भुशब्दे पूर्वसवर्णदीर्घे ऊकारः, गुणस्त्वोकारः, अव् इत्यादयो विशेषा आन्तरतम्याद् बोद्धव्याः ।

'तृज्वत्क्रोष्टुः'—( ७-१-९५ ) इति । 'क्रुश आह्वाने रोदने च' इत्यतः क्रोशति-आह्वयति रोदिति वेत्यर्थे 'सितनिगमिमसि' ( उ. १ पा. ६९ सू ) इति तुन्प्रत्यये लघूपधगुणे 'व्रश्चभ्रस्ज' ( ८-२-३६ ) इति शस्य षकारे क्रोष्टुशब्दः सिध्यति । क्रुशधातोस्तृचि तु क्रोष्टृशब्दः । द्वावपि शृगालवाचिनौ । तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियाञ्च तृजन्त एव । तृतीया- दावच्युभयम् । अन्यत्र तु तुन्नन्त एवेति फलतः प्रयोगनियमार्थं न तु शाब्दीयन्यायेन । तृज्वत्क्रोष्टुः, विभाषा तृतीयादिष्वचि, स्त्रियाञ्च, इति त्रिसूत्री आरभ्यते ।

सूत्रे क्रोष्टुरिति तुन्नन्तात्प्रथमा ।

तृज्वदिति—तृतीयान्ताद्वतिः । न च 'तृज्वत्क्रोष्टुः' इति तृजन्तेन भाव्यम् , शृगालवाचिन एव सूत्रे ग्रहणादस्य च शब्दस्वरूपार्थकत्वात् । यद्वा सूत्रे तृजन्तप्रकृतिकषष्ठ्यन्तमेव ।

तृज्वदिति षष्ठ्यन्ताद्वतिः तृजन्तस्य यद्रूपं तदस्य भवतीति । क्रोष्टुशब्दान्तं यदङ्गं तदवयवस्य निर्दिश्यमानस्य तृजन्तादेश इत्येवार्थः ।

अत एव 'अङ्गस्य क्रोष्टुस्तृज्वद् भवति' इति, 'आन्तरतम्यात्तु सिद्धम् । क्रोष्टुर्यदन्तरतम स्तद्भविष्यति' इति च भाष्यं सङ्गच्छते । किञ्च स्थान्यादेशभाव एवात्र ।

अत एव 'तुन्नन्तस्य तृजन्त आदेशो भविष्यति' इति, 'आन्तरतम्यात्तु सिद्धम्–'क्रोष्टुर्यद- न्तरतमं तद्भविष्यति ।' इति च भाष्योक्तिः संगच्छते ।

पदमञ्जर्याम् हरदत्तोऽपि 'क्रोष्टुरिति सूत्रे षष्ठीनिर्देशात्' इति, तृज्वद्भवतीति । तृच इव तृज्वत् । 'तत्र तस्येव' ( ५-१-११६ ) इति षष्ठी समर्थाद्वतिः । तृजन्तस्य यद्रूपं तदस्य भवतीति' इति । प्रत्याख्यातञ्च सूत्रत्रयं भाष्यकृता ।

तथा हि–'तृज्वद्वचनमनर्थकं तृज्विषये तृचो मृगवाचित्वात्'* । तुनो निवृत्त्यर्थं तर्हीदं वक्तव्यम् । तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात् । तुनो निवृत्त्यर्थमिति चेदन्तरेणापि वचनात्सिद्धं यथाऽन्य- त्राप्यविशेषविहिताः शब्दा नियतविषया दृश्यन्ते । तद्यथा—घरति ( गृ घृ सेवने भौवादिकः ) रस्मायविशेषेणोपदिष्टः स घृतं घर्मं, घृणा ( घृणिः ) इत्येव विषयः । रशिरस्मायविशेषेणोपदिष्टः स राशिः रश्मिः रशना इत्येवं विषयः लुशिरस्मायविशेषेणोपदिष्टः स लोष्ट इत्येवं विषयः ।

इदं तर्हि प्रयोजनम् 'विभाषा तृतीयादिष्वचि' इति । वा वचनानर्थक्यम्, स्वभावसिद्धत्वात । स्वभाव एव तृतीयादिष्वजादिषु विभक्तिषु तृजन्तं तुन्नन्तं च मृगवाचि इति' इति ।

यद्यपि भाष्यकृता प्रत्याख्यातम्, तथाऽपि लक्षणैकचक्षुष्काणां सूत्रमन्तरा कथं ज्ञानं स्यात् कुत्र के प्रयुज्यन्ते इति । अतो लक्षणैकचक्षुष्काणां कृते सूत्रत्रयी सार्थकीत्युपाध्यायाः ।

सप्त अतिदेशाः सन्ति—तथा हि १—निमित्तातिदेशः–'पूर्ववत्सनः' (१-३-६२) येन निमित्तेन सनः प्रकृतिभूतधातोरात्मनेपदं भवति तन्निमित्ते सन्नन्तेऽतिदिश्यते । चिकीर्षति, चिकीर्षते इत्यत्र सन्नन्ते ञित्वस्यातिदेशादुभयपदम् । स्वातन्त्र्येणात्मनेपदविधाने तु क्रियाफलस्य परगामित्वविव- क्षायामप्यात्मनेपदं स्यात् । न चैवं सति पूर्ववद्ग्रहणवैयर्थ्यम्, तस्य परस्मैपदप्रकृतिरवयोग्यप्रकृतिक-

समन्तादात्मनेपदं मा भूदेतदर्थं चारितार्थ्यात्। सनः पूर्वं प्रकृतेर्यत्कार्यं तत्सामान्यातिदेशस्तु न 'चिक्रंसते' इत्यादाविडापत्तेः, आत्मनेपदप्रकरणपाठविरोधापत्तेश्च।

२—व्यपदेशातिदेशः। व्यपदेशः=मुख्यव्यवहारः। 'आद्यन्तवदेकस्मिन्' (१-१-२१) इत्यत्र। 'प्रत्यय आद्युदात्तः' इत्यर्थे अनेकाच्प्रत्यये तव्यादौ तकाराकारे आद्यत्वं मुख्यम्। तस्य 'औपगवः' इत्यादावेकाच्प्रत्यये आद्यत्वस्यातिदेशेनाद्युदात्तत्वम्। एवं रामशब्दाकारवृत्तिमुख्यान्तत्वस्य 'आभ्याम्' इत्यकारेऽतिदेशेन दीर्घसिद्धिः। क्वचिदादित्वान्तत्वयोरुभयोरेकस्मिन्नतिदेश इति 'पृथते' इत्यादौरित्वसिद्धिः।

३—तादात्म्यातिदेशः। तादात्म्यम्=अभेदः।

तादात्म्यञ्च—तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्। ननु भेदाभेदयोर्विरोध इति चेन्न भेदस्य वास्तविकत्वेन, अभेदस्यारोपितत्वेन विरोधाभावात्। भेदसहिष्णुरभेद इति यावत् इति पञ्चोलिनः।

'सुबामन्त्रिते' ( २-१-२ ) इत्यत्र 'परशुना वृश्चन्' इत्यस्मिन् 'परशुना' इत्यस्य वृश्चन् शब्दाभेदत्वे पदात्परत्वाभावेन 'परशुना वृश्चन्' इति समुदायस्यामन्त्रितत्वेन 'परशुना' इत्यस्यामन्त्रिताद्युदात्तत्वम्।

४—रूपातिदेशः—रूपम्=आनुपूर्वी तस्यातिदेशः। 'तृज्वत् क्रोष्टुः (७-१-९५) अत्र 'क्रोष्टुः' शब्दे क्रोष्टृत्वातिदेशः। यत्र तृजन्तत्वरूपस्य यन्निमित्तं तस्य तद्व्यवहारस्य वा अतिदेशे ( तृच्त्वातिदेशे ) तृच्शब्दमुच्चार्य विहितकार्यस्यैवापत्तौ जसि गुणावादेशयोः कृतयोस्तृजन्तोद्देश्यकः 'अप्तृन्' ( ६-४-११ ) इति दीर्घ एव स्यात्। स्वौजसादिषु चानङ्गुणौ न स्याताम्, तयोस्तृच्शब्दमुच्चार्य विहितत्वाभावात्।

न च तृच्छब्दमुच्चार्य विहितकार्यस्य तृतीयादौ स्त्रियाञ्चाभावेन 'विभाषा तृतीयादिष्वचि' ( ७-१-९७ ) 'स्त्रियाञ्च' ( ७-१-९६ ) इति सूत्रद्वयसामर्थ्यात् कार्यसामान्यस्य ज्ञापनान्न दोष इति वाच्यम्, तत्सामर्थ्येन भाष्ये रूपातिदेशोक्त्या च रूपातिदेशस्यैव ज्ञापयितुं युक्तत्वात्। तादात्म्यातिदेशस्त्वसम्भवी, उभयोरेकार्थत्वेन सह प्रयोगाभावात्।

५—शास्त्रातिदेशः। 'कालेभ्यो भववत्' ( ४-२-३४ ) अनेन 'तत्र भवः' ( ४-३-५३ ) इत्यधिकारे यच्छास्त्रम् 'कालाट् ठञ्' ( ४-३-११ ) इति, 'प्रावृष एण्यः' ( ४-३-१७ ) इति 'साऽस्य देवता' इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते। वत्करणं शास्त्रातिदेशबोधनार्थम्। तेन यस्माद्यो विहितस्तस्मात्स एव भवति नान्यः। ततश्च 'मासो देवताऽस्येति मासिकम्, प्रावृड् देवताऽस्येति प्रावृषेण्यम्, इत्येव। यदि कार्यातिदेशः स्यात्तदा मासशब्दादपि एण्यः स्यात्।

६—कार्यातिदेशः—'स्थानिवदादेशः' ( १-१-५६ ) स्थानिनि यत्कार्यं तदादेशेऽपि भवतीति भावातिदेशः प्रसिद्ध एव।

७—अर्थातिदेशः—'स्त्री पुंवच्च' ( १-२-६६ ) यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत्। गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः शिष्यते 'तस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्यार्थः पुंवत्= पुमानिव स्यादित्यर्थः। गर्गस्यापत्यं स्त्री 'गार्गी' गर्गस्य युवापत्ये 'गार्ग्यायणौ' गार्गी च गार्ग्यायणौ च 'गर्गाः' 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२-४-६२) इति बहुष्वर्थेषु तद्राजस्य लुक् स्यात् तदर्थं ( अपत्यार्थं ) कृते बहुत्वे, न तु स्त्रियाम्। पुमर्थवाचकत्वेन बहुषु यञो लुक्।

प्रकृते क्रोष्टुशब्दस्य नित्प्रत्ययान्तत्वादाद्युदात्तत्वेनान्तोदात्तः क्रोष्टृशब्दोऽतिदिश्यते। अत एव तृज्वदिति सचकारः पाठः 'चितः' अन्तोदात्तत्वं यथा स्यात्। तेन 'क्रोष्टा' इत्यादौ 'उदात्तयणो हल्पूर्वात्' ( ६-१-१७४ ) इति विभक्तेरुदात्तत्वं सिध्यति। तृज्वदित्यत्र ऋकारस्योपस्थित्या तद्विशिष्टं क्रोष्टु इति अतिदिश्यते। अर्थकृदान्तरतम्याच्च।

'क्रोष्टुस्तृजन्तेन तुल्यं वर्तते, असंबुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः।

ऋतो ङिसर्वनामस्थानयोः [ ७-३-११० ]

ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्। इति प्राप्ते।

ऋदुशनस्पुरुदंसोऽनेहसां च [ ७-१-९४ ]

ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे।

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् [ ६-४-११ ]

अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्—'उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानां चेद्भवति दीर्घस्तर्हि नप्त्रादीनामेव।

---

'तृज्वत् क्रोष्टुः' इत्यत्र प्रत्ययग्रहणपरिभाषया तृजन्तं तदाद्युपतिष्ठते 'क्रोष्टुः' इत्यस्य प्रथमान्तत्वे तृज्वदित्यत्र 'तेन तुल्यम्' (५-१-११५) इति तृतीयान्ताद्वतिः। 'इतोऽत्सर्वनामस्थाने' ( ७-१-८६ ) इत्यतः 'सर्वनामस्थाने' इति, 'सख्युरसम्बुद्धौ' ( ७-१-९२ ) इत्यतः 'असम्बुद्धौ' इति चानुवर्तते। तदाह—क्रोष्टुशब्दस्तृजन्तेनेत्यादि। फलितार्थमाह—क्रोष्टुशब्दस्य स्थाने इति। 'क्रोष्टुः' इत्यस्य षष्ठ्यन्तत्वे तु शाब्द एवायमर्थः।

'क्रोष्टृ स्' इति स्थिते 'ऋतो ङिसर्वनामस्थानयोः' ( ७-३-११० ) इति। 'ह्रस्वस्य गुणः' इत्यतो गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतम् ऋत इत्यनेन विशेष्यते। तदन्तविधिस्तदाह—ङौ सर्वनामेत्यादि।

'ऋत्' इति दीर्घान्तानुकरणे गुणवारणाय तपरग्रहणम्। गुणे प्राप्ते 'ऋदुशनस्पुरुदंसोऽनेहसाञ्च' इति। सख्युरसम्बुद्धौ' इत्यतः 'असम्बुद्धौ' इति 'अनङ् सौ' इत्यतोऽनङिति चानुवर्त्तते। अङ्गस्येत्यधिकृतम् ऋदादिभिर्विशेष्यते। तदन्तविधिश्च। तदाह—ऋदन्तानामिति। उशनसादीनामिति—उनशसाद्यन्तानामित्यर्थः। अङ्गानामिति शेषः। उशनाः=शुक्राचार्यः, पुरुदंशाः = मार्जारः, अनेहाः = कालः, नप्ता = पौत्रो दौहित्रो वा। 'जन्यजन्यः पुमान् नप्ता' नेष्टा= अध्वर्युगणीय ऋत्विक्। पोता=ब्रह्मगणीय ऋत्विक्। होता=ऋग्वेदीय ऋत्विक्। प्रशास्ता=ऋत्विक्। अनङित्यत्र ङकार इत्। नकाराकार उच्चारणार्थः। 'ङिच्च' इति परिभाषयाऽन्तस्यादेशः। 'क्रोष्टन् स्' इति दशायाम्।

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ( ६-४-११ ) इति। 'नोपधायाः' ( ६-४-७ ) इत्यत उपधाया इति 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रञ्चानुवर्तते। तदाह—अबादीनामिति—'तुरिष्ठेमेयस्सु' इतिवत् 'तृ' ग्रहणेनैवोभयोर्ग्रहणे सिद्धे तृन्तृचोर्भेदेनोपादानं ज्ञापयति—'क्वचित्सामान्योक्तावपि विशेष एव गृह्यते' इति।

तेन 'न कोपधायाः' ( ६-३-३७ ) इत्यत्र सामान्योक्तावपि कृत्तद्धितयोरेव ग्रहणं न ककारमात्रस्य 'तेन पाका भार्या यस्य स पाकभार्यः' इत्यत्र न पुंवद्भावनिषेधः। पाकशब्दः प्रथमवयोवाची। वयोवाचकङीपं बाधित्वाऽजादित्वाट् टाप्। इति 'कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम्' इति नापूर्वम्।

अन्ये तु 'तृ'मात्रग्रहणेनैव सिद्धे तृन्तृचोर्भेदेनोपादानम् 'अवंशास्तृ' इत्यस्य व्यावृत्तये। यद्यप्यर्थवद्ग्रहणपरिभाषयैव तद्व्यावृत्तौ सिद्धायां न तत्फलं भवितुमर्हति। तथाप्यर्थवद्ग्रहणपरिभाषया अनित्यज्ञापनार्थमेव भेदेनोपादानम्। तेन 'अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति सिद्धमित्याहुः।

तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव, 'समर्थ—' ( सू ६४७ ) सूत्रे 'उद्गातारः' इति भाष्यप्रयोगात्। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ। क्रोष्टून्।

---

नियमार्थमिति—अत्र सूत्रे नप्त्रादयः सर्वे शब्दा औणादिकतृन्तृजन्ताः। तथा हि—'तृन्-तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' ( उ. २पा. ९४-५९सू. ) शंसेः क्षदादिभ्यश्च क्रमात् तृन् तृचौ स्त=स्तौ चानिटौ। शंसु स्तुतौ तृन् शंस्ता, शंस्तारौ, क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च अनुदात्तेत्—'वृक्ये चक्षदानम्' इति माम्नानात्, उक्षाणं वा वेहतं वा क्षदन्ते, इति क्षन्ताच। 'क्षद संवृत्तौ सौत्रो धातुः' इति श्री दयानन्दः। तृच् क्षत्ता, क्षत्तारौ, प्रशास्तारौ, नप्त्रादित्वाद्दीर्घः।

'क्षत्ता स्यात् सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे'। इति

प्रशास्तीति प्रशास्ता, प्रशास्तारौ। 'नप्तृनेष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ' ( ३-२ पा. ६० सू. ) एते दश निपात्यन्ते। न पत्तान्ति नरके पितरोऽनेनेति नप्ता=पौत्रो दौहित्रो वा। नञः प्रकृतिभावस्तृच् टिलोपः। हरदत्तस्तु नमतेस्तृचि मस्य पत्वं निपात्यते। नमतीति, 'नप्ता' इत्याह। णीञ् प्रापणे तृचः षुक् गुणश्च नेष्टा अध्वर्युगणीय ऋत्विक्। त्विष दीप्तौ त्वष्टा इकारस्याकारः। 'त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी।

हु दानादनयोः, होता=ऋग्वेदीय ऋत्विक्, पोता ब्रह्मगणीय ऋत्विक्। भ्राजृ दीप्तौ जलोपः भ्राता। जायां मानयतीति, जायया मान्यते वा जामाता=दुहितृपतिः। जायाशब्दस्य जादेशः। मान पूजायां नलोपः। मानयति मान्यते वा माता, नलोपः, पाति रक्षतीति पिता। आकारस्येकारः। दुह प्रपूरणे दोग्धि=पूरयति मनोरथानिति दुहिता=पुत्री। दूरे हिता दुहिता इति यास्कः। इह गुणाभावश्च निपात्यते। एवञ्च न प्त्रादीनां तृन्तृजन्तत्वेनैवोपधादीर्घत्वे सिद्धे नप्त्रादिग्रहणं नियमस्य सजातीयापेक्षत्वेन 'उणादिनिष्पन्नानां तृन्तृजन्तानामुपधादीर्घश्चेत्तर्हि नप्त्रादीनामेव नान्येषाम्' इति। तेनोणादिनिष्पन्नानां धात्रादीनां दीर्घः सिध्यति, उणादिनिष्पन्नानां पित्रादीनाञ्च दीर्घाभावः सिद्धः। संज्ञाशब्दानाञ्च न।

वस्तुतस्तु 'तृन्' ( ३-२-१३५ ) सूत्रभाष्यदृष्ट्या नप्तृ-प्रशास्तृशब्दौ विहाय नेष्ट्रादय एतत्सूत्रोपात्ता पञ्चशब्दास्तृन्सूत्रस्थभाष्यवार्तिकनिष्पन्नाः। तथा हि—'तृन् विधावृत्विक्षु चानुपसर्गस्य होता पोता।' इति एतेन ऋत्विग्विशेषावेताविति सूचितम्।

अनुपसर्गस्येति किमर्थम्। प्रशास्ता, प्रतिहर्ता इति। अत्रौणादिकस्तृजेव। 'नयतेः षुग्वक्तव्यः तृश्च प्रत्ययो वक्तव्यः। नेष्टा 'नवा' वक्तव्यः, किं कारणं धात्वन्यत्वात्। धात्वन्तरं नेषतिः 'नेषतुनेष्टादिति' प्रयोगो दृश्यते—'इन्द्रो वस्तेन नेषतु। गावो नेष्टात्' इति। 'त्विषे र्देवताया मकारश्चोपधाया अनिदत्वञ्च'''त्वष्टा।

किं पुनरिदं त्विषेरेवानिदत्वम्, नेत्याह। यत्रानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैवशेषोऽनिट्त्वं चेति। 'क्षदेश्च युक्तेः' क्षदेश्चयुक्ते तृन्वक्तव्यः क्षत्ता। 'छन्दसि तृच' छन्दसि तृच् च तृन् च वक्तव्यः क्षतृभ्यः, 'संगृहीतृभ्यः' इति। तथा च नियमे' नप्त्रादीत्यत्रादिशब्देन उणादिनिष्पन्नस्य प्रशास्तृशब्दस्यैव ग्रहणम्। एवञ्च नप्तृ-प्रशास्तृशब्दयोरेव नियमार्थत्वम्।

भाष्यप्रयोगादिति—भाष्यप्रयोगदर्शनादुणादिषु उद्गातृशब्दस्य व्युत्पादने प्रमाणाभावः। अनिट्त्वस्य स्वतः सिद्धत्वात्। ननु कृद्व्युत्पन्नस्य यौगिकत्वमात्रं दृष्टम् अयं तु ( उद्गातृशब्दस्तु ) संज्ञाशब्द इति कथं कृद्व्युत्पन्नत्वमिति चेन्न, पङ्कजादिवद्योगरूढत्वस्य वक्तुं शक्यत्वात्।

उद्गातृशब्दस्यौणादिकत्वकल्पने गौरवञ्च। औणादिकत्वं प्रकल्प्य प्राप्तस्य दीर्घस्य भाष्यप्रयोगादभावकल्पनञ्च, 'होतृपोतृनेष्टोद्गातारस्तर्हि न सिध्यन्ति' इति भाष्यप्रयुक्तवाक्ये दीर्घस्येष्टत्वस्वीकारेऽपि केवलोद्गातृशब्दे दीर्घाभावसाधनाय सूत्रस्योपलक्षणता वक्तव्येति चेति।

विभाषा तृतीयाऽऽदिष्वचि [ ७-१-९७ ]

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा, क्रोष्ट्रे।

'ण्वुल्तृचौ' ( ३-१-१३३ ) इति सूत्रभाष्ये तु तृचश्चकारो व्यर्थः। न च 'अप्तृन्' इत्यादौ विशेषणार्थः, 'तृ' इत्येव सिद्धेः। न च 'तृ' इत्युक्ते मातरौ पितरौ इत्यादौ प्राप्नोति, तत्र हि तृ-प्रत्ययो निरनुबन्धक इति वाच्यम्, नप्तृग्रहणस्य 'योनिसम्बन्धिवाचिनाम्वेदस्यैव ( नप्तुरेव ) नान्येषां योनिसम्बन्धवाचिनाम्' इत्युक्तम्।

एवञ्चायं नियमो योनिसम्बन्धवाचिविषयक एवेति उद्गातृशब्दे दीर्घः स्वत एव सिद्ध इति भाष्यप्रयोगाद्दीर्घ इति कथनं निष्फलमेव। 'नेष्टृत्वष्टृहोतृपोतॄणां तृनन्तत्वस्य प्रशास्तुस्तृजन्त-त्वस्य 'तृन्' इति सूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषां सूत्रे ग्रहणं प्रपञ्चार्थमेव। एवञ्च यथा न्यासे 'तृन्तृच्' इति सूत्रपाठे नियमफलं चिन्त्यम्, भाष्योक्तनियमेन मातृपित्रादिशब्दानां केवलतृ-प्रत्ययान्तत्वलाभात् तृन् तृजन्तत्वाभावाद् दीर्घाप्राप्तेः।

तेनेति—नियमेनत्यर्थः। 'क्रोष्टा' इति-क्रोष्टन् स् इति दशायाम् अष्टाध्याय्यां प्रथमो-पस्थितत्वात् 'सर्वनामस्थाने च' इति दीर्घः। वस्तुतस्तु तृन्तृचोः साक्षादुपादानेन प्रतिपदोक्त-त्वेन शीघ्रोपस्थितयाऽन्तरङ्गत्वेन 'अप् तृन्' इत्यनेनैव दीर्घो न्याय्यः। न चानङि तृजन्तत्वा-भावाद्दीर्घाप्राप्तिरिति वाच्यम्, एकदेशविकृतन्यायेन तृजन्तत्वस्य सुवचत्वात्। अन्यथा गुणे कृते एवोपधाभूतस्याचो लाभात् तदानीञ्च तृजन्तत्वाभावात् 'क्रोष्टारौ' इत्यादावपि दीर्घो न स्यात्। क्रोष्टार इति-सम्बुद्धौ 'हे क्रोष्टो' इति, असम्बुद्धावित्यनुवृत्तेर्न तृज्वद्भावः।

'क्रोष्टु आ' इति स्थितौ—

'विभाषा तृतीयादिष्वचि' ( ७-१-९७ )। इति 'तृज्वत् क्रोष्टुः' इत्यनुवर्त्तते। 'अचि' इति तृतीयादिविशेषणम्। 'यस्मिन् विधौ' इति तदादिविधिः। तदाह—अजादिष्विति। न च 'अजादिष्वति' इत्यसाधु, पदान्ते 'चोः कुः' इत्यस्य प्राप्तेः। न च 'अगादिषु' इत्युक्तावक्प्रत्याहार शङ्का स्यादिति कुत्वाभावः शङ्कायां शास्त्राप्रवृत्तौ प्रमाणाभावात्, 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इत्युक्तेश्चेति वाच्यम्, 'अचोऽन्त्यु' इति भाष्यप्रयोगेण 'अजनुनासिकः' 'ऐच्' इत्यादिप्रयोगदर्शनेन च विभक्तिघटकसकाराव्यवहितपूर्वत्वाभाववतः प्रत्याहारघटकचवर्गस्य कुत्वं नेति कल्पनात्।

'अजव्यां स्त्रीखलनाः' इति वार्त्तिकप्रयोगात् 'अच्' इति प्रत्ययघटकस्यापि चस्य कुत्वं न। अयमपि नियम एव 'अजादौ तृतीयादावेवोभयम्' 'क्रोष्टून्' इत्यत्र विशेष्याभावप्रयुक्तविशिष्टा-भावात्, 'क्रोष्टुभ्याम्' इत्यादौ विशेषणाभावप्रयुक्तविशिष्टाभावाच्चोभयोः प्रयोगः। 'क्रोष्टुपुत्रः' इति समासे विशेष्याभावप्रयुक्तविशिष्टाभावः। एवञ्च सामानाधिकरण्यसम्बन्धेनाजादित्वशिष्टं यत्तृतीयादित्वं तदवच्छिन्नस्योभयोः प्रयोगे निमित्तता। तयोर्मध्ये तुन्नन्तस्य तृतीयादावपि प्रयोगः प्राप्त एवेत्यप्राप्तप्रयोगकस्यैव विधेयतया तृजन्तस्य प्रयोग एव शास्त्रप्रयोज्य इति तन्नै-वाजादित्वविशिष्टतृतीयादित्वधर्मावच्छिन्नस्य प्रयोजकत्वम्।

यत्र तु तादृशधर्मावच्छिन्नाभावस्तत्र तृजन्तप्रयोगाभावः। तथा च सर्वनामस्थाने स्त्रियाञ्च उक्तविशिष्टधर्मावच्छिन्नाभावादप्राप्ततृजन्तप्रयोगस्य विधानेन 'तृज्वत् क्रोष्टुः' 'स्त्रियाञ्च' इति सूत्रयोः प्रयोगनियमार्थत्वं फलति, न तु शाब्दो नियमः।

न चैवमपि 'क्रोष्टून्' इत्यसङ्गतम्, अन्यत्र तृजन्तस्यापि प्रयोगेऽप्येव 'विभाषा तृतीयादिषु' इति सूत्रबोधितनियमस्य चारितार्थ्यादिति वाच्यम्, एवं सति सर्वनामस्थाने तृजन्तप्रयोगस्य

## ऋत उत् [ ६-१-१११ ]

ऋदन्तात् ङसिङसोरति परे उकार एकादेशः स्यात् । रपरत्वम् ।

---

सिद्धतया 'तृज्वत् क्रोष्टुः' इत्यस्य वैयर्थ्यापत्तेः । न चोत्तरार्थं तत्, 'तृज्वत् क्रोष्टुः स्त्रियाम्' इत्येकयोगे एव कर्तव्ये योगविभागस्य वैयर्थ्यतादवस्थ्यात् ।

न च 'तद्धितेष्वचामादेः' ( ७-१-११७ ) 'इको गुणवृद्धिः' ( १-१-३ ) इति सूत्रयोः 'क्रोष्टुः' 'क्रौष्ट्रियाः' इति भाष्यप्रयोगासङ्गतिः, ऋकारान्तस्यैव ऋपिवाचकत्वेनादोषात् । इदं सूत्रद्वयं तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थम् ।

तदुक्तं भाष्ये—'तृज्वद्भावविषये एतत्तृजन्तं मृगवाचीति, तृतीयाद्यजादिविभक्तिषु तृजन्तं तुन्नन्तम् 'तच्च मृगवाचि' इति च । अनेन हि अन्यत्र तुन्नन्तमेवेत्यपि सूचितम् ।

अन्ये तु 'विभाषा तृतीयाऽऽदिषु' इत्यनेन अन्यत्र तुन्नन्तत्वविशिष्टतृजन्तत्वाभावस्या-नियमनात् लाघवात् प्राधान्याद्विशेष्यतृजन्तत्वाभावप्रयुक्तविशिष्टाभावकल्पनेनैवोपपत्तौ उभया-भावविशेषणाभावाभ्यां विशिष्टाभावो न कल्पनीयः । सर्वनामस्थाने, तृतीयादिषु, स्त्रियां च एष्वेव तृजन्तोऽन्यत्र तुन्नन्तस्यैव प्रयोग इत्याहुः ।

क्रोष्ट्रेति—तृज्वद्भावे यणि रूपम् । एवं क्रोष्ट्रे इत्यत्रापि । ङसिङसोस्तृज्वद्भावे 'क्रोष्टृ अस्' इति दशायाम्—'ऋत उत्' ( ६-१-१११ ) इति । अत्र 'एङः पदान्तादति' ( ६-१-१०९ ) इत्यतोऽतीति 'ङसिङसोश्च' ( ६-१-११० ) इत्यतो ङसिङसोरिति चानुवर्तते । ङसिङसोरित्य-वयवषष्ठ्यन्तं विशेषणतया अति इत्यत्रान्वेति । अङ्गस्येति 'एकः पूर्वपरयोः' इत्यधिकृतम् ।

ऋदन्तादिति—अत्र तदन्तग्रहणं चिन्त्यम्, विशेष्याभावात् । किञ्च तदन्तग्रहणे पूर्वपदेन ऋदन्तस्य ग्रहणापत्तौ समुदायस्य उदादेशापत्तेः । अत ऋतो ङसिङसोरतीत्येवोचितमित्युपाध्यायाः । 'उत्' इति तपरकरणम् एकादेशे ह्रस्व एव उकारो यथा स्यादीर्घो मा भूदेतदर्थम् । न च 'भाव्य-मानेन सवर्णानां ग्रहणं न' इति परिभाषया दीर्घग्रहणाप्राप्ते तपरत्वं व्यर्थमेति वाच्यम्, भाव्य-मानोऽण् क्वचित् सवर्णान् गृह्णाति इति ज्ञापनार्थत्वात् ।

तेन यवलपरे हकारे मस्य विधीयमाना अपि यवला अनुनासिका भवन्तीति प्राञ्चः ।

वस्तुतस्तु भाष्यानुक्तत्वात्, 'नित्स्वरितम्' ( ६-१-१८५ ) इति सूत्रे 'भवत्युकारेण सवर्णानां ग्रहणमिति । यदयं दिव उत् इति उकारं तपरं करोति इति भाष्यविरुद्धत्वाच्च । सत्यां तस्यां परिभाषायामिदसङ्गतं स्यात् । तस्माद्यवला निरनुनासिका एव । अत एव घटवदित्यादौ नानु-नासिको वकारः । केचित्तु 'उत्' इति तपरेण 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्यस्यानित्यतां ज्ञापयति ।

तत्फलितार्थं एव 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' तेन 'अमू' इति सिध्यति । यत्तु तपरत्वं 'ढ्लोपे' इति दीर्घबाधनार्थमिति तन्न, 'सुपत्रपातिता बाणा ज्वलिता इव पन्नगाः । नैर्ऋ-तोरस्यमासन्त सविन् ररमयो यथा' ॥ इति रामायणविरोधात् 'उरण् रपरः' इति सूत्रेऽणग्रहणाभावे 'ऊ रपरः' इति भाष्यप्रयोगविरोधाच्च ।

रपरत्वमिति—पूर्वपरयोरित्यधिकाराद्धकाराकारयोः स्थाने प्रसक्तस्य उकारादेशस्य उभय-स्थानिकत्वेऽपि ऋकारमात्रस्थानिकत्वाभावेऽपि इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽ-सावन्यतरतो व्यपदेशम् । तद्यथा—देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति ।

रात्सस्य । [ ८-२-२४ ]

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । इति रेफस्य विसर्गः । क्रोष्टुः । आमि परत्वात् तृज्वद्भावे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' ( वा ४३७४ ) ।

---

इति 'उरण् रपरः' इति सूत्रभाष्यादृकारस्थानिकत्वेन रपरत्वमुकारस्य । 'क्रोष्टुर् स्' इति दशायाम् 'रात्सस्य' ( ८-२-२४ ) इति । 'संयोगान्तस्य लोपः' इत्यनुवर्तते । रेफादिति, संयोगान्तस्य इति च सस्य विशेषणम्, तदाह—रेफात्परस्येत्यादि । 'संयोगान्तस्य लोपः' इत्यनेनैव सलोपे सिद्धे नियमार्थमिदम् । तदाह—सस्यैवेति । नान्यस्येति—तेन 'ऊर्क्' 'परिमार्ट्' इत्यादौ न संयोगान्तलोपः ।

न च संयोगान्तस्य सस्य लोपश्चेत्तर्हि रेफात्परस्यैवेति विपरीतनियमः कुतो नेति वाच्यम्, उरःप्रभृतिषु कृतसंयोगान्तलोपस्य 'पुमान्' इत्यस्य दर्शनात्, 'पुमान् स्त्रिया' ( १-२-६७ ) इति निर्देशाच्च, न च 'पुमान् स् स्' इति दशायाम् 'झरो झरि सवर्णे' ( ८-४-६५ ) इति सलोपः स्यादिति वाच्यम्, 'झरो झरि' इत्यस्यासिद्धतया पूर्वमेव 'हल्ङ्याब्भ्यः' इति सुलोपे झरपरत्वाभावात्, 'नश्चापदान्तस्य' इति नकारस्यानुस्वारापत्त्या निर्देशासिद्धेः ।

इह 'तकारोऽपि प्रश्लिष्यते' इति पक्षान्तरम् । तेन 'हल्ङ्याब्भ्यः' इत्यस्य स्थाने 'ङ्यापः सोः' इति न्यासे 'अबिभर्भवान्' इति सिध्यति । 'अववर्त्' इत्यत्र तु 'रत्नमुट्' इत्यादीनां सिद्धये जश्त्वं कृत्वा 'वाऽवसाने' इत्यस्य प्रवृत्तिरिति मते 'रात्सस्य' इति दृष्ट्या चर्त्वस्यासिद्धतया लोपाप्राप्तेर्न दोषः । एतेन कीर्तयतेः क्विपि 'कीर्त्' इत्यपि व्याख्यातम्, दस्थानिकचर्त्वस्यासिद्धत्वात् ।

'यथालक्षणमप्रयुक्ते' इति भाष्योक्तेश्च । जश्त्वं बाधित्वा 'वाऽवसाने' इति मतं न युक्तम्, 'षट्' 'रत्नमुट्' इत्यादौ जश्त्वापवादत्वाच् चर्त्वप्रवृत्तौ षकारस्य षकाररूपे एवान्तरतम्याच् चर्त्वे षष्, रत्नमुष् इत्यस्यैवापत्तेः । न च चर्त्वे कृते जश्त्वम्, तक्रन्यायेन बाधस्थलेऽपवादे प्रवृत्ते उत्सर्गाप्रवृत्तेः । अन्यथा सुटि कृते नुडापत्तेः ।

तस्मादत्र जश्त्वचर्त्वप्रकरणे व्यापकधर्मावच्छिन्ने व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन संकोचस्य माठरपरिवेषणन्यायसिद्धतया 'वाऽवसाने' इत्यत्र झल्त्वावच्छिन्ने चर्त्वावच्छिन्नातिरिक्तत्वेन संकोचे चर्भिन्नस्यैव झलश्चर्त्वेन जश्त्वमन्तरा चर्त्वाप्राप्त्या जश्त्वे कृते एव चर्त्वप्रवृत्तिरिति न कश्चिद्दोषः ।

अत एव 'अभ्यासे चर्च' इत्यत्रापि जश्त्व-चर्त्वावच्छिन्नातिरिक्तत्वेन झल्त्वावच्छिन्ने संकोचेन शशिदद्योरभ्यासे जश्त्व— चर्त्वावच्छिन्नयोर्दकारशकारयोरादेशाप्रवृत्त्या 'आदेशश्च वैरूप्यसम्पादक एव गृह्यते' इति कल्पनाक्लेशोऽपि न कर्तव्यः, शशिदद्योरुक्तार्थसंकोचे एव तात्पर्यग्राहकत्वात् ।

परत्वात् तृज्वद्भावे इति—न च नुटो नित्यत्वम्, तृज्वद्भावे सन्निपातपरिभाषया नुटोऽप्राप्तेः, शब्दान्तरात् प्राप्नुवतो विधेरनित्यत्वाच्च । 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' । अत्र 'अचि र' इति 'अचि र ऋतः' इति सूत्रैकदेशानुकरणम् । तदपि तत्सूत्रविहितरेफपरम् । ल्यब्लोपे पञ्चमी । एतान् बाधित्वेत्यर्थः । विप्रतिषेधपदं विप्रतिषेधप्रयोज्यबलवत्त्वपरम् । पूर्वस्य विप्रतिषेधेन पूर्वशास्त्रबलवत्त्वेन नुडित्यर्थः । वारीणाम्, तिसृणाम्, क्रोष्टूनाम्, इति क्रमेणोदाहरणानि ।

ननु मम विषये यत्प्राप्तं तत्सर्वं बाध्यमिति बाधसामान्यचिन्तापक्षमाश्रित्य तेन सर्वबाधसिद्धे वार्तिकं व्यर्थम् । अत एव 'गुणदीर्घोत्वानामपवादः' इति मूले वक्ष्यते । किञ्चोत्सर्गापवादयोरन्यत्रान्यत्र लब्धावकाशत्वाभावादयुक्तश्च विप्रतिषेध इति चेदत्राहुः । अत एव अचि राते

क्रोष्टूनाम् । क्रोष्टरि । क्रोष्ट्रोः । पक्षे हलादौ च शंभुवत् ॥ इत्युदन्ताः ॥ हूहूः, हूह्वौ, हूह्वः । हूहूम्, हूह्वौ, हूहून् इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचम्वाः । अतिचमूनाम् । अतिचम्वाम् । खलपूः ।

**ओः सुपि । [ ६-४-८३ ]**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि । 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' ( वा ५०३४ ) । खलप्वौ, खलप्व इत्यादि । एवं सुल्वादयः । 'अनेकाचः' किम्-लूः, लुवौ, लुवः ।

---

विप्रतिषेधं दूषयित्वा 'न तिसृचतसृ' इति ज्ञापकान्नुडिति भाष्यकृतोक्तम् । एवञ्च 'नुमृड्वद्भ्या-वाम्याम्' इत्येव सुवचम् । इत्युदन्ता इति—उदाहरणरूपेणोदन्ताः शब्दाः समाप्ता इत्यर्थः । एतेन उदन्तानामवशिष्टत्वेऽपि न क्षतिः ।

अथ ऊदन्ताः

हूहूरिति—गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकम् । 'हूह्वौ' इति-'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यण् । हूहूम् इति 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घं बाधित्वा 'अमि पूर्वः' इति पूर्वरूपैकादेशः । हूहून् इति—'प्रथमयोः' इति दीर्घे नत्वम् । अजादौ तृतीयादौ सर्वत्र यण् । अतिचमूशब्द इति—'चमु अदने' चमतेश्चम्नोतेर्वा 'कृषिचमितनि' (उ.१ पा. ८० सू) इति स्त्रियामूप्रत्यये चमति = भक्षयति योद्धानिति चमूः सेना । तामतिक्रान्तोऽतिचमूः 'गोस्त्रियोः' ( १-२-४८ ) इति न ह्रस्वः, 'स्त्रियाम्' ( ४-१-३ ) इत्यधिकृत्य विहितप्रत्ययान्तानामेव तत्र ग्रहणात् । एतेन ऊप्रत्ययस्यापि 'स्त्रियाम्' इत्युक्त्वा विधानेन 'गोस्त्रियोः' इति ह्रस्वापत्तिर्निरस्ता । नदीकार्यमिति—'प्रथमलिङ्गग्रहणञ्च' इत्युक्तेर्नदीसंज्ञा ।

हे अतिचमु—'अम्बार्थनद्योः' इति ह्रस्वः । 'ह्रस्वस्य गुणः' इति गुणस्तु न, 'ह्रस्वस्य गुणः' इति सूत्रे 'अम्बार्थनद्योर्ह्रस्वः' इत्यनुवर्त्य अम्बार्थनद्योर्ह्रस्वो भवति, ह्रस्वान्तस्य गुण, इति पुनर्ह्रस्व-विधानसामर्थ्यादम्बार्थनद्योर्न गुण इति भाष्योक्तव्याख्यानात् । न च ह्रस्वे सम्बुद्धिलोपेन न भवितव्यं सन्निपातविरोधादिति वाच्यम्, सम्बुद्धिलोपेऽनित्यत्वस्य परिभाषया भाष्ये उक्तत्वात् । अधिकम् 'अम्बार्थनद्योः' इति सूत्रे द्रष्टव्यम् । अतिचम्वै अतिचम्वाः । 'आण् नद्याः' इत्याटि 'आटश्च' इति वृद्धिः । अतिचमूनाम्—नद्यन्तात्परत्वान्नुट् । अतिचम्वाम् इति 'ङेराम्नद्याम्नीभ्यः' आमि आटा नुटो बाधः पूर्ववत् ।

खलपूरिति—'खल संचये' खल्यते=संचीयते धान्यं यत्रेति विग्रहे अच् । खलं पुनातीति खलपूः क्विप्, धान्यस्थानशोधनकर्त्ता, खलशब्दः धान्यमर्दनस्थाने, तिलकल्के, अधमे, क्रूरे, खे=आकाशे लीयते इति खलः=सूर्य्ये, लीयतेर्डः । खं वर्णतो लाति गृह्णातीति खलस्तमालद्रुमः । खलपू औ, खलपू अस्, इत्यादौ 'अचि श्नुधातु' इति उवङि प्राप्ते ।

'ओः सुपि' ( ६-४-८३ ) इति । एरिति पदरहितम्, सानुवृत्ताऽऽनुवृत्तविशेषणं सवार्तिकम् एरनेकाचः' इति सूत्रमनुवर्त्तते इत्याह-धात्ववयवसंयोगपूर्वेत्यादि, 'गतिकारक' इत्यादि । सक्तुं-लुनातीति 'सक्तुलूः' अत्र गतिकारकेतरपूर्वपदत्वाद्यणनापत्तिस्तु न शङ्क्या, फलस्यापि व्यपदेशिवद्भावेन स्वाश्रयतया कर्मसंज्ञकत्वेन द्वैधीभावानुकूलव्यापारार्थकलूधात्वर्थे द्वैधीभावरूपे फलेऽभेदेन विशेषणस्यापि सक्तुपदार्थस्य कर्मतया कारकपूर्वपदकत्वाक्षतेः । खलप्वौ, खलप्वः । कारककर्मपूर्व-त्वाद्यण् । खलप्वम् 'अमि पूर्वः' इति पूर्वरूपं परत्वाद् बाधित्वा यण् । शसि 'प्रथमयोः' इति पूर्वसवर्णदीर्घं परत्वाद् बाधित्वा यण् । एवं सुल्यादय इति गतिपूर्वकत्वादत्र यण् बोध्यः । आदिना केदारलूः' इत्यादेः संग्रहः ।

'धात्ववयव-, इति किम् उल्लूः, उल्ल्वौ, उल्ल्वः। 'असंयोगपूर्वस्य' किम्-कटप्रूः, कटप्रुवौ, कटप्रुवः। 'गति' इत्यादि किम्-परमलुवौ। 'सुपि' किम्-लुलुवतुः। स्वभूः। 'न भूसुधियोः' (सू २७३)। स्वभुवौ, स्वभुवः। एवं स्वयम्भूः।

वर्षाभ्वश्च। [६-४-८४]

अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ, वर्षाभ्वः। दृम्भतीति दृम्भूः। 'अन्दूदृम्भू-जम्बू-कफेलूकर्कन्धूदिधिषूः' (उ ९३) इत्युणादिसूत्रेण निपातितः। दृम्भ्वौ, दृम्भ्वः। दृम्भूम्, दृम्भ्वौ, दृम्भून्। शेषं हूहूवत्। 'दृन्' इति नान्ते हिंसार्थेऽव्यये भुवः क्विप्, दृन्भूः। 'दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः' (वा ४११८) दृन्भ्वम्, दृन्भ्व इत्यादि खलपूवत्।

---

उल्लूरिति—उत्-उत्कृष्टम्-उदूर्ध्वं वा लुनातीति उल्लूः। उत्कृष्टच्छेदनकर्ता। गतिपूर्वकोऽयम्। 'क्विप् च' (३-२-७६) इति लूधातोः क्विपि रूपम्। कटप्रूरिति—कव्या कटं वा प्रवते इति कटप्रूः। 'क्विब्वचिप्रच्छि' इति क्विप्, दीर्घश्च। व्युत्पत्तिमात्रमेतत्। रूढोऽयम्—महादेवे विद्याधरे, कामरूपिणि राक्षसे, कामुके, भाक्षिके च। यत्तु कटं तृणादिनिर्मेयमास्तरं प्रवते=करोति यः स कटप्रूरिति तन्न, कोशविरोधात्।

परमलुवाविति—लुनीत इति लुवौ। परमौ च तौ लुवौ चेति 'परमलुवौ' परमशब्दः प्रातिपदिकार्यमात्रपरो न कारकपर इति न यण्।

ललुवतुरिति—सुप्परत्वाभावान्न यण्। स्वभूरिति—स्वेन-आत्मनैव भवति न पुण्यापुण्यमपेक्षते इति स्वभूः=ब्रह्मा, विष्णुः शिवः, ईश्वरः, कामश्च। कारकपूर्वपदत्वादयणि प्राप्ते 'न भूसुधियोः' इति निषेधः।

'वर्षाभ्वश्च' (६-४-८४) इति। अत्र 'ओः सुपि' इति सूत्रम्, 'अचि श्नु' इत्यतोऽचीति, 'इणो यण्' (६-४-८१) इतो यणिति चानुवर्त्तते। तदाह—अस्येति वर्षाभूशब्दस्येत्यर्थः। वर्षासु भवतीति—वर्षाभूः। वर्षाकालिकभवनकर्तृरूपेऽर्थे त्रिलिङ्गः। कैयटस्तु वर्षासु भवति भवते-प्राप्नोति वा वर्षाभूरोषधिविशेष इत्याह—'इन्द्रगोपे महीलतायाञ्चेति' शब्दस्तोममहानिधिः। दर्दुरे पुँल्लिङ्गः—

'भेके मण्डूकवर्षाभूशालूरप्लव दर्दुराः' [अम. १० वारि. १ का. २४ श्लो.]

इत्यमरोक्तेः, 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवकोशाच्च। न चामरे लिङ्गानुक्तेर्न पुंस्त्वम्, भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्। 'क्वचित्तु दर्दुरे षण्ढ' इति पाठः। तत्र 'षण्' इति पुंलिङ्गस्य प्राचां संज्ञा। भेक्यां पुनर्नवायां स्त्री। वर्षर्तावुत्पत्तिशीलः। वर्षाशब्दो नित्यस्त्रीलिङ्गो बहुवचनान्तश्च।

दृम्भूरिति—दृम्भी ग्रन्थे। दृम्भूर्ग्रन्थकर्त्ता। तौदादिकाद् दृभधातोः 'अन्दू दृम्भू' (उ. १ ९३ सू.) ऊप्रत्ययो नुम् च निपात्यते--नकारस्यानुस्वारपरसवर्णौ। उज्ज्वलदत्तस्तु 'दृम्फू' इति पवर्गद्वितीयं पठित्वा 'दृप दृम्फ उत्क्लेशे' इत्यत कूप्रत्यये दृम्फेर्नलोपाभावो निपात्यते इत्याचष्ट। अत्र ऊकारो न धात्ववयवः। अतो न उवङ्। नापि 'ओः सुपि' इति यण्। किन्तु 'इको यणचि' इति यण्। 'अमि पूर्वः' इति पूर्वरूपम् 'दृम्भूम्' इति। शसि पूर्वसवर्णदीर्घो नत्वञ्च 'दृम्भून्'-इति। दृम्भूरिति—दृन्निति हिंसार्थेऽव्ययम्। दृन्-हिंसां भवते=प्राप्नोतीति चौरादिकाद् भवतेः क्विप्। 'वर्षाभ्वश्च' इति सूत्रे भाष्ये पठितेन 'दृन्कर' इति वार्तिकेन अजादौ प्रत्यये यणि दृन्भ्वौ इत्यादि।

अत्र 'न भूसुधियोः' इति यणो निषेधे प्राप्ते यण् विधीयते। माधवस्तु 'अन्दूदृम्भू' इत्यादिसूत्रेण दृशशब्दे उपपदे भुवः कूप्रत्ययः। उपपदस्य दृमादेशश्च निपात्यते इत्याह—एकादेशे 'दृम्भू'

करभूः । करम्वम् । करम्वः । दीर्घपाठे तु कर एव कारः । स्वार्थिकः प्रज्ञाद्यण् । कारम्वम् । कारम्वः । पुनर्भूर्यौगिकः पुंसि । पुनर्भ्वौ इत्यादि ।

इति । एकादेशस्य पूर्वान्तवत्त्वेन भूत्वम् । न चात्र भूशब्दस्य लाक्षणिकत्वाद् वार्तिकेन यण् न स्यादिति वाच्यम्, अनिदेशविषये 'लक्षणप्रतिपदोक्त' परिभाषाया अतिदेशवैयर्थ्यापत्त्या अप्रवृत्तेः । दम्भूः नृपे, वज्रे, सूर्ये, सर्पे, चक्रे च इति शब्दस्तोममहानिधिः । दम्भूस्तरुरिति बालमनोरमा । 'दनूकर' इति पूर्वरूपपूर्वसवर्णदीर्घयोर्बाधकः । 'दनूभूः' इति निपातनादेव नकारस्य लोपो न । अनुस्वारोऽपि न, पदान्तत्वात् ।

यत्तु स्वाभाविकत्वान्नानुस्वार इति तच्चिन्त्यम्, स्वाभाविकत्वस्य दुर्वचत्वात् । यदि पदान्तत्वं स्वाभाविकत्वं तदा तदेव वक्तुमुचितम् । करात् करे वा भवतीति करभूः । करः पुः कृधातोरपि अचि वा करः—हस्ते, किरणे, राजग्राह्ये राजस्वे, वर्षोपले, हस्तिहस्ते, हस्तनक्षत्रे च । यदि वार्त्तिके दीर्घमध्यपाठः कार इति तदा दीर्घान्ताद् कॄञ् हिंसायाम् इत्यतः, डुकृञ् करणे इत्यतो वा घञि कार इति । अयमेव पक्षो युक्तः, कारशब्दस्य करतो भिन्ननानार्थत्वात् ।

कारशब्दः—वध्ये, निश्चये, यत्ने, क्रियायाञ्च । कॄ विक्षेपे वा आधारे घञि हिमाद्रौ पत्तौ च । कृञो वा कर्मणि घञ् । विक्षिप्ते धान्यादिराशौ । यदि स्वार्थिकाणन्तः कारशब्दो भवेत्तदाऽर्थान्तरं विरुध्येत ।

किञ्च भाष्ये स्वार्थिक इति—कार इत्येव पाठः । 'कर' इति पाठेऽप्यणन्तस्यैकदेश-विकृतन्यायेन ग्रहणमिति तु न युक्तम्, 'कार' इत्यस्यैकदेशविकृतत्वेऽणन्तस्य तद्भिन्नत्वात् ।

यत्तु कारशब्देन करोतेर्ण्यन्ताद् भिदादिङ् निष्पन्नो बन्धनगृहवाचकस्तस्य टापा सहैका-देशस्य पूर्वान्तवत्त्वेन वार्तिके ग्रहणमिति तदुपेक्ष्यमिति दीक्षितः ।

वस्तुतस्तु वर्षाभू—पुनर्भू—दम्भूशब्दानां योगरूढानामुपलब्धेस्तत्साहचर्यात् काराभू-शब्दस्य बन्धनभू ( भूमि ) वाचकस्यैव ग्रहणमुचितम् ।

यद्यपि काराशब्द एव दुराचरणकारिणः यत्र स्थाने राजकर्तृको निग्रहस्तद्वाचकस्तथाऽपि यत्र 'कारागृहम्' इति प्रयोगस्तत्र काराशब्दो बन्धनमात्रार्थक एव, यथा—

कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।

इति कोशान्मारुतपूर्णरन्ध्रविशिष्टे कीचकपदस्य शक्तिसत्त्वेऽपि रघुवंशे 'स कीचकैर्मारुतपूर्ण-रन्ध्रैः' इत्यत्र विशेषणदानात्पुनरुक्तिदोषवारणाय कीचकशब्दो वेणुमात्रार्थक एवेत्युपाध्यायाः ।

स्वार्थिक इति—स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भवः स्वार्थिकः । अध्यात्मादित्वात् ठञ् । ननु द्वारादिषु स्वन्शब्दस्य पाठेन 'धादेरिञि' ( ७-३-८ ) इत्यस्य धाद्यावैजागमाप्राप्त्या वैयर्थ्येन द्वारादिषु तदादिविधिज्ञापकत्वेन तदादेरैजागमस्येष्टत्वेन स्वार्थिक इत्यत्रैजागमः स्यादिति चेन्न, द्वारादिषु स्वशब्दस्य पाठसत्त्वेन तदादिविधिना स्वाध्याय-स्वग्रामशब्दयोरपि ऐजागमे सिद्धे द्वारादिषु स्वाध्यायस्वग्रामयोः पाठेन 'स्वशब्दादेश्चेदेतयोरेवेति' नियमार्थकेन 'स्वार्थिकः' इत्यत्रैजागमो न । अत एव 'अप्राकृतस्तु यः स्वारः' इति प्रातिशाख्येऽपि नैजागमः ।

नन्वेवं सौवर्य्यः सप्तम्यस्तदन्तसप्तम्यः इति निर्देशासङ्गतिरिति चेन्न, स्वरशब्दः सुपूर्वका-द्धातोरपि एकः, स्वपूर्वकराधातोः के द्वितीयः, इति अप्प्रत्ययान्तस्वरशब्दस्य 'सौवर्य्यः' इति रूपे बाधकाभावात् । अर्थवतः स्वशब्दस्य नियमविषयकत्वेनाप्प्रत्ययान्तघटकस्वशब्दस्य उपसर्ग-धातुघटकाकारघटितत्तया निरर्थकत्वात् ।

ननु 'पुनर्भूर्दिधिरूषूढा द्विः' इति ( २ का० मनुष्यवर्गे २३ श्लो० ) कोशात् पुनर्भूशब्दस्य नित्यस्त्रीत्वात्पुंलिङ्गे पाठोऽसङ्गत इत्यत आह—यौगिक इति—पुनर्भवनकर्तृत्वप्रवृत्तिनिमित्तकमि-

दृग्भूकाराभूशब्दो स्वयंभूवत्। इत्यूदन्ताः। धाता। हे धातः। धातारौ। धातारः। 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा ४६६९) धातॄणामित्यादि। एवं नप्त्रादयः। उद्गातारौ। पिता। व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ। पितरः। पितरम्। पितरौ। शेषं धातृवत्। एवं जामातृभ्रात्रादयः।

---

लिङ्ग इति भावः। वस्तुतस्तु वार्तिके 'योगाद् रूढिर्बलीयसी' इति न्यायाद् रूढेरेव ग्रहणमिति यौगिके यण् चिन्त्य इत्युपाध्यायाः। दृग्भूकाराभूशब्दाविति—दृशि भवतीति दृग्भूः नेत्ररोगादिः। काराभूः=बन्धनगृहभवनकर्ता। स्वयंभूवदिति–वस्तुतस्तु टाप्प्रकृतिकारशब्दस्यैव वार्तिके ग्रहणम्, करशब्दस्य प्रज्ञादिस्वकल्पने गौरवाद्रूढेरेव ग्रहणस्यौचित्याच्च। स्वयम्भूरिति—आत्मा इत्यर्थे 'स्वयम्' इत्यव्ययम्। स्वयं भवतीति स्वयम्भूः कर्तरि क्विप् 'स्वयंभूर्ब्रह्मा' 'न भूसुधियोः' इति निषेधाद्यण् न। इत्यूदन्ताः।

धातेति—'डुधाञ् धारणपोषणयोः' ततस्तृनि तृचि वा रूपम्। अनङ्दीर्घसुलोपनलोपाः। हे धातरिति—'ऋदुशनस्' इत्यत्र 'असम्बुद्धावित्यनुवृत्त्या अनङोऽभावे 'ऋतो ङि' इत्यकारे गुणे रपरत्वे विसर्गे च 'धातः' इति। 'अप् तृन्' इति दीर्घस्तु न, असम्बुद्धावित्युक्तेः। धाताराविति—ङि-सर्वनामस्थानयोः 'ऋतो ङि' इति गुणः। 'अप्तृन्' इति दीर्घः। एवं धातारः, धातारम्, धातारौ। शसि गुणाप्राप्त्या पूर्वसवर्णदीर्घे नत्वम्। यणि धात्रा, धात्रे इति। ङसिङसोः 'धातृ अस्' इति स्थिते 'ऋत उत्' इति ऋकाराकारयोरेकादेशे उकारे रपरत्वे 'रात्सस्य' इति सलोपे रेफस्य विसर्गे 'धातुः' इति।

धात्रोः, धात्रोः, आमि 'ह्रस्वनद्यापः' इति नुटि 'नामि' इति दीर्घे नकारस्य रेफषकाराभ्यां परत्वाभावादप्राप्तणत्वविधानायाह—'ऋवर्णान्नस्य णत्वं वाच्यम्' इति–इदं वार्तिकं सर्वेषु णत्व-विधायकशास्त्रेषु योजनीयम्, सर्वेषां णत्वविधायकशास्त्राणां शेषभूतत्वात्। इति 'नृनाम' इत्यादौ न णत्वम्, समानपदस्थत्वाभावात्संज्ञात्वाभावाच्च। इदञ्च वार्तिकम् 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इत्याश्रित्य ऋवर्णे भासमानरेफात्परत्वम् 'मातॄणाम्' इत्यादावपि वर्तते इति 'रषाभ्याम्' (८-४-१) इत्यनेनैव णत्वं प्रसाध्य भाष्यकृता प्रत्याख्यातम्। किञ्च 'क्षुभ्नादिषु च' (८-४-३९) इति णत्वनिषेधाय 'क्षुभ्नादिगणे' तृप्नोति शब्दः पठ्यते। तत्र रेफषकाराभ्यां परत्वाभावाद् णत्वा-प्राप्त्या 'तृप्नोति' ग्रहणं व्यर्थीभूय कल्पयति—'भवति ऋकारान्नो णत्वमिति' वाचनिकं वार्तिकं वर्णैकदेशस्याग्रहणपक्षेऽपि न कर्तव्यम्। अथवा 'छन्दस्यवग्रहात्' इति सूत्रम् 'ऋतः' इत्येको योगः। ऋकारात्परस्य नो णो भवति। ततः 'छन्दस्यवग्रहात् ऋत इत्येव इति' योगविभागेन व्याख्यातं भाष्यकृता। इत्येवम् ऋकाराच्च णत्वम् व्याख्यानसिद्धमेव, न वाचनिकम्। ऋत इत्यत्र तपरग्रहणं मुखसुखार्थमेव। अत एव 'प्रशास्तॄणाम्' इति निर्देशः संगच्छते इति स्पष्टं भाष्ये। ङौ 'ऋतो ङि' इति गुणे 'धातरि' इति। धातृशब्दस्य हिरण्यगर्भसंज्ञात्वादौणादिकत्वेन दीर्घा-भावस्तु न शङ्क्यः, 'ण्वुल्तृचौ' इत्यनेन सिद्धत्वादुणादिकल्पने मानाभावात्।

उद्गाताराविति—भाष्यप्रयोगादत्र दीर्घ इति तु न युक्तम्, उद्गातृशब्दस्यौणादिकत्वे प्रमाणाभावात्। 'अप्तृन्' इति नियमस्य औणादिकविषयकत्वाद्योनिसम्बन्धिविषकत्वाच्च।

पितेति—पा पाने, मान पूजायाम् इत्यतः 'नप्तृनेष्टृत्वष्टृ' (उ० २ पा० ९५ सू) इत्यनेन तृन् आकारस्येत्वं च निपात्यते। 'माता' इत्यत्र तृन् नलोपश्च निपात्यते 'ण्वुल्तृचौ' इति सूत्र-भाष्यात्तु 'मातृपितृशब्दयोर्निरनुबन्धकतृप्रत्यय एव लभ्यते। भ्रातृशब्देऽपि स एवेति। तथा च 'अप्तृन्' इत्यस्य नियमफलं चिन्त्यम्। जामातृभ्रात्रादय इति जायां माति मिनोति मिमीते वा तृन् कृत्वा यालोपश्च 'जामाता दुहितुः पतिः'। भ्राजतेस्तृन् तृजन्त जलोपश्च भ्राता=सोदरः। एतेषां न दीर्घः, नप्त्रादिष्वभावात्।

ना, नरौ, नरः। हे नः।

नॄ च। [ ६-४-६ ]

'नॄ' इत्येतस्य नामि वा दीर्घः स्यात्। नॄणाम्। नृणाम्,॥ इत्यृदन्ताः॥ 'कॄ' 'तॄ' अनयोरनुकरणे 'प्रकृतिवदनुकरणम्' (प ३७) इति।

---

यत्तु पिता इत्यत्र पाधातोस्तृन् इट् आलोपश्च इति तच्चिन्त्यम्, गौरवात् तृन्प्रत्यये कारादेशयोर्निपातनेनैव सिद्धेः।

नेति—नयति=देशाद्देशान्तरं नयतीति ना। नीधातोः 'ऋन् डिच्च' इति टिलोपे नृशब्दः सिद्धः। ना=मनुष्यः। स्त्रियां नारी 'शार्ङ्गरवाद्यञो ङीन्' (४-१-७३) इति ङीन् 'नृनरयोर्वृद्धिश्च' इति वृद्धिः। नृशब्दात् सुः 'ऋदुशनस्' इत्यनङ्, नान्तत्वात् 'सर्वनामस्थाने' इति उपधादीर्घः नलोपश्च। नरौ, नरः, नरम् नरौ। एषु 'ऋतो ङि' इति गुणः। शसि पूर्वसवर्णदीर्घो नत्वञ्च 'नॄन्' आ, अ यण् ङसिङसोः 'ऋत उत्' इति ऋकारस्य विभक्तेरकारस्य च उकारैकादेशे रपरत्वे 'रात्सस्य' इति सलोपे विसर्गे च 'नुः' इति। ओः। 'नृ आम्' इत्यत्र 'ह्रस्वनद्यापः' इति नुटि 'नामि' इति दीर्घे प्राप्ते।

'नॄ च' (६-४-६) इति नॄ इति लुप्तषष्ठीकम् नृशब्दस्येत्यर्थः। अत्र 'नामि' इति सूत्रम् 'ढ्रलोपे' इत्यतो दीर्घ इति 'छन्दस्युभयथा' इत्यत उभयथा इति चानुवर्त्तते। तदाह—नॄ इत्येतस्येत्यादि। वा दीर्घः स्यादिति।

केचित् 'उभयथा छन्दसि' इति सूत्रमनुवर्तयन्ति। तेषां मते 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा' 'नृणामेको गम्यस्त्वमसि पयसामर्णव इव' इत्यादिप्रयोगा न संगच्छेरन् लौकिकत्वात्, किञ्च छन्दसि 'छन्दस्युभयथा' इत्येव वैकल्पिके दीर्घे सिद्धे 'नॄ च' इति सूत्रस्य वैयर्थ्यापत्तिः।

यदपि 'उभयथा छन्दसि' इत्यत्र तिसृ चतसृ इत्यनुवर्तयन्ति तदप्ययुक्तम्, अविशेषेण छन्दसि दीर्घदर्शनात्। तथा हि—'धाता धातॄणाम्' इति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते। बह्वृचैस्तु दीर्घ इति। इति ऋदन्ताः।

अथ दीर्घऋकारान्ताः। कॄ-तॄ इति 'कॄ विक्षेपे' 'तॄ प्लवनतरणयोः' कॄतॄशब्दाभ्यामनुकरणे क्रियमाणे अनुकरणभूताभ्यां कॄतॄभ्यां धातुपाठपठितौ कॄतॄ इति बोध्यत्वेन अर्थत्वेन विवक्षितौ। वस्तुतस्तु धातुपाठपठितौ अर्थत्वेन विवक्षितौ इति तु न सङ्गतम्, तयोरप्यनुकरणत्वेन धातुत्वाभावात्।

धातुपाठे ये पठिता भू-एध इत्यादयस्ते सर्वे लक्ष्यस्यानुकरणभूता न धातवः, शब्दस्वरूपबोधकत्वेन क्रियावाचकत्वाभावात्। क्रियावाचिनो भ्वादय इति व्यवहारस्तु 'प्रकृतिवदनुकरणम्' इति पक्षमादायैव। तस्मात् अत्र कॄतॄ इत्यनुकरणम्, क्रियावाचकयोर्लक्ष्यस्थयोः कॄतॄशब्दयोरेव। एवञ्च अनुकरणाभ्यां कॄतॄभ्यां क्रियावाचकौ लक्ष्यस्थौ कॄतॄशब्दावेव वाच्यत्वेन विवक्षितौ। अत एव अनुकरणस्यानुकार्यमर्थः।

अनुकार्यञ्चानुकरणाद्भिन्नम् इति 'मतौ छः' (५-२-५९) भाष्ये उक्तम् 'अस्यवामीयम्' इति। अस्यवामशब्दोऽस्त्यस्मिन् सूक्ते तदस्यवामीयं सूक्तम्। अत्र आम्नायेयः, 'अस्य वामः' इति पदद्वयात्मकः शब्दः सोऽनुकार्यः। अनुकरणीभूतो योऽस्यवामशब्दः स न षष्ठ्यन्तघटितः किन्तु तदानुपूर्वीकस्तदन्य एव।

वैकल्पिकातिदेशादित्वे रपरत्वे कीः, किरौ, किरः। तीः, तिरौ, तिर इत्यादि गीर्वत्। इत्वाभावपक्षे तु 'ऋदुशनस्-' ( सू २७४ ) इति 'ऋतो ङि-' ( सू २७५ ) इति च तपरकरणादनङ्गुणौ न। कॄः, क्रौ, क्रः। कॄम्, क्रौ, कॄन्। क्रा। क्रे इत्यादि॥ इत्यृदन्ताः॥

---

तदुक्तम्भाष्ये—योऽसावाम्नाये अस्यवामशब्दः पठ्यते सोऽस्य ( अनुकरणीभूतस्य अस्य-वामशब्दस्य ) पदार्थः। किम्पुनरन्यस्मिन्नाय आशब्दाः। अम्य इमे। ओमित्याह। इति विस्तरस्तु तत्सूत्रभाष्ये द्रष्टव्यः।

अत्र कैयटः—अनुकरणं तु व्युत्क्रमेणाप्युच्चार्यमाणं सादृश्यादनुकार्यस्य प्रत्यायकं भवति इति, 'अनुकार्यानुकरणयोरर्थभेदादन्यत्वनिश्चयः' इति च। यथा 'भू सत्तायाम्' इत्यत्र भूशब्दस्या-नुकरणस्य अनुकार्यो यो लक्ष्यस्थो भूशब्दः सोऽर्थः। लक्ष्यस्थस्यानुकार्यभूशब्दस्य च सत्ताऽर्थः। 'प्राग्दीव्यतोऽण्' ( ४-१-८३ ) इति सूत्रभाष्ये च स्पष्टमेतत्।

एवञ्च अनुकरणस्य कॄ इत्यस्य अनुकार्यः कॄधातुरर्थः। तथा तॄ इत्यस्य तॄधातुरर्थः। तदर्थत्वेनानुकरणयोरेतयोः प्रातिपदिकसंज्ञा। नन्वेवम् अनुकरणयोरेतयोरनुकार्यशब्दस्वरूप-बोधकत्वात् क्रियावाचकत्वाभावेन धातुसंज्ञाया अभावात्।

'कॄ-स्' 'तॄ स्' इति स्थितौ 'ॠत इद्धातोः' ( ७-१-१०० ) इतीत्वं न स्यात्। न च 'प्रकृतिवदनुकरणम्' इति परिभाषया अनुकरणयोरनयोर्धातुत्वम् इति वाच्यम्, एवं सति 'अधातुः' इति धातुपर्युदासात् प्रातिपदिकत्वानापत्तेरत आह—वैकल्पिकातिदेशादिति।

'यत्तदेतेभ्यः परिमाणे वतुप्' ( ५-२-३९ ) इत्यत्र त्यदाद्यत्वेन निर्देशात् 'प्रकृतिवदनुकरणम्' इति, 'त्यदादीनि सर्वैर्नित्यम्' ( १-२-७२ ) इत्येकशेषाकरणात् प्रकृतिवदनुकरणं न भवति इति च ज्ञापनात्। लक्ष्यानुरोधेन वैकल्पिकत्वमनयोः। एवम् 'क्षियो दीर्घात्' ( ८-२-४६ ) इत्यत्र प्रातिपदिकत्वदर्शनात् प्रकृतिवदनुकरणं न भवति इति, इयङ्दर्शनात् प्रकृतिवदनुकरणं भवति इति लक्ष्यानुरोधेन व्यवस्थया वैकल्पिकत्वं परिभाषायाः।

ततश्च प्रकृते 'प्रकृतिवदनुकरणं न भवति' इति पक्षमादाय धातुभिन्नत्वेन प्रातिपदिकत्वम्, प्रकृतिवदनुकरणं भवति इति पक्षमादाय 'ॠत इद्धातोः' ( ७-१-१०० ) इतीत्वम्। अत एव 'किरश्च पञ्चभ्यः' इत्यत्र 'कॄधातोः' इत्यर्थः। 'भू सत्तायाम्' इत्यत्र 'प्रकृतिवदनुकरणम्' इति धातुत्वातिदेशात् प्रातिपदिकत्वाभावाच्च विभक्तिः। न चापि अभेदानुकरणम् 'मतौ छः' इति विरोधात्। 'प्रकृतिवदनुकरणम्' इति सौत्रप्रयोगे एव।

न चैवम् 'गवित्ययमाह' इत्यस्यानुपपत्तिरस्य लौकिकत्वेन प्रकृतिवदनुकरणं न भवति इति पक्षस्यैव सत्त्वे अनुकार्यरूपार्थवत्त्वेन प्रातिपदिकत्वात्सुबुत्पत्तौ निर्देशासङ्गतिरिति वाच्यम्, 'गवा' इत्यादेरेकदेशस्य वान्तस्यैवानुकरणत्वेन प्रातिपदिकत्वात्सौ 'हल्ङ्याभ्यः' इति 'स्वमोर्नपुंसकात्' इति वा सोर्लोपे प्रत्ययलक्षणेन पदत्वेऽपि 'लोपः शाकल्यस्य' ( ८-३-१९ ) इति लोपस्य वैकल्पिकतया वलोपाभावे निर्देशसङ्गतेः। अनुकरणस्वरूपभङ्गभिया न वलोप इति तु न युक्तम्, अनुकरणस्वरूपभङ्गभिया शास्त्राप्रवृत्तौ प्रमाणाभावात्। 'झलां जश् झशि' ( ८-४-५३ ) इत्यत्र जश्त्वम्, 'व्रश्चभ्रस्ज्' ( ८-२-३६ ) इति षत्वञ्च न छान्दसत्वेन, दृष्टानुविधित्वात्।

कीरिति—कॄधातुरित्यर्थः। ॠकारस्य इत्वे रपरत्वे 'हल्ङ्यादि' लोपे 'र्वोरुपधायाः' इति दीर्घे विसर्गे च सिद्धिः। वस्तुतस्तु प्रकृतिवदतिदेशस्य सौत्रप्रयोगे एव प्रवृत्त्या 'कीः' इत्यत्र इत्व-दीर्घयोरप्रवृत्त्या किरौ, किर इत्यादयश्चिन्त्याः।

इत एव वा अरुचेराह—इत्वाभावपक्षे त्विति। तीरिति—तॄधातुरित्यर्थः। गीर्वदिति-गीः-शब्दरूपाणीव रूपाणीत्यर्थः। कीर्म्याम् इत्यादौ हलादौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'र्वोरुपधायाः' इति दीर्घः। प्रकृतिवदित्यतिदेशाभावे तु अधातुत्वादित्वाभावे 'कॄः' 'क्रौ' इत्यादि

'गम्लृ' 'शक्लृ' अनयोरनुकरणे अनङ्। गमा। शका। गुणविषये तु लपरत्वम्। गमलौ, गमलः। गमलम्, गमलौ, गमॄन्। गम्ला। गम्ले। ङसिङसोस्तु 'ऋत उत्' (सू २७६) इत्युत्वे लपरत्वे 'संयोगान्तस्य लोपः' (सू ५४)। गमुल्। शकुल् इत्यादि।

---

रूपाणि। अनङ्गुणौ नेति—'ऋत उत्' इत्युत्वमपि न, तपरत्वाद् दीर्घस्याप्राप्तेः। अत एव 'ओ यद्धि' इत्यत्रापि उक्तं न।

कॄरिति—कॄधातुरित्यर्थः। इति दीर्घॠकारान्ताः। अनुकरणस्यैवोदाहरणदानेन अनुकरणभिन्ना दीर्घॠकारान्ताः शब्दा न सन्तीति ध्वनितम्। इत्यॄदन्ताः।

## अथ लृदन्ताः

गमलृरिति—गम्लृ गतौ, 'शक्लृ शक्तौ' इति धातुपाठपठितस्यानुकरणम्—गम्लृ इति शक्लृ इति। अनुकार्यरूपार्थवत्त्वेन प्रातिपदिकत्वात् सुः। अनङादेशे सोर्लोपे नान्तत्वाद् दीर्घे नलोपे 'गमा' 'शका' इति। सर्वनामस्थाने 'ऋतो ङि' इत्यत्र तपरत्वादृकारसवर्णस्य लृकारस्यापि ग्रहणेन ङसिङसोः उत्वे लपरत्वे सलोपे गमुल्, शकुल् इति, आमि ह्रस्वान्तत्वान्नुटि 'नामि' इति दीर्घे गमॄणाम्, शकॄणाम् इति रूपम्।

लृकारस्य दीर्घलृकारादेशस्तु न, दीर्घलृकारस्याभावात्। अत एव 'लृति लृ वा' इति लृकारादेशाभावे 'अकः' इति लृकारस्य दीर्घे 'होतॄकारः' इति दीर्घॠकारघटितो भाष्ये प्रयोगः संगच्छते। अत एव भाष्ये 'लृति ल्लृ वा' इत्यस्य 'अकः सवर्णे' इत्यनेन 'होतृ लृकारः' इत्यत्र लकारघटितस्थानिनः स्थाने लकारघटितदीर्घः, ईषत्स्पृष्टप्रयत्नकलकारद्वयघटित दीर्घसाधनं सङ्गच्छते।

अन्यथा एकलकारघटितस्य विवृतस्य च स्थाने लकारघटितत्वविवृतत्वोभयसाम्येन दीर्घलृकार एव स्यान्न लकारद्वयघटित इति 'लृति ल्लृ वा' इत्यस्य प्रत्याख्यानं विरुध्येत।

तत्त्वबोधिनीकारास्तु वस्तुतस्तु लृकारस्थाने लकारद्वयगर्भेणैव दीर्घेण भवितव्यम्, स्थानत आन्तर्यस्य बलीयस्त्वात्। 'होतॄणाम्' इत्यत्र तु ॠकार एव भवति, स्थानप्रयत्नोभयसाम्यात्।

स्यादेतत्। रेफद्वययुक्तस्य लकारद्वययुक्तस्य चेषत्स्पृष्टप्रयत्नत्वात् प्रयत्नभेदेन ऋलृवर्णाभ्यां सावर्ण्याभावेनाच्त्वाभावात् 'ऊकालोऽज्' इत्यादिना दीर्घसंज्ञा नास्तीति कथमत्र लकारद्वयगर्भेण भवितव्यम्, 'ऋति ॠ वा' 'लृति ल्लृ वा' इति वार्तिकप्रत्याख्यानं वा कथं संगच्छताम्? 'अकः सवर्णे' इत्यनेनेष्टरूपाणामसिद्धेः।

अत्राहुः—उभयोरच्त्वसिद्धये वर्णसमाम्नाये ऋलृक् सूत्रोत्तरं पाठः कर्तव्यः, तेन सर्वेष्टसिद्धिः। न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्याद् 'होतृ ऋकारः' इत्यत्र ॠकारो दीर्घ एव स्यात्, न तु रेफद्वययुक्तो दीर्घ इति वाच्यम्, ऋकारद्वयस्थाने रेफद्वयवतः साम्येन कदाचित्तस्यापि प्रवृत्तेः।

'होतॄकारः' इत्यत्र लृकारेणान्तर्यात् कदाचिल्लृकारद्वययुक्तः कदाचिदृकारेणान्तर्यादृकारश्च भवति। परन्तु वार्तिकमते 'होतृ ऋकारः' इत्यत्र रेफद्वयगर्भो न भवति। प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्ति, तन्नेष्टापत्तिर्वा प्रत्याख्यानस्य प्रौढिवादमात्रता वा अभ्युपगन्तव्येति।

अत्रेदं बोध्यम् 'अकः सवर्णे' इति भाष्ये 'ऋति ऋ वा' 'लृति लृ वा' इत्येतन्न प्रत्याख्यातम्। 'तुल्यास्य' इति सूत्रभाष्ये तु तस्य प्रत्याख्यानेऽपि फलभेदे तदयोगात्। स्वीकृते तु तस्मिन् 'अकोऽकि' इत्येव सुवचमिति ग्रन्थोऽनुपपन्न एव। यदि तु 'ऋति ऋ वा' इति वार्तिकम् 'उ ॠ' इति ऋ वा' इति पठ्यते तदा वार्तिके सवर्णे इति पदानुवृत्त्यनपेक्षणात् सुवचमेव 'अकोऽकि' इति।

वस्तुतस्तु 'अण्' इति सूत्रभाष्ये वर्णसमाम्नाये 'अइउण्' 'लण्' इति णद्वयकरणे 'अण्' प्रत्याहारसन्देहप्रतिपादनावसरे 'अस्मिंस्तर्हि अणग्रहणे सन्देहः 'उरण् रपरः' इति। असन्दिग्धं पूर्वेण

इति ऌदन्ताः॥ इना सह वर्तते इति सेः। सयौ। सयः। स्मृतेः। स्मृतयौ। स्मृतयः। इत्येदन्ताः।

---

न परेषा। कुत एतत्? पराभावात्। नह्युः स्थाने परेऽणः सन्ति। ननु चायमस्ति कर्त्रर्थम् हर्त्रर्थम् इति········ किञ्च स्याचत्र रपरत्वं स्याद् द्वयो रेफयोः श्रवणं प्रसज्येत।

'हलो यमां यमि' इत्येकस्य लोपो भविष्यति। विभाषा स लोपः, विभाषाश्रवणं प्रसज्येत। अयं तर्हि नित्यो लोपः 'रो रि' इति' इत्युक्तम्। लाकृतिः, गम्ल्ला, इत्यादौ ऌकारस्थानिकलकारस्य लपरत्वे न शङ्कासमाधी कृतौ। ततो ज्ञायते एतादृशानामनभिधानमिति।

अन्यथा पराभावात् इत्युक्तिर्विरुध्येत ऌकारस्थानिकलकारस्य लद्वयश्रवणस्य वारयितुमशक्यत्वात्। अत एव 'लाकृतिः' इत्यस्याप्यनभिधानमेव। किञ्च 'न पदान्ता हलोऽणः सन्ति' इति लण्सूत्रे भाष्योक्तेश्च 'गमुल्, शकुल्' इत्यादीनामनभिधानम्। इति ऌदन्ताः।

दीर्घऌकाराभावात्तदन्ता नोदाहृताः। वस्तुतस्तु ऌकारान्ता अपि नैव सन्ति, उक्तभाष्यविरोधादिति सुधियो विभावयन्तु। इति ऌदन्ताः।

## अथ एदन्ताः।

सेरिति—अस्य=वासुदेवस्यापत्यमिः=कामः, अत इञ् यस्येति चेत्यकारलोपः, अस्य पत्नी ई लक्ष्मीः 'पुंयोगादाख्यायाम्' इति ङीष्। तेन तया सह वा वर्त्तते इत्यर्थे 'तेन सहेति' (२-८-२८) बहुव्रीहौ 'वोपसर्जनस्य' (६-३-८२) इति सहस्य सादेशे गुणे च 'से' इति रूपम्। नन्वेकादेशस्य पूर्वान्तवत्त्वेन 'से' इत्यस्याव्ययत्वात् 'अव्ययादाप्सुपः' इति लुक् शङ्क्यः, अव्यय इति महासंज्ञया लिङ्गाद्यनन्वितार्थस्यैवाव्ययसंज्ञाविधानात्।

ननु 'सेः' इत्यत्रैकादेशस्यान्तवद्भावेन पदान्तत्वात् जसि 'एङः पदान्तात्' इति पूर्वरूपं स्यादिति चेदत्रोच्यते—अत्र केचित्–एवं तर्हि 'यासे' 'ईशः से' इति विहितादेशस्य 'से' इत्यनुकरणम्-

तथा च जसादौ परतः पदत्वाभावान्नोक्तदोषः, उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधेन पदान्तैङोऽभावाच्च।

उत्तरपदत्वञ्च—यद्वृत्तिनिमित्तसुम्निमित्तिका पदसंज्ञा चिकीर्षिता तादृशवृत्तिविशिष्टत्वम्। वैशिष्ट्यञ्च—स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्व-स्वघटकत्वैतदुभयसम्बन्धेन। स्वम्=वृत्तिः। तादृशोत्तरपदत्वञ्च 'से' इत्यत्राक्षतम्। घटकत्वञ्च व्यपदेशिवद्भावेनापि। 'उत्तरपदत्वे' इति वार्तिकप्रत्याख्यानपक्षे च 'सर्वनामस्थानेऽचि' न्यासेन सुबन्तमित्यनुवर्त्य यजादौ सर्वनामस्थाने पूर्वं पदं न, मध्ये चेत्सुबन्तं तदपि पदं नेति व्याख्यानात् जसि पदत्वाभावो बोध्यः। न त्वेवमपि सौ 'सेः' इति रूपासङ्गतिर्भाष्यकृद्योगविभागपक्षे सावपि पदत्वसत्त्वे 'नान्तः पादम्' (                ) इति सूत्रस्थभाष्येण 'न चेङः पदान्तात्परो ऽस्ति' इत्यनेन विरोधादिति चेन्न, योगविभागस्येष्टसिद्ध्यर्थत्वेन क्वचिदप्रवृत्तेः। तद्भाष्यात्सौ अप्रयोगाद्वा। 'हे से' 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः।

नन्वेवं सति 'हे हरे' इत्यत्र सम्बुद्धिलोपो न स्यात्, सम्बुद्धिं निमित्तीकृत्य जातस्य गुणस्य सन्निपातपरिभाषाविरोधाल्लोपे निमित्तं न स्यात्। न चैङ्ग्रहणं व्यर्थम् 'हे से' इत्यत्र सन्निपातपरिभाषाविषयाभावेन चारितार्थ्यादिति चेन्न, सम्बुद्धिरूपस्य सम्बुद्ध्युपजीव्यगुणेन विघातकत्वमेव नास्ति, प्रत्ययलक्षणेन सम्बुद्धेः सत्त्वात्। नन्वातिदेशिकसन्निपाताभावः सन्निपातपरिभाषाया अप्रवृत्तिप्रयोजको न भवति।

अत एव 'नदीह्रस्वत्वं सम्बुद्धिलोपस्य' नदीह्रस्वत्वं सम्बुद्धिलोपस्य निमित्तं न स्यात्। 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति भाष्यं संगच्छते। अन्यथा अत्रापि प्रत्ययलक्षणेन

गोतो णित् । [ ७-१-९० ]

गोशब्दात्परं सर्वनामस्थानं णिद्वत्स्यात् । गौः, गावौ, गावः ।

सम्बुद्धेः सत्त्वात् सन्निपातविघाताभावेन भाष्यं विरुध्येतेति चेन्न, 'गुणात्सम्बुद्धेः' इति न्यासेन सिद्धेः, एङ्ह्रस्वग्रहणसामर्थ्यादेङ्ह्रस्वनिमित्तकसम्बुद्धिलोपे कर्त्तव्ये तदप्रवृत्तिज्ञापनात् ।

अत एव 'कृन्मेजन्तः' ( १-१-३९ ) इति भाष्ये उक्तम् ।

तस्मायान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्त्तव्या प्रतिविधेयञ्च-दोषेषु इति ।

स्मृतेरिति—स्मृत इः=काम ईर्लक्ष्मीर्वा येन स स्मृतेः=कामस्मर्त्ता, लक्ष्मीस्मर्त्ता वा इत्यर्थः । 'निष्ठा' (२-२-१०२) इति स्मृतशब्दस्य पूर्वनिपातः । स्मृतय इति—अत्रापि अन्तर्वर्तिनीं विभक्ति-मादाय पदत्वात् 'एङः पदान्तात्' इति पूर्वरूपं न, 'उत्तरपदत्वे' इति प्रत्ययलक्षणप्रतिषेधात् । किञ्च 'स्वादिष्वसर्वनामस्थाने' 'यचि भम्' इत्यत्र भाष्यकृता 'स्वादिषु' इत्येको योगः । अत्र 'सुप्तिङन्तम्' इत्यनुवर्तते । स्वादिषु पूर्वं तदादि पदसंज्ञम्, मध्ये यत्सुप्तिङन्तं तदपि पदम् । ततः 'असर्वनामस्थाने-यचि' इत्यपरो योगः । अत्र 'असर्वनामस्थाने' इति प्रसज्यप्रतिषेधः ।

सुप्तिङन्तम् अनुवर्तते । 'यचि' इति 'सर्वनामस्थाने' इत्यस्य विशेषणम् । 'यस्मिन् विधिः' इति तदादिविधिः । तथा च यजादिषु स्वादिषु परतः पूर्वं पदं न, मध्ये यत्सुप्तिङन्तं तदपि पदं न ।

ततः 'भम्' अत्र 'यचि' इति 'स्वादिषु' इति, सुप्तिङन्तम्, इति चानुवर्तते । यजादिषु स्वादिषु परतः पूर्वं भसंज्ञम्भवति, मध्ये यत्सुप्तिङन्तं तदपि भम् इति व्याख्यातम् । ततश्च 'असर्व-नामस्थाने यचि' इत्यनेन 'स्मृते अस्' इत्यादिषु 'स्वादिषु' इति, सुप्तिङन्तम् इति च प्राप्तं पदत्वं निषिध्यते । शसादौ च 'भम्' इत्यनेन पदत्वं बाध्यते । इति न कोऽपि दोषः ।

न चैवमपि 'सह इ' इति स्थिते वर्णद्वयनिमित्तकत्वेनान्तरङ्गतया गुणे एदन्तस्य पूर्वान्त-वत्त्वेन सहशब्दतया 'सहे' इत्यस्य सादेशे रूपासिद्धिः ।

किञ्च उपसर्जनसंज्ञया समासापेक्षादुत्तरपदपरकस्य पूर्वपदसहशब्दस्यादेशविधानेन प्रकृते 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादन्तादिवत्त्वाभावे सादेशानापत्तिरिति वाच्यम्, 'नेन्द्रस्य परस्य' इत्युत्तरपदवृद्धिनिषेधेन 'पूर्वोत्तरपदनिमित्तकार्य्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न' इति ज्ञापनात् । इत्येदन्ताः ।

## अथ ओदन्ताः ।

गच्छन्ति स्वर्गादिलोकं येन, गच्छन्ति=प्राप्नुवन्ति अन्नादिकमनेनेति वा 'गौः' । 'गमेर्डोः' ( उ० २ पा० ६७ पृ० ) इति डोप्रत्ययः । 'गो स्' इति स्थितौ 'गोतो णित्' ( ७-१-९० ) इति । 'इतोऽत्सर्वनामस्थाने' ( ७-१-८६ ) इत्यतः सर्वनामस्थाने, इत्यनुवर्तते । तच्च 'अर्थवशाद्वि-भक्तेर्विपरिणामः' इति नियमात् णिदित्यनेन सामानाधिकरण्यानुरोधेन प्रथमया विपरिणम्यते ।

तदाह—सर्वनामस्थानमिति । तत्र णितः कार्य्यस्यासम्भवात् णिति यत्कार्य्यं तदतिदिश्यते। यद्वा 'सर्वनामस्थाने' इति सप्तम्यन्तमेवास्तु 'गोतः' इति पञ्चम्यन्तम्, णित्पदं णित्वप्रयुक्तकार्य्य-परम् । एवं गोशब्दस्य सर्वनामस्थाने परतो णित्वप्रयुक्तं कार्य्यं भवति इत्यर्थेन सिद्धे विभक्ति-विपरिणामो न कार्य्यः ।

गौरिति—णित्वे 'अचो ञ्णिति' ( ७-२-११५ ) इति वृद्धिः । हे गौः, अत्र नित्यत्वाद्-वृद्धौ एङन्तात्परत्वाभावान्न सुलोपः । न च वृद्धेः स्थानिवत्त्वम्, स्थानीभूतादचः पूर्वस्य कार्य्याभावात्, पञ्चमीसमासेऽपि पूर्वत्वेन दृष्टादव्यवहितोत्तरस्यैव कार्य्ये स्थानिवत्त्वात् । 'गोतो वृद्धिः' इति तु

औतोऽम्शसोः । [ ६-१-९३ ]

'आ ओतः' इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह-अचिनवम्, असुनवम् । गाम्, गावौ, गाः । गवा । गवे । गोः । इत्यादि । ओतो णिदिति वाच्यम् । विहितविशेषणं च । तेन सुद्यौः, सुद्यावौ, सुद्यावः । सुद्यामित्यादि ।

---

नोक्तम्, एवं सति 'णलुत्तमो वा' इत्यस्य स्थाने 'णश्युत्तमे' इति न्यासे वृद्धिपदस्य विधेयत्वाप्रयोजकतया 'इकः' इत्यस्योपस्थितौ 'जगाद, जगद्, इत्यत्र वैकल्पिकवृद्ध्यनापत्तेः ।

किञ्चोक्तन्यासं 'गाङ्कुटादिभ्यः' इत्यनेन णलो नित्यणित्वेन ङित्वाभावे चुकोट, चुकुट, इति रूपद्वयासिद्ध्यापत्तिः । वैकल्पिकणित्वे तु णित्वे ङित्वाभावोऽणितः प्रत्यया ङित इत्युक्तेः, चुकोट इति, णित्वाभावे णलो ङित्वे 'चुकुट' इति सिध्यति ।

अमि 'गो अम्' इति दशायां णित्वाद् वृद्धौ प्राप्तायाम् 'औतोऽम्शसोः' (६-१-९३) इति । आ ओत इति छेदः, भाष्ये 'आ गोतः' इति वक्तव्यम् इति व्याख्यानात् । अम् च शस् च अम्शसौ तयोरिति विग्रहः । अवयवषष्ठ्यन्तमेतत् । 'इको यणचि' इत्यतो 'अचि' इत्यनुवर्त्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम्—उदाह—ओकारादिति । शस् इह सुबेव गृह्यते, अचीत्यनुवृत्त्याऽजादेः शस एव ग्रहणात् तद्धितस्य च हलादित्वात् । न च तद्धितेऽपि शस्येत्त्वेऽजादित्वम्, 'अशक्' इत्यत्र 'अतद्धिते' इति पर्युदासात् ।

ननु 'चिञ् चयने' इत्यतो लङि मिपि 'तस्थस्थमिपाम्, ( ३-४-१०१ ) इत्यमादेशे गुणे श्नुक्किरणे अटि च 'अचिनो अम्' इत्यत्र अवादेशं बाधित्वा आत्वं स्यादत आह—शसेति 'वा सुप्यापिशलेः' इत्यतः 'सुपि' इत्यस्यानुवृत्तेश्च ।

तदुक्तं भाष्ये—'सुब्ग्रहणमनुवर्त्तते' इति गामिति । न च परत्वादाङ्गत्वाच्च 'अचो ञ्णिति' इति वृद्धिः स्यात्, अनवकाशेनात्वेन बाधात् । तदुक्तं भाष्ये यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यते अनवकाशमात्वं वृद्धिं बाधिष्यते इति । गा इति । शसोऽसर्वनामस्थानत्वान्न णित्वप्रयुक्त वृद्धिः, अनवकाशत्वेन आत्वस्यैव प्रवृत्तेश्च ।

द्योशब्दः स्त्रीलिङ्गः, 'सुरलोके द्योदिवौ द्वे स्त्रियाम्' इत्यमरोक्तेः । अतस्तदन्तमाह=सु शोभना द्यौर्यस्मिन् दिवसे इति बहुव्रीहौ पुंलिङ्गः । सुद्यो स् इत्यादिसर्वनामस्थाने 'गोतो णित्' इत्यस्याप्राप्तावाह—'ओतो णिदिति वाच्यम्' इति । गोत इत्यतो गकारमपनीय 'ओतः' इति वाच्यमित्यर्थः ।

वस्तुतस्तु 'गोतो णित्' इति सूत्रभाष्ये गकारस्याविवक्षितत्वं नोक्तम् । तत्र तपरकरणस्य फलम्—'चित्रगुः, शबलगुः' इत्युक्तम् । अत्र कैयटः—'तपरस्तत्कालस्य' इत्यत्राण् नानुवर्तते । इत्यनणोऽपि तत्कालस्य ग्रहणम् इति । पुनः 'हे चित्रगो, चित्रगवः' इत्यत्र सत्यपि तपरत्वेऽतिव्याप्तिमाशङ्क्य प्रतिपदोक्तपरिभाषया समाहितम् ।

किञ्च स्थानिवत्सूत्रे भाष्येऽपि चित्रगुः, चित्रगू, चित्रगवः, तपरकरणसामर्थ्यात् णित्वात्वे न भविष्यतः । आत्वेऽपि 'आ गोतः' इत्यात्वं न प्राप्नोतीत्युक्तम् । अतोऽपि गकारस्याविवक्षा न प्रतीयते ।

अग्रे अमि परत्वादाङ्गत्वाच्च वृद्धिरात्वं बाधिष्यते इत्याशङ्कायाम् अनवकाशमात्वं वृद्धिं बाधिष्यते । सावकाशमात्वम् । कोऽवकाशः 'द्यो गच्छ' इति । अनेन 'औतोऽम्शसोः' इत्येव सूत्रम्भाष्यकारस्याभिमतं प्रतीयते 'आ गोतः' इति न्यासे 'द्यां गच्छ' इत्यत्र कथमवकाशः स्यात्, 'द्योश्च सर्वनामस्थानेवृद्धिविधिः । द्योश्च सर्वनामस्थाने वृद्धिर्विधेया । किं प्रयोजनम् ?

'ओकारान्ताद्विहितं सर्वनामस्थानम्' इति व्याख्यानान्नेह—हे भाननो, हे भावः। उः=शम्भुः स्मृतो येन स स्मृतोः, स्मृतावौ, स्मतावः। स्मृताम्, स्मृतावौ, स्मृताः—इत्यादि ॥ इत्योदन्ताः ॥

रायो हलि। [ ७-२-८५ ]

यद् याव इन्द्र ते शतं शतं भूमीरुत स्युः।

यावता चेदानीं घोरपि सर्वनामस्थाने वृद्धिरुच्यते। अनवकाशमात्वं वृद्धिं बाधिष्यते। इत्युक्तं भाष्यकृता।

अनेन 'औतोम्शसोः' अनेन आत्वमोकारान्तमात्रे इत्युक्तं भवति, परन्तु वृद्धिस्तु गोद्योशब्दयोरेव, न तु ओकारान्तमात्रे इति स्पष्टं प्रतीयते। परन्तु यदि गकारो विवक्ष्यते तदा द्योः सर्वनामस्थाने णित्वं वक्तव्यं स्यादिति गौरवम्। अतो लाघवाद् गकारस्याविवक्षैव युक्ता।

अन्यथा स्मृतोशब्दे आत्वस्य चारितार्थ्यात् भाष्यकृतोऽनवकाशकथनं विरुध्येत। गकारस्याविवक्षितत्वे तु स्मृतोशब्देऽपि वृद्धेः प्राप्त्या अवकाशत्वोक्तिः संगच्छते।

गकारस्याविवक्षितत्वे स्थानिवत्त्वप्रतिषेधवार्त्तिके णित्वात्वग्रहणं न कर्त्तव्यमित्यपि लाघवम्। णित्वात्वयोः कर्त्तव्ययोः स्थानिवत्त्वं न स्यादल्विधित्वात्। णित्वात्वयोरोदन्तनिमित्तकत्वेन ओदन्तत्वस्याल्मात्रवृत्तिधर्मघटितत्वात्।

यत्तु गोपदं तपरकरणादोदन्तोपलक्षणम्। किञ्चौणादिकेन गोपदेन साहश्याद् द्योशब्द एव लक्ष्यते। तेन 'स्मृतोः, स्मृतवौ, स्मृतवः' इत्यादिरूपमिति तन्न, गोद्योभ्यां परस्यैव णित्वाभ्युपगमे 'औतोऽम्शसोः' इत्यस्य 'स्मृताम्' इत्यत्र चारितार्थ्येन 'गाम्' इत्यत्र परत्वादाङ्गत्वाच्च वृद्धेर्दुर्वारतया भाष्योक्तमात्वस्य निरवकाशत्वं विरुध्येत। केचित्तु अनवकाशत्वकथनपरभाष्येणैव 'स्मृतो' इत्याद्योकारान्तानामनभिधानम् इत्याहुः। इत्योदन्ताः।

अथ औदन्ता।

रातिः—ददाति सम्मानादिकं या यो वेति 'राः' रा दाने इत्यतः 'रातेर्डैः' (उ. २ पा. ६६ सू.) इति डैप्रत्ययः। रैशब्दस्य डैरूपकृत्प्रत्ययान्ततया 'कृन्मेजन्तः' इत्यव्ययत्वं तु न, 'रायो हलि' इति सूत्रारम्भसामर्थ्येन उणाद्येजन्तकृदन्तानामव्ययत्वाभावज्ञापनात्। अत एव गोनावादिशब्दानामव्ययत्वाभाव इत्युपाध्यायाः। राः=धनम्।

द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥

इत्यमरात् पुंलिङ्गोऽपि पुंलिङ्गार्थविभवशब्दघटितद्वन्द्वघटकत्वात्, विभिन्नलिङ्गानां द्वन्द्वाभावस्यामरे प्रतिज्ञानात्, 'सं राया भूयसा सृज' इत्यादिप्रयोगाच्च। यद्ययं स्त्रीलिङ्गः स्यात्तदा 'भूयस्या' इति स्यात्। न च रैशब्दः छान्दसस्तदुक्तम् 'वान्तो यि' (६-१-७९) इति सूत्रभाष्ये। रा यि छान्दसः, इतीति वाच्यम्, यादौ प्रत्यये एव छान्दसत्वात्, 'राश्छान्दसः, इत्येव वक्तव्ये 'रा यि' इत्युक्तेः। तथा च कैयटः 'एतद्भाष्यवशाद्भाषायां रैशब्दोऽसाधुरिति लक्ष्यते। अथवा क्यच्पर एव रा यि छान्दस इति व्याख्यायते' इति।

अत एव 'रायमिच्छति रैयति' इति विग्रहप्रदर्शनपरं भाष्यं संगच्छते। न हि विग्रहश्छन्दः। अत एव 'रायि' आशा 'राय्याशा' इति प्रयोगदर्शनम् 'अचः परस्मिन्' इति सूत्रभाष्ये।

'रै स्' इत्यादौ कार्यविशेषमाह—'रायो हलि' (७-२-८५)। 'अष्टन आ' (७-२-८४) इत्यतः 'विभक्तौ' इति 'आ' इति चानुवर्त्तते। तदाह—रैशब्दस्येत्यादि। हल्ग्रहणादजादावात्वं न

रैशब्दस्य आकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । आयादेशः । रायौ, रायः । रायम्, रायौ, रायः । राया, राभ्यामित्यादि ॥ इत्यैदन्ताः ॥ ग्लौः, ग्लावौ, ग्लावः । ग्लावम्, ग्लावौ, ग्लावः-इत्यादि । 'औतोऽम्शसोः' ( सू २८५ ) इतीह न प्रवर्तते । 'ऐऔच्' ( म सू ४ ) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ॥ इत्यौदन्ताः ॥ इति अजन्तपुँल्लिङ्गप्रकरणम् ।

तदाह—अच्यायादेश इति-'एचोऽम्' इत्यनेनेति शेषः । ग्लौरिति । ग्लायति = चौरादीनां हर्षक्षयं करोतीत्यर्थे 'ग्लानुदिभ्यो डौः' ( उ० २ पा० ६४ सू ) इति डौप्रत्ययः । ग्लौश्चन्द्रः । तथा चामरः—ग्लौर्मृगाङ्कः कलानिधिः इति । एवम् विश्वमवतीति विग्रहे क्विपि 'ज्वरत्वर' इत्यूठि 'एत्येधत्यूठ्सु' इति वृद्धौ 'विश्वौः, विश्वावौ' इत्यादि । एवम् 'जनानवतीति—जनौः, जनावौ इत्याद्यपि बोध्यम् ।

'औतोऽम्शसोः' इत्यत्र ओद्ग्रहणेन औकारस्यापि सवर्णस्य ग्रहणात् ग्लावम् ग्लावः इत्यादावात्वं स्यादत आह—सावर्ण्याभावज्ञापनादिति । ज्ञापनप्रकारविस्तरः संज्ञाप्रकरणे द्रष्टव्यः । अजन्त इति—'हयवरट्' सूत्रे 'अचोऽक्षु' इति भाष्यप्रयोगात् 'अल्पाच्तरम्' इति निर्देशाच्च विभक्तिघटकासकाराव्यवहितपूर्वत्वाभाववतः प्रत्याहारघटकस्य चस्य कुत्वं न भवतीति कल्पनेन 'अक्षु' इत्यत्र । कुत्वं ततोऽन्यत्र कुत्वाभावश्च सिध्यति । अतोऽजन्त इत्यादौ न कुत्वम् । इत्यजन्ताः पुंलिङ्गा इति—शब्देन लिङ्ग्यते=ज्ञायते यत्र लिङ्गम् । अर्थनिष्ठो धर्मविशेषो लिङ्गम् । विस्तरेण तु 'स्त्रियाम्' इति सूत्रे वक्ष्यते । इत्यौदन्ताः ।

इति अजन्तपुँल्लिङ्गप्रकरणम् ।

---

# परिशिष्टभागः

जराभ्यामित्यादौ जरसो वारणाय अजादाविति । विभक्तावित्यस्याननुवृत्तौ जराया इद-मित्यर्थे "तस्येदम्" ( पा० ४-३-१२० ) इत्यणि "जारम" इत्यादौ जरस् स्यात् । न च शरदादौ "जराया जरश्च" इति अन्तर्गणसूत्रस्य वैयर्थ्यात् तद्धिते चेत्समासान्ते एवेति नियमेनैव जारमित्यत्र दोषाभावाद्विभक्ताविति व्यर्थमेवेति वाच्यम्, क्यजन्ताज्जरीयधातोः क्विपि अयल्लोपयोः "जरीः" इत्यत्राप्यल्लोपस्य स्थानिवत्त्वेनाऽपरकत्वमादाय जरसादेशापत्तेः जराशब्दादाचारक्विबन्तात्तव्यत्प्रत्यये इटि जरसादेशापत्तेश्च ।

ननु "जराया असुङ्" इत्येव सूत्रमस्तु । ङित्वात् "ङिच्च" इत्यन्तादेशे "जरसौ" इत्यादि सिध्येदिति चेन्न, जरामाचष्टे इत्यर्थे "तत्करोति तदाचष्टे" गणसूत्रेण जराशब्दात् णिचि टिलोपे जरिधातोः क्विपि जरिशब्दादौविभक्तौ "जरसौ" इत्यस्य सिद्धये "जरस्" इत्यादेशस्यैवौचित्यात् ।

यदि तु "आरगुदीचाम्" ( ४-१-१३० ) इति सूत्रस्थात् "आरग्वचनमनर्थकम्, रका सिद्धत्वात्" आरग्वचनमनर्थकम्। किं कारणम्, रका सिद्धत्वात्। गोधा इति आकारन्तात् रकच्प्रत्ययः। एवं तर्हि सिद्धे सति यदारकं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। जाडारः पाण्डार इत्येतत्सिद्धं भवति। भाष्याज्ज्ञायते आबन्तेभ्यो नैव णिज् भवतीति।

यदि आबन्ताण् णिच् स्यात्तदा हलन्तगोधशब्दादेकदेशविकृतन्यायेनानुमनिकस्थान्यादेशमादाय स्थानिवद्भावेन वा गोधा बुद्ध्या आरकि "गौधारः" इत्यस्य सिद्धये आकारस्य चारितार्थ्येन अन्यतो विधानार्थज्ञापनपरं भाष्यमसङ्गतमेव स्यात्। यत्तु हलन्तजरशब्दस्य जरसि कर्तव्ये णिलोपस्य स्थानिवत्त्वेन विभक्तिपरकत्वाभावाज्जरसोऽप्राप्तिरिति तन्न, येन विधिस्तदन्तस्य इति सूत्रस्थात् ण्यन्तनिष्यन्तपादृच्छब्दस्य पदादेशसिद्धिप्रदर्शनपरभाष्यात्—

"क्वौ लुप्तं न स्थानिवत्" इत्यस्य लाभेन स्थानिवत्त्वाप्राप्तेः। जरीशब्दस्य ऋशब्देन समासे जरर् शब्दस्यासुङि "जरासौ" इति, जरसि जरसौ इति फलभेदस्तु न, पररूपेण "जरसौ" इत्यस्यैव सिद्धेः।

यत्तु जरामवर्तीति जरात् तस्य जरसादेशे जरसौ इति असुङि तु जरासाविति दोष इति तन्न, लुग्घटिते निर्दिश्यमानत्वाभावेन जरसोऽप्राप्तेः।

वस्तुतः प्रतिपत्तिः प्रक्रिया इत्संज्ञालोपरूपा "ङिच्च" इत्यस्यानुसन्धानरूपा च। तद्गौरवाद्-लुक् न कृत इत्येव सुवचम्।

केचित्तु प्रथमान्तजराशब्दस्य "नित्यवीप्सयोः" इति पदद्वित्वे स्थानिवद्भावेन "जराजरा" इत्यस्य सुबन्तत्वात् प्रगता जराजरा इति विग्रहे "प्रादयो गताद्यर्थे प्रथमया" इति समासे जरस् आदेशत्वे "प्रजरसौ" इति रूपमिष्यते, असुङादेशे च "प्रजराजरसौ" इति रूपवारणाय असुङादेशः कर्तुं न शक्यते इत्याहुः।

निर्दिश्यमानस्येति। "षष्ठी स्थानेयोगा" ( १-१-४९ ) इति सूत्रे भाष्यकृतोक्तम्—"यद्यपि लोके बहवोऽभिसम्बन्धाः—आर्था यौना मौखाः स्रौवारश्चेति। शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदतः स्थानात्" "व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् इति। स्थाने इति व्याख्यास्यामः" इति च।

एवञ्च "इको यणचि" इत्यादौ षष्ठी स्थाने इति सूत्रं विनाऽपि व्याख्यानात् स्थाने इत्यस्य लाभे षष्ठी स्थाने इति सूत्रस्य आदेशविधायके शास्त्रे "षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिताः। किं कृतं भवति? निर्दिश्यमानस्यादेशाः भवन्ति इति परिभाषा न कर्तव्या भवति" इति।

अयम्भावः— षष्ठी अन्ता = समीपा यस्य शब्दस्वरूपस्येति अतद्गुणसंविज्ञानबहुव्रीहिणा षष्ठ्यन्तमित्यस्य षष्ठीप्रकृतिरित्यर्थः। तस्याः प्रकृतेः सूत्रे एव सत्त्वादादेशासम्भवे तत्संज्ञिन एव स्थानपदार्थेन योगो न तु यदागमपरिभाषया येन विधिरिति सूत्रादिबलात्प्रतीयमानस्य स्थानेन योगः। तदुक्तं यतः षष्ठ्युच्चारितेति। एवञ्च इक्पदसंज्ञिन इकारादेरेव जराशब्दसंज्ञिनो जरेत्यस्यैव स्थाने आदेशः स्यान्न तु तदन्तस्य। न च इक्पदसंज्ञित्वस्य वर्णसमाम्नाये पठितानामेवेति दीर्घेकारादीनां ग्रहणानापत्तिरिति वाच्यम् "न भूसुधियोः" इति ज्ञापकेन संज्ञिनः संज्ञिनोऽपि ग्रहणेनादोषात्।

तत्र हि प्रसिद्धाप्रसिद्धयोरिति न्यायेन प्रसिद्धभू—सुधिशब्दयोरेव ग्रहणेन तद्घटकयो दीर्घोकारेकारयोः 'एरनेकाचः' इति 'ओः सुपि' आभ्यां यणोऽप्राप्त्या वैयर्थ्येन संज्ञिसंज्ञिनोऽपि ग्रहणाज्ञापनात् पदद्वित्वस्थाने "जराजरा" इत्यस्य जरस इष्टत्वे मानाभावः। एतेन जराघटितस्या देशाभावे द्वित्वस्थले तदनापत्तिरित्यपास्तम्।

एवञ्च जराशब्दस्यैवादेशो न तदन्तस्येत्याह—निर्दिश्यमानस्यादेशा भवन्तीति। निर्दिश्यमानस्येत्यस्य षष्ठीप्रकृतिसंज्ञिन आदेश इत्यर्थः। न च जरा इत्यस्य स्वं रूपमिति सूत्रात् जरासंज्ञी येन विधिरिति बलाद् जराशब्दान्तोऽपि संज्ञीति दोषतादवस्थ्यम्, भाष्यप्रामाण्येन संज्ञिघटितस्यानिर्दिश्यमानत्वबोधनेनादोषात्।

ननु एकदेशविकृतन्यायस्य लौकिकतया लोके परिच्छिन्नपरिमाणस्थले द्रोणाढकादौ संख्यायाञ्च न्यूनत्वेऽधिकत्वे वा तन्न्यायाप्रवृत्त्या प्रकृते जरात्वस्य वर्णचतुष्टये परिच्छिन्नतया तेन न्यायेन जरशब्दे जरात्वं दुर्लभम्। अत एव एकोनशते न शतत्वव्यपदेशः। नापि किञ्चिन्न्यूने द्रोणत्वव्यवहार इति चेन्न, जरशब्दे आनुमानिकस्थान्यादेशभावमादाय स्थानिवद्भावेनैकदेशविकृतस्यानन्यत्वादित्यर्थेन जरशब्दस्य जरात्वेन जरसादेश इति तदर्थात्, परिच्छद्यमानस्थले न प्रवर्तते इत्यस्यानित्यत्वाद्वा तद्दोषाभावात्।

अत एव "गुडोदकम्" इत्यत्रानेन न्यायेन दके उदकशब्दत्वमाश्रित्य "उदके केवले" इति स्वरसाधनपरं भाष्यं संगच्छते। सत्यामुपपत्तौ एकदेशयुक्तित्वं तु भाष्यस्य न युक्तमित्यलं विस्तरेण। निर्जरसौ निर्जरसः, इति प्रथमा-द्वितीया-द्विवचनबहुवचनयो रूपम्।

ननु तृतीयैकवचने "निर्जर आ" इति, पञ्चम्येकवचने "निर्जर अस्" इति स्थितौ इनातोः कृतयोर्जरसादेशे "निर्जरसिन" "निर्जरसात्" इति प्राप्नोति, तथा चतुर्थ्येकवचने षष्ठ्येकवचने च "निर्जर ए" "निर्जर अस्" इति स्थितौ यादेशे स्यादेशे च कृते अजादिविभक्तिपरत्वाभावाद् जरसादेशाभावे "निर्जराय" इति, "निर्जरस्य" इति चैकमेव रूपं स्यादत आह-इनादीनिति—

इति अजन्ताःपुँल्लिङ्गाः।

---

# अथ अजन्तस्त्रीलिङ्गप्रकरणम् ।

रमा ।

औङ आपः । [ ७-१-१८ ]

आबन्तादङ्गात्परस्यौङः शी स्यात् । औङ इत्यौकारविभक्तेः संज्ञा ।

॥ अथ अजन्तस्त्रीलिङ्गप्रकरणम् ॥

रमेति—रमयति क्रीडयति ( आनन्दानुकूलो व्यापारविशेषः क्रीडा ) विष्णुं जगद्वा या सा रमा=सम्पदधिष्ठात्री विष्णुपत्नीरूपा देवता लक्ष्मीरिति यावत् । ण्यन्ताद्रमेः पचादित्वादच् । 'नर्तीजृषक्नसुरञ्जोऽमन्ताश्च' इति घटादिगतगणसूत्रेण मित्त्वातिदेशात् 'मितां ह्रस्वः' ( ६-४-९२ ) इति ह्रस्वः टाप् ।

न च 'घमन्तश्च' ( ३७ ) इति लिङ्गानुशासनात् पुंस्त्वेन भवितव्यम् । अत्र 'पुमान्' ( ३५ ) इत्यधिकारादिति वाच्यम्, भावार्थकाजन्तेष्वेव तत्प्रवृत्तेः ।

तदुक्तं लिङ्गानुशासने—'भावार्थे एवेदम्' नपुंसकत्वविशिष्टे भावे क्तल्युट्भ्यां स्त्रीत्वविशिष्टे तु क्तित्वादिभिर्बाधेन परिशेषात् कर्मादौ तु घमन्तमपि विशेष्यलिङ्गम् । तथा च भाष्यम्—'सम्बन्धमनुवर्तिष्यते' इति ।

किञ्च 'पुंसि संज्ञायां घः' ( ३-३-११८ ) इत्यत्र 'अकर्तरि च कारके' इत्यधिकारादकर्त्रर्थक एव घप्रत्ययस्तत्साहचर्यादकर्तृकाजन्तस्यैव तत्र ग्रहणेन कर्त्रर्थकाजन्तस्य त्रिलिङ्गत्वमेव ।

यत्तु 'सम्बन्धमनुवर्तिष्यते' इति भाष्ये अनुयोगे द्वितीयेति तच्चिन्त्यम्, लक्षणादिष्वेवानोः कर्मप्रवचनीयत्वेनान्यत्र तद्योगे द्वितीयाऽननुशासनात् । एतेन 'शेषं रामवत्' इत्यपि व्याख्यातम् । कर्मघमन्तस्यैव प्रयोगात् । अत एव रमेत्यस्य रमयतीति कर्त्रर्थकविग्रहप्रदर्शनम् ।

रमेत्यत्र दीर्घैकादेशविशिष्टे रमाशब्दे पूर्वान्तवत्त्वेन प्रातिपदिकत्वातिदेशात्स्वादयः । लिङ्गविशिष्टपरिभाषया तु न प्रातिपदिकत्वारोपः, लिङ्गबोधकप्रत्ययान्तत्वज्ञानाय परादिवद्भावस्यावश्यकतया उभयोः परिभाषयोराश्रयणे गौरवेण पूर्वान्तवत्त्वेन प्रातिपदिकत्वातिदेशे लाघवादतः 'प्रातिपदिकग्रहणे' इति परिभाषया प्रातिपदिकत्वातिदेशेन स्वादय इत्यस्योदाहरणम्, 'बहुदामाः वाचाः' इत्यादि एकादेशाभावे बोध्यम् । 'बहुदामा' इत्यादावपि आबन्तत्वात्तु न स्वादयः । ङ्याब्ग्रहणस्यान्यार्थतया उक्तत्वाद् भाष्ये तत्प्रत्याख्यानाच्च ।

'रमा—औ' इति स्थिते 'औङ आपः' इति ( ७-१-१८ ) । 'आपः' इति पञ्चम्यन्तम् । प्रत्ययग्रहणपरिभाषया तदादिविशेष्यकतदन्तग्रहणम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । 'जसः शी' इत्यतः 'शी' इत्यनुवर्तते । 'औङः' इति षष्ठ्यन्तम् । तदाह—आबन्तादित्यादि ।

वस्तुतस्तु आप्प्रत्ययेन तदादेरुपस्थितौ तदन्तत्वे आबन्तं यत्तदादि । तत औङ्प्रत्ययेन तदादेरुपस्थितौ पुनस्तदन्तविधौ आबन्तं यत्तदादि तदन्तं यत्तदादि ततः परस्य अङ्गस्य निमित्तभूतो य औङ्प्रत्ययस्तस्य शीरूपादेश इत्येवार्थः । तथा च 'अङ्गस्य' इति पञ्चम्या न विपरिणमनीयम् ।

आबन्तात्परस्या औङ्विभक्तेरसम्भवाशङ्कायामाह—औङितीति । प्राचामिति—एतेन पाणिनिना प्राचां संज्ञामाश्रित्य प्रथमाद्विवचनद्वितीयाद्विवचनयोः सामान्येन ग्रहणाय 'औङः' इति निर्दिष्टमिति सूचितम् ।

रमे । रमाः ।

**सम्बुद्धौ च । [ ७-३-१०६ ]**

आप एकारः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वात्–' ( सु १९३ ) इति संबुद्धिलोपः, हे रमे। हे रमे, हे रमाः । रमाम्, रमे, रमाः । स्त्रीत्वान्नत्वाभावः ।

**आङि चापः । [ ७-३-१०५ ]**

आङि ओसि च परे आबन्तस्याङ्गस्यैकारः स्यात् । रमया, रमाभ्याम्, रमाभिः ।

---

तदुक्तं भाष्ये 'निर्देशोऽयं पूर्वसूत्रेण वा स्यात्' इति । संज्ञेति—प्राचामाचार्य्याणामिति शेषः । अत एव ङित्कार्य्यमपि औङि परतो नाशङ्क्यम् ।

अथवा उभावपि ङकारविशिष्टावेव पूर्वाचार्य्यैः पठितौ । यत्र 'सुट्' प्रत्याहारस्तत्र 'सुङ्' इति प्रत्याहारः । एवञ्च औङ्ग्रहणेनोभयोर्ग्रहणम् । ङकारस्येत्संज्ञालोपौ । आण्नद्याः, याडापः, इत्यत्र 'घेर्ङिति' इत्यतो ङितीत्यनुवर्तते । तत्र ङश्चासाविच्चेति कर्मधारयः । तथा वर्णग्रहणेन 'यस्मिन् विधिः' इति तदादिविधिः । इत्संज्ञकङकारादेराड्याटौ इति न दोषः ।

वस्तुतस्तु कर्मधारयो न युक्त इति 'घेर्ङिति' इति सूत्रे प्रपञ्चितमिति तत एवावसेयम् ।

अतः 'औङ्' इति संज्ञैव, न तु ङकारो नापि ङित् । 'रमे' इत्यत्र 'रमा ई' इति दशायाम् 'यस्येति च' इत्याकारलोपस्तु न, सर्वनामस्थानत्वेन भत्वाभावात् । अत एव 'औङः श्याम्' इत्यस्यापि न विषयः । हे रमा = स् इति स्थितौ 'सम्बुद्धौ च' इति । 'बहुवचने झल्येत्' इत्यत 'एत्' इति, 'आङि चापः' इत्यत 'आपः' इति चानुवर्त्तते । तदाह—आप इति—

वस्तुतस्तु आबन्ततदाद्यन्ताङ्गस्य एकार इत्यर्थः । 'अलोऽन्त्यस्य' इति, निर्दिश्यमानपरिभाषा च फलितार्थं एव—आप एकारः स्यादिति ।

एङ्ह्रस्वादिति—'येन नाप्राप्ते' इति न्यायेन निरवकाशतया 'हल्ङ्याब्भ्यः' इति बाधित्वा एत्वे 'एङ्ह्रस्वात्' इति परत्वात् सुलोपं बाधित्वा सुलोपः । आ आप् इति प्रश्लेषपक्षे तु एत्वे सति हल्ङ्यादिलोपस्य प्राप्तिरेव न, प्रतिपदोक्तत्वात् । 'सम्बुद्धौ च' इति हल्ङ्यादिलोपं बाधते इति तु न युक्तम्, सुतिसिपदोपादानेन हल्ङ्यादिलोपस्यापि प्रतिपदोक्तत्वात् ।

न चैत्वे कृते परत्वात् 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः, सूत्रकारमतेऽपीति न युक्तम्, उभयोर्लोपविधायकतया संवादित्वेन विप्रतिषेधाभावादिति वाच्यम्, उभयोरेककार्य्यविधायकत्वेऽपूर्वबोधकत्वरूपं विधायकत्वमेकस्यैव स्यादित्यपरस्यानुवादकत्वं वाच्यम् । एवं सति कस्य विधायकत्वं कस्यानुवादकत्वमित्यत्र विनिगमनाविरहेण अनुवदितु र्लोके वक्त्रपेक्षयाऽपकृष्टत्वप्रत्ययेन च परस्य रविरोधसरवात् ।

न च सन्निपातपरिभाषया सम्बुद्धिलोपो न स्यादिति वाच्यम्, सम्बुद्धिलोपे तस्या अनित्यत्वात् । अत एव 'हे गौरि' इत्यादिसिद्धिः ।

स्त्रीत्वादिति—स्त्रीत्वात् 'तस्माच्छसो नः पुंसि' इत्यस्याभावतया नत्वं नेत्यर्थः । 'रमा आ' इति स्थितौ 'आङि चापः' ( ७-३-१०५ ) । इति । 'ओसि च' इति, 'बहुवचने झल्येत्' इत्यत एदिति चानुवर्त्तते । 'अङ्गस्य' इति चाधिकृतम् तदन्तविधिः पूर्ववत् तदाह—आङि ओसि चेत्यादि । आप इत्यस्य पञ्चम्यन्ततया आत एत्वं तु न, 'प्रथमयोः' इत्यादिनिर्देशेन 'आपः' इत्यस्य षष्ठ्यन्तत्वात् ।

रमाभिरिति—पूर्वान्तवत्त्वेनादन्तत्वमादाय 'ऐस्' तु न, अत्वव्याप्यधर्मस्य तद्घटितधर्मस्य चातिदेशे 'अन्तादिवच्च' इत्यस्याप्रवृत्तेः । अत एव तुकि 'षत्वतुकोरसिद्धः' इत्यत्र तुग्ग्रहणं

याडापः । [ ७-३-११३ ]

आपः परस्य ङिद्वचनस्य याडागमः स्यात् । 'वृद्धिरेचि' ( सू ७२ ) रमायै । सवर्णदीर्घः, रमायाः । रमायाः, रमयोः, रमाणाम् । रमायाम्, रमयोः, रमासु । एवं दुर्गादयः ।

सर्वनाम्नः स्याड्ढ्रस्वश्च । [ ७-३-११४ ]

आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः ।

---

चरितार्थम् । अन्यथा 'अधीत्य' इत्यादौ पूर्वान्तवत्त्वेन ह्रस्वत्वमादाय तुकि सिद्धे तद्ग्रहणवैयर्थ्यं स्पष्टमेव ।

ईधातोः 'अधीय' इत्यत्र तुग्वारणाय चारितार्थ्यं तु न, ज्ञापकपरभाष्यप्रामाण्येन तादृशाना-मनभिधानात् । 'रमा ए' इति स्थिते 'याडापः' इति । आप इति पञ्चमी । 'घेर्ङिति' इत्यतो ङिति इत्यनुवर्तते 'पञ्चमी स्वस्मात्परां षष्ठीं' कल्पयति' ङिति इति षष्ठ्या विपरिणम्यते तदाह— आपः परस्येत्यादि । वृद्धिरेचीति—'आटश्च' इति तु न, यदवयवष्टकार इत् तादृशस्य आकारस्या-भावात् । 'याट्' इत्यत्र तु या एव टित् नत्वाकारः, यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्यैव तदनुबन्ध-कत्वव्यवहारात् । स्पष्टं चेदं घसंज्ञासूत्रे भाष्ये ।

यत्तु अर्थवत आटो ग्रहणमिति तन्न, आगममात्रस्यानर्थकत्वेन अर्थवत आट आगमस्य शशशृङ्गायमाणत्वात् । सवर्णदीर्घ इति, उक्तरीत्या 'आटश्च' इत्यस्याप्राप्तेः । यद्यपि 'यडापः' इति न्यासेऽपि न दोषः । 'यड्' इत्यत्राकारोच्चारणवैयर्थ्येन 'अतो गुणे' इत्यस्य बाधात् , तथाऽपि उच्चारणार्थत्वस्य ह्रस्वाकारे सम्भवेन स्पष्टार्थं दीर्घोच्चारणात् । रमाणामिति—आबन्तत्वान्नुट्टि पर्जन्यन्यायेन 'नामि' इति दीर्घः णत्वञ्च । रमायामिति—रमा ङि इत्यत्र 'ङेराम्नद्याम्नीभ्यः' इति ङेरामादेशे परत्वाद्याटा नुड्बाध्यते । सवर्णदीर्घः । समुदायवाचिसर्वशब्दात् टापि निष्पन्नस्य सर्वाशब्दस्य तृतीयायां यावद्रमावद् रूपाणि ।

सर्वा—ए इत्यत्र 'सर्वनाम्नः स्याड्ढ्रस्वश्च' ( ७-३-११४ ) । इति । 'याडापः' इत्यत आप इति पञ्चम्यन्तमनुवृत्तम् । तच्च सर्वनाम्न इत्यस्य विशेषणम्, तेन तदन्तविधिः । अङ्गस्येत्य-धिकृतं पञ्चम्या विपरिणम्यते तदन्तविधिश्च । तथा च आबन्तं यत्सर्वनाम तदन्तं यदङ्गं ततः परस्य ङितः स्याडित्यर्थस्तदाह—आबन्तात्सर्वनाम्न इत्यादि । नन्वेवमर्थे 'मासेन पूर्वा मासपूर्वा' 'पूर्व-सदृश' इति तृतीयातत्पुरुषे 'मासपूर्वायै' इत्यत्र स्याडापत्तिः 'मासपूर्वा' इति समुदायस्य 'तृतीया-समासे' इति सर्वनामत्वनिषेधेऽपि 'पूर्वा' इत्यस्य सर्वनामत्वादिति चेन्न, आबन्तात्परस्य सर्वनाम्नो विहितस्य ङितः स्याडित्यर्थेनादोषात् ।

इहापि 'स्यट्' इति वक्तुं युक्तम् । पररूपं तु न, अकारोच्चारणसामर्थ्यात् 'सेनाया वा' ( ७-४-४५ ) इति निर्देशाच्च । ह्रस्वत्वञ्चाप एव न स्याटः, फलाभावात् , विधेयत्वेनोद्देश्यत्वस्यानु-चितत्वाच्च । न च सन्ध्यभावः फलम्, सन्ध्यंशाधेनैवोपपत्तौ बाधस्यायुक्तत्वात् । नापि ङितः पूर्वमागमापेक्षयाऽवयवषष्ठ्यन्तत्वस्य निर्णीतत्वेन स्थानषष्ठ्यभावात् श्रुतानुमितयोः श्रुतसम्बन्धस्यैव बलीयस्त्वाच्च ।

न च 'आपः' इत्यस्यापि अनुमितत्वात् स्थानषष्ठ्यन्तत्वाभावाच्च कथं ह्रस्व इति वाच्यम्, 'ह्रस्वः' इत्यत्र स्थान्याकाङ्क्षायां सर्वनाम्न एव श्रुतत्वेन स्थानषष्ठ्यन्तत्वेन विपरिणामस्य युक्ततया प्रकृते आबन्तस्यैव सर्वनामत्वेन अलोऽन्त्यपरिभाषया 'अचश्च' इति परिभाषया चान्त्यस्याचो ह्रस्वत्वेऽर्थत आप एव ह्रस्वत्वलाभेन 'आपश्च ह्रस्व' इति मूलोक्तिः संगच्छते ।

यद्वा 'ह्रस्वश्च' इत्यत्र चशब्देन 'आङि चापः' इत्यतः षष्ठ्यन्तमेव 'आपः' इत्यनुकृष्यते ।

याटोऽपवादः । सर्वस्यै । सर्वस्याः । सर्वस्याः । एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'आमि सर्वनाम्नः' ( सू ११७ ) इति सुट्, सर्वासाम् । सर्वस्याम्, सर्वयोः, सर्वासु । एवं विश्वादयोऽप्यावन्ताः ।

## विभाषा दिक्समासे बहुव्रीहौ [ १-१-२८ ]

अत्र वदन्ति—सर्वनाम्नोऽसुङ् च इत्येव सूत्रमस्तु । याटः सर्वनामसंज्ञाऽनपेक्षत्वेनान्तरङ्गत्वादसुङं बाधित्वा याटि परे ङित्वादन्त्यस्यासुङादेशे 'सर्वस्यै' इत्यादि सिध्येदिति चेन्न 'अमुष्यै' इत्याद्यसिद्ध्यापत्तेः । मुत्वस्यासिद्धतया पूर्वमसुङि सान्तभिन्नस्य मुत्वमित्यर्थे मुत्वानापत्तेः, सकारस्य स्थाने अकारो यस्य इत्यर्थे मुत्वेऽपि 'अमुमुयङ' 'अदद्रयङ्' इतिवत् 'अमुष्यै' 'अदस्यै' इति रूपद्वयापत्तेः, अर्थकृतबहिरङ्गत्वस्यानाश्रयणे नित्यत्वाद्याटः पूर्वमसुङि याटोऽप्राप्तया रूपासिद्धेश्च ।

न च 'असुङ् च' इति चेन याडपि विधेय इति वाच्यम्, 'विभाषा द्वितीयातृतीयाभ्याम्' इति सूत्रेण समुचितयोर्वैकल्पिकतया 'द्वितीयायै' इत्यादेरसिद्ध्यापत्तेः । किञ्च 'अचि रादेशवत् विषयभेदेऽपि बाधकत्वेऽसुङो याडपवादत्वेन तद्विषये याड् दुर्लभः । न च 'सर्वनाम्नोऽस्याड्' इति न्यस्यते ह्रस्वग्रहणं च न क्रियते । तदा नोक्तदोषस्तथाऽपि 'गोरग्वचनं स्वरसिद्ध्यर्थम्' इतिवत् आरूपे स्थानिनि यदा व्यपदेशिवद्भावेनान्तोदात्तत्वबुद्धिस्तदा अन्तोदात्तेऽस्याडादेशे 'तस्यै' इत्यादौ 'एकादेश उदात्तेनोदात्तः' इति विभक्तेरुदात्तत्वापत्तिः ।

अन्ये तु 'आमि सर्वनाम्नः सुट्' ( ७-१-५२ ) इति, ततः 'याटो ह्रस्वश्च' इति अत्र 'सर्वनाम्नः सुट्' इत्यनुवर्तते । 'आज्जसेः' ( ७-१-५० ) 'आत्' इत्यनुवर्तते । अवर्णान्तात्परस्य सर्वनाम्नो विहितस्य याटः सुट् सर्वनाम्नश्च ह्रस्व इत्यर्थः । अत्र याटि सर्वनामविहितत्वञ्च आगमिलिङ्गद्वारा । ततः 'विभाषा द्वितीयातृतीयाभ्याम्' ( ७-३-११५ ) इति । ततः 'त्रेस्त्रयः' इति ( ६-३-४८ ) अत्र 'त्रेस्त्रयः' इत्यत्र 'त्रेः सम्प्रसारणम्' ( ५-२-५५ ) इत्यत्र च 'त्रेः' इति निर्देशात् मण्डूकप्लुत्या 'आमि' इत्यनुवर्तते । अन्यथा 'त्रेः' इत्यत्रापि त्रयादेशापत्त्या 'त्रेः' इति निर्देशासङ्गतिः । एवञ्च द्विः 'सर्वनाम्नः' इति न कर्तव्यं भवतीत्याहुः ।

याटोऽपवाद इति—'येन नाप्राप्ते' इति न्यायात् । आबन्तस्य सर्वादिगणे पाठाभावात्कथं सर्वनामत्वमिति शङ्कायामाह—एकादेशस्येति--सवर्णदीर्घरूपैकादेशस्येत्यर्थः । नन्वेकादेशनिष्पन्नस्याकारस्याप्त्वाभावेन आबन्तत्वक्षतिः । परादिवत्त्वेनाप्त्वं तु न, 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादिति चेन्न, लिङ्गविशिष्टपरिभाषया सर्वनामत्वम्, प्रातिपदिकत्वस्य तद्व्याप्यस्य च धर्मस्य च तयाऽतिदेशात् पदादिवत्त्वेन चाप्त्वम् । 'अनुडुहो' इत्यत्र आमनडुहः स्त्रियां वा वाच्यः' विभक्तिनिष्ठनिमित्तताके कार्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं न इत्यर्थकस्य 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इत्यस्यावश्यकतया तेनैव निषेधात् 'लिङ्गविशिष्ट'-परिभाषासंचारो न युक्तः । वस्तुतस्तु एकत्र पूर्वपरत्वातिदेशे एव 'उभयतः' इत्यस्य प्रवृत्त्या प्रकृते 'सर्वा' इत्यत्र सर्वनामत्वमावन्तत्वञ्चानेयम् । इति परादिवत्त्वेन आप्त्वातिदेशे आबन्तसर्वनामत्वमाधंसमाजग्रस्तम् । उत्तरस्याः पूर्वस्याश्चान्तरालं या दिक् सा उत्तरपूर्वा ऐशानी दिगित्यर्थः । अत्र गौणत्वात् ( उपसर्जनत्वात् ) अप्राप्ता संज्ञा अनेन विकल्प्यते । यत्तु 'न बहुव्रीहौ' इति निषेधे प्राप्तेऽस्यारम्भ इति तन्न, निषेधस्यालौकिकविग्रहवाक्ये प्रवृत्तिरस्य च समासे इति विभिन्नविषयकत्वात् ।

दिग्ग्रहणं किम् ? 'विभाषा समासे बहुव्रीहौ' इतीयत्युच्यमाने क्व 'विभाषा समासे' इत्यनेन विकल्पः, क्व 'न बहुव्रीहौ' इति नित्यप्रतिषेध इति ज्ञानं न स्यात् । सर्वत्र बहुव्रीहौ विकल्पे 'न बहुव्रीहौ' इत्यस्य वैयर्थ्यम्, सर्वत्र प्रतिषेधे विभाषावैयर्थ्यमित्युभयोर्विषयविभागाय दिग्ग्रहणम् ।

अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै, उत्तरपूर्वायै। 'दिङ्नामान्यन्तराले' ( सू ८८५ ) इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणादिह-योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै।

तथा च दिक्शब्दोच्चारणेन विहितबहुव्रीहौ विकल्पे, न सर्वनामसंज्ञा। अन्यत्र बहुव्रीहौ नित्यं सर्वनामसंज्ञानिषेध इति।

बहुव्रीहित्वस्य समासत्वव्याप्यतया बहुव्रीहौ इत्युक्त्यैव समासे लब्धे समासे इति किमर्थम्? बहुव्रीहिर्द्विविधः-समाससंज्ञको बहुव्रीहिरेकः, 'आबाधे च' ( ८-१-१० ) इति सूत्रेण पीडायां द्योत्यायां सर्वस्य पदस्य द्वे स्तो बहुव्रीहिवच्च इत्यतिदिष्टो द्वितीयः। तत्र समास एव यो बहुव्रीहिस्तत्रैव दिग् बहुव्रीहौ विकल्पो यथा स्यादतिदिष्टबहुव्रीहौ 'दक्षिणदक्षिणस्यै देहि' विरहात्पीडामनुभवत इयमुक्तिरत्र नित्यैव सर्वनामसंज्ञा। प्रतिपदोक्तस्येति। शास्त्रविशिष्टत्वं प्रतिपदोक्तत्वम्। वै० स्वीयोद्देश्यताऽवच्छेदकरूपावच्छिन्नविधेयताश्रयत्वे सति स्वीयोद्देश्यताऽवच्छेदकविषयकज्ञानोपयुज्यमाना याऽऽनुपूर्वी तद्विशिष्टविधेयताश्रयत्वम्।

आनुपूर्वीवैशिष्ट्यञ्च-स्वेन साक्षादवच्छिन्नत्व-स्वावच्छिन्नोद्देश्यतानिरूपितत्वान्यतरसम्बन्धेन। स्वम्=प्रतिपदोक्तत्वेनाभिमतं शास्त्रम्। यस्मिन् शास्त्रे प्रतिपदोक्तपरिभाषा प्रवर्तनीया तच्छास्त्रमिति यावत्। यथा 'गातिस्थाघुपाभूभ्यः' इति शास्त्रीयोद्देश्यतावच्छेदकं रूपं पात्वं तदवच्छिन्नविधेयताश्रयत्वम् 'पा पाने' इति गणसूत्रविहितपाशब्दे। तथा 'विभाषा दिक्समासे' इत्यस्योद्देश्यतावच्छेदकं दिक्त्वं समासत्वञ्च तत्र समासत्वमादाय प्रथमसम्बन्धः। दिक्त्वमादाय स्वा=( दिक्त्वा ) वच्छिन्नोद्देश्यतानिरूपितत्वं विधेयतायाम्। इति 'दिङ्नामान्यन्तराले' इति विहितबहुव्रीहेरेव ग्रहणम्।

स्वीयोद्देश्यतावच्छेदकेत्यादिसम्बन्धफलम् सर्वनामसंज्ञानिषेधके 'तृतीया समासे' इति सूत्रे 'पूर्वसदृशसमोनार्थ' इति विहिततृतीयासमासस्यैव ग्रहणमिति। 'तृतीया समासे' इत्यत्र 'सर्वादीनि सर्वनामानि' इत्यस्यानुवृत्त्या स्वीयोद्देश्यतावच्छेदकं सर्वादित्वं तज्ज्ञानायोपयुज्यमानानुपूर्वी पूर्वत्वम्, तदवच्छिन्नोद्देश्यतानिरूपितत्वम् 'पूर्वसदृश' इति विहितसमासनिष्ठविधेयतायाम् इति तस्यैव तृतीयासमासस्य ग्रहणम्, न तृतीयासमासमात्रस्य। न च 'दिक्संख्ये संज्ञायाम्' इति विहितस्यापि प्रतिपदोक्ततया बहुव्रीहिग्रहणमावश्यकमिति वाच्यम्, तद्विहितसर्वनामान्तस्त्रीवाचकसंज्ञाया अप्रसिद्धेः।

या उत्तरेति—उदूर्ध्वं तरति सूर्य्योऽनयेति उत्तरा। 'ऋदोरप्' ( ) इति करणेऽप्। टाप्। पूर्वेति—यत्तच्छब्दाभ्यामुद्देश्यत्वविधेयत्वप्रतीत्या या उत्तरत्वप्रकारकज्ञानविशेष्या, उत्तरत्वेन प्रतीयमानेत्यर्थः, सा पूर्वा प्रसिद्धपूर्वा यस्या भ्रान्तायाः सा उत्तरपूर्वा पूर्वां दिशमुत्तरत्वेन जानातीत्यर्थः। अत्र उत्तरापदस्य ज्ञानविशेष्यलाक्षणिकार्थबोधकतया गुणोपसर्जनद्रव्यवाचितया विशेषणत्वेन 'सप्तमी विशेषणे बहुव्रीहौ' ( २-२-३५ ) इति पूर्वनिपातः। 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। अत्र पूर्वाशब्देन लक्षणपूर्वापदार्थस्य विधेयत्वेन 'न विधौ परः शब्दार्थः' इति न्यायविरोधात्, ज्ञातार्थसम्बन्धस्यैव लक्षणात्वेन विधेयस्यापूर्वबोध्यत्वेन ज्ञातत्वाभावात्। अन्ये तु विशेष्यविशेषणभावो हि खोकाधीनः।

अत एव 'शुक्तिरजतको देवदत्तः' इत्यपि प्रयोगः। अत एव या पूर्वा सा उत्तरा यस्य स पूर्वोत्तरः इति भाष्ये उदाहृतः। 'यच्छब्दयोगः प्राथम्यम्' इत्यादि त्वसमस्तविषयकम्। अत्र उत्तरशब्दस्य गुणवाचकत्वेऽपि पूर्वशब्दस्यैव पूर्वनिपातः। अत एव 'सप्तमीविशेषणे बहुव्रीहौ' इत्यत्र विशेषणग्रहणं चरितार्थम्। अन्यथा विगुणवाचकत्वेनोपसर्जनतया तस्यैव पूर्वनिपाते सिद्धे तद्वैयर्थ्यं स्पष्टमेवेत्याहुः। या पूर्वत्वप्रकारकज्ञानविशेष्या सा उत्तरा यस्याः=इति तु न, पूर्वाशब्दस्य पूर्व-

बहुव्रीहिग्रहणं स्पष्टार्थम्। अन्तरस्यै शालायै। बाह्यायै इत्यर्थः। 'अपुरि' इत्युक्तेर्नेह—अन्तरायै नगर्यै।

**विभाषा द्वितीयातृतीयाभ्याम्। [ ७-३-११५ ]**

आभ्यां ङितः स्याट् स्यादापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम्, तीयस्य ङित्सूपसंख्यानात्। द्वितीयस्यै, द्वितीयायै। द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याम्,

---

निपातापत्तेः। 'सर्वनाम्नो वृत्तिमात्रे पुंवत्' इति उत्तराशब्दस्य उपसर्जनतया सर्वनामत्वाभावेऽपि मात्रग्रहणात्सर्वनामत्वेन क्वचिद् दृष्टस्य पुंवद्भाव इत्यर्थात्।

स्पष्टार्थमिति—न च बहुव्रीहिग्रहणम् 'न बहुव्रीहौ' इत्यत्रानुवृत्त्यर्थम्। बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव निषेधो यथा स्याद् बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र निषेधो मा भूत् 'एकैकस्मै देहि' 'एकं बहुव्रीहिवत्' ( ८-१-९ ) इति बहुव्रीहित्वातिदेश इति वाच्यम्, 'न बहुव्रीहौ' इत्यत्र 'विभाषा दिक्समासे' इत्यतः 'समासे' इत्यनुवृत्त्यैव तद्व्यावृत्तिसिद्धेः। तदुक्तं भाष्ये—समास इति वर्तते। तेन बहुव्रीहिं विशेषयिष्यामः। समासो यो बहुव्रीहिरिति' इति। बाह्यायै इति—'अन्तरं बहिर्योगोपसंव्यानयोः' इत्युक्त्याऽर्थान्तरे सर्वनामत्वाभाव इत्याह—'बाह्यायै' इत्यर्थ इति।

'अपुरि' इत्युक्तेरिति—'स्वं रूपम्' इति सूत्रेण शब्दविशिष्टस्यैवार्थस्य संज्ञित्वबोधनेन पुःशब्दनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावती या विषयता तादृशविषयतानिरूपिता या विषयता तत्प्रयोजकान्तराशब्दस्य 'अन्तरं बहिर्योग' इति सूत्रप्राप्ता संज्ञा नेत्यर्थः। तथा च नगर्यादिशब्दप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वे अन्तराशब्दस्य सर्वनामत्वं भवत्येव।

अत एव भाष्यकृता स्त्रियामेव 'अन्तरायां पुरि' इत्युदाहृतम्। एतन्मते 'अन्तरस्यां नगर्याम्' इत्येव। अन्ये तु यत्किञ्चित्पदप्रयोज्या या पुःशब्दार्थनिष्ठा विषयता तन्निरूपितविषयताप्रयोजकान्तराशब्दस्य न सर्वनामसंज्ञा इत्यर्थमाहुः।

तन्मते 'अन्तरायां नगर्याम्' इत्येव। अत्र प्रकारतारूपा विषयता अभेदसम्बन्धावच्छिन्ना, सम्बन्धानवच्छिन्ना वा ग्राह्या। तेन 'पुरोऽन्तरस्यां वसति' इत्यत्र 'अन्तरस्यां पुरि वसति' इत्यत्र च न निषेधः।

'विभाषा द्वितीयातृतीयाभ्याम्' ( ७-३-११५ ) इति। अत्र 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तम् पञ्चमी स्वस्मात्परां षष्ठीं कल्पयतीति न्यायात् षष्ठ्या विपरिणम्यते। 'याडापः' इत्यत्र आप इति, 'सर्वनाम्नः स्याड्' इत्यतः स्याडिति, ह्रस्व इति चानुवर्तते। तदाह—आभ्यामित्यादि। त्यक्तुं शक्यमिति—द्वितीयस्मै, द्वितीयाय, तृतीयस्मै, तृतीयाय इत्यादीनां सिद्धये 'तीयस्य ङित्सूपसंख्यानम्' इत्यस्यावश्यकतया तेनैव स्त्रियामपि सिद्धतया सूत्रं व्यर्थमिति भावः।

तदुक्तं भाष्ये—'वा प्रकरणे तीयस्य ङित्सूपसंख्यानम्' द्वितीयायै, द्वितीयस्यै, तृतीयायै, तृतीयस्यै। 'विभाषा द्वितीयातृतीयाभ्याम्' इत्येतच्च वक्तव्यं भवति। किम्पुनरत्र ज्यायः? उपसंख्यानमेवात्र ज्यायः। इदमपि सिद्धं भवति द्वितीयाय, द्वितीयस्मै, तृतीयाय, तृतीयस्मै, इति' इति।

द्वितीयतृतीयशब्दौ द्विविधौ—द्वयोः पूरणो द्वितीयः, त्रयाणां पूरणस्तृतीयः 'द्वेस्तीयः' ( ५-२-५४ ) 'त्रेः सम्प्रसारणञ्च' ( ५-२-५५ ) इति सूत्राभ्यां निष्पन्नौ 'द्वितीयो तृतीयो वा भागः' द्वितीयः, तृतीयः, 'पूरणाद् भागे तीयादन्' ( ५-३-४८ ) इति अन्प्रत्ययः। 'यस्येति च' इत्यकारलोपः। अर्थवद्ग्रहणपरिभाषया अर्थवतः पूरणार्थस्य तीयप्रत्ययस्य वार्तिके ग्रहणम्।

अन्प्रत्ययान्तघटकः 'तीय' इति तु अनर्थकः, प्रकृतिरर्थवती, प्रत्ययोऽर्थवान् प्रकृत्येकदेशविशिष्टस्य प्रत्ययस्यानर्थकत्वेन प्रकृते अन्प्रत्ययस्य प्रकृतिः द्वितीयः, तृतीयश्च। तत्र तीयघटकस्याकारस्य लोपे प्रकृत्येकदेशः तीय् इति तेन सहितः 'अन्प्रत्ययः' 'तीय' इत्यस्यानर्थकत्वात वार्तिकेन

द्वितीयायाम् । शेषं रमावत् । एवं तृतीया । 'अम्बार्थनद्योर्ह्रस्वः' ( सू २६७ ) हे अम्ब । हे अक्क । हे अल्ल । 'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न ( वा ४५६२ ) हे अम्बाडे, हे अम्बाले । हे अम्बिके ।

तस्याग्रहणात् 'द्वितीयाय, तृतीयाय, द्वितीयायै, तृतीयायै इत्येव रूपाणि । अत्र न सर्वनामकार्याणि । यत्तु 'तीयादनित्यस्य तीयप्रत्ययार्थेनैवार्थवत्त्वादर्थवत्परिभाषया तस्य वारणं न सम्भवतीति' तच्चिन्त्यम्, तीयान्ततदादेर्विहितत्वेन अनुप्रत्ययघटिततीयेत्यस्यानर्थकत्वे संदेहाभावात् । प्रतिपदोक्तपरिभाषयाऽपि अतन्तस्यात्राग्रहणम् । अतन्त आद्युदात्तस्तीयप्रत्ययान्तश्च प्रत्ययस्वरेण मध्योदात्त इति विशेषः । अम्बार्थनद्योर्ह्रस्व इति—व्याख्यातमिदं पूर्वम् । तत्र नदीविषये उदाहृतम् । अम्बार्थमुदाहरति—हे अम्ब इति—'रबिलबिअबि शब्दे' इति पठिताद्धातूनामनेकार्थत्वाद्रक्षणार्थादम्ब—धातोः पचाद्यचि अम्बते=रक्षतीति 'अम्बः = पिता । स्त्रियामम्बा माता । तदुक्तं माधवीये त्रयाणां लोकानामम्बः पितेत्यागमविदः । द्यौर्भूमिरापस्तिस्रोऽम्बा अस्येति भारतम्' इति । हे अक्केति । ह्रस्वे कृते 'सम्बुद्धौ च' इत्येवं तु न, आ आप् इति प्रश्लेषात् । अत्र वार्तिकानि—'डलकवतीनां प्रतिषेधो वक्तव्यः' ह्रस्वस्येति शेषः । हे अम्बाडे, हे अम्बाले, हे अम्बिके ।

वार्तिकसत्त्वे हे अक्क, हे अल्ल, अत्रेष्टो ह्रस्वो न सिध्यतीति भाष्यकृता 'द्व्यक्षरं यदि' इति पठित्वा द्व्यच्कं यदि अम्बार्थकं तदा ह्रस्वो भवतीत्युक्त्वा वार्तिकं प्रत्याख्यातम् । तथा च भाष्यकारवार्तिककृतोः फलभेद आपतति । 'डलकवतीनाम्' इति कसत्त्वे 'अक्क, अल्ल, इति ह्रस्वो न प्राप्नोति' कवत्त्वात् । भाष्यमते द्व्यच्कत्वात्प्राप्नोतीति फलभेदवारणाय कैयटेन असंयुक्तानाञ्च डलकवतां प्रतिषेध इत्युक्तं तदनुसारेण ग्रन्थकृदाह—

असंयुक्ता ये डलका इति । 'द्व्यक्षरं यदि' इत्यस्य अङ्गाधिकारीये ह्रस्वविधायके पाठात् द्व्यच्कं यदम्बार्थकं तदन्तस्याङ्गस्य ह्रस्वः सम्बुद्धौ इत्यर्थात् ।

'हे जगदम्ब' इत्यादावङ्गस्यानेकाच्त्वेऽपि ह्रस्वः सिध्यति । अत्र ह्रस्वे कृते टाप् तु न, बहिरङ्गत्वेन ह्रस्वस्यासिद्धत्वात्, सन्निपातपरिभाषाविरोधात् ह्रस्वस्थानीभूतटापा स्त्रीत्वस्य उक्तत्वाच्च। केचित्तु आङ्गत्वात्तदन्तविधिना 'जगदम्बाशब्दे प्राप्तोऽपि ह्रस्वो न भवति । 'अम्बार्थं द्व्यक्षरं यदि' इति वचनेन द्व्यक्षराणामेवाम्बार्थानां ग्रहणमुरीकृत्य 'डलकवतीनाम्' इत्यस्य प्रत्याख्यानात् । तत्र यदिशब्दः 'असंदिग्धे संदिग्धवचनम्' इति न्यायेन योज्यः, 'यदि वेदाः प्रमाणं स्युः' इतिवत् । तेन विकल्पो न शङ्क्यः । किन्तु 'हे जगदम्बे' इत्येव भवतीत्याहुः । द्वितीयं वार्तिकम् 'तलो ह्रस्वत्वं वा ङिसम्बुद्ध्योः' इति । हे देवत, हे देवते, ङौ देवते, देवतायाम्, इति । इदमपि प्रत्याख्यातम् । छान्दसत्वाद् 'व्यत्ययो बहुलम्' इत्यापो ह्रस्वः स्यात् । तृतीयम् 'मातॄणां मातच्पुत्रार्थमर्हते' इति ।

अर्हते इत्यत्र 'अर्हः प्रशंसायाम्' ( ३-२-१३३ ) इति शतृप्रत्ययः । अर्हते पुत्राय प्रयुक्ते मातृशब्द इति पुत्रार्थम् । न च अर्हते इति विशेषणसत्त्वे 'सविशेषणानां वृत्तिर्न' इति निषेधात् समासो न स्यादिति वाच्यम्, अनेनैव भाष्यप्रयोगेण समासस्य निपातनात् । पुत्रस्य स्वयं प्रशस्यत्वेऽपि यदा मातृप्रशंसया प्रशंसा तदैव मातजादेश इति मातुरेकत्वेऽपि 'मातॄणाम्' इति वार्तिकं बहुवचननिर्देशः ।

'अर्हधातोः पूजार्थकत्वेऽपि सूत्रे प्रशंसाग्रहणं धातूनामनेकार्थं इति ज्ञापनार्थम् । यद्यपि अलौकिकविग्रहवाक्ये एव समासस्तथाप्यत्र न तथा समासे सत्येव प्रशंसाप्रतीत्या तदैवादेशः । मातॄणां मातजादेशो वक्तव्यः पुत्रार्थमर्हते—अर्हते पुत्राय । यः पुत्रः श्लाघ्यगुणत्वात् सत्कुलसम्भूतया मात्रा व्यपदिश्यते । अर्हन्तं पुत्रमभिधातुं यो मातृशब्दः प्रयुज्यते तदन्तबहुव्रीहौ कब्बाधको मातजादेशो विधीयते । मात्रा पुत्रस्य प्रशस्तौ गम्यमानायाम् । 'गार्गी माताऽस्येति गार्गी-

जरा । जरसौ । शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरम्, जरसामित्यादि । पक्षे हलादौ च रमावत् । इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया अनित्यतां चाश्रित्य 'जरसी' इति केचिदाहुः, तन्निर्मूलम् । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य 'औङ आपः' ( सू २८७ ) 'ङेराम्—' ( २७० ) इति च पञ्चापि विधयः प्राप्ताः, नसुनिश्प्रभृ,

---

मात' सम्बुद्धावेवायमत्र सूत्रे उपसंख्यानाद् भाष्यतस्तथैव प्रतीतेश्च । अत्र 'नद्यृतश्च' इति प्राप्तः कप् मातजा बाध्यते । यत्र तु श्लाघा नास्ति किन्तु वस्तुस्थितिकथनं तत्र कबेव 'हे गार्गीमातृक' इति । मात्रा पुत्रस्याभिधानं बहुव्रीहिं विना न सम्भवतीति बहुव्रीहिराक्षिप्यते । 'गार्गीमात' इत्यत्र पुंवद्भावस्तु न गार्गी इत्यस्य गोत्रप्रत्ययान्तत्वेन जातिवाचकतया 'जातेश्च' ( ६-३-४१ ) इति निषेधात् ।

जरेति—जीर्यति शरीरं यया सा जरा । 'जॄष् वयोहानौ । 'षिद्भिदादिभ्योऽङ्' (३-३-१०४) इत्यङ् 'ऋदृशोऽङि गुणः' ( ७-४-१६ ) इति गुणः रपरत्वम् टाप् । जरसाविति—'जराया जरस्' इति जरसादेशः । ननु शीभावे कृते आबन्तसन्निपातमुपजीव्य प्रवृत्तः शीभावः सन्निपातपरिभाषया आबन्तसन्निपातकजरसादेशं प्रति निमित्तं न स्यादिति 'जरे' इति स्यादत आह—शीभावादिति—ल्यब्लोपे पञ्चमी, शीभावं प्रबाध्येत्यर्थः ।

ननु 'औङ आपः' ( ७-१-१८ ) 'ह्रस्वनद्यापो नुट्' ७-१-५४ ) इत्यपेक्षया 'जराया जरस्' ( ७-२-१०१ ) इति सूत्रस्य परत्वमस्ति । परन्तु 'आङि चापः' ( ७-३-१०५ ) 'याडापः' ( ७-३-११३ ) 'ङेराम्नद्याम्नीभ्यः' ( ७-३-११६ ) इति विधयः परत्वाज्जरसादेशं बाधित्वा स्युरिति चेन्न, 'आङि चापः' इत्येत्वं नित्यत्वाद् बाधित्वा जरसादेशप्रवृत्तेः । कृतेऽप्येत्वे 'एकदेशविकृतन्यायेन स्थानिवद्भावेन वा जरसादेशप्राप्त्या नित्यत्वम् ।

न च जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्ततया एत्वादिप्राप्त्या त्रयाणामपि नित्यतया परत्वात् एत्वादयः स्युरिति वाच्यम्, तत्र आ आविति प्रश्लेषेण जरसादेशे स्थानिवद्भावेनाप्त्वेऽपि आरूपत्वस्याल्-धर्मत्वेन 'अनल्विधौ' इति निषेधादेत्वादेरप्राप्त्या अनित्यत्वात् ।

न च याटि कृतेऽजादिपरत्वाभावेन जरसादेशस्याप्राप्त्या अनित्यतया परत्वाद्याडेव स्यादिति वाच्यम्, याट आकाररूपापः परस्य ङितः सुपो विहितत्वेन बह्वपेक्षत्वरूपबहिरङ्गत्वादन्तरङ्गस्य जरसादेशस्यैव प्रवृत्तेः ।

दीक्षिताकारास्तु जरसादेशाद्विभक्त्यादेशा एव पूर्वविप्रतिषेधेन । अत एव 'जराया जरस्' इति भाष्ये 'अजरांसि' इत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति भाष्यं संगच्छते । अन्यथा 'अजरस्' इत्यत्र शिभावं बाधित्वा परत्वाज्जरसादेशे ततः शिभावे नुमः प्राप्तिस्तदानीं जरसादेशस्य जातत्वेन नुमा सह भाष्योक्तविप्रतिषेधासङ्गतिः । जरसादेशं बाधित्वा पूर्वविप्रतिषेधेन विभक्त्यादेशे शिभावे तु नुम्जरसौ प्राप्नुत इति भाष्योक्तं सङ्गच्छते । एवञ्च 'अतिजरेण' अतिजराय, अतिजरात् इत्येकमेव रूपम्, विभक्त्यादेशे कृते सन्निपातपरिभाषया जरसादेशाभावात् ।

किञ्च जरसादेशाद्विभक्त्यादेश एव न पूर्वविप्रतिषेधेन किन्तु विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेन । अत एव 'ङ्याब्ग्रहणेऽदीर्घ' इति इति वार्तिकं जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्तिककृता आरब्धः, अन्यथा जरसे, जरसाम्' इत्यादौ जरसादेशोऽन्तरङ्गत्वाद्याटं नित्यत्वादामादेशं बाधित्वा स्यात् । तथा च स्थानिवत्त्वेनाप्त्वमाश्रित्य प्राप्तयोर्याडामोर्वारणाय वार्तिककृता 'ङ्याब्ग्रहणेऽजरस्' इत्यपि आरब्धं स्यात् तन्मते आकारप्रश्लेषाभावात् ।

पूर्वं विभक्तिसम्बन्धियाडामोः कृतयोस्तु अजादित्वाभावात्सन्निपातपरिभाषाविरोधाच्च न जरस् । एवं च जरायै, जराणाम्, इत्येकमेव रूपम्, न जरसादेशघटितमित्याहुः ।

तथाप्यनल्विधावित्युक्तेर्न भवन्ति, 'आ आप्' इति प्रश्लिष्याकाररूपस्यैवापः सर्वत्र ग्रहणात्।

अपरे तु 'अजर अस्' इति दशायां नित्यत्वात्पूर्वं शिभावः। जरसादेशस्तु न नित्यः, शिभावे कृते नुमि तदप्राप्तेरिति शङ्कापरिहाराय शिभावोत्तरमपि विप्रतिषेधेन जरसः प्राप्तिरि'ति भाष्यकृता उक्तं 'नुमजरसोः प्राप्तयोः परत्वाज्जरस्' इति जरसोऽपि नित्यत्वप्रदर्शनपरं तद्भाष्यमिति न तेन विभक्त्यादेशस्य बलवत्वं वक्तुं शक्यते।

किञ्चायं भाष्यकृतः पूर्वविप्रतिषेधोपन्यासः, जरसो नुमा सह समबलतामभ्युपेत्य, वस्तुतो जरसादेशः सर्वविधिभ्यो बलवान्। अत एव 'जरायाः' इति सूत्रे भाष्ये 'जरसोऽत्रकाशो जरसा जरसे' इति भाष्यकारोक्तिः संगच्छते। अन्यथा 'जरसे' इत्यादौ परत्वात् याडिति भाष्या सङ्गतिः। तेन पुंसि निर्जरसा, निर्जरेण, इत्यादि, स्त्रियां जरसे, जरायै इत्यादि प्राचीनोक्तं समाचीनमेवेति भवन्ति। मतान्तरं दूषयितुमाह—इहेति—जरा औ, इत्यत्र शीभावं कृत्वेति—ननु परत्वात् शीभावं बाधित्वा जरसादेश एव स्यादत आह-पूर्वविप्रतिषेधेनेति-'विप्रतिषेधे' इति सूत्रे परशब्दस्येष्टवाचित्वमाश्रित्य क्वचित्पूर्वस्यैवेष्टत्वाश्रयणेनेत्यर्थः।

नन्वाबन्तमुपजीव्य प्रवृत्तः शीभाव आबन्तसन्निपातविघातकजरसादेशे सन्निपातपरिभाषया निमित्तं न स्यादत आह-सन्निपातपरिभाषाया इति। निर्मूलमिति-पूर्वविप्रतिषेधस्य भाष्यपरिगणितेष्वेव प्रवृत्त्या अत्र तदाश्रयणे सन्निपातपरिभाषाया अनित्यत्वाश्रयणे च मानाभाव इति भावः। न च 'जसः शी' इति दीर्घादेश एव मानम्। अन्यथा 'शि' इत्यादेशेनैव सर्वे, रमे, इत्यादीनां सिद्धया तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम्, वारिणी, इत्यादौ तच्चारितार्थ्यात्।

ननु जरसौ, जरसाम्, इत्यत्र 'औङ आपः' 'ह्रस्वनद्यापः' इत्यपेक्षया 'जरायाः' इत्यस्य परत्वादस्तु जरसादेशः। अस्तु च ङेङसिङस्सु बहुनपेक्षं याटमन्तरङ्गत्वाद् बाधित्वा जरसादेशः ङौ च नित्यत्वादाममन्तरङ्गत्वाच्चाटं च बाधित्वा जरसादेशस्तथापि जरसादेश कृते स्थानिवत्त्वेनाबन्तत्वमाश्रित्य नैते विधयो भवन्ति। किञ्च निशा-नासिका-पृतनाशब्दानामपि उक्तप्रत्ययेषूक्तरीत्यैव 'पद्दन्नोमास्' इत्यादिना निश्-नस्पृतादेशेषु च स्थानिवत्त्वेनैवाबन्तत्वाद् याडादयः कथं नेत्याशङ्कायामाह—

यद्यपीत्यादि। परिहारमाह-तथापीति—स्थानीभूताबन्ताश्रयविधय एत्वादयस्तेषु कर्त्तव्येषु अनल्विधाविति स्थानिवत्त्वनिषेधान्न स्युः। ननु स्थानिघटकाल्वृत्त्येत्वव्याप्यत्वादिधर्मनिमित्तकत्वेन प्रवर्तमानो विधिरल्विधिः। न तु येन केन रूपेण अल् ( वर्ण ) निमित्तको विधिः। तथा सति 'रामाय' इत्यत्र दीर्घो न स्यात्। अत्र दीर्घो यञादौ सुपि परे विधीयते। यादेशस्य सुप्त्वं तु स्थानिवत्त्वलभ्यम्। यादेशस्य स्थानी एकाररूपोऽल् ततश्च स्थानिभूतैकारवृत्तिसुप्त्वनिमित्तकत्वेन एकाररूपालनिमित्तकतया अनल्विधाविति निषेधेन सुप्त्वाभावाद्दीर्घो न स्यात्। अल्वृत्त्यव्याप्यधर्मपुरस्कारेण स्थान्यलमाश्रित्य विधीयमानविधेरल्विधित्वाश्रयणे तु न दोषः दीर्घो हि यादेशस्य स्थानिभूतो योऽल् एकारस्तम् एकारत्वेन नाश्रयति किन्तु सुप्त्वेन। सुप्त्वन्तु नाल्त्वव्याप्यं धर्मो भ्यामादावपि सत्त्वात्। एवञ्च दीर्घस्य स्थान्यल्वृत्त्यल्त्वव्याप्यधर्मनिमित्तकत्वाभावात् स्थानिवत्त्वेन सुप्त्वाद् दीर्घः सिध्यति।

प्रकृते च एत्वादिविधयो जरसादेशस्य स्थानिभूतो यो जराशब्दस्तमाबन्तत्वेनाश्रयन्ते। तथा च आबन्तत्वं तत्र विशेषणतया निविष्टमाप्त्वञ्च नाल्त्वव्याप्यम्। आबन्तत्वस्य अल्समुदायजरादिवृत्तित्वादाप्त्वस्याप्यल्द्वयवृत्तित्वात्। तथा च एत्वादिविधीनामनल्विधित्वात्स्थानिवत्त्वेनाबन्तत्व-

एवं 'हल्ङ्याप्—' ( सू २५५ ) इति सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषाद् 'अतिख-ट्वः' 'निष्कौशाम्बिः' इत्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । न चैवमपि 'अतिखट्वाय' इत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम् ।

---

मादाय एत्वादयः स्युरित्यत आह—आ आबित्यादि । 'आङि चापः' इत्यादिषु सवर्णदीर्घेण आ आबिति प्रश्लिष्य आत्वेनाप आश्रयणादात्वस्य च अल्मात्रवृत्तित्वेनाल्त्वव्याप्यत्वेन एत्वादीनामप्यल्विधित्वात् स्थानिवत्त्वेनाबन्तत्वस्य वक्तुमशक्यत्वात् । अत एव हलन्तादेशेषु कृतेषु एत्वादयो न भवन्ति । प्रसङ्गादाह—एवमिति—'आङि चापः' इत्यादिषु आ आबिति प्रश्लेषवत् 'हल्ङ्याब्भ्यः' इति सूत्रेऽपि ङी ई आ आप्' इति सवर्णदीर्घेण प्रश्लिष्य ईरूपङ्यन्ताद् आरूपबन्तात्परेषां स्वादीनां लोपविधानेन 'खट्वामतिक्रान्तोऽतिखट्वः, इत्यत्र 'अत्यादयः' क्रान्ताद्यर्थे' इति समासे, कुशाम्बेन निर्वृत्ता नगरी कौशम्बी । तेन निर्वृत्तम्' ( ४-२-६८ ) इत्यणि 'टिड्ढाणञ्' ( ४-१-१५ ) इति ङीपि । कौशाम्ब्या निष्क्रान्त इति विग्रहे निरादयः क्रान्ताद्यर्थे पञ्चम्या, इति समासे उभयत्रापि 'गोस्त्रियोः' ( ६-२-४८ ) इति ह्रस्वे ईरूपङीप्त्वस्य आरूपाप्त्वस्य चाल्त्वव्याप्यधर्मतया 'अनल्विधौ' इति निषेधेन स्थानिवत्त्वेनानेतुमशक्यतया सुलोपाप्राप्त्या 'हल्ङ्याब्भ्यः' इति सूत्रे दीर्घग्रहणं प्रत्याख्येयमिति भावः । विस्तरस्तु 'हल्ङ्याप्' सूत्रे द्रष्टव्यः ।

'याडापः' इत्यादौ आकारप्रश्लेषेऽपि 'अतिखट्वाय' इत्यत्र याड् दुर्वारः । 'अतिखट्व य' इत्यत्र 'सुपि च' इति दीर्घे आकाररूपाप्त्वस्य सत्त्वात् । न चात्वस्याल्धर्मत्वात् तत्पुरस्कारेण प्रवर्तमानयाड्विधेरल्विधित्वादाकारत्वावच्छिन्नाप्त्वं दीर्घे लभ्यमिति वाच्यम्, याड्विधिराकाररूपाबाश्रयः । तत्राकाररूपवत्त्वं दीर्घस्य स्वत एव सिद्धम् इति न तत्स्थानिवत्त्वलभ्यम् । अनल्विधौ इति निषेधोऽतिदिश्यमानधर्मस्यैवाल्त्वव्याप्यत्वमपेक्षते । अन्यथा 'बभूविव' इत्यादावपि इटनापत्तिः । वसः स्थाने 'परस्मैपदानाम्' इति वादेशे स्थानिवत्त्वेनैवार्धधातुकत्वं लभ्यम् । तत्र 'आर्द्धधातुकस्येट्' इत्यस्य वलाद्यार्धधातुकत्वनिमित्तकत्वेन अल्त्वव्याप्यवल्त्वावच्छिन्ननिमित्तकतया स्थानिवद्भावाभावे इडनापत्तिः । अतिदिश्यमानस्यैवाल्त्वव्याप्यस्य ग्रहणे तु 'व' प्रत्यये वलादित्वस्य सत्त्वेनातिदिश्यमानत्वाभावान्न निषेध इत्यार्धधातुकत्वमेवातिदेश्यं तच्च नाल्त्वव्याप्यमिति न दोषः ।

एवं प्रकृते आत्वस्य सत्त्वेन आप्त्वमेवातिदेष्टव्यम् तच्च आब्रूपवर्णद्वयवृत्तित्वान्नाल्त्वव्याप्यमिति स्थानिवत्त्वेन तदादाय याड् दुर्वार इत्याशङ्क्य परिहरति न चेति । एवमपीति—'याडापः' इत्यत्राकारप्रश्लेषे सत्यपीत्यर्थः । स्वाश्रयमिति—स्वमाकार आश्रयो यस्यात्वस्य तत्स्वाश्रयम् स्वतः सिद्धमात्वमित्यर्थः । स्थानिवद्भावेनाप्त्वञ्चाश्रित्य याट् स्यादिति भावः । स्थानिवद्भावेनेति—

न च 'ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवत्' इति वार्त्तिकेन ह्रस्वाकारे स्थानिवत्त्वेन आप्त्वाभावात् कथं दीर्घे स्थानिवत्त्वेनाप्त्वलाभ इति वाच्यम् आ आबिति प्रश्लेषकर्तुर्भाष्यकारस्यमते वार्तिकाभावेन ह्रस्वाकारे स्थानिवत्त्वेनाप्त्वस्य सुलभत्वेन आकारप्रश्लेषेण वार्तिकप्रत्याख्यातुर्भाष्यकारस्य नये शङ्कायाः सत्त्वात् ।

अत्र वार्त्तिके 'ङ्याब्ग्रहणे ह्रस्व आदेशो न स्थानिवत्' इत्येव कुतो नोक्तम् इति तु न वाच्यम्, दीर्घभिन्न आदेशो न स्थानिवदित्युक्तौ 'श्रविष्ठासु जातः श्रविष्ठः' इत्यत्र जातार्थप्रत्ययस्य 'श्रविष्ठाफल्गुनी' ( ४-३-३४ ) इति सूत्रेण लुकि 'लुक् तद्धितलुकि' ( ४-२-४९ ) इति टापो लुकि दीर्घभिन्नस्य लुगादेशस्यापि स्थानिवत्त्वनिषेधेन 'हल्ङ्याब्भ्यः' इति सोर्लोपो न भवति, ह्रस्वादेशस्यैव स्थानिवत्त्वनिषे तु लुगादेशस्य स्थानिवत्त्वेनाप्त्वमादाय सोर्लोपापत्तिर्दुर्वारा स्यात् ।

किञ्च 'गङ्गामिच्छति गङ्गीयति । ततः क्विपि 'गङ्गीः' इत्यत्र सुलोपवारणाय आ आबिति प्रश्लेषेण वार्तिकप्रत्याख्यानपरकभाष्यप्रामाण्यात् 'अदीर्घः' इत्यस्य सवर्णदीर्घभिन्न इत्येवार्थः । तथा च 'गङ्गीः' इत्यत्र ईकारस्य सवर्णदीर्घभिन्नतया दीर्घत्वेऽपि स्थानिवत्त्वनिषेधात् सुलोपो न ।

आबन्तं यदङ्गं ततः परस्य याड्विधानात्, उपसर्जनस्त्रीप्रत्यये तदादिनियमात् ।

न च भाष्यकारमते आकारप्रश्लेषे अतिखट्वस्य अः, अतिखट्वाः, इत्यत्र आत्वस्य स्वतः सत्त्वात्स्थानिवत्त्वेनाप्त्वात्सुलोपापत्तिः वार्तिकमते तु अतिखट्व इत्यत्र ह्रस्वाकारे स्थानिवत्त्वनिषेधेनाप्त्वाभावात् 'अतिखट्वाः' इत्यत्र दीर्घाकारे आप्त्वाभावात्लोपो न प्राप्नोतीति फलभेदः, उभयमते फलभेदवारणाय ईदृशानामनभिधानात् ।

भाष्यमतेऽपि अतिखट्व इति ह्रस्वाकारे आप्त्वातिदेशे फलाभावेन स्थानिवद्भावाभावे दीर्घे आप्त्वाभावान्न सुलोप इति फलभेदाभाव इति शेखरोक्तिस्तु न युक्ता, परम्परया फलसत्त्वेऽपि स्थानिवत्त्वस्यावश्यकत्वात् । अत एव 'सुनयिका' इत्यत्र नीधातोर्गुणेऽयादेशे यकारस्य धात्ववयवत्वाद् 'धात्वन्तयकोस्तु नित्यम्' इति इत्वम्, शिवोऽर्च्यः' इत्यत्र ओकारस्य पदान्तत्वाद् 'एङः पदान्तादति' इति पूर्वरूपम्, 'बिभिदतुः' इत्यादावतुसो लिट्त्वेन 'असंयोगाल्लिट् कित्' इति कित्त्वं च सिध्यति ।

आबन्तं यदङ्गमिति—'याडापः' इत्यत्रापः प्रत्ययतया प्रत्ययग्रहणपरिभाषया आबन्तं तदादि गृह्यते । अङ्गस्येति च तदादिविशेषणम् । तथा चाङ्गाभिन्नं यदाबन्तं तदादि ततः परस्य ङितः सुपो याडित्यर्थः । आबन्तं तदादीत्यस्य यस्मादाप्प्रत्ययो विहितः सा प्रकृतिराद्यवयवो यस्य स आप्प्रत्ययोऽन्त्यावयवो यस्य समुदायस्य तदाबन्तं तदादिरूपम् । 'अतिखट्वाय' इत्यत्र खट्वशब्दादन्तात् टाब्विहितः । ततश्च 'खट्वा' इत्येवाबन्ततदादि । एवञ्चात्राङ्गम् 'अतिखट्वा' इति तच्च न आप्प्रकृत्यादि । एवञ्च स्थानित्वेन आप्त्वे सत्यपि ङित्प्रत्ययनिरूपितमङ्गमतिखट्वा' इति तच्च नाबन्ततदादीति ततः परस्य ङितोऽभावान्न याडिति भावः ।

ननु 'ष्यङः सम्प्रसारणम्' ( ६–१–१३ ) इति सूत्रे भाष्ये 'स्त्रीप्रत्यये तदादिनियमो न' इत्युक्तम् । अत एव 'परमकारीषगन्धीपुत्रः' इत्यत्र सम्प्रसारणं सिध्यति । अन्यथा अत्रापि 'कारीषगन्ध्या' एवाबन्ततदादि । पूर्वपदञ्च 'परमकारीगन्ध्या' इति । ततश्च पूर्वपदाभिन्नाबन्ततदादेरभावादिष्टं सम्प्रसारणं न स्यात् । एवञ्च तदादिनियमाभावे 'अतिखट्वाय' इत्यत्र याड्दुर्वार इति चेन्न भाष्ये अनुपसर्जने स्त्रीप्रत्यये एव तदादिनिषेधोक्तेः । 'अनुपसर्जनेस्त्रीप्रत्यये तदादिनियमो न' इति ।

अत्रोपसर्जनत्वञ्च—स्त्रीप्रत्ययान्तसमुदायपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपं लौकिकमेव, न तु शास्त्रीयम्, स्त्रीप्रत्ययेऽसम्भवात् विभक्त्यन्तस्यैवोपसर्जनसंज्ञालाभात् ।

लक्षणसमन्वयस्तु—स्त्रीप्रत्ययान्तः--'अतिखट्वा' इति समुदायः । तत्पर्याप्ता शक्तिः स्त्रीत्वविशिष्टखट्वाकर्मकातिक्रमणकर्तृत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थः स्त्रीत्वविशिष्टखट्वाकर्मकातिक्रमणकर्ता तन्निष्ठ ( कर्तृनिष्ठ ) विशेष्यतानिरूपितप्रकारता खट्वार्थनिष्ठा तादृशप्रकारतानिरूपिता या स्त्रीत्वनिष्ठाऽवच्छेदकता तत्प्रयोजकत्वमाप्प्रत्ययस्येत्युपसर्जनस्त्रीप्रत्ययसत्त्वात्तदादिनियमोऽत्र दुर्वारः ।

ननु 'अङ्गाभिन्नं यदाबन्ततदादि इत्यर्थो न स्यात्, 'पदाङ्गाधिकारे तस्य तदन्तस्य च' इति परिभाषया 'अङ्गस्य' इत्यस्य विशेष्यत्वबोधनात् । तथापि आबन्तं यत्तदादि तस्याङ्गविशेषणतया 'येन विधिः' इति तदन्तत्वे आबन्तं यत्तदादि तदन्तं यदङ्गम् ततः परस्य ङितो याडित्यर्थे 'अतिखट्वाय' इत्यत्र याडापत्ति स्तादवस्थ्यमिति चेन्न, धर्मिसन्निधाने 'प्रत्ययग्रहणे' इति परिभाषया तदादित्वरूपधर्ममात्रोपस्थापनेन आब्निरूपितं तदादित्वविशिष्टं यदङ्गम् ततः परस्य ङित एव याड्विधानेनादोषात् ।

'पद्दन्—' ( सू २२८ ) इति नासिकाया नस्, नसः, नसा । नोभ्यामित्यादि । पक्षे सुटि च रमावत् । निशाया निश्, निशः । निशा ।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । [ ८—२—३६ ]**

तदादित्वधर्ममात्रोपस्थित्या समानाधिकरणविशेषणत्वाभावाद्विर्तीयतदन्तविधेरप्राप्त्या दोषाभावात् ।

न चैवं खट्वाया अर्धे 'अर्धखट्वायाम्' इत्यत्र याडनापत्तिः, अत्र उपसर्जनतया तदादिनियमेन, आबन्ततदादित्वविशिष्टाङ्गाभावादिति वाच्यम्, शास्त्रीयोपसर्जनत्वविशिष्टलौकिकोपसर्जनत्वस्य ग्रहणेन 'अर्धखट्वायाम्' इत्यत्र 'एकविभक्तावषष्ठ्यन्तवचनम्' इति वार्तिकेन खट्वारूपार्थे लौकिकोपसर्जनत्वसत्त्वेऽपि शास्त्रीयोपसर्जनत्वाभावेनादोषात् ।

एतेन लौकिकोपसर्जनत्वस्य ग्रहणे एकदेशिसमासे खट्वाशब्दे लौकिकोपसर्जनसत्त्वेन तदादिनियमाद्याटोऽप्राप्तिः 'अर्धं नपुंसकम्' इत्यस्य अर्धश्चासौ खट्वा चेति कर्मधारयप्रत्याख्याने खट्वाशब्दे उपसर्जनत्वाभावेन तदादिनियमाभावाद्याटः प्राप्तिरिति फलभेद इत्यपास्तम् उभयोरपि पक्षयोः शास्त्रीयोपसर्जनत्वविशिष्टलौकिकोपसर्जनत्वस्याभावेन तदादिनियमाभावाद्याटः प्रवृत्तेः । अतिखट्वाय इत्यत्राकारस्य लाक्षणिकत्वादपि याटोऽप्राप्तिः ।

न च खट्वायै, इत्यादावपि लाक्षणिकत्वाद्याडनापत्तिः यस्य लक्षणप्रवृत्तेः प्राङ् न सम्भवस्तस्यैव लाक्षणिकत्वेन ग्रहणात् । खट्वा इत्यादौ तु सवर्णदीर्घप्रवृत्तेः प्रागपि आरूपत्वस्य सत्त्वेनादोषात् । वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषाप्रवृत्तेः 'अदोऽभवत्' इत्यत्र प्रगृह्यत्वाभावाय 'ओत्' इति सूत्रे भाष्ये सञ्चारितत्वात् ।

वस्तुतस्तु 'अगोऽभवत्' इत्यत्र प्रगृह्यत्ववारणाय 'गौणमुख्यन्याय आश्रितो भाष्यकृता इति तेनैव न्यायेन उभयत्रापि प्रगृह्यत्ववारणसम्भवाद् गौणमुख्यन्यायेन वारणपरभाष्यस्यैकदेशयुक्तित्वमेव । अन्यथा 'सुद्यु पास्यः' इत्यादौ यणापत्तिर्लाक्षणिकत्वात् । खट्यते काङ्क्ष्यते निद्रायै इति खट्वा । 'खट काङ्क्षायाम्' इत्यतः 'अशूप्रुषिलटि' (उ. १ वा. १५१ सू ) इति क्वन् । नासिकेति— नासते इति नासिका । 'णासृ रासृ शब्दे' इत्यतः 'कुशिल्पिसंज्ञयोः' ( उ. २ पा. २०० सू. ) इति संज्ञायां कुन् 'युवोरनाकौ' इत्यकादेशे स्त्रियाम् टाप् 'प्रत्ययस्थात्' इतीत्वम् । नासा एव नासिका स्वार्थे कस्तु न 'घोणा नासा च नासिका' ( अम. २ का. ८९ मनु. ) इत्यमरे पाठात् । स्वार्थिकप्रत्ययरहितानां स्वार्थिकप्रत्ययान्तानाञ्च कोशे पाठादर्शनात् । पक्षे इति नसादेशाभावपक्षे इत्यर्थः । सुटि चेति—सुटि नसादेशाभावात् ।

निशाया इति— नेशति—समाधिं करोति या सा निशा । 'इगुपध' ( ३-१-१३५ ) इति कः, टाप् । निशा हि निद्राप्रयोजिका । निद्रा च चित्तवृत्तिविशेषरूपा । तदुक्तं पातञ्जले 'अभावप्रत्ययालम्बना वृत्ति निंद्रा' ( योग. १ पा. १० सू. ) । जाग्रत्स्वप्नवृत्तीनां योऽभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमः । तदेवालम्बनम्—विषयो यस्या वृत्तेः सा वृत्तिर्निद्रा इत्युच्यते । तथा च निद्रायां चित्तवृत्तिनिरोधसत्त्वात्साम्यान्निद्राऽपि समाधिः । तत्प्रयोजकत्वान्निशा समाधिप्रयोजिका । निशाया निश् इति—शस्प्रभृतिष्विति शेषः । निशभ्याम् इति स्थितौ, षत्वविधायकम् ।

'व्रश्चभ्रस्ज' । ( ८-२-३६ ) इति । व्रश्चादयः सप्तधातवः, अत्र राजिसाहचर्याद् भ्राजिरेव गृह्यते । तेनान्यस्य विभ्राजित्येव ।

ननु 'च्छ्वोः शूडनुनासिके' इति ( ६-४-१९ ) इति छस्य शादेशे शान्तत्वेनैव षत्वे सिद्धे सूत्रे छग्रहणं व्यर्थमिति चेन्न मच्छादौ, विङतिशविधानेन 'प्रष्टा' इत्यादौ षत्वसिद्धये छग्रहणस्यावश्य-

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च । पस्य जश्त्वेन डः । निड्भ्याम् । निड्भिः । सुपि 'डः सि धुट्' ( म १३१ ) इति पक्षे धुट्, चर्त्वम्, तस्यासिद्धत्वात् 'चयो द्वितीयाः-' ( वा ५०२३ ) इति टतयोष्ठथौ न । 'न पदान्ताट्टोः' ( सू० ११४ ) इति ष्टुत्वं न । निट्त्सु-निट्सु ।

षढोः कः सि [ ८-२-४१ ]

षस्य ढस्य च कः स्यात्सकारे परे । इति तु न भवति, जश्त्वं प्रत्यसिद्धत्वात् ।

कत्वात् । अत्रापि तुको निवृत्तये सूत्रे 'च्छ' इति पठित्वा 'च्छशान्तयोश्च 'ष्' इत्येवं वाच्यम् । छशौ वर्णौ, याभ्यां शब्दस्वरूपविशेष्यमध्याहृत्य तदन्तविधिः 'झलो झलि' ( ८-४-६५ ) इत्यतो झलि इत्यनुवर्तते, पदस्य इत्यधिकारलभ्यम्, 'स्कोः संयोगाद्योः' इत्यतोऽन्ते इत्यनुवृत्तम्, तदाह व्रश्चादीनामित्यादि । अन्तादेश इति 'अलोऽन्त्यस्य' इति परिभाषालभ्योऽयमर्थः । पस्येति—प्रकृतसूत्रेण कृतस्य षस्येत्यर्थः । जश्त्वेनेति—'झलां जशोऽन्ते' इत्यनेनेति शेषः । ड इति—स्थानत आन्तर्यादिति शेषः । पक्षे इति—विधिमुखेन प्रवृत्तिपक्षे इत्यर्थः । चर्त्वमिति ।

'खरि च' ( ८-४-५५ ) इति इत्यनेन । स्थानसाम्यादकारस्य टकारे धकारस्य तकारः । तस्यासिद्धत्वादिति—'चयो द्वितीयाः शरि' इति वार्तिकस्य 'नादिन्याक्रोशे पुत्रस्य' ( ८-४-४८ ) इति सूत्रे भाष्ये पाठात् यस्य वार्तिकस्य यस्मिन् सूत्रे पाठस्तद्देशत्वात्तस्येति वार्तिकदृष्ट्या चर्त्वस्यासिद्धत्वादित्यर्थः ।

ष्टुत्वं नेति--'निट्त्सु' इत्यत्र तकारस्य, 'निट्सु' इत्यत्र सकारस्य टकारषकारौ नेत्यर्थः । 'निश् सु' इत्यत्र शस्य षत्वे 'षढोः कः सि' ( ८-२-४१ ) । इति षकारस्य कत्वं न 'झलां जशोऽन्ते' ( ८-२-३९ ) इति पूर्वत्रिपादीस्थदृष्ट्या परस्य कत्वस्यासिद्धतया पूर्वं जश्त्वेन डकारे षकाराभावात् । निशादेशाभावपक्षे शसादौ सुटि चादेशाभावेन रमावद्रूपाणि । मतान्तरमाह केचित्त्विति--'एकाचो बशः' इत्युत्तरसूत्रे धातोरित्यनुवृत्तेर्भाष्यादावुक्तत्वेन मध्येऽत्रापि तदनुवृत्तेरौचित्यादिति भावः ।

तन्मते इति—धातोरित्यस्यानुवृत्तिवादिमते इत्यर्थः । जश्त्वेनेति—यत्तु 'जश् झशि' इति निर्देशात् शस्य न जश्त्वमिति तन्न, सूत्रे अयस्मयादित्वेन भत्वाज्ज्ञापकत्वासम्भवादिति नागेशः ।

वस्तुतस्तु 'जश्त्वम्, अश्त्वम्, इत्यादिभाष्यप्रयोगनिर्वाहाय ज्ञापकत्वस्यावश्यकत्वम्, इत्ययस्मयादित्वकल्पनं चिन्त्यम्' । उपाध्यायास्तु जश्त्वम्, अनश्त्वम् इत्यादिभाष्यप्रयोगात् वृत्तिघटकप्रत्याहारघटकेषु पदान्तत्वप्रयुक्तकार्याभावो ज्ञाप्यते इत्याहुः । एवम् 'स्तोःश्चुना श्चुः' इत्यादि निर्देशात् एकवर्णात्मके पदे यदान्तत्वप्रयुक्तकार्याभावो ज्ञाप्यते । स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वेन 'स्तोः श्चुना' शित् 'इत्यादौ श्चुः' इति, श्चित् इति पाठे शकारस्याबोधान्न पदान्तकार्यम् ।

अत एव अः संख्यायाः, ष्णान्ताः षट्, इत्यादौ नलोपादयो नेत्याहुरन्ये । धातोरित्यनुवृत्तौ छशाविति सद्विशेषणतया तदन्तविधिः । निशब्दस्तु 'इत्यत्र' शस्य जश्त्वेन जः । तस्य चर्त्वेन चः । 'शश्छोऽटि' इति छत्वविकल्पः । निच्छु, निच्सु' इति रूपद्वयम् ।

असिद्धत्वादिति । इदमुपलक्षणं चर्त्वस्य । शसादौ वेति—'मांसपृतना' 'इत्यस्य पदन्न' इति सूत्रे उपसंख्यातत्वात् शसादौ वेति लभ्यते । मांस-पृतना—सानूनां स्थाने मांस्, पृत्, स्नु इत्येते आदेशाः शसादौ वा वाच्या इत्यर्थः । पृत इति—'पृङ् व्यायामे' इत्यतः तनन् प्रत्ययः ।

केचित् व्रश्चादिसूत्रे 'दादेर्धातोः-' ( सू ३२५ ) इति सूत्राद् 'धातोः' इत्यनुवर्तयन्ति, तन्मते अश्त्वेन बकारे, निज्भ्याम, निज्भिः । 'चोः कुः' ( सू ३७८ ) इति कुत्वं तु न भवति । जश्त्वस्यासिद्धत्वात् । जश्त्वम्, श्चुत्वम्, चर्त्वम्-निच्छु, निच्छु । 'मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा' ( वा ३४९६ ) । पृतः । पृता । पृद्भ्याम् । पक्षे मुटि च रमावत् । गोपा विश्वपावत् । इत्यादन्ताः । मतिशब्दः प्रायेण हरिवत् । स्त्रीत्वान्नत्वाभावः, मतीः । नात्वं न, मत्या ।

## ङिति ह्रस्वश्च [ १-४-६ ]

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे ।

---

प्रियते=व्यायामं करोति युद्धार्थं या सा पृतना=सेना—सेनाविशेषोऽपि । यत्र रथाः २४३ गजाः २४३ अश्वाः ७२९ पदातयः १२१५ इति शब्दस्तोममहानिधिः ।

पक्षे इति—पृदादेशाभावपक्ष इत्यर्थः । विश्वपावदिति—पुंलिङ्गे विश्वपाशब्दस्य यानि दशानि रूपाणि गोपाशब्दस्य स्त्रीलिङ्गेऽपि तादृशान्येव, आवन्तत्वाभावादिति भावः । यस्तु 'आतोऽनुपसर्गे' ( ३-२-३ ) इति कप्रत्ययान्तो गोपाशब्दस्तस्य स्त्रियां टापि रमावद्रूपम् । इत्यादन्ता इति—दृष्टान्तरूपेणादन्ताः समाप्ता इत्यर्थः । एतेन आदन्तशब्दानामानन्त्येऽपि न दोषः ।

अथ इदन्ताः--मतिशब्द इति—मननम्=मतिर्ज्ञानम् 'स्त्रियां क्तिन्' ( ३-३-९४ ) इति भावे मन्यतेः क्तिन् । मन्यते—ज्ञायतेऽनयेति करणे वा क्तिन् । मतिर्बुद्धिः । प्रायेणेति—प्रपूर्वकादिणः 'एरच्' ( ३-३-५६ ) इति अचि प्राय इति । यत्तु अयतेर्घञि प्राय इति तन्न, 'उपसर्गस्यायतौ' ( ८-२-१९ ) इति लत्वापत्तेः । प्रायशब्दो बाहुल्यपर्यायः 'प्रायो भूम्नि' ( अम० ३ का० १५२ ) इत्यमरात् । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वैशिष्ट्ये तृतीया । हरिपदञ्च हरिप्रकृतिकरूपवत्परम् । तत्र रूपे बाहुल्यस्यान्वयः । तथा च बहुत्वविशिष्टं यद्धरिप्रकृतिकरूपं तद्रूपवत्प्रतियोगिकसादृश्यवान् मतिशब्द इत्यर्थः । बहूनि रूपाणि हरिसदृशानि कचित्तद्भिन्नान्यपीत्यर्थः । तृतीयैकवचने घित्वाज्ञाभावमाशङ्क्याह—

स्त्रीत्वादिति—पुंस्त्वाभावादित्यर्थः । नात्वं नेति—स्त्रीत्वादित्यनुकृष्यते । अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम् पुंस्त्वाभावस्य नाभावे प्रतिबन्धकत्वाभावान्नपुंसकेऽपि परत्वान्नुमं बाधित्वा नाभावाङ्गीकारात् । पुंस्त्वाभावान्नत्वाभाव इत्युक्तौ स्त्रीत्वान्नत्वाभाव इत्यस्यावश्यकतया गौरवं स्यादिति भावः ।

ह्रस्वेकारान्तत्वात् ( यू स्त्र्याख्यौ ) इत्यस्याप्राप्त्या आह--'ङिति ह्रस्वश्च' ( १-४-६ ) इति अत्र 'च' ग्रहणाद् वाक्यद्वयम् 'ङिति' इत्येकम् । अत्र 'यू स्त्र्याख्यौ' इति सूत्रं नित्यस्त्रीत्वार्थकम्, ( वामि ) इत्यत वेति, नञ्रहितम् 'इयङुवङ्स्थानावस्त्री' इति चानुवर्तते । इयङुवङोः स्थानं स्थितिर्योग्यता ययोरीवर्णोवर्णयोस्तौ, इयङुवङ्स्थानौ 'अस्त्री' स्त्रीशब्दावयवभिन्नौ, नित्यस्त्रीलिङ्गौ इति त्रीणि ईदूतोर्विशेषणानि । तदाह—इयङुवङ्स्थानावित्यादि ।

'ह्रस्वश्च' इति द्वितीयं वाक्यम् । अत्र 'यू' इति, 'नदी' इति, नित्यत्वमजहाय स्त्रीलिङ्गौ इत्येतन्मात्रार्थकम् 'स्त्र्याख्यौ' इति, वेति वानुवर्तते । तथा च 'स्त्रीवाचकौ ह्रस्वौ चेदुतौ ङिति वा नदीसंज्ञौ स्तः' इति द्वितीयवाक्यार्थः । अत्र 'अस्त्री' इति न सम्बध्यते इत्यनुपदमेव मूले वक्ष्यते । अत्र दीर्घयोः 'नेयङुवङ्स्थानावस्त्री' इति निषेधान्नदीसंज्ञाया अप्राप्त्या ह्रस्वयोस्तु केनाप्यप्राप्त्या अप्राप्तविभाषेयम् ।

'ह्रस्वश्च' इति वाक्ये यदि 'नित्यस्त्रीलिङ्गौ' इत्यर्थः स्यात्तदा ह्रस्वशनिप्रभृतीनां स्त्रीपुंसयोर्वर्तमानानाम्, गुणवचनानां सर्वलिङ्गानां पश्वादीनाञ्च नित्यस्त्रीत्वाभावान्नदीत्वं न प्राप्नोतीत्याशङ्क्य

'आण् नद्याः' (सू २६८)। मत्यै, मतये। मत्याः, मतेः। नदीत्वपक्षे 'औत्' (सू २५६) इति ङेरौत्वे प्राप्ते।

कैयटेनोक्तम्। एवं तर्हि 'ङिति ह्रस्वश्च' इत्यत्रैवंविधो नियमो नाश्रीयते, केवलस्य स्त्रीशब्दस्यानुवर्तनात् इति।

किञ्च दीर्घयोर्निषेधविकल्पकत्वमपि भाष्ये उक्तम् अतस्तत्र नित्यस्त्रीलिङ्गे एव नदीत्वप्राप्त्या नित्यस्त्रीलिङ्गावित्युचितम्। तेन स्त्रियामपि 'कटप्रुवे ब्राह्मण्यै' इत्यादौ नदीत्वं न, नित्यस्त्रीत्वाभावात्। इति दीक्षिताः।

शेखरकारास्तु वाक्यद्वयेऽपि स्त्रीवाचकत्वमात्रमपेक्षते, नतु नित्यत्वघटितम्। अत एव 'ङिति ह्रस्वश्च' इत्यत्र 'प्रथमलिङ्गग्रहणञ्च' इत्यस्याप्रवृत्त्यन्वाख्यायके 'ह्रस्वौ च इयङुवङ्स्थानौ च प्राक् (वृत्तेः प्राक्) प्रवृत्तौ (अर्थान्तरोपसंक्रान्तौ) स्त्रीवचनानेव नदीसंज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यम्' इति वार्तिके 'अतिशकट्यै ब्राह्मण्यै' क मा भूत्? 'अतिशकटये ब्राह्मणाय, अतिश्रियै ब्राह्मण्यै, श्रियै ब्राह्मण्यै 'कनूलुवन्तमेतत्', क मा भूत् अतिश्रिये ब्राह्मणाय, इत्युक्तं संगच्छते।

अन्यथा 'अतिशकट्यै अतिश्रियै' इत्यत्र समुदायस्य नित्यस्त्रीत्वाभावात् 'यू स्त्र्याख्यौ' इत्यस्याप्राप्त्या 'प्रथमलिङ्गग्रहणञ्च' इत्यस्य या प्राप्तिः सा अत्रत्यवार्तिकेन निषिध्यते। दीर्घघटितवाक्ये यदि नित्यस्त्रीलिङ्गावित्यर्थः स्यात्तदा 'ङिति ह्रस्वश्च' इत्यस्याप्यप्राप्त्या 'अतिश्रियै ब्राह्मण्यै' इति भाष्योदाहरणासङ्गतिः। दीर्घांशेऽपि स्त्रीवाचकौ इत्यर्थे एव भाष्योदाहरणे 'ङिति ह्रस्वश्च' इति नदीत्वं सिध्यति इत्याहुः। तथा चैतन्मते कटप्रुवै, कटप्रुवे, ब्राह्मण्यै इति रूपद्वयमेवेष्टम्।

कनूलुवन्ते 'खरकुट्यै ब्राह्मणाय, इतिवत् चञ्चा ब्राह्मणान् पश्य इतिवच्च कनूलुवन्ते 'श्रिये ब्राह्मणाय' इत्यत्रापि युक्तवद्भावेन स्त्रियामङ्गस्य वर्तनात् 'ङिति ह्रस्वश्च' इति सूत्रे नित्यस्त्रीत्वानिवेशादिति 'श्रिये ब्राह्मणाय' इति भाष्यासङ्गतिरिति चेन्न, कनूलुवन्ते वैकल्पिकनदीत्वस्येष्टापत्तेः। भाष्ये दृश्यमानं 'श्रिये' 'ब्राह्मणाय' इति तु क्यजन्तात् क्विपि बोध्यम्। ननु 'ङिति ह्रस्वश्च' 'वाऽऽमि' अनयोः स्थाने 'वाऽचि ह्रस्व' इत्येकमेवास्तु 'इयङुवङ्स्थानौ स्त्रीशब्दभिन्नावयवौ' स्त्रीशब्दावयवभिन्नौ वा नित्यस्त्रीवाचकौ यौ ईदूतौ, ह्रस्वौ च इदुतौ स्त्रियां वर्तमानौ वा नदीसंज्ञौ स्तोऽजादौ प्रत्यये इत्यर्थेन 'मत्यै, मतये, श्रीणाम्, श्रियाम्' इत्यादिसिद्धेरिति चेन्न, सन्निपातपरिभाषाज्ञापनाय 'वाऽऽमि' इत्यस्यावश्यकत्वात्।

तथा हि 'श्रीणाम्' इत्यत्राजादित्वमुपजीव्य जायमाना नदीसंज्ञा तद्विघातकनुटि निमित्तं न स्यात्, 'वामि' इति सूत्रसत्त्वे तु नुड्विशिष्टे यदागमन्यायेनाम्त्वसत्त्वान्नोपजीव्यविरोधः। नुटि अजादित्वं तु यदागमन्यायेन न स्याद्वर्णमात्रवृत्तितद्घटितधर्मानयने तदप्रवृत्तेः 'आमि सुक्' इत्यनेन ज्ञापनात्। अन्यथा यदागमन्यायेन सुग्विशिष्टेऽत्त्वेन सवर्णदीर्घे 'पचानः' इत्यस्यैव सिद्धया सुग्विधानवैयर्थ्यं स्पष्टमेव।

नदीत्वपक्षे आह—आण् नद्या इति—मति ए इति स्थितौ आटि, वृद्धौ यणि च 'मत्यै' इति। नदीत्वाभावे घिसंज्ञायाम् 'मतये' इति। ङसिङसोर्नदीत्वे आटि—आकाररूपायां वृद्धौ यणि 'मत्याः' इति। घित्वे मतेः २ इति। आमि नदीत्वाभावेऽपि ह्रस्वान्तत्वान्नुटि 'मतीनाम्' इति। 'मति ङि' इति दशायाम् नदीत्वपक्षे घित्वाभावात् 'अच्च घेः' इत्यस्याप्राप्त्या 'औत्' इत्यौत्वंपरत्वात् प्राप्तं तद्बाधकमाह।

**इदुद्भ्याम्।** [ ७-३-११७ ]

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। पक्षे 'अच्च घेः' ( सू २४७ )। मत्याम्, मतौ। एवं श्रुत्यादयः।

**त्रिचतुरोः स्त्रियां तिसृचतसृ।** [ ७-२-९९ ]

स्त्रीलिङ्गयोरेतावादेशौ स्तो विभक्तौ परतः।

**अचि र ऋतः** [ ७-२-१०० ]

तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः तिसृभ्यः। आमि 'नुमचिर—' ( वा ४३७४ ) इति नुट्।

---

इदुद्भ्याम् इति। 'ङेराम्नद्याम्नीभ्यः' इति सूत्रात् 'ङेराम्' इति नदीति चानुवर्त्तते। तदाह—नदीसंज्ञकाभ्यामित्यादि। मत्यामिति—इदन्तत्वमादायजायमान आम सन्निपातपरिभाषया यणि निमित्तं न स्यादिति तु न, तस्या अनित्यत्वात्। 'सोऽचि लोपे चेत्' ( ६-१-१३४ ) इति निर्देशेन सन्धिकार्य्ये तस्या अनित्यत्वबोधनात्। पक्षे इति—नदीत्वाभावपक्षे इत्यर्थः। श्रुत्यादय इति—श्रवणं श्रुतिः भावे क्तिन्। यद्वा श्रूयते एव न तु केनापि क्रियते इति श्रुतिर्वेदः। 'तृप्नवनतरणयोः' इत्यतो तिप्रत्ययः। ( उ० उज्ज्व० ५-६६ ) त्रिशब्दे विशेषमाह—'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति। 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्त्तते। अङ्गस्यत्यधिकृतम्।

स्त्रियामिति—त्रिचतुरोरेव विशेषणम् 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति, पूर्वोपस्थितिमूलकन्यायात्। प्रत्ययोत्तरपदयोश्च इति सूत्रे भाष्ये 'त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम्', त्रिचतुरोः स्त्रियां तिसृचतसृ इति भाष्याच्च। 'विभक्तौ' विधानात् तिसृभिर्भार्यो भरणीयस्त्रीभार्य्यः इत्यत्र नादेशः।

यत्तु विभक्तौ किम्? त्रिभार्य्यः, चतुर्भार्य्य इति तन्मन्दम्, पुंवद्भावेनापि सिद्धेः। अतः प्रियादिषु पुंवद्भावनिषेधात्।

'त्रिप्रियः' इत्यत्र मा भूत् तिस्रादेश इत्यतो विभक्ताविति। तत्र 'त्रिभार्य्यः, चतुर्भार्य्यः' इत्यत्र तृतीयासमासेन पुंवद्भावाप्राप्तेः। न च भरणीय इत्यर्थे 'भृञोऽसंज्ञायाम् ( ३-१-११२ ) इति क्यप्। भार्यम् 'भृञोऽसंज्ञायाम्' इत्यत्र तदनुबन्धकपरिभाषया भौवादिकस्यैव ग्रहणेन जौहोत्यादिकात् ण्यता रूपसिद्धेः। अत्र भाष्ये वार्तिकम्—'तिसृभावे संज्ञायां कन्युपसंख्यानम् तिसृको नाम ग्रामः।

अस् शसोः 'तिसृ अस्' इति स्थितौ विशेषमाह—'अचि र ऋतः' इति। 'अचि रः' इत्युक्तौ त्रिचतुरोरेवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति सूत्रे ऋत इत्युक्तम्। तथा च विधेययोरपि तिसृचतस्रोरनुवृत्त्या षष्ठ्यन्तत्वकल्पनया तिसृचतस्रो ऋतो रादेशोऽचि इत्यर्थः सम्पन्नः। तिसृचतस्रोर्विभक्तावेव विधानादजादौ विभक्तौ इति फलति।

ननु 'इको यणचि' इत्यनेन रादेशः स्यादत आह—गुणदीर्घोत्वानामिति—यणं बाधित्वा परत्वात्प्राप्तानेतान् बाध्यसामान्यचिन्तया बाधतेऽयम्। तथा चैतेषामपवादोऽयमित्याह गुणदीर्घोत्वानामिति। जसि तिस्रः, चतस्रः, ङौ च प्रियतिस्रि, प्रियचतस्रि, 'जसि च' 'ऋतो ङि' इति गुणस्य, शसि तिस्रः, चतस्रः, इत्यत्र 'प्रथमयोः' इति दीर्घस्य, ङसिङसोः 'प्रियतिस्रः, प्रियचतस्र आगतः स्वं वा' इत्यत्र 'ऋत उत्' इत्युत्वस्य चापवाद इत्यर्थः।

नुमचिरेति—नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन इति वार्तिकबलाद् भावं बाधित्वेत्यर्थः। वार्तिके ल्यप् लोपे पञ्चमी। अचि रादेशो मद्विषये यत्प्राप्तं तत्सर्वं बाध्यम् इति बाध्य-

## न तिसृचतसृ [ ६-४-४ ]

तिसृ चतसृ एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु। 'स्त्रियाम्' इति त्रिचतुरोर्विशेषणान्नेह—प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः, मतिशब्दवत्। आमि तु 'प्रियत्रयाणाम्' इति विशेषः। 'प्रियास्तिस्रो यस्य सः' इति विग्रहे तु प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः।

प्रियतिस्रमित्यादि। प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि। स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः। 'न लुमता—' (सू २६३) इति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ।

---

सामान्यचिन्तया नुटोऽप्यपवादत्वेनापवादविषये पूर्वविप्रतिषेधस्यानौचित्यात् 'न तिसृ चतसृ' इति सूत्रारम्भसामर्थ्यान्नुटो बाधकत्वे मूलम्।

अन्यथा रमावेन नुटो बाधे आमि दीर्घाप्राप्त्या 'न तिसृ' इत्यस्य वैयर्थ्यं स्यात्। अन्ये तु न च स्वार्थद्रव्यलिङ्गरूपार्थविभक्तिसंज्ञानिमित्तापेक्षत्वेन तिस्राद्यादेशस्य बहिरङ्गत्वेनान्तरङ्गत्वान्नुटि-सिद्धे पूर्वविप्रतिषेधोऽयुक्त इति वाच्यम्, 'न तिसृ' इति सूत्रेण बहिरङ्गपरिभाषाया अत्राप्रवृत्तिज्ञापनात्।

अर्थंकृतसंज्ञाकृतबहिरङ्गत्वस्यानाश्रयणत्वज्ञापनाद्वेत्याहुः। यत्तु अन्तरङ्गत्वात् त्रयादेशेऽपि स्थानिवत्त्वेन तिस्रादेशे लक्ष्ये लक्षणन्यायेन त्रयादेशाप्रवृत्तौ 'न तिसृ' इत्यत्र तिसृग्रहणं चरितार्थमिति अर्थंकृतसंज्ञाकृतबहिरङ्गत्वानाश्रयणे नेदं ज्ञापकमिति तन्न, 'न तिसृचतसृ' इत्यन्तरङ्गे निषेधे कर्तव्येऽर्थ-संज्ञापेक्षस्य बहिरङ्गस्य तिस्रादेशस्यासिद्धतया तिसृग्रहणवैयर्थ्यापत्त्या तत्सामर्थ्येन सामान्यतोऽर्थ-कृतबहिरङ्गत्वानाश्रयणबोधनमित्याशयात्।

त्रिचतुरोर्विशेषणादिति—स्त्रीनिष्ठत्रित्वचतुष्ट्वसंख्यायां वर्तमानयोरित्यर्थः। नेहेति—त्रिशब्दस्य पुंनपुंसकवृत्तित्वेऽपि समुदायस्याङ्गस्य स्त्रियां वर्तमानत्वात् अङ्गविशेषणत्वे आदेशः स्यादिति भावः।

आमि त्विति—'त्रेस्त्रयः' इत्यत्र आम् षष्ठीबहुवचनमेव, अर्थाधिकारात्। तेन ङेरामि, प्रियभ्याम्, प्रियत्रौ इत्येव। स्त्रियामित्यस्याङ्गविशेषणत्वे स्त्रीलिङ्गत्रिशब्दगर्भबहुव्रीहौ अव्याप्तिः स्यादिति तन्निरासार्थमपि स्त्रियामिति त्रिचतुरोर्विशेषणमिति—प्रियास्तिस्र इत्यादि।

प्रियतिस्रेति—'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति न्यायेन समासान्तर्गतविभ-क्त्यवकृते एव तिस्रादेशे प्रिया जस् त्रि जस् इति स्थिते समासे सुपो लुकि समासाद्विभक्तौ 'प्रियत्रि सु' इति स्थितौ सौ परतस्तिस्रादेशे 'स्त्रियाः पुंवत्' (६-३-२४) इति प्रियाशब्दस्य पुंवद्भावः। अत्राङ्गस्य प्रियत्रिशब्दस्य पुंलिङ्गत्वेऽपि त्रिशब्दस्य स्त्रीवाचकत्वात्तिस्रादेशः। 'ऋदुशनस्' इति अनङादेशे 'सर्वनामस्थाने च' इत्युपधादीर्घे नलोपे 'प्रियतिसा' इति रूपम्।

यद्यपीह जहत्स्वार्थावृत्तिरिति पक्षे त्रिशब्दो निरर्थक एवेति तस्य स्त्रीवाचित्वं दुर्लभम्, तथाऽपि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या। अत्र पक्षे 'उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिप्रवादस्याप्येवमेव निर्वाहः। स्पष्टं चेदं पक्षद्वयम्—'ईदूतौ च सप्तम्यर्थे' (१-१-१९) इति सूत्रे 'प्रत्ययोत्तर-पदयोश्च' इति च सूत्रे भाष्ये। अत्र 'नद्यृतश्च' (५-४-१५३) इति कप् तु न, समासार्थालौकिकवाक्ये यदन्तमुत्तरपदं तत्रैव कप्प्रवृत्तेः। अत एव 'कुण्डोध्नी' इत्यत्र न कप्। स्पष्टं चेदं भाष्ये।

न लुमतेति निषेधस्येति—'इकोऽचि विभक्तौ' इत्यत्रार्चाति लिङ्गम्, तथा हि—हलादिविभक्तौ सत्यपि नुमि पदत्वान्तनलोपेनेष्टसिद्धेः। न च 'पञ्चग्रपुभ्याम्' इत्यादौ 'इगन्तकपाल' इति स्वराना-

रादेशात् पूर्वविप्रतिषेधेन नुम् ( वा ५०३६ ), प्रियतिसृणी, प्रियतिसृणी। तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्रभावौ, प्रियतिसृणा, प्रियतिस्रा इत्यादि।

---

पत्तिनं लोपस्यासिद्धतया इगन्तोत्तरपदत्वाभावादिति वाच्यम्, नुमः संघातभक्तत्वेनोत्तरपदत्वे-गन्तत्वानपायात्। अत एव पञ्चत्रपुणा, पञ्चत्रपुणे, इत्यादौ श्रूयमाणेऽपि नुमि स स्वरः। न च 'अतिराभ्याम्' प्रियतिसृभ्याम् इत्यादौ नुमि विभक्त्यव्यहितनिर्दिश्यमानस्याभावादादेशानुपपत्तिः, 'रायो हलि' ( ७-२-८५ ) 'त्रिचतुरोः' ( ७-२-९९ ) इत्येताभ्यां परत्वान्नुमं बाधित्वाऽऽदेश-सिद्धेः। 'शुचीनाम्' इत्यादौ 'नुमचि र' इति नुमं बाधित्वा नुटि ततो नुमि 'शुचिन् नाम्' इति स्थितौ 'नामि' इति दीर्घानापत्तिः। न च 'नोपधायाः' इति दीर्घः, 'इन्हन्' इति नियमेन बाधादिति चेन्न, नुटि 'सकृद्गतिन्यायेन नुमोऽप्रवृत्तौ' 'नामि' इति दीर्घे बाधकाभावात्।

'बहुभिः कुलैः' इत्यत्र 'षट्त्रि' इति स्वरापत्तिस्तु न, 'सख्युपोत्तमम्' इत्यस्य प्राप्त्या बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः।

न च सम्बुद्धौ 'न ङि सम्बुद्ध्योः' इति निषेधान्नलोपाभावेऽनिष्टवारणाय 'अचि' इति सार्थक्यम्। सम्बुद्धेर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्निषेधाप्राप्तेः। 'न लुमताऽङ्गस्य' इत्यस्यानित्यतां विना सम्बुद्धिपरत्वाभावेन निषेधाप्रवृत्तेः। नापि 'तृतीयादिषु भाषितपुंस्कम्' इत्यत्रोत्तरार्थम्, स्वरितत्वप्रतिज्ञाऽकरणलाघवेन तत्रैवाचीति वक्तव्येऽत्र करणस्य वैयर्थ्येन 'न लुमताऽङ्गस्य' इत्यस्य अनित्यत्वज्ञापनात्।

न च नपुंसके 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः' इति वार्त्तिकेन तत्र न दोषः, वार्त्तिकस्य एतदनित्यत्वबोधितार्थानुवादकत्वेनापूर्वत्वाभावात्।

तदुक्तं भाष्ये—'एवं तर्हि सिद्धे सति यदज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति। किमेतस्य ज्ञापने प्रयोजनम्? 'हे त्रपु, हे त्रपो' इति।

> इकोऽचीति व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्।
> स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति॥ १॥
> रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि।
> नुड्वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति॥ इति च भाष्ये।

न चेदमनित्यत्वं सम्बुद्धिमात्रविषयम्, संकोचे गौरवेण 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायेन सामान्यतोऽनित्यत्वस्यैव ज्ञापनात्।

अत एव 'प्रियतिसृ, प्रियत्रि, इति रूपद्वयं कैयटेन स्वीकृतम्। रादेशादिति— प्रत्ययोत्तर-पदयोश्च' इति सूत्रे भाष्ये स्त्रियां वर्तमानयोस्त्रिचतुरोरादेश इत्यस्य फलप्रदर्शनावसरे 'प्रियास्तिस्रो-ब्राह्मण्योऽस्य ब्राह्मणकुलस्य 'प्रितिसृ, प्रियतिसृणी, प्रियतिसृणि' इति प्रयोगे नुमदर्शनेन रादेशं बाधित्वा नुम् भवतीति पूर्वविप्रतिषेधकल्पनादिति भावः।

रादेशादिति लुप्ख्लोपे पक्षमां, पूर्वविप्रतिषेधेन रादेशं बाधित्वा नुमित्यर्थः। प्रियतिसृणी इति रभावं बाधित्वा नुमि णत्वे प्रियतिसृणी, प्रियतिसृणि।

वक्ष्यमाणपुंवद्भावेति—'तृतीयादिषु भाषितपुंस्कम्' ( ७-१-७४ ) इति पुंवद्भाव-विकल्पादित्यर्थः। पुंवद्भावे नुमोऽप्राप्तया रभावे प्रियतिस्रा, पुंवद्भावाभावे नुमि प्रियतिसृणा। अत्रेदं तत्त्वम्—'अचि र ऋतः' इति सूत्रे भाष्ये 'अचि रादेशे जस्युपसंख्यानं गुणपरत्वात्' इति वार्तिकं भाष्यकृता इत्थं व्याख्यातम्—मध्येऽपवादन्यायेन रो दीर्घोत्त्वयोरपवादेन सावकाशः, 'ऋतो ङि' इत्ययमपि 'कर्तारौ' इत्यादौ पूर्वसवर्णदीर्घबाधेन सावकाशः।

द्वेरत्वे सत्याप्, द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । इति इदन्ताः ॥ गौरी, गौर्यौ, गौर्यः, । नदीकार्यम्, हे गौरि । गौर्यै इत्यादि । एवं वाणीनद्यादयः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि सिद्धद्भावे च प्राप्ते 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' (प०), सखी, सख्यौ, सख्यः—इत्यादि ।

---

उभयप्रसङ्गे परत्वाद् गुणे प्राप्ते पूर्वविप्रतिषेधेन जसि रत्वमेव । तत्र जस्युपसंख्यानमिति जसो ग्रहणादन्यत्र ङिसर्वनामस्थानयोर्गुण एव भवति न तु रत्वमिति कात्यायनमतम् । अत एव 'त्रिचतुरोः' इति सूत्रे भाष्ये 'चतसर्याद्युदात्तनिपातनञ्च' इति वार्तिके 'चतसरि' इति गुणनिर्देशः संगच्छते इति केचिदाचक्षते । अपरे तु वार्तिके जस्ग्रहणं ङिसर्वनामस्थानयोरप्युपलक्षणम् । तथा सति 'प्रत्ययोत्तरपदयोः' इति सूत्रे भाष्ये 'प्रियतिस्रौ, प्रियतिस्रः' इति उदाहृतं संगच्छते इति मतद्वयं कैयटे स्थितम् । तथा च वार्तिके जस्ग्रहणं ङिसर्वनामस्थानयोरुपलक्षणत्वे 'चतसर्याद्युदात्तनिपातनम्' इति गुणनिर्देशो विरुध्यते, उपलक्षणत्वाभावे 'प्रियतिस्रौ' इति 'प्रत्ययोत्तरपदयोश्च' इति भाष्यप्रयोगो विरुध्यते । तस्मान्मतद्वयैकत्वाय 'जस्ग्रहणं सर्वनामस्थानमात्रोपलक्षणं मन्तव्यं न तु ङेः । तथा च न कश्चिद्विरोध इति सुधियो विभावयन्तु ।

द्वेरत्वे इति—'उभ उम्भ पूरणे' उभे रिप्रत्यये उभेर्दश्च द्वादेशे 'द्वि' इति । (दशपादी १-९९) द्विशब्दादौविभक्तौ 'त्यदादीनामः' इत्यत्वे टापि सवर्णदीर्घे । नादिचि इति पूर्वसवर्णदीर्घनिषेधे, 'औङ आपः' इति शयादेशे, गुणे 'द्वे' इति रूपम् । अत्र 'सन्निपातपरिभाषया टापोऽभावस्तु न, 'न यासयोः' इति निर्देशेन टापि सन्निपातपरिभाषाया अनित्यत्वज्ञापनात् ।

नचान्तरङ्गे टापि अत्वस्य बहिरङ्गत्वेनासिद्धत्वम्, 'न यासयोः' इति निर्देशादेवान्तरङ्गपरिभाषाया अप्रवृत्तेः । नचैवं 'बुद्धौ' इत्यादौ टापापत्तिः' 'सम्बुद्धौ' इत्यादिनिर्देशेन टाबभावकल्पनात् । द्वाशब्दस्य द्विवचनेष्वेव रमावद्रूपम् ।

गौरीति—गीयते=स्तूयते सर्वैरिति गौरी, 'गा' स्तुतौ जौहोत्यादिकात् 'किशोरादयश्च' (उ. १ पा. ६५ सू) इति ओरन् गौर इति, ततः 'षिद्गौरादिभ्यश्च' (४-१-४१) इति ङीष् ।

यत्तु बालमनोरमाकारः—गौरीशब्दाद् गौरादिलक्षणङीषि 'यस्येति च' इत्यकारलोपे गौरीशब्द इति तच्चिन्त्यम्, गौरशब्दादेव ङीष्विधानेन 'यस्येति च' इति लोपाप्रसक्तेः । यत्तु स एवाह–'वाणी' इत्यत्र वण शतोः 'इञ् वपादिभ्यः' इतीञ् 'कृदिकारात् इति ङीष् इति, तदपि चिन्त्यम्, धात्वर्थनिर्देशे एव इञ्विधानादर्थासङ्गतेः ।

गौरी सु 'हल्ङ्याब्भ्यः' इति सुलोपः । गौरी—उमा 'उमा कात्यायनी गौरी' इति (अम. १ का.) 'गौर्यौ' इति—'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्य 'दीर्घाज्जसि च' इति निषेधापत्ति 'अचो रहाभ्याम्' इति यकारस्य विकल्पेन द्वित्वे गौर्य्यौ, गौर्यौ इति ।

नदीकार्यमिति—'यू स्त्र्याख्यौ' इति नदीत्वात् 'अम्बार्थनद्योर्ह्रस्वः' 'आण्नद्याः' 'ङेराम्नद्याम्नीभ्यः' इति नदीकार्यम्, । वाणीनद्यादय इति—'वण शब्दे' इति वण्धातोः (इञ् वपादिभ्यः) इति इञ् प्रत्यये 'कृदिकारादक्तिनः' (ग०वा०) इति वा ङीष् वाणी, 'गीर्वाग्वाणी सरस्वती (अम. १ का.) इति । नदीति नद शब्दे' इत्यतः पचादित्वादचि पचादौ 'नदट्' इति पाठात् टित्वनिपातनात् 'टिड्ढ' इति ङीप् 'नदी' इति ।

'सख्यशिश्वीति भाषायाम्' (४-१-६२) इति सखिशब्दात् ङीषि 'यस्येति च इतीकारलोपे 'सखी' इति ङीपन्तम् तत्र 'अनङ् सौ' इत्यनङ्, 'सख्युरसम्बुद्धौ' इति णित्वं चाशङ्क्ते—प्रातिपदिकग्रहणे इति । सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्, प्रातिपदिकत्वस्य तद्व्याप्यधर्मस्य च लिङ्गबोधक-प्रत्ययविशिष्टे आरोपेण तद्ग्रहणम् । प्रकृते प्रातिपदिकत्वव्याप्यस्य 'सखिशब्दत्वस्य' सखी शब्दे आरोपे

गौरीवत् । अङ्यन्तत्वान्न सुलोपः, लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री । हे स्त्रि ।

स्त्रियाः । [ ६-४-७९ ]

स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ, स्त्रियः ।

वाऽम्शसोः । [ ६-४-८० ]

अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम्, स्त्रीम् । स्त्रियौ । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । स्त्रियोः । परत्वान्नुट्, स्त्रीणाम् । स्त्रियाम्, स्त्रियोः, स्त्रीषु ।

---

प्राप्ते विभक्तिनिमित्तके कार्ये कर्तव्ये लिङ्गबोधकप्रत्ययविशिष्टस्य न ग्रहणम् । तेन 'युवतीः पश्य' इत्यादौ 'श्वयुवमघोनाम्' इति सम्प्रसारणं न । प्रकृते विभक्तिनिमित्तिके अनङादौ कर्तव्ये सखिशब्देन सखीशब्दस्य न ग्रहणमित्यनङाद्यभावाद् गौरीवद्रूपं बोध्यम् । 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इति परिभाषा 'ङ्याप्प्रातिपदिकात्' ( ४-१-१ ) इति सूत्रे 'युवोरनाकौ' ( ७-१-१ ) इति सूत्रे च भाष्ये वचनरूपेण पठिता ।

अन्ये तु 'हरतेरनुद्यमनेऽच्' ( ३-२-९ ) इति सूत्रे अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमर-घटघटीधनुःषु ग्रहेरुपसंख्यानं कर्तव्यम्' इति वार्तिकं भाष्ये पठितम् । अत्र घटग्रहणेनैव 'घटीग्रहः' इत्यत्रापि अचि सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वं ज्ञापयति । अनित्यत्वमूलिकैव चैषा परिभाषेति वदन्ति ।

'सखी' शब्दे इकारस्य लोपात्पूर्वान्तवद्भावेनापि सखिग्रहणेन सखीशब्दस्य ग्रहणं न शक्यम् । लक्ष्मीरिति—'लक्ष दर्शनाङ्कनयोः' इति चौरादिकात् लक्षेः 'लक्षेर्मुट् च' ( उ. ३ पा. १६० सू. ) इति ईप्रत्यये मुटि लक्ष्मीः । ङ्यन्तत्वाभावान्न सुलोपः । लक्ष्मीः पद्मा विभूतिश्च' लक्ष्मीः सम्पत्तिशोभयोः' इति मेदिनी । 'कृदिकारादक्तिनः' इति ङीषि 'लक्ष्मी' इत्यपीति रक्षितः । गौरीवद्रूपम् 'अत एव लक्ष्मीर्लक्ष्मी हरिप्रिया' इति विश्वः ।

तरीतन्त्र्यादय इति—तरति=नद्याः पारं गच्छत्यनयेति तरीर्नौका, तॄ प्लवनतरणयोः, इत्यतः, 'तत्रि कुटुम्बधारणे' इति चौरादिकात् तन्त्रयतेश्च 'अवितॄस्तॄतन्त्रिभ्य ईः' ( उ.३पा.१५८सू. ) इति ईप्रत्यये णेर्लोपे तन्त्रीः=कुटुम्बपालिका वीणा वरा तरीतन्त्रीभ्याम् 'कृदिकारात्' इति ङीषि तु ङ्यन्तत्वात् सुलोपः ।

स्त्रीति—'स्त्यै ष्ट्यै शब्दसंघातयोः' इति स्त्यायतः=संघीभवतः शुक्रशोणिते यत्र इत्यर्थे स्त्यायतेर्ड्रट्' ( उ. ४ पा. १६६ सू. ) इति ड्रटि भत्वाभावेऽपि टिलोपे 'लोपो व्योः इति यलोपे' च टित्वात् 'टिड्ढे' इति ङीपि 'स्त्री' इति ङ्यन्तत्वात् सुलोपः ।

'हे स्त्रि' 'अम्बार्थ' इति ह्रस्वः 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः । 'स्त्री औ' इति स्थितौ धातुत्वाभावेन 'अचि श्नु' इतीयङि अप्राप्ते—'स्त्रियाः' ( ६-४-७९ ) इति । 'अचि श्नु' इत्यतोऽ-चीति, इयङिति चानुवर्तते । तदाह—स्त्रीशब्दस्येत्यादि । 'स्त्रियौ' स्त्रियः इत्यौजसोः रूपे । अमि शसि च नित्यमियङि प्राप्ते 'वाम्शसोः । 'वा अम्शसोः' इति विभागः । 'स्त्रियाः' इति इयङिति चानुवर्तते । इयङि 'स्त्रियम्' इयङोऽभावे 'अमि पूर्वः' इति पूर्वरूपे स्त्रीमिति । एवं शसि 'स्त्रियः, स्त्रीः' इति रूपे । टायाम् 'स्त्रिया स्त्रियै' इति—आट्, वृद्धिः, इयङ् । ङसिङसोः स्त्रियाः २ आड्वृद्धिरियङ् । आमि इयङं बाधित्वा परत्वान् नुटि 'स्त्रीणाम्' ङौ 'ङेराम्' इति ङेरामि आटि इयङि स्त्रियाम् ।

स्त्रियमतिक्रान्तोऽतिस्त्रिः, अतिस्त्रियौ ।

गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥

'जसि च' ( सू २४१ ) अतिस्त्रयः, हे अतिस्त्रे, हे अतिस्त्रियौ । हे अतिस्त्रयः । 'वाऽम्शसोः' ( सू० ३०२ ) अतिस्त्रियम्–अतिस्त्रिम्, अतिस्त्रियौ, अतिस्त्रियः–अतिस्त्रीन् । अतिस्त्रिणा । 'घेर्ङिति' ( सू २४५ ), अतिस्त्रये । अतिस्त्रेः । अतिस्त्रेः, अतिस्त्रीणाम् । अच्च घेः' ( सू २४७ ) अतिस्त्रौ, अतिस्त्रियोः ।

ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥

क्लीबे तु नुम् । अतिस्त्रि, अतिस्त्रिणी, अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम्, अतिस्त्रये, अतिस्त्रिणे । अतिस्त्रेः अतिस्त्रिणः । अतिस्त्रेः, अतिस्त्रिणः । अतिस्त्रियोः, अतिस्त्रिणोः—इत्यादि । स्त्रियां तु प्रायेण

---

अथ प्रसङ्गात् पुंसि नपुंसके च समासे विशेषमाह—स्त्रियमतिक्रान्त इति—'अत्यादयः क्रान्ताद्यर्थे' इति समासे 'गोस्त्रियोः' इति ह्रस्वः । दीर्घङ्यन्तत्वाभावात्, ईरूपङ्यन्तत्वाभावाद्वा न सुलोपः । 'अतिस्त्रिः' । 'अतिस्त्रियौ' इति 'स्त्रियाः' इति सूत्रस्याङ्गस्वात्तदन्तेऽपि प्रवृत्तेः ।

न च ह्रस्वे 'स्त्रीशब्दाभावादियङोऽप्रवृत्तिः' एकदेशविकृतन्यायेन आनुमानिकस्थान्यादेशमादाय स्थानिवत्त्वेन वा स्त्रीशब्दत्वस्य सुलभत्वात् । जसि, टायाम्, ङयि, ङसौ, ङसि, आमि, ङौ एषु अतिस्त्रिशब्दस्य इयङ् न, गुणादिभिः पुंसि, नपुंसके च नुमागमेन परत्वाद् बाधात् ।

अत्र सुकुमारबुद्धीनामपि सुबोधाय श्लोकेन दर्शयति—गुणेति—पुंसि गुणनाभावौत्वनुड्भिः क्लीबे नुमा च परत्वात् स्त्रीशब्दस्येयङ् बाध्यते इत्यवधार्यताम्=बुध्यताम् इत्यन्वयः । जसि च, घेर्ङिति, च गुणः, आङो नाऽस्त्रियाम्, इति नात्वम्, 'अच्च घेः' इत्यौत्वम्, 'ह्रस्वनद्यापः' इति नुट्, 'इकोऽचि विभक्तौ' इति नुम् । एते विधयो नुमपेक्षया परा इति 'विप्रतिषेधे परम्' इति शास्त्रबलादियङ् बाधन्ते ।

जसि च अस्य गुणः, बाधते इति च शेषः । अतिस्त्रय इति इयङं बाधित्वा गुणेऽयादेशे च रूपम् । हे अतिस्त्रे इति 'ह्रस्वस्य गुणः' इति गुणे 'एङ् ह्रस्वात्' इति सम्बुद्धिलोपे च रूपम् । 'वाऽम्शसोः' इति विकल्पेन इयङ्, इयङोऽभावे पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वम्—अतिस्त्रियः, अतिस्त्रीन् । अतिस्त्रियम्, इयङोऽभावे 'अमि पूर्वः' इति पूर्वरूपम् अतिस्त्रिम् । अतिस्त्रिणा इयङं बाधित्वा नात्वम् । हलादिषु अतिस्त्रिभ्याम् इत्यादि ।

घेर्ङिति—गुणेऽयादेशे च अतिस्त्रये । ङसिङसोः घेर्ङिति गुणे 'ङसिङसोश्च' इति पूर्वरूपे अतिस्त्रेः । ओसि अतिस्त्रियोः । आमि नुटि अतिस्त्रीणाम् । ङौ अच्च घेः इत्यौत्वे अतिस्त्रौ । अतिस्त्रियोः, अतिस्त्रिषु । उत्तरश्लोकस्य फलितार्थमाह—ओसीति–पुंस्युपसर्जने स्त्रियाः स्त्रीशब्दस्य अचि परत एव इयङ् नान्यत्रेति भावः ।

क्लीबे तु नुमिति—इयङं बाधते इति शेषः । नपुंसकेऽपि ङेप्रभृतावजादौ वैकल्पिकपुंवद्भावात् पुंवद्रूपम् । यद्यपि टायामपि पुंवद्भावपक्षे नाभावः, तदभावे नुम् इति टाप्रभृताविति वक्तव्यम् तथाऽपि नाभावे नुमागमे वा रूपे विशेषाभावात् ङे प्रभृतावित्युक्तम् । स्त्रियां त्विति—स्त्रियमतिक्रान्ता या स्त्री सा अतिस्त्रिः 'इत्येवं रूपेण स्त्रियाम्–स्त्रीलिङ्गे तु । प्रायेण—बहुत्वविशिष्टपुंरूपवदेवरूपम्–

पुंवत्। शसि अतिस्त्रीः। अतिस्त्रिया। 'ङिति ह्रस्वश्च' ( सू २६६ ) इति ह्रस्वान्तत्वप्रयुक्तौ विकल्पः। 'अस्त्री' तु इति इयङुवङ्स्थानावित्यस्यैव पर्युदासः, तत्संबद्धस्यैवानुवृत्तेः। दीर्घस्यायं निषेधः, न तु ह्रस्वस्य। अतिस्त्रियै, अतिस्त्रिये। अतिस्त्रियाः, अतिस्त्रेः। अतिस्त्रियाः, अतिस्त्रेः। अतिस्त्रिणाम्। अतिस्त्रियाम्, अतिस्त्रौ। श्रीः, श्रियौ, श्रियः।

नेयङुवङ्स्थानावस्त्री [ १-४-४ ]।

इयङुवङोः स्थितिर्ययोस्तावीदूतो नदीसंज्ञौ न स्तः, न तु स्त्री। हे श्रीः। श्रियम्, श्रियौ, श्रियः। श्रियै, श्रिये। श्रियाः, श्रियः।

---

प्रायेणेत्युक्त्या क्वचित्तन्निषपि तदाह--शसि 'अतिस्त्रीः इति। अत्र स्त्रीत्वाज्ञत्वम्न। अतिस्त्रिया, अत्रापि स्त्रीत्वात् नात्वं न, नात्वस्य अस्त्रियां विधानात्।

अतिस्त्रिशब्दान्ङिति प्रत्यये नदीत्वविकल्पः। अयम्भावः—'ङिति ह्रस्वश्चेत्यत्र वाक्यद्वयम्—'ङिति' इत्येकम्—तस्य इयङुवङ्स्थानौ स्त्रीशब्दभिन्नो यः शब्दस्तदवयवौ स्त्रीशब्दावयवभिन्नौ वा नित्यस्त्रीवाचकौ स्त्रीवाचकौ वा यावीदूतौ तौ ङिति नदीसंज्ञौ वा स्त इत्यर्थः। 'ह्रस्वश्च' इति द्वितीयं वाक्यम्। तस्य ह्रस्वौ स्त्रीवाचकौ याविदुतौ तौ ङिति वा नदीसंज्ञौ स्त इत्यर्थः।

ननु 'नेयङुवङ्स्थानौ' इत्यतः, 'अस्त्री' इत्यस्यानुवृत्तेः कथमिह नदीत्वविकल्प इत्यत आह–अस्त्री इति त्विति—इयङुवङ्स्थानावित्यादिप्रथमवाक्यविहितनदीत्वस्यैव 'अस्त्री' इति पर्य्युदासः, न तु ह्रस्वावित्यादिद्वितीयवाक्यविहितनदीत्वस्यापीत्यर्थः। कुत एतदित्याकाङ्क्षायामाह–तत्सम्बद्धस्यैवानुवृत्तेरिति— अयम्भावः—'नेयङुवङ्स्थानौ' इत्यतः 'अस्त्री' इत्यस्यानुवृत्तिर्वक्तव्या। तत्र लाघवात् 'अस्त्री' इति पर्य्युदासः। तथा च स्त्रीशब्दावयवभिन्नौ, स्त्रीशब्दभिन्नो यः शब्दस्तदवयवौ वा कौ इत्याकाङ्क्षायाम् प्रत्यासत्त्या इयङुवङ्स्थानाविति विशेष्यतया सम्बध्यते।

तथा च इयङुवङ्स्थानावित्यस्य यत्र सम्बन्धस्तत्रैव विशेषणतया 'अस्त्री' इति सम्बध्येत। ह्रस्ववाक्ये असम्भवाद् इयङुवङ्स्थानावित्यस्यासम्बन्धात् तत्सम्बद्धास्त्रीत्यस्याप्यसम्बन्धेन 'ह्रस्वश्च' इत्यस्य स्त्रीशब्देऽपि ह्रस्वे सति प्रवृत्तिरिति।

तदाह—'अतिस्त्रियै' इति 'आण्नद्याः' इत्यादि वृद्धौ इयङादेशे रूपम्। नदीत्वाभावे 'घेर्ङिति' इति गुणे 'अतिस्त्रये' इति। ङसिङसोर्नदीत्वपक्षे 'अतिस्त्रियाः' तदभावे अतिस्त्रेः। ओसि—नदीत्वाभावात् 'अतिस्त्रियोः'। आमि नदीत्वाभावेऽह्रस्वान्तत्वान्नुटि अतिस्त्रीणाम्। ङौ नदीत्वे 'ङेराम्' इत्यामि परत्वान्नुटं बाधित्वा आटि इयङि। अतिस्त्रियाम् नदीत्वे 'अच्च घेः' इत्यौत्वे अतिस्त्रौ।

श्रीरिति—श्रयति हरिं या सा श्रीः 'क्विब्वचिप्रच्छि' इति वार्त्तिकेन 'श्रिञ् सेवायाम्' इत्यतः क्विपि दीर्घे च श्रीः, ङ्यन्तत्वाभावान्न सुलोपः। श्रयन्त्येनामिति श्रीरिति शेखरस्तु फलितार्थपरः, वृत्तिविग्रहयोः समानार्थकत्वाभावात्। नदीत्वनिषेधकमाह—'नेयङुवङ्स्थानावस्त्री' ( १-४-४ ) इति। अत्र 'यू स्त्र्याख्यौ नदी' इति सूत्रमनुवर्त्तते। इयङुवङौ तिष्ठतो ययोरीवूतोरित्यधिकरणे स्थाधातोर्ल्युट्। इयङुवङोः स्थानौ--इयङुवङ्कर्तृकस्थित्यधिकरणतायोग्यौ इयङुवङ्स्थानौ। योग्यत्वानिवेशे इयङुवङादेशोयामपहारे एव इयङुवङोः स्थित्यधिकरणत्वं स्यात्—स्थानित्वमिति यावत्।

तदानीञ्च ईवूतोरभावान्नदीत्वाप्राप्त्या योग्यत्वनिवेशः। तथा च इयङुवङ्स्थित्यधिकरणत्वमुपलक्षणम्, न तु विशेषणम्, 'अविद्यमानं सद् व्यावर्त्तकमुपलक्षणम्'।

तेन श्रीशब्दघटकेकारस्याजादौ प्रत्यये इयङ्स्थानित्वदर्शनेन 'हे श्रीः' इत्यत्र प्राप्ताया नदीसंज्ञाया निषेधात् 'अम्बार्थ' इति ह्रस्वो न।

वाऽऽमि । [ १-४-५ ] ।

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, न तु स्त्री । श्रीणाम्, श्रियाम् । भ्रियाम्, भ्रुवि । प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम्, 'पदान्तरं विनाऽपि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात् ।

---

नागेशास्तु 'स्थानशब्दो भावल्युडन्तः । इयङुवङोः स्थाने स्थितिर्ययोरिति व्यधिकरण-बहुव्रीहिरित्याहुः । स्थानशब्दस्य लोके स्थित्यधिकरणे एव प्रसिद्धया तदर्थकत्वमेवोचितमित्यु-पाध्यायाः । अत्र 'इयङुवङ्स्थानौ' ईदूतौ विवक्ष्येते । तयोर्विशेषणम् 'अस्त्री' इति । तत्र यदा स्त्रीशब्दभिन्नौ इत्यर्थस्तदा 'अस्त्री' इति व्यर्थम् ईदूतोः स्त्रीशब्दभिन्नत्वस्य व्यभिचाराभावात् सम्भवव्यभिचारयोः सत्त्वे एव विशेषणस्यौचित्यात् । अतः 'अस्त्री' इत्यस्य सार्थक्याय स्त्रीशब्द-प्रतियोगिकभेदवान् यः शब्दस्तद्घटकौ यौ नित्यस्त्रीवाचकौ इयङुवङ्स्थानावीदूतौ तौ नदीसंज्ञौ नेत्यर्थ इति प्राञ्चः ।

तथा च प्रकृते 'परमस्त्री' शब्दस्यापि नदीत्वनिषेधः । स्त्रीशब्दभिन्नपरमस्त्रीशब्दघटकस्य ईकारस्य तादृशत्वात् । शेखरकृतस्तु स्त्रीशब्दस्य स्त्रीघटके लक्षणया स्त्रीशब्दघटकभिन्नौ यौ तादृशौ ईदूतौ तौ नदीसंज्ञकौ नेत्यर्थ इति मन्यन्ते । तथा च 'परमस्त्री' इत्यत्र निषेधो न प्राप्नोति । ईकारे-स्त्रीशब्दघटकभिन्नत्वाभावादिति नदीत्वाद् गौरीवद्रूपम् ।

ङ्द्वयोच्चारणं स्पष्टार्थम् । 'नेयङुवङोः' इति न्यासेऽपि इयङुवङोः स्थानिनौ यौ यू इत्यर्थेन सिद्धे स्थानग्रहणं यत्र इयङुवङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः, यत्र तु अपवादेन बाध्येत न तत्र निषेध इत्येतदर्थज्ञापनार्थम् । तेन प्रकृष्टा धीः 'प्रधीः' इत्यत्र इयङ् 'एरनेकाचः' इति यणा बाधितत्वान्न नदीसंज्ञाया निषेधः ।

ननु यत्रापवादेनेयङो बाधस्तत्र न नदीत्वनिषेधस्तर्हि सौ इयङोऽप्राप्त्या कथं निषेधः स्याद् इति चेन्न, इयङुवङ्भ्यां यजादिप्रत्यय आक्षिप्यते । आक्षिप्तेनाजादिप्रकृतिराक्षिप्यते ।

तथा च यस्मिन्नजादौ या प्रकृतिस्तस्मिन्प्रत्यये तत्प्रकृतिघटकयोरीदूतोरियङुवङोर्निष्पत्ति-रवश्यंभाविनो तयोरीदूतोर्नदीसंज्ञा नेति वाक्यार्थः । एवञ्चाजादिप्रत्ययस्येयङुवङौ प्रत्येव निमित्तत्वं न तु नदीत्वनिषेधं प्रति इति । 'हे प्रधि' । प्रध्यै, प्रध्याः, इत्यादि गौरीवत् । अस्त्रीति किम् 'हे स्त्रि' अत्र नदीत्वाद्ध्रस्वः ।

आमि विशेषमाह—'वाऽऽमि' ( १-४-५ ) इति । अत्र 'यूस्त्र्याख्यौ नदी' इति 'नेयङु-वङ्स्थानावस्त्री' इति च सूत्रद्वयमनुवर्तते—तदाह—इयङुवङ्स्थानावित्यादि । नदीत्वपक्षे आमि 'ह्रस्वनद्यापः' इति नुटि पर्जन्यन्यायेन दीर्घे णत्वे च 'श्रीणाम्' नदीत्वाभावे 'श्रियाम्' इति । यद्यपि 'नेयङुवङ्स्थानौ' इति नित्यनिषेधोऽनेन विकल्प्यते ।

अत एव 'वा आमि' इति न, छेदः, आमि नदीकार्याप्राप्त्या निषेधवैयर्थ्यापत्तेः । ततश्च 'वा नदीसंज्ञौ न स्त इत्येव वक्तव्ये तथाऽपि निषेधविकल्पे विधिविकल्पः फलतीत्यतो नदीसंज्ञौ वा स्त इत्युक्तम् । 'ङिति ह्रस्वश्च' इत्यत्र 'ङिति' इति प्रथमवाक्येऽप्येवमेव । ङौ 'ङिति' इति नदीत्वे ङेराम्नद्याम्नीभ्यः इति ङेरामि परत्वादाटा नुटो बाधादियङि 'भ्रियाम्' नदीत्वाभावे 'भ्रियि' ।

प्रधीशब्दस्त्रिविधः—प्रकृष्टं ध्यायति दधाति वा प्रधीः । प्रपूर्वकाद् 'ध्यै चिन्तायाम्, इत्यतः दधातेर्वा 'अन्येभ्योऽपि दृश्यते' ( ३-२-१७८ ) इति सूत्रस्थेन 'ध्यायतेः सम्प्रसारणञ्च' इति वार्तिकेन सूत्रेण च क्विपि सम्प्रसारणे पूर्वरूपे दीर्घे च 'घुमास्थागापा' इतीत्वे 'कुगतिप्रादयः' इति गतिसमासे च 'प्रधीः' इति त्रिलिङ्गम् ।

तदुक्तं भाष्ये । ध्यायतेः सम्प्रसारणञ्च ध्यायतेः सम्प्रसारणं च क्विप् च वक्तव्यः । धीर्ध्या-यतेर्दधातेर्वा इति । प्रधीशब्दस्य प्रकृष्टध्यानकर्त्री प्रयोगस्तदा 'पदान्तरं 'विशेष्यवाचकपदं' विनाऽपि स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वम्' इति मते प्रधी रमा, गौरी वा इति रमादिपदं

'लिङ्गान्तरानभिधायकत्वं तत्' इति कैयटमते तु पुंवद्रूपम्। 'प्रकृष्टा धीः' इति विग्रहे तु लक्ष्मीवत्। अमि शसि च प्रध्यम्, प्रध्यः—इति विशेषः। सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीः श्रीवत्। मतान्तरे तु पुंवत्। सुष्ठु धीः इति विग्रहे तु श्रीवदेव। ग्रामणीः पुंवत्। ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विनाऽपि स्त्रियामप्रवृत्तेः। एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥ इति ईदन्ताः ॥ धेनुर्मतिवत्।

---

विनाऽपि सामान्यतः स्त्रिया अपि बोधाद् वृत्तिकारस्य मते प्रकृष्टध्यानकर्तृत्वावच्छिन्नार्थकप्रधीशब्दस्य स्त्रियामपि वर्तमानत्वान्नित्यस्त्रीवाचकत्वेन 'यूस्त्र्याख्यौ' इति नदीत्वान्नदीकार्यं स्यात्तदाह—वृत्तिकारादीनामित्यादि। 'लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वम्' लिङ्गान्तरे स्त्रीत्वेतरलिङ्गं तदनभिधायकं तदवाचकमेव नित्यस्त्रीलिङ्गम् इति कैयटमते उक्तप्रधीशब्देन लिङ्गत्रयाभिधानान्न नित्यस्त्रीत्वमिति न नदीसंज्ञा। इति पुंवद् नदीकार्याभावघटितं रूपं बोध्यम्। तदाह—लिङ्गान्तरानभिधायकत्वादित्यादि।

प्रकृष्टा धीरिति—प्रकृष्टा धीरिति विग्रहे इत्यर्थः। तादृशश्च विग्रहः 'प्रकृष्टा चासौ धीश्चेति कर्मधारयस्थलीयः, प्रकृष्टा धीर्यस्या इति बहुव्रीहिस्थलीयश्च। एवञ्चोक्तकर्मधारये स्त्रीत्वेतरलिङ्गवाचकत्वं नास्ति, इति 'पदान्तरं विनाऽपि' इति वादिमतेऽपि, लिङ्गान्तरानभिधायकेति वादिकैयटमतेऽपि नित्यस्त्रीत्वादुभयमतेऽपि 'यूस्त्र्याख्यौ' इति नित्यनदीत्वात् उभयमतेऽपि लक्ष्मीवद्रूपम्।

एवं प्रकृष्टा धीर्यस्या इति बहुव्रीहिनिष्पन्नः प्रधीशब्दो यद्यपि त्रिलिङ्ग इति पदान्तरं विनाऽपीतिवादिमते तु नित्यस्त्रीत्वमस्ति। परन्तु कैयटमते तु नित्यस्त्रीत्वं न स्यादिति न, बहुश्रेयसी शब्दवत् 'प्रथमलिङ्गग्रहणञ्च' इति रीत्या कैयटमतेऽपि धीशब्दस्य लिङ्गान्तरानभिधायकत्वमादाय नित्यस्त्रीत्वात् 'यूस्त्र्याख्यौ' इति नित्यनदीत्वे कर्मधारये बहुव्रीहौ च नित्यनदीत्वमुभयमते बोध्यम् तदाह—प्रकृष्टा धीरिति विग्रहे तु—

ईदृशपदघटितविग्रहे कर्मधारये बहुव्रीहौ चेत्यर्थः। ननु बहुव्रीहौ प्रथमलिङ्गग्रहणं च, इति नदीत्वं न स्यात्, वृत्तेः पूर्वं धीशब्दस्य लिङ्गान्तरानभिधायकत्वेऽपि ईकारस्य इयङ्स्थानत्वेन 'नेयङ्' इति नदीत्वनिषेधात् वृत्तेः पूर्वं यस्य नदीत्वं दृष्टं तस्यैव 'प्रथमलिङ्गग्रहणञ्च' इत्यनेन 'नदीसंज्ञाबोधनादिति चेन्न, 'नेयङ्' इत्यनेन अङ्गस्य इयङ्स्थानत्वे एव निषेधात्।

तदुक्तं भाष्ये—'यस्याङ्गस्येयुवौ तत्प्रतिषेधात्' इति। यथा सुधीशब्दः, सुश्रीशब्दश्च। अनयोरवयवस्य केवलस्यापि इयङ्स्थानत्वादङ्गस्यापीति तत्र नदीत्वनिषेधः। प्रधीशब्दे तु यणा बाधितत्वान्नाङ्गस्य इयङ्स्थानत्वमिति न निषेधः। लक्ष्मीवद्रूपमिति। अस्योभयमतेऽपीति शेषः। प्रधीशब्दे 'एरनेकाच' इति यणा इयङो बाधात् 'नेयङुवङ्स्थानौ' इति निषेधो नेत्याह—लक्ष्मीवदिति। अमि शसि चेति—अमि पूर्वरूपम्, शसि च पूर्वसवर्णदीर्घञ्च बाधित्वा 'एरनेकाचः' इति यण् प्रध्यम्, प्रध्य इति—लक्ष्मीशब्दे तु धातोरीकाराभावान्न यण् इति लक्ष्मीम्, लक्ष्मीः, इति विशेषः।

वृत्तिकारास्तु 'यूस्त्र्याख्यौ' इति सूत्रे भाष्ये 'आध्यै ब्राह्मण्यै' इति प्रयोगदर्शनात्। आसमन्ताद्ध्यानकर्तृत्वप्रवृत्तिनिमित्तकस्य आधीशब्दस्य त्रिलिङ्गतया लिङ्गान्तरानभिधायकत्वाभावान्नदीत्वानापत्त्या प्रयोगासङ्गतिः। 'पदान्तरं विनाऽपि' इति स्वीकारे तु त्रिलिङ्गत्वेऽपि स्त्रिया अपि बोधकत्वसम्भवात्, पदान्तरं विनाऽपि स्त्रियां वर्तमानत्वरूपं नित्यस्त्रीत्वं सुलभमिति प्रयोगः सङ्गच्छते।

स्त्रियां च । [ ७-१-९६ ]

स्त्रीवाची क्रोष्टुशब्दस्तृज्वद्रूपं लभते ।

---

न च 'प्राध्यै ब्राह्मण्यै' इत्यत्र पदान्तरसमभिव्याहारोऽस्त्येवेति पदान्तरं विनापीत्य-प्रामाणिकमिति वाच्यम्, प्राध्यीरित्युक्तौ पुंसः स्त्रियाश्च प्रतीतिप्रसक्तौ अन्यतरव्यवच्छेदाय ब्राह्मणः, ब्राह्मणीत्यस्य प्रयोगात् । नैतावता पदान्तरासमभिव्याहारे स्त्रियां वृत्तिस्त-स्यापैति इत्याहुः ।

कैयटस्तु 'यूस्त्र्याख्यौ' इति सूत्रे' स्त्रीविषयावेव यौ यू तयोरेव नदीसंज्ञा' इत्युक्तेः, लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमित्याह । न चैतन्मते 'प्राध्यै' इति भाष्यासङ्गतिः, प्र = ईषद् धीर्यस्या इति विग्रहे बहुव्रीहेस्तत्र प्रयोग इति 'प्रथमलिङ्गग्रहणञ्च' इति रीत्या नदीत्वमिति नासङ्गतिः । अत एव 'अवयवोऽत्रेयङ्स्थानः' इति भाष्यं संगच्छते । 'प्राध्यै' इत्यत्र गतिसमासे तु तस्य नित्यसमासत्वात् 'धी' इत्यस्य पृथक् प्रयोगाभावेन तस्य इयङ्स्थानत्वासम्भवः । प्राधी-शब्दघटकधीशब्दस्य बुद्ध्यर्थकधीशब्दस्य धियौ धिय इत्यत्र इयङ्दर्शनेन भाष्यसङ्गतिः । तस्मात्कैयटोक्तमेव नित्यस्त्रीत्वं न वृत्तिकाराभिमतम् । प्रधीः, 'सुधीः' इत्यादौ बहुव्रीहौ 'नद्यृतश्च' इति कप् तु न, विग्रहवाक्ये यत्रोत्तरपदं नदीसंज्ञकं तत्रैव कः ।

सुष्ठु धीर्यस्या इति, सुष्ठु ध्यायतीति विग्रहयोर्बहुव्रीहिसमासे, गतिसमासे च 'सुधीः' इत्यत्र शोभनधीविशिष्टत्व—शोभनध्यानकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय त्रिलिङ्गत्वेऽपि स्त्रीबोधक-त्वस्यापि सम्भवेन पदान्तरं विनाऽपि इति मते नित्यस्त्रीलिङ्गत्वेन 'हे सुधीः' इत्यत्र 'यू स्त्र्याख्यौ' इति प्राप्ताया नदीसंज्ञाया अङ्गस्यापीयङ्स्थानत्वेन 'नेयङुवङ्' इति निषेधः । ङिति आमि च 'नेयङ्' इति निषेधबाधकेन 'ङिति' इति 'वामि' इति सूत्रेण विकल्पेन नदीसंज्ञा भवति—तदाह श्रीवदिति । स्त्रीत्वेतरपुंस्त्वादिलिङ्गस्यापि अभिधायकतया कैयटमते नदीत्वाभावः ।

अवयवस्य धीशब्दस्य नित्यस्त्रीत्वमादायापि न, 'नेयङुवङ्' इति निषेधात् । तदाह-पुंवदिति । 'ङिति' इति वाक्येऽपि अङ्गस्य स्त्रीवाचकत्वमपेक्ष्यते इति । शेखरकारमते तु सुधीशब्दस्य ङौ आमि च विकल्पेन नदीत्वं स्यादेव कटप्र्वै इत्यत्र यथा नात्र प्रथमलिङ्ग-ग्रहणस्यापेक्षा समुदायस्याङ्गस्य स्त्रीवाचकत्वमपेक्ष्येत, सुष्ठु चासौ धीश्चेति विग्रहे कर्मधारये तु सम्बुद्धौ 'नेयङ्' इति निषेधात् ङिति 'ङिति' इति आमि 'वाऽऽमि' इति विकल्पेन नदीत्वम् । तदाह श्रीवदेवेति ।

ग्रामणीरिति—अत्र कैयटमते, वृत्तिकारमतेऽपि च न नदीत्वम्—ग्रामणीशब्दस्य सर्व-लिङ्गतया ग्रामनयनस्य प्राकृतिकपुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेश्च उभयमतेऽपि न नदीत्वम् । एवं खलपवनस्यापि पुंधर्मतया पदान्तरं विना स्त्रियाम् ग्रामणीवद्रूपम् । कैयटमते तु लिङ्गान्तर-स्यापि वाचकत्वेन नदीत्वाप्राप्तिरेव ।

अथ उदन्ताः

धेनुर्मतिवदिति । क्रोष्टुशब्दस्य स्त्रियां विशेषमाह—

'स्त्रियाञ्च' ( ७-१-९६ ) । इति 'तृज्वत् क्रोष्टुः' इति सूत्रमनुवर्तते । रूपातिदेशोऽयम् । तदाह—क्रोष्टुशब्द इत्यादि । तदुक्तं भाष्ये 'सिद्धन्तु रूपातिदेशात्' इति, 'क्रोष्टुर्यदन्तरतमं तन्नविष्यति । किं पुनस्तत् ? क्रुशेर्यस्तृज्विहितस्तदन्तम्, इति च । अयमतिदेशोऽनिमित्तकः । तदुक्तम्—'न चापरं निमित्तमाश्रीयते अस्मिन्परतः क्रोष्टुस्तृज्वन्नवर्तीति । किं तर्हि 'अङ्गस्य क्रोष्टुस्तृज्वन्नवति । अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन' इदं सूत्रं भाष्ये प्रत्याख्यातम् ।

ऋन्नेभ्यो ङीप् । [ ४-१-५ ]

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री, क्रोष्ट्र्यौ, क्रोष्ट्र्यः ।। इत्युदन्ताः ।। वधूर्गौरीवत् । भ्रूः श्रीवत् । हे सुभ्रूः । कथं तर्हि 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः । प्रमाद

तथा हि—'तृज्वद्वचनमनर्थकम्, तृज्विषये तुचो मृगवाचित्वात् । 'वा वचनानर्थक्यञ्च, स्वाभाविकत्वात् । स्वभाव एष तृतीयादिष्वजादिषु तुन्नन्तं तृजन्तं च मृगवाचोति' । असर्वनामार्थोऽयमारम्भः । स्त्रीवाचीति--एवञ्च पञ्चभिः क्रोष्टीभिः क्रीतैः रथैः 'पञ्चक्रोष्टृभी रथैः' इत्यत्रापि परनिमित्तकत्वाभावात् तृज्वद्भावः सिध्यति ।

ये तु 'स्त्रियाम्' इत्यस्य 'स्त्रीप्रत्यये परे' इति व्याचक्षते । स्त्रीप्रत्ययपरत्वसम्पादनाय क्रोष्टुशब्दं गौरादिषु पठन्ति । तन्मते 'पञ्चक्रोष्टृ' इति न स्यात् 'तेन क्रीतम्' इति ठञः 'अध्यर्धपूर्व' इति लुका लुप्तत्वात् 'लुक् तद्धितलुकि' इति ङीपो लुकि प्रत्ययलक्षणस्याभावेन स्त्रीप्रत्ययपरत्वाभावात् । ततश्च स्त्रियामुदन्तः क्रोष्टुशब्दो नास्ती किन्तु ऋदन्तः । तत्र विशेषमाह—

'ऋन्नेभ्यो ङीप्' ( ४-१-५ ) इति । 'स्त्रियाम्' इति, 'प्रातिपदिकात्' इति चाधिक्रियते । ऋत्=ऋकारः, नो=नकारः । प्रयोगापेक्षबहुत्वमादाय बहुवचनम् । ऋन्नेभ्य इति प्रातिपदिकादित्यस्य विशेषणमिति तदन्तविधिः, तदाह—ऋदन्तेभ्य इत्यादि । अस्य प्रातिपदिकेभ्य इति शेषः । 'क्रोष्ट्री' इति ङ्यन्तत्वात्सुलोपः । गौरीवद्रूपम् । यत्तु दण्डिनः 'स्त्रियाम्' इत्यत्र अङ्गाधिकारादङ्गेन प्रत्ययस्याक्षेपाद्विभक्तौ परत एव तृज्वद्भावस्ततो ङीबिति तच्चिन्त्यम्, 'न चापरं निमित्तमाश्रीयते-ऽस्मिन्परतस्तृज्वद्भवतीति' इति भाष्यविरोधात् ।

अथ ऊदन्ताः

वधूरिति—वहति—सुखानि धर्मकार्याणि वा प्रापयति या सा वधूः 'वह प्रापणे' इत्यत 'वहेर्धश्च' (उ. १ पा. ८३ सू) इत्यूप्रत्यये हस्य धादेशे रूपम् । वधूः स्नुषा. ( अमर. ना. व. १०१ ) । वधूः पृक्का—शाकभेदः । 'समुद्रान्ता वधूः कोटिवर्षा' ( अमर. वनौ. १३३ ) भ्रूरिति—नेत्रयोऊर्ध्वस्था रोमराजिर्भ्रूः । भ्रमति-चलतीति भ्रूः । भ्रमु चलने इत्यतः 'भ्रमेडूः' ( उ० २ पा० ६८ सू ) श्रीवदिति । सम्बुद्धौ 'नेयङ्' इति नदीनिषेधाद् ह्रस्वाभावः, हे भ्रूः । सुभ्रूरिति—ऊङ्प्रत्ययस्य ङीप्रत्ययत्वाभावात् 'गोस्त्रियोः' इति ह्रस्वो न ।

हे सुभ्रूरिति--'नेयङ्' इति निषेधाद् नदीत्वाभावाद् 'अम्बार्थ' इति ह्रस्वो न ।

न चावयवस्य 'भ्रू' इत्यस्य नित्यस्त्रीत्वेन 'नेयङ्' इत्यनेन निषेधेऽपि समुदायस्य नित्यस्त्रीत्वाभावात्कथं निषेध इति वाच्यम्, पदान्तरं विनाऽपीति वादे नित्यस्त्रीत्वसत्त्वात् । कैयटमते तु शोभने भ्रुवौ यस्या इति बहुव्रीहेः, शोभनं भ्रमतीति तत्पुरुषस्य वा नित्यस्त्रीत्वाभावान्नदीत्वप्राप्तिरेव न ।

भावप्रकाशे तु—अयमङ्गलादौ भ्रूशब्दाद् 'अप्राणिजातेश्च' इत्यूङि तदन्तेन समासे उपसर्जनत्वेन ह्रस्वत्वे कृतेऽपि स्वभावान्मनुष्यजातिवचनत्वेन पुनः 'ऊङुतः' ( ४-१-६६ ) इत्यूङि ( सवर्णदीर्घे ) पूर्वान्तवत्त्वेन प्रातिपदिकत्वे सति 'अम्बार्थ' इति ह्रस्वत्वम् । ऊङभावे तु दीर्घत्वमित्युक्तम् । अस्यापि भ्रूग्रहणेन तु नोवङ्, धातुसाहचर्येण धातुनिष्पन्नस्यैव ग्रहणात् ।

उक्तव्याख्यानत्वेन नदीत्वाभावाद्ध्रस्वोऽनुपपन्न इत्याक्षिपति-कथं तर्हीति, प्रमाद एवेति सीताया विरहार्त्तीक्रियमाणस्य रामस्यायं ह्रस्वप्रयोगः प्रमादः चित्तानवधानजन्यप्रमादकृतः विरहपोषणाय कविना प्रदर्शितः । अनवधानतया तथोक्तौ विरहस्य पुष्टता गम्यते इति काव्ये गुण एवेत्युक्तं नागेशेनापि । परन्तु रावणेन सीतापहारोत्तरं रामविलापोऽयम् । विधिना त्वया हारितः सः हे सुभ्रु ! क्वासि इत्येवं बहु विलापप्रत्यर्थं उक्तः ।

स न पद्यव्याख्यानुगुणः । तथा हि—षष्ठसर्गे एकादशं भट्टिपद्यम्—

एवायमिति बहवः । खलपूः पुंवत् । पुनर्भूः । 'दृन्कर—' ( वा ४११८ ) इति यणा उवङो बाधनात् 'नेयङुवङ्' ( सू ३०२ ) इति निषेधो न, हे पुनर्भूः । पुनर्भ्वम् । पुनर्भ्वौ ।

### एकाजुत्तरपदे णः [ ८-४-१२ ]

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । यणं बाधित्वा परत्वान्नुट्, पुनर्भूणाम् । वर्षाभूः ।

---

आः कष्टं बत ही चित्रं हुँ मातर्दैव तानि धिक् ।
हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः ।। इति ।

व्याख्या अथमङ्गलायाम्—शोकेनाक्रान्तमनाश्चिन्तयन्नाह—

पीडायाम् आः । पितृवियोगात् पीडितः 'आ' इत्याह । अस्मद्वियोगमात्रापि ता प्राणांस्त्यक्तवान् इत्याह—कष्टम् कृच्छ्रमिति । भर्तृमरणादस्मद्वियोगाच्च मातुः काऽवस्थेत्यभिप्रायेणाह बतेति । बतशब्दः खेदे । सौमित्रिरपि सीतया शप्त इति विस्मितः 'ही' इत्याह । 'ही' इति विस्मये । यदि नाम सीतया मूढतयाऽपि शप्तः, तथापि सामित्रिणा विदुषा सतापि कथं तादृशशापो दत्त इत्यभिप्रायेणाह—चित्रमिति, चित्रमाश्चर्यम् यदेवंविधमनर्थंजातं तत्कैकेयीप्रभव इति क्रुध्यन् 'हुँ' मात इत्याह । हुँ शब्दः क्रोधे । अथ वा सर्वमेवेदं दैवविचेष्टितमिति न तेषु ममानुचितमित्यभिप्रायेण—धिग्दैवतानीत्याह । धिक्=कुत्सायाम् । प्राणांस्त्यक्त्वापि पितरं न पुनरहं द्रक्ष्यामीत्यभिप्रायेणाह—हा पितः क्व द्रष्टव्योऽसि । 'हा' शोके । हे सुभ्रु सीते 'क्वासि' इति व्याख्या । तस्मान्मूलोक्तः प्रमाद एव ज्यायान् ।

केचित्तु 'नेयङ्' इति सूत्रे 'वाऽऽमि' इत्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषामाश्रित्य समादधिरे, तदसत्, तथा सति 'नेयङुवङ्स्थानावस्त्री' इत्येव वक्तव्ये प्रकृते न ग्रहणस्य 'वामि' इति सूत्रस्य च वैयर्थ्यापत्तेः । केचिदाहुः—'हे सुभ्रु' इति सामान्ये नपुंसकमिति ।

पुनर्भूरिति—पुनर्भवति परस्य पत्नीति पुनर्भूः । 'क्विप् च' इति ( ३-२-७६ ) क्विप् । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः । पुनर्विवाहिता । 'नेयङ्' इति निषेधमाशङ्क्याह-'दृन्कर' इति यणा बाधात् न उवङ्स्थानी ऊकारः । 'यूस्त्र्याख्यौ' इति नदीत्वान्नदीकार्यम् । पुनर्भ्वै, 'पुनर्भ्वाः' इत्यादि । आमि नदीत्वान्नुटि दीर्घे च 'पुनर्भू नाम्' इति स्थितौ 'प्रातिपदिकान्त' ( ८-४-११ ) इति वैकल्पिकणत्वे प्राप्ते आह—

'एकाजुत्तरपदे णः' ( ८-४-१२ ) इति । एकोऽज्यस्मिन् तदेकाज् तादृशमुत्तरपदं यस्येति स बहुव्रीहिगर्भितो बहुव्रीहिः । उत्तरपदशब्दश्च समासस्य चरमावयवे रूढः । समासरूपं यद्वाक्यं तदेकदेशेनोत्तरपदेन समास आक्षिप्यते । तदाह-एकाजुत्तरपदं यस्य तस्मिन् समासे इति । अत्र 'रषाभ्यां नः' इति, 'पूर्वपदात्संज्ञायाम्' इत्यतः 'पूर्वपदात्' इति, 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति चानुवर्तते ।

तदाह—पूर्वपदस्थादित्यादि । ननु णग्रहणमिह व्यर्थम् 'रषाभ्याम्' इत्यतो णग्रहणानुवृत्त्यैव सिद्धेः । न च 'वा भावकरणयोः' ( ८-४-१० ) इत्यतोऽनुवर्तमानवाग्रहणेन सम्बद्धत्वात्तन्निवृत्त्यर्थं णग्रहणम् 'एकाज्' इति सूत्रारम्भसामर्थ्यादेव वाग्रहणनिवृत्तिः—

तदाह—आरम्भसामर्थ्यादित्यादि । स्पष्टार्थमिति—विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थमित्यर्थः । यणं बाधित्वेति—'दृन्कर' इति यणं बाधित्वेत्यर्थः । वर्षाभूरिति—पुनर्नवा, भेकी च वर्षाभूः । तत्र भेक्यां स्त्रीपुंसयोर्वर्तमानत्वस्य वक्ष्यमाणत्वात् कैयटमते नित्यस्त्रीत्वा-

भेकजातौ नित्यस्त्रीत्वाभावाद् हे वर्षाभूः कैयटमते। मतान्तरे तु हे वर्षाभु, 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः। 'वर्षाभ्वश्च' ( सू २८२ ) वर्षाभ्वौ, वर्षाभ्वः। स्वयम्भूः पुंवत्। इत्यूदन्ताः।

## न षट्स्वस्रादिभ्यः [ ४-१-१० ]

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः।

"स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति सप्तैते स्वस्रादय उदाहृताः॥"

---

भावान्न नदीत्वम्। तदाह-भेकजातावित्यादि। मतान्तरे त्विति-पदान्तरं विनापीति मतान्तरेत्यर्थः। स्त्रियामपि वृत्तेः। भेक्यामिति—एतेन 'भेक्यां स्त्री, दर्दुरे च पुमान्' इति भेकजातावुभयलिङ्गत्वमुक्तम्। दर्दुरो भेकः। पुनर्नवायां नित्यस्त्रीत्वान्नदीत्वं स्यादेव। यादव इति-यद्यपि-'शिल्पी गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इत्यमराद् वर्षाभूशब्दः स्त्रियामेव वर्तते, ङीषन्तश्च। तथाऽपि स्त्रीत्वं पुंस्त्वस्याप्युपलक्षणं बोध्यम्, यादवानुरोधात्। यद्वा अस्तु अमरानुसारेण कैयटाभिमतनित्यस्त्रीत्वान्नदीत्वम्।

परन्तु अमरमते ङीषन्त एव वर्षाभूशब्दः, गौरादिकल्पने मानाभावादमरे 'वर्षाभूः कमठी डुलिः' इत्येव पाठ इति सुबोधिनीकार इति माधवस्तदनुसारेणायं मूलग्रन्थः।

स्वयम्भूरिति—स्वयम्भूशब्दस्तद्व्यक्तित्वरूपविरिञ्चित्वावच्छिन्ने तु पुमानेव। आत्मकर्तृकभवनकर्तृत्वावच्छिन्ने शक्तश्चेत्तदा त्रिषु लिङ्गेष्वित्याशयेनाह—स्वयम्भूः पुंवदिति। उभयमतेऽपीति शेषः। स्वयंभूशब्दस्य ब्रह्मवाचकत्वेन पदान्तरं विना स्त्रियामवृत्तेः। 'योगाद्रूढिर्बलीयसी' इति न्यायेन पदान्तरं विना ब्रह्मण एव प्रतीतेः।

### अथ ऋदन्ताः

सुष्ठु अस्यति भ्रातरि प्रेमाणमिति स्वसा। असु क्षेपणे इत्यतः 'सरवसेऋन्' ( उ. २ पा-९६ सू. ) इति ऋन्। स्वसृशब्दात् 'ऋन्नेभ्यो ङीप्' इति ङीपि प्राप्ते आह-'न षट्स्वस्रादिभ्यः' ( ४-१-१० ) षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च न स्यात्। किं न स्यादिति प्रतियोग्याकाङ्क्षायामनन्तरत्वाङ्ङीप् सम्बध्यते तथा सति षट्संज्ञकानान्नलोपेऽदन्तत्वात् टाप् स्यात्।

न च लोपस्यासिद्धतयाऽदन्तत्वाभावात् टाप् न स्यात्। सुब्स्वरादिपरिगणितेष्वेव नलोपासिद्धत्वस्य 'नलोपः सुप् स्वर' ( ८-२-२ ) इति सूत्रेण नियमनात्। तेषु च टापोऽभावात्।

'तस्मान्नोभौ षट्संज्ञकेभ्य इति वक्तव्यम्' इति वार्तिकमुक्त्वा भाष्यकृतोक्तम्-'स्त्रियामिति वर्तते। स्त्रियां यत्प्राप्नोति तस्य प्रतिषेध इति। टाप्ङीपौ नानुवर्तनीयौ। षट्संज्ञकेभ्यः स्त्रियां न भवति यत्प्राप्तं तन्न भवति सामान्यतः प्रतिषेधात् इति ङीप् टापौ न स्त इति तदाह-ङीप् टापौ न स्त इति। स्वस्रादिभ्य ऋदन्तत्वान्ङीप् प्राप्तः षट्संज्ञकेभ्यस्तूभौ। स्वस्रादिगणे तिसृचतस्रोः पाठोऽनार्षः 'कृन्मेजन्तः' इति भाष्ये सन्निपातपरिभाषाफलत्वेन 'तिस्रः, चतस्र' इत्यत्र ङीबभावोक्तेः। किञ्च 'न तिसृचतसृ' इति नामि दीर्घनिषेधस्य ङीपि सति वैयर्थ्यापत्त्या ङीबभावस्य वक्तुं शक्यतया स्वस्रादिषु तयोः पाठो व्यर्थ इति कैयटोऽपि स्वसा 'ऋदुशनः' इत्यनङि 'अप्तृन्' इत्युपधादीर्घः। न नन्दति=तुष्यति पतिः स्वस्रेति 'नप्ति च नन्देः' ( उ. २ पा. ९८ सू ) इति ऋन्।

दुहिता—कन्या दोग्धि कामान् पूरयतीति 'दुहिता' 'दुह प्रपूरणे' इत्यतः 'नप्तृनेष्टृ' ( उ. २ पा. ९५ सू ) इत्यनेन तृन् इट् च निपात्यते। यतते इति याता भ्रातॄणां भार्या परस्परं यातरः। यती प्रयत्ने इत्यतः 'यतेर्वृद्धिश्च' ( उ. २ पा. १७ ) इति ऋन् वृद्धिश्च। मानयति—सत्करोतीति माता-जननी। मान पूजायाम् इत्यतः 'नप्तृनेष्टृ' ( उ. २ पा. ९५ ) निपातनान्नलोपः।

'अप्तृन्—' (सू २७७) इति दीर्घः—स्वसा, स्वसारौ, स्वसारः। माता पितृवत्। शसि मातॄः। इत्यृदन्ताः। द्यौ गोवत्। इत्योदन्ताः। राः पुंवत्। इत्यैदन्ताः। नौः ग्लौवत्। इत्यौदन्ताः।

इत्यजन्तस्त्रीलिङ्गप्रकरणम्।

---

यद्वा पाति-रक्षति माता पिता च। पा रक्षणे इत्यतः तृन् मातरि पकारस्य मकारः पितरि आकारस्येत्वञ्च निपात्यते 'नप्तृनेष्टृ' इति सूत्रे धातोरनवधारणेन एवमपि वक्तुं शक्यत्वादित्युपाध्यायाः। अत्र ननान्दृसाहचर्यात्प्रसिद्धत्वाच्च ससम्बधिकजननीवाचकस्यैव ग्रहणम्। तेन च परिच्छेत्तृवाचकान्मातृशब्दात् स्त्रियां ङीपि (मात्री) भवत्येव। पितृवदिति-माता—मातृशब्दः, पितृशब्दरूपसदृशरूपवानित्यर्थः। शसि विशेषमाह 'मातॄः' इति। स्त्रीत्वात्नत्वाभावः।

अथ औदन्ताः

रा इति–राति=सम्मानाद् ददातीति राः। रा दाने इत्यतः 'रातेर्डैः' इति डै। (२ पा. ६६ सू.) रै शब्दस्य स्त्रीत्वं चिन्त्यम्, अमरे पुंसि पाठात्। 'अर्थरैविभवाः पुंसि' इत्युक्तेः। नौरिति–नुदति=पारं गन्तुमिति नौः 'णुद प्रेरणे' इत्यतः 'ग्लानुदिभ्यां डौः' (उ. २ पा. ६४ सू.) इति डौः 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः। इत्यौदन्ताः।

इत्यजन्तस्त्रीलिङ्गप्रकरणम्।

---

# अथ अजन्तनपुंसकलिङ्गप्रकरणम् ।

## अतोऽम् [ ७-१-२४ ]

अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात् । 'अमि पूर्वः' ( सू १९४ ) ज्ञानम् ।

---

ज्ञान सु इत्यत्र 'स्वमोर्नपुंसकात्' ( ७-१-२३ ) इति सोर्लुकि प्राप्तेऽपवादमाह— 'अतोऽम्' ( ७-२-२४ ) इति । अतः, अम् इति च्छेदः । अत इति पञ्चमी । अङ्गस्य इत्यधिकृतं पञ्चम्या विपरिणम्यते । अत इत्यनेन विशेष्यते । तदन्तविधिः । स्वमोर्नपुंसकात् इत्यनुवर्तते । नपुंसकादित्यङ्गस्य विशेषणम् । तदाह—अतोऽङ्गादित्यादि । इदञ्च 'स्वमोर्नपुंसकात्' इत्यस्य 'येन नाप्राप्तिः' न्यायेनापवादः ।

अपवादबीजञ्चात्र - 'तदप्राप्तियोग्येऽचारितार्थ्ये सति, अपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तावपवादशास्त्रप्रणयनवैयर्थ्यसम्भावनारूपम्' अत्र 'तदप्राप्तियोग्यञ्च तद्विधेयाघटितं' ग्राह्यम् । तेन उत्सर्गशास्त्रविधेयघटिते उत्सर्गाप्राप्तियोग्येऽपवादशास्त्रस्य चारितार्थ्येऽपि न क्षतिः । अतोऽमित्यस्य लुगप्राप्तियोग्येऽचारितार्थ्येन अमुत्तरे लुकि तु अपवादशास्त्रप्रणयनवैयर्थ्येन । स्वमोर्नपुंसकादिति शास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्ने स्वविहितकार्य्याश्रयातिरिक्तत्वेन स्वप्रवृत्तियोग्यातिरिक्तत्वेन च संकोचे अमादेशोत्तरं न लुक्, नापि ततः प्राग् लुक् ।

ननु 'अतोऽम्' इत्यत्र 'अतः म्' इत्येवास्तु । न च 'ज्ञान अम्' इत्यत्र 'आदेः परस्य' ( १-१-५४ ) इति परिभाषया अकारस्यैव मादेशे लक्ष्यासिद्धिः । संयोगान्तलोपेन सिद्धेः । न च झल एव संयोगान्तस्य लोपः, गिरिवेशमाचष्टे गिरिवेडित्यस्य सिद्धये 'संयोगान्तस्य लोपः' ( ८-२-२३ ) इत्यत्र 'झलो झलि' ( ८-२-२९ ) इत्यतो झल्ग्रहणमपकृष्य षष्ठ्या विपरिणम्य संयोगान्तस्य झलो लोप इत्यर्थेन भाष्यकृता 'यणः प्रतिषेधः' इति वार्तिकं प्रत्याख्यातम् । 'अमो मश्' इति सूत्रे च मम् इति द्व्यात्मकमादेशं विधाय शित्त्वं प्रत्याख्यातम् । एवमस्य संयोगान्तलोप इति कैयटेन व्याख्यातम् ।

किञ्च 'व्यत्ययो बहुलम्' ( ३-१-८५ ) 'लिङ्याशिष्यङ्' ( ३-१-८६ ) इति संहितापाठे संयोगान्तलोपेन च लकारं प्रश्लिष्य 'कर्मवत्कर्मणा' ( ३-१-८७ ) इति सूत्रे तमनुवर्त्य लकारवाच्य एव, कर्ता कर्मवत् इति व्याख्यातं भाष्ये । तदुपपत्तये संयोगान्तस्य लोप इत्यत्र वाक्यद्वयम्—एकम्—संयोगान्तस्य पदस्य लोप इति सामान्यम्, द्वितीयम्—झल्ग्रहणसम्बन्धेन संयोगान्तस्य झलो लोप इति । तथा च आद्येन झलोऽपि लोपे सिद्धे द्वितीयं व्यर्थीभूय कल्पयति—पूर्ववाक्यं काचित्कमिति । तेनेष्टानुरोधेन क्वचिद् झल्भिन्नस्य लोपार्थं पूर्ववाक्यम् । तेन पूर्वोक्तभाष्यस्थले मलोपो न विरुध्यत इति 'ज्ञानम्' इत्यस्य सिद्धिरिति ।

यत्तु एवं सति 'सुपि च' इति दीर्घत्वं स्यादिति तन्न, सन्निपातपरिभाषया दीर्घाप्राप्तेः । यदपि कष्टाय क्रमणे, इत्यादिज्ञापकाद्दीर्घविधौ सा न प्रवर्तते इति तदपि न, भाष्यविरोधात् । तथा हि 'रत्नानलोपः' इति भाष्ये 'नाम्नलोपः इति न्यासे 'रत्नानाम्' 'यरनानाम्' इत्यादौ दीर्घे नलोपे च प्राप्ते परत्वान्नलोपापत्तिरित्युक्तम् । तत्र सुपि चेति दीर्घे सन्निपातपरिभाषाया अप्रवृत्तौ नलोपापेक्षया परत्वस्य सुपि चेति दीर्घे सत्त्वेन भाष्यासङ्गतिः । मम तु चतुर्थ्येकवचने दीर्घे सन्निपातपरिभाषा न प्रवर्त्तते । अन्यत्र दीर्घे सन्निपातपरिभाषा प्रवर्तत एवेति 'रत्नानाम्' इत्यत्र सुपि चेत्यस्याप्राप्तया परत्वान्नलोप इति भाष्यं संगच्छते ।

तथा 'एकहस्वात्' इति सूत्रे अपृक्ताधिकाराभावे 'हे कुण्ड अम्' इत्यत्र आदेः परस्येत्यकारलोपे च सति सुपि चेति दीर्घे कुण्डाम्, पीठाम् इत्येतद्रूपं स्यात् इति भाष्यं संगच्छते । अन्यथा

'एङ्ह्रस्वाद्—' ( सू १९३ ) इति हल्मात्रलोपः, हे ज्ञान ।

दीर्घे सन्निपातपरिभाषया अप्रवृत्तौ भाष्यं विरुध्येत । तस्मात् 'कष्टाय क्रमणे' इति निर्देशेन चतुर्थ्येकवचने दीर्घो न प्रवर्तते इत्येव ज्ञाप्यं न सामान्यतः । यत्तु द्वितीयैकवचने 'अतिजरसम्' इत्यस्यासिद्धिरिति तदपि न, अतोऽम् इति बाधित्वा परत्वाज्जरसि रूपसिद्धेः ।

'नुमजरसोः प्राप्तयोः परत्वाज्जरस्' इति भाष्यप्रामाण्यात्पूर्वविप्रतिषेधेन विभक्त्यादेश एव इति त्वप्रामाणिकम्, 'अजर अम्' इति दशायाम् 'जश्शसोः शिः' इति 'जराया जरस्' इत्युभयं प्राप्नोति । नित्यत्वात् श्यादेशः स्यात्, जरसादेशस्तु न नित्यः शिभावे कृते नुमि निर्दिश्यमानत्वाभावेन जरसोऽप्राप्तेरिति शङ्कायां जरसादेशस्यापि नित्यत्वप्रतिपादनाय नुमजरसोः प्राप्तयोर्नुमं बाधित्वा परत्वाज्जरस् इति जरसोऽपि नित्यतया शिभावं बाधित्वा परत्वाज्जरस् एव स्यादिति भाष्याशयेनानेन विभक्त्यादेशः पूर्वविप्रतिषेधेन, इत्यस्य साधयितुमशक्यत्वात् । न च 'म्' इति च्छेदे सौ जरसोऽनापत्तिरिति वाच्यम्, अमिति च्छेदेऽपि सन्निपातपरिभाषया जरसोऽभावस्यैवेष्टत्वेन दोषाभावात् ।

नच नपुंसके ह्रस्वत्वेन दीर्घाकारान्तस्याभावेन 'अतः' इति तपरत्वं मुखसुखार्थतया मादेशे अत्वमात्रस्य निमित्तत्वेन दीर्घेप्यत्वस्य सत्त्वेन सन्निपातविघाताभाव इति वाच्यम्, अश्च आश्चेति समाहारद्वन्द्वे अपरनिमित्तकत्वेनान्तरङ्गत्वाद् ह्रस्वे सवर्णदीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाभावे 'आ' इत्यन्तादेशवारणाय मात्राकालिकत्वस्यापि निमित्तत्वेन दीर्घे तद्विघातस्याक्षतत्वात् । ययोः सन्निपातस्तत्स्वरूपविघातमात्रस्यैवापेक्षितत्वाच्चेति चेत्सत्यम्, अमिति च्छेदस्यादृष्टार्थं मात्रफलकत्वात् ।

ज्ञानमिति—'ज्ञा अवबोधने' इत्यतः 'ल्युट् च' ( ३-३-११५ ) इति भावे ल्युट् । अवबोधनानुकूलो व्यापारः । ज्ञानञ्चान्तःकरणवृत्तिविशेषः । 'ज्ञान सु' इति दशायां लुकि प्राप्ते तस्यापवादत्वादमादेशे 'अमि पूर्वः' इति पूर्वरूपम् ।

हे ज्ञान इति—'ज्ञानम्' अमादेशे पूर्वरूपे 'एङ्ह्रस्वात्' इति ह्रस्वाकारात्परस्य हलो मकारस्य लोपे 'हे ज्ञान' इति ।

ननु 'एङ्ह्रस्वात्' इत्यत्र संबुद्धिरूपप्रत्ययाक्षिप्तस्याङ्गस्य संबुद्धावेवान्वयः समुचितः, उपस्थितत्वात् । एवञ्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परा या सम्बुद्धिस्तदवयवस्य हलो लोप इत्येवार्थः । तथा च 'एङ्ह्रस्वात्' इति लोपं परत्वाद् बाधित्वा पूर्वरूपे 'ज्ञानम्' इति दशायां पूर्वान्तवद्भावेन 'ज्ञान' इत्यस्याङ्गत्वेऽपि ततः परस्य 'म्' मात्रस्य सम्बुद्धित्वाभावेन लोपानापत्तिः, पूर्वान्तवद्भावे सति परादिवद्भावस्तु न, युगपदेकस्य 'उभयत आश्रयणे नान्तादिवत्' इति निषेधात् । एकदेशविकृतन्यायेनापि न, अर्थविकारे तदप्रवृत्तेरत आह—हल्मात्रलोप इति—लक्ष्यानुरोधाद् भाष्यप्रामाण्याच्च एङन्ताद् ह्रस्वान्ताङ्गाच्च परो यः सम्बुद्ध्यवयवो हल् स लुप्यते इत्यर्थेन पूर्वान्तवद्भावेन ज्ञानरूपाङ्गात्परस्य सम्बुद्ध्यवयवस्य मकाररूपस्य हलो लोपः सिद्ध्यति ।

तदुक्तं भाष्ये—'एवं तर्हि हलो लोपः सम्बुद्धिलोपः । तद्ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । नैष दोषः । 'एङ्ह्रस्वादित्येषा पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीं प्रकल्पयिष्यति-तस्मादित्युत्तरस्येति' इति । एतेनाङ्गादित्यस्य हल्येवान्वय इति स्पष्टमेव लभ्यते । एवञ्च मादेशेऽपि हे ज्ञान इत्यत्र न दोषः ।

शेखरकृतस्तु 'प्रत्यये गृह्यमाणे यस्मात्स विहित इत्याद्युपतिष्ठते इति प्रत्ययग्रहणे यस्मात्सविहित इत्यादिपरिभाषार्थः, इत्यङ्गस्येति सूत्रे भाष्ये उक्तम् । अनुमानरूपाक्षेपस्तु न, फलाभावात् ।

नपुंसकाच्च [ ७-१-१६ ]

क्लीबात्परस्यौङः शी स्यात्। भसंज्ञायाम्।

यस्येति च [ ६-४-१४८ ]

भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे। इत्यकारलोपे प्राप्ते। 'औङः श्यां प्रतिषेधो वाच्यः' ( वा ४१८६ ) ज्ञाने।

---

यथा पीनत्वानुपपत्त्याऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलम्। न तथा सम्बुद्ध्युपपत्तिर्भवति। किञ्च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावात्' इत्याहुः।

अत्र उपाध्यायाः—अङ्गस्याक्षेपाभावे 'कतरत्' इत्यादौ दोषो दुरुद्धरः, तत्प्रकृतिरूपमादिर्यस्य समुदायस्य तस्यैव तदादिग्रहणे 'कतर' इत्यस्य तदादित्वात्ततः परस्य सम्बुद्ध्यवयवस्य तकारस्य लोपापत्तेर्दुर्वारत्वात्। तदादेः सम्बुद्धिविशेषणत्वे 'कुण्ड' इत्यत्र लोपानापत्तिः। तस्मात् सम्बुद्ध्यनवयवैङ्साहचर्येण सम्बुद्ध्यनवयवस्यैव ग्रहणमित्यनयैव रीत्या दोषो वारणीय इति शेखरोक्ताङ्गाक्षेपस्य खण्डनं वृथैव स्यात्। तस्मादङ्गसंज्ञासूत्रे तदादिपदेन प्रत्ययाव्यवहितपूर्वस्यैव ग्रहणात्तन्मूलकप्रत्ययग्रहणपरिभाषयाऽपि तादृशस्यैव तदादेरुपस्थित्या 'कतरत्' इत्यत्र अद्ड्प्रत्ययाव्यवहितपूर्वत्वस्य कतर-इति तदादावभावेन न दोष इत्ययमेव पन्था ज्यायानिति वदन्ति।

नपुंसकाच्च ( ७-१-१९ ) इति। 'न स्त्री पुमान्' इत्यर्थे 'न भ्राण्नपात्' ( ६-३-७५ ) इति सूत्रेण नञः प्रकृतिभावः स्त्रीपुंसयोः पुंसकादेशश्च निपात्यते। अत्र 'जसः शी' इत्यतः 'शी' इति, 'औङ आपः' इत्यतः 'औङः' इति चानुवर्तते। तदाह—क्लीबादित्यादि। 'क्लीबृ मदे अप्रागल्भ्ये च' इत्यतः पचादित्वादचि 'क्लीबः' इति,=अप्रगल्भः=नपुंसक इति यावत्। भसंज्ञायामिति—नपुंसके 'सुडनपुंसकस्य' इति सुटः सर्वनामस्थानसंज्ञाया अभावेन सर्वनामस्थानभिन्ने अजादौ सुपि 'यचि भम्' इति भसंज्ञायामित्यर्थः।

'यस्येति च' ( ६-४-१४८ ) इति। इश्च अश्चानयोः समाहारोऽयम् 'इवर्णस्य ईति किमुदाहरणम्' इति भाष्यात्कृतसन्धेरेव 'यस्य' इति निर्देशः। 'यस्य ईति' इति च्छेदः। 'भस्य' इत्यधिक्रियते। चेन 'नस्तद्धिते' इत्यतः 'तद्धिते' इत्यनुकृष्यते। तदाह—भस्येवर्णावर्णयोरिति। इत्यकारलोपे प्राप्त इति—सर्वनामस्थानभिन्नाजादिसुप्परकत्वेन भत्वादित्यर्थः। औङः श्यामिति औङः स्थाने यः श्यादेशस्तस्मिन्परे भस्य यो लोपः प्राप्तस्तस्य प्रतिषेध इत्यर्थः। श्यामिति—अत एव निर्देशात् शीशब्दस्य गौरादित्वकल्पनेन ङीषि रूपम्। अत एव 'जसः शी' इत्यत्रापि 'हल्ङ्याब्' इति सुलोपः।

यत्तु विभक्तिरूपविशेष्यापेक्षया स्त्रीत्वमिति तच्चिन्त्यम्, विशेष्यापेक्षया स्त्रीत्वेऽपि नित्यस्त्रीत्वाभावेन नदीत्वानापत्तेः। अत्र 'औङः' इति स्पष्टार्थम्, जसः श्यां भत्वाभावेन लोपाप्राप्तेः। भाष्ये तु प्रत्याख्यातमिदम्। तथा हि—'यस्येत्यादौ, श्यां प्रतिषेधः' यस्येत्यादौ श्यां प्रतिषेधो वक्तव्यः। 'काण्डे सौर्ये नाम हिमवतः शृङ्गे'। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। इह श्यामित्यपि ऐत्यपि। तत्राभिसम्बन्धमात्रं कर्तव्यम्। यस्येत्यादौ लोपो भवति श्यां न। इति। अयम्भावः—'विभाषा ङिश्योः' इति प्रकृतम् ततः श्यामिति 'न संयोगाद्वमन्तात्' इति प्रकृतम् ततो नेति च। तत्राभिसम्बन्धमात्रं कर्तव्यम्। यस्य ईकार तद्धिते च लोपो भवति श्यां नेति। इति।

**जश्शसोः शिः [ ७-१-२० ]**

क्लीबादनयोः, शिः स्यात् ।

**शि सर्वनामस्थानम् [ १-१-४२ ]**

'शि' इत्येतदुक्तसंज्ञं स्यात् ।

**नपुंसकस्य झलचः [ ७-१-७२ ]**

झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात् सर्वनामस्थाने परे । उपधादीर्घः—ज्ञानानि । पुनस्तद्वत् । शेषं रामवत् । एवं धनवनफलादयः ।

**अद्ड्डतरादिभ्यः पञ्चभ्यः [ ७-१-२५ ]**

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ।

---

जश्शसोः शिः ( ७-१-२० ) इति । स्वमोर्नपुंसकात् इत्यतो नपुंसकादित्यनुवर्तते । तदाह—क्लीबादित्यादि । अत्र जस्साहचर्यात्सुप एव शसो ग्रहणं न तद्धितस्य । अत एव 'तान्येकवचनानि' ( १-४-१०२ ) इति सूत्रे 'एकशः' इति निर्देशात् तत्र तानीत्युपक्रमान्नपुंसक-शब्दाच्छस् । निरनुबन्धकपरिभाषया तद्धितशस एव ग्रहणं तु न, धर्मिग्राहकमानाद्येनानुबन्धेन सानुबन्धकात्वं तदनुच्चारणे एव तत्प्रवृत्तेः ।

'शि सर्वनामस्थानम्' (१-१-४२) इति । उक्तसंज्ञमिति—सर्वनामस्थानसंज्ञकमित्यर्थः 'अनपुंसक एव' इति पर्युदासात् 'शि' इत्यस्य सर्वनामस्थानत्वेऽप्राप्ते सूत्रम् । 'नपुंसकस्य झलचः' (७-१-७२) । झल् च अच् चेति समाहारद्वन्द्वः । सौत्रत्वात् 'द्वन्द्वाच्चुदषहान्तात्' (५-४-१०६) इति टज् न । अत्र 'अङ्गस्य' इत्यधिकृतं विशेष्यते । विशेषणेन तदन्तविधिः । 'इदितो नुम् धातोः' इत्यतो नुमिति, 'उगिदचां सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति चानुवर्तते । तदाह—झलन्त-स्येत्यादि । 'ज्ञान शि' इति दशायां, नुम् 'ज्ञानन् इ' 'सर्वनामस्थाने चासम्बुद्धौ' इत्युपधादीर्घे । ज्ञानानि इति ।

यद्वा नात्र द्वन्द्वः, किन्तु झलिति प्रथमान्तम् । 'अचः' इति पञ्चम्यन्तम् । अच इत्यस्य झलि अन्वयेन पञ्चम्या झल् इत्यस्य षष्ठीप्रकृतिर्भविष्यति । अचः परो यो झल् तदन्तं यत् क्लीबमङ्गं तस्य नुम् । एवञ्च 'बहूर्जि नुम्प्रतिषेधः' इति वार्तिकं न कर्तव्यम् । पुनस्तद्वदिति—अमि, औङि शसि च ज्ञानम् ज्ञाने ज्ञानानि इति रूपाणि ।

शेषमिति—शेषं रूपमित्यर्थः । 'घञबन्ताः' 'पुमान्' इत्यधिक्रियते । भावार्थे एवेदम्, नपुंसकत्वे विशिष्टे भावे क्तल्युडभ्याम्, स्त्रीत्वविशिष्टे तु क्तिन्नादिर्बाधेन परिशेषात् । कर्मादौ घञाद्यन्तमपि विशेष्यलिङ्गम् । तथा च भाष्यम् 'सम्बन्धमनुवर्तिष्यते' इति लिङ्गानुशासनकारः ।

धनवनादय इति—'धन धान्ये' इत्यतः 'घञर्थे कविधानम्' इति कप्रत्ययः । वनषन-संभक्तौ इत्यतः कप्रत्ययः, वन्यते=विरुध्यते लतावृक्षादिभिरिति वनम् । उभयत्र अच् तु न, विधायकाभावात् । पचादित्वात्तु न, कर्तरि एव विधानेनार्थानुपपत्तेः । 'फल निष्पत्तौ' इत्यतः पचादित्वादच् ।

'अद्ड्डतरादिभ्यः पञ्चभ्यः' ( ७-१-२५ ) इति । अत्र 'अद्ड्डतरादिभ्य' इति च्छेदः । अत्र दकारस्य ष्टुत्वं स्वरूपमङ्गमिया न कृतम्, नापि संयोगान्तलोपः । अद्ड् पाठे भाष्य-मेव मानम् । द्विडकारको निर्देशः । अद्ड्डतरादिभ्यः इति डतर-डतम-अन्य-अन्यतर-इतररूपाः सर्वाद्यन्तर्गताः । डतरडतमौ-प्रत्ययौ 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' ( ५-३-९२ ) इति,

टेः [ ६-४-१४३ ]

डिति परे भस्य टेर्लोपः स्यात्। 'वाऽवसाने' ( सू २०६ ) कतरत्-कतरद्, कतरे, कतराणि। 'भस्य' इति किम्—पञ्चमः। टेर्लुप्तत्वात् 'प्रथमयोः—( सू १६४ ) इति पूर्वसवर्णदीर्घः 'एङ्ह्रस्वात्-' ( सू० १६३ ) इति संबुद्धिलोपश्च न भवति, हे कतरत्। पुनस्तद्वत्। शेषं पुंवत्।

---

'वा बहूनां जातिपरिप्रश्ने डतमच्' ( ५-३-९३ ) इति च सूत्राभ्यां विहितौ। प्रत्ययग्रहणपरिभाषया तदादेरुपस्थितौ तदन्तविधिः, अत्र स्वमोर्नपुंसकादित्यनुवर्तितं तदाह—एभ्यः क्लीबेभ्य इत्यादि।

अत्र भाष्यम्—'संज्ञोपसर्जनप्रतिषेधः' संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः' इत्युक्त्वा 'अतिकतरं ब्राह्मणकुलम् इत्यत्राद्ड्भावो ने' ति फलं दत्तम्। ततो वार्तिकप्रत्याख्यानावसरे उतरार्थं वार्तिकं न वक्तव्यम् 'इह तावत्' डतरादिभ्यः पञ्चभ्य इति पञ्चमी, अङ्गस्येति षष्ठी, तत्राशक्यं भिन्नविभक्तित्वाद् डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययाद् डतरादिभ्यो यो विहित इति। अत्र डतरादिभ्यो विहितः इति भाष्यं कैयटादय एवं व्याचचक्षिरे 'डतरादिभ्यः' इति बहुवचननिर्देशाद् अर्थप्राधान्यं विवक्षितम्, डतरादितदार्थार्थात्परयोः स्वमोरद्डादेश इति। अर्थाच्च स्वमोः परत्वं शब्दद्वारकम् प्रधानीभूतडतरार्थवाचकशब्दात्परयोरित्यर्थः। तेन 'अतिकतरम्' इत्यादौ नाद्ड्। 'परमकतरत्' इत्यत्र च डतरार्थप्राधान्याद् भवत्येव इति।

नव्यास्तु—बहुवचनेन तथार्थकल्पने 'तिसृभ्यो जसः' 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यादावपि तथात्वापत्तौ, भाष्यविरोधेन 'डतरादिभ्यो विहितयोरङ्गसंज्ञानिमित्तयोः स्वमोरद्ड्' इत्येवार्थं इति 'परमकतरम्' इत्येव, डतरादिभ्यो विहितत्वाभावात्। कैयटोक्तिस्तु चिन्त्येत्याहुः।

गुरवस्तु 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकारम्भकल्पे 'परमसर्वस्मै, अतिसर्वाय, परमकतरत्, अतिकतरम्' इत्येवं यथा सिध्यन्ति तथा प्रत्याख्यानपक्षेऽपि फलभेदवारणाय कैयटोक्तमार्ग एव आश्रयणीयः। तथा सति 'परमकतरत्' इत्येव भवति न तु परमकतरमित्याहुः। 'डतरादीनां पञ्चानां डुक्' इति सुवचम्। न चैवाचक्षाणण्यन्तनिष्पन्नकतरशब्दे 'कतरत्' इति रूपासिद्धिः, सर्वाद्यन्तर्गणकार्यत्वेनोपसर्जनेऽप्रवृत्तेरेवेष्टत्वात्। तदुक्तं भाष्ये 'डकरणाद्वा डग्' डतरादीनामिति वक्ष्यामि' इति।

'कतर सु' इति दशायाम् अद्डादेशः, डकार इत्। 'कतर अद्' इति स्थितौ 'प्रथमयोः' इति दीर्घे प्राप्ते 'टेः' ( ६-४-१४३ ) इति। अत्र 'तिविंशतेर्डिति' ( ६-४-१४२ ) इत्यतः 'डिति' इति 'अल्लोपोऽनः' इत्यतो लोप इति चानुवर्तते। भस्येति चाधिकृतम्। तदाह—डिति परे इत्यादि। वाऽवसाने इति—वा चर्त्वमिति शेषः। पञ्चम इति—भस्येत्यस्यासम्बन्धे 'पञ्चमः' इत्यत्र 'नान्तादसंख्यादेः' इति डटो मडागमे 'स्वादिषु' इति पदत्वेऽटिलोपापत्तेः। न च 'नान्तात्' इत्यनेन पूरणे मट्प्रत्यये न दोष इति वाच्यम्, अग्रे ड्टोऽननुवृत्तौ षष्ठ इत्यादीनामसिद्ध्यापत्तेःअधिकारस्य पूर्वत्र 'पादः पत्' इत्यादौ परत्र 'नस्तद्धिते' इत्यादौ चावश्यकत्वेन केवलमत्र सम्बन्धमात्रखण्डनाय नानाप्रयासकरणेऽतिगौरवापत्तेरत्र सम्बन्धस्यैवौचित्यात्।

अद्डो डित्वफलमाह—टेर्लुप्तत्वादिति—टेर्लोपे 'कतर् अद्' इति दशायाम् अदिति प्रथमाया द्वितीयाया वा अदोऽच् अकः परो नास्ति किन्तु रेफात्पर इति पूर्वसवर्णदीर्घो न भवति। टेरलोपे त्वकः परस्य प्रथमाद्वितीययोरचः सत्वेन पूर्वसवर्णदीर्घो दुर्वारः स्यादिति भावः।

ननु पूर्वसवर्णदीर्घाभावाय 'द्' मात्रादेशो विधीयतामित्यच्परत्वाभावाद्दीर्घो न स्यादित्यत आह—एङ् ह्रस्वादिति—सोर्दादेशे स्थानिवत्त्वेन सम्बुद्धित्वात्, ह्रस्वान्तात्परत्वाच्च लोपः स्यात्।

कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमशब्दस्य तु अन्यतममित्येव । 'एकतरात्प्रतिषेधो वक्तव्यः ।' ( वा ४२८७ ) एकतरम् । सोरमादेशे कृते संनिपातपरिभाषया न जरस्, अजरम् । अजरसी-अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् ।

---

अद्डादेशे तु टेर्लोपे अङ्गं रेफान्तं न ह्रस्वान्तमिति न दोषः । न च सम्बुद्धित्वस्य स्थानिभूतालस-धर्मत्वेन 'अनल्विधौ' इति निषेधान्नव्यनये 'द्' मात्रादेशेऽपि लोपाप्राप्तिः, यत्रालत्वव्याप्यधर्मावच्छिन्ना स्थानिता तत्रैव तन्निषेधप्रवृत्तेः, प्रकृते सकारमात्रवृत्तिस्थानिताया 'स्वमोरि' त्युक्त्या लुक्त्वेनावच्छेदात् ।

न च नव्यनये 'हे कतरत्' इत्यत्र 'कतर' इति समुदाये ह्रस्वान्तत्वादिरवस्य सत्त्वात् लोपो दुर्वारः, सम्बुद्ध्यनवयवैङ्साहचर्येण ह्रस्वस्यापि सम्बुद्ध्यनवयवस्यैव ग्रहणेनादोषात् । अद्डादेशे तु टिलोपे सति रेफान्तमङ्गं न ह्रस्वान्तम् । यच्च प्रत्ययावयवाकारघटितं ह्रस्वान्तं, न तदङ्गम्, प्रत्ययाव्यवहितपूर्वत्वाभावात् । न च प्रत्ययावयवेऽपि प्रत्ययत्वस्य प्रत्ययलोपसूत्रभाष्य-बोधिततया दोषतादवस्थ्यम्, एङ्साहचर्येण सम्बुद्ध्यनवयवस्यैव ह्रस्वस्याग्रहणेनादोषात् । शेषं पुंवदिति—सर्वशब्दवदित्यर्थः ।

अन्यतमशब्दस्य त्विति—डतरादिपञ्चसु अन्यतमशब्दस्याभावान्न अद्डादेशः । न च डतमप्रत्ययान्तत्वेन ग्रहणम्, किंयत्तद्भ्य एकशब्दाच्चैव डतरडतमयोर्विधानात् । अत एवान्यतर-शब्दस्य सर्वादिषु पृथक् पाठः । एकतरादिति—एकतरशब्दस्य 'एकाच्च प्राचाम्' ( ५-३-९४ ) इति विहितडतरप्रत्ययप्राप्तस्य अद्डादेशस्य प्रतिषेध इत्यर्थः । एकतमशब्दस्य तु डतमान्ततया एकतमत् इत्येव ।

न विद्यमाना-अविद्यमानेति नञ्समासे 'अविद्यमाना जरा यस्ये' त्यर्थे 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहौ नञः परस्योत्तरपदलोपे 'गोस्त्रियोः' इति ह्रस्वे पर्जन्यवल्ल-क्षणप्रवृत्त्या 'ह्रस्वो नपुंसकस्य' इति ह्रस्वे 'अजर सु' इति दशायाम् 'अतोऽम्' इति सोरमादेशे अदन्तसंनिपातनिमित्तकोऽमादेशोऽदन्तसंनिपातविघातकजरसादेशं प्रति निमित्तं न स्यादिति 'जरायाः जरस्' इति प्राप्तोऽपि जरसादेश उपजीव्यविरोधान्न । 'अमि पूर्वः' इति पूर्वरूपे 'अजरम्' इति सौ रूपम् ।

अजरसी इति—औङः श्यादेशे जरसि च रूपम् । जरसोऽभावे 'अजरे' इति । जसि रूपं दर्शयितुमाह—परत्वादिति—'अजर अस्' इति स्थितौ शिभावं परत्वाद् बाधित्वा जरस् । ततः शिभावे झलन्तत्वान्नुमिति प्राञ्चः ।

तदेतद्भाष्यविरुद्धम्—'जराया जरस्' इति सूत्रे भाष्ये 'अजरांसि' इत्यत्र नुम्जरसोः प्राप्तयोः 'परत्वाज्जरस्' इत्युक्तम्, शिभावात्पूर्वमेव जरसः प्रवृत्तौ तु तदानीं सर्वनामस्थानपरत्वाभावेन 'नपुंसकस्य झलचः' इति नुमोऽप्राप्तया नुम्जरसोः प्राप्तयोः परत्वाज्जरसिति विरुध्येत । पूर्वविप्रति-षेधेन शिभावे कृते तु नुम्जरसोः प्राप्तयोः परत्वाज्जरसिति भाष्योक्तिः संगच्छते ।

वस्तुतस्तु 'अजर अस्' इति दशायां शिभावो जरसादेशश्च प्राप्नोति, तत्र परत्वात्प्राप्तं जरसं नित्यत्वात् बाधित्वा शिभाव एव स्यादित्याशङ्कायां जरसादेशस्यापि नित्यत्वं साधयितुं शिभावे कृतेऽपि जरसः प्राप्तिरिति नित्यत्वं जरसादेशस्य । न च नुमा जरसो बाधात्तदप्राप्तिस्तत्रोच्यते भाष्यकृता नुम्-जरसोः प्राप्तयोः परत्वाज्जरसिति जरसोऽपि नित्यत्वमुपपादयितुं तद्भाष्यं प्रवृत्तमिति शिभावं बाधित्वा परत्वाज्जरसिति पक्षेऽपि न विरोध इति पुंसि निर्जरशब्दे उक्तम् । एवञ्च शिभावजरसोरुभयो-र्नित्यतया परत्वाज्जरसादेशः ततः शिभावे परत्वान्नुमं बाधित्वा जरसादेशे झलन्तलक्षणे नुमि च 'अजरन्स् इ' इति दशायामाह—

सान्तमहतः संयोगस्य । [ ६-४-१० ]

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । अजरांसि, अजराणि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस्, ततः संनिपातपरिभाषया न लुक्—अजरसम्, अजरम् । अजरसी, अजरे । अजरांसि, अजराणि । शेषं पुंवत् । 'पद्दन्–' (सू२२८) इति । हृदयोदकास्यानां हृ उदन् आसन् । हृदि हृदा । हृद्भ्यामित्यादि । उदानि ।

'सान्तमहतः संयोगस्य' ( ६-४-१० ) इति । 'सर्वनामस्थाने च' इति दीर्घमात्रविधिरयम् । अत्र 'सर्वनामस्थाने चासम्बुद्धौ' इति, 'नोपधायाः' इति, 'न' इति लुप्तषष्ठीकम्, अकार उच्चारणार्थः । 'ढ्लोपे' इत्यतो 'दीर्घः' इति चानुवर्तते । 'सान्तमहतः' इत्यत्र न द्वन्द्वः । सान्त इत्यस्य संयोगविशेषणत्वे 'महतः' इत्यस्य नकारविशेषणत्वेन एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नसंसर्गेणैकधर्मावच्छिन्नेऽन्वयरूपसाहित्याभावाद् द्वन्द्वाप्राप्तेः ।

'सान्त' इत्यत्र 'स' इति लुप्तषष्ठीकम् अकार उच्चारणार्थः । 'स' इति संयोगस्य समानाधिकरणं विशेषणम् । तेन तदन्तविधिः सकारान्तस्य संयोगस्येत्यर्थः । 'अङ्गस्य' इत्यधिकृतम् चरमावयवरूपेऽन्तेऽन्वेति । अन्तपदार्थश्चाभेदेन संयोगेऽन्वेति । तथा च 'सम्बुद्धिभिन्नसर्वनामस्थानपरकं यदङ्गम् तच्चरमावयवाभिन्नो यः सान्तः संयोगस्तस्य यो नकारस्तदव्यवहितपूर्वस्याचो दीर्घः' इत्यर्थः । अन्त्योपधापदमव्यहितपूर्वपरम् अन्त्यालव्यवहितपूर्वस्य स्वघटकत्व-स्वघटकान्त्यालव्यवहितपूर्वत्वोभयसम्बन्धेन समुदायविशिष्टत्वरूपोपधात्वस्य संकेतितार्थस्यासम्भवात् ।

ईदृशार्थकरणे न 'हंसः' 'हंसशिरांसि' इत्यत्र च दोषः । ननु सर्वनामस्थाने इत्यस्य सान्तसंयोगविशेषणत्वेन नोक्तदोष इति चेन्न, प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेनाङ्गे एवान्वयस्यौचित्यात् । निमित्तस्याङ्गेऽन्वयादेव 'अनन्त्यविकारे' इति परिभाषाया हंसशिरांसि इत्यादिप्रयोजनान्युपपद्यन्ते ।

'ष्यङः सम्प्रसारणम्' ( ६-१-१३ ) इति सूत्रभाष्ये निमित्तस्य कार्यिविशेषणकल्पनेन 'अनन्त्यविकार' इति परिभाषायाः प्रयोजनान्यथासिद्धिप्रदर्शनन्तु शिष्यबुद्धिवैशद्यार्थम् । अत एव परिभाषाया आवश्यकत्वाभिप्रायेण तत्सूत्रव्याख्यानशेषे 'उदात्तनिर्देशात्सिद्धम्' इत्युपसंहृतं भगवता ।

तया परिभाषया 'हंसः', 'ध्वंसकः' इत्यादौ दोषपरिहारस्तु न सम्भवति, एकस्मिन् लक्ष्ये अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्तावेतत्प्रवृत्तेः । अन्यथा धात्वादेः नत्वसत्वे 'नेता' 'सोता' इत्यादावेव स्याताम् न तु 'नमति, सिञ्चति' इत्यादौ । ननु 'न्समहतः' इत्येव सूत्रमस्तु, सर्वनामस्थाने इत्यस्य न्सेविशेषणेन अनन्त्यविकार इति न्यायेन वा न दोष इति चेन्न, 'अन्त्स्' शब्दे दीर्घसंयोगग्रहणस्यावश्यकत्वात्, तथा हि—अन्ततीति अन्, त्सरतीति त्सर् । द्वयोर्द्वन्द्वे 'अन्त्सर्' शब्दादाचक्षाणण्यन्तात्कर्तरि क्विपि 'अन्त्स्' शब्दात्सर्वनामस्थाने आन्त्, आन्त्सौ, आन्त्सः इति सिद्धयर्थं संयोगग्रहणस्यावश्यकत्वम् । संयोगग्रहणे तु सान्तसंयोगः 'न्त्स्' इति तद्घटकनकारात्पूर्वस्याचो दीर्घत्वं सिध्यति ।

तस्योपधाया इति—तत्पूर्वस्येत्यर्थः । पारिभाषिकस्यान्त्यालव्यवहितपूर्वस्यासम्भवात् । सन्निपातपरिभाषयेति—अयमुपजीव्य जायमानो जरसादेशो लुकि निमित्तं न स्यादित्यर्थः । यद्यपि अपवादे निषिद्धे उत्सर्गस्य प्रवृत्तिरिति नियमो यथा 'गौर्य्यौ' इत्यत्र, तथाऽपि सन्निपातपरिभाषया न लुक उत्सर्गस्य प्रवृत्तिरिति भावः ।

हृदयोदकेति—हरति विषयानिति 'हृदयम्' हरतेः 'वृहोः षुग्दुकौ च' ( उ० ४–१०० सू० ) इति कयन् प्रत्ययो दुगागमश्च । उदकेति—उनत्तीति उदकम् 'उन्दी क्लेदने' इत्यतः 'उदकञ्च' ( उ० २ पा० ३९ सू० ) क्वुन् । आस्येति—अस्यन्ति वर्णाननेनेत्यास्यम् 'असु क्षेपणे' इत्यतः 'ऋहलोर्ण्यत्' इति ण्यत् हृदयोदकास्यशब्दाः सुटि ज्ञानवत् ।

उद्ना, उदभ्यामित्यादि । आसानि । आस्ना । आसभ्यामित्यादि । मांसि । मांसा, मान्भ्यामित्यादि । वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम् । अत एव भाष्ये 'मांस्पचन्या उखायाः' इत्युदाहृतम् ।

---

शसादौ विशेषमाह-पद्न्निति—हृदयशब्दात् शसः शिभावे 'पद्न्' इति हृदादेशे 'नपुंसकस्य झलचः' इति नुमि 'नश्चापदान्तस्य' इत्यनुस्वारे परसवर्णे च 'हृन्दि' इति, आदेशाभावे 'हृदयानि' इत्यादि ज्ञानवत् । उदकशब्दः सुटि ज्ञानवत् । उदानीति—शसादौ उदन्नादेशे 'सर्वनामस्थाने च' इति दीर्घे रूपम् । 'शि' इत्यस्य सर्वनामस्थानत्वाद् भत्वाभावाल्लोपो न । इत्यादीति—हृदा, हृदे, हृदः, हृदः, हृदोः, हृदाम्, हृदि, हृदोः, हलादौ हृद्भ्याम् इत्यादि हृदभावपक्षे ज्ञानवत् । उदक-शब्दस्य सुटि ज्ञानवत् । शसादौ विशेषमाह उदानीति—शिभावे उदन्नादेशे 'सर्वनामस्थाने च' इति दीर्घे रूपम् । उद्नेति—अल्लोपे उद्ना । उदभ्यामिति—'स्वादिष्वसर्वनामस्थाने' इति हलादौ पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः । अजादौ 'अल्लोपोऽनः' इति अल्लोपः । उद्ना, उदभ्याम् इत्यादि । आस्यशब्दस्यापि सुटि ज्ञानवत् । शसि उपधादीर्घे आसानि । अजादौ अल्लोपः आस्ना इत्यादि । हलादौ नलोपे आसभ्याम् इत्यादि । आसन्नादेशाभाव-पक्षे ज्ञानवत् ।

मन्यते अनेनेति 'मांसम्' 'मन ज्ञाने' इत्यतः 'मनेर्दीर्घश्च' ( उ. ३ पा. ६४ सू ) इति सप्रत्ययः, उपधादीर्घश्च अवयवशक्त्यसहकृतसमुदायशक्त्यबोधकत्वाद्रूढोऽयम् । 'मांसं स्यादामिषे क्लीबं कक्कोली ( वनकर्पूरम् ) जटयोः स्त्रियाम्' इति मेदिनी । मांसशब्दः सुटि ज्ञानवत्, शसि विशेषमाह—

'मांस-पृतना-सानूनां मांस्-पृत्—स्नवो वाच्याः' इति वार्त्तिकेन मांसादन्तस्य स्थाने 'मांस्' इति हलन्तादेशः । शसः शिभावे 'मांस् इ' दशायाम् 'नपुंसकस्य झलचः' इति झल-न्तलक्षणे नुमि 'मान् स्' इति जाते अनुस्वारस्य झल्ग्रहणेन ग्रहणात्पूर्वनस्यानुस्वारे 'मांसि' इति अनुस्वारद्वयघटितं रूपम् । यद्वा अचः परो झल् तदन्तस्य नुम् इत्यर्थे 'नपुंसकस्य झलचः' इति सूत्रदृष्ट्या 'मांस्' नकारस्थानिकानुस्वारस्यासिद्धतया नकारस्य झल्त्वाभावेन अचः परस्य झलोऽ-भावाद् झलन्तलक्षणो नुम् न । तथा सति 'मांसि' इति रूपमिति भाष्ये स्पष्टम् । पृतनेति—'पृ' पालनपूरणयोः' इत्यतः 'तनन् किच्च' इति तनन् प्रत्ययः ।

सुप्यपि हृदादेशं समर्थयितुमाह – वस्तुतस्त्विति । इत्युक्तमिति । सुटि 'ककुद्दोषणि' इति भाष्यप्रयोगात् प्रभृतिग्रहणं प्रकारार्थमिति" 'पद्दन्' इति सूत्रे उक्तमित्यर्थः । तथा च 'शस्प्रभृति-ष्वित्यस्य शसदृशेषु परेष्वित्यर्थः । 'पर्युदासः सदृशग्राही' इति न्यायेन सुप्त्वेन सादृश्यन्तु न, तथा सति 'सुप्सु' इत्येव वक्तव्ये प्रभृतिग्रहणस्य वैयर्थ्यापत्तेः । किन्तु प्रत्ययत्वेन प्रत्यये परत एते आदेशा इति । तथा च 'दत्' इति प्रयोगोऽनुपपन्नः, सोर्लुका लुप्तत्वेन 'न लुमताऽङ्गस्य' इति निषेधेन प्रत्ययलक्षणाभावात् । निषेधानित्यत्वाश्रयेणापि न मानाभावादत आह—अत एवेति—'न लुमता' इत्यस्यानित्यत्वादेवेत्यर्थः ।

अत्र प्रमाणमाह—मांस्पचन्या इति—पच्यतेऽस्यामिति पचनो अधिकरणे 'करणाधि-करणयोश्च' इति ल्युट् । मांसस्य पचनीति षष्ठीसमासे ङसो लुकि प्रत्ययलक्षणा-भावे प्रत्ययपरत्वाभावादादेशो न स्यात् । इति 'मांस्पचन्याः' इति प्रयोगासङ्गतिः । अतोऽनेन भाष्यप्रयोगेण ज्ञाप्यते 'पदाद्यादेशविधौ न लुमतेति निषेधो न प्रवर्तते' इति, तथा च प्रत्ययलक्षणेन ङस्परत्वमादायादेशः सिध्यति । ननु राजपुरुषः इत्यत्रेव सुबन्तस्य कार्ये अङ्गकार्या-भावेन 'न लुमता' इति निषेधाप्रवृत्त्या 'मांस्' इत्यस्य पदत्वेन सकारस्य रुत्वसंयोगान्तलोपौ स्याताम् अत आह—भत्वादिति ।

अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न। 'पद्दन्–' ( सू० २२८ ) इत्यत्र हि 'छन्दसि' इत्यनुवर्तितं वृत्तौ, तथापि 'अपो भि' ( सू० ४४२ ) इत्यत्र 'मासश्छन्दसि' ( वा० ४६३४ ) इति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचित्–इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् ॥ इत्यदन्ताः ॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य। ( १—२—४७ )

क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात्।

---

ननु लुका लुप्तत्वेन अजादिप्रत्ययपरत्वाभावात्कथं भत्वमत आह—अयस्मयादित्वेनेति भत्वेन पदत्वाभावाद्रुत्वसंयोगान्तलोपौ न। ननु पृषोदरादिषु–

लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि।
समो वा हिततत्योर्मांसस्य पचि युड्घञोः ॥

इत्युक्त्युर्युडन्तपचधातौ परे मांसस्याकारलोपे 'मांस्पचनी' इति सिध्येदिति चेन्न, 'पृषोदरादीनि यथोपदिष्टम्' इत्यस्य उत्तरपदाधिकारस्थत्वेन युडन्ते उत्तरपदे एवाप्रवृत्त्या, प्रकृते क्तोबन्तस्योत्तरपदत्वेनाकारलोपाप्राप्तेः।

पद्दन्नेत्यत्रेति—'पद्दन्न' इति सूत्रे 'शीर्षंश्छन्दसि' इति सूत्रतः 'छन्दसि' इत्यस्यानुवृत्तिर्वृत्ति ग्रन्थे प्रदर्शिता। एवञ्च 'पद्दन्न' इति सूत्रस्य वैदिकप्रक्रियायामेवोपन्यास उचित इत्यत आह—

तथापीति—'पद्दन्नः' इति सूत्रे छन्दसीत्यस्यानुवृत्तावपि लोकेऽपि क्वचित्प्रयोगः। अपो भीत्यादीति—अपो भिः इति सूत्रम्। अप् शब्दस्य तकारादेशो भादौ प्रत्यये परे इत्यर्थः। अत्र वार्तिकम् 'मासश्छन्दसि' मास् इत्यस्य तकारादेशो भादौ प्रत्यये परे छन्दसि इत्यर्थः। ऋग्वेदे 'माद्भिः शरद्भिर्दुरोदरम्' इत्युदाहरणम्। यदि पद्दः इति सूत्रस्य छन्दस्येव प्रवृत्तिः स्यात्तदा छन्दोग्रहणवैयर्थ्यापत्तिः छन्दस्येव हलन्तमास्शब्दस्य सम्भवात्। तदेव व्यर्थीभूय कल्पयति—लोकेऽपि क्वचित्प्रवृत्तिरिति तेन पदादय आदेशा लोकेऽपीति मतमादाय लौकिकप्रकरणे लेखो नासङ्गतः। यत्तु मासशब्दादाचचाणयन्तात् 'माभ्याम्' इत्यादौ तकारादेशवारणार्थं छन्दोग्रहणमिति तन्न, अल्लोपस्य स्थानिवत्त्वे तादेशाप्राप्तेः। न च 'न पदान्त' इति निषेधः, परपदस्याजादेशस्थानिवत्त्वस्यैव तेन निषेधात्। प्रयोगमनुसृत्येति-शिष्टप्रयोगानुसारेणेत्यर्थः। इत्यदन्ताः।

### अथ आदन्ताः

'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति विधेयताप्रयोजकह्रस्वपदश्रुत्या उपस्थितेन 'अचः' इति षष्ठ्यन्तेन प्रातिपदिकस्य विशेषणात् तदन्तविधिः। क्लीबे इति वाचकत्वं सप्तम्यर्थः। क्लीबः=नपुंसकत्वविशिष्टोऽर्थस्तद्वाचकस्याजन्तप्रातिपदिकस्य ह्रस्व इत्यार्थः।

सूत्रे नपुंसकपदम् 'अर्श आदिभ्योऽच्' इत्यजन्तं नपुंसकं लिङ्गमस्त्यस्यार्थस्येति नपुंसकम्, तदुक्तं शेखरे–क्लीबवदर्थे विद्यमानस्याजन्तस्येत्यर्थे लिङ्गविशिष्टार्थबोधकतायाः प्रातिपदिके एव दृष्टत्वेन प्रातिपदिकस्येत्यर्थलाभे सिद्धे प्रातिपदिकग्रहणं सामर्थ्यात्स्वप्रधानप्रातिपदिकलाभार्थम्।

ननु 'वारिणी' इत्यत्र ह्रस्ववारणाय प्रातिपदिकग्रहणमिति वाच्यम्, ह्रस्वे शौ कर्तव्ये दीर्घकरणवैयर्थ्येन ह्रस्वाभावज्ञापनात्। ननु ह्रस्वान्ते 'शि सर्वनामस्थानम्' इति संज्ञायाम् ज्ञाने इत्यत्र 'नपुंसकस्य झलचः' इति नुम् स्यादिति चेन्न, 'सुट्' सुट्सर्वनाम स्थानसंज्ञं भवति, अनेनैव 'शि' इत्यस्यापि सर्वनामस्थानत्वे सिद्धे 'शि' एव सर्वनामस्थानम् इति नियमार्थम् नपुंसकात्परं शि एव सर्वनामस्थानं नान्यदिति नियमेन सिद्धे। अनपुंसकग्रहणसामर्थ्येन जश्शस्सम्बन्धिन एव शेः 'शि

श्रीपं ज्ञानवत् । श्रीपाय । अत्र संनिपातपरिभाषया 'आतो धातोः' ( सू० २४० ) इत्याकारलोपो न । इत्यादन्ताः ॥

---

सर्वनाम' इत्यन्तग्रहणबोधनात्, द्वितीयाप्रभृतीति इत्यादि निर्देशाच्च बहुवचनादेशस्यैव ग्रहणात् ।

तथा च अनेन सूत्रेण सत्वप्रधानप्रातिपदिकस्य ह्रस्वो विधीयते तेन 'कापडे' कुपडे इत्यादौ विभक्त्यर्थप्राधान्येन विभक्त्यर्थे लिङ्गान्वयासम्भवेन न ह्रस्वः । सत्वम्=द्रव्यम् । सत्वप्रधानत्वञ्च — सत्वनिष्ठोपस्थितीयमुख्यविशेष्यतासमानाधिकरणशाब्दबोधीयविशेष्यतासाक्षान्निरूपितनपुंसकत्वनिष्ठप्रकारत्ताप्रयोजकतापर्य्याप्त्यधिकरणत्वम् । तच्च प्रातिपदिके एव न विभक्त्यन्ते । यद्वा नपुंसकत्वलिङ्गनिरूपितशक्तताऽवच्छेदकपर्य्याप्त्यधिकरणत्वम् । यत्तु वैयाकरणनये 'वारिणा', वारिणे इत्यादौ पदेऽपि शक्तिरिति तन्न, प्रमाणाभावात् । सत्वं च लिङ्गसंख्यान्वितम् ।

तादृशप्रातिपदिकस्याचो ह्रस्व इति तु नार्थः, वैयधिकरण्येनान्वये सम्बन्धपर्यालोचनकृतगौरवात् तदुक्तम्–'सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्, लाघवात्' इति, सुवाग्ब्राह्मणकुलम् इत्यादौ ह्रस्वत्वापत्तेश्च । यत्र तु न सामानाधिकरण्येनान्वयसम्भवस्तत्र वैयधिकरण्येनैवान्वयः अगतिकगतित्वात् यथा—'शमामष्टानां दीर्घः, ( ) इत्यत्र शमादीनामष्टानामत्र दीर्घ इत्येवार्थः । वाक्यस्य टेः प्लुतः इति सामानाधिकरण्येनान्वयसम्भवेऽपि टेरवयवस्याचः प्लुत इत्येवार्थः, अजन्तस्य वाक्यस्य प्लुतः एतावतैव, 'अलोऽन्त्यस्य' परिभाषया अन्त्यस्य कृतत्वे सिद्धेः टेर्ग्रहणस्य वैयर्थ्यापत्तेः तेन 'आयुष्मानेधि इन्द्रवर्मइन्' इति वाक्यस्यापि टेः प्लुतसिद्धिः ।

श्रीपमिति—अत्र नुक् तु न, ह्रस्वस्य तद्विरजत्वनासिद्धत्वात् श्रियं पाति यत्कुलम् इत्यर्थे क्विपि विचि वा ह्रस्वे श्रीप सु, इति दशायाम् 'अतोऽम्' इति सोरमादेशे पूर्वरूपे रूपम् । ज्ञानवदिति—ज्ञानशब्दापेक्षया दीर्घान्यत्वप्रयुक्तो न कश्चिद्विशेषः । तेन श्रीपेण, श्रीपाणाम् इत्यत्र णत्वप्रयुक्तरूपभेदेऽपि न दोषः । भिन्नपदस्थत्वेऽपि एकाजुत्तरपदे णः इति णत्वम् ।

श्रीपायेति—श्रीपाशब्दस्य 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे ङेर्यादेशे 'सुपि च' इति दीर्घे रूपम् । 'सुपि च' इति दीर्घे सन्निपातपरिभाषा तु न प्रवर्तते, 'कष्टाय क्रमणे' इति निर्देशात् ।

ननु ह्रस्वे कृतेऽपि 'प' इत्यस्यैकदेशविकृतन्यायेन स्थानिवत्त्वेन वा धातुत्वाद् दीर्घे कृते आकारान्तत्वाच्च 'आतो धातोः' इत्यालोपः स्यात् । यादेशस्य स्वतो यादितया स्थानिवत्त्वेन स्वादिप्रत्ययतया च 'यचि भम्' इत्यस्य प्रवृत्त्या भत्वस्यापि सत्त्वादित्यत आह—

अत्र सन्निपातेति । ननु उपजीव्यविघातं प्रति उपजीवकं निमित्तं न भवति इति सन्निपातपरिभाषया लभ्यते । प्रकृते यादेशस्योपजीव्यं ह्रस्वत्वसमानाधिकरणमत्वम् । 'कष्टाय' इति निर्देशेन तद्विघाते सन्निपातपरिभाषाया अप्रवृत्तावपि आत्वं तु न यादेशोपजीव्यमिति तद्विघातकस्य 'आतो धातोः' इत्यस्य प्रवृत्तौ सन्निपातपरिभाषायाः प्रवृत्तिः स्यादिति तु न, यद्यपि प्रकृते यादेशस्योपजीव्यं ह्रस्वत्वसमानाधिकरणमत्वम् । कष्टाय इति निर्देशेन प्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्तथापि अवर्णत्वांशस्तु दीर्घेऽप्यनुवर्तते एव तदपि यदि लोपेन निवर्तेत तर्हि परिभाषाविरोधः स्पष्ट एव, ईदृशश्च विरोधः । 'एओङ्' इति सूत्रे 'इको गुणवृद्धी' इति सूत्रे च भाष्ये ध्वनितः ।

तथा हि —'इको गुणवृद्धी' इति सूत्राभावे गाधातोर्गुणेन अकारे आर्द्धधातुकोपदेशेऽदन्तत्वाभावादतो लोपाभावेऽपि पररूपेण 'सामग' इत्यस्य सिद्धौ गापोष्टकः किल्करणाल्लिङ्गाद् आकारस्य गुणोनेति व्यर्थमिटग्रहणमिति भाष्ये उक्तम् तच्च ज्ञापकं तदैव संगच्छेत यदा 'सामगाय' इत्यत्र सन्निपातपरिभाषया 'आतो धातोः' इत्यालोपो न स्यात्, अन्यथा 'सामगाय' इत्यत्रासति टकः कित्वे एकादेशस्य पूर्वान्तत्वेन ग्रहणादाकारस्य धात्ववयवत्वेनातो लोपः स्यात् । सति कित्वे तु 'आतो

स्वमोर्नपुंसकात् । [ ७-१-२३ ]

क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि ।

धातोः' इत्यालोपे 'सुपि च' इति दीर्घनिष्पन्नस्य आकारस्य प्रत्ययस्थानिकतया आतो लोपाप्रवृत्तिरित्याशङ्क्य सन्निपातपरिभाषयाऽकित्त्वेऽपि न आतो लोप इति कैयटेन प्रतिपादितम् । अत्र कैयटानुयायदीक्षितमते यादेशे आल्लोपे निमित्तं न स्यादिति फलति ।

अत्र हरिदीक्षिताः—व्याप्यात्वजातिनिमित्तं यस्मिन् यादेशे स आल्लोपनिमित्तं न स्यादिति परिभाषया न लभ्यते ।

'जातिः पदार्थः' इति पक्षे तपरसूत्रस्य जातिपक्षप्राप्तसवर्णग्रहणवारकत्वस्यैव सत्त्वेन यत्र यत्र तपरकरणं तत्र सर्वत्र व्याप्यजातिनिर्देश एव बोध्यते । एवञ्च प्रकृते 'ङेर्यः' इत्यस्य प्रवृत्तौ ह्रस्ववृत्तित्वविशिष्टात्वरूपव्याप्यजातिविशिष्टयञादिसन्निपातो निमित्तं तस्य दीर्घेणैव विनाशात्त द्विघातकत्वं नलोपस्येति तद्रीत्या लोपवारणं परिभाषया न स्यात्, किन्तु दीर्घविधेः पूर्वं यो व्याप्यात्वजातियञादिसन्निपातः 'सुपि च' इति दीर्घप्रवृत्तौ निमित्तं तस्य विघातकं यल्लोपविधायकंशास्त्रान्तरं तत्प्रवृत्तौ दीर्घे निमित्तं न स्यादेवं रीत्या परिभाषा योजनीया । यतः सन्निपातपरिभाषायाः सन्निपातलक्षणविधिप्रवृत्तेः प्राक्तन्निमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तस्य शास्त्रस्यानिमित्तमित्येनार्थं न इत्याहुः ।

वस्तुतस्तु 'अत्र प्रतिपदोक्त एवाकारो गृह्यते, इह तु ह्रस्वे सति न पुनर्दीर्घेऽवगम्यमानं लाघवणिकमेवेति न दोषः । न च 'वर्णग्रहणे प्रतिपदोक्तपरिभाषा न प्रवर्तते अत एव नयति, भवति इत्यादावयादिसिद्धिरिति वाच्यम्, प्रमाणाभावात् न च 'आदेच उपदेशे' इत्यत्र उपदेशग्रहणं मानम् । अन्यथा चेता, स्तोता इत्यादौ प्रतिपदोक्तपरिभाषयैवात्वाभावे सिद्धे उपदेशग्रहणस्य वैयर्थ्यमेवेतिवाच्यम्, गोम्याम्, नौम्याम् इत्यादौ प्रतिपदोक्तेऽप्यात्वाभावाय तदावश्यकत्वात् ।

न च तत्र 'धातोः' इत्यस्य सम्बन्धादेव तत्रादोषः, उदीचां माङो व्यतिहारे, इतिनिर्देशसिद्धये धातोरित्यस्यासम्बन्धात् । वर्णग्रहणे प्रतिपदोक्तपरिभाषाप्रवृत्तौ ओत्सूत्रे 'अदोऽभवत्' इत्यत्र प्रतिपदोक्तपरिभाषया प्रगृह्यसंज्ञावारणपरभाष्यविरोधस्तु न, 'प्रतिषिद्धार्थोऽयमारम्भः' इति भाष्यविरोधेनास्याभाष्यस्यैकदेशयुक्तित्वात् । अन्यथा ओदन्ते 'अनाङ्' इति प्रतिषेधस्य लाक्षणिके एव सम्भवे न तद्विरोधः स्पष्ट एव । भवति, नयति, इत्यादौ 'एचोऽय्' इत्यस्य प्रवृत्तिस्तु 'भवतेरः' इत्यादिनिर्देशात्परिभाषाया अनित्यत्वादेव ।

अथ इदन्ताः

वारीति—वारयत्युष्णता मितिवारिवारतेः 'वविजियजि' उ. ४—पा १२५ सू' इतिइञ्प्रत्ययः वारि जलम् । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्, । ( अमर १ का वारिवर्ग ३ श्लो० ) इत्यादिनि सप्तविंशतिर्नामानि जलस्य । वारि सु 'इति' दशायाम् ।

'स्वमोर्नपुंसकात्' (७–१–२३) इति । यङ्म्यो लुक्' इत्यतो लुगित्यनुवर्तते तदाह—क्लीबादित्यादि । इति स्वमोर्लुक् । न च 'वारि अम्' इत्यत्र 'आदेः परस्य' इति परिभाषया अकारस्यैव लुक् स्यान्ननु अम् इति वाच्यम्, प्रत्ययादर्शनस्यैव लुक्संज्ञात्वेन अकारमात्रस्या प्रत्य यत्वेन लुकोऽसम्भवात् । न च प्रत्ययैकदेश स्यापि प्रत्ययत्वम् तस्य ज्ञापक सिद्धत्वेन इष्टेष्वेव प्रवृत्तेः ।

अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः । परत्वाद्धि त्यदाद्यत्वम्भावेन 'संकुलम्' इति स्यात् । अमि 'ते कुलम्' इति स्यात् । पूर्वविप्रतिषेधे प्रमाणंतु 'स्वमोर्लुक् त्यदादिभ्यत्वेति वक्तव्यम्, इति वरिन्तकमेव । न च नित्यत्वा न्नुजाव स्यात् । अत्वे कृते 'अतऽम्' इत्यनेन लुको बाधेऽपि प्राप्तेः सत्वात् । 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तद् नित्यम्' इत्युक्तेः । नित्यत्वव्यवहारे पुनः प्रसङ्ग मात्रमपेक्षते । न तु बाधकाबाधि तफलोपहित प्रसङ्ग एव ।

इकोऽचि विभक्तौ । [ ७—१—७३ ]

इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारीणी । वारीणि । 'न लुमता-' (सू २६१) इति निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः,–हे वारे, हे वारि । 'आङो ना-' ( सू २४४ )

---

अत एव त्वामाचष्टे 'त्वापयति' इति सिद्ध्यति । त्वमोः परत्वेऽपि 'त्व मद् णि' इति स्थितौ पररूपे कृते 'प्रकृत्यैकाच्' इत्यनेन टिलोपबाधेऽपि टिलोपप्राप्तेः सत्वात् । अत एव रामेण वालिनो वधेऽपि न सुग्रीवापेक्षं वालिनो दौर्बल्यं नाभिदधति सूरा इति वाच्यम्, लक्षणान्तरप्रवृत्ति-निमित्तमुपसंहरल्लक्षणं बलवन्नवर्तीति पक्षाश्रयणात् । अत एव भगवद्वासुदेवसहायतया विजयिनो पाण्डवानां कौरवापेक्षया प्राबल्यं व्यवहरन्तीति पक्षद्वयेनेष्टतो व्यवस्थितेः । यदि बाधकेन बाधितेऽपि नित्यत्वं न विहन्यते इति पक्षे नित्यत्वाल्लुकि विभक्तिपरत्वाभावादत्वं न स्यादिति वार्तिकं न कर्तव्यम् ।

वस्तुतस्तु 'अन्तराङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया 'त्यदादीनामः' इत्यादि न वर्तते । अत एव मूलकृता वार्तिकं नोपन्यस्तम् ।

यत्तु 'अन्तराङ्गानपि' इति न्यायः 'सुपो धातुप्रातिपदिकयोः' इति लुग्विषयः, 'प्रत्ययोत्तर-पदयोश्च' इति धर्मिग्राहकमानात्, तथैव भाष्योदाहरणात् 'तद्राजसूत्रे' अङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावाद् 'तद्राजस्य' इति लुक् न स्यादिति शङ्कापरभाष्यव्याख्यावसरे 'अन्तराङ्गानपि' इति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यते इति कैयटाच्च ।

न च 'हे त्रपु, इत्यादौ सम्बोधने 'एङ्ह्रस्वात्' इति लोपे नित्यगुणपरोरभावाय लुक्सामान्ये परिभाषाप्रवृत्तिरावश्यिकेति वाच्यम्, लुकि प्रत्ययलक्षणाभावः, लोपे प्रत्ययलक्षणम् इति विरोधाद्यौ-गपद्यासम्भवेन परत्वाल्लुकि हे वारि, हे वारे, इत्यादेः सिद्धत्वादिति प्राञ्चस्तन्न, 'एङ्ह्रस्वात्' इति सूत्रे भाष्ये 'हे त्रपु' इत्यादावनेन न्यायेन लोपं बाधित्वा लुगित्युक्तेः पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्वः, इत्यादावेकादेशात्प्रागेव टापो लुक् । अन्यथा कृतैकादेशस्य लुकि अकारश्रवणं न स्यादिति कैयटाच्च लुङ्-मात्रविषयकत्वात् ।

'इकोऽचि विभक्तौ' (७–१–७३) । इति 'इदितो नुम् धातोः' (                ) इत्यतो नुम् इति, 'नपुंसकस्य झलचः' इत्यतो 'नपुंसकस्येति चानुवर्तते । 'अङ्गस्य' इत्यधिकृतम् । इका विशेष्यते । तदन्तविधिस्तदाह–इगन्तस्येत्यादि । क्लीबस्येति–अङ्गस्येति शेषः ।

सुपीति वक्तव्ये 'विभक्तौ' इति चिन्त्यप्रयोजनमिति नागेशः । चिन्ता च विभक्तिग्रहणं संज्ञा-शब्दानां सर्वेषामर्थमात्रत्वज्ञापनाय । न च लघ्वर्थं संज्ञाकरणम् । संज्ञा नाम यतो न लघीयः' इति भाष्यविरोधः, तद्भाष्यस्यान्वर्थसंज्ञाविषयकत्वात् ।

केचित्तु नपुंसकवृत्तेरिदंशब्दादधुना प्रत्यये इदम इशादेशे तत्र नुमर्थं विभक्तिग्रहणमिति तन्न, सत्यपि नुमि 'नस्तद्धिते' इति टिलोपे फलाभावात् । केचित्तु वारिशब्दादाचारक्विबन्ताद् तृचि नुमभावार्थमिति तन्न, अजादिसुप्परकत्वाभावात् ।

वस्तुतस्तु क्विबन्तवारिधातोराशिषि लिङि कर्मणि 'वारि इषीष्ट' इति दशायाम् 'वारि निषीष्ट' इत्यत्र नुमर्थं विभक्तिग्रहणमावश्यकम् । विभक्तौ किम्-मधुन इदं माधवम्' अत्र मा भूत् । 'हे वारे' 'हे वारीति'–अत एव 'इकोऽचि' इति सूत्रस्थम् 'इह किञ्चित् त्रपो' इति 'एङ्ह्रस्वात्' इतिसूत्रस्थम् 'हे त्रपु' इति च भाष्यं संगच्छते । अनित्यत्वे अचि ग्रहणं यथा ज्ञापकं तत्सर्वं स्त्रीलिङ्गे प्रियत्रिशब्दे वक्ष्यम् ।

वारिणा । 'घेर्ङिति' ( सू २४५ ) इति गुणे प्राप्ते—'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' ( वा ४३७३ )। वारिणे। वारिणः। वारिणोः। 'नुमचिर–' ( वा ४३७४ ) इति नुट्। 'नामि' ( सू २०६ ) इति दीर्घः। वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत्।

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । [ ७–१–७४ ]**

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि। अनादये, अनादिने-इत्यादि

---

आङो नेति–नाभावे नुमि वा रूपे विशेषाभावेऽपि नुमपेक्षया परत्वेन नाभावस्यैवा-'न्वित्या अमुना कुलेन' इत्यत्रामुत्वस्यासिद्धतया नाभावस्यैव वक्तव्यत्वाच्च। नाभवे तु नासिद्धत्वम्। न मुनेतिनिषेधात्।

वृद्ध्यौत्वेति—इदञ्च वार्तिकं तृज्वत्सूत्रे गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धम् इत्येवं पठितम्। तत्र गुणस्यावकाशः 'अग्नये' 'वायवे' नुमोऽवकाशः–त्रपुणी, जतुनी। इहोभयं प्राप्नोति-त्रपुणे, जतुने। वृद्धेरवकाशः सखायौ, गावौ। नुमः स एव। इहोभयं प्राप्नोति-अति-सखीनि कुलानि। औत्वस्यावकाशः अग्नौ, वायौ। नुमः स एव। इह उभयं प्राप्नोति-त्रपुणि। तृज्वद्भावस्यावकाशः–क्रोष्टा। नुमः स एव। इह उभयं प्राप्नोति-कृशः क्रोष्टुने अरण्याय। नुम् भवति विप्रतिषेधेन।

यद्यपि 'विप्रतिषेधे परम्' इति सूत्रे परशब्दस्येष्टवाचित्वमाश्रित्य वार्तिकं भाष्ये प्रत्याख्यातम्। तथाऽपि लक्ष्यैकचक्षुष्कस्यैवेष्टत्वज्ञानसम्भवेन लक्षणैकचक्षुष्काणां कृते इहोपन्यस्तम्।

'वारिणे' इत्यादौ गुणं बाधित्वा नुमेव। 'वारि आम्' इत्यत्र परत्वान्नुटं बाधित्वा नुमि प्राप्ते आह-नुमचिरेति–तृज्वत्सूत्रस्थेन वार्तिकेन पूर्वविप्रतिषेधान्नुडेव। ननु नुम् अस्तु नुड्वा नाऽस्ति रूपे विशेष अत आह–नामीति—अर्थवति नामि दीर्घो विधीयते। नुमि तु तकारस्याङ्गावयवतया नाम् इत्यस्यानर्थकत्वेन तदव्यवहितस्याङ्गत्वाभावेन च दीर्घो न स्यादिति भावः। 'वारि ङि' इत्यत्र 'अच्च घेः' इत्यौत्वं 'वृद्ध्यौत्वम्' इति वार्तिकेन पूर्वविप्रतिषेधान्नुमेव। 'वारिणि' इति।

न विद्यते आदिर्यस्य तदनादिब्रह्म। अत्रादित्वञ्च-स्वप्रागभावाधिकरणकालोत्पत्तिकत्वम्। यस्यादित्वं चिकीर्षितं तत् स्वपदग्राह्यम्। ब्रह्मणः प्रागभावाभावादनादित्वम्। अनादिशब्दश्च विशेष्याधीनलिङ्गतया त्रिलिङ्गः। नपुंसकत्वे प्रथमद्वितीयोः वारिवद्रूपाणि। आदीयत इति आदिः। आङ्पूर्वकाद् डुदाञ् दाने इत्यतः 'उपसर्गे घोःकिः' इति कर्मणि किः। अनादिशब्दस्य तृतीयादिषु विशेषमाह—

'तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य' (७-१-७) इति। 'भाषितः पुमान् येन शब्देन इत्यर्थे फलवाचकपिलुशब्देऽतिप्रसङ्गः स्यात्, वृक्षरूपमर्थमादाय भाषितपुंस्कत्वात्। तस्माद्भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे' इति बहुव्रीहिः अन्यपदार्थप्रधानत्वाद् बहुव्रीहेरत्रान्यपदार्थः= प्रवृत्तिनिमित्तरूप एव न शब्दः।

भाषणक्रियया स्वकरणतयाऽऽक्षिप्तश्च शब्देरूपोऽर्थः क्लीबेन समानुपूर्वीकः समानार्थश्च गृह्यते भाषितपुंस्कमस्यास्तीत्यर्थे ततोऽर्श आद्यच्। तत्फलितमाह-प्रवृत्तिनिमित्तैक्ये इति।

ननु भाषितः पुमान् येन शब्देन इत्यर्थेऽप्यर्थभेदाच्छब्दभेदेन पुंवाचकस्य नपुंसकवृत्तित्वासम्भवः, अर्थभेदेऽपि शब्दैक्यमिति मतेन तदुक्तेः, येनेत्यस्य यत्सजातीयेनेत्यर्थाद्वा। साजात्यञ्च समानानुपूर्वीकत्वेन। भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्ते इत्युक्त्या पुंवाचकस्याधेयत्वं प्रवृत्तिनिमित्तस्य त्वाधारत्वं प्रतीयस्यते। पुंवाचकस्य प्रवृत्तिनिमित्तवृत्तित्वञ्च वाच्य त्वसम्बन्धावच्छिन्नाधेयतानिरूपिताधारतासम्बन्धेन। अर्शं आद्यचा च तादृशप्रवृत्तिमान् शब्द उपलभ्यते। ननु प्रवृत्तिनिमित्तञ्च स्वरूपसम्बन्धेन समवायसम्बन्धेन वा अर्थे एव तिष्ठति न तु शब्दे इति चेन्न, वाचकतासम्बन्धेन

शेषं वारिवत् पीलु वृक्षः, तत्फलं पीलु, तस्मै पीलुने।

---

शब्दस्यापि प्रवृत्तिनिमित्तिवत्त्वात्। तथा च यत्प्रवृत्तिनिमित्तं पुंस्त्वस्यान्वयितावच्छेदकं तदेव यत्र नपुंसकत्वस्यान्वयितावच्छेदकं भवति तद्भाषितपुंस्कमित्यर्थः।

पीलुशब्देन च 'पीलुः' इत्यत्र 'पुंस्त्वविशिष्टो वृक्षः इति बोधे पुंस्त्वनिष्ठप्रकारता-निरूपिताऽन्वयिता पीलुवृक्षे, सा च वृक्षत्वव्याप्यपीलुत्वजात्यवच्छिन्ना। 'पीलु' इत्यत्र फलत्व-व्याप्यपीलुत्वजातिरूपं नपुंसकत्वस्यान्वयितावच्छेदकमिति तस्य भाषितपुंस्कत्वम्। तदुक्तं भाष्ये 'तद्धितलुक् प्रतिषेधश्च—तद्धितलुकश्च प्रतिषेधो वक्तव्यः। पीलुर्वृक्षः पीलु फलम्। पीलुना पीलुने इति। नवा समानायामाकृतौ भाषितपुंस्कविज्ञानात्—इति। ······आकृत्यन्तरे चैतद्भाषितपुंस्कम्' इति एतदपि अर्थनिर्देशात्सिद्धम्। भाषितपुंस्कस्य पुंवदर्थो भवतीति' इति।

भाषितपुंस्कत्वञ्च—प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम्। शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्व — स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्व-निष्ठाप्रकारताप्रयोजकत्वोभयसम्बन्धेन। स्वं प्रवृत्तिनिमित्तम्। शब्दे शक्तिवैशिष्ट्यञ्च—स्वपर्य्याप्त्य-धिकरणत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्य्यविशेष्यतापर्य्याप्त्यधिकरण-त्वोभयसम्बन्धेन। अत्र 'इकोऽचि' इति, 'नपुंसकस्य' इति चानुवर्तते। इक इति नपुंसकस्य इति षष्ठी प्रथमया विपरिणम्यते तदाह—प्रवृत्तिनिमित्तैक्ये इति—पुंस्त्वे नपुंसकत्वे च एकप्रवृत्ति-निमित्तकं यत् क्लीबं तदेव पुंवद्भवति।

ननु क्लीबं 'पुंवद्' इत्यस्य पुंसि यत्कार्य्यं तत् क्लीबं लभते इति भावातिदेशश्चेत्तर्हि सूत्रवैय-र्थ्यम्, तृतीयादिषु पुंनिमित्तककार्य्याभावादिति चेन्न, पुंसि यन्न भवति तत् क्लीबेऽपि न भवतीत्यर्थात् मरुवदुशीनरेषु जलम् मरुषु यथा जलं न भवति तथा उशीनरेष्वपि न भवतीतिवत्। यद्वा मरुषु यथा स्वाभाववत्त्वसम्बन्धेन जलं विद्यते तथैवोशीनरप्रदेशे जलमस्ति। अर्थादुभयत्र जलाभावः। पुंसि तृतीयादिषु नुम्-ह्रस्वौ न भवतः। तौ नपुंसके न स्यातामिति गालवस्य मतेन इति भावः।

नन्वनन्तरस्य नुमोऽभाव एवातिदिश्येत प्रत्यासत्तेरिति चेन्न, 'न' इत्येव वक्तव्ये पुंवद्ग्रहण-सामर्थ्याद् मद्विषये यद्यत्प्राप्नोति तत्सर्वं बाध्यते इति लाघवमूलकन्यासिन्यायाच्च ह्रस्वनुमोरभाव-वत्त्वोरतिदेशकल्पनात्। नन्वेवं 'नञ्विषयस्यनिसन्तस्य' इति फिट्सूत्रविहितस्वराभावस्याप्यति-देशापत्तिरिति वाच्यम् प्रत्यासत्त्या पाणिनिसूत्रविहितस्यैव नपुंसककार्य्यस्याभावातिदेशात्, 'नञोऽनिसन्तस्य' इत्येव वक्तव्ये विषयग्रहणेनानपुंसकेऽपि प्रवृत्त्या नपुंसकमात्रप्रवृत्तिमत एव कार्यस्याभावातिदेशाच्च। उक्तं हि भाष्ये—'ह्रस्वाभावार्थं च'। किं च। नुम्प्रतिषेधार्थं च। कथं पुनरप्रकृतस्य असंशब्दितस्य ह्रस्वस्य प्रतिषेधः शक्यो विज्ञातुम्? अर्थातिदेशात्सिद्धम्।······ भाषितपुंस्कस्यार्थस्य पुंवदर्थो भवतीति।

अनादये इति—आदिरहितत्वप्रवृत्तिमादाय पुंसि नपुंसके च अनादिशब्दो वर्तते। अतस्तृ-तीयादावचि पुंवद्भावे हरिवद्रूपम्। घेर्ङिति, इति गुणे 'अनादये' इति। पुंवद्भावस्यस्याभावे क्लीब-त्वान्नुमि अनादिने इत्यादि।

पीलुर्वृक्ष इति—वृक्षविशेष इत्यर्थः। एतेन कोशे वृक्षपर्य्याये पीलुपाठाभाव इत्यपास्ताम्। 'पील प्रतिष्टम्भे' इति भौवादिकात् 'मृगय्वादयश्च' ( उ १ पा ३७ सू० ) इति कुप्रत्ययः।

पीलुरिति—पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसम्भवे।
अक्षोटकन्दरालौ द्वावंकोटे तु निकोचकः॥ ( अम. १ का. दिग्वर्ग. २८ श्लो. )

अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात् ।

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । [ ७-१-७५ ]

एषामनङ् स्याट्टादावचि, स चोदात्तः । 'अल्लोपोऽनः' ( सू २३४ ) । दध्ना । दध्ने । दध्नः ।

---

अक्षोट इति गुर्जरदेशे प्रसिद्धो वृक्षः । पीलुःपरमाणुः पीलुपाक इति वैशेषिकाः । गजे, अस्थिखण्डे, तालुकाण्डे, वामे, कूर्मौ कॉकणादेशख्याते गुडफले वृक्षे, कुसुमे च' इति शब्दस्तोमहानिधिः । पीलोर्वृक्षस्य फलं पीलु । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' ( ४-३-१३५ ) इत्यनेन विकारेऽवयवे वा अण् । फलितस्य वृक्षस्य फलं विकारोऽवयवश्च । 'फलजातिः' इति लिङ्गानुशासने नपुंसकाधिकारे ( १६१ सू० अ० ) । तथा वृक्षविशेषे इत्यनेन नपुंसकत्वम् । पुंसि वृक्षत्वव्याप्यपीलुत्वं प्रवृत्तिनिमित्तम् । पीलुफले नपुंसके फलत्वव्याप्यं प्रवृत्तिनिमित्तं भिन्नमिति तदाह—

प्रवृत्तिनिमित्तभेदादिति—प्रवृत्तिनिमित्तत्वञ्च शब्दविशिष्टत्वम् । वै स्ववाच्यत्वम्, स्ववाच्यसम्बन्धेन स्ववाच्यवृत्तित्वम्, स्ववाच्योपस्थितीयप्रकारतावत्त्वम्, स्वजन्योपस्थितीयविशेष्यतासमानाधिकरणा या शाब्दबोधीयमुख्यविशेष्यता तया साक्षान्निरूपिता या प्रकारता तद्वत्त्वम् । यथा घटशब्दस्य घटत्वं प्रवृत्तिनिमित्तम्—घटशब्दवाच्यत्वम्, घटशब्दवाच्यसमवायसम्बन्धेन घटवृत्ति, स्ववाच्यघटनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारतावत्त्वम्, 'घटइत्युक्तौ' एकत्वविशिष्टः, पुंस्त्वविशिष्टो घटः, इति शाब्दबोधो जायते ।

तत्र शाब्दबोधीया विशेष्यता, घटनिष्ठा । सा च घटनिष्ठोपस्थितीयविशेष्यतासमानाधिकरणा तया साक्षान्निरूपिता प्रकारता घटत्वे इति घटत्वं प्रवृत्तिनिमित्तम् । पुंस्त्वे शाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणा उपस्थितीया विशेष्यता नास्तीति न तादृशप्रकारतावत्त्वं तस्य पुंस्त्वत्वे यद्यपि घटनिष्ठतादृशविशेष्यतानिरूपितप्रकारता अस्ति परन्तु सा न साक्षान्निरूपिता किन्तु पुंस्त्वनिष्ठप्रकारताद्वारेति न दोषः ।

पीलुशब्दस्य वृक्षत्वव्याप्यपीलुत्वम्, फलत्वव्याप्यञ्च पीलुत्वं प्रवृत्तिनिमित्तम् । अनादिशब्दस्यादित्वाभावः ।

तया च प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाभावान्न पुंवद्भावः । एवम्—

आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।

( अम० २ का० वनौ० ३३ )

इति कोशात् वृक्षे पुमान् फले नपुंसकः । वृक्षत्वव्याप्यमाम्रत्वं भिन्नम् फलत्वव्याप्यमाम्रत्वं भिन्नमिति न पुंवद्भावः । न चेगन्तत्वाभावात्पुंवत्वाप्राप्तिः, इष्टाक्यजन्तादाम्रशब्दात्तृतीयादिषु पुंवद्भावप्राप्तेः । 'अत्र आम्रवृक्षविषयकेच्छाकर्तृत्वम्' आम्रफलविषयकेच्छाकर्तृत्वञ्च भिन्नमिति न पुंवद्भावः । न चाल्लोपस्य स्थानिवत्त्वम्, क्वौ लुप्तमिति निषेधात् ।

दधिशब्दः—दधते घृतादिकमिति दधि । दध धारणे इत्यत इन् । 'अद्यकुक्षिशवैव' ( लिङ्गानु० १६५ सू० ) इत्यादिना नपुंसकम् । प्रथमायां द्वितीयायाञ्च वारिवत् । तृतीयायजादौ विशेषमाह—

'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ( ७-१-७५ ) । इति । अस्यत्यनेनेति अस्थि, कुल्यम्, कीकसमिति त्रीणि नामानि अस्थ्नाम् हड्डीतिख्यातानाम् । तथा चामरः—

'स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च' इति

( अम. २ का. मनु. व. ६८ )

सक्थि-सजतीति सक्थि-अस्थि उभयत्रापि 'असिसञ्जिभ्यां क्थिन्' ( उ. ३ पा. १५४ सू ) इति क्थिन्प्रत्ययः । 'सक्थि क्लीबे पुमानूरुः' ( अम. २ का. मनुष्यव. ७३ ) जानूपरि भागः, जङ्घेति

दध्नः, दध्नोः, दध्नाम् । दध्नि, दधनि । दध्नोः । शेषं वारिवत् । एवमस्थिसक्थ्यक्षीणि । तदन्तस्याप्यनङ् । अतिदध्ना ॥ इति इदन्ताः ॥ सुधि, सुधिनी, सुधीनि । हे सुधे, हे सुधि । सुधिया, सुधिना । सुधियाम्, सुधीनाम् । प्रध्या, प्रधिना ॥ इति ईदन्ताः ॥ मधु, मधुनी, मधूनि । हे मधो, हे मधु । एव-

---

ख्यातः । अक्षि अश्नोति=व्याप्नोति विषयान् यस्माद् 'अक्षि' । 'अशेर्नित्' ( उ. ३ पा. १५६ सू ) इति क्सि प्रत्ययः । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः ( अम. २ का. मनुष्य. ९३ ) । एषां चतुर्णाम् प्रथमाद्वितीययोर्वारिवद्रूपाणि—

'अस्थिदधि' इति सूत्रे 'तृतीयादिषु भाषितपुंस्कम्' इत्यतः 'तृतीयादिषु' इति, 'इकोऽचि' इत्यतः 'अचि' इति, 'नपुंसकस्य झलचः' इत्यतः 'नपुंसकस्य' इति चानुवर्तते । 'अङ्गस्य' इति प्रकृतम् । नपुंसकस्येति अस्थ्यादीनां विशेषणम् । तदुक्तं स्वमोर्नपुंसकादिति सूत्रे भाष्ये 'अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम्' इति, 'अस्थ्यादिषु गृह्यमाणस्य' इति । नपुंसकग्रहणं विशेषणमिति शेषः । तथा च नपुंसकं यदस्थ्यादि तदन्तं यदङ्गं तदवयवस्य निर्दिश्यमानस्यास्थ्यादेरनङ् भवति अजादितृतीयादिषु इत्यर्थः । अत एव 'प्रियसक्थ्ना ब्राह्मणेन' इति भाष्योदाहरणं संगच्छते ।

दध्नेति'—'इकोऽचि' इति नुमं बाधित्वा अनङ्, नकाराकार उच्चारणार्थः । ङकारस्तु 'ङिच्च' इति अन्तादेशार्थः । अस्थ्यादयश्शब्दाः नब्विषयस्यानिसन्तस्य' इति फिट्सूत्रेणाद्युदात्ताः । शेषनिघातेन अन्तानुदात्ताः । एवञ्च 'स्थानेऽन्तरतमः' इति परिभाषया अनुदात्तस्य अस्थ्यादेरिकारस्थाने अनुदात्त एव अनङ् प्राप्तः । तद्बाधनार्थमुदात्तानङ्विधानम् ।

न च अनङोऽकारस्य 'अल्लोपोऽनः' इति लोपादुदात्तविधानं व्यर्थमिति वाच्यम्, ङौ 'विभाषा ङिश्योः' इति विकल्पेन लोपविधानाल्लोपाभावपक्षे 'दधनि' इत्यादावुदात्तश्रवणार्थमुदात्तविधानस्य चारितार्थ्यात् 'दध्ना' इत्यादावनङ उदात्तस्याकारस्य लोपे 'अनुदात्तस्य यत्रोदात्तलोपः' ( ३-१-४ ) इति विहितस्य तृतीयादेरनुदात्तस्याच उदात्तत्वसिद्धेश्च ।

अनङोऽकारस्य उदात्तत्वेनोच्चारणेनैवोदात्तत्वे सिद्धे उदात्तग्रहणं व्यर्थीभूय ज्ञापयति- 'असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित' इति यावत् । तेन 'यू स्त्र्याख्यौ नदी' इत्यत्र दीर्घेकारोकारयोर्गुणराहित्येनोच्चारणायोगात् धान्यपलालन्यायेन केनचिद्गुणेनोच्चारितयोस्तयोरुपलभ्यमानो गुणो बोध्यतया विवक्षितो न भवति । तेन सर्वगुणकयोस्तयोर्नदीसंज्ञा सिध्यति । अत्र तु उदात्तग्रहणस्य यत्नस्य सत्त्वाद्विवक्षितः । इति विवक्षाबोधनाय उदात्तग्रहणं चरितार्थम् । असति यत्ने इत्युक्त्या 'त्रिचतुरोः स्त्रियाम्' 'दधनि' इति विभाषाङिश्योः इति च अल्लोपः ।

तदन्तस्यापीति—वर्जीवं यदस्थ्यवादि तदन्तस्याङ्गस्यानङ् इत्यर्थात् । तत्राङ्गस्य नपुंसकत्वं नापेक्ष्यते । तेनाङ्गस्य पुंस्त्वे स्त्रीत्वे चानङ् ।

अतिदध्नेति—दध्यतिक्रान्तं यत्कुलं तदतिदधि । अतिशयितं दधि यस्य कुलस्य तत् 'अतिदधिकम्' इति बहुव्रीहौ उरः प्रभृतिषु 'दधि, मधु, शाली, इति पाठान्नित्यं कप् 'उरःप्रभृतिभ्यः' ( ५-४-१५१ ) ।

'प्रियदध्ना' इत्यत्र तु समासान्तविधेरनित्यत्वेन भाष्यप्रयोगाच्च कप् । न च गणे दधिशब्दपाठवैयर्थ्यम्, 'परमदधिकः' इत्यादौ पाठचारितार्थ्यात् । नव्यास्तु तादृशपाठस्य भाष्ये बहुषु पुस्तकेष्वनुपलम्भात्कपोऽभावमाहुः । प्रथमाद्वितीययोर्वारिवत् । तृतीयादावचि अनङ् अल्लोपः । अतिदधि

मम्ब्वादयः। सानुशब्दस्य स्नुर्वा स्नूनि, सानूनि। प्रियक्रोष्टु, प्रियक्रोष्टुनी। तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्। प्रियक्रोष्टूनि। टादौ पुंवत्त्वे-प्रियक्रोष्ट्रा, प्रियक्रोष्टुना। प्रियक्रोष्ट्रे, प्रियक्रोष्टवे। अन्यत्र तृज्वद्भावा-

---

शब्दस्य पुंलिङ्गे स्त्रीलिङ्गे च सुटि हरिवत्। शसि स्त्रियां विशेषः 'प्रतिदधीः'। तृतीयादावचि पुंसि स्त्रियाञ्चानङ्। हलादौ हरिवत्।

यत्तु स्त्रियामनङि 'ऋन्नेभ्यः' इति ङीबिति तन्न सन्निपातपरिभाषाविरोधाद् बहिरङ्गपरिभाषया ऽनङोऽसिद्धत्वाच्च ङीपोऽप्रासेः। धाधातोः 'आदगमहन्' ( ) इति किप्रत्ययान्त दधिशब्दस्तु लिङ्गानुशासने 'क्यन्तो घुः' क्यन्तो घुप्रकृतिकः पुंसि स्यादित्युक्तेः हरिवत्पुंस्येव। अत्र पुंस्त्वादनङ् न तेन दधिना इत्यादि।

सुधीति—शोभना धीर्यस्य कुलस्य शोभनं ध्यायतीति वा विग्रहे सुधि 'ह्रस्वो नपुंसके' इति ह्रस्वः। प्रथमाद्वितीययोर्वारिवत्। तृतीयादावचि शोभनधीविशिष्टत्वरूपैकप्रवृत्तिनिमित्तमादाय शोभनध्यानकर्तृत्वरूपं वाऽऽदाय पुंसि नपुंसके च वर्तमानतया तृतीयादावचि पुंवद्भावस्तदाह सुधियेति—पुंवत्पक्षे नुमोऽभावादियङ्। वह्व्यः श्रेयस्योऽस्य कुलस्य 'बहुश्रेयसी' कुलम्। अत्र नपुंसकह्रस्वत्वेन 'ईयसो बहुव्रीहेर्न' इति ह्रस्वमात्रस्य प्रतिषेधात्' इति श्रीपतिपुरुषोत्तमविश्वरूपादयः। अन्ये तु उपसर्जनह्रस्व एव निषिध्यते। नपुंसकह्रस्वत्वं तु स्यादेव। तेन बहुश्रेयसि, बहुश्रेयसिनी इत्यादिरूपाण्याहुः।

वस्तुतस्तु 'ईयसश्च' ( ) इति सूत्रे भाष्ये 'ईयस उपसर्जनह्रस्वदीर्घत्वं वक्तव्यम् बहुश्रेयसी। पुंवद्वचनात्सिद्धम्' इत्युक्तम्' तेनास्य नपुंसकह्रस्वनिवृत्त्यर्थमपि लभ्यते। 'ईयसो बहुव्रीहौ पुंवत्' इति वचनेन दीर्घत्वविधायकं वचनं प्रत्याख्यातम्। उपसर्जनह्रस्वमात्रस्य पुंवद्भावेनापि निषेधे प्रत्याख्यानवैफल्यं स्यात्। मम तु नपुंसकह्रस्वस्यापि निवृत्तये पुंवद्वचनस्यावश्यकतया तत्प्रत्याख्यानं संगच्छते। ततश्च नपुंसकह्रस्वस्यापि निषेधः सिध्यतीति 'बहुश्रेयसी' कुलमित्येव साधु इति हरिदीक्षिताः। पुंवत्त्वेन स्त्रीप्रत्ययनिवृत्तिस्तु न, विशिष्टस्य पुंवत्त्वेऽपि श्रेयसीशब्दे तदभावात् भाष्ये तन्निवृत्त्यदर्शनाच्च।

प्रध्येति—प्रकृष्टा धीर्यस्य कुलस्येति विग्रहे प्रकृष्टधीविशिष्टत्वरूपम्, प्रकृष्टं ध्यायतीति विग्रहे प्रकृष्टध्यानकर्तृत्वरूपं वा एकप्रवृत्तिनिमित्तमादाय पुंसि नपुंसके च वर्तमानतया तृतीयादावचि पुंवद्भावः।

मध्विति—'मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः।

अर्द्धर्चादिगणे पाठात् पुन्नपुंसकयोर्मधु॥

इत्यभियुक्तोक्ते मकरन्द-मद्यमाक्षिकवाचिनः पुंनपुंसकयोः सत्वात्पुंवत्त्वम्। 'माद्विकं मधु न द्वयोः' इत्यमरोक्तेर्मृद्वीकाविकारवाचिनो नित्यनपुंसकतया नपुंवत्त्वम्। 'मधुर्वसन्ते चैत्रे च' इति कोशात्पुंलिङ्गत्वे प्रवृत्तिनिमित्तभेदान्न पुंवत्त्वम्। न च मधुशब्दस्य पुंन्नपुंसकयोरपि वृत्तित्वे 'मधोस्तृप्ता इवासते इति लिङ्गव्यत्ययोदाहरणासङ्गतिः, 'माध्वीर्गावो भवन्तु नः' इति लिङ्गात् क्षीरपर्यायस्य मधुशब्दस्य नित्यनपुंसकत्वाभिप्रायेण तदुदाहरणसङ्गतेः।

स्नुर्वेति—'मांसरस्तनूनां पद्दादिषूपसंख्यानम्' इति वार्तिकेनेति भावः।

अम्ब्वादय इति—अम्ब्यते=शब्द्यते जीवनायेति अम्बु=जलम्, 'अबि शब्दे' इत्यतः 'उणादयो बहुलम्' ( ३-३-१ ) इत्युण्। 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इत्यमरः। स्नूनि, सानूनि इति शसि रूपे। जसि तु 'सानूनि' इत्येव शसप्रभृतिषु आदेशोक्तेः। प्रभृतिग्रहणस्य प्रकारार्थत्वेऽपि शिष्टप्रयोगानुसारेणैव सुटि प्रवृत्त्यौचित्यात्।

त्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । 'नुम्-अचिर-' ( वा ४३७४ ) इति नुट् । प्रियक्रोष्टूनाम् ॥ इत्युदन्ताः ॥ सुलु, सुलुनी, सुलूनि । पुनस्तद्वत् । सुल्वा, सुलुना ॥ इत्यूदन्ताः ॥ धातृ,

---

द्वन्द्वप्रयुक्तेऽन्तोदात्ते पठनीये आद्युदात्तोच्चारणं विवक्षार्थम् । तेन 'प्रियतिसा' इत्यादावनुदात्त एवानङ् । 'हनो वधः' इत्यत्र 'धातोः' इत्यनेनान्तोदात्तस्यैव साधुत्वबोधनेन स्थानानुरूपे ऽन्तोदात्ते कर्त्तव्ये उपदेशे हन्धातोरनुदात्तेनाप्यनुदात्तेनोच्चारणीये 'वधः' इत्याद्युकरणबलाद्वधादेश आद्युदात्तो विवक्षितः ।

प्रियक्रोष्टूनीति—यत्तु प्राचा 'प्रियक्रोष्टॄणि' इत्युक्तं तत्पूर्वविप्रतिषेधपरभाष्यवार्त्तिकविरुद्धम् । ननु पूर्वविप्रतिषेधादस्तु नुमागमस्तथापि 'पुनः प्रसङ्गविज्ञान' न्यायेन निर्दिश्यमानपरिभाषया नुम्रहितस्य क्रोष्टुशब्दस्य तृज्वत्त्वे उक्तं रूपं स्यादेवेति चेन्न, अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तग्रहणेन 'यदागमा' इति न्यायेन नुम्विशिष्टस्य ग्रहणेऽपि सूत्रे षष्ठीनिर्देशाभावेन निर्दिश्यमानपरिभाषाया विषयाभावेन निर्दिश्यमानस्य नुमा व्यवधानमित्यस्य वक्तुमशक्यतया तृज्वद्भावस्य प्राप्तिसत्त्वेऽपि पूर्वविप्रतिषेधसामर्थ्यात् सकृद्गतिन्यायेन पुनस्तृज्वत्त्वाभावः ।

वस्तुतस्तु 'तृज्वत्क्रोष्टुः' इति सूत्रे 'क्रोष्टुः' इति षष्ठ्यन्तमेव । अत एव 'अङ्गस्य क्रोष्टुस्तृज्वद्भवति' इति भाष्यं संगच्छते क्रोष्टुशब्दान्ङसि तृज्वत्त्वे 'ऋत उत्' इति उकारैकादेशे 'क्रोष्टुः' इति षष्ठ्यन्तं सिध्यति । तथा च निर्दिश्यमानपरिभाषोपस्थितौ सप्तम्यन्तार्थस्य पञ्चम्यन्तार्थस्य च निर्दिश्यमाने एवान्वयेन आगमविशिष्टस्य निर्दिश्यमानत्वाभावेन आगमरहितस्य निर्दिश्यमानस्य विभक्त्यव्यवहितपूर्वत्वाभावेनैव तृज्वद्भाववारणं बोध्यमिति गुरवः ।

यत्तु वैकल्पिकतृज्वद्भावविषयको विप्रतिषेधः, भाष्ये 'प्रियक्रोष्टुने आरण्याय' इत्यस्यैवोदाहृतत्वादिति तन्न, 'न चोदाहरणमादरणीयम्' इति भाष्यादुदाहरणस्य संकोचकत्वे मानाभावात् । किञ्च विप्रतिषेधस्य वैकल्पिकतृज्वद्भावमात्रविषयकत्वे वार्तिके तृज्वद्भावाग्रहणं व्यर्थमेव स्यात्, तृज्वद्भावाभावपक्षे प्रियक्रोष्टुना, इत्यस्य पुंवद्भावपक्षे 'प्रियक्रोष्ट्रा' इत्यस्य सिद्धत्वात् । न च समाहारद्विगौ नित्यनपुंसकत्वेन पुंवत्त्वाभावात् 'पञ्चक्रोष्टुना' इत्यादौ तृज्वन्निवृत्तिः फलम् । एवमपि 'प्रियक्रोष्टुने' इत्यत्र समाहारद्वन्द्वाभावेन भाष्योदाहरणस्यासङ्गत्यापत्तेः ।

न च भाष्ये 'प्रियक्रोष्टुने' इत्युदाहरणं 'पञ्चक्रोष्टुने' इत्यस्योपलक्षणम्, उपलक्षणत्वस्यैव स्वीकारे भाष्योदाहृतप्रातिपदिकानुग्रहाय 'प्रियक्रोष्टूनि' इत्यस्यैवोपलक्षणत्वौचित्यात् । प्रासादार्थमारोपितदीपस्य रथ्योपकारकत्ववत् । प्रियक्रोष्ट्रेति—पुंवत्त्वेऽनपुंसकत्वान्नुम् न ।

प्रियक्रोष्टुनेति—पुंवत्त्वे तृज्वद्भावाभावे रूपम् । नपुंसकत्वेऽपि परत्वान्नुमं बाधित्वा नाभाव एव 'प्रियक्रोष्टुना' इति । प्रियक्रोष्ट्रे, इति पुंवत्त्वे तृज्वत्त्वे यण् । प्रियक्रोष्टवे इति पुंवत्त्वे, तृज्वत्त्वाभावे गुणे रूपम् । ङसिङसोः पुंवत्त्वे तृज्वत्त्वे च 'प्रियक्रोष्टुः', तृज्वत्त्वाभावः, प्रियक्रोष्टोः, पुंवत्त्वाभावे नपुंसके पूर्वविप्रतिषेधेन तृज्वत्त्वं बाधित्वा नुम् 'प्रियक्रोष्टुनः' इति त्रीणि रूपाणि । ओसि—प्रियक्रोष्ट्रोः, प्रियक्रोष्ट्वोः, प्रियक्रोष्टुनोः ।

आमि विशेषमाह—नुमचिरेति—'नुमचिर' इति वार्त्तिकेन नपुंसकत्वे तृज्वत्त्वं नुमं च बाधित्वा नुट् । पुंवत्त्वे तृज्वत्त्वं बाधित्वा नुट् । पुंवत्त्वाभावे तु तृज्वत्त्वं बाधित्वा प्राप्तं नुमं बाधित्वा नुट् । 'प्रियक्रोष्टूनाम्' इत्येकमेव ।

स्नुःप्रस्थः सानुरस्त्रियाम्. ( अम. शैल. ५ ) इत्युक्तेः अयः पुंनपुंसकलिङ्गः इत्येकस्मिन् समभूभागपर्वतैकदेशत्वसमानाधिकरणसानुत्वरूपप्रवृत्तिनिमित्ते भाषितपुंस्कत्वात् तृतीयादिषु पुंवद्भावाद्भानुवद्रूपम् ।

इत्युदन्ताः ।

अथ ऊदन्ताः—सुष्ठु लुनाति वृक्षादिकं यत्कुलं तत् 'सुलु' ह्रस्वे स्वमोर्लुक् । अत्र शोभनलवनकर्तृत्वमादाय पुंनपुंसकयोरिति पुंवत्त्वे ह्रस्वाभावाद्घित्वाभावे 'ओः सुपि' इति यण् । 'सुल्वा'

धातृणी, धातॄणि । हे धातः, हे धातृ । धात्रा, धातृणा । एवं ज्ञातृकर्त्रादयः ॥ इत्यृदन्ताः ॥

**एच इग्घ्रस्वादेशे । ( १-१-४८ )**

आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् । प्रद्यु, प्रद्युनी, प्रद्यूनि । प्रद्युनेत्यादि ।

---

इति । पुंवत्त्वाभावे ह्रस्वो नुम् न 'सुधुना' इत्यादि । इत्यूदन्ताः । अथ ऋदन्ताः—दधाति-धारयति-पुष्यति वेति धातृ कुलम् 'डुधाञ् धारणपोषणयोः' इत्यतः 'ण्वुल्तृचौ' इतिकर्तरि तृच् । धातृ सु इति दशायाम् अन्तरङ्गानपि, इति सोर्लुकि 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् 'ऋदुशनस्' इत्यनङ् न । धातृणी इति —'इको ऽचि' इति नुम् 'ऋवर्णान्नस्य' इति णत्वम् । धातॄणि इति—परत्वात् 'अप्तृन्तृच्' इति गुणं बाधित्वा नुम् । 'सर्वनामस्थाने' इति दीर्घः ।

'हे धातः' इति—'अन्तरङ्गानपि' इति न्यायेन सोर्लुकि 'न लुमता' इत्यस्यानित्यतया प्रत्ययलक्षणेन सम्बुद्धिपरतया 'ह्रस्वस्य' इति गुणः । 'न लुमता' इत्यस्य प्रवृत्तिपक्षे गुणाभावे 'हे धातृ' इति धारणकर्तृत्वे पोषणकर्तृत्वे वा प्रवृत्तिनिमित्तमादाय पुंनपुंसकतया पुंवत्त्वे नुमोऽभावे यणि 'धात्रा' इति, नुमि धातृणा, इति । एवमिति—ज्ञातृ, ज्ञातृणी, ज्ञातॄणि । ज्ञात्रा, ज्ञातृणा, इत्यादि । 'गमॢ' इत्यादयोऽत्र कथं नोक्ता इति चिन्त्यम् । एदन्ता ह्रस्वे सति इदन्ता एव स्युरित्येदन्ता नोक्ताः । यद्यपि से, स्मृतोशब्दौ प्रवृत्तिनिमित्तैक्ये सति भाषितपुंस्कौ ततश्च टादौ सया, सिना, स्मृतवा, स्मृतुना इत्यादि रूपाणि प्रदर्शयितुमुचितानि । तथापि प्रद्योशब्दे वक्ष्यमाण-रूपेणैषामपि गतार्थतया पृथक् नोदाहृताः ।

'एच इग्घ्रस्वादेशे' ( १-१-४८ ) इति आदिश्यते इत्यादेशः कर्मणि घञ् । आदेशश्चासौ ह्रस्वश्चेति कर्मधारयः अत एव निर्देशाद्विशेष्यस्य ह्रस्वस्य पूर्वनिपातः निर्धारणे सप्तमी । यद्यपि 'कारके' ( १-४-२३ ) इति सूत्रे भाष्ये 'कारकेष्विति ब्रूयात्' इत्युक्ते निर्धारणे बहुवचनमेवोचितम् निर्द्धारण-स्यानेकाश्रयत्वात् तथाप्यत्र सौत्रमेकवचनम् जातौ वा ।

तदाह—आदिश्यमानेष्वित्यादि । नानेन ह्रस्वो विधीयते । किन्तु 'ह्रस्वो नपुंसके' इत्यादिना आदेशत्वेन विधीयमानेषु इक्षु, अनिक्षु च अनिको निवर्त्यन्ते । तदुक्तं भाष्ये 'नानेनेको निवर्त्यन्ते । किं तर्हि ? अनिको निवर्त्यन्ते सिद्धा ह्यत्र ह्रस्वा इकश्चानिकश्च । तत्रानेनानिको निवर्त्यन्ते इति ।

अयं भावः—एचां पूर्वभागोऽवर्णसदृशः, उत्तरभागश्च ए, ऐ, इत्यत्र इवर्णसदृशः ओ, औ, इत्यत्र उवर्णसदृशः । तत्रोभयान्तरतम् ह्रस्वाभावाद्भागकृतान्तरतम्येन प्राप्तस्य ह्रस्वाकारस्याभावायेदम् ।

तदाह—इगेवेति । अत एव 'यथासंख्यम्' इत्यस्य नोपस्थितिः, समसम्बन्धिविधेरभावात् । न च 'अर्द्धमात्रावर्णस्याद्ध्यर्द्धमात्रेवर्णोवर्णयोः इत्यत्रैव भाष्ये उक्ततया उत्तरभूयस्त्वात् तत्सदृश इगेव भविष्यतीति सूत्रं व्यर्थमिति वाच्यम्, एचोश्चोत्तरभूयस्त्वादवर्णे न भविष्यतीति भाष्यकृतैव प्रत्याख्यातत्वात् ।

शेखरकृता 'प्लुतावैचः [ ८-२-१०६ ] इति सूत्रे अध्यर्द्धमात्रावर्णस्यार्द्धमात्रे वर्णोवर्णयोः इति पक्षस्यापि विनिगमनाविरहेणोक्ततया समविभागपक्षस्यैव भाष्यकृत्सम्मततया सूत्रमावश्यकमित्यु-क्तम् । 'ह्रस्वादेशे' इत्यस्य निर्देश्यमानसप्तमीस्वीकारे ह्रस्वादेशेषु एच्स्थानिक इग्भवति, इत्यर्थः । तथा च ह्रस्वादेशपदार्थस्य स्वघटकवृत्तित्व-स्वघटकेगितरावृत्तित्वोभयसम्बन्धेन एच्स्थानिकत्वेऽन्वयः ।

नागेशमते तु स्वघटकत्व-स्वघटकेगितरावृत्ति एच्स्थानिकत्वसम्बन्धाभ्याम् ह्रस्वादेशसमु-दायस्य इकि अन्वयः । तन्न वरम्, एच्स्थानिकत्वस्य द्विधाभानापत्तेः । यत्र निर्द्धारणं तत्र त्रयाणां प्रयोगः । यतो निर्धार्यते, तस्य, येन निर्द्धार्यते तस्य, यश्च निर्द्धार्यते इति यथा नृषु ब्राह्मणः श्रेष्ठः, इत्यत्र नृसमुदायाद् श्रेष्ठो ब्राह्मणत्वेन श्रेष्ठो निर्द्धार्यते ।

इह न पुंवत्, यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात्। एवमग्रेऽपि ॥ इत्योदन्ताः ॥
प्ररि, प्ररिणी, प्ररीणि। प्ररिणा। एकदेशविकृतस्यानन्यत्वाद् 'रायो हलि' ( सू २८६ ) इत्यात्वम्,
प्राराभ्याम्, प्राराभिः। 'नुमचिर—' ( वा ४३७४ ) इति नुट्यात्वे प्राराणाम् इति माधवः।

---

प्रकृते आदेशभूतह्रस्वसमुदायात् पृथक्स्थानिक इकत्वेन निर्धार्यते। एवं च तादृशसमुदायस्य स्वघटकेगितरावृत्त्येचस्थानिकत्वसम्बन्धेनेकि अन्वये सम्बन्धघटकतया पृथक्स्थानित्वस्यान्वये द्विधाभानं स्पष्टमेव। एवञ्च प्रद्योशब्दे ओकारस्य उकार एव ह्रस्व इत्याह—'प्रद्यु' इति। द्योतन्ते देवा यत्र सा द्यौः। 'द्योततेर्डोः' इति डोप्रत्ययः। प्रकृष्टा द्यौर्यस्य तत 'प्रद्यु'।

ननु प्रकृष्टस्वर्गवत्त्वरूपैकस्मिन्प्रवृत्तिनिमित्ते पुंनपुंसकतया तृतीयादौ पुंवत्त्वं स्यादत आह—इह न पुंवदिति—कुत इत्याह—यदिगन्तमिति—पुंसि ओदन्तः प्रद्योशब्दः, नपुंसके उदन्तः प्रद्युशब्दः। ततश्च पुंसि प्रद्योशब्दस्य भाषितपुंस्कत्वेऽपि क्लीबे प्रद्युशब्दस्य भिन्नतया समानानुपूर्व्या भाषितपुंस्कत्वाभावेन न पुंवदित्यर्थः। अन्यथा समानप्रवृत्तिनिमित्तो वस्तुतदार्थशब्दयोर्भाषितपुंस्कतयापुंवत्त्वापत्तिः।

ननु 'ग्रामण्या ब्राह्मणकुलेन, ग्रामण्ये ब्राह्मणकुलेन' इत्यत्र भाष्ये पुंवद्भावस्य उक्ततया विरोधः, पुंसि ग्रामणीशब्दस्य दीर्घान्तत्वेन नपुंसके ह्रस्वान्तत्वेनेति चेन्न. नपुंसके ह्रस्वप्रवृत्तेः प्राक् यद्रूपं तेन रूपेण भाषितपुंस्कत्वस्य विवक्षणात् अत्र च प्रागुक्तं भाष्यमेव मानम्। तथा च प्रद्योशब्दस्य तदानीं पुंसि नपुंसके च समानरूपत्वेन पुंवत्त्वं स्यादेव। यद्वा पुंसि क्लीबे च समानानुपूर्वीक यदिगन्तं तत्पुंवत्।

ग्रामणीशब्दः, ग्रामणिशब्दश्च इगन्तः समानानुपूर्वीकश्चेति न भाष्यविरोधः। प्रकृते प्रद्योशब्दश्च नेगन्तः सन् समानुपूर्वीक इति न पुंवद्भाव इत्युपाध्यायाः। यत्तु एकदेशविकृतन्यायेन प्रद्युशब्दप्रद्योशब्दयोरैक्येन पुंवत्त्वं स्यादेवेति, तन्न, न हि विकृतिः प्रकृतिं गृह्णाति इति घुसञ्ज्ञासूत्रे भाष्योक्त्या इगन्तग्रहणेन प्रद्योशब्दस्य प्रकृतिरूपस्याग्रहणात्।

अन्ये तु प्रद्यवा, प्रराया, सुनावा कुलेनेत्युदाहरन्ति। तेषामयमाशयः—प्रकृष्टस्वर्गवत्त्वादिरूपप्रवृत्तिनिमित्तैक्यात् प्रद्योशब्दादयो भाषितपुंस्कास्ते एवेदानीमिगन्ताः। तथा च प्रद्योशब्दादयोऽपि भाषितपुंस्का एव एकदेशविकृतस्यानन्यत्वात्। अतः पुंवद्भावः स्यादेवेति। एवञ्च एजन्तेषु क्लीबेषु माधवमते पुंवद्भावो नास्ति। मतान्तरे तु पुंवद्भावो भवत्येव।

प्ररीति—प्रकृष्टो रायस्य कुलस्य तत् 'प्ररि' नपुंसकह्रस्वत्वे सुटि वारिवत्। शसि च वारिवत्। टादावचि माधवमते पुंवत्त्वाभावोऽन्यमते पुंवत्त्वमिति विशेषः। ननु ह्रस्वत्वे रैशब्दाभावाद् रायो हलि, इत्यात्वं न स्यादत आह—एकदेशविकृतस्येति—वस्तुतस्तु परिच्छेदकधर्मसमनियतधर्मस्थायिनानेनातिदेशः। अत एव 'प्रभीयात्' इत्यादौ भान्तेऽभित्वारोपेण ह्रस्वो न। ततश्चानुमानिकस्थान्यादेशभावेन 'अतिरै' इत्यस्य 'अतिरि' इत्यादेशे 'रि' इत्यस्य रैस्थानिकत्वस्यार्थसमाजग्रस्ततया रायो हलि इत्यात्वमिति भावः।

माधव इति—अयम्भावः—पर्वैर्विधिशास्त्रैः स्वविधेयघटितस्य साधुत्वं बोध्यते। अन्यथा विधेयमात्रबोधने विधेयाघटितस्योच्चारणं केन वार्येत। ततश्च 'राम ङे' इति दशायाम् 'ङेर्यः' इति शास्त्रेण अदन्ताङ्गाव्यवहितोत्तरस्य ङे इत्यस्य यादेशो भवति, यादेशघटितं च 'राम य' इति साधु। एवं यादेशः, तद्घटितस्य साधुत्वञ्चोभयं विधीयते। तदनन्तरम् 'सुपि च' इत्यनेन दीर्घत्वम् 'रामाय' इत्यस्य साधुत्वं च विधीयते। इति परस्परं विरोधः स्यात् ङेर्यः इत्यनेन 'रामय' इत्यस्य साधुत्वं तद्भिन्नस्यासाधुत्वम्, 'सुपि च' इत्यनेन 'रामाय' इत्यस्य साधुत्वं तदन्यस्यासाधुत्वमिति विरोधपरिहाराय यत्र वृत्त्युत्तरं प्रवृत्तिमता शास्त्रेण यद् बोध्येत तदपि साधु इत्येवाभ्यनुज्ञावाक्यमस्यु-
ह्यते। तत्रैवाभ्यनुज्ञावाक्ये 'सन्निपातपरिभाषाबलात्' मत्प्रवृत्त्युत्तरं प्रवृत्तिमता मदीयसन्निपात-
वर्तिकार्यनिमित्तेन शास्त्रेण यद् बोध्येत तदपि साधु इत्यभ्यनुज्ञावाक्यं स्यात्।

वस्तुतस्तु संनिपातपरिभाषाया नुट्यानित्यत्वं न । 'नामि' ( सू २०९ ) इति दीर्घस्यारम्भसामर्थ्यात्सन्निपातपरिभाषां बाधत इत्युक्तम् । प्रधीणाम् । इत्यदन्ताः । सुनु, सुनुनि, सुनूनि सुनुना–इत्यादि । इत्युदन्ताः ।

॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

---

तथा च 'डेयः' इत्यनेन स्वसन्निपातविघातकातिरिक्ताय शास्त्राय अभ्यनुज्ञा दत्ता स्यादिति, 'सुपि च' इत्यस्य प्रवृत्तिर्न स्यात् । एवञ्च 'कष्टाय' इति पाणिनिनिर्देशासङ्गतिः । तत्सङ्गतये 'सुपि च' इत्येतदतिरिक्तं यत्सन्निपातविघातकं तदतिरिक्तेन यद् बोध्येत तदपि साधु । एवञ्च प्रकृते 'सुपि च' इत्येतद्भिन्नं यत्सन्निपातविघातकं तद्भिन्नाय अनुज्ञादत्तेति लभ्यते । 'सुपि च' इत्येतद्भिन्नं यत्सन्निपातविघातकं तद्भिन्नं तु 'सुपि च' इत्यपि जातमिति 'सुपि च' इति प्रवर्तेत ।

एवम् 'प्रति ग्राम्' इत्यत्र 'ह्रस्वनद्यापः' इत्यनेन नुट् नुडघटितस्य साधुत्वम् मत्प्रवृत्त्युत्तरं प्रवृत्तिमतो मदीयसन्निपातविघातकातिरिक्तेन यद्बोध्येत तदपि साधु' इति स्वीकारे । 'नामि' इति सूत्रं ह्रस्वान्तात्परत्वविशिष्टामत्वरूपसन्निपातस्य विघातकमिति तस्मै अभ्यनुज्ञा न स्यादिति नामीति सूत्रवैयर्थ्यम् ।

ततश्च सूत्रसार्थक्याय नामीत्येतद् भिन्नं यत्सन्निपातविघातकं तदतिरिक्तेन यद्बोध्येत तदपि साधु इत्युक्तं स्यादिति नामीसूत्रभिन्नं यत्सन्निपातकं तद्भिन्नायानुज्ञादाने नामीत्यस्यापि अभ्यनुज्ञाता जातेति तस्य प्रवृत्तिः स्यात् । 'सुपि च' इत्यस्य राम नाम् इत्यत्र प्रवृत्तिर्न स्यात् । 'अग्नीनाम्' इत्यादावपि नुट् । तत्र तु 'सुपि च' इत्यस्य प्राप्तिर्नास्ति इति तत्प्रति 'ह्रस्वग्रहणस्य वैयर्थ्यं नास्ति । इत्यतः 'रामाणाम्' इत्यत्र सुपि च इति दीर्घो न, तस्मैऽभ्यनुज्ञाया अभावात् ।

माधवस्तु यत्र सन्निपातपरिभाषाविरोधात् शास्त्रवैयर्थ्यम् निर्देशासङ्गतिर्वा तत्र मत्प्रवृत्त्युत्तरं प्रवृत्तिमता शास्त्रेण यद्बोध्येत तदपि साधु इत्येव । तच्छास्त्रं सन्निपातविघातकमपि तस्मायाप्यभ्यनुज्ञा । एवञ्च 'ह्रस्वनद्यापः' इति शास्त्रं नामीति शास्त्रारम्भसामर्थ्यात् स्वप्रवृत्त्युत्तरं सर्वस्मै शास्त्राय प्रवृत्त्यभ्यनुज्ञां दद्यादिति 'रायो हलि' इति सूत्रं नुटि सति प्रवर्तेत । तथा च । प्राणाम् इत्येव स्यात् । माधवमते सूत्रवैयर्थ्यं स्थले निर्देशादसङ्गतिस्थले च अभ्यनुज्ञावाक्ये सन्निपातविधानारिक्तेनेति न निवेश्यते इति महल्लाघवम् ।

न चैवम् 'ह्रस्वनद्यापः' इत्यनेन सर्वस्मै अभ्यनुज्ञादाने 'रषाभ्यां नो णः' इति सूत्रभाष्यविरोधः 'नाम्नापः' इति न्यासे 'रत्नानाम्' इत्यत्र नामीति दीर्घं बाधित्वा परत्वान्नलोपः स्यादित्युक्तं तत्र सुपि च इत्यस्याप्यभ्यनुज्ञासत्वेन नलोपापेक्षया सुपि च इत्यस्य परत्वाद् दीर्घ एव स्यादिति परत्वान्नलोपभाष्यासङ्गतिरिति वाच्यम् सुपि चेत्यपेक्षया लोपस्य नित्यत्वेन प्रतिपदोक्तत्वेन च पूर्वं नलोपप्रवृत्तिरिति भाष्याशयकल्पनेन माधवमतेऽपि भाष्यविरोधाभावादित्याशयात् ।

यद्यपि माधवमते यत्र सन्निपातपरिभाषा प्रवृत्तौ सूत्रवैयर्थ्यं निर्देशासङ्गतिर्वा तत्र अभ्यनुज्ञावाक्ये संनिपातविघातकातिरिक्तत्वेन संकोचाभावे स्वप्रवृत्त्युत्तरं सर्वस्मै अभ्यनुज्ञादानेऽजन्तं वर्णाश्रमुपजीव्यप्रवृत्तस् ह्रस्वो नपुंसके इति सूत्रम् नुम्विधायकशास्त्राय यथा अभ्यनुज्ञां दद्यात्तथा 'ह्रस्वस्य पिति कृति' इति शास्त्रायापीति 'सुलु' इत्यत्र तुगापत्तिः 'डेयः' इति सूत्रम् 'सुपि च' इत्येतस्मै यथाऽनुज्ञांदद्यात्तथा 'आतो धातोः' इत्यस्मायापि 'श्रीपाय' इत्यत्रालोपापत्तिः स्यादतोऽभ्यनुज्ञावाक्ये स्यर्थीभूतशास्त्रायाभ्यनुज्ञादानेऽप्यन्ये सन्निपातकशास्त्रायाभ्यनुज्ञाभावान्न तुगाद्यापत्तिरिति संकुचिताभ्यनुज्ञाकल्पनमेवोचितमित्यतो माधव इत्यनेनारुचिः सूचिता । संकुचिताभ्यनुज्ञाया प्रामाणिकत्वं दर्शयितुमाह —वस्तुतस्त्विति ।

'सुनु' इति शोभना नौ यस्य कुलस्य तत् सुनु । सुनावा, सुनुना, मतभेदेन पुंवत् तदभावो वा । आमि नुट् 'सुनूनाम्' 'नामि' इति दीर्घः ।

पदवाक्यप्रमाणपारावारीणसर्वतन्त्रस्वतन्त्रविद्वन्मूर्द्धन्यश्रीसभापतिशर्मोपाध्यायविरचितायां तेषां प्रधानशिष्यपण्डितप्रवरश्रीबालकृष्णशर्मपञ्चोलिसम्पादितायां लक्ष्मीव्याख्यायाम्

अजन्तनपुंसकलिङ्गप्रकरणं समाप्तम् । इति शम् ।

श्रीभट्टोजिदीक्षितविरचिता

# वैयाकरणसिद्धान्तकौमुदी

काशीस्थविरलामहाविद्यालयप्रधानाचार्य–एम. एल. सी.

सकलशास्त्रपारावारीण-वैयाकरणकेसरि-

***पण्डितश्रीसभापतिशर्मोपाध्याय-***

विरचितया "*लक्ष्मी*"

व्याख्ययोपेता

श्रीबालकृष्णशर्मपञ्चोलिना सम्पादिता

[ द्वितीयांशः ]

प्रकाशकः

मो ती ला ल ब ना र सी दा स

दिल्ली : वाराणसी : पटना

# आमुखम् ।

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः ।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥ १ ॥

**वैयाकरणनिकाये टीकाकार इति समाख्यां गताः सुकृतिभिः परमादरेण परिगृहीताः प्रतीतानां न्यायकारप्रभृतीनामनेकेषां व्याकर्तॄणामुपजीव्यतामिता अभिनवपतञ्जलिसदृशाः प्रमाणभूता आचार्यास्तत्रभवन्तः सर्वतन्त्रस्वतन्त्राः श्रीसभापतिशर्मोपाध्याया** इति न तिरोहितं प्रेक्षावताम् । **नूतननिर्दुष्टपरिष्कारनिर्माणे,** शब्दतत्त्वविवेचने, ग्रन्थग्रन्थिविभेदनव्याख्याकरणे च तेषामुपाध्यायमहानुभावानां प्रशस्तिः सर्वैं विश्वविख्यातवैदुष्यवद्भिरकारि क्रियते च । भारते विदेशे च तेषामसंख्यसंख्यकाः प्रौढपाण्डित्यवन्तोऽन्तेवासिनोऽध्यापकादिपदमलङ्कुर्वाणाः सोत्साहं सुरभारतीप्रचारं कुर्वन्ति, प्रसारयन्ति च विद्यागुरुधवलकीर्तिराशिम् । पूज्यानां तेषामियं **'लक्ष्मी' व्याख्या चरमा कृतिः ।**

कारकप्रकरणीय **'प्रातिपदिकार्थलिङ्गसंख्यापारिमाणमात्रे प्रथमा'** इति सूत्रव्याख्याने **'ननु वचनमिति प्राचां संख्यायां संज्ञेति, वचनम् = संख्या'** इत्यसङ्गतमिति **चेन्न, शब्दार्थयोरभेदाङ्गीकारेण तदुक्तेः ।** अत एव **'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः'** इति । एतत्पर्य्यन्तां लक्ष्मीव्याख्यां विरच्य महावैयाकरणाः पुण्यश्लोका गुरुचरणाः श्रीसभापतिशर्मोपाध्याया वैकुण्ठधामनिष्ठाधारतानिरूपिताधेयतावन्तः समागताः । तेषां निर्देशेन कारकप्रकरणस्यावशिष्टां व्याख्यां विरच्य **प्रस्तौमि इति निवेदयते—श्रीबालकृष्णशर्मपञ्चोली ।**

प्रथमांशे आमुखे लक्ष्मीव्याख्या वैशिष्ट्यमतिसंक्षिप्तं मया वर्णितम् । द्वितीयांशे लक्ष्मीव्याख्यावैशिष्ट्यं स्थालीपुलाकन्यायेन प्रस्तूयतेऽत्र ।

पृ० ४७१—**'इग् यणः सम्प्रसारणम्'** इति सूत्रार्थविमर्शः । पृ० ४७९—'वस्तुतस्तु **इत्यारभ्य गुरुमतम् ।** पृ० ४८०—**'षट्चतुर्भ्यश्च'** इत्यत्र श्रीनागेशमतालोचनम् । **णत्वं द्वित्वम्' इत्यस्य विशदपरामर्शः ।** पृ० ४८६ परिसंख्यारूपनियामकशास्त्रप्रवृत्तिविचारः । पृ० ४८६ **अपूर्वः किम्पदार्थविमर्शः ।** पृ० ४८७ **'किमः कः'** इत्यत्र 'इम अः' इति न्यासविचारः । ४९०—श्रीधरमतम्, वस्तुतस्तु—चिन्त्यम् इति च । पृ० ४९१—**उपाध्यामतम् ।** आदिपदार्थः, अन्त्यपदार्थः, **असहायशब्दार्थः ।** ४९२ वार्तिकमतं भाष्यकारमतञ्च । पृ० ४९४ **उपाध्यायमतम् ।** पृ० ४९९ **'नलोपः सुप्'** इति सूत्रार्थविमर्शः । पृ० ५०० नियामकशास्त्रस्य निषेधमुखेन प्रवृत्तौ दूषणत्रयोपन्यासः । परिसंख्याविमर्शश्च । पृ० ५०१ संज्ञाविधिविषयकोदाहरणविचारः । पृ० ५०८ माधवमतालोचनम् । पृ० ५१७ पथ्यादिशब्दसिद्धिप्रकारः । पृ० ५२० नागेशमतालोचनपूर्वकमुपाध्यायमतम् । ५२२ **'नोपधायाः'** इति सूत्रार्थविचारः । ५२७ तदुक्तं **भाष्ये** इति । ५२८, ५२९

---

'प्रियाष्टनः' इति फक्किकाविमर्शः । ५४४, ५४५ मपर्य्यन्तस्य किमिति । ५५२ 'साम आकम्' इत्यर्थ-वि० । पृ० ५६० संसर्गस्य प्रकारतया भानमिति पक्षे 'राजपुरुषः' इत्यतः शब्दबोधविषये श्रीपञ्चोलिमतम् । ५६१ वाक्यलक्षणविमर्शस्तत्र बा० कृ० पञ्चोलिमतम् । पृ० ५६५ मन्त्रार्थ-विचारः । ५६८ 'वस्तुतस्तु—भवति' इति । ५८९ बृहत्, महत, जगत् शब्दार्थः । ५८४ शब्देन्दु-शेखरोक्तमतालोचनम्, उपाध्यायमतम् । ५९० षडर्थविमर्शः । ५९८ 'पुंसोऽसुङ्' इत्यर्थविमर्शः । ६०३ पृ० श्री बा० कृ० पञ्चोलिना संगृहीताः कोशेऽनुपलब्धाः शब्दास्तेषां परिशिष्टांशे निर्देशः । इति हलन्तपुंल्लिङ्गप्रकरणम् । ६०८ हलन्तस्त्रीलिङ्गप्रकरणम् । पृ० ६१०, ६११ 'उत्तरपदत्वे चापदादि-विधौ' इत्युपक्रम्य विमर्शः । पृ० ६२१ स्पष्टतया गवाक् शब्दरूपोल्लेखः । ६२५ वेदशाखाविषये मतभेदस्तत्र श्रीपञ्चोलिमतम् । ६२७ अदः शब्दार्थः । इति हलन्तनपुंसकलिङ्गप्रकरणम् । ६२८ स्वः पदार्थविमर्शः । ६२९ अव्ययार्थविमर्शः, तत्रोपाध्यायमतम् । ६३४ नञर्थविषये श्रीपञ्चोलि-मतम् । ६४७ इति अव्ययप्रकरणम् । पृ० ६४८ तः ६५४ पृष्ठपर्य्यन्तं परिशिष्टांशः । तत्र शब्द-माश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः ।

पृ० ६५५ प्रातिपदिकत्वविशिष्टत्वविमर्शः । पृ० ६५९ विषयसिद्धान्तः । पृ० ६६२ शूद्रा-पदार्थविमर्शः । ६६३ जातिवाचकत्वपरिष्कारः । 'आभीरोऽपि शूद्र एवं' इत्यत्र उपाध्यायमतम् । श्रीपञ्चोलिपरिष्कृतं व्यवस्थितविभाषात्वम् । पृ० ६६१ 'पञ्च नद्यः' इत्यत्र पञ्चन् शब्दान्न टाप्' इत्युपक्रम्य विशदविचारः । पृ० ६७५ स्थानिवद्भावविषये 'लक्ष्ये लक्षण' न्यायाप्रवृत्तिः । श्रीनागेशमते 'आपि' इति सप्तम्यन्तार्थस्य ककारेऽन्वयः । पृ० ६७७ 'पूर्वस्य किम् इति उपक्रम्य विमर्शः । पृ० ६८२, ६८३ 'उदीचामातः' इति सूत्रार्थः । आर्य्यपदार्थविमर्शः । ६८९ शुभ्र-शब्दार्थः । ६९० उपसर्जनपरिष्कारः । बहुकुरुचरा इत्यत्र समन्वयश्च । पृ० ६९१ कन्लुबन्तेषु चीपसर्जनत्वाभाव एवेत्यनभिधानकल्पनं चिन्त्यमिति उपाध्यायाः । पृ० ६९३ अनुपसर्जनाधि-कारस्य साफल्यम् इति । ६९४ वक्ष्यमाणा ङीप्निराकरणविमर्शः । पृ० ६९७ संख्यावाचकाः शब्दाः, संख्याविशिष्टसंख्येयवाचकाश्च समासतोऽत्र इति बा० कृ० पञ्चोलिनः । पृ० ७०४ कुरुदेश विचारः । ७०५ वयः पदार्थः । घान्तस्य प्रातिपदिकत्वानापत्तिरित्युपाध्यायाः । पृ० ७०७—गुञ्जा-माष-सुवर्ण-पल-प्रसृत-कुटव-प्रस्थ-आढकपदार्थनिर्वचनम् । उन्मान-प्रमाण-संख्या-परिमाणार्थ-विचारः । पृ० ७०८, ७०६ आचितशब्दार्थः । यौतवद्रुवय-पाय्यशब्दार्थविमर्शः । कुटव-पण-कार्षापणार्थः ।

पृ० ७१५ देवतापदार्थविमर्शः—देवतालक्षणम्, 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चस्कामः' इत्यत्र लक्षणसमन्वयः, मन्त्रलक्षणञ्चेति श्रीपञ्चोलिमतम् । 'अन्तर्वत् पतिवद् गर्भसंयोगे' इत्यत्रो-पाध्यायमतम् । ७१४ बालमनोरमामतखण्डनम् । पृ० ७२० एतशब्दार्थः । पृ० ७२३ 'मृजा' इति पाठश्चिन्त्य इत्युपाध्यायाः । पृ० ७२८ गुणवचनविमर्शः । अत्र उपाध्यायमतम् । पृ० ७२९ 'वस्तुतस्तु विशेषभिन्नत्वं न देयम्' इति उपाध्यायाः । पृ० ७३० आखुशब्दार्थः ।

'विभवे सति नैवात्ति न ददाति जुहोति न' । इति ।

पृ० ७३३ 'गवां पालिका' इत्यत्र विशिष्टविमर्शः । छायाशब्दार्थः । पृ० ७३४ पितृवत् मातृशब्देऽपि पाधातुरूपा प्रकृतिरिति उपाध्यायाः । पृ० ७३५ स्त्रीणामध्ययनेऽधिकारः, अनधि-

इति । ८५१ अधिकरणार्थः । ८५२ अधिकरणभेदाः। ८५३ तत्त्वचिन्तकाः । ८५३ शक्तिः कारकम्
इति । यैर्विशालकायेऽस्मिन् ग्रन्थप्रकाशने सुमहत् साहाय्यमाचरितं ते सर्वे धन्यवादार्हाः।
विशेषतश्च श्रीमोतीलाल-बनारसीदास पुस्तकालयाध्यक्षाः श्रीसुन्दरलाल महोदयाः,
पण्डितप्रवराः श्रीजितेन्द्रियाचार्याः, पण्डितप्रवरश्रीजनार्दनशर्म-
पाण्डेयाः । श्रीगौरीशङ्करमुद्रणालयाध्यक्षाः श्रीसोमारुराम-
महाशयाश्च । ते सर्वे धन्यवादार्हाः ।

अनादिसुखरूपता निखिलदृश्यनिर्मुक्तता
निरन्तरमनन्तता स्फुरणरूपता च स्वतः ।
त्रिकालपरमार्थता त्रिविधभेदशून्यात्मता
मम श्रुतिशतार्पिता तदहमस्मि पूर्णो हरिः ।।

इति निवेदयते—

बालकृष्णशर्मपञ्चोली

( काशिकराजकीयसंस्कृतमहाविद्यालयस्य, वाराणसेयसंस्कृतविश्वविद्यालयस्य पूर्वप्राध्यापकः )

/

अनन्तचतुर्दशी १९६६

# द्वितीयांशस्य विषयानुक्रमणिका

# अथ हलन्तपुंल्लिङ्गप्रकरणम् ।

हो ढः । [ ८-२-३१ ]

हस्य ढः स्याज्झलि पदान्ते च । 'हल्ङ्याप्–' इति सुलोपः । पदान्तत्वाद्धस्य ढः, **जश्त्वचर्त्वे**, लिट्, लिड् । लिहौ, लिहः । लिहम् । लिहौ, लिहः । लिहा, लिड्भ्याम् इत्यादि । लिट्त्सु लिट्सु ।

---

## अथ हलन्ताः पुंल्लिङ्गाः ।

वर्णसमाम्नायक्रमेण प्रथमं हान्तानाह—

**हो ढः** ( ८–२–३१ ) इति । ह इति षष्ठ्यन्तम्, पञ्चम्यन्तत्वेऽनन्वयापत्तेः । अत्र 'पदस्य' ( ८–१–१६ ), इत्यधिक्रियते, 'अपदान्तस्य मूर्द्धन्य इति वक्ष्यत्यतः प्राक् पदाधिकारः' इति भाष्यात् । 'झलो झलि' इत्यतो झलीति, 'स्कोः संयोगाद्योः' इत्यतोऽन्ते इति चानुवर्तते । झलि परे हस्य ढ इत्येकम् ।

पदान्ते विद्यमानस्य हस्य ढ इति द्वितीयं वाक्यम् । तत्र पदान्ते विद्यमानस्य हस्येत्यर्थे ( लिहौ ) इत्यादावपि ढत्वापत्तिः, पदान्तः पदचरमावयव 'हौ' इति तत्र हकारस्य विद्यमानत्वात् । अतः 'अन्ते' इति नानुवर्त्तनीयम् ह इति विशेषणम्, पदस्य इति विशेष्यम्, तदन्तविधौ हान्तस्य पदस्य ढ इत्येवार्थः । 'अलोऽन्त्यस्य' इति, 'निर्दिश्यमानस्य' इति च परिभाषया पदान्तस्य हस्य ढो भविष्यति ।

यद्वा अन्तशब्दोऽत्रावसानार्थकः, तथा चावसाने परे पदावयवस्य हस्य ढ इत्यर्थः । यद्वा अन्त इति षष्ठ्या विपरिणम्य पदान्ताभिन्नस्य हस्य ढ इत्यर्थः । ड एव तु प्रक्रियालाघवाय न विहितः, 'धुट्' इत्यादौ झषन्तत्वाभावेन भष्भावानापत्तेः ।

**लिडिति**—'लिह आस्वादने' इत्यतः 'लेढि' इति विग्रहे कर्तरि क्विप् प्रत्ययलक्षणेन कृदन्तत्वात्प्रातिपदिकत्वे सौ 'हल्ङ्याब्' इति सुलोपे प्रत्ययलक्षणेन पदत्वम् । तदाह—**पदान्तत्वादिति**—हस्य ढत्वे जश्त्वापवादत्वात् 'वाऽवसाने' इति चर्त्वेन टकारः । चर्त्वाभावे जश्त्वम् 'लिड्' इति । यत्तु प्रत्ययलक्षणेन झलि परतोऽपि ढत्वमिति तन्न, 'वर्णाश्रये प्रत्ययलक्षणन्न' इति प्रत्ययलक्षणनिषेधात् । **जश्त्वचर्त्वे इति**—पूर्वं चर्त्वं ततो जश्त्वम् । पदान्तचर्त्वस्य जश्त्वापवादत्वात् । **लिड्भ्यामिति**—अत्र झलि परे हस्य ढत्वम्, 'अन्तेऽवसाने परे' इत्यर्थे हान्तस्य पदस्याभावात् ।

**लिट्त्सु इति**—लिट् सु इति स्थितौ ढत्वम्, जश्त्वम्, 'खरि च' इत्यस्यासिद्धत्वात् 'डः सि धुट्' इति धुट् । धुटो धकारस्य पदान्तत्वाभावेन जश्त्वाभावे 'खरि च' इति तकारः । तस्य 'चयो द्वितीयाः' ( ८–३–४८ ) इति तु न, तद्दृष्ट्या 'खरि च' ( ८–४–५५ ) इत्यस्यासिद्धत्वेन चयोऽभावात् । तकारे परे डस्यापि चर्त्वेन टकारः । टस्यापि द्वितीयादेशो न, चर्त्वस्यासिद्धत्वात् । एवञ्च यत्र यत्र जश्त्वोत्तरं चर्त्वम् तत्र तत्र 'चयो द्वितीयाः' इति न, चर्त्वस्यासिद्धत्वेन चयोऽभावात् । एतत्फलितार्थमादायैव प्रातिशाख्ये **'उष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्'** इत्युक्तम् । एवञ्च यत्र जश्त्वचर्त्वे विनैव शर्परकश्रयः यथा 'सुगण्ट् षष्ठः' इत्यत्र । अत्र जश्त्व-चर्त्वदृष्ट्या टुकोऽसिद्धतया तयोरभावात् स्वत एव चयः सत्त्वाद् द्वितीयादेशो भवत्येव 'सुगण्ठ् षष्ठः' इति । अत्र तकारस्य ष्टुत्वमपि न, 'न पदान्तात्' इति निषेधात् । 'लिट्सु' अत्र टस्य ठो न डकारस्थाने जातस्य टस्यासिद्धत्वात् ।

दादेर्धातोर्घः । [ ८-२-३२ ]

उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम्—

---

दोग्धीति इत्यर्थे कर्तरि क्विप् 'धुक्' । न तु दोहनं धुगिति भावे सम्पदादिक्विबन्तस्य नित्यस्त्रीत्वात् ।

दादेर्धातोर्घः ( ८-२-३२ ) इति ।

'हो ढः' इत्यतो 'हः' इति, 'झलो झलि' इत्यतो झलि इति, 'स्कोः संयोगाद्योः' इत्यतोऽन्ते इति चानुवर्त्तते । पदस्येत्यधिकृतम् । अत्र शाब्दबोधप्रकारश्च 'हो ढः' इत्यत्रेव बोध्यः ।

अत्र दादिपदं लक्षणया औपदेशिकदादित्ववद्बोधकम् । तेन औपदेशिकदादित्ववतो धातोर्हस्य घत्वमित्यर्थः । एवञ्च 'दामलिट्' इत्यत्र घत्वाभावः सिध्यति ।

एतदर्थे मानञ्चैतत्सूत्रस्थं भाष्यमेव । तथा हि—'इह दोग्धा, दोग्धुम् इत्यत्र घत्वस्यासिद्धत्वाद् ढत्वं प्राप्नोति । नैष दोषः । उक्तमेतत् । अपवादो वचनप्रामाण्यादिति' इति । अयं भावो यदि घत्वस्यासिद्धत्वाद् ढत्वं स्यात्तर्हि घत्वविधानं व्यर्थं स्यादिति ज्ञापयति—यं प्रति यस्यापवादत्वं तं प्रति तस्यासिद्धत्वं न भवतीति । घत्वस्यासिद्धत्वाभावाद् ढत्वं न स्यात् । पुनर्भाष्यकृता समाधानान्तरमुक्तम् ।

'अथवा एवं वक्ष्यामि 'हो ढोऽदादेः' इति । हः ढो भवति अदादेः । ततो 'धातोर्घः' दादेरिति वर्तते । नेति निवृत्तम् ।' इति । अत्र न्यासे 'अदादेः' इत्युक्त्या दादेर्ढत्वं न स्यात् । नचैवं न्यासे 'धुक्' इत्यत्र 'वा द्रुह' इत्यनेन वैकल्पिकघत्वसिद्धावपि 'ध्रुट्' इति न सिध्येत् । 'अदादेः' इत्युक्त्या ढत्वाप्राप्तेरिति वाच्यम्, द्रुहेस्तु 'वा द्रुह' इत्यत्र वाग्रहणस्य समुच्चयार्थकत्वं स्वीकृत्य 'ढः' इत्यस्याप्यनुवृत्त्या घत्व-ढत्वोभयोर्विधानमिति भाष्याशयात् ।

अत्र न्यासे दादिषु ढत्वाप्राप्त्या 'धातोर्घः' इत्यस्य चारितार्थ्येन अदादौ धातावुभयोः प्राप्त्या ढत्वदृष्ट्या घत्वस्यासिद्धतया ढत्वसिद्ध्या तदनुवृत्तेर्दादिभिन्ने घत्ववारणरूपफलान्तराभावेन तदनुवृत्तिर्व्यर्था सती उपदेशवद्दादिलक्षिकेत्याशयकभाष्यमेव मानम् ।

नन्वेवमत्र न्यासे 'दामलिट्' इत्यत्रादादेरिति पर्युदासाड् ढत्वं न स्यादिति चेन्न, अर्थाधिकारानुरोधात् पूर्वत्र अदादेरित्यत्रापि दादिपदस्यौपदेशिकदादिपरत्वेन अनौपदेशिके दादौ 'दामलिट्' इत्यादौ ढत्वसिद्धौ बाधकाभावात् । एवञ्च भाष्यकृत्कृतन्यासपक्षेण सह फलैक्यायापवादपक्षेऽपि दादिपदस्य तदर्थकौचित्यादाह—उपदेशे इति ।

प्राञ्चस्तु उक्तभाष्यप्रामाण्यादेव 'धातोरित्यावर्त्तते । तत्रैकमतिरिच्यमानं 'धातोः' इति पदमुपदेशकालं लक्षयति इत्याशयेनाह—उपदेशे इति । न च 'दादेर्घः' इतीयता 'धुक्' इत्यादिसिद्धेः 'धातोः' इति सामर्थ्यादेव औपदेशिकदादेरित्यर्थः स्यादिति धातोरित्यस्यावृत्तिर्व्यर्थेति वाच्यम्, दाम, दामानं वा लेढीति इत्यर्थे कर्तृक्विबन्तदामलिट्शब्दे घत्ववारणाय धातोरित्यस्य चारितार्थ्येन तत्सामर्थ्येन औपदेशिकत्वार्थलाभ इत्याहुः । तन्न युक्तम्, आवर्तमानस्य धातोरित्यस्य औपदेशिकत्वार्थकस्य प्रत्यासत्त्या औपदेशिकस्य धातोरित्यर्थ एव स्यात् । तथा च दामलिहो व्यावृत्तावपि 'अधोक्' इत्यस्य संग्रहो न स्यात् । दादेर्दादेरित्यावृत्त्या तु उपदेशकालिकदादेरित्यर्थकेन तु दामलिडित्यस्य व्यावृत्तिः, 'अधोक्' इत्यस्य संग्रहश्च सिध्यति ।

वस्तुतस्तु भाष्ये 'धातोर्घः' इत्यत्र दादेरित्यस्यानुवृत्तिर्धातोरवयवो यो दादिरिति वैयधिकरण्येनान्वयलाभायैव, न त्वौपदेशिकत्वलाभाय । न चानुवृत्तिमकृत्वा वैयधिकरण्येनान्वयेऽपि 'अधोक्' इत्यादेः सिद्धावनुवृत्तिवैयर्थ्यम्, अर्थाधिकारानुरोधात्पूर्वत्रापि धातोरवयवो यो दादिस्तदवयवभिन्नस्यैव हस्य ढत्वमित्यर्थबोधनेन 'दामलिग्' इत्यस्यैवेष्टतया अनुवृत्तेश्चारितार्थ्यात् ।

अधोग् इत्यत्र यथा स्यात्, दामलिहमात्मन इच्छति दामलिह्यति, ततः क्विपि दामलिट्, अत्र मा भूत्।

*एकाचो बशो भष् झषन्तस्य स्ध्वोः।* [ ८-२-३७ ]

धातोरवयवो य एकाज् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे, ध्वशब्दे पदान्ते च। एकाचो धातोः-इति सामानाधिकरण्येनान्वये त्विह न स्याद्-गर्दभयति, ततः क्विप्, णिलोपः, गर्धप्। झलीति निवृत्तम्, स्ध्वोर्ग्रहणसामर्थ्यात्।

---

अत एव भाष्ये 'एवमपि घो दादेरित्युच्यते। तत्रेदं न सिध्यति-'अधोक्'। क्व तर्हि स्यात्? मा स्म धोक्, नैष दोषः। धातोरिति, न च दादिसमानाधिकरणा षष्ठी दादेर्धातोरिति। तर्हि? अवयवयोगे एषा षष्ठी 'धातोर्यो दादिरवयव इति' इति वैयधिकरण्येनान्वयद्वारा समाधानोक्तिः संगच्छते। दादिपदस्यौपदेशिकार्थत्वे तु सामानाधिकरण्यान्वयेनैव सिद्धेर्भाष्योक्तिरसङ्गता स्यात्। अत एवात्र धातोरित्यस्य सार्थकत्वम्। अन्यथा औपदेशिकदादित्वविशिष्टस्य धातोरेव सम्भवेन व्यभिचाराप्रसक्त्या धातोरित्यस्यात्र वैयर्थ्यमेव स्यादिति सुधीभिराकलनीयम्।

**अधोगिति**—न च 'अदोह्' इत्यत्र धातुत्वमिव दादित्वमपि यदागमपरिभाषया स्यादिति वाच्यम्, 'आने मुक्' इति सूत्रेण वर्णमात्रवृत्तिधर्मघटितधर्मानयने तदप्रवृत्तिज्ञापनात्। अत एव 'दिदीये' इत्यादौ यणादि न, 'जहार' इत्यादौ णल औकारादेशो न।

केचित्तु 'धातोर्दाद्धः' इति न्यस्यन्ति। गस्तु नोक्तः, भष्भावानापत्तेः—

**एकाचो बशो भष् झषन्तस्य स्ध्वोः** ( ८-२-३७ ) इति। स् च ध्व् चेति विग्रहे द्वन्द्वः 'स्ध्वोः' इति स्थानषष्ठी। धातोरित्यनुवृत्तमवयवावयविभावसम्बन्धेन एकाचि सम्बध्यते। धातोरवयवो य एकाजिति। एकाच इत्यवयवषष्ठी। एकोऽच् यस्य स एकाच् तस्यावयवावयविभावसम्बन्धेन बशि अन्वयः। झषन्तस्य इति अभेदेनैकाचो विशेषणम्।

**झलीति**, पदस्येति, अन्ते इति च सम्बध्यते, तदाह—**धातोरवयव** इत्यादीति। झष इत्यस्यैकाचि विशेषणतया तदन्तत्वे लब्धेऽन्तस्येति स्पष्टार्थम्। भष्पदाशक्तिकल्पनेन लाघवाद् 'झष् झषन्तस्य' इति नोक्तम्, मदोऽञ्भमाचष्टे 'मधोग्' इत्यादौ सयोगान्तलोपेन प्रयोगे झान्तासम्भवेऽपि 'एवमपि पञ्चागमास्त्रय आगमिनो वैषम्यात्संख्यातानुदेशो न प्राप्नोति। सन्तु तावद्येषामागमानामागमिनः सन्ति। मकारञकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः' इति 'ङमङ्णनम्' इति सूत्रभाष्योक्तरीत्या प्रातिपदिकसंख्यासाम्यमादाय परत्वादन्तरतमपरिभाषां बाधित्वा यथासंख्यशास्त्रप्रवृत्तौ 'गर्धव्' इत्यादौ मकारापत्तेः। अत एव 'भष् भषन्तस्य' इत्यपि नोक्तम्, स्थान्यादेशनिमित्तानां यथासंख्यविज्ञाने भान्तस्य यो बश् तस्य भः इत्यादिरूपेण सूत्रार्थपर्यवसाने 'गर्धव्' इत्यादेरसिद्ध्यापत्तेः।

**गर्धबिति**—'गर्द शब्दे' इत्यतः 'कृशृशलि' ( उ० ३ पा० १२२ सू० ) इत्यभच्प्रत्ययः। गर्दभो रासभः। एकाचो धातोर्झषन्तस्य, इति सामानाधिकरण्येनान्वये 'गर्दभ्' इति सुब्धातोरनेकाच्त्वाद्दकारस्य भष्भावो न स्यात्। 'धातोरवयवो य एकाज्झषन्तस्तस्य बशो भष्' इत्यर्थे तु 'दभ्' इत्यस्य तादृशत्वाद् भष्भावः सिध्यति।

अत्र प्राचीनैर्झलीत्यनुवर्त्तितं तदनुचितमित्याह—**झलीति निवृत्तमिति**। **सामर्थ्यादिति**—सकारे ध्वशब्दे च 'झलि परत एव भष्भावे सिद्धे स्ध्वोर्ग्रहणस्य वैयर्थ्यापत्तेरित्यर्थः। न च 'बुबुधिध्वे' इत्यादावप्रवृत्तये झलाद्योः स्ध्वोरित्यर्थलाभार्थं तत् हलन्तस्य 'ध्व्' इत्यस्य निमित्तत्वेन इटि ध्वपरत्वाभावेन भष्भावाप्राप्तेः। इडागमस्तु प्रत्ययस्य न ध्व्-शब्दस्येति यदागमन्यायस्य न विषयः।

**झलीति निवृत्तमिति**—अत्र सूत्रे झलीति निवृत्तमिति नार्थः, 'दधस्तथोश्च' ( ८-२-३८ ) सूत्रे भाष्ये 'तथोश्चापि ग्रहणं शक्यमकर्तुम्। कथम्? झलि झषन्तस्येत्युच्यते। तथोश्चापि झलि

तेनेह न—दुग्धम्, दोग्धा। व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः, जश्त्वचर्त्वे धुक्, धुग्। दुहौ, दुहः। षत्वचर्त्वे धुक्षु।

*वा द्रुहमुहष्णुहष्णिहाम्। [ ८-२-३३ ]*

एषां हस्य वा घः स्याज्झलि पदान्ते च।

---

झषन्तो भवति नान्यत्र' इति भाष्योक्तेरसङ्गत्यापत्तेः। न च मण्डूकानुवृत्तिः, धाराप्रवाहसम्भवे तदनौचित्यात्। ततश्च 'झलि' इत्यस्योत्तरार्थमनुवृत्तावपि इति—अस्य सूत्रस्य, झलि परे निवृत्तिः, स्ध्वोर्ग्रहणसामर्थ्यात् झलादौ प्रत्यये परे इत्यर्थेनैव सिद्धेः स्ध्वघटितयोरपि प्रत्ययत्वात्, प्रत्ययैकदेशस्यापि प्रत्ययत्वे स्ध्वोरपि प्रत्ययत्वाच्च। तेनेति—झलि अस्य सूत्रस्य निवर्त्तनेनेत्यर्थः। दुग्धमिति—दुह्यते यत्तद् दुग्धम्। गोरपादानत्वविवक्षायां पयोरूपे कर्मणि क्तः। एतेन 'गौणे कर्मणि दुह्यादेः' इत्यनेन न विरोधः, एकस्यैव कर्मणः सत्त्वात्। दोग्धेति—'दुह प्रपूरणे' इत्यतः कर्तरि तृन् तृज् वा, दोहनकर्तेत्यर्थः।

ननु दुहेः क्विबन्तात्सोर्लोपे घत्वे च 'दुघ्' इत्येकाज् धातुरेव न तु धात्ववयव इति कथमत्र भष्भावोऽत आह—व्यपदेशिवद्भावेनेति—विशिष्टः = मुख्यः अपदेशः=व्यवहारः—मुख्यव्यवहारः। 'गर्दभ्' इत्यत्र धातुर्गर्दभ् इति, तदवयव एकाच् 'दभ्' इति। अत्र धात्ववयवो य एकाच् इति मुख्यव्यवहारी 'दभ्' इति तेन तुल्यम् धातावपि एकाचि व्यवहारः कर्तव्य इत्यर्थः। यथा एकस्मिन्नपि पुत्रे ज्येष्ठत्वादिव्यवहारः। अयमेव ज्येष्ठः, मध्यमः, कनिष्ठ इति व्यवहरन्ति पित्रादयः।

तदुक्तम् भाष्ये 'व्यपदेशिवदेकस्मिन्' इति। एकस्मिन्=अमुख्यव्यवहारिणि। अर्थात् अवयविन्यपि स्वावयवव्यवहारो भवति। प्रकृते 'दुघ्' रूपे धातावपि धात्ववयवैकाच्त्वव्यवहारः स्यादिति भष्भावः सिध्यति। 'ओः सुपि' इत्यादिज्ञापकात् क्विबन्तादयो धातुत्वं न जहति। नच धातुत्वे प्रातिपदिकत्वानापत्तिः, अधातुरिति, अप्रत्ययान्त इति पर्युदासबाधनायैव कृदन्तस्य 'कृत्तद्धित' इति सूत्रेण प्रातिपादिकसंज्ञाविधानात्। धुगिति—'अत्वसन्तस्य' इति सूत्रे 'अधातोः' इति पर्युदासेन कारकप्रधानभूतक्रियावाचकस्यापि धातुत्वाद् क्विपः प्राक् प्रवृत्ताया धातुसंज्ञाया अनपायाच्चात्र धातुत्वम्।

ननु 'धातोरुच्यमानं कार्यं तत्प्रत्यये भवति' अत एव 'कंसपरिमृड्भ्याम्' इत्यादौ 'मृजेर्वृद्धिः' इति वृद्धिर्न ( तत्प्रत्यये = धातोरित्यधिकृत्य विहितप्रत्यये ) इति वाच्यम्, अस्य पदान्तनिमित्तकत्वेन प्रत्ययनिमित्तकत्वाभावात्। अत एव 'अप्रशान्' इति चरितार्थम्। अन्यथा 'मो नो धातोः' इत्यस्यापि धातुविहितप्रत्यये एव प्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेव।

षत्वचर्त्वे इति—जश्त्व-षत्वदृष्टया 'खरि च' इत्यस्यासिद्धतया जश्त्वे षत्वे च कृते चर्त्वमिति भावः। द्रुह जिघांसायाम्, मुह वैचित्त्ये, ष्णुह उद्गिरणे, ष्णिह प्रीतौ, एभ्यः क्विबन्तेभ्यः सोर्लोपे द्रुहेर्दादित्वाद् नित्यं घत्वे प्राप्ते, इतरेषु नित्यं ढत्वे प्राप्ते विकल्पेन घत्वं विधीयते। उभयत्रविभाषेयम्। 'वा द्रुह-मुह-ष्णुह-ष्णिहाम्'—( ८-२-३३ ) इति दादेरित्यतो घ इति, धातोरिति, झलीति, अन्ते इति हस्य इति च पूर्ववदनुवर्तते। पदस्येति चाधिकृतं तदाह—एषामित्यादि।

ननु द्रुहादयोऽनेनैव क्रमेण दिवादिषु पठ्यन्ते, ततश्च 'वा द्रुहादीनाम्' इत्येव सूत्रमस्तु, दिवाद्यन्तर्गणस्थपुषादेस्तदन्तर्गणे रधादिरिव, रधाद्यन्तर्गणे द्रुहादिरस्तु इति चेन्न, गणेन निर्देशे यङ्लुक्यप्रवृत्त्यापत्तेः, 'निर्दिष्टं यद्गणेन च' इति निषेधात्। तथा च दोध्रुक्, दोध्रुट्, इत्यादि न सिध्येत्।

वस्तुतस्तु एकाज्ग्रहणेऽपि 'अजर्घाः' इति भाष्योदाहरणे भष्भावदर्शनेनास्यानित्यत्वात्, नागेशमते भाष्यानुक्तत्वेनास्याभावाच्च न कोऽपि दोषः। श्तिपा शपाऽनुबन्धेन निर्देशस्तु लाघवात्

पक्षे ढः। घुक्, घुग्, घुट्, घुड्। दुहौ, दुहः। घुग्भ्याम्, घुड्भ्याम्। घुक्षु, घुट्त्सु, घुट्सु। एवं मुहष्णुहष्णिहाम्।

*इग् यणः संप्रसारणम्* [ १-१-४५ ]

---

स्तिबादिना विनापि निर्देशसम्भवे स्पष्टप्रतिपत्तये क्वचिद् गुरुभूतशब्दोच्चारणमपि साध्वेतदर्थ-द्योतनाय।

घत्वे ढत्वे च कृते भष्भावे जश्त्वे च चर्त्वविकल्पे आह—**घुक्, घुग् इति, घुट्, घुड्** इति च। **घुग्भ्यामिति**—घत्वपक्षे भष्भावो जश्त्वञ्च। **घुड्भ्यामिति**—ढत्वपक्षे भष्भावो जश्त्वञ्च। **घुक्ष्विति**—घत्वे भष्भावे जश्त्वे 'आदेशप्रत्यययोः' इति षत्वे 'खरि च' इति चर्त्वे रूपम्। **घुट्त्सु इति**—ढत्वे भष्भावे जश्त्वे धुटि धस्य चर्त्वे डस्य चर्त्वम्। चर्त्वस्यासिद्धत्वात् 'चयो द्वितीयाः' इति तस्य थो न, 'न पदान्तात्' इति निषेधात् ष्टुत्वं न। **घुट्स्विति**—धुडभावे रूपम्। **एवमिति**—भष्भाववर्जं सर्वं कार्यं पूर्ववत्।

विश्वम् = संसारं वहतीति—**विश्ववाट्**—वहतेः 'भजो ण्विः' ( ३-२-६२ ) इत्यतो ण्विरित्यनुवर्त्तमाने 'वहश्च' ( ३-२-६४ ) इति ण्विः। णस्येत्त्वे वेर्लोपः। अत उपधाया इति वृद्धिः। उपपदसमासः। ततः सुट्प्रत्यये रूपाणि सुगमत्वादुपेक्ष्य शसादावचि सम्प्रसारणादिकार्यं वक्ष्यन् सम्प्रसारणसंज्ञामाह—

**इग्यणः सम्प्रसारणम्** ( १-१-४४ ) इति। **यणः स्थाने इति**—'इग्यो यणः स्थाने वर्णः स सम्प्रसारणसंज्ञो भवतीति, इति भाष्यव्याख्यानात्स्थाने इत्यर्थलाभः। न च 'षष्ठी स्थानेयोगा' इति परिभाषया स्थानपदार्थलाभः, एतत्परिभाषाया भाष्ये प्रत्याख्यानात्, 'निर्दिश्यमानस्यादेशा भवन्ति' एतदर्थलाभमात्रफलकत्वाच्च। तदुक्तंभाष्ये 'तस्मान्नार्थोऽनेन नियमेन। व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति। स्थाने इति व्याख्यास्यामः। वक्तव्यश्च किं प्रयोजनम्? षष्ठ्यन्तं स्थानेन यथा युज्येत। यतः षष्ठ्युच्चारिता। किं कृतं भवति? निर्दिश्यमानस्यादेशा भवन्ति, इत्येषा परिभाषा न कर्तव्या भवति' इति।

ननु यणः स्थाने य इक् स सम्प्रसारणसंज्ञ इत्युच्यते। एवञ्च स्वज्ञप्त्यधीनज्ञप्तिकत्व-स्वोत्पत्त्यधीनोत्पत्तिकत्वैतदन्यतरसम्बन्धेन स्वविशिष्टत्वरूपान्योन्याश्रयदोष आपतति। सम्प्रसारणपद-शक्तिज्ञाने जाते 'ष्यङः सम्प्रसारणम्' इत्यस्य वाक्यार्थबोधः। ततश्च यणः स्थाने इगादेशः। यदा यणः स्थाने इगादेश उपलभ्येत तदा सम्प्रसारणसंज्ञा इतीतरेतराश्रयसत्त्वात् संज्ञाशास्त्रस्य विधिशास्त्रस्य च वाक्यार्थबोधो न स्यादिति चेन्न।

एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते। तद्यथा कश्चित् कञ्चित् तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वय' इति। स पश्यति—'यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाऽभिप्रेता' इति। एवमिहापि—स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा संज्ञा भविष्यति इति भाष्यकृतैव समाहितत्वात्। तेन दिव उतो न सम्प्रसारणसंज्ञा।

नन्वेवमपि 'अदुहितराम्' इत्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणत्वाद् 'हलः' इति दीर्घापत्तिः। न च यथासंख्यसम्बन्धाददोषः, 'लृकारोपदेशः किमर्थः' इति भाष्यविरोधादिति चेन्न, विधिप्रदेशे 'यण इक्' इत्येव सिद्धे संज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणात्।

न च यदा तेन ( 'इग्यणः' इत्यनेन ) संज्ञा तदा तद्भावितत्वम्, यदा च तद्भावितत्वं तदा तेन संज्ञेत्यन्योन्याश्रयस्तदवस्थ एवेति वाच्यम्, सम्प्रसारणपदस्य सम्प्रसारणपदप्रयोज्यविधेयताश्रये, यण्स्थानिकेक्त्वावच्छिन्ने च 'एकवृन्तगतफलद्वय' न्यायेन खण्डशः शक्तिस्वीकारेण यत्र सम्प्रसारण-पदं विधेयताप्रयोजकं यथा 'वसोः सम्प्रसारणम्' इत्यादौ तत्र 'भूमौ पङ्कजमुत्पन्नम्' इतिवत्

यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ।

*वाह ऊठ्* । [ ६-४-१३२ ]

भस्य वाहः संप्रसारणमूठ् स्यात् ।

*संप्रसारणाच्च* । [ ६-१-१०८ ]

संप्रसारणादचि पूर्वरूपमेकादेशः स्यात् । 'एत्येधत्यूठ्सु' विश्वौहः । विश्वौहेत्यादि ।

---

सम्प्रसारणपदप्रयोज्यविधेयताश्रयांशस्य मोषेण यण्स्थानिकेक्त्वावच्छिन्नमात्रस्योपस्थित्या सम्प्रसारण-शब्देन जातत्वज्ञानमन्तरापि यण्स्थानिकेक्त्वावच्छिन्नविषयकशाक्तिज्ञानस्य 'इग्यणः सम्प्रसारणम्' इत्यनेन बोधनसम्भवात् ।

यत्रोद्देश्यदले प्रविष्टं सम्प्रसारणपदं तत्र तूभयांशोपस्थित्या 'द्युभ्याम्' इत्यादौ 'हलः' इति दीर्घो न । सम्प्रसारणपदप्रयोज्यत्वोपलक्षितयण्स्थानिकेक्त्वावच्छिन्ने शक्तिबोधनाद्वाऽदोष इति सुधियो विभावयन्तु ।

**सम्प्रसारणसंज्ञ इति**—सम्प्रसारणसंज्ञया यणः स्थाने इक् इत्यस्य उपस्थितिः । तत्रान्तर-तम्यादाद्यस्य इकारः, वस्य उकारः, रेफस्य ऋकारः, लकारस्य लृकार आदेशः । लकारस्य सम्प्रसारण-विधायकाभावाद्वस्तुस्थितिमात्रप्रदर्शनम् । यत्तु सम्प्रसारणसंज्ञाभावे सम्प्रसारणशब्दस्थाने 'यण इक्' इति पठितव्यमिति तन्न, तथा सति 'हलः' इत्यादौ अङ्गावयवाद्धलः परस्य यण्स्थानिकस्य इको दीर्घ इत्यर्थे 'अदुहितराम्' इत्यादौ दीर्घापत्तेः ।

यदि तु अनुवादेऽपि परिभाषाणां प्रवृत्त्या 'स्थानेऽन्तरतमः' इति परिभाषया यण्स्थानिकस्य इक इत्यस्य यस्थानिकस्य इकारस्य, वस्थानिकस्य उकारस्य, रस्थानिकस्य ऋकारस्य, लृस्थानिकस्य लस्य-इत्येवंरूपेण व्याख्यानं तदा 'यण इक्' इति पाठेऽपि न दोषः । **वाह ऊठ्** ( ६-४-१३२ ) इति । अत्र 'अस्य' इति 'अङ्गस्य' इति चाधिक्रियते । 'वसोः सम्प्रसारणम्' इत्यतः 'सम्प्रसारणम्' इत्यनुवर्तते । तच्च ऊठि अभेदेनान्वेति—तदाह—**भस्य** इत्यादि । अत्र वाह इति भस्येत्यस्य विशेषणम् । तदन्तविधिः । तथा च वाहन्तस्य भस्याङ्गस्यावयवो यो निर्दिश्यमानो वाह् तस्य यणः स्थाने इग्भवतीत्यर्थः । यथाश्रुते तु 'विश्वौहः' इत्यादौ भस्य वाहोऽभावात् सम्प्रसारणं न स्यात् ।

अत्र सूत्रे 'ऊठ्' इत्येव पाठः । अत एव 'ऊडादिः कस्मान्न भवति ? आदिष्टिद्भवतीत्यादिः प्राप्नोति' इत्याशङ्क्य 'सम्प्रसारणमित्यनेन यणः स्थाने क्रियते' इति भाष्योक्तिः, 'च्छ्वोः शूड्' इति भाष्ये च 'तत्रोभयोश्चत्त्वे कृते आश्रयात्सिद्धत्वं भविष्यति' इति च भाष्योक्तिः सङ्गच्छते ।

ननु वाहन्तस्य भस्य ऊठ् संप्रसारणमित्युक्तौ भस्यावयवो यो यण् तस्य स्थाने स्यात् । ततश्च विश्वघटकवकारस्यापि प्राप्नोतीति चेन्न, 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायात् श्रुतस्य वाह एव यणो ग्रहणात् । तेन वाहो यो यण् वकारस्तस्यैव ऊठ् इति सिद्धम् । सम्प्रसारण-मूडित्युक्तेरेव 'अलोऽन्त्यस्य' इत्यस्य नोपस्थितिः, अन्त्यस्यालो हकारस्य ऊडादेशे यण्स्थानि-कत्वाभावेन सम्प्रसारणत्वापत्तेः । ह्रस्व उठ् तु न कृतः, 'विश्वौहः' इत्यादौ 'एत्येधत्यूठ्सु' इति वृद्ध्यनापत्तेः । तत्रापि ह्रस्वकरणे 'जनौः' इत्यत्र वृद्ध्यनापत्तिः । 'च्छ्वोः शूट्' इत्यत्रापि ह्रस्वकरणे 'अक्षद्यूः' इति दीर्घासिद्धिः । 'हलः' इति दीर्घस्तु न, असम्प्रसारणत्वात् । 'विश्व ऊ आह् अस्' इति स्थितौ—**सम्प्रसारणाच्च** ( ६-१-१०८ ) । इति ।

'इको यणचि' इत्यतोऽचीति, 'अमि पूर्वः' इत्यतः पूर्व इति चानुवर्त्तते । 'एकः पूर्वपरयोः' इत्यधिक्रियते । तदाह—**सम्प्रसारणादचीत्यादि** ।

ननु 'साच इग्यणः सम्प्रसारणम्' इति न्यस्यताम्—अज्विशिष्टस्य यणः स्थाने प्रयुज्यमान इक् संप्रसारणसंज्ञ इत्यर्थः । न च गौरवम्, 'सम्प्रसारणाच्च' इति पूर्वरूपविधायकशास्त्राकरणेन लाघवादिति चेन्न । विद्वांसमाचष्टे 'विदावयति' इत्यत्र इष्टवद्भावेन नित्यत्वात् टिलोपे साच्य-

छन्दस्येव ण्विः—इति पक्षे णिजन्ताद्विच् ।

णोऽभावेन सम्प्रसारणानापत्तेः । यदि तु टिलोपस्याभीयत्वेनासिद्धतया साचो यणः सत्त्वाद्दोषाभाव इत्युच्यते तदा 'शुनः' इत्यत्र श्वन्शब्दस्यान्तोदात्ततया वकारस्य स्वसवर्णोऽनुदात्तोकारे सम्प्रसारणे पूर्वरूपे 'एकादेश उदात्तेनोदात्तः' इत्युदात्तस्योकारस्य श्रवणं भवति । साचः सम्प्रसारणे तु अनुदात्तोदात्तयुक्तवकाराकारयोः सम्प्रसारणेऽन्तरतमस्य स्वरितस्यापत्तिः ।

किञ्च अच्साहित्यं स्वाव्यवहितपूर्वत्वसम्बन्धेन स्वाव्यवहितोत्तरत्वसम्बन्धेनापि विनिगमनाविरहेण स्यात्तया च घकाराकारविशिष्टस्य वकारस्य सम्प्रसारणे 'मघोनः' इत्यस्यासिद्धयापत्तिरिति, तस्मात् 'साच इग्यणः सम्प्रसारणम्' इति न्यासो न युक्तः ।

सम्प्रसारणविशिष्टेऽचि परे पूर्वरूपम् इत्यर्थः । वै० स्वाव्यवहितोत्तरत्व-स्वस्थानियणव्यवहितोत्तरत्वेन दृष्टत्वैतदुभयसम्बन्धेन । तेन 'सुध्युपास्यः, सुधियौ, सुधियोः पुत्रः' इत्यादिषु न दोषः । 'समानाङ्गग्रहणं कर्त्तव्यम्' इति, 'सिद्धमसम्प्रसारणत्वात्' इति च वार्तिकमत्रैवार्थे तात्पर्य्यग्राहकम् ।

छन्दस्येवेति—'वहश्च' (३-२-६४) इति सूत्रे 'भजो ण्विः' ( ३-२-६२ ) 'छन्दसि सहः' ( ३-२-६३ ) इत्यतो ण्विप्रत्ययस्य, छन्दसीत्यस्य चानुवृत्तेरिति भावः । वस्तुतस्तु 'वहश्च' इत्यत्र छन्दोग्रहणं नानुवर्त्तते, 'विभाषा पूर्वाह्ण' ( ४-३-२४ ) इति सूत्रे भाष्ये 'प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्' इति लौकिकप्रयोगदर्शनात् । णिजन्ताद्विजिति—ण्यन्ताद्विजन्तेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते, न त्वस्य ऊट्, णिलोपस्य स्थानिवत्त्वात् । अङ्गभसंज्ञाऽऽक्षिप्तप्रत्ययाव्यवहितपूर्वस्यैव वाह ऊड्विधानात् । विज्ग्रहणं क्विपोऽप्युपलक्षणम् । न च क्विपि 'वचिस्वपि' इति सम्प्रसारणापत्तिः, वच्यादिभ्यो विहिते किति परे सम्प्रसारणमिति व्याख्यानस्य 'अचः परस्मिन्' इति सूत्रे 'काम्यच्' सूत्रे च भाष्ये उक्तत्त्वेन ण्यन्ताद्विहिते क्वौ सम्प्रसारणाप्राप्तेः ।

न च 'क्वौ विधिं प्रति न स्थानिवत्' इति निषेधः, प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव तत्र ग्रहणात् । तेन काम्यच्सूत्रोक्तविहितविशेषणपक्षतदितरपक्षयोर्न विरोधः । भाष्ये हि 'काम्यचः ककारस्येत्त्वं कस्मान्न, नच फलाभावः, 'उपयट् काम्यति' इत्यत्र किति सम्प्रसारणरूपफलस्य सत्त्वात्' इत्याशङ्क्य यजादिभ्यो विहिते किति सम्प्रसारणमयं सुबन्ताद्विहित इति समाधाय, अथापि कथञ्चिदित्कार्यं ( किति परे सम्प्रसारणम् ) स्यादेवमपि न दोषः, संहितापाठे 'सुप आत्मनः क्यच्काम्यच्च' इति चकारादिः काम्यच् 'चुटू' इति चस्येत्त्वम् इति ककारस्य प्रत्ययादित्वाभावान्नेत्त्वम् इति पक्षान्तरमुक्तम् ।

यदि क्विशब्दमुच्चार्य्य इत्यर्थो न स्यात्तदा प्रकृते किन्निमित्तकसंप्रसारणे कर्त्तव्ये 'विश्ववाट्' इत्यत्र णिलोपस्य स्थानिवत्त्वनिषेधात् संप्रसारणम् । वच्यादिभ्यो विहिते किति सम्प्रसारणमिति पक्षे तु सम्प्रसारणं न प्राप्नोतीति फलभेदाद् भाष्यासङ्गतिः स्यात् । क्विशब्दमुच्चार्य विधावेव निषेधस्वीकारे तु न फलभेदः, सम्प्रसारणस्य क्विशब्दमुच्चार्य विहितत्वाभावेन उभयपक्षे णिलोपस्य स्थानिवत्त्वात्संप्रसारणाप्राप्तेः । यदि 'क्वौ लुप्तं न स्थानिवत्' इत्याश्रीयेत तदा ण्यन्तात् क्विप्यपि 'विश्वौहः' इत्यादिरूपम् ।

ननु संज्ञाशास्त्राणां पदैकवाक्यतया अभावेन सम्प्रसारणस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभावेन ण्यन्तनिष्पन्नविश्ववाट्शब्देऽपि सम्प्रसारणं दुर्वारमिति चेन्न, भसंज्ञायां कर्तव्यायां स्थानिवत्त्वस्य दुर्वारत्वेन भत्वाप्राप्त्या ऊठोऽभावे एव तात्पर्यात् ।

ननु 'वाहः' इत्येव सूत्रमस्तु सम्प्रसारणमात्रं विधीयताम् । 'विश्व उह् अस्' इत्यत्र प्रत्ययलक्षणेन ण्विप्रत्ययमार्द्धधातुकमादाय 'पुगन्त' इति गुणे 'वृद्धिरेचि' इति वृद्धौ 'विश्वौहः' इत्यादीनां सिद्धिः स्यात् इति चेत्सत्यम्, इदमेव ऊड्ग्रहणं व्यर्थीभूय ज्ञापयति—'असिद्धं बहिरङ्गमन्तरङ्गे' इति । ततश्च यजादिप्रत्ययनिमित्तकभसंज्ञाश्रयत्वाद्बहिरङ्गस्य जातस्य सम्प्रसारणस्यान्तरङ्गगुणे कर्तव्येऽसिद्धतया गुणो न स्यादत ऊड्ग्रहणम् ।

चतुरनडुहोरामुदात्तः। [ ७-१-९८ ]

**अनयोराम् स्यात्सर्वनामस्थाने परे, स चोदात्तः।**

सावनडुहः। [ ७-१-८२ ]

**अस्य नुम् स्यात्सौ परे। 'आत्' इत्यधिकारादवर्णात्परोऽयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते। अमा च नुम् न बाध्यते। सोर्लोपः।**

---

ऊठि तु 'एत्यधत्यूठ्सु' इति वृद्धया रूपसिद्धिः। वृद्धौ ऊठोऽसिद्धत्वं तु न, ऊड्ग्रहणसामर्थ्यात्। परिभाषाफलं तु 'पचावेदम्' 'पचामेदम्' इत्यादौ पदद्वयनिमित्तकत्वेन बहिरङ्गलक्षणस्यासिद्धतया अन्तरङ्गलक्षणम् 'एत ऐ' (३-४-९३) इत्यैत्वं न। तदुक्तं भाष्ये 'एवं तर्हि सिद्धे सति यदाह ऊठं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा—'असिद्धं। बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति। किमेतस्य ज्ञापने प्रयोजनम्? पचावेदम्, पचामेदम्। असिद्धत्वाद्बहिरङ्गलक्षणस्यादगुणस्यान्तरङ्गलक्षणमैत्वं न' इति। न च 'प्रौहः' इत्यस्य सिद्धयर्थमूड्ग्रहणम्। अत्र गुणे 'एङि पररूपम्' इति वृद्धेरपवादत्वात्पररूपापत्तिः। किञ्च वारिवाट्शब्दाद् 'वार्य्यूहः' इत्यादिसिद्धयर्थमूड्ग्रहणमिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्याद् अकरान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वा हेर्वा ण्वि-क्विब्-विजादयोऽनभिधानान्न भवन्तीति।

**चतुरनडुहोरामुदात्तः** ( ६-१-१०८ ) इति। अनः=शकटं वहतीत्यर्थे 'अनसि वहेः क्विप् अनसो डश्च' ( उ० ) इति क्विपि डादेशे वहेः सम्प्रसारणे 'अनड्वह्' इति। ततः सौ 'चतुरनडुहोरामुदात्तः' अत्र 'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' अनुवर्त्तते। आमि मकार इत् 'मिदचोऽन्त्यात्' इत्युकारात्परः आम्, उकारस्य यणि 'अनड्वाह्स्' इति जाते—

**सावनडुहः** ( ७-१-८२ ) इति। **अस्येति**—अनडुत्शब्दस्येत्यर्थः। **नुम् स्यादिति**—'आच्छीनद्योर्नुम्' इत्यतो नुमित्यनुवृत्तेः। नुमि मकार इत् उकार उच्चारणार्थ इति दीक्षिताः। उच्चारणार्थ इत्यस्योच्चारणे सहायमात्रफलकः। उच्चारणार्थकस्यापि विधेयविषये इत्संज्ञालोपाभ्यामपहार इति नागेशाः। मित्त्वादन्त्यादचः परो नकारः। अत्र नुमनवकाशः, आम् तु सुभिन्ने सुटि चरितार्थः। ततश्चानवकाशत्वान्नुमामं बाधेतेति चेन्न, 'आच्छीनद्योर्नुम्' इत्यत आदित्यनुवृत्त्या अनडुहोऽचां मध्ये अन्त्योऽवर्णस्ततः परो नुम् भवतीत्यर्थेन आमं विना अन्त्याकारासम्भवेन नुमं प्रति आमुपजीव्यः। नुमुपजीवक इति आमि सत्येव नुमः प्राप्तिरित्यनवकाशत्वेऽपि आमः पूर्वं न नुमः प्राप्तिरिति आमं कृत्वा नुमि, एवम् 'हे अनडुह् स्' इत्यत्र अपवादत्वेनामं बाधित्वा अम् प्राप्नोति, नुम् च प्राप्नोति। ततश्च नुमः सम्बुद्धिभिन्ने सौ चरितार्थत्वान्न निरवकाशता, 'अम् सम्बुद्धौ' इति तु सम्बुद्धावेव प्रवर्त्तते न त्वसम्बुद्धौ इति निरवकाशत्वादाम इव नुमोप्यपवादः स्यादिति चेन्न, 'सावनडुहः' इति सूत्रे 'आत्' इत्यनुवर्त्तते। तथा च नुमो मित्त्वेन 'मिदचोऽन्त्यात्' इति परिभाषोपस्थित्या अनडुहोऽचां मध्येऽन्त्यो योऽवर्णस्तस्मात्परो नुम् भवतीत्यर्थस्याधुनैव उक्ततया सम्बुद्धौ अमागमं विना अनडुहोऽचां मध्ये अवर्णत्यान्त्यत्वममि सत्येव स्यात् नान्यथेति अमागमे कृते नुम्। अम् नुम उपजीव्यः ( नुम आश्रयभूतः ) नुम् तूपजीवकः ( आश्रितः ) इति अम् नुममुपजीवयति। इति नुम् न बाध्यते अमा तदाह—

**विशेषविहितेनेति** 'चतुरनडुहोः' इत्याम् सर्वनामस्थाने विहितत्वात् 'सावनडुहः' इत्यपेक्षया बहुलक्ष्यव्यापकत्वेन सामान्यम् 'बहुलक्ष्यव्यापकं सामान्यम्' इत्युक्तेः। 'सावनडुहः' इति तु सावेव प्रवृत्त्या अल्पलक्ष्यव्यापकत्वेन विशेषः 'अल्पव्यापको विशेषः' इत्युक्तेः। एवम् 'सावनडुहः' इति सम्बुद्धौ सौ असम्बुद्धौ च सौ उभयत्र प्राप्त्या 'अम् सम्बुद्धौ' इत्यपेक्षयाऽधिकदेशव्यापकत्वेन सामान्यम्। 'अम् सम्बुद्धौ' इति तु सम्बुद्धौ सावेव प्राप्त्या अल्पदेश ( लक्ष्य ) व्यापकत्वेन विशेषः। एवमन्यत्रापि बोध्यम्। अमा च नुम् न बाध्यते इति। एतेन आदित्यनुवृत्तावपि अमोऽभावेऽपि

नुम्विधिसामर्थ्याद् 'वसुस्रंसु-' इति दत्वं न। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। अनड्वान्।

*अम् संबुद्धौ।* [ ७-१-९९ ]

चतुरनडुहोरम् स्यात्संबुद्धौ। आमोऽपवादः।

---

अनडुह अकारात्परो नुम् इत्यर्थे अनडुहो नकारोत्तरस्य अकारस्य सत्त्वेन नुम् स्यादित्यपास्तम्, नकारोत्तराकारस्याचामन्त्यत्त्वाभावात्। 'अनड्वान् ह् स् इति स्थितौ, हल्ङ्याब्' इति सुलोपे हस्य 'संयोगान्तस्य' ( ८-२-२३ ) इति लोपे च नुमो नकारस्य पदान्तत्वात् 'वसुस्रंसु' इति दत्वं स्यादत आह—

**नुम्विधिसामर्थ्यादिति**—यदि नुमो नकारस्य दत्वं स्यात्तदा 'अनड्वाद्' इत्येव स्यात्। तथा च नुम्विधानाभावेऽपि हस्य संयोगान्तत्वाभावेन लोपाप्राप्त्या हस्य दत्वे 'अनड्वाद्' इति स्यादेवेति नुम्विधानं व्यर्थं स्यादतो नुम्विधानसमर्थ्याद् दत्वं नेत्यर्थः। नन्वेवमपि 'अनड्वान्' इत्यत्र 'न लोपः प्रातिपदिकान्तस्य' ( ८-२-७ ) इति नलोपः कुतो न। न च नुम्विधिसामर्थ्यादेव लोपाभावः, सम्बुद्धौ 'न ङिसम्बुद्ध्योः' इति निषेधेन लोपाभावे नुमश्चारितार्थ्यादत आह— **संयोगान्तलोपस्येति**-'संयोगान्तस्य लोपः' (८-२-२३) इत्यस्य 'न लोपः' इति सूत्रदृष्ट्या असिद्धतया नस्य प्रातिपदिकान्तत्वपदान्तत्वयोरभावान्नलोपो नेत्यर्थः। 'हे अनडुह् स्' इत्यत्र 'चतुरनडुहोराम्' इति प्राप्ते तदपवादमाह—

**'अम् सम्बुद्धौ'** ( ७-१-९९ ) इति। 'चतुरनडुहोराम्' इत्यतश्चतुरनुडुहोरित्यनुवर्त्तते। तदाह—**चतुरनडुहोरिति। आमोऽपवाद इति**—आमोऽप्रातियोग्ये, लक्ष्ये 'अम् सम्बुद्धौ' इत्यस्य चरितार्थत्वादित्यर्थः। आम् तु अमोऽप्रवृत्तियोग्ये सम्बुद्धिभिन्ने चरितार्थः। 'निरवकाशो विधिरपवादः' इति न्यायेन विशेषविहितोऽम् सामान्यविहितस्य आमोऽपवादो निरवकाशत्वात्। **'हे अनड्वन्' इति**—'अनडुह् सु' इति दशायाम् मित्त्वादुकारात्परोऽमागमः। अकारात्परो नुम् यण् च। 'हल्ङ्याब्' इति सुलोपे 'संयोगान्तस्य' इति लोपे 'हे अनड्वन्' इति। अत्र नलोपो न, संयोगान्तलोपस्यासिद्धत्त्वेन पदान्तनकाराभावात्।

ननु स्रंसुध्वंसुभ्यां क्विपि सोर्हल्ङ्यादिलोपे सस्य संयोगान्तलोपे, 'स्रन्, ध्वन्' इत्यत्र व्यभिचार इति सान्तस्येति तत्रापि विशेषणमस्त्विति चेन्न, भाष्ये सस्याननुवृत्तौ 'पपिवान्' इत्यत्रैव दोषदानेन तयोरनभिधानात्।

नच 'नचोदाहरणमादरणीयम्' इति भाष्येण 'पपिवान्' इति 'स्रन्' इत्यादेरप्युपलक्षणम्, भाष्ये अनुवृत्तौ च 'अनडुद्भ्याम्' इत्यत्र सर्वेषां विशेषणत्वाभिप्रायेण प्रथमोपस्थितौ 'स्रन्भ्याम्' इत्यत्र दूषणमनाशङ्क्याग्रिमे दोषदानेनानभिधानसूचनात्। नच तत्र दत्वाभावस्य 'पपिवान्' इत्यत्रेवेष्टत्वात्, अव्याप्तिसम्भवेऽतिव्याप्तिदोषस्यानौचित्याच्च नानभिधानसिद्धिरिति वाच्यम्, सिद्धान्ते स्रंसुध्वंस्वोरविशेषणत्वेन 'स्रन्भ्याम्' इत्यादौ दत्वाभावस्य वक्तुमशक्यतया अनिष्टत्त्वस्य दुर्निश्चेयत्वात्।

अत एव सान्तस्येत्यस्य 'एकसमासनिर्दिष्टानां वस्वादीनां सर्वेषां विशेषणसम्बन्धस्य याय्यत्वात्' इत्युक्तं कैयटेन। तस्मात् 'स्रन्भ्याम्, ध्वन्भ्याम्' इत्येव न दत्वं सान्तत्वाभावात्।

ननु 'अनड्वान्' इत्यत्र अचिरादेशन भाष्याभिमतनुड्भावनवद्विषयभेदेऽपि 'सावनडुहः' इत्यनेन नाप्राप्तहल्ङ्यादिलोपस्यामोऽपवादतया सोर्लोपानापत्तिरिति चेन्न, हल्ङ्यादिलोपविषये तक्रकौण्डिन्यन्यायाप्रवृत्तेः।

अत्र ज्ञापकञ्च—'इदमो मः' ( ७-२-१०८ ) इति सूत्रमेव। अन्यथा 'इदोऽय् पुंसि' ( ७-२-११ ) 'यः सौ' ( ७-२-११० ) एते निरवकाशतया 'त्यदादीनामः' ( ७-२-१०२ ) इत्यस्यापवादत्वेन बाधके स्यातामिति 'इदमो मः' इति व्यर्थीभूय कल्पयति—यत्र हल्ङ्याबित्यस्य

हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहः । अनडुहा ।

वसुस्रंसुध्वंस्वनडुहां दः । [ ८-२-७२ ]

सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्त इति किम्—

---

विषयस्तत्र तत्र तक्रकौण्डिन्यन्यायेन बाधो न भवतीति । तेन 'अनड्वान्, हे अनड्वन्' इत्यत्र हल्ङ्यादिलोपः सिध्यति ।

यत्तु प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेन 'अनड्वान्' इत्यादौ उत्सर्गलोपाभावेनापवादत्वाभावान्न दोष इति तन्न । 'सः' इत्यत्र पूर्वं हल्ङ्यादिसूत्रेण सोरनुत्पत्तौ प्रत्ययलक्षणेन 'त्यदादीनामः' इत्यत्वे विसर्गश्रवणानापत्तेः, 'भवतात्' इत्यत्र 'अतो हेः' इति लुका प्रत्ययानुत्पत्तौ प्रत्ययस्थानिककार्ये प्रत्ययलक्षणाभावेन हेरभावात्तातङादेशानापत्तेः, 'णेरनिटि' ( ६-४-५१ ) इत्यनेन णेरनुत्पत्तिबोधने 'आटिटत्' इत्यत्र सणिच्कस्य द्वित्वानापत्तेश्च ।

**अनड्वाहौ इति**—'चतुरनडुहोः' इत्यामागमे यणि च रूपम् । अत्र नुम् न, सुपरत्वाभावात् । 'अनडुहः' शसादावचि विशेषकार्याभावाद्विभक्त्या सह सम्बन्ध एव बोध्यः । अनडुच्छब्दस्य हलादिविभक्तौ विशेषकार्यमाह—

**वसुस्रंसुध्वंस्वनडुहां दः** ( ८-२-७२ ) इति । 'वसु स्तम्भे' इति दैवादिकस्य धातोर्यदपि स्रंसादिधातुसाहचर्याद् ग्रहणं प्राप्तं तथाऽपि 'इह कस्मान्न भवति पपिवान्' इति भाष्ये क्वसुप्रत्ययान्ते प्रश्नात् 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति 'अङ्गस्य' इति सूत्रे भाष्योक्तेश्च 'विदेः शतुर्वसुः' ( ७-१-३६ ) इति विहितस्य वसोः 'क्वसुश्च' ( ३- -१०७ ) इति विहितस्य क्वसोश्च 'पपिवद्भ्याम्' इति भाष्यप्रयोगाद् ग्रहणम् ।

तेन 'तदनुबन्धकग्रहणे' इति परिभाषाऽत्र न प्रवर्त्तते । वसोः प्रत्ययत्वेन 'प्रत्ययग्रहणे' इति परिभाषया तदन्तग्रहणम्; 'ससजुषो रुः' इत्यत्र 'स' इति लुप्तषष्ठ्यन्तं पृथक् पदम्, अत्रैव सूत्रे 'सस्येति वर्त्तते' इति भाष्यात् । 'पदस्य' इत्यधिकृतम् । स इति । वस्वन्तपदस्यैव विशेषणम्, न स्रंसादेर्व्यभिचाराभावात् सर्वत्र सान्तत्वस्यैव सत्त्वात् ।

वस्वन्तस्तु 'विद्वान्' इत्यत्र नान्तः, विद्वद्भ्याम् इत्यादौ सान्त इति सम्भवव्यभिचारयोः सत्त्वान्नान्ते दत्ववारणाय **सान्तवस्वन्तस्येति** । 'विद्वान्' इत्यत्रापि संयोगान्तलोपस्यासिद्धत्वात्सान्तत्वे तु दत्वापेक्षया तस्य पूर्वत्रिपादीस्थत्वात् ।

न च सान्तस्येत्यस्येत्युक्तावप्यनवकाशत्वाद्दत्वेन संयोगान्तलोपस्य बाधः, पपिवद् इत्यत्र लोपाप्राप्त्या दत्वस्य चारितार्थ्यात् । न च तत्रापि रोः प्राप्त्याऽचरितार्थः, 'येन नाप्राप्ते' इति न्यायेन रुत्वस्य दत्वेन बाधेऽपि लोपस्य दत्वविषयेऽवश्यप्राप्तत्वाभावाद्दत्वासिद्धत्वेन संयोगान्तलोपे सान्तत्वाभावेन दत्वाप्राप्तेः । सान्तस्येति विशेषणाभावे तु नान्तस्य दत्वापत्तिः ।

'अनड्वान्' इत्यत्र नुम्विधानसामर्थ्याद्दत्वस्य बाधेऽपि उगिल्लक्षणस्य नुमः 'विद्वांसौ' इत्यादौ चारितार्थ्येन सान्तस्येत्यस्याभावे दत्वस्य दुर्वारत्वात् । तदाह—**सान्तस्य किं विद्वानिति**—सान्तत्वाभावान्न दत्वम् ।

ननु 'वसुस्रंसुध्वंस्वनडुहां दुः' इति सूत्रमस्तु । 'अनड्वाह् स्' इति दशायां सोर्लोपे पदान्तत्वाद् हस्य द्वादेशे उकारस्येत्त्वे प्रत्ययलक्षणेन सौ परतः 'उगिदचाम्' इति नुमि 'अनड्वान् द्' इति जाते दस्य संयोगान्तलोपे 'अनड्वान्' इति सिध्यति । एवञ्च 'सावनडुहः' इति सूत्रं न कार्यम् । न च 'उगिदचाम्' इति दृष्ट्या द्वादेशस्यासिद्धतया नुम् न स्यादिति वाच्यम्, उगित्करणसामर्थ्याद्उगित्कार्येऽसिद्धत्वाभावज्ञापनात् ।

न च अनडुच्छब्दात्तरप्प्रत्यये स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीपि 'अनडुदीतरा' इत्यत्र 'उगितश्च' ( ६-३-४५ ) इति उगितः परस्या नद्या वा ह्रस्वः स्यादिति वाच्यम्, अत्र

विद्वान् । पदान्त इति किम्-स्रस्तम् । ध्वस्तम् ।

*सहेः साडः सः । [ ८-३-५६ ]*

**साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् ।**

---

केचित् इषुमतोऽपत्यं स्त्री ऐषुमती ततस्तरप् प्रत्यये 'ऐषुमतितरा' इत्यत्र वा ह्रस्ववारणाय उगितो विहिता या नदी तस्या वा ह्रस्व इत्यर्थस्यावश्यकत्वेन प्रकृते तदभावात् । इदं समाधानं चिन्त्यम्, उगिदन्ताद्विहितत्वस्य प्रकृतेऽक्षतत्वात् ।

न च उगितो विहिता या नदीत्यर्थः 'इषुमतितरा' इत्यादावपि ह्रस्वत्वानापत्तेर्मतुप एवोगित्त्वेन ततो विहितत्वाभावात् ।

वस्तुतस्तु 'अनडुदीतरा' इति स्यादेव न, 'अनडुह्' शब्दस्य गौरादिगणे पाठेन परत्वात् ङीषा बाधात् 'अनड्वाहितरा' इत्यस्यैव सिद्धया द्वादेशस्यैवाप्राप्तेः । तस्मात् अनड्वानिवाचरति 'अनडोहति' इति क्विबन्तात्तरपि 'अनडुदीतरा' इति रूपापत्तिरेव दातुमुचिता, इष्यते तु 'अनडुत्तरा' इत्येव ।

अत्र गौरादिङीषस्तु न प्राप्तिरुपसर्जनत्वात्, तत्रानुपसर्जनादित्यस्याधिकारात् । यदि तु 'ह्रस्वनद्याप' इति सूत्रस्य भाष्यप्रामाण्यादिगुपधहलन्तेभ्य आचरार्थक्विबादेरनभिधानमित्युच्यते तदा अनडुह् शब्दस्याशब्देन समासे तत आचारक्विपि 'अतो लोप' इति अलोपे ततः सुबन्तात्तरपि स्त्रीत्वविवक्षायाम् 'अनडुत्तरा' इत्यत्र ङीप आपत्तिस्तन्न्यासे बोध्या । ङीपि कर्त्तव्ये अलोपस्य स्थानिवत्त्वं तु न, पूर्वत्वेन दृष्टस्य कार्याभावात् स्थानिवत्त्वेऽपि ङीपः प्राप्तेः । **स्रस्तम्, ध्वस्तम्** इति—स्रंसुध्वंसोरुदित्त्वेन क्त्वायां वैकल्पिकेड्विशिष्टत्वात् 'यस्य विभाषा' इति निष्ठायामत्र **नेट्** । विद्वांसौ, अनड्वाहौ, इत्यपि प्रत्युदाहरणीयम् ।

वस्तुतस्तु स्रंसुध्वंसुभ्यां विचि स्रंसौ, ध्वंसौ, इत्येव प्रत्युदाहर्तुमुचितम् । अन्ये तु पदान्ते इत्यस्याननुवृत्तौ झलीत्यस्य सम्बन्धाद जादौ दोषाभावेन 'स्रस्तम्, ध्वस्तम्' इति दोषोपन्यासः । न च 'झलीति निवृत्तम्' इति मूलविरोधः, 'दधस्तथोश्च' इति भाष्यानुरोधेन झलीत्यनुवृत्तेरावश्यकतया **'झलि परे' इति** = इदं सूत्रं स्वातन्त्र्येण न प्रवर्त्तते, किन्तु विशेषणतयैव झलाद्योः स्ध्वोरित्यर्थात् । **विस्तरस्तु 'एकाचो बशः' इति सूत्रे उक्तः ।**

**सहेः साडः सः ( ८-३-५६ )** इति । 'षह मर्षणे' इत्यतः **'इक् श्तिपौ धातुनिर्देशे'** इति धातुस्वरूपनिर्देशे ( बोधे ) इक् श्तिप् प्रत्ययौ स्तः, इकि 'धात्वादेः षः सः' इति षस्य सकारे **सहेरिति । सहेः** सहधातोरित्यर्थः । **साड्रूपस्येति**—साड्रूपतामापन्नस्य सहधातोरित्यर्थः । सूत्रे 'सः' **इति षष्ठ्यन्तम् । तदाह—सस्येति ।**

ननु 'साडः सः' इतीयत्युच्यमाने अडेन–सूक्ष्माग्रेण सह वर्तते इति साडो दण्डो वृश्चिको **वा । अत्रापि** स्यादिति तु न, अर्थवतो ग्रहणात् । अत्र डान्तोऽनर्थकः । साडस्यापत्यं 'साडिः' । **अत्र** साड्भागस्यार्थवत्त्वात् षत्वं स्यादित्यपि न, 'षत्वतुकोरसिद्धः' इत्येकादेशस्यासिद्धत्वादिति **चेन्न, डेन** वर्णेन सह वर्त्तते इति साडो दण्डशब्द मृडशब्दो वा तस्याथं साडः । अत्र मा भूत् **तदर्थं 'सहेः'** इति । सडस्यापत्यं साडिरिति तु न, तस्यापत्यत्वासम्भवात् । अर्थपरत्वे मृडस्य **शम्भोरपत्यसम्भवेऽपि** दण्डादेरपत्यत्वासंभवात् । भाष्ये साडिरिति अणन्तस्योपलक्षणं बोध्यम् ।

ननु 'सः' इत्यस्याभावे सहेः साडो मूर्द्धन्यो भवतीत्यर्थेऽन्त्यस्यालो विधाने फलाभावात् **'अपदान्तस्य मूर्द्धन्यः'** इत्यधिकाराच्च सकारस्यैव स्यादिति सग्रहणं व्यर्थम् इति चेन्न, आकारस्य स्थाने **मूर्द्धन्यो** मा भूदेतदर्थमुत्तरार्थम् 'आदेशप्रत्यययोः' इत्यर्थश्च सो ग्रहणम् । **मूर्द्धन्य इति—**मूर्द्धनि—

तुराषाट्, तुराषाड्, तुरासाहौ, तुरासाहः। तुराषाड्भ्यामित्यादि। तुरं सहत इत्यर्थे 'छन्दसि सहः' इति ण्विः। लोके तु साहयतेः क्विप्। 'अन्येषामपि–' इति पूर्वपदस्य दीर्घः॥ इति हान्ताः॥

*दिव औत्।* [ ७-१-८४ ]

दिविति प्रातिपदिकस्य औत्स्यात्सौ परे।

---

शिरसि भवो मूर्द्धस्थानक इत्यर्थः, प्रमाणकृतान्तरतम्येन सस्य स्थाने ष एव, न तु ऋकारः 'इणः षः' इत्यतः ष इत्यस्यानुवर्त्तनाच्च।

**तुरं सहत इति**—'तुर त्वरणे' इति जौहोत्यादिकाद् 'घञर्थे कविधानम्' इति भावे के तुर इति। तुरं वेगं सहते इत्यर्थे = 'छन्दसि सहः' ( ३-२-६३ ) इति कर्त्तरि ण्विः। 'अत उपधायाः' इति वृद्धौ रूपम्। ननु 'तुरासाहं पुरोधाय ब्रह्माणं शरणं ययौ' इति लोकेऽपि प्रयोगास्तेषां का गतिरत आह—**लोके त्विति**—निवृत्तप्रेषणाण्ण्यन्तसहधातोः 'क्विप् च' इति क्विपि रूपम्। **पूर्वपदस्येति**—तुरशब्दस्येत्यर्थः। ननु 'नहिवृतिवृषिव्यधि' इति सूत्रं क्विबन्ते सहधातौ परे पूर्वपदस्य दीर्घं विधत्ते। अत्र तु क्विबन्तः साहिण्यन्तो धातुस्तत्र कथं दीर्घत्वमत आह-**अन्येषामिति** वस्तुतस्तु तुरशब्दः स्त्रीलिङ्गोऽपीति तुराशब्दात् टापि 'तुरां सहते इति तुराषाट्' इन्द्रः, तुरासाहौ इत्यत्र साड्रूपस्याभावान्न षः। **इति हान्तप्रकरणम्।**

'अयपय गतौ' इत्यादितः क्विपि 'लोपो व्योः' इति यलोपात् 'न पदान्ता हलोऽणः (अवसान-कार्यभाजः) सन्ति' इति भाष्यप्रामाण्याच्च यकारान्तं प्रातिपदिकं नास्त्यतः क्रममुल्लङ्घ्य वान्तानाह—

**दिव औत्** ( ७-१-८४ ) इति। अत्र दिव इत्यनेन अव्युत्पन्नस्य 'दिवेर्डिविः' ( उ० ) इत्युणादिनिष्पन्नस्य च ग्रहणम्। न 'दिवु क्रीडा' इति दैवादिकस्य निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति 'वामदेवाड्ड्यड्ड्यौ' इत्यत्र डित्करणेन ज्ञापितपरिभाषाबलात्, 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यतोऽधातोरित्यनुवृत्तेश्च।

तदुक्तं भाष्ये 'अधात्वधिकारात्सिद्धमिति' 'अननुबन्धकग्रहणे न सानुबन्धकस्येति' इति च। ननु डिविप्रत्ययनिष्पन्नस्यापि सानुबन्धकतया अग्रहणापत्तिरिति चेन्न, प्रत्ययस्य सानुबन्धकत्वेऽदिविति समुदायस्य निरनुबन्धकत्वात्।

न च 'सावनडुहः' इत्यतः 'सौ' इत्यस्यात्रानुवृत्त्या धातोर्ग्रहणं न स्यादिति वाच्यम्, सावपि धातुनिष्पन्नस्य 'अक्षद्यूः' इत्यस्योपलम्भात्।

न चात्र 'दिव्' इति रूपाभावः, एकदेशविकृतन्यायेन तत्त्वस्य सत्त्वात्। तदाह—**दिविति प्रातिपदिकस्येति**—'औत्' इत्यत्र तकार उच्चारणार्थः। न चोच्चारणार्थ इत्यसङ्गतम् अचामुच्चारणे व्यञ्जनस्यानपेक्षितत्वादिति वाच्यम्, औकारोच्चारणे दीर्घस्य वायोरपेक्षणेन तस्य झटिति अवरोधे दुःखदर्शनेन तदनन्तरमर्द्धमात्रव्यापारे सत्यवरोधने मुखसुखोच्चारणार्थत्वात्। उच्चारणार्थत्वमित्यस्य उच्चारणे साहाय्यमेव प्रयोजनम्, न तु लक्ष्ये श्रवणं फलान्तरं वेति प्राञ्चः।

शेखरकारास्तु उच्चारणार्थानामपीत्संज्ञालोपाभ्यामेवापहारः। अत एव 'अदड्' इति सूत्रे भाष्ये डित्वाकरणे पूर्वसवर्णदीर्घमाशङ्क्य अकारस्यानुनासिकत्वेनेत्संज्ञालोपाभ्यां निवृत्त्या समाहितम्, नतूच्चारणार्थत्वेन। 'तस्य लोपः' ( १-३-९ ) इति सूत्रे भाष्ये 'अनुबन्धानामेकान्तत्वे 'दिव औत्' औत्त्ववदिशः प्राप्नोति' इत्युक्तम्, 'तित्स्वरितम्' ( ६-१-१९५ ) इति सूत्रे भाष्ये च 'दिव उत्' इत्यत्र 'द्युभ्याम्' इत्यादौ स्वरितत्ववारणाय 'एतदर्थमेव तर्हि 'तिति' प्रत्ययग्रहणं कर्तव्यम्' इत्युक्तम्।

अल्विधित्वेन स्थानिवत्त्वाभावाद् 'हल्ङ्याप्' इति सुलोपो न। सुद्यौः, सुदिवौ, सुदिवः। सुदिवम्, सुदिवौ।

*दिव उत्* [ ६-१-१३१ ]

दिवोऽन्तादेश उकारः स्यात्पदान्ते। सुद्युभ्याम्।

'इदितो नुम्' ( ७-१-५८ ) इत्यत्र भाष्ये धातोरित्यस्याभावे सिच इदित्त्वान्नुममाशङ्क्य सजादेशकरणेन समाहितम्। एतत्सर्वं भाष्यमुच्चारणार्थानामित्संज्ञालोपौ विनैव निवृत्तौ विरुध्येत। तस्मादुच्चारणार्थानामपीत्संज्ञालोपाभ्यामपहार इत्याहुः।

वस्तुतस्तु उच्चारणार्थानामित्संज्ञालोपाभ्यां विनैव निवृत्तिस्वीकारे नास्ति भाष्यविरोधः। उक्तेषु सर्वत्र भाष्येषु पूर्वसवर्णदीर्घ-सर्वादेश-स्वरितत्व-नुमादिफलसत्त्वेन 'रात्सस्य' इत्यत्र सकाराकारस्येव यत्र उच्चारणं विहायान्यत्फलं न सम्भवति तत्रैवोच्चारणार्थत्वम् इत्युक्तस्थलेषु नोच्चारणार्थत्वमिति प्राचीनमतमेव ज्याय इति गुरवः। 'औत्' इत्यत्र तकारस्येत्त्वे तित्प्रत्ययाभावात्स्वरितत्वरूपफलाभावात् 'नानुबन्धकृतमनेकाल्त्वम्' इत्यतः सर्वादेशरूपफलाभावाच्च सिद्धान्ते उच्चारणार्थ एवौतस्तकारः। अनुवादे 'ऋत उत्' इत्यादावुपदेशाभावेनेत्त्वाप्राप्त्या इतरव्यावृत्त्या चरितार्थ्येन चोच्चारणार्थत्वाभावाच्च तकाररहिते लक्षणा बोध्या।

द्यु = 'दिव्' शब्दः स्त्रीलिङ्गः, 'द्योदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करमम्बरम्' इत्यमरात्। अतः 'सु' ( शोभना ) द्यौर्यस्य यस्मिन् वा दिवसे स 'सुद्यौः' इति बहुव्रीहौ उदाहरणम्। अत्र औदादेशस्य स्थानिवत्त्वेन हल्त्वाद् 'हल्ङ्याब्भ्यः' इति सुलोपः कस्मान्नेति शङ्कायामाह—**अल्विधित्वेनेति**—स्थानी वकारस्तदवयवो व्यपदेशिवद्भावेन स एव तद्वृत्तिरल्त्वव्याप्यो धर्मो हल्त्वं तन्निमित्तकसुलोपविधौ अनल्विधाविति स्थानिवत्त्वनिषेधान्न सुलोप इत्याह—**सुलोपो नेति**। ननु सुलोपे कर्त्तव्ये सोरनल्त्वेन अल्स्थानिककविधेरभावात् कथं स्थानिवत्त्वनिषेध इति चेन्न; अलः परस्य विधावपि पञ्चमीसमासाश्रयणेन निषेधात्। 'दिव औत्' इत्यत्र 'अङ्गस्य' इत्यधिकारात्तदन्तविधौ तदन्तस्याप्यौदादेश इत्याह—**सुद्यौरिति**।

हलादौ विशेषमाह— **दिव उत्** ( ६-१-१३१ ) इति 'एङः पदान्तात्' इत्यतः पदान्तादित्यनुवर्त्तते। 'अर्थवशाद्विभक्तेर्विपरिणामः' इति नियमात्सप्तम्यन्तत्वेन विपरिणामः। तदाह—**पदान्ते इति**। वस्तुतस्तु षष्ठ्या विपरिणामः। तथा च पदान्तस्य दिवोऽन्तस्य स्थाने उदित्यर्थः। पदान्ते विद्यमानस्येत्यर्थे तु 'दिवौ' इत्यादौ 'वौ' इत्यपि पदान्तस्तत्र विद्यमानस्य दिवोऽन्त्यस्य वस्योत्वापत्तिः।

ननु 'उत्' इत्यत्र तपरत्वं व्यर्थम्। एकदेशविकृतन्यायेन निर्वाहात्। न च 'अक्षद्यूभ्याम्' इत्यूडन्ते सवर्णग्रहणेन प्राप्तस्य दीर्घादेशस्य वारणार्थं तपरकरणम्, तपरत्वाभावेऽपि 'भाव्यमानेन सवर्णानां ग्रहणं न' इति सवर्णाग्रहणादिति चेन्न, तपरत्वं व्यर्थीभूय ज्ञापयति–'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति तेन 'अदसोऽसेर्दादुदो मः' इत्यत्र दीर्घस्यापि विधानात् 'अमू' इत्यादि सिध्यति।

तदुक्तम् 'तित्स्वरितम्' इति सूत्रे भाष्ये 'भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणमिति यदयं दिव उदिति उकारं तपरं करोति' इति। न च ज्ञापितेऽपि स्वांशे चारितार्थ्याभावः तपरत्वाभावे उग्रहणेन दीर्घोकारस्यापि विधाने प्रकृते आन्तरतम्यादर्द्धमात्रकस्य वस्य स्थाने ह्रस्व एवोकारः स्यादिति तपरकरणं व्यर्थमिति वाच्यम्, यावता विनाऽनुपपन्नं तत्सर्वं तेन ज्ञाप्यते इति न्यायेन अन्तरतमसूत्रस्याप्यत्राप्रवृत्तिज्ञापने प्राप्तस्य दीर्घस्य वारणार्थं तपरत्वस्य चारितार्थ्यात्।

अव्युत्पन्नाद् डिविप्रत्ययान्ताद्वा द्युशब्दात् क्यजन्तात् क्विपि अलोपयलोपयोः 'च्छ्वोः' इत्यूठि निष्पन्नाद्दीर्घोकारान्ताद् भ्यामि 'द्युभ्याम्' इत्यादौ दीर्घोकारवारणाय चारितार्थ्याच्च।

सुद्युभिः—इत्यादि । इति वान्ताः । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः ।

षट्चतुर्भ्यश्च । [ ७-१-५५ ]

षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात् । णत्वम्, द्वित्वम् । चतुर्णाम् ।

---

अलोपस्योठि कर्तव्ये स्थानिवत्त्वं न, क्वौ लुप्तमिति निषेधात् ।

'दिव उत्' इति उदादेशेऽपि न स्थानिवत्त्वम्, ऊठः स्थानीभूतादचः पूर्वत्वेन दृष्टत्वाभावात् 'स्थानिवदादेशः' इत्यनेनापि न उदादेशप्रतिबन्धस्य शास्त्रीयकार्याभावात् । 'द्युभ्याम्' इत्यादौ ऊठ् तु न, 'क्ङिति' इत्यनुवृत्तेः; तदननुवृत्तौ क्विसाहचर्येण धातुविहितप्रत्यये एव तत्प्रवृत्तेश्च । 'हलः' इति दीर्घस्तु न 'सम्प्रसारणाज्जातं सम्प्रसारणम्' इति भाष्येण तद्भावितपक्षाश्रयणात् । अतद्भावितपक्षेऽपि तपरकरणसामर्थ्यान्न दीर्घः ।

अयमुकार उदात्तो निपात्यते । तेन 'द्युभिरक्तुभिः' इत्यादौ पठ्यमानमन्तोदात्तत्वे सिध्यतीति नागेशाः । 'चतेच देयाचने' इत्यतः 'चतेरुरन्' उ० ५ पा० ५८ सू) इति उरन् प्रत्ययः संख्यायां रूढः । **चत्वार इति**—जसि 'चतुरनडुहः' इत्यामागमः । **चतुर इति**—शसः सर्वनामस्थानत्वाभावादामागमो न । आमि विशेषमाह—

**षट्चतुर्भ्यश्च** ( ७-१-५५ ) इति । अत्र समाहारद्वन्द्वनिर्देशेन 'षट्चतुरश्च' इति लाघवाद्वक्तव्ये वहुवचननिर्देशादर्थप्राधान्यं विवक्षितम् । तेन प्रधानीभूतार्थात्परत्वं लब्धम् । अर्थाच्चामः परत्वं शब्दद्वारकम्, प्रधानीभूतार्थबोधकात्परस्यामो नुडित्यर्थेन न गौणे प्रवृत्तिरिति प्राञ्चः ।

शेखरकृतस्तु शब्दद्वारकमित्यस्य षट्संज्ञकशब्द–चतुश्शब्दैतदन्यतरनिष्ठं यदाम्निष्ठपरत्वनिरूपितावधित्वं तस्य अवधित्वसम्बन्धेन परत्वस्यैव वा अर्थे आरोप इत्यर्थः । एवञ्चार्थनिष्ठसम्बन्धस्यारोपितत्वेन गौणतया न तत्र पञ्चमी, 'गङ्गायां घोषः' इत्यत्र गौणाधारादावधिकरणत्वनिमित्ताया विभक्तेः स्वरितत्वप्रतिज्ञया स्वरितेनाधिकः कार इत्यर्थेन भाष्ये साधिततयाऽसति प्रमाणे गौणसम्बन्धस्य विभक्तेरवाच्यत्वबोधनात् ।

न च पञ्चम्यर्थस्यावधित्वस्य स्वाश्रयषडादिवाच्यत्वरूपपरम्परया षडाद्यर्थेऽन्वयो भविष्यतीति न विभक्त्यर्थस्य गौणत्वमिति वाच्यम्, प्रकृतिप्रत्ययार्थयोः साक्षात्सम्बन्धेन क्लृप्तस्यान्वयस्य भङ्गापत्तेः । 'गङ्गायां घोषः' इत्यत्रापि मुख्ये आधारे सप्तमीं विधाय तत्र सप्तम्यर्थस्य परम्परासम्बन्धेनान्वयोपपत्तौ भाष्यकृतः स्वरितत्वकल्पनाक्लेशो व्यर्थः स्यात् ।

अत एव 'न ह्यर्थेन पौर्वापर्यमस्ति' इति 'स्त्रियाः पुंवत्' (६-३-३४) इति सूत्रे भाष्यकृतोक्तम् । तस्मान्नामीति सूत्रे 'नैकमुदाहरणं योगारम्भं ( सामान्ययोगारम्भम् ) प्रयोजयति' इति भाष्योक्त्या 'चतसृणाम्, प्रियचतसृणाम्' इत्यादौ 'षट्चतुर्भ्यः' इत्येव नुट्सिद्ध इति सूचितम् । गौणे तदप्रवृत्तौ तु न मानम् । वहुवचननिर्देशः प्रधानार्थबोधक इति तु न युक्तम् 'अस्थिदधिसक्थ्यक्ष्णाम्' 'तिसृभ्यो जसः' इत्यादावपि तथात्वापत्त्या भाष्यविरोधापत्तेरिति वदन्ति ।

ननु 'ष्णान्ताः षट्' इति सूत्रे रेफान्तस्यापि षट्संज्ञां विधाय 'षट्चतुर्भ्यश्च' इति सूत्रे चतुर्ग्रहणं न कर्तव्यम् । तिस्रः, चतस्रः इत्यादौ 'शतानि' इत्यत्रेव सन्निपातपरिभाषया जस्शसोर्लुङ् न स्यात् । न च 'चत्वारः' इत्यादौ लुग्वारणाय 'षड्भ्यो लुगरः' इति न्यासे पदलाघवाभाव इति वाच्यम्, 'षट्चतुर्भ्यश्च' 'षट्त्रिचतुर्भ्यो हलादिः' ( ६-१-१७९ ) इत्यनयोश्चतुर्ग्रहणाकरणेन पदलाघवात् ।

'चतसृणाम्' इत्यत्र स्वरार्थम् । 'षट्त्रि' इति सूत्रे चतुर्ग्रहणस्यावश्यकत्वन्तु न, स्थानिवत्त्वेन षट्त्वस्य लाभेनादोषात् । संकेतसम्बन्धेन षट्पदवत्त्वरूपषट्त्वस्यानयनेऽनल्विधाविति निषेधाप्रवृत्तेः । ततश्च स्वस्रादिगणे चतसृशब्दस्य पाठोऽपि न कर्तव्यः, षट्त्वेनैव ङीन्निषेधसिद्धेरिति चतुर्ग्रहणं चिन्त्यम् ।

यथा स्वरितत्वप्रतिज्ञया गौणाधारस्यापि ग्रहणं तथा बहुवचनान्तनिर्देशादर्थप्राधान्यस्य गौण-सम्बन्धस्यापि ग्रहणेन गौणे नुटो न प्रवृत्तिरित्याह —

**'आमि सर्वनाम्नः सुट्'** इत्यत आमीत्यनुवर्तते—पट्चतुर्भ्य इति पञ्चम्या आमीति षष्ठयन्तेन विपरिणम्यते तदाह—**आम इति**। यद्यपि चतुःसाहचर्यात् षष् इति स्वरूपस्य ग्रहणं प्राप्तं तथापि 'स्वं रूपम्' असंज्ञायामिति पर्य्युदासात् 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्' इति न्यायाच्च षट्संज्ञकस्यैवात्र ग्रहणम्। नुटि टकार इत् आद्यवयवार्थः। उकार उच्चारणार्थः।

**णत्वमिति**--'रषाभ्याम्' इत्यनेनेति शेषः। ननु णत्वमित्यसङ्गतम्,'रषाभ्यां नो णः' इत्युक्तेः। किञ्च णत्वस्य विधानेऽणिति णित्वविधाने प्रत्ययवत् नकारो न निवर्ततेति चेन्न, ण-कु-चर्पदादीनाम् णकाराभिन्नणपदवाच्ये, कवर्गाभिन्नकुपदवाच्ये, चरभिन्नचर्पदवाच्ये शक्तिस्वीकारेण 'तस्य भावस्त्वतलौ' इत्यत्र प्रकृतिजन्यबोधे प्रकारीभूतपदार्थस्यैव भावपदार्थतया प्रकृते अभेद-सम्बन्धेन भासमाने णकाररूपे भावे एव त्वप्रत्ययविधानेन णत्वमित्यस्य णकार एवार्थ इत्यसङ्ग-तेरभावात्।

एवम् कुत्वमित्यस्य कवर्गः, चर्त्वमित्यस्य चकारादिरान्तसमुदायघटक इत्याद्यर्थो बोध्यः। यद्वा प्रपञ्चमात्रस्य ब्रह्मणि अध्यस्तत्वेन एकस्यैव स्फोटात्मकब्रह्मणोऽध्यस्तत्वात् कत्वादिरूपेण भास-मानतया धर्माणामेव विधेयत्वम्, न धर्मिण इत्यदोषः।

ननु णत्वविधायकशास्त्रापेक्षया द्वित्वविधायकशास्त्राणां पूर्वत्रिपादीस्थतया द्वित्वदृष्ट्या णत्व-शास्त्रस्यासिद्धतया पूर्वं द्वित्वेन भाव्यमिति णत्वं द्वित्वमित्ययुक्तम्। नच 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया द्वित्वे कर्तव्ये 'पूर्वत्रासिद्धम्' इत्यस्याप्रवृत्त्या पूर्वं द्वित्वं न्याय्यमेवेति वाच्यम्, 'संयन्ता' इत्यत्र 'अनचि च' इति दृष्ट्या 'वा पदान्तस्य' इति परसवर्णस्यासिद्धतया अनुस्वारस्यैव शर्षु पाठेन यरबुद्ध्या द्वित्वे परस्यानुस्वारस्य परसवर्णानुनासिक्यादेशे पूर्वानुस्वारस्य परसवर्णानुना-सिकयादेशो न स्यात्, परसवर्णयादेशस्यासिद्धतया यय्परत्वाभावेन 'अनुस्वारस्य ययि परसवर्णः' इत्यस्याप्रवृत्तेरित्याशङ्कायाम् 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम्' भाष्यकृतोक्तम्। तत्रानुस्वारस्य द्वित्वे कर्तव्ये परसवर्णशास्त्रस्य 'पूर्वत्रासिद्धीयम्' इति परिभाषया असिद्धत्वाभावेन द्वित्वं बाधि-त्वा परत्वात् परसवर्णे ततश्च द्वित्वे 'सय्य्यँन्ता' इत्यस्य सिद्धिः कृता।

एतद्भाष्येणानुमीयते वर्णद्वित्वे 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषा न प्रवर्तते। अन्यथा तयैव 'सय्य्यँन्ता' इत्यादीनां सिद्धया 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम्' इति वार्तिकस्य वैयर्थ्यापत्त्या भाष्यं विरुध्येतेति चेन्न, 'वाक् वाक्क्' इति सिद्धये भाष्यकृता 'अनचि च' इत्यत्र प्रसज्यप्रतिषेध आदृतः। अन्यथा पर्य्युदासे अज्भिन्ने हलि परे द्वित्वमित्यर्थेऽवसाने द्वित्वं न स्यात्।

तथा च 'वाक्क्' इति ककारद्वयघटितं रूपं न स्यात्। यदि वर्णद्वित्वे 'पूर्वत्रासिद्धीयम्' इति न प्रवर्तेत तदा चर्त्वस्यासिद्धतया गस्यैव द्वित्वेऽन्तिमगस्य 'वावसाने' इति चर्त्वेऽपि पूर्वगस्य 'खरि च' इति चर्त्वे कर्तव्ये 'वावसाने' इति चर्त्वस्यासिद्धत्वेन खर्परत्वाभावाद् गस्य कत्वं न स्यादिति पूर्वत्र गश्रवणापत्तिः।

ननु आवसानिकचर्त्वस्य जश्त्वापवादतया चर्त्वे कृते कस्यैव द्वित्वं स्यादिति न भाष्या-सङ्गतिरिति चेन्न, माठरपरिवेषणन्यायेन 'वाऽवसाने' इत्यत्र झल्पदार्थे चर्भिन्नत्वेन संकोचात् चर्भिन्नस्य झलश्चर्त्वविधानेन ककारस्य जश्त्वावसरे चर्भिन्नझलोऽभावेन चर्त्वस्य जश्त्वापवादत्वा-भावात्।

नन्वेवमपि 'वाच्' इति दशायामेव कुत्वद्वित्वयोः प्राप्तयोः 'पूर्वत्रासिद्धीयम्' इति द्वित्वस्य सिद्धत्वेन परत्वात् चस्य द्वित्वमेव स्यादिति चेन्न, 'वाक्क्' इति भाष्यप्रयोगेण कुत्वदृष्ट्या द्वित्वस्या-

**रोः सुपि । [ ८-३-१६ ]**

**सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य ।**

---

सिद्धत्वकल्पनात् । अन्तरङ्गत्वेन कुत्वं तु न युक्तम्, अन्तरङ्गपरिभाषां प्रति कुत्वस्यासिद्धत्वेन अन्तरङ्ग-शास्त्रत्वरूपलिङ्गाभावात् ।

ननु वर्णद्वित्वेऽप्यसिद्धत्वाभावे 'मध्वरिः' इत्यत्र 'अ अ' इति सूत्रेण विहितस्य संवृताकारस्य 'अनचि च' इति दृष्ट्या असिद्धत्वाभावेन अच्प्रत्याहारे 'अकारस्य विवृतोपदेश आकारग्रहणार्थः' इति वार्तिकेन विवृतस्यैव ग्रहणेन लक्ष्यस्थस्य ह्रस्वाकारस्य संवृतस्य अच्प्रत्याहारबोध्यविवृतेन प्रयत्नभेदात्सावर्ण्याभावेन अज्ग्रहणेनाग्रहणाद् द्वित्वानापत्तिरिति चेन्न, द्वित्वदृष्ट्या असिद्धत्वाभावबोधनेऽपि अच्संज्ञाविधायकस्य 'आदिरन्त्येन' इत्यस्य दृष्ट्या संवृतत्वस्यासिद्धतया अज्ग्रहणेन ग्रहणात्, 'अणुदित्' सूत्रदृष्ट्या चासिद्धत्वेनाज्ग्रहणेन ग्रहणाद् द्वित्वसिद्धेः । एतेन 'वाक्क्' इत्यत्र द्वित्वस्यासिद्धत्वाभावेन 'स्कोः संयोगाद्योः' इति कलोपापत्तिरित्यपास्तम्, 'हलोऽनन्तराः' इति दृष्ट्या द्वित्वस्य असिद्धत्वेन संयोगसंज्ञाया अभावात् ।

तथा च प्रकृते णत्वद्वित्वयोः प्राप्तयोः 'पूर्वत्रासिद्धीयम्' इत्यस्य वर्णद्वित्वेऽपि प्रवृत्त्या द्वित्वस्य सिद्धतया परत्वात्प्रथमं द्वित्वमुचितम् । न च कस्य द्वित्वेऽपि अवसानचर्त्वस्यासिद्धतया गरूपे झशि परे 'झलां जश् झशि' इत्यनेन पूर्वकस्य जश्त्वे पूर्वत्र गकारश्रवणापत्तिस्तथापि दुर्वारेति वाच्यम्, 'न मु ने' इतिवद् द्वित्वे कर्तव्ये, कृते च द्वित्वेऽसिद्धत्वाभावबोधनेन झश्परत्वाभावाज्जश्त्वाप्राप्तेरिति चेन्न, पूर्वत्रासिद्धीयम् इत्यस्य पूर्वत्रासिद्धम् इति शास्त्रे अद्वित्वे इत्युपतिष्ठते । तथा च द्वित्वभिन्ने प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये पूर्वत्र कर्तव्ये परमसिद्धम् । द्वित्वे पूर्वत्र कर्तव्ये तु परं नासिद्धम् । 'संयन्ता' इत्यत्रानुसारस्य 'अनचि च' इति द्वित्वे प्राप्नोति 'वा पदान्तस्य' इति परसवर्णादेशोऽपि प्राप्नोतीति द्वित्वे पूर्वत्र कर्तव्ये परस्य 'वा पदान्तस्य' असिद्धत्वाभावात्परत्वात्परसवर्णादेशे अनुनासिकयँादेशे कृते द्वित्वम् 'सय्य्यँन्ता' इति ।

प्रकृते द्वित्वभिन्ने णत्वे कर्तव्ये परस्य द्वित्वस्यासिद्धतया पूर्वं णत्वमेव स्यात्तदुक्तं **णत्वं द्वित्वमिति** । 'रषाभ्याम्' इत्यनेनेति शेषः । 'अचो रहाभ्यां द्वे' इत्यनेन यस्येति शेषः ।

ननु कृते च द्वित्वे तदाश्रयस्य यत्कार्य्यं प्राप्नोति तत्कार्य्यं प्रत्यपि परस्यासिद्धत्वाभावे 'वाक्क्' इत्यत्र 'स्कोः' इति संयोगादिलोपापत्तिरिति चेन्न, ककारद्वयघटितभाष्यप्रयोगादेव कृते द्वित्वे संयोगादिलोपातिरिक्तकार्य्ये एव परत्रिपादीस्थासिद्धत्वाभावबोधनात् ।

'हलोऽनन्तराः' इति सूत्रदृष्ट्या द्वित्वस्यासिद्धतया संयोगसंज्ञैव न—इति तु न युक्तम्, संज्ञाशास्त्रदृष्ट्या त्रिपाद्या नासिद्धत्वमिति सिद्धान्तात् । अत एव रोरुकारस्येत्त्वसिद्धिः ।

'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम्' इति वार्तिकन्तु 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्यैवावयुत्यानुवादो नापूर्वम् । 'पूर्वत्रासिद्धीयम्' इति परिभाषाबोधितार्थस्यैव बोधक इत्यर्थः । तेन वर्णद्वित्वे 'पूर्वत्रासिद्धीयम्' इति न प्रवर्तते इति कल्पयितुं न शक्यते ।

वार्तिकारम्भसामर्थ्याद्वर्णद्वित्वे 'पूर्वत्रासिद्धीयम्' इत्यस्याप्रवृत्तिकल्पने 'वाक्क्' इति ककारस्य द्वित्वपरकभाष्यविरोधापत्तिः ।

'चतुर् सु' इति दशायाम् 'खरवसानयोः' इति रेफस्य विसर्गत्वे प्राप्ते आह—

**रोः सुपि** ( ८–३–१६ ) इति । अत्र 'खरवसानयोः' इत्यतः 'खरि' इति, विसर्जनीय इति चानुवर्त्तते । तेन सुपीत्यनेन प्रत्याहारस्य न ग्रहणम् । खरादिः सुप् सप्तमीबहुवचनमेव नान्यः । न च प्रथमैकवचनमपि खरादिः, तस्य विसर्गेण लोपेन च खरादित्वाभावात् सुपशब्दमुच्चार्य्य विहितत्वेन प्रतिपदोक्तत्वाच्च । तत्र 'खरवसानयोः' इत्येव विसर्गे सिद्धे इतरनिवृत्तये नियमार्थमिदम् । तदाह—**सप्तमीबहुवचने रोरेवेति** । विपरीतनियमस्तु न, 'हलोऽनन्तराः संयोगः' इत्यादिनिर्देशात् ।

षत्वम् । षस्य द्वित्वे प्राप्ते ।

शरोऽचि । [ ८-४-४९ ]

**अचि परे शरो न द्वे स्तः । चतुर्षु । प्रियचत्वाः । हे प्रियचत्वः । प्रियचत्वारौ । प्रियचत्वारः । गौणत्वे तु नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् ॥**

न च 'विधिनियमसम्भवे विधिरेव ज्यायान्' इति न्यायात् 'खरि' इत्यस्यानुवृत्तिर्मास्तु भ्यामादौ विधिरेवास्त्विति चेन्न, 'किमर्थमिदमुच्यते न खरवसानयोर्विसर्जनीयमित्येव सिद्धम् । नियमार्थोऽयमारम्भः । रोरेव सुपि नान्यस्य सुपि । क मा भूत् गीर्षु, धूर्षु' इति भाष्यविरोधापत्तेः । अत्र 'रोः सौ' इत्येव वक्तुमुचितम्, खरादौ सौ इत्युक्तेर्न प्रथमैकवचनस्य ग्रहणम् । निरनुनासिकान्तोच्चारणेन न सानुनासिकप्रथमाया ग्रहणमिति तु न वरम्, ऐचोऽनुनासिकस्यादर्शनात् स्थानिनोऽनुनासिकत्वेऽपि ऐज्रूपादेशस्यानुनासिकत्वासम्भवात् ।

नियमशास्त्राणां द्विधा प्रवृत्तिर्विधिमुखेन निषेधमुखेन च । यदा नियामकशास्त्रीयोद्देश्यभिन्नत्वेन नियम्यशास्त्रीयोद्देश्ये संकोचस्तदा विधिमुखेन प्रवृत्तिः । यथा प्रकृते 'खरवसानयोः' इत्यत्र सप्तमीबहुवचनाव्यवहितरुघटकरेफभिन्नो यो रेफस्तस्य खरवसानयोर्विसर्ग इत्यर्थस्तदा 'यशस्सु' इत्यत्र 'खरवसानयोः' इत्यस्याप्राप्त्याऽनेन विसर्गो विधीयते । यदा न संकोचस्तदा 'यशस्सु' इत्यत्र 'खरवसानयोः' इत्यनेन विसर्गे सद्धेऽनेन 'गीर्षु' इत्यादौ विसर्गो निषिध्यते ।

तथा हि उकारेत्संज्ञकस्य रेफस्य विसर्ग इत्यर्थे तत्र पूर्वेणैव विसर्गस्य सिद्धतया सूत्रवैयर्थ्यापत्त्या 'रोः' इत्यस्य उकारेत्संज्ञकरेफभिन्ने लक्षणा, 'विसर्गो भवति' इत्यस्य 'न भवति' इत्यर्थे लक्षणा । तथा च सप्तमीबहुवचनाव्यवहितपूर्वस्य उकारेत्संज्ञकरेफभिन्नरेफस्य विसर्गो न भवति इत्यर्थेन 'चतुर्षु, गीर्षु' इत्यादौ निषिध्यते विसर्ग इति निषेधमुखेन प्रवृत्तिः ।

**षत्वमिति।** रेफस्येण्त्वे ततः परस्य सस्य 'आदेशप्रत्यययोः' इति षत्वमित्यर्थः। **'चतुर्षु' इति द्वित्वे प्राप्ते इति**—'अचो रहाभ्याम्' इत्यनेनेति शेषः ।

**शरोऽचि** ( ८-४-४६ ) इति । अत्र 'अचो रहाभ्याम्' इत्यतः 'द्वे' इति 'नादिन्याक्रोशे' इत्यतः 'न' इति चानुवर्त्तते । तदाह—**अचि परे** इत्यादि ।

न च सत्यपि शरो द्वित्वे 'झरो झरि' इति लोपेन एकषकारकमेव रूपं स्यादिति 'शरोऽचि' इति सूत्रं व्यर्थम् इति चेन्न, लोपस्य वैकल्पिकत्वेन लोपाभावे षकारद्वयश्रवणप्रसङ्गात् । तस्य वैकल्पिकत्वे 'शरोऽचि' इति सूत्रमेव ज्ञापकम्, नित्ये लोपे शरोऽचीत्यस्य वैयर्थ्यापत्तेः ।

ननु चतुःशब्दस्य चतुष्ट्वसंख्याविशिष्टसंख्येयवाचकत्वेन नित्यबहुवचनान्तत्वादेकवचनद्विवचनयोरभाव इत्यत आह—**प्रियचत्वा इति**—प्रियाश्चत्वारो यस्य ययोर्वेति बहुव्रीहौ तयोरपि सम्भवात् । अन्यपदार्थस्य विशेष्यत्वाद्विशेष्यगतसंख्याया एव विभक्तिवाच्यत्वनियमात् ।

'प्रियचतुरस्' इति दशायाम् 'चतुरनडुहोराम्' इत्यत्राङ्गाधिकारेण तदन्तस्यापि आम्विधानान्मित्त्वेनोकारात्परम् आम्विधानात् । 'हल्ङ्याब्भ्यः' इति रोर्लोपे 'प्रियचत्वाः' इति । **प्रियचत्व इति**—'अम् सम्बुद्धौ' इत्यमागमः । सुटि सर्वनामस्थानत्वादाम्, तदाह—**प्रियचत्वारौ** इत्यादि । शसादौ प्रियचतुःशब्दस्य न विकारः । आमि नुटमाशङ्क्याह—

**गौणत्वे त्विति**—अत्र प्राचां मते न नुट् 'षट्चतुर्भ्यश्च' इत्यत्र बहुवचनान्तनिर्देशेन चतुःशब्दार्थस्य प्राधान्य एव नुड्विधानात् । बहुव्रीहौ तु अन्यपदार्थस्य प्राधान्यमिति न नुट् । नव्यास्तु गौणत्वेऽपि नुटमाहुः 'षट्चतुर्भ्यश्च' इति व्याख्यायां द्रष्टव्यम् ।

**परमचतुर्णामिति**—परमाश्च ते चत्वारश्चेति परमचत्वारः । 'सन्महत्परमोत्तम' ( २-१-६१) इति कर्मधारयः । अत्रोत्तरपदार्थस्य प्राधान्यादुभयमतेऽपि नुट् । अत्रापि णत्वं द्वित्वं पूर्ववत् ।

तथा हि द्विवचननिर्देशे गौरवात् समाहारेण सर्वत्रा निर्देशात् षट्संज्ञकानां बहुवचनोपपत्तिः । किञ्च बहुवचननिर्देशात्तदर्थप्राधान्ये एव प्रवृत्तौ प्रियतिस्र इत्यादौ ङीबापत्तिः ।

इति रेफान्ताः । कमलं कमलां वा आचक्षाणः ।

किञ्च 'नामि' इति सूत्रे भाष्ये 'आमि' इति न्यासे नित्यत्वात्पूर्वं दीर्घे नुट् न स्यादित्याशङ्क्य ह्रस्वान्तान्नुड्विधानसामर्थ्याद् भूतपूर्वगत्या ह्रस्वान्तत्वमादाय तत्प्रवृत्तिरुपपादिता । 'न च नृणाम्' इत्यत्र दीर्घनिषेधात् चारितार्थ्यम् 'नैकमुदाहरणं योगारम्भं ( सामान्ययोगारम्भम् ) प्रयोजयति, 'नृ नद्याप' इत्येव ब्रूयात्' इति भाष्योक्तेः ।

न च 'तिसृणाम्' इत्यत्र चारितार्थ्यम्, 'षड्' इत्यत्र 'त्रेः' इत्यनुवृत्त्या सिद्धेः' इति भाष्ये उक्तम् । गौणेऽस्याप्रवृत्तौ 'प्रियतिसृणाम्' इत्यत्र चारितार्थ्येन भाष्यासङ्गतेः । त्रिशब्दानुवृत्तिपरभाष्य-विरोधात् 'ह्रस्वनद्यापः' इति न्यासे तु न भाष्यतात्पर्यम् । 'नैकमुदाहरणम्' इति भाष्यासङ्गतेश्च । गौणे तु रोऽप्रवृत्तिबोधकभाष्यान्तराभावाच्च ।

न च भूतपूर्वगत्याश्रयणे 'पदाम्, दताम्' इत्यादौ नुडापत्तिः, मात्राकालिकाच्त्वरूपह्रस्वत्वे विशेषणीभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणम्, न त्वच्त्वांशेऽपीत्यदोषात् तत्र स्थान्या-देशभावाभावाच्च ।

**कमलमिति**—कम्=जलम् अलति=भूषयतीति कमलम् । कमिति विभक्त्यन्तप्रतिरूपकं जलार्थकमव्ययम् । 'अल-भूषणपर्याप्त्योः' इत्यल्धातोः पचादित्वादच् ।

**कमलेति**—कमलमस्त्यस्या इति कमला = कमला, श्रीः, हरिप्रिया, इति लक्ष्मीः ।

**आचक्षाण इति**—अभिधायक इत्यर्थः । 'तदाचष्टे' इति चुरादिगणसूत्रेण णिचि इष्ठवद्भावेन 'टेः' ( ६–४–१४३ ) इति टिलोपे कर्तरि क्विपि 'णेरनिटि' ( ६–४–५१ ) इति णिलोपे लकारान्तः कमल् शब्दः ।

केचित्तु 'न पदान्ता हलोऽणः सन्ति' इति अणरूपहलन्तानामनभिधानमेव । अत एव 'भोभगो' इति सूत्रे 'अशग्रहणमनर्थकमन्यत्राभावात्' इति वार्तिकं संगच्छते । अविभिन्नपरकरोर-भावादिति तद्भाष्यार्थः । 'कर्तृ हर्तृ' इत्यादीनां पदान्तानामचां सत्त्वेऽपि हलन्तास्ते न सन्ति इति तेषां नानभिधानम् ।

न च सुध्युपास्य इत्यादौ पदान्तानां यणन्तानां दर्शनादिदमसङ्गतम्, 'अणोऽप्रगृह्यस्य' इति सूत्रे 'अण् प्रत्याहारः पूर्वेण न परेण पराभावात्, न हि पदान्ताः परेऽणः सन्ति । ननु चाय-मस्ति कर्तृ हर्तृ' इति भाष्येऽपि हलोऽण इति योजनीयं लण्सूत्रभाष्याविरोधाय । अनुनासिक-विधायकभाष्योक्त्या अनुनासिककार्यभाजोऽवसाने हलोऽणो न सन्तीति तदर्थात् । सुध्युपास्य इत्यादौ तु अवसानेऽभावान्नानुनासिकभाजः ।

यद्यपि अनुनासिकविधौ पदान्तग्रहणं नास्ति । तथापि 'वावसाने' ( ८–४–५६ ) इत्यतो-ऽवसाने इत्यस्य सम्बन्धादवसाने पदान्तस्यैव सम्भवात्, 'अदसो मात्' ( १–१–१२ ) इति सूत्रे भाष्ये प्रगृह्यसंज्ञानिमित्तकप्रकृतिभावं प्रकृत्य उक्तम् 'पदान्तप्रकरणे प्रकृतिभावः । न चैष पदान्तः' इत्युक्त्या पदान्ते एव प्रगृह्यस्य फलम् ।

तत्पर्युदासेन पदान्ते एव अनुनासिकविधानस्य सत्त्वाभावाच्च पदान्तण एवानुनासिकत्व-विधानम् ।

तेनावसानस्थितानां यवलानामेवानभिधानम् । एतेन 'भोभगो' इति सूत्रे 'अशग्रहणार्थम्' 'हलि सर्वेषाम्' ( ८–३–२२ ) इति । 'वृक्षव् करोति' इत्यत्र 'मा भूत्' इति भाष्यम् एकदेश्यु-क्तिरिति शेखरोक्तिरपास्ता । यत्तु 'न पदान्त' इति सूत्रे रत्नकृतोक्तम्—'अन्तशब्दस्य चरमावयव-वाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्या समासेन पदचरमावयवे कर्तव्ये इत्येवं व्याख्याने फलमाह—'वृक्षव्' इति तत्रावसानेऽनभिधानेन 'वृक्षव्याम्' इत्यस्य दातुमुचितत्वात् ।'

वस्तुतस्तु 'अणोऽप्रगृह्यस्य' ( ८–३–२२ ) इत्यत्र 'अप्रगृह्यस्य' इति पर्युदासेन, लण्-सूत्रस्थेन 'एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि हि परेण स्यादणग्रहणमनर्थकं स्याद् 'अचोऽप्रगृ-

कमल्, कमलौ, कमलः। षत्वम्, कमल्षु। इति लान्ताः।

*मो नो धातोः।* [ ८-२-६४ ]

मान्तस्य धातोर्नः स्यात्पदान्ते। नत्वस्यासिद्धत्वान्नलोपो न। प्रशाम्यतीति प्रशान्,

ह्रस्यानुनासिक' इत्येव ब्रूयात्। अथवैतदपि न ब्रूयात्, अच एव हि प्रगृह्या भवन्ति' इति भाष्येण च अच एवानेनानुनासिक इति लभ्यते।

अन्यथा यवलामनुनासिकत्वायाण्ग्रहणस्यावश्यकत्वेन 'अण्ग्रहणमनर्थकं स्यादि'त्युक्तिर्विरुध्येत। न च 'न पदान्ता हलोऽणः सन्ति' इति लण्सूत्रे भाष्योक्तेस्तदनभिधानम्, 'न पदान्ताः परेऽणः सन्ति' इति भाष्ये पाठात्तदुक्तेश्चिन्त्यत्वात्।

'भोभगो' इति सूत्रे भाष्यकृता 'वृक्षव् करोति' इत्युदाहृतत्वात्परभाष्यस्य बलवत्त्वात् पूर्वं भाष्यकृताऽनास्थया 'पदान्ताः' इत्याद्युक्तमित्यवसीयते। न च वृक्षवादीनामभिधाने 'अणोऽप्रगृह्यस्य' इत्यत्र परेण णकारेणाण्ग्रहणे फलसत्त्वेन 'अण्ग्रहणमनर्थकम्' इति भाष्यविरोध इति वाच्यम्, अप्रगृह्यस्येति पर्युदासेन अचोऽप्रगृह्यस्येति ब्रूयादिति भाष्येण चाच एवानुनासिकत्वबोधनाद् व्यञ्जनेऽप्रसङ्गात्।

कर्तृ-हर्तृ इत्यादावनुनासिकव्यावृत्तये पूर्वेणैवाण्ग्रहणमिति निर्णयात्। तस्माद् वृक्षवादेरनभिधाने न मानम्। किञ्च 'हलि सर्वेषाम्' ( ८-३-२२ ) इत्यत्र 'उञि च पदे' ( ८-३-२१ ) इत्यतः पदे इत्यनुवृत्त्या हलादौ पदे परे एव तस्य प्रवृत्त्या भ्यामादौ 'लोपः शाकल्यस्य' इत्यस्यैव प्रवृत्त्या 'वृक्षभ्याम्, वृक्षव्भ्याम्' इति रूपद्वयं बोध्यम्। तथा च 'प्राग्दीव्यतोऽण्' इतिवत्, कतिपयादिशब्दैकदेशस्य 'कतिपय्' यान्तस्य भेदानुकरणे 'कतिपय्, कतिपयौ' इत्यादीष्यत एवेत्युपाध्यायाः।

**कमलिति**—प्रथमैकवचनेऽनभिधानम्, अवसाने स्थितत्वात्। वस्तुतस्तु नानभिधानमित्युक्तं प्राक्। तोयमाचष्टे 'तोय्' इति यान्तस्तु नैव सम्भवति, यलोपे स्थानिवत्त्वनिषेधेन यलोपस्य दुर्वारत्वात्। तथा च 'तो' शब्दस्य सौ 'तौः' इति रूपम्, सावपि पदत्वात् पदान्तविधौ स्थानिवत्त्वनिषेधात् 'अचो ञ्णिति' वृद्धिः। अत्राकारलोपस्य स्थानिवत्त्वेन वृद्धिर्न स्यादिति न वाच्यम्, 'क्वौ लुप्तं न स्थानिवदि'ति निषेधात्।

**'षत्वं कमल्षु' इति**—ननु अत्र 'अचः परस्मिन्' इत्यत्र पञ्चमीसमासेन स्थानिभूतादचः पूर्वत्वेन दृष्टात्परस्य विधौ स्थानिवद्भाव इत्यर्थेन अलोपस्य स्थानिवत्त्वेनेणः परत्वाभावात्षत्वं न स्यादिति चेन्न, 'निष्ठायां सेटि' इत्यत्र इटि कृते एव णिलोपः, न तु पूर्वम्, इति कालावधारणार्थकृतसेड् ग्रहणवैयर्थ्येन पञ्चमीसमासस्यानित्यत्वज्ञापनात्। प्रपूर्वकात् 'शमु उपशमे' इत्यतः क्विपि 'अनुनासिकस्य क्विझलोः' इति उपधाया दीर्घे निष्पन्नप्रशाम्शब्दे विशेषमाह—

**मो नो धातोः ( ८-२-६४ ) इति।** 'मः' इति षष्ठ्यन्तं 'धातोः' इत्यस्य विशेषणम्। तदन्तस्य धातोर्ग्रहणम्। 'पदस्य' इत्यधिक्रियते। 'स्कोः संयोगाद्योः' इत्यतोऽन्ते इत्यनुवर्तते। तदाह—**मान्तस्य धातोरित्यादि**। 'अलोऽन्त्यस्य' इति मस्य नः। सोः 'हल्ङ्याब्' इति लोपे नकारस्य प्रातिपदिकान्तत्वात्पदान्तत्वाच्च नलोपमाशङ्क्याह—**नत्वस्येति**। **प्रशानिति** शान्तितुल्यत्वात्परवद्वाचकस्य लिङ्गसंख्यान्वितार्थकत्वेन सत्त्वार्थकतया स्वरादिगणे 'प्रशान्' इत्यस्य पाठेऽपि नाव्ययत्वम्।

स्वरादौ 'प्रशान्' शब्दपाठवैयर्थ्यं तु न, लिङ्गसंख्यानन्वयिसाम्यमात्रवाचके 'प्रशान्' शब्देऽव्ययसंज्ञार्थं तच्चारितार्थ्यात्। न च 'स्वरादिनिपातमव्ययम्' ( १-१-३६ ) इति सूत्रे भाष्ये 'चादीनां वै असत्त्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानाञ्च' इत्युक्तेः सत्त्ववचनस्यापि प्रशान्शब्दस्याव्ययत्वं स्यादिति वाच्यम्, 'अव्ययम्' इति महासंज्ञाकरणेनासत्त्ववाचिनो ग्रहणेनास्य तत्रासत्त्ववाचिनि पाठस्य चारितार्थ्येन सत्त्ववाचिन्यप्रवृत्तेः।

प्रशामौ, प्रशामः। प्रशान्भ्यामित्यादि।

स्वरादीनां तु स्वः पश्य, स्वरागतः, स्वः स्थितः, इत्यादिप्रयोगदर्शनादनेकशक्तिप्रधानतया सत्त्ववाचित्वमेवेति पाठसामर्थ्यात्सत्त्ववाचित्वेऽप्यव्ययत्वम्। वस्तुतस्तु स्वरादीनां कारकत्वेन क्रियान्वयित्वेऽपि लिङ्गसंख्याऽनन्वयित्वरूपमसत्त्ववाचित्वमक्षतमेव। भाष्ये सत्त्ववाचित्वोक्तिस्तु कारकत्वेन क्रियान्वयित्वमात्रेणेत्युपाध्यायाः।

**प्रशान्भ्यामिति**—ननु 'मो नो धातोः' इत्यत्र 'पदान्ते' इत्यस्य पदस्यान्ते = अवसाने परे इत्यर्थो यदि तदा 'प्रशान्भ्याम्' इत्यत्रावसानपरत्वाभावान्नत्वं न स्यात्। यदि पदान्ते इत्यस्य पदचरमावयवे विद्यमानस्य मस्य न इत्यर्थस्तदा 'प्रशान्भ्याम्' इत्यत्र पदचरमावयवो मकारस्तत्र व्यपदेशिवद्भावेन विद्यमानः मकारः; यद्वा पदचरमावयवो 'आम्' इति तत्र विद्यमानमस्य न इत्यर्थेन नत्वसिद्धावपि 'प्रशामौ' इत्यादिष्वपि नत्वापत्तिः।

पदचरमावयवः 'मौ' इति तत्र विद्यमानस्य मस्यापि नत्वापत्तिरिति चेन्न, 'मः' इति षष्ठ्यन्तविशेष्यवाचकानुरोधेन पदान्ते इत्यस्य षष्ठ्या विपरिणामेन पदान्ताभिन्नस्य मस्य न इत्यर्थेनादोषात्। एतेन पदान्ते = पदावसाने परतो मस्य न इत्यर्थे 'प्रशान्भ्याम्' इत्यस्यासिद्धथा झलीत्यनुवर्तनीयमित्यपास्तम्।

'कै शब्दे' इत्यतः 'कायतेर्डिमिः' (उ० ४ पा-१३४ सू०) इति डिमि प्रत्ययः। **अथ किम्पदार्थविमर्शः**—किंशब्दस्य जिज्ञासाविषये शक्तिः। जिज्ञासा च-ज्ञानविषयिणीच्छा, सा च वक्तुरेव। तथा च वक्तुर्यद्विषयकज्ञानेच्छा तादृशेच्छाया विषयो ज्ञानं ज्ञानस्य यो विषयः स एव इच्छाविषयज्ञानविषयो जिज्ञासाविषय इत्युच्यते स एव किंशब्दार्थः। जिज्ञासाविषये किंशब्दस्य शक्तत्वादेव स्वीयजिज्ञासाबोधनाय 'कः पण्डितः' इति किम्पदघटितं वाक्यं प्रयुज्यते।

अत्रेदमवधेयम्—उद्देश्यवाचकस्य किंशब्दस्य विधेयबोधकपदसमभिव्याहारे समभिव्याहृतपण्डितपदबोध्यताऽवच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वोपलक्षितो यो वक्तृजिज्ञासितो यो मैत्रत्वादिरूपो धर्मस्तद्धर्मावच्छिन्नबोधकता वाच्या। स च धर्मः को ब्राह्मणः, कः पण्डितः, इत्यादौ ब्राह्मणत्वपण्डितत्वव्याप्यो मैत्रत्वादिरूप एव। न तु जिज्ञासाविषयतावच्छेदकांशे तस्य (चैत्रत्वादेः) अनुगमकस्य शक्त्यैक्यसम्पादकस्य धर्मस्य तत्र विशेषणत्वम्, तेन रूपेण जिज्ञासाविषयतावच्छेदकधर्मस्य चैत्रत्वादेः शाब्दबोधे भानाभावात्।

एवञ्च 'को ब्राह्मणः' इत्यतो ब्राह्मणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान् ब्राह्मण इत्याकारकोऽन्वयबोधः श्रोतुः। वक्तुश्च किञ्चिद्धर्मावच्छिन्नोद्देश्यतानिरूपितं ब्राह्मणत्वाच्छिन्नविधेयताशालि ज्ञानं मे जायताम्, इत्याकारिका जिज्ञासा प्रथमं भवति। सा च जिज्ञासा वक्तृवाक्यजन्यसमभिव्याहृतब्राह्मणादिपदार्थताऽवच्छेदकावच्छिन्नविधेयतानिरूपितकिञ्चिद्धर्मावच्छिन्नोद्देश्यताकबोधेन निवर्त्तते।

न चैवं 'प्रमेयो ब्राह्मणः' इति वाक्यादपि तादृशजिज्ञासानिवृत्तिः स्यादिति वाच्यम्, पूर्वोक्तानुगमकधर्मोपलक्षितधर्मस्य विधेयधर्मन्यूनवृत्तित्वेनापि विशेषणीयत्वात्। प्रकृते विधेयो धर्मो ब्राह्मणत्वम्, न तदपेक्षया प्रमेयत्वं न्यूनवृत्ति। विधेयबोधककिम्पदस्य तु समभिव्याहृतपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो धर्मस्तदवच्छिन्ने शक्तिः।

यथा 'द्रव्यं किमस्ति' इत्यादौ। अत्र द्रव्यत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो धर्मो रजतत्वादिरूपस्तद्धर्मावच्छिन्ने शक्तिः। अव्ययसंज्ञकस्य वितर्कबोधककिंशब्दस्य तु प्रयोक्तृसमवेतसम्भावनात्मकज्ञानबोधकता, यथा—'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' इत्यादौ।

*किमः कः । [ ७-२-१०३ ]*

**किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः । कः, कौ, के । कम्, कौ, कान्** इत्यादि सर्ववत् ।

---

वितर्कश्च—वक्तुः सम्भावनात्मकं ज्ञानम् । संभावना चात्र एकधर्मिकविरुद्धानेककोट्यवगाहिसंशयरूपा । सम्भावनारूपस्य किंपदार्थस्य विषयतासम्बन्धेन मुखेऽन्वयः । सम्भावनायाञ्च अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपकत्वसम्बन्धेन विशेषणीभूतस्य चन्द्रादेरन्वयः । तथा च अभेदसम्बन्धावच्छिन्नेन्दुनिष्ठप्रकारतानिरूपकसम्भावनाविषयीभूतं मुखमित्यादिर्बोधः ।

किंशब्दस्य चात्र निपातत्वेन तदर्थस्य भेदसम्बन्धेन नामार्थे मुखेऽन्वये न विरोधः । 'कति घटाः सन्ति' इत्यादौ किंशब्दस्य पूर्वोक्तजिज्ञासाविषये एव शक्तिः—इति प्रत्ययार्थः संख्यात्वावच्छिन्नः । एवञ्च 'घटत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वोपलक्षितो यो धर्मः संख्यात्वन्यूनवृत्तिदशत्वत्वादिरूपः, तद्धर्मावच्छिन्नसंख्यावन्तो घटाः' इति बोधः । 'दश घटाः' इति बोधेन तादृशजिज्ञासानिवर्तनात् ।

'किं चैत्रस्य धनम् इदम्' इत्यादावपि किंशब्दस्य सम्भावनैवार्थः । 'चैत्रनिरूपितस्वत्व विषयिणी या संभावना तद्विषयो धनम्' इति बोधः । 'अयं कः, कस्य राजा पटुः' इत्यादावप्यूह्यम् ।
**इति किम्पदार्थविमर्शः ।**

**किमः कः** ( ७।२।१०३ ) इत्यत्र 'अष्टन आ विभक्तौ' ( ७-२-८४ ) इत्यतो विभक्ताविति अनुवर्तते । ननु 'इमः' इत्येव सूत्रमस्तु । अत्र 'त्यदादीनामः' इति सूत्रानुवृत्तिरस्तु । किंशब्दश्च द्वेः प्राक् त्यदादिषु पठिष्यते । तथा च त्यदादिसंबन्धिन इमोऽः स्यादित्यर्थेन किंशब्दघटकस्येमस्संपूर्णस्याकारादेशे 'कः' इत्यादि सिध्येत् । न च 'अलोऽन्त्यस्य' इति परिभाषया मकारमात्रस्याकारादेशे यणि च 'क्यः' इति स्यादिति वाच्यम्, 'नानर्थकेऽलोऽन्त्यविधिः' इति परिभाषया 'अलोऽन्त्यस्य' इत्यस्य बाधात्, इमो मस्य 'त्यदादीनामः, इत्यनेनैवात्वे सिद्धे 'इमः' इति सूत्रारम्भसामर्थ्याच्च । न च द्वेः प्राक्पाठे 'त्यदादीनां मिथः सहोक्तौ' इत्यनेन भवाँश्च कश्चेत्युक्तौ परत्वात्किंशब्दस्य 'कौ' इति न स्यात्, 'पूर्वशेषदर्शनाच्च स च यश्च तौ' इति भाष्येणैव समाधानात् । न च 'कु तिहोः' 'क्वाति' इत्यत्र इम एवानुवृत्तौ 'कुत्र, कुह, क्व, इत्यत्र कद्वयश्रवणापत्तिरिति वाच्यम्, 'उरितहोः' 'वाऽति' इति न्यासेन इम उशादेश-वादेशविधानेन च लक्ष्यसिद्धेः ।

'त्यदादीनाम्' इत्यनुवृत्त्या संज्ञोपसर्जनयोर्न प्रवृत्तिः । द्वेः प्राक् पाठेन 'अद्ड्यादिभ्यः' इति पर्य्युदासाप्रवृत्त्या 'किं सर्वनाम' इति सूत्रे किंग्रहणं न कार्य्यमित्यपि लाघवम् । न च 'इमौ' इत्यादौ विभक्त्या सहैकादेशे परादिवद्भावेन विभक्तिपरत्वादिमोऽत्वापत्तिः, मत्वरूपेऽङ्गकार्ये कृते अकारादेशरूपमङ्गकार्यं न, 'अङ्गकार्ये कृते नाङ्गकार्यम्' इति निषेधात् । विभक्ताविदयस्याङ्गविशेषणत्वेन स्थानिवत्त्वेऽपि 'इम औ' इति बुद्धौ विभक्त्यव्यवहितपूर्वत्वस्यादन्ताङ्गेऽक्षतत्वात् स्थानिवत्त्वेनात्वादेशस्य वारयितुमशक्यत्वात् । इत्थम् 'अलोऽन्त्यस्य' इत्यस्याप्रवृत्तौ 'कः इत्यादि सिध्येदत आह-**अकच्सहितस्यापीति**—त्यदादेरिमोऽकारविधाने 'अव्ययसर्वनाम्नाम्' इत्यनेन टेः प्रागकचि कृते 'ककिम्' इति जाते ककिम्शब्दस्यापि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन किंशब्देन ग्रहणात् 'किमः कः' इति सूत्रेणानेकाल्त्वात्कादेशे 'कः' इत्यादिरूपं सिध्यति । 'इमः' इति न्यासे तु 'ककः' इत्यापद्येत, तद्वारणाय ककारविशिष्टस्य ककारविशिष्टादेशः । अयम्भावः-'हुझल्भ्यो हेर्धिः' ( ६-४-१०१ ) इति सूत्रे 'भिन्धकि' इत्यत्र अकचि धित्वं न प्राप्नोति इत्याशङ्क्य अन्तरङ्गत्वाद् 'धित्वेऽकर्च्' इति भाष्ये समाहितम् । अकज्विशिष्टस्य निर्दिश्यमानत्वाभावादिति तदाशयः । तथा च प्रकृते निर्दिश्यमानपरिभाषया ककिंशब्दस्य कादेशो न प्राप्नोतीति तत्परिभाषां बाधित्वाऽकज्विशिष्टस्य कादेशविधानार्थम् 'किमः कः' इति सूत्रम् ।

न चोक्तभाष्यात्साकच्कस्य निर्दिश्यमानत्वाभावे 'अनाप्यकः' इत्यत्र 'अकः' पर्युदासवैयर्थ्यम्। अत एव ज्ञापकात्साकच्कापहारकादेशे कर्तव्ये निर्दिश्यमानत्वं साकच्कस्य नास्ति। किन्तु साकच्कानपहारकादेशे यथा 'अनाप्यकः' इति। अत्र साकच्केऽपि निर्दिश्यमानत्वमस्तीति तद्वारणाय 'अकः' इति।

अत एव 'सर्वकदा' इत्यत्र 'सर्वस्य सोऽन्यतरस्यां दि' इत्यनेन न सादेशः, सादेशस्य साकच्कापहारकत्वेन निर्दिश्यमानत्वाभावात्। अन्ये तु 'तन्निष्ठोद्देश्यतानिरूपितविधेयतावत्त्वे सति तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायस्वरूपाच्च।

अकज्विषये निर्दिश्यमानत्वस्वीकारेऽपि नास्ति भाष्यविरोधः। 'भिन्धकि' इति भाष्यप्रयोगे तिङन्तनिष्ठोद्देश्यता, न तु हिनिष्ठेति तन्मध्यपतितन्यायविषयत्वाभावेनाकज्विशिष्टे निर्दिश्यमानत्वाभावपरकभाष्योक्तिर्नासङ्गता। अकज्विशिष्टसर्वकशब्दाद् दाप्रत्यये 'सदा' इत्येव, न तु 'सर्वकदा' इति।

वस्तुतस्तु 'गर्भिणीस्थो गर्भो गर्भिणीग्रहणेन गृह्यते; गङ्गास्थो घटो गङ्गाग्रहणेन गृह्यते' इति लोकन्यायसिद्धोऽयं तन्मध्यपतित इति भाष्येण तत्सत्तोत्तरसत्ताकस्तन्मध्यपतित एव तद्ग्रहणेन गृह्यते इति बोधनाद् 'भिन्धकि' इत्यत्र तन्मध्यपतितन्यायेन निर्दिश्यमानत्वसत्त्वेऽपि भाष्यप्रामाण्यात् साकच्कापहारकविषये निर्दिश्यमानत्वं साकचि नास्ति, तदनपहारकत्वे त्वस्ति इति कल्पनैव ज्यायसीत्युपाध्यायाः।

'किमः कः' इति न्यासेऽपि संज्ञायामुपसर्जने चादेशवारणाय त्यदादीनामित्यनुवर्त्य वचनविपरिणामेन त्यदादेः किमः कादेश इति व्याख्येयम्। सर्वनाम इति महासंज्ञाकरणेनान्वर्थतया सर्वार्थवाचकानामेव सर्वादिगणे पाठात् त्यदादीनां सर्वाद्यन्तर्गततया न संज्ञोपसर्जनयोः प्रवृत्तिः।

एवञ्च किंशब्दस्य ककिंशब्दस्य च विभक्तौ परतः सर्वशब्दवद्रूपाणि बोध्यानि।

**'मारुते ( वायौ ) वेधसि ( ब्रह्माणि ) ब्रध्ने ( सूर्ये ) पुंसि कः कं**
**(नपुंसकम्) शिरोऽम्बुनोः। इति ( अमर। ३ का० नानार्थवर्गे ५ श्लो० )**

इति कोशोक्त'क' शब्दस्य तु रामवज्ज्ञानवच्च रूपम्।

'कस्येत्' (४-२-२५) इति सूत्रे भाष्ये। अथ यत् "कायं हविः। कथं तत्र संप्रैषः ( विनियोगः ) कर्तव्यः। यदि तावत्किमः कादेशः ( सूत्रे कस्य इति )। कस्मै अनुब्रूहीति भवितव्यम्। अथ न किमः, कायानुब्रूहीति भवितव्यम्। यद्यपि किमः। अथापि न किमः। उभयथा कस्मायनुब्रूहीति भवितव्यम्। सर्वस्य सर्वनामसंज्ञा क्रियते। सर्वश्च प्रजापतिः। प्रजापतिश्च कः। अपर आह यद्येव किमः। अथापि न किमः। उभयथा कायानुब्रूहीति भवितव्यम्। संज्ञोपसर्जनयोः सर्वनामसंज्ञा प्रतिषिध्यते। संज्ञा चैषा तत्र भवतः (ब्रह्मणः)" इति भाष्यम्। तत्र कस्मै, काय, इति द्विविधोक्त्या प्रजापतिवाचकस्य किंशब्दस्य विकल्पेन सर्वनामता सूचिता।

अत्र कैयटः—किमो विभक्तौ कादेशं कृत्वा कस्येति यदि निर्देशः कृत इत्यर्थः। किंशब्दश्च प्रश्नाक्षेपयोरिव प्रजापतौ वर्तते। सर्वादिषु कशब्दस्यापाठेऽपि अन्वर्थसंज्ञाविज्ञानात्सर्वनामसंज्ञा भवति। गणपाठस्तु प्रपञ्चार्थः। कशब्दोऽपि ब्रह्मवाचकः सर्वार्थः ब्रह्मणः सर्वकार्यकारणत्वात् कार्यकारणयोरभेदात्।

नन्वर्थमात्रेण सर्वनामत्वे सकलकृत्स्नादीनां सर्वनामता स्यादिति चेन्न, 'बहुव्रीहौ' इत्यत्र 'न' इति एको योगः। येषां सर्वार्थवाचकता नेष्यते सर्वत्वम् तेषां निषेध इति। यदा 'कस्येत्' इति सूत्रे किमो ग्रहणं तदा किंशब्दादणि 'किम् अ' इति स्थितौ मस्य इकारादेशे 'यस्येति च' इतीकारलोपे आद्यचो वृद्ध्यादेशे 'कायम्' इति। कशब्दस्य यदा इदादेशस्तदा इकारस्य न लोपो विधानसामर्थ्यात्। वृद्ध्यादेशे कायमिति।

इदमो मः । [ ७-२-१०८ ]

इदमो मस्य मः स्यात्सौ परे । त्यदाद्यत्वापवादः ।

इदोऽय् पुंसि । [ ७-२-१११ ]

इदम इदोऽय् स्यात्सौ पुंसि । सोर्लोपः । अयम् । त्यदाद्यत्वं पररूपत्वं च ।

दश्च । [ ७-२-१०९ ]

इदमो दस्य मः स्याद्विभक्तौ । इमौ, इमे । त्यदादेः संबोधनं नास्ति इत्युत्सर्गः ।

---

इदमेतदोः प्रत्यक्षज्ञाननिरूपितलौकिकविषयतावति शक्तिः । यथा अयं घटः, एष घटः । यद्वा संनिहिते, लौकिकालौकिकप्रत्यक्षविषये वा अयमात्मा, अयमाकाशः, अलौकिकप्रत्यक्षविषयेऽपि प्रयोगात् । वक्तृलौकिकालौकिकप्रत्यक्षबुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वादिप्रवृत्तिनिमित्तज्ञानयोः ।

इन्दति परमैश्वर्यं करोतीत्यर्थे 'इदि परमैश्वर्ये' इत्यतः 'इन्देः कमिन्नलोपश्च' ( उ० ४ पा० ५७ सू ) इति कमिन् प्रत्यये नलोपे च 'इदम्' इति सिध्यति ।

**इदमो मः** ( ७-२-१०८ ) इति । 'तदोः सः सौ' ( ७-२-१०६ ) इत्यतः 'सौ' इत्यनुवर्तते । 'अङ्गस्य' इत्यधिकृतम् । तेन तदन्तविधिः । इदम इति—इदंशब्दान्तस्येत्यर्थः । 'अलोऽन्त्यस्य' इति मस्य मः । ननु मस्य मविधानं व्यर्थम्, अत आह—त्यदादीति—त्यदादित्वेन प्राप्तस्यात्वस्यापवाद इत्यर्थः । 'येन नाप्राप्ते' इति न्यायात् । 'इदम्स्' इति स्थितौ विशेषकार्य्यमाह—

**इदोऽय् पुंसि** ( ७-२-१११ ) इति । इद इति स्थानषष्ठी, 'इदमः' इत्यनुवर्त्तते । तच्चावयवषष्ठी 'यः सौ' ( ७-२-११० ) इत्यतः सावित्यनुवर्त्तते । अङ्गस्येत्यधिक्रियते । तथा च इदम्शब्दान्तं यदङ्गं तदवयवस्य सुविभक्त्यव्यवहितपूर्वत्वविशिष्टस्य निर्दिश्यमानस्येद इत्यस्यायादेश इत्यर्थः । फलितमाह— **इदम इद** इत्यादि । 'सौ' इत्यस्य निर्दिश्यमाने इदि अन्वयो नाङ्गे । तेन अस्यायम् 'इदमयम्' इत्यत्र पूर्वस्य इद इत्यस्य न अयादेशः । सोर्लोपे '**अयम्**' इति ।

प्रत्ययलक्षणमाश्रित्य हल्परत्वमादाय मकारस्यानुस्वारस्तु न, मकारस्य मादेशविधानसामर्थ्यात्, हल्वर्णनिमित्तकत्वेन 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधाच्च । औजसादिषु विशेषमाह—त्यदाद्यत्वमिति—इदम् औ इति स्थितौ 'त्यदादीनामः' इति मस्य अत्वे 'इद अ औ' इति जाते 'अतो गुणे' इत्यकारयोः स्थाने पररूपे अकारादेशे 'इद् अ औ' इति स्थितौ कार्य्यविशेषमाह—

**दश्च** ( ७-२-१०९ ) इति । 'इदमो मः' इत्यत इदम इति, 'अष्टन आ' इत्यतो विभक्तौ इति चानुवर्तते । अतिव्यवहितमपि 'हयवरट्' सूत्रे भाष्ये 'किं पुनरिमे वर्णा अर्थवन्तः' इति प्रयोगदर्शनात् । 'इमं मे गङ्गे' इति छन्दसि प्रयोगाच्च सम्बध्यतेऽतिसन्निहितमपि । 'तदोः सः सौ' इत्यतः 'सौ' इति न सम्बध्यते, सौ इदमो दस्याभावादुत्तरसूत्रे 'यः सो' इत्यत्र सौग्रहणाच्च । द इति षष्ठी तदाह—**इदमो दस्येति**। एवञ्च औशसन्तेषु सर्ववद्रूपाणि । तदाह—'**इमौ**' इति ।

**सम्बोधनं नास्तीति** उत्सर्गः—साधारणो धर्मः । सम्यग् ज्ञापनं हि सम्बोधनम् । तेन 'तदोः सः' इति सूत्रे 'अनन्त्ययोरिति किम्, हे स' इति भाष्यम्, 'विभाषाभवद्भगवदघवतामोच्चावस्य' इति । 'मतुवसोः रुः सम्बुद्धौ' इति सूत्रस्थवार्तिकस्योदाहरणम्—भवन्, भोः, इति च न विरुध्यते ।

एतेन सम्बुद्ध्यन्तत्यदादिना व्यवहाराभाव एव, नतु सम्बुद्ध्यन्तत्यदादेरसाधुत्वमिति ध्वन्यते । यत्तु—

> 'इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम् ।
> अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥'

इति तदीयद्विचारतः । सन्निकृष्टादिशब्दानामिव इदमादीनामपि सम्बोधने बाधकाभावात् । विप्रकृष्टस्यापि बुद्ध्या सन्निधापितस्य प्रयोगदर्शनात् । तथा च भट्टिः 'हापितः क्वासि हे सुभ्रु' इति ।

*अनाप्यकः* । [ ७-२-११२ ]

**अककारस्येदम इदोऽन् स्यादापि विभक्तौ । आप्-इति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन ।**

*हलि लोपः* । [ ७-२-११३ ]

**अककारस्येदम इदो लोपः स्यादापि हलादौ ।**

---

**अनाप्यकः** ( ७-२-११२ ) इति । 'अन्-आपि-अकः' इति पदच्छेदः । न विद्यते कोऽस्येति अक् तस्य अकः । ककाररहितस्येत्यर्थः । 'इदमो मः' इत्यत 'इदम' इति 'इदोऽय्' इत्यत इति । 'अष्टन आ-' इत्यतः 'विभक्तौ' इति चानुवर्तते । तदाह—**अककारस्येत्यादि । प्रत्याहार इति**—विभक्ताविति विशेषणात् टाप आरभ्य चापः पकारेण न प्रत्याहारः 'इमामग्रण्णाम्' इत्यादावादेशादर्शनाच्च ।

**अनेनेति**—इदम् आ इति स्थितौ त्यदाद्यत्वे 'अतो गुणे' इति पररूपे 'येन नाव्यवधानम्' इति न्यायेनाकारेण व्यवधानेऽपि 'इद्' इत्यस्य अन् आदेशे 'अन आ' इति जाते 'टाङसि' इतीनादेशे 'आद्गुणः' इति गुणे 'अनेन' इति अन्तरङ्गपरिभाषया गुणादेशे इनादेशस्य बहिरङ्गत्वेनासिद्धत्वं तु न, 'नाजानन्तर्य्ये' इति निषेधात् ।

भ्यामादौ विशेषमाह—'हलि लोपः' ( ७-२-११६ ) इति भ्यामादौ हलादौ त्यदाद्यत्वे पररूपे च कृते 'अनाप्यकः' इति प्राप्ते । 'हलि लोपः' 'अनाप्यकः' इत्यतः 'आपि अकः' इति 'इदमो मः' इत्यतः 'इदमः' इति, 'इदोऽय्' इत्यतः 'इदः' इति, 'अष्टन आ' इत्यतः 'विभक्तौ' इति चानुवर्तते । विभक्तौ हलीत्यस्य विशेषणत्वेन 'यस्मिन् विधिः' इति तदादिविधिः । तदाह—**अककारस्येत्यादि** ।

केचिदाहुः—'अपि' इत्यनुवृत्तिर्व्यर्था, सौ 'इदोऽय्' इत्यस्य प्रवृत्त्या अन्यासाद्याजादित्वेन दोषाभावात् इति । अन्ये तु सौ लोपायादेशयोः पर्य्यायापत्तिवारणाय 'आपि' इति वदन्ति । वस्तुतस्तु तन्मध्यन्यायेन 'इदोऽय्' इति लोपापवाद इति न पर्य्यायापत्तिरिति आपीत्यनुवृत्तिर्व्यर्थैव ।

श्रीधराचार्य्यास्तु साकच्के चरितार्थम् 'इदम इश्' इतीशादेशं बाधित्वा अनकच्के 'इतः' इत्यत्र परत्वाल्लोपे मा भूदिति 'आपि' इत्यस्यानुवृत्तिरावश्यिकैव । तसिलादेः प्राग्देशीयत्वेन विभक्तिसंज्ञकत्वादित्याचक्षते ।

ननु 'हलि लोपः' इत्यस्य स्थाने 'हल्यश्' इति सूत्रमस्तु । अककारस्येदम इदोऽश् स्यादापि हलादौ विभक्तौ इत्यर्थः ।

ननु इदमाचष्टे इदयति । ततः क्विपि णिलोपे 'इद्भ्याम्' इति दशायाम् अशादेशे, 'आभ्याम्' इति स्यात् । लोपपक्षे तु क्विवन्ते इदोऽर्थवत्त्वेन । 'नानर्थके' इत्यस्याप्रवृत्त्या 'अलोऽन्त्यस्य' इत्यन्त्यलोपे 'इभ्याम्' इतीष्यते, तन्न स्यादिति चेन्न, णिलोपस्य स्थानिवत्त्वेन अशलोपे 'इद्भ्याम्' इत्यस्यैवेष्टत्वात् । 'क्वौ लुप्तं न स्थानिवत्' इति तु न, तस्यासार्वत्रिकत्वात् ।

वस्तुतस्तु इदं दूषणं चिन्त्यम्, अक इति पर्य्युदासेन ककारयोग्यतावत्येव प्रवृत्त्या 'त्यदादीनाम्' इत्यस्यानुवृत्त्या च गौणे एतदप्रवृत्तेः । यद्यपि अक इति बहुव्रीहिघटकनञोऽत्यन्ताभावबोधकतया भेदबोधकत्वेन पर्य्युदासासम्भवः । तथापि निषेधस्य प्राप्तिपूर्वकत्वात् 'अवत्सा धेनुः' इतिवत् सम्भावितककारस्यानुपसर्जनस्यैवेदमो ग्रहणस्यौचित्येन गौणे न प्रवृत्तिः । ननु लोपे कमिन्प्रत्ययान्तेदम्शब्दस्याद्युदात्ततया उदात्तस्य 'आभ्याम्' इत्यादौ श्रवणम्, अशादेशे तु 'इद्' इत्यस्य स्थानिनोऽनुदात्तत्वधर्मदकारोदात्तत्वधर्मेकारघटिततया चानुदात्तत्वोदात्तत्वरूपस्वरितत्वविशिष्टः स्वरित एवान्तरतम्यादादेशापत्तिरिति वाच्यम्, भाष्ये चतसरि आद्युदात्त इव निपातत्वेनोदात्तस्यैवाद्यः सिद्धेः ।

'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' ( वा ४१० ) ।

*आद्यन्तवदेकस्मिन्* । [ १-१-२१ ]

**एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव च स्यात् । आभ्याम् ।**

---

वस्तुतस्तु आद्युदात्तत्वनिपातनेत्संज्ञालोपादिप्रक्रिया ज्ञानकृतगौरवात् संज्ञावाचकानामर्द्धमात्रिकत्वस्वीकाराच्च '**इत्यश्**' इति न्यासश्चिन्त्य **इत्युपाध्यायाः** । 'झलि लोपः' इति नोक्तम् । वेदे इदंशब्दात् टाविभक्तेः 'सुपां सुलुक्' ( ७-१-३९ ) इत्यनेन यादेशे 'अया' इत्यत्र लोपानापत्तेः ।

ननु 'इद-भ्याम्' इति दशायाम् 'अलोऽन्त्यस्य' इत्यन्त्यस्य लोपः स्यादत आह—**नानर्थके इति** । इयम् 'अलोऽन्त्यात्' इत्युपधासंज्ञा सूत्रे भाष्ये स्पष्टा । फलानामन्यथासिद्धया प्रत्याख्याता च । प्रकृते 'हलि लोपः' इत्यत्र 'अनाप्यकः' इत्यतः 'अत्' इत्यनुवर्त्त्य 'हलि' इति सप्तम्या 'सप्तमी पूर्वा षष्ठीं कल्पयति' इति षष्ठया विपरिणम्य अतोऽन्त्यस्य 'अलोऽन्त्यस्य' इति लोपविधानेन उपजीव्यत्वादनादेशे कृते लोपे 'आभ्याम्' इत्यादेः सिद्धिः । **अनभ्यासविकार इति**—तेन 'पिपर्त्ति' 'बिभर्त्ति' इत्यादावभ्यासस्य निरर्थकत्वेऽपि 'अलोऽन्त्यस्य' इति परिभाषया ऋकारस्य ऋकारस्य 'भृञामित्' ( ७-४-७६ ) इत्यनेन 'अर्तिपिपर्त्योश्च' ( ७-४-७७ ) इत्यनेन चेत्वं सिध्यति ।

अत्र मानं तु 'अर्तिपिपर्त्योश्च' इति निर्देश एव । अनर्थकेऽभ्यासे 'अलोऽन्त्यस्य' इत्यस्याप्रवृत्तौ सर्वादेशेऽभ्यासे पकारश्रवणानापत्तिः । ननु 'इदम् भ्याम्' इत्यत्र त्यदाद्यत्वे पररूपे इद् इत्यस्य अनो वा नकारलोपे 'अभ्याम्' इति जाते अकाररूपाङ्गस्य सत्त्वेन अदान्ताङ्गत्वाभावात्सुपि चेति दीर्घो न स्यादत आह– **आद्यन्तवदेकस्मिन्** ( १-१-२१ ) इति । 'सति परस्मिन् यस्मात्पूर्वो नास्ति स आदिः' 'सति पूर्वस्मिन् यस्मात्परो नास्ति सोऽन्त्यः' इति भाष्योक्तेरादित्वान्तत्वयोः समुदायसापेक्षत्वेन एकस्मिन् तत्प्रयुक्तकार्य्याप्रसक्त्या तत्प्राप्त्यर्थमिदमारभ्यते । एकशब्दश्चात्रासहायवाची । 'एकादाकिनिच्चासहाये' इति पाणिन्युक्तेः, 'एकाकी त्वेक एककः' ( अमर–विशे० ३ का० ८३ ) इत्यमरोक्तेश्च । आदाविवान्ते इवेत्यर्थे सप्तम्यन्तात् 'तत्र तस्येव' इति वतिः, 'एकस्मिन्' इत्युपमेये सप्तमीदर्शनात् ।

वतिश्चोभाभ्यां सम्बध्यते 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इत्युक्तेः । अत्र पदपदमर्थवत्परम्, अन्तपदञ्च सन्निहितपरम् । सादृश्यनियामकधर्मश्च स्ववृत्तिधर्मप्रयुक्तकार्यकरत्वरूपस्तदाह—**आदाविवेति**–तदादौ तदन्ते च क्रियमाणं कार्य्यं तदादौ तदन्ते इवासहाये केवलेऽपि स्यादित्यर्थः ।

**समुदायविशिष्टत्वम् आदित्वम्—वै० स्वघटकोत्तरत्वाभाववत्त्व-स्वघटकपूर्वत्वोभयसम्बन्धेन । अन्तत्वञ्च स्वघटकपूर्वत्वाभाववत्त्व-स्वघटकोत्तरत्वोभयसम्बन्धेन ( समुदायविशिष्टत्वम् । )**

असहायत्वञ्च मुख्यधर्मविशिष्टत्वम् । वै० स्वाश्रयाघटितत्व-स्वाश्रयाघटकत्व-स्वाश्रयासमभिव्याहृतत्व-स्वमुखप्रविष्टधर्मवत्त्वैतच्चतुष्टयसम्बन्धेन । असहाये आरोप्यमाणो धर्मो मुख्यधर्मः । यथा अकारे आरोप्यमाणो धर्मोऽदन्तरूपो मुख्यः । अकारे अदन्तत्वाश्रयघटितत्वम्, अदन्तत्वाश्रयघटकत्वम्, अदन्तत्वाश्रयसमभिव्याहृतत्वञ्च नास्ति । अदन्तत्वस्य मुखे प्रविष्टो धर्मोऽत्त्वरूपस्तद्वत्त्वञ्च अकारे । अन्त्यसम्बन्धदानेन इकारादौ न अदन्तत्वातिदेशः, मुखप्रविष्टस्य अत्वस्याभावात् । मुखप्रविष्टत्वञ्च आरोप्यमाणधर्मघटकनिष्ठा या अवयवत्वव्याप्यधर्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारताऽवच्छेदकत्वम् । यथा अदन्तत्वे अत्वम्, धात्ववयवत्वे धातुत्वम् । अनुदात्तादित्वे अनुदात्तत्वम् ।

अन्ये तु यन्निरूपितमादित्वमन्तत्वमवयवत्वं वा स्वस्यानेयं तदवयवस्वेतरद्वितीयासमभिव्याहृतत्वमसहायत्वम् । समासन्नयने, दरिद्राधातौ च नासहायत्वम् । तत्समुदायघटकस्वेतरवर्णसत्त्वात् ।

नेदमदसोरकोः । [ ७-१-११ ]

**अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एत्वम्, एभिः । अत्वम्, नित्यत्वाद् ङेः स्मै,**

---

'हरी' इत्यादौ द्विवचननिरूपितमन्तत्वमानेयं तदवयवः स्वेतरो न कोऽपीत्यसहायत्वं सुलभम् । अच्परकत्वम्, लघुपूर्वकत्वादि च न व्यपदेशिवद्भावलभ्यम् । अत एव 'दधि' इत्यादौ न यण् ।

वार्तिककृता तु 'अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्' इत्युक्तम् । अयम्भावः यस्मात्पूर्वो नास्ति स आदिः यस्मात्परो नास्ति सोऽन्त्य इत्युच्यते । तथा च 'अ' इत्यादावेकवर्णस्थलेऽपि ततः पूर्वं कश्चन नास्ति, एवं परोऽपि नास्तीति आदित्वमन्तत्वञ्च स्वतः सिद्धम् । सूत्रं न कर्तव्यमित्युक्तम् ।

भाष्यकृता तु एकस्मिन्नादित्वान्तत्वव्यवहारो गौण एव, मुख्यव्यवहारस्तु समुदायस्थले एवेत्यभिप्रेत्य उक्तम् 'सत्यमेतत्सति त्वन्यस्मिन्निति' इति । वस्तुतस्तु भाष्यकृतापि लोकव्यवहारेण 'व्यपदेशिवदेकस्मिन्' इति संसाध्य सूत्रं प्रत्याख्यातम् । विशिष्टोऽपदेशो व्यपदेशो मुख्यव्यवहारः सोऽस्त्यस्येति व्यपदेशी मुख्यः । तेन तुल्यमेकस्मिन्नसहायेऽपि कार्य्यं कर्तव्यमित्यर्थः ।

तेन 'इयाय' 'आर' इत्यादौ 'एकाचो द्वे' इति द्वित्वं सिध्यति । 'आद्यन्तवत्' इति सूत्रेण तु न सिध्येत्, द्वित्वस्यादित्वान्तत्वव्यपदिष्टकार्य्यत्वाभावात् । तदुक्तम् 'अवचनाल्लोकविज्ञानात्सिद्धम्' इति, 'आद्यन्तवद्भावश्च शक्योऽवक्तुम्' इति च ।

असहाये इति किम् ? दरिद्राधातौ इकारान्तत्वस्यारोपाद् 'एरच्' इत्यज् मा भूत् । सति तु तस्मिन् इकारान्तत्वरूपमुख्यधर्मवद्दरिघटितत्वाद् दरिद्रातेरसहायत्वाभावादिवर्णान्तत्वानतिदेशः । 'औपगवः' इत्यादावकारमात्रप्रत्यये आदित्वात् 'आद्युदात्तश्च' ( ३-१-३ ) 'प्रत्ययः' इत्यधिक्रियते । प्रत्यय आद्युदात्तो भवतीति आद्युदात्तत्वं सिध्यति । 'आभ्याम्' इत्यादावदन्तत्वाद् दीर्घादिश्च सिध्यति ।

'इदम् भिस्' इत्यत्र त्यदाद्यत्वे पररूपे 'हलि लोपः' इतीदः सर्वस्य लोपे 'अतो भिस ऐस्' इति प्राप्ते—

**'नेदमदसोरकोः'** ( ७-१-११ ) इति 'अतो भिस ऐस्' इत्यतः 'भिस ऐस्' इत्यनुवर्तते । 'इदमदसोः' इति भिसपेक्षया सम्बन्धलक्षणा षष्ठी । न विद्यते ककारो ययोरिति विग्रहे बहुव्रीहिः । तदाह—**अककारयोरित्यादि** । ननु अकोरिति व्यर्थम्, इदकमदकस्शब्दयोरिदमदश्शब्दभिन्नतयाऽन्तरङ्गत्वादकचि कृते तदप्राप्तेरिति चेन्न, इदमेव व्यर्थीभूय ज्ञापयति—'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति । तेन अकज्विशिष्टे 'सर्वके' इत्यादौ सर्वनामकार्यं सिध्यति ।

ननु 'इदमदसोः कात्' इत्येव सूत्रमस्तु । इदमदसोः कात्परस्य भिस ऐस्स्यादित्यर्थः । 'अतो भिसः' इत्येव सिद्धे नियमार्थमिदम् 'इदमदसोर्भिस ऐस्चेत्कादेव' तेन 'इमकैः, एभिः' इत्युभयं सिद्धयेदिति चेन्न, कात्परस्य भिस ऐस् चेत्तदा इदमदसोरेवेति विपरीतनियमस्यापि सम्भवेन 'सर्वकैः' 'एभिः' इत्याद्यसिद्ध्यापत्तेः । तन्मध्यपरिभाषाया अपि ज्ञापितत्वासिद्धिरिति तु न, 'एततदोः सुलोपोऽकोः' इत्यत्रत्येन 'अकोः' ग्रहणेन ज्ञापनसम्भवात् । भाष्यकृता तु लक्ष्यानुरोधेन विपरीतनियमाभावमाश्रित्य नञ्द्वयं प्रत्याख्यातम् ।

तथा हि—"इमौ द्वौ प्रतिषेधावुच्येते । उभौ शक्यावक्तुम् । कथम् ? एवं वक्ष्यामि 'इदमदसोः कात्' इति । तन्नियमार्थं भविष्यति—इदमदसोः कादेव नान्यत इति" ननु 'इद ए' इति स्थितौ स्मैभावात्परत्वादनादेशो 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायेन पुनः स्मायादेशो न स्यादित्यत आह—**नित्यत्वादिति**–कृतेऽकृते चानादेशस्मायादेशस्य प्रवृत्तियोग्यतया नित्यत्वेनानादेशात्प्रागेव स्मायादेशो 'अनाप्यकः' इत्यनादेशस्तु न, 'हलि लोपः' इत्यपवादेन बाधात् । न च स्मायादेशे कृतेऽकृते च अन्नादेशप्राप्त्याऽन्नादेशस्यापि नित्यतया परत्वादनादेशो 'सकृद्गतौ'

पश्चाद्धलि लोपः, अस्मै, आभ्याम्, एभ्यः। अस्मात्, आभ्याम्, एभ्यः। अस्य, अनयोः, एषाम्। अस्मिन्, अनयोः, एषु। ककारयोगे तु अयकम्, इमकौ, इमके। इमकम्, इमकौ, इमकान्। इमकेन, इमकाभ्याम् इत्यादि।

*इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ।* [ २–४–३२ ]

**अन्वादेशविषयस्येदमोऽनुदात्तोऽशादेशः स्यात्तृतीयादौ। अश्वचनं साकच्कार्थम्।**

इति न्यायात्स्मायानापत्तिः, लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैव नित्यत्वप्रयोजकस्य ग्रहणात्।

वस्तुतस्तु लक्षणैकचक्षुष्केण लक्ष्यानुरोधस्य वक्तुमशक्यतया अन्तरङ्गत्वादुपसञ्जनिष्यमाणन्यायाच्च न अन्नादेश इति बाधकाबाधितेति निवेशकल्पना व्यर्थैव। **पश्चादिति**—स्मायादेशात्पश्चादपि न अन्नादेशः, किन्तु अन्नादेशापवादो 'हलि लोप' एव। **अस्मादिति**—अत्रापि नित्यत्वादुपसञ्जनिष्यमाणन्यायाद्वाऽनोऽप्रवृत्तौ स्मादादेशे हलि लोपः। **अनयोरिति**—त्यदाद्यत्वे पररूपे **'अनाप्यकः'** इत्यन्नादेशे 'ओसि च' इत्येत्वेऽयादेशे च 'अनयोः' इति।

'अनाप्यकः' इत्यत्र 'अकः' इत्यस्य 'नेदमदसोरकोः' इत्यत्र 'अकोः' इत्यस्य च फलमाह—

**ककारयोगे त्विति**—'अव्ययसर्वनाम्नामकच् प्राक्टेः' ( ५-३-७१ ) इत्यनेन इदंशब्दस्य टेः प्रागकचि **अयकम्**। ककाराकार उच्चारणार्थः 'इदकम्' इति जाते तन्मध्यपतितन्यायेन इदंशब्देन 'इदकम्' इत्यस्यापि ग्रहणे 'इदकम् सु' इति स्थितौ त्यदाद्यत्वं बाधित्वा मस्य मादेशे 'इदोऽय् पुंसि' इतीदोऽयादेशे सोर्हल्ङ्यादिलोपे 'अयकम्' इति।

**इमकाविति**—'इदकम् औ' त्यदाद्यत्वे पररूपे 'दश्च' इति दस्य मत्वे 'नादिचि' इति पूर्वसवर्णदीर्घनिषेधे 'वृद्धिरेचि' वृद्धौ 'इमकौ' इति। 'अनाप्यकः, हलि लोपः, नेदमदसोरकोः' एतानि नेह प्रवर्तन्ते, ककाररहिते एव तत्प्रवृत्तेः। तथा च सर्ववद्रूपं बोध्यम्।

इदमोऽन्वादेशे विशेषमाह—

**'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ'**—( २-४-३२ ) इति। इदमः, अन्वादेशे, अश्, अनुदात्तः, तृतीयादौ, इति पदच्छेदः। ननु इद स्मै, इत्यत्र इदम्शब्दः कमिन्प्रत्ययान्तत्वेन नित्त्वादाद्युदात्तः, शेषनिघातेन दकारोत्तराकारोऽनुदात्तः। त्यदाद्यत्वेन मकारस्थानेऽकारोप्यनुदात्त इति 'आभ्याम्' इत्यादौ पररूपनिष्पन्नोऽकारोऽनुदात्तस्तत्स्थाने दीर्घोऽप्यान्तरतम्यादनुदात्त एव स्यात्किमनुदात्तत्वविधानेनेति चेन्न, इद् इत्युदात्तस्यानुदात्तेऽकारे परे लोपात् 'अनुदात्तस्य यत्रोदात्तलोपः' ( ६-१-१६१ ) इत्यनुदात्तस्याकारस्य उदात्तत्वे तस्यानुदात्तत्वविधानेन तच्चारितार्थ्यात्।

नच परत्वेनानुदात्तत्वनिमित्तकोदात्तलोपे एव तत्प्रवृत्त्या प्रकृते तदभावान्नानुदात्तस्योदात्तत्वमिति वाच्यम्, अनुदात्ताश्विधानसामर्थ्यादत्रत्यभाष्यप्रामाण्याच्च कमिप्रत्ययान्तस्यैवोदात्तान्तेदंशब्दस्वीकारेणानुदात्तत्वविधानस्य चारितार्थ्यात्।

तथा च 'अन्तोदात्तेभ्य ऊडिदमादिभ्यः परा असर्वनामस्थानविभक्तिरुदात्ता स्यादि'त्यर्थकेन 'ऊडिदम्' ( ६-१-१७६ ) इत्यनेन 'आभ्याम्' इत्यादौ विभक्तेरुदात्तत्वाभावात् सर्वानुदात्तत्वं सिध्यति। अनुदात्तत्वविधानसामर्थ्यादेव 'सावेकाचः' ( ६-१-१६८ ) इत्यनेनापि न विभक्तेरुदात्तत्वम्।

ननु 'आभ्याम्' इत्यादौ सर्वानुदात्तत्वाय 'इदमोऽनुदात्तस्तृतीयादौ' इदमेवोच्यताम्। तत्र द्वितीयायां टायामोसि चान्वादेशे एतेन भवितव्यम्। अन्याः सर्वा हलादयो विभक्तयः, तत्र इदो लोपे कृते केवलमिदमोऽनुदात्तमात्रं वक्तव्यम्, किमश्विधानेनेति चेन्न, साकच्कस्य इदंग्रहणेन ग्रहणात् सर्वादेशविधानार्थम् अश्करणस्य चारितार्थ्यात्।

*द्वितीयाटौस्स्वेनः* । [ २-४-३४ ]

**द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः ।**

---

ननु अशि शित्करणसामर्थ्यात् निर्दिश्यमानपरिभाषाऽकचो व्यावर्त्तनाय न प्रवर्त्तते । एवञ्च त्यदादेरित्यस्य विशेष्यतया तदन्तविधौ 'अनाभ्याम्' इत्यादौ ससुट्कस्याशादेशापत्तिर्निर्दिश्यमानपरिभाषाया अप्रवृत्तेरिति चेन्न, शित्त्वेन अकज्व्यावर्तिकाया एव निर्दिश्यमानपरिभाषाया अप्रवृत्तिकल्पनात् । ससुट्कस्यादेशव्यावर्त्तनाय तु प्रवर्त्तत एव ।

ननु संज्ञोपसर्जने त्यदाद्यत्वाप्रवृत्त्याऽकरणं सर्वादेशत्वाय सार्थकमिति चेन्न, शित्त्वाभावे 'अकारस्याकारविधाने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति' इति भाष्यांक्त्या संज्ञोपसर्जनयोरेतदप्रवृत्तिबोधनात् । अन्यथा संज्ञोपसर्जनयोर्मकारस्याकारविधानेन चारितार्थ्यात् 'अन्तरेणापि शकारं सर्वादेशो भविष्यति' इति भाष्यासङ्गतिः स्पष्टैव ।

एतेन 'संज्ञोपसर्जनयोस्तु नेदम्, 'एतदस्त्रतसोः' इत्युत्तरसूत्रसाहचर्य्यात्' इति नागेशोक्तिरसङ्गता, 'नच सूत्रान्तरसाहचर्य्यस्य नागेशासम्मततया कथमेतदिति वाच्यम्, 'द्वितीयाटौस्सु' इत्युत्तरसूत्रे इदम एतदश्चानुवृत्त्या तस्य च तत्रानुपसर्जनस्य ग्रहणेन प्रकृतेऽपि अर्थाधिकारानुरोधात्तादृशस्यैव ग्रहणमित्याशयादि'त्युक्तिः परास्ता । 'द्वितीयाटौस्सु' इत्यस्यापि संज्ञोपसर्जनयोरप्रवृत्तेः प्रमाणान्तरानुसरणेनैव साध्यत्वाच्चेत्युपाध्यायाः ।

तद्यथा 'इमकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम्' अत्र साकच्कस्य 'आभ्याम्' इति । ननु अक्रियमाणेऽपि शित्करणे 'अलोऽन्त्यस्य' इति परिभाषया अकारस्याकारविधाने फलाभावादन्तरेण शकारं सर्वादेशो भविष्यतीति चेन्न, यथा 'मो राजि समः क्वौ' इत्यत्र मकारस्य मकारविधाने प्रयोजनं नास्तीति कृत्वा अनुस्वारादयो बाध्यन्ते तथा अकारस्य स्थाने ये दीर्घादयः प्राप्नुवन्ति तद्बाधनार्थमकाराकारविधानस्य चारितार्थ्यात् । तस्मात् साकच्कस्यादेशार्थः शकार इति चेन्न, अअ अ इति प्रश्लेषात् साकच्कस्यादेशसिद्धेः ।

तदुक्तं भाष्ये 'प्रश्लिष्टनिर्देशोऽयम् अ अ इति । अनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति । अथवा विचित्रास्तद्धितवृत्तयः । नान्वादेशेऽकजुत्पद्यते' इति । अनेन भाष्येणेदमुक्तं भवति । अन्वादेशेऽकचोऽभावात् साकच्कस्यैदमोऽन्वादेशो दुर्लभत्वात्तदर्थं शित्करणं व्यर्थमेवेति । स्पष्टञ्चेदं भाष्ये ।

**'द्वितीयाटौस्स्वेनः'** ( २-४-३४ ) इति । द्वितीया च टा च ( 'न मु ने' इति सूत्रे भाष्ये 'टायामादेशः' इति प्रयोगदर्शनादाबन्तष्टाशब्दः ) ओश्चेति द्वितीयाटौसः । तेषु द्वितीयाटौस्सु द्विसकारकः पाठः । 'इदमोऽन्वादेशे' इत्यत इदम इति, अन्वादेशे इति, 'एतदस्त्रतसोः' इत्यत एतद् इति चानुवर्तते । तदाह—**द्वितीयायामित्यादि** । पूर्वसूत्रयोरिदमेतदोस्त्यदादिपठितयोरेव ग्रहणात्संज्ञोपसर्जनयोर्नास्य प्रवृत्तिः, अर्थाधिकारानुरोधात् ।

अन्वादेशशब्दार्थमाह—**किञ्चिदिति**—**विधातुमिति**—विधानञ्चात्र अज्ञातज्ञापनं न तु प्रवर्त्तनारूपम् । तथा सति 'इमकाभ्यां छात्राभ्यां रात्रिरधीता, आभ्यामहरप्यधीतम्' इति भाष्योक्तोदाहरणविरोधापत्तेः, प्रवर्तनाविषयत्वाभावात् ।

पूर्वमिदमा किञ्चिद् बोधितं पुनरिदमैव बोधनेऽन्वादेश इति नायं नियमः, किन्तु केनापि रूपेण बोधितस्य पुनः केनापि रूपेणाज्ञातज्ञापनमन्वादेशः ।

तदुक्तं भाष्ये 'तद्द्वेष्यम् ( अनभिमतम् ) विजानीयादिदमा कथितमिदमैव यदानुकल्प्यते इति । तदाचार्य्यः ( वार्तिककारः ) सुहृद् भूत्वाऽन्वाचष्टे 'अन्वादेशश्च कथितानुकथितमात्रम्' इति । 'ईषदर्थे क्रियायोगे' इत्यत्र 'एतमातम्' इति प्रयोगे एनादेशस्तु न, लोके सिद्धस्यैवानुवादेन

यथा 'अनेन व्याकरणमधीतम् एनं छन्दोऽध्यापय' इति। 'अनयोः पवित्रं कुलम्, एनयोः प्रभूतं स्वम्' इति। एनम्, एनौ, एनान्। एनेन एनयोः। इति मान्ताः।

गणयतेर्विच्। सुगण्, सुगणौ, सुगणः। सुगण्ठ्सु, सुगण्ट्सु, सुगण्सु। क्विप्। 'अनुनासिकस्य क्विझलोः' इति दीर्घः। सुगाण्, सुगाणौ, सुगाणः। सुगाण्ठ्सु, सुगाण्ट्सु, सुगाण्सु ॥ इति णान्ताः ॥

अज्ञातज्ञापनाभावात्। इदमः विधाने एवान्वादेशत्वे तु 'अथैनमद्रेस्तनया शुशोच' इति रघुवंशे विधित्वाभावेऽपि अज्ञातज्ञापनस्य सत्त्वान्नानुपपत्तिः। इदमा उक्तस्य पुनरुक्तिरन्वादेश इत्यपि न।

अत एव

'एवं तयोक्ते तमवेक्ष्य किञ्चिद्विस्त्रंसिदूर्वाङ्कमधूकमाला।
ऋजुप्राणामक्रियथैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥'

इति रघुवंशे तच्छब्देनोपात्तस्यापि पुनरुपादाने एनादेशः सिध्यति।

**नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय'** इति गीतगोविन्देऽपि ज्ञातस्यैव भीरुत्वस्यानुवादसत्त्वेनाज्ञातज्ञापनाभावान्नादेशः। एवञ्च विधाने एवान्वादेश इति चिन्त्यं फलाभावश्च। **अनेन व्याकरणमिति**—अत्राप्यज्ञातज्ञापनमेवापूर्वबोध्यत्वस्यैव विधेयत्वात्। **प्रभूतमिति**—प्रचुरमित्यर्थः।

**अथ णकारान्ताः। गणयतेरिति**—'गण संख्याने' इति चौरादिकात्स्वार्थे णिच्। गण इत्यदन्तो धातुः 'अतो लोपः' (६-४-४८) इत्यलोपः। अलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् णकारस्यैवोपधात्वेनादुपधत्वाभावात् 'अत उपधायाः' (७-२-११६) इति न वृद्धिः। गणयतेः 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति कर्तरि विच्। णिलोपः 'सुगण्' इति। सुप्रत्यये तस्य 'हल्ङ्याब्' इति लोपे सुगण् इति। सुगण्शब्दात् सप्तमीबहुवचने 'सुगण् सु' इति दशायाम् 'ङ्णोः कुक्टुक्' इति टुकि 'चयो द्वितीयाः' इति टस्य ठकारे 'सुगण्ठ्सु' वैकल्पिकठकाराभावे 'सुगणट्सु' अत्र टुको जश्त्वं न, तद्दृष्ट्या टुकोऽसिद्धत्वात्। इति वैकल्पिकटुकोऽभावे 'सुगण्सु' इति रूपत्रयम्। गणयतेः 'क्विप् च' (३-२-७६) इति कर्तरि क्विपि तु पूर्वोक्तसुगण्शब्दवत्सर्वं कार्यं परन्तु क्विपि परे 'अनुनासिकस्य क्विझलोः' (६-४-१५) इत्युपधादीर्घो विशेषः।

न चालोपणिलोपयोः 'अचः परस्मिन्' इति स्थानिवत्त्वेन दीर्घाप्राप्तिः, दीर्घे स्थानिवत्त्वनिषेधात्। न च जश्रादिसाहचर्य्यात् त्रैपादिकस्यैव 'हलि च' (८-२-७७) इत्यादिविहितस्य ग्रहणम्, 'चिणणमुलोः' इति सूत्रभाष्यप्रामाण्यात् सपादसप्ताध्यायीस्थदीर्घस्यापि ग्रहणबोधनात्।

तथा हि—'चिणणमुलोर्णिज्व्यवेतानां यङ्लोपे च' चिणणमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानं कर्तव्यम्। शमयन्तं प्रयोजितवान् 'अशमि, अशामि। शमं शमम्, शामं शामम्।' शमयतेर्ण्यन्तात् कर्मणि लुङि चिणि, भावे 'आभीक्ष्ण्ये णमुल् च' (६-४-२२) इति णमुलि। 'नित्यवीप्सयोः' इति णमुलन्तस्य द्वित्वम्। अत्र द्वयोर्णिचोर्लोपस्य स्थानिवत्त्वेन चिण्परे, णमुल्परे च णौ 'चिणणमुलोर्दीर्घोऽन्यतरस्याम्' इति विधीयमान उपधाया दीर्घः प्रथमणिचा व्यवहितत्त्वान्न प्राप्नोति।

एवं यङन्तात् चिणि णमुलि च 'अतो लोपः' इति अलोपस्य स्थानिवत्त्वाद् दीर्घो न प्राप्नोतीति वार्त्तिकम् उक्तम्। तदनन्तरम्—

'ननु च प्रतिषिध्यते तत्र स्थानिवद्भावः, दीर्घविधिं प्रति न स्थानिवदिति।' यदि त्रैपादिके 'हलि च' इत्यादिदीर्घ एव स्थानिवत्त्वनिषेधः स्यात्तदेदम्भाष्यं विरुध्येत। एतेन 'णाविति जातिपरोऽयं निर्देशः' इत्यपि भाष्यविरुद्धम्।

'क्वौ विधिं प्रति न स्थानिवत्' इति, 'क्वौ लुप्तं न स्थानिवत्' इति च निषेधाच्च 'सुगाण्' इति क्विपि साधु। सुगाण्शब्दस्य सुगण्शब्दवद्रूपं बोध्यम्।

परत्वादुपधादीर्घः, हल्ङ्यादिलोपः, ततो नलोपः, राजा ।

*न ङिसंबुद्ध्योः* । [ ८-२-८ ]

**नस्य लोपो न स्याद् ङौ संबुद्धौ च । हे राजन् । ङौ तु छन्दस्युदाहरणम्: 'सुपां सुलुक्–' इति ङेर्लुक्, निषेधसामर्थ्यात्प्रत्ययलक्षणम् ।**

---

राजते = दीप्यते इति **राजा** भूपतिश्चन्द्रमा वा । 'राजृ दीप्तौ' इत्यतः 'कनिन् युवृषितृक्षि राजि' ( १ पा० १५६ सू० ) इत्यादिना कनिन् । 'राजन् सु' इति स्थितौ 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेन 'हल्ङ्याब्भ्यः' इति लोपं बाधित्वोपधादीर्घः । न च 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायात् पुनः सुलोपो न स्यात् । अत एव 'तिसृणाम्' इत्यत्र परत्वात् तिस्रादेशे कृते स्थानिवत्त्वेन त्रिशब्दत्वमादाय 'त्रेस्त्रयः' इति त्रयादेशो नेति वाच्यम्, 'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इतिवत् अत्रापि तेन न्यायेन सुलोपाक्षतेः । इमे च परिभाषे 'विप्रतिषेधे' इति सूत्रे भाष्ये स्पष्टे । तथाहि—'पठिष्यति ह्याचार्य्यः—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति' । पुनः पठिष्यति—'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति ।

किं पुनरियता सूत्रेण = 'विप्रतिषेधे परं कार्यम्' इति सूत्रेण लभ्यम् ? लभ्यमित्याह । **कथम् ?** इह भवता द्वौ हेतू व्यपदिष्टौ, तृजादिस्तुल्यं पर्य्यायः प्राप्नोतीति, अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति च । तद्यदैष हेतुस्तृजादिस्तुल्यं पर्य्यायः प्राप्नोतीति । तदा विप्रतिषेधे परमित्यनेन किं क्रियते, नियमः । विप्रतिषेधे परमेव भवतीति । तदैतदुपपन्नं भवति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । यदा त्वेष हेतुरप्रतिपत्तिरुभयोस्तुल्यबलत्वादिति तदा विप्रतिषेधे परमित्यनेन किं क्रियते ? द्वारम् । अप्रवृत्त्यपनयनेन परशास्त्रप्रवृत्तेर्द्वारमुपायः क्रियते, विप्रतिषेधे परं तावद्भवति । तस्मिन् कृते यदि पूर्वमपि प्राप्नोति तदा तदपि भवति । तदैतदुपपन्नं भवति 'पुनः प्रसङ्गविज्ञानात्सिद्धमिति' इति । लक्ष्यानुरोधेन व्यवस्थेति भावः ।

**ततो नलोप इति**—न च यथोद्देशपक्षे प्रत्ययान्तत्वस्य भावित्वेन 'अकृतव्यूहपरिभाषया' प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, अकृतव्यूहपरिभाषाया अनित्यत्वादसत्त्वाच्च । न च कार्यकालपक्षे सुलोपे प्रत्ययलक्षणेन 'अप्रत्ययः' इति प्रत्ययान्तत्वात्प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, 'न ङिसम्बुद्ध्योः' इति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तप्रतिषेधाप्रवृत्तिज्ञापनात् । न च 'हे सुराजन्' इत्यत्र समासत्वात्प्रातिपदिकत्वेन 'न ङि' इत्यस्य चारितार्थ्यमिति वाच्यम्, समासेऽप्यप्रत्यय इत्यस्य सम्बन्धात् । अन्यथा सुराजेत्यादौ विध्यर्थत्वे सम्भवति समासग्रहणस्य नियमार्थत्वपरभाष्यासङ्गतिः ।

वस्तुतस्तु लाघवात् 'अप्रत्ययः' इति पर्य्युदासपरम् । प्रत्ययान्तभिन्नमित्येवार्थः । अत्र यथोद्देश एव पक्ष इति जाता संज्ञा तिष्ठत्येवेति न कोऽपि दोषः । तथा च प्रातिपदिकसंज्ञकं तदन्तत्वान्नलोपे 'राजा' इति ।

**'हे राजन्'** इत्यत्र नलोपबाधकमाह—**'न ङिसम्बुद्ध्योः'** ( ८–२–८ ) इति । 'न लोपः प्रातिपदिकान्तस्य' इत्यतः **'न' इति लुप्तषष्ठीकं** 'लोपः' इति चानुवर्त्तते । नकारेऽभेदेन 'प्रातिपदिकान्तस्य' इति विशेषणाद् 'ऋद्धस्य राज्ञः पुरुषः' इतिवत् सविशेषणानां वृत्तिर्नेति सिद्धान्तात् समासो न स्यादित्युक्तं **लुप्तषष्ठीकमिति** । तदुक्तं **ङौ सम्बुद्धौ** चेत्यादि । इति नलोपनिषेधे 'हे राजन्' इति । ङौ 'यचि भम्' इति भत्वेन पदत्वबाधान्नलोपाप्राप्त्याऽऽह—**ङौ तु छन्दसीति**—न तु छन्दसि 'सुपां सु' ( ७–१–३९ ) इति लुक्यपि 'न लुमता' इति प्रत्ययलक्षणनिषेधात् 'न ङि' इति निषेधाप्राप्तिरत आह—**निषेधसामर्थ्यादिति**—ङौ निषेधस्य वैयर्थ्यापत्त्या 'न लुमता' इति निषेधस्य बाधाच्च इति भावः । यदि तु 'न ङिसम्बुद्ध्योः' इत्यत्र 'ङिसम्बुद्ध्योः' इति षष्ठीद्विवचनान्तं ङ्यन्तस्य सम्बुद्ध्यन्तस्य च तदादेर्नलोपो नेत्यर्थस्तदा लुप्यमानप्रत्ययान्तस्य कार्यसत्त्वात् लुप्यमानप्रत्यया-

'परमे व्योमन्' । 'ङावुत्तरपदे प्रतिषेधो वक्तव्यः' । ङौ विषये उत्तरपदे परे 'न ङिसम्बुद्धयोः' इत्यस्य निषेधो वाच्य इत्यर्थः । चर्मणि तिला अस्य चर्मतिलः, ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः ।

राजानौ, राजानः । राजानम्, राजानौ ।

---

व्यवहितपूर्वस्य कार्याभावेन 'न लुमता' इत्यस्याप्रवृत्त्या प्रत्ययलक्षणस्य सुलभत्वात् निषेधसामर्थ्य-क्लेशो न कार्यः ।

**परमे व्योमन्निति**—'सुपां सु' इति भाष्ये 'आर्द्रे चर्मन्' इत्यत्र इकारस्य पूर्वसवर्णे दकारादेशे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो नेत्युक्तम् । परन्तु नलोपे सुप्स्वरादिविधिष्वेवासिद्धत्वनियमादत्रासिद्धत्वाप्राप्त्या संयोगान्तलोपस्यासिद्धतया पूर्वसवर्णस्य प्राप्तावपि 'अन्तराङ्गानपि' इति न्यायेन लुक एव प्राप्त्या च प्रक्रियालाघवाय न लुमतेति निषेधानित्यत्वस्यैवाश्रयणीयत्वे गौरवात्तथा नोक्तम् ।

भाष्ये तु ङिग्रहणं प्रत्याख्यातम् । तथा हि—'एवं तर्हि ङ्यर्थेन तावन्नार्थः । तस्मात्तु द्वौ प्रतिषेधानर्थक्यम् । किं कारणम् ? भत्वात् । भसंज्ञाऽत्र भवति । यदि तर्हि भसंज्ञाऽत्र भवति 'रथन्तरे सामन्' इत्यत्र 'अल्लोपोऽनः' इत्यलोपः प्राप्नोति । नैष दोषः । उक्तमुभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा—'सत्नुष्टुभा सऋक्वता गणेन' पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वात् 'अल्लोपोऽनः' इति लोपो न, भत्वान्नलोपो न भविष्यति । तस्मान्नार्थो ङिग्रहणेन ।' इति ।

न च 'राजनीवाचरती'त्यर्थे 'उपमानादाचारे' ( ३-१-१० ) इति सूत्रे 'अधिकरणाच्चेति वक्तव्यम्' इति वार्तिकेन क्यचि 'सनाद्यन्ता धातवः' इति धातुसंज्ञायाम् 'सुपो धातु' इति ङेर्लुकि 'राजन्यति' इत्यत्र लोके 'अयस्मयादीनि छन्दसि' इत्यस्याप्रवृत्त्या प्रत्ययलक्षणेन 'सुप्तिङन्तम्' इति पदत्वात्प्राप्तनलोपवारणाय ङिग्रहणमावश्यकमिति भाष्योक्तं प्रत्याख्यानं न वरमिति वाच्यम्, प्रत्याख्यानपरभाष्येणेदृशानामनभिधानात् ।

अत्र सूत्रे भाष्ये 'वा नपुंसकानाम्' इत्येतद् वक्तव्यमेव इति' भाष्यात् 'सम्बुद्ध्यन्तस्य ङ्यन्तस्य च नलोपो न' इत्यर्थे 'न लुमता' इति निषेधस्यानित्यत्वं न ज्ञापनीयं भवतीति कस्यचिदुक्तिश्चिन्त्या ।

अन्ये तु सप्तम्यन्तपाठ एव ज्यायान् निषेधसामर्थ्यात् 'न लुमता' इत्यस्यानित्यत्वेनाप्रवृत्त्या 'हे चर्मन्' इति औत्सर्गिकप्रवृत्तौ 'हे चर्म' इति सिद्धौ 'सम्बुद्धौ वा नपुंसकानाम्' इति न वक्तव्यं भवतीत्याह । ननु छन्दसि ङेर्लुका लुप्तत्वेऽपि 'परमे व्योमन्' इत्यादौ प्रत्ययलक्षणमाश्रित्य 'न ङिसम्बुद्ध्योः' इति यथा प्रवर्तते तथा चर्मणि तिला अस्य चर्मतिलः, 'ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः' इत्यत्रापि समासे ङेर्लुकः प्रत्ययलक्षणेन 'न ङिसम्बुद्धयोः' इति निषेधः प्रवर्तेतात आह—**ङावुत्तरेति**—समासोत्तरपदे परतो यो ङिस्तत्र 'न ङिसम्बुद्ध्योः' इति निषेधस्य प्रतिषेधो वक्तव्य इत्यर्थः । तथा च निषेधस्य प्रतिषेधान्नलोपः सिध्यति । नञ्विशेषिताभावाभावस्य प्रतियोगिरूपत्वात् नलोपाभावाभावस्य नलोपरूपत्वात् ।

ननु मूले उत्तरत्र 'ङावुत्तरपदे' इत्यस्योपन्यासश्चिन्त्यः, 'शाब्दक्रमादार्थक्रमो बलीयान्' इति 'ङावुत्तरपदे'न्यायेन उत्तरत्र पठितस्याऽपि वार्तिकस्य तत्प्रत्याख्यानपर-ङौ तु छन्दस्युदाहरणम् इत्यतः प्रागेवोपन्यासो युक्तः । अन्ये तु सम्बुद्धिसाहचर्यादेकपदाश्रये लुक्येवास्य प्रवृत्तिर्न सामासिके लुकीति इति व्यर्थमेव । 'सम्बुद्ध्यन्तानां न समासः'···इदं तावत् समानार्थेन वाक्येन भवितव्यं समासेन च । यश्चेहार्थो वाक्येन गम्यते नासौ जातुचित्समासेन गम्यते । अवयवसम्बोधनं वाक्येन गम्यते समुदायसम्बोधनं समासेन' इति भाष्यात्सम्बुद्ध्यन्तानां न समासः ।

'अल्लोपोऽनः' श्चुत्वम्, न चाल्लोपः स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात्, नापि बहिरङ्गतया असिद्धः, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः, जञोर्ज्ञः, राज्ञः । राज्ञा ।

---

'राजन् शस्' इत्यत्र 'अल्लोपोऽनः' इत्यलोपे 'स्तोः श्चुना' इति श्चुत्वेन नकारस्य ञकारः । तदाह—**श्चुत्वमिति** ।

ननु 'अचः परस्मिन्' इति सूत्रे पूर्वस्माद्विधिः—इति पञ्चमीसमासे स्थानिभूतादचः पूर्वत्वेन दृष्टात्परस्य विधौ ( कार्ये ) अजादेशः स्थानिवदित्यर्थे प्रकृते लोपरूपादेशस्य स्थानिभूतोऽजकारस्ततः पूर्वत्वेन जकारस्तस्य श्चुत्वेऽलोपस्य स्थानिवत्त्वान्नकारस्य जकारयोगाभावात् चुत्वं न स्यादत आह—**न चेति**—चुत्वे कर्तव्येऽलोपो न स्थानिवदित्यर्थः । तत्र हेत्वाकाङ्क्षायामाह—**पूर्वत्रेति** । न पदान्त—सूत्रे 'पूर्वत्रासिद्धे च' इति भाष्यपठितवार्तिकेन त्रिपादीस्थे कार्ये कर्तव्ये अजादेशो न स्थानिवदिति निषेधादित्यर्थः । वार्तिके पूर्वत्रासिद्धपदं त्रिपादीस्थे लाक्षणिकम् । ननु अलोपो प्रकृतिप्रत्ययापेक्षभसंज्ञाङ्गसंज्ञासापेक्षत्वेन बहिरङ्गः, चुत्वं तु तवर्गचवर्गवर्णद्वयनिमित्तकत्वेनान्तरङ्गम् । तथा च अन्तरङ्गे चुत्वे कर्तव्ये बहिरङ्गस्यालोपस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयाऽसिद्धत्वेन 'अकारेण व्यवधानात्कथं चुत्वमित्याशङ्कायामाह—**नापि बहिरङ्गतयेति** ।

**यथोद्देश इति**— यदा 'यथोद्देशं संज्ञापरिभाषम्' इति पक्षः । उद्दिश्यतेऽस्मिन् इति विग्रहेऽधिकरणे घञ् । उद्देशः = उपदेशदेशः—अष्टाध्यायीघटकशास्त्राधिकरणीभूतः कालः । यद्यपि समवायेन शब्दाधिकरणमाकाशम् । तथाऽपि कालिकेन सम्बन्धेन शब्दाधिकरणं कालोऽपि । तदुक्तम् 'जन्यानां जनकः कालो जगतामाश्रयो मतः' इति । तथा च उद्देशम्=उच्चारणाधिकरणदेशमनतिक्रम्य वर्तते इति यथोद्देशम्, अव्ययीभावसमासः । संज्ञा च परिभाषा च संज्ञापरिभाषम् । समाहारद्वन्द्वः ।

संज्ञाशास्त्रं परिभाषाशास्त्रञ्च स्वदेशे तिष्ठदेव प्रतिविधिशास्त्रमुपकुरुते । तदाह—**यथोद्देशपक्षे इति** । एवञ्च 'वाह ऊठ्' ( ६–४–१३२ ) सूत्रे ऊठ्ग्रहणेन ज्ञापिता अन्तरङ्गपरिभाषा ऊङ्देशत्वेन सपादसप्ताध्यायीस्थेति तदाह—**षाष्ठीति**—षष्ठे अध्याये भवा षाष्ठी 'तत्र भवः' इत्यणि 'टिड्ढाणञ्' इति ङीप् । **षाष्ठीं प्रति** षष्ठाध्यायस्थां परिभाषां प्रतीत्यर्थः । **तद्दृष्ट्या** श्चुत्वस्य (८–४–४०) त्रिपादीस्थस्यासिद्धतया अन्तरङ्गं श्चुत्वेन जानातीत्यन्तरङ्गाभावेन परिभाषाया अप्रवृत्त्या अलोपासिद्धत्वाभावेन श्चुत्वं सिध्यति । न च कार्यकालपक्षे अदृष्टपिशाचन्यायेन त्रिपाद्यामपि अन्तरङ्गपरिभाषाप्रवृत्त्या दोषः, एकपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्यायुक्तत्वात् । अत एव पक्षद्वयाश्रयणं संगच्छते ।

'प्रविगणय्य' इति भाष्यप्रयोगात्पञ्चमीसमासबोधितार्थस्यानित्यत्वाच्च स्थानिवद्भावाभावः । चुत्वे 'राज् ञ् अस्' इति जाते 'जञोर्ज्ञः' इत्यभियुक्तवचनम् । जञ्योगे लोकवेदसिद्धतादृशध्वनेलिपिविशेषस्य चानुवादकम् । नन्विदं वर्णान्तरम् , शिक्षादावपरिगणितत्वेन तादृशवर्णसत्त्वे मानाभावात् । अत एव 'तज्ज्ञानम्' 'जिज्ञासा' इत्यादौ जकारश्रवणम् । लोके 'ज्ञ' इत्युच्चारणे बीजन्तु यमानामादेशत्वमते 'कुँ खुँ गुँ घुँ यमाः' इति यमस्वरूपकथनपरं प्रातिशाख्यमेव । 'कुँ खुँ' इति वचनमपि तादृशोच्चारणबोधनपरमेव, न तु तादृशविधानपरम् 'जिज्ञासा' इत्याद्यसिद्ध्यापत्तेः ।

ननु राजन्शब्दाद् भ्यामि, भिसि, भ्यसि, सुपि च कृते 'स्वादिष्वसर्वनामस्थाने' इति पदत्वे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'सुपि च' इति दीर्घः, 'अतो भिस ऐस्' इति ऐस्, 'बहुवचने झल्येत्' इत्येत्वञ्च स्यात् । न च दीर्घादिदृष्ट्या नलोपस्य त्रिपादीस्थत्वेनासिद्धतया तेषामप्राप्तिः तथा सति 'राजाश्वः, दण्ड्यर्घः' इत्यादावपि नलोपस्यासिद्धतया यण्सवर्णदीर्घयोरसिद्ध्यापत्तिरित्याशङ्कायामाह—

*नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।* [ ८-२-२ ]

**सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धः, नान्यत्र 'राजाश्व' इत्यादौ ।**

**'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति'** ( ८-२-२ ) इति । नस्य लोपो नलोपः । विधानं विधिर्भावे किः । विधीयते विधिरिति कर्मणि च । उभयोरेकशेषः । तत्र स्वरादिविषये भावसाधनः ( भावार्थकः ) । स्वर-संज्ञा-तुक्कर्मकविधाने इत्यर्थः । स्वरादौ विधेये सतीति यावत् । विधानकर्मणि सुप्सम्बन्धश्च स्थान्यादेशभावरूपो निमित्तनिमित्तिभावरूपश्च ।

सुबिति प्रत्याहारः । सुप् च स्वर ( उदात्तादिः ) श्च संज्ञा च तुक् चेति द्वन्द्वः, सुप्स्वरसंज्ञातुकः । तेषां विषयस्तेषु सम्बन्धसामान्यषष्ठ्या समासः । 'द्वन्द्वान्ते' इति न्यायेन विधिशब्दस्य प्रत्येकं सम्बन्धः । 'पूर्वत्रासिद्धम्' इत्यतः 'असिद्धम्' इत्यनुवर्त्तते—तदाह—**सुब्विधावित्यादि ।** भाष्ये सुपो विधिरि( सुपः स्थाने विधिः )त्यर्थे 'राजभिः' इत्यत्र 'ऐस्' न स्यात् । इह तु खलु 'राजभ्याम्' 'राजसु' इति नलोपे कृते दीर्घत्वैत्वे प्राप्नुतः, नैष दोषः । सुब्विधिरिति सर्वविभक्त्यन्तः समासः, 'सुपो विधिः सुब्विधिरिति सुपि विधिः सुब्विधिरिति' इत्युक्तं तत्र षष्ठ्यन्तसप्तम्यन्तयोरेव समासोक्त्या 'सर्वविभक्त्यन्तः समासः' इति भाष्योक्तिर्न सङ्गच्छते इति चेन्न, 'सर्वविभक्त्यन्तः समासः' भवितुमर्हतीति शेष इत्यभिप्रायेण तदुक्तेः । प्रकृते विभक्तिद्वयान्तेन समासे न दोष इत्याशयात् । एतेन तत्समर्थनाय महान् कैयटप्रयासो निष्फल इत्युपाध्यायाः ।

**कृतीति** सामर्थ्यात्समासैकदेशे तुक्येव विशेषणमन्यत्रासम्भवाच्च । सुब्विधिशब्देन सुप्त्व-तद्व्याप्यधर्मावच्छिन्नोद्देश्यताकविधेरेव ग्रहणम् । तेन सुप्त्वावच्छिन्नोद्देश्यताके दीर्घे, सुप्त्वव्याप्यभिस्त्वावच्छिन्नोद्देश्यताके ऐस्विधौ च नलोपासिद्धत्वेन दीर्घैस्त्वे न । 'दण्डिषु' इत्यादौ 'आदेशप्रत्यययोः' ( ८-३-५९ ) इति षत्वस्य सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यताकत्वाभावान्नासिद्धत्वम् । एतेन षत्वदृष्ट्या नलोपस्य पूर्वत्रिपादीस्थतया असिद्धत्वाप्राप्त्या सुब्ग्रहणं विध्यर्थमित्यपास्तम् । अत एव 'अप्राणिषु' इति निर्देशः संगच्छते ।

वस्तुतस्तु 'पूर्वत्रासिद्धम्' इत्यस्यानुवृत्त्या नलोपापेक्षया पूर्वत्वविशिष्टेषु सुप्त्वादिविधिषु कर्त्तव्येषु नलोपोऽसिद्ध इत्यर्थेन 'दण्डिषु' इत्यत्र षत्वस्य प्रत्ययावयवत्वेन सुब्विधित्वेऽपि नलोपापेक्षया पूर्वत्वाभावान्नलोपासिद्धत्वाप्राप्त्या षत्वसिद्धौ सुब्विधौ सुप्त्वतद्व्याप्यान्यतरधर्मावच्छिन्नोद्देश्यकत्वनिवेशस्य न फलम् । प्रत्युत 'इकोऽचि विभक्तौ' ( ७-१-७२ ) इति सूत्रस्थभाष्यविरोधः । तथा हि 'अज्ग्रहणं किमर्थम् । व्यञ्जनादौ मा भूत् । त्रपुभ्याम् त्रपुभिः । अस्त्वत्र लोपस्तु नुम् । 'न लोपः प्रातिपदिकान्तस्य' इति लोपो भविष्यति, इत्युक्तम् । अज्ग्रहणाभावे नुमः सुप्त्व-तद्व्याप्यधर्मावच्छिन्नोद्देश्यकत्वाभावेन नपुंसकदण्डिशब्दाद् भ्यामादौ नलोपे जाते नुमि नलोपस्याऽसिद्धत्वाभावेन इगन्तलक्षणे नुमि लक्ष्ये लक्षणन्यायेन पुनर्नलोपाप्राप्त्या दण्डिन् इत्यस्यापत्तिः । अचीत्यस्य सत्त्वे तु 'दण्डिभ्याम्' इति वैषम्यम् । येन केनापि सुब्विधावसिद्धत्वे तु विभक्तित्वेन पूर्वत्वविशिष्टसुब्विधिसत्त्वान्नलोपस्यासिद्धतया इगन्तत्वाभावेन नुमोऽप्राप्त्या न फलभेद इति दिक् ।

अन्ये तु यत्तु 'नलोपः सुब्' इति सूत्रे 'पूर्वत्रेत्यनुवर्त्त्य पूर्वत्र सुब्विध्यादौ कर्तव्ये नलोपोऽसिद्ध इत्यर्थे दोषाभावेन सुप्त्वतद्व्याप्येत्यादिनिवेशो निष्फल इति तन्न, राजीयतेः क्विपि अलोपयलोपयो राजीशब्दादौविभक्तौ 'राज्यौ' इति रूपम्, तत्र यणि नलोपासिद्धत्वापत्तेः । न चालोपस्य स्थानिवत्त्वेन यण्, न पदान्तेति निषेधात्, क्वौ लुप्तं न स्थानिवदिति निषेधाच्चेत्याहुः ।

ननु सुबादिविधीनां सपादसप्ताध्यायीस्थतया तेषु कर्तव्येषु 'पूर्वत्रासिद्धम्' ( ८-२-१ ) इत्यनेनैव नलोपासिद्धत्वे सिद्धे इदं व्यर्थम् इत्याशङ्कायामाह—**नान्यत्रेति** । सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते, इति न्यायेन सुबादिविधिष्वेव नलोपोऽसिद्धो नान्यत्रेति । अन्यत्रासिद्धत्वाभावस्योदाहरणमाह—**'राजाश्वः'** इत्यादाविति—'राज्ञोऽश्वः' इति षष्ठीसमासे ङसो लुकि नलोपे जाते

'अकः सवर्णे' इति दीर्घः सिद्धः, दण्डिनोऽश्वः 'दण्ड्यश्वः' इत्यत्र यण् च सिद्धः। नलोपासिद्धत्वे तु नकारेण व्यवधानाद्यण्दीर्घौ न स्याताम्। अयम्भावः—नियमशास्त्राणाम् नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकस्य व्यापकं यद्रूपं तद्रूपावच्छिन्नेतरत्वरूपः संकोचः।

प्रकृते च नियामकस्य 'न लोपः' इत्यस्योद्देश्यतावच्छेदकम् पूर्वत्वविशिष्टसुबादिविधित्वरूपम् तद्व्यापकं पूर्वविधित्वरूपम्, तदितरत्वेन 'पूर्वत्रासिद्धम्' इत्यस्योद्देश्ये पूर्वत्रपदार्थे संकोचे नलोपविधायके 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थितिरेव फलति। तथा च नलोपविधायके 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थितौ कुत्रापि कार्य्ये नलोपासिद्धत्वं न प्राप्तमिति सुबादिविधावपि नलोपासिद्धत्वाप्राप्त्या 'नलोपः सुप्स्वर' इत्यस्य सुबादिविधौ नलोपासिद्धत्वविधानेन 'विधिरत्यन्तमप्राप्तौ' इति सूचितं विधित्वं सिध्यति। सुबादिविधिभिन्ने च केनाप्यसिद्धत्वाप्राप्त्या फलितार्थपरतयाऽस्यान्यत्र प्रतिषेधव्यवहारोऽपि सिद्ध्यति।

ननु नियमशास्त्रस्यापि विधित्वे विधिनियमयोर्भेदभङ्ग इति चेन्न, इतरसंकोचरूपगुरुत्वप्रयोजकविधेरन्यनिवृत्तिफलकसिद्धविषयकविधेर्वा नियमशास्त्रत्वेन विधिनियमयोर्भेदस्य सुरक्षितत्वात्। एवञ्च यत्र नियम्यशास्त्रस्य नियामकशास्त्रविषये लक्ष्ये चारितार्थ्यं तत्रैव नियामकशास्त्रस्य विधिमुखेन प्रवृत्तिः। यत्र तु नियम्यशास्त्रस्य नियामकशास्त्रविषयो लक्ष्यं नास्ति तत्रैव नियामकशास्त्रस्य निषेधमुखेन प्रवृत्तिः यथा 'हन्तेः' 'अत्पूर्वस्य' इति, 'तपेः' 'तपःकर्मकस्यैव' इत्यादौ। विधित्वसम्भवे निषेधमुखेन प्रवृत्तिस्तु गौरवात् त्यज्यते।

गौरवञ्च स्वार्थत्यागः, परार्थकल्पना, शास्त्रबाधश्च एतद्दोषत्रयरूपम्। यथा प्रकृते सुबादिविधिभिन्नपूर्वस्मिन् विधौ लक्षणया नञ्पदमध्याहृत्य सुबादिविधिभिन्ने पूर्वस्मिन् यण्-सवर्णदीर्घादिविधौ नलोपोऽसिद्धो न भवति। अत्र पक्षेऽपि नलोपविधायके 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थितिरूपः संकोचो विधेयः। अन्यथा अनेनासिद्धत्वनिषेधेऽपि नलोपशास्त्रे उपस्थितेन 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वे 'राजाश्वः' इत्यादौ वैकल्पिकदीर्घाद्यापत्तिः।

यथा 'उदिते जुहोति, अनुदिते जुहोति' इति श्रुतिद्वयबलात् उदिते अनुदिते च होमवत्, 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति श्रुतिद्वयबलात् षोडशिग्रहणस्य विकल्पः तथात्रापि स्यादिति भावः। अतिरात्रो यागविशेषः। षोडशी—यज्ञीयं सोमरसपात्रम्।

एवं स्मृतावपि 'शशकः शल्लकी गोधा खड्गः कूर्मश्च पञ्चमः। पञ्च पञ्चनखा भक्ष्याः' इत्यत्र अन्यनिवृत्तिफलको नियमद्वारकः परिसंख्याविधिः। शशकादयः पञ्च भक्ष्याः, इतरे वानरादयोऽभक्ष्या इति भक्ष्यविधानेऽभक्ष्यप्रतिषेधो गम्यते। ननु विधिना शशकादीनां भक्ष्यत्वबोधने तस्यावश्यानुष्ठेयत्वापत्तिः, प्रापकप्रमाणस्य नियतत्वे एव तथाङ्गीकारात्। शशकादिभक्षणप्रापकं रागरूपं (इच्छाविशेषरूपम्) प्रमाणं त्वनियतम्, दोषदृष्टया रागस्य निवृत्तिसम्भवात्। किञ्च भक्ष्यनियमो न प्रापकविधिः, किन्त्वन्यनिवृत्तिफलकोऽभ्यनुज्ञाप्रयोजकविधिरेव। व्याकरणशास्त्रे तु प्रापकप्रमाणस्य सामान्यशास्त्रस्य नियतत्वात्तद्विधेयस्यावश्यानुष्ठेयत्वमेव।

किञ्च 'न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥' इत्यस्यापि यागादौ रागतः प्राप्तस्य मांसभक्षणादेरभ्यनुज्ञाविधिबोधितस्य न पापजनकत्वम्, नापि धर्मजनकत्वम्, वेदबोधितानिष्टसाधनताककर्मण एव पापजनकत्वात्, वेदबोधितेष्टसाधनताककर्मण एव धर्मजनकत्वात्। एवं विवाहवाक्यानामपि रागतः प्राप्तस्य पुंस्त्रीसंग्रहस्याभ्यनुज्ञापकत्वेनान्यनिवृत्तिफलकतया निवृत्तरागाणां नैष्ठिकब्रह्मचारिणां तदननुष्ठानेऽपि न दोषः। अनभ्यनुज्ञातमांसभक्षणादौ तु दोष एवेत्यलं प्रसक्तानुप्रसक्तविस्तरेण।

सुप्त्वधर्मावच्छिन्नोद्देश्यताकस्योदाहरणम्—'राजभ्याम्, राजभ्यः' इति। अत्र 'सुपि च' इत्यात्वाम्, 'बहुवचने झल्येद्' इत्येत्वञ्च न। सुप्त्वव्याप्यधर्मावच्छिन्नोद्देश्यताकविधेरुदाहरणम्—'राजभिः' अत्र भिस्त्वं सुप्त्वव्याप्यम्।

इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न। राजभ्याम्, राजभिः। राज्ञे, राजभ्यः। राज्ञः, राज्ञोः, राज्ञाम्। राज्ञि, राजनि।

---

न च भिस्त्वस्य 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यत्र भिस्साशब्दघटकभिसशब्देऽपि सत्त्वात् भिस्त्वे सुप्त्वव्याप्यत्वाभावः, अर्थवत्त्वविशिष्टस्याङ्गसंज्ञाप्रयोजकत्वविशिष्टस्य च ग्रहणेन व्याप्यत्वाक्षतेः।

वस्तुतस्तु सुप्त्वव्याप्यधर्मावच्छिन्नोद्देश्यताकविधावेवास्य प्रवृत्तिरित्येवोचितम्, सुप्त्वस्यापि सुप्त्वव्याप्यत्वेन तदवच्छिन्नोद्देश्यताकविधेरपि तेन संग्रहात् तदाह—इत्यसिद्धत्वादिति। नलोपासिद्धत्वेन अदन्ताङ्गाभावात्।

स्वरोदाहरणम्—पञ्चार्मम्, इति अर्मे परे द्वयच्, त्र्यच् पूर्वमवर्णान्तमाद्युदात्तम् इत्यर्थकेन 'अर्मे चावर्णद्वयच्त्र्यच्' (६–२–९०) इत्याद्युदात्तत्वं न, नलोपस्यासिद्धत्वेनावर्णान्तपूर्वपदत्वाभावात्। संज्ञाविधेरुदाहरणम् 'दण्डिदत्तौ, दत्तदण्डिनौ' इति। अत्र नलोपस्य घिसंज्ञायामसिद्धत्वेन दण्डीत्यस्य घित्वाभावाद्। 'द्वन्द्वे घि' इति पूर्वनिपातनियमो न। अत्रैव भाष्ये संज्ञाविधावित्यस्य प्रयोजनत्वेन रूपद्वयसिद्धेरुक्ततया रूपद्वयस्येष्टत्वम्। दत्तश्च दण्डी चेति द्वन्द्वे 'दत्तदण्डिनौ' इति, दण्डी च दत्तश्चेति विग्रहे 'दण्डिदत्तौ' इत्यस्य सिद्धया नेदमुदाहरणम्।

किञ्च यदा दण्डिशब्दस्य पूर्वनिपातस्तदैव नलोपः, नलोपे सति घित्वे च पूर्वनिपात इत्यन्योन्याश्रय इति चेन्न, यस्य पूर्वपदत्वे सति घित्वसम्भावना तस्य पूर्वनिपात इति 'द्वन्द्वे' इत्यस्यार्थेनादोषात्। ईदृशार्थे मानञ्चैतदुदाहरणपरकभाष्यमेव। एतदर्थफलन्तु 'द्यौश्च लिट् च, लिट् च द्यौश्च' इति द्विविधेऽपि विग्रहे 'द्युलिट्' इत्येकरूपसिद्धिः। 'दिव्' इत्यस्य पूर्वपदत्वे 'दिव उत्' इत्युत्त्वे घित्वसम्भावनायाः सत्त्वेन पूर्वनिपातः। अत एव 'ग्रामणीश्च वृषभश्चे'ति द्वन्द्वे कृते सुपो लुकि 'इको ह्रस्वोऽङ्यो गालवस्य' (६–३–६१) इति ह्रस्वे घित्वेन पूर्वनिपातः सिद्धः। द्वन्द्वसमासकालिकघित्वस्य ग्रहणे त्वेतत्सिद्ध्यनापत्तिः। एवमेव द्यौश्च कश्च 'द्युकौ' इत्यस्य सिद्धिर्बोध्या। न च यस्य घित्वं भावीत्यर्थे 'रविचन्द्रौ' इत्यत्र पूर्वनिपातो न स्यादिति चेन्न, राजदन्तादिषु 'पुत्रपती' इति पाठेन 'द्वन्द्वे घि' इत्यस्यावृत्त्याऽघिसंज्ञकस्यापि पूर्वनिपात इत्यर्थात्।

यद्यपि संज्ञाविधावित्यस्योदाहरणम्—'पञ्च' इत्यत्र नलोपे कृतेऽपि षट्संज्ञां प्रति नलोपस्यासिद्धत्वात् टापो निषेधरूपं फलं मूले एव स्फुटम्। तथाऽपि तत्र विभक्तेर्लुकं विना पदत्वाभावेन नलोपाप्राप्त्या प्रथमं लुगर्थां षट्संज्ञा वाच्या। तामादाय यथोद्देशपक्षाश्रयणेन तत्प्रयोजनमन्यथासिद्धम्। न च 'पञ्चभिः' इत्यत्र नलोपासिद्धत्वेन षट्त्वे 'झल्युपोत्तमम्' इत्यस्य प्रवृत्तिः फलम्, स्वरविधावित्येव तत्सिद्धेः।

कृति तुग्विधौ—'वृत्रहभिः'। अत्र नलोपस्यासिद्धतया प्रत्ययलक्षणेन 'ह्रस्वस्य पिति कृति' इति तुङ् न। ननु 'वृत्रहभिः' इत्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तको लोपो बहिरङ्गपरिभाषया असिद्ध इति चेन्न, कृति तुग्ग्रहणेनैव संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणज्ञापनात्। भाष्ये तु कृति तुग्ग्रहणं प्रत्याख्यातम्। 'वृत्रहभिः' इत्यत्र भिस्रूपे स्वादौ परे 'स्वादिष्वसर्वनामस्थाने' इत्यनेन पदत्वान्नलोपः। यद्यत्र तुक् स्यात्तदा तुका व्यवहितत्वादव्यहितत्वरूपसन्निपातस्य विघातः स्यादिति सन्निपातपरिभाषयात्र तुङ् न स्यादिति तन्न कर्तव्यम्।

न च सन्निपातपरिभाषाया नियामके तुग्ग्रहणं कृति तुक्येव सन्निपातपरिभाषाप्रवृत्तिः, न छे तुकीति वाच्यम्, 'वृत्रहच्छत्रम्' इत्यादौ छे तुको नलोपस्य सुबन्तत्वात्पदत्वेन तुकः सन्निपातविघातकत्वात्। तथा च भाष्यम्—'तुग्विधौ चोक्तम्, किमुक्तम्, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य। इदं तर्हि प्रयोजनम्। कृतीति वक्ष्यामि। इह मा भूत्। वृत्रहच्छत्रम् भ्रूणहच्छाया। न ह्येष सन्निपातलक्षणो नलोपः' इति।

प्रतिदीव्यतीति प्रतिदिवा, प्रतिदिवानौ, प्रतिदिवानः। अस्य भविषयेऽल्लोपे कृते—

*हलि च*। [ ८-२-७७ ]

**रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि।**

न च तुग्ग्रहणं व्यर्थं कृन्निमित्तके विधौ नलोपोऽसिद्ध इत्येव सिद्धेरिति चेन्न, अन्शब्दाद्विज-न्तात् क्यङि आयते इति। ततः क्विपि अलोपयलोपयोः 'आः' इति। तस्य आशब्देन षष्ठीसमासे 'आः' इति तत आचारक्विबन्ताद् घञि आतो युकि 'आयः' इति। अत्र-युकः कृन्निमित्तवया तत्र कर्तव्ये नलोपस्यासिद्धतापत्तेः। न च युकि अल्लोपस्य स्थानिवत्त्वम्, सवर्णदीर्घैकादेशनिष्पन्नस्या-कारस्य लोपस्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्।

यदि रेफवान्तस्य पदस्यावयवो धातोश्चावयवो य इक्तस्य दीर्घ इत्यर्थस्तदा नयतीति नीः, वेतीति वीः। उभाभ्यां क्रमेण रैशब्देन वाक्छब्देन च समासे प्रातिपदिकात् णिचि 'अचो यत्' इति यति 'नीर्यः' 'वीव्यः' इत्यत्रैव दीर्घः स्यान्न तु 'प्रतिदीव्नः' इत्यादाविति दोषः। केचित्तु तथात्वे सुन्दरं ग्रामणि कुलं यस्येत्यर्थके 'सुन्दरग्रामणि' इत्यत्र दीर्घापत्तिरिति **वदन्ति। तन्न, 'उत्तरपदत्वे' इति निषेधेन** राजनीति 'विभाषा ङिश्योः' इति वा अलोपः।

प्रतिपूर्वकाद् 'दिवु क्रीडाविजिगीषाव्यवहारस्तुतिमोदमदस्वप्नकान्तिगतिषु' इत्यतः **'कनिन् युवृषि'** ( उ० पा० १५६ सू० ) इति कनिन्प्रत्ययः। ( एतेन तुगभावे कृतीति व्यर्थमेवेति यदुक्तं नागेशेन तदपास्तम् ) प्रतिदिव्शब्दस्य सुटि राजवद्रूपम्। शसादावचि विशेषमाह—

**'हलि च'** ( ८-२-७७ ) इति। 'र्वोरुपधाया दीर्घ इकः' इति सूत्रमनुवर्तते। 'सिपि धातो-रुर्वा' इत्यतो धातोरिति चानुवर्तते। तच्च 'धातोः' इत्यनेन सामानाधिकरण्येन विशेष्यते। तदन्तविधि-स्तदाह—**रेफवान्तस्येत्यादि।** अत्र पदस्येति सम्बध्यमानमपि वैयधिकरण्येनेकि सम्बध्यते तदाह—**पदावयवो य इगिति।**

अन्यथा— हलि परे रेफान्तो वान्तश्च यो धातुस्तस्योपधाभूतो य इक्तदन्तस्य पदस्य दीर्घ इत्यर्थे दधिपूर्वकाद् रैशब्दात्, वाक्छब्दाच्च णिचि टिलोपे 'अचो यत्' इति यति 'दधीर्यः' 'दधीव्यः' इत्यत्र रेफवान्तो धातुः 'दधिर्' 'दधिव्' इति, तस्योपधाभूतो य इक् तदन्तं पदं समासान्तर्वर्तिनीं विभक्तिमादाय 'दधि' इति। अत्रैव दीर्घः स्यात् न तु 'प्रतिदीव्नः' इत्यत्र।

तथा च एकत्र द्वयमिति रीत्या एकत्र—इकि द्वयम्—धातोरिति, पदस्य इति च सम्बध्यते तदाह—**रेफवान्तधातूपधाभूतस्य पदावयवस्य चेको दीर्घ** इत्यर्थः। धातोः किम्—'अग्निः करोति। वायुः करोति।' एतद्दृष्टया 'खरवसानयोः' ( ७-३-१५ ) इत्यस्यासिद्धतया रेफान्त-पदस्य सत्त्वात्। रेफान्तस्य 'गीर्यति' 'पूर्यति' इत्याद्युदाहरणम्।

नन्वनुवर्तमानं 'धातोः' इति 'र्वोः' इत्यस्य विशेषणं मास्तु, किन्तु इको विशेषणम्। हल्परयो रेफवकारयोरन्तः समीपो यो धातोरिक् तस्य दीर्घः। तथा च 'प्रतिदीव्नः' इत्यादाविव 'ऊर्दते, कूर्दते' इत्यादावपि दीर्घसिद्धौ 'उपधायाञ्च' ( ८-२-७८ ) इति सूत्रं व्यर्थमिति चेन्न, कुर्कुर-मिच्छति कुर्कुरीयति, इत्यादावपि दीर्घापत्तेः। तस्माद् 'र्वोः' इत्यस्य धातुरेव विशेष्यः रेफवान्तस्य धातोरिति। एवञ्च 'ऊर्दते' इत्याद्यर्थम् 'उपधायाञ्च' इत्यावश्यकम्।

तदुक्तम्भाष्ये इग्विशेष्यते 'रेफवकारान्तस्येको धातोरिति' एवमपि 'कर्कुरीयति, मुर्मुरीयती'-त्यत्रापि प्राप्नोति। तस्माद्धातुरेव विशेष्यः। धातौ च विशेष्यमाणे 'उपधायाञ्च' इति 'वक्तव्यम्' इति। यत्तु 'प्रतिदीव्नः' इत्यत्र 'उपधायाञ्च' इत्युपन्यस्तं तच्चिन्त्यम्, दिवेर्वकारस्य धातोरनुपधा-त्वात्। 'र्वोरुपधाया दीर्घ इकः' (८-२-७६) इत्यस्याप्यत्र न प्राप्तिः, पदान्ते एव। तेन रेफवान्तस्य धातोरुपधाया इको दीर्घविधानात्। अत्र च दिवोऽपदान्तत्वात्।

न चाल्लोपस्य स्थानिवत्त्वम्, दीर्घविधौ तन्निषेधात्। बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते । प्रतिदीव्नः । प्रतिदीव्ना-इत्यादि ।

यज्वा, यज्वानौ, यज्वानः ।

*न संयोगाद्वमन्तात् । [ ६-४-१३७ ]*

वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना, यज्वभ्याम् इत्यादि ।

---

प्रकृते शसि 'प्रतिदिवन् अस्' इति स्थितौ 'अल्लोपोऽनः' इत्यल्लोपे नकाररूपे हलि परे 'दिव्' इति वान्तधातोः सत्त्वादिको दीर्घः । ननु 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वेनाकारेण व्यवधानात् दिव् इत्यस्य हलव्यवहितपूर्वत्वाभावेन दीर्घो न स्यादित्याशङ्कां परिहरति— **न चाल्लोपस्येति**— अल्लोपस्य स्थानिवत्त्वं तु न च वाच्यमित्यर्थः ।

तत्र हेतुमाह—**दीर्घविधौ तन्निषेधादिति** । 'न पदान्त' इति सूत्रेण दीर्घविधौ स्थानिवत्त्वनिषेधादित्यर्थः । यद्वा 'पूर्वत्रासिद्धे न स्थानिवत्' इति 'अचः परस्मिन्' इति सूत्रस्थवार्तिकबलात् 'अचः परस्मिन्' इति सूत्रदृष्ट्या त्रिपाद्या असिद्धत्वाद् दीर्घरूपकार्य्यस्याभावेन फलाभावात् स्थानिवत्त्वाप्रवृत्तेः ।

न च "न भकुर्छुराम्" ( ८-२-७९ ) इति दीर्घस्य निषेधः स्यादिति वाच्यम्, वान्तस्य 'दिव्' इत्यस्य भत्वाभावात्, 'दिवन्' इत्यस्य भत्वेऽपि तस्योपधाया दीर्घाप्राप्त्या निषेधाप्रवृत्तेः । ननु विभक्तिनिमित्तकभसंज्ञानिमित्तकत्वेनाल्लोपस्य बहिरङ्गतयाऽसिद्धत्वेन दीर्घाप्राप्तिरिति शङ्कायामाह—**बहिरङ्गेति** ।

**उक्तन्यायेनेति**—बहिरङ्गपरिभाषायाः 'वाह ऊठ्' इति ( ६-४-१३२ ) इति सूत्रस्थोठ्ग्रहणेन ज्ञापिततया षष्ठाध्यायस्थपरिभाषादृष्ट्या दीर्घस्यासिद्धतया बहिरङ्गपरिभाषाया अप्रवृत्तेः । न च कार्य्यकालपक्षे अदृष्टपिशाचन्यायेन त्रिपाद्यामपि प्रवृत्तिः स्यादिति वाच्यम्, यथोद्देशपक्षेण सिद्धेः पक्षान्तरेण दोषदानस्यायुक्तत्वात् । एवमेव 'राज्ञः' इत्यत्रोक्तत्वेनात्रोक्तम् 'उक्तन्यायेन' इति । **इत्यादीति**—आदिनाऽजादिविभक्तौ रूपाणां संग्रहः ।

**यज्वेति**—इष्टवानिति यज्वा । यज्धातोः 'सुयजोर्ङ्वनिप्' इति कर्तरि भूते ङ्वनिप्प्रत्ययः । विधिना कृतयागः पुरुषो 'यज्वा' । तदुक्तम् अमरे 'यज्वा तु विधिनेष्टवान्' इति ( अम-ब्रह्मव० ८ श्लो० ) 'सोमेन यजेति' इत्यादियागविधायकविधिमात्रेणेष्टवान् स, यज्वेत्यर्थः । सुटि राजवद्रूपाणि । शसि 'अल्लोपोऽनः' इति अलोपे प्राप्ते—'न संयोगाद्वमन्तात्' ( ६-४-३७ ) इति । 'अल्लोपोऽनः' इति सूत्रमनुवर्तते । वश्च मश्चेति द्वन्द्वः । वयावन्तौ यस्येति विग्रहे बहुव्रीहिः । 'संयोगाद्वमात्' इत्युक्तावपि वमयोः संयोगविशेषणत्वेन 'येन विधिः' इति तदन्तत्वे सिद्धेऽन्तग्रहणं स्पष्टार्थम् ।

अन्यथा अन्तग्रहणाभावे 'वमः' इत्यस्य षष्ठ्यन्तसम्भावनया मकारवकारसम्बन्धी यः संयोगस्ततः परस्यानो लोपो नेत्यर्थे 'शोभनो जम्भो' ( भक्ष्यो दन्तो वा )ऽस्येत्यर्थे बहुव्रीहौ 'जम्भा सुहरित' इति ( ५-४-१२५ ) समासान्तेऽनिचि शसि 'सुजम्भन् अस्' इत्यत्रापि निषेधः स्यात् । तथा च 'सुजम्भनः' इत्यादि न सिध्येत् । तन्निवृत्त्यर्थमन्तग्रहणम् ।

वस्तुतस्तु 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्' इति लाघवमूलकपरिभाषया 'संयोगात्' इत्यनेन सामानाधिकरण्येनान्वये सम्भवति षष्ठ्यन्तत्वस्यान्याय्यत्वात्, 'न संयोगाद्वमात्' इति न्यासे न षष्ठ्यन्तत्वसम्भावनाया अभावाच्चान्तग्रहणं चिन्त्यं सदृष्टार्थमेव ।

अन्ये तु अन्तग्रहणं व्यर्थीभूय 'येन विधिः' इत्यस्यानित्यत्वं ज्ञापयति । तेन 'समासप्रत्ययविधौ प्रतिषेधः' इति वार्तिकं नापूर्वं किन्त्वेतत्फलितार्थपरमित्याहुः ।

ब्रह्मणः । ब्रह्मणा, ब्रह्मभ्याम् इत्यादि ।

*इन्हन्पूषार्यम्णां शौ ।* [ ६-४-१२ ]

एषां शावेवोपधायां दीर्घः, नान्यत्र ।

---

'न हलो वमात्' इति तु न सूत्रितम्, पटुशब्दादाख्यानणिजन्तान्मनिन्प्रत्यये ततः शसि 'पट्मनः' इत्यत्र टिलोपस्य णिलोपस्य वा स्थानिवत्त्वेन मकारस्य हलः परत्वाभावेन निषेधाप्रवृत्त्या लोपापत्तेः ।

यथान्यासे तु संयोगसंज्ञायाः टकारमकारोभयनिष्ठत्वेन स्थानिभूतादचः पूर्वत्वेन दृष्टस्यैव कार्य्ये स्थानिवत्त्वमिति सिद्धान्तेन स्थानिवत्त्वाभावे निषेधप्रवृत्त्या रूपं सिध्यति । यदि तु 'हे गौः' इत्यादौ सम्बुद्धिलोपाभावाय स्थानिभूतादचोऽव्यवहितोत्तरस्यैव कार्य्ये स्थानिवत्त्वं पञ्चमीसमासेन स्थानिवत्त्वस्य 'प्रविगणय्य' इति भाष्यप्रयोगादर्नित्यत्वञ्चोच्यते तदा 'सुपठ्मनः' इत्यत्र न दोषः । अत्र क्वचित् 'सुपणमनः' इति णकारघटित उपलभ्यते स चिन्त्यः, टिलोपणिलोपयोः स्थानिवत्त्वेन 'प्रत्यये भाषायां नित्यम्' इत्यस्याप्राप्तेः ।

न च 'पूर्वत्रासिद्धीये न स्थानिवत्' इति स्थानिवत्त्वनिषेधः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्यनेन बाधात् । न च प्रतिपदोक्तपरिभाषया णशब्दमुच्चार्य्य विहितस्यैव तेन बाध इति वाच्यम्; 'अपदान्तस्य मूर्द्धन्यः' ( ८-४-५५ ) इत्यधिकृत्य 'पदान्तस्य' ( ८-४-३७ ) इत्यस्य 'रषाभ्याम्' (८-४-१) इति सूत्रे णग्रहणस्य च प्रत्याख्यानपरभाष्याविरोधेन प्रतिपदोक्तस्य णस्याभावेन च प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः ।

यदि तु संज्ञावाचकानामर्द्धमात्रकत्वमेवेत्याश्रीयते तदा संयोगग्रहणे हल्ग्रहणे च न कोऽपि विशेष इति तदा यथाश्रुतमेव सूत्रं वरम् ।

मान्तसंयोगस्योदाहरणमाह—**ब्रह्मण इति**—बृहि वृद्धौ इत्यतः, 'बृंहेर्नोऽच्च' इति ( उ० ४ पा० १४६ सू० ) मनिन् । नुमो नकारस्याकारादेशे यणि च ब्रह्मेति । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ।' पुंसि प्रजापतिर्विप्रो हिरण्यगर्भो वा । शसादावचि अनोऽकारस्य लोपाभावे 'ब्रह्मणः' इत्यादि शेषं राजवत् ।

**'इन्हन्पूषार्यम्णां शौ'** ( ६-४-१२ ) इति । 'ढ्रलोपे' इत्यतो दीर्घ इति 'नोपधायाः' इत्यत उपधाया इति चानुवर्तते । 'सर्वनामस्थाने' इति न सम्बध्यते । तदुक्तं भाष्ये 'शास्सि निवर्त्त्य सुटीत्यविशेषे शौ नियमं कुरु' इति, 'उपधालक्षणदीर्घस्य नियमः' इति च । 'सर्वनामस्थाने चासम्बुद्धौ' इत्येव दीर्घे सिद्धे नियमार्थमिदमित्याह-**शावेवेति** । नान्तस्योपधादीर्घस्य नियमनात् 'अनुनासिकस्य क्विझलोः' इत्यनेनापि न दीर्घः । तेन 'वृत्रहणी' नपुंसके श्याम्, 'वृत्रघ्नः' इत्यादौ क्विनिमित्तकोऽपि दीर्घो न । वृत्रहेवाचरतीत्यर्थे क्यङि 'वृत्रहायते' इत्यत्र च 'अकृत्सार्वधातुकयोः' इत्यजन्तलक्षणो दीर्घश्च सिध्यति ।

तथा च 'नोपधायाः' इति सूत्रे उपधाग्रहणस्येदमेव फलम् उपधादीर्घस्यैव नियमो यथा स्यादिति । अन्यथा दीर्घपदश्रुत्या 'अचः' इत्यस्योपस्थित्या नान्तेषु सर्वनामस्थानाद्यव्यवहितपूर्वस्याचोऽसम्भवेन नकाररूपैकवर्णव्यवहितस्याचो दीर्घसिद्धया उपधाग्रहणं व्यर्थमेव स्यात् । यदि तूत्तरार्थमुपधाग्रहणम् 'अत्वसन्तस्य' इत्यनेन समानविषयतया दीर्घो नुमपवादः स्यात् । तथा च 'गोमान्' इति न सिध्येदित्युच्यते तदा 'इह किञ्चित् त्रपो इति' इति भाष्योक्तन्यायेनोक्तनियमफलं बोध्यम् ।

नन्वेवम् 'पथीनति, मथीनति' इत्यादावपि उपधादीर्घो न स्यात्, तथा च नामधातुस्थमूलग्रन्थविरोध इति चेन्न, माधवानुरोधेन तद्ग्रन्थस्य सत्त्वात् । तदाशयस्तु नियमस्य सजातीयापेक्षत्वात् भाष्यप्रामाण्यात्सर्वनामस्थानत्वस्यानपेक्षणेऽपि तद्गतसुप्त्वस्यानपेक्षणे मानाभावेन सुबानन्तर्य्ये एव

इति निषेधे प्राप्ते—

*सौ च* । [ ६-४-१३ ]

**इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे । वृत्रहा । हे वृत्रहन् । 'एकाजुत्तरपदे-' ( सू ३०७ ) इति णत्वम्, वृत्रहणौ, वृत्रहणः । वृत्रहणम्, वृत्रहणौ ।**

*हो हन्तेर्ञ्णिन्नेषु* । [ ७-३-५४ ]

**ञिति णिति च प्रत्यये नकारे च परे हन्ते हंकारस्य कुत्वं स्यात् ।**

---

नियमफलनिषेधस्य प्रवृत्तिरिति 'पथीनति' इत्यादौ सुबानन्तर्य्याभावाद्दीर्घो भवत्येवेति । ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तेरेव 'नलोपः सुप्स्वर' इति सूत्रे सिद्धान्तिततया इति **निषेधे प्राप्ते** इत्यसङ्गतमिति चेन्न, नियमस्येतरनिवृत्तिफलकत्वेन नियमफलभूते निषेधे प्राप्ते इत्यर्थेनादोषात् ।

'इन् हन् पूषार्यम्णां शिस्वोः' इति तु नोक्तम् 'सौ' इत्यस्यैव 'अत्वसन्तस्य' इत्यत्रानुवृत्त्यर्थत्वात् ।

**'सौ च'** ( ६-४-१३ ) इति । 'इन् हन्' इति नियमेन सौ दीर्घाप्राप्त्या दीर्घविधानार्थमिदम् । 'शौ' इत्यपहाय इन् हनिति सूत्रम्, 'ढ्रलोपे' इत्यतो दीर्घ इति, 'सर्वनामस्थाने' इत्यतः **'असम्बुद्धौ'** इति चानुवर्तते तदाह—**इन्नादीनामिति** । **वृत्रहेति** वृत्रं हतवानिति वृत्रहा । वृतु वर्तने इत्यतः **'स्फायितञ्चिवञ्चि'** ( उ० २ १३ सू ) रकि 'वृत्रः' इति । 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे' इति **हैमः** । वृत्रस्त्वष्टृपुत्रो दानवः । त्वष्टा प्रजापतिविशेषः । य इन्द्रवधाय अन्वाहार्यपचनात् । **ऋग्वेदविधिना** स्थापितदक्षिणाग्नेर्वृत्रं पुत्रमुदपादयत् । इयं कथा भागवते षष्ठस्कन्धे नवमाध्याये द्रष्टव्या । तं वृत्रमिन्द्रो हतवानिति वृत्रहा=इन्द्रः । वृत्रपूर्वकात् हन्तेः 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( ३-२-८७ ) इति क्विप् । 'वृत्रहन् स्' दीर्घे सलोपे नलोपे च **'वृत्रहा'** इति ।

**हे वृत्रहन्निति**—असम्बुद्धावित्युक्तेर्न दीर्घः । अत्र 'एकाजुत्तर' इति णत्वं न, 'पदान्तस्य' इति निषेधात् 'अपदान्तस्य मूर्द्धन्यः' इत्यधिकारेणापदान्तस्यैव नस्य णत्वविधानाच्च । **वृत्रहणाविति** निमित्तनिमित्तिनो रेफनकारयोः समानपदस्थत्वाभावादाह—**'एकाजुत्तरपदे णत्वमि'ति** । **वृत्रहणाविति**—शावेवेति नियमादत्र दीर्घाभावः । शसि 'वृत्रहन् अस्' इत्यत्र 'अल्लोपोऽनः' इत्यल्लोपे **'हो हन्तेर्ञ्णिन्नेषु'** ( ७-३-५४ ) इति 'हः' इति स्थानषष्ठी । 'हन्तेः' इति हरूपावयवयोगे षष्ठी । हन्तेरिति श्तिपा निर्देशात् हन्धातोरिति लभ्यते । ञ् च ण् च ञ्णौ तावितावस्य प्रत्ययस्येति **'ञ्णितौ'** । **अङ्गस्ये**त्यधिकृतस्य विशेषणत्वेन 'द्वन्द्वान्ते श्रूयमाणं पदम्' इति न्यायेन च ञिति णिति च प्रत्यये इति लभ्यते । ञ्णित् च नश्चेति ञ्णिन्नास्तेषु ञ्णिन्नेषु । 'चजोः कुघिण्ण्यतोः' (७-३-५२) इत्यतः **'कु'** इति सम्बध्यते । तदाह—**ञिति णितीत्यादि** ।

अत्र 'ञिति णिति' इति हन्धातोरेव विशेषणम् । तथा च ञिण्णित्प्रत्ययाव्यवहितपूर्वो यो हन् धातुस्तदवयवो यो हकारस्तस्य कुत्वमित्यर्थः । एवं नकाराव्यवहितपूर्वो यो हन्धात्ववयवो हकारस्तस्य च कुत्वमित्यर्थश्च । यद्वा ञ्णिन्नाः सर्वे हस्यैव विशेषणम्, प्राधान्यात् । ञिण्णित्प्रत्ययाव्यवहितपूर्वस्य हनो हकारसम्भवेन ञ्णिदित्यस्य वैयर्थ्यापत्त्या नाव्यवधानमिति न्यायेनाकारव्यवधानेऽपि कुत्वं स्यान्न त्वधिकव्यवधाने । तेन 'घातः, घातकः' इत्यादावेकवर्णव्यवहितस्यापि कुत्वं सिद्धम् । हननमात्मन इच्छति हननीयति; ततः क्यजन्तात् ण्वुलि 'हननीयकः' इत्यत्रानेकवर्णव्यवहितस्य हस्य कुत्वाभावश्च सिध्यति ।

तदुक्तं भाष्ये 'हकारस्य चेत् ञ्णित्यप्राप्तिः' घातयति, घातकः । वचनाद्भविष्यति । ननु चोक्तमिहापि वचनात् प्राप्नोति 'हननीयकः' इति । नैष दोषो येन नाव्यवधाने तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति ।

हन्तेः । [ ८-४-२२ ]

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात् । प्रहण्यात् ।

अत्पूर्वस्य । [ ८-४-२२ ]

हन्तेरत्पूर्वस्यैव नस्य णत्वम्, नान्यस्य । प्रघ्नन्ति । योगविभागसामर्थ्याद् 'अनन्तरस्य

---

इदञ्च सूत्रम् 'धातोः कार्यमुच्यमानं तद्विहितप्रत्यये भवति' इति परिभाषया धातुशब्द-मुच्चार्य विहितप्रत्यये एव प्रवर्तते । तेन वृत्रहणमाचष्टे 'वृत्रहयति' इत्यादौ न । ननु 'अत उप-धायाः' इत्यनेन अतो वृद्धौ 'वृत्राहयति' इति स्यादिति चेन्न, 'अत उपधायाः' इत्यत्र उपधापदेन पूर्वपदाघटकस्यैव ग्रहणात् । अत एव 'भोभगो अघो' इति सूत्रे 'वृक्षवयतेरप्रत्ययः, 'वृक्षव् करोति' इति भाष्यं संगच्छते । अन्यथा 'वृक्षाव्' इति स्यात् । अत्र टिलोपस्य स्थानिवत्त्वं तु न, अन्तर्वर्ति-विभक्त्या 'वृक्ष' इत्यस्य पदत्वेन 'न पदान्त' इति निषेधात् ।

ने परे 'वृत्रघ्नः' इत्याद्येवोदाहरणम् । न च स्थानिवत्त्वेन नकाराव्यवहितपूर्वत्वाभावः, नकारे परे कुत्वविधानसामर्थ्येन यत्र श्रावणमव्यवधानं तत्रैव नकारस्य कुत्वे निमित्तत्वमिति ज्ञापनात् । श्रौतव्यवधानेऽपि नकारस्य निमित्तत्वे तु 'घातकः' इत्यादावनकारे परे कुत्वे सिद्धे ञ्णिद्ग्रहणस्य वैयर्थ्यापत्तिः । अत एव 'हननम्' इत्यादौ न कुत्वम् ।

अनेन प्रकृते नकारे परे घोष-संवार-नाद-महाप्राणप्रयत्नकस्य हस्य स्थाने तावत्प्रयत्नकः कवर्गचतुर्थो घादेशः । 'वृत्रघ्न् अस्' इति स्थितौ पूर्वस्मात् स्थानिभूतादचः परस्य विधौ स्थानि-वद्भाव इत्यर्थे अलोपस्य स्थानिवत्त्वाद् 'एकाजुत्तरपदे णः' इति णत्वं प्राप्नोति, स्थानिवत्त्वेनोत्तर-पदस्यैकाच्त्वात् । न च 'पूर्वत्रासिद्धीये' इति स्थानिवत्त्वनिषेधः, 'तस्य दोषः संयोगादिलोपलत्व-णत्वेषु' इत्यनेन बाधात् । पञ्चमीसमासस्यानित्यत्वेन स्थानिवत्त्वाभावेऽपि 'प्रातिपदिकान्तनुम्वि-भक्तिषु च' इत्यनेन 'कुमति च' इत्यनेन वा णत्वं दुर्वारमित्याशङ्कावारणाय **'हन्तेरत्पूर्वस्य'** इति सूत्रं विभज्य व्याचष्टे—

**'हन्तेः'** ( ८-४-२२ ) इति । अत्र 'रषाभ्यां नो णः' इति सूत्रम्, 'उपसर्गादसमासेऽपि' इत्यतः 'उपसर्गात्' इति चानुवर्तते । उपसर्गपदञ्च 'तास्थ्यात्ताच्छब्द्यम्' इति न्यायेन उपसर्गस्थ-रेफषकारपरम् । तदाह—**उपसर्गस्थादित्यादि** । **निमित्तादिति**—रेफषकाररूपादित्यर्थः । उदाह-रणमाह—**'प्रहण्यात्' इति** । अस्य नियामकं योगविभागेनाह—**'अत्पूर्वस्य'** ( ८-४-२२ ) **इति** । अत्र 'हन्तेः' इति, 'रषाभ्यां नो णः' इति चानुवर्तते । 'उपसर्गात्' इति निवृत्तम् । हन्तेरत्पूर्वस्य तस्यापि 'हन्तेः' इत्यनेनैव णत्वे सिद्धे नियमार्थमिदमित्याह—**हन्तेरत्पूर्वस्यैवेत्यादि** ।

न चोपसर्गस्थनिमित्तात्परत्वं यत्र 'वृत्रहणौ' इत्यादौ विधित्वसम्भवे नियमत्वानुपपत्तिरिति चेन्न, उपसर्गस्थरेफषकाराभ्यां परत्वाभावेऽपि 'एकाजुत्तरपदे णः' 'प्रातिपदिकान्त' इत्यादिना च णत्वे सिद्धे नियमत्वे बाधकाभावात् ।

नन्वेवमपि 'अरिहननम्' इत्यादौ केनापि णत्वाप्राप्त्या तत्र विधित्वसम्भवे नियमानुपपत्ति-रिति चेन्न, उपसर्गादित्यादीनामनुवृत्त्या 'उपर्गस्थान्निमित्तात्परस्य, पूर्वपदस्थान्निमित्ताद्वा परस्य प्राति-पदिकान्तनुम्विभक्तिस्थस्य, एकाजुत्तरपदस्थस्य कवर्गवत्युत्तरपदस्थस्य च हन्तेरत्पूर्वस्यैव णत्वमिति नियमेन तत्तत्सूत्रैः सिद्धस्यैव णत्वस्यानेन विधानान्नियमार्थत्वाक्षतेः । सर्वेषामनुवृत्तौ योगविभाग एव लिङ्गम् । तद्वक्ष्यति **'योगविभागसामर्थ्यादनन्तरस्य'** इत्यादि । यत्तु शेखरे 'उपसर्गादित्यस्य निवृत्त्या' इत्युक्तं तस्य उपसर्गमात्रस्य निवृत्त्या सर्वस्यानुवृत्त्येत्यर्थकमिति न तद्विरोधः ।

न चैवम् 'बहुवृत्रहाणि' इत्यत्र अत्पूर्वकत्वाभावाण् णत्वं न स्यात् । न चात्र णत्वे प्रमाणाभावः, 'अट्कुप्वाङ्' ( ८-४-२ ) इति सूत्रे भाष्ये 'कुव्यवायहादेशेषु प्रतिषेधः' । कुव्यवाये हादेशेषु

प्रतिषेधो वक्तव्यः । किम्प्रयोजनम् ? वृत्रघ्नः । स्रुग्घ्नः, प्राघानीति । हन्तेरत्पूर्वस्येत्यत्र अत्पूर्वग्रहणं न कर्तव्यं भवति' इति दर्शनेन भाष्यमतेऽत्र णत्वस्येष्टत्वादिति वाच्यम्, सूत्रकारभाष्यकारमतयोः फलैक्याय 'हन्तेरत्पूर्वस्य' इति सूत्रे अत्पूर्वग्रहणस्य हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणत्वेन 'बहुवृत्रहाणि' इत्यादौ णत्वसिद्धेः ।

'स्रुग्घ्नः' इत्यस्य स्रुचो हन्यन्तेऽस्मिन्निति 'घञर्थे कविधानम्' इति क इति कैयटः । स्रुक् च घृतमस्याः स्रवतीत्यर्थे स्रुधातोः 'चिक् च' ( उ० २ पा० ६२ सू० ) इति चिक्प्रत्यये सिध्यति । वटपत्राकृतौ विकङ्कतककाष्ठजे बाहुमात्रे यज्ञपात्रे । विकङ्कतो वृक्षविशेषः ( 'वइची' इति श० स्तो नि० ) नच हादेशस्य कवर्गेऽभेदान्वये 'सविशेषणानां वृत्तिर्न' इति भाष्योक्त्या 'कुव्यवाये' इत्यत्र समासो न स्यादिति वाच्यम्, आर्षप्रयोगेणादोषात्, कुव्यवायनिमित्तके णत्वे हस्य स्थाने आदेशेषु प्रत्यासत्त्या कवर्गरूपेषु सत्सु णत्वप्रतिषेध इत्यर्थेन 'सविशेषणानाम्' इत्यस्य विषयाभावाच्च ।

प्रतिषेधे हस्थानिककवर्गाभाववदित्युक्त्या 'प्राघानि' प्रघनाघनः, इत्यादौ हस्थानिककवर्गस्यैव सत्त्वात्, अर्थवद्ग्रहणपरिभाषया हस्थानिककवर्गाभाववदर्थवतो हन्तेरेव नस्य णत्वविधानेन द्वित्वस्थलेऽभ्यासस्य निरर्थकत्वेन 'प्रघनाघनः' इत्यादौ णत्वाप्राप्तेश्च । यत्र तु हन्तेः समुदायस्य कवर्गघटितादेशः, यथा 'करणेऽयो विद्रुषु' ( ३-३-८२ ) इत्यत्र 'द्रुघणः' इत्यादौ तत्र णत्वं सिध्यति ।

मनोरमाकृता तु 'कुव्यवाये' इत्यादि भाष्यं वार्तिकाशयवर्णनमात्रपरम् । न तु वस्तुस्थितिः । वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागेन वार्तिकार्थोपसंग्रहस्यैव न्याय्यत्वात्' इत्युक्तम् । ननु योगविभागे 'बहुवृत्रहाणि' इति न सिध्येत्, अत्पूर्वकत्वाभावात् । दीर्घदृष्ट्या त्रैपादिकणत्वस्यासिद्धतया पूर्वं दीर्घे नियमाप्राप्तेरिति चेन्न, कार्य्यकालपक्षे 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषायाश्चिपाद्यामपि प्रवृत्त्या णत्वे वृत्रहन्मात्रनिमित्ततयाऽन्तरङ्गत्वेन अङ्गविभक्त्युभयनिमित्तकबहिरङ्गस्य दीर्घस्यासिद्धतया पूर्वं णत्वेन 'बहुवृत्रहाणि' इत्यस्य सिद्धेः ।

'प्राघानि' इत्यत्र न णत्वम्, 'पूर्वं धातुः साधनेन युज्यते'-इति पक्षे अन्तरङ्गायां वृद्धौ जातायां तत उपसर्गयोगे अत्पूर्वकत्वाभावेन णत्वाप्राप्तेः । न च पूर्वं धातुरुपसर्गेण युज्यते इति पक्षे णत्वमन्तरङ्गम्, इष्टानुरोधेनैतत्पक्षानाश्रयणात् ।

केचित्तु 'हन्तेरत्पूर्वस्य' इत्यत्र उपसर्गादित्यस्यानुवृत्त्या 'भ्रूणप्रघ्नः' इत्यत्र योगविभागसामर्थ्येनानन्तरस्येति न्यायाप्रवृत्त्या 'एकाजुत्तर' इति णत्वस्य नियमेन बाधेऽपि 'वृत्रघ्नः, स्रुग्घ्नः' इत्यादावुपसर्गाभावेन नियमाप्राप्त्या णत्ववारणाय 'कुव्यवाये' इति वार्तिकस्यावश्यकता ।

न च योगविभागसामर्थ्येन 'उपसर्गात्' इत्यस्यानुवृत्तेरपि बाधान्नियमप्रवृत्त्या न णत्वम्, अनन्तरस्येति न्यायस्य बाधेन योगविभागस्य चारितार्थ्येन उपसर्गादित्यस्यानुवृत्तिबाधे सामर्थ्याभावात् । न च ब्रह्मादिषूपपदेषु विधीयमानः क्विप् धातोरेव स्यान्न तु सोपसर्गादिति 'भ्रूणप्रहन्, ब्रह्मप्रहन्' इत्यादिप्रयोग एव दुर्लभ इति न दोष इति वाच्यम्, 'आतोऽनुपसर्गे कः' ( ३-२-३ ) इति सूत्रे कर्मणीत्यनुवृत्त्या कर्मण्युपपदे धातोर्विधीयमानः कप्रत्ययः सोपसर्गादप्राप्तेः 'अनुपसर्गे' इत्यस्य वैयर्थ्येन ज्ञाप्यते—'सोपपदाद्विधीयमानाः प्रत्ययः सोपसर्गादपि धातोर्भवति' इति 'ब्रह्मप्रहन्' इत्यादिप्रयोगे बाधकाभावात् ।

न च ज्ञापकस्य सजातीयापेक्षत्वादान्तादेव सोपसर्गादित्यस्य ज्ञापनात् 'भ्रूणप्रघ्नः' इति प्रयोगाभावतादवस्थ्यम्, 'असति बाधके सामान्ये पक्षपातः' इति लाघवमूलकन्यायात् 'कुव्यवाये' इति वार्तिकाच्च सामान्यापेक्षज्ञापकत्वस्यैवौचित्यात् । तथा च वार्तिकस्यावश्यकतया योगविभागश्चिन्त्य इत्याहुः ।

विधिर्वा भवति प्रतिषेधो वा' इति न्यायं बाधित्वा 'एकाजुत्तरपदे' । इति णत्वमपि निवर्तते । नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत्, वृत्रघ्नः । वृत्रघ्ना इत्यादि ।

यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तम्, तद्भाष्यवार्तिकविरुद्धम् । एवं

---

**योगविभागसामर्थ्यादिति**—यदि 'हन्तेः' इति सूत्रेण प्राप्तस्य णत्वस्य योगविभागो नियामकः स्यात्तदा 'हन्तेरत्पूर्वस्य' इत्येकसूत्रे सत्यपि अन्यत्राप्रवृत्तौ सिद्धायां योगविभागो व्यर्थ एव स्यात् । अतः 'अनन्तरस्य' इति बाधित्वा वाक्यसामान्यपक्षाश्रयणेन येन केनापि प्राप्तस्य हन्तेर्णत्वस्य 'अत्पूर्वस्य' इति योगविभागो नियामकः ।

तदाह—**'एकाजुत्तरपदे' इति णत्वमपीति**–इदमुपलक्षणम्–'प्रातिपदिकान्त' इत्यस्य 'कुमति च' इत्यस्य च । न चाल्लोपे कृते एकाजुत्तरपदाभावेन तदप्राप्तिः, पञ्चमीसमासेन पूर्वत्वेन दृष्टात्वरस्यापि कार्ये स्थानिवत्त्वेनैकाजुत्तरपदत्वाक्षतेः । 'पूर्वत्रासिद्धीये न स्थानिवत्' इति स्थानिवत्त्वनिषेधस्तु न, 'तस्य दोषः' इत्युक्त्या णत्वे कर्तव्ये स्थानिवत्त्वे तदप्रवृत्तेः । ननु हस्य कुत्वेऽपि स्थानिवत्त्वेन नकाराव्यवहितपूर्वस्य हस्याभावात्कुत्वं न स्यादित्यत आह—**नकारे परे इति** नकारे परे कुत्वविधानसामर्थ्यात् कुत्वे कर्त्तव्ये न स्थानिवदिति भावः । स्थानिवत्त्वेन सर्वत्रैवाकारव्यवधानात्सूत्रस्यैव वैयर्थ्यं स्यात् ।

**माधवेनोक्तमिति**—धातुवृत्तौ माधवेन हन्धातुमुपक्रम्य 'वृत्रहणौ' इत्यत्र 'एकाजुत्तरपदे णः' इति णत्वमुक्त्वा 'भसंज्ञायामल्लोपे उत्तरपदमनच्कं स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पो भवति 'वृत्रघ्णः, वृत्रघ्नः' इत्युक्तम् ।

**तद्भाष्येति**—तत्कथनं भाष्यविरुद्धम् । तथा हि—'अट्कुप्वाङ्' ( ८–४–२ ) इति सूत्रे भाष्ये 'कुव्यवायेहादेशेषु प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? वृत्रघ्नः, स्रुघ्नः, प्राघानि । **हन्तेरत्पूर्वस्येति** सूत्रे अत्पूर्वग्रहणं न कर्तव्यं भवति' इति । अत्र णत्वप्रकरणे हस्य स्थाने यः कवर्गस्तद्व्यवधाने णत्वप्रतिषेधोक्तेरिति भावः । अत्र 'स्थानिवद्भावश्चाल्विधित्वान्न' इति माधवोक्तिरपि चिन्त्या, अल्विध्यर्थमेव 'अचः परस्मिन्' इत्यस्यारम्भात्–इति केचित् । वस्तुतस्तु पञ्चमीसमासानाश्रयणे स्थानिवत्त्वाप्राप्त्या माधवोक्तिः सङ्गतैव ।

यत्तु माधवमतेऽपि 'कुमति च' इत्यस्य प्रवृत्त्या वैकल्पिकं णत्वमसङ्गतम् । न च 'प्रातिपादिकान्त' इत्यस्य दृष्टया 'कुमति च' इत्यस्यासिद्धत्वम्, 'उपसर्गादसमासेऽपि' ( ८–४–१४ ) इति सूत्रे भाष्ये पूर्वप्रकरणस्थे शास्त्रे कार्ये कर्तव्ये परप्रकरणस्थं शास्त्रमसिद्धम् इति पूर्वत्रासिद्धम् इति सूत्रार्थस्योक्ततया णत्वप्रकरणस्थे 'प्रातिपादिकान्त' इति कर्तव्ये 'कुमति च' इत्यस्यासिद्धत्वाभावेन परत्वात् 'कुमति च' इत्येव स्यादिति वाच्यम्, अत एव 'इदुदुपधस्य चाप्रत्ययस्य' इत्यादिषु 'सोऽपदादौ' इत्यतः 'सः' इत्यनुवर्त्त्य तस्य षत्वविधानपक्षे 'निष्कृतम्' इत्यादौ सत्वस्यासिद्धत्वाभावेन 'इणः षः' इत्यनेन सर्वत्र षत्वसिद्धिरिति तन्न, 'प्रकरणे प्रकरणमसिद्धम्' इति पक्षस्यापसिद्धान्तपक्षाश्रयणोनोक्ततया तस्यैकदेशयुक्तत्वेन 'कुमति च' इत्यस्यासिद्धत्वे बाधकाभावात् ।

अत एव 'भोष्छिन्धि' 'हरिवश्छिन्धि' इत्यादौ 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वार्तिकदृष्टया 'वन उपसंख्यानम्' इति वार्त्तिकदृष्टया च 'नश्छवि' इत्यस्यासिद्धत्वाभावात् परत्वात्तेनैव रुत्वे अवस्य ओकारादेशानापत्तिरनुनासिकापत्तिश्च न । तस्मात्प्रकरणे प्रकरणमसिद्धम् इति पक्षस्त्याज्य एव । **एवमिति**—वृत्रहन्शब्दे यथा 'इन् हन्' इति दीर्घः, 'सौ च' इति दीर्घश्च तथा शार्ङ्गिन्नित्यादिशब्देऽपि दीर्घ इत्यर्थः । न तु कुत्वणत्वे, असम्भवात् ।

शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन्। यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि 'इन्हन्–' इत्यत्र ग्रहणं भवत्येव, 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति वचनात्। अर्यम्णि, अर्यमणि। पूष्णि, पूषणि।

---

**शार्ङ्गिन्निति**—शृङ्गस्य विकारः शार्ङ्गम्, शृङ्गनिर्मितं विष्णुधनुस्तदस्यास्तीति शार्ङ्गी = विष्णुः। **यशस्विन्निति**–यशोऽस्त्यस्येत्यर्थे 'अस्माया' (५–२–१२१) इति विनिप्रत्ययः। 'तसौ मत्वर्थे' (१–४–१९) इति भत्वान्न रुत्वम्। **अर्य्यमन्निति**—अर्य्यम् = स्वामिनं स्वामित्वं वा मिमीते 'माङ् माने' इत्यर्थे इत्यतः 'श्वन्नुक्षन्' (उ० १ पा० १६५) इति कनिप्रत्यये आलोपे 'अर्य्यमा' = सूर्य्यः पितृदेवो वा। 'अर्य्यमा तु पुमान् सूर्य्ये पितृदेवान्तरेऽपि च' इति मेदिनी। **पूषन्निति**— 'पूष वृद्धौ' इत्यतः पूषति = वर्द्धते इत्यर्थे 'श्वन्नुक्षन्' (उ० पा० १६५ सू०) कनिप्रत्यये पूषा = सूर्य्यः। 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमरः।

ननु 'यशस्वी' इत्यत्र 'सौ च' इति दीर्घो न स्यात् 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति परिभाषया अर्थवत एव इनो ग्रहणाद् 'दण्डी' इत्यादावेव स्यादित्यत आह—**यशस्विन्नितीति**। **अनिनस्मन्निति**—अन् च इन् च अस् च मन् च अनिनस्मानीति द्वन्द्वः। तानि गृह्यन्ते-बोध्यन्ते यैः पदैस्तानि। अनिनस्मन्बोधकपदानीत्यर्थः। अर्थवदनर्थकञ्च शब्दस्वरूपं तदन्तविधिम् (स्वान्तनिमित्तकं कार्य्यम्) प्रयुङ्क्ते = लभते। अनिनस्मन्ग्रहणानि प्रेरयन्तीति विग्रहे णिचि प्रयोज्यकर्तृवाचकात् 'कर्तृकरणयोस्तृतीया' (२–३–१८) इति तृतीयायाम्, तिपा प्रयोजककर्तुरुक्तत्वेन च 'अनिनस्मन्ग्रहणानि अर्थवता अनर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति वाक्यं सिद्धम्।

एतच्च 'येन विधिस्तदन्तस्य' (१–१–७२) इति सूत्रे भाष्ये स्पष्टम्। तथा हि—'अनिनस्मन्ग्रहणानि च' अर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। अन्, राज्ञेत्यर्थवता साम्नेत्यनर्थकेन च। इन् दण्डीत्यर्थवता वाग्मीत्यनर्थकेन च। अस्–सुपया इत्यर्थवता सुस्रोता इत्यनर्थकेन च। मन्—सुशर्मा इत्यर्थवता सुप्रथिमा इत्यनर्थकेन चेति। अत्र 'सुस्रोताः' इति भाष्ये 'स्रु गतौ' इतः 'स्रुरीभ्यां तुट् च' (उ० ५ पा० २०२ सू०) इत्यसि तुटि च सिद्धस्य न ग्रहणम्, आगमविशिष्टस्यापि अस्ग्रहणेन ग्रहणात् तस्य चार्थवत्त्वाद् भाष्यविरोधापत्तेः। किन्तु स्रुधातोर्विचि निष्पन्नस्रोशब्दात् प्रतियोगे 'पञ्चम्यास्तसिः' (५–४–४४) इति सूत्रस्थेन 'आद्यादिभ्य उपसंख्यानम्' इति वार्त्तिकेन स्वार्थे विहितस्य तसिप्रत्ययान्तस्य ग्रहणं बोध्यम्।

अन्ये त्वाहुः—'अनिनस्मन्' इति नापूर्वं वचनम्। किन्तु 'अर्थवद्ग्रहणे' इति परिभाषाया अनित्यत्वादिष्टानुरोधेन सिद्धम्। तथा हि–'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' (८–३–७८) इति सूत्रे 'अङ्गात्' इत्यस्य फलम् 'विषॢ व्याप्तौ' इत्यतो विधौ लिङि ध्वमि शपः श्लौ द्वित्वे सीयुटि सलोपे 'वेविषीध्वम्' इत्यत्र ढत्ववारणम्।

यदि 'अर्थवद्ग्रहणे' इति परिभाषया अर्थवत एव षीध्वमो ग्रहणं स्यात्तदा 'कृषीढ्वम्' इत्यादावर्थवत एव ढत्वं स्यान्न त्वनर्थकस्येति तद् व्यर्थं सत्परिभाषाया अनित्यत्वं ज्ञापयति। ज्ञापकादिष्टसिद्धयनुरोधेनेदं सिध्यति '**अनिनस्मन्**' इति।

ननु इन्रूपाङ्गासम्भवादिनो विशेषणत्वासम्भवेन 'येन विधिः' इत्यस्याप्रवृत्त्या तदन्तत्वालाभः। न च अकारोऽस्त्यस्येत्यर्थे अशब्दात् 'अत इनिठनौ' (५–२–११५) इतीन्प्रत्यये 'यस्येति च' इत्यलोपे इन्रूपमङ्गं सम्भवतीति चेन्न, 'इन्ठनोरेकाक्षरात्प्रतिषेधः' इति वार्त्तिकेन एकाक्षरादिनः प्रतिषेधादिति चेन्न, तदन्तविधौ सति अभेदेन विशेषणत्वयोग्यत्वस्यापि तदन्तविधौ प्रयोजकत्वात्, एन् इन् इति समासे इन्रूपाङ्गस्य सम्भवाच्च। एतेन 'न हि इनङ्गमित्यन्वयो भवति' इति नागेशोक्तिश्चिन्त्या। अर्यमन्पूषन्शब्दयोर्विशेषमाह—'**अर्यम्णि, अर्यमणि**' इत्यादि। ङौ 'विभाषा ङिश्योः' इति विकल्पेनाल्लोपः।

*मघवा बहुलम्* । [ ६-४-१२८ ]

मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋ इत् ।

*उगिदचां सर्वनामस्थानेऽधातोः* । [ ७-१-७० ]

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे ।

---

'मह पूजायाम्' इत्यतो मह्यते=पूज्यत इत्यर्थे 'श्वन्नुक्षन्' ( उ० १ पा० १६५ ) इति कनि-प्रत्यये इकारककारयोरित्त्वे लोपे च 'मह अन्' इति स्थितौ धातोर्निपातनात् 'अवुक्' आगमे उकावितौ तयोर्लोपे निपातनादेव ( सूत्रे 'मघवन्' इति श्रवणात् ) महेर्हस्य घत्वे 'मघवन्' इति प्रत्ययस्वरेणान्तोदात्तः सिध्यति । मघवन्शब्दात् सौ 'मघवत् स्' इति स्थितौ ।

**मघवा बहुलम्** ( ६-४-१२८ ) इति । 'अर्वणस्त्रसौ' ( ६-४-१२७ ) इत्यतो लुप्त-प्रथमान्तम् 'तृ' इत्यनुवर्तते । तदनुरोधात् 'मघवा' इति षष्ठ्यर्थे प्रथमा । अत एव **'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्'** इति भाष्ये 'मघोनस्तृ' इत्युक्तिः संगच्छते । तदाह—**मघवन्शब्दस्येत्यादि । ऋ इदिति**—'ऋ' इति नपुंसकं लुप्तप्रथमान्तम् । 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषयाऽन्तादेश एव । उगित्त्वान्नुमर्थमिति भावः । अत एव 'मघवान् मघवा' इति प्रयोगद्वयं संगच्छते । 'नानुबन्धकृतमनेकाल्त्वम्' इत्यनेकाल्त्वाभावान्नकारस्य तादेशे 'मघवत् स्' इति जाते—

**उगिदचां सर्वनामस्थानेऽधातोः** ( ७-१-७० ) इति । उगिति प्रत्याहारः । उक् इत्येषां ते उगितः । 'अच्' इति लुप्तनकारस्य अञ्चधातोर्ग्रहणम् नाच्प्रत्याहारस्य, 'प्रत्ययः परश्च' इत्यादि-निर्देशात् 'नपुंसकस्य झलचः' ( ७-१-७२ ) इति सूत्रे अच्प्रत्याहारग्रहणात्, 'अञ्चतिग्रहणं नियमार्थं भविष्यति' इत्येतत्सूत्रभाष्याच्च । उगितश्च अच्चेति उगिदचस्तेषामुगिदचाम् । 'अधातोः' इति च्छेदः, 'अधातोरिति शक्यमवक्तुम्' इत्यादिभाष्यात् । तच्च उगितामेव विशेषणम्, न त्वचः लुप्त-नकारस्याचो धातुत्वेन धातुभिन्नत्वासम्भवात् ।

'इदितो नुम् धातोः' ( ७-१-५८ ) इत्यतो नुमनुवर्तते । तदाह—**अधातोरुगित इत्यादि ।** ननु 'अधातोः' इति व्यर्थम् । तद्धि 'उखास्रत्' 'पर्णध्वत्' इत्यादौ नुमभावार्थम् । तत्र नुमभावस्य अत्राञ्चतिग्रहणस्य नियमादेव सिद्धेः । तथा हि 'अञ्चु गतौ याचने च' इत्यत्र गतौ 'उदितो वा' ( ७-२-५६ ) इति क्त्वायां वैकल्पिकेट्सिद्धये उदित्करणस्यावश्यकत्वेन 'प्राङ्, प्राञ्चौ' इत्यादिषु उगित्त्वादेव नुमि सिद्धे 'अच्' इति नियमार्थम्—'धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चेरेव' ।

तथा च नियमेनैव 'उखास्रत्' इत्यादौ नुमभावसिद्धेरिति चेन्न, अधातोरित्यस्याधातुभूत-पूर्वस्यापि नुमर्थत्वात् । यस्य कदाचिद् धातुत्वं दृष्टं तस्य सम्प्रति ( नुम् काले ) अधातुत्वे सत्यपि नुम् यथा स्यादिति भावः । यथा गोमन्तमिच्छति गोमत्यति । ततः क्विप्प्रत्यये अलोपे 'क्यस्य विभाषा' ( ६-४-५० ) इति यलोपे 'गोमान्' । अत्र पूर्वं मतुबन्तस्याधातुत्वात् सम्प्रति धातुत्वेऽपि नुम् सिद्ध्यति ।

ननु 'अत्वसन्तस्य चाधातोः' (६-४-१४) इति दीर्घत्वं न प्राप्नोति, धातुभिन्नस्यात्वसन्तस्येस्ये-त्युक्तेरिति चेन्न 'अतु' इत्यस्य लुप्तषष्ठ्यन्तस्य योगविभागेन 'अधातोः' इत्यस्य तत्र सम्बन्धाभावात् ।

अत एव मूले 'धातुभिन्नासन्तस्य' इत्येव वक्ष्यति, नतु धातुभिन्नात्वन्तस्येति' । अत एव 'उगिदचाम्' इति सूत्रे भाष्ये 'इदं तर्हि प्रयोजनम् । अधातुभूतपूर्वादपि यथा स्यात् । गोमन्त-मिच्छति गोमत्यति । गोमत्यतेरप्रत्यये 'गोमान्' इति दीर्घनिर्देशः संगच्छते । **नलोपिनोऽञ्चेरे-वेत्युक्तेः** । पूजायाम् 'नाञ्चेः पूजायाम्' इति नलोपनिषेधात्, 'प्राङ ब्राह्मणि' इत्यत्र 'उगितश्च' ( ४-१-६ ) इति स्त्रियां ङीप् न । एवम् 'पर्णध्वत्, गोमान्' इत्यादौ धातुत्वे सति स्त्रियां न ङीप् । यत्तु अञ्चधातोरौपदेशिकत्वेन नियमस्य सजातीयापेक्षतया 'औपदेशिकस्य धातोरुगित्कार्यं

उपधादीर्घः, मघवान्॥

---

चेदञ्चतेरेवेति नियमोऽस्तु, 'गोमान्' इत्यादावधातुभूतपूर्वस्यापि औपदेशिकधातुत्वाभावेन नियमा-प्रवृत्त्या नुम्सिद्धौ 'अधातोः' इति च मास्तु, इति चेन्न, 'अधातोः' इत्यस्य अधातुभूतपूर्वस्यापि नुमर्थपरभाष्यविरोधापत्तेः, नामधातुनिष्पन्ने 'गोमान्' इत्यादौ स्त्रियां ङीबापत्तेश्च।

यत्तु 'नलोपिनोऽञ्चतेरेव नुम् यथा स्यान्न तु पूजायां नलोपाभावविशिष्टस्याञ्चतेरि'ति नियमेना-चामित्यस्य चारितार्थ्यात्सामान्यापेक्षज्ञापकत्वासम्भव इति तन्न, धातोरुगितश्चेन्नलोपिनोऽञ्चतेरेव। 'उखास्रत्, पर्णध्वत्' इति फलप्रदर्शनपरभाष्यविरोधापत्तेः। तथा 'उगितश्च' इति सूत्रे भाष्ये 'उगितोऽधातोः' 'उखास्रत्, पर्णध्वत् ब्राह्मणी' इत्युक्त्वा 'उगित्यञ्चतिग्रहणात्सिद्धमधातोः' उगिति अञ्चतिग्रहणात् अधातोः सिद्धम्। अञ्चतिग्रहणं नियमार्थं भविष्यति। अञ्चतेरेवोगितो धातोर्नान्य-स्योगितो धातोरिति' इत्युक्तेः, भाष्यत आवृत्त्या धातोश्चेदुगित्कार्यं तर्हि नलोपिन एव इति निय-मद्वयलाभात्, पूजार्थस्य नुमागमे नकारद्वयश्रवणापत्तेश्च।

अन्ये तु पूजार्थस्य नुमागमेऽपि 'निपात एकाजनाङ्' ( १-१-१४ ) इति सूत्रे भाष्ये उक्तया 'वर्णग्रहणे जातिग्रहणम्' इति परिभाषया नकारद्वये न त्वारोपेणानुस्वारे रूपसिद्धौ क्षतेरभावः। अत एव 'धीप्सति' इत्यादौ 'हलन्ताच्च' ( १-२-१० ) इति सनः कित्त्वे नलोपः सिद्ध्यति। न च व्यक्तिपक्षे दोषः, एकपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्यायुक्तत्वात्।

अन्यथा 'धीप्सति' इत्यत्रापि व्यक्तिपक्षे कित्त्वानापत्त्या भाष्यविरोधापत्तेः। एतेन व्यक्तिपक्षे पूजार्थस्य नुमि अनुस्वारत्रयघटितं स्यादिति परास्तम्। अत्र झलन्तस्यैवोगितो नुम् अञ्चतिसाहचर्यात् 'नपुंसकस्य झलचः' ( ७-१-७२ ) इतो झलोऽनुकर्षणाच्च। तेन शमी, शमिनौ इत्यादिषु नुम् न। तथाच भाष्यम् 'युवोरनाकाविति चेद् ? धातुप्रतिषेधः। युत्वा, युतवान्। एतच्छङ्कायाम् 'अनुनासिक-परयोर्युवयोर्ग्रहणम्' इति समाहितम्। अनुनासिकः परावयवो ( उकारः ) ययोरित्यर्थः। ततो 'यद्य-नुनासिकपरयोर्ग्रहणं तदा इत्संज्ञा प्राप्नोति इत्याशङ्क्य तत्र को दोषः ? नुमागमप्रसङ्गः। तत्प्रतिषेधो वक्तव्यः। अन्यथा नन्दनः, कारकः, इत्यत्र नुम् प्राप्नोति। नुम्विधौ झल्ग्रहणम्। झलन्तस्योगित इष्यते' इति। मघवेति—ननु मघवन् त् स् इति स्थितौ हल्ङ्यादिना सुलोपे 'संयोगान्तस्य' इति नलोपे तस्यासिद्धतया नान्ताङ्गाभावेन 'सर्वनामस्थाने च' इति दीर्घो न स्यादत आह इह दीर्घ इति। बहुलग्रहणादिति—बहूनर्थात् लाति गृह्णातीत्यर्थे 'आतोऽनुपसर्गे कः' इति कर्मण्युपपदे कर्तरि के बहुलमित्यर्थकात्।

"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद्बहुलग्रहे तु॥"

इत्युक्तेः। अत्र बहुलग्रहणस्य क्वचिदन्यदेवेत्यर्थाश्रयणेन दीर्घे कर्त्तव्ये 'पूर्वत्रासिद्धम्' इत्य-नेन प्राप्तस्याप्यसिद्धत्वस्याभावकल्पनान्नासिद्धत्वम्।

नन्वेवम् 'भवन्' इत्यादावप्यसिद्धत्वाभावः स्यादिति दीर्घापत्तिरिति चेन्न, प्रमाणसत्त्वे एव अप्राप्तकल्पनाया न्याय्यत्वात्। तदाह तथा चेति—

अयम्भावः—भाष्ये "अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुवन्योर्विधानाच्च छन्दस्युभयदर्शनात्॥" अर्वणस्तृ मघोनश्च न शिष्यम्। किं कारणम् ? छान्दसं हि तत्। दृष्टानु-विधिश्छन्दसि भवतीति। मतुब्वन्योर्विधानाच्च मतुब्वनी खल्वपि छन्दसि विधीयेते। छन्दस्यु-भयदर्शनात्। उभयं खल्वपि छन्दसि दृश्यते। 'इमान्य वर्णः पदानि अनर्वाणं वृषभं मन्द्र-जिह्वम्' इति।

इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात् । तथा च 'श्वन्नुक्षन्—' इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे ।

---

एवं भाष्यकृता छन्दसि वनिप्रत्ययेन नान्तं मतुप्प्रत्ययेन तान्तं च अर्वणो मघोनश्च स्वरूपं संसाध्य सूत्रद्वयम् 'मघवा बहुलम्' 'अर्वणस्त्रसावनञः' इति च प्रत्याख्यातम् । सति सूत्रे त्रादेशे सौ 'अत्वसन्तस्य' इत्यस्यात्वन्तत्वाभावेन दीर्घाप्राप्त्या 'मघवन्' इति रूपम् । सूत्राभावे मतुपि अत्वन्तत्वेन दीर्घे 'मघवान्' इति रूपम् । इति फलभेदे प्रत्याख्यानासङ्गतिवारणाय त्रादेशपक्षेऽपि अत्वन्तनिमित्तकदीर्घाभावेऽपि 'सर्वनामस्थाने चासम्बुद्धौ' ( ६–४–८ ) इति दृष्ट्या तकाररूपसंयोगान्तलोपस्यासिद्धत्वाभावे दीर्घे नास्ति फलभेद इति कल्पनायामेव भाष्यतात्पर्यमिति तदेव दीर्घे कर्तव्येऽसिद्धत्वाभावे प्रमाणमिति भावः । तदाह—दीर्घे कर्तव्ये इत्यादि, तथा च 'श्वन्नुक्षन्' इत्यादि च ।

एतेनास्य छान्दसत्वात् छन्दसि त्रादेशपक्षे 'मघवन्' इत्येव रूपमिति परास्तम्, वेदे लोके चोक्तरीत्या 'मघवान्' इत्यस्यैवेष्टत्वात् । अत एव 'मघवानृजीषि' इत्यादौ वेदेऽपि दीर्घदर्शनम् । तथा च कातन्त्रसूत्रम् 'सौ मघवान् मघवा च' इति, विचारचिन्तामणावपि 'मघवानेव मघवा' इत्युक्तम् । काशिकायामपि दीर्घ एव दृश्यते ।

निपातनादिति—महेर्हकारस्य घकारो धातोरुगागमः कनिप्रत्ययश्चेत्यस्य त्रयस्य निपातनादित्यर्थः । यत्तूज्ज्वलदन्तः 'श्वन्नुक्षन्' इत्यनेन कनिन् नित्त्वादाद्युदात्त इति तन्न, वेदे लोके चाद्युदात्तस्यादर्शनात् । निपातनस्य घनवाचकान्मघशब्दान्मतुपश्च लोकवेदसाधारण्येन भाषायामपि नान्तस्य तान्तस्य च सिद्धौ बाधकाभावः । न च 'छान्दसं हि तत्' इति भाष्यविरोधः । किञ्च तृविधायकसूत्रयोश्छन्दसीत्यनुक्तेश्छान्दसमिति भाष्यासङ्गतिश्चेति वाच्यम्, तृज्वत्सूत्रे 'अविशेषविहिताः शब्दा नियतविषया दृश्यन्ते, घरतिरस्मायविशेषेणोपदिष्टः स घृतं, घृणा, घर्म इत्येव विषयः' इति भाष्योक्तेः सामान्यतो विहितानामपि केषाञ्चिन्नियतत्वेन मघवेत्यादिसूत्रयोरपि छन्दोमात्रविषयत्वसम्भवात् । नन्वेवमपि कनिप्रत्ययान्तस्याव्युत्पन्नस्य वा मघवन्शब्दस्य त्रादेशे वकाराकारस्योदात्तत्वम्, मतुपि तु 'ह्रस्वनुड्भ्याम्' ( ६–१–१७६ ) इति प्राप्तस्य मतुबुदात्तत्वस्य 'न गोश्वन्' ( ६–१–१७२ ) इति प्रतिषेधेन वकाराकारस्य पित्त्वादनुदात्तत्वमिति प्रत्याख्यानपक्षे फलभेदोऽस्त्येवेति चेन्न, त्रादेशपक्षे दीर्घवद्बहुलग्रहणेन त्रादेशपक्षेऽपि घकाराकारस्यैवादात्तत्वाङ्गीकारात् । वस्तुतस्तु 'वनोर च' इति सूत्रे 'मघोनी' इत्यत्र रत्वाशङ्कायाम् 'मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्' इति भाष्योक्त्या मघवन्शब्दोऽव्युत्पन्न एव । भाषायामपीति—अपिना छन्दसि ।

आकरे इति—'केशाद्वोऽन्यतरस्याम्' ( ५–२–१०९ ) इति सूत्रे कैयट इत्यर्थः । आक्रियन्ते समूहीकृत्य शङ्कासमाधिनोच्यन्ते शब्दा यत्र स आकरः = भाष्यकैयटादिग्रन्थाः । तत्र हि 'छन्दसिवनिपौ च' इति वार्त्तिके च शब्दः यस्य समुच्चयार्थोऽन्यतरस्यांग्रहणस्य सर्वसम्बन्धान्मतुबपि भवतीत्याह-भाष्ये 'वश्च मतुप् च, इति । मघवेति-मघमस्यास्तीति मघवा । मतुपि तु मघवच्छब्दः । मघवा बहुलमेतन्न कर्तव्यम्, श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात् ।' इति ।

ननु अव्युत्पन्नत्वे 'फिषोऽन्तः' इत्यन्तोदात्तत्वस्यैव सम्भवेन कथम् 'मघवानमीमहे' इति मध्योदात्तम्, तत्र वनिवन्तस्य ग्रहणेन मध्योदात्तत्वसिद्धेः । नागेशमते मघवन्शब्दोर्वन्शब्दश्च छान्दस एव । अत एव शेखरे 'मघवन्शब्दस्यलोकेऽसाधुत्वं लभ्यते' इत्युक्तम् ।

वस्तुतस्तु 'न शिष्यं छान्दसं हि तत्' इति भाष्ये तत् = तान्तं छान्दसम्, न तु लौकिकम् । छन्दस्युभयदर्शनादित्यस्य छन्दस्येवोभयदर्शनादित्यर्थः । लोके तु नान्तमेव दृश्यत इत्यर्थः । अत

'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः। **मघवन्तौ, मघवन्तः। हे मघवन्। मघवन्तम, मघवन्तौ, मघवतः। मघवता, मघवद्भ्याम् इत्यादि।**

**तृत्वाभावे मघवा। 'छन्दसीवनिपौ च' इति वनिबन्तं मघ्योदात्तं छन्दस्येव। अन्तोदात्तन्तु लोकेऽपीति विशेषः। मघवानौ, मघवानः। सुटि राजवत्।**

*श्वयुवमघोनामतद्धिते। [ ६-४-१३३ ]*

---

एव 'इन्द्रो मरुत्वान् मघवा' इत्यमरः संगच्छते। नच नान्तस्यैव लोके प्रयोगे **'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ'** इति भट्टेस्तान्तप्रयोगासङ्गतिः, **अनसौ**–गतप्राणे रावणे **मघवा निःशङ्कः** सन् **हविर्जक्षिति**=भुङ्क्ते इत्यर्थेन नान्तस्यैवात्र प्रयोगात्। एवं तृज्वत्सूत्रे **'मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्'** इति लौकिकप्रयोगपरमेव। अन्यथा **'मतुव्वन्योर्विधानाच्च'** इति भाष्यासङ्गतिः।

**मघवन्ताविति**—सुटि त्रादेश उगित्त्वान्नुम् च। शसादौ त्रादेश एव न तु नुम्, **सर्वनाम**स्थानत्वाभावात्तदाह—**मघवत** इत्यादि। **मघवद्भ्यामिति**—स्वादिष्विति पदत्वाज्जश्त्वम्। **सुपि** त्रादेशे जश्त्वचर्त्वे। बहुलग्रहात् त्रादेशाभावे 'मघवा' 'राजा' इतिवत् कार्य्यम्।

ननु **'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्'** इति वार्तिकं भाष्यादिषु छन्दोमात्रविषयकत्वोक्तेः, कथं लोके प्रयोग इत्याशङ्कायामाह—**छन्दसीवनिपौ चेति**—'बहुलं छन्दसि' (५-२-१२२) इति सूत्रे वार्तिकम्, 'छन्दसीवनिपौ च वक्तव्यौ' मत्वर्थे ईवनिपौ स्तः छन्दसि। 'सुमङ्गलीरिय वधूः'। **'मघवानमीमहे'** इत्युदाहरिष्यति वैदिके। सुमङ्गलीरिति विशेषणं वध्वा इति संज्ञात्वाभावात् **'केवलमामक'** इति न ङीष्। अत एव सोर्लोपो न।

घनवाची मघशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। ततो वनिपि तस्य पित्त्वेन **'अनुदात्तौ सुप्पितौ'** ( ३-१-४ ) इति वकाराकारस्यानुदात्तत्वेन मध्योदात्तमघवन्शब्दश्छन्दसि छन्दस्येव वनिपो विधानात्। न च वनिवन्तस्य शसादौ सम्प्रसारणे अजादिस्वादिपरत्वेन भत्वात्। 'यस्येति च' ( ६-४-१४८ ) इत्यलोपे 'मघोनः' इत्यस्यासिद्धिः। नच लोपे कर्तव्ये **'असिद्धवदत्राभात्'** ( ६-४-२२ ) इति **सम्प्रसारणासिद्धत्वम्**, व्याश्रयत्वेनासिद्धत्वाप्राप्तेः। न चान्तरङ्गे **लोपे बहिरङ्गसम्प्रसारणासिद्धत्वम्**, अन्तरङ्गपरिभाषायाः 'वाह ऊठ्' ( ६-४-१३३ ) एतत्सूत्रदेशस्थत्वेनान्तरङ्गशास्त्रस्य यन्निमित्तमन्तरङ्गपरिभाषाया अपि तन्निमित्तकत्वेन समानाश्रयतयाऽन्तरङ्गपरिभाषाद्दृष्ट्याऽऽभीयस्य लोपस्यासिद्धत्वेनान्तरङ्गाभावेनासिद्धत्वाप्राप्तेरिति वाच्यम्, निपातितस्याव्युत्पन्नस्य वा तद्रूपसिद्धेः। नच मध्योदात्तत्वासिद्धिः, 'एकादेश उदात्तेनोदात्तः' इत्यस्य प्रवृत्त्या छन्दसि दृष्टानुविधानस्यैव सत्त्वेन चेष्टरूपसिद्धेः।

**अन्तोदात्तन्त्विति**—कन्यन्तोऽव्युत्पन्नश्चेत्यर्थः। 'आद्युदात्तश्च' ( ३-१-३ ) इति प्रत्ययस्वरेण 'फिषोऽन्त उदात्तः' इत्यनेन वेत्यर्थः। **लोकेऽपीति**–अपिना वेदे इत्यस्य संग्रहः। एतादृशस्य लोकमात्रविषयकत्वे वेदमात्रविषयकत्वे च प्रमाणाभावेनोभयसाधारण्यम्।

शब्दरत्नकाराः शेखरकाराश्च 'न शिष्यं छान्दसं हि तत्' इति सामान्यतः प्रवृत्तयोर्भाष्यवार्त्तिकयोर्मध्योदात्तमात्रविषयं संकोचे प्रमाणाभावात्सर्वस्य मघवन्शब्दस्य लोकेऽसाधुत्वमेव। कविप्रयोगाणान्तु 'तं तस्थिवांसं नगरोपकण्ठे' 'तं पातयां प्रथममास पपात पश्चात्' इत्यादिषु प्रमाददर्शनेन आर्षवचनस्य संकोचकत्वे न किञ्चित्प्रमाणमित्याहुः।

**सुटि राजवदिति**—तृत्वाभावपक्षे सुटः सर्वनामस्थानत्वेन नान्तत्वे दीर्घ इति भावः। शसादावचि 'मघवत् अस्' इत्यादिस्थितौ 'अल्लोपोऽनः' इत्यलोपे प्राप्ते तदपवादमाह—**'श्वयुवमघोनामतद्धिते'** ( ६-४-१३३ ) इति। श्वा च युवा च मघवा चेतीतरेतरयोगद्वन्द्वस्तेषाम्।

अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात् । 'संप्रसारणाच्च' 'आद् गुणः' मघोनः । अन्नन्तानां किम्-मघवतः । मघवता । स्त्रियां मघवती । अतद्धिते किम्-माघवनम् । मघोना, मघवभ्याम् इत्यादि । शुनः । शुना, श्वभ्यामित्यादि ।

---

'इग्यणः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते । 'अल्लोपोऽनः' इत्यतः 'अनः' इत्यनुकृष्यते । तच्च त्रयाणां विशेषणम् । विशेषणत्वात् 'येन विधिः' इति तदन्तस्य संज्ञा 'भस्य' ( ६-४-१२६ ) इत्यधिकृतम् । तदाह—अन्नन्तानामित्यादि । 'इग्यणः सम्प्रसारणम्' इत्यनेन वकारस्य स्थाने उकारः सम्प्रसारणम् । 'मघ उ अन् अस्' इति जाते 'सम्प्रसारणाच्च' इति सूत्रेण उकाराकारे परे पूर्वपरयोरुकाराकारयोः पूर्वरूपादेशे 'उकारे' 'मघ उन् अस्' इति स्थितौ 'आद् गुणः' इति गुणे 'मघोनः' इति सिद्धम् ।

श्वादीनामन्नन्तत्वाव्यभिचारेण 'अन्नन्तानाम्' इति विशेषणं व्यर्थम्, नच त्रादेशे व्यभिचारस्तत्रापि एकदेशविकृतन्यायेनान्नन्तत्वसत्त्वादित्याशयेनाह—अन्नन्तानां किमिति—'मघवतः' इति—अत्र नकारान्ते सम्प्रसारणाभावाय अन्नन्तानामिति विशेषणम् । नच सत्यप्यन्नन्तत्वविशेषणे एकदेशविकृतन्यायेनान्नन्तत्वमादाय च सम्प्रसारणापत्तिः, एवं सति विशेषणवैयर्थ्येन श्रूयमाणान्नन्तत्वे एव तत्प्रवृत्तेः कल्पनात्, परिच्छिन्नपरिमाणे न्यायाप्रवृत्तेः षष्ठीप्रकृतिवृत्तिधर्मस्यैवातिदेशे तन्न्यायप्रवृत्तेः 'ऋृलृक्' सूत्रे भाष्यकृतोक्तत्वेन प्रकृते तदप्रवृत्तेश्च स्थानिवत्त्वेनान्नन्तत्वं तु न लभ्यम्, 'अलोऽन्त्यस्य' इत्यनेन नस्यैव स्थानित्वेनानः स्थानित्वाभावात् ।

भाष्ये तु 'श्वादीनां सम्प्रसारणे तकारान्तग्रहणं कर्तव्यमनकारान्तप्रतिषेधार्थम् मघवतः, मघवता' इत्युक्त्वा 'न कर्तव्यम् । उक्तं वा, किमुक्तम् ?' 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तदिति' इति छन्दसि दृष्टानुविधित्वाल्लोपो न भविष्यतीति भावः ।

एतेनापि तान्तमघवच्छब्दस्याभावः सूचितः । नच 'श्वादीनाम्' इति वार्तिकाभावे 'युवतीः पश्य' इत्यत्र सम्प्रसारणं स्यादिति वाच्यम्, 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इति भाष्ये समाहितत्वात् । 'अथवा उपरिष्टाद्योगविभागः करिष्यते—'श्वयुवमघोनामतद्धिते' 'अल्लोपः' अकारस्य च लोपो भवति । ततः 'अनः' इति उभयोः शेषः इति । योगविभागसामर्थ्यात् 'अनः' इति सम्प्रसारणलोपयोरुभयोर्नियामकः स्यादिति भावः । 'अनः' इत्यस्य सामर्थ्याच्छ्रूयमाणान्तन्तस्येत्यर्थः । एतेन 'बहुधीवरी, राजकीयम्' इत्यादावल्लोपाभावः 'युवतीः' इत्यादौ सम्प्रसारणाभावश्च सिद्धः । मघवतीति—त्रादेशस्योगित्त्वात् 'उगितश्च' इति उगिदन्तत्वेन ङीप् । अतः सम्प्रसारणं नान्तत्वाभावात् विभक्तौ लिङ्गविशिष्टाग्रहणाच्च 'उगिदचाम्' इति नुमपि न । न च मघवन्शब्दस्य पुंस्येव प्रवृत्तेर्ङीपो दौर्लभ्यम्, पुंयोगेन स्त्रियां वृत्तौ बाधकाभावात् ।

माघवनमिति—मघवा देवताऽस्य हविष इत्यर्थे 'साऽस्य देवता' ( ४-२-२० ) इत्यणि आदिवृद्धौ 'नस्तद्धिते' इति टिलोपे प्राप्ते 'अन्' ( ६-४-१६७ ) इति प्रकृतिभावे 'माघवनम्' अत्र तद्धितपरत्वात् सम्प्रसारणं न ।

शुन इति—श्वयति = गच्छति श्वानं प्रतीत्यर्थे 'टुओश्वि गतिवृद्ध्योः' इत्यतः 'श्वन्नुक्षन्' ( उ० १-पा० १६५ सू० ) इति कनिप्रत्यये निपातनादिकारलोपे श्वा । सुटि हलादौ च राजवद्रूपम् । शसादावचि 'श्वयुव' इति वस्य सम्प्रसारणे उकारे 'सम्प्रसारणाच्च' पूर्वरूपे शुन् अस् इति 'शुनः' इत्यादि । ननु 'वार्णादाङ्गं बलीयः' इति परिभाषया पूर्वरूपं बाधित्वा 'अल्लोपोऽनः' इत्यलोपे वकारस्थानिकोकारस्य शसोऽकारस्य च सुप्त्वेनानुदात्ततया सर्वानुदात्तं उदात्तनिवृत्तिस्वरेणान्तोदात्तं वा स्यादिति चेन्न, वार्णपरिभाषाया अनित्यत्वेनाप्रवृत्तेः, शुन इत्यत्र सम्प्रसारणस्याभीयत्वेनासिद्धतया 'न संयोगाद्वमन्तात्' इति निषेधेन चाल्लोपाप्राप्तेः ।

युवन्शब्दे वस्योत्वे कृते।

*न संप्रसारणे संप्रसारणम्।* [ ६-१-३७ ]

**संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम्, अत एव।**

---

**युवन् शब्द इति**—यौति=मिश्रयति स्ववीर्यं रजसि य इत्यर्थे 'कनिन् यु' ( उ० १ पा० १६५) कनिनि **युवा** इति। सुटि हलादौ च राजवत्। शसादावचि 'श्वयुव' इति वकारस्य उकारे सम्प्रसारणे 'यु उ अन्' अस् इत्यत्र 'सम्प्रसारणाच्च' इति पूर्वरूपादेशे 'यु उ न् अस्' इति जाते सवर्णदीर्घे 'यूनः' इत्यादिरूपं बोध्यम्। **उत्वे कृत** इति—अस्य यकारस्यापि सम्प्रसारणे प्राप्ते इति शेषः।

**न सम्प्रसारणे सम्प्रसारणम्** ( ६-१-३७ ) इति। **पूर्वस्येति**—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषया 'पूर्वस्य' इत्युपतिष्ठते। तदाह—**सम्प्रसारणे परतः पूर्वस्येत्यादि**। 'समो वा लोपमेके' इति मलोपे 'सस्कर्ता' इत्यत्र 'अनचि च' इति सस्य द्वित्वे पुनः सस्य द्वित्वे च 'सस्स्स्कर्ता' त्रिसकारकरूपसिद्धौ व्यर्थेन 'समः सुटि' ( ८-३-५ ) इति ज्ञापितेन 'सम्प्रसारणाच्च' ( ६-१-१०८ ) इति सूत्रे भाष्ये 'कार्य्यकृतत्वाद्वा, अथवा सकृत् कृतं पूर्वत्वम् ( शकद्वर्यम् ) इति पुनर्न भविष्यति' इति 'पुनर्न भविष्यति' इति भाष्यतः 'सिचि वृद्धिः' ( ७-१-२ ) इति सूत्रे 'उदवोढाम्' इत्यत्र पुनर्वृद्ध्यभावपरभाष्यतश्च सूचितेन—

'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते' इति न्यायेन तु न पुनः सम्प्रसारणाभावः, कार्य्याश्रयवर्णभेदेन लक्ष्यभेदात् तल्लक्ष्यत्वाभावात्। अन्यथा 'संस्स्कर्ता' इत्यादावनुस्वारसकारयोः 'अनचि च' इति द्वित्वं न स्यात्। न च 'उदवोढाम्' इति साधनपरभाष्यविरोधः। 'उदवह्स्ताम्' इत्यत्र 'वदव्रज' इति वकाराकारस्य वृद्धौ ओदादेशे प्रथमप्रवृत्तकार्याश्रयादकारादोकारे भेदसत्त्वेन लक्ष्यलक्षणन्यायेन पुनर्वृद्धिवारणपरभाष्यविरोधः स्पष्ट एवेति वाच्यम्, अत एव भाष्यादिकारकृतवर्णभेद-स्यानाश्रयणात्। **इति यकारस्य नेत्वमिति**—सवर्णदीर्घनिष्पन्नस्य उकारस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन यकारस्य सम्प्रसारणपरकतया यकारस्य इकाररूपं सम्प्रसारणं नेत्यर्थः।

नच पूर्वरूपनिष्पन्ने उकारे सम्प्रसारणत्वाभावात् स्थानिवत्त्वेन दीर्घे सम्प्रसारणत्वं दुर्लभम्। परादिवद्भावेन तु न सम्प्रसारणत्वम्, वर्णाश्रये परादिवद्भावाप्रवृत्तेरिति वाच्यम्, 'हलः' (६-४-२) **इति ज्ञापकेन** सम्प्रसारणस्थानिकस्य सम्प्रसारणत्वबोधनात्।

नन्वेवमपि 'अचः परस्मिन्' इति स्थानिवत्त्वे 'यु उ न्' इति बुद्धौ द्वितीयोकारे एव सम्प्र-सारणत्वम् इति प्रथमोकारेण व्यवधानात् सम्प्रसारणपरत्वाभावान्निषेधासम्भव इति चेन्न, व्यवधानेऽपि **'न सम्प्रसारणे'** इति निषेधस्य प्रवृत्तेः। अव्यवधानेन सम्प्रसारणपरत्वे एव निषेधप्रवृत्तौ सूत्र-वैयर्थ्यापत्तेः।

न च 'विव्यथे' इत्यादौ इकाररूपे सम्प्रसारणे परे वकारस्य सम्प्रसारणाभावाय सूत्रस्य चारि-तार्थ्यम्, 'व्ययो लिटि' इत्यादो 'व्यथो यो लिटि' इति यप्रश्लेषेणैव निर्वाहे—सूत्रारम्भसामर्थ्येन व्यवधानेऽपि प्रवृत्तेरावश्यकत्वात्। ननु 'श्वयुव' इत्यनेन सकृत्प्रवृत्त्यैव यवयोः सम्प्रसारणं स्यादिति शेखरे उक्तं तन्नासङ्गतम्, 'विव्यथे' इत्यादेरसिद्ध्यापत्तेः।

अनेकस्थानिघटितलक्ष्ये न युगपत्प्रवृत्तिः शास्त्रस्य, किन्तु पर्य्यायेणैव। अन्यथा **'व्ययो लिटि'** इति शास्त्रस्य 'हलादिः शेषः' इति सूत्रापवादतया 'हलादिः शेषः' इत्यस्याप्रवृत्तौ **'विव्यथे'** इत्यत्र यकारलोपो न स्यात्। पर्य्यायेण प्रवृत्तौ तु यकारनिवर्तकस्य 'हलादिः' इत्यस्यापवादत्वेन बाधेऽपि यकारनिवर्तकस्य 'हलादिः' इत्यस्यापवादत्वे मानाभावेन यकारनिवृत्तिः सिध्यति। तस्मात्पर्य्यायेणैव शास्त्रप्रवृत्तिरिति गुरवः।

युवन्शब्दे वस्योत्वे कृते।

*न संप्रसारणे संप्रसारणम् ।* [ ६-१-३७ ]

**संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम्, अत एव ।**

---

**युवन् शब्द इति**—यौति=मिश्रयति स्ववीर्य्यं रजसि य इत्यर्थे 'कनिन् यु' ( उ० १ पा० १६५) कनिनि **युवा** इति । सुटि हलादौ च राजवत् । शसादावचि 'श्वयुव' इति वकारस्य उकारे सम्प्रसारणे 'यु उ अन्' अस् इत्यत्र 'सम्प्रसारणाच्च' इति पूर्वरूपादेशे 'यु उ न् अस्' इति जाते सवर्णदीर्घे 'यूनः' इत्यादिरूपं बोध्यम् । उत्वे कृत इति–अस्य यकारस्यापि सम्प्रसारणे प्राप्ते इति शेषः।

**न सम्प्रसारणे सम्प्रसारणम्** ( ६-१-३७ ) इति । **पूर्वस्येति**—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषया 'पूर्वस्य' इत्युपतिष्ठते । तदाह—**सम्प्रसारणे परतः पूर्वस्येत्यादि । '**समो वा लोपमेके' इति मलोपे 'सस्कर्ता' इत्यत्र 'अनचि च' इति सस्य द्वित्वे पुनः सस्य द्वित्वे च 'सस्स्स्कर्ता' त्रिसकाररूपसिद्धौ व्यर्थेन 'समः सुटि' ( ८-३-५ ) इति ज्ञापितेन 'सम्प्रसारणाच्च' ( ६-१-१०८ ) इति सूत्रे भाष्ये 'कार्य्यकृतत्वाद्वा, अथवा सकृत् कृतं पूर्वत्वम् ( शकद्वर्यम् ) इति पुनर्न भविष्यति' इति 'पुनर्न भविष्यति' इति भाष्यतः 'सिचि वृद्धिः' ( ७-१-२ ) इति सूत्रे 'उदवोढाम्' इत्यत्र पुनर्वृद्ध्यभावपरभाष्यतश्च सूचितेन—

'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते' इति न्यायेन तु न पुनः सम्प्रसारणाभावः, कार्य्याश्रयवर्णभेदेन लक्ष्यभेदात् तल्लक्ष्यत्वाभावात् । अन्यथा 'संस्स्कर्ता' इत्यादावनुस्वारसकारयोः 'अनचि च' इति द्वित्वं न स्यात् । न च 'उदवोढाम्' इति साधनपरभाष्यविरोधः । 'उदवह्स्ताम्' इत्यत्र 'वदव्रज' इति वकाराकारस्य वृद्धौ ओदादेशे प्रथमप्रवृत्तकार्याश्रयादकारादोकारे भेदसत्त्वेन लक्ष्यलक्षणन्यायेन पुनर्वृद्धिवारणपरभाष्यविरोधः स्पष्ट एवेति वाच्यम्, अत एव भाष्याद्विकारकृतवर्णभेद-स्यानाश्रयणात् । **इति यकारस्य नेत्वमिति**—सवर्णदीर्घानिष्पन्नस्य उकारस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन यकारस्य सम्प्रसारणपरकतया यकारस्य इकाररूपं सम्प्रसारणं नेत्यर्थः ।

नच पूर्वरूपनिष्पन्ने उकारे सम्प्रसारणत्वाभावात् स्थानिवत्त्वेन दीर्घे सम्प्रसारणत्वं दुर्लभम् । परादिवद्भावेन तु न सम्प्रसारणत्वम्, वर्णाश्रये परादिवद्भावाप्रवृत्तेरिति वाच्यम्, 'हलः' (६-४-२) **इति ज्ञापकेन सम्प्रसारणस्थानिकस्य सम्प्रसारणत्वबोधनात् ।**

नन्वेवमपि 'अचः परस्मिन्' इति स्थानिवत्त्वे 'यु उ न्' इति बुद्धौ द्वितीयोकारे एव सम्प्र-सारणत्वम् इति प्रथमोकारेण व्यवधानात् सम्प्रसारणपरत्वाभावान्निषेधासम्भव इति चेन्न, व्यवधानेऽपि 'न सम्प्रसारणे' इति निषेधस्य प्रवृत्तेः । अव्यवधानेन सम्प्रसारणपरत्वे एव निषेधप्रवृत्तौ सूत्र-वैयर्थ्यापत्तेः ।

न च 'विव्यथे' इत्यादौ इकाररूपे सम्प्रसारणे परे वकारस्य सम्प्रसारणाभावाय सूत्रस्य चारि-तार्थ्यम्, 'व्यथो लिटि' इत्यादो 'व्यथो यो लिटि' इति यप्रश्लेषेणैव निर्वाहे—सूत्रारम्भसामर्थ्येन व्यवधानेऽपि प्रवृत्तेरावश्यकत्वात् । ननु 'श्वयुव' इत्यनेन सकृत्प्रवृत्त्यैव यवयोः सम्प्रसारणं स्यादिति शेखरे उक्तं तच्चासङ्गतम्, 'विव्यथे' इत्यादेरसिद्ध्यापत्तेः ।

अनेकस्थानिघटितलक्ष्ये न युगपत्प्रवृत्तिः शास्त्रस्य, किन्तु पर्य्यायेणैव। अन्यथा 'व्यथो लिटि' इति शास्त्रस्य 'हलादिः शेषः' इति सूत्रापवादतया 'हलादिः शेषः' इत्यस्याप्रवृत्तौ 'विव्यथे' इत्यत्र यकारलोपो न स्यात् । पर्य्यायेण प्रवृत्तौ तु यकारनिवर्तकस्य 'हलादिः' इत्यस्यापवादत्वेन बाधेऽपि यकारनिवर्तकस्य 'हलादिः' इत्यस्यापवादत्वे मानाभावेन यकारनिवृत्तिः सिध्यति । तस्मात्पर्य्यायेणैव शास्त्रप्रवृत्तिरिति गुरवः ।

ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्, यूनः । यूना, युवभ्यामित्यादि ।
अर्वा । हे अर्वन् ।

*अर्वणस्त्रसावनञः* । [ ६-४-१२७ ]

नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशः स्यात्, न तु सौ । उगित्वान्नुम् । **अर्वन्तौ, अर्वन्तः । अर्वन्तम्, अर्वन्तौ, अर्वतः । अर्वता, अर्वद्भ्याम्** इत्यादि ।

---

यद्वा प्रथमोपस्थितिकत्वात्पूर्वं यकारस्यैव सम्प्रसारणमस्त्विति निषेधासम्भवस्तदानीं सम्प्रसारणपरत्वाभावात्तदनन्तरं वकारस्य संप्रसारणमस्त्वित्याशङ्कायामाह– **अत एव ज्ञापकादिति अन्त्यस्येति**—अन्यथा निषेधस्य वैयर्थ्यापत्तिरिति भावः । 'यूनस्तिः' इति सौत्रनिर्देशासङ्गतिश्च । वस्तुतस्तु 'अन्त्यविकारेऽन्त्यसदेशस्य' इति परिभाषयैव परयणा सम्प्रसारणे सिद्धे इदं सूत्रं व्यर्थम् ।

**अर्वेति** । 'ऋ गतिप्रापणयोः' इत्यतः 'अन्येभ्योऽपि दृश्यन्ते' ( ३-२-७५ ) इत्यनेन वनिपि गुणे अर्वन्शब्दः सिध्यति । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः ( २ का ८ वर्ग, ४४ श्लोक ) अश्वे योगरूढोऽर्वन्शब्दः । तस्मात्सौ राजवद्रूपम्—**अर्वा, हे अर्वन्** ।

**'अर्वणस्त्रसावनञः'** ( ६-४-१२७ ) इति । अर्वणः, तृ, असौ, अनञः । न विद्यते नञ् यस्य सोऽनञ् तस्येति बहुव्रीहिः । 'न नञ् अनञ्' इति तत्पुरुषे तु नञ्भिन्नात्परस्येत्यर्थे 'अर्वन्तौ' इत्यादेरसिद्धिः नञ्भिन्नपदात्परत्वाभावात् । प्रसज्यप्रतिषेधस्वीकारे तु गौरवम् । 'अङ्गस्य' इत्यधिकृतम् । तच्चार्वणा विशेष्यते । विशेषणेन तदन्तविधिः । तदाह—**नञा रहितस्येत्यादि** ।

**न तु साविति**—प्रसज्यप्रतिषेधाभिप्रायेणेदम् पर्युदासे तु विभक्तौ परत एव स्यात् । तथा च 'अर्वती' इति न सिध्येत् । प्रतिषेधपरत्वे तु अनिमित्तकत्वेन पूर्वं त्रादेशे उगित्त्वान्ङीपि 'अर्वती' इति सिध्यति ।

वस्तुतस्तु 'न शिष्यं छान्दसं हि तत्' इति भाष्येण लोके त्रादेशाभावः । छन्दसि तु छन्दसि दृष्टानुविधानात् सिद्धिः । लोके मतुबन्तान्ङीपि तादृशरूपसिद्धेः । तथा च 'असौ' इति पर्युदास एव । प्रतिषेधे वाक्यभेद-शास्त्रबाधादिकल्पने गौरवात् । प्रत्ययत्वेन सादृश्यात् प्रत्यये परत एव त्रादेशविधानात् । तेन 'अर्वप्रियः' 'वाहैरलुप्यत सहस्रदृगर्वगर्वः' इति श्रीहर्षप्रयोगः समर्थितः ।

एवञ्च अङ्गेन प्रत्ययाक्षेपात् प्रत्यये परत एव त्रादेशे तत्त्वबोधिन्यां मनोरमादिग्रन्थविरोधप्रदर्शनं—'असौ' इति प्रसज्यप्रतिषे 'अर्वप्रियः' 'सहस्रदृगर्वगर्वः' इत्यादौ त्रादेशमाशङ्क्य अङ्गेन प्रत्ययमाक्षिप्य प्रत्यये परे एव त्रादेशविधानादुक्तस्थाने सुपो लुका लुप्तत्वात् 'न लुमता' इति प्रत्ययलक्षणप्रतिषेधान्न त्रादेशः । नन्वेवम् 'स्थानिवत्' इति सूत्रे 'धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत्' इति प्राचीनोक्तमनूद्याशङ्कितम् किं परिगणनमुदाहरणमात्रं वेति विकल्प्य नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यादिति मनोरमोक्तं विरुद्ध्येत, अव्ययस्य 'न लुमता' इति निषेधेनानङ्गत्वात् ।

न च 'न लुमता' इत्यनेनाङ्गसंज्ञकस्य कार्यनिषेधेऽपि नाङ्गसंज्ञायां निषेध इति नोक्तविरोधः, 'प्रत्यये परतः पूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तत् सर्वं लुमता लुप्ते निषिध्यते' इति 'यञोऽचि च' इति सूत्रे मनोरमोक्त्याऽङ्गसंज्ञाया अपि निषेधस्वीकारात् । 'यदि लुमता लुप्तेऽङ्गत्वं स्वीक्रियते तदा 'वृषणश्वः' 'वृषण्वसु' इत्यादौ अल्लोपो न, अनङ्गत्वात्' इति वैदिकप्रक्रियास्थग्रन्थेन विरोधः, अङ्गसंज्ञायाम् 'न लुमता' इत्यस्याप्रवृत्त्याऽङ्गत्वसत्त्वात् । तस्मात् 'आङ्गमनाङ्गं वा' इति मनोरमाग्रन्थः 'न लुमता तस्मिन्' इति न्यासपर इति न कश्चन विरोध इति निरस्तम् । पर्युदासेन प्रत्यये परतो विधाने सर्वविरोधपरिहारात् । ननु ऋधातोर्वनिपि गुणे च 'अर्' इति । ततो मतुपि **'अर्वन्तौ' इत्यादेः सिद्धिः** । नान्तार्वन्शब्दोऽपि ऋधातोः 'स्नामदिपद्यर्ति' (उ० ४ पा० ११३ सू०) इति वनिपि सिध्यति । छन्दसि तु अर्शब्दात् 'ईवनिपौ छन्दसि' इति वनिपि अर्वन्शब्दो भाष्यकृता

अनञः किम्—अनर्वा, यज्ववत् ।

*पथिमथ्यृभुक्षामात् । [ ७-१-८५ ]*

एषामाकारोऽन्तादेशः स्यात्सौ परे। आ आत् इति प्रश्लेषेण शुद्धाया एव व्यक्तेः

साधितः । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरादर्थविशेषे रूढत्वबोधनेन नार्थभेदः । एवं नान्ततान्तयोः सिद्धौ सूत्रं व्यर्थमिति चेदत्राहुः—नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सूत्रस्य प्रयोगव्यवस्थार्थत्वात् । नान्तस्यैव सौ नञ्पूर्वकत्वे प्रयोगोऽन्यत्र यथेष्टम् 'तृज्वत्क्रोष्टुः' इति त्रिसूत्रीवत् । 'छन्दस्येव प्रयोगः' इति भाष्योक्तिस्तु तद्धितवनिवन्तविषयिकैव ।

अनञः किमिति—'अनञः' इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः । उत्तरम्—अनर्वेति—यज्वन्शब्दसदृशोऽनर्वन्शब्दोऽस्य व्यावर्त्य इत्यर्थः । एतेन सौ परतः त्रादेशाप्राप्तेरिदमसङ्गतमिति परास्तम्, अनर्वन्शब्दे यश्च प्राप्नोति तत्र मा भूदित्याशयात् ।

पतन्ति–गच्छन्ति जना यत्र स पन्थाः । पतधातोः 'पतस्थश्च' ( उ० ४-१२ सू० ) इति इनिप्रत्यये तकारस्य थकारादेशे 'पथिन्' पन्थाः = मार्गः । तदुक्तम्—'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इति ( अमरभूमिव० श्लो० १४ ) । मथिन्—'मन्थ विलोडने' इत्यतः 'गमेरिनिः' इत्यत इनिरिति, 'परमे कित्' इत्यतः 'कित्' इति चानुवर्तते 'मन्थः' ( उ० ४ पा० ११ सू० ) इति सूत्रेण किति इति नलोपे 'मथिन्' = विलोडनकर्ता मन्थनदण्डो वा । ऋभुक्षिन्—आ स्वर्गः तत्र भवन्तीति ऋभवो देवाः । ऋपूर्वकाद्भूधातोः 'मितद्र्वादिभ्य उपसंख्यानम्' इति वार्तिकेन डुप्रत्यये 'ऋभुः' इति । ते क्षियन्ति-वसन्ति यत्र स ऋभुक्षः स्वर्गः, ऋभुं देवमिन्द्रं क्षियति–गच्छतीति 'ऋभुक्षो' वज्रं वा । ऋपूर्वकात् 'क्षि निवासगत्योः' इत्यतः 'अन्येष्वपि दृश्यते' ( ३-२-१०१ ) इति सूत्रस्येन 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन डप्रत्यये 'ऋभुक्षः' इति । सोऽस्त्यस्येत्यर्थे इनि प्रत्यये 'ऋभुक्षाः'=इन्द्रः । तदुक्तम्–'इन्द्रो मरुत्वान्···आखण्डलः सहस्राक्ष ऋभुक्षाः' इति ( अम० १ का० स्वर्गव० श्लो० ४४ ) एषु विशेषकार्यप्रदर्शनायाह—

पथिमथ्यृभुक्षामात् ( ७-१-१८५ ) इति । पन्थाश्च मन्थाश्च ऋभुक्षाश्चेति विग्रहे द्वन्द्वः । 'सावनडुहः' इत्यतः 'सौ' इत्यनुवर्तते । 'अलोऽन्त्यस्य' इति परिभाषयाऽन्त्यस्यादेशस्तदाह—एषामन्त्यस्येत्यादि । ननु 'अस्थि दधि' इति सूत्रे 'अनङ्' इत्यत्राकारस्योदात्तोच्चारणेनैवोदात्तत्वे सिद्धे 'उदात्तः' इति व्यर्थीभूय ज्ञापयति—'शास्त्रे विना यत्नं स्वरूपेण ( उदात्तादिशब्दं विना ) उच्चारिता गुणा अभेदकाः = इतरव्यावर्तका न भवन्ति' इति ।

तथा च प्रकृते 'आत्' इत्यस्याननुनासिकोच्चारणेऽपि अनुनासिकाकारस्य व्यावर्त्तनं न स्यादिति स्थानिनो नकारस्यानुनासिकत्वेनान्तरतम्यादनुनासिक एवाकारः स्यात् । न च दीर्घाकारस्यानण्त्वेन 'अणुदित्' इत्यस्याप्राप्त्या विधीयमानत्वेन च अनुनासिकाकारस्यानुपस्थित्या विधानं न स्यादिति वाच्यम्, तपरसूत्रस्य 'वृद्धिरादैच्' इत्यादावनणोव विधीयमानेऽपि विध्यर्थत्वात् तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तवद् अणग्रहणानुवृत्तौ च मानाभावाच्चात आह—आ आदिति आ–अननुनासिकाकाराभिन्नो य आत् स एवात्र विधेय इत्यर्थः । न च पूर्वाकारस्याननुनासिकत्वे प्रमाणाभावः, प्रश्लेषसामर्थ्येन अननुनासिकत्वकल्पने बाधकाभावात् ।

न चाकारसमुदायस्य विधेयत्वेऽनेकाल्त्वात्सर्वादेशापत्तिः, अभेदेन विशेषणत्वे एकाकारस्यैव विधेयत्वात् । 'अष्टन आ' इति सूत्रभाष्ये तु ''अष्टन्जनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः'' इत्याशङ्क्य 'सिद्धमनण्त्वात्, सिद्धमेतत् कथम् ? अनण्त्वात् । कथमनण्त्वम् ? अण् सवर्णान् गृह्णातीत्युच्यते । न च आकारोऽण्, 'उच्चारणसामर्थ्याद्वा' इत्युक्तम् ।

तथा च अनुनासिकाकारस्यानुपस्थितत्वात्, यद्यनुनासिकोऽभविष्यत् तदा स एव सूत्रे उद-

विधानान्नानुनासिकः ।

*इतोऽत्सर्वनामस्थाने ।* [ ७-१-८६ ]

**पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे ।**

---

चारयिष्यत इत्यननुनासिक एवोच्चारणसामर्थ्याद् अननुनासिकस्यैव विधानाद्वा अननुनासिक एव स्यादिति प्रश्लेषो व्यर्थ एव । यदि तु 'गुणा भेदकाः' इति पक्षस्तदा 'तपर' इति सूत्रं विध्यर्थम् । तत्र च 'अण्' इत्यस्यासम्बन्ध एवेत्यनुनासिकस्याप्युपस्थित्या तद्वारणाय प्रश्लेषः । वस्तुतस्तु 'अप्रत्ययस्य' वाक्यभेदेन व्याख्यानात् 'गुणा अभेदकाः' इति पक्षे जातिपक्षे च प्राप्तस्य सर्वस्यापि प्रतिषेधकत्वम् । अत एव भाष्यकृता 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषायाम् अप्रत्ययग्रहणस्य ज्ञापकत्वमुक्तम् । न च 'भाव्यमानेन' इत्यस्य सर्वप्रतिषेधकत्वे जातिपक्षप्राप्तस्यापि निषेधे जश्पदेन सर्वजशां ग्रहणं न स्यादिति वाच्यम्, परिभाषाघटकसवर्णपदेन समानजातीयस्य विभिन्नधर्मणो ग्रहणेनादोषात् । जश्पदग्राह्याणां समानजातीयत्वेऽपि विभिन्नधर्मत्वाभावात् । न चैवमपि 'चोः कुः' इत्यत्र कुपदेन सवर्णग्रहणं न स्यात्, उदित्करणसामर्थ्येन परिभाषाया बाधात् । 'उच्चारणसामर्थ्याद्वा' इति भाष्योक्तेः पथीयतेः क्विपि 'पन्थाः' इत्यस्यानभिधानम् । अन्यथा पथीशब्दात् सौ अननुनासिकस्यान्यनुरोधेन शुद्धोच्चारणस्य चारितार्थ्याद् भाष्यासङ्गतिस्स्यात् ।

न च 'अत्' इति न्यासोऽस्तु । इकारनकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः । पररूपन्तु न, 'पथिमथ्यृभुक्षां लोपः', 'भस्य टेः' 'इतोऽत् सर्वनामस्थाने' इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्यात् । न च पथीयतेः क्विपि 'पन्थाः' इत्यत्र आकारश्रवणार्थमाद्विधानम्, तस्यानभिधानस्योक्तत्वादिति वाच्यम्, पररूपापत्तिशङ्काया न्यासान्तरेण वारणे ज्ञानगौरवात् । वस्तुतस्तु 'इतोऽत्' इति सूत्रे अद्करणलाघवेन ज्ञानगौरवं चिन्त्यम् । पथिन्शब्दात् सौ 'पथि आ स्' इति स्थितौ—

**इतोऽत्सर्वनामस्थाने** ( ७-१-८६ ) इति 'पथिमथ्यृभुक्षाम्' इत्यनुवर्त्तते । तदाह—**पथ्यादीनामिति**—न च 'आत्' इत्यस्यानुवृत्तिरस्तु अद्ग्रहणं मास्तु कृतेऽप्यद्ग्रहणे 'पन्थाः' इत्यत्र सवर्णदीर्घेण भाव्यम् । सुटि तु उपधादीर्घेणेति चेन्न, 'ऋभुक्षाणम्' इत्यत्र 'वा षपूर्वस्य निगमे' ( ६-४-९ ) इति दीर्घाभावे ह्रस्वाकारश्रवणार्थमद्ग्रहणस्यावश्यकत्वात् ।

तदुक्तं भाष्ये 'षपूर्वार्थं तर्ह्यद्वक्तव्यः । ऋभुक्षणमिन्द्रम्' इत इति अदिति च तपरकरणं मुखसुखार्थम् 'एरत्' इत्युक्तौ लाघवाभावात् । अन्यथा विधेयेऽपि तपरकरणात् 'कुरुतः' इत्यादौ गुणाभाववत् 'पन्थानौ' इत्यादौ दीर्घाभावापत्तिः । आचारक्विबन्तपथिन्शब्दान्नपुंसके 'पथीनि' इत्यादौ अत्वाभावार्थं तपरकरणं तु न, हलन्तेभ्य आचारक्विपोऽनभिधानस्य 'ह्रस्वनद्यापः' इति सूत्रभाष्ये ध्वनितत्वात् ।

मनोरमायान्तु पन्थानमिच्छति पथीयति, ततः क्विपि अलोपयलोपयोः सौ 'पन्थाः' इति । सुटि इतोऽदिति तपरकरणादत्वं न भवति, 'एरनेकाचः' इति यणं परत्वान्नित्यत्वाच्च बाधित्वा, न्यादेशे संयोगपूर्वकत्वेन यणोऽभावे 'पन्थियौ, पन्थियः' इत्यादि । शसादावचि 'भस्य टेर्लोपः' इति लोपे 'पथः' इत्यादि । भ्यामादौ हलि 'पथीभ्याम्' इत्यादि । एतेन 'इतोऽत्' इत्यत्र स्थानिनि आदेशे च तपरकरणं मुखसुखार्थमिति हरदत्तग्रन्थः प्रत्युक्तः । यत्तु 'सुखीः सुतीरितिवत् पथीः, पथ्यः' इति तच्चिन्त्यम्, सावात्वस्य दुर्वारत्वात् ।

यत्तु 'पथिमथि' सूत्रे नान्तानुकरणमिति, तदप्यनर्थकम्, एकदेशविकृतन्यायस्य दुर्वारत्वात् । 'पन्थाः' इत्यत्रापि नित्यत्वाद्विशेषविहितत्वाच्च पूर्वमात्वे कृतेऽनान्तत्वेन न्यादेशाप्रसङ्गाच्च । यदप्यलोपस्य स्थानिवत्त्वान्नात्वादि, क्वौ लुप्तं न स्थानिवदिति नेहाश्रीयत इति, तदपि चिन्त्यम्, तथा सति यणप्रसङ्गात्, 'सुखीः' इत्यादिनिर्वाहाय 'क्वौ लुप्तम्' इत्यस्य कैयटादिभिराश्रितत्वात् 'इतोऽत्'

*थो न्थः ।* [ ७–१–८७ ]

पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। पन्थाः, पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ।

*भस्य टेर्लोपः ।* [ ७–१–८८ ]

भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा, पथिभ्यामित्यादि। एवं मन्थाः, ऋभुक्षाः।

---

इत्यत्र तपरकरणं कुर्वतः सूत्रकृतोऽपीहानुकूलत्वाच्च। यदपि 'ऋभुक्षीः, ऋभुक्ष्यौ' इत्यादि तदपि चिन्त्यम्, रावात्त्वस्य दुर्वारत्वात् संयोगपूर्वकत्वेन यणोऽप्राप्तेश्च। गौणमुख्यन्यायस्य तु नात्रविषयः, तस्य पदकार्यविषयत्वात्। तस्माद् 'ऋभुक्षाः, ऋभुक्षियौ' इत्यादीत्युक्तम्। 'पथ आ स्' इत्यत्र—

**थो न्थः** ( ७–१–८७ ) इति। सूत्रे 'थः' इति षष्ठ्यन्तम्। आदेशेऽकार उच्चारणार्थः। अत्र 'थेन्थः' इतीकारविशिष्टस्य न्थादेशेन सिद्धे 'इतोऽत्' इति सूत्रमृभुक्षिन्नर्थम्। अत्र पथ्यादीनां त्रयाणामनुवृत्तावपि 'ऋभुक्षः थो न सम्भवती'त्याह—**पथिमथोरि**ति। 'पन्थ आ स्' इति स्थितौ सवर्णदीर्घे रुत्वे विसर्गे च '**पन्थाः**' इति। 'थो नुट्' इति तु नोक्तम् 'आद्यन्तौ' इत्यादेरनुसन्धानेन ज्ञानगौरवात्। शसादौ भविषये विशेषमाह—

**भस्य टेर्लोपः** ( ७–१–८८ ) इति। 'पथिमथ्यृभुक्षाम्' इत्यनुवर्त्तते तदाह—**भसंज्ञकस्येत्यादि**। 'पथिन् अस्, पथिन् आ' इति स्थितौ टेरिता लोपे '**पथः, पथा**' इत्यादि। हलादौ नलोपस्तदाह—'**पथिभ्याम्**' इति। 'पथिषु' इत्यत्र षत्वस्य सुम्निमित्तकत्वेऽपि नलोपासिद्धत्वं न, सुप्त्वतद्व्याप्यधर्मेण सुम्निमित्तकविषेरेव सुब्विधिशब्देन ग्रहणात्। षत्वे तु सुपः प्रत्ययत्वेन निमित्तत्वम्। प्रत्ययत्वञ्च सुप्त्वव्याप्यम् सुप्त्वाभाववदवृत्तित्वरूपसुप्त्वव्याप्यत्वस्य प्रत्ययत्वेऽभावात्।

ननु 'भाड्डित्' इत्येव सूत्रमस्तु। भसंज्ञकात्पथ्यादेः पुरः प्रत्ययो डिद् भवतीत्यर्थेन शसादेर्डित्त्वे 'टेः' ( ६–४–१९३ ) इत्यनेन डिति परे भस्य टेर्लोपे 'पथः' इत्यादि सिध्येत्। न चोत्तरत्रानुवृत्त्यर्थम् टेर्लोप इति कुत्राप्यनुवृत्तेरभावात्।

न च संज्ञिनः प्रत्ययस्याभावादुक्तार्थासिद्धिः भसंज्ञया अङ्गसंज्ञया वा प्रत्ययस्याक्षेपः, आक्षिप्तस्य शाब्दबोधे मानानङ्गीकारादिति वाच्यम्, अर्थापत्त्याऽऽक्षिप्तस्य वैयाकरणैः शाब्दबोधे मानाङ्गीकारात्। अत एव 'आदिरन्त्येन' इत्यत्राक्षिप्तस्यावयविनः संज्ञित्वम् इति चेन्न, सुपथ इदमित्यर्थे 'तस्येदम्' इति शैषिकेऽणि 'सौपथम्' इत्यत्र 'टेः' ( ६–४–१४३ ) इत्यस्य 'इनण्यनपत्ये' ( ६–४–१६४ ) इत्यनेन बाधे टिलोपानापत्तेः।

'भस्य टेर्लोपः' इति यथाश्रुतन्यासे तु परत्वात्प्रतिपदोक्तत्वाच्च टिलोप एव। किञ्च सुपथिन्शब्दादिष्ठनि 'टेः' ( ६–४–१५५ ) भस्य टेर्लोप इष्ठेमेयस्सु इत्यर्थकेन टेर्लोपे, ततः 'भस्य टेर्लोपः' इत्यनेन टेर्लोपे 'सुपिष्ठः' इति भवति। आभीयासिद्धत्वं तु न, 'भस्य टेः' इत्यस्याभीयत्वाभावात्। डिति 'टेः' इत्यनेन लोपे कर्तव्ये तु उभयोराभीयतया समानाश्रयतया च पूर्वटिलोपस्य 'असिद्धवदत्राभात्' ( ६–४–२२ ) इत्यनेनासिद्धतया टिलोपाप्राप्त्या 'सुपिष्ठः' इत्यादेरसिद्ध्यापत्तिः। एवम् सुपथिन्शब्दादाचक्षाणणिचि टिलोपद्वयेन 'सुपथति' इतीष्यते, अधुना तु आभीयासिद्धतया पुनष्टिलोपो न स्यात्।

यत्तु सुपथिन्शब्दात्' 'तत आगतः' ( ४–३–७४ ) इत्यणि 'नस्तद्धिते' इति टिलोपे पुनः 'भस्य टेः' इत्यनेन टिलोपे 'सौपथम्' इतीष्यते 'टेः' इत्यनेन लोपे पूर्ववदाभीयासिद्धतया लोपाप्राप्तया 'सौपथम्' इत्यस्यासिद्धिरिति तन्न, 'इनण्यनपत्ये' इत्यनेन प्रकृतिभावस्य 'नस्तद्धिते' इति टिलोपस्य च नित्यत्वात्प्रतिपदोक्तत्वाच्च 'भस्य टेः' इत्यनेन बाधात् 'सौपथम्' इत्यस्यैवेष्टत्वेनाभीयासिद्धत्वेऽपि एतस्य सिद्धौ बाधकाभावात्। एवं **मन्था ऋभुक्षाः** इति। मन्थनकर्तृवाची, मन्थन-

**स्त्रियां** नान्तलक्षणे ङीपि भत्वाट्टिलोपः। सुपथी सुमथी नगरी। अनृभुक्षी सेना। **आत्वं नपुंसके न भवति,** 'न लुमता–' इति प्रत्ययलक्षणनिषेधात्। **सुपथि वनम्।** 'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः'।

---

दण्डवाची वा मथिन्शब्दः। इन्द्रवाची देववाची वा ऋभुक्षिन्शब्दः। 'ऋभुक्षाणौ' इत्यादिषु षात्परत्वाण्णत्वम्। पथीयतेः, मथीयतेः, ऋभुक्षीयतेश्च क्यजन्तात् क्विपि 'पन्थाः पन्थियौ, मन्थाः मन्थियौ, ऋभुक्षाः, ऋभुक्षियौ' इत्यादि बोध्यम्।

ननु आत्वे कर्त्तव्ये नलोपस्यासिद्धत्वान्नस्यात्वे इत इति तपरकरणेन ईकारस्य अत्वाभावे यणि 'पन्थ्याः, ऋभुक्ष्याः' इत्यादि स्यादिति चेन्न, प्रत्यासत्तिन्यायेन यत्र नलोपः सुम्निमित्तककार्ययो-रेकसुम्निमित्तकत्वं तत्रैव सुब्विधौ नलोपस्यासिद्धत्वस्वीकारात्। प्रकृते तु नलोपस्यान्तर्वर्तिसुम्नि-मित्तकत्वम्, आत्वस्य च तद्भिन्नसुम्निमित्तकत्वमित्यदोषः।

वस्तुतस्तु क्विबन्तक्यजन्तानां पथ्यादीनामेवेत्युक्तं प्राक्। पथ्यादिशब्दस्य नित्यपुंलिङ्गत्वेऽपि बहुव्रीह्यादौ स्त्रीत्वसम्भवादाह—**स्त्रियां त्विति**–सु = शोभनः पन्था अस्या नगर्या इत्यर्थे बहुव्रीहिः। 'ऋन्नेभ्यो ङीप्' ( ४-१-५ ) इति ङीप्। टेलोपे '**सुपथी**' इति। न च 'ऋक्पूरप्' ( ५-४-७४ ) इति समासान्तोऽप्प्रत्ययः स्यादिति वाच्यम्, 'न पूजनात्' ( -४-६६ ) इति निषेधात्।

नन्वेवमपि 'प्राग्बहुव्रीहिग्रहणम् इह मा भूत् 'स्वक्षः, अत्यक्षः' इति भाष्यात् 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' ( ५-४-११३ ) इत्यतः प्राग्विहितस्यैव निषेधात् 'इनः स्त्रियाम्' (५-४-१५२) इति तदुत्तरविहितः कप् स्यादिति चेन्न, 'युवोरनाकौ' ( ७-१-१ ) इति सूत्रे भाष्ये—'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इत्यस्य प्रयोजनदर्शनप्रसङ्गे 'पथिमथोरात्वे प्रयोजनम् 'सुपथी' इति भाष्यप्रयोगेण 'इनः' इति कपोऽनित्यत्वज्ञापनात्। न चैवमपि लिङ्गविशिष्टपरिभाषया स्त्रियामपि 'पथि मथि' इत्यात्वं थो न्थश्च स्यादिति वाच्यम्, 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इति परिभाषयाऽऽत्वन्थादेशयोः स्त्रियामप्रवृत्तेः। एवं शोभनो मन्थाः, अविद्यमान ऋभुक्षा = स्वामी यस्या इति विग्रहे बहुव्रीहौ 'सुमथी, अनृभुक्षी' इत्याद्यपि बोध्यम्।

ननु शोभनः पन्था यस्य वनस्य तत् 'सुपथि वनम्' इत्यादौ नपुंसके स्वमोर्लुकि प्रत्ययलक्षणेन आत्वं न्थादेशश्च कुतो नेत्याशङ्कायामाह—**आत्वं नपुंसके न भवतीति। सम्बुद्धाविति**—यद्यपि 'न ङिसम्बुद्ध्योः' ( ८-२-८ ) इति भाष्ये 'वा नपुंसकानामिति वक्तव्यम्' 'हे चर्मन् चर्म' इत्येवोक्तम्, तथाऽपि एतत्सूत्रे पाठात्सूत्रतः 'सम्बुद्धौ' इत्यस्य सम्बन्धः। न च ङिपदस्यापि सम्बन्धः स्यादिति वाच्यम्। 'हे चर्मन् हे चर्म' इति सम्बुद्धिमात्रे उदाहरणदानात्, ङिग्रहणस्य भाष्ये प्रत्याख्यानाच्चैक-देशे स्वरितत्वप्रतिज्ञया तावन्मात्रस्य सम्बन्धकल्पनात्।

ननु वार्त्तिके सम्बन्धाय सम्बुद्धिग्रहणस्यावश्यकतया 'नलोपे कर्त्तव्ये संयोगान्तलोपो यत्र नकारविभक्त्योरानन्तर्यं तत्र नासिद्धः, 'न ङिसम्बुद्ध्योः' इति 'सम्बुद्धिग्रहणाज्ज्ञापकात्' इति मनोरमायाः का गतिरिति चेन्न, वार्त्तिके एव सम्बुद्धिग्रहणे कर्तव्ये सूत्रे करणेन 'इह किञ्चित् त्रपो' इति न्यायेन तत्कल्पनसम्भवात्।

नागेशास्तु इदं वार्त्तिकं नापूर्वम्, किन्तु 'लुमताऽङ्गस्य' इति 'निषेधानित्यत्वमूलकम्' इत्याहुः। अनित्यत्वमूलकत्वञ्च 'न ङिसम्बुद्ध्योः' इत्यस्य सप्तम्यन्तत्वपक्षे एव। षष्ठ्यन्तत्वपक्षे तु 'न लुमता' इत्यस्याङ्गकार्याभावेनाप्रवृत्त्या वार्त्तिकमावश्यकम्। परन्तु सप्तम्यन्तपक्ष एव ज्यायान् वार्त्तिकारम्भा-पेक्षयाऽनित्यत्वकल्पने एव लाघवात्। उपाध्यायास्तु अनित्यत्वपक्षे क्व प्रवृत्तिः क्वाप्रवृत्तिरित्यस्य लक्ष्यानुरोधेनैव कल्पनीयतया लक्षणैकचक्षुष्काणां तदशक्यतया विकल्पार्थं वार्त्तिकमावश्यकमित्याहुः।

सम्बुद्धिग्रहणमपि भाष्ये प्रत्याख्यातमिति न भ्रमितव्यम्। भाष्ये 'चर्मणि तिला अस्य 'चर्म-तिलः' इत्यत्र, राजञ्चासौ वृन्दारकश्च 'राजवृन्दारकः' इत्यत्र च निषेधाभावाय 'न ङि सम्बुद्ध्योरनुत्तर-

हे सुपथिन्, हे सुपथि। 'नलोपः सुप्स्वर–' इति नलोपस्यासिद्धत्वाद्घ्रस्वस्य गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात्सुपन्थानि। पुनरपि सुपथि, सुपथी, सुपन्थानि। सुपथा। सुपथे सुपथिभ्यामित्यादि।

ष्णान्ता षट् [ १-१-२४ ]

षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। 'षड्भ्यो लुक्' पञ्च। पञ्च। संख्या किम्—विप्रुषः, पामानः।

पदे' इत्युक्त्वा 'भत्वात्तु ङौ प्रतिषेधानर्थक्यम्। उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते। पदत्वाद् 'अल्लोपोऽनः' इत्यल्लोपो न; भत्वान्नलोपो न भविष्यति इत्युक्त्वा सूत्रस्थङिग्रहणस्य, सम्बुद्ध्यर्थेनापि नार्थः, कथम्, सम्बुद्ध्यन्तानां न समासः' सम्बुद्ध्यन्तार्थानां क्रियायामन्वयात् परस्परं सम्बन्धाभावादित्याशयः। इति वार्तिकस्थसम्बुद्धिग्रहणस्य प्रत्याख्यानेऽपि सूत्रस्थसम्बुद्धिग्रहणस्य प्रत्याख्याने मानाभावात्।

हे **सुपथिन्निति**—सम्बुद्धेर्लुका लुप्तत्वात्सम्बुद्धिपरत्वाभावेन 'न ङिसम्बुद्ध्योः' इति निषेधाप्राप्तया नित्यं नलोपे प्राप्ते विकल्पार्थं वार्त्तिकारम्भः। ननु 'सुपथि' इत्यत्र सम्बुद्धौ परतः 'ह्रस्वस्य गुणः' इति गुणे कर्तव्ये 'न लुमता' इत्यस्यानित्यतया 'हे वारे, हे वारि' इतिवत् गुणविकल्पः स्यादत आह—**नलोपः सुप्स्वर** इति। तथा च ह्रस्वान्ताङ्गत्वाभावान्न गुण इति भावः। नपुंसके सुटः सर्वनामस्थानत्वाभावेन 'यचि भम्' इति भत्वे द्विवचने 'भस्य टेर्लोपः' इति टिलोपस्तदाह—**द्विवचने इत्यादि**। **शाविति**—'जश्शसोश्शिः' इति जसः शसश्च श्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानत्वाद् भत्वाभावेन टिलोपाभावे 'इतोऽत्' इत्यदादेशे 'थो न्थः' इति न्थादेशे 'सर्वनामस्थाने चासम्बुद्धौ' इत्युपधाया दीर्घे 'सुपन्थानि' इति।

'पचि विस्तारे' इत्यतः 'सप्यशूभ्यां तुट् च' ( उ० १ पा० १६३ सू० ) इत्यनेन बहुलग्रहणात् कनिन्प्रत्यये 'पञ्चन्' इति। पञ्चन्शब्दो नित्यं बहुवचनान्तः। तस्य षट्संज्ञाप्रयोज्यलुग्विधानाय षट्संज्ञामाह—

**ष्णान्ता षट्** ( १-१-२४ ) षश्च नश्च ष्णौ। ष्टुत्वेन नस्य णः। ष्णौ अन्तौ यस्या सा ष्णान्ता। प्रकृते स्त्रीत्वविशिष्टान्यपदार्थबोधकबहुव्रीहेर्विशेष्यसाकाङ्क्षतया संख्यां विशेषयितुं स्त्रीलिङ्गनिर्देशः। 'बहुगण' इत्यतः 'संख्या' इत्यनुवर्तते। तत्र संख्याशब्दस्य स्वरूपपरतया ष्णान्तत्वासम्भवात् तद्बोध्येषु बहुगणादिष्वपि तथात्वात् संख्याशब्देनात्र संख्याप्रकारकसंख्येयविशेष्यकबोधजनकाः पञ्चादयो गृह्यन्ते। एतेन पञ्चादीनामपि 'आदशतः संख्या संख्येये' इत्युक्त्वा संख्यावाचकत्वासम्भव इत्यपास्तम्। तदाह—**षान्तेत्यादि**। **संख्येति**—गुणभूतयाः संख्यायाः, संख्याशब्दस्य, बहुगणादेश्च ष्णान्तत्वासंभवेऽपि पञ्चत्वादीनां संख्याप्रकारकसंख्येयविशेष्यकबोधजनकतया ते एवात्र संख्याशब्देन विवक्षिता इति न कश्चिद् दोषः। **षड्भ्य इति**—'षड्भ्यो लुक्' इति सूत्रेण जश्शसोर्लुगित्यर्थः। संख्या किमिति—संख्याग्रहणानुवृत्तेः किं फलमित्यर्थः। विप्रुष्शब्दस्य पामन्शब्दस्य च ष्णान्तत्वेऽपि संख्यावाचकत्वाभावेन षट्संज्ञकत्वाभावात् जश्शसोर्लुगभाव एव फलमिति भावः। 'प्रुषु प्लुषु दाहे' इत्यतो भावे 'सम्पदादिभ्यश्च' 'रोगाख्यायाम्' ( ३-३-१८ ) इति सूत्रस्थवार्तिकेन क्विप्, विनष्टा प्रुड् दाहो यस्याः सा विप्रुट्=तोयबिन्दुः। तदुक्तम् 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः इति ( अम० १ का० वारिव० ) 'कच्छ्वां तु पाम पामा विचर्चिका। कण्डूः खर्जूश्च कण्डूया' इति च ( अम० २ का० मनु० व० ५३ श्लो० ) 'पै ओवै शोषणे' इत्यतः 'सर्वधातुभ्यो मनिन्' ( उ० ४ पा० १४५ सू० ) इति मनिन्। पायति = शोषयत्यङ्गं या सा पामा = खर्जूः।

ननु नपुंसकाच्छतशब्दात् परयोर्जश्शसोश्शिभावे 'नपुंसकस्य झलचः' इति अजन्ताङ्गस्य नुमि 'सर्वनामस्थाने चासम्बुद्धौ' इत्युपधादीर्घे 'शतानि' इति सिध्यति। एवम् 'सहस्राणि'

शतानि, सहस्राणि इत्यत्र संनिपातपरिभाषया न लुक्, सर्वनामस्थानसंनिपातेन कृतस्य नुमस्तदविघातकत्वात् । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । 'षट्चतुर्भ्यश्च' इति नुट् ।

*नोपधायाः ।* [ ६-४-७ ]

**नान्तस्योपधाया दीर्घः स्यान्नामि परे । नलोपः ।**

---

इत्यपि । अत्र 'अट्कुप्वाङ्' इति णत्वमतिरिच्यते । इह 'यदागमाः' इति न्यायेन नुमोऽङ्गावयवत्वात् शतन् इत्यस्य सहस्रन् इत्यस्य च नकारान्ताङ्गत्वात् संख्यावाचकत्वाच्च 'ष्णान्ता षट्' इति षट्संज्ञायाम् 'षड्भ्यो लुक्' इति जश्शसोर्लुक् स्यादत आह—**शतानीत्यादि । सन्निपातपरिभाषयेति** संनिपातः = अङ्ग-सर्वनामस्थानयोः पौर्वापरीभावरूपः सम्बन्धस्तल्लक्षणस्तन्निमित्तको विधिर्नुम्रूपः । स नान्तसंख्यावाचकत्वसम्पादनद्वारा जश्शसोर्लुका तत्सम्बन्धविघातस्य निमित्तं न स्यात् । तदुक्तम्—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति । द्वयोः सत्त्वे सम्बन्धः । तत्रैकस्य सम्बन्धिनो नाशे सम्बन्धो न भवेदिति भावः ।

लोकेऽपि यमुपजीव्य यो जायते तस्य विनाशे स निमित्तं न भवति । **सर्वनामेति**—सर्वनामस्थानं परत्वेनोपजीव्य=आश्रित्य जातस्य नुमः सन्निपातपरिभाषया सर्वनामस्थानभूतजश्शसोर्लुकं प्रति निमित्तं न स्यात्, तथा च लुकोऽभावे फलाभावादत्र षट्संज्ञा न स्यादिति भावः ।

यत्तु 'षट्संज्ञायामुपदेशवचनम्' इति भाष्यवार्तिकमाश्रित्य उपदेशकाले = प्रत्ययविधानकाले षकारनकारान्ता संख्या षट् भवतीति नात्र दोष इति तन्न, भाष्यकृतैव सन्निपातपरिभाषामाश्रित्य तद्वार्तिकस्य प्रत्याख्यानात् । एवञ्च 'उपदेशे' इत्यस्य एकदेशभूताभ्यां षकारनकाभ्यां अन्तपदार्थेन वा सम्बन्ध इति विकल्पादिना प्राचीनोक्तिखण्डनमपि मनोरमायां निष्फलमेव, मूलस्यैवाभावात् ।

यत्तु सन्निपातपरिभाषायाः 'कृन्मेजन्तः' इति सूत्रे भाष्येऽनित्यत्वस्योक्ततया कदाचिदत्र तदप्रवृत्त्या तया समाधानं न वरमिति तन्न, इष्टस्थलेऽपि तदप्रवृत्तौ परिभाषावैयर्थ्यापत्तेः । तदुक्तं भाष्ये 'प्रतिविधेयञ्च दोषेषु' अनिष्टस्थलेऽनित्यत्वं न त्विष्टस्थले इत्यर्थः ।

यत्तु नुमो वहिरङ्गत्वेनासिद्धस्तया नात्र षट्संज्ञेति तन्न, कार्यकालपक्षे संज्ञाशास्त्राणां विध्येकवाक्यतया 'षड्भ्यो लुक्' इत्येतन्निमित्तनिमित्तकत्वेन नुमो वहिरङ्गत्वस्य वक्तुमशक्यत्वात् 'पञ्चन् आम्' इति स्थितौ 'षट्चतुर्भ्यश्च' इति नुटि पदत्वेन नलोपे तस्यासिद्धतया अजन्ताङ्गाभावेन 'नामि' इति दीर्घाप्राप्तावाह—

**नोपधायाः** ( ६-४-७ ) इति । 'न' इति लुप्तषष्ठीकं पृथक् पदम् । तच्चाङ्गस्य विशेषणतया तदन्तग्राहकम् । 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्तते 'नामि' इति सूत्रञ्च तदाह—**नान्तस्येत्यादि ।** ननु नान्ताङ्गघटको नामव्यवहितपूर्वश्च योऽच् तस्य दीर्घ इत्यर्थे 'पञ्चानाम्' इत्यादौ 'येन नाव्यवधानं तेन व्यवहितेऽपि भवति' इति न्यायेन नकारमात्रव्यवहितस्योपधाभूतस्याच एव दीर्घः स्यान्न तु पकाराकारस्येत्युपधाग्रहणं व्यर्थमिति चेन्न, अङ्गसम्बन्धिनामः प्रत्ययत्वेन प्रत्ययस्याङ्गांशे उत्थिताकांक्षत्वेन तत्रैवान्वये पकाराकारस्यापि दीर्घापत्तेः । नन्वेवमपि 'अन्त्यबाधेऽन्त्यसदेशस्य' इति परिभाषयैवोपधाया दीर्घे सिद्धे उपधाग्रहणं व्यर्थम् । न चैवम् 'अत उपधायाः' 'णौ चङ्युपधाया ह्रस्वः' इत्यादावप्युपधाग्रहणं व्यर्थमिति वाच्यम् 'ननन्द' 'अचकाङ्क्षत्' इत्यादौ दीर्घवारणाय चरितार्थत्वात् । 'अन्त्यसदेश' इति परिभाषया तु नात्र निर्वाहः, एकस्मिन् लक्ष्ये युगपदन्त्यसदेशानन्त्यसदेशयोः प्राप्तावेतत्परिभाषाप्रवृत्तेः । उक्तलक्ष्ये युगपत् अन्त्यसदेशानन्त्यसदेशयोः प्राप्त्यभावेन परिभाषाया अप्रवृत्त्या उपधाग्रहणस्य चरितार्थ्यादिति चेन्न, 'पक्तारौ' इत्यादौ 'ऋतो ङि' इति गुणं बाधित्वा दीर्घवारणाय उपधाग्रहणस्य 'अप तृन् तृच्' इत्यत्रोत्तरार्थमावश्यकत्वात् । किञ्चोपधाग्रहणाभावे '**इन् हन्**' इत्यत्र तदसम्बन्धे इन्नादीनां दीर्घः शावेवेति नियमे 'वृत्रहायते' इत्यस्यासिद्धिः । **नलोप इति**—नुटि, 'स्वादिष्वसर्वनामस्थाने' इति पदत्वे 'न लोपः प्रातिपदिकान्तस्य' इति नलोप इत्यर्थः ।

पञ्चानाम् । पञ्चसु । परमपञ्च । परमपञ्चानाम् । गौणत्वे तु न लुङ्नुटौ । प्रियपञ्चा, प्रियपञ्चानौ, प्रियपञ्चानः । प्रियपञ्चाम् । एवं सप्तन् नवन् दशन् ।

*अष्टन आ विभक्तौ* । [ ७-२-८४ ]

**अष्टन आत्वं स्याद्धलादौ विभक्तौ ।**

---

न च सन्निपातपरिभाषयाऽत्र नलोपो न स्यात्, नान्तत्वमुपजीव्य जायमानो नुट् तद्विघाते निमित्तं न स्यादिति वाच्यम्, 'त्रुवः पञ्चानाम्' इति निर्देशात् 'न तिसृचतसृ' इति धर्मिग्राहकमानाच्च त्रिपाद्यां सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनात् । न च नलोपस्यासिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितसन्निपातविघाताभावमादाय सन्निपातपरिभाषाया अप्रवृत्तौ 'कृन्मेजन्तः' इति सूत्रभाष्ये सन्निपातपरिभाषाया अनित्यत्वनिरूपणावसरे 'हे गौरि' इत्यत्र सन्निपातपरिभाषाया अनित्यत्वाद्ध्रस्वनिमित्तकसुलोप इत्यनित्यत्वफलप्रदर्शनपरभाष्यासङ्गत्यापत्तेः । अत्रापि स्थानिवत्त्वेन सोः सत्त्वेन सन्निपातविघाताभावात् । तस्मात् 'पञ्चानाम्' इति निर्देशात् सन्निपातपरिभाषाया अनित्यत्वमेव स्वीकार्यम् ।

**परमपञ्चेति**—'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' उभयत्र 'अङ्गस्य' इत्यधिकारात्तदन्तविधिना तदन्तादपि लुङ् नुटौ । नागेशमते 'अङ्गस्य' इत्यस्य पष्ठ्यन्तत्वेन तदन्तविध्यभावेऽपि षट्संज्ञकेभ्यो विहितयोरङ्गसंज्ञानिमित्तयोर्जश्शसोर्लुगित्यर्थेन परमपञ्चन्शब्दस्यापि संख्याप्रकारकसंख्येयमुख्यविशेष्यकबोधजनकतया षट्त्वात् लुङ् नुटौ स्याताम् ।

ननु परमपञ्चादिशब्दा न हि लोके गणनायां प्रसिद्धाः । तथा च 'परमपञ्च' इत्यस्य षट्त्वं न स्यादिति चेन्न, लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र मानाभावात् । प्रियाः पञ्च यस्य इत्यर्थे बहुव्रीहौ त्रिलिङ्गः प्रियपञ्चन्शब्दः ।

तत्र पुंसि विशेषमाह—**गौणत्वे त्विति**—'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इत्यत्र लाघवादेकवचनेनैव निर्देशे कर्तव्ये बहुवचननिर्देशात् षडर्थस्य यत्र प्राधान्यं तत्रैव लुङ् नुटोः प्रवृत्तिरिति कैयटमतेन 'सर्वादीनि' इति सूत्रे भाष्ये 'अथवा अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति । यद्येवं 'परमपञ्च, परमसप्त' षड्भ्यो लुङ् न प्राप्नोति । नैष दोषः, षट्प्रधान एष समासः' इति भाष्यान्नागेशमते 'षान्तनान्तत्वे सति संख्याप्रकारकसंख्येयमुख्यविशेष्योपस्थितिजनकत्वं यस्य तस्य षट्संज्ञा' इत्यर्थेन गौणे बहुव्रीह्यादावन्यपदार्थस्य मुख्यविशेष्यत्वेन न षट्संज्ञेति गौणे लुङ् नुटोरप्रवृत्तिः । **प्रियपञ्चेति**—सुटि हलादौ च राजवत् । अजादौ भत्वेन अल्लोपे नकारस्य श्चुत्वेन ञकारः । चकारे परे तु 'अनुस्वारस्य ययि परसवर्णः' इति स्थित एव ञकारः । तथा च 'पञ्ञ्चाम्' इति ञकारद्वयमध्यगतचकारघटितं रूपम् । 'सप्तन्' 'अष्टन्' इति शब्दौ षप समवाये, 'अशूङ् व्याप्तौ' इत्यतः 'सप्यशूभ्यां तुट् च' ( उ० १ पा० १५७ सू० ) इति कनिन्प्रत्यये तस्य तुडागमे 'व्रश्चभ्रस्ज' इति शस्य षत्वे ष्टुत्वे च साधू । अष्टन्शब्दो नित्यं बहुवचनान्तः । तत्र विशेषमाह—

**अष्टन आ विभक्तौ** (७-२-८४) इति । न च अष्टन्शब्दस्य नित्यबहुवचनान्तत्वात् 'अष्टनः' इत्यसङ्गतमिति वाच्यम्, अत्राष्टन्शब्दस्य स्वरूपपरकत्वेनैकवचनस्यैव साधुत्वात् । नन्वेवमपि 'अष्टनः' इत्यत्र भत्वादल्लोपः स्यादिति वाच्यम्, 'अयस्मयादीनि' ( १-४-२० ) इति सूत्रस्थेन 'उभयसंज्ञान्यपीति वक्तव्यम्' इति वार्तिकेन पदत्वादल्लोपाभावः भत्वाच्च नलोपाभाव इति 'छन्दोवत्सूत्राणि' इति स्वीकारेण छन्दसो दृष्टानुविधित्वात् । 'ष्णान्ता षट्' इति सूत्रे भाष्ये 'अथवा योगो विभज्यते—'अष्टन आ विभक्तौ' ततो 'रायः' 'हलि' इत्युभयोः 'शेष' इत्युक्तेः 'रायो हलि' इत्यतः 'हलि' इत्यपकृष्यते । तस्य विभक्तेर्विशेषणतया अल्पग्राहकतया च 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधौ हलादौ विभक्ताविस्यर्थः सम्पद्यते । तदाह—**हलादावित्यादि** । तेन

*अष्टाभ्य औश्* । [ ७-१-२१ ]

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् ।

---

'अष्टानाम्' इत्यत्र नुटः पश्चादेव सन्निपातपरिभाषाया अनित्यत्वादात्वं न तु ततः प्राग्हलादिविभक्तेरभावात् । हलीत्यस्यापकर्षाभावे 'अष्टन् आम्' इति स्थितौ नुटं बाधित्वा नित्यत्वादात्वेऽनान्तत्वेन षट्संज्ञाया अप्राप्तेर्नुट् न स्यात् ।

न च यथोद्देशपक्षे जातायाः षट्संज्ञायाः स्थानिवत्त्वेनारोपान्नुडिति वाच्यम्, नान्तत्वसमानाधिकरणसंख्यावाचकत्वरूपषट्त्वस्याल्व्याप्यनत्वावच्छिन्नघटितत्वेनानल्विधाविति निषेधात् । यदि तु संकेतसम्बन्धेन षट्पदवत्त्वमित्युच्यते तदा कार्यकालपक्षे एव 'हलि' इत्यपकर्षफलं बोध्यं न यथोद्देशे इत्यलम् । ननु अष्टन्शब्दाज्जश्शसोः 'अष्टन् अस्' इति स्थितौ 'अष्टन आ' इत्यनेनानुनासिकनकारस्य स्थाने अनुनासिक आकारादेशः स्यादिति चेन्न, 'स्थानेऽन्तरतमः' इति सूत्रेण एकस्य स्थानिनः स्थानेऽनेकेषामादेशानां प्रसङ्गे—प्राप्तावेव सदृशादेशस्य नियामकत्वेन प्रकृते 'आ' इत्यस्यानण्त्वेन 'अणुदित्' इत्यस्याप्रवृत्त्या 'आ' इत्येकस्या एव व्यक्तेरुपस्थितत्वेन 'स्थानेऽन्तरतमः' इति सूत्राप्राप्त्या अननुनासिकस्यैवाकारस्य विधानात् । न च जातिपक्षेण गुणानामभेदकत्वपक्षेण च आपदेन षण्णां दीर्घाकाराणामुपस्थितावान्तरतम्यान्नस्यानुनासिक एव आँकारः स्यादिति वाच्यम्, यत्किञ्चित्प्राप्तस्य सवर्णग्रहणस्य 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्यनेन निषेधादनुनासिकाकारस्यानुपस्थितेः ।

यत्तु नकाररूपस्थान्यनुरोधेनानुनासिके एवाकारे उच्चारणीये शुद्धोच्चारणसामर्थ्यान्नानुनासिकादेश इति तन्न, 'शयो हलि' इत्युत्तरार्थं शुद्धोच्चारणस्य चारितार्थ्यात् । यदपि 'आ–आ' इति प्रश्लेषेणानुनासिकादेशग्रहणं तदपि न, प्रश्लिष्टाकारेऽपि जातिपक्षस्य, गुणाभेदपक्षकत्वस्य च दुर्वारत्वेनानुनासिकापत्तेः । प्रश्लेषवैयर्थ्यं तु न, पर्यायेण षड्विधाकारविधानार्थत्वेन चरितार्थत्वात् । 'अष्ट आ अस्' इति स्थितौ विशेषमाह—

**अष्टाभ्य औश् (७-१-२१)** इति । 'जश्शसोः शिः' इत्यतो जश्शसोरित्यनुवर्तते । 'अष्टाभ्यः' इति अष्टाशब्दप्रकृतिकपञ्चम्यन्तः । पञ्चम्या 'तस्मादित्युत्तरस्य' इत्युपतिष्ठते । एवञ्च अष्टाशब्दात्—कृताकारादष्टन्शब्दात्परयोर्जश्शसोरौश् इत्यर्थः सम्पन्नः । तदाह—**कृताकारादित्यादि** कृतात्वस्येदमनुकरणं न तु लक्षणवशसम्पन्नम् । यदि लक्षणवशसम्पन्नमभविष्यत्तदा लाघवादष्टभ्य इत्येव वदेदितिभावः । भाष्यकृता तु यदि 'अष्टाभ्यः' इत्यनेन अष्टाशब्दो विवक्षितः स्यात्तदा 'अष्टन आ विभक्तौ' इतिवत् 'अष्टन औश्' इत्येव वदेदित्युक्तम् ।

औशि शित्करणम् 'अनेकाल् शित्' इति सर्वादेशार्थम् । ननु 'अनेकाल्' सूत्रे शिद्ग्रहणं मास्तु । औशादेशोऽनेकाल्त्वादेव सर्वस्य स्यात् । न च अन्तरङ्गत्वादित्संज्ञालोपाभ्यामपहारादनेकाल्त्वाभावः शकारोच्चारणसामर्थ्येन भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वसिद्धेः ।

न चैवम् 'अवर्णस्तृ' इत्यत्रापि सर्वादेशः स्यादिति वाच्यम्, अत्र ॠकारस्य उगित्कार्यनुमाद्यर्थत्वेन भूतपूर्वगत्याश्रयणे मानाभावात् । तथा च यत्र इत्संज्ञकवर्णस्य फलान्तरं नास्ति तत्रैव भूतपूर्वानेकाल्त्वेन सर्वादेश इति शिद्ग्रहणं न कर्त्तव्यम् । नकारस्य आत्वे कृते सति च अष्टाशब्दस्वतः परयोर्जश्शसोरौश् स्यादित्यर्थः ।

तदुक्तं भाष्ये 'अथेह कस्मान्न भवत्यौश्त्वम् । अष्ट तिष्ठन्ति, अष्ट पश्येति । आत्वं तु यत्र तु यत्र तत्रौश्त्वम् । यत्रैवात्वं तत्रौश्त्वेन भवितव्यम् । कुत एतत् । तथा ह्यस्य ग्रहः कृतः । तथा ह्यस्य आत्वभूतस्य ग्रहणं क्रियते 'अष्टाभ्यः' इति । ननु च नित्यमात्वम् । एतदेव ज्ञापयत्याचार्यो विभाषा आत्वमिति । इतरथा 'अष्टनः' इत्येव ब्रूयात् ।' इति । अयम्भावः—लक्षणवशाद्विभक्ता-

'अष्टभ्यः' इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। वैकल्पिकं चेदमष्टन आत्वम्, 'अष्टनो दीर्घात्' इति सूत्रे—

वात्वनिर्देशः कृतः। लाघवार्थम् 'अष्टनः' इत्येव वक्तव्ये कृतात्वस्येदमनुकरणम्। तस्य चैतत्प्रयोजनं कृतात्वाद्यथा स्यादकृतात्वान्मा भूदिति। यदि च नित्यमात्वं स्यात्तदा व्यवच्छेद्याभावात्कृतात्वानुकरणमनर्थकं स्यात्। तस्मात्कृतात्वानुकरणनिर्देश आत्वविकल्पस्य ज्ञापकः—इति कैयटः। एतेन पर्य्यायवाचकशब्दानां लाघवगौरवचर्चा नाद्रियते—इत्यपि परास्तम्, 'अष्टाभ्य' इत्यस्य अष्टाशब्दात्परस्येत्यर्थात्, 'अष्टभ्यः' 'अष्टनः' इत्यस्य अष्टन्शब्दात्परस्येत्यर्थेन पर्य्यायत्वाभावात्।

नन्वेवमपि जश्शसोरष्टन्शब्दस्यात्वासम्भवः, आत्वे 'हलि' इत्यपकर्षस्योक्तत्वात् तत्राह—**अष्टभ्य इति**—'आत्वान्तानुकरणमेव व्यर्थीभूय ज्ञापयति जश्शसोरात्वं भवति' इति। 'अष्टन आ' इति सूत्रे 'इति' इत्यपकृष्यमाणं वाक्यभेदेन विधानार्थम्। तेन क्वचिदन्यत्रापि प्रवृत्तिः इति जश्शसोरात्वं सिद्धयति। नित्ये आत्वे कृतात्वानुकरणं पुनरपि व्यर्थं स्यात् अष्टना, अष्टभ्य इत्युक्तावपि कृतात्वस्यैवोपलम्भात् तदेव व्यर्थीभूय ज्ञापयति वैकल्पिकञ्च जश्शसोरात्वमिति। तेन अष्ट तिष्ठन्ति, अष्ट पश्येति सिध्यति। मूले 'अष्टभ्य इति वक्तव्ये' इति वैकल्पिकञ्चेदमष्टन आत्वम् 'अष्टनो दीर्घात्' इति सूत्रे 'दीर्घग्रहणाज्ज्ञापकात्' इति च भाष्यविरुद्धम् 'अष्टभ्य' इति निर्देशस्य दीर्घादिति ज्ञापकत्वस्य वाचाऽनुक्तत्वात्।

**अष्टभ्य इति वक्तव्ये इति** वदता दीक्षितेन तु 'अष्टाभ्य' इत्यस्याष्टन्शब्दप्रकृतिकत्वे लाघवादष्टभ्य इत्येव वदेदाचार्य्यः, न तु अष्टाभ्य इति। तत्र 'अष्टभ्यः' इत्यात्वाभावरहितस्य समर्थनाय 'अष्टन आ विभक्तौ' इत्यस्य 'दीर्घात्' इति ज्ञापकेन वैकल्पिकत्वं निरूपितम्। न च लक्षणवशनिष्पन्नस्य ग्रहणे उभयत्रापि अष्टन्शब्दात्परयोरित्येवार्थः स्यात्। तथा च पर्य्यायवाचकशब्देषु लाघवगौरवचर्चाया अनादरात् 'अष्टभ्यः' इत्येव वक्तव्ये इत्यनुपपन्नमिति चेन्न, रूढेषु पर्य्यायवाचकशब्देष्वेव ज्ञापकसाजात्यात्तथात्वस्य स्वीकारात्। तथा च गुरुभूतनिर्देश एव ज्ञापयति—कृतात्वानुकरणप्रकृतिकोऽयम् 'अष्टाभ्यः' इति। एवञ्च अष्टाशब्दात्परयोर्जश्शसोरसम्भवात् कृतात्वानुकरणं ज्ञापयति—अष्टनः जश्शसोरात्वं भवतीति। ज्ञापितस्य नित्यत्वे पुनरपि कृतात्वानुकरणं व्यावर्त्याभावाद् व्यर्थं स्यादिति भाष्योक्तरीत्या जश्शसोरात्वस्य वैकल्पिकत्वं ज्ञापयतीति दिक्। एतेन हलादावेवात्वविधानाजश्शसोरात्वमसम्भवीति परास्तम् 'अष्टन आ विभक्तौ' इत्यस्य हलि एव प्रवृत्त्या इत्यस्य जश्शसावप्राप्तावपि ज्ञापकसिद्धस्य आत्वस्य तत्र सम्भवात्। ननु 'अष्ट' इत्यात्वस्यापि नित्यत्वात् 'अष्टाभ्यः' इति निर्देश एव प्राप्नोतीति कथमात्वं ज्ञापयेदत आह—**वैकल्पिकञ्चेति ज्ञापकादिति**—

**अष्टनो दीर्घात्** ( ६-१-१७२ ) इति। इदं सूत्रं दीर्घान्तादष्टन्शब्दात्परस्यासर्वनामस्थानविभक्तेरुदात्तत्वं विधत्ते। तत्राष्टन आत्वस्य नित्यत्वे 'दीर्घात्' इति व्यर्थं ह्रस्वान्तादष्टनः परस्यासर्वनामस्थानविभक्तेरभावादिति व्यर्थीभूय ज्ञापयति—वैकल्पिकञ्चेदमष्टन आत्वमिति। तथा च ह्रस्वान्ते व्यावृत्तये 'दीर्घात्' इति चरितार्थम्। एवञ्च 'अष्टभिः' इत्यादौ षट्चतुर्भ्यः परा या झलादिर्विभक्तिस्तदन्तस्य पदस्य यदुपोत्तमम् = अन्त्यवर्णस्य समीपं तदुदात्तमित्यर्थकेन 'झल्युपोत्तमम्' ( ६-१-१८० ) इत्यनेन अन्त्यो योऽजिकारस्ततः पूर्वो यष्टकाराकारस्तस्यैवोदात्तत्वमिति मध्योदात्तः 'अष्टभिः' इत्यादिः। आत्वस्य वैकल्पिकत्वे ज्ञापितेऽपि व्यर्थमेव तत्। 'अष्टाभिः' इत्यादौ दीर्घान्ते कार्य्यकालपक्षे नान्तत्वाभावेन षट्संज्ञाया अप्राप्त्या 'झल्युपोत्तमम्' इत्यस्याप्राप्त्या सावकाशस्याष्टन्स्वरस्य परत्वाज् झल्युपोत्तमम् इत्यस्यैव प्रवृत्तेरिति चेन्न, 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति न्यायेन पुनरष्टन्स्वरस्य प्रवृत्तिसम्भवात्।

यथोद्देशपक्षे आत्वेऽपि स्थानिवत्त्वेन सङ्केतसम्बन्धेन षट्पदवत्त्वरूपषट्त्वस्य सत्त्वेन 'झल्युपोत्तमम्' इत्यस्य येन नाप्राप्तिन्यायेन अष्टन्स्वरेण बाधात्। ननु 'अष्टानाम्' इत्यत्र झलादित्वाभावेन

**दीर्घग्रहणाज्ज्ञापकात् । अष्टौ । अष्टौ । परमाष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु । आत्वाभावे अष्ट, अष्ट इत्यादि पञ्चवत् ।**

---

अष्टन्स्वरस्य चारितार्थ्येनापवादत्वाभावः, तत्रापि 'षट्त्रिचतुर्भ्यो हलादिः' ( ६-१-१७९ ) इत्यस्य प्राप्त्या बाध्यसामान्यचिन्ताश्रयणेन अष्टन्स्वरस्यापवादत्वाक्षतेः ।

आकारान्तस्य षट्त्वेऽपि 'षड्भ्यो लुक्' इति जश्शसोर्लुङ् न, औश्विधानसामर्थ्यात् । **'अष्टौ'** इत्यत्र तु नाष्टन्स्वरस्य चारितार्थ्यम्, घृतादावष्टन्शब्दस्य पाठेनान्तोदात्ततया 'एकादेश उदात्तेन' ( ८-२-५ ) इत्यनेनैवोदात्तत्वसिद्धेः । नापि गौणे चारितार्थ्यम्, तेषामनभिधानात् । **न च** गौणेऽनभिधाने मानाभावः, दीर्घग्रहणज्ञापकपरभाष्यस्यैव मानत्वात् । 'हलि' इत्युभयोः शेषः । यद्येवं प्रियाष्टौ प्रियाष्टा इति न सिध्यति । प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति । **'यथालक्षणमप्रयुक्ते'** इति भाष्योक्तेश्च ।

किञ्च **'अष्टनो दीर्घात्'** इत्यत्र **'अन्तोदात्तादुत्तरपदादन्यतरस्यानित्यसमासे'** इत्यतः **'अन्तोदात्तात्'** इत्यनुवर्तते । **'अष्टाभिः'** इत्यादौ तु घृतादित्वादष्टन्शब्दस्यान्तोदात्तत्वेन विभक्तेरुदात्तत्वं स्यात् । 'प्रियाष्टभिः' इत्यादौ तु बहुव्रीहिणा पूर्वपदप्रकृतिस्वरत्वेनाष्टन्शब्दस्यान्तोदात्तत्वाभावाद् **गौणेऽप्रवृत्तिस्तस्य ।**

'अष्टाभ्य उङ्' इति तु नोक्तम् । ङित्त्वाज्जश्शसोः सकारस्योकारे 'अष्टा अ उ' इति स्थितौ **'इण्ङिशीनामाद् गुणः सवर्णदीर्घत्वात्'** इति न्यायेनान्तरङ्गत्वात्सवर्णदीर्घे 'अष्टा उ' इति जाते तत **आद् गुणे 'अष्टो'** इत्यस्यापत्तेः ।

**न च** प्रकृतिप्रत्ययोभयघटकवर्णद्वयापेक्षदीर्घतः प्रत्ययान्तघटकाकारोकारापेक्षगुणोऽन्तरङ्ग इति **पूर्वं गुणे 'अष्टा ओ'** इति स्थितौ **'वृद्धिरेचि'** इति वृद्धौ रूपसिद्धिः, शसि 'अष्टा ओ' इति जाते **'आतो धातोः'** इत्याधातोः इत्यालोपापत्तेः । न च धातुत्वाभावः, धातुग्रहणस्य आबन्तमात्रनिवृत्तिफलकत्वात् ।

अन्ये तु पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वे दीर्घे प्रत्ययान्तनिमित्तकत्वरूपान्तरङ्गत्वं गुणे इत्युभयोरन्तरङ्गत्वेऽपि दीर्घस्य गुणाद्यपवादत्वेन पूर्वं दीर्घे **'अष्टौ'** इत्यस्यासिद्ध्यापत्तेः **'उङ्' न कृत** इत्याहुः । **'अष्टौ' इति**–'अष्टाभ्यः' इत्यत्र कृताकारानुकरणत्वेन तस्य पूर्वमात्वे ततो जश्शसोः षित्त्वात्सर्वस्य स्थाने औशादेशे सवर्णदीर्घे वृद्धौ **'अष्टौ'** इति । 'अष्टाभ्यः' इत्यस्याङ्गत्वात्तदन्तेऽपि प्रवृत्तौ **'परमाष्टौ'** इति । **अष्टाभिरिति**—हलादावात्वे सवर्णदीर्घः ।

**अष्टानामिति**—नुटि कृते हलादित्वादात्वम् । न च नान्तसंख्यावाचकत्वरूपषट्त्वमुपजीव्य जायमानो नुट् हलादित्वसम्पादनद्वारा सन्निपातविघातकमात्वं प्रति निमित्तं स्यादिति वाच्यम्, 'षमामष्टानां दीर्घः श्यनि' इति निर्देशेनात्र सन्निपातपरिभाषाया अनित्यत्वाश्रयणात् । कृतात्वेऽपि स्थानिवत्त्वेन षट्त्वस्य सत्त्वात्सन्निपातविघाताभाव इति तु न युक्तम्, 'हे गौरि' इत्यत्र सन्निपातपरिभाषाया अनित्यत्वेन ह्रस्वान्तनिमित्तकसम्बुद्धिलोपपरभाष्यविरोधात् आरोपितसन्निपातविघाताभावेऽपि वास्तविकसन्निपातविधानमादायैव तत्प्रवृत्त्यङ्गीकारात् ।

अन्ये तु सन्निपातपरिभाषयाऽत्रात्वाभावेऽपि न दोषः, 'नोपधायाः' इत्युपधादीर्घे नलोपे चेष्टरूपसिद्धेः । **आत्वाभाव इति**–'अष्टनो दीर्घात्' इत्यत्र दीर्घग्रहणेनात्वविकल्पस्योक्तत्वादिति भावः । यद्यपि शसादिषु परतः स्वरविधायके 'अष्टनो दीर्घात्' इति सूत्रे कृतं दीर्घग्रहणं शसादिष्वेवात्वविकल्पं ज्ञापयेत्तथापि लाघवात् 'प्रमाणानां सामान्ये पक्षपातः' इति न्यायात्सामान्यापेक्षज्ञापकत्वमेव तस्येति आत्वास्याऽपि वैकल्पिकत्वं सिध्यति । वस्तुतस्तु कृतात्वानुकरणमेव जश्शसोरात्वविकल्पे ज्ञापकमित्युक्तं प्राक् ।

गौणत्वे त्वात्वाभावे राजवत् । शसि प्रियाष्ट्नः, इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम्,

---

गौणत्वे त्विति—अष्टन्शब्दस्य प्रकारतया स्वार्थोपस्थापकत्वे सतीत्यर्थः । प्रिया अष्टौ यस्येति बहुव्रीहावन्यपदार्थस्य प्रधानतयाऽष्टन्शब्दार्थस्य प्रकारताश्रयत्वरूपं गौणत्वमिति भावः ।

राजवदिति—प्रायेण राजवत्कार्य्यम् । प्रियाष्ट्नः इति–ननु ष्टुत्वेन नस्य णत्वं कुतो न स्यादत आह इहेति—अलोपस्य स्थानिवत्त्वेनाकारेण व्यवधानात् टकारनकारयोर्योगाभावान्न णत्वमिति भावः ।

ननु 'आदेशः स्थानिवत्' इत्यनेन स्थानिनि सति यत्कार्य्यं भवति तत्कार्य्यमादेशेऽपि भवतीत्येव लभ्यते । स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीति तु नोपलभ्यते । तथा सति 'नायकः' इत्याद्यसिद्ध्यापत्तेः । तथा हि—नीधातोर्ण्वुलि 'युवोरनाकौ' इत्यनेन 'यु' इत्यस्याकादेशे । नीत्यस्य वृद्धौ 'नै अक' इति स्थितौ स्थानिनि वुशब्दे सति 'आय्' आदेशो न भवतीति अकादेशेऽपि 'आय्' आदेशो न स्यादिति 'नायक' इत्यस्यासिद्ध्यापत्तिरिति चेन्न, 'णेरध्ययने वृत्तम्' इत्यत्र 'अध्ययने' इति निर्देशात् 'स्थानिवदादेशोऽनल्विधौ' इति सूत्रे 'आदेशः स्थानिवत्' इत्यस्य क्रियायां साकाङ्क्षत्वात् 'भवति' इत्यस्य, न 'भवति' इत्यस्य च अध्याहर्तुं शक्यत्वेऽपि 'न भवति' इत्यस्य नाध्याहारः ।

अन्यथा युशब्दे सति आयादेशो न भवतीति अनादेशेऽप्यायादेशो न स्यात् । तस्मात् 'स्थानिवदादेशः' इत्यस्य प्राप्तिर्नास्ति, अल्विधित्वाच्च । तस्मात् 'स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति' इत्यर्थस्य स्थानिवत्सूत्रेणालाभात् लोपस्य स्थानिवत्त्वान्न ष्टुत्वमित्यसङ्गतम् ।

यद्यपि 'अचः परस्मिन्' इति सूत्रमुभयं बोधयति, तदुक्तं भाष्ये—'काममतिदिश्यतां सन्वासन्वापि नेह भारोऽस्ति । कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्य्यधीनं हि' इति । 'स्थानिवदादेशः' इति वाक्यस्य शेषः कल्प्यः भवतीति, न भवतीति । 'पटु ई आ' इत्यत्र ईकारस्य यणादेशे कृते उकारस्य यणादेशः सिध्यति यकारमचमादाय 'वाय्वोः' इत्यत्र 'वायु ओस्' इति दशायाम् यकारस्य 'लोपो व्योर्वलि' इत्यनेन वल्परत्वाभावाद्यलोपो न भवति । उकारस्य वकारादेशे वल्परत्वमस्ति इति लोपः प्राप्नोति । परन्तु स्थानिनि सति यलोपो न भवति । एवं वकारादेशेऽपि यलोपो न स्यात् ।

तदुक्तं भाष्ये–'उशीनरवन्मद्रेषु यवाः सन्ति, सन्ति न सन्तीति च । मातृवदस्याः कलाः । सन्ति, न सन्तीति । एवमिहापि स्थानिवद्भवति, स्थानिवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे । इह तावत्पट्व्या, मृद्व्येति यथा स्थानियणादेशो भवति एवमादेशेऽपि भवति । इहेदानीं वाय्वोरध्वर्य्वोरिति यथा स्थानियलोपो न भवति एवमादेशेऽपि न भवतीति' इति । उक्तभाष्यप्रामाण्याद् यद्यपि 'अचः परस्मिन्' इति सूत्रम् स्थानिनि सति यत्कार्य्यं न भवति तददादेशेऽपि न भवतीति कार्य्याभावस्याप्यतिदेशकम् । तथाऽपि न तस्येह प्राप्तिः, स्थानिभूतादचः पूर्वत्वेन दृष्टस्यैव तत्प्रवृत्तेः ।

प्रकृते ष्टुत्वं स्थानिभूतादचः परत्वेन दृष्टस्य नकारस्येत्यत आह --पूर्वस्मादपीति—पूर्वस्माद्विधिरिति पञ्चमीसमासेन स्थानिभूतादचः पूर्वत्वेन दृष्टो यो वर्णस्ततः परो यो वर्णस्तस्यापि कार्ये कर्तव्ये स्थानिवद्भवतीत्यर्थात् 'प्रियाष्ट्नः' इत्यत्र स्थानिभूतोऽकारस्ततः पूर्वत्वेन दृष्टष्टकारस्ततः परो नकारस्तस्यापि ष्टुत्वे कर्त्तव्ये स्थानिनि अकारे सति नकारस्य ष्टुत्वं न प्राप्नोतीति अकारस्य लोपादेशेऽपि न स्यादिति भावः । न च त्रिपादीस्थे कार्य्ये कर्तव्ये न स्थानिवदित्यर्थकेन 'पूर्वत्रासिद्धीये न स्थानिवत्' इति वार्तिकेन ष्टुत्वे ( ८–४–४१ ) कर्तव्ये स्थानिवत्त्वनिषेधः स्यादिति वाच्यम्, संयोगादिलोपे लत्वे णत्वे च त्रिपादीस्थे कार्य्ये कर्तव्ये 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधो न भवतीत्यर्थकेन 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वार्तिकेन प्रतिषेधात् णत्वरूपे ष्टुत्वे कर्तव्ये स्थानिवत्त्वात् ।

कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा ।

---

न च प्रतिपदोक्तपरिभाषया णशब्दमुच्चार्य्य विहिते 'रषाभ्यां नो णः' इत्यादावेवैतद्वार्तिक-प्रवृत्तिरिति वाच्यम्, 'अपदान्तस्य मूर्द्धन्यः' इत्यनुवर्त्त्य 'णः' इत्यस्य भाष्ये प्रत्याख्यानेन प्रतिपदोक्त-णकाराभावात् ।

शब्दकौस्तुभे तु 'तस्य दोषः' इति वार्त्तिके णग्रहणं प्रत्याख्यातम् । तथा हि—'माषवपनी' इत्यत्र 'प्रातिपदिकान्त' इति णत्ववारणाय 'यस्येति च' इति लोपस्य स्थानिवत्त्वं भवति । तथा सति प्रातिपदिकान्तत्वाभावाण्णत्वं न भवति । तत्र 'पूर्वत्रासिद्धीये' इत्यनेन प्राप्तस्थानिवत्त्वा-भावनिषेधाय 'तस्य दोषः' इति वार्तिके णग्रहणम् ।

अत्र कार्य्यकालपक्षे 'अन्तरङ्गपरिभाषया बहिरङ्गस्य 'यस्येति च' इति लोपस्यासिद्धतया णत्वाप्राप्त्या णग्रहणं प्रत्याख्यातम् यथोद्देशपक्षमाश्रित्य 'अन्तरङ्गपरिभाषाया अप्रवृत्त्या 'पूर्वत्रा-सिद्धीये' इति स्थानिवत्त्वनिषेधेन च 'प्रियाष्ट्नः' इत्यत्र णत्वस्वीकारे वार्तिके णग्रहणसत्त्वे स्थानि-वत्त्वेन णत्वाभाव इति फलभेदः स्यादिति यथोद्देशपक्षानाश्रयणम् । वस्तुतस्तु वार्तिके णग्रहण-प्रत्याख्यानस्यादर्शनेन कार्य्यकालपक्षेऽपि अन्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तेः परिभाषेन्दावुक्तत्वेन मनोरमोक्तं णग्रहणप्रत्याख्यानं चिन्त्यम् ।

ननु अलोपस्य स्थानिवत्त्वेऽड्व्यवायसत्त्वाद् 'अट्कुप्वाङ्' इति णत्वं स्यादिति वाच्यम् 'अटा व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यः' इति वार्त्तिकेन 'व्यवाये' इति योगविभागेन 'अट्-कुप्वाङ्' इति सूत्रस्य 'अडादिभिरेव व्यवाये नान्यव्यवाये' इति नियमपरकभाष्येण चात्र टकार-व्यवधानेन 'अट्कुप्वाङ्' इत्यस्य प्राप्तयभावात् । मनोरमोक्तणग्रहणस्य प्रत्याख्याने पूर्वत्रासिद्धीये स्थानिवत्त्वाभावाभिप्रायेणाह—कार्य्यकालपक्षे बहिरङ्गस्येति—बहिरङ्गत्वेनाल्लोपस्यासिद्धतया न ष्टुत्वमिति भावः । 'निष्ठायां सेटि' इति सूत्रे 'सेटि' इति व्यर्थम्, ण्यन्तादनिटो निष्ठाया असम्भवात् । तस्माद्योगविभागेन कालावधारणार्थम् 'सेटि' इति । इटि कृते एव णिलोपो न तु ततः प्राक्–इति । अन्यथा 'कारितम्' इत्यादौ परमपीटं बाधित्वा नित्यत्वाण्णिलोपे 'एकाच' उपदेशे' इतीण्निषेधः स्यात् । कालावधारणे तु इटि सत्येव णिलोप इत्यवधारणेन इटि कृते णिलोपे 'कारितम्' इति सिध्यति ।

पूर्वस्मादपि विधौ स्थानिवत्त्वस्य नित्यत्वे तु नित्यत्वादिटं बाधित्वा णिलोपे जातेऽपि णिलो-पस्य स्थानिवत्त्वेन 'एकाच' इति निषेधाप्राप्तया इटि 'कारितम्' इति सिध्येदिति सेड्ग्रहणं व्यर्थीभूय पञ्चमीसमासेन स्थानिवत्त्वस्यानित्यत्वं ज्ञापयति ।

यदि तु 'एकाचः' इत्यत्र विहितविशेषणम् 'एकाचो धातोर्विहितं यद्वलाद्यार्धधातुकं तस्य नेट्' इत्यर्थस्तदा 'कारितम्' इत्यत्र कारीतिण्यन्ताद्विहितत्वेन निषेधाप्राप्तया 'सेटि' इति व्यर्थम् तदा 'ल्यपि लघुपूर्वात्' ( ६–४–५६ ) इति भाष्ये 'प्रस्तनय्य गतः' इत्युदाहरणेन पूर्वस्मादपि विधौ इत्यस्यानित्यत्वं बोध्यम् । अत्र हि 'स्तन-गर्दा देवशब्दे' इति चुरादावदन्तेषु पठ्यते । ततः क्त्वा-प्रत्यये समासे ल्यपि 'प्रस्तन इ य' इति दशायाम् 'अतो लोपः' इत्यलोपे लघुपूर्वकात्तकारात्परस्य णेरयादेशे 'प्रस्तनय्य' इति सिध्यति । यदि पञ्चमीसमासेन अलोपस्य स्थानिवत्त्वं स्यात्तदा लघुपूर्वा-न्नकारात्परस्य णेरभावेन अयादेशो न स्यात् । अतस्तद्भाष्योदाहरणात्पञ्चमीसमासेन स्थानिवत्त्वस्या नित्यत्वं ज्ञापनीयम् ।

एवम्—'प्रविगणय्य' इत्युदाहरणेनापि । न चात्र स्थानिवत्त्वेऽपि लघुर्लोपस्यानिभूतोऽकारः स पूर्वो यस्य तस्य स लुप्यमानोऽकार एव व्यपदेशिवद्भावेन स्वस्मिन्नपि स्वपूर्वत्वसम्भवादिति न भाष्योदाहरणासङ्गतिरिति वाच्यम्, व्यपदेशिवन्न्यायस्य लौकिकत्वेन लोके स्वपूर्वत्वस्य स्वस्मिन्

प्रियाष्टनः, इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्य एव ।

---

क्वाप्यदर्शनेन स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्य च स्वस्मिन्नसम्भवेन उक्तोदाहरणस्य स्थानिवत्त्वानित्यत्वं विना अनुपपत्तेः ।

तथा च स्थानिवत्त्वानित्यत्वेनापि णत्वं न समर्थितं स्यात्, णत्वघटितस्य 'प्रियाष्ण:' इत्यस्य सत्त्वे प्रमाणाभावात् । प्रामाणिकलक्ष्यानुरोधेनैवानित्यत्वकल्पनस्य युक्तत्वात् ज्ञापकादिदृष्टसिद्धेरेव सर्वसम्मतत्वात् ।

**कार्य्यकालपक्ष इति**—यथोद्देशे तु 'वाह ऊठ्' इत्यत्र 'ऊठ्'ग्रहणेन ज्ञापिताया अन्तरङ्गपरिभाषायाः सपादसप्ताध्यायीस्थतया तद्दृष्ट्याऽन्तरङ्गस्य प्लुत्वस्यासिद्धतयाऽन्तरङ्गाभावेनान्तरङ्गपरिभाषाया अप्रवृत्त्याऽऽह—**कार्यकाल इति** । अस्मिन्पक्षे त्रिपादीस्थमेव शास्त्रमदृष्टपिशाचन्यायेन सपादसप्ताध्ययीस्थां परिभाषां स्वदेशे उपस्थापयति । तत्र गता च परिभाषा तद्देशमहिम्ना त्रिपादीस्थं शास्त्रं पश्यतीत्यन्तरङ्गत्रिपादीस्थदृष्ट्या बहिरङ्गस्याल्लोपस्यासिद्धत्वं बोधयतीति न ष्टुत्वमिति भावः ।

अत्र नागेशाः—कार्य्यकालपक्षेऽपि अन्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तिरेव । अत **एव** विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना 'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वादि'त्याद्युक्तं सङ्गच्छते ।

अन्तरङ्गपरिभाषाया अप्रवृत्तेरेव 'निगाल्यते' इत्यत्र सपादसप्ताध्ययीस्थत्वेन पूर्वं णिलोपे स्थानिवत्त्वेन लत्वार्थम् 'तस्य दोषः' इत्यत्र लग्रहणं कृतम् । अन्यथा अन्तरङ्गत्वात् णिलोपात्पूर्वं वैकल्पिकलत्वे सिद्धे वार्तिके लग्रहणं व्यर्थमेव स्यादित्याहुः । **प्राधान्ये एवेति**—'अष्टाभ्यः' इति बहुवचननिर्देशात् । एवञ्च गौणे औशोऽप्रवृत्तौ कृतात्वानुकरणनिर्देशज्ञाप्यात्वमपि गौणे न प्रवर्त्तत इति भावः ।

शेखरकारास्तु 'ष्णान्ता' इति सूत्रे 'अष्टानाम्' इत्यस्य सिद्धये 'हलि' इत्यस्यापकर्षे 'प्रियाष्टौ, प्रियाष्ट' इति न सिध्यति 'प्रयाष्टानौ, प्रियाष्टानः' इति प्राप्नोति इति शङ्किते 'यथालक्षणमप्रयुक्ते' इति भाष्यकृता समाहितम् ।

तत्र कैयटेनोक्तम् 'यस्य विशिष्टः प्रयोगो न स्मर्य्यते, नापि प्रयोगनिषेधस्मृतिः, तद् यथालक्षणमनुगन्तव्यम्, तदत्र ( प्रियाष्टानौ इत्यादिषु ) मा भूदात्त्वमित्यर्थः । इत्येकमर्थमुक्त्वा 'नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात्' इत्युक्तम् । तत्राद्यव्याख्यायाम् 'प्रियाष्टानौ' इत्येव लक्षणानुसारं स्यादिति फलति । द्वितीयव्याख्यायान्तु 'अप्रयुक्ते शास्त्रं नैव प्रवर्त्तते । लोके प्रयोग एव एवं नास्तीत्यर्थः । एषामनभिधानमेव । तथा च 'प्रियाष्टन्शब्दस्य प्रयोग एव न भवतीत्यर्थः' इत्याहुः । अत्र गुरवः—'यथालक्षणमप्रयुक्ते' इत्यस्य व्याख्यानद्वयं कैयटस्य । लक्षणमनतिक्रम्य यथालक्षणम् इति यथार्थेऽव्ययीभावेन यस्य लक्ष्यस्य क्वचिदपि प्रयोगो नोपलभ्यते, तत्र लक्षणमनतिक्रम्य कार्यं कर्त्तव्यम् । लक्षणेन यथा प्राप्नोति तथैव तत्स्वरूपं बोध्यमित्येकम् ।

द्वितीयम्—लक्षणस्याभावोऽलक्षणम् इत्यर्थाभावेऽव्ययीभावं विधाय पुनर्यथार्थे अलक्षणं लक्षणभावमनतिक्रम्येति यथार्थेऽव्ययीभावेन अप्रयुक्तलक्ष्ये लक्षणप्रवृत्त्यभावस्य योग्यता अप्रयुक्ते लक्ष्ये लक्षणं नैव प्रवर्त्तते । तस्यानभिधानमेवेति यावत् । तथा च प्रियाष्टन्शब्दस्यानभिधानमेवेति च ।

वस्तुतस्तु लक्ष्ये लक्षणाभावस्य स्वभावसिद्धत्वात्तदुक्तिवैयर्थ्येन लक्षणशब्दस्य लक्षणप्रवृत्तौ लक्षणायाम्, वारद्वयमव्ययीभावे च गौरवादाद्यव्याख्यानमेव युक्तम् । द्वितीयव्याख्यानन्तु सम्भवमात्रेण मतान्तरपरतयेति न कैयटमते एकस्य लक्ष्यस्य साधुत्वासाधुत्वप्रसक्तिः ।

न च 'अप्रयुक्ते' इति वाक्यशेषविरोधः, प्रयुक्तेऽपि लक्षणानतिक्रमस्य दर्शनादिति वाच्यम्, अप्रयुक्तस्यैव प्रक्रान्तत्वेन तयोक्तेः । न च 'प्रयुक्तानामन्वाख्यानं व्याकरणम्' इत्यभियुक्तोक्तिविरोधः, प्रयुक्तानामित्यस्य साधूनामेवेत्यर्थेनादोषात् ।

न तु गौणतायाम्, तेन प्रियाष्ट्नो हलादावेव वैकल्पिकमात्वम् । प्रियाष्टाः । प्रियाष्टाभ्याम् । प्रियाष्टाभिः । प्रियाष्टाभ्यः । प्रियाष्टाभ्यः । प्रियाष्टासु । 'प्रियाष्ट्नो राजवत्सर्वं ह्यहावच्चापरं हलि ।' इति नान्ताः ॥ भष्भावः, जश्त्व-चर्त्वे; भुत्, भुद् । बुधौ, बुधः । बुधा, भुद्भ्याम् । भुत्सु । इति धान्ताः ॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । [ ३-२-५९ ]

एभ्यः क्विन् स्यात् । अलाक्षणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते ।

---

किञ्च शिष्टप्रयुक्तत्वमेव साधुत्वम् । लक्षणन्तु तद्द्योतकम् । अत एव 'सर्वनामानि, अग्रगामिनि' इत्यनयोर्णत्वविधायकलक्षणातिक्रमेऽपि साधुत्वम्, अन्ति परस्य वचे लक्षणविषयत्वेऽप्यसाधुत्वम् । तथा च प्रियाष्टादीनां शिष्टाप्रयुक्तत्वादसाधुत्वमेवेत्यलम् । ननु गौणतायामिति— 'अष्टाभ्यः' इति बहुवचननिर्देशात् अनभिधानाच्च । प्रियाष्टा इति—सौ हलादित्वात् 'अष्टन आ' इत्यात्वम् 'षड्भ्यो लुक्' इति, 'षट्चतुर्भ्यश्च' इति नुट् च गौणतायां न भवतीति प्रागुक्तम् । एवं शसादौ प्रायो राजवत् हलादावात्वेन विशेषः । तदाह—प्रियाष्ट्न इति ।

'अमङ्णनम्' इति भाष्ये 'न झकारभकारौ पदान्तौ स्तः' इत्युक्त्या झकारान्तभकारान्तानामभावाद् धकारान्तमाह—बुध् इति । वस्तुतस्तु 'उज्झ त्यागे' इत्यतः क्विपि 'उज्झ्' इति झान्तस्य 'उग्' 'उज्झौ' इत्यादीनि, दिग्वाचकस्य 'ककुभ्' शब्दस्य 'ककुब्' ककुभौ लुभ 'विमोहने' । ततः क्विपि 'लुब्, लुभौ' इत्यादि, 'घघ हसने' इत्यतः क्विपि 'धग्' 'घघौ' इत्यादि, 'दृह् वृद्धौ' इत्यतः क्ते 'दृढः स्थूलबलयोः' ( ७-२-२० ) इत्यनेन क्तस्येडभावे, तस्य ढत्वे हस्य लोपे च निपातिते 'दृढः' इति । ततो णिचि क्विपि च 'द्रढ्' इति तस्य 'द्रड्, द्रढौ' इत्यादिरूपाणि झान्त-भान्त-घान्त-ढान्तानामपि बोध्यानि । 'अमङ्णनम्' इति सूत्रस्थभाष्यन्तु 'पदान्तौ झ-भौ न स्तः, पदान्ते जश्त्वविधानात्' इत्याशयकम्, न तु तदन्तशब्दाभावपरम् ।

भष्भाव इति—'बुध अवगमने' इत्यतः बुध्यते इत्यर्थे कर्तरि क्विपि बुध्शब्दात् सौ तस्य लोपे प्रत्ययलक्षणेन पदत्वात् 'एकाचो बशः' इति बकारस्य स्थाने भष्भावेन भकारः । जश्त्वेति— 'झलां जशोऽन्ते' इति जश्त्वेन दकारे 'वाऽवसाने' इति दस्य चर्त्वेन वा तकारः । भ्यामादौ 'स्वादिषु' इति पदत्वाद् भष्भावजश्त्वे । भुत्स्विति—'खरि च' इति दस्य चर्त्वम् । अथ जकारान्ताः—

अथ 'युज्' शब्दो व्युत्पाद्यते—'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च' ( ३-२-५९ ) इति । अत्र 'धातोः' (३-१-९१) इत्यधिक्रियते । 'स्पृशोऽनुदके क्विन्' (३-२-५८) इत्यतः 'क्विन्' इत्यनुवर्तते । षष्ठी चात्र पञ्चम्यर्थे तदाह—एभ्य इत्यादि । ऋतावुपपदाद्यजेः, 'ञिधृषा प्रागल्भ्ये' ऋतुशब्दे उपपदे 'यज देवपूजा' इति यजेः क्विन् प्रत्ययो निपात्यते । ऋतौ, ऋतुं वा यजतीति 'ऋत्विक्' रूढिरेषा 'अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते' इति शब्दस्तोमनिधिः । 'ञिधृषा प्रागल्भ्ये' इति धृषेः क्विन् द्वित्वमन्तोदात्तत्वञ्च निपात्यते । धृष्णोतीति दधृक् = धाष्टर्यकर्ता 'सृज विसर्गे निर्माणे' च 'विश्वसर्गविसर्गादिनवलक्षणालक्षितम्' 'इति श्रीधरा' इति दर्शनात् सृजेः कर्मणि क्विन् अमागमश्च निपात्यते । सृज्यते या, सृजति यां सा स्रक् = माला । 'दिश अतिसर्जने' इति दिशेः कर्मणि क्विन्निपात्यते । दिश्यते = पूर्वादिशब्देन व्यवह्रियते या, दिशति यां वा सा दिक् । दिशति = अवकाशं ददाति या सा दिक् कर्तरि क्विन् इति केचित् । उत्पूर्वात् 'ष्णिह प्रीतौ' इति ष्णिहेः क्विन् उपसर्गान्तस्य लोपः षत्वञ्च निपात्यते । 'उष्णिक्' = सप्ताक्षरकं वैदिकच्छन्दः ।

यद्यपि 'अञ्चुयुजिक्रुञ्चधातुभ्यः क्विन्प्रत्ययमात्रं विधीयते न किञ्चिन्निपात्यते । तथाऽपि निपातनैः सह निर्देशादत्रापि किञ्चिदलाक्षणिकं कार्य्यं बोध्यते इत्यग्रे तत्र तत्र वक्ष्यते । तदाह—अलाक्षणिकमपीति—निरुपपदादेव युजेः क्विन्निति निपातनसाहचर्य्याल्लक्ष्यानुरोधात्प्रतीयत इति भावः ।

निरुपपदाद्युजेः क्विन् । कनावितौ ।

कृदतिङ् । [ ३-१-९३ ]

सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

---

अञ्चतेः सुबन्ते उपपदे क्विन् प्रत्ययो भवति । प्राङ्, प्रत्यङ्, सम्यङ् इत्यादौ । युजेः कुञ्चेश्च केवलादेव 'युङ्, कुङ्' इति । सोपपदाभ्यामाभ्याम् 'सत्सूद्विष' इति क्विबेव-'अश्वयुक्' इत्यादि । क्रुञ्चेरपि 'उपक्रुक्' उपक्रुञ्चौ इत्यादि । क्विन्नन्ते क्रुञ्चौ नलोपाभावोऽपि निपात्यते इति मनोरमाकृत्, एतच्चिन्त्यम्, 'परेश्च घाङ्कयोः' ( ८-२-२२ इति सूत्रस्थभाष्यविरोधात् । तत्र हि सनः सशब्दादारभ्य आमहिङो ङकारात् 'सङ्' प्रत्याहारः ।

'सङि लत्व-सलोप-संयोगादिलोप-कुत्व-दीर्घत्वानि ।' इति वार्तिकस्य झलादौ सङि प्रत्यये कुत्वम् इत्यस्य फलप्रदर्शनप्रसङ्गे भाष्ये उक्तम् 'क्रुञ्चा-इत्यत्र 'चोः कुः' झलीति कुत्वं प्राप्नोति । सङीति । वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । निपातनात्सिद्धम् । किं निपातनम् । 'ऋत्विक्' इति । यदि नलोपाभावो निपातितः स्यात्तदा नश्चानुस्वारे परसवर्णे च कृते एव कुत्वं प्राप्नोति । तत्र कुत्वदृष्ट्या परसवर्णस्य असिद्धतयैव कुत्वं न स्यात्' निपातनात्कुत्वाभाव इति भाष्योक्तिर्विरुध्येत । तथा च उपदेशे अकारोपधोऽयम् । निपातनाच्चास्य कुत्वाभावः । न च निपातनात्कुत्वाभावे 'क्रुङ्' इत्यत्रापि कुत्वं न स्यादिति वाच्यम्, चयोगे एव कुत्वाभावनिपातनात् ।

यद्यपि 'ऋत्विक्' सूत्रे 'ऋत्विज्' इत्यस्य प्रथमोपादानात्तस्यैव जान्तस्य प्रथमं रूपप्रदर्शनमुचितम् तथापि कार्यविशेषप्रदर्शनाय 'युज्' शब्दस्यैवोपादानमित्याह—**निरुपपदादिति** । संयोगार्थकाद् युजेः क्विन्विधानस्य फलं नुमो नकारस्य कुत्वमेव । नुम् चासमासे एव वक्ष्यते । समासे तु क्विनि क्विपि वा नास्ति विशेषः । उभयत्रापि 'चोः कुः' इति कुत्वेनापि रूपसिद्धेरित्युक्तं **निरुपपदादिति** । **कनाविताविति**-कित्त्वं गुणप्रतिषेधार्थम् । नकारः 'क्विन्प्रत्ययस्य कुः' इत्यत्र विशेषणार्थः । यदि तु 'क्वि' इति विधानेऽपि 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया पकारानुबन्धकस्य क्विपो ग्रहणं न स्यादिति नित्करणं मुखसुखार्थमेव । क्विन इकार उच्चारणार्थ इति प्राञ्चः । तस्येत्संज्ञालोपाभ्यामपहार इति नागेशः ।

यत्र उच्चारणमात्रं प्रयोजनं न तु फलान्तरं तत्रैवोच्चारणार्थत्वम् । प्रकृते तु 'वेरपृक्तस्य' इत्यत्र विशेषणार्थत्वमपीत्युच्चारणार्थत्वं न युक्तम् । क्विन्नन्तस्य प्रातिपदिकसंज्ञां दर्शयितुं कृत्संज्ञामाह—

**कृदतिङ्** ( ३-१-९३ ) इति । 'धातोः' ( ३-१-९१ ) इत्यधिक्रियते । 'प्रत्ययः' इति च ( ३-१-१ ) । अत्र 'धातोः' इति विहितविशेषणम्, धातोर्विहितो यः प्रत्यय इति । तदुक्तं भाष्ये 'कृत्संज्ञा च' कृत्संज्ञा च प्रयोजनम् । धातोर्विहितः प्रत्ययः कृत्संज्ञो भवतीति कृत्संज्ञा च सिद्धा भवति' इति । तत्र प्रत्यासत्त्या सन्निहितं 'धातोः' इत्यधिकृत्य धातोर्विहितोऽन्यस्माद्वा विहितः प्रत्ययः कृत्संज्ञो भवतीत्यर्थस्तेन 'वर्णात्कारः' इति वर्णाद्विहितस्य कारप्रत्ययस्यापि कृत्संज्ञा सिध्यतीति अकारादिशब्दानामपि कृदन्तत्वात्प्रातिपदिकत्वम् । एवम् 'रादिफः' 'रेफः' इत्यादेरपि बोध्यम् ।

**सन्निहिते इति**—तेन 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' ( ३-१-२२ , इत्यत्र 'धातोः' इत्यप्यधिकृतम् यङ्ङादीनामार्धधातुकसंज्ञार्थम् । तस्य नेह ग्रहणम्, असन्निहितत्वात् । अन्यथा णिचः कृत्त्वे 'देवदत्तेन पाचयति चैत्रः' इत्यादौ कर्त्रादिवाचकाद् देवदत्तादिशब्दात् 'कर्तृकर्मणोः कृति' 'उभयप्राप्तौ' इति षष्ठ्यापत्तिः । 'चेचीयते' इत्यादौ यङि 'अकृत्सार्वधातुकयोः' इति दीर्घानापत्तिश्च । 'धातोः कर्मणः' इत्यत्र 'धातोः' इति तु नाधिकृतम्, अग्रे 'सुप आत्मनः क्यच्' इत्यस्यैव सत्त्वात् ।

'अतिङ्' इति किम् 'रुरुदिव' इत्यत्र 'आर्द्धधातुकस्येड् वलादेः' इति प्राप्तस्येटः 'नेड् वशि कृति' इति प्रतिषेधो मा भूत् । न चात्र 'कृसृभृवृ' (७-२-१३) इति सूत्रेण 'प्रकृत्याश्रयः प्रत्ययाश्रये

*वेरपृक्तस्य* । [ ६-१-६७ ]

अपृक्तस्य वस्य लोपः स्यात् 'कृत्तद्धित-' इति प्रातिपदिकत्वात्स्वादयः ।

*युजेरसमासे* । [ ७-१-७१ ]

युजेः सर्वनामस्थाने नुम्स्यादसमासे । सुलोपः । संयोगान्तलोपः ।

वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव' इति नियमादेव 'नेड् वशि' इति निषेधस्यापि निवृत्त्या नात्र दोष इति वाच्यम्, 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन क्रादिनियमो हि पूर्वयोः 'एकाच उपदेशे' इति ( ७-२-१० ) 'श्र्युकः' किति' ( ७-२-११ ) इत्यनयोरेव बाधको न तु 'नेड् वशि' इति निषेधस्येत्याशयात् । वस्तुतस्तु 'रुदिवः' इत्यत्र दोषः । नन्वेवं सति 'बभूविव' इत्यस्य पुरःस्फूर्तिकत्वात्तत्त्यागस्य निर्बीजत्वापत्तिः । 'अशोकवनिका'न्यायेन समाधानं तु क्लिष्टम्, युगपदुपस्थितावेव तद्विषयत्वञ्च ।

यत्तु तिङः कृत्त्वे 'चिकीर्षति' इत्यत्र 'ह्रस्वस्य पिति' इति तुगापत्तिरिति तन्न, 'धातोः' इत्यधिकारात् धातोरव्यवहितोत्तरस्यैव कृत्संज्ञाविधानेन तुकि कर्तव्ये शप एकादेशस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन शपा व्यवधाने कृत्संज्ञाया अप्राप्तेः ।

तदुक्तं भाष्ये—'इह तर्हि पचति, पठतीति । 'ह्रस्वस्य पिति कृति तुग्भवती'ति तुक् प्राप्नोतीति । धातोरिति वर्त्तते । एवमपि 'चिकीर्षती'त्यत्रापि प्राप्नोति । अत्रापि शपा व्यवहितत्वात् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद् व्यवधानमेवेति' इति । यदि तु धातोरिति विहितविशेषणं तदाऽत्र दोष एव ।

ननु तिङः कृत्संज्ञाया अभावे 'अकृत्सार्वधातुकयोः' इति सूत्रे सार्वधातुकग्रहणमेव मानम् । तद्धि 'चिनुयात्' इत्यादौ सार्वधातुके परे दीर्घाभावार्थम् । यदि तिङः कृत्संज्ञा स्यात्तदा कृत्पर्युदासेनैव दीर्घाभावे तद्व्यर्थं सज्ज्ञापकं स्यात् 'तिङः' कृत्संज्ञा न भवतीति । किञ्च तिङः कृत्वे तिङन्तस्यापि कृदन्तत्वात्प्रातिपदिकत्वे 'अतिशायने' इति सूत्रेणैव त्तिङन्तादतिशायिनि प्रत्यये सिद्धे 'तिङश्च' इति सूत्रमपि तिङः कृत्त्वाभावे ज्ञापकं भविष्यतीति चेन्न, ज्ञापकेन लिङः कृत्संज्ञावारणापेक्षया 'अतिङ्' इति शब्दोपादानस्यैव ज्यायस्त्वात् ।

तथा हि—यत्र तत्तदर्थबोधकपदोपादानं तत्र वृत्त्याऽर्थोपस्थितौ शाब्दबोधः । यत्र ज्ञापकेन यत्किञ्चिदर्थविषयकबोधस्तत्र 'ज्ञापकम्' इत्यस्य अनुमापकमित्येवार्थोऽभ्युपेयो गत्यन्तराभावात् । एवं सति विवक्षितार्थविषयिण्यनुमितिरेव वाच्या । अनुमितिसामग्र्याश्च, व्याप्त्याद्यनेकपदार्थघटितत्वेनातिगौरवग्रस्ततयाऽन्याय्यत्वमेव । 'युज् व्' इति स्थितौ—

**वेरपृक्तस्य** ( ६-१-६७ ) इति । 'लोपो व्योर्वलि' इत्यतः 'लोपः' इत्यनुवर्तते । केवलस्य 'वेः' प्रत्ययस्याभावाद्विशब्देन क्विन्-क्विप्-विचां ग्रहणम् । 'वि' इतीकारस्येत्संज्ञालोपाभ्यामपहारात् केवलं वमात्रमवशिष्यते । तदाह—**अपृक्तस्य वस्येति** । अपृक्तस्येति किम् ? 'दर्विः' 'जागृविः' 'वृदम्यां विन्' ( ३-४ पा० ५३ सू ) इति विन् दर्विः, 'जुगुस्तुजागृभ्यः क्विन्' इति क्विन् जागृविः । अत्र वेर्लोपो मा भूत् । भाष्ये तु 'अनुनासिकपरस्य वेर्ग्रहणम्' । न चात्रानुनासिकपरो विशब्दः । एवमपि 'प्रियदर्वि' इत्यत्रापि प्राप्नोति । असिद्धोऽत्रानुनासिकः । अथवा वकारस्यैवानुनासिकस्य ग्रहणम्' इत्युक्तम् । एवञ्च अपृक्तस्येत्यस्य फलं चिन्त्यम् । क्विनः कृत्संज्ञायाः प्रयोजनमाह—**कृत्तद्धितेति** । क्विन्नन्तयुजशब्दे विशेषमाह—

**युजेरसमासे** ( ७-१-७१ ) इति 'उगिदचाम्' इत्यतः 'सर्वनामस्थाने' इति, 'इदितो नुम्' इत्यतः 'नुम्' इति चानुवर्तते । तदाह—**नुम् स्यादित्यादि** । 'युन् ज' इति स्थिते । **सुलोप इति** । परत्वात्पूर्वं नुम् । ततः 'हल्ङ्याब्भ्यः' इति **सुलोपः** । **संयोगान्तस्येति**—जकारस्य लोप इत्यर्थः । **'युन्' इति स्थितौ विशेषमाह—**

*क्विन्प्रत्ययस्य कुः।* [ ८-२-६२ ]

**क्विन् प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते। नस्य कुत्वेनानुनासिको ङकारः, युङ्। 'नश्चापदान्तस्य-' इति नुमोऽनुस्वारः। परसवर्णः। तस्यासिद्धत्वात् 'चोः कुः' इति कुत्वं न। युञ्जौ। युञ्जः। युञ्जम्। युञ्जौ। युजः। युजा। युग्भ्याम् इत्यादि। 'असमासे' किम्—**

---

**क्विन्प्रत्ययस्य कुः** (८-२-६२) इति 'पदस्य' (८-१-१६) इत्यधिक्रियते। 'झलां जशोऽन्ते' इत्यतः 'अन्ते' इत्यनुवर्त्तते। क्विन्प्रत्ययो यस्माद् धातोर्विहितः **क्विन्प्रत्ययः**—इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। पदसंज्ञकस्य तस्य धातोर्योऽन्तस्तस्य स्थाने कवर्गादेशस्तदाह—**क्विन्प्रत्ययो यस्मादित्यादि।**

अत्र '**झलि**' इति न सम्बध्यते 'स्ध्वः' ग्रहणसामर्थ्येन 'एकाचो बशः' इत्यतस्तन्निवृत्तेः, निष्ठादेशप्रकरणेन विच्छेदात् प्रकरणव्यवधानेनानुवृत्तेः काप्यदृष्टत्वात् 'स्पृष्टः' इत्यादौ कुत्वापत्तेश्च। एतेन 'चोः कुः' इत्यस्य स्थाने 'चोः क्विन्प्रत्ययस्य च कुः' इति न्यासः। यद्वा 'क्विन्प्रत्ययस्य' इत्यस्य स्थानेऽस्तु, वारद्वयं कुग्रहणं मास्त्विति परास्तम्, एकत्र '**झलि**' इत्यस्य सम्बन्धाऽसम्बन्धयोर्वक्तुमशक्यत्वात्। ननु क्विनः प्रत्ययत्वाव्यभिचारात् 'क्विनः कुः' इत्येव सूत्रमस्तु, क्विन्नन्तस्य कुत्वं स्यात्पदान्ते इत्यर्थेनैव सिद्धे प्रत्ययग्रहणं व्यर्थम् इति चेन्न, क्विन्प्रत्ययो यस्माद् धातोर्दृष्टस्तस्य पदस्य धातोः क्विन्प्रत्ययाभावेऽपि क्विबाद्यन्तादेरपि कुत्वार्थं प्रत्ययग्रहणस्य सत्त्वात्।

न च प्रत्ययग्रहणाभावे क्विनो वस्य कुत्वापत्तिरिति वाच्यम्, तथा सति वस्य स्थाने आन्तरतम्याद् घ एव स्यादिति 'क्विनो घः' इत्येव सिद्धे कुग्रहणसामर्थ्यात् क्विन्नन्तस्यैव कुत्वविधानसम्भवात्। वस्तुतस्तु वस्याल्पप्राणतया 'क्विनो गः' इत्येव वक्तुमुचितम्, वस्य महाप्राणत्वे मानाभावाद् 'घः' इति न्यासश्चिन्त्यः।

तदुक्तं भाष्ये 'येभ्यः क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यादिति' इति। यथा च भाष्ये श्लोकः—'क्विनः कुरिति सिद्धे यत्प्रत्ययग्रहणं कृतम्। क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते' इति।

न च 'नशेर्वा' इत्यत्रानुवृत्तये कुग्रहणम्, तत्र घेत्यस्य गेत्यस्य वाऽनुवृत्तावप्यक्षतेः। तत्फलं तु 'स्पृक्' इत्यत्र क्विबन्तेऽपि स्पृशो कुत्वसिद्धिः। 'स्पृशोऽनुदके क्विन्' इति सोपपदे 'घृतस्पृक्' इत्यादौ क्विनो दर्शनादिति मूले एव वक्ष्यते।

ननु 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यत्र 'विधीयमानः सवर्णस्य संज्ञा न भवतीत्युक्तम्। तथा च विधेयताप्रयोजकतया कुपदं स्वाद्यसवर्णस्य ग्राहकं न स्यादिति चेन्न, उदित्करणसामर्थ्येन उदिता सह 'अप्रत्ययः' इत्यस्य सम्बन्धात्। तत्सम्बन्धे हि तत्र उदित्करणस्य वैयर्थ्यमेव स्यात्।

ननु स्पृष्टप्रयत्नसाम्यस्य कादिषु पञ्चस्वपि सत्त्वेन स्थानसाम्यस्य कवर्गेष्वभावेन नस्य स्थाने पर्यायेण सर्वे कादयः स्युः। अल्पप्राणकृतसाम्यग्रहणे गकारोऽपि स्यादत आह—**नस्य कुत्वेनेति**—नासिकास्थानतः, आनुनासिक्यगुणसाम्यतश्च नस्य ङकार एवेति भावः। **युङिति**—रौधादिकाद् 'युजिर् योगे' इत्यत 'ऋत्विक्' इत्यादिना क्विन् इत्युक्तम्। तत्र युनक्तीति युङ्=सम्बन्धकर्ता। नुमि कृते नस्य 'चोः कुः' इत्यनेन कुत्वाप्राप्तावस्यारम्भः। औजसादिषु विशेषमाह—**नश्चापदान्तस्येति। नुम इति**—'युजेरसमासे' इति विहितस्य नुम इत्यर्थः। **परसवर्ण इति**—'अनुस्वारस्य ययि परसवर्णः' ( ८-४-५८ ) इति विहितो ञकाररूपः। **तस्येति** परसवर्णस्येत्यर्थः। **असिद्धत्वादिति** 'चोः कुः' ( ८-२-३० ) इति पूर्वत्र कर्तव्ये परस्य परसवर्णस्य ञस्यासिद्धत्वान्न कुत्वमिति भावः। **युग्भ्यामिति**—'स्वादिष्वसर्व' इति पदत्वाज्जकारस्य कुत्वेन गकारः। **युक्ष्विति**—कुत्वेन जस्य गकारे तस्य 'खरि च' इति ककारे 'आदेशप्रत्यययोः' इति सोः सस्य षत्वे कषसंयोगे क्ष इति '**युक्षु**'। '**युजेरसमासे**' इत्यत्र असमासे' इत्यस्य फलं दर्शयिष्यन् विशेषमाह—

चोः कुः । [ ८-२-३० ]

चवर्गस्य कवर्गः स्याद् झलि पदान्ते च । इति कुत्वम्, 'क्विन्प्रत्ययस्य-' इति कुत्वस्यासिद्धत्वात् । मुयुक्, सुयुग् । सुयुजौ । सुयुजः । 'युजेः' इति धातुपाठपठितेकारविशिष्टस्यानुकरणम्, न त्विका निर्देशः, तेनेह न-युज्यते = समाधत्ते इति युक् । 'युज समाधौ' देवादिक आत्मनेपदी । संयोगान्तलोपः, खन् । खञ्जौ । खञ्जः, इत्यादि । 'व्रश्च-' इति षत्वम्, जश्त्वचर्त्वे, राट्, राड् । राजौ । राजः । राट्त्सु, राट्सु ।

---

'चोः कुः' (८-२-३०) इति 'पदस्य' इत्यधिक्रियते, 'स्कोः संयोगाद्योरन्ते च' इत्यतः 'अन्ते' इत्यनुवर्त्तते । तदाह—चवर्गस्येत्यादि । 'चु' इति, 'कु' इति च स्वाद्यसवर्णस्य संज्ञा । तदाह—चवर्गस्य कवर्ग इति । 'अणुदित्सवर्णस्य' इत्यत्र उदिद्ग्रस्थ तस्य न उदित्पदेन न ग्रहणम्, कुक्, टुक्-नुम् इत्यादावपि सवर्णग्रहणापत्तेः, 'चोः कुः' इत्यादौ अज्ञातस्वस्वरूपज्ञापकत्वरूपोपदेशत्वाभावेन च इत्संज्ञाया अप्राप्तेश्च । किन्तु 'कु-चु-टु-तु-पु' इति शब्दाः उदित्संज्ञकाः संकेतसम्बन्धेन उदित्पदवन्त इत्यर्थः । तदुक्तं मूले 'कु-चु-टु-तु-पु-एते उदितः' इति । एतेन 'कुचु' इत्यादिषूकारग्रहणसामर्थ्यादित्संज्ञेत्यपास्तम् । कुत्वमिति-सुयुज्शब्दे 'चोः कुः' इत्यनेन जकारस्य कुत्वं गकारः । ननु निरुपपदादेव युजः क्विनो विधानेनात्र क्विनोऽभावेऽपि 'क्विप् च' ( ३-२-७६ ) इति क्विबन्तसुयुज्शब्देऽपि क्विन्प्रत्ययो यस्माद् दृष्ट इति व्युत्पत्त्या 'क्विन्प्रत्ययस्य कुः' इति क्विबन्तेऽपि स्यादत आह—क्विन्प्रत्ययस्येति । तस्यासिद्धत्वात् 'चोः कुः' इत्यनेनैवात्र कुत्वमिति भावः ।

ननु निरुपपदाद्युजः क्विन एव विधानेन तस्य 'युङ्' इत्येव स्यान्न तु 'युग्' इति चेन्न, 'ऋत्विक्' इति सूत्रे 'युजेरसमासे' इत्यत्र च यदि 'इक्श्तिपौ धातुनिर्देशे' इति विहितेक्प्रत्ययान्तस्यैव निर्देशो यद्यमविष्यत्तदा 'युजिर् योगे, युज समाधौ' उभयोस्तत्र ग्रहणेन उभाभ्यां क्विन् एवाभविष्यदिति 'युक्' इत्यस्यासिद्धिः स्यात् ।

तदेव तु नात्र, उभयसूत्रेऽपि लक्ष्यानुसारात् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति न्यायाच्च, 'युजिर् योगे' इत्यत्र प्रतिपदोक्तस्य 'युजि' इत्यस्यैवानुकरणं सूत्रे । तथा च 'युज समाधौ' इत्यतः क्विन् न स्यात् । तदभावे नुमपि न स्यादिति 'युक्' इति सिध्येत् । तदाह—धातुपाठेति धातुपाठे 'युजिर्' इति इतीकारविशिष्टपठितस्यैवानुकरणं सूत्रयोः । तेनेति—उभयसूत्रे 'युजिर्' इतीकारान्तस्यानुकरणेन 'युज समाधौ' इत्यदन्तस्य दैवादिकस्य न ग्रहणमिति नात्र क्विन्, किन्तु क्विबेवेति 'युक्' इति स्यात्तदाह-युज्यते-समाधत्ते इति युक्=समाधिकर्ता ।

यत्तु तत्त्वबोधिनीकाराः—'युजेरसमासे' इत्यत्रैव 'युजि' इति धातुपाठपठितेकारविशिष्टस्यानुकरणम् । 'युज समाधौ' इत्यतोप्युपपदाभावे क्विन् स्यादेव 'ऋत्विक्' इत्यादिसूत्रे युजितीका निर्देशादिति तच्चिन्त्यम्, तुल्ययुक्त्योभयत्रापि धातुपाठपठितेकारविशिष्टस्यैवानुकरणात् । 'खजि गतिवैकल्ये' इत्यतः 'क्विप् च' ( ३-२-७६ ) इति क्विपि इदित्त्वान्नुमि कृदन्तत्वेन प्रातिपदिकत्वात्सौ तस्य लोपे 'खन् ज्' इति स्थितौ संयोगान्तलोपे 'खन्' इति । संयोगान्तलोपाभावेऽनुस्वारपरसवर्णयोः 'खञ्जौ' इत्यादि । परसवर्णस्यासिद्धत्वादत्रापि कुत्वाभावो बोध्यः । 'राजृ दीप्तौ' इत्यतः क्विपि राजशब्दो निष्पन्नः । तत्र विशेषमाह—व्रश्चेति षत्वमिति ।

जश्त्वेन डकारः, 'वाऽवसाने' इति विकल्पेन चर्त्वम्, तदाह-'राट्, राड्' इति । भ्यामादौ 'स्वादिषु' इति पदत्वात् षत्वजश्त्वे 'राड्भ्याम्' इत्यादि । सुपि 'डः सि धुट्' इति वा 'धुटि' 'राड्धसु' इति स्थितौ धस्य चर्त्वेन तकारे कृते डस्यापि चर्त्वम् । 'लक्ष्ये लक्षणम्' इति न्यायविरोधस्तु न, वर्णभेदेन लक्ष्यभेदात् । तदाह—'राट्त्सु, राट्सु' इति ।

एवं विभ्राट्। देवेट् देवेजौ, देवेजः। विश्वसृट्, विश्वसृड्। विश्वसृजौ। विश्वसृजः। इह सृजियज्योः कुत्वं नेति क्लीबे वक्ष्यते। परिमृट्। षत्वविधौ राजिसाहचर्यात् 'टुभ्राजृ दीप्तौ' इति फणादिरेव गृह्यते। यस्तु-'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति तस्य कुत्वमेव, विभ्राक् विभ्राग्। विभ्राग्भ्याम् इत्यादि। 'परौ व्रजेः षः पदान्ते' परावुपपदे व्रजेः क्विप्स्याद्दीर्घश्च पदान्तविषये षत्वं च। परित्यज्य सर्वं व्रजतीति परिव्राट्। परिव्राजौ। परिव्राजः।

*विश्वस्य वसुराटोः।* [ ६-३-१२८ ]

**विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे। विश्वं वसु यस्य स विश्वावसुः।**

---

**विभ्राडिति**—फणादौ पठिताद् 'भ्राजृ दीप्तौ' इत्यतः विशेषेण भ्राजते=दीप्यते इत्यर्थे क्विपि, 'यज देवपूजासङ्गतिकरणदानेषु' इत्यतश्च देवान् यजते इत्यर्थे क्विपि च 'विभ्राज् देवेज्' शब्दौ निष्पन्नौ। यजादित्वात्संप्रसारणे पूर्वरूपगुणयोः 'देवेज्' इति। सौ षत्वजश्त्वे 'वाऽवसाने' इति वैकल्पिकचर्त्वे 'देवेट् देवेड्' इत्यादि **विश्वसृडिति**-विश्वं सृजतीत्यर्थे 'सृज विसर्गे' इत्यतः क्विपि 'व्रश्च' इत्यादिना षत्वादौ **'विश्वसृट्'** इत्यादि। विश्वसृड्=ब्रह्मा। तदुक्तम्—'स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः' इति ( अम० १ का० स्वर्वर्ग १७ श्लोक )। ननु 'ऋत्विक्' इत्यत्र यजधातोः क्विनो दृष्टतया क्विबन्तेऽपि देवेज्-शब्दे क्विन्प्रत्ययो यस्माद् दृष्ट इति बहुव्रीहिणा 'क्विन्प्रत्ययस्य' इति कुत्वं कुतो नेत्यत आह—**इहेति—वक्ष्यते इति**। 'सृजिदृशोर्झल्यमकिति' ( ६-१-४८ ) इति सूत्रे 'अमि सङ्ग्रहणम्' इति वार्तिकमुपक्रम्य 'क्विबन्तस्य मा भूत् रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्।

'काम्यच् च' ( ३-१-९ ) इति सूत्रे ककारस्येत्त्वे फलं दर्शयितुम् 'इह तर्हि प्रयोजनम्। उपयट्काम्यति। कितीति सम्प्रसारणं यथा स्यात्' इति भाष्यप्रयोगाच्च सृजियज्योः 'क्विन्प्रत्ययस्य' इति कुत्वं नेति क्लीबे वक्ष्यते इत्यर्थः। यद्वा 'व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवाद इति वक्ष्यते' इत्यर्थः। **परिमृडिति**-'मृजूष् शुद्धौ' इत्यतः क्विपि 'क्ङिति च' इत्यनेन 'मृजेर्वृद्धिः' इत्यस्य निषेधे षत्वे परिमार्ष्टीति **परिमाट्** = शोधनकर्ता। 'विभ्राक्' इति कुत्वघटितस्यापि साधुत्वमाह—**षत्वविधाविति**—'व्रश्चभ्रस्ज' इति सूत्रे इत्यर्थः। **राजिसाहचर्य्यादिति**—फणादिगणपठितराजिसाहचर्य्यादित्यर्थः।

परिव्राज्शब्दं व्युत्पादयितुमाह—**परौ व्रजेरिति**—'क्विब्वचिप्रच्छि' इति ( ३०२ पा० ५७ सू० ) सूत्रात् क्विबिति दीर्घ इति चानुवर्तते तदाह—**परावुपपदे व्रजेः क्विब् दीर्घश्चेति, पदान्ते षत्वञ्च** इत्यर्थकेन 'परौ व्रजेः' ( ३०२ पा० ५६ सू० ) इति सूत्रेण व्युत्पाद्यते। पदान्ते इत्यस्य **षत्वेनैव सम्बन्धो न तु क्विन्दीर्घाभ्याम्**, 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायात्।

यदा तु 'अन्येभ्योऽपि दृश्यते' ( ३-२-१७८ ) इति सूत्रे कार्य्यविशेषसंग्राहकाद् दृशिग्रहणाद्दुणादिसूत्रस्य तत्समानाकारकस्य एतत्सूत्रस्थवार्तिकस्य च प्रत्याख्यानं तदा क्विप् दीर्घयोर्दृशिग्रहणेनैव सिद्धत्वात् 'परौ व्रजेः' ( ३०२ पा० ५९ ) इत्युणादिसूत्रेण षत्वमात्रं विधेयम्।

वस्तुतस्तु 'दृशिग्रहणाद् वार्तिकार्थरूपोणादिसूत्रार्थस्य च संग्रहो लक्ष्यैकचक्षुष्काणामेव न लक्षणैकचक्षुष्काणाम्। अतः वार्तिकं तत्समानाकारकं सूत्रञ्च कर्तव्यमेव। तदाह—**परावुपपदे इति**। 'येन नाप्राप्ते' इति न्यायेन षत्वञ्च 'चोः कुः' इति कुत्वस्यापवादः। **परिव्राडिति**—संन्यासीत्यर्थः। 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्य्यपि मस्करी' ( अम० २ का० ब्रह्म० ४१ श्लो० ) इत्यमरात्। विश्वस्मिन् वस्तुनि राजते = दीप्यते इति **विश्वराट्** = परमात्मा। 'सत्सूद्विष' इति क्विपि उपपदसमासे विश्वराज्शब्दः सिद्धः। तत्र विशेषं दर्शयितुमाह—

**विश्वस्य वसुराटोः** ( ६-३-१२८ )। 'ढ्रलोपे' इत्यतः 'दीर्घः' इति सम्बध्यते। **वस्विति** 'वसु मह्देऽग्नौ योक्त्रेऽथौ वसु तोये धने मणौ' इति कोशात् 'वसु' धनम्। **विश्वावसुरिति—इदं**

राडिति पदान्तोपलक्षणार्थम् । चर्त्वमविवक्षितम् । विश्वाराट्, विश्वाराड् । विश्व-
राजौ । विश्वराजः । विश्वाराड्भ्याम्-इत्यादि ।

*स्कोः संयोगाद्योरन्ते च* । [ ८-२-२९ ]

पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् ।

---

प्रासङ्गिकमुदाहरणम् । 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' ( अमर १ का० स्वर्गव० ५२ श्लो० ) 'आद्यशब्देन' तुम्बुरु-विश्वावसु-चित्ररथादीनां संग्रहः । देवगायका एते । 'आदित्यविश्व-वसवः' इत्यमरे तु न दीर्घः, 'नरे संज्ञायाम्' ( ६-३-१२६ ) इत्यतः 'संज्ञायाम्' इत्यस्यापकर्षणात् । पूर्वोत्तरपदेन यत्र संज्ञा गम्यते तत्रैव विश्वशब्दस्य दीर्घविधानात् अमरे तु आदित्यादयः शब्दाः गणदेवतावाचकाः समूहीभूतदेवविशेषवाचकाः ।

तदुक्तं शब्दस्तोमनिधौ 'आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः । वसवश्चाष्ट संख्याताः षट्त्रिंशत् तुषिता मताः ॥ १ ॥ आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः । महाराजिक-नामानो द्विशते विंशतिस्तथा ॥ २ ॥ साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः ।' इत्युक्त-तत्तत्संख्याभेदान्वितेषु आदित्यादिषु । ततश्चामरे 'वसु' इति भिन्नार्थकम्, इति, न विशिष्टे संज्ञावाचकत्वम् ।

ननु 'राट्' इति कृतचर्त्वानुकरणस्य सूत्रे निर्देशात् जश्त्वे सति दीर्घो न स्यात् । किञ्च एतत्सूत्रदृष्ट्या चर्त्वस्यासिद्धतया राट्परत्वं दुर्लभमत आह—**राडिति पदान्तोपलक्षणार्थमिति** तेन यत्र 'राज्' इत्यस्य पदान्तत्वं तत्र दीर्घ इति फलति । **विश्वराजाविति** । अत्र न राजित्यस्य पदा-न्तत्वमित्यतो दीर्घाभावः । **चर्त्वमविवक्षितमिति**—चर्त्वं स्वरूपबोधनाभिप्रायेण न विवक्षितं, किन्तु उपलक्ष्यीभूतपदान्तत्वबोधनाभिप्रायेण तु विवक्षितमित्यर्थः । अन्यथा अविवक्षितस्योक्तौ पाणिने-रुन्मत्तत्वापत्तिर्दुर्वारा ।

**विश्वाराट्, विश्वाराडिति**—चर्त्वस्य पदान्तोपलक्षणत्वेन जश्त्वपक्षेऽपि दीर्घः । ननु 'चोः कुः' (८-२-३०) इति दृष्ट्या 'व्रश्च' इति (८-२-३६) षत्वस्यासिद्धतया कुत्वेन भाव्यमिति चेन्न, चवर्ग-व्रश्चादिषत्वविषये षत्वस्य कुत्वापवादत्वेन यं प्रति यस्यापवादत्वं तं प्रति तस्यासिद्धत्वं न भवतीति नियमात् । अत एव 'हो ढः' इति ढत्वदृष्ट्या 'दादेर्घः' इत्यस्यासिद्धत्वं न । **विश्वराजाविति**— पदान्तराज्शब्दपरत्वाभावान्न दीर्घ इति भावः । अजादौ स्वादौ पूर्वस्य 'असर्वनामस्थाने' इत्यनेन पदत्वनिषेधात् । 'भ्रस्ज पाके' इत्यतः क्विपि 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे च निष्पन्नः 'भृस्ज्' इति शब्दस्तत्र विशेषमाह—

**स्कोः संयोगाद्योरन्ते च** (८-२-२९) इति । 'पदस्य' इत्यधिक्रियते । 'झलो झलि' इत्यतो झलीति चशब्दबलादनुवर्त्तते । 'संयोग' इति लुप्तषष्ठीकं पदम्, तत्र 'पदान्ते' इत्यस्य 'झलि' इत्यस्य चान्वयेन 'सविशेषणस्य वृत्तिर्न' इति समासनिषेधात् । तथा चाह—**पदान्ते झलि च यः संयोग** इति । तत्र पदान्ते इत्यस्य पदस्य योऽन्तावयवस्तत्र विद्यमानो यः संयोगस्तदाद्योः सकारककारयोर्लोप इति तु नार्थः, 'भृज्जौ' इत्यादावपि 'भृस्ज् औ' इति पदस्यान्तावयवः 'औ' इति समुदायस्तदादेः सकारस्य लोपापत्तेः । अतः 'अन्त'शब्दोऽत्रावसानपरः । तथा च पदस्य यदवसानं तदव्यवहितपूर्वो यः संयोगस्तदाद्योः सकारककारयोर्लोप इत्येवार्थः । एवञ्च 'भृस्ज् औ' इति स्थितौ अवसाने परतः 'स्ज् औ' इति स च न संयोगः । यश्च 'स्ज्' इति संयोगः स न अवसानाव्यवहितपूर्व इति न दोषः । यद्वा 'पदान्ते' इति षष्ठ्या विपरिणम्यते पदान्तस्य संयोगस्येत्यर्थः ।

ननु झलिपरे यः संयोग इत्यर्थेऽपि काष्ठे शक्नोति 'काष्ठशक्' 'काष्ठशक् स्याता' इत्यत्र झल् यकारस्तस्मिन् परे संयोगः 'क्स्' इति तदादेः सकारस्य लोपापत्तिरिति चेन्न, 'परेश्च घाङ्कयोः' ( ८-२-२२ ) इति सूत्रे भाष्ये 'काष्ठशक् स्याता-इत्यत्र ककारलोपमाशङ्क्य 'सङ्हि' इति वचनान्न

भृड् भृट् । सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः, भृज्जौ । भृज्जः । 'ऋत्विग्-' इत्यादिना ऋतावुपपदे यजेः क्विन्, क्विन्नन्तत्वात्कुत्वम्, ऋत्विक्, ऋत्विग् । ऋत्विजौ । ऋत्विजः । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः, ऊर्क्, ऊर्ग् । ऊर्जौ ।

---

भवति' इत्युक्तम् । तत्र 'सङ्' इति प्रत्याहारः सनः सशब्दादारभ्य आमहिङो ङकरात् । तथा च झलादौ सङि प्रत्यये परे यः संयोगस्तदाद्योर्लोप इत्यर्थेनादोषात् । यद्वा तत्रैव भाष्ये 'काष्ठशगेव नास्ति कुतः काष्ठशक् स्थाता' इति भाष्येण ककारान्तधातुभ्यः क्विपोऽनभिधानात् ।

न च 'पृथक् स्थाता, पयस्थितिः' इत्यादिप्रयोगाणां लोकप्रसिद्धत्वेनानभिधानस्य वक्तुमशक्यतया तत्र दोषतादवस्थ्यम्, 'सङीति वक्तव्यम्' इति वार्त्तिकेन 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रारम्भसामर्थ्येन 'झलो झलि' इत्यस्य झलादौ प्रत्यये इत्यर्थकस्य 'झलि' इत्यस्यार्थाधिकारानुरोधात् 'स्कोः' इति सूत्रेऽपि तदर्थकत्वेनादोषात् ।

नच 'उदःस्था' इति सूत्रम् 'उत्थ्थानम्' इत्यादौ 'झरो झरि' इति लोपस्याभावे थकारद्वयश्रवणार्थं चरितार्थम्, **व्यञ्जनपरस्यानेकस्यैकस्य वा** 'न व्यञ्जनपरस्यानेकस्यैकस्य वा····श्रवणं प्रति विशेषोऽस्ति' इति 'असिद्धवदत्राभात्' ६-४-२२ ) सूत्रभाष्योक्तन्यायेन लोपाभावेप्यक्षतेः, 'सङीति वक्तव्यम्' इति वार्तिकप्रत्याख्यानपरभाष्येणैषामनभिधानाच । झलि किम् 'भ्रष्टा' इत्यत्र सस्य लोपो यथा स्यात् । 'भृस्ज् स्' इति स्यितौ 'हल्ङ्याब्भ्यः' इति सोर्लोपे 'स्कोः' इति सस्य लोपे च 'व्रश्च' इत्यनेन जस्य षत्वे जश्त्वचर्त्वयोः **'भृट्, भृड्' इति** । यद्यप्यत्र संयोगादिलोपाभावेऽपि जस्य संयोगान्तलोपे सस्य 'व्रश्च' इति षत्वेऽपि रूपं सिध्यति । तथाऽपि संयोगादिलोपस्य संयोगान्तलोपापवादतया तेन लोपस्यैवोचित्यात् । **तस्येति**—सकारस्येत्यर्थः ।

**तस्येति**—शकारस्येत्यर्थः । न च जश्त्वस्यासिद्धत्वाद् 'व्रश्च' इति शस्य षत्वमेव स्यान्न जकार इति वाच्यम्, षत्वदृष्ट्या श्चुत्वस्यासिद्धतया शकाराभावेन षत्वाप्राप्तेः शान्तस्य धातोरेव षत्वविधानाच्च । भ्यामादौ 'स्वादिषु' इति पदत्वात्संयोगादिलोपे 'व्रश्च' इति जस्य षत्वे जश्त्वे च **'भृड्भ्याम्'** इत्यादि । ऋतावुपपदे यजधातोः **'ऋत्विग्'** इति क्विनि **ऋत्विगिति**—'ऋ गतौ' इत्यतः 'अतेश्चतुः' ( १-पा० ७२ सू० ) इति तुप्रत्ययकिदित्यनुवर्तते गुणाभावः । अर्च्छति = पुनः पुनरागच्छतीति ऋतुः । **कुत्वमिति**—'क्विन्प्रत्ययस्य' इत्यनेन । ऋतुपदेनात्र लक्षणया दक्षिणाद्रव्यलाभो विवक्षितः । तन्निमित्तीकृत्य यो यजति स ऋत्त्विक् = याज्ञिकः ।

वस्तुतस्तु 'ऋत्विक्' शब्दो यज्ञसम्बन्धिपुरुषविशेषे रूढः—इत्युक्तम् । 'चोः कुः' इति कुत्वेन सिद्धिस्तु न, 'व्रश्च' इति षान्तस्य कुत्वापवादत्वात् । 'कुत्वं तु' 'युज समाधौ' 'युक्' इत्यादौ चरितार्थम् । 'क्विन् प्रत्ययस्य' इति तु क्विन्विधानसामर्थ्यात् षत्वं तु क्विन्प्रत्ययाभावे 'षष्टा' इत्यादौ चरितार्थम् ।

**ऊर्क् ऊर्गिति**—'ऊर्ज बलप्राणनयोः' इति चौरादिकात् 'भ्राजस' इति चर्त्वविकल्पः । कुत्वे णिलोपस्य स्थानिवत्त्वं न तु 'पदान्त' इति निषेधात्, 'पूर्वत्रासिद्धीये' इति निषेधाच्च । अन्तेषु 'अवे यजः' ( ३- -७२ ) इति ण्विन्त 'अवयाज्' शब्दस्तु नोदाहृतः, तस्य छान्दसत्त्वेन वैदिके एव वक्तुमुचितत्वात् । पदत्वभाविनि उस्प्रत्ययविधाने नासन्तत्वाच्च सौ 'अवयाः' इति न ण्विन्नन्तः 'श्वेतवहादीनां डस्य दस्येति वक्तव्यम्' इति विहितेनापवादेन ण्विनो बाधात् ।

ननु 'श्वेतवहादीनां रुः पदस्य' इति रुत्वमेवान्त्यस्य विधीयतां किं उस्विधानेनेति चेन्न, उस् वक्तव्यः । किम् प्रयोजनं वर्यर्थम्, क्रियते वर्यं निपातनम् । 'अवयाः, श्वेतवाः' इति । तन्न वक्तव्यम्, अवश्यं तद्वक्तव्यम् उसारम्भेऽपि सम्बुद्धौ दीर्घार्थम्, तर्हि उस् न वक्तव्यः, उसपि वक्तव्यः श्वेतवोभ्यामित्यर्थम्' इति भाष्यविरोधात् । णिन्नन्तस्य रुत्वविधाने वृद्धौ सत्यामतः परत्वाभावा-

उर्जः ॥ इति जान्ताः ॥ त्यदाद्यत्वं पररूपत्वं च ।

*तदोः सः सावनन्त्ययोः* । [ ७-२-१०६ ]

दुत्वानापत्तिरित्यर्थः । डस्मात्रविधाने 'अत्वसन्तस्य' इति दीर्घस्य सम्बुद्धौ निषेधाद् दीर्घानापत्तिरिति भावः ।

वस्तुतस्तु 'श्वेतवहादीनां डस्पदस्य' इति वार्त्तिकेन 'श्वेतवहादिसम्बन्धिनो ण्विनः प्रत्ययस्य उसादेशस्तदन्ते पदस्य भावित्वे' इत्येवं विधाने न कोऽपि दोषः । एतेन 'वा स्वरूपः' इति न्यायेन डसविषये ण्विन्नपि स्यादिति परास्तम्, आदेशविषये तत्प्राप्त्यभावात् । इति जान्ताः ।

**अथ दान्तानाह**—यद्यपि जान्तात्परम् क्रमेण वान्ताः 'क्लीबृ अधार्ष्ट्ये' इत्यादितः क्विपि क्लीब् क्लीबौ इत्यादयः 'अग कुटिलायां गतौ' इत्यतः क्विपि 'अग्, अगौ' इत्यादयो गान्ताः, 'जुड बन्धने' इत्यादितः क्विपि 'जुड्' 'जुडौ' इत्यादयः प्रयोगा उदाहर्तुमुचितास्तथाप्यप्रसिद्धत्वान्नोदाहृताः ।

'त्यज हानौ' त्यजति विशेषयतीति 'त्यद्' तनुते विस्तृतो भवतीति 'तद्' 'यज देवपूजासङ्गतिकरणदानेषु' यजते = सर्वत्र सङ्गतो भवतीति 'यद्' 'त्यजितनियजिभ्यो डित्' ( उ० १ पा० १३२ सू० ) अत्र पूर्वतः 'अदिः' इत्यनुवर्तते । एभ्योऽदिः स्यात्स च डित्' इत्यदि प्रत्यये डित्वाट्टिलोपे पूर्वोक्ताः शब्दाः सिध्यन्ति । एतेषां ब्रह्मवाचकत्वे नपुंसकत्वम् । सर्वनामत्वाभावश्च संज्ञात्वात् । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीता ।

बुद्धिस्थपरामर्शकत्वे सर्वनामत्वम् त्रिलिङ्गकत्वञ्च । यच्छब्दो द्विविधः—वर्तमानकालिकप्रक्रमविषयवाचकः, भूतकालिकप्रक्रमविषयवाचकश्च ।

उभयत्र प्रक्रमश्च, एवं तच्छब्दोऽपि । प्रक्रम्यमाणवाचक एव यच्छब्दस्तत्पदमपेक्षते, तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितो यो घटत्वादिरूपो धर्मस्तदवच्छिन्ने यत्पदस्य शक्तिस्वीकारात् । एवं यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयताऽवच्छेदकत्वोपलक्षितघटत्वाद्यवच्छिन्ने तत्पदस्य शक्तिर्ज्ञेया ।

अन्योन्याश्रयस्तु न, तत्पदप्रतिपाद्यत्वप्रकारकज्ञानानुकूलतात्पर्य्यज्ञानस्य तत्पदजन्यबोधात् प्रागपि प्रकरणादिना सुग्रहत्वात् । तथा च प्रकरणादिज्ञाने तत्पदप्रतिपाद्यत्वजनकवक्तृतात्पर्य्यविषये यच्छब्दस्य शक्तिः पर्य्यवस्यति । एवं प्रकरणादिज्ञातयत्पदप्रतिपाद्यत्वानुकूलवक्तृतात्पर्य्यविषये तत्पदस्य शक्तिरित्यन्यत्र विस्तरः ।

प्रक्रान्तवाचकयच्छब्दतच्छब्दयोस्तु यत्किञ्चित्पदोपस्थापितेऽप्यन्या शक्तिर्बोद्धव्या । यथा 'यं सर्वशैलाः परिकल्प्य वत्सम्' इत्यत्र हिमालयपदेन प्रक्रान्ते यत्पदस्य शक्तिः । अत्र न तत्पदापेक्षा । एवम् 'तदन्वये शुद्धिमति' इत्यत्र पूर्वप्रयुक्तवैवस्वतपदोपस्थाप्ये तत्पदस्य शक्तिः । अत्रापि न यत्पदापेक्षा ।

त्यच्छब्दश्च तत्पदपर्य्यायः । 'यो वा स्यो वा भवाम्यहम्' इति वेणीसंहारे । त्यद्शब्दात् स्वादिविभक्तावागतायां सर्वत्र 'त्यदादीनामः' इति दस्यात्वे 'अतो गुणे' इति पररूपे च त्यच्छब्दोऽदन्तः सम्पन्नस्तदाह—त्यदाद्यत्वञ्चेत्यादि । तस्य सौ विशेषमाह—

तदोः सः सावनन्त्ययोः ( ६-२-१०६ ) इति । 'अङ्गस्य' इत्यधिकृतम् । 'त्यदादीनामः' इत्यतः 'त्यदादीनाम्' इत्यनुवर्तते । तत्र 'अङ्गस्य' इत्यस्यावयवावयविभावसम्बन्धेन त्यदादावन्वयः, त्यदादीनामित्यस्यावयवावयविभावसम्बन्धेन तदोरन्वयः । 'अनन्त्ययोः' इत्यपि अभेदेन तदोरन्वेति । 'सौ' इत्यपि अव्यवहितपूर्वत्वसंबन्धेन तदोरेवान्वेति । तदोरित्यत्र तकाराकारः, 'सः' इत्यत्राकारश्च उच्चारणार्थः । तथा च अङ्गावयवत्यदादीनामवयवयोः सुप्रत्ययाव्यवहितपूर्वयोरनन्त्ययोस्तदोः सः स्यादित्यर्थः ।

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे। स्यः, त्यौ, त्ये। त्यम्, त्यौ, त्यान्। सः, तौ, ते। परमसः, परमतौ परमते। द्विपर्यन्तानामित्येव, नेह—त्वम्। न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अतित्वमिति गौणे चरितार्थत्वात्। संज्ञायां गौणत्वे चात्वसत्वे न, त्यद् त्यदौ, त्यदः। अतित्यद्, अतित्यदौ, अतित्यदः। यः, यौ, ये।

---

तत्फलितमाह—त्यदादीनां तकारेत्यादि। ननु सुप्रत्ययाव्यवहितपूर्वयोस्त्यदादीनामनन्त्ययोस्तदोर्दुर्लभत्वमिति चेन्न, 'येन नाव्यवधानाम्' इति न्यायेन अकारातिरिक्तवर्णव्यवधानशून्ययोरित्यर्थात्। 'त्यौ' इत्यादौ सुपरत्वाभावान्न सत्वम्। सर्वत्र शेषं सर्ववद्रूपम्। परमस इति—अत्रापि अङ्गावयवस्य त्यदादेः सत्त्वात्। यद्वा त्यदाद्यन्तं यदङ्गं तदवयवयोस्तदोरित्यर्थात्। ननु त्यदादिर्यस्य समुदायस्य स त्यदादिरित्यर्थात् सर्वाद्यन्तर्गतकिम्शब्दान्तसमुदायस्यापि ग्रहीतुं शक्यतया 'त्वम्' इत्यादावपि सत्वं स्यादत आह—द्विपर्यन्तानामिति—तदुक्तं भाष्ये—'त्यदादीनां द्विपर्य्यन्तानामकारवचनम्' इति अत्राकारवचनमुपलक्षणं सकारादीनामपि।

त्यदादीनामित्यस्यानुवृत्त्या 'आतपः' इत्यत्र न सत्वम्। न च 'येन नाव्यवधानम्' इति न्यायेन सौ परे एकवर्णव्यवधाने एव प्रवृत्त्याऽत्र दोषाभावः, एवमपि 'गतः' इत्यादौ दोषस्य सत्त्वात्। 'तदोर्ग्रहणम्' 'यः' इत्यादौ सत्वाभावार्थम्। 'तोः' इति तु नोक्तम्, 'अनेषः' इत्यादौ नञ्समासे 'तस्मान्नुडचि' इति उत्तरपदस्य नुडागमे 'यदागम' इति न्यायेन नकारस्य एतच्छब्दावयवतया सत्वापत्तेः। नुटो बहिरङ्गतया असिद्धत्वं तु न, बहिर्भूतसुनिमित्तकत्वेन सत्वस्यैव बहिरङ्गत्वात्। वस्तुतस्तु सौ परे एकवर्णव्यवहितस्यैव तोः सत्वविधानादत्र दोषाभावात्तदोर्ग्रहणस्य फलं चिन्त्यम्। अनन्त्ययोः किम् 'हे स' परत्वात् त्यदाद्यत्वं बाधित्वा सत्वे हल्ङ्यादिलोपे रुत्वविसर्गयोः 'हे सः' इति स्यात्। इष्यते तु 'हे स' इति। न चासम्बुद्धौ 'अत्वसन्तस्य' इति दीर्घापत्तिः, प्रतिपदोक्तेनानुना साहचर्यान् प्रतिपदोक्तस्यैवासोर्ग्रहणम्। भाष्ये तु 'अनन्त्ययोः' इति प्रत्याख्यातम्—तथाहि 'तस्मादनन्त्ययोरिति वक्तव्यम्। न वक्तव्यम्। एवं वक्ष्यामि 'तदोः सः सौ' ततः 'अदसः' अदसश्च दकारस्य सो भवतीति। इदमिदानीं किमर्थम्? नियमार्थम्।

अदस एव दकारस्य नान्यस्य दकारस्येति यदि नियमः क्रियते, द्यतेरप्रत्ययः (क्विप्) द्यः' इति प्राप्नोति। स्व इति चेष्यते। 'यथालक्षणमप्रयुक्ते' इति। अत्र गौणत्वं नु नाशङ्क्यम्, यस्य गौणत्वं चिकीर्षितं तद्विशिष्टपदप्रयोज्यविशेषणनिरूपितप्रकारताप्रयोजकस्यैव गौणपदेन ग्रहणात् स्वपूर्वत्वेन श्रूयमाणत्व-स्वोत्तरत्वेन श्रूयमाणत्वैतदन्यतरसम्बन्धेन। एतेन 'अनन्त्ययोः' इत्यस्याभावे स्त्रियां 'सा' इति न सिध्येदित्यपि परास्तम्।

नेहेति—युष्मच्छब्दस्य द्विपर्य्यन्तत्यदादिसमुदाये पाठाभावादिति भावः। तकारोच्चारणेति—'त्याहौ सौ' इति सूत्रे तकारोच्चारणसामर्थ्यादित्यर्थः। अन्यथा प्रक्रियालाघवाय 'स्वाहौ' इत्येव ब्रूयात्। गौणे इति—युष्मदस्मदोरादेशानां गौणेऽपि प्रवृत्तिः। अत एव 'प्रत्ययोत्तरपदयोश्च' (७-२-९८) इति सूत्रे भाष्ये 'अतिक्रान्तो युवामतित्वम्' इत्युदाहरणं संगच्छते।

ननु गौणेऽपि सत्वप्रवृत्त्या तकारोच्चारणचारितार्थ्याभावोऽत आह-संज्ञायां गौणत्वे चेति। अत एव 'त्यदादीनामः' (७-२-१०२) इति सूत्रे भाष्ये 'अतितत्, अतितदौ, अतितदः' इत्यत्र सत्वात्वाभावौ संगच्छेते। किञ्च 'सर्वनाम' इति महासंज्ञाकरणेनान्वर्थविज्ञानात् संज्ञोपसर्जनीभूतयोः सर्वादौ पाठाभावः। त्यदिति—'त्यद्' इति कस्यचिन्नाम। अतित्यदिति—त्यमतिक्रान्तोऽतित्यद्। त्यत्कर्मकातिक्रमणकर्ता इत्यर्थे त्यदर्थस्य प्रकारतया भानाद् गौणत्वम्। अन्यपदार्थनिष्ठोपस्थितीयविशेष्यतानिरूपितोपस्थितीयप्रकारतावत्त्वस्यैव गौणत्वात्। यदिति य इति—त्यदाद्यत्वे पररूपत्वे च सर्ववद्रूपाणि। एतच्छब्दस्य त्यदाद्यत्वे पररूपत्वे च सर्ववद्रूपाणि। सौ तु तकारस्य सत्वे 'आदेशप्रत्यययोः' इति षत्वे च विशेषः।

एषः, एतौ, एते । अन्वादेशे तु एनम्, एनौ, एनान् । एनेन । एनयोः । एनयोः ।

*ङे प्रथमयोरम् ।* [ ७-१-२८ ]

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात् ।

*मपर्यन्तस्य ।* [ ७-२-९१ ]

---

**एनमिति**—'द्वितीयाटौस्स्वेनः' इति इत्येनादेशो विशेषः । युष्मदादिशब्दात् **सम्बोधन-विभक्त्यभावे** बीजमाह—

सम्बोध्यत्वञ्च—प्रकृतवाक्यार्थविषयकबोधानुकूलव्यापाराश्रयत्वप्रकारकेच्छोद्देश्यत्वरूपम् । तथा च युष्मदर्थस्थले उच्चारितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छाविषयत्वरूपसम्बोध्यत्वसत्त्वेऽपि बोधानुकूलव्यापाराश्रयत्वप्रकारकेच्छाया अभावान्न सम्बोधनविभक्तिप्रसक्तिः ।

"युष्यसिभ्यां मदिक्" ( उ० १ पा० १३८ ) इति । युष् सौत्रो धातुः । योषति—सेवते इति, अस्यति प्रक्षिपत्यर्थमिति विग्रहे युष्यसिभ्यां मदिक्प्रत्यये युष्मद्, अस्मद् इति ।

स्वसम्बोध्यताऽवच्छेदकत्वोपलक्षितचैत्रत्वाद्यवच्छिन्ने युष्मच्छब्दस्य शक्तिः । स्वशब्देन युष्मच्छब्दोच्चारयिता ग्राह्यः । सम्बोध्यत्वञ्चात्र उच्चारितशब्दजन्यबोधाश्रयत्वप्रकारकेच्छाविषयत्वम् । इच्छाऽपि युष्मच्छब्दोच्चारयितुर्ग्राह्या । तथा च युष्मच्छब्दोच्चारणकर्तृसमवेता या उच्चारितवाक्यजन्यबोधाश्रयत्वप्रकारिका इच्छा तद्विशेष्यताऽवच्छेदकत्वोपलक्षितो यश्चैत्रत्वादिरूपो धर्मस्तदवच्छिन्ने एका शक्तिः ।

'सम्बोधने च' इत्यत्र अस्मच्छब्दस्य तु स्वोच्चारणकर्तृताऽवच्छेदकत्वोपलक्षितचैत्रत्वाद्यवच्छिन्ने एकैव शक्तिः । स्वपदमस्मच्छब्दपरम् । 'गर्ज गर्ज क्षणं मूढ' इत्यादौ देव्या एतद्वाक्योच्चारण-कर्तृत्वाभावाद्बोधानुपपत्तिस्तु नाशङ्क्या, तादृशानुपूर्वीज्ञानरूपसामान्यप्रत्यासत्त्या देवीवाक्यस्यापि ग्रहणात् । अस्मिन् देव्युच्चारितत्वस्य महिषासुरे सम्बोध्यत्वस्य च भ्रमात्तादृशप्रतीत्युपपत्तेः । युष्मदस्मच्छब्दयोर्विशेषं दर्शयितुमाह—

**ङेप्रथमयोरम्** ( ७-१-२८ ) इति । 'ङे' इति चतुर्थ्येकवचनस्यानुकरणं लुप्तषष्ठीकं पृथक् पदम् । प्रथमापदेन प्रथमाद्वितीययोर्ग्रहणं वक्ष्यति । तथा सति समासे 'ङे प्रथमयोः' इति द्विवचनानुपपत्तिः बहुवचनापत्तिश्च स्यात् । अत्र प्रथमापदं प्रथमाद्वितीयारूपसुब्विभक्तिसमुदाये लाक्षणिकम् । उद्भूतावयवभेदविवक्षया 'प्रथमयोः' इति द्विवचनम् । अत्र च भाष्यमेव मानम्—'कयोरिदं प्रथमयोर्ग्रहणम् ? किं विभक्त्योराहोस्वित्प्रत्यययोः । विभक्त्योरित्याह' इति, 'यत्तर्हि युष्मदस्मदोरनादेशे द्वितीयायाश्चेत्याह तज्ज्ञापयत्याचार्यो विभक्त्योर्ग्रहणमिति' इति च ।

अयम्भावः—'प्रथमयोः' इत्यनेन प्रथमाद्वितीयविभक्त्योर्ग्रहणम् इत्यत्र 'द्वितीयायाञ्च' इति सूत्रमेव ज्ञापकम् । तद्धि द्वितीयाया अमादेशे 'युष्मदस्मदोरनादेशे' इत्यात्वाप्राप्त्या आदेशेऽप्यात्वार्थम् । प्रत्यययोर्ग्रहणे आदेशाभावेन 'युष्मदस्मदोः' इत्येवास्तु सिद्धे तद्वैयर्थ्यं स्पष्टमेव । 'योऽचि' इति यत्वबाधनार्थन्तु न, 'योऽच्यापि' इति न्यासेन द्वितीयायां यत्वाप्राप्तेः । आचिति प्रत्याहारश्चातः ।

वस्तुतस्तु लक्षणाया नोपयोगः, लोके 'एषु छात्रेषु प्रथमौ द्वावानय' इत्युक्ते प्रथमत्व-समानाधिकरणद्वित्वावच्छिन्नस्य बोधो यथा जायते, तथाऽत्रापि प्रथमापदेनैव प्रथमत्वसमानाधिकरणद्वित्वावच्छिन्नविभक्तिविवक्षायां प्रथमाद्वितीयाविभक्त्योर्ग्रहणं स्यात् । अत एव भाष्ये 'कयोः प्रथमयोः ? विभक्त्योः' इत्युक्तम् ।

**'युष्मदस्मद्भ्यां ङसोऽश्'** ( ७-१-२७ ) इत्यतो 'युष्मदस्मद्भ्याम्' इत्यनुवर्तते 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येत्युपतिष्ठते, तदाह—**युष्मदस्मद्भ्यामित्यादि** । सोरमादेशे कृते मकारस्येत्संज्ञा तु न 'न विभक्तौ' इति निषेधात् । युष्मद् अम्, अस्मद् अम्-इति स्थितौ ।

इत्यधिकृत्य।

*त्वाहौ सौ।* [ ७-२-९४ ]

युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परे।

*शेषे लोपः।* [ ७-२-९० ]

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात्। **'अतो गुणे' 'अमि पूर्वः'** त्वम्। अहम्। ननु 'त्वम् स्त्री' 'अहम् स्त्री' इत्यत्र **'त्व अम्' 'अह अम्'** इति स्थिते, अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप् प्राप्नोति।

**अधिकृत्येति**—अस्य 'कार्याणि वक्ष्यन्ते' इत्युत्तरकालिकक्रिया बोध्या। अत्र 'ङे सुटरम्' इति सुवचम्, सुट एवामादेशस्येष्टत्वात्। शसि तु 'शसो न' इत्यस्य प्रवृत्तेः।

**त्वाहौ सौ** ( ७-२-९४ ) इति। त्वश्चाहश्च त्वाहौ, 'युष्मदस्मदोरनादेशे' ( ७-३-८६ ) इत्यतो युष्मदस्मदोरित्यनुवर्तते। 'मपर्यन्तस्य' इत्यधिकृतम्। तदाह—**युष्मदस्मदोरित्यादि**—युष्मदस्मदोरवयवस्य मपर्यन्तस्येत्यर्थः। यद्यपि युष्मदस्त्वादेशः 'त्वमावेकवचने' इत्यनेनात्र सिद्धस्तथापि युवाम्, युष्मान् वा अतिक्रान्तः 'अतित्वम्' इत्यत्र त्वादेशार्थं सूत्रे त्वग्रहणम्। 'त्वमावेकवचने' इत्यनेन तु नात्र सिद्धिः, एकत्ववाचिन एव तेन त्वादेशविधानादित्यग्रे वक्ष्यते।

न च बहुत्वादिवाचिनो युष्मच्छब्दस्य त्वादेशविधानार्थं त्वादेशस्य चारितार्थ्यात् 'त्वम्' इत्यत्र परत्वात् 'त्वमावेकवचने' (७-२-९७) इति स्यादिति वाच्यम्, 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः।' इत्यनेन त्वाहादेशयोरेव बाधकत्वस्य वक्ष्यमाणत्वात्। 'त्व अद् अम्, अह अद् अम्' इति स्थितौ—

**शेषे लोपः** (७-२-९०) इति 'युष्मदस्मदोरनादेशे' इत्यतः 'युष्मदस्मदोः' इति, 'अष्टन आ' इत्यतः 'आ' इति 'विभक्तौ' इति चानुवर्तते। उक्तादन्यस्य शेषपदार्थत्वेन 'युष्मदस्मदोरनादेशे, द्वितीयायाञ्च, प्रथमायाश्च द्विवचने भाषायाम्' इत्येतैरात्वस्य 'योऽचि' इत्यनेन यत्वस्य च प्रागुक्तत्वेन तन्निमित्तविभक्तेर्भिन्नविभक्तेरेवात्र शेषपदेनात्र ग्रहणम्।

तदुक्तम्—'युष्मदस्मद्भ्यां ङसोऽश्' इति भाष्ये 'यः शेषे लोप आदेशे स विज्ञायते' इति। अनादेशे विभक्तौ आत्वयत्वाभ्यां बाधात् परिशेषादादेशे एव विभक्तौ लोपः स्यादिति शेषे इति विभक्तेर्विशेषणं व्यर्थम्। तदाह—**आत्वयत्वेत्यादि। अन्त्यस्येति**—अलोऽन्त्यपरिभाषया लभ्यमिदम्। इति दकारयोर्लोपे। 'त्व अ अम्, अह अ अम्' इति स्थितौ पररूपे 'त्व अम्, अह अम्' इति दशायाम् 'प्रथमयोः पूर्वः' इति सवर्णदीर्घे प्राप्ते आह—**'अमि पूर्वः'** इति।

शेखरकृतस्तु त्वाहादयो हलन्ता एवादेशास्तदा पररूपस्य प्राप्तिरेव न। एतेन स्त्रियां टाबभावोऽपि व्याख्यातः। तदुक्तं भाष्ये—'एवं सिद्धे सति यच्छेषग्रहणं करोति तस्यैतत्प्रयोजनमवशिष्टस्य लोपो यथा स्यादिति। 'लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः' इति। 'लुप्ते यः शिष्टस्तस्मिन् कार्यस्य टाबभावस्य सिद्धिः।' 'तवममादिषु चादेशे अकार उच्चारणार्थो हलन्ता एवादेशा इति न कश्चित् टाप्प्रसङ्गः' इति कैयटः।

ननु आदेशानां हलन्तत्वे 'त्वाहौ' इति, 'तवममौ' इति च निर्देशौ न सङ्गच्छेते इति चेन्न, उच्चारणार्थाकारस्य सत्त्वात्। उच्चारणार्थानामपीत्संज्ञालोपाभ्यामपहारे गौरवन्तु न शङ्क्यम्, सूत्रे एव तयोः सत्त्वेन प्रयोगसाधुत्वज्ञाने लाघवात्। ननु हलन्ता आदेशा इति पक्षे णिजन्तात् क्विपि मान्तयोर्युष्मस्मशब्दयोर्हलन्तेषु त्वाहाद्यादेशेषु कृतेषु 'शेषे लोपः' इति वकारहकारयोर्लोपापत्तिरिति चेन्न, 'मपर्यन्तस्य' सूत्रभाष्यान्मान्तयोस्तयोरादेशाभावस्यैव लाभात्। 'अवधिद्योतनार्थं परिग्रहणं कर्तव्यम्' इति मपर्यन्तस्येति सूत्रभाष्येण मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशा इत्यस्य प्रतीतेः। **नन्विति**—शङ्कते इत्यर्थः, 'ननु च स्याद्विरुद्धोक्तौ' इत्युक्तेः। **अन्तरङ्गत्वादिति**—टापः परनिमित्तान-

सत्यम् । अलिङ्गे युष्मदस्मदी, तेन स्त्रीत्वाभावान्न टाप् । यद्वा शेष इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया, तेन मपर्यन्ताच्छेषस्य 'अद्' इत्यस्य लोपः, स च परोऽप्यन्तरङ्गे 'अतो गुणे' कृते प्रवर्तते, अदन्तत्वाभावान्न टाप् ।

पेक्षत्वेन अपरनिमित्तकत्वरूपान्तरङ्गत्वादित्यर्थः । सत्यमिति—यद्यपि पररूपादन्तरङ्गष्टाविति सत्यमित्यर्थः । तथाऽपि टापः प्रवृत्तिस्तु न, युष्मदस्मदोर्लिङ्गानुपस्थापकत्वात् । तदाह—अलिङ्गे इति । तदुक्तम्—'साम आकम्' इति सूत्रभाष्ये 'अलिङ्गे युष्मदस्मदी' इति । यद्वा लिङ्गसंख्याकारकनिमित्तिकाया विभक्ति स्तन्निमित्तकपूर्वरूपापेक्षया टापः स्त्रीत्वमात्रापेक्षत्वेनान्तरङ्गत्वादित्यर्थः ।

ननु भाष्ये 'युष्मदस्मदी' इति नपुंसकत्वमसङ्गतम्, लिङ्गाभावादिति चेन्न, युष्मदस्मद्वाच्यस्य लिङ्गस्याभावेऽपि शब्दस्वरूपपरकत्वे नपुंसकत्वसम्भवात् । अत एव सर्वादित्वाभावेन 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषोऽपि न । तेनेति--लिङ्गाभावेनेत्यर्थः ।

ननु 'ङेप्रथमयोः' इति सूत्रे भाष्ये 'आचार्यप्रवृत्तिर्ज्ञापयति—विभक्त्योर्ग्रहणमिति । यदयं 'शसो नः' इति प्रतिषेधं शास्ति । नैष प्रतिषेधः । नत्वमेतद्विधीयते । सिद्धमत्र ( युष्मान् ब्राह्मणान् पश्य अस्मान् ब्राह्मणान् पश्य ) नत्वं 'तस्माच्छसो नः पुंसी'ति । यत्र तेन न सिध्यति तदर्थम् । क्व तेन न सिध्यति । स्त्रियां नपुंसके च 'युष्मान् ब्राह्मणीः, पश्य, अस्मान् ब्राह्मणीः पश्य, युष्मान् ब्रह्मकुलानि पश्य, अस्मान् ब्राह्मणकुलानि पश्येति' इत्युक्तम् ।

'नेतराच्छन्दसि' इति सूत्रे भाष्ये च 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन, त्वं ब्राह्मणकुलम् । अहं ब्राह्मणकुलम् । युवां ब्राह्मणकुले । आवां ब्राह्मणकुले । यूयं ब्राह्मणकुलानि । वयं ब्राह्मणकुलानि । युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन' इति चोक्तं विरुध्येतेति युष्मदस्मदोर्लिङ्गाभावे ।

तस्मात् तयोरपि सलिङ्गत्वं स्वीकार्य्यम् । न चैवं सति 'साम आकम्' इत्यत्रत्याद् 'अलिङ्गे युष्मदस्मदी' भाष्याद् विरोध इति वाच्यम् , तस्य भाष्यस्य लिङ्गबोधसूचकपदान्तरसमभिव्याहाराभावपरकत्वेनाविरोधात् । तथा च युष्मदस्मदोरपि स्त्रीत्वात् टाब् दुर्वार इत्यत आह—

यद्वेति । अधिकरणत्वेति पष्ठ्यर्थे सप्तमीत्यर्थः, मुख्याधिकरणत्वविवक्षायाम् शेषे विभक्ताविव्यर्थे आत्वयत्वनिमित्तेतरविभक्तावित्यर्थः स्यात्तदा शेषग्रहणस्य वैयर्थ्यं स्यात् , तत्र आत्वयत्वाभ्यां लोपस्य बाधात् । तेन 'शेषे' इत्यस्य शेषस्य मपर्य्यन्ताच्छेषस्य लोपः टेर्लोप इति यावत् ।

कस्माच्छेष इत्यवध्याकाङ्क्षायाम् 'मपर्य्यन्तस्य' इत्यपकृष्टं पञ्चम्या विपरिणम्यते—तदाह—मपर्य्यन्तादिति । एतच्च 'त्यदादीनामः' इति सूत्रे भाष्ये 'टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम्' इत्यादिनोक्तम् । नन्वेवमपि 'त्व अद् अम्, अह अद् अम्' इति स्थितौ लोपपररूपयोः प्राप्तयोः पररूपं बाधित्वा परत्वाददो लोपेऽपि 'त्व' इत्यस्य 'अह' इत्यस्य चादन्तात् 'अजाद्यतः' इति टाब् दुर्वारोऽत आह—स चेति-शेषस्य लोप इत्यर्थः । अन्तरङ्गे इति—प्रकृतिप्रत्ययापेक्षलोपापेक्षया तदन्तर्भूतवर्णद्वयनिमित्तकत्वेनान्तरङ्गत्वात् 'असिद्धं बहिरङ्गम्' इति परिभाषया पररूपमेव पूर्वं स्यात् । तदाह—अन्तरङ्गे कृते इति । तथा च पररूपे कृते लोपे सति 'त्व अम् , अह अम्' इति स्थितौ अदन्तप्रातिपदिकाभावान्न टाप् । तदाह—अदन्तत्वाभावादिति ।

नच 'त्वद् अम्, अहद् अम्' इति दशायां मपर्यन्तरूपावधेरभावात् लोपानापत्तिः, 'साम्प्रतिकाभावे भूतपूर्वगतिः' इति न्यायेन लोपप्रवृत्तिवेलायां मपर्य्यन्ताच्छेषाभावेऽपि त्वाहाद्यादेशप्रवृत्तेः पूर्वकालिकमपर्य्यन्ताच्छेषत्वमादाय लोपप्रवृत्तौ बाधकाभावात् । 'टेर्लोपः' इत्येव वक्तव्ये 'शेषे लोपः' इति शेषग्रहणसामर्थ्येन स्थानिभूतादचः पूर्वत्वेन दृष्टस्येव मपर्यन्तात्परत्वेन दृष्टस्येत्यर्थात् ।

ननु चतुर्थीपञ्चमीषष्ठीबहुवचनेषु मपर्य्यन्तस्यादेशाभावेन मपर्य्यन्ताच्छेषस्याभावेन लोपानापत्तिरिति चेन्न,त्वाद्यादेशविधावुद्देश्यतावच्छेदिका याऽऽनुपूर्वी तदवच्छिन्नभिन्नो यो युष्मदस्मदोर्भाग-

परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ।

*युवावौ द्विवचने* । [ ७-२-९२ ]

स्तस्यैव शेषपदार्थत्वेन विवक्षितत्वात् । अस्ति च चतुर्थ्यादिवहुवचनेष्वपि तदवच्छिन्नः 'अद्' इति भागस्तस्यापि लोपः सिध्यति ।

नन्वादेशानामदन्तत्वे 'वार्णादाङ्गं बलीयः' इति न्यायाद् वार्णकार्यपररूपात्पूर्वमेव टिलोपे टाबभावो वक्तुमशक्यः । न च 'गा अ आते' इत्यत्रान्तरङ्गमपि सवर्णदीर्घं बाधित्वाऽऽङ्गत्वात् 'आतो ङितः' इतीयादेशस्य वारणायाङ्गवार्णयोः समानस्थानिकत्वे एव ज्ञापकसाजात्यात्प्रवृत्त्यङ्गीकारेणात्राङ्गस्य टिलोपस्य समानस्थानिकत्वाभावः, अदोऽकारस्य पररूपे लोपे च स्थानितया समानस्थानिकत्वाक्षतेः।

अन्ये तु 'वार्णादाङ्गम्' इति समानाश्रये एव प्रवर्त्तते, न तु व्याश्रये । इह तु लोपे विभक्तिनिमित्तम्, पररूपे तु अकार इति व्याश्रयत्वम् । समानाश्रये उदाहरणन्तु 'कारकः' इति । अत्र वृद्धौ 'अक' इत्यस्य निमित्तत्वमुण्यपि अवयवद्वारा तस्यैव निमित्तत्वमित्याहुरिति चेन्न, 'हलन्ता एवादेशाः' इति कैयटेनैवोक्तत्वेनादोषात् ।

'च्छ्वोः शूडनुनासिके' इत्यत्र सतुग्ग्रहणेन वार्णपरिभाषाया अनित्यत्वज्ञापनेनात्राप्रवृत्तेश्च । ननु टिलोपान्त्यलोपयोरन्यतरस्यैवाश्रयणे 'युष्मभ्यम्' इत्यादौ टिलोपपक्षे हलन्तस्यैव श्रवणापत्तिरिति 'साम आकम्' इति सूत्रभाष्यप्रमाणेन अन्त्यलोपपक्षस्य 'त्यदादीनामः' इति सूत्रस्थभाष्यप्रामाण्येन 'शेषे लोपः' इति सूत्रस्यावृत्त्याऽर्थद्वये तात्पर्य्यकल्पनेनादोषात् ।

वस्तुतस्तु टिलोपो व्यर्थः, सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वात् । न च 'यासयोः' इत्यादिनिर्देशेन टापि कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिरिति वाच्यम्, 'बुद्धौ' इत्यत्र सन्निपातपरिभाषया टाबभावोपपादनपरभाष्यविरोधपरिहाराय उक्तनिर्देशेन सन्निपातपरिभाषाया अनित्यत्वज्ञापनस्यैवौचित्येन लक्ष्यानुरोधेन परिभाषायाः क्वचित्प्रवृत्तेः क्वचिदप्रवृत्तेः कल्पयितुं शक्यत्वात् 'या सा' इत्यत्राप्रवृत्तेः । 'बुद्धौ, 'त्वं स्त्री, अहं स्त्री' इत्यादौ प्रवृत्तेः कल्पनेन न क्वापि दोष इत्याहुः । 'ङे प्रथमयोः' इत्यादिषु 'अङ्गस्य' इत्यधिकारात्तदन्तविधिना तदन्तेऽपि प्रवृत्तिरित्याह—**परमत्वमित्यादि ।**

ननु समासे संहिताकार्य्यस्य नित्यत्वात् पूर्वसवर्णदीर्घे परमास्मच्छब्दात् सौ परादिवद्भावेन 'अस्मद्' इत्यस्याहादेशाशक्त्या 'परमाहम्' इत्यस्यासिद्धिरिति चेन्न, 'पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न' इति परिभाषया दीर्घस्य निषेधात् ।

अत्र च 'नेन्द्रस्य परस्य' इति सूत्रमेव ज्ञापकम् । तदुक्तं भाष्ये—'इन्द्रे' द्वावचावेको यस्येति लोपेनापहृतोऽपर एकादेशेन ततोऽनच्क इन्द्रशब्दः 'न्द्र्' सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरिति' तथा च उत्तरपदस्य वृद्धिनिषेधाय कृतं 'नेन्द्रस्य परस्य' इति सूत्रं पूर्वोक्तपरिभाषां ज्ञापयतीति 'सोमेन्द्रः' इत्यत्र सोम इन्द्र अ इति स्थितौ 'देवताद्वन्द्वे च' इति प्राप्ताया वृद्धेर्निषेधार्थम् । 'नेन्द्रस्य परस्य' इति सूत्रं चरितार्थम् । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये 'अतिक्रान्तो युवामावामिति 'अतित्वम्, अत्यहम्' इत्याद्युदाहरणाद् गौणेऽपि युष्मदस्मदोरादेशाः । 'युवावौ द्विवचने' 'त्वमावेकवचने' इत्यादिषु द्विवचने इत्यादीनि युष्मदस्मदोर्विशेषणानि, न तु विभक्तिपराणि, भाष्ये 'त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम्' इत्युक्तेः । गौणे युष्मदस्मदोरादेशप्रवृत्तौ तु अर्थग्रहणस्य शब्दविशेषणत्वे फलाभावः, युष्मादादेरेव विभक्तिप्रकृतितया तदर्थगतसंख्याया एव विभक्त्यर्थत्वेन विभक्तिविशेषणत्वेऽप्यक्षतेः ।

गौणे प्रवृत्तौ तु समासार्थगतसंख्याबोधिका या काचन विभक्तिरस्तु, तस्यां विभक्तौ समासघटकयुष्मदस्मदोरेकार्थवाचित्वे त्वमावादेशौ द्वित्ववाचित्वे युवावौ भवतः—इत्यग्रे मूले एव वक्ष्यते ।

युष्मद् औ, अस्मद् औ, इति दशायां विशेषमाह—**युवावौ द्विवचने ( ७-२-९२ ) इति।**

द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ।

*प्रथमायाश्च द्विवचने भाषायाम् ।* [ ७-२-८८ ]

इह युष्मदस्मदोराकारोऽन्तादेशः स्यात् । युवाम् । आवाम् । 'औङि' इत्येव सुवचम् । भाषायाम् किम्—युवं वस्त्राणि । युवाम् । आवाम् । मपर्यन्तस्य किम्—

---

'युष्मदस्मदोरनादेशे' इत्यतः 'युष्मदस्मदोः' 'अष्टन आ' इत्यतः 'विभक्तौ' इति चानुवर्तते । 'मपर्यन्तस्य' इत्यधिकृतम् 'अङ्गस्येति च' अत्र द्विवचनपदं न प्रत्ययपरम्, किन्तु उक्तिर्वचनम् भावे ल्युट् । द्वयोर्वचनं द्विवचनं तस्मिन् द्वित्वोक्तौ समर्थयोः युष्मदस्मदोरित्यर्थः—द्वित्वविशिष्टार्थवाचिनोरिति फलितोऽर्थः ।

न च 'कृत्रिमाकृत्रिमयोः' इति न्यायेन प्रत्ययस्यैव ग्रहणं स्यादिति वाच्यम्, तथा सति 'द्वित्वे' इत्येव वक्तव्ये तस्य विभक्तावन्वयेन द्वित्वे या विभक्तिर्द्विवचनमिति यावत्, तत्र परत इत्यर्थेन सिद्धे वचनग्रहणवैयर्थ्यापत्तेः, इत्यतो वचनग्रहणसामर्थ्यादत्र कृत्रिमन्यायबाधः । एवम् 'त्वमावेकवचने' इत्यत्र एकवचनपदमपि यौगिकमेव, न तु कृत्रिमम् । युष्मदस्मच्छब्दान्तं यदङ्गम् तदवयवस्य मपर्यन्तस्य युवावौ स्त इत्यर्थः । तदाह—**द्वयोरुक्तावित्यादि ।** द्वयोरुक्तावित्यर्थस्य फलं गौणे मूले एव स्फुटीभविष्यति । 'युव् अद् अम्, अह् अद् अम्' इति स्थितौ 'शेषे लोपः' इति प्राप्ते तद्बाधकमाह—

**प्रथमायाश्च द्विवचने भाषायाम्** ( ७-२-८८ ) इति । अत्र 'युष्मदस्मदोः' इति चानुवर्तते । 'अङ्गस्य' इत्यधिकृतम् । अङ्गविशेषणतया तदन्तविधौ युष्मदस्मदन्तं यदङ्गं तस्याकारोऽन्तादेशः स्यात् प्रथमाया द्विवचने परे इत्यर्थस्तत्फलितमाह–**इह युष्मदस्मदोरित्यादि ।** अत्र द्विवचनपदेन कृत्रिमस्यैव ग्रहणम् प्रथमाया इति विशेषणसामर्थ्यात् । **इहेति–भाषायां प्रथमाद्विवचने पक्षे** इत्यर्थः । भाषायामित्यस्य लौकिकवाक्ये इत्यर्थः । 'युव् अद् अम्, अह् अद् अम्' इत्यत्र दस्य आत्वे युव् अ आ अम्, अह् अ आ अम्, इति जाते पूर्वयोरकारयोः सवर्णदीर्घे 'युव् आ अम्, अह् आ अम्' इति 'अमि पूर्वः' इति पूर्वपरयोरकारयोः पूर्वरूपे **'युवाम्, आवाम्'** इति सिध्यति । युवावयोरदन्तत्वे तु 'अतो गुणे' इति पररूपमपि बोध्यम् । **सुवचमिति—'औङ्'** इति ओकारविभक्तेः संज्ञेयस्य पूर्वमुक्तत्वेन तत्र चात्वस्येष्टत्वेन सुवचमिति भावः ।

प्रथमायाः किम् ? 'युवयोः, आवयोः' ननु अत्र परत्वाद् 'योऽचि' इति यत्वं स्यात् । एवं 'शेषे लोपः' इत्यस्य प्राप्तया बाध्यसामान्यचिन्ताश्रयणेनोभयोरपवादत्वं स्यात् । किञ्च पुरस्तादपवादन्यायेन 'योऽचि' इत्यस्यैवापवादोऽयं स्यात् । प्रथमाया द्विवचनेऽपि परत्वात् 'शेषे लोपः' इत्यस्य प्रवृत्त्येष्टासिद्धिरपि स्यादिति 'प्रथमायाः' इत्युक्तम् । द्विवचने किम् 'त्वम्, अहम्, यूयम्, वयम्, आत्वं मा भूत्—**युवं वस्त्राणीति**—युष्मद् औ, इति स्थितौ मपर्य्यन्तस्य युवादेशे 'शेषे लोपः' इति लोपे रूपम् 'युवं वस्त्राणि पीवसावसाथे' ।

**मपर्य्यन्तस्य किमिति**—अधिकारसूत्रं किमर्थमिति प्रश्नः । 'मपर्य्यन्तस्य' इत्यवयवस्य स्थानित्वेन निर्देशात् 'युष्मदस्मदोः' इत्यवयवषष्ठी प्रतीयते । मः पर्य्यन्तोऽवधिर्यस्य स मपर्य्यन्तस्तस्य । यद्यपि द्वयोः शब्दयोर्द्वौ मपर्य्यन्तौ इति 'मपर्य्यन्तयोः' इति वक्तव्यं तथापि द्वयोरवयवयोरभेदविवक्षया 'मपर्य्यन्तस्य' इत्येकवचननिर्देशः । तदभावे युष्मदस्मदोरेव स्थानित्वे सम्पूर्णयोस्तयोर्युवावादेशयोः कृतयोरादेशाकारयोरात्वे 'अमि पूर्वः' इति पूर्वरूपे च युवाम्, आवाम् इत्यस्य सिद्धिरिति प्रश्नः ।

आदेशानामदन्तत्वे एव प्रश्नः । आदेशानां हलन्तत्वे तु 'युवाम्, आवाम्' इत्यस्यासिद्धिरेव दोषः ।

साकच्कस्य मा भूत्, युवकाम्। आवकाम्। 'त्वया' 'मया' इत्यत्र 'त्व्या' 'म्या' इति मा भूत्। 'युवकाभ्याम्' आवकाभ्याम्' इति च न सिध्येत्।

---

**साकच्कस्येति**—'अव्ययसर्वनाम्नामकच्प्राक् टेः' (५-३-७१) इत्यधिकृत्य 'अज्ञाते' (५-३-७३) इत्यनेन अव्ययादिभ्योऽज्ञातेऽर्थेऽकज् भवति स च टेः प्राक् इति युष्मदस्मदोः सर्वनाम्नष्टेः प्रागकचि 'युष्मकद् औ, अस्मकद् औ' इति स्थितौ 'ङे प्रथमयोः' इत्यमि 'तन्मध्यपतित-तस्तद्ग्रहणेन गृह्यते' इति न्यायेन अकच्विशिष्टयोस्तयोर्युष्मदस्मद्ग्रहणेन ग्रहणात् साकच्कयोर्युष्मकद्-अस्मकच्छब्दयोर्युवावादेशयोः 'प्रथमायाश्च द्विवचने' इत्यात्वे 'युवाम्, आवाम्' इत्येव स्यात्, इष्यते तु 'युवकाम्, आवकाम्' इति 'मपर्यन्तस्य' इत्यस्य सत्त्वे तु मपर्यन्तयोर्युष्मदस्मदोर्युवावादेशयोः 'युवकाम्' 'आवकाम्' इति सिध्यति।

ननु समुदाययोरादेशेऽपि 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य टेः प्रागकच्' इति व्यवस्थायाः सत्त्वात्।

तदुक्तम्—'अव्ययसर्वनाम्नाम्' (७-३-७१) इति सूत्रे भाष्ये 'अस्तु सुबन्तस्य' अस्य टेः प्रागकजिति शेषः। 'कथं युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोरावकयोरिति। अनोकारसकारभकारादाविति वक्तव्यम्' इति ओकार-सकार-भकारादिभिन्ने सुपि सति सुबन्तस्य टेः प्रागकच्, ओकारादौ सुपि तु सर्वनाम्नष्टेः प्रागकच् इति फलति।

अत्र 'युवाम्, आवाम्' इति परिनिष्ठिते सति टेः प्रागकचि 'युवकाम्, आवकाम्' इतीष्टं रूपं सिध्यत्येवेति नास्ति साकच्कस्यादेशप्रसक्तिरित्यरुचेराह—**त्वया मयेति**—अत्र यदि 'मपर्य्यन्तस्य' इत्यधिकारो न स्यात्तदा 'युष्मद् आ, अस्मद् आ' इति स्थितौ 'त्वमावेकवचने' इत्यनेन सम्पूर्ण-योर्युष्मदस्मदोः 'अनेकाल्' इति परिभाषया सर्वादेशे 'त्व आ, म आ' इति जाते 'योऽचि' इत्यनेन 'अलोऽन्त्यस्य' इति परिभाषया त्वमशब्दयोरन्त्यस्याकारस्य यादेशे **'त्व्या' 'म्या'** इत्यनिष्टं रूपं प्रसज्जेत, तद्वारणाय 'मपर्यन्तस्य' इति, सति तस्मिन् मपर्य्यन्तस्य त्वमादेशयोः त्व अद् आ, म अद् आ, इति जाते 'अतो गुणे' इति पररूपे दस्य यत्वे 'त्वया, मया' इति सिध्यति। ननु सर्वादेशेऽपि 'योऽच्ये' इति न्यस्य त्वमयोरकारस्य एकारादेशे 'एचोऽयव्' इत्ययादेशे 'त्वया, मया' इत्यस्य मपर्य्यन्तस्येति व्यर्थम्।

न चादेशानां हलन्तत्वपक्षे 'अच्ये' इति न्यासे वकारयोरेव एत्वे 'तया' 'या' इत्यापद्येतेति वाच्यम्, 'अच्येक्' इति न्यासेन एगागमे अयादेशे च रूपसिद्धेः। आदेशानामदन्तत्वे तु एगागमे अयादेशे च 'अतो गुणे' इति पररूपमपि कार्य्यमित्यस्वरसादाह—**युवकाभ्यामिति**।

**न सिध्येदिति**—'मपर्य्यन्तस्य' इत्यस्याधिकाराभावे न सिध्येदित्यर्थः। ओकारसकार-भकारादिभिन्ने एव सुबन्तस्य टेः प्रागकच उक्तत्वेन भकारादौ सुपि तु सर्वनाम्नष्टेरेव प्रागकच् स्यात्। तथा च 'युष्मकद् भ्याम्, अस्मकद् भ्याम्' इति जाते तन्मध्यपतितन्यायेनाकच्विशिष्टयो-र्युवावादेशे 'युवाभ्याम्, आवाभ्याम्' इत्यापद्येत। 'मपर्य्यन्तस्य' इत्यधिकारस्य सत्त्वे तु भ्यामि कृतेऽप्यकचि 'युष्म्, अस्म् मात्रस्य युवावयोः, 'युवकाभ्याम्, आवकाभ्याम्' इति सिध्यति। त्रिपथ-गाकारास्तु साकच्कापहारकादेशविषये साकच्के निर्दिश्यमानत्वं नैव तिष्ठति। अत एव 'भिन्धकि' इत्यत्राकचि कृते धित्वं नैव प्राप्नोति, निर्दिश्यमानत्वाभावादेतदर्थकम्। 'यद्येवं 'भिन्धकि, छिन्धकि' इत्यत्र धित्वं न प्राप्नोति। एवं तर्हि धित्वे कृते अकज् भविष्यति इति भाष्यं संगच्छते। तथा च प्रकृते अकचि कृते निर्दिश्यमानयुष्मदस्मदोरभावादादेशाप्राप्त्या साकच्कस्यादेशव्यावृत्त्यर्थं मपर्य्यन्त-ग्रहणं न कर्तव्यमित्याहुः।

ननु अकज्घटिते निर्दिश्यमानत्वं तिष्ठतीति मते तद्व्यावृत्तये 'मान्तस्य' इत्येवोच्यतां किं परिग्रहणेन इति चेन्न, युष्मदादेः किपि 'युष्म् अस्म्' शब्दात् सुपि आदेशाभावार्थं तद्ग्रहणात्।

*यूयवयौ जसि । [ ७-२-९३ ]*

स्पष्टम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्तः, 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति न भवति ।

---

तत्सत्त्वे तु यत्र मान्तादग्रे किञ्चिदवशिष्टं युष्मदस्मदोर्भक्तं वर्तते तत्रैवादेशो न तु मान्तयोः। तदुक्तं भाष्ये 'अवधिद्योतनार्थं परिग्रहणं कर्तव्यम् । 'मान्तस्य' इत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः' इति । 'ङे प्रथमयोः' इत्यनेन जसोऽमि कृते विशेषमाह—

**यूयवयौ जसि** ( ७-२-९३ ) इति 'युष्मदस्मदोरनादेशे' इत्यतः 'युष्मदस्मदोः' इत्यनुवर्तते । 'मपर्यन्तस्य' इत्यधिकृतम् । तथा च 'युष्मदस्मदोर्मपर्यन्तस्य यूय-वय इत्यादेशौ भवतो जसि परे' इति विवरणं स्पष्टमित्यर्थः । 'यूय अद् अम्, वय अद् अम्' इति जाते पररूपे 'यूय् अद् अम्, वय् अद् अम्' इति दशायां 'शेषे लोपः' इत्यदो लोपे **यूयम्, वयम्, इति** । 'अङ्गस्य' इत्यधिकारात्तदन्तेऽपि प्रवृत्त्या आह—**परमयूयमित्यादि** । 'प्रत्ययोत्तरपदयोश्च' ( ७-२-९८ ) इति सूत्रभाष्ये गौणेऽपि आदेशानामुदाहरणदानेन 'प्रथमायाश्च द्विवचने' इति सूत्रे 'द्वित्वे' इत्येव वक्तव्ये 'वचन' ग्रहणसामर्थ्याच्च गौणेऽप्यादेशानामिष्टत्वादाह—**अतियूयमित्यादि** । यत्तु गौणे तदप्रवृत्तौ मानाभावादिति ज्ञानेन्द्रसरस्वतीमहोदयास्तन्न, युष्मदस्मदोः सर्वनामत्वेन संज्ञोपसर्जनीभूतानां सर्वादित्वाभावस्य सर्वसम्मतत्वात् । अतो गौणे प्रवृत्तावेव मानस्यापेक्षितत्वात् ।

**इहेति**— यूयम, वयम् इत्यत्रेत्यर्थः ।'शेषे लोपः' इत्यत्र शेषे इति विभक्तिविशेषणम्, आदेशे विभक्तावित्यर्थः । लोपस्तु युष्मदस्मदोरन्त्यदकारस्यैव । अत एव 'साम आकम्' इत्यत्र 'सामः' इति ससुट्कनिर्देशः संगच्छेत, अन्यथा शेषस्य अद इत्यस्य लोपे अवर्णान्तत्वाभावेन सुटोऽप्राप्त्या तन्निवृत्तये ससुट्कनिर्देशो व्यर्थ एव स्यात् ।

तथा च 'यूय अद् अम्, वय अद् अम्' इत्यदकारस्य लोपे पररूपे हलन्तादेशपक्षे पररूपाभावेऽपि 'यूय अम्, वय अम्' इत्यत्र 'जसः शी' इति अमः शीभावः प्राप्नोति स्थानिवत्त्वेन अमो जस्त्वात् इत्याशङ्क्य परिहरति—

**अङ्गकार्य्ये इति**—अङ्गाधिकारविहिते कार्य्ये कृते सति पुनरङ्गाधिकारविहितकार्यं न भवतीत्यर्थः । 'अङ्गकार्य्ये कृते' इति 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति भाष्योक्तपरिभाषाया आर्थिकार्यकथनम् अङ्गे=अङ्गाधिकारे वृत्तं = वर्तनं यस्य तदङ्गवृत्तं शास्त्रं तस्मिन् कृते सति पुनरन्यस्याङ्गाधिकारीयशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिर्विधानाभाव इति भाष्योक्तपरिभाषार्थः । एषा च परिभाषा 'ज्यादादीयसः' ( ६-४-१६० ) 'ज्ञाजनोर्जा' ( ७-३-७९ ) इति सूत्रद्वये भाष्ये ज्ञापिता । तथा हि—'किमर्थं ज्यात्परस्येयस आत्वमुच्यते । न लोपः प्रकृतः सोऽनुवर्तते । का रूपसिद्धिः ? ज्यायान् । 'अकृत्सार्व' इति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यत् ज्यात्परस्येयस आत्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा—'अङ्गवृत्ते पुनर्वृत्तावविधिरिति' ।

'न ज्ञाजनोर्जः' इत्येवोच्येत । का रूपसिद्धिः ? जानाति जायते 'अतो दीर्घो यञि' इति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यद् दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा-'अङ्गवृत्ते पुनर्वृत्तावविधिरिति' इति च । ननु मूले 'जानाति' इत्यत्र 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वमाशङ्क्य दीर्घादेशविधानसामर्थ्यान्न ह्रस्व इति वक्ष्यते तद्विरुध्येतेति चेन्न, तस्य ग्रन्थस्य अङ्गवृत्तपरिभाषाज्ञापनद्वारा तत्परिभाषया न ह्रस्व इत्यर्थात् ।

ननु 'ज' इत्यादेशे कृतेऽपि 'अतो दीर्घः' इति दीर्घो यदि स्यात् तदा 'पचामि भोः' इतिवत् 'जानामि भोः' इत्यत्र 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्लुतो न स्यात् 'अत आत्' इति सिद्धे तत्रत्यदीर्घग्रहणस्य दीर्घ एव यथा प्लुतो मा भूदेतदर्थत्वात् । न च 'अनन्त्यस्य पदस्य टेः' इत्यर्थात्

'ङे प्रथमयोः–' इत्यत्र मकारान्तरं प्रश्लिष्य 'अम् मान्त एवावशिष्यते, न तु विक्रियते' इति व्याख्यानाद्वा ।

---

कथं पचामि इत्यादौ प्लुतप्राप्तिरिति वाच्यम्, दीर्घग्रहणसामर्थ्येन अन्त्यस्य पदस्य टेः, अनन्त्यस्य पदस्याचश्च प्लुत इति तदर्थात् ।

वाक्यटयोः क्लृप्तसम्बन्धत्यागे मानाभावात् । 'आत्' इति तपरकरणेन तु न प्लुतनिवृत्तिः, तद्दृष्ट्या प्लुतस्यासिद्धत्वात् । अत एव 'गोः, पूः' इत्यादौ दीर्घः । अन्यथा अन्यत्रापि 'इत्, उत्' इति तपरकरणाद् दीर्घो न स्यात् । दीर्घग्रहणात्तु 'यावता विनाऽनुपपन्नम्' इति न्यायेन असिद्धत्वस्यापि बाधः । आ—आ इति प्रश्लेषेण प्लुतवारणं तु तात्पर्य्यग्राहकाभावेन स्वकल्पनया कल्पनं क्लेशकरमुपायान्तरं वेति चेन्न, उक्तज्ञापकपरभाष्यप्रामाण्येन ततः प्लुताप्रवृत्तेरेवेष्टत्वात् ।

'अतो दीर्घः' इति सूत्रे दीर्घग्रहणं तु 'हलि लोपः' इत्यत्र हल्यश् इति वक्तव्ये लोपग्रहणवन्नार्थसाधकम् । वस्तुतस्तु दीर्घग्रहणस्य ज्ञापकत्वपरं भाष्यमेकदेशिमत एव । अत एव ज्ञापनस्य फलम् 'पिबतेर्गुणप्रतिषेधो न वक्तव्यो भवति' इत्येवोक्तं न तु प्रयोजनान्तरमिति दिक् ।

वस्तुतस्तु सति दीर्घग्रहणे तस्य 'सुपि च' इत्यत्रानुवृत्त्या 'ततउ' शब्दादाचक्षाणण्यन्तात् क्विपि णिलोपटिलोपयोः स्थानिवत्त्वेन तुकोऽप्राप्त्या तितशब्दाद् भ्यामि दीर्घग्रहणसत्त्वे 'न पदान्त' इति दीर्घे कर्त्तव्ये स्थानिवत्त्वनिषेधेन 'सुपि च' इति दीर्घे 'तिताभ्याम्' इति सिध्यति । 'आत्' इति न्यासे तु तस्यैव 'सुपि च' इत्यत्रानुवृत्त्या स्थानिवत्त्वनिषेधाप्राप्त्या 'तिताभ्याम्' इत्यत्र दीर्घानापत्तिः, अतस्तत्र दीर्घसिद्धये दीर्घग्रहणस्य चारितार्थ्येन तत्सामर्थ्यात् 'जानामि भोः' इत्यत्र प्लुतनिवर्तनं दुर्वचम् ।

'अङ्गकार्य्ये' इत्यस्य अङ्गाधिकारविहिते कार्य्ये कृते सति पुनरङ्गाधिकारविहितं कार्य्यं न भवतीत्यर्थः । तेन 'त्वम्' इत्यादौ पररूपे कृतेऽपि 'अमि पूर्वः' इति पूर्वरूपस्य नानुपपत्तिः, तयोरङ्गाधिकारस्थत्वाभावात् । नन्वेवं सति 'द्वाभ्याम्' इत्यादावङ्गाधिकारीये त्यदाद्यत्वे कृते अङ्गाधिकारीयं 'सुपि च' इति दीर्घत्वं न स्यादिति वाच्यम्, 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' ( ५–३–९२ ) इत्यत्र 'द्वयोः' इति निर्देशेन तदनित्यत्वज्ञापनात् । प्रकृतेऽङ्गाधिकारीये 'शेषे लोपः' इत्यस्मिन् कृतेऽङ्गाधिकारीयः 'जसः शी' इति न स्यादिति भावः ।

ननु 'अङ्गकार्य्ये कृते' इति परिभाषाया नात्र विषयः, ज्ञापकसाजात्यादङ्गस्य कार्य्ये एव तत्प्रवृत्तेः । प्रकृते तु शीभावः प्रत्ययस्य कार्यं नाङ्गस्येति परिभाषया शीभावो दुर्वार इत्यरुचेराह—ङे-प्रथमयोरिति—'ङे प्रथमयोः' इत्यत्र 'अमम्' इति मकारान्तरं प्रश्लिष्यते । ननु 'अमम्' इत्यत्र विशेषणसमासे मस्य प्रथमानिर्दिष्टत्वेन पूर्वनिपातापत्तिः । असमासे संयोगान्तलोपाप्राप्तौ मद्वयश्रवणापत्तिरिति चेन्न, 'ङे प्रथमयोरमम्' 'शसो न' इति संहितया पाठे 'न व्यञ्जनपरस्यानेकस्यैकस्य वोच्चारणे विशेषोऽस्ति' इति न्यायेन मद्वयोच्चारणेऽपि एकमकारोच्चारणाविशेषात्, 'वर्णग्रहणे जातिग्रहणम्' इति न्यायेन मद्वये मत्वारोपेणानुस्वाराद्वा ।

मकारान्तरमित्युपलक्षणम्, 'जसः श्शी' इत्यत्र सकारं प्रश्लिष्य सकारान्तस्य जसः शी इति व्याख्यानस्य, 'अतोऽम्' इति सूत्रादमित्यनुवर्त्त्य अममेव, न तु विक्रियते इति व्याख्यानस्य च ।

नागेशास्तु मकारप्रश्लेषादेर्भाष्येऽदर्शनात् शेषविभक्तिभूतामादियुष्मदादिसन्निपातेन जातस्य लोपस्य सन्निपातविघातकश्यादेशनिमित्तं नेति सन्निपातपरिभाषयैव श्याद्यभाव इत्याहुः ।

अत एव 'तुभ्यम्, मह्यम्, त्वत्, मत्, तव, मम' इत्यादौ स्मै, स्मात्, स्मादयोऽनयैव परिभाषया न । न च 'अत्, अश् विधानसामर्थ्यान् न स्यात्स्यादेशाविति वाच्यम्, गौणे स्मायादीनामप्रवृत्त्या तत्र तेषां चारितार्थ्यात् । द्वितीयैकवचनस्यामः 'ङेप्रथमयोः' इत्यमादेशे 'युष्मद् अस्मद् अम्' इति स्थितौ विशेषमाह—

*त्वमावेकवचने* । [ ७-२-९७ ]

**एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ।**

*द्वितीयायां च* । [ ७-२-८७ ]

**युष्मदस्मदोराकारः स्यात् । त्वाम् । माम् । युवाम् । आवाम् ।**

*शसो न* । [ ७-१-२९ ]

**नेत्यविभक्तिकं पदम् ।**

**त्वमावेकवचने**—( ७-२-९७ ) इति 'अङ्गस्य' इति, 'मपर्यन्तस्य' इति वा अधिकृतम् । 'युष्मदस्मदोरनादेशे' इत्यतः 'युष्मदस्मदोः' इत्यनुवर्तते । 'एकवचने' इत्यत्रापि यौगिकम् । अन्यथा 'त्वमावेकत्वे' इति न्यस्य 'अष्टन आ विभक्तौ' इत्यतः 'विभक्तौ' इत्यनुवर्त्य एकत्वे विभक्तौ = एकत्वद्योतिकायां विभक्ताविति व्याख्यानेन एकवचनविभक्तिलाभे सिद्धे वचनग्रहणवैयर्थ्यापत्तिः । अत एकस्यौक्तौ वर्तमानयोर्युष्मदस्मदोरित्येवार्थ इत्याह—**एकस्योक्तावित्यादि** ।

अत्र 'विभक्तौ' इत्यप्यनुवर्तनीयम् । अन्यथा प्रत्ययोत्तरपदयोरपि परतः '**त्वमावेकवचने**' इत्यनेनैवादेशे सिद्धे 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं व्यर्थं स्यात् । न चेष्टापत्तिः, त्वं सुन्दरः पुत्रो यस्येति त्रिपदबहुव्रीहौ 'युष्मत्सुन्दरपुत्रः' इत्यत्र त्वादेशापत्तिः, एकत्वार्थकयुष्मच्छब्दस्य सत्त्वात् ।

तत्र विभक्तावित्यस्य सम्बन्धे 'त्वं पुत्रो यस्य 'त्वत्पुत्रः' इत्यादौ विभक्तिपरत्वाभावात् 'त्वमावेकवचने' इत्यस्याप्राप्त्या तत्र त्वाद्यादेशविधानार्थम् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं सार्थकम् । उत्तरपदस्य समासचरमावयवे रूढत्वेन 'युष्मत्सुन्दरपुत्रः' इति त्रिपदबहुव्रीहौ नादेशः, सुन्दरपदस्य समासचरमावयवत्वाभावात् । 'त्व अद् अम्' 'म अद् अम्' इति स्थितौ विशेषमाह—

**द्वितीयायाश्च** ( ७-२-८७ ) इति । 'अष्टन आ विभक्तौ' इत्यतः 'आ' इति, 'विभक्तौ' इति च, 'युष्मदस्मदोः' इत्यतः 'युष्मदस्मदोः' इति चानुवर्तते । 'अङ्गस्य' इति चाधिकृतम् । तदन्तविधौ युष्मदाद्यन्तस्येत्यर्थः । फलितमाह—**युष्मदस्मदोरित्यादि** । आकार इति—अलोऽन्त्यपरिभाषयाऽत्राऽन्त्यस्याकार इत्यर्थः । 'त्व अ आ अम् म अ आ अम्' इति जाते पररूपे सवर्णदीर्घे 'अमि पूर्वः' इति रूपे निष्पन्नं रूपमाह—**त्वाम्, माम्**, इति । **युवाम्, आवामिति** 'युष्मद् औ' 'अस्मद् औ' इति स्थितौ विभक्तेरमादेशे मपर्यन्तयोर्युष्मदस्मदोः युवावयोः 'युव अद् अम्, आव अद् अम्' इति स्थितौ 'शेषे लोपः' इति बाधित्वा पूर्वरूपे 'द्वितीयायां च' इति दस्यात्वे 'अमि पूर्वः' इति पूर्वरूपे युवाम्, आवाम्, इति । शसि 'युष्मद् अस् अस्मद् अस्' इति स्थितौ विशेषमाह—

**शसो न** ( ७-१-२९ ) इति । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतः 'युष्मदस्मद्भ्याम्' इत्यनुवर्तते । यद्यपि 'न' इत्यत्र विभक्तेरश्रवणेन यदि निषेधार्थकमव्ययं गृह्येत तदा प्रतियोग्याकाङ्क्षायाम् 'ङे प्रथमयोः' इत्यतः 'अम्' इत्यनुवर्तेत । युष्मदस्मद्भ्यां परस्य शसोऽम् न स्यादित्यर्थे अमोऽभावे 'द्वितीयायाश्च' इति दस्यात्वे 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे लिङ्गसत्तास्वीकारे पुंसि 'तस्माच्छसो नः पुंसि' इति सस्य नकारे 'युष्मान्' इति सिध्येत् ।

तथाऽपि 'युष्मान् ब्राह्मणीः पश्य, अस्मान् ब्राह्मणीः पश्य, युष्मान् ब्राह्मणकुलानि, अस्मान् ब्राह्मणकुलानि' इति स्त्रीनपुंसकयो रूपाणि न सिध्येयुः । तदुक्तं भाष्ये—'नैष प्रतिषेधः । नत्वमेतद्विधीयते । सिद्धमत्र नत्वं 'तस्माच्छसो नः पुंसी'ति । यत्र तेन न सिध्यति तदर्थम् । क्व च तेन न सिध्यति । स्त्रियां नपुंसके च ।' इति । अतो नेदं सूत्रममो निषेधपरम् ! किन्तु शसो नत्वमनेन विधीयते । तर्हि 'शसो न' इति सूत्रे न इत्यस्य नकारपरत्वे 'तस्माच्छसो नः' इतिवत् प्रथमान्तेन भाव्यमित्याशङ्कायामाह—**नेत्यविभक्तिकमिति** । सौत्रत्वात् 'सुपां सुलुक्' इति लुप्तप्रथमाविभक्तिकमित्यर्थः ।

युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात्। अमोऽपवादः। 'आदेः परस्य'। 'संयोगान्तस्य लोपः'। युष्मान्। अस्मान्।

*योऽचि।* [ ७-२-८९ ]

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया।

*युष्मदस्मदोरनादेशे।* [ ७-२-८६ ]

अनयोराकारः स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः।

*तुभ्यमह्यौ ङयि।* [ ७-२-९५ ]

अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। अमादेशः 'शेषे लोपः'। तुभ्यम्। मह्यम्।

---

तदाह—**युष्मदस्मद्भ्यां परस्य शसो नकारः स्यादिति**। तस्मादमादेशापवादोऽयमित्याह **अमोऽपवादः**। **आदेः परस्येति**—तथा च 'प्रथमयोः पूर्वसवर्णः' इत्यस्यापि बाध्यसामान्यचिन्तयाऽपवादोऽयम्। तथा च 'युष्मा अस्, अस्मा अस्' इति स्थितौ अशोऽकारस्य नकारे संयोगान्तलोपे रूपं सिध्यति। किञ्चामोऽपवादत्वाभावे अमादेशे कृतेऽमोऽकारस्य नत्वे मस्य संयोगान्तलोपो न स्यात् अम् अमेव मान्त एव, न तु विक्रियते इत्युक्तत्वात्। तृतीयादावचि विशेषमाह—

**योऽचि** ( ७-२-८९ )। 'युष्मदस्मदोरनादेशे' इति सूत्रम्, 'अष्टन आ' इत्यतः 'विभक्तौ' इति चानुवर्तते। 'अचि' इति विभक्तेः विशेषणम्। 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधौ तदाह—**अनयोरिस्तदादा**। युष्मद् आ, अस्मद् आ इति स्थितौ मपर्यन्तस्य 'त्वमावेकवचने' इति त्वमादेशयोः 'योऽचि' इत्यनेन दस्य यत्वे 'त्व अय् आ, म अय् आ' इति स्थितौ पररूपे **त्वया मया इति**।

अचि किम् 'युवाभ्याम्, आवाभ्याम्'। वस्तुतस्तु 'युष्मदस्मदोरनादेशे' इत्यत्र 'रायो हलि' इत्यतः 'हलि' इत्यस्यानुवर्त्तनादात्वं यत्वापवादः स्यादिति परिशेषादजादौ विभक्तावेव यत्वं स्यादिति अचिग्रहणं शक्यमकर्तुम्। अनादेशे किम्। त्वम्, अहम्। यदि च 'य आपि' इति न्यासेननात्र दोष इत्युच्यते तदा 'त्वत्, मत्' इत्यत्र दोषो बोध्यः। हलादौ विभक्तौ 'युष्मद् भ्याम्, अस्मद् भ्याम्' इत्यादौ विशेषमाह—

**युष्मदस्मदोरनादेशे** ( ७-२-८६ ) इति। 'अष्टन आ विभक्तौ' इत्यत आ इति 'विभक्तौ' इति 'रायो हलि' इत्यतः 'हलि' इति चानुवर्तते। तच्च विभक्तावित्यस्य विशेषणम्। अल्ग्रहणेन तदादिविधौ हलादौ विभक्तावित्यर्थः। 'अङ्गस्य' इति चाधिकृतमिति तदन्तेऽपि प्रवृत्तिः। **अनयोरिति**—युष्मदस्मदोरित्यर्थः। बालमनोरमाकारास्तु—वस्तुतस्तु हलीति नानुवर्तनीयम्। योऽचीत्यजादौ यत्वविधानेन परिशेषादेव तत्सिद्धेरित्याहुः।

भाष्यकृतस्तु 'अज्ग्रहणं शक्यमकर्तुम्। कथम् अविशेषेण यत्वमुत्सर्गस्तस्य हलादावात्वमपवादः' इत्याहुः। हलीत्यनुवर्तते तत्राचिग्रहणं न कर्तव्यं भवतीति लाघवम्।

**युवाभ्यामिति**—मपर्य्यन्तस्य युवावादेशयोः दस्यात्वे पूर्वरूपे सवर्णदीर्घे च **युवाभ्याम्, आवाभ्याम्**। **युष्माभिरिति**—बहुत्वविशिष्टस्य वाचकत्वेन त्वमयोः, युवावयोश्चाभावः। चतुर्थ्यां विशेषमाह—

**तुभ्यमह्यौ ङयि** (७-२-९५) इति। 'ङयि' इति ङे इत्यस्य सप्तम्यां रूपम्। 'युष्मदस्मदोः' इति 'मपर्य्यन्तस्य' इत्यधिकृतम्। तदाह—**अनयोरिति**—युष्मद् ए, इति स्थितौ त्वमौ बाधित्वा तुभ्य-मह्यादेशयोर्विभक्तेरमादेशे 'शेषे लोपः' इति अदो दस्य वा लोपः। दस्य लोपे आदेशस्यादन्तत्वे पररूपम्। हलन्तत्वे तु 'अमि पूर्वः' इति पूर्वरूपम्। 'अङ्गस्य' इत्यधिकारात् तदन्तविधेः

परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् । युवाभ्याम् । आवाभ्याम् ।

*भ्यसो भ्यम् । [ ७-१-३० ]*

भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् । आद्यः शेषे लोपस्यान्त्यलोपत्व एव । तत्राङ्ग-वृत्तपरिभाषया एत्वं न । अभ्यम् तु पक्षद्वयेऽपि साधुः । युष्मभ्यम् । अस्मभ्यम् ।

*एकवचनस्य च । [ ७-१-३२ ]*

आभ्यां पञ्चम्येकवचनस्य अत् स्यात् ।

---

फलमाह—परमतुभ्यमित्यादि । अतितुभ्यमिति—'द्विवचने' 'एकवचने' इत्यादौ वचनग्रहणात् भाष्ये गौणेऽप्युदाहरणाच्च गौणेऽप्यादेशानां प्रवृत्तिरित्युक्तं तदाह—अतितुभ्यमित्यादि । चतुर्थ्या बहुवचने विशेषमाह—

**भ्यसो भ्यम्** (७-१-३०) इति । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतः 'युष्मदस्मद्भ्याम्' इत्यनुवर्तते । 'अङ्गस्य' इत्यधिकारात् तदन्तेऽपि प्रवृत्तिः । भ्यस इति—युष्मदस्मद्भ्यां परस्येति शेषः । 'भ्यम् , अभ्यम्' उभयविधच्छेदस्य सम्भवादुभयमुक्तम् । 'युष्मदस्मदोरनादेशे' इति सूत्रे भाष्ये 'अनादेशग्रहणं शक्यमकर्तुम् । कथम् ? हलीत्यनुवर्तते । न चादेशो हलादिरस्ति' इत्युक्त्या 'अभ्यम्' इत्येव च्छेद इति नागेशाः ।

ननु भ्यमादेशपक्षे 'शेषे लोपः' इत्यस्य शेषस्य लोप इत्यर्थे अद् इत्यस्य लोपे युष्म्, अस्म् इति प्रकृतेर्हलन्तत्वापत्तिरत आह—आद्य इति—भ्यमादेश इत्यर्थः । अन्त्यलोपपक्ष इति—तथा च अदन्तस्य युष्मेत्यस्य च श्रवणं सुलभम् । ननु अन्त्यलोपे भ्यमादेशे च 'बहुवचने झल्येत्' इत्येत्वं स्यादत आह—तत्राङ्गवृत्तेति—'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषयेत्यर्थः । अङ्गे = अङ्गाधिकारे वृत्तम् = वर्तनं यस्य कार्यस्य तस्मिन् प्रवृत्ते सति पुनरन्याङ्गकार्यस्य वृत्तौ = प्रवृत्तिविषये अविधिः—विधिर्नास्ति इत्यर्थः । प्रकृते अन्त्यलोपरूपेऽङ्गकार्ये प्रवृत्ते सति पुनरन्यस्य एत्वरूपस्याङ्गकार्यस्य प्रवृत्तौ विध्यभावादेत्वं न स्यादिति भावस्तदाह—एत्वं नेति । अभ्यन्त्विति—अभ्यमादेशस्तु अन्त्यलोपपक्षे टिलोपपक्षे च साधु=इष्टजनकम् । अन्त्यलोपपक्षे झलादिबहुवचनपरकत्वाभावेन एत्वं न ।

एतेन अन्त्यलोपपक्षे 'अभ्यम्' इत्यत्राकारोच्चारणसामर्थ्यात्पररूपाभावे सवर्णदीर्घः स्यादित्यपास्तम्, झलादित्वाभावेन एत्वनिवृत्त्या चारितार्थ्येन सवर्णदीर्घबाधकस्य पररूपस्यैव प्रवृत्तेः । यद्यप्यङ्गपरिभाषया भ्यमादेशेऽपि एत्वं सुपरिहरम् । तथाऽपि तस्या अनित्यत्वात्प्राप्तैत्ववारणाय परिभाषाया अनित्यत्वज्ञापनाय चकारग्रहणम् । पररूपे युष्मभ्यम्, अस्मभ्यम् इति टिलोपपक्षे अदन्ताङ्गझलादिबहुवचनोभयाभावादात्वाभावः ।

वस्तुतस्तु अभ्यमादेश एव साधु । तदुक्तं भाष्ये—'अनादेशग्रहणं शक्यमकर्तुम् । कथम् ? हलीत्यनुवर्तते । न चादेशो हलादिरस्ति' इति । भ्यम आदेशत्वे तु भाष्यं विरुध्येत । न च अभ्यमादेशे टिलोपे युष्मच्छब्दोऽन्तोदात्तः । उदात्तस्य लोपेऽनुदात्तोऽवशिष्यते, अभ्यमः सुप्त्वेनानुदात्तत्वमिति सर्वानुदात्तत्वातिप्रसङ्गः । अन्त्यलोपपक्षे तु अन्तोदात्तस्य युष्म इत्यस्य श्रवणमिति भेद इति वाच्यम्, टिलोपपक्षेऽपि यस्मिन्ननुदात्ते परे उदात्तो लुप्यते सोऽनुदात्त उदात्तो भवतीत्यर्थकेन अभ्यम आद्याकारस्य उदात्तत्वमित्युभयपक्षेऽपि मकारोत्तराकारस्यैवोदात्तत्वेनाविशेषात् । अत्र 'अनादेशे' इत्युत्तरार्थम्, न चादेशो हलादिरस्ति इति भाष्योक्तथा आदेशे विभक्तावात्वाप्राप्तेः ।

**एकवचनस्य च** (७-१-३२) इति । युष्मदस्मद्भ्यां ङसोऽश् 'इत्यतः' युष्मदस्मद्भ्यामिति, 'पञ्चम्या अत्' इति सूत्रञ्चानुवर्तते । तदाह—आभ्यामिति । युष्मदस्मच्छब्दाभ्यां परस्येत्यर्थः । 'न विभक्तौ तुस्माः' इति अतस्तकारस्येत्संज्ञकत्वाभावादनेकाल्त्वेन ङसेः सर्वस्य अदादेशः । युष्मद् अत्, अस्मद् अत् 'इति स्थितौ' 'त्वमावेकवचने' इति मपर्यन्तस्य त्वमादेशयोरादेशस्यादन्तत्वे-

त्वत् । मत् । 'ङसेश्च' इति । सुवचम् । युवाभ्याम् । आवाभ्याम् ।

*पञ्चम्या अत् ।* [ ७-१-३१ ]

आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ।

*तवममौ ङसि ।* [ ७-२-९६ ]

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ।

*युष्मदस्मद्भ्यां ङसोऽश् ।* [ ७-१-२७ ]

स्पष्टम् । तव । मम ।

---

पररूपे 'शेषे लोपः' इति टिलोपे 'त्वत्, मत्' इति । 'शेषे लोपः' इत्यन्त्यलोपपक्षे वारद्वयं पररूपे उक्तं रूपम् । **सुवचमिति**—लाघवादिति भावः । पञ्चम्या बहुवचने विशेषमाह—

**पञ्चम्या अत्** ( ७-१-३१ ) इति । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतः 'युष्मदस्मद्भ्याम्' इति 'भ्यसोऽभ्यम्' इत्यतः 'भ्यसः' इति चानुवर्तते । तदाह —**आभ्यामिति** । युष्मदस्मद्भ्यां परस्यात् इत्यर्थः । युष्मद् भ्यस् , अस्मद् भ्यस् , इति स्थितौ भ्यसः सर्वस्यादादेशे 'शेषे लोपः' इति लोपे च **युष्मत्, अस्मत्** इति । षष्ठ्येकवचने विशेषमाह—

**तवममौ ङसि** (७-२-९६) इति । 'युष्मदस्मदोरनादेशे' इत्यतः 'युष्मदस्मदोः' इति, अङ्गस्य,'मपर्यन्तस्य' इति चाधिकृतम् । तदाह —**अनयोरिति** । 'त्वमावेकवचने' इत्यस्यापवादोऽयम् । 'युष्मद् अस् , अस्मद् अस्' इति स्थितौ 'त्वमावेकवचने' इति बाधित्वा मपर्यन्तस्य तव-ममादेशयोः कृतयोर्विशेषमाह—

**युष्मदस्मद्भ्यां ङसोऽश्** ( ७-१-२७ ) इति। **स्पष्टमिति**—युष्मदस्मद्भ्यां परस्य ङसोऽश् स्यादिति स्पष्टमेव विवरणम् इत्यर्थः । तव अद् अस् मम अद् अस् इति स्थितौ अशः शित्वात् सर्वस्य ङसोऽशादेशः, शित्वस्य सर्वादेशार्थत्वात् । न च शित्वाभावेऽपि 'अलोऽन्त्यस्य' इति परिभाषया ङसः सकारस्याकारादेशे पररूपे च तवेत्यादीनां सिद्धिः, 'आदेः परस्य' इत्यनया 'अलोऽन्त्यस्य' इत्यस्या बाधेन आदेरकारस्याकारादेशापत्तेः । न चाकारस्याकारविधानवैयर्थ्येनान्त्यस्यैवाकारे पररूपे च तवेत्यादेः सिद्धिरिति व्यर्थमेव शित्वम् ।

न च पररूपबाधनार्थमेवादेरकारविधानं स्यादिति वाच्यम् , 'गुणे त्वन्याय्यकल्पना' इति इति न्यायेन 'अतो गुणे' इति बाधापेक्षया गुणस्य 'आदेः परस्य' इत्यस्याः परिभाषाया एव बाधस्य न्याय्यत्वादिति वाच्यम् , अकारस्याकारविधानेऽपि अस आदेशत्वसम्पादनेन 'योऽचि' इति यत्वनिवृत्त्या 'शेषे लोपः' इत्यस्य प्रवृत्त्यर्थम् अकारविधानस्य चारितार्थ्येन 'आदेः परस्य' बाधे मानाभावेन सर्वादेशार्थं शित्त्वस्यावश्यकत्वात् । 'योऽच्यङसि' इति न्यासेनैव यत्वनिरासः, शेषे लोपश्च सिद्ध इति वाच्यम्, 'अङसि' इत्यस्य पर्युदासत्वे एकवचनत्वेन सादृश्यग्रहणे 'युवयोः' 'आवयोः' इत्यादौ यत्वानापत्तेः 'योऽचि' इति सूत्रे 'अचि' इत्यस्य भाष्यकृता प्रत्याख्यातत्वेन 'योऽच्यङसि' इति न्यासस्य कर्तुमशक्यत्वात् ।

न चावयवस्यादेशे सत्यपि विभक्तेर्ङसोऽनादेशताऽस्त्येवेति यत्वं दुर्वारम् , न चैवमवयवस्यादेशत्वेऽपि समुदायस्यानादेशत्वेऽकारस्याकारविधानं व्यर्थमिति तत्सामर्थ्यादन्त्यस्य स्यात् ।

तथा च द्वयोरकारयोः पररूपे आदेशरूपविभक्तित्वस्य पररूपनिष्पन्नेऽकारे सत्त्वेन यत्वाप्राप्तिः । न च 'वार्णादाङ्गम्' इति पररूपात्प्रागेव यत्वं प्राप्नोतीति वाच्यम्, धर्मिग्राहकमानेनाङ्गवार्णयोः समानस्थानिकत्वे एव वार्णपरिभाषाप्रवृत्तेरिति चेन्न, 'युष्मदस्मदोरनादेशे' इत्यत्र प्रत्यासत्त्या युष्मदादिग्रहणेन विहितादेशरूपविभक्तेरेवादेशपदेन ग्रहणेन अन्त्यादेशे सति पररूपे निष्पन्नस्यादेशत्वेऽपि तादृशादेशत्वाभावेन यत्वापत्तेर्दुर्वारत्वात् ।

युवयोः । आवयोः ।

*साम आकम् ।* [ ७-१-३३ ]

**आभ्यां परस्य साम आकम् स्यात् ।**

---

इत्यकारविधानं व्यर्थम् । ननु 'अनादेशे' इत्यस्य नास्त्यादेशो यस्मिन् सोऽनादेशः । तथा सति अकारस्याकारविधाने आदेशवानेवायम् इति यत्वाभाव एव फलमिति चेन्न, आदिश्यतेऽसौ आदेश इति कर्मघञन्तादेशशब्देन न आदेशोऽनादेश इति तत्पुरुष एव अन्यपदार्थसापेक्षबहुव्रीह्यपेक्षया तत्पुरुषस्य वर्तिपदार्थमात्रापेक्षत्वेन लाघवादिति चेन्न,

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥'

इति सिद्धान्तेन आदेरकारस्य इत्यनेन आद्यकारघटितस्य स्थाने आद्यकारघटित आदेश इत्यर्थेन असः स्थाने अस् आदेश इति बोधनेन 'योऽचि' इत्यस्य निवृत्तावपि तवः, ममः, इति विसर्गान्तरूपापत्तेः । अतः 'तव मम' इत्यनयोः सिद्धये शित्करणेन असोऽश् विधानात् । 'सर्वे सर्वपदादेशाः' इत्यत्र इदं शित्त्वकरणमपि ज्ञापकम् ।

'अन्यथा आदेः परस्य' इति परिभाषया अकारस्याकारवैयर्थ्येन 'अलोऽन्त्यस्य' अन्त्यसस्याकारादेशे त्रयाणामकाराणां पररूपेऽनादेशत्वाभावेन यत्वनिवृत्त्या तव, मम—इत्यनयोः सिद्धया शित्त्वकरणवैयर्थ्यं स्पष्टमेव । शित्त्वकरणवैयर्थ्येन ज्ञापिते तु सर्वादेशत्वे आद्याकारघटितस्य असः स्थाने अस् आदेश इत्यर्थेनादेशरूपविभक्तिपरत्वसत्त्वादकारविधानचारितार्थ्येन अन्त्यादेशकल्पना न स्यादिति 'तव, मम' इत्यदन्तरूपसिद्धये शित्त्वं चरितार्थम् । स्पष्टश्चायमर्थोऽत्रैव भाष्ये ।

न च प्रकृते ङसः पदत्वाभावेन 'सर्वे सर्वपदादेशाः' इति न्यायविषयाभावोक्तकल्पना व्यर्थेति वाच्यम् , न्यायघटकपदपदस्य पद्यते = गम्यतेऽर्थोऽनेनेति व्युत्पत्त्या करणे 'घञर्थे कविधानम्' इति निष्पन्नत्वेनार्थवत्परत्वात् । आदेश एषा विभक्तिः 'सर्वे सर्वपदादेशाः' इति न्यायादित्यर्थकं भाष्यं संगच्छते । न चैवम् 'अचः परस्मिन्' इत्यादिसूत्रवैयर्थ्यम् च्ल्यादीनामनर्थकत्वेन सिजादिविधानवैयर्थ्यञ्चेति वाच्यम् , तत्र सूत्रारम्भसामर्थ्येनानर्थकानामपि स्थान्यादेशभावकल्पनात् ।

अन्त्यलोपपक्षे अशः स्यादेशस्तु न शङ्कनीयः, अङ्गवृत्तपरिभाषाविरोधात् । न चाङ्गस्य कार्ये एव सा इति वाच्यम्, 'ज्यादादीयसः' ( ६-४-१६० ) इति ज्ञापकपरभाष्यविरोधात् । तत्र लोपदीर्घयोरङ्गसम्बन्धिकार्यत्वाभावात् ।

न च नव्यमते भाष्ये 'अङ्गवृत्त' परिभाषायाः फलनिरूपणावसरे—'पिबतेर्गुणप्रतिषेधो वक्तव्यः । स न वक्तव्यो भवति' इत्यस्यैव फलप्रदर्शनेन परिभाषाया अभावात् स्यादेशो दुर्वारः । न च अशो विधानसामर्थ्यान्न स्यादेश इति वाच्यम्, 'योऽचि' इति यत्वाभावसम्पादनेन तच्चारितार्थ्यादिति वाच्यम्, अशित्यत्र 'अतो गुणे' इति पररूपेण अकारान्तरं प्रश्लिष्याकाररूप एवाश् भवति न विक्रियते इति व्याख्यानेन स्यादेशाप्रसक्तेः । अत एव भाष्यकृता अ अ इति प्रश्लिष्यानेकाल्त्वात् सर्वादेशसम्पादनेन शित्त्वं प्रत्याख्यातम् ।

तथा हि—'शकारः कर्तव्यः ? न कर्तव्यः । क्रियते न्यासे एव । कथम् ? प्रश्लिष्टनिर्देशोऽयम् , सोऽनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति' इति ।

**युवयोरिति**—युष्मद् ओस् , अस्मद् ओस् , इति स्थितौ मपर्य्यन्तस्य युवावादेशयोः 'योऽचि' इति दस्यायादेशे पररूपे च **'युवयोः, आवयोः' इति** । षष्ठीबहुवचने विशेषमाह—

**साम आकम्** ( ७-१-३३ ) इति । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतः 'युष्मदस्मद्भ्याम्' इत्यनुवर्त्तते तदाह—**आभ्यामित्यादि** । **साम** इति सकारेण सहित आम् साम् । सकारसहितस्याम इत्यर्थः । ननु युष्मद् आम्, अस्मद् आम्, इति स्थितौ अवर्णान्तात्परस्यामोऽभावेन सुटोऽप्राप्तिः

**भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु।**

---

न च 'शेषे लोपः' इत्यन्त्यस्य दस्य लोपे कृतेऽवर्णात्परत्वमाम इति वाच्यम्, आकमादेशात् प्रागना-देशविभक्तेः सत्त्वेन 'योऽचि' इति यत्वविषयतया लोपाप्राप्तेरत आह—**भाविन इति**।

यदि 'आम आकम्' इत्येव न्यासः स्यात्तदा आम आकमादेशे स्थानिवत्त्वेन आकमोऽप्याम्-त्वात् सुडागमः स्यात्। तथा च 'बहुवचने झल्येत्' इत्येत्वे यत्वे चानिष्टं रूपं स्यात्। यदा तु ससुट्-कनिर्देशः क्रियते तदा 'सामः प्रसङ्गे आकम्' इत्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते। अयम्भावः—स्थान्यादेशभावविषये सर्वत्र स्थानिनोऽप्रयोग आदेशस्य च प्रयोग इति रीत्यैव। यद्धर्मावच्छिन्नविषयकबुद्धिप्रसङ्गे आदेशबुद्धेः कर्तव्यत्वं शास्त्रेणोपदिश्यते कृते आदेशे तस्मिन् स्थानिवत्त्वेन तद्धर्मावच्छिन्नबुद्धिरेव भवतीति प्रकृते आकमादेशे कृते साम्त्वबुद्धिरेव स्यान्न तु आम्त्वबुद्धिरिति सुट उद्देश्यतावच्छेदकाम्त्वाभावान्न आकमि सुडापत्तिः। स्थानिबुद्धिं परित्यज्या-देशबुद्धिः कर्तव्येत्येवं शास्त्रेण बोध्यते, न तु स्थानिनिवृत्तिरादेशस्य चोत्पत्तिरुच्यते, तथा सति शब्दानित्यत्वप्रसङ्गात्। यथा आर्द्धधातुकविषयेऽस्तेरप्रयोगो भवतेश्च प्रयोगः 'अस्तेर्भूः' इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः, शब्दानित्यत्वप्रसङ्गात्।

किन्तु स्थानिविषयकबुद्धेरेव निवृत्तिः। प्रकृते सकारबुद्धिप्रसक्तेराकमादेशकालेऽभावात् सकारोच्चारणसामर्थ्यात् भाविन्या ग्रहणम्। सापि सम्भाविन्याः यदि आम आकम् स्यात्तदा सुटि सति सकारबुद्धिप्रसक्तिः स्यात्।

तथा च भाविसकारबुद्धिप्रसक्तेरभावः ससुट्कनिर्देशेन बोध्यते, तन्निमित्तस्यामोऽभावात्। न च स्थानिवत्त्वेनाम्त्वात् सुट्प्रसक्तिः, सामः स्थानित्वोक्तिसामर्थ्यात् आमि साम्त्वारोपे अति-दिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वेनाम्त्वेतरधर्मप्रयुक्तमेव कार्यं न त्वाम्त्वप्रयुक्तम्।

न च ससुट्कनिर्देशाद्यत्र सुड् भावी तत्रैवाकमादेशः गौणे न स्यादिति वाच्यम्, सामो भा-वित्वस्य सर्वथा दुरुपपाद्यत्वेन आमि साम्त्वारोपेणैव वक्तव्यतया तस्य गौणेऽपि सम्भवात्। अत एव 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्योदाहृते 'अतित्वाकम्' इत्यादौ आकमादेशो नुडभावश्च सिध्यति। न च 'युष्माकम्' इत्यादीनां सुबन्तत्वाभावेन पदत्वानापत्तिरानुमानिकस्थान्यादेशभावेन 'युष्मद् आम्' इत्यस्य प्रसक्तौ युष्माकम् बुद्धिः कर्तव्येति बोधेन सुबन्ततदादित्वं स्थानिवत्त्वेनादाय पदत्वसिद्धेः।

किञ्च ससुट्कनिर्देशसामर्थ्यादाम्त्वस्यातिदेशाभावबोधनेऽपि सुप्त्वातिदेशे बाधाभावेन सुबन्त-त्वात्पदत्वं सुवचम्।

अन्ये तु 'साम आकम्' इत्यत्र साश्च मश्च साम् तस्य, आकश्च मश्च आकम् इति व्याख्याय सा इत्यस्य स्थाने आक आदेशः, म इत्यस्य मादेशः। तथा चामः स्थानित्वाभावेन आकमादेशे सुटो-ऽप्राप्तिः। परन्त्वत्र पक्षेऽपि सकारसाहित्यं भावि एव गृहीतं स्यादिति यत्किञ्चिदेतत्।

**केचित्तु**—सकारात्पूर्वं लोपेन नकारं प्रश्लिष्य सकारात्परम् निषेधार्थकम् अकारञ्च प्रश्लिष्य नकारसकाराभ्यां नुट्सुटौ लक्षयित्वा 'युष्मदस्मत्परस्याम आकमादेशो भवति नुट्सुटौ च न स्तः' इत्येवं वर्णयन्ति। टिलोपपक्षे तु ससुट्कनिर्देशो व्यर्थ एव। अ कमि दीर्घोच्चारणं सवर्णदीर्घार्थम्। अन्यथा पररूपं स्यात्। न च अकारोच्चारणसामर्थ्यात्पररूपाभावः 'बहुवचने झल्येत्' इत्येत्वनिवर्तनेन चारि-तार्थ्यात् 'अभ्यम्' इत्यत्र यथा।

'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वये एकवचनद्विवचनशब्दौ न प्रत्ययपरौ, किन्तु द्वित्वविशिष्टोक्तिपरौ वचनग्रहणसामर्थ्यादिति प्राग्व्याख्यातम्।

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी।
समासार्थोऽन्यसङ्ख्यश्चेत्स्तो युवावौ त्वमावपि॥ १॥
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते। त्वाहौ यूयवयौ तुभ्यमह्यौ तवममाविति॥ २॥
एते परत्वाद् बाधन्ते युवावौ विषये स्वके। त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः॥ ३॥

तत्फलं दर्शयति—**समस्यमाने** इत्यादिना। **द्व्येकत्वेति**—'पञ्चकं प्रातिपदिकार्थः' इति पक्षे संख्याया अपि युष्मदस्मच्छब्दार्थत्वमिति मतेनेदम्। 'त्रिकं प्रातिपदिकार्थः' इति पक्षे तु यद्यपि युष्मदस्मदोर्द्वित्वैकत्ववाचित्वं नास्ति, किन्तु विभक्तिरेव संख्यावाचिकेत्यर्थपरत्वेनेष्टार्थसंग्रह इति चेन्न, त्रिकपक्षे संख्यावाचित्वाभावेऽपि द्वित्वाश्रयैकत्वार्थवाचिनोर्युष्मदस्मदोरिति व्याख्यानेनादोषात्। **'युष्मदस्मदी'** इति स्वरूपपरकत्वेन नपुंसकद्विवचनान्तम्।

**समस्यमाने** इति प्रथमाद्विवचनान्तम्। यदि द्व्येकत्ववाचिनी युष्मदस्मदी **समासकर्मीभूते** स्याताम्, तदा यदि **समासार्थः** = समाससंज्ञकपदार्थः = समासपदजन्योपस्थितीयमुख्यविशेष्यताश्रयोऽर्थः = **अन्यसंख्यः** = युष्मदस्मदर्थगतद्वित्वैकत्वसंख्यापेक्षया अन्यसंख्यश्चे**दपि** अपिना द्वित्वैकत्वविशिष्टोऽपि यदि समासार्थः स्यात्तदाऽपि समासघटकयुष्मदर्थे द्वित्वे सति **युवावौ,** एकत्वे सति **त्वमौ** च स्यातामेव समासाद् यस्यां कस्यांचिद्विभक्तौ सत्याम्। यथा त्वां मां वा अतिक्रान्तः, **अतिक्रान्तौ, अतिक्रान्ता** इति, युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, **अतिक्रान्ता** इति च विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति तत्पुरुषे युष्मदस्मदर्थयोरेकत्वद्वित्वयोः सत्त्वात् समासार्थे एकत्वस्य द्वित्वस्य च सत्त्वेऽपि त्वमौ युवावौ च स्त एव। जसि समासार्थे बहुत्वस्य सत्त्वे तु 'अतियूयम्, अतिवयम्' इत्येवेत्यग्रिमकारिकया वक्ष्यते।

**एकवचने प्रत्यये परे त्वमौ द्विवचने प्रत्यये परे युवावौ इत्यर्थे तु त्वां मां वा अतिक्रान्त इत्यर्थकातियुष्मदत्यस्मच्छब्दाभ्यां प्रथमाया द्विवचने परे द्वितीयादीनां द्विवचनबहुवचनयोश्च त्वमौ न स्याताम्,** इष्यते च तत्रापि त्वमादेशः। एवं युवामावां वा अतिक्रान्त इत्यर्थकातियुष्मदत्यस्मच्छब्दाभ्यां द्वितीयाद्येकवचनबहुवचनयोः युवावौ न स्यातां द्विवचनपरत्वाभावादिष्यते च तत्रापि। अतो द्वयोरुक्तिर्द्विवचनम्, एकस्योक्तिरेकवचनमित्यर्थकं द्विवचनपदमेकवचनपदं च व्याख्यातम्।

युष्मदस्मदोर्द्व्यर्थकत्वे युवावौ, एकार्थकत्वे त्वमौ भवत इति नियमस्य बाधस्थलमाह—**सुजस्ङेङस्सु परत इति**—अत्र 'त्वाहौ' इत्यादिपदेन सूत्रं लक्ष्यते। तथा च **'त्वाहौ सौ'** इति (७-२-९४) 'यूयवयौ जसि' इति (७-२-९३) 'तुभ्यमह्यौ ङयि' (७-२-९५) इति, 'तवममौ ङसि' (७-२-९६) इति च सूत्रैः सु-जस्-ङे-ङस्-सु परतो ये आदेशा विहितास्ते आदेशाः **सदैव युष्मदस्मदर्थस्य एकत्वे द्वित्वे बहुत्वे च** सु-जस्-ङे-ङस्सु परतः स्युरेव। **तेषु प्रत्ययेषु युवावौ त्वमौ** च स्वनिमित्तसत्त्वेऽपि न भवतः। कुत इति प्रश्ने आह—

**एते इति**—एते त्वाहादय आदेशाः **स्वके विषये** = सु-जस्-ङे-ङस्सु युवावौ परत्वाद् बाधन्ते 'विप्रतिषेधे परं कार्य्यम्' इत्युक्तेः। नन्वेवम् त्वाहाद्यपेक्षया 'त्वमावेकवचने' (७-२-९७) इति विहिताभ्यां त्वमाभ्यां परत्वात् त्वाहादीनां बाधः स्यादत आह—**पूर्वविप्रतिषेधतः** इति **'विप्रतिषेधे** पूर्वम्' इति विग्रहे 'सुपा' इति समासः। 'विप्रतिषेधे पूर्वं बलीयः' इति न्यायात्। न चात्र मानाभावः, 'त्वमावेकवचने, त्वाहौ सौ, यूयवयौ जसि, तुभ्यमह्यौ ङयि, तवममौ ङसि' इत्येतदनुवर्तिष्यते' इति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रस्थभाष्यस्यैव मानत्वात्।

अयं भावः—'त्वमावेकवचने' इति सूत्रे 'त्वाहौ सौ' 'यूयवयौ जसि' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसि' इति सूत्रचतुष्टयमनुवर्त्य वाक्यभेदेन व्याख्येयम्—एकस्योक्तौ विद्यमानयोर्युष्मदस्मदोस्त्वमौ स्तो विभक्तौ युष्मदस्मदोर्मपर्य्यन्तस्य सौ त्वाहौ, जसि यूयवयौ, ङयि तुभ्यमह्यौ, ङसि तवममौ स्त इत्यर्थः।

**द्वयेकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयोरद्वयेकतार्थत्वान्न युवावौ त्वमौ च न ॥४॥**
**त्वां मां वा अतिक्रान्त इति विग्रहे अतित्वम्, अत्यहम् ।**

एते आदेशाः प्राक् तत्तत्सूत्रैर्विहिता एव, पुनर्विधानं 'त्वमावेकवचने' इति बाधकस्य बाधनार्थम् । तेनैतेषु त्वमौ भवतः किन्तु त एवादेशा इति पूर्वविप्रतिषेधत्वं फलतीति । यद्वा तत्रैव भाष्ये 'त्वमावेकवचने' इत्यत्र शेषे इत्यनुवर्त्य शेषे = सु–जस्–ङे–ङस्भिन्ने प्रत्यये त्वमौ स्तः' इति व्याख्यानेन पूर्वविप्रतिषेधलाभः । एतावता यौगिकैकवचनद्विवचनशब्दग्रहणेनाव्याप्तिः परिहृता । अतिव्याप्तिदोषपरिहारमपि दर्शयति **द्वयेकसंख्य इति**—यदि एकवचन–द्विवचनप्रत्यययोर्ग्रहणं स्यात्तदा यदा बहुत्वविशिष्टार्थवाचिनी युष्मदस्मदी स्याताम् **समासार्थश्च द्वयेकसंख्यः**=समासादेकवचनप्रत्ययो द्विवचनप्रत्ययो वा तदा त्वमौ युवावौ च स्यातामित्यतिव्याप्तिः स्यात् । यौगिकस्य ग्रहणे तु **तयोः** = युष्मदस्मदोर**द्वयेकतार्थत्वात्** = बहुत्वविशिष्टार्थवाचकत्वात् युवावौ त्वमौ च न भवतः द्वित्वविशिष्टैकत्वविशिष्टार्थकत्वाभावादित्यतिव्याप्तिः परिहृता भवति ।

तदयं निर्गलितोऽर्थः—यत् एकत्वविशिष्टार्थवाचकयुष्मदस्मदोः समासस्तदा सु-जस्-ङे-ङस्भिन्ना कापि विभक्तिः समासात्स्यात्तत्र सर्वत्र त्वमौ भवतः । एवं द्वित्वविशिष्टार्थवाचकयुष्मदस्मदोः समासे सु–जस्–ङे–ङस्भिन्नायां सर्वत्र विभक्तौ परतो युवावौ भवतः । बहुत्वविशिष्टार्थवाचकयुष्मदस्मदोः समास समासात्परासु सु–जस्–ङे–ङस्भिन्नासु सर्वासु विभक्तिषु न त्वमौ भवतो नापि युवावौ । एतत्सर्वं मनसि निधाय दर्शयति—**त्वां मां वा अतिक्रान्त** इत्यादि । अतिक्रान्त इत्युपलक्षणम् अतिक्रान्तौ, अतिक्रान्ताः, अतिक्रान्तम्, अतिक्रान्तौ, अतिक्रान्तान्, अतिक्रान्तेन, अतिक्रान्ताभ्याम्, अतिक्रान्तैः, अतिक्रान्ताय, अतिक्रान्ताभ्याम्, अतिक्रान्तेभ्यः, अतिक्रान्तात्, अतिक्रान्ताभ्याम्, अतिक्रान्तेभ्यः, अतिक्रान्तस्य, अतिक्रान्तयोः, अतिक्रान्तानाम्, अतिक्रान्ते, अतिक्रान्तयोः, अतिक्रान्तेषु' इत्यन्तानाम् । एषु विग्रहेषु सु—जस्—ङे—ङसोऽन्यत्र सर्वत्र मपर्य्यन्तस्य त्वमादेशौ । त्वमादेशयोः शेषप्रक्रिया केवलयुष्मदस्मच्छब्दवद् बोध्या । सुजस्ङेङस्सु तु पूर्वविप्रतिषेधात् त्वाहादय आदेशाः त्वमौ बाधन्ते ।

**अतित्वाकम्, अतिमाकमिति** । यत्तु वदन्ति अन्त्यलोपपक्षे 'अङ्गवृत्तपरिभाषया नुड् वारणीयः । यद्वा 'ह्रस्वनद्यापः' इत्यत्र ह्रस्वान्ताद्विहितस्यैवामो नुड् इति व्याख्यानात् । नन्वेवं 'येषाम्, केषाम्' इत्यादौ ह्रस्वान्तादामो विहितत्वाभावेन नुटोऽप्राप्त्या सुटोऽत्र चारितार्थ्येन नुटोऽपवादत्वाभावात् ।

'सर्वेषाम्' इत्यादौ सुटं बाधित्वा परत्वान्नुडेव स्यादिति चेन्न, 'त्यदादेरामि सुट् इत्येव वक्तव्ये' 'आमि सर्वनाम्नः' इति सर्वनामग्रहणसामर्थ्यात् 'हलि सर्वेषाम्' इति निर्देशाच्च पूर्वविप्रतिषेधेन अवर्णान्तसर्वनामभ्योऽपि सुडेव भवतीति कल्पनात् । ह्रस्वान्ताद्विहितस्यामो नुडित्यर्थे पदाम्, दताम्, इत्यादावपि नुडापत्तिरिति वाच्यम्, 'पद्दन्नो' इति सूत्रे 'शस्प्रभृतिषु' इति सप्तम्या विषयत्वार्थकत्वेन 'पदाम्' इत्यत्र हलन्तादामो विहितत्वेनादोषात् ।

तथा च 'युष्माकम्' इत्यत्र हलन्ताद्युष्मच्छब्दादामो विहितत्वेन नुडागमाशङ्काया अवकाश एव नेति बोध्यमिति तत्तुच्छम्, ससुट्कनिर्देशसामर्थ्येन आकमि स्थानिवत्त्वेन आम्त्वेतरधर्मस्यैवारोपबोधनेन नुटोऽप्राप्तया आकमो नुड्वारणायोक्तकल्पनाप्रपञ्चस्य विवेकासहत्वात् ।

यत्त्वाहुः—'साम आकम्' इत्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणम्, सुड्विशिष्टस्य युष्मदस्मद्भ्यां परस्यामोऽसम्भवात् । तथापि उपलक्षणं तु भवितुमर्हति पूर्वं परं वा तद्वैशिष्ट्यस्यैवोपलक्षणत्वात् । प्रकृते सुड्विशिष्टस्यामोऽसम्भवेऽपि यस्यामः सुडग्रे भावी तस्यैवाम आकमा भवितव्यम् । न चैतद् गौणत्वे सम्भवति गौणे सर्वनामत्वाभावेन सुटोऽप्रवृत्तेः । तथा च गौणे 'अतित्वयाम्, अतिमयाम्' इत्येव भाव्यं न तु 'अतित्वाकम्, अतिमाकम्' इति तन्न, आकमः पूर्वं सुटोऽप्राप्तेः । आकमादेशे सुटः सम्भवेऽपि आमोऽभावेन सुड्-

अतित्वाम्, अतिमाम् । अतियूयम्, अतिवयम् । अतित्वाम्, अतिमाम् । अतित्वाम्, अतिमाम् । अतित्वान्, अतिमान् । अतित्वया, अतिमया । अतित्वाभ्याम्, अतिमाभ्याम् । अतित्वाभिः, अतिमाभिः । अतितुभ्यम्, अतिमह्यम् । अतित्वाभ्याम्, अतिमाभ्याम् । अतित्वभ्यम्, अतिमभ्यम् । ङसिभ्यसोः–अतित्वत्, अतित्वत् । अतिमत्, अतिमत् । भ्यामि प्राग्वत् । अतितव, अतिमम । अतित्वयोः, अतिमयोः । अतित्वाकम्, अतिमाकम् । अतित्वयि, अतिमयि । अतित्वयोः, अतिमयोः । अतित्वासु, अतिमासु ॥ युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्–औट्सु–अतियुवाम्, अतियुवाम्, अतियुवाम् । अत्यावाम्, अत्यावाम्, अत्यावाम् । अतियुवान्, अत्यावान् । अतियुवया, अत्यावया । अतियुवाभ्याम् ३, अत्यावाभ्याम् ३ । अतियुवाभिः, अत्यावाभिः । भ्यसि–अतियुवभ्यम्, अत्यावभ्यम् । ङसिभ्यसोः–अतियुवत्, अतियुवत् । अत्यावत्, अत्यावत् । ओसि–अतियुवयोः अतियुवयोः । अत्यावयोः, अत्यावयोः । अतियुवाकम्, अत्यावाकम् । अतियुवयि, अत्यावयि । अतियुवासु । अत्यावासु ॥ युष्मानस्मान्वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम् औट्सु–अतियुष्माम्, अतियुष्माम्, अतियुष्माम् । अत्यस्माम्, अत्यस्माम्, अत्यस्माम् । अतियुष्मान्, अत्यस्मान् । अतियुष्मया, अत्यस्मया । अतियुष्माभ्याम् ३, अत्यस्माभ्याम् ३ । अतियुष्माभिः, अत्यस्माभिः । भ्यसि–अतियुष्मभ्यम्, अत्यस्मभ्यम् । ङसिभ्यसोः–अतियुष्मत् २, अत्यस्मत् २ । ओसि–अतियुष्मयोः, अतियुष्मयोः । अत्यस्मयोः, अत्यस्मयोः । अतियुष्माकम्, अत्यस्माकम् । अतियुष्मयि, अत्यस्मयि । अतियुष्मासु, अत्यस्मासु ।

पदस्य । [ ८–१–१६ ]
पदात् । [ ८–१–१७ ]

---

विशिष्टस्यामोऽनुपलब्धेः । आदेशे आकमि यत्ससुट्कत्वं तत् स्थानिनि आरोप्यते, अथवा स्वविशिष्ट-निष्ठादेशतानिरूपितस्थानित्वरूपपरम्परासम्बन्धेन सुड्वैशिष्ट्यमामि सुलभमिति चेत् 'तथा युष्माकम्' इत्यादौ सुट्श्रवणापत्तेः । 'साम:' इति ससुट्कनिर्देशसामर्थ्यान्न श्रूयेत इत्यपि न, गौणव्यावृत्त्या चारितार्थ्येन सामर्थ्यस्योपक्षीणत्वात् । यदपि स चाम् चेति समाहारद्वन्द्वे साहित्यविवक्षायाम् केवल-स्यामोऽप्रसक्तिरिति तदपि न, प्रक्रियादशायां स्थितस्याम उत्तरकालभावित्वेनोत्प्रेक्षितस्य सुटश्चैक-बुद्ध्युपारोहेणैव 'अतीतानागतयोरयं द्रष्टा' इतिवत् साहित्यसम्भवात् । तथा च आम्येव साम्त्वस्या-हार्य्यारोपणाकमादेशः । ससुट्कनिर्देशसामर्थ्यादादेशे आकमि आम्त्वारोपाभावबोधनेन सुण्नुटौ न ।

न च गौणव्यावृत्त्या ससुट्कनिर्देशस्य चारितार्थ्यम् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे भाष्ये 'अतित्वाकम्' इत्याद्युदाहरणदानेन 'त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम्' इति वार्तिकेन च गौणेऽपि आकमाद्यादेशानां प्रवृत्तेरिष्टत्वात् ।

त्वां मां वा अतिक्रान्त इत्यादिविग्रहे एकत्ववाचिनोर्युष्मदस्मदोस्त्वमादेशयोरुदाहरणं प्रदर्श्य 'युवाम् आवां वा अतिक्रान्त इत्यादिविग्रहे' द्वित्वविशिष्टवाचिनोर्युष्मदस्मदोर्युवावादेशावु-दाहरति अतियुवामित्यादि ।

युष्मानस्मानतिक्रान्त इत्यादि विग्रहे युष्मदस्मदोर्बहुत्वविशिष्टार्थवाचितया त्वामादेशौ युवावादेशौ च न भवत इति अतियुष्माम्, अत्यस्माम्, इत्याद्युदाहरणेन दर्शयति—अतियुष्माक-मित्यादिना ।

युष्मदस्मदोः पदात्परत्वे विभक्तिविशेषे कार्यविशेषं दर्शयितुमाह—
पदस्य ( ८–१–१६ ) ।

*अनुदात्तं सर्वमपादादौ । [ ८-१-१८ ]*

इत्यधिकृत्य ।

*युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ । [ ८-१-२० ]*

पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः। तौ चानुदात्तौ।

---

**पदात्** ( ८-१-१७ ) । **अनुदात्तं सर्वमपादादौ** ( ८-१-१८ ) इति । **इत्यधिकृत्येति**—युष्मदस्मदोरादेशविशेषा वक्ष्यन्ते इति शेषः । 'अपदान्तस्य मूर्द्धन्यः' ( ८-३-५५ ) इत्यतः 'पदस्य' इत्यधिक्रियते । तदुक्तं भाष्ये 'आकुतः पदाधिकारः ? प्राक् पदान्ताधिकारात् अपदान्तस्य मूर्द्धन्य इति अतः प्राक् पदाधिकारः' इति ।

**कुत्सने च सुप्यगोत्रादौ** ( ८-१-६९ ) । इत्यतः प्राक् 'पदात्' इत्यधिकारः । तदुक्तं भाष्ये 'अथ पदादित्यधिकार आकुतः...'कुत्सने च सुप्यगोत्रादौ' इति वक्ष्यति प्रागेतस्मात्' इति । अष्टमाध्यायस्य प्रथमपादसमाप्तिपर्यन्तम् 'अनुदात्तम्, सर्वम् अपादादौ' इति पदत्रयस्याधिकारो भाष्ये तथैवोदाहरणदर्शनात् ।

**'पदस्य'**इति सम्बन्धसामन्ये षष्ठी न तु स्थानषष्ठी, 'न लोपः प्रातिपदिकान्तस्य'इति सूत्रेऽन्तग्रहणात् । तदुक्तं भाष्ये 'पदस्येति नैषा स्थानषष्ठी । का तर्हि ? विशेषणषष्ठी' इति तेन 'एकादेश उदात्तेनोदात्त' इत्यस्य पदावयवो य उदात्तेन एकादेशः स उदात्त इत्येवार्थः । न तु एकादेशान्तं यत्पदं तदन्तस्य उदात्त इति । तेन पदमध्यमोऽप्येकादेश उदात्तो भवति । सम्बन्धसामान्यषष्ठीस्वीकारे यथायोगं क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी ।

यथा 'संयोगान्तस्य लोपः, मोऽनुस्वारः, मो नो धातोः' एषु स्थानषष्ठी । तेन 'गोमन्तौ' इत्यादौ न संयोगान्तलोपः, गम्यते इत्यादौ नानुस्वारः, 'प्रशामौ' इत्यादौ मस्य नो न । 'गम्यते' इत्यादौ 'उञि च पदे' इत्यतः पदे इत्यनुवर्त्य हलादौ परेऽनुस्वार इत्यर्थेन तु न निर्वाहः 'पुंसि' इत्यादावनुस्वारानापत्तेः । भाष्ये 'विशेषणषष्ठी' इत्युक्त्वा न स्थानषष्ठ्या निरासः, स्थानषष्ठ्या अपि विशेषणषष्ठीत्वात् । पूर्वोक्ताधिकाराणां फलं तु मूले एव तत्र तत्र वक्ष्यते । प्रागनुक्तान् युष्मदस्मदोरादेशविशेषान् दर्शयितुमाह—

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ** ( ८-१-२० ) इति । षष्ठी च चतुर्थी च द्वितीया चेति विग्रहे द्वन्द्वः । अल्पाच्तरत्वात् 'अल्पाच्तरम्' इति षष्ठीशब्दस्य पूर्वनिपातः । षष्ठीचतुर्थीद्वितीयाभिः सह तिष्ठत इति विग्रहे 'सुपि स्थः' ( ३-२-४ ) इति स्थाधातोः कः । 'पदस्य' इत्यधिकृतम् । 'षष्ठीचतुर्थी' इति द्विवचनान्तविशेष्यानुरोधाद् द्विवचनान्तेन विपरिणतं विशेष्येण सम्बध्यते—**पदात्परयोरित्यादि** । **अनयोरिति**—युष्मदस्मदोरित्यर्थः ।

**षष्ठ्यादिविशिष्टयोरिति**—पदयोरिति शेषः । षष्ठ्यादिविभक्त्यव्यवहितपूर्वयोरिति तु नार्थः, चतुर्थीभ्यामादौ परतः तत्सम्भवेऽपि षष्ठीद्वितीययोः परतः पदयोर्युष्मदस्मदारसम्भवात् । ननु षष्ठीद्वितीययोर्विभक्तिविशिष्टयोरेव पदत्वलाभेन तत्साहचर्यात् चतुर्थ्यामपि विभक्तिविशिष्टस्यैव ग्रहणं स्यादिति चेन्न, षष्ठीद्वितीययोः पदावयवयोरपि युष्मदस्मदोः सम्भवेन विभक्तिविशिष्टत्वेनैव साहचर्य्यस्य दुरुपपादत्वात् । न च पदावयवत्वस्याव्यभिचारित्वेनानुवृत्तिवैयर्थ्याद् विभक्तिविशिष्टयोरित्यर्थलाभः, 'पदस्य' इत्यस्यानुवृत्तेः 'तिङ्ङतिङः' इत्यादावुत्तरत्र चारितार्थ्येन सामर्थ्यायोगादिति चेदत्रोच्यते—

'अनुदात्तं सर्वम्' इत्यतः 'सर्वम्' इत्यनुवर्त्तते । तस्य षष्ठ्या विपरिणामेन युष्मदस्मदवयवकस्य सर्वस्य पदस्येत्यर्थलाभात् । अत एव 'युष्माम्' इत्यादौ प्रकृतिभागस्य न। स्थग्रहणाद् विभक्ति-

*बहुवचनस्य वस्नसौ ।* [ ८-१-२१ ]

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः । वांनावोरपवादः ।

*तेमयावेकवचनस्य ।* [ ८-१-२२ ]

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ।

*त्वामौ द्वितीयायाः ।* [ ८-१-२३ ]

द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः ।
श्रीशस्त्वाऽवतु माऽपीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥

---

विशिष्टयोरित्यर्थ लाभ इति तु न, विभक्तौ श्रूयमाणायामेव यथा स्यान्न तु लुप्तायामित्यर्थं स्थग्रहण-मित्यस्य वक्ष्यमाणत्वात् ।

यदि तु 'सर्वस्य द्वे' ( ८-१-१ ) । इत्यतः 'सर्वस्य' इत्यनुवर्तते तदा 'सर्वम्' इति न कर्तव्यम् । तदुक्तम्—'सर्वस्य द्वे' इति सूत्रे भाष्ये 'सर्वग्रहणमप्युत्तरार्थम् । 'अनुदात्तं सर्वमपादादौ' इति वक्ष्यति तत्सर्वग्रहणं कर्तव्यं भवति' इति । [ननु युष्मदस्मदन्यतरावयवकस्य सर्वस्य पदस्यादेश इत्यर्थे 'अतितव' इत्यादिविशिष्टस्य 'ते' इत्यादय आदेशाः स्युरिति चेन्न, षष्ठ्यादेः प्रकृत्याकाङ्क्षायां प्रत्यासत्त्या श्रूयमाणयुष्मदादिप्रकृतिकाया एव ग्रहणेनादोषात् । पदात्परयोः षष्ठी-चतुर्थी-द्वितीया-बहुवचनान्तयोर्युष्मदस्मदोर्विशेषमाह—

**बहुवचनस्य वस्नसौ** ( ८-१-२१ ) इति । 'युष्मदस्मदोः' इति, षष्ठीचतुर्थीद्वितीयास्थयो-रिति चानुवर्तते । पदस्य, पदात्, अनुदात्तं सर्वमपादादौ इति चाधिकृतम् । **उक्तविधयोरिति—** पदात्परयोरपादादौ स्थितयोरित्यर्थः ।

**वांनावोरपवाद इति**—सामान्येन विहितयोर्वानावोर्विशेषविहितत्वादपवाद इत्यर्थः । षष्ठी-चतुर्थ्येकवचनान्तयोर्विशेषमाह—

**तेमयावेकवचनस्य** ( ८-१-२२ ) । 'पदस्य, पदात्, अनुदात्तं सर्वमपादादौ' इति सर्वमधिकृतम् । 'युष्मदस्मदोः' इति षष्ठीत्यादि चानुवर्तते । यद्यपि 'षष्ठीचतुर्थीद्वितीयास्थयोः' इत्यनुवृत्तं तथापि द्वितीयैकवचनान्तयोर्युष्मदस्मदोः 'त्वामौ द्वितीयायाः' इत्यपवादस्यैव प्रवृत्त्या परिशेषात् षष्ठीचतुर्थ्येकवचनान्तयोरेवैतद्विषयतयाऽऽह—**षष्ठीचतुर्थ्येकवचनान्तयोरिति ।** द्वितीयै-कवचनान्तयोर्युष्मदस्मदोर्विशेषमाह—

**त्वामौ द्वितीयायाः** ( ८-१-२३ ) । **द्वितीयैकवचनान्तयोरिति**—अस्य पदात्परयोरित्यादिः शेषो बोध्यः । तेमयोरपवादोऽयम् । 'अपादादौ' इत्यत्र पादशब्देन ऋक्पादः, श्लोकपादश्च गृह्यते, विशिष्य ग्रहणे मानाभावात् । अत्र पादशब्देन छन्दोहीनवाक्यस्यापि ग्रहणम् । अत एव 'सपूर्वायाः प्रथमाया विभाषा' ( ८-१-२६ ) इति सूत्रे भाष्ये 'ग्रामे कम्बलो मे स्वम्' इति वाक्ये 'मे' इत्यादेशः संगच्छते ।

विभक्तिक्रममनुसृत्य द्वितीया-चतुर्थी-षष्ठीक्रमेण, एकवचन-द्विवचन-बहुवचनक्रमेण चोदाहरति—**श्रीश** इत्यादिना । इह=संसारे श्रिया ईशः श्रीशो विष्णुस्त्वा मापि **अवतु**=त्वां मामपि रक्षत्वित्यर्थः । चतुर्थ्या एकवचनमुदाहरति-**दत्तादिति**-**सः** हरिः **ते**=तुभ्यम्, **मे**=मह्यमपि **शर्म**=सुखं दत्तात् 'शर्मशातसुखानि च' इति ( अमर० १ का० ४ वर्ग० श्लो० २५ ) **स** हरिः **ते**= तव, **मे**=ममापि स्वामी । 'स्वामी त्वीश्वरः पति रीशिता' ( अमर० ३-का० १ वर्ग १० श्लो० )

द्वितीयाद्विवचनमुदाहरति-**विभुर्व्यापकः** परमात्मा **वाम्**=युवाम् **नौ**=आवाम् **अपि पातु** । ईशः ईश्वरः **वाम्** = युवाभ्याम्, **नौ** = आवाभ्याम् अपि सुखं ददातु । हरिः **वाम्**=युवयोः, **नौ**=

सुखं वां नो ददात्वीशः पतिर्वामपि नो हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः॥ २॥

पदात्परयोः किम्—वाक्यादौ मा भूत्, त्वां पातु, मां पातु।' अपादादौ किम्—'वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु।' स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव। नेह—इति युष्म-

---

आवयोरपि पतिः=स्वामी। स=हरिः वः=युष्मान् नः=अस्मान् अपि अव्यात् = रक्षतु। स हरिः वः युष्मभ्यम् नः=अस्मभ्यम् अपि शिवम् = शुभं दद्यात्।

'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' (अमर० १ का० ४ वर्ग० २५ श्लो०) स=हरिः वः=युष्माकम् नः=अस्माकम् अपि सेव्यः सेवितुं योग्यः। 'कृत्यानां कर्तरि वा' ( २-३-७१ ) इति कर्तरि षष्ठी। एषु आदेशेषु स्थानिनि यथा प्रकृतिप्रत्ययविभागः प्रतीयते तथा न प्रतीयते। अतस्तिरोहितप्रकृतिप्रत्ययकमपदम्। स्थानिवत्त्वेन सुबन्तत्वात्पदत्वं बोध्यम्।

**त्वां पात्विति**—अत्र 'त्वाम्' इत्यत्र 'माम्' इत्यत्र च पदात्परत्वाभावात् 'त्वामौ द्वितीयायाः' इति द्वितीयान्तयोर्युष्मदस्मदोस्त्वामादेशौ न। यद्यपि 'माम्' इत्यस्य पातुरूपपदात्परत्वमस्ति, तथापि 'समानवाक्ये एव युष्मदस्मदोरादेशाः' इत्यस्य वक्ष्यमाणतया 'त्वां पातु' इति वाक्यस्थं पातुपदं न 'माम्' इत्यनेन सम्बद्धमित्यादेशाभावः। अत्र भिन्नकालं वाक्यद्वयं विवक्षितम्। प्रत्युच्चारणं शब्दा भिद्यन्ते इति पातु-पदमुच्चारणभेदेनान्वयिभेदेन भिन्नम्। **अशेषैरिति**—शेषरहितैरित्यर्थः। शेषराहित्यञ्च संख्यातः स्वरूपतश्च। तथा च चतुर्भिः सम्पूर्णैर्वेदैरिति फलितम्। **वेद्योऽस्मानिति**—अत्रास्मच्छब्दस्य पादादित्वान्नादेशः। अष्टाक्षरपादकोऽनुष्टुप् छन्दस्कोऽयं श्लोकः।

ननु नेदं युक्तमुदाहरणम्। तथा हि—सन्ध्यभावे 'अस्मान् कृष्णः सर्वदाऽवतु' इति स्थितौ नवाक्षरकत्वात्पादत्वाभावेन पादादित्वाभावः। कृते सन्धौ 'संवेद्योऽस्मान्' इत्यत्र 'एङः पदान्तादति' इति पूर्वरूपस्य 'अन्तादिवच्च' इति परादिवत्त्वे नवाक्षरत्वात्पादादित्वाभावः, किञ्च 'संवेद्य्' इति हलन्तस्य पदत्वाभावेन पदात्परत्वाभावश्च, पूर्वरूपस्य पूर्वान्तवत्त्वे तु 'स्मान्' इत्यस्य अस्मच्छब्दत्वभङ्ग इति चेन्न, एकादेशस्य पूर्वान्तवत्त्वेन 'संवेद्यो' इत्यस्य पदत्वेन पदात्परत्वम्, 'स्मान्' इत्यस्यैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वात् प्राप्तस्य 'नः' इत्यादेशस्य पादादित्वेन प्रतिषेधात्।

यदि तु अस्मच्छब्दत्वस्य परिच्छिन्नपरिमाणसमनियतत्वेन 'अभीयात्' इत्यत्र 'अभ्' इत्यस्य उपसर्गत्वाभाववत् एकदेशविकृतन्यायेन 'स्मान्' इत्यस्य अस्मच्छब्दत्वाभावस्तदा आनुमानिकस्थान्यादेशभावेन 'अस्मान्' इत्यस्य स्थाने 'स्मान्' इत्यादेश इति स्थानिवत्त्वेन अस्मच्छब्दत्वमादाय तत्प्राप्तिर्बोध्या।

यत्तु पूर्वान्तवत्त्वेन 'संवेद्यो' इत्यस्य पदत्वम्, परादिवद्भावेनास्मच्छब्दरूपत्वञ्चेति तन्न, 'उभयत' इत्यनेन एकत्र युगपद् विरुद्धधर्मयोः पूर्वत्वपरत्वयोरनतिदेशात्। तदुक्तम्-'अन्तादिवच्च' ( ६-१-८५ ) इति सूत्रे भाष्ये 'लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत् प्रेषयतः नानादिक्षु च कार्ये भवतः तत्र यद्यसावविरोधार्थी भवति उभयोर्न करोति। किं पुनः कारणमुभयोर्न करोति, यौगपद्यासंभवात्। नास्ति यौगपद्येन सम्भवः' इति।

अन्ये तु 'अस्मान् कृष्णः सर्वदाऽवतु' इत्यस्य नवाक्षरत्वेन पादादित्वाभावेन 'नः' इत्यादेशे सति 'नः कृष्णः सर्वदावतु' इत्यत्र 'नः' इत्यस्य पादादित्वेन सन्निपातपरिभाषया स्वनिमित्तविघातकातिरिक्तः 'नस्' इत्यादेशो भवतीत्यर्थेन प्रकृतेऽपादादित्वमुपजीव्य जायमानो नसादेशः पादादित्वेन स्वोपजीव्यापादादित्वविनाशक इत्युपजीव्यविरोधान्न भवतीत्याहुः।

ननु 'षष्ठीचतुर्थीद्वितीयानाम्' इति सूत्र्यताम्, षष्ठ्याद्यन्तयोर्युष्मदस्मदोरित्यर्थलाभः स्यात्किं स्थग्रहणेनेत्यत आह—**स्थग्रहणादिति**—अत्र स्थाधातुस्त्यागाभावे वर्तते यथा 'समये तिष्ठ सुग्रीव' इति रामायणे समये = मर्यादायामनुवृत्तिं मा जहासीरित्यर्थः। तथा च षष्ठ्या विभक्तिकर्मकहाना-

त्पुत्रो ब्रवीति, इत्यस्मत्पुत्रो ब्रवीति । 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' 'एकतिङ् वाक्यम्' तेनेह न–ओदनं पच, तव भविष्यति ।

---

भावकर्तृभूतयोर्युष्मदस्मदोरित्यर्थः । षष्ठ्यादिषु विधानाद्युष्मदस्मदोः षष्ठ्यादिस्थत्वे लब्धे स्थग्रहणं निमित्तसहितयुष्मदस्मत्प्रतिपत्त्यर्थं विज्ञायते इति सविभक्तिकयोरेवादेशसिद्धिः । यथा 'अश्वस्य आनीयताम्' सहैवाश्वेनाऽऽनीयते ।' इति कैयटः ।

तदुक्तम् **'अनुदात्तं सर्वमपादादौ'** ( ८–१–१८ ) इति सूत्रे भाष्ये 'अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम् । किम् ? श्रूयमाणविशेषणं यथा विज्ञायेत । यत्र विभक्तिः श्रूयते तत्र यथा स्युरिह मा भूवन् इति युष्मत्पुत्रो ददाति, इत्यस्मत्पुत्रो ददातीति' इति । **इति युष्मत्पुत्र इति**—अत्रोभयत्रेतिशब्दः पदात्परत्वं सम्पादयितुं निर्दिष्टः। युवयोर्युष्माकं वा पुत्र इति विग्रहः। तव पुत्र इति विग्रहस्तु न, एवं विग्रहे वृत्तौ 'प्रत्ययोत्तरपदयोश्च' ( ७–२–९८ ) इत्यनेन 'त्वत्पुत्रः' इत्यस्यैवेष्टत्वात् । एवम् आवयोरस्माकं वा पुत्र इति विग्रहे 'इत्यस्मत्पुत्रो ब्रवीति' इत्यत्रापि बोध्यम् ।

ननु 'संख्याविशेषो भवति वाक्ये । राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुष इति । समासे न भवति राजपुरुष इति' इति भाष्योक्तसिद्धान्तविरोधाद् 'युष्मत्पुत्रः' इत्यस्य युवयोर्युष्माकं वा पुत्र इति विग्रहो न सम्भवतीति चेदत्राहुः—

वृत्तौ सत्यां यत्र संख्याविशेषबोधकं प्रमाणं नास्ति यथा 'राजपुरुषः' इत्यत्र । अत्र हि उपसर्जनीभूतपदार्थतावच्छेदकराजत्वावच्छिन्नप्रतियोगिताकभेदाभावो भासते । तादृशभेदाभावस्य राजमात्रे सत्त्वेन 'राजसम्बन्ध्यभिन्नः पुरुषः' इत्येव प्रतीयते न तु संख्याविशेषः । सर्वत्रैव संख्याविशेषाऽनवगम इति न भाष्याशयः ।

संसर्गस्य प्रकारतया मानमिति पक्षे 'राजपुरुषः' इत्यत्र निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपिता या स्वत्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना आश्रयत्वसम्बन्धावच्छिन्ना स्वत्वत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वावच्छिन्नप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नपुँस्त्वत्वावच्छिन्नप्रकारतानिरूपिता पुरुषत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशाली शाब्दबोध इति **पक्षोलिनः** ।

'कुमार्य्योरगारं कुमार्य्यगारम्' इति 'ईदूदेद्द्विवचनम्' इति सूत्रभाष्यविरोधात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे 'यद्यपि समासार्थ एकार्थो वा भवति बह्वर्थो वा भवति द्व्यर्थे च युष्मदस्मदी । भवत एव युवावौ' इति भाष्यविरोधाच्च । तस्माद्यत्र किञ्चिद्गमकमर्थः प्रकरणं वास्ति तत्र संख्याविशेषः प्रतीयते एव । प्रकृते वृत्तौ युष्मदस्मदर्थयोः संख्याप्रतीतिर्भवतीत्यत्र 'षष्ठीचतुर्थीद्वितीयास्थयोः' इत्यत्र स्थग्रहणमेव प्रमाणम् । तद्धि 'इति युष्मत्पुत्रो ददाति' इत्यादौ लुप्तायां विभक्तावादेशा मा भूवन्नेतदर्थम् । वृत्तौ संख्याविशेषस्याप्रतीतौ द्वित्वबहुत्वविशिष्टार्थवाचिनोर्युष्मदस्मदोरभावादेव तत्रादेशाप्राप्तया तद्वारणार्थं स्थग्रहणं व्यर्थमेव स्यात् क्वचिदर्थतः=सामर्थ्यतो यथा मुद्गैः क्रीतो मौद्गिकः, न ह्येकस्मिन् द्वयोर्वा मुद्गयोः क्रयणसामर्थ्यमस्तीति सामर्थ्याद्बहुत्वप्रत्ययो भवति, क्वचित् प्रकरणाद्यथा 'भवद्गिरामवसरप्रदानाय वचांसि नः' इति माघीयवाक्ये 'भवतो गिराम्' इत्यर्थप्रत्ययः ।

**समानवाक्य इति**—निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं 'समानवाक्ये' इति पदमधिकृत्य निघात-युष्मदस्मदादेशा विधेया इत्यर्थः। **निघातः**=अनुदात्तः। वाक्यस्वरूपाकाङ्क्षायामाह—**एकतिङिति**—एकं तिङन्तं यस्मिन् विशेष्यविशेषणभावपन्नार्थबोधकपदसमुदाये तद्वाक्यपदवाच्यमित्यर्थः। तेन 'पचति' इत्यस्यैव नैकवाक्यत्वं, किन्तु तद्घटितसमुदायस्यापि। 'पचति' इत्यस्यापि । 'पचति' इत्यस्यापि व्यपदेशिवद्भावेनैकपदघटितत्वाद् वाक्यत्वम् । तत्फलन्तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यनेन 'पचति ३' इत्यत्र टेः प्लुतसिद्धिः ।

नन्वेकतिङ्वाक्यमिति स्वीकारे 'ओदनस्त्वया पक्तव्यो मम भविष्यति' इति पदसमुदायस्याप्येकतिङ्घटितत्वेन एकवाक्यत्वापत्तिरिति चेन्न, पक्तव्योऽस्तीत्यध्याहारेणादोषात्। तथा च 'मम भविष्यति' इति भिन्नं वाक्यम्। इदं स्वशास्त्रकार्य्योपयोगि वाक्यलक्षणम्। तेन 'पश्य मृगो धावति' इत्यादौ लौकिकैकवाक्यत्वविशिष्टे एतल्लक्षणासत्त्वेऽपि न दोषस्तस्यैतल्लक्षणालक्ष्यत्वात्। अत एव 'समर्थः पदविधिः' ( २-१-१ ) इति सूत्रे भाष्ये 'आख्यातं साव्ययकारकविशेषणं वाक्यम्, आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम्। साव्ययम्—उच्चैः पठति, नीचैः पठति। सकारकम्—ओदनं पचति, सकारकविशेषणम्—ओदनं मृदु विशदं पचति। सक्रियाविशेषणं चेति वक्तव्यम्—सुष्ठु पचति, मृदु पचति। अपर आह। 'आख्यातं सविशेषणम्' इत्येव। सर्वाणि ह्येतानि सविशेषणानि।' इति। एतावता लौकिके वाक्यसंज्ञामुक्त्वा 'एकतिङ् वाक्यसंज्ञं भवतीति वक्तव्यम्। 'ब्रूहि ब्रूहि देवदत्त' इत्युक्तम्, स्वशास्त्रकार्य्योपयोगि लक्षणान्तरमुक्तम्। अन्यथा पूर्वेणैव सिद्धे इदं व्यर्थं स्यात्।

जैमिनीयैरपि 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति वाक्यलक्षणमुक्तम्। लौकिकवाक्यत्वममरेणाप्युक्तम्—'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इति।

अत्र वाशब्दश्चेदर्थे 'कारकान्विता क्रिया चेत्' अस्य बोध्येति शेषः। तेन निरर्थकपदसमुदायस्य व्यावृत्तिः। निरर्थको यः पदसमुदायः स निरर्थकपदसमुदायः। तेन पदानां सार्थकत्वेऽपि न दोषः। सुप् च तिङन्तञ्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तम्, तेषामेकशेषः। तेन कारकान्वितक्रियाबोधकस्य सुबन्तचयस्य, तिङन्तचयस्य, सुप्तिङन्तचयस्य च वाक्यत्वं लब्धम्। सुबन्तचयः—चैत्रेण शयितव्यम्, तिङन्तचयः—पचति भवति = पाको भवतीत्यर्थः, सुप्तिङन्तचयः—चैत्रः पचति, इत्यादि। 'तिङ्ङतिङः' इति सूत्रे 'अतिङः' इति पर्य्युदासं वदतः सूत्रकारस्यापीदमेव वाक्यलक्षणमभिप्रेतम्।

समर्थसूत्रे 'आख्यातं सविशेषणं वाक्यम्' इति भाष्योक्तलक्षणे आख्यातपदेन क्रियाप्रधानं लक्ष्यते। तेन 'त्वया भवितव्यम्' इत्यादेः संग्रहः। सविशेषणमित्यस्य साक्षात्परम्परया वा यद्विशेषणं तत्सहितमित्यर्थः। परन्तु इदं लक्षणम् 'ब्रूहि ब्रूहि' इत्यत्र विशेषणानुपादानेऽव्याप्तम्, वाक्यत्वफलन्त्वत्र प्रश्नोत्तरे 'अनन्त्यस्यापि प्रश्नाख्यानयोः' ( ८-२-१०५ ) इत्यनेन वाक्यस्य टेः प्लुतसिद्धिः।

अत एव स्वशास्त्रपरिभाषितं लक्षणम् 'एकतिङ्' इत्युक्तम्। नन्वेतल्लक्षणे 'त्वया भवितव्यम्' इत्यस्यैकवाक्यत्वानापत्तिः, 'त्वया भवितव्यमिति रामो वदति' इत्यस्यैकवाक्यत्वापत्तिश्चेति चेन्न, मुख्यविशेष्यत्वयोग्या या क्रिया तत्प्रतिपादकत्वेन तात्पर्य्यविषयीभूतं यत् पदाघटकं पदद्वयं तद्घटितत्वं स्वशास्त्रपारिभाषिकं वाक्यत्वमित्यस्य स्वीकारात्। प्रकृते मुख्यविशेष्यतावत्त्वयोग्या भवनक्रिया तत्प्रतिपादकत्वेन तात्पर्यविषयीभूतं यत्पदं 'भवितव्यम्' इत्येकमेव पदं तादृशपदद्वयाघटितत्वम् 'त्वया भवितव्यम्' इति वाक्यस्येति नाव्याप्तिः। 'त्वया भवितव्यमिति रामो वदति' इत्यस्य तु तादृशं पदद्वयमस्ति, परन्तु आष्टमिकद्विर्वचनस्य स्थाने द्विर्वचनत्वात्स्थानिवत्त्वेन समुदायस्यापि पदत्वात् तद्घटकं ब्रूहीति पदं न, किन्तूदासीनमिति तदघटितत्वम् 'ब्रूहि' इति वाक्यस्येत्यत्रापि वाक्यत्वं सुलभम्। न चैवमपि 'ग्रामं गच्छ तव' इत्यस्य तत्त्वापत्तिः, स्ववृत्त्यानुपूर्वीमत्त्वं स्वप्रयोज्यविषयताप्रयोजकत्त्वमेतदुभयसम्बन्धेन मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्य्यविशेष्यपदविशिष्टतरद् यत् मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्य्यविशेष्यकं पदं तादृशपदद्वयाघटितत्वे सति परस्परनिरूप्यनिरूपकभावानापन्नविषयताप्रयोजकपदाघटितत्वमेकवाक्यत्वमिति वा० कृ० पञ्चोलिनः।

कैयटस्तु 'एकतिङ्' इत्यत्र एकशब्दः समानवचनो न तु संख्यावाची। बहुव्रीहिश्चायम्। तेन 'ब्रूहि ब्रूहि देवदत्त' इत्यत्र वाक्यत्वाद् आमन्त्रितनिघातः सिध्यतीत्याह—'ओदनं पच' इति भिन्नं वाक्यम्। 'तव भविष्यति' इत्यपरं वाक्यम्। समर्थपरिभाषा नात्र प्रवर्तते, एकार्थीभाव-

इह तु स्यादेव-शालीनां ते ओदनं दास्यामि इति। 'एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः' अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव।

*न चवाहाहैवयुक्ते। [ ८-१-२४ ]*

चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां मां च रक्षतु, कथं त्वां मां वा न रक्षेदित्यादि। युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः।

---

विषये एव तत्प्रवृत्तेः। तथा च 'तव' इत्यस्य स्वघटितवाक्यघटकपदात्परत्वाभावात् 'ते' इत्यादेशो न। **शालीनामिति** - कलमानां षष्टिकानां वेत्यर्थः 'शालयः कलमाद्याश्च षष्टिकाद्याश्च' इत्यमरः ( २ का० ६ व० ५४ श्लो० ) शाड्यते=आप्लाव्यते इत्यर्थे 'शाडृ आप्लाव्ये' इत्यतः 'सर्वधातुभ्य इन्' ( उ० ४ पा० ११८ ) इत्यनेन इन् डलयोरभेदात् 'शालिः' प्रकृतिविकृतिभावरूपे सम्बन्धे षष्ठी। **अनन्वादेशे वेति**—'सपूर्वायाः प्रथमायाः' ( ८-१-२६ ) इति सूत्रे भाष्ये 'युष्मदस्मदोरन्यतरस्याम्' ....'सर्व एव वांनावादयोऽनन्वादेशे विभाषा वक्तव्याः' इत्युक्तेराह—**एते वांनावादय आदेशा वा वक्तव्या इति।**

**धातेति**—महेश्वरं प्रति उक्तिरियम्। ननु 'सपूर्वायाः प्रथमायाः' इति सूत्रेऽस्य वार्तिकस्य पाठात् सपूर्वकं यत्र प्रथमान्तं पदं ततः परयोरेवास्य प्रवृत्त्या प्रकृते धातेति प्रथमान्तं सपूर्वकं नास्तीतीदमुदाहरणमसङ्गतमिति चेन्न, तत्रैव भाष्ये 'सर्व एव वांनावादय आदेशा विभाषा वक्तव्याः' इत्युक्तेः सपूर्वकप्रथमान्ताभावेऽपि पदात्परयोर्युष्मदस्मदोरादेशमात्रे एतद्वार्तिकप्रवृत्तेरिष्टत्वात्। अत एव 'कम्बलस्ते स्वम्, कम्बलस्तव स्वम्' इति भाष्योदाहरणं संगच्छते।

अन्वादेशे नित्यमाह—**तस्मै इति**—अज्ञातज्ञापनाय पूर्वमुपात्तस्य पुनरज्ञातज्ञापनायोपादानमन्वादेश इति पूर्वं भक्तत्वबोधनाय युष्मच्छब्देन महेश्वरस्योपादानम् पुनर्नमस्कारबोधनायोपादानेऽन्वादेश इत्यतो नित्यमादेशः। उक्तादेशनिषेधविषयमाह—

**न चवाहाहैवयुक्ते** (८-१-२४) इति। चश्च वाश्च हाश्च अहश्च एवश्चेति विग्रहे द्वन्द्वः, चवाहाऽहैवास्तैर्युक्ते=योगे सति युस्मदस्मदोरादेशा न स्युः। युक्त इत्यत्र भावे क्तः-योगः=सम्बन्धः। तदाह—**चादिपञ्चकेति**—चादीनामन्यतमेन योग इत्यर्थः। अत्र चः समुच्चये। समुच्चयश्च परस्परनिरपेक्षाणामनेकेषामेकस्मिन्नन्वयः। तद्वाचकस्तद्द्योतको वा चशब्दः। क्वचित् 'तथा' शब्दोऽपि। वा = विकल्पे, हा = अद्भुते, अह - इति = खेदे, एव इति = निर्द्धारणे। वांनावादयः सर्वे आदेशा अनुवर्तन्ते। तदाह--**एत इति**—वांनावादय आदेशा इत्यर्थः। **हरिरिति**—परस्परं निरपेक्षयोर्युष्मदस्मदर्थकर्मणो रक्षणरूपैकक्रियायामन्वयः। पक्षतः प्राप्तिर्विकल्पः। **हरिस्त्वामिति**—अत्र 'त्वामौ द्वितीयायाः' इति त्वामादेशौ न। उक्तान्वयरूप एव समुच्चयस्तत्र युष्मदस्मदर्थयोः स्वनिष्ठप्रतियोगितानिरूपकत्वरूपो योगः। **कथं त्वामिति**—पाक्षिकसम्बन्धरूपविकल्पे युष्मदस्मदर्थयोः स्वनिष्ठप्रतियोगितानिरूपकत्वरूप एव = योगः।

**इत्यादीति**—आदिना हरिर्मम हा प्रसीदति इत्यद्भुतम्—अत्र स्वविषयकत्वं सम्बन्धः। 'हरिर्ममाऽह न प्रसीदति इति खेदः'। अत्रापि स्वविषयकत्वं सम्बन्धः। हरिर्ममैव सेव्यः, अत्र यत्प्रतियोगिकभेदवन्निरूपितसम्बन्धाभाववत्त्वरूपैवार्थघटकभेदे स्वनिष्ठप्रतियोगितानिरूपकत्वं सम्बन्धः। ग्रामस्तुभ्यं मह्यञ्च दीयते, इत्यादीनि षष्ठीचतुर्थीद्वितीयैकवचनान्तादीनामुदाहरणानि ऊह्यानि।

ननु 'न चवाहाऽहैवैः' इत्येव सूत्रमस्तु 'वृद्धो यूना' ( १-२-६५ ) इत्यत्रेव विनाऽपि योगग्रहणं तृतीययैव तदर्थलाभः स्यादत आह—**युक्तग्रहणादिति**—यदा युष्मदस्मदर्थगतान् समुच्च यादीन्चादयो द्योतयन्ति तदा चादिभिः सह अर्थद्वारा युष्मदस्मदोः साक्षाद्योगस्तत्रैवाऽयं

परम्परासम्बन्धे त्वादेशः स्यादेव । हरो हरिश्च मे स्वामी ।

*पश्यार्थैश्चानालोचने* [ ८-१-२५ ]

अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । परम्परासम्बन्धेऽप्ययं निषेधः, भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ।

*सपूर्वायाः प्रथमाया विभाषा ।* [ ८-१-२६ ]

---

निषेधः । **हरो हरिश्चेति**—अत्र चशब्दो हरिहरगतं समुच्चयं ब्रूते, समुच्चयविशिष्टयोर्हरिहरयोः स्वामिना सम्बन्धस्तस्य च ऽस्मदर्थेनेति अस्मदर्थगतसमुच्चयस्य चशब्दाद्योत्यतया न साक्षात्सम्बन्धः, किन्तु परम्परयेति निषेधाप्रवृत्त्या 'मे' इत्यादेशो भवत्येव । त्वामाद्यादेशानां निषेधान्तरस्थलमाह—

**पश्यार्थैश्चानालोचने** ( ८-१-२५ ) इति । दृशिरत्र ज्ञानसामान्ये 'अदर्शनं लोपः' इत्यत्र यथा । आलोचनं चाक्षुषज्ञानं तत्र 'अनालोचने' इति पर्य्युदासात् । दर्शनम्-ज्ञानमित्यर्थेऽस्मादेव निपातनाद् दृशेर्भावे शः, 'पाघ्राध्मा' ( ७-३-७८ ) इति पश्यादेशः । भावार्थकसार्वधातुकपरत्वेऽपि निपातनादेव यगभावोऽपि । यदि तु 'पाघ्राध्माधेट्दृशः' ( ३-१-१३७ ) इति कर्तरि शः स्यात्तदा 'द्रष्ट्रर्थैः' इत्यर्थः स्यात् । तथा च 'अनालोचने' इति पर्य्युदासो व्यर्थ एव स्यात् । न ह्यालोचनार्था द्रष्ट्रर्था भवन्ति । तदाह—**अचाक्षुषज्ञानार्थैरित्यादि** । **चेतसेति** मनसेत्यर्थः ।

'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ।' ( अमरः १ कां ५ व० ६१ श्लो० ) ।

ननु 'अनालोचने' इति पर्य्युदासेन बहिरिन्द्रियजन्यज्ञानार्थकयोगे एव स्यादिति चेतसेत्युक्तमिति चेन्न, 'न अनालोचनार्थैः' इत्येव पर्युदासेन सिद्धे 'पश्यार्थैः' इत्यस्य वैयर्थ्यापत्त्या सकलेन्द्रियजन्यज्ञानसंग्रहसिद्धेः । 'इन्द्रियजन्यम्' इत्यस्य इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावदित्यर्थः । तेन सकलज्ञानस्येन्द्रियजन्यत्वेऽपि तत्तदिन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वस्याभावेन दूषणाभावात् । **परम्परासम्बन्धेऽपीति**—स्वान्वितान्वयित्वादिरूपे इत्यर्थः । स्वम् धात्वर्थज्ञानम् । **भक्तस्तवेति**—इह 'तव' इत्यस्य रूपेऽन्वयो रूपस्य च ध्यायतिनेति स्वान्वितान्वयित्वरूपः परम्परासम्बन्धः ।

तदुक्तं भाष्ये 'पश्यार्थैश्च प्रतिषेधः' 'समानवाक्ये' इति प्रकृत्य वक्तव्यः' । इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात् 'ग्रामस्त्वा सम्प्रेक्ष्य गतः' इति इह न स्यात् 'ग्रामस्तव स्वं सम्प्रेक्ष्य गतः' इति । समानवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति । एवञ्च 'समानवाक्ये' इत्यस्य सम्बन्धायुक्तयुक्तेऽपि निषेधप्रवृत्तिरिति भाष्योक्त्या यत्र तदसम्बन्धस्तत्र साक्षात्सम्बन्धे एव निषेध इति प्रतीयते । तथा च 'न चवाहाऽहैव' इति युक्तग्रहणं व्यर्थमेव ।

तत्तच्छब्दयोगे विधीयमानकार्य्यस्य साक्षाद्योगे एव प्रवृत्तेरेव 'देवदत्तस्य पुत्राद्यज्ञदत्तः पृथक्' इत्यादौ देवदत्तशब्दात् 'पृथग्विनानाना' ( २-३-३२ ) इति सूत्रेण न पञ्चमी इति नागेशाः । **भक्तस्तवेति**—इह तवेत्यस्य रूपेण साक्षात्सम्बन्धो ध्यायतिना तु परम्परैवेत्यत्रापि आदेशनिषेधः । अनालोचने इत्यस्य फलमाह—**आलोचने त्विति**—चाक्षुषज्ञाने तु आदेशो भवत्येव तदाह—**भक्तस्त्वेति**—अत्र 'त्वाम्' इत्यस्य त्वादेशः । इमे वांनावादय आदेशा अनन्वादेशे वैकल्पिकाः, अन्वादेशे तु नित्या इति प्राङ् निरूपितम् । अन्वादेशेऽपि क्वचिद्विकल्पार्थमाह—

**सपूर्वायाः प्रथमाया विभाषा** ( ८-१-२६ ) विद्यमानवाची सहशब्दोऽत्र विद्यमानं पूर्वं यस्याः सा सपूर्वा 'अनेकम्' इति बहुव्रीहिः । यद्वा पूर्वेण सह वर्तत इति सपूर्वा 'विभाषा सपूर्वस्य'

विद्यमानपूर्वात् प्रथमान्तात्परयोरनयोरन्वादशेऽप्येते आदेशा वा स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्। त्वा मा इति।

*सामन्त्रितम्* [ २-३-४८ ]

**सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्।**

---

( ४-१-३४ ) 'पूर्वादिनिः, सपूर्वाच्च' ( ५-२-८६ ) इत्यादिनिर्देशात् तुल्ययोगवचनं प्रायिकम्। तेन सलोमकः, सकर्मक इति सिध्यति। अत्र सर्वत्र विद्यमानवाची सहशब्दः।

वस्तुतस्तु 'तुल्ययोगवचनं प्रायिकम्' इति चिन्त्यम्, उक्तनिर्देशानाम् विद्यमानवाचिसह-शब्दस्य 'अनेकमन्यपदार्थे' इति समासेनाप्युपपत्तौ 'तुल्ययोगे' इत्यस्य प्रायिकत्वकल्पने साम-र्थ्याभावात्।

सकर्मकः, सलोमकः, इत्यादावपि 'अनेकम्' इत्यनेनैव समासः। **प्रथमान्तादिति**—'प्रत्यय-ग्रहणे' इति तदन्तविधौ प्रथमान्ततदादेरित्यर्थः। **अनयोरिति**—युष्मदस्मदोरित्यर्थः। हे देवदत्त इति सम्बोध्योऽध्याहार्य्यः। हे देवदत्त त्वमपि भक्तोऽहमपि भक्तः। तेन भक्तत्वेन हेतुना। अत्र 'हरिः' इति प्रथमान्तम् 'तेन' इति पदे विद्यमानं पूर्वं यस्य तादृशम्, 'त्रायते' इति विद्यमानं पूर्वं यस्य 'सः' इति प्रथमान्तपदं ततः परत्वाद् युष्मदस्मच्छब्दयोर्विकल्पेनादेशस्तदाह—**त्वा मेति वेति।** अत्र तच्छब्दः प्रक्रान्तवाचीति न यच्छब्दापेक्षा। प्रक्रम्यमाणवाचितच्छब्दे एव यच्छब्दापेक्षा। येन कारणेन त्वं भक्तस्तेनैव कारणेनाहमपि भक्त इति व्याचक्षाणानान्तु यच्छब्दाध्याहारे गौरवमिति बोध्यम्। 'त्रायते' इति पदं मध्यमणिन्यायेन 'त्वाम्' 'माम्' इत्युभयत्र सम्बध्यते। तन्त्रेण एकत्रैवानेक-कारकसम्बन्धः। श्रूयमाण एव 'त्रायते' इत्यत्र त्वामित्यस्य मामित्यस्य वान्वय इति नैकवाक्यत्व-हानिः। तेन निमित्तनिमित्तिनोः समानवाक्यस्थत्वम्, 'सः' इति प्रथमान्तस्य विद्यमानपूर्व-पदत्वञ्च सिद्धम्।

'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रे 'आमन्त्रित' पदार्थपरिज्ञानाय आह—**साऽमन्त्रि-तम्** ( २-४-४८ ) इति। 'प्रातिपदिकार्थलिङ्ग' इति पूर्वसूत्रे पठिता 'प्रथमा' सापदेन परामृश्यते 'सम्बोधने च' इत्यतः 'सम्बोधने' इत्यनुवर्त्तते। आमन्त्रणमामन्त्रितम् उपचारात् तत्साधने सम्बोधन-विभक्त्यन्ते वृत्तिः। यद्वा आमन्त्र्यतेऽनेनेत्यामन्त्रणं निपातनात् करणे क्तः। अथवा—आमन्त्र-णमामन्त्रो भावे घञ्। करणस्य शेषत्वविवक्षया आमन्त्रः संजातोऽस्य करणस्येत्यामन्त्रितम् तार-कादित्वादितच्। आमन्त्रणसाधनम्। विभक्त्यन्तेनामन्त्र्यते, न तु केवलया विभक्त्येति महासंज्ञाक-रणसामर्थ्यात्संज्ञाविधावपि तदन्तविधिस्तदाह—**तदन्तमिति**—तेन '**है, हे,** भोः' इत्याद्यव्ययाना-मपि सम्बोधनप्रथमान्ततया आमन्त्रितसंज्ञा सिद्धा।

अन्यथा 'अन्तरङ्गानपि' इति न्यायेन 'अव्ययादाप्सुपः' इति सुपो लुकि प्रथमाया अभावात् 'नखनिर्भिन्नः' इत्यादावैसमाववत् अत्रामन्त्रितसंज्ञा न स्यात्। नच 'अन्तरङ्गानपि' इति न्यायेन सुप्संज्ञामपि बाधित्वा लुकि 'हे-हे' इत्यादिशब्दानां पदत्वानापत्तिरिति वाच्यम्, 'अव्ययादाप्सुपः' इत्यादावुपजीव्यत्वेन सुबादिसंज्ञाया लुकः पूर्वं प्रवृत्तावपि आमन्त्रितसंज्ञाया लुकः प्रथमं प्रवृत्तौ मानाभावात्। यद्येष्वेषां संबोधने शक्तिस्वीकारेण प्रातिपदिकार्थे एव प्रथमा, तथाऽपि सम्बोधन-विषयत्वसत्त्वात्।

सम्बोधने प्रथमा इत्यस्य सम्बोधने गम्ये प्रथमा इत्येवार्थः प्रातिपादिकार्थापेक्षया यत्र सम्बो-धनमात्रमधिकं भासते तत्र प्रथमेत्येवार्थः। ननु युष्मच्छब्दस्यापि सम्बोधने विद्यमानत्वेन प्रथमैव स्यान्न द्वितीयादिरिति चेन्न, प्रवर्त्तनाविषयसंबोधनस्यैवात्र ग्रहणात्।

वस्तुतस्तु विभक्तिवाच्यता-द्योत्यतावच्छेदकसम्बोधनत्वेन न प्रातिपदिकाद् भानमिति युष्म-दादिशब्देभ्यो न प्रथमैव। यथा कर्म-सम्प्रदानादिशब्देभ्यो न द्वितीयाचतुर्थ्यादयस्तया युष्मत्सम्बो-

*आमन्त्रितं पूर्वमविद्यमानवत् । [ ८-१-७२ ]*

**स्पष्टम् । अग्ने तव । देवास्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न ।**

---

धनादिशब्देभ्यो न सम्बोधने प्रथमैवेत्युपाध्यायाः । अन्ये तु **हे-हे** शब्देभ्यः 'संबोधने च' इत्येव प्रतिपदोक्तत्वात्प्रथमा । नच सम्बोधनस्य प्रकृत्या उक्तत्वात्तदप्राप्तिः, तिङ्कृत्तद्धितसमासैरेवोक्तत्वस्य विभक्तिप्रतिबन्धकत्वात् ।

ननु प्रथमाया 'प्रातिपदिकार्थ' इत्यतोऽनुवृत्त्यैव लाभात्तापदं व्यर्थम् इति चेन्न, **'हे-हे'** इत्यादौ यदा प्रातिपदिकार्थसूत्रेण प्रथमा, तदा सम्बोधनमुद्धार्य्य विहिताया एव प्रथमायाः प्रतिपदोक्तत्वाद् ग्रहणेनामन्त्रितसंज्ञाया अप्राप्त्या प्रतिपदोक्तपरिभाषाबाधनार्थमेव 'सा' इत्यस्य चारितार्थ्यात् । **किञ्च** पूर्वसूत्रे प्रथमापदस्य विधेयताप्रयोजकतया अत्रोद्देश्यत्वासम्भवेन 'सा' इत्यस्य सार्थकत्वम् । आमन्त्रितसंज्ञायाः फलप्रदर्शनायाह—

**आमन्त्रितं पूर्वमविद्यमानवत्** ( ८-१-७२ ) इति । **स्पष्टमिति**—पूर्वमामन्त्रितमविद्यमानवद् भवतीति विवरणं स्पष्टमित्यर्थः । पूर्वमिति—पूर्वत्वञ्च परापेक्षया । तथा च परस्य स्वनिमित्तेऽन्यनिमित्ते वा कार्य्ये कर्तव्ये आमन्त्रितमविद्यमानावद् भवति । 'देवदत्त !' इत्यत्र 'आमन्त्रितस्य च' ( ६-१-१९८ ) इत्यनेनाद्युदात्तत्वं भवति । अविद्यमानवद्भावस्य फलानि 'देवदत्त, यज्ञदत्त' अत्र उभे पदे आमन्त्रिते । अत्र 'पदात्परमपादादौ स्थितमामन्त्रितं निहन्यते' इत्यर्थकेन 'आमन्त्रितस्य च' ( ८-१-१९ ) इत्यनेन यज्ञदत्तरूपस्यामन्त्रितस्य निघातो न भवति । परस्य यज्ञदत्तस्य निघाते कर्तव्ये पूर्वस्य 'देवदत्त' इत्यस्याविद्यमानत्वेन पदात्परत्वाभावात् ।

'अग्ने तव यदुक्थ्यं देवेष्व स्त्याप्यम् ।

स नः सत्तो मनुष्वदा देवान् यक्षि विदुष्वःशे वित्तं मे अस्य रोदसी' (ऋग्वे० १, १०५, १३)

'अग्ने तव त्ये अजर' (ऋ० वे० ८, २३, ११) 'अग्ने तव श्रमो वयः' (ऋ० १०, १४, १)

**अग्ने तवेति**—अत्र 'अग्ने' इत्यस्याविद्यमानत्वात् पदात्परत्वाभावात् 'तव' इत्यस्य 'ते' आदेशो न । **देवास्मानिति**—अत्र 'देव' इत्यस्याविद्यमानत्वात्पदात्परत्वाभावात् 'अस्मान्' इत्यस्य नसादेशो न । 'अग्ने नय' अत्र 'तिङ्ङतिङः' ( ८-१-२८ ) इत्यनेन पदात्परत्वाभावात् 'नय' इति तिङन्तस्य निघातो न । **'अग्ने, इन्द्र, वरुण'**, इत्यत्र 'अग्ने' इत्यस्याविद्यमानवद्भावात् **'इन्द्र'** इत्यस्य पदात्परत्वाभावात् पदात्परम् आमन्त्रितं निहन्यते इत्यर्थकेन 'आमन्त्रितस्य च' इत्यनेन निघातो न । एतत्सर्वं मनसि निधायाह—**इहेति**—'अग्ने तव' देव अस्मान् इत्यनयोर्युष्मदस्मदोः 'ते' 'नस्' इत्यादेशौ न भवतः, पदात्परत्वाभावात् । 'अग्ने नय' इत्यत्र नय इति तिङन्तस्य **निघातो न**, अतिङन्तात्पदात्परं तिङन्तं निहन्यते इत्यर्थकेन 'तिङ्ङतिङः' इत्यनेन नानुदात्तः, पदात् परत्वाभावात् । अग्न इन्द्र वरुण—

'अग्न इन्द्र वरुण मित्रदेवा शर्धः प्रयंत मारुतोत विष्णो ।
उभा नासत्या रुद्रो अधग्नाः पूषाभगः सरस्वती जुषन्त ॥'

हे अग्न वरुण मित्र देवा यूयं शर्धो बलमस्माकं प्रयन्त प्राश्यत । उत = अपि च हे मारुत = मारुतानि = मरुतां बलानि, हे विष्णो यूयं शर्धः प्रयन्त । किञ्चोभौ नासत्यां सत्यभूतौ रुद्रोऽध= अधग्ना=एतेषां देवानां स्त्रियश्च पूषा भगः सरस्वती च जुषन्त=सेवन्तामस्मदीयं यज्ञं स्तुतिं वा । ( इति मन्त्रार्थः ) ।

इत्यत्र पदात्परमामन्त्रितं निहन्यते इत्यर्थकेन 'आमन्त्रितस्य च' इत्यनेन पूर्वस्याविद्यमानवद्भावात्परत्वाभावात् ।

'सर्वदा रक्ष देव नः' इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः। एवम् 'इमं मे गङ्गे यमुने' इति मन्त्रे यमुन इत्यादिभ्यः प्राचीनानामन्त्रितानामविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः।

---

ननु 'वरुण' इत्यस्यानुदात्तत्वे कर्तव्ये 'इन्द्र' इत्यस्याविद्यमानवद्भावेऽपि 'अग्ने' इत्यस्याविद्यमानवद्भावो न स्यात् 'पदात्' इत्यस्य पञ्चम्यन्तत्त्वेनाव्यवहितोत्तरस्यैव कार्येऽविद्यमानवद्भावेन प्रकृते 'इन्द्र' इत्यनेन व्यवहितत्वादिति चेन्न, 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यत्र पञ्चम्यन्तपदाभावेन व्यवहिताव्यवहितसाधारण्येन पूर्वत्वविशिष्टस्य परत्वविशिष्टस्य चापेक्षणेनाविद्यमानवद्भावबोधनात्।

ननु 'सर्वदा रक्ष देव नः' इत्यत्र देवेत्यस्याविद्यमानवद्भावेनास्मच्छब्दस्य पदात्परत्वाभावात् नसादेशो न स्यादत आह - **सर्वदेति**। **ततः**—देवशब्दात्। **प्राचीनम्**—पूर्ववर्ति **'रक्ष'** इति पदं निमित्तत्वेनाश्रित्य **आदेशः** 'अस्मान्' इत्यस्य नसादेशः। **एवमिति**—**'इमं मे गङ्गे यमुने'** इति मन्त्रे—

'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुयासुषोमया॥'
( म० १० अनु० ६–७५ सू० ५ ऋक् )

अत्र प्रधानभूताः सप्त नद्यः स्तूयन्ते—हे गङ्गे, हे यमुने, हे सरस्वति, हे शुतुद्रि, हे परुष्णि, असिक्न्याऽवयभूतया सहिते मरुद्वृधे, वितस्तया सुषोमया च सहिते आर्जीकीये, एवं सप्त नद्यः यूयं मे स्तोमं स्तोत्रं मदीयमासचत = आसेवध्वम्। शृणुहि = शृणुत। सर्वेषां निघातः। 'आमन्त्रितस्य च' इत्यनुदात्तत्वम्। सर्वशब्दार्थमाह—**यमुने** इत्यादिभ्यः **प्राचीनमिति**—'यमुने' इति आदिर्येषां प्राचीनानाम्। तेभ्यः तद्गुणसंविज्ञानबहुव्रीहिणा यमुने, सरस्वति, शुतुद्रि, इत्येतेषु एकैकस्मात्—

**प्राचीनानाम्**—'यमुने' इत्यत्र 'गङ्गे' इति प्राचीनम्, 'सरस्वती' इत्यतः 'गङ्गे यमुने' इति प्राचीने, 'शुतुद्रि' इत्यतः 'गङ्गे, यमुने, सरस्वति', इत्येतानि प्राचीनानि आमन्त्रितानि। तेषां सर्वेषामविद्यमानवद्भावेऽपि मेरूपपूर्वपदात्परत्वमादाय गङ्गे-इत्यादीनां त्रयाणामामन्त्रितानां निघातः।

'शुतुद्रि' इत्यस्य नानुदात्तत्वम्, तस्य द्वितीयपादादिस्थत्वेन 'अपादादौ' इति पर्युदासात्। 'आमन्त्रितस्य च' इति सूत्रे 'पदस्य, पदात्, अनुदात्तं सर्वमपादादौ' इत्याद्यनुवृत्तेः। 'इमं मे गङ्गे' इति ऋक् जगतीछन्दस्का, जगती च द्वादशाक्षरपादा। तस्याः प्रथमपादः सरस्वतिशब्दान्तः। तदाह **मेशब्दमाश्रित्येति**। ननु 'लक्ष्मीपते तेऽङ्घ्रियुगं नमामि' इत्यत्र, 'प्रतापरुद्र ते ख्यातिः' इत्यादौ 'लक्ष्मीपते, प्रतापरुद्र' इत्यनयोरामन्त्रितयोरविद्यमानवद्भावेन पदात्परत्वाभावात्कथं 'ते' इत्यादेश इति चेन्न, अत्र 'ते' इत्यस्य विभक्तिप्रतिरूपकाव्ययत्वात्।

**सर्वेषां निघात इति**—अयं निघातः पदविभागकाले एव श्रूयते, न तु संहिताकाले। तत्र 'स्वरितात्संहितायामनुदात्तानाम्' ( १–२–३९ ) इत्यनेन स्वरितात्परेषामनुदात्तानामेकश्रुतिविधानात्। इदम्शब्दः 'फिषोऽन्त उदात्तः' इति प्रातिपदिकस्वरेणान्तोदात्तः। अम् विभक्तिः 'अनुदात्तौ सुप्पितौ' ( ३–१–४ ) इत्यनुदात्तात्पदाद्यत्वे 'अमि पूर्वः' इत्येकादेशः 'एकादेश उदात्तेनानुदात्तः' इत्युदात्तः 'मे' इति 'अनुदात्तं सर्वम्' ( ८।१–१८ ) इत्यनुदात्तम्। तस्य 'उदात्तादनुदात्तस्य स्वरितः' ( ८–४–६६ ) इति स्वरितत्वम्। ततः परेषामनुदात्तानां 'गङ्गे' इत्यादीनामेकश्रुतिः।

ननु 'मे' इति स्वरितस्य 'स्वरितात्संहितायाम्' इति दृष्ट्या असिद्धतया एकश्रुतेरप्राप्तिः। न च 'स्वरितात्संहितायाम्' इति सूत्रसामर्थ्यादसिद्धत्वाभावः, 'तित्स्वरितम्' ( ६–१–१८५ ) इति विहितस्वरितस्यासिद्धत्वाभावेन 'क्व वः सुम्नाः' इत्यादौ सूत्रस्य चारितार्थ्यादिति चेन्न,

*नामन्त्रिते समानाधिकरणे सामान्यवचनम् । [ ८-१-७३ ]*

विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत्स्यात् । हरे दयालो नः पाहि । अग्ने तेजस्विन् । 'विभाषितं विशेषवचने' । अत्र भाष्यम्—'बहुवचनमिति वक्ष्यामि' इति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा । यूयं प्रभवः देवाः शरण्याः, युष्मान्भजे, वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशाः ।

---

'तस्यादित उदात्तम्' ( १-२-३२ ) इत्यारभ्य 'उदात्तात्स्वरितपरस्य सन्नतरः' ( १-२-४० ) इत्यन्तानां नवसूत्राणाम् 'अ अ' ( ८-४-६८ ) इति सूत्रात्प्राक् भाष्ये पाठकरणेनासिद्धत्वाभावात् । तदुक्तम् 'तस्यादितः' इति सूत्रे भाष्ये 'न ब्रूमो देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । किं तर्हि ? परमेतत्सूत्रकाण्डमिति' इति । अस्यायमाशयः—एतानि नवसूत्राणि आष्टमिकात्स्वरितविधायकात्परम् 'अ अ' इत्यतः प्राक् कर्तव्यानीत्यर्थः ।

'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' ( १-२-३७ ) इति सूत्रेण स्वरितस्य उदात्तविधानाज्ज्ञापकात्सिद्धः स्वरित इति ज्ञापनाच्च । नच 'सुब्रह्मणि साधुः' इत्यर्थे यति 'तित्स्वरितम्' इति स्वरितत्वे टापि आन्तरतम्यात्स्वरितादेशे 'सुब्रह्मण्योम्' इत्यत्र स्वरितस्यासिद्धत्वाभावात्सूत्रस्य चरितार्थत्वमिति वाच्यम् 'एकादेश उदात्तेनोदात्तः' इत्यनेन उदात्तस्यैवैकादेशस्य विधानेन स्वरितैकादेशाभावात् । अविद्यमानवद्भावस्य निषेधस्थलमाह—

**नामन्त्रिते समानाधिकरणे सामान्यवचनम्** ( ८-१-७३ ) इति 'आमन्त्रितम्' इति, 'अविद्यमानवत्' इति चानुवर्तते । सामान्यम् विशेष्यम् । तदुच्यतेऽनेनेति सामान्यवचनम् विशेष्यवचनमिति यावत् । तेन च विशेषणमाक्षिप्यते । तच्च 'समानाधिकरणे' इत्यनेनान्वेति । समानमधिकरणमर्थो यस्य तत्समानाधिकरणम् ।

अधिकरणशब्द इहार्थपरः । केन समानमित्याकाङ्क्षायां प्रत्यासत्त्या सामान्यवचनेनेति लभ्यते । समानत्वञ्चैकार्थवाचकत्वेन । तदाह—**विशेष्यमित्यादि । नाविद्यमानवदिति**—विद्यमानवदेवेत्यर्थः । **हरे दयालो इति**—अत्र समानाधिकरणे विशेषणवाचके 'दयालो' इति पदे परे विशेष्यवाचकं हरिपदं नाविद्यमानवदिति 'दयालो' इत्यस्य पदात्परत्वेन 'आमन्त्रितस्य च' इति निघातो भवत्येव । एवम् 'हरे' इति पदात्परत्वात् 'अस्मान्' इत्यस्य नसादेशो भवत्येव तदाह—'**हरे दयालो नः पाहि**' इति । तथा 'अग्ने तेजस्विन्' इत्यत्र विशेष्यवाचकस्य 'अग्ने' इत्यस्याविद्यमानवद्भावनिषेधात् 'अग्ने' इति पदात्परत्वं 'तेजस्विन्' इत्यस्येति 'आमन्त्रितस्य च' इत्यनुदात्तत्वं भवत्येव । अविद्यमानवद्भावविधायके 'अनुदात्तं सर्वम्' इति न सम्बध्यते, विधेयेन सम्बन्धानर्हत्वात्तत्साहचर्यात् 'अपादादौ' इत्यपि न सम्बध्यते इति 'अग्ने' इत्यस्य पादादिस्थत्वेऽपि न दोषः । कारिकं वाक्यमेव, न तु पादघटकम् । 'नामन्त्रिते' इति पूर्वसूत्रेणाविद्यमानवद्भावे प्रतिषिद्धे विकल्पमाह—

**विभाषितं विशेषवचने** ( ८-१-७४ ) इति । विशिष्यतेऽनेनेति विशेषः=विशेषणम् । तदुच्यतेऽनेनेति विशेषवचनम्—विशेषणवाचि तस्मिन् परे । '**बहुवचनम् इति वक्ष्यामि**' इति भाष्याद् बहुवचनान्तं विशेष्यमिति लभ्यते । तदाह—**बहुवचनान्तमिति** । बहुवचनान्तमित्यस्याभावे पूर्वसूत्रवैयर्थ्यापत्तिः, उभयोरेकविषयत्वात् । **यूयमिति**—'यूयम्' इति बहुवचनान्तं विशेष्यम् । **'यूयम्'**—इत्यविद्यमानवद्भावनिषेधे पदात्परत्वात् प्रभव इति अनुदात्तः । निषेधाभावेऽविद्यमानवद्भावे पदात्परत्वाभावात् 'प्रभवः' इत्याद्युदात्तः । **देवा इति**—शरणं रक्षणं तत्र साधवः **शरण्याः**—रक्षका इत्यर्थः । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी । अत्रापि 'शरण्याः' इत्यस्य अविद्यमानवद्भावनिषेधे निघातत्वे निघातत्वम्, निषेधाभावे आद्युदात्तत्वम् । आमन्त्रिते किम्-'देव करोषि' अत्र देव इत्यस्याविद्यमानवद्भावो मा भूत् ।

सुपात्, सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ ।

पादः पत् । [ ६-४-१३० ]

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः ।

---

ननु 'सम्बोधनपदञ्च यच्च तत्क्रियायां विशेषणम् ।'

इति हर्युक्तेः 'देव' इत्यस्य विशेष्यवाचकत्वाभावान्नात्र दोष इति चेन्न, प्रतीतिसिद्धस्य विशेष्यविशेषणभावस्य द्रव्यं क्रियादिषु प्रतीतिभेदेन विपरिमाणत्वेऽपि प्रतीतिं विनाऽपि वस्तुनिष्ठस्य सामान्यविशेषभावस्य 'वर्णो वर्णेन' ( १-१-६६ ) इति सूत्रभाष्यसम्मततया वस्तुनियतत्वेन—द्रव्यस्य क्रियासमभिहारे विशेष्यत्वस्य स्वीकारात्, स्वसमानाधिकरणपदप्रयोज्यविषयतानिरूपित-विषयताप्रयोजकत्वे सति नामपदप्रयोज्यविषयतानिरूपिताभेदसम्बन्धावच्छिन्नविषयताप्रयोज-कत्वाभाववत्त्वस्यैव सामान्यवचनत्वाच्च । प्रकृते तत्त्वस्य सत्त्वेन देवस्य सामान्यवचनत्वाच्चतेः । सामान्यवचनं किम् ? 'अघ्न्ये देवि सरस्वति इडे काव्ये' इत्यादौ पर्य्यायेषु परेषु निषेधो मा भूत् । नच पर्य्यायेषु प्रवृत्तिनिमित्तभेदविशिष्टैकार्थबोधकत्वरूपसमानाधिकरणत्वाभावाददोषः, एकार्थ-विशेष्यकबोधजनकत्वरूपसामानाधिकरण्यस्यैवात्र विवक्षितत्वात् ।

वस्तुतस्तु एकार्थविशेष्यकबोधजनकत्वमपि पर्य्यायस्थले नास्ति, विशेषणाभावे एकार्थ-विशेष्यकबोधस्याप्यभावात् । प्रवृत्तिनिमित्तभेदाभावे एकार्थबोधकत्वे पर्य्यायत्वमेवेति सामान्यवचन-ग्रहणं त्यक्तुं शक्यम् । भाष्येऽपि सामान्यवचनं विशेषवचनत्वासम्भवाद्विशेषवचनेनैव सामान्यवचनत्वे लब्धे सामान्यवचनग्रहणं न कर्तव्यमित्युक्तम् । तथा हि—'सामान्यवचनं शक्यमकर्तुम् । कथम् ? 'विभाषितं विशेषवचने' इत्युच्यते । तेन यत्प्रति विशेष्यवचनमित्येतद्भवति तस्य भविष्यति । अपर आह—'विशेषवचने' इति शक्यमवक्तुम् । कथम् ? सामान्यवचनं विभाषितमित्युच्यते । तेन यत्प्रति सामान्यवचनमित्येतद्भवति तस्य भविष्यति । किञ्च प्रत्येतद् भवति विशेषवचनम्' इति । अनेन भाष्येण अन्यतरच्छक्यमकर्तुमित्युक्तं भवति ।

यद्यपि भाष्ये 'नामन्त्रिते समानाधिकरणे' इति सूत्रेण 'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये' इति पर्य्यायेषु अविद्यमानवद्भावनिषेधमाशङ्क्य 'नामन्त्रिते समानाधिकरणे सामान्यवच-नम्' इत्येको योगः । 'विभाषितं विशेषवचने' इत्यपरो योगः । तेन पर्य्यायस्थले सामान्यवचनत्वा-भावान्न निषेध इत्युक्तम् । एवञ्च सामानाधिकरण्यं तु तत्रास्तीति ध्वनितम् । पर्य्यायेषु प्रवृत्तिनिमित्त-भेदाघटितमेव सामानाधिकरण्यं भाष्यसम्मतं प्रतीयते । तच्च एकार्थविषयकबोधजनकत्वरूपम् । तदुक्तं नागेशेन 'ननु प्रवृत्तिनिमित्तभेदगर्भम्' इति ।

**सुपादिति**—शोभनौ पादौ शोभना वा पादा अस्येत्यर्थे बहुव्रीहिः । 'संख्यासुपूर्वस्य' ( ५-४-१४० ) इति पादशब्दस्यान्त्यलोपरूपसमासान्तः **सुपादिति**—अस्य सुटि रूपाणि सुपा-दित्यादीनि । शसादावचि विशेषमाह—

**पादः पत्** ( ६-४-१३० ) । अत्र 'अङ्गस्य' 'भस्य' ( ६-४-१२९ ) इति चाधिकम् । 'पादः' इत्यस्याङ्गविशेषणत्वेन तदन्तविधिस्तदाह—**पाच्छब्दान्तं यदङ्गमिति** । ननु भविशेषण-त्वेन तदन्तविधौ 'पाच्छब्दान्तं यद्भम्' इत्यपि स्यादिति चेन्न, 'अर्वणस्त्रसावनञः' इत्यादिपूर्व-सूत्रेषु षष्ठाध्यायस्य चतुर्थपादपर्यन्तं भाधिकारात् परेषु च सूत्रेषु अङ्गविशेष्यकतदन्तविधेः सिद्धतयाऽ सिद्धमविशेष्यकतदन्तविधिकल्पने गौरवात् ।

**तदवयवस्येति**—यद्यपि पाच्छब्दान्तस्याङ्गस्य पदादेश इत्येवार्थः प्राप्नोति, आदेशस्थान-षष्ठ्या एवोचितत्वात् तथापि 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया निर्दिश्यमान-पाच्छब्दस्यैवादेश इत्यभिप्रायेणाह—

सुपदा। सुपदा। सुपाद्भ्यामित्यादि ॥ इति दान्ताः ॥ अग्निं मन्यतीत्यग्निमत्, अग्निमद्। अग्निमथौ। अग्निमथः। अग्निमद्भ्यामित्यादि ॥ इति थान्ताः ॥ 'ऋत्विग्-' इत्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन्।

---

तदवयवस्य पाच्छब्दस्येति - भसंज्ञकाङ्गावयवस्येत्यर्थः। इयं च परिभाषा 'षष्ठी स्थानेयोगा' इति सूत्रे भाष्ये स्पष्टा। तथा हि—'किमर्थं पुनरिदमुच्यते ? षष्ठी स्थानेयोगवचनं नियमार्थम्। नियमार्थोऽयमारम्भः। एकशतं षष्ठ्यर्थाः। यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति। इष्यते च व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति। अवयवषष्ठ्यादीनां नियमस्याप्राप्तिः। संदेहे नियमः। न चावयवषष्ठ्यादिषु संदेहः।

यद्यपि लोके बहवः सम्बन्धाः आर्याः, यौनाः स्रौवाश्चेति। शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदतः स्थानात्। शब्दस्यापि शब्देनानन्तरादयोऽभिसम्बन्धाः, 'अस्तेर्भूर्भवतीति सन्देहः स्थानेऽनन्तरे समीपे इति। सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति' स्थाने इति व्याख्यास्यामः। न तर्हि अयं योगो वक्तव्यः ? वक्तव्यश्च। किं प्रयोजनम् ? षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता। किं कृतं भवति ? 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषा न कर्तव्या भवति।' इति।

अयम्भावः—अस्यैव सूत्रस्य 'निर्दिश्यमानस्यादेशा भवन्तीत्ययमर्थः। षष्ठीप्रकृतिरेव स्थानेन युज्यते, न तु शास्त्रान्तरसहकारेण प्रतीयमानम्। यथा 'पादः पत्' इत्यत्र पाच्छब्द एव षष्ठीप्रकृतिरिति तस्यैव 'स्थाने' इत्यनेन सम्बोधो नतु तदन्तस्य। 'अलोऽन्त्यस्य' इति 'आदेः परस्य' इति चारम्भसामर्थ्यात् 'निर्दिश्यमानपरिभाषाया बाधकौ। तेन 'पुमः खय्यम्परे' 'उदः स्थास्तम्भोः' इत्यादौ न दोषः, षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिरूपनिर्दिश्यमानत्वस्य प्रकृते पाच्छब्दे एव सत्त्वात्। शास्त्रान्तरासहकारेण या उपस्थितिः सैव प्राथमिकोपस्थितिः। तदन्तस्योपस्थितिस्तु 'येन विधिः' इति सहकारेणेति न सा प्राथमिकोपस्थितिः। सुपद्भ्यामित्याद ति—आदिना सुपदे, सुपदः, सुपदः, सुपदोः, सुपदाम्, सुपदि—एषां संग्रहः।

अथ थान्ताः—ननु वर्णसमाम्नाये दकारोत्तरम् 'ख-फ-छ-ठ-थ' इति पाठात् खाद्यन्तानाम् 'ओख्-राख्-लाख् शोषणालमर्थयोः' 'ऋफ हिंसायाम्' 'उच्छी विवासे' 'पठ व्यक्तायां वाचि' एभ्यः क्विपि 'ओक्, ओग्, 'राक्, राग्, लाक्, लाग्, ऋप्, ऋब्, उट्, उड् पट्, इत्यादीनि कथं नोदाहृतानीति चेन्न, एषामप्रसिद्धत्वेनोपेक्षणात्।

अग्निमदिति—अग्निं मन्यति, मथ्नाति वेति विग्रहे 'मन्थ विलोडने, मथे विलोडने' इति भौवादिकात्, क्रैयादिकाद्वा कर्तरि क्विपि नलोपे 'उपपदमतिङ्' (२-२-१९) इति समासे 'अग्निमथ्' इति, ततः सौ तस्य लोपे जश्त्वचर्त्वे 'अग्निमत्, अग्निमद्' इति। यस्तु 'मथि हिंसासंक्लेशनयोः' इति ततः क्विपि इदित्वान्नलोपाभावे 'अग्निमन्, अग्निमन्थौ' इत्यादिनकारघटितमेव रूपम्, भ्यामादौ 'अग्निमन्भ्याम्, अग्निमन्सु' इति थान्ताः।

अथ चान्ताः 'ऋत्विगिति'—'ऋत्विग्दधृक्' (३-२-५९) इति सूत्रेण प्रपूर्वकाद् 'अञ्चु गतिपूजनयोः' इत्यन्ते गत्यर्थकात् धातोः कर्तरि क्विन्। ननु 'ऋत्विक्' इति सूत्रे 'सुपि' इत्यस्यानुवादात्' 'सुप्युपपदे' इत्ययुक्तमिति चेन्न 'उष्णिक्' साहचर्येण तथोक्तेः। ओख् राख् लाख्-शोषणालमर्थयोः पर ऋफ ऋम्फ हिंसायाम्, (तुदा० प०) उच्छी विवासे (भ्वा० प०) प्रायेण विपूर्वः। पठ व्यक्तायां वाचि (भ्वा० प०) 'अञ्च' इत्यत्र नकारो नस्थानिकानुस्वारस्थानिकः 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजश् शकारश् चेषांट्टवर्गस्तवर्गजः।'

इत्युक्तेः। नकारस्येत्संज्ञालोपौ। इकार उच्चारणार्थ इत्संज्ञको वा। 'लशक्वतद्धिते' इति ककार इत्। 'वेरपृक्तस्य' इति वकारलोपः।

*अनिदितां हल उपधायाः क्ङिति । [ ६-४-२४ ]*

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च । 'उगिदचाम्-' इति नुम्, 'संयोगान्तस्य लोपः'। नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकारः, प्राङ्। अनुस्वारपरसवर्णौ प्राञ्चौ । प्राञ्चः । प्राञ्चम्, प्राञ्चौ ।

*अचः । [ ६-४-१३८ ]*

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ।

---

'प्र अञ्च्' इत्यत्र विशेषमाह—

अनिदितां हल उपधायाः क्ङिति ( ६-४-२४ ) इति । 'अङ्गस्य' इत्यधिकृतम् । तत् 'अनिदिताम्' इति श्रूयमाणबहुवचनान्तविशेषणवशाद् बहुवचनेन विपरिणम्यते । इत् = ह्रस्वेकारः । तत्र यदि न इत्-अनित्=ह्रस्वेकारभिन्नः; नञ्समासं कृत्वा ह्रस्वेकारभिन्न इत्=इत्यत्र नलोपापत्तिः । 'टुनदि समृद्धौ' इत्यत्र ह्रस्वेकारभिन्नः 'टु' इति स इत्यस्य तादृशो नन्दधातुरिति नलोपः स्यात्, 'बध्नाति' इत्यादौ ह्रस्वेकारभिन्नस्य इत्संज्ञकस्याभावात् नलोपो न स्यात् । तस्मात् 'इत्' ह्रस्वेकार इत्संज्ञको यस्य स इदित्, नास्ति इदिद् येषु अङ्गेषु तानि अनिदिन्ति अङ्गानि तेषामनिदितामङ्गानामित्यर्थः । बहुव्रीहिघटितो बहुव्रीहिः ।

तेन 'अमंस्त' इत्यत्र 'अमन्स्' रूपाङ्गस्य सिज्रूपो य इदित् तद्घटितत्वान्नलोपो न । इदितो येषां तानि 'इदिन्ति' अङ्गानि । न इदिन्ति तेषामङ्गानामित्यर्थे तु 'अमंस्त' इत्यत्र नलोपो दुर्वारः स्यात् 'अमन् स्' इत्यङ्गस्येदिद्भिन्नत्वात् ।

इदञ्च व्याख्यानम् 'इर इत्संज्ञा वाच्या' इति वार्तिकारम्भपक्षे । यदा तु वार्तिकं नारभ्यते । इकारो रकारश्चेत्यस्येत्यर्थे इरित्संज्ञकेषु 'इदितो नुम् धातोः' ( ७-१-५८ ) इति नुम्वारणाय यथा 'इत् = इत्संज्ञकश्चासौ इत् = ह्रस्वाकारश्चेति 'इदितः' तदन्तविधौ इत्संज्ञकेकारान्तस्य नुम् इत्यर्थेन 'उबुन्दिर्' इत्यादौ इत्संज्ञकरेफान्तत्वेन न नुम् तथा प्रकृते इत्संज्ञकश्चासौ इत् चेति इदित् तदन्तभिन्नानामङ्गानामुपधाभूतस्य नस्य लोप इत्यर्थः । तदा 'हनः सिच्' इति ज्ञापकाद् 'विकरणाघटितानामङ्गानामुपधाभूतस्य नस्य नलोपः' इत्यर्थेन 'अमंस्त' इत्यत्र नलोपो न । अन्यथा 'हनः सिच्' इत्यस्य वैयर्थ्यापत्तिः 'आ, हन् स्त्' इत्यत्र 'अनिदिताम्' इत्यनेन सिजन्तस्याङ्गस्य उपधाभूतस्य नस्य लोपे 'ह्रस्वादङ्गात्' इति सिचो लोपे च 'आहत' इत्यस्य सिद्धौ 'अनुदात्तोपदेश' इत्यनेन नलोपार्थं सिचः कित्त्वविधानं व्यर्थमेव स्यात् । तदेव व्यर्थीभूय ज्ञापयति—'विकरणाघटितानामङ्गानामेव उपधाभूतस्य लोपो भवति' इति । अत एव 'सच्' इति भाष्यीयन्यासेऽपि 'अमंस्त' इत्यत्र नलोपो न । हलन्तानाम् इति, अनिदितामिति च 'अङ्गानाम्' इत्यस्य विशेषणम् ।

'अङ्गानाम्' इतीदमवयवावयविभावसम्बन्धेन 'श्नान्नलोपः' इत्यतोऽनुवृत्ते लुप्तषष्ठीके नकारेऽन्वेति । तदाह-उपधाया नस्येति । 'प्र अञ्च्' इत्यत्र । इति चकारात्पूर्वस्य नस्य लोपे 'प्र अच्' इति जाते 'कुगतिप्रादयः' इति समासे प्रातिपदिकत्वात्सुटि विशेषमाह—उगिदचामिति—'उगिदचाम्' ( ७-१-७० ) इत्यनेन नलोपिनोऽञ्चतेर्नुमि 'हल्ङ्याब्भ्यः' इति सोर्लोपे, 'संयोगान्तस्य' इति चस्य लोपे नासिकास्थानसाम्यात् कुत्वेन ङकारादेशे 'प्राङ्' इति । 'प्राच् औ' इत्यादिसुटि नुमि नस्य 'नश्चापदान्तस्य' इत्यनुस्वारे 'अनुस्वारस्य ययि' इति ञकारे परसवर्णे 'प्राञ्चौ' इत्यादि । नस्य चुत्वं तु न, श्चुत्वस्यासिद्धतयाऽनुस्वारस्यैव प्रवृत्तेः । शसादावचि विशेषमाह—

अचः ( ६-४-१३८ ) इति । 'अचः' इति 'अञ्चु' धातोर्लुप्तनकारस्यानुकरणं षष्ठ्यन्तम् । 'भस्य' इत्यधिक्रियते । 'अल्लोपोऽनः' इत्यतः 'अत्' इति लुप्तषष्ठ्यन्तम्, लोप इति चानुवर्तते, तदाह—लुप्तेत्यादि । ननु सामानाधिकरण्येनान्वयसम्भवे वैयधिकरण्येनान्वयस्यान्याय्यत्वाद्यदि

चौ । [ ६-३-१३८ ]

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः, प्राचा, प्राग्भ्यामित्यादि ।

---

भसंज्ञकस्य अञ्चतेरित्यन्वयः स्यात्तदा 'प्रतीचः' इत्यादि न सिध्येत्, उपसर्गविशिष्टस्यैवाञ्चतेर्भत्वेन भसंज्ञकस्याञ्चतेरभावात् ।

भसंज्ञकं यदञ्चत्यन्तं तस्याकारस्य लोप इत्यर्थे तु 'प्रतीचः' इत्यादावुपसर्गाकारस्यापि लोपापत्तिः । आवृत्त्या अञ्चत्यन्तं यद् भं तस्याञ्चतेरकारस्य लोप इत्यर्थे प्रत्यञ्चमञ्चतीति 'प्रत्यङ्' ततः शसादौ पूर्वस्याञ्चतेरप्यकारलोपापत्तिरिति चेन्न, 'द्युप्रागपागुदक्प्रतीचो यत्' (४-२-१०१) इति निर्देशाद् भसंज्ञकं यदञ्चत्यन्तमङ्गं तस्य योऽसर्वनामस्थानाजादिस्वाद्यव्यवहितपूर्वोऽकारस्तस्य लोप इत्यर्थेन एकवर्णव्यवहितस्याकारस्य लोपविधानात्, 'अल्लोपोऽन' इतिवत् । असर्वनामस्थानाजादिस्वादेरनाक्षेपे तु 'अनन्त्यविकारेऽन्त्यसदेशस्य' इति न्यायेनान्त्यस्यैवाञ्चतेरकारस्य लोपविधानाच्च । ननु सवर्णदीर्घस्य जातत्वेनातोऽभावाल्लोपानापत्तिरिति चेन्न, 'पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न' इति परिभाषया उत्तरपदघटकाल्लोपे कर्तव्ये पूर्वं दीर्घैकादेशाप्रवृत्तेः ।

तदुक्तम्—'अन्तादिवच्च' ( ६-१-८५ ) इति सूत्रे भाष्ये 'आचार्य्यप्रवृत्तिर्ज्ञापयति पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति । यदयं 'नेन्द्रस्य परस्य' इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इन्द्रे द्वावचौ । तत्रैको यस्येति लोपेन ह्रियते अपर एकादेशेन । अनच्क इन्द्रः सम्पन्नः, तत्र को वृद्धेः प्रसङ्गः । पश्यति त्वाचार्य्यः पूर्वोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति । ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति' इति । तथा च शसादावचि नुमोऽभावेन दीर्घैकादेशाभावेन च 'प्र अच् अस्' इति स्थितौ 'अचः' इति अञ्चतेरकारस्य लोपे 'प्र च् अस्' इति जाते विशेषमाह—

**चौ** ( ६-३-१३८ ) इति । लुप्ताकारनकारस्य 'अञ्चु' धात्ववयवस्य 'चु' इत्यनुकरणस्य 'चौ' इति सप्तम्यन्तम्, न तु चवर्गस्य 'चु' इत्यस्य 'चजोः कुघिण्ण्यतोः' ( ७-३-५२ ) इत्यत्र जकारे परे दीर्घादर्शनात् 'छे च' इति सूत्रारम्भसामर्थ्याच्च । अन्यथा छे परे सर्वत्र 'चौ' इति दीर्घप्रवृत्त्या 'दीर्घात्' इत्येव तुकि सिद्धया तद्वैयर्थ्यं स्पष्टमेव । नाप्यचो (स्वरस्य ) ग्रहणम्, 'द्युप्रागपागुदक्प्रतीचो यत्' ( ४-२-१०१ ) इति निर्देशात् 'आतो धातोः' इत्यारम्भाच्च ।

'अणः' इति किम् 'कर्तृचः' इत्यादौ दीर्घो मा भूत् । यदि तु 'हलः' इति सूत्रभाष्येऽस्यानभिधानाद्दोषाभाव इत्युच्यते तदा 'तृतीयः' इत्यत्र दीर्घवारणाय 'संप्रसारणस्य' ( ६-३-१३९ ) इत्यत्रोत्तरार्थां अणोऽनुवृत्तिः । यदि तु 'द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्' ( २-२-३ ) इति सूत्रे निपातनाद्दीर्घाभावः कल्प्यते तदाऽणोऽनुवृत्तिर्व्यर्था । 'ढ्रलोपे' इत्यतः पूर्वस्य, दीर्घः, अण इति पदत्रयमनुवर्तते । तदाह—**लुप्ताकारनकार इत्यादि** । इति चकारे परे प्रशब्दाकारस्य दीर्घे **'प्राचः'** इत्यादिरूपम् । यद्यप्यत्राकारलोपाभावेऽपि सवर्णदीर्घेण 'प्राचः' इति सिद्ध्यति तथाऽपि 'प्रतीचः' इत्याद्यर्थं लोपस्यावश्यकतया न्याय्यत्वादिहैवोपन्यस्तम् ।

**प्राग्भ्यामिति**—'क्विन्प्रत्ययस्य' इत्यस्यासिद्धतया 'चोः कुः' इति कुत्वमत्र ।

**प्रत्यङिति**—प्रतिपूर्वकादञ्चेः 'ऋत्विग्दधृक्' इति क्विन्, 'अनिदिताम्' इति नलोपः, 'इको यणचि' इति यण् 'प्रत्यच्' 'कुगतिप्रादयः' (२-२-१८) इति समासत्वात् 'कृत्तद्धित' इति प्रातिपदिकत्वात् स्वादयः । तत्र सुटि 'अनिदिताम्' इति नुमि 'हल्ङ्याप्' इति सुलोपे चस्य संयोगान्तलोपे 'क्विन् प्रत्ययस्य' इति नस्यान्तरतम्यात्कुत्वेन ङकारे 'प्रत्यङ्' इति । **प्रत्यञ्चाविति**—नुमि नस्यानुस्वारपरसवर्णयोः 'प्रत्यञ्चौ' इत्यादि ।

ननु 'प्रति अञ्च्' इति स्थितौ वर्णद्वयनिमित्तकत्वेनान्तरङ्गत्वाद्यणि 'अनिदिताम्' इति नलोपे 'प्रत्यच्' शब्दात् शसादौ 'अचः' इति अलोपे पूर्वस्याणोऽभावात् 'चौ' इति दीर्घो न स्यादत आह—

प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः। प्रत्यञ्चम्, प्रत्यञ्चौ। 'अचः' इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते, 'अकृतव्यूहा' इति परिभाषया। प्रतीचः। प्रतीचा, 'अमुमञ्चति' इति विग्रहे 'अदस् अञ्च्' इति स्थिते।

*विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये [ ६-३-९२ ]*

अनयोः, सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्ते अञ्चतौ परे। 'अदद्रि अञ्च्' इति स्थिते, यण्।

---

**'अचः' इति लोपस्य विषय इति—अकृतव्यूहा इति।** न कृतो विशिष्ट ऊहः = शास्त्रप्रवृत्तिविषयको निश्चयो यैस्ते 'अकृतव्यूहाः पाणिनीयाः'। बहिरङ्गेण अन्तरङ्गशास्त्रनिमित्तविनाशे सम्भाविते अन्तरङ्गं न प्रवर्त्तयन्ति पाणिनीयाः। अत्र मानन्तु 'समर्थानां प्रथमाद्वा' ( ४-१-८२ ) इति सूत्रे 'समर्थानाम्' इति पञ्चम्यर्थे षष्ठी समर्थेभ्य इत्यर्थः। समर्थत्वञ्चात्र शक्तत्वरूपम्। शक्तत्वञ्चार्थ-प्रतिपादकत्वम्। तच्च कृतसन्धेरेव सम्भवति। न हि 'सु उत्थितः' इति कल्पनयापि अर्थबोधकत्वम् 'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इत्युक्त्या सूत्थितशब्दे एव सामर्थ्यस्य सत्त्वात्। तदाह—**कृतसन्धेरिति।** अन्तरङ्गत्वात्कृतसन्धेरेव प्रत्ययोत्पत्त्या तद् व्यर्थं सत् 'अकृतव्यूहपरिभाषां ज्ञापयति। अत्र हि भाविन्या आदिवृद्धया अन्तरङ्गस्य 'अकः सवर्णे दीर्घः' इत्यस्य सवर्णाचो विनाशः स्पष्ट एव।

प्रकृते 'प्रति अच् अस्' इत्यत्र बहिरङ्गेण 'अचः' इति सूत्रेण अन्तरङ्गस्य 'इको यणचि' इत्यस्य निमित्तस्य अकारस्य लोपेन विनाशे सम्भाविते अन्तरङ्गं न प्रवर्तयन्तीति पूर्वं यण् न स्यादिति 'चौ' इति दीर्घे 'प्रतीचः' इत्यादि सिध्यति। भाष्ये तु 'एतदेव ज्ञापयत्याचार्यो न चौ प्रत्यङ्गं ( अन्तरङ्गम् ) भवतीति यदयं चौ दीर्घत्वं शास्ति' इत्युक्तम्। अत्र कैयटः 'प्राचा, दधीचा' इत्यादौ अन्तरङ्गत्वादेकादेशयणादेशयोः कृतयोरनजन्तत्वाद्दीर्घो न प्राप्नोतीत्याह'।

**अमुमञ्चतीति**—न दस्यते=उत्क्षिप्यतेऽङ्गुलिर्यत्र सः 'अदस्' = परोऽक्षे ज्ञाते पदार्थे। 'दसु उपक्षये' इत्यतः कर्मणि क्विप्। इदन्तया निर्द्धारणाय पुरोवर्तिन्येवाङ्गुलिनिर्देशः सम्भवति, नापुरोवर्तिनि। अपुरोवर्तिनि अदश्शब्दः। अमुमपुरोवर्त्तिनं पदार्थम् अञ्चति=गच्छति—जानाति वा इति विग्रहे अञ्चतेः क्विन् नलोपे 'अदस् अच्' इति जाते। अदश्शब्दात् 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठ्याम् उपपदसमासे समासत्वेन प्रातिपदिकत्वात् ङसो लुकि सौ 'अदस् अच् स्' इति स्थितौ विशेषमाह—

**विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये** ( ६-३-९२ ) इति। विषु = साम्यं नानात्वं वा अञ्चतीति विष्वक् = समन्तादित्यर्थे अव्ययमव्युत्पन्नम्, यथा 'विष्वक्सेनो जनार्दनः' इति। तथा चात्र प्रतिपदोक्तत्वाद्विष्वक्शब्देनाव्ययस्यैव ग्रहणम्। सूत्रे 'अद्रि' इति लुप्तप्रथमान्तम्। **अनयोरिति**—विष्वग्देवशब्दयोरित्यर्थः। **सर्वनाम्न इति**—चशब्देन 'आ सर्वनाम्नः' ( ६-३-९१ ) इत्यतः सर्वनाम्न इत्याकृष्यते इत्याह—**सर्वनाम्नश्चेति।**

यद्यपि अदश्शब्दार्थस्याञ्चत्यर्थे विशेषणतया समासनिष्ठशक्तिज्ञानजन्योपस्थितीयविशेष्यता-निरूपितप्रकारताश्रयत्वरूपोपसर्जनत्वसत्त्वेन सर्वनामत्वाप्राप्त्याऽञ्चत्यव्यवहितपूर्वस्यादसोऽद्र्या-देशो न प्राप्नोति।

तथाप्याकर्षकचकारकरणसामर्थ्यात्सर्वनामत्वं भूतपूर्वगत्या इत्यदोषः। यद्वा स्वान्तपर्य्याप्त-शक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्यैवोपसर्जनत्वेन प्रकृतेऽदश्शब्दान्तपर्य्याप्त-शक्तेरभावादुपसर्जनत्वाभावेन सर्वनामत्वं सुलभमिति सामर्थ्यं नाश्रयणीयम्।

**अप्रत्ययान्त इति**—आगत्य नित्यमविद्यमानः प्रत्ययः क्विबादिः। 'प्रत्ययग्रहणे' इति तदन्त-विधौ 'अप्रत्ययान्त' इति क्विन्नाद्यन्ते इत्यर्थः। अविद्यमानः प्रत्ययो यस्मादिति बहुव्रीहिस्तु चिन्त्यः,

अदसोऽसेर्दादुदो मः [ ८-२-८० ]

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । उ इति ह्रस्वदीर्घयोः

सर्वत्रैव यस्य कस्यचित् प्रत्ययस्य विद्यमानत्वात् गौरवाच्च । 'वप्रत्यये' इति पाठेऽपि 'वश्चासौ प्रत्ययः' इति विग्रहे अकारस्याविवक्षितत्वात् वप्रत्ययः = क्विन्नादिरेव । तथा च वप्रत्ययान्ते इत्यर्थः ।

अत्र 'विष्वग्देवयोश्च टेरद्रि चौ' इत्येवोचितम् 'चौ' ( ६।३।१३८ ) इत्यत्रेव लुप्ताकारनकारकेऽञ्चतावुत्तरपदे इत्यर्थेन सिद्धेरिति केचित् । एतन्मते धातुग्रहणे तदादिविधेरभावात् 'कृकमि' इत्यत्र 'कृकमादि' इति पठितव्यम् । कृकमावादी=आद्यवयवौ यस्योत्तरपदस्य तस्मिन्नुत्तरपदे इत्यर्थेन 'अयस्कृत्' इत्यादिसिद्धेः । अद्रिसध्र्यादेशावन्तोदात्तौ 'अद्रिसध्र्योरन्तोदात्तवचनम्, कृत्स्वरनिवृत्त्यर्थम्' इति भाष्यवार्त्तिकात्, 'गतिकारकोपपदात्कृत्' ( ६-२-१३९ ) इति प्राप्तस्य तत्पुरुषे कृदन्तप्रकृतिस्वरस्य बाधनार्थं तदुक्तेः । ततश्च अदसष्टेरद्र्यादेशे 'अदद्रि अच्' इति स्थितौ यणि 'अदद्र्यच्' इति जाते ततः सौ तस्य लोपे कार्यविशेषमाह—

'अदसोऽसेर्दादुदो मः' ( ८-२-८० ) इति । अत्र अदसः, असेः, दात्, उ, दः, मः, इति पदविभागः । न विद्यते सिः सकारो यस्य सोऽसिस्तस्य सकाररहितस्येत्यर्थः । 'सिः' इत्यत्रेकार उच्चारणार्थः । एतच्च 'अदसः' इत्यस्य विशेषणम् । सग्रहणं तत्स्थानिकौकाररेफयोरप्युपलक्षणम् । तेन अमुमिच्छति 'अदस्यति' 'अदोऽत्र' 'अदः' इत्यादौ न प्रवर्तते । न च अदकयतेः क्विपि 'अदक्' इत्यत्र मुत्वापत्तिः, निर्दिश्यमानपरिभाषया तदप्राप्तेः । न चाकज्विषये न सा, तस्यास्तिङन्तमात्रविषयकत्वात् ।

वस्तुतस्तु क्विबन्ते मुत्वमिष्टमेव । तेन 'अमुके' इत्यादि सिध्यति । भाष्येऽप्युक्तम्—'अदसोऽनोसे अनोकारस्य असकारस्य, अरेफस्येति' अस्य भाष्यस्य 'अदस' इति शेषः । यद्वा सूत्रे अदस्, ओ, अ, से, र, इति । अत्र 'अ' इति निषेधपरा । 'अदस्' इति लुप्तषष्ठीकम् । निषेधस्य ओकारे, सकारे, रेफे च सम्बन्धः । तथा च नास्ति ओकारः, सकारो रेफश्च य त्रादश्शब्दे तत्र मुत्वमिति सूत्रत एव लब्धे वार्त्तिकं न कर्तव्यम् इति ।

तथा च भाष्यम्—'अविभक्तिको निर्देशः' अदस्, ओ, अ, सेर् इति । ओकारात् परः प्रतिषेधः ( प्रतिषेधबोधकाकारः ) पूर्वम् तः (पूर्वरूपेणापह्नुतः) । ततः सकारः । ततो रेफ इति' इति ।

यद्वा अः=अकारः सकारस्य स्थाने यस्यादश्शब्दस्य तत्र मुत्वम् । तथा चाद्र्यादेशे सकारस्थानेऽकारादेशाभावेन मुत्वाभावे 'अदद्र्यङ्' इत्येव । तदुक्तम्—'अथवा नैवं विज्ञायते 'अदसः असकारस्येति । कथं तर्हि ? अः, अस्य सकारस्य सोऽयमसिरसेरिति। यद्येवममुमुयङिति न सिध्यति। 'अदद्र्यङ्' इति प्राप्नोति' इति । दादिति किम् ? 'अमुयोः' इत्यत्र एत्वेऽयादेशे च कृतेऽन्त्यस्य यकारस्य उत्वं मा भूत् । न च 'पदस्य' इत्यधिकारादत्रोत्वं न स्यादिति वाच्यम्, 'अदस्यति' इत्यत्र पदस्यादसो ग्रहणे मुत्वाप्राप्त्या 'असेः' इत्यस्य वैयर्थ्येन 'पदस्य' इत्यसम्बन्धज्ञापनेन, पदावयवस्यादस इति वैयधिकरण्येनान्वयज्ञापनेन वा तत्रापि मुत्वप्रवृत्तौ बाधकाभावात् । तथा च भाष्यम्—'तत्र पदाधिकारादपदान्तस्य न प्राप्नोति 'अमुया, अमुयोरिति । सिद्धन्तु सकारप्रतिषेधात् । कथम् । यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः 'अपदान्तस्यापि भवतीति' इति ।

ननु वृत्तौ 'उदूतौ' इति कथं सूत्रे 'उ' इत्यस्यैव श्रुतेरित्यत आह—'उ' इतीति–वस्तुत उक्तमेतत्—उश्च ऊश्चेति विग्रहे 'उ सु ऊ सु' इत्यस्य समाहारे द्वन्द्वसंज्ञकसमाससंज्ञायां प्रातिपदिकत्वे 'सुपो धातु' इति सुब्लुकि सवर्णदीर्घे ऊ इति स्थितौ 'स नपुंसकम्' इति नपुंसकत्वेन सोर्लुकि 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे 'उ' इति । अत्र शेखरकृतः—'ह्रस्वो नपुंसके' इति ह्रस्वत्वे सवर्णे इति दीर्घत्वे च प्राप्ते अपरनिमित्तकत्वरूपान्तरङ्गत्वेन पूर्वं ह्रस्वे ततो दीर्घे 'ऊ' इति स्यात् सवर्णदीर्घापेक्षया ह्रस्वस्यान्तरङ्गत्वादेव 'ऊकालोऽज्झ्रस्व' इति दीर्घनिर्देशः सङ्गच्छते। अपरनिमित्तकस्यान्तरङ्गत्वे

समाहारद्वन्द्वः ।

मानन्तु 'अतोऽम्' ( ६।१।३४ ) इति सूत्रे 'अतः' इति तपरकरणमेव । तथा हि अश्च आश्चेति समाहारद्वन्द्वे 'लघ्वक्षरं पूर्वम्' इति अकारस्य पूर्वनिपाते 'अ आ' इति दशायां नपुंसकह्रस्व–सवर्णदीर्घयोः प्राप्तयोरपरनिमित्तकत्वरूपान्तरङ्गत्वाद् ह्रस्वत्वे ततो दीर्घे 'आ' शब्दान्नपुंसके विकारकृतलक्ष्यभेदाभावेन लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्राप्त्या 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'आ' इत्यत्रामादेशाभावाय 'अतोऽम्' इति सूत्रे तपरकरणं चरितार्थम् । अपरनिमित्तकत्वरूपान्तरङ्गत्वानाश्रयणे तु परत्वात्सवर्णदीर्घे कृते ह्रस्वत्वे तपरोच्चारणं व्यर्थमेव स्यादिति तादृशान्तरङ्गत्वं ज्ञापयति ।

अन्ये तु सुमनायधातोर्विचि अलोपयलोपयोर्नपुंसके अमादेशवारणाय 'अतोऽम्' सूत्रे तपरकरणम् नात्र ह्रस्वप्राप्तिरलोपस्य स्थानिवत्त्वात् । 'ऊकालोऽच्' इति दीर्घनिर्देशस्तु इतरेतरयोगद्वन्द्वे ह्रस्वाप्राप्तेः सिद्धः । तथा च—'अश्च आश्चेति समाहारद्वन्द्वे 'अम्' इत्येव रूपम् । तथा च 'अदसोऽसेः' इत्यत्रापि 'उ ऊ' इति समाहारद्वन्द्वे अपरनिमित्तकत्वरूपान्तरङ्गे प्रमाणाभावेन परत्वात्पूर्वं दीर्घे ततो ह्रस्वे 'उ' इति निर्देशः सङ्गच्छते ।

किञ्च 'उदवोढाम्' इत्यत्र 'वदव्रज' इत्युपधावृद्धौ कृतायामाकारस्य ओकारविधानार्थं वर्णग्रहणम् इति भाष्योक्त्या ओकारे कृते वर्णभेदेन लक्ष्यभेदात्पुनः प्राप्ताया अपि वृद्धेरकरणेन 'विकारकृतलक्ष्यभेदो नाश्रीयते' इति ज्ञाप्यते। तत्र ज्ञापकसाजात्यादेकव्यक्तिकृतविकारस्यैव ग्रहणेन 'उ' इत्यत्र पूर्वं ह्रस्वेऽपि व्यक्तिद्वयवृत्तिदीर्घे विकारकृतेति न्यायाप्रवृत्त्या वर्णभेदेन लक्ष्यभेदात् लक्ष्ये लक्षणन्यायाप्रवृत्त्या पुनर्ह्रस्वे समाहारद्वन्द्वेऽपि 'उ' इति रूपसिद्धौ न किञ्चिद् बाधकम् ।

ननु 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति परिभाषयैव दीर्घस्याऽपि विधाने सिद्धे ऊप्रश्लेषो व्यर्थः । न चोकारस्य भाव्यमानस्यापि सवर्णग्राहकत्वे मानाभावः 'दिव उत्' 'ॠत उत्' इति सूत्रे तपरकरणस्यैव मानत्वात् । अन्यथा 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषयैव दीर्घोकारव्यावृत्तिसिद्धौ तपरकरणं व्यर्थमेव स्यादिति 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति परिभाषां ज्ञापयति । अनया परिभाषया दीर्घोऽप्यूकारः स्यादिति तद्वारणाय तपरकरणं स्वांशे चरितार्थम् । फलन्तु 'अदसोऽसेः' इत्यत्र दीर्घोकारस्याप्यादेशत्वं सिध्यति । एवञ्चोकारप्रश्लेषस्य न फलमिति चेन्न, सूत्रभाष्यविरुद्धत्वात्फलाभावाच्चास्याः परिभाषाया अस्वीकारात् ।

तथा हि एतत्परिभाषास्वीकारे 'ऊदुपधाया गोहः' ( ६–४–८९ ) इति सूत्रे ओकारस्यान्तरतम्याद्ध्रस्वाकारविधानेऽपि दीर्घ एव स्यादिति सूत्रकृतः 'ऊत्' इति दीर्घविधानं व्यर्थं स्यात् । भाष्यकृता च गोहिग्रहणं क्रियते विषयार्थम् । यत्रास्यैतद्रूपं तत्र यथा स्यादिह मा भूत् 'निजुगुहतुः' 'निजुगुहुः' इति । विषयार्थेन तावन्नार्थो गोहिग्रहणेन प्रश्लिष्टनिर्देशात्सिद्धम् । 'उऊत्' इति परिभाषासत्त्वे प्रश्लेषो विरुध्येत ।

न च ह्रस्वमात्रकरणे गुणबाधकत्वापत्तिः दीर्घस्यापि विधाने तु तत्सामर्थ्यात्पूर्वं गुणे दोर्घोकारादेशे 'गूहतः' इत्यादिसिद्धिः फलम् इति वाच्यम्, ह्रस्वविधानस्य गुणबाधमात्रफलकत्वे 'नाभ्यस्तस्याचि' ( ७।३।८७ ) इत्युत्तरम् 'गुह' इति पाठेन अजादौ प्रत्यये गुहो गुणो नेति निषेधेनैव सिद्धे ह्रस्वोकारविधानेन गुणाबाधकत्वकल्पनद्वारा गुणे दीर्घोकारविधानफलकत्वकल्पनात् । उपधाग्रहणस्य 'मितां ह्रस्वः' इत्यादावावश्यकत्वेऽपि उद्ग्रहणाकरणलाघवस्य तक्रन्यायाप्रवृत्तिरूपलाघवस्य च वक्तुं शक्यत्वादित्याहुः । अन्ये तु गुहेर्ण्यन्ताच् चङि ओणेरॄदित्करणेन उपधाकार्यस्य बलवत्तया गुणे ऊत्वे 'णौ चङि' इति ह्रस्वाभावाय दीर्घविधानं चरितार्थमिति न सूत्रकृद्भाष्यकृतोश्च विरोध इति वदन्ति ।

आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः । अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्चः । अमुमुयञ्चम्, अमुमुयञ्चौ, अमुमुईचः । अमुमुईचा, अमुमुयग्भ्यामित्यादि । मुत्वस्यासिद्धत्वान्न यण् । 'अन्त्यबाधेऽन्त्यसदेशस्य' इति परिभाषामाश्रित्य परस्यैव मुत्वं

---

**आन्तरतम्यादिति**—'इको गुणवृद्धी' इति सूत्रे 'अर्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति' इत्युक्त्या अर्धमात्रस्य व्यञ्जनस्य दीर्घोकारापेक्षया ईषत्सदृशो ह्रस्वोकारः । ह्रस्वस्य स्थाने तु मात्रिकत्वेन सादृश्याद्ध्रस्व उकारः । दीर्घस्य स्थाने तु द्विमात्रकत्वेन सादृश्याद् द्विमात्रको दीर्घ ऊकार इति विवेकः ।

**अमुमुयङिति** 'अदद्रयच् स्' इति स्थितौ 'उगिदचाम्' इति नुमि 'हल्ङ्याब्' इति सोर्लोपे 'संयोगान्तस्य' इति तकारलोपे 'क्विन्प्रत्ययस्य कुः' इति नुमो नकारस्य कुत्वेन ङकारे 'अदद्रयङ्' इति जाते प्रथमस्य दकारस्य मत्वे तदुत्तरस्य ह्रस्वाकारस्य ह्रस्वे उकारे ततो द्वितीयस्य दस्य मकारे तदुत्तरस्य व्यञ्जनस्य रेफस्य स्थाने ह्रस्वाकारे 'अमुमुयङ्' इति सिध्यति ।

**अमुमुयञ्चाविति**— पूर्ववन्मत्वे उत्वे बोध्ये । पदान्तत्वाभावात्कुत्वाभावे नकारस्यानुस्वारपरसवर्णयोः **'अमुमुयञ्चौ'** इति । **'अमुमुईचः'** इति—शसि 'अमुमु इ अच् अस्' इति स्थितौ अकृतव्यूहपरिभाषया **'चौ'** इति सूत्रारम्भसामर्थ्येन च 'अचः' इति लोपविषये अन्तरङ्गस्यापि यणोऽप्रवृत्त्या 'अचः' इत्यकारलोपे इकारस्य 'चौ' इति दीर्घे 'अमुमुईचः' इति । एवं तृतीयादावजादौ सर्वत्र बोध्यम् ।

**अमुमुयग्भ्याम्** इति—अत्र नुमोऽभावेन संयोगान्तलोपाभावे 'क्विन्प्रत्ययस्य' (८-२-६२) इत्यस्य 'चोः कुः' इति दृष्ट्या असिद्धतया 'चोः कुः' इति चस्य कादेशे जश्त्वे **'अमुमुयग्भ्याम्'** इति ।

**मुत्वस्येति**—'अमुमुईचः' इत्यत्र ईकारे परे यणि प्राप्ते तु 'इको यणचि' इति कर्तव्ये त्रिपादीस्थमुत्वस्यासिद्धतया न यणित्यर्थः । 'अमुमुयग्भ्याम्' इत्यत्र नोकारस्य यण्प्राप्तिरच्परत्वाभावात् । न च यणः स्थानिवत्त्वेनात्रापि तत्प्राप्तिः, यण्प्रवृत्तिकालेऽसिद्धतया मुत्वाभावेन दृष्टस्य कार्याभावात् ।

**अन्त्यबाध इति**—अद्र्यादेशे 'अदसः' इत्यस्य स्थानषष्ठ्यन्तत्वेऽपि 'अलोऽन्त्यस्य' इति परिभाषा नोपतिष्ठते, अन्त्यस्येकारस्य दात्परत्वाभावेन उत्वाप्राप्तेः । तथा च अन्त्यस्य कार्याप्राप्तौ सत्याम् अन्त्यसदेशस्य रेफस्य दात्परत्वेनोत्वं दस्य मत्वञ्च स्यात् । ननु ततः पूर्वयोर्दकाराकारयोरिति 'अदमुयङ्' इत्येव । तदुक्तं भाष्ये—'अदमुयङ्' इति भवितव्यम् । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति' । तथा चात्र पक्षत्रयम् ओकारान्त-सकारान्त-रेफान्तभिन्नस्यादश्शब्दस्य मत्वोत्वे इत्येकः । सकारस्य त्यदादित्वादत्वं यत्र तत्रैव मुत्वम् इति द्वितीयः । अन्त्यसदेशस्यैव मुत्वम् इति तृतीयः । तदुक्तं भाष्ये—

> 'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
> केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥' इति ।

नन्वेवम् 'णो नः' (६-१-६५) इति विहितणत्वस्यान्त्यस्य स्थानेऽप्राप्तया 'नेता' इत्यादावन्त्यसदेशस्यैव स्यात्, 'नमति' इत्यादौ 'णम्'धातोरन्त्यसदेशो णकारो नास्ति, किन्तु अकार एवान्त्यसदेश इति नत्वासिद्धिरिति चेन्न, अन्त्यसदेशानन्त्यसदेशयोरेकलक्ष्ये युगपत् प्राप्तावन्त्यसदेशस्यैव कार्यमिति तदर्थात् । अत एव 'नते नासिकायाः' (५-२-३१) इत्यत्र 'नते' इति निर्देशः संगच्छते । 'अनन्त्यविकारे' इत्यत्र अन्त्यस्य विकारोऽन्त्यविकार इति षष्ठीतत्पुरुषानन्तरम् अन्त्यविकारस्याभाव इत्यर्थेऽव्ययीभावः । अव्ययीभावे सप्तम्या अम्भावस्तु न, 'तृतीयासप्तम्योर्बहुलम्' इत्यत्र बहुलग्रहणात् ।

वदतां मते 'अदमुयङ्' । 'अः सेः सकारस्य स्थाने यस्य सः असिः, तस्य असेः' इति व्याख्यानात् 'त्यदाद्यत्वविषय एव मुत्वं नान्यत्र' इति पक्षे 'अदद्र्यङ्' । उक्तं च ( भाष्ये )—

'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥' इति ।

'विष्वग्देवयोः' किम्—अश्वाची । 'अद्रौ' किम्—विष्वग्युक् । 'अप्रत्यये' किम्—विष्वगञ्चनम् । अप्रत्ययग्रहणं ज्ञापयति—'अन्यत्र धातुग्रहणे तदादिविधिः' इति । तेनायस्कारः ।

---

पक्षान्तरमाह—**अः सेरिति**—ये न सिरसिस्तस्य असेरिति नञ्तत्पुरुषमाश्रयन्ति इकारश्च उच्चारणार्थः । तथा च तन्मते सान्तभिन्नस्यादस इत्यर्थ इति पूर्वमुक्तम् । सम्प्रति **अः**=अकारः **सेः**=सकारस्य स्थाने यस्य सः, असिः तस्य सकारस्थानिकाकारवतोऽदसो मुत्वम् । अदश्शब्दस्य सकारस्थानिकाकारवत्त्वं त्यदाद्यत्वे एव । तथा च यत्र त्यदाद्यत्वं तत्रैव मुत्वम् । अद्र्यादेशस्य त्यदाद्यत्वापवादतया तत्र सति मुत्वाभाव एव ।

तदाह—'**अदद्र्यङ्**' इति । भाष्योक्तं पक्षत्रयमाह—**अदसोऽद्रेरिति**—सान्तभिन्नस्यादसो मुत्वमिति पक्षे 'अदद्र्यच्' इत्यवस्थायाम् युगपद्द्वयोर्दकारयोर्मद्वयम्, प्रथमदकारात्परस्याकारस्य द्वितीयदकारात्परस्य रेफस्य चोत्वे 'अमुमुयङ्' इति, तदाह—'**अदसोऽद्रेः पृथङ् मुत्वमि**'ति । **लत्ववदिति**—कृपधातोर्यङ्लुकि 'रुग्रिकौ लुकि' ( ७-४-९१ ) इत्यभ्यासस्य रीगागमे ततो भावे लटि यकि 'चरीकृप्यते' इति दशायाम् रेफऋकारयोर्यथा 'कृपो रो लः' ( ८-२-१८ ) इत्यनेन ऋकारघटकस्य रेफस्य रीघटकरेफस्य च युगपदेव लत्वे यथा तद्वत्केचिदिच्छन्तीत्यर्थः ।

**अन्त्यसदेशस्येति**—'अनन्त्यविकारे' इति वाचनिकपरिभाषया केचिदन्त्यसदेशस्यैव मत्वमुत्वञ्चेच्छन्ति । ननु अन्त्यसदेशो नाम—अन्त्यवर्णाव्यवहितपूर्वः । तादृशश्च रेफ एव न तु दकार इति कथं दस्य मत्वमिति चेन्न, कार्यिव्यवधानशून्यस्यैवान्त्यसदेशशब्देन ग्रहणात् । तथा च मत्वरूपं यत्कार्यं तस्य कार्यी दकारस्तद्व्यवधानशून्यत्वं द्वितीयदकारे एव, प्रथमदकारे तु द्वितीय दकाररूपकार्यिव्यवधानमेव ।

**एके**=अन्ये इत्यर्थः । अन्ये अद्र्यादेशे नापि पूर्वस्य नापि परस्य मुत्वं इच्छन्ति **हि**=यतो मुत्वविधायके सूत्रे अः सकारस्य स्थाने यस्यादसस्तस्यासेः पदस्य दर्शनात् । प्रकृते सस्यात्वाभावान्न मुत्वमिति तदाशयः । तथा च 'अमुमुयङ्, अदमुयङ्, अदद्र्यङ्' इति रूपत्रयं सिद्धम् ।

**विष्वग्देवयोरिति**—विष्वग्देवयोश्चेति किमित्यर्थः । अन्यथा विष्वग्देवयोरित्यस्याभावेऽपि सर्वनाम्नोऽनुवृत्त्या 'अश्वाची' इति प्रत्युदाहरणं न संगच्छेत । 'विष्वद्र्यङ्' इत्यादावव्याप्तिदोषं परिहायातिव्याप्तिदोषदानासाङ्गत्यञ्च, तस्मात् सर्वनामानुकर्षकचशब्दविशिष्टे एव प्रश्नः ।

**विष्वग्युगिति**—विष्वग्युनक्तीति विष्वग्युक् युजेः क्विप्, क्विन् तु न, निरुपपदादेव क्विनो विधानात् । **विष्वगञ्चनमिति**—अत्र ल्युडादेशस्थान श्रूयमाणतया अञ्चतेर्विद्यमानप्रत्ययत्वेन अविद्यमानप्रत्ययान्तत्वाभावान्नाद्र्यादेशः । 'अप्रत्यये' इत्यस्याविद्यमानप्रत्ययार्थत्वादिति भावः ।

ननु 'अलुगुत्तरपदे' ( ६-३-१ ) इत्यतः 'उत्तरपदे' इत्यधिकारादुत्तरपदेऽञ्चताविर्त्यर्थेन प्रकृते 'अञ्चन' इत्यस्याञ्चतिरूपोत्तरपदत्वाभावेनाद्र्यादेशाप्राप्तया 'अप्रत्यये' इति व्यर्थमेवेति चेन्न, इदमेवाप्रत्ययग्रहणं व्यर्थीभूय ज्ञापयति—'**अन्यत्र धातुग्रहणे तदादिविधिः**' इति । **तेनेति**—धातुग्रहणे तदादिविधिज्ञापनेनेत्यर्थः ।

**अयस्कार इति**—अन्यथा 'यशः करोति' इत्यत्र सत्ववारणाय 'अतः कृकमि' ( ८-३-४६ ) इत्यत्र 'नित्यं समासे' इत्यस्यानुवृत्तेरावश्यकतया समासग्रहणेन 'उत्तरपदे' इत्यस्याक्षेपात् 'कृकमि' इत्यादिनाऽभेदेन विशेषणात् कृधादिरूपे उत्तरपदे इत्यर्थे कृधातुरूपे उत्तरपदे 'अयस्कृत्' इत्यादौ यदागमपरिभाषया 'कृत्' इत्यस्य कृधातुतया कृधातुरूपोत्तरपदपरे एव प्रवृत्तिः स्यान्न तु 'अयस्कारः'

'अतः कृकमि–' इति सः । उदङ्, उदञ्चौ, उदञ्चः । शसादावचि ।

उद ईत् । [ ६–४–१३९ ]

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात् । उदीचः । उदीचा, उदग्भ्यामित्यादि ।

समः समि । [ ६–३–९३ ]

अप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात् । सम्यङ्, सम्यञ्चौ, सम्यञ्चः । समीचः । समीचा ।

---

इत्यादावन्तस्योत्तरपदत्वाभावात् । ज्ञापिते तु तदादिविधौ कृञादिधात्वाद्यवयवके उत्तरपदे परे इत्यर्थेन कार इत्यस्यापि कृधात्वाद्यवयवकोत्तरपदत्वेन सत्त्वं सिध्यतीति भावः ।

न चाक्षिप्तस्य शब्देऽन्वयाभावेन कृरूपे उत्तरपदे इत्यर्थासङ्गतिः, "नहि-वृति" (६–३–११६) इति सूत्रे धातुग्रहणे तदादिविधिः इत्यस्य "अयस्कारः" इति फलप्रदर्शनपरभाष्यप्रमाणेन सूत्रजन्यबोधे आक्षिप्तस्यापि प्रवेशस्वीकारात् । अत एव "आदिरन्त्येन" इत्यत्राद्यन्ताभ्यामाक्षिप्त-स्यापि संज्ञिनः समुदायस्य सूत्रजन्यबोधे सन्निवेशः ।

**उदङिति**—उत्पूर्वकादञ्चेः उदञ्चतीति विग्रहे "ऋत्विक्" ( ३–२–५९ ) इति क्विन् । "अनिदिताम्" (६–४–२४) इति न लोपे "उदच्" इति। ततः सर्वनामस्थाने स्वादौ "उगिदचाम्" इति नुमि "उदन्च् स्" इति स्थितौ सुलोपे "संयोगान्तस्य" इति चलोपे "क्विन्प्रत्ययस्य" ( ८–२–६२ ) इति नस्य कुत्वेन ङकारे "उदङ्" इति सिध्यति। ऊर्ध्वं वगन्ता। "उदच्" अव्ययमपि। यदाऽयं दिग्-देश-कालवाची तदा सप्तमी-पञ्चमी–प्रथमान्तात् "दिक्छब्देभ्यः" ( ५–३–२७ ) इति स्वार्थे स्तातिप्रत्यये तस्य "अञ्चेर्लुक्" ( ५–३–३० ) इति लुकि "तद्धितश्चा-सर्व" ( १–१–३८ ) इत्यव्ययसंज्ञायाम् सुपो लुकि उदीच्याम् इत्यर्थे उदक्। उदीच्याः इत्यर्थे उदीची इत्यर्थेन च "उदक्" इत्येव। एवम् उदक् काले कालात्, कालः, देशे देशात्, देशश्च उदक्। स्तातिप्रत्ययाभावे दिशि ङीपि उदीची, काले देशे च "उदङ्" = उदीची वेला इत्यपि। शसादावचीति—

"उद ईत्" (६–४–१३९) इति। "अचः" (६–४–१३८) इति लोपापवादोऽयम्। "अचः" इति पूर्वसूत्रमनुवर्त्तते "अल्लोपोऽनः" इत्यतः "अत्" इति च "भस्य" इत्यधिकृतम्। तदाह—**लुप्तनकारस्याञ्चतेर्भस्याकारस्येति** । वस्तुतस्तु "अत्" इति नानुवर्त्तनीयम् "उदः" इत्यस्य पञ्चम्यन्ततया "तस्मादित्युत्तरस्य" इत्यव्यवहितोरत्वस्योपस्थित्या "आदेः परस्य" इति परिभाषया अचोऽकारस्यैव ईत्वसिद्धेः। सम्पूर्वादञ्चतेः क्विनि नलोपे "सम् अच्" इति स्थितौ—

"समः समि" ( ६–३–९३ ) इति । "समि" इति नपुंसकत्वेन निर्देशात् लुप्तस्वन्तम्। "विष्वग्देवयोश्च" इत्यतः "अञ्चतौ" "अप्रत्यये" इति चानुवर्तते—तदाह—**अप्रत्ययन्तेऽञ्चतौ पर इति**। समिरिति वृत्तौ पुंस्त्वेन निर्देशः। स्वादौ सर्वनामस्थाने उदञ्छब्दवद्रूपम्। **समीच इति**—अजादिशसादौ सम्यादेशे "अचः" इत्यकारलोपे—"चौ" इति समेरिकारस्य दीर्घे "समीचः" इत्यादि। न च अलोपस्य "अचः परस्मिन्" इति स्थानिवद्भावेन यण् स्यादिति वाच्यम्, समीत्यस्य स्थानिवत्त्वेन पदतया "न पदान्त" इति स्थानिवद्भावनिषेधात्। न च "समो मिङ्" "सम इक्" वेति सूत्र्यतामिति वाच्यम्, इत्संज्ञालोपरूपगौरवप्रस्तत्वात्।

ननु समुशब्दादव्ययत्वेनाकचि समकमञ्चतीति विग्रहे "सम्यङ्" इत्यत्र तन्मध्यपतितन्यायेन समकशब्दस्यापि सम्यादेशार्थम् यथाश्रुतन्यास एवोचितः, नच "भिन्धकि" इत्यत्र "अकचि हि धित्वं न प्राप्नोति" इति भाष्योक्त्या अकज्विषये तन्मध्यपतितन्यायाप्रवृत्त्याऽकज्विशिष्टे निर्दिश्य-मानत्वाभावेन सम्यादेशाप्राप्तिरिति वाच्यम्, साकच्कापहारकादेशविषये तन्मध्यपतितन्यायस्या-

*सहस्य सध्रिः । [ ६-३-९५ ]*

अप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् ।

*तिरसस्तिर्यलोपे । [ ६-३-९४ ]*

अलुप्ताकारेऽञ्चतावप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ्, **तिर्यञ्चौ, तिर्यञ्चः** । **तिरश्चा, तिर्यग्भ्यामित्यादि** ।

---

प्रवृत्तेः । सम्यादेशस्य साकच्कापहारकत्वेन तन्न्यायाप्रवृत्तौ निर्दिश्यमानत्वाभावेन सम्यादेशाभावात् । अत एव "सर्वदा" इत्यादौ न सादेशः ।

वस्तुतस्तु "अव्ययसर्वनाम्नाम्" इत्यस्य वाचकसर्वनामसामर्थ्याद् वाचकादुच्चैराद्यव्ययादेवाकजिति सम्‌शब्दस्य द्योतकतयाऽकचोभावेन तत्रादेशाभावेन समेरचारितार्थ्यात् । भट्टोकारास्तु "उपसर्गस्यायतौ" ( ८-२-१९ ) इतिसूत्रे "रेफस्यायतौ चेत्परेरुपसंख्यानम्, पल्ययते" इत्युक्तम् । यद्युपसर्गादकच् स्यात्तदा उपसर्गविशिष्टस्याप्युपसंख्यानस्य वक्तव्यतया तदनुक्त्या तेभ्योऽकचोऽनभिधानं प्रतीयत इत्याहुः ।

"ङिच्च" इत्यादिपरिभाषाज्ञानगौरवञ्च न, उभयत्र पक्षे यत्किञ्चित्परिभाषाज्ञानस्यावश्यकत्वात् । शोभने "सम्यक्" इत्यव्ययम् । **भट्ट्यां द्रष्टव्यम्** । सहाञ्चतीति विग्रहे क्विन्नादिः पूर्ववत् ।

**"सहस्य सध्रिः"** इति । ( ६-३-९५ ) अत्र "अप्रत्ययान्तेऽञ्चतौ" इत्यनुवर्तते । तदाह—**अप्रत्ययान्ते** इत्यादि । सहस्य सध्रिरिति सूत्रतो लाभाद् वृत्तौ नोक्तम् । सध्र्यङ्पूर्वोक्तवत्कार्य्यं विज्ञेयम् । सध्र्यङ् = सहचरः । तिरः = कुटिलमञ्चतीति **तिर्यङ्** = वक्रगामी–पशुः पक्षी वा । तिरःपूर्वकादञ्चतेः क्विन्नादौ "तिरस् अच्" इति स्थितौ—

**तिरसस्तिर्यलोपे**' ( ६–३–९४ ) इति । 'अप्रत्यये' इति, 'अञ्चतौ' इति चानुवर्तते । 'तिरि' इति लुप्तप्रथमान्तम् । 'अलोपे' इत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते । **अस्य**=अकारस्य **अलोपो** = लोपाभावो यत्राञ्चतौ तस्मिन्पर इति अलोप इत्यत्र अकारो निषेधार्थक इति शेखरकारः ।

अन्ये तु 'अलोपे' इत्यत्राशब्दं निषेधार्थकं मत्वा अविद्यमानो लोपो यस्याञ्चतेरिति बहुव्रीहिणा अञ्चतेः समुदायस्य लोपाभावेऽपि अवयवद्वारकश्च लोपः समुदाये उपचर्य्यते । तत्फलितमाह—**अलुप्ताकारेऽञ्चताविति** ।

ननु 'तिरस्तिरि ए' इति सूत्रमस्तु अकारादावञ्चतावित्यर्थे अकारस्य लोपेऽकारादित्वाभावेन नापत्तिसम्भव इति चेन्न, तिरः करोति 'तिरायति' इत्यस्येष्टस्यासिद्ध्यापत्तेः । 'प्रातिपदिकाद्धात्वर्थे' इति णिचि इष्ठवद्भावेनाञ्चेर्लोपेऽपि अकारपर्य्यासस्थानिताकलोपाभावविशिष्टस्याञ्चतेः स्थानिवत्त्वेनाञ्चतिपरत्वादादेशो भवति । अकारादावञ्चतावित्यर्थे तु अकारादित्वस्याल्मात्रवृत्तिधर्मघटिततया 'अनल्विधौ' इति निषेधेन स्थानिवत्त्वेनालाभादादेशानापत्तिः स्पष्टैव ।

अन्ये तु क्विन्नन्तस्य 'अच्' इत्यस्य 'नित्यवीप्सयोः' ( ८–१–४ ) इति द्वित्वे तिरःशब्देन समासे ततः शसि 'अनन्त्यविकारे' इति परिभाषया अन्त्यस्य अचोऽकारस्य 'अचः' इति लोपे 'तिरोक्त्वः' इत्यत्राकारस्य लोपसत्त्वेन यथाश्रुतन्यासे आदेशो न भवति । अकारादावित्यर्थे तु पूर्वस्य लोपाभावेनाकाराद्यञ्चतिपरत्वसत्त्वेन तिर्य्यादेशापत्तिरूपं दोषमाहुः ।

एतेन 'तिरसस्तिर्यति'–इति 'तिरसस्तिर्य्यचि' इति च न्यासान्तरमपास्तम्, उक्तदोषग्रस्तत्वात् । अप्रत्ययान्ते किम् ? तिरोऽञ्चनम् । **तिरश्च इति**—अत्र 'अचः' इत्यकारस्य लोपसत्त्वेन न तिर्य्यादेशः । तिरसः सकारस्य श्चुत्वेन शः । न चालोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन चुना योगाभावात् श्चुत्वं न स्यादिति वाच्यम्, 'पूर्वत्रासिद्धीये न स्थानिवत्' इति त्रिपादीस्थे श्चुत्वे कर्तव्ये स्थानिवत्त्वनिषेधात् सकारस्य पदचरमावयवत्वेन 'न पदान्त' इति निषेधाच्च । पूजार्थादञ्चतेः क्विनि **'अनिदिताम्' इति नलोपे प्राप्ते आह—**

नाञ्चेः पूजायाम् । [ ६-४-३० ]

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । प्राङ् प्राञ्चौ, प्राञ्चः । नलोपाभावादकारलोपो न । प्राञ्चः । प्राञ्चा, प्राङ्भ्याम् इत्यादि । प्राङ्क्षु । प्राङ्षु । एवं पूजार्थे प्रत्यङ्ङादयः । 'क्रुञ्च कौटिल्याल्पीभावयोः' । अस्य 'ऋत्विग्–' आदिना

---

**नाञ्चेः पूजायाम्** (६–४–३०) इति । 'अनिदिताम्' इत्यत उपधाया इति 'क्ङिति' इति च 'श्नान्नलोपः' ( ६–४– २३ ) इत्यतः 'नलोपः' इति चानुवर्तते । 'पूजायाम्' इति विषयसप्तमी । तेन यथाकथञ्चित्पूजायां गम्यमानायां नलोपो नेत्यर्थः । मूले पूजार्थस्य गम्यत्व इत्यर्थः । तेन अव्याकुलं गच्छतीत्यर्थके 'अञ्चितं गच्छति' इत्यादौ नलोपो न । पूजार्थस्याञ्चतेरित्यर्थे त्वत्र नलोपो दुर्वारः, अञ्चेरत्र समाधानार्थकत्वात् ।

तदुक्तं भाष्ये–'अञ्चोऽनापादाने' (६–२–४९) इति सूत्रे भाष्ये 'अञ्चितं गच्छति । प्रकाशयत्यात्मानमिति गम्यते । न वै लोके अञ्चितं गच्छतीति प्रकाशनं गम्यते । किं तर्हि । समाधानं गम्यते । समाहितो भूत्वा गच्छतीति' इति ।

**अत्र कैयटः 'समाधानमिति**—गमनस्याव्याकुलत्वमित्यर्थः । तथा च 'नागाश्चाञ्चितगामिनः' इति प्रयोगो दृश्यते । गमनस्य च समाधानमेव पूजा ।' इति, नागेशोऽपि अव्याकुलगमनेन पूजा गम्यते न त्वञ्चतेरेवासौ ( पूजार्थः ) अर्थ इति ।

एतेन अञ्चतेरव्याकुलार्थत्वे प्रमाणाभाव इत्यपास्तम्, उक्तभाष्यस्यैव प्रमाणत्वात् । समाधानमव्याकुलज्ञानमर्थान्तरम् । अञ्चतेः पूजावाचकत्वेऽपि 'नाञ्चेः पूजायाम्' इत्यस्यावश्यकत्वे 'अचु गतौ, अचि पूजायाम्' इति गणपाठे इदित्त्वान्नलोपाप्राप्तथा 'नाञ्चेः पूजायाम्' इति सूत्रं व्यर्थमित्यपास्तम् ।

ननु पूजायां गम्यमानायामित्यर्थे प्रकृष्टं गच्छतीत्यर्थे पूर्वोक्ते प्राचः, प्राचा, इत्यादावपि न स्यात्, प्रकर्षेण पूजाया गम्यमानत्वादिति चेन्न, चिरन्तनादिरूढ्यर्थस्यैव प्रयोगात् । योगार्थत्वे तु तत्रापि नलोपाभाव इष्ट एव ।

केचित्तु 'अनिदिताम्' इत्यनन्तरम् 'अञ्चेर्गतौ' इति सूत्रं कर्तव्यम् । अनिदिताम्–इत्यनेनाञ्चेर्नलोपे इदं नियमार्थं स्यात्' अञ्चेर्गतावनलोप इति नाञ्चेः पूजायामिति न्याय्यमित्याहुः । तदपि चिन्त्यम्, प्राच इत्यादौ नलोपानापत्तेः, उत्तरत्र 'क्त्वि स्कन्दस्यन्दोः' इत्यादौ नेत्यस्यानुवृत्तेरावश्यकत्वाच्च ।

**प्राङिति**—प्रकर्षेणाञ्चति = पूजयतीत्यर्थे क्विन् । अत्र नलोपो न, नापि 'उगिदचाम्' नुम्–'अचाम्' इति लुप्तनकारस्यैव ग्रहणात् । तदाह—**अलुप्तेति**—नकारलोपाभावादित्यर्थः । शसादावचि भत्वेऽपि पूजार्थकत्वेन नकारलोपाभावात् 'अचः' इत्यलोपो न । तदाह—**अकारलोपाभावादिति प्राङ्क्ष्विति** 'ङ्णोः कुक्' इति वा कुकि कषसंयोगे क्षे रूपम् । 'चयो द्वितीयाः' इति पक्षे खकारे **'प्राङ्ख्षु'** इत्यपि । एवं पूजार्थे इति—सुटि पूर्ववद्रूपाणि । शसादावचि 'प्रत्यञ्चः प्रत्यञ्चा, अमुमुयञ्चः, अमुमुयञ्चा, उदञ्चः, उदञ्चा' इत्यादिरूपाणि ।

शसादौ हलि चकारस्य संयोगान्तलोपे 'क्विन्प्रत्ययस्य' इति कुत्वे **'प्रत्यङ्भ्याम्, अमुमुयङ्भ्याम्, उदङ्भ्याम्** इत्यादि । अमुमुयङ्=अदःपूजनकर्ता इत्याद्यर्थो बोध्यः ।

क्रुञ्चति=कुटिलीभवति, अल्पीभवतीति विग्रहे 'ऋत्विक्' इति 'क्रुञ्चेः' क्विनि 'क्रुङ्' इति । सोर्लोपे संयोगान्तस्येति चस्य लोपे नस्य कुत्वेन ङः । ननु अत्र 'अनिदिताम्' इति नस्य लोपे कुत्वाप्राप्तिरित्यत आह—**अलोपाभावोऽपीति**—न चात्र प्रमाणाभावः, 'परेश्च घाङ्कयोः' ( ६–२–२२ ) इति सूत्रे भाष्ये 'क्रुञ्चा–इत्यत्र 'चोः कुः' झलीति कुत्वं प्राप्नोति । सङीति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । निपातनादेतत्सिद्धम् । किं निपातनम् । 'ऋत्विक्' इति' इति भाष्यस्यैव

नलोपाभावोऽपि निपात्यते। कुङ् कुञ्चौ। कुङ्भ्यामित्यादि। 'चोः कुः' पयोमुक् पयोमुग्, पयोमुचौ, पयोमुचः। 'व्रश्च–' इति षत्वम्। 'स्कोः–' इति सलोपः। जश्त्वचर्त्वे। सुवृट् सुवृड्, सवृश्चौ, सुवृश्चः। सुवृट्सु। सुवृट्त्सु॥ इति चान्ताः॥ 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' एते निपात्यन्ते, शतृवच्चैषां कार्यं स्यात्।

---

मानत्वात्। निपातनेन कुत्वाभावपरभाष्योक्तिर्हि ओपधत्वमन्तरेणानुपपन्ना परसवर्णानुस्वारयोरसिद्धत्वेन कुत्वप्राप्तेरेवाभावात्।

अत एव शेखरे उक्तम् 'नलोपाभावो ओपधत्वबोधनद्वारेति'। तच्च क्रुञ्चधातुमात्रविषयम्। न तु क्विबन्तक्रुञ्चधातुविषयम्। तथा सति 'क्रुञ्चति' इत्यादौ दुर्वारः स्यात्।

नलोपाभावोऽपि इत्यत्रापिना च समवधाने 'चोः कुः' इति कुत्वाभावः, निरुपपदादेव क्विन्निति निपात्यते। वस्तुतस्तु नोपधत्वेऽपि नलोपाभावमात्रं निपात्यताम्। कुत्वाभावस्तु कुत्वदृष्ट्या परसवर्णासिद्धया चोरभावेनैव सिद्धः। अत एव—

'नकारजावनुस्वारपञ्चमौ झलि धातुषु'।

इति वृद्धोक्तिः संगच्छते। 'क्रुञ्चा' इत्यत्र 'चोः कुः' झलीति कुत्वं प्राप्नोति' इति भाष्योक्त्या कुत्वदृष्ट्या परसवर्णासिद्धत्वाभावकल्पनं फलाभावान्न युक्तम्।

**पयोमुगिति**—पयो मुञ्चतीति विग्रहे 'क्विप् च' ( ३–२–७६ ) इति क्विप्। पयोमुङ्=मेघः।

सुष्ठु वृश्चतीत्यर्थे 'ओव्रश्चू छेदने' इत्यतः क्विपि 'ग्रहिज्या' इति सम्प्रसारणे कृदन्तत्वात् 'कृत्तद्धित' इति समासत्वाद्वा प्रातिपदिकत्वे सौ तस्य लोपे 'सुप्तिङन्तम्' इति पदत्वे 'नकारजावनुस्वारः' इति वृद्धोक्त्या श्चुत्वस्यासिद्धत्वात् 'स्कोः' ( ८–२–२९ ) इति सलोपे ततः 'व्रश्चभ्रस्ज' (८–२–३६) इति चस्य षत्वे जश्त्वविकल्पेन चर्त्वे सुवृट्, सुवृड् इति। वृक्षादीनां सुष्ठु छेदनकर्ता। "व्रश्च" इति षत्वे "स्कोः" इति सलोप इति तु न युक्तम्, षत्वस्यासिद्धत्वेन पूर्वं सलोपस्यैव प्राप्तेः। व्रश्चधातौ वलि लोपेन वस्य लोपस्तु न, "लोपो व्योः" ( ६–१–६६ ) इति सूत्रे वकारोपदेशसामर्थ्याल्लोपो न" इति भाष्योक्तेः। "वृश्चति" इत्यादौ चारितार्थ्यन्तु न, उपदेशे एव लोपप्राप्तेः।

**सुवृट्त्स्विति**—"सुवृड्सु" इति दशायाम् "खरि च" इति डस्य चर्त्वप्राप्ते तस्यासिद्धतया पूर्वं "डः सि धुट्" इति वा धुटि' सुवृड् ध् सु' इति दशायाम्, पूर्वं धस्य चर्त्वेन तकारे ततो डस्य चर्त्वेन टकारे 'सुवृट्त्सु' इति। अत्र टतयोः 'चया द्वितीयाः' इति ठथौ न, 'नादिन्याक्रोशे पुत्रस्य' ( ८–४–४८ ) इति सूत्रे भाष्ये 'चयो द्वितीयाः' इत्यस्य पाठेनैतदृदृष्ट्या चर्त्वस्यासिद्धतया तदप्राप्तेः।

**इति चान्ता इति**—अतः परम् यद्यपि 'चटतव' इति क्रमेण टान्ता वक्तव्यास्तथापि वर्णक्रमानुसरणं ग्रन्थकृतः स्वेच्छयैव न तु किञ्चिन्मूलकम्। अत एव तान्तानन्तरं कपान्तं विहाय 'तादृश्' इति शान्तप्रदर्शनं संगच्छते।

महदादितान्तसिद्धिमुपक्रमते—

'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' ( उ० २ पा० १५० सू० ) इति। **शतृवच्चेति**—ननु शतृवदित्यतिदेशो 'शतुरनुमो नद्यजादी' ( ६–१–१७३ ) इति सूत्रे 'महद्बृहतोरुपसंख्यानम्' इति वार्तिकवैयर्थ्यम् इति चेन्न, अतिप्रत्ययान्तस्य चेदेतयोरेवेति नियमार्थत्वात्। शतृप्रत्ययान्तवच्चेत्यर्थः। तथा सति 'उगिदचाम्' इति नुमि 'महान्' इति। स्त्रियाम् 'उगितश्च' इति ङीपि 'महती'। ननु शतृप्रत्ययान्ता एव महदादयः सन्तु। 'जगत्' इति 'द्युतिगमिजुहोतीनां द्वे च' इति क्विप्प्रत्ययान्तोऽस्तु किं निपातनेनेति चेन्न, शतृप्रत्ययान्तत्वे शपि 'महती' इति नपुंसके द्विवचने 'शप्-

उगित्वान्नुम् । 'सान्त महतः-' इति दीर्घः । मह्यते पूज्यत इति महान् , महान्तौ, महान्तः । हे महन् । महतः । महता, महद्भ्यामित्यादि ।

*अत्वसन्तस्य चाधातोः ।* [ ६-४-१४ ]

---

श्नोः' इति नित्यं नुमापत्तेः, 'तास्यनुदात्तेत्' इति लसार्वधातुकस्वरापत्तेः, मह्यते = पूज्यते 'महान्' इति कर्मणि लटि रूपासिद्धेश्च । जगदित्यस्य क्विबन्तत्वे 'जगती' इति स्त्रियां ङीपोऽसिद्धेश्च । क्विबन्तस्य तु पुंसि स्त्रियाञ्च 'जगत् जगतौ जगतः' इत्येव रूपम् ।

**पृषन्तीति**—गुणाभावो निपात्यते । नपुंसकस्य बहुवचने रूपन्तु विन्दुवाचिनो नपुंसकत्वद्योतनाय । श्वेतबिन्दुयुक्ते पृषच्छब्दस्त्रिलिङ्गः । तदुक्तम्—'पृषन् मृगे पुमान् बिन्दौ न द्वयोः ( स्त्रीपुंसयोः ) पृषतोऽपि ना । अनयोश्च ( स्त्रीपुंसयोश्च ) त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ ॥' इति । 'पृषतः' इत्यदन्तोऽपि 'पृषिरञ्जिभ्यां कित्' इति ( उ० ३ पा० ३९८ सू० ) । इत्यतच्प्रत्ययः । पृषच्छन्दो बिन्दौ तद्वति च भाष्ये 'स्थूला चासौ पृषती ( श्वेतबिन्दुयुक्ता ) च, स्थूलानि पृषन्ति ( श्वेतबिन्दवः ) यस्याः' इत्युक्तेः ।

**बृहदिति**—बृह वृद्धौ इत्यतोऽतिप्रत्यये निपातनाद् गुणाभावे 'बृहत्' इति, विपुल इत्यर्थः । ङीपि बृहती ।

'बृहती क्षुद्रवार्ताक्यां कण्टकार्य्यां च वाचि च ।
वारिधान्यां महत्याञ्च छन्दोवसनभेदयोः ॥' इति विश्वः ।

**महानिति**—'मह पूजायाम्' इत्यतोऽतिप्रत्ययः । उगित्वान्नुम् । स्त्रियां ङीपि 'महती' विपुलेत्यर्थः ।

'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् ।
तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत् ॥' इति मेदिनी ।

महती = नारदवीणा—'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी ॥' इति वैजयन्ती ।

तथा च माघः—'अवेक्षमाणं महतीं मुहुर्मुहुः' इति ।

**जगदिति**—गमेरतिप्रत्यये धातोर्जगादेशे रूपम् ।

'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु ।
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥'

इति मेदिनी । तत्र वायुवाचिनः पुंलिङ्गस्य शतृवद्भावादुगित्त्वेन नुम् 'जगन् जगन्तौ जगन्तः' इत्यादिरूपाणि । 'द्युतिगमि' इति क्विबन्तस्य तु 'जगत् जगतौ' इत्यादिरूपाणि ।

मह पूजायां भ्वामह पप्जायां चुरादिः प० महयति अदन्तः । वृह वृहि वृद्धौ भ्वा० पर० पवर्गादिः वृहू उद्यमने दस्योष्ठ्यादि तु० प० बृहि भाषायाम्—चु० पर० ।

**मह्यत इति**—'कर्तरि कृत्' इति बाधित्वा निपातनात् कर्मणि अतिप्रत्ययः । एतेन शतृप्रत्ययेन न सिद्धिरिति ध्वनितम् , कर्मणि शतुरभावात् । **महान्ताविति**—नुमि दीर्घेऽनुस्वारपरसवर्णौ । **महन्निति**—'सान्तमहत' इत्यत्रासम्बुद्धावित्यनुवृत्तेर्न दीर्घः ।

धीरस्त्यस्येत्यर्थे धीशब्दान्मतुपि उकारपकारयोरित्त्वे लोपे च तद्धितान्तत्वात्प्रातिपदिकत्वे सौ 'धीमन् सु' इति दशायाम्–विशेषमाह—

**अत्वसन्तस्य चाधातोः** ( ६–४–१४ ) इति । 'नोपधायाः' इत्यत उपधाया इति, 'सर्वनामस्थाने चासम्बुद्धौ' इत्यतः 'असम्बुद्धौ' इति, 'सौ च' इत्यतः 'सौ' इति, 'ढ्रलोपे दीर्घः' इत्यतश्च—'दीर्घः' इति चानुवर्तते । तदाह—उपधाया दीर्घ इत्यादि । इह 'अधातोः' इति योगो विभज्यते । योगविभागसामर्थ्यादसन्तस्येति धातुभिन्ने एव सम्बध्यते, न तु अत्वन्तस्येत्यत्र । तेन

अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः। ततो नुम्। धीमान्, धीमन्तौ, धीमन्तः। हे धीमन्। शसादौ महद्वत्। धातोरप्यत्वन्तस्य दीर्घः। गोमन्तमिच्छति, गोमानिवाचरतीति वा क्यजन्ता-

---

'उगिदचाम्' इति सूत्रे गोमत्यतेरप्रत्यये 'गोमान्' इति भाष्यप्रयोगः संगच्छते। अन्यथा 'गोमत्' इत्यस्य क्विबन्तस्य क्यजन्तत्वेन धातुत्वाद्दीर्घो न स्यादिति भाव इति कैयटादयः।

नागेशास्तु योगो व्यर्थः। सूत्रे 'च' शब्दस्त्वर्थे 'अतु' इति लुप्तषष्ठीकं पृथक् पदम्। त्वर्थक-चग्रहणसामर्थ्यात् 'अधातोः' इति 'असन्तस्यैव विशेषणम्।' 'अधातोः' इत्यस्य असन्तस्यैव विशेषणत्वादेव 'गोमत्यतेरप्रत्यये गोमान्' इति प्रयोगः संगच्छते इत्याहुः।

धातुभिन्नासन्तस्येति—अत्र धातुपदं धात्ववयवपरम्। तच्च अधि अभेदेन विशेषणम् धात्ववयवाभिन्नो योऽस् तदन्तस्येत्यर्थः। तेन 'स्रत्' 'ध्वत्' इत्यत्र, उखास्रत्, इत्यत्र च असो-र्धात्ववयवत्वान्न दीर्घः। धातुभिन्नो योऽसन्तस्तस्योपधाया दीर्घ इत्यर्थे 'उखास्रत्' इत्यसन्तस्य धातुभिन्नत्वेन दीर्घापत्तिर्दुर्वारैव स्यात्।

सूत्रे अन्तग्रहणम् अधिकृतस्य 'अङ्गस्य' इत्यस्य अत्वसोर्विशेषणतया "येन विधिः' इति लब्धतदन्तस्यैवानुवादकं न त्वपूर्वम्। स्पष्टप्रतिपत्तये सूत्रे कृतम्। केचित्तु औपदेशिकात्वन्त-लाभार्थमन्तग्रहणम्। तेन जतुशब्दादौ श्रूयमाणात्वन्ते नास्य प्रवृत्तिः। वस्तुतस्तु श्रूयमाणात्वन्ते उपधाभूताचो लाभेन दीर्घाप्राप्त्या तदुक्तिश्चिन्त्या।

ननु मतुबन्तेऽस्य प्रवृत्तिर्न स्यात्, समुदायोपदेशे एव ऋषितात्पर्य्येण उपदेशे मतुपः पान्त-त्वात् 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम्' इति परिभाषाविरोधादिति चेन्न, अत एव भाष्ये 'लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते। कोऽसौ ? उपदेशः। उपदेशे चैतदवुबन्तं नात्वन्तम्' इति। 'अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम्' इति भाष्योक्तवार्त्तिकेन मतुपोऽपि ग्रहणोक्तेः।

किञ्च 'उपदेशेऽजनुनासिकः' इति सूत्रार्थबोधस्य 'हलन्त्यम्' इति सूत्रार्थबोधाधीनत्वा-त्तदुत्तरप्रवृत्तिकत्वात् पस्येत्संज्ञायां लोपे च कृते अत्वन्तत्वस्योपदेशेऽपि लाभात्। स्पष्टञ्चेदमत्रैव सूत्रे भाष्ये।

ननु कृतेऽकृते च दीर्घे प्रवृत्तियोग्यस्य नुमो नित्यत्वात्परत्वाच्च नुमि उपधाभूताचोऽभावेन कथं दीर्घ इत्यत आह—परमिति। वचनसामर्थ्यादिति—अन्यथा सूत्रवैयर्थ्यापत्तिरिति भावः। वस्तुतस्तु विद्यमानमपि परत्वम् अन्यत्र चारितार्थ्यरूपविशेषणाभावेन विप्रतिषेधशास्त्रप्रवृत्त्यनुप-योगीति 'नित्यञ्च' इत्यत्र चो हेतौ। तथा च यतो नुम् नित्यमतः परमुत्कृष्टं बलवदिति यावत्। एवञ्च नित्यत्वेनोत्कृष्टं नुमं बाधित्वेत्यर्थः। नुमि कृते दीर्घस्य चारितार्थ्याभावेन तक्रन्यायाप्रवृत्त्या निरवकाशत्वादेव बाधेन 'रमायाम्' इत्यादावामि कृते याडिव कृतेऽपि दीर्घे नुम् भवत्येवेत्यलं विस्तरेण।

ननु 'तदनुबन्धक' परिभाषया मतुपो ग्रहणं न स्यात्। न च सूत्रवैयर्थ्यं सर्वादिपठितानु-नासिकाकारविशिष्टे भवतुशब्दे सूत्रस्य चारितार्थ्यादिति चेन्न, पकारादेः समुदायानुबन्धत्वेऽपि अतो-द्दर्यनुबन्धकत्वाभावात्। यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धताया एव स्वीकारात्। प्रकृते मतुप उपदेशप्रयुक्ता पस्येत्संज्ञेति मतुब्ववयवत्वेऽपि अतोरनवयवत्वात्। न चोपदेशे एवोकारलोपे-ऽत्वन्तत्वाभावः, लोके अतोरभावेन तदंशे भूतपूर्वगत्याश्रयणात्। तस्मादुपदेशेऽनुनासिकाकारविशि-ष्टो य उपदेशेऽत् तदन्तस्य प्रयोगस्थस्य दीर्घ इति सूत्रार्थ इति न दोष इति नागेशाः।

'हे धीमन्निति' असम्बुद्धाविलुक्तेर्न दीर्घः। धातोरप्यत्वन्तस्येति—अधातोरित्यस्यासन्ते एव विशेषणात्।

दाचारक्विबन्ताद्वा कर्तरि क्विप्। 'उगिदचाम्-' इति सूत्रेऽज्ग्रहणं नियमार्थम्। 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति। तेन 'स्रत्' 'ध्वत्' इत्यादौ न। 'अधातोः' इति त्वधातुभूतपूर्वस्यापि नुमर्थम्। गोमान्, गोमन्तौ, गोमन्तः, इत्यादि। 'भातेर्डवतुः' भवान्, भवन्तौ, भवन्तः। शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः। भवतीति भवन्।

ननु 'उगिदचाम्' इति 'अधातोरि' त्युक्त्या क्यजन्तस्य गोमदित्यस्य 'सनाद्यन्ता धातवः' (३, १, ३२) इति धातुसंज्ञकतया कथमत्र नुम् इत्याशङ्कायामाह—**उगिदचामितीति**—'उगिदचाम्' इत्यत्र अच्पदेन कृतनलोपिनोऽञ्चतेरेव ग्रहणस्य पूर्वं सिद्धान्तितत्वेन तस्य च 'अञ्चु गतिपूजनयोः' इति पाठे उगित एव पठितत्वेन तस्योगित्त्वादेव नुमः सिद्धत्वेन 'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते' इति न्यायेन तत्र सूत्रेऽज्ग्रहणं नियमार्थमिति भावः। नियमशरीरमाह—**धातोश्चेदिति**—धातोर्यदि उगित्प्रयुक्तं कार्य्यं स्यात्तर्हि अञ्चतेरेव, न तु तद्भिन्नस्य कस्यचिद्धातोरुगित्कार्य्यम्। **तेन** = नियमेनेत्यर्थः **'स्रत्, ध्वत्'** इत्यस्य 'स्रंसु ध्वंसु अधःपतने' इतितः क्विपा निष्पन्नत्वेन उगित्त्वेऽपि न नुम्, नापि स्त्रियाम् 'उगितश्चे'ति ङीप्।

**अधातोरितीति**—अयम्भावः—नियमेनैव धात्वन्तरस्य उगित्कार्य्यं न स्यात्, उगिदचामिति सूत्रे 'अधातोः' इति व्यर्थम्, तद् व्यर्थीभूय कल्पयति—अत्र धातुपदं धातुत्वव्याप्या याऽऽनुपूर्वी तादृशानुपूर्व्यवच्छिन्नस्यैव नियमशरीरघटकधातुपदेन ग्रहणम्, न तु धातुत्वाव्याप्यानुपूर्व्यवच्छिन्नस्य। तथा च क्यजन्तगोमच्छब्दवृत्तिर्या गोमत्त्वरूपाऽऽनुपूर्वी तस्याः क्यज्रहिते तद्धितान्तगोमच्छब्देऽपि सत्त्वेन तत्र धातुत्वाभावेन तद्व्याप्यत्वाभावान्न तदवच्छिन्नस्य धातुपदेन ग्रहणमिति तत्र, नुमङीपौ भवत एव। तदुक्तं भाष्ये—'इदं तर्हि प्रयोजनम्। अभूतपूर्वादपि यथा स्यात्। गोमन्तमिच्छति गोमत्यति गोमत्यतेरप्रत्यये गोमान्' इति।

न्यायप्राप्तस्यापि 'अचः' इत्यलोपस्याकरणेन नलोपस्य च करणेन नियमे नलोपिनोऽञ्चतेरेवेति नियमात् पूजायां नलोपाभावे 'प्राङ् ब्राह्मणी' इत्यत्र ङीप्-नुमौ न भवतः।

यत्तु नागेशः—'तत्रौपदेशिकधातुविषयक एव नियमोऽस्तु, किमनेन (अधातुग्रहणेन) इति वाच्यम्, औपदेशिकत्वानन्तर्भाविण सामान्यापेक्षनियमज्ञापनार्थत्वात्। तत्फलं पर्णध्वदित्यादाविव गोमानिति नामधातौ उगितश्चेति ङीन्नभाव इति दिक्' इति तच्चिन्त्यम् 'अधातुभूतपूर्वस्यापि नुमर्थम्' इति वदता भाष्यकृतैव सामान्यापेक्षनियमस्य निराकृतत्वात्।

पूर्वं भूतो भूतपूर्वः। न धातुरधातुरधातुश्चासौ भूतपूर्वश्चेति **अधातुभूतपूर्वः**। पूर्वमधातुभूतस्यापि नुमाद्यर्थम् अधातोरिति भावः। **'गोमान्'** इत्यत्र नुमि दीर्घे च क्यचो लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वं तु न, 'क्वौ लुप्तं न स्थानिवत्' इति, दीर्घविधाविति च निषेधात्।

**भवच्छब्दे** विशेषमाह—'भा दीप्तौ' इत्यतः 'भातेर्डवतुः' (उ १ पा० ६६ सू०) डकारोकारयोरित्त्वे डित्त्वसामर्थ्याद् भत्वाभावेऽपि 'टेः' (६-४-१४३) इति टिलोपे 'भवत्' इति। सर्वादिषु पठितत्त्वात्सर्वनामसंज्ञकोऽयमपि। अन्ये तु नायं सर्वनामसंज्ञकः, सर्वादौ भवतुशब्दस्य पाठेन डकारेत्संज्ञकभवच्छब्दस्यैव ग्रहणात्। डवत्वन्ते नहि उकारो भवच्छब्दावयवः, किन्तु प्रत्ययावयव एव।

**भवानिति**—भवच्छब्दात्सौ 'हल्ङ्याप्' इति सोर्लोपे नुमि संयोगान्तलोपे च 'भवान्' इति। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। **शत्रन्तस्येति**—भूधातोर्लटि 'लटः शतृशानचौ' (३-२-२४) इति लस्य शत्रादेशे शकारऋकारयोरित्त्वे लोपे च शपि गुणावादेशयोः शपोऽकारस्य 'अतो गुणे' इति पररूपे 'भवत्' इति। अत्रात्वन्तत्वाभावात् 'अत्वसन्तस्य' इति दीर्घो न। शेषं कार्य्यं पूर्ववत्।

*उभे अभ्यस्तम्* । [ ६-१-५ ]
षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ।

'ददत्' इत्यस्य सिद्धिप्रकारमाह—'डुदाञ् दाने' इति धातोर्लटः शत्रादेशे शपः श्लौ ( श्लुशब्देनादर्शने ) 'श्लौ' इति धातोर्द्वित्वे अभ्यासह्रस्वे 'श्नाभ्यस्तयोः' ( ६-४-१२२ ) इत्युत्तरखण्डाकारस्य लोपे 'ददत्' इति सिध्यति । कृदन्तत्वात्प्रातिपदिकत्वे सौ 'उगिदचाम्' इति नुमि प्राप्ते 'नाभ्यस्तात्' इति तन्निषेधायाभ्यस्तसंज्ञामाह—

उभे अभ्यस्तम् (६-१-५) इति । 'उभे' इति शब्दस्वरूपपरकतया नपुंसके प्रथमाद्विवचननिर्देशः । 'एकाचो द्वे' ( ६।१।१ ) इत्यतो द्वे इत्यनुवर्तते । 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन 'द्वे' इत्यनेन षष्ठाध्यायविहितमेव द्वित्वं विवक्षितम् ।

द्वे इत्यनुवृत्त्यैव संज्ञिलाभे सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थम् । स च 'एकाचो द्वे' इत्यत्र द्वेपदं विधेयबोधकं कथमत्रोद्देश्यवत् स्यादिति वाच्यम्, 'पूर्वोऽभ्यासः' इत्यत्रोद्देश्यपरकत्वदर्शनादत्राप्युद्देश्यपरत्वे बाधकाभावात् ।

उभेग्रहणं द्वित्वपर्य्याप्त्याश्रयसमुदायलाभार्थम् । तेन समुदायस्यैवाभ्यस्तसंज्ञा, न तु प्रत्येकम् । अत एव 'नेनिजति' इत्यादौ 'अभ्यस्तानामादिः' ( ६।१।१८९ ) इति प्रत्येकमाद्युदात्तत्वं न । तदुक्तं भाष्ये—'तदेवमसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते' इति । एतदग्रे भाष्यकृता उभेग्रहणं प्रत्याख्यातम् ।

तथा हि—'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति' । तद्यथा प्रत्येकं वृद्धिगुणसंज्ञे भवतः । ननु चायमपि दृष्टान्तः—समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा—गर्गाः शतं दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते तत्र ( वृद्धिरादैच् ) यदि प्रत्येकमित्युच्यते । इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः । 'इहापि नार्थः सहग्रहणेन' इति ।

शेखरकृताऽपि 'लक्ष्यानुसारेण गर्गदण्डनन्यायादत्र समुदाये वाक्यपरिसमाप्तिरित्याह—**उभे समुदिते** इति द्वे इत्यनुवृत्त्यैव सिद्धे 'उभेग्रहणं स्पष्टार्थम्' इत्याहुः । वस्तुतस्तु लक्षणैकचक्षुष्काणां लक्ष्यानुसरणस्याशक्यतया सहार्थमुभेग्रहणं कर्तव्यमेव । भाष्यन्तु लक्ष्यैकचक्षुष्काभिप्रायेणेत्युपाध्यायाः ।

यत्तु यत्र उभे श्रूयेते तत्रैवाभ्यस्तसंज्ञेतदर्थमुभेग्रहणम् । तेन 'ऐर्त्सन्' इत्यत्र ईर्स्तेर्लङि श्लौ शपि अकारयोः पररूपेऽन्तवद्भावादभ्यस्तात्परत्वेन झेर्जुस् मा भूदेतदर्थमुभेग्रहणमिति, तन्न, पञ्चमीसमासमाश्रित्य 'अचः परस्मिन्' इत्येकादेशस्य स्थानिवद्भावेन शपोकारेण व्यवधानादभ्यस्तात्परत्वाभावेन जुसोऽप्राप्तेः । तदुक्तं भाष्ये—'स्थानिवद्भावाद्व्यवधानम् । व्यवधानान्न भविष्यति । पूर्वविधौ स्थानिवद्भावः । न चायं पूर्वविधिः । पूर्वस्मादपि विधिः' इति ।

किञ्च सिचा साहचर्य्याल्लुङ एव झेर्जुस् इति नात्र दोषः । न च परभूतस्य विदेः साहचर्य्याल्लुङ एव झेर्जुस् स्यादिति वाच्यम्, पट्व्या, मृद्व्या इत्यत्र भाष्यकृता पूर्वोपस्थितिमात्रेणान्तरङ्गत्वात्पूर्वस्य यण उक्तस्तथा प्रकृते पूर्वसाहचर्य्यस्यापि पूर्वोपस्थितिमात्रेणान्तरङ्गतया पूर्वसाहचर्य्यस्यैव बलवत्त्वात् । स्पष्टञ्चेदं मत्कृतशब्दरत्नप्रभायाम् ।

ननु पूर्वसाहचर्य्यस्य ग्रहणेऽपि प्रतिपूर्वकात् 'वी इ' इत्यादौ प्रश्लिष्टेकारात्मकाद्धातोः सनि लुङि श्लौ आदिवृद्धौ चङि द्वितीयस्यैकाचः सस्य द्वित्वेऽभ्यासस्येत्वे झस्यान्तादेशे इतो लोपे संयोगान्तलोपे च 'प्रत्यैषिषन्' इत्यत्र दोष एवेति चेन्न, पूर्वोत्तर ( सिज्विदोः ) साहचर्य्येण भावरूपादेशानपहृतविकरणकाभ्यस्तस्यैव ग्रहणेन पररूपेण विकरणस्य चङोऽपहारसत्त्वेन जुसोऽप्रवृत्तेरित्यलमतिविस्तरेण ।

अभ्यस्तसंज्ञायाः फलमाह—

*नाभ्यस्ताच्छतुः [ ७-१-७८ ]*

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत्-ददद्, ददतौ, ददतः ।

*जक्षित्यादयः षट् । [ ६-१-६ ]*

षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः । जक्षत्-जक्षद्; जक्षतौ, जक्षतः । एवं जाग्रत्, दरिद्रत्, शासत्, चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद् व्यत्ययेन

---

**नाभ्यस्ताच्छतुः** ( ७-१-७८ ) इति । 'इदितो नुम्' ( ७-१-५८ ) इत्यतो व्यवहितोऽपि नुमेवानुवर्त्तते, अन्यस्य निषेधप्रतियोगिनोऽनुपलब्धेः । तदुक्तं भाष्ये—'अथेदानीं व्यवहितमपि शक्यतेऽनुवर्तयितुम् । नुममेवानुवर्त्त्य इहार्थमुत्तरार्थञ्च । इह चैव प्रतिषेधः सिद्धो भवति । इह च 'आच्छीनद्योर्नुम्' इति नुम्ग्रहणं 'न कर्तव्यं भवति' इति ।

तदाह—नुम् न स्यादिति । दददिति—ददच्छब्दात्सौ हल्ङ्याब्भ्यिति सोलोपे 'उगिदचाम्' इति प्राप्तस्य नुमो 'नाभ्यस्तात्' इति प्रतिषेधः । 'अत्वसन्तस्य' इति दीर्घस्तु न, अत्वन्तत्वाभावात् ।

'जक्ष-भक्षहसनयोः, जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीप्तौ, शास अनुशिष्टौ, दीधीङ् दीप्तिदेवनयोः, वेवीङ् वेतिना तुल्ये' इति सप्त धातवोऽदादौ लुग्विकरणाः सन्ति । शत्रन्तेभ्य एभ्यो 'नाभ्यस्तात्' इति नुम्निषेध इष्यते । षाष्ठद्वित्वाभावेन 'उभे अभ्यस्तम्' इत्यस्याप्राप्तया इदमारभ्यते—

**जक्षित्यादयः षट्** ( ६-१-६ ) इति । यद्यपि 'जक्ष्' इति पृथक्पदम्, तथाऽपि इतिशब्दस्योपस्थितपरामर्शकतया 'जक्ष्' इत्यस्यैव परामर्शे तद्गुणसंविज्ञानबहुव्रीह्यङ्गीकारे षण्णामेव लाभः स्यादतोऽत्रातद्गुणसंविज्ञानबहुव्रीहिरेव स्वीकार्य्यः । स च आदिशब्दस्यावयववाचकत्वेऽनुपपन्न इत्यतोऽत्रादिशब्दः पूर्ववाची ।

तथा च 'जक्ष्' इत्यादिः पूर्ववर्ती येषां षण्णां ते जक्षित्यादयः, अन्यपदार्थाः षड्धातवः, जक्षितिश्च पूर्ववर्तीति सप्त धातवो लब्धाः । अभ्यस्तमित्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते । जक्ष् इत्यस्य पृथक् पदत्वेन तस्य समवायसम्बन्धेन सम्बन्धी नान्यपदार्थ इत्यतद्गुणत्वं सुलभम् । अतद्गुणसंविज्ञानबहुव्रीहौ तु 'जागृ' इत्यारभ्य षण्णां ग्रहणम् । षड्धातवोऽन्य इत्यादि । 'जक्षितिश्च सप्तमः' इत्यत्र जक्षितिरिति श्तिपा निर्देशो जक्षधातुरित्यर्थः । 'रुदादिभ्यः सार्वधातुके' इतीडागमे रूपम् ।

तदुक्तं भाष्ये—'अथवा सप्तैवेमे धातवः पठ्यन्ते, जक्ष् अभ्यस्तसंज्ञको भवति, इत्यादयश्च षट् । जक्षित्यादयः षडिति' इति । जक्षदिति-अभ्यस्तत्वादुगित्त्वेऽपि नुम् न । जक्षत् = हसन्नित्यर्थः । जाग्रदिति—लटः शतरि शपो लुकि सौ नुम् न । दरिद्रदिति—दरिद्रातेर्लटि शत्रादेशेऽदादित्वात् शपो लुकि 'श्नाऽभ्यस्तयोरातः' ( ६-४-११२ ) इत्यालोपेऽभ्यस्तत्वाद् नुम् न । दरिद्रत् = दुर्गतिं निर्धनतां गच्छन्नित्यर्थः । शासत् = शासनं कुर्वन्नित्यर्थः । चकासत् = दीप्यमान इत्यर्थः । एषु अभ्यस्तत्वान्नुम्निषेधः ।

ननु दिधी-वेव्योर्ङित्त्वात् लटः 'अनुदात्तङित आत्मनेपदम्' इति शानजादेश एव स्यात् । तत्र च नुमोऽप्राप्तया अभ्यस्तसंज्ञा व्यर्थेत्याशङ्कायामाह—दीधीवेव्योरिति—'दिधीत्यादयः पञ्चधातवश्छान्दसाः' इत्यदादिगणसूत्रेण छान्दसत्वस्य बोधिततया 'व्यत्ययो बहुलम्' ( ३-१-८५ ) इति सूत्रे भाष्ये ।

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥'

परस्मैपदम् । दीव्यत्, वेव्यत् ॥ इति तान्ताः ॥ गुब् गुपौ, गुपः । गुब्भ्यामित्यादि ॥ इति पान्ताः ॥

*त्यदादिषु दृशोऽनालोचने कञ्च । [ ३-२-६० ]*

त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेर्धातोः कञ्च स्यात् क्विन् ।

*आ सर्वनाम्नः । [ ६-३-९१ ]*

सर्वनाम्नो आकारोऽन्तादेशः स्याद् दृग्दृशवतुषु । कुत्वस्यासिद्धत्वात् 'व्रश्च-' इति षः ।

---

इति । उपग्रहः = परस्मैपदात्मनैपदे । नरः = प्रथमादिपुरुषः । कर्तृशब्दः = कारकमात्र-परः । तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः । यङो यशब्दादारभ्य 'लिङ्याशिष्यङ्' ( ३-१-८६ ) इत्यङो ङकारेण यङ्प्रत्याहारः। एतत्सर्वं वैदिकप्रक्रियायां सोदाहरणं वक्ष्यते ।

दीव्यदिति—अत्र नुम् न । वेव्यदिति—गच्छत् = व्याप्नुवन्नित्यादिरर्थः । इति तान्ताः । 'चटतव , कपय' इति क्रमेणातः कान्ता वक्तव्या इति कुक् वृक् आदाने इत्यतः कर्तरि क्विपि कुक्- इत्यादिकान्तानां सम्भवेऽपि कथं परित्यागस्तेषामिति चिन्त्यम् । पान्तमाह-गुबिति—गुपू रक्षणे इत्यतः क्विपि रूपम् । 'आयादय आर्धधातुके वा' ( ३।१।३१ ) इत्यस्य वैकल्पिकत्वादायप्रत्ययो न । गुब्भ्यामिति—भ्यामादौ 'स्वादिषु' इति पदत्वाज्जश्त्वम् । आयप्रत्ययान्तात्तु क्विपि अलोपे यलोपे 'गोपाः' इत्यादिरूपाणि । इति पान्ताः । अथ शान्ता निरूप्यन्ते—तत्र तादृक्छब्दं निरूपयितुमाह—

'त्यदादिषु दृशोऽनालोचने कञ् च' ( ३-२-६० ) इति । 'स्पृशोऽनुदके क्विन्' ( ३-२-५८ ) इत्यतः क्विन् चकारेणानुकृष्यते । आलोचनमिह ज्ञानसामान्यम्, न तु चाक्षुष-ज्ञानम् । तथा च ज्ञानभिन्नार्थकाद् दृश इत्यर्थः । तदाह—अज्ञानार्थादिति—अनालोचने किम् ? तं पश्यन्ति = चाक्षुषज्ञानविषयीकुर्वन्तीत्यर्थे 'तद्दर्शः' इत्यत्र कर्मण्युपपदेऽणेव, न तु क्विन्, अत्र दृशश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारार्थकत्वेन ज्ञानार्थकत्वम् ।

तादृशादयस्तु शब्दा रूढिशब्दा असताऽप्यवयवार्थेन व्युत्पाद्यन्ते । अज्ञानार्थाद् दृशेरिति संगच्छते । भाष्ये तु तादृगादिशब्देषु कर्मकर्तरि व्युत्पत्तिः प्रदर्शिता 'तमिवेमं पश्यन्ति जनाः सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यति 'तादृक्' । अन्यमिवेमं पश्यन्ति जनाः सोऽयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति 'अन्यादृक्' इति । न चैवं विग्रहेऽज्ञानार्थत्वाभावः, 'पश्यन्ति' इत्यत्र दृशधातुश्चाक्षुषज्ञानविषयतानुकूलव्यापारार्थकः । 'स इव दृश्यते' इत्यत्र कर्मण एव प्रयो-जकत्वविवक्षया चाक्षुषज्ञानविषयत्वानुकूलव्यापारानुकूलव्यापारार्थकत्वमिति कर्मण्येव प्रयोजकत्वा-रोप इति विषयीकरणापेक्षया विषयीकरणानुकूलव्यापारस्याधिकार्थत्त्वेन ज्ञानभिन्नार्थकत्वम् इति कर्मण्येवाध्यारोपितप्रेषणाक्षेपेण समाधानम् ।

यद्वा निवृत्तप्रेषणपक्षे दृशो ज्ञानविषयीभवनमर्थ इति । तथा च ज्ञानविषयीकरणरूपो यो ज्ञा-नार्थस्तद्भिन्नार्थकतया अज्ञानार्थत्वम् ।

नन्वत्र पक्षे 'त्यदादिषु दृशः' इति सूत्रे 'कर्मणि' इत्यधिकारात्, कर्मण्युपपदे दृश्यर्थाभावेन क्विनोऽनापत्तिः सूत्रारम्भसामर्थ्यादेव 'कर्मणि' इत्यधिकारस्य बाधात् । अत्र पक्षे दृशो विषयत्वा-पत्तिमात्रार्थकत्वेन विषयीकरणरूपज्ञानार्थभिन्नार्थत्वं बोध्यमिति दिक् । स्पष्टश्चैतत्सर्वं शब्दरत्ने । अत्र पक्षे सूत्रारम्भसामर्थ्यात् कर्तरि उपपदेऽपि कञ्क्विनौ भवतः । तच्छब्दे उपपदे क्विनि क्विना कर्तुरुक्तत्वेन 'कर्तृकर्मणोः' इति षष्ठ्यभावे 'तद् सु दृश्' इति दशायाम् 'कुगतिप्रादयः' ( २।२।१८ इत्युपपदसमासे सुब्लुकि 'तद् दृश्' इति जाते विशेषमाह—

'आ सर्वनाम्नः' (६-३-९१) इति। 'आ' इति सौत्रत्वाल्लुप्तस्वन्तम् । 'दृग्दृशवतुषु' इत्यनु-वर्तते । तदाह—सर्वनाम्न इति । 'अ' इति तु न कृतम्, 'अतो गुणे' इति पररूपापत्तेः । न च-

तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वेन पक्षे कः। तादृक्, तादृग्, तादृशौ, तादृशः 'षत्वापवादत्वात्कुत्वेन खकारः' इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयते, न

---

विधानसामर्थ्याभावः, अकारविधानाभावे हलन्तस्यैव श्रवणापत्तेः। अन्तादेश इति—'अलोऽन्त्यस्य' इति परिभाषालभ्यमिदम्। दस्यात्वे सवर्णदीर्घे 'तादृश्' इति सुपि हल्ङ्यादिलोपे 'सुप्तिङन्तम्' इति पदत्वे 'व्रश्चभ्रस्ज' इति शस्य षत्वम्। नच 'क्विन्प्रत्ययस्य' इति कुत्वं स्यादिति वाच्यम्, षत्वदृष्ट्या कुत्वस्यासिद्धत्वेन षत्वे बाधकाभावात्। तस्येति–षस्येत्यर्थः। तस्येति–डस्येत्यर्थः। कुत्वेनेति–'क्विन्प्रत्ययस्य' इत्यनेनेत्यर्थः। तस्येति–गस्येत्यर्थः। चर्त्वेनेति–'वाऽवसाने' इत्यनेन वैकल्पिकः क इत्यर्थः। षत्वापवादत्वादिति—

क्विनः प्रत्ययत्वाव्यभिचारेण प्रत्ययत्वे लब्धे प्रत्ययग्रहणं वीप्सागर्भबहुव्रीहिलाभार्थम्। नच बहुव्रीहिणा अन्यपदार्थलाभार्थं प्रत्ययग्रहणस्य चारितार्थ्ये वीप्सागर्भितार्थलाभे प्रमाणाभाव इति वाच्यम्, 'क्विन् यतः कुः' इति न्यासेन 'दृष्टः' इत्यध्याहारेण वा बहुव्रीहिफले लब्धे प्रत्ययग्रहणेनान्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा यतो यतः क्विन्प्रत्ययो दृष्टस्तस्य क्विनोऽभावेऽपि कुत्वार्थं प्रत्ययग्रहणस्य सत्त्वात्। तेन प्रतिलक्ष्योपप्लवं लक्षणस्य सिद्धत्वम्।

तथा च शस्य षत्वप्राप्तिविषयककुत्वविधायकस्य 'क्विन्प्रत्ययस्य' इति सूत्रस्य निरवकाशोत्वेनापवादत्वं सिध्यतीति भावः। तदुक्तं भाष्ये 'येभ्यः क्विन् प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्' इति। एतेन 'वस्तुत इदं चिन्त्यम्, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्योक्तेः' इति शेखरोक्तं चिन्त्यम्।

'क्विनः कुः' इति न्यासे क्विनो वस्य तु न कुत्वम् 'क्विनो घः' इति न्यासेन सिद्धे वर्गग्रहणवैयर्थ्यापत्तेः। आन्तरतम्याद्धस्य स्थाने घस्यैव प्राप्तेः। अपवादत्वे प्रकारान्तरमाह—ननु व्रश्चादिसूत्राप्रातियोग्येषु दधृगञ्चुयुजिप्रभृतिषु 'क्विन्प्रत्ययस्य कुः' इत्यस्य चारितार्थ्येन निरवकाशत्वाभावादपवादत्वाभाव इति चेन्न, 'स्पृशोऽनुदके क्विन्' 'त्यदादिषु दृशोऽनालोचने' इति कुत्वार्थं विधीयमानस्य क्विनः षत्वे सति घृतस्पृक्, तादृक् इत्यादावप्रवृत्तौ वैयर्थ्यापत्तेः। अतः कुत्वस्यापवादत्वं सुलभम्। अपवादत्वादेव 'यं प्रति यस्यापवादत्वं तं प्रति तस्यासिद्धत्वं न भवति।' उक्तञ्च 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये 'अपवादो वचनप्रामाण्यात्' इति षत्वं प्रति कुत्वस्यासिद्धत्वमपि दुर्वचम्।

तथा चापवादत्वात् षत्वं बाधित्वा अघोषस्य महाप्राणस्य शस्य स्थाने तादृशः कुत्वेन ख एव स्यात्। खस्य 'वाऽवसाने' इत्यनेन चर्त्वे 'तादृक्' इति। चर्त्वाभावपक्षे 'तादृख्' इत्येव स्यात् 'तादृग्' इति गकारान्तो न स्यात्। जश्त्वदृष्ट्या कुत्वेन जातस्य खस्यासिद्धत्वात्। न च शस्यैव जश्त्वमस्त्विति वाच्यम्, जश्य स्थाने स्थानतः साम्येन जादेशस्यैवापत्तेः, शस्थानिकजश्त्वस्यापवादेन कुत्वेन बाधादप्रवृत्तेः।

ननु जश्त्वं प्रति कुत्वस्यापवादत्वे कुत्वैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र पूर्वपदार्थे जश्त्वातिरिक्तत्वेन संकोचे कथं जश्त्वदृष्ट्या कुत्वस्यासिद्धत्वमिति चेन्न, अपवादशास्त्रारम्भसामर्थ्येनापवादप्राक्क्षणेऽपवादशास्त्रस्यासिद्धत्वाभावबोधनेन तस्य चारितार्थ्यात्। तत्प्रवृत्त्युत्तरमपि कुत्वस्यासिद्धत्वाभावबोधने प्रमाणाभावात्। यत्र तु 'धुक्' इत्यादौ कृते धत्वे तस्यासिद्धत्वेन दत्वप्रवृत्तौ सूत्रवैयर्थ्यम्, तत्र तदुत्तरमपि नासिद्धत्वम्।

वस्तुतस्तु 'स्रक्' इत्यत्र भाष्ये कुत्वदर्शनात् कुत्वस्य षत्वापवादत्वं सुव्यक्तमेव। अन्यथा सृजेः षत्वस्य विशेषविहितत्वेन पदान्ते 'रज्जुसृड्भ्याम्' इत्यादाविव षत्वेन कुत्वबाधप्रसङ्गात् 'स्रक्' इति भाष्योदाहरणासङ्गतिः। न च कुत्वे तस्यासिद्धत्वात् षत्वं जश्त्वं च स्यादिति वाच्यम्, एवमपि

तु गः, जश्त्वं प्रति कुत्वस्यासिद्धत्वात्। 'दिगादिभ्यो यत्' इति निर्देशान्नासिद्धत्वमिति वा बोध्यम्। 'व्रश्चे'ति षत्वम्, जश्त्वचर्त्वे। विट्, विड्, विशौ, विशः। विशम्।

नशेर्वा। [ ८-२-६३ ]

नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते। नक्, नग्, नट्-नड्, नशौ, नशः। नग्भ्याम्, नड्भ्यामित्यादि।

स्पृशोऽनुदके क्विन्। [ ३-२-५८ ]

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात्।

---

लक्ष्ये लक्षणन्यायेन पुनः कुत्वाप्रवृत्तेः। प्रथमप्रवृत्तकुत्ववैयर्थ्यकल्पनाद् 'स्रक्' इति भाष्योदाहरणासङ्गतेर्वचनसामर्थ्यादसिद्धत्वबाधनात्। स्पष्टं चेदम् 'क्विन्प्रत्ययस्य' इति सूत्रे भाष्यप्रदीपयोः।

एवं स्थिते 'तादृग्भ्याम्' इत्यादौ शस्य कुत्वेन खकारेऽसिद्धत्वाभावाच्च षत्वं न प्रवर्तते, जश्त्वं तु प्रवर्तते एव, 'दिगादिभ्यो यत्' ( ४, ३, ५४ ) इति निर्देशश्चात एव संगच्छते। तथा सति 'काम्यच्' ( ३-१-६ ) इति सूत्रस्थः 'उपयट् काम्यति' इति भाष्यप्रयोगः, 'सृजिदृशोः' इति सूत्रस्थः 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगश्च कथं संगच्छताम्? तत्रेदमुत्तरम्—'क्विन् प्रत्ययो यस्मात्' इति बहुव्रीह्यभिधेयावधित्वस्य सृजौ निरुपपदलक्षणस्य, यजावनुपसर्गोपपदलक्षणस्यैवाश्रयणेनादोषात्।

'विश प्रवेशने' इत्यतः क्विपि 'विश्' इति। ततः सौ तस्य लोपे 'व्रश्च' इति शस्य षः। जश्त्वं प्रति षत्वस्यासिद्धत्वाभावाज्जश्त्वे वैकल्पिकचर्त्वे च 'विट्, विड्' इत्यादि। प्रवेशकर्तेत्यर्थः। विड्=वैश्यो वा, 'विप्रक्षत्रियविट्शूद्राः' ( अमरः २ का० ७ व ) इत्यमरात्, विट्—मनुजः, 'द्वौ विशौ वैश्यमनुजौ' ( अम० ३ का० ३ व० ) इत्यमरात्, 'विट् स्मृतौ वैश्यमनुजप्रवेशेषु' इति विश्वाच्च।

'णश अदर्शने' इत्यतः क्विपि सौ तस्य लोपे 'व्रश्च' इति षत्वे प्राप्ते विशेषमाह—नशेर्वा ( ८-२-६३ ) इति। 'क्विन्प्रत्ययस्य' इत्यतः 'क्विन्' इति, 'स्कोः संयोगाद्योः' इत्यतः 'अन्ते' इति चानुवर्तते, 'पदस्य' इत्यधिकृतम्। तदाह—नशेः कवर्ग इत्यादि। अन्तादेश इति 'अलोऽन्त्यस्य' इति परिभाषालभ्यम्। केचिदिह झलीत्यनुवर्त्त्य झलि पदान्ते चेति व्याचक्षते तन्न वरम्, 'नष्टः' इत्यादावपि कुत्वापत्तेः। नगिति—शस्य 'व्रश्च' इति षः, तस्य जश्त्वेन डः, तस्य कुत्वेन गः, तस्य 'वावसाने' इति चर्त्वे नक्, नग् इति षडगकाः प्राग्वत्।

कुत्वाभावपक्षे 'व्रश्च' इति षत्वे चर्त्वे 'नट्, नड्' इति रूपे। दर्शनाविषय इत्यर्थः। नग्भ्यामिति—कुत्वपक्षे जश्त्वेन गः, षत्वपक्षे जश्त्वेन डः। अत्र 'मस्जिनशोर्झलि' ( ७।१।६० ) इति नुम् तु न, 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य्यविज्ञानम्' इति परिभाषया धातोर्विहिते प्रत्यये एव तत्प्रवृत्तेः। 'घृतस्पृक्' इत्यादिसिद्धये विशेषमाह—

'स्पृशोऽनुदके क्विन्' ( ३-२-५८ ) इति। क्विनि ककारः 'क्ङिति च' इति गुणनिषेधार्थः, नकारः 'क्विन्प्रत्ययस्य' इत्यत्र विशेषणार्थः। वस्तुतस्तु व्यर्थ एव नकारः। 'क्विप्रत्ययस्य' इत्युक्तेऽपि 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया क्विपो ग्रहणाप्राप्तेः। न च 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वप्रयोजनम्, क्विनः प्रकृतीनामेकाच्त्वात् 'धातोः' ( ६-१-१६२ ) इति धातुस्वरेणान्तोदात्तेनाप्याद्युदात्तत्वसिद्धेः। नच 'दधृक्' इत्यस्यानेकाच्त्वादन्तोदात्तेन धातुस्वरेणाद्युदात्तत्वासिद्धिः, 'दधृक्' इत्यत्र 'ऋत्विक्' सूत्रे निपातनादाद्युदात्तत्वसिद्धेः। स्पष्टञ्चैतत्सर्वमत्रैव भाष्ये।

अनुदके किम्? उदकस्पर्श इति नागेशः। अत्र केचित्—अनुदक इत्यस्याभावे उदकशब्देऽप्युपपदे क्विन् स्यात्। तथा च 'उदकस्पृक्' इति स्यात्। तस्य च क्विनाऽसरूपापवादेन पक्षे

घृतस्पृक्-घृतस्पृग्, घृतस्पृशौ, घृतस्पृशः । क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । स्पृक् । षड्गकाः प्रागवत् ॥ इति शान्ताः ॥ 'ञिधृषा प्रागल्भ्ये' । अस्मात् 'ऋत्विग्–' आदिना क्विन् । द्वित्वमन्तोदात्तत्वं च निपात्यते ।

'कर्मण्यण्' इत्यण इष्टतया 'उदकस्पर्शः' इत्यस्येष्टत्वेन 'उदकस्पृट्' इति क्विबन्तं प्रत्युदाहरणीयम् । क्विन्क्विपोः सरूपतया नित्यबाधापत्तेः । न च क्विप्यपि क्विन्प्रत्ययो यस्माद् दृष्ट इति बहुव्रीहिणा कुत्वमेवेष्टमिति वाच्यम्, 'अनुदके' इत्यस्य सत्त्वे उदकभिन्नोपपदलक्षणस्यैव क्विपो बाधेन 'उदकस्पृट्' इत्यस्यैवेष्टतया तदभावे तदसिद्ध्यापत्तेः ।

एतेन क्विप्यपि कुत्वस्येष्टतया 'अनुदके' इत्यस्य व्यावर्त्याप्रसिद्धया तत्सामर्थ्यात् क्विपोऽभाव एवेत्यपि परास्तम् । उदकभिन्नोपपदविशिष्टस्यैव स्पृशः क्विबन्तत्वेऽपि क्विन्नन्तत्वकार्य्यभाक्त्वात् ।

**सुप्युपपदे इति**—'कर्मणि' इति निवर्तते 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते । तदाह—**सुप्युपपदे इत्यादि** । वस्तुतस्तु सुपीत्यनुवृत्तौ प्रमाणाभावः । किञ्च सुपीत्यनुवृत्तौ 'सत्सूद्विष' ( ३-२-६१ ) इति सूत्रस्थभाष्यविरोधः, तथा हि—'सदादिषु सुब्ग्रहणम्' सदादिषु सुब्ग्रहणं कर्तव्यम्' इत्युक्तं यद्यत्र कर्मणीति निवृत्तं सुपीति सम्बध्येत तदा वार्त्तिकवैयर्थ्यापत्तिः, सुपीत्यनुवृत्त्यैव तत्सिद्धेः । अत एव हरदत्तेनापि 'सुपि स्थः' इत्यत्रोक्तं 'सकर्मकेषु कर्मणीत्युपतिष्ठतेऽन्यत्र सुपीति । ततश्च सुबन्ते उपपदे क्विन्नित्युक्तमनुपपन्नम्' इत्युक्तम् ।

**घृतस्पृगिति**—घृतं स्पृशतीत्यर्थे क्विनि उपपदसमासे 'घृतस्पृश्शब्दात्सौ' तस्य लोपे 'क्विन्प्रत्ययस्य' इति कुत्वस्यासिद्धतया 'व्रश्च' इति षत्वे तस्य जश्त्वेन डः, तस्य कुत्वेन गः, तस्य वैकल्पिकचर्त्वेन कः । इति षड्गकाः प्रागवत् ।

'क्विन्प्रत्ययस्य' क्विनः प्रत्ययत्वस्याव्यभिचारेण प्रत्ययत्वे प्रत्ययग्रहणं वीप्सागर्भितबहुव्रीहिलाभार्थमिति पूर्वमुक्तम्, तत्प्रदर्शनपूर्वकं तत्फलमाह-**क्विन्प्रत्ययो यस्मादित्यादिना** । क्विन्प्रत्ययो यस्माद् भवति तस्य कुत्वमित्यर्थे क्विप्यपि कुत्वं सिध्यति, क्विन उपलक्षणतया 'काकवन्तो देवदत्तस्य गृहाः' इत्युक्ते काक उत्पतितोऽपि परिचाययति तद् गृहम्, स्पृगित्यत्र उदकभिन्नोपपदाभावात् क्विनोऽप्राप्तया क्विप्यपि कुत्वमत्र । वस्तुतस्तु क्विन्योग्यस्य क्विनोऽभावेऽपि कुत्वमिति तात्पर्य्ये 'स्पृक्' इत्यत्र उदकभिन्नोपपदाभावेन क्विन्योग्यत्वाभावात् 'स्पृट्' इत्येवोचितम् ।

वस्तुतस्तु क्विन्योग्याद्धातोः क्विनः सरूपापवादतया क्विपोऽभाव एवेति कुत्वाप्राप्तिः । अत एव भाष्यकृता बहुव्रीहेः फलं छन्दसि 'मानो अद्राक्, मानो अस्राक्' इति दत्तम् । अत्र हि सृजिदृशिभ्यां माङि लुङि तिपि सिचि 'बहुलं छन्दसि' इतीडभावे 'हल्ङ्याब्' इति तिपो लोपे 'सृजिदृशोः' इत्यमागमे 'वदव्रज' इति वृद्धौ 'बहुलं छन्दस्यमाङ्योगेऽपि' ( ६-४-७५ ) इति माङ्योगेऽप्यडागमे संयोगान्तलोपे कुत्वादौ रूपम् । छन्दसि फलप्रदर्शनेन लोके तदभाव एव सूचितः । इति शान्ताः ।

**अथ षकारान्ता निरूप्यन्ते**-दधृष्शब्दस्य सिद्धिं दर्शयति—'ऋत्विग् दधृक्' इत्यादिना 'ञिधृषा प्रागल्भ्ये' इत्यतः क्विन् । 'ञि' इत्यस्य 'आदिर्ञिटुडवः' इत्यनेनेत्संज्ञायां लोपः । 'ञीतः क्तः' (३-२-१८७) इति वर्तमाने क्तप्रत्ययः । आकारोपीत् । तेन निष्ठायाम् 'आदितश्च' (७-२-१६) इतीट्प्रतिषेधः ।

**निपात्यते इति**—केनाप्यसिद्धावनेन विधीयत इत्यर्थः । क्विनि-निपातनाद् द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे तस्य 'उरत्' इति ऋकारस्यात्वे रपरत्वे जश्त्वे च आदेर्हलः शेषे कित्परत्वाद् गुणाभावे 'दधृष्' इति । क्विनो नित्त्वात् 'ञ्नित्यादिः' इत्याद्युदात्तत्वं बाधित्वा निपातनाद्

कुत्वात्पूर्वं जश्त्वेन डः, गः, कः। धृष्णोतीति दधृक्, दधृषौ, दधृषः। दधृग्भ्यामित्यादि। रत्नानि मुष्णातीति रत्नमुट्, रत्नमुड्, रत्नमुषौ, रत्नमुषः। 'षड्भ्यो लुक्' षट्। षड्, षड्भिः। षड्भ्यः। षड्भ्यः। 'षट्चतुर्भ्यश्च' इति नुट्। 'अनाम्' इति पर्युदासान्न ष्टुत्वनिषेधः। 'यरोऽनुनासिके—' इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' इति वचनान्नित्यमनुनासिकः। षण्णाम्। षट्त्सु, षट्सु। तदन्तविधिः। परमषट्। गौणत्वे तु प्रियषषः।

---

दात्तम्। कुत्वात्पूर्वमिति—जश्त्वं प्रति कुत्वस्यासिद्धत्वात् पूर्वं जश्त्वेन डः, ततः कुत्वेन गः। वैकल्पिकचर्त्त्वेन कः। 'दधृक्' इति—धार्ष्ट्यकर्तेत्यर्थः। रत्नमुडिति—'मुष स्तेये' इत्यतः क्विप्। 'उपपदमतिङ्' (२-२-१९) इत्युपपदसमासे 'कर्तृकर्मणोः कृति' विहितषष्ठ्या लुकि सौ तस्य लोपे जश्त्वे चर्त्वे च रूपम्। रत्नचोरयितेत्यर्थः।

षडित्यस्य सिद्धये विशेषमाह—'षो अन्तकर्मणि' इत्यतः क्विपि विचि वा पृषोदरादित्वेऽन्त्याकारस्य लोपे प्रातिपदिकत्वे नित्यबहुवचनान्तत्वाज्जस्शसोः। 'ष्णान्ताः षट्' इति षट्संज्ञायाम् 'षड्भ्यो लुक्' इति जस्शसोर्लुकि जश्त्वचर्त्त्वयोः षट्, षड् इति षट्त्वसंख्याविशिष्टा इत्यर्थः। संख्यायान्तु नायम्, 'आदशतः संख्याः संख्येये' इत्युक्तेः। संख्यायान्तु 'षट्त्वम्' इत्यस्यैव प्रयोगः। तदन्तविधिरिति—'अङ्गस्य' इत्यधिकृतम्। तद्विशेषणतया तदन्तविधिरित्यर्थः। वस्तुतस्तु 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इत्युभयत्रापि न तदन्तविधिः, 'अद्ड्' इति सूत्रे भाष्ये 'डतरादिभ्यः पञ्चभ्य इति पञ्चमी, 'अङ्गस्य' इति षष्ठी तदशक्यं भिन्नविभक्तित्वाद् डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यम्—विशेषयितुमन्यदतो विहितात्प्रत्ययाद्' इत्युक्त्या तत्र यथा न तदन्तविधिस्तथाऽत्रापि न स्यात्।

तथा च 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इत्युभयत्रापि 'षषः' इति, 'षट् चतुरश्च' इति लाघवाद् वक्तव्ये गुरुभूतबहुवचननिर्देशसामर्थ्यात् सूत्रे उभयत्रापि 'षड्भ्यः' इति तन्त्रेण निर्देशः। एकः शब्दयुक्तार्थपरः, अपरोऽर्थयुक्तशब्दपरः। इति शब्दादर्थाच्च उभाभ्यां परत्वं विवक्षितम्। इति 'पञ्चकाः शकुनयः' इत्यत्रार्थात्परत्वेऽपि जसः नान्तषट्संज्ञकशब्दपरत्वाभावान्न लुक्।

अर्थात् परत्वञ्च षडर्थगतसंख्यानुवादकत्वरूपं गौणम्। 'प्रियपञ्चानः' इत्यादौ षट्संज्ञकपञ्चशब्दात्परत्वेऽपि षडर्थगतसंख्याभिधायकत्वरूपार्थात्परत्वाभावान्न लुक्, इति गौणे न लुगादि। एवमत्र 'षट् चतुर्भ्यश्च' इत्यत्रापीति गौणे न प्रवृत्तिः प्राचाम्—कैयटमनोरमाकारादीनां मतेऽर्थः। तथा च यत्र षडर्थस्य प्राधान्यं तत्रैव लुङ्नुटौ। 'परमषट्' इत्यत्र षडर्थस्य प्राधान्यात् 'परमषट्' 'परमषण्णाम्' इत्यत्र लुङ्नुटौ भवतः, 'प्रियषषः, प्रियषषाम्' इत्यादावन्यपदार्थबहुव्रीह्यर्थस्य प्राधान्याद् लुङ्नुटौ न भवतः।

शेखरकारमते तु 'षड्भ्यो लुक्' इत्यत्र बहुवचनं प्रयोगबाहुल्याभिप्रायात्। 'षड्भ्यो विहितयोर्जश्शसोर्लुक्' इत्यर्थेन गौणे न लुक्। गौणे षट्संज्ञा तु न, संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकस्यैव षट्संज्ञकत्वेन गौणे प्रियषष इत्यादौ प्रियाभिन्नषड्विशिष्टस्योपस्थित्या षडर्थे संख्येये विशिष्टनिष्ठविशेष्यतानिरूपितप्रकारत्वस्यैव सत्त्वेन प्रकारत्वासमानाधिकरणरूपमुख्योपस्थितीयविशेष्यत्वाभावात्समुदायस्य प्रियषषः षट्त्वाभावेन ततो विहितयोर्जश्शसोर्लुगप्राप्तेः। परमाभिन्नषट्त्वसंख्याविशिष्टार्थकस्य परमषट्शब्दस्य षट्त्वरूपसंख्यानिष्ठप्रकारतानिरूपितमुख्योपस्थितीयमुख्यविशेष्यतायाः सत्त्वात् परमषडिति समुदाये सत्त्वेन ततो विहितयोर्जश्शसोर्लुकि 'परमषट्' इति रूपम्। नच परमषट्शब्दो न गणनायां प्रसिद्ध इति षट्त्वाभाव इति वाच्यम्, गणनायां प्रसिद्धस्यैव ग्रहणे मानाभावात्। स्पष्टञ्चेदं सर्वादीति सूत्रे भाष्ये।

प्रियषषाम् । रुत्वं प्रति षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वम् ।

*र्वोरुपधाया दीर्घ इकः* । [ ८-२-७६ ]

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते । पिपठीः, पिपठिषौ, पिपठिषः । पिपठीर्भ्याम् । 'वा शरि' इति वा विसर्जनीयः ।

---

न चैवम्—'षट्चतुर्भ्यश्च' इति नुड्विधायकेऽपि विहितपदाध्याहारेण नागेशमते इष्टस्य गौणे 'प्रियचतुर्णाम्' इत्यत्र नुटः प्रवृत्तिर्न स्यादिति वाच्यम्, 'नामि' इति सूत्रे भाष्ये 'आमि' इत्येव सूत्रमस्तु । न च नित्यत्वात्पूर्वं दीर्घे ह्रस्वाश्रयो नुट् न स्यात् ह्रस्वान्तान्नुडित्येतत्सामर्थ्येन भूतपूर्वगत्या ह्रस्वान्तमादाय नुट्प्रवृत्तेः । न च 'नृणाम्' इत्यत्र दीर्घाभावे नुडर्थं ह्रस्वग्रहणमिति भूतपूर्वह्रस्वान्तग्रहणे मानाभावोऽत्रोक्ते भाष्यकृता—'नैकमुदाहरणं योगारम्भं प्रयोजयति 'नृनद्यापः' इत्येव ब्रूयात् । नच 'तिसृणाम्' इत्यत्र नुडर्थं ह्रस्वग्रहणं चरितार्थम् 'षट् चतुर्भ्यः' इत्यत्र 'त्रेः' 'इत्यनुवृत्त्या सिद्धेः' इत्युक्तम् ।

'षट्चतुर्भ्यश्च' इत्यस्य गौणे चतुःशब्दान् नुटोऽप्रवृत्तौ 'प्रियचतसृणाम्' इत्यत्र नुडर्थं ह्रस्वग्रहणस्य चारितार्थ्येन 'नृनद्यापः' इत्येव ब्रूयात् इति भाष्यासङ्गतिवारणाय 'प्रियचतसृणाम्' इत्यत्र गौणेऽपि 'षट्चतुर्भ्यश्च' इत्यस्य प्रवृत्तये विहितपदानध्याहारेण षडादिभ्यः परस्याङ्गसंज्ञानिमित्तस्यामो नुडित्यर्थेन गौणेऽपि प्रवृत्तौ बाधकाभावात् । तेन 'प्रियषषाम्' इत्येवेत्यलं विस्तरेण ।

'पिपठीः' इत्यस्य सिद्धिप्रकारमाह—**रुत्वं प्रतीति**—पठितुमिच्छतीत्यर्थे 'पठ व्यक्तायां वाचि' इत्यतः 'धातोः कर्मणः' ( ३।१।७ ) इति सन्प्रत्यये नस्येत्त्वे 'सनाद्यन्ता धातवः' इति 'पठ् स' इत्यस्य धातुसंज्ञा । ततः 'सन्यङोः' ( ६।१।९ ) इत्यनेन 'पठ्' इत्यस्य द्वित्वे 'पठ् पठ् स' इति जाते । पूर्वस्य पठ् इत्यस्याभ्याससंज्ञायाम् 'हलादिः शेषः' इति आदिहलः शेषे, 'सन्यतः' इत्यभ्यासाकारस्येत्वे सन इडागमे षत्वे च 'पिपठिष' इति जाते । पिपठिषधातोः क्विपि सनोऽकारस्य 'अतो लोपः' इति लोपे कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् सौ तस्य लोपे 'पिपठिस्' इति दशायाम् 'ससजुषो रुः' ( ८–२–६६ ) इति रुत्वदृष्ट्या 'आदेशप्रत्यययोः' ( ८।३।५९ ) इति षत्वस्यासिद्धतया सबुद्धया सस्य रुत्वम् । न च रुत्वे कर्तव्ये अलोपस्य स्थानिवत्त्वात्पदान्तसकाराभावाद् रुत्वं न स्यादिति वाच्यम्, 'पूर्वत्रासिद्धीये न स्थानिवत्' इति 'क्वौ लुप्तं न स्थानिवत्' इति वा निषेधात् । तदाह—**रुत्वं प्रतीति** । 'सुप्तिङन्तम्' इति 'स्कोः संयोगाद्योः' इत्यतः 'अन्ते' इति पदत्वेन 'खरवसानयोः' इति रस्य विसर्गे प्राप्ते विशेषमाह—

**'र्वोरुपधाया दीर्घः'** (८–२–७३) इति । 'र्च व् च' इति द्वन्द्वे ओसि 'र्वोः' इति । 'सिपि धातोः' इत्यतो धातोरित्यनुवर्तते इति 'पदस्य' अधिक्रियते धातोरित्यस्य 'र्वोः' इति विशेषणम् । तदन्तविधिः । तदाह—**रेफवान्तस्येत्यादि** । उपधाभूतस्य इरः दीर्घे रेफस्य विसर्गे च 'पिपठीः' इति । एवमेव भ्यामादौ पदत्वादनेन दीर्घ इति 'पिपठीर्भ्याम्' इत्यादि । सुपि विशेषमाह—

'वा शरि' ( ८–३–३६ ) इति । 'पिपठिर् सु' इति दशायाम् षत्वस्यासिद्धत्वाद् रुत्वे उपधादीर्घे रस्य विसर्गे 'विसर्जनीयस्य सः' इति प्राप्तं सत्वं बाधित्वा 'वा शरि' इति वैकल्पिको विसर्गस्य स्थाने विसर्गे एव स्थिते 'पिपठीःसु' इति । विसर्गाभावपक्षे विसर्गस्य सत्त्वे 'पिपठीस्सु' इति च । उभयत्रापि इण्कवर्गाभ्यामव्यवहितोत्तरस्य सस्याभावात् 'आदेशप्रत्यययोः' इति षत्वाप्राप्तयाऽऽह—

*नुम्विसर्जनीयशर्व्यवायेऽपि* । [ ८-३-५८ ]

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु, पिपठीःषु । 'प्रत्येकम्' इति व्याख्यानादनेकव्यवधाने षत्वं न । निंस्स्व । निंस्से । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थम् व्याख्यानात् । तेनेह न—सुहिन्सु । पुंसु । अत एव न शर्ग्रहणेन गतार्थता । 'रात्सस्य' । इति सलोपे विसर्गः–चिकीः, चिकीर्षौ, चिकीर्षः ।

---

'नुम्विसर्जनीयशर्व्यवायेऽपि' ( ८–३–५८ ) इति । अत्र 'इण्कोः' इति, मूर्द्धन्य इति चानुवर्तते- तदाह—एतैरित्यादि = एतैर्नुम्विसर्गशर्भिः । प्रत्येकमिति —एकेनैव नुमादिना व्यवधानेन तु 'अट्कुप्वाङ्' इतिवद् द्वित्रादिनाऽपि व्यवधाने–तदुक्तं भाष्ये 'यथाऽन्यत्रापि व्यवायसमुदाये कार्य्यं न भवति । क्वान्यत्र ?' नुम्विसर्जनीयशर्व्यवायेऽपीति 'निंस्से, निंस्स्व' इति' इति । विसर्जनीयपक्षे विसर्गेण व्यवधानेप्यनेन षत्वम् 'पिपठीःषु' इति । विसर्गसत्वपक्षे 'पिपठीस् सु' इति स्थितौ प्रथमसकाररूपेण शरा व्यवधानेऽपि 'नुम्विसर्जनीय' इत्यनेन सुपः सकारस्य षत्वे पूर्वसकारस्य 'ष्टुना ष्टुः' इति षत्वे 'पिपठीष्षु' इति । अत्र पिपठीस्घटकस्य सस्य इणोऽव्यवहितपरत्वात् 'आदेशप्रत्यययोः' इति षत्वं तु अपदान्तस्यैव तेन षत्वविधानात् । प्रकृते च सौ परे पदान्तत्वमेव सकारे ।

वस्तुतस्तु 'नुम्शर्व्यवाये' इति न्यासेनापि विसर्गस्यायोगवाहे पाठात् अयोगवाहस्य विसर्गस्य शर्षु पाठात् शर्व्यवधानमादाय षत्वसिद्धे सूत्रे विसर्जनीयग्रहणं व्यर्थमेव । तदुक्तं हयवरट्सूत्रे भाष्ये—'सर्पिःषु, धनुःषु' शर्व्यवाय इति षत्वं सिद्धं भवति 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति विसर्जनीयग्रहणं न कर्तव्यं भवति' इति ।

निंस्स्वेति—'णिसि चुम्बने' इत्यादादिकाल्लोटि मध्यमपुरुषैकवचने थासि तस्य 'से' इत्यादेशे 'सवाभ्यां वामौ' इत्येकारस्य वादेशे णस्य 'णो नः' इति नत्वे इदित्वान्नुमि 'नश्चापदान्तस्य' इति नुमो नस्यानुस्वारे 'निंस्स्व' इति, तत एव धातोर्लटि थासि तस्य 'से' आदेशे पूर्वन्नुमादिकार्ये 'निंस्से' इति । उभयत्रापि द्वितीयसकारस्य 'नुम्विसर्जनीय' इति षत्वं न भवति, प्रत्येकव्यवधाने एव षत्वोक्तेः । तदुक्तम्—'यथान्यत्रापि व्यवायसमुदाये कार्य्यं न भवति । क्वान्यत्र ? 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति । तदाह—अनेकव्यवधानेऽपीति । नुम्स्थानिकेति—नुम्स्थानिकानुस्वारव्यवधाने एव षत्वं न तु श्रूयमाणनुम्व्यवधाने । व्याख्यानादिति—हयवरट् सूत्रे भाष्ये 'नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम् । कथं 'सर्पींषि, धनूंषि' इति । अनुस्वारे कृते 'शर्व्यवाये' इत्येव सिद्धम् । अवश्यं नुमो ग्रहणं कर्त्तव्यम् । अनुस्वारविशेषणं नुमो ग्रहणम् । नुमो योऽनुस्वारस्तत्र यथा स्यादिह मा भूत् 'पुंसु' इति । प्रकृतसूत्रे भाष्येऽपि स्पष्टमेतत् ।

'हिसि हिंसायाम्' इत्यतः सुपूर्वकात् क्विपि इदित्वान्नुमि सुपि 'सुहिन् स् सु' इति स्थितौ सुपि पदत्वाद् धातुसकारस्य संयोगान्तलोपे 'सुहिन्सु' इति । अत्र नुम्व्यवायसत्त्वेऽपि न षत्वम्, विशेष्यानुस्वाराभावप्रयुक्तनुम्स्थानिकानुस्वाराभावात् । 'पुंसु' इत्यत्र विशेष्यानुस्वारसत्त्वेऽपि नुम्स्थानिकत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावात्षत्वाभावः । अत एवेति—नुम्स्थानिकानुस्वारव्यवाये षत्वमिति नियमार्थत्वादेवेत्यर्थः । न गतार्थतेति—शर्ग्रहणेऽनुस्वारमात्रग्रहणादुक्तार्थासिद्धेर्न गतार्थता = लब्धप्रयोजनता । अनुस्वारमात्रग्रहणे शर्ग्रहणेन गतार्थत्वेन नुम्ग्रहणवैयर्थ्यापत्तेः । नच नुम्व्यवधाने षत्वमित्यर्थे न नुम्ग्रहणस्य वैयर्थ्यमिति वाच्यम्, भाष्यप्रदर्शितलक्ष्ये 'सुहिन्सु' 'पुंसु' इत्यत्र षत्वाभावाय तथोपलक्षणत्वस्यावश्यकत्वात् ।

चिकीरिति—'डुकृञ् करणे' इत्यतः सनि 'इको झल्' इति सनः कित्वाद् गुणाभावे 'अज्झनगमां सनि' इति मकारस्य दीर्घे 'ॠत इद्धातोः' दीर्घॠकारस्य इत्वे रपरत्वे सन्नन्तस्य धातुतया 'सन्यङोः' इत्यनेन 'किर्' इत्यस्य द्वित्वे हलादिशेषे 'कुहोश्चुः' ( ७।२।६२ ) इत्यभ्यासककारस्य

'रो॰ सुपि' इति नियमान्न विसर्गः। चिकीर्षु। 'दमेर्डोस्' डित्त्वसामर्थ्याट्टिलोपः। षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ। दोः, दोषौ, दोषः। 'पद्दन्नो–' इति वा दोषन्। दोष्णः। दोष्णा। दोषः। दोषा। 'विश प्रवेशने'। सन्नन्तात्क्विप्। षत्वस्यासिद्धत्वात्संयोगान्तलोपः। 'व्रश्च–' इति षः। जश्त्वचर्त्वे। विविड्, विविट्, विविक्षौ, विविक्षः। 'स्कोः–' इति कलोपः। तट्, तड्, तक्षौ, तक्षः। गोरट्, गोरड्, गोरक्षौ, गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु 'स्कोः–' इति न प्रवर्तते,

---

चुत्वे 'हलि च' इत्युपधाया इको दीर्घे सस्य षत्वे ततः क्विपि अलोपे 'चिकीर्ष्' इति स्थितौ प्रातिपदिकत्वात्सौ सोर्लोपे षत्वस्यासिद्धत्वात् सबुद्धया षस्य 'रात्सस्य' इति लोपे इत्याह—रात्सस्येति। 'सुप्तिङन्तम्' इति पदत्वात् 'र्वोरुपधाया दीर्घः' इति उपधादीर्घः। यद्यपि 'हलि च' इति पूर्वमेव दीर्घो जातस्तथाऽपि 'हलि च' इत्यसिद्धतया 'र्वोः' इति दीर्घः। 'चिकीर्षु' इत्यत्र 'खरवसानयोः' इति विसर्गमाशङ्कयाह—'रो॰ सुपि' इति—प्रकृते 'उरण्' इति विहितस्य रेफस्य रुत्वाभावान्न दीर्घः। दोरित्यस्य सिद्धये आह—दमेरिति–'डोसिः' इति पाठः, इकाराभावे 'हलन्त्यम्' इति सस्येत्वापत्तिः। न चोच्चारणसामर्थ्यान्नेत्त्वम्, अनेकक्लिष्टकल्पनापेक्षया इदित्करणमेव ज्यायः। यद्यपि 'ककुदोषणी' इति भाष्याद् 'दोष्' शब्दो नपुंसकस्तथापि—

'भुजबाहू प्रवेष्टो दोः' इति कोशे पुंलिङ्गभुजादिशब्दसाहचर्यात् 'दोषं तस्य तथाविधस्य भजतः' इति श्रीहर्षप्रयोगाच्च पुंलिङ्गोऽपि। 'दोर्दोषा च भुजो बाहुः' इति धनञ्जयकोशात् स्त्रीलिङ्गोऽपि। 'दमेर्डोसिः' ( उ० २ पा० ६६ सू० )। दाम्यति = इन्द्रियाणि शमयति यः, येन वा स दोः=बाहुः, शमनकर्ता वा। दैवादिकात् 'दम उपशमे' इत्यतो डोसि प्रत्यये डित्त्वसामर्थ्याद् भत्वाभावेऽपि टेर्लोपे सस्य षत्वे च 'दोष्' शब्दः। षत्वस्यासिद्धत्वादिति–कार्यासिद्धत्वाभिप्रायेण तत्र तत्रासिद्धत्वादित्युक्तम्। शास्त्रासिद्धत्वपक्षे तु असिद्धशास्त्रप्रतिबन्धकीभूतसिद्धशास्त्रप्रवृत्तिसम्भावनायां पूर्वमसिद्धशास्त्रं न प्रवर्तते इति न्यायात् स्वाद्युत्पत्तेः पूर्वं षत्वाप्रवृत्तिः। स्वादौ च सति पदान्तत्वादेव षत्वाप्रवृत्तिरिति सस्यैव रुत्वं न तु षस्येतीद चिन्त्यम्।

वा दोषन्निति—दोष्शब्दस्य शसादावचि दोषन्नादेश इत्यर्थः। दोष्ण इति—'पद्दन्' इति दोषन्नादेशेऽल्लोपे 'रषाभ्याम्' इति णत्वे च रूपम्। दोष इति—आदेशाभावे।

विविक्षशब्दसिद्धिमाह—विश प्रवेशने इति।

वेष्टुमिच्छतीति विग्रहे विशधातोः सनि 'हलन्ताच्च' इति सनः कित्त्वाद् गुणाभावे द्वित्वेऽभ्यासकार्ये 'व्रश्च' इति शस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे सुपः सस्य षत्वे सन्नन्तस्य धातुत्वात् क्विपि अलोपे 'विविक्ष्' इति रूपम्। ततः सौ हल्ङ्यादिलोपे पदत्वे कत्वस्यासिद्धत्वात् 'स्कोः संयोगाद्योः' इत्यस्याप्राप्तौ 'संयोगान्तस्य' इति षलोपे निमित्तापायन्यायात् झलनिमित्तकषत्वनिवृत्तौ पुनः शस्य षत्वे जश्त्वे 'वावसाने' इति चर्त्वे 'विविट्, विविड्' इति।

न चात्र पूर्वं पूर्वमन्तरङ्गम्, इति न्यायेनालोपस्य बहिरङ्गस्यासिद्धतया संयोगान्तलोपाप्राप्तिः, बहिर्भूतसुब्निमित्तकपदनिमित्तकत्वेन अलोपापेक्षया संयोगान्तलोपस्यैव बहिरङ्गत्वात्। सलोप इति। 'तक्षू तनूकरणे' इत्यतः क्विपि ततः सौ तस्य लोपे पदत्वे च 'स्कोः' इति कलोपे षस्य जश्त्वेन डे तस्य वैकल्पिकचर्त्वे 'तट् तड्' इति। गोरडिति—गां रक्षतीति विग्रहे कर्मण्युपपदेऽणोऽपवादत्वेऽपि 'वाऽसरूपः' इति परिभाषयाऽपवादत्वे वैकल्पिके पक्षे क्विपि प्रातिपदिकत्वात्सौ तस्य लोपे प्रत्ययलक्षणेन पदत्वे 'स्कोः' इति कलोपे षस्य जश्त्वे चर्त्वे च गोरक्, गोरग्–इति। तक्षिरक्षिभ्यामिति—यदि 'तक्षि-रक्षी' इति णिच्प्रत्ययान्तस्तदा ण्यन्ताभिन्नाभ्यां तक्षिरक्षिभ्यामित्यर्थः। यदि तक्षिरक्षिति धातुनिर्देशे इक्प्रत्ययान्तस्तदा तक्षरक्षधातुप्रकृतिको यो णिच् तदन्ताभ्यामित्यर्थः। उभयथाऽऽपि तक्षरक्षधातुभ्यां 'हेतुमति च' इति णिचि ण्यन्तात् क्विपि णिलोपे क्विपो लोपे 'तक्ष्, रक्ष्' इति षान्तौ शब्दौ। ततः सौ तस्य लोपे प्रत्ययलक्षणेन 'सुप्तिङन्तम्' पदत्वे

णिलोपस्य स्थानिवद्भावात्। 'पूर्वत्रासिद्धे न स्थानिवत्' इति त्विह नास्ति, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति निषेधात्। तस्मात्संयोगान्तलोप एव। तक्, तग्। गोरक्, गोरग्। 'स्कोः –' इति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगान्तलोपः पिपक्, पिपग्। एवं विवक्। दिधक्॥ इति षान्ताः॥ 'पिस गतौ' सुष्ठु पेसतीति सुपीः, सुपिसौ, सुपिसः। सुपिसा, सुपीर्भ्याम्। सुपीःषु, सुपीष्षु।

---

'तक्ष्, रक्ष्' इत्यत्र 'स्कोः' इति संयोगादिलोपो न, णिच इकारलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन पदान्तसंयोगाभावात्।

न च पूर्वत्रासिद्धीये संयोगादिलोपे कर्तव्ये 'पूर्वत्रासिद्धीये न स्थानिवत्' इति स्थानिवत्त्वस्य निषेधः स्यादिति वाच्यम्, 'तस्यदोषः संयोगादिलोपलत्वणत्वेषु' इति वार्तिकेन स्थानिवत्त्वनिषेधस्य बाधात्। तदाह—**तस्य दोषः इति**—तस्य = पूर्वत्रासिद्धीये न स्थानिवदित्यस्य दोषो = बाधः। संयोगादिलोपे लत्वे णत्वे च कर्तव्ये बाध इत्यर्थः। अत एव 'तक्' इत्यत्र न संयोगादिलोपः, णिलोपस्य स्थानिवत्त्वेन पदान्तसंयोगाभावात्। 'निगाल्यते' इत्यत्र णिलोपस्य स्थानिवत्त्वात् 'अचि विभाषा' इति लत्वे सिध्यति। '**माषवपनी**' इत्यत्र ल्युटः टित्वात् 'टिड्ढाणञ्' इति ङीपि '**यस्येति**' च इत्यलोपस्य स्थानिवत्त्वे नस्य प्रातिपदिकान्तत्वाभावात् 'प्रातिपदिकान्त' इति णत्वं न। **तस्मादिति**—संयोगादिलोपे स्थानिवत्त्वात्, 'स्कोः' इत्यस्याप्रवृत्त्या षकारस्य संयोगान्तलोपे कस्य जश्त्वेन गस्तस्य वैकल्पिकचर्त्वेन कस्तदाह 'तक्, तग्' इति। **गोरगिति**—अत्रापि णिलोपस्य स्थानिवत्त्वेन संयोगादिलोपाभावः, संयोगान्तलोपे 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधात् संयोगान्तलोपादिकं पूर्ववद् बोध्यम्। **पिपगित्यस्य** सिद्धिप्रकारमाह—**कलोपं प्रतीति**—'डुपचष् पाके' इत्यतः पक्तुमिच्छतीति सनि द्वित्वादिकार्य्ये 'पिपचस' इति। चस्य 'चोः कुः' इति झल्निमित्तककुत्वे सस्य षत्वे 'पिपक्षः' इति सन्नन्तात् क्विपि तस्य लोपे कृदन्तत्वेन प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे पदत्वात्संयोगादिलोपमाशङ्क्याह—**कुत्वस्यासिद्धत्वादिति**। **लोप इति** षस्य लोप इत्यर्थः। **विवगिति**—वक्तुमिच्छतीत्यर्थे पूर्ववत्सर्वं कार्य्यं बोध्यम्।

**दिधगिति**—दग्धुमिच्छतीत्यर्थे 'दह भस्मीकरणे' इत्यतः सनि द्वित्वे अभ्यासकार्य्ये 'दिदह् स' इति स्थितौ 'दादेर्धातोर्घः' इति दहो हकारस्य झलिनिमित्तके घत्वे 'दिदघ् स' इति स्थितौ '**एकाचो बशो भष्**' इति द्वितीयदकारस्य भष्भावेन धकारे 'दिधघ् स' इति दशायाम् 'खरि च' इति घस्य चर्त्वेन ककारे 'आदेशप्रत्यययोः' इति सस्य षत्वे 'दिधक्ष' इत्यतः क्विपि सनोऽकारस्य 'अतो लोपः' इति लोपे कृदन्तत्वेन प्रातिपदिकत्वात् सौ तस्य 'हल्ङ्याब्' इति लोपे प्रत्ययलक्षणेन पदत्वे संयोगादिलोपदृष्ट्या घस्थाने जातस्य चर्त्वस्यासिद्धतया ककाराभावेन संयोगादिलोपाप्रवृत्त्या षस्य संयोगान्तलोपे खर्परत्वाभावेन निमित्तापाय इति न्यायेन, निमित्तस्य विनाशोन्मुखत्वे चर्त्वाप्रवृत्त्या वा घस्य जश्त्वेन गस्तस्य वैकल्पिकचर्त्वेन कः '**दिधक्, दिधग्**' इति रूपे। **इति षान्ताः**।

**अथ सान्ता निरूप्यन्ते**—सुष्ठु पेसति=गच्छतीति विग्रहे क्विपि 'कुगतिप्रादयः' इति समासे प्रातिपदिकत्वात्सौ तस्य लोपे पदसंज्ञायां सस्य रुत्वे 'र्वोः' इति उपधाया दीर्घे विसर्गे च '**सुपीः**' इति। **सुपिसाविति**—इणः परत्वात्सस्य षत्वं तु न सस्यादेशरूपत्वाभावात् प्रत्ययावयवत्वाभावाच्च। यत्र पदत्वं तत्रोपधादीर्घः '**सुपीर्भ्याम्**' इत्यादौ। **सुपीःस्विति**—'वा शरि' इति विसर्गस्य विकल्पेन विसर्गे 'नुम्विसर्जनीय' इति सुपः सस्य षत्वे '**सुपीःषु**' इति विसर्गस्य 'विसर्जनीयस्य सः' इति सत्वे सुपः सस्य शरा व्यवधानात् 'नुम्विसर्जनीय' इति षत्वे 'ष्टुना ष्टुः' इति धातोः सस्य षत्वे '**सुपीष्षु**' इति। न च धातोः सस्य पदान्तत्वेन जश्त्वं स्यादिति वाच्यम्, जश्त्वदृष्ट्या ष्टुत्वस्यासिद्धत्वात्। न च सस्यैव जश्त्वं स्यात्, तद्दृष्ट्यापि विसर्गस्थानिकस्य सस्यासिद्धत्वात्।

एवं सुतूः। 'तुस शब्दे'। विद्वान्, विद्वांसौ, विद्वांसः। हे विद्वन्। विद्वांसम्, विद्वांसौ।

*वसोः सम्प्रसारणम्।* [ ६-४-१३१ ]

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। पूर्वरूपत्वम् षत्वम्। विदुषः। विदुषा। 'वसुस्रंसु-' इति

---

एवं सुतूरिति—'तुस शब्दे, खण्डने' इति धातुपाठे नोपलभ्यते। किन्तु 'तुसह्रसह्लसरस शब्दे' इत्येव। माधवीयधातुपाठेऽपि 'तुसह्रसह्लसरस शब्दे' इत्येव पठितम्। तथा च 'तोसति'= शब्दं करोतीत्यर्थे क्विपि सति पिसिवत्सर्नं कार्य्यं बोध्यम्।

विद्वानिति—वेत्ति=जानातीत्यर्थे लटि तस्य 'लटः शतृशानचौ' [ ३।२।१२४ ] शत्रादेशे शपि तस्य 'अदिप्रभृतिभ्यः' इति लुकि 'विदेः शतुर्वसुः' इति वस्वादेशः। अत्र यद्यपि 'विदेः' धातुनिर्देशे इक्प्रत्ययान्तनिर्देशेन 'विद ज्ञाने, ज्ञानञ्चात्रावरणभङ्गानुकूलव्यापाररूपम्। आवरणम्=आच्छादकम्, अज्ञानम्, तम इति। 'ज्ञानम्प्रति आत्ममनःसंयोगः कारणम्' इति तार्किकमतम्। ज्ञानविषये वेदान्तिप्रदर्शितप्रक्रिया तु अन्या—'यथा तडागोदकं केदारान्निःसृत्य कुल्यात्मना तद्वदेव चतुष्कोणाद्याकारं भवति तद्वत् तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। स च परिणामो वृत्तिरित्युच्यते। वृत्तिजन्यं ज्ञानमिति दिगिति पञ्चोलिनः विद सत्तायाम्, विद्लृ लाभे, विद विचारणे' इति चतुर्णां ग्रहणं प्राप्नोति।

तथाऽपि सत्ताविचारार्थयोरात्मनेपदित्वेन लाभार्थस्य शप्रत्ययरूपविकरणेन व्यवधानात् त्रयाणामग्रहणाद् वेत्तेरादादिकस्यैव ग्रहणम्, ततः परस्यैव शतोर्वसुरादेशः 'सार्वधातुकमपित्' इति शतुर्ङित्त्वात् लघूपधगुणो न। कृदन्तत्वेन प्रातिपदिकत्वात् सौ उगित्त्वान्नुमि 'विद्वन्स् स्' इति स्थितौ 'सान्तमहतः' इति दीर्घे सुलोपे सस्य संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे 'विद्वान्' इति रूपम्। सान्तवस्वन्तत्वाभावात् 'वसुस्रंसु' इति दत्वं न। सुटि दीर्घे नुमो नस्यानुस्वारे 'विद्वांसौ' इत्यादि। शसादौ विशेषमाह—

'वसोः सम्प्रसारणम्' ( ६-४-१३१ ) इति। अत्र वसुपदेन क्वसोरपि ग्रहणम्। अन्यथा शतृप्रत्ययस्योगित्त्वात् स्थानिवद्भावेनैव वसोरप्युगित्त्वे सिद्धे 'विदेः शतुर्वसुः' इत्यत्रोगित्करणं व्यर्थं स्यात्। 'विदेः शतुर्वसुः' इत्येवोक्त्वा 'वसः सम्प्रसारणम्' इत्यत्र निरनुबन्धकस्य शत्रादेशवस एव ग्रहणं स्यादुदित्करणं व्यर्थमेव स्यादित्युदित्करणसामर्थ्यात् क्वसोरपि वसोर्ग्रहणम्। नन्वेवमपि तदनुबन्धकपरिभाषया क्वसोर्ग्रहणं न स्यादिति वाच्यम्, उदित्करणसामर्थ्यादेवात्र तदनुबन्धकपरिभाषाया अत्रावृत्तिज्ञापनात्।

भाष्यकृता तु 'विदेर्वसोः कित्त्वं वक्तव्यम्' इत्युक्तम् 'शतुः क्वसुः' इति कर्तव्यम्। तथा च केवलस्य वसोरभावात् 'वसोः सम्प्रसारणम्' इत्यत्रोभयोर्ग्रहणं स्यात्। भाष्ये 'क्वसुश्च' इत्यत्रैव 'वसुश्च' इत्युभयोर्ग्रहणं स्यात् इत्याशङ्क्योक्तम्—'किं पुनः कारणं सानुबन्धकः ( क्वसुः ) क्रियते अयमृकारान्तानां लिटि गुणः ( ऋच्छत्यृताम् ) प्रतिषेधविषयः ( क्ङिति चेत्यस्य बाधनाय ) आरभ्यते। स प्रतिषेधः कित्करणाद्बाध्यते' इति। तत उक्तम् 'न कर्तव्यः' ( शतुः क्वसुरिति न वक्तव्यम् )। क्रियते न्यासे एव ( शतुर्वसुरपि सानुबन्धकः )। द्विसकारको निर्देशः, 'विदेः शतुर्वसुस्समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति। एवञ्च वसुः केवलो नास्तीत्युभयोर्ग्रहणम् 'वसोः सम्प्रसारणम्' इत्यत्र स्यात्। 'वसुस्' इत्यत्र सकार इत्। भाष्यमतं गौरवग्रस्तम्।

भस्येति—इदमधिकारलब्धम्। शसादावचि 'विद्वस्' इति वस्य उकारे 'विद्उ अस्' इत्यत्र 'सम्प्रसारणाच्च' इत्यकारस्य पूर्वरूपे 'विदुस् अस्' इति स्थितौ पूर्वसस्य षत्वे अन्त्यसस्य रुत्वविसर्गयोः 'विदुषः, विदुषा' इत्यादि रूपम्। न च 'विदुषः' इत्यादौ 'आदेशप्रत्यययोः' इति षत्वं न स्यात्, 'षत्वतुकोरसिद्धः' ( ८।१।८६ ) इति षत्वे एकादेशस्य 'सम्प्रसारणाच्च' इति पूर्व-

दत्वम्। विद्वद्भ्याम् इत्यादि। सेदिवान्, सेदिवांसौ, सेदिवांसः। सेदिवांसम्, सेदिवांसौ। अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते, 'अकृतव्यूहाः'—इति परिभाषया। सेदुषः। सेदुषा,

रूपस्यासिद्धत्वेऽकारेण व्यवधानादिणः परत्वाभावादिति वाच्यम्, पदान्तपदाद्योरेकादेशस्य तेनासिद्धत्वबोधनात्। अन्यथा "शकहूषु, परिवीषु" इत्यत्र षत्वं न स्यात् "ह्वा" "व्या" इत्यतः क्विपि "वचिस्वपियजादीनाम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इत्येकादेशस्यासिद्धतया अकारेण व्यवधानादिणोऽव्यवहितस्य सस्याभावात् षत्वं न स्यात्। तदुक्तं भाष्ये—"पदान्तपदाद्योरेकादेशस्यासिद्धवचनात्। नन्वेष ( सम्प्रसारणाच्चेत्येकादेशः ) पदान्तपदाद्योरेकादेशः" इति।

अत्र लिट्स्थानिकक्वसुप्रत्ययान्तं नोदाहृतम्, "छन्दसि लिट्" (३-२-१०५) इति विहितस्य लिट एव क्वसोर्विधानेन लोके तदभावात्। केचित्तु "अपो भि" (७-४-४८) इति सूत्रे "मासश्छन्दसि" इति वार्तिकं पठितम्, मासस्तकारः स्याद्भादौ प्रत्यये छन्दसि इत्यर्थः। "पद्दन्" इति सूत्रे छन्दसीत्यनुवर्तनात्। सान्तस्य माश्शब्दस्य तेनैवादेशविधानात् छन्दस्येव तस्य सम्भवेन वार्त्तिके छन्दोग्रहणं व्यर्थीभूय कल्पयति—लोकेऽपि छान्दसानां प्रयोगो भवति शिष्टानुरोधेन। अत एव "तं तस्थिवांसं नगरोपकण्ठे" इति, "श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इति च सङ्गच्छते। अन्ये तु शब्दशास्त्रविरुद्धप्रयोगे 'निरङ्कुशाः कवयः' इति वदन्ति।

**सेदिवानिति**—"षद्लृ विशरणगत्यवसादनेषु" अत्र "धात्वादेः षः सः" इति षस्य सत्वे ततो लिटि "भाषायां सदवसश्रुवः" (३-२-१०८) इति लिटः क्वस्वादेशे ककारोकारयोरित्त्वे लोपे च "लिटि धातोः" इति द्वित्वेऽभ्यासकार्य्ये "अत एकहल्मध्ये" इति अभ्यासस्य लोपे उत्तरस्य "सद्" इत्यकारस्यैत्वे "वस्वेकाचाद्घसाम्" (७-२-६७) इति क्वसोरिटि "सेदिवस्" इति। तस्य कृदन्तत्वे प्रातिपदिकत्वात् सौ उगित्त्वान्नुमि "सान्तमहत" इत्युपधादीर्घे "हल्ङ्याब्" इति सुलोपे "सेदिवान्स्" इति स्थितौ संयोगान्तलोपे 'सेदिवान्' इति। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। न च "वसुस्रंसु" इति नस्य दत्वं स्यात्, सान्तवस्वन्तस्यैव दत्वविधानात्।

ननु सेदिवस्शब्दात् शसादावचि वस्य सम्प्रसारणे पूर्वरूपे इह इकारस्य यणि "सेद्युषः" इति स्यान्न तु "सेदुषः" इत्यादि। नच पदावधिकान्वाख्यानपक्षे शसादौ भविष्यत्सम्प्रसारणरूपकार्य्यसम्भावनया अकृतव्यूहपरिभाषया निमित्तस्य वलादित्वस्य विनाशोन्मुखत्वं दृष्ट्वा पूर्वमेवेट् न स्यादिति वाच्यम्, वहिर्भूताजाद्यसर्वनामस्थानप्रत्ययनिमित्तकभसंज्ञकाङ्गसापेक्षतया सम्प्रसारणस्य वहिरङ्गत्वेनान्तरङ्गत्वादिटि रूपासिद्धेरित्यत आह—**अन्तरङ्गोऽपीति**—वहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भावितेऽन्तरङ्गं न प्रवर्त्तते।

तथा चोक्तम्—'अकृतव्यूहाः पाणिनीयाः' इति। अत्र "समर्थानां प्रथमाद्वा" (४-१-८२) इति सूत्रे "समर्थानाम्" इति लिङ्गम्। अत्र समर्थपदं परिनिष्ठितपरम्, शक्तपरमिति यावत्। यद्वा अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकताऽनाक्रान्तपरम्। तथा च यथा "राम इन" इत्यस्याशक्तत्वम्, तथा "सु उत्थित" इत्यसमर्थम्। "सूत्थित" इति समर्थम्। तदुक्तं मूले—कृतसन्धिकार्यमिति। तथा च कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थं समर्थग्रहणम्। तद्धि व्यर्थमन्तरङ्गत्वाद्दीर्घे कृते एव प्रत्ययः स्यादिति व्यर्थीभूय ज्ञापयति—"अकृतव्यूहाः पाणिनीयाः" इति। न कृतो विशिष्ट ऊहः समवायिकारणनाशे असमवायिकारणनाशे वा कार्य्यस्य नाशो भवति। यथा पटस्य समवायिकारणं तन्तुस्तन्नाशे पटस्य नाशः स्यात् इति, असमवायिकारणस्य तन्तुसंयोगस्य नाशेऽपि पटनाश इति विशिष्ट ऊहः स न कृतः, किन्तु साधारण ऊहः कारणनाशे कार्य्यनाश इत्यूहकारिणः पाणिनीया भवन्ति।

प्रकृते "सु उत्थितः" इत्यत्र भाविन्या वृद्धया दीर्घस्य सवर्णाजूरूपकारणनाशं दृष्ट्वा दीर्घरूपं कार्य्यं न कुर्य्युस्तथा च "सावुत्थितिः स्यात्तन्मा भूत् किन्तु कृतदीर्घादेव कार्य्यम्—इञ्प्रत्ययोत्पत्तिरूपमिति समर्थानामिति चरितार्थञ्च। फलञ्च "सेदुषः" इत्यत्र इटो निमित्तस्य वलादित्वस्य

सेदिवद्भ्याम् । इत्यादि । 'सान्तमहतः-' इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, न तु धातोः, महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन्, सुहिंसौ, सुहिंसः । सुहिन्भ्याम् इत्यादि । सुहिन्सु । ध्वत्, ध्वद्, ध्वसौ, ध्वसः । ध्वद्भ्याम् । एवं स्रत् ।

---

सम्प्रसारणेन विनाशात् इटोऽपि नाशः इति तत्सिद्धिः । तथा च 'कृतमपि कार्य्यं निवर्तयन्ति पाणिनीयाः' इति फलितम् । यद्वा निमित्तं विनाशोन्मुखं दृष्ट्वा पूर्वमेव कार्य्यं न कुर्वन्ति । एवं चात्र इट् स्यादेव न ।

अन्ये तु अकृतव्यूहपरिभाषाया अभावेऽपि "सेदुषः" इति सिध्येत् । तथा हि-सेदिवश्शब्दात् शसि वस्य सम्प्रसारणे यणि च "सेदुषः" इति सिध्यति । न च सम्प्रसारणे वल्परत्वाभावाद् यलोपो न स्यादिति वाच्यम्, सम्प्रसारणस्य बहिरङ्गतया असिद्धतया असिद्धत्वेन वल्परत्वसत्त्वात् । यणि तु नासिद्धत्वम्, "नाजाऽनन्तर्य्ये" इति बहिरङ्गासिद्धत्वनिषेधात् ।

न च वलि लोपेऽपि "नाजाऽनन्तर्य्ये" इति बहिरङ्गासिद्धत्वनिषेधात् वल्परत्वाभावः, अज्निष्ठान्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे एव तत्प्रवृत्तेः । वलि लोपस्तु न तादृशः । किञ्च "सेद्वस् अस्" इति पदावधिकान्वाख्यानेऽपि इट्सम्प्रसारणयोः प्राप्तौ सम्प्रसारणस्य प्रतिपदविधितया "प्रतिपदोक्तकार्य्यञ्च सर्वतो बलवत्" इति सिद्धान्तेन पूर्वं सम्प्रसारणे वलादित्वाभावादिटोऽप्राप्तिः ।

न चेटोऽपि वसुशब्दमुच्चार्य्य विहितत्वेन प्रतिपदविधित्वात् परत्वादिडेव स्यादिति वाच्यम्, उभयोः प्रतिपदविधित्वेऽपि सम्प्रसारणस्य कृताकृतप्रसङ्गित्वेन नित्यतया पूर्वं सम्प्रसारणे इटोऽप्राप्तेः । नच क्रमिकान्वाख्याने दोषः, एकेन पक्षेण लक्ष्यसिद्धेः पक्षान्तरेण दोषदानस्यायुक्तत्वात् ।

नागेशमते तु अन्तरङ्गपरिभाषाया अनित्यत्वादिटोऽप्राप्तौ लक्ष्यसिद्धिः । तन्मते अकृतव्यूहपरिभाषा नास्त्येव ।

'हिसि हिंसायाम्' इदित्वान्नुमि सुपूर्वकात्ततः क्विपि सौ तस्य लोपे "सान्तमहतः" इति दीर्घाशङ्कायामाह — सान्तसंयोगोऽपीति—महच्छब्दो धात्ववयवभिन्नस्तत्साहचर्य्यात् सान्तसंयोगोऽपि धात्ववयवभिन्नो गृह्यते । प्रकृते च संयोगो धात्ववयव एव । नच महत्यतेः क्विपि महच्छब्दोऽपि व्यपदेशिवद्भावेन धात्ववयव एवेति धात्ववयवभिन्नत्वेन सादृश्यं वक्तुमशक्यमिति वाच्यम्, औपदेशिकधात्ववयवभिन्नत्वेनैव सादृश्यस्य ग्रहणात् । औपदेशिकधातुभिन्नं यत्प्रातिपदिकं तदवयवस्य सान्तसंयोगस्य ग्रहणमिति तु न युक्तम्, औपदेशिकधातुभिन्नं प्रातिपदिकं सुहिंस् इति तदवयवसान्तसंयोगसत्त्वेन दीर्घापत्तेः । नलोपस्तु न, संयोगान्तलोपस्यासिद्धत्वात् ।

निमित्तापायादनुस्वारविनाशः, अनुस्वाराप्रवृत्तेर्वा । "सुहिन्" इति । सुहिन्भ्यामिति—निमित्तापायादनुस्वारविनाशः, निमित्तस्य विनाशोन्मुखत्वादप्रवृत्तिर्वा । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । "नश्च" इत्यनुस्वारे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाभावेऽपि नस्यानुस्वारो न, पदान्तत्वात् लक्ष्ये लक्षणन्यायाच्च ।

ध्वदिति—ध्वंसु अवस्रंसने इत्यतः क्विपि "नकारजावनुस्वारपञ्चमौ झलि धातुषु" इत्युक्त्याऽनुस्वारस्य "अनिदिताम्" इति दृष्ट्याऽसिद्धतया नलोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे पदत्वात् "वसुस्रंसु" इति दत्वे वैकल्पिकचर्त्वे ध्वत्, ध्वद् इति । एवमिति—ध्वंसु अवस्रंसने इतिवत् "स्रंसु अवस्रंसने" इत्यत्रापि कार्य्यं बोध्यम् ।

"पूञ् पवने" "पा रक्षणे" इत्यतो वा "पूञो डुम्सुन्" इत्यनेन "पातेर्डुम्सुन्" ( उ० ४ पा० १७८ सू० ) इत्यनेन वा पुनाति रक्षति वेत्यर्थे "डुम्सुन्" प्रत्यये, डकारोकारनकाराणामित्त्वम् । "डु" इत्यस्य तु नेत्त्वं फलाभावात् । डस्य "चुटू" इत्यनेनेत्त्वम् । डित्त्वसामर्थ्यादभत्वेऽपि उकारस्याकारस्य च लोपे मस्य "नश्च" इत्यनुस्वारे "पुंस्" शब्दः । "स्त्रियाम्" (४-१-३) इति सूत्रे भाष्ये तु 'पूङ् प्राणिगर्भविमोचने" इत्यत औणादिको "म्सुन्" प्रत्ययो धातोः सस्य पः

पुंसोऽसुङ् । [ ७-१-८९ ]

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। उकार उच्चारणार्थः। 'बहुपुंसी' इत्यत्र 'उगितश्च' इति ङीबर्थं कृतेन 'पूञो डुम्सुन्निति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः। पुमान्। हे पुमन्। पुमांसौ, पुमांसः, पुंसः। पुंसा, पुंभ्याम्, पुम्भिः—इत्यादि। पुंसि। पुंसु।

---

ह्रस्वश्च "पुम्स्" इत्युक्तम्। "संस्त्याने स्त्यायतेर्ड्ट्स्त्री सूतेः सप् प्रसवे पुमान्" इति। पुंस्शब्दात्-प्रातिपदिकत्वात्सौ विशेषमाह—

"पुंसोऽसुङ्" (७-१-८९) इति।

'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इत्यनुवर्त्तते तदाह-**सर्वनामस्थाने इत्यादि**।

**विवक्षित इति**—ननु "तस्मिन्निति" इति सूत्रसत्त्वे विषयसप्तमीं स्वीकृत्य "विवक्षिते" इत्यसङ्गतम्, उक्तञ्च—"तस्मिन्निति परिभाषायां जागरूकायां विषयसप्तम्याश्रयणमशक्यम्" इति, इति चेन्न, भाष्ये "असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थम्" इति वार्त्तिकेनैव विवक्षिते इत्यर्थबोधनात्। तेन परमशब्दस्य पुंसशब्देन समासे सुब्लुकि सुबनुत्पत्तिदशायामेव "समासस्य" ( ६-१-२२३ ) इत्यन्तोदात्तत्वं प्राप्नोति। तथा च पुंस उकारस्योदात्तत्वं स्यात्। इष्यते च असुङोऽस्योदात्तत्वम्। **विवक्षिते** इत्यर्थस्वीकारे तु सर्वनामस्थानविवक्षायामेवोभयोः समासस्वरासुङादेशयोर्युगपत्प्राप्तेः परत्वादसुङादेशे **'समासस्य'** इत्यनेन 'परमपुमस्' इत्यत्रासुङोकारस्योदात्तत्वं सिध्यति। परसप्तम्यान्तु नैतत्सिध्येत्, सर्वनामस्थानोत्पत्तेः प्राक् सर्वनामस्थानपरत्वादसुङोऽप्राप्तेः। न च सर्वनामस्थानोत्पत्त्यनन्तरमसुङादेशे कृते पुनः समासोदात्तत्वं स्यादिति वाच्यम्, अन्तरङ्गे समासस्यान्तोदात्त्वे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वात्। न चाकृतव्यूहपरिभाषया बहिरङ्गासिद्धत्वबाधः, तस्या असत्त्वादनित्यत्वाच्च।

न चैवमसमासेऽपि 'पुमान्' इत्यादौ 'फिषोऽन्त उदात्तः' इत्यनेनासुङ अकारस्यान्तोदात्तत्वं स्यात्। न चेष्टापत्तिः, **'पुमान् पुमांसं परिपातु'** इत्यादिलक्ष्येषु उकारस्यैवोदात्तत्वदर्शनेनेष्टापत्तेरशक्यत्वादिति वाच्यम्, डुम्सुनो नित्करणसामर्थ्येन प्रातिपदिकस्वरस्य बाधकल्पनात्। असुङोऽकारस्योदात्तत्वनिपातनेन तु न स्वरसिद्धिः, पुमान् इत्यादावप्यकारस्योदात्तत्वापत्तेः। वस्तुतस्तु विवक्षिते इत्यर्थस्वीकारेऽपि असुङो विभक्तिविषयकबुद्धिनिमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गसमासस्वरप्रवृत्तौ दोषसत्त्वेन 'असुङ्युपदेशिवद्वचनम्' इति वार्त्तिकेनैव समासस्वरस्य बाधकल्पनमुचितमिति **नागेशः**!

समासे 'परमपुमान्' इत्यत्रासुङोऽकारस्योदात्तत्वम्, पुमान् इत्यादौ तूकारस्योदात्तत्वमिति विवेकः।

**उच्चारणार्थं इति**—न तूगित्कार्य्यार्थम्। 'बहुपुंसी' इत्यत्र 'उगितश्च' इति ङीबर्थमावश्यकेन 'डुम्सुनः' उदित्त्वेन 'पुमान्' इत्यादौ नुमादेरप्युगित्कार्य्यस्य सिद्धेस्तदाह—**बहुपुंसीत्यत्रेति**। बहवः पुमांसो यस्यां नगर्य्यां सा बहुपुंसी। अत्र बहु जस् पुंस् जस् इति स्थितौ बहुव्रीहिसमासे समासत्वात्प्रातिपदिकत्वे सुब्लुकि 'निमित्तापाये' नासुङादेर्निवृत्तौ निमित्तविनाशोन्मुखत्वेनाप्रवृत्तौ वा 'बहुपुंस्' इति स्थितौ डुम्सुन उगित्त्वात् 'उगितश्च' इति ङीपि तत्सिद्धिः। तथा च ङीबर्थमावश्यकेन प्रत्ययस्योगित्त्वेनैव नुमादिके सिद्धेऽसुङ उकार उच्चारणार्थ एवेति भावः। नच प्रातिपदिकग्रहणे इति परिभाषया ङीबन्तस्याप्यङ् स्यादिति वाच्यम्, विभक्तौ लिङ्गविशिष्टाग्रहणात्। **पुमानिति**—पुंस्शब्दात्सौ विवक्षिते सस्य 'ह्रिच' इत्यसुङि ङस्येत्त्वे लोपे च उकारस्योच्चारणानन्तरं निवृत्तौ नागेशमते उच्चारणार्थस्यापि इत्त्वलोपाभ्यां निवृत्तौ उगित्त्वान्नुमि 'सान्तमहतः' इति दीर्घे सोर्लोपे संयोगान्तलोपे च 'पुमान्' इति। अत्र नस्य लोपो न, संयोगान्तलोपस्यासिद्धत्वात्। **'हे पुमन्'** अत्र 'सान्तमहतः' इति दीर्घस्तु न, असम्बुद्धावित्युक्तेः। शसादावचि नुमसुङोरभावः, सर्वनामस्थानपरत्वाभावात्। **पुंभ्यामिति**—हलादौ पदत्वात्सस्य 'संयोगान्तस्य' इति लोपः। **पुंसीति**—

'ऋदुशन-' इत्यनङ्। उशना, उशनसौ, उशनसः। 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः'। हे उषनन्, हे उशन, हे उशनः। उशनोभ्यामित्यादि। अनेहा, अनेहसौ, अनेहसः। हे अनेहः। अनेहोभ्यामित्यादि। वेधाः, वेधसौ, वेधसः। हे वेधः। वेधोभ्यामित्यादि। अधातो-रित्युक्तेर्न दीर्घः—सुष्ठु वस्ते सुवः, सुवसौ, सुवसः। पिण्डं ग्रसते पिण्डग्रः, पिण्डग्लः। 'ग्रसु ग्लसु अदने'।

---

अत्र यय्परत्वाभावादनुस्वारस्य परसवर्णो न। नुम्स्थानिकानुस्वाराभावात् 'नुम्विसर्जनीय' इति सस्य षत्वं न।

'वश कान्तौ' इत्यतः वष्टि=कामयते इत्यर्थे 'वशेः कनसिः' (उ० ४ पा० २३९सू०) इति कनसि-प्रत्यये इकारस्योच्चारणार्थत्वे इत्त्वे वा वस्य 'ग्रहिज्या' इति सम्प्रसारणे 'उशनस्' इति। ततः सौ विशेषमाह—'ऋदुशनस्' इति सस्य 'ङिच्च' इत्यनङि 'सर्वनामस्थाने' इत्युपधादीर्घे सोर्लोपे नलोपे च 'उशना' इति।

'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः' ( अमर० १ का० ३ वर्ग ) इति।

बालमनोरमाकारास्तु 'यद्यपि वशधातुश्छान्दस इति लुग्विकरणे वक्ष्यते। तथापि तत् प्रायिकम्, 'वष्टि भागुरिः' इत्यादिनिर्देशात् 'उशना भार्गवः कविः' इति कोशाच्चेत्याहुः। वस्तुतस्तु 'वशिश्छान्दसः' इति लुग्विकरणे न दृश्यते।

अस्य सम्बुद्धाविति—माधवानुसारेणेदम्—तथा हि—'सम्बुद्धावपि पक्षेऽनङिष्यते' 'न ङि-सम्बुद्ध्योः' इति नलोपस्य पाक्षिकत्वञ्च। तेन त्रीणि रूपाणि भवन्ति 'उशन, उशनन्, उशनः' इति। तथा च श्लोकवार्त्तिकम्—'सम्बोधने तूशनस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्' इति। भाष्या-नुक्तत्वादिदमप्रामाणिकमिति प्रामाणिका इति नागेशाः। हे उशनन् इति अनङादेशे नलोपाभावे रूपम्। 'हे उशन' इति अनङि नलोपे रूपम्। वस्तुतस्तु सम्बुद्धौ 'हे उशनः' इत्येकमेव रूपम्। अत्र 'असम्बुद्धौ' इत्युक्तेर्नानङ् नापि 'सान्त' इति दीर्घः। हे 'उशनः' इति—अनङोऽभावे 'अस-म्बुद्धौ' इत्युक्त्या 'सान्त' इति दीर्घाभावे च रूपम्। उशनोभ्यामिति—सस्य रुत्वे रोः 'हशि च' इत्युत्वे गुणे च रूपम्। उशनःसु इति–'वा शरि' इति वैकल्पिके विसर्गे। सत्वे सति 'उशनस्सु' इति।

अनेहेति—न हन्यते = विच्छिद्यते इत्यर्थे नञि उपपदे हनधातोः 'नञि हन एह्च' ( उ० ४ पा० ६७३ सू० ) इत्यसुन्प्रत्यये हन एहादेशे उपपदसमासे नञो नलोपे एहशब्दस्य 'तस्मान्नुडचि' इति नुडागमे अनेहसशब्दः। ततः सौ 'ऋदुशनः' इत्यनङादेशे 'सर्वनामस्थाने' इत्युपधादीर्घे सोर्लोपे नलोपे च। 'अनेहा' इति। अनेहा = कालः। 'कालोदिष्टोऽप्यनेहाऽपि समयोऽपि' इत्य-मरात् ( अ—१–४ वर्ग )।

वेधा इति—विदधाति = सृष्टिं करोतीत्यर्थे विपूर्वकात् 'डुधाञ् धारणपोषणयोः' इत्यतः 'विधाञो वेध च' ( उ० ४ पा० २२५ सू ) इति असिप्रत्यये पूर्ववच्च कार्य्यम्। विशिष्टस्य धाञो वेधादेशे 'वेधस्' इति। 'मिथुनेऽसिः' ( उ० ४ पा० २२२ सू ) उपसर्गविशिष्टो धातुमिथुनम्। तत्रासुनोऽपवादोऽसिः स्वरार्थः। यस्य धातोर्यत्कार्य्यमसुनि उक्तं तदत्रापि भवतीत्यर्थः। इति सूत्रात् 'असिः' एव न तु असुन्। केचित्तु 'असुन्' प्रत्ययमाहुः। वेधसशब्दात्सौ तस्य लोपे 'अत्वसन्तस्य' इत्युपधादीर्घे रुत्वविसर्गयोः 'वेधा' इति सृष्टिकर्ता—'वेधाः पुंसि हृषीकेशे विधौ च परमेष्ठिनि' इति मेदिनी। वेधाः—विष्णुः—'स्रष्टा प्रजापतिर्वेधाः' (अ० १ का० १ व०) इति कोशात्।

सुव इति—सुपूर्वकात् 'वस आच्छादने' इत्यतः क्विपि सुवसशब्दात् सौ हल्ङ्यादिलोपे रुत्वविसर्गयोः 'सुवः' इति। धात्वयवभिन्नो योऽस् तदन्तस्य दीर्घ इत्युक्तेः 'अत्वसन्तस्य' इति न

*अदस औ सुलोपश्च । [ ७-२-१०७ ]*

अदस ओकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । 'तदोः सः सौ-' इति दस्य सः । असौ । 'औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च' । प्रतिषेधसंनियोगविशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ, असुकः ।

---

दीर्घः । तदुक्तं मूले 'अधातोः' इत्युक्तेरिति । अत्रास् धात्ववयव एव । असन्तधातुभिन्नं यत् तस्य दीर्घ इति तु नार्थः 'सुवः' इत्यत्रासन्तो धातुर्वस् इति तद्भिन्नं 'सुवस्' इति तस्य दीर्घापत्तेः, एतस्र्वं पूर्वमुक्तम् । वस निवासे इत्यस्य नैतद्रूपम् क्विपि 'ग्रहिज्या' इति सम्प्रसारणेन 'उः' इत्यापत्तेः ।

न दस्यते=उत्क्षिप्यतेऽङ्गुलिर्यत्र सः 'अदः' अपुरोवर्त्ती । इदन्तया निर्द्धारणाय पुरोवर्त्तिन्ये-वाङ्गुलिनिर्देशसम्भवात् । नञ्पूर्वकाद् दस्यतेः क्विपि अदस्शब्दात्सौ त्यदाद्यत्वे प्राप्ते विशेषमाह—

**अदस औ सुलोपश्च (७-२-१०७) इति ।**

'अदसः' इति षष्ठ्यन्तम्, न तु पञ्चम्यन्तम्, तथा सति अदसः परस्य सोरौकार इत्यर्थः स्यात् । त्यदाद्यत्वे वृद्धौ 'तदोः सौ' इति दस्य सत्वे 'असौ' इत्यस्य सिद्धौ सुलोपाविधानेन लाघवसत्त्वेऽपि 'असकौ स्त्री' इत्यस्यासिद्धयापत्तेः । तथा हि—अदकस्शब्दात् सौ त्यदाद्यत्वे टापि सोरौकारादेशे 'प्रत्ययस्थात्' इति ककारात्पूर्वस्याकारस्येत्वे 'असिकौ' इत्यापत्तेः । अदस औकारादेशे तु त्यदाद्यत्वं बाधित्वा सस्यौकारादेशे टापोऽप्राप्त्या इत्वं न भवति ।

तदुक्तं भाष्ये—'अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते । प्रत्ययस्थाच्च कादित्वम् ।' इह च 'असकौ ब्राह्मणि' इति प्रत्ययस्थात्कात्पूर्वस्य 'इतीत्वं प्रसज्येत' इति । विस्तरस्तु भाष्ये द्रष्टव्यः । **अदस इति** षष्ठ्याः फलमाह—**अदस औकार इति** । अत्रान्तादेश इति—अदसोऽन्तस्य सस्य स्थाने औकारादेश इत्यर्थः । 'अलोऽन्त्यस्य' इति परिभाषालभ्यमिदम् । सस्यौत्वे हलः परत्वाभावात् 'हल्ङ्याब्' इति सोर्लोपाप्राप्त्या सुलोपविधानम् । ननु '**अदसः सौर्डौ**' इत्येवास्तु । डित्त्वसामर्थ्याद-मस्यापि टेर्लोपे 'असौ' इति सिध्येदिति चेन्न, टिलोपे कृते नित्यत्वाद्दस्य सत्त्वं बाधित्वा त्यदाद्यत्वे 'असौ' इत्यस्यासिद्धयापत्तेः । न च तक्रन्यायेन सत्त्वं त्यदाद्यत्वापवादेन त्यदाद्यत्वाप्रवृत्तिः, 'सः' इत्यस्य सिद्धये हल्ङ्यादिविषये तक्रन्यायाप्रवृत्तेः । अन्यथा सत्त्वस्य हल्ङ्यादिलोपापवादत्वापत्त्या 'सः' इत्यस्यासिद्धयापत्तिः । अत एव 'इदमो मः' इत्यपि चरितार्थम्, अन्यथा 'इदोऽय् पुंसि' इति तक्रन्यायेन त्यदाद्यत्वापवादत्वादत्वाप्रवृत्त्या मस्य मविधानं व्यर्थमेव स्यात् । अदस्शब्दात् 'अव्यय-सर्वनाम्नाम्' इत्यकचि अदकस् इत्यतः सौ विशेषमाह—

**"औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वञ्च" इति ।**

**'अदस औ सुलोपश्च'** इत्यत्र 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन 'अदसः' इत्यनेन 'अदकम्' इत्यस्यापि सौ औत्वे प्राप्ते तस्यौत्वस्य विकल्पेन प्रतिषेधो वक्तव्य इत्यर्थः । 'तदोः सौ' इति दकारे सति सकारात्परस्याकारस्य उत्वं च वक्तव्यम् ।

तथा च 'अदकस् स्' इति स्थितौ औत्वाभावे दस्य सत्वे ततः परस्य अकारस्योत्वे अन्त्यस्य सस्य 'त्यदादीनामः' इत्यत्वे पररूपे सोरुत्वविसर्गयोः 'असुकः' इति । औत्वस्य प्रतिषेधाभावे = औत्वे सतीति यावत् । 'अदकस् स्' इति स्थितौ सस्यौत्वे सुलोपे दकारस्य सत्त्वे 'असकौ' इति । ननु साकच्कस्य औत्वे सकारात्परस्याकारस्य 'सादुत्वञ्च' इत्युत्वं कुतो नेति शङ्कायामाह—**प्रतिषेध-सन्नियोगेति**—'सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिः' इति न्यायात्प्रतिषेधाभावे औत्वे इति यावत्, उत्वस्याप्यभाव इत्यर्थः । तेन **'असकौ'** इत्येव । प्रथमाद्विवचनादिषु 'अदकस्' इत्यस्य त्यदाद्यत्वे पररूपत्वे 'अदसो दादु दो मः' इति दस्य मत्वेऽस्योत्वे च 'अमुक औ' इत्यादिजाते सर्व-शब्दवद्रूपाणि बोध्यानि ।

त्यदाद्यत्वम्, पररूपम्, वृद्धिः। 'अदसोऽसेः-' इति मत्वोत्वे। अमू। 'जसः शी'। 'आद् गुणः'।

एत ईद्बहुवचने। [ ८-२-८१ ]

अदसो दात्परस्य एत ईत्स्याद् दस्य च मो बह्वर्थोक्तौ। अमी। 'पूर्वत्रासिद्धम्' इति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे। अमुम्, अमू, अमून्। मुत्वे कृते घिसंज्ञायां नाभावः।

---

असुकौ, असुके इत्यादि, स्त्रियाञ्च 'असुकी' इति चासाध्वेव, औ परे एव साकच्कस्य औत्व-प्रतिषेधस्य साद्रुत्वस्य च विधानात्। एवं समासे सुपो लुकि विभक्तिपरत्वाभावेन त्यदाद्यत्वाभावेऽसे-रिति निषेधेन मत्वोत्वयोरभाव एवेति 'अमुक' शर्मा इत्यादि, सौ 'अमुकः' इति च लक्ष्यमसाध्वेव। केचित्तु अदकश्शब्दपर्यायोऽमुकशब्दोऽव्युत्पन्नोऽस्ति। तस्यैव अमुकशर्मा इत्यादौ प्रयोग इत्याहुः। अत्र मानं चिन्त्यम्।

'अदस् औ' इत्यादिस्थितावाह—त्यदाद्यत्वमिति। मत्वोत्वे इति दकारात्परस्य वृद्ध्यादिना निष्पन्नस्याच औकारादेशः 'स्थानेऽन्तरतमः' इति परिभाषया दीर्घ एवोकार इत्याह-अमू इति। जसि अत्वे पररूपत्वे कृते आह—'जसः शी' इत्यादि। अदे इति स्थितौ विशेषमाह—

'एत ईद्बहुवचने' ( ८-२-८१ ) इति 'अदसो दादुदो मः' इत्यतः 'अदसः' इति 'दाद्' इति, 'दः' इति, 'मः' इति पदचतुष्टयमनुवर्तते। तदाह—अदस इत्यादि। अत्र सूत्रे 'बहुवचने' इति पदं न बहुवचनविभक्तिपरम्। किन्तु बहूनां वचनमुक्तिरित्येतदर्थपरमयौगिकम्। अन्यथा विभक्तिपरत्वे 'अमीभिः, अमीषु' इत्यत्र बहुवचने परे एत ईद् इत्यर्थे ईत्वसिद्धावपि जसि 'अदे' इत्यत्र बहुवचनपरत्वादीत्वानापत्तिः। तदुक्तं भाष्ये - 'नेदं पारिभाषिकस्य बहुवचनस्य ग्रहणम्। किं तर्हि। अन्वर्थग्रहणमेतत्। बहूनामर्थानां वचनं बहुवचनं तस्मिन् बहुवचने' इति।

ननु औजसादिषु त्यदाद्यत्वे मत्वे च कृते 'अमु औ, अमु अः' इति स्यात्। यण् तु न स्यान्मुत्व-स्यासिद्धत्वादिति शङ्कायामाह—पूर्वत्रेति— मुत्वस्य त्रैपादिकत्वेन सपादसप्ताध्यायीस्थत्यदाद्यत्वादिदृ-ष्ट्याऽसिद्धतया प्राक् त्यदाद्यत्वे पररूपत्वे 'अमि पूर्वः' इति पूर्वरूपत्वे च कृते 'अमुम्' इति। एवम् 'अदौ अदान्' इति मुत्वे 'अमू, अमून्' इति। अनयोर्दीर्घस्य स्थाने आन्तरतम्याद् दीर्घोकारः।

'पूर्वत्रासिद्धम्' इत्यत्र पक्षद्वयम्—कार्यासिद्धत्वपक्ष एकः। अत्र पूर्वशास्त्रविहिते कार्य्ये कर्तव्ये त्रैपादिकपरशास्त्रविहितं कार्य्यमसिद्धमित्यर्थः स्यात्तथा च 'विप्रतिषेधे परं कार्य्यम्' इत्यनेन परशास्त्रस्यासिद्धत्वाभावेन त्रैपादिकपरशास्त्रेण कार्य्ये जाते तत्रैवासिद्धत्वारोपः। एवं च निराधारारो-पासम्भवेन 'अद अ औ, अद अ ई' इत्यत्र मुत्वे कृते सति तत्रासिद्धत्वारोपे मुत्वं न जातमिति पूर्वत्रेत्यनेन बोधितेऽपि मुस्थानिनो दकाराकारयोः सत्ता न स्यात्। यथा लोके देवदत्तः केनचिद्धतः। तदनन्तरं देवदत्तस्य हन्तुर्हननेऽपि देवदत्तस्य उज्जीवनं न स्यात्तथा प्रकृते मुत्वस्याभावबोधनेऽदका-राकारयोः सत्ता न स्यात्। तथा च 'अतो गुणे' इति पररूपम् वृद्धिगुणादिकं न स्यादिति अमू, अमी इत्याद्यसिद्धिप्रसङ्गः। अतः कार्य्यासिद्धत्वपक्षो न ज्यायान्।

शास्त्रासिद्धपक्षो द्वितीयः। अत्र पूर्वशास्त्रदृष्ट्या परशास्त्रस्यासिद्धत्वम् 'पूर्वत्र' इत्यनेन बोध्यते। तथा च पूर्वशास्त्रदृष्ट्या परत्रैपादिकशास्त्रस्याभावेन तद्विहितकार्य्यस्य सुतरामभाव इति। एवञ्च पूर्वं पूर्वशास्त्रप्रवृत्त्या पररूपे वृद्धौ च सत्यां त्रैपादिकशास्त्रप्रवृत्तिरिति। अमू, अमी, इत्यादीनां सिद्धिर्निर्बाधा सिध्यतीति शास्त्रासिद्धत्वपक्ष एव ज्यायानिति स्पष्टं शब्दरत्नशेखरयोः। 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये च स्पष्टमेतत्।

तृतीयैकवचने 'अदस् आ' इति दशायाम् त्यदाद्यत्वे पररूपत्वे मुत्वे च कृते आह— घिसंज्ञायामित्यादि। 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति नाभाव इत्यर्थः।

न मु ने । [ ८-२-३ ]

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना अमूभ्याम् । अमूभ्याम् २ । अमीभिः । अमुष्मै । अमीभ्यः । अमीभ्यः २ । अमुष्मात् ।

---

ननु 'पूर्वत्रासिद्धम्' इति मुत्वस्यासिद्धतया विभक्तिकार्य्यम् प्राक्, पश्चादुत्वमत्वे' इति पूर्वमुक्तम् । अत्र च मुत्वे कृते घिसंज्ञायां नाभाव इति तद्विरुद्धमुच्यते इति पूर्वापरग्रन्थविरोध इति चेन्न, यद्विभक्तिकार्य्यं प्रति मुत्वं निमित्तत्वेन नापेक्ष्यते तत्कार्य्यं प्राक् पश्चादुत्वमत्वे इति तदर्थात् । प्रकृते नाभावो मुत्वं नापेक्षते इति न, किन्तु मुत्वमपेक्षते । अत उक्तम्--'मुत्वे कृते घिसंज्ञायां नाभाव' इति । अत्रार्थे मानञ्च 'न मु ने' इति सूत्रमेव ।

ननु कृतेऽपि प्रकृते नाभावो न सम्भवति, 'आङो ना' इति दृष्टया मुत्वस्यासिद्धतया घेः परस्याङोऽभाव दित्यतो विशेषमाह—

'न मु ने' ( ८-२-३ ) इति । 'पूर्वत्रासिद्धम्' इत्यतः 'असिद्धम्' इत्यनुवर्तते । अत्र 'मु' इति पदे समाहारद्वन्द्वः । मश्च अश्चेति नपुंसकत्वात् सोर्लुक् । 'ने' इति नाशब्दस्य ङौ रूपम् । विषयसप्तमी च 'ने' इति । न चैवमपि नाभावविषये इत्यस्य नाभावे कर्तव्ये इत्यर्थः । तथा च कृते नाभावे 'सुपि च' इति कर्तव्ये मुत्वस्यासिद्धतया दीर्घः स्यादत आह--कृते चेति--अयं भावः 'ने' इति सप्तमी विषयसप्तमी, सत्सप्तमी च, तथा नाभावे कर्तव्ये कृते च सतीत्यर्थद्वयलाभः । वस्तुतस्तु परसप्तम्यामपि न दोषः । ने परे मुभावो नासिद्ध इत्युक्तौ नाभावे कर्तव्ये यद्यसिद्धत्वं स्यात्तदा नाभावो न स्यादिति ने परतोऽसिद्धत्वं नेति निषेधो व्यर्थ एव स्यादिति तत्सामर्थ्यान्नाभावे कर्तव्येऽपि मुत्वस्यासिद्धत्वं न स्यादित्यर्थोऽपि लभ्यते तथा च परसप्तम्यामपि दोषो नास्ति ।

तदुक्तं भाष्ये--'तदेतदेव ज्ञापयत्याचार्य्यो भवत्यत्र नाभाव इति ने परतो मुभावो नासिद्ध इत्यनेन । 'सुपि च' इति दीर्घेऽसिद्धत्वस्य निषेधः । ज्ञापितेन च नाभावे कर्तव्ये इत्यर्थेन नाभावे मुत्वस्यासिद्धत्वं न । इति परसप्तम्यामपि न दोषः । एवञ्च सुपि चेति दीर्घे, नाभावे च मुत्वस्यासिद्धत्वाभावात् 'अमुना' इत्यस्य सिद्धिः । मनोरमायान्तु 'अधुना' इतिवत् 'अमुना' इति वक्तव्ये 'न मु ने' इत्युक्तिः 'न' इति योगविभागार्था । तेन 'न' इत्यस्य पूर्वं प्रति परमसिद्धं नेत्यर्थे नाभावेऽपि नेनैवा अ सिद्धत्वे सिद्धे 'मु ने' इति सूत्रं व्यर्थीभूय-'न' इत्यस्य क्वाचित्कत्वं ज्ञापयति । तेन योगविभागादिष्टसिद्धिरितीष्टानुरोधेन प्रवृत्तिः । तेन रामो रामेभ्य इत्यादि सिद्ध्यति ।

अन्यथा रोरसिद्धतयोकारस्येत्संज्ञालोपौ कथं स्याताम् । न च 'रु' इत्यस्येत्संज्ञार्थं कृतस्यानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपयोर्नासिद्धत्वम्, 'तरुमूलम्' इत्यादौ 'हशि च' इति उत्त्ववारणयानुनासिकत्वस्य चारितार्थ्यात् । न च 'लक्षणप्रतिपदोक्त' परिभाषया रुशब्दमुच्चार्य्य विहितस्यैव रोरुत्वविधानात् 'तरुमूलम्' इत्यादौ न दोष इत्यनुनासिकत्ववैयर्थ्यं तदवस्थमेवेति वाच्यम्, एवमपि 'रुशब्दे' इति शब्देयं 'रु' इत्यस्य विधानेन प्रतिपदोक्तस्य ग्रहणेऽपि 'देव रुहि' इत्यत्रोत्वापत्तेः । योगविभागेन क्वचिदसिद्धत्वाभावबोधने 'रामः' इत्यादौ रौ स्थानिवत्त्वात्पदत्वे रेफस्य विसर्गः सिध्यति, अन्यथा रेफस्य पदान्तत्वाभावेन विसर्गो दुर्वचः स्यात् 'प्रत्ययः परश्च' इत्यादिनिर्देशा योगविभागे एव लिङ्गम् इति । अमूभ्यामिति—त्यदाद्यत्वे पररूपत्वे 'सुपि च' इति दीर्घत्वे च कृते दस्य मत्वे आकारस्य दीर्घोकारे च 'अमूभ्याम्' इति । अमीभिरिति--त्यदाद्यत्वे पररूपत्वे 'नेदमदसोरकोः' इति ऐसो निषेधे 'बहुवचने झल्येत्' इत्येत्वे 'एत ईत्' इत्येकारस्येकारे 'अमीभिः' इति—अमुष्मै इति—त्यदाद्यत्वे पररूपत्वे 'सर्वनाम्नः स्मै' इति स्मैभावे मत्वे षत्वे च 'अमुष्मै' इति । अमूभ्याम्, अमीभ्य इति—एत्वे ईत्वे च रूपम् । अमुष्मादिति—त्यदाद्यत्वे पररूपत्वे ङसेः 'ङसिङ्योः' इति

अमुष्य, अमुयोः, अमीषाम् । अमुष्मिन्, अमुयोः, अमीषु ॥ इति सान्ताः ॥ इति हलन्तपुंल्लिङ्गप्रकरणम् ॥

स्मादादेशे मत्वे उत्वे षत्वे च रूपम् । **अमुष्य इति**—अत्वादिकं पूर्ववत् । 'टाङसि' इति स्यादेशो विशेषः । **अमुयोरिति**—अत्वादिके कृते 'ओसि च' इत्येत्वे अयादेशे मत्व उत्वे च रूपम् । **अमीषामिति**—अत्वे पररूपत्वे 'आमि सर्वनाम्नः' इति सुटि एत्वे ईत्वे मत्वे षत्वे च रूपम् । **अमुष्मिन्निति**—ङौ त्यदाद्यत्वे पररूपत्वे ङेः स्मिन्नादेशे मत्वे उत्वे षत्वे च रूपम् । ओसि पूर्ववत् कार्य्यम् । **अमीष्विति**—अत्वे पररूपत्वे एत्वे ईत्वे षत्वे च रूपम् । इति सान्ताः ।

पदवाक्यप्रमाणपारावारीणश्रीसभापतिशर्मोपाध्यायविरचितलक्ष्मीव्याख्यायां

हलन्तपुलिङ्गप्रकरणं समाप्तम् ॥

**परिशिष्टांशः**—कोशेऽनुपलब्धाः शब्दाः—१—सनुतर् = अन्तर्धाने । २—सनङ्गु = चर्मविकारः । इति 'उगवादिभ्यो यत्' सूत्रभाष्ये । ३—श्रृधक् = सत्यसातत्ये । वियोगशीघ्रसामीप्यलाघवेषु इत्यन्ये । ४—इद्धा प्राकाश्ये । ५—सनात्=स्वरादौ नित्ये । ६—प्रवाहुकम्-समानकाले उद्धवार्थे च । ७—आर्य्यहलम् = बलात्कारे । ८—अम्=शैघ्र्ये अल्पे च । ९—सत्यम्=अर्द्धाङ्गीकारे । १०—झटिति = शैघ्र्ये । ११—शु = पूजायाम् , ऋग्वेदे—शुतुद्रीनदीवर्णनप्रसङ्गे । १२—मिथु = द्वौ । १३—वरम्=ईषदुत्कर्षे । १४—त्रदि=कृष्णपक्षे । १५—कूपत्=प्रश्ने, प्रशंसायां च । १६—कुविन् = भूम्यर्थे, प्रशंसायाञ्च । १७—नेत् = शङ्कायां प्रतिषेधविचारसंशयेषु च । १८—त्वै वितर्के । १९—द्वै वितर्के । २०—चै=वितर्के । २१—रै = दाने, अनादरे च । २२—आदह–उपक्रमहिंसाकुत्सनेषु । २३—शुकम् = शैघ्र्ये । २४—प्याट् = सम्बोधने । २५—ग्र-हिंसाप्रातिलोम्यपादपूरणेषु । २६—युत् = कुत्सायाम् । २७—आतः = इतोऽप्यर्थे । एतस्य प्रयोगः—'आतश्च विषमीप्सितं यद्भक्षयति ताडनात्' इति 'कर्तुरीप्सिततमं कर्म' इति भाष्ये । २८—सीम= सर्वतो भावे । २९—शुक्रम् = अतिशये । ३०—अनुकम् = वितर्के । ३१—शाम्बट् = अन्तः करणे, आभिमुख्ये चेति वा० कृ० पञ्चोलिनः ।

# अथ हलन्तस्त्रीलिङ्गप्रकरणम्

*नहो धः । [ ८-२-३४ ]*

**नहो हस्य धः स्याज्झलि पदान्ते च । उपानत् उपानद्, उपानहौ, उपानहः । उपानद्भ्याम् । उपानत्सु । उत्पूर्वात् 'ष्णिह प्रीतौ' इत्यस्माद् 'ऋत्विग्—' आदिना क्विन्, निपातनाद् दलोपषत्वे, क्विन्नन्तत्वात्कुत्वेन हस्य घः, जश्त्वचर्त्वे । उष्णिक् उष्णिग्, उष्णिहौ, उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ इति हान्ताः ।**

---

**अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।**

**अथ हान्ताः** । उपपूर्वकात् 'णह बन्धने' इत्यतः 'णो नः' इति णस्य नत्वे उपनह्यते=बध्यते इति विग्रहे 'रोगाख्यायां ण्वुल् बहुलम्' (३-३-१०८) इति सूत्रस्थेन 'सम्पदादिभ्यश्च' इति वार्तिकेन कर्मणि क्विपि 'कुगतिप्रादयः' (२-२-१८) इति समासे 'नहिवृति वृषि' (६-३-११६) इति पूर्वपदस्य दीर्घे समासत्वेन प्रातिपदिकत्वात्सौ तस्य लोपे पदत्वे 'हो ढः' इति ढत्वे प्राप्ते विशेषमाह—

**'नहो धः'** (८-२-३४ । 'हो ढः' इत्यतः 'हः' इति, 'झलो झलि' इत्यतः 'झलि' इति, 'स्कोः' इत्यतः 'अन्ते' इति चानुवर्त्तते, 'पदस्य' इत्यधिक्रियते—तदाह **नहो हस्येत्यादि** । 'हो ढः' इति ढत्वस्यापवादोऽयं योगः । **उपानदिति—'उपानह्'** इत्यतः सौ हल्ङ्यादिलोपे हस्य धत्वे जश्त्वे वैकल्पिके चर्त्वे रूपम् । अत्र प्रक्रियालाघवाय 'दः' इत्येव तु नोक्तम्, 'नद्धः' इत्यत्र 'रदाभ्याम्' इति निष्ठानत्वापत्तेः । 'झषस्तथोर्धः' इत्यनापत्तेश्च । 'नहस्तः' इति न्यासोऽस्तु 'आह स्थः' इति सूत्रे थग्रहणं न कर्तव्यम्, त इत्यनुवृत्त्यैव लक्ष्यसिद्धिरित्यपि न, 'झषः' इत्यनापत्तेः । उपानच्छब्दं विहायान्ये ये हान्ताः सन्ति तेषां बहुव्रीहौ स्त्रीत्वे पुंवद्रूपम् । न चानडुच्छब्दस्य बहुव्रीहौ स्त्रीत्वे 'गौरादिभ्यश्च' इति ङीषा विशेष इति वाच्यम्, 'अनुपसर्जनात्' इत्यधिकारेण ङीषोऽप्राप्त्या 'बहनुड्वान्' इत्यादेरेवेष्टत्वात् । उपानत् = पादुका 'अथ पादुका । **पादूरुपानत्स्त्री'** इत्यमरात् (२-का० १० व०) **'सैवानुपदीना पदायता'** ।

**'ष्णिह्'** इति शब्दो वैदिकच्छन्दोविशेषवाची । तं व्युत्पादयितुमाह—**उत्पूर्वादिति** । **दलोप इति**—उदो दस्य लोपः, 'सात्पदाद्योः' इति निषेधं बाधित्वा निपातनात्षत्त्वम् । न च 'धात्वादेः षः सः' इति षस्य स्थाने सरूपादेशस्य 'आदेशप्रत्यययोः' इत्यनेनैव षत्वे सिद्धे षत्वनिपातनं व्यर्थमिति वाच्यम्, तस्य 'सात्पदाद्योः' इति निषेधात् तेन षत्वासिद्धेः । नच 'गतिकारकोपपदानां कृद्भिः समासवचनम्' इति परिभाषया कृदन्तेनैव समासे 'ष्णिह' इत्यस्य पदत्वाभावान्निषेधाप्राप्तिरिति वाच्यम्, पदादादिरिति पञ्चमीसमासे उदित्यस्य पदत्वान्निषेधप्राप्तेरबाधात् पदपदस्य पदत्वयोग्यपरत्वाच्च । **हस्य घ इति**—घोष-संवार-नादमहाप्राणप्रयत्नकस्य हस्य तावत्प्रयत्नको घ एव कुरित्यर्थः ।

ननु कुत्वस्यासिद्धतया 'हो ढः' इति ढत्वमेव कस्मान्नेति चेन्न, कैयटादिमते षत्वापवादत्वमिव बाध्यसामान्यचिन्तापक्षाश्रयणेन ढत्वस्यापि अपवादभूतकुत्वेन बाधात् । **जश्त्वचर्त्वे इति** । नच जश्त्वदृष्ट्या कुत्वस्यासिद्धतया घस्य जश्त्वानापत्तिरिति वाच्यम्, **'ऋत्विक्'** इति सूत्रे **'उष्णिगञ्चु'** इति जश्त्वघटितनिर्देशेन जश्त्वं प्रति कुत्वस्यासिद्धत्वाभावज्ञापनात् । वस्तुतस्तु षत्वं प्रति कुत्वस्यापवादत्वाभाव इव मूलकारमते ढत्वं प्रत्यपि कुत्वस्य नापवादत्वम् । एवञ्च ढ–ड–ग–काः क्रमेणेति बोध्यम् । **इति हान्ताः** । यान्तानामप्रसिद्धत्वात्—

**द्यौः, दिवौ, दिवः । द्युभ्याम् । द्युषु ॥ इति वान्ताः ॥ गीः, गिरौ, गिरः । एवं पूः । चतुरश्चतस्रादेशः । चतस्रः । चतस्रः । चतसृणाम् ॥ इति रेफान्ताः ॥ किमः कादेशे टाप् । का, के, काः । सर्वावत् ।**

यः सौ । [ ७-२-११० ]

**अथ वान्ताः**--**द्यौरिति**—दीव्यन्ति = क्रीडन्ति देवा यत्रेति विग्रहे 'दिव्' धातोरधिकरणे बाहुलकात् 'दिवेर्डिविः' इति डिविप्रत्यये डित्त्वसामर्थ्यादभस्यापि टेर्लोपे दिव्शब्दः स्त्रीलिङ्गः । **'सुरलोको द्योदिवौ द्वे स्त्रियाम्'** इत्यमरोक्तेः । कृदन्तत्वेन प्रातिपदिकत्वात्सौ 'दिव औत्' इति वस्यौकारादेशे यणि रुत्वविसर्गयोः '**द्यौः**' इति । 'हल्ङ्याब्' इति सुलोपस्तु न, हल्परत्वाभावात् । न च औकारे स्थानिवद्भावेन हल्त्वम् , हल्त्वस्याल्मात्रवृत्तित्वेन 'अनल्विधौ' इति स्थानिवत्त्वनिषेधात् । द्युभ्यामिति—भ्यामादौ पदत्वात् 'दिव उत्' इत्युत्त्वम् ।

**अथ रेफान्तानाह 'गीर्' इति**—गीर्यते या सेत्यर्थे 'गॄ शब्दे' इत्यतः कर्मणि क्विपि 'ॠत इत्' इति ॠकारस्येत्त्वे रपरत्वे च 'गिर्' इति शब्दः । ततः सौ तस्य लोपे पदत्वात् 'र्वोरुपधायाः' इतीको दीर्घे रस्य विसर्गे 'गीः' इति वाणी--'गीर्वाग्वाणी सरस्वती' इत्यमरात् । भ्यामादावपि पदत्वादुपधादीर्घः । **गीर्षु** इति—अत्र रेफस्य न विसर्गः, 'रोः सुपि' इति सप्तमीबहुवचने रोरेव रेफस्य विसर्ग इति नियमात् ।

**पूरिति**--पूर्यन्ते = पाल्यन्ते जना यत्रेत्यर्थे 'पॄपालनपूरणयोः' इत्यतः सम्पदादित्वात् क्विप् । 'उदोष्ठ्यपूर्वस्य' इति ॠकारस्योकारादेशे रपरत्वे 'पुर्' इति । ततः सौ तस्य लोपे 'र्वोरुपधायाः' इत्युपधादीर्घे रेफस्य विसर्गे च 'पूः' इति । पूर्नगरी । 'पूः स्त्री पुरीनगर्यौ' ( २ का० २ व० ) इत्यमरात् । **चतुर्शब्दो बहुवचनान्तः । चतस्र इति**—चतुर्शब्दाज्जसि शसि च 'चतुरनडुहोः' इत्यामं परत्वाद् बाधित्वा 'त्रिचतुरोः' इति चतस्रादेशः । नच नित्यत्वादामागम एव स्यादिति वाच्यम् , 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति परिभाषयाऽऽमोऽनित्यत्वात् । कृते चतस्रादेशे आम् तु न 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव' इति न्यायात् । यणि **'चतस्रः' इति । चतसृणामिति**—अत्र 'नामि' इति दीर्घस्तु न, 'न तिसृ' इति निषेधात् । 'चतस्र' इत्यादौ **'ॠन्नेभ्यो ङीप्'** तु न 'न तिसृचतसृ' इति सूत्रेण दीर्घनिषेधस्य वैयर्थ्यापत्त्या ङीबभावज्ञापनात् । **'न षट्स्वस्रादिभ्यः'** इति निषेधान्न ङीप् इति तु न युक्तम् , 'आचार्यप्रवृत्तिर्ज्ञापयति—न तिसृचतसृभावे कृते ङीब् भवति । यदयं न तिसृचतसृ इति नामीति दीर्घत्वस्य प्रतिषेधं शास्ति' इति 'कृन्मेजन्तः' इति सूत्रस्थभाष्यविरोधापत्तेः ; 'न षट्स्वस्रादिभ्यः' इति निषेधेनैव ङीपोऽप्रवृत्त्या ज्ञापनेन तद्वारणपरभाष्यविरोधः स्पष्ट एव । तस्मात् स्वस्रादिगतस्तिसृचतसृशब्दयोः पाठः प्रक्षिप्त एव ।

**इति रान्ताः**—लान्तशान्तयोः प्रयोगस्याप्रसिद्ध्या तानुपेक्ष्य **मान्तानाह–किमः कादेश इति–** किंशब्दात्सुपि 'किमः कः' इति कादेशे टापि सवर्णदीर्घे सोः **'हल्ङ्याब्'** इति लोपे **'का'** इति । **के इति**—'औङ आपः' इति औङः श्यादेशे 'आद् गुणः' इति गुणे **'के'** इति । **का इति**—जसि 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे सवर्णदीर्घे सस्य रुत्वविसर्गयोः **'काः'** इति । **सर्वावदिति**—**स्त्रीलिङ्गसर्वाशब्दवदित्यर्थः** । ननु 'सर्वावत्' इत्यत्र **'तेन तुल्यम्'** इति वतिः । तद्धितस्य वृत्तितया 'सर्वनाम्नो वृत्तिमात्रे पुंवत्' इति पुंवद्भावः स्यादिति चेन्न, अत्र 'सर्वा' इत्यस्य स्वरूपबोधकत्वेन सर्वार्थवाचकत्वाभावेन 'सर्वादीनि' इति सर्वनामत्वस्याप्रवृत्त्या पुंवद्भावाप्राप्तेः ।

**इदंशब्दस्य सौ विशेषमाह—**

**'यः सौ'**(७–२–११०) इति तत्र 'इदमो मः' इत्यतः 'इदमः' इति, **'दश्च'**इत्यतः **'दः'** इति च षष्ठ्यन्तमनुवर्तते तदाह–**इदमो दस्येत्यादि** । अयं यादेशः स्त्रियामेव, पुंसि **'इदोऽय् पुंसि'** इत्यनेन

इदमो दस्य यः स्यात्सौ। 'इदमो मः'। इयम्। त्यदाद्यत्वम्, टाप्, 'दश्च' इति मः। इमे, इमाः। इमाम्, इमे, इमाः। अनया। 'हलि लोपः'। आभ्याम्। आभ्याम्। आभ्याम्। आभिः। अस्यै। अस्याः, अनयोः, आसाम्। अस्याम्, अनयोः, आसु। अन्वादेशे तु एनाम्, एने, एनाः। एनया। एनयोः। एनयोः॥ इति मान्ताः॥ 'ऋत्विग्–' आदिना सृजेः क्विन् अमागमश्च निपातितः। स्रक् स्रग्, स्रजौ, स्रजः। स्रग्भ्याम्। स्रक्षु॥ इति जान्ताः॥ त्यदाद्यत्वं टाप्। स्या त्ये त्याः। एवं तद् यद्, एतद्॥

---

बाधात्, नपुंसके सोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावेन सुपरत्वाभावात्। परिशेषात्स्त्रियामेव। **इयमिति**–'इदम् स्' इति स्थितौ दस्य यादेशे त्यदाद्यत्वं बाधित्वा 'इदमो मः' इति मस्य म एव सोर्लोपे **'इयम्'** इति रूपम्। 'इदम् औ' इति स्थितौ त्यदाद्यत्वे पररूपत्वे अदन्तत्वात् 'अजाद्यतः' इति टापि सवर्णदीर्घे 'दश्च' इति दस्य मत्वे 'औङ आपः' औ श्यादेशे गुणे **'इमे'** इति। अत्र जसादौ सर्वत्र त्यदाद्यत्वं पररूपत्वं टाप् चेति बोध्यम्। जसि सवर्णदीर्घः। पूर्वसवर्णदीर्घस्तु न, 'दीर्घाज्जसि च' इति निषेधात्। अमि 'अमि पूर्वः' इति पूर्वरूपम्। द्वितीयाद्विवचने प्रथमाद्विवचनवत्कार्य्ये **'इमे'** इत्येव। शसि सवर्णदीर्घं बाधित्वा 'प्रथमयोः' इति पूर्वसवर्णदीर्घः। स्त्रीत्वात् 'तस्माच्छसः' इति नत्वं न।

**अनयेति** 'इदम् आ' इति स्थितौ त्यदाद्यत्वे पररूपत्वे टापि सवर्णदीर्घे 'इदा आ' इति जाते 'अनाप्यकः' इति इदोऽनादेशे 'आङि चापः' इति आबन्तस्यैत्वेऽयादेशे **'अनयोः'** इति। **आभ्यामिति**—त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'इदाभ्याम्' इति स्थितौ 'अनाप्यकः' इत्यनादेशमनवकाशत्वात् बाधित्वा 'हलि लोपः' इत्यनेन 'इदः' सर्वस्य लोपः। 'अलोऽन्त्यस्य' इति तु न 'नानर्थके' इति तन्निषेधात्। एवम् 'आभिः' इत्यपि बोध्यम्।

**अस्यै इति**—'इदा ए' इति स्थितौ 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आपो ह्रस्वे **'इदो'**लोपे **'वृद्धिरेचि'** इति वृद्धौ 'अस्यै' इति रूपम्। **आभ्याम्, आभ्या**, 'हलि लोपः' इतीदो लोपे पूर्ववद्रूपम्। 'अस्याः' इति ङसौ ङसि च **'अस्यै'** इतिवत्कार्य्यं वृद्धेरभावात्सवर्णदीर्घः। **अनयोरिति**। 'इदा ओस्' इति स्थितौ लोपं बाधित्वा अनादेशे 'आङि चापः' इत्येत्वेऽयादेशे रूपम्। **आसामिति** 'इदा आम्' इति स्थितौ पूर्वान्तवद्भावेनाबन्तस्य सर्वनामग्रहणेन ग्रहणात् 'आमि सर्वनाम्नः' इत्यामः सुटि इदो लोपे रूपम्। **अस्यामिति**—'इदा ङि' इति स्थितौ ङेरामादेशे स्याटि आपो ह्रस्वे इदो लोपे सवर्णदीर्घे रूपम्। ओसि पूर्ववत्कार्य्ये कृते 'अनयोः' इति। **आस्विति**—'इदासु' इति स्थितौ इदो लोपे **'आसु'** इति।

**अन्वादेशे त्विति**—उक्तार्थस्य पुनः कथने द्वितीयाटौस्सु इदः 'द्वितीया टौस्स्वेनः' इति एनादेशेऽन्यत्सर्वं पूर्ववत्कार्य्यम्। **इति मान्ताः।**

चवन्तानां प्रयोगाभावाद्विशेषकार्याभावाच्च तानुपेक्ष्य जान्तानाह—**ऋत्विगिति**—'सृज विसर्गे' इत्यतः सृज्यते=निर्मीयते सृजति सुखं वेत्यर्थे कर्मणि कर्तरि वा क्विन् 'सृजिदृशोर्झल्यमकिति' इति क्विनः कित्त्वेनामागमाप्राप्तौ निपात्यते। तथा च 'स्रज्' इति जाते सौ तस्य लोपे 'क्विन् प्रत्ययस्य' इति 'व्रश्च' इति षत्वं बाधित्वा कुत्वे जश्त्वे वैकल्पिकचर्त्वे स्रक्, स्रग् इति रूपम्। स्रङ्=माला। 'माल्यं मालास्रजौ' (अमर २ का० ६ व०) स्रक्छब्दो नित्यस्त्रीलिङ्गः। **इति जान्तः।**

चगडान्तान् विहाय दान्तानाह—त्यदाद्यत्व इत्यादिना। त्यजति लौकिकप्रयोजनानीत्यर्थे त्यजधातोः 'त्यजितनियजिभ्यो डित्' ( उ० १ पा० १३२ सू० ) इत्यदिप्रत्यये डित्त्वात् टिलोपे 'त्यद्' इति तच्छब्दार्थे रूढः। 'स्यश्छन्दसि' इति छन्दोग्रहणात् 'मासश्छन्दसि' इति ज्ञापनाच्च छान्दसा अपि लोके प्रयुज्यन्ते। त्यच्छब्दात्सुपि त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'त्या सु' इति स्थितौ 'तदोः

इति दान्ताः ॥ वाक्, वाग्, वाचौ, वाचः । वाग्भ्याम् । वाक्षु ॥ इति चान्ताः ॥ अप्शब्दो नित्यं बहुवचनान्तः । 'अप्तृन्-' इति दीर्घः । आपः । अपः ।

*अपो भि* । [ ७-४-४८ ]

**अपस्तकारः स्याद्भादौ प्रत्यये परे ।** अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु । ॥ इति पान्ताः ॥ दिक्, दिग्, दिशौ, दिशः । दिग्भ्याम् । दिक्षु । 'त्यदादिषु-' इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग्, दृशौ, दृशः ॥ इति शान्ताः ॥ त्विट्-त्विड्, त्विषौ,

---

सः सौ' इति तस्य सत्वे सोर्लोपे 'स्या' इति रूपम् । शेषं सर्वावत् । एवं तद्यदेतच्छब्देभ्यो विभक्तौ सर्वावत् । 'एषा' इत्यत्र षत्वं विशेषः । इति दान्ताः ।

अथ ख-फ-छ-ठ-थान्तानुपेक्ष्य चान्तानाह—**वागिति**—वक्तीति वाक् वागीश्वरी सरस्वती, उच्यते या सा इत्यर्थे च भाषा 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' ( अम० १ का० ६ व ) इत्यमरः । 'अन्येभ्योऽपि दृश्यते' ( ३-२-१७८ ) इति सूत्रे पठितेन 'क्विब्वचि' इत्यादिना वार्त्तिकेन कर्तरि कर्मणि वा क्विपि दीर्घे च 'वचिस्वपि' इति सम्प्रसारणे प्राप्ते तदभावस्याप्यनेन विधाने 'वाच्' इति शब्दो निष्पन्नः । ततः सौ तस्य लोपे प्रत्ययलक्षणेन सुबन्ततया पदतया 'चोः कुः' इति कुत्वेन ककारे जश्त्वे वैकल्पिकचर्त्वे 'वाक्' वाग् इति । इति चान्ताः ।

अथ टकारान्ततकारान्तान् विहाय पकारान्तानाह—**अप्शब्द इति**—आप्नुवन्ति, आप्यन्ते वेत्यर्थे 'आप्लृ व्याप्तौ' इत्यतः 'आप्नोतेर्ह्रस्वश्च' ( उ० २ पा० ५८ सू ) इति क्विपि ह्रस्वे च 'अप्' शब्दः । 'आपः' वारि । 'आपः स्त्री भूम्नि वार्वारि' ( अ० १ का० ६ व ) इत्यमरः । 'अप्सुमनस्समासिकतावर्षाणां बहुत्वञ्च' इति स्त्र्यधिकारे लिङ्गानुशासनसूत्रञ्च । आप्नोतेरसुनि 'आपस्' शब्दः क्लीबोऽपि । 'कबन्धमुदकमापोनीरवार्वारिनारम्' इति संसारावर्त्तः । तथा च स्मृतिः 'आपोभिर्मार्जनं कृत्वा' इति तदाह—'**अप्शब्दो नित्यबहुवचनान्त इति**—'अप् जस्' इति स्थितौ 'अप्तृन्' इत्युपधादीर्घे रुत्वविसर्गयोः '**आपः**' इति । अप इति शसि 'अप्तृन्' इति न दीर्घः 'तत्र सर्वनामस्थानेऽसम्बुद्धौ च' इत्यनुवृत्तेः । भादौ प्रत्यये विशेषमाह—

'**अपो भि**' ( ७-४-४८ ) । अत्र 'अच उपसर्गात्तः' इत्यतः 'तः' इत्यनुवर्तते । 'अङ्गस्य' इत्यधिकृतम् । तच्च 'भि' इत्यनेन सम्बध्यते । 'भि' इत्यस्याल्बोधकसप्तम्यन्तत्वेन 'यस्मिन् विधिः' इति तदादिविधौ **भादावित्यर्थः** । अङ्गस्य निमित्ते भादौ प्रत्यये परे इत्यर्थलाभः प्रत्ययस्यैवाङ्गसंज्ञानिमित्तत्वात् । तदाह—

**अपस्तकार इत्यादि** । अत्र अप्पदेन न 'ऋदोरप्' इत्यप् प्रत्ययस्य ग्रहणम् 'अद्भिः संस्कृतम्' ( ४-४-१३४ ) इति निर्देशात् लौकिकप्रयोगासम्भवे एव शास्त्रीयस्य ग्रहणाच्च । भादौ प्रत्यये इत्युक्तया 'अब्भक्षः' इत्यादौ नादेशः । **अद्भिरिति**— तस्य जश्त्वेन दः । **अप्स्विति**—जश्त्वे चर्त्वे च कृते रूपम् । 'चयो द्वितीया' इति तु न, अस्य 'नादिन्याक्रोशे' इति सूत्रे पाठादेतद्दृष्टया चर्त्वस्यासिद्धत्वात् । इति पान्ताः ।

**अथ शान्ताः—दिगिति**—दिशति पूर्वा, दक्षिणा इत्यादि ज्ञानं या सा दिक् । 'दिश अतिसर्जने' इत्यतः 'ऋत्विक्' इत्यादिना क्विनि सौ तस्य लोपे पदत्वे 'व्रश्च' इति षत्वे जश्त्वे कुत्वेन गकारे वैकल्पिकचर्त्वे रूपम्—**दिक्ष्विति**—षडगकेषु कृतेषु सस्य षत्वे '**दिक्षु**' इति ।

दृश्यन्ते = चाक्षुषज्ञानविषयीभवन्त्यर्था अनयेत्यर्थे सम्पदादित्वात् करणे क्विपि यद्वा पश्यतीत्यर्थे कर्तरि क्विपि दृश्शब्दः । ततः सौ तस्य लोपे पदत्वाद् 'व्रश्च' इति शस्य षत्वे प्राप्ते आह—**त्यदादिष्विति**—त्यदाद्युपपदाभावेन क्विनोऽभावेऽपि 'क्विन्प्रत्ययस्य' इत्यस्य क्विन्प्रत्ययो यस्मात् क्वचिद् दृष्टस्तस्य क्विनोऽभावेऽपि कुत्वमित्यर्थाश्रयणात् क्विप्यपि पदत्वे कुत्वम् । **दृगिति**, षडगकाः प्राग्वत् । 'दृग् ज्ञाने ज्ञातरि त्रिषु' ( ३-का० ३ व ) इत्यमरः । 'दृक् स्त्रियां दर्शने नेत्रे बुद्धौ

त्विषः। त्विड्भ्याम्। त्विट्सु, त्विट्त्सु। सह जुषत इति सजूः, सजुषौ, सजुषः। सजूष्षु, सजूःषु। षत्वस्यासिद्धत्वाद्रुत्वम्। आशीः, आशिषौ, आशिषः। आशीर्भ्याम्। आशीर्भिः॥ इति षान्ताः। असौ। त्यदाद्यत्वम्, टाप्। औङः शी। उत्वमत्वे। अमू, अमूः। अमूम्, अमू, अमूः। अमुया, अमूभ्याम्, अमूभिः। अमुष्यै, अमूभ्याम्। अमूभ्यः। अमुष्याः। अमुष्याः, अमुयोः, अमूषाम्। अमुष्याम्, अमुयोः, अमूषु॥ इति सान्ताः॥

*इति हलन्तस्त्रीलिङ्गप्रकरणम्।*

---

च त्रिषु वीक्षके' इति मेदिनी। **इति शान्ताः।** अथ षान्तानाह—**त्विडिति**—त्वेषणं दीपनमिति भावे। त्वेषन्ति = दीप्यन्तेऽर्था अनयेति करणे वा क्विपि **सौ** तस्य लोपे षत्वे जश्त्वे चर्त्वे च रूपम्। 'त्विट् शोभाऽपि' ( ३–का० ३ व ) इत्यमरः। **कान्तौ वाचि रुचौ त्विट् स्त्री'** इति रभसः। **सजूरिति**—सह जुषते इत्यर्थे 'जुषी प्रीतिसेवनयोः' इत्यतः क्विपि **'सहस्य सः संज्ञायाम्'** इति, 'ससजुषो रुः' इति निर्देशेन निपातनाद्वा सहस्य सादेशे **'सजुष्' इति।** तत **सौ** तस्य लोपे पदत्वे 'र्वोरुपधायाः' इत्युपधादीर्घे विसर्गे **'सजूः'** इति। सजूः = मित्रम्, सेवको वा त्रिलिङ्गः **'सजूष्षु'** इति 'नुम्विसर्जनीय' इति सुपः सस्य षत्वे विसर्गस्थानिकसकारस्य ष्टुत्वेन षत्वे रूपम्।

आङ्पूर्वकात् 'आङः शासु इच्छायाम्' इत्यतो भावे क्विपि 'आशासः क्वावुपधायाः' इत्युपधाया इत्वे 'शासिवसिघसीनाञ्च' इति सस्य षत्वे 'आशिष्' इति। **'कुगतिप्रादयः'** इति समासे प्रातिपदिकत्वे सौ तल्लोपे पदत्वे षत्वस्य रुत्वदृष्ट्या असिद्धतया षस्य सस्य वा रुत्वे **'र्वोः'** इत्युपधादीर्घे विसर्गे च **'आशीः'** इति। शुभाशंसनम् = आशीः। **इति षान्ताः।**

अदश्शब्दस्य सौ पुंवत्कार्यं रूपञ्च। 'अदस् औ' इति स्थितौ त्यदाद्यत्वे पररूपत्वे टापि औङः शीभावे गुणे दीर्घस्य एकारस्य आन्तरतम्याद्दीर्घोकारे मत्वे च **'अमू' इति।** जसि त्यदाद्यत्वे पररूपत्वे टापि सवर्णदीर्घे, पूर्वसवर्णदीर्घ इति तु चिन्त्यम् 'दीर्घाज्जसि च' इति निषेधात् ऊत्वे मत्वे च **'अमूः'** इति। **अमूमिति**—**'अदाम्'** इति जाते दीर्घोकारः मत्वञ्च। अतः परं सर्वत्र विभक्तौ 'अदा' इति कृत्वा सर्वावत्कार्य्यम् उत्वं मत्वं चाधिकं बोध्यम्। इयान् विशेषो ह्रस्वस्थाने ह्रस्व उकारः, दीर्घस्य दीर्घः। यथा 'अदया' इति स्थितौ **'अमुया' 'अदस्यै'** इत्यत्र **'अमुष्यै'** षत्वमधिकम्। **इति सान्ताः।**

**इति हलन्तस्त्रीलिङ्गप्रकरणम्।**

—:०:—

# अथ हलन्तनपुंसकलिंगप्रकरणम्

**स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद्, स्वनडुही । 'चतुरनडुहोः-' इत्याम् । स्वनड्-वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ इति हान्ताः ॥ 'दिव उत्' अहर्विमलद्यु ।**

**अथ हलन्तनपुंसकप्रकरणम् ।** अथ हान्तानाह—**स्वनडुदिति**—केवलानडुच्छब्दस्य पुंनसकत्वाभावात् सुष्ठु—शोभना अनड्वाहो यस्मिन्नगरे तत्स्वनडुद् इति 'बहुव्रीहौ' समासत्वात् प्रातिपदिकत्वे सौ 'चतुरनडुहोराम्' इति, 'अम् सम्बुद्धौ' इति, 'सावनडुहः' इति च न भवति 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया पूर्वं सोर्लुकि 'न लुमताङ्गस्य' इति निषेधेन प्रत्ययलक्षणाभावेन सुपरत्वाभावात् । तदाह—**स्वमोर्लुगिति । दत्वमिति**—'वसुस्रंसु' इत्यनेनेति शेषः । 'वसुस्रंसु' इति सूत्रे 'पदस्य' इत्यधिक्रियते । तद्विशेष्यकतदन्तविधौ वस्वन्ततदाद्यन्ते स्रंसाद्यन्ते च दत्वमित्याह—**दत्वमिति । स्वनडुह्** इत्यत्र पदत्वे 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधस्तु न, 'सुप्तिङन्तम्' इति पदत्वस्याङ्गकार्य्यत्वाभावात् ।

न च 'स्वनडुत्' इत्यत्र बहुव्रीहित्वादनडुच्छब्दस्य उरःप्रभृतिषु पाठात् 'उरःप्रभृतिभ्यः कप्' इति कप् स्यादिति वाच्यम्, तत्र तत्र गणे शब्दानां स्वरूपमात्रस्य पाठदर्शनेन 'अनुडुह्' इत्येव पठितव्ये उरःप्रभृतौ 'अनड्वान्' इति प्रथमैकवचनान्तपाठसामर्थ्यादेकवचनान्तस्यानडुच्छब्दस्य यत्र बहुव्रीहिस्तत्रैव तत्प्रवृत्तिरित्यस्य मूले एव वक्ष्यमाणत्वात् । **स्वनडुहीति**—'नपुंसकाच्च' इति औङः श्यादेशः । 'सुडनपुंसकस्य' इति नपुंसके सर्वनामस्थानसंज्ञाया अभावेन 'चतुरनडुहोराम्' इति न प्रवर्तते, सर्वनामस्थानपरत्वाभावात् ।

**स्वनड्वांहीति**—अत्र जश्शसोः 'शि' इत्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानत्वे सर्वनामस्थानपरत्वसत्त्वात् 'चतुरनडुहोः' इत्यामि 'नपुंसकस्य झलचः' इति नुमि नस्यानुस्वारे 'स्वनड्वांहि' इति जश्शसो रूपम् । नुमा आम् न बाध्यते, आमा च नुम् न बाध्यते इत्यादि पूर्वोक्तमनुसंधेयम् । **शेषं पुंवदिति**—ननु 'शेषं रूपम्' इत्यसङ्गतम् 'घञबन्तः' इति लिङ्गानुशासनेन पुंस्त्वविधानादिति चेन्न, नपुंसकत्वविशिष्टे भावे क्तिन्नादिभिर्बाधात् परिशेषाद् भावार्थे एव घञपोः प्रवृत्त्याऽत्र कर्मघञन्तस्य शेषशब्दस्य प्रयोगेण तत्प्रवृत्त्यभावात् । अत एव 'सम्बन्धमनुवर्तिष्यते' इति भाष्यप्रयोगः सङ्गच्छते । **इति हान्ताः ।**

**अथ वान्तानाह**—यद्यपि हयम्, हयातं वाऽऽचष्टे इत्यर्थे ण्यन्तात् क्विपि 'हय्' इति यान्तः सम्भवति, तथाप्यप्रसिद्धत्वात्तानुपेक्ष्य वान्ता निरूप्यन्ते । विमला द्यौर्यस्मिन् यस्य वेत्यर्थे बहुव्रीहौ 'विमलदिव्' इति नपुंसकात्सौ 'स्वमोः' इति लुकि पदत्वे 'दिव उत्' इत्युकारादेशे तस्य यणि 'विमलद्यु' अहः । **अहर्विमलद्यु अत्राहर्ग्रहणं नपुंसकत्वद्योतनाय ।** वस्तुतस्तु व्यर्थमेव नपुंसकप्रकरणेनैव तल्लभ्यत्वात् ।

ननु 'विमलदिव्' इत्यत औङि तस्य शीभावे 'विमलदिव् ई' इति स्थितौ 'दिव उत्' इति वस्य उत्वं स्यात् । नच सर्वनामस्थानभिन्ने यजादौ स्वादौ 'यचि भम्' इति भत्वेन पदत्वाभावः, 'विमला सु दिव् सु' इति स्थितौ बहुव्रीहौ 'सुपो धातुप्रातिपदिकयोः' इति लुप्तं सुपं प्रत्ययलक्षणेनादाय 'सुप्तिङन्तं पदम्' इति 'दिव्' इत्यस्य पदत्वात् । नच तस्यापि भत्वेन बाधः, यजादौ तदादेरेव भसंज्ञाविधानेन प्रकृते 'विमलदिव्' इति तदादि न तु दिव् इति तेन भत्वाप्राप्तेः । नच 'न लुमता' इत्यनेन प्रत्ययलक्षणनिषेधान्न 'दिव्' इत्यस्य सुबन्तत्वमिति वाच्यम्, अङ्गस्य कार्य्ये एव 'न लुमता' इत्यस्य प्रवृत्त्या प्रकृते च सुबन्तस्य पदसंज्ञारूपं कार्य्यमिति सुबन्त-

अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम् 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणं न । विमलदिवी, विमलदिवि । 'अपदादिविधौ' किम्—दधिसेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । चकारस्य कुत्वे तु न ॥ इति वान्ताः ॥ वाः, वारी ।

---

स्याङ्गत्वाभावेन निषेधाप्राप्तेः । अङ्गस्य कार्याभावेऽपि प्रवृत्तौ 'राजपुरुषः' इत्यत्र 'राजन्' इत्यस्यापि समासगतस्य ङसः प्रत्ययलक्षणं न स्यादिति पदत्वाभावान्नलोपो न स्यादिति मनसि निधाय आह—**अन्तर्वर्तिनीमिति** । **पूर्वपदस्येवेति**—'राजपुरुषः' इत्यत्र पूर्वस्य 'राजन्' इत्यस्य यथा ङसमादाय 'सुप्तिङन्तम्' इति पदत्वं तथा प्रकृते उत्तरखण्डस्य 'दिव्' इत्यस्य पदसंज्ञायां प्राप्तायामित्यर्थः ।

उत्तरमाह—**उत्तरपदत्वे इति**—वार्तिके उत्तरपदं वृत्तिचरमावयवे लाक्षणिकम्, लुप्तषष्ठीकं पृथक्पदम् । तथा च वृत्तिचरमावयवस्य पदत्वे पदसंज्ञायाम्, पदत्वप्रयुक्तप्रयुक्ते कार्ये वा कर्तव्ये 'प्रत्ययलक्षणं न' इत्यनेन प्रकृते पदत्वे कर्तव्ये पदत्वनिमित्तके 'दिव् उत्' इत्युत्वे च च कर्तव्ये प्रत्ययलक्षणप्रतिषेधात् 'दिव्' इत्यस्य पदत्वाभावेन नोत्वम् । **अपदादिविधौ किमिति** वृत्तिचरमावयवस्याद्यो यो वर्णस्तस्य कार्ये कर्तव्ये प्रत्ययलक्षणनिषेधो न, किन्तु प्रत्ययलक्षणं भवत्येव । तेन '**दधिसेचौ**' इत्यत्र 'आदेशप्रत्यययोः' इत्यनेन सस्य षत्वे कर्तव्ये प्रत्ययलक्षणेन 'सेच्' इत्यस्य पदत्वात् 'सात्पदाद्योः' इति षत्वनिषेधः सिध्यति । अत्रैव चस्य कुत्वे कर्तव्ये तु न प्रत्ययलक्षणम् 'उत्तरपदत्वे' इति निषेधात् ।

नच 'दधिसेचौ' इत्यत्रोपपदसमाससत्त्वेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्' इति परिभाषया कृदन्तेनैव समासे प्रत्ययलक्षणेन पदत्वाप्राप्त्या 'अपदादिविधौ' इति व्यर्थम्, सिञ्चत इति 'सेचौ' 'अन्येभ्योऽपि दृश्यन्ते' इति विचि दध्नः सेचौ इति शेषषष्ठ्या समासे प्रत्ययलक्षणेन पदतया षत्वनिषेधरूपफलस्य सत्त्वात् ।

नन्वेवमपि उपपदसमासे 'सात्पदाद्योः' इति निषेधाप्रवृत्त्या षत्वं दुर्वारमिति चेन्न, 'पदादादिः पदादिः' इति भाष्योक्तपञ्चमीसमासेन दधिरूपपदात्परस्य सस्य षत्वनिषेधात्, सात्पदाद्योरित्यत्र पदपदस्य पदत्वप्रयोजकसुप्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकावच्छिन्नत्वरूपपदत्वयोग्यरूपप्रातिपदिकपरत्वाच्च ।

**कैयटस्तु** सोपपदाद्विचोऽनभिधानम् इति प्रयोगाभाव इत्याह । पदादिविधिश्च प्रतिपदोक्तपरिभाषया पदादिशब्दमुच्चार्य विहित एव गृह्यते । तेन 'परमबुधौ' इत्यत्र भष्भावस्य पदादिविधित्वेऽपि 'अपदादिविधौ' इत्यस्य न प्रवृत्तिः ।

यत्किञ्चिन्निरूपितोत्तरत्वविशिष्टस्य 'पदत्वे' इति तु नार्थः, 'आर्द्रे चर्म' इति वाक्ये चर्मेत्यस्य पदत्वानापत्तेः । समासचरमावयवस्य पदत्वे इत्यपि नार्थः, 'अत्रेरपत्यान्यत्रयः' इति भाष्यप्रयोगे प्रत्ययलक्षणेन पदत्वापत्तेः । किन्तु वृत्तिचरमावयवस्य पदत्वे इत्येवार्थः । 'अत्रयः' इत्यस्य व्यपदेशिवद्भावेन तद्धितान्तरूपवृत्तिचरमावयवत्वम् । **कुत्वे तु नेति**—चस्य कुत्वे तु नेत्यर्थः, चस्य पदाद्यवयवत्वाभावात् । न चैवमपि परमश्चासौ दण्डी च परमदण्डीति कर्मधारयानन्तरं परमदण्डी प्रियो यस्येति बहुव्रीहौ 'परमदण्डिप्रियः' इत्यत्र नलोपासिद्धिः, 'दण्डिन्' इत्यस्योत्तरपदत्वेन 'उत्तरपदत्वे' इति प्रतिषेधेन सुबन्तत्वाभावेन पदत्वाभावादिति वाच्यम्, पूर्वो दण्डी प्रियो यस्येति त्रिपदबहुव्रीहौ 'दण्डिन्' इत्यस्य पदत्वाय मध्यमपदत्वानाक्रान्तस्यैव 'उत्तरपदत्वे' इत्यत्र उत्तरपदस्य ग्रहणेन 'परमदण्डिप्रियः' इत्यत्र दण्डिन्नित्यस्य मध्यमपदत्वाक्रान्तत्वेन निषेधाप्रवृत्तेः ।

मध्यमपदत्वञ्च वृत्तिविशिष्टत्वम्—वै० स्वारम्भकत्वम्, स्वारम्भकाव्यवहितपूर्वत्वम्, स्वारम्भकावधिकोत्तरत्वम् एतत्त्रितयसम्बन्धेन । कुम्भे न मध्यमपदत्वम् । 'सनाद्यन्ता धातवः, सुप्तिङन्तं

चत्वारि ॥ इति रेफान्ताः ॥ 'न लुमता-' इति कादेशो न। किम्, के, कानि। इदम्, इमे, इमानि।

---

पदम्' इत्यादौ 'उत्तरपदत्वे' इति निषेधादजादिपदत्वाभावान्न ङमुट्। वस्तुतस्तु त्रिपदबहुव्रीहौ दण्डिन्नित्यस्य वृत्तिचरमावयवत्वाभावेन 'उत्तरपदत्वे' इति निषेधाप्रवृत्त्या न दोषः। कर्मधारयघटित-बहुव्रीहौ परमदण्डिप्रकृतिकं सुपमादाय पदत्वेन नलोपसिद्धिः। वृत्तिचरमावयवत्वञ्च-यद्वृत्तिघटकं सुपमादाय पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम्। वैशिष्ट्यञ्च—स्वघटकत्वम्, स्वघटकार्थवदव्य-वहितपूर्वत्वाभाववत्त्वम्, एतदुभयसम्बन्धेन। न चैवम् 'माषाणां कुम्भो माषकुम्भस्तं वपतीति माष-कुम्भवापः' इत्यत्र षष्ठीतत्पुरुषरूपवृत्तिमादाय 'उत्तरपदत्वे' इति निषेधात् 'कुम्भः' इत्यस्य पदत्वा-भावेन 'पदव्यवायेऽपि' इति णत्वनिषेधानापत्तिः, 'पदव्यवायेऽपि' इत्यत्र पदशब्देन पदत्वयोग्यस्य ग्रहणेनादोषात्। पदत्वयोग्यञ्च प्रातिपदिकमेव। यद्वा प्रत्यासत्त्या उत्तरपदस्य कार्यित्वे एव 'उत्तर-पदत्वे' इत्यस्य प्रवृत्तिरिति 'माषकुम्भवापेन' इत्यत्र न हि कुम्भशब्दस्य किञ्चित्कार्य्यम्। अस्ति च प्रातिपदिकत्वं कुम्भेत्यस्येत्यन्यत्र विस्तरः। 'उत्तरपदत्वे' इत्यस्य भाष्यकृत्कृतप्रत्याख्यानरीत्याऽपि 'विमलदिवी' इत्यादौ नास्ति दोषः।

तथा हि-भाष्यकृता 'स्वादिषु' इत्येको योगः। अत्र 'सुप्तिङन्तम्' इत्यनुवर्तते। कप्प्रत्यया-वधिकस्वादिषु परतः पूर्वं पदम्, सुतिङन्तञ्च पदमित्यर्थकः। द्वितीयश्च-'असर्वनामस्थाने यचि' इति यजादौ सर्वनामस्थाने पूर्वं पदं न, सुप्तिङन्तञ्च पदं न इत्यर्थकः। अनेन 'परमदण्डिनौ, परमवाचौ' इत्यादौ सर्वनामस्थाने परतः 'परमदण्डिन् परमवाच्' इत्यस्य चरमावयवस्य 'दण्डिन्, वाच्' इत्यस्य च सुबन्तस्य पदत्वनिषेधाद्नुत्वकुत्वे न भवतः। तृतीयः—'भम्' इति, अत्र 'असर्वनामस्थाने यचि' इति सूत्रमनुवर्तते। 'सुप्तिङन्तमि'ति च। तथा च सर्वनामस्थानभिन्ने यजादौ स्वादौ पूर्वं मं भवति, सुप्तिङन्तं च मं भवतीत्यर्थकः। अनेन 'विमलदिवी, परमवाचः, परमवाचा, विमलदिवा' इत्यादौ पूर्वस्य सुबन्तस्य च पदत्वबाधकभत्वेन नोत्वकुत्वे इति 'उत्तरपदत्वे' इति वार्तिकं न कर्तव्यम्। अयञ्च प्रत्याख्यानप्रकारो गुरुतर इत्युक्तं नागेशेन।

भाष्ये 'उत्तरपदत्वे पदादिविधौ' इति वृत्तिचरमावयवस्य पदादिविधावेव प्रत्ययलक्षणं भवतीति नियमार्थं वार्तिकम्। 'बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणम्' इत्युक्तम् इति नियमेन पदान्तविधौ न प्रत्ययलक्षणम्। इति 'प्रत्ययलोपे' इत्यस्य नियामकं वार्तिकम्, न तु निषेधकम्। इति वान्ताः।

**अथ रेफान्तानाह—'वाः'** इत्यादि—रेफान्तो वार्शब्दः क्लीबः 'आपः स्त्री भूम्नि वार्वारि' इत्यमरात्। 'वार्' 'वृञ् आवरणे' इति चौरादिकात् क्विपि णिलोपे वारयत्याकाशमिति 'वार्' इति। ततः सौ तस्य लुकि रेफस्य विसर्गे रूपम्। जश्शसोः 'नपुंसकस्य झलचः' इति न नुम्, झलन्तत्वा-भावादित्याह—**झलन्तेति**। **चत्वारीति**—चतुर्शब्दो बहुवचनान्त एव। जश्शसोः शिभावे 'चतुर-नडुहोः' इत्यन्त्यादच उकारात्परत आमागमे यणि च रूपम्। नुम् तु न, झलन्तत्वाभावात्। **इति रेफान्ताः।**

नान्तान् आन्तांश्च विहाय मान्तानाह—

'किम्' इति शब्दात् स्वमोर्लुकि प्रत्ययलक्षणेन विभक्तिपरकत्वात् 'किमः कः' इति कादेश-माशङ्क्याह—**न लुमतेति**। अन्यत्र विभक्तिपरकत्वात् सर्वत्र कादेशे सर्वशब्दवद्रूपाणि।

**इदमिति**—स्वमोर्लुकि रूपम्। सुपरत्वाभावात् 'इदमो मः' इति, विभक्तिपरकत्वाभावात् 'दश्च' इति च न प्रवर्तते। न च प्रत्ययलक्षणम् 'न लुमता' इति निषेधात्। **इमे इति**—औङः शीभावे त्यदाद्यत्वे पररूपत्वे च 'दश्च' इति दस्य मादेशे गुणे रूपम्। **इमानीति** जश्शसोः शिभावे त्यदाद्यत्वे पररूपत्वे दस्य मत्वे 'नपुंसकस्य झलचः' इत्यजन्तलक्षणे नुमि 'सर्वनामस्थाने च' इति

'अन्वादेशे नपुंसके एनद्वक्तव्यः' एनत्, एने, एनानि। एनेन। एनयोः। एनयोः॥ इति मान्ताः॥ ब्रह्म, ब्रह्मणी, ब्रह्माणि। 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः।' हे ब्रह्मन् हे ब्रह्म। 'रोऽसुपि'। अहर्भाति। 'विभाषा ङिश्योः'। अह्नी, अहनी, अहानि।

अहन्। [ ८-२-६८ ]

---

नान्तस्योपधाया दीर्घे रूपम्। अन्वादेशे नपुंसके इति—अम्येव एनदादेशः। अन्यत्र द्वितीयाटौस्सु एनादेश एव। न चामो लुका लुप्ततया द्वितीयापरत्वाभावाद् एनदादेशाप्राप्तिः, 'अन्वादेशे नपुंसके' इत्यस्यारम्भसामर्थ्यात् प्रत्ययलक्षणाप्रवृत्तेः। अन्यथा दान्तादेशविधानं व्यर्थमेव स्यात्। न च सामासिके लुकि 'एतच्छ्रितकः' इत्यत्रापि प्रत्ययलक्षणेन एनदादेशः स्यात्, वचनसामर्थ्येन नपुंसकलुक्येव प्रत्ययलक्षणप्रवृत्तेः सामासिकलुको बहिरङ्गतया वचनसामर्थ्येन न प्रत्ययलक्षणकल्पनम्।

वस्तुतस्तु 'द्वितीयाटौस्स्वेनः' इति सूत्रे एनद्वक्तव्यो न त्वेनादेशः। त्यदाद्यत्वेन एनम्, एनौ, एनान् इत्यादीनां सिद्धिः। नपुंसकेऽमि दान्तादेशविधानसामर्थ्यादेनदादेश इति दीक्षितमतम्। ननु येन नाप्राप्तिन्यायेन एनदस्त्यदाद्यत्वापवादत्वेन कृते सुटि नुडिव कथं त्यदाद्यत्वम्। न चोपसर्जने चारितार्थ्यम् 'त्यदाद्यत्वेन सिद्धम्' इति भाष्योक्त्या एनदोऽपि उपसर्जनेऽप्रवृत्तेः, तस्मात् सूत्रे एनद्वक्तव्य इति मतं चिन्त्यमिति शेखरकारः।

वस्तुतस्तु त्यदाद्यत्वविषये तक्रन्यायो न प्रवर्तते। अत एव 'सः' इति रूपसिद्धिः। अन्यथा तक्रन्यायेन 'तदोः सः सौ' इति सूत्रं त्यदाद्यत्वापवादः स्यादिति 'सः' इत्यस्यासिद्धिप्रसङ्गः। तस्मात् 'द्वितीयाटौष्वेनद्' इति मनोरमाकारमतमेव ज्यायः। अत एव भाष्ये 'यद्येनत् क्रियते एनो न वक्तव्यः' इत्युक्तम्। इति मान्ताः।

अथ नकारान्तानाह—ब्रह्मेति—बृंहति = वर्द्धयति प्रजाम् इत्यर्थे 'बृहि वृद्धौ' इत्यतोऽन्तर्भावितण्यर्थात् 'बृंहेर्नोऽच्च' ( ३-४-पा० १४६ सू० ) इति मनिनि प्रत्यये धातोर्नस्यादादेशे यणि 'ब्रह्मन्' इति, बृंहति—अध्यासरूपेण वर्धते इत्यर्थे वा। 'ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि' इत्यमरटिप्पणी ( अ० १ का० १६ श्लो० )। 'स्वभावो ब्रह्म वर्ष्म च' ( अ० ३ का० ३ व ) वेदाद्यर्थे ब्रह्मशब्दो नपुंसकलिङ्गः। स्वमोर्लुकि मलोपे 'ब्रह्म' इति। औङः श्यादेशे 'अट्कुप्' इति णत्वे 'न संयोगाद्वमन्तात्' इति निषेधात् 'विभाषा ङिश्योः' इत्यलोपाभावे 'ब्रह्मणी' इति। ब्रह्माणीति—जश्शसोः शिभावे नान्तलक्षणदीर्घे रूपम्। न जहाति—न त्यजति पदार्थानित्यर्थे 'नञि जहातेः' ( उ० १ पा० १५८ सू० ) इति कनिन् प्रत्यये 'आतो लोपः' इत्यालोपे उपपदसमासे नलोपे 'अहन्' इति। अहन्शब्दात्परयोः स्वमोर्लुकि 'अहन्' इति रुत्वे प्राप्ते आह—'रोऽसुपि' इति—रुत्वं बाधित्वा नस्य रेफादेशः। नच प्रत्ययलक्षणेन सुप्परत्वात् रेफादेशो न स्यादिति वाच्यम्, 'न लुमता' इति निषेधात्। अत्र रुत्वे तु 'हशि च' इति रोरुत्वे 'अहो भाति' इत्यापद्येत। उत्वाभावं प्रदर्शयितुमेव भातिपदोपादानम्। तदभावे तु रुत्वे रत्वे वा 'अहः' इत्येवेति भेदो न स्यात्। अह्नीति वैकल्पिकालोपे रूपद्वयम्। अहानीति—जश्शसोः शिभावे नान्तलक्षणोपधादीर्घे रूपम्। अजादौ टादौ भत्वात् 'अल्लोपोऽनः' इत्यल्लोपः, हलादौ विशेषमाह—

'अहन्' ( ८-२-६८ ) इति। अत्र 'ससजुषो रुः' इत्यतः 'रुः' इति, 'स्कोः संयोगाद्योः' इत्यतः 'अन्ते' इति चानुवर्तते। सूत्रे 'अहन्' इति छान्दसत्वात् 'सुपां सुलुक्' इति लुप्तषष्ठीकम्, 'रुः' इत्यादेशानुरोधात्। 'पदस्य' इति चाधिकृतम्। तदाह–अहन्नित्यस्येत्यादि। अहोभ्यामिति–नस्य रुत्वे रोः 'हशि च' इत्युत्वे गुणे च रूपम्। ननु 'अहः, अहोभ्याम्' इत्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपः स्यात्। न च 'येन नाप्राप्ति' न्यायेन रत्वरुत्वयोर्नलोपापवादत्वात् 'यं प्रति

'अहन्' इत्यस्य रुः स्यात्पदान्ते। अहोभ्याम्, अहोभिः।

इह 'अहः' 'अहोभ्याम्' इत्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते 'अहन्' इत्यावर्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः। तदन्तस्यापि रत्वरुत्वे—दीर्घाण्यहानि यस्मिन् स दीर्घाहा निदाघः। इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'असुपि' इति निषेधाद्रत्वाभावे रुः,

---

यस्यापवादत्वं तं प्रति तस्यासिद्धत्वं न भवति' इति नलोपे कर्तव्ये तयोरसिद्धत्वं न स्यादिति वाच्यम्, 'हे दीर्घाहो निदाघ' इत्यत्र च 'न ङिसम्बुद्ध्योः' इति निषेधेन नलोपाप्राप्तया 'हे अहः' इत्यत्र रत्वस्य, 'हे दीर्घाहो निदाघ' इत्यत्र प्रत्ययलक्षणेन सुप्परत्वेन रत्वाप्राप्तया रुत्वस्य च चारितार्थ्येनापवादत्वासम्भवादित्याशङ्क्य निराकरोति—

अहन्नित्यावर्त्येति—'अहन्' इति सूत्रं तन्त्रेण पाणिनिना पठितम्। बोद्धुस्त्वावृत्त्या बोधः, इति न्यायेन 'अहन्' इत्यस्यावृत्तिं कृत्वा 'अहन्' इति सूत्रद्वयम्, आद्येन 'पदान्तेऽहन्' इति निपात्यते तेन नलोपो न भवति। द्वितीयेन अहन्नित्यस्य रुः स्यात्पदान्ते इत्यर्थकेन रुर्विधेयः। एतच्च 'न लोपः प्रातिपदिकान्तस्य' ( ८-२-१ ) इति सूत्रभाष्याशयलभ्यमिति दीक्षिताभिप्रायः। आवृत्तौ मानञ्च 'रूपरात्रि' इति वार्तिकमेव।

यद्यावृत्तिर्न स्यात्तदा नलोपे कृते हकारोत्तराकारस्यैव रुत्वं स्यात्। तथा च हकारोत्तररो रुत्वाप्राप्तया रेफादेशेनैव रेफस्य सिद्धे रुविधानं व्यर्थीभूय सूत्रावृत्तिं ज्ञापयति। आवृत्तौ च सत्यां नलोपाभावान् नस्य रुत्वमुत्वादिविधानाय चरितार्थम्। आवृत्तस्य 'पदान्तेऽहन्' इति निपात्यते इत्यर्थः। इदम् मूलोक्तं समाधानम् उत्सर्गापवादयोः प्रवृत्त्यसम्भवे एवापवादत्वमिति वार्तिककारमतेन। प्रकृते च नलोपे सति अकारस्य रुत्वं स्यादित्यसम्भवो नास्तीति रुत्वं नलोपापवादो न स्यादित्यावृत्त्या परिहारः।

ननु सूत्रे 'अहन्' इति नकारान्तोच्चारणेन नकारान्तानुकरणेन नकारान्ताहन्-शब्दस्य रुत्वमित्यर्थेन नलोपो न स्यादिति चेन्न, भ्यामादौ व्यावृत्तये सम्बुद्धौ प्रवृत्तये च नकारान्तानुकरणस्य चारितार्थ्येन नलोपबाधे मानाभावात्। न च तक्रन्यायेन रुत्वरत्वाभ्यां नलोपस्य बाधः स्यादिति वाच्यम्, अहन्शब्दात् 'प्रातिपदिकात्' इति णिचि टिलोपे नलोपाप्राप्तया रत्वरुत्वयोश्चारितार्थ्येन तक्रन्यायविषयाभावात्। वस्तुतस्तूभयविधानवैयर्थ्येन रत्वरुत्वयोरपवादत्वमेवेति दिक्।

सत्यपि सम्भवे बाधनं भवति इति भाष्यमते तु रत्वरुत्वे नलोपापवादभूते एव। एवञ्चापवादत्वेन नलोपबाधः स्यादेवेति आवृत्तिर्व्यर्थैव। न च सम्बोधने रुत्वरत्वयोश्चारितार्थ्यात् अपवादत्वाभावः, येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इति सिद्धान्तः। सम्बुद्धावपि नलोपस्य प्राप्तिरस्त्येव। निषेधेन नलोपप्रवृत्तिर्न भवतीत्यन्यदेतत्। ध्वनितञ्चेदम् 'अपवादो रुर्नलोपं बाधिष्यते' इत्यर्थकभाष्येणेति शेखरकाराः।

तदन्तस्यापीति—पदस्येत्यधिकारात्तदन्तविधौ अहन्शब्दान्तस्य पदस्य रत्वरुत्वे भवतः। तदाह—दीर्घाहा निदाघ इति।

ननु 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति परिभाषया तदन्तविधिर्न स्यादिति चेन्न, तस्य प्रत्ययविधिविषयत्वात्। अत एव 'अप्तृन्' इति सूत्रे 'परमस्वसा' इति तदन्तस्योदाहरणं भाष्योक्तं संगच्छते। निदाघवाचकात् पुंलिङ्गाद् दीर्घाहन्शब्दात्परत्वादुपधादीर्घे कृते सोर्लोपे 'अहन्' इति रुत्वे 'भोभगो' इति रोर्यत्वे 'हलि सर्वेषाम्' इति यलोपे रूपम्। ननु सोर्लोपे कृते सुप्परत्वाभावाद्रुत्वापवादे रत्वे रोरभावाद्यत्वं न स्यात्तथा च 'दीर्घाहार्निदाघः' इति स्यादित्यत आह—इह हल्ङ्यादिलोपे इति—ननु अकृतव्यूहपरिभाषया सुलोपात्परत्वेऽपि नान्तलक्षणदीर्घः

तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः। सम्बुद्धौ तु हे दीर्घाहो निदाघ। **दीर्घाहानौ, दीर्घाहानः। दीर्घाह्ना, दीर्घाहोभ्याम्।** दण्डि, दण्डिनी, दण्डीनि। स्रग्वि, स्रग्विणी, स्रग्वीणि,। **वाग्मि, वाग्मिनी,** वाग्मीनि। बहुवृत्रह, बहुवृत्रघ्नी, बहुवृत्रहणी, बहुवृत्रहाणि। **बहुपूष, बहुपूष्णी, बहुपूषणी,** बहुपूषाणि। बह्वर्यम, बह्वर्यम्णी, बह्वर्यमणी, बह्वर्यमाणि ॥ **इति नान्ताः॥**

---

सुलोपात्पूर्वं न स्यात्। नकारस्य रुत्वेन विनाशोन्मुखत्वादत आह— **तस्यासिद्धत्वादिति—** जातस्य रुत्वस्य दीर्घदृष्ट्या असिद्धतया नान्तलक्षण उपधादीर्घो निर्बाध एव।

ननु 'पदत्वादुपधादीर्घे हल्ङ्यादिलोपे 'राजा' इति पूर्वमुक्तम्। अत्र च हल्ङ्यादिलोपे कृते नान्तलक्षणोपपधादीर्घ इति पूर्वापरग्रन्थविरोध इति चेन्न, अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादिति शङ्कायां **तस्यासिद्धत्वादित्युक्तेः।** दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वं प्रवर्तते इति भावः। वस्तुतस्तु 'अकृत' इति परिभाषाया असत्त्वात्सत्त्वेऽप्यनित्यत्वात्पूर्वमेवोपधादीर्घः।

**सम्बुद्धौ त्विति—**सोः 'हल्ङ्याव्' इति लोपे प्रत्ययलक्षणेन सम्बुद्धिपरत्वात् 'असम्बुद्धौ' इति निषेधेन दीर्घाभावे रत्वाभावे च 'अहन्' इति रुत्वे 'हशि च' इति रोरुत्वे गुणे रूपम्। अत्र तदन्तेऽपि रत्वविधानफलं तु दीर्घश्चासौ निदाघश्चेत्यर्थे समासे 'दीर्घाहर्निदाघः' इत्यत्र रत्वम्। अत्र प्रत्ययलक्षणेन 'असुपि' इति निषेधस्तु न 'न लुमता' इति निषेधात्।

दण्ड्यतेऽनेनेत्यर्थे 'दण्ड निपातने' इत्यतः करणे घञि 'दण्डः' ततः प्रथमान्तात् 'अत इनिठनौ' इत्यनेन दण्डोऽस्त्यस्येत्यर्थे इनिप्रत्यये इकारस्येत्त्वे लोपे च तद्धितान्तत्वात्प्रातिपदिकत्वे सोर्लुकि 'दण्डिन्' ततः स्वमोर्लुकि पदत्वे नलोपे 'दण्डि' इति रूपम्। सर्वनामस्थानपरत्वाभावात् नान्तलक्षणोपधादीर्घो न, 'इन्हन्' इति नियमाच्च। **दण्डीनीति—**जश्शसोः शिभावे 'इन्हन्' इत्युपधादीर्घे रूपम्। सृज्यते सृजति सुखं वेति विग्रहे 'ऋत्विक्' इति क्विन्नन्तो निपात्यत इत्युक्तम्। ततः 'अस्मायाः' इति विनिप्रत्यये तद्धितान्तात्वत् प्रातिपदिकत्वे सुब्लुकि प्रत्ययलक्षणेन सुपमाश्रित्य सृजो जस्य कुत्वे 'स्रग्विन्' शब्दः। ततः सौ तस्य लुकि पदत्वेन नलोपे च **'स्रग्वि' इति।** दण्डिवद् रूपाणि बोध्यानि। **'स्रग्वीणि'** अत्र इनोऽनर्थकत्वे 'इन्हन्' इति सूत्रे **'अनिनस्मिन्ग्रहणानि'** इति परिभाषया अनर्थकस्यापीनादेर्ग्रहणेन शौ दीर्घे रूपम्। प्रशस्ता वागस्त्यस्येत्यर्थे **'वाचो ग्मिनिः'** ( ५-२-१२४ ) इति ग्मिनिप्रत्ययेऽन्तर्वर्तिनीं विभक्तिमाश्रित्य 'स्वादिषु' इति वा पदत्वे चस्य कुत्वे जश्त्वे च 'वाग्मिन्' इति गकारद्वयघटित एव शब्दः साधुः। एवमेव पत्त्रम्, छात्त्रः, उद्द्योतः, छत्त्रम्, इत्येव शब्दाः साधवः। ततः सौ तस्य लुकि नलोपे च **'वाग्मि'** इति रूपम्। दण्डिवद्रूपाणि।

बहवो वृत्रहणो यस्मिन्नित्यर्थे बहुव्रीहौ प्रातिपदिकत्वात् सुपो लुकि ततः स्वमोर्लुकि नलोपे **'बहुवृत्रह'** इति। औङः शीभावे भत्वे 'विभाषा ङिश्योः' इति वैकल्पिकालोपे 'हो हन्तेः' इति नियमाण्णत्वाभावः। अलोपाभावे णत्वे **'बहुवृत्रहणी'** इति। **बहुवृत्रहाणीति—**जश्शसोः शिभावे सर्वनामस्थानत्वाद् 'इन्हन्' इत्युपधादीर्घे 'एकाजुत्तरपदे णः' इति तस्य णत्वे रूपम्।

बहवः पूषणः सूर्या यस्मिन् स्थाने तत् 'बहुपूषन्' इति बहुव्रीहौ प्रातिपदिकत्वात् स्वमोर्लुकि नलोपे 'बहुपूष' औङः शीभावे वैकल्पिकालोपे 'इन्हन्' इत्युपधादीर्घे 'अट्कुप्वाङ्' इति णत्वे **'बहुपूषाणि' इति।** अजादौ टादौ भत्वेऽलोपे णत्वे च रूपाणि। हलादौ पदत्वेन नलोपे रूपाणि।

अर्य्यः = श्रेष्ठः स्वामी वा मीयते मन्यते जनैर्यः सोऽर्यमा। अर्य्यपूर्वकान्माधातोः 'श्वन्नुक्षन्' ( उ० १ पा० १५९ सू० ) इति कनिन्प्रत्यये ककारेकारयोरित्वे लोपे 'आतो लोपः' इत्यालोपे 'अर्यमन्' इतिशब्दः। 'सूरसूर्यार्यमादित्य' इत्यमरः। **'अर्यमापितृदेवते तरणौ सूर्यभक्तायाम्'** इति टिप्पनी पितॄणां राजा। बहवोऽर्यमणो यस्मिन्नित्यर्थे बहुव्रीहौ प्रातिपदिकत्वात् समासघटकविभक्तेर्लुकि ततः स्वमोर्लुकि नलोपे' **बह्वर्यम** इति रूपम्। औङः शीभावे 'विभाषा ङिश्योः'

असृजः पदान्ते कुत्वम्, सृजेः क्विनो विधानात्। विश्वसृडादौ तु न, 'सृजिदृशोः-' इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्। यद्वा 'व्रश्च' आदिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः। स्रगृत्विक्छब्दयोस्तु निपातनादेव कुत्वम्। असृक्छब्दस्तु अस्यतेरौणादिके ऋच्प्रत्यये

---

इति विकल्पेनाल्लोपे 'अट्कुपु' इति णत्वे रूपे। जश्शसोः शीभावे 'इन्हन्' इत्युपधादीर्घे 'बह्वर्यमाणि' इति रूपे। इति नान्ताः।

झय्प्रत्याहारान्तान् विहाय जान्तानाह—न सृज्यते = संसृज्यते इतराङ्गवत्सहजत्वादित्यर्थे नञ्पूर्वकात्सृजेः क्विपि 'असृज्' इति 'सम्पदादित्वात् क्विप्' इति तु न युक्तम्, तत्र 'स्त्रियाम्' इत्यधिकारात्। अस्यते=क्षिप्यते इतस्ततो नाडीभिरित्यर्थे वा अस्यतेर्बाहुलकाद् ऋजि प्रत्यये 'असृज्' इति।

'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' ( अ० २ का ६ व ) इत्यमरः।

**असृजः पदान्ते कुत्वमिति**—'क्विन्प्रत्ययस्य कुः' इत्यस्यासिद्धत्वात् 'चोः कुः' इति प्राप्ते कुत्वमपवादत्वाद् बाधित्वा 'व्रश्चभ्रस्ज' इति षत्वे तस्य जश्त्वेन डकारे तस्य कुत्वेन गकारः। तस्य वैकल्पिकचर्त्वे '**असृक्, असृग्**' इति तस्य 'क्विन्प्रत्ययस्य' इति अघोषश्वासविवारमहाप्राणरूपप्रयत्नसाम्यात् कुत्वेन खकारः। न च षत्वं निरवकाशत्वात्कुत्वापवादः, सृष्टम्, इष्टम्-इत्यादावपदान्ते कुत्वाप्राप्त्या षत्वस्य चारितार्थ्यात्। ननु क्विन्प्रत्ययान्तत्वाभावात् 'क्विन्प्रत्ययस्य' इत्यस्याप्राप्तिरत आह—**सृजेः क्विनो विधानादिति**—'क्विन्प्रत्ययस्य' इत्यत्र प्रत्ययग्रहणसामर्थ्यादतद्गुणबहुव्रीहिणा क्विन्प्रत्ययो यस्मात्कचिद् दृष्टस्तस्य क्विनोऽभावेऽपि कुत्वं भवतीत्यर्थात् क्विबन्तेऽपि कुत्वं निर्बाधमेवेति भावः।

तदुक्तं भाष्ये-'येभ्यः क्विन् विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्। 'मानोऽस्राक्, मानोऽद्राक्' इति। न चैवम् विश्वसृडादौ क्विबन्तेऽपि षत्वापत्तिरिति वाच्यम् 'सृजिदृशोर्झल्यमकिति' इति सूत्रे '**रज्जुसृड्भ्याम्**' इति भाष्यप्रयोगेण 'नञितरपूर्वपदे कुत्वं न' इति ज्ञापनात्। तेन काम्यच् सूत्रे 'उपयट्काम्यति' इति भाष्यप्रयोगोऽपि संगच्छते।

वस्तुतस्तु उक्तभाष्यप्रयोगेण पूर्वोत्तरसाहचर्येण च 'सृजियज्योः पदान्तेऽपि षत्वं भवति' इति वाक्यं कल्प्यते। एवञ्च पदान्ते षत्वं निरवकाशत्वात् **कुत्वापवाद इति** सिद्धम्। स्रक् ऋत्विक्शब्दयोस्तु न पदान्ते षत्वम्, 'ऋत्विक्' सूत्रे कृतकुत्वनिर्देशात्। तदाह—**यद्वेति**। 'व्रश्च' इति सूत्रेण झलि परतः कुत्वं विधीयते पदान्ते च। तत्र प्रमाणम्-रज्जुसृड्भ्याम्, उपयट्काम्यति इति भाष्यप्रयोगं पूर्वोत्तरसाहचर्यञ्च। सूत्रे सृजिमृजिभ्यां पूर्वोत्तरं पठितयोर्धात्वोर्झलि पदान्ते च षत्वस्य निर्बाधतया तत्साहचर्यात् सृजियज्योरप्युभयत्र षत्वं लभ्यते। इति सृजियज्योः पदान्ते षत्वस्य निरवकाशतया कुत्वापवादत्वम्। तच्च निरवकाशत्वात् कुत्वं बाधते। न त्वेवं सति 'स्रक्' 'ऋत्विक्' इत्यत्रापि षत्वं स्यादत आह **स्रगृत्विक्छब्दयोस्त्विति**। **निपातनादिति** = सूत्रे स्रक् ऋत्विगिति निर्देशात् तत्र निपातनसिद्धं कुत्वं षत्वापवादः।

ननूक्तनिर्देशात् षत्वापवादभूतं कुत्वं निपात्यते यदि तदा स्रष्टा, यष्टा, इत्यादावपि कुत्वापत्तिरिति चेन्न, निपातनसिद्धकुत्वस्य पदान्तषत्वापवादतया 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन पदान्ते एव प्रवृत्तेः। किञ्च निपातनेन हि षत्वं बाध्यते, तच्च अविद्यमानक्विन्नादिप्रत्ययसन्निधाने एवेत्यदोषात्। नन्वेवमपि असृक्छब्देऽपि कुत्वापवादः षत्वं स्यादत आह—**असृक्छब्दस्त्विति**—अस्यतेरौणादिके ऋजिप्रत्यये निष्पन्नोऽसृक्छब्द इति सृजधातोरभावेन षत्वाप्राप्तेः 'चोः कुः' इति कुत्वम्। एतच्च क्षीरस्वामिग्रन्थे स्पष्टम्। यद्यपि अत्र पक्षे 'असृज्' इति प्रत्ययस्वरेण मध्योदात्तः, नञ्पूर्वकात्सृजेर्निष्पन्नस्तु 'तत्पुरुषे तुल्यार्थे' इत्यनेन पूर्वपदप्रकृतिस्वर इति भेदस्तथाऽपि लोके

बोध्यः। असृक्, असृग्, असृजी, असृञ्जि। 'पद्दन्–' इति वा असन्, असानि। असृजा, अस्ना। असृग्भ्याम्, असभ्यामित्यादि। ऊर्क्, ऊर्ग्, ऊर्जी, ऊर्न्जि,। नरजानां संयोगः। 'बहूर्जि नुम्प्रतिषेधः, 'अन्त्यात्पूर्वो वा नुम्, बहूर्जि, बहूर्ञ्जि वा कुलानि ॥ इति जान्ताः ॥ त्यत्, त्यद्, त्ये, त्यानि। तत्, तद्, ते, तानि। यत्, यद्, ये, यानि। एतत्, एतद्, एते, एतानि।

---

स्वरस्यानादरात्, वेदे बहुलग्रहणेन दृष्टानुविधित्वाददोषः। वस्तुतस्तु नञितरोपपदकस्यैव सृजेः षत्वम्। नञ्पूर्वके तु कुत्वमेवेत्यदोषः। **असृञ्जीति**—असृजः परयोर्जश्शसोः शिभावे झलन्तत्वान्नुमि नस्य 'नश्चापदान्तस्य' इत्यनुस्वारे 'अनुस्वारस्य ययि' इति परसवर्णे ञकारे रूपम्। शसादौ 'पद्दन्ः' इति वैकल्पिके असृजः स्थाने 'आसन्' इत्यादेशे शौ नान्तलक्षणोपधादीर्घे **'असानि'** इति। अजादौ टादौ 'अल्लोपोऽनः' इत्यलोपः। ङौ तु 'विभाषा ङिश्योः' इति वैकल्पिकालोपे **'आस्नि', 'आसनि'** इति रूपम्। हलादौ टादौ नलोपः 'असभ्याम्' इत्यादि रूपम्।

'ऊर्ज बलप्राणनयोः' इत्यतः क्विपि स्वमोर्लुकि 'चोः कुः' इति जस्य गकारे वैकल्पिकचर्त्वे **'ऊर्क्', ऊर्ग्'** इति वा। बलवत्, जीवकम्, वा।

**'ऊर्न्जि' इति**—जश्शसोः शिभावे झलन्तत्वादुकाररूपादचः परे नुमि रूपम्। तदाह—**नरजानामिति**। अचः परो यो झल् तदन्तस्य नुम् इत्यर्थे तु 'ऊर्जि' इत्येव रूपम्।

बहव ऊर्जो बलवन्तो येषु कालेषु इत्यर्थे बहुव्रीहौ जश्शसोः झलन्तस्य नुमित्यर्थे नुमि प्राप्ते आह—

**'बहूर्जि नुम्प्रतिषेधः'** इति। तथा च **'बहूर्जि'** इत्येव। **अन्त्यात्पूर्वो वा नुम्** तथाच **'बहूरन्जि'** इति स्थितौ नस्यानुस्वारपरसवर्णयोः 'बहूर्ञ्जि' इति। नुमोऽभावे **'बहूर्जि'** इति। **'बहूर्जि नुम्प्रतिषेधः'** इति वार्तिकं भाष्यकृता प्रत्याख्यातम्—तथा हि—"बहूर्जि स तर्हि प्रतिषेधो वक्तव्यः? न वक्तव्यः। अच उत्तरो यो झल् तदन्तस्य नपुंसकस्य नुमा भवितव्यम्। यश्चात्र अचः परो नासौ झल्। नापि तदन्तं नपुंसकम्, यदन्तं च नपुंसकं नासावचः परः' इति। तथा च **'बहूर्जि'** इत्यत्र अचः परो यो झल् तदन्तत्वाभावान्नुम् न स्यादिति **वार्त्तिकं न कर्तव्यम्**।

पुनरपि भाष्यकृतोक्तम्—इहापि तर्हि न प्राप्नोति। **'काष्ठतक्षि'** इति। अत्र अचः परो यो झल् न तदन्तं नपुंसकं यदन्तञ्च नपुंसकं नासावच उत्तरः। नैतदस्ति झल्जातिः प्रतिनिर्दिश्यते। **अच** उत्तरा झल्जातिरिजि'। एतदनन्तरमुक्तं यदि 'नपुंसकस्य झलचः'। इत्यत्र 'यदि अचः' **इति** पञ्चमी। 'कुण्डानि, वनानि' इह न प्राप्नोति। एवं तर्हि इकोऽचि विभक्तावित्यत्र अचः सर्वनाम-स्थाने इत्येतदनुवर्तयिष्यते। सर्वनामस्थान इत्येषा सप्तमी 'अचः' इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्येति' इति।

अयम्भावः—'नपुंसकस्य झलचः' इति सूत्रम् **'इकोऽचि विभक्तौ'** इत्यत्रानुवर्तनीयम्। **'सप्तमी** स्वस्मात्पूर्वां षष्ठीं प्रकल्पयति' इति 'अचः' इति पञ्चम्यन्तं षष्ठ्यन्तं स्यात्। तथा च अजन्तस्य नपुंसकस्य नुम् स्यात् सर्वनामस्थाने परे इत्यर्थेन अजन्तेष्वपि 'कुण्डानि, वनानि' इत्यादिषु नुम् सिध्यतीति 'बहूर्जि नुम्प्रतिषेधः' इति वार्तिकं न कर्तव्यमिति। एतत्सर्वं भाष्ये द्रष्टव्यम्।

एवं सति **'नरजानां संयोगः'** इति मूलं भाष्यविरुद्धम्। वस्तुतस्तु 'अन्त्यात्पूर्वं नुमित्येके' इति वार्तिकानुसारेण 'नरजानां संयोगः' इति मूलं लेखकप्रमादाद् भ्रष्टम् इति विभाति। **इति जान्ताः**। अप्रसिद्धान् वगडान्तानपहाय दान्तानाह—

त्यद् तद् यद् एतद्। एषां स्वमोर्लुकि 'न लुमता' इति निषेधात् प्रत्ययलक्षणाभावेन त्यदाद्यत्वम् 'तदोः सः' इति सत्वञ्च न भवति। शेषविभक्तौ च त्यदाद्यत्वे सर्वशब्दव-द्रूपाणि बोध्यानि।

अन्वादेशे तु एनत् । बेभिद्यतेः क्विप् । बेभित्, बेभिद्, बेभिदी । शावल्लोपस्य स्थानिवत्त्वा-दझलन्तत्वान्न नुम् । अजन्तलक्षणस्तु नुम् न, स्वविधौ स्थानिवत्त्वाभावात् । बेभिदि ब्राह्मण-कुलानि । चेच्छिदि ॥ इति दान्ताः ॥

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥
स्वमुसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥

---

अन्वादेशे त्विति—द्वितीयैकवचने इति शेषः, । 'अन्वादेशे नपुंसके एनद्वक्तव्यः' इति वार्त्तिकेनैनद्विधानात् । प्रथमैकवचने तु 'एतद्' इत्येव । न च अमो लुका लुप्तत्वेन द्वितीयैकवचन-परत्वाभावादेनदादेशो न स्यादिति वाच्यम्, एनदादेशविधानसामर्थ्येन एनदादेशे कर्तव्ये न लुमतेति निषेधाप्रवृत्तेः ।

यङन्ताद्भिद्धातोः क्विपि विशेषमाह—बेभिद्यतेरिति—धातुनिर्देशे श्तिवन्तप्रयोगः । भेत्तु-मिच्छति यत्कुलमित्यर्थे सन्प्रत्यये 'सन्यङोः' इति धातोर्द्वित्वे हलादिशेषे 'अभ्यासे चर्च' इत्यभ्यासभ-कारस्य जश्त्वेन बकारे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'बेभिद्य' इति स्थितौ 'सनाद्यन्ताः' इति धातुत्वात् क्विपि तस्येत्त्वलोपयोः 'अतो लोपः' इत्यलोपे 'यस्य हलः' इति यलोपे 'बेभिद्' ततः स्वमोर्लुकि वैकल्पिकचर्त्वेन 'बेभित्' 'बेभिद्' इति । अत्र जश्त्वं तु न, माठरपरिवेषणन्यायेन जश्भिन्न-स्यैव झलो जश्विधानात् । औङः शीभावे 'बेभिदी' इति । जश्शसोः शिभावे झलन्तलक्षणनुमि प्राप्ते आह—शाविति— 'अचः परस्मिन्' सूत्रेण स्थानिवत्त्वादित्यर्थः । ननु स्थानिभूतादचोऽव्यवहित-पूर्वस्यैव कार्य्ये स्थानिवत्त्वं स्यात् । प्रकृते च स्थानिभूतादचोऽव्यवहितपूर्वो दकार एव, न च तस्य कार्य्यम् । यस्येकारस्य नुम् रूपं कार्य्यम् स च नाव्यवहितपूर्व इति नुमोऽप्राप्तिरिति वाच्यम्, 'अचः परस्मिन्' इत्यत्र 'न पदान्त' सूत्रे स्वरविधौ निषेधसामर्थ्याद् व्यवहिताव्यवहितसाधारणस्य पूर्वत्वस्य ग्रहणात् ।

न च 'क्वौ लुप्तं न स्थानिवत्' इति स्थानिवत्त्वनिषेधः, तस्यासत्त्वादनित्यत्वाच्च, तदुक्तं न पदान्तसूत्रे भाष्ये 'नैवं विज्ञायते क्वौ लुप्तं न स्थानिवत्' इति । कथं तर्हि ? 'क्वौ विधिं प्रति न स्थानि-वदिति' इति । ननु झलन्तलक्षणनुमोऽभावेऽपि स्थानिभूतमचमादायादन्तनिमित्तको नुम् स्यादित्या-शङ्कायामाह—अजन्तलक्षणस्त्विति नुम् नेति—स्वविधौ = स्थानिभूताज्निमित्तके विधौ स्थानिवत्त्वनि-षेधादित्यर्थः । मित्त्वादन्त्यादचः प्रवर्तमानो नुम् स्थानिभूताज्निमित्तक एवेति स्वविधित्वमक्षतम् । यद्यपि 'अचः परस्मिन्नपरविधौ' इति वार्तिककृन्मते स्वविधौ स्थानिवत्त्वं प्राप्नोति । तथापि भाष्यकृता स न्यासः खण्डितः 'तर्त्हि वक्तव्य मपरविधाविति । न वक्तव्यम् पूर्वविधावित्येव सिद्धम्' इति । न च पञ्चमीसमासेन स्वविधावपि स्थानिवत्त्वं प्राप्नोतीति वाच्यम् 'भवतेरः' इति निर्देशानुपपत्त्या पञ्चमीसमासस्यानित्यत्वात् । अन्यथा भवतीत्यत्रोवङापत्तिः । इति दान्ताः । ख-फ-छ-ठ-थान्तानु-पेक्ष्य चान्तानाह—

'जायन्ते नव सौ तथाऽमि च नव भ्यांभिसभ्यसां सङ्गमे,
षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्य्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तद्,
जानन्तु प्रतिमाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥

अत्र 'षाण्मासिकः' इत्यपपाठः 'अत इनिठनौ' इतीनि षण्मासिक इत्यस्यैवौचित्यात् ।

तथा हि गामञ्चतीति विग्रहे 'ऋत्विग्–' आदिना क्विन्। गतौ नलोपः। 'अवङ् स्फोटायनस्य' इत्यवङ्। गवाक्, गवाग्,। 'सर्वत्र विभाषा–' इति प्रकृतिभावे—**गोअक् गोअग्**। पूर्वरूपे-गोऽक्, गोऽग्। पूजायाम्—नस्य कुत्वेन, ङः, **गवाङ्, गोऽङ्, गोअङ्**,। अम्यप्येतान्येव नव।

---

इति प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह—**गवाक्शब्दस्येति**—ननु 'गवाक शब्दस्य' इति वाक्यघटके गवाक् इत्यंशे नलोपोऽनुपपन्नो गता-र्चार्थाश्च तस्य सत्त्वेन नलोपानुपपत्तेरिति चेन्न, 'गवाक्' इत्यस्य स्वरूपबोधकत्वेन नलोपप्रवृत्तौ बाधकाभावात्। अर्चागतिभेदत इति आद्यादित्वात्तृतीयान्तात् तसिः, भेदतः=भेदेनेत्यर्थः। अञ्चे गत्यर्थे 'अनिदिताम्' इति नलोपः, अर्चायान्तु 'नाञ्चेः पूजायाम्' इति निषेधान्नलोपाभाव इत्येवं गति-पूजार्थनिमित्तककार्य्यभेदेनेति यावत्। **असन्धिपदेन** प्रकृतिभावो विवक्षितः। पूर्वरूपैरित्यनन्तरं चशब्दोऽध्याहार्य्यः। तथा च अर्चागतिभेदतः, असन्ध्यवङ्पूर्वरूपैश्च हेतुभिरित्यर्थः।

**रूपाणि नवाधिकशतमिति**—नव अधिका यस्मिन् तन्नवाधिकम् नवाधिकं च तत् शतम् नवाधिकशतम्। **नवेति**—'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते' इति न्यायेन 'स्वम्सुप्सु' इति द्वन्द्वस्यान्ते श्रूयमाणत्वात्प्रत्येकमभिसंबध्यते।

**सौ नव, अमि नव, सुपि नव** रूपाणीत्येवं सम्बन्धः। न च 'नव' इत्यस्य द्वन्द्वचरमा-वयवत्वाभावात् कथं प्रत्येकं संबन्ध इति वाच्यम्, व्युत्पत्तौ अन्तशब्दस्य समीपवाचित्वाद् द्वन्द्वसमीपे इत्यर्थात्। सामीप्यञ्च पूर्वत्वेन परत्वेन वा, विनिगमनाविरहात्। प्रकृते उत्तरत्वेन द्वन्द्वोत्तरं नवशब्दस्य सत्त्वात् 'अधिशीङ्स्थासाम्' इत्यादौ पूर्वत्वेनेति अधिशब्दस्य प्रत्येकं संबन्धः। अत्र व्युत्पत्तौ मानञ्च—एकधर्मावच्छिन्नस्य एकसम्बन्धेन एकधर्मावच्छिन्नेऽन्वयित्वरूपसाहित्ये द्वन्द्व-विधानमेव। तथा च द्वन्द्वघटकस्वादीनां नवपदार्थान्वये द्वन्द्व एव नोपपद्येत।

नन्वत्र शतपदं यदि संख्यापरं तदा रूपाणां निष्ठत्वसंबन्धेन शतेऽन्वयात् **'रूपाणां शतम्'** इति स्यात्। संख्येयपरत्वे शतत्वसंख्याविशिष्टस्याभेदेन रूपेऽन्वये 'विंशत्याद्याः सदैकत्वे' इति कोशात् 'नवाधिकशतं रूपाणि' इत्यस्य साधुत्वेऽपि मतपदार्थस्य ज्ञानविषयस्याभेदेनानन्वयात् **'मतानि'** इति भवितव्यमिति चेन्न, इति पदमध्याहृत्य नवाधिकशतं रूपाणि भवन्ति इति मतं संमतमित्यर्थेन संख्येयपरत्वेऽप्यदोषात्। **'षट्के'** इति—षडेव षट्कम्। स्वार्थे कः—षट्त्वसंख्याविशिष्टे इत्यर्थः। नच षट्शब्दस्य नित्यबहुवचनान्ततया बहुवचनान्तेन भाव्यम्, "क्वचित्स्वार्थिकाः प्रकृतितो लिङ्ग-वचनान्यतिवर्त्तन्ते' इति परिभाषयैकवचनस्यापि साधुत्वात्। अतः **'कुटीरः'**=ह्रस्वा कुटी। 'अप्-कल्पम्' इत्यादि संगच्छते। **त्रीणि जस्शसोरिति**—जसि शसि च प्रत्येकं त्रीणि रूपाणीत्यर्थः। **शेषे दशके** इति—औङि, औङि, टायाम्, ङयि, ङसौ, ङसि, ओसि, आमि, ङौ, औसि चेत्यर्थः प्रत्येकं चत्वारि।

स्वम्सुप्सु प्रत्येकं नव रूपाणि दर्शयति—**तथा हीति**—**गामञ्चति**—गच्छति, पूजयति वेत्यर्थे अञ्चतेः सुप्युपपदे 'ऋत्विक्' इति क्विनि उपपदसमासे सुब्लुकि 'गो अन्च्' इति स्थितौ आह—**गतौ नलोप** इति—'अनिदिताम्' इति शेषः। **गवागिति**—गो अच् स्, गो अच् अम्' स्थितौ स्वमोर्लुकि 'सुडनपुंसकस्य' इति पर्य्युदासेन नपुंसकभिन्नप्रकृतिकस्य सुट एव सर्वनाम-स्थानसंज्ञाविधानेन नपुंसके सर्वनामस्थानत्वाभावेन लुका लुप्तत्वेन च सर्वनामस्थानपरत्वाभावात् 'उगिदचाम्' इति नुमभावे समासान्तर्वर्त्तिनीं विभक्तिमाश्रित्य 'गो' इत्यस्य 'सुप्तिङन्तम्' पदत्वे 'अवङ् स्फोटायनस्य' इति वैकल्पिकेऽवङादेशे सवर्णदीर्घे चस्य कुत्वे जश्त्वे वैकल्पिकचर्त्वेन **गवाक्, गवाग्**, इति। **पूर्वरूपे इति**—अवङः प्रकृतिभावस्य चाभावे 'एङः' इति पूर्वरूपे इत्यर्थः। **कुत्वेनेति**—'क्विन्प्रत्ययस्य' इति विहितकुत्वेनेत्यर्थः। **अम्यपीति**—अमो लुका लुप्तत्वात्साविव नव

औङः शी, भत्वाद् 'अचः' इत्यल्लोपः। गोची। पूजायां तु गवाञ्ची, गोअञ्ची। गोऽञ्ची। 'जश्शसोः शिः' शेस्सर्वनामस्थानत्वान्नुम्। गवाञ्चि, गोअञ्चि, गोऽञ्चि। गतिपूजनयोस्त्रीण्येव। गोचा, गवाञ्चा, गोअञ्चा, गोऽञ्चा। गवाग्भ्याम्, गोअग्भ्याम्, गोऽग्भ्याम्, गवाङ्भ्याम्, गोअङ्भ्याम्, गोऽङ्भ्याम्, इत्यादि। सुपि तु ञन्तानां पक्षे 'ङ्णोः कुक्-' इति कुक्। गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु गवाङ्षु, गोअङ्षु, गोङ्षु, गवाक्षु, गोअक्षु, गाऽक्षु। न चेह 'चयो द्वितीयाः—' इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम्, चर्त्वस्यासिद्धत्वात्। कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे चयो द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव।

ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात्।
रूपाण्यश्वाक्षिभूतानि ५२७ भवन्तीति मनीषिभिः॥

---

रूपाणि बोध्यानि। औङि नलोपपक्षे 'अचः' (६-४-१३९) इत्यलोपे 'गोची' इत्येकमेव रूपम्, अच्परत्वाभावेनावङादेरप्राप्तेः।

**पूजायान्त्विति**—नलोपाभावेन 'अचः' इति लोपाप्राप्त्या अवङ्प्रकृतिभावपूर्वरूपैस्त्रीणि रूपाणि। जश्शसोः 'शि सर्वनामस्थानम्' (१।१।४२) इति सर्वनामस्थानत्वाद् भत्वाप्राप्तया अलोपाभावेन गतौ नलोपेऽपि 'नपुंसकस्य झलचः' (७-१-७२) इति नुमि, पूजायां नलोपाभावेन च समानान्येव त्रीणि रूपाणि। एवं टादौ अजादौ गतौ नलोपे 'अचः' इत्यलोपे च 'गोचा' इत्याद्येकमेव रूपम्। पूजायान्तु अकारनकारयोर्लोपाभावेन त्रीणि रूपाणि बोध्यानि। हलादौ भ्यामादौ सुपि भत्वाभावेनालोपाभावाद् गतौ पूजायाञ्च **त्रीणि त्रीणि रूपाणि**।

सप्तमीबहुवचने सुपि गतौ नलोपे अवङ्प्रकृतिभावपूर्वरूपेषु सस्य षत्वे च त्रीणि, पूजायां नलोपाभावेन चस्य संयोगान्तलोपे नस्य कुत्वेन ङकारे 'ङोः कुक्' (८।३।२८) इति कुकि **गवाङ्क्षु** इत्यादीनि त्रीणि, कुकोऽभावे **'गवाङ्षु'** इत्यादीनि त्रीणि। इत्येवं नव रूपाणि।

**चयो द्वितीयेति**—ककारघटितेषु। **कस्येति**—**'गवाच् सु'** इत्याद्यवस्थायां जश्त्वदृष्टया क्विन्प्रत्ययस्य इत्यस्यासिद्धतया चस्य **जश्त्वेन जकारे**—'चोः कुः' इति कुत्वेन **ककारे तस्य** जश्त्वेन गकारे तस्य जश्त्वे चर्त्वेन च रूपसिद्धिः 'चयो द्वितीयाः' इति वार्तिकस्य 'नादिन्याक्रोशे' (८-४-४८) इति सूत्रस्थत्वेनैतद्दृष्टया 'खरि च' (८-४-५५) इति चर्त्वस्यासिद्धत्वेन गकारस्य चय्प्रत्याहारे पाठाभावेन द्वितीयादेशाप्राप्तिरिति भावः। तथा च 'गवाख्षु, गोअख्षु, गोऽख्षु' इति त्रीणि रूपाणि न भवन्त्येव। **तस्यासिद्धत्वादिति**—कुकोऽसिद्धत्वादित्यर्थः। **त्रीणि रूपाणीति**—गवाङ्ख्षु गोअङ्ख्षु, गोऽङ्ख्षु इति त्रीणि रूपाणि वर्द्धन्त एवेत्यर्थः।

**एवञ्च** सुपि त्रयाणां रूपाणामाधिक्याद् द्वादशाधिकशतं रूपाणि। **न च नवाधिकशतमिति** मूलविरोधः, वार्तिकरीत्याऽऽधिक्येऽपि सूत्रकाराभिमतपक्षे नवाधिकशतस्यैव सत्त्वेन तदुक्तौ विरोधाभावात्। **ऊह्यमिति**—अस्य 'इति' इतिवाक्यार्थं कर्म-**अश्वाक्षिभूतानि रूपाणि भवन्तीत्यूह्य**मित्यर्थः। **एषामिति**—पूर्वोक्तानां द्वादशाधिकशतसंख्याकरूपाणाम्। अस्य रूपाणीत्यनेनान्वयः। तथा च द्विर्वचनानुनासिकविकल्पनाद्धेतोरेषामश्वाक्षिभूतादिरूपाणि भवन्तीति मनीषिभिरूह्यमित्यन्वयः। अत्र **'सप्ताश्वा** हरितः सूर्यस्य' इति दर्शनात् **'सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः'** इत्युक्तेः **अश्वपदं** सूर्याश्ववृत्तिसप्तत्वसंख्यायाम्, **अक्षिपदं** मनुष्यादेर्नेत्रद्वयस्य **प्रसिद्धेः** लक्षितद्वित्वलक्षणया विंशतिसंख्यायाम्, **भूतपदं** पृथिव्यादिपञ्चभूतस्य प्रसिद्धया लक्षितपञ्चत्वलक्षणया पञ्चशतसंख्यायां लाक्षणिकम्। **'अश्वाक्षिभूतानि'**—इति समासे भूतशब्दस्य पञ्चशतपरत्वम्, अक्षिशब्दस्य विंशतिपरत्वं बोध्यम्, अन्यथा भूतादेः पञ्चद्विसप्तसंख्यार्थकत्वे चतुर्दश संख्यात्वस्यैवापत्तेः।

एवञ्च 'अङ्कानां वामतो गतिः' इति नियमात्, रूपैरभेदान्वयासम्भवाच्चोक्तसंख्याया अपि संख्येयपरत्वेन ५२७ सप्तविंशत्यधिकपञ्चशती रूपाणि भवन्ति। तथा हि—सौ मूलोक्तानां नवानां रूपाणाम् 'अनचि च' इत्यत्र 'च' इति विभक्तयोगेन 'अचः परस्य यरो द्वे वा स्तः' इत्यर्थकेन अन्त्यवर्णस्य द्वित्वे तदभावे च १८ अष्टादश रूपाणि। प्रथमाद्विवचने पूजार्थानां त्रयाणाम् 'च' इति विभक्तसूत्रेण चकारस्य द्वित्वे तदभावे च षड्रूपाणि। अन्त्यस्याचः 'अणोऽप्रगृह्यस्य' (८-४-५७) इत्यनुनासिकत्वं तु न, 'इदूदेद्द्विवचनम्' (१।१।११) इति प्रगृह्यत्वेन 'अप्रगृह्यस्य' इति निषेधात्। गतौ त्वेकमेवेति ७ सप्तरूपाणि। जसि तु मूलोक्तानां गतौ पूजायाञ्च समानानुपूर्वीकत्वेन त्रयाणामेव 'च' इति अस्य द्वित्वे तदभावे च षड्रूपाणि, अन्त्यस्याणः 'अणोऽप्रगृह्यस्य' इत्यनुनासिकत्वे तदभावे च द्वादश। एवञ्च प्रथमायां संकलनया २७ सप्तविंशती रूपाणि। एवं द्वितीयायामपि २७ सप्तविंशतिरेव। टायान्तु मूलोक्तानां चतुर्णां मध्ये पूजायां त्रयाणां नकारस्य द्वित्वे तदभावे च षट्, गतौ त्वेकमिति ७ सप्त रूपाणि। एषां सप्तानामप्यन्त्यस्याकारस्यानुनासिकादेशे तदभावे च चतुर्दश रूपाणि।

तृतीयाद्विवचने भ्यामि गतौ गकारघटितानां त्रयाणां गकारस्य 'च' इति द्वित्वे तदभावे च षट्, पूजायां ङकारघटितानां त्रयाणां ङकारस्य द्वित्वे तदभावे च षट् इति संकलनया १२ द्वादश। द्वादशसु अकाररूपान्मयः परस्य यकाररूपस्य यणो द्वित्वे तदभावे च चतुर्विंशती रूपाणि। तेषु सर्वेषु 'च' इति मकारस्य द्वित्वे तदभावे च ४८ अष्टाचत्वारिंशद्रूपाणि।

भिसि गतौ गकारघटितानां त्रयाणां गकारस्य 'च' इति द्वित्वे तदभावे च षट्, पूजायां त्रिषु ङकारस्य द्वित्वे तदभावे च षट्, संकलनया १२ द्वादश। तेषु सर्वेषु विसर्गस्य भाष्ये 'अट्सु शर्षु चोपसंख्यानात्' यत्वेन 'च' इति द्वित्वे तदभावे च २४ चतुर्विंशती रूपाणि। संकलनया तृतीयायां ८६ षडशीती रूपाणि।

चतुर्थ्येकवचने टायामिव पूजायां त्रयाणां अकारस्य द्वित्वे तदभावे च षड्रूपाणि, गतौ त्वेकमेवेति ७ सप्त, अन्त्यस्यैकारस्याणत्वाभावेन नानुनासिकत्वम्, 'अणुदित्' इति सूत्रं विहाय सर्वत्र पूर्वेणैव णकारेणाण्प्रत्याहारस्य ग्रहणात् तत्र चैकारस्य पाठाभावात्।

भ्यामि पूर्ववदष्टाचत्वारिंशद्रूपाणि। भ्यसि भ्यामीव मकारस्य द्वित्वाभावेऽपि तत्स्थलीयविसर्गस्य यत्वेन 'च' इति द्वित्वे तदभावे च ४८ अष्टाचत्वारिंशद्रूपाणि। संकलनया चतुर्थ्याम् १०३ त्र्यधिकं शतं रूपाणि।

पञ्चम्येकवचने पूजायां अकारद्वित्वे तदभावे च मूलोक्तानां त्रयाणां षड्रूपाणि। गतौ तु मूलोक्तमेकमेवेति सप्त। सप्तसु 'च' इति विसर्गस्य यत्वेन द्वित्वे तदभावे च १४ चतुर्दशरूपाणि। भ्यामि भ्यसि च पूर्ववत्प्रत्येकमष्टाचत्वारिंशत्। एवञ्च पञ्चम्यां संकलनया दशाधिकशतं ११० रूपाणि। षष्ठ्येकवचने ङसिवत् पूजायां षट्, गतावेकम् इति सप्त, सप्तसु विसर्गद्वित्वे तदभावे च १४ चतुर्दश रूपाणि। ओस्यपि ङसौ। १४ चतुर्दश। आमि तु पूजार्थानां त्रयाणां अकारस्य द्वित्वे तदभावे च षट्, गतावेकमिति सप्त। सप्तसु मकारस्य द्वित्वे तदभावे च १४ चतुर्दश। तथा च संकलनया षष्ठ्यां ४२ द्वाचत्वारिंशद्रूपाणि।

सप्तम्येकवचने ङौ पूजायां त्रयाणां अस्य द्वित्वे तदभावे च षट्, गतावेकमिति सप्त। सप्तसु ङेरिकारस्य 'अणोऽप्रगृह्यस्य' इत्यनुनासिकत्वे तदभावे च १४ चतुर्दश। षष्ठ्या ओसीव सप्तम्या ओस्यपि १४ चतुर्दश। सुपि पूजार्थानां त्रयाणां ङस्य कुकि 'चयो द्वितीयाः' इति कस्य खकारे तदभावे च षट्। कुक्पक्षे खकारघटितानां त्रयाणाम्, ककारघटितानाञ्च त्रयाणां ङस्य द्वित्वे तदभावे च १२ द्वादश रूपाणि। एषां द्वादशानाम् 'अनचि च' (८-४-४७) इति सूत्रस्थेन 'शरः खयः' इति वार्तिकेन 'खयः' इत्यस्य पञ्चम्यन्तत्वपक्षे ककाररूपात् खकाररूपाद्वा खयः परस्य सुपः षस्य द्वित्वे तदभावे च चतुर्विंशती रूपाणि। 'शरोऽचि' इति द्वित्वनिषेधस्तु न, तस्य सौत्रद्वित्वमात्र-

तिर्यक् तिरश्ची, तिर्यञ्चि। पूजायां तु, तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चि ॥ इति चान्ताः ॥यकृत्,

विषयत्वात्। कुकोऽभावे तु ङकारस्य द्वित्वे तदभावे च षट्। तथा च पूजायां कुकि २४ चतुर्विंशतिः। कुगभावे तु षडिति त्रिंशद्रूपाणि। गतौ तु त्रयाणां मूलोक्तानां कस्य द्वित्वे तदभावे च षट्, षण्णामेषाम् 'खयः शरः' इति षद्वित्वे तदभावे च द्वादश। तथा च पूजायां गतौ च सुपि संकलनया ४२ द्विचत्वारिंशद्रूपाणि। अन्त्यस्याणोऽनुनासिकत्वे तदभावे च ८४ चतुरशीती रूपाणि सुपि।

एवञ्चोक्तरीत्या— प्रथमायां ३७ सप्तत्रिंशद्रूपाणि।
द्वितीयायां ३७ सप्तत्रिंशद्रूपाणि।
तृतीयायाम्—८६ षडशीतिः „
चतुर्थ्याम्—१०३ त्र्यधिकं शतम् „
पञ्चम्याम्—११० दशाधिकं शतम् „
षष्ठ्याम्—४२ द्वाचत्वारिंशत् „
सप्तम्याम्—११२ द्वादशाधिकं शतम् „
संकलनया सप्तविंशत्यधिकपञ्चशतानि५२७

यत्तु पूजायां जसि शसि च नुमि अनुस्वारपरसवर्णयोः ञकारद्वयघटिते ञकारस्य द्वित्वे ञकारत्रयघटितानि षट्, द्वित्वाभावे ञकारद्वयघटितानि षट्, इति द्वादश रूपाणि वर्द्धन्त इति तन्न, भाष्यमते अचः परो यो झल् तदन्तस्यैव नुम्विधानेन पूजायां नलोपाभावेनाचः परस्य झलोऽभावात्।
**इति गवाक्शब्दस्य रूपविचारः।**

**तिर्य्यगिति**—तिरोऽञ्चतीति विग्रहे 'ऋत्विग्' इत्यादिना क्विन् 'तिरोऽन्तर्धौ तिर्य्यगर्थे' (अम, ३ का, ४ वर्ग, २५५) इति। 'उपपदमतिङ्' इति समासे समासत्वेन प्रातिपदिकत्वात्सौ 'तिरस् अञ्च्' इति स्थितौ 'अञ्चु गतिपूजनयोः' इत्युक्तया गतौ 'अनिदिताम्' (६-४-२४) इति नलोपे 'तिरस् अच्' इत्यस्मात्सौ लुकि च 'न लुमता' इति प्रत्ययलक्षणविरहात्, नपुंसकत्वेन सर्वनामस्थानत्वाभावाच्च 'उगिदचाम्' (७।१।७०) इति नुमोऽभावे भत्वाभावेन 'अचः' इति लोपाभावे च 'तिरसस्तिरि' इति तिरसस्तिर्य्यादेशः। 'इको यणचि' इति यण् 'क्विन्प्रत्ययस्य कुः' इत्यस्यासिद्धतया 'चोः कुः' इति चस्य कत्वम्, जश्त्वचर्त्वे 'तिर्य्यक्' इति। **तिरश्ची इति**—'तिरस् औ' इति दशायां 'नपुंसकाच्च' इति औङः श्यादेशः, भत्वात् 'अचः' इत्यलोपः, श्चुत्वम् तिरश्ची' इति। 'तिरस् अच्' इत्यतो जसि शसि च 'जश्शसोः शिः' इति श्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानत्वात् भत्वाभावेन 'अचः' इत्यलोपाभावे 'तिरसस्तिरि' इति तिर्य्यादेशे 'नपुंसकस्य 'झलचः' इति नुमि अनुस्वारपरसवर्णयोः 'तिर्य्यञ्चि' इति। प्रथमायां द्वितीयायाञ्च समानं रूपम्।

**पूजायान्तु** 'नाञ्चेः पूजायाम्' इति नलोपाभावे स्वमोर्लुकि भत्वाभावेन 'अचः' इत्यलोपाभावेन तिर्य्यादेशे चस्य 'संयोगान्तस्य' इति लोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य ङकारे 'तिर्य्यङ्' इति। औङि 'तिर्य्यञ्ची' इति। जश्शसोः 'तिर्यञ्ची' इति 'नपुंसकस्य झलचः' इति नुम् तु न, अचः परस्य झलोऽभावात्। टादौ 'तिरश्चा' इत्यादि। पूजायान्तु 'तिर्य्यञ्चा' इत्यादि।

**अथ तकारान्ताः-यकृदिति**—'शकेर्ऋतिन्' (उणादि० ४ पा० ५८ सू०) शरीरधारणे शक्नोतीति शकृत् = विष्ठा।

'मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत्।
पुरीषं गूथवर्चस्कमस्त्रीविष्ठाविशौ स्त्रियौ ॥' नव विष्ठाया नामानि।

बाहुलकाद् यजेरपि ऋतिन् यजतीति **यकृत्**=कालखण्डम् यजेर्जकारस्य कत्वं निपात्यते पृषोदरत्वात्। **"कालखण्डयकृती तु समे इमे'** द्वे दक्षिणकुक्षिगतमांसपिण्डस्य। अत्र स्वमोर्लुक,

यकृती, यकृन्ति। 'पद्दन्–' इति वा यकन्। यकानि। यक्ना, यकृता। शकृत्, शकृती, शकृन्ति, शकानि। शक्ना, शकृता। ददत् ददती।

*वा नपुंसकस्य।* [ ७–१–७९ ]

अभ्यास्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने। ददन्ति, ददति। तुदत्।

---

जश्त्वचर्त्वे **'यकृत्'** इति। औङः श्यां **'यकृती'**। जश्शसोः श्यादेशे 'नपुंसकस्य झलचः' इति नुमि **'यकृन्ति'** इति। शसादौ **'पद्दन्नोमास्'** इति विकल्पेन यकृतो यकन्, शकृतः शकन्नादेशः। शसः श्यादेशे तस्य सर्वनामस्थानत्वेन यकनः शकनश्च 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्तलक्षणोपधादीर्घे **'यकानि; शकानि'** इति। अजादौ टादौ **यकनि, शकनि** च 'अल्लोपोऽनः' इत्यलोपे **'यक्ना, शक्ना'** इत्यादिरूपम्। हलादौ सुपि पदत्वान्नलोपे **यकभ्याम्, शकभ्याम्**, इत्यादि। 'पद्दन्स्' इत्यादेशाभावे **यकृन्ति, शकृन्ति, यकृता, शकृता**, इत्यादि।

**ददिति**—दाधातोर्लटि तस्य 'लटः शतृशानचौ' ( ३–२ १२४ ) शत्रादेशे शपि 'जुहोत्यादिभ्यः श्लुः' ( २–४–७५ ) इति श्लौ ( श्लुशब्देन शपोऽदर्शने ) 'श्लौ' ( ६–१–१० ) इति दाधातोर्द्वित्वे 'ह्रस्वः' ( ७–४–५९ ) इत्यभ्यासस्य ह्रस्वे 'श्नाभ्यस्तयोरातः' ( ६–४–११२ ) इत्याकारलोपे 'ददत्' इति सिद्धम्। कृदन्तत्वेन प्रातिपदिकत्वात् स्वमोर्लुकि च **'ददत्'** इति सावमि च रूपम्। दानकर्तृ कुलमित्यर्थः।

**ददती इति**—औङः श्यादेशे 'सुडनपुंसकस्य' ( १–१–४३ ) इति नपुंसके सुटः सर्वनामस्थानत्वनिषेधात्, 'नाभ्यस्ताच्छतुः' ( ७–१–७८ ) इति निषेधाच्च नुम्न **'ददती'** इति। जश्शसोः शेः सर्वनामस्थानत्वेन झलन्तत्वेन प्राप्तस्य नुमः 'नाभ्यस्तात्' इति नित्यं निषेधे प्राप्ते 'वा नपुंसकस्य' ( ७–१–७९ ) 'नाभ्यस्ताच्छतुः' इति सूत्रं नञ्सहितमनुवर्तते। 'इदितो नुम्' इत्यतो नुमिति, 'उगिदचाम्' इत्यतः 'सर्वनामस्थाने' इति=चानुवर्तते तदाह—**अभ्यस्तादित्यादि**। अत्र 'ददत्' इत्यत्राभ्यस्तात्परस्य शतुः सम्भवादुक्तं **'शता'** इति, शतृप्रत्यय इत्यर्थः। यत्राभ्यस्तात्परः शतृप्रत्ययो नोपलभ्यते तत्रैवाभ्यस्तात्परो यः शतुरवयव इत्यर्थः। अत्र तु न तथा, अभ्यस्तात्परस्य शतुरुपलम्भात्। 'ऋदुशनः' इत्यनङि शतृशब्दस्य सौ 'शता' इति रूपम् 'नपुंसकस्य' इत्यत्र 'अन्त्यादचः' इति सम्बन्धात् षष्ठी। एतेन पञ्चम्यर्थे षष्ठी व्यत्ययादित्युक्तिश्चिन्त्या।

ननु **'वा शौ'** इत्येव सूत्रमस्तु, नपुंसके एव सर्वनामस्थानस्य शेः सम्भवेनार्थत एव तल्लाभसम्भवादिति चेन्न, 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायज्ञापनद्वारा गृह्यमाणस्य शत्रन्ततदादेरेव नपुंसकस्य वा नुम् यथा स्यादेतदर्थं तत्सत्त्वात्। तेन बहवो ददतो येषु कुलेषु तानि **'बहुददति कुलानि'** इत्यत्र मा भूत्, बहूनि ददति येषु ग्रामेषु ते **'बहुददन्तः'** इत्यत्र यथा स्यादेतदर्थं **'नपुंसकस्य'** इत्यस्यावश्यकत्वात्।

तदुक्तं 'स्वमोर्नपुंसकात्' ( ७–१–२३ ) इति सूत्रे भाष्ये-'क्व प्रकृतस्यार्थो विशेष्यते, क्व गृह्यमाणस्येति ? शिशीलुङ्नुम्विधिषु प्रकृतस्यार्थो विशेष्यते, अस्थ्यादिषु गृह्यमाणस्य' इति। प्रकृतस्य प्रकरणप्राप्तस्य 'अङ्गस्य' नपुंसकादङ्गात् परे ये औङादयस्तेषां श्यादय आदेशा इत्यर्थः, गृह्यमाणस्याभावात्। **गृह्यमाणस्येति** 'अस्थिदधि' इत्यत्र गृह्यमाणस्य=श्रूयमाणस्य नपुंसकं यदस्थ्यादि तदन्तस्याङ्गस्येति। तेन 'प्रियदध्ना ब्राह्मणेन' इत्यादि सिध्यति। तथा च नुमि **'ददन्ति'** इति तदभावे **'ददति'** इति।

**तुददिति**—**'तुद व्यथने'** इत्यतः कर्तरि लटि तस्य शत्रादेशे शपोऽपवादत्वात्'तुदादिभ्यः शः' इति शे विकरणे शस्येत्वे 'सार्वधातुकमपित्' इति शस्य ङित्त्वाद्गुणाभावे 'तुद् अ अत्' इति दशायाम् 'अतो गुणे' इति पररूपे तुदच्छब्दात्स्वमोर्लुकि च नपुंसके सुटः सर्वनामस्थानत्वाभावेन

*आच्छीनद्योर्नुम्* । [ ७-१-८० ]

**अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः । तुदन्ती तुदती । तुदन्ति । भात् । भान्ती, भाती, भान्ति । पचत् ।**

*शप्श्यनोर्नित्यम्* । [ ७-१-८१ ]

**शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती ।**

---

लुका लुप्तत्वेन प्रत्ययलक्षणाभावाच्च नुम् न । 'जश्त्वचर्त्वयोः 'तुदत्' इति- व्यथमानम् इत्यर्थः । तुदच्छब्दादौङः श्यादेशे सर्वनामस्थानत्वाभावेन नुमोऽप्राप्तौ आह–

**'आच्छीनद्योर्नुम्'** ( ७-१-८० ) इति । नाभ्यस्तादित्यतः शतुरिति, 'वा नपुंसकस्य' इत्यतो वेति चानुवर्तते ।

उत्तरसूत्रे नित्यग्रहणात् । अत्र वेत्यस्याननुवृत्तावुत्तरसूत्रे नित्यग्रहणस्य वैयर्थ्यमेव स्यात् । न चेह वाग्रहणं मास्तु, उत्तरसूत्रारम्भसामर्थ्यादस्य वैकल्पिकत्वं स्यात् । अस्य नित्यत्वे 'शप्श्यनोर्नित्यम्' इत्यस्य वैयर्थ्यं स्पष्टमेव । इत्युत्तरसूत्रादस्य वैकल्पिकत्वम्, उत्तरसूत्रस्य च नित्यत्वमिति व्यवस्यासम्भवादुत्तरसूत्रे नित्यग्रहणमपि न कार्यमिति वाच्यम्, उत्तरसूत्रस्य वैकल्पिकत्वमस्य च नित्यत्वेनाप्युभयोश्चारितार्थ्येन वैपरीत्यस्यापि सम्भवात् । सामर्थ्येन वैकल्पिकत्वकल्पनापेक्षया वाग्रहणानुवृत्तावेव लाघवात् । सूत्रे **'आत्'** इति पञ्चम्यन्तम् । 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणम्यते आदिति विशेषणमङ्गस्येति विशेष्यम्, तदन्तविधौ **अवर्णान्तादङ्गादित्यर्थः** । 'तुद् अ अत्' इति दशायां पररूपे नुमि च प्राप्ते पररूपस्य वर्णद्वयनिमित्तकत्वेनान्तरङ्गत्वात्' नुमश्च प्रकृतिप्रत्ययोभयनिमित्तकत्वेन बहिरङ्गतया पररूपे अवर्णान्तादङ्गात्परस्य शतुरसम्भवादाह—**अङ्गात्परो यः शतुरवयव** इति शतृपदं शतुरवयवे लाक्षणिकमिति भावः । न च परादिवद्भावेनाङ्गात्परः शता, अकारस्य परादिवद्भावेऽवर्णान्ताङ्गासम्भवात् । न च पूर्वान्तवद्भावेनावर्णाङ्गत्वमपि स्यात् 'उभयत आश्रयणे नान्तादिवदि'ति निषेधात् । **शतुरवयव इति** विशेषणमात्रत्त्या 'अङ्गस्य' इति विशेष्यं तदन्तविधौ शीनद्योः परतः अवर्णान्तादङ्गात्परो यः शत्रवयवस्तस्याङ्गस्य नुम् इत्यर्थः । तदाह—**तदन्तस्याङ्गस्येति** । 'इदितो नुम्' इति नुम्ग्रहणानुवृत्त्यैव सिद्धेऽत्र नुम्ग्रहणं स्पष्टार्थम् । न च पूर्वसूत्रे नुमो वाग्रहणेन सम्बद्धतयाऽत्र नित्यार्थं नुम्ग्रहणमिति वाच्यम्, उत्तरसूत्रे नित्यग्रहणेनात्र वाग्रहणानुवृत्तेरिष्टत्वेन नित्यार्थत्वस्य वक्तुमशक्यत्वात् ।

'शप्श्यनोः' इति सूत्रे वाशब्दसम्बद्धस्य नुमोऽनुवृत्तिस्तु न, नित्यग्रहणसत्त्वेन वाच्यार्थविरोधात्केवलनुम एवानुवृत्तिः स्यादिति नुम्ग्रहणमत्र स्पष्टार्थम् । **तुदन्ती इति—**औङः श्याम् नुमि **'तुदन्ती'** नुमोऽभावे **'तुदती'** इति । जश्शसोः शावादेशे 'नपुंसकस्य झलचः,' इति नित्यो नुम् । **'तुदन्ति'** इति । **भादिति**—'भा दीप्तौ' इत्यतो लटि तस्य शत्रादेशे शपि तस्य 'अदिप्रभृतिभ्यः' लुकि सवर्णदीर्घे **'भात्'** इति । ततः स्वमोर्लुकि च जश्त्वचर्त्वयोः **'भात्'** चर्त्वाभावे **'भाद्'** इति । **भान्ती, भाती** इति 'औङः श्याम्' 'आच्छीनद्योः' इति नुमि तदभावे च रूपम् । **भान्तीति**—जश्शसोः शौ नित्ये नुमि रूपम् । टादौ **भाता, भाद्भ्याम्** इत्यादि । **पचदिति**—लटि तस्य शतरि शपि 'पच् अ अत्' इति दशायाम् 'अतो गुणे' इति पररूपे ततः स्वमोर्लुकि जश्त्वचर्त्वयोः 'पचत्' चर्त्वाभावे 'पचद्' इति । पचत् इत्यत औङि तस्य श्यादेशे 'आच्छी' इति वैकल्पिके नुमि प्राप्ते—

**'शप्श्यनोर्नित्यम्'** ( ७-१-८१ ) इति । अत्र 'आच्छीनद्योर्नुम्' इति सूत्रम्, 'नाभ्यस्तात्' इत्यतः शतुरिति चानुवर्त्तते । तच्च शतुरवयवे लाक्षणिकम्, अन्तरङ्गत्वात्पररूपे जाते पूर्ववदवर्णात्परस्य शतुरसम्भवात् । 'अङ्गस्य' इत्यधिकृतमावर्तते । एकं पञ्चम्या विपरिणम्यते 'आत्' इति पञ्चम्या अनुरोधात् । 'शप्श्यनोः' इति च 'आत्' इत्यस्य सम्बन्धे पष्ठ्यन्तम् । तदाह—**शप्श्यनोरात्परो यः**

पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ इति तान्ताः ॥ स्वप्, स्वब् । स्वपी । नित्यात्प-रादपि नुमः प्राक् 'अप्तृन्–' इति दीर्घः, प्रतिपदोक्तत्वाद् नुम्, स्वाम्पि । 'निरवकाशत्वं प्रतिपदोक्तत्वम्' इति पक्षे तु प्रकृते तद्विरहान्नुमेव स्वाम्प । स्वपा । 'अपो भि ।' स्वद्भ्याम् ।

---

**अवयव** इत्यादि । 'आत्' इति 'भान्ती' इत्यादौ शपो लुकि प्रत्ययलक्षणेन शपः परस्य शतुः सत्त्वेन प्राप्तस्य नित्यनुमोऽभावाय । आदित्युक्तौ तु 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इत्यकारस्य प्रत्ययलक्षण-निषेधान्नुमोऽप्राप्तिः । न च 'न लुमताङ्गस्य' इति निषेधेन शपोऽभावादेव नित्यनुमोऽभावः, प्रत्यासत्त्या लुप्तप्रत्ययनिमित्तकं यदङ्गं तस्य कार्य्ये एव 'न लुमता' इत्यस्य प्रवृत्तेः ।

प्रकृते तु शत्रवयवान्तस्याङ्गस्य कार्य्यं न च तल्लुप्तशप्निमित्तकम् इति न दोषः । नन्वेवमपि 'भान्ती' इत्यत्रावर्णो धातुघटक आकारस्ततः परः शतुरवयवस्तकारस्तदन्ताङ्गस्य सत्त्वेन नित्यनुमापत्ति-रिति चेन्न, प्रत्यासत्त्या शप्श्यनोरवयवस्यैवाकारस्य ग्रहणात् । तदुक्तं मूले **शप्श्यनोरादिति** ।

**पचन्ती इति** औङः श्यादेशे नित्यो नुम् । **पचन्तीति**—जश्शसोः शौ 'नपुंसकस्य झलचः' इति नुमि रूपम् । **दीव्यदिति**—'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इत्यतो लटि शतरि 'दिवादिभ्यः श्यन्' इति श्यनि 'हलि च' इतीको दीर्घे '**दीव्यत्**' इति । ततः स्वमोर्लुकि जश्त्वचर्त्वयोः '**दीव्यत, दीव्यद्**' इति । औङि नित्ये नुमि '**दीव्यन्ती**' इति । **दीव्यन्तीति**—जश्शसोः श्यादेशे झलन्तलक्षणो नित्यो नुम् । **इति तकारान्ताः** । कान्तं विहाय पकारान्तप्रदर्शने ग्रन्थकृत इच्छैव नियामिका ।

**अथ पकारान्ताः** । **स्वबिति**—सु = शोभना आपो यस्मिन् तत् '**स्वप्**' बहुव्रीहिः । '**ऋक्-पूरब्धूः**' ( ५–४–७४ ) इति समासान्तोऽप्रत्ययस्तु न, 'न पूजनात्' ( ४–४–६९ ) इति निषेधात् । इह '**द्व्यन्तरुपसर्गेभ्यः**' इति अपोऽकारस्य ईदादेशो न भवति, सूत्रे 'अप' इति कृतसमासान्त-स्यानुकरणेन समासान्ते सत्येव तत्प्रवृत्तेः । स्वप्शब्दात्स्वमोर्लुकि जश्त्वचर्त्वे च '**स्वप्, स्वब्**' इति । **स्वपी इति**—औङः श्यां रूपम् । जश्शसोः शौ कृताकृतप्रसङ्गित्वेन नित्यत्वात्परत्वाच्च प्राप्तं नुमम् 'अप्शब्दमुच्चार्य्य विहितत्वेन प्रतिपदोक्तत्वाद्दीर्घ एव प्राक् स्यात्ततो नुमि '**स्वाम्पि**' इति । न च प्रतिपदोक्तस्य बलवत्त्वे बीजाभावः, शीघ्रोपस्थितिकत्वरूपान्तरङ्गत्वेनान्तरङ्गपरिभाषयैव तद्बलवत्त्वस्य बोधनात् । अत एव '**ब्राह्मणा आनीयन्तां वशिष्ठश्च**' इत्युक्तौ पूर्वं वशिष्ठसविधे एव गमनम् । शीघ्रो-पस्थितिमूलकं प्रतिपदोक्तस्य बलवत्त्वं पूर्वप्रवृत्तावेव प्रयोजकं न तु बाधकत्वे । तथाऽपि नुमः पूर्वं प्रतिपदोक्तत्वेन दीर्घत्वे नुमि च '**स्वाम्पि**' इत्येव युक्तम् ।

**निरवकाशत्वं प्रतिपदोक्तत्वमिति**—प्रतिपदोक्तत्वेऽपि निरवकाशत्वे सत्येव बलवत्त्वमिति 'उगवादिभ्यो यत्' ( ५–१–२ ) इति भाष्ये ध्वनितम् । तथा हि'—ढञ् च भवति अञः पूर्ववि-प्रतिषेधेन । ढञोऽवकाशः '**छादिषेयं तृणम्**' अञोऽवकाशः '**वाद्ध्रम्, वारत्रम्**' । छदिर्नाम चर्मविकारः तस्मादुभयं प्राप्नोति '**छादिषं चर्म**' ढञ् भवति पूर्वविप्रतिषेधेन इत्युक्तम् । निरवकाशत्वाभावेऽपि प्रतिपदोक्तस्य बलवत्त्वे पूर्वविप्रतिषेधपरं वार्तिकमसङ्गतमेव स्यात् 'छदिरुपधिबलेर्ढञ्' (५–१–१३) इति सूत्रे छदिषः प्रतिपदोक्तत्वेनोपादानात्प्रतिपदोक्तत्वादेव ढञः सिद्धेः ।

'**शेषाद्विभाषा**' ( ५–४–१५४ ) इति सूत्रे भाष्येऽपि '**शेषग्रहणमनर्थकम्** । ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति इत्याशङ्कया' 'अनवकाशा हि बाधका भविष्यन्ति समासान्ताश्च क्वभावे सावकाशाः' इत्युक्तम् । इति भाष्यादपि अनवकाशत्वे एव तस्य बलवत्त्वमुक्तम् । मूले 'अनवकाशत्वे प्रतिपदोक्तत्वम् इत्युभया' 'अनवकाशत्वरूपं प्रतिपदोक्तम्' इति प्रतीयते । तच्चासङ्गतम्, अनवकाश-त्वरूपस्य प्रतिपदोक्तत्वस्य भाष्यकृताऽनुक्तेः, सर्वत्रैवानवकाशस्थले प्रतिपदोक्तत्वापत्तेश्च ।

तथा च 'प्रकृते '**अप्तृन्**' इति दीर्घस्य 'आपः' इत्यत्र नुमोऽविषये चारितार्थ्येन नित्यत्वाद्दीर्घं बाधित्वा नुमि दीर्घाप्राप्त्या '**स्वम्पि**' इत्येवानुस्वारपरसवर्णयोः कृतयो रूपम् ।

स्वदभिः ॥ इति पान्ताः' ॥ 'अर्तिपूवपि' इत्यादिना धनेरुस् । षत्वस्यासिद्धत्वाद्रुत्वम् । धनुः । धनुषी । 'सान्त' इति दीर्घः । 'नुम्विसर्जनीय' इति षत्वम् । धनूंषि । धनुर्भ्याम् । एवं चक्षुर्हविरादयः ।

---

शान्तमुपेक्ष्य षान्तशब्दप्रदर्शनं चिन्त्यम् । **अथ षान्ताः**—धनुश्शब्दव्युत्पादनायाह—**'अर्तिपूवपि'** ( उणा॰ २ पा॰ २८२ सू॰ ) इति । 'जनेरुसिः' ( उणा॰ २ पा॰ २८० ) इत्यत उसिरनुवर्तते । 'अर्तिपॄवपियजितनिधनितपिभ्यो नित्' एभ्य उसिः स च नित् । अरुः, 'व्रणोऽस्त्रिया-मीर्ममरुः क्लीवे' ( अम॰ २ का॰ मनुष्य॰ ५४ श्लो॰ ) । व्रणोऽस्त्रियाम् । ईर्मम्, अरुः क्लीवे । त्रीणि व्रणस्य नामानि । परुर्ग्रन्थिः । 'ग्रन्थिर्ना पर्वपरुषी' ( अम॰ २ का॰ वनौ॰ १६० ) इति । वपुः=शरीरम् 'वपुः क्लीवं तनौ शस्ताकृतावपि' इति मेदिनी । यजुः=यजुर्वेदः । 'एकविंशत्यध्व-युक्तमृग्वेदमृषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताध्वकम् ॥' इति यजुर्वेदस्य एकशतं शाखा आसन् इति निश्चीयते । परन्तु चरणव्यूहरचनासमये केवलं षडशीतिर्भेदा एवावशिष्टा इति सुधियो विभावयन्तु इति । वेदानामाविर्भावविषये भगवान् श्रीशङ्कराचार्यः स्वभाष्ये उक्तवान्—'महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः=कारणं ब्रह्म । न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति' इति ( शा॰ भा॰ १।१।३ ) 'वेदज्ञानार्थं व्याकरणाध्ययनम्' इति भाष्योक्तिराधुनिकैः शब्दशास्त्रा-ध्ययनप्रवृत्तैरनुस्मर्तव्या । साधनस्य मुख्यं फलं साध्यसिद्धिरूपम् इति वेदार्थज्ञाने, तदध्ययने च प्रवृत्तिर्विधेया इति, किञ्च वैदिकवाङ्मयस्योपेक्षायामनेके वेदविरुद्धाः पन्थानो भारतीयजनान् अनर्थगर्ते पातयन्ति इति पञ्चोलिनः ।

'सेनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥' इति मनुः ।
'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥ इति मनुः ।

**तनुः**—शरीरम् । **'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुः'** इति विश्वः । 'धन धान्ये' इति धान्यम्—धनादिप्राप्तिः । दधन्ति = धनादिकं प्राप्नोति येन तद् 'धनुः' । 'धनुश्चापौ धन्वशरासन-कोदण्डकार्मुकम्' सप्त नामानि धनुषः ( अम॰ २ का॰ ८३ श्लो॰ ) । 'धनुरस्त्रियाम् ।' 'धनुर्वंशवि-शुद्धोऽपि निर्गुणः किं करिष्यति' इति । 'वपुः सूर्याग्निशत्रुषु' इति विश्वः ।

यद्यपि जुहोत्यादौ **'अथागणान्ता परस्मैपदिनश्छान्दसाश्च'** इति गणसूत्रेण छान्दसोऽयं धनधातुस्तथाऽपि 'उणादयो बहुलम्' (उण॰ १ पा॰ १ सू॰) इत्यत्र बहुलग्रहणाल्लोकेऽपि प्रयोगः । तथा च धनधातोरुसि सस्य प्रत्ययावयवत्वात्षत्वे 'धनुष्' इति । ततः स्वमोर्लुकि च सुबन्तत्त्वेन पदत्वे षत्वस्यासिद्धत्वाद् रुत्वे विसर्गे च 'धनुः' इति, 'र्वोरुपधायाः' इति दीर्घस्तु न, रेफान्तस्य धातुत्वाभावात् । जश्शसोः शौ 'नपुंसकस्य झलचः' इति नुमि षत्वस्यासिद्धत्वात् 'सान्तमहतः' इति दीर्घे नस्यानुस्वारे 'नुम्विसर्जनीय' इति सस्य षत्वे च **'धनूंषि'** इति । एवं **चक्षुरिति**—धातूनाम-नेकार्थत्वात् । चक्षते = पश्यन्ति रूपमनेनेति चक्षुः । उसिरित्यनुवर्तमाने 'चक्षेः शिच' ( उणा॰ २ पा॰ ११६ सू॰ ) उसेः शित्त्वादार्धधातुकत्वाभावेन 'चक्षिङः ख्याञ्' इति ख्याञादेशो न, आर्धधातुक-विषये एव तत्प्रवृत्तेः । **धनुर्भ्यामिति**—अत्र 'र्वोः' इति दीर्घो न, रेफान्तस्य धातुत्वाभावात् ।

**हविरादय इति**—"हु दानादानयोः' दानं चेह प्रक्षेपः । स च वैधाधारस्थाग्नौ हविष एव । प्रक्षेपश्चाग्निसंयोगावच्छिन्नक्रियानुकूलो व्यापाररूप एवेति पाषाणादेर्यत्र कुत्रचित्प्रक्षेपे ( दूरीकरणे ) जुहोतेर्न प्रयोगः । हूयते यत्तद्धविः 'अर्चिशुचि' ( उणा॰ २ पा॰ १०८ ) इति इसिप्रत्यये गुणावा-देशयोः **'हविः'** इति । आदिना सर्पिरादयो ग्राह्याः ।

पिपठिषतेः क्विप् 'र्वोः— इति दीर्घः। पिपठीः। पिपठिषी। अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न, स्वविधौ स्थानिवत्त्वाभावात्। अजन्तलक्षणोऽपि नुम् न। पिपठिषि। पिपठीर्भ्यामित्यादि पुंवत्॥ इति षान्ताः॥ पयः। पयसी। पयांसि। पयसा। पयोभ्याम् इत्यादि। सुपुम्, सुपुंसी। सुपुमांसि।

---

**पिपठिषतेः क्विपिति**— पठितुमिच्छतीत्यर्थे 'धातोः कर्मणः' (पा० ३-१-७) इतीच्छार्थे सनि 'सन्यङोः' (६-१-९) इति धातोर्द्वित्वे हलादिशेषे 'सन्यतः' (७-४-७९) इत्यभ्यासाकारस्येत्वे सन आर्धधातुकत्वेनेटि 'सनाद्यन्ता धातवः' (३-१-३२) इति सन्नन्तस्य धातुसंज्ञायां सस्य षत्वे 'पिपठिष' इत्यतः कर्तरि 'क्विप् च' (३-२-७६) इति क्विपि अतो लोपे 'पिपठिष्' इत्यतः स्वमोर्लुकि च 'र्वोः' इत्युपधादीर्घे षत्वस्यासिद्धतया षस्य ससुद्धया रुत्वे विसर्गे च 'पिपठीः' इति रूपम्। **पिपठिषी** इति—औङः श्यां रूपम्। पिपठिषशब्दाज्जश्शसोः शौ 'पिपठिषि' इति। अत्र झलन्तलक्षणो नुम् तु न, 'अचः परस्मिन्' इत्यलोपस्य स्थानिवत्त्वेन झलन्तत्वाभावात्। तदाह **अल्लोपस्येति**।

ननु स्थानिवत्त्वेनाचमादायाजन्तनिमित्तको नुम् स्यादित्याशङ्कायामाह—**स्वविधाविति**— पूर्वस्य विधौ स्थ निवत्त्वोक्त्या स्वविधौ स्थानिवत्त्वाप्राप्तेरिति भावः। '**क्वौ लुप्तं न स्थानिवत्**' इति निषेधस्तु न, तस्य क्वाचित्कत्वात्। अत एव न पदान्तसूत्रे भाष्ये 'नैवं विज्ञायते क्वौ लुप्तं न स्थानिवदिति। कथं तर्हि ? क्वौ विधिं प्रति न स्थानिवदिति' इत्युक्तिः संगच्छते। 'उगिदचाम्' (७-१-७०) इति सूत्रे 'गोमन्तमिच्छति गोमत्यति। गोमत्यतेरप्रत्ययो 'गोमान्' इति भाष्यप्रयोगात्क्वचित्तदाश्रयणेऽपि न सार्वत्रिकत्वं तस्येति भावः। सप्तमीबहुवचने 'वा शरि' इति विकल्पेन विसर्गे "नुम्विसर्जनीय" इति सुपः सस्य षत्वे 'पिपठीःषु" इति पक्षे विसर्गस्य सत्त्वे। शर्व्यवधानेऽपि सुपः सस्य षत्वे पूर्वस्य सस्य 'ष्टुना ष्टुः' इति षत्वे '**पिपठीष्षु**' इति पुंवद्रूपम्।

**अथ सकारान्ताः**। पय **इति**–पीयते यत्तत्पयः। "पीङ् पाने" इति दैवादिकात् "सर्वधातुभ्यो ऽसुन्" (उणा० ४ पा० १८९) इत्यसुनि गुणेऽयादेशे च "पयस्" इत्यत्र स्वमोर्लुकि रुत्वविसर्गयोः 'पयः' इति। 'पयः क्षीरं पयोऽम्बु च' इति (अमर-३ का० २३ श्लोक) **पयसी इति**—औङः श्यां रूपम्। **पयांसीति**—जश्शसोः शौ झलन्तत्वान्नुमि "सान्तमहतः" इति दीर्घेऽनुस्वारे च 'पयांसि' इति। **पयोभ्यामिति**—रुत्वोत्वयोर्गुणे च रूपम्। सुपि "वा शरि" इति वा विसर्गे सत्त्वे च '**पयःसु**' इति, '**पयस्सु**' इति च।

**सुपुमिति**— शोभनाः पुमांसो यस्मिन्नगरे तत् 'सुपुम्' नगरम्। 'शेषाद्विभाषा' इति कबभावे रूपम्। तदुक्तं मूले 'द्विवचनबहुवचनान्तेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप्' इति। शोभनः पुमान् यस्मिन्निति तु न विग्रहः, उरःप्रभृतिषु 'पुमान्, अनड्वान्' इति एकवचनान्तानां पाठेन 'उरःप्रभृतिभ्यः कप्" (५-४-१५१) इति नित्यकबापत्तेः। नच 'न पूजनात्" (५-४-६९) इति समासान्तनिषेधः, अत्रैव सूत्रे भाष्ये "प्राग्बहुव्रीहिग्रहणं च" प्राग्बहुव्रीहिग्रहणं च कर्तव्यम्। इह मा भूत् "स्वक्षः, अत्यक्षः, इति" इत्युक्त्या "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५-४-११३) इत्यतः प्राक्सूत्रेण विहितानामेव समासान्तानां तेन निषेधात्। "उरःप्रभृतिभ्यः कप्" इति तु ततः परम्। एवञ्च सुपुंस् इत्यतः स्वमोर्लुकि संयोगान्तलोपे "सुपुम्" इति।

**सुपुमांसीति**— जश्शसोः शौ 'पुंसोऽसुङ्" (७-१-८९) इत्यत्र 'इतोऽत्सर्वनामस्थाने" (७-१-८६) इत्यतः "सर्वनामस्थाने" इत्यनुवृत्त्या अन्त्यस्य सस्यासुङादेशे "सुपुमस् इ" इति स्थितौ झलन्तलक्षणे नुमि "सान्तमहतः" इति नकारात्पूर्वस्याचो दीर्घे नस्यानुस्वारे च "**सुपुमांसि**" इति रूपम्। शेषं पुंवत्।

अदः । विभक्तिकार्यम्, उत्वमत्वे—अमू । अमूनि । शेषं पुंवत् ॥ इति सान्ताः ॥

*इति हलन्तनपुंसकलिङ्गप्रकरणम् ।*

---

सुपि "सुपुंसु" इति । "नुम्विसर्जनीय" इत्यत्र शर्ग्रहणेनानुस्वारस्य षत्वं तु न, नुम्स्थानिकानुस्वारस्यैव तत्र ग्रहणात् । तदुक्तं हयवरट्सूत्रे भाष्ये—"नुमो मोऽनुस्वारस्तत्र यथा स्यात् । इह मा भूत्—"पुंसु" इति" इति ।

**अद इति**—न दस्यते=उत्क्षिप्यतेऽङ्गुलिरिदन्तया निर्धारणाय यत्र तददोऽपुरोवर्त्ति, पुरोवर्त्तिन्येवाङ्गुलिनिर्देशस्य सम्भवात् । नञ्पूर्वकाद्दस्यतेः क्विपि **"अदः" इति । विभक्तिकार्य्यमिति**—विभक्तिनिमित्तकम् "त्यदादीनामः" इत्यत्वमौङः श्यादेशो रूपञ्च । ततः पररूपे गुणे च कृते **"अदे"** इतिजाते प्रमाणत आन्तर्य्यादूत्वे मत्वे च **"अमू"** इति । **अमूनीति**—जश्शसोः शौ त्यदाद्यत्वे पररूपेऽजन्तलक्षणे नुमि "सर्वनामस्थाने चासम्बुद्धौ" ( ६-४-८ ) इत्युपधादीर्घे ऊत्वमत्वयोः **"अमूनि"** इति । शेषं पुंवत् । **"अमूभ्याम्"** इत्यादौ "ह्रस्वो नपुंसके" इति ह्रस्वत्वं तु न, ऊत्वस्यासिद्धत्वात् । **इति सान्ताः** । अत्र नपुंसकपदं धर्मपरम् । तथा च नपुंसकम्=नपुंसकत्वं लिङ्गं येषां शब्दानां ते नपुंसकलिङ्गाः । हलन्ताश्च ते नपुंसकलिङ्गास्तेषां प्रकरणमित्यर्थः । एवं पुंल्लिङ्गादिशब्देऽपि पुंस्त्वं लिङ्गं येषामित्यर्थो बोध्यः ।

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।

# अथाव्ययप्रकरणम्

*स्वरादिनिपातमव्ययम्* । [ १-१-३७ ]

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् ।

---

**अथाव्ययप्रकरणम्** । न व्येति = भिन्नभिन्नरूपं विकारं लिङ्गक्रियाकारकप्रयोज्यं न प्राप्नोति तदव्ययम् । एतेन युष्मदस्मदोः संख्यावाचकेषु च नातिव्याप्तिः, तेषां विभक्तिकृतरूपभेदसत्त्वात् । न चाव्ययीभावेऽव्याप्तिः, तत्रारोपिताव्ययत्वस्यैव सत्त्वेनादोषात् । अत एवाव्ययीभावपदे व्यर्थ उपपद्यते "तद्धितश्च" ( १-१-३८ ) इति सूत्रे भाष्ये तु "स्त्रीपुंनपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् केचिद्वियन्ति, केचिन्न वियन्ति । ये न वियन्ति तदव्ययम्" इत्युक्तम् । "न वियन्ति= विविधप्रकारप्रापकान्न प्राप्नुवन्ति" इत्युद्द्योतः । "नेदं वाचनिकमलिङ्गता असंख्यता च । किं तर्हि ? स्वाभाविकमेतत्" इति च तत्रैव भाष्ये । अन्वर्था चेयं संज्ञा । **"स्वरादिनिपातमव्ययम्"** ( १-१ ३७ ) इति । स्वर् आदिर्येषां ते स्वरादयः । ते च निपाताश्चेति समाहारद्वन्द्वः । फलितार्थमाह— **स्वरादय इति**—सुपूर्वकात् "ऋ गतौ" इत्यतः सुखमर्य्यते=प्राप्यतेऽस्मिन्निति बाहुलकादधिकरणे यद्वा सुष्ठु प्राप्तिरित्यर्थे भावे "अन्येभ्योऽपि दृश्यन्ते" (३-२-७५) इति विचि गुणे च "स्वर्" इति । **"स्वर्गे परे च लोके स्वर्"** इति (अम० ३ का०४वर्ग) । स्वर्गे—"स्वर्णद्यां स्नाति नारदः" । परे लोके **"स्वर्गतस्य क्रिया कार्य्या पुत्रैः परमभक्तितः"** इति । स्वः=सुखे । तथा चोक्तम् ।—

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥"

इति । गणे—लोके वेदे च प्रत्युक्तानां स्वरादीनामनुकरणानि स्वरादीनि । अभेदानुकरणतया सादृश्येनानुकार्य्योपस्थापकतया वृत्त्या अर्थवाचकत्वाभावान्न प्रातिपदिकत्वम् इति सुबन्तत्वाभावेनापदत्वान्न रेफस्य विसर्गः ।

नागेशास्तु गणे रेफान्तपाठसामर्थ्यान्न विसर्ग इत्याहुः । द्विविधा हि स्वरादयः—सत्त्ववाचका असत्त्ववाचकाश्च । अत्र कर्मत्वाद्यन्वययोग्यत्वं सत्त्ववाचित्वम् । यथा स्वः पश्य, स्वरागतः, स्वः स्थित इत्यादौ । यदा शोभनेऽर्थे स्वरशब्दस्तदाऽसत्त्ववाची ।

वस्तुतस्तु सीदन्ति गुणक्रिया यत्र तत् सत् । सतो भावः सत्त्वम् । द्रव्ये एव गुणादयस्तिष्ठन्तीति गुणाद्याश्रयत्वं सत्त्वम् । स्वस्ति = मङ्गलं कुशलञ्च । अनव्ययमपि स्वस्तिशब्दः,

"प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः । स्वस्तिर्भवतु ते नित्यं सुखञ्चानुत्तमं तथा" इति भविष्योत्तरे पाठात् ।

ननु "प्राग्रीश्वरान्निपाताः" इत्यतः परम् "स्वरादि" इत्यारभ्य "अव्ययीभावश्च" इत्यन्तं पठित्वा "चादयोऽसत्त्वे" इति पठनीयम् । सर्वेषां निपातसंज्ञैव विधेया । यत्राव्ययपदं तत्र निपातपदमेव पठनीयम् । यथा "निपातादाप्सुपः" इत्यादि—इत्यव्ययसंज्ञा व्यर्था इति चेन्न, स्वरादीनामपि "निपाता आद्युदात्ताः" इत्याद्युदात्तापत्तेः । एवं सति स्वरादीनामपि "किमोऽत्" "दक्षिणादाच्" इत्यादौ "तद्धितश्चासर्व" इति निपातसंज्ञायाम् "निपात एकाच्" इति प्रगृह्यत्वापत्तेः । ननु तद्धितान्तस्य निपातत्वेन नोक्तदोष इति चेन्न, स्वरादिगणे "तसिलादयस्तद्धित एधाच्पर्य्यन्तः" इति, "कृन्मकारसन्ध्यक्षरान्तः" इति सूत्राभ्यां केवलतद्धितस्य स्वरादित्वेनोक्तापत्तेस्तादवस्थ्यात् । ननु "स्वरादि चाद्यव्ययम्" इत्येवास्तु निपातसंज्ञैव मास्त्विति चेन्न, चादीनाम् "निपाता आद्युदात्ताः" इत्यनापत्तेः "तत्पुरुषे तुल्यार्थ" ( ६-२-२ ) इति सूत्रे "अव्यये नञ्कुनिपातानामेव" इति वार्त्तिके चादीनां

बहूनां पठने गौरवापत्तेश्च । तदुक्तं भाष्ये—"तर्ह्यव्ययसंज्ञैवास्तु । तचाशक्यम् । वक्ष्यत्येतत् "अव्यये नञ्कुनिपातानाम्" इति । तद्गरीयसा न्यासेन परिगणनं स्यात् । तस्मात्पृथग्ग्रहणं कर्तव्यम् । उभे च संज्ञे कर्तव्ये इति" इति ।

**भूमिकारूपेण समासतोऽव्ययार्थविमर्शः प्रस्तूयते—**

ननु स्वरादयोऽनेकशक्तिप्रधानास्तेषां सर्वेषां सकृदुच्चरितन्यायेन ग्रहणं न स्यादिति चेन्न, तन्त्रेण निर्देशे सर्वग्रहणसिद्धेः । यत्र तत्रेत्यादीनि, उच्चैरादीनि चाधिकरणशक्तिप्रधानानि शब्दशक्तिस्वभावात् । हिरुक्, पृथक् इत्यादीनि क्रियाविशेषणान्येवेति क्रियाप्रधानानि ।

तदुक्तं भाष्ये "किञ्चिदव्ययं विभक्त्यर्थप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम् । हिरुक् पृथगिति क्रियाप्रधानम् । तद्धितश्चापि कश्चिद्विभक्त्यर्थप्रधानः, कश्चित्क्रियाप्रधानः । तत्र यत्रेति विभक्त्यर्थप्रधानः, विना नानेति क्रियाप्रधानः । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति" इति । **सायम्, चिरम्** इति मान्ते अव्यये । "सायञ्चिरम्" (४-३-२७) इति सूत्रे भाष्ये "सायञ्चिरयोर्मान्तत्वं प्रत्ययसंनियोगेन निपात्यते । नैतदस्ति प्रयोजनम् । मकारान्तः **सायंशब्दः** । यदि मकारान्तः कथं सायाह्नः । सायमोऽह्नि मलोपो वक्तव्यः । **चिरशब्दस्तु** अदन्त एव तस्यापि प्रत्ययसन्नियोगेन मान्तत्वनिपातनादन्यत्रादन्त एवेति नागेशः । वस्तुतस्तु "चिरम्" मान्तमप्यव्ययमस्ति । न च भाष्ये मान्तत्वनिपातनविरोधः, चिरमित्यव्ययमादाय चिरन्तन इत्यस्य सिद्धेरिति वाच्यम्, अदन्तचिरशब्दादपि चिरन्तन इत्यस्य सिद्धये भाष्ये निपातनत्वेनोक्तेरिति **तूपाध्यायाः** ।

अयम्भावः—सायशब्दस्य घञन्तस्यावसानवाचिनः स्वीकारेऽपि मकारान्तः सायंशब्द इति भाष्योक्तेः, **"प्रातः सन्ध्या सनक्षत्रा सायं सन्ध्या सभास्करा"** इत्यादिप्रयोगदर्शनाच्च मकारान्तः सायंशब्दोऽप्यस्ति । घञन्तस्तु न कालवाची किन्त्ववसानवाच्येव । भाष्ये चिरशब्दस्य प्रत्ययसन्नियोगेन मान्तत्वनिपातनात्, मकारान्तश्चिरंशब्द इत्यनुक्तेः, **"तस्य तावदेव चिरं यावन्न विमोक्ष्ये"** "चिरं भुङ्क्ते" इत्यादौ अदन्त एव चिरशब्दः क्रियाविशेषणत्वात् द्वितीयैकवचनान्त एव । किञ्च चिरशब्दस्य मान्तस्य सत्त्वे चिरशब्दस्य भाष्योक्तं मान्तत्वनिपातनं व्यर्थं स्यात्, मान्तचिरशब्देनैव तत्सिद्धेः । तस्मात् "चिरञ्जीवी देवदत्तः" इत्येव साधु । कालविप्रकर्षाभिधायी यश्चिरशब्दस्तस्यैव प्रत्ययसंनियोगेन मान्तत्वनिपातनपरं भाष्यम् । चिरशब्दस्त्वनव्ययमेव । शब्दशक्तिस्वभावादेकवचनान्त एव । अत एव "चिरेण तवागमनं पश्यामि" इति, "चिरादागतोऽसि" इत्यादयः प्रयोगाः संगच्छन्ते ।

अत एव शेखरे "चिरमित्यस्याव्ययत्वमप्रामाणिकमिति परे" इति नागेशः । **"वत्" इति** स्वरादौ पठ्यते । स च "तेन तुल्यम्" "तत्र तस्येव" "तदर्हम्" इति विहितः सर्वोऽपि गृह्यते, विनिगमनाविरहात् । "उपसर्गाच्छन्दसि" (५-१-११८) इति विहितस्य तु नाव्ययत्वम्, "यदुद्वतो निवतः" इत्यादिप्रयोगदर्शनात् ।

तदुक्तं भाष्ये—"साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते --"उद्वतानि"=उद्वतः, निगतानि= "निवतः" इति "उपसर्गाच्छन्दसि धात्वर्थे" इत्यस्य धात्वर्थः=क्रिया सा अर्थः=प्रयोजनं यस्य साधनस्य तस्मिन् वर्तमानादुपसर्गात् ( क्रियाविशिष्टद्रव्यवाचिनः, ) स्वार्थे वतिप्रत्ययः । वृत्तिविषयश्चोपसर्गः क्रियाविशेषविशिष्टशक्त्याधारे द्रव्ये वर्तते इति तस्यार्थे विधीयमानस्य वतेः सत्त्ववाचित्वादन्वर्थसंज्ञाविज्ञानादलिङ्गासंख्यस्य विधीयमानाऽव्ययसंज्ञा प्रवर्तते । "उद्वतानि = उद्वतः, निगतानि = निवतः" इत्यत्र पुंस्त्वमत्र नपुंसकप्रसक्ते छान्दसम्" इति कैयटः ।

तथा च छान्दसोपसर्गवत्यन्तस्य नाव्ययत्वम् । वस्तुतस्तु "तद्धितश्च" इति सूत्रे भाष्ये "तसिवती" इति परिगणनात् स्वरादिषु 'वत्'इत्यस्य पाठः प्रक्षिप्तो व्यर्थश्च । "अन्तरान्तरेण युक्ते" ( २-३-४ ) इति सूत्रे अनयोर्निपातत्वोक्तेः स्वरादिषु पाठः प्रक्षिप्तः । तथा च भाष्यम्—"अयं

त्वन्तरःशब्दोऽदृष्टापचारो निपात एव। तस्यास्य कोऽन्यः सहायो द्वितीयो भवितुमर्हति—अन्यदतो निपातात्" इति।

**अस्तीति**—यद्यपि ननु "अस्ति" इति तिङन्तं विभक्त्यन्तमिति विभक्त्यन्तप्रतिरूपकाव्ययत्वेनैवाव्ययत्वसिद्धौ स्वरादावस्य पाठो व्यर्थ इति चेन्न, विनिगमनाविरहेण शब्दानुपूर्वीतोऽर्थतश्च प्रतिरूपकस्य ग्रहणे "धनवान्"इत्यर्थे धनवाचिनोऽस्तिशब्दस्यार्थकृतसादृश्याभावाद्विभक्तिप्रतिरूपकत्वाभावेनासिद्धया स्वरादौ पाठसामर्थ्येन सत्त्ववाचिनोऽप्यव्ययात् स्वस्तिशब्दात् मतुपि "स्वस्तिमान्" इति सिध्यति। सत्ताकर्तृवाच्यपि अव्ययमस्तिशब्दोऽस्ति। तस्य शब्दतोऽर्थश्च विभक्तिप्रतिरूपकत्वेनाव्ययत्वात्प्रातिपदिकत्वाच्च मतुप् सिध्यति।

तदुक्तं भाष्ये—'तदस्यास्ति' इति सूत्रे 'अव्ययमेषोऽस्तिशब्दः। नैषोऽस्तेर्लट्। कथमव्ययत्वम्? विभक्तिप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपातोऽव्ययमित्यव्ययसंज्ञेति' इति। ननु प्रातिपदिकत्वादेव सुबन्तान्मतुप् स्यादित्यस्तिग्रहणं व्यर्थमिति चेन्न, 'अस्तिना सामानाधिकरण्ये मतुब् विधीयते। न चास्तेरस्तिना सामानाधिकरण्यम्। तदेतत् क्रियमाणमपि प्रत्ययविध्यर्थं नोपाध्यर्थम्' इति भाष्यतः सामानाधिकरण्याभावेऽपि सूत्रे अस्तिग्रहणसामर्थ्यान्मतुप् सिध्यतीति भावः।

तथा च धनवाचिनोऽस्तिशब्दस्यैव स्वरादौ पाठो नास्त्येति तत्त्वम्। यस्तु स्वरादौ पठितः शब्दः सत्त्ववाची असत्त्ववाची च। तत्रासत्त्ववाचिन एवाव्ययसंज्ञा, महासंज्ञाकरणबलात्। तेन 'महसां नमसाम्' इत्यादिसत्त्ववाचिनां नाऽव्ययत्वम्।

केचित्तु धनवाचकस्यास्तिशब्दस्यापि सत्ताकर्तृत्वेन धनबोधसम्भवादर्थप्रतिरूपकत्वस्यापि सत्त्वेन विभक्तिप्रतिरूपकत्वेनैवाव्ययतया स्वरादावस्तिशब्दस्य पाठो व्यर्थ एवेत्याहुः।

ननु प्रपूर्वकात्तम्धातोः क्विपि निष्पन्नप्रताम्शब्दावयवस्य धातुत्वेन 'मो नो धातोः' इति नत्वापत्तिरिति चेन्न, स्वरादौ नान्तस्यापि प्रतान्शब्दस्य पाठेन तद्वैयर्थ्यापत्त्या प्रयोगस्थानां गणेऽनुकरणेन धातुत्वाभावेन च नत्वाभावकल्पनेनादोषात्। स्वरादौ 'प्रशान्' इति नान्तपाठः सम्प्रदायविरुद्धः। मान्तानुकरणे 'स्वर्' इत्यत्र विसर्गाभाव इव पदत्वाभावान्नत्वाप्राप्तेः। 'प्रशान्' इत्येव गणे पाठः।

नच 'कृन्मेजन्तः' इति सूत्रे एव भाष्ये 'अथवा पुनरस्तु कृदन्तं यन्मान्तमिति। कथं प्रतामौ प्रतामः' इति? आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवति यदयं प्रशान्शब्दं स्वरादिषु पठति' नचैवं ज्ञापने 'कारयांचकार' इत्यादौ प्रत्ययलक्षणेन लिङ्रूपकृदन्तत्वमादायाव्ययसंज्ञा न स्यादिति वाच्यम्, ज्ञापकस्य साजात्येन धातोरेव नियमात्। 'कारयाम्' इत्यस्याधातुत्वेन नियमाप्राप्तेः। अत्र 'प्रशान्' इति नान्तोक्तिर्विरुध्येतेति वाच्यम्, अस्य भाष्यस्यान्यथैवोपपत्तेः। तथाहि—गणे लौकिकप्रयोगानुकरणम्। तत्र प्रातिपदिकसंज्ञैव न भवति। अत एव स्वर्, अन्तर् इत्यादौ विसर्गाप्राप्तिः। लोके तु 'स्वस्तिरस्तिष्ठति, अन्तस्तिष्ठति' इत्यादौ विसर्गादिकं भवति। तथैव गणे 'प्रशाम्' इत्येव पाठः।

भाष्ये 'प्रशान्शब्दं पठति' इति तु भाष्यकारीयं वाक्यमिति तस्य तत्र नत्वकरणे दोषाभावः। यत्तु कैयटः—गणे नान्तपाठेऽपि नत्वस्यासिद्धत्वान्मान्तत्वमादायाव्ययसंज्ञा स्यादिति तन्न, अनुकरणे शास्त्रेण नत्वविधानाभावासिद्धत्वासिद्धेः।

यत्तु नञोऽव्ययस्य स्वरादिषु पाठः, अन्यथा चादिषु पाठे 'अव्यये नञ्कुनिपातानाम्' इति वार्तिके नञ्ग्रहणस्य वैयर्थ्यापत्तिः, निपाततो नैव तस्य संग्रहादिति तन्न, तस्य चादौ पाठेन निपातत्वेऽपि 'आक्रोशे नञ्यनिः' इति नञ्युपपदेऽनिप्रत्यये 'अकरणिः' इत्यत्र 'तत्पुरुषे तुल्यार्थः' इति प्राप्तमव्ययपूर्वपदप्रकृतिस्वरं परत्वाद् बाधित्वा 'गतिकारकोपपदात्कृत्' (६-२-१३९) प्राप्तस्य

कृत्स्वरस्य वार्तिके नञ्ग्रहणसामर्थ्येन बाधनाय तस्य निपातत्वेऽपि चारितार्थ्यात्। माङोऽपि स्वरादौ प्रक्षिप्तः पाठ इति नागेशः। चादिषु माङः पाठादिति तदाशयः।

वस्तुतस्तु विनिगमनाविरहात् स्वरादिषु पाठात् चादिषु प्रक्षिप्त इत्यस्यापि वक्तुं शक्यत्वेन क्व पाठः क्व प्रक्षेप इत्यत्र प्रमाणमन्वेष्यम्। किञ्च चादिषु पाठे चादित्वान्निपातत्वम्, निपातत्वाच्चाव्ययत्वमिति गौरवम्।

**'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः'** इति रामायणपद्ये निरनुबन्धको माशब्दः, अत एवाटो न निषेधः। स्वरादौ **'यावत् तावत्'** इमावव्युत्पन्नौ साकल्यमानावधारणेषु अतो न वत्वन्तत्वेन गतार्थता, वत्वन्तयोः सत्त्वार्थकत्वाच्चाव्ययत्वाप्राप्तिः।

**'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च'** अत्र प्रतिरूपका इत्यस्य सदृशा इत्यर्थः। सादृश्यञ्चानुपूर्व्या अर्थतश्च। आनुपूर्वीमात्रेण सादृश्यग्रहणे विप्रशब्दघटकप्रशब्दस्याऽव्ययत्वापत्तिः। अर्थत एव सादृश्ये प्रशब्दसमानार्थकप्रकर्षशब्दस्याव्ययत्वापत्तिः। नच सत्त्वार्थकतया न तत्र दोष इति वाच्यम्, लिङ्गाविवक्षायामसत्त्वार्थकत्वेन दोषतादवस्थ्यात्।

**'गेये केन विनीतौ वाम्'** इति वाक्ये युष्मत्प्रकृतिकषष्ठ्याद्यन्तस्थानिकादेशरूपं यद् 'वाम्' इति तत्प्रतिरूपकम् अव्ययम्, 'विनीतौ' इत्यत्र कर्मक्तान्तेन कर्मण उक्ततया प्रथमान्तत्वेनादेशाप्राप्तेः। ननु स्वरप्रतिरूपकत्वमपि शब्दतोऽर्थतश्चेति स्वराणां तदभावादव्ययत्वानुपपत्तिरिति चेन्न, गणे पाठसामर्थ्येन तदभावेऽप्यव्ययत्वात्। न चैवं षष्ठ्याद्यन्तस्थानिकेन 'वाम्' इत्यनेन समानार्थत्वाभावेनार्थतः सादृश्याभावः, सम्बोध्यरूपार्थबोधकत्वेनार्थतः सादृश्यस्याक्षतत्वात्। सर्वत्र विवक्षितधर्मेणैव सादृश्यस्य प्रसिद्धत्वात्, प्रतियोगिवृत्तियावद्धर्मसत्त्वे तत्त्वव्यवहारस्यैव दर्शनात्।

**एतेन** षष्ठ्याद्यर्थाप्रतीत्या प्रतिरूपकत्वाभाव इत्यपास्तम्। विषमीकारास्तु युष्मच्छब्दप्रकृतिकविभक्त्यन्तसमानार्थत्वम्—'युवाम्' इति प्रथमाद्विवचनान्तत्वमादाय शब्दतः सारूप्यम् 'वाम्' इति द्वितीयाद्विवचनान्तत्वमादाय। न चैवं सति 'युगपत्' इत्यादीनामपि 'एककाले' इति विभक्त्यन्तमादायार्थतः सारूप्यम्, युगं पततीत्यर्थकयुगपच्छब्दमादाय शब्दतः सारूप्यम्। तथा च विभक्तिप्रतिरूपकत्वादेव युगपदित्यादीनामव्ययत्वे सिद्धे गणे युगपदित्यस्य पाठो व्यर्थ इति चेन्न, यच्छब्दप्रकृतिकविभक्त्यन्तत्वमादायार्थतः सारूप्यं प्रत्यासत्त्या तच्छब्दप्रकृतिकविभक्त्यन्तत्वमादायैव शब्दतः सारूप्यस्य विवक्षितत्वात्।

अन्ये तु स्वराद्यैकरूप्याय शब्दतः सारूप्यम्, नार्थतः तेन तस्मादित्यर्थकतदित्यस्य प्रथमान्तार्थकस्य 'वाम्' इत्यस्य चाव्ययत्वं सिध्यति। अत एव धनवाचिनोऽस्तिशब्दस्य विभक्तिप्रतिरूपकत्वेनाव्ययत्वसिद्धिरिति मतुप्सूत्रे भाष्यकैयटोक्तं संगच्छते। विभक्त्यन्तश्च पदद्वयाघटितमेवेति न 'युगपत्' इत्यादीनामव्ययत्वसिद्धिरिति गणे न युगपच्छब्दस्य पाठवैयर्थ्यम्। न च शब्दत एव सादृश्यग्रहणे विप्रघटकप्रशब्दस्याव्ययत्वापत्तिः, 'असत्त्वे' इत्यस्य पर्युदासेन विशेष्यतया द्रव्यभिन्नार्थाश्चादय इत्यर्थेन विप्रघटकप्रशब्दस्य मनोरथादिकर्मकपूरणकर्तृवाचकतयाऽदोषात्। अर्थतः सादृश्यस्यावश्यकतया 'युगं पतति इति 'युगपत्' इत्यस्यानुपूर्व्या 'एककालिकपरम् युगपत्' इति विभक्त्यन्तप्रतिरूपकमव्ययमिति तस्य चादिगणे पाठो व्यर्थ इत्यपास्तम्।

गणे 'तद्' इत्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम्। अत एव —

'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥'

इति पद्ये 'तच्चितोः' इति द्वन्द्वः संगच्छते। अन्यथा तच्छब्दस्य चिच्छब्देन द्वन्द्वो न स्यात्, 'त्यदादीनि सर्वैर्नित्यम्' इति (१–२–७२) एकशेषप्रवृत्तेः। एवम् 'तत्तदर्थविभागः' इत्यत्रैक-

शेषो न। यत्तु 'तद्' इति लुप्तषष्ठीकस्याव्ययत्वे प्रथमान्तानामेव द्वन्द्वविधानात् 'तच्चितोः' इत्यत्र द्वन्द्वानुपपत्तिरिति तन्न, परिनिष्ठितविभक्त्या समासे चिच्छब्दस्यापि षष्ठयन्तस्यैव द्वन्द्वे प्रवेशेनादोषात्। न चैवमपि द्वन्द्वानुपपत्तिः, प्रथमान्तानामेव द्वन्द्वविधानादिति वाच्यम्, 'चार्थे द्वन्द्वः' इत्यत्र 'शेषे' इत्यस्यानुवृत्तौ प्रमाणाभावेनाप्रथमान्तानामपि द्वन्द्वे बाधकाभावात्। यद्वा 'तच्चितोः' इत्यत्र तच्छब्दचिच्छब्दौ षष्ठयन्तार्थकौ प्रथमान्तौ तयोर्द्वन्द्व इति नोक्तदोषः।

'प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च सर्वोऽपि कल्पित एव' इति वाक्ये प्रकृतिप्रत्ययपरयोस्तदित्यव्यययोर्द्वन्द्व इति त्यदादिसाहचर्येणानव्ययस्यैवैकशेषविधानान्नैकशेषः। शब्दरत्ने तु वीप्सायां कृतद्विर्वचनस्य तच्छब्दस्यार्थशब्देन तत्पुरुष इत्युक्तम्।

अवदत्तमिति—'अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते॥' इति

भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा 'अच उपसर्गात्तः' ( ७–४–७७ ) इति तादेशाभावो बोध्यते। न च भाष्यवचनेन तादेशाभावो बोध्यतां किमुपसर्गत्वाभावबोधनेनेति वाच्यम्, 'गुणप्रधानसन्निधौ गुणे त्वन्याय्यकल्पना' इति न्यायेन प्रधानस्य तादेशस्य साक्षाद्बाधानौचित्यात्।

तथा च क्रियायोगेऽपि प्रादीनामुपसर्गत्वं वैकल्पिकमिति फलति। 'अहनि' इत्यर्थे 'अह्नः' इति। अथ ओंशब्दार्थः, ओंशब्दस्य प्रयोगविषयश्च प्रदर्श्यते—

**'ओम्'** इति च स्वरादिषु। अश्च, उश्च, मश्चेति व्युत्पत्त्या **'ओम्'** इति पदञ्च शिवादिवाचकम्। **१—ओम् इति** – वेदे—'ओम् खं ब्रह्म' ( यजु० अ० ४० म० १७ ) 'ओमित्येतदक्षरमुद्गीथमुपासीत'। ( छा० उ० म० १ ) 'ओमित्येतदक्षरमिदं सर्वं तस्योपाख्यानम्' इति माण्डू० मं० १। 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योम् इत्येतत्'
( क० उप० व० २ म० १५ ) 'ओम् शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा। शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः।'

'नमो ब्रह्मणे नमस्ते वायो त्वामेव प्रत्यक्षं ब्रह्मासि, त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि, तन्मामवतु तद्वक्तारमवतु, अवतु मामवतु वक्तारम् ओम् शान्तिः ३, इति।

अ=विराट्, अग्निः, विश्वादिदेवगणः, उः = हिरण्यगर्भः, वायुः, म् = ईश्वरः, आदित्यः। 'ततो विराड् अजायत, विराजो अधिपुरुषः, श्रोत्राद् वायुश्च प्राणश्च, मुखादग्निरजायत, तेन देवा अयजन्त, पश्चाद् भूमिरथो पुरः' (यजु० अ० ३१ इति)। एवम्—'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥' इति, य० वे० अ० १३ म० ४। अत्र ओंशब्दार्थविषये वैदिकवाङ्मये अनेके मन्त्राः सन्ति। विस्तरभयान्न वितन्यते इति **पञ्चोलिनः**। श्रीमद्भागवतेऽपि एतद्विषये भूयान् विमर्शोऽस्ति।

ननु अकारस्य प्राथम्याद्विष्णवादिवाचकमित्येवोचितमिति चेन्न, शिवपदेन सत्त्वादिप्रधानमायोपाधिकस्य ब्रह्मण एव विवक्षितत्वात्। 'अवतेष्टिलोपश्च' ( उणा० १ पा० १४२ सू० ) अवतेर्मन्प्रत्यये मनष्टिलोपे 'म्' इति शिष्यते, धातोरुपधावकारयोरूठि गुणे च 'ओम्' इति ब्रह्मणि, अङ्गीकारे च। उभयोरपि स्वरादित्वं विनिगमनाविरहात्।

ननु मन्प्रत्ययान्तस्य 'कृन्मेजन्तः' ( १–१–३९ ) इत्यव्ययत्वसिद्धया तस्य स्वरादित्वकल्पनमफलमिति चेन्न, 'च्विरव्ययम्' (उणा० २ पा० ६५ सू०) इति सूत्रेण नियमात्। तथा हि—अत्र 'ग्लानुदिभ्यां डौः' इत्यत 'डौः' इत्यनुवर्तते। तथा च डौप्रत्ययान्तश्च्व्यन्तोऽव्ययसंज्ञको भवतीत्यर्थः। तथा च 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे 'शस्प्रभृतयः प्राक्समासान्तेभ्यः' इति परिगणने च्विरन्तर्भावात्।

अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् ।

'तद्धितश्च' इति सूत्रेण च्व्यन्तस्याव्ययत्वे सिद्धे 'च्विरव्ययम्' इति नियमार्थम् । उणादिव्युत्पन्नानां चादिस्वरादिपठितानामव्ययसंज्ञा चेत्तदा च्व्यन्तानामेवेति न ग्लौरग्लौः ग्लौः सम्पद्यते इति 'ग्लौभवति' इत्यादावव्ययत्वेन सुपो लुक् । ग्लौः, नौः, गौः, इत्यादौ कृन्मेजन्त इति यथा न प्रवर्तते तथा 'ओम्' इत्यत्रापि न प्रवर्ततेति चादौ पाठेनाव्ययत्वं तस्य ।

अयञ्च नियमो यद्यपि कौमुद्याम् 'च्विरव्ययम्' डौरित्यस्यानुवृत्त्या सूत्रव्याख्याने सति डौप्रत्ययान्तस्य चेदव्ययसंज्ञा तर्हि च्व्यन्तस्यैव, न तु तद्रहितस्येति लभ्यते । तथाऽपि एतादृशनियमे 'रातेर्डैः' 'गमेर्डोस्' इति सूत्राभ्यां सिद्धयो रै गो-शब्दयोरव्ययत्वव्यावृत्तिर्न प्राप्नोतीत्यत उणादिप्रत्ययान्तानां चेदव्ययसंज्ञा तर्हि च्व्यन्तानामेवेति सामान्यत एव नियम उचितः, असति बाधके प्रमाणानां सामान्ये पक्षपातात् । यद्यपि सामान्यतो नियमे 'उदिचेर्डैसिः' इति 'उच्चैः' 'नौ दीर्घश्च' इति 'नीचैः' इत्यनयोरव्ययत्वं न प्राप्नोति, तथापि चादिषु तयोर्वैयर्थ्यापत्त्याऽनयोर्नियमाप्रवृत्तेः ।

ननु 'च्विरव्ययम्' इत्यस्य नियमार्थत्वमनुपपन्नम्, गौणमुख्यन्यायेन यथा 'अदोऽभवत्' न गौरगौः गौः समपद्यत— 'गोऽभवत्' इत्यत्र गौणमुख्यन्यायेन 'ओत्' इति प्रगृह्यत्वं वारितं भाष्ये तथोणाद्यन्तानामपि च्व्यन्तानामप्युणाद्यन्तानामव्ययत्वाप्राप्त्या विध्यर्थत्वमेव स्यादित्युक्तदोषतादवस्थ्यमिति चेन्न, 'स्वरादिनिपातमव्ययम्' (१-१-३७) इत्यत्र निपातपदेन गौणन्यायाप्रवृत्तिरनित्यत्वात् । तथाहि—अस्याः परिभाषाया अर्थवद्ग्रहणपरिभाषामूलकतया अर्थवत्परिभाषायाश्च 'इणः षीध्वम्' इति (८-३-७८) सूत्रस्थाङ्गग्रहणेनानित्यत्वस्य ज्ञापनात् । अन्यथा 'अङ्गात्' इत्यस्य वैयर्थ्यापत्तिः ।

अङ्गादित्यस्याभावे विपधातोर्लिङि सीयुटि सीयुटः सस्य 'लिङः सलोपोऽनन्त्यस्य' (७-२-७९) इति लोपे 'वेविषीध्वम्' इत्यत्र ढत्वापत्तिरुक्ता । तत्रार्थवत्परिभाषया अर्थवतः षीध्वमः प्रत्ययस्य ग्रहणेऽत्र षीध्वमो धातुघटकषकारघटितत्वेनार्थवत्त्वाभावादेव ढत्वाप्राप्त्या तद्वैयर्थ्येन अर्थवानित्यस्यानित्यत्वं ज्ञापयति । तदनित्यत्वेन गौणमुख्यन्यायस्याप्यनित्यतया निपातपदेऽप्रवृत्तिकल्पनात् ।

अत्र चादौ 'साधीयस्' इत्यप्यव्ययम् । न तु ईयसुन्प्रत्ययान्तम् साधुरित्यर्थः । अत एव 'कस्तत्र साधीयः' इति प्रयोगः सगच्छते । अतः परं स्वरादीनामर्थं निरूपयति—**स्वरिति** । स्वर्गे, परलोके, सुखविशेषे च । तदुक्तम्—

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ॥
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्" इति ।

**अन्तर्**=मध्ये । **प्रातर्**=प्रभाते । **पुनर्**=अप्रथमे, भेदे, अप्रथमे यथा— पुनरुक्तम् । भेदे यथा—"किं पुनर्ब्राह्मणाः पुण्याः" इति "पुनरप्रथमे मतम्,
"अधिकारे च भेदे च तथा पक्षान्तरेऽपि च" इति मेदिनी ।

**सनुतर्**=अन्तर्धाने । अत्र प्रमाणमन्वेष्यम्, कोशेऽनुपलम्भात् । स्वराद्याः पञ्च रेफान्ताः । तेन प्रातर्गच्छति इत्यादौ "हशि च" इत्युत्त्वं न, उकारेत्संज्ञकस्य रेफस्य रोःपदेन ग्रहणात् । **उच्चैस्**=महति । **नीचैस्**=अल्पे । तदुक्तम्—"अल्पे नीचैर्महत्युच्चैः" इति-( अम० ३ का ) ४ वर्ग० श्लोक १७ ) यथा—"कटङ्कमुच्चैरिरेरिदम्" इति "तथाऽपि नीचैर्विनयाददृश्यत" इति च । **शनैस्**=अद्रुते—मान्द्ये इति यावत् । मान्द्यञ्च क्रियाया एव यथा—**शनैर्याति पिपीलिका** । "प्रायो भूम्यद्रुते शनैः" ( अम० ३ का० ४ वर्ग० श्लो० १७ ) **अन्तर्धौ**=तिर्य्यगर्थे च । अन्तर्धाने यथा—"तिरोभूयास्ते" इति । 'तिर्य्यगर्थे यथा—'तिरो वर्त्तते चन्द्रः ।' इति । कृधातुयोगे परिभवे ।

ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् ।

'अनादरः परिभवः परीभावस्तिरस्क्रिया'

इति ( अम० १ का० ७ वर्ग० श्लो० २२ ) इति कोशात् । **ऋधक्** = सत्ये सातत्ये च । वियोगशीघ्रसामीप्यलाघवेषु 'इत्यन्ये' इति तत्त्वबोधिनीकारः । अयं शब्दकोशे न दृश्यते।

**ऋते**=वर्जने । तदुक्तम्— पृथग्विनान्तरेणर्तेहिरुङ्नाना च वर्जने" ( अम० ३ का० ४ वर्ग० ३ श्लो० ) इति । विनार्थे 'किञ्चिद्दत्वा पृथक्क्रिया' इति, **'क्षणमप्युत्सहते न मां विना' अन्तरेण सुतं नास्ति सुखं संसारिणां भुवि, ऋते पुत्रात् स्वर्गतिर्न,** हिरुक् कर्म न मोक्षः स्यात्, विष्णुं नाना मोक्षदो नास्ति देवः । **युगपत्**=एकस्मिन्काले । "युगपदेकदा" ( अम० ३ का० ४ वर्ग २२ ) इति **आरात्** = दूरसमीपयोः । आराद्दूरसमीपयोः' (अथ ३ का ३ वर्ग श्लोक २४१ ) । **पृथक्** = भिन्ने । यथा 'किञ्चिद्दत्वा पृथक्क्रिया' इति। **ह्यस्**=गतेऽह्नि । **श्वस्**-अनागतेऽह्नि । **'ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽह्नि'** ( अम० ३-का० ४ वर्ग २२) इति । **'ह्यः सर्वमभवत्कर्म, अद्य श्वो वा परश्वो वा सर्वं कर्म भविष्यति'** इति ।

**दिवा**=दिवसे । **रात्रौ**=निशि । राति उत्सवं ददाति या–रात्रिः । अस्य पाठश्चिन्त्यो विभक्तिप्रतिरूपकत्वेन गतार्थत्वात् । 'दिवाह्नीत्यथ दोषा च नक्तञ्च रजनाविति' (अम० ३–का० ४–वर्ग० ६) इति । **सायम्** = निशामुखे । 'दिनान्ते तु **सायंसन्ध्यापितृप्रसूः**' इत्युक्तेः ( अम० १ का० ४ वर्ग० ३ ) । यथा—'सायं सन्ध्यामुपासिष्ये' इति । **चिरम्** = बहुकाले । **मनाक्** = ईषत्—**अल्पे** । तदुक्तम्- **'किंचिदीषन्मनागल्पे'** इति ( अम० ३–का० ४ वर्ग ८ ) । **जोषम्** = सुखे मौने च । तदुक्तम्— 'तूष्णीमर्थे सुखे जोषम्' इति । ( अम० ३ का० ३ व० २०० ) **तूष्णीम्** = मौने । 'मौने तु तूष्णीं तूष्णीकाम्' इत्युक्तेः ( अम० ३ का० ४ व० ९ ) नक्तञ्च रात्रौ ।

**बहिस्**—'अवस्—बाह्ये । **'अवस्'** इति तु अवरशब्दात् पञ्चमी–सप्तमी–प्रथमान्तात्- 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' ( ५-३-३९ ) इत्यसिप्रत्यये अवरशब्दस्य 'अव्' इत्यादेशे 'तद्धितश्चासर्व' इत्येवाव्ययत्वे सिद्धे स्वरादौ पाठश्चिन्त्य इत्युपाध्यायाः । **समया**—समीपे मध्ये च । 'समया निकषा हिरुक्' ( अम० ३–का० ४ वर्ग ७ ) इत्युक्तेः, **'समयान्तिकमध्ययोः'** इत्युक्तेश्च । ( अम० ३ का ३ वर्ग २५१ ) यथा—समया पत्तनं नदी, इति, समया शैलयोर्ग्रामः' । **निकषा** = अन्तिके । **'सायं साये प्रगे प्रातः प्रभाते निकषान्तिके'** इत्यमरात् । (३ का० ४–वर्ग १९) **स्वयम्** = आत्मना—इत्यर्थं 'स्वयमात्मना' ( अम० ३ का० ४ वर्ग १६ ) इति **वृथा** = व्यर्थे । 'व्यर्थके तु वृथा मुधा' (अम० ३– का० ४ व० ४) इति । **नक्तम्**—रात्रौ, 'नक्तञ्च रजनाविति' ( अम० ३ का० ४ वर्ग ६ ) इति । रजनावित्युक्ते ह्रस्वान्तोऽपि रजनिशब्दः । **नञ्**—निषेधे— अभावे । तदुक्तं नञ्सूत्रे ( २–१–४६ ) भाष्ये—'नञ् निवृत्तपदार्थकः' इति । निवृत्तं पदार्थो यस्य 'नपुंसके भावे क्तः ( ३–१–११४ ), इति क्तः । अभावार्थक इत्यर्थः । यत्तु–**'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।, अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः'** इति ते न नञ्वाच्याः, किन्तु लक्षणादिना बोधविषया आर्थिकाः । नञर्थस्य विस्तृता व्याख्या वैयाकरणभूषणसारस्य श्रीपञ्चोलिविरचितप्रभाव्याख्यातो द्रष्टव्या । पृ० सं० ३४६—३६४ प० ) ।

'नञा किञ्चन नास्तीति बोधयन्ती श्रुतिर्यतः ।
तदर्थनिर्णयो जातो बालकृष्णप्रभाऽश्रितः ॥' इति ।

**हेतौ । इद्धा । अद्धा । सामि । 'वत्' ब्राह्मणवत् । क्षत्रियवत् । सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा ।**

---

श्रुतिस्त्वरूपन्तु—'एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किञ्चन' इति । **'हेतौ'** इत्यव्ययम् = निमित्ते । वस्तुतस्त्वस्य गणे पाठश्चिन्त्यः, विभक्तिप्रतिरूपकत्वेन गतार्थत्वादित्युपाध्यायाः । **अद्धा** स्फुटावधारणयोः । तत्त्वातिशययोरित्यन्ये । 'तत्त्वे त्वद्धाऽञ्जसा द्वयम्' ( अम० ३ का० ४ वर्ग १२ ) इति । **सामि**—अर्धजुगुप्सितयोः 'सामि त्वर्धे जुगुप्सिते' ( अम० ३-का० ३ वर्ग २४८ ) इति । सामिकृतम्—अर्धं कृतम् । 'सामि' पा० सूत्रेण समासः, समासफलन्तु स्वरे, ततः तद्धिते च बोध्यम् । **वत्**—'तेन तुल्यम्' इत्यादिना विहितो वतिः । वस्तुतोऽस्य पाठो व्यर्थः, 'तद्धितश्च' इति सूत्रे परिगणनेन गतार्थत्वात् । ब्राह्मणवत्, क्षत्रियवत् इति सूदाहरणम् । **सना, सनत्, सनात्,** एते नित्येऽर्थे । 'सनान्नित्ये' ( अम० ३-का० ४ वर्ग० १७ ) इति, सनत्—प्र० सन् अतिः । चतुर्मुखे ब्रह्मणि । नित्येऽव्ययम् इति शब्दस्तोममहानिधिः ।

**सनात्**—इति कोशे नोपलभ्यते । **उपधा**—भेदे । 'भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम्' ( अम० २ ना० ८ व० ११ ) इति । संहतयोर्द्वैधीकरणमुपधा = धर्माद्यैः परीक्षणम् । तद्यथा—अमात्यादीनामाशयान्वेषणमुपधा स्यात् । अमात्यस्य भावज्ञानाय राज्ञा प्रेरितेनाप्तेन अमात्यं प्रति

**'दुष्टोऽयं राजा तदेनमुत्सृज्यान्यमभिषेचयामोऽन्यं वा साधुं नृपं व्रजामः'**

इत्युक्तोऽमात्यादिर्यदि तद्भाषणं न मन्येत तर्हि सत्यं धार्मिकोऽयममात्य इति धर्मपरीक्षणम् । एवमर्थभयकामैः परीक्षणमुदाहरणीयम् । **तिरस्** = अन्तर्धौ, तिर्य्यगर्थे च परिभवे । **अन्तरेण** = मध्ये विनार्थे च । वस्तुतस्तु 'अन्तराऽन्तरेण युक्ते' ( २-३-४ ) इति सूत्रे भाष्येऽनयोर्निपातत्वोक्तेः स्वरादिषु पाठः प्रक्षिप्तः । **ज्योक्**—कालभूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च । **कम्**—वारिमूर्धनिन्दासुखेषु । वस्तुतस्तु—

**'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः । सुखेऽपि कम् । ( अम० ३ का० ३ व० ५ )**
इत्युक्तेः । **'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।**
**मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम् ॥'**

इति मेदिनीतश्च 'कम्' इत्यव्ययं न प्रतीयते । यद्यव्ययत्वं प्रामाणिकं तदा विभक्तिप्रतिरूपकत्वेन तदुपपत्तिरिति स्वरादौ पाठश्चिन्त्य इत्युपाध्यायाः । **शम्** = सुखे । **शम्** = मङ्गले नपुंसकम्, महादेवे शम्भे च पुंसि० इति शब्दस्तोममहानिधिः । शमित्यपि विभक्तिप्रतिरूपकत्वेन गतार्थम् । **सहसा** = आकस्मिकाविमर्शयोः । प्राणनिरपेक्षं कर्म साहसम् ।

यथा-**'सहसा विदधीत न क्रियाम्'** इति । **'दिवः प्रसूनं सहसा पपात'** इति च । 'अतर्किते तु सहसा' (अम० ३-का० ४ व० ७) इति **विना** = वर्जने । **नाना** = अनेकोभयार्थयोः । 'नानाऽनेकोभयार्थयोः'( अम० ३ का० ३ व० २४६ ) इति । **स्वस्ति** = मङ्गले । 'स्वस्त्याशीः क्षेमपुण्यादौ' ( अम, ३-का० ३ व० २४० ) इति **स्वधापि** = पितृदाने । **अलम्**—भूषणपर्य्याप्तिशक्तिवारणनिषेधेषु । 'अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम् ।' (अम० ३० का० ३ व० २५१ इति । **वषट् श्रौषट् वौषट्**=हविर्दाने । 'स्वाहा=देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा' (अम० ३ का० ४ व० ८) इति। **अन्यत्** = अन्यार्थे । अस्य पाठो व्यर्थः, विभक्तिप्रतिरूपकत्वेन गतार्थत्वात् । अत एव कोशेऽस्याव्ययत्वेनानुक्तिः । **अस्ति** = सत्तायाम् । **उपांशु** = अप्रकाशोच्चारणरहस्ययोः । **क्षमा**—क्षान्तौ । अस्यापि विभक्तिरूपकत्वेन गतार्थता । अर्थतः शब्दतश्च विभक्त्यन्तप्रतिरूपकाणां गणे पाठो व्यर्थो बोद्धव्यः ।

विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रबाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अम् । आम् ।

**विहायसा** = वियदर्थे । **दोषा** = रात्रौ । **मृषा** = मिथ्या = वितथे । 'मृषा मिथ्या च वितथे यथार्थं तु यथातथम्' ( अम० ३-का० ४ व० १४ ) इति । **मुधा** = व्यर्थे ।

इत ऊर्ध्वम्—क्त्वातोसुन्कसुनः, कृन्मकारसन्ध्यक्षरान्ताः, 'अव्ययीभावश्च' इति गणसूत्रत्रय-मष्टाध्यायीस्थसूत्रसमानार्थकमिह न पठितं चेत्तदपि पठनीयम्, प्राचीनगणपाठे सत्त्वात् । न चाष्टा-ध्यायीस्थसूत्रैरेव गतार्थत्वात्तेषां पाठोऽत्र विफल इति वाच्यम् , तेषामनित्यत्वज्ञापनाय स्वरादौ पाठस्य चारितार्थ्यात् । एवञ्च 'अव्ययीभावश्च' इति सूत्रे भाष्ये 'लुङ्मुखस्वरोपचाराः' इत्यव्ययीभावस्या-व्ययत्वमेष्वेवेति परिगणितमन्यत्र व्यावृत्त्यर्थम् , तन्न वक्तव्यं भवति, अनित्यत्वादेवान्यत्राप्रवृत्तेः । पुरा सूर्यस्योदेतोराधेयः, पुरा क्रूरस्य विसृपो विरप्शम्' इत्यादौ षष्ठीसिद्धये 'न लोकाव्यय' (२-३-६९ ) इति सूत्रे 'अव्ययस्य प्रतिषेधे 'तोसुन्कसुनोरप्रतिषेधः' इत्युक्तं तदपि न वक्तव्यम्, अनित्यत्वा-त्तयोरव्ययसंज्ञाया अभावे निषेधाप्राप्तेः ।

**पुरा**—अविरते चिरातीते भविष्यदासन्ने च । **मिथो, मिथस्** एतौ रहसि सहार्थे च । **प्रायस्**—बाहुल्ये । **मुहुस्**—पुनरर्थे । **प्रबाहुकम्**—समानकाले ऊर्ध्वार्थे चाप्रवाहिका इति पाठान्त-रम् । 'ग्रहणी रुक् प्रवाहिका' इत्यमरात्तस्याव्ययत्वाभावः । **आर्य्यहलम्**—बलात्कारे । शाकटायनस्तु 'आर्य्यं' इति प्रतिबन्धे इत्याह । **हलम्**—प्रतिषेधविवादयोरित्याह । **अभीक्ष्णम्**—पौनःपुन्ये । **'मुहुः**—पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः ( ३ का० ४ व० १ ) । **साकम्, सार्द्धम्**—सहार्थे । 'सार्धन्तु साकं सत्रा समं सह' इत्यमरः ( ३ का० ४-म० ४ ) **नमस्**—नतौ । **हिरुक्**—वर्जने । **धिक्**—निन्दाभर्त्सनयोः । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः ( ३-का० ३ व० २३६ ) ।

इत ऊर्द्ध्वम्—तसिलादय एधाच्पर्यन्तास्तद्धिताः—शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्च' इति प्राचीनगणपाठे दृश्यन्ते । 'पञ्चम्यास्तसिल्' ( ५-३-७ ) इत्यारभ्य 'एधाच्च' (५-३-४६) इत्येतदन्तैः सूत्रैरुक्तास्तसिलादयो बोध्याः । तथा-'शस्तसी' इत्यादिना 'बह्वल्पार्था-च्छस्' (५-४-४२) 'प्रतियोगे पञ्चम्यास्तसिः' (५-४-४४) 'तेनैकदिक्' इत्यधिकारे ( ४-३-११२) 'तसिश्च' इति विहितः सर्वोऽपि तसिर्ग्राह्यः । 'आस्थालौ' इत्यनेन 'इण आसिः' (उणा० ४ पा० २२२ सू० ) इति विहित आसिः, 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' इति विहितस्थाल् च गृह्यते । च्व्यर्था इत्यनेन 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' ।

'विभाषा साति कार्त्स्न्ये' ( ५-४-५२ ) 'देये त्रा च' ( ५-४-५५ ) एतदन्ता ग्राह्याः । **अम्**—शैघ्र्येऽल्पेच । 'किमेत्तिङव्ययघात्' ( ५-४-११ ) इत्यधिकारे 'अमु च च्छन्दसि' ( ५-४-१२ ) इति विहितोऽम् स्वरादौ पठ्यते । तेन 'प्रतं नय प्रतरम्' इत्यत्राव्ययत्वं सिध्यति । 'किमे-त्तिङव्यय' इति विहितः 'कास्प्रत्ययात्' इति ( ३-१-३५ ) इति विहितश्चाम् स्वरादौ पठ्यते । तेन 'यजाचतराम्' 'कारयामास' इत्यादावामन्तस्याव्ययत्वं सिद्ध्यति । **प्रताम्** = मान्त एव । 'मो नो धातोः' इति नत्वं तु न, 'प्रतान्' इति नान्तस्य पृथक् पाठेन मान्तस्यापि नत्वे पाठवैयर्थ्या-पत्तेः, प्रयोगस्यस्यानुकरणेन 'स्वर्' इत्यादाविव गणे पदान्तनिमित्तककार्य्याभावकल्पनाच्च ।

एतेन 'प्रशान्' इति पाठोऽप्रयुक्तः, उक्तरीत्या नत्वाप्राप्तेः । भाष्ये मान्तं यत्कृदन्तं तदव्यय-मित्यर्थे प्रतामौ प्रताम इत्यत्र दोषमाशङ्क्य न प्रत्ययलक्षणेन कृदन्तत्वमादाय श्रूयमाणमान्तस्या-व्ययसंज्ञा भवति यदयं गणे प्रशामशब्दं पठति ।

यद्यपि कैयटेन नान्तं स्वीकृत्य नत्वस्यासिद्धत्वादव्ययत्वं मान्तत्वेन स्यादित्युक्तं तथाऽपि 'स्वर्' इति रेफान्तपाठाद्यथा न विसर्गस्तथा मान्तपाठेऽपि नत्वाभावः कल्पनीय इति नागेशः । आधये, चिकीर्षवे इत्यादावव्ययत्त्वात् सन्निपातपरिभाषया प्रतिपदोक्तपरिभाषया वा वारणीयः ।

प्रताम्। प्रशान्। प्रतान्। मा। माङ्। आकृतिगणोऽयम्॥ ( इति स्वरादयः )। च। वा। ह। अह। एव। एवम्। नूनम्।

प्रताम् = ग्लानौ। प्रशाम् = शान्तौ। प्रतान्—विस्तारे। मा माङ् = निषेधे। 'मास्म मालञ्च वारणे' (अम० ३ –का० ४ व० ११) इति निषेधाशङ्कयोरित्यन्ये। 'आङ्माङोश्च' इति सूत्रभाष्यात् ङिद्भिन्नः 'मा' इति न लभ्यते। 'आकृतिगणोऽयम्' इति स्वरादिगणसूत्रम्। तेनान्येऽपि स्वरादयो यथालक्ष्यं बोध्याः। तथा हि—कामम् = स्वाच्छन्द्ये। 'अकामानुमतौ कामम्' ( अम० का० ४ व० १३ ) इति। अनिच्छायां सत्यामनुमतौ 'कामम्' इत्येकम् इत्यर्थः। यथा—'त्वं हनिष्यसि चेत्कामम्' इति। 'कामं प्रकामेऽनुमतावसूयानुगमेऽपि च' इति हेमविश्वप्रकाशौ। असूयापूर्वकस्वीकारे 'अस्तु' इति—'कामम्' इति च। तदुक्तम्—'असूयोपगमेऽस्तु च' (अम० ३ का० ४ व० १३) इति चेन 'कामम्' इत्यस्य संग्रहः।

प्रकामम् = अतिशये। भूयस् = पुनरर्थे। 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु। पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' इति ( अम० ३ का० १ व० ६३ ) साम्प्रतम् = न्याय्ये। 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्'। इति 'युक्ते द्वे साम्प्रतं स्थाने' ( अम० ३ का० ४ व० ११ ) इति साम्प्रतम् = इदानीम्। तदुक्तम्—

'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इति ( अम० ३ का० ४ व० २३ ) परम् = किन्त्वर्थे। साक्षात् = प्रत्यक्षे। 'साक्षात्प्रत्यक्षतुल्ययोः' इति ( अम० ३ का० ३ व० २४२ ) यथा—'साक्षाद्दृष्टो यथा हरिः'। 'साक्षाल्लक्ष्मीरियं वधूः' इति च। साचि = तिर्यगर्थे। 'तिर्यगर्थे तिरः साचि' ( अम० ३ का० ४ व० ६ ) सत्यम् = अर्धाङ्गीकारे। मङ्क्षु = आशु—शैघ्र्ये। 'स्राक्झटित्यञ्जसाऽह्नाय द्राङ्मक्षु सपदि द्रुते' ( अम० ३ का० ४ व० २ ) इति संवत् = वर्षे। अवश्यम् = निश्चये। उषा = रात्रेरवसाने। 'हुं तर्के स्यादुषा रात्रेरवसाने' इत्यमरः ( अ० ३ का० ४ व० १८ ) ओम् = अङ्गीकारे ब्रह्मणि च। 'ओमेवं परमम्मते' इत्यमरः ( ३ का० ४ व० १२ )। ओम् = एवम्, परमम् त्रयं मते अङ्गीकारे इत्यर्थः। भूर् = इति पृथिव्याम् 'स भूरिति व्याहरत् भूमिमसृजत्' इति। भुवर्—अन्तरीक्षे। झटिति, झगिति, तरसा एते = शैघ्र्ये। सुष्ठु = प्रशंसायाम्। दुष्ठु = निकृष्टे। सु = पूजायाम्। कु = कुत्सिते ईषदर्थे च। 'पापकुत्सेषदर्थे कु' इत्यमरः ( ३ का० ३ व० २४९ ) कुकर्म, कापथः, कवोष्णम्। क्रमेणोदाहरणम्। अञ्जसा = तत्त्वशीघ्रार्थयोः। 'तत्त्वे त्वद्धाऽञ्जसा द्वयम्' इत्यमरः ( ३ का० ४ व० १२ )। मिथु = द्वावित्यर्थे। अस्तम् = विनाशे। अमरस्तु 'अस्तमदर्शने' ( ३ का० ४ व० १७ ) इत्याह। यथा—'सायमस्तमितो रविः' इति। स्थाने = युक्ते। 'स्थाने हृषीकेश तव प्रकीर्त्या' गीतायाम्। 'युक्ते द्वे साम्प्रतं स्थाने' इति ( अम० ३ का० ४ व० ११ )। वरम् = ईषदुत्कर्षे। सुदि = शुक्लपक्षे। बदि = कृष्णपक्षे।

अथ चादीनामर्थो निरूप्यते। च—समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। द्वयोर्मध्ये एकस्यानुषङ्गिकत्वेऽन्वाचयः—अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिरनुषङ्गः। यथा—'बटो भिक्षामट, गाञ्चानय'। समाहारः समूहः। यथा—'संज्ञापरिभाषम्'। मिलितानामेकत्रान्वयः समुच्चयः। यथा—'धवखदिरौ छिन्धि'। 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः (३ का० ३ व० २४०) अन्वाचयसमुच्चयार्थकचयोगे एकार्थीभावरूपसामर्थ्याभावेन न द्वन्द्वसमासः। यथा 'भिक्षामट गाञ्चानय' 'ईश्वरञ्च गुरुञ्च भजस्व' इत्यत्र। वा = 'स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये। उपमायां विकल्पे वा' ( अम० ३ का० ३ व० २४८ ) इति। ह = प्रसिद्धौ। अह = पूजायाम्। एव = 'अवधारणे अनवक्लृप्तौ च। अनवक्लृप्तिः = असम्भावना। एवम् = उक्तपरामर्शे। नूनम् = निश्चये तर्के च। 'नूनमवश्यं निश्चये द्वयम्' इति ( अम० ३ का० ४-१६ ) 'नूनं तर्केऽर्थनिश्चये' इति च। ( अम० ३ का० ३ व० २४९ )।

शश्वत् । युगपत् । भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । किञ्चित् । यत्र । नह । हन्त । माकिः । माकीम् । नकिः । आकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । न्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् ( ओम् ) । तुम् ।

---

शश्वत् = पौनःपुन्ये नित्ये सहार्थे च । 'मुहुः = पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इति ( अम० ३ का० ४ व० १ ) 'पुनः सहार्थयोः शश्वत्' इति ( ३ का० ३ व० २४२ ) 'शश्वदनारते' ( अम० ३ का० ४ व० ११ ) युगपत् = एककाले । भूयस् = पुनरर्थे आवश्यके च । कूपत्—प्रश्ने प्रशंसायाञ्च । कुवित्—भूर्य्यर्थे प्रशंसायाञ्च । नेत् = शङ्कायां प्रतिषेधविचार-संशयेषु च । चेत्, चण्—यद्यर्थे । 'पक्षान्तरे चेद्यदि च' ( अम० ३ का० ४ व०–१२ ) अत्रेत्संज्ञक-णकारणाम् 'निपातैर्यद्यदि'। इति सूत्रे ( ८–१–३० ) 'चण्' इति विशेषणार्थम् । तेन समुच्चया-दिबोधकचशब्दयोगे न तत्प्रवृत्तिः ।

भाष्येऽप्युक्तम् 'चण् णिद्विशिष्टश्चेदर्थे द्रष्टव्यः' इति । अयं च वै मरिष्यति—अयं चेन्मरिष्य-तीत्यर्थः । यद्यदार्थे च = हेतौ च विचारे यदि चेत् चणः । 'हन्त = हर्षेऽनुकम्पायां वाक्यारम्भ-विषादयोः, कच्चित् = इष्टप्रश्ने । यत्र—अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नह = प्रत्यारम्भे । हन्त = हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च । 'माकिः, माकी, नकिः, त्रयोऽपि = निषेधे । माङ्नञौ स्वरादि-धृतौ । इह पाठस्तु निपातत्वार्थः । तेन 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वं फलं सिध्यतीति केचित् , तदसत्, स्वरादावेव पाठेऽपि फिट्स्वरेणाद्युदात्तत्वसिद्धेः । 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमा-नाव्यय' ( ६–२–२ ) इति सूत्रे भाष्ये परिगणनं कर्तव्यम् । 'अव्यये नञ्कुनिपातानाम्' अव्यये नञ्कुनिपातानामिति वक्तव्यम् ।....क मा भूत्—स्नात्वाकालकः पीत्वास्थिरकः' निपातात्पृथङ् नञ्-नञ्ग्रहणाज्ज्ञायते नञः स्वरादिपाठादव्ययत्वम्, न तु निपातत्वादिति केचित्तन्न, नञश्चादिषु पाठेन निपातत्वेऽपि पृथग्ग्रहणम् 'अकरणिः' इत्यादौ समासस्वरं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते तं बाधित्वा 'गतिकारकोपपदात्' इति प्राप्तोपपदस्वरबाधनाय पूर्वपदप्रकृतिस्वरार्थं नञ्ग्रहणम्, निपात-त्वेन सिद्धे प्रतिपदोक्तनञ्ग्रहणसामर्थ्यात् । एतेन चादिषु नञः पाठः प्रक्षिप्तः, स्वरादिष्वेव नञः पाठ इति परास्तम् । स्पष्टञ्चेदं शेखरे । अन्ये तु सत्त्ववाचकानामप्यव्ययसंज्ञार्थं पाठ इत्याहुस्तदपि चिन्त्यम्, लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः ।

वस्तुतस्तु लक्ष्मीवाचकस्याव्ययत्वापत्तिश्चिन्त्या, ङित एव माशब्दस्य पाठात् । लक्ष्मीवाचकस्तु माशब्दो न तथा, मान्यते—पूज्यते या सेत्यर्थे 'मान पूजायाम्' इत्यतः 'अन्येष्वपि दृश्यते' (३–२–१०१) इति सूत्रे 'अपि'शब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्' इति कौमुद्यामुक्तत्वात् डप्रत्यये टिलोपे टापि निष्पन्नत्वादित्युपाध्यायाः ।

यस्य मते माधातोः कप्रत्यये 'मा' इति तन्मतेऽपि नोक्तदोषः, अङित्त्वात् । यावत्, तावत् = साकल्यावधिमानावधारणेष्वव्युत्पन्नौ । साकल्ये—'यावत्कार्य्यं तावत्कृतम्' इति, अवधौ = यावद्ग-न्तव्यं तावत्तिष्ठ, माने = यावद्दत्तं तावद् भुक्तम् । अवधारणे = यावदमत्र तावद् ब्राह्मणानाम-न्त्रयस्व, इति त्वै = विशेषवितर्कयोः । रै = दानेऽनादरे च रै करोति—ददातीत्यर्थः । त्वं रै किं करिष्यसि—किमपि नेत्यनादरः । श्रौषट्, वौषट् = हविर्दाने । स्वाहा = देवताभ्यो दाने । 'स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा' इत्यमरः ( ३ का० ४ व० ८ ) । स्वधा = इति पितृभ्यो दाने 'पितृभ्यः स्वधा' इति प्रसिद्ध एव । श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः । एकाचां तूभयत्र पाठो व्यर्थ एव, आद्युदात्तत्वेऽन्तोदात्तत्वे वा भेदाभावात् । तुम् = तुङ्कारे । यथा—

'गुरुं तुंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः ।
श्मशाने जायते घोरे काकगृध्रोपसेविते' ॥ इति ।

तथाहि। खलु। किल अथो। अथ। सुष्ठु। स्म। आदह। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (ग १६) अवदत्तम्। अहंयुः। अस्तिक्षीरा। अ। आ। इ। ई। उ। ऊ। ए। ऐ। ओ। औ। पशु। शुकम्। यथाकथाच। पाट्। प्याट्। अङ्ग। है। हे। भोः। अये। घ। विषु। एकपदे। युत्। आतः। चादिरप्याकृतिगणः॥ (इति चादयः)।

---

इति। तथाहि = निदर्शने। खलु = निषेधवाक्यालङ्कारनिश्चयेषु। 'निषेधवाक्यालङ्कारजिज्ञासाऽनुनये खलु' इत्यमरः (३ का० ४ व० २५४)। 'प्रश्ने सान्त्वने वीप्सायां माने निषेधेऽनुनये। वाक्यस्य भूषणपूरणयोः निश्चये हेतौ चे'ति शब्दस्तोममहानिधिः। किल = वार्तायाम्, वृत्तश्रुतौ सम्भावनायाञ्च। सम्भावनायां यथा-गुरून् किलातिशेते शिष्यः। वार्तायां यथा-जघान कंसं किल वासुदेवः। वार्तायाम्, अनुशयार्थे, निश्चये सम्भाव्ये प्रसिद्धप्रमाणद्योतके सत्ये हेतावरुचौ अलीके तिरस्कारे चेति शब्दस्तोममहानिधिः। अथो, अथ—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि तेन मङ्गलवाचकस्य सत्त्वार्थकत्वेऽप्यव्ययत्वं सिध्यति। अत एव श्रीहर्षः—

'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे।
यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयांबभूव ताम्॥' इति।

अत्र हि 'अथ स्नपयांबभूव' इत्यस्य मङ्गलस्नपनं चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गादिध्वनिवत्।

सुष्ठु = अतिशये। 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः (३ का० ४ व० २) स्म—अतीते पादपूरणे च। 'तु हि च स्म ह वै पादपूरणे' इत्यमरः (३ का०-४५) यथा—रामस्तु लक्ष्मणं प्राह, अहं हि यास्ये नगरम्, अत्र प्राह च राजानम्, मया स्म भुक्तम्, स ह तं प्राह लक्ष्मणः, तेन वै स हतस्तूर्णम्। आदह = उपक्रमहिंसाकुत्सनेषु 'आदह = स्वधामनु' इत्यत्र तु पदकारा 'आत्' इति पृथक् पदं पठन्ति। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' इति चादिगणसूत्रम्। अवदत्तम्—अत्र 'अव' इत्यस्याव्ययत्वमात्रम्, न तूपसर्गत्वमिति—'अच उपसर्गात्तः' इति (७-४-४७) इति दाधातोस्तादेशो न। किन्तु 'दो दद्घोः' (७-४-४६) इति 'दथ्' इत्यादेशश्चर्त्वेन तकारे 'अवदत्तम्' इति। यद्यप्युपसर्गस्यापि निपातत्वेनाव्ययत्वमस्ति तथापि तत्रोपसर्गत्वसमानाधिकरणमव्ययत्वं प्रतिरूपके त्वव्ययत्वमात्रम्। अहम् = इति अहङ्कारे। तेनाहमित्यव्ययात् 'अहंशुभमोर्युस्' (५-२-१४०) इति मत्वर्थे युस् 'अहंयुः'=अहङ्कारवान्। अस्मच्छब्दाद्युचि तु मद्युरिति स्यात्। 'अस्तिक्षीरा' अस्ति-विद्यमानं क्षीरं यस्या इति विग्रहे 'अस्ति' इत्यव्ययस्य सुबन्तत्वेन बहुव्रीहिर्नोपपद्येत।

स्वरप्रतिरूपकमव्ययमाह—अ—इत्यादि। सम्बोधनेऽधिक्षेपे निषेधे च। आ = वाक्यार्थे स्मरणे च। यथा—आ एवं मन्यसे। अत्र आ इत्यस्य 'पूर्वं त्वं नामंस्था' इत्यर्थः। इ = सम्बोधनजुगुप्साविस्मयेषु। ई, उ, ऊ, ए, ऐ, ओ, औ, = सम्बोधने। उ=सम्बोधने कोपवचने अनुकम्पायाम् नियोगे विस्मये चेति शब्दस्तोममहानिधिः। ऊ=सम्बोधने वाक्यारम्भे दशायां रक्षायाञ्चेति शब्दमहानिधिः। ए—दशायाम्, स्मृतौ, आमन्त्रणे, असूयायाम्, आह्वाने चेति श० स्तो० म० नि०। ऐ-ओ-औ कोशेषु अव्ययं नोपलभ्यते। पशु—सम्यगर्थे। दर्शनार्थेऽव्ययम् इति, श० स्तो०। शुकम् = शैघ्र्ये। यथाकथाच=अनादरे। पाट् प्याट् अङ्ग है हे भोः अये सप्त=सम्बोधने। घ = हिंसाप्रातिलोम्यपादपूरणेषु। विषु=नानार्थे साम्ये च। एकपदे = अकस्मात् यथा—'कथमेकपदे निरागसम्' इति रघुवंशेः। युत्=कुत्सायाम्। आतः = इतोऽपीत्यर्थे। 'आकृतिगणोऽयम्' इति चादिगणसूत्रम्। तद्यथा—यत्तत् = हेतौ। आहोस्वित् = विकल्पे, सीम=सर्वतोभावे। शुकम् =

*तद्धितश्चासर्वविभक्तिः । [ १-१-३८ ]*

यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् ।

अतिशये । अनुकम्=वितर्के । शम्बट्=अन्तःकरणे आभिमुख्ये च । व=पादपूरणे इवार्थे च । 'ववा यथा तथैवैवं साम्ये' इत्यमरः ( ३ का० ४ व० ९ )

**दिष्ट्या**—आनन्दे । 'दिष्ट्या समुपजोषञ्चानन्दे' इत्यमरः (३ का० वि० १०) **चटु** चाटु—प्रियवाक्ये । यथा—'विस्रब्धचाटुकशतानि' इति साहित्यदर्पणे ३ परिच्छेदे । **हुम्**—भर्त्सने । 'हुम्—तर्के स्यात्' इत्यमरः ( ३ का० ४ व० १८ ) **इव**—सादृश्ये । **अद्यत्वे**—इदानीम् । स्वरादिचाद्योराकृतिगणत्वेऽपि ये निपातस्वरभाजस्ते चादिषु परे स्वरादिषु ये उभयस्वरभाजस्ते उभयत्र बोध्याः । एकाच उभयत्र पाठस्तु व्यर्थ एव । चादिस्वरादिव्यतिरिक्तमव्ययमाह—

**'तद्धितश्चासर्वविभक्तिः'** ( १-१-३८ ) । इति अत्र **'स्वरादिनिपातम्'** इति पूर्वसूत्रात् 'अव्ययम्' इत्यनुवर्तते । अत्र तद्धितपदेन 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तद्धितान्ततदादेर्ग्रहणम् । न च 'संज्ञाविधौ प्रत्ययग्रहणे' इति परिभाषया तदन्तविधिनिषेधः स्यादिति वाच्यम्, केवलतद्धितस्याव्ययसंज्ञायां फलाभावेन सूत्रवैयर्थ्यापत्त्या केवलतद्धितादिभक्तेरप्राप्त्या 'असर्वविभक्तिः' इति विशेषणवैयर्थ्येन 'येन विधिः' इति सूत्रे 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति भाष्यवार्त्तिकेन च 'संज्ञाविधौ' इति निषेधाप्रवृत्तेः, ज्ञापकसिद्धायास्तस्या असार्वत्रिकत्वात् ।

अत्र **'असर्वविभक्तिः'** इति बहुव्रीहिः । तत्र न सर्वा असर्वा इति तत्पुरुषान्तरम्, असर्वा विभक्तिर्यस्मादिति विग्रहः । तदुक्तं मूले—**यस्मात्सर्वा विभक्तिर्नोत्पद्यत** इति । यदा तु सर्वशब्दः विभक्तिप्रकारप्रथमादिपरः स्यात्तदा सर्वप्रथमादिप्रकारिका विभक्तिर्नोत्पद्यत इत्यर्थः स्यात् । एवञ्च यस्य मते अव्ययात्प्रथमादीनां सप्तानामेकवचनमुत्पद्यते तदा अव्ययात्सर्वप्रकारिका विभक्तिरुत्पन्नेति कस्यापि तद्धितान्तस्याव्ययसंज्ञा न स्यात् ।

तथाहि–'द्वयेकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति पाणिनिन्यासं त्यक्त्वा 'एकवचनम्' ततः 'द्विबह्वोर्द्विवचनबहुवचने' इति न्यस्य प्रातिपदिकादेकवचनं भवति इत्यर्थे द्वित्वबहुत्वयोरपि प्राप्तस्यैकवचनस्य 'द्विबह्वोः' इत्यनेन बाधः स्यात् । तथा च 'एकवचनम्' इति सूत्रस्य द्वित्वबहुत्वयोरभावे प्रवृत्तिः स्यात् । द्वित्वबहुत्वयोरभावश्च यत्रैकत्वम् तत्र, यत्र काऽपि संख्या नास्ति तत्रापि, यथा—अव्यये । एवञ्चासंख्याव्ययेभ्यः सर्वासां प्रथमादीनामेकवचनमुत्पद्यते इति कस्याप्यव्ययसंज्ञा न प्राप्नोतीति विभक्तिशब्दोऽत्र वचनत्रयात्मकविभक्तिपर एव ।

तस्मात् सर्वा विभक्तयो यस्मादिति न विग्रहः, किन्तु 'सर्वशब्दोऽत्र सर्वः घटो दग्ध' इतिवदवयवकार्त्स्न्ये वर्तते सर्वावचनत्रयात्मिका विभक्तिर्यस्मात्तद्धितान्तान्नोत्पद्यते तादृशं तद्धितान्तमव्ययमित्यर्थे न कोऽपि दोष इत्याह मूले—**यस्मादिति** । **सर्वेति**—वचनत्रयात्मिकेत्यर्थः । **नोत्पद्यते** इति किन्त्वेकवचनमेवोत्पद्यते इत्यर्थः ।

ननु संख्याकारकबोधकैः 'द्वयेकयोर्द्विवचनबहुवचने' 'बहुषु बहुवचनम्' इत्यादिभिः, 'कर्मणि द्वितीया' इत्यादिभिश्चैकवाक्यतया 'स्वौजसमौट्' इत्यनेन स्वादिविधानेऽव्ययार्थे संख्याकारकयोरभावात्कथं विभक्तिः । 'अव्ययादाप्सुपः' इति ज्ञापकात्स्वादिविधाने चाव्ययात्सर्वा विभक्तयः प्राप्नुवन्ति । यदि तु 'स्वौजसमौट्' इति सूत्रेण सर्वेभ्यः प्रातिपदिकेभ्यः सर्वस्मिन्नपि कारके सर्वा विभक्तीर्विधाय विहितानां नियमः ।

तदा कर्माद्यर्थयोग्यप्रातिपदिकात् चेत्कर्मणि विभक्तिस्तदा द्वितीयैवेति, कर्मादिरहिते तद्योग्यप्रातिपदिकात् चेद्विभक्तिस्तदा प्रथमैवेत्यर्थनियमेन कर्मादौ सामान्यसूत्रेण जातानां तृतीयादिविभक्तीनां लोपेनैव निवृत्तिः कार्य्येति पक्षेऽपि कर्मादियोग्यप्रातिपदिकेभ्य एव द्वितीयादिभिन्नानां निवृत्तिः स्यात् अव्ययेभ्यः सामान्यसूत्रेण जातानां तु सर्वासां विभक्तीनां स्थितिरेव स्यात् ।

परिगणनं कर्तव्यम्--तसिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक्समासान्तेभ्यः ।

तथा च सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यः, नियमस्यात्राप्रवृत्तेरित्यर्थं नियमरक्षः । यदि कर्माद्यर्थयोग्य-प्रातिपदिकात् चेद्द्वितीया तदा कर्मण्येव न करणादौ, कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा न कर्मादौ, संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावे कवचनादि न द्वित्वादौ इति प्रकृत्य-र्थापेक्षप्रत्ययनियमस्तदापि अव्यये संख्याद्यभावान्नियमाप्रवृत्त्या प्रकृत्यर्थापेक्षप्रत्ययनियमेऽप्यव्ययेभ्य सर्वा विभक्तय इति वचनत्रयात्मिका नोत्पद्यत इत्यर्थासङ्गतिः ।

ननु सुप्तिङां संख्या कर्माद्युभयार्थकत्वेन कर्ममात्रे एवेति नियमासङ्गतिरिति चेन्न, कर्मण्ये-वेत्यस्य कर्मत्वसत्त्वे एव, न तु तदभावे इत्यर्थेन संख्यासत्त्वेऽपि नियमप्रवृत्तौ बाधाभावात् ।

अत एव 'गां दोग्धि' इत्यादौ अपादानत्वेऽपि कर्मत्वस्यापि सत्त्वेन द्वितीया सिध्यति । तथा च पूर्वोक्तसर्वनियमपक्षेऽपि वचनत्रयात्मिका नोत्पद्यते इत्यर्थासङ्गतिस्तदवस्थैवेति चेन्न, 'एकवचनम्' इति सूत्राभावेऽपि एकत्वे, संख्याया अभावे च सामान्यसूत्रेण एकवचनस्य सिद्धौ 'एकवचनम्' इति सूत्रस्याप्राप्तप्रापणार्थत्वेन संख्याकर्मादियोग्यत्वाभावेऽप्येकवचनस्य विधानेनोक्तदोषाभावात् ।

विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन । अत एव 'अव्ययादाप्सुपः' इत्यत्र 'सुपः' इति प्रत्याहारग्रहणं चरितार्थम् : अन्यथा 'सोः' इत्येव ब्रूयात् । ननु 'पचतिकल्पम्' इत्यादावपि 'एकवचनम्' इत्यनेन सर्वैकवचनं स्यादिति चेन्न, सर्वथाऽप्राप्तावेव तस्य प्रवृत्तेः । अत्र च कर्तृत्व-कर्मत्वसत्त्वेन क्रियायाम् 'एका क्रिया' इति भाष्येण स्वत एकत्वसत्त्वेन च सर्वथा तदप्राप्त्य-भावात् । अत एव **'पचतिकल्पं भवति, पचतिकल्पस्य भवनम्'**। पचतिकल्पेन स्थीयते, पचतिकल्पं पश्य, पचतिकल्पस्य दर्शनम्, पचतिकल्पाय गच्छति इत्यादौ कर्तरि कर्मणि च या या विभक्तयो विहितास्तासामुत्पत्तिः संगच्छते ।

न च 'एकवचनम्' इत्यस्याप्राप्तप्रापणार्थत्वे तिङन्तेभ्योऽप्येकवचनं स्यादिति वाच्यम्, सुप्त्विधायकशास्त्रैकवाक्यतया प्रातिपदिकेष्वेव तत्प्रवृत्तेः ।

यत्तु 'तद्धितश्च' इति सूत्रे कैयटः—'एकवचनम्' इत्यनेन प्रथमायाः प्रथमोपस्थितत्वेन प्रथ-माया एवैकवचनमिति तत्र 'निजां त्रयाणाम्' इति त्रयाणां ग्रहणसामर्थ्येन 'आद्युदात्तश्च' इत्यत्रादि-ग्रहणेन च पाणिनिना स्वशास्त्रे एतन्न्यायानाश्रयणबोधनादिति नागेशः । वस्तु तस्तु—'अव्ययादाप्सुपः' इत्यत्र प्रत्याहाराश्रयणात् 'तृतीयासप्तम्योर्बहुलम्' ( २-४-८४ ) इति ज्ञापनाच्च सप्तविभक्ती-नामेकवचनमनेनेत्येव वरम् । नन्वेकवचनस्य संख्याबोधकत्वाभावेन 'घटः' इत्यादावेकत्वप्रतीतिर्नस्या-देति चेन्न, द्विवचनबहुवचनयोरभावेन द्वित्वाद्यनुपस्थितौ घटादेः संख्यावदर्थत्वेन सत्त्वभूतत्वात्प्रकर-णाच्चैकत्वस्य मानसबोधनात् ।

ननु 'पचतिकल्पम्' इत्यादावतिव्याप्तिः, एकवचनस्यैव सत्त्वे वचनत्रयात्मकविभक्तेरभावात् । एवमेवोभयशब्दे चातिव्याप्तिः, ततो द्विवचनानुत्पादादित्यत आह—**परिगणनमिति** । परिगणितानां पाठः स्वरादिषु कर्तव्यः । तेन स्वरादित्वादव्ययत्वं स्यात् । 'तद्धितश्चासर्वविभक्तिः' इति सूत्रं न कार्यमिति भावः । सत्यपि सूत्रे परिगणनस्यावश्यकतया परिगणनेनैव सिद्धया सूत्रवैयर्थ्यं स्पष्टमेव ।

**तसिलादय इति**—'पञ्चम्यास्तसिल्' ( ५-३-७ ) इत्यारभ्य 'याप्ये पाशप्' ( ५-३-४७ ) इत्यतः प्राक् 'एकाद्धो ध्यमुञन्यतरस्याम्' ( ५-३-४४ ) इत्यन्तास्तसिलादयः । ननु ध्यमुञन्तानां तसिलादित्वे 'द्वित्र्योश्च धमुञ्' ( ५-३-४५ ) इति विहितस्य धमुञः 'एधाच्च' ( ५-३-४६ ) इति विहितस्य एधाचश्च तसिलादित्वानापत्त्याऽव्ययत्वानापत्तिरिति चेन्न, एतयोर्धास्थानिकादेशविधाय-कत्वेन स्थानिवत्त्वेन धाप्रत्ययान्तत्वेनैवाव्ययत्वसिद्धेः । **शस्प्रभृतय इति**—'बह्वल्पार्थाच्छस्' ( ५-४-४२ ) इति विहितशस्प्रत्ययादारभ्य 'अव्यक्तानुकरणात्' ( ५-४-५७ ) इति विहितडाच्-प्रत्ययान्ताः शस्प्रभृतय इत्यर्थः । **प्राक् समासान्तेभ्य इति** ।

अम्, आम्, कृत्वोऽर्थाः, तसिवती, नानाञाविति। तेनेह न—पचतिकल्पम्। पचतिरूपम्।

---

एतेन 'मद्रात्परिवापणे' ( ५-४-६७ ) इत्येतत्पर्यन्तसूत्रैर्डाज्विधीयते। इदञ्च सूत्रम् 'समासान्ताः' (५-४-६८) इत्यधिकारसूत्रात्प्रागिति स्पष्टप्रतिपत्तये उक्तम् **'प्राक् समासान्तेभ्यः'** इति।

नन्वेवम् **'इवे प्रतिकृतौ'** ( ५-३-९६ ) इति विहितथाल्प्रत्ययान्तस्येष्टमव्ययत्वं न स्यादुक्तेष्वनन्तर्भावादिति चेन्न, स्वरादौ 'आस्थालौ' इति पाठेन तदन्तस्याप्यव्ययत्वात्। तत्र 'इण आसिः' ( उणा.४ पा.२२२ ) इति विहित आसिर्गृह्यते। 'अयाः' इति विभक्तिरहितस्य लोके साधुत्वायाव्ययत्वमावश्यकम्। 'अयासौ' इत्यादि तु छान्दसम्। छन्दसि तु न 'अयाः' इत्यस्याव्ययत्वमावश्यकम्, 'सुपां सुलुक्' इति लुकैव तद्रूपसिद्धेः। **अम् आम् इति**—'अमु च छन्दसि' ( ५-४-१२ ) इति विहितः 'अम्' इति 'किमेत्तिङव्यय' ( ५-४-११ ) इति विहित आम्। तद्भिन्नस्यामस्तु नात्र ग्रहणम्, तद्धितानामेव भाष्ये परिगणनात्।

**कृत्वोऽर्था इति**—'संख्यायाः क्रियाभ्यावृत्तिगणने' ( ५-४-१७ ) इति विहितः कृत्वसुच्प्रत्ययः। तदर्थश्च क्रियोत्पत्तिगणनम्। 'पञ्चकृत्वो भुङ्क्ते' इत्यनेन भोजनस्य पञ्चावृत्तयः प्रतीयन्ते। क्रियाभ्यावृत्तिर्नाम क्रियायाः पुनः पुनरावृत्तिः। तस्याः परिगणनं कृत्वोऽर्थः। **तदुक्तम् 'एकस्य सकृच्च'** ( ५-४-१९ ) इति सूत्रे भाष्ये 'पुनरावृत्तिरभ्यावृत्तिः' इति क्रियापदेनात्र साध्यरूपा क्रिया विवक्षिता। तेन द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाका इत्यादौ कृत्वोऽर्थप्रत्यया न भवन्ति। साध्यत्वञ्च—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वम्।

**तदुक्तं भाष्ये** 'कस्मान्न भवति 'द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दश पाका इति। नैतत्क्रियागणनं किं तर्हि द्रव्यगणनम्। कथम्? 'कृदभिहितो भावो द्रव्यवद्भवतीति'। 'इहापि तर्हि द्रव्यगणनान्न प्राप्नोति—द्विर्भुक्त्वा, द्विर्भोक्तुम्,......पञ्चकृत्वो भुक्त्वा, पञ्चकृत्वो भोक्तुम्' इति। 'कृदभिहितो भावो द्रव्यवदपि क्रियावदपि' इति च। एतेन पूर्वोत्तरकालिकत्वविशिष्टा क्रियावद्भवतीति सूचितम्। द्विः प्रयोगः, द्विर्वचनम् इत्यादयस्तु शिष्टप्रयुक्तत्वात्साधवः।

**कृत्वोऽर्थपदेन** कृत्वसुचः, 'द्वित्रिचतुर्भ्यः सुच्' ( ५-४-१८ ) इति विहितसुचः, **'एकस्य सकृच्च'** ( ५-४-१९ ) इति च 'विभाषा बहोर्धा' ( ५-४-२० ) इति विहितधाप्रत्ययस्य च ग्रहणं बोध्यम्। **तसिवती इति**—न च तसिग्रहणं व्यर्थम् 'प्रतियोगे पञ्चम्यास्तसिः' ( ५-४-४४ ) इति विहिततसेस्तसिलाद्यन्तर्गतत्वादिति वाच्यम्, 'तेनैकदिक्' ( ४-३-११२ ) इत्यधिकारे 'तसिश्च' ( ४-३-११३ ) इति तसेः, 'तेन तुल्यं क्रिया' ( ५-१-११५ ) इति विहितवतेश्च तसिलादिबहिर्भूतत्वात्।

एवञ्च स्वरादिषु 'वत्' इति पाठे फलं चिन्त्यम्। **नानाञाविति**—'विनञ्भ्यां नानाञौ न सह' ( ५-२-२७ ) इति विहितो ना अनाञ् च गृह्यते। **तेनेति**—पूर्वोक्तपरिगणनेनेत्यर्थः। **इहेति**—**'पचतिकल्पम् पचतिरूपम्'** इत्यत्रेत्यर्थः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (५-३-६७) इतोषदूने **'तिङश्च'** ( ५-३-५६ ) तिङश्चेत्यस्यानुवर्त्तनात् अपरिपूर्णः पाक इत्यर्थे 'भावप्रधानमाख्यातम्' इत्यनुशासनात् तिङन्तात्कल्पप्रत्ययः। **'पचतिरूपम्'** इत्यत्र 'प्रशंसायां रूपप्' ( ५-३-६६ ) इति तिङश्चेत्यनुवर्तनात् रूपप्। अत्र 'ईषदसमाप्तौ' इति 'प्रशंसायाम्' इति च न प्रत्ययविशेषणम्, किन्तु प्रकृत्यर्थविशेषणम्। तेन प्रकृत्यर्थस्यापरिपूर्णतायां कल्पः, प्रकृत्यर्थस्य परिपूर्णतायां रूपप्। तथा च प्रशंसा नात्र स्तुतिरूपा। तदुक्तं भाष्ये 'नायं प्रत्ययार्थः। किं तर्हि? प्रकृत्यर्थविशेषणमेतत्।' इति। तेन 'चोररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति' इति सिध्यति। गुप्तवस्तुपरिहरणेन चौर्यं परिपूर्यते।

कृन्मेजन्तः [ १-१-३९ ]

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारं स्मारम् । जीवसे । पिबध्यै ।

कृन्मेजन्तः ( १-१-३९ ) इति । कृत् मेजन्त इति पदद्वयम् । म् च एच् चेति द्वन्द्वे 'मेचौ' इति तौ अन्तौ यस्य कृतः स मेजन्तः कृत् इति विशेषणानन्तरम् 'प्रत्ययग्रहणे' इति परिभाषया तदादिविशेष्यकतदन्तविधौ मान्त एजन्तश्च यः कृत् तदन्तं यत्तदादि तदव्ययसंज्ञमित्यर्थः । तदाह-कृद्यो मान्त इत्यादि । मान्तमिति कृदन्तस्य तु न विशेषणम्, स्वरादौ 'प्रशाम्' इत्यस्य पाठात् । अन्यथा 'प्रशाम्' इति श्रूयमाणं मान्तं कृदन्तञ्च प्रत्ययलक्षणेनेति सूत्रेणैवाव्ययत्वसिद्धया तत्पाठवैयर्थ्यापत्तेः, श्रुतानुमितन्यायाच्च ।

न च कृद्यो मान्त इत्यर्थे 'कारयाञ्चकार' इत्यादौ 'कारयाम्' इत्यस्याव्ययत्वानापत्तिः, 'आम्' इति मान्तस्य सन्निहिताद् 'धातोः' इत्यधिकाद्विहितत्वाभावेन कृत्त्वाभावादिति वाच्यम्, अस्याव्ययत्वाभावेऽपि क्षतिविरहात् । न च लिटः तिङ्भिन्नत्वेन सन्निहितधात्वधिकारविहितत्वेन च कृत्संज्ञकत्वात् प्रत्ययलक्षणेन 'कारयाम्' इत्यस्य प्रातिपदिकत्वे सुबुत्पत्तौ सुपो लुगर्थमव्ययत्वमावश्यकम् ।

'आमः' (२—४—८१) इति लुका सुपो लुक्सिद्धेः । तदुक्तं भाष्ये-'मा भूदेवम्' आम इत्येव भविष्यति । न भविष्यति लिग्रहणमनुवर्त्तते । लिग्रहणं तत्र निवर्तिष्यते । यदि निवर्तते प्रत्ययमात्रस्य लुक् प्राप्नोति । इष्यते च प्रत्ययमात्रस्य आमश्रेष्यते । एवं ह्याह 'कृञ्चानुप्रयुज्यते लिटि' । यदि च प्रत्ययमात्रस्य लुग्भवति । तत्र एतदुपपन्नं भवति' इति । अयम्भावः—आमन्तादव्यवहितोत्तरं लिडव्यवहितपूर्वं कृञोऽनुप्रयोगार्थमनुग्रहणं सूत्रे क्रियते । यदि लेरेव लुक् स्यात्तदा आमन्तात्स्वार्थिके तरपि कृञोऽव्यवहितोत्तरत्वं व्याहन्येत । प्रत्ययमात्रस्य लुकि तु 'आमः' इति तरपो लुकि नाव्यवहितोत्तरत्वहानिरिति । तथा च कृद्यो मान्त एजन्तश्चेत्यर्थे न कोऽपि दोषः ।

स्मारं स्मारमिति—स्मृ चिन्तायाम् इत्यतः 'आभीक्ष्ण्ये णमुल् च' ( ३-४-२२ ) इति णमुलि 'नित्यवीप्सयोः' ( ८-१-४ ) इति द्वित्वेऽव्ययत्वे च सुपो लुकि रूपम् । जीवसे इति । जीव प्राणधारणे इत्यतः 'तुमर्थे सेसेनसेअसेन्' ( ३-४-९ ) इत्यसे प्रत्यये एजन्तम् असे इति कृतमादायाव्ययत्वम् । रामेभ्यः आधये, चिकीर्षवे इत्यादावेजन्तत्वेनाव्ययत्वं तु न सन्निपातपरिभाषाविरोधात् । विभक्तिं निमित्तीकृत्य जातमेजन्तत्वमव्ययत्वप्रयोज्ये सुपो लुकि निमित्तं न स्यात् । न चाकचि सन्निपातपरिभाषाविरोधाभावेनाकजस्त्विति वाच्यम्, अकज्विध्येकवाक्यतापन्नाव्ययसंज्ञाया अन्तरङ्गत्वेन तत्र कर्तव्ये गुणादेरसिद्धत्वेनैजन्तत्वाभावात् । लुगेकवाक्यतापन्ना त्वव्ययसंज्ञा न गुणादितोऽन्तरङ्गा, उभयोरपि सुबाश्रयत्वेन समत्वात् ।

यद्वा 'कृन्मेच्' इति वक्तव्ये कृतो विशेषणतया तदन्तलाभेऽत्र ग्रहणसामर्थ्यनौपदेशिकमेजन्तत्वग्रहणेन लाक्षणिकमेजन्तेऽव्ययत्वाप्राप्तेः । औपदेशिक इत्यस्य सुब्विधानकाले य एजन्त इत्यर्थः । एतेन 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इत्यनेन न विरोधः । वस्तुतस्तु लाक्षणिकैजन्ते लक्षणप्रतिपदोक्तपरिभाषया सन्निपातपरिभाषया चाव्ययत्वाप्राप्त्या तयोरनित्यत्वज्ञापनार्थमन्तग्रहणम् । अन्ये तु अव्ययाद्विहितस्य सुपो लुगिति व्याख्याने 'आधये' इत्यादौ फलाभावान्नाव्ययत्वमित्याहुः ।

पिबध्यै इति—पा पाने इत्यतः 'तुमर्थे' इत्यनेन शध्यै 'पाघ्राध्मा' ( ७-३-७८ ) इति पिबादेशे 'पिबध्यै' इत्यस्याव्ययत्वम् । 'कर्तरि शप्' इति शप् तु न, 'अव्ययकृतो भावे' इत्यनेन शध्यैप्रत्ययस्य भावे विधानेन कर्त्रर्थकसार्वधातुकपरत्वाभावात् । यगपि न, 'छन्दसि व्यत्ययो बहुलम्' ( ३-१-८५ ) इति व्यत्ययकल्पनात् ।

*क्त्वातोसुन्कसुनः* [ । १-१-४० ]

एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ।

*अव्ययीभावश्च* । १-१-४१ ]

अधिहरि ।

---

**'क्त्वातोसुन्कसुनः'** ( २-४-८२ ) । क्त्वा–तोसुन्–कसुन् एतदन्तमव्ययसंज्ञं भवति । **कृत्वेति**—'समानकर्तृकयोः पूर्वकाले प्राचां क्त्वा' (३-४-२१) इति भावे क्त्वाप्रत्ययः । **उदेतोरिति**—उत्पूर्वादिणः 'भावलक्षणे स्थेण्कृञ्वदि' ( ३-४-१६ ) इत्यनेन भावः लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यस्तुमर्थे तोसुन् छन्दसि इत्यर्थकेन तोसुन् प्रत्ययः । संस्थानादीनामवधित्वेन लक्षणं भावः । उदेतोस्तिष्ठति = उदयपर्य्यन्तं तिष्ठतीत्यर्थः । आसंस्थातोः सीदन्ति = समाप्तिपर्य्यन्तं तिष्ठन्तीत्यर्थः । संपूर्वको हि तिष्ठतिः समाप्तौ रूढः । संतिष्ठते पिण्डपितृयज्ञः समाप्नोतीत्यर्थः । **विसृप इति**—पुरा क्रूरस्य विसृपो विरप्शिन् । क्रूरस्य गमनावधीत्यर्थः । विपूर्वकात्सृपेः 'सृपितृदोः कसुन्' ( ३-१-४७ ) इति भावलक्षणे गम्ये भावे कसुन् ।

**'अव्ययीभावश्च'** ( १-१-४१ ) इति अव्ययीभावसमासोऽव्ययसंज्ञको भवतीत्यर्थः । **अधिहरीति**—हरौ इत्यर्थे 'अव्ययं विभक्ति' इत्यनेन विभक्त्यर्थे विद्यमानेनाधिनाऽव्ययीभावसमासेऽव्ययत्वे च 'अधिहरि' शब्दात्परस्य सुपः 'अव्ययादाप्सुपः' इति सुपो लुक् । अव्ययीभावस्याव्ययसंज्ञा परिगणितकार्य्येष्वेव भवति न सर्वत्र । तथाहि—लुकि **'उपाग्नि'** अग्नेः समीपमित्यर्थे 'अव्ययं विभक्तिसमीप' (२-१-६) इत्यव्ययीभावसमासः । अत्र 'अव्ययादाप्सुपः' (२-४-८२) इति सुपो लुक्यव्ययसंज्ञा । मुखस्वरप्रतिषेधे—'उपाग्निमुखः' इति । उपाग्नि मुखं यस्य स इति बहुव्रीहौ 'मुखं स्वाङ्गम्' ( ६-२-१६७ ) इति पूर्वपदात्परं स्वाङ्गवाचिमुखपदमन्तोदात्तं बहुव्रीहौ प्राप्तस्यान्तोदात्तस्य 'नाव्ययदिक्' ( ६-२- ६८ ) इत्यनेन अव्ययात्परं मुखं नान्तोदात्तमिति मुखस्वरप्रतिषेधे 'उपाग्नि' इत्यस्याव्ययसंज्ञा भवति । विसर्गस्थानिकस्य सकारादेशस्य 'उपचार' इति प्राचां संज्ञा । 'उपपयः कामः' इत्यत्र 'अतः कृकमि' ( ८-३-४६ ) इति विसर्गस्योपचारे प्राप्तेऽत्र सूत्रे एव पठितेन 'अनव्ययस्य' इत्यनेन तस्य निषेधेऽव्ययीभावस्याव्ययसंज्ञा भवति । एवञ्च लुकि, मुखस्वरप्रतिनिषेधे, उपचारप्रतिषेधे च त्रिष्वेवाव्ययीभावस्याव्ययसंज्ञा नान्यत्र ।

यथा—'उपाग्न्यधीयान' इत्यत्र प्राप्तस्य 'सुबामन्त्रिते पराङ्गवत्स्वरे' ( २-१-२ ) इति पराङ्गवद्भावस्य 'अव्ययानां न' इति निषेधे कर्तव्ये 'उपाग्नि' इत्यव्ययीभावस्य नाव्ययसंज्ञेति पराङ्गवद्भावो भवत्येव । एवम् 'अव्ययसर्वनाम्नाम्, खित्यनव्ययस्य, अव्ययस्य च्वावित्वं न' इत्यादावव्ययीभावस्याव्ययपदेन ग्रहणं न भवति । तदुक्तं भाष्ये—'अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचाराः' इति अस्य प्रयोजनानीति शेषः । 'किं पुनरिदं परिगणनमाहोस्विद् उदाहरणमात्रम् ? परिगणनमित्याह' इति । वस्तुतस्तु अव्ययीभावस्याव्ययसंज्ञा व्यर्था । लुक् तु न फलम् ।

'नाव्ययीभावात्' इति निषेधो ज्ञापयति—अव्ययीभावात्परस्य सुपो लुग्भवतीति । उपचारप्रतिषेधोऽपि न तत्फलम् 'उपपयःकारः' इत्यादौ 'अनुत्तरपदस्य' इति निषेधादेवोपचाराभावसिद्धेः । मुखस्वरप्रतिषेधोऽपि न फलम्, मुखस्वरनिषेधके 'नाव्ययाव्ययीभाव' इति पाठेनैव निषेधसिद्धेः । सर्वञ्चेदं भाष्ये स्पष्टम् ।

अत्रेदं विचार्य्यते—स्वरादिगणे 'तसिलादिस्तद्धित एधाच्पर्यन्तः, शौनादिकमसिं वर्जयित्वा च्व्यर्थाश्च, कृन्मेजन्तः, क्त्वा-तोसुन्कसुनः; अव्ययीभावश्च' एवं पाठेनाव्ययत्वे स्वरादित्वादेव सिद्धे पुनर्वचनमव्ययसंज्ञाया अनित्यत्वज्ञापनार्थम् । तेन परिगणितादन्यत्रानित्यत्वादेव न

अव्ययादाप्सुपः [ २-४-८२ ]

**अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् ।** तत्र शालायाम् । **विहितविशेषणान्नेह-- अत्युच्चैसौ । अव्ययसंज्ञायां** यद्यपि तदन्तविधिरस्ति, तथाऽपि **न गौणे । 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' ।**

स्यात् । 'न लोकाव्यय' इति सूत्रे अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इत्यप्यनित्यत्वलभ्य एवेति 'तद्धितश्च' इत्यादिका चतुःसूत्री अत्रैव तात्पर्यग्राहिकेति ।

**अव्ययादाप्सुपः** ( २-४-८२ ) इति । 'ण्यक्षत्रियार्षे' ( २-४-५८ ) इत्यतो लुगित्यनुवर्तते तदाह— **लुक् स्यादिति** । अत्राव्ययमिति संज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम् । तेन न व्येति = विविधं विकारं न प्राप्नोति, सत्त्वधर्मान् लिङ्गसंख्यादीद् न गृह्णाति तदव्ययमिति । तेन 'अत्युच्चैः अत्युच्चैसौ' इत्यादावुच्चैःकर्मकातिक्रमणकर्तृरूपलिङ्गसंख्यान्वय्यर्थबोधकत्वेनाव्ययसंज्ञाया अभावान्नाव्ययत्वम् । ननु 'अत्युच्चैः' इत्यस्य चादिषु पाठाभावेनाव्ययत्वाप्राप्तिरिति चेन्न, 'येन विधिः' इति सूत्रे 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति भाष्येण चाद्यन्तस्यापि अव्ययसंज्ञाविधानात् । नन्वेवमपि 'उच्चैः' इत्यस्याव्ययत्वसत्त्वात्ततः परस्य सुपो लुग्दुर्वार इत्यत आह—**विहितविशेषणादिति**—सुपि अव्ययाद्विहितत्वविशेषणादित्यर्थः । तथा च यतो विहितः सोऽत्युच्चैरिति नाव्ययम् । यच्चाव्ययम्—'उच्चैः' इति ततो न विहितः सुबिति न दोषः । ननु 'तस्मादित्युत्तरस्य' इति परिभाषया दिग्योगलक्षणा पञ्चमी एव 'अव्ययात्' इति स्यात्तथा च विहितत्वांशोऽनुचित इति चेन्न, अङ्गसंज्ञायां विहितत्वांशप्रवेशेन अव्ययादित्यस्य विहितप्रत्ययनिरूपिताङ्गविशेषणत्वेन विहितप्रत्ययनिरूपिताङ्गरूपाव्ययात्परस्य सुपो लुगित्यर्थादिति भावः ।

प्रकृते **'अत्युच्चैसौ'** इत्यादौ विहितौरूपप्रत्ययनिरूपिताङ्गम् 'अत्युच्चैः' इति तच्च नाव्ययम् इत्यदोषः । यद्यपि लुग्विधायकम् 'अव्ययात्' इति परिभाषया सुपो यस्माद्विधानं तदादेरव्ययात्परस्येति सूत्रार्थो भवेत् । एवञ्च 'आधये' इत्यादौ 'आधे' इत्यस्य यद्यपि विधानकाले नाव्ययत्वम्, तथाऽपि यस्मात्सुपो विधानं तदादेरुत्तरकालिकाव्ययत्वमाश्रित्य प्राप्तस्य लुकः सन्निपातपरिभाषया वारणपरभाष्येण न विरोधः ।

ननु 'स्वः पश्य' इत्यादिदर्शनेन स्वरादीनां कर्मार्थकत्वं सम्भवति, तथाप्यधिकरणशक्तिप्रधानाव्ययस्य कर्मार्थकत्वासम्भव इति 'अत्युच्चैसौ' इत्यादौ द्वितीयासमासानुपपत्तिरिति चेन्न, अधिकरणशक्तिप्रधानस्याप्युच्चैःशब्दस्य वृत्तौ शक्तिमत्प्रधानतया अधिकरणत्वविशिष्टस्य कर्मत्वसम्भवेन न द्वितीयासमासानुपपत्तिः । **तदन्तविधिरिति** अव्ययसंज्ञाविधायके विशेष्यासन्निधानाद्विशेषणत्वाभावेन तदन्तत्वानुपपत्तिस्तु न शङ्क्या, 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति भाष्यबलात् शब्दस्वरूपविशेष्याध्याहारेण विशेषणतया तदन्तविधिसम्भवात् । **न गौण इति**—महासंज्ञाकरणेन सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थविषयकबोधजनकत्वविशिष्टं यदव्ययपदं तद्वत्त्वेनाव्ययपदं चादीनां बोधकम् ।

महासंज्ञाकरणात्तादृशार्थकानां स्वरादिचादिगणेऽनुकरणावश्यकत्वे गौणार्थकानामनुकरणे मानाभावेन गौणार्थबोधकसमुदायस्य नाव्ययत्वमिति भावः ।

वस्तुतस्तु महासंज्ञाकरणलब्धस्यार्थस्य 'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायेन प्रसिद्धान्तरङ्गं यत्पदान्तरानपेक्षानुपसर्जनीभूतं तस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न गौणस्य ग्रहणम् ।

ननु प्रधानाप्रधानन्यायोऽर्थविषयकः । यथा 'पुमान् स्त्रिया' इत्यत्र पुमर्थकस्य स्त्र्यर्थकस्य च निर्देशः । अत्र हि 'ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च' इत्येवं सहोक्तौ प्रधानाप्रधानन्यायेन प्रधानीभूत-

स्त्रीपुंसवत्सावत्साभिन्नाप्रधानस्त्रीपुंसब्राह्मणीब्राह्मणस्त्रीपुंसकृतस्य भेदस्यापि सत्त्वादेकशेषो न भवति। किन्तु ब्राह्मणवत्सश्च ब्राह्मणवत्सा चेत्यादिविग्रहे एवैकशेषः। प्रकृते तु गणपाठे प्रयोगस्थानां शब्दानामनुकरणेनानुकार्य्यशब्दमात्रबोधकतया स्वरादिनिपातेति शब्दपरमेव नार्थपरमिति न प्रधानाप्रधानन्यायविषय इति गौणानामनुकरणाभावे प्रमाणाभाव इति चेन्न, सर्वनाममहासंज्ञासाहचर्य्येण तथा कल्पनात्। तत्र यथा सर्वनामेति महासंज्ञाकरणेन विलक्षणोऽर्थः क्लृप्तस्तथाऽत्रापि 'अव्ययम्' इति महासंज्ञाकरणेनैतादृशोऽर्थः कल्प्यत इत्याशयात्।

प्रसिद्धमित्यनेन 'स्वर्' इति यदि कस्यचिन्नाम तस्य व्यावृत्तिः। संज्ञाशब्दो हि यदि संज्ञिबोधनाय प्रयुज्यते तदा 'चैत्रनामकोऽयम्' इत्येवं रीत्या प्रयोगो भवति। तथाऽत्रापि संज्ञायां 'स्वर्' नामकोऽयमित्येव प्रयोग इति पदान्तरसापेक्षता स्पष्टैव। अन्तरङ्गमित्यस्यैव व्याख्यानमनुपसर्जनीभूतमिति। केवलः प्रयुक्त उच्चैःशब्द उर्ध्वदेशनिष्ठाभिन्नाधिकरणतां प्रतिपादयति। तस्य स्वार्थमात्रप्रतिपादकतयाऽन्तरङ्गत्वम्। 'अत्युच्चैसौ' इत्यादौ तु यथा 'राजपुरुषः' इत्यत्र वृत्तिघटकस्य राजशब्दस्य पुरुषशब्दस्य चैकार्थीभावरूपवृत्तिबलात् राजसम्बन्धिपुरुषार्थप्रतिपादकतैव, न तु राजमात्रपुरुषमात्रप्रतिपादकत्वम्। तथा 'अत्युच्चैसौ' इत्यत्र अतिशब्दस्य उच्चैःशब्दस्य च ऊर्ध्वदेशाभिन्नाधिकरणकर्मकातिक्रमणकर्तृप्रतिपादकत्वमेवेति पदान्तरार्थविशिष्टस्वार्थप्रतिपादकतया बहिरङ्गत्वम्।

नन्वेवं सर्वनामसंज्ञायामप्यवयवेऽनापत्तौ अतिभवकान्, त्वकत्पितृक इत्यादावकचोऽसिद्धिरिति चेन्न, तेषु वृत्तेः प्रागनुपसर्जनार्थं ( स्वार्थमात्र ) वाचकत्वेन सर्वनामत्वादकचि वृत्तौ विशिष्टार्थबोधकत्वेनोपसर्जनत्वेऽपि 'जातसंस्कारो न निवर्तते' इति न्यायेनाकचोऽनिवृत्तेः। न च 'अकृतव्यूहाः पाणिनीयाः' अकचोऽप्रवृत्तिः, तस्या असत्त्वादनित्यत्वाच्च। न च यथोद्देशपक्षे दोषः, लक्ष्यानुरोधेन कार्य्यकालपक्षस्यैवात्राश्रयणात्। 'मासपूर्वाय' इत्यादौ तु 'तृतीयासमासे' इति शास्त्रबलादेव नापत्तिसम्भवः।

एवञ्च 'अत्युच्चैसौ' इत्यादौ न समुदायस्य नाप्यवयवस्याव्ययसंज्ञोपसर्जनीभूतार्थप्रतिपादकत्वादुभयोः। 'परमोच्चैः' इत्यादौ तु समुदायस्यावयवस्य चानुपसर्जनीभूतार्थप्रतिपादकतया भवत्येवाव्ययसंज्ञा।

एवञ्च विहितविशेषणम्, सुब्निरूपिततदाद्यभिन्नं यदव्ययं ततः परस्य सुपो लुगित्यर्थेऽपि व्यर्थ एव 'अत्युच्चैस्' इत्यवयवस्याप्यव्ययत्वाभावेन 'अव्ययात्परस्य सुपो लुक्' इत्यर्थेऽपि दोषाभावात्। न चैवम् अशब्दादौ विभक्तौ वृद्धौ च परादिवद्भावेन 'औ' इत्यस्य सुप्त्वेन उच्चैःशब्दस्य योगे 'उच्चैरौ इत्यादावव्ययात्परत्वस्य सत्त्वेन सुपो लुगापत्तिरिति वाच्यम्, एतादृशस्य सत्त्वे मानाभावात् सुप्निरूपिततदाद्यभिन्नादव्ययात्परस्य सुपो लुगित्यर्थेनादोषाच्च।

**लिङ्गाभावादिति**—अव्ययस्य लिङ्गसंख्यानन्वय्यर्थबोधकत्वेनापोऽप्राप्तया व्यर्थमिति भावः। तदुक्तं भाष्ये—'अव्ययादापो लुग्वचनानर्थक्यम् लिङ्गाभावात्' इति। यदि तु 'सुपो धातुप्रातिपदिकयोः' ( २-४-७१ ), इति सूत्रम् 'आमः' ( २-४-८१ ) इति सूत्रानन्तरं पठ्यते 'आप्सुपः' इति विशिष्टं व्यर्थम् 'सुपः' इत्यनुवृत्त्यैव सिद्धेः। नन्वेवं पाणिनेर्भ्रान्तत्वापत्तिः 'स्त्रीत्वविशिष्टार्थनिष्ठविशेष्यतानिरूपितसम्बन्धानवच्छिन्नविशेषणताप्रयोजकात्प्रातिपदिकात् टाप्' इति पक्षे 'तत्र शालायाम्' इत्यत्र 'तत्र' इत्यस्य शालार्थसमानाधिकरणप्रातिपदिकत्वात् टाप् स्यात् तल्लुगर्थम् आब्ग्रहणमिति सूत्रकृतामाशयात्। तदुक्तं भाष्ये—'स्त्र्यर्थस्य प्रातिपदिकार्थत्वात् स्त्रियामितीकारो न प्राप्नोति।

अस्तु तर्हि स्त्रीसमानाधिकरणात्प्रातिपदिकादिति'। उक्तार्थानामप्रयोग इति न्यायादिति भाष्याशयः। यद्यपि अत्र पक्षे 'भूतमियं ब्राह्मणी, कारणमियं ब्राह्मणी' इत्यादौ दोषमाशङ्क्यायं पक्षस्त्यक्तः भूतशब्दोऽत्र चैतन्यवृत्तिर्नित्यनपुंसकः। धर्मधर्मिणोश्चाभेदेन ब्राह्मणीपदेन सामानाधिकरण्यम्

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥'

इति [ भाष्योक्ता श्रुतिलिङ्गकारकसंख्याऽभावपरा ॥

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥'

वगाहः-अवगाहः। पिधानम्-अपिधानम् ॥

इत्यव्ययप्रकरणम्।

---

तत्र पर्जन्यवल्लक्षणप्रवृत्त्या भूतशब्दस्य नपुंसकह्रस्वत्वे शब्दान्तरब्राह्मणीसन्निधानोत्तरं टापि लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वो न स्यात् किन्तु भूतेयं ब्राह्मणीत्यनिष्टापत्तिः स्यादिति भाष्याशयः।

अलिङ्गत्वे भाष्योक्ताऽथर्वणविद्यागतश्रुतिं प्रमाणयति—**सदृशमिति**— सर्वत्र पुस्तके श्रुतिविरोधमाशङ्क्याहेति दृश्यते, तच्चिन्त्यम्, व्याख्यानतः श्रुतिप्रामाण्यस्यैव प्रतीतेः। भाष्येऽपि स्वोपोद्बलकत्वेनैवोपन्यासात्। **अव्ययम्** = ब्रह्म तत्प्रतियोगिकसादृश्यवदव्ययसंज्ञकम्। सादृश्यनियामको धर्मश्च—स्ववृत्तिलिङ्गाभावानुयोगित्वेन, स्ववृत्तिकारकत्वाभावानुयोगित्वेन, स्ववृत्तिसंख्याभावानुयोगित्वेन च बोध्यः।

अत्र श्रुतौ विभक्तिवचनशब्दौ कारकत्वसंख्यापरौ, प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः। 'लिङ्गेषु' इत्यादौ विषयसप्तमी। तत्तद्विषये इत्यर्थः। ननु लिङ्गाभावानुयोगित्वेन सादृश्येऽव्ययीभावाव्ययेऽव्याप्तिस्तत्र नपुंसकत्वस्य सत्त्वादिति चेन्न, लिङ्गाभावाश्रयत्वेन सादृश्यस्याव्ययीभावातिरिक्तविषयकत्वात्, अनतिरिक्ताव्ययत्ववत्त्वेव तादृशसादृश्यस्य विवक्षितत्वेनाव्ययीभावे 'अव्ययीभावश्च' इति वचनबलेनाव्ययत्वातिदेशाच्च।

यद्वा **यन्न व्येति** किन्तु सदृशमेकप्रकारमेकानुपूर्वीकमिति यावत् तदव्ययम्।

यद्वा यत्, तत्, इति हेतुपरमव्ययम् अव्ययं यस्मान्न व्येति—विकारं प्राप्नोति तद्=अव्ययं महासंज्ञाकरणात्। **कारकाभावपरेति**—कारकपदं धर्मपरम्। प्रसङ्गादाह—**वष्टीति**—अव्ययनिरूपणस्य प्रक्रान्तत्वात्तेषु अवाप्योः प्रवेशादेतयोः स्मरणे सति निरूपणमावश्यकमिति स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गतिः।

**वष्टीति**—वष्टेरदादौ छान्दसत्त्वेन पठितत्वाल्लोके प्रयोगोऽसाधुरेव। केचित्तु छान्दसा अपि क्वचिद्भाषायां भवन्तीति समादधुः। वस्तुतस्तु छान्दसानां लोके प्रयोगेऽपि असाधुत्वं दुर्वारमेव। **भागुरिरिति**—एतन्नामकः कश्चनाचार्य्यः, एतेन तेनापि किञ्चिद्व्याकरणं निर्मितमिति प्रतीयते। तदन्वेषणीयम्। इदं पद्यं भाष्यासम्मतम्। निशा, दिशा इति तु इगुपधलक्षणे 'घञर्थे कविधानम्' इति वाक्ये अदन्तत्वात् टापि सिद्धौ हलन्तः 'दिग्' इति क्विनि हलन्तप्रकृतिकटाबन्तस्याभावादेव '**ङ्याप्प्रातिपदिकात्**' ( ४-१-१ ) इति सूत्रे भाष्योक्तं संगच्छते। तथा हि—'आब्ग्रहणं न कार्य्यम्। अकारान्तात् टाप्। तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धम्। यस्तर्ह्यनकारान्तात् 'क्रुञ्चा' 'उष्णिहा' '**देवविशेति**' अत्राप्यकारान्तादेव 'क्रुञ्चानालभेत, उष्णिहककुभौ, देवविशञ्च, मनुष्यविशञ्चेति इति देवविशमित्यत्र शङ्कितम् 'नास्ति विशेषोऽकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्तादेति' इति। 'स्वरे विशेषः ? यदि व्यञ्जनान्तादुत्पत्तिः स्यात्तदा कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तात्परविभक्तेरनुदात्तत्वं भवति। यदा तु कान्तत्वं तदा याथादिस्वरेणान्तोदात्तात्परविभक्त्या सहैकादेशः पदमत्रोदात्तमिति। तस्मात्कप्रत्यय एवंविषयः' इत्युक्त्वा 'बहुराजा' इति डाबन्तार्थमाब् ग्रहणम्' इति। तस्माद् '**वाचा**' इत्यादि हलन्तप्रकृतिकं टाबन्तमसाध्वेव। इत्यव्ययानि।

इत्यव्ययप्रकरणम्।

परिशिष्टांशः ।

## शब्दमाश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः

अदृश्यं दर्शयद् दृश्यं प्रपञ्चं परमाद्भुतम् । दृश्यं तत्सत् समुद्धर्तुं कारुण्यं मे प्रयच्छतु ॥
शब्दगं वार्थगं लिङ्गं सर्वभाषासु विश्रुतम् । विविच्य विदुषां प्रीत्यै तत्स्वरूपं विभास्यते ॥

विश्वस्मिन् विश्वे व्यवहृतिपथमवलम्बमानासु निखिलभाषासु प्रतीयमानं वाच्यतया द्योत्यतया वा शब्दनिष्ठवृत्तिनिरूपकं लिङ्गं शाब्दीं विषयतां नातिक्रामति । बहुषु पाणिनीयसूत्रेषु कात्यायनीयवार्त्तिकेषु च लिङ्गबोधकपदोपादानाल्लिङ्गानां प्रातिपदिकार्थत्त्वं तदभिमतमित्यत्र नास्ति संशयः ।

कायिकवाचिकमानसिकामयचिकित्सको भगवान् पतञ्जलिस्तु तत्र तत्र कण्ठरवेण लिङ्गस्य प्रातिपदिकार्थत्वं तत्स्वरूपञ्च विस्तरेण निरूपितवान् । तथा हि—'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २–३–४६ ) इति सूत्रे भाष्ये—'अथ लिङ्गग्रहणं किमर्थम्? स्त्री पुमान् नपुंसकमित्यत्रापि यथा स्यात् । नैतदस्ति प्रयोजनम् । एष एव चात्रास्ति प्रातिपदिकार्थः । इदं तर्हि कुमारी वृक्षः कुण्डमिति' इति, 'यत्प्रातिपदिकं स्त्रियां वर्तते तस्मात् टाबादयो भवन्ति । कस्मिन्नर्थे ? स्वार्थे इति' इति च । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' ( ५–३–७४ ) इति सूत्रे भाष्ये—'किञ्च नपुंसके ? नपुंसकं यस्य गुणः । कस्य च नपुंसकं गुणः ? प्रातिपदिकस्य' इति । 'कुत्सिते' ( ५–३–७४) इति सूत्रभाष्ये–'अथवा स्वार्थमभिधाय शब्दो निरपेक्षं द्रव्यमाह समवेतम्' इत्युक्तम् ।

अत्र कैयटः— 'स्वशब्दोऽत्रात्मीयवचनोऽर्थशब्दोऽभिधेयवचनः । स्वोऽर्थः स्वार्थः । स चानेकप्रकारो जातिगुणक्रियासम्बन्धस्वरूपलक्षणः । यथा गौः शुक्लः पाचको राजपुरुषो डित्थ इति । स्वार्थमभिधाय तेन स्वार्थेन समवेतं द्रव्यमाह शब्दः । निरपेक्ष इत्यनेन ( भाष्येण ) तद्दर्शयति—यथा द्रव्येऽभिधातव्ये स्वार्थमपेक्षते शब्दो न तथा स्वार्थेऽभिधातव्येऽर्थगतं निमित्तान्तरमपेक्षते, द्रव्यशब्देन चेदं तदिति सर्वनामपरामर्शयोग्यं वस्त्वभिधीयते । तत्र जातिशब्दो यदा जातौ वर्तते तदा आरोपितस्वरूपां स्वरूपेणैकीकृतां जातिमाहेति । तदा स्वरूपं स्वार्थः । जातिस्तु द्रव्यम् । यदा तु जातिविशिष्टं द्रव्यमाह तदा जातिः स्वार्थः । शुक्लादयो यदा गुणजातौ वर्तन्ते तदा तेषां स्वरूपं स्वार्थः, जातिस्तु द्रव्यम् । यदा गुणे वर्तन्ते तदा गुणसामान्यं स्वार्थः, गुणो द्रव्यम् । यदा द्रव्ये वर्तन्ते तदा गुणः स्वार्थः' इति ।

'समवेतस्य लिङ्गं वचनं विभक्तिं च' इति भाष्यम् । अस्य आह शब्द इति शेषः । लिङ्गं स्त्रीत्वादि, वचनं संख्या, विभक्तिः कारकम् । यद्यपि लोके पदादुच्चरितात् पञ्चार्थाः युगपत्प्रतीयन्ते न तु क्रमेण, शब्दस्य विरम्य व्यापाराभावात्, तथापि शास्त्रसंव्यवहाराय कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रयोगार्हस्य प्रातिपदिकस्य कल्पितामर्थवत्तां कल्पितन्यायवशात् क्रमवतीमाश्रित्येदमुच्यते । क्रमश्चेदृशः— 'नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते' इति न्यायात् पूर्वं स्वार्थाभिधानेन भाव्यम्, पश्चात्तद्विशिष्टस्य लिङ्गाद्याश्रयस्य द्रव्यस्याभिधानेन । ततो भेदापेक्षबहिरङ्गसंख्यापेक्षया लिङ्गमन्तरङ्गमिति तदभिधीयते, ततः संख्या । सा हि विजातीयक्रियापेक्षसाधनापेक्षया सजातीयापेक्षाऽन्तरङ्गा । संख्याभिधानानन्तरन्तु कारकाभिधानमिति क्रमेण प्रतीयमानं स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकरूपं पञ्चकं प्रातिपदिकार्थः ।

ननु लिङ्गस्य प्रातिपदिकार्थत्वे 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २–३–४६ ) इति सूत्रे लिङ्गग्रहणं व्यर्थम्, प्रातिपदिकार्थे प्रथमाविधानेन लिङ्गस्यापि प्रातिपदिकार्थतया तत्र प्रथमासिद्धेरिति चेन्न, तद्वैयर्थ्यापत्त्याऽत्र सूत्रे नियतोपस्थितिकस्य प्रवृत्तिनिमित्ततदाश्रययोर्वा प्रातिपदिकार्थपदेन ग्रहणस्य ज्ञापनात् ।

वस्तुतस्तु 'अर्थे प्रथमा' इति न्यस्यता मनोरमाकृता स्वादीनां प्रातिपदिकादेव विधानेः कस्यार्थे इत्याकाङ्क्षायां यस्मात् स्वादिविधिस्तदर्थ इत्यस्य लाभेन प्रातिपदिकग्रहणस्य लिङ्गादिग्रहणस्य च वैयर्थ्यं स्पष्टमेवोक्तम्। सूत्रोपक्रमे संख्याविध्येकवाक्यतयाऽव्ययेभ्यः सुपोऽप्राप्त्या तेभ्यः प्रातिपदिकग्रहणस्य विधानार्थत्वं वदता 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे 'बहुषु बहुवचनम्' इति सूत्रे च ज्ञापकादिना प्रकारान्तरेणाव्ययेभ्यो विभक्तिं साधयता भाष्यकृताऽपि प्रातिपदिकग्रहणं प्रत्याख्यातप्रायम्।

मुनित्रयाद्यभिमतस्य लिङ्गस्य स्वरूपजिज्ञासायां 'स्त्रियाम्' इतिसूत्रस्थभाष्यमाश्रित्य किञ्चिदुच्यते। 'स्त्रियाम्' इति सप्तमीनिर्देशेन कार्य्यान्तरविधानायानूद्यते इति गम्यते। प्रसिद्धस्यार्थस्य कार्य्यान्तरविधानायानुवाददर्शनादिह व्याकरणे प्रातिपदिकादिवत् स्त्रियाः परिभाषितत्वाभावाल्लोके चाप्राणिषु खट्वादिषु स्त्रीत्वव्यवहृतेरदर्शनाद् भगवान् भाष्यकार आह—'स्त्रियाम् इत्युच्यते, का स्त्री नाम ? लोकत एते शब्दाः प्रसिद्धाः स्त्री पुमान् नपुंसकमिति। सा स्त्री स पुमान् तन्नपुंसकमिति। किं पुनर्लोके दृष्ट्वैतदध्यवसीयते—इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति लिङ्गम्। किं पुनस्तत् ? 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुंसकम्॥' इति। स्तनकेशवतीत्यत्र भूमादौ मतुप्। एवं लोमश इत्यत्रापि। स्तनकेशवत्त्वञ्च प्रसिद्धत्वादन्यस्यापि स्त्रीप्रतिपत्तिहेतोः कुमार्य्यादिगतस्योपलक्षणम्, एवं लोमशत्वमपि पुंविज्ञानहेतोः कुमारादिगतस्योपलक्षणं बोध्यम्। 'उभयोरन्तरम्' इत्यत्रान्तरशब्दः सदृशार्थकः। तथा च तदभावे स्तनकेशवत्त्व-लोमशत्वोभयोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकम्। तेनाव्ययाख्यातार्थयोरुभयाभावेऽपि लिङ्गवत्त्वेन सादृश्याभावान्न नपुंसकत्वापत्तिः। तदभावे इत्युक्त्वा मयूरीकुक्कुटादीनां स्त्रीपुंससमुदायानां नपुंसकत्वं निराकृतं वेदितव्यम्, अन्यथाऽत्रोभयोरन्तरमित्यनेन नपुंसकत्वापत्तिः। भवति हि समुदायसमुदायिनोरनवयवयोः सदृश इति नपुंसकत्वं दुर्वारं स्यात्। यदि तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यनुशासनेन समुदाये परलिङ्गकत्वारोपान्न नपुंसकत्वप्रसक्तिरित्युच्यते, वस्तुस्वरूपनिरूपणपरमेवैतदवगन्तव्यम्।

ततः परं 'स्तनकेशवती' इति लक्षणे दूषणान्याह भाष्यकारः—'लिङ्गात् स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप् प्राप्नोति। यदि लोके दृष्ट्वा एतदध्यवसीयते इयं स्त्री, अस्ति तद् भ्रूकुंसे। इह चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्येति 'तस्माच्छसो नः पुंसि' इति नत्वं प्राप्नोति। यदि लोके दृष्ट्वैतदध्यवसीयते अयं पुमान् इति, अस्ति तद् वध्रिकादिषु' इति भाष्यम्। ननु 'स्तनकेशवती स्त्री' इति लक्षणे नित्ययोगे मतुब्विज्ञानाद् भ्रूकुंसे तदभावात् स्त्रीत्वाभाव इति चेन्न, प्रतिपत्तॄणां नित्यलिङ्गदर्शनेन तत्र पि स्त्रीत्वप्रसक्तेः सत्त्वात्, केशवपने च तदानीं केशसम्बन्धाभावात् स्त्रियामपि तदभावप्रसङ्गाच्च। स्तनकेशवतीत्यत्रातिशये मतुबित्यपि न, तदतिशयसम्बन्धस्य कुमार्य्यामुत्तरकालभावित्वात्ततः प्राक् स्त्रीत्वाभावापत्तेः।

किञ्च खरकुटी नापितगृहम्, चञ्चा केशनिर्मितपुमान्, वध्रिका केशमयी रज्जुः। एतेभ्यो बहुकेशवत्त्वरूपसादृश्यादिवार्थे कनि तस्य लुपि तत्र मनुष्यवाच्यत्वसत्त्वेन पुंस्त्वात् खरकुटीः पश्य, चञ्चाः पश्य, वध्रिकाः पश्य इत्यादौ 'तस्माच्छसो नः पुंसि' ( ६-१-१०३ ) इति नत्वापत्तेश्च 'स्तनकेशवती स्त्री' इति लिङ्गविषयकं दर्शनं हेयमेव।

अपि च, तद्दर्शने खट्वावृक्षादिषु लिङ्गं न सिध्येदुक्तलक्षणाभावात्। यदि लोके दृष्ट्वैतदध्यवसीयते इयं स्त्री अयं पुमानिति, न तत् खट्वावृक्षयोरुपलभ्यते। पूर्वोक्तदर्शने तयोः 'उभयोरन्तरं यच्च तदभावे नपुंसकम्' इत्युक्त्या नपुंसकत्वापत्तिः।

यद्वा खट्वायां स्त्रीत्वम्, वृक्षे पुंस्त्वं चासदेव भासते। कथं पुनरसन्नाम लिङ्गं द्रष्टुं शक्यम् ? मृगतृष्णावत्। तद्यथा मृगास्तृषिता अपां धाराः पश्यन्ति। न च ताः सन्ति। मृगतृष्णाविषया

मरुमरीचिका यथाऽसत्येन जलरूपेण भासते, तथा खट्वावृक्षावसता स्त्रीपुंसत्वेन भासेते। ननु मरीचिदर्शनसादृश्यात्तत्र पूर्वानुभूतं जलं स्मृतिपथमेतीत्युच्यते यदि तदा भाष्यकार आह—'गन्धर्व-नगरं यथा' इति। यथा गन्धर्वनगरं दूरतो दृश्यते, उपसृत्य च नोपलभ्यते; तद्वत् खट्वावृक्षयोर्लिङ्ग-मसद् द्रष्टव्यम्। न हि गन्धर्वनगरमन्तरिक्षे केनचित्कदाचिदप्युपलब्धं येन तत्रापि स्मर्यत इति वक्तुं शक्यम्, अनुभूतस्यैवोद्बोधकवशात् स्मृतिविषयत्वस्य सर्वानुभवसिद्धत्वात्।

सम्प्रति खट्वावृक्षयोः सती एव स्त्रीत्वपुंस्त्वे कारणान्तरवशाज्ज्ञानविषयतां नोपयात इति पक्षान्तरमादाय भाष्यकृता विविच्यते—

'आदित्यगतिवत् सन्न' इति। अथवा आदित्यगतिः सत्यपि नोपलभ्यते। तद्वत् खट्वा-वृक्षयोर्लिङ्गं सदपि नोपलभ्यते। आदित्यगतेः सत्ताऽनुमानादिना सिद्धापि प्रत्यक्षप्रमाणविषयतां नावगाहते, किन्तु देशान्तरप्राप्त्यादिनाऽनुमीयते। तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात् प्रत्यक्ष-प्रमाणेनाशक्यदर्शनम्। बीजगतवटवृक्षवत्। किन्तु शास्त्रीयतत्तत्कार्यरूपहेतुनानुमीयते धूमाद्वह्निरिव।

पक्षान्तरं भाष्ये—'वस्त्रान्तर्हितवच्च तत्' इति। यथा वस्त्रान्तर्हितानि द्रव्याणि न दृश्यन्ते, तद्वत् खट्वावृक्षयोः सदपि लिङ्गं नोपलभ्यते। विषम उपन्यासः। वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाये उपलभ्यन्ते। खट्वावृक्षयोः पुनर्येऽप्येते रथकारा वाशी ( वसिला ) वृक्षादन-( कुठार ) हस्ता मूलात्प्रभृति आ अग्राद् वृक्षांस्तक्ष्णुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते। केनैतदध्य-वसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति।

षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति। १—अतिसन्निकर्षात्, २—अतिविप्रकर्षात्, ३—मूर्तान्तरव्यवधानात्, ४—तमसावृतत्वात्, ५—इन्द्रियदौर्बल्यात्, ६—अतिप्रमादादिति। अतिसन्निकर्षाद्यथा—स्वचक्षुर्गतस्याञ्जनादेः। अतिविप्रकर्षाद्यथा—उड्डीनस्य शकुनेः। मूर्तान्तरव्य-वधानाद्यथा—कुड्यादिव्यवहितस्य सुवर्णादेः। अन्धकारावृतत्वाद्यथा—अन्धकाराक्रान्तस्य घटादेः। इन्द्रियदौर्बल्याद्यथा—तिमिराद्युपघाते सति चक्षुरादेः। अतिप्रमादाद्यथा—प्रमादोऽनवधानता। विषयान्तरासक्तचित्तो हि सन्निकृष्टमप्यर्थं नोपलभते।

ननु भाष्यकृताऽतः पूर्वम् "आदित्यगतिवत् सन्न" इत्यनेन "सौक्ष्म्यात् खट्वावृक्षयोर्लिङ्गं नोपलभ्यते" इत्युक्तम्। तेनानुपलब्धौ सूक्ष्मत्वमपि कारणमभ्युपेतम्। तस्य चात्र परिगणनं न कृतमिति न्यूनतेति चेन्न, सूक्ष्मत्वस्येन्द्रियदौर्बल्येन संगृहीतत्वात्। अत एव प्रबलेन्द्रिया दिव्यदृशो महर्षयः सूक्ष्ममप्यर्थमुपलभन्ते। ननु समानाभिहारोऽप्यनुपलब्धौ हेतुस्तद्यथा—माषराशौ प्रक्षिप्तो माषः पृथङ् नोपलभ्यते। एवमभिभवोऽपि—तद्यथा सौरीभिर्भाभिरभिभूतानि नक्षत्राणि दिवा नोपलभ्यन्ते। प्रकृते एतयोरप्यनुक्त्या न्यूनतादोषस्तदवस्थ एवेति चेन्न, इन्द्रियदौर्बल्ये एवैनयोर-प्यन्तर्भावात्।

पुनर्भाष्यकृता शङ्कितम्—'केनैतदध्यवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति? तयोस्तु तत्कृतं दृष्ट्वा। स्त्रीकृतं टाबादिकं शब्दं दृष्ट्वा स्त्रीत्यध्यवसीयते। पुंस्कृतं शब्दं दृष्ट्वा पुमानिति' इति भाष्यम्। अयं भावः—खट्वारूपोऽर्थः स्त्रीत्वविशिष्टस्तदर्थककार्यस्य टाबादेः, स्वघटितशब्द-वाच्यत्वसम्बन्धेनार्थे दर्शनात्, एवं वृक्षरूपोऽर्थः पुंस्त्वविशिष्टः, 'वृक्षान्' इत्यत्र पुंस्त्वार्थद्योतक-नकारादेशरूपकार्यस्य स्वघटितप्रत्ययप्रकृतिवाच्यत्वसंसर्गेणार्थे दर्शनात्। दर्शनञ्चात्र ज्ञानविशेषो न तु चाक्षुषम्। साध्यतावच्छेदकसम्बन्धश्च यदि लिङ्गं गुणस्तदा समवायः। यद्युपाधिरूपं तदा स्वरूपसम्बन्धः। हेतुतावच्छेदकसंसर्गश्च विषयतारूपः। एवमुक्तानुमित्या खट्वावृक्षयोर्लिङ्गं प्रतीति-विषयतामवगाहते। अत्रानुमितौ दृष्टान्तरूपेण भाष्यकृताभिहितम्—'यथा आकाशेन ज्योतिषः। तद्यथा आकाशं दृष्ट्वा ज्योतिरत्रेत्यवगम्यते' इति। अत्राकाशते=प्रकाशते इत्याकाशः = प्रकाशः। तेन यथा मेघान्तरितंज्योतिरनुमीयते तथा लिङ्गमनुमीयत इत्याकूतम्।

अत्र भाष्यम्—'ज्योतिर्निमित्तं ह्याकाशम्। अन्योन्याश्रयत्वे तद्भवति। स्त्रीकृतः शब्दः इति। अत्र ज्योतिष्प्रकाशयोरन्योन्याश्रयत्वञ्च प्रत्यक्षेण कार्य्यकारणभावावगमात्।

भवतु कार्य्येण कारणानुमानम्। खट्वादिषु तु लिङ्गस्य कदाचिदप्यग्रहणान्न तेन कार्य्यकारणभावः कल्पयितुं शक्यः। अत्र लिङ्गावगमात् टाबादिशब्दप्रयोगः, टाबादिशब्दप्रयोगाच्च लिङ्गावगतिरित्यन्योन्याश्रयः। यदुक्तं पूर्वम्—'आदित्यगतिवत् सदपि नोपलभ्यते' इति, तद्दूषयितुमाह भाष्यकृत्—'प्रत्यक्षेण विरुध्यते। प्रत्यक्षेण सन्नपि स विरुध्यते। य आह खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति। स च स्वेन्द्रियविरोधः कृतो भवति। न च स्वेन्द्रियविरोधिना भवितव्यम्' इति। लिङ्गस्वरूपेण विविक्तो यः खट्वादिविषयस्तन्मात्रविषयकेण लिङ्गाभावनिश्चयकारिणा चाक्षुषप्रत्यक्षेण खट्वादिषु लिङ्गसद्भावो विरुध्यत इति भावः। नहि शक्यते वक्तुं भिक्षुगृहं गजवद् देशत्वाद् गजशालावत् प्रत्यक्षेण चक्षुरिन्द्रियदौर्बल्यान्नोपलभ्यत इति।

लौकिकलिङ्गवत्ताया जडेषु स्वीकारे दोषान्तरमपि तत्रैवोक्तम्—'तटे च सर्वलिङ्गकार्य्याणि दृष्ट्वा तटस्तटी तटमिति कस्तदध्यवसातुमर्हति—इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति' इति। एकस्मिन् द्रव्ये सर्वलिङ्गासम्भवः। स्त्रीपुंसत्वासम्भवः, 'तदभावे नपुंसकम्' इत्युक्तेः। तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यञ्च कश्चित् स्वकृतान्त आस्थेयः। कोऽसौ कृतान्तः संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्तः। किमिदं संस्त्यानप्रसवाविति ? संस्त्याने ( संघाते ) स्त्यायतेर्ड्रट् स्त्री। सूतेः सप् प्रसवे पुमानितीत्युक्तं भाष्यकृता। अत्र 'सूतेः सप्' इति भाष्यस्य षूङ् प्राणिगर्भविमोचने इत्यत औणादिकः सुन्प्रत्ययो ह्रस्वश्च बाहुलकाद् धातोः सस्य पकारादेशश्चेत्यर्थः। तेन पुमान् सिध्यति। उणादौ 'पातेर्डुमसुन्' पुमान् इत्युक्तम्, तदेतद् भाष्यविरुद्धम्।

ननु च 'लोकेऽपि स्त्यायतेरेव स्त्री सूतेः सप् प्रसवे पुमान्' इति। अधिकरणसाधना लोके स्त्री, स्त्यायति गर्भोऽस्यामिति। इह पुनरुभयं भावसाधनम्। संस्त्यानं स्त्रीप्रवृत्तिश्च पुमान्' इति भाष्यम्। अत्र संस्त्यानं तिरोभावः प्रवृत्तिश्चाविर्भावः। 'कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमान् ? गुणानाम्, केषाम् ? शब्दस्पर्शरूपरसगन्धानाम्' इत्युक्तं पतञ्जलिना भगवता। अयं भावः—संस्त्यानं तिरोभावः। प्रवृत्तिराविर्भावः। साम्यावस्था गुणानां स्थितिः। एताश्चावस्थाः शब्दगोचरा एव गुणाः सत्त्वरजस्तमांसि। तत्परिणामरूपाः शब्दादयः पञ्च गुणास्तदात्मका एव। तत्संघातरूपञ्च घटादि, न तु तद्व्यतिरिक्तमवयवि द्रव्यमस्तीति सांख्यसिद्धान्तः। सत्त्वादीनामनारब्धकार्य्याणां सूक्ष्मावस्थाविशिष्टानामप्रत्यक्षत्वाच्छब्दव्यवहारागोचरत्वाद् भाष्ये तत्परिणामरूपा लोकप्रसिद्धाः शब्दादय उक्ताः। 'सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणास्तत्राप्यवरतस्त्रयः शब्दो रूपं स्पर्श इति' इति भाष्यम्। नन्वाकाशं शब्दगुणकमेव वायुरपि स्पर्शमात्रैकगुणस्तर्हि 'यत्राल्पीयांसो गुणास्तत्राप्यवरतस्त्रयो गुणाः' इत्यनुपपन्नमिति चेन्न, सम्पिण्डितस्वभावानां चक्षुर्गोचराणामेव मूर्तिशब्देनात्र विवक्षितत्वात्, वाय्वाकाशयोश्चातथात्वात्। अतः परम् 'रसगन्धौ न सर्वत्र, प्रवृत्तिः खल्वपि नित्या। नहीह कश्चिदपि स्वस्मिन्नवतिष्ठते वा। यावदनेन वर्द्धितव्यमपायेन वा युज्यते। तच्चोभयं सर्वत्र' इति भाष्यम्। 'तच्चोभयं सर्वत्र' इत्यस्य सत्त्वादीनां गुणानामाविर्भावतिरोभावरूपः परिणामः प्रवृत्तिपदवाच्यः सर्वत्र पदार्थमात्रे इत्यर्थः। पुरुषो यद्यप्यपरिणामी तथापि भोक्तृत्वात् प्रकृतिधर्मापन्नत्वेन भानात् यत्किञ्चिद्धर्मिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वस्य पुंस्त्वादीनां स्वीकारेण पुरुषस्य निर्धर्मकतया केवलान्वयित्वाक्षतेश्च। शब्दादिसंघातरूपाश्च सर्वा मूर्तयः प्रतिक्षणपरिणामस्वभावाः। एवं शब्दादय आकाशादयो घटादयश्च।

ननु 'चादयोऽसत्त्वे' ( १-४-५७ ) इति सूत्रेणाद्रव्यार्थाश्चादय इत्युच्यते। अत्र सत्त्वपदेन लिङ्गसंख्यानन्वितं द्रव्यमुच्यते। लिङ्गसंख्याऽनन्वितार्थकाश्च चादयो निपाता इति लिङ्गस्योक्तकेव-

लान्वयित्वं नोपपद्यत इति चेन्न, निपातानां लिङ्गसंख्यानन्वितार्थवाचकत्वेऽपि तदर्थे लिङ्गसंख्याऽभावस्य वक्तुमशक्यत्वात् । अत एव—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

इति 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे भाष्योक्तिः संगच्छते । लिङ्गत्रयविशिष्टेष्वर्थेष्वव्ययरूपं न भिद्यत इति तदर्थः । तदुक्तं हरिणा—

आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः । धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥
सर्वमूर्त्यात्मभूतानां शब्दादीनां गणे गणे । त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥
क्वथितोदकवच्चैषामनवस्थितिवृत्तिता । अनवस्थितभावानां भाष्य एवोपवर्णिताः ॥
रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम् । काचित् प्रलीयते काचित् कथञ्चिदभिवर्धते ॥
प्रवृत्तिमन्तः सर्वे हि तिसृभिश्च प्रवृत्तिभिः । सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः ॥
अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते । प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम् ॥
पश्चात् प्रवृत्तिधर्मार्थस्थितिरूपेण गृह्यते । अनुयातीव सोऽन्येषां प्रवृत्तिर्विष्वगाश्रया ॥
सामान्यमपि गोत्वादिव्यक्तेरव्यतिरेकतः । प्रवृत्तिधर्मः तद्द्वारा शशशृङ्गादिवाक्षु तु ॥
तस्मादुक्तपदार्थस्य सम्भवाल्लिङ्गयोगिता । प्रवृत्तेरपि विद्यन्ते तिस्रो ह्येताः प्रवृत्तयः ॥
पुंनपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता । इति ।

तदेवं सर्वपदार्थव्यापिन्य उपचयापचयान्तरालावस्थास्त्रीणि लिङ्गानि । एवं च नक्षत्रे तारकास्तिष्यः कुमार्य्यर्थो वस्तु इत्येकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते । आविर्भावादित्रयस्याप्येकस्मिन्नर्थे सर्वदा सम्भवात् । शशविषाणादावप्युत्तरपदार्थसद्भावात्तद्द्वारको लिङ्गयोगः । बौद्धशशविषाणमादाय वा लिङ्गवत्त्वम् । एवमेव वन्ध्यासुतादावपि बोध्यम् ।

न चैवं गुणानामुपचयापचयस्थितिस्वरूपाण्येव यदि लिङ्गानि तदा तेषां सर्वत्र सत्त्वात् सर्वेषां शब्दानां सर्वलिङ्गताप्रसङ्ग इति वाच्यम्, यदर्थवाचकः शब्दस्तदर्थे यावन्ति लिङ्गानि तावल्लिङ्गभाक् शब्द इति नियमाभावेन यल्लिङ्गं स्वस्वशक्तिस्वभावादाह—'शब्दस्तेन लिङ्गेन तदर्थे सता भवितव्यम्' इत्येव नियमात् । तथा च सर्वत्र सर्वलिङ्गसत्त्वेऽपि शब्दशक्तिस्वभावात् कश्चिदेकमेव लिङ्गं कश्चिल्लिङ्गत्रयं प्रतिपादयतीति न सर्वेषां सर्वलिङ्गताप्रसङ्गः । अत एव कुमार्य्यादावियं व्यक्तिः, अयं पदार्थः, इदं वस्तु इति प्रयोगदर्शनेन लिङ्गत्रयसत्तायाः सत्त्वेऽपि कुमारीशब्दः स्त्रीत्वमेवाभिधत्ते नान्यत् । तदुक्तं भाष्यकृता—'यद्युभयं सर्वत्र कुतो व्यवस्था ? विवक्षातः । संस्त्यान ( अपचय ) विवक्षायां स्त्री । प्रसव ( उपचय ) विवक्षायां पुमान्, उभय ( स्थिति ) विवक्षायां नपुंसकमिति । यथा तक्षार्थी तक्षा युवा कृष्ण इत्यत्र तक्षादिशब्दानामेकार्थपर्य्यवसायिनामपि व्यवस्थित एवार्थोऽभिधीयते, तथा लिङ्गेष्वपि द्रष्टव्यम् । तदुक्तं हरिणा—

सन्निधाने पदार्थानां किञ्चिदेव प्रवर्तकम् । यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ इति ।

ननूपचीयते कुमारीत्यत्रोपचयस्यैवाविर्भावेन 'कुमारी' इति स्त्रीत्वमनुपपन्नमिति चेन्न, कुमारीशब्दः स्वमहिम्नाऽपचयमेवाह, शब्दान्तरयोगात्तु धर्मान्तास्याभचयस्य प्रतीतेः । एवं क्षीयते वृक्षः क्षीयते ज्ञानमित्यादावपि बोध्यम् ।

ननु लिङ्गत्रयस्य व्यापित्वेऽपि प्रत्यक्षप्रमाणगोचरतया तत्तच्छब्दे तत्तल्लिङ्गप्रतिपादनशक्तिरप्यप्रत्यक्षैवेति तत्तल्लिङ्गबोधनमप्यसम्भवीति चेन्न, शिष्टलोककृतलिङ्गानुशासनत एव तत्तच्छब्दनिष्ठलिङ्गनिरूपितशक्तेरप्यवगन्तव्यत्वात् । तदुक्तं भाष्कृता—'तस्योक्तौ वचने लोकतो नामैतद्भवति स्त्री पुमान् नपुंसकमिति' 'एकार्थे लिङ्गान्यत्वाद्' इति, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति,

दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च' इति च एकस्मिन्नेवार्थे संस्त्यानादिसद्भावात् पुष्यः तारका नक्षत्रमिति । अवयवान्यत्वात् कुटी कुटीरः ।

रेफस्यावयवस्योपजनने लिङ्गभेदो दृष्टः । स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्ता इत्यादिशिष्टप्रयोगदर्शनात् संस्त्यानादेरपि प्रवृत्तिलक्षणलिङ्गयोगः । किञ्च, 'गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा—शुक्लं वस्त्रम्, शुक्लः शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनञ्च तद्गुणस्यापि भवति । एवमिहापि यददो द्रव्यं श्रितं भवति स्त्रीत्वं गुणस्तस्य यल्लिङ्गं वचनं च तत्स्त्रीत्वस्यापि भविष्यति' इति भाष्येण स्त्रीत्वादीनां गुणत्वसिद्धया आश्रयतो लिङ्गवचनं न्यायादनपेतमेव ।

नागेशभट्टा अपि प्रवृत्तिविषये स्वाराध्यभाष्यकृदभिप्रेतमेवाद्रियन्ते । 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः' इत्यादिलौकिकलिङ्गसम्भवे तद्विशिष्टे एव लौकिकं शास्त्रीयं च कार्य्यम्, प्रत्यक्षप्रमाणस्य बलवत्त्वेन तत्त्यागे मानाभावात् । अत एव 'पशुना यजेत' इत्यनेन लौकिकलिङ्गसमानाधिकरणशास्त्रीयस्यैव शब्दसंस्कारकत्वेन न केवलशास्त्रीयपुंस्त्वविशिष्टया स्त्रिया यागः ।

वृत्तिकारास्तु हालिकपर्य्यन्तानां लौकिकानां सत्त्वादिगुणानामुपचयस्थितिरूपलिङ्गस्य प्रतिपत्तेरभावाल्लौकिकानुगुणं पक्षं दर्शयन्ति—तथा हि—'स्त्रियाम्' इत्युच्यते केयं स्त्री नाम ? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः । क्वचिदाश्रयविशेषाभावादुपदेशगम्या एव भवन्ति, यथा ब्राह्मणत्वादय इत्याहुः । अयं भावः— सामान्यविशेषाः ( जातिविशेषाः ) स्त्रीत्वादयः । तदुक्तं हरिणा—

विस्रो जातय एवैताः केषाञ्चित् समवस्थिताः । अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥
हस्तिन्यां वडवायाञ्च स्त्रीत्वबुद्धेः समन्वयः । अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम् ॥ इति ।

नन्वेषां त्रयाणामपि सामान्यविशेषाणां सर्वार्थेषु सद्भावोऽभ्युपगन्तव्यः, न तु गोत्वादिवत् कतिपयेष्वेवार्थेषु । अन्यथा एकस्मिन्नेवार्थे पदार्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानां सर्वानुभूतानां प्रतीत्यनुपपत्तिरिति चेन्न, व्यज्यन्ते जातिविशेषाः स्त्रीत्वादय आभिरिति व्यक्तय आश्रयाः, पुंस्त्वादिजातिव्यञ्जकानामाश्रयाणां नानाविधत्वात् कश्चिदाश्रयः कस्यचित्सामान्यविशेषस्य व्यञ्जको न सर्वः सर्वस्येत्यभ्युपगमात् । तत्र चेतनेषु स्तनादिमती व्यक्तिः स्त्रीत्वस्याभिव्यञ्जिका, लोमशत्वादिमती पुंस्त्वस्य, उभयव्यञ्जना नपुंसकत्वस्य । अचेतनेषु कथम् ? नहि तत्र किञ्चिल्लिङ्गं व्यज्यते । तथा चेतनेऽप्येकस्मिन् अर्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामनुपपत्तिः, पुंलिङ्गस्य दारशब्दस्य स्त्रियामनुपपत्तिरिति चेन्न, क्वचिदाश्रयविशेषाभावादुपदेशव्यङ्ग्या एव ता जातयो ब्राह्मणत्वादिवत्, ब्राह्मणक्षत्रियादिव्यक्तीनामत्यन्तसादृश्यादुपदेशादेव ब्राह्मणत्वादीनां यथाभिव्यक्तिः । न हि खलु पुरोऽवस्थितयोरपि ब्राह्मणक्षत्रिययोरुपदेशात् प्राक् क्षत्रियोऽयं ब्राह्मणोऽयमिति प्रत्यय उदेति । शशविषाणादावप्युत्तरपदार्थद्वारकः सामान्ययोगः । नन स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्ता जातिः । तत्र कथं लिङ्गरूपजातिप्रतीतिरिति चेन्न, वैयाकरणनये गोत्वादौ सत्तासामान्यस्येव सामान्येऽपि सामान्यसद्भावस्वीकारात् । न ह्यस्माकं वैशेषिकाणामिव 'निःसामान्यानि सामान्यानि' इति मतम् ।

यद्यपि मीमांसकैः 'पशुना यजेत' इत्यादिवाक्यमुपजीव्य पुंस्त्वं विवक्षितं न वेत्युपक्रम्य 'पशुना यजेत' इति वाक्यान्तर्गतः पशुशब्दो नाभावेन पुंस्त्वबोधनात् स्त्रियां नास्तीति हेतोर्न छाग्यादीन् यज्ञाङ्गत्वेन प्रयोजयति । अतो लौकिकपुंस्त्वविशिष्टपशुकरणकयागस्यैवेष्टसाधनत्वं नान्यस्य । न च नित्यपुंलिङ्गपदार्थशब्दो यथा लौकिकलिङ्गानादरेण पुंस्त्वस्त्रीत्वनपुंसकत्वान्यतमधर्मावच्छिन्नबोधकस्तथा नित्यपुंलिङ्गः पशुशब्दोऽपि लौकिकलिङ्गानादरेण स्त्रीत्वविशिष्टं पशुमपि

बोधयेदिति छाग्या अपि यागाङ्गत्वं स्यादिति वाच्यम्, सर्वार्थाभिधायिनित्यलिङ्गकशब्दस्यैव लौकिकलिङ्गानादरेण शिष्टप्रयोगदर्शनादुक्तदोषाप्रसङ्गात् ।

वस्तुतस्तु 'पश्वा न तायुं गुहा चरन्तम्' ( ऋग्वेदे १ म० १२ अनुवा० १५ सू० ) इति वेदे स्त्रियां प्रयोगदर्शनेन पशुशब्दस्य नित्यपुंस्त्वं दुर्निरूप्यम् । 'छागो वा मान्त्रवर्णात्' ( मी० ६ आ० ८ पा० ३१ सू० ) इत्यत्रापि लिङ्गविवक्षादर्शनाल्लिङ्गस्य नामार्थत्वं मीमांसकाभिप्रेतमित्यत्र नास्ति विचिकित्सा ।

'व्यक्त्याकृतिजातयः पदार्थः' इति सूत्रयता भगवता गौतमेन, न्यायसूत्रभाष्यकृता वात्स्यायनेन, वैशेषिकसूत्रकृता महर्षिणा कणादेन, वैशेषिकसूत्रोपस्कारकृता श्रीशङ्करमिश्रेण च सर्वभाषाप्रसिद्धपुंस्त्वादिलिङ्गविषयः सर्वथोपेक्षितः । पदार्थमात्रविचारपराणामेषां तदुपेक्षायां कारणमन्वेषणविषयतामाश्रयति । गौतमसूत्रे जातिपदस्य धर्ममात्रपरत्वमपि न पुंस्त्वादिविषयकतत्त्वातत्त्वविवेकपद्धतित्रुटिं परिमार्ष्टि ।

किञ्च, तन्मते पुंस्त्वादीनां कुत्रान्तर्भाव इत्यपि दुर्वचनम् । यद्यपि नव्यनैयायिकशिरोमणिना गदाधरभट्टाचार्य्येण लिङ्गनिरूपणप्रकरणे 'टाबादयः क्वचित् स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति । अजा ब्राह्मणी गौरीत्यादौ स्त्रीत्वञ्च योनिमत्त्वम् । न च स्त्रीपरपदात् साधुत्वार्थष्टाबादिर्न तु स्त्रीत्वं तदर्थः । क्वचित् स्त्रीत्वबोधश्च स्त्रीप्रत्ययप्रकृतितात्पर्य्यविषयत्वरूपलिङ्गज एवेति वाच्यम्, खट्वादौ व्यभिचारेण तादृशहेतोः स्त्रीत्वासाधकत्वात् । प्राणित्वेन विशेषणत्वेऽपि 'इन्द्रो देवता' इत्यादौ व्यभिचारात् ।

वस्तुतस्तु अजवत्यपि देशेऽजा नास्तीत्यादिप्रयोगदर्शनात् स्त्रीत्वस्य नञर्थान्वयिताऽवच्छेदकतया भानमावश्यकम्, अन्यथा पुंसाधारणजातिविशेषावच्छिन्नाभावस्य बाधेन तादृशप्रयोगस्य प्रामाण्यानुपपत्तेः । न च प्रातिपदिकार्थ एव स्त्रीत्वं द्योतकाश्च स्त्रीप्रत्यया इति वाच्यम्; लिङ्गस्य प्रातिपदिकार्थत्वामावश्यकमेव, नात्र ब्राह्मणोऽपि तु ब्राह्मणीत्यादौ पुंस्त्वबोधकपदान्तराभावेन तदबोधानुपपत्तेः ब्राह्मणादिपदाच्च जात्यादेर्द्रव्यस्य च भानं नियतमेव । लिङ्गभानं तात्पर्य्ययोग्यताधीनं क्वाचित्कम्, ब्राह्मणीत्यादौ पुंस्त्वाद्यबोधादिति वाच्यम्, उक्तयुक्त्या पुंस्त्वस्य प्रातिदिकार्थत्वेऽप्यनन्तानां प्रातिपदिकपदानां स्त्रीत्वार्थकत्वे गौरवाल्लाघवेनाल्पीयसां स्त्रीप्रत्ययानां स्त्रीत्वार्थकत्वकल्पनाया एवौचित्यात् । योनिमत्त्वरूपस्त्रीत्वस्य खट्वाऽश्वोदेवतापदे च स्त्रीप्रत्यया न बोधकाः, किन्तु शाबुत्वसम्पादका एव; तत्र योनिमत्त्वरूपस्त्रीत्वस्यायोग्यताऽनन्वयात्; एतन्मते स्त्रीत्वस्य प्रत्ययार्थत्वे स्त्रीप्रत्ययरहिते गीर्वाणादौ शब्दे न भानं लिङ्गस्य, नामजन्योपस्थितेरभावाद्योनिमत्त्वरूपालिङ्गस्याभावाच्च । 'यू स्त्र्याख्यौ नदी' इत्यादौ स्त्र्याख्यपदं स्त्रीलिङ्गशब्दपरम् । तेनाऽऽव्यादिशब्दानां स्त्रीत्वविशिष्टाबोधकत्वेऽपि न नदीसंज्ञानुपपत्तिः । न चैवं सेनान्ये स्त्रियै इत्यादावपि नदीसंज्ञा स्यात्, सेनान्यादिशब्दस्य विशेष्यनिघ्नतया स्त्रीत्वादिति वाच्यम्, प्रयोगानुसारेण विशेष्यानधीनायाः स्त्रीलिङ्गताया ग्रहणात् । तथा च 'स्वमोर्नपुंसकात्', 'तस्माच्छसो नः पुंसि' इत्यादौ का गतिरिति त एव प्रष्टव्याः । लिङ्गस्य शब्दगतत्वस्वीकारे 'पशुना यजेत' इत्यादौ स्त्रिया योगो दुर्वारः स्यात् । किञ्च, शब्दगतलिङ्गस्य स्वरूपं दुर्निरूपं स्यात् । तस्माद्भाष्योक्तं गुणानामुपचयापचयस्थितिरूपं केवलान्वयि पुंस्त्वस्त्रीत्वनपुंसकत्वात्मकं लिङ्गं सर्वैर्ग्राह्यम् ।

व्याकरणभाष्यं वाक्यपदीयञ्चापहाय कुत्रापि लिङ्गस्वरूपनिर्णयो नोपलभ्य इति मन्ये ।
लिङ्गत्रयं जगद्व्याप्तं ज्योतिर्लिंगसमं मतम् । तद्विचारः शुभं कुर्य्यात् सुरवाचो जगत्त्रये ॥

इत्युपाध्यायः इति शम् ॥

# अथ स्त्रीप्रत्ययप्रकरणम्

*स्त्रियाम्* । [ ४-१-३ ]

अधिकारोऽयम् । समर्थानामिति यावत् ।

---

'**स्त्रियाम्**' ( ४-१-३ ) इति अत्र स्त्रीत्वं न—

'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ।'

केशो भगः, लोमः, शिश्नम् उभयोरपि स्त्रीपुंसयोर्यदन्तरम्—सदृशम्=स्तनलोमाद्युभयव्यञ्जनम् तन्नपुंसकमित्यर्थः । तेनाव्ययाख्यातयोर्नपुंसकत्वम् सादृश्याभावात् । वस्तुतस्तु केशपदं लोमपदञ्च स्वार्थपरमेव । भाष्ये भ्रकुंसे=स्त्रीवेषधारिनटे खरकुट्याम् नापितगृहे टापः शङ्कनात् । किन्तु भूमादौ मतुपश्चेति इत्युक्ते लौकिकं खट्वादावव्याप्त्यापत्तेः । किन्तु सकलकार्य्यकारणीभूतसाङ्ख्याभिमतसत्त्वरजस्तमोगुणानामुपचयापचयसत्तारूपं क्रमेण पुंस्त्वस्त्रीत्वनपुंसकत्वरूपम् । इदञ्च लिङ्गत्रयं पुरुषे स्त्रियाञ्च वर्त्तते । चेतनाचेतनसकलपदार्थसाधारणम् ।

परन्तु बोध्यता तत्तच्छब्देन नियता, शब्दशक्तिस्वभावात् । शशशृङ्गादौ ब्रह्मणि च सत्त्वादिगुणकार्य्यत्वाभावादाध्यासिकम् (आरोपितम्) लिङ्गं बोध्यम् । एतत्सर्वं — विस्तरेणानुपदमेव स्फुटीभविष्यति ।

**अथ स्त्रीप्रत्ययाः** । लिङ्गत्वञ्च—प्रतिपादिकविशिष्टत्वम्—

वैशिष्ट्यञ्च स्वजन्यशाब्दबोधीयप्रकारतावत्त्वम्, स्वनिष्ठशक्तिविषयत्वम्, स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वम् एतत्त्रितयसम्बन्धेन । धर्मितावत्त्वञ्चाश्रयतासम्बन्धेन । तेन पुंस्त्वत्वादौ नातिव्याप्तिस्तत्र धर्मितानिरूपितप्रकारताया अवच्छेदकतासम्बन्धेन सत्त्वेऽपि स्वरूप ( आश्रयता ) सम्बन्धेनाभावात् । प्रवृत्तिनिमित्ते घटत्वादौ स्वजन्यशाब्दबोधीयप्रकारतावत्त्वेऽपि घटत्वावच्छिन्नधर्मितानिरूपितप्रकारताया अभावात् ।

**समर्थानामिति**—'समर्थानां प्रथमाद्वा' ( ४-१-८२ ) इति सूत्रं मर्य्यादीकृत्येत्यर्थः । सूत्रकृन्मतेऽत्र स्त्रीपदं स्त्रीत्वविशिष्टार्थपरम् । तथा च 'स्त्रियाम्' इति प्रातिपदिकविशेषणम् । तेन स्त्रीत्वविशिष्टार्थबोधकात्प्रातिपदिकात्स्वार्थे टाबादय इत्यर्थः । अत एव 'तत्र शालायाम्' इत्यादौ तत्रेत्यस्य स्त्रीत्वविशिष्टशालारूपार्थबोधकत्वेन जातस्य तत्रशब्दात्परस्य टापो लुगर्थम् 'अव्ययादाप्सुपः' इति सूत्रे आब्ग्रहणं चरितार्थम् ।

भाष्यकृन्मते तु धर्मपरम् । तेन स्त्रीत्वे बोत्य इत्यर्थः । '**स्त्रियाम्**' इति सप्तमीनिर्देशेन किञ्चित्कार्य्यं विधातुमनुवादः प्रतीयते प्रथमान्तेतरपदेन निर्देशे तादृशार्थस्यैव बोधात् । '**स्त्रियाम्**' इति सूत्रं व्याख्यातुं भाष्ये शङ्कितम्—'स्त्रियामित्युच्यते । का स्त्री नाम' इति । अयम्भावः— स्त्रीशब्दो नद्यादिवत् कचिदर्थविशेषे सङ्केतितः । तस्मात्पारिभाषिकमर्थमुपस्थातुं नालम् । नाप्याकृतिव्यङ्ग्यजातिरूपः, रमामानुषीशिंशपागवादिसाधारण्येन प्रयोगदर्शनात्सर्वसाधारणस्यानुगतसंस्थानस्याभावेनानुगतसंस्थानव्यङ्ग्यत्वासम्भवात । नापि अवयवेऽवयवीति न्यायेन शिश्नरूपावयवसमवेतत्वे सति प्राणित्वं पुंस्त्वम्, योनिरूपावयवसमवेतत्वे प्राणित्वं स्त्रीत्वम्, तदुभयासमवेतत्वे सति प्राणित्वं नपुंसकत्वम्, घटखट्वादिसाधारणस्य पुंस्त्वादिव्यवहारस्यासिद्ध्यापत्तेः । अतः सत्त्वरजस्तमसां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाऽख्यं लिङ्गम् ।

तदुक्तं भाष्ये—तटे सर्वलिङ्गानि दृष्ट्वा कोऽध्यवस्यति—अयं पुमान्, इयं स्त्री, इदं नपुंसकमिति। तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित्स्वकृतान्तः—

**'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु'**

इति। ( अम० ३ का० ३ वर्ग ) अकुशलकर्म=पापम्।) सिद्धान्त आस्थेयः। कोऽसौ स्वकृतान्तः? संस्त्यानप्रसवौ लिङ्गमास्थेयौ। किमिदं संस्त्यानप्रसवाविति ?

**'संस्त्याने स्त्यायतेड्ट् स्त्री सूतेः सप्प्रसवे पुमान्' इति।**

अत्र संस्त्यानप्रसवशब्दाभ्यां तृतीयावस्था=साम्यावस्थापि लक्षणीया। संस्त्यानम् तिरोभावः। एतदेव=असंस्त्यानमेव अपचयशब्देनोच्यते। यद्यपि स्त्यायेते शुक्रशोणिते यस्यामिति व्युत्पत्त्या संस्त्यानम्=संघः। लोकेऽपि ड्रट्प्रत्ययान्तः स्त्रीशब्दो यद्यप्येतस्यैवार्थस्य प्रतिपादकः, तथाऽपि स्त्रीत्वस्य खट्वादिसाधारण्योपपत्तये तस्य तिरोभावपरत्वमेव स्वीकृतम्।

एवं 'सूतेः सप्' इत्यनेन सूङ्धातोरौणादिकोम्सुन्प्रत्ययः सस्य प् इत्यादेशो ह्रस्वश्चेत्येवंरीत्या पुम्शब्दो व्युत्पादितः। यद्यपि सूतेऽपत्यं जनयतीत्यर्थेन प्राणिनि पुरुषे एव पुम्शब्दस्य शक्तिः लभ्यते। तथाऽपि तस्य वृक्षादिसाधारण्योपपत्तये प्रवृत्ति-( लिङ्गम् ) राविर्भावरूपा 'पुमान्' इत्यनेनोच्यते। एवं यदा न तिरोभावे (संस्त्यानम्) नवा प्रवृत्तिः ( आविर्भावः ) किन्तु साम्यावस्था सत्तावस्थितिर्नपुंसकशब्देनोच्यते। सत्त्वरजस्तमःसु कस्यचिद्गुणस्याविर्भावतिरोभावः स्थितिश्च सर्वदा सर्वत्रोपलभ्यते पदार्थमात्रस्य गुणत्रयात्मकत्वात्। ततः पुनर्भाष्ये शङ्कितम्—'कस्य पुनः संस्त्यानं स्त्री प्रवृत्तिर्वा (आविर्भावो वा) पुमानिति ? गुणानाम्। केषाम् ? शब्दस्पर्शरूपरसगन्धानाम्' इति। एतदत्र तत्त्वम्—सत्त्वरजस्तमांसि गुणास्तेषां परिणामरूपा एव तेभ्योऽभिन्नाः शब्दादयः पञ्चगुणाः। सर्वाः पुनर्मूर्तयः एवमात्मिकाः। सर्वस्य पदार्थस्य सुखदुःखमोहरूपतया तत्कारणत्वेन सत्त्वादिरूपो गुणः कल्प्यते। ततः सर्वपदार्थव्यापित्वं पुंस्त्वादीनां दर्शितम्। ततः 'प्रवृत्तिः खल्वपि नित्या' इत्युक्तम्।

अत्र प्रवृत्तिशब्देन लिङ्गसामान्यलक्षणं दर्शितम्। सार्वदिकत्वात्सार्वत्रिकत्वाच्च नित्यत्वं तस्याः। 'सत्त्वादीनामाविर्भावादिरूपः परिणामः प्रवृत्तिशब्दवाच्यो नित्यः परिणाम इति कैयटः। यद्यपि पुरुष आत्मपदव्यवहार्योऽपरिणामी तथाऽपि भोक्तृत्वात्प्रकृतिधर्मापन्न इव भवति। अत एव पुरुषः, चितिः, चैतन्यम्, इति तत्रापि लिङ्गत्रययोगः। अत एव किञ्चिद्धर्मिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपं केवलान्वयित्वं स्त्रीत्वादीनाम्। इदञ्च लिङ्गमर्थनिष्ठम्। अत एव 'स्वमोर्नपुंसकात्' ( ७-१-२३ ) इति सूत्रे भाष्ये 'नपुंसकादित्यनेनासंदिग्धेनार्थग्रहणेन भवितव्यम्। न हि नपुंसकं नाम शब्दोऽस्ति' इत्युक्तिः संगच्छते। अर्थनिष्ठत्वञ्च तादात्म्येन, लिङ्गस्यार्थरूपत्वात्। यद्यपि 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति न्यायेन शब्दार्थयोरपि तादात्म्येन शब्दनिष्ठत्वमपि सम्भाव्यते।

तथापि 'नहि नपुंसकं नाम शब्दोऽस्ति' इति भाष्यादर्थाभेदेन प्रतीयमानत्वमेव कल्प्यते। न चैवं शब्दे लिङ्गाभावेन केवलान्वयित्वहानिः, अर्थप्रतियोगिकान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वस्यैवात्र केवलान्वयित्वात्। तथा च गुणानामुपचयः ( आविर्भावः ) पुंस्त्वम्, अपचयः ( तिरोभावः ) स्त्रीत्वम्, स्थितिः ( सत्ता ) नपुंसकत्वमित्येष निर्दुष्टः पन्थाः। स्थितिपदेन गुणानां साम्यावस्था तु न ग्राह्या, प्रलये एव गुणानां साम्यावस्थास्वीकारेण सृष्टिदशायां तदसम्भवात्। पुंलिङ्गः शब्दः इति व्यवहारस्तु कथां शृणोमीतिवत् वाच्यवाचकयोरभेदाध्यवसायात्। मीमांसा पा० ४ अधिक० १ अध्वरमीमांसाकुतूहलवृत्तिः अन्वेष्या।

अत एव इयं व्यक्तिः, इदं वस्तु, अयं पदार्थ इति त्रिविधव्यवहारः पदार्थमात्रे। लिङ्गत्रयस्य सर्वत्र सत्त्वेऽपि शब्दशक्तिस्वभावात् कश्चित् शब्द एकलिङ्गविशिष्टमेव, कश्चिल्लिङ्गद्वयविशिष्टम्,

*अजाद्यतष्टाप्* [ ४-१-४ ]

कश्चिल्लिङ्गत्रयविशिष्टमेवार्थं प्रत्याययति । कुत्र लिङ्गे कस्य शक्तिरिति लिङ्गानुशासनादितः शिष्टव्यवहाराच्च निर्णेयम् ।

एतेन त्रयाणामपि लिङ्गानां केवलान्वयित्वे दारशब्देन स्त्रीत्वस्य अप्शब्देन पुंस्त्वस्य, ज्ञानशब्देन स्त्रीत्वस्यापि भानापत्तिर्निरस्ता । शशविषाणादौ तु बौद्धपदार्थसत्त्वमादाय तत्तल्लिङ्गव्यवहारः । मृगतृष्णासलिलवदसदेव भासतेऽन्यथाख्यातिस्वीकाराद्वेति केचित् ।

ननु शास्त्रीयं लिङ्गमादाय अजशब्दस्य स्त्रियाम्, अजाशब्दस्य पुंसि च प्रयोगापत्तिरिति चेन्न, 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः' इत्यादिलौकिकलिङ्गासम्भवे शास्त्रीयं कार्य्यं सर्वान्वयिशास्त्रीयलिङ्गे एव । लौकिकलिङ्गसम्भवे तु लौकिकलिङ्गविशिष्टमेव शास्त्रीयमिति 'पशुना यजेत' इत्यादौ लौकिकपुंस्त्वादिविशिष्टस्यैव ग्रहणान्न दोषः । अत्र पुंस्त्वविशिष्टैकत्वविशिष्टपशुकरणकयागेनेष्टं भावयेदित्यर्थः । तेन स्त्रीत्वविशिष्टेनाप्या न यज्ञाङ्गत्वम्, नापि बहुत्वविशिष्टस्य । अत एव स्त्री, पुमान्, नपुंसकम्, इति महत्या संज्ञया व्यवहारः सति । सम्भवे लौकिकलिङ्गविशिष्टस्यैव शास्त्रीयस्य ग्रहणम् । अन्यथा टि-घु-संज्ञावत् लघुना व्यवहार एव उचितः स्यात् । उपचयापचयोः स्थले स्थितेरपि सत्ताया अपि सत्त्वेन तन्मात्रविवक्षायाम् 'सामान्ये नपुंसकम्' इति प्रवादः ।

**अजाद्यतष्टाप्** ( ४-१-४ ) इति । अत्र 'स्त्रियाम्' इति 'ङ्याप्प्रातिपदिकात्' ( ४-१-१ ) इत्यतः 'प्रातिपदिकात्' इति चाधिक्रियते । 'ङ्याप्' इति तु न सम्बध्यते ङ्यापोर्विधाने तदुद्देश्यत्वासम्भवात् । अजशब्द आदिर्यस्य सोऽजादिः, न त्वजादिर्यस्येति, अजादिगणे स्वरादिशब्दानामेडकादीनां पाठवैयर्थ्यापत्तेः । अत्र 'अजादि' इति लुप्तषष्ठीकं पृथक्पदम् ।

अत एव 'प्रातिपदिकात्' इति सामानाधिकरण्येनासम्बन्धात् 'अजाद्यन्तात्प्रातिपदिकादिति नार्थः । किन्तु अजादीत्यस्य स्त्रियामित्यनेन सम्बन्धः । तदाह—अजादीनां वाच्यं यत्स्त्रीत्वमिति । न नैवम् अजादिशब्दवाच्ये स्त्रीत्वे प्रातिपदिकात् टाबित्यर्थस्वीकारे 'तुरगी' इत्यत्र टाप् प्राप्नोति, अजादिषु अश्वशब्दस्य पाठेनाश्वशब्दवाच्यस्त्रीत्वस्य तुरगशब्दार्थे सत्त्वादिति वाच्यम्, यस्मात्प्रातिपदिकात् टाप् चिकीर्षितस्तद्वाच्यार्थगतं यत्तद्वाच्यं स्त्रीत्वं तत्र द्योत्ये तस्मादेव प्रातिपदिकात् टाबित्यर्थात् ।

अयम्भावः—शब्दादुपस्थितिश्चार्थस्य शब्दप्रकारिकाऽर्थविशेष्यिका जायते । तथा च तद्वाच्यार्थस्य यादृशविशेषणताविशिष्टस्य तच्छब्दजन्योपस्थितिविषयता तादृशविशेषणावच्छिन्नतद्विषयताविशिष्टं यत्स्त्रीत्वं तत्र द्योत्ये टाबित्यर्थो विवक्ष्यते । अश्वशब्दजन्योपस्थितिविषयताविशिष्टं यत्स्त्रीत्वं तदश्वशब्दसामानाधिकरण्येन भासते, न तु तुरगशब्दसामानाधिकरण्येन ।

एवञ्चोपस्थितौ यच्छब्दसामानाधिकरण्येन भासमानं यत्तच्छब्दवाच्यं स्त्रीत्वं तस्मिन्द्योत्ये तत्तच्छब्दात् टाबित्यर्थेनादोषात् । अत एव 'पञ्चाजी' इत्यत्र न टाप् । अत्र पञ्चाजशब्दसामानाधिकरण्येन भासमानं स्त्रीत्वं न त्वजशब्दसामानाधिकरण्येन । यदि तु 'अजाद्यतः' इति विशिष्टं पञ्चम्यन्तं स्यात्तदा अजाद्यन्तादन्ताच्च प्रातिपादिकादित्यर्थः स्यात् । तथा च अजाद्यन्तपञ्चाजशब्दसामानाधिकरण्येन भासमानं स्त्रीत्वमस्तीति पञ्चाजशब्दात् टाबापत्तिः स्यात् ।

न चात्र 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधेः प्रतिषेधात् तदन्तविधिर्न स्यादिति वाच्यम्, 'शूद्रा चामहत्पूर्वा जातिः' इत्यत्रामहत्पूर्वग्रहणेन, 'अनुपसर्जनात्' इत्यधिकारेण च भाष्यकृतैव स्त्रीप्रत्यये तदन्तविधेर्ज्ञापनात् । 'अतः' इत्यंशे 'उगिद्वर्णग्रहणवर्जम्' इति वार्तिकेन प्रतिषेधे संकोचाच्च ।

अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् ।

न चैवमपि अजोऽस्याः सा अजा इति अजशब्दस्य अशब्देन समासे अत्र पूर्वान्तवद्भावेन एकादेशविशिष्टेऽजशब्दत्वस्यारोपेण तद्वाच्यत्वस्य स्त्रीत्वे सत्त्वात् अजशब्दसामानाधिकरण्येन भासमानं यदजशब्दवाच्यं स्त्रीत्वं तस्मिन्द्योत्ये अजाशब्दात् टापि 'अजाः' इत्यत्रापः परस्य सोर्लो-पापत्तिरिति वाच्यम्, अजादिपदावच्छिन्ना अजत्वाद्यवच्छिन्ना या धर्मिता तादृशधर्मितानिरूपितस्त्रीत्व-निष्ठप्रकारताकबोधतात्पर्येणोच्चरितादजादिरूपात्प्रातिपदिकात् टाबित्यर्थेनादोषात् । प्रकृते च नाजत्वावच्छिन्ना धर्मिता किन्तु अन्यपदार्थत्वावच्छिन्नेति नापत्तिसम्भवः । अजत्वाद्यवच्छिन्नत्वञ्च साक्षाद्बोध्यम् । तेन 'पञ्चाजी' इत्यत्र समाहारनिष्ठधर्मितायाः परम्परया अजत्वावच्छिन्नत्वेऽपि न क्षतिः ।

**अजादीनामकारान्तस्य चेति**—सूत्रे 'अजादि' इति 'सुपां सुलुक्' इति लुप्तषष्ठीकमित्युक्तं तद्वाच्यार्थमेव **अजादीनां वाच्यं यत् स्त्रीत्वमिति** । अत एव 'अजादिभिः स्त्रिया विशेषणम् । अजा-दीनां या स्त्रीति' इति भाष्यं संगच्छते । भाष्ये 'या स्त्री' इत्यस्य यत्स्त्रीत्वमित्यर्थः । न च पञ्चम्यन्त-त्वे तदन्तविधावपि 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायेन श्रुतत्वात् स्त्रियामित्यजादीना-मेव विशेषणं स्यादिति वाच्यम्, अनुपसर्जनाधिकारेण स्त्रीप्रत्यये तदन्तग्रहणस्यैव 'स्त्रियाम्' इति तदन्तस्य विशेषणमित्यर्थस्यापि तेन ज्ञापनात् । अन्यथा 'बहुकुरुचरा' इत्यत्र ङीपो व्यावृत्तये कृतस्य 'अनुपसर्जनात्' इत्यस्य वैयर्थ्यं स्यात् श्रुतस्य टितः स्त्रियामवर्तनात् । कस्मात्प्रातिपदिकात् टाप् इत्याकाङ्क्षायां प्रत्यासत्त्या अजादिरूपादिति फलति । 'अतः' इति तु पञ्चम्यन्तम् । तेन प्रातिपदिका-दित्यस्य सामानाधिकरण्येन विशेषणत्वात् तदन्तविधिः । षष्ठ्यन्तत्वे तु समानाधिकरणविशेषणा-भावात्तदन्तविधिर्न स्यात् । तस्मात् अदन्तात्प्रातिपदिकात् टाप् स्त्रीत्वे द्योत्ये इति शाब्दोऽर्थः । स तु मूलकृता त्यक्तः । कस्य स्त्रीत्वे इत्याकाङ्क्षायां प्रत्यासत्त्या अदन्तस्येति फलति । फलितार्थं मूले आह **अकारान्तस्य वाच्यं यत्स्त्रीत्वमिति** ।

न च 'अजाद्यतः' इति विशिष्टस्य विशेषणत्वेऽपि 'समासप्रत्ययविधौ प्रतिषेधः' इति प्रतिषेधा-त्तदन्तविधिर्न स्यात् । तथा च 'पञ्चाजी' इत्यत्र टापोऽभावः सिध्यतीति वाच्यम्, 'शूद्रा चामहत्पूर्वा' इति सूत्रे 'अमहत्पूर्वग्रहणेन स्त्रीप्रत्यये 'समासप्रत्ययविधौ प्रतिषेधः' इत्यस्याप्रवृत्तिज्ञापनात् । तेन 'वनो र च' इत्यत्र तदन्तविधौ 'पञ्चसुत्वरी' इत्यादि सिध्यति । तज्ज्ञापकादेव 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इत्यस्यापि स्त्रीप्रत्यये न प्रवृत्तिः । 'अतः' वर्णग्रहणात् 'उगिद्वर्णग्रहणवर्जम्' इत्यनेन 'समासप्रत्ययविधौ' इत्यस्य प्रतिषेधाच्च अदन्तात्प्रातिपदिकादिति तदन्तविधिः । **तत्र द्योत्य इति**—द्योत्यत्वञ्च—'स्वसमभिव्याहारेणोद्बुद्धवृत्तिज्ञानजन्योपस्थितिविषयत्वम् । तथा च लिङ्गं प्रातिपदिकार्थ एव न तु प्रत्ययार्थः । स्त्रीत्वस्य टाबादिशक्यत्वे 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोश्च प्रत्ययार्थः' इति न्यायेन 'अजा' इत्यादिना अजनिष्ठं स्त्रीत्वम् इत्याद्येव बोधः स्यात् । इष्यते स्त्रीत्वविशिष्टा अजेति बोधः । असति बाधके द्योत्यार्थस्य विशेषणत्वमेवेति नियमात् । अत एव 'रामौ' इत्यादौ 'द्वित्वविशिष्टौ रामः' इत्येव बोधः । 'पचति' इत्यादावाख्याते 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति नियमात् 'कर्तृवृत्तिः पाकः' इति प्रकृत्यर्थविशेष्यकबोधः इत्युक्तम् । असति बाधके इति । किञ्च स्त्रीत्वप्राधान्ये अजाशब्दाद् द्विवचनबहुवचने न स्याताम्, प्रकृत्यर्थे विशेष्यतया भास-मानार्थगतसंख्याया एव द्विवचनादिनाऽभिधानेन स्त्रीत्वे द्वित्वादिसंख्याया अभावात् । किञ्च स्त्रीत्व-वाचकटाबादिकं विनाऽपि वाङ्मातृस्वसृदुहितृगवादिशब्देन स्त्रीत्वविशिष्टार्थस्य बोधदर्शनात्प्रातिपदि-केष्वेव तत्र स्त्रीत्वनिरूपिता शक्तिरावश्यकीति क्वचिल्लिङ्गनिरूपिता शक्तिः प्रत्यये क्वचित्प्रातिपदिके चेति गौरवात् 'पञ्चकं प्रातिपदिकार्थः' इति भाष्यविरोधाच्च लिङ्गं प्रातिपदिकार्थ एव, द्योतकास्तु टाबादय इत्येव पन्था ज्यायान् ।

**अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय । अजा।**

---

अत एव 'स्त्री' इत्यधिकृत्य ऋकारान्ताः मातृदुहितृस्वसृपोतृननान्दृप्रभृतय इति, पुमान् इत्यधिकृत्य 'घञबन्तः' 'घञन्तश्च' इति नपुंसकमधिकृत्य 'भावे ल्युडन्तः, निष्ठा च' इत्यादिलिङ्गानुशासनं संगच्छते ।

किञ्च लिङ्गस्य प्रत्ययार्थत्वे 'कृदिकारादक्तिनः' इति बह्वादिगणसूत्रे 'अक्तिनः' इति पर्य्युदासवैयर्थ्यम्, 'स्त्रियां क्तिन्' इति विहितक्तिन्प्रत्ययेनैव स्त्रीत्वस्योक्ततया ङीपोऽप्राप्तेः । न चैवं प्रकृत्यैव स्त्रीत्वस्योक्ततया टाबादिविधानवैयर्थ्यम्, द्योत्यस्थले 'उक्तार्थानामप्रयोगः' इति न्यायस्याप्रवृत्तेः । अत एव 'व्यावक्रोशी' 'व्यतिलुनीते' इत्यादौ णजन्तोर्ङीपश्च समुच्चयः, आत्मनेपदव्यतिशब्दयोश्च ।

तदुक्तं भाष्ये—'स्त्रियाम्' इति स्त्र्यर्थाभिधाने चेट्टाबादयो भवन्ति द्विवचनबहुवचनयोरनुपपत्तिः । कुमार्यौ, कुमार्यः । किं कारणम् ? एकत्वात्स्त्रीत्वस्य' इति । यद्यपि तत्तदर्थभेदेन तत्तत्सम्बन्धिविशिष्टं स्त्रीत्वमपि भिद्यते । तथापि शब्दभेद एव स्त्रीत्वस्य भेदक इत्यभिप्रायपरं भाष्यमिदम् । अनेकप्रत्ययानुपपत्तिश्च । 'गार्ग्यायणी, कारीषगन्ध्या' इत्यादौ । एकोऽयमर्थः स्त्रीत्वं नाम तस्यैकेन प्रत्ययेनोक्तत्वादुक्तार्थानामप्रयोग इति ।'

ततः सिद्धान्तितम् । 'स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादयः' इति । ननु ये नित्यं टाबन्ता एव प्रयुज्यन्ते तेषामप्यनेनैव साधुत्वमन्वाख्येयम् । तत्र चेदकारान्तस्य क्वचिच्छक्तिनिर्णयः स्यात्तदा टाप्समभिव्याहारेऽधिकस्य स्त्रीत्वस्याभिव्यक्त्या टापो द्योतकत्वनिर्णयो भवेत् । न तथा खट्वा, मालादिषु अवधारयितुं शक्यते इति चेन्न, सर्वेषां स्वरवर्णानुपूर्वीज्ञानार्थम् उपदेशः कर्तव्यः । शशः ष इति मा भूत् । पलाशः पलाष इति स्त्रीत्वविशिष्टार्थबुबोधयिषायाम् टाबादिप्रत्ययविशिष्टा एव अजाद्यदन्तादयः साधवः इति साधुत्वबोधनाय 'स्त्रियाम्' इत्यधिकारोक्तसूत्राणां चारितार्थ्यात् ।

लिङ्गं प्रातिपदिकार्थो द्योतकास्तु टाबादय इत्यभिप्रेत्याह—तत्र मा भूत् । मञ्चको मञ्चक इति मा भूत्तस्मात्सिद्धये तद्भवति इति भाष्येण क्वचिद्व्रणविशेषे खट्व-मालयोः पाठकल्पनेन समाधानात् । एवं पञ्चभिः खट्वाभिः क्रीतः पटः पञ्चखट्वः इत्यादौ टापो लुकि टाब्रहितस्यादन्तस्य दर्शनाच्च । **द्योत्ये इति** । एवञ्च यत्र यत्र टाबादयस्तत्र तत्र स्त्रीत्वभानमित्येव व्याप्तिः, न तु यत्र यत्र स्त्रीत्वमानं तत्र तत्र टाबादय इति व्याप्तिः । तेन टाबाद्यसत्त्वेऽपि वागादिषु स्त्रीत्वभानं नासङ्गतम्, व्याप्यासत्त्वेऽपि व्यापकसत्तायाः सर्वसम्मतत्वात् । टापः पकारः 'अनुदात्तौ सुप्पितौ' इति स्वरार्थः, 'औङ आपः, 'याडापः, आङि चापः' इत्यादौ 'डाबुभाभ्याम्' इत्यादिविहितडापः, 'यङश्चाप्' इत्यादिविहितयोर्डाप्चापोरपि ग्रहणं यथा स्यात् । अन्यथा 'अजाद्यत आप्' इत्युक्तौ 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम्' इति परिभाषया डापचापोर्ग्रहणं न स्यात् ।

ननु अजादिषु अज–अश्व–चाल–वत्स इत्याद्यदन्तानां पाठो व्यर्थस्तेभ्यः 'अतः' इत्येव टापः सिद्धेरत आह—**अजाद्युक्तिरिति**—अजादिषु उक्तिरिति विग्रहे सप्तमीसमासः । अजादिष्वदन्तानामुक्तिरित्यर्थः । **ङीषः** इति—अदन्तत्वप्रयुक्तप्राप्तस्य टापः 'वयसि प्रथमे' इति ङीप्, 'जातेरस्त्रीविषयात्' इति ङीप् च 'येन नाप्राप्ते' इति न्यायेन बाधकः । तयोर्बाधनार्थम् 'येन नाप्राप्ते' इति न्यायेनैवाजादिग्रहणमिति बाधकबाधनार्थमिति यावत् । वस्तुतस्तु अदन्तत्वादेवाजादिभ्यः टाप्सिद्धेरजादिग्रहणमेव व्यर्थम् । व्यर्थं सद् बाधकबाधनार्थं चरितार्थम् । तत्र अजशब्दश्छागवाचकत्वेनाजत्वस्यावयवसंस्थानव्यङ्ग्यत्वेन आकृतिग्रहणा जातिः' इति लक्षणलक्ष्यत्वम् । 'अजा छागी शुभच्छागवस्तच्छगलका अजे' शुभादिपञ्चकोऽजे ( अम० २ का० ९ वर्ग ) इति । न च हलन्तेभ्यः 'क्रुञ्चा, उष्णिहा, देवविशा–इत्यादिसिद्ध्यर्थमजादिग्रहणम्, तेषामपि अदन्तत्वस्य 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्ये उक्तत्वात् ।

अतः--खट्वा । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह--पञ्चाजी ।

तथा हि 'आब्ग्रहणमपि न कर्तव्यम् । आबपि अकारान्ताद्विधीयते । तत्रैकादेशः । एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति । यस्तर्हि अनकारान्तात् कुञ्चा, उष्णिहा देवविशेति । अत्राप्यकारान्ताद् वृत्तिर्लक्ष्यते। 'क्रुञ्चानालभेत, उष्णिहककुभौ देवविशश्च मनुविशश्चेति ।' इति ।

न च 'टायामादेशः, क्त्वायामिट्' इति भाष्यप्रयोगसिद्धये 'अजादिग्रहणम्, तत्र टाप्त्वारोपेणैव याडादिकार्य्याणामुपपादनीयत्वात् । अन्यथा ङ्याप्सूत्रस्थभाष्यविरोधः । तथा हि—'इह तर्हि' डाबुभाभ्यामन्यतरस्याम्— बहुराजा बहुराजे, बहुराजा इति ।

अयम्भावः—अत्र टिलोपेनैकादेशाभावादन्तवद्भावेन प्रातिपदिकत्वं न स्यादिति सुपोऽनापत्तिः । यदि तु टाशब्दात् क्त्वाशब्दात् टाप् स्यात्तदा 'आतो धातोः' इति सूत्रे धातुग्रहणम् आबन्तभिन्नपरम् । अत एव 'आतोऽनाप' इति वक्तव्यम् इति वार्त्तिकेन न विरोधः । 'टा आप् क्त्वा आप्' इत्यत्र 'आतो धातोः' इत्यालोपे एकादेशाभावेनान्तवद्भावाप्रवृत्तौ टाबर्थमेव आब्ग्रहणमिति डापपर्य्यन्तानुधावनं भाष्यकृतो विरुध्येत ।

तथा च 'टायाम्' 'क्त्वायाम्' इति सिद्धये अजादिग्रहणस्य नावश्यकता, तत्र भाष्यप्रयोगस्य आप्त्वारोपेणैवोपपत्तेः ।

वस्तुतस्तु 'न मु ने' इत्यत्र 'ने' इत्यस्य सिद्धये 'आतो धातोः' इत्यत्र 'आतः' पदम् स्त्रीबोधकशब्दघटकाकारभिन्नो य आकारस्तत्परम् । ना, टा, क्त्वा इत्यादीनां स्त्रीबोधकत्वेन तद्घटकाकारस्यैव सत्त्वेन लोपाप्राप्त्या एकादेशेऽन्तवद्भावेनैव प्रातिपदिकत्वमिति डापपर्य्यन्तानुधावनं भाष्यकृतो न विरुद्धम् । इत्यजादिग्रहणं बाधकबाधनार्थमेव नान्यार्थम् इति । 'क्रुञ्चाद्यतः' इति न्यासकल्पना मुधैव ।

**अत इति**—उदाहरणमिति शेषः। **'खट्वा' इति**—खट्यते—आकाङ्क्ष्यते या सा इत्यर्थे 'खट् काङ्क्षायाम्' इत्यतः 'अशप्रुषिकटिकणिखटिविशिभ्यः क्वन्' ( उणा० १ पा० १५१ सू० ) इति क्वनि साधुः ननु 'प्रत्ययः, परश्च' इत्यधिकारात् 'अजाद्यतः' इति समाहाराद् दिग्योगलक्षणा पञ्चम्येव युक्ता । ततश्च अजादिभ्योऽदन्ताच्च टाप् स्त्रीत्वे द्योत्ये इत्यर्थः स्यात् । तथा च 'अजाद्यतः' इत्यत्र षष्ठ्यन्तत्वाश्रयणमयुक्तमत आह --

**अजादिभिरिति**—'अजाद्यतः' इति षष्ठ्यन्तमाश्रित्य अजादीनामदन्तस्य च वाच्ये स्त्रीत्वे द्योत्य इत्येवमजादिभिः स्त्रीत्वस्य विशेषणादित्यर्थः । एवमर्थे फलमाह—**पञ्चाजीति**—पञ्चानामजानां समाहार इत्यर्थे 'तद्धितार्थोत्तरपदसमाहारे च' ( २-१-५१ ) इति समासे 'द्विगुश्च' ( २-१-२३ ) इति द्विगुसंज्ञायाम् 'अकारान्तोत्तरपदद्विगुः स्त्रियामिष्टः' इति वार्त्तिकेन स्त्रीत्वे 'द्विगोः' ( ४-१-२१ ) इति ङीपि रूपम् ।

अत्राजशब्दवाच्यस्त्रीत्वाभावान्न ङीपं बाधित्वा टाबित्याशयः । न चात्र प्रत्ययविधौ तदन्तविधिनिषेधात् टापोऽप्राप्त्या ङीबेव स्यादिति दोषाभावः, असमहत्पूर्वग्रहणेनानुपसर्जने स्त्रीप्रत्यये तदन्तविधेर्ज्ञापनात् । षष्ठ्यन्तत्वे तु अजादिपदार्थगतस्त्रीत्वे वर्तमानात्प्रातिपदिकात् टाबित्यर्थे समाहारनिष्ठस्त्रीत्वस्याजपदार्थगतस्त्रीत्वाभावान्न टाप् । तदन्तविधौ तु अजाद्यन्तार्थगतस्त्रीत्वस्य सत्त्वेन टाबापत्तिर्दुर्वारा ।

नच प्रत्येकस्य समुदायानतिरिक्ततया अजादिपदवाच्यार्थगतस्त्रीत्वाक्षतिरिति दोषतादवस्थ्यम्, अजादिपदवाच्यं तदितरपदावाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाबित्यर्थेनादोषात्, प्रकृते अजादीतरपञ्चपदवाच्यत्वस्यापि स्त्रीत्वे सत्त्वेन न टाप् । यद्वा शब्दोऽपि शाब्दबोधे भासते । अयं भावः षट्कंप्रातिपदिकार्थः । उक्तञ्च—

अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अजा । एडका । अश्वा । चटका । मूषिका । एषु जातिलक्षणो ङीष् प्राप्तः । बाला । वत्सा । होडा । मन्दा । विलाता । एषु 'वयसि प्रथमे' इति ङीप् प्राप्तः । 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात् ।' सम्फला ।

> 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते ।
> अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥
> ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।
> तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
> विषयत्वमनादृत्य शब्देनार्थः प्रकाशते ।

इति नियमेन अजादिपदावच्छिन्ना अजत्वादिधर्मेण साक्षादवच्छिन्ना च या धर्मिता तादृशधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधतात्पर्येणोच्चरितादजादिरूपात् प्रातिपदिकात् टाबित्यर्थेन 'पञ्चाजी' इत्यत्र न टाप्प्रसङ्ग इत्यत्रैव मूलतात्पर्यम् । विस्तरस्तु प्रागुक्तो द्रष्टव्यः ।

**समाहारनिष्ठमिति**—ननु अजपदमात्रवाच्यनिष्ठं स्त्रीत्वमित्यर्थः । नञ्पूर्वकाजनेः 'अन्येष्वपि दृश्यते' ( ३-२-१०१ ) इति डः । रूढोऽयं छागे शब्दः । **एडका** = मेषी । तथा चामरः '**मेढोरभ्रोरणोर्णायुमेषवृष्णय एडके**' इति ( २ का० ९ वर्ग ) । 'अस्य स्त्रीत्वे कोशान्तरं मृग्यम्' इति मनोरमा । स्त्रीत्वे अजादिपाठस्यैव मानत्वात् चिन्त्यमिदम् । **अश्वेति**—अश्नुते—व्याप्नोत्यध्वानमित्यर्थे 'अशुप्रुषि' (उणा-१-पा० १५१ सू० ) इति क्वन् । 'वालः किशोरोवाम्यश्वा वडवा' ( अम० २ का० ४६ ) **चटकेति**—चट स्फुट भेदने इत्यतः 'क्वुन् शिल्पिसंज्ञयोः' ( उणा २ पा० २०० ) इति क्वुन् । 'चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयोः । पुमपत्ये चाटकैरस्त्र्यपत्ये चटकैव सा' ( अम० २ का० १८ श्लो० ) इति । क्षिप्रादित्वात् 'चटका' **मूषिकेति**—क्रैयादिकात् 'मुष स्तेये' इत्यतः 'मुषेर्दीर्घश्च' इति ( उणा० २ पा ) इति किकन् दीर्घश्च । इकारमध्यो मूषिकशब्दः । दीर्घोपधात् 'कुन् शिल्पिसंज्ञयोः' इति संज्ञायां क्वुन् । तत्र स्त्रियाम् 'प्रत्ययस्थात्' इतीत्वम् ।

यस्तु संज्ञायां मूषकशब्दस्य जातित्वाभावान्ङीषोऽप्राप्त्या अदन्तत्वात् टाप् स्यादेवेति गणे पाठश्चिन्त्य इति स एव चिन्त्यः 'घः संज्ञायाम्' इत्युक्तावपि जातित्वानपायात् 'व्याघ्री' इतिवत्प्राप्तस्य जातिलक्षणङीषो बाधनाय गणे पाठस्यावश्यकत्वात् । कुत्रादिशब्देन रूढिरेव गृह्यते न त्वेकव्यक्तिबोधकं संकेतसम्बन्धेन तच्छब्दवत्त्वरूपं संज्ञात्वम् । अत एव 'व्याघ्री' इत्यत्र जातिलक्षणो ङीष् सिध्यति । अवयवार्थमनपेक्ष्य तत्तज्जात्यवच्छिन्नबोधकत्वात्संज्ञात्वव्यवहारः ।

वस्तुतस्तु 'त्रयीशब्दानां प्रवृत्तिर्न सन्ति यदृच्छाशब्दा इति भाष्यमते सर्वेषां शब्दानां जातिवाचकत्वमेव । **एष्विति**—अजादिमूषिकान्तेष्वित्यर्थः । **बालेति**—'बल प्राणने' इत्यतः 'ज्वलितिकसन्तेभ्यो णः' ( ३-१=१४० ) इति णप्रत्ययः 'ज्वलिति' इत्यत्र इतिशब्द आद्यर्थकः बालशब्दात् स्त्रियां टाप् **बालेति**—'मूर्खेऽर्भकेऽपि बालः स्यात्' ( अम० ३ का० १०४ ) । 'आषोडशाब्दा, कन्या च' इति शब्दस्तोमनिधिः । 'अम्बा = माताऽथ बाला स्याद्वासुः' इति बाला वासुरिति द्वे कुमार्य्या इति टीका ।

**वत्सेति**—'वत्सौ तर्णकवर्षौ द्वौ' इति ( अम० ३ का २२५ ) 'वत्सः पुत्रादिवर्षयोः' इति मेदिनी । **होडा, मन्दा, विलाता** एते कीदृग्वयोवाचका इति कोशादितो न ज्ञायते । **एष्विति**—बालादिविलातान्तेष्वित्यर्थः ।

**संभस्त्रेति**—सम्, भस्त्रा, अजिन, शण, पिण्डशब्देभ्यः परो यः फलशब्दस्तस्मात् टाप् स्यात् । 'पाक-कर्ण' ( ४-१-६४ ) इति ङीषोऽपवादः । स च ङीष् नित्यस्त्रीलिङ्गाद्विधीयते । अतः प्रतीयते सम्फला इत्यादयो नित्यस्त्रीलिङ्गा ओषधिविशेषजातिवाचिनः । **सम्फलेति** । समृद्धानि फलानि

**भस्त्रफला**। 'ङ्यापोः--'इति ह्रस्वः। 'सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्'। **सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा**। 'शूद्रा चामहत्पूर्वा जातिः' पुंयोगे तु **शूद्री**। 'अमहत्पूर्वा' किम्-**महाशूद्री**।

---

यस्याः सा सम्फला ओषधिजातिविशेषः। **भस्त्रफलेति**—भस्त्रेव फलं यस्याः सा भस्त्रफला। 'भस्त्रा-चर्मप्रसेविका' ( अम० २ का० ३३ श्लो० ) 'भार्थी'ति ख्यातस्य। **भस्त्रफला—अजिनफलेति** अजिनम्—चर्मविकारत्वात् **भस्त्रा**। **अजिनफला—भस्त्रफला**। भस्त्राशब्दस्य भाषितपुंस्कत्त्वाभावात् 'पुंवत्कर्मधारय' ( ६-३-४२ ) पुंवद्भावाप्राप्त्या ह्रस्वघटितमसाध्वि-त्याशङ्कायामाह—

**'ङ्यापोः संज्ञाछन्दसोर्बहुलम्'** इति (६-३-६३) इति **ह्रस्व** इति। एतच्च 'फल निष्पत्तौ' इति धातौ माधवधातुवृत्तौ स्थितम्। भाष्ये तु दीर्घघटित एव पाठः। **शणफलेति—**शणः लोके **'सन'** इति। तस्य फलमिव फलं यस्याः सा शणफला ओषधिविशेषः। **पिण्डफलेति**—पिण्डमिव फलं यस्याः सा पिण्डफला—कटुतुम्बीति शब्दस्तोमम० सत्, अच्, (अच् क्विन्नन्त एवेति कैयटः) **काण्ड प्रान्त, शत, एक, एतेभ्यः परो यः** पुष्पशब्दस्तदन्तादपि टावेव न तु 'पाककर्ण' इति ङीष्।

**सत्पुष्पेति—सन्ति**—साधूनि विद्यमानानि वा पुष्पाणि यस्याः सा इति विग्रहः। **प्राक्पुष्पेति-प्राञ्चि**—पूर्वकालिकानि पुष्पाणि यस्या इति विग्रहः। **प्रत्यक्पुष्पेति—प्रत्यञ्चि—**पश्चिमानि पुष्पाणि यस्या इति विग्रहः पश्चिमपुष्पेति यावत्। एतेन 'सत्प्राक्काण्ड' इति वार्त्तिकपाठो **निरस्तः। तथा सति** प्रत्यक्पुष्पा इति न सिध्येत्। काण्डपुष्पा, प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा-**इत्यप्युदाहर्तव्यम्।** यद्यपि 'पाककर्ण' इति सूत्रे भाष्ये 'सदच् काण्डशतैकेभ्यः पुष्पात् प्रतिषेधः, **सम्भस्त्राजिनशणपिण्डेभ्यः** फलात्प्रतिषेधो वक्तव्यः,। श्वेताच्च श्वेतफला। त्रेश्च, त्रिफला, मूलान्नञः, **'अमूला' इत्येवं ङीषः** प्रतिषेधरूपेण वार्त्तिकानि पठितानि सन्ति। अतः तत्सूत्रे **एव एतेषां प्रतिषेधरूपेण पाठ उचितः।** तथाऽपि फले विशेषाभावात् टाब्विधायकत्वेनात्र ग्रन्थकृता पठितानि। साम्प्रतम् अजादिगणे एषां पाठस्तु फले विशेषाभावेऽपि भाष्यविरोधात्प्रक्षिप्तः। मूलेऽत्र पाठेन एषामजादिगणसूत्रत्वं न मन्तव्यम्। अत्र भाष्यानुरोधेन 'श्वेताच फलात्' **श्वेतफला**, 'त्रेश्च फलात्' **'त्रिफला'** इत्युचितोऽपि पाठः कथं परित्यक्त इति चिन्त्यम्।

**'शूद्रा चामहत्पूर्वा जातिः'** इत्यजादिगणे पठ्यते तत्र वाक्यत्रयम्। **'शूद्रा च'** इत्येकम्। **'अमहत्पूर्वा'** इति द्वितीयम्। 'जातिः' इति तृतीयम्। इदञ्च पूर्वयोः शेषः। **शूद्रशब्दः** स्ववा-च्यार्थगतस्त्रीत्वे द्योत्ये टापं लभते शूद्रत्वजातिविशिष्टा चेद्वाच्या। महत्पूर्वः **शूद्रशब्दः** टापं न लभते समुदाय ( शूद्रशब्दान्तशक्त्या ) शक्त्या जातिश्चेद्वाच्या। तेन शूद्रत्वजातिविशिष्टा **स्त्री शूद्रा**। या तु शूद्रत्वजातिविष्टस्य स्त्री शूद्रा अशूद्रा वा तत्र शूद्रीत्येव 'पुंयोगादाख्यायाम्' इति **ङीषेव**। तथा चामरः ( २० मा० १२ श्लो०)—

> 'शूद्री शूद्रस्य भार्य्या स्याच्छूद्रा तज्जातिरेव च।
> आभीरी तु महाशूद्री जातिपुंयोगयोः समा॥' इति।

यदा महाशूद्रशब्दः समुदायशक्त्याऽऽभीरजातिवाचकः, अवयवशक्त्या शूद्रत्वजातिवाचकश्च तदाऽवयवशक्त्या शूद्रत्वावच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकशूद्रशब्दान्तप्रातिपदिका-व्याप्तस्य टापः समुदायशक्त्या आभीरत्वावच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्यापि सत्त्वेन समुदायशक्त्या जातिश्चेन्महत्पूर्वकशूद्रशब्दान्तात्प्रातिपदिकात् टाप् न इति निषेधात् टाप् न भवति, किन्तु 'जातेरस्त्री' इत्यनेन ङीषेवेति **'महाशूद्री'** इत्येव। यत्र तु समुदायशक्त्या जातिर्न विवक्ष्यते तत्र **'महाशूद्रा'** महत्त्वविशिष्टा शूद्रा इत्यर्थं भवति। समुदायशक्त्यवयवशक्त्युभयवि-वक्षायां निषेधः, अवयवशक्तिमात्रविवक्षायां न निषेध इति यावत्।

एवञ्च महत्पूर्वकशूद्रशब्दे जातिविशिष्टत्वरूपं निषेधप्रयोजकजातिवाचकत्वं ग्राह्यम्। वैशिष्ट्यञ्च स्वनिष्ठप्रकारताकोपस्थितिजनकत्व-स्वावच्छिन्नविषयतानिरूपितविषयतानिरूपकोपस्थित्यजनकत्वोभयसम्बन्धेन। स्वम्=आभीरत्वजातिः।

निषेध्यसमर्पकजातिवाचकत्वञ्च जातिविशिष्टत्वम्—वैशिष्ट्यञ्च स्वनिष्ठप्रकारताकोपस्थितिजनकत्व—स्वावच्छिन्नविषयतानिरूपितविषयतानिरूपकोपस्थितिजनकत्वोभयसम्बन्धेन। स्वम् = शूद्रत्वजातिः। नच वृत्तौ समुदायशक्तिरेव नावयवशक्तिरिति वाच्यम्, निषेधविधिवैयर्थ्येन प्रकृतेऽवयवशक्तेरपि कल्पनात्।

नच 'अमहत्पूर्वा' इत्यत्र जातिरित्यस्यासम्बन्धेऽपि महती चासौ शूद्रा चेत्यर्थके समासात्प्रागेव 'शूद्रा च' इत्यनेन टाप् स्यादित्यदोष इति वा नायं ब्राह्मणः क्षत्रियो वा किन्तु शूद्र इति जातिमात्रविवक्षा यथा भाष्ये 'कुक्कुट्या अण्डम्' इत्यत्र जातिमात्रविवक्षया लिङ्गाविवक्षया च, समासात् प्राक् स्त्रीप्रत्ययाप्राप्तया कुक्कुटशब्दस्याण्डशब्देन समासे 'कुक्कुटाण्डम्' इत्यस्य सिद्धया 'कुक्कुट्यादीनामण्डादिषु' इति पुंवद्भावविधायकं वार्त्तिकं प्रत्याख्यातम् तथात्रापि समासे ततो यदि स्त्रीत्वविवक्षा तदा टाप् भवति।

जातिरित्यस्यासम्बन्धे तु समुदायशक्त्या जातेरनुपस्थित्या निषेधाप्राप्तिः। जातिमात्रविवक्षायां 'सामान्ये नपुंसकम्' इति नपुंसकत्वन्तु न, यत्र विशेषलिङ्गाविवक्षा लिङ्गत्वेन लिङ्गविवक्षा च तत्रैव तत्प्रवृत्तेः। प्रकृते तु न लिङ्गत्वेन लिङ्गविवक्षेति नात्र तत्प्रवृत्तिः।

यद्वा 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन समासात्प्रागपि टाप् न स्यात्। वस्तुतस्तु नात्रोक्तन्यायविषयः, अपवादनिमित्तं विषयीकृत्य पूर्वमप्युत्सर्गो न प्रवर्तते इत्येव न्यायाशयः। प्रकृते चापवादनिमित्तभूतो महत्पूर्वकशूद्रशब्दो न तु केवलशूद्रशब्द इति समासात् प्राक् केवलशूद्रशब्दात् टाप् दुर्वार इत्युक्तरीत्यैव जातिसम्बन्धस्य फलं बोध्यम्।

ननु आभीरत्वजातिबोधकमहाशूद्रस्थाने आभीरगतस्त्रीत्वस्यैव सत्त्वेन शूद्रशब्दरूपाजादिवाच्यार्थनिष्ठस्त्रीत्वाभावात् टापोऽप्राप्तिरिति चेन्न, आभीरस्यापि शूद्रत्वेन शूद्रपदवाच्यनिष्ठस्त्रीत्वाक्षतेः। तथा हि—**क्षत्रियात् शूद्रायामुत्पन्ना उग्रा**। तदुक्तं शङ्खस्मृतौ—**'वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ'** इति ब्राह्मणादुग्रायामुत्पन्ना आभीरी। अत्र उग्रा शूद्रा—तत्रोत्पन्नापि शूद्रैव। अनुलोमसङ्कराणां मातृवृत्तिजात्यारोपात्। अनुलोमसङ्करो नाम उच्चवर्णाद् नीचवर्णासूत्पन्नः। अत्र ब्राह्मण उच्चवर्ण उग्रा च नीचवर्णशूद्रासूत्पन्नेति मातृवृत्तिशूद्रत्वारोपादुग्रा शूद्रा। तत्रोत्पन्ना आभीरी शूद्रा।

अन्ये तु यत्र शूद्रशब्दे पर्याप्त्या जातिवाचकत्वं स्त्रीत्वञ्च तत्रैव टाप्। आभीरवाचकमहाशूद्रशब्दे तु न पर्याप्तया शूद्रशब्दे जातिवाचकत्वम्, किन्तु समुदाय एवेति टापोऽप्राप्तया 'अमहत्पूर्वा' इति त्याज्यमेव। अत एव तत्र महाशूद्र इत्येव व्यवहारो नतु शूद्र इति शूद्रादुत्तमत्वात्तस्येत्याहुः। एवञ्च 'त्यदादीनि च' सूत्रे 'आभीरा जात्यन्तराणि' इति भाष्यमपि स्वरसतः संगच्छते।

वस्तुतस्तु महच्छब्दस्य शूद्रशब्देन समासेऽपि भाष्यप्रामाण्यात् शूद्रशब्दस्यार्थवत्त्वं (जातिवाचकत्वम्) स्वीकार्य्यम्, अन्यथा 'शूद्रशब्दोऽजादिषु पठ्यते। तत्र कः प्रसङ्गो महत्पूर्वात् स्यात्। नैव प्राप्नोतीति नार्थः प्रतिषेधेन। तदन्तविधिना प्राप्नोति' इति भाष्यं जातिवाचकशूद्रशब्दान्तात् टाप् प्राप्नोतीत्यर्थकमेव स्यात्। अन्यथा शूद्रशब्दस्यानर्थकतया टापोऽप्राप्त्या तदवधि धावनं भाष्यकृतो व्यर्थमेव स्यात्।

तस्मात्प्रकृते आभीरोऽपि शूद्र एव। न च 'त्यदादीनि' इति सूत्रे 'आभीरा जात्यन्तराणि' इति भाष्यविरोधः, आभीरपदप्रतिपाद्या आभीरा जात्यन्तराणि ('शूद्रभिन्नाः') इत्यर्थकत्वेनाविरोधात्। महाशूद्रपदप्रतिपाद्यस्तु शूद्र एवेति न दोष इत्युपाध्यायाः।

क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा, कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि ।

शेखरकृता तु 'यत्तु शूद्राभीरमित्यादौ सामान्यविशेषवाचित्वाद् द्वन्द्वाभावमाशङ्क्य 'आभीरा जात्यन्तराणि' इति 'त्यदादीनि' ( १-१-७४ ) इति सूत्रे भाष्ये उक्तम्, तत्तु आरोपाभिप्रायेणेति न तद्विरोधः' इत्युक्तम् ।

**अजादिराकृतिगणः** । अत एव 'न मु ने' इति सूत्रे 'टायामादेशः' इति भाष्यप्रयोगः, 'क्त्वायाः' इति च संगच्छते । प्रथमाध्यायचतुर्थपादे 'चमसवदविशेषात्' इति ( वैयासिकसू० १ अ० ४ पा० ८ अ० ) सूत्रे शाङ्कर-वाचस्पत्ययोरजायाम् 'छागा' इति टाबन्तप्रयोगो दृश्यतेऽतः छागशब्दोऽप्यजादिष्विति केचित्' इति शेखरकृता केचिदित्यनेन 'छागी' इति ङीषन्तप्रयोगासिद्धिं मनसि निधायारुचिः सूचिता ।

वस्तुतस्तूभयप्रयोगदर्शनादजादिषु 'छागाद्या' इति पठित्वा प्रयोगद्वयं साधनीयमित्युपाध्यायाः ।

**पुंयोगे त्विति**—पुंयोगो दाम्पत्य (वैवाहिक) एवेति न नियमः । अत एव **"वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ"** इति स्मृतिः संगच्छते । **शूद्री** = शूद्रकन्या । नागेशस्तु दाम्पत्यरूप एव पुंयोगः । अत एव 'यथेयं भर्तृपापकृतान् बन्धनादीन् लभते एवं तच्छब्दमपि' इति भाष्यं संगच्छते । 'केकयी' इत्यादिगौरादित्वाद्बोध्यम् इत्याह । **शूद्रीति**—शूद्रस्य स्त्री इत्यर्थः । अत्र न टाप्, जातिविवक्षाया अभावात् । **महाशूद्रीति**—महाशूद्रजातिविशिष्टेत्यर्थः । अत्र महत्पूर्वकशूद्रशब्दस्य जातिवाचकत्वात् 'अमहत्पूर्वा' इति निषेधान्न टाप् । तदुक्तम्, **'आभीरी तु महाशूद्री जातिपुंयोगयोः समा'** इति । महाशूद्रत्वजातिविशिष्टा, महाशूद्रस्य स्त्री इत्युभयोरर्थयोः 'महाशूद्री' इति जातिलक्षण-पुंयोगलक्षणङीषेव न टाप् । एवम् 'पञ्चशूद्री' इति समाहारे जातिवाचकत्वाभावात् शूद्रशब्दार्थ-गतस्त्रीत्वाभावान्न टाप् ।

**अत्रेदमवधेयम्**—अजादिगणे शूद्रा इत्येव पाठ्यम् । जातिरिति व्यर्थम् । न चैवम् पुंयोग-लक्षणङीषोऽपि टापा बाधापत्तिः, पुंयोगे पुरुषगतधर्मस्य स्त्रियामारोपेणैव पुंवाचकशब्दस्य स्त्रीबोधक-तया गौणार्थत्वेन गौणमुख्यन्यायेन 'शूद्राच' इत्यस्य गौणेऽप्रवृत्तेः । 'अमहत्पूर्वा' इत्यपि व्यर्थम् । महाशूद्र इति समुदाय एव जात्यन्तरे वर्तते । तद्घटकशूद्रस्य वृत्त्येकदेशत्वेनानर्थकतया शूद्रशब्द-वाच्यार्थगतस्त्रीत्वाभावेन टापोऽप्राप्तेः ।

या तु महती शूद्रा तत्र टावेवेष्यते इति मनोरमाकारः । गौणमुख्यन्यायः पदकार्य्ये एव न प्रातिपदिककार्य्ये, तादृशलाक्षणिकस्याप्रसिद्धस्य संज्ञादेरेव वा गौणन्यायविषयत्वेन न्यायेन पुंयोगे टाप आपादयितुमशक्यतया 'जातिः' इति वाच्यमेव, भाष्यस्वारस्येन महाशूद्रशब्दघटक-शूद्रशब्दस्याप्यर्थवत्त्वेन प्राप्तस्य टापो वारणाय 'अमहत्पूर्वा' इत्यप्यावश्यकमिति नागेशः ।

**क्रुञ्चेति**—'क्रुञ्च्' इत्यादित्रयोऽपि हलन्ता इत्येके । भाष्ये तु '**क्रुञ्चानालभेत** उष्णिहककुभौ, देवविशम्' इति प्रयोगदर्शनाददन्ता एव त्रयः । पचाद्यचा इगुपधलक्षणकप्रत्ययेन चादन्तत्वोपपत्तिः । **पुंयोगेऽपीति**—यदा ज्येष्ठत्वादिविशिष्टप्रथमजातेत्यर्थो विवक्षितस्तदादन्तत्वादेव टाप्, ज्येष्ठादे-र्वयोवाचकत्वाभावेन ङीपोऽप्राप्तेर्जातिवाचकत्वाभावाच्च ङीषोऽविषयात् । 'पुंयोगे' इति पाठे तु पुंयोगे एव टाप् स्यात्प्रथमजातायां न स्यात् । इष्यते तूभयत्र टाविति 'पुंयोगेऽपि' इत्युक्तम् । यदा ज्येष्ठादेः स्त्रीत्यर्थस्तदा 'पुंयोगात्' इति ङीषं बाधित्वा टावेव, गणे 'पुंयोगेऽपि' इति अपिघटितपाठसामर्थ्यात् पुंयोगे आरोपितज्येष्ठत्वपुरस्कारेण बोधेऽपि न गौणमुख्यन्यायविषयस्तत्र सदृशाप्रसिद्धयोरेव गौणपदेन ग्रहणात् तस्य पदकार्य्यविषयकत्वाच्च । **जातावपीति**—कोकिलत्वजातिविशिष्टेत्यर्थे जातिलक्षणङीषम्, **कोकिलस्य** स्त्रीत्यर्थे पुंयोगलक्षणङीषं च बाधित्वा टाबित्यर्थः । 'वनप्रियः परभृतः कोकिलः पिक

'मूलान्नञः' अमूला। 'ऋन्नेभ्यो ङीप्' कर्त्री। दण्डिनी।

*उगितश्च। ४-१-६*

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात्। भवन्ती। पचन्ती। दीव्यन्ती 'शप्श्यनोः-' इति नुम्।

---

इत्यपि' ( अम० २ का० ५ व० १९ श्लो० ) कोकते—आदत्ते पञ्चमस्वरमित्यर्थे 'सलिकल्मनिषहि' ( उणा० १ अ० ५४ सू० ) इतीलचि 'कोकिलः' इति।

**मूलान्नञ इति**—'पाककर्ण' इति सूत्रे भाष्ये वार्तिकमिदम्। फले विशेषाभावादजादिगणे मूलकृतोपन्यस्तम्। तत्र नञः परो यो मूलशब्दस्ततो जातिलक्षणो ङीप् नेत्यर्थः। ङीषो निषेधेऽदन्तत्वात् टाप्। अजादिगणे पाठे तु नञः परान्मूलात् टाबित्यर्थः। 'शतमूली' इत्यादौ तु ङीपेव। **अमूलेति**—नास्ति मूलं यस्याः सा। ओषधिजातिविशेषः। अग्निशिखावृक्ष इति शब्दस्तोममहानिधिः।

**'ऋन्नेभ्यो ङीप्'** (४-१-४) इति। उक्तमपि प्रकरणात् पुनरुच्यते 'प्रातिपदिकात्' इत्यभिक्रियते। तस्य विशेषणतया तदन्तविधिः। ऋदन्तेभ्यो नान्तेभ्यश्च प्रातिपदिकेभ्यो ङीप् स्यात्। **कर्त्रीति**— करोति या सा कर्त्री। करोतेस्तृच्। **दण्डिनीति**—दण्डोऽस्त्यस्या इत्यर्थे 'अत इनिठनौ' ( ५-२-११५ ) इतीन्।

**उगितश्च** (४-१-६) इति। उगिद्यस्य तत्प्रातिपदिकं प्रत्ययश्च। प्रातिपदिकम्—'भवतु' इति, प्रत्ययः शत्रादिः। उगिच्छब्देन प्रातिपदिकं विशेष्यते, विशेषणेन तदन्तविधिः। 'समासप्रत्ययविधौ' इति निषेधस्तु न, 'उगिद्वर्णग्रहणवर्जम्' इत्युक्तेः, स्त्रीप्रत्यये तदप्रवृत्तिज्ञापनाच्च। तदाह—**उगिदन्तादिति**। ऋन्नेभ्य इत्यनेन ङीबित्यनुवर्तते-तदाह **ङीबिति**।

**भवती इति**— सर्वादिगणे 'भवतु' इति पठ्यते। तत्रोकार इत्। व्यपदेशिवद्भावेन "भवत्" इत्यस्योगिदन्तत्वान्ङीप्। आदरविशिष्टयुष्मदर्थकोऽयम्। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषय एवेति न निषेधः। 'भवतु, महत्' इत्यव्युत्पन्ने प्रातिपदिके।

अत एव—"कथमिदं विज्ञायते उगितः प्रातिपदिकादिति। आहोस्विदुगिदन्तात्प्रातिपदिकादिति। यदि विज्ञायते 'उगितः प्रातिपदिकादिति। सिद्धम्—भवती, महतीति। **अतिभवती, अतिमहतीति** न सिध्यति। सिद्धम् 'भवती, महतीति' भाष्येण भवन्महतोरुगित्प्रातिपदिकत्वस्यैवोक्तत्वात्। एतेन 'भातेर्डवतुः' इति (१ अ० ३ सू० उणा०) 'वर्तमाने पृषद्बृहन्महत्' ( उणा० २ अ० ८४ सू० ) इति डवतुप्प्रत्ययान्तो भवच्छब्दः, अतिप्रत्ययान्तो महच्छब्द इति च परास्तम्, उक्तभाष्यविरोधात्। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इत्यत्र 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यत्र च प्रातिपदिकमात्रबोधकं यत्पदं तत्रैव प्रवृत्तिः, 'नैतत्प्रातिपदिकग्रहणम्। प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम्' इति भाष्येण उगित्पदेन प्रातिपदिकप्रत्यययोर्ग्रहणान्न तयोरत्र विषयः।

ननूगित्पदेन प्रत्ययस्य ग्रहणे 'प्रत्ययग्रहणे यस्मात्' इति परिभाषया 'निर्यवमती' इति इत्यत्र ङीप् न स्यात्, 'निर्यवमत्' इत्यस्य प्रत्ययान्ततदादित्वाभावादिति चेन्न, प्रत्ययग्रहणपरिभाषाया अपि प्रत्ययमात्रग्रहणे एव प्रवृत्तेः।

तदुक्तं भाष्ये 'नैतत् प्रत्ययग्रहणम्, प्रत्ययाप्रत्यययोरेतद् ग्रहणम्। कथम्? वर्णोऽप्युगित्, ( अर्वतः' इत्यत्र 'त्' इति ) प्रत्ययोऽप्युगित्, प्रातिपदिकमप्युगित्' इति। **भवतीति**—'भवत्' इत्युगित्प्रातिपदिकान्ङीप्। उगिदन्तस्योदाहरणमाह—**पचन्ती, दीव्यन्ती**, इति। उभयत्रापि शतृप्रत्ययः। उगित् "अत्" इति। तदन्तः पचत्, दीव्यत् इति। यदि तु भातेर्डवतुप् तदा 'भवती' इति उगिदन्तस्योदाहरणम्। परन्त्विदं न वरम्, उगित्प्रातिपदिकस्योदाहरणमनुक्त्वा उगिदन्तस्योदाहरणानौचित्यात्। डवतुप्प्रत्ययान्तस्य भाष्यविरुद्धत्वाच्च। यद्यपि शत्रन्ताद्भवतेः **'भवन्ती'** इति **भवति**। परन्तु शत्रन्तस्य

'उगिदचाम्--' इति सूत्रेऽञ्चग्रहणेन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति नियम्यते। तेनेह न। उखास्रत्। क्विप्। 'अनिदिताम्--' इति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव-प्राची, प्रतीची।

*वनो र च। [ ४-१-७ ]*

वन्नन्तात्तदन्ताच्च प्रातिपदिकात्स्त्रियां ङीप्स्यात्, रश्चान्तादेशः। वन्निति ङ्वनिप्क्वनिब्वनिपां सामान्यग्रहणम्। 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्'। तेन

---

**'पचन्ती' दीव्यन्ती'** इत्युदाहरणात् प्रथमम् 'भवन्ती' इत्येव पाठः। **उगिदचामिति सूत्र इति—** धातुपाठे अञ्चतेः क्त्वाप्रत्यये गतौ 'उदितो वा' ( ७-२-५६ ) इति वैकल्पिके इटि 'अञ्चित्वा, अक्त्वा' इति सिद्धये 'अञ्चु गतिपूजनयोः' इत्युदित्करणस्यावश्यकतया उगित्त्वेनैवाञ्चतेरपि नुमि सिद्धे 'उगिदचाम्' ( ७-१-७० ) इति सूत्रे नलोपिनोऽञ्चतेर्ग्रहणं नियमार्थम्—धातोश्चेदगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेति। तेन उखायाः स्रंसते, पर्णाद् ध्वंसते इत्यर्थे स्रंसतेर्ध्वंसतेश्च क्विपि नलोपे उखास्रत्, पर्णध्वत्, यवागुः, इत्यादौ 'उगितश्च' इति न ङीप्। स्रंसु, ध्वंसु अवस्रंसने इत्युगित्त्वेऽप्युक्तनियमात्। **क्विप्, 'अनिदितामिति न लोपः'** इति मध्यमणिन्यायेन पूर्वेण परेण च सम्बध्यते। अयञ्च नियमो नलोपिनोऽञ्चतेरेव सूत्रे 'अचाम्' इति नलोपिन उपादानात्। तेन 'प्राङ्ब्राह्मणी' इत्यत्रोगित्त्वादञ्चतेरपि न ङीप्। तदुक्तं भाष्ये—'अञ्चतिग्रहणं नियमार्थं भविष्यति। **अञ्चतेरेवोगितो** धातोर्नान्यस्योगितो धातोरिति' इति।

**अञ्चतेस्त्विति—**नलोपिनोऽञ्चतेरित्यर्थः। तेन पूजायाम् 'नाञ्चेः पूजायाम्' इति नलोपनिषेधात् 'प्राङ्ब्राह्मणी' इत्येव। **स्यादेवेति ङीबिति शेषः। प्राचीति—**प्रपूर्वकात् प्रतिपूर्वकादञ्चतेः 'ऋत्विक्' इति क्विन्, अनिदितामिति नलोपे 'उगितश्च' इति ङीपि 'अचः' इत्यकारलोपे प्रशब्दाकारस्य प्रतिशब्देकारस्य 'चौ' इति दीर्घे प्राची, प्रतीची, इति रूपम्।

**'वनो र च'** ( ४-१-७ ) इति सूत्रे 'वनः' इति पञ्चम्यन्तम्। 'र' इति लुप्तप्रथमान्तम्। अकार उच्चारणार्थः। अग्रे हशन्ताद्विहितो यो वन् इत्युक्त्या वन्पदेन प्रत्ययस्यैव ग्रहणम्। निरनुबन्धकस्य वन्प्रत्ययस्याभावात् 'उत्सृष्टानुबन्धग्रहणे सामान्यग्रहणम्' इति परिभाषया लभ्यमर्थमाह—वन्निति ङ्वनिवित्यादि। 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदादिविशेष्यकतदन्तविधौ वन्नन्ततदादेरित्यर्थ उपलभ्यते। पुनः प्रातिपदिकविशेषणत्वेन वन्नन्ततदाद्यन्तात्प्रातिपदिकात् ङीप् रश्च स्यादित्यर्थ उपलभ्यते।

कस्य स्थाने इत्याकाङ्क्षायां सूत्रे सन्निहितत्वेन श्रूयमाणत्वाद्वनः स्थाने इत्युपलभ्यते। स च 'अलोऽन्त्यस्य' इत्यन्त्यस्य नस्य रादेश इति फलति। तदाह—**रश्चान्तादेश इति।** अत्र नस्य रादेशे एकदेशविकृतन्यायेनान्नन्ततया 'अल्लोपोऽनः' इत्यलोपस्तु न, तेन नकारान्तस्यैवानोऽकारलोपस्योक्तत्वात्। अत एव 'मघवतः' इत्यत्रालोपाभावः। तेन 'बहुधीवरी' इत्यादौ वन्नन्ततदादि धीवन्निति तदन्तं 'बहुधीवन्' इति न सिध्येत्, वन्नन्ततदाद्यन्तत्वाभावादिति चेन्न, व्यपदेशिवद्भावेन तस्यापि तदादितदन्तान्तत्वात्। इदं सूत्रं न ङीव्विधायकं किन्तु 'ऋन्नेभ्यः' इति प्राप्तङीवनुवादेन रभावमात्रविधायकम्, उभयविधौ गौरवात्। 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायाच्च। तदुक्तम्—'न चेदन्येन शिष्टः' इति ( वेदा० )। अत एव 'अग्निहोत्रं जुहोति' इति प्राप्तहोमानुवादेन 'दध्ना जुहोति' इत्यत्र दधिमात्रविधानं संगच्छते, हवनस्य वाक्यान्तरेण विहितत्वात्। किञ्च 'अनो बहुव्रीहेः' इत्यनेन 'वनो र च' इति विहितस्य ङीपो निषेधे तत्सन्नियोगशिष्टस्य रादेशस्याप्रवृत्तौ प्रकरणान्तरस्थेन 'अन उपधा' इत्यनेन ङीप्यपि रो दुर्लभस्तेन ङीम्मात्रस्य विधानात्।

**तदन्तान्तमपीति-**'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तु 'स्त्रियाम्' इत्यधिकारे न प्रवर्तते, 'अमहत्पूर्वा' ग्रहणेन ज्ञापनात्, सूत्रे गृह्यमाणस्य 'वनः' इत्यस्य प्रत्ययत्वेनाप्रातिपदि-

प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता, अतिसुत्वरी। अतिधीवरी। शर्वरी।

---

कत्वाच। सुत्वानमिति—'सुयजोर्ङ्वनिप्' ( ३-२-१०३ ) इति 'षुञ् अभिषवे' इत्यतो ङ्वनिप्। इकारङकारपकाराणामित्त्वे लोपे च 'ह्रस्वस्य पिति कृति' इति तुकि 'सुत्वन्' इत्यतो ङीपि नस्य रादेशे च 'सुत्वरी' इति। 'सुत्वानम् = स्नपयन्तम्, पीडयन्तम्, स्नान्तम्, सुरां संदधानं वा अतिक्रान्ता' इत्यर्थे 'अत्यादयः क्रान्ताद्यर्थे' इति समासे प्रातिपदिकत्वे सुब्लुकि ङीपि रादेशे च 'अतिसुत्वरी' इति वन्नन्ततदायन्त प्रातिपदिकस्योदाहरणम्।

एवम् अतिधीवरीति—'डुधाञ् धारणपोषणयोः' इत्यतः 'अन्येभ्योऽपि दृश्यन्ते' ( ३-२-७५ ) "छन्दसि" इति निवृत्तम्। मनिन्, क्वनिप्, वनिप्, विच्, एते प्रत्यया धातोः स्युः। इति भाषायामपि क्वनिप्। 'घुमास्था' इतीत्वे 'धीवन्' यद्वा ध्यायतेः क्वनिपि संप्रसारणे च। 'हलः' इति दीर्घे 'धीवन्' इति। धीवानम्=धारयन्तं पोषयन्तं ध्यायन्तं वा अतिक्रान्तेत्यर्थे पूर्ववत्समासे प्रातिपदिकत्वे ङीपि रत्वे च 'अतिधीवरी' इति।

ननु भाष्ये 'पावानः' इत्यस्य क्वनिप्सिद्धये 'ईत्वमवकारादौ' इति वार्त्तिकमुपन्यस्तम्। तथा च 'धीवरी' इत्यत्रेत्वं न स्यादिति चेन्न, 'पावानः' इत्यस्य वनिपा सिद्धिं कृत्वाऽस्य वार्त्तिकस्य प्रत्याख्यानात्।

ननु वार्त्तिकाभावे 'अम्बाम्ब' ( ८-३-७७ ) इति सूत्रभाष्ये 'सव्येष्ठाः' इत्यत्र 'स्थः क च' ( ३-३-७७ ) इति सूत्र भाष्ये 'शंस्थाः' इत्यत्र चेत्त्वापत्ति रिति चेन्न, 'स्यसिच् सीयुट्' ( ६-४-६२ ) इति सूत्रान्मण्डूकप्लुत्या वाग्रहणमनुवर्त्त्य व्यवस्थितविभाषाश्रयणात्। व्यवस्थितविभाषात्वञ्च—उद्देश्यताऽवच्छेदकावच्छिन्ने क्वचिद् भावविधानं क्वचिदभावविधानम्। एकस्मिन् लक्ष्ये भावाभावयोरविधानमिति यावदिति **बा० कृ० पञ्चोलिनः**। तत्र विच्प्रत्ययस्यैव सत्त्वाच्च, सिद्धेः। अत एव=( वार्तिकस्यासत्त्वादेव ) 'ध्यायतेः सम्प्रसारणम्' इति वार्तिकस्थम् 'धीः' ध्यायतेर्दधातेर्वा' इति भाष्यं संगच्छते। अन्यथा क्विप्प्रत्ययस्यापि वकारादित्वेन 'ईत्वमवकारादौ' इति निषेधात् 'धीः' इत्यत्रेत्वानापत्त्या भाष्यासङ्गतिः। न त्वेवमपि 'धीः' इत्यस्यान्तरङ्गत्वात् क्विपो लोपे हलादिकिङत्परत्वाभावात् 'घुमास्था' इतीत्वं न स्यात्। न च स्थानिवद्भावो विशेषणतयाऽलाश्रयणेन 'अनल्विधौ' इति निषेधात्। न च प्रत्ययलक्षणम्, तस्य नियमार्थत्वादिति चेन्न, 'घुमास्था' इत्यत्र 'हलि' इत्यस्यानजादिपरत्वेन अजादौ नेत्यर्थेन क्विपि प्रवृत्तौ बाधकाभावात्। अत्र च 'धीः दधातेः' इति भाष्यस्यैव मानत्वात्।

यद्वा 'घुमास्था' इति सूत्रे 'हलि' इति न कार्य्यम् 'दीङो युडचि' इत्यतः 'अचि' इति, 'न ल्यपि' इत्यतो मण्डूकप्लुत्या 'न' इति चानुवर्त्त्य अजादौ नेति व्याख्येयम्। वस्तुतस्तु 'ईत्वमवकारादौ' इति वार्तिकस्य श्रूयमाणवकारादिभिन्ने हलादौ किति ङिति च प्रत्यये ईत्वम्-इत्यर्थे वार्त्तिकसत्त्वेऽपि क्विपि 'घुमास्था' इतीत्वे बाधकाभावः। श्रूयमाणवकारादिभिन्नत्वात् क्विपः।

शर्वरीति—शृणाति दुःखं येत्यर्थे 'शॄ हिंसायाम्' इत्यतो वनिपि गुणे च 'शर्वन्' इत्यतो ङीपि रादेशे च 'शर्वरी' इति=निशा, हरिद्रा वा। 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी।' इत्यमरः ( २ का० ९ वर्ग० ४१ ) निशापर्य्यायाः सर्वे हरिद्रावाचका इत्युक्तं 'निशाख्या' इति। शर्वरीत्यत्र रेफरूपाद्धशः परत्वाद् 'वनो न हशः' इति निषेधस्तु न, हशन्ताद्विहितस्यैव वनो निषेधस्य वक्ष्यमाणत्वात्। वनोऽर्थवतो ग्रहणेन महधातोः कनिप्रत्यये प्रकृतेरुगागमेन घत्वेन च निपातितमघवच्छब्दान् ङीपि 'मघोनी' इत्यत्र नास्य प्रवृत्तिः, प्रकृत्येकदेशप्रत्ययसमुदायरूपस्य वनोऽनर्थकत्वात्, मघवच्छब्दस्याव्युत्पन्नत्वेन प्रकृतिप्रत्ययनिमित्तककार्य्याभावाच्च। तदुक्तमत्रैव भाष्ये—

'वनो न हश इति वक्तव्यम्' । हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीप् रश्च नेत्यर्थः । 'ओणृ अपनयने' वनिप्, 'विड्वनोः–' इत्यात्वम् । अवावा ब्राह्मणी । राजयुध्वा । 'बहुव्रीहौ'—बहुधीवरी ।

'मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्' इति । 'ईवनिपौ छन्दसि' इति वनिबन्तमघवन्शब्दस्तु छन्दस्येवेति न दोषः, छन्दसि दृष्टानुविधित्वात् ।

**'वनो न हश इति वक्तव्यम्'** वार्तिकमिदम् । 'बहवो युध्वानो यत्र सा **'बहुयुध्वा'** इत्यत्र तु 'अनो बहुव्रीहेः' इत्येव ङीपि निषिद्धे सन्नियोगशिष्टन्यायेन रोऽपि न स्यादित्यबहुव्रीह्यर्थम् । विहितविशेषणाभावेऽव्याप्तिं दर्शयन्नाह—**'ओणृ अपनयने'** इत्यादिना – **वनिविति**—'अन्येभ्यो दृश्यन्ते' इत्यनेनेति शेषः । **अवावेति**—ओणृ धातोर्वनिपि 'विड्वनोरनुनासिकस्यात्' ( ६-४-४१ ) इति णकारस्यात्वे 'एचोऽयवाय्' इत्योकारस्यावादेशे 'अवावन्' इति, अत्र 'ओणृ' इति हशन्ताद्वनो विहितत्वेन ङीप्रश्च न भवति । हशः परो यो वन् इति व्याख्याने तु वनः हशः परत्वाभावान्निषेधो न स्यात्, 'शर्वरी' इत्यत्र च निषेधः स्यादिति अव्याप्त्यतिव्याप्ती स्याताम् ।

**राजयुध्वेति**—'युध संप्रहारे' इत्यतो राजानं योधितवतीत्यर्थेऽन्तर्भावितण्यर्थाद् युधेः **'राजनि युधि कृञः'** ( ३-२-९५ ) इति भूते, कर्मणि, क्वनिप् त्रयमनुवर्तते । कर्मीभूते राजन्युपपदे भूते युधः कृञश्च क्वनिबित्यर्थः । 'अन्येभ्योऽपि दृश्यन्ते' इत्येव सिद्धे नियमार्थमिदम् । वस्तुतस्तु हशिग्रहणस्यागतिकगतित्वेन विधायकत्वमेवोचितम् । राजन् ङस् युध्वन् इति दशायाम् 'उपपदमतिङ्' इत्युपपदसमासे सुब्लुकि 'राजयुध्वन्' । अत्र युधेर्विहितः क्वनिबिति 'युध्वन्निति वन्नन्ततदादिः राजयुध्वन्निति तु तदन्तान्तः । हशन्ताद्विहितत्वेन ङीब्रादेशौ न । तदुक्तं भाष्ये—**'विहितविशेषणं हशग्रहणम् । 'हशन्ताद्यो विहित इति'** इति ।

'बहुव्रीहौ वा' इति । 'वनो र च' इति सूत्रे पठित्वा इदं वार्त्तिकं 'अनो बहुव्रीहेः' इति प्रतिषेधस्यापवादः ।

ननु 'वनो र च' इति सूत्रभाष्ये 'रविधाने बहुव्रीहेरुपसंख्यानम्, प्रतिषिद्धत्वात्' इत्येवोक्तम् । एवञ्च 'वा' इत्यनुपपन्नमिति चेन्न, अस्य वार्तिकस्य 'अन उपधालोपिनोऽन्यतरस्याम्' ( ४-१-२८ ) इति विहितङीबनुवादेन रादेशमात्रविधायकत्वात्, न तु स्वतन्त्रमिदम् । अत एव 'सुपर्वा, चारुपर्वा' इत्यादौ नास्य प्रवृत्तिः । तथा चानुवादकत्वेनैव विकल्पस्य फलितत्वाद् भाष्यकृता 'बहुव्रीहेरुपसंख्यानम्' इति न तद्विरोधः ।

ननु 'वनो र च' इति सूत्रं न ङीब्विधायकं किन्तु ङीबनुवादेन रादेशमात्रविधायकमित्युक्तम् । तथा च 'अन उपधा' इति विहितङीप्संनियोगेनापि तेनैव रविधानं स्यादिति वार्तिकं व्यर्थमिति चेन्न, प्रकरणस्यार्थनियामकत्वेन 'ऋन्नेभ्यो ङीप्' इति प्रकरणपठितेन 'वनो र च' इत्यनेन प्रकरणविहितङीप्सन्नियोगेनैव रत्वं विधीयेत, न तु प्रकरणान्तरविहितेन ङीपा, इति प्रकरणान्तरस्यविहितङीप्संनियोगेनापि ङीपा संनियोगेन रत्वविधानाय 'बहुव्रीहेरुपसंख्यानं कर्तव्यम्' इत्युक्तं भाष्यकृतेति भावः ।

वस्तुतस्तु 'डाबुभाभ्याम्' ( ४-१-१३ ) इति सूत्रे 'अन्यतरस्याम्' इति व्यर्थम् । न च तदभावे नित्यमेव डाप् स्यादिति वाच्यम् । एवं सति 'अनो बहुव्रीहेर्मनश्च डाप्' इत्येकस्मिन्नेव सूत्रे कर्तव्ये पृथक् सूत्रद्वयकरणेन 'उभाभ्यां डाप्' इति सूत्रकरणेन च डाप्निषेधयोर्विकल्पेन सिद्धिः स्यादिति 'अन्यतरस्याम्' इति योगविभागः क्रियते । अत्र अनो बहुव्रीहेरित्यनुवर्त्य अन्नन्ताद्बहुव्रीहेर्ङीबन्यतरस्यामिति व्याख्येयम् । इति पक्षे डाप्प्रतिषेधौ स्याताम् ।

एवञ्च **'बहुधीवरी'** इति बहुव्रीहौ प्रकरणस्थ एव ङीबिति रोऽपि स्यादिति 'बहुव्रीहौ वा' इति वार्तिकं नापूर्वम्, किन्तु 'अन्यतरस्याम्' इति योगविभागसिद्धार्थानुवादकमेव । एवञ्च 'अन उपधालोपिनः' (४-१-२८) इति सूत्रं नियमार्थम्–'अनो योऽसौ विकल्पः स उपधालोपिन एव

**बहुधीवा । पक्षे डाब्वक्ष्यते ।**

*पादोऽन्यतरस्याम् [ ४-१-८ ]*

**पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकाद् ङीब्वा स्यात् । द्विपदी, दिपाद् ।**

*टावृचि । [ ४-१-९ ]*

---

नान्यस्य । तेन सुपर्वा, चारुपर्वा इत्यादौ न ङीप्, उपधालोपित्वाभावात् किन्तु डाब्निषेधावेव । उपधालोपिनस्तु डापि 'बहुधीवे' इति, ङीपि 'बहुधीवरी' इति, निषेधे 'बहुधीवानौ' इति । एकवचने डापि निषेधे च **'बहुधीवा'** इत्येकविधमेवेति द्विवचने रूपं स्पष्टप्रतिपत्तये प्रदर्शितम् ।

भाष्ये तु प्रकरणस्थङीप्संनियोगेन रत्वसिद्धये 'अनो बहुव्रीहेः' इत्यनन्तरम् 'उपधालोपिनो वा' इति न्यस्य प्रकरणान्तरस्थम् 'अन उपधालोपिनोऽन्यतरस्याम्' इति सूत्रं प्रत्याख्यातम् । न च प्रकरणान्तरस्थे 'अन उपधालोपिनोऽन्यतरस्याम्' (४-१-२८) इति सूत्रे 'अनुपसर्जनात्' (४-१-१४) इत्यनुवर्तते । तथा च बहवो दामानो येषु पुरेषु तानि **बहुदामानि** पुराणि । तानि अतिक्रान्ता नगरी **'अतिबहुदामा'** इत्यत्र ङीप् न भवति । अनो बहुव्रीहेरित्यनन्तरम् 'उपधालोपिनो वा' इति न्यासे तु, अनुपसर्जनादित्यस्य सम्बन्धो न स्यात् । उक्तन्यासस्य अनुपसर्जनादिति सूत्रात्पूर्वत्वादिति वाच्यम्, **'स्त्रियाम्'** इत्यस्य गृह्यमाणस्य बहुव्रीहेर्विशेषणत्वेन प्रकृते बहुव्रीहिः स्त्रियामवर्तनेनादोषात् । अत एव 'पञ्चाजी' इत्यत्र न टाप्, गृह्यमाणस्याजादेः स्त्रियामवर्त्तनात् ।

**बहुधीवेति**—ङीपोऽभावे 'हल्ङ्याब्' इति सुलोपे 'सर्वनामस्थाने च' इत्युपधादीर्घे च रूपमिदम् । **डाब् वक्ष्यत इति**—'डाबुभाभ्याम्' इत्यनेनेति शेषः । तेन द्विवचने रूपत्रयम् । **'पादोऽन्यतरस्याम्'** ( ४-१-८ ) इति । **कृतसमासान्तस्येति**—

**'पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च ।'**

इति कोशात् अनेकार्थकपादशब्दाद् आचक्षाणणिचा निष्पन्नः, 'संख्यासुपूर्वस्य' ( ५-४-१४० ) इति सूत्रेण द्वौ पादौ यस्या इत्यर्थे बहुव्रीहौ कृतलोपरूपसमासान्तः । ननु लोपस्याभावरूपत्वेन कथं समासचरमावयवत्वम् ? इति चेन्न, लोपस्थानिनिष्ठसमास-चरमावयवत्वं तत्स्थाने जायमाने लोपे आरोप इति **पञ्चोलिनः** । पद गतौ इत्यतो णिचि क्विपि च निष्पन्नश्च 'पाद' इति । तत्र कृतसमासान्तस्यैवात्र ग्रहणं नान्यस्य, उत्तरसूत्रे 'टावृचि' इत्यत्र ऋचि समासान्तनिष्पन्नस्यैव तुरीयांशवाचकस्य सम्भवेनार्थाधिकारानुरोधात् । तदाह—**कृतसमासान्त इति**—अभावरूपस्य लोपस्य भावरूपसमासावयवस्य वास्तविकावयवत्वासम्भवेन समासान्ताधिकारे सूत्रारम्भसामर्थ्यादभावे स्थानिगतावयवत्वमारोप्यत इति पूर्वं सूचितमेव । **तदन्तादिति**—कृतसमासान्तपाच्छब्दान्तादित्यर्थः । **द्विपदीति**—श्लोकस्य चतुर्थांशः पादः । द्वौ पादौ यस्यां गायत्र्यां सा **द्विपदी, द्विपाद्वा** । द्विपाच्छब्दाद्वैकल्पिके ङीपि भसंज्ञायाम् 'पादः पत्' इति पदादेशे **'द्विपदी'** इति ङीपोऽभावे **'द्विपाद्'** इति ।

**'टावृचि'** ( ४-१-९ ) इति । पूर्वसूत्रेण प्राप्तस्य ङीपोऽपवादोऽयम् इति **प्राञ्चः** । एवञ्च **द्वौ पादौ यस्या ऋचः** इत्यर्थे ङीपं बाधित्वा टावेवेति 'द्विपदा' इत्येकमेव रूपम् । शेखरकारस्तु यत्रो त्सर्गशास्त्रं वैकल्पिकं तत्रोत्सर्गाप्रवृत्तौ विशेषशास्त्रस्य **'टावृचि'** इत्यस्य चारितार्थ्येन ऋच्यपि **'द्विपदी' 'द्विपदा'** इति रूपद्वयम् । 'उत्सर्गस्य वैकल्पिकत्वेऽपवादत्वं न भवति' इत्यत्र मानञ्च 'शेषाद्विभाषा' इति वैकल्पिककपो विशेषविहिताः समासान्ता अपवादा न भवन्ति, कपोऽभावे तेषां चरितार्थ्यादित्यर्थकपरं भाष्यमेव । तथा च ङीपोऽभावे चरितार्थेन **'टावृचि'** इत्यनेन बाधाभावः स्पष्ट एव ।

ऋचि वाच्यायां पादन्तात्टाप् स्यात् । द्विपदा ऋक् । एकपदा । 'न षट्स्वस्रादिभ्यः' । पञ्च । चतस्रः ।

---

किञ्च 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु'

इति कोशादत्र पदशब्देन बहुव्रीहौ अदन्तत्वात् टापि 'द्विपदा' इत्यस्य सिद्धया 'टावृचि' इति सूत्रं भाष्यकृता प्रत्याख्यातम् ।

तथा हि—'ङ्याप्प्रातिपदिकात्' (४-१-१) इति सूत्रे आब्ग्रहणस्य प्रयोजनखण्डनावसरे अदन्तात् टाप् विधीयते । तत्र सवर्णदीर्घस्य पूर्वान्तवद्भावेन एकादेशविशिष्टस्य प्रातिपदिकत्वेन 'प्रातिपदिकात्' इत्येव स्वादयः स्युरिति समर्थ्य यत्र हलन्तात् टाप् तत्रैकादेशाभावात्तदर्थमाब्ग्रहणम् । इदं तर्हि प्रयोजनम् । 'इदं तर्हि पादोऽन्यतरस्यां टावृचीति । ऋचीत्युच्यते तत्र छान्दसत्वाद्भ-विष्यति । ऋचीति न हि छन्दो विवक्षितम् । काठकम्, कालपकम्, मौदकम्, पैप्पलकञ्च । किं तर्हि प्रत्ययार्थविशेषणमेतत्' इति प्रत्ययार्थमित्यस्य ऋगर्थरूपान्यपदार्थगतस्त्रीत्वविवक्षाया-मित्यर्थः । ऋक्चेत्प्रत्ययार्थो भवति । एतदपि नास्ति प्रयोजनम् । पदशब्दः पादसमानार्थोऽकारान्त इति । एतेन 'टावृचि' इति सूत्रं कर्त्तव्यमिति फलति ।

तथा च कृतसमासान्तपाच्छब्दादृचि वैकल्पिको ङीबेवेति प्रत्याख्यानपक्षे ऋचि 'द्विपदा, द्विपदी, द्विपात्' इति रूपत्रयमुपलभ्यते । तदेकवाक्यतया टावृचीत्यस्यारम्भपक्षेऽपि रूपत्रयसिद्धये 'टावृचि' इत्यत्रापि 'अन्यतरस्याम्' इत्यनुवर्तते इति सूत्रारम्भपक्षेऽपि रूपत्रयं स्यादित्यारम्भप्रत्याख्यानयोर्न फलभेद इत्याह ।

प्राचीनानुयायिनस्तु ऋचि ङीपः टापा बाधेन 'एकपदा ऋक्' इत्येव । सूत्रप्रत्याख्यानपक्षे-ऽपि पूर्वोक्तस्यैकरूपस्यैव सिद्धये हलन्तपाच्छब्दस्य स्त्रीत्वविशिष्टऋगर्थेऽनभिधानमित्याहुः ।

यद्यपि 'टावृचि' इति सूत्रस्य प्रत्याख्यानं भाष्याशयसिद्धये सूत्रप्रत्याख्यानं ध्वन्यते । अन्यथा सूत्रसत्त्वे हलन्तात् टाप् नास्तीति भाष्यं विरुध्येत । पादन्तादिति 'पादोऽन्यतरस्याम्' इत्यताऽनुवृत्तेन पाच्छब्देन प्रातिपदिकादित्यधिकृतस्य विशेषणात् तदन्तविधिः । द्विपदा ऋगिति— द्वौ पादौ यस्या ऋचः सेत्यर्थः, टापि भत्वे पदादेशे च रूपम् । एकपदेति—ऋगित्यस्यात्रापि सम्बन्धः । एकः पादो यस्या ऋचः सेति विग्रहः । 'द्विपदी, द्विपात्, एकपदी, एकपात्' इति प्रयोगनिवृत्तये सूत्रं पाणिनिना कृतमिति भावः ।

**न षट्स्वस्रादिभ्यः** ( ४-१-१० ) इति प्रागुक्तमपि प्रकरणादिहोपन्यस्तम् । पञ्च स्त्रिय इत्यर्थे जस्शसोरुत्पत्तेः प्रागेव संख्याकारकाभ्यामन्तरङ्गत्वात् लिङ्गस्य प्रथमोपस्थितत्वेन स्त्रीत्वविवक्षा-यामन्तरङ्गत्वात् 'ऋन्नेभ्यः' इति प्राप्तस्य ङीपो निषेधे प्रातिपदिकत्वाज्जातयोर्जश्शसोः षट्त्वात् लुकि नलोपे पञ्चेति । चतस्र इति—चतुष्ट्वसंख्याविशिष्टाः स्त्रिय इत्यर्थे चतुश्शब्दाज् जश्शसोः 'त्रिचतुरोः स्त्रियां तिसृ-चतसृ' ( ७—२—९९ ) इति चतस्रादेशे ऋदन्तत्वात्प्राप्तो ङीब् निषिध्यते ।

वस्तुतस्तु इदमुदाहरणं चिन्त्यम्, तिसृ–चतसृशब्दयोः स्वस्रादिगणे पाठाभावात् । अत एव 'क्रुन्मेजन्तः' इति सूत्रे भाष्ये सन्निपातपरिभाषायाः फलनिरूपणावसरे 'तिस्रस्तिष्ठन्ति । तिसृचतसृभावे कृते 'ऋन्नेभ्य' इति ङीप् प्राप्नोति । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति' इति भाष्यं संगच्छते । स्वस्रादिगणे तयोः पाठे निषेधेनैव ङीपोऽभावे सिद्धे सन्नि-पातपरिभाषायाः फलप्रदर्शनं विरुध्येत । किञ्च तिसृचतसृशब्दयोः स्वस्रादित्वमतेऽपि प्रथमोपस्थि-तत्वात् 'तिस्रः' इत्येवोदाहर्तुमुचितम् ।

'पञ्च' इत्यत्र नलोपे कृतेऽपि 'ष्णान्ता षट्' इति षट्संज्ञां प्रति 'नलोपः सुप्स्वर-' इति नलोपस्यासिद्धत्वाद् 'न षट्स्वस्रादिभ्यः' इति न टाप्।

---

ननु 'पञ्च' इत्यत्र 'न षट्स्वस्रादिभ्यः' इति ङीबेव निषिध्यताम्, नान्तत्वेन टाप्प्रसक्तेरभावादिति शङ्कायामाह—**पञ्चेति**। अत्र नान्तलक्षणे ङीपो निषेधे ततो जातयोर्जश्शसोः 'षड्भ्यो लुक्' इति लुकि प्रत्ययलक्षणेन पदत्वान्नलोपेऽदन्तत्वात् टाप् प्राप्नोति। तन्निषेधाय 'न षट्' इत्यत्र टापोऽनुवृत्तिरावश्यकीत्याह—**न षट्स्वस्रादिभ्य इति न टाबिति**। ननु नलोपे कृतेऽपि 'अजाद्यतः' इति दृष्टया नलोपस्य त्रिपादीस्थत्वेनासिद्धतया टापोऽप्राप्तिरिति चेन्न, 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इति सूत्रस्य नियमार्थत्वेन टापि कर्त्तव्ये नलोपस्यासिद्धत्वाभावात्। अत एव 'राजाश्व' इत्यादौ दीर्घः सिध्यति।

ननु नलोपे कृते नान्तत्वाभावेन षट्संज्ञाविरहात्कथं न षट्स्वादिभ्य इति तन्निबन्धनः 'न षट्' इति निषेधः। नच टाब्निषेधे कर्तव्ये नलोपस्यासिद्धत्वम्, टाब्निषेधस्य नियमशास्त्रेऽपरिगणनात्। इत्याह—**नलोपे कृतेऽपीत्यादि**। अयम्भावः—'कार्यकालं संज्ञापरिभाषम्' इति पक्षे षट्संज्ञाविधायकस्य 'ष्णान्ता षट्' इत्यस्य 'न षट्स्वस्रादिभ्यः' इत्यत्रोपस्थित्या द्वयोरेकवाक्यतया 'न षट्' इत्यस्यापि षट्संज्ञाविधायकत्वेन नियमे संज्ञायाः परिगणनेन टाब्निषेधेऽपि नलोपस्यासिद्धत्वात् संज्ञानिबन्धननलोपस्यासिद्धत्वात् संज्ञानिबन्धननलोपासिद्धत्वम्।

वस्तुतस्तु यथोद्देशं संज्ञापरिभाषमिति पक्षे नान्तकाले प्रवृत्तायाः षट्संज्ञायाः सर्वार्थत्वेन पुनः संज्ञाया अभावादेकदेशविकृतन्यायेनानुमानिकस्थान्यादेशभावमाश्रित्य स्थानिवत्त्वेन चादन्तेऽपि षट्त्वनिबन्धनटाब्निषेधः। नच नान्तत्वसमानाधिकरणसंख्यावाचकत्वरूपषट्त्वस्य नत्वरूपाल्मात्रवृत्तिधर्मघटितत्वेन 'अनल्विधौ' इति स्थानिवत्त्वनिषेधः, सङ्केतसम्बन्धेन षट्पदवत्त्वरूपषट्त्वस्याल्मात्रवृत्तिधर्मघटितत्वाभावात्। नान्तत्वसमानाधिकरणसंख्यावाचकत्वं तु षट्त्वपरिचायकधर्मरूपलक्षणतया तत्र भासते।

एतेन 'एकदेशविकृतस्योपसंख्यानम्' हि 'स्थानिवदादेशोऽनल्विधौ' इत्यत्र पठ्यते। तच्चाल्विधौ न प्रवर्तत एवेति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात्' इति दण्डयुक्तमपास्तम्। अत एव 'स्त्रियामि'ति वर्त्तते, स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः' इत्युक्तं भाष्ये, भूतपूर्वषट्त्वमादाय टापोऽपि निषेधः स्यादिति भावः।

किञ्च 'नलोपः सुप्स्वरसंज्ञा' इति सूत्रे संज्ञापदेन घिसंज्ञाया एव ग्रहणम्। अत एव 'नलोपः सुप्' इति भाष्ये 'अथ संज्ञाविधौ किमुदाहरणम्? पञ्च, सप्त। पञ्च सप्तेत्यत्र नलोपे कृते 'ष्णान्ता षट्' इति षट्संज्ञा न प्राप्नोति। असिद्धत्वाद् भवति। संज्ञाग्रहणानर्थक्यञ्च तन्निमित्तत्वाल्लोपस्य संज्ञाग्रहणञ्चानर्थकम्। किं कारणम्? तन्निमित्तत्वाल्लोपस्य। नाकृतायां संज्ञायां जश्शसोर्लुक्। न चाकृते लुकि पदसंज्ञा। न चाकृतायां पदसंज्ञायां नलोपः प्राप्नोति। तदेतदानुपूर्व्या सिद्धं भवति' इत्युक्तिः संगच्छते। 'न षट्' इति निषेधः स्त्रीप्रत्यये तदन्तविधिसत्त्वात्तदन्तेऽपि। तेन प्रियपञ्चा द्रौपदी इति सिद्ध्यति। न च षडर्थस्य यत्र प्राधान्यं तत्रैव निषेध इति वाच्यम्, अर्थप्राधान्याश्रयणे मानाभावात्।

न चानन्तरस्येति न्यायेन नान्तलक्षणङीपो निषेधेऽपि 'अन उपधा' इति ङीप् स्यादिति वाच्यम्, 'स्त्रियां यत्प्राप्नोति तन्न' इति सामान्यतो निषेधपरभाष्येण प्रकृते 'अनन्तरस्य' इति न्यायाप्रवृत्तेः। अत एव भाष्ये 'कस्यायं प्रति ङीबनन्तरस्य' इत्युक्त्वा 'तस्मान्नोभौ, तस्मात् षट्संज्ञकेभ्य उभौ (ङीप्टापौ) न भवत इति वक्तव्यम्। तर्त्तर्हि वक्तव्यम्। न वक्तव्यम्। स्त्रियामिति वर्त्तते। स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः' इत्युक्तम्। अस्यायम्भावः—लाघवान्न ङीप्टापोरनुवृत्तिः। सामान्यतः

*मनः ।* [ *४-१-११* ]

मन्नन्तान्न ङीप् । सीमा, सीमानौ ।

*अनो बहुव्रीहेः ।* [ *४-१-१२* ]

अन्नन्ताद् बहुव्रीहेर्न ङीप् । बहुयज्वानौ ।

*डाबुभाभ्यामन्यतरस्याम् ।* [ *४-१-१३* ]

---

**स्त्रीत्वनिमित्तको** यः कश्चन प्रत्ययः प्राप्नोति तस्य सर्वस्यापि प्रतिषेध इति 'अन उपधा' इति ङीप इव डापोऽपि निषेधो ध्वनितः ।

**'मनः'** ( ४-१-११ ) इति । पूर्वसूत्रात् ङीबिति नेति चानुवर्तते । तदाह—**न ङीबिति । मन्नन्तादिति** प्रत्ययत्वात् मनः प्रत्ययग्रहणपरिभाषया तदन्तविधिः प्रातिपदिकविशेषणतया तदन्तान्तमपि लभ्यते । तेन सीमानमतिक्रान्ता 'अतिसीमा' इत्यत्रापि निषेधः सर्वेषाम् ।

ननु ङीपो निषेधे **'सीमा'** इति रूपमिष्यते । तच्च वक्ष्यमाणडाप्प्रत्ययेनापि सिध्यति, किं निषेधेनेत्यत आह—**सीमानाविति**—ङीपो निषेधे द्विवचनादौ **सीमानौ,** सीमान इत्यादि भवति । डापि तु तन्न सिध्येदिति भावः ।

'मनः' इति 'अनो बहुव्रीहेः' इति च 'स्त्रियां यत्प्राप्नोति' इति भाष्योक्तरीत्या टाप्ङीपोरुभयोरपि निषेधः । एतेन 'सीमभ्याम् बहुयज्वभ्याम्, बहुधीवभ्याम् इत्यत्र डाप्ङीपोरभावे नलोपे टाब् दुर्वार इत्यपास्तम् ।

**'अनो बहुव्रीहेः'** ( ४-१-१२ ) इति । नेति ङीबिति चानुवर्त्तते, अन्निति बहुव्रीहेर्विशेषणमिति तदन्तविधिस्तदाह—**अन्नन्ताद् बहुव्रीहेरिति**—उक्तरीत्या ङीपः टापश्च प्रतिषेधे राजवद्रूपमित्याह **बहुयज्वानाविति ।** बहुव्रीहेरिति प्रातिपदिकादित्यस्य विशेषणं तेन अन्नन्तबहुव्रीह्यन्तात्प्रातिपदिकान्न ङीबिति लभ्यते । तथा च बहुयज्वानमतिक्रान्ता **'अतिबहुयज्वा'** इत्यत्रापि ङीप्टापौ न । 'न संयोगाद्वमन्तात्' इति उपधालोपनिषेधात् । 'अन उपधा' इत्यपि न ।

**'डाबुभाभ्यामन्यतरस्याम्'** ( ४-१-१३ ) इति । अनन्तरन्यायेन 'अनो बहुव्रीहेः' इत्यस्यैवानुवृत्तिः सम्भाव्येत, अत उभयोः 'मनः' 'अनो बहुव्रीहेः' इत्यनयोरनुवृत्त्यर्थमु**भाभ्यामिति ।** भाष्ये तु उभयत्र स्वरितत्वकरणसामर्थ्यादनन्तरन्यायबाधेनोभयोरनुवृत्तायां सिद्धम् 'उभाभ्याम्' इति प्रत्याख्यातम् । तथाहि—'किमर्थमुभाभ्यामित्युच्यते ? उभाभ्यां योगाभ्यां डाब् यथा स्यात् । मन्नन्तादन्नन्ताच्च । नैतदस्ति प्रयोजनम् । प्रकृतमुभयमनुवर्त्तते' इति । 'द्वयोरपि स्वरितत्वप्रतिज्ञानात्' इति कैयटः ।

ननु **'अन्यतरस्याम्'** इति व्यर्थम् । नच 'अन्यतरस्याम्' इत्यस्याभावे नित्यं डाप् स्यादिति वाच्यम्, डापो नित्यत्वे तेनैव मन्नन्तादन्नन्ताद्बहुव्रीहेश्च ङीपो बाधे सिद्धे 'मनः' इत्यस्य 'अनो बहुव्रीहेः' इत्यस्य च निषेधस्य वैयर्थ्यापत्त्या ङीपो निषेधे डाब्विधानसामर्थ्यात् पक्षे डापि च सिद्धे 'अन्यतरस्याम्' इति व्यर्थमिति चेन्न, 'अन्यतरस्याम्' इति योगो विभज्यते । मन इति निवृत्तम् । अनो बहुव्रीहेरित्यनुवर्त्तते अन्नन्ताद् बहुव्रीहेर्डाप् वा स्यात् । पक्षे 'ऋन्नेभ्यः' इति ङीप् । पूर्वेण 'उभाभ्याम्' इत्यनेन डापि सिद्धे 'अन्यतरस्याम्' इत्यनेन डापो विधानं 'ऋन्नेभ्यः' इति ङीबर्थमेव ।

न चैवं निषेधसामर्थ्यान्ङीन्निषेधस्य, डाब्विधानसामर्थ्याद् डापः, विकल्पेन डाब्विधानसामर्थ्याल्लब्धे ङीपश्च सिद्धया 'बहुधीवर्य्यौ' इति रूपत्रयसिद्धया 'अन उपधालोपिनः' इत्यस्य वैयर्थ्यमिति वाच्यम्, तस्य नियमार्थत्वात् । अनो योऽसौ 'अन्यतरस्याम्' इति विभक्तसूत्रेण प्राप्तो ङीप् स उपधालोपिन एव । तेन 'सुपर्वा, चारुपर्वा' इत्यादौ डाब्निषेधावेति । तेन सुपर्वाणौ, चारुपर्वाणौ,

सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात्। सीमा, सीमे, सीमानौ। दामा, दामे, दामानौ। 'न पुंसि दाम' इत्यमरः। बहुयज्वा, बहुयज्वे, बहुयज्वानौ।

*अन उपधालोपिनोऽन्यतरस्याम्।* [ ४–१–२८ ]

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात्। पक्षे डाब्ङीब्निषेधौ।

'सुपर्वे, चारुपर्वे' इति डाप् निषेधश्च सिद्ध्यति न तु ङीप्। 'न संयोगाद्वमन्तात्' इत्युपधालोपनिषेधेनोपधालोपित्वाभावात्। एवञ्च 'बहुधीवरी' इत्यत्र 'ऋन्नेभ्यः' इति प्राप्तं ङीपमनूद्य 'वनो र च' इति रविधानेन 'बहुधीवरी' इत्यत्र रादेशः सिध्यतीति 'बहुव्रीहौ वा' इति वार्त्तिकं न कर्त्तव्यम्। 'संख्याव्ययादेर्ङीप्' ( ४–१–२६ ) इति ङीपमनूद्य 'अन उपधालोपिनोऽन्यतरस्याम्' ( ४–१–२८ ) इत्यनेन ङीपि तु 'ऋन्नेभ्यः' इति ङीप्सन्नियोगेन विधीयमानो रादेशो न स्यात् 'वनो र च' इत्यनेनैव ङीब्रौ विधीयेतां किं 'ऋन्नेभ्यः' इति ङीबनुवादेनेति वाच्यम्, उभयविधाने गौरवादिदोषस्य पूर्वमुपपादितत्वात्।

तथा च '**बहुव्रीहौ वा**' इति वार्तिकं नापूर्वम्। किन्तु उक्तरीत्या योगविभागसिद्ध्यर्थकमेवेत्यलमतिविस्तरेण। **सीमेति**—सिनाति = बध्नाति ग्रामादिमर्य्यादामित्यर्थे 'षिञ् बन्धने' इत्यतः 'नामन्सीमन्व्योमन्' ( उणा० ४ पा० १५१ सू० ) इति दीर्घत्वविशिष्टा मनिनन्ता निपात्यन्ते।

**'ग्रामान्तमुपशल्यं स्यात् सीमसीमे स्त्रियामुभे'**

इत्यमरः ( २ का० ३ वर्ग० २० श्लो० )। सीमन्शब्दात् डापि टिलोपे सोर्लोपे च रूपम्। 'ङ्याप्प्रातिपदिकात्' इति सूत्रे 'आप्' इत्यस्य इदमेवोदाहरणम्। टापि तु पूर्वान्तवद्भावेन प्रातिपदिकादेव सोर्विधानम्। डापोऽभावे 'मनः' इति ङीपो निषेधे च '**सीमा**' राजवद्रूपम्। ननु डापि तदभावे च '**सीमा**' इत्येव रूपं चेड्डाब्विधेः किं फलमित आह—'**सीमे सीमानौ**' इति।

उदाहरणान्तरमाह—**दामेति**। ददाति बन्धनं सुखं वेति 'दामन्' 'डुदाञ् दाने' इत्यतः 'सर्वधातुभ्यो मनिन्' ( उणा० ४ पा० १४५ सू० ) इति मनिप्रत्यये रूपम्।

**'न पुंसि दाम संदानं पशुरज्जुस्तु दामनी'**

( इत्य० २ का ९ वर्ग ७३ श्लो० ) शब्दस्तोममहानिधौ तु दोहनकाले 'पशुबन्धनरज्जौ, रज्जुमात्रे मालायाञ्च' इत्युक्तम्। डापि द्विवचने विशेषमाह – '**दामे, दामानौ**' इति। कोशे 'दामनी' इति प्रज्ञादित्वात्स्वार्थेऽण् स्त्रियाम् 'टिड्ढाण्' इति ङीबन्तम्। डापः फलमाह—' **बहुयज्वे, बहुयज्वानौ**' इति द्विवचनादौ विशेष इति भावः। एवम् बहुयज्वायै, बहुयज्वने इत्यादावपि डापः फलं ज्ञेयम्। 'न संयोगात्' इति उपधालोपनिषेधात् 'अन उपधा' इति न ङीप्। बहवो राजानो यस्याम् इति विग्रहे बहुराजन्शब्दात् 'अनो बहुव्रीहेः' इति ङीप्निषेधे, 'बहुराजानौ' इति, '**डाबुभाभ्याम्**' इति डापि 'बहुराजे' इति रूपसिद्धावपि ङीबन्तमपीष्यते। तत्सिद्धये आह—

'**अन उपधालोपिनोऽन्यतरस्याम्**' ( ४– –२८ ) इति। इदं सूत्रं नात्र प्रकरणेऽष्टाध्याय्यां पठितम्, किन्तु अन्नन्तबहुव्रीहिः प्रसङ्गादत्रोपन्यस्तम्। ननु 'अन उपधालोपिनः' इति सूत्रम् 'अनो बहुव्रीहेः' इत्यतः परं पठनीयम्, अनो ग्रहणं मास्तु 'उपधालोपिनो वा' इत्येवास्तु किं प्रकरणान्तरे पाठेनेति चेन्न, भाष्यकृता स्वयमेव 'उपधालोपिना वा' इति न्यस्य प्रकरणान्तरस्थसूत्रस्य प्रत्याख्यातत्वात्। परन्तु भाष्यकृदुक्तिश्चिन्त्या, प्रकरणान्तरे पाठे 'नित्यं संज्ञाछन्दसोः' इत्यत्र 'अन उपधालोपिनः' इत्यनुवर्त्तते। अत्रपाठे तु तत्रानुवृत्तिर्न स्यात्। न चात्रैव 'नित्यं संज्ञाछन्दसोः' इत्यपि पठनीयमिति वाच्यम्, 'केवलमामक' इति सूत्रेऽनुवृत्त्यनापत्तेरित्युपाध्यायाः।

अत्र 'बहुव्रीहेरूधसो ङीष्' ( ४–१–२५ ) इत्यतः 'बहुव्रीहे' इति 'संख्याव्ययादेर्ङीप्' ( ४–१–२६ ) इत्यतः 'ङीप्' इति चानुवर्तते। 'प्रातिपदिकात्' इत्यधिकृतम्। 'अनः' इत्यनेन विशेष्यते। विशेषणतया तदन्तविधिः। तदाह—**अन्नन्तादित्यादि**। **डाब्ङीब्निषेधाविति**—पक्षे डाप् ङीब्निषेधश्चेत्यर्थः।

बहुराज्ञी, बहुराजा। बहुराज्ञ्यौ, बहुराजे, बहुराजानौ।

*प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः।* [ ७-३-४४ ]

प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे, स आप् सुपः परो न चेत्। सर्विका। कारिका। अतः किम्-नौका। प्रत्ययस्थात् किम्-शक्नोतीति शका। असुपः किम्-

'अन्यतरस्याम्' इत्यस्य फलमिदम्। एतस्याभावे अनुपधालोपिनि 'बहुयज्वा' इत्यादौ चरितार्थस्य 'अनो बहुव्रीहेः' इति ङीप्प्रतिषेधस्य, 'डाबुभाभ्याम्' इति डापश्च उपधालोपिनि बहुराजशब्दादावनवकाशेन 'अन उपधालोपिनः' इत्यनेन ङीपा बाध एव स्यादिति **'बहुराजे बहुराजानौ'** इति न स्यात्। विकल्पेन बाधे तु तावपि भवतः। **बहुराज्ञीति**—ङीपि अल्लोपे 'हल्ङ्याप्' इति सोर्लोपे रूपम्। **बहुराजेति**—सौ ङीब्निषेधे डापि च 'राजा' इत्येव रूपमतो भेदप्रदर्शनायाह—**बहुराज्ञ्यावित्यादि**। औङि यणि च ङीपि रूपम्। **बहुराजे इति**—डाप्पक्षे औङः श्यादेशे गुणे च रूपम्। **बहुराजानाविति**—ङीब्निषेधपक्षे औङि उपधादीर्घे रूपम्। स्त्रीप्रत्ययप्रसङ्गात्प्रकरणादौ प्रथमविहिताब्निमित्तककार्य्यप्रदर्शनाय आह—

**'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः'** ( ७-३-४४ ) इति। सप्त पदानि। प्रत्ययस्थात्, कात्, पूर्वस्य, अतः, इत्, आपि, असुपः, इति। **ककारादिति**—कारप्रत्ययान्तेन विवरणात् कपदेन व्यञ्जनमात्रमत्र विवक्षितम्, 'वर्णात्कारः' इत्युक्तेः। कादित्यत्राकार उच्चारणार्थः। 'क' इत्यकारविशिष्टस्य ग्रहणे तु **'एतिका'** इत्यत्राकचि अकारस्योच्चारणार्थतया प्रत्ययस्थकशब्दाभावात्। 'पचति' इति तिङन्तात् 'तिङश्च' ( ५-३-५६ ) इत्यकचि 'पचतकि' इत्यादिसिद्धये ककारमात्रस्य विवक्षितत्वात्। वर्णमात्रविवक्षणे च स्थग्रहणं व्यर्थम्, ककाररूपप्रत्ययस्याभावेन प्रत्ययात्कादिति वचनसामर्थ्येनैव प्रत्ययस्थककारलाभात्।

तदुक्तं भाष्ये—'यदा हि वर्णग्रहणं तदा केवलः ककारः प्रत्ययो नास्तीति कृत्वा वचनाद्भविष्यति' इति। वचनादित्यस्य वचनसामर्थ्यादेव प्रत्ययस्थककारादित्यर्थः स्यादिति भावः। ननु स्थग्रहणाभावे 'प्रत्ययात् कात्' इत्युक्तौ कादित्यस्य प्रत्ययविशेषणतया तदन्तविधौ कान्तात्प्रत्ययात्पूर्वस्यात इदित्यर्थो न सम्भवेत्। तथा च **'सर्विका'** इत्यादौ सूत्रचारितार्थ्येन **'कारिका'** इत्यत्र इत्वं न स्यादिति स्थग्रहणमावश्यकमिति चेन्न, 'आशिषि वुनश्च न' इत्यस्य 'क्षिपकादीनाञ्च' इत्यस्य च वैयर्थ्यापत्त्या प्रत्ययादित्यस्य विशेषणत्वम्, कादित्यस्य विशेष्यत्वमिति ज्ञापनेनादोषात्। अत्र च पूर्वोक्तभाष्यमपि मानम्। ननु **'कारिका'** इत्यत्राकारेण व्यवधानादात्रव्यवहितककाराभावादित्वानापत्तिः।

न च सवर्णदीर्घस्य परादिवद्भावेनाप्त्वादावव्यवहितककार उपलभ्यत इति वाच्यम्, एकादेशेऽपि 'अचः परस्मिन्' इति स्थानिवत्त्वेनाप्परककारानुपलब्धेः। न च स्थानिवत्त्वेप्याप्परकत्वं ककारस्यास्त्येव व्यवधानेऽपि पूर्वपरभावदर्शनादिति वाच्यम्, 'तस्मिन्निति निर्दिष्टे' इति परिभाषयाऽव्यवहितककारस्यैवापेक्षणादिति चेन्न, आब्व्यवहितपूर्वककाराव्यवहितपूर्वस्येत्वविधानसामर्थ्यात् 'येन नाव्यवधानम्' इति न्यायेनाकारव्यवधानेऽपि तत्प्रवृत्तेः श्रौताव्यवधानस्यैव ग्रहणाद्वा। रथानां समूह इत्यर्थे 'इनित्रकट्यचश्च' ( ४-२-५१ ) इति कट्यच् प्रत्यये **'रथकट्या'** इत्यत्र तु नेत्वम्। अकारमात्रव्यवधाने चरितार्थस्य 'अस्य' व्यवधाने प्रवृत्तौ मानाभावात्। अत एव 'न यासयोः' इति निषेधः संगच्छते। अन्यथाऽकारव्यवधानेनेत्वाप्राप्त्या तद्वैयर्थ्यं स्यात्। तेन ज्ञापकेन 'क' इति संघातस्य ग्रहणमिति तु न 'एतिका' इत्यत्र प्रत्ययस्थस्य 'क' इति संघातस्याभावेनेत्वानापत्तेः।

न च 'येन नाव्यवधानम्' इति न्यायेनाकारमात्रव्यवधाने प्रवृत्तिस्वीकारे **'सर्विका'** इत्यादावेवेत्वं स्यात् **'एतिका'** इत्यत्र न स्यात्।

तथा हि—एतकच्छब्दात्सौ त्यदाद्यत्वे 'एतक अ सु' इति दशायाम् 'अतो गुणे' इति पररूपे 'एतक सु' इति जाते टापि 'एतक आ सु' इति दशायां सवर्णदीर्घे सोर्लोपे 'एतका' इत्यत्र परादिवद्भावेनाप्परकत्वेऽपि स्थानिवत्त्वेन अकारद्वयव्यवधानसत्त्वेनेत्वाप्राप्तेरिति वाच्यम्, सवर्णदीर्घस्य स्थानिवत्त्वे एकाकारस्यैव व्यवधानसत्त्वात्। पररूपैकादेशस्य स्थानिवत्त्वं तु न, लक्ष्ये लक्षणन्यायेन पुनः स्थानिवत्त्वाप्रवृत्तेः।

वस्तुतस्तु स्थानिवद्भावविषये लक्ष्ये लक्षणाप्रवृत्तिः। अत एव 'सुनयिका' इत्यादौ 'धात्वन्तयकोस्तु नित्यम्' इति वार्तिकं संगच्छते। अन्यथा 'नै' इत्यस्य धातुत्वाभावेन 'नय्' इत्यत्रापि धातुत्वाभावाद् धात्वन्तयकाराभावेनेत्वानापत्तिः। 'नै' इत्यस्य स्थानिवत्त्वेन धातुत्वं पुनः स्थानिवत्त्वेन 'नय्' इत्यस्य धातुत्वं मिति न क्षतिः। वार्तिकस्य न वैयर्थ्यम् 'आर्यिका' इत्यादौ चारितार्थ्यात्। टापा सह सवर्णदीर्घस्य स्थानिवत्त्वं विना पररूपादेशस्याभावेन स्थानिवत्त्वाप्राप्तेश्च।

यद्वा अकारमात्रव्यवधाने इत्यस्यात्वजात्यवच्छिन्नस्यैकस्यानेकस्य च व्यवधाने इत्यर्थः। अत्र 'न यासयोः' इति सूत्रमेव लिङ्गम्। अन्यथा तत्राप्युक्तरीत्या अकारद्वयव्यवधानसत्त्वेनेत्वाप्राप्त्या निषेधवैयर्थ्यं स्पष्टमेव। **आपि पर इति**—विधेयस्य यत्साक्षादुद्देश्यं तत्र यदि सप्तम्यन्तार्थस्यान्वयस्तत्रैव परिभाषोपतिष्ठते नानुवादे—न विधेयोद्देश्यविशेषणे सप्तम्यन्तार्थान्वये। यथा 'इको यणचि' इत्यत्रेकमुद्दिश्य यण् विधीयते। अतो यणः साक्षादुद्देश्यमिक्। तत्र 'अचि' इत्यर्थस्यान्वये 'तस्मिन्' इति परिभाषा उपतिष्ठते। यत्र तु उद्देश्यविशेषणेऽन्वयस्तत्र परिभाषा नोपतिष्ठते। यथा 'उदीचामातः स्थाने यकपूर्वायाः' इत्यत्र इत्वस्य साक्षादुद्देश्यम् 'अतः' इति तस्य विशेषणम् 'आतः' इति। अत्र 'षष्ठी स्थानेयोगा' इति परिभाषया स्थाने इत्यस्य लाभो न स्यात्, आत उद्देश्यविशेषणत्वात्। अतः पाणिनिना 'स्थाने' ग्रहणं कृतम् 'आतः स्थाने' इति।

तथा च प्रकृते यदि इत्वस्य साक्षादुद्देश्यम्—'अतः' इति। तत्र विशेषणं **कादिति**। अत्रोद्देश्यविशेषणे ककारे यदि आपीत्यस्यान्वयस्तदा 'तस्मिन्निर्दिष्टे' इति परिभाषया उपस्थितिर्न स्यात्। एवञ्च 'आपि परे यः ककारः' व्यवहितोऽव्यवहितो वा ततः पूर्वस्य अत इरित्यर्थे 'रथकस्या' इत्यत्रापीत्वापत्तिः। तस्मात् 'आपि' इति साक्षादुद्देश्यस्य 'अतः' इस्यस्य विशेषणम्-आपि परे यः ककारात्पूर्वः 'अत्' इति तस्मिन्निति परिभाषया आबव्यवहितपूर्वो यः ककारात्पूर्वोऽकारस्तस्येत्वमित्यर्थे यः ककाराव्यवहितपूर्वः स आबव्यवहितपूर्वो न स्यादिति सूत्रवैयर्थ्यात् 'येन नाव्यवधान'न्यायेन ककाराकारव्यवहितस्याप्यकाकारस्येत्वं स्यान्न तु 'रथकस्या' इत्यादावनेकव्यवधान इति प्राञ्चः।

**नागेशास्तु** आपीत्यस्य ककारे एवान्वयः। 'तस्मिन्निर्दिष्टे' इति परिभाषयोपस्थापितस्याव्यवहितत्वस्य ककारेऽन्वयात्, 'कात्' इति पञ्चम्या 'तस्मादित्युत्तरस्य' इत्युपस्थापिताव्यवहितत्वस्याकारेऽन्वय इति आबव्यवहितो यः ककारस्तदव्यवहितो योऽत् तस्येत्वम्। 'विधौ परिभाषोपतिष्ठते, नानुवादे' इति परिभाषा तु नास्त्येव। इको गुणवृद्धी, अचश्च, इत्यादौ विधेयसमर्पकगुणवृद्धिपदे, विधेयसमर्पकह्रस्वादिपदे लक्षणया न दोष इत्यन्यत्र विस्तरः। 'उदीचामातः स्थाने' इत्यत्र स्थानेग्रहणं तु स्पष्टार्थमेव। अत एव 'उदात्तस्वरितयोर्यणः' इत्यादौ, 'अल्लोपोऽनः' इत्यादौ च 'षष्ठी स्थानेयोगा' 'तस्मिन्निति निर्दिष्टे' इत्यादेरुपस्थित्या 'उदात्तस्थाने स्वरितस्थाने च यो यण्' इत्यर्थः, अजादिस्वादिपरो योऽन् तस्यातो लोप इत्याद्यर्थः संगच्छते। एवं 'संख्याव्ययादेर्ङीप्' इत्यत्रादिग्रहणम् 'द्विविधोध्नी' इति सिद्धये कृतम्।

यदि अनुवादे परिभाषाया अनुपस्थितिस्तदा 'संख्याव्ययात्' इत्युक्तेऽपि संख्याव्यययोरुद्देश्यविशेषणतयी 'तस्मात्' इत्यस्यानुपस्थित्या परत्वमात्रस्योपस्थितौ व्यवधाने चानङादेशे सिद्धे आदिग्रहणं व्यर्थमेव स्यादित्यन्यत्र विस्तरः।

वस्तुतस्तु 'षष्ठी स्थानेयोगा' ( १-१-४९ ) इति सूत्रे भाष्ये 'यद्यपि लोके बहवोऽभिसम्बन्धाः = आर्था यौना मौखा स्रौवाश्च । शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति । अन्यदतः स्थानात् शब्दस्यापि शब्देनाऽनन्तरादयोऽभिसम्बन्धाः । 'अस्तेर्भूः' भवतीति सन्देहः— स्थानेऽनन्तरे समीपे वेति । सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति । स्थाने इति व्याख्यास्यामः' ।

इत्येवं भाष्यकृता स्थाने-ग्रहणमुक्तरीत्या प्रत्याख्यातमेव । 'अस्तेर्भूः' इत्यादौ स्थानपदार्थनिरूपितसम्बन्धार्थकत्वं षष्ठ्या इत्यत्र 'स्थानिवदादेशः' इति, 'हलः' इत्यादिसूत्रकरणरूपं व्याख्यानं बोध्यम् । नच 'विधौ परिभाषोपतिष्ठते' इत्यस्याभावे वृद्धसंज्ञायाम् 'इको गुणवृद्धी' इत्यस्योपस्थित्या शालीयाद्यसिद्धिः, 'मालादीनाञ्च' ( ६-२-८८ ) सूत्रे 'प्रस्थेऽवृद्धम्' इति प्राप्तपर्युदासबाधनार्थं मालाग्रहणेन इक्परिभाषाया अनुपस्थितिज्ञापनात् विधेयताप्रयोजकवृद्धिपदघटिते एव तदुपस्थितेश्चेत्यदोषात् ।

**असुप इति**—नास्ति सुब्यस्याङ्गस्य तदिति न बहुव्रीहिः, 'बहुचर्मिका' इत्यादावित्वानापत्तेः। बहुचर्मकरूपाङ्गस्य प्रत्ययलक्षणेन लुप्तसुब्घटितत्वात् । 'न लुमता' इति निषेधस्तु न, लुप्तप्रत्ययाव्यवहितस्य कार्ये एव तत्प्रवृत्तेः । तस्मात् 'असुपः' इत्यत्रासामर्थ्येपि नञ्तत्पुरुषः । आप् सुपः परो न चेदिति प्रसज्यप्रतिषेधः । तदुक्तं भाष्ये-'असुप् इति कथमिदं विज्ञायते असुब्वतोऽङ्गस्येति, आहोस्विन्न चेत् सुपः पर आबिति । किञ्चातः ? यदि विज्ञायते असुब्वतोऽङ्गस्येति 'बहुचर्मिका' अत्र न प्राप्नोति । अथ चेद्विज्ञायते न सुपः पर आबिति न दोषो भवति' इति । समासान्ता इत्यत्र समासपदं समासार्थालौकिकविग्रहवाक्यपरम् । तथा च 'बहु जस् चर्मन् जस्' इत्यवस्थायां कपि 'बहु जस् चर्मन् जस् क' इति । ततः प्रातिपदिकत्वात्सुपोलुकि 'बहुचर्मक' इति । ततः स्त्रीत्वविवक्षायां टापि 'बहुचर्मिका' इति । अत्र प्रत्ययलक्षणेन सुपः परः कप् । ततः पर आप् सुप इति पञ्चम्याऽव्यवहितपरो यदा सुप आप् तदा इत्वं न । अत्र कपा व्यवधानान्न सुबव्यवहितपर आबिति निषेधाप्रवृत्त्या इत्वं सिध्यति न दोषः' इत्युक्तं भाष्ये। तदाह मूले—**स आप् सुपः परो न चेदिति**— इत्वविधौ परनिमित्तत्वेनोपात्तो य आप् स इत्यर्थः ।

सुपोऽव्यवहितपरस्मिन्नापि सतीत्वं नेत्यर्थः । **सर्विकेति**–सर्वशब्दात् टापि सवर्णदीर्घे पूर्वान्तवद्भावेन 'सर्वा' इत्यस्य सर्वनामत्वात् 'अव्ययसर्वनाम्नाम्' इति टेः प्रागकचि चस्येत्त्वे ककाराकारः 'पचत्कि' इत्यादिसिद्धये उच्चारणार्थः । सर्वका इति जाते ककारात्पूर्वस्य वकाराकारस्येत्वे 'सर्विका' इति । ननु ककारात्पूर्वस्याकारस्य आबव्यवहितपूर्वत्वाभावादित्वं न स्यादिति चेन्न, इत्वविधानसामर्थ्याद् 'येन नाप्राप्ते' इति न्यायेन तद्व्यवधानेऽपीत्वज्ञापनात् ।

**कारिकेति**—करोतेर्ण्वुलि वुनोऽकादेशे टापि दीर्घे इत्वे च रूपम् । दीर्घस्य स्थानिवत्त्वेनोकारव्यवधानत्वं तु न शङ्क्यम्, श्रौताव्यवधानस्यैवापेक्षितत्वात् । न च 'सर्विका' इत्युदाहरणदानानन्तरं 'कारिका' इत्युदाहरणदानं व्यर्थमिति वाच्यम्, कृतसन्धेस्तद्धितविधानात् सर्वशब्दात् टापि दीर्घे च कृतेऽकचि अकचोऽकारस्येत्वे कर्तव्ये दीर्घस्थानिभूतोऽच् 'अ आ' इति तदानीमकचोऽभावेन स्थानिभूतादचः पूर्वत्वेनादृष्टस्याकचोऽकारस्येत्वे कर्तव्ये दीर्घैकादेशस्य 'अचः परस्मिन्' इति स्थानिवत्त्वं न स्यात् । अत्र परादिवद्भावेनाव्यवहितककारात्पूर्वस्यात इत्वविधानेन चरितार्थं सूत्रं कारिकेत्यत्र स्थानिवद्भावेनाव्यवहितककाराभावादिति शङ्कानिवृत्तये 'कारिका' इत्युदाहरणमित्याशयात् । न चात्र व्यवधाने कथमित्वम् 'क्षिपकादीनाञ्च' इति निषेधसामर्थ्यनैकवर्णव्यवधानेऽपीत्वज्ञापनात् ।

**नौकेति**—नौशब्दात् 'अज्ञाते' ( ५-३-७३ ) इति अज्ञाता नौरित्यर्थे स्वार्थे के 'अतद्धिते' इति पर्युदासेन कस्येत्त्वाभावे टापि 'नौका' अत्र 'अतः' इत्यस्याभावे औकारस्यापीत्त्वं तद्वारणाय

बहुपरिव्राजका नगरी। कात् किम्-नन्दना। पूर्वस्य किम्-परस्य मा भूत्। कटुका। अत

'अतः' इति। स्वार्थकप्रत्ययान्ते 'नदिका, तनुका' इत्यादौ दोषसम्भवे 'नौका' पर्य्यन्तमनुधावनं व्यर्थमिति चेन्न, प्रसिद्धत्वेन तस्यैव प्रथमोपस्थितेः।

शकेति—'शक्लृ शक्तौ' इत्यतः पचाद्यचि टापि 'शका' इति। अत्र प्रत्ययावयवककाराभावान्नेत्वम्। न च 'मामकनरकयोरुपसंख्यानम्' इतोत्वविधानपरकवार्त्तिकारम्भसामर्थ्यादप्रत्ययघटकककारात्पूर्वस्यात इत्वं चेत्तर्हि मामकनरकयोरेवेति नियमात् 'शका' इत्यत्र नेत्वमिति वाच्यम्, सूत्रनिर्माणकाले वार्तिकस्यासत्त्वेन सूत्रे तादृशनियमस्य वक्तुमशक्यत्वात्। बहुपरिव्राजकेति—परित्यज्य सर्वं व्रजन्ति वनादिकं ये इत्यर्थे 'व्रज गतौ' इत्यतो ण्वुलि अकादेशे 'परिव्राजक' इति। ततो बहवः परिव्राजका यस्यां नगर्य्यां सा, बहुपरिव्राजका। 'बहु जस् परिव्राजक जस्' इति दशायां बहुव्रीहौ द्वयोर्जसोः समासावयवत्वेन 'सुपो धातु' इति लुकि टापि 'बहुपरिव्राजका' इति। अत्र प्रत्ययलक्षणेन सुपं जसमादाय ततः परः टाप् इति आपः सुपः परत्वान्नेत्वम्।

'न लुमता' इति प्रत्ययलक्षणप्रतिषेधस्तु लुप्यमानप्रत्यये परे यत्कार्य्यं तत्रैव निषेधप्रवृत्तेः। इदं च सुपः परो य आप् तस्मिन् परे इत्वं नेति नञः प्रसज्यप्रतिषेधे फलम्। यदि पर्य्युदासः स्यात्तदा सुब्भिन्नात्परो य आप् तस्मिन् परे इत्वमित्यर्थः स्यात्। तथा च प्रकृते—सुब्भिन्नः सुबन्ततदादिभिन्नश्च 'बहुपरिव्राजक' इति ततः परे आपि परे इत्वं स्यात्तद्वारणाय पूर्वोक्तरीत्या प्रसज्यप्रतिषेध एवाश्रयणीयो न तु पर्य्युदासः। नन्दनेति—नन्द्यादित्वात् ल्युः, अनादेशे च तत्सिद्धिः।

पूर्वस्य किमिति—टापि सवर्णदीर्घे 'कात्' इति श्रुत्या 'तस्मात्' इति परिभाषया परत्वस्योपस्थितिर्न स्यात्। ह्रस्वाकारस्य दीर्घेणापहारात् कात्परस्य ह्रस्वाकारस्याभावात् आनन्तर्य्यमात्रस्योपस्थित्या ककारानन्तरो यो ह्रस्वाकारस्तस्येत्वमित्यर्थे पूर्वस्यैवेत्वं स्यादित्याशयेन पृच्छति—**पूर्वस्य किमिति। परस्य मा भूत्कटुकेति।** अयम्भावः—पूर्वस्येत्यभावे 'कात्' इति पञ्चमीश्रुत्या 'तस्मादित्युत्तरस्य' इति परिभाषया अव्यवहितत्वम्, उत्तरत्वम्, विधेयान्वयी षष्ठ्यर्थश्चोपस्थाप्यते। तथा च प्रत्ययस्थात्ककारादव्यवहितोत्तरस्य ह्रस्वाकारस्येत्वं स्यादित्यर्थे कटुकशब्दात् टापि 'कटुक आ' इति स्थितावन्तरङ्गमपि सवर्णदीर्घं 'वार्णादाङ्गं बलीयः' इति न्यायात्, येन नाप्राप्तिन्यायेनापवादत्वाच्च सवर्णदीर्घं बाधित्वा इत्वं स्यात्। नन्वेवं 'सर्विका' इत्यत्रैव 'सर्वक आ' इति दशायां कादुत्तराकारस्येत्वापत्तिरूपदोषसत्त्वेन 'कटुका' इत्यत्र दोषदानानुधावनं निष्फलमिति चेन्न, 'नित्यं क्रीडाजीविकयोः' इति निर्देशेन, 'बहुचर्मिका' इत्यादिभाष्यप्रयोगेण च 'प्रत्ययस्थात्' इति सूत्रे 'तस्मात्' इति परिभाषाया अप्रवृत्तिज्ञापनात्। न च 'कात्' इति निर्देशानुपपत्तिः, तन्निर्देशोपपत्तये दिग्वाचकपदाकाङ्क्षायां पूर्वस्येत्यस्याध्याहर्तुं शक्यत्वात्।

न च 'परस्य' इत्यस्याध्याहारेणापि पञ्चम्युपपत्तिः, परस्येत्यस्याध्याहारे इत्वविधायकस्य सवर्णदीर्घापवादत्वकल्पने दीर्घविधायकशास्त्रबाधकल्पने च गौरवेण पूर्वस्येत्यस्याध्याहारे लाघवात्। यत्र प्रयोगे पूर्वस्यातोऽभावस्तत्र परस्याध्याहारेण परत्वात्सवर्णदीर्घं बाधित्वेत्वं स्यादिति कटुकापर्य्यन्तमनुधावनं नायुक्तम्।

न चात्र टाप्परत्वाभावः, परादिवद्भावेन तत्परत्वस्य सत्त्वात्। यत्तु अदन्तादेव टापो विधानेन 'तस्मात्' इत्यस्य प्रवृत्तौ 'अतः' इत्यस्य वैयर्थ्यापत्त्या पूर्वस्यैवेत्वं ज्ञाप्यत इति तन्न, भवतुशब्दात्तिङन्तात् 'तिङश्च' इत्यकचि 'भवतकु' इत्यस्य, अ इवाचर 'अ' इत्यनेन हि लुगन्तेन 'आख्यातमाख्यातेन' इत्यनेन भवतकु—अ यस्यां क्रियायां सततमाख्यायते सा 'भवतक्वा' क्रिया इत्यत्र ककारात्परस्य वस्येत्ववारणाय अत इत्यस्य चारितार्थ्येनोक्तार्थज्ञापनासम्भवात्।

इति तपरः किम्–राका। आपि किम्–कारकः। 'मामकनरकयोरुपसंख्यानम्'। मामिका। नरान्कायतीति नरिका।

---

न च 'अतः' इत्यत्र तपरकरणवैयर्थ्येन पूर्वस्येत्यस्य लाभः, 'भविता' इति तिङन्तादकचि 'भवितका' इत्यत्र 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति ककाराकारस्य प्लुतत्वे 'अ' इति तिङन्तेन भवितका अ यस्यां क्रियायामित्यर्थे समासे प्लुतत्वात्प्रकृतिभावे दीर्घाप्रवृत्त्या टापि पराकारस्य टापा सह दीर्घैकादेशे परादिवद्भावेनाप्परत्वात् प्लुताकारस्येत्ववारणाय तपरकरणस्यापि चारितार्थ्येन तद्वैयर्थ्येन पूर्वस्येत्यस्य लाभासम्भवात्। न च प्रकृतिभावेनेत्वस्यापि बाधान्नैतत्तपरफलमिति वाच्यम्, 'संहितायाम्' इत्यधिकारे प्रकृतिभावेन संहिताधिकारीये कार्य्ये एव तत्प्रवृत्तेः।

वस्तुतस्तु 'पूर्वस्य किम्? सर्विकेत्यादौ टाबेकादेशं बाधित्वा परस्य मा भूत्' इति मनोरमा-पर्य्यालोचनया कौमुद्यां 'पूर्वस्य किं परस्य मा भूत् कटुका' इति प्रत्युदाहरणं प्रक्षिप्तम्, मूलेऽनुक्तस्थले एव टीकायां प्रत्युदाहरणदानस्य ग्रन्थकारशैलीसिद्धत्वात् 'नित्यं क्रीडाजीविकयोः' इति सौत्रनिर्देशेन खण्डने तु बहूपप्लवापत्तिरित्यलं विस्तरेण। वस्तुतस्तु 'प्रत्ययस्य किं' इति न्यस्य पूर्वस्य ग्रहणं त्यक्तुं शक्यम्। यद्वा कात्परस्येत्यर्थे 'उदीचामातः स्थाने' इति सूत्रे कग्रहणवैयर्थ्यापत्त्या कात्पूर्वस्ये-त्यर्थलाभे पूर्वस्येति स्पष्टार्थमेव। **राकेति**—रा दाने इत्यतः 'कृदाधारार्चिकलिभ्यः कः' ( उणा० ३ पा० ४० सू० ) इति कप्रत्ययः। राति—ददाति प्रकाशमिति राका पूर्णिमा नदीविशेषो वा। अत्र 'लशक्व' इति ककारस्येत्त्वम् 'केऽणः' ( ७–४–१३ ) इति ह्रस्वत्वञ्च न, 'उणादयो बहुलम्' ( ३–३–१ ) इत्यत्र बहुलग्रहणात्। तदुक्तं भाष्ये—

'बाहुलकं प्रकृतेस्तनुदृष्टं कार्य्यमशेषविधेश्च।
नैगमरूढिभवं हि सुसाधु नाम च धातुजमाह निरुक्ते॥ इति।

व्याकरणे शकटस्य च तोकम्' इति 'अशेषविधेश्च कार्य्यं बाहुलकात्सिद्धमित्यर्थः। संज्ञा-पूर्वकविधेरनित्यत्वाद्वा ह्रस्वाभावः। अत्र ककारात्पूर्वस्य दीर्घाकारस्येत्वाभावाय तपरकरणमित्यर्थः। 'पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा। कलाहीने सानुमतिः पूर्णे राका' इत्यमरः ( १ का-४ वर्ग श्लो० ७,८ )। कलाहीनचन्द्रवती शुक्लचतुर्दशीयुक्तपूर्णिमा 'अनुमतिः' इत्युच्यते। कलापूर्णे चन्द्रे 'राका' इति।

**कारक इति**—ननु 'युवोरनाकौ' इत्यत्र 'अनेकौ' इति वक्तव्ये तत्राकारोच्चारणसामर्थ्यादित्वं न स्यादिति चेन्न, 'जीवका' 'भवका' इत्यादावित्वस्य 'आशिषि वुनश्च न' इति निषेधेन 'अक' इत्यकारस्य चारितार्थ्यात्। किञ्च 'अक' इत्यादेशेऽकारोच्चारणसामर्थ्यादित्वाभावकल्पने 'कारिका' इत्यत्रापीत्वानापत्तिः।

**मामकनरकयोरिति**—मामकनरकयोरापि परे कात्पूर्वस्यात इत्वमिति वक्तव्यमुपसंख्यानम्। संख्यायते—शाप्यते साधुशब्दोऽनेनेति संख्यानम्—सूत्रम्, तस्य समीपे उपसंख्यानम्—सूत्रस्य समीपे इत्यर्थः। तथा च यत्र सूत्रार्थे एव विशेषार्थप्रदर्शनं तत्र 'वक्तव्यम्' इत्युच्यते यत्र स्वातन्त्र्येण सूत्रविषये बोधनं तत्र 'उपसंख्यानम्' इत्युच्यते।

**मामिकेति**—ममेयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ्च' ( ४–३–१ ) इत्यनेन अस्मद् ङस् इत्यतः चादणि, 'तवकममकावेकवचने' ( ३–३–३ ) इति 'अस्मद्' इत्यस्य ममकादेशे तद्धितान्तत्वात्प्रातिपदिकत्वे 'सुपो धातु' इति ङसो लुकि आदिवृद्धौ टापि ककारात्पूर्वस्येत्वे '**मामिका**' इति। अणन्तत्वात् 'टिड्ढाणञ्' इति ङीप् तु न, 'केवल' इति सूत्रे मामकशब्दात् ङीप् चेत्तर्हि संज्ञाछन्दसोरेवेति नियमादिति वक्ष्यते। तेन लोकेऽसंज्ञायाम् 'मामिका' टाबन्त एव। **नरिकेति**—नरान् कायति = शब्दायते या इत्यर्थे 'कै शब्दे इत्यतः 'आदेचः' इति कृतात्वकात् 'आतोऽनुपसर्गे'

'त्यक्त्यपोश्च'। दाक्षिणात्यिका। इहत्यिका।

*न यासयोः।* [ ७-३-४५ ]

यत्तदोरस्येन्न स्यात्। यका। सका। यकाम्। तकाम्। 'त्यकनश्च निषेधः' उपत्यका। अधित्यका।

इति प्रत्यये कस्येत्त्वे 'आतो लोप इटि च' ( ६-४-६४ ) इत्यालोपे उपपदसमासे टापि रूपम्। उभयत्र ककारस्य प्रत्ययस्थत्वाभावादप्राप्तौ वचनम्। यस्तु निरयवाची नरकशब्दः स पुंस्येव। 'नरकः पुंसि निरये देवारातिप्रदेशयोः' इति मेदिनी।

**'त्यक्त्यपोश्च'** इति। त्यगन्तस्य त्यबन्तस्य च कात्पूर्वस्य आत्स्थानिकस्याकारस्येत्वमापि परे उपसंख्यानं वक्तव्यम्। **दाक्षिणात्यिकेति**—दक्षिणस्यामदूरे या वसतिरूपो देशः सा इत्यर्थे आबन्ताद्दक्षिणाशब्दात् 'दक्षिणादाच्' ( ५-३-३६ ) इत्याच्प्रत्ययः। नच सूत्रे दक्षिणशब्दस्य ग्रहणात् दक्षिणेति टाबन्तादाच् न स्यादिति वाच्यम्, पूर्वान्तवद्भावेन तस्यापि दक्षिणशब्दत्वात्। 'दक्षिणा ङि आच्' तद्धितान्तत्वेन प्रातिपदिकत्वात् ङेर्लुकि 'यस्येति च' इत्यालोपे 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञायाम् ततः 'तत्र भवे'त्यर्थे 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यकि आदिवृद्धौ अज्ञातार्थे स्वार्थे के 'केऽणः' इति ह्रस्वे टापि ककारात्पूर्वस्य आत्स्थानिकस्येत्वे 'दाक्षिणात्यिका' इति मनोरमाकारः। आच्प्रत्ययान्तादेवाव्ययात्त्यकन् वार्त्तिके पश्चादव्ययसाहचर्येणाव्ययस्यैव 'दक्षिणा' शब्दस्य ग्रहणादिति तदाशयः।

एतेन टाबन्ताद् दक्षिणाशब्दात् त्यकन्निति परास्तम्। किञ्च सर्वनाम्नो दक्षिणाशब्दात् त्यग्विधाने 'सर्वनाम्नो वृत्तिमात्रे पुंवद्' इति पुंवद्भावापत्तिरिति 'दाक्षिणत्यिका' इति स्यात्।

**इहत्यिकेति**—अस्मिन् देशे इत्यर्थे सप्तम्यन्तादिदम्शब्दात् 'इदमो हः' इति हप्रत्यये 'इदम इश्' ५-३-३ ) इति इशादेशे 'इह' 'तद्धितश्च' इत्यव्ययत्वात् 'अव्ययात् त्यप्' इति भव. इत्यर्थे त्यपि टापि स्वार्थे के 'केऽणः' इत्यापो ह्रस्वे टापि कात्पूर्वस्यात्स्थानिकस्येत्वे 'इहत्यिका' इति। अनयोः 'उदीचामातः स्थाने' इति विकल्पेनेत्वे प्राप्ते तदपवादत्वान्नित्येत्वविधानार्थमिदम्।

**'न यासयोः'** ( ७-३-४५ ) इति। या, सा इति प्रथमान्तानुकरणात् षष्ठी। स्त्रीत्वविशिष्टार्थोपस्थितये तथा निर्देशः। वस्तुतस्तु स्त्रियामेवेत्त्वप्राप्त्या तथा निर्देशस्य न फलम्। प्रत्युत प्रथमान्ते एव निषेधः स्यादिति शङ्कावारणायाह—**यत्तदोरिति**। तदुक्तं भाष्ये—'न यत्तदोरिति वक्तव्यम्। इहापि यथा स्यात्। यकामधीते, तकां पचामहे' इति। तस्माद्यत्तदोरुपलक्षणमिदम्। 'न यत्तदोः' इत्येव सूत्रयितुमुचितम्। 'प्रत्ययस्थात्' इति सूत्रमनुवर्त्तते। एवञ्च प्रत्ययस्थात्कात्पूर्वस्य यत्तदोरस्येत्वं न आपि परे इत्यर्थः। **यका, सकेति**—यत्तदोष्टेः प्राक् 'अव्ययसर्वनाम्नाम्' इत्यकचि सौ त्यदाद्यत्वे पररूपे टापि इत्वनिषेधे तच्छब्दे 'तदोः स सौ' इति तकारस्य सकारे सुलोपे च रूपम्। सूत्रे 'या सा' इत्यस्य यत्तदोरुपलक्षणत्वे फलमाह—**यकाम्, तकामिति**—प्रथमान्तस्यैव ग्रहणे त्वत्र न स्यादिति भावः।

**त्यकनश्च निषेध** इति—त्यकन्प्रत्ययान्तस्य प्रत्ययस्थात्कात्पूर्वस्यात इत्वं नेति वक्तव्यमित्यर्थः। **उपत्यका अधित्यकेति**—उपशब्दादधिशब्दाच्च आसन्ने आरूढे चार्थे 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' ( ५-२-३४ ) इति त्यकन्संज्ञायां गम्यमानायाम्। एतेन आसन्नमात्रे आरूढमात्रे न प्रत्यय इति ध्वनितम्। आसन्नं समीपम् आरूढम्, उच्चस्थानम् पर्वतस्यैव ननु यस्य कस्य। त्यकनि टापि इत्वनिषेधे रूपम्। 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः ( २ का० ३ व० ७ श्लो० ) इति।

'आशिषि वुनश्च न'। जीवका। भवका। 'उत्तरपदलोपे न'। देवदत्तिका, देवका। 'क्षिपकादीनां च न'। क्षिपका। ध्रुवका। कन्यका। चटका।

---

ननु संज्ञायाम् उपत्यकाशब्दः, अधित्यकाशब्दश्च नित्यस्त्रीलिङ्गः। तथा च प्रक्रियालाघवात् 'त्यिकन्' इत्येव त्यकन्नित्यत्राकारोच्चारणसामर्थ्यादेवेत्वं न स्यादिति वार्तिकं व्यर्थमिति चेन्न, त्यकनोऽकारोच्चारणस्य 'पञ्चोपत्यकः' इत्यत्र चारितार्थ्यात्। तथा हि–पञ्चभिरुपत्यकाभिः क्रीत इत्यर्थे 'तेन क्रीतम्' इति ठकि 'अध्यर्द्धपूर्वात्' इति द्विगोः परत्वात् ठको लुकि तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुगित्यर्थकेन 'लुक् तद्धितलुकि' इत्यनेन टापो लुकि भाविनि 'अन्तरङ्गानपि बहिरङ्गो लुग्बाधते' इति न्यायात्तत्र 'प्रत्ययस्थात्' इत्वं न स्यात्। एवञ्चाकारोच्चारणे 'पञ्चोपत्यकः' इत्येव भवति। त्यिकनि कृते तु तत्रापि 'पञ्चोपत्यिकः' इत्यापद्येत। अकारोच्चारणसामर्थ्येनेत्वं न स्यादिति कल्पयितुमशक्यत्वात्। अत्रान्तरङ्गानपीति न्यायेन 'पञ्चोपत्यक आ' इति दशायां सवर्णदीर्घोऽपि न भवति। अन्यथा दीर्घे कृते परादिवद्भावेन कृतदीर्घस्य टापो लुकि 'पञ्चोपत्यक्' इति हलन्तमापद्येत। लुग्विषयेऽन्तरङ्गाप्रवृत्तेरेव 'सनीस्रंस्ति' इति यङ्लुकि 'अनिदिताम्' इति नलोपो न।

**आशिषीति**—आशिषि यो वुन् तदकारस्य कात्पूर्वस्यापीत्वं नेति वक्तव्यमित्यर्थः। **जीवकेति—भवकेति च**—'जीवतात्, भवतात्' इत्यर्थे 'आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरी'त्यर्थकेन 'आशिषि च' ( ३–१–१५० ) इत्यनेन जीवधातोर्भूधातोश्च वुन्प्रत्यये वुनोः 'युवोरनाकौ' इत्यकादेशे भूधातोर्गुणे टापि रूपम्। अनयोः 'प्रत्ययस्थात्' इति प्राप्तस्येत्वस्य निषेधः। 'उत्तरपदलोपे न' वा० उत्तरपदलोपे सतीत्वं नेति वक्तव्यमित्यर्थः। **देवकेति**—अनुकम्पिता देवदत्ता इत्यर्थे 'अनुकम्पायाम्' ( ५-३ ७६ ) इति स्वार्थे के 'अनजादौ च विभाषा लोपो वक्तव्यः' अनुकम्पायामिति प्रकरणे हलादावुत्तरपदे सति विभाषा तस्य लोपो वक्तव्य इत्यर्थः। इति दत्तशब्दस्य लोपे टापि इत्वनिषेधे 'देवका' इति। लोपाभावे इत्वे 'देवदत्तिका' इति। इदं नोदाहरणम्। किन्तु 'देवका' इत्यत्र दत्तरूपोत्तरपदस्य लोप इति द्योतनाय। अत्र दत्तशब्दस्य लोप इति प्रदर्शनायोक्तम्।

**'क्षिपकादीनाञ्च'** इति। क्षिपकादीनाञ्चेत्वं नेति वक्तव्यमित्यर्थः अत्र आदिशब्दः प्रकारार्थकः। **क्षिपकेति**। 'क्षिप प्रेरणे' इत्यतः 'इगुपध' ( ३–१–१३५ ) इति कप्रत्यये कित्त्वात् लघूपधगुणनिषेधे क्षिपति या क्षिपा ततोऽज्ञानार्थे के टापि इत्वाभावः। **ध्रुवकेति**—ध्रुव स्थैर्य्ये इति भौवादिकात् इगुपधलक्षणे के कित्त्वाद् गुणाभावे ध्रुवा, यद्वा 'ध्रु गतिस्थैर्य्ययोः' इति तौदादिकात्पचाद्यचि 'गाङ्कुटादिभ्यः' ( १–२–१ ) इति अच्प्रत्ययस्य ङित्वातिदेशेन **'क्ङिति च'** (१–१–५) इति गुणनिषेधे 'अचि श्नुधातुभ्रुवां' इत्युवङि ध्रुवा इति। ततोऽज्ञातादौ स्वार्थे के **'केऽणः'** इति टापो ह्रस्वे कप्रत्ययान्तात्पुनः टापि 'ध्रुवका' अत्रेत्वं न। स्थायिकेत्यर्थः।

**कन्यकेति**—'कनी दीप्तिकान्तिगतिषु' इति भौवादिकात् कनधातोः 'अघ्न्यादयश्च' ( उणा० ४ पा० ११२ सू०) यक्प्रत्यये कनति—दीप्यते या इत्यर्थे टापि कन्या इति। ततोऽज्ञातादौ स्वार्थे के पूर्वस्यापो ह्रस्वे टापि कन्यका इति अत्रेत्वं न। कन्यकाशब्दो न हि भाष्ये क्षिपकादौ पठितः। आकृतिग्रहणस्योदाहरणमिदम्। शेखरे 'ध्रुवका' इत्याकृतिग्रहणोदाहरणं चिन्त्यम्, भाष्ये क्षिपकादौ पाठात्। **चटकेति**—'चट भेदने' इति चौरादिकण्यन्तात्पचाद्यचि णिलोपे टापि 'चाटा' इति। ततः स्वार्थे के आपो ह्रस्वे 'चाटका' इति। क्षिपकादिषु पाठेन निपातनात् णिञ्निमित्तकवृद्धिनिष्पन्नाकारस्य ह्रस्वे अजादित्वात्पुनष्टाप्। 'चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयोः। पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव सा॥' ( इत्यम० २ का० ५ वर्ग० १८ श्लो० ) चटकस्य चटकाया वा अपत्यम्पुमांश्चेत्तदा 'चटकाया ऐरक्' ( ४–१–२८ ) इत्यैरक् 'चाटकैरः' स्त्र्यपत्ये 'स्त्रियां लुग्वक्तव्यः' इत्यैरको लुकि अजादित्वात् टाप् 'चटका' इति। अत्र क्षिपकादित्वादित्त्वनिषेधः। क्षिपकादिराकृतिगणस्तेन **'अलका' 'इष्टका'** इत्यादि सिध्यति।

**'तारका ज्योतिषि'** अन्यत्र तारिका। **'वर्णका तान्तवे'** अन्यत्र वर्णिका। **'वर्तका शकुनौ प्राचाम्'** उदीचां तु वर्तिका **'अष्टका पितृदेवत्ये'**। अष्टिकान्या।

---

**'तारका ज्योतिषि'** इति वार्तिकम्। ज्योतिरर्थे विवक्षिते 'प्रत्ययस्थात्' इतीत्वाभावो निपात्यते। 'तॄ प्लवनसंतरणयोः' इत्यतो ण्वुलि टापि रूपम्। **'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा-स्त्रियाम्। दाक्षायण्योऽश्विनीत्यादिदितारा:'** ( इत्यमरः १ का० ३ वर्ग० श्लो ) अश्विन्यादिसप्त-विंशतितारा दाक्षायणीपदवाच्याः। अन्यत्र **तारिकेति**—ज्योतिषोऽन्यत्र 'तारिका'=संतरणकर्त्रीत्यर्थः। अक्ष्णोः कनीनिकाऽपि ज्योतिःशब्देनोच्यते। तथा चामरः - **'कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका'** इति। (२ का० ६ वर्ग० ९३लो०) अक्ष्णोर्मध्यगतं कृष्णमण्डलमपि 'तारका' इत्युच्यते। **'वर्णका तान्तवे'** वार्त्तिकमिदम्। 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' इत्यतश्चौरादिकात् ण्वुलि वर्ण्यते=विस्तीर्य्यते या सा **वर्णका**। तन्तूनां विकारस्तान्तवम्। तन्तुशब्दात् 'ओरञ्' इत्यञ्। प्रावार-विशेषो 'वर्णका'। यद्वा वर्णयति = आच्छादयति या सा कर्तरि ण्वुल्। अन्यत्र स्तुतिकर्त्र्यादौ **'वर्णिका'** इत्वं भवत्येव। 'वर्णिका भागुरी लोकायतस्य' इति भाष्यकारः। भागुरी टीकाविशेषो लोकायतस्य ( बौद्धस्य ) **'वर्तका शकुनौ प्राचाम्'** वा० शकुनौ पक्षिणि वाच्ये 'वर्तका' इत्यत्रेत्वं न भवति। 'वृतु वर्त्तने' इत्यतो णिचि ततो ण्वुलि अकादेशे णिलोपे स्वार्थेऽज्ञातादौ के टापि रूपम्। शकुनेरन्यत्रार्थे नित्यमित्वम्। वर्त्तिका = जीवनकर्त्री। **'कोयष्टिकष्टिट्टिभको एवमेवामस्पाठः वर्तको वर्तिकादयः'** ( इत्यमरः २ का० ५ वर्ग० ३५ श्लो० ) इति चित्रपक्षः पक्षिभेदो वर्तकः— बतक इति प्रसिद्धः। उदीचां तु—**'वर्तिका'** = वनचटका।

**अष्टका पितृदेवत्ये इति।** पितरश्च ता देवताः पितृदेवताः कर्मधारयः। तदर्थं कर्म इत्यर्थे **'देवतान्तात्तादर्थ्ये'** ( ५-४-२४ ) शास्त्रविहिते कर्मणि दीयमानद्रव्योद्देश्यत्वम्, मन्त्रस्तुत्यत्वं वा देवतात्वम्। तदर्थमेव तादर्थ्यम् स्वार्थे ष्यञ्। तदर्थकर्मणीत्यर्थः। पित्रर्थे कर्मणि श्राद्धादौ **अष्टका** इत्यत्रेत्वं नेत्यर्थः। अश्नन्ति—भुञ्जते ब्राह्मणाः पित्रर्थम्—पितृपकृतये यस्यां क्रियायां यस्यां तिथौ वा सा 'अष्टका' 'अश भोजने' इत्यतः 'इष्यशिभ्यां तकन्' ( उणा० ३ पा० १४८ सू० )। तक-न्प्रत्यये षत्वे ष्टुत्वे टापि रूपम्।

**'अष्टका तु समाख्याता सप्तम्यादिदिनत्रयम्'**

इत्युक्तलक्षणे सप्तम्यादित्रये। पौषमाघफाल्गुनानां कृष्णाष्टम्याम् च उक्ततिथिविहितश्राद्ध-श्चाष्टका। **अष्टिकान्येति**—अष्टौ अध्यायाः प्रमाणमस्या इति **'अष्टिका'** पाणिनीया अष्टाध्यायी। **'अष्टन् जस्'** इति सुबन्तात् प्रमाणेऽर्थे वर्तमानात् त्यन्तशदन्तभिन्नात् संख्यावाचकात् अस्येति षष्ठ्यर्थे कन् इत्यर्थकेन 'संख्याया अतिशदन्तायाः कन्' इति कनि तद्धितान्तत्वात्प्रातिपदिकत्वेन जसो लुकि प्रत्ययलक्षणेन जसमाश्रित्य सुबन्तत्वात् 'सुप्तिङन्तम्' इति कन्प्रत्ययमाश्रित्य 'स्वादिषु' इति वा अष्टन् इत्यस्य पदत्वे नलोपे टापि इत्वे च **'अष्टिका'** इति। भाष्ये तु **'अष्टिका खारी'** इत्युक्तम्।

वस्तुतस्तु 'अष्टावध्यायाः प्रमाणमस्या' इति विग्रहेऽष्टशब्दस्य संख्येयवाचकत्वेन कन् न स्यादतो भाष्योक्तम्-'अष्टिका खारी' इत्येव युक्तम्। अत्र अष्टसंख्याः परिमाणमस्याः खार्या इत्यष्टिका-अष्टत्वसंख्याविशिष्टेत्यर्थः। न च लुप्यमानसुपः प्रत्ययलक्षणेनापः सुपः परतयेत्वं न स्यादिति वाच्यम्, सुबव्यवहितोत्तरे आप्येव 'असुपः' इति निषेधप्रवृत्तेः। प्रकृते ककारेण व्यवहितत्वान्निषेध-विषयत्वाभाव एव। येन नाव्यवधानमिति न्यायस्य 'बहुपरिव्राजका' इत्यादौ सुपोऽव्यवहिते आपि निषेधस्य चरितार्थतया विषयतैव न।

अत एव 'क्षिपकादीनाञ्च' इत्यस्य वैयर्थ्यम्। अन्यथा क्षिपाशब्दात् सुबन्तात् स्वार्थे के टापि अन्तर्वर्तिविभक्त्या सुपः परककारेणापो व्यवहितत्वेऽपि परत्वानपायात् 'असुपः' इति निषेधेनैव सिद्धे

'सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्' इह वा अ इति छेदः। कात्पूर्वस्याकारादेशो वेत्यर्थः। तेन पुत्रिकाशब्दे ङीनः ईवर्णस्य पक्षेऽकारः। अन्यत्रेत्वबाधनार्थमकारस्यैव पक्षेऽकारः सूतका, सूतिका, इत्यादि।

*उदीचामातः स्थाने यकपूर्वायाः।* [ ७-३-४६ ]

यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे।

---

तद्वैयर्थ्यं स्पष्टमेव। 'वा सूतकापुत्रिकावृन्दारकाणामुपसंख्यानं कर्तव्यम्' इति भाष्यस्थं वार्तिकमर्थतः पठति— **सूतकेति**· अत्र पुत्रिकाशब्द इकारघटित एव न त्वकारघटितः, पुत्रशब्दस्य शार्ङ्गरवादौ पाठेन 'शार्ङ्गरवादिभ्यो ङीन्' इति स्त्रियां ङीनो दुर्वारत्वात्। अत्र विकल्पेनेत्त्वभ्रमं वारयति—वा; अ, इति च्छेद इति—सवर्णदीर्घेण 'वा' इति निर्देशः। अत एव पुत्रिकाशब्दस्य पाठः संगच्छते। अन्यथा 'पुत्रिका' शब्दे कात्पूर्वस्याकारस्याभावेनेत्वाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। अत एव वृत्तौ 'कात्पूर्वस्याकारादेशो वा' इत्येवोक्तं न त्वकारस्येत्वमिति।

भाष्यकृता च आदावेव 'वा सूतका' इत्युपन्यस्तम्। न तु 'वृन्दारकाणां वा' इति। **'पुत्रका पुत्रिका'** इत्युदाहृतञ्च। अत्र 'अ' इति सौत्रत्वाल्लुप्तप्रथमाकम्। कात्पूर्वस्य इत्यनुवर्तते। 'अतः' इति नानुवर्त्तते, पुत्रिकाशब्दे बाधात्। नन्वत्रेत्वविकल्प एव कुतो नेत्याह **तेनेति**—अत्वविधानेनेत्यर्थः। 'प्रत्ययस्थात्' इतीत्वबाधनार्थं सूतकादावकारस्य विकल्पेनाकारविधानम्। **पुत्रिकाशब्दे इति**–पुत्रशब्दात् स्त्रियां शार्ङ्गरवादित्वात् ङीनि स्वार्थिके के 'केऽणः' इति ङीनो ह्रस्वे **'पुत्रिका'** इति। अत्र विकल्पेनेत्वविधाने 'केऽणः' इति ह्रस्वं बाधित्वा इत्वे 'पुत्रिका' तदभावे **'पुत्रीका'** इति। इकारघटितः, ईकारघटितश्च स्यान्न त्वकारघटित इति विकल्पेनाकारविधानम्।

**सूतकेत्यादीति**—'षूङ् प्राणिगर्भविमोचने' इत्यादादिकात् प्राणिरूपकर्मणो धात्वर्थेनोपसंग्रहेणाकर्मकत्वात् 'गत्यर्थाकर्मक' ( ३-४-७२ ) इति कर्तरि क्ते टापि तदन्तात्ततः स्वार्थिके कप्रत्यये आपो ह्रस्वे कप्रत्ययान्तात्पुनष्टापि अकारस्याकारविधाने **'सूतका'** तदभावे 'प्रत्ययस्थात्' इतीत्वे **'सूतिका'** इति रूपद्वयम्। आदिना पुत्रका, वृन्दारका इत्यनयोः संग्रहः। यद्यपि देवतावाची वृन्दारकशब्दः पुंलिङ्ग एव, तथाऽपि अमरे—'त्रिषूत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्यौ' ( ३ का० ३ वर्ग० १६ श्लो० ) इत्युक्तेः सुन्दरे मुख्ये चार्थे त्रिलिङ्गतया वृन्दम्=प्रेक्षकसमूहोऽस्त्यस्य इत्यर्थे 'शृङ्गवृन्दाभ्यामारकन्' इति वार्तिकेन वृन्दशब्दादारकन्प्रत्यये टापि कात्पूर्वस्याकारादेशे **'वृन्दारका'** रूपिणी—**'वृन्दारिका वा'** मुख्या वा।

**'उदीचामातः स्थाने यकपूर्वायाः'** इति। उदीचां ग्रहणं विकल्पार्थं न तु देशतो व्यवस्थार्थम्, भाष्ये विकल्पेन कार्य्यप्रदर्शनात्। ननु देशतो व्यवस्थितये उदग्देशवासिन एव प्रयुञ्जीरन्नान्ये इति। **यकपूर्वाया इति**–यकौ पूर्वौ यस्याः सा यकपूर्वा तस्याः। यकशब्देऽकार उच्चारणार्थः। वर्णमात्रं विवक्षितम्। यकपूर्वाया इति आत इत्यस्य विशेषणम्। ननु आत इत्यनेनाकारस्य विवक्षितत्वात् तस्य विशेषणत्वे 'यकपूर्वस्य' इत्येव वक्तुमुचितमिति चेन्न, आशब्दार्थगतं यत् स्त्रीत्वं तत् आपशब्दे आरोप्य स्त्रीबोधको य आकारः आप् इति तस्यैव ग्रहणं यथा स्यान्नान्यस्येति सूचनार्थं स्त्रीलिङ्गनिर्देशात्। तथा च स्त्रीबोधकस्य आप एव ग्रहणमिति सूचितम्। अस्य फलमग्रे वक्ष्यते।

तदाह-**स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्येति**। ननु 'आतः स्थाने' ग्रहणं व्यर्थम् 'इको यणचि' इत्यादाविव 'षष्ठी स्थानेयोगा' इत्यनेनैव स्थाने इत्यस्य लाभादिति चेन्न, स्थानेग्रहणं व्यर्थीभूय ज्ञापयति—'विधौ परिभाषोपतिष्ठते नानुवादे' इति। परिभाषोपस्थाप्यार्थस्य यत्र विधेयतानिरूपितसाक्षादुद्देश्यताश्रयेऽन्वयस्तत्रैव परिभाषोपस्थितेः। यथा 'इको यणचि' इत्यत्र यण्निष्ठविधेयतानिरूपितोद्देश्यताश्रय इक्। तत्रैव स्थानपदार्थस्यान्वयः। प्रकृते तु विधेयस्येत्वस्य साक्षादुद्देश्यम्। अत इति न तु आत इति।

'केऽणः' इति ह्रस्वः । आर्यका, आर्यिका ।

आत इति अत इत्यस्य विशेषणम् । इति स्थाने इत्यस्य लाभो न स्यादिति स्थाने चरितार्थम् । फलञ्च 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' ( १-१-७३ ) इत्यत्र 'अतो गुणे' इत्यत्र, च 'इको गुणवृद्धी' इत्यस्यानुपस्थित्या शालामालारूपसमुदायस्य वृद्धसंज्ञया 'शालीयः' 'मालीयः' इत्यत्र 'वृद्धाच्छः' इति छप्रत्ययः शालाशब्दो हि 'शल गतौ, शल संवरणे' इत्यतः शलन्ति—गच्छन्ति निवसितुमध्येतुं वा यत्रेत्यर्थे 'अकर्तरि च कारके' इत्यधिकरणे घञि 'अत उपधायाः' इति वृद्धौ टापि सिध्यति । एवम् 'मान पूजायाम्' इत्यतः 'ऋज्रेन्द्राग्र' ( उणा० २ पा० २८ सू० ) इति सूत्रेणारकप्रत्ययो रलत्वं नलोपश्च निपात्यते । मान्यते पूज्यतेऽनयेति माला । उभयत्रापि नेक्स्थानिकाकारः । 'यः सः' इत्यादौ पररूपञ्च सिध्यति। यदि तु 'इकः' इत्यस्योपस्थितिः स्यात्तदा औपगवीयः, स्त्रैणीयः इत्यादाविक्स्थानिकवृद्धिघटितादेव छः स्यात्। एवम् 'अतो गुणे' इत्यपि 'टित आत्मनेपदानाम्' इतीट एत्वे पच, यजे, इत्यादावेव प्रवर्त्तेत इति न तयोर्वैयर्थ्यम् । एवं 'दीर्घादाचार्य्याणाम्' ( ८-४-५२ ) इत्यत्र 'अचश्च' इति परिभाषानुपस्थित्या 'दात्रम्, पात्रम्' इत्यादौ द्वित्वनिषेधश्च संगच्छते ।

वस्तुतस्तु 'विधौ परिभाषोपतिष्ठते' इति परिभाषा भाष्यानुक्तत्वादप्रमाणा । किञ्चैतत्सत्त्वे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्यत्र 'उदात्तस्थाने स्वरितस्य च स्थाने यो यण्' इत्यर्थो न स्यात् । 'प्रत्ययस्थात् कात्' इत्यत्राव्यवहितपूर्वो योऽकारस्तस्येत्वमित्यर्थो न स्यात्, आपोऽनुवादत्वेन 'तस्मिन्निति' इति परिभाषाया अप्रवृत्तिप्रसक्तौ 'रथकस्या' इत्यत्रापीत्वापत्तिः । 'विधौ परिभाषा' इति परिभाषाया गुणवृद्धिपदघटिते दीर्घादिपदघटिते शास्त्रे एवोपयोगो नान्यत्र ।

तथा सति 'इको गुणवृद्धी' इत्यत्र गुणवृद्धिपदानुवृत्त्यैव यत्र ते पदे तत्र 'इकः' इत्युपतिष्ठते, इत्यर्थेन 'त्यदादीनामः' 'पथिमथ्यृभुक्षाम्' इत्यादीनां व्यावृत्तौ सूत्रे गुणवृद्धिग्रहणसामर्थ्यात् यत्र अदेङ्निष्ठविधेयताप्रयोजकं गुणपदम्, यत्र आदेज्निष्ठविधेयताप्रयोजकं वृद्धिपदं वा तत्र शास्त्रे 'इकः' इत्युपतिष्ठते इत्यर्थे न, एवम् 'अचश्च' 'ऊकालोऽज्' इत्यतः 'अच्' इति, ह्रस्वादिपदं चानुवर्त्त्य तृतीयया विपरिणम्य ह्रस्वादिपदैर्यत्राज्विधीयते अर्थात् अज्निष्ठविधेयताप्रयोजकं यत्र ह्रस्वदीर्घप्लुतपदं तत्र 'अचः' इत्युपतिष्ठत इत्यर्थेन चोक्तदोषाभावेनानुवादेऽपि परिभाषोपस्थित्या 'उदात्तस्वरितयोः' 'पथिमथि' इत्यादौ, 'दीर्घादाचार्य्याणाम्' इत्यादौ च दोषाभावेन परिभाषा निष्फलैव । 'उदीचामातः स्थाने' इत्यत्र स्थानेग्रहणञ्च स्पष्टार्थमेव, न तु परिभाषाज्ञापकम्, भाष्यानुक्तेरिति नागेशाः ।

किञ्च दीक्षितादिमतेऽपि व्याकरणे भवः व्याकरणस्य व्याख्यानभूतो ग्रन्थो वेत्यर्थे छप्रत्ययं बाधित्वा अणप्रत्ययो यथा स्यादिति ऋगयनादौ व्याकरणशब्दः पठितः । यदि अनुवादे परिभाषा प्रवर्तेत तदा व्याकरणशब्दे इक्स्थानिकवृद्धेरभावात् वृद्धत्वाभावेन छप्रत्ययाप्राप्त्या 'तत्र भवः' इत्यादिनैवोऽक्तार्थेऽणि सिद्धे ऋगयनादिगणे व्याकरणशब्दस्य पाठो व्यर्थीभूय 'विधौ परिभाषोपतिष्ठते नानुवादे' इति परिभाषां ज्ञापयेदिति 'उदीचाम्' इत्यत्र स्थानेग्रहणं स्पष्टार्थमेव । 'उदीचाम्' इत्यत्र 'न यासयोः' इत्यतः 'न' इति, 'प्रत्ययस्थात्' इति सूत्रं चानुवर्तते । यकपूर्वो यः स्त्रीप्रत्ययाकारस्तस्य स्थाने यः कात्पूर्वोऽकारस्तस्येत्वन्न, आपि परे उदीचां मते, प्राचां मते तु तत्रापीत्वमवत्येवेति निषेधविकल्पे विकल्पः फलतीति फलितार्थमाह—'मूले इद्वा स्या'दिति । एवम् अग्रेतनसूत्रेषु विभित्वं फलितार्थमेव बोध्यम् । निषेधप्रकरणेन निषेधस्यैव श्रौतार्थत्वात् । केऽण इति—अर्य्यते = ज्ञायते सदाचारकर्तृत्वेन या सा इत्यर्थे 'ऋहलोर्ण्यत्' इति कर्मणि ण्यति वृद्धौ आर्य्यशब्दात् टापि 'आर्या' इति—

'कर्तव्यमाचरन्कामकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स आर्य इति संस्मृतः ॥'

इति स्मृत्युक्तलक्षणोपेते त्रिलिङ्गः । ततः स्वार्थिके 'केऽणः' इति ह्रस्वेऽत्र यकारात्परस्याकारस्यात्स्थानिकत्वात् 'प्रत्ययस्थात्' इति नित्यस्येत्वस्यापवादोऽयं योगः । इति विकल्पेनेत्वनिषेधे 'आर्यका' इति निषेधाभावे इत्वे 'आर्यिका' इति ।

चटकका, चटकिका। आतः किम्—साङ्काश्ये भवा साङ्काश्यिका। यक इति किम्–अश्विका। स्त्रीप्रत्यय इति किम्–शुभं यातीति शुभंयाः। अज्ञाता शुभंया शुभंयिका। 'धात्वन्तयकोस्तु नित्यम्'। सुनयिका। सुपाकिका।

---

ककारपूर्वमात्स्थानिकमुदाहरति—**चटककेति**—चटकाशब्दात्स्वार्थे के ह्रस्वे टापि इत्वनिषेधे **'चटकका'** इति। इत्वे **'चटकिका'** इति। **साङ्काश्यिकेति**–सङ्काशः कस्यचिन्नाम। ततः सङ्काशेन निर्वृत्तं नगरमित्यर्थे 'बुञ्छणकठ' (४–२–८०) इति सूत्रस्थेन 'सङ्काशादिभ्यो ण्यः' इति ण्यप्रत्यये आदिवृद्धौ 'यस्येति च' इत्यलोपे 'साङ्काश्य' इति। ततो भवार्थे साङ्काश्ये भवा इत्यर्थे 'वृद्धाच्छः' इति छं बाधित्वा 'धन्वयोपधाद्वुञ्' ४–२–१२१) इति वुञि अकादेशे 'यस्येति च' इत्यलोपे टापि रूपम्। अत्र यकारात्परोऽकारो नात्स्थानिकः, किन्तु अकप्रत्ययघटक इति 'प्रत्ययस्थात्' इति नित्यमित्वम्।

ननु 'आतः स्थाने' इत्यस्याभावे 'उदीचां यकपूर्वायाः' इति न्यासे यकपूर्वो यः स्त्रीबोधकोऽकारस्तस्येत्वमित्यर्थे 'सांकाश्यके' नातिप्रसङ्गः। अत्र स्त्रीत्वविशिष्टभवार्थकस्य अकप्रत्ययस्य स्त्रीत्वबोधकत्वेऽपि अकारस्य स्त्रीत्वबोधकत्वाभावादिति चेन्न, 'कारिका' 'पाचिका' **'सर्विका'** इत्यादावपि अकारस्य स्त्रीबोधकत्वाभावेनेत्वानापत्त्या स्त्रीबोधकप्रत्ययस्य योऽकारस्तस्येत्वमित्यर्थस्येष्टत्वात्। अस्ति च 'सांकाश्यक' शब्दे स्त्रीबोधकप्रत्ययघटकोऽकार इति 'सांकाश्यिका' इत्यत्र विकल्पेनेत्ववारणायाद्ग्रहणम्।

वस्तुतस्तु 'प्रत्ययस्थात्' इति स्त्रीबोधको योऽकार इत्यर्थाभावेन 'कारिका' इत्यत्र इत्वे बाधकाभावेन अत्र 'आतःस्थाने' व्यर्थमेव, सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्त्वेन स्त्रीबोधकस्य य अकार इत्यर्थासम्भवात्। **यकेति किमिति**—स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्येत्वं वा नेत्येवास्तु इति प्रश्ने आह—**'अश्विका'** इति—अश्वशब्दात् टापि स्वार्थिके के ह्रस्वे वपूर्वस्यात्स्थानिकस्य विकल्पेन इत्वं मा भूदिति यकग्रहणम्।

ननु 'यकपूर्वायाः' इति स्त्रीलिङ्गनिर्देशलब्धं स्त्रीप्रत्ययस्येति किमर्थमित्यत आह–**शुभंयिकेति**। शुभमिति मान्तमव्ययम्, 'अहंशुभमोर्युस्' (५–२–१४) इत्यत्र तथा दर्शनात्। शुभमुपपदे याधातोः 'अन्येभ्योऽपि दृश्यते' (३–२–१७८) इति क्विपि विचि वा 'शुभंया' इति। ततः स्वार्थे के 'केऽणः' इति ह्रस्वे टापि **'शुभंयिका'**। अत्र यकारोत्तराकारस्य धातुघटकाकारस्थानिकत्वेन स्त्रीबोधकाकारस्थानिकत्वाभावान्नित्यमेवेत्वम्।

'यकपूर्वे धात्वन्तप्रतिषेधो वक्तव्यः' इति भाष्योक्तं वार्तिकमर्थतः पठति—**धात्वन्तयकोस्तु नित्यमिति**। धात्वन्ताभ्यां यकारककाराभ्यां परस्यातः स्थानेऽकारस्य वैकल्पिकेत्वप्रतिषेधस्य प्रतिषेधः। इति नित्यम् 'प्रत्ययस्थात्' इतीत्वं भवत्येव। तदाह—**धात्वन्तयकोस्त्विति**—धात्वन्तयकपूर्वयोरातः स्थानेऽकारयोर्नित्यमित्वमित्यर्थः। **सुनयिकेति**—नीयते कार्यमनेनेत्यर्थे 'णीञ् प्रापणे' इत्यतः 'एरच्' इति 'श्रिणीभुवोऽनुपसर्गे' (३–३–२४) इति घञं बाहुलकाद् बाधित्वा अच्प्रत्यये नय इति—नयः=नीतिः। सु—शोभनो नयो यस्याः सा सुनया, ततः स्वार्थे के 'केऽणः' इति ह्रस्वे टापि सुनयका इति। अत्र धात्वन्तयकारात्परस्यातः स्थानेऽकारस्येत्त्वविकल्पो न, किन्तु 'प्रत्ययस्थात्' इति नित्यमित्वम्।

ननु 'नय' इत्यस्य धातुत्वाभावेन यस्य धात्वन्तत्वाभावः। ईकारवृत्तिधात्वन्तत्वस्य स्थानिवत्त्वेनैकारे आरोपेऽपि 'अय्' इत्यस्य धात्ववयवत्वाभावस्तदवस्थ एव। पुनःस्थानिवत्त्वन्तु न, लक्ष्ये लक्षणन्यायात्। नच विकारभेदेन लक्ष्यभेदः 'उदवोढाम्' इत्यत्र पुनः 'वदव्रज' इति वृद्धेर्लक्ष्ये लक्षणन्यायेन वारणपरभाष्यप्रामाण्येन विकारकृतलक्ष्यभेदस्यानाश्रयणादिति चेन्न, 'धात्वन्तयकोस्तु नित्यम्' इति ज्ञापकेनातिदेशविषये लक्ष्येलक्षणन्याया प्रवृत्तिज्ञापनात्।

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि । [ ७-३-४७ ]

स्वेत्यन्तं लुप्तषष्ठीकं पदम् । एषामत इद्वा स्यात् । तदन्तविधिनेव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम्, अन्यस्य तूत्तरसूत्रेण सिद्धम् । एषा द्वा एतयोस्तु सपूर्वयोर्नेत्वम् । अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'असुपः' प्रतिषेधात् ।

---

अत एव ज्याधातोः क्विपि 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे स्थानिवत्त्वेन धात्ववयवत्वं 'सम्प्रसारणाच्च' इति दीर्घे पुनः स्थानिवत्त्वेनेकारस्य धात्ववयवत्वात् 'जियौ' इत्यत्रेयङ् सिध्यति ।

**सुपाकिकेति**—सु-शोभनः पाको यस्याः इत्यर्थे बहुव्रीहौ टापि स्वार्थे के ह्रस्वे पुनष्टापि 'सुपाकिका' इत्यत्र 'उदीचाम्' इति बाधित्वा 'प्रत्ययस्थात्' इति नित्यमित्वम् ।

**'भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणाम्'** ( ७-३-४ ) इति । भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वा, इति टावन्तमनुकृत्य द्वन्द्वः । अत्र द्वन्द्वादुत्पन्नायाः षष्ठ्याः 'सुपां सुलुक्, इति लुक् तदाह—**स्वेत्यन्तं लुप्तषष्ठीकमिति।** केचित्तु सौत्रत्वादेवामः स्थाने जसादेशः षष्ठ्यर्थे प्रथमेति यावदित्याहुस्तन्न, बाहुलकात्तत्कल्पने गौरवात् । तदाह—**एषामिति**—भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वानामित्यर्थः । अत्र पूर्वसूत्रात् 'उदीचाम्' इति, 'न यासयोः' इत्यतः 'न' इति, 'प्रत्ययस्थात्' इत्यतः 'अतः' इति, 'इत्' इति चानुवर्त्तते । 'अङ्गस्य' इति चाधिकृतम् । 'आतः स्थाने' इत्यप्यनुवर्तते, परन्तु न तत्सर्वेण सम्बध्यते इति वक्ष्यते । तथा च एषां कात्पूर्वस्यात इद्वा न स्यादित्यर्थः । फलितमाह—**इद्वा स्यादिति,** निषेधविकल्पे विधिविकल्पस्य फलितत्वात् ।

ननु भस्त्रादीनामङ्गविशेषणतया तदन्तविधौ भस्त्रादिशब्दान्तानां कात्पूर्वस्यात इद्वा स्यादित्यर्थे नञ्पूर्वाणामपीत्वे सिद्धे 'नञ्पूर्वाणाम्' इति व्यर्थमित्याह—**नञ्पूर्वाणामपीति** । व्यपदेशिवद्भावेन केवलानामपीत्वमिति भावः । ननु 'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय' इति न्यायेन नञ्पूर्वाणामिति सपूर्वाणाञ्चेन्नञ्पूर्वाणामेवेति नियमार्थमेव स्यादिति चेन्न, 'नञ्पूर्वग्रहणानर्थक्यञ्चोत्तरपदमात्रस्येद्वचनात्' इति भाष्येण नियमार्थत्वाभावात् । ननु भस्त्राशब्दस्य नित्यस्त्रीलिङ्गतया 'अभाषितपुंस्काच्च' इतीत्वे सिद्धे भस्त्राग्रहणं व्यर्थमित्यत आह—

**भस्त्राग्रहणमिति—उपसर्जनार्थमिति**—भस्त्राया निर्गता, निर्गतः, निर्गतम् इत्यर्थे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे त्रिलिङ्गतया भाषितपुंस्कत्वेन 'अभाषितपुंस्काच्च' इत्यस्याप्राप्त्या 'निर्भस्त्रिका' इत्यत्र वैल्पिकेत्वार्थमत्र भस्त्राग्रहणमिति भावः । एवं भस्त्रामतिक्रान्ता 'अतिभस्त्रिका' इत्याद्यपि बोध्यम् । अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपम्, संकेतसम्बन्धेनोपसर्जनपदवत्त्वं वा । संज्ञारूपस्य ग्रहणं न वरम्, भस्त्रासदृशीत्यर्थे 'इवे प्रतिकृतौ' इति कनि **'भस्त्रिका'** इत्यत्र संकेतितोपसर्गत्वस्याभावेन वैकल्पिकेत्वानापत्तेः । **अन्यस्य त्विति**—अनुपसर्जनस्य भस्त्राशब्दस्य तु **'भस्त्रिका परमभस्त्रिका'** इत्यादौ नित्यस्त्रीलिङ्गतया 'अभाषितपुंस्काच्च' इति वक्ष्यमाणसूत्रेण वैकल्पिकमित्वं सिद्धमित्यर्थः । अतोऽत्र सूत्रे भस्त्राग्रहणमुपसर्जनार्थमिति भावः ।

**एतयोरिति**—एषाद्वाशब्दयोरित्यर्थः । **सपूर्वयोर्नेत्वमिति—अनेषका परमेषका, अद्वके, परमद्वके** इत्यादौ नेत्वमिति भावः । तथाहि—'न सु एतद् सु, परम सु एतद् सु, न सु द्वि औ, परम औ द्वि औ' एतेषु नञ् सुपा सह समस्यते इत्यर्थकेन 'नञ्' ( २-२-६ ) इति सूत्रेण 'सन्महत्परमोत्कृष्टाः' ( २-१-६१ ) इति सूत्रेण च समासे समासस्य प्रातिपदिकत्वात् सुपो लुकि टेः पूर्वमकचि यद्वा एतदादिशब्दादकचि कृते एतकद्, इति द्वकि इति जाते 'न सु एतकद् सु, न सु द्वकि औ' इत्येवं वा समासे कृते ततः समासात् सुपि त्यदाद्यत्वे तकारस्य 'तदोः सः' इति सादेशे अनेसकशब्दात्, द्वकशब्दाच्च स्त्रीत्वविवक्षायां टापि 'हल्ङ्याब्भ्यः' इति सोर्लोपे औविभक्तेश्च 'औङ

**अनेषका । परमेषका । अद्वके । परमद्वके । स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् ।**

आपः' इति श्यादेशे 'आद् गुणः' इति गुणे । **अनेसका** इत्यत्र सस्य षत्वे '**अनेषका, परमेषका, अद्वके, परमद्वके**' एषु वैकल्पिकम् 'भस्त्रैषा' इतीत्वं 'प्रत्ययस्थात्' इति नित्यमित्वञ्च न, समासान्तर्गतसुपो लुकि टापो विधानेन प्रत्ययलक्षणेन सुपमादाय टापः परतया सुपः परे आपि इत्वं नेत्यर्थकेन 'असुपः' इत्यनेन निषेधात् ।

न लुमतेति प्रत्ययलक्षणनिषेधस्तु न, लुप्यमानप्रत्यये परे यत्कार्य्यं तत्रैव न लुमतेत्यस्य प्रवृत्तेः। प्रकृते 'असुपः' इति निषेधो न लुप्यमानप्रत्ययपरत्वनिमित्तकः । किन्तु सुपः परो य आप् तत्परत्वनिमित्तकः । ननु सुपः परो य आप् इत्युक्तौ लुप्यमानसुब्निरूपितपदत्वनिमित्ततया निषेधः प्रत्ययलक्षणस्य स्यादिति चेन्न, लुप्यमानप्रत्ययनिष्ठपरत्वनिमित्तके एव प्रत्ययलक्षणप्रतिषेधात् । अत्र च आब्निष्ठं परत्वम्, न तु लुप्तप्रत्ययनिष्ठमित्यदोषः ।

ननु एतच्छब्दात् द्विशब्दाच्चाकचि ततः सुपि त्यदाद्यत्वे तस्य सत्वे षत्वे च स्त्रियां टापि 'हल्ङ्याप' इति सुलोपे 'एषका' इति जाते ततो नञ्समासे समासात् सौ पुनर्हल्ङ्यादिति सुलोपे '**अनेषका**' इति । अत्र सोः पूर्व एव टाप् इति कथं सुपः परत्वमाप इति चेन्न, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषया लुग्विषये लुप्यमानप्रत्ययनिमित्तकं त्यदाद्यत्वादिकम् लोपादिकञ्चान्तरङ्गमपि न भवत्येव ।

अत एव 'गोमत्प्रियः' इत्यादौ दीर्घनुमादिकं न । तथा च समासस्थले समासघटकं प्रत्ययं परत्वेन निमित्तीकृत्य किमपि कार्य्यं हल्ङ्यादिलोपादिकं न स्यात् । समासात्प्राक् त्यदाद्यत्वाभावे टाबपि न स्यात् । समासानन्तरं पुनः सुपि त्यदाद्यत्वे टापि च समासान्तवर्तिनीं विभक्तिमादाय टापः सुपः परत्वं दुर्वारम् । एवम् 'परमैषका, अद्वके, परमद्वके' इत्यादावप्यापः सुपः परत्वं बोध्यम् ।

**स्वशब्दग्रहणमिति**—स्वशब्द आत्माऽऽत्मीयज्ञातिधनवाची । तत्र आत्मनि ज्ञातौ चार्थे पुंलिङ्ग एव 'स्वो ज्ञातावात्मनि' इत्युक्तेः । धने पुंनपुंसकलिङ्गः 'स्वोऽस्त्रियां धने' इत्युक्तेः । आत्मीयेऽर्थे त्रिलिङ्गः 'त्रिष्वात्मीये' इत्युक्तेः । तथा चामरः ( ३ का० ३ वर्ग २१० श्लो० )

'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने'

इति । यदा स्त्रीव्यक्तिविशेषस्य संज्ञा ( नाम ) तदा स्त्रीलिङ्गः । एवञ्च संज्ञायामात्मीये चार्थे स्वशब्दः सर्वनामसंज्ञकः । सर्वनामताप्यनुपसर्जनस्यैव । 'सर्वनामेति महासंज्ञाकरणादन्वर्थत्वेन सर्वार्थस्यात्मीयवाचकस्यैव सर्वता ।'

तदुक्तम्—'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति स्त्रीत्वविशिष्टात्मीयविवक्षायामकचि टापि 'प्रत्ययस्थात्' इति नित्यमेवेत्वम्, आत्स्थानिकाकाराभावात् 'आतः स्थाने' इति स्वशब्दस्य विशेषणमित्यस्य वक्ष्यमाणत्वात् । यदा तु स्त्रीत्वविशिष्टात्मीयवाचिनः स्वशब्दात् स्वार्थिककप्रत्ययस्ततः टाप् तदा 'भस्त्रैषा' इतीत्वविकल्प एव, आत्स्थानिकाकारस्य सत्त्वात् । न चाकच् अपवादत्वात् स्वार्थिकं कप्रत्ययं बाधेत, कुत्सिताद्यर्थककस्यापवादत्वेऽप्यत्यन्तस्वार्थिकस्य कस्यापवादत्वे मानाभावात् । अकज्विधायकेऽपि अज्ञाते, कुत्सिते, इत्यनयोरनुवृत्तेः ।

न च '**स्वशब्दग्रहणं संज्ञोपसर्जनार्थम्**' इति मूलविरोधः, अकज्विषयकत्वमादायैव तद्ग्रन्थप्रवृत्तेः । एवञ्च 'हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिमिव स्विकायाम्' इति श्रीहर्षश्लोके 'भस्त्रैषा' इतीत्वमिति नातीवोपेक्ष्यम् । अकचमुक्त्वा यदि तदुक्तिः सैवोपेक्ष्या ।

**संज्ञोपसर्जनार्थमिति**—संज्ञायां स्त्रीव्यक्तिबोधकस्वशब्दाट्टापि अज्ञाताद्यर्थे स्वार्थे कप्रत्यये 'केऽणः' इति ह्रस्वे पुनः कान्तात् टापि आत्स्थानिकाकारस्य सत्त्वाद्विकल्पेनेत्वम् । ननु संज्ञायां नियमेन

इह हि 'आतः स्थाने' इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम्। न तु द्वेषयोरसंभवात्। नाप्यन्येषाम्, अव्यभिचारात्। स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। संज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्युदाहरणम्। एवं चात्मीयायां स्विका। परमस्विकेति नित्यमेवेत्वम्, निर्भस्त्रका निर्भस्त्रिका। एषका, एषिका।

स्त्रीबोधकतया नित्यस्त्रीत्वात् 'अभाषितपुंस्काच्च' इत्यनेन विकल्पेनेत्वसिद्धया संज्ञार्थम् इत्युक्तिरसङ्गतेति चेन्न, 'संज्ञापूरण्योश्च' इत्यनेन भाषितपुंस्कत्वेन प्राप्तस्य पुंवद्भावस्य निषेधसामर्थ्यात्संज्ञाया अपि भाषितपुंस्कत्वबोधनेन स्वशब्दस्यात्मीयत्वपुरस्कारेणैव संज्ञाकरणादात्मीयत्वेन पुंबोधकत्वस्यापि सत्त्वेनाभाषितपुंस्कत्वाभावात्। स्वस्या निष्क्रान्तेति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे प्रातिपदिकत्वात् 'सुपो धातु' इति पञ्चम्या लुकि 'एकविभक्ति' इत्युपसर्जनत्वे स्वाशब्दस्य 'गोस्त्रियोः' इति ह्रस्वे टापि सुबन्तात्के सोर्लुकि टापि 'केऽणः' इति ह्रस्वे 'निःस्वका' शब्दे आत्स्थानिकाकारस्य विकल्पेनेत्वे 'निःस्विका निःस्वका' इति। असम्भवादिति—कापवादस्याकचो विषयत्वेन कात्पूर्वस्यात्स्थानिकस्यास्यासम्भवादित्यर्थः। नाप्यन्येषामिति—भस्त्राजाज्ञानामित्यर्थः।

अव्यभिचारादिति—आत्स्थानिकभिन्नस्याभावादित्यर्थः। केवलसम्भवे विशेषणं व्यर्थम्, यथा 'उष्णमग्निमानय' इत्यत्रोष्णस्यैवाग्नेः सम्भवेन 'उष्णम्' इति विशेषणं व्यर्थम्। एवं 'शीतमग्निमानय' इत्यत्र शीतमिति व्यर्थमग्नौ शीतत्वस्याभावात्। 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायादिति भावः।

स्वशब्दस्त्विति—अनुपसर्जनम्—अन्यपदार्थेऽविशेषणीभूतः। अकजर्ह इति—आत्मीयवाचिनः सर्वनामत्वाभावाद्वैकल्पिकेत्वाभावः। कप्रत्ययान्तत्वादिति—संज्ञोपसर्जनीभूतस्य सर्वनामत्वाभावादकचोऽप्राप्त्या कप्रत्यये आत्स्थानिकाकारस्य सत्त्वाद्वैकल्पिकोदाहरणं भवतीत्यर्थः। तथा च सम्भवव्यभिचारयोः सत्त्वात् 'निःस्विका, निःस्वका' इत्येवोदाहरणम्। तदुक्तम्—

'अत्रातः स्थान इत्येतत्स्वशब्दस्य विशेषणाम्।
'सम्भवव्यभिचारौ हि तत्र स्तः काकचोः सतोः॥'
'द्वयेतदोः सम्भवो नास्ति नान्यत्र व्यभिचारिता।
सर्वनाम्नः स्वशब्दस्य तेन नायं विधिर्भवेत्॥' इति।

ननु ज्ञाति-धनवाची स्वशब्दः 'स्वमज्ञातिधनाख्यायाम्' इत्युक्तेरसर्वनामत्वात्कप्रत्ययान्तत्वादुदाहरणं स्यादत आह—अर्थान्तरे तु न स्त्रीति—'स्वो ज्ञातावात्मनि' इत्यमरात्, 'स्वोऽस्त्रियां धने' इत्यमराच्च न स्त्रीत्यर्थः।

नित्यमेवेत्त्वमिति—अकज्घटितत्वेन आत्स्थानिकत्त्वाभावात् 'प्रत्ययस्थात्' इति नित्यमेवेत्वमिति भावः।

एवमुदाहरणाविषयत्वं प्रदर्श्योदाहरणमाह—निर्भस्त्रिकेत्यादि। भस्त्राया निष्क्रान्तेति विग्रहे 'निरादयः क्रान्ताद्यर्थे' इति समासे 'क्रान्ता' इत्यस्य 'एकविभक्ति' इत्युपसर्जनसंज्ञायाम् 'गोस्त्रियोः' इति ह्रस्वे पुनः टापि कप्रत्यये पुनष्टापि पूर्वस्य टापो ह्रस्वत्वे टापः सवर्णदीर्घे नित्यमित्वं बाधित्वा विकल्पेनेत्वम्। निर्भस्त्रिका, निर्भस्त्रका इति रूपद्वयम्।

न च सामासिकं सुपं प्रत्ययलक्षणेनादाय सुपः परष्टाविति वाच्यम्, कप्रत्ययव्यवधानेनाव्यवहितपरत्वाभावात्।

सूत्रे 'एषा' इति प्रथमैकवचनानुकरणात्कृतपत्वस्यैवोदाहरणत्वम्। तेन षत्वाभावे 'एतिके एतिका' इत्यादौ 'प्रत्ययस्थात्' इति नित्यमेवेत्वम्।

एषिकेति—एतच्छब्दादकचि 'एतकद्' इत्यतः सौ त्यदाद्यत्वे पररूपे 'तदोः सः' इति तकारस्य सादेशे षत्वे च स्त्रीत्वविवक्षायां सोः प्रागेव टापि 'हल्ङ्याप्' इति सोर्लोपे 'प्रत्ययस्थात्'

कृतषत्वनिर्देशान्नेह विकल्पः, 'एतिके, एतिकाः। अजका, अजिका। ज्ञका, ज्ञिका। द्वके, द्विके। निःस्वका, निःस्विका।

*अभाषितपुंस्काच्च।* [ ७-३-४८ ]

एतस्माद्विहितस्य आतः स्थाने अत इद्वा स्यात्।

---

इति नित्यमित्वं बाधित्वा वैकल्पिकमित्वम् 'एषका, एषिका' इति षत्वनिर्देशादिति—सूत्रे कृतषत्वस्यैवानुकरणात् भस्त्राशब्दसाहचर्य्यात्, 'एषा द्वे नञ्पूर्वे अनुदाहरणे 'असुपः' इति प्रतिषेधात्' इति भाष्याच्च तत्रैव वैकल्पिकमित्वम्। यत्र सत्वषत्वे न स्तः तत्र 'प्रत्ययस्थात्' इति नित्यमेवेत्याह—एतिके द्विवचने, एतिकाः, बहुवचने सावेव षत्वप्रवृत्त्या तत्रैव विकल्पः। अजकेति—अजशब्दात् स्त्रियां टापि अज्ञाता अजा इत्याद्यर्थे स्वार्थिके के 'केऽणः' इति ह्रस्वे कान्तात्पुनष्टापि विकल्पेनेत्वम्। ज्ञकेति—'ज्ञा अवबोधने' इत्यतः' 'इगुपधज्ञा' ( ३-१-१३५ ) इति कप्रत्यये बुद्धावर्थे नित्यस्त्रीत्वात् टापि टाबन्तात् अज्ञाताद्यर्थे स्वार्थे के 'केऽणः' इति कात्पूर्वस्य ह्रस्वत्वे पुनष्टापि 'ज्ञका' इति जाते विकल्पेनेत्वे ज्ञका, ज्ञिका इति रूपद्वयम्। द्वकेति—द्विशब्दस्य टेः प्रागकचि द्वकिशब्दादौविभक्तौ त्यदाद्यत्वे टापि सवर्णदीर्घे विकल्पेनेत्वे औङः श्यादेशे गुणे च 'द्वके' 'द्विके' इति।

सूत्रे स्त्रीलिङ्गनिर्देशात् 'शुभ्रोऽज्ञोऽस्याः, जानातीति ज्ञः, प्रियो ज्ञोऽस्याः' इति विग्रहे बहुव्रीहौ टापि ततः स्वार्थिके कप्रत्यये टापि शुभ्राज्ञिका 'प्रियज्ञिका' इत्यत्र नित्यमेवेत्वम्। न च सुपः परः टाप्, केन व्यवधानात्।

निःस्विकेति—स्वस्या निष्क्रान्तेति विग्रहे 'निरादयः' इति समासे 'एकविभक्ति' इति स्वशब्दस्योपसर्जनत्वे 'गोस्त्रियोः' इति ह्रस्वत्वे टापि सुपि च सति ततः स्वार्थिके के सुब्लुकि पुनः टापि सौ तस्य 'हल्ङ्याब्' इति लोपे इत्वविकल्पे निःस्वका निःस्विका इति।

'अभाषितपुंस्काच्च' ( ७-३-४८ ) इति। अत्र 'उदीचामातः स्थाने' इति सूत्रद्वयानुवर्तते। न भाषितोऽभाषितः पुमान् येन प्रातिपदिकं तदभाषितपुंस्कं प्रातिपदिकम्। 'उरःप्रभृतिभ्यः कप्' ( ५-४-१५१ ) इति नित्यः कप्। अत्र विहितस्येत्यध्याहार्यं तदाह—एतस्माद्विहितस्येति—अस्य 'आतः' इत्यनेन सम्बन्धः। ननु 'तस्मादित्युत्तरस्य' इति परिभाषासत्त्वे विहितस्येत्यसङ्गतमिति चेन्न, 'अथ भस्त्राग्रहणं किमर्थम्? न 'अभाषितपुंस्काच्च' इत्येव सिद्धम्। भस्त्राग्रहणमुपसर्जनार्थम्' इति भाष्यस्यैव मानत्वात्।

तथा हि—भस्त्राया निष्क्रान्तेति विग्रहे समासे उपसर्जनह्रस्वे पुनः समासरूपप्रातिपदिकात् टापि कप्रत्यये पुनः 'निर्भस्त्रिका' इत्यत्र विकल्पार्थं सूत्रमित्युक्तम्। यदि विहितविशेषणं न स्यात्तदा 'अभाषितपुंस्कात्परो य आत्' इत्येवार्थः स्यात्। तथा च समासरूपप्रातिपदिकाद्विहितो य आप् सोऽपि अभाषितपुंस्कभस्त्राशब्दात्पर एवेति 'अभाषितपुंस्काच्च' इत्यनेनैव विकल्पेनेत्वसिद्धौ 'भस्त्राग्रहणमुपसर्जनार्थम्' इति भाष्यं विरुध्येत। विहितविशेषणत्वे तु समासाद्विहित आप् स अभाषितपुंस्कभस्त्राशब्दात्परोऽपि न ततो विहित इति तेनासिद्धया 'भस्त्राग्रहणमुपसर्जनार्थम्' इति भाष्यं संगच्छते।

एतस्मादिति—अभाषितपुंस्कादित्यर्थः। प्रवृत्तिनिमित्तैक्येऽभाषितपुंस्कादिति यावत्। तेन संकेतसम्बन्धेन गङ्गापदवति गङ्गाशब्दे नास्य प्रवृत्तिः, गङ्गापदरूपप्रवृत्तिनिमित्तमादाय पुंबोधकत्वात्। नदीत्वव्याप्यगङ्गात्वेन नित्यस्त्रीलिङ्ग एव। यकपूर्वत्वाभावेऽपि विकल्पेनेत्वविधानार्थमिदम्।

गङ्कका, गङ्किका, बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम्। अज्ञाता अखट्वा अखट्विका। शैषिके कपि तु विकल्प एव।

*आदाचार्याणाम्।* [ ७-३-४९ ]

पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु शुभ्रिका।

---

**गङ्कका, गङ्किकेति**—गम्‌धातोः 'गन् गम्ययोः' ( उणा० १ आ० १२३ सू० ) इति गन्प्रत्यये गङ्गशब्दात् टापि टाबन्तात् स्वार्थिके के 'केऽणः' इति ह्रस्वे टापि 'गङ्कका' इत्यत्र आत्स्थानिकस्य अतो विकल्पेनेत्वम्। विहितविशेषणस्य फलमाह—

**बहुव्रीहेरिति**—अविद्यमाना खट्वा यस्या इति विग्रहे 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपद-लोपः' इति वार्त्तिकेन बहुव्रीहौ विद्यमानरूपोत्तरपदलोपे नञो नलोपे 'शेषाद्विभाषा' इति समा-सान्तस्य कपोऽभावे 'गोस्त्रियोः' इति टापो ह्रस्वे 'अखट्वशब्दात्पुनष्टापि सुपि ततः स्वार्थे कप्रत्यये सुब्लुकि 'केऽणः' कात्पूर्वस्य टापो ह्रस्वे पुनः कान्तात् टापि 'अखट्वका' इत्यत्र अखट्वशब्दाद्विहितो य आप् स भाषितपुंस्को यः 'अखट्व' इति तत एव विहितो न त्वभाषितपुंस्कखट्वशब्दाद्विहित इति अभाषितपुंस्काद्विहितस्यातोऽभावेन तस्य स्थाने ह्रस्वनिष्पन्नस्यास्य नित्यमेवेत्वमित्याह '**अखट्विका**' इति। अत्र विकल्पो न किन्तु 'प्रत्ययस्थात्' इति नित्यमेवेत्वम्। विहितविशेषणाभावे तु विक-ल्पो दुर्वार एव स्यात्।

**शैषिके कपि त्विति**-शेषात् अनुक्तसमासान्ताज्जात इत्यर्थे 'अध्यात्मादिभ्यः ठञिष्यते' ठञि शैषिक इति। 'नस् खट्वाम्' इति दशायां कपः प्राप्तौ पूर्वम् 'अनेकमन्यपदार्थे' इति बहुव्रीहिर्न भवति 'न तावत्तेषामन्यद् ( समाससंज्ञादिकम् ) भवति कपं तावत्प्रतीक्षते' इति भाष्यात् सुबन्तयोः समाससंज्ञा कप् च सहैति। तथा च 'न स् खट्वा स् कप्' (क) इति एककालावच्छेदेन समासे कपि सति कबरूपतद्धितान्तस्य प्रातिपदिकसंज्ञायां 'समासस्यान्तावयवाः' इत्यर्थकस्य 'समासान्ताः' ( ५-४-६८ ) इत्यधिकारात् कपः समासावयवत्वमपि। एवञ्च कबन्तस्यैव समासरूपप्राति-पदिकत्वेन स्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकत्वाभावेन 'गोस्त्रियोः' (१-२-४८) इति 'खट्वा' इत्यस्य ह्रस्वस्यत्वाभावे 'केऽणः' इति ह्रस्वस्यापि 'न कपि' ( ७-४-१४ ) इति निषेधे 'आपोऽन्यत-रस्याम्' इति विकल्पेन अभाषितपुंस्कात् खट्वशब्दाद्विहितस्यैवापो ह्रस्वे कबन्तात् टापि अभाषित-पुंस्काद्विहितस्य आतः स्थाने जातस्याकारस्य सत्त्वे विकल्पेनेत्वम्। इत्युक्तं **शैषिके कपि तु विकल्प-एवेति**। 'आपोऽन्यतरस्याम्' इति ह्रस्वाभावेन आतः स्थानेऽकाराभावेन नानेनेत्वम्। ककारात्पूर्व-स्यातोऽभावेन 'प्रत्ययस्थात्' इत्यनेनापि नेत्वम् '**अखट्वाका**' इत्येव रूपम्।

**'आदाचार्य्याणाम्**'( ७-३-४९ ) इति। **पूर्वसूत्रविषय इति**—अभाषितपुंस्काद्विहितस्य अतः स्थाने योऽत् तस्य आत् स्यादापि परे स आप् सुपः परो न चेदित्यर्थः। **गङ्गाकेति**—गङ्गश-ब्दात्स्वार्थे कप्रत्यये 'केऽणः' इति ह्रस्वेऽत आदादेशे '**गङ्गाका**' इति। एतदभावे पूर्वेण विकल्पेनेत्व-मिति रूपत्रयम् '**गङ्किका, गङ्गाका, गङ्कका**' इति।

**उक्तपुंस्कादिति**—भाषितपुंस्कादित्यर्थः। **शुभ्रिकेति**—शुभ्रशब्दो विशेष्यवाचकपदसमान-लिङ्गकत्वेन त्रिलिङ्गः। शुभ्रशब्दात् स्त्रियां टापि अज्ञाता शुभ्रा इत्याद्यर्थे के 'केऽणः' इति टापो ह्रस्वे टापि 'प्रत्ययस्थात्' इति नित्यमेवेत्वम्। अभाषितपुंस्काद्विहितस्य टापोऽभावेन न विकल्पः। शुभ्रः = शुक्लः।

'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः।
अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः॥
हरिणः पाण्डुरः पाण्डुः' इत्यमरात् ( १-का० ५ वर्ग १२-१३ श्लो० )।

*अनुपसर्जनात्* । [ ४-१-१४ ]

अधिकारोऽयम् 'यूनस्तिः' इत्यभिव्याप्य । अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति ।

---

शब्दार्णवे तु—"श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचिः । वलक्षस्तु सितः
शावः कदलीकुसुमोपमः ॥ अर्जुनस्तु सितः कृष्णलेशवान्
कुमुदच्छविः ॥ पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः ।" इत्युक्तम् ।

**'अनुपसर्जनात्'** ( ४-१-१४ ) इति । **अधिकारोऽयम् इति**—स्वदेशे निराकाङ्क्षबोधाजनकः सुन्नुत्तरोत्तरसम्बद्धोऽधिकारः । सम्बन्धस्यावधिमाह—**यूनस्तिरिति**—अवधिभूतेऽपि सम्बन्धश्चेत्तदा अभिव्याप्तिरवधिरित्युच्यते । तेन 'अभिव्याप्य' इत्युक्त्या 'यूनस्तिः' इति सूत्रेऽपि सम्बन्धो बोधितः । एवञ्च बहवो युवानो यस्यां सा 'बहुयुवा' इत्यत्र न तिप्रत्ययः ।

ननु नलोपस्यासिद्धतया 'ऋन्नेभ्यः' इति ङीप् स्यादिति चेन्न, 'नलोपः सुप्स्वर' इति नियमेन ङीपि कर्तव्ये नलोपस्यासिद्धत्वाभावात्, परत्वान्नलोपस्यैव प्रवृत्तेः । नचान्तवर्तिनीं विभक्तिमादाय पदत्वस्य 'उत्तरपदत्वे' इति प्रत्ययलक्षणप्रतिषेधेन नलोपाप्राप्त्या नान्तलक्षणङीब् दुर्वार इति चेन्न, बहुव्रीहिप्रकृतिकसुपमादाय पदत्वस्य सत्त्वेन नलोपे बाधकाभावात्, 'अन उपधालोपिनः' इति नियमेन ङीपोऽप्राप्तेश्च । युवन्शब्दस्तु न उपधालोपी 'सम्प्रसारणाच्च' इति पूर्वरूपेण बाधात् । 'अनो बहुव्रीहेः' इति निषेधाच्च न ङीप् । डाप् तु स्यादेव ।

उपसर्जनम् = अप्रधानम् । ततो न ङीबादिः । इति प्रसज्यप्रतिषेधः । यदि पर्य्युदासः स्यात्तदा विरुद्धार्थेऽपि समासात् उपसर्जनविरुद्धात्प्रातिपदिकादित्यर्थे कुक्कुटी इत्यादौ उपसर्जनविरुद्धत्वाभावाज्जातिलक्षणो ङीषादिर्न स्यात् । प्रसज्यप्रतिषेधे तु न दोष उपसर्जने एव निषेधप्रवृत्तेः । इति स्पष्टं पदमञ्जर्य्याम् । उपसर्जनत्वञ्च—'स्वविशिष्टप्रकारताप्रयोजकत्त्वम्—वैशिष्ट्यञ्च प्रकारतायाम् स्वान्तपर्य्याप्तशक्तिनिरूपकार्थनिष्ठमुख्यविशेष्यतानिरूपितत्वम्, स्वपर्य्याप्तशक्तिज्ञानाधीनोपस्थितीयविशेष्यतासामानाधिकरण्यम्, एतदुभयसम्बन्धेन । यस्योपसर्जनत्वं चिकीर्षितं तत्स्वम् । स्वान्तत्वञ्च व्यपदेशिवद्भावानतिदिष्टम् । तेन 'तदोः सः' ( ७-२-१०६ ) इति सूत्रभाष्ये 'अनन्त्ययोः' इत्यस्य प्रत्याख्यानावसरे 'तदोः सः सौ' ततः 'अदसः' इति । नियमार्थमिदम् । 'अदस एव दकारस्य नान्यस्य दकारस्येति यदि नियमः क्रियते—द्वीयतेरप्रत्यये द्व इति प्राप्नोति । स्व इति चेष्यत' इति भाष्येण न विरोधः; द्व इत्यस्यानतिदिष्टस्वान्तत्वाभावेनोपसर्जनत्वाभावात् ।

लक्षणसमन्वयश्चेत्थम्—**'बहुकुरुचरा'** इत्यत्र स्वम् = टस्तदन्तं बहुकुरुचर इति, तत्पर्य्याप्ता शक्तिः बहुभिन्ना ये कुरुदेशाधिकरणकचरणकर्तारस्तदधिकरणभूता या नगरी तन्निरूपिता, तन्निरूपकोऽर्थो नगर्य्यन्तस्तन्निष्ठमुख्यविशेष्यतानिरूपितत्वं टप्रत्ययार्थकर्तृनिष्ठप्रकारतायाम् इति प्रथमसम्बन्धोऽस्ति, स्वम् = टस्तत्पर्य्याप्ता शक्तिः कुरुदेशाधिकरणकचरणकर्तृत्वावच्छिन्ननिरूपिता तज्ज्ञानाधीनोपस्थितीयविशेष्यता कर्तृनिष्ठा तत्सामानाधिकरण्यं तत्प्रकारतायाम् इति कुरुचरपदार्थस्योपसर्जनत्वमेव ।

ननु बहवः कुरुचरा यस्यां नगर्य्यां सा बहुकुरुचरा, इत्यादौ 'टिड्ढाणञ्' इति ङीब्वारणाय 'अनुपसर्जनात्' इति सूत्रम्, तत्र 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधिनिषेधात् टिद्रूपत्वात् प्रातिपदिकाद् ङीब्विधानेन टप्रत्ययगतटित्त्वस्य कुरुचरे आरोपेऽपि 'बहुकुरुचररूपप्रातिपदिकस्य टिद्रूपत्वाभावाद् ङीपोऽप्राप्त्या 'अनुपसर्जनात्' इति व्यर्थम् इत्यत आह—**अयमेवेति**—'अनुपसर्जनात्' इत्यधिकार एवेत्यर्थः । तथा च टित् कुरुचर इति तदन्तात् बहुकुरुचर' इत्यस्मात् प्राप्तस्य ङीपो वारणाय 'अनुपसर्जनात्' इति चरितार्थम् अनुपसर्जनं यत् तदन्तादित्यर्थे प्रकृते कुरुचरस्यान्यपदार्थनगर्य्यादौ विशेषणतया अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वरूपोपसर्जनत्वेन अनुपसर्जनटिदर्थाभावेन ङीपोऽभावः सिद्ध्यति ।

*टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।* [ ४-१-१५ ]

ङीप्रत्यये तदन्तविधिज्ञापनफलन्तु 'वन्नन्तं यत्तदादि तदन्तं यत् स्त्रियां वर्तमानं प्रातिपदिकम् ततो ङीब्रावि'त्यर्थेन बहवो धीवानो यस्यां सा बहुधीवरी इत्यत्र ङीप् सिध्यति । न चात्रापि 'अनुपसर्जनात्' इति निषेधः, अत्र तदधिकाराभावात् ।

न च कुरुचर इवाचरति नद इवाचरति इत्यर्थे च आचारक्विबन्तात् कर्तरि क्विपि कुरुचरा, नदा, इत्यत्र ङीब्वारणाय तदन्तविध्यभावेऽपि 'अनुपसर्जनादि'त्यस्य चारितार्थ्यम् इति वाच्यम्, क्विपि 'अतो लोपः' इत्यलोपेऽदन्तप्रातिपदिकाभावेन ङीपः टापश्चाप्राप्तेः । ननु गौर इवाचरतीत्यर्थे 'कर्तुःक्यङ्' इति क्यङि 'अकृत्सार्वधातुकयोः' इति दीर्घे गौरायधातोः क्विपि अलोपयलोपयोः 'गौरा' इत्यत्र 'षिद्गौरादिभ्यश्च' इति ङीष्वारणार्थमनुपसर्जनादिति तदन्तविधिज्ञापकत्वमसङ्गतमिति चेन्न, तदन्तविधिज्ञापकपरभाष्यप्रामाण्येनैतामनभिधानात् ।

न चात्रापि 'अतः' इत्यस्यानुवृत्तिः, गौरादिगणे बृहत्, महत्शब्दपाठस्य वैयर्थ्यापत्त्या 'अतः' इत्यस्याननुवृत्तेः । किञ्च बहुशब्दादाचारक्विबन्तात् 'बह्वादिभ्यश्च' इति ङीष्वारणाय 'अनुपसर्जनादि'त्यस्यावश्यकत्वादेर्भाष्यानुक्त्या 'द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते' इति भाष्योक्त्या उपसर्जनत्वलक्षणे तदन्तत्वस्य व्यपदेशिवद्भावानतिदिष्टस्यैव ग्रहणेनाचारादिक्विबाद्यन्तेषु कन्ड्वन्तेषु चोपसर्जनत्वाभाव एवेत्यनभिधानकल्पनं चिन्त्यमेवेत्युपाध्यायाः ।

**'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः'** (४-१-१५) इति । टित् च, ढश्च, अण् च, अञ् च, द्वयसच् च, दघ्नच् च मात्रच् च तयप् च, ठक् च, ठञ् च, कञ् च, क्वरप् च, एतेषां समाहारः । ततः पञ्चम्येकवचनम् । अनुपसर्जनादित्यधिकृतम् । तत् सूत्रपठितानां टिदादीनां विशेषणम् 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' शीघ्रोपस्थितिकत्वात् । तदाह—**अनुपसर्जनं यत् टिदादीति** । अनुपसर्जनीभूतं यत् टित्, अनुपसर्जनीभूताश्च ये ढादय इत्यर्थः । तत्र ढादय एकादश प्रत्ययाः, तेन 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणम्' इति परिभाषया तदादिविशेष्यकतदन्तविधौ ढाद्यन्तं यत्तदादीति लभ्यते । 'प्रातिपदिकात्' इत्यधिकृतम् । तस्य टित् ढाद्यन्ततदादिविशेषणम् । तेन तदन्तविधौ अनुपसर्जनं यत् टित्तदन्तम्, ढाद्यन्ततदाद्यन्तम्, च यदन्तं प्रातिपदिकं स्त्रियां वर्त्तमानं ततो ङीप् 'स्त्रियाम्' इत्यधिकृतञ्च प्रातिपदिकविशेषणम् । अत्र मानमग्रे वक्ष्यते ।

टिच्च त्रिविधम् । प्रत्ययरूपम्—यथा 'चरेष्टः' ( ३-२-१६ ) इति । प्रातिपदिकम्—नदट् चोरट् इति । यदि गणे पचादिविहितस्याच्प्रत्ययस्यैव टित्वं प्रतिज्ञायत इत्याद्ययस्तदा टिद्रूपं प्रातिपदिकं नास्ति । वस्तुतस्तु 'टिड्ढाणञ्' इत्यत्र टित्प्रातिपदिकं गृह्यते । तच्च साक्षात् टित्वाभावे टिदवयघटितत्वेन । अवयवे हि च तत् टित्त्वमकिञ्चित्करं तत्समुदाये आरोप्यते । स चावयवः प्रत्ययः ख्यु-ष्युल्-ल्युडादिरूपो धातुरूपश्च धातुरूपश्चैक एव 'धेट् पाने' इति । तत्र यं समुदायं योऽवयवो न व्यभिचरति तादृशसमुदाये टित्त्वमारोप्यते । 'चरेष्टः' इति टित्त्वम् अधिकरणोपपदे एव चरेष्टविधानादधिकरणघटितं समुदायं न व्यभिचरतीति कुरुचरे एव टित्त्वमारोप्यते । तदुक्तं भाष्यकृता 'कुरुचरशब्दात्प्रत्ययो विधीयते तत्र कः प्रसङ्गो यद् बहुकुरुचरशब्दान्नैव प्राप्नोति' इति अत्र कुरुचरशब्दात्प्रत्ययो विधीयते इत्युक्त्या 'कुरुचर' इत्यस्य टित्त्वं सूचितम् । धातुरूपम्—धेट् पाने इति—एतस्य 'स्तनंधयी' इत्युदाहरणं वक्ष्यते । तथा च प्रकृते टित्पदं न प्रत्ययमात्रबोधकम् । अत्र प्रत्ययमात्रबोधकत्वाभावात्तदादिविशेष्यकतदन्तविधिर्न ।

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात्। कुरुचरी। नदट्-नदी। उपसर्जनत्वान्नेह। बहुकुरुचरा।

---

एवञ्च टिदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्। टादयस्तु प्रत्यया एवेति प्रत्ययग्रहणपरिभाषया तदादेरित्यस्योपस्थित्या तदादिविशेष्यकतदन्तविधौ टाद्यन्तं यत्तदादि तदन्तं यददन्तप्रातिपदिकं ततः स्त्रियां ङीबित्यर्थः। टित् टादि चानुपसर्जनं ग्राह्यम्। तदाह—**उपसर्जनं यट्टिदादीति-तदन्तमिति**—टिदन्तम् टाद्यन्ततदाद्यन्तञ्चादन्तं यत्प्रातिपदिकमित्यर्थः। **कुरुचरीति**—कुरुषु देशेषु चरतीति विग्रहे अधिकरणे उपपदे चरधातोष्ट इत्यर्थकेन 'चरेष्टः' इत्यनेन कर्तरि टप्रत्यये टस्येत्त्वलोपयोः 'उपपदमतिङ्' इत्युपपदसमासे प्रातिपदिकसंज्ञायां विभक्तेर्लुकि स्त्रीत्वविवक्षायां कुरुदेशाधिकरणकचरणकर्त्री इत्यर्थे टित् 'अ' इति। स च न कुत्रचिद्विशेषणीभूतार्थकर्तृवाचकमित्यनुपसर्जनीभूतम्। तदन्तं कुरुचर इति। ततो ङीपि 'यस्येति च' इतीकारे परे अकारस्य लोपे ततः सुप्रत्यये 'हल्ङ्याप्' इति सुलोपे 'कुरुचरी' इति। टित्प्रातिपदिकमुदाहरति—**नदट् नदीति**—'णद अव्यक्ते शब्दे' इत्यतः 'नन्दिग्रहिपचादिभ्यः' इत्यच् प्रत्यये गणे 'नदट्' इति पाठेन टस्येत्त्वे स्त्रियां ङीपि अलोपे सौ तस्य लोपे 'नदी' इति।

'धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते।

न ता नदीशब्दवहाः' इति शब्दस्तोमनिधौ। पचादौ—नदट्, भषट्, चरट्, गरट्, लरट्, चारट्, गाहट्, सूरट्, देवट्, एते शब्दाः टितः पठिताः। बहवः कोशेषु नोपलभ्यन्ते। उपसर्जनं यट्टिदादीत्यत्रोपसर्जनत्वविशेषणस्य फलमाह—**उपसर्जनत्वान्नेहेति**—उपसर्जनत्वं पूर्वमुक्तम्। तस्यायं फलितोर्थः टिदाद्यर्थादन्यो योऽर्थस्तन्निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपम्।

**बहुकुरुचरेति**—बहवः कुरुचरा यस्यामित्यर्थे बहुव्रीहौ—बहुत्वसंख्याविशिष्टकुरुदेशाधिकरणकचरणकर्तृविशिष्टा इत्यर्थे स्त्रीत्वविशिष्टान्यपदार्थनगर्यादिनिष्ठविशेष्यतानिरूपितचरणकर्तृनिष्ठप्रकारताप्रयोजकत्वमेव टप्रत्ययस्येत्युपसर्जनत्वादनुपसर्जनटितोऽभावान्न ङीबित्यर्थः।

ननु 'स्त्रियाम्' इत्यपि टिदादेः श्रुतस्यैव विशेषणमस्तु। एवं च प्रकृते टितः स्त्रियामवर्तनादत्र टाप् इति चेन्न, तथा सति 'उपसर्जनात्' इत्यस्य वैयर्थ्यं स्यात्तज्ज्ञापयति—'उपसर्जनात्' इति ज्ञापयति 'स्त्रियाम्' इति अदन्तप्रातिपदिकस्यैव विशेषणमिति। तेन 'बहवो धीवानो यस्यामित्यर्थे' 'बहुधीवरी' इति सिध्यति। श्रुतस्य विशेषणत्वे तु वन्नन्ततदादेः स्त्रियामवर्त्तनात् ङीब्रौ न स्याताम्। तस्माद् 'न सुपाधेरुपाधिर्भवति' इति न्यायेन 'स्त्रियाम्' इति प्रधानस्य प्रातिपदिकादित्यस्यैव विशेषणम्।

नन्वेवम् 'अनुपसर्जनात्' इत्यपि प्रधानाप्रधानन्यायेन ङीप् प्रकृतेरेव विशेषणं स्यात्। प्राधान्यञ्च—'साक्षाद्विध्युद्देश्यत्वेनोपात्तटिदादिनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपम्' इति 'बहुकुरुचरा' इत्यत्र दोषतादवस्थ्यमिति चेन्न, अनुपसर्जनादित्यस्य प्रातिपदिकविशेषणत्वे 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन 'अनुपसर्जनात्' इत्यस्य वैयर्थ्यापत्त्या तेन गृह्यमाणविशेषणत्वस्यैव ज्ञापनात्। अनुपसर्जनाधिकारेण 'यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यते' इति न्यायेन त्रितयं ज्ञाप्यते। १—तदन्तविधिः, २—'अनुपसर्जनात्' इति गृह्यमाणस्यैव विशेषणम्, ३—'स्त्रियाम्' इति प्रधानीभूतप्रातिपदिकस्यैव विशेषणमिति च। तत्राद्यस्य फलमाह—अत एव 'कौम्भकारेयः' इति भाष्योक्तप्रयोगः सिध्यति। तथा हि—तदन्तविध्यभावे केवलात् कारशब्दान्ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात्समुदायस्य स्त्रीप्रत्ययान्ततया ततोऽपत्यार्थे 'स्त्रीभ्यो ढक्' इति ढकि यद्यपीष्टसिद्धिः।

नच समुदायस्य स्त्रीप्रत्ययान्तत्वेऽपि प्रातिपदिकत्वाभावाड् ढकोऽप्राप्तिः, तत्र प्रातिपदिकादित्यस्यासम्बन्धात्। अन्यथा ङ्याब्ग्रहणस्यैतदर्थमावश्यकतया ङ्याबन्तात्तद्धितोत्पत्तिरूपफलवर्णनपरं

भाष्यं ङ्याप्सूत्रस्थं विरुध्येत। तथाऽपि कुम्भेनोपपदसमासे केवलस्य कारस्यापि प्रातिपदिकत्वा-तदर्थस्यापि स्त्रीत्वेन योगात् ततो ङीपि विशिष्टस्यापत्येन योगे कुम्भेनैकार्थीभूतस्यापि कारीशब्द-स्यापत्यार्थेनायोगस्य वक्तुमशक्यतयाऽनेनापि अपत्यार्थेन योगे कदाचित्ततोऽपि ढकि समासात्मक-समुदायस्य ढङ्निरूपिताङ्गत्वाभावेन 'तद्धितेष्वचाम्' इति कुम्भशब्दोकारे वृद्ध्यनापत्तेः।

नच तदन्तविधिपक्षे समुदायान्ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन कदा-चित्कारीशब्दाड् ढगापत्तिस्तदन्तविधिवादिनोऽप्यस्त्येवेति वाच्यम्, 'अनुपसर्जनात्' इत्यस्याधिका-रसामर्थ्येन 'तदादिनियमाभावेनाधिकस्यैव कार्यं नतु न्यूनस्य' इति ज्ञापनेनादोषात्। 'अनुपसर्जनात्' इत्यस्य प्रयोजनप्रदर्शनपरेण 'समासे च कृते' अवयवाद्युत्पत्तिः प्राप्नोति। अवयवाद्युत्पत्तौ सत्यां को दोषः? कौम्भकारेयो न सिध्यति। अवयवस्य वृद्धिस्वरौ स्याताम्। तस्मादनुपसर्जनाधिकारः' इति भाष्येणासहाये एव व्यपदेशिवद्भाव इति तदन्तविधिपक्षेऽपि कारीशब्दाड्ढगापत्तिरिति परास्तम्। एतद्दोषप्रदर्शनपरभाष्येण निष्कृष्यैकार्थीभावस्यैव (पर्याप्त्यैकार्थीभावस्यैव) प्रत्ययोत्पत्तौ निमित्तत्वमित्यपि निरस्तम्।

ननु 'सर्वादीनि' इति सूत्रे भाष्ये 'अनुपसर्जनात्' इति योगः प्रत्याख्यायत इत्युक्तम्। तत्र तु तत्प्रयोजनं प्रदर्श्यते इति परस्परं विरुद्धमिति चेन्न, तत्र 'प्रत्याख्यायते' इत्युक्तिः 'संज्ञोपसर्जनी-भूतानां प्रतिषेधः' इति वार्तिकरीत्या। अत्र तु स्वीयसिद्धान्तः निष्कृष्यैकार्थीभाव एव वृत्तिप्रयोजक इति न भाष्यकारमतम्। अत एव 'परमगार्ग्यायण' इति 'प्रत्ययग्रहणे यस्मात्स विहितः' इति परिभाषायाः फलम् 'येन विधिस्तदन्तस्य' इति भाष्ये उक्तं संगच्छते। परमगार्ग्यस्यापत्यमित्य-र्थेऽपि गार्ग्येण सह निष्कृष्यैकार्थीभावाभावेऽपि गार्ग्यशब्दादेव 'यञिञोश्च' (४–१–१०१) इति फक्।

नन्वेवं राजपुरुषस्यापत्यमित्यर्थे पुरुषशब्दात् 'अत इञ्' इतीञः, सुत्रनडस्यापत्यमित्यर्थे नडशब्दात् 'नडादिभ्यः फक्' इति फको वारणाय 'प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोज-कतापर्य्याप्त्यधिकरणात्प्रातिपदिकात्प्रत्ययः' इति नियमस्यावश्यकतया प्रकृते प्रत्ययार्थापत्यनिष्ठ-विशेष्यतानिरूपितप्रकारताप्रयोजकतापर्य्याप्त्यधिकरणम्–कुम्भकारीति न तु कारीति ततो ढगापादन-परं भाष्यमसङ्गतमिति चेन्न, उक्तनियमस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय-प्रत्ययविधानातिरिक्तस्थले एव प्रवृत्तेः।

प्रकृते 'स्त्रीभ्यो ढक्' इत्यस्य स्त्रीप्रत्ययान्तेभ्यो ढगित्यर्थेन प्रत्ययत्वव्याप्यस्त्रीप्रत्ययत्वाव-च्छिन्नोद्देश्यताकतया तन्नियमस्याप्रवृत्त्या भाष्योक्तापत्तिर्नासङ्गता। 'यदि' तु 'ढकि लोपः' (४–१–१३२) इत्यनेन पितृष्वसुः, 'मातृष्वसुश्च' इत्यनेन मातृष्वसुश्च ढकि लोपविधानात् 'स्त्रीभ्यो ढक्' इत्यस्य स्त्रीवाचकेभ्यो ढगित्येवार्थस्तदा उक्तनियमसंकोचाविषयतया भाष्यासङ्गति-र्दुर्वारेत्युच्यते तदा 'अयः शूलः' (५–२७७६) इति सूत्रे भाष्ये 'शिवभागवतः' इति प्रयोगेण प्रथ-मान्तात् अस्य भक्तिः—इदमर्थकर्तृकभजनकर्मीभूतेऽर्थे 'भक्तिः' (४–३–९५) इति सूत्रेण एकदेश-भूतभगवच्छब्दादण्दर्शनेन परमगार्ग्यायणः इति भाष्यप्रयोगेण, 'कौम्भकारेयः' इत्यत्र कारीशब्दा-दापत्तिदानपरभाष्येण च 'प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्य्याप्त्यधिकरणात् प्रातिपदिकादेव प्रत्ययः' इति नियमस्य शिष्टप्रयोगानुरोधेनानित्यत्वं कल्पनीयम्। इति न क्वचि-त्कश्चिद्दोषः। 'देवीभागवतम्' इत्यत्र, पुंवद्भावाभावस्तु 'संज्ञापूरण्योश्च' इति निषेधाद्वारणीयः।

केचित्तु तदन्तविधिद्वयेन कुम्भकारादणन्तान्ङीप्यपि अनुपसर्जने स्त्रीप्रत्यये तदादिनिय-माभावेन कारीशब्दात्प्राप्तं ढकं वृक्षप्रचलनन्यायेन वारयन्ति। तथा हि–वृक्षः प्रचलन् सहावयवैः प्रचलति = कम्पते। न तु शाखाप्रचलने वृक्षः प्रचलति। तथा समुदायात्प्रत्यये कारीशब्दोऽपि

वक्ष्यमाणेत्यत्र टित्त्वादुगित्त्वाच्च ङीप्प्राप्तः ।

प्रत्ययविशिष्टः स्यादिति तन्न, यत्रावयवस्य कार्यमवयविनि न दृश्यतेऽवयविकार्यन्तु अवयवेऽपि दृश्यते तत्रैव वृक्षप्रचलनन्यायस्य विषयः ।

प्रकृते तु कारीरूपावयवो यदि स्वाव्यवहितपूर्वत्वसम्बन्धेन प्रत्ययरूपकार्य्यविशिष्टः स्यात्तदा समुदायोऽपि कुम्भकारीशब्दः स्वाव्यवहितपूर्वत्वसम्बन्धेन फक्प्रत्ययरूपकार्य्यविशिष्टः स्यादेवेति न वृक्षप्रचलनन्यायविषयत्वम् ।

यत्तु कुम्भकारशब्दान् ङीप्यपि ढग्दुर्लभः 'सेनान्तलक्षणकारिभ्यश्च' ( ४–१–१५२ ) इति ण्येन बाधात् । कुम्भकारीत्यस्य शिल्पिवाचकत्वादिति तन्न, कुम्भकारशब्दस्य शिल्पिवाचकत्वेऽपि कुम्भकारीशब्दस्य शिल्पिवाचकत्वं लिङ्गविशिष्टपरिभाषया आरोपेणैव वाच्यम् । तस्याश्चानित्यत्वात्तत्रारोपाभावेन शिल्पिवाचकत्वाभावात् ।

यदि तु 'शूद्रा चामहत्पूर्वा जातिः' इत्यत्रामहत्पूर्वग्रहणेन तदन्तविधिर्ज्ञाप्यते तदा 'बहुकुरुचरा' इत्यत्र ङीपोऽभावाय 'अनुपसर्जनात्' इत्यस्यावश्यकत्वम् ।

तथा च अनुपसर्जनाधिकारेण यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यते इति न्यायेन तदादिनियमाभावेनाधिकस्यैव कार्य्यं बोध्यते, न तु न्यूनस्येति, असहाये एव व्यपदेशिवद्भाव इति, 'स्त्रियाम्' इति तदन्तप्रातिपदिकस्यैव विशेषणम् इति, अनुपसर्जनम् गृह्यमाणस्यैव विशेषणमिति च । एतादृशेष्वर्थेष्वत्रत्यं भाष्यमपि मानं बोध्यम् ।

**'टिड्ढाणञ्'** इति सूत्रे ठक्ठञोर्ग्रहणमपहाय 'ठ' इति कृत्वा 'उत्सृष्टानुबन्धग्रहणे सामान्यग्रहणम्' इति न्यायेन ठक्ठञ्भ्यां ङीप् स्यादिति चेन्न, 'अत इनिठनौ' ( ५–२–११५ ) इति ठनः 'काश्यादिभ्यष्ठञ् ञिठौ' ( ४–२–११६ ) इति ञिठश्च ठग्रहणेन ग्रहणापत्तेः । **अदन्तमिति—** अकारश्च प्रत्यासत्त्या टिदादेरेव । तेन पञ्चभिरश्वैः क्रीता 'पञ्चाश्वा' इत्यत्र न ङीप्, ठको लुकि ठकोऽकाराभावात् । नच प्रत्ययलक्षणम्, वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधात् । स्थानिवत्त्वेनादन्तत्वं तु न, अनल्विधाविति निषेधात् । पञ्च स्त्रीगोव्यक्तयो धनं यस्येत्यर्थे बहुव्रीहौ पञ्चशब्दस्य गोशब्देनावान्तरतत्पुरुषे 'गोरतद्धितलुकि' इति गोऽन्तात् टचि 'टिड्ढाणञ्' इति टिदन्तत्वान् ङीप् तु न, एतत्संज्ञाफलभूतविभक्तीतरधनपदसमभिव्याहारापेक्षयैवार्थबोधजनकत्वेनार्थवत्त्वाभावेन प्रातिपदिकत्वाभावात् टिदन्तादन्तादेव प्रातिपदिकाद्विधीयमानस्य ङीपोऽप्राप्तेः ।

आपिशलिना प्रोक्तं ग्रन्थमधीते या सा 'आपिशला' अत्रापि न ङीप् 'प्रोक्ताल्लुक्' इत्यध्येत्रणो लुप्तत्वेन ढादीनां योऽकारस्तदन्तात् स्त्रियां वर्तमानात्प्रातिपदिकादेव ङीपो विधानेन वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधात्प्रत्ययलक्षणाप्राप्तेः । अध्येत्रर्थगतस्त्रीत्वमादाय प्रोक्तार्थकाण्निमित्तकस्य न प्राप्तिस्तदण उपसर्जनत्वात् । अनुपसर्जनादित्यस्याभावे 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणतया तदणः स्त्रियामवर्तनात् । अत एव 'काशकृत्स्निना प्रोक्तां मीमांसामधीते 'काशकृत्स्ना' अत्रापि न ङीप्, अध्येत्रणो लुप्तत्वात् । प्रोक्तार्थगतस्त्रीत्वमादाय जातस्य ङीपः 'लुक् तद्धितलुकि' इति लुप्तत्वेन लक्ष्ये लक्षणन्यायेन पुनरप्राप्तेः । तस्मात् 'अनुपसर्जनात्' इत्यस्य 'बहुकुरुचरा' इत्येव व्यावर्त्यं बोध्यम् ।

**वक्ष्यमाणेत्यत्रेति—** वच परिभाषणे 'ब्रूञ् व्यक्तायां वाचि' इत्यतः कर्मणि लृटः 'सद्वा' इति शानजादेशे 'स्यतासी लृलुटोः' इति स्ये ब्रुवो 'ब्रुवो वचिः' इति वचादेशे कुत्वे सस्य षत्वे 'आने मुक्' इति मुकि नस्य णत्वे टापि च 'वक्ष्यमाणा' इति । अत्र लृडादेशस्य शानचः स्थानिवद्भावेन टित्वात् 'टिड्ढ' इति ङीप् प्राप्नोति, 'बहुवक्ष्यमाणा' इत्यत्र स्थानिवत्त्वेनोगित्त्वात् 'उगितश्च' इति ङीप् प्राप्नोति । अत्र टित्त्वात्तु न ङीपः प्राप्तिः, टित उपसर्जनत्वात् ।

यासुटो ङित्त्वेन 'लाश्रयमनुबन्धकार्यं नादेशानाम्' इति ज्ञापनान्न भवति। श्ना-शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा।

---

'वक्ष्यमाणा' इत्यत्र 'उगितश्च' इति न स्यात्, परत्वेन 'टिड्ढ' इत्यनेन बाधात्। न च स्थानिनो लृटः टकारस्य ऋकारस्यालत्वेन तन्निमित्तकङीब्विधौ 'अनल्विधौ' इति निषेधः शङ्क्यः, इत्त्वंश्कालन्निमित्तके इत्त्वघटितवर्णमात्रवृत्तिधर्मघटितधर्मातिदेशे क्त्विति विहितस्य 'घुमास्था' इती-त्त्वस्य 'न ल्यपि' इति निषेधसामर्थ्येनानल्विधौ इति निषेधाप्रवृत्तिज्ञापनात्। तथा हि—अनुबन्ध-कार्य्ये 'अनल्विधौ' इति निषेधप्रवृत्तौ क्त्वावृत्तीत्त्वधर्मविशिष्टाल्मात्रवृत्तिकत्वधर्मघटितकित्त्वस्या-ल्मात्रमात्रवृत्तिघटितत्वेन स्थानिवद्भावस्य निषेधात् ल्यपः कित्त्वाभावेनेत्त्वाप्राप्त्या 'न ल्यपि' इति निषेधवैयर्थ्येन उक्तेऽनुबन्धकार्य्ये तदप्रवृत्तिज्ञापनात्।

ज्ञापिते च टित्त्वोगित्त्वनिमित्तकस्य ङीपोऽनुबन्धकार्य्यत्वेन स्थानिवत्त्वनिषेधाप्रवृत्त्या स्थानि-वत्त्वेन ल्यपः कित्त्वात्प्राप्तस्य ईत्त्वस्य वारणाय 'न ल्यपि' इति सूत्रस्य चारितार्थ्यम्। फलञ्च 'रमा-याम्, नद्याम्' इत्यादौ याडाटौ अपवादत्वाद् बाधित्वा 'ङेराम् नद्याम्नीभ्यः' इत्यामि कृते स्थानि-वत्त्वेनामो ङित्त्वाद्याडाटौ भवतः। अन्यथा याडाटोरप्राप्त्या नुडापत्तिः। तथा च लृडादेशस्य शानचः टित्त्वादुगित्त्वाच्च ङीप् दुर्वार इत्याशङ्कां वारयति—**यासुटो ङित्त्वेनेति**—

'यासुट् परस्मैपदेषूदात्तो ङिच्च' (३-४-१०३) लिङादेशानां परस्मैपदानां यासुट् स यासुट् ङित्। अत्र यासुटा ङित्त्वविधानं व्यर्थम्, यासुटो ङित्त्वे फलाभावात् 'अवयवेष्वचरितार्थः समुदायोप-कारको भवति' इति न्यायेन यदागमन्यायेन यासुटः परस्मैपदावयवतया यासुड्विशिष्टं परस्मैपदं ङिदित्यर्थे परस्मैपदस्य लिङ्स्थानिकस्य स्थानिवत्त्वेन ङित्त्वस्य सिद्धतया समुदायस्य ङित्त्वार्थं कृतं यासुण्ङिद्वचनं व्यर्थीभूय ज्ञापयति—

**लाश्रयमनुबन्धकार्य्यमादेशानां नेति।** आदेशसम्बन्ध्यनुबन्धकार्य्ये लाश्रयत्वम्—लनिमित्त-कत्वञ्च स्ववृत्तिङित्त्वादिधर्मनिमित्तकत्वेन। न च यासुटो ङित्त्वम् 'स्तुयात्' इत्यादौ 'उतो वृद्धि-र्लुकि हलि' (७-३-८९) इत्यनिग्लक्षणाया अपि वृद्धेर्निषेधार्थमिति वाच्यम्, यासुटो ङित्त्वस्य चारितार्थ्यं वाच्यम्, तदुक्तार्थज्ञापनतया अनिग्लक्षणवृद्धिनिषेधार्थत्वेन वेत्यत्र विनिगमनाविरहात् 'उत औत् लुकि' इति वक्तव्ये वृद्धिग्रहणसामर्थ्येन स्थानिनिर्देशेऽपि इक्परिभाषोपस्थित्या तस्या अपीग्लक्षणत्वाच्च।

ननु लाश्रयानुबन्धकार्य्यस्य तदादेशेषु अभावकल्पनेऽपि 'ब्रूतात्' इत्यत्र 'ब्रुव ईट्' इति पितो विधीयमानस्य ईडागमस्य लाश्रयानुबन्धकार्य्यत्वाभावेन ईटि कर्तव्ये तातङः स्थानिवत्त्वेन पित्त्वादी-डापत्तिर्दुर्वारा। किञ्च भाष्ये 'ङिच्च पिन्न, पिच्च ङिन्न' इत्युक्तेः लकारगतङित्त्वं तिबादावति-देशेन न लभ्येत। अत एव विशेषविहितेन यासुटो ङित्त्वेन पित्त्वस्य बाधाद् 'युयात्' इत्यत्र 'उतो वृद्धिर्लुकि हलि' इति वृद्धिर्न। तथा च वृद्ध्यभावाय यासुटो ङित्त्वमावश्यकं यदि तदा श्नादेशस्य शानचः शित्त्वेन अनुबन्धघटितस्यापि अल्त्वव्याप्यधर्मघटितधर्मस्यातिदेशे क्वचिदनल्विधाविति निषे-धज्ञापनात् 'वक्ष्यमाणा' इत्यत्र टित्त्वोगित्त्वयोः स्थानिवत्त्वेनालाभान्न ङीप्। यदि तु शानचः शित्त्वं 'हलश्नः' इति सूत्रे एव भाष्यकृता प्रत्याख्यातमिति तेनापि क्वचिदनुबन्धघटितधर्मस्य स्थानिवत्त्वेऽ-प्यनल्विधाविति निषेधः प्रवर्तते इति ज्ञापयितुं न शक्यत इत्युच्यते तदा 'वक्ष्यमाणी' इत्येव भवितव्यम्। 'वक्ष्यमाण' इत्यस्यैव शिष्टाभिमतत्त्वे अजादित्वात् टाप् कल्पनीय इति नागेशाः।

सूत्रे ढपदेन सानुबन्धकस्यैव ढको ग्रहणम् न 'शिलाया ढः' (५-३-१०२) इत्यस्य, नापि सभाया इत्यनुवृत्तौ 'ढश्छन्दसि' इत्यस्य च, उभयविहितढान्तस्य स्त्रियामवृत्तेः। तदुक्तं

सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्री। पञ्चतयी।

---

भाष्यकृता—'अननुबन्धको ढशब्दो नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते। ननु चायमस्ति 'शिलाया ढः' इति। नैष स्त्रियां वर्त्तते। अयं तर्हि सभाया यः ढश्छन्दसीति। एषोऽपि न स्त्रियां वर्तते, किं कारणम्? तत्र साधुरिति वर्त्तते। कथं च स्त्री नाम सभायां साध्वी स्यात्' इति। एतेन स्त्रिया जनसङ्घे गमनस्यासाधुत्वम् वस्त्रादिनावगुण्ठनस्य साधुत्वञ्च सूचितम्।

ननु सभायां साधुरियं ब्राह्मणपङ्क्तिः परिषद्वा इत्यस्य साधुत्वदर्शनाद् भाष्योक्तिश्चिन्त्येति चेन्न, छन्दसि दृष्टस्यैवानुविधानेन स्त्रियां तथा प्रयोगस्यादर्शनात्। लोके तु सभाया य एव न तु ढः।

ननु सूत्रे ठक्ठञोर्ग्रहणं व्यर्थम्, ठमात्रस्य पाठेनैव निरनुबन्धकस्याभावादेवाविशेषात् ठक्ठञोर्ग्रहणं स्यादिति चेन्न, ठन्ठिठञोर्व्यावृत्तये उभयोरुपादानात्। प्रत्यासत्त्या टिदाद्यवयवादन्तस्य ग्रहणात्' पञ्चभिरश्वैः क्रीता 'पञ्चाश्वा' इत्यत्र ढको लुकि वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति ठकोऽकाराभावान्न ङीप्। **सौपर्णेयीति**—शोभनानि पर्णान्यस्या यद्वा सुपर्णो गरुडः सोऽस्त्यस्या इत्यर्थे अर्शआदित्वादचि गौरादित्वान्ङीषि 'सुपर्णी' इति। ततः 'स्त्रीभ्यो ढक्' इति सुपर्ण्या अपत्यं स्त्रीत्यर्थे ढकि आदिवृद्धौ ढस्य एयादेशे 'यस्येति च' इति ईकारलोपे 'सौपर्णेय'शब्दात् ढस्य योऽकारस्तदन्तान् ङीपि अलोपे ङ्यन्तात्सोर्लोपे 'सौपर्णेयी' इति केचित्तु सुपर्णशब्दस्य गौरादौ पाठाभावाददन्तत्वात् टापि सुपर्णशब्दादेव ढगित्याहुः।

**ऐन्द्रीति**—इन्द्रो देवता अस्या इति विग्रहे 'साऽस्य देवता' इति प्रथमान्तादणि आदिवृद्धौ तद्धितान्तत्वात्प्रातिपदिकत्वेन सोर्लुकि अणो योऽकारस्तदन्तान् ङीपि ङ्यन्तात्सौ तस्य लोपे 'ऐन्द्री' इति।

**औत्सीति**—उनत्ति—क्लिद्यतीत्यर्थे 'उन्दी क्लेदने' इत्यतः 'उन्दिगुधिषिभ्यश्च' (उणा० ३ पा० ६८) इति सप्रत्यये किदधिकारात् कित्त्वे नलोपे उत्सः पर्वतादितः स्रवज्जलस्य पातस्थानम्, कश्चन ऋषिर्वा। 'उत्सः प्रस्रवणम्' (अमरः २ का० वर्ग०) इमे द्वे यत्र पानीयं निपत्य बहुलीभवति तत्स्थानस्य नाम्नी। उत्सस्येयमित्यर्थे 'उत्सादिभ्योऽञ्' इत्यञि तद्धितान्तत्वात् प्रातिपदिकत्वे 'सुपो धातुप्रातिपदिकयोः' इति ङसो लुकि आदिवृद्धावलोपे ङीपि सौ तस्य लोपे 'औत्सी' इति। उत्ससम्बन्धिनीत्यर्थः। उत्सस्य ऋषेरपत्यमित्यर्थेऽञि तु नोदाहरणमस्यापत्यप्रत्ययान्तस्य 'गोत्रञ्च चरणैः सह' इति जातित्वेन जातिवाचकतया शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचकान् ङीनित्यर्थकेन 'शार्ङ्गरवाद्यञो ङीन्' इत्यनेन ङीपो बाधात्। अत्र 'शार्ङ्गरवादि' इति लुप्तपञ्चमीके पृथक्पदम्। 'अञः' इति षष्ठ्यन्तम्। 'जातेरस्त्रीविषयात्' इति प्राप्तस्य ङीषोऽपवादोयं योगः।

तथा च 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन जातिवाचकादेव ङीन्। जातेरित्यनुवृत्तिस्तु न, मध्ये विच्छेदेनानुवृत्तौ प्रमाणाभावात। जातेरित्यस्य फलं तु प्रयोगे ङीषेव न ङीन् **ऊरुद्वयसी ऊरुदघ्नी ऊरुमात्रीति**—'सक्थि क्लीबे पुमानूरुः' (अमरः २ का० ६ वर्ग० ७३) जानूपरिभाव ऊरुः। ऊरुप्रमाणमस्या इत्यर्थे 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इत्यनेन प्रमाणवाचकात्प्रथमान्तात् अस्येति षष्ठ्यन्तेन निर्दिष्टप्रमेयेऽर्थे द्वयसच्-दघ्नच्-मात्रच् त्रयः प्रत्ययाः। ऊरुस् इत्यतः त्रिषु प्रत्ययेषु जातेषु तद्धितान्तत्वेन प्रातिपदिकत्वात् सोर्लुकि ङीपि 'यस्येति च' इत्यलोपे सौ तस्य लोपे ऊरुदघ्नीत्यादि रूपम्।

**पञ्चतयीति**—पञ्च अवयवा अस्यावयविन इत्यर्थे अवयवबोधकात्प्रथमान्तात्संख्यावाचकात् अस्येति निर्दिष्टेऽवयविनि तयप् इत्यर्थकेन 'संख्याया अवयवे तयप्' (५-२-४२) इति तयपि 'पञ्चन् जस् तय' इति जाते जसो लुकि सुबन्तत्वेन 'स्वादिष्वसर्वनामस्थाने' इति वा पदत्वान्नलोपे

आक्षिकी। लावणिकी। यादृशी।

---

ङीपि अलोपे सौ तस्य लोपे 'पञ्चतयी' पञ्चावयवविशिष्टेत्यर्थः। **संख्यावाचकाः शब्दाः- संख्याविशिष्टसंख्येयवाचकाश्च समासतो निर्दिश्यन्तेऽत्र**— एकः, द्विः, त्रिः, चतुर्, पञ्चन्, षष्, सप्तन्, अष्टन्, नवन्, दशन्, एकादशशब्दमारभ्य एकोनविंशतिः, विंशतिः, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः, नवतिः, शतम्, सहस्रम्, अयुतम्=दशसहस्रम्। लक्षम्। प्रयुतम्=दशलक्षम्, कोटिः, अर्बुदम्=दशकोटिः, खर्वम्, महापद्मम्=दशखर्वम्। शङ्कुः= नीलम्, जलधिः, शङ्खः, दशशङ्खः, महाशङ्ख इति। मूलभूतशब्दपरिज्ञानायात्र सन्ध्यादिकं कार्यं क्वचित् न कृतमिति **बा० कृ० पञ्चोलिनः।**

**आक्षिकीति**— अक्षैः=पाशैर्दीव्यति=क्रीडति—विजिगीषते वेत्यर्थे 'तेन दीव्यति' (४-४-२) इति तृतीयान्तादक्षशब्दात् ठकि 'ठस्येकः' इति ठस्येकादेशे अलोपे आदिवृद्धौ तद्धितान्तत्वात्प्राति-पदिकत्वे तृतीयाः 'सुपो धातु' इति लोपे ङीपि 'यस्येति च' इत्यलोपे सौ तस्य लोपे 'आक्षिकी' अक्ष-करणकदेवनविशिष्टेत्यर्थः। 'अक्षास्तु देवनाः पाशकाश्च ते' (अम० २ का० १० वर्ग ४५)।

**लावणिकीति**—लवणं पण्यम् (विक्रयाय हट्टे प्रसारितम्) अस्येत्यर्थे 'तदस्य पण्यम्' (४-४-५१) इत्यधिकारे 'लवणाट्ठञ्' (४-४-५२) प्रथमान्तात् लवणशब्दादस्येति षष्ठ्यर्थे विक्रेतरि ठञ् प्रत्यये ठस्येकादेशेऽलोपे आदिवृद्धौ तद्धितान्तत्वेन प्रातिपदिकत्वात् 'सुपो धातु' इति प्रातिपदिकावयवस्य सोर्लुकि ङीपि अलोपे सौ तस्य 'हल्ङ्याप्' इति लोपे 'लावणिकी' इति। लूयते— छिद्यते बुभुक्षाऽवरोधकदोषविशेषोऽनेनेत्यर्थे धातूनामनेकार्थत्वात् लूयते—रस्यते यत् तत् लवणम्=रसविशेषः।

तद्युक्तं द्रव्यं सैंधवादिकं द्रव्यमपि लवणम्।

> **'सामुद्रं यत्तु लवणमक्षीवं वशिरं (वसिरं) च तत्।**
> **सैन्धवोऽस्त्री शीलशिवं (सितशिवं) माणिमन्थञ्च सिन्धुजे॥'**

सिन्धुदेशभवे चत्वारि। मणिमन्थपर्वते भवं माणिमन्थम्।

> **रौमकं वसुकं पाक्यं विडं च कृतके द्वयम्।**
> **रौमकं वसुकं वस्तकं वा वस्तोऽजः स इवाजगन्धित्वात्।**

द्वे शांभरलवणस्यातस्य। शाम्भरिदेशे रुमानामको लवणाकरः। तत्र भवं रौमकम्। क्षारमृत्तिकां पाचयित्वा कृतं लवणं पाक्यं विडञ्च।

> **'सौवर्चलेऽक्षरुचके' त्रीणि मधुरलवणस्य।**
> **'तिलकं तत्र मेचके' कृष्णवर्णे सौवर्चले तिलकमित्युच्यते।**

लोके 'कालानिमक' इति ख्यातस्य। एतत्सर्वममरे (२ का० ६ वर्ग) सूत्रे 'ठ' इति **पाठेन** ठक्ठञोर्ग्रहणे सिद्धे ठक्ठञोरुभयोर्ग्रहणम् 'अत इनिठनौ' (५-२-११५) इति ठनः 'काश्यादिभ्यष्ठञ्ञिठौ' (४-२-११६) इति विहितयोष्ठञ्ञिठनोष्ठान्तात् ङीपो व्यावृत्त्यर्थम्। तेन काश्यां भवेत्यर्थे ञिठनि 'काशिका' इत्येव, दण्डोऽस्त्यस्या इत्यर्थे ठनि 'दण्डिका' इत्येव।

**यादृशीति**—यामिव पश्यन्ति जनाः येयं या इव दृश्यमाना 'यादृशी' इति। **अत्र** यच्छब्दो यत्सदृशपरः, तस्मिन्नुपपदे त्यदादिषु 'दृशोऽनालोचने कञ्च' (३-२-६०) इति **कर्मकर्तरि कञ्**। या इव ज्ञानविषयो भवतीत्यर्थः। नच 'अनालोचने' इति निषेधात्कञोऽप्राप्तिः, अत्र दृशे-**र्ज्ञानविषयीभवनार्थकत्वेन** ज्ञानविषयीकरणस्यैवालोचनार्थकत्वे निषेधप्रवृत्तेः। उपपदसमासे 'आ सर्वनाम्नः' इति यदो दस्याकारादेशे सवर्णदीर्घे यादृशशब्दान्ङीपि अलोपे सौ तस्य लोपे 'यादृशी'

इत्वरी। 'ताच्छीलिके णेऽपि'। चौरी ।

---

इति । केचित्तु यादृशादयो रूढिशब्दा असताप्यवयवार्थेन व्युत्पाद्यन्ते। अज्ञातार्थाद् दृशेरित्यर्थः सङ्गच्छेत । तथा चात्र दृशधात्वर्थोऽविवक्षित एवेति ।

**इत्वरीति**—एतुं शीलमस्या इत्यर्थे 'इण् गतौ' इत्यतः 'इण्नशजिसर्तिभ्यः क्वरप्' ( ३-२-१६३ ) इति क्वरपि 'ह्रस्वस्य पिति' तुकि कृदन्तत्वेन प्रातिपदिकत्वान्ङीपि सौ लोपे 'इत्वरी' गमनशीलेत्यर्थः । अत्र ककारपकाररूपानुबन्धद्वयं 'स्थेशभासपिसकसोर्वरच्' ( ३-२-१७५ ) इति वरचोऽग्रहणार्थम् । वस्तुतस्तु ककारेण पकारेण वैकेनैवानुबन्धेन वरचो व्यावृत्तिसिद्धावनुबन्धद्वयकरणं स्पष्टार्थम् । वरच्प्रत्ययान्तादीश्वरादिशब्दात् टाबेव । तथा च भारविः—

'विन्यस्तमङ्गलमहौषधिरीश्वरायाः'

इति टाबन्त एव । एवम् वेदेऽपि—'सेनमीश्वरा प्रदह' इति । नन्वेवम् 'उत्तरस्यां तयेश्वरी' इति सप्तशत्याम् 'ईश्वरीं सर्वभूतानाम्' इति वेदे ङ्यन्तप्रयोगासङ्गतिरिति चेन्न, ईश्वरस्य पत्नीत्यर्थे 'पुंयोगादाख्यायाम्' इति ङीषन्तस्य तत्र प्रयोगात् 'अश्नोतेराशुकर्मणि वरट्च' (उणा० ५ वा०५७) इति सूत्रे 'क्लिशेरीच्चोपधायाः' ( उणा० ५ या० ६५ ) इत्यत उपधाया ईच्चेत्यस्यानुवृत्त्या अश्नुते = व्याप्नोति जगदित्यर्थे वरट्प्रत्यये उपधाया ईत्वे टित्त्वान्ङीपि ईश्वरीति सिद्धेश्च ।

यद्वा 'आतो मनिन् क्वनिप् वनिपश्च' ( ३-२-७४ ) इत्यतः परेण 'अन्येभ्योऽपि दृश्यन्ते' ( ३-२-७५ ) इति सूत्रेण 'ईश ऐश्वर्ये' इत्यतः क्वनिपि वनिपि वा स्त्रियाम् 'वनो र च' इति ङीपि वनो नस्य रत्वे च 'ईश्वरी' इति सिध्यति, पुंसि 'ईश्वरः' इत्यादि ।

**ताच्छीलिके णेऽपीति**—तच्छीलमित्यधिकारे भवस्ताच्छीलिकः । ताच्छीलिके णेऽपि अण्कार्यं भवतीति । तच्छीले भवस्ताच्छीलिक इति तु नार्थः, प्रथमान्ताच्छीलवाचकादस्येति षष्ठ्यर्थे णो विधानात् । अत्र ज्ञापकञ्च 'कार्मस्ताच्छील्ये' ( ६-४-१७२ ) इति सूत्रमेव । तथा हि ताच्छील्ये गम्ये कर्मन्शब्दस्य णे परे टिलोपो निपात्यते । 'अन्' ( ६-४-१७७ इति प्रकृतिभावबाधनार्थम् । प्रकृतिभावस्तु अण्प्रत्यये परे विधीयते इति णे प्रकृतिभावाप्राप्त्या तद्बाधनार्थटिलोपनिपातनं व्यर्थं सज्ज्ञापयति—**ताच्छीलिके णेऽप्यण्कृतानि कार्य्याणि भवन्तीति ।**

तथा च 'अन्' इति प्राप्तप्रकृतिभावबाधनार्थं निपातनं चरितार्थम् । फलञ्च चुरा शीलमस्य इत्यर्थे 'छत्रादिभ्यो णः' ( ४-४-६२ ) इति णो 'चुरा स् ण' इति णस्येत्त्वलोपयोरादिवृद्धौ 'यस्येति च' इत्यालोपे प्रातिपदिकावयवस्य सोः 'सुपो धातु' इति लोपे चौरशब्दात् णप्रत्ययात् 'टिड्ढाण्' इति ङीपि अलोपे सौ तस्य लोपे 'चौरी' इति। एवं तपः शीलमस्या इति 'तापसी' इत्यादि बोध्यम् ।

तदुक्तं भाष्ये 'एवं तर्हि सिद्धे सति तन्निपातनं करोति तज्ज्ञापयत्याचार्य्यः—ताच्छीलिकेऽण्कृतानि भवन्तीति । किमेतस्य ज्ञापने प्रयोजनम् ? चौरी, तापसी अणन्तादिति ङीप् सिद्धो भवति । ताच्छीलिके इत्युक्त्या दण्डः प्रहरणमस्या इत्यर्थे 'तदस्य प्रहरणमिति क्रीडायां णः' इति णे 'दाण्डा' इत्येव, ताच्छीलिकस्य णस्याभावात् । यत्तु 'अणो द्व्यचः' ( ४-१-१५६ ) इति छात्रस्यापत्यमित्यर्थे फिञि 'छात्रायणिः' इत्यपि फलमिति तन्न, गोत्रप्रत्ययान्तादेव फिञो विधानात् ।

यदपि कार्मस्ताच्छील्ये इति ज्ञापने गौरवात् 'छत्रादिभ्योऽण्' इत्येवोचितमिति तन्न, ज्ञापने ज्ञापकसिद्धस्यासार्वत्रिकतया 'छत्त्रं शीलमस्याः 'छात्रा' इत्यस्य सिद्धये ज्ञापनस्यावश्यकत्वात् । अण्प्रयुक्तं कार्य्यं शीले णेऽपीत्येव वक्तव्ये तच्छब्दोपादानात् 'कर्मण्यण्', इति सूत्रे 'शीलिकामिभक्ष्याचरिभ्यो णः' इति वार्त्तिकविहितस्य शीलार्थकत्वेऽपि न ग्रहणम् । अत एव तत्र 'मांसशीला' इत्यत्र न ङीप् इति द्योतनाय स्त्रियामुदाहृतम् । 'छत्रादिभ्यो णः' इत्यत्र 'तदस्य पण्यम्' ( ४-४-५१ ) इत्यतः 'तदस्य' इत्यस्याधिकारात् प्रथमात् शीलबोधकाद्विहितस्यैव णस्य ताच्छीलिकपदेन ग्रहणमित्याशयः ।

'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी, तलुनी ।

यञश्च । [ ४-१-१६ ]

नञ्स्नञीकक्—नञ् स्नञ् ईकक् ख्युन् चत्वारः, तेन प्रत्ययग्रहणपरिभाषया तदादि-विशेष्यकतदन्तविधौ तदन्ततदादीनामित्यर्थः । तरुणतलुनयोश्च ङीब्विधायकं वचनं संख्यानं = सूत्रं तस्य समीपे उपसंख्यानम् = ङीब्विधायकसूत्रसमीपे कर्तव्यमित्यर्थः । एतेन उपसंख्यानम्, वक्तव्यमिति पर्य्याय इत्यपास्तम् । संख्यायते = बोध्यतेऽनेनेति संख्यानम् = सूत्रम् । अत्र प्रातिपदिकवि-शेष्यकतदन्तविधिर्न, प्रातिपदिकादित्यस्य षष्ठ्यन्तेन विशेषणभावाभावात् ।

स्त्रैणी—पौंस्नीति—'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' ( ४-१-८७ ) इत्यनेन 'धान्यानां भवने क्षेत्रे' ( ५-२-१ ) इत्यत्र निर्दिष्टाद्भवनरूपार्थात्प्राग्यावन्तोऽर्थाः सूत्रेषु निर्दिष्टा अपत्यादिरू-पास्तेष्वबाधितेष्वर्थेषु स्त्रीपुंसाभ्यां क्रमेण स्त्रीशब्दात् स्नञ् पुंसोऽपत्यं स्त्री कन्येति यावत् तदर्थे 'स्त्री ङस् नञ्' 'पुंस् ङस् स्नञ्' आद्यचः 'तद्धितेष्वचामादेः' (७-२-११७) इति वृद्धौ प्रातिपदिकत्वान्ङ-सो लुकि नस्य णत्वे 'स्त्रैण' इति । स्नञि परे पुंसः पदत्वात् 'संयोगान्तस्य' सलोपे 'पौंस्न' इति ङीपि अलोपे स्त्रैणी, पौंस्नी इति रूपम् ।

केचित्तु 'स्त्रीपुंसाभ्यां नक् च' इति न्यस्य 'उत्सादिभ्योऽञ्' ( ४-१-८६ ) इत्यतोऽञमनुवर्त्य प्रकृतेर्नगागमं विधाय नकोऽकारस्य विवक्षितत्वेन 'यस्येति च' इत्यकारस्य लोपे 'टिड्ढाणञ्' इत्यञ-न्तत्वेन ङीपः सिद्धौ वार्तिके नञ्स्नञोर्ग्रहणं न कार्य्यमित्याहुः । न चाञि 'नस्तद्धिते' इति टिलोपा-पत्तिः, आगमाकारलोपस्य स्थानिवत्त्वेन नान्तत्वाभावात् । शाक्तीकीति—प्रहरणवाचकात्प्रथमान्तात् शक्तिशब्दाद् यष्टिशब्दाच्चास्या इत्यर्थे 'शक्तियष्ट्योरीकक्' ( ४-४-५९ ) इति ईकक्प्रत्यये वृद्धौ 'यस्येति च' इतीकारलोपे आदिवृद्धौ शाक्तीकशब्दात् ङीपि 'शाक्तीकी' इति । आढ्यङ्करणीति—'इभ्य आढ्यो धनी स्वामी' ( ३ का० १० वर्ग० १० श्लोक ) न आढ्योऽनाढ्य आढ्यो = धनी क्रियतेत्यर्थे 'आढ्यसुभग' इत्यनेन च्विप्रत्ययान्तभिन्नेषु आढ्यादिषु कर्मसूपपदेषु कृञः करणे ख्युन् इत्यर्थकेन कृञः ख्युन्प्रत्यये खस्येत्त्वलोपयोः योः 'युवोरनाकौ' ( ७-१-१ ) इत्यनादेशे कृञो गुणे 'खित्यनव्ययस्य' ( ६-३-६६ ) इति पूर्वपदस्य मुमागमे 'कर्तृकर्मणोः कृति' ( २-३-६५ ) इति कर्मणि षष्ठ्याम् 'आढ्य अस् करण' इति दशायाम् 'उपपदमतिङ्' ( २-२-१९ ) इति तत्पुरुष-समासे प्रातिपदिकसंज्ञायाम् 'सुपो धातु' इति असो लुकि 'आढ्यकरण' शब्दान्ङीपि सौ तस्य लोपे नस्य णत्वे 'आढ्यङ्करणी' इति ।

तरुणी तलुनीति—तरुण-तलुनयोर्युववाचिनोः 'वयस्यप्रथमे' ( ४-१-२० ) इत्येव ङीपि सिद्धे पुनरत्र वचनं गौरादिष्वपि पाठात्प्राप्तस्य ङीषो बाधनार्थम् । अन्यथा परत्वादपवा-दत्वाद्वा 'वयस्यप्रथमे' इति बाधित्वा ङीषेव स्यात् । तथा च वार्तिके गौरादौ च पाठात्पर्यायेण ङीप्-ङीषौ भवतः । ङी आद्युदात्तः 'त्रो रस्य लो वा' ( उणा० ३ पा० ५४ सू० ) इत्युनन्प्रत्यये नित्त्वादाद्युदात्तः प्रत्ययस्वरेण ।

अन्ये तु तरुन-तलुनशब्दौ प्रत्यग्रवाचकावपि । वयसः प्राणिधर्मत्वात्प्रत्यग्रे 'तरुलुनी, तरुणी, मदिरा' इत्यर्थे ङीप्सिद्ध्यर्थं तयोर्ग्रहणम्, अन्यथा तदर्थेऽपि गौरादावर्थानुपादानेन टापं बाधित्वा परत्वान्ङीषेव स्यात् । वार्त्तिके पाठे तु उभौ भवत इत्येव ज्यायान् ।

'यञश्च'—( ४-१-१६ ) इति । 'टिड्ढाणञ्' इति सूत्रे एव यञः पाठेन ङीपि सिद्धे 'प्राचां ष्फ' इत्युत्तरसूत्रे यञ एवानुवृत्तिर्यथा स्यादित्यतो योगविभागः । 'ऋन्नेभ्यः' इत्यतो ङीबित्य-नुवर्तते । स्त्रियामित्यधिकाराल्लभ्यम् ।

**यञन्तात्स्त्रियां ङीप्स्यात् । अकारलोपे कृते ।**

*हलस्तद्धितस्य* । [ ६-४-१५० ]

**हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे । गार्गी । 'अनपत्या-**

---

यञः प्रत्ययत्वेन तदन्तविधिस्तदाह—**यञन्तादिति** यञन्ततदादेरित्यर्थः । प्रातिपदिकविशेषणतया तदन्तान्तमपि बोध्यम् । गर्गस्यापत्यं स्त्रीत्यर्थे 'गर्गादिभ्यो यञ्' ( ४-१-१०५ ) इति यञि इत्संज्ञालोपयोः 'गर्ग अस् य' इति दशायां तद्धितान्तत्वात्प्रातिपदिकत्वे ङसो लुकि आदिवृद्धौ अकारलोपे गार्ग्यशब्दात् ङीपि 'यस्येति च' ( ६-४-१४८ ) इत्यलोपे '**हलस्तद्धितस्य**' इति यलोपे च प्राप्ते 'असिद्धवत्' ( ६-४-२२ ) इति यलोपस्यासिद्धतया पूर्वमलोपस्तदाह—**अकारलोपे कृते इति** । परत्वादलोपे कृते इति तु न, 'हलस्तद्धितस्य' ( ६-४-५० ) इत्यस्यैव परत्वात् । अत एव तत्र 'ईति' इत्यस्यानुवृत्तिः सिध्यति ।

'**हलस्तद्धितस्य**' ( ६-४-१५० ) इति । 'हलः' इत्यस्य पञ्चम्यन्ततया 'तस्मादित्युत्तरस्य' इति परिभाषया 'उत्तरस्य' इत्युपतिष्ठते तदाह—**परस्येति** । 'यस्येति च' इत्यतः 'ईति' इति, 'सूर्यतिष्यागस्त्य' ( ६-४-१४९ ) इत्यतः 'उपधायाः' इति 'यः' इति 'ढे लोपोऽकद्र्वाः' ( ६-४-१४७ ) इत्यत 'लोपः' इति चानुवर्तते । तदाह— हलः **परस्येत्यादि** । ननु 'ईति' इति सप्तम्या 'तस्मिन्' इति परिभाषोपस्थित्या ईकाराव्यवहितपूर्वस्योपधाभूतस्य यस्यासम्भवाद्यलोपो न प्राप्नोति । न चाकारलोपे तत्सम्भव इति वाच्यम् , लोपे सति यकारे उपधात्वाभावादिति चेन्न, येन नाव्यवधानमिति न्यायेनाकारव्यवधानस्य सोढव्यत्वात् । लोपेऽपि आभीयत्वेन लोपस्यासिद्धतयाऽकारव्यवधानसत्त्वात् । अलोपस्य स्थानिवत्त्वं तु न, यलोपे तन्निषेधात् ।

वस्तुतस्तु उपधाया इत्यस्यानुवृत्त्यभावेऽपि ईकाराव्यवहितपूर्वापत्ययकारासम्भवादकारव्यवधानेऽपि सूत्रारम्भसामर्थ्याद् यलोपः स्यादेवेत्यनुवृत्तिर्व्यर्थैव । अत एव 'आपत्यस्य च' इत्युत्तरसूत्रेऽनुवृत्तिर्नोक्ता ।

**गार्गीति**—गर्गस्य गोत्रापत्यं स्त्री गार्गी । अत्र 'गोत्रञ्च चरणैः सह' इति जातित्वेऽपि 'जातेरस्त्रीविषयात्' इति न ङीष् तत्रायोपधादिति निषेधात् । एवञ्च 'गार्गी' इति 'ञ्नित्यादिर्नित्यम्' ( ६-१-१९७ ) इत्यनेनाद्युदात्तमेव । **अनपत्याधिकारस्थादिति** —अपत्याधिकारस्थभिन्नादित्यर्थः । अनेन अनपत्याधिकारस्याप्रसिद्ध्या अनपत्याधिकारस्थादित्यनुपपन्नमित्यपास्तम् ।

यद्यपि भाष्ये 'आपत्यग्रहणं कर्तव्यम्' द्वीपाद्यञः प्रतिषेधार्थम् इत्येवोक्तम् । तत्र 'आपत्य' इत्यस्यापत्ये भव आपत्य इत्यर्थः । 'तत्तर्हि वक्तव्यम् ?। न वक्तव्यम् । नैवं विज्ञायते—'कञ्करपो यञश्चेति । कथं तर्हि 'कञ् करपोऽयञश्चेति । अयं भावः—'द्वैप्या' इत्यत्र ङीब्निवृत्तये वार्तिकं न कर्तव्यम् 'गर्गादिभ्योऽयञ्' इत्यनेन 'अयञ्' प्रत्ययो विधीयते । अकारश्चानुनासिक इतीत्संज्ञालोपाभ्यां निवर्त्तते । तथा चायञ्प्रत्ययान्तान्ङीवेत्येवार्थः । अष्टाध्याय्याः संहितया पाठे 'करपोयञश्च' इत्यत्राकारप्रश्लेषे 'एङः पदान्तात्' इत्यकारस्य पूर्वरूपेण नास्ति गौरवम् । प्रश्लेषफलन्तु अकारेत्संज्ञकयञन्तान्ङीबित्यर्थे 'द्वीपादनुसमुद्रं यञ्' इत्यत्र गौरवादकारप्रश्लेषाभावात् 'यञ्' एव विधीयते । इत्ययञन्तत्वाभावान् ङीप् न स्यात् ।

सति वार्तिके आपत्यशब्दस्य अपत्ये भव इत्यर्थः, स चार्थो द्वैप्येऽपि सम्भवति । या द्वीपे भवा कस्यचिदपत्यं भवत्स्येवेति चेन्न, वार्तिकप्रत्याख्यानपक्षेऽयञन्तादेव ङीब्विधानेन स चायञ् अपत्याधिकारस्थ एव नान्य इति वार्तिकप्रत्याख्यानपरभाष्यैकवाक्यतया वार्तिकेऽपत्यपदमपत्याधिकारपरमेव । प्रतिपदोक्तपरिभाषाऽपि अपत्यशब्दमुच्चार्य्य विहितस्यैव वार्तिके ग्रहणं बोधयति । 'द्वीपादनुसमुद्रम्' इति सूत्रं त्वपत्याधिकारात्प्रागेवेति न तत्र ङीप् ।

धिकारस्थात्र ङीप् द्वीपे भवा द्वैप्या। अधिकारग्रहणाद् नेह—देवस्यापत्यं दैव्या 'देवाद्यञञौ' इति हि यञ् प्राग्दीव्यतीयः, न त्वपत्याधिकारपठितः।

*प्राचां ष्फ तद्धितः। [ ४-१-१७ ]*

**यञन्तात्ष्फो वा स्यात्स्त्रियाम्, स च तद्धितः।**

न च संहितया पाठे गौरवाभावेऽपि विच्छिद्य पाठे सूत्रेऽकारश्रवणापत्तिः, संहितया पाठस्यैव भाष्यसम्मतत्वेन विच्छिद्य पाठस्याधुनिकत्वात्। 'यस्कादिभ्यो गोत्रे' ( २-४-६३ ) 'यस्कादिभ्यो गोत्रेऽयञञोश्च' इति संहितया पाठे 'अयञञोश्च' ( २-४-६४ ) इत्यत्रापि 'अयञ्' इत्येव पठितव्यमिति लुकि न दोषः।

ननु 'अभिजिद्विदभृत्' ······ शुमदणो यञ्' (५-३-११८) इति सूत्रे 'अयञ्' इति पठितव्यं ङीप् यथा स्यादिति चेन्न, 'व्रातच्फञोरस्त्रियाम्' (५-३-११३) इत्यतः 'अस्त्रियाम्' इत्यनुवृत्त्या ङीपोऽप्राप्तेः। तथा च तत्र यञेव न त्वयञ्। ननूद्देश्यताप्रयोजकेऽयञ्पदेऽकारस्येत्त्वानापत्तिस्तस्योपदेश्यताया अभावादिति चेन्न, अनुकरणस्योद्देश्यस्य अकारेत्संज्ञकयञ इत्यर्थपरकत्वेनेत्संज्ञाया अनपेक्षणात्।

ननु 'संघाङ्क···अञ्यञिञामण्' ( ४-१-१२० ) इति सूत्रे गौरवेण प्रश्लेषस्य कर्तुमशक्यत्वात् 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम्' इति परिभाषया यञ्ग्रहणेनायञोऽग्रहणादण् न स्यादिति चेन्न, संघाङ्क इति भाष्ये 'संघादिषु घोषग्रहणं कर्तव्यम्' 'गार्गो घोषः। वात्सो घोषः' इति यञन्तादण उदाहरणपरभाष्यात् तदनुबन्धकपरिभाषाया अप्रवृत्त्या द्व्यनुबन्धकस्याप्ययञो ग्रहणात्।

**द्वैप्येति**—द्वीपे = अन्तरीपे भवा इत्यर्थे समुद्रं समया अनुसमुद्रम् समुद्रसमीपे वर्तमानो यो द्वीपस्तद्वाचकाद् द्वीपशब्दाद्भवार्थे यञ् इत्यर्थकेन 'द्वीपादनुसमुद्रं यञ्' ( ४-३-१० ) इत्यनेन सप्तम्यन्ताद् द्वीपशब्दाद्यञि तद्धितान्तत्वेन प्रातिपदिकत्वे ङेर्लुकि अलोपे आदिवृद्धौ अपत्यार्थकत्वाभावान्ङीपोऽभावे टापि सोर्लोपे द्वैप्येति। वारिणोर्मध्ये यत्तटं तद् द्वीपमुच्यते। 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' ( अम०-१ का० १ का० १० वर्ग० ८ श्लो० )। तद्वार्तिके आपत्यग्रहणेनोक्तरीत्या अपत्याधिकारग्रहणस्य फलमाह—**देवस्यापत्यं दैव्येति**। देवस्यापत्यमित्यर्थे षष्ठ्यन्ताद्देवशब्दाद् 'देवाद्यञञौ' इति वार्तिकेन यञि प्रातिपदिकत्वेन ङसोर्लुकि आदिवृद्धावलोपे दैव्यशब्दात् टापि सवर्णदीर्घे सौ तस्य लोपे च 'दैव्या' इति अस्य यञः 'तस्यापत्यम्' ( ४-१-९२ ) इत्यधिकाराप्राक् 'दित्यदित्यादित्य' ( ४-१-८५ ) इति सूत्रस्थवार्तिकेन विहितत्वयाऽपत्याधिकारस्थत्वाभावान्न ङीप्। यद्यपि भाष्ये 'देवस्य यञञौ देवस्य यञञौ वक्तव्यौ।' इत्युक्तं, तथाप्यर्थतोऽत्राह—**'देवाद्यञञौ'** इति।

**'प्राचां ष्फ तद्धितः'** ( ४-१-१७ ) इति। पूर्वसूत्रात् 'यञः' इति 'अतः' इति चानुवर्त्तते। तेन यञो योऽकारस्तदन्तात् ष्फो वा स्यात् स्त्रियामित्यर्थः। एवञ्च वतण्डस्यापत्यं स्त्री ( कन्या ) इत्यर्थे 'वतण्डाच्च' ( ४-१-१०८ ) इति विहितस्य यञः 'लुक् स्त्रियाम्' ( ४-१-१०९ ) इति लुकि यञोऽकाराभावान्न ष्फः, किन्तु शार्ङ्गरवादिषु पाठात् ङीनेव।

न चैवं यञो योऽकार इत्यर्थाभावे शार्ङ्गरवादौ पाठसामर्थ्यात् प्राचां ष्फ इति बाधित्वा ङीनेव स्यादिति वाच्यम्, उदीचां मते प्राचां ष्फ इत्यस्याप्राप्त्या शार्ङ्गरवादिपाठस्य चारितार्थ्येन प्राचां मते ष्फस्यापत्तेः। न चैवमपि ष्फं परत्वाद् बाधित्वा ङीनेव स्यादिति यो यञोऽकार इत्यर्थो विफल एवेति वाच्यम्, उत्तरसूत्रे 'सर्वत्र' ग्रहणात्सर्वमते एव ष्फप्रत्ययस्येष्टत्वात्। उत्तरसूत्रे 'सर्वत्र' ग्रहणाभावेऽपि सर्वप्रवृत्तौ बाधकाभावात्।

न च 'प्राचाम्' इत्यस्य निवृत्त्यर्थं सर्वत्रग्रहणम्, सूत्रारम्भसामर्थ्यादेव प्राचामित्यस्य निवृत्तिसिद्धेः। अन्यथा पूर्वेणैव लोहितादिभ्योऽपि ष्ये सिद्धे सूत्रवैयर्थ्यं स्पष्टमेव। अत एव 'आवट्यायनी' इति सर्वत्र ग्रहणस्य फलप्रदर्शनपरं भाष्यं संगच्छते। अत्र हि प्राचां ष्फ इति ष्फः।

*षः प्रत्ययस्य।* [ १-३-६ ]

प्रत्ययस्यादिः ष इत्स्यात्।

*आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्।* [ ७-१-२ ]

प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः। तद्धितान्तत्वात्प्रातिपदिक-

---

तदुक्तं भाष्ये 'सर्वत्रग्रहणं किमर्थम्? प्राचामेव हि स्यात्। नैतदस्ति प्रयोजनम्। सिद्धं प्राचां पूर्वेणैव। इदं तर्हि प्रयोजनम्। सर्वेषामेव यथा स्यात्। आवट्यायनी। चापं बाधित्वा ष्फो यथा स्यात्' इति। 'सर्वेषामित्यस्यापवादविषयाणामप्यर्थः' इति कैयटः। नच चाब्विधायकस्य 'आवट्याच्च' इत्यस्य वैयर्थ्यम्, उदीचां मते तस्य चारितार्थ्यात्। सर्वत्रेत्यस्यापवादविषयेऽपीत्यर्थः। तेन 'वतण्डी' इत्यत्र परमपि ङीनं बाधित्वा ष्फ एव स्यादिति तन्निवृत्त्यर्थं यञो योऽकार इत्यर्थ आवश्यकः। प्रत्यय-लक्षणेन यञोऽतिदेशेऽपि वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधेनाकारातिदेशासम्भवात्। सूत्रे 'ष्फ' इति सौत्रत्वाल्लुप्तप्रथमान्तम्।

**'षः प्रत्ययस्य'** ( १-३-६ ) इति। 'आदिर्ञिटुडवः' ( १-३-५ ) इत्यत आदिरिति, 'उपदेशेऽजनुनासिकः' ( १-३-२ ) इत्यत इदिति चानुवर्त्तते। तदाह—**प्रत्ययादिति**। प्रत्ययस्य किम् 'षोडश'। 'षष उत्वम्' इत्यत्र षष इत्यस्य निपातनादुपदेशस्योऽयं षकारः। एतेनोपदेशे इत्य-स्यानुवृत्त्या नात्र दोष इत्यपास्तम्। वस्तुतस्तूपदेशे इत्यत्र स्वरितत्वं नास्तीति 'हलन्त्यम्' इत्यत्रोक्तम्। आदिरिति तूत्तरत्रानुवृत्तेरावश्यकत्वेनात्रापि तस्यापि सम्भवमात्रेणेक्तम्। अन्यथा मण्डूकानुवृत्तिः स्यात्। ननु 'अविमह्योष्टिषच्' इति (उणा० १ पा० ४५ सू०) विहितटिषचः षस्येत्त्ववारणायादिग्रहणम्। न च फलाभावः 'षिद्गौरादिभ्यश्च' इति ङीष एव फलत्वादिति चेन्न, 'अविषी महिषी' इत्यस्य टित्त्वात् ङीपा सिद्धेः। नच स्वरे भेदः, अविष-महिषशब्दस्य चित्प्रत्ययान्तत्वेनान्तोदात्ततया उदात्तनिवृत्तिस्वरेण 'अनुदात्तस्य यत्रोदात्तलोपः' ( ६-१-१६१ ) इति विहितेनान्तोदात्तत्वसिद्धेः।

**'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'** ( ७-१-२ ) इति। आयन् च एय् च, ईन् च इय् चैषामितरेतरयोगद्वन्द्वाद्बहुवचनम्। एवं फश्च ढश्च खश्च छश्च घश्चेति षण्णां द्वन्द्वात् षष्ठीबहुवचनम्। एषां यथासंख्यं सम्बन्धे फकारस्य आयन्, ढकारस्य एय्, खकारस्य ईन्, छकारस्य ईय्, घकारस्य इय् आदेशः। तथा चात्र सूत्रे स्थानिषु फादिष्वकार उच्चारणार्थः। तत्तत्सूत्रादि-भिर्विधीयमानाश्च स्वरान्ता एव यथा फक्, फिन्, फिञादयः।

ननु आयनि नकारस्य 'हलन्त्यम्' इति इत्त्वं स्यात्। नच फलाभावः, 'ञ्नित्यादिः' इत्याद्यु-दात्तस्य फलस्य सत्त्वादिति चेन्न, फिनो नित्करणवैयर्थ्येनेत्त्वाभावज्ञापनात्। अन्यथा फादेशायनो नित्त्वेनैव नित्स्वरसिद्धया तद्वैयर्थ्यं स्यात्। न चैवमपि ईनो नस्येत्त्वापत्तिः, शालीनकौपीने 'अधृष्टाकार्य्ययोः' इति निर्देशेन तदभावज्ञापनात्। आयनः साहचर्य्यादीनो नेत्त्वमिति नागेशाः।

अन्ये तु फिनो नित्त्वनैतत्सूत्रविहितादेशानामित्त्वं नेति ज्ञाप्यते। ईयादीनां यकारस्य फला-भावान्नेत्त्वमिति न कल्पनीयमिति लाघवम्। आदिग्रहणात् 'ऊरुदघ्नम्' इत्यत्र घकारस्य नादेशः। प्रत्ययग्रहणात् 'फलति, खनति' इत्यादौ धात्ववयवस्य नाऽदेशः।

'प्रियवशे वदः खच्' ( ३-२-३८ ) इत्यादिना विहितानां खच्खशादीनां खस्येत्त्वमेव, नादेशः, 'खित्यनव्ययस्य' इत्यादि लिङ्गात्। एवम् 'भावे' ( ३-३-१८ ) इत्यादिना विहितानां घञादीनाञ्चेत्त्वमेव, 'चजोः कु घिण्ण्यतोः' इति घिति कुत्वविधानात्। उणादिप्रत्ययानामपि नादेशाः, 'ऋतेरीयङ्' इतीयङ्विधानाज्ज्ञापकान्न धातुविहितप्रत्ययानामायन्नादयः, 'उणादयोऽ-व्युत्पन्नानि प्रातिपदिकानि' इति भाष्याच्च। तेन 'शङ्खः' 'शण्ढः' इत्यादौ नादेशः।

"आयन्नादिषूपदेशिवद्वचनम्" इति वार्तिकात्, अग्रादित्यनुवृत्तौ "घच्छौ च" (४-४-११७) इत्यत्र घचश्चित्करणाच्च प्रत्ययोत्पत्तिकाले एव एते आदेशा भवन्ति, तत आयन्नादि-

त्वम् । षित्त्वसामर्थ्यात्ष्फेणोक्तेऽपि स्त्रीत्वे 'षिद्गौरा-' इति वक्ष्यमाणो ङीष्। गार्ग्यायणी ।

सर्वत्र लोहितादिकतन्तेभ्यः [ ४-१-१८ ]

---

विशिष्टस्य 'प्रत्ययः' ( ३-१-१ ) इति प्रत्ययसंज्ञायाम् "आद्युदात्तश्च ( ३-१-३ ) इति आयन्नादेरादिस्वरस्योदात्तत्वं यदि तूपदेशावस्थायामादेशा न स्युस्तदा पूर्वं प्रकृत्यनपेक्षत्वेनान्तरङ्ग आद्युदात्तस्वरः, अङ्गापेक्षत्वेन बहिरङ्गमादेशं बाधित्वा अग्राद् घचि "अग्रघ" इति दशायां घस्याद्युदात्तत्वं स्यात् । इति "अग्रियः" इत्यत्रान्तस्यैवोदात्तत्वं स्यादिति घचश्चित्करणं व्यर्थमेव स्यात् चित्प्रयुक्तान्तोदात्तत्वस्य प्रत्ययस्वरेणैव सिद्धेरिति चित्करणं व्यर्थीभूय ज्ञापयति—उपदेशावस्थायामेवादेशा इति । तथा च "इय" इतीकारस्य प्रत्ययस्वरो मा भूत् किन्त्वकारस्यैवेति चित्करणं सार्थकम् । फलञ्चादेशघटितस्यैव प्रत्ययसंज्ञायामादेशादेरेव प्रत्ययाद्युदात्तत्वम् , नादेशात्प्राक् ।

ष्फप्रत्ययस्य तद्धितसंज्ञाविधानात् प्रातिपदिकत्वम् । तेन "षिद्गौरादिभ्यश्च" इत्यनेन षिदन्तात्प्रातिपदिकान् ङीष् इति "गार्ग्यायणी" इत्यत्र ङीष् सिध्यति । ननु तद्धितग्रहणं व्यर्थमेव षित्त्वसामर्थ्यादेवाप्रातिपदिकत्वेऽपि ङीषः सिद्धेः। 'यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यते' इति न्यायेन षित्त्वादेव उक्तार्थानामप्रयोग इति न्यायाप्रवृत्तिः, अप्रातिपदिकत्वेऽपि ङीषः सिद्धेश्च वक्तुं शक्यत्वादिति चेन्न, इञन्तादपि क्वचित् ष्फ इति ज्ञापनार्थं तद्धितग्रहणस्य सत्त्वात् । नच यञोऽकारस्यतद्धिते परे लोपार्थं तद्धितग्रहणमिति वाच्यम् , सवर्णदीर्घेणापि रूपसिद्धौ लोपस्यानावश्यकत्वात् । इञन्तादपि ष्फस्य ज्ञापने तु 'यस्येति च' इतीकारलोपार्थं तद्धितग्रहणस्य चारितार्थ्यम् । तेन 'आसुरेरुपसंख्यानम्' इति वार्तिकं सिध्यति । नापूर्वं तद्वचनम् । तदुक्तं भाष्ये 'तद्धितवचनं क्रियते। षितः प्रातिपादिकादीकारो यथा स्यात् । नैतदस्ति प्रयोजनम् । षित्करणसामर्थ्यादेवादत्र ईकारो भविष्यति' इति ।

ननु गोकक्षशब्दाद् गर्गादित्वाद्यञि, ततः क्रौड्यादित्वेन ष्यङि चापि प्रकृतसूत्रेण ष्फप्रत्यये चिकीर्षिते "भस्याढे तद्धिते" इति पुंवद्भावे गोकक्ष्यशब्दाद्यञन्तात् ष्फे 'गौकक्ष्यायणी' सिध्यति । तद्धितत्त्वाभावे तु पुंवद्भावाप्राप्त्या यञन्तत्वाभावेन ष्फो न स्यादिति चेन्न, क्रौड्यादिषु गोकक्ष्याशब्दस्य पाठाभावे क्षत्यभावात् । न च क्रौड्यादित्वाभावात् ष्यङोऽभावे चापोऽनापत्तिः 'षाद्यञश्चाप् वक्तव्यः' इत्यनेन चापि उदीचां मते ष्फस्याभावेन "गौकक्ष्या" इत्येव ।

प्राचां मते उत्तरसूत्रात् सर्वत्रग्रहणाद् बाधकस्यापि चापो बाधेन ष्फे 'गौकक्ष्यायणी' इत्यस्य सिद्धेः । ननु स्त्रियामेव ष्फविधानेन 'उक्तार्थानाम्' इति न्यायेन ङीष् न स्यादत आह—**ष्फेणोक्तेऽपीति** द्योतितेऽपीत्यर्थः । **षित्त्वसामर्थ्यादिति**—'द्वौ ब्राह्मणौ, व्यतिङ्नीते' इत्यादौ द्योतकसमुच्चयस्य भाष्यादौ दर्शनात् । षित्त्वमपि द्योतकसमुच्चयत्वश्रयणे लिङ्गं बोध्यम् ।

**गार्ग्यायणीति**—गर्गो नाम ऋषिस्तस्यापत्यं स्त्रीत्यर्थे 'गर्गादिभ्यो यञ्' इति यञि 'गार्ग्य' इति ततः ष्फः । ष इत् तस्य लोपे फकारस्यायनि कृते 'यस्येति च' यञोऽकारस्य लोपे 'गार्ग्य आयन् अ' इति 'गार्ग्यायन' इति । ईति परे लोपविधानात् 'हलस्तद्धितस्य' इति, आति परे निषेधात् 'आपत्यस्य च तद्धितेऽनाति' इति च यलोपो न । गार्ग्यायनशब्दात् 'षिद्गौरादिभ्यश्च' इति ङीषि अल्लोपे सौ तस्य लोपे णत्वे च 'गार्ग्यायणी' इति ।

**'सर्वत्र लोहितादिकतन्तेभ्यः'** ( ४-१-२२ ) इति । लोहितादिर्गर्गाद्यन्तर्गणः । लोहित आदिर्येषां ते लोहिताद्याः, कतोऽन्तो येषां ते कतन्ताः। कतन्त इत्यत्र सवर्णदीर्घं बाधित्वा शकन्ध्वादित्वात्पररूपम् । लोहितादयश्च ते कतन्ताश्चेति कर्मधारयः । यञ इति, प्राचां पदं परित्यज्य 'ष्फ' इति 'तद्धित' इति चानुवर्तते । एवञ्च सर्वेषु मतेषु यञन्तेभ्यो लोहितादिकतन्तेभ्यो नित्यं ष्फः स्यात्

लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लोहित्यायनी । कात्यायनी ।

*कौरव्यमाण्डूकाभ्यां च । [ ४-१-१९ ]*

आभ्यां ष्फः स्यात् । क्रमेण टाब्ङीषोरपवादः । कुर्वादिभ्यो ण्यः' । कौरव्यायणी ।

---

स्त्रियामित्यर्थः । पूर्वेण सिद्धे नित्यार्थमिदम् । आरम्भसामर्थ्यादस्य नित्यत्वलाभेऽपि सर्वत्र ग्रहणस्य पूर्वसूत्रेऽपकर्षः । तथा च पूर्वसूत्रं सर्वत्रग्रहणसामर्थ्याद् 'आवट्याच्च' इति चापं बाधित्वा 'आवट्यायनी' इति ष्फ एव प्राचां मते। 'आवट्याच्च' इति तूदीचां मते यञन्तात्प्राप्तङीब्बाधनेन चरितार्थम्। ननु ष्फ बाधकम्, सर्वत्रग्रहणसामर्थ्यात् । तदुक्तं भाष्ये 'इदं तर्हि प्रयोजनम् 'आवट्यायनी' चापं बाधित्वा ष्फो यथा स्यादिति' इति । एतेन ङीपः ष्फस्य च बाधकत्वं चापः, अनन्तरस्यायाश्रयणे तु ष्फस्यैवेति शङ्का परास्ता । चापि कृते तु न ष्फः 'अतः' इत्यनुवृत्तेः । लोहितादिर्गर्गाद्यन्तर्गतः ।

ननु गर्गादौ कतकण्वशकलेति पाठात् 'शाकल्यायनी' इत्यत्र ष्फो न स्यात्, कतन्तलोहितादिबहिर्भूतत्वात् । न चेष्टापत्तिः, 'लोहितादिषु शाकल्यस्योपसंख्यानं कर्तव्यम् । शाकल्यायनी' इति भाष्यविरोधापत्तेः । यदि तु 'शकलकतकण्वेति पठ्येत तदा कण्वादौ शकलशब्दस्य ग्रहणेन शाकल्यस्य छात्राः 'शाकलाः' इत्यत्र 'कण्वादिभ्यो गोत्रे' इत्यण् न स्यादिष्यते च स्यादिति, यथाश्रुतपाठे तस्येष्टत्वादिति चेन्न, कतशकलकण्वेति पाठेन शकल्यायनी, शाकलाश्छात्राः इत्युभयसिद्धेः । तथा हि—सूत्रे 'कतन्त' इत्येकशेषेण निर्देशः, कतोऽन्तो यस्य स कतन्तः कतस्यान्तः समीपः कतन्तः, कतन्तश्च कतन्तश्चेति 'कतन्त' इति । तथा च कतस्यान्तः समीपः शकल इति लोहितादिग्रहणेन ग्रहणात् 'शाकल्यायनी' इत्यत्र ष्फः सिध्यति ।

'कण्वादिभ्यः' इत्यत्रापि कण्व आदिर्यस्य समुदायस्य स कण्वादिः, कण्वस्यादिः कण्वादिरित्युभयोरेकशेषेण कण्वस्य पूर्वत्वेन समीपः शकल इति कण्वादित्वात् शाकल्यस्य छात्राः शाकला इत्यत्राण् अपि सिध्यति । तदुक्तं भाष्ये 'कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते । पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्' इति ।

**लौहित्यायनीति**— लोहितो नाम कश्चन तस्यापत्यं स्त्रीत्यर्थे ङसन्तात् लोहितशब्दात् 'गर्गादिभ्यो यञ्' इति यञि प्रातिपदिकत्वात् ङसो लुकि आदिवृद्धौ अलोपे 'लौहित्य' इति । ततः स्त्रियां ष्फे षस्येत्त्वलोपयोः पुनस्तद्धितत्वेन प्रातिपदिकत्वात् षित्त्वसामर्थ्येन ष्फेणोक्तेऽपि स्त्रीत्वे ङीषि सौ च कृते सोर्लोपे 'यस्येति च' इत्यलोपे 'लौहित्यायनी' इति । एवं कतोऽपि कश्चन ऋषिस्तस्यापत्यं स्त्रीत्यर्थे पूर्ववत् प्रक्रिया बोध्या ।

**'कौरव्यमाण्डूकाभ्याञ्च'** ( ४-१-१९ ) इति । **आभ्यामिति**—कौरव्यमाण्डूकाभ्यामित्यर्थः । **टाप्ङीषोरिति**—कौरव्यशब्दस्य योपधत्वेन 'जातेरस्त्रीविषयादयोपधात्' इति ङीपोऽप्राप्त्या टाप एव प्राप्तिः, न तु 'यञश्च' इति ङीपः प्राप्तिरिति भ्रमं निराकर्तुमाह—**'कुर्वादिभ्यो ण्यः'** इति ण्य इति—तथा च यञन्तत्वाभावान्ङीपोऽप्राप्तिः । **कौरव्यायणीति**—करोति राज्यमित्यर्थे 'कृग्रोरुच्च' ( १ पा० २४ सू० ) इत्युप्रत्यये गुणेऽकारस्योकारादेशे 'कुरुः' इति चन्द्रवंशीयो राजा ।

'हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे ।
पञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्त्तितः ॥'

इत्युक्तदेशोऽपि कुरुः । नववर्षात्मकस्य जम्बूद्वीपस्य वर्षभेदोऽपि कुरुः । वर्षोऽत्रांशः । कुरो राज्ञोऽपत्यं स्त्रीत्यर्थे ण्यप्रत्यये णस्येत्त्वलोपयोः तद्धितान्तत्वेन प्रातिपदिकत्वे ङसोर्लुकि 'ओर्गुणः' इति गुणेऽवादेशे आदिवृद्धौ 'कौरव्य' इति टापं बाधित्वा ष्फे आयनादेशे षित्त्वान्ङीषि 'कौरव्यायणी' इत्यतः सौ तस्य लोपे रूपम् ।

**'ढक्च मण्डूकात्' इत्यण्। माण्डूकायनी। 'आसुरेरुपसंख्यानम्' आसुरायणी।**

*वयसि प्रथमे* [ ४-१-२० ]

**प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात् ।**

---

यद्यपीह—टाप्ङीपोरपवाद इति पाठ एव प्रायेण दृश्यते। तत्र मण्डूकस्य ऋषेरनन्तरापत्यं स्त्रीत्यर्थे 'ढक् च मण्डूकात्' इत्यणि 'अपत्यं पौत्रप्रभृति गोत्रम्' इति पारिभाषिकस्य गोत्रस्य 'गोत्रञ्च चरणैः सह' इत्यत्र ग्रहणमिति मते उक्तार्थकमाण्डूकशब्दस्य गोत्रवाचकत्वाभावेन जातित्वलक्षण-ङीषोऽप्राप्त्या 'टिड्ढाणञ्' इति ङीप एव प्राप्तिरित्यभिप्रायक एव। अपत्यान्तगोत्रपदेन ग्रहणे तु ङीषोऽपवादत्वमपि सुवचम्। शेखरकृन्मते शास्त्रीयस्यैव गोत्रस्य ग्रहणम्। अतः टाप्ङीपोरपवाद इति प्रामादिकः पाठः।

कौरव्यशब्दसाहचर्यात्सूत्रे माण्डूकस्येयं भार्या इत्यर्थे 'तस्येदम्'—इत्यणन्तेन ग्रहणमिति शैषिकाणन्तान्ङीबेवेति 'यद्यसौ कूपमाण्डूकि तवैतावति कः स्मयः' इति भट्टिप्रयोगः संगच्छते।

अत्र **'कौरव्यमाण्डूकयोरासुरेरुपसंख्यानं कर्तव्यम्'** आसुरायणी। छश्च, छश्चेति वक्तव्यम्। आसुरीयः कल्पः इत्युक्तं भाष्यकृता। आसुरिणा प्रोक्तः कल्पः इत्यर्थे छापवादे 'इञश्च' इत्यणि प्राप्ते छस्य प्रतिप्रसवोऽयम्। ननु छप्रकरणे एवास्योपन्यास उचित इति चेन्न, तत्र करणे 'आसुरेः' इत्यपि करणे गौरवात्। इदमप्यत्र 'छश्च' इति करणेन अस्य तद्धितसंज्ञार्थं तद्धितग्रहणस्यावश्यकता सूचिता। अन्यथा छान्तस्य प्रातिपदिकत्वानापत्तिरित्युपाध्यायाः।

**'आसुरेरुपसंख्यानम्'** इति ष्फस्येति शेषः।

**आसुरायणीति**—असुरस्यापत्यमित्यर्थे 'अत इञ्' इतीञि पूर्ववत् प्रक्रिया बोध्या।

**'वयसि प्रथमे'** ( ४-१-२० ) इति। वेति = गच्छतीत्यर्थे 'वी गति' इति वीधातोः **'सर्व-धातुभ्योऽसुन्'** ( उणा० ४ पा० १८९ सू० ) असुनि वय इति रूपम्। प्राणिनां कालकृतावस्था-विशेषो वयः। तच्च त्रिविधम्—कौमारम्, यौवनम्, स्थाविरमिति—तदुक्तम्—

'पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥'

इति। चतुर्विधं तदित्यन्ये—

'प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥'

इत्युक्तेः बाल्यम्, कौमारम्, यौवनम्, वार्द्धक्यञ्चेति चतुर्विधमिति चतुर्विधवयसीति—वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थः। यत्प्रातिपदिकनिष्ठशक्ततानिरूपितशक्यता वयोरूपप्रवृत्तिनिमित्ते तत्प्रातिपदिकं वयोवाचकम्।

यत्तु प्रातिपदिकं प्रकरणादिना वयो गमयति न तद्वयोवाचकम्। यथा—उत्तानशया, लोहि-तपादा इत्यादयः। एते न वयःप्रवृत्तिनिमित्तकाः किन्तूत्तानशयनादिना यौवनवयोद्योतका एव। एवम्—द्विवर्षा, त्रिवर्षा इत्यादयः।

नन्वेवं कुमारशब्दोऽपि पुंसा स्त्रिया वा सहायोगेनैव वयोद्योतकः, न तु वयोवाचक इति कुमारीति न सिध्येदत एव 'वृद्धकुमारी' इति सिध्यतीति चेन्न, वृद्धायामपि पुंसा सहासंप्रयोग-रूपसादृश्येन कुमारीत्वारोपेण तथा प्रयोगात्। कुमारशब्दः प्रथमवयःप्रवृत्तिनिमित्तक एवाल्पवयसि ऊढायमिपि तत्प्रयोगदर्शनात्।

वयसीत्यस्य विद्यमानादिति शेषः। अजाद्यत इत्यतः 'अत इति' 'ऋन्नेभ्यः' इत्यतो ङीबिति चानुवर्तते, प्रातिपादिकादिति, स्त्रियामिति चाधिक्रियते। अत इत्यस्य प्रातिपदिकविशेषणतया तदन्तविधिः। तदाह—**प्रथमवयोवाचिन इत्यादि।**

कुमारी। 'वयस्यचरम इति वाच्यम्' [ वा २४३५ ] । वधूटी। चिरण्टी। वधूट-चिरण्टशब्दौ यौवनवाचिनौ। अतः किम्, शिशुः। कन्याया न, 'कन्यायाः कनीन च' इति निर्देशात्।

द्विगोः। [ ४-१-१२ ]

अदन्ताद् द्विगोर्ङीप्स्यात्। त्रिलोकी। अजादित्वात् त्रिफला। त्र्यनीका सेना।

*अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि।* [ ४-१-२१ ]

---

**कुमारीति**—प्रथमे वयसि वर्तमाना 'कन्या कुमारी' इति ( अम० २ का० ६ वर्ग० ८ श्लो० ) कामयते भोगानिति कुमारः। 'कमेः किदुच्चोपधायाः' ( उणा० ३ पा० १३८ सू० ) इत्यारन् प्रत्ययः। 'कुमार क्रीडायाम्' इत्यतः पचाद्यचि साधुः। **वयस्यचरम इति**—

'अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः।'

**षडन्त्यवाचकाः** ( अम० ३ का० १ वर्ग ८१ श्लो० )। अन्त्यभिन्ने वयसीत्यर्थः। ये त्रीणि वयांसीच्छन्ति तन्मतेनेदं वार्त्तिकम्। यदा तु उपचयापचयलक्षणे द्वे एव वयसी इति दर्शनं तदा वार्त्तिकं व्यर्थम्, यौवनस्यापि प्रथमवयःपदेन ग्रहणात्। पाणिनेरिदमेव मतं प्रतीयते। **वधूट-चिरण्टशब्दाविति**—चिरण्टी तु सुवासिन्यां स्याद् द्वितीयवयः स्त्रियाम्' इति विश्वः। वधूटशब्दस्य यौवनवाचित्वे भाष्यमेव मानम्। 'गोपवधूटीदुकूलचौराय' इति भाषापरिच्छेदः।

**शिशुरिति**—श्यति = तनूकरोति मातुः शरीरमित्यर्थे 'शो तनूकरणे' इत्यतः 'शः कित् सन्वच्च' ( उणा० १ पा० २० सू० ) इत्युप्रत्यये सन्वद्भावाद् द्वित्वे 'सन्यतः' इत्यभ्यासस्येत्वे रूपम्।

**कन्याया नेति**—कन्यते = दीप्यते या इत्यर्थे 'कनी दीप्तिदेवनयोः' इत्यतः 'अघ्न्यान्यादयश्च' ( उणा० ४ पा० ११२ सू० ) इति यकप्रत्यये 'कन्या' इति। **कन्याया नेति**—ङीबिति शेषः। **निर्देशादिति**—कन्याया इति टाबन्तनिर्देशादित्यर्थः। तदुक्तं भाष्ये—'कन्येति। निपातनादेतत्सिद्धम्। किं निपातनम्? 'कन्यायाः कनीन चेति' इति।

**'द्विगोः'** ( ४-१-२१ ) **इति**। 'तद्धितार्थोत्तरपदसमाहारे च' ( २-१-५१ ) इत्युक्तः संख्यापूर्वः समासो द्विगुः। **त्रिलोकीति**—त्रयाणां लोकानां समाहार इत्यर्थे 'तद्धितार्थ' इति समाहारे समासे 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे प्राप्तं टापं बाधित्वा ङीप् 'यस्येति च' इत्यलोपे 'त्रिलोकी' इति। **अजादित्वादिति**—टाबिति शेषः। **त्रिफलेति**—त्रयाणां फलानां समाहार इत्यर्थः। अत्र ङीपं बाधित्वा अजादित्वात् टाप्। 'पाककर्ण' इति ङीषस्तु न प्राप्तिः, तत्र 'जातेः' इत्यनुवृत्तेः।

**त्र्यनीकेति**—त्रयाणामनीकानां समाहार इत्यर्थः। अजादित्वात् टाबिति त्र्यनीकाधिकरणे मीमांसकाः। शास्त्रदीपिकायाम् 'त्र्यनीकायां न्यायोक्तेष्वाम्नातं गुणार्थं स्यात्' ( शास्त्र० १ अध्या० ५ पा० २३ अधि० ७७ सू० ) इति सूत्रे व्याख्यायाम्—लोके शताग्रे-शतानीके इति व्यवहारात्, वेदे च **'चित्रं देवानामुदगादनीकम्'** इति प्रयोगादग्रतावचनोऽनीकशब्दः। यश्चित्रमुदगात्। आश्चर्यं हि यः स्वकीयेन तेजसा शार्वरं तमोपहत्यान्येषां ज्योतिषां ज्योतिरादायोद्गच्छति। देवानां रश्मीनामनीकं मुखम्। उक्तं च

**'स्मृत्याजादिगणे युक्ता टाबुत्पत्तिर्द्विगोरपि।**
**त्र्यनीकेति गणे कीर्त्यः स्यादाकृतिगणो हि सः'** ॥

इति। एवं त्रिफलेत्यादि। समाहारे 'तद्धितार्थ' इति द्विगुः। अकारान्तोत्तरपदत्वात् स्त्रीत्वम्। **त्र्यनीका**=( तीमुहानी ) त्रिमुखी।

'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' (४-१-२२) इति। द्विगोरिति ङीबिति चानुवर्तते। प्रातिपदिकादिति स्त्रियामिति चाधिकृतम्। अपरिमाणादिना द्विगुर्विशेष्यते। तदाह—

अपरिमाणान्ताद्विस्ताद्यन्ताच्च द्विगोर्ङीन्न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । तस्य 'अध्यर्ध-'इति लुक् । द्वौ विस्तौ पचति द्विविस्ता ।

---

अपरिमाणान्तादिति । पञ्चभिरश्वैरिति—तद्धितार्थे विवक्षिते 'तद्धितार्थ' इति द्विगुः । 'सुपो धातु' इति सुपो लुकि पुनः सुपि 'तेन क्रीतम्' इति ठकि तस्य 'अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्' इति लुकि 'द्विगोः' इति प्राप्तस्य ङीपोऽनेन निषेधात् टापि 'पञ्चाश्वा' इति ।

नन्वत्र 'टिड्ढ' इति ठगन्तत्वात् ङीप् स्यात् । न च परिमाणान्तान्ङीषो निषेधसामर्थ्याच्च-स्यापि बाधः, 'द्वाभ्यां शताभ्यां क्रीतेत्यर्थे' 'संख्याया अतिशदन्तायाः कन्' इति कनि तस्य लुकि तत्र 'द्विगोः' इति प्राप्तस्य ङीपो निषेधेन 'अपरिमाण' इति निषेधस्य चारितार्थ्येन टिड्ढेति ङीपो बाधे मानाभावादिति चेन्न, ठको योऽकारस्तदन्तादेव ङीपो विधानात् । तेनात्र ठको लुप्तत्वेन तदकारान्त-त्वाभावात् ङीपोऽप्राप्तेः । अन्यथाऽत्र ङीब् दुर्वार एव स्यात् । न च प्रत्ययलक्षणम्, तेन ठगन्त-त्वेऽपि वर्णाश्रये प्रत्ययलक्षणनिषेधेन ठकोऽकारस्य दुर्लभत्वात् । विस्तादीनां परिमाणविशेषवाचि-त्वादपरिमाणेति निषेधाप्राप्तया पृथग् ग्रहणम् ।

अत्र सूत्रे—'ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥"

उन्मानञ्च तुलादावारोप्य येन गुञ्जादिना मीयते तत्, पुरुषोऽप्युन्मानमेव, यत ऊर्ध्वं मीयते । परित आरोहतः = ऊर्ध्वतः, परिणाहतः = सर्वतः पूरणेन काष्ठादिनिर्मितकुडवादि । 'नपना' इति लोके । आयामो दैर्घ्यं तच्च द्विविधम् तिर्यगूर्ध्वञ्च—ऊर्ध्वं पुरुषप्रमाणादि । एतच्चोन्मानमेव । तिर्यङ्मानं वस्त्रभूम्यादीनामायामः । 'पञ्चारत्निः पुरुषः' इति शुल्वसूत्रम् ।

इति पारिभाषिकस्यैव परिमाणशब्देन ग्रहणम् । न तु मानमात्रस्य, न च 'सुवर्णविस्तौ हेम्नोऽक्षे' ( अम० २ का० ९ वर्ग ८६ श्लो० ) इति कोशात् 'कम्बल्यमूर्णापलशतम्' इत्याप्तोक्तेश्च विस्त-कम्बल्ययोरुन्मानवाचित्वेन अपरिमाणान्तत्वादेव ङीपो निषेधे सिद्धे तयोर्ग्रहणं व्यर्थमिति वाच्यम्, उन्मानस्य निषेधश्चेद् विस्तकम्बल्ययोरेवेति नियमार्थं तयोर्ग्रहणस्य चारितार्थ्यात् । तेन 'द्विनिष्की' इति सिध्यति । पारिभाषिकपरिमाणस्य ग्रहणादेव द्वे वर्षे भूता द्विवर्षा, द्वाभ्यां शताभ्यां क्रीता द्विशता, तिर्यङ्माने द्विहस्ता भित्तिरिति च सिध्यति ।

न चैवम् 'काण्डान्तात्क्षेत्रे' इत्यस्य वैयर्थ्यम्, षोडशहस्तपरिमितो दण्ड इत्याप्तवचनात् आया-मरूपमानार्थकाण्डशब्दः । अपरिमाणान्तादित्येव सिद्धेरिति वाच्यम्, 'क्षेत्रवाचिन एव काण्डान्तान् ङीब्निषेध' इति नियमार्थत्वात् । तेन द्वे काण्डे प्रमाणमस्या इति द्विकाण्डी रज्जुरित्यत्र न निषेधः । षोडशहस्तप्रमाणार्थककाण्डशब्दस्य तिर्यङ्मानपरकत्वमेव नोन्मानपरकत्वम् ।

द्वौ विस्तौ पचतीति—

'गुञ्जाः पञ्च तु माषः स्यात्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम् ॥ १ ॥
पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकाः ॥ २ ॥

'तुल्या यवाभ्यां कथितात्र गुञ्जा' इति लीलावती ।

षोडशमाषमितो विस्तः सुवर्ण इति चोच्यते—स्वर्णमुद्रेति यावत् । अशीतिगुञ्जा ( रतिः ) त्मकः सुवर्णः । मानवाची सुवर्णशब्दः पुंलिङ्ग एव 'सुवर्णविस्तौ हेम्नोऽक्षे' इत्युक्तेः । पचिरिह द्रावणे, द्वौ विस्तौ हेम्नोऽक्षौ पचति द्रावयति वा इत्यर्थे 'सम्भवत्यवहरति पचति' (५-१-५२) इति ठकि तस्य 'अध्यर्ध' इति लुकि 'द्विगोः' इति प्राप्तस्य ङीपोऽनेन निषेधे टापि 'द्विविस्ता' इति

**द्व्याचिता । द्विकम्बल्या । परिमाणान्तात्तु द्व्याढकी । तद्धितलुकि किम्— समाहारे पञ्चाश्वी ।**

रूपम् । **द्व्याचितेति**–'तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः । आचितो दशभाराः स्युश्शाकटो भार आचितः' (अम-२ का० ६ वर्ग० ८७ श्लो०) पलानां शतं तुला स्यात्, विंशतिस्तुलाः–भारः, **'भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके'** इति कोशान्तरम् । पुरुषेण हि द्वे पलशते वोढुं शक्येते । दश भारा आचितः स्युः । यः शकटेन वोढुं शक्यते भारः सोऽपि भार आचित इत्युच्यते । अत्र भ्रियतेऽसौ भरः स एव भारः स्वार्थेऽण्, न तु संकेतितो भारः; **'आचितः शकटोन्मेषे पलानामयुतद्वयम्'** इति विश्वकोशात्, **'आचितः शाकटो भारः'** इत्यमराच्च । द्वावाचितौ वहति या सा **द्व्याचिता** इत्यर्थे 'आढकाचितपात्रात्खोऽन्यतरस्याम्' ( ५-१-५३ ) 'द्विगोः ष्ठंश्च' (५-१-५४) इति वैकल्पिकखठनोरभावे 'आर्हादगोपुच्छपरिमाणात् ठक्' ( ५-१-१९ ) इति **'अगोपुच्छपरिमाण'** इति परिमाणशब्देन काष्ठादिनिर्मितकुडवादेरेव पर्युदासात् आचितस्योन्मानत्वेन **'आ अर्हात्'** ठगधिक्रियते इति ठकि तस्य 'अध्यर्ध' इति लुकि अनेन 'द्विगोः' इति ङीपो निषेधे टापि 'द्व्याचिता' इति रूपम् । आचितद्वयवोढ्री शकटीत्यर्थः । शाकटस्याचितस्य ग्रहणे तस्य परिमाणत्वेन 'प्राग्वतेष्ठञ्' ( ५-१-१८ ) इति ठञेव ।

**द्विकम्बल्येति**—**'समौ रल्लककम्बलौ'** ( अम० २ का० ६ वर्ग० ११६ श्लो० ) रल्लकः कम्बलः द्वे लोकप्रसिद्धकम्बलस्य । येन कम्बलो निर्मीयते तद् द्रव्यमूर्णापलशतम् । तदेव कम्बलस्य प्रकृतिरित्युच्यते । विकृति ( कार्य्य ) वाचकात् चतुर्थ्यन्तात् तदर्थायां प्रकृतौ ( कारणे ) वाच्यायां छप्रत्ययः स्यादित्यर्थकेन **'तदर्थं विकृतेः प्रकृतौ'** ( ५-१-१२ ) इत्यनेन प्राप्तं छं बाधित्वा 'प्राक् क्रीताच्छः' ( ५-१-१ ) इत्यधिकारे 'कम्बलाच्च संज्ञायाम्' ( ५-१-३ ) इत्यनेन प्राक्क्रीतीये प्रकृतिरूपेऽर्थे विकृतिवाचकात् कम्बलशब्दात् ऊर्णापलशतस्य संज्ञायां गम्यमानायां यत्प्रत्ययः । तथा च ऊर्णापलशतं संज्ञि कम्बल्यञ्च संज्ञा । द्वाभ्यां कम्बल्याभ्याम् ( ऊर्णापलशताभ्याम् ) क्रीतेत्यर्थे **'तद्धितार्थ'** ( २-१-५१ ) इत्यनेन द्विगुसमासे 'तेन क्रीतम्' ( ५-१-३७ ) इत्यनेन ठञि तस्य 'अध्यर्ध' ५-१-२८ ) इत्यनेन लुकि 'द्विगोः' इति प्राप्तस्य ङीपोऽनेन निषेधे 'अजाद्यतः' इति टापि **द्विकम्बल्या** इति ।

ननु 'न तद्धितलुकि' इत्येव सूत्रमस्तु । द्विगोरित्यनुवर्तते तद्धितलुकि सति द्विगोर्न ङीप् इति पञ्चाश्वा इत्यादीनां सिद्धिरिति चेन्न, द्वावाढकौ पचतीति विग्रहे 'आढकाचितपात्रात्खोऽन्यतरस्याम्' इत्यनुवृत्तौ **'द्विगोष्ठंश्च'** इति खठनोरभावे प्राग्वतीये ठञि तस्य लुकि **'द्व्याढकी'** इति भवति, द्व्याढकशब्दस्य परिमाणान्तत्वेन अपरिमाणेति निषेधाप्राप्त्या 'न तद्धितलुकि' इत्येतावति सूत्रे त्वत्रापि निषेधः स्यात् । एतत्सिद्धये 'अपरिमाणान्न तद्धितलुकि' इति न्यासे तु 'द्विनिष्की' इत्यादावपि निषेधापत्तिः ।

यथाश्रुतन्यासे तु बिस्तकम्बल्ययोरुन्मानवाचित्वेनापरिमाणान्तत्वादेव तत्र निषेधे सिद्धे तयोर्ग्रहणस्योन्मानान्तान्निषेधश्चेत्तर्हि बिस्तकम्बल्यान्तादेवेति नियमार्थतया **द्विनिष्की, द्विदीनारी** इत्यादिसिद्धये तयोर्ग्रहणस्यावश्यकत्वात् ।

भाष्ये तु **'इमौ द्वौ प्रतिषेधावुच्येते'** अपरिमाण इत्यत्रैकः, 'न' इति च । 'तत्रैकः शक्योऽवक्तुम् । कथम् ? एवं वक्ष्यामि—'परिमाणात् तद्धितलुकि ङीब् भवतीति । तन्नियमार्थं भविष्यति । परिमाणान्तादेव तद्धितलुकि ङीब् भवतीति नान्यत इति । ततः 'बिस्ताचितकम्बल्येभ्यो न' इति । तद्धितलुकीत्येव' इति । तथाऽपि मूले तथा नोक्तम्, योगविभागनियमकल्पने विपरीतनियमवारणाय कल्पनान्तराश्रयणे चातीव गौरवं स्यादिति तदुपेक्षितम् ।

यत्तु 'न तद्धितलुकि' इत्यस्य स्थाने 'न तद्धिते' इत्येवास्तु, तद्धितार्थे योऽपरिमाणान्तो बिस्ताद्यन्तश्च द्विगुस्ततो न ङीप् इत्यर्थेन लक्ष्ये सिद्धे समाहारे 'पञ्चाश्वी' इत्यादौ ङीपि सिद्धे ङुग्-

*काण्डान्तात् क्षेत्रे । [ ४-१-२३ ]*

क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः । 'प्रमाणे द्वयसच्--' इति विहितस्य मात्रचः 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् । क्षेत्रे किम्—द्विकाण्डी रज्जुः ।

---

ग्रहणं व्यर्थमिति तन्न, द्विगोस्तद्धिते सति न ङीबित्यर्थस्यापि सम्भवेन 'अध्यर्धकार्षापणिकी' इत्यादौ 'विभाषा कर्षापण' इति लुकोऽभावेऽपि निषेधापत्तेः । प्रसङ्गादपरमपि मानविषये किञ्चिदुच्यते—

'यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।'

त्रयं मानपर्यायः । तच्च त्रिविधम् १—तुलामानम्, २—अङ्गुलिमानम्, ३—प्रस्थमानञ्च । तुलामानमुन्मानम्, अङ्गुलिमानं प्रमाणम्, प्रस्थमानं परिमाणम् । तदेवोक्तम्—'ऊर्ध्वमानम्' इत्यादिना पञ्चकृष्णलाः ( गुञ्जाः ) माषः, षोडशमाषाः अक्षः कर्षश्च 'तोला' इति लोके । कर्ष-चतुष्टयं पलमिति । पलानां शतं तुलेत्यादि पूर्वमुक्तम् । कार्षापणः कार्षकः द्वे 'रूपया' इति ख्यातस्य । राजतकर्षमितरूपकस्येति यावत् । ताम्रे कर्षमिते पण इति । 'पैसा' इति ख्यातस्य ।

मृद्वेणुकाष्ठलोहादेः पात्रं यच्चतुरङ्गुलम् । विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् ॥

प्रस्थ इति 'सेर' इति ख्यातस्य । चतुष्प्रस्थमाढकम् । अष्टाढको द्रोणः । द्विद्रोणः शूर्पः । सार्धशूर्पः खारी । द्विशूर्पा द्रोणी । रूपकादेश्चतुर्थभागः पादः चौअन्नीति ख्यातस्य । एतत्सर्वं द्वितीय-काण्डे नवमवर्गेऽमरे द्रष्टव्यम् ।

'काण्डान्तात् क्षेत्रे' ( ४-१-२३ ) इति । द्विगोरिति, न तद्धितलुकि इति, ङीबिति चानुवर्त्तते । तदाह—क्षेत्रे यः काण्डान्त इत्यादि । अत्र द्विगोरिति, 'न तद्धितलुकि' इति ङीबिति चानुवर्त्तते । शेषं पूर्ववत् । षोडशसहस्रमितो दण्डः काण्डमिति प्रमाणवाची काण्डशब्दस्तया च 'अपरिमाणान्ताच्च ङीबिति' निषेधे सिद्धे सूत्रं व्यर्थमिति चेन्न, काण्डान्ताद् द्विगोर्ङीबनिषेधश्चेत्तर्हि क्षेत्रे एवेति नियमार्थं सूत्रस्यावश्यकत्वात् । तेन द्विकाण्डी रज्जुः इत्यादौ नापरिमाणान्तादिति न प्रवर्त्तते ।

ननु विशेषणतया 'काण्डात्' इत्युक्तेऽपि तदन्तत्वे लब्धे अन्तग्रहणं व्यर्थमिति चेन्न, 'काण्डात्' इत्युक्ते 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायेन 'क्षेत्रे' इति काण्डस्यैव विशेषणं तथा च क्षेत्रे वर्त्तमानो यः काण्डस्तदन्तादेव निषेधः स्यात्तथा च द्वाभ्यां काण्डमितक्षेत्राभ्यां क्रीता या काचन वडवादिस्तत्रैव निषेधः स्यात् तत्र काण्डशब्दस्य क्षेत्रवाचकत्वात् । द्वौ काण्डौ प्रमाणमस्याः क्षेत्रभक्तेः ( क्षेत्रभागस्य ) सा द्विकाण्डा क्षेत्रभक्तिरित्यत्र निषेधो न स्यात्, अत्र काण्डशब्दस्य प्रमाणपरतया काण्डान्तस्य क्षेत्रवाचकत्वेऽपि काण्डस्य क्षेत्रावाचकत्वादित्यव्याप्त्यति-व्याप्तिदोषवारणाय 'काण्डान्तात्' इत्युक्तम् । तथा च काण्डान्तस्यैव श्रुतत्वेन यत्र काण्डान्तस्य क्षेत्र-वाचकत्वं तत्रैव निषेध इष्यते न तु काण्डस्य क्षेत्रवाचकत्वे इत्यर्थलाभार्थमन्तग्रहणम् ।

द्वे काण्डे इति—'काण्डोऽस्त्री' ( अम० ३ का० ३ वर्ग० ४३ श्लो० ) प्रमाणे द्वयसजिति-प्रमाणवाचकं यत्प्रथमान्तं ततः अस्य इति षष्ठ्यर्थे मेये द्वयसज् दघ्नञ्मात्रचः प्रत्यया इत्यर्थकेन 'प्रमाणे द्वयसज्' ( ५-२-३७ ) इत्यनेन 'प्रथमश्च ( द्वयसच् ) द्वितीयश्च ( दघ्नच् ) ऊर्ध्वमाने मतौ मम' इति भाष्ये काण्डस्य ऊर्ध्वमानवाचकत्वाभावेन प्रथमद्वितीययोरभावे मात्रच्प्रत्यय एव तस्य प्रमाणे विद्यमानात्प्रातिपदिकात्परस्य मात्रच् प्रत्ययस्य ( मात्रचः ) लः लुगित्यर्थकेन 'प्रमाणे लः' इति वार्तिकेन लुकि द्विगोरिति प्राप्तस्य ङीपो निषेधेऽपि द्विकाण्डा इति ।

'द्विगोर्नित्यम्' द्विगोः प्रमाणवाचित्वाभावात्तदन्तविधेरभावाच्च 'प्रमाणे लः' इत्यनेनाप्राप्तो लो विधीयते ।

पुरुषात्प्रमाणेऽन्यतरस्याम् [ ४—१—२४ ]

**प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि। द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी, द्विपुरुषा वा परिखा।**

---

ननु नित्यग्रहणं व्यर्थं विकल्पस्याप्रकृतत्वादिति चेन्न, 'प्रमाणे लः' इति वार्त्तिकस्य 'प्रमाणे द्वयसच्' इति सूत्रे पठितत्वात्तद्विहितस्यैवानेन लुग्भवति नान्यविहितस्य। अत एव 'प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः' इति विहितस्य शमः स्यान्नवेति संशये विहितस्य 'शममात्रम्' इत्यादौ मात्रचो न लुक्, किन्तु श्रूयते एव तथा द्वौ शमौ स्यातां नवेति संशये मात्र च 'द्विशमः' इत्यादावपि न लुप्येत, इष्यते च लुप्यतामिति तस्यापि लुक् यथा स्यादित्यधिकसंग्रहार्थमेव नित्यग्रहणम्।

तथा च भाष्यम्—किमर्थमिदमुच्यते ? संशये श्राविणं वक्ष्यति। तस्यायं पुरस्तादपकर्षः' इति। अयमर्थः—श्रवणं=श्रावः 'कृत्यल्युटो बहुलम्' इति बाहुलकादपं बाधित्वा घञि श्राव इति सोऽस्त्यस्येति श्रावी। यथा 'शममात्रः' इत्यत्र मात्रच् श्रावी तथा द्विगावपि 'द्विशमः' इत्यादौ श्रवणे प्राप्ते नित्यग्रहणसामर्थ्यात्तस्यापि लुग्विधीयते। न च द्विगोः प्रमाणवाचकत्वाभावान्मात्रचोऽप्राप्तिः, द्विगोर्लुग्विधानसामर्थ्यादेवात्र तदन्तविधेर्ज्ञापनादिति। काण्डान्तस्य क्षेत्रावाचकत्वे द्विगोरिति ङीपि 'द्विकाण्डी' इति।

'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः।' इति मेदिनी।

'पुरुषात्प्रमाणेऽन्यतरस्याम्' ( ४-१-२४ ) इति।

अत्र द्विगोरिति, तद्धितलुकीति, ङीबिति चानुवर्त्तते। स्त्रियामिति, प्रातिपदिकादिति चाधिक्रियते। तदाह—प्रमाणे य इत्यादि।

पुरुषशब्द ऊर्ध्वाधरदेशावस्थितवस्तुपरिच्छेदकत्वेन उन्मानविशेषवाची। तथा च 'अपरिमाणबिस्त' इति सूत्रे विस्तादिग्रहणस्योन्मानवाचिनो निषेधश्चेत्तर्हि विस्तादेरेवेति नियमार्थतया उक्तत्वेनापरिमाणेति निषेधाप्राप्त्या द्विगोरिति नित्ये ङीपि प्राप्ते विकल्पार्थमिदं सूत्रम्।

अत्र पुरुषशब्दः परिच्छेदकपरो न तु 'आयामस्तु प्रमाणं स्यात्' इति पारिभाषिकः। अत एव सूत्रे प्रमाणे इति विशेषणम्, द्वौ पुरुषौ प्रमाणमस्या इति सामानाधिकरण्येन विग्रहश्च संगच्छते। यदपि 'द्विपुरुषी' इत्यत्र पुरुषस्य प्रमाणत्वाभावेन 'प्रमाणे लः' इत्यस्याप्राप्त्या 'द्विगोर्नित्यम्' येन पुरुषान्तात्लुग्विधीयते तदपि न, 'अध्यर्ध' इति लुकि चारितार्थ्येन पुरुषान्ताद् द्विगोर्लुग्विधायकत्वे प्रमाणम्।

यत्तु मनोरमाकृता 'पुरुषात्प्रमाणे' इति सूत्रे तद्धितलुकीत्यस्यानुवृत्तिसामर्थ्यात् लुगाक्षिप्यते इति तदपि न, द्वौ पुरुषौ प्रमाणमस्या, इत्यर्थे 'तदस्य परिमाणम्' इति विहितस्य ठकष्ठञो वा 'अध्यर्ध' इति लुकि तद्धितलुकीत्यस्य चारितार्थ्येन लुगाक्षेपे मानाभावात्।

'तदस्य परिमाणम्' इत्यत्र परिमाणपदं परिच्छेदमात्रपरम्, 'संख्यायाः संज्ञासङ्घ' इत्युत्तरसूत्रा ( ५-१-५८ ) नुरोधेनात्रापि परिच्छेदकमात्रपरत्वस्यैवौचित्यात्। अत एव षष्टिर्जीवितं प्रमाणमस्येत्यर्थे षाष्टिक इति सिध्यति। जातिवाचकोऽपि पुरुषशब्दः 'पञ्चारत्निः पुरुषः' इति शुल्बसूत्रादत्र प्रमाणे इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकवाचकोऽपि।

प्रकोष्ठे = कूर्णेरधोभागे विस्तृतकरे हस्त इत्युच्येते। स च चतुर्विंशत्यङ्गुलमितः। स एव बद्धया मुष्ट्योपलक्षितो रत्निरित्यभिधीयते। विस्तृतकनिष्ठेन मुष्टिनोपलक्षितो हस्तः 'अरत्निः' इत्युच्यते।

'ऊर्ध्वविस्तृतदोष्पाणिनृमाने पौरुषं त्रिषु' ( अम० २ का० ६ व० ८७ श्लो० ) यत्पौरुषं मानं तदेव पुरुषशब्देनाप्युच्यते। षण्णवत्यङ्गुलमितः पुरुष इत्यभिधीयते। द्वौ पुरुषाविति—

ऊधसोऽनङ् । [ ५–४–१३१ ]

ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम् । इत्यनङि कृते डाब्ङीब्निषेधेषु प्राप्तेषु

बहुव्रीहेरूधसो ङीष् । [ ४—१—२५ ]

ऊधोऽन्ताद् बहुव्रीहेर्ङीष् स्यात्स्त्रियाम् । कुण्डोध्नी । स्त्रियाम् किम्–कुण्डोघो धेनुकम् ।

---

द्वौ पुरुषौ प्रमाणमस्या इति विग्रहे 'तद्धितार्थ' इति समासे 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायाम् । द्विगोः प्रमाणवाचकत्वाभावेऽपि लुग्विधानसामर्थ्यात् 'प्रमाणे द्वयसच्' इति विहितस्य मात्रचो लुकि 'तदस्य परिमाणम्' इति वा विहितस्य ठकञ्ञो वा 'अध्यर्ध' इति लुकि वैकल्पिके ङीपि **द्विपुरुषी,** टापि **द्विपुरुषा** इति । **परिखेति**–दुर्गं परितस्तत्संरक्षणाय निर्मितो जलाशयः परिखा । **कुण्डमिवोधो** यस्या इत्यर्थे बहुव्रीहौ कुण्डोधस्शब्दः स्त्रीवाचकस्तत्र विशेषमाह—

**'ऊधसोऽनङ्'** ( ५–४–१३१ ) इति । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवर्त्तते । षष्ठ्यन्तेन विपरिणम्यते । तद्विशेषणतया 'ऊधसः' इति तदन्तपरं तदाह—**ऊधोऽन्तस्येत्यादि ।** 'ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् । इह मा भून्महोधाः पर्जन्य इति' इति भाष्यात् 'स्त्रियाम्' इति लभ्यते तदाह— **स्त्रियामिति** । यत्तु 'स्त्रियाम्' इत्यधिक्रियते इति तत्र 'समर्थानाम् (४–१–८२) इत्यतः प्रागेव 'स्त्रियाम्' इत्यस्याधिकारात् । नकारमात्रस्यादेशत्वेनैवात्र सिद्धे 'अनङ्' विधानं **'धनुषश्च'** ( ५–४–१३२ ) इत्युत्तरार्थम् । तेन 'शार्ङ्गधन्वा' इत्यादि सिध्यति । अन्ये तु **नङो** विधाने 'अन्' इत्यस्य लाक्षणिकत्वेन 'अल्लोपोऽनः' इत्यलोपानापत्त्या इहार्थमपीत्याहुः । **अत्रानङः** समासान्तप्रकरणस्थत्वेऽपि न प्रत्ययत्वम्, ङित्करणवैयर्थ्यापत्तेः किन्त्वादेशत्वमेव ।

**अनङि कृते इति** 'ङिच्च' इति परिभाषया ऊधसः सकारस्यानङादेशः । नकाराकार उच्चारणार्थ एव । 'ऊध अन्' इति दशायां 'अतो गुणे' इति पररूपे 'कुण्डोधन्' इति जाते **'डाबुभाभ्याम्'** इति वैकल्पिके डापि, 'अन उपधालोपिनः' इति वैकल्पिके ङीपि च प्राप्ते डापो ङीपश्चाभावे **'ऋन्नेभ्यः'** इति प्राप्तस्य ङीपः 'अनो बहुव्रीहेः' इति निषेधे च प्राप्ते तान् सर्वान् बाधित्वाह— **डाब्ङीब्निषेधेष्विति**–समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या पूर्वमनङ्येषां प्राप्तिः ।

ननु 'बहुव्रीहेरूधसः' इति सूत्रं मध्येऽपवादन्यायेन डाम्निषेधयोरेव बाधकं स्यान्न तु 'अन उपधालोपिनः' इति सूत्रविहितस्य ङीपस्तस्य परत्वादिति चेन्न, 'अन उपधालोपिनः' इत्यत्रास्यानुवृत्त्या वाक्यभेदेन ङीपो विधानात्तन्ङीपोऽपि बाधात् ।

कुण्डोधस् शब्दात् 'शेषाद्विभाषा' ( ५–४–१५४ ) इति कबापत्तेः । नच निरवकाशत्वादनङा कपो बाधः, कपो वैकल्पिकत्वेन तदभावे तस्य चारितार्थ्यात् ।

**'बहुव्रीहेरूधसो ङीष्'** ( ४–१–२५ ) इति । ऊधस इति बहुव्रीहेर्विशेषणतया तदन्तपरम् । स्त्रियामित्यधिकाराल्लभ्यते । तदाह—**ऊधोऽन्तादित्यादि । कुण्डोध्नीति**–अनेन ङीपि 'अल्लोपोऽनः' इत्यलोपे रूपम् । ननु 'संख्याव्ययादेः' इति वक्ष्यमाणो ङीन् इहैव क्रियतां ङीष्ग्रहणं मास्त्विति चेन्न, ङीपः पित्त्वेनानुदात्तत्वापत्त्या तद्वारणाय प्रत्ययस्वरेणोदात्तत्वार्थं ङीप्विधानस्यावश्यकत्वात् । **धेनुकमिति**—धेनूनां समूहो धेनुकम् 'अचित्तहस्तिधेनोष्ठक्' ( ४–२–४७ ) इति धेनुशब्दात् ठकि 'इसुसुक्तान्तात्कः' ( ७–३–५१ ) इति ठस्य कादेशे नपुंसके रूपम् । 'पिठरः स्थाल्युखा कुण्डम्' ( अम० २ का० ९ व० श्लो० ) इति, 'ऊधस्तु क्लीबमापीनम्' ( अम० २ का० ९ व० ७३ श्लो० ) इति च ।

'गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके' ( अम० २ का० वि० ६० श्लो० ) संहतिरित्यनुवर्तते–यथा गवां संहतिर्गव्या गोत्राऽत्रवत्सानां धेनूनाञ्च संहतिः । वात्सकम्-धैनुकञ्च ।

इहानङ्ङपि न, तद्विधौ 'स्त्रियाम्' इत्युपसंख्यानात् ।

*सङ्ख्याऽव्ययादेर्ङीप्* । [ ४-१-२६ ]

ङीषोऽपवादः । द्व्यूध्नी । अत्यूध्नी ॥ बहुव्रीहेरित्येव । ऊधोऽतिक्रान्ता अत्यूधाः ।

*दामहायनान्ताच्च* । [ ४-१-२७ ]

संख्यादेर्बहुव्रीहेर्दामान्ताच्च ङीप्स्यात् । दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम् । द्विदाम्नी । अव्ययग्रहणादनुवृत्तेरुद्दामा वडवेत्यत्र डान्निषेधावपि पक्षे स्तः । द्विहायनी बाला । 'त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्' । 'वयोवाचकस्यैव हायनस्य ङीण्णत्वं चेष्यते' त्रिहायणी । चतुर्हायणी ।

---

**उपसंख्यानादिति**—अस्य भाष्ये इति शेषः । बहुव्रीहिः किम् ? ऊधः प्राप्ता इति विग्रहे '**प्राप्तापन्ने च** द्वितीयया' इति तत्पुरुषसमासे 'प्राप्तोधाः' इत्यत्र मा भूत् ।

'**संख्याऽव्ययादेर्ङीप्**' ( ४-१-२६ ) इति बहुव्रीहेरित्यनुवर्तते । स्त्रियामित्यधिकाराल्लभ्यते । संख्याव्ययादेरूधोऽन्ताद्बहुव्रीहेः स्त्रियां ङीप् स्यादित्यर्थः । **ङीषोऽपवाद इति**—'बहुव्रीहेरूधसः' इति प्राप्तस्य ङीषोऽपवाद इत्यर्थः । द्वे ऊधसी यस्या इत्यर्थे बहुव्रीहौ अनङादेशे ङीपि अलोपे '**द्व्यूध्नी**' इति रूपम् ( **अत्यूध्नीति** ) अतिशयितमूधो यस्या इत्यर्थे बहुव्रीहिः । अतीत्यव्ययादित्वान् ङीप् ।

**बहुव्रीहेरित्येवेति**—पूर्वसूत्राद्बहुव्रीहेरित्यनुवृत्तेः । अत्यूधा इति तत्पुरुषे न प्रवृत्तिः । ननु 'संख्याव्ययान्ङीप्' इति न्यासेन 'तस्मादित्युत्तरस्य' इति परिभाषया संख्याव्ययात्परो य ऊधस्शब्दस्तदन्ताद्बहुव्रीहेर्ङीबित्यर्थेन सिद्धेरादिग्रहणं व्यर्थमिति चेन्न, द्वे महती ऊधसी यस्या इत्यर्थे बहुव्रीहौ द्विमहोधस्शब्दान्ङीपि 'द्विमहोध्नी' इति सिद्धये आदिग्रहणस्य चारितार्थ्यात् । पञ्चम्यन्तन्यासे संख्याव्ययाव्यवहितोत्तरोधःशब्दसत्त्वे एव प्रवृत्त्या 'द्विमहोध्नी' इत्यस्यासिद्धयापत्तेः । आदिग्रहणसत्त्वे तु 'द्विमहोधस्' शब्दस्य संख्याद्यूधःशब्दान्तत्वेनोक्तरूपं सिध्यति ।

'**दामहायनान्ताच्च**' ( ४-१-२७ ) इति । एकदेशे स्वरितत्वप्रतिज्ञाबलात्संख्यादेरित्यनुवर्तते । तदुक्तं भाष्ये—'संख्यादेरित्यनुवर्तते । अव्ययादेरिति निवृत्तम्' इति बहुव्रीहेरिति, ङीबिति-चानुवर्तते । स्त्रियामित्यधिकृतम् । बहुव्रीहिविशेषणत्वादेवान्तत्वलाभेऽन्तग्रहणं स्पष्टार्थम् ।

**दाम इति**—'न पुंसि दाम संदानम्' ( अम० २ का० ९ व० ७३ श्लो० ) दाम संदानम्—द्वे बन्धनरज्जोः । द्विदामशब्दे 'डाबुभाभ्याम्' इति डापि 'अन उपधालोपिनः' इति ङीपि 'अनो बहुव्रीहेः' इति 'मन्नन्तेभ्यः' इति प्राप्तस्य ङीपो निषेधे च प्राप्ते, हायनान्ते टापि प्राप्ते वचनम् ।

**द्विदाम्नीति**—द्वे दामनी=बन्धनरज्जू यस्या इति विग्रहे बहुव्रीहिः, ङीपि अलोपे '**द्विदाम्नी**' वाडवादिः । **उद्दामेति**—उत्क्रान्तं दाम यस्या इत्यर्थे बहुव्रीहौ अव्ययग्रहणानुवृत्त्या ङीपोऽभावे डापि 'उद्दामे' ङीपो निषेधे 'उद्दमानौ' इति रूपम् । **वयोवाचकस्यैवेति**—प्राणिनामवस्थाविशेषसूचकः कालविशेषो वयः तद्वाचकस्येत्यर्थः । '**त्रिहायणी, चतुर्हायणी**' इत्यत्र निमित्तनिमित्तिनोः समानपदस्थत्वाभावात् 'अट्कुप्वाङ्' इति णत्वाप्राप्तावाह—'**त्रिचतुर्भ्याम्**' इति ।

ननु द्विहायना शाला इत्यत्र ङीप्, त्रिहायना शाला, इत्यत्र ङीप् णत्वं च स्यादत आह—**वयोवाचकस्यैवेति । इष्यते इति**—अस्य भाष्यकृतेति शेषः । तदुक्तं भाष्ये 'वयोवाचिनो हायनशब्दस्य ग्रहणम् । न चैष ( द्विहायना शाला त्रिहायना शाला ) वयोवाची । अथ णत्वं कस्मान्न भवति ? णत्वमपि वयोवाचिन एव' इति ।

वयसोऽन्यत्र द्विहायना, त्रिहायना, चतुर्हायना शाला।

*नित्यं संज्ञाछन्दसोः।* [ ४—१—२९ ]

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप्स्यात्संज्ञाछन्दसोः। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण **विकल्प एव**। वेदे तु शतमूर्ध्नी।

*केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च।* [ ४—१—३० ]

एभ्यो नवभ्यो नित्यं ङीप्स्यात्संज्ञाछन्दसोः। 'अथोत इन्द्रः केवलीर्विशः' 'मामकी तनू'। भागधेयी। पापी। अपरी।

---

**त्रिहायणीति**—अनयोः 'शाला' इति शेषः। **वयसोऽन्यत्रेति**—ङीप् णत्वञ्च नेत्यर्थः। तदाह—**द्विहायना** इत्यादि, 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा।' ( १ का० ४-व० २० श्लो० ) अम०। षड् वर्षस्य नाम। हायनान्ताः पञ्च अस्त्रियाम्। शरत्, समा स्त्रियाम्।

**'नित्यं संज्ञाछन्दसोः'** ( ४-१-२९ ) इति 'अन उपधालोपिनः' इति, ङीप् इति चानुवर्तते। 'स्त्रियाम्' इति चाधिकृतम्। 'अन उपधा' इति विकल्पस्यापवादः। आरम्भसामर्थ्यान्नित्यत्वे सिद्धे नित्यग्रहणमुत्तरत्र 'अन्यतरस्याम्' इत्यस्य अननुवृत्तिसूचनार्थम्। **सुराज्ञीति**—शोभनो राजा यस्यामित्यर्थे बहुव्रीहौ 'अन उपधा' इति वैकल्पिकं ङीपं बाधित्वा ङीपि अलोपे 'सुराज्ञी' अन्वर्था चेयं संज्ञा। अतएव केन नाम्ना प्रसिद्धेत्यन्वेष्टव्यम्। **अन्यत्रेति**—संज्ञात्वाभावे इत्यर्थः। **विकल्प एवेति**—'अन उपधा' इत्यस्यैव प्रवृत्तेः। **शतमूर्ध्नीति**—शतं मूर्धानो यस्या इत्यर्थः। नन्विदं सूत्रं व्यर्थम्, छन्दस्यापाद्यमानस्याभावात् दृष्टस्य ङीबन्तस्य वैकल्पिकङीपा सिद्धेः। किञ्च संज्ञाशब्दा अप्यनादितः प्रयुक्ता नियतानुपूर्वीका ङीपा सिद्धेरिति चेन्न, 'संज्ञाछन्दसोः' इत्यस्योत्तरार्थमावश्यकत्वेन स्पष्टार्थमत्रैव तदुक्तेः। नित्यग्रहणमप्युत्तरत्र विकल्पनिवृत्त्यर्थम्।

**'केवलमामकभागधेयपापापरसमानार्य्यकृतसुमङ्गलभेषजाच्च'** ( ४-१-३० ) इति 'नित्यं संज्ञाछन्दसोः' इति सूत्रम्, ङीबिति चानुवर्तते। स्त्रियामिति चाधिकृतं बोद्धव्यम्। अन्यतरस्यामिति निवृत्तम्। **एभ्यो नवभ्य इति** सूत्रनिर्दिष्टेभ्यो नवभ्य इत्यर्थः। नवेत्युक्तिः न्यूनाधिकनिवृत्त्यर्था। **छन्दसि** उदाहरति—**केवलीरिति**। न च ङ्यन्तत्वात्सुलोपेन भाव्यम्, द्वितीयाबहुवचनान्तत्वेन सुलोपाप्राप्तेः। छन्दस्येव **'मामकी तनू'** इति, मदीयायां तन्वामित्यर्थः। 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यस्मच्छब्दात् चादणि 'तवकममकावेकवचने' इति अस्मच्छब्दस्य ममकादेशे ङीपि **'मामकी तनू'** इति उभयत्रापि सप्तम्या लुक्। ईदूतौ च सप्तम्यर्थे इति प्रगृह्यत्वेन प्रकृतिभावः।

मित्रावरुणयोर्भागधेयीस्थ, भागशब्दात्पुंलिङ्गात् 'तद्युक्तात्कर्मणोऽण्' ( ५-४-३६ ) इति सूत्रे भाष्ये पठितेन 'भागरूपनामभ्यो धेयः' इति वार्तिकेन स्वार्थे धेयप्रत्ययः। 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति 'कर्मव्यतिहारे णच् स्त्रियाम्' ( ३-३-४३ ) इति स्त्रियामेव णचो विधानात् 'णचः स्त्रियाम्' ( ५-४-१४ ) इति सूत्रे 'स्त्रियाम्' इति ग्रहणेन ज्ञापितया परिभाषया स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्त्वाद् भागशब्दस्य पुंलिङ्गत्वेऽपि भागधेयशब्दः स्त्रियाम्। भागधेयशब्दात् सूत्रेण स्त्रियां ङीब्विधानमपि परिभाषार्थे लिङ्गम्। अत एव कुटीरः, अप्कलम् इत्यादि सिध्यति। भागधेयशब्दान्ङीपि **भागधेयी**। 'तन्वः सन्तु पपीः' पापशब्दस्य नपुंसकत्वेऽपि पापमस्त्यस्या इत्यर्थे 'अर्शआद्यजन्तस्य पापशब्दस्य विशेष्यनिघ्नतया स्त्रीत्वम्।

केचित्तु अभेदोपचारात् तद्वति वर्तमानः पापशब्दो विशेष्यनिघ्न इत्याहुस्तन्न, अभेदोपचारो नाम तद्वति लक्षणैव। लक्षणास्थले च 'गङ्गायां घोषः' इत्यादौ लिङ्गापरित्यागस्यैव दर्शनादित्युपाध्यायाः। 'उतापरीभ्यः मघवा विजिग्ये'। अपरशब्दः पवर्गमध्यः नतु दन्त्योष्ठमध्यः, 'उतापरं यांश्च देवान्' इत्यादौ पवर्गघटितस्यैव दर्शनात् 'घृतादीनाञ्च' इति फिट्सूत्रेणान्तोदात्तत्वम्।

समानी। आर्यकृती। सुमङ्गली। भेषजी। अन्यत्र केवला इत्यादि। मामकग्रहणं नियमार्थम्, अण्णन्तत्वादेव सिद्धेः। तेन लोकेऽसंज्ञायां मामिका।

*अन्तर्वत्पतिवतोर्नुक्।* [ ४—१—३२ ]

एतयोः स्त्रियां नुक् स्यात्। 'ऋन्नेभ्यो ङीप्' [ सू० ३०६ ]। गर्भिण्यां जीवद्भर्तृकायां

---

'पूर्वममयन्नपरम्' इत्यत्र पठ्यमानमाद्युदात्तत्वम् 'वृषादीनाञ्च' ( ६-१-२०३ ) इति विहितं बोध्यम्। 'अपरा पूर्वमभ्येति' इत्यत्र टाबन्तपाठोऽजादित्वात्। 'समानी व आकूतिः, आर्य्यकृती' इति छन्दस्यन्वेषणीयम्। ननु आर्य्येण कृता इत्यर्थे समासात्प्रागेव बाधकाभावात् टाप् स्यादिति चेन्न, 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्' इति परिभाषया सुबुत्पत्तेः प्राक् समासे प्राप्तस्य टापो ङीपा बाधात् उपसंजनिष्यमाणन्यायात्समासात्प्रागपि टापो बाधस्य वक्तुं शक्यत्वाच्च। 'सुमङ्गली' इत्यपि वेदेऽन्वेषणीम्। 'सुमङ्गलीरियम्' इत्यत्र सुलोपस्तु न, 'छन्दसीवनिपौ च वक्तव्यौ' इति वार्त्तिकेन ईप्रत्ययविधानेन ङ्यन्तत्वाभावात्। 'सुमङ्गलीरियम्' इत्यस्यैवोदाहरणत्वे तु छान्दसत्वात्सुलोपाभावः। क्वचित् 'सुमङ्गली शिवा' इति पाठः। 'शिवा रुद्रस्य भेषजी'। भेषजशब्दोऽव्युत्पन्न औषधे रूढः। बिभेति रोगोऽस्मादित्यर्थे 'भियः षुग्घ्रस्वश्च' ( उणा० १ पा० १३८ ) इति निष्पन्नभिषज्शब्दात् भिषज इदमित्यणन्तो भैषजशब्दोऽपि औषधे एव रूढः। अत्रैव ङीविधानसामर्थ्यात् स्त्रियामपि। बालमनोरमाकारः 'भिषज इयमित्यर्थेऽणि वृद्धिं बाधित्वा सूत्रे भेषज इति पाठात् इकारस्यैत्वं निपात्यते' इत्याह। एवं संज्ञायामपि ङीबन्तं रूपं बोध्यम्। संज्ञाछन्दोभ्यामन्यत्र टाबन्तं रूपम्। तदाह—केवलेत्यादीति। निश्चितेऽर्थे केवलशब्दो नित्यनपुंसकः, यथा 'केवलं मूर्खः। एकस्मिन्नर्थे कृत्स्ने चार्थे त्रिलिङ्गः। यथा केवलोऽयं व्रजति। एक इत्यर्थः। केवला भिक्षवः। सर्वे इत्यर्थः। स्त्रीलिङ्गे केवली इति। तदुक्तमरे ( ३ का० ३ व० २०२ श्लो० ) 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इति। संज्ञायां छन्दसि च सूत्रोदाहरणम्।

ननु सूत्रे मामकग्रहणं व्यर्थमणन्तत्वादेव 'टिड्ढ' इति ङीपि सिद्धेरित्यत आह—मामकग्रहणमिति—मामकशब्दात् संज्ञाछन्दसोरेव ङीप् नान्यत्र। तेन लोकेऽसंज्ञायाम् 'मामिका' इत्येव। ननु संज्ञायाम् 'मामकनरकयोरुपसंख्यानम्' इतीत्वं स्यादिति चेन्न, आपि परे एवेत्वविधानात्।

यत्तु बालमनोरमाकारः 'भेषजशब्दस्याणन्तत्वे तदपि नियमार्थम्। संज्ञाछन्दसोरन्यत्राणन्तादपि 'भेषजा' इति तन्न, इकारस्य एत्वनिपातनाय तद्ग्रहणस्य चारितार्थ्येन नियमत्वासम्भवात्। अणन्तभैषजशब्दात् 'भैषजी' इत्येव। संज्ञाछन्दसोरन्यत्रापि। लोके संज्ञायामप्यस्य प्रवृत्तेर्वैदिकप्रकरणेऽस्यानुपन्यासः।

'अन्तर्वत्पतिवतोर्नुक्' (४-१-१२)। 'स्त्रियामि'त्यधिक्रियते, 'संख्याव्ययादेः' इत्यतः ङीप् चानुवर्तते–तदाह–एतयोरित्यादि—एतयोरन्तर्वत्पतिवतोः। कित्करणान्नुगागम एव न तु प्रत्ययः। प्रत्ययत्वे फलाभावाच्च। स्त्रियाम् 'अन्तर्वत् न् पतिवत् न्' नान्तत्वात् 'ऋन्नेभ्यो ङीप्' इति ङीप्। तदाह—ऋन्नेभ्य इति। गर्भिण्यामिति—एतच्च 'अन्तर्वत् पतिवदिति गर्भभर्तृसंयोगे' अन्तर्वत् पतिवदिति गर्भभर्तृयोग इति वक्तव्यम्। इह मा भूत्। प्रथते त्वया पतिमती पृथिवीति अन्तरस्यां शालायामस्तीति। किं पुनः कारणं वाक्यमेवोदाह्रियते ? न पुनर्मतुप्। अस्ति सामानाधिकरण्ये मतुब् विधीयते। न चास्मिन् विग्रयेऽस्तिना सामानाधिकरण्यम्। इहापि तर्हि न प्राप्नोति। अन्तर्वत्नीति। एवं तर्हि अन्तर्वत्पतिवतोर्नुक् मतुब् वत्वे निपातनात्। अन्तर्वदिति मतुब् निपात्यते। वत्वं सिद्धम्। पतिवदिति वत्वं निपात्यते। मतुप् सिद्धः 'अन्तर्वत्पतिवतोर्नुग् मतुब् वत्वञ्च निपातनात्' गर्भिण्यां जीवत्पत्याञ्च वाच छन्दसि नुग्भवेत्' इति भाष्याल् लभ्यते। तदाह—गर्भिण्याम्

गर्भे इति विग्रहे अन्तश्शब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादप्राप्तौ मतुन्निपात्यते। 'पतिवत्नी' इत्यत्र तु वत्वं निपात्यते। अन्तर्वत्नी। पतिवत्नी। प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां घटः। पतिमती पृथिवी।

*पत्युर्नो यज्ञसंयोगे*। [ ४—१—३३ ]

पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे।

---

**मित्यादि**। ननु 'अन्तर्वत्, पतिवत्' इति प्रकृतेरसिद्धिः, अन्तःशब्दस्याधिकरणशक्तिप्रधानाव्ययत्वेन सप्तम्यन्ततया प्रथमान्ताद्विहितस्य मतुपोऽप्राप्तेः, पतिरस्त्यस्या इत्यर्थे पतिशब्दात् मतुपः सिद्धत्त्वेऽपि 'मादुपधायाश्च' इति वत्वाप्राप्तेरित्याशङ्कायामाह—**अन्तरस्ति गर्भोऽस्यामिति**। अन्तःशब्दस्य सप्तम्यन्ततयाऽप्राप्तो मतुप् निपात्यते। अयम्भावः—

**'तदस्यास्त्यस्मिन्निति मतुप्'** ( ५-२-९४ ) इति सूत्रे तत्पदं प्रथमान्तार्थकम्। अस्तीत्यनेन पुरुषवचने न विवक्षिते। वर्तमानकालस्तु विवक्ष्यते। तेन गते धने भाविनि वा 'धनवानयम्' इति न भवति। गोमान् आसीत्, गोमान् भविता, इति तु 'धातुसम्बन्धे प्रत्ययाः' इति सिद्धम्।

धात्वर्थानां सम्बन्धे ये प्रत्यया यत्र काले उक्तास्ततोऽन्यत्रापि भवन्तीति भूतभविष्यत्सत्तामादायापि मतुप्। तथा चास्तिसमानार्थकात् कर्तृकारकबोधकात्प्रथमान्तान्मतुपो विधानेन प्रकृते तादृशो गर्भशब्द एव, न त्वन्तः शब्दस्तस्याधिकरणार्थबोधकत्वेन सप्तम्यन्तत्वादप्राप्तो मतुप् 'अन्तर्वत्' इति निर्देशान्निपात्यते। 'अन्तर् मतुप्' इति जाते 'मादुपधायाश्च' इत्यनेनादुपधत्वाद्वत्वे 'अन्तर्वत्' इति प्रकृतिभागः सिध्यति।

तदाह—**अन्तःशब्दस्येत्यादि**। **पतिवत्नीत्यत्र त्विति**—पतिरस्त्यस्यां इति विग्रहे मतुपः सिद्धत्वेऽपि अदुपधत्वाभावेन 'मादुपधायाः' इत्यस्याप्राप्तया सूत्रे 'पतिवत्' इति निर्देशेन वत्वं निपात्यते। तदाह—**वत्वं निपात्यत इति**। **प्रत्युदाहरणन्त्विति**—गर्भिण्याम्, जीवद्भर्तृकाणामेव वत्वमतुपोर्निपातनेन तदभावे 'अन्तरस्त्यस्यां शालायां घटः' इति वाक्यमेव। एवं 'पतिमती पृथिवी' इत्यत्र न वत्वम्। ननु यस्याः पृथिव्याः पतिर्जीवति तत्र प्राप्नोतीति चेन्न, 'अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे' इति वार्तिके गर्भसंयोगस्य प्राणिन्यामेव सम्भवेन तत्साहचर्याद् भर्तृसंयोगस्यापि प्राणिनीस्थस्यैव ग्रहणादित्युपाध्यायाः।

**'पत्युर्नो यज्ञसंयोगे'** ( ४-१-३३ ) इति। 'पत्युः' इति स्थानषष्ठी। स्त्रियामित्यधिकृतम्। **पतिशब्दस्येत्यादि**। 'अलोऽन्त्यस्य' इति परिभाषयाऽन्त्यस्याल इकारस्य नकारादेशः। 'नः' इत्यत्राकार उच्चारणार्थः। तेन 'ऋन्नेभ्यः' इति ङीप् सिध्यति। **यज्ञसंयोगे इति**—संयोगः—सम्बन्धः। यज्ञशब्दस्य योऽर्थस्तेन स्त्रीत्वविशिष्टपतिशब्दार्थस्य सम्बन्धे सतीत्यर्थः। **सम्बन्धश्च**—यज्ञफलप्रतियोगिकैश्वर्यवत्त्वम्। देवतोद्देशेन स्वद्रव्यत्यागो यज्ञः। **देवता च मन्त्रेण या स्तूयते सा**, वेदबोधितत्यागकर्मीभूतद्रव्यविषयित्वावच्छिन्नस्वामित्वप्रकारितावदिच्छोद्देश्या वा। यथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र 'त्यागकर्मीभूतचरुनिरूपितस्वामित्ववान् सूर्यो भवतु' इतीच्छोद्देश्यतायाः सूर्ये सत्त्वात् तस्य देवतात्वम्। अत्र वेदपदस्य श्रुतिपुराणाद्युपलक्षणत्वेन तद्बोधितमहेश्वरदुर्गादीनामपि देवतात्वं बोध्यम्। मन्त्रत्वञ्च—वेदत्वे सति कर्मविधायकभिन्नवाक्यत्वरूपम्, वेदत्वे सति ब्राह्मणभिन्नत्वं वेति पञ्चोलिनः। जायापत्योर्धनस्य विभागो न विद्यते इति स्मृतिः। ततश्च भर्तृकर्तृकत्यागे भार्याया अप्यनुमतिरपेक्ष्यते। ततश्च क्रिया अनुमत्या यज्ञसाधनत्वमपि सम्बन्धः। किञ्च सपत्नीकस्यैव यज्ञेऽधिकारात्पत्न्या यज्ञसाधनत्वम्। सोऽपि सम्बन्धः शास्त्रानुमतवैवाहिकसंस्कारविशिष्टाया एवेत्यग्रे वक्ष्यते।

वसिष्ठस्य पत्नी। तत्कर्तृकस्य यज्ञस्य फलभोक्त्रीत्यर्थः। दम्पत्योः सहाधिकारात्।

*विभाषा सपूर्वस्य।* [ ४--१--३४ ]

पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात्। गृहस्य पतिः, गृहपत्नी। 'अनुपसर्जनस्य' इतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणम्, किन्तु तदन्तस्य। तेन बहुव्रीहावपि। दृढपत्नी, दृढपतिः। वृषलपत्नी, वृषलपतिः। अथ 'वृषलस्य पत्नी' इति व्यस्ते कथमिति

---

**वसिष्ठस्य पत्नीति**—वसिष्ठपदं यज्ञसम्बन्धद्योतनार्थम्। ननु वसिष्ठकर्तृको यो यज्ञस्तत्फल-भोक्ता वसिष्ठ एवेत्याशङ्कायामाह—**दम्पत्योरिति।**

**'विभाषा सपूर्वस्य'** (४-१-३४) इति। सपूर्वस्येत्यत्र सहशब्देन पूर्वशब्दस्य समासः। सहशब्दोऽत्र विद्यमानवाची। पूर्वशब्दः पूर्वावयववाचकः। तथा च विद्यमानः पूर्वावयवो यस्य स सपूर्वः। अत्र तृतीयान्तेन 'तेन सहेति' इति तुल्ययोगस्य प्रायिकत्वात्तदभावेऽपि समास इति तु न, साहित्यार्थकयोगे एव तृतीयाविधानात्। साहित्यञ्च-स्वसमभिव्याहृतक्रियागुणद्रव्याभावसमान-कालिकक्रियादिमत्त्वरूपम्। विद्यमानार्थत्वे नैतत्सम्भवति। अन्यपदार्थश्च न पतिशब्दः। यदि पूर्वा-वयवोऽर्थवान् गृह्यते। तदा केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवः। यद्यनर्थकोऽवयवो गृह्येत। तदा पकाराद्यवयकत्वस्य पतिशब्दे सम्भवेऽपि व्यभिचाराभाव इति 'सपूर्वस्य' इति न पत्युर्विशेषणम्। किन्तु प्रातिपदिकादित्यधिकृतम्। तच्च षष्ठ्यन्तत्वेन विपरिणम्यते। तस्यैव विशेषणम्। विशेषणत्वेन तदन्तविधिः।

तथा च पतिशब्दान्तं विद्यमानपूर्वावयवकं यत्प्रातिपदिकं तस्य वा नकारादेशः स्त्रियामित्यर्थः। तदाह—**पतिशब्दान्तस्येत्यादि।** ननु 'विभाषा च' इत्येव सूत्रमस्तु, पतिशब्दान्तस्य प्रातिपदिकस्य वा नकारादेशः स्त्रियामित्यर्थेन सकललक्ष्यसिद्धिरिति चेन्न, तथा सति अनुपसर्जनादिति पत्युरेव विशेषणं स्याद् गृह्यमाणत्वात्। सपूर्वस्येत्यस्य सत्त्वे तु तस्यैव गृह्यमाणत्वेन तत्रैव विशेषणार्थं तस्यावश्यकत्वात्। पत्युरिति त्वनुवर्त्तनाल्लभ्यते इति 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायेन 'न ह्युपाधेरुपाधिर्भवति' इति भाष्येण च अनुपसर्जनस्येत्यस्य सपूर्वस्यैव विशेषणस्यौ-चित्यात्। 'अलोऽन्त्यस्य' इति परिभाषया पत्युरिकारस्य नकारादेशः। 'पत्युः' इति 'न' इति चानुवर्तते। यज्ञसंयोगाभावे विकल्पार्थमिदम्। पतिशब्दश्चात्र 'पातीति पतिः' इति यौगिकार्थपरः। ननु यज्ञसंयोगे एव प्राप्तविभाषाऽस्त्विति चेन्न, भाष्ये 'कथं तुषजकस्य पत्नी' इति व्यस्ते एव प्रश्नात्। अन्यथा 'तुषजकपत्नी' इत्यपि प्रष्टव्यः स्यात्। सूत्रं तु 'ब्राह्मणपत्नी' इत्यत्र चरितार्थम्।

ननु वृद्धः पतिर्यस्या इत्यर्थे बहुव्रीहौ 'वृद्धपत्नी, वृद्धपतिः' इति विकल्प इष्यते। स च न सिध्यति, पतिशब्दस्योपसर्जनत्वात्। न च 'उपसर्जनात्' इति नात्र सम्बध्यते इति वाच्यम्, 'सपूर्वा-त्पत्यन्तात्प्रातिपदिकादनुपसर्जनात्' इति भाष्योक्तेस्तदनुवृत्तेरावश्यकत्वात्। **अनुपसर्जनस्येत्युत्तरार्थ-मनुवृत्तमपीति**—बहवः समानाः पतयो यस्या इत्यर्थे 'बहुसपतिः' इति कर्मधारयोत्तरबहुव्रीहौ वारणायोत्तरत्राप्यनुवृत्तेरावश्यकत्वेनात्राप्यनुवृत्तेरावश्यकत्वेऽपि न पत्युर्विशेषणम्, किन्तु पति-शब्दान्तं यदनुपसर्जनं प्रातिपदिकमिति। तेन वृद्धः पतिर्यस्या इति पतिशब्दस्योपसर्जनत्वेऽपि पत्यन्तस्यानुपसर्जनत्वात्। वृद्धपत्नी, वृद्धपतिः, इति विकल्पो भवत्येव। तदाह—**तेन बहुव्रीहाव-पीति।** दृढः पतिः, वृषलो वा पतिर्यस्या इत्यर्थे **दृढपत्नी, दृढपतिः, वृषलपत्नी, वृषलपतिः** इति विकल्पः।

**व्यस्ते** = समासाभावे। 'वृषलस्य पत्नी' इत्यत्र वृषलस्य (शूद्रस्य) यज्ञेऽधिकाराभावेन पूर्व-सूत्राप्राप्तेः, वाक्यस्य प्रातिपदिकत्वाभावेन पतिशब्दान्तसपूर्वकप्रातिपदिकत्वाभावाद्विकल्पाप्राप्तेश्च। नच व्यपदेशिवद्भावेन पतिशब्दोऽपि पतिशब्दपूर्वक इति वाच्यम्, व्यपदेशिवद्भावेन पूर्वत्वपरत्व-

चेत्। पत्नीव पत्नीत्युपचारात्। यद्वा, आचारक्विबन्तात्कर्तरि क्विप्। अस्मिश्च पक्षे, पत्नियौ, पत्नियः, इतीयङ्विषये विशेषः। सपूर्वस्य किम्-गवां पतिः स्त्री।

*नित्यं सपत्न्यादिषु।* [ ४—१—३५ ]

पूर्वविकल्पापवादः। समानस्य सभावोऽपि निपात्यते। समानः पतिर्यस्याः सा सपत्नी। एकपत्नी। वीरपत्नी।

*पूतक्रतोरै च।* [ ४—१—३६ ]

---

घटितधर्मस्यातिदेशादर्शनात्। इत्याशङ्कायामाह—**उपचारादिति**–उपचारो = लक्षणा। स्त्रीप्रत्ययान्तस्य 'पत्नी' इत्यस्य शक्त्या प्रवृत्तिस्त्रैवर्णिकब्राह्मण्यादौ। वृषलस्त्रियां तु लक्षणया। गृह्यते यस्मिंस्तद् ग्रहणम्, पाणेर्ग्रहणम् इति व्युत्पत्त्या पाणिग्रहणपदं विवाहपरम्।

तदुक्तं शेखरकृता पाणिग्रहणाश्रयणमिति। वैधविवाहाश्रयणादित्यर्थः। ब्राह्मणपत्न्या य आचारस्तादृशाचारवत्त्वेन सादृश्यमूलकपत्नीत्वारोपेण **'वृषलस्य पत्नी'** इति प्रयोगः। तदुक्तं-माष्यकृता **'एवमपि तुषजकस्य पत्नी न** सिध्यति। उपमानात् सिद्धम्। पत्नीव पत्नी' इति। **आचारक्विबन्तादिति**—पत्नीवाचरति पत्नयति। ततः कर्तरि क्विप्। **'पत्नी'–इति**। अत्र पक्षे पत्नीत्यस्य क्विबन्तत्वेन धातुत्वादजादौ सुपि इयङादेशः। तदाह—**इयङ्विषय इति**।

ननूक्तरीत्या यज्ञसंयोगाभावेऽपि 'पत्नी' इत्यस्य साधुत्वे यज्ञसंयोगे इत्यस्य वैयर्थ्यापत्तिरिति चेन्न, उपमानत्वाभावे 'वृषलस्य पतिः स्त्री' इत्यस्य साधुत्वार्थं तस्य चारितार्थ्यात्। **गवां पतिरिति**–सपूर्वस्येत्यस्य सत्त्वे सपूर्वावयवकं पतिशब्दान्तं यत्प्रातिपदिकम् इत्यर्थेन 'गवां पतिः' इत्यन्तस्य सपूर्वकपतिशब्दान्तत्वेऽपि प्रातिपदिकत्वाभावान्न नत्वम्। पतिरित्यस्य प्रातिपदिकत्वेऽसपूर्वकत्वाभावान्नत्वाप्राप्तिः।

यत्र सपूर्वस्येत्यस्याभावेऽपि पत्यन्तप्रातिपदिकस्य नत्वविधानेन पतिरित्यस्य व्यपदेशिवद्भावेन पत्यन्तप्रातिपदिकत्वेऽपि 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषया व्यपदेशिवद्भावनिषेधात् नत्वाप्राप्त्या सपूर्वस्येति स्पष्टार्थमेवेति बालमनोरमाकारस्तन्न, व्यपदेशिवद्भावोऽप्रातिपदिकेन इत्यस्य 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इत्यस्य च प्रत्ययविधायकसूत्रे एव प्रवृत्त्या नत्वविधायकेऽत्र तदप्रवृत्तेः। अत एव 'सजूः' जरसौ' इत्यादावादेशसिद्धिरित्युपाध्यायाः।

**'नित्यं सपत्न्यादिषु'** ( ४-१-३५ ) इति। सपत्न्यादिगणे—समान-एक-वीर-पिण्ड-श्व-( शिरि ) भ्रातृ-भद्र-पुत्र-दासाच्छन्दसि इति पाठात् यानि समानादिपूर्वपदानि पत्यन्तानि प्रातिपदिकानि ते सपत्न्यादयः। न चैवं सति 'नित्यं समानादिषु' इत्येव सूत्रमस्तु, सपूर्वस्येत्यनुवृत्त्या समानादिषु पूर्वावयवेषु पत्यन्तेषु प्रातिपदिकेषु सत्सु नकारादेश इत्यर्थः स्यादिति चेत्सत्यम्, समानस्य सभावनिपातनार्थं 'सपत्न्यादिषु' इति पाठात्। पूर्वेण सिद्धे नित्यार्थमिदम्। आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्।

तदाह—**पूर्वविकल्पापवाद इति**। **निपात्यते इति**—उदात्तस्यैव स इत्यस्य निपातनात् सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम्। किञ्च समानस्वामिकस्त्रीविशेषे एवास्य प्रयोग इति सूचनार्थोऽपि ङीब्नकारविशिष्टपाठः। तेन समानस्वामिकदासीभूम्यादौ 'सपतिः' इत्येव। ननु समानः पतिर्यस्या इत्यर्थोऽनुपपन्नः, एकस्वामिकपत्नीद्वयादावेव तत्प्रयोगदर्शनेन एकत्र भेदघटितसादृश्यबाधादिति चेन्न, एकस्मिन्नपि तत्तत्पत्नीसम्बन्धभेदेन भेदघटितसमानत्वस्योपपादयितुं शक्यत्वात्। मुख्यसादृश्यविशिष्टपतिद्वयादिविशिष्टासु च न सपत्नीशब्दप्रयोगः, शब्दशक्तिस्वभावात्।

**'पूतक्रतोरै च'** ( ४-१-३६ ) इति। 'ऐ' इति सौत्रत्वाल्लुप्तप्रथमान्त आदेश एव, न तु प्रत्ययः, उत्तरसूत्रे 'उदात्त' ग्रहणात्। प्रत्ययत्वे हि 'आद्युदात्तश्च' ( ३-१-३ ) इत्याद्युदात्त-

अस्य स्त्रियामै आदेशो ङीप् च। 'इयं त्रिसूत्री पुंयोग एवेष्यते' पूतक्रतोः स्त्री पूतक्रतायी। 'यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा'।

*वृषाकप्यग्निकुसितकुसिदानामुदात्तः।* [ ४—१—३७ ]

एषामुदात्त ऐ आदेशः स्यान्ङीप् च। वृषाकपेः स्त्री वृषाकपायी। 'हरविष्णू वृषाकपी' इत्यमरः। 'वृषाकपायी श्रीगौर्योः' इति च। अग्नायी।

---

विधानादेवोदात्तत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। चेन ङीबनुकृष्यते। पूतक्रतुशब्दात् स्त्रियां ङीप् प्रकृतेरैकारश्चान्तादेश इत्यर्थः। तदाह—**अस्येत्यादि**।

**पुंयोगे एवेति**—पुंयोगे सत्येव विधायकत्वेनेष्यते इत्यर्थः। अत्र मानञ्च 'पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम्' पूतक्रत्वादयः पुंयोगप्रकरणे वक्तव्याः। पूतक्रतोः स्त्री **पूतक्रतायी**। **"यया तु पूताः क्रतवः पूतक्रतुः सा भवति।"** इति भाष्यमेव।

त्रिसूत्री तु वार्तिके बहुवचननिर्देशात् कपिञ्जलाधिकरणन्यायेन बहुत्वेषु त्रित्वस्य प्रथमोपस्थिकत्वेन लाभ इति कश्चित्तन्न, 'निजां त्रयाणाम्' इति सूत्रे त्रयाणां ग्रहणसामर्थ्येनात्र तदप्रवृत्तेर्ज्ञापनात्। किन्तु भाष्ये सूत्रत्रये एव तादृशोदाहरणदानरूपव्याख्यानात् त्रिसूत्रीति लभ्यते।

**वस्तुतस्तु** 'निजां त्रयाणाम्' इत्यत्र 'त्रयाणाम्' ग्रहणेन कपिञ्जलाधिकरणन्यायस्यानित्यत्वेऽपि इष्टस्थले न्यायप्रवृत्तौ बाधकाभावः, इष्टस्थलेऽपि न्यायाप्रवृत्तौ न्यायस्य निर्विषयत्वापातश्चेति **पञ्चोलिनः।** नन्वेवं पुंयोगप्रकरणे एव सूत्रत्रये वक्तव्येऽत्र पाठो व्यर्थ इति चेन्न, इह करणसामर्थ्याच्च ङीप्सहिता एवानुवर्तन्ते। तेन यदा पूतक्रत्वादयः पुंयोगात् स्त्रियां वर्तन्ते तदा ङीषं बाधित्वा ऐकारसहितो ङीप्स्यादित्येतदर्थमत्र पाठात्। **पूतक्रतायीति**—पूतः क्रतुर्येन स पूतक्रतुः। तस्य स्त्री **पूतक्रतायी।** पुंयोगाद्धेतोः स्त्रियां वर्तमानात् पूतक्रतुशब्दान्ङीपि उकारस्यैकारायादेशयोः **पूतक्रतायीति।** येन यज्ञः पवित्रीकृतस्तस्य पत्नीत्यर्थः।

पुंयोगे इत्यस्य फलमाह—**ययेति**। यया तु स्त्रिया स्वयं क्रतवः पूतास्तत्र **'पूतक्रतुः'** इत्येव।

**'वृषाकप्यग्निकुसितकुसिदानामुदात्तः'** (४–१–३७) इति। ऐरिति, ङीबिति चानुवर्तते। स्त्रियामित्यधिकृतम्। तदाह—**एषामित्यादि**। **ङीप् चेति**—एभ्य इति शेषः। **वृषाकपेरिति**—वृषः कपिर्यस्येत्यर्थे बहुव्रीहिः। वृषपदस्य 'अन्येषामपि' इति दीर्घः। हरे विष्णौ च **रूढोऽयम्।** वृषाकपिसंज्ञको हरो विष्णुश्च। तत्र प्रमाणमाह—**अमर इति** ( ३ का० ३ व० १२९ श्लो० **श्रीगौर्य्योरिति,** अमर० ३ का० ३-व० १५५ श्लो० )।

**वृषाकपायीति**—वृषाकपिशब्दः '**अन्ते लघौ द्वयोर्वा लघ्वोः स परतो बह्वषः=बह्वच्कस्य** **फिषः**=प्रातिपदिकस्य गुरुरुदात्त इत्यर्थकेन शान्तनवाचार्यप्रणीतफिट् सूत्रेण 'लघावन्ते **द्वयोश्च बह्वषो** गुरुः' इत्यनेन द्वयोर्लघ्वोः परतः पकारात्परस्य गुरोराकारस्य उदात्तत्वे 'अनुदात्तपदमेकवर्जम्' ( ६-१-१५८ ) इति सूत्रेण पकाराकारं वर्जयित्वा सर्वस्यानुदात्तत्वे कपेरिकारस्यानुदात्तस्य ऐकारादेश आन्तरतम्यादनुदात्त एव स्यात्। तस्य आदेशोऽप्यनुदात्त एव स्यादिति तद्वारणायानुदात्तस्यापीकारस्य स्थाने उदात्त ऐकारो विधीयते। आयादेशोऽप्युदात्त एवेति।

**'वृषाकपायी'** इत्यत्र पकाराकार उदात्त एव यथा स्यादिति सूत्रे उदात्तग्रहणम्। शान्तनवाचार्यमते 'अष्' पदमच्पदपर्यायभूतम्। तन्मते 'ऐ औच्' इत्यस्य स्थाने 'ऐ औष्' इति पाठः। षकारेण प्रत्याहारः।

**अग्नायीति**—अग्न्यादयस्त्रयः फिट्स्वरेण, कृदुत्तरप्रकृतिस्वरेण च यथार्हमन्तोदात्ताः। इति तत्रापि न फलम्, उदात्त इत्यस्य। कुसिदशब्दो वृद्धि ( सूद ) जीविपरः। तस्य स्त्री कुसिदायी। पूर्ववत्प्रक्रिया। कुसिदग्रहणं निन्दितं कर्म, 'कुसीदाद् दारिद्र्यं प्राप्नोति जनः' इत्यभि-

कुसितायी, कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः ।

*मनोरौ वा ।* [ ४—१—३८ ]

मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा, ताभ्यां सन्नियोगशिष्टो ङीप्च । मनोः स्त्री मनायी, मनावी, मनुः ।

---

युक्तोक्तेः । गत्यर्थादगिधातोः 'अङ्गेर्नलोपश्च' ( उणा० ४ पा० ५० सू॰ )निरिति, किदिचानुवर्तते । इति निप्रत्यये नलोपे च 'अग्निः' प्रत्ययाद्युदात्तस्वरेणान्तोदात्तः । आन्तरतम्यादिकार आयादेशश्चो-दात्त एवेति नात्र उदात्त इत्यस्य फलम् ।

'अग्निर्वैश्वानरेऽपि स्यात् चित्रकाख्यौषधौ पुमान् ।' इति मेदिनी ।

**कुसितायीति**—कुपूर्वकात् 'षो अन्तकर्मणि' इत्यतः क्ते सित इति कुषितः कुस्वभावे रूढः, ईषत् शुभ्रवर्णे तद्वति च । कुषितस्य=कुस्वभावस्य ईषत् शुभ्रवर्णवतो वा स्त्री कुसितायी । एवं **कुसिदायी** । बालमनोरमायान्तु 'कुषितकुषिदे अव्युत्पन्नप्रातिपदिके देवताविशेषस्य नामधेये फिट्-स्वरेणान्तोदात्ते' इत्युक्तम् । तत्र देवताविशेषस्य नामधेये मूलं मृग्यम् इति **उपाध्यायाः** । **न तु दीर्घ-मध्य इति** । वृषाकप्यर्थमिदमुच्यते इत्याकरग्रन्थविरोधात् । यदि तु कुसीद इति दीर्घमध्यः स्यात्तदा **'लघावन्ते'** इत्यनेन मध्योदात्तत्वेनान्तस्य शेषनिघातेनान्तस्यानुदात्तत्वे तस्य स्थाने उदात्तैकार-**विधानार्थमपि** स्यादिति वृषाकप्यर्थमित्याकरग्रन्थविरोधः स्पष्ट एव । किञ्च कुषितशब्दस्य इच् **स्यादपि ह्रस्वमध्य एव** ।

**'मनोरौ वा'** (४-१-३८) इति । **अत्र उदात्त इति, ऐ चेति,** ङीबिति चानुवर्तते । तदाह—**मनुशब्दस्येत्यादि** । उदात्तैकारश्चेति—**वृत्तौ** समासनिर्देशेन सूचयति—औकारेण नास्त्युदात्त इत्यस्य सम्बन्ध इति । किन्तु ऐकारेणैवोदात्त इति सम्बध्यते । वाग्रहणेन ऐकार औकारश्च द्वावपि विकल्प्येते । यदा च द्वावपि न भवतस्तदा तत्सन्नियोगशिष्टो ङीबपि न, तदाह—ताभ्याम् = ऐकारौ-काराभ्याम्, सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिरिति न्यायात् । अयञ्च न्यायः 'पूतक्रतोरै च' इति भाष्ये 'लिङ्ग ( लिङ्गार्थप्रत्यय ) सन्नियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतं प्राप्नोति' इत्यनेन ध्वनितः ।

**मनोरिति**—उरिति निदिति चानुवर्तते । 'शृस्वृस्निहि·······मनिभ्यश्च' ( उणा० १ पा० १० सू॰ ) इति सूत्रेण मन ज्ञाने इत्यत उप्रत्ययः, स च निदिति मनुशब्द आद्युदात्त इति शेषनिघातेनो-ऽनुदात्तस्तस्य स्थाने ऐकार उदात्तः । औकारादेशश्चान्तरतम्यादनुदात्त एव, तेन सह उदात्त इत्यस्या-सम्बन्धात् । तयोरभावे सन्नियोगशिष्टो ङीबपि न । एवञ्च 'मनायी, मनावी, मनुः' इति मनोः स्त्रीत्यर्थे सिद्धः । **मनायीति** मध्योदात्तः । **मनावी, मनुः,** इति द्वयमाद्युदात्तम् । मनुः = प्रजापति-विशेषः, धर्मशास्त्रकर्तरि मुनिभेदे च । तदुक्तम्—

'यत्किञ्चिन्मनुरवदत्तद् भेषजम्' । इति ।

मनावीत्यत्रौकारोऽनुदात्तोकारस्थानिकत्वादनुदात्त एव । **मनुरिति**—ऐकारौकारयोरभावे तत्सन्नियोगशिष्टो ङीबपि न ।

**'मानवः' 'मनुष्यः'** इत्यत्र तु मनुपदं मनुस्मृतिकारपरन्न, किन्तु कश्यपपत्नीमनुबोधकम् । कश्यपस्य तिस्रः स्त्रियः—दितिः, अदितिः, मनुश्चेति । दितेः पुत्रा दैत्याः, अदितेः पुत्रा आदित्याः, मनोरपत्यानि मानवाः, मनुष्या वा । त्रयाणामेकजनकजन्यत्वेऽपि विभिन्नजननीजन्यत्वाज्जननीनिष्ठ-संस्कारतो तेषां भेद इति बा० कृ० **पञ्चोलिनः** ।

*वर्णादनुदात्तात्तोपधात्तो नः । [ ४—१—३९ ]*

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप्स्यात्, तकारस्य नकारादेशश्च । एनी, एता । रोहिणी, रोहिता । 'वर्णानां तणतिनितान्तानाम्' इति फिट्सूत्रेणाद्युदात्तः 'त्र्येण्या शलल्या' इति गृह्यसूत्रम् । त्रीण्येतानि यस्या इति बहुव्रीहिः ।

'वर्णादनुदात्तात्तोपधात्तो नः' ( ४-१-३९ ) इति । वेति, ङीबिति अनुपसर्जनात् प्रातिपदिकादिति चानुवर्तते । स्त्रियामित्यधिकृतम् । अनुदात्तादिति वर्णादित्यस्य विशेषणम् । तेन तदन्तविधिः । तोपधादित्यपि वर्णादित्यस्य विशेषणम् । तोपधादित्यस्य तकार उपधा यस्य वर्णवाचकस्य तस्मादित्यर्थः । वर्णपदञ्च न स्वरूपपरम्, तत्र तोपधादिति विशेषणस्य बाधात्तदाह—**वर्णवाचीत्यादि** । वर्णादिति प्रातिपदिकादित्यस्य विशेषणम् । अनुपसर्जनादित्यपि तस्यैव विशेषणम् । 'तः' इति स्थानपदार्थानुयोगिकसम्बन्धबोधकषष्ठयन्तम् । तदाह—**तकारस्येत्यादि** । एवञ्च अनुदात्तस्तोपधश्च यो वर्णवाची तदन्तमनुपसर्जनं यत्प्रातिपदिकं ततः स्त्रियां वा ङीप् तकारस्य नकारादेशश्चेत्यर्थः सम्पन्नः । 'नः' इत्यत्राकार उच्चारणार्थो लाघवात् । विवक्षितत्वेऽल्लोपकरणे गौरवं स्पष्टमेव ।

**एनीति**—

एतः कर्बुरः 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' । इत्यमरात् ।

( १ का० ५-व० ७ श्लो० )

एतशब्दस्य चित्रवर्णपर्यायत्वे 'त्र्येण्या शलल्ये'ति न संगच्छेत, शलल्यां चित्रत्रयाभावादिति चेन्न, एतशब्दस्यात्र एतावयवपरत्वात् । तथा सति त्रिषु स्थानेषु चित्रावयवविशिष्टेति व्याख्यानेनादोषात् । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यमरात् ( १ का० ५ व० १७ श्लो० ) । 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वार्तिकात् लिङ्गत्रयेऽपि प्रयोगात् एनी, एतेति स्त्रियां प्रवृत्तिः । 'एतशब्दः श्वेतपर्याय इति कल्पसूत्रव्याख्यातारो धूर्तस्वामिभवस्वामिहरदत्तप्रभृतयो याज्ञिकाः' इति बालमनोरमा । **वर्णानां तणतिनितान्तानामिति**—तशब्दान्तानामेतादीनाम्, णशब्दान्तानां शोणादीनाम्, तिशब्दान्तानां शितिप्रभृतीनाम्, निशब्दान्तानां पृश्निप्रभृतीनाम्, तकारान्तानाञ्च पृषत्प्रभृतीनाञ्च वर्णवाचिनामादिरुदात्तो भवतीत्यर्थः । 'तान्त' इत्यत्र तकारमात्रं विवक्षितम्, तशब्देन पृथक् तशब्दोपादानात् । जस्त्वाभावः सौत्रः, उच्चारणार्थः, तकारान्ततशब्दोपादानाद्वा ।

**एतेति**—ङीपोऽभावे तत्संनियोगशिष्टो नकारोऽपि न । **रोहिणी, रोहितेति**—रोहितशब्दो रक्तपर्यायः 'लोहितो रोहितो रक्तः' इत्यमरात् (१ का० ५ व० १५ श्लो०) । एतरोहितशब्दयोरुक्तसूत्रेणाद्युदात्तत्वे शेषनिघातेनान्तानुदात्त इत्यनुदात्तान्तत्वं तयोः । ननु 'अनुपसर्जनात्' इति सूत्रे श्रुतस्यैव विशेषणमिति 'टिड्ढ' इति सूत्रभाष्याल्लभ्यते इत्युक्तम् । तथा च वर्णवाची योऽनुपसर्जन इत्येवार्थः स्यादिति **त्रीण्येतानि यस्या** इत्यर्थे बहुव्रीहावेतशब्दस्योपसर्जनत्वात् ङीप् नकारादेशश्च न स्यादिति चेन्न, अत्र वर्णवाचकान्तं यदनुपसर्जनं प्रातिपदिकं ततः ङीप् नकारो स्त इत्यर्थेन न्येत इति प्रातिपदिकस्यानुपसर्जनत्वेनादोषात् ।

अत्र मानञ्च गृह्यसूत्रवृत्तिकृतो नारायणस्य बहुव्रीहिं कृत्वाऽनेन ङीबिति व्याख्यानमेव । **शलल्येति**—'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्' इति ( अमर० २ का० ५ व० श्लो ) श्वानं विध्यति लोम्नेति श्वावित् । तस्य लोम्नि शलली, शललं शलम्—इति त्रीणि ।

**गृह्यसूत्रमिति**—गृह्यन्ते-संगृह्यन्ते औपासनाग्निसाध्यकर्माण्यत्रेति व्युत्पत्त्या आपस्तम्बाश्वलायनादिप्रणीतसूत्रविशेषो गृह्यम् । शेखरकारास्तु 'उपमानानि सामान्यवचनैः' ( २-१-५५ ) इति सूत्रस्थवक्ष्यमाणभाष्यस्वरसात्, 'टिड्ढाणञ्' इत्यादौ गृह्यमाणविशेषणस्य निर्णीतत्वाच्चात्रापि तथैवोचितम् । तत्र हि भाष्ये 'शस्त्रीश्यामा' इत्यादौ श्यामाशब्दः शस्त्र्यामेव । उपमेयन्तु समास-

अनुदात्तात् किम्-श्वेता। 'घृतादीनां च' ( फि २१ ) इत्यन्तोदात्तोऽयम् । अत इत्येव। शितिः स्त्री । 'पिशङ्गादुपसंख्यानम्' । पिशङ्गी, पिशङ्गा। 'असितपलितयोर्न'। असिता। पलिता। 'छन्दसि क्नमेके' असिक्नी। पलिक्नी।

---

वाच्यम्, उपमेयस्य समासवाच्यत्वे 'शस्त्री श्यामा इवायं देवदत्तः' इति विग्रहः। अस्मिन् पक्षे दूषणमुक्तम्। 'शस्त्रीश्यामो देवदत्तः' इत्यत्र ह्रस्वत्वं न सिध्यति। शस्त्रीव श्यामो देवदत्त इति विग्रहे तु स्वतो ह्रस्वान्तस्यैव श्यामशब्दस्य प्रयोग इति शस्त्रीश्यामो देवदत्त इति प्रयोगः सिध्यति। सम्प्रति तु शस्त्रीश्यामा देवदत्त इत्यापद्येत।

यदि तु शास्त्रीयोपसर्जनत्वाभावेऽपि 'अप्रधानमुपसर्जनम्' इत्याश्रित्य समासवाच्यमुपमेयं प्रति श्यामाशब्दार्थस्याप्रधानत्वादुपसर्जनत्वमिति 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। तदा 'कुम्भ-कपाललोहिनी' इत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोति' इत्युक्तम्। 'वर्णवाचकान्तस्य विशेषणत्वे तु समासरूपप्रातिपदिकस्य प्रधानार्थकतयाऽनुपसर्जनलक्षण ईकारो न प्राप्नोति' इति भाष्यं विरुध्येत। तस्मादनुपसर्जनादिति गृह्यमाणस्य वर्णवाचकस्यैव विशेषणम्। न चैवं 'त्र्येण्या च शलल्या' इति रूपासिद्धिः, 'त्रिषु स्थानेषु एनी' इत्यर्थे सप्तमीसमासेन सिद्धेः।

न च गृह्यवृत्तिकृता नारायणेन विरोधः, प्रमाणबलाद्वस्तुसिद्धौ तद्विरोधस्याकिञ्चित्करत्वाद् इत्याहुः। गुरवस्त्रिपाठिनस्तु 'त्र्येणी' इत्यत्र समानपदत्वाभावेऽपि छान्दसत्वात् णत्वं बोध्यम्। न च 'पूर्वपदात्संज्ञायाम्' इति णत्वम्, संज्ञात्वाभावात्। यजुर्वेदे तु 'त्रिएण्या शलल्या निवर्चयेत्' इति पाठः। तत्र त्रीणि एतानि-श्वेतानि यस्या इति विग्रहः। 'यणभावो णत्वञ्चार्षमिति वेदभाष्ये भट्टभास्करः' इति बालमनोरमा। **अनुदात्तात्किमिति**—'वर्णानां तणतिनि' इति बाधित्वा 'घृतादीनाञ्च' इति फिट्सूत्रेणान्तोदात्तः श्वेतशब्द इत्यनुदात्तत्वाभावान्न ङीम्नकारौ। **अत इत्येवेति**—'अजाद्यतः' इत्यत्र 'अतः' इत्यनुवृत्तेः।

**शितिः स्त्रीति**—'शिती धवलमेचकौ' इत्यमरः ( ३ का० ३ व० ८२ श्लो० ) मेचकः = कृष्णवर्णः।

"निशितेऽपि शितिर्भूर्जे ना सितासितयोस्त्रिषु।'

इति मेदिनी। भूर्जः=भूर्जवृक्षः। 'शिञ् निशाने' इत्यतः क्तिनि निशिते यौगिकोऽन्यत्र रूढः। **पिशङ्गीति**—'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः ( १ का० ५ व० १६ श्लो०) षट्कं पिङ्गलवर्णस्य। दीपशिखातुल्यो वर्णः पिङ्गलः। शब्दार्णवे तु—

सितपीतहरिद्रक्तः कडारस्तृणवह्निवत्। अयं तद्रक्तपीताङ्गः कपिलो गोविभूषणः॥
हरितांशेऽधिकेऽसौ तु पिशङ्गः पद्मधूलिवत्। पिशङ्गस्त्वसितावेशात्पिशो दीपशिखा-
दिषु। पिङ्गलस्तु परच्छायः पिङ्गे शुक्लाङ्गखण्डवदित्युक्तम्।

तद्वति त्रिषु। पद्मधूलितुल्यवर्णा पिशङ्गीत्यर्थः।

**'पिशङ्गादुपसंख्यानम्'** इति 'अन्यतो ङीष्' इति वक्ष्यमाणस्य ङीषोऽपवादः। ङीप् पित्त्वा-दनुदात्त इति स्वरे भेदः।

**'असितपलितयोर्न'** इति वार्तिकेन 'वर्णादनुदात्तात्' इति प्राप्ते ङीम्नत्वे निषिध्येते। **'अवदातः सितो गौरः'** इत्यमरात् सितः = श्वेतस्तद्विरुद्धः कृष्णोऽसितशब्देनोच्यते। **'पलितो जरया शौक्ल्यम्'** इत्यमरात् पलितशब्दो जराकृतं यत्केशादीनां शौक्ल्यं तद्वाची। तद्विशिष्टा वृद्धाऽपि पलिताशब्देनोच्यते। 'छन्दसि क्नमेके' इति वार्तिके 'क्नम्' इति क्नशब्दादमि रूपम् एके = अन्ये आचार्या असितपलितशब्दयोस्तस्य क्न आदेशः स्यात् ङीष्सन्नियोगेन स्त्रियामितीच्छन्तीत्यर्थः। एतेन क्नमागम इति भ्रमो निरस्तः। छन्दसीति भाष्योक्तेर्भाषायां न क्नादेश इति लभ्यते।

अवदातशब्दस्तु न वर्णवाची, किन्तु विशुद्धवाची । तेन अवदाता इत्येव ।

*अन्यतो ङीष्* । [ ४-१-४० ]

तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष् स्यात् । **कल्माषी** । **सारङ्गी** । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' ( फि ४२ ) इति मध्योदात्तावेतौ । अनुदात्तान्तात् किम्–कृष्णा, कपिला ।

---

वस्तुतस्तु अन्ये इत्यस्य पाणिनेरन्ये इत्यर्थश्चेत्तदा पाणिनिः छन्दसि क्नादेशं नेच्छतीति सिध्यति । तथा च पाणिनेश्छन्दसि क्नादेशाभावोऽन्यमते क्नादेश इति तु तदैव संगच्छेत यदा उभयविधप्रयोगो दृश्येत । छन्दसि क्नादेश एवोपलभ्यते न तु तदभावः । अत एव भाष्यकृता 'असिक्न्यस्योपधेपलिक्नीरियुवतयो भवन्ति' इति भावमात्रमुदाहृतम् । तस्मात् छन्दस्येके इत्यन्वयात् । भाषायामपि 'गतो गणस्तूर्णमसिक्निकानाम्' इति प्रयोगः साधुरेवेति मनोरमा । आदेशे 'एके' इत्यस्यान्वये तद्वैयर्थ्यापत्तिश्च छन्दस्यापाद्यमानस्याभावात् 'दृष्टानुविधिश्छन्दसि' इति सिद्धात् ।

ननु **'अवदातः सितो गौरः'** ( अम० १ का० ५ व० १३ श्लो० ) इति कोशादवदातशब्दस्य वर्णवाचित्वात् 'लघावन्ते' इति मध्योदात्तत्वेन शेषनिघातेनान्तानुदात्तत्वान् ओपधत्वाच्च ङीम्नादेशौ प्राप्नुत इत्यत आह—**अवदातशब्दस्त्विति**—**'अवदातः सिते पीते विशुद्धे'** ( अम० ३ का० ३ व० ८० श्लो० ) इति कोशात् विशुद्धवाचिनोऽवदातशब्दात् टावेव । तदाह–**'अवदाता' इत्येवेति** । अवपूर्वकाद 'दैप् शोधने' इत्यतः कर्मणि क्ते अवदातशब्दः सिध्यति । विशुद्धवाचित्वे भाष्यमपि मानम् ।

'अवदातायां ङीप् प्राप्नोति । **अवदाता ब्राह्मणी** । वर्णादनुदात्तात्तोपधात्तो न इति । **नैष** वर्णवाची । किं तर्हि **विशुद्धवाची** । अतश्च विशुद्धवाची ।

**त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च ।**
**एतच्छिवं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥' इति**

'पुंयोगादाख्यायाम्' ( ४–१–४८ ) इति सूत्रे ।

**'अन्यतो ङीष्'** ( ४–१–४० ) इति । **अन्यत** इत्यस्य भिन्नादित्यर्थः । भेदस्य प्रतियोग्याकाङ्क्षायाम् अनन्तरत्वात्तोपधादिति लभ्यते । तदाह—**तोपधभिन्नादिति** । न च 'शाब्दक्रमादर्थक्रमो बलीयान्' इति न्यायेन वर्णवाचिन एव विशेष्यस्य प्रतियोगितयाऽन्वयः स्यादिति **वाच्यम्**, 'प्रयुक्तानामन्वाख्यानं व्याकरणम्' इति भाष्योक्त्या **'कल्माषी, सारङ्गी'** इत्यादिप्रयोगानुसारेण तोपधस्यैव प्रतियोगितया सम्बन्धकल्पनस्यौचित्यात् । अत्र वर्णादिति, अनुदात्तादिति, तोपधादिति चानुवर्तते । तत्र तोपधादित्यस्य भेदे प्रतियोगितया सम्बन्धः तदा, **तोपधभिन्नादित्यादि** । **कल्माषीति**—कल्माषश्चित्रवर्णः ।

**'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे'** ।

इति ( अम० १ का० ५ व० १७ श्लो० ) कोशात् । कलतेर्भावे क्विपि कल् मधुराव्यक्तशब्दस्तं मषति—हिनस्तीति अणि कल्माषश्चित्रवर्णे रूढः । तद्वत्यां ङीष् । ङीष् उदात्तः ।

**सारङ्गीति**—सारङ्गश्चित्रवर्णः । तद्वति स्त्रियां ङीष् । 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' ( अम० ३ का० ३ व० २३ श्लो० ) इत्युक्तेः 'सृवृञोर्वृद्धिश्च' ( उणा० १ पा० १२२ सू० ) इति अङ्गच्प्रत्यये **सारङ्ग इति** । **कृष्णेति**—'कृषेर्वर्णेपि' इति ( उणा० १ पा० ३ सू० ) नक्प्रत्यये कृष्ण इति **'कृष्णे नीलासितश्यामकालश्यामलमेचकाः'** ( अमर० १ का० ५ व० १४ श्लो० ) इत्यमरान्नीलवर्णः तद्वति । स्त्रियां टापि **कृष्णेति**—कृष्णा द्रौपदी, पिप्पली वा । कृष्णशब्दः प्रत्ययस्वरेणान्तोदात्तः ।

*षिद्गौरादिभ्यश्च* । [ ४—१—४१ ]

**षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । नर्तकी । गौरी । 'आम् अनडुहः स्त्रियाम् वा' । अनड्वाही, अनडुही ।**

---

**कपिलेति**— कपिलः=पिङ्गलवर्णः । दीपशिखातुल्यवर्ण इति यावत् । तद्विशिष्टा कपिला। कपिलशब्दोऽयमव्युत्पन्नः फिट्सूत्रेणान्तोदात्तः ! व्युत्पत्तिपक्षेऽपि 'कमेः पश्च' ( उणा० १ पा० ५५ सू० ) इति कामयतेऽसौ इत्यर्थे इलच्प्रत्यये मस्य पादेशे चित्त्वादन्तोदात्त एव ।

**'षिद्गौरादिभ्यश्च'** ( ४-१-४१ ) इति । **अनुपसर्जनादिति,** प्रातिपदिकादिति, स्त्रियामिति चाधिक्रियते । ङीषिति चानुवर्तते । ष इत्येषां ते षितः । गौर आदिर्येषां ते गौरादयः । षितश्च गौरादयश्चेतीतरेतरद्वन्द्वः । अनुपसर्जनेभ्यः षिद्भ्यो गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीषित्यर्थः । वृत्तौ अनुपसर्जनादित्यस्यानुक्तिश्चिन्त्या ।

**नर्तकीति**—'नृती गात्रविक्षेपे' इत्यतः 'शिल्पिनि ष्वुन्' (३-१-१४५) इति ष्वुन्प्रत्यये 'षः प्रत्ययस्य' ( १-३-६ ) इति षस्येत्त्वे लोपे च 'युवोरनाकौ' ( ७-१-१ ) इति वुशब्दस्याकादेशे लघूपधगुणे 'नर्तक' इत्यतः ङीषि अलोपे **'नर्तकी'** इति । नच यदवयवः ष इत् स षिदित्यर्थे अक इत्यस्य षित्त्वेऽपि नर्तक इति प्रातिपदिकस्य षित्त्वाभावान्ङीषोऽनापत्तिः, 'अवयवेष्वचरितार्थोऽनुबन्धः समुदायोपकारको भवति' इति न्यायेन प्रत्ययगतं षित्त्वं समुदाये प्रातिपदिके आरोपेणादोषात् । त्रपूष् लज्जायाम्, डुपचष् पाके, इत्यादौ षित्त्वस्य । 'षिद्भिदादिभ्योऽङ्' ( ३-३-१०४ ) इत्यङ्विधानेन चरितार्थत्वादङन्तस्य त्रपादेः षित्त्वाभावेन 'त्रपा, पचा' इत्यत्र न ङीष् । 'मृजू शुद्धौ' इत्येव पाठः, भिदादौ 'मृजा' इत्यस्य पाठदर्शनात् ! वस्तुतस्तु 'मृजूष्' इति पाठे लाघवात् भिदादौ 'मृजा' इत्यस्य पाठश्चिन्त्य इत्युपाध्यायाः । अत एव 'मृजेः षित्त्वादेवाङ् भिदादौ पाठस्त्वनार्षः' इत्यन्ये ।

**'गौरीति—'अवदातः सितो गौरः'** (अम० १ का० ५ व० १३ श्लो० ) इति कोशाद् गौरशब्दस्य वर्णवाचित्वे तोपधभिन्नत्वेऽपि फिट्सूत्रेणान्तोदात्ततया पूर्वेणासिद्धया गणे पाठः । श्वेता, गौरी=पार्वती **'उमा कात्यायनी गौरी'** इत्यमरात् । **'पञ्चवर्षा भवेद् गौरी'**इति स्मृतेः पञ्चवर्षवयस्का कन्याऽपि । श्वन्शब्दो गौरादौ पठ्यते, तेन ङीषेव तान्तत्वान्न ङीप् । यत्तु श्वानमाचष्टे, इत्यर्थे णिचि, श्वेवाचरतीत्यर्थे क्विपि वा उपसर्जनतया ङीषोऽप्राप्त्या ततः नान्तलक्षणङीवेवेति, तन्न, णिचि टिलोपेन नान्तत्वाभावात् ।

नच 'प्रकृत्यैकाच्' इति प्रकृतिभावेन टिलोपो दुर्लभः, 'न च येन नाप्राप्ते' इति न्यायेन 'टेः' इत्यस्यैव प्रकृतिभावो बाधको न 'नस्तद्धिते' इत्यस्येति वाच्यम्, 'नैकाच्' इत्येव वक्तव्ये प्रकृतिग्रहणेन टिलोपमात्रस्यैवापवादत्वादिति वाच्यम्, टिलोपाभावेऽपि सम्प्रसारणे एकाच्त्वाभावेन प्रकृतिभावाप्राप्तथा 'वार्णादाङ्गं बलीयः' इति न्यायेन 'सम्प्रसारणाच्च' इति पररूपात्पूर्वं टिलोपे नान्तत्वाभावात् ।

क्विपि तु श्वसहचरणकर्तृरूपार्थस्यापि श्वशब्दार्थत्वेन तस्य चानुपसर्जनत्वेन गौरादिङीष एव प्राप्तेः । हलन्तादाचारक्विपोऽनभिधानाच्च । गौणमुख्यन्यायेन मुख्यार्थस्यैवानुपसर्जनस्य ग्रहणमिति तु न, पदकार्य्ये एव गौणमुख्यन्यायप्रवृत्तेः । **पदकार्यत्वञ्च—**विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वञ्च । **अनडुही, अनड्वाहीति**—अनडुही, अनड्वाहीति विशिष्टस्य गणे पाठादेव विकल्पेनाम् निपातनात्सिद्ध इति **'आमनडुहः स्त्रियां वा वाच्यः'** इति वार्तिकं नापूर्वम् । अदन्तत्वाभावेन जातिलक्षणस्य पुंयोगलक्षणस्य वा ङीषोऽप्राप्तया अनडुह्शब्दस्य गणे पाठः । एतेन जातिलक्षणे पुंयोगलक्षणे च ङीपि विकल्पेनामो विधानार्थं वार्तिकं कर्तव्यमित्यपास्तम् ।

'पिप्पल्यादयश्च' आकृतिगणोऽयम् ।

*सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः* । [ ६-४-१४९ ]

**अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः । 'मत्स्यस्य ङ्याम्' । 'सूर्यागस्त्ययोश्छे च ङ्यां च' । 'तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्' ।**

---

**पिप्पल्यादयश्चेति**—अत्र केचित् 'पिप्पल्यादीनां नित्यस्त्रीत्वात् पिप्पलादिशब्दात् 'जातेरस्त्रीविषयात्' इत्यनेन ङीषोऽप्राप्त्या ततो ङीषर्थं 'पिप्पल्यादयश्च' इति पठ्यते । गणे 'पिप्पलादयश्च' इत्येव पठितव्ये ङीषन्तपाठस्तु चिन्त्य एव ।

न च पिप्पली अमृता यस्य स पिप्पल्यमृतः—इत्यादौ पुंवद्भावबाधनार्थं ङीषन्तपाठ इति वाच्यम्, पिप्पल्यादेर्नित्यस्त्रीत्वेन भाषितपुंस्कत्वाभावात्पुंवद्भावाप्राप्तेः । किञ्च गौराद्यन्तर्गणपिप्पल्यादिगणपाठोऽपि व्यर्थ एव, गौरादिगणे एव पिप्पलादीन् पठित्वा गौरादिराकृतिगण इत्यस्यैव वक्तुं शक्यत्वात् ।

न च 'लुक् तद्धितलुकि' ( ४–२–४९ ) इति सूत्रे 'चित्रारेवतीरोहिणीभ्यः परस्य जातार्थप्रत्ययस्य स्त्रियां लुक्' इति वार्त्तिके आभ्याम् ( रेवतीरोहिणीभ्याम् ) तद्धितलुकीति लुकि ( ङीषो लुकि ) कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष्—इति वक्ष्यमाणग्रन्थो विरुध्येतेति वाच्यम्, तत्र गौरादेराकृतिगणत्वादित्यस्यापि निवेशे क्षत्यभावात् ।

'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' ( ६–४–१४६ ) इति । मत्स्यशब्दस्य योपधत्वेन जातिलक्षणङीषोऽप्राप्त्या गौरादिपाठान्ङीषि विशेषमाह—**सूर्य्यतिष्येति** । अत्र 'ढे लोपोऽकद्र्वाः' (६–४–१४७) इत्यतो लोप इत्यनुवर्तते । **य इति** षष्ठ्यन्तमुपधाया इत्यनेनान्वेति तदाह—**अङ्गस्य उपधाया यस्येत्यादि**। सूर्यतिष्येत्यवयवषष्ठ्यन्तानां यकारेऽन्वय इत्याह—**स चेत् सूर्य्याद्यवयव इति** । अङ्गावयवस्य यस्य लोपो भवति स चेद्यकारः सूर्याद्यवयवः । तेन सूर्येण समाना दिगस्याः ।

**सौरी बलाका** इत्यत्राणन्तस्याङ्गत्वेन सूर्य्यरूपाङ्गाभावेऽपि यलोपः सिध्यति । न चाणो यस्येति चेति लोपे सूर्य्यरूपमङ्गं लभ्यत इति वाच्यम्, यलोपाण्लोपयोः समानाश्रयत्वेनाभीयत्वेनासिद्धतया ङीपरकसूर्यरूपाङ्गाभावात् । न चैवमपि अग्निमित्तकसूर्यघटकालोपस्यासिद्धतया यकारेऽङ्गनिरूपितोपधात्वाभावाल्लोपानापत्तिः, व्याश्रयत्वेन तदसिद्धत्वाप्राप्तेः । सूर्य्यस्य स्त्री सूरी सा भूतपूर्वा 'सूर्य्यचरी' इत्यत्र यलोपकारणाय उपधाग्रहणम् । यदि तु ङ्यादौ परतः सूर्य्यादीनामङ्गानां यलोप इत्युच्यते तदा यस्यैवोपधात्वलाभाद् यग्रहणम् । यदि तु ङ्यादौ परतः सूर्य्यादीनामङ्गानां यलोप इत्युच्यते सौरीत्यत्रैकदेशविकृतन्यायेन च सूर्य्यादिरूपाङ्गत्वेन सूर्य्यचरीत्यत्र ङीनिरूपितसूर्य्यादिरूपाङ्गाभावेन चादोष इत्युच्यते तदोपधाग्रहणं व्यर्थम् । **अङ्गस्योपधा इति** । यदि तु सूर्य्यादीनामुपधाया लोप इत्युच्यते तदा यस्यैव उपधात्वेन लाभाद् यग्रहणम् । 'हलस्तद्धितस्य' इत्यादावुत्तरार्थम्। **मत्स्यस्य ङ्यामिति**–तेन मत्स्यस्येदं 'मात्स्यम्' इत्यत्र न यलोपः । **छेच ङ्याञ्चेति**–सूर्य्यस्यायमित्यर्थे 'वृद्धाच्छः' इति छे 'सूरीयः' सूर्य्यस्य स्त्रीत्यर्थे 'पुंयोगात्' इति ङीषि **सूरी** इति । नेह 'वा नामधेयस्य' इति वृद्धत्वाभावे 'तस्येदम्' इत्यणि 'सौर्य्यम्' इति अत्र यलोपो न । यद्यपि सूर्य्यशब्दस्य पाठो गौरादौ दृश्यते, तथापि सूर्य्यशब्दस्य नित्यपुंस्त्वकत्वेन स्त्रीप्रत्ययाप्राप्त्या 'सूर्य' इति पाठान्तरमुपन्यस्तं तदेव साधु प्रतीयते । सूर्यशब्दार्थोऽप्यन्वेषणीय एव । अगस्त्यस्यायमगस्तीयः, अगस्त्यस्य स्त्री अगस्ती । नेह अगस्त्यस्यायम् 'आगस्त्यः' ।

**तिष्यपुष्ययोरिति**—'नक्षत्रेण युक्तः कालः' इति 'संधिवेलाद्युतुनक्षत्रेभ्योऽण्' इति च विहिते नक्षत्रसम्बन्धिन्यणि परतस्तिष्यपुष्ययोर्यलोप इत्यर्थः । तत्र तिष्यस्य 'सूर्य्यतिष्य' इति प्राप्तो यलोपो नियम्यते नक्षत्राण्येवेति । पुष्यस्य त्वप्राप्तो यलोपो विधीयते । अश्विन्यादयः शब्दाः केवलनक्षत्रवाचकाः, स्वयुक्तचन्द्रवाचकाश्च । तत्र नक्षत्रेण युक्तः काल इत्यत्र नक्षत्रशब्दोऽपि केवल-

मत्सी 'मातरि षिच्च' इति षित्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष् ।

*जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु* । [ ४-१-४२ ]

एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत्, अन्या तु जानपदी । उत्सादित्वादञन्तत्वेन 'टिड्ढ–' इति ङीप्याद्युदात्तः । कुण्डी अमत्रं चेत्, कुण्डान्या । 'कुडि दाहे' । 'गुरोश्च हलः' ( सू ३२८० ) इत्यप्रत्ययः ।

नक्षत्रपरः, तद्युक्तचन्द्रपरश्च । तत्र नक्षत्रयुक्तचन्द्रमसा युक्त इत्यर्थे नक्षत्रवाचकात् तृतीयान्तादण् प्रत्ययो भवति यो युक्तः स कालश्चेत् । तिष्यपुष्यशब्दावेकार्थकौ । **तिष्येण** = तिष्यनक्षत्रयुक्तचन्द्रेण युक्तः काल इत्यर्थे, **पुष्येण** = पुष्यनक्षत्रयुक्तचन्द्रेण युक्तः कालः । तत्र भवो वा **तैषः, पौषः,** इत्यत्र यलोपः । तिष्यस्य, पुष्यस्य वा तैष्यः, पौष्यः, इत्यत्र न यलोपः, नक्षत्रशब्दमुच्चार्यनक्षत्रवाचकाद्विहितत्वाभावात् ।

**मत्सीति**—गौरादित्वान्ङीषि अलोपयलोपौ । ननु 'पितृव्यमातुलमातामहपितामहाः' ( ४–२–३६ ) इति सूत्रे मातृपितृशब्दाभ्याम् मातुः पिता, पितुः पिता इत्यर्थे मातृपितृशब्दाभ्यां डामहच्प्रत्यये मातामह–पितामहशब्दौ निपातितौ । तत्र मातुर्माता, पितुर्माता इत्यर्थे डामहच्प्रत्ययस्य "मातरि षिच्च" इति वार्तिकेन डामहचः षित्त्वमतिदिश्यते । तथा च **"मातामही"** इत्यत्र मातामहशब्दात् षित्वादेव ङीषि सिद्धे गौरादिषु मातामहशब्दपाठो व्यर्थः । न च 'मातरि षिच्च' इति वार्तिकं मास्तु, गौरादौ पाठ एवास्त्विति वाच्यम्, पितामहीसिद्धयर्थं वार्तिकस्यावश्यकत्वात् । वार्तिकसामर्थ्यादेव गौरादौ पितामहशब्दस्य पाठोऽनार्षः प्रक्षिप्त इति गम्यते । तदाह—**गौरादिषु मातामहशब्दपाठाद् अनित्यत्वादेवेति षितां ङीषिति ।**

ये तु पितामहशब्दमपि गौरादौ पठन्ति 'मातरि षिच' इति वार्त्तिकं व्यर्थमेव, मातामहीत्यत्र गौरादित्वादेव ङीषि सिद्धे षित्वस्य पितामहीत्येव फलं वाच्यम् । यदि पितामहशब्दस्यापि गौरादौ पाठः स्यात्तदा षित्वविधानवैयर्थ्यं स्पष्टमेव । यदि तु षित्त्वप्रयुक्तङीषोऽनित्यत्वमेव फलमित्युच्यते तदापि 'अनित्यं षितः' इति न्यासेनैवानित्यत्वसिद्धौ वार्त्तिकवैयर्थ्यं दुर्वारमेवेति कुटिलमार्गाश्रयणं चिन्त्यमेव स्यादित्यास्तां तावन्निष्फलप्रयासेन । 'दंश दशने' इत्यतः 'दाम्नीशसयुयुज' (३–२–१८३) इति करणे ष्ट्रन्प्रत्यये दश्यतेऽनया इत्यर्थे पस्येत्त्वलोपयोः धातोः शस्य 'व्रश्चभ्रस्ज' इति षत्वे प्रत्ययतकारस्य ष्टुत्वे षित्त्वप्रयुक्तङीषोऽनित्यत्वादप्रवृत्तौ दंष्ट्रशब्दात् टापि 'दंष्ट्रा' इति। नागेशास्तु गौरादौ मातामहशब्दोऽनार्षः । 'दंष्ट्रा' इत्यत्र टाप् तु अजादौ पाठसामर्थ्यात् । षित्त्वप्रयुक्तं ङीषं बाधित्वा टाबित्याहुः।

**जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ( ४–१–४२ ) इति** । जानपदादिकबरान्तसमाहारद्वन्द्वात्पञ्चमी । वृत्त्यादिकेशवेशान्ते इतरेतरतयोगद्वन्द्वात्सप्तमी। अत्र स्त्रियामिति प्रातिपदिकादिति चाधिकृतम् । ङीषित्यनुवर्तते । **एभ्य इति** जानपदादिभ्य इत्यर्थः । **क्रमादिति**—यथासंख्यमित्यर्थः । **जानपदीति**—जनैः पितृपितामहादिभिः पद्यते = गम्यते यो देशः स जनपदः । 'घञर्थे कविधानम्' इति कर्मणि कः । जनपदे भवा इत्यर्थे 'उत्सादिभ्योऽञ्' ( ४–१–८६ ) इति प्राग्दीव्यतीये भवार्थेऽञि 'टिड्ढ' इति ङीपं बाधित्वा ङीप् । स्वरे भेदः । वृत्तिरनुच्छेद्या जीविका सा गम्यमाना चेत्तदा ङीप् । अन्या परिदादिः । **जानपदीति**—ङीपि आद्युदात्तः । 'ञ्नित्यादिर्नित्यम्' ( ६–१–१९७ ) इत्यनेन । **कुण्डीति**—'पिठरं स्थाल्युखाकुण्डम्' ( २ का० ९ व० ३१ श्लो ) इत्यमरात् कुण्डशब्दस्य नपुंसकत्वेऽपि स्त्रियां ङीष्विधानसामर्थ्यात् स्त्रीलिङ्गोऽपि । तथा च मेदिनी—**'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्'** इति । कमण्डलुरूपेऽर्थे नित्यस्त्रीत्वात्

यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव। अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते, न तु नियम्यते। गोणी आवपनं चेत्, गोणान्या। स्थली अकृत्रिमा चेत्, स्थलाऽन्या। भाजी श्राणा चेत्, भाजान्या। नागी स्थूला चेत्, नागाऽन्या। गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्। सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम्। काली वर्णश्चेत्, कालाऽन्या। नीली अनाच्छदनं

---

'जातेः' इत्यप्राप्तो ङीप् विधीयते। यद्वा अनेकविधसंस्थानेषु अमत्रेषु ( पात्रेषु ) कुण्डव्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तो ङीषिति बोध्यमिति नागेशः।

कमण्डलुसंस्थानस्यानुगतत्वात्कमण्डलुरूपामत्रवाचिनः कुण्डशब्दस्य जातिवाचकत्वात् 'जातेः' इत्येव ङीषि सिद्धे नियमार्थमिदम्। **अमत्रे इति**। अमृते पत्यौ जारजायाम् 'कुण्डा' 'कुडि दाहे' इत्यतः इत्येव। अप्रत्यये कुण्डा = दहनक्रिया।

यस्तु घटपर्यायः कुण्डशब्दः स न प्रत्युदाहरणम्। 'पिठरं स्याल्युखाकुण्डम्' इत्यमरेण नित्यनपुंसकत्वात्। **'कुण्डमग्न्यालये मानभेदे देवजलाशये'** इति कोशात् अग्न्यालयादिवैधस्थानवाचकस्यापि नित्यनपुंसकत्वेन प्रत्युदाहरणत्वाभाव एव। **'अस्त्री कमण्डलुः कुण्डी'** ( अम० २ का० ७ व० श्लो० ४६ ) इत्यमरात् नित्यस्त्रीलिङ्ग इति अप्राप्तो ङीप् विधीयत इति कौमुदीकारमतं तदाह—**यस्त्विति**।

**गोणीति**—चौरादिकाद् गुणधातोर्घञि **'गोण'** इति। ततो ङीषि **गोणीति**। **आवपनमिति**—ओप्यते = निक्षिप्यते धान्यमस्मिन्नित्यधिकरणे ल्युट्। **गोणाऽन्येति**—गोण इति कस्याश्चिन्नाम। यद्वा 'गुण आमन्त्रणे' इति चौरादिकात् गोणयति—आमन्त्रयते इत्यर्थेऽचि गोणा = आमन्त्रणकर्त्री। **स्थलीति**—**'ष्ठल स्थाने'** इति भौवादिकात् 'घञर्थे कविधानम्' इत्यधिकरणे के 'स्थल' इति। ततो ङीषि **स्थलीति** = अकृत्रिमा जलशून्या भूमिः। तथा च रघुः—'सैषा स्थली यत्र विचिन्वता त्वाम्' इति। कृत्रिमाकृत्रिमभूभागः संस्कृता संस्कृतभूभाग इति यावत्। स्थलम्। **स्थलाऽन्येति**—कृत्रिमेत्यर्थः। **भाजीति** भाज पृथक्कर्मणि, भज सेवायाम् इत्यतः 'कर्मणि घञ्' भाज इति निर्देशादेव कुत्वाभावः। घञर्थे के वा भाज इति। **श्राणेति**—पक्वा इत्यर्थः। 'श्रै पाके' इत्यतः के आत्वे 'संयोगादेरातो धातोर्यण्वतः' इति तस्य नकारे णत्वे च 'श्राण' इति टापि **श्राणेति**। **भाजान्येति**—अपक्वव्यञ्जनरूपा। 'घञजपः पुंसि' इति तु भावप्रत्ययान्तविषयः।

**नागीति**—नागशब्दस्य स्थौल्येऽप्रसिद्धत्वादाह—**गजवाचीति**—गजवाच्येव नागशब्दः कस्याश्चित् स्त्रियां स्थौल्यदर्शनात् नागसदृशे प्रयुक्तस्तदा ङीष्, **नागीति**। न च **'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तत्र कर्तव्यः न शब्देषु तदुक्तिषु॥'** इति विरोधस्तस्य पदकार्ये एव प्रवृत्तेः। **सर्पवाची त्विति**—यदा तु सर्पवाची नागशब्दो दैर्घ्यगुणसम्बन्धात् कस्याश्चित् कृशायां स्त्रियां प्रयुक्तः = लाक्षणिकस्तदा न ङीष् टाबेवेति प्रत्युदाहरणम्।

**काली वर्णश्चेदिति**—कालवर्णविशिष्टा चेदित्यर्थः। अन्यथा 'गुणे शुक्लादयः पुंसि' इति कोशात्स्त्रियामप्रयोग एव स्यात्। सूत्रे वर्णशब्दोऽर्शआद्यजन्तो वर्णविशिष्टार्थपरः। **कालान्येति**—**'कृतान्तानेहसोः कालः'** ( ३ का० ३ वा० १६३ श्लो० ) इत्यमरात्, 'कालो मृत्यौ महाकाले समये यमकृष्णयोः।' इति मेदिन्याश्च यमवाचककालशब्दः क्रौर्यगुणयोगात् यमराजसदृशस्त्रियां प्रयुक्तो लाक्षणिकस्तदा वर्णविशिष्टार्थकत्वाभावात् टाबेव तदाह—**कालान्येति**। कृतान्तसदृशी क्रूरेत्यर्थः।

**नीलीति**—**'नीलादोषधौ'** इति वार्त्तिकबलादोषधित्वव्याप्यजातिविशिष्टार्थबोधकान्ङीप्-विधानेन **'नीली'** इत्यत्र नीलत्वविशिष्टा ( लोके लील इति ख्याता ) ओषधिरित्यर्थः। **एतेन** **'नीली'** इत्यस्य नील्या रक्ताऽऽच्छादनभिन्ना गवादिरर्थ इत्यपास्तम्। **नीलान्येति**—ओषधिवकवा-

चेत्, नीलाऽन्या नील्या रक्ता शाटीत्यर्थः। 'नील्या अन् वक्तव्यः' इत्यन्। अनाच्छादनेऽपि न सर्वत्र; किन्तु 'नीलादोषधौ'। नीली। 'प्राणिनि च'। नीली गौः। 'संज्ञायां वा' नीली, नीला। कुशी अयोविकारश्चेत्, कुशाऽन्या। कामुकी मैथुनेच्छा चेत्, कामुकाऽन्या। कबरी केशानां सन्निवेशश्चेत्, कबराऽन्या—चित्रेत्यर्थः।

---

नीलशब्दस्य नित्यस्त्रीत्वेन तत्र ङीषो नित्यतया आच्छादनार्थस्यासम्भवेन च नीलान्येत्यसङ्गतमत आह—**नीलान्येत्यस्य नील्या** रक्तेत्यर्थे निष्पन्ननीलशब्दस्यान्प्रत्ययान्तस्यापि 'अनाच्छदने' इत्यस्याभावे ग्रहणेन नील्या रक्ता शाटीत्यर्थे आच्छादनभूतायां शाट्यां ङीष्वारणाय 'अनाच्छादने' इति मूलकारमतम्।

शेखरकारस्तु अनाच्छादने इत्यस्याभावेऽपि 'प्रतिपदोक्तपरिभाषया अन्प्रत्ययनिष्पन्ननीलशब्दस्य लाक्षणिकत्वेनाग्रहणात् तदर्थे ङीषोऽप्रासया 'अनाच्छादने' इति व्यर्थमेव स्यात्। किञ्च नील्या रक्तार्थकस्य नीलशब्दस्यौषधिवाचकत्वाभावेन 'नीलादोषधौ' इति वार्त्तिकविरोधस्तस्य शाट्यादिबोधकत्वेनौषधिवाचकत्वाभावात्।

नच रक्तार्थे विशेषणीभूतौषधिवाचकत्वमादायौषधिवाचकत्वम्, प्रधानाप्रधानन्यायेन विशेष्यतयौषधिवाचकत्वस्यैव वार्त्तिके ग्रहणात्। तस्माल्लक्षणया नीलवर्णविशिष्टबोधकाप्रतिपदोक्तात् नीलशब्दात् नीलवर्णवती शाटीत्यर्थे ङीष् वारणाय **'अनाच्छादने'** इति। मूलन्तु वृत्त्यनुसारेणेत्याहुः। तथा च अनाच्छादनेऽपि नील्या रक्ता गौरित्याद्यर्थे **'नीला'** इत्येव अन्नन्तस्य लाक्षणिकत्वेन ङीषोऽप्राप्तेरिति शेखरकृतोक्तम्।

तन्न युक्तम् 'प्राणिनि च' इति वार्तिकेन नील्या रक्ता गौरित्यस्येष्टत्वात्। प्राणिनि ओषधिवाचकस्यासम्भवेन लाक्षणिकस्यान्नन्तस्यैव ग्रहणात्। तस्मान्नील्या रक्ता भित्तिर्नीलेत्यनाच्छादनेऽपि न ङीष् प्रतिपदोक्तनीलशब्दाभावादित्येव वक्तुं युक्तमित्युपाध्यायाः।

**'नीलादोषधौ' नीली** इत्यस्य लोके लीलपदवाच्या ओषधिरित्यर्थः। उदाहरणे **नीली** इत्यस्य **नीली** ओषधिः। न तु नील्या रक्तेत्यर्थः। **संज्ञायां वेति**—सङ्केतसम्बन्धेन नीलपदवत्त्वाविवक्षायां वा ङीप्। नीली, नीला, संकेतसम्बन्धेन नीलपदवतीत्यर्थः।

**कुशीति—लाङ्गलमुखे लोहभेदे लोके फाल इति ख्यातम्।** फलाय=शस्याय हितम्। यद्वा फल्यते = विदार्यते भूमिरनेनेति फाल 'ञिफला विशरणे' इत्यतः करणे घञि फाल इति। तथा चामरः ( २ का० ९ व० ९९ श्लो० ) **'सर्वं च तैजसं लौहं विकारस्त्वयसः कुशी'** सर्वमपि तैजसं सुवर्णरजतादि लोहमित्युच्यते। यद्वा सर्वं सुवर्णादि लौहं तैजसं चोच्यते। यदुक्तम्—

**'सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।**
**सीसं कालायसं चैवमष्टौ लोहानि (लौहानि वा) चक्षते॥'**

इति। विशेषतस्तु अयो लोहसंज्ञम्। अयसो विकारः फालाख्यः कुशी स्यात्।

**कुशान्येति**—वला, रज्जुः, मधुकर्कटी ( कोंकर ) सामगानां स्तोत्रगानार्थः औदुम्बरशङ्कुविशेष इति शब्दस्तोमनिधिः। छन्दोगसूत्रे—'प्रस्तोता तु कुशाः कारयेद्यज्ञीयस्य वृक्षस्य खदिरस्य दीर्घसत्रेष्वेके प्रादेशमात्रीः कुशाग्रास्त्वक्तः समाममजते' इति प्रसिद्धा इति बालमनोरमा। 'छन्दोगा स्तोत्रीयगणनार्थान् शंकून् 'कुशा' इति 'व्यवहरन्ति' इति तत्त्वबोधिनी।

**कामुकीति—'कमु कान्तौ'** इत्यतः 'लषपतपदस्था' ( ३-२-१५४ ) इत्युकञ्। या पुमांसं रत्यर्थं कामयते=इच्छति सा **कामुकी**। कामुकशब्दात् स्त्रियां ङीप्। **मैथुनेच्छेति**— मैथुनेच्छावतीत्यर्थः। सूत्रे मैथुनेच्छापदं तद्वत्परम्, कामुकशब्दस्येच्छावद्वाचकत्वात्। **कामुकान्येति**—यस्या धनादिकं कामयितुं शीलं सा कामुका। मैथुनेच्छाविशिष्टातो भिन्नेति यावत। **कबरीति**—केशानां

*शोणात्प्राचाम्* । [ ४-१-४३ ]

शोणी, शोणा ।

*वोतो गुणवचनात्* [ ४—१—४४ ]

उदन्ताद् गुणवाचिनो वा ङीष् स्यात् ।

---

वेशः = बन्धरचना । तथा चामरः ( २ का० ६ व० ९७ श्लो० ) 'कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः' इति । कबरान्येति—यदा कबरशब्दः चित्रवर्णविशिष्टपरस्तदा 'कबरा' इति टाबन्तः । चित्रेति—चित्रवर्णविशिष्टेत्यर्थः ।

'शोणात् प्राचाम्' ( ४-१-४३ ) इति । 'शोणः कोकनदच्छविः' ( १ का० ५ व० १५ श्लो० ) इत्यमरात् शोणः रक्तोत्पलवर्णः । इति वर्णवाचित्वात् 'वर्णानां तण' इत्याद्युदात्तत्वेनानुदात्तत्वात् तोपधभिन्नत्वाच्च 'अन्यतो ङीष्' इत्येव ङीषि सिद्धे नियमार्थमिदं प्राचामेवेति । अन्यमते टाबेवेति शोणा इति । एवञ्च विकल्पः फलति ।

'वोतो गुणवचनात्' (४-१-४४) इति । प्रातिपदिकादित्यधिकृतम् । उत इति तद्विशेषणत्वेन तदन्तपरम् । तदाह—उदन्तादित्यादि । सूत्रे वा उत इति छेदः । अत्र ङीषिति नानुवर्तते । भाष्ये 'गुणवचनान्ङीबाद्युदात्तार्थः । गुणवचनान् ङीप् वक्तव्यः, किं प्रयोजनम् ? आद्युदात्तार्थः । आद्युदात्ताः प्रयोजयन्ति । वस्वी, पट्वी' इत्युक्तेः । किन्तु ङीवेव । वसुशब्दः 'शृस्वृस्निहित्रप्यसिवसि' ( उणा० १ पा० १० सू० ) अत्र उ इति निदितिचानुवर्तते । वस्ते=आच्छादयति दोषानिति वसेरुप्रत्ययो नित्त्वादाद्युदात्तः । गुणवचनश्चायं नैर्मल्यवचनः । प्रशस्तवचन इत्यन्ये । श्यामे मधुरे चेति शब्दस्तोममहानिधिः । तस्मान्ङीपि ईकारोऽनुदात्तः पित्त्वात् । अन्तोदात्तात्तु ङीम्ङीषोर्विशेषाभावः ।

'उदात्तयणो हल्पूर्वात्' इति ङीप् । उदात्तत्वविधानात् पटुशब्दोऽप्याद्युदात्तः 'फलिपाटिनमिमनि' ( उणा० १ पा० १८ सू० ) इत्युप्रत्ययो नित्त्वात् । पाटेश्च पाटीरादेशः । गुणवचनादिति—गुणमुक्तवान् गुणवचनः, बाहुलकाद्भूते कर्तरि ल्युट् । यः प्राग्गुणमभिधाय पश्चान्मतुब्लोपादुपचाराद्वा तद्वति वर्तते स गुणवचनशब्दः । अत्र गुणशब्दो नादेङ्पर उत इति विशेषणात् । गुणबोधनपूर्वकगुणिबोधकवचनग्रहणविरोधाच्च । एतेन नैयायिकवैशेषिकाभिमता रूपादयोऽपि निरस्ताः । विशेषणस्यापि गुणत्वेन व्यवहारात्तद्वारणाय रूपरसादिवारणाय च भाष्यकृताऽत्रैव सूत्रे गुणलक्षणमुक्तम् । तथा हि—

> 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
> आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥'

इति सीदन्ति गुणक्रियादयो यत्र तत्सत्, अधिकरणे क्विप्, सदेव सत्त्वम्, चतुर्वर्णादित्वात्स्वार्थे त्वप्रत्ययः । सत्त्वम् = द्रव्यम् । तत्रैव निविशते=समवायसम्बन्धेन वर्तते । द्रव्यमात्रवृत्तिरितियावत् । एतेन सत्ताया न गुणत्वम्, तस्या द्रव्यगुणकर्मवृत्तित्वात् । वस्तुतस्तु 'निविशते' इत्यस्य समवैतीत्यर्थे सत्ताया गुणत्वापत्तावपि 'अपैती'त्यस्य पृथग्भवतीत्यर्थे नश्यतीत्यर्थे वोभयार्थस्य सत्तायामभावान्निर्धारणपरत्वेन व्याख्यानं हेयमेवेत्युपाध्यायाः । किञ्च गोत्वेऽतिव्याप्तिवारणाय 'पृथग्जातिषु दृश्यते' इत्यपि व्यर्थम् । अपैतीत्यस्य नश्यतीत्यर्थे गोत्वे तद्बाधात् । द्रव्यत्वस्य द्रव्यमात्रवृत्तित्वाद् गुणत्ववारणाय अपैतीति—अपगच्छतीति—द्रव्यत्वं तु न द्रव्यादपैति । गोत्वं गोरूपद्रव्ये एव समवैति, अश्वादिभ्योऽपैति = पृथग्भवतीति तद्वारणाय पृथग्जातिषु दृश्यते—भिन्नभिन्नजातीयेषु दृश्यते इति । पृथग्—भिन्ना=द्रव्यत्वतो भिन्ना जातयो येषां ते भिन्नजातयोऽश्वादयस्तेषु दृश्यते इति । गोत्वं तु नाश्वादिषु दृश्यत इति न तत्रातिव्याप्तिः । गोत्वं तु न भिन्नजातीयेषु दृश्यते । क्रियाया द्रव्यमात्रवृत्तितया भिन्नजातीयेषु वृत्तितया च गुणत्ववारणाय आधेयश्च = उत्पाद्यश्च आधीयते

उत्पाद्य इत्याधेय इत्यर्थात्। अक्रियाजश्च=अनुत्पाद्यश्च। क्रियाया उत्पाद्यत्वमात्रस्वभावतया च गुणत्वम्। गुणाश्च घटादिगता उत्पाद्याः। आकाशपरमाण्वादिनित्यगता अनुत्पाद्याश्चेति गुणत्वम्।

नन्वेवमपि कपालाद्यवयवेषु घटाद्यवयविद्रव्यमुत्पाद्यम्। असमवायिकारणसंयोगादिनाशेऽपैति। निरवयवात्मपरमाण्वादिद्रव्यञ्चानुत्पाद्यम्। भिन्नजातीयेषु हस्तपादादिषु अवयवद्रव्यं दृश्यते। 'सत्त्वे निविशते' इति कारिकोक्तधर्मा अवयविद्रव्ये सन्तीति तद्वारणाय 'असत्त्वप्रकृति' इति। अवयविद्रव्यस्य अवयवरूपं सत्त्वं प्रकृतिः कारणम्। द्रव्यभिन्नमिति यावत्।

तथा चैतत्कारिकातः, 'चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दा ( संज्ञाशब्दा ) श्च' इति भाष्यतश्च जातिशब्दभिन्नाः क्रियाशब्दभिन्नाः संज्ञाशब्दभिन्ना ये शब्दास्ते गुणवचनशब्देन गुणवाचकत्वसमानाधिकरणगुणिवाचकत्वं यत्र ते एव गृह्यन्ते। रूपरसादयस्तु न तथा इति न ते गुणवचनशब्दग्राह्याः। नित्यद्रव्येषु पृथिवीजलतेजःपवनानां परमाणुषु, आकाशकालदिङ्मनःसु च वर्तमानानां नैयायिकवैशेषिकाभिमतविशेषपदार्थानां कारिकोक्तलक्षणाक्रान्तत्वात्तद्वारणाय गुणलक्षणे विशेषभिन्नत्वमपि निवेशनीयम्। वस्तुतस्तु 'विशेषभिन्नत्वं' न निवेशनीयम्, तस्य नित्यत्वेनोत्पाद्यत्वाभावात् किञ्च विशेष इति संज्ञेति संज्ञाभिन्नत्वेनैव तन्निरासादित्युपाध्यायाः।

'आकडारादेका संज्ञा' इति सूत्रे भाष्ये तु 'समासकृदन्त-तद्धितान्ताव्यय-सर्वनाम-जाति-संख्या-संज्ञाशब्दव्यतिरिक्तमर्थवच्छब्दरूपं गुणवचनं संज्ञं भवति' इत्युक्तम्। इति 'आकडार' सूत्रोक्तम् एव गुणवचनशब्देन ग्राह्यमित्युक्तं शेखरकृता। 'सत्त्वे निविशते' इति भाष्यन्त्वेकदेश्युक्तिः, बहुविशेषणानां वैयर्थ्याद् भाष्यकृताऽव्याख्यातत्वाच्चेत्यप्युक्तं नागेशेन। 'गुणवचनब्राह्मणादिभ्यः' इत्यत्र भाष्योक्तगुणवचनग्रहणाग्रहणे 'ऐक्यम्' इत्यादौ तु ब्राह्मणादित्वात् ष्यञ्।

किञ्च 'सत्त्वे निविशते' इति भाष्योक्तलक्षणमेकदेश्युक्तिरेव, 'बहुविशेषणानां वैयर्थ्यात्, भाष्यकृताऽव्याख्यातत्त्वाच्च' इति नागेशोक्तमपि चिन्त्यम्। तथा हि सत्त्वे निविशते=उत्पद्यते, अपैति नश्यति च। तथा द्रव्याधिकरणकोत्पादविनाशशालित्वमिति प्रथमविशेषणम्। 'पृथग्जातिषु' पञ्चम्यर्थे सप्तमी आर्षत्वात्, जातिभ्यः पृथग्भिन्नम्। जातिभिन्नमिति द्वितीयं विशेषणम्। आधेयश्चाक्रियाजश्चेति=नित्यानित्यवृत्तिधर्मवत्त्वमिति तृतीयं विशेषणम्। असत्त्वप्रकृतिरिति—द्रव्यभिन्न इत्यर्थः। तेन द्रव्यभिन्नत्वं चतुर्थं विशेषणम्। आद्यविशेषणादाने अभावेऽतिव्याप्तिः। उत्पादमात्रस्य विशेषणत्वे ध्वंसेऽतिव्याप्तिः। नाशमात्रस्य विशेषणत्वे प्रागभावेऽतिव्याप्तिः। जातिभिन्नत्वरूपद्वितीयविशेषणानुपादाने—

> 'तपःश्रुतञ्च योनिश्चेतद् ब्राह्मणकारकम् ( ब्राह्मणत्वप्रयोजकम् )।
> तपःश्रुताभ्यां हीनोऽपि जातिब्राह्मण एव सः ॥'

इत्याप्तवचनात् 'ब्राह्मण्यादेव हीयते' इति वचनाच्च विशिष्टाधिकारप्रयोजकं ब्राह्मणत्वमुत्पद्यते, असत्कार्यकरणाद्धीयते च। एवञ्चोत्पादविनाशशालिन्या ब्राह्मणत्वजातेर्गुणत्ववारणाय द्वितीयं विशेषणम्। उपनयनादिसंस्कारेणोत्पद्यते, पातित्यप्रयोजकदुष्कर्मणा च विनश्यति। योनिजेषु ब्राह्मणत्वं तु नित्यम्—नोत्पद्यते, न विनश्यति। क्रियाया गुणत्ववारणाय तृतीयम्। अवयविद्रव्यस्य घटादेर्गुणत्ववारणाय चतुर्थं विशेषणम्।

यत्तु 'आकडारसूत्रस्थभाष्यानुरोधेन गुणलक्षणे संख्याभिन्नत्वमपि देयमिति तन्न, द्वित्वादिसंख्याया अपेक्षाबुद्धिजन्यत्वेनानुत्पाद्यवृत्तिधर्मवत्त्वाभावादित्युपाध्यायाः। आकडारसूत्रभाष्यलक्षणन्तु यत्र 'गुणवचनब्राह्मणादिभ्यः, गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यादौ गुणलक्षणं नोक्तं तत्रैव निर्णायकम्। यद्यपि गुणत्वजातिमत्त्वं गुणत्वं वक्तुं शक्यते, तथाऽपि गुणत्वजातिपरिचायकत्वेनास्यो-

मृद्वी मृदुः। उतः किम्-शुचिः। गुण इति किम्-आखुः। 'खरुसंयोगोपधान्न'। 'खरुः = पतिंवरा कन्या'। पाण्डुः ।

---

पयोगो बोध्यः । मृद्वीति—'म्रद मर्दने' इत्यतः 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' ( उणा० १ पा० २८ सू० ) इति कुप्रत्ययः। म्रद्यते=मर्दितुं शक्यते या सा मृद्वी। सम्प्रसारणे मृदुशब्दान्ङीप्। शुचिरिति—शुचिशब्दः शुभ्रगुणवाची 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरात् ( १ का० ५ व० १२ श्लो० )। न च उत इत्यस्याभावे 'अतः' इत्यनुवर्त्तनात् 'मृद्वी'। इत्यत्राव्याप्तिदोषं परित्यज्य।तिव्याप्तिदानमसङ्गतमिति वाच्यम्, 'शोणात् प्राचाम्' इति सूत्रसामर्थ्येन 'अतः' इत्यस्यानुवृत्त्यभावकल्पनन्तु न युक्तम्, शोणशब्दात् 'अन्यतः' इति ङीपि सिद्धे शोणशब्दान्ङीष् चेत्तर्हि प्राचामेवेति नियमार्थत्वेन तच्चारितार्थ्यात्। न च 'अन्यतो ङीष्' इत्यत्र वाग्रहणानुवृत्त्यभावज्ञापनार्थम् 'शोणात्' इत्यस्य चारितार्थ्यमिति वाच्यम्, अनुवृत्तेरननुवृत्तेश्च व्याख्यानादेव सिद्धेः।

बह्वादिषु 'कल्याण' शब्दस्य पाठसामर्थ्येन 'अतः' इत्यस्यानुवृत्तेर्बाधात्। किञ्च 'खरुसंयोगोपधान्न' इति वार्तिके खरुग्रहणसामर्थ्येन अत इत्यस्याननुवृत्तावव्याप्तेरभावात् 'शुचिः' इत्यत्रातिव्याप्तिदानम्। यदि तु शुचधातोः 'इगुपधात् कित्' इति ( उणा० ४-पा० १२० सू० ) इन्प्रत्यये कित्वाद् गुणाभावे शुचिरिति तदा 'कृदिकारादक्तिनः' इति गणसूत्रेण शुचिरित्यस्यापि संग्रहात्तेन 'बह्वादिभ्यश्च' इति वैकल्पिके ङीपि शुचिः, इत्यस्येष्टत्वमेवेत्युच्यते तदा उतः किम् 'श्यामा' इति प्रत्युदाहरणीयम्।

शेखरकृता तु 'शुक्ला' इति प्रत्युदाहृतम्। न च 'खरुसंयोगोपधान्न' इति निषेधः, खरुसाहचर्येण उकारान्तस्यैव संयोगोपधस्य ग्रहणात्। अत एव भाष्यकृता प्रथमोपस्थितमकारान्तं परित्यज्य 'खरुरियं ब्राह्मणी, पाण्डुरियं ब्राह्मणी' इत्यत्रैव निषेध उक्तः। यदि तु शोणशब्दस्य वर्णवाचकतया गुणवाचित्वादनेनैव ङीपि सिद्धे 'शोणात्प्राचाम्' इति नियमार्थम्, अकारान्ताद् गुणवाचकान्ङीष् चेत्तर्हि शोणादेवेति नियमार्थमित्युच्यते, तदा शुक्लाद्यदन्ते दोषाभावात् 'उतः' इति। अव्युत्पत्तिपक्षे 'शुचिः' इति तु न सम्यक्, एकपक्षेण रूपस्येष्टत्वे पक्षान्तरेण दोषदानस्यायुक्तत्वात्।

वस्तुतस्तु 'शुचिः' इत्यव्युत्पत्तिपक्षे एव प्रत्युदाहरणम्, व्युत्पत्तिपक्षे आकडारसूत्रभाष्योक्तगुणवचनस्य ग्रहणे तत्र कृदन्तभिन्नस्य गुणवचनसंज्ञाया उक्ततया गुणवचनत्वाभावात्। तपरः किम्। वधूः, कासूः। 'वधूः स्नुषा नवोढा स्त्री' इति, 'कासूर्विकलवाचि स्यात्' इति च विश्वकोशात् नवोढात्वस्य विकलवाक्त्वस्य च प्रवृत्तिनिमित्तत्वेन खरुशब्दवद्गुणवचनत्वादिति नागेशः।

आखुरिति—'उन्दुरुर्मूषकोऽप्याखुः' इत्यमरात् ( २ का० ५ व० १२ श्लो० ) आखुर्मूषकः। यद्वा—

**विभवे सति नैवात्ति न ददाति जुहोति न। तमाहुराखुम्'**

इति शब्दस्तोमादाखुः = कृपणः। खरुरिति—खनुधातोः 'खरुशङ्कु' ( उणा० ३६ सू० ) इत्युणादिसूत्रेण कुप्रत्ययो नस्य रादेशश्च निपात्यते। पतिंवरेति—'खरुकन्या पतिंवरा' इति निघण्टुः। पाणिग्रहणोत्कण्ठावदभिधायित्वाद् गुणोपसर्जनद्रव्यवाचित्वम्। उत्कण्ठा = इच्छेति गुणत्वम्।

वस्तुतस्तु 'श्वेतवर्णवति' इति शब्दस्तोमनिधौ खरुशब्दोऽत्र वर्णवाच्येव। अत एव भाष्यकृता 'खरुरियं ब्राह्मणी' इत्युक्तं न तु कन्येति। पाण्डुरिति—पडि गतौ इत्यतः 'मृगय्वादयश्च' ( उणा० १ पा० ३७ सू० ) इत्यनेन कुप्रत्ययो वृद्धिश्च निपात्यते। पाण्डुर्वर्णविशेषः। श्वेतवर्णः, केतकीधूलिसंनिभः पीतवर्णाढ्यो वर्णविशेष इति शब्दस्तोममहानिधिः।

*बह्वादिभ्यश्च* । [ ४-१-४५ ]

**एभ्यो वा ङीप्स्यात् । बह्वी, बहुः । 'कृदिकारादक्तिनः' ( ग ५० ) । रात्रिः, रात्री । 'सर्वतोऽक्तिन्नर्थादित्येके' शकटिः, शकटी । अक्तिन्नर्थात् किम्—अजननिः । क्तिन्नन्तत्वाद-प्राप्ते विध्यर्थं पद्धतिशब्दो गणे पठ्यते । 'हिमकाषिहतिषु च' इति पद्भावः । पद्धतिः, पद्धती ।**

'**बह्वादिभ्यश्च**' ( ४-१-४५ ) इति । बहुशब्दाद् गुणवाचित्वादेव पूर्वेण सिद्धे 'नित्यं छन्दसि' इत्युत्तरार्थं तद्ग्रहणमिति तत्त्वबोधिनी, बहुशब्दो गुणवचन एव तस्येह पाठ उत्तरार्थ इति काशिका च चिन्त्या, आकाडारभाष्ये संख्याभिन्नस्यैव गुणवचनस्योक्तेः, 'सत्त्वे निविशते' इत्यत्र उत्पाद्यत्वानुत्पाद्यत्वविशिष्टस्यैव गुणत्वोक्त्या बहुत्वस्य चापेक्षाबुद्धिजन्यत्वमात्रतया गुणत्वासम्भवात् । तस्माद् बहुग्रहणं विध्यर्थम् ।

एतेन वस्तुतस्तु बहुशब्दो 'नित्यं छन्दसि' इत्युत्तरसूत्रं चेति द्वयमपि व्यर्थमेव, सर्वविकल्पानां छन्दसि व्यवस्थितत्वात्' इति मनोरमादिग्रन्थो निरस्तः । छन्दसि विकल्पस्य व्यवस्थितत्वेन 'नित्यं छन्दसि' इत्यस्य वैयर्थ्यं तु सम्यगेव । **बह्वीति**—'बहि वृद्धौ' इत्यतः "लङ्घिबंह्योर्नलोपश्च' ( उणा० १ पा० २९ सू० ) इति कुप्रत्यये नलोपे च 'बहुः' इति । ओष्ठ्यपठितपाठस्तु पृषोदरादि-त्वाद् बोध्यः । अत्रैकवचनान्तोदाहरणदानेनोदाहरणे बहुशब्दो वैपुल्यवाच्येव । संख्यावाचकात्तु '**बह्व्यः**' 'बहवः' इत्युदाहरणीयम् । विनिगमनाविरहादुभयोरत्र ग्रहणात् । यद्यपि वैपुल्यवाचिबहु-शब्दात् 'सत्त्वे निविशते' इति गुणलक्षणाक्रान्ततया पूर्वेण ङीष् सिद्धस्तथाऽपि विनिगमनाविरहेणो-भयोरत्र ग्रहणमिति परत्वादनेनैव ङीष उदाहरणम् ।

**कृदिकारादिति**—गणसूत्रमिदम् । कृतो य इकारस्तदन्तात् क्तिन्नन्तभिन्नात्प्रातिपदिकात् स्त्रियां वा ङीष् । **रात्रिरिति**—'रा दाने' इत्यतः 'राशदिभ्यां त्रिप्' ( उणा० ४ पा० ६७ सू० ) इत्यतो राति = सुखं ददातीत्यर्थे त्रिप् 'रात्रिः' इति । ङीषि **रात्रीति** । अत्र पूर्वं '**रात्री**' इति लेखनीयम्, लेखकप्रमादादुत्तरत्र पाठः ।

**सर्वत इति**—गणसूत्रमिदम् । क्तिन्नर्थप्रत्ययान्तभिन्नात्कृतोऽकृतो वा य इकारस्तदन्तात् स्त्रियां ङीष् वेत्यर्थः । 'सुगन्धिः, प्रियपतिर्वेश्या' इत्यत्र 'शोणात्प्राचाम्' इत्यनुवृत्त्यैव सिद्धे 'वोतः' इति सूत्रे वाग्रहणसामर्थ्येन व्यवस्थितविभाषाश्रयणात्क्वचिन्नेति । वस्तुतस्तु 'देवत्रातो गलग्राहः' इत्यादिना व्यवस्थितविभाषायाः परिगणनान्नेदं युक्तम् । उक्तस्थले ङीषोऽभावस्तु लिङ्गस्य लोकाश्रयत्वात्तदर्थे स्त्रीत्वाभावकल्पनेन समर्थनीयः । इष्टापत्त्या **त्वित्युपाध्यायाः** । वैकल्पिकत्वेन ङीषोऽभाव इत्यु-**पाध्यायाः** । **शकटिरिति**—'शकटि' इत्यव्युत्पन्नं प्रातिपदिकम् । ङीषि '**शकटी**' इति । ङीषोऽभावे '**शकटिः**' । मूले 'शकटी, शकटिः' इति क्रमेण लेखनीयम् । क्तिन्नर्थप्रत्ययान्तभिन्नेभ्य इकारान्तेभ्यः 'सर्वतोऽक्तिन्नर्थात्' इत्येव ङीषि सिद्धे गणे इकारान्तानां शकट्यादीनां पाठः प्रपञ्चार्थः ।

**अजननिरिति**—'स्त्रियां क्तिन्' इत्यधिकारे 'आक्रोशे नञ्यनिः' ( ३-३-११२ ) इत्यनेन नञि उपपदे आक्रोशे गम्ये स्त्रियामनिप्रत्ययो धातोः । 'जनी प्रादुर्भावे' इत्यतो भावे अनिप्रत्यये '**अजननिः**' अत्र न ङीष्, क्तिन्नर्थकानिप्रत्ययस्य सत्त्वात् । 'रे शठ ! अजननिस्ते उचिता' इत्यत्राक्रोशो गम्यते । आक्रोशः = निन्दा । आक्रोशः = शापो वा ।

ननु हनधातोः पादाभ्यां हन्यते या सा पद्धतिरित्यर्थे स्त्रियां कर्मणि हन-धातोः क्तिनि नलोपे 'कर्तृकरणे कृता बहुलम्' ( २-१-३२ ) इति तृतीयान्तेन समासे सुब्लुकि 'पादहति' इति दशायां कथं पदादेशः कृतसमासान्तस्यैव पादशब्दस्य 'पादः पत्' इत्यत्र ग्रहणात् भसंज्ञकत्वाभावाच्च तदप्राप्तेरित्यत आह—**क्तिन्नन्तत्वादिति**—गणे पद्धतिशब्दस्य पाठसामर्थ्यात्तन्निषेधबाधः । पाद-शब्दस्य पदादेशस्तु 'हिमकाषिहतिषु च' इत्यनेन एषूत्तरपदेषु पादस्य पदादेश इत्यर्थात् ।

*पुंयोगादाख्यायाम्* । [ ४-१-४८ ]

**या पुमाख्या पुंयोगात्स्त्रियां वर्तते, ततो ङीष् स्यात् । गोपस्य स्त्री गोपी । 'पालका-**

अत्रापराण्यपि गणसूत्राणि सन्ति-तथाहि-'शक्तिः शस्त्रे' शस्त्रेऽर्थे शक्तिशब्दो ङीषं लभते । नेह शक्तिः = सामर्थ्यम् । 'इतः प्राण्यङ्गात्' धमनी, धमनिः, नेह दक्षस्यानन्तरापत्यं स्त्री 'दाक्षिः' । अहन्शब्दोऽत्र पठ्यते । स च नित्यनपुंसकः । तस्माद् बहुव्रीहिरुदाहार्यः । दीर्घमहोऽस्या इति दीर्घाह्नी प्रावृट् । नान्तत्वात्प्राप्तस्य ङीपो बाधः । स्वरे भेदः । गणे पाठसामर्थ्यात् 'अनुपसर्जनात्' इत्यस्याप्यसम्बन्धः, तदन्तविशेषणं वा । तेन 'प्रियदीर्घाह्नी' इत्यत्र ङीबेव । अस्य ङीपो वैकल्पिकतया पक्षे डाप्प्रतिषेधौ स्याताम् 'अन उपधा' इति ङीप् चेति त्रीणि रूपाणि ङीपमादाय चत्वारि वा । अत्र पुराणशब्दः पठितः । स च 'अयं पन्था अनुचितः पुराणः' इत्यादावन्तोदात्तदर्शनाद् 'घृतादीनाञ्च' इत्यन्तोदात्तः । तथा च ङीप्यपि उदात्तनिवृत्तिस्वरेण ङीपोऽप्युदात्तत्वमिति ङीपि ङीषि वा स्वरे विशेषाभाव इति गणे पाठवैयर्थ्येन ङीपोऽभावे प्राप्तोऽपि ङीप् न भवति, किन्तु टावेवेति टावर्थ एव गणे पाठः । पुराणशब्दः ल्युन्नन्त इति टित्त्वान्ङीप्प्राप्तिः ।

**'पुंयोगादाख्यायाम्'** ( ४-१-४८ ) इति । पुंसो योगः = सम्बन्धः पुंयोगस्तस्मात् **पुंयोगादिति** 'विभाषा गुणेऽस्त्रियाम्' ( २-३-२५ ) इत्यनेन हेतौ पञ्चमी । **आख्यायामिति** पञ्चम्याः सप्तम्यादेशः 'सुपां सुलुक्' इति सूत्रे 'सुपां च सुपो भवन्तीति वक्तव्यम्, **'युक्ता माताऽसीद्धुरि दक्षिणायाः'** । दक्षिणायामिति प्राप्ते' इति भाष्ये पठितवार्तिकेन । प्रयोगादिति हेतौ पञ्चमी । आख्याशब्द आख्यायते = बोध्यतेऽनयेत्यर्थे 'आतश्चोपसर्गे' इति करणेऽङ् इति बोधकपरः । ज्ञानस्य विषयाकाङ्क्षायां 'पुंयोगात्' इत्यत्र योगे गुणीभूतोऽपि पुमानेव सम्बध्यते न स्त्री, स्त्रियां वर्तमानस्य स्त्रीवाचकत्वाव्यभिचारात् ।

'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायेन पुंवाचकः शब्दः स्त्रीसम्बन्धात् स्त्रीवाचकः इत्येवार्थो गौण्या वृत्त्या, तदुक्तं भाष्ये 'यथैव ह्यसावकुर्वती किञ्चित्पापं भर्तृकृतान् बन्धनादिक्लेशान् लभते । एवं शब्दमपि लभते' इति । लोकेऽपि भर्तृनाम्ना स्त्रिया व्यवहारः । तथा च पुंस्येव यः प्रसिद्धः शब्दः पुंयोगाद्धेतोः पुंवाचकप्रवृत्तिनिमित्तारोपेण स्त्रियां वर्तमानस्तस्मात् स्त्रियां वर्तमानात् पुंबोधकप्रातिपदिकात् ङीषित्यर्थः ।

तदाह—**या पुमाख्येत्यादि** । पुमाख्या = पुंवाचकः शब्द इत्यर्थः, (पञ्चाम्याः) शेषषष्ठ्यां प्रवृत्तौ मानाभाव इत्यपि न । 'उपपदमतिङ्' इति सूत्रस्थभाष्यस्य मानत्वात् । तथा हि—षष्ठीसमासोपपदसमासयोः प्राप्तौ 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्तिककृतोक्तम् । विप्रतिषेधविचारेण षष्ठीसमासस्यापि सुबुत्पत्तेः पूर्वमेव समास इति लभ्यते । अन्यथा उपपदसमासस्य सुबुत्पत्तेः प्राक् प्राप्तिः । षष्ठीसमासस्य सुबुत्पत्ताविति विप्रतिषेधविचारो विरुध्येत । विरोधपरिहारायोभयोः सुबुत्पत्तेः प्रागेव समासो वाच्यः । शेषषष्ठीसमासेऽपि परिभाषाप्रवृत्तिः स्पष्टैवेति षष्ठीसमासं परित्यज्य सुलभत्वेन 'गोपालिका' इति भाष्यप्रयोगः संगच्छते । तथा च 'पुंयोगात्' इत्यस्य स्त्रियामित्यनेनान्वयः । पुंयोगाद्धेतोः स्त्रियां विद्यमानादित्यर्थः । **गोपीति**—गाः पातीत्यर्थे 'आतोऽनुपसर्गे कः' इति कप्रत्यये उपपदसमासे 'गोप' इति तस्य स्त्रियां यदि गोपशब्दो लक्षणया ( गोपालनकर्तृत्वारोपेण ) वर्तते तदा ङीष् । यदा तु अनारोपितगोपालनकर्तृत्वेन स्त्रियां प्रयोगस्तदा न ङीप्, किन्तु टापि 'गोपा' इत्येव । ननु यत्र गोपस्य स्त्रियां गोपालनकर्तृत्वमपि वर्तते तत्र तदभाववति तत्प्रकारकारोपासम्भवेन 'गोपी' इति न स्यादिति चेन्न, प्रकृते पुंसम्बन्धज्ञानप्रयोज्यपुंवाचकशब्दप्रवृत्तिनिमित्तप्रकारकस्त्रीविशेष्यकज्ञानस्यैवारोपस्य ग्रहणादित्युपाध्यायाः । **पालकान्तान्नेति** । पुंसम्बन्धज्ञानप्रयोज्यस्त्रियां वर्तमानात्पालकान्तात्प्रातिपदिकान्न ङीप् इत्यर्थः । **अत्र** गाः पालयतीत्यर्थे 'कर्मण्यण्' कर्मण्युपपदे कर्तरि अण् ।

गोपालिका। अश्वपालिका। 'सूर्याद्देवतायां चाब्वाच्यः'। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्-सूरी कुन्ती, मानुषीयम्।

---

'गोपाल' इति। ततः स्वार्थे कप्रत्यये गोपालकस्तस्य स्त्री 'गोपालिका' इति दशायां न ङीष्। ण्वुलन्तस्य तु 'तृजकाभ्यां कर्तरि' इति कर्त्रर्थतृजकाभ्यां षष्ठीसमासनिषेधात्। शेषषष्ठ्या समासे आपः सुपः परत्वादित्वं दुर्लभम्। न च 'गतिकारकोपपदानां कृद्भिः समासवचनम्' इति परिभाषया कृदन्तेन समासे टापः सुपः परत्वाभावादित्वं स्यादिति वाच्यम्, शेषषष्ठ्या समासे कारकसमासाभावेन तदप्रवृत्तेः।

वस्तुतस्तु गवां पालिका इति विग्रहे शेषषष्ठ्या समासेऽपि 'गतिकारक' इति परिभाषायाः प्रवृत्तिः। अत एव 'गोपालिकादीनां प्रतिषेधः, गोपालिका, पशुपालिका' इति भाष्यम्। अत्र वार्तिके प्रतिषेधस्य प्रतियोगी ङीष् एव न गोपालिकादिस्तस्य विधेरभावेन प्रतिषेधासम्भवादत एव कैयटेन सिद्धये इति शेष इत्युक्तम्। 'तृजकाभ्याम्' इति निषेधेन कर्मषष्ठ्या समासाभावाच्छेषषष्ठ्यैव समासो वाच्यः। तत्र यदि गतिकारकोपपदानामित्यस्य प्रवृत्तिर्न स्यात्तदा सुबन्तेन समासे आपः सुपः परत्वादित्वं दुर्लभमिति गोपालिकादीनामितीत्वघटितपाठस्य भाष्योक्तस्य सिद्धये शेषषष्ठीविषयेऽपि गतिकारकेत्यस्य प्रवृत्तिरावश्यिकी। यदि भाष्ये इत्वघटितपाठस्य कप्रत्ययान्तेन सिद्धया परिभाषा संगच्छते—यद्वा गवां पालिका इत्यर्थे कर्मषष्ठ्यैव समासः। न च 'तृजकाभ्याम्' इति समासनिषेधः, 'तत्प्रयोजको हेतुश्च' इत्यत्र, 'जनिकर्तुः' इत्यत्र च कर्मषष्ठ्या समासदर्शनेन तन्निषेधस्यानित्यत्वज्ञापनात्। कर्मषष्ठ्या समासे 'गतिकारक' इत्यत्र कारकपदेन कारकत्वव्याप्यकर्मत्वादिमतो ग्रहणेनात्र तत्परिभाषाप्रवृत्त्या कृदन्तेनैव समासे आपः सुपः परत्वाभावादित्वे गोपालिकादिभाष्यप्रयोगसिद्धौ बाधकाभावः। अत्र योगश्च पतिपत्नीभावरूप एवेति नाग्रहः, किन्तु जन्यजनकभावोऽपि। तथा च केकयस्य दुहितेत्यर्थे केकयशब्दः पुंसम्बन्धात् = जन्यजनकभावरूपाद्धेतोर्दुहितृरूपस्त्रियां वर्तते इति 'केकयी' इत्यत्र ङीष् सिध्यति। तथा च भट्टिः—

'कौसल्ययाऽसावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत्' इति।

केकयस्यापत्यमियं स्त्रीत्यर्थे तु 'जनपदशब्दात् क्षत्रियादञ्' (४-१-१६८) इत्यञि 'कैकेयी' इत्येव।

न च अञः 'ते तद्राजाः (४-१-१७४) इति अञादिप्रत्ययानां तद्राजसंज्ञात्वेन 'अतश्च' (४-१-१७७) इति तद्राजस्याकारस्य स्त्रियां लुक् स्यादिति वाच्यम्, केकयशब्दस्य भर्गादौ पाठेन 'न प्राच्यभर्गादियौधेयादिभ्यः' (४-१-१७८) इति लुको निषेधात्। तथा च कालिदासः–'कैकेयि! कामाः सफलास्तवेति' इति। एतेन 'देव कस्य कन्या देवकी' इत्यपि सिद्धम्। जन्यजनकसम्बन्धमादाय पुंयोगादिति ङीष्।

नागेशास्तु 'पुंयोगोऽत्र दाम्पत्य एवेति भाष्यस्वरसः। 'यथेयं भर्तृपापकृतान् बन्धादीन् लभते एवं तच्छब्दमपि' इति भाष्यात्। अत्र भर्तृपदस्वारस्येन दाम्पत्यरूपसम्बन्धस्यैव प्रतीतेः। केकयी, देवकी इत्यादयस्तु गौरादेराकृतिगणत्वात्संग्राह्याः।

देवतायामिति—देवताभूतायां स्त्रियां पुंयोगाद्वर्तमानात्सूर्यशब्दात् चाप् वक्तव्य इत्यर्थः। पुंयोगादिति ङीषोऽपवादः। सूर्यस्य स्त्री देवता चेत् सूर्या = शनैश्चरमाता छाया।

'छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे।
उत्कोचे पालने कान्तौ शोभायाञ्च तमस्यपि॥' इति मेदिनी।

सूर्यस्य स्त्री मानुषी चेत्तदा 'पुंयोगात्' इति ङीषेव। तदाह सूरी कुन्ती मानुषीयमिति–अत्र ङीषि 'सूर्यतिष्य' इति यलोपः। यस्येति च इत्यलोपश्च। कुन्त्याः सूरीत्वञ्च महाभारते द्रष्टव्यम्।

*इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्* [ ४-१-४९ ]

एषामानुगागमः स्यान्ङीष् च। इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते, तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते। इतरेषां चतुर्णामुभयम्। इन्द्राणी। **'हिमारण्ययोर्महत्त्वे'**। महद्धिमं हिमानी। महदरण्यम् अरण्यानी। 'यवाद्दोषे'। **दुष्टो यवो यवानी। यवनाल्लिप्याम्।** यवनानां लिपिर्यवनानी।

---

**'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक्'** ( ४-१-४९ ) इति। **आनुगागम इति**—कित्करणादागम एव न त्वादेशः। ङीषिति–'अन्यतो ङीष्' इत्यतो ङीषित्यनुवृत्तेः। **पुंयोगे एवेति**—'पुंयोगादाख्यायाम्' इति सूत्रानुवृत्तेः। इन्द्रादिभ्यः षड्भ्यो मातुलाचार्य्याभ्याञ्च पूर्वसूत्रेण सिद्धे ङीषमनूद्य आनुगागममात्रमनेन विधीयते। **इतरेषामिति—हिमारण्ययवयवनानामित्यर्थः।** यद्यपि यवनपदं यदा यवनदेशवासिजनपरं तदा ततः पुंयोगे ङीष् प्राप्नोति, तथाऽपि **'यवनाल्लिप्याम्'** इति वार्तिकेन पुंयोगे ङीषो बाधात् तत्राप्राप्तिः। **उभयमिति—ङीष्,** आनुक् च उभयं विधीयते इत्यर्थः। **इन्द्राणीति**—इन्दति=परमैश्वर्य्यवान् भवतीत्यर्थे **'ऋज्रेन्द्राग्न'** इति ( उणा-२ पा० २८ सू ) इति परमैश्वर्य्ये इत्यतो रन्प्रत्ययान्तो निपात्यते। इन्द्रो देवराजः। तस्य पत्नीत्यर्थे इन्द्रशब्दान् ङीषि आनुकि उकारककारयोरित्संज्ञालोपयोः **'इन्द्राणी'** इति। एवम् **'वरुणानी'** वृणोति व्रियते वा इत्यर्थे 'कृवृदारिभ्यः' ( उणा० ३ पा० २८ सू० ) इति वृ धातोरुनन्प्रत्यये **वरुण इति—'वरुणस्तरुभेऽप्सु प्रतीची ( पश्चिमा दिक् ) पतिसूर्य्ययोः'** इति विश्वः।

**भवानी** = भवति सृष्टिः प्रलयो वाऽस्मादित्यर्थे भूधातो 'ऋदोरप्' (३-३-५७) इत्यप् प्रत्यये **'भव'** इति। तस्य पत्नी 'भवानी' **'शिवा भवानी रुद्राणी मृडानी चण्डिकाऽम्बिका'** ( अम० ) शर्वाणी, शृणाति=हिनस्ति पापं दुःखं वेत्यर्थे 'शॄ हिंसायाम्' इत्यतः 'कृगृशृदृभ्यो वः' ( उणा० १ पा० १५५ सू ) इति वप्रत्यये गुणे च 'शर्व' इति ततो ङीषि आनुकि च रूपम्। **रुद्राणी** रोदयति पापान् इत्यर्थे **'रुदिर् अश्रुविमोचने'** इत्यतः 'रोदेर्णिलुक् च' (उणा० २ पा० २२ सू) इति उक्प्रत्यये णेर्लुकि लुका लुप्तत्वात् णौ परे गुणो न 'रुद्र' इति। ननु 'सोऽरोदीद्यत्तद्रुद्रस्य रुद्रत्वम्' इति श्रुतिविरोधः, शं भावयतीत्यर्थे शम्भुरिव श्रुतान्तर्भावितण्यर्थतास्वीकारेणादोषात्। **'मृडानी'** **'मृ क्षोदे सुखे च'** इत्यतः मृड्नाति=पिनष्टि पापं सुखयति प्राणिन इत्यर्थे **'इगुपधज्ञा'** इति कप्रत्यये मृड इति ङीषि रूपम्। **'हिमानी'** हिनस्त्युस्नतामित्यर्थे **'हन्तेर्हि च'** ( उणा० १ पा० १४७ सू ) इति हन्तेर्मक्प्रत्यये हि इत्यादेशे 'हिमम्' ऋच्छति=गच्छति शेषे वयसि यत्र इत्यर्थे **'ऋगतौ'** इत्यतः 'उणादयो बहुलम्' ( उणा० १ डा० १ सू ) इति अन्यप्रत्यये 'अरण्यम्' इति। ततः **महद्धिमम्,** महदरण्यम् इत्यर्थे 'हिमारण्ययोर्महत्त्वे' इति वार्तिकबलात् महत्त्वे ङीषि आनुकि च **हिमानी, अरण्यानी** इति।

महत्त्वयोगेनानयोः स्त्रीत्वम्। तदभावे नपुंसकत्वम्। दुष्टो यवो **यवानीति**—अनेन जात्यन्तरमभिधीयते। 'जई' इति लोके। अयमेव दोषो यद् यवत्वजातेरभावेऽपि तदाकारानुकृतिः। यु-धातोरचि अपि वा 'यव' इति। **यवनानामिति**–युधातोः नन्द्यादित्वात् 'नन्दिग्रहि' (३-१-१३४) ल्युप्रत्ययः। यवनो म्लेच्छः लशुनप्रियः। यवनदेशवासिनो वा यवनास्तेषां लिपिरित्यर्थे **'तस्येदम्'** इत्यणो बाधको ङीप्। **मातुलोपाध्याययोरिति**—भाष्ये तु 'उपाध्यायमातुलाभ्यां वा, उपाध्यायमातुलाभ्यां वेति वक्तव्यम्'। 'उपाध्यायी, उपाध्यायानी, मातुली, मातुलानी' इत्युक्तम्। अत्र 'वा' इत्यस्यानुगिति शेषः। पाति=रक्षति स्त्री चेत् 'मातृ' इति 'नप्तृनेष्टृ' ( उणा० २ पा० ९५ सू० ) इति तृन्प्रत्यये पकारस्य नकारादेशे माता इति। पितृसाहचर्यात् मातृशब्देऽपि पाधातुरेव पस्य मत्वं निपात्यते—**इत्युपाध्यायाः।** मानमत्याद्रियते इति माता, मानधातोस् तृनि नलोपे माता इति

**मातुलोपाध्याययोरानुग्वा ।** मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । **'या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः'** । उपाध्यायी, उपाध्याया । **'आचार्यादणत्वञ्च'** आचार्यस्य स्त्री आचार्यानी ।

---

केचित्, मातुर्भ्राता मातुलः 'पितृव्यमातुल' ( ४-३-२९ ) इत्यनेन मातुर्डुलच् प्रत्ययो निपात्यते, स अत्र पुंयोगादिति सम्बध्यते । **मातुलोपाध्याययोरानुग्वेति**—मातुलोपाध्यायाभ्यां पुंयोगे यो ङीष् तत्सन्नियोगेनानयोर्वाऽऽनुगागमो वक्तव्य इत्यर्थः । तत्र उपाध्यायस्याप्राप्तो मातुलस्य तु सूत्रेण नित्यं प्राप्तो वाऽऽनुग्विधीयते ।

**उपाध्यायानीति**—उपेत्य—समीपे गत्वाऽधीयतेऽस्मादित्यर्थे **'इङश्च'** ( ३-३-२१ ) इत्यपादाने 'इङ् अध्ययने' इत्यतो घञ् **उपाध्याय इति**—तस्य स्त्री उपाध्यायानी, आनुकोऽभावे उपाध्यायी पुंयोगे ङीष् । **या तु स्वयमेवेति**-'इङश्च' इति सूत्रस्थभाष्ये वार्तिकम् 'इङश्चेत्यपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' तदेवार्थतः पठति **'या तु स्वयमेवाध्यापिका तत्र वा ङीष्'** इङश्चेत्यत्रापादाने स्त्रियामुपसंख्यानं कर्तव्यं तदन्ताच्च वा ङीष् वक्तव्यः । उपेत्याधीयतेऽस्या **'उपध्यायी, उपाध्याया ।'** इति भाष्यकृतो व्याख्या वार्तिकस्य । असत्यस्मिन् वार्तिके **'इङश्च'** इति विहितो घञ् पुरस्तादपवादन्यायेन 'एरच्' इति विहितस्याच एवापवादः स्यात् । स्त्रियां तु क्तिन् स्यादिति क्तिनो बाधनायेदं वार्तिकम् । तथा च या स्वयमध्यापयति तत्र ङीष् वा, पक्षे टाप् आनुक्तु न । ननु **'स्त्रीशूद्रौ** नाधीयाताम्' इत्याप्तोक्तेः स्त्रिया अध्ययने एवाधिकारो नास्ति अध्यापनं तु दूरापास्तमिति चेन्न,

> **'पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते ।**
> **अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥'**

**इति स्मृत्यनुसारेण** या तु स्वयमेवाध्यापिकेत्युक्तेः । किञ्चाधिकाराभावेऽपि यदि काचन अध्यापयेत्तदा कीदृशः प्रयोगः प्रयोक्तव्य **इत्यभिप्रायेण** या तु स्वयमेवात्याद्युक्तेरित्युपाध्यायाः ।

यदि तु **'स्त्रीशूद्रौ** नाधीयाताम्' इति, 'यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय' ( यजु० अ० २६, २ ) इत्यत्र च जनपदं द्विजपरञ्चेति **प्रोच्यते तदाऽध्ययने तयोरनधिकारः सिद्धयेत्**, किन्तु पूर्वोक्तश्रुतौ न दृढं मानम् । अन्ते जनपदं **मनुष्यमात्रपरम्** । किञ्च 'ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्' (अथर्व० का० ११ अ०३ मं० १८) **इति, 'इमं** मन्त्रं पत्नी पठेत्—

> **'पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।**
> **अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥' इति च**

**पक्षे तयोरध्ययनेऽधिकारः**, अत्र विदुषां विभिन्ना विप्रतिपत्तयो विस्तरभयान्न वितन्यन्ते । वस्तुतस्तु **वैदिकवाङ्मयमात्राध्ययने न तयोरधिकारः,** अन्यत्र तु न कश्चनावरोध इति केचन प्राहुः । ऐतिहासिकदृष्ट्या गवेषणायां कृतायां सत्यान्तु वैदिककाले स्त्रीणामध्ययने अध्यापने धनादिस्वामित्वे **पुरुषतुल्योऽधिकार** आसीत् । तदनन्तरं मध्यकाले सोऽधिकारः पुरुषैः स्वायत्तीकृतः, तत्रानेकानि कारणानि आसन् इति **बा० कृ० पञ्चोलिनः** ।

**आचार्यादणत्वञ्चेति**—चशब्दो ङीगानुकोरनुकर्षणार्थः । वेति तु न सम्बध्यते । अणत्वञ्चेत्युक्त्वा क्षुभ्नादिषु पाठः सूच्यते । आङ् पूर्वकात् चरेः 'चरेराङि चागुरौ' इति वार्तिकेन गुरौ यतो निषेधात् आङ्युपपदे चरेर्गुरौ **'ऋहलोः'** इति ण्यदेव । 'अत उपधायाः' इति वृद्धौ **आचार्य इति** ।

> 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
> सकल्पं ( यज्ञविद्या ) सरहस्यं ( उपनिषत् ) च तमाचार्यं प्रचक्षते ॥

'स्वार्थे' पुंयोग इत्येव, आचार्या=स्वयं व्याख्यात्री। 'अर्यक्षत्रियाभ्यां वा स्वार्थे' अर्याणी, अर्या। स्वामिनी वैश्या वेत्यर्थः। क्षत्रियाणी, क्षत्रिया। पुंयोगे तु–अर्यी। क्षत्रियी।

---

एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥
निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते॥'

[ मनु० २ अ० १४०–४२ श्लो० ]

निषेको गर्भाधानम्। तेन पितुरयं गुरुत्वोपदेशः।

पुंयोग इत्येवेति–पुंयोगाभावे 'आचार्य्या' इत्येव। व्याख्यात्रीति–धर्मोपदेष्ट्रीत्यर्थः। 'यस्माद्धर्मानाचिनोति सोऽपि आचार्य्य' इति स्मरणात्। अर्य्यक्षत्रियाभ्यामिति –'ऋ गतौ' इत्यतः 'अर्यः स्वामिवैश्ययोः' ( ३–१–१०३ ) इति ण्यतोऽपवादो यत्। गुणे च अर्य्य इति रूढः। स्वार्थे इति–यद्यपि भाष्ये 'अर्य्यक्षत्रियाभ्यां वा' इत्येव वार्तिकम्। तथाऽपि तत् स्वार्थपरमेव, 'अर्य्या, आर्य्याणी, क्षत्रिया, क्षत्रियाणी' इत्युदाहरणात्।

यदि पुंयोगे स्यात्तदा ङीषानुकोरभावे अर्य्यी, क्षत्रियीत्येवादाहरेत् पुंयोगे ङीष एव प्राप्तेः। किञ्च स्वार्थे ङीपि क्षत्रियत्वजातिविशिष्टा स्त्री ब्राह्मणभार्य्या इत्यभेदान्वयो भवति। क्षत्रियाणीत्यस्य क्षत्रियस्य स्त्रीत्यर्थे तु ब्राह्मणभार्य्यात्वाभावात् तदन्वयो न स्यात्। अपि च शूद्रापि क्षत्रियाणी स्यात्, शूद्रायामपि क्षत्रियनिरूपितस्त्रीत्वसम्भवात्। तस्मात्ताभ्यां स्वार्थे एव ङीषानुकौ। तदभावे आर्य्या, क्षत्रिया इत्येव। स्वामिनीति–स्वामिन्यां वैश्यायां वा आर्य्याणी, अर्य्या इति प्रयोगः।

क्षत्रियाणी क्षत्रिया इति–क्षत्रियत्वजातिविशिष्टेत्यर्थः। ननु क्षत्रियस्य स्त्रीति। क्षणनं क्षत्। 'क्षणु हिंसायाम्' इत्यतः भावे क्विपि 'अनुदात्तोपदेशवनतितनोत्यादीनाम्' ( ६–४–३७ ) इति नस्य लोपे तुकि च क्षत् इति। क्षतस्त्रायते इत्यर्थे 'सुपि स्थः' इति सूत्रे ( ३–२–४ ) 'सुपि' इति योगविभागात्, सुप्युपपदे आदन्तात् कः स्यादित्यर्थकेन त्रैङ् पालने इत्यत्वं कप्रत्यये क्षत्र इति। क्षत्रस्यापत्यं जातिश्चेत् तदा 'क्षत्राद् घः' इति ( ४–१–१३८ ) घप्रत्यये घस्य इयादेशे 'क्षत्रिय' इति तकारद्वयघटित एव साधुः। लेखकप्रमादादेकस्तकार उच्छिन्न इत्युपाध्यायाः। अर्य्यी–वैश्यस्य स्वामिनो वा स्त्रीत्यर्थः। क्षत्रियी = क्षत्रियस्य स्त्रीत्यर्थः। छत्त्रछात्त्रशब्दोऽपि तकारद्वयघटित एव साधुः, तकारस्यात्र लोपविधायकशास्त्राभावात् लोपस्य केनाप्यनुक्तेश्च। एवं पत्त्रशब्दोऽपि 'वाग्ग्मी' इत्यपि गद्वयघटितं प्रयोज्यम्।

यत्तु प्राञ्चः 'इन्द्रवरुण' इति अत इत्यस्यानुवृत्त्या इन्द्रमाचष्टे इन्द्रयतीति ण्यन्तात् क्विपि णेर्लोपे 'इन्द्र' इति हलन्तात् ङीषोऽप्राप्तेरुपसर्जनत्वाच्च अदन्तादेव ङीष् स्यात्। तथा 'अनुक्' इत्येवास्तु सवर्णदीर्घेण 'इन्द्राणी' इत्यादीनां सिद्धिः स्यात् इति दीर्घोच्चारणं व्यर्थीभूय ज्ञापयति–अत्र आ अनुक् इतिच्छेदः। आकारादेश अनुगागमश्चेति।

तत्र पूर्वम् इन्द्रादीनामाकारदेशस्ततोऽनुक्। यदि पूर्वम् अनुक् तत आकारादेशस्तदाऽनुको नकारस्यैवाकारादेशः स्यादिति नकारकरणं व्यर्थमेव स्यात्। इति नकारोच्चारणं ज्ञापयति–पूर्वमाकारादेशस्ततोऽनुगिति। आकारविधाने च 'इन्द्राणी' इत्यादीनामनुकैव सिद्ध्या आकारादेशविधानमन्यतोऽपि ङीपोऽनुकश्च विधानार्थमिति। तेन ब्रह्मणः स्त्रीत्यर्थे ब्रह्मन्शब्दान्ङीपि अनुकि च ब्रह्मणो नकारादेशे 'ब्रह्माणी' इति सिध्यतीति, तन्न युक्तमिति ध्वनयन्नाह–

कथमिति। 'अतो गुणे' इति पररूपाप्राप्तये 'आनुक्' इति दीर्घोच्चारणम्। ननु यदि पररूपं स्यात्तदा नुका सिद्धे अकारोच्चारणं व्यर्थं सत्पररूपं बाधेतेति चेन्न, 'अल्लोपोऽनः' इत्यस्य

**कथं ब्रह्माणी इति । ब्रह्माणमानयति = जीवयतीति 'कर्मण्यण्'**

*क्रीतात्करणपूर्वात्* । [ ४—१—५० )

**क्रीतान्ताददन्तात्करणादेः स्त्रियां ङीष् स्यात् ।**

---

बाधनेन तच्चारितार्थ्यात् । नच लाक्षणिकत्वात् अल्लोपाप्राप्तिः, 'ऊधसोऽनङ्' इति भाष्ये 'ऊधसो नादेशेन सिद्धे 'अनङ्' ग्रहणम् 'धनुषश्च' इत्युत्तरार्थम् इति भाष्योक्त्या अनो लोपे कर्तव्ये प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः ।

अन्यथा 'अल्लोपोऽनः' इत्यस्य 'कुण्डोध्नी' इत्यत्र प्रतिपदोक्तत्वेन तत्प्रवृत्तयेऽत्रैव तदावश्यकत्वेन उत्तरार्थमित्युक्तिर्विरुध्येत । न च नुकि कृते लाक्षणिकेऽपि अल्लोपः स्यात्तदा इन्द्रादीनां नादेशे कर्तव्ये आगमचिह्नककारकरणवैयर्थ्येन अलोपो न स्यादिति वाच्यम्, 'शर्वाणी' इत्यत्र 'न संयोगात्' इति अलोपस्य निषेधेन तदर्थं नुगागमस्य चारितार्थ्यात् तथाऽत्र पररूपसाधनार्थमेव आनुगिति दीर्घोच्चारणमिति सिद्धम् ।

**कथमिति**—'इन्द्रवरुण' इति सूत्रे ब्रह्मन्शब्दस्य पाठाभावात् ब्रह्मणः स्त्रीत्यर्थे **'ब्रह्माणी'** इत्यस्य कथं सिद्धिर्ङीषानुकोरप्राप्तेरिति शङ्कायामाह—**ब्रह्माणमानयतीति** । आनयतीत्यस्य 'अन प्राणने' इत्यतः प्रेरणार्थे णिचि जीवनकरणमर्थस्तदाह—**जीवयतीति** । जीवनं साधयतीत्यर्थः । ब्रह्मरूपकर्मण्युपपदे 'कर्मण्यण्' इति कर्तरि अणि णिलोपे 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठ्याम् 'ब्रह्मन् अस् आन' इति जाते 'गतिकारकोपपदानां कृद्भिः समासवचनम्' इति परिभाषया आन इत्यतः सुबुत्पत्तेः प्रागेव समासे प्रातिपदिकसंज्ञायां ङसो लुकि स्त्रीत्वविवक्षायाम् 'टिड्ढ' इति ङीपि आनस्याकारस्य 'यस्येति च' इति लोपे 'ब्रह्माणी' इति सिध्यति । न च नकाराकारयोः समानपदस्थत्वाभावात् णत्वं न स्यादिति वाच्यम्, समानपदस्थत्वाभावेऽपि 'पूर्वपदात्संज्ञायामगः' इत्यनेन णत्वविधानात् । 'एकाजुत्तरपदे णः' इत्यनेन तु न णत्वम्, अणि सति 'आन' इत्युत्तरपदस्य द्व्यच्कत्वात् । अकारलोपेऽपि स्थानिवत्त्वेन द्व्यच्कत्वाविघातात् 'पूर्वत्रासिद्धीये' इति स्थानिवत्त्वनिषेधस्तु न, णत्वे तस्य दोषः 'संयोगादिलोपणत्वलत्वेषु' इति वार्तिकेन तदप्रवृत्तेः । न त्वेवं सति **'इन्द्रवरुण'** इति सूत्रं व्यर्थम्, इन्द्रादीन् आनयतीत्यर्थे उक्तरीत्या इन्द्राणी इत्यादीनां सिद्धेरिति वाच्यम्, इन्द्रस्य स्त्री इत्यर्थे इन्द्री इत्यादेर्वारणार्थं सूत्रस्य चारितार्थ्यात् ।

यत्तु सूत्रसत्त्वे 'इन्द्राणी' इत्यन्तोदात्तम् । इन्द्रमानयतीत्यर्थे ङीपि त्वन्तानुदात्तमिति अत्रोदात्तत्वसिद्धये सूत्रमिति तन्न, इन्द्रशब्दस्यान्तोदात्ततया 'अनुदात्तस्य यत्रोदात्तलोपः' ( ६–१–१६१ ) इत्यनेनानुदात्तस्य ङीप उदात्तत्वविधानेन स्वरे भेदाभावात् । तस्मात् **'इन्द्री'** इत्यादिव्यावृत्तिरेव सूत्रस्य फलम् ।

**'क्रीतात् करणपूर्वात्'** ( ४–१–५० ) इति । 'प्रातिपदिकात्' इत्यधिकृतम् । तस्यानुवर्तमानम् 'अतः' इति करणपूर्वात् इति, क्रीतादिति च विशेषणम् । तत्र अत इति क्रीतात् इति च विशेषणतया तदन्तपरम् । तदाह—**क्रीतान्तादन्तात् करणपूर्वात्प्रातिपदिकादिति** । 'करणपूर्वात्' इत्यत्र पूर्वशब्दः पूर्वावयवपरः । तथा च करणं पूर्वावयवो यस्य क्रीतान्तप्रातिपदिकस्य तस्मादिति लब्धम् । ननु मूले करणादेरित्यनुपपन्नम्, प्रातिपदिकस्य नपुंसकत्वेन विशेष्यनिघ्नतया 'करणादिनः' इति भाव्यमिति चेन्न, प्रातिपदिकसंज्ञकात् शब्दादित्यर्थेन शब्दरूपविशेष्यस्य पुंस्त्वेन 'करणादेः' इति पुंस्त्वोपपत्तेः । करणपूर्वादिति च क्रीतात्प्रातिपदिकस्य केवलस्य क्रीतशब्दस्य करणपूर्वावयवकत्वासम्भवात् । तथा च करणपूर्वावयवकं यत् क्तान्तं प्रातिपदिकं तस्मादित्यर्थः । पूर्वशब्दस्य पूर्वावयवपरत्वेन 'वस्त्रेण क्रीता' इति वाक्ये न ङीष् ।

वस्त्रक्रीती । क्वचिन्न, धनक्रीता ।

*क्तादल्पाख्यायाम्* [ ४-१-५१ ]

करणादेः क्तान्तादकारान्तात्स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये ।

---

**वस्त्रक्रीतीति**— ननु 'वस्त्रेण क्रीता' इति टावन्तेन समासे 'वस्त्र टा क्रीता सु' इत्यलौकिकविग्रहे समासे क्रीतान्तस्य प्रातिपदिकस्य अदन्तत्वाभावान् ङीष् न स्यादिति चेन्न, 'कर्तृकरणे कृता बहुलम्' इत्यनेन 'गतिकारकोपपदानां कृद्भिः समासवचनम् प्राक् सुबुत्पत्तेः' इति परिभाषया 'वस्त्र टा कृत' इति दशायां कृदन्तेनैव समासे सुपो लुकि 'वस्त्रक्रीत' इति समासरूपं प्रातिपदिकमदन्तमेव । तत्र टापं बाधित्वा ङीषेव स्यात् । ननु सुबुत्पत्तेः प्रागित्युक्त्या टाबुत्पत्त्यनन्तरं समासः स्यादिति चेन्न, 'सुबुत्पत्तेः' इत्यत्र सुप्पदस्य टाप उपलक्षणत्वात् । कृदन्तेन समास इत्युक्त्वाऽन्तरङ्गत्वात् समास एव स्यात्, न तु टाप्, बहिरङ्गत्वात् । स्वार्थद्रव्यापेक्षया लिङ्गस्य विलम्बोपस्थितिकत्वात् । करणेति किम् ? सुक्रीता इत्यत्र ङीष् मा भूत् ।

**क्वचिन्नेति**—'कर्तृकरणे कृता बहुलम्' इत्यत्र बहुलग्रहणात् 'गतिकारक' इत्यस्यानित्यतया क्वचिदप्रवृत्त्या सुबन्तेन समासे सुपः प्रागेव टापि ततः सुपि समासे **'धनक्रीता'** इत्यत्र अदन्तं यत् करणपूर्वकक्रीतान्तं प्रातिपदिकं तस्याभावेन ङीषोऽप्राप्त्या टापि धनक्रीता इत्यस्यासिद्धिः । 'धनक्रीत' इत्यस्याजादिषु आकृतिग्रहणेन पाठस्वीकारात् सिद्धौ परिभाषाया अनित्यत्वे न मानम् । न च बहुलग्रहणं मानम्, भाष्ये 'कर्तृकरणे कृता बहुलम्' इत्यत्र बहुलग्रहणस्य फलत्वेन तदनित्यत्वानुक्तेः । -

ननु 'गतिकारक' इत्यस्य अनित्यत्वाभावे 'अम्बाम्बगोभूमि' ( ८-३-९७ ) इति सूत्रे गोभूम्यादिग्रहणं व्यर्थम्, 'गोष्ठः, भूमिष्ठः' इत्यादौ स्थ इत्यस्य पदत्वाभावेन 'सात्पदाद्योः' इति निषेधाप्रवृत्त्या 'आदेशप्रत्यययोः' इत्यनेनैव षत्वसिद्धेरिति चेन्न, 'आदेशप्रत्यययोः' इत्यनेन पदादेः षत्वं चेत्तदा गवादिभ्यः परस्य स्थादेरेवेति नियमार्थत्वेन चारितार्थ्यात् ।

तेन हृदिस्थ इत्यादौ न षत्वम् । तेन 'हृदिस्था शोभते माला' इति पद्ये षत्वाभावः संगच्छते । नियमार्थत्वोक्त्या परिभाषाया अनित्यत्वे गवादिग्रहणमेव मानमित्यपि परास्तम्, नियमार्थत्वेन तच्चारितार्थ्यात् । किञ्च 'पदादादिः पदादिरिति' भाष्योक्तपञ्चमीसमासपक्षे पदात्परस्योत्तरस्यादेः षत्वं नेत्यर्थेन निषेधबाधनार्थं गवादिग्रहणस्य चारितार्थ्यात् । गवादिग्रहणेन परिभाषाया अनित्यत्वं वक्तुमशक्यम् ।

वस्तुतस्तु 'न पदान्त' सूत्रे भाष्ये 'गोचा' इत्यादिसिद्ध्यर्थं परिभाषाया अनित्यत्वमावश्यकम् । अन्यथा कृदन्तेन समासे अच् इत्यस्य पदत्वाभावेन 'न पदान्त' इति निषेधाप्रवृत्त्या लुप्ताकारस्य स्थानिवत्त्वेन गो इत्यस्यावादेशापत्तिः । अनित्यत्वे तु सुबन्तेन समासे पदे परतोऽन्त्यौकारस्यावङादेशे स्थानिवत्त्वनिषेधान्न दोषः । नागेशस्तु पदत्वयोग्ये परत इत्यर्थेन स्थानिवत्त्वनिषेधादनित्यत्वे फलाभाव इत्याह । **धनक्रीता** इत्यस्याजादित्वात् सिद्धिः । पदत्वयोग्यत्वञ्च सुप्निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकान्तत्वम् = सङ्केतसम्बन्धेन प्रातिपदिकपदवत्त्वमिति यावत् ।

**'क्तादल्पाख्यायाम्'** ( ४-१-५१ ) इति । अत्र करणपूर्वादित्यनुवर्तते । अत इति च । उभये क्तान्तान्तप्रातिपादिकस्य विशेषणम् । तथा च अदन्तं करणपूर्वकं यत् क्तान्तं ( **क्तान्तेत्यस्य** क्तान्ततदाद्यन्तेत्यर्थः, 'प्रत्ययग्रहण' परिभाषया तदादिविशेष्यकतदन्तविधेराश्रयणात् । **'कृद्ग्रहणे** गतिकारकपूर्वस्यापि ग्रहणम्' अभ्रलिप्त' इत्यस्य क्तान्ततदाद्यन्तत्वम् । ) प्रातिपदिकं ततः स्त्रियां ङीष् अल्पाख्यायां गम्यमानायाम् । **'अल्पाख्यायाम्'** इति समुदायोपाधिः । ननु 'अल्पैरभ्रैर्लिप्ते'त्यर्थे पूर्वपदार्थस्यैवाल्पत्वं गम्यते न विलेपस्येति चेन्न, अभ्रस्याल्पत्वे विलेपनस्याप्यल्पत्वस्यावश्यम्भावात् ।

अभ्रलिप्ती द्यौः। अल्पाख्यायाम् किम्–चन्दनलिप्ता अङ्गना।

बहुव्रीहेश्चान्तोदात्तात् [ ४-१-५२ ]

**बहुव्रीहेः** क्तान्तादन्तोदात्तादन्तात्स्त्रियां ङीप्स्यात्। 'जातिपूर्वादिति वक्तव्यम्' तेन 'बहुनञ्सुकालसुखादिपूर्वान्न'। ऊरुभिन्नी। नेह्–बहुकोता। 'जातान्तान्न'। दन्तजाता। 'पाणिगृहीती भार्यायाम्'। प्राणिगृहीता अन्या।

---

तथा चाल्पत्वं करणगतं क्रियागतं वेति सिद्धम्! **अभ्रलिप्ती द्यौरिति**—अल्पेनाभ्रेण = मेघेन लिप्ता इति, अभ्रेण ईषल्लिप्ता वेत्यर्थः। **चन्दनलिप्तेति**—अधिकेन चन्दनेन लिप्ता इति, चन्दनेनातीव लिप्ता वेत्यर्थः।

**'बहुव्रीहेश्चान्तोदात्तात्'** ( ४–१–५२ ) इति। अत्र 'क्तान्तादिति, 'अत' इति चानुवर्त्तते। क्तान्तादित्यस्य क्तान्ततदाद्यन्तादित्यर्थः, तदादिविशेष्यकतदन्तविधेरपीष्टत्वात्। ननु बहुव्रीहेः क्तान्तत्वमसम्भवि प्रत्ययग्रहणपरिभाषया कृद्ग्रहणपरिभाषया च कृदन्ते एव तत्सम्भवादिति चेन्न, अत्र सूत्रे 'क्तात्' इत्यस्यानुवृत्तिसामर्थ्यात्तयोः परिभाषयोरनुपस्थितेर्बहुव्रीहेः क्तान्तत्वस्य वक्तुं शक्यत्वात्। स्वाङ्गपूर्वपदो बहुव्रीहिरेवात्रोदाह्रियते, अस्वाङ्गपूर्वपदाद् बहुव्रीहेर्विकल्पेन ङीषो वक्ष्यमाणत्वात्।

**जातिपूर्वादिति**—'जातिपूर्वाद्वा, अथवा जातिपूर्वादिति वक्तव्यम्' इति भाष्योक्तेः। जातिश्चाकृतिव्यङ्ग्या ग्राह्या **तेनेति**—जातिपूर्वादिवचनेनेत्यर्थः। **बहुनञ्सुकालेति**—क्तान्तबहुव्रीहौ अन्तोदात्तविधायकानि 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः' ( ६–२–१७० ) इति 'नञ्सुभ्याम्' ( ६–२–१७२ ) इति, 'बहोर्नञ्वदुत्तरपदभूम्नि' ( ६–२–१७५ ) इति च सुखादयश्च 'सुखादिभ्यः कर्तृवेदनायाम्' (३–१–१ ) इति सूत्रे गणपठिताः सुख-दुःख-तीव्र-कृच्छ्र-अस्र-आस्र-अलीक-प्रतीप-करुण-कृपण-सोढ इत्येते बोध्याः। अत्र जातिपूर्वादित्युक्त्या अन्यपूर्वकक्तान्तबहुव्रीहेरग्रहणं फलितम्, तदाह—**बहुनञ्सुकालसुखादिपूर्वान्नेति**—अस्य ङीषिति शेषः।

**ऊरुभिन्नीति**—भिन्नौ = असंयुक्तावूरू यस्याः सेत्यर्थः। अत्र जातिवाचकादूरुशब्दात्परस्य क्तान्तस्य भिन्नशब्दस्य 'जातिकाल' इति सूत्रेणान्तोदात्तत्वम्। अत्र 'निष्ठा' ( २–२–३६ ) इति सूत्रेण निष्ठान्तस्य भिन्नशब्दस्य पूर्वनिपातस्तु न, 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति वार्तिकेन तद्बाधात्। इदञ्च वार्तिकं नापूर्वम्, किन्तु 'जातिकाल' इति सूत्रेण जात्यादिभ्यः परस्य क्तान्तस्य बहुव्रीहेरन्तोदात्तविधानसामर्थ्यादेव वार्तिकार्थसिद्धेः। अन्यथा क्तान्तस्य पूर्वनिपाते जात्यादिभ्यः परस्य क्तान्तस्य बहुव्रीहावसम्भवेन सूत्रवैयर्थ्यं स्पष्टमेव। **नेह बहुकृतेति**—बहूनि कृतान्यनयेति बहुकृतात् तृतीयार्थे बहुव्रीहिः। 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यनेनान्तोदात्तत्वेऽपि जातिपूर्वकत्वाभावान्न ङीप्। 'वर्णादनुदात्तात्' इतिवदन्तग्रहणाभावेऽपि तदन्तत्वे सिद्धेऽन्तग्रहणं नित्यान्तोदात्तलाभार्थम्। तेन 'वा जाते' ( ६–२–१७१ ) इति वैकल्पिकान्तोदात्तान्ङीप् न। तदाह—**जातान्तान्नेति**।

**दन्तजातेति**—जाता दन्ता यस्याः सा दन्तजाता। अत्र जातान्तान्नेति निषेधसामर्थ्यादेव 'निष्ठा' इति बाधित्वा जातशब्दस्य परनिपातः। **पाणिगृहीतीति भार्य्यायामिति**—यस्याः सविधि अग्निसाक्षिकं पाणिः गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दात् स्त्रियां ङीष् वक्तव्य इत्यर्थः। तथा च भाष्यम्—'पाणिगृहीत्यादीनां विशेषः, पाणिगृहीतादीनां विशेष इति वक्तव्यम्। पाणिगृहीती भार्य्या चेत्। यस्या हि यथा कथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवति' इति। **'बहुलं तणीतिवक्तव्यम्, प्रवृद्धविलूनी** प्रवृद्धविलूना। काचिदोषधिः। **तणीति** संज्ञाछन्दसोर्ग्रहणम्। तदुक्तं भाष्ये 'बहुलं तणीति वक्तव्यम् किमिदं तणीति? संज्ञाछन्दसोर्ग्रहणम्। किं प्रयोजनं प्रवृद्धलून्-।द्यर्थम्। 'प्रवृद्धलूनी, प्रवृद्धलूना' इति।

यत्तु बहुव्रीहौ अन्तोदात्तनिमित्तेष्वन्येषु बह्वादिषु प्रतिषिद्धेषु जातिरेवान्तोदात्तनिमित्तं क्तान्तस्यावशिष्यते इति 'बहुव्रीहेश्च जातिपूर्वात्' इत्येव सूत्रे कर्तव्यमिति तन्न, 'अन्तोदात्तात्'

*अस्वाङ्गपूर्वपदाद्वा* । [ ४-१-५३ ]

**पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती । सुरापीता ।**

इत्यत्र अन्तग्रहणेन नित्यान्तोदात्तस्यैव ग्रहणज्ञापनद्वारा 'जातान्तान्न' इत्यस्य लाभार्थं यथाश्रुतन्यासस्यैवौचित्यात् ।

**अस्वाङ्गपूर्वपदाद्वा'** ( ४-१-५३ ) इति । अत्र 'बहुव्रीहेश्चान्तोदात्तात्' इति सूत्रमनुवर्तते । न स्वाङ्गमस्वाङ्गम्, पूर्वञ्च पदं पूर्वपदम् । अस्वाङ्गं च तत्पूर्वपदमित्यस्वाङ्गपूर्वपदम्=स्वाङ्गभिन्नं पूर्वपदमिति यावत् । उत्तरसूत्रे 'स्वाङ्गाच्चोपसर्जनात्' इत्यत्र **'कल्याणपाणिपादा'** इत्यत्र ङीप्वारणाय 'अस्वाङ्गपूर्वपदात्' इत्यनुवर्त्य तथा व्याख्यानात् । अर्थाधिकारानुरोधेनात्रापि तथैवौचित्यात् । यदि अस्वाङ्गं पूर्वपदं यस्य बहुव्रीहेरित्यर्थः स्यात्तदा कल्याणपाणिपादरूपबहुव्रीहेः पूर्वपदस्य कल्याणस्य स्वाङ्गभिन्नत्वेन 'स्वाङ्गाच्चोपसर्जनात्' इत्यनेन ङीषापत्तिर्दुर्वारा स्यात् । अस्वाङ्गं च यत्पूर्वपदमिति कर्मधारये तु अस्वाङ्गात् पूर्वपदात्परं यदसंयोगोपधमुपसर्जनं स्वाङ्गवाचकं तदन्तादन्तात्प्रातिपदिकात् ङीष् इत्यर्थेन प्रकृते अस्वाङ्गं यत् पूर्वपदभूतं कल्याणपदं तस्मात्परं पाणिपदं तच्च नोपसर्जनम् तदन्तं च न प्रातिपदिकम् इति न ङीष् ।

न च अस्वाङ्गं पूर्वपदं कल्याणपदं ततः परं स्वाङ्गवाचकं पाणिपादपदं तदन्तान्ङीष् स्यादिति वाच्यम्, स्वाङ्गसमुदायवाचकस्य पाणिपादस्य स्वाङ्गवाचकत्वाभावात् । अत्र च अस्वाङ्गपदादित्यनुवर्त्य 'कल्याणपाणिपादा' इत्यत्र ङीप्वारणपरभाष्यस्यैव मानत्वात् । पाणी च पादौ चानयोः समाहारः पणिपादम् । कल्याणं पाणिपादं यस्याः सा कल्याणपाणिपादा । अत्र पाणिपादं प्रथमा निर्दिष्टमुपसर्जनम् । उपसर्जनीभूतस्वाङ्गसमुदायवाची न स्वाङ्गवाची । यच्च प्रत्येकं पाणीति, पादेति च स्वाङ्गवाचि न तदुपसर्जनमिति ङीष् न भवति । असति तूपसर्जनग्रहणे स्वाङ्गवाचिना पादशब्देन स्वाङ्गान्तो बहुव्रीहिर्भवतीति ङीष् स्यात् । एवञ्च करे मुखं यस्याः सा करमुखीति करस्थापतमुखत्यर्थे उत्तरसूत्रेण ङीषविधानं चिन्त्यम्, अस्वाङ्गपूर्वपदात्परस्वाङ्गवाचकाभावात् ।

अत्रापि जातिपूर्वादिति सम्बध्यते । अन्यथा बहुनआदीनामस्वाङ्गत्वेन तत्पूर्वके वैकल्पिकङीषो दुर्वारत्वं स्यात् । तदाह—**नित्ये प्राप्ते इति**—'बहुव्रीहेश्चान्तोदात्तात्' इति नित्ये ङीपि प्राप्ते तद्विकल्पोऽत्र विधीयते इति भावः । तथा च जातिपूर्वादित्यस्य क्तादित्यस्यान्तोदात्तादित्यस्य चात्रापि सम्बन्धः । तेन बहुकृता इत्यादौ नातिप्रसङ्गः, बहुशब्दस्य जातिवाचकत्वाभावात् । 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' ( ७-२-२७ ) एते णिचि निष्ठान्ता निपात्यन्ते । एतेन विकल्पोऽप्ययं जातिपूर्वादेवेति ध्वनितम् । ननु पुत्रहतीत्यत्र 'अस्वाङ्गपूर्वपदाद्वा' इति वा ङीप् इति कैयटविरोधः, पुत्रस्य जातिवाचकत्वाभावात् । अन्यथा 'पुत्रादिनी' इति णिनिर्न स्यादजाताविति निषेधात् । यत्तु नात्र णिनिः, किन्तु अदनमादः भावे घञ्, सोऽस्त्यस्य इति आदिनी पुत्राणामादिनी पुत्रादिनीति पुत्रस्य जातित्वेऽपि न क्षतिरिति तन्न, 'जातिकाल' इति सूत्रे जातेः किम् ? पुत्रजातः' इति वक्ष्यमाणमूलग्रन्थविरोधापत्तेः । यदि 'जातेरस्त्री' इति सूत्रे—

**'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गा बह्वर्था तां जातिं कवयो विदुः' ॥**

इति जातिलक्षणमुक्तम् । अत्र कैयटः—सत्त्वस्य—द्रव्यस्य प्रादुर्भावविनाशाभ्यां या प्रादुर्भावविनाशौ प्राप्नोति यावद्द्रव्यभाविनीति यावत् । गुणैर्युगपद् द्रव्येण सम्बध्यते । बह्वर्था सर्वव्यक्तिव्यापिनीमित्यर्थः । तां जातिं कवयो विदुरिति कैयटव्याख्यानम् । एवञ्च पुत्रत्वस्य यावद्द्रव्यभावित्वात् जातिवाचक एव पुत्रशब्द इत्याश्रीयते तदा 'पुत्रहती' इत्यत्र 'अस्वाङ्गपूर्वपदाद्वा' इति वा ङीप् इति कैयटग्रन्थोऽपि सङ्गत एव । 'जातिकाल' इति सूत्रे जातेः किं पुत्रजात इति प्रत्युदारणन्तु 'आकृतिग्रहणा जातिः' इति लक्षणाभिप्रायेण । पुत्रत्वस्याकृतिव्यङ्ग्यत्वाभावादिति तत्त्वबोधिनी । **सुरापीतीति**—पीता सुरा यया सा **सुरापीती, सुरापीता** ङीप्विकल्पः ।

'अन्तोदात्तात्' किम्—वस्त्रच्छन्ना। 'अनाच्छादनात्' इत्युदात्तनिषेधः, अत एव पूर्वेणापि न ङीष्।

*स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्।* [ ४-१-५४ ]

असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीष्। केशानतिक्रान्ता अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। संयोगोपधात्तु—

---

**अन्तोदात्तात्किमिति**—पूर्वसूत्रात् 'अन्तोदात्तात्' इत्यस्यानुवृत्तिः किमर्थेति प्रश्नः। **वस्त्रच्छन्नेति**—छन्नं वस्त्रं ययेत्यर्थे वस्त्रछन्नेति छद अपवारणे चुरादिः। छादेर्ण्यन्तात् क्तस्य वा इडभावो णेर्लुक् लुका लुप्तत्वाच्च वृद्धेरभावः। 'रदाभ्याम्' इति नत्वे 'छन्न' इति। पक्षे छादित इति जातिकालसुखादिभ्यः परा निष्ठा वाच्या इति निष्ठान्तस्य परनिपातः। 'जाति कालसुखादिभ्यः' इत्यनेन क्तान्तस्य छन्नशब्दस्यान्तोदात्तत्वं न, 'अनाच्छादनात्' इति पर्य्युदासेन आच्छादनभिन्नात्पूर्वपदात्परस्यैव क्तान्तान्तस्यान्तोदात्तत्वविधानात्। वस्त्रञ्चाच्छादनमेवेति नान्तोदात्तत्वम्। किन्तु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६-२-१ ) इति पूर्वपदप्रकृतिस्वरे शेषनिघातेनान्तानुदात्त एवेति न ङीष्।

**अत एवेति**—अनुदात्तान्तत्वादेवेत्यर्थः। **पूर्वेणापीति**। 'बहुव्रीहेश्च' इति पूर्वसूत्रेण नित्यं ङीप् न, 'अस्वाङ्गपूर्वपदाद्वा' इति वैकल्पिकश्च न। ननु 'पुत्रहती, पुत्रजग्धी' इत्यादौ ङीषोऽनापत्तिः 'पुत्रादिनी' इत्यादौ णिनेर्दर्शनेन 'सुप्यजातौ' ( ३-२-७८ ) इत्यजातावितिनिषेधाप्रवृत्त्या आकृतिग्रहणा जातिरित्यस्य चाभावेन पुत्रस्य जातिवाचकत्वाभावादिति चेन्न, 'नादिन्याक्रोशे पुत्रस्य' ( ८-४-४८ ) इति सूत्रभाष्ये 'पुत्रहती पुत्रजग्धी' इति दर्शनेन गौरादित्वकल्पनया ङीष उपपत्तेः।

'अस्वाङ्गात्' इत्येवेष्टसिद्धौ पूर्वपदग्रहणं प्रकृतसूत्रे विवक्षितस्य पूर्वपदरूपार्थस्य स्पष्टतया लाभार्थम्, अस्वाङ्गादित्यस्य प्राधान्याद् बहुव्रीहेर्विशेषणत्ववारणार्थञ्च। अन्यथा 'साध्वी कल्याणपाणिपादा' इत्यत्र ङीषापत्तिः अस्वाङ्गोपसर्जनान्ताद् बहुव्रीहेरित्यर्थात्। प्रकृतेऽस्वाङ्गोपसर्जनं पाणिपादं तदन्तबहुव्रीहेः सत्त्वात्।

'**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्**' ( ४-१-५४ ) इति। उपसर्जनादिति, असंयोगोपधादिति च स्वाङ्गादित्यस्य विशेषणम्। तदाह—**तदन्तात्प्रातिपदिकादिति**—स्वाङ्गवाचकान्तादन्तात्प्रातिपदिकादित्यर्थः। **वा ङीषिति**—अस्वाङ्गपूर्वपदाद्वेत्यतो वेति, अन्यतो ङीप् इत्यतो ङीषिति चानुवर्तते। तदाह, **वा ङीषिति** अस्य स्त्रियामिति शेषः। बहुव्रीहेरित्यनुवृत्त्यैवोपसर्जनत्वे लब्धे उपसर्जनग्रहणं व्यर्थमित्याशङ्कायामाह—**अतिकेशीति**—केशानतिक्रान्त इत्यर्थे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति वार्तिकेन द्वितीयातत्पुरुषः। अत्र बहुव्रीहित्वाभावेऽपि ङीषर्थमुपसर्जनग्रहणमिति भावः। केशस्य प्रथमानिर्दिष्टत्वाभावात् 'प्रथमानिर्दिष्टम्' इत्युपसर्जनत्वं न स्यादिति न शङ्क्यम्, 'एकविभक्ति चापूर्वनिपाते' (१-२-४४) इत्यनेन नियतविभक्तिकस्य द्वितीयान्तस्योपसर्जनत्वात्। 'उपसर्जनं पूर्वम्' ( २-२-३० ) इति उपसर्जनीभूतकेशपदस्य पूर्वनिपातस्तु न, 'अपूर्वनिपाते' इत्युक्त्या पूर्वनिपातभिन्ने कार्य्ये एवोपसर्जनत्वात्। **चन्द्रमुखीति**—चन्द्रशब्दस्य चन्द्रसदृशे लक्षणया चन्द्र इव मुखं यस्या इति विग्रहे 'अनेकमन्यपदार्थे' ( २-२-२४ ) इति बहुव्रीहिः। सादृश्यनियामको धर्मश्च आह्लादकत्वरूपः।

केशशब्दः 'क्लिश उपतापे' इत्यतः 'क्लिशेरन् लोलोपश्च' ( उणा० ५ पा० ३३ सू० ) इत्यन् प्रत्यये लस्य लोपे गुणे च साधुः।

सुगुल्फा। उपसर्जनात् किम्–शिखा।

---

"चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः।"

(अम० २–का० ६ व० ९० श्लो०) गुल्फेति—शोभनौ गुल्फौ यस्या इति सुगुल्फा। संयोगोपधत्वात् न ङीष्। गलतेः 'कलिगलिभ्यां फगस्य उच्च' (उणा० ५ पा० ३६ सू०) इति फकि लस्य लोपे अस्योत्त्वे गुल्फ इति—'तद्ग्रन्थी घुटिके गुल्फौ' (अम० २ का० ७२) पादस्य पार्श्वस्थौ ग्रन्थिविशेषौ घुटिके गुल्फाविति चोच्येते।

उपसर्जनात् किमिति—केवलकेशमुखादिशब्दानां स्त्रियामवृत्तेरिति उपसर्जनत्वलाभे तद्व्यर्थमिति शङ्कायामाह—शिखेति—'शीङः खो ह्रस्वश्च' (उणा० ५ पा० सू०) इति खप्रत्यये ह्रस्वे च निष्पन्नशिखशब्दान् ङीष् मा भूदित्युपसर्जनग्रहणम्। 'शिखा' इत्येव प्रत्युदाहरणं युक्तम्। शोभना शिखा 'सुशिखा' इति तु प्रक्षिप्तम्, समासात्प्रागेवान्तरङ्गत्वात् टापि अदन्तत्वाभावादेव ङीषोऽप्राप्तेः। यद्यपि 'अशिखा' इत्येव प्रत्युदाहृतं तथापि तस्याप्येकदेशे एव तात्पर्य्यम्, नञ्पूर्वे 'सहनञ्' इति निषेधेन प्राप्त्यभावात्। प्रत्युदाहरणपरभाष्यदर्शनेन क्रोडादिषु शिखाशब्दस्य पाठ इत्यपास्तमिति **नागेशः।**

अन्ये तु 'सुशिखा' इत्येव प्रत्युदाहरणं युक्तम्, भाष्ये 'कल्याणपाणिपादा' इत्यत्र ङीष्वारणाय 'अस्वाङ्गपूर्वपदात्' इत्यनुवर्त्य अस्वाङ्गात्पूर्वपदात्परं यत्स्वाङ्गमुपसर्जनं तदन्तादन्तात्प्रातिपदिकान् ङीष् इत्यर्थ आश्रितः। तथा च 'शिखा' इत्यत्र अस्वाङ्गपूर्वपदात्परशिखशब्दाभावादेव ङीषोऽप्राप्तिः। अत एव भाष्ये 'अशिखा' इत्येव प्रत्युदाहृतम्। 'सहनञ्' इति निषेधस्तु न शङ्क्यः, 'अस्य शिखा' इति षष्ठीसमासे नञोऽभावात्। न च बहिरङ्गसमासात्प्रागेवान्तरङ्गत्वात् टापि अदन्तत्वाभावान् ङीषोऽप्राप्तिः 'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन पूर्वमपि टापोऽप्राप्तेः स्त्रीत्वाविवक्षया शिखाशब्दस्योणादिनिष्पन्नत्वेन गतिकारकेतिपरिभाषया सुबुत्पत्तेः प्रागेव समासेन ङीष एव पूर्वं प्राप्तेश्चेत्याहुः।

वस्तुतस्तु 'उपसंजनिष्यमाण' न्यायेनोत्सर्गशास्त्रीयोद्देश्ये विशेष्यविशेषणभावापन्नापवादशास्त्रीयोद्देश्यतावच्छेदकपर्याप्त्यधिकरणातिरिक्तत्वेनैव संकोचो न त्वपवादशास्त्रीयोद्देश्यघटकातिरिक्तत्वेन। अन्यथा 'व्याघ्री' इत्यादौ जातिवाचकव्याघ्रशब्दघटकघ्रशब्दातिरिक्तत्वेन 'अजाद्यतः' इत्युत्सर्गशास्त्रे संकोचे टापोऽप्राप्त्या 'गतिकारक' इति परिभाषाफलदानपरभाष्यासंगतिः, 'अयजे इन्द्रम्' 'खट्वाक्रीती' इत्यादौ गुणटापोरनापत्तिश्च स्यात्। नित्यस्त्रीलिङ्गे शिखादौ सुशिखेति समासतः प्राक् स्त्रीत्वविवक्षायां न मानम्। अतः 'अशिखा, सुशिखा' इत्यादावन्तरङ्गत्वात् समासतः पूर्वमेव टापि अदन्तत्वाभावादेव ङीषोऽप्राप्तिरिति 'शिखा' इत्येव प्रत्युदाहरणमुचितमिति नागेशानुयायिनो वदन्ति।

नन्वेवम् 'अस्वाङ्गपूर्वपदात्' इत्यनुवृत्त्या 'कल्याणपाणिपादा' इत्यादौ ङीष्वारणपरभाष्यविरोधस्त्वन्मते 'शिखा' इत्यस्य अस्वाङ्गपूर्वपदात्परत्वस्याभावेन 'अस्वाङ्गपूर्वपदात्' इत्यस्याननुवृत्तेरिति चेन्न, वक्ष्यमाणदिशा भाष्यविरोधाभावात्। तथाहि– बहुव्रीहिपदानुवृत्त्यैव शिखा इत्यादौ ङीष्व्यावृत्तिं मनसि निधाय उपसर्जनग्रहणं—यस्मात्प्रातिपदिकान् ङीष् चिकीर्षितस्तन्निरूपितोपसर्जनत्वविशिष्टस्वाङ्गवाचकान्तात् प्रातिपदिकान् ङीषित्यर्थसम्पादनद्वारा 'कल्याणपाणिपादा' इत्यत्र पादरूपस्वाङ्गस्योपसर्जनत्वाभावेन पाणिपादसमुदायस्योपसर्जनत्वेऽपि स्वाङ्गवाचकत्वाभावेन च ङीप्व्यावृत्तिरूपं फलमुपसर्जनग्रहणस्याभिधाय पुनः स्वाङ्गपूर्वपदादित्यस्यानुवृत्त्या तत्फलं निरस्य **'निष्केशी यूका, अतिकेशी** माला' इति उपसर्जनग्रहणस्य फलमुक्तम्। तत्फलस्य 'बहुव्रीहेः' इत्यस्याननुवृत्त्यैव सिद्धया उपसर्जनात् किं? शिखा–इत्युक्तं भाष्ये।

स्वाङ्गं त्रिधा—

'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।'

सुस्वेदा, द्रवत्वात् । सुज्ञाना, अमूर्तत्वात् । सुमुखा शाला, अप्राणिस्थत्वात् । सुशोफा, विकारजत्वात् ।

'अतत्स्थं तत्र दृष्टं च'

---

तथा च बहुव्रीहेरित्यस्यानुवृत्तिपक्षे 'कल्याणपाणिपादा' इत्यादौ दोषवारणाय स्वाङ्गपूर्वपदादित्यस्यानुवृत्तिर्भाष्यकाराभिमता । अनुवृत्तौ तु यस्मात्प्रातिपदिकान् ङीष् चिकीर्षित इत्याद्युक्तार्थसंपादनेनैवोपसर्जनग्रहणस्य चारितार्थ्यं भाष्याभिमतम् । न चैवमुपसर्जनग्रहणस्य प्रत्युदाहरणं 'कल्याणपाणिपादा' इत्येव वक्तुमुचितं न शिखेति वाच्यम्, 'उपसर्जनात् किं शिखा' इत्यस्यैव भाष्ये प्रथमोपात्ततया तदनुरोधेनैव मूले उपसर्जनात् किं शिखा इत्युक्तेः । यद्यपि कर्णनासिकादिविशिष्टे शिर आदौ स्वाङ्गत्वव्यवहारो लोकसिद्धस्तथापि स्वाङ्गत्वव्याप्यकरत्वपादत्वादिरूपेण शक्तस्यैव स्वाङ्गवाचकशब्देनात्र ग्रहणं भाष्याभिमतमिति न कोऽपि दोषः ।

यत्तु सत्युपसर्जनग्रहणे 'कल्याणघटपादा' इत्येव प्राप्नोति प्रातिपदिकघटकपादशब्दे उपसर्जनत्वाभावात् । अस्वाङ्गपूर्वपदादित्यस्यानुवृत्तिकल्पे तु अस्वाङ्गपूर्वपदाद् घटात्परत्वेन ङीष् प्राप्नोतीति फलभेद इति तन्न, अस्वाङ्गपूर्वपदादित्यनुकल्पेऽपि पूर्वपदशब्देन समासाद्यवयवे उत्तरपदस्य चरमावयववद्रूढतया घटशब्दस्य समासाद्यवयवत्वाभावेन फलभेदाभावात् ।

तथा च बहुव्रीहेरित्यनुवृत्तिपक्षे एव अस्वाङ्गपूर्वपदादित्यस्य सम्बन्धः, उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यादिति पक्षे प्रत्यासत्त्यैव दोषो वारणीय इति शिखेति प्रत्युदाहरणं युक्तमेव । एवञ्च करे मुखं यस्याः सा करमुखीति साधुरेव । स्वाङ्गपूर्वपदादित्यस्यानुवृत्तेरभावात् । यद्वा अनुवृत्त्यननुवृत्त्योः फलभेदसत्त्वेन करमुखीत्यादेरनभिधानमेवेति दिक् ।

ननु स्वस्य=अवयविनोऽङ्गं स्वाङ्गमित्यर्थे सुमुखा शाला इत्यत्र 'मुखं निःसरणम्' ( अमर, ३ का० ३ व० १६ श्लो० ) इति कोशात् 'मुखं निःसरणं' द्वे गृहादेर्मुखभूतस्य = द्वारदेशस्य । तस्यावयविनः शालारूपस्याङ्गत्वान् ङीप् स्यात्, किञ्च सुकेशी रथ्या इत्यत्र ङीष् न स्यात् वाय्वादिना रथ्यायां प्रक्षिप्तस्य केशस्य रथ्याया अङ्गत्वाभावादत आह = स्वाङ्गं त्रिधेति—

'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टञ्च तेन चेत्तत्तथा युतम् ॥' इति ।

अप्राणिनोऽप्यङ्गम् । अद्रवमिति—द्रवणं द्रवः । 'द्रु गतौ' इत्यतोऽप्प्रत्ययः । नास्ति द्रवो यस्य तदद्रवम् । यद्वा द्रवतीति द्रवम् पचाद्यच् न द्रवमद्रवम् = स्पन्दनरहितम् । तेन शोभनः स्वेदो यस्याः सा 'सुस्वेदा' अत्र न ङीप्, स्वेदो घर्मजो जलप्रसवः । सुज्ञानेति—मूर्तिः=अवयवसंयोगः सोऽस्यास्तीति मूर्तिमत् । यद्वा स्पर्शवन्ति यानि द्रव्याणि पृथिव्यप्तेजोवायुरूपाणि । तेषां यत्परिच्छिन्नपरिमाणं सा मूर्तिः । तेन 'सुज्ञाना' इत्यत्र न ङीप्, ज्ञानेऽवयवसंयोगाभावात् । सुमुखा शालेति—द्वारदेशरूपावयवस्य प्राणिस्थत्वाभावान्न ङीप्, तदाह—अप्राणिस्थत्वादिति । सुशोफेति—'शोफस्तु श्वयथुः शोथः' इति (अम० २ का० ६ व० ५२ श्लो० ) त्रीणि सूजनेति ख्यातस्य । शोभनः शोफो यस्याः सा सुशोफेति—वाय्वादिविकारजन्यत्वात् । एषु सर्वत्र न स्वाङ्गमिति योजनीयम् ।

अतत्स्थमिति—तत्र = प्राणिनि दृष्टम्, अतत्स्थम् = अप्राणिनि स्थितमपि स्थित्याधारभूतस्याप्राणिनोऽङ्गम् । एतेन पूर्वलक्षणे प्राणिस्थत्वमुपलक्षणं न तु विशेषणमित्यत्र तात्पर्यग्राहकमेतन्न तु लक्षणान्तरम् । पूर्वोक्तविशेषणविशिष्टमप्राणिस्थमपि प्राणिनि दृष्टं चेत्तदपि स्वाङ्गसंज्ञकं भव-

सुकेशी, सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ।

'तेन चेत्तत्तथा युतम् ॥'

सुस्तनी, सुस्तना वा प्रतिमा, प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

*नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च ।* [ ४-१-५५ ]

एभ्यो वा ङीष् स्यात् । आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते, पुरस्तादपवादन्यायात् ।

तीत्यर्थः । तेन 'सुस्वेदा रथ्या' इत्यादौ न ङीष् । **सुकेशी, सुकेशेति**—अप्राणिस्थत्वेऽपि प्राणिनि दृष्टत्वात्स्वाङ्गप्रयुक्तं कार्य्यं भवतीति ।

**'तेन चेत्तत्तथा युतम्'** इति—अप्राणिनोऽपि यदि **तेन** = तत्सजातीयेन प्राणिनि दृष्टस्वाङ्गसदृशेनेति यावत् । प्राणी यथा सम्बद्धस्तथाऽप्राणी प्रतिमादिः सम्बद्धश्चेदित्यर्थः । इदं तु द्वितीयं लक्षणम् । अप्राणिविषयकमिदम् । अत एवास्य 'अप्राणिनोऽपि स्वाङ्गम्' इति शेषो भाष्ये दर्शितः । भाष्ये तु 'तस्य चेत्तत्तथायुतम्' इति पाठो दृश्यते । तस्यापि स एवार्थः । तत्र कारणस्य शेषत्वविवक्षया षष्ठी । **सुस्तनी सुस्तनेति**—शोभनौ स्तनौ यस्या इति विग्रहः । अत्र समानाकृतिकत्वात् स्तनत्वारोपेण स्तनत्वव्यवहारः ।

**'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च'** ( ४-१-५५ ) इति । अत्र 'नासिकोदरोष्ठ' इत्येवोचितम्, 'ओत्वोष्ठयोः समासे' इत्यस्य ओत्वोष्ठघटितसमासे अवर्णादोत्वोष्ठयोर्घटकेऽचि परे पूर्वपरयोः पररूपमित्यर्थात् । समासचरमावयवयोरोत्वोष्ठयोरिति तु नार्थस्तादृशार्थे प्रमाणाभावात् । अन्यथा **'दन्त्योष्ठ्यो वः स्मृतो बुधैः'** इत्यत्र पररूपं न संगच्छेत । दन्त्यश्चासावोष्ठ्यश्च इति विग्रहे औष्ठ्यस्यैव समासचरमावयवत्वात्, अत्र 'अस्वाङ्गपूर्वपदाद्वा' इत्यतो वेति, 'स्वाङ्गाच्चोपसर्जनात्' इत्यत उपसर्जनादिति चानुवर्तते । तेन उपसर्जनीभूतनासिकाद्यन्तप्रातिपदिकेभ्यो वा ङीष् इत्यर्थः फलति—तदाह—**एभ्य इति**—उपसर्जनीभूतनासिकाद्यन्तेभ्य इत्यर्थः । स्त्रियामिति शेषः ।

ननु **'स्वाङ्गाच्चोपसर्जनात्'** इत्येव सिद्धे इदं व्यर्थमत आह—**आद्ययोरिति**—नासिकोदरान्तयोरित्यर्थः । **बह्वज्लक्षणेति** 'न क्रोडादिबह्वचः' इति बह्वच्कनिमित्तक इत्यर्थः, नासिकोदरयोर्बह्वच्कत्वात् । स निषेधोऽनेन वैकल्पिकङीषा बाध्यते इत्यर्थः । 'येन नाप्राप्त' इति न्यायात् निरवकाशत्वादिति यावत् ।

ननु बह्वच्कलक्षणनिषेधेन निरवकाशत्वाद् वैकल्पिकङीषेव बाध्यतामिति चेन्न, बह्वच्कलक्षणनिषेधस्य 'सुजघना' इत्यादौ चरितार्थत्वेन निरवकाशत्वाभावात् । ननु 'सहनासिका, अनासिका, सहोदरा, अनुदरा' इत्यादौ 'सहनञ्' इति निषेधोऽप्यनेन बाध्यताम् ।

'सहनञ्' इत्यस्य सहकेशा, अकेशा इत्यादौ चरितार्थत्वादत आह—**पुरस्तादिति**—निरवकाशेन शास्त्रेण स्वपरस्मिन् बाधनीये प्रथमोपस्थितं यद्बाध्यं शास्त्रं तद्बाधेन निरवकाशस्य शास्त्रस्य चारितार्थ्ये सति बाध्येन व्यवहितं यच्छास्त्रं पश्चादुपस्थितं तस्य बाधे मानाभावोऽत्र लिङ्गम् । तथा चापवादेन पूर्वोपस्थितबाध्यशास्त्रस्य बाधेन चरितार्थे बाध्यत्वयोग्येन परशास्त्रेणापवादशास्त्रमेव बाध्यते, परत्वाद् 'विप्रतिषेधे परं कार्य्यम्' इत्युक्तेः । तेन 'सहनासिका, अनासिका' इत्यादौ ङीषो निषेध एव स्यान्न तु वैकल्पिको ङीष् । तदुक्तं **पुरस्तादिति**—बाध्यशास्त्रापेक्षया पूर्वं पठिता अपवादा इत्यर्थः ।

सूत्रे पठितस्योष्ठादिपञ्चकस्य प्रयोजनमाह—**ओष्ठादीनां त्विति**—अयम्भावः—ओष्ठाद्यन्तप्रातिपदिकात् स्त्रियाम् 'नासिकोदरोष्ठ' इति ङीष् विधीयते । तच्च ङीष् विधानं बाध्यबाधनार्थम् । बाध्यञ्च 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति सूत्रे संयोगोपधान्न ङीष् इत्यर्थकम् 'असंयोगोपधात्' इत्येकम् । सहनञादिपूर्वकत्वे 'सहनञ्' इति द्वितीयं बाध्यम् । उभयोर्बाध्ययोर्मध्ये

ओष्ठादीनां पञ्चानां तु 'असंयोगोपधात्' इति पर्युदासे प्राप्ते वचनम्, मध्येऽपवादन्यायात्। सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः। तुङ्गनासिकी। तुङ्गनासि इत्यादि। नेह— सहनासिका, अनासिका। अत्र वृत्तिः। 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' स्वङ्गी। स्वङ्गेत्यादि। एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित्। 'भाष्याद्यनुक्तत्वादप्रमाणम्' इति प्रामाणिकाः। अत्र वर्तिकानि। 'पुच्छाच्च'। सुपुच्छी, सुपुच्छा। 'कबरमणिविषशरेभ्यो नित्यम्'। कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरीत्यादि। 'उपमानात्पक्षाच्च पुच्छाच्च' नित्यमित्येव। उलूकपक्षी शाला। उलूकपुच्छी सेना।

---

पठितश्च 'नासिकोदरोष्ठ' इत्यपवादशास्त्रम्। तेन 'असंयोगोपधात्' इत्यस्य बाधो, भवतु 'सहनञ्' इत्यस्य वेत्याकाङ्क्षायां प्रथमोपस्थितत्वात् 'असंयोगोपधात्' इत्यस्य बाधेन चरितार्थे 'नासिकोदरोष्ठ' इति सूत्रे बाध्याकाङ्क्षाया निवृत्तौ 'सहनञ्' इति विषये ओष्ठाद्यन्ते परत्वान्निषेध एव न तु वैकल्पिको ङीष्। तेन सहोष्ठा, अनोष्ठा इत्याद्येव रूपम्।

नन्वयं विधिः स प्रतिषेधः। विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेध इति चेन्न, मृदूनां कार्पासानां कृतः पट इव प्रतिषेधविषयकविधेरपि प्रतिषेधत्वमेव, तदुक्तं भाष्ये 'अयमपि विधिर्न मृदूनामिव कार्पासानां कृतः' इति। अत्र कैयटः—मृदुभिः कार्पासैः कृतः पटोऽपि मृदुरेव भवतीति। एतत्सर्वमभिप्रेत्याह—**ओष्ठादीनां पञ्चानां त्विति**—अस्य 'वचनम्' इत्यनेनान्वयः, ओष्ठादीनां पञ्चानां वचनं त्वित्यर्थः।

**ओष्ठादीनां पञ्चानां त्विति**—अस्य 'वचनम्' इत्यनेनान्वयः, ओष्ठादीनां पञ्चानां वचनं त्वित्यर्थः। **मध्येऽपवादन्यायादिति** द्वयोर्बाध्ययोर्मध्ये पठिता अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्, इति न्यायादित्यर्थ एतत्तत्त्वमुक्तम्।

**तुङ्गनासिकी, तुङ्गनासिकेत्यादीति।** अत्र 'न क्रोडादि' इति बह्वच्कस्वाङ्गलक्षणं पूर्वोपस्थितं निषेधं पुरस्तादपवादन्येन बाधित्वा वैकल्पिको ङीषेव। आदिना कृशोदरी कृशोदरा इत्यादेः संग्रहः। एतत्सर्वं भाष्ये स्पष्टम्।

**सहनासिका, अनासिका।** अत्र 'सहनञ्' इति निषेध एव बाधकः, परत्वात्। बिम्बोष्ठी बिम्बोष्ठा, सुजङ्घी सुजङ्घा, शुभ्रदन्ती, शुभ्रदन्ता, **सुकर्णी, सुकर्णा, सुश्रृङ्गी, सुश्रृङ्गा** इत्यादौ 'असंयोगोपधात्' इति निषेधं बाधित्वा वैकल्पिको ङीषेव, मध्येऽपवादन्यायात्।

**नेहेति—'सहनासिका'** सहशब्दो विद्यमानार्थकः, विद्यमाना नासिका यस्याः सेत्यर्थः। **अनासिकेति**—अविद्यमाना नासिका यस्याः सेत्यर्थः, 'नञोऽस्त्यर्थानाम्' इति विद्यमानपदलोपः। उभयत्रापि परत्वात् 'सहनञ्' इति वैकल्पिकस्य ङीषो निषेध एव।

अत्र वृत्तिरिति—अनेनारुचिः सूचिता भाष्यानुक्तत्वात्। **अङ्गेति**—उपसर्जनीभूताङ्गाद्यन्तेभ्यः स्त्रियां वा ङीषिति वक्तव्यम्। एतदर्थश्च 'नासिकोदर' इति सूत्रे चशब्दस्यानुक्तसमुच्चयार्थकतया संगृह्यते। तेन स्वङ्गी, सुगात्रीत्युक्तम्। सिद्धान्ते त्वसाधुत्वमेवैषाम्। तदाह—भाष्याद्यनुक्तत्वादिति। **प्रामाणिका इति**—भाष्यानुयायिनः। **वार्तिकानीति**—भाष्ये इति शेषः। यद्यपि भाष्ये 'नासिकादीनां विभाषायां पुच्छाच्च इत्युक्तम् तथापि लाघवादाह 'पुच्छाच्च' इति। उपसर्जनीभूतपुच्छशब्दान्तात् प्रातिपदिकात् स्त्रियां वा ङीषिति वक्तव्यमित्यर्थः।

**सुपुच्छीति**—शोभनं पुच्छं यस्याः सेत्यर्थः। भाष्ये कल्याणपुच्छीत्याद्युक्ता कवरमणीति—कवरादिभ्योऽव्यवहितपरो यः पुच्छशब्दस्तदन्तात्प्रातिपदिकात् स्त्रियां नित्यं ङीषिति वक्तव्यमित्यर्थः। 'पुच्छाच्च' इति विकल्पापवादोऽयम्। **चित्रमिति**—कवरमित्यस्यार्थमाह—**चित्रमिति।**

**उपमानादिति**—उपमानवाचकात्परः यः पक्षशब्दः पुच्छशब्दो वा तदन्तात् स्त्रियां नित्यं ङीषिति वक्तव्यमित्यर्थः। पक्षांशे नित्यविधिः। पुच्छांशे 'पुच्छाच्च' इत्यस्य बाधकम्। **उलूक-**

*न क्रोडादिबह्वचः [ ४—१—५६ ]*

**क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। अश्वानामुरः क्रोडा। आकृतिगणोऽयम्। सुजघना।**

*सहनञ्विद्यमानपूर्वाच्च [ ४—१—५७ ]*

**सहेत्यात्यादित्रिकपूर्वान्न ङीष्। सकेशा। अकेशा विद्यमाननासिका।**

---

**पक्षीति**—अत्र उलूकपदमुलूकपक्षसदृशे लाक्षणिकम्। **उलूकपुच्छीति**—उलूकः ( उलूकपुच्छसदृशम् ) पुच्छं यस्या इति विग्रहः। सेनायां पुच्छशब्देन तस्याश्चान्त्यभागो गृह्यते। स च पुच्छाकारः। पणायति = स्तौति व्यवहरति वा येन यत्र वा स पक्षः। पणधातोरायप्रत्ययाभावे 'गृधिपण्योर्दकौ च' इति ( उणा० ३ पा० ६८ सू ) सप्रत्यये णस्य कादेशे सस्य षत्वे पक्ष इति।

'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः।
केशादेः परतो वृन्दे बले सखिसहाययोः।
चुल्लीरन्ध्रे पतत्त्रे च राजकुञ्जरपार्श्वयोः ॥'

इति विश्वमेदिन्यौ। पुच्छतेरचि पुच्छ इति। 'पुच्छोऽस्त्री लूमलाङ्गूले' इत्यमरः ( २ का० ८ व० ५० श्लो० )।

**'न क्रोडादिबह्वचः'** (४-१-५६) इति। क्रोडा आदिर्यस्य, बहवोऽचो यस्य क्रोडादिश्च बह्वच् चेति समाहारद्वन्द्वः। तस्मात् अत्र 'द्वन्द्वाच्चुदष' (५-४-१०६) इति टचोऽभावः समासान्तविधेरनित्यत्वात्। अत एव 'प्रतेरश्वादयस्तत्पुरुषे' इति ( ६-२-१९६ )। 'प्रतिराजा' इत्यत्र अश्वादिगणे पाठेनान्तोदात्तत्वविधानं संगच्छते। अन्यथा 'राजाहः' इति टचि 'चितः' ( ६-१-६३ ) इत्यन्तोदात्तत्वसिद्धौ गणे पाठो व्यर्थ एव स्यात्। क्रोडादिरूपं बह्वच् च यत्स्वाङ्गं तदन्तान्ङीष् न। **कल्याणक्रोडेति**— कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा। 'स्त्रियाः पुंवत्' इति पूर्वपदस्य पुंवत्त्वे उपसर्जनह्रस्वत्वे 'स्वाङ्गाच्चोपसर्जनात्' इति प्राप्तो ङीष् निषिध्यते। **अश्वानामिति**—स्त्रीलिङ्गोऽयमिति हरदत्तः। क्रोडाशब्दः स्वभावतोऽश्वोरसि रूढः। **'न ना क्रोडं भुजान्तरम्'** इत्यमरेण न विरोधोऽर्थान्तरत्वात्। रत्नपतिस्तु पुंलिङ्गतामाह। गणे च क्रोड इति प्रातिपदिकमात्रं पठ्यते, न तु टाबन्तमिति गणरत्नमहोदधिकारः।

माधवस्तु क्रुड निमज्जने इति धातौ क्रोडः घञ् क्रोडा अश्वानामुरः। टाबन्तोऽयं स्वभावतो विशेषविषयः क्रोडादिषु टाबन्तमात्रस्य पाठात्। भुजान्तरवाचकस्य क्रोडशब्दस्य बहुव्रीहौ कल्याणक्रोडी कल्याणक्रोडा इति वैकल्पिको ङीष् भवत्येव।

**आकृतिगणोऽयमिति**—आकृत्या = आनुपूर्व्या गण्यते=बुध्यते इत्याकृतिगणः। तेन 'सुभगा, जघना इत्यादि सिध्यति। **सुजघनेति** शोभनं जघनं यस्याः सा 'सुजघना' अत्र बह्वच्कस्वाङ्गात् न ङीष् हन्तेः 'हन्तेः शरीरावयवे द्वे च' ( उणा० ५ पा० ३२ ) इत्यप्रत्यये धातोर्द्वित्वेऽभ्यासकार्ये जघनमिति—'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः ( २ का० ६ व० ७४ )।

**'सहनञ्विद्यमानपूर्वाच्च'** ( ४-१-५७ ) इति। **स्वाङ्गाच्चोपसर्जनादिति नासिकोदरोष्ठ-** इति च प्राप्तो ङीप् प्रतिषिध्यते। त्रिकेति—त्रित्वार्थकात् त्रिशब्दात् त्रित्वं परिमाणमस्येत्यर्थे 'संख्यायाः सङ्घसंज्ञा' इति ( ५-१-५८ ) कप्रत्यये **त्रिकेति। त्रिकपूर्वादिति**—स्वाङ्गादिति शेषः। **सकेशेति**—सहशब्दो विद्यमानार्थकः। सह केशा यस्याः सा सकेशा बहुव्रीहौ 'वोपसर्जनस्य' इति (६-३-८२) इति सादेशो न। सादेशवैकल्पिकत्वात् 'सहकेशा' इत्युदाहर्तुमुचितम्। सशब्दे सहत्वारोपे गौरवात्। **अकेशेति**—अविद्यमानाः केशा यस्या सेत्यर्थः। स्वाङ्गाच्चेति प्राप्तस्य निषेधः। नासिकोदरोष्ठ इति प्राप्तोऽप्यनेन निषिध्यत इत्युक्तं तदाह–**'विद्यमाननासिका'** इति। विद्यमाना नासिका

*नखमुखात्संज्ञायाम्* [ ४-१-५८ ]

ङीष् न स्यात् । शूर्पणखा । गौरमुखा । संज्ञायां किम्—ताम्रमुखी कन्या ।

*दिक्पूर्वपदान्ङीप्* । [ ४—१—६० ]

दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात् । प्राङ्मुखी । आद्युदात्तं पदम् ।

---

यस्या इत्यर्थे बहुव्रीहिः । 'सहनञ्विद्यमानात्' इत्युच्यमाने 'तस्मादित्युत्तरस्य' इति परिभाषया सहाद्यव्यवहितोत्तरं यत्स्वाङ्गं तदन्तात् ङीप् नेत्यर्थे विद्यमानं मुखमस्य विद्यमानमुखः । कल्याणो विद्यमानमुखो यस्या इत्यर्थे कल्याणविद्यमानमुखीत्यत्र प्रतिषेध आपद्येत । विद्यमानकल्याणमुखेतीष्टश्च न सिध्येत् । पूर्वग्रहणसत्त्वे तु तस्य समासाद्यवयवे रूढत्वेनोभयं सिध्यति ।

'नखमुखात्संज्ञायाम्' ( ४-१-५८ ) इति । नखमुखरूपस्वाङ्गवाचकान्तात्प्रातिपदिकात् संज्ञायां गम्यमानायां ङीप् नेत्यर्थः । स्वाङ्गाच्चेति प्राप्तस्य निषेधः । शूर्पाणीवेति—शूर्पं इव नखो यस्या इत्यर्थे बहुव्रीहिः । शूर्पणखा = रावणस्वसा । यत्तु शूर्पाणीव करुहा यस्या इत्यस्वपदविग्रहः संज्ञात्वेन नित्यसमासत्वादिति बालमनोरमा तन्न, संज्ञायां नित्यबहुव्रीहेर्विधायकाभावात् । वाक्येन संज्ञाया अप्रतीतिमात्रम् । 'पूर्वपदात्संज्ञायामगः' ( ८-४-३ ) इति णत्वम् । केवलयौगिकत्वे 'शूर्पनखी' इति ङीप् भवत्येव । गौरमुखेति—गौरं मुखं यस्या इति विग्रहः । कस्याश्चिन्नाम । असंज्ञायां गौरमुखी, गौरमुखा 'स्वाङ्गाच्च' इति वा ङीष् । ताम्रमुखी कन्येति—ताम्रं मुखं यस्या इति यौगिकोऽयम् । ननु 'नान्दीमुख्यो मातरः' इत्यसङ्गतम् 'नखमुखात् संज्ञायाम्' इति ङीषो निषेधादिति चेन्न, अत्र संज्ञापदेन ऐश्वरसंकेतातिरिक्तस्य पौरुषेयस्यैव संकेतस्य ग्रहणात् । मातृषु च नान्दीमुखशब्दस्य ऐश्वरसंकेतस्यैव सत्त्वात् । यद्वा नान्दी = कर्मसमृद्धिः सा मुखं प्रदेयमस्यास्ता मातर इत्यर्थेन यौगिकतया संज्ञात्वाभावाच्च । 'दीर्घजिह्वी च छन्दसि' नित्यार्थमिदम् ।

'दिक्पूर्वपदान्ङीप्' ( ४-१-६० ) इति दिक्पूर्वपदं यस्य तस्मात् स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेश इत्यर्थः । अत्र ङीषित्यनुवर्तते । तस्य प्रातिपदिकादिति पञ्चमी षष्ठीं प्रकल्पयिष्यति प्रातिपदिकात्परस्य ङीष इति 'तस्मादित्युत्तरस्य' इति । 'प्रत्ययविधौ पञ्चम्यः प्रकल्पिका न भवन्ति' इति तु विधीयमानप्रत्ययस्य षष्ठीप्रक्लृप्तेर्निषेधिका । अत्र तु अन्येन विहितस्य ङीषः षष्ठीप्रक्लृप्तिः ।

तदुक्तं भाष्ये—'अथवा ङीष आदेशो ङीप् करिष्यते । तत्तर्हि ङीषो ग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? अन्यतो ङीषिति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । दिक्पूर्वपदादित्येषा पञ्चमी ङीषिति प्रथमायाः षष्ठीमिह प्रकल्पयिष्यति 'तस्मादित्युत्तरस्येति' इति ।

ङीषो ङीब्विधानस्य फलमाह—आद्युदात्तं पदमिति—यदि ङीषो ङीबादेशो न स्यात्तदा ङीषः प्रत्ययस्वरेणाद्युदात्ततया ङीषं विहाय शेषस्यानुदात्तपदमेकवर्जमित्यनुदात्तत्वे आद्यनुदात्तं पदं स्यात् । इष्यते त्वाद्युदात्तत्वमिति । ङीषः ङीबादेशे तु आदेशविधानसामर्थ्यात् 'अनुदात्तौ सुप्पितौ' (३-१-४) इति ङीपोऽनुदात्तत्वेन प्राक्शब्दस्याद्युदात्तया 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरेण प्राक्पदस्याद्युदात्तत्वं सिध्यति । यदि ङीषो बाधकः स्वतन्त्रो ङीप् स्यात्तदापि 'अनुदात्तं पदमेकवर्जम्' ( ६-२-१ ) इत्यनेन प्रकृतिस्वरत्वे आद्युदात्तत्वं स्यादेवेति ङीषो ङीबादेशविधानं व्यर्थमिति चेन्न, 'प्रागगुल्फा, प्राक्क्रोडा' इत्यादावपि 'असंयोगोपधात्' 'न क्रोडादि' इति ङीषं परत्वाद् बाधित्वा ङीबापत्तेः । अत्र निषेधानामप्यनुवृत्तौ त्वतिगौरवम् ।

*वाहः* । [ ४-१-६१ ]

वाहन्तात् प्रातिपदिकान्ङीष् स्यात् । ङीषेवानुवर्तते न ङीप् । 'दित्यवाट् च मे दित्यौही च मे' ।

*सख्यशिश्वीति भाषायाम्* । [ ४-१-६२ ]

इतिशब्दः प्रकारे भाषायाम् इत्यस्यानन्तरं द्रष्टव्यः । तेन छन्दस्यपि क्वचित् । सखी । अशिश्वी । 'आधेनवो धुनयन्तामशिश्वीः' ।

---

'वाहः' ( ४-१-६१ ) इति । 'वाहः' इति पञ्चम्यन्तम् । अधिकृतस्य 'प्रातिपदिकात्' इत्यस्य विशेषणतया तदन्तविधिस्तदाह—**वाहन्तादिति**—वहेरयम् 'वहश्च' ( ३ २-६४ ) इति ण्विप्रत्ययान्तस्य ण्यन्तात क्विपि वा 'वाहः' इति निर्देशः । छन्दसि कर्मण्युपपदे वहेर्ण्विविधानात् केवलस्य वाहोऽसम्भवेन तदन्तस्यैव ग्रहणम् । **ङीषेवानुवर्तत इति**—बहुसूत्रेषु ङीषोऽनुवृत्ति दर्शनेनानुवृत्तिसूचकस्वरितत्वस्य तत्र दर्शनात् । **न ङीबिति**—तत्र स्वरितत्वप्रतिज्ञायां माना-भावादिति भावः । 'त्र्यविश्च मे त्र्यवीच मे **दित्यवाट् च मे दित्यौही च मे** पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्य्यवाट् च मे तुर्य्यौही च मे यज्ञेन कल्पन्ताम्' । इति ( शुक्ल-यजुर्वेद० १८ अ० २६ अनुवाक ) दित्यः = द्विवर्षात्मकः कालः । दित्यं वहतीति दित्यवाड् = द्विवत्सरो वृषा । तादृशी गौः दित्यौही सा मेऽस्त्वित्यादिः प्रार्थना इत्युक्तं यजुर्वेदभाष्ये ।

बालमनोरमायां वासुदेवदीक्षितेन तु 'गवां तावत् षण्मासात्मकमेकैकं वयः । 'गर्भाश्च मे वत्साश्च मे' इत्यनुवाके अनुक्रान्तानि वयांसि । तत्र तृतीयं वयो दित्यशब्देनोच्यते । इति यजु-र्वेदभाष्ये भवस्वामिधूर्तस्वाम्यादिकृतकल्पभाष्येषु च स्पष्टम्' इत्युक्तम् ।

**दित्यौहीति**—दित्यं = द्विवर्षात्मकं सार्धवर्षात्मकं वा वयो वहतीत्यर्थे 'वहश्च' इति ण्विप्र-त्यये णस्येत्संज्ञया लोपेन वेः 'वेरपृक्तस्य' ( ६-१-६७ ) इति लोपेनापहारे उपधावृद्धौ उपपद-समासे दित्यवाहशब्दान् ङीषि 'वाह ऊठ्' ( ६-४-१३३ ) इत्यूठि ऊठः सम्प्रसारणसंज्ञकत्वेन 'दित्य ऊ आह्' इति दशायाम् 'सम्प्रसारणाच्च' ( ६-१-१०८ ) इति पूर्वरूपे 'दित्यऊह्' इति जाते 'एत्येधत्यूठसु' ( ६-१-८९ ) इति वृद्धौ 'दित्यौही' इति । ण्विप्रत्ययस्य छान्दसत्वात् वेदवाक्यमेवोदाहृतं मूले । लोके तु ण्यन्ताद्वाहयतेः क्विपि निष्पन्नवाहशब्दात् ङीषि दित्यौही इति । ण्यन्ताद् वाहेरुदाहरणार्थमेवात्र 'वाहः' इति सूत्रमुपन्यस्तम् । अन्यथा वैदिकप्रकरणे एवोपन्यस्येत ।

**'सख्यशिश्वीति भाषायाम्'** ( ४-१-६२ ) इति सखी, अशिश्वी इति सिद्धोच्चारणेन सखिशब्दात् अशिशुशब्दात् स्त्रियां ङीष् निपात्यते भाषायाम् । लौकिकसंस्कृतप्रयोगो = भाषा । भाषायामित्युक्तेर्वेदे नैव स्यादित्यत आह–**इतिशब्दः प्रकारे इति** प्रकारः = सादृश्यम् । तच्च प्रयो-गत्वेन । भाषायामित्यनन्तरं द्रष्टव्यम् इति । 'भाषायामिति' इति प्रयोज्यमिति यावत् ! **तेन** = प्रकारा-र्थकत्वेन । वस्तुतस्तु इतिश्चार्थे '**भाषायाञ्चेति**–न्वेन छन्दसि । तदुक्तं नागेशेन **इतिशब्दश्चार्थे इति** । एवञ्च भाषायामिति व्यर्थम् , न च 'दीर्घजिह्वी च छन्दसि' इत्यतश्छन्दसीत्यस्य निवृत्त्यर्थं तत् । 'दिक्पूर्वपदात्' इत्यत्र सम्बन्धादर्शनेन तत्र स्वरितत्वाभावात् । 'परे तु' दिक्पूर्वपदात् इत्यत्र 'वाहः' इत्यत्र च छन्दसीत्यनुवर्तते । लोके तु 'प्राङ्मुखी' इत्यत्र ङीषाऽन्तोदात्तत्वमेव, न तु ङीबादेशः । एवञ्च तन्निवृत्त्यर्थंऽत्र भाषा-ग्रहणमिति **नागेशः** । **क्वचिदिति**—छन्दसि सर्वविधीनां वैकल्पिकत्वात् क्वचिद् भवति ।

**'आधेनवो धुनयन्तामशिश्वीः'** इति । 'अशिश्वीः' इति जसन्तम् , धेनव इत्यस्य विशेषणात् । छान्दसत्वात् 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधो न । क्वचिन्न भवति 'सखा सप्तपदी भव' अत्र न ङीष् । इतिशब्दस्य चार्थत्वादेव 'ङेराम्' ( ७-४-११६ ) इति सूत्रे कैयटे 'सख्यशिश्वी

*जातेरस्त्रीविषयादयोपधात् [ ४—१—६३ ]*

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् ।

'आकृतिग्रहणा जातिः'

अनुगतसंस्थानव्यङ्ग्येत्यर्थः । तटी ।

---

च भाषायाम्' इति पाठो दृश्यते । हरदत्तस्तु भाषाग्रहणं नित्यार्थमित्याह । **सखीति**—सखिशब्दान् ङीषि 'यस्येति च' इतीकारलोपे रूपम् ।

**'आलिः सखी वयस्या च'** इत्यमरः ।

**'सखा मित्रे सहाये ना वयस्यायां सखी मता'** इति मेदिनीकोषः ।

**अशिश्वीति**—नास्ति शिशुर्यस्या इत्यर्थे बहुव्रीहौ ङीपि रूपम्। **'अशिश्वी शिशुना विना'** इत्यमरः ।

**'जातेरस्त्रीविषयादयोपधात्'** (४-१-६३) इति । जातेरिति पञ्चम्यन्तम् तत्र जातिनिरूपितपरत्वस्य प्रत्ययेऽसम्भवाज्जातिवाचकपरम्, तदाह—**जातिवाचीति** । नच जातिशब्देन जातिवाचकजातिशब्दस्यैव ग्रहणमस्त्विति वाच्यम्, अस्त्रीविषयादित्यादिविशेषणवैयर्थ्यापत्तेः, अस्त्रीविषयादित्यत्र अनन्यभावे विषयशब्द इत्याह—**यन्न च स्त्रियां नियतमिति**—स्त्रियामेव यस्य प्रातिपदिकस्य नियमेन वृत्तिस्तत्स्त्रीविषयम् । ततोऽन्यदस्त्रीविषयम् । स्त्रीविषयः = नियमेन वाच्यो यस्येति विग्रहे बहुव्रीहिणा स्त्रीविषयशब्दो नित्यस्त्रीलिङ्गपरः । तथा च अस्त्रीविषयादित्यनेन नित्यस्त्रीलिङ्गभिन्नार्थो विवक्ष्यते । नित्यार्थलाभार्थमेव विषयग्रहणम् । अन्यथा 'अस्त्रियाः' इत्येव ब्रूयात् ।

लोके जननेन प्राप्यते या सा जातिरिति रीत्या जातिशब्दस्य शुक्लादिगुणसाधारण्येन प्रवृत्तिदर्शनात्तस्यैवात्र विवक्षायां गुणेऽतिव्याप्तिः । यदि तन्त्रान्तरप्रसिद्धे 'भिन्नेषु स्वाश्रयेषु अभिन्नाभिधानप्रत्ययनिमित्तं जातिः' इति, अभिन्नयोः = समानाकारयोरभिधानप्रत्यययोः, अभिधीयतेऽनेनेत्यभिधानम् = शब्दः । प्रत्ययः=ज्ञानम् । निमित्तं जातिरित्यस्याश्रयणे, नित्यमेकमनेकानुगतं सामान्यमित्यस्य वाश्रयणे शुक्लादिगुणानां नित्यत्वैकत्ववादिनये तेष्वतिव्याप्तिरिति शुक्ला शाटीत्यादि न सिध्येत् । किञ्च लौकिकजातिग्रहणे ब्राह्मणत्वादीनां गोत्रस्यौपगवादेर्जातित्वे वादिनो विप्रतिपत्तेः, चरणशब्दानाञ्च कठादीनामध्ययनक्रियासम्बन्धनिबन्धनत्वेन पाचकादिवत् क्रियाशब्दत्वात्, 'सवर्णभ्यः सवर्णासु जायन्ते हि सजातयः' इत्यादिस्मृत्या जननेन यत्प्राप्यते ब्राह्मणत्वादि सा जातिश्चेत्तदा युवत्वादावव्याप्तिः । तथा च 'युवतितरा' इत्यत्र 'जातेश्च' इति पुंवत्त्वनिषेधो न स्यादित्यतो भाष्योक्तजातिलक्षणमाह—

**आकृतिग्रहणेत्यादि**—गृह्यते=ज्ञायतेऽनेनेति करणे ल्युट् । सामान्ये नपुंसकम् । आकृतिः = अवयवसंनिवेशः । आकृतिर्ग्रहणं ज्ञानसाधनं यस्याः सा आकृतिग्रहणा । उपसर्जनत्वाद् ग्रहणशब्दस्य **'टिड्ढ'** इति न ङीप् । फलितार्थमाह—**अनुगतेति**—सर्वासु तटादितत्तद्व्यक्तिषु आकृतिविशेषविशिष्टेषु जलसमीपप्रदेशविशेषेषु तटशब्दो रूढः । गृह्यते या सेति कर्मणि ल्युटा आकृत्या ग्रहणेति तृतीयातत्पुरुषस्तु न, 'टिड्ढ' इति ङीब्रापत्तेः । 'कूलं रोधश्च तीरञ्च प्रतीरं च तटं त्रिषु' इत्यमरः ( १ का० १० व० ७ श्लो० ) । ईदृशाकारो गौरित्याकृत्युपदेशादिव्यङ्ग्या जातिरित्यर्थः ।

न च बाल्याद्यवस्थाभेदभिन्नेष्वनेकदेहेषु वृत्तितया देवदत्तत्वादिकस्यापि जातित्वापत्तिरिति वाच्यम्, समानकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येत्यर्थात् । देवदत्तादिशरीरञ्च न ह्येककालावच्छेदेनानेकम् । घटादयश्चैककालावच्छेदेनानेके सन्तीति घटत्वादेर्जातित्वम् । अत एव कल्पभेदेनेन्द्रादेर्भेदेऽप्येककालावच्छेदेनानेकेन्द्रादेरभावादिन्द्रत्वादिकं न जातिः ।

न च दमयन्त्याः स्वयंवरे पञ्चेन्द्रोपाख्यानादिन्द्रत्वस्यैककालिकानेकेन्द्रवृत्तित्वेन जातित्वापत्तिर्दुर्वारेति वाच्यम्, सर्वेषामिन्द्राणां संस्थानस्यैकत्वे मानाभावात्, समानकालिकानेकव्यक्ति-

**'लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या—'**

**'असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ** कथनाद्व्यक्त्यन्तरे कथनं विनाऽपि **सुग्रहा जातिः'** **इति लक्षणान्तरम् । वृषली । सत्यन्तं किम्-शुक्ला ।** सकृदित्यादि **किम्-देवदत्ता ।**

---

वृत्तित्वे सति विभिन्नकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्याया एव जातित्वात् । पञ्चानामिन्द्राणामनेककालवृत्तित्वाभावेनादोषाच्च । दुर्गा, अपर्णा, इत्यादौ नित्यस्त्रीत्वादेव न ङीप् ।

नन्वेवं वृषलत्वादीनां जातित्वं न स्यात्, तेषामवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन वृषलत्वादेराकृतिग्रहणत्वाभावात्, किन्तु साक्षादुपदेशगम्यत्वादतो लक्षणान्तरमाह—**लिङ्गानामिति—'लिङ्गानाञ्च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या'** इति द्वितीयं लक्षणम् । ननु सर्वाणि लिङ्गानि न भजते इत्यर्थे 'न सर्वलिङ्गभाग्' इति भवितव्यमिति चेन्न, सर्वशब्दस्य लिङ्गापेक्षत्वेन 'सापेक्षमसमर्थवत्' इति न्यायविषयत्वेऽपि भाष्यप्रयोगात्तन्न्यायाप्रवृत्त्या भजो ण्विप्रत्ययस्य समासस्य च साधुत्वाङ्गीकारात् । आख्यातमाख्यानम्=उपदेशः ।

एकस्यां व्यक्तौ सकृद् वृषलाद् वृषल्याम्, ब्राह्मणाद् ब्राह्मण्यामुत्पन्नोऽयमित्युपदेशात् वृषलत्वं तदपत्यतत्सहोदरादौ सुग्रहम्, ब्राह्मणत्वन्त्वेकत्रोपदिष्टं तत्तत्पितृपितामहादिषु सुग्रहम् । **निर्ग्राह्येत्यस्य** व्यक्त्यन्तरे उपदेशं विनापि सुज्ञेयेत्यर्थः । द्वितीयलक्षणस्य फलितार्थमाह—**असर्वलिङ्गत्वे** इत्यादिना । **लक्षणान्तरमिति** जात्यन्तरमित्यर्थः । उक्ततटत्वादिजातेरेव 'आकृतिग्रहणा' इत्यतो भिन्नं लक्षणमिति तु नार्थः, तटस्य लिङ्गत्रयविशिष्टत्वात् ।

**वृषलीति—'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः'** इत्यमरः ( २ का० १० व० १ श्लो० ) । जघन्यात्=देहस्यान्त्यात् पादाज् जातो जघन्यजः । 'अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः' इत्यमरः ( ३ का० १ व० ८१ श्लो० ) षडन्त्यवाचकाः ।

**आकृतिग्रहणा** जातिरिति नित्यानित्यसाधारणमित्येतन्मतं नित्यं ब्राह्मणत्वादि, अनित्यं युवत्वादि । भाष्ये 'अपर आह इत्यादिना 'अपर आह—

'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥'

इत्युक्तम् । अत्र **कैयटः—सत्त्वस्य**=द्रव्यस्य प्रादुर्भावविनाशाभ्यां या आविर्भावतिरोभावौ प्राप्नोति यावद्द्रव्यभाविनीत्यर्थः । गुणैर्युगपद् द्रव्येण सम्बध्यते । यथा निर्गुणस्य द्रव्यस्योपलम्भो न भवत्येवं जातिरहितस्यापीत्यर्थः । **बह्वर्थामिति**—सर्वव्यक्तिव्यापिनीमित्यर्थः । अर्थशब्दोऽत्र विषयवाची' इति । नन्विदं लक्षणं यत्राश्रयस्योत्पत्तिविनाशौ सम्भवतस्तत्रैव सम्भवति । यत्र त्वाश्रयस्योत्पत्तिविनाशौ न सम्भवतो यथाऽऽत्मनस्तत्रात्मत्वस्य जातित्वं न स्यादिति चेन्न, प्रादुर्भावेत्यादिना यावद्द्रव्यभावित्वस्य विवक्षणात् । यावद्द्रव्यभावित्वञ्च—स्वाश्रयद्रव्यसत्त्वप्रतीतिसमनियतप्रतीतिविषयत्वम् । समनियतत्वञ्च कालिकप्रत्यासत्त्या बोध्यम् ।

एवञ्च भिन्नमुनिकर्तृकलक्षणद्वयप्रामाण्येन कुमारादिशब्दे जातिकार्य्यविकल्पः । अत एव 'अचः परस्मिन्' इति भाष्ये 'परस्मिन्निति किमर्थम् ? 'युवजातिः' इति भाष्ये 'जातेश्च' इति पुंवत्त्वनिषेधादर्शनाद् यौवनस्य जातित्वाभावः । 'युवजातिः' इत्यत्र 'जातेश्च' इत्यनेन जातिलक्षणपुंवत्त्वनिषेधाभावः, 'ङ्याप्प्रातिपदिकात्' ( ४-१-१ ) इति भाष्ये 'युवतितरा' इत्यत्र 'जातेश्च' इति पुंवत्त्वनिषेधदर्शनाज्जातित्वम् । उभयविधभाष्यप्रयोगदर्शनेन यौवने जातिकार्य्यविकल्पः ? इति । 'युवतितरा' इत्यत्र जातिलक्षणपुंवत्त्वनिषेधश्च सिध्यति ।

तदुक्तं भाष्ये—'कः पुनरेतयोर्लक्षणयोर्विशेषः ? यथापूर्वं जातिलक्षणं तथा कुमारीभार्य्य इति भवितव्यम् । यथोत्तरं तथा कुमारभार्य्य इति भवितव्यम् ।' इति ।

—'गोत्रं च चरणैः सह।'

अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः। औपगवी। कठी। कलापी।

---

अत्र कैयटः 'कौमारमयावद्द्रव्यभाव्यपि आकृतिग्रहणत्वाज्जातिरिति 'जातेश्च' इति पुंवद्भावप्रतिषेधः। उत्तरे तु लक्षणे कौमारं जातिर्न भवति अयावद्द्रव्यभावित्वात्। पूर्वोक्तमेव लक्षणं भाष्यकारस्याभिमतम्। उत्तरलक्षणस्य 'अपर आह' इत्यादिशब्देनाभिधानादिति **नागेशाः।**

नन्वेताभ्यां लक्षणाभ्यामौ**पगवी कठी**त्यादेरसंग्रहोऽनुगतसंस्थानव्यङ्ग्यत्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह – **गोत्रञ्चेति।** अपत्याधिकारादन्यत्र लौकिकमपत्यमात्रं गोत्रशब्देन गृह्यते। गोत्रशब्देनापत्यमात्रं विवक्षितं न तु 'पौत्रप्रभृती'ति पारिभाषिकम्। अत एवानन्तरापत्यप्रत्ययान्ते 'अवन्ती' इत्यत्र जातिप्रयुक्तो ङीपिति 'अनुपसर्जनात्' इति सूत्रस्थं भाष्यं संगच्छते। चरणशब्दः शाखाध्येतरि प्रसिद्धः। चरणैः सह गोत्रं जातिरित्यर्थः। गोत्रं चरणश्च जातित्वं लभते इत्यर्थः। यद्यपि लोकेऽनुगताकारप्रत्ययवेद्या जननविशेषप्रयुक्ता चेति जातिः द्विविधैव प्रसिद्धा, तथापि 'अतस्मिंस्तच्छब्दस्तद्वाचिषु शब्देषु तत्कार्यार्थः' इति न्यायात् तेषु जातित्वारोपः। शेखरकारमते तु 'एवं तर्हि' ग्लुचुकायनीभार्य्ये दोष इति एको गोत्रे' इति सूत्रस्थभाष्ये युवापत्यत्वस्य जातित्वाभावोक्त्या पुंवत्त्वप्रतिषेधो न प्राप्नोतीत्युक्त्या च गोत्रपदेनात्र शास्त्रीयस्यैव 'अपत्यं पौत्रप्रभृति गोत्रम्' इति पारिभाषिकस्य ग्रहणम्। अत एव 'ब्राह्मोऽजातौ' इति सूत्रेऽपत्ये जातौ नेत्यर्थः संगच्छते। अपत्यमात्रस्य ग्रहणेऽपत्यस्य जातित्वाव्यभिचारात् 'अपत्ये जातौ' नेत्यर्थासङ्गतिः स्पष्टैवेत्याहुः।

**चरणः**—वेदशाखाध्येतृपरः। तत्फलितमाह **अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्द इति।** गोत्रस्याकृतिग्रहणत्वाभावात्सर्वलिङ्गत्वाच्च पूर्वलक्षणाभ्यामसंग्रहात्पृथगुपादानम्, **गोत्रञ्चेति। औपगवीति**—उपगता गावो यस्या इति विग्रहे बहुव्रीहिः। गामुपगत इति तु न, गोऽन्तात्तत्पुरुषात् टच्प्रसङ्गात्। उपगोरपत्यं गोत्रापत्यं वेति विग्रहेऽणि वृद्धावौपगवशब्दात् अणन्तत्वात्प्राप्तं ङीपं बाधित्वा ङीषो रूपम्। स्वरे भेदः। तथा चापत्याधिकारे 'औपगवी' इति प्रयोगमुपादाय 'टिड्ढ' इति ङीबिति व्याख्योपेक्ष्या। अपरे तु 'तस्यापत्यम्' इत्यपत्याधिकाराद्गुत्तरत्रैव अपत्यमात्रं लौकिकं गोत्रं गृह्यते गोत्रशब्देन नान्यत्रेति पारिभाषिकगोत्रप्रत्ययान्तमेव। जातिकार्य्यं लभते नत्वपत्यप्रत्ययान्तः, **'गोत्रे च चरणैः सह'** इति वचनस्यापत्याधिकारात्पूर्वं पाठात्। तथा चापत्यार्थे 'टिड्ढ' इति ङीपि 'औपगवी' इति प्रयोगः साधुरेवेत्याहुः। चरणमुदाहरति—**कठीति।** कठेन प्रोक्तमधीयानेत्यर्थे।

**'कलापिवैशम्पायनान्तेवासिभ्यश्च'** (४-३-१०४)। कलाप्यन्तेवासिभ्यो वैशम्पायनान्तेवासिभ्यश्च प्रोक्तार्थे णिनिः। अणोऽपवादः, छं तु परत्वाद् बाधते।

कलाप्यन्तेवासिनः—'हरिद्रुः, छगली, तुम्बुरुः, उलप इति चत्वारः। वैशम्पायनान्तेवासिनः—आलम्बिः, कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी चेति नव। ननु कलापी वैशम्पायनान्तेवासिनि कलापिशिष्या अपि परम्परया वैशम्पायनशिष्या इति कलाप्यन्तेवासिभ्योऽपि वैशम्पायनान्तेवासित्वादेव णिनेः सिद्धौ सूत्रे कलापिग्रहणं व्यर्थमिति चेन्न, शिष्यग्रहणेन शिष्यशिष्याणां न ग्रहणमिति ज्ञापनार्थं तत्सत्त्वात्। प्रकृते कठशब्दाद् वैशम्पायनान्तेवासित्वात् णिनिः। तस्य 'कठचरकाल्लुक्' (४-३-१०७)। इति लुकि 'छन्दोब्राह्मणानि च तद्विषयाणि' (४-२-६६)। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्युक्तेः णिन्यन्तात् कठशब्दात् 'तदधीते' इत्यणः 'प्रोक्ताल्लुक्' इति लुकि कठशब्दस्य कठप्रोक्तशाखाध्येतृवाचकत्वेन जातिवाचकतया 'जातेरस्त्री' इति स्त्रियां ङीपि यस्येति चेत्यलोपो 'कठी' = कठशाखाध्येत्रीत्यर्थः।

बह्वृची। ब्राह्मणीत्यत्र तु शार्ङ्गरवादिपाठान्ङीना ङीष्बाध्यते। जातेः किम्—मुण्डा।

बह्वृचीति—बह्व्य ऋचोऽध्येतव्या अस्या इत्यर्थे बहुव्रीहिः 'ऋक्पूरब्धूःपथामानक्षे' (५-४-७४) इति अप्रत्यये ङीपि 'बह्वृची' इति। 'अनृचबह्वृचावध्येतर्य्येव' अप्रत्ययः समासान्तः। नेह नास्ति ऋग्यस्मिन् तद् 'अनृक् साम, बह्व ऋचो यस्मिन् सूक्ते तत् 'बह्वृक्' सूक्तम्। अप्रत्ययो न। ननूपनीतस्यैव वेदाध्ययनेऽधिकारात् स्त्रीणामुपनयनाभावात् 'बह्वृची' इति अध्येत्र्यामसङ्गतमिति-चेन्न, पुराकल्पाभिप्रायेण स्त्रीणामप्यध्ययनाभिप्रायात्। तदुक्तम्—

'पुराकल्पे नु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां सावित्रीवचनं तथा॥'

इति यमस्मृतौ। यद्वा मा ध्यगीष्ट तद्वंश्यात्ताच्छब्द्यं भविष्यति। यथा अनधीयानेऽपि माणवके 'बह्वृचोऽयम्' इति।

ननु 'लिङ्गानाञ्च न सर्वभाक्' 'गोत्रञ्च चरणैः सह' इति जातिलक्षणे 'ब्राह्मणी' इति परित्यज्य वृषली, औपगवीत्युदाहरणमनुचितमित्यत आह—ब्राह्मणीत्यत्रेति—ब्रह्मणोऽपत्यमित्यर्थे 'तस्यापत्यम्' इत्यणि 'ब्राह्मोऽजातौ' इति टिलोपाभावे आदिवृद्धौ 'ब्राह्मणा' इति। स्त्रियां जातिलक्षणं ङीषं बाधित्वा शार्ङ्गरवादौ पाठसामर्थ्यात्। 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनेव। स्वरे भेदः। 'जातेः किमिति' 'अस्त्रीविषयादयोपधात्' इतीयत्युच्यमाने 'मुण्डा' इत्यत्रापि ङीष् स्यात्तद्वारणाय 'जातेः' इति।

मुण्डत्वं गुणः। तच्च विच्छिन्नसर्वशिरस्केशत्वम्। तच्च नाकृतिव्यङ्ग्यम्, केशदशायां यदवयवसंस्थानं तस्यैव तदानीमपि सत्त्वात्। नापि 'लिङ्गानाम्' इति लक्षणलक्षितम्, सर्वलिङ्गत्वात्।

शेखरकारस्तु 'परे तु-आकृतिग्रहणेत्येव जातिलक्षणम्। आकृतिपदमुपदेशोपलक्षणम्। आकृतिद्वारा साक्षाद्वोपदेशग्राह्या जातिरित्यर्थः। तत्रैदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजातिः, 'अयं ब्राह्मणः' इति साक्षादुपदेशग्राह्या ब्राह्मणत्वादिजातिः।

नन्वेवं शुक्लादिगुणानामपि जातित्वं दुर्वारम्, एकत्र 'अयं शुक्लः' इत्युपदेशे सर्वत्र ग्राह्यत्वात् इति चेन्न, जातिग्राहकोपदेशस्यैव लक्षणत्वात्। अयं शुक्ल इति च गुणग्राहकोपदेशः। न चैवमात्माश्रयो जातिलक्षणे जातेः प्रवेशादिति वाच्यम्, उपदेशविशिष्टस्यैव जातिग्राहकोपदेशपदेन ग्रहणात्। वैशिष्ट्यञ्च स्व (उपदेश) प्रयोजिका या 'अस्य गोत्वादिज्ञानं जायतामितीच्छा, तदुद्देश्यता गोत्वज्ञाननिष्ठा तादृशोद्देश्यतानिरूपिता या विषयित्वसम्बन्धावच्छिन्नावच्छेदकता सा गोत्वे तादृशावच्छेदकतासमानाधिकरणविशेष्यत्वासमानाधिकरणा च या प्रकारता तन्निरूपकज्ञानजनकस्यैवोपदेशस्य ग्रहणात्।

अयं शुक्ल इत्युपदेशवैशिष्ट्यं न शुक्लत्वे तस्य गुणरूपतया तत्र शुक्लत्वनिष्ठप्रकारतानिरूपितविशेष्यतासामानाधिकरण्यस्यैव प्रकारतायां सत्त्वात्। एवम् 'अयमभावः' इत्यत्रापि नातिव्याप्तिः, अनुयोगित्वस्यानुयोगिताविशेषरूपत्वेन तन्निष्ठप्रकारताया विशेष्यत्वसमानाधिकरणत्वादित्याहुः।

एवञ्च 'लिङ्गानाञ्च न सर्वभाक्' सकृदाख्यातनिर्ग्राह्या इति उक्तया आकृतिग्रहणायाः स्वरूपानुवादकं न तु लक्षणान्तरम्, तेन शुक्लादिगुणानामेकत्वपक्षे न जातित्वम्। 'विशेषणानां चाजातेः' इति सूत्रे जातेराविष्टलिङ्गत्वं भाष्ये उक्तम्। आविष्टलिङ्गत्वञ्च—नियतलिङ्गत्वमिति कैयटः। नियतलिङ्गत्वञ्चात्र लिङ्गत्रयविशिष्टभिन्नत्वम्। तथा च यावन्त उक्तलक्षणकजातिवाचकास्ते न लिङ्गत्रयविशिष्टाः। भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता। 'तटं त्रिषु' इति कोशकृतां प्रमादः। 'जातिवाचकं नियतलिङ्गम्' इति प्रायिकमिति केचित्। तेन तटादेस्त्रिलिङ्गत्वेऽपि न दोष इति केचिदिति शेखरकाराः। आकृतिग्रहणेत्येकम्, प्रादुर्भावविनाशाभ्यामित्यपरम्। अत एव 'कः पुनरेतयोर्जातिलक्षणयोर्विशेषः? यथा पूर्वं लक्षणं तथा कुमारीभार्य्य इति भवितव्यम्। यथोत्तरं

अस्त्रीविषयात् किम्—बलाका। अयोपधात् किम्—क्षत्रिया। 'योपधप्रतिषेधे हयगवयमुकय-मनुष्यमत्स्यानामप्रतिषेधः'। हयी। गवयी। मुकयी। 'हलस्तद्धितस्य' इति यलोपः। [ 'मनोर्जातावञ्यतौ षुक्च' ]। मनुषी। 'मत्स्यस्य ङ्याम्' मत्सी।

---

तथा कुमारभार्य्य इति भाष्ये लक्षणमित्येकवचनमेव प्रयुक्तम्। आकडारसूत्रेऽपि 'आकृतिग्रहणा जातिः' इत्येवोक्तं भाष्ये।

**अस्त्रीविषयात् किमिति**—विषयग्रहणेन नियतत्वं प्रवेश्य अनियतस्त्रीलिङ्गादिति किमर्थं **बलाकेति**—'बलाका बिसकण्ठिका' इत्यमरः ( २ का० ५ व० २५ श्लो० )। बिसमिव दीर्घः कण्ठो यस्या इत्यर्थः। बगला इति लोके। बलाकाया आकृतिव्यङ्ग्यतया जातित्वेऽपि नियतस्त्रीत्वान्न ङीष्। अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादित्यर्थः। स्त्रीविषयादित्यत्र प्रवृत्तिनिमित्तैक्ये इत्यस्य प्रवेशेन बलं कार्यत्वेनास्त्यस्या इति बला 'अर्शआदिभ्यः' इत्यच् (बरियार) इति लोके, तां कायतीति यौगिकस्य सर्वलिङ्गत्वात्—

'बलाका बकपंक्तिः स्याद् बलाका बिसकण्ठिका।
बलाका कामुकी प्रोक्ता बलाकश्च बको मतः॥'

इति कोशे स्त्रीलिङ्गस्याप्यभिधानाच्च नेदं युक्तमित्यपास्तम्, अत एव 'पाककर्ण' ( ४–१–६४ ) सूत्रं चरितार्थम्। तत्सूत्रं हि स्त्रीविषयार्थम्, अन्यथा तेषामपि यौगिकेऽर्थे मालेति—मलनं मालः भावे घञि पुंलिङ्गः। क्षेत्रविशेषे नपुंसकम्। स्रजि स्त्रीलिङ्गा। बलां दायतीति यौगिकः पुंसि। लिङ्गान्तरसम्भवेन 'जातेः' इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव।

भाष्ये तु 'अस्तु कचिद्यदस्त्रीविषयमिति। कथं माला बलाकेति, अजादिषु पाठः करिष्यते' इत्युक्तम्। वस्तुतस्तु प्रौढिवादमात्रमेतत्। तत्पक्षे अजादिषु पाठकल्पने गौरवादित्युपाध्यायाः। **क्षत्रियेति**—क्षणनं क्षत्। भावे क्विप्। क्षतस्त्रायते इति क्षत्त्रः क्षायतेः कः। क्षत्त्रस्यापत्यम् 'क्षत्राद् घः' इति घ इयादेशे क्षत्रिय इति अयं क्षत्रिय इत्युपदेशगम्यत्वेन जातित्वेऽपि योपधत्वान्न ङीष्।

**योपधप्रतिषेध इति**—इदं वार्त्तिकम्। योपधप्रतिषेधे इति सति सप्तमी। संख्यायते कार्य्यमनेनेति संख्यानं सूत्रं तस्य समीपे इत्यव्ययीभावः। हयगवेति पञ्चम्यर्थे षष्ठी। तथा च सूत्रसमीपे हयगवयमुकयमनुष्येभ्यो ङीष् भवतीति वक्तव्यमित्यर्थः। इदं च 'अयोपधादित्यस्य' बाधकम्। फलितार्थमाह—हयगवयमुकयानामप्रतिषेध इति। हयति—'हि गतिवृद्ध्योः' इत्यतो हिनोति शीघ्रतया गच्छतीत्यर्थे 'नन्दिग्रहिपचादिभ्यः' इत्यचि हय इति—स्त्रियां ङीषि 'हयी' इति।

'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः।
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः॥'

इत्यमरः ( २ का० ८ व० ४३ श्लो० )। **गवयीति**—'गुङ् गतौ' इत्यत औणादिकेऽयच्-प्रत्यये 'गवय' इति—गोसदृशो गलकम्बलरहितो वन्यः पशुविशेषः। 'गन्धर्वः शरभो रामः समरो गवयः शशः' इत्यमरः ( २ का० ५ व० ११ श्लो० ) **मुकयीति** चतुष्पाज्जातिविशेष इति बालमनोरमा। कोशेऽयं नोपलभ्यते। स्त्रियां ङीष्। हयत्वजातिविशिष्टा **हयी**, गवयत्वजातिविशिष्टा **गवयी**, मुकयत्वजातिविशिष्टा **मुकयी**। मनुष्यत्वजातिविशिष्टेत्यर्थे **मनुषी**त्यस्य साधुत्वप्रकारमाह–**हल इति**–मनुः= कश्यपस्य पत्नी तस्या अपत्यार्थं 'मनोर्जातावञ्यतौ षुक् च' ( ४–१–६१ ) इति अपत्याधिकारस्थमिदं सूत्रम् 'मनुशब्दादपत्येऽर्थेऽञ्यतौ प्रत्ययौ स्तः प्रकृतेः षुक् च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यमानयामित्यर्थकेन मनुशब्दात् यत्प्रत्यये षुगागमे च 'मनुष्य' इति ततः स्त्रियाम् 'हयगवय' इति ङीषि 'यस्येति च' इत्यलोपे 'हलस्तद्धितस्य' ( ६–४–१५० ) इति यलोपे 'मनुषी' इति।

*पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च* [ ४—१—६४ ]

पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीप्स्यात् । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते ।

*इतो मनुष्यजातेः* । [ ४—१—६५ ]

ङीष् स्यात् । दाक्षी । योपधादपि, उदमेयस्यापत्यं स्त्री औदमेयी । मनुष्येति किम्—तित्तिरिः ।

---

दक्षस्य प्रजापतेः कन्या कश्यपस्य पत्नी मनुः । तस्या अपत्यं मनुष्य इति वाल्मीकीयरामायणेऽरण्यकाण्डे १४ सर्गे स्पष्टम् 'मनोर्जातौ' इति सूत्रे तत्त्वबोधिन्यां ज्ञानेन्द्रसरस्वतीस्वामिना—

'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।'

नकारस्य च णत्वञ्च तेन सिध्यति माणवः । णत्वविधानार्थमिदम् 'अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वम्' विहिताननुष्ठानाच्च कुत्सितत्वम् । इदं च वचनं 'ब्राह्मणमाणव' इति सूत्रे णत्वनिपातनाल्लब्धमित्युक्तम ।

'मत्सीति'—माद्यति जलेन हृष्यतीत्यर्थे 'ऋतन्यञ्जि' ( उणादि० ४ पा० २ सू ) इति मदी हर्षे इत्यतो निपातनात्स्यन्प्रत्यये मत्स्यशब्दान्ङीषि यकारस्य तद्धितावयवत्वाभावाद्यलोपाप्राप्तावाह—'मत्स्यस्येति' 'सूर्य्यतिष्यागस्त्यमत्स्यानाम्' इत्येव यलोपे सिद्धे नियमार्थमिदं वार्तिकम्—मत्स्यस्य छे ङ्याश्च एव यलोपो नान्यत्र । तेन मत्स्यस्यायं मात्स्य इत्यत्र न यलोपः 'मत्सी' इत्यत्र ङीपरत्वेन यलोपः ।

'पाककर्णपुष्पफलमूलवालोत्तरपदाच्च' ( ४-१-६४ ) इति । जातेरित्यनुवृत्तेः बहुपुष्पा, बहुफला शाखा इत्यत्र न ङीप् । ननु अजात्यर्थमेवेदमस्तु इति चेन्न, 'प्राक्पुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु' 'सदन्काण्ड' इति निषेधारम्भसामर्थ्यात् । नियतलिङ्गत्वेन 'जातेरस्त्री' इत्यस्य अजात्यर्थत्वेन 'पाककर्ण' इत्यस्य चाप्राप्त्या निषेधवैयर्थ्यं स्पष्टमेव । ननु 'जातेः' इत्येव सिद्धे इदं व्यर्थमत आह—**स्त्रीविषयादपीति** पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यादिति–तथा च नियतलिङ्गत्वात्पूर्वेणाप्राप्तिरिति भावः । जातिवाचित्वं दर्शयितुमाह **ओषधिविशेषे रूढा** इति । अवयवशक्तिरहिता इत्यर्थः । ओदनस्य पाक इव पाको यस्याः । शङ्कुरिः, कर्णोऽस्याः शङ्कुकर्णी गर्दभी ओषधिश्च । शालस्येव पर्णान्यस्याः । शालपर्णीति लोके । शङ्ख इव पुष्पमस्याः, लोकेऽपि शङ्खपुष्पी । दासी—झिणो—काकजङ्घा वा तद्वत्फलं यस्याः । ओषधिभेदः । दर्भ इव मूलमस्याः । गोवालसदृशो वालोऽस्या गोवालोऽस्या गोवाली श्वेतदूर्वा ।

'इतो मनुष्यजातेः' (४-१-६५) इति । 'जातेरस्त्री' इत्यत्र 'अतः' इत्यनुवृत्तेर्ङीषोऽप्राप्तौ वचनम् । इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष् स्यादित्यर्थः । **दाक्षीति**—दक्षः प्रजापतिविशेषः । यस्य षष्टिर्दुहितरः । दक्षस्य गोत्रापत्यमपत्यं वेत्यर्थे 'अत इञ्' इति इञ्प्रत्ययेऽलोपे आदिवृद्धौ 'दाक्षी' इति । ततो 'गोत्रं च' इति जातित्वान् ङीपि 'यस्येति च' इतीकारलोपे **'दाक्षी'** इति । **योपधादपीति**—जातेरित्यनुवर्तमाने पुनर्जातिग्रहणादिति भावः । **औदमेयीति**—उदकं मेयं यस्य स उदमेयो नाम कश्चित् । 'उदकस्योदः संज्ञायाम्' (६-३-५७) इत्युदादेशः । तस्यापत्यमित्यर्थे 'अत इञ्' इतीञि प्रत्यये वृद्ध्यादिकार्य्ये **'औदमेयः'** **'गोत्रञ्च'** इति जातित्वान् ङीप् । पूर्वेण तु ङीषोऽप्राप्तिः, योपधत्वात् ।

**तित्तिरिरिति**—तरति = प्लवतेऽसौ तित्तिरिः तॄधातोरिः प्रत्ययः । स च कित् सन्वत्कार्य्यमभ्यासस्य तुगागमश्च । 'तित्तिरिवरतन्तु' इति ( ४-३-१०२ ) निपातनात्साधुः । तित्तिरिर्ऋषिः पक्षिभेदश्च । 'स्त्रीपुंसावरपत्यन्ता द्विचतुःषट्पदोरगाः' इत्यमरादयं स्त्रियामपीति भाव इति नागेशः ।

ऊङुतः । [ ४-१-६६ ]

उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । 'कुरुनादिभ्यो ण्यः' । तस्य 'स्त्रियामवन्ति-' इत्यादिना लुक् । अयोपधात् किम्—

इतः किम् 'दरत्' 'दृ हिंसायाम्' इत्यतः दृणाति दीर्य्यते वाशौ इत्यर्थे 'शृदृभसोऽदिः' इति ( उणा० १ पा० १३५ सू ) अदिः । 'दरत् स्त्री वत्सरेऽप्यूतौ दरत् स्त्रियां प्रपाते च भयपर्वतयोरपि । भसत् स्त्री भास्वरे योनौ' इति मेदिनी । 'उवे अम्बसुलभिके' इति मन्त्रव्याख्यायां भसद् भग इति वेद-भाष्यम् । 'जघन्यां पत्नीः संयोजयन्ति भसद्वीर्य्या हि स्त्रियः' इति मन्त्रे 'भसज्जघनम्' इति व्याख्यातारः ।

'ऊङुतः' ( ४-१-६६ ) इति । अयोपधादिति—मनुष्यजातेरिति चानुवर्तते । उत इति तद्विशेषणतया तदन्तपरम् ? तदाह—उकारान्तादित्यादि । ङकारः 'नोङ्धात्वोः' इत्यत्र (६-१-१७५) विशेषणार्थः । अन्यथा 'यवाग्वा, यवाग्वै' अत्रापि निषेधः स्यात् । ङकारसत्त्वे तु तस्यैव ग्रहणान्नात्र निषेधः । दीर्घोच्चारणन्तु श्वश्रूशब्दार्थम् । अन्यथा श्वशुरशब्दादूङ् वक्ष्यते । तत्र ह्रस्वे सति 'श्वश्रूः' इति दीर्घान्तो न सिध्येत् ।

यद्वा दीर्घोच्चारणं प्रश्लेषेणोकारद्वयविधानद्वारा ब्रह्मा बन्धुर्यस्येति बहुव्रीहौ परत्वात्प्राप्तकपो निवृत्त्यर्थम् । रूपाणां ह्रस्वविधानेऽपि सवर्णदीर्घेण सिद्धेरिति भाष्यं स्पष्टम् । तथा हि 'शेषाद्विभाषा' इति कपोऽवकाशोऽयवकोऽव्रीहिकः । ऊङोऽवकाशः—कुरूरिति । ब्रह्मबन्ध्वादेर्बहुव्रीहेरुभयप्रसङ्गे परत्वात् कप् प्राप्नोति । दीर्घोच्चारणसामर्थ्यान्न भवति । कथम् ? उकारद्वयं दीर्घेण निर्दिष्टं तत्र द्वितीय उकारः कपो बाधनार्थ इति ।

कुरूरिति—करोति यो येन वा इत्यर्थे 'कृग्रोरुच' ( उणा० १ पा० २४ सू ) इत्युप्रत्यये ऋकारस्योकारादेशे रपरत्वे च 'कुरु' इत्यत्र ऊङि कुरु राजा तस्यापत्यं स्त्रीत्यर्थे 'कुरुनादिभ्यो ण्यः' (४-१-१७२) इति ण्यप्रत्यये तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' ( ४-१-१७६ ) इति ण्यप्रत्ययस्य लुकि 'गोत्रञ्च' इति जातित्वादूङि दीर्घे 'कुरूः' इति । प्रत्ययान्तत्वेनाप्रातिपदिकत्वेऽपि लिङ्गविशिष्टपरिभाषया स्वादयः । अत्र व्याचक्षते यद्येकादेशस्य पूर्वान्तवत्त्वेन प्रातिपदिकत्वात्स्वादय इति व्याख्यायेत तदा 'काण्डे, कुड्ये, इत्यादावपि 'एकवचनमुत्सर्गतः' इति सुः प्रवर्तेत । तद्वारणाय 'अप्रत्यया' इति । प्रसज्यप्रतिषेधाश्रयणे तु 'कुरूः' इत्यत्र दोषतादवस्थ्यम् । 'श्वश्रूः' इत्यत्रैकादेशाभावात् लिङ्गविशिष्टपरिभाषाया आवश्यकत्वाच्च । अत एव रमा इत्यादावेकादेशस्य पूर्वान्तवत्त्वेन ग्रहणात्स्वादय इति मनोरमादौ न व्याख्यातम् ।

यत्तु 'श्वशुरः श्वश्रा' इति निर्देशसामर्थ्यात्स्वादय इति तन्न, निर्देशस्य शब्दबोधकत्वेनार्थबोधके 'श्वश्रू' शब्दे तदकल्पनात् 'विपराभ्यां जेः' 'ङ्ऱ्याः' इतिवत् । यत्तु लिङ्गबोधकप्रत्ययान्तरूपलिङ्गवैशिष्ट्यस्य प्रातिपदिकत्वस्य च लाभाय लिङ्गविशिष्टपरिभाषा अन्तादिवद्भावेन तु नोभयलाभः, पूर्वान्तवत्त्वेन प्रातिपदिकत्वस्य परादिवत्त्वेन प्रत्ययान्तत्वस्य चारोपे 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादन्तादिवत्त्वम् 'कुरूः' इत्यत्र दुर्लभमिति तन्न, 'इन्द्राणी' इत्यसिद्ध्यापत्तेः ।

अयम्भावः—यत्र प्रकृतौ प्रातिपदिकत्वस्य लिङ्गबोधकप्रत्ययान्तस्य च सत्ता तत्र तादृशसमुदायस्य प्रातिपदिकग्रहणं बोध्यते 'कुरूः' इत्यत्र पूर्वान्तवद्भावं विना प्रातिपदिकत्वस्य परादिवत्त्वं विना लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता नास्तीत्युभयोरावश्यकतया 'उभयतः' इति निषेधः प्रवर्तत इति । यत्र च नोभयोरुपयोगस्तत्र परिभाषया ग्रहणम् । 'इन्द्राणी' इति समुदाये प्रातिपदिकत्वाभावेन परिभाषाया अप्रवृत्तौ दोषः । तस्मात् 'प्रातिपदिकग्रहण' परिभाषया प्रातिपदिकत्वतद्व्याप्यधर्माणामारोपः । काण्डे इत्यत्र ह्रस्वत्वं तु न, सत्त्वप्रधान एव तत्प्रवृत्तेः । 'अधिकरणे' इति निर्देशेन विभ-

अध्वर्युः । 'अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्' रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाब्वा । कर्कन्ध्वा । अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वोः' इति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् । प्राणिजातेस्तु कृकवाकुः । रज्ज्वादेस्तु रज्जुः । हनुः ।

*बाह्वन्तात्संज्ञायाम् ।* [ ४-१-६७ ]

स्त्रियामूङ् स्यात् । भद्रबाहूः । संज्ञायां किम्–वृत्तबाहुः ।

---

त्स्येकादेशो नान्तवदिति ज्ञापनाच्च । **अध्वर्युरिति**—अध्वरं यज्ञं यातीत्यर्थे 'मृगय्वादयश्च' ( उणा० १ पा० ३७ सू० ) इति याधातोः कुप्रत्यये बाहुलकादध्वरस्यान्त्यलोपे आलोपे च 'अध्वर्युः' इति । अध्वर्युशब्दोऽत्राध्वर्युशाखाध्यायिनीपरः, अध्वर्युशाखाध्यायिवंशोद्भवा वा तद्वंश्यत्वात् तच्छब्दयम् । **'अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्'** इति वार्तिकम् । **अप्राणिजातेश्चेति**—अस्य वाचकानामिति शेषः । रज्ज्वादिभिन्नानामप्राणिजातिवाचकानामपि ऊङ उपसंख्यानमित्यर्थः । नन्वत्र 'उतः' इति सम्बध्यते नवा, नाद्यः 'अलाबूः' इति भाष्योदाहरणविरोधात् । अलाबूशब्दो हि दीर्घोकारान्तः । न द्वितीयः—अदन्तादप्यप्राणिजातिवाचिनो घटादिशब्दादूङापत्तेरित्यत आह—**रज्ज्वादिपर्युदासादिति**–'उतः' इति न सम्बध्यते । न चैवं सति अदन्तादप्यूङ् स्यादिति वाच्यम्, 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः' नञ्युक्तम् इवयुक्तञ्च यत्पदं तत् तद्भिन्नं तत्सदृशञ्च यदधिकरणम् आश्रयस्तद्बोधकम्, तथैवार्थप्रतीतेः' इति न्यायेन रज्ज्वादिसदृशानामुवर्णान्तानामेव ग्रहणात् ।

**अलाब्वेति**—प्रथमान्तं द्वितीयान्तं वा नोदाहृतम्, तत्र 'नोङ्धात्वोः' इत्यस्य शसादावेव प्रवृत्तेः । 'उदात्तमणो हल्पूर्वात्' ( ६-१-१७४ ) इत्युदात्तत्वस्य शसादेरेव विधानात् । जले नावलम्बते नाधः पततीत्यलाबूः । 'नञिलम्बेर्नलोपश्च' ( उणा० १ पा० ९ सू० ) 'ल विस्रसने' इत्यतो नञि उपपदे ऊप्रत्यये तस्य णित्वातिदेशाद् वृद्धौ 'अलाबूः' तत ऊङि यणिटायां 'अलाब्वा' इत्यत्र उदात्तत्वनिषेधः । ऊङः स्थाने यो यण् धात्ववयवस्थाने च यो यण् ततः परे शसादय उदात्ता न स्युरिति तदर्थात् । कर्कं कण्टकं दधातीत्यर्थे धाधातोः 'अन्दूदृम्भूजम्बू' ( उणा० १ पा० ९३ सू० ) कूप्रत्यये उपपदस्य निपातनान्नुमि 'कर्कन्धू' तत ऊङि सवर्णदीर्घे साधुः, 'कर्कन्धूर्बदरी कोलिः' ( अम० २ का० ४ व० ३६ श्लो० ) इति त्रयं बदर्या नाम ।

**कृकवाकुरिति** कृकेन गलेन वक्तीत्यर्थे 'कृके नचः कश्च' ( उणा० १ पा० ६ सू ) कृकशब्दे उपपदे वचेर्धातोर्मुण् प्रत्ययो भवति कश्चान्तादेशः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः । ( अम० २ का० ५ व० १७ श्लो० ) ।

**रज्जुरिति**—सृजतीति रज्जुः । 'सृजेरसुम् च' ( उणा० १ पा० १५ सू० ) इत्युप्रत्ययः स च कित् । असुमागमः 'सृअसज् उ' इति दशायां सस्य लोपे ऋकारस्य यणि आगमसस्य श्चुत्वेन शः, जश्त्वेन जश्च, **'रज्जु'** इति **हनुरिति**—हन्यतेऽनेनेत्यर्थे 'शृस्वृस्निहि' इति (उणा० १ पा० १० सू०) इत्युप्रत्ययः स च नित् । हनुः = कपोलावयवः ।

**'अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः ।'**

इत्यमरः ( २ का० ६ व० ९० श्लो० ) चिबुकस्याधस्ताद् हनुः ।

**'धमन्यञ्जनके शी च हनुर्हट्टविलासिनी ।'**

इत्यमरः ( २ का० ४ व० १३ ) सप्त नामानि नखाख्यगन्धद्रव्यस्य । बदरीतुल्यपत्रत्वात्कोलदलमिति ।

**'बाह्वन्तात्संज्ञायाम्'** ( ४-१-१६७ ) इति । स्त्रियामूङ् स्यात्संज्ञायां गम्यमानायाम् । **भद्रबाहूरिति**—कस्याश्चित्संज्ञा । बाध्यन्ते विलोड्यन्ते पदार्था याभ्यां तौ बाहू । 'अर्जिदृशिकम्भि' इति ( उणा० १ पा० २७ सू० ) उप्रत्यये धस्य हकारादेशे 'बाहुः' इति । भद्रौ बाहू यस्याः सा **'भद्रबाहूः' 'वृत्तबाहुरि'ति**—वृत्तौ, वर्तुलौ बाहू यस्याः सा 'वृत्तबाहुः' । यौगिकोऽयम्, नात्रोङ् ।

पङ्गोश्च । [ ४-१-६८ ]

पङ्गुः । 'श्वशुरस्योकाराकारलोपश्च' । चादूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः । लिङ्गविशिष्टपरिभाषया स्वादयः । श्वश्रूः ।

ऊरूत्तरपदादौपम्ये [ ४-१-६९ ]

**उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ।**

---

**'पङ्गोश्च'** ( ४-१-६८ ) इति । अस्य स्त्रियामूङिति शेषः । अजात्यर्थमिदम् । पङ्गुत्वं न जातिः, शयाने आसीने चाकृत्या दुर्ग्रहत्वात् । एकस्यां व्यक्तौ विकलपादोऽयं पङ्गुरित्युपदेशेऽपि व्यक्त्यन्तरे आसनशयनादिस्थे तस्य दुर्ग्रहत्वात्, अवयवदोषरोगादिजन्यत्वाच्च । किन्तु गुणः । खञ्जति गतिविकलो भवतीत्यर्थे 'खरुशङ्कुपीयु' इति ( उणा० १ पा० ३६ सू० ) इति कुप्रत्यये खञ्जेः पङ्गादेशे 'पङ्गु' इति । तत ऊङ्प्रत्यये पङ्गूरिति । **'श्वशुरस्योकाराकारलोपश्च'** इदं वचनम् 'श्वशुरः श्वश्रा' इति निर्देशसिद्धम् । श्वशुरस्य स्त्री इत्यर्थे पुंयोगलक्षणे ङीषि प्राप्ते तदपवाद ऊङ् विधीयते । यद्यपि अकारस्य लोप इत्युक्ते श्वशब्दाकारस्यापि लोपः प्राप्नोति, तथापि निर्देशसिद्धयर्थमन्त्यस्यैवाकारस्य लोपो न पूर्वस्य, निर्देशासिद्धेः । **श्वशुरस्येति**—'शावशेराप्तौ' इति ( उणा० १ पा० ४४ सू० ) 'अशूङ् व्याप्तौ' इत्यतः शीघ्रार्थके शुशब्दे उपपदे आप्तौ गम्यमानायाम् उरन् प्रत्ययः । श्वशुरो दम्पत्योः पिता । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः । शु इति कृताकारलोप आशुशब्दः ।

वस्तुतस्तु ऊङ्प्रत्ययान्तः श्वश्रूशब्दो भाष्यविरुद्धः । तथाहि—'ङ्याप्प्रातिपदिकात्' इति सूत्रे 'ङ्याब्ग्रहणं किमर्थम् ? न प्रातिपदिकादित्येव सिद्धम्' इति प्रश्ने 'अप्रत्ययः' इति प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोति । इति समाधाने 'एवं सति' 'त्यूङ्' ग्रहणं कर्तव्यम् । इति पुनः प्रश्ने 'तिप्रत्ययस्य तद्धितत्वात्सिद्धम्' इति समाधाय 'ऊङन्तादपि पूर्वान्तवत्त्वेन सिद्धम्' इत्युक्तम् । श्वश्रूशब्दो यद्यूङन्तः स्यात्तदा तदर्थमूङ्ग्रहणस्यावश्यकत्वेन भाष्ये तदनुक्तत्वेन न्यूनतापत्तिर्भाष्यस्य स्यादतोऽव्युत्पन्न एव श्वश्रूशब्द इति कल्प्यते इति नागेशः ।

नच 'यस्येति च' इत्यन्त्यस्याकारस्य लोपः स्यादिति वाच्यम्, ईकारे तद्धिते च परे एव तत्प्रवृत्तेः । 'अन्त्यबाधेऽन्त्यसदेशस्य' इति तु नात्र, अन्त्यस्य बाधाभावात् ।

ननु **'श्वश्रूः'** इत्यत्र कथं स्वादयः । 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य स्वादिविधानेनास्य च ङ्याबन्तत्वाभावादूङन्तस्य प्रत्ययान्तत्वेन प्रातिपदिकत्वाभावादित्यत आह—**लिङ्गविशिष्टेति**—'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषयेत्यर्थः ।

**'ऊरूत्तरपदादौपम्ये'** (४-१-६९) इति । ऊरुरुत्तरपदं यस्येत्यर्थे बहुव्रीहिः । प्रातिपदिकादित्यनुवर्तते । उत्तरपदेत्यनेन पूर्वपदमाक्षिप्यते । तत्रैव **औपम्ये** इत्यन्वेति । उपमीयतेऽनयेत्यर्थे करणेऽङि उपमा=उपमानम् । तस्य भाव औपम्यम् उपमानत्वम् । वस्तुतस्तु उपमानमित्यत्र भावे-ल्युडिति द्योतनाय भावाङन्तेन विवरणम्, औपम्यमित्यत्र स्वार्थे ष्यञ् इति पङ्गोलिनः । ऊरूत्तरपदादिति प्रातिपदिकविशेषणम् । औपम्ये इति सप्तम्यर्थो वाचकत्वम् । पूर्वपदस्योपमानवाचित्वे समुदायस्य औपम्यवाचकत्वसम्भवः ।

**उपमानवाचीति**—उपमानवाचि पूर्वपदं यस्योरूत्तरपदिकस्य तदाह—**उपमानवाचि** पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यादित्यर्थः । **करभोरूरिति**—

**'मणिबन्धादाकनिष्ठं करस्य करभो बहिः'**

इत्यमरः ( २ का० ६ व० ८१ श्लो० ) पाणिप्रकोष्ठसन्धिर्मणिबन्धः । तमारभ्य कनिष्ठापर्यन्तं करस्य मांसलो बहिर्भागः करभ इत्युच्यते । कारभाविवोरूर्यस्या इत्यर्थे बहुव्रीहिः । अत्र

*संहितशफलक्षणवामादेश्च । [ ४—१—७० ]*

**अनौपम्यार्थे सूत्रम् । संहितोरूः । सैव शफोरूः, शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात् ।** लक्षणशब्दादर्शआद्यच् लक्षणोरूः । वामोरूः **'सहितसहाभ्यां चेति वक्तव्यम्' ।**

करभोरुत्वस्य जातित्वाभावादप्राप्तौ विध्यर्थमिदम् । उरुत्वस्याकृतिग्रहणत्वेऽपि करभोरुत्वस्याकृतिग्रहणत्वाभावात्सर्वलिङ्गत्वाच्च । करभोपमांरुरित्यत्र न ऊङ्, करभस्योर्वन्तसमासीयपूर्वपदत्वाभावात् करभोपमस्य सामानाधिकरण्येनोरुपदार्थेऽन्वयादुपमानवाचकत्वाभावाच्च ।

ननु करभोरूरित्यत्र करभशब्दस्योपमानवाचित्वाभावादुपमायाः कथं प्रतीतिरिवादिशब्दसत्त्वे एव तत्प्रतीतेरिति चेन्न, सादृश्यान्तर्भावेण वृत्तिस्वीकारादुपमायाः प्रतीतेः । करभोपमोरुरित्यत्र सादृश्यस्य समासावाच्यत्वात्तदप्रतीतिरिति भेदः । 'ऊर्वन्तात्' इत्येव वक्तव्ये उत्तरपदग्रहणेन पूर्वपदस्याक्षेपाद्यत्र पूर्वपदस्योपमानवाचित्वं तत्रैवास्य प्रवृत्तिस्तत्रैव च सादृश्यान्तर्भावेण वृत्तिश्च ।

औपम्ये किम्—**सुन्दरोरुः** । उत्तरपदग्रहणन्तु पूर्वपदस्याक्षेपार्थम् हस्तिन इव स्वाम्यूरुर्यस्याः 'हस्तिस्वाम्यूरुः' इत्यत्रोङोऽभावार्थञ्च स्वाम्यूरुशब्दस्यैवोत्तरपदत्वं नोरुशब्दस्य ।

**'संहितशफलक्षणवामादेश्च'** ( ४-१-७० ) इति । संहितादिपूर्वपदादप्यूरूत्तरपदात् प्रातिपदिकात् स्त्रियामूङ् स्यादित्यर्थः । पूर्वेणैव सिद्धिरित्याशङ्कावारणायाह— **अनौपम्यार्थमिति**—यत्रेवार्थो न प्रतीयते तदर्थमिदं सूत्रमित्यर्थः । **संहितोरूरिति**—संहितौ=संश्लिष्टावूरू यस्याः सा **संहितोरूरिति** । **सैव शफोरूरिति**– संहितोरुरेव शफोरुशब्देनोच्यते । तदेव विवृणोति-**शफौ=खुरावित्यादिना** । ननु 'शफौ' इत्यसङ्गतम् **'शफं क्लीबे खुरः पुमान्'** इत्यमरे ( २ का० ८ व० ४९ श्लो० ) नपुंसकत्वोक्तेरिति चेन्न, 'शफाविव जर्भुराण' इति श्रुतौ 'ग्राम्यपशुसंघेषु' इति सूत्रस्य व्याख्यावसरे न्यासहरदत्तादिग्रन्थेषु, वाचस्पत्यादिनिबन्धेषु च प्रचुरप्रयोगात् शफशब्दस्य पुंस्त्वमपि बहुसम्मतम्, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यात्, **'शफो भुजो गुदं घोणा'** इति गणरत्नमहोदधौ क्रोडादिगणे पाठात् ।

**'शफः खुरे गवादीनां मूले विटपिनामपि'**

इति हेमचन्द्रकोशाच्च । विश्वकोशे च पुन्नपुंसकतोक्ता । शफोरूरित्यत्र 'शफौ ऊरू यस्या इत्येव विग्रहः । ननु शफत्वमूर्वोः प्रत्यक्षविरुद्धमत आह— **उपचारादिति**—अदेवदत्तेऽपि देवदत्त इतिवत् सादृश्यमूलकशफत्वारोपेण शफत्वेनैवोर्वोः प्रतीतिरत्र । एवञ्च समासस्योपमानोपमेयभावाबोधकत्वेन न पूर्वसूत्राप्राप्तिः । अत्र च वार्तिके शफग्रहणमेव मानम । तदारोपे सादृश्यं निमित्तमित्यन्यत् ।

ननु लक्षणम् = चिह्नम् **'चिह्नं लक्ष्म च लक्षणम्'** इत्यमरात् ( १ का० ३ व० १७ श्लो० ) तथा च लक्षणे ऊरू यस्या इत्यसङ्गतमत आह—**लक्षणशब्दादर्शआद्यजिति**—तथा च लक्षणौ इत्यस्य प्रशंसायाम् 'अर्शआदिभ्यः' इत्यचि प्रशस्तौ शुभसूचकलक्षणयुक्तावित्यर्थः । लक्षणवन्तौ इत्यर्थः । **वामोरूरिति**—वामौ सुन्दरावूरू यस्या इति विग्रहः । **'वामौ वल्गुप्रतीपौ द्वौ'** इत्यमरः ( ३ का० ३ व० १५४ श्लो० ) । वामशब्दः सुन्दरे प्रतीपे च । कथं तर्हि 'पीवरोरु पिबतीव बर्हिणः' इति कुमारः । अत्रोङोऽप्राप्त्या 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वाभावेन **'ह्रस्वस्य गुणः'** इति गुणः स्यादिति चेन्न, प्रमादादेव तथोक्तेः । 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषया गुणाभाव इत्येके ।

**'सहितसहाभ्याञ्चेति वक्तव्यम्'** वार्तिकम् । सहितशब्दात् सहशब्दाच्च परो य ऊरुशब्दस्तदन्तादपि स्त्रियामूङ् स्यादिति वक्तव्यमित्यर्थः । ननु **'समो वा हिततयोः'** इत्यस्य हिततयोः परतः समो वा लोप इत्यर्थेन पूर्वसूत्रे 'संहितग्रहणेनैकदेशविकृतन्यायात् सहितशब्दस्यापि ग्रहणेन

हितेन सह सहितौ ऊरू यस्याः सा सहितोरू। सहेते इति सहौ ऊरू यस्याः सा सहोरूः। यद्वा विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः।

*संज्ञायाम्।* [ ४-१-७२ ]

कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः। संज्ञायां किम्—कद्रुः, कमण्डलुः। अच्छन्दोऽर्थं वचनम्।

*शार्ङ्गरवाद्यञो ङीन्।* [ ४-१-७३ ]

---

'सहितोरूः' इत्यस्य सिद्धया वार्तिके सहितग्रहणं व्यर्थमत आह—**हितेन सह** इत्यर्थे बहुव्रीहि-निष्पन्नस्य' सहितशब्दग्रहणमित्याह **हितेन सहेति**।

सहोरुरिति—ननु सहशब्दस्य विद्यमानार्थकतया सर्वस्या ऊरुविशिष्टतया 'सहोरुः' इति प्रयोगो व्यर्थ इत्यत आह—**सहेति** इति। 'षह मर्षणे' इत्यतः पचादित्वादचि सहशब्दः सहनकर्तृ-बोधक इत्यर्थः। तथा च सहेते श्रमं यौ तादृशावूरू यस्या इत्यर्थः। सहशब्दस्य विद्यमानवाचित्वेऽपि न प्रयोगवैयर्थ्यमित्याह—**यद्वेति**—सहेत्यस्यातिशयेन विद्यमानौ इत्यर्थः। अतिशयश्च विद्यमान-तायामपेक्षितगुणविशिष्टतया बोध्यः। तदाह—**ऊर्वतिशयेति**।

**'संज्ञायाम्'** ( ४-१-७२ ) इति। 'कद्रुकमण्डल्वोश्छन्दसि' ( ४-१-७१ ) इत्यतः कद्रुकमण्डल्वोरिति, ऊङिति चानुवर्तते। प्रातिपदिकादिति स्त्रियामिति चाधिकृतम्। कद्रुकमण्ड-ल्वोरिति पञ्चम्यर्थे षष्ठी छान्दसत्वात्तदाह—**कद्रुकमण्डल्वोरित्यादि**। कद्रुकमण्डलुभ्यामित्यर्थः। अत्र कद्रुशब्देन पन्नगमातुर्ग्रहणम्। तथा च रामायणम्—'सुरसा जनयन्नागान् राम! कद्रूस्तु पन्नगान्' इति ( अरण्य० १४ सर्ग० २८ श्लो० ) यद्यपि 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरे वर्णवाचकोऽपि कद्रुशब्दस्तथापि तस्य न ग्रहणम्, कमण्डलुश्चतुष्पाज्जातिविशेषे इति तत्साह-चर्यात्प्राणिवाचकस्य पन्नागमातृवाचकस्यैव ग्रहणात्। कद्रूर्नागमातुः संज्ञा। कमण्डलुर्मृगविशेषस्य संज्ञा। अत एव 'चतुष्पाद्भ्यो ढञ्' इति सूत्रोदाहरणम् 'कामण्डलेयः' इति वक्ष्यते। पात्रपर्यायस्य न ग्रहणं तस्य स्त्रियामप्रयोगात्। **संज्ञायां किमिति**—

सूत्रमेव किमर्थमिति प्रश्नः। संज्ञायामित्यस्याभावे 'कद्रूः, कमण्डलूः' इति संज्ञायां यदुदा-हरणं तदेव न सिध्येत्। पूर्वसूत्रे 'छन्दसि' इत्युक्त्या लोके संज्ञायां तदप्रवृत्तेः। तस्मात्सूत्रमा-वश्यकम्। मूले संज्ञायां किम्? 'कद्रुः, कमण्डलुः' इति ह्रस्वान्तपाठश्चिन्त्यः।

यद्वा 'संज्ञायाम्' इत्यनुक्त्वा 'च' इति सूत्रं कर्तव्यम्। तथाच 'च' इत्यस्य कद्रुकमण्डलु-भ्यामूङ् स्त्रियाम् इत्यर्थे संज्ञात्वाभावे 'कद्रुः' इत्येवेष्यते। तत्र मा भूदिति संज्ञायामिति मूलोक्तं युक्त-मेवेति **उपाध्यायाः**। **अच्छन्दोऽर्थमिति**—पूर्वसूत्रे 'छन्दसि' इत्युक्त्या लोके संज्ञायामप्राप्तौ वचन-मिति भावः। छन्दसि तु संज्ञायामसंज्ञायाञ्च पूर्वसूत्रेणैव सिद्धिः।

**'शार्ङ्गरवाद्यञो ङीन्'** ( ४-१-७३ ) इति। 'शार्ङ्गरवादि' इति लुप्तपञ्चम्यन्तं पृथक् पदम्। 'अञः' इति षष्ठ्यन्तम्। अत इत्यनुवृत्तम्। तत्रैव अञ इति षष्ठ्यन्तस्यान्वयः। **अञो योऽत इति** जातेरित्यनुवर्तते। तस्यात इति विशेषणम्। तेन तदन्तविधौ अञो योऽकार-स्तदन्तं यज्जातिवाचकमिति। अनुपसर्जनादित्यनुवृत्तम्। तस्य तेन 'श्रून्नेभ्यः' इति प्राप्तस्यैव निषेधात् टित्त्वसामर्थ्येन स्थानिवत्त्वाप्रवृत्तेश्च। षष्ठ्या विपरिणामेन अनुपसर्जनीभूतस्याञो योऽत इत्यन्वयः। शार्ङ्गरवादेस्तु नाकारेऽन्वयः, फलाभावात् शार्ङ्गरवादौ 'एहि, पर्येहि' इत्यस्य 'इह चेष्टायाम्' इत्यत आङ् पूर्वकात्पर्याङ् पूर्वकाच्च 'सर्वधातुभ्य इन्' ( उणा० ४ पा० ११८ सू० ) इन् इतीन्प्रत्ययान्तस्य, भोगवद्गौरीमतोर्हलन्तस्य च पाठाच्च। अत एव शार्ङ्गरवादेरश्चैकधर्मा-वच्छिन्नेऽन्वयाभावेन द्वन्द्वस्याप्राप्त्या 'शार्ङ्गरवादी'ति लुप्तपञ्चमीकं पृथक् पदमित्युक्तम्।

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्स्यात् । शार्ङ्गरवी ।

---

अञो योऽकार इत्यस्य फलं तु 'शूरसेनी' इत्यत्र 'जनपदशब्दात्क्षत्रियादञ्' ( ४-१-१६८ ) इत्यपत्यार्थस्याञः 'अतश्च' ( ४-१-१७७ ) इति स्त्रियां लुकि अञोऽकाराभावेन जातिलक्षणङीषेव न ङीन् । अनुपसर्जनो योऽञ् इत्यस्य फलं तु विदस्य गोत्रापत्यं स्त्रीत्यर्थे 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' ( ३-१-१०४ ) इत्यञि सुन्दरो वैदो यस्यामित्यर्थे बहुव्रीहौ 'सुन्दरवैदी' इत्यत्र जातिलक्षणङीषेव, न ङीन्, अञ उपसर्जनत्वात् । जातिलक्षणे कृदिकारलक्षणे च ङीषि प्राप्ते वचनम् । भोगवद्गौरीमद्भ्यां तु 'उगितश्च' इति प्राप्ते ङीन्विधानम् ।

ननु भोगशब्दो घञन्तः, गौरिशब्दोऽपि 'अत इञ्' इतीञन्तः । द्वावपि ञित्स्वरेणाद्युदात्तौ । ताभ्यां मतुप् पित्त्वादनुदात्त इति ङीप्ङीनोर्नास्ति स्वरे भेद इति चेन्न, 'उगितश्च' ( ४-१-६ ) इति ङीपि सति 'उगितश्च' ( ६-३-४५ ) इति 'भोगवतितरा, गौरिमतितरा' इत्यत्र विकल्पेन ह्रस्वत्वापत्तेः । ह्रस्वविषायके उगितश्च इति सूत्रे चशब्दस्य इत्यर्थकतया 'उगितः' इतिशब्देन विधीयमाना या नदी तस्या एव ग्रहणेन ङीनस्तत्त्वाभावेन ङीनो 'घरूपकल्प' इति नित्यह्रस्वत्वविधानार्थं तयोः पाठात् । गणे 'भोगवद्गौरिमतोः संज्ञायाम्' इति पाठात् संज्ञायां ङीनेव । अन्यत्र ङीप् । ह्रस्वश्च विकल्पितः । अत्र पुत्रशब्दमपि केचित्पठन्ति । तदुदाहरणं तु शैलपुत्रीत्यादि बोध्यम् । गौरादावपि पुत्रशब्दस्तेन ङीषपि पक्षे ।

केवलः पुत्रशब्दः स्त्रियां नास्तीति न भ्रमितव्यम् **'पुत्रीव हर्षं हृदये तनोति, कुर्वे तदुर्वीपतिपुत्रि सर्वम्'** इति प्रयोगविरोधात् । पुत्रशब्दः कन्यायां नास्तीत्यपि न,

**'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे'**

इत्यमरोक्तेः । अत एव 'प्रत्ययस्थात्' इतीत्वप्रकरणे 'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्त्तिके पुत्रिका इति निर्देशः संगच्छते ।

यत्तु 'कारे सत्यागदस्य' ( ६-३-७० ) इति सूत्रभाष्ये 'सूतोगराजभोजकुलमेरुभ्यो दुहितुः पुत्रड् वा' इति वार्तिकं तद् व्यर्थम्, सूतस्य पुत्रीत्यर्थे पुत्रीदुहितृशब्दाभ्यां तत्पुरुषे सूतपुत्री सूतदुहिता इत्यादिप्रयोगाणां सिद्धेः । नच ङीपि ङीनि स्वरे भेदः, टित्त्वान्ङीपि उदात्तनिवृत्तिस्वरेणान्तोदात्तः, ङीनन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे भेदाभावादिति चेन्न, सूतादिपुंशब्देभ्यः ङीनन्ते तत्पुरुषे 'पुत्रः पुंभ्यः' इत्यनेन पुंशब्दात्परपुत्रशब्दात्तत्पुरुषे पुत्रस्यादिरुदात्त इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुत्रशब्दोकारस्योदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः, अनुबन्धकत्वादत उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति स्वरभेदार्थं पुत्रडादेशचारितार्थ्यात् । 'नादिन्याक्रोशे पुत्रस्य' इत्यस्य पुत्रटि अप्रवृत्तिस्तु न फलम्, आदिनीशब्दपरत्वाभावात् । पुत्रटि स्थानिवत्त्वेन दुहितृशब्दतया 'नद्यट्' इति निषेधोऽपि न फलम्, तेन 'ऋन्नेभ्यः' इति प्राप्तस्यैव निषेधात् टित्त्वसामर्थ्येन स्थानिवत्त्वाप्रवृत्तेश्च । पुत्रशब्दस्य जातिवाचकत्वाभावेऽपि गणे पाठसामर्थ्यान् ङीन् । अनेन जातिलक्षणङीषेव बाध्यते, पुंयोगे त्वस्याप्राप्त्या शार्ङ्गरवस्य स्त्रीत्यर्थे पुंयोगलक्षणङीषेव ।

अत्र गणे—शार्ङ्गरवादयः पञ्चाणन्ताः, कामण्डलेयादयः पञ्च ढगन्ताः, वात्स्यायनमौञ्जायनौ फगन्तौ, कैकेयो ढगन्तः, काव्यशैव्यौ यञन्तौ, एहिपर्य्येहिशब्दौ कृदिकारान्तौ, आश्मरथ्यो यञन्तः, औदपानः शुण्डिकाद्यणन्तः, अरालचण्डालौ जातिवाचकौ, भोगवद्गौरिमतोः संज्ञायाम् । घादिषु नित्यह्रस्वार्थम् ।

**शार्ङ्गरवीति**—शृङ्गपर्वतशृङ्गे रौतीत्यर्थे रौतेः क्विपि शार्ङ्गरवादेरिति निर्देशात् तुकोऽभावे शृङ्गरोरपत्यमित्यर्थेऽणि आदिवृद्धौ रपरत्वे 'ओर्गुणः' इति गुणे 'गोत्रञ्चेति जातित्वात् प्राप्तं ङीषं बाधित्वा ङीन् । स्वरे भेदः ।

वेदी। 'जातेः' इत्यनुवृत्तेः पुंयोगे ङीषेव। 'नृनरयोर्वृद्धिश्च' इति गणसूत्रम्। नारी।

वेदीति—वेत्तीति विदः 'इगुपधज्ञा' इति के तस्य गोत्रापत्यं स्त्रीत्यर्थे 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इति गोत्रत्वेन जातित्वात्प्राप्तं ङीषं बाधित्वा ङीन्। आद्युदात्तोऽयम्। अञो योऽकार इत्यर्थेन 'शूरसेनी' इत्यत्र ङीन् न। शूरसेनस्यापत्यमित्यर्थे 'जनपदशब्दात्' इत्यञि तस्य स्त्रियाम् 'अनश्च' इति लुकि अञोऽकाराभावात् न ङीन्, किन्तु जातिलक्षणङीषेव।

अञो योऽकार इत्यर्थे मानन्तु 'न प्राच्यभर्गादियौधेयादिभ्यः' (३-१-१७८) इति यौधेयादिग्रहणमेव। तद्धि-'पर्श्वादिभ्यादणञौ' (५-३-११७) इति स्वार्थिकाञः 'अतश्च' (४-१-१७७) इति स्त्रियां प्राप्तस्य लुकः प्रतिषेधार्थम्। तत्फलन्तु अञन्तात् ङीन् यथा स्यात्। ढगन्तत्वात् ङीन्मा-भूत्। यदि त्वञन्तान्ङीनित्येवार्थः स्यात्तदा निषेधाभावे लुक्यपि प्रत्ययलक्षणेनाञन्तात् ङीषं बाधित्वा ङीन् स्यादेवेति लुङ्निषेधो व्यर्थ एव स्यात्। अञो योऽकार इत्यर्थे तु लुकि अञोऽकाराभावेन ङीन् न स्यात्। न च प्रत्ययलक्षणेनाकाराश्रयणम् 'वर्णाश्रये नास्ति प्रत्ययलक्षणमि'ति निषेधात्। अञो योऽकार इत्यर्थे एव लुङ्निषेधस्य चारितार्थ्यम्।

'नृनरयोर्वृद्धिश्च' इति गणसूत्रम्। चेन ङीन् नयतेः 'नयतेर्डिच' (उणा० २ पा० १०० सू०) इति ऋप्रत्यये डित्त्वात् टिलोपे 'नृ' इति। 'नॄ नये' इत्यतः 'नृणाति—नयत्यात्मानमुत्कर्षमित्यर्थे पचाद्यचि 'नर' इति। नृशब्दात् 'ऋन्नेभ्यः' इति प्राप्तं ङीपम्, नरशब्दात् 'जातेरस्त्री' इति प्राप्तं ङीषञ्च बाधितुमिदं गणसूत्रम्। ननु नरशब्दे 'अलोऽन्त्यस्य' इति परिभाषयान्त्यस्यैव वृद्धिः स्यात्। न चान्त्यस्य 'यस्येति च' इति लोपेनापहारादनन्त्यस्याकारस्यैव वृद्धिः स्यादिति वाच्यम्, प्रत्ययसन्नियोगेन विहिताया वृद्धेरन्तरङ्गत्वेन परमपि लोपं बाधित्वा पूर्वं प्रवृत्तेः। न च वृद्धौ कृतायामपि लोपस्य प्राप्त्या वृद्धेर्वैयर्थ्येन लोपाभावः, वृद्धेर्वैयर्थ्येन 'गुणे त्वन्याय्यकल्पना' इति न्यायेन अलोऽन्त्यपरिभाषाया एव बाधौचित्यात्, नृशब्दे नकारात्परस्यैव वृद्धिरिति तत्साहचर्य्यात् नरशब्देऽपि नकारात्परस्यैव वृद्धेरौचित्याच्च।

यद्वा गणसूत्रे लुप्ताकाररेफान्तानुकरणम्। नरोऽनरः, ना च नरश्चेति द्वन्द्वः। तयोर्वृद्धिः नृशब्दस्य नरोऽकारस्य च वृद्धिरित्यर्थः। रेफान्तानुकरणे एक एवाकारस्तस्य वृद्धिरिति भावः। यद्वा नरस्य अः, नरः शकन्ध्वादित्वात्पररूपेण प्रश्लिष्टस्याकारस्य प्रश्लेषसामर्थ्यादाद्यस्यैव वृद्धिः।

अन्ये तु वार्तिके वृद्धिपदश्रुत्या 'इको गुणवृद्धी' इति परिभाषया 'इकः' इत्यस्योपस्थित्या नृशब्दस्यैव वृद्धिः। नरग्रहणं तु 'नरी' इत्यत्र ङीनर्थमेव। तदपरे न क्षमन्ते। तथा सति गणे पृथगेव पाठे कर्तव्ये वार्त्तिके सहपाठस्य वैयर्थ्यापत्तेः। परन्त्वत्र पक्षे ङीनः प्रकृतेरनिर्देशात् 'वानरी' इत्यत्रापि लोपापत्तिः। यदि तु अर्थवत एव नरीग्रहणमित्युच्यते तदा वानरघटकान्नरान्न ङीन्, अर्थवत एव नरो ग्रहणात्। वस्तुतस्तु इदं गणसूत्रमनार्षम्, नुर्नरस्य च धर्म्या नारी इति 'ऋतोऽञ्' इति सूत्रेण तत्रैव 'नरस्य चेति वक्तव्यम्' इति वार्त्तिकेन चाञा आद्युदात्तनार्याः सिद्धेः। न च नरधर्म्या इत्यर्थे नारीत्यस्य सिद्धावपि नरत्वजातिविशिष्टा इत्यर्थे ङीनन्तस्य सिद्ध्यर्थमिदं वार्तिकम्, रूढ्या योग्यतया च तद्धर्म्यत्वे नरत्वजातिविशिष्टस्यैव बोधात्।

अन्यार्थरूपेण सिद्धस्यान्यत्रार्थे प्रयोग इत्यर्थस्य भाष्यादेव लाभात्। तथाहि—'तव्यत्तव्यानीयरः' (३-१-९६) इति सूत्रे भाष्ये 'वसेस्तव्यत् कर्तरि णिच्च' इति वार्तिकं वास्तुनि भवो वास्तव्य इति दिगादियता संसाध्य प्रत्याख्यातम्। तत्र नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कार्य्यमिति कैयटः। रूढ्या सर्वदोषपरिहार इति तदाशय इति नागेशः। न च वार्तिके नरग्रहणं व्यर्थम् नृ-शब्दात् 'नारी' इत्यस्य पुंयोगलक्षणङीषा 'नरी' इत्यस्य च सिद्धेरिति वाच्यम्, नरत्वजातिविशिष्टेत्यर्थे 'नरी' इत्यस्य सिद्ध्यर्थं तत्सत्त्वात्।

*यङश्चाप्* । [ ४-१-७४ ]

यङन्तात्स्त्रियां चाप्स्यात् । यङ इति ञ्यङ्ष्यङोः सामान्यग्रहणम् । आम्बष्ठ्या । कारीषगन्ध्या । 'षाद्यञश्चाब्वाच्यः' । शार्कराक्ष्या । पौतिमाष्या ।

*आवट्याच्च* । [ ४-१-७५ ]

अस्माच्चाप्स्यात् ।

---

'यङश्चाप्' ( ४- -७४ ) इति पकारः 'हल्ङ्याब्भ्यः' इति सूत्रे आब्ग्रहणेन ग्रहणार्थः । चकारः 'चितः' ( ६-१-६३ ) इत्यन्तोदात्तार्थः । केवलयङन्तप्रातिपदिकस्याभावात् 'यङ्' इति रूपस्य ञ्यङि ष्यङि च सत्त्वात् 'यङश्च' इत्यत्र सामान्यग्रहणविघातार्थं ङित्करणसामर्थ्याच्च सामान्यग्रहणमित्यर्थः ।

ननु क्रौड्यादिषु गर्गादियञन्तः 'गौकक्ष्य शब्दः' 'क्रौड्यादिभ्यश्च' ( ४-१-८० ) इति ष्यङ्विधानाय पठ्यते । तत्पाठो व्यर्थ एव । ष्यङि यङश्चाप्सिद्धयर्थं एव पाठः । तत्पाठो मास्तु 'षाद्यञश्चाप्' इत्येव चाप्सिद्धः । न च 'गौकाक्षीपुत्रः' इत्यत्र 'ष्यङः सम्प्रसारणम्' इति सम्प्रसारणार्थः, सम्प्रसारणरूपफलस्य भाष्यकृताऽनभ्युपगमात् ।

तथा हि—'षाद्यञश्चाप् वक्तव्यः । शर्कराक्ष्या, पौतिमष्या । तत्रायमप्यर्थः । गोकक्ष्यशब्दः क्रौड्यादिषु पठ्यते । स न पठितव्यो भवति । यदि न पठ्यते । गौकक्षीपुत्र इति सम्प्रसारणं न प्राप्नोति । इष्टमेवैतत्संगृहीतम्—'गौकक्ष्यापुत्र' इत्येव भवितव्यम् ।

एवं हि सौनागाः पठन्ति—ष्यङः सम्प्रसारणे गौकक्ष्यायाः प्रतिषेध इति । पाठपक्षेऽयमप्रतिषेधः । पाठाभावे तु ष्यङोऽप्राप्त्या प्रतिषेधाभावः ।

आम्बष्ठ्येति—वैश्यायां ब्राह्मणाज्जातः सुतोऽम्बष्ठः । स तु चिकित्सावृत्तिः । 'अम्बष्ठो वैश्याद्विजन्मनोः' इत्यमरः ( २ का० १० व० २ श्लो० ) अम्बष्ठस्यापत्यं स्त्रीत्यर्थे 'वृद्धेत्कोसलात्' ( ४-१-१७१ ) इति ञ्यङि वृद्धौ 'आम्बष्ठ्यशब्दाच्चापि रूपम् । ष्यङन्तमुदाहरति—कारीषगन्ध्येति—करीषम् = शुष्कगोमयम् 'गोविड्गोमयमस्त्रियाम् । तत्तु शुष्कं करीषोऽस्त्री' इत्यमरः ( २ का० वि० ५० श्लो० ) । अत्र करीषपदं करीषगन्धसदृशपरम् । तथा च करीषं गन्धो यस्या इत्येव विग्रहः । अन्यथा समानाधिकरणबहुव्रीह्यनापत्तिः । 'उपमानाच्च' ( ५-४-१३७ ) इति गन्धशब्दस्येकारोऽन्तादेशः । करीषगन्धिशब्दात् तस्या गोत्रापत्यार्थेऽणि तस्य 'अणिञोः' ( ४-१-७८ ) इत्यणः स्त्रियां ष्यङादेशे षकारङकारयोरित्त्वे यङन्तात् चापि 'कारीषगन्ध्या' इति । यद्यपि स्त्रियामेव ष्यङ् विहित इत्युक्तार्थानामप्रयोग इति न्यायात् स्त्रियां चाप् न प्राप्नोति, तथापि ष्यङो ङित्करणस्य यङ्ग्रहणेन ग्रहणार्थतया चापो विधानाभावे वैयर्थ्यापत्त्या तत्सामर्थ्यादुक्तन्यायाप्रवृत्तिः ।

'षाद्यञः' इति वार्तिकं नापूर्वम्, किन्तु 'आवट्याच्च' इति सूत्रेऽनुक्तसमुच्चयार्थकचशब्देन लभ्यते । 'षाद्यञश्चाप् वक्तव्यः' इति वार्तिकम् । षकारात्परो यो यञ् तदन्तादपि स्त्रियां चाप् वक्तव्य इत्यर्थः । शार्कराक्ष्येति—शर्करेवाक्षि यस्या इत्यर्थे बहुव्रीहौ 'अदर्शनात्' इति प्रतिषेधात्समासान्तस्याचोऽभावे 'शर्कराक्षि' इति ततोऽपत्यार्थे 'गर्गादिभ्यो यञ्' इति यञि 'यस्येति च' इतीकारलोपे यञः षात्परत्वाच्चापि रूपम् । पौतिमाष्येति—पूयी विशरणे दुर्गन्धे च इत्यतः क्विपि यलोपे पूतिः = दुगर्न्धवान् माषो यस्या इत्यर्थे बहुव्रीहौ पूतिमाषस्यापत्यमित्यर्थे गर्गादित्वाद्यञि ततः चापि पौतिमाष्येति ।

'आवट्याच्च' (४-१-७५) इति । अस्मादिति—आवट्यशब्दादित्यर्थः । अवटः=ऐन्द्रजालिकजीविकावानिति शब्दस्तोममहानिधिः । तस्यापत्यमित्यर्थे गर्गादित्वाद्यञि वृद्धौ 'आवट्यशब्दात् 'यञश्च' इति प्राप्तं ङीपं बाधित्वा चाप् ।

'यञश्च' इति ङीपोऽपवादः। अवटशब्दो गर्गादिः, आवट्या।

*तद्धिताः।* [ ४-१-७६ ]

आपञ्चमसमाप्तेरधिकारोऽयम्।

*यूनस्तिः।* [ ४-१-७७ ]

युवन्शब्दात्तिप्रत्ययः स्यात्, स च तद्धितः। लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः।

---

भाष्ये 'आवट्याद्यञः ष्फश्चापः' इति वार्तिकम्। यञन्तादावट्यशब्दात् चापं बाधित्वा पूर्वविप्रतिषेधेन ष्फो भवति। 'आवट्याद्यञश्चापोऽवकाशः, उदीचामावट्या, ष्फस्यावकाशः, गार्ग्यायणी। आवट्यशब्दात्प्राचामुभयं प्राप्नोति। 'आवट्यायनी' ष्फो भवति पूर्वविप्रतिषेधेन। ततो वार्तिकलभ्योऽर्थो योगविभागेन साधितः। 'प्राचां ष्फः तद्धितः सर्वत्र' क्व सर्वत्र? यत्र ष्फश्चान्यश्च प्राप्नोति। ष्फ एव तत्र भवति 'एतेन प्राचां' आवट्यायनी' इति साधितम्। ततो 'लोहितादिकतन्तेभ्यः' 'सर्वत्र' क्व सर्वत्र? प्राचां च उदीचां च, तेन शार्कराक्ष्यायणी, गौकक्ष्यायणी' इत्यपि सिद्धं भवति।

'तद्धिताः' ( ३-१-७६ ) इति। अधिकारसूत्रमिदम् तदाह—**आपञ्चमेति**—अत आरभ्यमाणाः प्रत्ययास्तद्धितसंज्ञका भवन्तीत्यर्थः। ननु तद्धिताधिकारः 'अजाद्यतः' प्रागेवास्तु, तथा सति 'प्राचां ष्फः' इत्यत्र तद्धिताधिकारेणैव सिद्धया तद्धितग्रहणम्, 'यस्येति च' ईतिग्रहणम् 'औङः श्याम्' इति वार्त्तिकम्, डापि डकारानुबन्धकरणञ्च विफलम्, ङ्यादिषु तद्धितपरत्वेनैव 'यस्य' इत्यस्य, 'नस्तद्धिते' इत्यस्य च प्रवृत्त्या लोपसिद्धेः। टाबादिषु 'चुटू' इति न्यासेन 'अतद्धिते' इति पर्युदासेऽपि इत्त्वसिद्धेः। ङीबादिस्थाने टीबादीति न्यासेनैवेष्टसिद्धेः।

नच टावाद्यन्तस्य तद्धितान्तत्वेन प्रातिपदिकतया फिट्स्वरापत्तिः, टाबादिषु पकारषकाराद्यनुबन्धकरणेन तदप्रवृत्तेः, फिट्पदेन प्रकृतिप्रत्ययशून्यस्यैव ग्रहणाच्च। अन्यथा लिङ्गविशिष्टपरिभाषया फिट्स्वरो दुर्वार एव स्यादिति चेन्न, 'मृद्वी' इत्यादौ 'ओर्गुणः' इत्यस्यापत्तेः। न च 'यस्येति च' इत्यत्रेतिग्रहणं कृत्वा तेन तद्धितनिमित्तकं कार्य्यं ङीबादीकारादौ नेति ज्ञापनान्न दोष इति वाच्यम्, 'कुरुः' इत्यत्र 'ओर्गुणः' इति गुणस्य दुर्वारत्वात्।

सामान्यतः 'स्त्रीप्रत्ययेषु तद्धितकार्य्यं न' इति ज्ञापने तु 'आसुरायणी' इत्यत्रेकारलोपानापत्तेः। 'शुनी' इत्यत्र 'तद्धिते' इति सम्प्रसारणानापत्तेः, 'दण्डिनी' इत्यादौ 'नस्तद्धिते' इति टिलोपापत्तेश्च। 'तद्धिताः' इति तूपसंख्येयानाम्, ज्ञापकसिद्धानामत्यन्तं संग्रहार्थञ्च। महासंज्ञाकरणन्तु अन्वर्थतालाभाय। तेन तेभ्यो हितस्तद्धिता इत्यर्थबोधनद्वारा अनुक्ता अपि 'ग्रामटिका' इत्यादिषु ग्रामशब्दान् अल्पो ग्राम इत्यर्थे ग्रामशब्दात् 'टिकच्' प्रत्ययादीनां प्रयोगः सिध्यति।

**'यूनस्तिः'** ( ४-१-७७ ) इति। **तिप्रत्यय इति**—स्त्रियामिति शेषः। 'ऋन्नेभ्यः' इति ङीपोऽपवादोऽयम्। ननु अत्र 'तद्धिताः' इत्यस्य सम्बन्धो व्यर्थः।

नच 'कृत्तद्धित' इति प्रतिपादिकसंज्ञार्थः। प्रातिपदिकसंज्ञाया अभावेऽपि लिङ्गविशिष्टपरिभाषया स्वाद्युत्पत्तिसिद्धेरित्यत आह—**लिङ्गविशिष्टेति—उत्तरार्थं इति**—वक्ष्यमाणेषु ष्यङादिषु सम्बन्धार्थः।

ननु लिङ्गविशिष्टपरिभाषयैव युवतिशब्दात्स्वाद्युत्पत्तिसिद्धौ इहाधिकारो व्यर्थ इति चेन्न, तदनित्यज्ञापनाय इहकरणस्य साफल्यादिति केचित्। एतस्याः परिभाषायाः 'ङ्याप्प्रातिपदिकात्' इति सूत्रेऽनित्यत्वस्य परिगणनात् 'शक्तिलाङ्गलाङ्कुश' इति वार्तिके घटघटीग्रहणाच्चानित्यत्वे सिद्धे इहकरणं स्पष्टार्थमेव।

युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तान्ङीपि बोध्यम् ।

## ॥ इति स्त्रीप्रत्ययप्रकरणम् ॥

---

युवतिरिति—यौति = पत्न्या पत्याऽऽत्मानं मिश्रयतीत्यर्थे 'कनिन् युवृषितक्षि' ( उणा० १ पा० १५६ सू० ) इति कनिन्प्रत्ययान्ताद् युवन्शब्दात् निप्रत्यये 'स्वादिषु' इति पदत्वान्नलोपः ।

'ननु युवतीकरनिर्मथितम्' इत्यादिप्रयोगाः कथं सिध्येयुः ? अत्र केचित्—'सर्वतोऽक्तिन्नर्थात्' इति बह्वादिगणसूत्रेण वैकल्पिको ङीष् । नच तिप्रत्ययेन स्त्रीत्वस्योक्तया ङीष् न स्यादिति वाच्यम्, स्त्रीप्रत्यये 'उक्तार्थानाम्' इति न्यायाप्रवृत्तेः । वयोवाचकानां वैकल्पिकजातित्वस्य भाष्यसम्मततया 'इतो मनुष्यजातेः' इति तिप्रत्ययान्तान्ङीषा वा सिद्धेः । न चैवमपि युवतीनां समूहो यौवतमिति न सिद्ध्येत् । किन्तु 'तस्य समूहः' इत्यणि 'भस्याढे तद्धिते' इति पुंवद्भावे 'यौवनम्' इत्येव स्यादिति वाच्यम्, युधातोर्बाहुलकादौणादिके कतिप्रत्यये ततः समूहेऽणि तत्सिद्धेः । इति क्लेशं परिहरन्नाह—शत्रन्तादिति—युधातोर्लटि 'लटः शतृशानचौ' इति लटः स्थाने शत्रादेशे उगित्त्वात् 'उगितश्च' इति ङीप् तत एव समूहे 'अनुदात्तादेरञ्' ( ४-२४ ) इत्यञि यौवतमित्यपि सिध्यति । 'यूनस्तिः' इति तिप्रत्ययान्तादणि तु 'भस्याढे' इति पुंवद्भावेन तिप्रत्ययनिवृत्तौ 'अन्' इति प्रकृतिभावेन टिलोपाभावे 'यौवनम्' इति । तिप्रत्ययान्तादप्यणि 'भिक्षादिषु पाठसामर्थ्यान्न पुंवद्भावः' इति वृत्तिस्तु चिन्त्या, 'भिक्षादिभ्योऽण्' ( ४-२-३८ ) इति सूत्रस्थभाष्यविरोधात् । तथा हि—'प्रत्ययविधौ भिक्षादिषु युवतिग्रहणानर्थक्यम् । किं कारणम् ? पुंवद्भावस्य सिद्धत्वात्' इति । ननु युवतिशब्दस्यानुदात्तादित्वात् 'अनुदात्तादेरञ्' ( ४-२-४४ ) इत्यञ्बाधनार्थः पाठ इत्याशङ्कायां भाष्ये 'पुंवद्भावस्य सिद्धत्वात्' इति तथा च युवन्शब्दस्याद्युदात्ततया 'तस्य समूहः' इत्येवाण् सिद्धः ।

ननु सति प्रत्यये भत्वात्पुंवद्भाव इत्यण् न स्यात्, युवतिशब्दस्याद्यनुदात्ततयाऽञा बाधादिति शङ्कायामाह भाष्ये—'सिद्धश्च प्रत्ययविधौ' इति । अढे प्रत्यये विवक्षिते पूर्वं पुंवद्भावः पश्चात्प्रत्यय इत्यर्थः । अत एव दरदोऽयं दारदीयः इत्यत्र 'वृद्धाच्छः' इति छः सिध्यति । 'अतश्च' इति लुको निवृत्त्या दारद इत्यस्य वृद्धत्वात् । तथाच प्रकृते प्रत्यये विवक्षिते तिप्रत्ययस्य पुंवद्भावेन निवृत्त्या युवन्शब्दस्याद्युदात्ततया 'तस्य समूहः' इत्येवाणा सिद्धेः । तथा च वृत्तौ भिक्षादिषु पाठसामर्थ्यात् पुंवद्भावनिवृत्तिरिति वृत्तेश्चिन्त्यत्वं स्पष्टमेति दिक् ।

पदवाक्यप्रमाणपारावारीणसर्वतन्त्रस्वतन्त्रविद्वन्मूर्द्धन्यबलियामण्डलान्तर्गतोदयीछपराग्रामवास्तव्यश्रीपलटशर्मोपाध्यायतनुजन्मश्रीसखीदेवगर्भजश्रीसभापतिशर्मोपाध्यायविरचितायां तेषां प्रधानशिष्यपण्डितप्रवरगुर्जरप्रान्तवास्तव्यश्रीनीलकण्ठशर्मतनयश्रीबालकृष्णशर्मपञ्चोलिसम्पादितायां लक्ष्मीव्याख्यायां स्त्रीप्रत्ययप्रकरणं समाप्तम् ।

॥ इति शम् ॥

# अथ कारकप्रकरणम्

*प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । [ २-३-४६ ]*

---

ग्रन्थनिर्माणे क्रमद्वयम् । आरोहणरूपः, अवरोहणरूपश्च । वाक्येनैव व्यवहारदर्शनाद्वाक्यस्य च धातुमूलकतया पूर्वं धातवस्तत्प्रकृतिकप्रत्ययास्ततो नामादीनि यदि बोधितानि भवेयुस्तदारोहणक्रमः । पूर्वं वाक्यनिमित्तककार्य्यप्रदर्शनमभिधाय तद्घटकानां निदर्शनेन निर्माणमवरोहणक्रमः । अर्थावबोधप्रयोजकपदसमुदायो वाक्यम् । प्रायः सन्धेर्वाक्यनिमित्तकतया सन्ध्युपयोगिसंज्ञापरिभाषाप्रकरणप्रदर्शनपूर्वकसन्धिप्रकरणमुल्लिख्य पदप्रकरणमभिधेयम् ।

तत्र 'सुप्तिङन्तं पदम्' इति सूत्रे सुबन्तस्य प्रथमोपात्तत्वेन सुपश्च प्रातिपदिकप्रकृतिकत्वेन प्रातिपदिकसंज्ञोल्लेखनपुरस्सरं तत्प्रकृतिकप्रत्ययानां स्वादीनां स्त्रीप्रत्ययानाञ्च प्रकरणमभिधाय तदर्थबोधनाय कारकादिप्रकरणमित्यवरोहणक्रमेण कौमुदीनिर्माणं प्रतीयते । स्त्रीप्रत्ययान्ता अपि स्वादिप्रकृतय इति तदभिधानानन्तरं स्वाद्यर्थाः के इति जिज्ञासोदेति । यद्यपि स्वादीनामप्येकत्वादिसंख्यारूपा अर्था उक्ताः, परन्तु तन्मात्रार्थकत्वे सर्वेषां स्वादीनामेकवचनानां द्विवचनानां बहुवचनानाञ्च पर्य्यायतापत्तिवारणायार्थविशेषान् दर्शयितुं कारकप्रकरणमारभते—

**'प्रातिपदिकार्थलिङ्गवचनपरिमाणमात्रे प्रथमा'** ( २-३-४६ ) इति । **प्रातिपदिकेति— पदं पदं प्रतीत्यर्थेऽव्ययीभावः ।** पदपदञ्चात्र प्रातिपदिकसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मवत्परम् । उद्देश्यतावच्छेदकधर्मश्च धातुप्रत्ययप्रत्ययान्तभिन्नार्थवत्त्व-कृदन्ततदादित्व-तद्धितान्ततदादित्व-समासत्वैतदन्यतमरूपः । तथाच प्रतिपदमुद्देश्यतया लब्धुमर्हति यत्तत्प्रातिपदिकम् । 'तदर्हति' ( ५-१-६३ ) इत्यनेन द्वितीयान्तात्प्रतिपदशब्दात् ठञि रूपम् । अर्थ्यते = बुध्यते इत्यर्थे 'अर्थ उपयाच्ञायाम्' इत्यतो धातूनामनेकार्थत्वाद् बोधकर्मणि 'अकर्तरि च कारके संज्ञायाम्' इति घञि रूपम् । प्रातिपदिकस्यार्थः = प्रातिपदिकजन्यबोधविषय इति यावत् ।

नन्वेवं सति 'कुत्सिते' ( ५-३-७४ ) इति सूत्रे 'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् । समवेतस्य च लिङ्गं वचनं विभक्तिञ्च' इति भाष्यात् पञ्चकं प्रातिपदिकार्थ इति लभ्यते । भाष्ये द्रव्यशब्देन इदं तदिति परामर्शयोग्यं वस्त्वभिधीयते, समवेतम् सम्बद्धमिति कैयटः । 'स्वार्थम्' इत्यत्र स्वशब्द आत्मीयवचनः । स्वोऽर्थः स्वार्थः । स चानेकप्रकारो जाति-गुण-क्रिया-सम्बन्ध-स्वरूपलक्षणः ।

क्रमेणोदाहरणम्—गौः, शुक्लः, पाचकः, राजपुरुषः, डित्थ इति । भाष्ये 'विभक्तिश्चेत्यस्य कारकमर्थः । एवञ्चात्र स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकस्य पञ्चकस्य प्रातिपदिकार्थपदेन ग्रहणे लिङ्गादिग्रहणस्य वैयर्थ्यापत्तिः ।

तथाहि—यदि यस्य शब्दस्य शक्यार्थे योऽर्थः प्रकारतया भासते स एवार्थः प्रवृत्तिनिमित्तमित्युच्यते । यथा घटे घटत्वम् , 'शुक्लः पटः' इत्यस्य शुक्लगुणवानित्यर्थे शुक्लगुणः प्रवृत्तिनिमित्तम्, शुक्लगुण इत्यर्थे गुणत्वव्याप्यं जातिरूपं शुक्लत्वं प्रवृत्तिनिमित्तमेवं सर्वत्रोह्यम् । प्रातिपदिकस्य लिङ्गं संख्या चार्थः, दधि, मधु इत्यादौ कारकञ्च प्रातिपदिकार्थ इति पञ्चकस्य ग्रहणे लिङ्गसंख्ययोर्ग्रहणस्य वैयर्थ्यं स्पष्टमेव ।

नियतोपस्थितिकः प्रातिपदिकार्थः ।

---

अतः सूत्रकाराभिमतं प्रातिपदिकार्थमाह— नियतेति—नियता=व्यापिका उपस्थितिः=बोधो यस्यार्थस्य स नियतोपस्थितिकोऽर्थः प्रातिपदिकार्थः। उपस्थितिशब्देन स्मृतिर्न ग्राह्या, यस्य प्रातिपदिकस्य येष्वर्थेषु शक्तिस्तेषां सर्वेषां युगपत्स्मृतेः सत्त्वेनोपस्थितेर्नियतत्वेन लिङ्गादिग्रहणवैयर्थ्यस्य तादवस्थ्यात् ।

उपस्थितिपदेन शाब्दबोधस्य ग्रहणे तु तटः, तटी, तटम्-इत्यादौ विसर्गसमभिव्याहारे पुंस्त्वस्यैवाम्समभिव्याहारे नपुंसकत्वस्यैव ङीष्समभिव्याहारे स्त्रीत्वस्यैवेति कस्यापि लिङ्गस्य यत्र यत्र तटशब्दस्तत्र तत्रोपस्थितेरभावेन लिङ्गविषयकोपस्थितिर्न व्यापिकेति अनियतलिङ्गस्थले कस्यापि लिङ्गस्योपस्थितिर्न व्यापिकेति लिङ्गग्रहणं सार्थकम् । एवं तटः तटौ, तटाः-इत्यादौ क्वचिदेकत्वस्यैव क्वचिद् द्वित्वस्य क्वचिद्बहुत्वस्येति कापि संख्या नियमेन नोपतिष्ठते । अनियतलिङ्गस्यानियतसंख्यायाश्च यत्र प्रातिपदिकेन भानं ततोऽपि प्रथमाविधानाय लिङ्गसंख्याग्रहणम् ।

ननु नियतोपस्थितिकः प्रातिपदिकार्थ इत्यस्य व्यापकतावती या उपस्थितिस्तद्विषयोऽर्थः-इति स्वीकारे व्यापकता व्याप्यतानिरूपिता प्रकृते किंनिष्ठा व्याप्यता इत्याकाङ्क्षायां प्रातिपदिकनिष्ठेति गृहाण ।

ननु प्रातिपदिकञ्च वक्तरि बोधश्च श्रोतरीति व्यधिकरणत्वात् व्याप्याधिकरणवृत्तिर्योऽत्यन्ताभावस्तत्प्रतियोगिताऽनवच्छेदकधर्मवत्त्वरूपकत्वं दुर्वचमिति चेन्न, स्वविषयकश्रावणप्रत्यक्षसमवायित्वस्य, स्वनिष्ठशक्तिविषयकोद्बुद्धसंस्काराकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्वस्य च व्याप्यतावच्छेदकसम्बन्धस्य स्वीकारेणादोषात् ।

नन्वेवमपि 'सर्वं वाक्यं क्रियया परिसमाप्यते' इति सिद्धान्तात् क्रियाविषयकबोधस्यापि व्यापकत्वेन क्रियाया अपि प्रातिपदिकार्थत्वापत्तिरिति चेन्न, स्वनिष्ठशक्तिनिरूपकत्वस्यापि व्याप्यतावच्छेदकसंसर्गस्य दानेनादोषात् ।

ननु नानार्थकहर्य्यादिप्रातिपदिकस्थले हरिशब्दनिष्ठव्याप्यतानिरूपितव्यापकताया भिन्नभिन्नार्थकशाब्दबोधेऽसम्भवेन कस्यापि शाब्दबोधस्य व्यापकत्वं न स्यादिति दोषतादवस्थ्यमिति चेन्न, प्रातिपदिकनिष्ठशक्तिविशिष्टत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषात् ।

वैशिष्ट्यञ्च स्वजन्यबोधविषयत्वप्रकारकतात्पर्य्यविषयतापर्य्याप्त्यधिकरणत्व-स्वविशिष्टत्वैतदुभयसम्बन्धेन, सम्बन्धघटकशक्तिवैशिष्ट्यञ्च स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्नप्रकारतावत्त्व-स्वविशिष्टावच्छेदकतावद्विषयतावत्त्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्व—प्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयत्वैतदुभयसम्बन्धेन । स्व = शक्तिः । शक्तिवैशिष्ट्यञ्चावच्छेदकतायाम्, स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वैतदुभयसम्बन्धेन ।

लक्षणसमन्वयश्चेत्थम्—यत्र यत्र शाब्दबोधश्चिकीर्ष्यते तत्र तत्रैतादृशं तात्पर्य्यं भवति वक्तुः, यथा घटपदनिष्ठशक्तिज्ञानजन्यबोधविषयतापर्य्याप्त्यधिकरणं घटः, घटत्वम्, नियतलिङ्गस्थले लिङ्गस्यापि प्रातिपदिकार्थतया पुंस्त्वम्, पुंस्त्वत्वञ्च भवतु' इति तात्पर्य्यीयविषयतापर्य्याप्त्यधिकरणत्वं चतुर्षु । शक्तिविशिष्टत्वमपि चतुर्षु । तथाहि—शक्तिवैशिष्ट्यघटकप्रथमसम्बन्धः स्वप्रयोज्यधर्मिता 'पुंस्त्वविशिष्टो घटः' इत्याकारकशब्दे घटे, तन्निरूपिता पदार्थसम्बन्धावच्छिन्ना प्रकारता घट-घटत्वयोर्नास्तीति स्वाभाववत्त्वरूपसम्बन्धोऽप्यस्तीति प्रातिपदिकार्थत्वं तयोः ।

यद्यपि पुंस्त्वेऽपदार्थसम्बन्धावच्छिन्नप्रकारतावत्त्वमेवेति शक्त्यभाववत्त्वं न गतमिति तस्य प्रातिपदिकार्थत्वानुपपत्तिः प्राप्नोति, तथापि स्वविशिष्टावच्छेदकतावत्त्वरूपः सम्बन्धो नास्तीति एकसत्त्वेऽपि द्वयं नास्तीति न्यायेनोभयसम्बन्धावच्छिन्नशक्तिनिष्ठप्रतियोगिताकाभावो गत इति पुंस्त्वपुंस्त्वत्वयोरपि प्रातिपदिकार्थत्वं सुलभम् ।

तथाहि—स्व( शक्ति )विशिष्टावच्छेदकता प्रकृते दुर्लभा, यतः स्वज्ञानाधीनोपस्थितिप्रयोज्यो बोधः 'घटः पुंस्त्ववान्' इत्याकारकः। घटशब्दस्य घटत्वविशिष्टे घटे, पुंस्त्वविशिष्टे पुंस्त्वे च पृथक् शक्तिरिति पुंस्त्वस्याकाङ्क्षाभास्यसम्बन्धेन घटेऽन्वयः। तादृशबोधनिष्ठो 'घटादिविषयतावान्' इत्याकारको भेदो घटादिविषयतावद्बोधे न सम्भवति, किन्तु 'घटादिविषयतावान् बोधः पटादिविषयतावान्' इत्याकारक एव। भेदीया प्रतियोगिता पटादिविषयतावति, तत्प्रतियोगितावच्छेदकता च पटादिविषयतायाम्। सा चावच्छेदकता 'पटविषयतावान्' इत्याकारकबोधे निरूपकतासम्बन्धेन विषयता विशेषणीभूतेति येन सम्बन्धेन यद्विशेषणं तन्निष्ठावच्छेदकता तत्सम्बन्धावच्छिन्ना।

परन्तु पटादिविषयतानिष्ठभेदीयप्रतियोगितावच्छेदकता न घटादिपदनिष्ठशक्तिविषयविषयतानिरूपकत्वसम्बन्धावच्छिन्ना, किन्तु पटपदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नैवेति घटविषयकबोधनिष्ठभेदीयप्रतियोगितायाम् घटपदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वमप्रसिद्धम्। इति तादृशी अवच्छेदकता घटादिविषयकबोधीयविषयतायां नास्तीति पूर्वोक्तप्रकारतारूपसम्बन्धस्य सत्त्वेऽपि भेदीयप्रतियोगितानिरूपितावच्छेदकता नास्तीति घटपदनिष्ठशक्तिविशिष्टत्वरूपः सम्बन्धो न गत इत्युभयसम्बन्धावच्छिन्नशक्तिनिष्ठप्रतियोगिताकाभाववत्त्वं घटादिषु सुलभम्।

अनियलिङ्गस्थले तु 'तटः' इत्यत्र पुंस्त्वविशिष्टस्तट इत्याकारकः, 'तटम्' इत्यत्र नपुंसकत्वविशिष्टस्तट इति, 'तटी' इत्यत्र स्त्रीत्वविशिष्टस्तट इति। तत्र तटपदनिष्ठशक्तिज्ञानजन्योपस्थितिप्रयोज्यो बोधः पुंस्त्वविशिष्टस्तट इति तत्र स्त्रीत्वविशिष्टतटविषयतावान् न इति भेदमादाय तटपदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकता स्त्रीत्वविषयतायां गता तटनिष्ठधर्मितानिरूपिताऽपदार्थसम्बन्धावच्छिन्ना प्रकारतापीति सम्बन्धद्वयसत्त्वात् तटपदनिष्ठशक्त्यभाववत्त्वरूपो द्वितीयसम्बन्धो न गत इति लिङ्गस्यात्र प्रातिपदिकार्थत्वाभावाल्लिङ्गग्रहणं सार्थकम्।

अयम्भावो यत्रैकयैव शक्त्या द्विविधो बोधस्तत्र भेदप्रतियोगी बोधो भेदानुयोगी बोधश्चैक एव चेत्तदा यमंशमादाय भेदस्तदंशस्य न प्रातिपदिकार्थत्वम्। तटपदनिष्ठैकशक्तिजन्ययोर्बोधयोर्लिङ्गांशमादाय भेदः। तटविषयताया उभयत्र सत्त्वात् तदंशमादाय न भेद इति तटतटत्वयोः प्रातिपदिकार्थत्वम्।

ननु तत्शब्दस्य बुद्धिविषयतोपलक्षिततत्तद्धर्मावच्छिन्ने एकैव शक्तिः। तथा च तत्पदेन यदा 'सः' इत्यत्र राजपुरुषत्वावच्छिन्नस्य बोधस्तदा राजपदार्थस्य तच्छब्दप्रातिपदिकार्थत्वं न स्यात् तत्र पुरुषनिष्ठधर्मितानिरूपितप्रकारतायाः, 'स घटः' इति तत्पदनिष्ठशक्त्या बोधे राजविषयतावान्नेति भेदमादाय राजनि तत्पदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नभेदीयप्रतियोगितावच्छेदकताया अपि सत्त्वेन स्वाभाववत्त्वरूपसम्बन्धस्याभावादिति चेन्न, धर्मितानिरूपितप्रकारतायामपदार्थसम्बन्धावच्छिन्नत्वनिवेशेन 'स राजपुरुषः' इत्यत्र राजनि समासशक्तिभास्यसम्बन्धावच्छिन्नैव प्रकारतेति अपदार्थसम्बन्धावच्छिन्नप्रकारताया अभावेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकशक्त्यभावस्य सत्त्वेनादोषात्।

एवमेव लक्षणसमन्वयः स्वयमूहनीयः। नागेशस्तु लिङ्गादिग्रहणसामर्थ्यादपूर्वस्य नियतोपस्थितिकरूपप्रातिपदिकार्थस्य कल्पनापेक्षया—

'एकं द्विकं त्रिकञ्चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वे पक्षाः शास्त्रे निरूपिताः॥'

इति भाष्यादिसिद्धस्य त्रिकादेर्ग्रहणे लिङ्गादेर्ग्रहणस्य वैयर्थ्येऽपि द्विकस्य ग्रहणे लिङ्गादिग्रहणस्य चारितार्थ्यात् 'सरूपाणाम्' इति सूत्रे न हि आकृतिपदार्थस्य द्रव्यं न पदार्थः, द्रव्यपदार्थस्या-

**मात्रशब्दस्य प्रत्येकं योगः ।**

---

कृतिर्न पदार्थः, इति, 'कस्यचित् किञ्चिद्गुणीभूतं किञ्चित् प्रधानम्' इत्युत्तरभाष्याच्च विशिष्टे शक्त्यवधारणाद्विशिष्टं नामार्थ इति लभ्यते । तस्मात् **'जातिः तदाश्रयश्च प्रातिपदिकार्थः'** ।

अत्र जातिपदं तत्तन्नाम्नस्तत्तत्प्रवृत्तिनिमित्तपरम् । तेनाभावत्वाकाशत्वादीनां नित्यानेकसमवेतत्वरूपजातित्वाभावेऽपि नासंग्रहः ।

नन्वेवं 'गौर्वाहीकः' इत्यादिस्थले कस्याप्यर्थस्य नियतोपस्थितिकत्वाभावात् प्रवृत्तिनिमित्ततदाश्रयाभावाच्च प्रथमायाः साधुत्वं न स्यादिति चेन्न, पदान्तरसम्बन्धाभावे एव प्रथमतः शक्यार्थमादाय प्रथमायां जातायां पश्चात्पदान्तरसम्बन्धे एव लाक्षणिकार्थोपस्थित्या, शक्यताऽवच्छेदकारोप एव लक्षणेति स्वीकारेण वा क्षतेरभावात् ।

नन्वेवमपि 'अभिहिते प्रथमा' इति वार्त्तिकेन कृदाद्यभिहितकारकार्थत्वं प्रथमाया इति लभ्यते, इति तद्विरोध इति चेन्न, तत्तत्प्रातिपदिकार्थगतकारकशक्त्यावन्येन कृदादिनाभिहितायां प्रातिपदिकात् स्वार्थे प्रथमेत्यर्थेन विरोधाभावात् । 'अनेकमन्यपदार्थे' (२-२-२४) इति सूत्रे भाष्ये 'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः' इत्युक्त्याऽभिहितकारकस्य प्रातिपदिकार्थत्वेनैव प्रतीतेश्च । अनि॰तलिङ्गानां तटादिशब्दानां विसर्गादिसमभिहारे एकैकस्यैव लिङ्गस्य शाब्दबोधेन न कस्यापि लिङ्गस्य प्रातिपदिकार्थत्वमिति लिङ्गग्रहणं सार्थकम् ।

नियतलिङ्गस्थले तु लिङ्गस्य नियमेन शाब्दबोधात् लिङ्गमपि प्रातिपदिकार्थ एव । प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थ इति मते प्रातिपदिकार्थमात्रे प्रथमा इत्यस्य 'उच्चैः, नीचैः' इत्याद्यव्ययानि, लिङ्गप्रवृत्तिनिमित्तकाश्च स्त्री, पुमान्, नपुंसकञ्चोदाहरणम् ।

प्रवृत्तिनिमित्तलक्षणं तु 'वाच्यत्वे सति वाच्यसम्बन्धेन वाच्यवृत्तित्वे च सति वाच्योपस्थितीयप्रकारतावत्त्वम्, अस्ति च घटत्वादौ घटपदवाच्यत्वम्, वाच्यघटवृत्तित्वं च वाच्यसमवायसम्बन्धेन वाच्यविषयिणी या घटोपस्थितिस्तदीयप्रकारतावत्त्वं घटत्वं घटशब्दप्रवृत्तिनिमित्तम् । एवमेवान्यत्रोह्यम् ।

न च 'पुंस्त्वत्वेऽतिव्याप्तिः,प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वमिति स्वीकारेणादोषात् । वैशिष्ट्यञ्च— स्ववाच्यत्व-स्ववाच्यसम्बन्धेन स्ववाच्यवृत्तित्वम्, स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयप्रकारतावत्त्वम्, एतत्त्रितयसम्बन्धेन ।

'पुंस्त्वविशिष्टो घटः' इति शाब्दबोधीयमुख्यविशेष्यता घटे तत्समानाधिकरणोपस्थितीयविशेष्यताऽपि घट एव, तन्निरूपितोपस्थितीयप्रकारता घटत्वे एव न तु पुंस्त्वत्वे एवेत्यदोषः । उपस्थितीयविशेष्यतानिरूपितप्रकारता च साक्षात्परम्परासाधारण्येन । तेन पशुपदवाच्यलोमवल्लाङ्गूलावच्छिन्नघटकलोमत्वादौ नाव्याप्तिः ।

यत्र लिङ्गस्य बोधः तानि नियतलिङ्गानि अनियतलिङ्गानि वा प्रातिपदिकानि सर्वाणि लिङ्गमात्रे इत्यस्योदाहरणानि । तथा च तन्मते **कृष्णः, श्रीः, ज्ञानम्** इत्यदावपि लिङ्गमात्रे एव प्रथमा ।

**मात्रशब्दस्येति**—प्रातिपदिकार्थश्च लिङ्गञ्च वचनञ्चेति विग्रहे द्वन्द्वं कृत्वा प्रातिपदिकार्थलिङ्गवचनान्येवेति विग्रहे एवार्थकमात्रशब्देन 'मयूरव्यंसकादयश्च' ( २-१-७२ ) इति मात्रशब्देन नित्यतत्पुरुषः । **प्रत्येकं योग इति**—'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति परिभाषयेति भावः । अत्रान्तपदं समीपपरम्, सामीप्यञ्च क्वचित्पूर्वेण, क्वचित्परेण । अत्र परेण, 'अधिशीङ्' इति सूत्रे पूर्वेण । तेन मात्रशब्दस्य द्वन्द्वान्त्यावयवत्वाभावात्प्रत्येकं सम्बन्धानुपपत्तिरिति न शङ्क्या, परिभाषायामन्तशब्दस्य समीपवाचित्वात् । अत एव 'अधिशीङ्स्थासां कर्म' इत्यत्राधिशब्दस्य पूर्वत्वेन सामीप्येऽपि

प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्। उच्चैः। नीचैः।

---

प्रत्येकमन्वयः सम्पद्यते। एतेन द्वन्द्वान्ते 'द्वन्द्वादौ वा श्रूयमाणं पदम्' इति पाठो निरस्तः। साहित्ये एव द्वन्द्वविधानसिद्धेयं परिभाषा।

मात्रशब्दोऽत्रावधारणे। तथा चामरः 'मात्रा परिच्छदे, अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे' इति ( अमर० ३ का० ३ व० ७७ श्लो० ) 'मा माने' इत्यतः 'हुयामाश्रुभसिभ्यस्त्रन्' ( उणा० ४ पा० १६८ सू० ) इति त्रन्प्रत्ययः। परिच्छेद ( उपकरणे ) अल्पे परिमाणे च मात्रा स्त्रियाम्। कार्त्स्न्येऽवधारणे च नपुंसकम्।

अवधारणेऽत्र मात्रशब्दः। अवधारणञ्चान्ययोगव्यवच्छेदः = अन्यसम्बन्धाभाव इति यावत्। अन्ययोगस्य सर्वत्र सत्त्वादन्ययोगव्यवच्छेदोऽप्रसिद्ध एव स्यादतः, अन्ययोगे व्यवच्छेदे च पृथक् शक्तिरेवशब्दस्य तत्पर्यायमात्रशब्दस्य च। तथा च अन्यो भेदवान्, योगः-सम्बन्धः, व्यवच्छेदोऽभावः। भेदवतो निरूपितत्वसम्बन्धेन योगे ( सम्बन्धे ) अन्वयः, योगस्य च प्रतियोगितानिरूपकत्वसम्बन्धेनाभावरूपे व्यवच्छेदेऽन्वयः। भेदवन्निरूपितसम्बन्धप्रतियोगिकोऽभाव एव मात्रशब्दार्थः। भेदस्य प्रतियोगिसाकङ्क्षतया प्रातिपदिकार्थादिः प्रतियोगितयाऽन्वयः। सम्बन्धश्च भेदप्रतियोगिनः प्रातिपदिकार्थादेर्येन सम्बन्धेन यत्रान्वयश्चिकीर्षितः स एव।

प्रकृते प्रातिपदिकार्थादेर्वाचकत्वसम्बन्धेन प्रातिपदिकेऽन्वयश्चिकीर्षित इति प्रातिपदिकार्थादिनिरूपितवाचकत्वसम्बन्धाभावः फलितः। सम्बन्धाभावस्यापि प्रातिपदिकार्थादिवाचके प्रातिपदिके एव स्वरूपसम्बन्धेनान्वयः। प्रातिपदिकार्थमात्रे प्रथमा इत्यस्य बोधकत्वसम्बन्धेन प्रातिपदिकार्थविशिष्टं प्रातिपदिकार्थभिन्नो योऽर्थस्तद्विषयकबोधजनकत्वसम्बन्धाभाववच्च यत्प्रातिपदिकं तस्मात्प्रथमेत्यर्थः। प्रातिपदिकार्थबोधकं प्रातिपदिकार्थेतराबोधकं यत् प्रातिपदिकं ततः प्रथमेति फलति। एवं लिङ्गमात्रे इत्यस्य बोधकतासम्बन्धेन प्रातिपदिकार्थ-लिङ्गोभयविशिष्टम्, प्रातिपदिकार्थ-लिङ्गोभयप्रतियोगिकभेदवान् योऽर्थस्तद्विषयकबोधजनकत्वाभाववच्च यत्प्रातिपदिकं ततः प्रथमेत्यर्थः। परिमाणमात्रे इत्यस्य बोधकत्वसम्बन्धेन प्रातिपदिकार्थ-लिङ्ग-परिमाणत्वैतत्त्रितयविशिष्टम्, त्रितयभेदवदर्थविषयकबोधजनकत्वाभाववच्च यत्प्रातिपदिकं ततः प्रथमेत्यर्थः।

वचनमात्रे इत्यस्य बोधकतासम्बन्धेन प्रातिपदिकार्थ-लिङ्ग-वचनै( संख्या ) तत्त्रितयविशिष्टम्, एतत्त्रितयप्रतियोगिकभेदवदर्थविषयकबोधजनकत्वाभाववच्च यत्प्रातिपदिकं ततः प्रथमेत्यर्थः। प्रातिपदिकार्थस्य सर्वत्र भावात् प्रातिपदिकार्थबोधकत्वस्य सर्वार्थे निवेशः।

प्रातिपदिकार्थ इत्यत्र प्रातिपदिकपदेन लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणात् 'प्रातिपदिकग्रहणम्' इति तटी, गोपी इत्यादौ न दोषः। **लिङ्गमात्राधिक्ये** इति—प्रातिपदिकार्थं विना लिङ्गभावस्यासम्भवात् 'लिङ्गमात्राधिक्ये' इत्युक्तम्। प्रातिपदिकार्थापेक्षया यत्र लिङ्गमात्रमधिकं भासते तत्र प्रथमेति यावत्। **लिङ्गमात्राद्याधिक्ये इति** न पाठः, तादृशपाठे तु परिमाणमात्रे संख्यामात्रे इत्युक्तिर्न संगच्छेत 'लिङ्गमात्राद्याधिक्ये' इत्यत्रादिपदेनैव तत्संग्रहात्।

**परिमाणमात्रे** इति—परिमाणग्रहणं मानमात्रपरम्, न तु परितः परिच्छेदकपरम्। तेन विस्तः, पुरुषः, पलं, घृतम्, काण्डम् इत्यादावपि प्रथमा सिध्यति। प्रातिपदिकार्थापेक्षया लिङ्गापेक्षया च परिमाणमात्राधिक्ये इत्यर्थः। **संख्यामात्रे** इति—प्रातिपदिकार्थापेक्षया लिङ्गापेक्षया च संख्यामात्राधिक्ये इत्यर्थः। प्रातिपदिकार्थमात्रे इत्यस्योदाहरणमाह—**उच्चैरिति**। ननु 'उच्चैः, नीचैः' इत्यत्राधिकरणस्यापि प्रतीत्या उच्चैस्त्वतदाश्रययोरेव नियतोपस्थितिकत्वेन प्रथमा न स्यादिति चेन्न, अधिकरणत्वस्यापि नियतोपस्थितिकत्वेनादोषात्। स्त्री, पुमान्, नपुंसकम्, इत्यत्र प्रातिपदिकार्थे एव प्रथमा, लिङ्गतदाश्रययोर्नियतोपस्थितिकत्वात्।

कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रतिपदिकार्थमात्र इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य । तटः, तटी, तटम् । परिमाणमात्रे, द्रोणो

---

ननु लवणेन संसृष्ट इत्यर्थे 'संसृष्टे' ( ४-४-२२ ) इति विहितस्य ठको 'लवणाल्लुक्' ( ४-४-२४ ) इति लुकि लवणः सूपः, लवणः शाक इत्यादौ लवणजातीयमेव द्रव्यं नियतोपस्थितिकम् । लवणसंसृष्टं सूपाद्यनियतोपस्थितिकमिति प्रथमा न स्यादिति चेन्न, लवणशब्दस्य लवणजातीये तत्संसृष्टे चाक्षादिवत्साधारणत्वात् ।

ननु नीलो घट इत्यादौ विशेष्यविशेषणभावस्याधिकस्य भावात् प्रथमा न स्यात् . शुक्लशब्दो गुणमेव न व्यभिचरति गुणिनं तु पटादिकं व्यभिचरत्येवेति चेन्न, अस्यापि लवणादिवत् उभयसाधारण्यात् । अत्र च 'लवणाल्लुक्', 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वचनमेव मानम् । तथा च लवणादिशब्दा लवणत्वावच्छिन्ने लवणसंसृष्टत्वावच्छिन्ने च शक्ता एव । एवं शुक्लादिशब्दा अपि शुक्लत्वावच्छिन्ने शुक्लगुणे च शक्ता एवेति न नियतोपस्थितिकत्वव्यभिचारः ।

**उच्चैः, नीचैरिति**—अत्र प्रथमोत्पत्तौ पदत्वाद्रुत्वविसर्गौ, ग्राम उच्चैस्तव स्वम्, ग्राम उच्चैस्ते स्वम् इत्यादौ 'सपूर्वायाः प्रथमाया विभाषा' इति विकल्पेन तेमयाद्यादेशसिद्धिश्च फलम् । **कृष्ण इति**—वासुदेवेऽर्थे इदमुदाहरणम् । तत्र नियतलिङ्गत्वात् कृष्णगुणविशिष्टार्थे तु लिङ्गाधिक्ये इत्यस्योदाहरणम् । प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थ इति मते तु वासुदेवार्थेऽपि लिङ्गाधिक्ये इत्यस्यैवोदाहरणम् । प्रातिपदिकार्थे इत्यस्य त्वव्ययानि, स्त्री, पुमान्, नपुंसकमिति चोदाहरणानि । अव्ययानां प्रवृत्तिनिमित्तं तदाश्रयश्चार्थः । स्त्रीपुंनपुंसकशब्दानां लिङ्गमेव प्रवृत्तिनिमित्तं तद्भिन्नलिङ्गाभावात् ।

ननु लिङ्गाधिक्ये प्रथमाया वक्ष्यमाणतया अव्ययेषु सामान्ये नपुंसकमिति नपुंसकत्वस्य, श्रीशब्दे स्त्रीत्वस्य, ज्ञानशब्दे नपुंसकत्वस्य च भावात्कथं प्रातिपदिकार्थे प्रथमा इत्याशङ्कायामाह—**अलिङ्गा इत्यादि** । 'अव्ययादाप्सुपः' इति सूत्रे भाष्ये 'आब्ग्रहणं व्यर्थमलिङ्गत्वादि'त्युक्त्या लिङ्गानुपस्थितेः, नियतलिङ्गस्थले लिङ्गस्यापि नियतोपस्थितिकत्वेन प्रातिपदिकार्थत्वात् प्रातिपदिकार्थे प्रथमेत्यस्योदाहरणं सममेव ।

यद्यपि गुणिवाचिनः कृष्णदयोऽनियतलिङ्गा एव इति लिङ्गमात्रे इत्यस्योदाहरणं भवितुमर्हन्ति—इत्याह—**अनियतलिङ्गास्त्विति**—यत्र यत्र तटशब्दस्तत्र तत्र न किमपि लिङ्गं नियतोपस्थितिकम्, यत्र पुंस्त्वस्य बोधस्तत्र न स्त्रीत्वनपुंसकत्वे । यत्र तयोर्बोधस्तत्र न पुंस्त्वस्येति व्यापकताया अभावो लिङ्गबोधे । इति युक्तमुक्तम**नियतलिङ्गास्तु लिङ्गमात्राधिक्ये इत्यस्येति** ।

**परिमाणमात्रे इति द्रोण इति**–अमरे २ का० ९ व० ८८ श्लो० 'अस्त्रियामाढकद्रोणौ' इति 'द्रोणः काकेऽपि' ( ३ का० ३ व० ४८ श्लो० ) इति चोक्तम् । 'अपिशब्दात् अश्वत्थाम्नः पितरि परिमाणविशेषे च द्रोणः' इति टीकायाम् ।

'जालसूर्य्यमरीचिस्थं त्रसरेणुरिति स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु (सर्षपस्तु) ते त्रयष्षट् ते यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ।
पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ॥
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ।
आढकैस्तैश्चतुर्भिस्तु द्रोण इत्यभिधीयते ॥
कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणस्तु षोडश ।
इति स्मृतिरपि द्रोणः=परिमाणविशेष इत्यत्र मानम् ।

द्रोणो व्रीहिः। द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः।

---

यत्तु 'द्रोणः' इत्यत्र प्रातिपदिकार्थे प्रथमा स्यादिति तन्न, 'अस्त्रियामाढकद्रोणौ' इत्युक्त्या द्रोणशब्दस्यानियतलिङ्गत्वेन 'प्रातिपदिकार्थमात्रे प्रथमा' इत्यस्याप्राप्तेः। किन्तु लिङ्गमात्रे प्रथमेति वक्तुं युक्तम् इत्याशङ्कायामाह—द्रोणो व्रीहिरिति। लिङ्गविशिष्टप्रातिपदिकार्थे प्रथमायाः स्वीकारे द्रोणाभिन्नो यो नामार्थस्तस्य व्रीहौ परिच्छेद्यपरिच्छेदकभावेनान्वयासम्भवो व्रीहेः प्रथमार्थस्य च नामार्थतया प्रथमार्थस्य व्रीहौ परिच्छेद्यपरिच्छेदकभावसम्बन्धे नान्वयासम्भवो नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वात्। अत एव 'राजा पुरुषः, भूतलं घटः' इत्यादौ स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इति, आधेयतासम्बन्धेन भूतलविशिष्टो घटः' इति च न बोधः। परिमाणे प्रथमायान्तु 'द्रोणो व्रीहिः' इत्यत्र द्रोणस्य प्रथमार्थे परिमाणे सामान्यविशेषयोरभेदान्वय इति सिद्धान्तादभेदसम्बन्धेनान्वयः। न च प्रकृतिप्रत्ययार्थयोरभेदेनान्वयादर्शनात् द्रोणाभिन्नं यत्परिमाणमित्यसङ्गतम्, पचतीत्यत्र कर्तृवृत्तिः पाकः, पाचक इत्यत्र पाककर्ता, औपगव इत्यत्र उपगवपत्यम्–इति बोधात् आधाराधेयभाव–जन्यजनकभावौ भेद एव सम्बन्ध इति वाच्यम्, देवतार्थकतद्धितादौ ऐन्द्रं हविः, इन्द्राभिन्नदेवताकं हविः, मथितं पण्यमस्य माथितिक इत्यत्र प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वयस्यापि सर्वसम्मतत्वात्। परिमाणस्य प्रत्ययार्थस्य परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहावन्वयः।

नामार्थप्रत्ययार्थयोर्भेदेनान्वयस्य 'राज्ञः पुरुषः' इत्यादौ ङसर्थस्वत्वस्य स्वामिस्वभावस्य वा पुरुषेऽन्वयदर्शनात् प्रत्ययार्थस्य परिमाणस्य व्रीहावन्वयेनार्थाभावेन द्रोणरूपपरिमाणपरिच्छिन्नो व्रीहिरित्यन्वयः सिध्यति। तदाह–द्रोणरूपं यत्परिमाणमित्यादि। नामार्थे प्रथमायां तूभयोः प्रकृत्यर्थप्रत्ययार्थयोः नामार्थतया परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहावन्वयासम्भवः, नामार्थनामार्थयोरभेदेनैवान्वय इति व्युत्पत्तिविरोधात्। न च द्रोणपरिच्छिन्नानां व्रीहीणां बहुत्वाद् द्रोणो व्रीहिरित्यनुपपन्नम्, जातावेकवचनात्। तदुक्तम्––'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (१–२–५८) इति। व्यक्तिविवक्षायान्तु 'द्रोणो व्रीहयः' इति भवत्येव।

**प्रत्ययार्थे परिमाणे** इति—द्रोणत्वादिरूपेण परिमाणविशेषवाचिद्रोणादिशब्दात् लिङ्गविशिष्टप्रातिपदिकार्थे प्रथमेत्यर्थे 'द्रोणः' इत्यादौ प्रथमायां सिद्धायामपि 'द्रोणो व्रीहिः' इत्यत्र शाब्दबोधानुपपत्त्या द्रोणत्वेन परिमाणविशेषवाचिनो द्रोणशब्दात् परिमाणसामान्यरूपेण 'यद्धटः' इतिवत् द्रोणरूपपरिमाणे विवक्षिते प्रथमा विभक्तिर्विधीयते। एवञ्च परिमाणविशेषस्य प्रकृत्यर्थद्रोणस्य 'सामान्यविशेषयोरभेदान्वयः' इति सिद्धान्तात्प्रथमार्थे सामान्यपरिमाणेऽभेदेनान्वयः। प्रथमार्थस्य सामान्यपरिमाणस्य परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहिरूपे प्रातिपदिकार्थेऽन्वयः।

तथा च द्रोणरूपपरिमाणविशेषाभिन्नं यत्सामान्यपरिमाणं तत्परिच्छिन्नो व्रीहिरिति शाब्दबोध उपपद्यते। अन्यथा परिमाणविशेषरूपद्रोणस्य व्रीहावभेदान्वयस्य बाधात् परिच्छेद्यपरिच्छेदकभावेन चान्वयस्य 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तिविरोधेन शाब्दबोधानुपपत्तिः—इति विद्वद्वरेण्या दीक्षिताः।

अत्र सर्वतन्त्रस्वतन्त्रा नागेशाः—परिमाणत्वव्याप्यद्रोणत्वादिप्रवृत्तिनिमित्तमानं द्रोणत्वं तदाश्रयः परिमाणत्वेन परिमाणमप्यर्थः। एतन्मते लिङ्गस्य यथा न प्रातिपदिकार्थत्वं परिमाणस्यापि न प्रातिपदिकार्थत्वम्––इति 'द्रोणः' इत्यत्र प्रथमासिद्ध्यर्थं प्रातिपदिकापेक्षया परिमाणमप्यधिकं भासते चेत्ततोऽपि प्रथमेत्यर्थेन प्रथमासिद्ध्यर्थमेव परिमाणग्रहणम्। न च परिमाणस्यापि द्रोणशब्दार्थत्वे 'द्रोणः परिमाणम्' इति न स्यात् द्रोण इत्यनेनैव परिमाणोक्तेरिति वाच्यम्, 'द्वौ ब्राह्मणौ'

वचनम् = संख्या ।

---

इतिवत्स्पष्टार्थर्थम् अश्वत्थाम्नः पितुः काकस्य च बोधाभावार्थं च तत्प्रयोगात् । किञ्च परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीह्यन्वये 'राज्ञः पुरुषमानय' इतिवत् 'द्रोणो व्रीहिमानय' इत्यस्याप्यापत्तिर्भेदेनान्वयिनो विशेष्यसमानविभक्तिकत्वाभावात् । न च प्रकृत्यर्थस्य प्रत्ययार्थे यत्राभेदेनान्वयस्तस्य च भेदेनान्वयेऽपि विशेष्यसमानविभक्तिकत्वकल्पनान्नोक्तदोषः, अपूर्वनियमकल्पने मानाभावाद्गौरवाच्च । किञ्च परिमाणे प्रथमायाम् 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकविरोधः, द्रोणपरिमाणस्य तिङर्थवाचकत्वाभावात् । तिङर्थवाचको व्रीहिरेव न तु द्रोणपरिमाणम् ।

यत्तु कैयटः—परिमाणपदं कर्मल्युडन्तं प्रमेयपरम् । प्रमेयस्य चानेकविधत्वेन नियतोपस्थितिकत्वाभावात् तदर्थे प्रथमार्थं परिमाणग्रहणमिति तन्न, 'सिंहो माणवकः' इत्यत्र सिंहशब्दस्य सिंहसदृशार्थकत्वे तस्यानियततया प्रथमानापत्तेः । यदि तु पदे एव लक्षणेति सिंहशब्दात् शक्यार्थमादाय प्रथमेति तदा प्रकृतेऽपि शक्यार्थे एव प्रथमा । ननु शक्यार्थमादाय प्रथमोत्पत्तिरिति चिन्त्यम्, प्रातिपदिकार्थलक्षणे उपस्थितिपदेन शाब्दबोधस्यैव ग्रहणेन तस्य च पदान्तरसमभिव्याहारे एव सम्भवादिति चेन्न, लक्षणे बोधजनकत्वपदस्य बोधजनकत्वप्रकारकसम्भावनापरत्वात् । सम्भावनायाश्च शाब्दबोधात्प्रागपि सम्भवे बाधकाभावात् । पदान्तरव्रीह्यादिपदसन्निधाने द्रोणस्य परिच्छिन्ने लक्षणया द्रोणपरिच्छिन्नाभिन्नो व्रीहिरित्यर्थसिद्धौ परिमाणग्रहणं व्यर्थमेव स्यात्तस्माद् द्रोणस्य परिमाणेऽपि शक्तौ तस्य लिङ्गवत्प्रातिपदिकार्थत्वाभावेन तत्र प्रथमाविधानार्थमेव परिमाणग्रहणमित्याहुः ।

**वचनं संख्येति**—ननु 'वचनम्' इति प्राचां संख्यायाः संज्ञेति न तु संख्येति 'वचनं संख्या' इत्यसङ्गतमिति चेन्न, शब्दार्थयोरभेदाभिप्रायेण तदुक्तेः । अत एव 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति संगच्छते ।

**विज्ञप्तिः**—'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति संगच्छते, एतत्पर्य्यन्तां लक्ष्मीं व्याख्यां विलिख्य पूज्यपादा गुरुचरणाः श्रीसभापतिशर्मोपाध्याया दिवङ्गता इति तेषां निर्देशेन कारकप्रकरणस्यावशिष्टां व्याख्यां विरच्य प्रकाशयामि, इति निवेदयते—**बालकृष्णशर्मपञ्चोली ।**

शब्दार्थज्ञानानामितरेतराध्यासात् 'सर्वभूतरुतज्ञानम्' इति योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः, यज्ज्ञानं स शब्दः, इति त्रयाणां परस्परं तादात्म्यम् । तादात्म्यञ्च–'तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्' भेदसहिष्णुरभेद इति यावत् । भेदस्य वास्तविकत्वम् । अभेदस्याध्यस्तत्वमिति न कुतर्कावसरः—अग्निशब्दोच्चारणे मुखे दाहापत्तिः, मधुशब्दोच्चारणे मुखे माधुर्य्यापत्तिरिति दिक् । अध्यासश्च 'अन्यस्मिन् अन्यधर्मावभासरूपः' इति ।

**उक्तार्थत्वादिति**—उक्तार्थानामप्रयोगः' इति न्यायेन एकत्वादिसंख्याया एकादिशब्देनैवोक्ततया विभक्तेरप्राप्तौ तन्न्यायबाधनार्थं सूत्रे वचनग्रहणमिति भावः । 'उक्तार्थानामप्रयोगः' इति न्यायस्तु 'अनन्यलभ्यो हि शब्दार्थः' इत्यस्य व्याख्यानेन फलितमर्थं प्रकारान्तरेण व्यनक्ति । अयं भावः—'अर्थबोधनार्थं शब्दप्रयोगः' इति योऽर्थोऽन्येन लब्धस्तदर्थस्य गतार्थत्वात् पुनस्तदर्थं शब्दप्रयोगरूपव्यापारो व्यर्थ एव ।

एकादयः शब्दा एकत्वादिसंख्याविशिष्टसंख्येयवाचका इति प्रकारतया संख्याया उक्तत्वादप्राप्तप्रथमाविधानार्थं सूत्रे वचनग्रहणम् । तथा च संख्यारूपार्थबोधकवचनग्रहणसामर्थ्यादिह संख्याया उक्तत्वेऽपि प्रथमा भवत्येव । तत्रानन्वितार्थकविभक्त्यपेक्षयाऽन्वितार्थकविभक्तिर्न्याय्येति एकशब्दात् प्रथमैकवचनम् । द्विशब्दात्प्रथमाद्विवचनम् । एवं बहुशब्दात् प्रथमाबहुवचनमेव ।

न चैकत्वादिसंख्याया द्विधा भानापत्तिरिति वाच्यम्, प्रत्ययप्रकृतिभूतैकादिशब्दाः संख्याया अभिधायकाः=शक्त्या वाचकाः, विभक्तयो द्योतिका इति न पुनरुक्तिदोषः । द्योतकत्वञ्च-स्वसमभिव्याहृत-

एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ।

संबोधने च । [ २-३-४७ ]

इह प्रथमा स्यात् ।

---

पदनिष्ठशक्त्युद्बोधकत्वम् । अत्र पदपदेन शक्तं पदं ग्राह्यम्, न स्वशाब्दशङ्केतितम् । एकः = एकत्व-विशिष्टः पुरुषः । अत्र वैशिष्ट्यञ्च समवायसम्बन्धेन । अयं भावः—संख्याया गुणत्वात् संख्येयस्य द्रव्यत्वात् गुणगुणिनोः समवायसम्बन्धः । तथा च समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नप्रकारता-निरूपितपुंस्त्वविशिष्टपुरुषत्वावच्छिन्नविशेष्यताको बोधः । द्वौ इति द्वित्वसंख्याविशिष्टसंख्येय = पुरुष इति शाब्दबोधः । बहव इति । बहुत्वप्रकारकपुरुषविशेष्यकबोध इति ।

सम्बोधने च ( २-३-४७ ) इति । प्रातिपदिकार्थसूत्रे मात्रग्रहणेन सम्बोधनाधिक्ये प्रथमा न प्राप्नोति, इति संबोधनाधिक्येऽपि प्रथमाविधानार्थं सूत्रारम्भः । इह सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियाम्प्रति विशेषणम् । उक्तञ्च—

'सम्बोधनपदं यच्च तत्क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति' ॥

अयं भावः—'आख्यातं सविशेषणं वाक्यम्' इति वाक्यलक्षणं तत्रास्य क्रियाविशेषणत्वाभावे वाक्यत्वं न स्यात् । 'एवञ्च समानवाक्ये विधीयमानोऽनुदात्तः 'हे देवदत्त व्रजानि अहम्' इत्यत्रेष्टनिघातानापत्तिः स्यात् । समर्थसूत्रभाष्येऽपि उक्तम्—

'साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते' ॥ इति ।
'अर्थादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' ।

'पचति भवति'=पाककर्तृकं भवनम्-अत्रापि एकवाक्यत्वम् । व्रजानि देवदत्तेति । देवदत्त-संबन्धिसंबोधनविषयो मत्कर्तृकं प्राप्तकालिकं गमनमिति बोधः । संबोधनपदार्थस्तु अनभिमुखस्या-भिमुखीकरणरूपः । संबोधनम् = अभिमुखीभावः । प्रयोक्तृवचनार्थग्रहणे सादरत्वभवनम् । तद्-व्यञ्जकञ्च मुखपरावृत्त्यादि । तत्फलं प्रवृत्तिनिवृत्तिरूपं । सम्बोधनविभक्तिरनुवाद्यविषया । संबोध्यता-वच्छेदकरूपेण संबोध्यस्य सिद्धिं विना तत्त्वासंभवात् । तेन बाल्यावस्थायां 'राजन् भव युध्यस्व' इति न प्रयोगः । तदुक्तम्—

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते' ॥ इति ।

प्राचीनमते संबोधनविभक्त्यर्थस्तु—'संबोध्यनिष्ठाभिमुखीभावरूपव्यापारानुकूलेच्छारूपव्यापारः संबोधननिष्ठो विभक्त्यर्थः ।' नवीनास्तु—'संबोध्यनिष्ठोऽभिमुखीभाव एव संबोधनम्' इति प्राहुः । 'बोधनाय समीहा' इति व्युत्पत्तिमङ्गीकृत्य प्रत्यासत्त्या श्रोतृसमवेतबोधेच्छाया लाभेन संबोधनपदा-व्यवहितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छां विभक्त्यर्थं तार्किका अङ्गीकुर्वन्ति ।

एकवाक्यत्वलक्षणन्तु—'स्वनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्व-स्वनिष्ठविशेष्यतानिरूपित-प्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावत्त्वैतदन्यतरसंबन्धेन क्रियाविशिष्टार्थप्रयोजकरूपम् । एवञ्च 'त्वं ब्रूहि देवदत्त' इत्यत्र निघातः, अयं भावः—प्रकृतवाक्यार्थविषयकबोधफलकश्रोत्रभिमुखीभावा-नुकूलव्यापारविषयकेच्छा संबोधनविभक्त्यर्थः । तथा च देवदत्तनिष्ठो यः प्रकृतवाक्यार्थविषयकबोध-फलकोऽभिमुखीभावस्तदनुकूलो व्यापारः = संबोधनविभक्त्यन्तरूपो वक्तृनिष्ठस्तद्विषयकेच्छाप्रयोक्तुः, तादृशेच्छाविषयः = प्रवर्तनाविषयश्च त्वत्कर्तृकं भाषणमिति 'त्वं ब्रूहि देवदत्त' इत्यनेन बोधः । विस्त-रस्तु वै० भू० सारस्य श्रीपञ्चोलिविरचितप्रभायां द्रष्टव्य इति दिक् ।

हे राम।

*कारके*। [ १-४-२३ ]

इत्यधिकृत्य।

*कर्तुरीप्सिततमं कर्म*। [ १-४-४९ ]

---

तिङ्बोध्यकारकबोधकत्वेन प्रथमाया अपि कारकविभक्तित्वम्। तेन 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकं संगच्छते। उपपदविभक्तितः कारकविभक्तेर्बलवत्त्वेन 'सहयुक्तेऽप्रधाने' इत्यत्र अप्रधानग्रहणं न कार्य्यम्। **हे राम** इति। 'सर्वं वाक्यं क्रियायां परिसमाप्यते' इति **'हे राम! मां पाहि'** इति वाक्यं योजनीयम्। रमन्ते योगिनोऽस्मिन्निति रामः। अधिकरणे 'हलश्च' इति घञ्, 'अत उपधायाः' इति वृद्धिः, कृदन्तत्वात् प्रातिपदिकत्वम्। योगरूढश्च रामशब्दस्तेन ज्येष्ठत्वसमानाधिकरणदशरथापत्यत्वरूपार्थबोधः। एवं 'हे दुर्गे मां पाहि' हे विश्वनाथ मां रक्ष' 'हे पितः त्रायस्व माम्', 'हे गुरो शिक्षां देहि' इति प्रयोगाः। **इति प्रथमा।**

**कारके** इति ( १। ४। २३ ) इदमधिकारसूत्रमुत्तरत्र सम्बध्यते 'कारके' इति प्रथमार्थे सप्तमी इति कारकं कर्मादिसंज्ञकमित्यर्थः। क्रियानिष्ठजन्यतानिरूपितजनकतावत्त्वं कारकत्वम्। 'करोति क्रियां निर्वर्तयति' = सम्पादयति इति व्युत्पत्ति प्रदर्शयन् भाष्यकारः। तेन 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यत्र न ब्राह्मणस्य कारकत्वम्; किन्तु पुत्रस्य कारकत्वम्, तेन ब्राह्मणस्य कुलालजनकस्येव चतुर्थान्यथासिद्धत्वम्। सर्वेषां कारकाणां स्वस्वावान्तरक्रियाद्वाराऽन्यानधीनत्व-रूपप्रधानक्रियानिष्पादकत्वं ज्ञेयम्। 'स्तोकं पचति' इत्यत्र विक्लित्तिरूपे फले ज्ञानविषयीभवनमेव व्यापारः। 'घटं करोति' इत्यत्र घटे बुद्धिस्थत्वरूपव्यापारः। एवमन्यत्रापि बोध्यम्।

ननु 'कारकनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति क्रियाजन्यो-पस्थितिः कारणम्' कारकाणां क्रियायामन्वयात्, तथा च कारके इति प्रथमार्थसप्तम्याः कुत्रान्वय इति 'गम्यमानाऽपि क्रिया कारकप्रयोजिका' इति 'भवति' इत्यादिक्रियाध्याहारः। कारकं सत् कर्म-संज्ञकं भवति। कारकशब्दोऽपि योगरूढस्तेन कर्त्रादिषड्बोधकः। 'षट् कारकाणि' इति अभि-युक्तोक्तेः। भाष्ये—'अथवा यावद् ब्रूयात् क्रियायामिति तावत् कारके इति' तेन क्रिया कारकशब्दे-नोच्यते इत्यपि पक्षान्तरम्।

**अधिकृत्येति**—ननु क्रियाद्वयस्थले द्वयोः क्रिययोरेकः कर्ता तत्र पूर्वकालिकक्रियावाचकधातोः 'समानकर्तृकयोः पूर्वकाले प्राचां क्त्वा' इति क्त्वाप्रत्ययो भवति। अत्र द्वित्वमतन्त्रम्। तथा चात्र एक एव कर्ता, एका चाधिकाररूपा क्रिया इति क्त्वाप्रत्ययानुपपत्तिरिति चेन्न, 'कारके' इत्यधिकृत्य पाणिनिराह—

**'कर्तुरीप्सिततमं कर्म'** ( १-४-४९ ) इति। **कर्तुरिति** 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। कर्तृशब्दोऽत्र यद्वाक्यघटककारकस्य कर्मसंज्ञा चिकीर्षिता तद्वाक्योपात्तधातुवाच्यप्रधानीभूत-व्यापाराश्रयरूपस्वतन्त्रपरः। कर्तृसंज्ञकपरस्तु न, अन्यथा 'शत्रून् अगमयत् स्वर्गम्' इत्यत्र शत्रुवृत्ति-व्यापारजन्यफलाश्रयतया स्वर्गस्य कर्तुरित्यनेन कर्मत्वानापत्तेः।

अत एव 'सार्थाद् हीयते' इत्यत्र 'अपादानेचाहीयरुहोः' इत्यनेन अहीय इति पर्युदासात् तसेर-भावेऽपि कर्मणि लकारः सिध्यति। कर्तृषष्ठ्या आश्रयमात्रमर्थः, 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन व्यापारस्य धातुलभ्यत्वेन लाघवाच्च तन्मात्रे शक्तिः, लघुभूतधर्मस्य शक्यतावच्छेदकत्वे सम्भवति सति गुरुभूतस्य व्यापाराश्रयत्वस्य शक्यतावच्छेदकत्वे गौरवेण अत्राश्रयत्वमात्रं शक्यता-वच्छेदकत्वमुचितम् इति। अत एव 'कम्बुग्रीवादिमान् नास्ति' इत्यत्र घटत्वमेव लाघवात् अभावीय-प्रतियोगितावच्छेदकमिति।

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । कर्तुः किम्—माषेष्वश्वं बध्नाति ।

ईप्सिततममिति—आप्नोतेः सन्नन्तत्वात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्ययः । अत्र मतिपदेन इच्छा ग्राह्या, सूत्रे बुद्धिग्रहणसामर्थ्यात् । अतिशयेन ईप्सितम् इति ईप्सिततमम् ,'अतिशायने' इति तमप्प्रत्ययः । अत्र कर्तुरित्यत्र प्रकृत्यर्थव्यापाराश्रयस्य षष्ठ्यर्थाश्रये अभेदसम्बन्धेन ( विशेष्यविशेषणभावसम्बन्धेन ) अन्वयः । ननु 'अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकधर्मयोर्भेदः कारणम्' । अत एव 'घटो घटः' इति न प्रयोगः, प्रकारतावच्छेदकविशेष्यतावच्छेदकघटत्वरूपधर्मैक्यात् । 'नीलो घटः' इत्यत्र नीलत्वं घटत्वं प्रकारतावच्छेदकं विशेष्यतावच्छेदकञ्च भिन्नमेवेति भवति तत्र शाब्दबोधः ।

प्रकृते आश्रयत्वं प्रकारतावच्छेदकं तदेव विशेष्यतावच्छेदकमिति कथमन्वय इति चेद् उच्यते—'नीलघटो घटः' इतिवद् विधेयांशेऽधिकावगाहिशाब्दस्थले तन्नियमाभावात्, प्रकृते व्यापाराश्रयाभिन्नाश्रय इति प्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मभेदस्य सत्त्वाच्च ।

आप्-धात्वर्थः = कर्तृवृत्तिव्यापारविशिष्टफलवत्त्वरूपः सम्बन्धः । वै० स्वप्रयोज्यत्वस्ववाचकधातुवाच्यत्वाभ्याम् । सम्बन्धघटकफलवत्त्वञ्च फलतावच्छेदकसम्बन्धावच्छिन्नं बोध्यम् । सन्नर्थः = इच्छा । तमबर्थश्च प्रकर्षः । तेन प्रयोज्यत्वलाभः । साक्षात् परम्परया जन्यत्वं प्रयोज्यत्वम् । तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयवृत्तिव्यापारविशिष्टफलतावच्छेदकसम्बन्धावच्छिन्नफलाश्रयत्वसम्बन्धविशिष्टेच्छानिरूपितोद्देश्यताश्रयः संकेतसम्बन्धेन कर्मपदवान् इति सूत्रार्थः सम्पन्नो भवति । अत्र क्तप्रत्ययार्थवर्तमानत्वमविवक्षितम् । 'क्तस्य च वर्तमाने' इति षष्ठीविधायके वर्तमानपदं कर्मपदशक्यतावच्छेदककोटिप्रविष्टेच्छाविशेषणतया वर्तमानत्वं न विवक्षितमिति षष्ठ्यनापत्तिशङ्का निरस्ता ।

एवञ्च 'नष्टं घटं जानामि' 'भविष्यत्कालिकं घटं जानामि' 'कटं कृतवान्' 'कटं करिष्यति' इत्यत्र कर्मसंज्ञा भवत्येव । एवञ्च कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यः कर्म इत्यर्थ इति सारम् । 'तण्डुलं पचति' इत्यत्र 'समवायेन विक्लित्तिं प्रति तादात्म्येन तण्डुलः कारणम्' । एवञ्च कर्तृनिष्ठो व्यापारः=फूत्कारत्वाधःसन्तापनत्वार्थरूपः, व्यापारजन्या विक्लित्तिस्तदाश्रयस्तण्डुलः, कर्तुश्चेच्छा = 'मन्निष्ठव्यापारप्रयोज्यविक्लित्त्याश्रयस्तण्डुलो भवतु' इत्येवंरूपा इति तण्डुलस्यानेन कर्मत्वम् ।

**कारकं कर्मसंज्ञकमिति ।** महासंज्ञया क्रियाजनकं कारकमिति । करोति = स्वसम्बन्धेन क्रियायां भेदरूपतामापादयति इति व्युत्पत्त्या क्रियान्वयित्वमेव कारककर्मादिसंज्ञोद्देश्यतावच्छेदकम् । अत्र पूर्वं कारकसंज्ञा सामान्यतो विधेया, तदनन्तरं कारकत्वव्याप्यकर्मादिसंज्ञा करणीया । कारकाधिकारसामर्थ्यात् विशेषसंज्ञया सामान्यकारकसंज्ञाया न बाधः, उपजीव्यत्वात्, कारकसंज्ञा पूर्वं भवति । एवमेव कारकं सत्करणादिसंज्ञकमिति । कारकपदे स्वरितत्वप्रतिज्ञया कारकाधिकारोक्तकर्त्रादिघटकमेव तेन 'नटश्रवणम्' इत्यत्र न कृदुत्तरप्रकृतिस्वरः । 'ग्रामे वासः' इत्यत्र थाथादिस्वरसिद्धिश्च ।

**कर्तुः किमिति ।** ननु तदभावे केनाप्तुमिति उत्थिताकाङ्क्षायां कारकाधिकारेण व्यापारस्य लाभ इति 'कारकवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्म' इत्यर्थेन सकलेष्टसिद्धौ सूत्रे कर्तृग्रहणं व्यर्थमेवेति चेन्न, 'माषा मे गलबिलाधः संयोगाश्रया भवन्तु' इति भक्षणक्रियाकर्तुरश्वस्येच्छा, क्षेत्राधिपतिस्तु—माषभक्षणार्थं प्रवृत्तमश्वं मे माषनाशो मा भूत्, एतदर्थं क्षेत्रादन्यत्र शङ्कुसंयोगानुकूलव्यापारं करोति । एवञ्च कर्तुरित्यस्याभावे बन्धनक्रियाकर्मणो माषा ईप्सिता इति माषाणां कर्मत्वापत्तौ 'माषान् अश्वं बध्नाति' इत्यनिष्टापत्तिवारणाय तस्यावश्यकता इति भावः ।

ननु कृतेऽपि कर्तृग्रहणे भक्षणक्रियाकर्तृत्वस्याश्वे सत्त्वाद् दोषस्तदवस्थ इति चेन्न, कर्तृग्रहणसामर्थ्यात् प्रकृतधात्वर्थकर्तृग्रहणेनादोषात् । अयं भावः—यद्धातुवाच्यफलाश्रयत्वेनेष्टस्य कर्मत्वं

कर्मण ईप्सिता माषाः, न तु कर्तुः। तमब्ग्रहणं किम्—पयसा ओदनं भुङ्क्ते। 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्।

*अनभिहिते।* [ २-३-१ ]

इत्यधिकृत्य।

---

चिकीर्षितं तद्धात्वर्थकर्तुर्ग्रहणम्। अत एव मूले उक्तम्—**कर्मण ईप्सिता माषा न कर्तुरिति। तमब्ग्रहणं किमिति**—अवयवद्वारा समुदाये प्रश्नः ? ईप्सिततमग्रहणं किमर्थमिति। 'कर्तुरुद्देश्यं कर्म' इत्येव सूत्रमस्तु इति पृच्छकस्याशयः। कर्तृवृत्तीच्छीयोद्देश्यताश्रयः कर्मेत्यर्थः। **पयसोदनमिति**। पयसेति करणे तृतीया। ईप्सितग्रहणाभावे यत्किञ्चित्प्रकारकेच्छोद्देश्यस्य कर्मत्वापत्तौ 'पयो लाभनिरूपितविषयताश्रयो भवतु' अत्र पयसि विशेष्यता लाभनिरूपितविषयतायां प्रकारता इति पयसः कर्मत्वं दुर्वारम्। कृते तु ईप्सितग्रहणे फलाश्रयत्वप्रकारकेच्छोद्देश्यस्यैव कर्मत्वेन न दोषः। यदि फलाश्रयत्वेनेच्छायान्तु 'पयो भुङ्क्ते' इति भवत्येव। यदा कृतभोजनो रमेशः पयोलाभेनौदनभोजने प्रवर्तते तदेदमुदाहरणम्।

तमस्य फलन्तु **'अग्नेर्माणवकं वारयतीति'**। तदभावे उभयोः समानविषयत्वेन 'वारणार्थानामीप्सितः' इति सूत्रमस्यापवादः स्यात्। एवञ्च माणवकस्य कर्मत्वं न स्यात्। न चाग्नौ अपादानसंज्ञा कृतार्था, तत्रापि संयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकवारिधात्वर्थघटकसंयोगरूपफलाश्रयत्वेन कर्मसंज्ञा प्राप्नोत्येव। तथा च 'अग्निं माणवकं वारयति' इत्यनिष्टापत्तिवारणाय तमब्ग्रहणम्। एवञ्च ईप्सितमात्रे अपादानसंज्ञा, प्रकर्षविवक्षायाम् = ईप्सिततमे कर्मसंज्ञेति द्वयोर्विषयविभागान्नास्ति बाध्यबाधकभावप्रसङ्ग इति। ईप्सिततमत्वञ्च—'प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वरूपम्'। साक्षात् परम्परया जन्यत्वं प्रयोज्यत्वे तमपा लभ्यते, तेन 'गां पयो दोग्धि' इत्यादौ व्यापारद्वयं धातुलभ्यमिति विभागानुकूलव्यापारानुकूलव्यापारार्थत्वं स्वीकृत्य कर्तुरिति कर्मत्वं प्रसाध्य 'अकथितञ्च' इति सूत्रप्रत्याख्यानसङ्गतिः।

**कर्मेति**। 'अधिशीङ्स्थासां कर्म' इत्यतः कर्मानुवृत्तिसंभवे सूत्रे कर्मग्रहणं व्यर्थमिति चेन्न, आधारनिवृत्त्यर्थमत्र कर्मग्रहणम्। अयं भावः—कर्तृकर्मद्वारा क्रियाश्रय आधारः, अर्थात् फलतावच्छेदकसंबन्धेन फलाश्रयो यस्तदधिकरणम्, व्यापारतावच्छेदकसंबन्धेन व्यापाराश्रयो यस्तदधिकरणम्। एतदन्यतरस्मिन् आधारपदं रूढम्। तेन **'गेहं प्रविशति'** इत्यादिष्वेव आधारस्य कर्मसंज्ञा स्यात् 'हरिं भजति' इत्यादौ अनाधारे इष्टा कर्मसंज्ञा नैव स्यादिति भावः।

**'अनभिहिते'** ( २-३-१ ) इति। न अभिहितोऽनभिहितस्तस्मिन्। अत्राभिहितशब्दः—उक्तार्थकस्तेनानभिहिते = अनुक्ते इत्यर्थः। केनाभिधानमिति मूले एव स्पष्टीभविष्यति। तेनानभिहिते कारके कर्मादिसंज्ञा। अभिहिते कर्मणि प्रथमा, अनुक्ते कर्तरि तृतीया, एवं सर्वत्र योजना कार्या। अधिकारसूत्रमिदमुत्तरत्र संबध्यते। ननु 'बहुपटुः' इत्यत्र बहुचा उक्तत्वेन यथा कल्पप् न भवति तथैव 'क्रियते कटः' इत्यादावपि तिङादिभिरुक्तत्वाद् द्वितीया न भविष्यति। किञ्च 'कटं करोति' इत्यत्र सावकाशा द्वितीया 'कृतः कटः' इत्यादौ प्रथमया बाधिष्यते, निरवकाशत्वात्। न च 'वृक्षः' इत्यादिरवकाशः, तत्रापि प्रतीयमानामस्तिक्रियाम्प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्।

एवञ्च—**'अनभिहिता'** धिकारो व्यर्थः, इति चेत् मैवम्। 'संख्या विभक्त्यर्थः' इति पक्षे सूत्रारम्भात्। तथा चानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः। 'अनभिहिते' इति सूत्राभावे कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति वाक्यार्थस्तथा सति 'कृतः कटः' इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया अम् दुर्वारः। 'परत्वात् प्रथमा' इत्यपि न, ततोऽपि परत्वात् कृद्योगलक्षणषष्ठीप्रसङ्गात्। 'कारकं विभक्त्यर्थः' इति पक्षे सूत्रं भाष्ये प्रत्याख्यातम्।

*कर्मणि द्वितीया* । [ २-३-२ ]

अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मणि 'प्रातिपदिकार्थ-

---

अयं भावः—'पञ्चकं प्रातिपदिकार्थः' तथा च प्रातिपदिकेनैव संख्याकारकयोरप्यभिधाने 'कर्मणि वर्तमानात् प्रातिपदिकात् द्वितीया' 'एकत्वे वर्तमानात् एकवचनम्' इत्येवं तत्तदर्थस्य वाच्यतया तत्र च स्वादिसूत्रेणैव विभक्तेः सिद्धतया तेषां नियमत्वम् । 'एकस्मिन् कर्मणि' इति सूत्रार्थबोधे कर्माद्यर्थस्य प्राधान्यं तदा अनभिहिताधिकारो व्यर्थ एवेत्यत्र भाष्यतात्पर्यम् ।

**कर्मणि द्वितीया** ( २-३-२ ) इति । 'अनभिहिते' इत्यधिक्रियते, तेनानुक्ते कर्मणि द्वितीया स्यात् । कर्मादिसंज्ञा अर्थस्य न शब्दस्येति कर्तृवाचकात् प्रथमा-तृतीयादिविभक्तयः । एवं कर्म-वाचकाच्छब्दात् द्वितीया इत्यर्थः । कर्मवाचकादित्यस्य क्रियाजन्यफलाश्रयवाचकादित्यर्थः । एवञ्च द्वितीयाया आश्रयरूपोऽर्थः, फलस्य धातुलभ्यत्वात् । आश्रय इत्यस्याश्रयतावानित्यर्थः । आश्र-यनिष्ठा वाच्यता न किञ्चिद्धर्मावच्छिन्ना । आश्रयत्वस्य भूतलादावपि सत्त्वेनानतिप्रसक्ततया द्वितीया-वाच्यतानवच्छेदकत्वात् । फलादिनिरूपितत्वविशिष्टमाश्रयत्वमपि नावच्छेदकम्, गोरवात्, 'वैकुण्ठ-मध्यास्ते' इत्यादौ तदभावेन न्यूनवृत्तित्वाच्च ।

**कर्म सप्तविधम्—**

**'निर्वर्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम् ।**
**तच्चेप्सिततमं कर्म्म चतुर्द्धाऽन्यत्तु कल्पितम् ॥**
**औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।**
**संज्ञान्तरैरनाख्यातं यद् यच्चाप्यन्यपूर्वकम् ॥**

इति वाक्यपदीयात् । १—घटं करोति, २ काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोति ३, घटं पश्यति ४, तृणं स्पृशति ५, विप्रं भुङ्क्ते ६, गां दोग्धि ७ क्रूरमभिक्रुद्ध्यति इति ।

वैयाकरणमते कृञ्धात्वर्थः—उत्पत्त्यनुकूलव्यापारः । तेन नैयायिकाभिमतयत्नार्थकत्वमस्य निरस्तम् । सकर्मकत्वेन 'चैत्रेण घटः क्रियते' इति कर्मणि लकारसिद्धिः ।

ननु 'चैत्रो ग्रामं गच्छति' इतिवत् संयोगरूपफलस्य ग्राम इव चैत्रेऽपि सत्त्वात् 'चैत्रः चैत्रं गच्छति' इति कुतो न, एवमेव प्रयागात् काशीं गच्छति चैत्रे विभागरूपफलाश्रयत्वेन प्रयागस्य कर्मसंज्ञा कुतो न ? अत्रोच्यते, आद्ये परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात् । अन्त्ये प्रयागस्य कर्म-संज्ञाया न प्राप्तिः, गम्धात्वर्थफलं संयोगरूपम्, न विभागरूपम् इति प्रकृतधात्वर्थव्यापारप्रयोज्य-फलाश्रयत्वं प्रयागे नास्ति, संयोगरूपफलाश्रयत्वं काश्यामस्ति । तार्किकस्तु ब्रूते—'द्वितीयाप्रकृतित्वेन विवक्षितार्थप्रतियोगिकभेदवत्समवेतव्यापारजन्यं यद्धात्वर्थताऽवच्छेदकं फलं तदाश्रयस्य कर्मसंज्ञा' इति तन्न, गौरवात् ।

**हरिं भजति** इति । हरति पापमिति हरिः । उक्तञ्च—

**"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।**
**अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥" इति ।**

**भजति** इति—प्रीत्यनुकूलव्यापारार्थको भज्धातुस्तथा च 'हरिं भजति' इत्यतो हर्यभिन्न-कर्मनिष्ठसाध्यसाधनभावसम्बन्धावच्छिन्नविशेषणतानिरूपितविशेष्यतावद्वर्तमानकालनिष्ठावच्छेदकता-निरूपितावच्छेद्यतावद्भजनमिति शाब्दबोधः । हरिकर्मकं भजनमिति यावत् ।

**अभिहिते त्विति** । तिङादिभिः कर्मरूपार्थस्योक्तत्वे नैव द्वितीया, किन्तु प्रथमैव, 'अन-भिहिते' इत्यधिकारात् । नन्वेवं 'पक्वं भुङ्क्ते ओदनम्' इत्यत्र द्वितीया न स्यात्, पच्धातुप्रकृतिक-क्तप्रत्ययेनौदनरूपकर्मण उक्तत्वात् इति चेन्न, तत्र पच्भुजनिरूपिते द्वे कर्मत्वशक्ती । तत्र प्रधानक्रिया = भोजनक्रिया, तन्निरूपितकर्मत्वशक्तिरनभिहिता इति द्वितीयोत्पत्तौ बाधकाभावात् ।

मात्रे' इति प्रथमैव । अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ्—हरिः सेव्यते । कृत्—लक्ष्म्या सेवितः । तद्धितः—शतेन क्रीतः शत्यः ।

---

पच्धातूत्तरनिष्ठाप्रत्ययेन कर्मत्वोक्तावपि पचधातूपस्थाप्या क्रिया गुणीभूता इति 'सर्वे सेवका राजानमुपचरन्ति' इति न्यायात् प्रधानक्रियानिरूपिता कर्मत्वशक्तिरनुक्तेति, अप्रधानक्रियानिरूपिताऽपि अनुक्तवतीव भासते । उक्तञ्च—

'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥' इति ।

अत एव 'पक्त्वा ओदनो भुज्यते' इत्यत्र प्रधानभुजिप्रत्ययेनाभिहिते प्रथमैव । पचेरप्राधान्यात् । **अभिधानन्तु प्रायः तिङ्कृततद्धितसमासैरिति** । अयं भावः—'प्रतियोगिविशेषिताभावज्ञानम्प्रति प्रतियोगिनो ज्ञानं कारणम्' इति अनभिहिताधिकारघटकाभिहितपदार्थः कस्तावत् ? अभिहितशब्दार्थः = उक्तिपरः = कथितपरश्चेत् केनोक्त इति जिज्ञासा उदेति तन्निरासाय मूले **अभिधानन्तु** इति क्रमेण उदाहरति—तिङ्—'हरिः सेव्यते' इति ।

अत्र 'चैत्रेण' इति कर्तृवाचकं पदमध्याहार्य्यम् । तेन चैत्राभिन्नैकत्वविशिष्टपुंस्त्वविशिष्टकर्तृनिष्ठः, हर्य्यभिन्नकर्मनिष्ठप्रीतिनिष्ठजन्यतानिरूपितजनकतावाँश्च वर्तमानकालिको व्यापार इति बोधः शाब्दिकमते । तार्किकमते तु प्रथमान्तार्थविशेष्यको बोध इति 'हरिनिष्ठप्रीत्यनुकूलकृत्याश्रयश्चैत्रः' इति । तार्किकमतं वैयाकरणभूषणे निरस्तम् । **सेव्यते** इति । अत्र धातुप्रकृतिकाख्यातेन ( तिङा ) कर्मण उक्तत्वेन हरिशब्दान्न द्वितीया किन्तु प्रथमैव । वस्तुतो नेदं फलम् अनभिहिते इत्यस्य अनवकाशा प्रथमा बाधिका भविष्यति ।

उक्तञ्च भाष्ये– 'अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात्' 'प्रथमा भविष्यति विप्रतिषेधेन' इति द्वितीयाया अवकाशः–'कटं करोति' । प्रथमाया अवकाशः—अकारकम्, वृक्षः, प्लक्षः, इति । **कृत्** इति । **'लक्ष्म्या सेवितः'** इति । लक्षेर्मुट् ईप्रत्ययः लक्ष्मीरिति । विष्णुपत्नी समुद्रतनया तया सेवितो हरिः । अत्र धातूत्तरनिष्ठाप्रत्ययेन कर्मणोऽभिहितत्वात् प्रथमैव । कर्तुश्चानुक्तत्वेन तृतीया । कर्मणि प्रयोगः । लक्ष्मीकर्तृकव्यापारजन्यप्रीतिजनककृतिमान् हरिरिति तार्किकमते बोधः ।

शाब्दिकमते तु स्त्रीत्वविशिष्टैकत्वविशिष्टलक्ष्म्यभिन्नकर्तृवृत्ति—अथ च पुंस्त्वविशिष्टैकत्वविशिष्टहर्यभिन्नकर्मनिष्ठप्रीतिजन्यतानिरूपितजनकतावान् वर्तमानकालनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावान् व्यापार इति बोधः । कालक्रिययोरवच्छेद्यावच्छेदकभावसम्बन्धः, **'क्रियाभेदाय कालः स्यात् सङ्ख्या सर्वस्य भेदिका ।'** इत्युक्तेः । इदमपि न फलमनभिहिताधिकारस्य, अनवकाशत्वात् प्रथमा बाधिका भविष्यति, अथवा परत्वात् प्रथमा इति ।

तद्धितान्तोदाहरणम्—**शत्य** इति । शतेन क्रीतः शत्यः । क्रयणरूपफलाश्रयः = अश्व इति । अत्र अश्वस्य धात्वर्थफलाश्रयत्वेऽपि तद्धितेन यत्प्रत्ययेन अश्वादिरूपकर्मण उक्तत्वेन नाश्वादिशब्दाद् द्वितीया । वस्तुतस्तु नेदं फलमनभिहिताधिकारस्य ।

तथाहि—यथा विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिपुरस्कारेण कर्मादिभासकतासामर्थ्यं कर्मादिपदानां नास्ति, एवं तद्धितादेरपि इति न द्वितीयायाः प्राप्तिरिति । अतः **'औपगवः'** इति प्रत्युदाहरणं युक्तम् । तत्र सम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तषष्ठीवारणार्थमनभिहिते इति । तत्र हि उपगुनिरूपितजन्यजनकभावरूपः संबन्धः, तस्य तद्धितेनोक्तत्वात् न षष्ठी इति भावः ।

समासः, प्राप्त आनन्दो यं स प्राप्तानन्दः। क्वचिन्निपातेनाभिधानम्, यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।'

---

'भीष्मं कटं कुरु' इति। उक्तञ्च भाष्ये—'अशेषत्वान्नात्र शेषलक्षणा षष्ठी' इति। अनन्वितार्थककर्मादीनामभावाच्च नान्या, न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्यय इति 'अपदं न प्रयुञ्जीत' इति च नियमानुरोधेन 'भीष्मं कटं कुरु' इत्यत्र कटपदोत्तरद्वितीयया कर्मण उक्तत्वेऽपि द्वितीया भीष्मपदात् भवत्येव इत्युक्तम्।

वस्तुतस्तु 'अनभिहिते' इत्यस्य न किमपि फलम्। तथाहि—'कारकाणां क्रियायामन्वयः' इति कारकनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नंप्रति धातुजन्यसाध्यत्वविशिष्टभावनात्वावच्छिन्नभावनोपस्थितिः कारणम्' इति प्रकृते 'शत्यः' इत्यादौ तद्धितकृदादिभिः कारकान्वययोग्यतावच्छेदकं साध्यत्वेन न क्रियादेर्भानमिति। अत एव तत्र नेतरकारकाणामन्वयः। प्राप्तानन्द इति। 'यत्कर्मकप्राप्तिकर्ता आनन्दः' इति विग्रहवाक्यार्थबोधः। समासतश्च 'आनन्दकर्तृकप्राप्तिकर्म' इति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्पनीयः स्यात्, वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च।

किञ्च तथा सति बहुव्रीह्युपजीव्यस्य एकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः स्यात्। तथा सति प्राप्ता भार्या यं स 'प्राप्तभार्यः' इत्यादौ पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्याभावेन पुंवत्त्वानापत्तिः। अतः 'किम्प्रधानोऽयं समासः' इति प्रश्नस्य 'उत्तरपदार्थप्रधानः' इत्युत्तरे 'राज्ञः पुरुषः' 'राजपुरुषः' इत्यादौ विग्रहे उत्तरपदादुत्तरं श्रूयमाणा विभक्तिः यथा समासादपि श्रूयते तथाऽत्रापि 'जातस्य मासः' इति विग्रहे जातपदोत्तरं श्रूयमाणा षष्ठीविभक्तिः 'मासजातः' इति समासादपि श्रूयेत इति शङ्कानिरासाय भाष्यकृतोक्तम्—'अभिहितः सोऽर्थोऽन्तर्भूतः' प्रातिपदिकार्थ इति षष्ठी न भवति' इति भाष्ये समासपदं समासविग्रहोभयपरम्।

तथा च प्रकृते 'प्राप्तिकर्त्रानन्दकर्म' इति बोधः। ननु क्रियानिरूपितं कर्मत्वम्; न तु कारकनिरूपितं कर्मत्वमिति 'आनन्दकर्म' इत्यसङ्गतम् इति चेन्न, आनन्दनिरूपितकर्मत्वस्य बोधेऽपि तत्र विशेषणीभूता क्रिया = प्राप्तिरूपा तन्निरूपितकर्मत्वभानम् आरोप्यते तत्रेति दिक्। एवञ्च 'कृदन्ताः शब्दा हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तु उद्भूतां कारकशक्तिं प्रतिपादयन्ति' इति कैयटोक्तिमनुसृत्य तस्य कर्मत्वस्य न क्रियायामन्वयः। अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन (शतकरणक्रयणकर्मीभूतोऽश्वः) इत्यर्थेऽश्वस्य प्राधान्यं न स्यात्, भवति च तस्य प्राधान्यम्। तदयं निर्गलितोऽर्थः—कर्मादिपदैरिव पक्वादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् इति विभक्तिवाच्यताऽवच्छेदकोद्भूतशक्तिमत्त्वाभावेन कर्मादिसंज्ञाया अप्राप्त्या 'अनभिहिते' इति सूत्रं नावश्यकमिति। ध्वनितश्चायमर्थः 'सुप आत्मनः क्यच्' इति सूत्रभाष्ये। एवञ्च विभक्त्यप्राप्तिरूपार्थानुवादकमेव सूत्रम्, नापूर्वमिति।

**प्रायेण** इत्यस्य फलमाह—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति। अत्र विषवृक्षस्य संवर्धनक्रियानिरूपितकर्मत्वेऽपि 'अपिना निपातेनै एतत्कर्मत्वस्याभिधानात्तत्र कर्मणि द्वितीया न, किन्तु प्रथमैव। वस्तुतस्तु नेदमपि 'अनभिहिते' इत्यस्य फलम्। तथाहि—अत्र 'च्छेत्तुम्' इत्यत्र तु पुनः साधुत्वाय 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति सूत्रप्रवृत्त्यर्थम् (इष्यते) इत्यध्याहारः कर्तव्यः। अन्यथा क्रियार्थक्रियोपपदत्वाभावेन स दुर्लभः स्यात्। अध्याहारे तु इच्छार्थे तुमुन् सुलभः। विषवृक्षोऽपि संवर्ध्य छेत्तुमिष्यते इति यत् तद् असाम्प्रतम् = अन्याय्यम्। तथा च प्रधानीभूतक्रियावाचकधातुप्रकृतिकतिङा कर्मत्वस्याभिधानात्प्रधानमनुबुध्यत इति संवर्धनक्रियाकर्मत्वमनुक्तमपि उक्तवत्प्रतिभातीति तत्कर्मवाचकान्न द्वितीयेति भावः। अत्र निर्विषया इच्छा न

साम्प्रतमित्यस्य हि युज्यत इत्यर्थः।

भवतीति इच्छायाः सविषयकत्वमुचितम् इति इच्छाविषयीभूतविषयस्यान्याय्यत्वेनेच्छायामन्याय्यत्वमभ्यस्यते। एवमेव।

'चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
ततो विभक्तावयवं पुमानिति क्रमादयं नारद इत्यबोधि सः॥'

इति गुर्जरदेशालङ्कारमणिना माघकविना स्वीये माघकाव्ये शिशुपालवधाख्ये श्लोकोऽयं विरचितस्तत्र बुधधात्वर्थज्ञानानुकूलव्यापारक्रियानिरूपितफलाश्रयत्वेन 'नारदम्' इति प्रयोगनिरसनायात्रेति निपातेन तत्कर्मत्वस्याभिधानेन न तस्माद् द्वितीयेति प्राचीनाः। नव्यास्तु 'नारद इति श्रीकृष्णीयज्ञानाकारानुकरणम् इति प्रथमान्तस्याप्रातिपदिकत्वान्न तत्र द्वितीया। इतिशब्दादुत्पन्ना द्वितीयाऽव्ययत्वेन सा लुप्तेति नेदं फलमनभिहिते' इत्यस्य।

अत एव 'अधिहरि' इत्यव्ययीभावे निपातेनाधिशब्देनाधिकरणरूपार्थस्य उक्तत्वेऽपि हरिशब्दात्सप्तमीति। तत्र वचनासामर्थ्यादिति कल्पना न कार्य्या। 'ग्रामं न गच्छति' इत्यत्र 'मद्वृत्तिव्यापारप्रयोज्यसंयोगाश्रयो ग्रामो भवतु' इति इच्छोद्देश्यत्वाभावेन ग्रामस्य कथं कर्मत्वम्? इति जिज्ञासायामुच्यते–'बुद्धिसिद्धन्तु तदसत्' इति बौद्धपदार्थसत्ताऽङ्गीकरणात्। एवञ्च पदार्थो द्विविधः– बाह्यो बौद्धश्च। अत्र बाह्यस्य ग्रामरूपार्थस्य तादृशेच्छाविषयत्वाभावेऽपि बौद्धव्यापारप्रयोज्यफलवत्त्वप्रकारकेच्छोद्देश्यत्वमिति कर्मसंज्ञा भवति।

'देवदत्तस्तण्डुलान् पचति' इत्यतो बोधः—देवदत्ताभिन्नैकत्वविशिष्टकर्तृवृत्ति–बहुत्वविशिष्टतण्डुलाभिन्नकर्मनिष्ठविक्लित्त्यनुकूलवर्तमानकालिको व्यापार इति शाब्दबोधः। एवं 'घटं करोति कुलालः' 'चैत्रः पुस्तकं पठति', 'चैत्रो ग्रामं गच्छति' 'कमलेशः सन्ध्यां करोति' 'रमेशो दुग्धं पिबति' 'ब्राह्मणो वेदमधीते' 'आचार्यो धर्मं ब्रूते' 'शिष्टः परोपकारं कुरुते' 'दुर्जनो निन्दां करोति' इत्यादिषु शाब्दबोधप्रकारः पूर्वोक्तरीत्या स्वयं तर्कणीय इति। कर्तृप्रत्यये—आख्यातस्य = तिङः कर्तृसंख्याकालरूपास्त्रयोऽर्थाः। **कर्मणि प्रत्यये** कर्मसंख्याकालरूपास्त्रयोऽर्थाः सन्ति। धातोस्तु फलम्, व्यापारश्चार्थः। फलं जन्यम्। व्यापारस्तु जनकः। व्यापारस्य जनकः कर्त्रादिः। चैत्रादिपदार्थस्य कर्तरि अभेदसम्बन्धेनान्वयः। आख्यातार्थसंख्यायास्तु समवायेन कर्तरि अन्वयः, द्वितीयाप्रकृत्यर्थस्य प्राचीनमते द्वितीयार्थकर्मणि अभेदेनान्वयः। संख्याया विभक्तिवाच्यायाः, द्योत्यायाश्च प्रकृत्यर्थे समवायेऽन्वयः। द्वितीयार्थकर्मणश्च निष्ठत्वसम्बन्धेन धात्वर्थफलेऽन्वयः। फलस्य जनकत्व (अनुकूलत्व) सम्बन्धेन, कर्तुश्च निष्ठत्वसम्बन्धेन च धात्वर्थव्यापारेऽन्वयः, आख्यातार्थ–वर्तमानादिकालानां व्यापारेऽवच्छेद्यत्वसम्बन्धेनान्वयः, कालक्रिययोरवच्छेद्यावच्छेदकभावसम्बन्धः। अत्रावच्छेदकत्वम्= व्यावर्त्तकत्वम्। अवच्छेद्यत्वम्=व्यावर्त्यत्वम् इति न नैयायिकनिकायप्रसिद्धमिति **पञ्चोलिना।** कालस्त्रिविधः—भूतभविष्यद्वर्तमानभेदात्। कालसामान्यलक्षणन्तु १—कालं क्रियात्मकमाहुः। २—क्षणसमूहं कालमाहुः। ३—अखण्डमतिरिक्तं कालं वदन्ति। कालसामान्यलक्षणन्तु—'कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतया निमित्तकारणत्वम्। अस्मिन् लक्षणे संसर्गविधया कालस्य प्रवेशादात्माश्रय इत्युच्यते तदा कार्यतायां कालिकसम्बन्धावच्छिन्नत्वमपहाय 'दैशिकातिरिक्तसर्वाधारतानियामकसम्बन्धावच्छिन्नत्वं देयमिति **पञ्चोलिनः।**

वर्तमानत्वं धातुविशिष्टत्वम्। वैशिष्ट्यञ्च—स्वाधिकरणत्वं स्वजन्यबोधविषयत्वेन तात्पर्य्यविषयीभूतक्रियाधिकरणत्वं स्वजन्यबोधविषययावद्व्यापारप्रतियोगिकध्वंसानधिकरणत्वं स्वजन्यबोधविषययावद्व्यापारप्रतियोगिकप्रागभावानधिकरणत्वमेतच्चतुष्टयसम्बन्धेन। लक्षणसमन्वयश्चेत्थम्—तत्तद्धातुवाच्याद्यक्रियामादाय चरमक्रियापर्यन्ताधिकरणीभूतः कालो वर्तमानत्वेन व्यवह्रियते, तत्रैव 'पचति' 'गच्छति' इत्यादिप्रयोगदर्शनात्। तथा च तादृशकाले पच्यादिधातुविशिष्टत्वमस्ति। तथा

*तथायुक्तं चानीप्सितम् [ १-४-५० ]*

ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। ग्रामं गच्छंस्तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते।

---

हि—त्वम् = पच्यादिधातुरतदधिकरणत्वं 'पचति' इत्यादिप्रयोगमादाय, पच्यादिधातुजन्यबोधविषयत्वेन तात्पर्यविषयीभूता क्रिया=पाकादिरतदधिकरणत्वमपि तत्र काले, पच्यादिधातुजन्यबोधविषय-सकलव्यापारप्रतियोगिकध्वंसस्योक्तकालेऽसत्त्वेन तृतीयसम्बन्धोऽप्युपपद्यते। अत्र यत्किञ्चित्क्रियाप्रतियोगिकध्वंसस्य सत्त्वेनाव्याप्तिवारणाय ध्वंसे यावत्क्रियाप्रतियोगिकत्वनिवेशः। पच्यादिधातुजन्यबोध-विषयसकलव्यापारप्रतियोगिकप्रागभावाधिकरणत्वस्य तादृशपूर्वकाले एव सत्त्वेन तादृशप्रागभावानधिकरणत्वमपि तत्र सुलभमिति।

भूतत्वम्=वर्तमानध्वंसप्रतियोगित्वम्। भविष्यत्त्वम् = वर्तमानप्रागभावप्रतियोगित्वम्। धातुवाच्या सर्वा क्रियाऽतीन्द्रियत्वेन परोक्षा। उक्तञ्च—'क्रिया नामेयमत्यन्तापर (रि) दृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्' इति।

ईप्सिततमकारकस्य कर्मत्वं विधाय अनीप्सितकारकस्य कर्मसंज्ञाविधानार्थमाह—**तथायुक्तं चानीप्सितम्** ( १-४-५० ) इति। अत्र तथायुक्तत्वञ्च—समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्य-तद्धात्वर्थफलाश्रयत्वम्। अनीप्सितं चतुर्विधम्। **उदासीनम्**—यथा 'तृणं स्पृशति' इति। **द्वेष्यम्**—'ओदनं भुञ्जानो विषं भुंक्ते' इति। यदि अनिच्छया तद् भुंक्ते तदेदमुदाहरणम्। यदि तु रोगादिना पीड्यमानो विषभक्षणमेव श्रेयो मनुते तदा तु पूर्वेण कर्मसंज्ञा विधेया। वस्तुतस्तु नेदमुदाहरणमस्य सूत्रस्य। तथा हि—पराधीनतया विषं भुञ्जानेऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात् पूर्वसूत्रेणैव सिद्धम्। तदुक्तं भाष्ये—'आतश्च विषमीप्सितं यत्तद्भक्षयति' इति। तस्माद् **द्वेष्यस्योदाहरणम्**—'चौरान्पश्यति' इति। **संज्ञान्तरैरनाख्यातम्**—'गां दोग्धि' इति। **अन्यपूर्वकम्**—'क्रूरमभिक्रुध्यति' इति। अत्र **तथाशब्दस्तेन** प्रकारेणेत्यर्थकः। बुद्धिविशेषविषयत्वोपलक्षिततत्तद्धर्मावच्छिन्नबोधकत्वं त्यदादिशब्दानाम्। एवञ्च पूर्वसूत्रस्थम् ईप्सिततमपदं तद्धितप्रकृतिभूतवच्छब्देनाभिधीयते। तदेवाह—**ईप्सिततमवदिति**। अत्र तुल्यार्थे 'तेन तुल्यं क्रिया चेद्वतिः' इति वदर्थः= सादृश्यम्। सादृश्यञ्च क्रियात्वेनेति **क्रियया** इति। **अनीप्सितमिति** नञा इच्छोद्देश्यत्वमिह व्यवच्छिद्यते। तथा च 'कर्तृवृत्तिप्रकृतधात्वर्थप्रधानव्यापारविशिष्टफलाश्रयत्वेन वक्त्रा विवक्षितोऽर्थः कर्मसंज्ञकः। **वैशिष्ट्यञ्च**—स्ववाचकवाच्यत्वं स्वप्रयोज्यत्वमेतदुभयसंबन्धेन।

सूत्रोदाहरणमाह—**ग्रामं गच्छन् तृणं स्पृशति** इति। संयोगानुकूलव्यापारो गम्धात्वर्थः। अत्रानुकूलत्वम् = जनकत्वम्। तेन संयोगरूपफलस्य जन्यत्वम्। गमनक्रियाकर्तुश्चेच्छा—'मद्वृत्ति-व्यापारजन्यसंयोगाश्रयो ग्रामो भवतु' इति तादृशफलाश्रयत्वेन ग्रामस्य 'कर्तुः' इति पूर्वसूत्रेणैव कर्मसंज्ञा। **गच्छन्निति**—शतृप्रत्ययान्तं रूपमिदम्। शतृप्रत्ययार्थः—आश्रयः। व्यापाराश्रय इति यावत्। व्यापारस्य धातुलभ्यत्वेन न तदंशे शक्तिः। **तृणमिति**। तृण्यते इति तृणम्। 'तृणु अदने' ( त० उ० से० ) घञ्प्रत्ययः। 'संज्ञापूर्वको विधिरनित्यः' इति न गुणः। संज्ञाशब्दोऽयं योगरूढः। भक्षणक्रियाकर्मभूतं घासापरपर्य्यायं वस्तु। तदेव संयोगानुकूलव्यापारार्थकस्पृशधातुवाच्यसंयोग-रूपफलाश्रय इति गमनक्रियाकर्तुर्नेप्सितं किन्तूदासीनमिति अनीप्सितत्वादनेन तस्य कर्मसंज्ञा, कर्मणि द्वितीया च। **ओदनमिति**।

**'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः।'**

इति कोषः। उनत्ति = क्लेदयति ( रु० प० से० ) 'उन्देर्नलोपश्च', ( उ० २-७६ ) इति युच्। ऊर्दतेऽनेन वा। उर्द क्रीडायाम्, करणे ल्युट्, पृषोदरादिः। **भुञ्जान इति**। गलबिलाधः

*अकथितं च । [ १-४-५१ ]*

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

'दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म' इति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः । बलिं याचते वसुधाम् ।

---

संयोगानुकूलव्यापारो भुजेरर्थः । भुजधातोर्लटि, शानचि, नुमि, अनुस्वारे परसवर्णे चेदं रूपम् । गलविलाधः संयोगरूपफलाश्रयत्वात् 'ओदन'स्य पूर्वसूत्रेण कर्मसंज्ञा । विषमिति । विष्लृ व्याप्तौ ( जु० प० अ० ) वेवेष्टि = व्याप्नोति इति विषम् । भुङ्क्ते इति । भुजधात्वर्थफलाश्रयत्वात्, अनीप्सिततमत्वाच्चानेन तस्य कर्मसंज्ञा ।

अकथितञ्च ( १-४-४१ ) इति । अत्र 'अकथित' शब्दोऽसंकीर्तितपरः । असंकीर्तितत्वञ्च क्वचित् प्रसक्तस्यापादानत्वादेरप्यपादानत्वादिरूपेणाविवक्षितत्वरूपम् । क्वचिच्च सर्वथाऽपादानत्वाप्राप्तिरूपम् । आद्यम्—'गां दोग्धि पयः' इति । द्वितीयं 'बलिं याचते वसुधाम्' इति । एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायाम्, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति । यदि अपादानत्वादिना विवक्षा तदा तु पञ्चम्याद्येव । तेन रूपेणाविवक्षा, कर्मत्वेन यदा विवक्षा तदेदं सूत्रं प्रवर्तते इति भावः । अयं भावः—'विवक्षातः कारकाणि भवन्ति' कर्मादिषु निश्चयो नास्ति । उक्तञ्च—

'वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्येषा पच्यते ह्येषा विवक्षा दृश्यते यतः ॥'

इति । 'स्थाल्यां पचति, स्थाल्या पचति, स्थाली पचति' इत्येवमादयः प्रयोगाः सन्ति । दुहादिषोडशधातुवाच्यव्यापारजन्यफलाश्रयप्रधानकर्मसम्बद्धाकथितकारकस्य कर्मसंज्ञां विधत्ते । कर्मयुगिति । कर्मयुक्त्वं धात्वर्थव्यापारात् प्राक् तदनन्तरं वा तत्सम्बद्धत्वम् । तत्र ब्रुविशास्यतिरिक्ते धात्वर्थव्यापारात्प्रागेव तत्सम्बद्धत्वम् । तद्विषये तु तदनन्तरं तत्सम्बद्धत्वं बोद्धव्यम् 'गां दोग्धि पयः' इति । अत्रापादानत्वेन गोशब्दात्पञ्चमी प्राप्ता, किन्तु अपादानत्वेनाविवक्षया कर्मत्वेन विवक्षया चानेन कर्मसंज्ञा विधीयते । पय इति प्रधानं कर्म । तस्य कर्तुरिति कर्मसंज्ञा । द्रवद्द्रव्यविभागानुकूलव्यापारो दुहेरर्थः । अत्राप्रधानं कर्म गौरिति । तेन पूर्वोक्तषोडशधातूनां द्विकर्मकत्वम् । अकथितञ्चेति सूत्रविहितकर्मणो गौणत्वम् । पयःसम्बन्धि गोकर्मकं दोहनमिति बोधः । ननु द्विकर्मकधातूनां कस्मिन् कर्मणि प्रत्ययः, इति जिज्ञासायाम् उक्तम्—

'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मणाञ्च निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।' इति ।

'गौः दुह्यते पयः' इत्यादिरूपाणि । वस्तुतस्तु दुहादिषोडशधातूनां तत्समानार्थकान्यधातूनाञ्च व्यापारद्वयार्थकत्वं स्वीकृत्याकथितञ्चेति सूत्रं न करणीयमिति वदन्ति नव्याः । तथाहि—'गां दोग्धि' इत्यत्र 'गौः पयस्त्यजति', 'गवा पयस्त्याजयति' इत्यर्थप्रतीत्या दुह्धातोः 'द्रवद्द्रव्यविभागानुकूलव्यापारानुकूलव्यापारोऽर्थः' । एवञ्च नव्यमते प्रधानकर्मत्वं गवादीनामेवेति तत्रैव कर्मणि लादिसिद्धिः । प्रधानकर्मत्वञ्च—'कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम्' । प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठव्यापारस्तदनुकूलव्यापारस्य शाब्दबोधीयविशेष्यत्वरूपप्राधान्यम् । 'बलिं याचते वसुधाम्' इति परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारो याचेरर्थः । स्वत्वे बलेः निरूपकतयाऽन्वय इति नागेशः ।

अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गाञ्छतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते, शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति, हरति, कर्षति, वहति वा । अर्थनिबन्धनेयं संज्ञा ।

---

**अत्र पञ्चोलिनः**—ननु स्वामितानिरूपकं स्वत्वम्, न तु बलिनिरूपकत्वमिति जिज्ञासायाम्—बलिनिष्ठस्वामितानिरूपके स्वत्वे स्वामिताऽऽश्रयनिरूपकत्वमपि परम्परया भासते इति बलिनिरूपकत्वोक्तिर्यथाकथञ्चित् संगतेति ।

अत्रापि व्यापारद्वयार्थकत्वं स्वीकृत्य पूर्वेणैव कर्मसंज्ञेति नेदं सूत्रमावश्यकमिति । अत्र बलेरपादानत्वेनाविवक्षा, कर्मत्वेन विवक्षा बोध्या । **अविनीतं विनयं याचते** इति । अविनीतं विनयानुनयतीत्यर्थः । विनयस्यानेन कर्मत्वम् । अविनीतस्य पूर्वेण । यदि तु अनुनयानुकूलव्यापारानुकूलव्यापारर्थकत्वे तु पूर्वेण गतार्थता । **तण्डुलानोदनं पचति** इति । अत्र द्वयर्थः पचिः । विक्लित्त्यनुकूलव्यापारवाचको यदा तण्डुलं कर्म तदा । ओदनरूपं कर्म तदा सिध्यनुकूलव्यापारः । तण्डुलानां करणत्वाविवक्षायामनेन कर्मसंज्ञा । अत्रापि विक्लित्त्यनुकूलव्यापारानुकूलव्यापारवाचकत्वं पचेस्तदा पूर्वेण कर्मत्वम् । **गर्गान् शतं दण्डयति** इति । अपादानत्वेनाविवक्षायां गर्गाणामनेन कर्मसंज्ञा । शतस्य पूर्वेण । बलात् परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारो दण्डेरर्थः । अत्र गर्गपदं गर्गगोत्रवतां पुरुषाणां बोधकम् । तेभ्यः शतकर्मकं दण्डनम्, न तु प्रत्येकस्मात् शतकर्मकं दण्डनम् । **व्रजमवरुणद्धि गाम्** इति । व्रजस्याधिकरणत्वाविवक्षायां कर्मसंज्ञाऽनेन । निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः । व्रजे गौस्तिष्ठति, तत्र तां निर्गमप्रतिबन्धपूर्वकं चिरं स्थापयतीति सम्प्रत्ययात् । अत्रापि व्यापारद्वयार्थकत्वे तु पूर्वेण कर्तुरित्यनेन कर्मत्वम् । **माणवकं पन्थानं पृच्छति** इति । जिज्ञासाविषयार्थज्ञानानुकूलव्यापारः पृच्छेरर्थः । जिज्ञासा च—'केन पथा गन्तव्यमित्येवं रूपा । अत्र ज्ञानविषयत्वेन पथः कर्मत्वम् । माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः । अपादानत्वन्तु नात्र, 'न प्रश्नादेवापायो भवति पृष्टोऽसौ यद्याचष्टे तदाऽपायेन युज्यते' इति । सम्प्रदानत्वमपि न, कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वाभावात् । व्यापारद्वयार्थकत्वे तु कर्तुरिति कर्मत्वम् ।

**वृक्षमवचिनोति फलानि** इति । विभागपूर्वकादानानुकूलो व्यापारश्चिनोतेरर्थः । वृक्षात् फलानि आदत्ते । अपादानत्वाविवक्षायामनेन कर्मत्वम् । **माणवकं धर्मं ब्रूते शास्ति इति** । कण्ठताल्वाद्यभिघातपूर्वकज्ञानजनकशब्दप्रयोगरूपव्यापारो ब्रूञर्थः । प्रवृत्तिपर्य्यवसायी शासेरर्थः । 'अध्ययनं कुरु' इति शिष्योपदेशरूपः । सम्प्रदानत्वाविवक्षायामनेन कर्मत्वम्, उपदेशानुकूलधर्मसम्बन्धकरणपरीक्षणमपि आचार्यस्येति कर्तव्यतायामागच्छति । न केवलोपदेशदानेन आचार्यस्य कृतार्थतेति दिक् । शतं जयति देवदत्तम् । अपादानत्वाविवक्षायां देवदत्तस्यानेन कर्मत्वम् । पराक्रमप्रदर्शनपूर्वकपरस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्यनुकूलव्यापारो जिधात्वर्थः । व्यापारद्वयार्थकत्वे तु पूर्वेण कर्मत्वम् । **'सुधां क्षीरनिधिं मथ्नाति'** इति । सुधायै इति प्राप्ते सम्प्रदानत्वाविवक्षायामनेन कर्मत्वम् । अन्तःस्थितसारभूतद्रव्यबहिःप्रकाशनाय विलोडनानुकूलव्यापारार्थकत्वं मथेः । **देवदत्तं शतं मुष्णाति इति** । गुप्तप्रकारेणान्यायेन परस्वत्वस्वाधीनीकरणरूपव्यापारो मुषेरर्थः । व्यापारद्वयार्थकत्वे कर्तुरिति कर्मत्वम् । **ग्राममजां नयति हरति कर्षति वहति वा** इति । नयतेः संयोगानुकूलो व्यापारः । स्कन्धादिग्रहणपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारो वहेरर्थः । गत्यनुकूलव्यापारविशेषः कृषेरर्थः । बलात् ग्रहणपूर्वकं देशान्तरप्रापणं हरतेरर्थः । सर्वत्रोदाहरणेषु व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वसिद्धया 'अकथितञ्चे'ति सूत्रं भगवता प्रत्याख्यातम् ।

**अर्थनिबन्धनेयं संज्ञा इति** । न तु स्वरूपाश्रया । तेन षोडशधातुपर्य्यायवाचकधातुयोगेऽपि 'अकथितञ्च' इति सूत्रं प्रवर्तत एव । अत्रार्थे 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२-४-६२) इति

बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि । **कारकं किम्**— माणवकस्य पितरं पन्थानं पृच्छति । 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ।' कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ॥

*गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । [ १-४-५२ ]*

---

सूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मत्वबोधनपरं भाष्यमेव । तथाहि—'यो हि उभयोर्दोषो न तत्रैकश्चोद्यः' इत्यर्थमुपक्रम्य 'अचोद्यं मां त्वं चोदयसि' 'अहमपि त्वां किमचोद्यं चोदयामि ।' इति कर्तरि प्रत्यये प्रयोगः । कर्मणि प्रत्यये—'अहमपीदमचोद्यं चोद्ये' इति ।

तथा भट्टिः—**स्यात्स्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्** । इति ।
कालिदासोऽपि—**शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव** ॥ इति ।
भारविरपि—**उदारचेता गिरिमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः** । इति च ।

एवं पूर्वोक्तधातुसमानार्थकानेकधातूनां द्विकर्मकत्वं ज्ञेयम् । तेन बलिं **भिक्षते वसुधाम्** । **माणवकं धर्मं भाषते = अभिधत्ते वक्ति** इत्यादि ।

**अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति** । द्विविधा हि धातवः- सकर्मकाः, अकर्मकाश्च । स्वार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । स्वार्थफलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । स्वम् = धातुः । धातुत्वञ्च क्रियावाचकत्वरूपम् । क्रियात्वञ्च—गुणत्वानाश्रयत्वे सति विभागासमवायिकारणत्वम् । क्रिया च साध्यरूपा साधनरूपा च । पचति, पाकः, क्रमेणोदाहरणम् । **साध्यत्वञ्च**—'क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वम् । 'पचति' इत्युक्ते साधन( कारक )विषयिणी आकाङ्क्षा उदेति न क्रियाविषयिणी । 'पाकः' इत्युक्तौ पाको जातो नष्टो वेति अन्यक्रियाविषयिणी आकाङ्क्षा नियमेन भवति इति । क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकत्वं सिद्धत्वम् । नास्ति कर्म येषान्ते **अकर्मकाः** । अकर्मकाश्च ते धातवस्तेषां योगे = सम्बन्धे **देशः** = कुरु-पञ्चालादिस्तस्य कर्मसंज्ञा भवति । तेन 'अधिशीङ्स्थासां कर्म' इत्यस्य न वैयर्थ्यम् । **देशस्योदाहरणम्—कुरून् स्वपिति** इति । अभावप्रत्ययालम्बननिद्रारूपः स्वापः । एवं **कालस्य कर्मसंज्ञा** भवति । अत्र कालपदेन लोके प्रसिद्धस्यैव मासादेर्ग्रहणन्नतु गोदोहनादिकालस्य, अप्रसिद्धत्वात् । तेन **मासमास्ते** इति । **भावः**—साधनरूपा क्रिया, लक्षणया तदु लक्षितः प्रसिद्धकालश्च । **कर्मत्वोदाहरणं 'गोदोहमास्ते'** इति । **गन्तव्योऽध्वा** = गन्तव्यत्वेन विशेषितः, गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति । उदाहरणमाह—**क्रोशमास्ते । कर्मसंज्ञक इति** । अत एव **'आस्यते मासः'** इति कर्मणि लादयोऽपि । अकर्मकपदे निषेध्यसमर्पककर्मपदेन कालादिरूपकर्मणामग्रहणेनाकर्मकत्वाभावेन लादय इति बोध्यम् इति प्राचीनाः । नव्यास्तु स्वकरणव्यापने वृत्त्या व्याप्तिरूपफलाश्रयत्वेन कर्तुरिति कर्मत्वम् । **मासमास्ते** इत्यत्र स्थितिक्रियाद्वारा मासं व्याप्नोति । एवमन्यत्रापि बोध्यमिति वार्तिकं नारब्धव्यमिति प्राहुः ।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ** ( १-४-५२ ) इति । गतिश्च **बुद्धिश्च**, प्रत्यवसानं ( भक्षणं ) च गतिबुद्धिप्रत्यवसानानि तेऽर्था येषां धातूनामिति गतिबुद्धिप्रत्यवसानार्थाः, शब्दकर्म ( कारकम् ) येषान्ते शब्दकर्माणः, नास्ति कर्म येषान्ते अकर्मकाः, गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्चाकर्मकाश्चेति तेषाम् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' अत्रान्तपदं समीपपरम् । सामीप्यञ्च क्वचित् पूर्वेण क्वचित्परेण च । 'अधिशीङ्स्थासां कर्म' इत्यत्र पूर्वेण । अत्र परेण । एवञ्चात्रार्थशब्दस्य प्रत्येकं योगकरणेन गत्यर्थका ये धातवः, बुद्धि=

गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

ज्ञानम् इति ज्ञानार्थकाश्च ये धातवः, प्रत्यवसानम् = भक्षणम् इति भक्षणार्थकाश्च ये धातवस्तेषां गतिबुद्धिप्रत्यवसानार्थपदेन ग्रहणम् । **शब्दकर्मेति** शब्दरूपं कर्मकारकमेवात्र कर्मपदेन गृह्यते, न तु करोति कर्तृकर्मादिव्यपदेशान् यत्तत्कर्म=क्रियेति । कर्मशब्दो द्विविधः—कारकत्वव्याप्यकर्मकारकपरः, यौगिकव्युत्पत्त्या क्रियापरश्च । यथा 'कर्तरि कर्मव्यतिहारे' इति सूत्रे कर्मशब्दस्य क्रियापरत्वम् । तेन कर्मव्यतिहारे=क्रियाव्यत्यासे इति तत्रार्थः ।

अयं भावः—यदि कर्मपदेनात्र क्रियाऽभिमता स्यात् तदा तु सूत्रघटकार्थशब्दात् पूर्वमेव शब्दं पठेत्, कर्मपदं न कुर्यात्, लाघवात् । तथा च गतिबुद्धिप्रत्यवसानशब्दार्थ इति न्यस्य शब्द-क्रियार्थकधातुग्रहणं स्यात्, इति कर्मपदं शब्दाधिक्यादर्थाधिक्यमिति कर्मकारकपरमेव । किञ्च यौगिकार्थक्रियारूपार्थस्य प्रकृत्यर्थप्रत्ययार्थज्ञानसापेक्षत्वेन विलम्बोपस्थितित्वेन बहिरङ्गत्वात् कर्म-कारकरूढ्यर्थस्य शीघ्रोपस्थितित्वेनान्तरङ्गत्वात् न यौगिकार्थस्य ग्रहणम् । एतन्मूलकमेव—पठन्ति आचार्याः – **'योगाद् रूढिर्बलीयसी'** इति **पञ्चोलिनः** । ननु सूत्रे अकर्मकपदं व्यावर्त्याभावाद् व्यर्थ-मेव, तथा हि प्रसिद्धं द्रव्यादिरूपं कर्म नास्ति तत्रापि देशरूप कालादिरूपं कर्म अस्त्येव इति चेन्न, देशकालादिभिन्नं कर्म यत्र न सम्भवति, तस्याकर्मकपदेन ग्रहणम् न तु कर्मणोऽविवक्षयाऽकर्मकत्व-मिति । **अणौ** इति । णिचि अनुत्पन्ने यः प्रयोज्यकर्ता सः=प्रयोज्यकर्ता **णौ**=णिचि उत्पन्ने ण्यन्ते पाणिनिसङ्केतशब्देन कर्मपदवान् भवति इति सामान्यरूपेण सूत्रजबोधः । उभयत्र णिज् 'हेतुमति च' इति सूत्रविहित एव ग्राह्यः । तथा च अनुत्पन्ने णिचि शुद्धधातुवाच्यां क्रियाम्प्रति यः कर्ता स ण्यन्तधातुवाच्यां क्रियाम्प्रति कर्मसंज्ञः स्यादिति फलति ।

### अत्र प्राच्यसम्मतविध्यर्थत्वविमर्शः ।

तथाहि 'आकडारसूत्रभाष्ये–'आकडारात् परं कार्य्यम्' इति पाठे गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञकमपि प्राप्नोति–आरम्भसामर्थ्याच्च कर्मसंज्ञा, परकार्यत्वाच्च कर्तृसंज्ञा प्राप्नोति' इत्युक्तम् । अत्र भाष्ये 'आरम्भसामर्थ्यात्' इत्युक्तिर्गत्यादिसूत्रस्य विधायकत्वे एवोपपद्यते । नियामकत्वे तु 'पाच-यत्योदनं देवदत्तेन' इत्यादौ देवदत्तादेः कर्तुरीप्सितत्येनेन प्राप्तकर्मत्वव्यावृत्त्यर्थं गत्यादिसूत्रस्या-वश्यकता कर्तुरीप्सितेत्यस्य च 'हरिं भजति' इत्यादौ कर्मत्वार्थं चरितार्थ्येन कस्यापि वैयर्थ्याभावात् 'आरम्भसामर्थ्यादि'त्युक्तिरसङ्गता स्यात् । कर्मसंज्ञासूत्रस्थकर्तृपदस्य स्वतन्त्रोपलक्षकत्वेन तस्य च **'हेतुमति च'** इत्यत्रानुवृत्त्या कर्तृसंज्ञोपजीव्यत्वाभावेऽपि परत्वात् अन्तरङ्गत्वाच्च प्रयोज्यस्य प्राप्त-कर्तृसंज्ञाबाधनार्थं गत्यादिसूत्रमिति ।

### नव्यसम्मतनियमार्थत्वविमर्शः ।

'हेतुमति च' इति सूत्रभाष्यं प्रयोजकव्यापारस्य णिज्वाच्यत्वे प्रयोजकव्यापारेण प्रयोज्य-व्यापारस्येप्सिततत्वेन कर्तुरिति 'पाचयत्योदनं देवदत्तेन' इत्याशङ्क्य 'गतिबुद्धि' इति सूत्रं नियमार्थम् । अयं भावः—यद्यपि कर्तृसंज्ञायां परत्वम्, अन्तरङ्गत्वम्, उद्देश्यत्वलक्षणमर्थप्राधान्यं प्रयोज्यव्यापारे-ऽस्तीति प्राप्तकर्तृसंज्ञां बाधित्वाऽप्राप्तकर्मत्वार्थं विधित्वमेव 'गतिबुद्धि' इत्यस्य, अत एव 'आरम्भ-सामर्थ्यात्कर्मसंज्ञा' इति भाष्यमपि उपपद्यते । तथापि 'अन्यानधीनत्वलक्षणार्थप्राधान्य–शाब्दबोधीय-विशेष्यताश्रयत्वरूपशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि बल-वत्त्वेन 'कर्तुः' इति कर्मत्वे सिद्धे गतिबुद्धीत्यस्य नियमार्थत्वमेव । न च 'आरम्भसामर्थ्यात् कर्म-संज्ञा' इति भाष्यं नियमपक्षे विरुध्येतेति वाच्यम्, 'यावन्ति लक्ष्याणि तावन्ति लक्षणानि' इति लक्ष-णोपप्लवपक्षे ण्यन्तधातुविषयकलक्ष्यार्थावृत्तकर्तुरीप्सितेति सूत्रारम्भसामर्थ्यादित्यर्थपरतया भाष्योक्तेः । नियमशरीरन्तु 'णिजर्थव्यापारप्रयोज्यव्यापाराश्रयस्याणौ यः कर्ता तस्य णौ कर्मसंज्ञा भवति चेत् सूत्रो-पात्तार्थकगत्यादीनामेव' । तेन गत्यादिधातुयोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वम् । सूत्रानुपात्तार्थक-पाचयत्यादियोगे कर्तृत्वशक्तिमत्त्वमेव । नियमव्यावृत्तफलमग्रे सुस्पष्टं भविष्यति । सूत्रोदाहरणान्याह–

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥

**शत्रूनगमयत् स्वर्गमिति** । 'शत्रवः स्वर्गम् अगच्छन् तान्=शत्रून् श्रीहरिः प्रेरणाम् अकरोत्' इति । अत्र शुद्धगम्धात्वर्थः—संयोगानुकूलव्यापाररूपः, व्यापारस्य जनकाः शत्रव इति तेषां कर्तृत्वम् । व्यापारजन्यं फलम्—संयोगरूपम् । तादृशफलाश्रयत्वेन स्वर्गस्य कर्तुरिति कर्मसंज्ञा । ण्यन्तगम्धातोरर्थः—संयोगानुकूलव्यापारानुकूलव्यापार इति । अत्र चरमव्यापाराश्रयः प्रयोजकः श्रीकृष्ण इति श्रीकृष्णे प्रयोजककर्तृत्वम् । अन्तिमव्यापारजन्यं फलम्=संयोगानुकूलव्यापाररूपम् । तदाश्रयाः = शत्रव इति प्रयोज्यकर्तृशत्रूणां कर्तुरिति कर्मत्वबोधने नियमार्थमिदम् । नियामकशास्त्राणां विधिमुखेन प्रवृत्तौ तु अनेन कर्मत्वशक्तिबोधनम् । तथा च प्रकृते प्रयोजककर्तृतः प्रथमा । शाब्दबोधश्चेत्थम्—शत्रुनिष्ठं स्वर्गकर्मकं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिः = शरणमित्यर्थः । यद्वा—बहुत्वविशिष्टपुंस्त्वविशिष्टशत्रुरूपकर्तृनिष्ठः—स्वर्गाभिन्नकर्मनिष्ठसंयोगजनकः—वर्तमानकाल-निष्ठावच्छेदकतानिरूपितावच्छेद्यतावान् व्यापारः, अथ च श्रीहरिरभिन्नैकत्वविशिष्टकर्तृवृत्तिबहुत्व-विशिष्टपुंस्त्वविशिष्टशत्रुरूपाभिन्नकर्मनिष्ठसंयोगानुकूलव्यापाररूपफलजनको वर्तमानकालावच्छिन्नो व्यापारस्तद्वान् यो हरिः स मे गतिः । संसर्गविधया परिष्कृतार्थबोधस्तु विस्तरभयेन त्यज्यते ।

**वेदार्थं स्वानवेदयत् इति** । स्वे = स्वकीया वेदार्थम् अविदुस्तान् श्रीहरिर्वेदार्थम् अवेदयत् । अत्र शुद्धविद्धात्वर्थः—आवरणभङ्गानुकूलव्यापारः । आवरणम् = अज्ञानं, तिमिरं तम इति । स्वशब्दोऽत्रात्मीयार्थः । व्यापारजनकत्वेन तेषां कर्तृत्वम् । आवरणभङ्गरूपज्ञानाश्रयत्वं वेदार्थे इति कर्तुरिति तस्य कर्मत्वम् । ण्यन्तवेदिधात्वर्थस्तु = आवरणभङ्गरूपज्ञानानुकूलव्यापारानुकूलो व्यापारः । स च श्रीहरिनिष्ठ इति तस्य प्रयोजककर्तृत्वम् । प्रयोजकव्यापाररूपं फलं प्रयोज्ये इति तेषां कर्मत्वेन स्वान् इति । शाब्दबोधश्च—स्वकीयपुरुषनिष्ठं वेदार्थकर्मकं यद् वेदनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति ।

हिताहितसाधनबोधकत्वं वेदत्वम् । वेदार्थज्ञानमावश्यकमिति विषये महर्षिणा यास्केनोक्तम्—'स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा' (१–१८) अर्थज्ञानपूर्वकवेदाध्ययनमावश्यकमिति विषये ऋग्वेदस्योऽयं मन्त्रः । 'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम् । उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ।' ( ऋ० म० १ सू० ७१ म० ४ ) इति । 'सर्वेषामेव दानानां ब्रह्म ( वेद ) दानं विशिष्यते । वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥' इति वदता मनुना वेद-विद्यादानं सर्वेभ्यो दानेभ्यः श्रेष्ठतममभिहितम् ।

**वेदान् अधीत्य वेदौ वा वेदं चापि यथाक्रमम् ।**
**अविलुप्तब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥** ( मनु० ३, २ ) इति ।

'**नास्तिको वेदनिन्दकः**' इति वैदिकवाङ्मयाध्ययनपूर्वकार्षग्रन्थाध्ययनपूर्वकानार्षप्रचलि-तमतनिरसनं विधेयमिति ।

**आशयच्चामृतं देवान्** इति । देवा अमृतम् आश्नन् तान् श्रीहरिः—आशयत् । अत्र गल-बिलाधःसंयोगजनकव्यापारानुकूल व्यापारः प्रयोजके, प्रथमव्यापाररूपफलाश्रयत्वं प्रयोज्ये देवेषु । प्रथमव्यापाराश्रयत्वं प्रयोज्ये तत्फलाश्रयत्वममृते इति । '**अमृतं** यज्ञशेषे स्यात् पीयूषे सलिले घृते । अया-चिते च मोक्षे च ना धन्वन्तरिदेवयोः ।' इति मेदिनीकोशः । **वेदमध्यापयद् विधिम्** इति । विधिः वेदमध्यैत तं=ब्रह्माणं वेदम् अध्यापयत् । ज्ञानजनकोपदेशात्मकशब्दकर्मकदानानुकूलव्यापारोऽधिपूर्व-कण्यन्तेङ्धात्वर्थः । प्रयोज्ये ब्रह्मणि प्रथमव्यापाररूपफलाश्रयत्वेन कर्मत्वम् । प्रथमव्यापारप्रयोज्यफला-श्रयत्वं वेदे इति तस्य कर्मत्वम् । विधिशब्दार्थः—'विधिर्ना नियतौ काले विधाने परमेष्ठिनि' ।

आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।

गतीत्यादि किम्—पाचयत्योदनं देवदत्तेन । अण्यन्तानां किम्—गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः । 'नीवह्योर्न' ।

इति मेदिनीकोशः । 'विध विधाने' 'इगुपधत्वात् कित्' (उ० ४-१२०) इतीन् प्रत्ययः । 'आम्नायत्रयी वेदः' त्रयीति—'विधानमृग्यजुःसाम्नां त्रयीधर्मं विदुर्बुधाः ।' इति मुकुटः । 'वेदोऽखिलो धर्ममूलं धर्ममूलमिदं स्मृतम् ।' धर्मः=चोदनालक्षणोऽर्थः । वेदस्य षडङ्गानि 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दो विचितिरित्येतैः षडङ्गो वेद उच्यते ॥' इति आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः । सलिले = जले पृथ्वी = भूमिः आस्त = अतिष्ठत् । तां यो हरिः आसयत् स्थापयति स्म स हरिर्मे=मम गतिः शरणम् । अत्र ण्यन्तधात्वर्थः - स्थित्यनुकूलव्यापारानुकूलव्यापाररूपः । द्वितीयव्यापाराश्रयः प्रयोजककर्ता = हरिः । प्रथमव्यापाररूपफलाश्रयत्वं पृथ्व्याम् इति । क्रमेण सूत्रोदाहरणानि श्लोकमुखेन प्रदर्शितानि ।

नियमफलं पृच्छति—गतीत्यादि किम् इति । समाधत्ते पाचयत्योदनं देवदत्तेन । देवदत्त ओदनं पचति, पचन्तं देवदत्तं चैत्रः प्रेरयति, इति । अत्र सिद्ध्यनुकूलो व्यापारः पचेरर्थः । सिद्धिरूपं फलमोदने इति तस्य कर्मत्वम् । प्रयोजककर्ता = चैत्रः । प्रयोज्यकर्ता = देवदत्तः । ण्यन्तपाचिधात्वर्थः = सिद्ध्यनुकूलव्यापारानुकूलव्यापारः । प्रयोजकचैत्रनिष्ठचरमव्यापारजन्यप्रथमव्यापाराश्रयदेवदत्तरूपप्रयोज्यस्य कर्तरिति प्राप्तकर्मत्वं 'गतिबुद्धि' इति नियमेन व्यावर्तते । नियमस्वरूपन्तु पुनः स्मरणाय संस्कारदार्ढ्याय पुनरुच्यते—'णिजर्थव्यापारप्रयोज्यव्यापाराश्रयस्य कर्मत्वं भवति चेत् ण्यन्तानां गत्याद्यर्थकानां धातूनां योगे एव' तेनात्र पाचिधातुयोगे न प्रयोज्यस्य देवदत्तादेः कर्मत्वशक्तिमत्त्वम् इति न कर्मसंज्ञा, किन्तु कर्तृत्वशक्तिमत्त्वेन कर्तरि प्रथमैव ।

अण्यन्तानां किमिति । सूत्रे णिच्प्रत्ययबोधकं पदमस्ति 'प्रत्ययग्रहणे' इति परिभाषयोपस्थिततदादिशब्दस्वरूपरूपविशेष्यम्, णिच् इति विशेषणं तदन्तविधिश्च णौ=ण्यन्ते न ण्यन्ते एतदर्थकम् अणौ इति । तेन णिचि अनुत्पन्ने यः कर्ता = प्रयोज्यः तस्यैव कर्मत्वं न प्रयोजककर्तृसमानाधिकरणप्रयोज्यस्य । अयं भावः—यस्मिन् एकस्मिन्कारके प्रयोज्यत्वमप्यस्ति प्रयोजकर्तृत्वमप्यस्ति द्वयोरेकाधिकरणता तत्र कर्मसंज्ञा मा भूदिति अण्यन्तानामिति । प्रत्युदाहरणमुखेन स्पष्टीकरोति—गमयति देवदत्तेन यज्ञदत्तं तमपरः ( विष्णुमित्रः ) प्रयुङ्क्ते इति । अत्रार्थे—गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्र इति । अत्र देवदत्तस्य कर्मसंज्ञा मा भूदिति ग्रन्थकाररहस्यम् । तथाहि—२ यज्ञदत्तो गच्छति, २—तं गच्छन्तं यज्ञदत्तं देवदत्तः प्रेरयति । ३-प्रेरयन्तं देवदत्तं विष्णुमित्रः प्रेरयति इति क्रमः । संयोगानुकूलव्यापारानुकूलव्यापारानुकूलव्यापारः—ण्यन्तप्रकृतिकण्यन्तगमिधात्वर्थः । प्रथमगुद्धव्यापाराश्रयः—यज्ञदत्तः । द्वितीयव्यापाराश्रयो देवदत्तः । इति देवदत्ते प्रयोजककर्तृत्वम् । तृतीयव्यापाराश्रयत्वं विष्णुमित्रे, तत्र केवलं प्रयोजकत्वमेव । तृतीयव्यापारप्रयोज्यं द्वितीयव्यापारे तदाश्रयत्वेन देवदत्ते प्रयोज्यत्वमपि इति प्रयोज्यत्वसमानाधिकरणप्रयोजकत्वं देवदत्ते तस्य णिचि अनुत्पन्ने कर्तृत्वं नास्ति इति न तस्य कर्मत्वं किन्तु कर्तृत्वमेव । तेन कर्तरि 'कर्तृकरणयोः' इति तृतीया । शाब्दबोधस्तु—यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको व्यापार इति ।

ननु देवदत्तस्य कर्मत्वाभावाय 'गमयति देवदत्तो यज्ञदत्तम्' इत्यत्रापि देवदत्तस्य कर्तृसंज्ञां बाधित्वाऽनेन कर्मत्वं दुर्वारमेवेति किमर्थं ण्यन्तप्रकृतिकाण्यन्तानुधावनमिति चेन्न, पूर्वसूत्रात् 'ईप्सिततमम्' इत्यस्यानुवृत्त्या कर्तृव्यापारप्रयोज्यफलाश्रयस्यैव गत्यादिकर्तुः कर्मसंज्ञाविधानेन द्वितीयणिचं विना कर्तृव्यापारप्रयोज्यफलाश्रयत्वस्य तत्र दुरुपपादत्वेन कर्मत्वाप्राप्तेस्तत्पर्यन्तानुधावनस्य सार्थक्यात् । नीवह्योर्न इति । ण्यन्तयोरनयोः प्रयोज्ययोर्गतिबुद्धीति कर्मसंज्ञा न भवति । ननु प्रापणार्थकयोरनयोर्गतित्वाभावेन गतिबुद्धीति न प्राप्नोति इति कथं निषेध इति । गतिं विना प्रापणं न

नाययति वाहयति वा भारं भृत्येन । 'नियन्तृकर्तृकस्य वहेरनिषेधः' । वाहयति रथं वाहान् सूतः । 'अदिखाद्योर्न' । आदयति खादयति वा अन्नं बटुना । 'भक्षेरहिंसार्थस्य न' अभक्षयत्यन्नं बटुना । अहिंसार्थस्य किम्-भक्षयति बलीवर्दान् सस्यम् । 'जल्पतिप्रभृतीनामुपसंख्यानम्' ।

---

सम्भवतीति प्रापणे नियमेन विशेषणतया गतिर्भासत इति गत्यर्थत्वमनयोरिति भावः । **नाययति वाहयति वा भारं भृत्येन** इति । भृत्यः = सेवको भारं वहति, नयति वा तं भृत्यं चैत्रः प्रेरयति इति भृत्यस्य कर्मसंज्ञया द्वितीया प्राप्ता, किन्तु कर्मसंज्ञानिषेधेन कर्तरि तृतीया **भृत्येनेति** । प्रापणञ्च—स्कन्धादिग्रहणपूर्वकोत्तरदेशसंयोगानुकूलव्यापाररूपम् ।

**नियन्तृकर्तृकस्य वहेरनिषेधः** । नियन्ता=पशुप्रेरकः । नियन्ता कर्ता यस्य तादृशवहेरनिषेध इति । गतिबुद्धीति प्राप्तकर्मसंज्ञानिषेधकं वार्तिकं **नीवह्योर्नेति** तन्निषेधकमिदं वचनम् । तथा च कर्मसंज्ञाप्रतियोगिकाभावप्रतियोगिकाभावो लब्ध इत्यभावाभावस्य प्रतियोगिरूपत्वेन कर्मसंज्ञा भवति इति फलति । यथा घटाभावाभावस्य घटरूपत्वं तथैवात्रापि । **वाहयति रथं वाहान् सूत इति** । वहन्तीति वाहाः = अश्वा रथं वहन्ति, तान् सूतः प्रेरयति । अत्र प्रयोज्यकर्तुः कर्मत्वेन **वाहान् इति** । सूतोऽत्र पशुप्रेरकः । नियन्तृकर्तृकस्य = नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः । 'ग्रामं प्राप्तः' इत्यादौ गतिं विना तत्प्राप्तेरसम्भवात् आक्षिप्तगत्या गतित्वेन गत्यर्थत्वात् क्तप्रत्ययः । तथैव गतिं विना प्रापणासम्भवेन गतित्वं बोध्यम् । नयतेस्तु गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वम् ।

**अदिखाद्योर्न** इति । अत्र, कुत्रचिद्'आदि' इति ण्यन्तस्यानुकरणं कृत्वा पाठस्त्वसङ्गत एव, धातुनिर्देशे 'इक्' प्रत्ययोत्पत्तेः । गतिबुद्धीति प्रत्यवसानार्थत्वेन = भक्षणार्थत्वेन प्राप्तकर्मसंज्ञानिषेधकमिदं वार्तिकम् । 'अद भक्षणे' इत्यत्र गलबिलाधःसंयोगानुकूलव्यापाररूपं भक्षणम् । एवं 'खाद भक्षणे' इत्यत्रापि बोध्यम् । **आदयति खादयति वा अन्नं बटुना** । बटुरन्नमत्ति, खादति वा, तं कमलेशः, रमेशो वा प्रेरयति' इत्यर्थे ण्यन्तस्य गलबिलाधःसंयोगानुकूलव्यापारार्थकत्वेन प्रथमव्यापाररूपफलाश्रयत्वेन बटोः प्राप्तकर्मत्वबाधेन प्रयोज्ये कर्तरि कर्तृकरणयोरिति तृतीया । गतिबुद्धिसूत्रस्य नियमार्थत्वे तु कर्तुरीप्सिततममिति कर्मत्वनिषेधकमिदम् । ननु 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदनियमप्रवृत्त्या 'आदयते' इति भाव्यम् , इति चेन्न, तस्य 'अदेः प्रतिषेधः' निषेधात् । तथा चा—कर्त्रभिप्राये क्रियाफले 'शेषात्' इति परस्मैपदम् । कर्त्रभिप्राये तु 'णिचश्च' इति आत्मनेपदम् । **भक्षेरहिंसार्थस्य न इति** । कर्मसंज्ञानिषेधनिषेधकमिदं वचनम् । अहिंसार्थकस्य भक्षेः कर्मत्वनिषेधो न, अभावाभावस्य प्रतियोगिरूपत्वात् तेन कर्मत्वं भवत्येव । **अहिंसार्थस्य किम् इति** । **भक्षयति बलीवर्दान् सस्यम्** इति । बलीवर्दाः सस्यं भक्षयन्ति, तान् चैत्रः प्रेरयति, इत्यर्थे व्यापारद्वयार्थकण्यन्तभक्षधातुवाच्यचरमव्यापारप्रयोज्यगलबिलाधःसंयोगानुकूलव्यापाररूपफलाश्रयस्य प्रयोज्यस्य कर्तुर्बलीवर्दस्य कर्मत्वेन द्वितीया । हिंसाफलके भक्षणे भक्षेर्वृत्तिः । क्षेत्रस्थानां यवादीनां भक्ष्यमाणानां हिंसा ज्ञेया, तस्यामवस्थायां तेषां चेतनत्वात् । परकीयसस्यभक्षणे परो हिंसितो भवतीति तत्स्वामिनोऽत्र हिंसा द्रष्टव्या ।

अप्राप्तकर्मसंज्ञाविधानार्थं वार्तिकमाह **जल्पतिप्रभृतीनामुपसंख्यानम्** इति । अत्र प्रभृतिशब्दः सादृश्यार्थकः, सादृश्यञ्च—एकार्थबोधकत्वरूपम् । तेन ज्ञानजनककण्ठताल्वाद्यभिघातपूर्वकशब्दनिष्ठजन्यतानिरूपितजनकतावद्व्यापारार्थकण्यन्तधातुयोगे प्रयोजककर्तुः कर्मत्वमप्राप्तं तदनेन विधीयते । ननु 'गतिबुद्धि' इत्यत्र शब्दकर्मकत्वेन शब्दार्थकधातुयोगे तेन कर्मसंज्ञा सिद्धा एव, 'कर्तरि कर्मव्यतिहारे' इत्यत्रापि कर्मपदस्य क्रियापरत्वात् , इति चेन्न, तथात्वे तु लाघवात् 'गतिबुद्धिप्रत्यवसानशब्दार्थानाम्' इति वक्तव्ये तत्र कर्मपदं व्यर्थीभूय शब्दाधिक्यादर्थाधिक्यमिति शब्दः कर्म = कारकमित्यर्थेन कर्मपदस्य क्रियापरत्वाभावेन तेन कर्मसंज्ञा अप्राप्तेति वार्तिकमिदमावश्य-

जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः। 'दृशेश्च'। दर्शयति हरिं भक्तान्। सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणम्, न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते। तेन स्मरति जिघ्रतीत्यादीनां न। स्मारयति घ्रापयति वा देवदत्तेन। 'शब्दायतेर्न'। शब्दाययति देवदत्तेन। धात्वर्थसंगृहीत-कर्मत्वेनाकर्मकत्वात्प्राप्तिः। येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः, न त्वविवक्षितकर्माणोऽपि। तेन 'मासमासयति देवदत्तम्' इत्यादौ कर्मत्वं भवति, 'देवदत्तेन पाचयति' इत्यादौ तु न।

---

मिति। जल्पयति भाषयति वा धर्मं पुत्रं देवदत्त इति। पुत्रो धर्मं जल्पति भाषते वा, तं देवदत्तः प्रेरयति, इति ण्यन्तधातुयोगे प्रयोज्यस्य पुत्रस्यानेन कर्मसंज्ञा। व्यक्तशब्दकर्मकोच्चारणार्थकशुद्धधातुः, ण्यन्तश्च ज्ञाननिष्ठजन्यतानिरूपितजनकतावच्छेदकर्मकोच्चारणानुकूलव्यापारार्थकः। एवं पुत्रः किञ्चिद् विलपति तं विलापयतीत्याद्यूह्यम्।

**दृशेश्चेति**। ण्यन्तदृशधातुयोगे प्रयोज्यकर्तुरप्राप्तकर्मत्वमनेन विधीयते। 'भक्ता हरिं पश्यन्ति तान् दर्शयति' इत्यर्थे चक्षुरिन्द्रियजन्यज्ञानानुकूलव्यापारो ण्यन्तदृशेरर्थः, अत्र ज्ञानरूपफलाश्रयत्वेन हरेः कर्मत्वम्, प्रथमव्यापाररूपफलाश्रयत्वेन प्रयोज्यस्य भक्तस्य कर्मत्वम्। द्वितीयव्यापाराश्रयत्वेन प्रयोजककर्तुश्चैत्रादेः प्रथमा। एतदेव प्रदर्शनाय मूले—**दर्शयति हरिं भक्तान्** इति। नन्वत्र गतिबुद्धीति ज्ञानार्थकत्वेन कर्मसंज्ञा सिद्धेति वार्तिकमिदं व्यर्थमिति चेन्न, तत्र सूत्रे बुद्ध्यर्थपदेन ज्ञानसामान्यार्थकधातूनामेव ग्रहणात्। अत्र तु ज्ञानविशेषार्थकत्वेन तेन कर्मत्वाप्राप्तेः। अत्रार्थे **'दृशेश्चे'**ति ज्ञापकम्। तेन देवदत्तः स्मरति, जिघ्रति वा, तमन्यः स्मारयति, घ्रापयति वा, इत्यत्र प्रयोज्यस्य देवदत्तादेर्न कर्मसंज्ञा, तेषां ज्ञानविशेषार्थकत्वात्। यतो हि चिन्तनम्, गन्धग्रहणञ्च तत्तद्विशेषेन्द्रियजन्यम्। उत्कण्ठापूर्वकस्मरणरूपाध्यानार्थकस्य स्मरतेरेव 'घटादयो मिताः' इति मित्त्वम्, न तु चिन्तनार्थकस्य, तेन 'स्मरयति' इति न। 'स्मारयति एनं वनगुल्मः' इत्यत्र तु, **'णेरणौ'** इति सूत्रे भाष्ये प्रयोगादेव कर्मत्वम्।

**शब्दायतेर्न** इति। शब्दं करोतीत्यर्थे 'शब्दवैर' इति क्यङ्, ततो हेतुमण्णिच्। गतिबुद्धीति अकर्मकत्वात् प्रयोज्यस्य प्राप्तकर्मत्वमनेन निषिध्यते, यतो हि शब्दरूपकर्मणो धात्वर्थसंगृहीतकर्मत्वेन सकर्मिकाऽपि क्रिया अकर्मिका भवति। अयमाशयः—ण्यन्तगत्यादिधातूनां व्यापारद्वयार्थकत्वेन प्रथमव्यापाराश्रयस्य 'कर्तुरीप्सिततमम्' इति कर्मत्वे सिद्धे 'गतिबुद्धि' इति नियमार्थम्। नियमस्य सजातीयापेक्षत्वात् सकर्मकाणाञ्चेदेषामेवेति नियमशरीरम्। यद्यपि कर्मणोऽविवक्षया गत्यादीनामपि अकर्मकत्वेन सकर्मकत्वेन साजात्यं वक्तुं न शक्यते, तथापि शब्दकर्मणः सकर्मकस्य साहचर्येण गत्यादीनामपि सकर्मकाणां ग्रहणमिति पूर्वोक्तसाजात्यस्य ग्रहणम्। एवं सिद्धे सूत्रे अकर्मकग्रहणं व्यर्थीभूय ज्ञापयति—**येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्रार्मकपदेन ग्राह्याः, न तु अविवक्षितकर्माणः।** तेन 'मासमास्यते' इत्यत्र मासरूपकर्मसत्त्वेऽपि अकर्मकत्वेन भावे लकारो भवति। **मासमासयति देवदत्तमित्यादौ** कर्मत्वं भवत्येव। **'देवदत्तेन पाचयति'** इत्यत्र तण्डुलादिकर्मणोऽविवक्षयाऽकर्मत्वमादाय प्रयोज्यस्य देवदत्तस्य न कर्मत्वम्। ण्यन्तपाचिधात्वर्थो विक्लित्त्यनुकूलव्यापारानुकूलव्यापाररूपः। ओदनादिकर्मत्वे तु सिद्धिरूपं धातुवाच्यं फलं बोध्यम्। अत्र कर्मणोऽविवक्षा च द्वेधा कर्मान्वययोग्यधात्वर्थत्यागात्, सत्येव तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयविवक्षणाद्वा। नन्वास्तु **'कर्तृकर्मणोः कृति'** इत्यत्र कृति किं ? तद्धिते मा भूत्—कृतपूर्वी कटम् इति। अत्र कटरूपकर्मणोऽविवक्षयाऽकर्मकत्वेन कृञो भावे लकार इति तेनाविवक्षितकर्मणामपि अकर्मकपदेन ग्रहणमिति वदन्ति। अतिप्रसङ्गस्तु अनभिधानाद् वारणीयः।

अत्र प्राचा **'शब्दायतेर्न'** इत्यस्य स्थाने 'अयक्रन्दशब्दायह्वेञां न' इत्युक्तम्। तदसङ्गतम्, अयतेर्निषेधस्य निर्मूलत्वात्, अणौ कर्तुर्णौ कर्मत्वस्य तत्रेष्टत्वात्। क्रन्दह्वेञोस्तु शब्द-

*हृक्रोरन्यतरस्याम् । [ १-४-५३ ]*

हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् । 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' । अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ।

---

क्रियत्वेऽपि शब्दः कर्मकारकन्नेति प्राप्तेरेवाभावात् । अत्र प्राचा—'श्रुग्रहदृशां कर्मत्वम्' उक्तम् । तन्न युक्तम्, तत्र दृशिग्रहणं प्रामादिकम् । शृणोतेस्तु शब्दकर्मत्वं सिद्धम् । ग्रहेस्तु द्विकर्मकत्वं नानेकाचार्य्यसम्मतम् ।

अत एव 'अजिग्रहत् तं जनको धनुस्तत्' इति भट्टिप्रयोगः अजिग्रहत् = बोधितवान् इत्यर्थ-स्तत्र प्रदर्शितः । तेन बोधनातिरिक्तस्थले न द्विकर्मकत्वम् । अन्यथाऽप्रसिद्धार्थपरिग्रहो व्यर्थ एव स्यात् । एवम्— 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इत्यत्रापि ग्राहयितुम् = उद्वाह्यत्वेन बोधयितुमित्यर्थः । बोधनातिरिक्तग्राहेर्द्विकर्मकत्वे हि 'जायाप्रतिग्राहितगन्धमाल्याम्' इत्यत्र क्तप्रत्ययेन प्रयोज्याया धेनोरभिधानं स्यात्, 'ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तेः । ततश्च जायया गन्धमाल्ये प्रतिग्राहितमिति स्यात् । सिद्धान्ते तु 'प्रतिग्राहिते गन्धमाल्ये यया' इति विग्रहः । जाया-निष्ठप्रेरणाविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्कर्त्रीमित्यर्थः । अन्यपदार्थान्तर्भावेणैव विशेष्यविशेषणभाववैपरीत्येनैवैकार्थीभावकल्पनात् ।

**हृक्रोरन्यतरस्याम्** ( १-४-५३ ) इति हा च का च हृकरौ तयोर्हृक्रोः । परिनिष्ठित-विभक्त्या समास इति पक्षे हृश्च कृश्चेति विग्रहः । विभाषा त्रिविधा—प्राप्तविभाषा, अप्राप्तविभाषा प्राप्ताप्राप्तविभाषाभेदेन । अत्राभ्यवहारस्य भक्षणार्थत्वेन, विकारार्थककरोतेश्चाकर्मकत्वेन गतिबुद्धीति कर्मत्वे प्राप्ते, अर्थान्तरे चाप्राप्ते प्राप्ताप्राप्तविभाषेयम् । हृक्रोश्च णिचि अनुत्पन्ने यः कर्ता सः= प्रयोज्यो णिच्युत्पन्ने कर्मत्वं लभते । अप्राप्तावुदाहरणमाह—

**हारयति कारयति वा भृत्यं भृत्येन वा कटम्** इति । भृत्यः=सेवकः कटं हरति, करोति वा, तं प्रयोज्यकर्तारं भृत्यमन्यः प्रेरयति । अत्र हरणानुकूलव्यापारानुकूलो व्यापारो हारिधात्वर्थः, उत्पत्त्यनुकूलव्यापारानुकूलव्यापारः कारिधात्वर्थः । 'गतिबुद्धि' इति परिसंख्यार्थकनियमेनात्र न कर्तु-रिति कर्मत्वं प्राप्तमिति अप्राप्तकर्मत्वमनेन विधीयते । प्राप्तविभाषायामुदाहरणम्–तृणमभ्यवहारयति सैन्धवान् सैन्धवैरिति । कृञ्धातोः शाब्दिकमते उत्पत्त्यनुकूलव्यापाररूपोऽर्थः । अत एव कर्मवद्भावः । कर्मणि लकारश्च 'चैत्रेण घटः क्रियते' इत्यत्र भवति । यत्नार्थकत्वे तु कर्तृस्थभावकत्वेन कर्मवद्भावश्च न स्यात्, भावे लकारापत्तिश्च तार्किकमते भवेदिति । 'चैत्रो घटं करोति' इत्यतो विवरणदर्शने-नोत्पत्त्यनुकूलव्यापारार्थकत्वं कृञः सिद्धम् । घटं करोति = उत्पादयति, इति विवरणदर्शनेन विव-रणविव्रियमाणयोः समानार्थकत्वात् ।

**अभिवादिदृशोरात्मनेपदे वेति वाच्यम् इति** । केवलस्य वदधातोः संदेशवचनार्थकत्वेऽपि अभिपूर्वकस्य वदेर्नमस्कारार्थकत्वम् । अभिवादयते पूर्वेणाप्राप्तकर्मत्वं दृशेस्तु प्राप्तकर्मत्वमनेन विकल्पेन बोध्यते । यदा ण्यन्तस्यात्मनेपदविषयता तदा । परस्मैपदविषयत्वे तु 'अभिवादयति देवं भक्तेन' इति **अभिवादयते दर्शयते देवं भक्तं भक्तेन वा** इति । अभिवदति, पश्यति वा देवं भक्तस्तमन्यः प्रेरयति अभिवादयते, दर्शयते च । अत्र 'णिचश्च' इत्यात्मनेपदम् ।

**भक्त** इति । ननु सेवानुकूलव्यापारार्थकभजधातोः सकर्मकत्वेन कर्मणि क्तप्रत्यये भक्तपदार्थो भजनकर्म न तु भजनकर्तेति इति चेन्न, भजनं भक्तिरिति भावे क्तिन्प्रत्ययं कृत्वा ततोऽर्शआदि-भ्योऽच् इत्यच् भक्तिरस्त्यस्येति भक्त इति । एवं 'शक्तं 'पदम्' इत्यत्रापि बोध्यम् । अथवा यदा उपासक उपास्यं भजते, उपास्योऽप्युपासकं भजते तदा भजेः कर्मणि क्तप्रत्ययः, क्तिन्प्रत्ययाच् प्रत्ययरूपवृत्तिद्वयस्वीकारे गौरवात् । उक्तञ्च गीतायां श्रीकृष्णेन भगवता—

*अधिशीङ्स्थाऽऽसां कर्म । [ १-४-४६ ]*

अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः।

*अभिनिविशश्च । [ १-४-४७ ]*

अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । 'परिक्रयणे संप्रदानम्—' इति सूत्रादिह मण्डूकप्लुत्या अन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थित-विभाषाश्रयणात्क्वचिन्न ।

---

**'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति ।**

**पीतप्रतिबद्धवत्साम्** इत्यत्र पाधातोः कर्तरि क्तप्रत्ययो दुर्लभः, सकर्मकत्वात्, एवञ्च 'पीतो वत्स' इत्यनुपपन्नम् इति तत्रापि कर्मणोऽविवक्षयाऽकर्मकत्वेन भावेक्त प्रत्यये ततोऽर्श आदिभ्योऽच्' इत्यच्प्रत्ययो ज्ञेय ।

**'अधिशीङ्स्थासां कर्म'** ( १-४-४६ ) इति सूत्रोपात्तधातूनां द्वन्द्वं विधाय 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायाद् अधिशब्दस्य प्रत्येकं सम्बन्धः कार्यः। तथा च 'अधिशीङ्—अधिस्था—अध्यास्' इति योगे आधारस्यैव कर्मत्वशक्तिमत्ताऽनेन बोध्यते, अत्र 'आधारः' इत्यनुवर्तनात् । 'द्वन्द्वान्ते' इत्यत्रान्तपदं न चरमावयवपरं किन्तु समीपपरम् । सामीप्यञ्च पूर्वत्वेन परत्वेन च । यथात्र पूर्वत्वेन । परत्वेन 'प्रातिपदिकार्थ' सूत्रे मात्रशब्दस्य प्रत्येकं योग-बोधनेन । एतत्फलितार्थमादाय 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति । **अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः। वैकुण्ठमिति** अनेकार्थकोऽयं शब्दः। **विकुण्ठाया** अपत्यं शिवादित्वात् ( ४-१-११२ ) इत्यण् । विगता कुण्ठा = नाशोऽस्य, विकु-ण्ठम् = ज्ञानम्, स्थानं वास्ति स्वरूपत्वेनाश्रयत्वेन वास्य ज्योत्स्नादित्वात् ( वा० ५-२-१०३ ) इत्यण् । यद्वा विकुण्ठानाम् = जीवानामयं नियन्ता, ज्ञानदो वा 'तस्येदम्' ( ४-३-१२० ) इति, 'शेषे' ( ४-२-९२ ) इत्यण् । अत्र वैकुण्ठपदं विशिष्टस्थानपरं तेन वैकुण्ठं धाम ग्राह्यम् । सूत्रा-भावे 'वैकुण्ठे' इति स्यात् । शीङ् स्वप्ने, ष्ठा गतिनिवृत्तौ, आस उपवेशने । अध्युपसर्गपूर्वकत्वेन त्रयाणां समानार्थकत्वम् ।

**उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते ।**
**प्रहाराहारसंहारविहारपरिहारवत् ॥ इति ।**

अत्र **'बलात्'** इति पाठ इत्यनेके वदन्ति, तन्मतं न युक्तं बलादर्थबोधनन्तु सर्वथाऽनुचित-मेव प्रतिभाति । अतः ( अबलात् ) इति खण्डाकारसूचकं चिह्नं संयोज्य 'अबलादित्यस्य शब्दशक्ति-स्वाभाव्यात्' अन्यः=प्रसिद्धतरादन्यः, अर्थः प्रतीयते = वाच्यत्वेनोपतिष्ठते । अयमाशयः—उपसर्गाणां द्योतकत्वमेव, न वाचकत्वम्, द्योतकत्वञ्च—'स्वसमभिव्याहृतपदनिष्ठशक्त्युद्बोधकत्वम्' । स्वम-त्रोपसर्गपदम् । उपसर्गाणां द्योतकत्वादेव 'उपास्येते हरिहरौ' इत्यत्र कर्मणि लकारश्च सिद्ध इति **पञ्चोलिनः** ।

**अभिनिविशश्च** ( १-४-४७ ) इति । अभिनिशब्दयोर्द्वन्द्वः । द्वन्द्वे 'अल्पाच्तरम्' इति निशब्दस्य पूर्वनिपाताकरणं ज्ञापयति—'अभिनि' इति संघातस्यैव ग्रहणम् । तेन 'निविशते यदि **शूकशिखापदे'** इत्यत्राधारस्य नानेन कर्मत्वम् । अभिनिपूर्वकविशधात्वर्थः = आग्रहः । **अभिनि-विशते सन्मार्गम्** इति । अत्र सन्मार्गरूपाधारस्यानेन कर्मत्वशक्तिबोधनेन द्वितीया । सन्मार्गविष-यकाग्रहानुकूलज्ञानानुकूलो व्यापार इति बोधः । **मण्डूकप्लुत्येति** । 'परिक्रयणे सम्प्रदानमन्यतरस्या-मि'त्यतः 'अन्यतरस्याम्' इति अनुवर्तते, साऽनुवृत्तिर्न जलधाराप्रवाहवत्, मध्ये विच्छेदसत्त्वात् । **एवञ्च** यथा मण्डूका उत्प्लुत्य उत्प्लुत्य गच्छन्ति तथैव मध्ये विच्छेदसत्त्वेऽपि 'अन्यतरस्याम्' उत्तरत्र

पापेऽभिनिवेशः ।

*उपान्वध्याङ्वसः* । [ १-४-४८ ]

उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति आवसति वा वैकुण्ठं हरिः । 'अभुक्त्यर्थस्य न' । वने उपवसति ।

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।

---

सम्बध्यते । यद्यपि मण्डूकप्लुत्याऽनुवृत्तावत्र सम्बद्धेति ज्ञाने क्लेशस्तथापि शिष्टोक्तव्याख्यानतस्तज्ज्ञानं करणीयमेव । एवञ्चास्य सूत्रस्य व्यवस्थितविभाषात्वमङ्गीकृत्य 'अभिनिविशते सन्मार्गम्' इत्यादौ नित्यकर्मसंज्ञा । 'पापेऽभिनिवेशः' इत्यत्र पापरूपाधारस्य न कर्मत्वं, तेनाधारस्याधिकरणसंज्ञायां 'सप्तम्यधिकरणे' इति पापशब्दादधिकरणवाचकात्सप्तमी इति ।

वस्तुतस्तु नात्रान्यतरस्याम् इति मण्डूकप्लुत्याऽनुवर्तते, मण्डूकप्लुत्यानुवृत्तौ दृढतरप्रमाणाभावात् । किञ्च व्यवस्थितविभाषाश्रयणमप्यशक्यम्, भाष्योक्तषड्विधस्थले एव व्यवस्थितविभाषाश्रयणात् । तथाहि—

'देवत्रातो गलो ग्राह इतियोगे च सद्विधौ ।
मिथस्तेन विभाषन्ते गवाक्षः संशितो व्रतः ॥' इति ।

तेन देवत्रात इत्येव न देवत्राण इति । गल इत्येव न गर इति, जलचरे ग्राहः, न ग्रह इति । सत्पदेन शतृ-शानचौ ग्राह्यौ । तेन कुर्वन्नित्येव, न करोति इति, करिष्यमाण इति, न करिष्यति इति । वातायने—गवाक्ष इत्येव, न तु गो अक्ष इति । व्रते संशित इत्येव, न संश्यान इति ।

तथा च कथं 'पापेऽभिनिवेश इति ? अत्रोच्यते—'एषु अर्थेषु अभिनिविष्टानाम्' ( एतदर्थविषयकाग्रहवताम् ) इति समर्थसूत्रस्थभाष्यप्रयोगाद् इत्थं कल्प्यते—'अभिनिविश् इत्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैव 'अभिनिविशश्च' इति कर्मसंज्ञां बोधयति । तेन 'अभिनिवेश्' योगे आधारस्य न कर्मत्वम् । तेन सप्तमी । इत्येव पन्था रमणीयः ।

**उपान्वध्याङ्वस इति** ( १-४-४८ ) इति । उप-अनु-अधि-आङ्पूर्वकवसतेराधारः कर्मसंज्ञको भवति । अत्र न संघातग्रहणम्, प्रमाणाभावात् । अत्र लुग्विकरणस्य वसेर्न ग्रहणम्, 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति परिभाषाबलात् शब्विकरणकवसतेरेव ग्रहणात् । अत्र वैकुण्ठस्य कर्मसंज्ञा, तेन द्वितीया न सप्तमी । अदादिगणपठिते 'वस आच्छादने' इति योगे आधारस्य सप्तम्येव ।

**अभुक्त्यर्थस्य न** इति भोजननिवृत्तिवाचकस्य वसेराधारः कर्म नेत्यर्थः । उदाहरणमाह—'**वने उपवसति**' इति । ननु ईदृशानुपूर्वीकं नेदं वार्तिकमिति चेन्न, 'वसेरश्यर्थस्य प्रतिषेधः' इति वार्तिकं तत्रार्थशब्दो निवृत्तिपरः । यथा 'मशकार्थो धूमः' इतिवत् । न तत्र मशकानामानयनार्थं किन्तु निवृत्त्यर्थमेव धूमप्रयोगः । यथा च अशननिवृत्तिवाचकवसेराधारस्य कर्मत्वमिति फलति — फलितार्थमादायैव मूलकृताऽभिहितम्—**अभुक्त्यर्थस्य न** इति ।

कारकविभक्तिं द्वितीयामुक्त्वा, उपपदविभक्तिमाह—

**उभसवतसोः कार्य्या** इति । उभश्च सर्वश्च तयोः तसौ तदन्तयोगे द्वितीया कार्या । अत्र प्रकृतिनिष्ठद्वित्वेन तसोरिति द्विवचनेन निर्देशः । अनुकरणस्य संख्यावाचकत्वाभावेन 'उभादुदात्त' इति नायच् । केवलात् परस्मिन् तसिलोऽसंभवेनात्रोभशब्देनोभयशब्दस्य ग्रहणम्–लक्षणया । तथा चोभयशब्दसर्वशब्दप्रकृतिकश्च यस्तसिल् तदन्तयोगे द्वितीया भवति । **धिगति** धिग्योगे द्वितीया कार्य्या । धिगर्थो निन्दा । निन्दा च खेदजनकः—'त्वं निन्दितः' इत्याद्यभिलापादिरूपो व्यापारः । धिक् इत्यत्र कस्य जश्त्वनिर्देशेन नायमविभक्तिको निर्देशः । गान्तस्तु धिगिति न, 'धकित्' इत्य-

द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥'

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक् कृष्णाभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाभक्तम्, तस्य शोच्यता इत्यर्थः । 'बुभुक्षितं न प्रतिभाति किञ्चित्' ।

*अन्तराऽन्तरेणयुक्ते । [ २—३—४ ]*

---

स्यासिद्धे नायमविभक्तिको निर्देशः । गान्तस्तु धिगिति न, 'धकित्' इत्यस्यासिद्धेः । अतो विभक्त्यन्तमेव धिगिति । उपर्यादिषु त्रिषु इति । 'तस्य परमाम्रेडितम्' इति पाणिनिसंकेतसम्बन्धेनाम्रेडितपदवत्सु उपरि अधि-अधःशब्दानां द्विरुक्तानां समीपोर्ध्वाधोदेशादिवृत्तिमतां योगे द्वितीया विधेया । ततोऽन्यत्रापि दृश्यते इति । प्रयुक्तानां शब्दानामन्वाख्यानार्थं व्याकरणमिति शिष्टैर्यस्मिन् प्रयोगे द्वितीया प्रयुक्ता, द्वितीयाविधायकं किमपि विशेषवचनं तत्र नास्ति तत्रानेन द्वितीया भवति । न सर्वत्रेति दिक् ।

कारिकायाः क्रमेणोदाहरणमाह—उभयतः कृष्णं गोपा इति । 'सर्वं वाक्यं क्रियायां परिसमाप्यते' इति सन्तीत्यध्याहारः । एवञ्च कृष्णस्य पार्श्वद्वये गोपालका गोपास्तिष्ठन्तीत्यर्थः । षष्ठ्यर्थे द्वितीयाऽत्र । एवमन्यत्राप्युपपदविभक्तौ । उभसर्वयोर्गणे परस्परसाहचर्यात् तसिल् एव ग्राह्यो न तसिरिति । सर्वतः कृष्णमिति गोपाः सन्तीत्यर्थः । किमर्थमिति चेद् भक्तत्वेन, रक्षकत्वेन वा । धिक् कृष्णाभक्तम् इति । कृष्णस्य यो हि भक्तिरहितस्तत्सम्बन्धिनी निन्दा इत्यर्थः । 'धिङ्, मूर्ख' इत्यत्र 'मूर्खं धिक्' इति कुतो न, इति चेन्न, सम्बोधनपदार्थस्य क्रियायामन्वयेन 'सम्बोधने च' इति प्रथमाविधानात् । यत्र क्रियापदं श्रुतन्नास्ति तत्राक्षेपस्तेन मूर्खसम्बोध्यकनिषिद्धाचरणस्य निन्द्यतेति वाक्यार्थः सम्पन्नः । प्रथमाया अपि कारकविभक्तित्वं 'सहयुक्तेऽप्रधाने' इत्यत्राप्रधानखण्डनपरभाष्यप्रामाण्यात्, तथा च 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन 'धिङ् मूर्ख' इत्यत्र प्रथमया द्वितीयाबाधात् । उपरि उपरि लोकं हरिरिति । अत्रोपरिपदार्थः सामीप्यरूपार्थकः, तस्य द्वित्वम्, 'तस्य परमाम्रेडितम्' इति द्विरुक्तोत्तरभागस्याम्रेडितसंज्ञा । लोकमिति षष्ठ्यर्थे द्वितीया । उत्तानबुद्धीनामुपरि ईश्वरबुद्धयश्चरन्तीति न तत्राम्रेडितसंज्ञेति न द्वितीया–'उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः' इत्यत्रेति ।

अध्यधि लोकमिति । उर्ध्वदेशरूपोऽर्थोऽधिशब्दार्थः । 'उपर्यध्यधसः सामीप्ये' इति द्वित्वम् । अधोऽधः लोकमिति । अधोदेशवृत्तित्वमधःपदार्थः । 'ततोऽन्यत्रापि दृश्यते' इत्यस्य व्याख्यानभूतमिदम् । अभितः परितः इति । 'पर्यभिभ्याम्' इति तसिल् । समयानिकषा—शब्दौ सामीप्यवचनावव्ययौ । उक्तश्च गुर्जरकविना माघेन—'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति । हा इति खेदार्थकः । प्रति इति क्रियाविशेषणार्थकत्वेनोपसर्गसंज्ञको न तु कर्मप्रवचनीय इति कर्मप्रवचनीयसंज्ञया न गतार्था द्वितीयेति भावः । क्रमेणोदाहरणानि । अभितः कृष्णम् परितः कृष्णम् । ग्रामं समया=ग्रामसमीपे । निकषा लङ्काम्=लङ्कायाः समीपमित्यर्थः । हा कृष्णाभक्तम्—यो हि कृष्णभक्तिबहिर्मुखस्तस्य निन्दा गम्यते, नास्तिकत्वात् । बुभुक्षितमिति बुभुक्षितस्य जनस्य कर्तव्याकर्तव्यविषयकं किमपि ज्ञानं नास्ति ।

अन्तरान्तरेणयुक्ते ( २–३–४ ) इति । अन्तरेणेत्यटाबन्तसाहचर्यादन्तरेत्यटाबन्तम्, अन्तरेत्यतृतीयान्तसाहचर्यादन्तरेणेति अतृतीयान्तम्, इति परस्परसाहचर्यादव्ययोरेवात्र ग्रहणम् । तदुक्तं भाष्ये—'यद्यपि तावदयमन्तरेणशब्दो दृष्टापचारः = दृष्टव्यभिचारो निपातश्चानिपातश्च, अयं तु खल्वन्तराशब्दोऽदृष्टापचारो निपात एव, तस्यास्य कोऽन्यः सहायो द्वितीयो भवितुमर्हति' इति ।

आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः, अन्तरेण हरिं न सुखम् ।

*कर्मप्रवचनीयाः* । [ १—४—८३ ]

इत्यधिकृत्य ।

---

तेनोभयोर्निपातयोरेवात्र ग्रहणम् । अन्तरान्तरेणेति द्वन्द्वनिर्देशात् समभिव्याहृतयुक्तपदार्थेन संबन्धात् अन्तरायुक्ते, अन्तरेणयुक्ते च द्वितीया भवतीत्यर्थः, सहविवक्षायां द्वन्द्वविधानात् ।

सहविवक्षा च—एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्ने एकधर्मावच्छिन्नसंसर्गेणान्वयरूपा । ननु द्वन्द्वनिर्देशे साहित्यस्यैवान्वयिताऽवच्छेदकत्वेनात्रोभाभ्यां योगे एव द्वितीया स्यात् न तु प्रत्येकयोगे, इति चेन्न, सति तात्पर्ये एव विशेषणतयोपस्थितधर्मस्यान्वयितावच्छेदकत्वेन वोधविषयत्वाङ्गीकारात् । अत एव 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इत्यत्राभ्युदयसाधनस्य, निःश्रेयससाधनस्य च प्रत्येकं धर्मत्वम् । एवं 'मातृपितृगुरुमरणे वपनं कुर्य्यात्' इत्यादौ प्रत्येकमरणे वपनम् । 'पतिपुत्रवती नारी भर्तुरग्रे मृता सति । वृषोत्सर्गं न कुर्वीत गाञ्च दद्यात् पयस्विनीम् ॥' इत्यत्र तु तात्पर्यविशेषेण पतिपुत्रोभयविशिष्टाया मरणे एव वृषोत्सर्गः ।

अन्तरान्तरेणशब्दौ मध्यार्थकौ । उदाहरणमाह—**अन्तरा त्वां मां हरिरिति** । तव मम मध्ये साक्षिरूपः श्रीहरिरेव ।

**अन्तरेण हरिं न सुखमिति**—धृतजनुषां जनानां हरिसाक्षात्कारं विना सुखं नास्ति, 'चिन्ताजर्जरितचेतसां वत नृणां का नाम शान्तेः कथा' इति । युक्तग्रहणात् 'अन्तरा त्वां मां वा कृष्णस्य मूर्तिः' इत्यत्र कृष्णशब्दार्थेन सहान्तरापदार्थस्यानन्वयात् कृष्णात् न द्वितीया, किन्तु सम्बन्धे षष्ठी । 'अन्तरा त्वां माञ्च कमण्डलुः' इत्यत्र कारकविभक्तित्वेन प्रथमया बाधान्न कमण्डलुशब्दाद् द्वितीया । एवञ्च 'अन्तरान्तरेण युक्तानामप्रधानग्रहणं कर्तव्यमि'ति वार्तिकं न कार्य्यमिति । 'कमण्डलुरस्ति' इति योज्यम् । तेन तिङ्बोध्यकर्तृकारकबोधकत्वेन 'तिङ्समानाधिकरणे प्रथमा', 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायात् ।

**'कर्मप्रवचनीयाः'** (१-४-८३) इति । अधिकारसूत्रमिदम् । विषयबाहुल्याद् बहुवचनम् । अन्वर्था संज्ञेयम्, गुरुभूतसंज्ञाकरणात् । अत्र कर्मशब्दः क्रियापरः, करोतिकर्तृकर्मादिव्यपदेशात् ।

अयं भावः—धातुवाच्यव्यापाराश्रयः कर्ता, धात्वर्थव्यापारजन्यफलाश्रयः कर्म, धात्वर्थव्यापारजन्यफलसिद्धौ प्रकृष्टोपकारकं करणसंज्ञकम् । दानादिव्यापारो यमुद्दिश्य प्रवर्तते तत् सम्प्रदानम् । कर्तृनिष्ठक्रियया विभागाश्रयस्यापादानत्वम् । कर्तृकर्मद्वारा क्रियाया आश्रयस्याधिकरणत्वमिति कर्तृकर्मादिकारकाणां सामान्यरूपेण ज्ञानप्रयोजिका क्रियैवास्ति । एवञ्चान्वर्थसंज्ञया कर्म = क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । बाहुलकात् भूतकालेऽनीयर् । तेन वर्तमानकाले क्रियां ये न प्रतिपादयन्ति त एव कर्मप्रवचनीयसंज्ञां लभन्ते । उक्तञ्च हरिणा—

"क्रियाया द्योतको नाऽयं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥" इति ।

क्रियानिरूपितसम्बन्धविशेषं ये द्योतयन्ति ते कर्मप्रवचनीयसंज्ञका इति फलति । 'अधिपरी अनर्थकौ' 'सुः पूजायाम्' इत्यादिसूत्रारम्भसामर्थ्यात् क्वचित्सम्बन्धविशेषाद्योतकत्वेऽपि कर्मप्रवचनीयाधिकारः । एवञ्च 'प्राग्रीश्वरान्निपाताः' इत्यस्य 'अधिरीश्वरे' इत्यभिव्याप्य, प्राङ्निपातसंज्ञकाः सन्तो गत्यादिसंज्ञका भवन्तीत्यर्थः । तेनाव्ययत्वमपि कर्मप्रवचनीयानां भविष्यति ।

**इत्यधिकृत्येति** । ननु अनेकक्रिययोरेकः कर्ता तत्रैव, पूर्वकालिकक्रियावाचकधातोः 'समानकर्तृकयोः पूर्वकाले प्राचां क्त्वा' इति क्त्वाप्रत्ययो भवति, अत्र तु अधिकाररूपैका क्रिया कर्ता चैक इति कथं क्त्वाप्रत्यय इति चेन्न, 'कर्मप्रवचनीयाः' इत्यधिकृत्य आचार्य्यः प्राह—'अनुर्लक्षणे' इति

*अनुर्लक्षणे । [ १—४—८४ ]*

लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ।

*कर्मप्रवचनीययुक्ते द्वितीया । [ २—३—८ ]*

एतेन योगे द्वितीया स्यात् । पर्जन्यो जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । परापि हेतौ तृतीया अनेन बाध्यते, 'लक्षणेत्थंभूत—' इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात् ।

*तृतीयार्थे । [ १—४—८५ ]*

अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह संबद्धेत्यर्थः । 'षिञ् बन्धने' क्तः ।

---

तेनाधिकाररूपक्रियायाः पूर्वकालिकत्वमिति क्त्वाप्रत्यये 'कुगति' इति समासे 'समासेऽनञ्' इति ल्यपि तुकि च इत्यधिकृत्येति ।

**अनुर्लक्षणे** ( १-४-८४ ) इति । लक्ष्यलक्षणभावरूपे सम्बन्धेऽनुः कर्मप्रवचनीयसंज्ञको भवति । 'लक्षणेत्थंभूत' इति कर्मप्रवचनीयसंज्ञा सिद्धा किमर्थमिदमुच्यते ? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति, अत एव मूले उक्तम्—**गत्युपसर्गसंज्ञाऽपवाद** इति । तेन 'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यत्र 'गतिर्गतौ' इति निघातो न । 'प्रादेशं विपरिलिखति' इत्यत्र वेः कर्मप्रवचनीयसंज्ञाया अभावेन अत्र निघातापत्तिस्तु न शङ्क्या, तत्र वेर्लिखिम्प्रति क्रियायोयोगाभावात्, प्रादेशं विमाय परिलिखतीत्यर्थात् । नन्वेवमनोरपि वृष्टि प्रति न क्रियायोगः । किं तर्हि अप्रयुज्यमानक्रियाम्प्रति योगः—शाकल्येन सुकृतां संहितामनु निशम्य देवः प्रावर्षत् । **हेत्वर्थं वचनम् ।** शाकल्यस्य संहिता वर्षणस्य हेतुर्न लक्षणम्, 'लक्षणन्नाम स भवति येन स पुनः पुनर्लक्ष्यते न यः सकृदपि निमित्तत्वाय कल्प्यत इति' एवञ्च 'हेतौ' प्राप्ततृतीयाबाधनार्थं द्वितीयोत्पत्त्यर्थञ्च कर्मप्रवचनीयविधानाय सूत्रसार्थक्यम् ।

**कर्मप्रवचनीययुक्ते द्वितीया** ( २-३-८ ) इति । क्रियानिरूपितसम्बन्धविशेषद्योतकत्वं कर्मप्रवचनीयसंज्ञकस्य । एवञ्चात्र युक्तग्रहणसामर्थ्यात् कर्मप्रवचनीयसम्बन्धप्रतियोगिवाचकाद् द्वितीया, नानुयोगिवाचकादिति भावः । **जपमनु प्रावर्षत्** इति । अत्रानुशब्दस्य लक्षणे कर्मप्रवचनीयत्वेन जपशब्दाद् द्वितीया । द्वितीयार्थो लक्ष्यलक्षणभावः सम्बन्धो हेतुश्चानुना द्योत्यते । लक्षणत्वञ्च—ज्ञानजनकज्ञानविषयत्वम् । ज्ञानजन्यज्ञानविषयत्वञ्च लक्ष्यत्वम् । वर्षणकालज्ञानजनकं जपकालज्ञानं तद्विषयो जप इति । जपाभिन्नहेत्वधिकरणीभूतकालविषयकज्ञानेन कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते । अयं भावः पूर्वं वृष्टिज्ञानसत्त्वेऽपि तत्कालज्ञानाभावात् कालविशेषविशिष्टत्वेन वृष्टिज्ञानं हेतुभूतजपज्ञानेन तत्कालज्ञानद्वारा जन्यते । **पराऽपि हेतौ इति तृतीयाऽनेन बाध्यत इति ।** 'लक्षणेत्थंभूताख्यान' इति कर्मप्रवचनीयत्वे सिद्धे पुनर्लक्षणरूपार्थे 'अनुर्लक्षणे' इति कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् पराऽपि तृतीयाऽनेन बाध्यते । तेन जपशब्दाद् द्वितीयैव । अयमाशयः लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशो यो न हेतुः—'वृक्षमनु विद्योतते विद्युत्' इति, हेतुतृतीयाया अवकाशः—'धनेन कुलमि'ति । 'जपमनु प्रावर्षत्' इत्यत्र परत्वात् तृतीया प्राप्ता तां बाधित्वा 'अनुर्लक्षणे' इति पुनः संज्ञाविधानसामर्थ्याद् द्वितीयैव । न च 'तृतीयार्थे' इति गतार्थता, 'पुरस्तादपवादा' इति न्यायेन 'सहयुक्तेऽप्रधाने' इत्यस्यैव बाधकत्वात् ।

**तृतीयार्थे** ( १-४-८५ ) इति । साहित्यरूपसम्बन्धे द्योत्येऽनुशब्दस्य कर्मप्रवचनीयसंज्ञा भवति । नदीमिति नद्या सह सम्बद्धा सेना । प्राप्तषष्ठीं प्रबाध्य द्वितीयाविधानसामर्थ्यादत्र द्वितीयायाः सम्बन्धरूपोऽर्थः । स च सम्बन्धः साहित्यरूपोऽनुना द्योत्यते । **तृतीयार्थं** इत्यत्र तृतीयाशब्देन

*हीने* । [ १—४—८५ ]

हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ।

*उपोऽधिके च* । [ १—४—८८ ]

अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् । अधिके सप्तमी वक्ष्यते । हीने—उप हरिं सुराः ।

*लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः* । [ १—४—९० ]

एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे—वृक्षं प्रति अनु वा विद्योतते विद्युत् । इत्थंभूताख्याने—भक्तो विष्णुं प्रति परि अनु वा ।

---

तन्निमित्तशब्दः 'सहयुक्ते' इत्यत्रोपात्तः सहशब्दो लक्षणया बोध्यते । अनु—अवपूर्वकबन्धनार्थकषो-पदेशषिञ्धातोः कर्तरि क्तः । षस्य 'धात्वादेः' इति सः । ननु लाघवादत्र **'सहार्थे'** इति कथं न सूत्रितमिति चेन्न, तृतीयानिमित्तभूतैकक्रियादिमत्त्वसहार्थद्योतकस्य संज्ञा, न तु सादृश्यद्योतकस्यानु-शब्दस्येति बोधनात् ।

**हीने ( १-४-८६ )** इति । किमपेक्षया हीनत्वमनुना द्योत्यते यत्रानुशब्दस्य कर्मप्रव-चनीयसंज्ञेति जिज्ञासायामाह—**अनु हरिं सुरा इति** । हर्यपेक्षया हीनत्वं सुराणामिति उत्कृष्टाद् हरेरेव द्वितीया ।

**उपोऽधिके च** ( १-४-८७ ) अत्र चानुकृष्टं हीनपदम् । तेन अधिके हीने च द्योत्ये उपेत्य-व्ययं कर्मप्रवचनीयसंज्ञकं भवति । 'यस्मादधिकम्' ( २-३-९ ) इति अधिकशब्दयोगे 'उपखार्यां द्रोणः' सप्तमी वक्ष्यते । ननु 'खारी द्रोणचतुष्टयम्' द्रोणस्य न्यूनत्वं नाधिकत्वमिति 'खार्यपेक्षया-ऽधिकत्ववान् द्रोणः' इति कथमत्रोच्यते, तत्रोभयमप्यस्तीति तदर्थात् । हीने—**उप हरिं सुरा इति** ।

**लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ( १-४-९० )** इति । ज्ञानजनकज्ञान-विषयत्वं लक्षणत्वम् । ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वम् । वृक्षप्रकाशनेन विद्युद्विद्योतज्ञानात् वृक्षो लक्षणम् । विद्युद्विद्योतनं लक्ष्यम् । लक्ष्यलक्षणभावस्य ज्ञाप्यज्ञापकत्वरूपत्वे तु वैपरीत्येन विद्युत्पदा-देव द्वितीयापत्तिः स्यात् । तथा च प्रकृते वृक्षप्रकाशनज्ञानेन विद्युद्विद्योतनदेशज्ञानात् 'स्वविषय-प्रकाशाश्रयत्व' सम्बन्धेन वृक्षविषयकं यज्ज्ञानं तज्जन्यं यत् 'स्वविषयदेशवृत्तित्वसम्बन्धेन प्रकाश-विषयकं ज्ञा॰ तादृशज्ञानविषयत्वात् वृक्षस्य लक्षणत्वम्, विद्युत्प्रकाशस्य च लक्ष्यत्वं बोध्यम् । **लक्षण-मिति** । लक्ष दर्शनाङ्कनयोः ( चु० प० से० ) ल्युट्प्रत्ययः । अनेकार्थकश्चायं शब्दः ।

"**कलङ्काङ्कौ** लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" । इति ।

**इत्थंभूताख्यानेति** । **इत्थंभूतः** = किञ्चित्प्रकारं प्राप्तः स आख्यायतेऽनेनेति **इत्थंभूताख्या-नम्** = प्रकारविशेषनिरूपकम् । **भागेति** । अत्र भागशब्देनार्शआद्यजन्तेन तत्स्वामी उच्यते । तथा च भागवान् इति फलति । **वीप्सेति** । क्रियासाकल्येन सम्बन्धुमिच्छा वीप्सा । पूर्वोक्तेषु अर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञकाः स्युरिति **सूत्रार्थः** । क्रमेणोदाहरणानि—**लक्षणे**—'वृक्षं प्रति पर्यनु वा विद्योतते विद्युत्' इति । वृक्षसम्बन्धि विद्योतनमर्थः । सम्बन्धश्च लक्ष्यलक्षणभाव-स्तस्य द्योतकाः प्रत्यादय इति । वृक्षोऽत्र विद्योतनस्य लक्षणम् । प्रत्यादयस्तु प्राप्तिक्रियाजनित-सम्बन्धविशेषताऽवच्छेदकहेतवः । कर्मप्रवचनीयप्रत्यादीनां न गत्युपसर्गसंज्ञे भवतः । 'गत्यु-पसर्गसंज्ञापवादः' इत्यत्रापवादशब्दोऽप्राप्तिलक्षणापवादसदृशपरः, न प्राप्तिपूर्वकबाधपर इति बोध्यम् । कर्मप्रवचनीयत्वेन वृक्षशब्दात् द्वितीया । क्रियाविशेषानवद्योतनात् क्रियायोगाभावात् न गतिसंज्ञा, नापि उपसर्गसंज्ञाप्राप्तिः । अकर्मकत्वाद् द्युतेः कर्मणि द्वितीया न प्राप्नोति । **इत्थंभूताख्याने—भक्तो विष्णुं प्रति पर्य्यनु वा** इति । भजनं भक्तिः, साऽस्त्यस्येति भक्तः, कर्मणोऽविवक्षया भावे क्तिन्,

भागे-लक्ष्मीर्हरिं प्रति परि अनु वा। हरेर्भाग इत्यर्थः। 'वीप्सायाम्'-वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति।

---

ततो 'अर्शआदिभ्योऽच्' इति अच्प्रत्ययः। अन्यथा भजधातोः सकर्मकत्वेन कर्मणि क्तप्रत्यये भक्त-शब्देन भजनकर्म इत्यर्थः स्यान्न तु भजनकर्तेति। विष्णुमिति। वेवेष्टि इति विष्णुः। विष्लृ व्याप्तौ (जु० उ० अ०) 'विषेः किच्च' इति नुः।

"विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः" इति।

अत्र विष्णोर्भक्तेश्च विषयविषयिभावः सम्बन्धः प्रत्यादिद्योत्यः। भक्तः किञ्चित्प्रकारं प्राप्त इत्यर्थः। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगिवाचकाद् द्वितीया विभक्तिः। भागे-लक्ष्मीर्हरिं प्रति पर्यनु व इति। लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः सम्बन्धः प्रत्यादिद्योत्यः। तेन लक्ष्मीरूपस्वत्वनिरूपितस्वामित्वं हरौ। फलितमाह मूले—हरेर्भाग इत्यर्थः। वीप्सायाम्—वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति' इति। इह वीप्सा द्विर्वचनेन द्योत्यते। 'नित्यवीप्सयोः' इति द्वित्वम्। वृक्षस्य व्यापकताधसम्बन्धेनान्वयो यद्यपि द्विर्वचनबलादेव, तथापि प्रत्यादिसत्त्वे प्रत्यादिशब्दोऽपि तन्निर्णायक इति सम्बन्धपरिच्छेदकत्वं बोध्यम्। एवञ्च 'सेचनक्रियाद्वारोद्यानस्थसर्वान् वृक्षान् व्याप्नोति' इति 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यादौ 'कर्मणि द्वितीया' इति सिद्धत्वात् कर्मप्रवचनीय-संज्ञायाः फलम् 'उपसर्गात्' इति षत्वाभावरूपमिति प्राचीनवैयाकरणमतम्।

अत्र नव्याः प्राहुः-'वृक्षादीनां कर्मत्वेनाविवक्षायामप्राप्तद्वितीयाविधानार्थं कर्मप्रवचनीयसंज्ञेति कर्मप्रवचनीययोगे द्वितीया। किञ्च यदि कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात् 'प्रतिवृक्षम्' इति समासानापत्तिः। किञ्च प्रत्यादेः क्रियाविशेषकत्वेऽन्वयंतया कर्मप्रवचनीयसंज्ञाया एवानापत्तिः। नव्यमते भाष्यमपि प्रमाणम्—तथाहि—'किमर्थं पुनरिदमुच्यते ? न चोपसर्गसंज्ञाबाधनार्थम्, क्रिया-योगाभावात्' इत्युक्त्वा 'द्वितीयार्थम्' इति सिद्धान्तितम्। अत एव 'प्रत्यर्थं शब्दनिवेशः' इत्यादौ अर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेऽपि 'अर्थमर्थं प्रति' इति विग्रहो भाष्ये दर्शित इति।

अत्र प्राचीनमतमेव ज्यायः। प्राचीनस्तु द्वितीयार्थः कर्म। तस्य च प्रकृतबुद्धिस्थयावन्निष्ठ-व्याप्यतानिरूपितव्यापकतासम्बन्धेन सेचनेऽन्वयः। प्रत्यादयः क्रियाविशेषका एव। कर्मप्रवचनीय-संज्ञाफलन्तु षत्वाभावः। प्रतिना समासस्तु न, प्रतेरतदर्थकत्वात्। क्रियान्वयेन सामर्थ्याभावाच्चे-त्याहुः। 'उपपदविभक्तेः कारकविभक्तिः' इति न्यायेन कर्मण्येव द्वितीया। वीप्साविषये कर्मत्वाविवक्षा तु कर्तुमशक्या, द्विरुच्चारणकर्मीभूतनिष्ठपदसंज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरू-पितव्याप्यता तदर्थबोधकपदस्यैव प्रत्यासत्त्या 'नित्यवीप्सयोः' इत्यनेन द्वित्वविधानात्। कर्मत्वा-विवक्षायान्तु द्वित्वस्यैवानापत्तेः।

अत एव कर्मतासम्बन्धावच्छिन्नव्यापकताया द्विर्वचनेन बुबोधयिषया 'वृक्षो वृक्षः सिञ्चति' इति न प्रयोगः। अतस्तादृशपदत्वसम्पादनाय पूर्वं कर्मणि द्वितीया, ततो व्यापकत्वद्योतकत्वप्रयुक्तया प्रतेः कर्मप्रवचनीयसंज्ञया षत्वाभावोऽपि सिद्धयति। एवञ्च कर्मत्वाविवक्षायां वृक्षशब्दस्य विभक्त्यर्थ-सम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकत्वाभावाद् द्वितीयातः प्राग् द्वित्वासम्भवः। वृत्तेरन्यत्र व्यापकताबोधकत्वस्य द्विर्वचनं विना प्रतेरदर्शनेन द्वित्वाभावे वीप्साया अप्रतीत्या कर्म-प्रवचनीयसंज्ञाऽपि न स्यात्।

कर्मत्वाविवक्षायामपि प्रतेरेव व्यापकतार्थवत्त्वस्वीकारेण कर्मप्रवचनीयसंज्ञया द्वितीयास्वी-कारे तु 'वृक्षो वृक्षः प्रतिसिच्यते' इत्यादावपि द्वित्वापत्तिः। न च तिङा कर्मत्वस्योक्ततया प्रातिपदि-कार्थे एव प्रथमायाः सत्त्वाद् विभक्त्यर्थसम्बन्धेनान्वयाभावेन द्वित्वस्याप्यनापत्तिः, अभिहितकारके विहितप्रथमाया अनुद्भूतशक्तिमत्त्वेन कर्मत्वादिबोधकतया सुरूपविभक्त्यर्थसम्बन्धेन सेचनेऽन्वया-भावेऽपि द्विरुच्चारणीयपदघटकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकतायाः

अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किम्-परिषिञ्चति ।

*अभिरभागे* । [ १—४—९१ ]

भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभिसिञ्चति । अभागे किम्—यदत्र ममाभिष्यात्तद्दीयताम् ।

*अधिपरी अनर्थकौ* । [ १—४—९३ ]

उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधाद् 'गतिर्गतौ' इति निघातो न ।

---

प्रकृतवृत्तयऽक्षतत्वात् । **'द्वितीयार्थम्'** इति भाष्योक्त्या तु न विरोधः, 'वृक्षं प्रति विद्योतते' इत्यकर्मकधातुसमभिव्याहाराभिप्रायेण तद्भाष्यप्रवृत्तेः । तथा च **कर्मणि द्वितीयायाः सिद्धया प्राचीनोक्तषत्वाभाव एव कर्मप्रवचनीयसंज्ञायाः फलमिति गुरवः ।**

**न षत्वमिति ।** 'उपसर्गाः क्रियायोगे' इत्यत्र 'क्रियया' इति तृतीयान्तनिर्देशेन योगार्थे लब्धे सूत्रे उपात्तं योगग्रहणं व्यर्थीभूय ज्ञापयति—'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञका भवन्ति' इति । 'यत्क्रियायुक्ताः' इत्यस्य यदर्थक्रियायुक्ता इत्यर्थः । एवञ्च कर्मप्रवचनीयसंज्ञकप्रत्यादेः सम्बन्धद्योतकत्वेन क्रियायोगाभावेनोपसर्गसंज्ञाया अप्राप्त्या 'उपसर्गात् सुनोति' इति 'प्रति सिञ्चति' इत्यत्र न षत्वमिति भावः । **एषु किमिति ।** 'सर्वतः सिञ्चति' एतदर्थके 'प्रतिषिञ्चति' इत्यत्र क्रियायोगसत्त्वेन भवत्येव षत्वम् ।

**'अभिरभागे'** ( १-४-९१ ) इति । अत्रापि निषेधप्रतियोगी भागशब्दोऽर्शआद्यजन्तः । तेन भागवद्भिन्नार्थे लक्षणादौ अभेः कर्मप्रवचनीयसंज्ञा भवति । लक्षणे—**हरिमभिवर्तते ।** 'भक्तः' इति पदमध्याहार्यम् । पूर्ववर्णितलक्ष्यलक्षणभावज्ञानमत्रापि । कर्मप्रवचनीयत्वेन हरिशब्दाद् द्वितीया । इत्थंभूताख्याने—**भक्तो हरिमभि ।** वीप्सायाम्-**'देवं देवमभिसिञ्चति'** इति । **अभागे किमिति—** भागत्वावच्छिन्नप्रतियोगिताकाभावार्थकाभेः कर्मप्रवचनीयत्वविधानेन **'यदत्र ममाभिष्यात् तद्दीयताम्'** इति वाक्यघटकाभेर्भागार्थकत्वेन कर्मप्रवचनीयत्वाभावेन क्रियायोगसत्त्वेन चोपसर्गसंज्ञया अस्धातुघटकसस्य 'उपसर्गात् सुनोति' इति षत्वं भवत्येव । **ममाभिष्यात्** = मम भागः स्यात् । **केचनात्र** 'मामभिष्यात्' इति प्रत्युदाहरन्ति । तत्र मां प्राप्नुयादित्यर्थः । उपसर्गवशेनास्तेः **सकर्मकत्वेन** मामिति द्वितीया । अत्र च मम भाग इत्यर्थतः पर्यवसानात् 'अभागे' इति कर्मप्रवचनीयत्वे निषिद्धे 'उपसर्गात् सुनोति' इति षत्वम् । परे तु भागशब्दोऽत्र विभागार्थक एव, नाच्प्रत्ययान्त **इति** । यद् वस्तु मम भागः स्यात् तद्दीयतामित्यर्थः ।

**'अधिपरी अनर्थकौ'** ( १-४-९३ ) इति । गत्युपसर्गसंज्ञाबाधनार्थमनर्थकयोरपि अधिपरिशब्दयोः कर्मप्रवचनीयसंज्ञाऽनेन विधीयते, नैतदस्ति प्रयोजनम्, अनर्थकत्वेन क्रियायोगाभावात् । **इदं** तर्हि प्रयोजनम् 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी यथा स्यात्—**'कुतः पर्यागम्यते'** इति, **नेदं** प्रयोजनम्, सिद्धन्तु 'पञ्चम्यपादाने' इति । अयं सदिदं सूत्रं ज्ञापयति—'अनर्थकानां येषां भवत्यर्थकृतमिति, तेन प्राप्तगत्युपसर्गसंज्ञाबाधनार्थमिदमावश्यकम् । ज्ञाप्यस्य वचनस्य फलन्तु **'निपातस्य** चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति वार्तिकं न वक्तव्यं भवतीति । यद्वा अनर्थान्तर ( पर्याय ) वाचिनावनर्थकौ धातुनोक्तां क्रियामाहतुः । उक्तार्थानामपि प्रयोगो दृश्यते लोके—'अपूपौ द्वावानय' इति । **कुतोऽध्यागच्छति** इति । इह विशेषद्योतकत्वाभावादानर्थक्यम् । धात्वर्थमात्रद्योतकत्वेन त्वर्थवत्ता । 'गतिर्गतौ' इत्यत्र पदादित्यधिक्रियते इति, पदात् परत्वसम्पत्तये **'कुतः'** इत्युक्तम् । कर्मप्रवचनीयस्थले क्रियायोगाभावेन गतित्वाभावात् **'गतिर्गतौ' इति निघातो न । 'कुतः'** इति अपादाने **पञ्चमी** । द्वितीया तु न ,कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्या-

*सुः पूजायाम्* । [ १-४-९४ ]

सुसिक्तम्, सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायाम् किम्—सुषिक्तं किं स्यात् तवात्र । क्षेपोऽयम् ।

*अतिरतिक्रमणे च* । [ १-४-९५ ]

अतिक्रमणे पूजायां च अतिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान् कृष्णः ।

*अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु* । [ १-४—९६ ]

एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः ।

---

भावात् । गतिसंज्ञाबाधादिति । धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद्गतित्वं प्राप्तम्, विशेषद्योतकत्वाभावात्त्वनर्थकत्वव्यवहार इति भावः ।

**'सुः पूजायाम्'** ( १-४-९४ ) इति । पूजनं पूजा । 'पूज पूजायाम्' ( चु० प० से० ) 'चिन्तिपूजि—( ३-३-१०५ ) इत्यङ्, स्त्रियां टाप्प्रत्ययः ।

**'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः'** ।

इत्यमरः । पूजायाम् = प्रशंसायां गम्यमानायां 'सु' शब्दस्य कर्मप्रवचनीयत्वेन **'सुसिक्तम्, सुस्तुतम्'**—इत्यादौ न षत्वम्, उपसर्गत्वाभावात् । अत्र सेकादिगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्वकृते तत्तत्क्रियाकर्तुः पूज्यत्वे गम्ये एवैषा संज्ञा । पूजायां किमिति । सुषिक्तं किं तवात्र इति । पूज्यसेकः किं त्वत्कर्तृक इत्याक्षेपात् सेककर्तुः पूज्यत्वाप्रतीतेरत्र न कर्मप्रवचनीयत्वमित्युपसर्गसंज्ञकत्वेन सोर्भवत्येवात्र षत्वम् । अत्र निन्दा गम्यते, आक्षेपात् ।

**'अतिरतिक्रमणे च'** ( १-४-९५ ) इति । सूत्रे 'अतिक्रमणे' इत्यस्य विद्यमानत्वात् 'सजातीयं दृष्ट्वा सजातीयो निवर्तते' इति न्यायात्पूर्वसूत्रात् 'पूजायाम्' इत्यस्यानुवृत्तिर्नैव स्यात्, निराकाङ्क्षत्वात्, इति तदनुवृत्तये च सूत्रे चपदम् । तेन चानुकृष्टं पूजायामिति पदं सम्बध्यतेऽत्र । तथा चातिक्रमणे पूजायाञ्चातिः कर्मप्रवचनीयसंज्ञः स्यादिति । अतिक्रमणम् = उचितादधिकानुष्ठानम् । **'अतिदेवान् कृष्णः'** इति । देवेभ्योऽधिकः, देवपूज्यो वेत्यर्थः । अर्थद्वयेऽप्येकमेवोदाहरणम् । अथवा 'अतिसिक्तम्' 'अतिस्तुतम्' इति चोदाहरणे । बहुतरं समीचीनं वा सिक्तं स्तुतञ्चेत्यर्थः । बहुतरार्थे अतिक्रमणम् । समीचीने पूजेति विवेकः ।

**'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु'** ( १।४।९६ ) इति । सर्वस्य वाच्यस्यार्थस्य पदार्थत्वेन सूत्रे पदार्थग्रहणसामर्थ्यात् पदस्य = अप्रयुज्यमानपदान्तरस्य अर्थः—पदार्थः । एवञ्च यत्पदप्रयोगं विनाऽपि येनापिना तदर्थो द्योत्यते तादृशापेः कर्मप्रवचनीयत्वमित्यर्थः । **'सर्पिषोऽपि स्यात्'** इति । यथाऽपिशब्दस्य कर्मप्रवचनीयसंज्ञायां सत्यां 'स्यात्' इत्यत्रोपसर्गाश्रयं षत्वं न भवत्येवं सर्पिःशब्दाद् द्वितीया कस्मान्न भवति, इति प्रश्ने भगवान् भाष्यकारः कथयति—'नैष दोषः । नेमे अप्यर्था निर्दिश्यन्ते, किं तर्हि परपदार्था इमे निर्दिश्यन्ते' । एतेषु अर्थेषु यत्पदं वर्तते तत्प्रत्यपि कर्मप्रवचनीयसंज्ञो भवतीति । यद्वा यदत्र कर्मप्रवचनीययुक्तं नादः प्रयुज्यते । किं पुनस्तद् बिन्दुः, बिन्दोस्तर्हि कस्मान्न भवति । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति प्रथमा भविष्यति ।

अयं भावः—बिन्दुकर्तृकत्वं क्रियायाः द्योतयितुमपिः प्रयुज्यते इति बिन्दुम्प्रति कर्मप्रवचनीयोऽपिः, न तु सर्पिः प्रति इति भावः । बिन्दुशब्दात्तु न द्वितीया, 'न चाप्रयुक्ते द्वितीया विधातुं शक्या' इति भाष्यात् । यदा स्पष्टप्रतिपत्तये बिन्दुशब्दो वाक्ये उपात्तस्तदाऽप्रयुज्यमानपदार्थद्योतकत्वाभावेनाऽपिशब्दस्य न कर्मप्रवचनीयत्वम् । अथवा 'उपपदविभक्तेः' इति परिभाषया प्रथमया द्वितीयाया बाधात् । वस्तुतस्तु बाधरूपं समाधानं नोचितमिति पञ्चोलिनः । अपिशब्दस्य बिन्द्वर्थद्योतकत्वं वृत्तिकृताऽप्युक्तम्—'मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपि वर्तते' इति । **'स्यात्'**

संभावनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन संबध्यते । सर्पिष इति षष्ठी त्वपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसंबन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु नेह प्रवर्तते, सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात् । अपि स्तुयाद्विष्णुम्, संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः । अपि स्तुहि । अन्ववसर्गः = कामाचारानुज्ञा । धिग्देवदत्तम् अपि स्तुयाद् वृषलम् । गर्हा । अपि सिञ्च । अपि स्तुहि—समुच्चये ।

---

इति । अत्र सम्भावनायां लिङ् । 'उपसंवादाशङ्कयोश्च' इति सम्भाव्यते इति सम्भावना । 'ण्यासश्रन्थो युच्' इति युच्प्रत्ययः । एवञ्च भवनक्रियासम्भावनायामित्यर्थे घटकतया भवनस्य प्रवेशात् ।

**'कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते ।'**

अयं भावः—कर्तृदौर्लभ्याद् भवनक्रियाया दौर्लभ्यम्, एवञ्च बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यद्योतकताऽपिशब्दस्य सिद्धा । **सर्पिष इति** । अप्रयुज्यमानपदार्थरूपबिन्दुरवयवस्तन्निरूपितावयवित्वं सर्पिष इति 'अवयवावयविभावरूप'सम्बन्धे 'शेषे षष्ठी' इति षष्ठी बोध्या । **द्वितीयेति—सर्पिःशब्दान्न द्वितीया** । **सर्पिषो बिन्दुना योगो न त्वपिना** इत्युक्तेः । बिन्दुना योगेऽपि द्योत्यसम्बन्धेनानन्वय इत्यर्थः । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वम्, प्रकृते चापिद्योत्यसम्बन्धस्य बिन्दुः प्रतियोगी न तु सर्पिरिति भावः । एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृकसम्भावनाविषयः सत्तेति बोधः । विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे बिन्दुदौर्लभ्यस्यापि सम्भावनाविषयत्वमनुभवसिद्धम् ।

**'अपि स्तुयाद् विष्णुम्'** इति । 'अवाङ्मनसगोचरं विष्णुमपि स्तुयात्' इति स्तोतुः शक्त्युत्कर्षबोधनम् । स्तुतिश्च गुणोत्कर्षबोधनरूपा । निर्गुणे विष्णौ स्तुतिस्तु भवितुं नार्हति । उक्तञ्च—

**'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति ।**

एवञ्च तत्र गुणान् अध्यस्य निर्गुणस्वरूपमपि विष्णुमयं स्तौति इति स्तोतुरुत्कर्षः । तथा चैतादृशस्यान्यदीयस्तवने सामर्थ्यमस्ति—इत्यत्र किं वक्तव्यम् । अत्रोपसर्गसंज्ञाया अभावेन न षत्वम्, कर्मप्रवचनीयत्वात् तद्योगे विष्णुशब्दाद् द्वितीया ।

अन्ववसर्ग इति । यथेच्छया कार्यकरणे आज्ञाप्रदानम् = अन्ववसर्गः । **अपि सिञ्च; अपि स्तुहि** इति । कामचारानुज्ञया = इच्छया प्रवृत्त्या स्तुहि मा वा यथेष्टं कुरु। **'प्रैषातिसर्ग'** इति लिङ् । **गर्हा** = निन्दा । **अपि स्तुयाद् वृषलम्** इति ।

**'उपसंवाद'** ( २-३-८ ) इति । पठितवार्तिकेन परेणान्तरङ्गेण च **'गर्हायां लडपि'** ( ३-३- . ) इति बाधित्वा सम्भावने लिङ् । क्रियागतं गर्ह्यत्वमपि द्योत्यम् । वृषल ( शूद्र ) पदसमभिव्याहारात् । स्तुतेर्गर्ह्यत्वं फलति, तदेव धिगित्यादिनाऽनूद्यते । **धिग्देवदत्तमपि स्तुयाद् वृषलम् इति** । वृषलमिति—वृषम् = धर्मं लुनाति = छिनत्ति इति वृषलः, 'लूञ् छेदने' ( क्र्या० उ० से० ) 'अन्येभ्योऽपि' ( वा० ३-२-१० ) इति डप्रत्ययः ।

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।
आचाण्डलास्तु संकीर्णा अम्बष्ठकरणादयः ॥ इति ।

वृषलस्य अस्तुत्यस्य स्तुतिकरणेन स्तोतुर्निन्दा गम्यते । कर्मप्रवचनीयत्वेनानुपसर्गत्वादपेस्तद्योगे 'उपसर्गात् सुनोति' इति न षत्वम्, द्वितीया चेति भावः । **समुच्चयेति** । **अपि सिञ्च अपि स्तुहि** इति । अपिद्वयेन मिलितेन समुच्चयद्योतनात् प्रत्येकं संज्ञायामुभयत्र षत्वाभावः । सिञ्च च स्तुहि चेत्यर्थः ।

*कालाध्वनोरत्यन्तसंयोगे।* [ २–३–५ ]

'कालाध्वनोरत्यन्तसंयोगे' ( २–३–५ ) काल इति। अथ कालविमर्शः। अनेकार्थकः कालशब्दः। 'कलयति = नाशयति आयुः' इति कालः 'कल संख्याने' ( चु० उ० से० ) पचाद्यच्। 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' इति यमवाचकः कालः। तत्र कालस्य परमेश्वरस्वरूपत्वम् अथर्ववेदान्तर्गतं कालसूक्तं भर्तृहरिसिद्धान्तस्य मूलभूतम् अस्ति। कालव्यवहारस्य सर्वजनप्रसिद्धत्वेऽपि कालस्वरूपे विवदन्ते वादिनः। निरीश्वरसाङ्ख्यमतम्—श्रीशङ्करभगवत्पादप्रणीतशारीरकभाष्यटीकायां रत्नप्रभायां रचनानुपपत्त्यधिकरणे ( अ० २ पा० २ ) प्रथमसूत्रान्ते साङ्ख्यानां कालपदार्थानङ्गीकारः प्रतिपादितः 'सांख्यैः कालस्यानङ्गीकारात्' इत्यनया पङ्क्त्या। ईश्वरकृष्णकृतसाङ्ख्यकारिकाव्याख्यायां तत्त्वकौमुद्यां श्रीवाचस्पतिमिश्रैरपि साङ्ख्यमते कालपदार्थस्याभाव उपपादितः। कालश्च वैशेषिकाभिमते एको न अनागतादिव्यवहारभेदं प्रतिपद्यते, तस्मादयं यैरुपाधिभेदैरनागतादिव्यवहारभेदं प्रतिपद्यते, सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः, कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्याः। इदं मतं सर्वसाङ्ख्याचार्याणां न सम्मतम्। प्रकृतेः परिणत्यात्मकोऽसौ काल इति सांख्यैरुच्यते।

'परिणामः पृथग्भावो व्यवस्थाक्रमतः सदा।
भूतेष्वद्वर्तमानात्मा कालरूपी विभाव्यते॥' इति।
( मृगेन्द्र वृ० दी० प्र० १० का० १४ )

कापिलं निरीश्वरम्, पातञ्जलं मतं सेश्वरम्। सेश्वरसाङ्ख्यमते क्षणात्मकः कालोऽङ्गीकृतः। क्षणस्तु वस्तुपतितः। कालश्च गुणानां क्षोभसम्पादकः। वाक्यपदीयतृतीयकाण्डे कालसमुद्देशे सत्कार्य्यवादिनां सांख्यानां मतमेकं परकीयमतमित्युपन्यस्तम्। तत्रत्यं हेलाराजीयव्याख्यानमनुसन्धानयोग्यमस्ति (का० ५९–६१)। पौराणिकमतं कालविषये—मानसोल्लासे वर्णितमस्ति। तथाहि—पञ्चमहाभूतानि, पञ्चप्राणाः, मनोबुद्धिरहङ्कारश्चित्तञ्चेति चत्वार्यन्तःकरणानि, पञ्च ज्ञानेन्द्रियाणि, इति चतुर्विंशतिस्तत्त्वानि, ततः महान्, कालः, प्रधानम्, माया, अविद्या, पुरुष इति षट्। संकलनया त्रिंशत् तत्त्वानि। कालस्य परमात्मनश्चेष्टारूपत्वमङ्गीक्रियते।

'महान् कालः प्रधानञ्च मायाऽविद्ये च पूरुषः।
इति पौराणिकाः प्राहुस्त्रिंशत् तत्त्वानि तैः सह॥' इति

कालविशेषे शैवमतम्—पौराणिकसिद्धान्तसिद्धेभ्यस्त्रिंशत्संख्यकेभ्योऽन्ये षट् पदार्थाः शैवमते सन्ति। अत्र विषये प्रत्यभिज्ञादर्शनं प्रमाणम्। पौराणिकमतमेव कालविषये तेषां मतम्। कालपदार्थविषये मीमांसकमतम्—'ओरियेण्टालरिसर्च' पत्रे मुरारिमिश्रकृतं मीमांसासूत्रव्याख्यानमस्ति। तदवलोकनेन तेन कालसत्ताऽङ्गीकृताऽस्ति। कुमारिलभट्टमते—कालस्य द्रव्यत्वम्। उक्तञ्च प्रमेयपरिच्छेदारम्भे—

'परिमाणगुणाधारं द्रव्यं द्रव्यविदो विदुः।
पृथिवी सलिलं तेजः पवनमानस्तमस्तथा॥
व्योमकालदिगात्मानो मनः शब्द इति क्रमात्।
एकादशविधं चैतत् कुमारिलमते मतम्॥' इति।

स च कालो निमेषकाष्ठामुहूर्त—अहोरात्रमाससंवत्सरयुगादिरूपोपाधिवशादनेकविधः।

'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते'

इति श्रीमद्गौडब्रह्मानन्दसरस्वतीमहाशयैः स्वनिर्मितमीमांसाचन्द्रिकायामुक्तम्।

प्रभाकरमतेऽपि कालस्य द्रव्यत्वम्। कालविषये शाङ्कराद्वैतमतम्—पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी त्रिविधा सत्ता कालत्रयेऽपि न व्यभिचरति इति तस्यैव पारमार्थिकी सत्ता

ब्रह्मण एव। कालस्तु अविद्यैव, तस्या एव सर्वाधारत्वात्। 'यः कालकालो गुणी सर्वविद्यः' (श्वे० उ० ६-१६) प्रत्यक्तत्त्वप्रदीपिकायां कालयुक्तसर्वव्यवहारोपपत्तिमभिधाय स्वतन्त्रस्य कालतत्त्वस्यासत्ता चित्सुखाचार्यैः प्रतिपादिता। कालविषये वाक्यपदीयोक्तं मतम्—कालस्य बुद्धिसंकलनरूपत्वमास्थितम्। तदुक्तम्—'केचिद् बुद्ध्यनुसंहारलक्षणं तं प्रचक्षते'। (वा० प० का० ३—श्लो० ५७)। वैशेषिकमतम्—तन्मते कालस्य द्रव्यत्वं विभुत्वं नित्यत्वम् एकत्वञ्च। स च कालो न प्रत्यक्षः, किन्तु अनुमानसाध्य इति। 'स्थविरादौ परत्वं तपनपरिस्पन्दप्रकर्षबुद्धिजन्यं तदनुविधायित्वात्, पटकुविन्दवत्' इत्यनुमानप्रकारः।

नैयायिकमतम्—कालविषये वैशेषिकमततुल्यमेव न्यायमतम्। इयान् विशेषः—षोडशपदार्थानामेतन्मते सप्तपदार्थेषु अन्तर्भाव इत्येव। उक्तञ्च जयन्तभट्टेन न्यायमञ्जर्याम्—

'दृष्टः परापरत्वस्य दिक्कृतस्य विपर्ययः।
युवस्थविरयोः सोऽपि विना कालं न सिद्ध्यति॥ इति।

श्रीरघुनाथशिरोमणिमते—उपाध्यवच्छिन्नः परमेश्वरः कालव्यवहारविषयः, न तु परमेश्वरातिरिक्तः कालः, प्रमाणाभावात्। कालविषये पतञ्जलिमतम्—'येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमाहुः।' (म० भा० २-२-५) उभयत्रैकवचनेन कालस्यैकत्वम्। वाक्यपदीयेऽपि भर्तृहरिराह—

'उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्विदाम्।
निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम्॥'

इत्यारभ्य 'भेदाय कल्प्यते' इत्यन्तेन।

'अव्याहतकला यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षट् भावभेदस्य योनयः॥' इति।

'कालो नाम—ब्रह्मणः स्वातन्त्र्यशक्तिरिति भर्तृहरेः सिद्धान्तः। कालविषये मतद्वयम्—आत्मा = पुरुषः। जीव एव काल इति। ज्योतिःशास्त्रमतम्—'ग्रहनक्षत्रादिक्रियैव कालः।' उक्तञ्च—

'आदित्यग्रहतारादिपरिस्पन्दमथापरे।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥' इति।

एवम् ऋक्संहितायाम्, अथर्वसंहितायाम्, मनुसंहितायाम्, महाभारते, विष्णुपुराणे, श्रीमद्भागवते, योगवाशिष्ठे, प्रत्यभिज्ञादर्शने, शैव-पाशुपत-कारुणिकसिद्धान्ति कापालिकमाहेश्वरमते, सिद्धान्तागममते, शैवविशिष्टाद्वैतमते, वीरशैवमते, नकुलीशपाशुपतमते, शाक्तमते, वैष्णवागममते, आगममते, द्वैतशाक्तमते, प्रपञ्चसारमते, सूतसंहितामते, उपनिषन्मते, पाञ्चरात्रमते, श्रीरामानुजसम्प्रदायमते, श्रीनिम्बार्कसम्प्रदायमते, श्रीवल्लभसम्प्रदायमते, गौडीयवैष्णवमते, श्रीमाध्वीयमते, लोकायतमते, बौद्धमते जैनमते, डल्हणाचार्यमते, कामशास्त्रमते, कालकरणिकमते च कालस्वरूपनिर्द्धारणं तेषु तेषु ग्रन्थेषु सयुक्तिकं कृतमस्ति। विस्तरभयेन तत्सर्वं न प्रस्तूयते।

संस्कृतवाङ्मयस्य १७३ पुस्तकेषु कालपदार्थविषयको विमर्शो विद्यते इति बा० कृ० पञ्चोलिनः।

अध्वा = मार्गः। अत्यन्तसंयोगे इति। अन्तम् = विरामम् अतिक्रान्तोऽत्यन्तः स चासौ संयोगश्चात्यन्तसंयोगः—निरन्तरसन्निकर्ष इत्यर्थः। अत्यन्तसंयोगश्च गुणक्रियाद्रव्यवदभावस्यापि। अत एव 'मासं भोजनाभावः' इति सिद्ध्यति। निरन्तरसंयोगः केनेति उत्थिताकाङ्क्षायां गुणक्रियाद्रव्यैरिति। क्रमेणोदाहरणानि—

इह द्वितीया स्यात् । मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । अत्यन्तसंयोगे किम्—मासस्य द्विरधीते, क्रोशस्यैकदेशे पर्वतः ।

स्वतन्त्रः कर्ता । [ १-४-५४ ]

---

**मासं कल्याणी इति** । पञ्चदश निमेषाः काष्ठा, ताभिस्त्रिंशतां मुहूर्तः, ते त्रिंशदहोरात्रः, तैस्तावद्भिर्मासः । तेन मासपर्यन्तं निरन्तरं सुखं दुःखात्यन्ताभावः । **मासमधीते इति** । विरामम कृत्वाऽध्ययनं करोति चैत्रः । ननु प्रतिपदि, अष्टम्याद्याध्ययनं निषिद्धमेवं प्रदोषादिकालेऽपि, तथा च कथं मासमधीते इति, अत्रोच्यते, अत्र मासपदमध्ययनोपयोगिसंकेतितकालपरं तेन मासघटकाध्ययनोपयोगिकाले निरन्तरमधीते इति भावः । द्रव्ये उदाहरति—**मासं गुडधानाः** इति । पक्वा यवा धानेति । गुडेन संमिश्रिता धाना इति गुडधानाः । मासपर्यन्तमविरामभोजनार्थं गुडमिश्रितधानाप्राप्तिः । सूत्रे कालपदेन स्वरूपग्रहणन्तु न, व्याख्यानात् । 'कालाः' इति सूत्रे बहुवचनग्रहणेन द्वितीयाविभक्तिविधायके न स्वरूपग्रहणमिति व्याख्यानादिति भावः । अत एव तत्र 'मासं प्रमितः' 'मुहूर्तं सुखम्' इति द्वितीयसमासविधौ विग्रहप्रदर्शनं संगच्छते । अध्वन उदाहरणमाह—**'क्रोशं कुटिला नदी'**, नद्या द्वादश नामानि—

'तरङ्गिणी शैवलिनी तटिनी ह्लादिनी धुनी ।
स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥'

नदति = अव्यक्तशब्दं करोतीति नदी । णद अव्यक्ते शब्दे ( भ्वा० प० से० ) पचादिषु ( ३-१-१३४ ) 'नदट्' इति निपातनात् 'टिड्ढा' इति ङीप् । कुटिला=वक्रा । कुटिम्=कौटिल्यं लातीति कुटिला, 'आतोऽनुपसर्गे कः' ( ३-२-३ ) इति कप्रत्ययस्ततो टाप् ।

'कुटिला त्वापगायां स्त्री भुग्नेऽसौ वाच्यलिङ्गका ।' इति मेदिनीकोषः ।

**क्रोशमधीते** इति क्रोशरूपे मार्गे गच्छन् सन् अविरामं पठति । **क्रोशं गिरिः** इति । 'सर्वं वाक्यं क्रियायां परिसमाप्यते' यत्र श्रूयमाणं क्रियावाचकं पदं नास्ति तत्र कारकान्वययोग्यक्रियावाचकपदस्याध्याहारो विधेय इति 'विद्यते' इत्यत्राध्याहार्य्यम् । **गिरिः = पर्वतः** । गिरति इति गिरिः । 'गॄ निगरणे' ( तु० प० से ) बाहुलकात् किप्रत्ययः । 'ॠत इद्धातोः' ( ७-१-१०० ) इति ॠकारस्येत्वं रपरत्वञ्च ।

'गिरिः पूज्येऽक्षिरुजि कन्दुके । शैले गेरेयके गीर्णावपि' इति विश्वः ।

सूत्रे 'अत्यन्तसंयोगाभावे 'मासस्य द्विरधीते' इत्यत्र मासशब्दाद् द्वितीयापत्तिः स्यात् । अत्र 'द्विः' इति सुच्प्रत्ययान्तमव्ययम् । अध्ययनक्रियागतद्वित्वसंख्यां बोधयति । माससम्बन्धि चैत्रकर्तृकं वर्तमानकालिकं द्वित्वविशिष्टम् अध्ययनमिति बोधः । अत्र निरन्तरसन्निकर्षो नास्ति, इति द्वितीया न, किन्तु सम्बन्धे षष्ठी । एवं 'क्रोशस्यैकदेशे पर्वतः' इत्यत्र निरन्तरसन्निकर्षाभावेनानेन न द्वितीया । 'एकादश्यां रात्रौ जागृयात्' इत्यत्रात्यन्तसंयोगसत्त्वेऽपि 'विवक्षातः कारकाणि भवन्ति' इति तत्र कर्मत्वेनाविवक्षा, अधिकरणत्वेन च विवक्षेति 'सप्तम्यधिकरणे' इति सप्तमी । **इति द्वितीया ॥**

अथ तृतीया

'स्वतन्त्रः कर्ता' ( १-४-५४ ) इति । स्वम् = आत्मा तन्त्रम् = प्रधानम् अस्येति स्वतन्त्रः ।

'स्वतन्त्रोऽपावृतः स्वैरो स्वच्छन्दो निरवग्रहः' ।

स्वतन्त्रस्य पञ्च नामानि । स्वतन्त्रघटकतन्त्रशब्दार्थः—तननं तन्त्रम्, तन्यतेऽनेन वा तन्त्रम् । तन्त्रणं तन्त्र्यते वा तन्त्रम् । तनु विस्तारे ( त० उ० से० ष्ट्रन् ) तन्त्रि धारणे घञ् । रक्प्रत्ययेन साधनं मुकुटस्यासङ्गतम्, रक्प्रत्ययविधायकसूत्राभावात्, रकि नलोपापत्तेश्च ।

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

---

'तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे ।
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ॥' इति ।

एवञ्चान्यानधीनत्वरूपप्रधानार्थकस्वतन्त्रशब्दः । अत्र कारकाधिकारात् क्रियाजनने स्वतन्त्रः । अयं भावः—कर्मादिकारकाणां क्रियाजनने न स्वातन्त्र्यम्, कर्तृव्यापारपरतन्त्रत्वात् । 'चैत्रः तण्डुलं पचति' इत्यत्र चैत्रः फूत्कारादिव्यापारं विधत्ते तदैव 'समवायेन विक्लित्तिंप्रति तादात्म्येन तण्डुलः कारणम्' इति चैत्रव्यापारजन्यायां पचधात्वर्थविक्लित्तौ आनविषयीभवनमेव व्यापारः, इति कर्मादिकारकनिष्ठक्रियायाः पारतन्त्र्यम् । एवमेव करणादिकारकेषु बोध्यम् । एवञ्च सूत्रोपात्तस्वतन्त्रशब्दार्थश्च—'स्वार्थकारकाप्रयोज्यं यत्स्वार्थनिरूपितकारकत्वं तदाश्रयत्वसंबन्धेन धातुविशिष्टः' । कारकमात्रवृत्तिक्रियाजनकत्वस्वरूपकारकत्वस्य कर्तृरूपतथाविधकारकप्रयोज्यत्वेन न कुत्रापि दोष इति । नागेशमते स्वातन्त्र्यञ्च—'कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् ।' कर्मप्रत्ययस्थले 'पक्वस्तण्डुलो देवदत्तेन' इत्यादौ फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये 'कर्तृप्रत्ययसमभिव्याहारे' इति निवेशितम् । कर्मप्रत्ययस्थले फलविशेष्यको बोधः । तथाहि—एकत्वविशिष्टपुंस्त्वविशिष्टदेवदत्ताभिन्नकर्तृनिष्ठपच्धात्वर्थव्यापारजन्या—तण्डुलाभिन्नकर्मनिष्ठा विक्लित्तिरिति बोधः । ननु कर्तृलक्षणे कर्तुश्च प्रवेशादात्माश्रयदोष इति चेन्न, 'तृजादिसमभिव्याहारे' इति निवेशेनादोषात् । इदमुपलक्षणं न विशेषणम् । ननु ण्यन्तस्थले प्रयोज्यव्यापारस्य प्रकारताश्रयत्वेनाप्रधानत्वादव्याप्तिः, इति चेन्न, न णिचो द्योतकत्वम्, किन्तु द्वितीयव्यापारवाचकत्वमेव । एवञ्च धात्वर्थव्यापाराश्रयत्वेन प्रयोज्यस्य, णिजर्थव्यापाराश्रयत्वेन प्रयोजकस्य च स्वस्वव्यापारं प्रति स्वातन्त्र्येण कर्तृत्वमित्यदोषात् । 'देवदत्तेन यज्ञदत्तः पाचयति' इत्यत्र विक्लित्त्यनुकूलव्यापाराश्रयत्वं प्रयोज्ये देवदत्ते । द्वितीयणिजर्थव्यापाराश्रयत्वं प्रयोजके यज्ञदत्ते । तत्र ण्यन्तपाचिधात्वर्थस्तु—विक्लित्त्यनुकूलव्यापारानुकूलव्यापारः । 'गतिबुद्धि' इति नियमान्न प्रयोज्यस्य कर्मत्वं तेन कर्तरि तृतीया । प्रयोजकयज्ञदत्तरूपकर्तुस्तु तिङाऽभिधानात्प्रथमैव ।

निर्दुष्टकर्तृत्वञ्च—'धातुनिष्ठशक्तिविशिष्टार्थाऽश्रयत्वम्, अर्थे शक्तिवैशिष्ट्यञ्च-स्वज्ञानप्रयोज्यशाब्दबोधीयानुकूलत्वसंबन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्व—स्वज्ञानीयविषयताश्रयत्वैतदुभयसम्बन्धेन । प्रतियोगिता च—स्वाश्रयत्व—स्वावच्छेदकताऽऽश्रयत्वान्यतरसम्बन्धावाच्छिन्ना ग्राह्या । लक्षणसमन्वयादिविस्तरस्तु वैयाकरणभूषणसारस्य पञ्चोलिविरचितप्रभाव्याख्यातोऽवगन्तव्यः । प्रभाव्या० पृ० १९१ ।

विवक्षाऽधीनत्वं कारकाणाम् 'स्थालीं पचति', 'स्थाल्या पचति,' 'स्थाल्यां पचति' इति प्रयोगदर्शनात् ।

'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यत ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥' इति ।

अयञ्च कर्ता त्रिविधः । शुद्धः, प्रयोजको हेतुः, कर्मकर्ता च । क्रमेणोदाहरणानि—'मया हरिः सेव्यते । कार्य्यते हरिणा । 'गमयति कृष्णं गोकुलम्' इति । शुद्धत्वञ्च—हेतुत्वानाश्रयत्वे सति सामानाधिकरण्येन कर्मत्वविशिष्टकर्तृत्वानधिकरणत्वरूपम् ।

कारकाधिकारात् क्रियायामिति । 'विवक्षितोऽर्थः' इत्यत्र विवक्षाधीनत्वं कर्तृत्वकर्मत्वादिकं न हि निश्चप्रचमिति भावः । कर्तृकर्मादिसंज्ञा प्राचीनवैयाकरणकृताऽत्रापि स्वीकृताऽस्ति । कमलेशः पुस्तकं पठति । रमेशो विश्वनाथमन्दिरं गच्छति । इत्यादौ कर्तृसंज्ञया प्रथमाविभक्तिः ।

साधकतमं करणम् । [ १-४-४२ ]

**क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् । तमब्ग्रहणं किम् । गङ्गायां घोषः ।**

---

**'साधकतमं करणम्'** ( १-४-४२ ) इति । स्वादिगणपठितसंसिद्धयर्थसाध्धातुतः करणे ल्युटि, अकादेशे च साध्नोत्यनेनेति साधकम् । अतिशयेन साधकमिति साधकतमम् । अतिशायने तमप्प्रत्ययः, तेन साधकतमम् = प्रकृष्टोपकारकमित्यर्थः । यद्व्यापाराव्यवधानेन क्रिया( फल ) निष्पत्तिः ( सिद्धिः ) तत्प्रकृष्टम् । उक्तञ्च—

'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥'

'विवक्ष्यते' इत्यनेन विवक्षाधीनं करणत्वम् । उक्तञ्च—

**'वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥'** इति ।

अयमाशयः—कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कञ्च न नियतम् । किन्तु वैवक्षिकम् । अत एव **'धात्वर्थव्यापाराश्रयत्वेन विवक्षितः कर्ता'** । 'धात्वर्थव्यापारव्यधिकरणफलाश्रयः कर्म' । कर्तृकर्मद्वारकसम्बन्धेन व्यापारस्य फलस्य वा आश्रयोऽधिकरणम् । एवमन्यत्रापि बोध्यम् । स्पष्टप्रतिपत्तये किञ्चिदत्रोच्यते पच्यर्थो व्यापारश्चानेकधा । एवञ्च पचेः फूत्काराधःसन्तापनचुल्ल्युपरिधारणाधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता । ज्वलनतात्पर्यकत्वे एधाः कर्तारः । तण्डुलधारणादिपरत्वे स्थाली कर्त्री । अवयवावयविभावादिपरत्वे तण्डुलाः कर्तारः । 'स्थाल्या पचति' इत्यत्र तृतीयोपात्तव्यापाराश्रयोऽपि **स्थाली** करणमेव न तु कर्त्री इति ।

अयं भावः—यद्धातूपात्तक्रियायां यदा यस्य स्वातन्त्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्ता, यदुपात्तया कर्तुः क्रियया यदा आप्तुमिष्टतमत्वेन यद् विवक्ष्यते तदा तत्कारकं तत्क्रियायां कर्मत्येवं शब्दविशेषोपाधिकस्य कर्तृत्वादेः सम्भवेन ज्ञानस्य स्वप्रकाशकत्वे कर्तृकर्मविरोधो नेति स्पष्टं वै० भूषणे ।

**क्रियासिद्धौ** इति कारकाधिकारादिदं लब्धम् । अत्र क्रियापदं धात्वर्थव्यापारजन्यफलपरम् । **तेन फलसिद्धौ** यत्प्रकृष्टोपकारकं कारकं तत् करणसंज्ञकं भवतीत्यर्थः । **तमब्ग्रहणं किमिति** । अयं भावः—कारकाधिकारात् करणल्युडन्तकरणेति महासंज्ञया च साधकत्वे (उपकारकत्वे) लब्धे साधकग्रहणं व्यर्थीभूय साधकतमार्थं ( प्रकृष्टोपकारार्थम् ) भविष्यति तमब्ग्रहणं व्यर्थमिति प्रश्नकर्तुराशयः । तमप्प्रत्ययस्य फलं **'गङ्गायां घोषः'** इत्यत्र सप्तमीविभक्तिरूपम् । अयमाशयः—प्रकृते क्रियतेऽनेनेति करणमिति व्युत्पत्त्या महासंज्ञया यथा साधकार्थलाभस्तथैव 'आधारोऽधिकरणम्' इत्यत्र 'अधिक्रियतेऽस्मिन्नित्यधिकरणमिति महासंज्ञयाऽऽधारलाभे सिद्धे तत्राधारपदमाधारतमार्थं भविष्यतीति **सर्वावयवव्याप्त्याधारस्याधिकरणसंज्ञेति** 'तिलेषु तैलम्' 'सर्वस्मिन्नात्माऽस्ति' इत्यादावेवाधिकरणसंज्ञा **न तु गौणाधारे इति 'गङ्गायां घोषः'** इत्यत्र गङ्गाशब्दस्य अधिकरणत्वाभावेन सप्तमी नैव प्राप्नोति । **कृते तु** तमप्प्रत्यये न दोषः । तमब्ग्रहणं व्यर्थीभूय ज्ञापयति—**'अस्मिन् कारकाधिकारे प्रकर्षार्थप्रत्ययं विना शब्दसामर्थ्यगम्यार्थप्रकर्षो नाश्रीयते;** तेन प्रकृते साधकार्थमात्रबोधकं साधकपदं न **प्रकृष्टोपकारकार्थपरम्**, एवम् आधारपदमपि सर्वावयवव्याप्त्या यो हि आधारो न तत्परं किन्तु **गौणमुख्यसर्वविधाधारपरं** तेन **'गङ्गायां घोषः'** इति गौणाधारस्याप्यधिकरणसंज्ञा, इति ततः सप्तमी **सिद्धा** । ज्ञाप्यस्यैतद्वचनस्येदं फलं सप्तमीसाधनरूपम् । करणसंज्ञाविधायकसूत्रे तमपः फलन्तु 'धनुषो बाणेन वाली हतः' इत्यत्रोपकारकस्यापि धनुषो न करणसंज्ञा, किन्तु बाणस्यैव, बाणव्यापारा**नन्तरमेव** प्राणवियोगरूपफलसिद्धिरिति 'प्रकृष्टोपकारकत्वं बाणे न धनुषि' इति भावः । 'व्यापारवद-

*कर्तृकरणयोस्तृतीया* । [ २-३-१८ ]

**अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ।**

साधारणं करणम्' । इति बाणेऽपि व्यापारः, स च धनुर्देशान्निर्गमनपूर्वकलक्ष्यवेधनस्थानपर्य्यन्त-गमनरूप व्यापारः । **'गङ्गायां घोषः'** इति भगीरथखातावच्छिन्नजलप्रवाहो गङ्गापदार्थः । गच्छतीति गङ्गा ( योगरूढिः ) ।

'गङ्गा, विष्णुपदी, जह्नुतनया, सुरनिम्नगा ।
भागीरथी, त्रिपथगा, त्रिस्रोता, भीष्मसूः अपि ॥'

**'कलहंसिनी' इत्यपि** केचित् । इति भागीरथ्या अष्टौ नामानि । 'कालिन्दी, सूर्यतनया, यमुना, शमनस्वसा ।' इति यमुनायाश्चत्वारि नामानि । 'रेवा तु नर्मदा, सोमोद्भवा, मेकलकन्यका ।' इति चत्वारि नर्मदाया नामानि । **घोष** इति । घोषन्ति गावोऽत्रेति घोषः । 'घुषिरविशब्दने' ( भ्वा० प० से ) 'हलश्च' ( ३-३-१२१ ) इत्यधिकरणे घञ्प्रत्ययः । **'घोष आभीरपल्ली स्यात् ।**

**'घोष आभीरपल्ल्यां स्याद् गोपालध्वनिघोषके ।**
**कांस्ये चाम्बुदनादे ना घोषा मधुरिकोषधौ ॥'**

**'कुटिग्रामकयोः पल्ली'** इति शाश्वतः । ननु घोषनिष्ठाधेयतानिरूपिताऽधिकरणता गङ्गापदार्थ-जलप्रवाहे बाधिता । यदि गङ्गायास्तीरे घोषश्चेत्तदा गङ्गायामित्यनुपपन्नमिति चेदत्रोच्यते— **'शक्यार्थबाधे लक्षणा'** इति लक्षणयात्र गङ्गापदं तीरबोधकं शक्त्या च नीरबोधकमिति, अस्ति चात्र शक्यस्य जलरूपार्थस्य सामीप्यसम्बन्धो तीरेण सहेति शक्यसम्बन्धरूपा लक्षणा । व्यञ्जनया वृत्त्या च अतिशयशैत्यपावनत्वं व्यङ्ग्यम् । वक्तुस्तात्पर्य्यानुपपत्तिरेव लक्षणाबीजम् । अन्वयानुपपत्तिस्तु न लक्षणायां बीजमिति नागेशः । विस्तरस्तु मञ्जूषायां द्रष्टव्यः । नव्य वैयाकरणमते 'शक्यताऽवच्छेदका-रोप एव लक्षणा ।' उक्तञ्च—

**'अर्थमात्रं विपर्य्यस्तं शब्दः स्वार्थे व्यवस्थितः ।'** इति ।

अन्यथा **'गङ्गायां मीनघोषौ'** इत्यत्र मीनस्य नीरे, घोषस्य च तीरेऽन्वये एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्ने एकसंसर्गेणान्वयरूपसहविवक्षाया अभावेन द्वन्द्वानुपपत्तिः स्यात् तार्किकमते । शाब्दिकमते तु मीनघोषयोरेकत्रान्वयेन द्वन्द्वः सुलभः । एवञ्च जले गङ्गात्वमनारोपितम् तीरे च गङ्गात्वमारोपितमिति विवेकः । वस्तुतः शाब्दिकमते न लक्षणावृत्तिरित्यन्यत्र प्रपञ्चितम् ।

केचित्तु 'आधारोऽधिकरणम्' इत्यत्राधारपदे स्वरितत्वप्रतिज्ञया स्वरितत्वप्रतिज्ञायुक्तपदस्या-नेकार्थबोधकत्वेन आधारपदेन गौणाधारस्य मुख्याधारस्य चाधिकरणसंज्ञा । एवञ्च व्यवधानेन फलो-त्पादके करणकत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम् । अत्र तमब्ग्रहणसामर्थ्यात् अन्यत्र स्वरितत्वं न साधकशब्दे इति दिक् ।

शाब्दिकमते 'या या संज्ञा सा सा फलवती' इति कर्तृ-करणसंज्ञयोः फलमाह—**'कर्तृकरण-योस्तृतीया'** ( २-३-१८ ) इति उत्पत्त्यनुकूलव्यापारार्थककृधातोः कर्तरि तृचि गुणे रपरत्वे च **कर्तृशब्दसम्पन्नः** । करणे ल्युटि **करणशब्दस्य सिद्धिः 'अनभिहिते'** इत्यनुवर्तते । **अनुक्ते कर्तरि करणे च तृतीया भवति** । कस्मात् तृतीया भवति ? इत्याकाङ्क्षायां प्रत्यासत्त्या सूत्रे कर्तृकर्मणोरुपादानात् कर्तृसंज्ञावाचकात् प्रातिपदिकादित्यर्थो बोध्यः । कर्तृ-कर्म-करणादिसंज्ञा न शब्दस्य किन्त्वर्थस्यैव, संज्ञावाचकत्वं शब्दे । **तृतीयेति** । तद्धिते पूरणाधिकारे 'त्रेः सम्प्रसारणञ्च' चेन तीयप्रत्ययस्य संग्रहः । त्रिशब्दस्थरेफस्य सम्प्रसारणं तीयप्रत्ययश्चेति तृतीयशब्दात् स्त्रियां टापि तृतीयेति । **रामेण बाणेन हतो वाली** इति । रमन्ते योगिनोऽस्मिन्निति रामः । 'रमु क्रीडायाम्' हलश्चेति अधिकरणे घञ्, उपधावृद्धिश्च । योगरूढत्वं रामशब्दे । तेन ज्येष्ठत्वसमानाधिकरणदशरथापत्यत्वावच्छिन्ने परमात्मनि

'प्रकृत्यादिभ्य उपसंख्यानम्'। प्रकृत्या चारुः। प्रायेण यात्रिकः। गोत्रेण गार्ग्यः। समेनेति। विषमेणेति। द्विद्रोणेन धान्यं क्रीणाति।

---

मर्य्यादापरिपालनावतारेऽर्थेऽयं वर्तते। धर्मग्लानिपूर्वकाधर्माभ्युत्थानं यदा यदा भवति तदा तदा दुष्टनिग्रहपूर्वकशिष्टरक्षार्थं सच्चिदानन्दो भगवान् पृथिव्यामवतरति, कर्तव्यानुष्ठानञ्च परिसमाप्य लीलया तिरोभवति। श्रीराम एव श्रीकृष्णावतारं गृहीतवानग्रे। राक्षसवधादिरूपाख्यानं रामायणे प्रसिद्धमस्ति। **रामेणेति**। प्राणवियोगानुकूलव्यापारार्थकहन्धातुवाच्यव्यापाराश्रयत्वेन रामशब्दार्थस्य 'स्वतन्त्रः कर्ता' इति कर्तृसंज्ञा, तद्वाचकात् रामशब्दात् कर्तरि तृतीया। **बाणेनेति** बाणयति इति बाणः। वण शब्दे ( भ्वा० आ० से० ) स्वार्थिकण्यन्तादच्प्रत्ययः। **'बाणो बलिसुते शरे'। 'बाणः स्याद् गोस्तने दैत्यभेदे केवलकाण्डयोः।'** इति मेदिनी। शरार्थकबाणशब्दार्थस्य करणसंज्ञा। बाणव्यापारानन्तरमेव प्राणवियोगरूपं फलं जातमिति यद्व्यापारानन्तरं फलनिष्पत्तिस्तदेव प्रकृष्टोपकारकमिति बाणे तदस्ति। 'धनुषो बाणेन' इत्यत्र धनुषि नास्ति, न धनुषः करणत्वम्। किन्तु सम्बन्धे तस्मात् षष्ठीविभक्तिः। शाब्दबोधस्तु रामनिष्ठधनुष्कर्षणव्यापारजन्यो बाणनिष्ठशरीरभेदनव्यापारकरणकः प्राणवियोगरूपफलाश्रयो वालीति। एकस्मिन्नेव वाक्ये कर्तृकरणसंज्ञयोरुदाहरणम्।

ननु विभक्त्युपस्थितानां कारकाणां क्रियाम्प्रति विशेषणत्वमेव, 'कारकादिप्रकारकबोधे धातुजन्यभावनात्वावच्छिन्नभावनोपस्थितिर्विशेष्यतासम्बन्धेन कारणम्' इति कृदुपस्थितकारकाणां कथं विशेष्यता? इति चेन्न, **'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'** नियमात्। द्वितीया-तृतीया-सप्तमीनामाश्रयोऽर्थः। फलनिरूपित आधारो द्वितीयार्थः। व्यापारनिरूपित आधारस्तृतीयार्थः। स्वाश्रयद्वारा व्यापारनिरूपितः फलनिरूपितश्च सप्तम्यर्थः। 'करोति हरिः' इत्यत्र तिङाभिहितत्वान्न हरिशब्दात् तृतीया। **'प्रकृत्यादिभ्य उपसंख्यानम्'** इति। आकृतिगणोऽयम्। प्रकृत्यादिगणपठितशब्देभ्यस्तृतीयाविभक्तिर्भवतीत्यर्थः। **उपसंख्यानम्** इति उप=समीपे संख्यानम्=बोधनम्। तृतीयाविभक्तिविधायकसूत्रसमीपे एतेषां प्रकृत्यादिशब्दानां ज्ञानं विधेयं तृतीयाविधानाय। आकृतिगणत्वात् यत्र तृतीयाविभक्तिविधायकं वचनं नास्ति शिष्टप्रयुक्तश्च तृतीयान्तप्रयोगस्तत्रानेन तृतीया कार्य्या। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्तः' इत्यत्र तृतीयाऽनेन। उदाहरणमाह—**'प्रकृत्या चारुः'** इति। प्रकृतिशब्दः स्वभाववाचकः। 'प्रकृतिस्तु दुस्त्यजा' 'श्वपुच्छः प्रकृतिं गतः' 'प्रकृतिभावः' इत्यादौ प्रकृतिशब्दस्य स्वभाववाचकत्वम्। प्रकृत्या=स्वभावेन चारुः=सुन्दरोऽयं पुरुषोऽस्ति। चार्वभिन्नाऽस्य प्रकृतिरित्यर्थः। इदं तृतीयाविभक्तिविधायकं वार्तिकं सर्वविभक्तीनामपवादभूतम्। तेन 'प्रकृतिसम्बन्धी चारुः' इत्यर्थे षष्ठीं बाधित्वा तृतीया। **गोत्रेण गार्ग्यः** इति। गोत्राभिन्नो गार्ग्य इत्यर्थे प्रथमा, गोत्रसम्बन्धिगार्ग्यत्ववानित्यर्थे षष्ठी च न, अनेन बाधात्। **समेनेति। विषमेणेति।** उभयत्र समं यथा स्यात्तथा एति विषमं यथा स्यात् तथा एति, इत्यत्र समार्थविषमार्थयोः क्रियाविशेषणत्वेन 'क्रियाविशेषणानां कर्मत्वं नपुंसकत्वमेकत्वञ्च' इति द्वितीया प्राप्ता, तां बाधित्वाऽनेन तृतीया। क्रियाविशेषणानामित्यस्य धात्वर्थव्यापारजन्यधातुवाच्यफलविशेषणानामित्यर्थः। फलमपि व्यपदेशिवद्भावेन फलाश्रय इति स्वनिरूपिताश्रयत्वं स्वस्मिन्निति द्वितीया प्राप्नोति। तन्मूलमेव क्रियाविशेषणानामिति वचनं नापूर्वम्। एति=चैत्रादिकर्तृकसंयोगानुकूलो व्यापारः। **द्विद्रोणेन धान्यं क्रीणाति** इतिपरिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणाभिन्नं धान्यमित्यर्थे द्वितीया प्राप्नोति, तां बाधित्वा तृतीया। धान्ये परिच्छेद्यत्वम् द्रोणे परिच्छेदकत्वम्। अत्र द्रोणपदेन न काकादिग्रहणम्। केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः। रुदन्ति कौरवाः सर्वे हा हा केशव केशव॥' इति जले मृतमांसं वीक्ष्य काकः प्रसन्नः समजनि। शृगाला रोदनक्रियामकुर्वन्। अश्रुमोचने कारणन्तु शवस्य जलस्थितिरूपमेव। द्रोणाचार्यपरं नात्र द्रोणपदम्। किन्तु दशशेटक-

सुखेन दुःखेन वा यातीत्यादि ।

*दिवः कर्म च । [ १-४-४३ ]*

दिवः साधकतमं कारकं कर्मसंज्ञं स्यात्, चात्करणसंज्ञम् । **अक्षैरक्षान्वा दीव्यति ।**

*अपवर्गे तृतीया । २-३-६ ]*

---

परमेव । **सुखेन दुःखेन वा याति** । अत्र द्वितीयां बाधित्वाऽनेन तृतीया । अनुकूलवेदनीयतया, प्रतिकूलवेदनीयतया च यज्ज्ञायते तत् सुखम्, दुःखञ्च क्रमेण बोध्यम् । आनुकूल्यं प्रातिकूल्यञ्च धर्मशास्त्रानुमोदतमेवेति न कुतर्कावसर इति दिक् ।

वस्तुतस्तु प्रकृत्यादिभ्य उपसंख्यानमिति वार्तिकमनारम्भणीयमेव, तथाहि—'स्वभावेनायमभिरूपः कृतो न त्वलङ्कारादिना' इत्यर्थे गम्यमानकृधातुवाच्यक्रियाकरणत्वात् करणतृतीयया **'प्रकृत्या चारुः'** इति सिद्धम् । आचारादिबाहुल्येन याज्ञिकोऽयमिति जनैर्ज्ञायते इति गम्यमानज्ञानक्रियां प्रति करणत्वेन 'प्रायेण याज्ञिकः' इति । 'गोत्रेणायं ज्ञेयः' इति । **गोत्रेण गार्ग्यः** इत्यत्र करणतृतीया । **समेन** पथा एति, **विषमेण** पथा एति । पथोऽपि गमने करणत्वम् । **द्विद्रोणेति** द्वयोर्द्रोणयोः समाहारः । पात्रादित्वात् स्त्रीत्वाभावः । द्रोणद्वयसम्बन्धि धान्यम् । द्विद्रोणपरिमितधान्यार्थे मूल्ये द्विद्रोणशब्दः । तस्य च क्रियाम्प्रति करणत्वेन सिद्धाऽत्र तृतीया । एवमन्यत्रापि तृतीया करणे बोध्या ।

**'दिवः कर्म च'** ( १-४-४३ ) इति । अत्र साधकतमम्, कारकम्, चानुवर्तते । चकारेण पूर्वतः करणस्यानुकर्षः । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इत्यनेकक्रियार्थकोऽयं दिव्धातुः । तथा च दिवधातुवाच्यव्यापारजन्यधात्वर्थफलसिद्धौ यत्प्रकृष्टोपकारकं कारकं कर्मसंज्ञकं करणसंज्ञकञ्च भवतीति सूत्रार्थः । अत्र चकारेण समुच्चयो बोध्यते । तेन एककालावच्छेदेन एकत्र कारके कर्मत्वकरणत्वशक्तिद्वयबोधः । अन्यथा परिकयणे सम्प्रदानमन्यतरस्यामित्यतोऽन्यतरस्य मित्यस्यापकर्षेण, करणशब्दानुवृत्त्या वापर्य्यायत्वे लब्धे चग्रहणस्य वैयर्थ्यापत्तिः स्यात् । समुच्चयार्थकचग्रहणादेव 'मनसा दीव्यति **'मनसादेवः'** इत्यत्र 'कर्मण्यण्' इति अणप्रत्ययः, करणे तृतीया चोभयं युगपत् सिध्यति । अत्र सामासिकलुक् न, 'मनसः संज्ञायाम्' इत्यलुक् । किञ्च **'अक्षैर्देवयते देवदत्तो यज्ञदत्तेन'** इत्यत्र सकर्मकत्वाद् 'अणि कर्तुर्णौ' **'गतिबुद्धि'** इति कर्मत्वन्न, 'अणावकर्मकात्' इति परस्मैपदमपि न । **अक्षैरक्षान् वा दीव्यति** इति । दिवः साधकतमस्य कर्मत्वकरणत्वशक्तिद्वयसत्त्वात् **'अक्षैर्देवयते'** परत्वात् तृतीया, कर्मत्वाच्च कर्मत्वप्रयुक्तपरस्मैपदाभावः । अत्र विप्रतिषेधशास्त्रबलात् तृतीयैव शक्तिद्वयबोधिका । यदाऽक्षाणां फलतावच्छेदकसंबन्धेन फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदा **'अक्षान् दीव्यति'** इति साधुः । **'अक्षाणां देविता'** इत्यत्र तृतीयातः परत्वात् कृद्योगलक्षणा षष्ठी । एकद्रव्यगतानेकशक्तिमध्ये एकस्या अभिहितत्वे परस्या अपि तद्वत्=अभिहितत्ववत् प्रकाशेन कर्मणि लकारे करणत्वशक्तेरनुक्तत्वेन तृतीयाऽऽपत्तिरूपं न दूषणम्, तस्या अपि अभिहितत्वात् । **अक्षशब्दार्थः**—अक्षतीति अक्षः । अशू व्याप्तौ ( भ्वा० प० से० ) पचाद्यच् ( १-१-१३४ ) इति ।

'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके ।
रुद्राक्षो रावणो सर्पे बिभीतकतरावपि ॥
चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये' । इति ।

**अपवर्गे तृतीया** ( २-३-६ ) इति । **'अपवर्गस्त्यागमोक्षयोः । क्रियावसाने साकल्ये'** इति हैमः । फलप्राप्त्यर्थमेव जनः क्रियां कर्तुं प्रवर्तते । फलप्राप्त्यनुकूलक्रियाया अवसाने यदा फलप्राप्तिर्जाता, फलावप्राप्तौ जातायां प्रयोजनाभावादेव न क्रियायां प्रवृत्तिरिति फलप्राप्तिपूर्वक-

अपवर्गः फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वा अनुवाकोऽधीतः। अपवर्गे किम्—मासमधीतो नायातः।

*सहयुक्तेऽप्रधाने।* [ २–३–१९ ]

सहार्थेन युक्तेऽप्रधाने तृतीया स्यात्। पुत्रेण सहागतः पिता। एवं साकं सार्धं समं योगेऽपि। विनापि तद्योगं तृतीया। 'वृद्धो यूना–' इत्यादिनिर्देशात्।

*येनाङ्गविकारः* [ २–३–२० ]

---

क्रियात्याग उच्यते। त्यागस्य च फलप्राप्तिर्व्यञ्जिका। अत एव सूत्रवृत्तौ 'अपवर्गः=फलप्राप्तिः' इत्युक्तम्। फलप्राप्तौ द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया भवति। पूर्वसूत्रात् कालाध्व-नोरिति अत्यन्तसंयोगे इति चानुवर्तते।

सूत्रोदाहरणमाह—अह्ना क्रोशेन वाऽनुवाकोऽधीतः इति। ज्ञानजनककण्ठताल्वाद्यभिघा-तपूर्वकशब्दोच्चारणानुकूलो व्यापारोऽध्ययनम्। अध्ययनक्रियाकर्ता चैत्रः। तेनाध्ययने कृते यदाऽध्य-यनस्य फलं समजनि तदेदमुदाहरणम्। अनुवाद इति। अनुपूर्वकभाषणार्थकवच्धातोर्घञ् ( ३–३–१९ ) उपधावृद्धिः। 'चजोः' ( ७–३–५२ ) इति कुत्वम्। 'ऋग्यजुःसमूहः'=अनुवाकः। अपवर्गे किमिति।

मासमधीतो नायातः इति मासशब्दस्य कालवाचकत्वेऽपि अनुवाकज्ञानरूपफलसिद्धिर्न जातेति न मासशब्दात् तृतीया, 'कालाध्वनोः' इति द्वितीया। नायात इत्यनेन फलाप्राप्तिरेव स्फुट-मुच्यते। अध्ययने सम्पादितेऽपि तद्विषयकज्ञानाभावे बुद्धिमान्द्यत्वादिदोषाणां प्रयोजकत्वम्।

'सहयुक्तेऽप्रधाने' ( २–३–१९ ) इति। अत्र 'सहेनाप्रधाने' इति वक्तव्ये युक्तग्रहणसाम-र्थ्यात् सहार्थपरत्वं तेन सहशब्दसमानार्थका ये शब्दाः=सहसाकसार्धप्रभृतयस्तेषां योगेऽपि अप्रधा-नवाचकशब्दात् तृतीया भवति। अत एव मूले—'सहार्थेन युक्ते' इत्युक्तम्। पुत्रेण सहागतः पिता इति। अत्रागमनक्रियायां पितुः साक्षादन्वयः, न पुत्रस्य। एवञ्च 'पुत्रप्रतियोगिकसाहित्यानुयोगी आगमनक्रियाश्रयः पिता' इति बोधः।

सहार्थं इति। तदर्थः=साहित्यम्। सहशब्दसमभिव्याहृतपदोपस्थाप्यगुणादिरूपेऽर्थे तृतीयार्थ-द्वारा तृतीयाप्रकृत्यर्थानन्वय एव शाब्दगुणाद्यन्वयित्वाभावरूपमप्राधान्यम्।

'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।'

अत्र प्रधानभूतवहनक्रियायां गर्दभीपदार्थस्यान्वयः। पुत्राणान्न वहनक्रियायामन्वयः। अत्र विद्यमानार्थकः सहशब्दः। एवञ्च दशपुत्रसत्तादशायामपि गर्दभीकर्तृकभारकर्मकं वर्तमानकालिकं वहनमिति पुत्राणां शाब्दगुणाद्यन्वयित्वाभावेनाप्रधानत्वेन ततस्तृतीयाऽनेन सूत्रेण विधीयते। विनाऽपीति। सहार्थेनेति कथनादेव 'क्वचित् शब्दप्रयोगमन्तराऽपि तृतीया भवति' इति न्यायसिद्ध-मर्थं प्रमाणोपन्यासेन दृढयति तदाह—वृद्ध इति 'वृद्धो यूना' इति सूत्रे तृतीयान्तयूनेति निर्देशात् विनाऽपि तद्योगे तृतीया भवति।

अत्र सूत्रे 'अप्रधानग्रहणं न कार्यम्। नच तदभावे प्रधानात् तृतीयाऽपत्तिः, 'उपपद-विभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन प्रथमया तृतीयाया बाधात्। प्रथमाया अपि कारक-विभक्तित्वमस्त्येव। अत एव तिङ्बोध्यकारकबोधकत्वं प्रथमायास्तेन 'तिङ्समानाधिकरणे प्रथमा' इति सङ्गच्छते।

येनाङ्गविकार इति। 'बुद्धिविशेषविषयत्वोपलक्षिततत्तद्धर्मावच्छिन्ने त्यदादिशब्दानां शक्तिः' इति सन्निधानात् 'येन' इति सर्वनाम्ना प्रकृत्यर्थविशेषणत्वेनोपस्थितावयवोऽत्र गृह्यते, स चार्था-

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततः तृतीया स्यात् । **अक्ष्णा काणः ।** अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । **अङ्गविकारः किम्—अक्षि काणमस्य ।**

*इत्थंभूतलक्षणे । [ २-३-२१ ]*

कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ।

---

द्विकृत एव । न हि अविकृतेनावयवेन शरीरस्य विकारः सम्भवति । **अङ्गविकार इति ।** अत्राङ्गशब्दोऽर्शआद्यजन्तस्तेनाङ्गपदेनाङ्गिनो ग्रहणम् । एतत्सर्वमभिप्रेत्य आह –**येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात्** इति । **अङ्ग इति ।** 'अगि गतौ' ( भ्वा० प० से० ) अङ्गति इति अङ्गम् । अच्प्रत्ययः ।

**अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति ।**
**क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥** ( इति मेदिनी )

**अक्ष्णा काण इति ।** यद्यप्यक्ष्ण्येव काणं तथाप्यवयवधर्मस्य समुदाये आरोपात् शरीरे तदवच्छिन्ने च व्यवहारो निरूढः । अश्नुते अनेन इति अक्षि ( अशू व्याप्तौ स्वा० आ० से० ) 'अशेर्नित्' ( ३०३–११५ ) इति क्सिः ।

**'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इति ।**

**काण इति** लेशतोऽपि दर्शनशून्यत्वं काणत्वम् । **'काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् ।'** इति प्रयोगदर्शनात् । एवञ्च शरीरावयवनेत्रसम्बन्धिकाणत्वं शरीरे आरोप्यते इति **'चैत्रः काणः'** इति लोके व्यवहारः । ईदृशरीत्या साधुत्वे चेदं सूत्रमेव मानम् । अक्षिसम्बन्धिकाणत्वविशिष्ट इति फलति ।

**अङ्गविकारः किमिति ।** 'अस्य चैत्रस्य नेत्रं काणम्' इति व्यवहारे नानेन तृतीया । अङ्गिनो विकाराबोधनात् । काणत्वं जन्मान्तरपापप्रयोज्यम् । करणतृतीयान्तेन येन = अवयवेन अङ्गी = समुदायो द्योत्यते तस्मिन् भवितव्यम् इति भाष्यकारीयव्याख्यानात् **'अक्षिकाणमस्ये'**त्यत्र न तृतीया इति भावः ।

**इत्थंभूतलक्षणे चेति ।** अनेन एतेन वा प्रकारेणेति **इत्थम् ।** **'इदमस्थमुः'** इति थालोऽपवादः थमुप्रत्ययः । 'एतेतौ रथोः' इति इदम इतादेशः 'एतदः' इति योगविभागादेतदोऽपि इतादेशः । एवञ्च 'इत्थं'शब्दः प्रकारमात्रपरः । **भूत इति ।** प्राप्त्यर्थकाद् भुवः कर्तरि क्तप्रत्ययः । कर्मविभक्त्यन्तेत्थंशब्देन भूतशब्दस्य समास इत्याह—

**किञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् ।**

**जटाभिः तापसः इति ।** अत्र तापसत्वादिविशिष्टतापसादेर्ज्ञान जटादिना इति तद्वाचकजटादिपदरूपलक्षणवाचकात् तृतीया । एवञ्च स्वज्ञानजन्यज्ञानविषयत्वमर्थः । एवञ्च जटाज्ञानजन्यज्ञानविषयत्वं तापसत्वं तद्वानित्यर्थः । यद्यपि जटाभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां करणत्वात् करणतृतीयया गतार्थत्वेऽपि करणत्वाविवक्षायां तृतीया विधानार्थमिदं सूत्रम् । एवञ्च लक्ष्यलक्षणभावमात्रविवक्षायामनेन तृतीया । केचित्तु ज्ञापकत्व–स्थापकत्व–उत्पादकत्वभेदेन त्रिविधहेतोः **'हेतौ'** इति सूत्रे ग्रहणेन 'जटाभिः तापसः' इत्यादौ **'हेतौ'** इति तृतीया सिद्धा । अतः सूत्रे लक्षणपदं भावप्रत्ययान्तत्वेन ज्ञानपरम् । जनकत्वं सप्तम्यर्थः । तथा च प्रकारविशिष्टविषयकज्ञानजनकपदात् तृतीयेति सूत्रार्थः ।

गदाधरभट्टाचार्यमते तु विद्यमानजटासम्बन्धी तापस इति बोधः ।

*संज्ञोऽन्यतरस्यां कर्मणि* । [ २-३-२२ ]

**संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा संजानीते ।**

*हेतौ* । [ २-३-२३ ]

**हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । कारणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः ।**

---

अत्रेदं तत्त्वम्—लक्षणवाचकपदाप्रयोज्या यत्रेत्थंभूतस्योपस्थितिस्तत्रैवानेन तृतीया । तेन 'कमण्डलुपाणिं छात्रमद्राक्षीः' इत्यादौ कमण्डलुशब्दान्न तृतीया । न चोत्पन्नायास्तृतीयायाः 'सुपो धातु' इति लुक्, कृते समासे उत्पन्नायास्तस्याः समासरूपप्रातिपदिकानवयवत्वात् ।

नागेशास्तु कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः, कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात् । तदुक्तम्—'अनुर्लक्षणे' इति सूत्रे भाष्ये—'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणम्' इति । तदेव=कमण्डलुपाणित्वमेव । कमण्डलोर्लक्षणत्वे तु स एवेति वदेत् । किञ्च तन्मध्यपतितन्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन प्रातिपदिकानवयवोक्तिरसङ्गता स्यात् इति लुको दुर्वारत्वम् । अत एव 'नरंमन्यः' इत्यादौ इजन्तस्योत्तरपदत्वाय पूर्वं सुपो लुकि उत्पन्नस्यामः 'सुपो धातु' इति लुक् अम्विधानसामर्थ्येन वारितः 'इच् एकाचोऽम्' इति सूत्रे भाष्ये—इत्याहुः ।

आलोचकास्तु नागेशमतमयुक्तमिति वदन्ति । तथाहि—यदुक्तं नागेशेन 'स एव वदेत्' इति तन्न युक्तम्, 'उद्देश्यविधेययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभाग् भवति' इति लक्षणशब्दानुरोधेन नपुंसकत्वोक्तिरत्र । तन्मध्यपतितन्यायस्तु नात्र प्रवर्तते, इति तेन न्यायेन लुको दुर्वारत्वोक्तिरपि असङ्गता । तथाहि—तन्मध्यपतितस्य तत्समुदायनिष्ठोद्देश्यतानिरूपितविधेयताश्रयस्यैव तद्ग्रहणेन ग्रहणात् । 'नरम्मन्यः' इत्यत्र समुदायस्याप्युद्देश्यत्वं परम्परयाऽस्त्येवेति न भाष्यविरोधः । कमण्डलुपाणिशब्दात्तृतीयापत्तिस्तु न, कारकविभक्तित्वेन द्वितीयाता बाधात् ।

**संज्ञोऽन्यतरस्यां कर्मणि** इति । अत्र सम्पूर्वक 'ज्ञा अवबोधने' इति गृह्यते, न तु 'जनि प्रादुर्भावे' इति, तस्याकर्मकत्वेन कर्मणोऽभावात् । 'आतश्चोपसर्गे' इति कप्रत्ययः, आलोपश्च । एवञ्च सम्पूर्वकज्ञाधातुवाच्यव्यापारजन्यफलाश्रयवाचकात् प्रातिपदिकात् तृतीया विकल्पेन भवति । तेन कर्मत्वशक्तिरेवात्र तृतीयार्थः । पित्रा पितरं वा संजानीते इति । तृतीयाया अभावे पक्षे कर्मणि द्वितीया । संजानीते इति । 'सम्प्रतिभ्यामनाध्याने' इति आत्मनेपदम् । तत्र प्रतियोगितया प्रविष्टमाध्यानञ्च—उत्कण्ठापूर्वकं स्मरणम् । कृदन्ततदादियोगे तु तृतीयां द्वितीयाञ्च परत्वात् बाधित्वा 'कर्तृकर्मणोः कृति' इति षष्ठ्येव । यथा—'पितुः संज्ञाता' इत्यादौ । आध्यानरूपार्थे तु 'पित्रा पितरं वा संजानाति' इति । केचित्तु आध्यानेऽर्थे 'अधीगर्थ' इति षष्ठी—'मातुः संजानाति' इति तदयुक्तम्, तत्र सूत्रे शेषाधिकारसत्त्वात् ।

**'हेतौ'** इति । हेतुरिह लौकिकः, नतु 'तत्प्रयोजको हेतुश्च' इति कृत्रिमसंज्ञापरः, तस्य चकारेण कर्तृसंज्ञाया अपि विधानेन तत्र 'कर्तृकरणयोः तृतीया' इति कर्तृत्वादेव तृतीयासिद्धेः । अत्र हेतुत्वञ्च—'द्रव्यगुणक्रियानिरूपितं निर्व्यापारसव्यापारवृत्तित्वरूपम्' । करणत्वञ्च 'क्रियामात्रनिरूपितं व्यापारवद्वृत्ति च' इति हेतुकरणयोर्भेदः । उक्तञ्च—

'द्रव्यादिविषयो हेतुः कारकं नियतक्रमम् ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते' ॥ इति ।

द्रव्यविषये हेतुत्वस्योदाहरणमाह —'दण्डेन घटः' इति । 'दण्डहेतुको घटः' इत्यर्थः । अत्र दण्डे व्यापारोऽस्तु मा स्तु वा । अत्र दण्डस्य साक्षात् क्रियान्वयित्वाभावेन करणत्वं नास्ति । मूले

पुण्येन दृष्टो हरिः। फलमपीह हेतुः। अध्ययनेन वसति। 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका'। अलं श्रमेण। श्रमेण साध्यं नास्तीत्यर्थः। इह साधनक्रियां प्रति श्रमः करणम्। शतेन शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्येत्यर्थः। 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया'।

---

गुणस्योदाहरणं न दत्तम्। तदुदाहरणन्तु 'कोपेन रक्तः' इति। कोपहेतुको रक्तत्ववानित्यर्थः। क्रियाविषये हेतुत्वमुदाहरति—

**पुण्येन दृष्टो हरिरिति**। अत्र पुण्यपदं यज्ञादिसत्कर्मनिष्ठजनकतानिरूपितजन्यतावदपूर्वपरम्, अपूर्वन्तु यावत्पर्यन्तं तत्सम्पाद्यं कार्यं न जातं तावत्कालपर्यन्तं तिष्ठत्येव, पुण्यस्य ध्वंसेऽपि तज्जन्यस्यापूर्वस्य विद्यमानत्वात्। अत्रापूर्वस्य हरिदर्शनरूपक्रियान्वयित्वसम्भवेऽपि व्यापारवत्त्वाभावेन न करणत्वं तस्य। यागादिकमेव पुण्यशब्देनोच्यते तदा तस्य करणत्वे तु 'पुण्येन गौरवर्णः' इति उदाहरणं बोध्यम्। ननु 'जटाभिस्तापसः' इत्यत्रानेन तृतीया कुतो नेति चेन्न, तत्र हेतुत्वाविवक्षायां लक्ष्यलक्षणभावविवक्षायां तृतीयाविधानार्थम् 'इत्थंभूतलक्षणे' इत्यस्यावश्यकत्वात्।

ननु 'बाणेन हतः' इत्यादौ 'हेतौ' इति तृतीयासिद्धौ 'कर्तृकरणयोस्तृतीया' इत्यत्र करणग्रहणं व्यर्थम्। संज्ञा तु 'करणाधिकरणयोश्च' एतदर्थमावश्यकी। इति चेदत्रोच्यते—क्रियासाधकतमं यद् व्यापारवत्त्वेन विवक्षितं चेत् करणम्, नो चेद् हेतुः। द्रव्यसाधकतमस्य दण्डादेस्तु व्यापारवत्त्वेऽपि हेतुत्वमेव। किञ्च 'बाणव्यापारसाध्यप्राणवियोगाश्रयः' इति व्यापाराविष्टत्वेन विवक्षायां हेतुत्वेनाविवक्षायां करणे तृतीयार्थं तत्र करणग्रहणमावश्यकमिति।

अत्र सूत्रे हेतुपदेन फलस्यापि ग्रहणं तदाह—**फलमपीह हेतुरिति**। अत्र 'इह' पदेन 'हेतौ' इति सूत्रं विवक्ष्यते तदा इह सूत्रे हेतुपदेन फलत्वेन फलमप्युच्यते। तथा च फलं तृतीयार्थः। **अध्ययनेन वसति** इत्यत्राध्ययनाभिन्नफलजनको वर्तमानकालिको वास इति बोधः। यदा 'इह' इत्यस्योदाहरणे इत्यर्थस्तदा हेतुत्वेन रूपेण फलमपि तृतीयार्थः। तथात्र 'अध्ययननिरूपितनिरूपकतावदुपकारकत्ववान् वासः' इति बोधः। तादर्थ्यविवक्षायां चतुर्थ्या सहानेन तृतीया। तेन 'अध्ययनाय वसति' इत्यपि भवत्येव। इयान् विशेषः—अध्ययनस्य फलेन सहाभेदः संसर्गः। उपकारकत्वेन सह निरूपकता।

**गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका** इति। अयं भावः शब्दतोऽश्रूयमाणा = गम्यमाना अध्याहारादिना लभ्या। अपिना श्रूयमाणा समुच्चीयते, तेन न केवलं श्रूयमाणा एव क्रिया कारकविभक्तौ प्रयोजिका, किन्तु अश्रूयमाणाऽपि। **अलं श्रमेण इति**। निषेधार्थकोऽत्रालंशब्दः। इह श्रमेण साध्यमिदं कार्यं नास्तीत्यर्थेन **साधनक्रियाम्प्रति श्रमः करणम्**। कालिदासविरचितपद्यस्यैकदेशस्यमिदं वाक्यम्। एवं 'शतेन शतेन परिच्छिद्य वत्सान् पाययति पयः' इत्यर्थकम् **'शतेन शतेन वत्सान् पाययति पयः'** इत्यत्र परिच्छेदनक्रियाम्प्रति शतस्य करणत्वम्। वत्साः पयः पिबन्ति तान् रक्षकः पाययति। **'पाययते'** इति युक्तम् -

'दाणश्च सा चेच्चतुर्थ्यर्थे' इति शाप्यं वचनमिष्टार्थानुरोधेनानुवदति—**'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया इति**। शिष्टाः=असंकीर्णाचाराः। यद्वा शिष्टाः=वेदप्रामाण्याभ्युपगन्तृत्वे सति फलसाधनांशे भ्रान्तिरहिता रागादिवशादपि वैपरीत्यं ये न वदन्ति त एव। अथवा—'शास्त्रस्थानां तन्निमित्तत्वात्' इत्युपक्रम्य 'यः शास्त्रस्थानां स शब्दार्थः, के शास्त्रस्थाः?' शिष्टाः, 'शिष्टाश्च वैयाकरणाः' इति आर्य्यम्लेच्छाधिकरणे पदार्थनिर्णयप्रसङ्गे भगवता पतञ्जलिनाऽभिहितम्। एवं यवपदार्थनिर्णये चोक्तम्। अत्र **'अशिष्टव्यवहार'** इति वाचनीयः। अन्यार्थस्तु ज्ञापकसिद्ध इति केचित्। वस्तुतस्तु इष्टानुरोधेनैव शाप्यं वचनं कल्पनीयमिति **सर्वांश एव ज्ञापकसिद्ध एव**।

दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ।

*कर्मणा यमभिप्रैति स संप्रदानम्* । [ १-४-३२ ]

दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् ।

---

एवञ्च संकीर्णाचाराणां व्यवहारे दर्शनीये प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य संकीर्णाचारत्वं तद्वाचका-च्चतुर्थ्यर्थे तृतीया भवतीत्यर्थः । **दास्या संयच्छते कामुकः** इति । अत्र 'दाणश्च सा चेत्' इति तङ् । 'पाघ्राध्मा' इति यच्छादेशः । **कामुक** इति । 'लषपत' इति उकञ्प्रत्ययः । दासी = दीना भृत्या, गृहकर्मकरी । सा दीना एतदर्थं कामवासनासक्तपुमान् दानं न करोति, किन्तु व्यभिचाररूपकुत्सित-भावनया दानं वशीकरणार्थं ददाति । अत्र प्राप्तचतुर्थी बाधित्वाऽनेन तृतीया । तथा च दासी-सम्प्रदानकं रतिफलकं दानमिति फलति । धर्मानुमोदिते शिष्टव्यवहारे तु **भार्य्यायै संयच्छते** इति भवति । तदाह — **धर्म्ये इति** शिष्टव्यवहारे इत्यर्थः । अत्र धर्मश्च —'यतोऽभ्युदयनिःश्रेयससिद्धिः स एव' । ऐहिकाभ्युन्नतिप्रतिपादकः, अन्ते च मोक्षसाधकः स एव सर्वैरुपादेयः । **इति तृतीया ।**

## अथ चतुर्थी

**'कर्मणा यमभिप्रैति स सम्प्रदानम्'** इति । 'लघ्वर्थं संज्ञाकरणम्, संज्ञा नाम यतो न लघीयः' महत्या एतस्याः सम्प्रदानसंज्ञायाः करणमन्वर्थत्वाय । तथा च सम्यग् प्रदीयतेऽस्मै तत्स-म्प्रदानमिति । अत आह—**दानस्येति** । दानक्रियाकर्मणा कर्ता यमभिप्रैति ( इच्छति ) संबध्नाति ईप्सति वा तत् कारकं संप्रदानसंज्ञकमित्यर्थः । तेन 'अजां नयति ग्रामम्' 'हस्तं निदधाति वृत्ते' **इत्यादौ नातिप्रसङ्गः** । दानञ्च—स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपम् । अत एव 'रज-कस्य वस्त्रं ददाति' इत्यादौ न संप्रदानसंज्ञा । तत्र ददाति भाक्तः = लाक्षणिकार्थप्रतिपादकः । भक्तिः= लक्षणा तत्प्रयोज्यो भाक्तः । इदञ्च वृत्तिकारमतम् । भाष्यमते तु नान्वर्थतायामाग्रहः । **महासंज्ञा-करणं प्राचामनुरोधेन** । एवञ्च 'खण्डिकोपाध्यायः ( क्रुद्धाध्यापको बालकानामध्यापको वा ) शिष्याय चपेटां ददाति' । प्रसृतकरतलं चपेटा ( भाषायां चपत इति ) इत्यत्र दुःखं फलम् । ददातिरत्र संयोगविशेषानुकूलव्यापारार्थकः । तथा च 'चपेटासंयोगजन्यदुःखाश्रयः शिष्यो भवतु' इति इच्छया दुःखरूपफलाश्रयत्वेन शिष्यस्य सम्प्रदानत्वम् । 'रजकाय वस्त्रं ददाति' इत्यत्र दाधातोरधीनीकरण-मर्थः । अधीनीकरणत्वञ्चात्र मलनाशानुकूलं स्थापनम् । तथा च 'वस्त्रनिष्ठमलनाशरूपफलसम्बन्धेन भृतिमान् रजको भवतु' इतीच्छया भृतिरूपफलाश्रयत्वेन रजकस्य सम्प्रदानत्वम् । 'विप्राय गां ददाति' इत्यत्र विप्रस्य शेषित्वम् । गोश्च शेषत्वम् ।

अयमाशयः—'धात्वर्थक्रियाया यत्कर्म तद्वृत्ति यद् धात्वर्थफलं तत्सम्बन्धजन्यफलाश्रय-त्वकेच्छाविशेष्यत्वं शेषित्वम् ।' समन्वयश्चेत्थम्—'दानकर्मगोवृत्तितादृशस्वत्वसम्बन्धजन्यसुखाश्रयो विप्रो भवतु' इत्याकारिका या इच्छा तादृशेच्छाविशेष्यत्वरूपं शेषित्वं विप्रस्य । तादृशेच्छाप्रकारता-श्रयत्वरूपं शेषत्वं गवि, इच्छीयप्रकारतायास्तत्र सत्त्वात् । 'नाशिष्याय मतिं दद्यात्' 'शिष्याय शास्त्र-मुपदिशति' इत्यत्रापि सम्प्रदानसंज्ञा भवत्येव । एवमेव पूर्वमीमांसायां चतुर्थाध्यायस्य द्वितीयपादे षष्ठाधिकरणे 'मैत्रावरुणाय दण्डप्रदानम्' इत्यत्र सम्प्रदानसंज्ञा । सम्प्रदानञ्च त्रिविधम्—

**'अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।**

**प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्'** ॥ इति ।

अनिराकर्तृ, प्रेरयितृ, अनुमन्तृ—इति त्रयो भेदाः । १ 'सूर्याय अर्घ्यं ददाति' इत्याद्यम् । नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति । २ प्रेरकम्—'विप्राय गां ददाति' । 'विप्रेण मह्यं गां देहि' इति पूर्वं प्रवर्तितो राजा तस्मै गां ददाति । अत्र पूर्वव्यापारप्रेरकत्वं विप्रे । ३—'उपा-ध्यायाय गां ददाति' इति । उद्देश्यश्चतुर्थ्यर्थः । ननु 'चैत्रो ग्रामं गच्छति' इत्यत्र 'ग्रामसम्बन्धजन्यं सुखं मे जायताम्' इति यदि चैत्रस्येच्छा तदा चैत्रस्य गमनक्रियाकर्मग्रामसम्बन्धजन्यसुखरूपफला-

*चतुर्थी संप्रदाने* [ २-३-१३ ]

**विप्राय गां ददाति । अनभिहित इत्येव । दीयतेऽस्मै दानीयो विप्रः । 'क्रियया यमभिप्रेति सोऽपि संप्रदानम्' । पत्ये शेते । 'यजेः कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा' । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।**

*रुच्यर्थानां प्रीयमाणः* [ १-४-३३ ]

---

श्रयतया सम्प्रदानत्वापत्तिरिति चेन्न, ग्रामसंयोगस्य चैत्रीयसुखं प्रति अन्यथासिद्धत्वेनाजनकत्वात्, उद्देश्यवृत्तिफलस्य सुखादेर्धात्वर्थफलद्वारैव कर्मरूपकरणजन्यत्वस्यापेक्षणात् । क्रियाकर्मसम्बन्धजन्यं फलं नानाविधम् इति **पञ्चोलिनः** ।

**अभिप्रेति** इति । अत्र पदत्रयं न समासः । 'उदात्तवता गतिमता च तिङा समासः' इति तु छन्दोविषयम् इति हरदत्तः । छन्दोवत् सूत्राणि भवन्ति' इति मतमाश्रित्य भवत्येवात्र समास इति **पञ्चोलिनः । चतुर्थी सम्प्रदाने** इति । सम्प्रदानादिसंज्ञा अर्थस्य न शब्दस्य । एवञ्च सम्प्रदानार्थबोधकात् प्रातिपदिकात् चतुर्थी विभक्तिर्भवति । **विप्राय गां ददाति** ( राजा ) इत्यत्र क्रिया—स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छारूपा, तत्कर्म—स्वस्वत्वध्वंसविशिष्टपरस्वत्वरूपफलाश्रयः **गौः** । **कर्मणः करणत्वञ्च** अभिसम्बन्धक्रियाम्प्रति, करणस्य च व्यापारवत्त्वनियमात् कर्मत्वप्रयोजकत्वेनोपस्थितस्य फलस्यैव व्यापारवत्त्वं कल्प्यते । गांपदोत्तरद्वितीयाया आश्रयोऽर्थः । तथा च विप्रस्याभेदेन चतुर्थ्यर्थोद्देश्यस्य स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धेन दाधात्वर्थेच्छायामन्वयः । गांपदार्थस्य द्वितीयार्थाश्रयेऽभेदेन, तस्याधेयतासम्बन्धेनेच्छायामन्वयः । एवञ्च 'विप्रोद्देशिका गवाभिन्नाश्रयनिष्ठस्वस्वत्वध्वंससमानाधिकरणपरस्वत्वानुकूला राजाभिन्नाश्रयनिष्ठा वर्तमानकालावच्छिन्ना' इति 'राजा विप्राय गां ददाति' इत्यतो बोधः । **अनभिहित इत्येवेति** । तेन दीयतेऽस्मै = ब्राह्मणाय एतदर्थबोधनाय बाहुलकात् सम्प्रदाने अनीयर्प्रत्ययः, तदा अनीयर्प्रत्ययेन सम्प्रदानरूपार्थस्योक्ततया **'दानीयो विप्रः'** इत्येव न तत्र विप्रस्य सम्प्रदानत्वम् ।

अकर्मकधातुयोगे सम्प्रदानसंज्ञाविधायकवार्तिकमाह—**क्रियया यमभिप्रेति सोऽपि सम्प्रदानम्** इति । क्रियायाः कृत्रिमकर्मत्वाभावात् तया अभिप्रेयमाणस्य सूत्रेण संज्ञा न प्राप्नोति इति वचनम् । **पत्ये शेते** इति । अत्र शयनक्रियया पतिसम्बन्धमिच्छति ( इत्यर्थम् ) इति संप्रदानत्वेन चतुर्थ्या **पत्ये** इति । एवञ्चाकर्मकक्रियोद्देश्यस्य संप्रदानत्वार्थमिदं वार्तिकम् । तत्र शयनादिक्रियाया अपि प्रतीयमानपतिकर्तृकदर्शनकर्मत्वेन यदा विवक्षा तदा शयनस्यापि दर्शनकर्मतया शयनरूपेण **कर्मणा = कर्मसंज्ञकेन** करणभूतेन यं पतिं संयोगादिसंबन्धेन संबन्धुमिच्छति तस्य सूत्रेणैव संप्रदानत्वं स्यात्, वार्तिकं व्यर्थमेवेति भाष्याशयः । क्रियामात्रकर्मणोऽग्रहणे इदं भाष्यमसङ्गतमेव स्यादिति भावः । एवञ्च 'पत्ये शेते' इत्यनेन पतिसंप्रदानकं दर्शनादिकर्मीभूतं पत्नीकर्तृकं शयनमिति बोधः । तादर्थ्यचतुर्थ्यैव सिद्धे संप्रदानसंज्ञा 'दाशगोघ्नौ संप्रदाने' इत्येतदर्था, सम्प्रदानत्वेन बोधार्था वेति दिक् । अन्ये तु नात्र तादर्थ्ये चतुर्थी, दानक्रियार्थं हि संप्रदानम् , न तु दानक्रिया तदर्था, कारकाणां क्रियार्थत्वादित्याहुः ।

**यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा** इति । 'पशुं रुद्राय ददाति' इत्यर्थे कर्मणः = पशोः करणसंज्ञा तया तृतीया । रुद्राय इत्यत्र संप्रदानत्वेन चतुर्थी प्राप्ता, किन्तु अनेन कर्मसंज्ञाविधानेन द्वितीयैव । वार्तिके 'यजेः' अयं पाठो न सर्वत्र परन्त्वस्य वचनस्य यजिविषयताप्रदर्शनाय क्वचित्तथा पाठः । वस्तुतस्तु इदं वार्तिकं व्यर्थमेव, छन्दोमात्रविषयत्वेन छन्दसि सुब्व्यत्ययेन सिद्धत्वात् । अत एवेदं प्रत्याख्यायते ।

**'रुच्यर्थानां प्रीयमाणः'** इति । रुचिरर्थो येषां ते रुच्यर्थास्तेषाम् । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानसंज्ञः स्यात् । विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणो यो

रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानं स्यात् । हरये रोचते भक्तिः । अन्य-कर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । प्रीयमाणः किम्—देवदत्ताय रोचते मोदकः पथि ।

*श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।* [ १-४-३४ ]

एषां प्रयोगे बोधयितुमिष्टः संप्रदानं स्यात् । गोपी स्मरात्कृष्णाय श्लाघते, ह्नुते, तिष्ठते, शपते वा ।

---

व्यापारः स रुचेरर्थः । विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो यो व्यापारः सोऽभि-लषतेरर्थः । स्वीयविषयत्वसामानाधिकरण्यम्—स्वीयसमवायित्वासामानाधिकरण्यम्—स्वानुकूलत्व-मेतत्त्रितयसंबन्धेन प्रीतिविशिष्टो व्यापारो भजेरर्थः। इति तेषां भेदः। **प्रीयमाण** इति कर्मणि शानच्-निर्देशेन प्रीधातूपात्तप्रीत्याश्रयस्य न संप्रदानत्वं तेन 'हरिं प्रीणाति भक्तिः' इति प्रयोगः ।

**अन्यकर्तृकोऽभिलाषो रुचिरिति ।** अभिलष्यतिकर्त्रपेक्षयाऽन्यदभिलष्यति कर्म तत्कर्तृक इत्यर्थः। अयं भावः समवायसंबन्धेन प्रीत्याश्रयापेक्षया यदन्यत् तत्कर्तृकाभिलाषो रुच् धात्वर्थः। प्रीत्याश्रयकर्तृकः किञ्चिद्विषयक इच्छाविशेषोऽभिलाषस्तथा चाभिलषते रुच्यर्थत्वाभावेन न तद्योगे सम्प्रदानत्वम् । अत एव 'हरिर्भक्तमभिलषति' इत्यत्र न हरेः सम्प्रदानत्वम् । **हरये रोचते भक्तिः इति ।** पूज्येष्वनुरागो भक्तिः । रुच्धात्वर्थस्तूक्त एव । हरिं प्रीणयति इत्यर्थः । कर्मसंज्ञायां प्राप्तायामिदं वचनम् । 'रुच दीप्तौ' इति दीप्त्यर्थकोऽपि रुच्धातुरस्ति, किन्तु अत्र दीप्तिर्न विवक्षिता । तेन 'आदित्यो रोचते दिक्षु' इत्यत्र दीप्त्यर्थे न सम्प्रदानसंज्ञा । **हरिनिष्ठेति ।** हरौ विद्यमाना या प्रीतिस्तस्याः प्रीतेर्भक्तिः कर्त्री । एतेन अन्यकर्तृकत्वमिह प्रीत्याश्रयान्यकर्तृकत्वमित्युक्तं भवति । **प्रीयमाणः किमिति ।** प्रीयमाणपदाभावे **'देवदत्ताय रोचते मोदकः पथि'** इत्यत्र पथोऽपि सम्प्रदानत्वापत्तिः । तत्सत्त्वे तु देवदत्तस्यैव प्रीयमाणत्वं न पथ इति पथिन्शब्दादधिकरणे सप्तमी । **मोदक इति ।** मोदयते इति मोदकः । 'मुद् हर्षे' ( भ्वा० अ० से० ) ण्वुल्प्रत्ययः ।

**'मोदकः खाद्यभेदेऽस्त्री हर्षके पुनरन्यवत्'** । इति।

मोदकशब्दप्रयोगः प्राचीनपद्ये—

**'अलङ्कारप्रियो विष्णुर्जलधाराप्रियः शिवः ।**
**नमस्कारप्रियो भानुर्ब्राह्मणो मोदकप्रियः ॥'**

इति । भाषायां 'लड्डु' इति ख्यातः । न च प्रीयमाणपदाभावेऽपि परत्वेन बाधात् अधि-करणसंज्ञया 'पथि' इति स्यादेवेति वाच्यम्, 'देवदत्तं रोचते' इत्यस्याप्यापत्तेः । तत्सत्त्वे तु कर्म-संज्ञापवादत्वमस्येति न दोषः ।

**'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति ।** 'श्लाघृ कत्थने' 'ह्नुङ् अपनयने' 'ष्ठा गतिनिवृत्तौ' 'शप उपालम्भे' एतेषां धातूनां प्रयोगे बोधयितुमिष्टः सम्प्रदानसंज्ञको भवति । अत्र श्लाघादेः स्तुत्या-दिना बोधनमर्थः । उत्कर्षगुणबोधनशब्दप्रयोगः स्तुतिः, अदर्शनयोग्यदेशस्थापनं ह्नुतिः । स्थाया-त्वर्थः=स्थितिः । उपालम्भदानं शापः । **गोपी** इति । गोपस्य स्त्रीत्यर्थे 'पुंयोगादाख्यायाम्' इति ङीन्, अलोपः । **स्मरात्** इति हेतौ पञ्चमी । **कृष्णाय श्लाघते ।** कृष्णं स्तौति । कर्मत्वे प्राप्ते वचनम् । **ह्नुते** इति कृष्णं ह्नुवाना तमेवार्थं बोधयति । **तिष्ठते** इति । स्थित्या स्वाभिप्रायं कृष्णं बोधयति । अत्र 'प्रकाशनस्थेयाख्ययोश्च' इति आत्मनेपदम् । **शपते** इति । उपालम्भेन स्वाभिप्रायं कृष्णं बोधयति ।

यद्वा, 'स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयति, स्थित्या शपनेन च कृष्णं तं बोधयति' इत्यर्थः । ज्ञीप्स्यमानपदे ण्यर्थकर्मणः, प्रकृत्यर्थकर्मणश्च ग्रहणात् । अयं भावः—प्राधान्यात् ण्यर्थ-

ज्ञीप्स्यमान किम्—देवदत्ताय श्लाघते पथि ।

*धारेरुत्तमर्णः ।* [ १-४-३५ ]

धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः । **उत्तमर्णः किम्**— देवदत्ताय शतं धारयति ग्रामे ।

*स्पृहेरीप्सितः* [ १-४-३६ ]

स्पृहयतेः प्रयोगे इष्टः संप्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । **ईप्सितः किम्—पुष्पेभ्यो वने स्पृहयति ।**

---

कर्मणो ग्रहणे 'कृष्णं स्वानुरागं बोधयती'त्यर्थः । सन्बलात् प्रकृत्यर्थकर्मणो ग्रहणे कृष्णं स्वसखीजनं बोधयतीत्यर्थः । स्वाभिप्रायप्रकटनाऽभावपूर्वकस्तुत्यादिमात्रार्थकत्वे तु 'कृष्णं श्लाघते कुते' इत्येव । **ज्ञीप्स्यमान** इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात् कर्मणि शानच् ।

**'धारेरुत्तमर्णः'** इति । धृङ् अवस्थानार्थकस्तस्माण्णिचि अवस्थानानुकूलो व्यापारः प्रतीयते । स एव धारयतेरर्थः । उत्तमर्णश्चावस्थितिशाश्रयसम्बन्धी 'देवदत्ताय शतं धारयति चैत्रः' इत्यत्र देवदत्त उत्तमर्णः । यतो द्रव्यं चैत्रेण गृहीतमपि देवदत्तसम्बन्धित्वेनैव तिष्ठते चैत्रकर्तृको देवदत्तसम्प्रदानकः शतकर्मकावस्थित्यनुकूलो व्यापार इति शाब्दबोधः । एवं **'भक्ताय धारयति मोक्षं हरिः'** इति । भजनं भक्तिः सा अस्ति अस्येत्यर्थे 'अर्शआदिभ्योऽच्' इति अच्प्रत्ययान्तो भक्त-शब्दः । तृचि तु 'भक्ता' इत्येव स्यात् । भज् धातोः सकर्मकत्वेन कर्मणि क्तप्रत्यये तु भजनकर्तृत्व-रूपार्थस्य प्रतीतिर्न स्यात् । भक्तेन कृष्णस्य पूर्वमनुरागोत्पादिका सम्पादिता भक्तिस्तया प्रसन्नो हरि-स्तस्मै अपुनर्भवलक्षणं मोक्षं ददाति । मुक्तस्य भवसागरे पुनर्जन्म न भवति, 'न स पुनरावर्तते' इति श्रुत्या ब्रह्मज्ञानेन मुक्तः पुरुषः पुनः पुनः जन्मादिसंज्ञां न लभते । अत्र भक्तसम्बन्धिनी भक्तिः पूर्वं हरिणा धारिता इति अधमर्णो हरिः, उत्तमर्णश्च भक्त इति तस्यानेन सूत्रेण संप्रदान-संज्ञा । ऋणमवश्यदेयं भवति ।

ऋणन्नाम—सजातीयद्रव्यान्तरमङ्गीकृत्य परदत्ततदीयद्रव्यदानं तज्जन्योऽधमर्णनिष्ठः परिशो-धननाश्योऽदृष्टविशेषो वा । ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते । भक्तासत्त्वे प्रेरणाया अभावात् तस्यापि प्रेरणाजनकत्वेन कारकत्वम् । यद्यस्यावश्यकं देयं तत्र ऋणत्वव्यवहारस्य पितृऋणा-पकरणे पुत्रोऽधिकारीत्यत्र प्रसिद्धिरस्त्येवेति उत्तमर्णायाधमर्णेन तदवश्यं देयमिति अवश्यदेयत्वेन ब्रह्मस्वरूपावस्थितिरूपे मोक्षे ऋणत्वमारोप्यते इति भावः । **उत्तमर्णः** इति । उत्तमर्णो धनस्वामी । अर्ते क्तः ऋणम् । 'ऋणमाधमर्ण्ये' इत्यत्र व्यवहारविशेषोपलक्षणार्थमाधमर्ण्यग्रहणमिति व्याख्यानात् उत्तमर्णेऽपि निष्ठानत्वं भवति । अस्मादेव निपातनात् अत्र बहुव्रीहौ निष्ठान्तस्य परनिपातः । **उत्तमर्णः किमिति** । मार्गार्थकपथिशब्दार्थस्य न सम्प्रदानसंज्ञेति तत्राधिकरणे सप्तमी, तस्योत्तमर्णत्वाभावात् । उत्तमर्णग्रहणाभावे हेतुसंज्ञाया इवाधिकरणसंज्ञाया अप्यपवादः स्यात्तद्वारणाय तद्ग्रहणम् ।

**'स्पृहेरीप्सितः'** इति । अत्र स्पृहधातुरिच्छायास्तदनुकूलव्यापारस्य च वाचकः । **ईप्सित** इति । ईप्सितत्वञ्च-धात्वर्थव्यापारजन्यफलाश्रयत्वम् । तच्च फलं प्रकृतधातुवाच्यमेव ग्राह्यमिति नियमो न । यदा स्पृहधात्वर्थेच्छाजन्यस्वीकारस्य विवक्षा तदा 'कर्तुरीप्सिततमम्' इति कर्मत्वाप्राप्त्या 'शेषे षष्ठी' प्राप्ता, तस्या बाधनार्थं सूत्रारम्भः । **पुष्पेभ्यः स्पृहयति** इति । पुष्पसंप्रदानिका इच्छेति बोधः । यदा तु विषयत्वावच्छिन्नेच्छानुकूलव्यापारस्य स्पृहधातुवाच्यत्वविवक्षा तदा फलताऽवच्छेदक-विषयतासम्बन्धेन प्रकृतधात्वर्थप्रधानव्यापारजन्यफलाश्रयत्वस्य पुष्पेषु सत्त्वात् पुष्पाणां कर्मसंज्ञा भवति—'पुष्पाणि स्पृहयति' इति । वनस्येप्सितत्वाभावेन न संप्रदानसंज्ञा, किन्तु अधिकरणत्वेन सप्तमी तदाह—**पुष्पेभ्यो वने स्पृहयति** । पूर्वोक्तमेव प्रदर्शयति—

ईप्सितमात्रे इयं संज्ञा। प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा, पुष्पाणि स्पृहयति।

*क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः।* [ १-४-३७ ]

क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात्। हरये क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति वा। यं प्रति कोपः किम् —भार्यामीर्ष्यति। मैनामन्यो द्राक्षीदिति। क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्या अक्षमा। असूया गुणेषु दोषाविष्करणम्। द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते। अतो विशेषणं सामान्येन 'यं प्रति कोपः' इति।

*क्रुधद्रुहोरुपसृष्टयोः कर्म।* [ १-४-३८ ]

---

**ईप्सितमात्रे इयं संज्ञा, प्रकर्षविवक्षायान्तु परत्वात् कर्मसंज्ञा** इति। अत्रेप्सार्थकस्पृहधातुश्चौरादिकोऽदन्तः। तेनाल्लोपस्य स्थानिवत्त्वेन लघूपधगुणः 'स्पृहयति' इत्यत्र न भवति। परत्वेन कर्मसंज्ञया सम्प्रदानसंज्ञाया बाधेन दानीयवत् 'स्पृहणीयशोभम्' इत्यत्र 'स्पृहणीयगुणैर्महात्मभिः' इत्यत्र च न सम्प्रदाने अनीयर्, किन्तु कर्मण्यनीयर्प्रत्ययः। शेषत्वविवक्षायान्तु षष्ठ्यपि।

**'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च'**

इत्यत्रेति हरदत्तादयः। वस्तुतस्तु तन्मतमयुक्तमेव। तथाहि—स्पृहयतियोगे कर्मषष्ठ्याः शेषषष्ठ्याश्च बाधिका सम्प्रदानसंज्ञा। एवञ्च 'स्पृहणीयम्' इत्यत्र संप्रदाने अनीयर्। 'कुमार्य इव' इत्यत्र विभक्तिविपरिणामेन 'कान्ताय स्पृहयन्ति' इति व्याख्येयम्। कान्तस्य त्रस्यन्ति, कान्ताय स्पृहयन्ति इति योजना इति न कश्चन दोषः। वस्तुतः उभयत्राधकत्वमयुक्तम्। यदा इच्छाया एव धातुवाच्यत्वविवक्षा धात्ववाच्यस्यैव फलस्य च विवक्षा तदा कर्मसंज्ञाया अप्राप्त्या शेषषष्ठी बाधकत्वेनास्य चारितार्थ्यात् न निरवकाशत्वं सम्प्रदानसंज्ञायाः। किञ्च यथा 'मातुः स्मरति' इत्यत्र मातृपदार्थस्य कर्मत्वेऽपि तस्य संबन्धित्वेन विवक्षायां षष्ठी भवति तथाऽस्य सूत्रस्य शेषषष्ठ्यपवादत्वेऽपि संप्रदानत्वाविवक्षायां शेषत्वविवक्षायां तादृशप्रयोगस्य निर्वाहे सति विभक्तिविपरिणामकल्पनमन्याय्यमिति दिक्।

**'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः'** इति।

**'क्रुध कोपे' 'द्रुह द्रोहे'** 'ईर्ष्य ईर्ष्यायाम्' असूयेति कण्ड्वादियगन्तः। एषामर्थ इवार्थो येषां धातूनामित्यर्थः। तेषां प्रयोगे यं प्रति कोपः स संप्रदानसंज्ञको भवति।

**'हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति'** इति।

**'यं प्रति कोपः'** इत्युक्तौ **भार्यामीर्ष्यति** इत्यत्र न संप्रदानसंज्ञा, नात्र भार्यां प्रति कोपः। किन्तु परैर्दृश्यमानां तां न सहते। क्रोधादीनामेतत्सूत्रघटकधात्वर्थानां सर्वेषां कोपप्रभवाणामेव ग्रहणस्याभिप्रेतत्वेऽपि सामग्रीवैजात्याद्वैजात्यमतस्तेषां स्वरूपमाह—**क्रोधः=अमर्षः**=वाक्चक्षुरादिविकारानुमेयप्ररूढकोपः=आधिक्यं प्राप्तः कोपः। **द्रोहः=अपकारः**=अपकारविषयेच्छा=दुःखजनिका क्रिया।

**ईर्ष्या=असहनम्**। उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः। **असूया**=गुणेषु दम्भादिकृतो दोषत्वारोपानुकूलो व्यापारः। क्रुधद्रुहोरकर्मकत्वात् तद्योगे षष्ठी प्राप्ता, अन्ययोः सकर्मकत्वेन द्वितीया प्राप्ता, षष्ठीं द्वितीयाञ्च बाधित्वा संप्रदानसंज्ञया चतुर्थी। ननु लाघवात् **'चित्तदोषार्थानाम्'** इत्येवास्तु सूत्रम्। किं क्रोधादीनां विशेष्योपादानेन ? अत्रोच्यते, द्वेषादावतिप्रसङ्गवारणाय विशेष्योपादानम्। तेन 'योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः' इत्यत्र चतुर्थी न भवति। तत्र हि अनभिनन्दनं द्विषेरर्थः। अत एवाचेतनेषु न प्रयुज्यते -'औषधं द्वेष्टि देवदत्तम्' इति। सूत्रे **द्रुहादयो कोपप्रभवा एव गृह्यन्ते** इति। न हि कोपः कोपप्रभव इति कथं तर्हि 'क्रुध्यसि कस्मैचित्' इति, कुपिरत्र द्रोहार्थ इति न दोषः। 'क्रियया यम्' इत्येव सिद्धे सूत्रे क्रुधद्रुहोर्ग्रहणं न कार्य्यमिति।

**क्रुधद्रुहोरुपसृष्टयोः कर्म** इति। उपसृष्टयोरित्यस्यार्थमाह—**सोपसर्गयोः**रिति। वैयाकरणनिकाये एष तदर्थकत्वेन प्रसिद्धः। पूर्वसूत्रापवादोऽयम्। अत्र पूर्वतः 'यम्प्रति कोपः' इत्यनु-

सोपसर्गयोरनयोर्योगे यं प्रति कोपः तत्कारकं कर्म संज्ञं स्यात्। **क्रूरमभिक्रुध्यति अभिद्रुह्यति।**

*राधीक्ष्योर्यस्य विप्रश्नः।* [ १-४-३९ ]

एतयोः कारकं संप्रदानं स्यात्, यदीयो विविधः प्रश्नः क्रियते। **कृष्णाय राध्यति ईक्षते वा।** पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः।

*प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता।* [ १-४-४० ]

आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता संप्रदानं स्यात्। **विप्राय गां प्रतिशृणोति आशृणोति वा।** विप्रेण मह्यं देहीति प्रवर्तितस्तं प्रतिजानीत इत्यर्थः।

*अनुप्रतिगृणश्च।* [ १-४-४१ ]

आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात्। **होत्रेऽनुगृणाति प्रतिगृणाति वा।** होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः।

वर्तते। कर्मसंज्ञाविधानेन द्वितीया। उदाहरणम्—**क्रूरमभिद्रुह्यति, अभिक्रुध्यति** इति।

**राधीक्ष्योर्यस्य विप्रश्नः** इति। 'राध संसिद्धौ' 'ईक्ष दर्शने' अनयोरिह शुभाशुभपर्यालोचनमर्थः। पर्यालोचनञ्च प्रश्नपूर्वकं भवति। शुभाशुभरूपयोः कर्मणोर्धात्वर्थकुक्षिगतत्वेनाकर्मकावेतौ। 'राधोऽकर्मकादेव' इति दिवादिगणपठितवचनेनाकर्मकादेव श्यन्विधानम्। एवञ्च कृष्णसम्बन्धि शुभाशुभमित्यर्थाभ्युपगमात् षष्ठ्यां प्राप्तायां वचनमिदम्। एतयोर्योगे यत्सम्बन्धी विप्रश्नः = विविधः प्रश्नस्तस्य संप्रदानसंज्ञा भवति। **'कृष्णाय राध्यति, ईक्षते वा।'** बाल्यकाले श्रीकृष्णकृतानेकाश्चर्यघटनाचकितेन नन्देन **पृष्टो** महर्षिः सकलशास्त्रपारङ्गतो गर्गाचार्यः **कृष्णसम्बन्धि शुभाशुभरूपं फलं पर्यालोचयति।**

महावैयाकरणो गर्गाचार्य आसीत्। एवं ज्यौतिषशास्त्रे अपि विशिष्टं वैदुष्यं गर्गस्य। गर्गसंहिताञ्च रचितवान् सः। 'वैयाकरणशिरोमणिना गर्गेण सह व्याकरणमहाभाष्यप्रणेतुः श्रीपतञ्जलेः कदाचित् शास्त्रार्थोऽपि जातः' इति किंवदन्ती श्रूयते। जाते विवादे द्वयोर्वैमनस्यमत एव भगवता पतञ्जलिना अभाणि 'कूपे गर्गकुलम्' 'कुत्सितो गार्ग्यः' 'गर्गशतदण्ड'-न्यायः। इति महाभाष्ये कुत्सायामेव गर्गपदमुपात्तम्। अनेके गर्गाः, तद्वंशीया अपि गर्गपदेन व्यपदिश्यन्ते। ब्राह्मणेषु श्रेष्ठत्वं गर्गवंशजानाम्। अद्यत्वेऽपि गर्गगौतमशाण्डिल्यवंश्या विप्राः पूज्यत्वेन परिगणिता भवन्ति इति पञ्चोलिनः।

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** इति। प्रत्याङ्भ्यामिति द्विवचननिर्देशेन प्रत्येकमेव धातुसंबन्धः। एवमुत्तरसूत्रेऽपि। एवञ्च प्रतिपूर्वकस्य, आङ्पूर्वकस्य च शृणोतेर्योगे पूर्वप्रवर्तन ( प्रेरक ) रूपव्यापाराश्रयस्य ( कर्तुः ) संप्रदानत्वमनेन बोध्यते। अत्र विप्रस्य प्रवर्तनान्वयित्वेन षष्ठी प्राप्ता साऽनेन बाध्यते। अत्र विप्रेण पूर्वं प्रेरणारूपो व्यापारः संपादितस्ततः विप्रसंप्रदानकं प्रत्याश्रवणमिति। विशिष्टशाब्दबोधप्रकारस्तु पूर्वं वर्णित एवातो नात्र वितन्यते। प्रत्याश्रवणम् = स्वीकारः। परे तु विप्रस्य कर्तृप्रेरकत्वेन हेतुत्वे प्राप्ते वचनम्।

**अनुप्रतिगृणश्च** इति अनुपूर्वकस्य, प्रतिपूर्वकस्य च गृणातेः कारकं पूर्वव्यापारस्य = शंसनस्य कर्तुः संप्रदानसंज्ञा। **होत्रेऽनुगृणाति** इति। जुहोतीति होता, तस्मै। प्रथमं होता मन्त्रोच्चारणं करोति, यक्ष्यमाणदेवतोद्देश्यकद्रव्यस्य मन्त्रोच्चारणपूर्वकवैधाधाररूपकुण्डस्थाग्नौ प्रक्षेपविधानात्। मन्त्रोच्चारणं कुर्वन्तम् ओथामित्यादिशब्दैः प्रोत्साहनं करोति अध्वर्युः। यज्ञे अध्वर्युः, उद्गाता होता च आवश्यकः। यजुर्विदध्वर्युः। सामवेदविद् उद्गाता। ऋग्वेदविद् होता च। उक्तञ्च—

*परिक्रयणे संप्रदानमन्यतरस्याम्* । [ १-४-४४ ]

नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन्साधकतमं कारकं संप्रदानसंज्ञं वा स्यात् । शतेन—शताय वा परिक्रीतः । 'तादर्थ्ये चतुर्थी वाच्या' । मुक्तये हरिं भजति । 'क्लृपि संपद्यमाने च' । भक्तिर्ज्ञानाय कल्पते, संपद्यते, जायते इत्यादि । 'उत्पातेन ज्ञापिते च' । वाताय कपिला विद्युत् । 'हितयोगे च' ।

---

'अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।' इति ।

अध्वर्युरिति । अध्वरम् = यज्ञम् इच्छति यः । 'सुपः' इति क्यच् । 'कव्यध्वरपृतनस्य' इति लोपः । 'क्याच्छन्दसि' इति उप्रत्ययः । उद्गायति साम इति उद्गाता । 'गै शब्दे' तृच् । जुहोतीति होता हु × तृच् 'अप्तृन्तृच्' इति दीर्घः । कर्मसंज्ञां बाधित्वा संप्रदानसंज्ञा ।

**परिक्रयणे सम्प्रदानमन्यतरस्याम्** इति । क्रयो नाम—धन( रूपक )अन्नाद्यर्पणेनात्यन्तिकस्वीकरणम् । क्रयस्य समीपं परिक्रयणम् । 'अव्ययं विभक्ति' इति समीपार्थेऽव्ययीभावसमासः । अनियतकालात् क्रयणात् परिक्रयणस्य न्यूनकालत्वात् व्याचष्टे—**नियतकालं भृत्या**=वेतनादिना **स्वीकरणम्=परिक्रयणं** तत्र यद्व्यापारानन्तरफलनिष्पत्तिरूपप्रकृष्टोपकारकं कारकं संप्रदानसंज्ञं वा स्यात् । संप्रदानसंज्ञाया वैकल्पिकत्वेन पक्षे करणसंज्ञा । **शतेन शताय वा परिक्रीतः** ( भृत्यः ) । अत्रोदाहरणे पूर्वं शताय ततः शतेन इति वक्तुमुचितम्, पूर्वं संप्रदानसंज्ञा तदभावे करणसंज्ञा इति क्रमसत्त्वात् ।

**'तादर्थ्ये चतुर्थी वाच्या'** इति । तस्मै = कार्य्यायेदं तदर्थम् = कारणम् । तस्य भावस्तादर्थ्यम् । अत्र ष्यञा उपकारकत्वरूपः सम्बन्धोऽभिधीयते, 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति राद्धान्तात् । साक्षात् परंपरया चोपकारकत्वमनेकधा । **'मुक्तये हरिं भजति'** । 'ब्राह्मणाय दधि' 'यूपाय दारु' इति । अत्रापि षष्ठीवत् संबन्धप्रतियोगिवाचकादेव चतुर्थी, न तु संबन्धानुयोगिवाचकविशेष्यदध्यादिभ्यः । 'हरये रोचते' इत्यत्र तादर्थ्यचतुर्थी न प्राप्नोति तत्र चतुर्थ्यर्थं 'चतुर्थी संप्रदाने' इति सार्थकम् ।

**'क्लृपि सम्पद्यमाने च'** इति । अर्थग्रहणमत्र । संपत्तिः=उत्पत्तिः । तथाच क्लृप्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थी भवति । अनेन प्रकृतिविकृत्योर्भेदविवक्षायां चतुर्थी, अभेदविवक्षायां तु प्रथमैव 'भक्तेर्ज्ञानं कल्पते' । 'जनिकर्तुः' इति भक्तेरपादानत्वं तदा ज्ञानस्याभिहितकर्तृत्वेन परत्वात् प्रथमैव । यद्यपि 'तादर्थ्ये चतुर्थी' इति चतुर्थी सिद्धा, वार्तिकारम्भणन्तु परिणामत्वप्रकारकबोधनार्थम् । **भक्तिर्ज्ञानाय कल्पते, सम्पद्यते, जायते** इति । भक्तिर्ज्ञानात्मना परिणमते । तात्त्विकोऽन्यथा भावः = परिणामः । अतात्त्विकोऽन्यथाभावो विवर्तः । दुग्धं दधिरूपेण परिणतं भवति । रज्जौ सर्पावभासो विवर्तः । साङ्ख्यमते ( कपिलमते ) परिणामवादः । वाक्यपदीयादिमते विवर्तवादः । उक्तञ्च —

'अनादिनिधनं ब्रह्म शब्दतत्त्वं निरञ्जनम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः' ॥ इति ।

द्वयोर्वादयोर्युक्तायुक्तत्वविवेचनं वटपत्तन ( बडोदा गुजरात ) विश्वविद्यालयीयविशिष्टव्याख्यानमालायां महाकाये विशिष्टे मद्विरचितनिबन्धे शतपत्रात्मके मया कृतमिति ततोऽवगन्तव्यमिति पञ्चोलिनः ।

**'उत्पातेन ज्ञापिते च'** इति । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः । इदमुत्पातस्वरूपवर्णनमयुक्तम्, शुभसूचकस्योत्पातत्वे प्रमाणाभावात्, लोके तादृशार्थे तत्प्रयोगादर्शनाच्च । अतोऽशुभसूचको भूतविकार एवोत्पात इति उपाध्यायाः पूज्या गुरुचरणाः । एवञ्चोत्पातेन ज्ञापितेऽर्थे वर्तमानाच्चतुर्थी । **'वाताय कपिला विद्युत्'** इति । संपूर्णं भाष्योक्तश्लोकवार्तिकम्—

**ब्राह्मणाय हितम् ।**

*क्रियार्थोपपदस्य च कर्मणि स्थानिनः । [ २-३-१४ ]*

**क्रियार्था क्रिया** उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि **चतुर्थी**

---

'वाताय कपिला विद्युद् आतपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्' ॥ इति ।

वातस्य ज्ञापिका कपिला विद्युत् । कपिला = श्यामा । 'श्यावः स्यात् कपिशः' । कपिः = वर्णविशेषः सोऽस्यास्तीति लोमादित्वात् ( ५,२,१०० ) इति शप्रत्ययः । यद्वा कपिः = मर्कटः तद्वर्णत्वात् ।

**'कपिशस्त्रिषु श्यामे, स्त्रीं माधव्यां, सिह्लके पुमान्'** इति ।

कृष्णपीतवर्णोऽपि कपिशः । '**कपिशा**' इति पाठभेदमाश्रित्येदं व्याख्यानम् । '**कपिला**' इति मुख्यः पाठः । कपिं वर्णं लातीति कपिला ।

**'स्त्री रेणुकायां कपिला वर्णे ना कुक्कुरे मुनौ ।
अनले वासुदेवे च कपिलः परिकीर्तितः ॥'** इति ।

कपिलो गोविभूषणः । उद्रिक्तपीताङ्गः । हरितांशाधिके तु पिङ्गलः पद्मधूलिवत् । **हितयोगे च** इति । चकारात् सुखयोगेऽपि चतुर्थी । 'चतुर्थी तदर्थ' इति समासविधानज्ञापितार्थमनुवदति नापूर्वमिदमिति । अयं भावः चतुर्थ्यन्तस्य हितयोगे सुखयोगे च समासविधानमनुपपन्नं सत् ज्ञापयति = एतयोर्योगे चतुर्थी । **ब्राह्मणाय हितम्** । ब्राह्मणाय सुखमिति । अध्ययनं तपः सत्कर्मानुष्ठानञ्च ब्राह्मणाय हितकरं कार्य्यम् । एवममानित्वम्, सत्यभाषणादिकञ्च ब्राह्मणाय सुखकरम् ।

**'क्रियार्थोपपदस्य च कर्मणि स्थानिनः'** इति । क्रियात्वञ्च—'गुणत्वानाश्रयत्वे सति विभागासमवायिकरणरूपत्वम् । साध्यसाधनभेदेन क्रिया द्विविधा । 'पचति' इत्यादौ साध्यरूपा । 'पाकः' इत्यादौ साधनरूपा । साध्यत्वञ्च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वम् । पचतीत्यादिपदे उच्चारिते साधन ( कारक ) विषयिणी आकाङ्क्षा अवश्यमुदिता भवति, नान्यक्रियाविषयिणी आकाङ्क्षा । पाकादिपदोच्चरिते पाको जातो नष्टो वेति आकाङ्क्षोदयेन तत्र साधनरूपा क्रिया । साधनत्वञ्च—क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वम् । **क्रियार्थोपपदस्येति ।** क्रिया अर्थः = प्रयोजनं यस्याः सा क्रियार्था सा = क्रियार्थक्रिया उपपदं यस्य तस्येत्यर्थः । ननु क्रिया नाम—अर्थविशेषः । न हि अर्थे उच्चारणक्रिया, नापि अर्थरूपक्रियाया उपपदत्वं संभवति, तथापि स्व( क्रिया )वाचकशब्दद्वारा तद्बोध्यम् । क्रियाफलकक्रियावाचकमित्यर्थः फलति ।

ननु क्रियावाचकधातोरुपोच्चरितपदरूपोपपदत्वं न संभवति, सुबन्ततिङन्तस्यैव पदत्वादिति चेन्न, क्रियावाचकं धातुरूपं प्रकृतिर्यस्येति क्रियावाचकप्रकृतिकमित्यर्थेनादोषात् । एवञ्च तादृशमुपपदं यस्य तुमुन्नन्तस्य तस्य कर्मणि चतुर्थी । 'तुमुन्ण्वुलौ' इति सूत्रमहिम्ना क्रियार्थमुपपदं क्रियावाच्येव फलतीत्यत आह—**क्रियार्था क्रियेति** । **स्थानिन** इति । स्थानिशब्दश्च अप्रयुज्यमानवाचो वैयाकरणानां निकाये प्रसिद्धः । **तुमुनः** इति तुमुन्निति ण्वुलोऽप्युपलक्षणम् । फलान्याहरको यातीत्यर्थके फलेभ्यो यातीति प्रयोगदर्शनात् । **कर्मणि** इति । तेन द्वितीयापवादत्वमस्य सूत्रस्य सिद्धम् । 'प्रयुज्यमानस्य कर्मणि मा भूत् अप्रयुज्यमानस्यैव कर्मणि यथा स्यादिति नियमार्थपरत्वेन कस्यचिद् व्याख्यानन्तु असङ्गतमेव, अप्राप्तस्य नियमायोगात् । यानक्रियायाः फलार्थत्वाभावेन **न तादर्थ्ये चतुर्थी** प्राप्नोति, आहरणार्था हि यानक्रिया, आहरणन्तु फलकर्मकम् । एवञ्च 'क्रियाफलकक्रियावाचकं क्रियावाचकप्रकृतिकं तुमुन्नन्तं ण्वुलन्तञ्च अप्रयुज्यमानं पदं तद्बोध्यव्यापारनिरूपितफलतावच्छेदकसंबन्धेन फलाश्रयरूपकर्मवाचकात् चतुर्थी इति फलति । अप्रयुज्यमानपदस्यार्थो अध्याहारादिना लभ्य इति 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' तेन नानुपपत्तिरिति ।

स्यात्। फलेभ्यो याति। फलान्याहर्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितु-मित्यर्थः। एवं 'स्वयंभुवे नमस्कृत्य' इत्यादावपि।

*तुमर्थाच्च भाववचनात्।* [ २-३-१५ ]

'भाववचनाश्च' इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति। यष्टुं यातीत्यर्थः।

---

**फलेभ्यो याति** इति। कमलेशो याति, किमर्थं स गच्छति, आहर्तुम्, कानि आहर्तुं फलानि, एवञ्च 'बहुत्वविशिष्टफलकर्मकाहरणफलिका वर्तमानकालनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती एकत्वविशिष्टकमलेशाभिन्नाश्रयवती व्यापारलक्षणा क्रिया' इति क्रियाविशेष्यको बोधः शाब्दिकानाम्। **'नमस्कुर्मो नृसिंहाय'** इति। वयमिति शेषः। **नृसिंह इति।** नृसिंहे भगवति नापि नरत्वम्, नापि सिंहत्वं किन्तु तत्र विलक्षणा नृसिंहत्वजातिः। आश्रययोर्भेदभङ्ग एव साङ्कर्य्यदूषकता-बीजम्, यथाऽत्र। ययोस्तु सामानाधिकरण्येन सिद्धिस्तयोर्जात्योः साङ्कर्य्यस्यादोषत्वात्। एवञ्च भूतत्वम्, मूर्तत्वञ्च जातिरूपमेव। विस्तरस्तु श्रीहर्षकृते खण्डनेऽवलोकनीयः।

दशावतारेषु स्वभक्तप्रह्लादसंरक्षणाय प्रह्लादपितुर्दुष्टत्वादमनाय लोहमयस्तम्भादवतीर्णो भगवान् नृसिंहो हिरण्याक्षं जघान। हिरण्यम् = सुवर्णम् = सांसारिका भोगसाधका मुख्या विषया एव यस्य अक्षिणी—दृष्टिपथगोचराः स एव हिरण्याक्षः = भोगवासनाप्रधानः। भोगवासनाप्रधाने तस्मिन् राक्षसे प्रह्लादः=प्रकृष्टा ( सर्वोत्तमा ) नन्दः कुतः, स तु भगवत्साक्षात्कारलक्षणानन्दं द्वेष्टि। सच्चिदानन्दस्वरूपो भगवान् हरिः। तस्य जीवात्मा अंशः। अंशस्तु यस्य तं प्रति स गच्छति। प्रह्लादस्तु अंशिनं प्रभुं भजति। इति तयोः परस्परं वैरकारणम् इति दार्शनिकी व्याख्या पुराणेषु लुप्तप्राया सा विद्वद्भिरनुसन्धेयेति। एवमेव सुनीतिसुरुचिसहितोत्तानपादपितृजन्ये ध्रुवेऽपि दार्शनिकी व्याख्या विद्यते, विस्तरभयेन न वितन्यते। अधरामृतपानेऽपि प्रसिद्धा सम्प्रति या व्याख्या सा तु अज्ञकल्पिता असाध्वी। धरा = पृथ्वी तत्र अमृतवदास्वाद्या विभिन्ना रस्या भोगास्तेषां पानं सांसारिकैः क्रियते ते न भवन्ति यत्र इति अधरामृतपानम् = आपातरम्याः अमृतभिन्ना अपि अमृतवद्-भ्रमात् उपादेयत्वेन भोगार्थं ज्ञातास्तेषां यत्र न पानं किन्तु ब्रह्मसाक्षात्कारलक्षणानन्दकर्मकं पानं भक्तैः भक्तामिश्च कृतं श्रीकृष्णेन कारितम् इत्यर्थः। विद्वद्भिरुपेक्षितानि, अज्ञैरात्मसात्कृतानि पुराणानि संप्रति सन्ति इति पञ्चोलिनः। दशावतारवर्णनमेकेन पद्येनात्र प्रदर्श्यते—

> वेदानुद्धरते जगन्ति वहते, भूलोकमुद्बिभ्रते
> दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
> पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
> म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥ इति।

**एवं स्वयंभुवे नमस्कृत्य इति।** 'स्वयंभुवमनुकूलयितुं नमस्कारं कृत्वा भक्तो देवमन्दिरात् गतः' इति योजना। नमः कृत्वा इत्यत्र गतिसमासं विधाय 'समासे' इति ल्यपि, 'ह्रस्वस्य पिति' इति तुकि 'नमस्पुरसोः' इति सत्वम्।

**'तुमर्थाच्च भाववचनात्'** इति। ननु अव्ययसंज्ञानिष्ठप्रयोज्यतानिरूपितप्रयोजका ये प्रत्ययास्ते भावे एव भवन्ति, 'अव्ययकृतो भावे' इति वचनात्। तथा च 'तुमर्थाच्च' इत्येव सूत्रमस्तु, लाघवात् इति चेदत्रोच्यते—भाववचनग्रहणं सूत्रविशेषपरिग्रहार्थम्। इत्यत आह—**'भाववचनाश्च'** इति **सूत्रेण विहित** इति। **तुमर्थात्** इति भाववचनघञादीनां तुमुन्प्रत्ययापवादतया तत्समानार्थकत्वम्। यष्टुं यातीत्यर्थकं **यागाय याति** इति। यजधातो-प्रातिपदिकार्थे प्राप्तां प्रथमां बाधित्वाऽनेन चतुर्थी। 'द्विषां विघाताय विधातुमिच्छतः' इत्यत्र विघाताय इति घञि, वृद्धौ 'चजोः' इति कुत्वे याग इति।

*नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च* । [ २-३-१६ ]

एभिर्योगे चतुर्थी स्यात् । हरये नमः । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा ।

---

तादर्थ्ये चतुर्थी । विधातार्थं यद् विधानं तदिच्छावत इत्यर्थः । एतेन तुमुना तादर्थ्यस्योक्तत्वेन कथं चतुर्थी इत्यपास्तम् । उत्तरक्रिययोस्तद्द्योतनेऽपि पूर्वक्रिययोस्तदद्योकत्वात् । अस्य सूत्रस्य नियमार्थत्वपरं प्रसादव्याख्यानमश्रद्धेयमेव । 'पाचको व्रजति' इत्यत्र ण्वुलः कर्तृवाचतकतया तुमर्थत्वाभावात् । ण्वुलन्ते कर्तुः प्राधान्यात् कर्तारं प्रति च तादर्थ्याभावात् । गुणीभूतं पाकं प्रति तादर्थ्यसम्भवेऽपि पाकवाचकधातोश्चतुर्थ्ययोगाच्च । तुमर्थात् किम् ? 'पचनं वर्तते' । भाववचनात् किम् ? पाकः । त्यागः ।

अत्र सूत्रे 'क्रियार्थोपपदस्य' इत्यनुवर्त्यार्थवशाद् विभक्तेर्विपरिणाम इति पञ्चम्या विपरिणाम्य 'भाववचनात्' इति त्यक्तुं शक्यम् ।

"नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इति । योगशब्दस्य प्रत्येकं योगः=सम्बन्धः । नमस् इति । नमनं नमः । 'नमो नतौ' इत्यमरः । 'णम प्रह्वत्वे' ( भ्वा० प० अ० ) असुन् ( उ० ४, १८९) । स्वस्तिशब्दोऽव्ययम् । मङ्गलार्थकः । रेफान्तोऽपि स्वस्तिशब्दः 'स्वस्तिर्भवतु ते नित्यम्' इत्यत्र न चतुर्थी । सुष्ठु आहूयन्ते देवा अनया । 'अन्येभ्योऽपि' ( वा० ३-२-१०१ ) इति डः स्वाहा अस्ति अस्या 'अर्शआदिभ्यः' इत्यच् वा । 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' । त्रीणि अग्नेः प्रियायाम् । स्वधा = पितृदाने । अलंशब्दोऽनेकार्थकः । 'अल भूषणादौ' ( भ्वा० प० से० ) बाहुलकादम् ।

'अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।' इत्यमरः ।

अलं भूषणपर्याप्तिवारणेषु निरर्थके । अलं शक्तौ च निर्दिष्टम् ॥ इति विश्वः ।

अत्र शिष्टकृद्व्याख्यानात्पर्याप्त्यर्थकस्यालंशब्दस्यैव ग्रहणन्नान्यार्थकस्य । वषडिति देवहविर्दाने वषट् । उक्तञ्च—"स्वाहा देवहविर्दाने श्रौषड् वौषड् वषट्स्वधा ।" इति ।

स्वादतेऽनेनेति स्वाहा । 'स्वाद आस्वादने' ( स्वा० आ० से० ) आप्रत्ययः । पृषोदरादित्वात् ( ६-३-१०९ ) इति हस्य दः । उह्यतेऽनेनेति वषट् 'वह प्रापणे' ( भ्वा० उ० अ० ) उषट्प्रत्ययः । हरये नमः इति । नमःपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकाच्चतुर्थी । नमःपदप्रयोज्या विषयता नमस्कारत्वावच्छिन्ना विधेयताऽऽख्या विषयता, तादृशविषयतानिरूपिता विषयता हरित्वावच्छिन्ना उद्देश्यताऽऽख्या विषयता तादृशविषयताप्रयोजकं प्रातिपादिकं शब्दस्वरूपं हरिरिति तस्माच्चतुर्थी । हरिमुद्दिश्य नमस्कारो विधीयते । नमस्करोति देवान् इति । अत्र द्वितीयाचतुर्थ्योः प्राप्तयोः 'उपपदविभक्तेः' कारकविभक्तिर्बलीयसी' इति न्यायेन द्वितीयैव । केचित्तु उद्देशनक्रियावगतौ विलम्ब इति कारकविभक्तिर्बलीयसीत्याहुः । अन्ये तूपपदविभक्त्या संबन्धसामान्यमवगम्यते, संबन्धविशेषावगमस्तु प्रकरणादिपर्यालोचनाधीनः, कारकविभक्त्या तु कर्मत्वादिसंबन्धविशेषो झटित्येवावगम्यते इति तस्या बलीयस्त्वम् अन्तरङ्गत्वात् । वस्तुतस्तु 'उपपदविभक्तेः' इति परिभाषा न ज्ञापकसिद्धा, नापि 'अन्तरङ्गपरिभाषामूला, किन्तु वाचनिक्येव । अत एव भाष्ये 'इयं वाचनिकी' इत्येवोक्तम् । प्रजाभ्यः स्वस्ति कल्याणार्थकस्वस्तिशब्दोऽव्ययसंज्ञकः ।

प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु ते नित्यं सुखं चानुत्तमं तथा ॥

इति भविष्योत्तरपुराणात् स्वस्तिशब्दोऽनव्ययोऽपि । अग्नये स्वाहा । अग्निदेवमुद्दिश्य हविर्दानमन्त्रो विधीयते । पितृभ्यः स्वधा इति पितुद्दिश्य यत् विधिना दीयते तत्र स्वधाशब्दप्रयो-

'अलमिति पर्याप्त्यर्थग्रहणम्'। तेन दैत्येभ्यो हरिरलं-प्रभुः-समर्थः-शक्त इत्यादि। प्रभ्वादियोगे षष्ठ्यपि साधुः। 'तस्मै प्रभवति–' 'स एषां ग्रामणीः' इति निर्देशात्। तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इति सिद्धम्। वषडिन्द्राय। चकारः पुनर्विधानार्थः, तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषि–' इति षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्।

*मन्यकर्मण्यनादरे विभाषाऽप्राणिषु*। [ २-३-१७ ]

प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे। न त्वां तृणं मन्ये तृणाय वा।

---

गोऽपि। दैत्येभ्यो हरिरलं समर्थः प्रभुः शक्त इति। पर्याप्तिशब्दसमानार्थकसर्वशब्दानामत्र ग्रहणं नान्येषां भूषणादीनाम्, व्याख्यानात्। **'तस्मै प्रभवति स एषां ग्रामणीः'** इति निर्देशेन प्रभ्वादि-शब्दयोगे चतुर्थी षष्ठी च भवति। तेन शिशुपालवधाख्ये महाकाव्ये 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इत्यत्र षष्ठी विभक्तिः।

"प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद् दशमं चिकर्तिषुः।
अतर्कयद् विघ्नमिवेष्टसाहसः प्रसादमिच्छासदृशं पिनाकिनः॥" ( प्र० स० ४९ श्लोक ) इति। पूर्णपद्यम्।

**इन्द्राय वषट्** इति। परमैश्वर्य्यवान् देवाधिपतिरिन्द्रः। तं देवदेवमुद्दिश्य हविषो दानं तत्प्रीतये सम्पाद्यते यजमानेन। अस्मिन् सूत्रे 'च' इति पृथक् सूत्रं योगविभागेन। तेन शुभाशंसन-रूपाशीर्विवक्षायाम् 'नमः स्वस्ति' इति चतुर्थी बाधित्वा परत्वात् 'चतुर्थी चाशिषि' इति षष्ठी **'स्वस्ति गोभ्यो भूयात्'** इत्यत्र गोशब्दात् प्राप्ता, किन्तु बाधकबाधनार्थं योगविभागेन कृतं 'च' इति षष्ठीं बाधित्वा चतुर्थी संपादयति।

**'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु'** इति। 'मन ज्ञाने' 'मनु अवबोधने' इति धातुद्वयम्, आद्यो दिवादिः, अन्यस्तनादिः। **सूत्रे मन्य** इति श्यन्विकरणघटितनिर्देशः। न यक्घटितनिर्देशः। कर्मणि यकि कर्मण उक्तत्वात् अस्मिन् सूत्रे 'अनभिहिते' इत्यस्य अधिकारसत्त्वेनानभिहितं कर्म न संभवेत्। अतो न यका निर्देशः, श्यन्विकरणघटितमन्धातुयोगे एवेदं प्रवर्तते इति तु न, श्यन उपलक्षणत्वेन दैवादिकमनधातुयोगेऽनेन चतुर्थी। न च यक्प्रत्ययस्याप्युपलक्षणत्वेन न स्वयं यक् विवक्षित इति दैवादिकतानादिकयोरुभयोर्ग्रहणमिति वाच्यम्। उभयग्रहणस्याभिप्रेतत्वे तु लाघवात् **'मन्कर्मणि'** इत्येवाचार्य्यो वदेत्। अतो गुरुभूतमन्य इति निर्देशेन दैवादिकस्यैव ग्रहणम्।

**कर्मणि** इति। मनधातुवाच्यव्यापारनिष्ठजनकतानिरूपितजन्यतावज्ज्ञानरूपफलाश्रयकर्मणी-त्यर्थः। **अनादरे** इति। अत्र 'असुराः' इतिवत् विरुद्धार्थको नञ्। तेन नादराभावः, किन्तु तिरस्कारार्थकस्तस्मिन्। **अप्राणिषु** = प्राणिभिन्नेषु। **विभाषा** = विकल्पेन। तथा च 'प्राणित्वा-वच्छिन्नप्रतियोगिताकभेदवन्मनधातुवाच्यव्यापारजन्यज्ञानरूपफलाश्रयरूपकर्मवाचकात् तिरस्काररूपार्थे प्रतीयमाने विकल्पेन चतुर्थी, तदभावे 'कर्मणि द्वितीया' इति सूत्रार्थः फलति। **न त्वां तृणं मन्ये तृणाय वा** इति। तृण्यते इति तृणम्। 'तृणु अदने' ( त० उ० से० ) 'घञ्' ( ३-३-१९ ) भोजनकर्म पशूनाम्। अहं त्वां तृणं ( अतीव तुच्छं वस्तु पशुखाद्यम् ) अपि न मन्ये, तेन तिर-स्कृतिः सुस्पष्टं प्रतीयते। अत्र तृणशब्दात् चतुर्थी, पक्षे कर्मणि द्वितीया तृणं वेति।

श्यन्विकरणस्याविवक्षितत्वेन। 'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान् निरा-स्यत्।' इति भट्टिप्रयोगः सङ्गच्छते। अनादरे इत्यत्र विरुद्धार्थो नञ् तेन आदरविरुद्धे = तिरस्कारे विद्यमानत्वञ्च तद्द्योतकत्वेनेति युष्मदस्तिरस्काराद्योतकत्वेन न चतुर्थी। नन्वेवमपि 'त्वां तृणं मन्ये तृणाय वा' इत्येवोदाहियतां कृतं नञः प्रयोगेणेति चेन्न, 'मन्यकर्मणि प्रकृत्य कुत्सितग्रहणम्' इति वार्तिकप्रामाण्येन यतश्चतुर्थी विधीयते ततः प्रकर्षेण = अपकृष्टनिष्ठोपमानतानिरूपितोपमेयत्वा-भाववत्त्वेन यदा कुत्सा प्रतिपाद्यते तदा चतुर्थी, न तु साम्यविवक्षायामित्यर्थस्य विवक्षितत्वात्।

श्यना निर्देशात्तानादिकयोगे न। न त्वां तृणं मन्वे। 'अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम्'। तेन 'न त्वां नावमन्नं वा मन्ये' इत्यत्राऽप्राणित्वेऽपि चतुर्थी न। 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव।

*गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि* । [ २-३-१२ ]

अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। चेष्टायाम् किम्-मनसा हरिं व्रजति। अनध्वनि इति किम्-पन्थानं गच्छति। गन्त्राऽधिष्ठितेऽध्वन्येवायं निषेधः। यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव, उत्पथेन पथे गच्छति।

*ध्रुवमपायेऽपादानम्* । [ १-४-२४ ]

अपायो विश्लेषः, तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात्।

---

तादृग्प्रतीतिश्च नञ्समभिव्याहारे एव। अत एव नञ्घटितमेवादाहृतम्। एवञ्च 'तृणाय मत्वा रघुनन्दनोऽपि' इत्यादावपि नञ्पदमध्याहार्य्यम्।

**श्यना निर्देशादिति**। तेन 'न त्वां तृणं मन्वेऽहम्' इत्यत्र तनादिमनुधातुयोगे न चतुर्थी। किन्तु द्वितीया भवति। सूत्रे 'अप्राणिषु' इति निष्काश्य तत्स्थाने '**नौकाकान्न**' इत्यादि योजनीयम्। तेन वार्तिकपठितशब्दसमानशब्देभ्यो न चतुर्थी, किन्तु द्वितीया एवं। **शुने इति** वार्तिकमते प्राणित्वेऽपि चतुर्थी।

**'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि'** इति। गत्यर्थका ये धातवस्तद्वाच्यधातुजन्यफलाश्रयवाचकात् अध्वभिन्नात् द्वितीयाचतुर्थ्यौ च भवतश्चेष्टायाम्। अत्राध्वपदेन न स्वरूपस्य ग्रहणं किन्तु अर्थग्रहणम्, सप्तमीनिर्देशात्, 'कर्मणि' इत्यनेनैकार्थबोधकत्वरूपसामानाधिकरण्याच्च। शब्दस्वरूपस्य ग्रहणे तु 'अनध्वनः' इत्येव अवक्ष्यत्। 'ओदनं पचति' इत्यत्र गत्यर्थत्वाभावान्न चतुर्थी। 'अश्वेन व्रजति' इत्यत्र अश्वस्य करणत्वम्।

अत्र **वार्तिककाराः**—'अध्वन्यर्थग्रहणम्' 'आस्थितप्रतिषेधो वक्तव्यः'। आस्थितः = सम्प्राप्तः। 'पन्थानं गच्छति' इत्यत्र पन्था प्राप्त एवेति न पक्षे चतुर्थी। यदा अप्राप्तत्वेन विवक्षा तदैवेदं सूत्रं प्रवर्तते इति भावः। अत्र केचित् 'अनध्वनि' इत्यपनीय 'असंप्राप्ते' न्यस्यते तेन 'स्त्रियं गच्छति' इत्यत्र सा प्राप्ता एवेति न चतुर्थी। सूत्रे द्वितीयाग्रहणमपवादविषयेऽपि कृद्योगलक्षणषष्ठीप्रतिषेधार्थम्। तेन 'ग्रामं गन्ता' इत्यत्र न षष्ठी। अत्र चेष्टापदेन शरीरक्रियाया एव ग्रहणम्। अत्र **अधिष्ठितपदेन** शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः। **सूत्रोदाहरणमाह—ग्रामं ग्रामाय वा गच्छति इति**। कर्मात्रापि चतुर्थ्यर्थः। **चेष्टायाम्** किमिति। धात्वर्थस्य गतेः क्रियारूपत्वात् प्रश्नः। शरीरव्यापारस्यैव ग्रहणमित्युत्तरम्। मनसा हरिं व्रजति। **'पन्थानं गच्छति'** इत्यत्राध्वनः कर्मत्वम्। न पक्षे चतुर्थी। अधिष्ठितग्रहणेन उत्पथं परित्यज्येत्यर्थः = **उत्पथादित्यस्य इष्यते** = न तु आक्रान्तः। **उत्पथेनेति**। गन्तुमशक्त इति शेषः। **इति चतुर्थी।**

## अथ पञ्चमी

**ध्रुवमपायेऽपादानमिति**। ध्रुवमिति। 'ध्रु गतिस्थैर्ययोः' अस्मात्पचाद्यच् कुटादित्वात् ङित्वेनोवङ्। 'ध्रुव स्थैर्ये' इति मते 'इगुपधे'ति कप्रत्ययः। ध्रुवम् = स्थिरम्। **अपायः** = विभागजनको व्यापारः। तदनाश्रयम्। विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पितोऽपि संबन्धपूर्वको बुद्धिपरिकल्पितोऽपि। यथा 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यादौ बुद्धिपरिकल्पितापायाश्रयेणैव भाष्ये पञ्चमी साधिता। कर्तृवारणाय ध्रुवमिति। अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात्। कर्तृसंज्ञा तु 'पचति' इत्यादियोगे सावकाशा। तथा च 'विभागजनकक्रियानाश्रयत्वे सति विभागाश्रयत्वं ध्रुवत्वम्' इति। हरिरप्याह—

अपादाने पञ्चमी। [ २-३-२८ ]
ग्रामादायाति। धावतोऽश्वात्पतति। कारकं किम्—वृक्षस्य पर्णं पतति।

'अपाये यदुदासीनं चलं वा यदि वा चलम्।
ध्रुवमेवातदावेशात् तदपादानमुच्यते॥' इति।

वै० भूषणकारमते प्रकृतधात्वर्थप्रधानीभूतव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वम्। नागेशमते च अपाये = गतिविशेषे सति यद् ध्रुवम् = अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वं ध्रुवत्वम्। अत एव भाष्ये 'गतियुक्तेष्वपादानसंज्ञा नोपपद्यते'—'रथात् प्रवीतात् ( प्रचलितात् ) पतितः' 'अश्वात् त्रस्तात् पतितः' इति। 'सार्थाद् गच्छतो हीनः' इति। किं कारणम्? अध्रुवत्वात्। न वा ध्रौव्यस्याविवक्षितत्वात्, न वैष दोषः, किं कारणम्, अध्रौव्यस्याविवक्षितत्वात्। न चात्राध्रौव्यं विवक्षितम्। किन्तर्हि ध्रौव्यम्।' इति भाष्यं सङ्गच्छते। धात्वर्थव्यापारानाश्रयत्वस्य ध्रुवत्वे तु तदसङ्गतं स्यात्, त्वदभिमताध्रुवत्वस्य रथादिष्वभावेन 'सतोऽध्रौव्यस्याविवक्षा' इति भाष्यस्यासङ्गत्यापत्तेः। कारिकायाम् अतदावेशात् = तद्धात्वर्थक्रियानाश्रयत्वात्। शेखरमते तु—अतदावेशात् = इत्यस्यावधित्वोपयोगिव्यापारस्याविवक्षितत्वात्। 'परस्परान् मेषावपसरतः' इत्यत्र सुधातुर्गतिद्वयं बोधयति। एवञ्चैकनिष्ठां गतिम्प्रति इतरस्यापादानत्वं न विरुध्यते। उक्तञ्च हरिणा –

पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ( के )।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते ( विवक्षिते )॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक्॥

'पर्वतात्पततोऽश्वात्पतति' इत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं चैत्रादिनिष्ठम् अधोदेशावच्छिन्नसंयोगरूपं पतनमर्थः। अत्र पञ्चम्यर्थस्यावधेः, प्रकृत्यर्थस्य पर्वतादेरभेदः संसर्गः। अभेदस्य न संसर्गत्वमिति सिद्धान्तपक्षे तु विशेष्यविशेषणभावरूपः संसर्गः। संसर्गो हि प्रतियोग्यनुयोगिभ्यां भिन्नो द्विष्ठो विशिष्टबुद्धिनियामकश्चेति नागेशः। प्रत्ययार्थस्तु अवधिरूपो धर्मी न धर्मरूपः स पतनक्रियायां विशेषणीभूतः। 'उद्धृतौदना स्थाली' इत्यत्रौदनकर्मकोद्धरणावधिभूता स्थाली इत्यत्रैकार्यबोधकत्वरूपसामानाधिकरण्यानुरोधेन 'शक्तिमत् कारकम्' इति पक्षमवलम्ब्य न धर्ममात्रमत्र विभक्त्यर्थः। 'ग्रामादागच्छति शकटेन' इत्यत्र कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेनाविवक्षायां परत्वात्करणसंज्ञाया अप्राप्तदशायां शकटस्य प्राप्तापादानसंज्ञानिरासार्थं सूत्रे ध्रुवग्रहणम्। 'आसनाच्चलितः' 'राज्याच्चलितः' इत्यादयः प्रयोगाः दृष्टा एव। एतेन 'अपादानत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन' शाब्दबोधम्प्रति, विशेष्यतासंबन्धेन 'धातुजन्योपस्थितिः कारणम्' इत्युक्तिः परास्ता। विस्तरस्तु श्रीबालकृष्णशर्मपञ्चोलिविरचितवैयाकरणभूषणप्रभाव्याख्यायां द्रष्टव्यः। वृक्षं त्यजति इत्यत्र कर्मसंज्ञया बाधेनात्र नापादानसंज्ञा।

ननु विभागस्यानुपस्थितत्वात् 'बलाहकात् विद्योतते' इति न स्यात्, इति चेन्न, निःसरणपूर्वकविद्योतने द्युतधातोर्वृत्तिरिति स्वीकारेणादोषात्। 'रूपं रसात् पृथक्' इत्यत्र 'बौद्धसंश्लेषपूर्वको बौद्धो यो विश्लेषस्तज्जनको रूपाश्रयको बौद्धव्यापारः' कल्पनीय इति भवत्येवापादानसंज्ञेति पञ्चोलिनः। अपादानत्वञ्च त्रिविधम्—साक्षाद् धातुना बोधितो विषयो निरूपकोऽर्थो यस्य तत् 'निर्दिष्टविषयम्'। उपात्तः = धातुना धात्वन्तरार्थगर्भितो विषयोऽर्थो यस्य तत्—उपात्तविषयम्। अपेक्षिता = धातोरनपादानेनाकाङ्क्षिता गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका यस्य तत्

'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्'। पापाज्जुगुप्सते, विरमति । धर्मात्प्रमाद्यति ।

**अपेक्षितक्रियम्** इति । क्रमेणोदाहरणानि—'अश्वात् पतति, 'बलाहकाद् विद्योतते', कुतो भवान् ? पाटलिपुत्रात् । अत्रागमनमध्याहृत्यान्वयः कार्य्यः ।

**'निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।**
**अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते'** ।। इति ।

ननु 'सार्थाद्धीयते' इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वात्कथमपादानत्वम् ? अत्रोच्यते, 'अपादाने चाहीयरुहोः' इति ज्ञापकात् 'कर्मप्रत्ययान्त 'हीय' योगेऽपादानत्वम्' इत्यदोषात् । अत्र कर्मणि लकारः । कर्मसंज्ञाविधायकसूत्रे कर्तृपदं न संज्ञापरम्, किन्तु धात्वर्थप्रधानव्यापारपरमेव । 'सार्थेन चैत्रः त्यज्यते' इत्यर्थः ।

**श्री बा० कृ० पञ्चोलिनस्तु** विवक्षातः कारकाणि भवन्ति—'यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्त्ता' स्थाली पचति, अग्निः पचति, तण्डुलः पच्यते स्वयमेव, इत्येवमादयः प्रयोगाः । तेनेत्थं फलति—यस्य कारकस्य विवक्षातो विपरिणामो भवति **तस्यैव कारकत्वम्** । कर्तृ-कर्म-करण-अधिकरणकारकाणां विवक्षाभेदेन भिन्नभिन्नरूपेण परिणतिः शिष्टसम्मता दरीदृश्यन्ते, तत्तदर्थबोधने साधुत्वम्-पुण्यजनकतावच्छेदकधर्मवत्त्वरूपञ्च विद्यते । **अतश्चत्वारि एव कारकाणि ।**

अपादान-सम्प्रदानकारकयोस्तु न तथा विभिन्ना विवक्षा इति न तयोः कारकत्वम्—तथा हि 'विप्राय गां ददाति' इत्यर्थे चतुर्थीमन्तरा अन्या काचन विभक्तिः प्रयुक्ता चेत्तदा तस्यासाधुत्वमेव शिष्टसम्मतम् । एवं 'वृक्षात् पतति' इत्यर्थे पञ्चम्यन्तवृक्षात् इति 'वृक्षतः' इत्येव वा प्रयोगः, नान्यविभक्त्यन्तप्रयोग इति तत्र विभिन्ना विवक्षा न भवति, नापि अन्यविभक्त्यन्तस्य तदर्थे साधुत्वम् । यद्यपि 'षट् कारकाणि' इति व्यवहारोऽनेकत्र दृष्टः किन्तु कथं स प्रामाणिकः' अत्र गुणैकपक्षपातिनो विद्वांसः स्वीयां गुणग्राहितां संदर्श्य स्वमतं प्रकाशयन्तु इति च समीहे । पूर्वोक्ते प्रस्तुते पक्षे नाभिनिवेशः कश्चनेति **प्राहुः** ।

**'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्'** इति । 'गुपे निन्दायाम्' 'गुप्तिज्किद्भ्यः सन्' इति सनि 'सनाद्यन्ताः' इति धातुत्वे 'सन्यङोः' इति द्वित्वे अभ्यासादिकार्ये च 'जुगुप्स' इति सन्नन्तात् 'अ प्रत्ययात्' इति अप्रत्यये स्त्रियां टापि च जुगुप्सा = निन्दा इत्यर्थः । विरमणम् = विरामः । कार्यकरणाद् विरतिः = पृथग् भवनम् । प्रमादो द्वेधा—अज्ञानलक्षणः, अनवधानलक्षणो वा । एतेषां योगे अपादानसंज्ञा भवति । **पापाज्जुगुप्सते** इति । अनिष्टसाधनताज्ञानरूपनिन्दा सन्नन्तधात्वर्थः । इदं कार्य्यमनिष्टसाधकमिति ज्ञानं यदा जातं तदा ततो निवृत्तिः सहृदयस्य स्वतो भवति । एवञ्च पापापादनकानिष्टज्ञानपूर्वकनिवृत्त्यनुकूलो वर्तमानकालिको व्यापार इति बोधः । **विरमति** इति । विरामो विरतिः । पापात् विरमति = पृथग् भवति । **धर्मात् प्रमाद्यति** । प्रमादोऽज्ञानवधानतालक्षणः । धर्माचरणरूपसत्कार्येऽनवधानतां करोति । धर्मस्तु **'नोदनालक्षणो धर्मः'** । यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । संयोगपूर्वको विश्लेषः = विभागः सोऽत्र नास्ति, बुद्धिकृतस्तु गौणत्वान्न गृह्यते इति वार्तिकारम्भः । वस्तुतस्तु जुगुप्सादीनां तत्पूर्वकनिवृत्तिवाचित्वमाश्रित्येदं वार्तिकं 'भीत्रार्थानां भयहेतुः' इत्यादिसूत्राणि भाष्यकारस्तु प्रत्याचख्यौ । 'गौणमुख्य' न्यायस्तु करणसंज्ञाघटकतमपा निरस्त एवात्र ।

एकञ्च बुद्ध्याऽपायं सम्प्राप्य ततो दोषदर्शनान्निवर्तते इत्यस्त्येवात्र बुद्धिकृतोऽपायः । एवमुत्तरसूत्रेष्वपि बोध्यम् । तदुक्तं भाष्ये—'अयं योगः, शक्योऽवक्तुम्' इति; कथं **वृकेभ्यो बिभेति** इति, **चौरेभ्यस्त्रायत** इति, इह तावद् वृकेभ्यो बिभेति, य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति बुद्धया सम्प्राप्य निवर्तते तत्र 'ध्रुवमपायेऽपादानम्' इत्येव सिद्धम् । **चौरेभ्यस्त्रायते** इति । य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद् भवति स पश्यति यदीमं चौराः

*भीत्रार्थानां भयहेतुः । [ १-४-२५ ]*

भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चौराद्बिभेति । चौरात्त्रायते । भयहेतुः किम् । अरण्ये बिभेति, त्रायते वा ।

*पराजेरसोढः । [ १-४-२६ ]*

पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढः किम्-शत्रून्पराजयते । अभिभवतीत्यर्थः ।

*वारणार्थानामीप्सितः । [ १-४-२७ ]*

प्रवृत्तिविघातः = वारणम्, वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् ।

---

पश्यन्ति ध्रुवमस्य वधबन्धनादिपरिक्लेशः । इति स बुद्ध्या संप्राप्य निवर्तयति तत्र 'ध्रुवमपाये' इत्येव सिद्धम्" । एवञ्चैतद्रो विषये बिभेत्यादयो भयपूर्वकनिवृत्त्यर्थकाः । सूत्रकारमतमाह—

**भीत्रार्थानां भयहेतुरिति** । भयम् = भीः = अनिष्टज्ञानम् = भयम् । अनिष्टविरहानुकूलो व्यापारस्त्राणम् । द्वन्द्वान्ते श्रूयमाणार्थपदस्य प्रत्येकं सम्बन्धः । भयकारणवाचकात् हेतौ तृतीया प्राप्ता, तां बाधित्वाऽनेनापादनसंज्ञा तेन पञ्चमी, न तृतीया । सूत्रे 'भयहेतुः' इत्यस्याभावे तु सर्वविभक्त्यपवादत्वेन 'अरण्ये बिभेति' इत्यत्रापि पञ्चम्यापत्तेः । चौराद्बिभेति चौरात् त्रायते इत्यादिसूत्रोदाहरणानि । अरण्यं न भयहेतुरिति अत्राधिकरणत्वेन सप्तमी—अरण्ये इति ।

'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे'

इति रामायणे 'कस्मात्' इति तु न, किमर्थस्य युद्धार्थकसंयुगार्थेनान्वयात्—नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः संगच्छत एव । परयाऽपादानसंज्ञया बाधेन संयुगस्य नापादानत्वम् । अधिकरणत्वेनाविवक्षायान्तु अपादानसंज्ञा भवत्येव । भयार्थेत्युक्तया—'व्याघ्रं पश्यति' इत्यत्र नापादानसंज्ञा । कर्मत्वाविवक्षायां षष्ठीं बाधित्वाऽपादानत्वापत्तिरित्याशयः शङ्कितुः । 'अरण्ये' आदिषु परत्वेनाधिकरणसंज्ञयाऽपादानस्य बाधात् सूत्रे 'भयहेतुः' इति सुत्यजम् । वस्तुतः 'अरण्यस्य चौराद् बिभेति' इत्यत्र कारकशेषत्वविवक्षायामतिप्रसङ्गः स्यादिति तदावश्यकमेवेति दिक् । बौद्धमपादानत्वमाश्रित्येदं सुत्यजमिति पूर्वमुक्तमेवेति ।

**पराजेरसोढ इति** । असोढः ग्लानिविशेषः । कृतिसाध्यत्वाभावधीसमानाधिकरणोऽनुत्साहः पराजयतेरर्थः । एवञ्चाकर्मकपराजेरुदाहरणम्—अध्ययनात् पराजयते । 'विपराभ्यां जेः' इत्यात्मनेपदम् । अत्रासाध्योऽर्थोऽध्ययनम् । ततो ग्लायतीत्यर्थः । असाध्यर्थत्वाभावेन 'शत्रून् पराजयते' इत्यत्र कर्मसंज्ञा, नापादानसंज्ञा । अत्र तिरस्कारानुकूलो व्यापारो धात्वर्थः । अभिभवति—'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति कोषः । तथा चाध्ययनसम्बन्धिनी ग्लानिरित्यर्थः । वस्तुतस्तु कारकाधिकारेऽस्य सूत्रस्य पाठेन जन्यजनकभावसम्बन्धेनान्वय उचित इति अध्ययनजन्या ग्लानिरित्यर्थः । मूलन्तु प्राचामनुरोधेनेति भैरवमिश्राः । वस्तुतस्तु 'पराजेः' इति सूत्रस्य 'य एव मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्ययनस्य दुःखत्वद्दुर्धरत्वबुद्ध्या ततो निवर्तते, इति प्रत्याख्यानैकवाक्यतया योऽध्ययनार्थमप्रवृत्तस्तत्राप्ययं प्रयोग इष्ट एवेति परापूर्वकजिधातोरनिष्टसाधकत्वप्रकारज्ञानमर्थः । अध्ययनपदस्याध्ययनज्ञाने लक्षणा । एवञ्चाध्ययनज्ञानजन्यमध्ययनविशेष्यकमनिष्टसाधकत्वप्रकारकं ज्ञानमिति फलितम् । अतस्तस्मान्निवर्तते इति दिक् ।

**वारणार्थानामीप्सित इति** । प्रवृत्तिविघातः=वारणमिति । भक्षण-संयोगादिजनकव्यापाराभावानुकूलो व्यापार इत्यर्थः । एवञ्च वारणार्थकधातुयोगे वारणार्थधात्वर्थफलाश्रयस्यापादानसंज्ञा भवति । यवेभ्यो गां वारयति इत्यत्र भक्षणजनकव्यापाराभावानुकूलो व्यापारः । 'कूपादन्धं

यवेभ्यो गां वारयति । ईप्सितः किम् —यवेभ्यो गां वारयति क्षेत्रे ।

*अन्तर्धौ येनादर्शनमिच्छति ।* [ १–४–२८ ]

व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः ।

---

**वारयति'** इत्यत्र तु संयोगजनकव्यापाराभावानुकूलो व्यापारः । उभयत्र चरमव्यापारो वारके कर्तरि चरमव्यापारजन्यं फलं प्रथमव्यापारप्रतियोगिकाभाव ( व्यापाराभावरूपम् ) रूपम्, तदाश्रयाः = यवाः, कूपश्चेति तेषामपादानसंज्ञा, इति तत्र पञ्चमी ।

ईप्सिततमस्य कर्मसंज्ञा ईप्सितस्यापादानसंज्ञेति कर्मापादानसंज्ञयोर्विषयभेदः । तमब्ग्रहणाभावे तु अनवकाशया वारणार्थकधातुयोगेऽपादानसंज्ञया कर्मसंज्ञाया बाधापत्तिः ।

कर्मसंज्ञाविधायकसूत्रे तमब्ग्रहणात् प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणम् ! **यवेभ्य इति । 'सितशूकयवौ समौ'** इत्यमरः । यौति यूयते वा अच् (३–१–१३४) अप् ( ३–३–५७) वा । 'यवो धान्येऽपृथक्कृतौ' इति हैमः । **गामिति** लोमवल्लाङ्गूलावच्छिन्नगलकम्बलविशिष्टचतुष्पादजातिविशेषत्वावच्छिन्ने पशौ गोशब्दो योगरूढः । गच्छति इति गौः । गम् + डोस्प्रत्ययः ( उ० २–६७ ) । गोशब्दोऽनेकार्थकः ।

**'गोः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्' ।**
**'स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' ॥**

इति विश्वमेदिन्यौ । 'यवसंयोगात्प्रागेव गां निवारयति' इति 'ध्रुवमपाये' इत्यसिद्धावयमारम्भः । बुद्धिपरिकल्पितापायमङ्गीकुर्वतो भाष्यकारस्य मते तु वैयर्थ्यमेवैतस्य सूत्रस्य । **ईप्सितः किमिति ।** क्षेत्रस्य तदभावेऽपादानत्वापत्तेः । परत्वादधिकरणसंज्ञयाऽपादानत्वबाधे तु ईप्सितग्रहणं व्यर्थमेवेति चेन्न, अधिकरणस्य शेषत्वविवक्षायां षष्ठीं बाधित्वा क्षेत्रस्यापादानत्वापत्तेः । **वारयतीति ।** 'वृञ् वरणे' चुरादिः, लटि रूपम् ।

**अन्तर्धौ येनादर्शनमिच्छति** इति । अन्तर्धिः = व्यवधानम् । 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानम्' इति अनुपसर्गस्यापि अन्तःशब्दस्य विशेषवचनादुपसर्गत्वेनान्तःपूर्वकधाधातोः 'उपसर्गे घोः किः' इति भावे किप्रत्यये आलोपे चान्तर्धिशब्दः । अन्तर्धानस्य अष्टौ नामानि ।

**"अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ।**
**अपिधानतिरोधानपिधानाच्छादनानि च ॥"** इत्यमरः ।

सत्सप्तम्यन्तमन्तर्धौ इति । तथा च व्यवधाने सति इत्यर्थो लब्धः । **येन इति ।** 'उभयप्राप्तौ कर्मणि' इति नियमेन नात्र 'कर्तृकर्मणोः कृति' इति षष्ठी, किन्तु कर्तरि तृतीया । न च 'उभयप्राप्तौ' इत्यत्र प्राप्तिग्रहणसामर्थ्याद् यद्वाक्यघटककर्तृ-कर्मवाचकात् प्रातिपदिकात् कृदन्ततदादियोगे षष्ठी प्राप्ता, तयोस्तस्मिन् वाक्ये प्रयोगे एव नियमप्रवृत्त्याऽत्र कर्मवाचकशब्दाभावेनोभयप्राप्त्यभावेन कथं नियमप्रवृत्तिरिति वाच्यम्, अत्र 'आत्मनः' इत्यस्य गम्यमानत्वेनोभयप्राप्तिसत्त्वात् । एतदेव ध्वनितं वृत्तौ—यत्कर्तृकस्यात्मन इति । **अदर्शनमिति ।** चक्षुरिन्द्रियजन्यज्ञानानुकूलो व्यापारोऽत्र दृशधात्वर्थः । एवञ्च व्यवधाने सति यत्कर्तृकात्मकर्मकदर्शनत्वावच्छिन्नप्रतियोगिताकाभावविषयिणी इच्छा यत्र, तत्र मात्रादेरपादानसंज्ञा भवति । **मातुर्निलीयते कृष्णः** इति । अत्र मातृशब्दोऽयं जननीपरः । मातृशब्दश्चानेकार्थकः ।

**ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा ।**
**कौमारीत्यपि चामुण्डा चर्चिकेत्यष्ट मातरः ॥**

अन्तर्धौ किम्-चौरान् न दिदृक्षते। इच्छतिग्रहणं किम्-अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्।

*आख्यातोपयोगे।* [ १-४-२९ ]

नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते।

मान्यन्ते पूज्यन्ते लोकमातृकत्वात् इति मातरः। 'मान पूजायाम्' ( भ्वा० प० से०, चु० उ० से० ) 'ब्राह्मीत्याद्यास्तु मातरः' इति। अम्बा माता। जनयित्री प्रसूर्माता जननी इति च। "माता गौर्दुर्गा जननी मही" इति हेमकोषः।

'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी।' इत्यमरः। निलीयते इति। 'लीङ् श्लेषणे' दैवादिकः। कृष्ण इति। ऊनचत्वारिंशत् विष्णोर्नामानि—

विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः॥
विश्वम्भरः कैटभजिद् विधुः श्रीवत्सलाञ्छनः॥ इति। इत्यमरः।

विष्णुसहस्रनामस्तोत्रे तु श्रीकृष्णस्य सहस्रनामानि। कर्षति अरीन् इति कृष्णः। 'कृष विलेखने' नक्प्रत्ययः। 'कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने' इति। एवञ्च मातृकर्तृककृष्णकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थितिरूपस्तद्धटकं यत्कर्तृकदर्शनाभावमिच्छति तत् अपादानमिति मातुरपादानत्वम्।

अन्तर्धौ किम् इति। चौरान् न दिदृक्षते इति। अत्र व्यवधानरूपार्थाभावेन चौराणां कर्मत्वम्। बहुत्वविशिष्टपुंस्त्वविशिष्टचौरकर्मकचैत्रकर्तृकवर्तमानकालिकदर्शनेच्छाप्रतियोगिकोऽभावः इति बोधः। नन्वत्र परत्वात्कर्मसंज्ञयाऽपादानसंज्ञाया बाधेन न दोष इति सूत्रे 'अन्तर्धौ' इति व्यर्थमिति चेन्न, चौरा आत्मानं मा द्राक्षुरिति बुद्धया चौरान्न दिदृक्षते इत्ययमर्थोऽत्र विवक्षितस्तत्र कर्मणः शेषत्वविवक्षायामिदं प्रत्युदाहरणम्। शब्दकौस्तुभे तु न तादृशी विवक्षेति 'अन्तर्धौ' इति चिन्त्यप्रयोजनमित्युक्तम्। चौरान् इति द्वितीयाबहुवचनम्। सूत्रे इच्छतिग्रहणेन यदा आत्मकर्मकदर्शनाभावेच्छायां सत्यामपि कदाचिद्दर्शने जातेऽपि अपादानसंज्ञा भवति। तदभावे तु दर्शनाभावे एव संज्ञा स्यात्। सूत्रे 'येन' इत्यस्याभावे तु 'स्वकर्मकदर्शनाभावं य इच्छति' इत्यर्थे कर्तुरेवापादानसंज्ञा स्यादतस्तत्।

आख्यातोपयोगे इति। आख्याता=वक्ता। आङ्पूर्वक 'चक्षिङ् व्यक्तायां वाचि' तृचि, चक्षिङः ख्यादेशः। उपयोग इति। ब्रह्मचर्यादिरूपनियमपूर्वकविद्यास्वीकरणे उपयोगशब्दो रूढः। यतस्तत इति अध्याहार्य्यम्। यतो नियमपूर्वकविद्याया ग्रहणं ततः वक्तुरपादानसंज्ञा भवति। उपाध्यायादधीते इति। उपेत्य अस्मादधीयते इति उपाध्यायः। 'इङश्च' इति घञ्। अध्ययनं तु गुरूच्चारणानूच्चारणं नियमपूर्वकम्। अध्ययनन्तावत् गुरुसेवापूर्वकं सफलं भवति। तदुक्तम्—

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥" ( भ० गी० ४, ३४ )

उपयोगे किम्—नटस्य गाथां शृणोति ।

"व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥" ( मनुः २, ७२ )
"हीनान्नवस्त्रवेषः स्यात् सर्वदा गुरुसन्निधौ ।
उत्तिष्ठेत् प्रथमं चास्य चरमञ्चैव संविशेत् ॥"
"आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः ।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥"
"नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥" (म० २ अ० १९४, १९६, १९८)

गुरुणा सह असद्व्यवहारं न कुर्यात् । असद्व्यवहारकरणे मनुराह—

"परीवादात् खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी" ॥ ( म० २ अ० २–१ )

"देवद्विजगुरुप्राज्ञपूजनम्" ( गी० १७ अ० श्लो० १४ ) । इति च ।

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ (म० २ अ० २३०, २३२ श्लो०)

त्रयः = माता, पिता, आचार्यश्च । त्रयः = भूः, भुवः, स्वः । त्रयः = ब्रह्मचर्य–गृहस्थ–वानप्रस्थाश्रमाः । त्रयः = ऋक्, यजुः, सामवेदश्च । त्रयः=गार्हपत्य-दक्षिणाग्नि-आवहनीयोऽग्निः ।

"त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥ ( म० २ अ० २३७ ) ।
सर्वेषामेव लोकानां यथा सूर्यः प्रकाशकः ।
गुरुः प्रकाशकस्तद्वच्छिष्याणां बुद्धिदानतः ॥

मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव । तैत्तिरीयोपनिषद् १, ११ एवम्'शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न शङ्करः' इति च ।

उपाध्यायादिति—उपाध्यायान्निःसरन्तं शब्दं शिष्य उपादत्ते=गृह्णाति भर्तृहरिणा वाक्यपदीये शब्दः कस्य परिणामः ? इत्युपक्रम्याभ्यधायि—

वायोः परिणामः शब्दः । 'वायुः खात्'=आकाशादुत्पद्यते । शब्दस्य कारणभूतो वायुः । ततः 'शब्दः तत्' द्वि० सूत्रम् ( यजुः प्रा० , ७ ) शब्दो वाय्वात्मकः········इति । योगसूत्रे व्यासेनाऽपि 'वागिन्द्रियं वर्णेषु एव अर्थवत्' इत्युक्तम् । ततो जैनदार्शनिकैः—शब्दः परमाणुपरिणामः । तथाहि—'शब्दः, पौद्गलिकः, इन्द्रियार्थत्वात् रूपादिवत् ।' 'शब्दो ज्ञानस्य परिणामः' इति वैयाकरणाः ।

'वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
केश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः ॥' ( वा० प० का० १–१०८ ) ।

इति । आख्यातोपयोगे इति प्रकृतसूत्रखण्डनाय 'अयमपि योगः शक्योऽवक्तुम् । कथम् उपाध्यायादधीते इति ? अपक्रामति तस्मादध्ययनम् । यदि अपक्रामति किं नात्यन्ताय अपक्रामति ? सन्ततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति' इत्युक्तं महाभाष्ये ।

अयं भावः—'उपाध्यायादपक्रमच्छब्दजातमधीयमान उपादत्ते' इत्यर्थके 'उपाध्यायादधीते' इत्यत्र अपक्रमजन्यविश्लेषाश्रयत्वादुत्सर्गेण ( ध्रुवमपाये इत्यनेन ) अपादानत्वं संसाध्य शब्दानामपक्रमणं न युक्तम् ।

*जनिकर्तुः प्रकृतिः* । [ १-४-३० ]
जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते ।
*भुवः प्रभवः* । [ १-४-३१ ]
भवनं भूः । भूकर्तुः प्रभवस्तथा । हिमवतो गङ्गा प्रभवति ।

---

यथा फलं वृक्षादपक्रान्तं न पुनर्वृक्षे भवति, एवं शब्देऽपि प्रसङ्गः, इत्याशङ्कयोक्तम्, **'सन्ततत्वात्' इति**—शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना अपि सादृश्यात् तत्त्वेनाध्यवसीयमानं सन्ततं तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापाद्यमानानि सन्ततानीत्युच्यन्ते इति । एवञ्चोपाध्यायज्ञानानि भिन्नशब्दरूपतामापाद्यमानानि सन्ततानीत्युच्यन्ते इति । **'सन्ततत्वात्'** इति ध्वनयता भाष्यकृता शब्दस्य ज्ञानपरिणामत्वं सूचितम् । अत एव कैयटेनोक्तम्—**'ज्ञानस्य शब्दरूपतापत्तिरिति दर्शनमत्र भाष्यकारस्य ।'**

सूत्रकारमते उपयोग इत्यस्य फलं दर्शयति—**नटस्य गाथां शृणोति** इति । नटतीति नटः, **'णट नृत्तौ'** ( भ्वा० प० से० ) पचाद्यच् । षट् नटाः—

**शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।**
**भरता इत्यपि नटाः** । इत्यमरः ।
**रङ्गावतारी शैलूषो नटो भरतभारतौ** ॥ वाचस्पतिकोषः ।

गाथा = नाट्यसम्बन्धिनी कथा । अत्र नियमपूर्वकं शास्त्रनिर्दिष्टं वैधं श्रवणं नास्तीत्यतो नापादानसंज्ञा । किन्तु सम्बन्धे सम्बन्धप्रतियोगिवाचकात् षष्ठी । नटसम्बन्धि इत्यर्थः । गाथाकर्मकं नटसम्बन्धि श्रवणमिति बोधः ।

**'जनिकर्तुः प्रकृतिः'** इति । **जनिरिति** । धातुस्वरूपनिर्देशे इक्प्रत्ययः । जनी प्रादुर्भावे । अत्र प्रादुर्भावः = उत्पत्त्यनुकूलो व्यापारस्तस्याश्रयः कर्ता तस्य यदुपादानकारणं तस्यापादानसंज्ञा भवति । प्रकृतिः = उपादानकारणम् । **ब्रह्मण** इति बृंहति = वर्धयति प्रजा इति ब्रह्मेति । **'बृहि वृद्धौ'** ( भ्वा० प० से० ) अन्तर्भावितण्यर्थः ।

**'बृहेर्नोऽच्च'** ( ३०४-१४७ ) इति मनिन्प्रत्ययः । अमरे विंशतिर्ब्रह्मणो नामानि उक्तानि । ब्रह्मात्मभूरित्यारभ्य विधिरित्यन्तेन । **प्रजा इति** । प्रकर्षेण जायन्ते इति प्रजाः । जन्धातोर्डप्रत्ययः । टिलोपः । स्त्रियां टाप् । **'प्रजा स्यात् सन्ततौ जने'** इति । एकमेव चैतन्यं विभिन्नकार्यकरत्वेन विभिन्नशब्दैर्व्यवह्रियते—सृष्टिपालकत्वेन विष्णुरिति । सृष्ट्युत्पादकत्वेन ब्रह्मेति । जगत्संहारकर्तृत्वेन रुद्र इति । 'एकोऽहं बहु स्यामुत्पन्नः स्याम्' इति यदेच्छा तस्य तदा मायाशबलं ब्रह्म जगदुपादानकारणम् । माया = प्रकृतिः, अविद्या इत्यनर्थान्तरम् । 'विभाषा गुणेऽस्त्रियाम्' इत्यत्र 'गुणेऽस्त्रियाम्' इति प्रायिकं तेन सिद्धे इदं सूत्रमपादानत्वेन बोधनार्थम् । 'पुत्रात् प्रमादो जायते' 'विभाषा' इति पञ्चमी । 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ 'जनिकर्तुः' इति पञ्चमी, स्थितिलयाधारकत्वश्रवणेन तस्योपादानकारणत्वनिर्णयात् । अत्र सूत्रे 'जनितुः प्रकृतिः' इत्येव सिद्धे कर्तृग्रहणं कर्तृसंज्ञाविवक्षार्थम् । तेन 'मृदो घटं जनयति' इत्यत्र मृदो नापादानत्वम् । **'बाहुलकं प्रकृतेस्तनुदृष्टेः'** इति वार्तिकप्रयोगे 'गुणेऽस्त्रियाम्' इत्यस्य प्रायिकत्वेन 'विभाषा' इति पञ्चमी । **भुवः प्रभव इति** । भवनं भूरिति सम्पदादित्वात् भावे क्विप् । पूर्वसूत्रे उत्पत्त्यर्थकजनिशब्दार्थः तस्याः कर्ता इति समस्तमपि कर्तृपदं स्वरितत्वादनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञाबलात् । तेन भूकर्तुरित्यर्थलाभः । **प्रभव** इति प्रभवत्यस्मादिति प्रभवः । 'अकर्तरि च कारके' इत्यधिकारादपादानार्थे **'ऋदोरप्'** । **हिमवतो गङ्गा प्रभवति** इति । हिममस्ति अस्मिन्निति मतुप्प्रत्ययः । मस्य च वकारादेशः । **गङ्गेति** । गच्छतीति गङ्गा । योगरूढोऽयं शब्दः । 'गन् गम्यद्योः' ( उ० १-१२३ ) अष्टौ भागीरथ्याः नामानि ।

तत्र प्रकाशत इत्यर्थः। 'ल्यब्लोपे कर्मण्यधिकरणे च'। प्रासादात्प्रेक्षते, आसनात्प्रेक्षते। प्रासादमारुह्य, आसन उपविश्य, प्रेक्षत इत्यर्थः। श्वशुराज्जिह्रेति। श्वशुरं वीक्ष्येत्यर्थः। 'गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तम्'। कस्मात्त्वम्, नद्याः। 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी'। 'तद्युक्तादध्वनः प्रथमासप्तम्यौ'।

---

गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि॥

**प्रभवति** इति। प्रकाशते, प्रथमं दृश्यते। उत्पत्त्यर्थकभूधातोरत्र प्रकाशनमर्थः, धातूनामनेकार्थत्वात्। एवञ्च न पूर्वसूत्रेण गतार्थताऽस्य। अभूतप्रादुर्भावो जनिपदार्थः। अन्यतः सिद्धस्य प्रथममुपलम्भः = प्रभव इत्यर्थभेदोऽस्तीति भावः। **'भीत्रार्थानाम्'** इत्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता।

तत्रेत्थमुपपत्तिसम्भवः—'चौरेभ्यो बिभेति' भयान्निवर्तते। **त्रायते**—रक्षणेन चौरेभ्यो निवर्तयति। **पराजयते**—ग्लान्या निवर्तते। **वारयति** = प्रवृत्तिं प्रतिबध्नन् निवर्तयति। **निलयते**—निलयनेन निवर्तते। **अधीते**—उपाध्यायान्निःसरन्तं शब्दं गृह्णाति। ब्रह्मणः प्रपञ्चो **जायते**—ततोऽपक्रामति। **प्रभवति**—भवनपूर्वकं निःसरणम्। तथा च 'ध्रुवमपाये' इत्येवेष्टसिद्धिः। भाष्यसम्मतोऽयं प्रत्याख्यानप्रकार इति न कुतर्कावसरः कस्यचित्।

**ल्यब्लोपे कर्मण्यधिकरणे च** इति। **ल्यब्लोपे** इति ल्यबन्तस्य गम्यमानार्थकत्वादप्रयोगे इत्यर्थः। अयं भावः—अर्थबोधनाय शब्दप्रयोगः। शब्दप्रयोगमन्तराऽपि यत्र तदर्थज्ञानं तत्र व्यर्थत्वान्न शब्दप्रयोगः। यथा 'प्रविश' 'पिण्डीम्' इत्यादौ 'इग्यणः' इति सूत्रोक्तभाष्यरीत्या वाक्यैकदेशप्रयोगस्तस्यैव पदस्य वृत्त्या सम्पूर्णवाक्यार्थबोधकता तथा प्रकृतेऽपि बोध्यम्। प्रविश इत्यस्यैव गृहादिकर्मकप्रवेशनमर्थः। पिण्डीम् इत्यस्यैव पिण्डीकर्मकभक्षणमर्थः। एवं ल्यब्लोपपञ्चम्यन्तस्थलेऽपि पञ्चम्यन्तस्यैव ल्यबन्तार्थविशिष्टस्वार्थे शक्त्या तावन्मात्रेणैव विशिष्टार्थबोध इति भावः। प्रासादमारुह्य प्रेक्षते इत्यर्थे ल्यप्प्रकृतिभूतधातुवाच्यपूर्वकालिकारोहणक्रियाजन्यफलतावच्छेदकसम्बन्धयुक्तफलाश्रयस्य प्रासादरूपकर्मवाचकात् द्वितीयां बाधित्वाऽनेनापादानत्वेन पञ्चमी **प्रासादात् प्रेक्षते इति।**

तदयं निर्गलितोऽर्थः—प्रासादकर्मकपूर्वकालावच्छिन्नारोहणकर्तृकर्तृकं तदुत्तरकालिकं प्रेक्षणमित्यर्थे शक्तिः। एतच्छास्त्रमेव तत्र शक्तिग्राहकम्। यत्र तु ल्यबन्तस्य साक्षात् प्रयोगस्तत्र तु **नानेन पञ्चमी**, लोपग्रहणात्। एतत्—पञ्चम्यर्थो ल्यबन्तार्थक्रियायाः कर्म, क्वचिदधिकरणञ्च। **आसने उपविश्य प्रेक्षते** इत्यर्थे **आसनात् प्रेक्षते** इति एतस्मात् आसनाधिकरणकपूर्वकालावच्छिन्नोपवेशनकर्तृकं तदुत्तरकालिकं वर्तमानं प्रेक्षणम् इति बोधो यत्र तत्रानेन पञ्चमी। आसनशब्देऽधिकरणे ल्युट् प्रत्ययः। श्वशुरं वीक्ष्य लज्जामनुभवतीत्यर्थकम्—**श्वशुराज् जिह्रेति**। पतिजनकः, पत्नीजनको वा श्वशुरः। स्त्रीणां कृते पतिपिता श्वशुरः। पत्युः कृते पत्नीपिता श्वशुरः। शाब्दबोधप्रकारस्तु पूर्ववदेव। 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र कर्मणः शेषत्वविवक्षायां षष्ठी। 'वक्षः' इत्यस्य प्राप्य इति शेषः।

**गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तम्** इति। **गम्यमानापि** = विशिष्य तद्वाचकशब्दानुपात्ताऽपीत्यर्थः। कस्मात् त्वम् ? नद्याः इति, अत्र आगमनक्रिया गम्यमाना अर्थात् कस्मात् त्वमागतः, उत्तरमाह—नद्या इति विश्लेषाश्रयत्वं नदीपदार्थस्येति ध्रुवमिति अपादानत्वम्।

**यतश्चाध्वकालनिर्माणं ततः पञ्चमी इति।** यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते तस्मादित्यर्थः। **तद्युक्तादध्वनः प्रथमासप्तम्यौ** इति। तेन युक्तस्तद्युक्त-

'कालात्सप्तमी च वक्तव्या'। वनाद् ग्रामो योजनं योजने वा। कार्तिक्या आग्रहायणी मासे।

*अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते।* [ २-३-२९ ]

एतैर्योगे पञ्चमी स्यात्। अन्येत्यर्थग्रहणम्। इतरग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद्वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्शब्दः।

---

स्तस्मादिति = पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः। कालादिति अत्रापि तद्युक्तादित्यपेक्ष्यते। सर्वेषामुदाहरणायाह— वनात् ग्रामो योजनं योजने वा इति।

वनशब्दोऽत्र न जलार्थकः, किन्तु काननवाची। 'अटव्यरण्यं विपिनं गहनं काननं वनम्'। इति। 'वन संभक्तौ' पचाद्यच्। वनतीति वनम्। 'वने सलिलकानने' इति। 'क्लीबं स्यात् कानने नीरे निवासे निलये वनम्' इति च। ग्राम इति। ग्रामशब्दो बह्वर्थो भाष्ये दर्शितः। योजनमिति। युजिर् योगे, 'कृत्यल्युटोः' इति ल्युट्। 'योजनं परमात्मनि, चतुष्कोश्यां च योगे च।' इति मेदिनी। कार्तिक्या आग्रहायणी मासे इति। कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्तिकी तयेत्यर्थः। अग्रे हायनमस्याः सा। प्रज्ञादेराकृतिगणत्वात् स्वार्थे = प्रकृत्यर्थे स्वार्थिकोऽण्। 'पूर्वपदात्संज्ञायाम्' इति णत्वे आग्रहायणी इति।

अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति। 'अन्य-आरात्-इतर-ऋते-दिक्शब्द-अञ्चूत्तरपद-आच्-आहि' इति पदच्छेदः। अन्य इति अन प्राणने। अघ्न्यादित्वात् (उ० ४-११२) यप्रत्ययः। 'अन्योऽसदृशेतरयोः' इति हैमः। भिन्नार्थकोऽन्यशब्दोऽपि अस्ति। सूत्रे शिष्टकृद्व्याख्यानादन्यपदेन न शब्दस्वरूपग्रहणम्, किन्तु तदर्थग्रहणं तेन अन्यपर्यायवाचकशब्द-योगेऽपि पञ्चमी। अन्यः, भिन्नः, इतरो वा कृष्णात् इत्यत्र कृष्णशब्दात् पञ्चमी। अन्यः=भिन्नः= भेदवान् भेदस्य प्रतियोगिनि नित्यसाकाङ्क्षत्वेन प्रकृते कृष्णत्वावच्छिन्नप्रतियोगिताकभेदाश्रयः= अनुयोगी चैत्रादिपदार्थ इति तत्त्वम्। अन्यपदेन पर्यायवाचकशब्दग्रहणात् पञ्चमी इतरयोगेऽपि सिद्धा इति सूत्रे 'इतर' ग्रहणं व्यर्थमेव। तदुक्तं मूले इतरग्रहणं प्रपञ्चार्थमिति। स्पष्टार्थमेव, नास्ति किञ्चित्प्रयोजनमिति भावः।

वस्ततस्तु इतरग्रहणं सूत्रे आवश्यकमेव न व्यर्थम्। तथा हि—कामस्य बीजं इकार इति, एवञ्च इः = कामः। तद्बीजकत्वेन तच्छब्दव्यवहारः। इना = कामेन तरतीति इतरः = नीचः, तृधातोः 'ऋदोरप्' इति अप्प्रत्ययः, गुणश्च। अच् प्रत्ययो वा। 'नाकामी मण्डनप्रियः' इति कामप्रधानत्वाद् ईश्वरभक्तिबहिर्मुखत्वान्नीच इत्यर्थः। 'इतरस्त्वन्यनीचयोः' इति कोषात्। एवञ्च नीचार्थकेतरशब्दयोगे पञ्चमीविधानार्थं सूत्रे इतरग्रहणमावश्यकमिति पञ्चोलिनः।

ननु अन्यशब्देनान्यार्थग्रहणे नञोऽपि भेदबोधकत्वेन 'घटः पटो न' इत्यत्र पञ्चम्यापत्तिरिति चेन्न, नञो द्योतकत्वेन शक्त्या भेदबोधकत्वाभावेनादोषात्, निपातानां द्योतकत्वमेवेति सिद्धान्तात्। आराद् वनात् इति। आ रातीति आरात्, 'रा दाने' बाहुलकादातिप्रत्ययः। 'आराद् दूरसमीपयोः' इत्यमरः। ऋते कृष्णात् इति। ऋतिः सौत्रो धातुः। ऋतीयते इति ऋते केप्रत्ययः। ऋते=वर्जने। कृष्णसाक्षात्कारमन्तरा न सुखमिति योज्यम्। पुरुषाराधनात् ऋते इत्येव साधुप्रयोगः। द्वितीयान्तन्तु तत्र न प्रयोज्यम्। यद्वा 'ततोऽन्यत्रापि दृश्यते' इति वचनात् यथाकथञ्चित्तस्य साधुत्वम्। 'ऋते द्वितीया' इति चानुवचनन्तु नाचार्यसम्मतम्।

दिग्वाचकमुदाहरति—पूर्वो ग्रामात् इति। सूत्रे शब्दग्रहणसामर्थ्यात् रूढ्या दिशायां दृष्टस्यैव दिक्शब्दस्य ग्रहणं न यौगिकस्यैन्द्रादिशब्दस्य। एवं व्याख्यानात् दिग्भिन्ने यो न दृष्टः,

तेन संप्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । अवयववाचियोगे तु न, 'तस्य परमाम्रेडितम्' इति निर्देशात् । पूर्वं कायस्य । अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ–' इति षष्ठीं बाधितुं पृथग्ग्रहणम् । प्राक् प्रत्यग् वा ग्रामात् । आच्–दक्षिणा ग्रामात् । आहि–दक्षिणाहि ग्रामात् । 'अपादाने पञ्चमी' इति सूत्रे 'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्प्रभृत्यर्थयोगे पञ्चमी । भवात् प्रभृति आरभ्य वा सेव्यो हरिः । 'अपपरिबहिः–' इति समासविधानाद् ज्ञापकाद् बहिर्योगे पञ्चमी । ग्रामाद् बहिः ।

---

केवलदिशि इव दृष्टः तेन न कुकुभादिग्रहणप्रसङ्ग इति । पूर्वोक्तव्याख्यानस्य फलमाह—**तेन सम्प्रति इति** । तेन **'चैत्रात् पूर्वः फाल्गुनः'** इति सिद्धम् ।

**पूर्वं कायस्य** इत्यत्र कायस्य पूर्वोऽशः कायावयव इत्यर्थे अवयववाचकपूर्वशब्दयोगे, एवं परादिशब्दयोगे च न पञ्चमी, **'तस्य परमाम्रेडितम्' इति निर्देशात्** । ननु सूत्रे दिक्शब्दग्रहणात् अञ्चूत्तरपदस्य प्राङ् आदिशब्दस्य दिक्शब्देनैव गतार्थत्वात् तद्व्यर्थमिति चेन्न, दिक्शब्दत्वेन प्राप्तां पञ्चमीं बाधित्वा **'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठीबाधनार्थं** सूत्रेऽञ्चूत्तरपदग्रहणस्यावश्यकत्वात् । उदाहरणमाह—**प्राक् प्रत्यक् वा ग्रामात्** इति ।

सूत्रे दिक्शब्दत्वेन गतार्थत्वात् आच् आहिग्रहणञ्च व्यर्थमेव । **दक्षिणा ग्रामात् इति । दक्षिणाहि ग्रामात् इति** दक्षिणस्यां दिशीत्यर्थे 'दक्षिणादाच्' इति आच्प्रत्ययः । 'आहि च दूरे' इत्याहिप्रत्ययः क्रमेण । षष्ठ्यतसर्थेत्यस्यापवादः । भवात् **प्रभृति आरभ्य वा सेव्यो हरिरिति** । अत्र प्रभृतियोगे पञ्चमीविधायकं वचनं नास्ति इति कथं पञ्चमी इति शङ्कानिरासाय **'कार्तिक्याः प्रभृति'** इति अपादाने पञ्चमीत्यत्र भाष्यप्रयोगात् प्रभृतियोगे पञ्चमीति ज्ञाप्यते । मूले **'प्रभृतियोगे'** इत्येवोचितम् । अर्थशब्दघटितं व्याख्यानन्तु नागेशस्यैव ।

**अत्र नागेशः**—प्रभृत्यर्थयोग इत्यर्थः । अपादाने पञ्चमी इति सूत्रे 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी' 'कार्तिक्या आग्रहायणी मासे' इति वार्तिकप्रत्याख्यानाय 'इदमत्र प्रयोक्तव्यं यत् प्रयुज्यते–'कार्तिक्याः प्रभृति आग्रहायणी मासे' इति भाष्येण प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी **'इत्यर्थकेन प्रभृत्यर्थयोगे पञ्चमी'** इति वचनसत्त्वस्य भगवता बोधितत्वात् । एवञ्च तदर्थकारम्यशब्दयोगेऽपि पञ्चमी । यथा—'अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्य्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः' इति भाष्यप्रयोगोऽपि संगच्छते ।

वस्तुतस्तु नात्र पूर्वोक्तज्ञापकस्योपयोगः । ज्ञाप्यवचनमन्तरापि इष्टसिद्धिः । तथा हि—वस्तुतोऽवधित्वं तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा । कार्तिकीतो विभक्ते, अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः । भवात् प्रभृति आरभ्य वेत्यत्र भवकालाद् विभक्ते अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्यम् ।

**ग्रामाद् बहिरिति** । बहिःशब्दयोगे पञ्चमीविधायकवचनाभावात् कथं पञ्चमी ? अत्रोच्यते—पञ्चम्यन्तेन सुबन्ततदादिना सुबन्तबहिःशब्दस्य 'अपपरिबहिरि'ति समाससंज्ञाविधानसामर्थ्यात् बहिःशब्दयोगे पञ्चमी भवति इति ज्ञापनात् ।

'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्रोपपाद्यस्य पीनत्वस्य रात्रिभोजनरूपोपपादकमन्तरा नोपपद्यते इति अर्थापत्त्या रात्रिभोजनं कल्प्यते । अर्थापत्तिश्च उपपाद्यज्ञानेनोपपादककल्पनारूपा ।

एवञ्च पीनत्वविशिष्टो देवदत्तो रात्र्यधिकरणकभोजनविशिष्टः, दिवा अभुञ्जानत्वे सति पीनत्ववत्त्वात् स्थूलचैत्रवत् । तथैवात्र पञ्चम्यन्तेन सह बहिशब्दप्रकृतिकसुबन्तस्य समासविधानमनुपपन्नमिति उपपाद्येन समासविधानेनोपपादकं पञ्चमीविधानं तेन बहिशब्दयोगे अर्थापत्त्या पञ्चमी । अर्थापत्तिशब्दार्थस्तु अर्थस्य = उपपादकस्य आपत्तिः = कल्पना ।

*अपपरी वर्जने।* [ १-४-८८ ]

एतौ वर्जने कर्मप्रवचनीयौ स्तः।

*आङ् मर्यादावचने।* [ १-४-८९ ]

आङ्मर्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिविधावपि।

*पञ्चम्यपाङ्परिभिः।* [ २-३-१० ]

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप हरेः परि हरेः संसारः। परिरत्र वर्जने। लक्षणादौ तु हरिं परि। आमुक्तेः संसारः। आसकलाद् ब्रह्म।

*प्रतिः प्रतिनिधिप्रतिदानयोः।* [ १-४-९२ ]

एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्।

*प्रतिनिधिप्रतिदाने च यस्मात्।* [ २-३-११ ]

अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात् प्रति।

---

आक्षेपो द्विविधः–अर्थापत्त्या, तत्सत्ताधीनसत्ताकत्वेन च। अर्थापत्त्या आक्षिप्तस्यार्थस्य शाब्दबोधे भानं भवति। तत्सत्ताधीनसत्ताकत्वेन = यथा शरीरसत्ताधीनसत्ताऽवयवानाम्। तत्रावयवानां न शाब्दे भानम्। दार्शनिकैरर्थापत्तिरनुपलब्धिरूपप्रमाणद्वयमधिकमङ्गीकृतमिति तेषां मते षट् प्रमाणानि। अन्यमते चत्वारि प्रमाणानि।

'ज्ञापकसिद्धं वस्तु न सार्वत्रिकम्' इष्टानुरोधेन तत्रैच्छिकी व्यवस्था। तथा च **'बहिःशब्दयोगे पञ्चमी'** इत्यत्र पञ्चम्यपि तेन **'करस्य करभो बहिः'** इत्यत्र षष्ठीविभक्तिरपि संगच्छते इति दिक्। ज्ञापकसिद्धस्य सार्वत्रिकत्वे तु वचनरूपेणैव ब्रूयात्।

कर्मप्रवचनीयसंज्ञाविधायकसूत्रमाह—**अपपरी वर्जने** इति। वर्जनग्रहणात् सर्वतः सिञ्चतीत्यर्थके 'परिषिञ्चति' इत्यत्रोपसर्गत्वेनोपसर्गादिति षत्वं भवत्येव। **आङ् मर्य्यादावचने** इति। अत्र लाघवात् 'मर्य्यादायाम्' इति वक्तव्ये वचनग्रहणसामर्थ्यात् शब्दाधिक्यादर्थाधिक्यम् अधिकमधिकार्थबोधकमिति च शिष्टोक्त्या **'अभिविधौ'** अपि कर्मप्रवचनीयसंज्ञा।

**'तेन विना मर्यादा'**। **'तेन सह अभिविधिः'**। सूत्रे वचनग्रहणसामर्थ्यात् उभयत्र विशेषणांशस्य मोषः। अर्थात् अवधिमात्रमत्र विवक्ष्यते इत्यर्थः। अथवा मर्य्यादाशब्दोऽस्मिन् उच्यते तन्मर्य्यादावचनम्। तद्धि 'आङ् मर्यादाभिविध्योः' इति सूत्रं तत्र दृष्टो य आङ् स कर्मप्रवचनीयसंज्ञकः। सूत्रद्वयबोधितकर्मप्रवचनीयसंज्ञाफलमाह – **पञ्चम्यपाङ्परिभिः** इति।

**अप हरेः** = हरिं विना। **परि हरेः** हरिं विना। उभयत्र संसारपदार्थान्वयः। हरिसाक्षात्कारमन्तरा संसार इति। **लक्षणादौ तु** द्वितीया – **हरिं परि** इति। मर्य्यादाया उदाहरणमाह—**आमुक्तेः संसारः**। मुक्तिक्षणाव्यवहितपूर्वक्षणपर्य्यन्तं संसारो न मुक्तिक्षणे इति **'तेन विना मर्य्यादा'**। अभिविधौ—**आसकलाद् ब्रह्म** इति। सकलमभिव्याप्येत्यर्थः।

**प्रति प्रतिनिधिप्रतिदानयोरिति**। प्रतिनिधिः = सदृशः। प्रतिदानम् = दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम्। प्रतिनिधीयते असौ प्रतिनिधिः **'उपसर्गे घोः किः'** इति कर्मणि किप्रत्ययः, आलोपश्च। प्रतिदानशब्दो भावल्युडन्तः। इदमपि कर्मप्रवचनीयसंज्ञाविधायकमर्थद्वये प्रतिशब्दस्य। संज्ञाफलमाह—

**प्रतिनिधिप्रतिदाने च यस्मात्** इति। यस्मादित्यत्र पञ्चम्यर्थः सम्बन्धः। अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी। अस्मादेव निर्देशात् पञ्चमी इति च ज्ञाप्यते **'ज्ञापकसिद्धं न सर्वत्र'** इति 'कृष्णस्य प्रतिनिधिः' इत्यपि भवति। मुख्यस्याभावे तत्सदृश उपादीयते स प्रतिनिधिस्तस्योदाहरणमाह—**प्रद्युम्नः कृष्णात् प्रति** इति। कारणस्य = जनकस्य गुणसदृशगुणवान् पुत्रो भवति। इति कृष्णसादृश्यं तत्पुत्रे इति तस्मात् पञ्चमी। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। तस्य प्रतिदान-

तिलेभ्यः प्रतियच्छति माषान् ।

*अकर्तर्यृणे पञ्चमी* । [ २-३-२४ ]

कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । शताद्बद्धः । अकर्तरि किम्-शतेन बन्धितः ।

*विभाषा गुणेऽस्त्रियाम्* । [ २-३-२५ ]

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याद् जाड्येन वा बद्धः । गुणे किम्—धनेन कुलम् । अस्त्रियां किम्—बुद्ध्या मुक्तः । 'विभाषा' इति योगविभागाद् अगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ।

*पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्* । [ २-३-३२ ]

एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च । अन्यतरस्यांग्रहणं समुच्चयार्थम्, पञ्चमीद्वितीये चानुवर्तेते । पृथग् रामेण रामाद् रामं वा । एवं विना, नाना ।

---

स्योदाहरणम्—**तिलेभ्यः प्रतियच्छति माषान्** इति । '**यच्छति**' इति । 'पाघ्राध्मा' इति दाणो यच्छादेशः ।

हेतुतृतीयापवादसूत्रमाह—**अकर्तर्यृणे पञ्चमी** इति । कर्तृभिन्नं हेतुभूतम् ऋणं ततः पञ्चमी । **शताद् बद्ध इति** । शतमिह उत्तमर्णाव धार्यत्वाद् ऋणम् । तत्प्रयोजकहेतुश्चेति चकारात् कर्तृसंज्ञा च । **शताद् बद्धः** = शतहेतुकबन्धनाश्रयश्चैत्र इति बोधः । कर्तृत्वेन तृतीया **शतेन बन्धित** इति । ण्यन्ते प्रयोजककर्तुः शतस्य हेतुसंज्ञाप्यस्ति इति पञ्चम्यपि स्यात् तद्वारणाय सूत्रे 'अकर्तरि' इत्युपात्तम् ।

गुणे हेतौ अस्त्रीलिङ्गे विकल्पेन पञ्चमीविधायकं सूत्रमाह—**विभाषा गुणेऽस्त्रियाम्** इति । **जाड्यात् जाड्येन वा बद्ध इति** । जडस्य = मूर्खस्य भावो जाड्यम् । 'गुणवचन' इति ष्यञ्प्रत्ययः । जडता इत्यर्थः । जाड्यशब्दो हि गुणवाचको बन्धने हेतुभूतः अस्त्रीलिङ्गश्च तेन पञ्चमी, पक्षे हेतौ तृतीया च । **धनेन कुलम्** अत्र धनशब्दो द्रव्यवाचको न प्रधानतया गुणवाचक इति न पञ्चमी, किन्तु तृतीया एव । धनहेतुकं कुलस्य प्रशंसनीयम् अस्ति । प्रशंसायां बीजं धनमेव । **बुद्ध्या मुक्तः** इत्यत्र बुद्धिशब्दस्य स्त्रीलिङ्गत्वेन न पञ्चमी । '**बाहुलकं प्रकृतेस्तु न दृष्टेः**' इति वार्तिकनिर्देशज्ञापकादत्र '**विभाषा**' इत्येव योगः । तेनागुणे स्त्रियाञ्च शिष्टप्रयोगानुरोधेन विकल्पेन पञ्चमी, योगविभागस्येष्टार्थसाधकत्वात् ।

योगविभागजन्यं फलमाह—**धूमादग्निमान्** इति । अत्र ज्ञाननिष्ठजन्यजनकभावस्य विषये आरोपबोधनेन धूमज्ञानजन्यं वह्निज्ञानमिति बोधः । भूतले घटो नास्ति, कथम् ? अनुपलब्धेः, यदि स्यात्तदा उपलभ्येत नोपलभ्यतेऽतो नास्तीति । अत्र स्त्रीलिङ्गानुपलब्धिशब्दात् योगविभागेन विभक्तेन '**विभाषा**' इति सूत्रेण पञ्चमी । वस्तुतस्तु दार्शनिकस्वीकृतमनुपलब्धिरूपं प्रमाणं नास्ति, एवमर्थापत्तिरपि इत्यन्यत्र विस्तरः ।

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्** । **इति** ।

तृतीयाविधायकमिदं पक्षे पञ्चमीद्वितीये च । तृतीयाविभक्त्यभावपक्षे प्रकृता द्वितीयैव स्यात् । सा तु नित्या इति कथं पञ्चमी इत्यत आह—**अन्यतरस्यांग्रहणं समुच्चयार्थम्** इति । निपातानामनेकार्थत्वात् तेन 'एनपा द्वितीया' इत्यतः प्रकृता द्वितीया, मण्डूकप्लुत्या च पञ्चमी अनुवर्तते इति पञ्चमीद्वितीये पक्षे भवत इति । **पृथक् नाना विना वा रामेण रामात् रामं वा** इति । यत्तु अन्यतरस्य आम् = अङ्गीकारः । इति पदद्वयमिति तन्न, विकल्पविपर्येऽर्थासङ्गतेः ।

वस्तुतस्तु द्वितीयासमुच्चयो न फलम्, 'विना वातं विना वर्षं विद्युतः पतनं विना । विना जलप्रवाहेण केनेमौ पातितौ द्रुमौ' इति । इत्यादौ ऋतेशब्दयोगे इव '**ततोऽन्यत्रापि दृश्यते**'

*करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।* [ २-३-३३ ]

एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु स्तोकेन विषेण हतः।

*दूरान्तिकार्थेभ्यो द्वितीया च ।* [ २-३-३५ ]

एभ्यो द्वितीया स्यात्, चात् पञ्चमीतृतीये च। प्रातिपदिकार्थमात्रे विधिरयम्। ग्रामस्य दूरं दूराद् दूरेण वा, अन्तिकम् अन्तिकाद् अन्तिकेन वा। असत्त्ववचनस्य इत्यनुवृत्तेर्नेह—दूरः पन्थाः।

*षष्ठी शेषे ।* [ २-३-५० ]

---

इत्यनेन द्वितीयासिद्धेः। अत एव भाष्ये द्वितीयासमुच्चयो नोक्तः। 'पञ्चम्या अधिकारे द्वितीया षष्ठीविषये प्रतिषेधो वक्तव्यः' 'दक्षिणेन ग्रामम्' 'दक्षिणतो ग्रामस्य' इति प्रकृतसूत्रस्य भाष्येण 'एनपा द्वितीया' (२-३-३१) इति सूत्रं 'षष्ठ्यतसर्थ' (२-३-३०) इत्यतः प्रागिति सूचितम्। अन्यथा सौत्रक्रमत्यागे, न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः। अत एव 'करणे च' इति सूत्रे द्वितीयासमुच्चयो नोक्त इति।

'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति। करणे तृतीया सिद्धा। पक्षे पञ्चमीविधायकमिदम्। असत्त्ववचनस्येति। सत्त्वम् = द्रव्यम्। द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यम् लिङ्गनिरूपितविशेष्यरूपं वा। तद्भिन्नार्थस्येत्यर्थः। सूत्रे चकारस्तृतीयाऽन्यतरस्यामित्यनुकर्षणार्थः। प्रत्ययविधाने षष्ठी तु 'गापोष्टक्' इतिवत्। पञ्चम्यर्थे षष्ठी तेनासत्त्ववचनेभ्य इति फलति। सूत्रे स्तोकशब्दो यद्धर्मावेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः।

स च धर्मोऽल्पत्वादि शब्दप्रवृत्तिनिमित्तमेव। शुक्लादिवच्चैते धर्मवचना अपि। करणत्वञ्च परम्परया। ईदृशार्थे एव साधुत्वम्, सूत्रबलात्। अनुगुत्तरपदसूत्रस्थकैयटव्याख्याने स्पष्टमिदम्। 'स्तोकं पचति' इत्यत्र करणत्वाभावात् इदं न प्रवर्तते। फलमपि फलाश्रय इति धात्वर्थविक्लित्तिरूपे फलेऽभेदसम्बन्धेन स्तोकपदार्थो विशेषणम्। व्यपदेशिवद्भावलभ्यमर्थमर्थतो गृहीत्वा उच्यते—'क्रियाविशेषणानां कर्मत्वं नपुंसकत्वमेकवचनत्वञ्च' इति। अत्र क्रियापदं फलपरम्।

स्तोकेन स्तोकाद् वा मुक्त इति। अनायासेन मुक्त इत्यर्थः। अल्पेन विषेण हत इत्यर्थके द्रव्यवाचके तु तृतीयैव स्तोकशब्दात्। दूरान्तिकार्थेभ्यो द्वितीया च इति। चकारोऽत्र पञ्चमीतृतीयाग्रहणार्थः। व्याख्यानात् प्रातिपदिकार्थमात्रे विधिरयम्। तेन प्रातिपदिकार्थ एव प्रत्ययार्थः। अत्रासत्त्ववचनस्यानुवृत्त्या दूरः पन्थाः इत्यत्र प्रातिपदिकार्थे प्रथमा, दूरशब्दस्यात्र द्रव्यवाचकत्वात्। इति पञ्चमी।

अथ षष्ठी। कारकविभक्तिविषये 'शक्तिः कारकम्' 'शक्तिमत्कारकम्' इति मतभेदसत्त्वेऽपि शेषषष्ठीविषये सम्बन्धमात्रमेवार्थः। अत्र धर्मधर्मिवाचकत्वप्रयुक्तमतभेदो नास्ति तद्बोधनायाह—षष्ठी शेषे इति। उक्तादन्योऽर्थः शेषः। यत्रार्थे विशेषसूत्रैर्न काचन विभक्तिः निर्दिष्टा तत्रार्थे षष्ठीविभक्तिः। शेषपदार्थश्च प्रकृते सम्बन्धो यत्र काचन विभक्तिरन्येन सूत्रेण न विहिता तत्र सम्बन्धप्रतियोगिवाचकात् षष्ठी। सम्बन्धश्च सम्बन्धिभ्याम् = प्रतियोग्यनुयोगिभ्याम्, भिन्नः = न तत्स्वरूपः, द्विष्ठः = प्रतियोग्यनुयोगिनिष्ठः, विशिष्टबुद्धि (विशेष्यविशेषणसंसर्गावगाहिबुद्धि) नियामकः।

अत्रायं विवेकः—शेषषष्ठ्याः क्वचित् सम्बन्धसामान्यरूपेण सम्बन्धवाचकता। यथा 'मातुः स्मरति' इत्यादौ। क्वचित् विशेषरूपेण स्वत्वादिना यथा—'राज्ञः पुरुषः' इत्यादौ। सर्वत्र सम्बन्धसामान्येनैव बोधकत्वे तु चैत्रेण रक्षिते मैत्रीयहस्त्यादौ 'नेदं चैत्रस्य धनम्' इति प्रयोगः संगच्छते।

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी स्यात्। राज्ञः पुरुषः। कर्मादीनापि संबन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते।

---

अन्यथा चैत्रसम्बन्धस्यापि तत्र हस्त्यादौ सत्त्वेन निषेधानुपपत्तिः। स्वत्वत्वेन स्वत्वस्य भाने तु चैत्रीयपाल्यपालकभावसम्बन्धस्य सत्त्वेऽपि तदीयस्वत्वस्याभावान्निषेधोपपत्तिः। सम्बन्धश्च सर्वोऽपि क्रियाकारकभावमूलक एव। तदुक्तम्—

'सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते'॥ इति।

भाष्येऽपि 'न हि कर्मादिभ्योऽन्येऽर्थाः सन्ति। इह तावत् 'राज्ञः पुरुषः' इति, राजा कर्ता, पुरुषः सम्प्रदानम्, राजा पुरुषाय सम्प्रददाति इत्यर्थसम्प्रत्ययात्। 'वृक्षस्य शाखा' इति वृक्षः शाखाया अधिकरणम्, 'वृक्षे शाखा' इति लोकप्रसिद्धेः। ( वस्तुतः शाखासु वृक्ष इत्येव, अवयवे अवयवी समवायेन तिष्ठति, 'तन्तुषु पटः' इत्येव व्यवहार उचितः )।

तदेतत्स्वन्नाम ( स्वत्वन्नाम ) चतुर्भिरेतत्प्रकारैर्भवति—क्रयणात्, अपहरणात्, याच्ञायाः, विनिमयात्, इति। अत्र सर्वत्र कर्मादयः सन्ति। एवं तर्हि कर्मादीनामविवक्षा शेषः। कथन्नाम सतो नाम अविवक्षा स्यात्, सतोऽप्यविवक्षा भवति—तद् यथा—'अलोमिका एडका' 'अनुदरा कन्या' इति। असतश्च विवक्षा भवति। तद् यथा—'समुद्रः कुण्डिका' 'विन्ध्यो वर्धितकम्' इति। अनेन भाष्येण क्रियाकारकभावसम्बन्धस्य तदितरसम्बन्धस्थले सर्वत्र सत्त्वेऽपि क्रियाकारकभावमूलक-स्वस्वामिभावादेः सम्बन्धत्वेन विवक्षायां क्रियाकारकभावसम्बन्धस्याविवक्षा। तदुक्तं भाष्यकृता—'कर्मादीनामविवक्षा शेषः' इति। यदा राज्ञः स्वत्वविवक्षा तदा राजपदादेव, यदा तु पुरुषस्य स्वत्वविवक्षा तदा पुरुषपदात् षष्ठी—'राज्ञः पुरुषः' 'पुरुषस्य राजा' इति। तदुक्तं हरिणा—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेऽप्युपचर्य्यते॥ इति।

एतदर्थश्चायम्—यद्यप्यसौ सम्बन्धः प्रतियोग्यनुयोग्युभयवृत्तिस्तथाऽपि अन्यं प्रति गुणानां विशेषणत्वात् विशेषणत्वेन विवक्षितस्य सम्बन्धं विना विशेषणत्वासम्भवात् सम्बन्ध उद्भूततया प्रतीयते इति विशेषणवाचकादेव षष्ठी। विशेष्यस्य तु केवलस्य स्वरूपत एव प्रतीत्या उद्भूत-सम्बन्धो नास्ति इति न ततः षष्ठी। पुरुषनिष्ठराजनिरूपितविशेष्यताया राजपदसन्निधाने प्रतीय-मानाया उपकारको भवतीत्यर्थः। राज्ञः पुरुष इति राजन्शब्दात् षष्ठी न पुरुषशब्दात्।

ननु सम्बन्धस्योभयनिरूप्यत्वाद् विशेषणाद् यथा षष्ठी भवति तथा विशेष्यवाचकादपि राजनिरूपितस्वत्ववान् पुरुष इत्यर्थे षष्ठी स्यादिति चेन्न, उक्तार्थे विशेष्यवाचकात् षष्ठ्युत्पत्तौ 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति न्यायविरोधात्। उक्तार्थे प्रत्ययार्थस्य स्वत्वस्य पुरुषरूपप्रकृत्यर्थंप्रति अप्रधानत्वात्। किञ्च यदपेक्षया यस्य लघुभूतसम्बन्धेन क्रियान्व-यित्वं तद्वाचकप्रकृतिकविभक्तेः कारकविभक्तिरिति प्रथमया विभक्त्या उपपदविभक्ति ( षष्ठी ) बाधात्। स्पष्टञ्चेदं 'सहयुक्तेऽप्रधाने' इति सूत्रभाष्ये।

कर्मादीनामपि सम्बन्धविवक्षायां षष्ठी इति। आदिना कर्तुरपि ग्रहणम्। 'क्तस्य च वर्तमाने' इत्यत्र भाष्ये 'छात्रस्य हसितम्' इति प्रयोगात्। इदं वचनं न्यायसिद्धं नापूर्वम्। तथा हि—यथा विशेषाविवक्षायां रूपवान् इति प्रयुज्यते, विशेषविवक्षायान्तु नीलः, पीत इत्यादि तथेद-मपि न्यायसिद्धमेव। सतां गतमिति। सत्पुरुषसम्बन्धि गमनमित्यर्थः। 'सन्तो गच्छन्ति' इत्यत्र तु आख्यातेन कर्तुरुक्तत्वात् सम्बन्धमात्रविवक्षा कर्तुं न शक्यते इति भावः। सर्पिषो जानीते इति करणस्य सम्बन्धविवक्षायां षष्ठी। सर्पिःसम्बन्धि प्रवर्तनम्। 'अकर्मकाच्च' 'अनुपसर्गाज्ञः' इत्या-

मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ।

*षष्ठी हेतुप्रयोगे* । [ २-३-२६ ]

हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ।

*सर्वनाम्नस्तृतीया च* । [ २-३-२७ ]

सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति । कस्य हेतोः । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' । किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय इत्यादि । एवं किं कारणम्, को हेतुः किं, प्रयोजनम् इत्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्ताय इत्यादि ।

*षष्ठ्यतसर्थप्रत्ययेन* । [ २-३-३० ]

एतद्योगे षष्ठी स्यात् । 'दिक्शब्द-' इति पञ्चम्या अपवादः । ग्रामस्य दक्षिणतः पुरः पुरस्तात् उपरि उपरिष्टात् ।

---

त्मनेपदम् । मातृसम्बन्धि स्मरणमित्यर्थे कर्मणोऽविवक्षया षष्ठी—मातुः स्मरणमिति । एधो दकस्योपस्कुरुते इति । एधाश्चोदकञ्चेति समाहारे एधोदकमिति, यद्वा एधांसि च दकञ्चेति विग्रहे पूर्ववदेकवद्भावः । उदकपर्य्यायी दकशब्दोऽप्यस्ति । तथा च हलायुधः —

भुवनममृतं जीवनीयं दकञ्च ।

उपस्कुरुते इति । गन्धनादिसूत्रेणात्मनेपदम् । 'उपात् प्रतियत्ने' इति सुडागमः । शङ्करसम्बन्धि चरणसम्बन्धि भजनमित्यर्थं षष्ठी । करणफलानां संबन्धत्वेन विवक्षायां बहुत्वविशिष्टफलसंबन्धिनी या तृप्तिस्तस्या आश्रय इति बोधः । ननु 'ज्ञोऽविदर्थस्य करणे' इत्यारम्य षष्ठीविधायकानि अष्टसूत्राणि व्यर्थानि, शेषषष्ठ्या गतार्थत्वादिति चेन्न, 'शेषे' इति विहितषष्ठ्यन्तस्य समासो भवति, ज्ञोऽविदर्थस्येत्यादिसूत्रविहितषष्ठी यत्र तत्र षष्ठ्यन्तस्य न समासः, विशेषतत्तत्सूत्रारम्भसामर्थ्यात् । विशेषसूत्रवैयर्थ्यमूलकं वचनमग्रे वक्ष्यते–'प्रतिपदविधाना षष्ठी न समस्यते' इति ।

षष्ठी हेतुप्रयोगे इति । अत्र 'हेतौ' इत्यतो 'हेतौ' इत्यनुवर्तते । एवं च हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठीत्यर्थलाभः । वासे अन्नं हेतुः = कारणम् । अन्नप्राप्तिनिमित्तको चैत्रकर्तृको वर्तमानकालिकः स्थित्यनुकूलो व्यापार इति बोधः—अन्नस्य हेतोर्वसति इत्यतः ।

हेतौ तृतीयायां प्राप्तायामनेन षष्ठी । 'अन्नेन वसति' अत्र हेतुशब्दप्रयोगाभावेन तृतीया । यत्र अन्नस्य हेतोस्तुभ्यं नमः, इत्यत्रान्नशब्दादेव षष्ठी न तु युष्मच्छब्दात् ।

सर्वनाम्नः तृतीया च इति । चकारात् हेतौ इति सम्बध्यते । तृतीयाया अभावे पक्षे षष्ठी । केन हेतुना कस्य हेतोरिति किंशब्दात् तृतीया षष्ठी च । निमित्तार्थका ये शब्दास्तेषां प्रयोगे सर्वविभक्तिर्भवति अत आह—निमित्तपर्य्यायेति । किं निमित्तमिति—इदं प्रथमान्तं द्वितीयान्तमपि समानमेव । केन कस्मै कस्मात् कस्य कस्मिन्नित्यपि बोध्यम् । एवं कारणशब्दप्रयोजनशब्दयोगेऽपि सर्वविभक्तिदर्शनम् । इष्टानुरोधेन वार्तिके प्रायग्रहणात् असर्वनाम्नः प्रथमाद्वितीये न स्त इति ।

ज्ञानेन निमित्तेन ज्ञानाय निमित्ताय इत्यादौ । उभयत्र हरिः सेव्य इति सम्बध्यते । षष्ठ्यतसर्थप्रत्ययेन इति । 'दक्षिणोत्तराभ्यामतसुच्' इत्यस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः—अस्तातिप्रभृतिः, तदन्तेन योगे षष्ठी । पञ्चमीबाधकमिदम्, दिक्शब्दत्वात् 'अन्येति' सूत्रेण पञ्चमी न भवति । दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टात्, एतेषां

*एनप द्वितीया* । [ २-३-३१ ]

एनबन्तेन योगे द्वितीया स्यात् । 'एनपा' इति योगविभागात्षष्ठ्यपि । **दक्षिणेन ग्रामं ग्रामस्य वा, एवमुत्तरेण ।**

*दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्* । [ २-३-४ ]

**एतैर्योगे षष्ठी स्यात्पञ्चमी च । दूरं निकटं ग्रामस्य ग्रामाद्वा ।**

*ज्ञोऽविदर्थस्य करणे* । [ २-३-५१ ]

जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ।

*अधीगर्थदयेशां कर्मणि* । [ २-३-५२ ]

एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनम् । ईशनं वा ।

*कृञः प्रतियत्ने* । [ २-३-५३ ]

[प्रतियत्नो गुणाधानम् ।] **कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने । एधो दकस्योपस्करणम् ।**

*रुजार्थानां भाववचनानामज्वरेः* । [ २-३-५४ ]

**भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा ।**

---

योगे ग्रामादिशब्देभ्यः षष्ठी भवति । **एनपा द्वितीया** इति । 'एनबन्यतरस्याम्' इति विहितैनबन्तयोगे द्वितीया भवति । 'एनपा' इति योगं विभज्य षष्ठीमनुवृत्त्य च षष्ठी भवति । तेन **ग्रामं ग्रामस्य** दक्षिणेनेति सिद्धम् । एवमुत्तरेण योगेऽपि बोध्यम् ।

षष्ठ्यां प्राप्तायां पक्षे पञ्चम्यर्थं वचनमाह—**दूरान्तिकार्थैरिति** । समुच्चयार्थमत्रान्यतरस्यामिति । तेन विप्रकृष्टाऽपि पञ्चमी व्याख्यानादत्र समुच्चीयते, न तु सन्निहिते द्वितीयातृतीये । तदेवाह—**पञ्चमी चेति । दूरम्, निकटम्, अन्तिकं वा ग्रामस्य ग्रामात्** इति । **ज्ञोऽविदर्थस्य करणे** इति । विद्धातोर्ज्ञानानुकूलव्यापारोऽर्थस्तद्भिन्नार्थकस्य जानातेः = अज्ञानार्थकस्य **करणे** यदा करणत्वेन न विवक्षा किन्तु शेषत्वेन विवक्षा तदा षष्ठी । **सर्पिषो ज्ञानम्** इति । वस्तुतस्तु करणीभूतं यत्सर्पिः तत्सम्बन्धिनी प्रवृत्तिः । अत्र ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा ।

**अधीगर्थदयेशां कर्मणि** इति । स्मृत्यर्थ इति वक्तव्ये अधीगर्थ इत्युक्तिः ज्ञापनार्था—'**इङिकौ** अध्युपसर्गतो न व्यभिचरतः' । इङर्थे नेदं ज्ञापकम्, किन्तु इगर्थे एव । **'णेरध्ययने वृत्तम्' इति इङर्थे** ज्ञापकं बोध्यम् ।

**मातुः स्मरणम्** इति । मातृसम्बन्धिस्मरणमित्यर्थे कर्मणि षष्ठी, विशेषवचनविहितषष्ठी यत्र तत्र शेषे षष्ठी इव षष्ठ्यन्तेन न समासस्तथा च व्यस्तमेव । शेषत्वविवक्षायां तु षष्ठी प्राप्नोति तथा च मातृसम्बन्धिस्मरणमित्यर्थे मातृस्मरणमित्येव स्यात् । **सर्पिषो दयनम्** । 'दय गतौ' । घृतं मे प्राप्तं स्यादित्यर्थ गमनरूपा प्रवृत्तिः । **सर्पिषो ईशनम्** इति । सर्पिर्मे भूयादित्याशंसनमित्यर्थः । **कर्मणि किम्** इति । करणे शेषत्वविवक्षायां मा भूदिति मातुर्गुणस्मरणम् । अत्र गुणशब्दादनेन न षष्ठी, किन्तु शेषषष्ठ्या समासो बाध्यः । अत्र माता कर्म, गुणस्तु करणम्, उभयत्र शेषत्वविवक्षायामपि मातृशब्दादेवानेन षष्ठी, गुणशब्दात्तु शेषषष्ठी ।

**कृञः प्रतियत्ने** इति । प्रतियत्नः = गुणाधानम् । उत्पत्त्यनुकूलव्यापारजन्यफलनिष्ठाधेयताश्रयरूपकर्मवाचकात् शेषे षष्ठी गुणाधानेऽर्थे गम्ये । अन्यस्य गुणाः सन्निकर्षेणान्यत्रारोपिताः । **एधो दकस्योपस्करणम्** । जलीया ये आर्द्रत्वादयो गुणास्ते काष्ठसंक्रान्ता यदा भवन्ति तदेदं सूत्रं प्रवर्तते ।

**रुजार्थानां भाववचनानामज्वरेः** इति । 'रुजो भङ्गे' भिदादिपाठात्, अत एव निपातनाद्धि टापि **रुजा** इति । रुजा=व्याधिः=रोगः अर्थो येषां तेषां धातूनां भाववचनत्वाव्यभिचारात् =

'अज्वरिसन्ताप्योरिति वाच्यम्'। रोगस्य चौरज्वरः चौरसन्तापो वा। रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः।

*आशिषि नाथः।* [ २-३-५५ ]

आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। आशिषि इति किम्—माणवकनाथनम्। तत्सम्बन्धिनी याच्ञेत्यर्थः।

*जासिनिप्रहणनाटक्राथपिषां हिंसायाम्।* [ २-३-५६ ]

हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनं प्रणिहननं निहननं प्रहणनं वा। 'नट अवस्कन्दने' चुरादिः। चौरस्योन्नाटनम्। चौरस्य क्राथनम्।

---

क्रियावाचकत्वात् अत्र भावशब्देन न साध्यरूपक्रियाया ग्रहणम्, किन्तु घञादिवाच्या सिद्धा क्रिया, तस्या ग्रहणम्। बाहुलकाद्वक्ति इति वचनः कर्तरि ल्युट्प्रत्ययः। अत्र प्रकृत्यर्थस्तु न विवक्षितः। न हि भावो वक्ता संभवतीति, किन्तु प्रत्ययस्य साधुत्वमात्रनिर्वाहाय वचिरिति। तथा च वचनशब्दस्यार्थोऽत्र कर्ता।

एवञ्च भावः = भावप्रत्ययान्तार्थो वचनः = कर्ता येषां तेषां **भाववचनानाम्** = भावकर्तृकाणाम् ज्वरिवर्जितानां रोगार्थानां कर्मणि शेषे षष्ठी। **चौरस्य रोगस्य** रुजा इति। रोगशब्दो भावघञन्तः, 'पदरुज' इति घञ्, गुणे, कुत्वे च सिद्धः। रुजायां कर्ता रोग इति रोगशब्दात् **'कर्तृकर्मणोः कृति'** इति षष्ठी। **चौरस्य** इत्यत्रानेन षष्ठी। चौरसंबन्धिनी रोगकर्तृका पीडेत्यर्थः। भावकर्तृकाणां किम्? श्लेष्मोऽत्र न भावः, 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः। **श्लेष्मणश्चौररुजा** इत्यत्र नास्य सूत्रस्य प्रवृत्तिः। सूत्रे अत्यल्पमिदमुच्यते—अज्वरेरिति। अज्वरिसन्ताप्योरिति वाच्यम्। तेन रोगस्य चौरज्वरः इत्यत्र शेषे षष्ठीसमासश्च। एवं चौरसन्तापो वा। अर्थमाह—रोगकर्तृकं चौरसम्बन्धि ज्वरादिकम्।

**आशिषि नाथः** इति। शुभाशंसनम् आशीः। आङ्पूर्वकशासु अनुशिष्टौ इति धातुः। प्रवृत्तिपर्य्यवसायी शासेरर्थः। क्विप्, 'शास इत्' इति इकारादेशः, षकारादेशः। आशीरर्थस्य नाथतेः कर्मणः शेषत्वविवक्षायां षष्ठी। सर्पिर्मे भूयादित्याशासनमित्यर्थे—**सर्पिषो नाथनम्** इति। याच्ञार्थकनाथधातुवाच्यक्रियाकर्मणो यदा शेषत्वविवक्षा तत्र नेदं प्रवर्तते—'माणवक( बालक ) संबन्धिनी याच्ञा' इत्यर्थे शेषे षष्ठ्या समासेन रूपम् -**माणवकनाथनम्** इति। यद्यपि कर्मत्वविवक्षायां 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी सिद्धा, इति कर्मषष्ठ्यन्तेन समासे **माणवकनाथनम्** भवत्येव, तथापि तत्र 'गतिकारकोपपदात् कृत्' इति कृदुत्तरप्रकृतिस्वरः स्यात्। शेषषष्ठ्यन्तसमासे चान्तोदात्तत्वमिति विशेषः।

**जासिनिप्रहणनाथक्राथपिषां हिंसायाम्।** इति। अत्र जसु मोक्षणे इति दैवादिकस्य न ग्रहणम्, जासीति दीर्घोपधनिर्देशात्, हिंसायामित्युक्तेश्च। किन्तु जसु ताडने, जसु हिंसायाम् इति चुराद्योर्ग्रहणम्। निप्रोपसृष्टो हनो **निप्रहणम्** इति। शब्दपरत्वेऽपि सौत्रत्वात् 'हन्तेः' इति णत्वम्। नट अवस्कन्दे चुरादिः। घटादेस्तु न ग्रहणम्, नाटेति दीर्घनिर्देशात्। 'क्रथ हिंसायाम्' घटादिस्तस्य मित्त्वेऽपि इह निपातनाद् वृद्धिः। मित्त्वफलन्तु 'चिण्णमुलोः' इति दीर्घे चरितार्थम्।

परे तु एतन्निर्देशसामर्थ्यात् नटसाहचर्य्याच्चायमपि चुरादिः, तस्याकृतिगणत्वात्। निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां **चौरस्य क्राथनम्** इत्यनापत्तिः। सामान्येन निपातने चिण्णमुल्विषये क्रथं क्रथमित्यादेः, 'क्रथयति' इत्यादेश्चानापत्तिरित्याहुः। पिष अवयवे—

वृषलस्य पेषणम् । हिंसायाम् किम्–धानापेषणम् ।

*व्यवहृपणोः समर्थयोः ।* [ २-३-५७ ]

शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता । शतस्य व्यवहरणं पणनं वा । समर्थयोः किम्–शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनं स्तुतिरित्यर्थः ।

*दिवस्तदर्थस्य ।* [ २-३-५८ ]

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति ।

---

अवयवानां चूर्णकरणम् । हिंसार्थका एते धातवः स्युस्तदा तेषां कर्मणो यदा शेषत्वविवक्षा तत्रानेन षष्ठी । उदाहरणमाह—चौरस्य उज्जासनमिति । चौरसम्बन्धिनी हिंसा । प्राणवियोगानुकूलो व्यापारः = हिंसा । निप्रौ उपसर्गौ व्यस्तौ = पृथग्भूतौ संहतौ = सह प्रयुक्तौ विपर्यस्तौ = पूर्वापरीभावरूपत्यक्तक्रमरूपौ वाऽत्र गृहीतौ, व्याख्यानात् तेन चत्वारि उदाहरणानि बोध्यानि । चौरस्य सर्वत्र संबन्धः । चौरस्य निप्रहणनम्, प्रणिहननम्, अत्र निनकारस्य नेर्गदेति णत्वम् । निहननम् । प्रहणनम् । उन्नाटनमिति अवस्कन्दनार्थकचुरादिनटधातुः । वृषणस्येति । वृषु सेचने ( भ्वा० प० से० ) वृषादिभ्यश्च ( उ० १–१०६ ) इति कलच् । वृषम् = धर्मं लुनाति 'लूञ् छेदने' ( क्र्या० उ० से० ) 'अन्येभ्योऽपि दृश्यते' इति डप्रत्ययः ।

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः । इति ।

शूद्रस्य चत्वारि नामानि । अत्र धर्मनिन्दकस्य धर्मनाशकस्य शूद्रस्य हिंसा उदाहरणे बोधिता । यस्तु सत्कर्म करोति तस्य तु प्रशंसा एव भवति, अनेके महापुरुषा भगवद्भक्ताश्च शूद्राः पुरा आसन्, वर्तन्ते च साम्प्रतमपि ।

धानापेषणमित्यत्र न हिंसेति शेषषष्ठ्या भवति समासोऽत्र । व्यवहृपणोः समर्थयोः इति । तुल्यार्थकसमशब्दपर्यायार्थसंशब्देनार्थशब्दस्य सुबन्तस्य समासः । अथवा समेति अकारान्तेन समासः, अत्र समार्थ इति तु न, शकन्ध्वादित्वेन पररूपेण दीर्घस्य बाधात् । तेन तुल्यार्थता लब्धा । एवञ्च द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता तत्र शेषत्वेन विवक्षिते कर्मणि षष्ठी । गणनार्थयोगे तु शलाकाव्यवहारः—नानेन षष्ठी किन्तु शेषे षष्ठी, समासश्च । स्तुत्यर्थकपणनयोगेऽपि नेदं सूत्रं प्रवर्तते—ब्राह्मणपणनमिति ।

दिवस्तदर्थस्य इति । तच्छब्देन व्यवहृपणौ परामृश्येते तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतौ । तेन द्यूतार्थस्य क्रयविक्रयव्यवहारार्थस्य दिवः कर्मणि षष्ठी । इह 'शेषे' इति न सम्बध्यते, उत्तरसूत्रद्वयारम्भात् । अत एव त्रिसूत्र्यां तिङन्तमुदाहरति—शतस्य दीव्यति इति । अयं भावः—अत्र 'शेषे' इत्यस्य सम्बन्धे 'विभाषोपसर्गे' इत्यत्र शेषे इति सम्बध्यते न वा, नाद्यः, 'दिवस्तदर्थस्य' इत्यनेनैव समासाभावस्य सिद्धत्वेन सूत्रवैयर्थ्यापत्तेः । न च पक्षे 'षष्ठी शेषे' इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिः फलम् । 'नोपसर्गे' इति न्यासेन 'दिव' इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणस्य तत्रापि वैयर्थ्यात् । नान्त्यः, वेदेऽपि 'विभाषोपसर्गे' इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वात् आद्यरूपस्य तत्राभावाच्च 'द्वितीया ब्राह्मणे' इत्यस्य वैयर्थ्यापत्तेः । न च तन्निरुपसर्गे द्वितीयार्थमिति वाच्यम्, कर्मत्वविवक्षायां 'दिव', इत्यस्याप्रवृत्त्या 'कर्मणि द्वितीया' इत्येव । सिद्धतया वैयर्थ्यस्य तादवस्थ्यात् । न च 'द्वितीया ब्राह्मणे' इति सूत्रे शेषे इत्यनुवर्तते, तेन कर्मत्वाविवक्षायां द्वितीयार्थमिति वाच्यम्, विच्छिन्नत्वेनानुवृत्तेरयुक्तत्वात् । वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्च । कृति त्वदं न प्रवर्तते इति पुनर्विधानं समासाभावाय इत्यपि न वाच्यम् ।

तदर्थस्य किम्-ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ।

*विभाषोपसर्गे* । [ २-३-५९ ]

पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

*प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने* । [ २-३-६१ ]

देवतासंप्रदानकेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविषो वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ।

*कृत्वोऽर्थप्रयोगे कालेऽधिकरणे* । [ २-३-६४ ]

कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् ।

---

अत एव 'द्वितीया ब्राह्मणे' इति सूत्रे भाष्यम्—'किमुदाहरणम् ? गां प्रतिदीव्यन्ति, पूर्वेणाप्येतत् सिद्धम्, इदं तर्हि गामस्य तदहः सभायां दीव्येयुरिति दिवस्तदर्थस्येति नित्यं षष्ठी प्राप्नोति इति कैयटश्चेति दिक् । ब्राह्मणं स्तौति इत्यर्थके नेदं प्रवर्तते ।

विभाषोपसर्गे इति । अत्र शेषे इति न संबध्यते, तदर्थस्य चेति अनुवर्तते । पूर्वसूत्रापवादः । शतं शतस्य वा प्रतिदीव्यति सूत्रोदाहरणम् । प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने इति । प्रेष्येति—प्रोपसर्गादाद् इष्यतेर्दैवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषैकवचनं 'प्रेष्य' इति, तत्साहचर्य्यात् ब्रुविरपि तथाभूत एव । अत एवेह शेषग्रहणं न संबध्यते, तिङन्तेन सह समासस्याप्रसक्तत्वात् । कल्पाद्यन्तस्य तु न प्रेषे प्रयोगः, अनभिधानात् । प्रकृतसूत्रे शेषग्रहणसम्बन्धे भाष्यमपि मानम् ।

तत्र हि 'हविषोऽप्रस्थितस्य हविषः प्रस्थितं नेति वक्तव्यम्' । यदा प्रस्थितत्वेन हविर्विशेष्यते तदा षष्ठी न भवतीत्यर्थः । प्रस्थितत्वेन विशेषितं यद्धविस्तद्वाचकात् प्रातिपदिकात् न षष्ठीति फलितम् । इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य इत्येतदस्योदाहरणं भाष्ये । अत्र छागमिति द्वितीया दृश्यते, यदि 'प्रेष्यब्रुव' इति सूत्रस्य शेषत्वविवक्षायामेव प्रवृत्तिस्तदाऽनेन वार्तिकेनैतत्सूत्राप्रवृत्तिसम्पादनेऽपि 'षष्ठी शेषे' इति सूत्रेण षष्ठ्या दुर्वारत्वेनोदाहरणासङ्गतिः स्पष्टैव । न च वार्तिकारम्भसामर्थ्यात् तस्या अप्ययन्निषेध इति वाच्यम्, सामर्थ्यकल्पनापेक्षया शेषग्रहणासम्बन्धे एव लाघवमित्यत्र तात्पर्य्यात् ।

प्रेष्यब्रुवोः किमिति—अग्नये छागस्य हविर्वपां मेदो जुहोधि । हविषः किमिति—अग्नये गोमयानि प्रेष्य । देवतासंप्रदाने किम्—माणवकाय पुरोडाशान् प्रेष्य । 'हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः' इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य । देवतेति 'मन्त्रेण या स्तूयते सा देवता' । यद्वा 'वेदबोधितत्यागकर्मीभूतद्रव्यविषयित्वावच्छिन्नस्वामित्वप्रकारितावदिच्छोद्देश्या' । 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र समन्वयप्रकारः पूर्वमुक्त एव । सूत्रार्थस्तु वृत्तौ स्पष्ट एव । सूत्रोदाहरणमाह—अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ।

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे इति । संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच् । क्रियाया अभ्यावृत्तिः = पुनः पुनर्जन्म । सा च क्रियाया एव भवति । गुणद्रव्ययोस्तु सिद्धस्वभावतया न पुनः पुनर्जन्म । कृत्वोऽर्थेति । कृत्वसुचोऽर्थ इवार्थो येषां प्रत्ययानां ते कृत्वोऽर्थाः । द्वित्रिचतुर्भ्यः सुच् । सुचादयः = कृत्वोऽर्थाः । दिवस्तदर्थस्य इति षट्सूत्रे विच्छिन्नमपि शेषग्रहणमनुवर्तते, शिष्टकृद्व्याख्यानात् । पञ्चकृत्वोऽह्नो भोजनम् । कालवाचकोऽधिकरणवाचकश्च अहन्शब्दस्तस्मादधिकरणे सप्तमी प्राप्ता, किन्तु अधिकरणस्य शेषत्वविवक्षायां षष्ठी । दिवससम्बन्धि पञ्चवारं भोजनम् । भोजनन्नाम–गलबिलाधःसंयोगानुकूलव्यापाररूपम् । द्विरह्नो भोजनम् इति । द्विशब्दात्प्राप्तं कृत्वसुचं

शेषे किम्-द्विरहन्यध्ययनम् ।

*कर्तृकर्मणोः कृति* । [ २-३-६५ ]

कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । 'गुण-कर्मणि वेष्यते' । नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वा ।

---

बाधित्वा सुच्प्रत्ययः । 'उत्सर्गापवादयोः समानविषयत्वम्' इति कृत्वोऽर्थे एव सुच्प्रत्ययः । अहन्-शब्दात् षष्ठी । यत्र तु अधिकरणस्य न शेषत्वविवक्षा तत्र सप्तम्येव यथा—**द्विरहनि अध्ययनम्** । अत्राध्ययनक्रियागतं द्वित्वं द्विशब्दः प्रतिपादयति । अतः सुच्प्रत्ययः । सुच्प्रत्ययान्तमव्ययम् ।

ननु शेषस्य मण्डूकानुवृत्तौ किम्मानम् ? वृत्त्यादिप्रामाण्यात् तदनुवृत्तेः ।

तथा हि—'अधीगर्थ' इति सूत्रे 'कर्मादीनामविवक्षा शेषः' इति भाष्ये अधिकरणघटिते-ऽस्मिन् सूत्रे शेषपदासंबन्धे 'कर्मादीनामविवक्षा शेषः' इति बहुवचनासङ्गतिः । एतद्व्यतिरिक्ते कर्मकरणयोर्द्वयोरेवोपलम्भात् ।

वस्तुतस्तु 'कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद् वचनम्' इति वार्तिकप्रत्या-ख्यानाय 'शेषे' इति वर्तते इति भाष्यकृतोक्ते परेण 'शेषश्च कः' इति पृष्टे शेषे षष्ठी इति सूत्रोक्तं 'कर्मादीनामविवक्षा शेषः' इति सिद्धान्तिना स्मारितम् । नैतावता 'कृत्वोऽर्थ' इत्यत्र तत्संबन्धो लभ्यते ।

किञ्चैतद्भाष्यबलात् 'दिवः' इति सूत्रेऽपि शेषपदसम्बन्ध आवश्यकः । अन्यथा वार्तिकरीत्या 'शतस्य दीव्यते' इति भावे इष्टस्य प्रयोगस्यासिद्धिः । अत एव वार्तिकव्याख्यायाम् 'अधीगर्थादयः प्रेष्यब्रुवपर्यन्ताः कर्माश्रयपदेनोच्यन्ते' इति कैयटः । एवञ्च 'शेषे' इत्यनुवृत्त्या वार्तिकप्रत्याख्या-नवत् 'विभाषोपसर्गे' 'द्वितीया ब्राह्मणे' इति सूत्रद्वयप्रत्याख्याने भाष्यतात्पर्यम् । 'द्वितीया ब्राह्मणे' इति सूत्रस्थभाष्यन्तु वार्तिकरीत्यैवेत्याहुः ।

किञ्च यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति—'स्मराम्यहं मातरम्' इति भाष्ये उक्तम् । त्वद्रीत्या तु यदा कर्मादि विवक्षितं भवतीति वदेत् । एवञ्च 'ज्ञोऽविदर्थस्य' इत्यत्रापि तदसंबन्ध एव । एवञ्च तद्योगे न कदापि तृतीया । 'शतं दीव्यति' इत्यादि च सिद्ध्यति । 'अधीगर्थ' इत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु ।

**कर्तृकर्मणोः** कृति इति । अत्र शेषे इति न संबद्ध्यते, सूत्रवैयर्थ्यापत्तेः । 'कृद्योगा षष्ठी समस्यते' इति वार्तिकेन तत्र समासस्येष्टत्वात् । अत्र कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते । तेन क्रिया( फल ) विशेषणानां कर्मत्वेऽपि न ततः षष्ठी । अत्र 'कर्तरि च कृति' इति न्यस्य चकारेण सन्निहितकर्मणीत्यस्यानुकर्षणसंभवेन कर्मग्रहणं व्यर्थमिति चेन्न, सन्निहिताधिकरण-स्याप्यनुकर्षणापत्तेः ।

कर्तृकर्मणोः किम्—'शस्त्रेण भेत्ता' । सूत्रोदाहरणमाह—**कृष्णस्य कृतिरिति** । करणं कृतिः । स्त्रियां क्तिन् । उत्पत्त्यनुकूलो व्यापारः कृञर्थः । तादृशव्यापारस्य जनकः कृष्णः कर्ता । तद्-वाचकात् षष्ठी **कृष्णस्येति** । कर्मण्युदाहरणमाह-**जगतः कर्ता कृष्ण इति** तृच्प्रत्ययेन कृष्णरूपकर्तुर-भिधानेन कर्तुरुक्तत्वात् कृष्णात् प्रथमैव । कृञ्धात्वर्थव्यापारजन्योत्पत्तिरूपफलाश्रयत्वेन जगतः कर्मत्वात् तद्वाचकात् षष्ठी **जगत** इति । कृञ्धातोर्यत्नवाचकत्वं नास्ति । स्पष्टं वै० भूषणे ।

द्विकर्मकधातुयोगेऽप्रधानकर्मसंज्ञकात् विकल्पेन षष्ठी । पक्षे द्वितीया तदाह—**गुणकर्मणि वेष्यते** इति । उदाहरणमाह-**नेताऽश्वस्य स्रुघ्नस्य स्रुघ्नं वा** । अत्र अश्वस्य प्रधानकर्मत्वम्, 'कर्तुरी-प्सिततमं कर्म' इति । अकथितञ्चेति कर्मत्वं स्रुघ्नस्येति अप्रधानकर्मत्वं तस्य । ननु 'स्तोकं पाचकः' इत्यादौ क्रियाविशेषणेन समानाधिकरणसमासः, सुप्सुपेति वा समासः कुतो नेति चेन्न, सुबन्तार्थ-

कृति किम्-तद्धिते मा भूत्, कृतपूर्वी कटम्[।]

---

विशेषणेनानन्वयात् । 'द्वितीयाश्रित' इत्यत्र तु द्वितीयाविभक्तिप्रकृत्यर्थस्य कृत्प्रत्ययकार्यविशेषणी-भूतधात्वर्थक्रियान्वयेऽपि अवयवद्वारा सामर्थ्यमादाय समासो भवत्येव ।

क्रियाविशेषणस्तोकदारुणादिभ्यो न षष्ठी 'कर्तृकर्मणोः' इति । नापि समासः । अत एव 'दारुणम् अध्यापकः' इत्यत्र 'दारुणाध्यापकः' इति सिद्धयर्थं 'मलोपवचनम्' इति वार्तिकमारब्धम् । अन्यथा 'कर्तृकर्मणोः' इति षष्ठया 'तृजकाभ्यां कर्तरि' इति निषेधसामर्थ्यादवयवद्वारा सामर्थ्येऽपि प्रवृत्त्या, तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यात् ।

न च समासस्य वैकल्पिकत्वेन तदभावे वाक्ये मलोपपूर्वकदारुणाध्यापकरूपसिद्धयर्थं मलोपवचनमिति वाच्यम्, तथा सति 'वाक्ये मलोपश्च वक्तव्यः' इति वदेत् ।

अत एव कैयटेन 'क्रियाविशेषणदारुणादयस्तत्र वैयधिकरण्यात्समासाभावात् मलोपो विधीयते' इत्युक्तम् । 'सुबामन्त्रिते' इत्यतः सुबिति अनुवर्तमाने 'सुपा' इति समासस्तु न सार्वत्रिकः । किन्तु अगतिकगतिस्थले एव शिष्टप्रयोगानुरोधेन विधानात् नात्र तत्समासप्रसक्तिः ।

यद्यपि 'विस्पष्टं पटुः' इत्यर्थके 'विस्पष्टपटुः' इत्यत्र विस्पष्टं 'पटुत्वं तदाश्रयः पटुः' इत्यत्र विस्पष्टपदार्थस्याश्रयार्थे विशेषणतया भासमाने पटुत्वेऽन्वयेऽपि 'सुपा' इति समासो भाष्ये बोधितस्तथा न प्रकृते । तत्र भाष्यप्रामाण्यात् तथा स्वीकारेऽपि अत्र तथा स्वीकारे प्रमाणाभावात् ।

कृति किमिति प्रश्नकर्तुरयमाशयः—कर्तृसंज्ञा च धात्वर्थव्यापाराश्रयस्य, कर्मसंज्ञा च धात्वर्थ-व्यापारजन्यफलाश्रयस्य भवति इति पीनत्वस्यान्यथाऽनुपपत्त्या रात्रिभोजनमर्थापत्त्या यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्राक्षिप्यते तथैव प्रकृते कर्तृकर्मभ्यां क्रिया सन्निधाप्यते=आक्षिप्यते । क्रियावाची धातुरेव ।

अयं भावः । 'कारकनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नरूप-कार्यंप्रति, धातुजन्यसाध्यत्वविशिष्टभावनात्वावच्छिन्नोपस्थितिः कारणम्' इति कारकान्वययोग्यताव-च्छेदकरूपेण साध्यत्वेन धातुभिरेव तदुपस्थितेः । 'शत्योऽश्वः' 'आश्विकः' इत्यादौ न तेन रूपेणो-पस्थितिरिति न तत्र कारकाणामन्वयः, एतद्भाष्यप्रामाण्यात् । अत एव हिरुगादियोगे न कर्मादि-संज्ञा । तेन 'देवदत्तेन शत्योऽश्वः' इत्यादौ षष्ठीनिवृत्त्यर्थमपि न कृद्ग्रहणम् । 'अधिका खारी द्रोणेन' इत्यत्र हेतौ तृतीया, तत्र जनकत्वरूपहेतुत्वसत्त्वात् ।

धातोश्च द्वये प्रत्ययास्तिङः कृतश्च । तत्र तिङ्योगे ( तिङन्तयोगे ) 'न लोकेति' निषेधात् कृदन्ततदादियोगे एव कर्तृवाचकात्, कर्मवाचकात् षष्ठी भविष्यति किं कृद्ग्रहणेन । नन्वत्र कृद्ग्र-हणाभावे उत्तरत्र तत्सम्बन्धाभावेन 'न लोक' इति सूत्रे 'कृदव्ययस्यैव ग्रहणम्' इति कथं लभ्येत ? अत्रोच्यते, 'अव्ययार्थस्य ये कर्तृकर्मणी' इति व्याख्यानेन तत्सिद्धेः । ननु कृद्ग्रहणाभावे तस्यो-त्तरत्रानुवृत्त्यभावेन 'उभयप्राप्तौ' इत्यत्रान्यपदार्थे जायमानो बहुव्रीहिरिति तत्रान्यपदार्थज्ञानाभावः । कृद्ग्रहणसत्त्वे तु कृदन्ततदादिरूपान्यपदार्थस्य सुस्पष्टतयाऽवगम इति चेन्न, 'एकाचो द्वे' इत्यत्रेव अशब्दस्यापि अन्यपदार्थस्य यत्रावगमस्तत्रापि इति व्याख्यानाद् भविष्यति । न च 'भेदिका देव-दत्तस्य काष्ठानाम्' इत्यादौ गुणभूते णिच्प्रत्ययार्थकर्तरि षष्ठयर्थं कृत्पदं यौगिकमिति करोतीति कृत् इति कर्तृपरमिति वाच्यम्, तृतीयावत् तत्र षष्ठया अपि विनैव यत्नं सिद्धेः ।

विस्तरेण प्रश्नकर्तुराशयं प्रदर्श्य कृद्ग्रहणस्य प्रयोजनं प्रदर्शयति—

कृति किमिति, तद्धिते मा भूदिति । अयमाशयः—'तद्धितान्ततदादिपर्याप्तानुभाविकशक्ति-ग्रहमात्रप्रयोज्यशाब्दबोधविषयक्रियायाः कर्तरि कर्मणि च मा भूदित्यर्थः' । कृद्ग्रहणेन कृदन्तपर्या-प्तानुभाविकशक्तिग्रहप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्तृकर्मणोः षष्ठी इति सूत्रार्थः । कृतपूर्वी

*उभयप्राप्तौ कर्मणि* । [ २-३-६६ ]

उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् ।

---

**कटम्** इति । कृतः कटः पूर्वमनेनेति विग्रहे उत्पत्त्यनुकूलव्यापारवाचककृधातोः सकर्मकत्वेन क्तस्य कटरूपकर्मणि विधानेन क्तप्रत्ययेनैवाभिहितं कर्मेति नात्र द्वितीया प्राप्नोति, अनभिहिताधिकारात्, नापि द्वितीया बाधिकाऽनेन षष्ठी प्राप्नोति, इहाप्यनभिहिताधिकारसत्त्वात् ।

किञ्च कृतः कः ? इति प्रश्ने सन्निधानात् कट इति, कृतपदार्थस्य कटपदार्थसापेक्षत्वेन 'सापेक्षमसमर्थवत्' इति एकार्थीभावरूपसामर्थ्याभावात् समासोऽत्र दुर्लभ इति, एवं 'सपूर्वाच्च' इति इनप्रत्ययोऽपि न प्राप्नोति इति **'कृतपूर्वी कटम्'** इति वाक्यमेव अशुद्धम् ।

अत्रोच्यते—**'पूर्वं कृतमनेन'** इति विग्रहं कृत्वा कटरूपकर्मणोऽविवक्षया अविवक्षितकर्मतया अकर्मत्वेन पूर्वं भावे क्तप्रत्ययो विधेयः ।

एवञ्च कृधात्वर्थक्रियामेवाभिधत्ते कृत्प्रत्ययः । इयान् विशेषः—धातुवाच्या क्रिया साध्या, प्रत्ययबोध्या क्रिया सिद्धा । एवञ्च प्रकृत्यर्थस्य प्रकारतया प्रत्ययार्थे स्ववाचकक्रियावत्त्वसम्बन्धेनान्वयः । साध्यत्वरूपोपाधिविशिष्टा धात्वर्थक्रिया सिद्धत्वोपलक्षितक्रिया इति न **'घटो घटः'** इतिवत् शाब्दबोधानुपपत्तिरिति **पञ्चोलिनः** ।

एवञ्च कृतपदार्थस्य सापेक्षत्वाभावेन समासतद्धितौ भवतः । तथा च कृतपूर्वी इत्ययं 'पूर्वं कृतवान्' इति समासार्थः सम्पद्यते, गुणभूतयाऽपि ( विशेषणभूतयाऽपि ) क्रियया कारकाणां सम्बन्धस्य 'कटं कृतवान्' इत्यादौ दर्शनात् । अत्रापि करोतिक्रियापेक्षं कर्मत्वं कटस्य । तच्च कर्मत्वं न केनाऽप्यभिहितम्, भावे क्तस्य, कर्तरि इनिप्रत्ययस्य च विधानात् । एवञ्च प्रत्युदाहरणे सकर्मकप्रकृतिकभावक्तान्तस्येदृग्वृत्तिमात्रविषयताया भाष्यसम्मतत्वेन तस्य केवलस्य काप्यप्रयोगेण तद्धितान्ततदादिसमुदायशक्त्यैव क्रियोपस्थापकत्वेन तद्योगे कटशब्दान्नानेन षष्ठी, किन्तु कर्मणि द्वितीयैव । पूर्वं कर्मणोऽविवक्षा समासतद्धितानन्तरं कर्मणः कटस्य विवक्षा । अत्र भाष्यमेव मानम् ।

'तण्डुलानां पाचकतरः' इत्यादौ तु तरब्रहितस्य पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्ततदादिपर्याप्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी । अत एव मूले **'तद्धिते मा भूत्'** इत्येवोक्तम्, न तु तद्धिताधिक्येऽपीति । भाष्येऽपि 'तद्धितस्य ( तद्धितान्ततदाद्युपस्थाप्यक्रियायाः ) ये कर्तृकर्मणी तत्र मा भूत्, कृतो ये कर्तृकर्मणी तत्रैव यथा स्यादित्येव' उक्तम् 'एवमधीती व्याकरणे' इत्यत्रापि बोध्यम् । तदुक्तं भाष्ये-यदा वाक्यं न तदा प्रत्ययः ( भावे ) यदा प्रत्ययः सामान्येन ( भावे ) तदा वृत्तिः । अनेन भाष्येण भावक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमुक्तम् ।

**इयमेव कर्मणोऽविवक्षा नाम** । न च 'नपुंसके भावे क्तः' इति भावे क्तप्रत्ययेन कृत इत्यस्य सिद्धिः, तत्र **अकर्मकेभ्यः** इत्यनुवृत्तिसत्त्वात् । अकर्मकानुवृत्तौ चेदं भाष्यमेव मानम् । **वायेरामोदमुत्तमम्** इत्यत्र उत्तमम् आमोदं गृहीत्वा इत्याहृत्य तत्र द्वितीया, न षष्ठी । **'तदर्हम्'** इति निर्देशादस्य सूत्रस्य अनित्यत्वमिति मनोरमोक्तिस्तु चिन्त्या, अनित्यत्वमन्तराऽपि पूर्वोक्तप्रयोगस्य सिद्धेः । कृतपूर्वी इत्यत्र 'सुपा' इति समासो बोध्यः ।

**उभयप्राप्तौ कर्मणि** इति । पूर्वसूत्रात् 'कृति' इत्यनुवर्तते, तेन बहुव्रीहौ अन्यपदार्थलाभः—उभयोः = कर्तृकर्मणोः प्राप्तिर्यस्मिन् कृति = कृदन्ततदादौ इति । पूर्वेण सिद्धे नियमार्थमिदम् । **कर्मण्येव षष्ठी** न कर्तरि इति फलति । अत्र प्राप्तिग्रहणसामर्थ्यात् यद्वाक्ये कर्तृवाचकं कर्मवाचकञ्च कारकं युगपत्प्रयुज्यते तत्रैवायं नियमः प्रवर्तते । यत्र वाक्ये केवलस्य कर्तुः प्रयोगस्तत्रेदं न प्रवर्तते । नियमफलन्तु कर्तरि षष्ठीप्रतिषेधरूपमेव । न तु कर्मणि षष्ठीविधानरूपम्, तत्र तु पूर्वेण सूत्रेणैव

आश्चर्यो गवां दोहोऽगोपेन । 'स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः' । भेदिका बिभित्सा वा रुद्रस्य जगतः । 'शेषे विभाषा' । स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येण आचार्यस्य वा ।

---

षष्ठी विधानात् । अन्यनिवृत्तिफलिका हि परिसंख्या व्याकरणशास्त्रे नियमपदेन सर्वत्र परिसंख्याया एव ग्रहणम् । न तु 'नियमः पाक्षिके सति' इत्यस्य । उक्तञ्च—

'विधिरत्यन्तमप्राप्तौ, नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥' इति ।

नियामकशास्त्राणां विधिमुखेन प्रवृत्तिरित्येकः पक्षः । निषेधमुखेन प्रवृत्तिरित्यपरपक्षः । विधिमुखेन प्रवृत्तिपक्षे नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकञ्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचं कृत्वा नियामकशास्त्रेण कार्यविधानम् । निषेधमुखेन प्रवृत्तिरिति द्वितीयपक्षे नियामकशास्त्रीयोद्देश्यताप्रयोजकपदस्य स्वार्थभिन्नं यन्नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यनियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपावच्छिन्नम्, तत्र लक्षणां कृत्वा नञोऽध्याहारेण नियामकशास्त्रेण प्राप्तकार्य्यस्य निषेधः । विस्तरस्तु पूज्यगुरुवरश्रीसभापतिशर्मोपाध्यायविरचितसशब्दरत्नमनोरमाविरचितप्रभायाम् 'अट्कुप्वाङ्' सूत्रे द्रष्टव्यः । पृ० सं० ७८ ।

आश्चर्यो गवां दोहोऽगोपेन इति । आ इति चर्यते=अभिनीयते इति 'आश्चर्यमनित्ये' ( पा० सू० ६।१।१४७ ) इति साधु । अद्भुतस्य चत्वारि नामानि—

'विस्मयोऽद्भुतमाश्चर्यं चित्रमपि' इत्यमरः ।

अन्तःस्थितद्रवद्द्रव्यविभागानुकूलव्यापारार्थकदुहधातोर्घञि दोह इति । द्रवद्द्रव्यमत्र पयोरूपम् । गोपशब्दश्च गां पाति रक्षति इति कप्रत्ययान्तो गोपालके योगरूढः । एवञ्च कर्तृवाचकात् अगोपशब्दात् कर्मवाचकाच्च गोशब्दात् 'कर्तृकर्मणोः' इति उभयत्र षष्ठी प्राप्ता नियमेनानेन व्यावर्त्यते । एवञ्च कर्तरि तृतीया—अगोपेनेति । गोशब्दाच्च षष्ठी गवामिति । एवञ्च गोपत्वावच्छिन्नप्रतियोगिताकाभाववद्( एकत्वत्वावच्छिन्न )पुंस्त्वत्वावच्छिन्नकर्तृनिष्ठव्यापारनिष्ठजनकतानिरूपितजन्यतावद् द्रवद्द्रव्यरूपफलाश्रयाश्रयत्वं गवामिति तेषां कर्मत्वम् ।

स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः इति । 'स्त्रियां क्तिन्' इत्यधिकारे विहितयोरकाकारयोः प्रयोगे कर्मण्येव षष्ठी, न तु कर्तरीति यो नियम उक्तः स न प्रवर्तते, किन्तु कर्तर्यपि षष्ठी प्रवर्तते । 'सुटा यासुटो बाधा न' इत्यत्र तु कर्तुः करणत्वेन विवक्षायां तृतीया । भेदिका—भेदनं भेदिका, 'पर्य्यायार्हर्णोत्पत्तिषु' इति ण्वुच् । युवोरनाकौ, स्त्रियां टापि प्रत्ययस्थादिति इकारः । बिभित्सा इति भेत्तुमिच्छतीति बिभित्सति, बिभित्सतीति बिभित्सा । भेत्तुमिच्छेत्यर्थः । भिदेः सनि 'हलन्ताच्च' इति कित्त्वे गुणाभावे द्वित्वादिकार्य्ये 'अ प्रत्ययात्' इत्यप्रत्यये टापि तत्सिद्धिः । रुद्रकर्तृकजगत्कर्मकभेत्तुमिच्छा इत्यर्थकवाक्ये—'कर्तृकर्मणोः' इति उभयत्र षष्ठी, न नियमस्य 'उभयप्राप्तौ कर्मणि' इत्यस्य प्रवृत्तिस्तदाह—भेदिका बिभित्सा वा रुद्रस्य जगत इति । शेषे विभाषा इति । अका, अकाराभ्याम् अन्यस्मिन् क्तिनादावित्यर्थः । कर्तरि षष्ठीनिषेधफलकस्य 'उभयप्राप्तौ' इति सूत्रस्य तत्रैव कर्तरि षष्ठीसम्पादकफलकस्य 'स्त्रीप्रत्यययोः' इति वचनस्य च प्राक्स्थितत्वात् कर्तर्येव विभाषाऽनेन शेषवचनेन क्रियते न तु कर्मणीत्याशयेनोदाहरति—विचित्रा जगतः कृतिर्हरेर्हरिणा वा । स्त्रीप्रत्ययान्तयोगे एवेदं प्रवर्तते इति कस्यचिन्मतम् । अकाकारभिन्ने कृन्मात्रे इदं प्रवर्तते इत्यपरं मतम् । संकोचे मानाभावादित्यर्थः । शब्दानामनुशासनमाचार्येण आचार्य्यस्य वा । अत्र विकल्पेन कर्तृवाचकात् षष्ठी । असाधुभ्यो विविच्य पृथक् क्रियन्ते साधवः शब्दाः ।

*क्तस्य च वर्तमाने* । [ २-३-६७ ]

वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । 'न लोक-' इति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा ।

*अधिकरणवाचिनश्च* । [ २-३-६८ ]

क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा ।

*न लोकाव्ययनिष्ठाखलर्थतृनाम्* । [ २-३-६९ ]

एषां प्रयोगे षष्ठी न स्यात् । लादेशाः—कुर्वन् कुर्वाणो वा सृष्टिं हरिः । उ—हरिं दिदृक्षुः—अलङ्करिष्णुर्वा । उक—दैत्यान्घातुको हरिः । कमेरनिषेधः' । लक्ष्म्याः कामुको

---

तेषामुच्चारणे पुण्यम् । साधुत्वञ्च पुण्यजनकताऽवच्छेदकधर्मवत्त्वम् । साधुशब्दप्रयोक्तरि पुरुषे तदीयात्मनि अन्तःकरणे वा समवायेन पुण्यमुदेति । व्याकरणशास्त्रनियमपूर्वकशब्दव्युत्पादनं येन आचार्येण अनुशिष्यते इति करणे ल्युट् । तृतीया सप्तमी चात्र विकल्पेन ।

**क्तस्य च वर्तमाने** इति । वर्तमानकालार्थको यः क्तप्रत्ययस्तदन्ततदादियोगे षष्ठी । न लोके ति निषेधापवादः । मत इति 'मनु अवबोधने' 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'अनुदात्तोपदेश' इति नलोपः । 'पूजितो यः सुरासुरैः' इत्यत्र न वर्तमाने क्तः, किन्तु भूते क्तप्रत्ययः । भूतार्थकक्तस्य तु 'मतिबुद्धि' इति सूत्रं न बाधकम्, 'तेन' इत्यधिकारे 'उपज्ञाते' इति लिङ्गेना-बाधज्ञापनात् ।

**अधिकरणवाचिनश्च** इति । अयमपि निषेधापवादः । 'क्तोऽधिकरणे च' इति आस्यतेऽनेनेति आसितम् । इदम् एषामिति । अनन्तरस्येति न्यायेनोभयप्राप्तौ इति नियमस्तु 'कर्तृकर्मणोः कृति' इत्यस्यैव न त्वस्य ।

**न लोकाव्ययनिष्ठाखलर्थतृनाम्** इति । षष्ठीनिषेधकमिदं वचनम् । लश्च उश्च उकश्च अव्ययञ्च निष्ठा च खलर्थाश्च तृन् च तेषाम् । लडादिलकाराणां सामान्येन लपदेन ग्रहणं बोध्यम् । तेषां लकाराणां साक्षात् प्रयोगो न सम्भवति इति लपदं लादेशपरम्, तात्पर्यानुपपत्त्या लक्षणा । अथवा लादेशे लत्वस्य शक्यतावच्छेदकधर्मस्यारोपो बोध्यः । अनारोपितं लत्वं लकारे तच्चादेशे आरोप्यत इति भावः । लादेशौ = शतृशानचौ । सनाशंसभिक्ष उः । केवलस्योकारप्रत्ययस्याभावेन कृद्विशेष्यकतदन्तविधिना उकारान्तं शब्दस्वरूपं गृह्यते । तेन 'अलंकृञ्' इति विहितेष्णुच्प्रत्ययस्यापि ग्रहणं भवति । अव्ययसंज्ञाप्रयोजककृदन्ततदादिशब्दस्याव्ययपदेन ग्रहणम् । निष्ठासंज्ञा 'क्तक्तवतू निष्ठा' इति विधीयते, तथा च केवलयोस्तयोरभावेन तदन्ततदाद्योर्ग्रहणं विधेयम् । 'ईषद्दुःसु' इति विहितखल्प्रत्ययान्ततदादेः, खलर्थसमानार्थकप्रत्ययान्ततदादेश्च ग्रहणम् ।

तृन्पदेन प्रत्याहारस्य ग्रहणम् । शतृप्रत्ययघटकतृशब्दमारभ्य 'तृन्' इति सूत्रघटकनका-रान्तस्य ग्रहणम् । तेन शतृशब्दमारभ्य मध्यपतितसूत्रविहितप्रत्ययानां ग्रहणं बोध्यम् । 'तृन्' इति सूत्रानन्तरपठितप्रत्ययस्य न ग्रहणम् । नापि शतृपूर्ववर्तिप्रत्ययानाम् । कुर्वन् इति शतृप्रत्ययान्तम् । 'लटः शतृशानचौ' इति लकारस्थानिकोऽयमादेशः, प्रत्ययग्रहणपरिभाषया तदन्ततदादेर्ग्रहणम् । कुर्वाण इति शानच्प्रत्ययान्ततदादिशब्दस्वरूपमेतत् ।

**सृष्टिं हरिरिति** । अत्र न षष्ठी, किन्तु द्वितीयैव । हरिं दिदृक्षुः इति द्रष्टुमिच्छतीति दिदृक्षते, दिदृक्षते इति 'दिदृक्षुः' 'सनाशंसभिक्ष उः' इति उप्रत्ययान्ततदादिकृदन्तस्य ग्रहणम् । नात्र हरि-शब्दात्षष्ठी किन्तु द्वितीया एव । हरिम् अलङ्करिष्णुः, इष्णुच्प्रत्ययस्यापि उकारान्ततदादिशब्देन ग्रहणात् हरिशब्दात् न षष्ठी । दैत्यान् घातुको हरिः इति । 'लषपत' इत्यादिना उकञ् । लक्ष्म्याः

हरिः। अव्ययम्-जगत्सृष्ट्वा। सुखं कर्तुम्। निष्ठा-विष्णुना हता दैत्याः। दैत्यान्हतवान्विष्णुः। खलर्थाः—ईषत्करः प्रपञ्चो हरिणा। तृन् इति प्रत्याहारः 'शतृशानचौ' इति तृशब्दादारभ्य आतृनो नकारात्। शानन्-सोमं पवमानः। चानश्—आत्मानं मण्डयमानः। शतृ—वेदमधीयन्। तृन्-कर्ता लोकान्।

'द्विषः शतुर्वा'। मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।

*अकेनोर्भविष्यदाधमर्ण्ययोः।* [ २-६-७० ]

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजं गामी। शतं दायी।

*कृत्यानां कर्तरि वा।* [ २-३-७१ ]

षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्तरि इति किम्—गेयो माणवकः साम्नाम्। 'भव्यगेय—' इति कर्तरि तद्विधानादनभिहितं कर्म। अत्र योगो विभज्यते-कृत्यानाम्।

---

कामुको हरिरित्यत्र कर्मेरनिषेधः षष्ठीनिषेधनिषेधकम्। तेन षष्ठी भवति, अभावाभावस्य प्रतियोगिरूपत्वात्। जगत् सृष्ट्वा इति क्त्वाप्रत्ययान्तत्वेन अव्ययसंज्ञकम्। अव्ययकृते भावे इति भावे त्वाप्रत्ययः। कर्तुमिति 'तुमुन् ण्वुलौ' इति भावे तुमुन् तदन्तमव्ययम् 'कृन्मेजन्त' इति। हता इति भूते कर्मणि क्तः, धातोर्नकारलोपश्च। कर्तुरनुक्तत्वेन तृतीया। हतवान् भूते कर्तरि क्तवतुप्रत्ययः। ईषत्करः इति 'ईषद्दुस्सुषु' इति खल्प्रत्ययः। पवमान इति। 'पूङ्यजोः शानन्'। मण्डयमानः इति चानश्। मांड भूषायाम्, इदित्वान्नुम्। 'ताच्छील्यवयोवचन' इति चानश्। अधीयन् 'इङ्धार्योः' इति शता। कर्ता इति 'तृन्' ताच्छील्यादिषु विहितः। शतृप्रत्ययान्तद्विषो वा षष्ठीनिषेधः—मुरस्य मुरं वा। सन्निहितकारकषष्ठीनिषेधकत्वेन षष्ठी तु स्यादेव। शेखरकारस्तु 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' इति वार्तिककारककषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते' इति स्वीकुर्वन्ति।

अकेनोर्भविष्यदाधमर्ण्ययोः इति। 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति आधमर्ण्ये अकस्यासम्भवात् वृत्तौ—भविष्यत्यकस्येत्युक्तम्। इनस्तूभयोः सम्भवात् भविष्यदाधमर्ण्यार्थेनश्च योगे न षष्ठी। सतां पालक इति न, किन्तु सतः पालक इति। सत् इति शतृप्रत्ययान्तम् असधातोरकारलोपश्च। सज्जनकर्मकपालनकर्तृकमवतरणं वर्तमानकालिकम्। पालक इति ण्वुलप्रत्ययान्तम्। 'भविष्यति गम्यादयः' इत्यधिकारे विहितः 'तुमुन्ण्वुलौ' इति ण्वुल् गृह्यते। ओदनस्य पाचक इति कालसामान्ये विहिते ण्वुलन्ततदादियोगे न निषेधः। व्रजं गामीति 'आवश्यकाधमर्ण्ययोर्णिनिः' इति आवश्यके णिनिप्रत्ययः। दायी इति आधमर्ण्ये णिनिः। 'अवश्यं कारी कटस्य' इत्यत्र न निषेधः, गम्यादित्वाभावेन वर्तमाने णिनिः।

'कर्तृकर्मणोः कृति' इति नित्ये प्राप्ते विभाषा षष्ठीविधायकं सूत्रमाह—कृत्यानां कर्तरि वा इति। सेव्य इति। 'षेवृ सेवायाम्' ऋहलोर्ण्यत्। षष्ठी पक्षे तृतीया—मम मया इति मूले पूर्वं 'मया' इत्युक्तं तत्तु न युक्तम्, पूर्वं षष्ठ्यन्तमुचितम्, तदभावपक्षे तृतीयान्तं वक्तुं युक्तम्। कर्तरि इति किम्—ननु यत्प्रत्ययस्य कर्मणि विधानेन यता कर्मण उक्तत्वात् अनभिहितकर्माभावेन कर्तृवाचकादेव विकल्पेन षष्ठी स्यादेव पुनः सूत्रे कर्तरि इति व्यर्थमिति प्रश्नकर्तुराशयः।

समाधत्ते-गेय इत्यत्र 'भव्यगेय' इति कर्तरि यद्विधानेनानभिहितं कर्म। तथा च कर्मवाचकसामन्शब्दात् कर्तृग्रहणाभावे विकल्पेन षष्ठी मा भूत्, किन्तु नित्यषष्ठ्यर्थं तस्यावश्यकत्वमिति दिक्। भाष्यकारसम्मतयोगमाह-कृत्यानाम् इति। उभयप्राप्तौ नेति चानुवर्तते कर्मण्येवेति नियमेन

'उभयप्राप्तौ' इति 'न' इति चानुवर्तते। तेन नेतव्या व्रजं गावः कृष्णेन। ततः कर्तरि वा। उक्तोऽर्थः।

*तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्।* [ २-३-७२ ]

तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्–तुला उपमा वा कृष्णस्य नास्ति।

*चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः।* [ २-३-७३ ]

एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी आशिषि। आयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं वा भूयात्। आशिषि किम्–देवदत्तस्यायुष्यमस्ति। व्याख्यानात्सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः।

*आधारोऽधिकरणम्।* [ १-४-४५ ]

**कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात्।**

---

कर्तृवाचकात् निषेधस्तु सिद्ध एव, किन्तु कर्मवाचकात् प्राप्तषष्ठीनिषेधकमिदम्। ततः **कर्तरि वा** उक्तोऽर्थः।

शेषषष्ठ्यां प्राप्तायां विकल्पेन तृतीयाविधानार्थमाह—**तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्** इति।

**तुल्यार्थैरिति**—तुल्यत्वार्थैरित्यर्थः। अत एव अतुलोपमाभ्यामिति चरितार्थम्। अत एव पर्युदासादनव्यययोगे एवेदं, तेन इवशब्दयोगे न। तुल्य इति तुलया संमितस्तुल्य इति '**नौवयोधर्म**' इति यत्प्रत्ययः। तोलनम् = तुला। उपमितिः=उपमा।

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः** इति। विकल्पेन चतुर्थीविधायकं पक्षे षष्ठी आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात् तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः। अत एवैतदर्थकचतुर्थ्यन्तेन सुखहितादिभिर्न समासः, उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्। अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकं भाष्योक्तं सङ्गच्छते। सूत्रे अर्थशब्दः **प्रत्येकं** निमित्तम्। भाष्ये तु नैतद् दृश्यते। शुभाशंसनम् = आशीः। भद्रमद्रशब्दौ तुल्यार्थौ। **एवमेक** एव पठनीयः। द्वयोरुपादानं व्यर्थमिति भावः। **इति षष्ठी**॥

**अथ सप्तमी। आधारोऽधिकरणमिति** आङ्पूर्वकधृधातोरधिकरणे घञ् 'अध्यायन्याय' **इति सूत्रे** 'अवहाराधार' इत्युपसंख्यानात्। आधीयतेऽस्मिन्नित्याधारः। आधारः = आश्रयः। **किन्निष्ठाधेयतानिरूपिताधारतावान् इति नियमेनाकाङ्क्षोदयात् साक्षात् क्रियाधारत्वं न सम्भवतीति** कर्तृकर्मान्यतरवृत्तिक्रियाधारत्वं लभ्यते। साक्षात् फलाधारस्य नाधिकरणसंज्ञा, **कर्मसंज्ञया** परया बाधात्।

नापि साक्षात् व्यापाराश्रयस्याधिकरणसंज्ञा, परया कर्तृसंज्ञया बाधात्। **एवञ्चान्यकारकव्यवहिताच्च** साक्षात्क्रियाश्रयत्वं नाधिकरणकारकस्य। किन्तु स्वाश्रयाश्रयत्व–स्वनिष्ठसमवेतत्वैतदन्यतरसम्बन्धेन। 'कटे आस्ते चैत्रः' स्वम्=कट इति तदाश्रयः चैत्रः तद्वृत्तिः स्थितिक्रिया। 'स्थाल्यां पचति तण्डुलान्'। स्वम् = स्थाली तन्निष्ठास्तण्डुलास्तद्वृत्तिः विक्लित्तिः। तथा चेत्थं फलति साक्षात् क्रियाधाराधारयोरधिकरणसंज्ञा भवति। एवं मूले उक्तम्–**कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।**

एवञ्च सप्तम्या आश्रयोऽर्थः, शक्यतावच्छेदकमाश्रयत्वम्। क्रिया च कटे तण्डुलेषु **केन सम्बन्धेनेति** इति चेदुच्यते—स्वाश्रयाश्रयत्वसम्बन्धेन। स्वम्=क्रिया तदाश्रयश्चैत्रस्तदाश्रयः कटः।

*सप्तम्यधिकरणे च* । [ २–३–३६ ]

अधिकरणे सप्तमी स्याद् । चकाराद् दूरान्तिकार्थेभ्यः । **औपश्लेषिको**

---

एवं स्वम्=क्रिया ( विक्लित्तिरूपा ) तदाश्रयास्तण्डुलास्तदाश्रयत्वं स्थाल्याम् इति । उक्तञ्च वाक्यपदीये —'कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् ।

उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति ।' कर्तृकर्मद्वारा क्रियाधारभूतां स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन सहायकं व्याकरणशास्त्रे अधिकरणं हर्यादिभिः कथितम् ।

ननु कालस्य साक्षात् क्रियाधारत्वेनाधिकरणसंज्ञा न स्यात् तथा च 'समये चैत्रस्तण्डुलान् पचति' इति न स्यादिति चेन्न, सूत्रे स्वरितत्वप्रतिज्ञया कालस्यापि परम्परया क्रियाश्रयत्वात् । साक्षात् क्रियाधारत्वविवक्षायान्तु 'कालः पचति' इत्येव, 'भूतानि कालः पचतीति वार्ता' इतिवत् । **'का वार्ता च किमाश्चर्यं कः पन्थाः कश्च मोदते । इति मे चतुरः प्रश्नान् पूरयित्वा जलं पिब ॥'**

इति प्रश्नसमाधाने—'अस्मिन् महामोहमये कटाहे' इत्यारभ्य 'भूतानि कालः पचतीति वार्ता' इति । विस्तरभयेन सर्वमत्र महाभारतीयं वृत्तं न विलिख्यते ।

कैयटदीक्षितादिप्राचीनमते अधिकरणकारकस्य परम्परासम्बन्धेन ( स्ववृत्तिवृत्तित्वादिसम्बन्धेन) साक्षात् क्रियायामन्वयः । नव्यमतेऽधिकरणकारकस्य साक्षात् कर्तृकर्मणोरेवान्वयः, तद्द्वारा क्रियायामन्वयः, न तु साक्षात् क्रियायामिति विशेषः । तथा च प्राचीनमते 'अक्षेषु शौण्डः' इत्यत्राक्षपदार्थस्य शौण्डेऽन्वयाभावात् समासो न स्यात् इति शौण्डपदस्य आसक्तशौण्डे लक्षणां कृत्वा आसक्तिक्रियारूपे लक्ष्यार्थे शौण्डपदार्थैकदेशे साक्षादन्वयमादाय समास उपपाद्यः । नवीनमते तु अक्षस्य शौण्डरूपे कर्तरि अन्वयः, शौण्डस्य च अस्त्यादिक्रियायामन्वय इति न दोषः । अत्र नव्यप्राचीनमतसमीक्षा गुरुपरम्परया समागता विस्तृतलेखसाध्या नात्र वितन्यते इति संक्षेपः ।

ईश्वरो रूपद्वयं धत्ते—आकाशरूपं कालरूपञ्च । तत्र सर्वभावात्मकपदार्थानाम् , अभावात्मकपदार्थानाञ्चाधारशक्तिमान् आकाशरूपपदार्थः । शक्तिशक्तिमतोरभेदाध्यवसायात् आकाशरूपं वस्तु सर्वाधारभूतम् । सिद्धसाध्यभेदेन द्विविधक्रियाधारत्वं काले । उक्तञ्च —

**'आधारशक्तिः प्रथमा सर्वसंयोगिमानयम् । इदमत्रेति भावानामभावानाञ्च कल्प्यते ॥**
**जन्यानां जनकः कालः सर्वेषामाश्रयो मतः ।' इति च ।**

विस्तरांशस्तु पूज्यगुरुवरश्रीसभापतिशर्मोपाध्यायविरचितवैयाकरणलघुमञ्जूषाया रत्नप्रभाव्याख्यातोऽवगन्तव्यः । अत्राधिकरण इति महासंज्ञया आधारलाभे आधारपदमाधारतमार्थमिति सर्वावयवव्याप्त्या हि यो मुख्याधारो न तु गौणाधारस्तस्य ग्रहणविषयिणी चर्चा न कार्य्या । करणसंज्ञायामभिहितम्—'अस्मिन् कारकाधिकारे शब्दसामर्थ्यगम्योऽर्थप्रकर्षो नाश्रीयते' । तेन गौणमुख्यसाधारणसर्वाधारस्यात्राधारपदेन ग्रहणम् ।

**सप्तम्यधिकरणे च** इति । **चशब्देन दूरान्तिकार्थेभ्यः पञ्चमी । आधारस्त्रिविधः—** एकः—औपश्लेषिकः । उप=समीपे श्लेषः सम्बन्धः । उपगतः श्लेष उपश्लेषः = संयोग इति यावत् । अत्र 'उप' इत्यविवक्षितम् । उपश्लेषात् आगतमौपश्लेषिकम् । तत आगत इत्यर्थे अध्यात्मादित्वाट्ठञ् । यद्यपि उपश्लेषादागतमधिकरणत्वं न तु अधिकरणम् , तथापि धर्मधर्मिणोरभेदमादायाधिकरणेऽपि तथात्वमिति पञ्चोलिनः ।

उपश्लेषः = संयोग इति मते 'वटे गावः शेरते' 'गुरौ वसति' इति संयोगाभावात् न स्यात् इति चेन्न, गोसंयुक्तदेशसंयोगस्य संयोगरूपतया तस्य च वटादौ सत्त्वेनादोषात् । समीपे श्लेष इति पक्षेऽपि सामीप्यस्य संयुक्तसंयोगरूपतया तदवच्छेदेन संयोगस्य सत्त्वात् गुर्वादावधिकरणत्वोपपत्तिः । 'इको यणचि' इत्यादावपि इङ्निरूपितकालिकसामीप्यावच्छेदेन संयोगस्यापि सत्त्वादौपश्लेषिकाधिकरणत्वम् । 'गुणसमुदायो द्रव्यम्' इति शब्दस्य गुणत्वपक्षे तु श्लेषपदेन

**वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छाऽस्ति। सर्वस्मिन्नात्माऽस्ति। वनस्य दूरे अन्तिके वा। 'दूरान्तिकार्थेभ्यः-' इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः। 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्'। अधीती व्याकरणे।**

---

सम्बन्धमात्रग्रहणात् स्वाव्यवहितोत्तरत्वसम्बन्धेनौपश्लेषिकाधिकरणत्वं बोध्यम्। स्वम् = इक्। एकदेशावच्छेदेन श्लेषेऽप्यौपश्लेषिकम्। तत्र श्लेषस्य समीपमुपश्लेषम् = आरोपितश्लेषः। तत आगतमौपश्लेषिकम्—एकदेशावच्छेदेन सम्बन्धस्यावयविनि आरोपः, यथा **कटे शेते** इति। अत्राव-यववृत्तिसंयोगस्य अवयविनि कटे आरोपः। तत्कृतं कटात्मकमौपश्लेषिकाधिकरणम्।

२—**वैषयिकमिति**। विषयात् = विषयत्वसम्बन्धादागतं वैषयिकम्। **औपश्लेषिकाभिव्या-**पकभिन्नाधिकरणमात्रं वैषयिकपदेन गृह्यते। अत एव तत्र तत्र घटकत्वं सप्तम्यर्थ इति उपपद्यते। **मोक्षे इच्छाऽस्ति** इत्युदाहरणमस्य। अयं भावः-**'ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्।'**

ज्ञानात् इच्छति, ततो यतते तदुत्तरं फलावाप्तिरिति क्रमः। चतुर्विधपुरुषार्थेषु मोक्षस्य परमपुरुषार्थत्वमभिहितं शिष्टैः। 'न स पुनरावर्तते' इति मोक्षस्य नित्यत्वम्। अत्र निर्विषयिका इच्छा **न भवति, सर्वा इच्छा** सविषया एव। एवञ्चात्र इच्छायां मोक्षो विषयतया भासते। तस्मात् अधि-**करणत्वेन सप्तमी।**

३—**अभिव्यापकश्च—**सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रय इत्यर्थः। अवच्छेदकत्वसम्ब-न्धावच्छिन्नाधेयतानिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकताशालित्वम् अभिव्यापकत्व-मिति **पञ्चोलिनः**। समन्वयप्रकारश्चेत्थम्—अवच्छेदकता यावदवयवनिष्ठा ग्राह्या यथा **तिलेषु तैलम्** इति, अत्र यावदवयवावच्छेदेन तिले तैलस्य सत्त्वात्। तैलनिष्ठाधेयता अवच्छेदकतासम्बन्धेन यावदवयवेषु, तत्रैव समवायसम्बन्धेन तिलस्यापि सत्ता, अवयवावयविनोः समवायनियमात्। तिलः समवायसम्बन्धावच्छिन्नव्यापकताशालीत्यभिव्यापकत्वं तस्मिन्। **मूले क्रमेणोदाहरणानि—१ कटे आस्ते ( चैत्रः ) स्थाल्यां ( तण्डुलान् ) पचति ( मैत्रः )** २—मोक्षे इच्छाऽस्ति ( मम मे वा ) ३—सर्वस्मिन् आत्मा अस्ति। चकारबोधितार्थस्योदाहरणम्—**वनस्य दूरे अन्तिके वा। 'दूरान्तिकार्थेभ्यः' इति विभक्तिक्रमेण चतस्रो विभक्तय** प्रातिपदिकार्थमात्रे इत्यर्थः।

**'क्तस्येन्विषयस्य कर्मणि उपसंख्यानम्'** इति।

इन् विषयो यस्य। इन् = इन्नन्तः। विषयः = प्रकृतिः। विषयः = वर्तनभूमिर्वा। **अधीती व्याकरणे** इति। अध्युपसर्गात् 'इङ् अध्ययने' इत्यतो भावे क्तप्रत्यये ततः 'इष्टादिभ्यश्च' इति कर्तरि **इनौ कृते** पश्चात् गुणभूतक्रियया ( अध्ययनक्रियया ) सम्बध्यमानं व्याकरणमनभिहितं **कर्म इति** तद्वाचकात् सप्तमी। **कृतपूर्वी कटम्** इतिवत् द्वितीया प्राप्ता तां बाधित्वाऽनेन सप्तमी। गुण-भूताऽपि क्रिया कारकविभक्त्युत्पत्तौ प्रयोजिका भवति। उक्तञ्च—

**अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता॥ इति।**

न विविच्य ग्रहो यस्याः सा अविग्रहा = विशेष्यतया पृथक् नावभासमाना अर्थात् प्रकारतया भासमाना, गुणीभूता इति यावत्। सा गुणभूताऽपि क्रिया 'ग्रामं गतः' इत्यत्र क्तार्थविशेषणीभूता गम्धातुवाच्या क्रिया कर्मसंज्ञायां प्रयोजिका। एवं कृतपूर्वी कटम् इत्यत्रापि गुणभूता कृधात्वर्थक्रिया कटस्य कर्मत्वप्रयोजिका तद्वत् अधीती व्याकरणे इत्यत्र इन्यर्थं प्रति गुणभूता अध्ययनक्रिया-प्रयोज्या कर्मसंज्ञाऽत्र व्याकरणात् प्राप्तेत्यर्थः।

**व्याकरणे** इति। व्याकृतिः = व्याकरणम्। प्रकृति-प्रत्ययविभागज्ञानम्, प्रकृत्यर्थ-प्रत्ययार्थ-ज्ञानम्। प्रकृत्यर्थप्रत्ययार्थसम्बन्धज्ञानम् = व्याकृतिः। तस्याः ज्ञानं येन भवति तत् व्याकरणम्। व्याक्रियन्ते निष्पाद्यन्ते शब्दा अनेनेति व्याकरणमिति वा। सिद्धानां नित्यानां शब्दानामन्वाख्यानं येन भवति तत् व्याकरणम्। 'सिद्धे शब्दार्थसम्बन्धे च' इत्यनेन शब्दार्थसम्बन्धानां नित्यत्वप्रतिपादनात्।

**अधीतमनेनेति** विग्रहे **'इष्टादिभ्यश्च'** इति कर्तरीनिः। **'साध्वसाधुप्रयोगे च'**। **साधुः कृष्णो मातरि, असाधुर्मातुले**। **'निमित्तात्कर्मयोगे'**। **निमित्तमिह फलम्। योगः संयोगसमवायात्मकः।**
**'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥'**
हेतौ तृतीयात्र प्राप्ता। सीमा=अण्डकोशः। पुष्कलको गन्धमृगः। **योगविशेषे किम्-वेतनेन धान्यं लुनाति** ? *यस्य च भावेन भावलक्षणम्।* [ २-३-३७ ]
**यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः। अर्हाणां**

---

**साध्वसाधुप्रयोगे च।** साध्नोति परकार्य्यमिति साधुस्तद्भिन्नोऽसाधुः। **श्रीकृष्णो मातरि साधुः।** मातुः= देवक्या भ्राता यः कंसस्तस्मिन् विषये असाधुः, दुष्टकंसनाशकर्तृत्वात्।

**मातुल** इति मातुर्भ्राता मातुलः। मातृशब्दात् डामहच्प्रत्यये टिलोपे मातुल इति ( लोके मामा ) इति। वार्तिके सप्तमीविधायके अस्मिन् अर्चा=पूजा=प्रशंसा न विवक्षिता, किन्तु तत्त्वकथनमात्रं विवक्षितम्। 'साधुर्भृत्यो राज्ञि' इत्यत्र तत्त्वमात्रकथने सप्तमी। साधुनिपुणाभ्यामित्यत्र तु साधुपदमर्चायां विवक्षितम्।

**निमित्तात् कर्मयोगे** इति। निमित्तवाचकात् सप्तमी भवति, तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योगे इत्यर्थः। निमित्तञ्चात्र क्रियाफलम्। एवञ्च फलं सप्तम्यर्थः। युजिर् योगे इति घञ्प्रत्ययान्तो योगशब्दः। योगः=सम्बन्धः स च प्राचीनमते—**संयोगः, समवायश्च। चर्मणि** इति। चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनत्वात्। कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम्। द्वीपिचर्मणोः, अण्डकोशमृगयोः, समवायसम्बन्धः। इतरयोः संयोगसम्बन्धः। **मुक्ताफलाय करिणं रघुवीर!** इत्यादौ 'क्रियार्थोपपदस्य' इति चतुर्थी। मुक्ताफलान्याहर्तुं घ्नन्तीत्यर्थः। द्वीपी = भाषायां चीता इति। चित्राङ्गशब्दस्यापभ्रंश ( चीता ) इति। कुञ्जरः = गजः। पुष्कलकः = कस्तूरीप्रधानो मृगः। **चर्मणि, दन्तयोः, केशेषु, सीम्नि** सप्तम्यन्तानि वार्तिकोदाहरणानि। द्वीपिकर्मकहननक्रिया-फलं चर्मप्राप्तिरूपम्। गजकर्मकं हननं तस्य फलं दन्तद्वयप्राप्तिरूपम्। चमरीकर्मकहननफलं केश-प्राप्तिरूपम्। मृगकर्मकहननफलं कस्तूरीलाभरूपम्।

तत्त्वचिन्तकास्तु कर्म = क्रिया तस्या योगे = सम्बन्धे निमित्तवाचकात् सप्तमी इति वार्ति-कार्थः। निमित्तन्तु यत्प्राप्तीच्छाप्रयोज्या, तत्प्रयोजिका वा क्रिया तदुभयम्। तत्राद्ये 'चर्मणि द्वीपिनम्' इत्यादौ सप्तमी। अन्त्ये—'अविद्यारजनीक्षये यदुदेति' इत्यादौ सप्तमी। तथा च 'चर्मणि द्वीपिनम्' इत्यादौ प्राप्तीच्छैव सप्तम्या अर्थः। 'अविद्यारजनीक्षये' इत्यादौ च अनुकूलत्वं सप्तम्यर्थः। अनुकू-लत्वे च चतुर्थीतृतीयासप्तम्यो भवन्ति इति न परस्परं तासां बाध्यबाधकभाव इत्याद्याहुरिति विभक्त्यर्थनिर्णये। एतदभिप्रायेणैव 'तत्र स्थितौ यत्नोऽभ्यासः' इति सूत्रे स्थिताविति निमित्त-सप्तमीति श्रीवाचस्पतिमिश्रैरुक्तम्। महाभाष्यकारास्तु अत्र विषये तटस्था एव। कुत्रचित् **पुष्कल-कः = शङ्कुः।** सीम्नि = सीमाज्ञानार्थं हतः = निहतः = निखातः, अस्मिन् पक्षे संयोगसम्बन्धः। एतद्वार्तिकाभावे तृतीया प्राप्नोति। तां बाधित्वाऽनेन सप्तमी **सीमा = अण्डकोशः,** पुष्कलको गन्ध-मृगः। धान्यकर्मकलवने वेतनमुपकारकं नात्र समवायसम्बन्धः। नापि संयोगसम्बन्धः। हेतौ तृतीया—**वेतनेन धान्यं लुनाति** इति। **यस्य भावेन भावलक्षणम्** इति। भावः = क्रिया। निर्ज्ञा-तकाला हि क्रिया, अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणम्। तत्र प्रसिद्धक्रियाश्रययोः कर्तृकर्मणोर्वाचकात् ब्राह्मणादिशब्दाल्लक्ष्यलक्षणभावसम्बन्धे षष्ठ्यां प्राप्तायां सप्तमीविधानार्थमिदम्। लक्षणत्वमिह क्रियायाः साक्षात्। आश्रयस्य = ब्राह्मणादेस्तु क्रियाद्वारेणेति बोध्यम्। **ब्राह्मणेषु अधीयानेषु गतः** इति कर्तरि उदाहरणम्। कर्मणि उदाहरणमाह—

**गोषु दुह्यमानासु गत इति।** ज्ञापकक्रियाश्रयवाचकात् सप्तमीति तेन गोपद-दुह्यमान-पदयोरुभयोरपि सप्तमी सिद्धा। क्रियाश्रयः कर्ता, कर्म च। व्यापाररूपक्रियाश्रयः = कर्ता। फलरूप-

**कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च।** सत्सु तरत्सु असन्त आसते। असत्सु तिष्ठत्सु सन्तस्तरन्ति। सत्सु तिष्ठत्सु असन्तस्तरन्ति। असत्सु तरत्सु सन्तस्तिष्ठन्ति। *षष्ठी चानादरे।* [ २-३-३८ ] **अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः।** रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः। *स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च।* [ २-३-३९ ] एतैः **सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः।** षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्। **गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः।** गा एवानुभवितुं जात इत्यर्थः। *आयुक्तकुशलाभ्यां चासेवायाम्।* [२-३-४०] **आभ्यां योगे षष्ठीसप्तम्यौ** स्तस्तात्पर्येऽर्थे। आयुक्तः=व्यापारितः। **आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा।** आसेवायां किम्–आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः।

---

**क्रियाश्रया=कर्म।** तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति। यथा प्रकृते। काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा–**गोषु घोक्ष्यमाणसु** इत्यादौ। काचित्तु स्वाधारकालान्तरकालेन यथा–**गोषु दुग्धासु** इत्यादौ। ज्ञापकत्वं सप्तम्यर्थः, भावलक्षणमित्युक्तेः क्रियायामेवान्वयः। लक्ष्यलक्षणभावः शब्दबोध्य एव एतच्छास्त्रप्रवृत्तौ निमित्तम्, न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोध्यम्। अन्यथा **'उदिते आदित्ये तमो नष्टम्'** इत्यादावेव स्यात्, न तु प्रकृते कदाचिद्धि **गोषु दुह्यमानासु असौ** गत इति। इदञ्च यत्र मानान्तरेण ज्ञातस्वरूपार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्तते, भाष्यस्वरसात्। **'राहूपरागे स्नायात्'** इत्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति अधिकरणसप्तम्येव। **'विवाहे नान्दीमुखं कुर्यात्'** इत्यत्र विवाहपदेन तत्प्राक्काल उच्यते। 'गवां दोहे आगतः' इत्यत्रापि अधिकरणसप्तम्येव।

**अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च** इति। अत्र वाक्यचतुष्टयम्। अर्हाणां **कर्तृत्वे। अनर्हाणाम् अकर्तृत्वे।** अर्हाणाम् अकर्तृत्वे। अनर्हाणां कर्तृत्वे। यस्यां क्रियायां ये उचितास्ते=**अर्हाः।** तेषां **कर्तृत्वे** विवक्षिते सति तत्र सप्तमी। **सत्सु तरत्सु असन्त आसते** इति। यस्यां क्रियायां येषां **कर्तृत्वमनुचितं** तेषामकर्तृत्वे विवक्षिते च सप्तमी वाच्या। **असत्सु तिष्ठत्सु सन्तस्तरन्ति। तद्वैपरीत्ये**=येषां कर्तृत्वमुचितं तेषामकर्तृत्वे **सत्सु तिष्ठत्सु असन्तस्तरन्ति** इति। **तद्वैपरीत्ये**=येषां च कर्तृत्वं नोचितं तेषां कर्तृत्वे च सप्तमी वाच्या। **असत्सु तरत्सु सन्तः तिष्ठन्ति** इति प्रयोगानुरोधेन लक्ष्यलक्षणभावविवक्षा तदा व्यर्थमेवेदम्।

**षष्ठी चानादरे** इति। **अनादरे** इति विषयसप्तमी। यस्य च भावेन इत्याद्यनुवर्तते। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी वेत्यर्थः। फलितमाह—**अनादराधिक्ये इति।** लक्ष्यलक्षणभावः षष्ठ्यर्थः। अनादरविशिष्टं प्रव्रजनं धात्वर्थः। तत्र षष्ठी तात्पर्यग्राहिका। **अनादरः**=यदुद्देश्यकेच्छाप्रयोज्या क्रिया क्रियान्तरं लक्षयति तस्य समाहितत्वाधिद्धिरूपः। अत्रानादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः। उदाहरणमाह – **रुदति रुदतो वा प्राव्राजीत्।** अत्र **'रुदतः'** इति पूर्वं प्रयोज्यम्, सूत्रेण पूर्वं षष्ठीविधानात्। चेन सप्तमीविधानमिति क्रमः। वाक्यार्थस्तु मूले स्पष्ट एव – रुदन्तं पुत्रादिकम् अनादृत्य सन्न्यस्तवान् इति।

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** इति। शब्दस्वरूपबोधकत्वेन 'विरूपाणामपि समानार्थानाम्' इति नैकशेषः। पर्यायान्तरसंग्रहापत्त्या स्वाम्यर्थ इति नोक्तम्। **दायाद** इति। दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात् कः। दायादः=स्वाम्यर्थ इति केचित्। गवादिकञ्च दीयमानेऽन्वेति नित्यसाकाङ्क्षत्वात्। शेषे षष्ठी पक्षे भवति। **गवां गोषु वा प्रसूतः**=गा एवानुभवितुं जातः।

**आयुक्तकुशलाभ्यां चासेवायाम्** इति। आयुक्तः=व्यापारितः। आङ्पूर्वकयुज्धातोः क्तप्रत्ययः। **कुशल** इति। **'कुशलं क्षेमपुण्ययोः पर्याप्तौ कुशलेऽभिज्ञे।'** 'कुश संश्लेषणे' कलच्प्रत्ययः। कुशलम्=तालव्यमध्यम्। कुशलवर्धितः=विदग्धमुखमण्डनम्। कुशलवयोरुपोञ्छवास इति श्लेषः।

*यतश्च निर्धारणम्* । [ २-३-४१ ] जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं **निर्धारणं** यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावञ्छीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः। *पञ्चमी विभक्ते*। [२-३-४२] विभागः=विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।

*साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः* । [ २-३-४३ ]

आभ्यां योगे सप्तमी स्यादर्चायाम्, न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। अर्चायां किम्-निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। 'अप्रत्यादिभिरिति वक्तव्यम्।' साधुर्निपुणो वा मातरं प्रति परि अनु वा।

*प्रसितोत्सुकाभ्यां तृतीया च* । [ २-३-४४ ]

---

मूर्द्धन्यमध्योऽपि कुषलशब्दः। 'कुष निष्कर्षे' इति धातुप्रकृतिकः। कुषलम् = मूर्द्धन्यमध्यम्—इति पीयूषकृतोक्तम्। 'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्।' इत्यमरः।

**यतश्च निर्धारणम्** इति। शब्दाश्चतुर्विधाः। चतुष्टयी शब्दानां प्रवृत्तिः—जातिवाचकाः, गुणवाचकाः, क्रियावाचकाः, यदृच्छावाचकाः, ( संज्ञावाचकाः ) १ ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्रप्रभृतयः । २—शुक्लकृष्णनीलरक्तादयः । ३—पाचकपाठकादयः । ४—टित्थभपदाम्रेडितडित्थ-चञ्चाप्रभृतयः। अनेकत एकस्य पृथक्करणं भवति, तेन समुदाय इति लभ्यते। निर्धारणम् = पृथक्करणम्। यतः = समुदायात्। यतः पृथक्करणं तद्वाचकशब्दात् षष्ठी सप्तमी च। यश्च निर्धार्य्यते = पृथक् क्रियते, यस्मात् निर्धार्य्यते, येन रूपेण निर्धार्य्यते इति त्रयाणामुपादाने एवेदं सूत्रं प्रवर्तते, नान्यत्र। जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वप्रकारकज्ञानविषयीकरणं निर्धारणमित्यर्थः। एवञ्च यद्व्यावृत्तधर्मवत्त्वं जात्यादिविशिष्टस्य प्रतिपाद्यते ततः षष्ठीसप्तम्यौ स्तः।

**नृणां नृषु च ब्राह्मणः श्रेष्ठः** इति। नृसमुदायस्यैकत्वेऽपि उद्भूतावयवभेदविवक्षया बहुवचनं **नृणामिति**। तिरोहितावयवभेदविवक्षया एक वचनन्तु निर्धारणविषयेऽसाधु। ब्राह्मणत्वादिविशिष्टस्य तदितरनरादिव्यावृत्तश्रेष्ठत्वधर्मवत्तया प्रतिपत्तिरिति तत्र षष्ठीसप्तम्यौ भवतः। 'नरेभ्यो राक्षसः क्रूरतमः' इत्यत्र 'पञ्चमी विभक्ते' इति बाधात् पञ्चम्येव। एवञ्च व्यावृत्तत्वाख्यः सम्बन्धो निर्द्धारणविभक्तेरर्थः। व्यावृत्तत्वञ्च-अत्यन्ताभावप्रतियोगिरूपं विधेयताऽवच्छेदकावच्छिन्नत्वम्। तेन 'नराणां ब्राह्मणः प्राणी' इति न प्रयोगः। ब्राह्मणेतरनरेषु प्राणित्वघटोभयाभावसत्त्वेऽपि प्राणित्वत्वस्य तद्वृत्त्यभावप्रतियोगितावच्छेदकतापर्य्याप्त्यनधिकरणत्वात्। नरत्वजातिवाचको नरशब्दः।

गुणवाचकोदाहरणमाह—**गवां गोषु वा कृष्णा बहुक्षीरा**। क्रियावाचकशब्दोदाहरणमाह—**गच्छतां गच्छत्सु वा धावन् शीघ्रः**। संज्ञावाचकोदाहरणम्—**छात्राणां छात्रेषु मैत्रः पटुरिति। एवं कन्यासु कन्यानां मीना, वीणा, वसुमती च पट्वी।**

**'पञ्चमी विभक्ते'** इति। विभक्तम् = विभागः। भेद इति यावत्। निर्धार्यमाणस्य यत्र भेदप्रतीतिस्तत्र पञ्चमी। **भेद एव** इति कथनेन न तु शब्दान्तरोपात्तसामान्याक्रान्तेति भावः। ननु **'एव'** गर्भितव्याख्याने किं बीजम्? अत्रोच्यते—तत्र निर्धारणे यथाकथञ्चिद् भेदस्य सत्त्वेन विभक्तग्रहणसामर्थ्यात् यत्र भेद एव न तु केनाप्युपात्तरूपेणाभेदस्तत्रैव प्रवृत्तिरित्याह—भेदे एव। अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव। पाटलिपुत्रकावधिकनिर्धारणाविषया **माथुरा आढ्यतरा इति। पुरुषोत्तम** इत्यत्र त्रितयोपादानाभावेन सम्बन्धसामान्ये षष्ठी, षष्ठीसमासश्च। **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** इति। अर्चा = पूजा, प्रशंसा वा। तत्त्वकथने तु षष्ठी। **निपुणो राज्ञो भृत्यः**। अत्र प्रशंसाभावेन षष्ठी। प्रतियोगे नानेन सप्तमी। अप्रतेरिति परित्यज्य **'अप्रत्यादिभिरिति** कर्तव्यम्। तेन-प्रति-परि अनुप्रभृतियोगे द्वितीया न सप्तमी। **प्रसितोत्सुकाभ्याञ्च**

आभ्यां योगे तृतीया स्यात् चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा ।

*नक्षत्रे च लुपि । [ २-३-४५ ]*

नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ।' मूले श्रवणे इति वा । लुपि किम्—पुष्ये शनिः ।

*सप्तमीपञ्चम्यौ कारकमध्ये । [ २-३-७ ]*

शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः ।

---

इति । प्रसितशब्दार्थस्तु अमरे—'तत्परे प्रसितासक्तौ' इति । प्रसितः उत्सुको वा हरौ हरिणा वा अनेन तृतीयासप्तम्यौ । नक्षत्रे च लुपि इति । लुप्शब्दोऽत्रार्थविशेषबोधकः, लक्षणया । एवञ्च यत्र 'नक्षत्रेण युक्तः कालः' इत्यणो 'लुबविशेषे' इति लुप् तत्रैवेदं सूत्रं प्रवर्तते । एतत्सर्वमभिप्रेत्याह—वृत्तौ—नक्षत्रे प्रकृत्यर्थे लुप्संज्ञया लुप्यमानप्रत्ययार्थस्तत्र वर्तमानात् तृतीयासप्तम्यौ स्तोऽधिकरणे इति । मण्डूकप्लुत्याऽत्राधिकरणमनुवर्तते । अधिकरणे किम्—मूलं प्रतीक्षते । नक्षत्रे किम्—पञ्चालेषु तिष्ठति । 'जनपदे लुप्' इति लुप् । अधिकरणे किम्—अत्र नागेशः—'अद्य पुष्यः' असत्यां तदनुवृत्तौ अन्तरङ्गत्वात् प्रातिपदिकार्थे एव स्यात् । उदाहरणं सूत्रस्य हि—मूलेन इति । तृतीयान्ताद् युक्तमित्यर्थेऽण् यो हि युक्तः स कालश्चेत् एतदर्थक 'नक्षत्रेण युक्तः कालः' इत्यण्, लुबविशेषे इत्यणो लुप् = लोपः । पक्षे सप्तमी पक्षे मूले इति ।

शारदीयनवरात्रसमये तत्रभवत्याः शारदायाः = सरस्वत्याः विश्रान्तिकालस्तत्र तस्या आवाहनम्, पूजनम्, बलिप्रदानम्, विसर्जनञ्च भवति । स कालः सरस्वतीशयनरूपेण लोके प्रसिद्धि गतस्तमुपक्रम्य सूत्रोदाहरणमिदं निगदितं मूलकृता । पठन्ति हि आचार्याः—

"मूलेनावाहयेद् देवीं पूर्वयाऽञ्च प्रपूजयेत् ।
उत्तरायां बलिं दद्यात् श्रवणेन विसर्जयेत् ॥" इति ।

पक्षे श्रवणे इति, अत्र सप्तमी । पुष्ये शनिः । पुष्णाति मनोरथान् यत्तत् पुष्यं नक्षत्रम् । पुष्यनक्षत्रे कार्यारम्भे कार्यसिद्धिर्भवतीति शिष्टोक्तिः । अत्र लुप्संज्ञया लोपाभावेन सप्तम्येव न तृतीया ।

सप्तमीपञ्चम्यौ कारकमध्ये इति । 'कालाध्वनोरत्यन्तसंयोगे च' इत्यतः कालाध्वनोरित्यनुवर्त्य पञ्चम्या विपरिणम्य सूत्रार्थो विधेय इति । मध्यस्य अवधिद्वयसापेक्षत्वेनात्र कारकयोर्मध्यमिति कारकमध्यं तस्मिन् कारकमध्ये इति । बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोध्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वात् भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह—शक्तिद्वयमध्ये यौ इति । कर्तृत्वादिशक्तिरेव कारकम्, 'शक्तिः कारकम्' इत्युक्तेः । सा च क्रियाभेदेन भिन्ना । यद्यप्यवध्यवधिमतोः साजात्यनियमात् न कालाध्वनोः कारकमध्ये सम्भवस्तथापि शक्तिपदेन तदाधारकालादिग्रहणान्न दोषः । पञ्चम्यपवादोऽयं योगः । शक्तिद्वयमध्यवर्तित्वन्तु वस्तुसन्निमित्तम्, न तु तस्य शाब्दबोधे भानमपेक्षणीयम् । अत्रास्वरितत्वात् कालाध्वभ्यां विभक्त्योर्यथासङ्ख्यन्न ।

एतत्सर्वमभिप्रेत्य वृत्तौ—

शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्त इति ।
अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद् वा भोक्तेति ।

नन्वत्र कर्ता एक एव, तत्कथं कारकयोर्मध्ये कालः ? अत्रोच्यते—नात्र शक्त्याश्रयं द्रव्यं कारकमिति व्यवह्रियते, किन्तु शक्तिरेव । सा च कालभेदात् भिद्यते एव । एका हि अद्य भुजेः साधनम्, अपरा द्व्यहेऽतीते भुजेः । तद्व्याचष्टे—कर्तृशक्त्योर्मध्येऽयं काल इति ।

अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते । 'तदस्मिन्नधिकम्-' इति 'यस्मादधिकम्-' इति च सूत्रनिर्देशात् । लोके लोकाद्वा अधिको हरिः ।

*अधिरीश्वरे* । [ १-४-९७ ]

स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात् ।

*यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी* । [ २-३-९ ]

अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः । 'सप्तमी शौण्डैः' इति समासपक्षे तु रामाधीना । 'अषडक्ष-' इत्यादिना खः ।

---

क्रोशे क्रोशाद्वेति एकस्मिन् देशे स्थितः सन् लक्ष्यं विध्येत् इति ।

कर्तृकर्मशक्त्योर्मध्ये काल इति । क्रोशशब्दात्सप्तमी, पक्षे पञ्चमी ।

ननु **'शक्तिः कारकम्'** इति पक्षे प्रमाणाभावः, इति चेन्न, 'सप्तमीपञ्चम्यौ' ( २-३-७ ) **इति सूत्रभाष्ये** तत्र हि 'क्रियामध्ये इति वक्तव्यम्, इहापि यथा स्यात्-'अद्य देवदत्तो भुक्त्वा द्व्यहात् भोक्ता' इति। अयं भावः-द्रव्यं कारकं तच्च देवदत्तरूपम् अद्य द्व्यहानन्तरञ्चैकमेव, भेदनिबन्धनो हि मध्यव्यवहार इति द्व्यहस्य द्वयोः कारकयोर्मध्यवाचकत्वाभावात् सप्तमीपञ्चम्यौ न प्राप्नुतः । **'क्रियामध्ये'** इति कथने तु भुजिक्रियायाः कालभेदेन भेदात् भुजिक्रिययोर्मध्ये द्व्यहरूपः कालो भवतीति न दोष इति भाष्यवार्तिकाशयः । **'कारकमध्ये'** इत्युच्यमाने इहैव स्यात्—**'इहस्थोऽयम् इष्वासः क्रोशात् लक्ष्यं विध्यति क्रोशे लक्ष्यं विध्यतीति'** । यं विध्यति, यतश्च विध्यति तयोः ( कर्मापादानयोः ) तन्मध्यं भवति । अत्र भाष्ये **'यं यतः'** इत्युक्त्वा कर्मापादानयोर्मध्यत्वं भाष्यकृदभिप्रेतं प्रतीयते । कैयटोऽप्याह—**'लक्ष्यप्रदेशयोः कर्मापादानयोर्भेदान्मध्यव्यपदेशोऽस्त्येवेति'** । **एवञ्च** 'शक्तिः कारकम्' इति पक्षमवलम्ब्य भगवता—'क्रियामध्य' इति वार्तिकं प्रत्याख्यातम् । इति एतस्य पक्षस्य प्रामाणिकत्वात् । **अनभिहिते** इति सूत्रेऽपि **शक्तिः कारकम्** इति पक्षः प्रतीयते—'प्रासादे आस्ते, शयन आस्ते, अत्र सप्तमी न प्राप्नोति, अभिहितत्वात्, इत्युपक्रम्य 'शक्तिः कारकम्' इति पक्षमाश्रित्य समाधत्ते भाष्यकारः—'अत्राधिकरणत्वशक्तिद्वयम्—सदिनिरूपितम्, आसिनिरूपितञ्च । तत्राभिहितं यत्सदिनिरूपितमधिकरणत्वं तद्भिन्नं यदासिनिरूपिताधिकरणत्वं तदाश्रया सप्तमी निर्बाधा' इति तेन शक्तिः कारकमिति पक्षः प्रामाणिकः । विस्तरस्तु **वै० भू० सारस्य पञ्चोलिप्रभातोऽवगन्तव्यः** ।

**अधिकशब्देनेति** कर्तरि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकशब्देनेत्यर्थः । **प्रमाणमाह— सूत्रद्वयनिर्देशरूपम्** । **यदस्मिन्नधिकम्** इति, **यस्मादधिकञ्चेति** । तेन **लोके लोकाद्वाऽधिको हरिरिति** सिद्धम् । 'तदस्मिन्' सूत्रभाष्ये तु उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे **सप्तमीत्युक्तम्** । कर्मणि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु **'अधिको लोको हरिणा'** इति **प्रथमैव** ।

**अधिरीश्वरे** इति । ईष्टे इति ईश्वरः । भावसाधनत्वपक्षे यस्य स्वामिनः ईश्वरत्वमुच्यते **इत्येकं व्याख्यानम्** । यस्य स्वं निर्दिश्यते । यस्य स्वस्य ईश्वर उच्यते इत्यपरम् । **एवञ्च व्याख्यानभेदेन** पर्यायेण विभक्तिरिति व्याख्यानमग्रे भविष्यति । **तमभिप्रेत्य** आह स्वस्वामिभावसम्बन्धेऽधिः **कर्मप्रवचनीयसंज्ञकः** । कर्मप्रवचनीयसंज्ञाफलं सप्तमीरूपं तदाह—**यस्मादधिकं यस्य चेश्वरवचनमिति** । **ईश्वरवचनशब्दोऽत्र** तन्त्रादिना पूर्वोक्तार्थद्वयपरः । **उपपरार्द्धे इति उपोऽधिके च** इति कर्मप्रवचनीयत्वम् । **पर्यायेणेति** अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसम्बन्धस्यापि उक्तत्वाद् **युगपदुभाभ्यां न सप्तमी**, किन्तु क्रमेणेत्यर्थः । **अधि भुवि रामः** । **अधि रामे भूरिति** । समासपक्षे खान्तेन **रामाधीना** इत्येव भवति । विभक्त्यर्थेऽव्ययीभावे तु **अधिरामम्** इति । ईश्वरेऽर्थे कृञ्धातुयोगेऽधिः

*विभाषा कृञि* । [ १-४-९८ ]

अधि: करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे। यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात् 'तिङि चोदात्तवति' इति निघातो न ॥ इति सप्तमी विभक्तिः ॥

इति कारकप्रकरणम् ।

---

कर्मप्रवचनीयसंज्ञको विकल्पेन भवति तत्सूत्रमाह – **विभाषा कृञि** इति । कार्य्यकरणे नियोजकस्य स्वामित्वम् । ननु **'मामुद्दिश्य विनियोक्ष्यते'** इत्यर्थादत्र कर्मणि द्वितीयैवेति किं कर्मप्रवचनीयत्वेनेत्यत आह–मूले—**अगतित्वादिति तिङि** चेति । उदात्तवति तिङन्ते गतिर्विहन्यते **इत्यर्थः** । अत्र 'तिङ्तिङः' इति निघातस्य **'निपातैर्यद्यदि'** इत्यादिना निषेधात् 'करिष्यति' इति तिङन्तस्योदात्तत्वमिति सर्वेष्टसिद्धिः इति **कारकप्रकरणम्** । इति **द्वितीयोंऽशः** ।

**गुर्जरप्रान्तान्तर्गतवसाइ ( डाभला ) नगराभिजनवास्तव्येन द्विचत्वारिंशद्वायनतो वाराणसीकृताखण्डनिवासेन खेतान–विरला–लोयलका–श्रीकृष्णमहाविद्यालयपूर्वप्राध्यापके विश्वविख्यातकाशीस्थराजकीयसंस्कृतमहाविद्यालय-वाराणसेयसंस्कृतविश्वविद्यालयपूर्वप्राध्यापकेन पवित्रतमोदीच्यब्राह्मणकुलोद्भवेन श्रीदिवालीदेवीजननीजातेन विद्वद्वरश्रीनीलकण्ठशास्त्रिपञ्चोलितनुजन्मना सर्वतन्त्रस्वतन्त्रपूज्यगुरुवरश्रीसभापतिशर्मोपाध्यायप्रधानशिष्येण श्रीबालकृष्णशास्त्रिपञ्चोलिना विरचिता कारकप्रकरणस्य लक्ष्मीव्याख्या समाप्ता ।**

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलं कुर्यादिति शिष्टोक्त्या **स्वविरचितपद्येन** भगवत्याः सरस्वत्या मङ्गलं—प्रस्तौमि—

**शास्त्रे रत्नैर्गुरुजनभवप्रज्ञयाऽऽप्तप्रकर्षै—**
**श्चित्रैस्तर्कैर्नवनवधियां सत्तरङ्गैरुपेताम् ।**
**पौरस्त्यैरर्थैः कमलनिचयैर्विष्टपं प्रीणयन्तीं**
**वाचं वन्दे जलनिधिसमां श्रीलपञ्चोल्यहं ताम् ॥ १ ॥**

**गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।**
**गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ॥**

इति शम् ।